॥ श्रीः ॥

अस्मत्पितामहश्रीचरणानां—पण्डितराजश्री १०८स्नेहिरामजिशास्त्रिणाम्,
अस्मत्पितृचरणानाम्—न्यायाचार्यपण्डितश्री १०८शिवनारायणशास्त्रिणाञ्च स्मारकम्।

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः ।

चतुर्दशकुसुमम्

महामहोपाध्यायनागेशभट्टविरचितः—

# लघुशब्देन्दुशेखरः

श्रीविश्वनाथदण्डिभट्टविरचितयाऽभिनवचन्द्रिकाटीकया, श्रीवैद्यनाथपायगुण्डे-विरचितया चिदस्थिमालाटीकया, श्रीसदाशिवभट्टविरचितेन तिलकेन, श्रीमद्भट्टोदयङ्करपाठकविरचितया ज्योत्स्नाटीकया, श्रीराघवेन्द्राचार्य-कृतया विषमपदविवृत्या, कारकप्रकरणे—श्रीशिवनारायणशास्त्रि-विरचितया विजयाटीकया श्रीगुरुप्रसादशास्त्रिविरचितया न्यासपरिष्कारपूर्णया वरवर्णिन्या, किञ्च—टिप्पण्या च विराजितः ।

तस्य

( अव्ययीभावान्तो भागः )

समलङ्कर्त्ता—श्रीगुरुप्रसादशास्त्री,
व्याकरणाचार्यः, न्यायाचार्यः, दर्शनाचार्यः,
[ प्रिन्सिपल—श्रीराजस्थान-संस्कृत—कालेज, मीरघाट, काशी । ]

सम्पादकः—पं० नन्दकिशोरशास्त्री, आयुर्वेदाचार्यः,
[ प्रोफेसर—श्रीराजस्थान—संस्कृत—कालेज, मीरघाट, काशी । ]

प्रकाशकः—भार्गव-पुस्तकालयः, गायघाट, काशी ।

प्रथमं राज[illegible]    १९९२ [illegible]    मूल्य ४०)

॥ श्रीः ॥

# प्रास्ताविकङ्किञ्चित् ।



अथ परिप्रथितयशोराशिधवलिताखण्डभूमण्डलानामनितरसाधारणपाण्डित्यप्रकर्ष-निघृष्टवादिमत्तमतङ्गजानां, महामहोपाध्यायपण्डितप्रकाण्ड-श्रीनागेशभट्टानां जगदावर्जन-प्रभविष्णु निस्तन्द्रं पदं लम्भयन्तीषु नैकासु कृतिषु मूर्धाभिषिक्तं वरेण्यं धाम दधानो लघुरपि महतोऽपि लघयन्नन्वर्थनामा लघुशब्देन्दुशेखरो विद्वद्वैरेयैर्भट्टोजिदीक्षितचरणै-राविष्कृतायाः **सिद्धान्तकौमुद्या** व्याख्यानव्यपदेशेन निखिलवैयाकरणसिद्धान्तानां कामं प्रकाशकः कैर्नाम न श्रद्धाऽवनतोत्तमाङ्गैः सादरमभिनन्द्यते ? ।

अनुगङ्गमङ्ग ! वाराणस्यामस्याङ्कस्य न सचेतसो हृदयावर्जनाय प्रभवति प्रतिप्रतोलि प्रत्यङ्गणं वाऽनुरणन्मसृणमसृणो ध्वनिर्वटूनां शेखरस्यास्य फक्किकाः समभ्यस्यताङ्कलगलविवरान्मन्द्रोऽतन्द्रशोभः समुत्तिष्ठन्प्रसरतोऽध्वनीनस्यापि ? ।

के नाम नास्य ग्रन्थरत्नस्यानन्यदुर्लभेन सौभाग्यसौरभेण परिस्पर्द्धमाना हृदि कमप्य-निर्वचनीयं भावमुद्बिभ्रति सुकृतिनोऽपि ? । निगूढतमतत्त्वस्य तस्यास्य प्रथितमहसो ग्रन्थरत्नस्य विद्वन्मौलिमण्डनस्य शेखरस्य—तदनुरूपाभिर्नैकविधेन पथा गूढतमन्तत्त्वं प्रकटयन्तीभिर**भिनवचन्द्रिका**दिभिष्टीकाभिरलमलङ्कृतस्येदम्प्रथमं राजसंस्करणं प्रकल्प-यन्त्याः काशीस्थ—'श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः' सौभाग्यातिशयङ्किल परामृशन्तो भृशं निभृततमम्प्रमोदामहे ।

## ( १ ) चिदस्थिमाला ।

तत्र—तत्रभवन्नागेशभट्टप्रधानशिष्यश्री**वैद्यनाथपायगुण्डे**—विरचिता चिदस्थिमालां टीका शेखरपङ्क्तिलापने, 'कुतः केन वा का किल शङ्का कौमुदीमधिकृत्य कृता ? यामपहस्तयितुममुष्याः शेखरपङ्क्तेरवतारः' इत्याद्यवश्यज्ञातव्यविषयप्रकटने च सर्वाष्टीका अप्यतिशेते ।

क्वचन प्रतिपङ्क्ति प्रतिपदञ्च क्वचन दुर्विगाहविषम-तमाऽशुद्धि-दुरुक्ति-द्विरुक्ति-पङ्क्ति-

विपर्यास-प्रसङ्गभङ्गादिदूषणगणैराकुलीकृताया अस्याः शोधनं नाम नवीनटीकानिर्माणादपि गरिष्ठमतिमात्रं मनोव्यथामापादयदपि श्रीचिन्तामणिगुरुचरणकृपयैव निर्व्यूढमिति वस्तुस्थितिरेवैषा । अस्याः कर्णेहत्य रसमास्वादयन्तो रसिकाः प्रकामं नाम प्रमोदं धास्यन्ति । अस्याश्च काप्यभिनवैव वर्णनशैलीति द्रष्टृणां स्पष्टमेतद्भवेदेवाभिरूपपुङ्गवानाम् ।

अस्मदुपलब्धेषु चतुर्ष्वपि पुस्तकेषु प्रत्यक्षरं दुर्विगाह्या अशुद्धयो ग्रन्थरत्नं दूषयन्त्य इवोपलभ्यन्ते । ता निरस्य प्रकाशनं नामासिधाराऽवलेहनमेव । अथ तत्कियदिव निर्व्यूढमस्माभिरित्यत्र तु विद्वांसः प्रमाणम् । इयं कारकान्तैवोपलभ्यते ।

## ( २ ) अभिनव-चन्द्रिका ।

शारदावताराणां **श्रीबालशास्त्रि**परमगुरुचरणानां शिष्यैर्दण्डिभट्टैर्विरचिता परिष्कारपथावलम्बिनी जगद्विदिताऽभिनवचन्द्रिकाऽद्यापि पठने पाठने चोपयुज्यते, नितरामभिनन्द्यते च परिष्कारप्रियैः पण्डितवृन्दैरन्तेवासिसार्थैश्च । परीक्षादिषु बाढमुपकारिणीयमविकलं प्रकाशभावं भजमाना भूयोऽपि विदुषस्तोषयेदिति,—बहुशः स्खलनं दधत्या पङ्क्तिभ्रंश—विषयप्रमोष—ग्रन्थासङ्गति—प्रसङ्गभङ्गादि—निगूढदूषणगणैः पदे—पदे समाक्रान्ताया अस्याः स्वशेमुषीं, गुरूक्ति-परम्परा-स्वसम्प्रदायादिकञ्च प्रमाणीकृत्य शोधनं नाम नोद्वेजयिष्यति सहृदयानिति च सुदृढोऽस्माकं प्रत्ययोन्मेषः । हन्त ! इयं हलन्तपर्यन्तमेवोपलब्धा । अग्रे तु अस्मत्तातपादैर्न्यायाचार्यश्री**शिवनारायणशास्त्रि**भिर्विरचिता नवीनशैलीसुललिता विजयैव विजयते, अस्मत्सङ्कलिता—**वरवर्णिनी** च ।

अस्याश्च नवपुस्तकानि शोधनायोपयुक्तान्यस्माभिः, तत्र प्रायः समाना एवाऽशुद्धयो दरीदृश्यन्ते । लेखकैरियं मन्ये एवं कदर्थिता—यत्—यद्यस्यामुपात्तो विषयः सम्प्रदायप्रसिद्धो न स्यात्तर्ह्यस्याः संशोद्धय प्रकाशनमप्यसम्भाव्यमेव स्यात् । इदानीं पठन-पाठनयोरुपयुज्यमानो विषयोऽस्यां निबद्ध इत्येतावतैवाऽस्या भूयान् समादरो दरीदृश्यते ।

## ( ३ ) सदाशिवभट्टीयं तिलकं [ भट्टी ]

१८७३ सम्वति विद्यमानैः सिद्धसारस्वतैः प्रचण्डपाण्डित्यशोभिभिः काशिकासिपरिसरमलङ्कुर्वाणैः **श्रीसदाशिवभट्टै**र्विरचिता प्रक्रियांशव्याख्यानमूर्धन्यतमा टीकेयमतीव

मनोहारिणी विदुषां समवाये नितान्तं प्रथते च । परन्दौर्भाग्यभरेणान्तेवासिनामस्या न शुद्धं संस्करणमिति दूयमानमानसानां मनीषिणां कृतेऽस्माभिरत्यन्तं क्लेशमुरीकृत्यापि किञ्चिदिव शोधितेयं हर्षतरलितस्वान्तांस्तानतान्तान्विधास्यति पण्डितेन्द्रानिति वयं विदन्तः प्रमोदामहे । इदम्प्रथममस्याः किञ्चिदिव शुद्धं संस्करणमिति ब्रुवन्तो हर्षातिरेकम्भजामहे च ।

## ( ४ ) ज्योत्स्ना ।

श्रीसदाशिवभट्टादिभिराद्रियमाणा विवेचनेयं कामपि तां शोभां धत्ते इति विद्वच्चेतांसि प्रमाणम् । इयं १८५० वत्सरे वैक्रमेऽधिकाशि प्रकटितेति सप्रमाणमुपरिष्टान्निवदयिष्यामः । अस्याः शोधने परैस्तर्कयितुमप्यशक्यः श्रमः खेदश्चास्मान्व्याकुलीचकार ।

## ( ५ ) विषमा [ विषमपदविवृतिः ]

श्रीराघवेन्द्राचार्यैः सदाशिवभट्टाभ्यर्णङ्कालं स्पृशद्भिः स्वनिर्मितां चन्द्रिकां सञ्क्षिप्येयं निर्मिता । प्रक्रियांशं विवृण्वती चेयं म०म० श्रीराजारामशास्त्रिचरणैः, तदन्तेवासिभिः शिवावतारैः श्रीबालशास्त्रिचरणैश्च तत्र-तत्र शेखरव्याख्यानावसरे स्मर्यमाणा विशिष्टं स्थानं विद्वत्समवाये धत्ते इति विदन्त्येव विद्वांसः ।

## ( ६ ) विजया

कारकाव्ययीभावप्रकरणेऽस्मत्पितृचरणैः श्रीश्रीशिवनारायणशास्त्रिभिराविष्कृता नितरां प्रौढाऽपि सरला विजयाऽभिधाना शेखरटीकाऽपि निवेशिता । अस्या अतितमां मधुरां वर्णनशैलीं दृष्ट्वा परीक्षार्थिसार्थः सर्वथैव प्रमोदमाधास्यति ।

## ( ७ ) वरवर्णिनी

श्रीविश्वनाथावतारश्रीबालशास्त्रिचरणैरभ्यूहितस्य, तदन्तेवासिभिरस्मत्पितामहश्रीचरणैः श्रीस्नेहिरामशास्त्रिभिराविष्कृतस्य शब्देन्दुशेखर-बृहज्जटाजूट-शब्देन्दुशेखर-भूति—शब्देन्दुशेखर—त्रिपुरसुन्दरीत्यादिनामभिः प्रसिद्धस्य व्याख्यानिकुरम्बस्य, किञ्च स्त्रीप्रत्ययादावुमानाथीयदीपिकायाः, गुरुवर--पण्डितैकशेष—शेषावतार—श्री १०८ श्रीहरनारायणत्रिपाठिपादानाञ्चालम्बनेन मया सङ्कलितेयं वरवर्णिनी यदि विदुषस्तोषयेत्तनु सफलश्रमोऽहं कृतकृत्यमात्मानं मन्ये ।

# प्रस्ताविककिञ्चित् ।

अत्र स्वसम्प्रदायमनुरुध्यैव सर्वे परिष्कारा, न्यासाश्च, विशिष्टाः शङ्काः, समाधयश्च
शिताः—इति क्वचित्पुनरुक्तिदोषोऽपि मर्षणीय एव ।

यथामति शोधितेष्यत्र शेखरे नूनं मदज्ञानविलसिता मुद्रणयन्त्रसङ्घर्षजाश्च
भिङ्गादिनैकरूपास्त्रुटयो भवेयुस्ता विद्वद्भिः समीकरणीया एव ।

ननु—विद्वन्निवहैरेवैकपदे संहत्य कर्त्तुमर्हं, नितान्तं गुरु कार्यमेतच्छेखरप्रकाशना-
ः त्रिचतुराक्षरलवलघीयसा चेतसा चिकीर्षन्नहं कथं नाम न वचनीयोऽस्म्यभिरूपाणाम्? ।

अथापि—अप्रकाशितग्रन्थप्रकाशनादिकौतुककङ्कथङ्कथमपि संवरीतुमसमर्थेन मया
प्यदभ्रेण साहसेन यदिदमनुष्ठितं, तत्र—

'पदे त्वर्वाचीने पतति न मनः कस्य ? न वचः ?'

—इति प्रामाणिकोक्तिरेव प्रमाणभूता ।

किञ्च—दुर्लभतमग्रन्थप्रदानैरतिवेलमस्माननुगृह्णतां परममान्यानां महामहोपाध्याय—
कीयविद्यालयाधिपति—**श्रीगोपीनाथकविराज**पूज्यपादानां न केवलमयमेव जनः—
पि सुरभारतीप्रणयिसार्थ एवाधमर्णभावं भजते इति न चटुलचाटुवाद एषः ।

एवं मान्यवर—**श्रीगणपतिशास्त्रि**मुकाटे—**श्रीगङ्गाधरशास्त्रि**भारद्वाज,—सुहृद्वरीण—
नृसिंहशास्त्रित्रिपाठि—**श्रीगोपालशास्त्रि**नेने—**श्रीनारायणशास्त्रि**खिस्ते—व्याकरणा-
ि—सुहृन्मूर्धन्य—स्वर्गीय**भास्कर**शर्मपर्वतीयप्रभृतयोऽस्मानैकविधाभिर्वीथीभिरुत्साहयन्तो
ा न विस्मरणीयाश्च ।

दृशमहत्तमग्रन्थरत्नस्य मुद्रणेन संस्कृतस्नेहिलोकमुपकुर्वन्तः श्री**जगन्नाथप्रसाद**भार्गव-
दयाः, तदनु श्री**कैलासनाथ**भार्गवमहाभागाश्च नितरां धन्यवादार्हाः । इति ।

श्रीराजस्थान-संस्कृत-कालेज,
मीरघाट, काशी ।
वसन्तपञ्चमी १९९२—२८।१।३६

विधेयतमस्य —
**श्रीगुरुप्रसादशास्त्रिणः** ।



शब्देन्दुशेखर त्रिपुरसुन्दरीव्याख्याकाराः, अस्मत्पितामहाः—

**पण्डितराज-श्रीस्नेहिरामशास्त्रिणः,**

जन्मसंवत् १९०५-] चिड़ावा राजपूताना [कैलासवास-संवत् १९८०



शब्देन्दुशेखरविजयाव्याख्याकारा अस्मत्तातपादाः—

**श्रीशिवनारायणशास्त्रिणो न्यायाचार्याः ।**

जन्म सं० १९३६ वै०—काशीवास सं० १९९१ वै०

टीकाद्वयोपेतः—

# लघुशब्देन्दुशेखरः ।



पण्डितराज श्रीस्नेहिरामशास्त्रिणां पौत्रः, न्यायाचार्यश्रीशिवनारायणशास्त्रिणां पुत्रः,

**श्रीगुरुप्रसादशास्त्री, व्याकरणाचार्यः, न्यायाचार्यः,**

**दर्शनाचार्यः, आयुर्वेदाचार्यः, ( काशी ) ।**

[ 'शब्देन्दुशेखराभिनवराजलक्ष्मी' 'वरवर्णिन्यादि'व्याख्याकारः ]

परमगुरुवराणां—श्री १०८ श्रीविश्वनाथबालशास्त्रिचरणानां—

अस्मत्पितामहानां—पण्डितराज श्री १०८ श्रीहिरामशास्त्रिचरणानां—

अस्मत्तातपादानां—श्री १०८ शिवनारायणशास्त्रि-न्यायाचार्याणाञ्च स्मारकः—

**श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः—**

**वाङ्मय एष—**




परमपावन-महनीयकीर्त्तिपरिमलोल्लासितजगतीतल-

निलयनिखिललोकमानसमरन्दानां—

योगविभूतितति समधिगतसमस्ततत्त्वसाक्षात्काराणां—

सुरभारती-विभ्रमभरैक-निकेतनानां,—

प्राच्य-पाश्चात्य-विद्यामहार्णवानां—

'महामहोपाध्याय'—

**श्रीश्रीगोपीनाथकविराज-पण्डितराजमहोदयानां—**

विद्वद्भिर्वहैरहमहमिकया चिरायाऽर्चितयोश्चरण-

—पादुकयोरादरादाधीयते—

समश्रयं—

—श्रीगुरुप्रसादशास्त्रिणा ।

पण्डितप्रकाण्ड—महामहोपाध्याय—

# श्रीगोपीनाथकविराज—महोदयानां

## सम्मतिः—

*I congratulate Pandit Guru Prasad Shastri on the excellent edition of Shabdendu Shekhara with Several rare Commentaries which he has brought out in the Rajasthana Sanskrit College Granthamala. These commentaries, some of which are by distinguished scholars of the past, include an original work compiled by the editor himself to meet the requirements of modern students. The paper, typography and get-up of the edition leave nothing to be desired. The manuscripts of some of the commentaries being extremely errupt it reflects great credit on the editor that he has been able, through with great difficulty, to present these rare books to the world of Sanskrit scholarship in a correct and intelligible form. Students of Sanskrit-grammar will remain ever indebted to Pandit Guru Prasad Shastri and to the enthusiastic Publishers for this noble enterprise.*

---

GOVT. SANSKRIT COLLEGE
**BENARES.**
4-5-1936.

**GOPINATH KAVIRAJ M. A.,**
MAHAMAHOPADHYAY
PRINCIPAL-
GOVERNMENT SANSKRIT COLLEGE, BENARES.

* श्रीर्जयति *

**पूज्यपाद-पाणिनि-पतञ्जलि-लीलावतार-पण्डितप्रकाण्डैकशेष-जगन्मान्य-श्री१०८श्रीहरनारायणत्रिपाठिगुरुवरचरणानाम शीर्वादः—**

ब्रह्मभूयङ्गतानां जगद्विदितपण्डितप्रवरश्रीस्नेहिरामशास्त्रिणां पौत्रेण, श्रीशिवनारायणशास्त्रिणान्तनुजनुषाऽऽयुष्मता श्रीगुरुप्रसादशास्त्रिणा सङ्गृहीतया पण्डित-परीक्षार्थिसार्थोपकाराय सविशदं प्रदर्शितैः साम्प्रदायिकैर्निगूढैरपि प्रथितैः परिष्कारै-र्न्यासैश्च समन्वितया विद्वन्मनोहारिण्या **वरवर्णिन्या** समन्वितो **लघुशब्देन्दुशेखर**-ष्टीकाषट्केनोपेतोऽस्माभिर्निरीक्षितो बहुत्र परीक्षितश्च ।

अत्र सङ्कलिताः सर्वा अपि दुर्लभतमाष्टीका विद्वन्निवहस्य परीक्षार्थिलोकस्य च नितरामानन्दञ्जनयन्ति । किञ्च तत्रापि-अभिनवचन्द्रिकायां विशेषतश्च **वरवर्णिन्यां** सङ्कलिताः सम्प्रदायप्रसिद्धाः समन्वयपुरस्सरं मञ्जुलयाऽपि प्रौढया चमत्कारकारिण्या सरण्या प्रदर्शिताः परिष्कारा अतितरां प्रहर्षयन्ति ।

तत्रापि पत्राणां स्निग्धता,मुद्रणसौष्ठवं, बहिरङ्गभूपासमारम्भोऽन्तरङ्गसंस्काराश्चानुरूपा एवास्य सकललोकमहनीयस्य ग्रन्थरत्नस्येति परं प्रमोदस्थानम् । अनेन सर्वोपकारगुरुणा शुभोदर्केण कर्मणा सन्तुष्टाः शुभाशीभिरेनं श्रीगुरुप्रसादशास्त्रिणं योजयन्तो ग्रन्थस्यास्य निर्बाधं प्रचारं कामयामहे—इति ।

गवर्नमेंट-संस्कृत-कालेज, काशी । } **श्रीदेवनारायणत्रिपाठिनः ।**

---

व्याकरणाचार्य–पण्डितप्रवर–**रामदत्तमिश्र**शास्त्रिगौडानां सम्मतिः—

( श्रीगुरुर्जयति )

**बहवः पण्डिता भूमौ सन्ति विद्योपजीविनः ।**
**ग्रन्थग्रन्थिभिदादक्षस्त्वेको राजानति क्वचित् ॥**

य एष सकलशाब्दिकविद्वज्जनानन्ददायी लघुशब्देन्दुशेखरष्टीकाषट्कविभूषितो मुद्रितो मूलादासमाप्ति मया सम्यङ्निरीक्षितः । लुप्तप्रायाणामासां जीर्णानां टीकानामुद्धारे परं प्रयतमानैर्गौडवंशमणिभिरभिरतिदवीयसीरपि न्याय-व्याकरणाद्याचार्यपदवीरुद्वहद्भिर्जग-द्विदितैः श्रीगुरुप्रसादशास्त्रिमहोदयैः शाब्दिकजगति परमुपकृतम् ।

निजनिर्मितायां पुनर्वरवर्णिन्यान्तु परमदुर्लभा अत्यन्तगोप्यत्वेन स्निग्धशिष्येषु निगूढ-रहस्यमिव गुरुभिरुपदिष्टा अपि विषयाः सन्निवेशिताः । नवनवाश्चापि परिष्काराः स्थले-स्थले सहृदयहृदयारुन्तुदशङ्कापिशाचीरपि समूलघातं घ्नन्तो व्यक्तमुद्भाविताः ।

**गुरुर्गुरुप्रसादोत्था कृतिरेषा महोज्ज्वला ।**
**पाणिनीयमहासिन्धुतलस्पर्शं करोति हि ॥ १ ॥**

इतिसम्मन्वते—**रामदत्तमिश्रगौडाः, विद्यारत्नं, व्याकरणाचार्याः,**
[ काशीस्थ—गणेशपाठशालाप्रधानाध्यापकाः ]

( श्रीविश्वेश्वरो विजयते )

विड़लामहाविद्यालयाध्यक्षाणां—

व्याकरणाचार्य

## पण्डितप्रकाण्ड-श्रीसभापतिशर्मशास्त्रिणां सम्मतिः—

अद्य महान्प्रमोदावसरो यदपारशब्दजालाऽकूपारपारमवजिगमिषुभिर्मनोज्ञशेमुषीधनैर्मञ्जिमदृढबन्धगम्भीरविचारपरिपूर्णं 'शब्देन्दुशेखर'बृहत्पोतमवरूढैर्विपश्चित्कदम्बैः स्वस्वान्तविनोदाय, धिषणावैभवसम्पादनाय च शब्दशास्त्रतत्त्वरत्नाकरविहरणशीलानां प्राक्तनानां भूरिसूरिप्रकाण्डानां या व्याख्यानरत्नस्रजो १ ज्योत्स्ना—२ विषमी—३ चिदस्थिमाला—४ (अ)भिनवचन्द्रिका—५ सदाशिवभट्टी-प्रभृतयोऽवश्यमेव दृक्पथयितुमभिलष्यमाणा अपि नातः पूर्वं सख्य इव सहचरीभूय विद्वत्कदम्बनयनकुमुदानि चन्द्रिका इव प्रोल्लासयितुं प्रबभूवुः ।

ता महोत्साहशालिभिर्न्याय-व्याकरणाद्याचार्यपदालङ्कृतैः श्रीमद्भिर्गुरुप्रसादशास्त्रिमहोदयैर्गुरुतरप्रयत्नेनैकत्र सङ्गृह्य-कियद्वारं मुद्रणेऽपि दुश्शकशोधना अशुद्धयः प्रायो निराकृताः । स्वयं 'वरवर्णिनी' नामकं व्याख्यानान्तरं निर्माय च पण्डिततल्लजानामन्तेवास्युद्धानाञ्च मनःप्रमोदाय पुर उपस्थाप्याऽतीवोपकृता मनीषिणः ।

पुस्तकान्तरापेक्षयाऽत्रेदमपि वैशिष्ट्यं—यदत्र महामहोपाध्याय-सर्वतन्त्रस्वतन्त्रजगद्विश्रुतोतथ्यानुजप्रतियोगिकसादृश्यानुयोगिगुरुवर-श्रीशिवकुमारशर्ममिश्र-श्रीश्रीदामोदरशास्त्रि-श्रीतात्याशास्त्रि—श्रीदेवनारायणत्रिपाठिप्रभृतयो ये महाविद्वांसस्तेषामपि बहवः साधारणजनदुर्लभा व्याख्यानप्रणाल्यः परिष्काराश्च विशदीकृत्य प्रदर्शिता विद्योतन्ते ।

'वर्णात्कार'इत्यत्र,'अचः परस्मिन्'इत्यस्य-'अच एव आदेशः'इत्यर्थविचारे, 'यरोऽनुनासिके' इत्यस्य विषम्यां, 'कृत्तद्धितसमासाश्च' इति सूत्रे-'शब्दानुगमस्य' इत्यस्य व्यवच्छेद्याननुगमेऽपि' इत्यस्य च प्रतीके,'नामि'इत्यस्य **वरवर्णिन्याम्**,'प्ररि'शब्दे सन्निपातविषयकविवरणे, 'शूद्रा चामहत्पूर्वा जातिः' इत्यस्य **वरवर्णिन्याम्**, 'प्रातिपदिकार्थ'सूत्रव्याख्याने च दृष्टिप्रक्षेपपूर्वकमन्यत्रानुपलभ्यमानविषयविवेचनपरव्याख्यानोपलब्ध्या सम्भाव्यते उपकारसम्भारबाहुल्यमेव सङ्ख्यावतां सङ्ख्यामनुसरेदिति ।

अस्य मुद्रणप्रकारसौष्ठवादिना दर्शकानां सपदि हृदयङ्गमतासम्पादकत्वसम्पादका भार्गवमहोदया अपि धन्यवादार्हाः ।

इति निवेदयन्ते—

ता० १-२-३६

**सभापतिशर्म्मोपाध्यायाः,**

[ प्रिन्सिपल-बिरला-संस्कृत-कालेज-काशी ] ।

## गवर्न्मेन्ट-संस्कृत-कालेज-सरस्वती-भवनोपाध्यक्ष-विद्वद्वर-साहित्याचार्य-श्रीनारायणशास्त्रिखिस्ते-महोदयानां सम्मतिः—

श्रीमद्भिर्व्याकरणन्यायदर्शनाद्याचार्यैरनेकग्रन्थनिर्माणविख्यातकीर्तिभिरस्मन्मित्रवरैः **श्रीगुरुप्रसादशास्त्रि**महोदयैर्दुर्लभटीकाषट्केन, स्वकृतविशदटिप्पन्या **वरवर्णिन्या** च सह प्रकाशितं शब्देन्दुशेखरं वीक्ष्य नितान्तं हृष्टचेता अहं तथाविधाऽन्तर्बहिःसुन्दरशेखराभिनवसंस्करणसम्पादकान् शास्त्रिमहोदयान् परःशतैर्धन्यवादैरभिनन्दामि, आशासे च,— यदिदमेकमेव संस्करणमादाय विद्यार्थिनोऽध्यापकाश्च शेखरटीकान्तरसंस्करणसङ्ग्रहणे निरपेक्षा एव भवेयुः ।

परिष्कार-प्रक्रिया-न्यासाख्यत्रिविधसम्प्रदायसङ्कलनात्रिवेणीतीर्थमाहात्म्यमधिगतमिदं संस्करणमत्र मिमङ्क्षूणां विदुषां विद्यार्थिनाञ्च कृते शब्दशास्त्ररहस्यावबोध-लोकातिग-प्रतिष्ठालाभात्मकं पीयूषं सुलभं करिष्यतीति सुदृढो मे विश्वासः । शब्दशास्त्ररसिकैरिदं संस्करणमवश्यमुपादेयमिति शिवम् ।

**सरस्वती-भवनम्**
गवन्मन्ट-संस्कृत—कालेज काशी
८।२।२६

**नारायणशास्त्री खिस्ते ।**

---

॥ श्रीः ॥

## श्रीराजस्थान-संस्कृत-कालेज—काशी—व्याकरणप्रधानाध्यापकानां—व्याकरणाचार्य—श्रीश्रीदत्तशास्त्रिगौडानां सम्मतिः—

स्वतःप्रमाणसमाम्नाय-प्रधानाङ्गव्याकरणशास्त्र-मूर्धाभिषिक्तं, वरवर्णिन्यादिटीकासङ्कलयितृ-**श्रीगुरुप्रसादशास्त्रि**महोदयानामधिकाशि प्रख्यातप्रकाण्डपण्डितरत्नेष्वाध्यात्मिकपराचिन्त्य-वैदुष्यं प्रकटयन्तं, व्याख्यातृश्रोतॄणां सयुक्ति सहस्रशो विषमस्थलसंलापनवेपथुं निरस्य कल्पलतयेव शतशः परिष्कारं द्योतयन्त्या **वरवर्णिन्या** दाम्पत्यमनुमोदमानं, लसन्तम्, अलौकिकसार्वभौमानन्दथुं सरोमहर्षं जनयन्तं, स्वसङ्गाह्यतां विशदयन्तं, टीकाषट्कोपेतं लघुशब्देन्दुशेखरममुम्—

वर्तुलाक्षरसंयुक्तं दृढपत्रैः परिष्कृतम् ।
ग्रन्थरत्नं समालोच्य गुरुप्रसादभूषितम् ॥ १ ॥
गौडव्याकरणाचार्यभूषणेन मया मुदा ।
श्रीदत्तशर्म्ममिश्रेण सम्मतिश्चात्र दीयते ॥ २ ॥

* श्रीः *

विदितमेव विदुषां यद्वेदाङ्गप्रधानव्याकरणप्रधानं दुरूहं पाणिनीयतन्त्रम् । तद्व्याख्यानभूता महाभाष्यकैयटादयश्चातीव सूक्ष्मबुद्धिवेद्यास्तद्रहस्यप्रकाशकश्च शब्देन्दुशेखरादिग्रन्थः काश्यां विद्वद्वर्यैः परिष्कृत्य परिष्कृत्य सूक्ष्मतमतां नीतः । तेषां विद्वद्वराणां सरणिमवलम्ब्य केचिदेव विद्वांसोऽध्यापयन्ति सम्प्रदायप्राप्तं परिष्कृतं शास्त्रं,यदि गुरुवराणां वाक्यं सङ्कलय्य-सङ्गृहीतं न भवेद्विलुप्तमिदं न चिराद्भविष्यतीति मनसि निधाय तत्प्रकाशने प्रवृत्ताः काशीस्थ-श्रीराजस्थान-संस्कृत—कालेजप्रधानाध्यक्षमहोदयाः श्रीमन्तो न्याय-व्याकरणाचार्याः परिशीलितशास्त्रजाताः श्रीगुरुप्रसादलब्धशुद्धशेमुषीकाः श्रीगुरुप्रसादशास्त्रिणो मुक्तकण्ठं नैकशो धन्यवादार्हाः ।

रक्षितारश्च ते शास्त्रजातस्य प्रकाशना-ऽध्यापन-पाठशालानिर्मिति-विद्वद्वररक्षण-च्छात्रवृत्ति-दानादिभिरिति मात्सर्यमुत्सार्य विद्वद्भिर्नितरामिमे समादरणीयाः ।

सम्भावये यदहमिव चान्येऽपि—एतान्महानुभावानादरिष्यन्ते ।

इति—मन्यते—

**नारायणदत्तत्रिपाठी [ व्याकरणाचार्यः ]**

प्रधानाध्यापकः—मारवाड़ी—संस्कृत—कालेज, मीरघाट, काशी ।

---

## पण्डितप्रवर-व्याकरणाचार्य-श्रीगोपालशास्त्रिनेने-महोदयानां सम्मतिः ।

### ( श्रीगुरुः शरणम् )

महान् प्रमोदोऽयमद्य यन्मयेयं लेखनी तत्र सम्मतिदानाय प्रचार्यते यदर्थमेतावन्तं कालं सर्वे वैयाकरणविद्वांसः साभिलाषाः सोत्कण्ठाश्च आसन् । मन्ये लघुशब्देन्दुशेखरस्य कृते न तादृगन्यद्व्याख्यानं यथावदुपकारकं यथा 'चिदस्थिमाला'भिधं, यतो हि तद्ग्रन्थकर्तुर्महामहोपाध्यायस्य श्रीनागोजीभट्टस्य साक्षादन्तेवासिना पायगुण्डे वैद्यनाथमहाशयेन रचितं वर्तते ।—सेयं महती न्यूनता संस्करणेनैतेन पूरितेति ।

किञ्च शब्देन्दुशेखरसदृशस्य व्याकरणमहाग्रन्थस्य कृते यावन्ति व्याख्यानानि प्रकाशितानि भवेयुस्तानि सर्वाण्यपि तत्तद्व्याख्यातृविभिन्नविभिन्नकल्पना-प्रकाशकराणीति वैयाकरणैरभिलष्यन्ते, तत्राप्यांशिकी पूर्तिरन्यासां टीकानामभिनवचन्द्रिकादीनां समावेशनेन सम्पादितेति— सम्पादकप्रकाशकयोरत्र रुचिरोऽयं सुप्रयत्नो वर्तते ।

तदेवं टीकापञ्चकोपेतमिदं राजसंस्करणं बहिरन्तश्च सर्वाङ्गसुन्दरं वैयाकरणानामवश्यमुपादेयतां भजते-इति मदीयो विश्वासः ।

**गवर्मेन्ट संस्कृत—कालेज, बनारस ।**
८—२—३६

**गोपालशास्त्रीनेने ।**

॥ श्रीः ॥

दुर्लभानेकटीकाभिः सह यत्नात्परिष्कृतम् ।
शब्देन्दुशेखरं दृष्ट्वा वयं मोदामहेतमाम् ॥ १ ॥
एतत्सम्पादकं नैकपदवीपरिभूषितम् ।
गुरुप्रसादाधिगतसुयशोमानगौरवम् ॥ २ ॥
गुरुप्रसादं विद्वांसं मार्कण्डेयोपमायुषम् ।
शुभाशीराशिभिर्भव्यैरभिनन्दाम आदरात् ॥ ३ ॥

गवर्न्मेंन्ट-संस्कृत-कालेज काशी
६।२।३६

इति—
न्यायाचार्यश्रीशिवदत्तशास्त्रिगौडानाम् ।

श्रीविश्वेश्वरः शरणम् ।

राजकीय-संस्कृत-कालेज-न्यायव्याकरणाध्यापक-न्याय-व्याकरणाचार्य-मीमांसक-शिरोमणि—पण्डितवर—श्रीसूर्यनारायणशुक्लानां सम्मतिः—

वाराणसेयश्रीराजस्थानसंस्कृतमहाविद्यालयाध्यक्षैर्व्याकरणन्यायाचार्यादिपदवीविभूषितैः श्रीमद्भिर्गुरुप्रसादशास्त्रिमहोदयैष्टीकाषट्कनालङ्कृत्य लघुशब्देन्दुशेखरः संपाद्य सम्मत्यर्थं मह्यं समर्पितः ।

तदनु निरीक्षितेऽस्मिन्ग्रन्थरत्ने—संपादनशैली, अक्षराणां सौष्ठवं, पत्राणां मसृणता चेत्येवं सर्वगुणसाहित्यमतितरां चेतश्चमत्करोति ।

काश्यादिनगरेषु यादृशी पाठनप्रणाली तया अनुमोदिता एवेमा वरवर्णिन्याद्यष्टीका इत्ययमपि सुवर्णसौरभयोग एव ।

अनेन च व्यापारेण संस्कृतसाहित्यस्य महानुपकारः समजनीति वस्तुस्थितिकथनमात्रमिति मन्यते ।—

गवर्न्मेंन्ट-संस्कृत-कालेज काशी ।
६।२।३६

श्रीसूर्यनारायणशर्मशुक्लः

---

॥ श्रीः ॥

नागेशभट्टरचितो लघुशब्देन्दुशेखरः ।
वैयाकरणसिद्धान्तरत्नरत्नाकरो महान् ॥ १ ॥
गुरुप्रसादगौडेन शास्त्रिवर्येण धीमता
टीकाषट्कोपयोगेन सेतुस्तत्र विनिर्मितः ॥ २ ॥
शब्दशास्त्रपरीक्ष्याणां छात्राणां विदुषामपि ।
शास्त्रेष्वभ्याससरणिः सञ्जाता सुगमाऽधुना ॥ ३ ॥
दृष्ट्वा मुद्रणसौन्दर्य सुन्दराक्षरयोजनम्
चेतः सम्मोदमाधत्ते ग्रन्थस्याऽस्य प्रकाशनात् ॥ ४ ॥

गवर्न्मेन्ट-संस्कृत-कालेज, काशी ।
१०।८।३५

गङ्गाधरशास्त्री-भारद्वाजः
व्याकरण साहित्याचार्यः ।

॥ श्रीः ॥

# शब्देन्दुशेखरानुक्रमणिका—

# विषयानुक्रमणिका ।



❀ इति विषयानुक्रमणिका ❀

॥ श्रीः ॥

# ( १ ) कारकप्रकरणानुक्रमणिका ।



## ( २ ) अव्ययीभावसमासप्रकरणम् ।



॥ इत्यव्ययीभावसमासप्रकरणम् ॥

❀ श्रीः ❀

# वाङ्मयं प्राभृतकम्

कल्याणगुणगणाऽऽस्थाननिभृततमैकनिकेतनाय—

विद्याऽनिर्बन्धप्रबन्धरक्षणगृहीतदीक्षाय—

**विद्वज्जनोज्जीवनजीवातवे,—**

सुरभारतीप्रणयप्रवणाय—

वाराणसीपरिसरलसदन्तेवसदावलिलीलाकुमुदवीरुदुल्लासजैवातृकाय—

जैवातृकाय—

**श्रेष्ठिवर-'श्रीगौरीशङ्करगोयनका' महाभागाय-**

विद्योन्नतायाऽपि विनयावनताय—

सप्रणयमुपनयत्येतत्—

श्रीराजस्थान-संस्कृत कालेज,<br>मीरघाट, काशी।<br>अक्षयतृतीया १९९३

**श्रीगुरुप्रसादशास्त्री।**

॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

टीकापञ्चकोपेतः, टिप्पणीविराजितः—

# लघुशब्देन्दुशेखरः ।



## ❀ श्री'विश्वनाथ'दण्डिभट्टकृताऽभिनवचन्द्रिका ❀

'सत्यव्रता'च्च 'विजयनगरा'धिपसत्तमात् । 'पूसाटि'वंशसम्भूतादानन्दाल्लब्धवृत्तिना ॥ १ ॥
श्री'दण्डिभट्ट'कुलज 'वीरराघव'सूनुना । बालशास्त्रि'पदाम्भोजध्यानसंलब्धबुद्धिना ॥ २ ॥
'सुब्बम्म'देव्याः पुत्रेण श्वश्रूपूजारतेः सदा । सान्नपूर्णाधर्मपत्नि'विश्वनाथे'न वै मुदा ॥ ३ ॥
वाराणसीपुरीवासिश्रीविश्वेश्वरतुष्टये । आबाहुपुरुषाकारं शङ्खचक्रासिधारिणम् ॥ ४ ॥
सहस्रशिरसं नत्वा पतञ्जलिमहामुनिम् । क्रियते कौमुदीव्याख्या-लघुशब्देन्दु-चन्द्रिका ॥ ५ ॥

## ❀ श्री'बालम्भट्ट'कृता चिदस्थिमाला ❀

निराधाराऽऽधारं निखिलजगतां, पारमुदधेर्भवस्य, प्राकारं विमलसुखलक्ष्म्याः सुरुचिरम् ।
चिरन्धारन्धारं मनसि गुरुगीर्वाणकृपया परन्देवं वन्दे हरिहरमहं श्रीकरवरम् ॥ १ ॥

नत्वा गुरुं वैद्यनाथः पायगुण्डाख्यको वृतिम् ।
चिदस्थिमालान्तनुते लघुशब्देन्दुशेखरे ॥ २ ॥

## ❀ उदयङ्करपाठककृता ज्योत्स्ना ❀

वाग्देवीं मानसे कृत्वा गङ्गामाध्यानमङ्गलाम् ॥ शब्देन्दुशेखरज्यौत्स्नीमातनोत्युदयङ्करः ॥ १ ॥

## ❀ सदाशिवभट्टीयम् ❀

प्राणनाथपदाम्भोजनखचन्द्रमरीचयः ॥
व्याकोचयन्तु सततं मम मानसकैरवम् ॥ १ ॥

## ❀ श्री'राघवेन्द्राचार्य'कृता विषमपदविवृतिः ❀

ब्रह्मेशाद्यैः सुरवरगणैः स्तूयमानोऽप्यपारो व्यक्ताव्यक्ते सृजति भरति प्रापयत्युच्चभावम् ।
यद्भ्रूभङ्गात्सृजति भुवनं ब्रह्मरुद्रादि सा श्रीर्वक्षःश्लिष्टा जयति स विभुः श्रीनिवासो वृषाद्रौ ॥ १ ॥

## ❀ श्रीगुरुप्रसादशास्त्रिकृता 'वरवर्णिनी' टिप्पणी ❀

सेवा-हेवाक-वन्नाकि-निकुरम्ब-करम्बितम् ॥
ढुण्ढिराजपदाम्भोद-चिन्तामणिमुपास्महे ॥ १ ॥

वन्देऽनवद्य—सद्धृद्य-विद्योद्योतित-दिङ्मुखान् ॥
मरुमण्डल-मार्त्तण्ड-स्नेहिरामाभिधान् गुरून् ॥ २ ॥

पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ॥

❀ अभिनव-चन्द्रिका ❀

चिकीर्षितग्रन्थनिर्विघ्नपरिसमाप्तये कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति-**पातञ्जल** इत्यादिना । पतञ्जलिना निर्मितं—पातञ्जलं, तस्मिन्; 'शेषे' इति लक्षणसूत्रेणाण्प्रत्ययः ।

ननु सर्वभाष्येष्वस्यैव भाष्यस्य महत्त्वान्महाभाष्यपदेनैव पातञ्जलभाष्यलाभे—'पातञ्जले' इ विशेषणोपादानं व्यर्थमिति चेन्न, महात्मनां नामोच्चारणमपि मङ्गलाय भवतीति तदुपादानात् केचित्तु–"चेनविनाऽपि समुच्चय इति—पातञ्जले=योगशास्त्रे, महाभाष्ये=व्याकरणभाष्ये च-कृतभूरिपरिश्रम इत्यर्थः—"इत्याहुः । कृतो भूरिपरिश्रमो येन सः,—कृतमहापरिश्रम इति यावत

यत्तु "—भूरिपरिश्रमः सन् महाभाष्यरूपे-जले-पातमकृतेत्यर्थ—" इति, तन्न, एवं ह्यश्लील प्रतीत्या काव्यस्य दुष्टत्वापत्तेः ।

❀ चिदस्थिमाला ❀

ग्रन्थसमाप्त्यादिप्रतिबन्धकदुरितशमनाय समुचितस्वेष्टदेवतानत्यात्मकं मङ्गलमाचरन् शिष्यशिक्ष व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—**पातञ्जल इति** । तत्त्वस्य चरकादिसाधारण्यादाह-**महेति** । वैयधिकरण्यान्वयाभावाय महत्त्वं विशेषणमिति कश्चित् । स्वरूपकीर्तनपरं तदित्यन्ये । विशिष्टे तन्नामेति तदित्यपरे । वस्तुतः—पातञ्जले=योगसूत्रादौ, ( महाभाष्ये=) महाभाष्ये चेत्यर्थः, 'गामश्व'मि वद्विनाऽपि च समुच्चयश्च । एतेन 'महाभाष्ये' इत्येव सिद्धे 'पातञ्जले' इति व्यर्थमित्यपास्तं, तत्स्मरणरूप ङ्गलार्थत्वाच्च । आद्योक्त्या स्वस्मिन् तत्त्वज्ञत्वसूचनद्वाराऽत्रत्यस्वोक्तीनां तात्त्विकत्वं सूचितमिति बोध्यम नत्र कृतपरिश्रमत्वस्यातिप्रसक्तत्वादाह—**भूरीति** । तथा च तत्सिद्धान्तार्थ-ज्ञातृत्वसूचनद्वारा स्वस्मिन् , स्व

❀ ज्योत्स्ना ❀

**पातञ्जल इति** । अत्र'महाभाष्य'इत्येतावदुक्तौ—शारीरकसूत्रभाष्यादावतिव्याप्तिरतः-'पा ञ्जल' इति । 'पातञ्जले भाष्ये'इत्युक्तावपि पातञ्जलसूत्राणां भाष्ये-वेदव्यासकृतेऽतिव्याप्तिरतो 'मह पदम् । '**कृतभूरिपरिश्रम**'इति । 'भूरि'पदोपादानं नन्त्रान्तरपरिश्रमासद्भावाभावसूचनार्थम

❀ सदाशिवभट्टीयम् ❀

शेषं तदीशं च विनत्य लक्ष्मीमीशस्य प्रीत्या ह्यचलोपि योऽभवत् ॥
लिखामि ग्रन्थं निजबुद्धिपुष्ट्यै शिष्टार्थकं विवृतिसङ्ग्रहत्विमम् ॥ २ ॥

❀ विषमपदविवृतिः ❀

आत्रेयवंशविधुना सकलकलापारदृश्वना सुधिया। श्रीराघवेन्द्रगुरुणा क्रियते शब्देन्दुशेखरव्याख्य नवयुक्तिगुम्फिततया प्रौढां तां चन्द्रिकां तु सङ्क्षिप्य । विषमपदवाक्यविवृतिं कुर्वेऽहं बालबोधाय

'पातञ्जल' इत्यादि श्लोकत्रयमेकान्वयम् । सतीं दीव्यतीति विग्रहः । कक्षः=शुष्ककाननम

❀ वरवर्णिनी ❀

'**त्रिपाठि**'चरणाम्भोजसौरभोल्लासिमानसः ॥
नत्वा साम्बशिवं हृद्यां टिप्पणीं कुरुते नवाम् ॥ ३ ॥

'पातञ्जलं महाभाष्य'मिति समुदितमेव नाम, खण्डशः प्रयोगस्तु प्रामाणिकानां भीमः' 'सत्ये' वन्नामैकदेशन्यायादिति पदद्वयोपादानोपपादनाय क्लिश्यन्तो **नागेशोक्तिप्रकाशकृतो** **दण्डिभट्टाद** समाहिताः । 'पातञ्जले=योगशास्त्रे, महाभाष्ये चे'ति व्याख्यानमपि सहृदयोद्वेजकमेव, समुचितमहाभा कीर्तनमुपेक्ष्यादौ स्वीययोगशास्त्रप्रावीण्यख्यापनस्यात्यन्तमनुचितत्वात् , तदेवं 'मार्त्तण्ड इत्यादौ शब्दशा नुपाती'त्यादिना स्वोक्तिं समर्थयमाना **मैथिलाः** पराकृताः ।

शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ॥ १ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ॥

ॐ अभिनव-चन्द्रिका ॐ

ननु 'भाष्ये कृतभूरिपरिश्रम' इत्युक्त्या स्वस्य बुद्धिः, प्रतिभा च नास्तीति प्रतीयतेऽत आह—**धीमानिति**। ननु बुद्धिमत्त्वेऽपि, भाष्ये कृतभूरिपरिश्रमत्वेऽपि च—मातापित्रोर्दुष्टत्वे तद्दोषस्य पुत्रेऽपि सङ्क्रमेण बुद्धिमोहः स्यादित्यत आह—**शिवभट्ट** इत्यादि। **सतीदेव्या इति**। तथा च पिता साक्षाच्छिवसदृशो, माता च सतीसदृशीति गम्यते,—इति सत्कुलप्रसूतत्वं गम्यते। न च '"सती-देव्या'—इत्यत्र कर्मधारये पुंवद्भावापत्तिरिति वाच्यं, 'सतीं' दीव्यति—पातिव्रत्येन जेतुमिच्छती'तियोगरूढिस्वीकारेणाऽदोषात् ॥ १ ॥

ॐ चिदस्थिमाला ॐ

तदनुरोधित्वं, समूलत्वञ्चात्र प्रतिपादितमिति बोध्यम्। पित्रादिकीर्त्तये आह—**शिवेति**। ननु तत्र तत्त्वेपि सूक्ष्ममतेरभावात्कथं तत्सूक्ष्मार्थाकलनमत आह—**धीमानिति**। ऊहापोहकुशल इत्यर्थः। **सती देव्या इत्यत्र** सञ्ज्ञात्वेनाभाषितपुंस्कत्वान्न पुंवत्त्वं, न च 'सञ्ज्ञापूरण्योश्चे'ति निषेधसामर्थ्यात्तत्त्वेपि तत्त्वमस्तीति वाच्यं, तत्र—तत्सामर्थ्यात्तेन योगरूढस्य ग्रहणमिति तत्र योगार्थनावच्छेदकनादाय भाषितपुंस्कत्वेऽपि, रूढ्यर्थनावच्छेद-कारोपेण सञ्ज्ञात्वेन,—अत्र तत्त्वस्य दुर्वचत्वात्, अत एव 'दत्ताभार्य' इत्यादि तत्रोदाहरन्माकरे। एवञ्च क्रिया-प्रवृत्तिनिमित्तकदेवदत्तादिसञ्ज्ञानामेव तत्र ग्रहणमिति बोध्यम्। 'तेन निषेधेनाऽभाषितपुंस्कत्वमेव बोध्यते, सिद्धानुवादे लाघवा'दिति केचित्। 'दान्तं नाम स्त्रीणा'मित्युक्तेर्देवीत्युक्तं, यद्यपि 'दाया'इत्युक्तेपि तत्त्वसिद्धिस्त-थापि अस्य फलमनुपदमेव स्फुटीभविष्यति। तुः पादपूरणे, सर्वविशेषणसमुच्चायकत्वेन चार्थे वा, तदनु-क्तिस्तु—अनयोरेव मिथःसमुच्चयो न सर्वेषामिति भ्रमनिरासाय। वस्तुतस्तु—मनुष्यसुतत्वेपि देवीगर्भजत्वमिति वैलक्षण्यसूचनद्वारा, तस्या अत्यन्ततद्धर्मवत्त्वसूचनद्वारा स्वस्मिन् वास्तवभूदेवत्वसूचकस्तुरिति बोध्यम् ॥१॥

ननु सदा प्रतिग्रह—परान्नभोजनादिना मतिनाशात्कथं धीमत्त्वमत आह—**याचकानामिति**। यद्वा—'अन्नदाता भयत्राता पञ्चैते पितरः स्मृता' इत्युक्तेस्तमपि कीर्त्तयति—**याचेति**। अभेदरूपकद्वयमिदं, तत्राद्येन—याचकवाञ्छितदातृत्वसूचनद्वारा सर्वोत्कर्षः सूचितः। अरय एव कक्षाः=तृणानि, तेषामग्निः। अनेन

ॐ ज्योत्स्ना ॐ

सतीं दीव्यति=पातिव्रत्येन जिगीषतीति सतीदेवी, कर्मण्यण्। यथाश्रुते तु पुंवद्भावप्रसङ्गः, न च सञ्ज्ञात्वान्निषेधः, कर्मधारये तत्प्रतिप्रसवात्। **अरिकक्षहुताशनादिति**। अरिषु कक्षत्वारोपणमूलको राज्ञि हुताशनत्वारोप इति **परम्परितरूपकमलङ्कारः**,—'नियतारोपणोपायः स्यादारोपः परस्य यः', इति तल्लक्षणत्वात्। 'कक्षस्तु दोर्मूले शुष्ककानने'इति त्रिकाण्डशेषः।

---

ॐ वरवर्णिनी ॐ

**धीमानिति**। आशुग्रहण स्मरणानुसन्धान-विवेचनोहापोहादिगुणगणप्रगुणितधिषण इति तु तदर्थः। **बालम्भट्टानान्त्वथोक्तिस्तु**-उपलक्षणतयोपपादनीया, अन्यथो'हापोहमात्रसारः प्रक्रियांशशून्यो दुस्त-र्ककर्कश' इति उपेक्षणीयोपहसनीयतामापन्नः स्यात्, तदेवं गतानुगतिकः **प्रकाशकृदुपेक्षणीय एवेति गौडाः**।

**'सतीदेवी'ति** रूढन्तस्या नामेति—तत्र मुधा पुंवद्भाव—ह्रस्वादिप्राप्तिशङ्कासमाधिडम्बरेणच्छात्रा-न्विडम्बयन्तो महान्तो महान्त एव। 'अरय एव कक्षाः-गहनानि भीरुभीकराणि अरण्यानि, तेषु हुताशनः= समिद्धतमो दारुणोऽनल'- इति तदर्थः। 'कक्षोऽरण्ये च दुर्गमे' इति **केशवनानार्थकोशात्**। एतेन 'कक्षः=

शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः ॥ २ ॥
नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम् ॥
मनोरमोमार्द्धदेहं लघु-शब्देन्दु-शेखरम् ॥ ३ ॥

❀ अभिनव-चन्द्रिका ❀

ननु भाष्ये कृतभूरिपरिश्रमत्वेऽपि, बुद्धिमत्त्वेऽपि, सत्कुलप्रसूतत्वेऽपि वृत्तेरभावेन ग्रन्थ-करणं सम्यङ् न स्यादित आह—**रामतो लब्धजीविक इति**। नन्वस्याल्पधनत्वे स्थिरा वृत्तिर्न स्यादत आह—**शृङ्गवेरपुराधीशादिति**। नन्वस्य शत्रुभिः पराजये पुनरपि वृत्तिभङ्गः स्यादित्यत आह—**अरिकक्षहुताशनादिति**। कक्षः—शुष्कतृणपुञ्जः, अरय एव कक्षः, तस्य-हुताशनात्= अग्निसदृशादित्यर्थः। नन्वसौ कृपणश्चेद्वृत्तिप्रतिबन्धं कुर्यादत आह—**याचकानां कल्पतरोरिति**॥२॥

**नागेश इति**। न चा'त्मनामे'ति निषेधात्स्वनामोपादानमनुचितमिति वाच्यम्, 'आत्म-नामे'ति स्मृतौ—'न गृह्णीया'दित्यस्य—नोच्चरयेदित्यर्थेन लेखने दोषाऽभावात्, अत एव सर्वो व्यवहारकाण्डः सङ्गच्छते।

यत्तु "—'कूपखनन'न्यायेन स्वनामोच्चारणजं दुरितं नश्यति—" इति,तन्न, नान्तरीयक-पापनाशस्यैव तन्न्यायविषयत्वात्, आत्मनामोच्चारणस्य ग्रन्थकरणनान्तरीयकत्वाभावात्।

यदपि "—नत्वा फणीश'मिति मङ्गलाचरणेन स्वनामोच्चारणजं पापं नश्यति—" इति, तदपि न, पुण्य-पापयोः शब्दैकसमधिगम्यत्वेन 'समाप्तिकामो मङ्गलमाचरे'दिति शिष्टाचारानुमित-श्रुत्या अन्यफलकत्वकल्पनायाः कर्तुमशक्यत्वात्, सम्भवति दृष्टफलकत्वेऽदृष्टकल्पनाया अन्याय्य-त्वात्। यदपि "—'नागेश' इति न नाम, किन्तु—'नागः=पतञ्जलिः, ईशः=प्रवर्त्तकोऽन्तर्या-मितये'ति यौगिक इति; तदपि न, अन्यनाम्नोऽप्रसिद्ध्या एतादृशार्थकल्पने मानाभावात्।

**मनोरमोमार्द्धदेहमिति**। ग्रन्थपक्षे—मनोरमैव-उमा-सैवार्धदेहो यस्ये'ति बहुव्रीहिः,

❀ चिदस्थिमाला ❀

विजातीयशूरत्वं, रणे यं प्राप्य अरयो नश्यन्त्येवेति यावदिति सूचितम्। **रामतः**=रामसिंहाख्यात्, नामै-कदेशे नामग्रहणं, तत्फलं–तत्र तत्त्वसूचनद्वारा पुण्यशीलत्वसूचनद्वारा तत्रोपादेयत्वसूचनम्। क्रियाकारकयो-र्नित्यसाकाङ्क्षत्वेनैकदेशान्वयः। **लब्धजीविक**–इत्यनेन-तत्पर्याप्तस्यैव आवश्यकस्यैव धनस्य तदन्यथाऽनु-पपत्त्या स्वीकारो, न लोभादिनाऽधिकस्येति सूचितं, तत्र 'लब्धे'त्यनेन-तादृशप्रतिग्रहाभावः, आयासाभावः, स्वेच्छा-भावश्च सूचितः ॥ २ ॥

फणीशं=पतञ्जलिम्। **तेर्थेऽति**। तत्त्वार्थप्रकाशकं, प्रकृतग्रन्थसिद्धान्तार्थप्रकाशकञ्चेत्यर्थः। ननु मनोरमा

❀ ज्योत्स्ना ❀

**अर्थप्रकाशकमिति**। अर्थाः=सिद्धान्तकौमुदीविषयभूता वैयाकरणसिद्धान्ताः, तेषां प्रकाशक-मित्यर्थः। **मनोरमोमार्द्धदेहमिति**। मनोरमारूपाया उमाया अर्द्धदेह,' इति समासः। अनेन

❀ वरवर्णिनी ❀

शुष्कतृणं, तथा च 'कक्षेषु हुताशन' इत्येव विग्रहीतव्यम्, 'अरय एव कक्षा' इति विग्रहे तु-राशि दुर्बल-त्वप्रतीतिः स्यादित्यादिना **भट्ट-भैरवमिश्रादी**नधिक्षिपन्तो **नागेशोक्तिप्रकाशक**तोमान्या एवेति **गौडाः**।

परे तु–'फणी ईश'मिति पदे च्छित्वा-फणी=साक्षात्पतञ्जलिरेव, नागेशः, ईशं=शिवं नत्वा शेखर-न्तनुत इति व्याचक्षते,–**गौडाः**। शिवपक्षेऽपि श्लोको योजनीयः,–तत्र–अर्थप्रकाशकं=ज्ञानमित्येवमूहनीयम्।

ग्रन्थसमाप्ति–ग्रन्थप्रचाराऽऽदिप्रतिबन्धकदुरितप्रशमाय समुचितऋषित्रयनम-
स्काररूपं मङ्गलमाचरञ्शिष्यशिक्षायै व्याख्यातृ-श्रोतॄणामनुषङ्गतो मङ्गलाय च

ॐ अभिनव-चन्द्रिका ॐ

अथ वा—'मनोरमोमाया अर्थं द्यति=खण्डयतीति—मनोरमोमार्धदा, 'आतोऽनुपसर्गे' इति 'क'प्रत्ययः, तादृशी–ईहा–चेष्टा यस्येत्यर्थः। एतेन—मनोरमा–शेखरयोः परस्परमगतार्थत्वं, मनोरमोक्ताऽसम्मतार्थानां खण्डनञ्च सूचितं; स्वस्त्युक्तानां सम्मतानां ग्रहणस्याऽसम्मतानां खण्डनस्य च लोके दर्शनात्। ईश्वरपक्षे च—मनोरमा–मनोहरा–या उमा, सैवाऽर्धदेहो यस्येत्यर्थः।

लघुशब्देन्दुशेखरमिति—ग्रन्थपक्षे लघवो ये शब्दास्त एव य इन्दुः, तस्य शेखरः—प्राधान्येन कथनमत्रेत्यर्थः। ईश्वरपक्षे च,—लघुशब्दा इवेन्दुः—शेखरः=शिरोभूषणं यस्येत्यर्थः। अर्थप्रकाशकत्वं समानो धर्मः, एतेन "—अस्मिन् ग्रन्थेऽर्थबाहुल्यमेव न शब्दबाहुल्यम्—" इति सूचितम् ॥ ३ ॥

व्याख्यातृ-श्रोतॄणामिति। नचाऽत्र'नङ् ऋत' इत्यानङा भवितव्यमिति वाच्यं, पूर्वोत्तर-पदयोर्विद्यायोनिसम्बन्धवाचिनोरेव तत्र ग्रहणेन 'श्रोतृ' शब्दस्य तद्वाचकत्वाभावात्तदप्राप्तेः। समुचितेति। "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" –इति 'गीता' वचनेन मुनित्रयस्य व्याकरणकर्तृत्वेनेश्वरांशत्वादिति भावः।

ॐ चिदस्थिमाला ॐ

ग्रन्थादेवैतदर्थप्रकाशे सिद्धे किमर्थमयमत आह–मनोरमोमेति। मनोरमैवोमा–मनोरमोमा, सा अर्द्धदेहो यस्य तमित्यर्थः। एतेन तत्रानुक्तमत्रोच्यत इति तया न गतार्थतेति सूचितम्। लघुः=कलात्मकः,–शब्द इव इन्दुः—शेखरे यस्य शिवस्य तम्। शब्दरूप इन्दुः,–इन्दुरिव शब्दो वा-शेखरो=मस्तकं, मुख्यो यस्य–प्रतिपाद्यप्रतिपादकभावसम्बन्धेन–स ग्रन्थो लघुत्वविशिष्टस्तमित्यर्थः। यद्वा–लघवः शब्दा यस्मिन् स लघुशब्दः, लघुश्चासौ शब्दश्च लघुशब्दो वा, तद्रूपमिन्दुशेखरमित्यर्थः ॥ ३ ॥

'समाप्त्यादी'त्यादिना—स्थितिपरिग्रहः। समुचितेति। योग्येत्यर्थः, एतच्छास्त्रप्रवर्तकत्वात्तथा-सामर्थ्यवत्त्वाच्चेति भावः। अनुषङ्गतः=प्रसङ्गतः। ननु 'नमस्कुर्मो नृसिंहाये'ति वत्-'नमः स्वस्ती'ति चतुर्थी स्यादत

ॐ ज्योत्स्ना ॐ

मनोरमाव्याख्यातभागस्याव्याख्यानमूलको न्यूनतादोषः परिहृतः। मनोरमायामुमात्वारोपात्तस्याश्च वामार्द्धत्वेन निरूपणादप्राधान्यसूचनात्क्वचिद्व्याख्यातभागस्यानुपादेयता, स्वव्याख्यानयोग्यता च सूचिता। शब्देन्दुशेखरमिति। शब्दो—व्याकरणव्यङ्ग्यः,–स एव इन्दुर्दोषरहितत्वात्–शेखरः= शिरोभूषणं यस्य सः। अत्रापि शब्दे इन्दुत्वारोपणमूलकं ग्रन्थे शिवत्वारोपणमिति पूर्ववत्परम्परित रूपकं बोध्यम्। ग्रन्थप्रचारादी'त्यादिपदात् ग्रन्थस्य परैरनुपहसनीयत्वं ग्राह्यम्। ऋषित्रयनम-स्कारस्य समुचितत्वं–शास्त्रप्रणेतृसम्बन्धित्वात्। अन्यार्थं प्रकृतस्य नान्तरीयकफलान्तरजनकत्वमनुषङ्गः।

ॐ विषमपदविवृतिः ॐ

'कक्षस्तु दोर्मूले शुष्ककानने' इत्यभिधानम्। मनोरमोमार्द्धदेहमिति। तेन मनोरमोक्तार्थाप्रकाशनं मनोरमायाः क्वचिद्दूषणत्वं सूचितं भवति। समुचितेति। तत्त्वं-चैतच्छास्त्रप्रवर्तकसम्बन्धित्वात्।

---

ॐ वरवर्णिनी ॐ

मूले—अर्थप्रकाशकं=सिद्धान्ततत्त्वप्रकाशकम्, एतेन 'मनोरमापेक्षयाधिकाऽर्थे'त्यादिरीत्याऽन्यथा सुधैव व्याचक्षणा मैथिलाः समाहिता इति—गौडाः।

भाति-**मुनित्रयमिति** । कारकविभक्तेर्बलवत्त्वाद्द्वितीया ।

❀ अभिनव-चन्द्रिका ❀

**बलवत्त्वादिति** । न च 'विभक्ति'शब्दस्य स्त्रीलिङ्गत्वेन तत्सामानाधिकरण्याद् 'बलवतीत्वा' पेक्षितमिति वाच्यं, 'कृत्तद्धितसमासैः सम्बन्धाऽभिधानं भावप्रत्ययेने'ति सिद्धान्तेन बल-न्वस्यैव प्रतीत्या, तस्य च स्त्रीपुरुषसाधारण्येन बलवच्छब्दात्त्वप्रत्ययेऽपि दोषाभावात्, एव 'पृथिव्या गन्धवत्त्वं लक्षण'मित्यादिप्रयोगाः सङ्गच्छन्ते ।

अन्ये तु—'कुक्कुटाण्ड'वत्स्त्रीत्वाऽविवक्षायां बलवच्छब्दात्त्वप्रत्यये साध्विदम्—" इत्याहुः । कृधात्वर्थफलेऽन्वयविवक्षायां द्वितीयैव प्राप्नोति, नमःपदार्थेऽन्वयविवक्षायां चतुर्थ्येव प्राप्नोतीति दुभयोः प्राप्त्यभावेन 'कारकविभक्तेर्बलवत्वाद्द्वितीये'त्यसङ्गतमिति वाच्यं, नमःशब्दस्य तत्वेन द्योतकतया द्योतकवाचकस्थले विनिगमनाविरहेण विषयतायामुभयप्रयोज्यत्वमिति न्तेन 'नमःस्वस्ती'त्यस्य नमःपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वतात्पर्यविषयी-वतुर्था'त्यर्थेन कृधात्वर्थफलेऽन्वयविवक्षायामुभयोः प्राप्त्याऽसङ्गत्यभावात् ।

न च स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारस्य नमःपदार्थत्वे–यत्र चैत्रो विष्णुमित्रं नमस्क-न यज्ञदत्तं,तत्र चैत्रीयकरपुटसंवलनादिव्यापारेण चैत्रावधिकोत्कर्षप्रकारकज्ञानमुदासीनयज्ञदत्त-जातमिति-'यज्ञदत्तं नमस्करोती'ति प्रयोगापत्तिरिति वाच्यम्,उत्कर्षविशिष्टज्ञानानुकूलव्यापारस्य

❀ चिदस्थिमाला ❀

**कारकेति** । कृधातूपस्थाप्यक्रियानिरूपितकर्मत्वात् । 'कर्तृकर्मणो'रिति षष्ठी तु न,'न लोके'ति निषेधात् । तु 'क्रियार्थोपपदस्ये'ति चतुर्थी, तथार्थावगमात् । 'नमः स्वस्ती'ति चतुर्थी तु शुद्धनमःशब्दयोगे थेति भावः । एतेन—'जहत्स्वार्थावृत्तिपक्षे नमःशब्दस्यानर्थक्यादर्थवद्ग्रहणपरिभाषया चतुर्थी ने'ति क्रमपास्तं,'देवान् नमस्करोती'त्यादावुक्तयुक्तेरसम्भवात्,तस्यार्थान्तरत्वात्,प्रक्रियादशायां तदनङ्गीकाराच्च-

❀ ज्योत्स्ना ❀

**कारकविभक्तेर्बलवत्त्वादिति** । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायादित्यर्थः,स च ऽन्तरङ्गन्यायमूलकोऽतिरिक्तो वेत्यन्यदेतत् । न च 'नमस्स्वस्ती'त्यत्र स्वस्त्यादिसाहचर्यात् पठितस्यैव नमःशब्दस्य ग्रहणात्साक्षात्प्रभृत्यूर्याद्यन्यतरगणपठितस्य योगे द्वितीयैव भवति, ञ्चकस्य हि नमःशब्दस्योपसर्गवद् द्योतकतया कृञ एव प्रणत्यर्थकत्वेन 'कर्मणि द्वितीये'त्यस्य

❀ सदाशिवभट्टीयम् ❀

**कारकविभक्तेर्बलवत्त्वाद् द्वितीयेति** । कुक्कुटाण्डसमासवत् स्त्रीप्रत्ययोत्पत्तेः पूर्वन्तद्धितः, ततस्तु न कार्थीभावात्, 'शरदः कृतार्थते'तिवत्सामान्ये नपुंसकं वा । एतेन तद्धितान्तत्वेन गुणवचनत्वाभावा-त्'रित्यस्याप्राप्त्या पुंवत्त्वासङ्गतिरित्यपास्तम् । न च स्वस्त्यादिसाहचर्यादि'त्यादिमाधवोक्तयुक्त्यापि इति वाच्यं, 'रावणाय नमस्कुर्या'दिति भट्टिप्रयोगे द्वितीयाप्रसङ्गात् । न चासत्वार्थकस्य स्वरादिपठि-प्रयोगः, 'नमस्पुरसो'रिति सत्वानापत्तेः, तत्र जयमङ्गलानुरोधेन सविसर्गपाठकल्पनेपि 'स्वयंभुवे 'त्यादौ समासानापत्तिर्दुष्परिहरा । वस्तुतस्तु कर्मत्वमिह न विवक्ष्यते इति 'जयमङ्गला'शयः । यितु'मित्यस्याध्याहारपरग्रन्थास्तूपायान्तरपरा इति बोध्यम्; एतेन–'फलाभावात्साहचर्यमिह न क'मित्यपास्तम्, 'देवान् नमस्करोती'त्यस्य फलस्य सत्त्वादिति बोध्यम्। फलाभावा'दुपपदविभक्ते' प्रवर्तत इत्यस्य वक्तुं शक्यत्वाच्च ।

---

दण्डी=सिद्धान्तकौमुदीतत्त्वबोधिनीकर्त्ता—ज्ञानेन्द्रसरस्वती ।

परिभाव्येति । तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्प्राचामुक्तीरितिरस्कृत्येत्यर्थः,

ॐ अभिनव-चन्द्रिका ॐ

नमःपदार्थत्वेनाऽदोषात्', उत्कर्षवैशिष्ट्यञ्च—'स्वप्रकारकज्ञानविशेष्यसमवेतत्व' 'स्वप्रकारकत्व'-तदुभयसम्बन्धेन, प्रकृते च—उदासीनयज्ञदत्तज्ञाने स्वप्रकारकज्ञानविशेष्यसमवेतत्वाभावान्न दोष. ।

यत्तु"—'स्वाश्रयसमवेतत्व,' 'स्वप्रकारकत्वै'तदुभयसन्बन्धेन ज्ञाने उत्कर्षवैशिष्ट्य'मिति" तन्न,—यत्रोत्कर्षाश्रयत्वं बाधितं तत्र 'नमस्करोती'ति प्रयोगानुपपत्तेः, यत्रोदासीनो वस्तुत उत्कृष्टस्तत्र 'नमस्करोती'ति प्रयोगापत्तेश्च । न च 'स्थाणुं नमस्करोती'ति प्रयोगानुपपत्तिः, स्थाणोरचेतनत्वेन स्वप्रकारकज्ञानसमवेतत्वस्याभावादिति वाच्यं, तत्र चेतनत्वभ्रमेण, तदारोपेण, देवतात्वारोपेण वा तादृशप्रयोगोपपत्तेः ।

ॐ चिदस्थिमाला ॐ

'प्राचा'मित्युक्त्वा बहुवचनान्तसमासः सूचितः, तेन सर्वतिरस्कारसिद्धिः, तस्य प्रक्रान्तपरामर्शकत्वादाह—मुनीति । 'मुनित्रये'त्युक्त्वा एकवचनान्तसमासः सूचितः । यद्यपि समुदायोक्तमेकं न किमपीति मुन्युक्तिष्वेव पर्यवसानमिति प्राग्वत्सुवचं, तथापि सति सम्भवे सर्वनाम्नां प्रक्रान्तप्रधानपरामर्शित्वादेवमुक्तं, प्रायः सिद्धान्तस्यैक्येन समूहोक्तस्यैकस्य तस्य सम्भवाच्च । एतेन तथा दुण्ढ्युक्तमपास्तम् ।

ॐ ज्योत्स्ना ॐ

प्रवृत्तेः"—इति माधवोक्तिर्युक्तेति वाच्यं, 'रावणाय नमस्कुर्या'दिति भट्टिप्रयोगे द्वितीयाप्रसङ्गात् ।

न च सत्त्वार्थकस्य स्वरादिपठितस्यायं प्रयोगः, 'नमस्पुरसो'रिति सत्वाभावापत्तेः। तत्र 'नमःस्वती'-त्यनेन चतुर्थीति जयमङ्गलानुरोधात् सविसर्गपाठकल्पनेऽपि 'स्वयम्भुवे नमस्कृत्ये'त्यादौ समासाना-

ॐ सदाशिवभट्टीयम् ॐ

केचित्तु "–साहचर्यं नात्र नियामकम्, अन्यथा विनिगमनाविरहेणाऽजन्तत्वेनाऽऽक्षरसमाम्नायिकान्तत्वेन वा सादृश्यग्रहे'देवेभ्यो नमोऽन्ने'त्यादावेव तदापत्त्या 'देवेभ्यो नम' इत्यत्रानापत्त्या भाष्याद्याकरग्रन्थासङ्गतिरेव स्यात् ।

किञ्च 'नमोवरिव' इति सूत्रे भाष्ये 'नमस्यति देवा'निश्त्र चतुर्थीमाशङ्क्योपपदविभक्तेरिति न्यायेन समाहितं, साहचर्येण द्योतकनमःशब्दयोगे चतुर्थ्यप्रवृत्तौ क्यचः पूजार्थकत्वेन नमसो द्योतकत्वेन तदप्राप्त्योभयमप्यसङ्गतं स्यादि–"त्याहुः ।

तिरस्कृत्येत्यर्थ इति । फलितार्थप्रदर्शनमिदमिति पाठकाः । एवञ्च तिरस्कारार्थस्य परिभवतेरेव विचारार्थकत्वमिति नासङ्गतिरिति भावः । इदमेव युक्तम् । केचित्तु वैयधिकरण्येनान्वये तत्सम्बन्धिधातोरित्यर्थः, तदर्थप्रकृतिकण्यन्तधातोरिति यावत् । यद्वा कोशात्तिरस्कारार्थस्य परिभवतेर्धातोर्विचारार्थकत्वे=विषयत्वापत्त्यर्थकत्वे, तदुत्तरणिचा तदनुकूलकृत्यभिधानाद्विषयत्वापादनरूपविचारार्थकत्वं परिभावयतेरित्यर्थः। एतेन–यस्य कोशात्तिरस्कारार्थकत्वं परिभवतेर्न यस्य विचारार्थकत्वं, यस्य भावयतेस्तत्त्वं, न तस्य कोशात्तत्त्वमित्युभयमसङ्गतमित्यपास्तम्। "यत्तु'परिभवतेस्तिरोभवनं ण्यन्तस्य तिरस्करणमर्थ' इति, भू प्राप्तावित्यस्य चौरादिकस्येदं रूपमिति वा-परिभाव्येत्यस्य तिरस्कृत्येति विवरणं सम्यगेवेति, तन्न । घञन्तनामार्थानुशासकवक्ष्यमाणकोशसञ्चारस्यासङ्गतिप्रसङ्गात्। मम तु परिभाव्येत्यादेरयमर्थः–"कोशात्तिरस्कारार्थस्य=परिभावशब्दस्य धातोः"=परिभाव्ये यत्र णिलोपे धातुत्ववतः,। एतदुक्तिस्तु अनेकार्थत्वे साधकस्य धातुत्वरूपस्य सम्पत्तिसूचनाय" इत्यन्ये । "वस्तुतः–तिरस्कारार्थस्य परिभावशब्दस्यावयवो यो धातुस्तस्येति वैयधिकरण्येन व्याख्येयम्, अन्यथा तु न सम्भवः ।

१ ज्योत्स्नाकृत उदयङ्करपाठकाः । शेखरटीकाविशेषकृतो लक्ष्मणपाठकाश्च ।

मुनित्रयोक्तीर्विचार्येत्यर्थो वा; 'परिभावस्तिरस्क्रिये'ति कोशात्तिरस्कारार्थकस्य धातोर्विचारार्थकत्वेऽपि न बाधकं, धातूनामनेकार्थत्वात्, अत एव 'परौ भुवोऽवज्ञाने' इति सङ्गच्छते। एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता, समूलत्वञ्च ध्वनितम्। भाविनोऽपि बुद्ध्याः विपर्यीकरणादियमिति निर्देशः।

सिद्धान्तप्रकाशकत्वेन, अतिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च-कौमुदीसादृश्यम्।

ॐ अभिनव-चन्द्रिका ॐ

धातूनामनेकार्थत्वादिति—न च परिपूर्वकभूधातोरेव तिरस्कारार्थत्वेनेदमसङ्गतमिति वाच्यं, नामलिङ्गानुशासने'ऽनादरः परिभव':—इत्यत्र 'परिभवः परीभाव' इत्युभयोपादानवैयर्थ्यापत्तेः, धात्वर्थकथनाऽसङ्गत्यापत्तेश्च। शामकत्वेनेति। न च 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधा'च्छमकत्वेने'त्यपेक्षितमिति वाच्यं, 'शमक एव शामक' इति स्वार्थिकाणन्तत्वस्वीकारेणादोषात्, क्वचित्तु—'शमकत्वेने'त्येव पाठः।

ननु प्रवृत्तिमात्रं प्रति बलवदनिष्टाननुबन्धीष्टसाधनत्वप्रकारकज्ञानस्य, कृतिसाध्यत्वप्रकारकज्ञानस्य च करणत्वेन तदुत्पत्त्यर्थं ग्रन्थादाववश्यं यत्नः कर्त्तव्यः, निरुक्तज्ञानद्वयश्चानुबन्धज्ञानेन जायते, अनुबन्धाश्च विषय-प्रयोजन-सम्बन्धा-ऽधिकारिभेदेन चतुर्विधाः। ग्रन्थाध्ययनविषयकप्रवृत्तिप्रयोजकज्ञानविषयत्वञ्चानुबन्धसामान्यलक्षणं। तत्र विषयज्ञानादिष्टसाधनत्वप्रकारकं,

ॐ चिदस्थिमाला ॐ

नन्वत्र पक्षे कोशविरोधोऽत आह—**परौति**। **धातोरिति**। एतेन 'घञन्तस्यैव तद्बोधकत्वमुक्तकोशा'-दित्यपास्तं, 'परिभवती'त्यादितोऽपि तत्प्रतीतेः। ननु धातूनामनेकार्थत्वं गमकसत्त्वे एवात आह-**अत एवेति**। तेषामनेकार्थत्वादेवेत्यर्थः। **इतीति**। इत्यत्रावज्ञाने इति विशेषणमित्यर्थः। 'मनसा परिभाव्ये'ति श्रीहर्षप्रयोगादप्रयुक्तत्वदोषशङ्का नेति भावः। उक्तार्थद्वयस्य क्रमेण फलमाह—**एतेनेति**। उक्तार्थद्वयार्थकद्वितीयत्यबन्तान्त-

ॐ ज्योत्स्ना ॐ

पत्तिर्दुःपरिहरेत्याद्यस्मत्कृतपरिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम्। प्रसिद्धप्रक्रान्तानुभूतार्थकतच्छब्दस्य यच्छब्दानाकाङ्क्षतोक्तिरर्थविशेषपरत्वेन व्याख्यानमाह—**तच्छब्दस्येति**। 'बुद्धिस्थपरामर्शकत्वा'दित्यनेनानुभूतार्थकत्वं, 'मुनित्रयोक्तीर्विचार्ये'त्यनेन तु प्रक्रान्तार्थकत्वमुक्तमिति ज्ञेयम्।

**तिरस्कृत्येत्यर्थ इति**। यद्यपि परिसमभिव्याहारे भूधातोरेव तिरस्कारार्थत्वं तदुत्तरणिचा तु प्रयोजकव्यापारोऽभिहित इति तिरस्कार्येति वक्तुमुचितं, तथापि घञन्तपरिभावशब्दात्तत्करोतीति णिचि, क्त्वो ल्यपि, 'तिरस्कारं कृत्वे'त्यस्य फलितार्थप्रदर्शनमिदम्।

**इत्यर्थो वेति**। अत्र पक्षे सर्वतोभावार्थद्योतकेन परिणा विषयत्वापादनस्वरूपो ण्यन्तार्थो विशेष्यते। **तिरस्कारार्थस्य धातोर्विचारार्थत्वेऽपीति**। इदञ्च 'णिज्द्योतक'इति पक्षाभिप्रायेण।

ॐ सदाशिवभट्टीयम् ॐ

उपसर्गसमानाकारत्वेन परेः पृथक्करणाद्विशिष्टस्य धातुत्वाभावात्, **अत एव**=धातोरनेकार्थत्वादेव,परिभवतेस्तिरस्कारातिरिक्तार्थकत्वादेव। **सङ्गच्छते**-तन्मात्रार्थकत्वे तु व्यावर्त्याभावेना'ऽवज्ञाने'इति विफलमेव स्यादिति न सङ्गच्छेत''इति **केचित्**। **तिरस्कारार्थस्य धातोर्विचारार्थत्वेपीति**। इदं च 'णिच् द्योतक' इति पक्षाभिप्रायेणेति **पाठकः**;—'हेतुमती'ति सूत्रस्थोत्तरग्रन्थविरोधात् द्योतकत्वपक्षरूपकुत्सितयष्टिं व्यवष्टभ्य समर्थनं तु न

१. 'परिभाव्ये'त्यस्योपादानेनेत्यर्थः।

अनेन वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं प्रयोजनं, तज्जिज्ञासुरधिकारी-—त्यादि सूचितम् ।

### ❀ अभिनव-चन्द्रिका ❀

कृतिसाध्यत्वप्रकारकश्चेति ज्ञानद्वयं जायते, विशिष्टबुद्धौ विशेष्यतावच्छेदकधर्मप्रकारकनिश्चयस्य कारणत्वात् । अधिकारिज्ञानेन च कृतिसाध्यत्वप्रकारकं ज्ञानं जायते, प्रयोजनज्ञानेन चेष्टसाधनत्व-प्रकारकं ज्ञानं जायते, सम्बन्धज्ञानेन चोभयज्ञानं जायते इत्यनुबन्धचतुष्टयनिरूपणमवश्यं कर्त्तव्य-मित्याह—**अनेनेति । वैयाकरणसिद्धान्ता विषया इति ।** चिन्त्यमिदं, प्रवृत्तौ सिद्धान्तज्ञानस्यो-द्देश्यत्वेन—प्रवृत्त्युद्देश्यस्यैव च विषयरूपानुबन्धत्वौचित्येन 'वैयाकरणसिद्धान्तज्ञानं विषय'इति लेखनस्योचितत्वात् । **तज्ज्ञानं प्रयोजनमिति ।** इदमपि चिन्त्यम्—, अन्यस्य प्रयोजनज्ञानेऽन्यत्र प्रवृत्तेरसम्भवात्, वैयाकरणसिद्धान्तज्ञानस्य कौमुदीकरणप्रयोजनत्वेन वैयाकरणसिद्धान्तज्ञानरूप-विषयस्य प्रयोजनज्ञानमन्तराऽध्येतृप्रवृत्त्यसम्भवात्, अनुबन्धचतुष्टयज्ञानस्यैवाध्ययनप्रवृत्तिप्रयोजन-कत्वाच्च, तस्माद्'रक्षोहागमे'त्यादिभाष्योक्तप्रयोजनमेव वक्तव्यम् । **तज्जिज्ञासुरधिकारीति** । इदमपि

### ❀ चिदस्थिमाला ❀

कथनेनेत्यर्थः । 'तेने'ति पाठोऽप्येवम् । स्वग्रन्थस्य=कौमुदीरूपस्य । **ध्वनितमिति** । 'अगतार्थने'त्यत्र लिङ्ग-विपरिणामेनान्वयः । **भाविनोपीति** । 'ग्रन्थस्ये'ति शेषः । नचैवम्–'अय'मित्युचितमिति वाच्यं, कौमुदी-गतलिङ्गारोपेण तथोक्तेः । आरोपफलन्तु–उपमाया लिङ्गभेदजदुष्टत्वनिरासः । यद्वा–भाविनोऽप्यर्थस्य बुद्ध्या विषयीकरणस्यान्यत्र दृष्टत्वात् भाविसूत्रविवृतेरियमित्यनेन बुद्धिस्थत्वात्परामर्श इत्यर्थः । **सिद्धान्तेति** । वैयाकरणसिद्धान्तस्यान्धकारे घटपटादिसंशये तत्सिद्धान्तस्यैव प्रकाशिकेत्यर्थः । ननु वैयाकरणसिद्धान्त-भूतस्फोटस्यात्राऽनिरूपणात्तदप्रकाशत्वात्कथं तेन सादृश्यमत आह—**अतिदुरूहेति** । महाभाष्यादिभ्य **इत्यर्थः**। सिद्धान्तपदेन प्रक्रियासिद्धान्तोऽत्र, मूले च विवक्षित इति भावः । **सिद्धान्तज्ञाने**–'सम्पादनीये सती'ति शेषः । **सादृश्यमिति** । तद्विशिष्टे कौमुदीपदं लाक्षणिकं, तथा चोपमालङ्कारो व्यङ्ग्य इति भावः ।

**अनेन**=सिद्धान्तकौमुदी'त्यनेन । **आदिना**—प्रतिपाद्य-प्रतिपादकभावसम्बन्धपरिग्रहः ।

### ❀ ज्योत्स्ना ❀

**परौ भुवोऽवज्ञान इति** । 'अकर्तरि च कारके सञ्ज्ञायां' 'भावे'इत्यनुवृत्तौ घञ्विधायकं सूत्रम् ।

**सङ्गच्छत इति** । एवञ्च घञन्तस्यैव नियमेनावज्ञानार्थत्वमित्यन्यत्र विचारार्थत्वमुपपद्यते, यथा परिभवत्यर्थयोगे तिरस्कारं गमयत्येवं भावयत्यर्थयोगे विचारार्थत्वम्, 'अध्ययनभावनाभ्या'-मित्यादौ भावयतेर्विषयत्वापादनार्थत्वस्य दृष्टत्वादिति भावः । उक्तमर्थद्वयमपि प्रकृते विवक्षितमिति तदुपयोगमाह—**तेनेति** । संनिकृष्टार्थविषयेदंशब्दस्य प्रयोगानुपपत्तिमाशङ्क्याह—**भाविनोऽपीति** ।

**बुद्ध्या विषयीकरणादिति** । बुद्धिसत्तासमाविष्टस्यैव शक्तिग्रहशाब्दबोधविषयत्वं, न बाह्यस्य, ज्ञानादीनामन्तःकरणनिष्ठत्वेन तन्निष्ठविषयस्यैव सामानाधिकरण्येन तत्कारणत्वौचित्यात्, प्रत्यक्षा-दिना बुद्धावकृतस्य बाह्यस्य शक्तिग्रहविषयत्वासम्भवाच्चेति भावः ।

"सञ्ज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते ॥"

### ❀ सदाशिवभट्टीयम् ❀

रोचतेऽस्माकमिति **मन्यते** । **भाविनोपीति** । अत्र'ग्रन्थस्ये'ति शेषः । '**इय**'मित्युक्तिः–कौमुदीगत-उपमाया लिङ्गभेदजदुष्टत्वनिरासायारोपः । यद्वा—भाविनोऽप्यर्थस्यान्यत्र बुद्ध्या विषयीकरणस्य दृष्टत्वाद्भावि-सूत्रविवृतेरियमित्यनेन परामर्शः ।

**अइउण्** । एषां क्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन—सञ्ज्ञासूत्रत्वं, क्रमस्य सञ्ज्ञाद्वारैवोपयोगात् । एकवाक्यता च "—आदिरकारादि-

❀ अभिनव-चन्द्रिका ❀

चिन्त्यं, तज्जिज्ञासायाश्चाण्डालादेरपि सम्भवेन तस्याप्यधिकारित्वापत्तेः, तस्मा'दधीतकाव्यकोशादिर्द्विजातिरधिकारी'ति वक्तव्यम् ।

ननु—"सञ्ज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्" इत्यभियुक्तोक्तषड्विधसूत्रेषु 'अइउ'णित्यादि किं सूत्रमित्यत आह—**एषामित्यादि** ।

**क्रमबोधकत्वेऽपीति** । चिन्त्यमिदम्, एषां वर्णानां—प्रत्यक्षं प्रति विषयस्य करणत्वेन—क्रमेण श्रावणप्रत्यक्षजनकत्वेऽपि क्रमे शक्त्यभावेन तद्बोधकत्वाऽसम्भवात् । न च क्रमबोधजनकत्वं—क्रमेणोपस्थितिजनकत्वं, क्रमेण शक्तिज्ञानजनकत्वं वेति—नासङ्गतिरिति वाच्यं, पूर्वोच्चरितवर्णेषु शक्तिज्ञानाद्यभावदशायां परोच्चरितवर्णेषु शक्तिज्ञानोपस्थित्योः सम्भवेन पश्चात्पूर्वोच्चरितवर्णेषु शक्तिग्रहे वृत्ते उपस्थितिसम्भवेन व्यभिचारात्, क्रमेण शक्तिज्ञानजनत्वकस्योपस्थितिजनकत्वस्य वक्तुमशक्यत्वात्, न च 'क्रमबोधजनकत्वेऽपी'त्यस्य—क्रमेण श्रावणप्रत्यक्षजनकत्वेऽपीत्यर्थ इति नाऽसङ्गतिरिति वाच्यम्, उक्तार्थकरणस्य कयाऽपि विधया प्रयोजनासम्भवेन 'क्रमबोधकत्वेऽपी'ति लेखनवैयर्थ्यापत्तेः । **वृत्तिपरिच्छेदकत्वेनेति** । शक्तिनियामकत्वेनेत्यर्थः ।

**आदिरकारादिरिति** । तत्सदृश इत्यर्थः । सादृश्यमूलकाध्यवसाये तु यथाश्रुतमेव

❀ चिदस्थिमाला ❀

**अइउणिति** । ननु कान्येतानि सूत्राणि, नच सञ्ज्ञासूत्राणि,क्रमविधायकत्वात्, अत एव 'यमां यमी' त्यादौ यथासङ्ख्यनिर्वाहोऽत आह—**एषामिति** । **वृत्तीति** । शक्तिग्राहकत्वेनेत्यर्थः । ननु कथमेकस्मादुभयमत आह—**क्रमस्येति** । 'शास्त्रे सर्वत्रे'ति शेषः। एवञ्च नान्तरीयकत्वेन तत्त्वसिद्धिरिति भावः । चस्त्वर्थे । **सदृशेने**-त्यस्य—**तदित्यादिः** । इदन्त्यसदृशेनेति तदर्थः । एतदुपयोगः स्फुटीभविष्यति । **आद्यन्तेति** । अवयवत्त्वेन

❀ ज्योत्स्ना ❀

इति प्राचीनपरिभाषितसूत्रलक्षणाक्रान्तत्वादाह—**एषामिति** । **क्रमबोधकत्वेऽपीति** । अन्यथेणादिप्रत्याहारे उकारादीनामग्रहणमकारादीनाञ्च ग्रहणं प्रसज्येतेति भावः । **वृत्तिपरिच्छेदकत्वेनेति** । नियमरूपतया वृत्तिसङ्कोचकत्वेन, प्रकरणरूपतया वृत्तिग्राहकत्वेनेति वार्थः । नन्वन्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारात्तेन प्रत्याहाराद्युपपत्तिरत आह—**इता सदृशेनेति** । अयं भावः,—वर्णोपदेशानन्तरं

❀ सदाशिवभट्टीयम् ❀

**वृत्तिपरिच्छेदकत्वेनेति** । सञ्ज्ञाशब्दनिष्ठवृत्तिपरिच्छेदकत्वेनेत्यर्थः, अत'स्तस्यापत्यं''कर्तरि कृ'दित्यादीनां न सञ्ज्ञासूत्रत्वम्,'अणा'दीनां जातिशब्दत्वात् । एतेन-तत्र सञ्ज्ञासूत्रत्वातिव्याप्तिनिरासाय सञ्ज्ञास्वरूप-

❀ विषमपदविवृतिः ❀

**तिरस्कृत्येत्यर्थ इति** । निवृत्तप्रेषणाद्धातोर्हेतुमण्णिजिति भावः। **वृत्तिपरिच्छेदकत्वेनेति** । शक्तिग्राहकत्वेनेत्यर्थः । "-स्वरसन्धिस्तु न प्रवर्त्तते,वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादा'दिति कैयटोक्तं तु न युक्तं,तदुपदेशकालेऽजादिसञ्ज्ञानामनिष्पादेपि सवर्णसञ्ज्ञादिफलस्य दीर्घादेस्तुल्यास्यसूत्रादाविव स्वरसन्धेरत्र प्रवृत्तौ बाधकाभावात्–" इति'दीक्षितोक्तदूषणमुद्दिधीर्षुणा'रत्नकोश'कारेण—उक्तकैयट-

१. सूत्रलक्षणस्य षड्विधत्वाभावाच्चिन्त्यमिदं,'सूत्रमुच्यते' इत्येव तु साम्प्रदायिकः पाठः । स्वरूपपरो वा लक्षणशब्द इत्यसद्गुरुचरणाः । २. रत्नकोशः=सिद्धान्तरत्नाकरः—कौमुदीटीका ।

रन्त्येनेता तत्सदृशेन-णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां सञ्ज्ञा-"इति । स्वौजस-
मित्यादीनामप्येतदेकवाक्यतया सुबादिसञ्ज्ञासूत्रत्वं, स्वादिविधायकत्वञ्चेति बोद्ध्यम् ।

❀ अभिनव-चन्द्रिका ❀

माध्विति न लक्षणोपयोगः । स्वादिविधायकत्वञ्चेति । नन्वेवं षड्विधं सूत्रलक्षण' मित्यस्या-सङ्गतिः, स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्य 'विधा'पदार्थत्वेन 'स्वौजसमौ' डित्यादौ विधिसूत्रत्व-सञ्ज्ञासूत्रत्वोभयसत्त्वेन परस्परविरुद्धत्वाभावेन विधापदार्थत्वानु-पपत्तेरिति चेन्मैवं, सञ्ज्ञासूत्रत्वत्व—विधिसूत्रत्वत्वादीनां परस्परविरुद्धत्वेन स्वसमभिव्याहृत-पदार्थतावच्छेदक-सूत्रत्व-व्याप्यत्वेन च विधापदार्थत्वोपपत्तेः, स्पष्टञ्चेदं हेत्वाभासशिरोमणौ,-'उपधेयसङ्करेऽप्युपाधीनामसाङ्कर्या' दित्यादिना । परे तु—'अइउण्' इत्यादीना'मत्वावच्छिन्नः साधु' रित्यादिरीत्या—वर्णसाधुत्वविधायकत्वेन विधिसूत्रत्वमेव, अत एव इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः कर्त्तव्य' इति भाष्यञ्च सङ्गच्छते ।

'आदिरन्त्येनेत्येकवाक्यतये'त्यादिमूलन्तु न युक्तम् , आदिरन्त्येनेतिसूत्रे आदिपद-स्यान्त्येत्पदस्य चाक्षरसमाम्नायिकाकारादेरर्थत्वेन पदतदर्थयोरेकवाक्यतायाः कुत्राप्यदर्शनात् , 'घटमानये' त्यादौ घटपद-तदर्थयोरेकवाक्यतापत्तेश्च । एकवाक्यता हि त्रिधा लोके दृश्यते—वाक्यैकवाक्यता, पदैकवाक्यता, पदार्थैकवाक्यता चेति । तत्र वाक्यैकवाक्यता नाम—उपजीव्योपजीवकभावापन्नबोधप्रयोजकत्वं, यथा सञ्ज्ञाशास्त्र-विधिशास्त्रयोः, यथा वाऽङ्गवाक्य-प्रधानवाक्ययोः। 'प्रयाजैश्चरन्ती' त्याद्यङ्गवाक्यानां 'दर्शपूर्णमासाभ्यां यजेते' त्याद्यङ्गिवाक्यानाञ्च। परस्परनिरूप्य—निरूपकभावापन्नविषयताप्रयोजकपदघटितत्वं—पदैकवाक्यत्वं, यथा 'मिद्-गुणः'—'इको गुणवृद्धी' इतिशास्त्रयोः । परस्परनिरूपकभावापन्नविषयताश्रयत्वम् पदार्थैक-वाक्यत्वं यथा—'तस्मिति निर्दिष्टे पूर्वस्य' 'इको यणची' त्यादीनां, प्रकृते च निरुक्तत्रिविधैक-वाक्यत्वमध्ये न कस्यापि सम्भव इति दिगित्याहुः ।

❀ चिदस्थिमाला ❀

बोधकाद्यन्तपदाक्षिप्ताऽऽदिघटितमध्यमानामित्यर्थः, यथैवमन्त्यस्य न, तथा स्फुटीभविष्यति । प्रासङ्गिकमाह-**स्वजौसिति** । यद्वा-उभयार्थत्वमात्रमन्यत्रापि दृष्टमिति ध्वनयितुमाह-'स्वौजसिति' । **एतदेकवाक्यतयेति** ।

❀ ज्योत्स्ना ❀

'हलन्त्य' मित्यस्य वाक्यार्थबोधे तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते 'ऽइउ'णित्यादावपि प्रवृत्याणा-देरित्सञ्ज्ञासद्भावेऽपि उपदेशेनाभिव्यक्तस्येत्सञ्ज्ञायां लोपेन भाव्यमिति न तदा लोपः।'उर'णित्यादौ प्रत्याहारपरामर्शवेलायां त्वस्त्येव स इत्यादिरन्त्येनेत्यत्रेत्पदस्य तत्सदृशपरत्वमस्य वक्तव्यम् , 'अइउ'णिति णकारस्य वर्णसमाम्नायस्थत्वप्रत्यभिज्ञायाः शशविषाणसदृशत्वात् । न चाण्पदस्य प्रा-तिपदिकत्वादुपदेशत्वात्तदन्त्यत्वादेव कुतो नेत्सञ्ज्ञा, न च प्रयोजनाभावः, प्रत्याहारस्यैव प्रयोजन-त्वादिति वाच्यम् । आदिरन्त्येनेत्येतद्वाक्यार्थबोधोत्तरमण्पदशक्तिग्रहेऽर्थवत्त्वात्प्रातिपदिकत्वयोग्य-तायामपि वाक्यार्थबोधात्पूर्वं संज्ञाया अप्रसङ्गादिति । प्रसङ्गादाह—**स्वौजसित्यादीनामपीति** ।

❀ सदाशिवभट्टीयम् ❀

वच्छिन्ने'त्यादि क्लिश्यन्तो **मिश्रा**[1]:समाहिताः, 'अणुदि'दित्यादिष्वव्याप्तेश्च । **स्वौजसमौडित्यादीनामपीति।**

१. भैरवमिश्राः ।

एषु संहिताया अविवक्षया न संहिताकार्यम् । अनुकरणत्वेन—

### ॐ अभिनव-चन्द्रिका ॐ

**संहिताया अविवक्षयेति** । न चाऽग्रे 'इको यणची' त्यत्र ङमुटमाशङ्क्य 'सौत्रत्वान्ने ' त्युक्तं ापि संहिताया अविवक्षया न ङमुडिति कस्मान्नोक्तं ?, न च 'ङमो ह्रस्वादची' त्यत्र'संहिताया'- यधिकाराभाव इति वाच्यं, 'तयोर्य्वावचि संहितायां' मित्यारभ्य 'संहिताया'मित्यधिकारस्य ऽध्यायपरिसमाप्तेः सत्त्वात्, तथा च तदेवात्र समाधानं युक्तम्, एतदेव वा समाधानं तत्र ामिति वाच्यं, तत्र संहिताया अविवक्षणे सूत्रद्वयापत्तेः, पूर्वं संहितया पठिताया अष्टाध्याय्याः हिताया अविवक्षणेन सूत्रविभागस्य वार्त्तिककृता कृतत्वात् ।'अइउ'णित्यादौ संहिताया अविवक्षया ाकं सूत्रत्वेऽपि न क्षतिः,'अत्वावच्छिन्नःसाधुः''इत्वावच्छिन्नः साधु' रित्यादिरीत्या वर्णसाधुत्व- ायकत्वेन प्रत्येकं सूत्रत्वस्येष्टत्वात् । एतदेव द्योतयितुं 'सौत्रत्वा'दिति समाधानं विहाय- हिताया अविवक्षये'ति समाधानमुक्तं, चतुर्दशसूत्रीव्यवहारस्त्वनुबन्धप्रयोज्य इति बोध्यम् ।

### ॐ चिदस्थिमाला ॐ

दिरन्त्येने' त्युपात्तैकवाक्यतयेत्यर्थः । इदञ्च[1] 'सुप' इत्याद्यर्थमावश्यकम् । नन्वेवं विधिर्न स्यादत —स्वादीति । आवृत्त्येति भावः ।

नन्वत्र गुणादिकं कुतो न, अत आह—**एष्विति** । तथा निर्देशेन तदविवक्षानुमीयते, न तु तत्करणे-[2] नेर्देशानुपपत्त्या, व्याख्यानतो निर्वाहात् । एतेन—''यस्येति च'' 'न लोका' 'ग्योः' 'औतोम्' इत्यादा- स्थान्याद्यप्रतिपत्त्यापत्त्या—'तथा तदविवक्षे'ति चिन्त्यमित्यपास्तमिति भावः । नन्वेवमपि प्रत्येकं विभक्तिः

### ॐ ज्योत्स्ना ॐ

**अनुकरणत्वेनेति** । अनुकार्यानुकरणयोरर्थभेदेऽपि शब्दैक्यपक्षे श्रोत्रोपस्थितस्य शाब्दे रत्वेन भानं यदनुकरणस्य तदेवानुकार्यस्य, भेदपक्षे च व्युत्पत्तिवैचित्र्यात्सादृश्याख्यसम्ब- त्युभयथापि न तत्र सङ्केतः, प्रयोजनाभावादिति—सङ्केतवत्त्वरूपवृत्त्यभावात्प्रातिपदिकत्वा- इति प्रतिपदिकत्वाभावद्वारानुकरणत्वस्य हेतुत्वं तृतीययोच्यते । न च वृत्त्यनुपस्थितस्य दबोधे प्रकारत्वेतिप्रसङ्गः, आश्रयतानिरूपकतान्यतरसम्बन्धेन वृत्त्युपस्थितस्य तत्त्वाङ्गीकारा- दस्य वृत्त्याश्रयत्वाददोषात् । अर्थाध्याहारपक्षे तात्पर्यग्रहसहकारेण तथात्वस्य प्राभा- ङ्गीकाराच्चेति भावः । न **विभक्त्युत्पत्तिरिति** । नन्वेवमपदत्वात्समुदाये वाक्य- ावात् संहिताया अविवक्षोक्तेरसङ्गतिः, ''संहितैकपदे नित्या धातूपसर्गयोः । नित्या समासे

### ॐ सदाशिवभट्टीयम् ॐ

विध्यर्थत्वे फलान्यूह्यानि । **अविवक्षया न तत्कार्यमिति** । न चैकपदे इत्यस्य 'राजीयती' त्यादि- र्'पदत्वाभाववदुत्तरखण्डकसमुदायत्व'मिति परिष्करिष्यमाणत्वेन प्रकृते च तदाक्रान्तत्वेन तस्यानित्य- अविवक्षोक्त्यसंगतिरिति वाच्यं, 'पदत्वे सति तत्त्व' मिति तदर्थात्, प्रकृते च समुदायस्यातथात्वात् । **तत्तु**-अनुकरणत्वेन सौत्रत्वाच्चेति 'मध्यमणि' न्यायेन पूर्वोत्तरयोरन्वयः । 'अनुकरणत्वेने'त्यस्य ानुकरणत्वेनेत्यर्थः । संहिताया अविवक्षया तद्वारणं तु न युक्तम्, एकसूत्रे तदभावात्, तदुक्त- 'गुणे' ति सूत्रे **उद्योते**—'एकयोगत्वञ्च द्वयोस्संहितापाठमात्रेणे'ति, अत एवेकोयणचीत्यत्र ादेव ङमुट् वारयिष्यते ग्रन्थकृता । ''यत्तु क्रमबोधकत्वेन वर्णबोधकत्वाभावान्न 'कार'प्राप्तिरिति, समूहस्य तत्त्वेपि प्रत्येकं तत्त्वाऽनपायादिति जरन्त[3] **आहुः** ।

१. इदञ्च=स्वौजसित्यादेः सञ्ज्ञासूत्रत्वञ्च । २.तत्करणे=गुणादिसन्धिकरणे, इष्टनिर्देशः=आकारेका- ां स्पष्टप्रतिपत्तिः।'इष्टनिर्देशानुपपत्त्या सन्धिर्ने'त्युत्तरं न युक्तमित्याशयः।३ जरन्तः=चिदस्थिमालाकृतः।

—सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः ।
कारप्रत्ययोऽपि न, बाहुलकात् ।

ॐ अभिनव-चन्द्रिका ॐ

**सौत्रत्वाच्चेति** । चो हेतौ, यतः सौत्रत्वमतोऽनुकरणत्वम्, अतोऽनुकार्यानुकरणयोरभेद-विवक्षायां सादृश्यज्ञानाधीनोपस्थित्याऽर्थविषयकबोधजनकत्वेऽपि, शक्ति-लक्षणाऽन्यतरज्ञानाधीनो-पस्थित्याऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वाभावेन प्रातिपदिकत्वाभावान्न प्रत्येकं स्वादय इति भावः।

**बाहुलकादिति** । 'रोगाख्याया'मितिसूत्रस्थबहुलग्रहणस्यास्मिन् वार्त्तिकेऽनुवृत्तेरिति भावः ।

स्यादेतत्,-'वर्णात्कार'इत्यस्य यदि वर्णवाचकात्कारप्रत्यय इत्यर्थस्तर्हि विसर्जनीयपदादपि कारप्रत्ययापत्तिः, न च 'यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयक-बोधतात्पर्येणोच्चरितात्कारप्रत्ययो भवती'त्यर्थे न दोष इति वाच्यम्, अनुनासिकपदस्य स्वघटक-नकारवृत्त्यनुनासिकत्वरूपवर्णत्वव्याप्यधर्मावच्छिन्नविषयकबोधतात्पर्येणोच्चरितत्वेन तस्मात्कार-प्रत्ययापत्तेः, न च 'यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यजात्यवच्छिन्नविषयकबोध-तात्पर्येणोच्चरितात्कारप्रत्ययो भवती'त्यर्थेनानुनासिकत्वस्य गुणतया-( जातित्वाभावेन ) न दोष इति वाच्यं, गुणपदस्य, वर्णसञ्ज्ञापक्षे-धि-नदीपदयोश्च स्वघटकेकाराकारवृत्तिवर्णत्वव्याप्याऽत्वें-त्वादिजात्यवच्छिन्नविषयकबोधतात्पर्येणोच्चारितत्वेन तेभ्यः कारप्रत्ययापत्तेः, न च 'यस्मात्कार-प्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिर्या वर्णत्वव्याप्या जातिस्तया साक्षादवच्छिन्ना या मुख्यविशेष्यता तादृशविशेष्यताकबोधतात्पर्येणोच्चरितात्कारप्रत्ययो भवतीति गुणादिपदस्थले बोधीयमुख्यविशेष्य-ताया अन्यतमत्वादिनैव साक्षादवच्छिन्नत्वान्न दोष इति वाच्यं, ह्रस्व-दीर्घपदयोरुच्चारणार्थकारादि-घटित'कि'—'कु'इत्यादिपदानाञ्च साक्षात्स्वघटकवृत्तिवर्णत्वव्याप्य-ह्रस्वत्व-दीर्घत्व—कत्वादि-

ॐ चिदस्थिमाला ॐ

कुतो न, न च तयोरभेदपक्षे स्वरूपस्यानुकार्यस्य वा श्रोत्रगृहीतत्वेन, सादृश्येनोपस्थितेर्वा तत्र तस्य वृत्त्यभावात्तादृशार्थवत्त्वाभावेनाप्रातिपदिकत्वमेवेति वाच्यम्, एवमपि भेदपक्षे वृत्त्यङ्गीकारेण तत्त्वादाह—**अनुकरणेति** । तत्त्वभङ्गमियेत्यर्थः । ननु नेदमनुकरणम्, अर्थपरत्वात्, अत एवेतः सनकाद्युद्धारः, पाणिनेस्तु तात्पर्यतः शब्दमात्रबोधोऽत आह—**सौत्रत्वाच्चेति** । अनेन सूत्र एव तथा प्रयोगो नान्यत्रेति सूचितम्, अन्यथा'निपातनाच्चे'ति वदेत् ।

**वर्णेभ्यः**—'प्रत्येक'मिति शेषः, अग्रेऽप्यस्यैतादृशस्यानुषङ्गः । **बाहुलकात्**—'रोगाख्याया'मिति

ॐ ज्योत्स्ना ॐ

वाक्ये तु सा विवक्षामपेक्षते ॥'' इति वचनात् । न च शक्तपदसमूह एव वाक्यं स्यात्, 'चक्रतु'रित्यादावपि कदाचिण्णभावप्रसङ्गादिति चेन्न। आदिरन्त्येने'त्यनेनैकवाक्यतायां'गवित्ययमाहे'त्यादा-विव वाक्यत्वस्य सुवचत्वात्, 'संहितैकपदे' इत्यत्र वाक्यशब्देनैकपदादिभिन्नसमुदायस्य विवक्षणा-द्वेति तात्पर्यात् । **बाहुलकादिति** । 'रोगाख्यायां ण्वुल् बहुल'मित्यतो बहुलग्रहणस्य 'वर्णात्कार' इत्यत्र सम्बन्धादित्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

**सौत्रेति** । औपदेशिकश्रुतित्वस्य स्वयमेव वक्ष्यमाणत्वेन 'छन्दस्त्वा'दित्येव वक्तव्ये 'छन्दोवत्सूत्रे' त्यतिदेशप्रवर्तकं 'सौत्रत्वा'दिति कुत उक्तमिति तदाशयं स[4] एव प्रष्टव्यः । अन्ये तु सूत्राणामिदं सौत्रं—पाणिनिसूत्रमूलभूतं,—तदुपकारकं वा—छन्द इत्यर्थः, तत्त्वात्—छन्दस्त्वादिति यावत्, अत एवाणपि सफलः,

१. तत्त्वात्—अर्थवत्त्वात् । २, अनुकरणस्वरूपभङ्गभियेत्यर्थः । ३. तथा—अभेदविवक्षया । ४. स—नागेशः।

तु--"उपजीव्यावरोधात् सान्धिनं,—

❀ अभिनव-चन्द्रिका ❀

छन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरितत्वेन तेभ्यः कारप्रत्यापत्तेरिति चेत्, मैवम्,
श्रु पुनः- पुनरकारोच्चारणेन व्यञ्जनद्योतकत्वमकार एव स्वीक्रियते, न लिकारादौ ।
च–'वर्णात्कार' इत्यस्य,–वर्णविशिष्टात्कारप्रत्यय इत्यर्थः, वैशिष्ट्यञ्च–'स्वनिष्ठवर्णत्वव्याप्य-
छन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणघटितत्व' 'स्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशे-
जकतापर्याप्त्याधिकरणेतराऽघटितत्वै' तदुभयसम्बन्धेन । 'कि' 'कु'शब्दादौ च द्वितीय-
गावान्न दोषः । न चा'ऽक्लोपोन' इति सूत्रोदाहृतेऽन्कारः'अस्कार' इत्यादौ कारप्रत्ययानु-
ा वाच्यम्, 'अनिनस्मि'न्निति परिभाषयाऽनादिषु वर्णबोधकत्वाऽतिदेशात् । अन्ये
कारः' 'वषट्कार' इत्यादाविव कारप्रत्ययादन्य एव कारशब्दस्तेन समास—"इत्याहुः ।
जीव्यविरोधादिति । अविकृताकारादिषु गृहीता अजादिपदशक्तिः स्वोपजीव्या-ऽवि-

❀ चिदस्थिमाला ❀

नुवृत्तेः । यत्तु—'कारप्रत्ययस्यात्राप्राप्तिरेव, क्रमबोधकत्वेन वर्णाबोधकत्वा'दिति, तन्न,
त्वेपि प्रत्येकं तत्त्वानपायात् ।
तात्पर्यबोधिका कौस्तुभखण्डिकां रत्नाकरोक्तिं खण्डयति—यत्त्विति । सन्धिः किं

❀ ज्योत्स्ना ❀

र्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्सन्धिर्न"ति यथाश्रुतं कैयटमतं–'प्रकाश-कौस्तुभादौ
त्परिष्कारदूषणद्वारा स्वयमपि दूषयितुमुपन्यस्यति–'यत्त्वित्यादि ।

❀ सदाशिवभट्टीयम् ❀

त्तावभिप्रेतायान्तु सूत्रत्वस्यैव तत्प्रवृत्तिप्रयोजकत्वेन 'तत्त्वा'दित्येव वदेत्, नाणम्''—इत्यावि-
शयम् । इदं पञ्चम्यन्तमपि—तृतीयान्तवत्,—'गुणे त्वन्याय्ये'ति न्यायाच्च,—प्रातिपदिकत्व-
रैव—विभक्त्युत्पत्तिप्रतिबन्धकम् । एतेनातिदेशाल्लुगिति वक्तव्ये शास्त्रबाधोक्तिरसङ्गतेत्यपा-
तलुकि, अनुपरयन्व्याख्यानेपि वा शास्त्रद्वयानुसन्धानस्यावश्यकत्वेन प्रत्युत तवैव गौरवं, छन्दसि
वैकल्पिकत्वेनाऽभावकल्पेन वा बाधाऽभावेनाऽसङ्गतेरभावश्च । एतेन—"प्रतिसूत्रं प्रातिपदि-
श्यमाणत्वेन तदवयवत्वेन लुकः सिद्ध्या सौत्रत्वाश्रयणं विफलम्''—इत्यपि निरस्तम् । जश्त्वाद्य-
त्रप्रकृतिकसुबनुत्पन्नः-इत्येतदादरस्यावश्यकत्वाच्च । किञ्च लुकि पूर्वभागस्य पदत्वे नियमेन प्रत्येकं
तिपदिकत्वनापत्त्या णादेरित्संज्ञानापत्तिरुपायान्तरेण परिहरणीया स्यात् । यत्तु प्रातिपदिका-
या णादेरित्सञ्ज्ञायै प्रत्येकं सूत्रोपदेशस्य तात्पर्यस्यावश्यकत्वेपि वर्णोपदेशे आचार्यतात्पर्यकल्पने
, एव धनादौ धादिभ्य इवात्रापि न तदुत्पत्तिः, तथैव च कारप्रत्ययोपि नेति सौत्रत्व—बाहुल-
विफलमिति, तन्न; 'वर्णानामुपदेश' इत्यादिभाष्योक्तिस्वारस्यस्यैव तत्र मानत्वादिति सुधियो
इति केचित् । बाहुलकादिति ।
वति । एवञ्च पुनः शक्तिग्रहाभावेपि सन्ध्युपजीव्यानिश्चयेनाविकृतरूपाकारादिषु गृहीताऽजादि-

❀ विषमपदविवृतिः ❀

विरोधात्सन्धिर्न'त्यर्थकतया व्याख्यातस्तद्दूषयितुमनुवदति–यत्त्विति । तथाचाविकृता-

---

"स्वरसन्धिस्तु न प्रवर्त्तते, वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादात्" इति कैयटः :
कौमुदीटीका सिद्धान्तरत्नाकरः—रामकृष्णसूरिविरचितः ।

—तथा ह्यजादिसञ्ज्ञाग्रहकाले 'आद्गुण इत्यादीनामनिष्पत्त्या तदप्रवृत्तावविकृत-रूपाकारादिषु गृहीताजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुद्ध्येत; न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति"—इति । तन्न ।

※ चिद्स्थिमाला ※

वर्णोपदेशकाले उत सन्धिशास्त्रनिष्पत्त्यनन्तरम्—आपाद्यते ?, तत्रोभयत्र अभावे हेतुः—कैयटनोक्तो—'वर्णोपदेश' इत्यादि, तत्राद्यपक्षे स्पष्ट एवार्थः । अन्त्यपक्षे तु तेन—उपजीव्यविरोधः सूचितस्तदसाधकत्वेन, तमुपपादयति—**तथा ह्रीति । तदिति** । 'आद्गुण इत्यादी'त्यर्थः, एवमग्रेपि । 'अक्षरसमाम्नाय' इत्यादिः । **गृहीतेति** । आदिरन्त्येनेतिशास्त्रेणेति भावः । पश्चात्=वर्णोपदेशज्ञानाद्यनन्तरम् । अत्रापि=अक्षरसमाम्नायेऽपि । **विरुध्येतेति** । 'उपजीव्यभूतशक्तिग्राहकमानविरोधापत्ते'रिति शेषः । तत्र हेतुमाह—**न हीति** । नचैवं 'तुल्यास्ये'त्यादौ दीर्घाद्यप्युक्तरीत्या न स्यादिति वाच्यं, शास्त्रयोः पौर्वापर्येपि आनुपूर्व्यंशे उपजीव्योपजीवकभावाभावात्, सवर्णसञ्ज्ञायास्तत्रोपजीव्यत्वादिति भावः । **अजिति** । अजादिसञ्ज्ञाया इत्यर्थः । अर्थान्तरे=विकृतरूपेषु तेषु । **सन्देह इति** । तथा चाविकृतानामेव सञ्ज्ञितालाभ इति भावः ।

यत्तु "—क्रमबोधके वर्णोपदेशे—गुणादिप्रवृत्तौ, सुपामिति सोर्लुकि, पदत्वात् 'लोपः शाकल्यस्ये'ति प्रवृत्त्या—'अ-उण्'इति 'अयुण्'इति वा स्यात्, तथा चेकारस्याजादिसञ्ज्ञा न स्यादित्याशयेन—'अजादिसञ्ज्ञा न स्यात्' इति ['अजादिसञ्ज्ञानामनिष्पादा'दिति कैयटेन—] उक्तं, न च सन्देहनिवृत्तिर्व्याख्यानादिति वाच्यम्, 'ईदूदे'दिति तपरकरणेनेदृशे विषये अप्रवृत्तिज्ञापनात्—" इति **मन्दः**[1], तन्न, तथा सत्य'जादिसञ्ज्ञा न स्या'दिति वाच्ये—'अजादिसञ्ज्ञानामनिष्पादा'दित्यस्यासङ्गत्यापत्तेः, 'काल—निष्पाद'पदयोरेवं सति निष्फलत्वापत्तेश्च । अजादिसञ्ज्ञाऽभावे साध्ये हेत्वनुक्त्या वाक्यस्याप्रयोजकत्वापत्तेश्च । तन्ध्यभावे हेतुत्वाभावेनासम्बद्धत्वापत्तेः, विभक्त्यनुत्पत्तिं प्रतिपाद्य 'स्वरसन्धिस्तु ने'ति तदुक्तग्रन्थस्वारस्येन तदनुत्पत्तेरेव स्फुटत्वेन 'सुपा'मित्यादिपरत्वेन कैयटयोजनस्यात्यन्तानौचित्याच्च, । अशब्दार्थत्वाच्च । इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया निर्विषयत्वापत्तेश्च । गुणान्तरयुक्तसग्रहाय तपरकरणस्य—सूत्रमते भेदकपक्षे सत्त्वेनावैयर्थ्याच्च । भाष्यमतेऽभेदकपक्षे तस्य प्रत्याख्यातत्वेन तद्विरोधापत्तेश्च । 'किञ्चेदृशे विषये'**इत्यस्य**—'सौत्रे' इति, 'साजात्यात्—'दीर्घे,—इति वार्थः?, नाद्यः, 'यस्येति' 'न लोकाव्यय' 'औतो'मित्यादावप्रवृत्त्यापत्तेः, वृद्धिसूत्रस्थभाष्यविरोधापत्तेश्च । अत एवान्त्योऽपि नेति दिक् ।

※ ज्योत्स्ना ※

स्याविकृतरूपस्य कारणत्वात्सन्धिना तद्विनाशे सत्युपजीव्योपजीवकविरोध इति भावः, तदाह—**नहीति**। **शक्त्यग्रहेणेति** । प्राथमिकशक्तिग्रहमात्रेणोद्देश्यतावच्छेदकावच्छिन्ने सर्वत्र युगपत्संस्कारे बाधकाभावा-'तुल्यास्यप्रयत्न'मित्यादिनिर्देशात् ,अन्यथौतोम्शसोरित्यादावगतेरिति भावः। **सन्देह इति**। प्रयोजकत्वग्राहितशक्तिसन्देहस्य तटस्थशक्तिग्रहम्प्रति सामानाधिकरण्येन प्रतिबन्धकत्वात्पाणिनिना स्वशिष्येभ्यो

※ सदाशिवभट्टीयम् ※

पदशक्तिः संधिकार्ये कृतेऽविकृतेषु विकृतेषु वेति सन्देहाद्विरुध्येतेति भाव इति व्याचक्षते । **केचित्तु**—"उपजीव्यस्य—संधिकारणीभूताऽजादिपदशक्तिग्रहस्य विरोधादित्यर्थः ।

※ विषमपदविवृतिः ※

ऽकारश्रवणमुपजीव्य जातशक्तिग्रहण उपजीव्याविकृतश्रवणविरोधिसन्धिकार्यं न जनयतीति भावः ।

१. **मन्दः**=मौनी कृष्णभट्टः, शेखरमनोरमादिखण्डन—'**तर्कचन्द्रिका**'दिकर्त्ता **ज्योत्स्ना**कृतोऽपि प्राचीनः।

पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात्, न च सन्धौ सन्देहः, व्याख्यानतो निर्णयसम्भवात् । ननु चतुर्दशसूत्र्याम'क्षरसमाम्नाय'इतिव्यवहारानुपपत्तिराम्नाय-समाम्नायशब्दयोर्वेदे एव प्रसिद्धेरित्यत आह—**माहेश्वराणीति** । महेश्वरादागतानी-त्यर्थः, महेश्वरप्रसादलब्धानीति फलितम् । एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा,

**ॐ अभिनव-चन्द्रिका ॐ**

कृतत्व-विघातका-'ऽऽद्गुण'इत्यादिप्रवृत्तिं प्रति निमित्तं न भवतीति भावः । **विरोधाभावादिति** । 'आदिरन्त्येने'तिसूत्रबोधिता शक्तिः—अकारादि–चान्तसमुदायघटकत्वावच्छिन्ने, न त्वविकृत-तादृशसमुदायघटकत्वावच्छिन्ने, तादृशसमुदायघटकबोध्यत्वावच्छिन्ने वा इत्यविकृतत्वमुपजीव्यमेव नास्तीति प्रकृते उपजीव्यविरोधाभावेन सन्निपातपरिभाषाया अप्रवृत्तेरिति भावः । ननु सन्धौ सति घटकत्वसन्देहः स्यादत आह—**व्याख्यानत इति** ।

**ॐ चिदस्थिमाला ॐ**

'माहेश्वराणी'त्यधिकोक्तिं सफलयितुमाह—**नन्विति** । **व्यवहारेति** । 'शिक्षा-भाष्यादिकृते'त्यादिः । **वेद एवेति** । तद्रूपेर्थे एवेत्यर्थः । आम्नायस्य क्रियार्थत्वात्' 'अथैतस्य समाम्नायस्ये'त्यादाविति भावः । अत एव 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरोक्तिः । 'चन्द्रोदये विताने च स्यादाम्नायोऽन्वये श्रुतौ' इति नानार्थ-कोशादन्यार्थकत्वेऽपि तत्र प्रसिद्ध्यभावस्तदाह—**प्रसिद्धेरिति** । एतेन—''प्रचयशब्दवत्तदप्रसिद्ध्या न वैदिकी प्रसिद्धिः, 'सर्वाम्नायैर्नमस्कृताः' 'आम्नायोक्ताः प्रकाराः' इति कव्युक्तेर्मघवच्छब्दादिवन्न नियतविषयत्वम्, उक्तनानार्थकोशविरोधाच्च तन्मात्रार्थत्वमितीदं चिन्त्यम्—'' इत्यपास्तमिति भावः ।

**ॐ ज्योत्स्ना ॐ**

**विरुध्येतेति** । शक्तिग्रहविषयग्राहितशक्तिविषयकः सन्देह इदानीन्तनानामिह विवक्षितः । व्याख्या-नतः =व्याख्यातृपरम्परामूलात् ।

**निर्णयसम्भवादिति** । अनेन शास्त्रप्रारम्भ एव सन्देहोत्पादकशब्दप्रयोगःस्वाकौशलोन्नायत्वादा-चार्य्येण पराकृत इति संहिताया अविवक्षायां बीजप्रदर्शनमिदं कैयटोपाध्यायानामिति सूचयति। अन्यथा निर्णयादित्येतावन्मात्रं वदेत् । **श्रुतिरेवैषेति** । एवञ्चाक्षरसमाम्नायव्यहारो नानुपपन्न इति भावः ।

**ॐ सदाशिवभट्टीयम् ॐ**

**विरोधाभावादिति** ।–अविकृतेषु शक्तिग्रहमुपजीव्य जातस्य विकृतेषु शक्तिग्राहकत्वे स स्यादिति भावः । ननूपजीव्यस्याविकृतत्वरूपविशेषणविशिष्टाकारादिवर्णरूपविशेष्यरूपस्य शक्तिग्रहोपजीव्यस्येत्यर्थः । विरोधात् =कृते संधौ सन्निपातविघातःस्पष्ट एव,सन्निपातप्रतियोगिनोरुपादानग्रहत्यागस्य वक्ष्यमाणत्वात् । एवं च कैयटः सम्यगेवेति चेन्न,पूर्वापरीभावांशे भाष्यादितस्त्यागेपि अन्यत्र त्यागे–मानाभावादिति भाव'इति–**व्याचक्षते**[१] ।

**ॐ विषमपदविवृतिः ॐ**

**शक्त्यग्रहेणेति** । इदमयुक्तं, न ह्य'कारादिषु शक्तिग्रहमुपजीव्य प्रवर्त्तमानं सन्धिकार्यमर्थान्तरे शक्तिग्रहजननद्वारा स्वोपजीव्यशक्तिग्रहं न विहन्ती'ति 'रत्नकोश' ग्रन्थार्थः, किन्तूक्तरीत्याऽवि-कृताकारादिश्रवणमुपजीव्य जातः शक्तिग्रहः स्वोपजीव्याविकृताकारादिश्रवणं न विहन्तीति, तथा च त्वद्दूषणमपराद्धेषोर्धानुष्कस्य कण्ठाडम्बरमनुकरोति ।

अकारादिषु शक्तिनिश्चयमुपजीव्य प्रवर्तमानं सन्धिकार्यमुक्तनिश्चयविरोधिसन्देहाधायकतया न सन्धिकार्यं प्रवर्तयतीत्याशङ्कते—**नचेति** ।

१. 'व्याचक्षते' इत्यस्य पूर्वेण 'केचित्तु' इत्यनेन सम्बन्धः । उक्तग्रन्थार्थः—इति शेषः ।

॥ वरवर्णिनी ॥

**वाहुलकादिति** । [ १५ पृष्ठे ] **परे तु**—ननु—'वर्णात्कार'इत्यस्य—'स्वं रूप'मितिशास्त्रबलात्—'वर्णशब्दात्कारप्रत्ययो भवती'ति नार्थः कर्त्तुं शक्यते, वर्णशब्दात्कारप्रत्ययापत्तेः, ककारादौ तदनापत्तेश्च । **न च** 'स्वं रूप'मिति सूत्रस्य 'तस्यापत्य'मित्यादावप्रवृत्तयेऽनित्यतया—'उभयगतिरिह भवती'ति न्यायाच्चात्राप्रवृत्त्या—'लोके वर्णशब्देन व्यवहृतो यस्तस्मात्कारप्रत्यय'इत्येवार्थ इति न पूर्वोक्तदोष इति वाच्यं, घटपटादिशब्दे प्रतिवर्णं कारप्रत्ययापत्तेः, उच्चारणार्थकाऽकारविशिष्ट'ह'शब्दादेर्लोके वर्णशब्देन व्यवहाराभावात्तनस्तदनापत्तेश्च । **न च** 'वर्णबोधकात्कारप्रत्यय'इत्येवार्थः, घटादिघटकप्रत्येकवर्णानाञ्च वर्णबोधकत्वाभावान्न दोषः, उच्चारणार्थकाकारविशिष्टहादेरपि वर्णबोधकतया कारप्रत्ययः सुलभ एवेति वाच्यं, वर्ण-प्रमेय-ङीप्-टाप्-घि-नद्यादिशब्दानामपि वर्णबोधकतया ततोपि कारप्रत्ययापत्तेः । **न च** 'वर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधजनकात्कारप्रत्यय'इत्येवार्थः, तथा च वर्णत्वव्याप्यो धर्मः—अत्व-कत्वादिः, तादृशात्वकत्वादिधर्मावच्छिन्नविषयतानिरूपको बोधः—अकारादिबोधः, तज्जनकास्तकारादिः कारप्रत्ययो भवति, ङीप्टाबादिशब्दाश्च ङीप्त्वाद्यवच्छिन्नविषयताकबोधजनकाः—न तु वर्णत्वव्याप्यत्वादिधर्मावच्छिन्नविषयताकबोधजनका इति न तत्रातिव्याप्तिः, वर्णत्वञ्च न वर्णत्वव्याप्यो धर्म इति न वर्णशब्दादपि कारप्रत्ययापत्तिरिति वाच्यम् । स्वस्मिन्नपि स्वव्याप्यत्वस्य वक्तुं शक्यतया वर्णशब्दात्कारप्रत्ययापत्तेर्दुरुद्धरत्वात् ।

**न च** 'वर्णत्वविशिष्टधर्मावच्छिन्नविषयताकबोधजनकात्कारप्रत्यय'इत्येवार्थः, वैशिष्ट्यञ्च—'स्वभिन्नत्व' 'स्वव्याप्यत्वो'भयतसम्बन्धेन, एवञ्च—वर्णत्वस्य स्वभिन्नत्वाभावान्न वर्णत्ववैशिष्ट्यमिति नोक्तदोष इति वाच्यम् । ह्रस्व-दीर्घादिशब्देभ्यः, अणगादिप्रत्याहारशब्देभ्यश्च तदापत्तेः । अणादौ—अणपदवत्त्वेन, अकारादिणान्तसमुदायघटकत्वाद्युपलक्षिताऽत्वादिना वा धर्मेणावच्छिन्ना या विषयता तादृशविषयताकबोधजनकत्वस्यादिरन्त्येनेतिसूत्राल्लाभात् । एवं ह्रस्वादिपदानां—मात्राकालिकत्वसमानाधिकरणाकारादित्वान्तसमुदायघटकत्वोपलक्षितात्वादिधर्मावच्छिन्नविषयताकबोधजनकत्वस्योकालोऽजितिशास्त्रेण बोधनात् ।

**न च**—वर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधजनकाद्वर्णात्कार'इत्यर्थेन ह्रस्वादिपदानां वर्णत्वाभावान्न दोषलेश इति वाच्यम् । उच्चारणार्थकाकारविशिष्टात्ककारादेः कारप्रत्ययानापत्तेः, समुदायस्य वर्णत्वाभावात् ।

**न च** यतः कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधनात्पर्येणोच्चरितात्कारप्रत्यय इत्यर्थः, 'अकार'इत्यादौ व्यपदेशिवद्भावेन स्वस्यापि स्वघटकत्वादकारवृत्तिवर्णत्वव्याप्यात्वाद्यवच्छिन्नविषयताकबोधजनकत्वेन कारप्रत्ययोपपत्तिः, एवम्—उच्चारणार्थाकारविशिष्टहादिघटककेवलहादिवृत्ति-वर्णत्वव्याप्यहत्वावच्छिन्नविषयताकबोधजनकत्वस्य उच्चारणार्थकाकारविशिष्टे हकारे सत्त्वात्तत्रापि कारप्रत्ययोपपत्तिरिति वाच्यम् । 'अनुनासिक'पदस्य--स्वघटकनकारवृत्त्यनुनासिकत्वरूपवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधनात्पर्येणोच्चरितत्वात्ततोऽपि कारप्रत्ययापत्तेः । **न च** 'यतः कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधनात्पर्येणोच्चरिता'दित्यर्थः, 'आनुनासिक्यं नाम गुण' इति भाष्योक्तेरानुनासिक्यस्य गुणत्वेन जातित्वाभावान्नोक्तदोष इति वाच्यम्, 'स्वर'पद'गुण'पदादेः—स्वघटकाकारादिवृत्त्यत्वादिजात्यवच्छिन्नविषयताकबोधनात्पर्येणोच्चरिततया कारप्रत्ययापत्तेः । **न च** 'यतः कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यजात्या साक्षादवच्छिन्ना या विषयता तादृशविषयताकबोधतात्पर्येणोच्चरिता'दित्यर्थेन गुणपदस्य-अकारैकारौकारान्यतमत्वेन साक्षादवच्छिन्नविषयताप्रयोजकत्वेऽपि साक्षात्-अत्वाद्यवच्छिन्नविषयताप्रयोजकत्वविरहान्न दोष इति वाच्यम्, तत्त्वाद्यवच्छिन्नविषयताकबोधनात्पर्येणोच्चरितात्तच्छब्दात्कारप्रत्ययापत्तेरिति चेत्, 'वर्णत्वव्याप्यधर्मविशिष्टात्कारप्रत्यय' इत्यर्थेनादोषात् । वै० 'स्वावच्छिन्नविषयताकबोधनात्पर्येणोच्चरितत्व' 'स्वानाश्रयीभूतो य उच्चारणार्थकाजितरो वर्णः—तदघटितत्वै'तदुभयसम्बन्धेन । वासुदेवबोधतात्पर्यकादशब्दात्तदापत्तिवारणायाद्यः सम्बन्धः । द्वितीयसम्बन्धोपादानादनुस्वारविसर्गादिशब्देभ्यो न तदापत्तिः, तेषां यादृश-यादृश-वर्णत्व-

तत्प्रसादात्पाणिनिना लब्धा।

श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्, अत्र प्रमाणं—"येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तम्—" इति शिक्षावचनम्। 'लण्सूत्रे णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति—व्याख्यानत इति'—इत्यादावा'चार्य'पदेन महेश्वरः। अनुबन्धाश्च महे-

ॐ **अभिनव-चन्द्रिका** ॐ

**अस्यैव वेदाङ्गत्वमिति**। चिन्त्यमिदं,-पाणिनीयव्याकरणोत्पत्तेः प्राग्वेदस्य पञ्चाङ्गत्वापत्तेः,

ॐ **चिदस्थिमाला** ॐ

यत्तु-**रत्नाकरकृत्**"-'कृते ग्रन्थे' इत्यणा तेन कृतानीत्यर्थः, न चात्र न मानं, 'येनाक्षरे'ति शिक्षावचनस्यैव मानत्वा"दिति, तन्न, तथा सति श्रुतित्वाभावापत्तेः, तद्ध्वनयन्नाह—**महेश्वरादिति**। 'तत आगतः' इत्यण्। नन्विदं बाधितमत आह—**महेश्वरेति**। एवं व्याख्याफलमाह—**एवञ्चेवमिति**। महेश्वरादागतानीति व्याख्याने चेत्यर्थः। तत्प्रसादात्तेन लब्धा एषा चतुर्दशसूत्री—उक्तानुपूर्वीका श्रुतिरेवेति समुदितार्थः। एवञ्चानादित्वेन, अष्टाध्यायीतोऽस्य बाह्यत्वेन तत्त्वात्तद्व्यवहारो नानुपपन्न इति भावः।

तत्फलमाह—**श्रुतीति**। **अस्यैवेति**। एवं च व्याकरणान्तरनिरासो नान्याङ्गानां, साजात्यात्। अत्र='श्रुतिरियं तत्प्रसादलब्धे'त्युक्तार्थे। अन्यथा—'अधिगम्य' 'महेश्वरा'दित्यनयोरस्वारस्यं स्पष्टमेवेति भावः।

एतेन'पञ्चम्यन्तोक्तिश्छन्दानुरोधादिति सामान्यस्य विशेषपरत्वे न मान'मित्यपास्तम्। एतेन 'महेश्वरेण प्रोक्तानी'त्यपि व्याख्यानं निरस्तम्। एवं सति प्रसक्तं भाष्यविरोधं परिहरति—**लणिति**। अस्य—णकारेणान्वयः, यद्वा—'इत्यादौ=इति भाष्यादौ—इत्यत्र वैयधिकरण्येनान्वयः। आदिना—'अव्युत्पत्तिपक्षाश्रयेणाचार्येणोपदिष्टो लकारः, वार्त्तिककारस्तु व्युत्पत्तिपक्षाश्रयेण तत्प्रत्याचष्टे—समाने चेती'ति—ऋलृक्सूत्रस्थकैयटस्य, 'एषा ह्याचार्यस्ये'ति भाष्यान्तरस्य च ग्रहणम्। नन्वेवमपि तद्विषयप्रवृत्तित्वं दुर्घटम्, उक्तयुक्तेरत

ॐ **ज्योत्स्ना** ॐ

**ज्ञापयतीति**। न च वक्ष्यमाणरीत्या सर्वेषामदृष्टार्थत्वे ज्ञापकत्वासम्भव इति वाच्यं, सम्भवे

ॐ **सदाशिवभट्टीयम्** ॐ

**निर्णयसम्भवादिति**। यत्त्वेतत्प्रतीकमुपादाय—'अनेन शास्त्रप्रारम्भे एव सन्देहोत्पादकशब्दप्रयोगः

ॐ **विषमपदविवृतिः** ॐ

'आम्नाय'शब्दो दृष्टान्तार्थः। अनुबन्धानां महेश्वरकृतत्वे तत्प्रत्याख्यानासङ्गतिमाशङ्क्य समाधत्ते—

ॐ **वरवर्णिनी** ॐ

व्याप्यानुनासिकत्वादिधर्मावच्छिन्नविषयताकबोधतात्पर्यकत्वं, तदनाश्रयीभूतोच्चारणार्थकाजितर-ककारादिवर्णघटितत्वात्। 'दिव उ'दित्यादावुदादिभ्यः कारप्रत्ययापत्तिवारणाय—'**अजि**'ति। उच्चारणार्थकाकारघटितह्रादिशब्देभ्यः कारप्रत्ययस्य सिद्धये च स्वानाश्रये—'उच्चारणार्थाजितरत्वं' विशेषणम्—' इति **प्राहुः**।

**मिश्रास्तु**"—वर्णविशिष्टात्कारप्रत्ययो भवति। वै०—'स्वावयवकत्व' 'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्नबोधकत्वेन तात्पर्यविषयत्व' 'स्वविशिष्टाघटितत्वै'तत्त्रितयसम्बन्धेन। वैशिष्ट्ये वैशिष्ट्यञ्च—'स्वेतरत्व' 'स्वसमभिव्याहृताकारेतरत्वो'भयसम्बन्धेन। उच्चारणार्थकाकारघटितह्रादेः कारप्रत्ययस्योपपत्तये—'**स्वावयवकत्वे**'**ति**। वासुदेवतात्पर्यकादशब्दात्तदापत्तिवारणाय द्वितीयः सम्बन्धः। तच्छब्दादेस्तदापत्तिवारणाय च तृतीयः सम्बन्धः—"**इत्याहुः**।

१. **अस्यैवेति**। एवकारोप्यर्थे—अस्यापीत्यर्थः। तेनैतन्निर्माणात्पूर्वं वेदस्य पञ्चाङ्गत्वापत्तिरिति निरस्तम्। अत्र=चतुर्दशसूत्र्या वेदत्वे, महेश्वरात्पाणिनेर्मन्त्रवल्लाभे च।

श्वरकृता एवेत्यनुपदं स्फुटीभविष्यति । 'ञमङणन'मित्यत्र मकारप्रत्याख्यानपरभाष्यन्तु, —'किमदृष्टार्थमेव तदुच्चारणमुत दृष्टार्थमपी'त्येवं विचारपरं, सर्वत्र प्रत्याख्यानमेवम्परमेव, अन्यथाऽङ्गानामपि पारायणे धर्मश्रवणेन तत्र-तत्र पाणिनिन्यासप्रत्याख्यानस्याप्यसङ्गतिः स्यात् । तदुक्तम्—'इको यणची'ति सूत्रे—'सामर्थ्ययोगान्न हि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इति । 'किञ्चिद्—दृष्टाऽदृष्टार्थवत्, किञ्चिच्छुद्धाऽदृष्टार्थवत्,

ॐ अभिनव-चन्द्रिका ॐ

कस्य व्याकरणस्य वेदाङ्गत्वमित्यत्र विनिगमनाविरहाच्च । तैत्तिरीयशाखायामैन्द्रव्याकरणस्य प्रशंसा-दर्शनेन तस्यापि वेदमूलकत्वाच्च । **एवं विचारपरमिति** । एवं विचार्याऽदृष्टार्थमेवेत्येवं परमित्यर्थः ।

ॐ चिदस्थिमाला ॐ

आह—**अनुबन्धाश्चेति** । चस्त्वर्थं, एवेनानादित्वव्यवच्छेदः । नन्वेवं कथं 'मा'ऽनुबन्धप्रत्याख्यानमत आह—**ञमेति** । अपिनाऽदृष्टार्थत्वमसमुच्चयः । **इत्येवं विचारपरमिति** । इत्येवं विचारपूर्वकादृष्टार्थत्व-प्रतिपादनपरमित्यर्थः । प्रसङ्गादाह—**सर्वत्रेति** । पाणिनीयन्यासेऽपीत्यर्थः । एवम्परमेव=उक्तनात्पर्यकमेव। अन्यथा=उक्ततात्पर्यानङ्गीकारे, **अपिना**—श्रुतिपरिग्रहः । तत्र तत्र=भाष्ये । **अपिना**—'म'प्रत्याख्यानम्समुच्चयः । **तदिति** । सर्वत्र प्रत्याख्यानस्य तत्परत्वमित्यर्थः । **सूत्र इति** । 'भाष्ये' इति शेषः । **सामर्थ्ययोगादिति,–**

ॐ ज्योत्स्ना ॐ

दृष्टफलद्वारैवादृष्टार्थत्वस्य वक्तव्यतया साक्षात्सङ्केतसहकारेण तथात्वाभावेऽप्यर्थापत्तिसहकारेण तथा-त्वस्य—'ज्ञापयती'त्यनेन विवक्षितत्वात् । सामर्थ्ययोगात्=प्रयोजनवत्त्वसद्भावात् । अनर्थकम् = दृष्टादृष्टप्रयोजनशून्यम् । ननु यत्किञ्चित्प्रयोजनसद्भावहेतुकयथाकथञ्चिच्छास्त्रानर्थक्याभावबोधक-'वृद्धि'सूत्रस्थभाष्येण विरोधोऽस्त्येव, 'सामर्थ्ययोगा'दितिवद्धेतूपन्यासाभावेन यथाकथञ्चिदानर्थ-

ॐ सदाशिवभट्टीयम् ॐ

स्वाकौशलोल्लापकत्वादाचार्येण पराकृत इति संहिताया अविवक्षाया बीजप्रदर्शनमिदं कैयटोपाध्यायानामिति सूचयति, अन्यथा निर्णयादित्येव वदे'दिति **व्याचक्षते । तत्राचार्यपदेन महेश्वरमभिप्रैति ?, उत पाणिनिं,?** नाद्यः, तस्य चतुर्दशसूत्रीप्रारम्भकत्वेपि यावच्छास्त्रप्रारम्भकत्वाभावेन 'शास्त्रे'त्यादिग्रन्थासामञ्जस्यं स्यात्,

ॐ विषमपदविवृतिः ॐ

**ञमङणनमिति** । प्रत्याख्यानभाष्यस्य दृष्टार्थकत्वखण्डनपरत्वे 'वृद्धि'सूत्रस्थभाष्यासङ्गतिमाशङ्क्य

ॐ वरवर्णिनी ॐ

अस्मत्पितामहाः पण्डितराज**श्रीनेहिरामशास्त्रिणस्तु**—'वर्णत्वव्याप्यधर्मविशिष्टवर्णविशिष्टात्कारप्रत्ययः, वर्णे धर्मवैशिष्ट्यञ्च—'स्वपर्याप्त्यधिकरणत्व,' 'स्वावच्छिन्नविषयताप्रयोजकत्वो'भयसम्बन्धेन । वर्णवैशिष्ट्यञ्च—'स्वघटितत्व,' 'स्वेतरद्–यद्वाचकं–तदघटितत्वो'भयसम्बन्धेन । वाचकता चाऽपर्याप्त्यापत्ति–न जिह्वामूली-योपध्मानीयबोधकात् ≍क≍प शब्दात्, जिह्वामूलीयोपध्मानीयादिशब्दाद्, विसर्जनीयानुस्वारानुनासिकादि-शब्दाच्च कारप्रत्ययापत्तिः । हकारादौ च हकारमात्रस्यैव वाचकत्वं, तत्रैव शक्तेः, अकारस्तूच्चारणार्थः, आकाङ्क्षाविधया तद्घटिते बोधकतेत्यन्यदेतत् । अजादिपदे तु समुदाय एव वाचकतेति न तत्र कारप्रत्ययाप-त्तिः'रित्याहुः । **फलितमिति** । गत्यर्थानां धातूनां प्राप्त्यर्थकत्वस्याप्यभ्युपगमादिति भावः ।

**सामर्थ्ययोगादिति** । सम्यगर्थः=प्रयोजनं—समर्थः । समर्थ एव सामर्थ्यं, स्वार्थे ष्यञ् । सामर्थ्य-योगात्=सर्वत्रैवादृष्टरूपफलस्य सम्बन्धात् । के चित्तु—'योगस्य सामर्थ्यं–सामर्थ्ययोगः । राजदन्तादेरा-कृतिगणत्वात्साधुः । मम युक्तिबलात्, पाणिनेर्वा—योगबलाच्चेत्यर्थ'इत्याहुः ।

सर्वथाऽनर्थकं न किञ्चि'दिति तदर्थः। 'वृद्धि'सूत्रस्थे—'वर्णेनाप्यनर्थकेन न भवितव्य'-मिति भाष्यग्रन्थेऽनर्थकत्वं बोध्यार्थराहित्यरूपमिति—न निष्प्रयोजनत्वरूपानर्थक्येन तत्र-तत्र प्रत्याख्यानपरभाष्यासङ्गतिः। अत एव 'सोऽयमक्षरसमाम्नायः—पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो ब्रह्मराशि'रिति भाष्यमुपादायोक्तं भर्तृहरिणा,—'यथैवेदमव्युच्छिन्नं चन्द्रतारकादि, एवमस्याक्षरसमाम्नायस्य न कश्चिदाधुनिकः कर्त्तास्ति, एवमेव वेदपारम्पर्येण स्मर्यमाण' इति। आधुनिकः=शरीरी। पुष्पितत्वं—तन्मूलकशब्द-शास्त्रद्वारेण, शब्दप्रयोगेण च—फलितत्वम्।

उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृत—काशिकायाम्—

❀ अभिनव-चन्द्रिका ❀

ननु 'न कश्चिदाधुनिकः कर्त्ते'त्युक्त्या- चिरन्तनः कर्त्ताऽस्तीति प्रतीयतेऽत आह—**आधुनिकः**

❀ चिदस्थिमाला ❀

ल्यब्लोपे पञ्चमी, सामर्थ्ययुक्तं विहायेत्यर्थः। शुद्धदृष्टार्थवतोऽभावात्तदनुल्लेखः। नन्वेवमपि प्रत्याख्यानपर-भाष्यासङ्गतिरेव, **वृद्धि**सूत्रस्थभाष्यविरोधादत आह—**वृद्धीति**। **इतिः**—असङ्गत्यभावे पूर्वस्य हेतुत्व-बोधकः। **निष्प्रयोजनत्वेति**। दृष्टप्रयोजनशून्यत्वेत्यर्थः। '**आनर्थक्येने**'त्यस्य प्रत्याख्यानेऽन्वयः।

अस्योक्तं श्रुतित्वं द्रढयति—**अत एवेति**। वर्णसमाम्नायस्य श्रुतित्वादेवेत्यर्थः। अव्युच्छिन्नं=शरीरि-कर्तृकत्वेनापरिच्छिन्नम्। एवमेव=उक्तानुपूर्वीकमेव। नन्वाधुनिकत्वनिवेशेन चिरन्तनः कर्त्ता लब्धोऽत आह—**शरीरीति**। एतेन वेदवदस्य सकर्तृकत्वे इष्टापत्तिरिति सूचितम्।

अनुबन्धानां सादित्वं प्रतिपादयन्नत्र तत्त्वे मानान्तरमाह—**उक्तमिति**। आत्मतत्त्वं वागाद्यगोचर-मिति—ज्ञापनाय ढक्कानिनादव्याजेन सनकादिसिद्धानुद्धर्तुकामो [1]नटराजराजः—(विश्वरूपविलासवैचित्र्य-चमत्कारप्रवीणत्वात्तत्त्वं[2],)—नृत्तसमाप्तौ चतुर्दशवारं स्वात्मतत्त्वं प्रकटयितुं ढक्कां ननाद, यत्तदेतद्-

❀ ज्योत्स्ना ❀

क्याभावग्रहणे तत्र प्रमाणाभावादत आह—**वृद्धिसूत्रस्थ इति**। 'ननादे'त्यन्तर्भावितण्यर्थो,-

❀ सदाशिवभट्टीयम् ❀

नान्त्यः,—मूलाभावादिति—वक्तव्यम्। **सामर्थ्ययोगादिति**। प्रयोजनसद्भावाद्धेतोरित्यर्थः। **यत्तु**—अत्र ल्यब्लोपे पञ्चमी, सामर्थ्ययुक्तं विहायेत्यर्थ' इति **भट्टाः**। तत्कथं सङ्गच्छते ? किञ्च-तस्य किं फलमिति ते एव प्रष्टव्याः। **न निष्प्रयोजनत्वरूपानर्थक्ये इति**। निष्प्रयोजनत्वरूपानर्थक्यसम्भवे सतीत्यर्थः, तद्वर्णानर्थक्य-प्रत्याख्यानभाष्येर्णे न विरोधोऽभिधेयपरत्वादित्यर्थः, तृतीयान्तत्वे तूभयोरप्यानर्थक्यप्रतिपादकत्वेनासङ्गतौ हेतुत्वानुपपत्तिः। **वेदपारम्पर्येणेति**। परम्परैव पारम्पर्यं, गुरुशिष्यपरम्परेति यावत्, वेदसम्बन्धिनी या सा तया स्मर्यमाणम्। वेदस्य येऽध्यापका ये चाध्येतारस्तैरधीयमानत्वादध्याप्यमानत्वाच्चास्यापि वेदत्वमिति

❀ विषमपदविवृतिः ❀

समाधत्ते—**वृद्धिसूत्रस्थेति**। **अत एवेति**। चतुर्दशसूत्र्या वेदत्वादेवेत्यर्थः। **शरीरीति**। अनेना-ऽशरीरेणेश्वरेण वेदः कृत इति लभ्यते, इदन्तु न युक्तं, तस्य पौरुषेयत्वात्। 'अस्य महतो भूतस्य

१. अनेन 'नटराजराज'पदोपादानेन मङ्गलं ग्रन्थादौ चकार नन्दिकेश्वरः। २. तत्त्वं=नटराजराजत्वम्।
३. प्रत्याख्याते सूत्रादौ। ४. 'वृद्धि'सूत्रस्थेन—'वर्णेनाप्यनर्थकेन ने'त्यादिना। ५. 'अनर्थकेन ने'ति भाष्येऽर्थपदस्येति शेषः। ६. 'निष्प्रयोजनत्वरूपानर्थक्ये' इति मन्मम्यन्त' पाठो भट्टमते न तृतीयान्तः।

"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥
अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥" इति ।

धात्वर्थं=धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । अत एव—'अनुबन्धकरणार्थश्च वर्णानामुपदेशः' इत्युक्तं भाष्ये । अत्र 'करण'शब्दप्रयोगेणानुबन्धानां सादित्वं सूचितं, तत्करणञ्चोपदेशकर्तृकर्तृकमेव—प्रत्यासत्तेः, तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं

❀ अभिनव-चन्द्रिका ❀

**शरीरीति । वर्णचतुर्दशमिति ।** वर्णाश्चतुर्दशेत्यर्थे—आर्षं नपुंसकत्वम् । 'अन्त्या वर्णाश्चतुर्दशे'ति क्वचित्पाठः । **धात्वर्थमिति ।** सनकादिपक्षे—'धात्वर्थ'मित्यस्य—क्रियावाचकपदसम्पत्त्यर्थमित्यर्थः । स्पष्टश्चेदम् "अः=परमात्मा, इम्=मायाम्—आश्रित्य, उः=व्यापकः, ण्=आसीत्—" इत्यादिना

❀ चिदस्थिमाला ❀

ढक्कानवपञ्चवारं नवपञ्चवर्णात्मकमाद्यम् अतिरहस्यं पाणिनिशिवप्रसादलब्धसूत्रसमूहरूपम्, अहं=नन्दिकेश्वरो—विमर्शे=विचार्य स्फुटीकरोमीत्यर्थः । आर्षस्तङ् । **अत्रेति ।** एषु नादरूपेषु सर्वेषु सूत्रेष्वित्यर्थः । **अन्त्यवर्णेति** पाठः । अन्त्या वर्णाश्चतुर्दश यस्मिन् समूहरूपे तत्=णादिलान्तानुबन्धसमूहरूपम् । अत्र समासान्तः । यद्वा—अन्त्यो वर्णो लः—चतुर्दशत्वसंख्यापूरको यस्मिंस्तत् । पाठान्तरमन्यत्रोक्तम् । समुपादिष्टं=सम्यक्—यथोचितम्, **उप**—तत्तत्समीपे कृत्वा, **आ**—समन्तात्कथितम् । एवञ्चानुबन्धाश्च तदा नासन्, तत्र बुद्ध्या तन्नादः कृत इति ते तेनैव कृता इति भावः । तावन्मात्रेण सनकादीष्टसिद्धावपि पाणिनेस्तदभावादाह—**पाणिन्यादीति । आदिना** शाकटायनादिः । **'सर्वं नामे'**त्युक्तेराह—**धातुमूलेति ।** धातुमूलका ये शब्दास्तत्प्रतिपादकशास्त्रेत्यर्थः ।

द्वितीयपद्योक्ते भाष्यमपि मानमाह—**अत एवेति** । अनुबन्धानां सादित्वादेवेत्यर्थः । **अत एवेत्यस्यार्थं** ध्वनयितुमाह—**अत्रेति ।** उक्तभाष्य इत्यर्थः । नन्वेवमपि कथं महेश्वरकृतत्वलाभोऽन्यशिष्यकृतत्वस्यापि सम्भवादत आह—**तत्करणमिति ।** तेन='अनुबन्धकरणार्थश्चे'ति भाष्येण । **इदमेव दृढयति—अत्रेति ।** उक्तकाशिकायामित्यर्थः । 'तत्र हेतुत्वेनोक्तम्'इति शेषः । अस्य=ढक्कानादस्य । तच्च=ब्रह्मोपदेशरूपत्वञ्च ।

❀ ज्योत्स्ना ❀

नादयामासेत्यर्थः । 'विमर्शे'इति सप्तम्यन्तम् । विमर्शे=विचारे कृते एतड्ढक्कानादरूपं वस्तु शिवसूत्रजालं=शिवोपदिष्टचतुर्दशसूत्रीरूपेण परिणतं, 'बभूवे'ति शेषः । न तूक्तमेकवचनं, सृशनेः परस्मैपदित्वात्, इटो क्ङित्वेन गुणानापत्तेश्च । 'अन्त्यवर्णाश्चतुर्दश, धात्वर्थं समुपादिष्टा'इति पाठः ।

❀ सदाशिवभट्टीयम् ❀

भावः । **अन्त्यवर्णचतुर्दशेति** । अत्र 'अन्त्या वर्णाश्चतुर्दश यस्मिन् समूहरूपे तत्—णादिलान्तानु-

❀ विषमपदविवृतिः ❀

निःश्वसित'मिति श्रुतेश्च—अनायासेनोच्चारितार्थकत्वात् । विमर्शे=विचारे क्रियमाणे शिवादागतमेवैतत्सूत्रजालं, न तु ढक्कानिनाद एव । अन्त्या वर्णाश्चतुर्दश यत्र समुदाये इति विग्रहः, 'अजि'ति

---

१. **अनादित्वं सूचितमिति । परे** तु—'अनुबन्धकरणार्थश्च वर्णानामुपदेश' इत्यत्र भाष्ये 'आदेच उपदेश' इत्यादाविवोच्चारणार्थ एवोपदेशशब्दः,—एवञ्चानुबन्धातिरिक्तानामपि महेश्वरकृतत्वमेवेत्याहुः ।

चिनम् । अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितं, तच्च श्रुतित्वाभावे सङ्गच्छते, 'श्रोतव्यः श्रुतिवाक्येभ्यः—' इत्युक्तेः ।

ऋक्तन्त्रव्याकरणे शाकटायनोऽपि—'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं—ाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं याद्ब्रह्मराशिरिति' । 'ब्रह्मराशि'रित्यस्य,—ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः । तत्त्वञ्च न्देकेश्वरकृतकाशिकायां स्पष्टम् ।

---

### ॐ अभिनव-चन्द्रिका ॐ

न्देकेश्वरकृतकाशिकायाम् । **उपदेशकर्तृकर्तृकमिति** । महेश्वरकर्तृकमित्यर्थः । **श्रुतित्वाभावे न** च्छत इति । चिन्त्यमेतत्—'गीता'दीनां श्रुतित्वाऽभावेन ब्रह्मोपदेशत्वाऽसङ्गत्यापत्तेः । न च

### ॐ चिदस्थिमाला ॐ

**श्रुतित्वेति ।** वर्णसमाम्नायस्येति भावः । अत एव गीताद्युपदेशादेर्न ब्रह्मोपदेशरूपत्वं, तस्य धनञ्जययुद्ध-त्तिमात्रफलकत्वात् । एतेन 'तत्रापि वेदत्वापत्त्या चिन्त्यमिद'मित्यपास्तम् । उक्तमेव द्रढयितुं मानान्तर-—**ऋक्तन्त्रेति ।** 'आहे'ति शेषः । अक्षरच्छन्दः=नित्यवेदरूपं, समनुक्रान्तं=सम्यगनुक्रमेण दर्शितं, ा मये'ति शेषः । तत्र दृष्टान्तमाह—**यथेति ।** सामान्योक्तं विशिष्याह—**ब्रह्मेति ।** तथाकथनाऽभावे माह—**ब्रह्मेति ।** 'यत' इत्यादिः । ननु नायं ब्रह्मराशिः, तस्यैकत्वात्, नापि श्रुतिराशिः, तत्त्वस्य समूह-त्वादत आह—**ब्रह्मेति ।** तत्त्वञ्च=ब्रह्मप्रतिपादकत्वञ्च, 'अः=परमेश्वरो निर्गुणः, इं=मायामाश्रित्य, =व्यापकः सगुणो, ण्=आर्सा'दित्याद्यर्थकाऽग्रिमतदीयपद्येष्वित्यर्थः । नन्वनुबन्धानां सादित्वेन प्रत्या-ग्रोपदेशकर्तृकर्तृकत्वलाभेऽपि उपदेशेऽन्यकर्तृकत्वमेव कुतः ?, पाणिनिकर्तृकत्वस्यापि सम्भवादत आह—

### ॐ ज्योत्स्ना ॐ

**अक्षरसमाम्नायमित्याचक्षत इति ।** नचेहेतिशब्देन कर्मत्वस्याभिधानात्प्रथमया भाव्यं, एद इत्यबोधि स इत्यत्र यथेति वाच्यं, निपातानां वाचकत्वपक्षे वाचकमसुच्चयस्यादृष्टत्वात्तथाकल्प-पे,—द्योतकत्वपक्षे तत्समुच्चयस्य सद्भावे बाधकाभावेनादोषात् । 'कीर्तयिष्यन्ति मनुजाः शताक्षी-ति मां ततः, 'वदन्त्यपर्णामिति तां पुराविद' इत्यादिप्रयोगदर्शनादित्याहुः ।

### ॐ सदाशिवभट्टीयम् ॐ

रूपम् । समासान्तः । सम्यक् यथोचितं **उप** तत्समीपे कृत्वा **आ** समन्तात् कथिता इत्यर्थ—इत्यन्तं—ा आहुः । **अक्षरसमाम्नायमित्याचक्षते इति । केचित्तु** 'तं खल्विममक्षरसमाम्नायं ब्रह्मराशिरिति ं भुक्त्वा न नक्तं प्रब्रूयादिति—ऋषयो ब्राह्मणेभ्य आचक्षते इति शाकटायनोप्याह'त्यन्वयः,—**'आहे'ति** ते [ चिदस्थिमालाकृतद्भट्टमते ]—इवाध्याह्रियेत । 'कीर्तयिष्यन्ती'त्यादौ—'शताक्षीं नुमः' 'अपर्णां इति वाक्यैकदेशस्य शताक्षीमपर्णामित्यस्यानुकरणान्नानुपपत्तिः । यथाश्रुते 'ऋषय' इत्यस्य व्यवहिते समानवचने च— ] 'प्रोवाचे'त्यत्रान्वयोऽपि दुर्वच इति—व्याचक्षते ।

### ॐ विषमपदविवृतिः ॐ

विभागादच् । **यद्वा**—चतुर्दशानां पूरणाश्चतुर्दशाः, सर्वेषामप्यविशेषेण तथात्वात्, विग्रहस्तु न् । 'अन्त्य'मित्यस्यासमस्तत्वेऽन्त्यभूतश्चतुर्दशवर्णसमुदाय इत्यर्थः । **तत्करणञ्चेति । अन्ये** त्वनु-ः पाणिनिकृता एव, **'समुपादिष्ट'**मित्यस्यैवमनुबन्धा आसक्तव्या इति महेश्वरेणोपदिष्टमित्यर्थ

अत एव 'वृत्तिसमवायार्थो वर्णानामुपदेशः कर्त्तव्यः—' इति भाष्ये उक्तम् । पाणिने-र्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो=वर्णानां क्रमेण सन्निवेशस्तदर्थ—इति तदर्थः ।

स चाऽणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः । एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम् । 'मन्त्रोपदेश' इतिवच्चात्रोपदेशपदप्रयोगः, अत एवा'स्य ज्ञाने सर्ववेदपारायणजं पुण्यं फल'मिति भाष्ये उक्तम् । व्याकरणमुपक्रम्य—'वेदानां वेद' इति च्छन्दोगश्रुतिरप्ये-तत्परैवेति दिक् । तत्प्रयोजनमाह—**सञ्ज्ञार्थानीति** । एतच्चोपपादितम् । सञ्ज्ञाप्रणयन-ञ्च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम् । सञ्ज्ञार्थत्वोपपत्तये आह—**एषामिति** ।

**ॐ अभिनव-चन्द्रिका ॐ**

'श्रोतव्यः श्रुतिवाक्येभ्य'इति स्मृतिविरोध इति वाच्यं, 'श्रुतिवाक्येभ्य'इत्यस्य—श्रुत्यर्थप्रतिपादक-वाक्येभ्य इत्यर्थकरणेनाऽदोषात् ।

**तदर्थ इति** । अन्ये तु—"वृत्तिः='आदिरन्त्येने'ति सूत्रबोधिना शक्तिः, तस्याः-समवायः=

**ॐ चिदस्थिमाला ॐ**

**अत एवेति** । तेषामन्यकर्तृकत्वादेवेत्यर्थः । **वृत्ति**पदार्थमाह—**शास्त्रप्रवृत्तीति** । अवशिष्टं शेषपूरणं, '**पाणिने**'रित्यस्यात्रैवान्वयः, नित्यसाकाङ्क्षत्वात् । **शस्तदर्थ इति** । सम्बोध्यत्वेनार्थः=प्रयोजनं यस्य स इत्यर्थः । ननु वर्णसमाम्नायस्य साक्षान्न शास्त्रप्रवृत्त्यर्थत्वमत आह—**स चेति** । समवायश्चेत्यर्थः, सति हि अक्षरसमाम्नायेऽणादिसञ्ज्ञाभिर्लाघवेन शास्त्रप्रवृत्ति'**रियण**' इत्यादौ यथासङ्ख्यप्रवृत्तिश्चेति भावः । एतदाश-येनैवोक्तं—'**क्रमस्य सञ्ज्ञाद्वारैवे**'ति । अनेनास्य शास्त्रबहिर्भूतत्वं सूचितम् । अत एव 'मङ्गलार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं प्रयुङ्क्ते' इति भाष्यं सङ्गच्छते ।

**अत एवे**त्यस्यार्थं सूचयन्नाह—**एवञ्चेति** । तस्योक्तफलकत्वोक्तौ चेत्यर्थः । **स्पष्टमेवोक्तमिति** । 'पाणिनिशास्त्रप्रवृत्त्यर्थं उपदेश' इत्युक्ते—उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेरिति भावः । नन्वेवमुप-देशव्यवहारेण तस्य चाज्ञातज्ञापनविषयकत्वेन वर्णानामपि सादित्वापत्त्या उक्तार्थासङ्गतिरेवात आह—**मन्त्रोपेति** । अत्र--न तु सर्वत्र, तथा च सिद्धोच्चारणेऽपि तद्व्यवहारान्न तदसङ्गतिः । अत एव—"अथ क उपदेशः ? उच्चारणम्—" इत्यायेव भाष्ये उक्तं, न तु आद्योच्चारणमिति । तस्य च—ढक्कानिनादेनाभिव्यक्तिरि-त्यर्थः । एतेनो'पदेशपदप्रयोगादनुबन्धवद्वर्णानामपि सादित्वमित्यर्धजरतीयं हेय' मित्यपास्तम् । ब्रह्मराशित्वं द्रढयति—**अत एवेति** । ब्रह्मप्रतिपादकत्वादेवेत्यर्थः । **एतदिति** । नान्यपरा, नापि पाणिनीयपरेति भावः ।

**दिगर्थस्तु** प्रागुक्त एव । **तत्प्रयोजनमिति** । साक्षाद्वर्णसमाम्नायप्रयोजनमित्यर्थः । अत एव वक्ष्यति—'सञ्ज्ञाप्रणयनञ्चे'ति । एतेन 'लघ्वर्थत्वादिकं भाष्योक्तमप्यानुषङ्गिकत्वान्नोक्त' मिति **रत्नाकरोक्तमपास्तं**, तस्य साक्षादफलत्वात्, अन्यथा लोकप्रसिद्धमातृकापाठेनैव कलादिदोषरहितवर्णस्वरूपज्ञानसिद्धेः,—कस्य चित्साधु-

**ॐ विषमपदविवृतिः ॐ**

इत्याहुः । **ननू**पदेशपदस्यादेव उपदेश इत्यादौ पाणिनीयापूर्वोच्चारणार्थकत्वमिव महेश्वरीयापूर्वोच्चा-रणार्थकत्वं, तथा च तन्निमित्तत्वं प्राप्तमित्यत आह,—**मन्त्रोपदेशवदिति** । नहि मन्त्र उपदेष्टृनिर्मित इति भावः । **अत एवेति** । महेश्वरकर्तृकत्वाभावादेवेत्यर्थः । इदं चिन्त्यं—, श्रीबादरायणकर्तृकस्यापि भारतादेः सर्ववेदपारायणपुण्यफलकत्वोक्तेः ।

**ननु** हल्प्रत्याहारसिद्धेः प्राक् 'उपदेशेऽ'जित्यस्य वाक्यार्थबोधाभावेऽप्यण्प्रत्याहारकाले 'ल'-णित्यकारस्येत्सञ्ज्ञालोपाभ्यामपहारसम्भवेनाक्षरसमाम्नायिकानामेव ग्राहकशास्त्रेऽण्पदेन ग्रहणेन

**अकारश्चेति**। तेन 'र'प्रत्याहारसिद्धिः। अनन्त्यत्वात्पृथगुक्तिः। इदं तुल्यास्यसूत्रस्थकैयटानुरोधेन। परे त्वस्यानुनासिकत्वे—'अतो ल्रे'ति सूत्रे पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात्। किञ्चास्येत्सञ्ज्ञकत्वे बहुषु यणपदघटितसूत्रेष्वर्द्धमात्रालाघवानुरो-

❀ अभिनव-चन्द्रिका ❀

सम्यक् ज्ञानं, तत्—अर्थः=प्रयोजनं यस्येत्यर्थः—"इत्याहुः। ननु दीक्षितस्य परमगुरुत्वेन तद्ग्रन्थखण्डनमनुचितमित्यत आह—**कैयटानुरोधेनेति**।

**लकारं नोच्चारयेदिति**। यत्तु 'अतो ल्रे'ति सूत्रे लकारोच्चारणेन रप्रत्याहारोऽनित्यः, तेन 'रषाभ्यां' 'रदाभ्यां'मित्यादौ न लग्रहणमिति, तन्न, 'रप्रत्याहारोऽनित्य'इत्यस्य–यदि 'र'निष्ठा रेफलकारोभयनिरूपिता शक्तिरनित्येत्युच्यते, तदा--वैयाकरणानां मते शब्दानां नित्यत्वेन तन्निष्ठस्वरूपसम्बन्धरूपबोधजनकतारूपशक्तेरपि नित्यत्वेन तदनित्यत्वस्य वक्तुमशक्यत्वात्। शक्तिज्ञानाधीनोपस्थित्यादीनां द्विक्षणावस्थायित्वेन तदनित्यत्वकथनस्याप्यनुपयुक्तत्वेन--'रप्रत्याहारोऽनित्य' इत्यस्य–'तन्निष्ठशक्तिज्ञानादिकमनित्य'मित्यर्थस्य वक्तुमशक्यत्वाच्च। न च'रप्रत्याहारोऽनित्य'-इत्यस्य--सर्वत्र रपदं'र-ल' एतदुभयतात्पर्येण नोच्चरितमित्यर्थ इति न दोष इति वाच्यं,'क्वोभयतात्पर्येणोच्चरितं ? क्व च ने'त्यस्य व्याख्यानत एव निर्णेयत्वेन—'उरणरपर' इत्यत्र, 'अतो ल्रे'त्यत्र च—रेफपदं रेफलकारोभयतात्पर्येणोच्चरितमन्यत्र नेति व्याख्यातुं शक्यत्वेन पुनरपि लकारोच्चारणवैयर्थ्यापत्तेः। **यप्रत्याहारेणैव व्यवहरेदिति**। न च 'पर्यायपदानां लाघवगौरवचर्चा नाद्रियते'

❀ चिद्स्थिमाला ❀

त्वाप्रतिपादनाचाद्दृष्टार्थत्वे मानाभावाच्च वैयर्थ्यापत्तिरिति भावः। तथा च मूले (सञ्ज्ञायै इमानि सञ्ज्ञार्थानीत्येवम्-) चतुर्थीसमासो बोध्यः। ननु सञ्ज्ञाया अत्रानुपादानात्कथं तदर्थत्वमत आह—**एतच्चोपेति**। 'एषां क्रमबोधकत्वेपीत्यादिने'ति शेषः। 'आदिरन्त्येने'ति सूत्रेण क्रियमाणाऽगादिसञ्ज्ञानां सन्निवेशविशेषं विना दुष्करत्वादिति भावः। सञ्ज्ञाफलमाह—**सञ्ज्ञेति**। '**वृद्धिरादै**'जित्यादिवृत्त्याद्युक्तक्रमं विहायैतत्कथने सङ्गतिमाह—**सञ्ज्ञार्थेति**। **तेन**=असेत्त्वेन।

'इद'मित्यादिना सूचितामरुचिमाह—'**परे**'स्त्वित्याद्यग्रहुरित्यन्तेन। अस्य=लणित्यकारस्य, एवमग्रेऽपि। **ल्रेतीति**—अनुस्वारं विहाय सूत्रैकदेशानुकरणम्। **प्रत्येति**। रप्रत्याहारेणैवेत्यर्थः, अर्धमात्रालाघवादिति भावः। दोषान्तरमाह—**किञ्चेति**। अनुनासिकत्वफलमाह—**अस्येत्सञ्ज्ञेति**। **यणिति**। तत्पदघटितेत्यर्थः। **बहुष्विति**। यत्र यत्र लाघवसम्भवस्तेषु, न तु सर्वत्रेत्यर्थः। दोषान्तरमाह--**किञ्चेति**। 'अस्येत्सञ्ज्ञकत्वे' इत्यस्यानुषङ्गः। अस्य '**अव्यापकत्वापत्ति**'रित्यत्रान्वयः। '**ग्रहणाभावे**' इत्यस्य

❀ ज्योत्स्ना ❀

नन्वतोल्रेत्यत्र लकारोच्चारणमजनुबन्धप्रत्याहाराऽनित्यत्वार्थमतो 'रात्सस्य' 'योऽची' त्यादौ न प्रत्याहारग्रहणम्। एवञ्चे'को यणची'त्यादौ णकारोच्चारणमपि नानर्थकमित्यस्वरसादाह—**किञ्चानु-**

❀ सदाशिवभट्टीयम् ❀

**परे त्विति**। **केचित्तु**—ननु ज्ञानलाघवाभावान्न तद्वैयर्थ्यमत आह—**किञ्चास्येति**। अत्र हि प्रत्याहारज्ञानस्य तवाऽप्यावश्यकत्वान्न तल्लाघवमिति भावः। **लाघवेति**। 'यण्वन' इत्यत्र 'यवनः' 'इकं' यणि'

१. **कैयटानुरोधेनेति**। 'तुल्यास्य'सूत्रे–ऋलृवर्णयोः सावर्ण्यस्वीकारे–तवल्कार इत्यादौ रपरत्वमेव स्यादिति शङ्कायां 'लपरत्वं वक्ष्यामी'ति भाष्यवार्तिककारैरुक्तम्। 'लपरत्वं वक्ष्यामी'त्यस्य–'रप्रत्याहाररूपेण–व्याख्यास्यामी'ति कैयटोऽर्थमाह। एवञ्च रप्रत्याहारः कैयटाभिमत इति लब्धम्।

ॐ वरवर्णिनी ॐ

**लकारं नोच्चारयेदिति** । [ २४ पृष्ठे ] **परे तु**,—ननु-'अतो ले'रित्यत्र लकारोच्चारणेन रप्रत्याहारोऽनित्यस्तेन 'रदाभ्यां' 'रषाभ्यां' 'वनो र च' 'रात्सस्ये'त्यादौ न रप्रत्याहारग्रहणमिति चेन्न, वैयाकरणानां मते शब्दस्य नित्यतया रपदाऽनित्यत्वस्य वक्तुमशक्यत्वात् । **न च** रपदस्य नित्यत्वेऽपि—रपदनिष्ठा रेफलकारोभयनिरूपिता शक्तिरनित्येति वाच्यम्, शक्तताविच्छेदकीभूतायाः-'र'त्यानुपूर्व्याः सत्त्वे-'शक्तिर्नास्ती'त्यस्य वक्तुमशक्यत्वात् । 'सिद्धे शब्दार्थसम्बन्धे'इति पस्पशाह्निकस्थभाष्येण शक्त्याख्यस्य शब्दार्थयोः सम्बन्धस्य नित्यताया एव स्वीकाराच्च । **न च** शक्तेर्नित्यत्वेऽपि—'अतो ले'रित्यत्र लकारोच्चारणेन—रप्रत्याहारजन्यो रेफलकारोभयविषयको बोध एवाऽनित्य इति वाच्यम्, तादृशबोधसामग्रीसत्त्वे बोधस्य-वचनसहस्रेणापि निरोद्धुमशक्यत्वात् । **न च**—'रपदं सर्वत्र 'र-ल'तात्पर्येण पाणिनिना नोच्चरित'मिति पाणिनितात्पर्यस्यैवानित्यत्वं तेन कल्प्यते इति वाच्यम्, 'अतो ले'रित्यत्र लकारोच्चारणं विनापि—व्याख्यानादिनैव रेफलकारोभयविषयकपाणिनितात्पर्यानित्यत्वस्य निर्णयसम्भवेन—स्वतात्पर्यस्यानित्यत्वबोधनाय—पाणिनेर्लकारोच्चारणरूपोपायान्तरस्यानपेक्षणाल्लकारोच्चारणस्य स्वांशेऽचारितार्थ्यात् । **अन्यथा**—'इणो य'णित्यादावपि-'इण्प्रत्याहारे, यकारोत्तरे णकारे [यण्प्रत्याहारे] च मे तात्पर्यं नास्ति' 'इको यणची'त्यादौ च तत्र मम तात्पर्यमस्ती'ति बोधनायाप्युपायान्तरस्य करणीयत्वं स्यात् । **शब्देन्दुशेखरजटाजूटे**—वाग्देवतावताराः **श्रीबालशास्त्रिचरणास्तु**—'रषाभ्यां' 'रहाभ्या'मित्यादौ रफोत्तराकारस्यानुनासिकत्वाभावादेव न प्रत्याहार—इत्यस्य वक्तुं शक्यतया रप्रत्याहाराऽनित्यत्वे फलाभावात्,—'अतो ले'रित्यत्र लकारोच्चारणवैयर्थ्यरूपो दोषो रप्रत्याहारस्वीकारे वज्रलेपायमान एव नारुचिग्रस्त'इत्याहुः । **एतेन** "—यथा लोके नानार्थहर्यादिस्थले—चैत्रोच्चरितहरिपदधर्मिकात्—चैत्रोच्चरिततद्व्यक्तित्वधर्मितावच्छेदककात्—'चैत्रोच्चरितं हरिपदं विष्णुत्वावच्छिन्नविषयकबोधं जनय'त्वित्याकारकात्तात्पर्यज्ञानाद्विष्णुत्वावच्छिन्नविषयको बोधः । एवं—मैत्रोच्चरितहरिपदधर्मिकान्मैत्रोच्चरिततद्व्यक्तित्वधर्मितावच्छेदककात्,—'मैत्रोच्चरितं हरिपदमिन्द्रत्वावच्छिन्नविषयकबोधं-जनय'त्वित्याकारकात्तात्पर्यज्ञानादिन्द्रविषयको बोधः, न तु हरित्वरूपसामान्यधर्मितावच्छेदकं तात्पर्यज्ञानं तत्र शाब्दबोधप्रयोजकं, तथा सतीन्द्रतात्पर्येणोच्चरिताद्धरिपदादपि मर्कटादिबोधापत्तेः, नैवं शास्त्रे, किन्तु 'वृद्धिरादै'जित्यादिसूत्रं—वृद्धिपदत्वाद्यवच्छेदेनैवादैज्विषयकबोधजनकत्वप्रकारकं तात्पर्यं ग्राहयति । तदेवम्—अष्टाध्यायीसूत्रघटक'र'पदत्वावच्छेदेनादिरन्त्येनेतिशास्त्रेण प्राप्तो यो र-लोभयविषयकबोधजनकत्वप्रकारकस्तात्पर्यग्रहः सोऽतो ले'रित्यत्र लकारोच्चारणा'दुरण्रपर'इत्येतद्घटकरपदधर्मिकतद्व्यक्तित्वावच्छेदेनैवावसीयते—इत्येतावतैव 'रप्रत्याहारोऽनित्य' इत्युच्यते—" इति केन चिदुक्तं परास्तम् । तथा ज्ञापनेऽपि फलाभावात् ।

**यण्पदघटितेति** । [२४ पृष्ठे] 'लण्सूत्रे णकारानुबन्धो न कार्य' इति यावत् । **श्रीबालशास्त्रिचरणास्तु**,-केचित्तु यण्पद-यपदयोः पर्यायतया-पर्यायशब्दानां लाघवगौरवचर्चानादरात्-'**अर्धमात्रालाघवेने**'तिशेखरग्रन्थोऽयुक्त एव । पर्यायत्वञ्च स्वविशिष्टत्वं, वै० 'स्ववाच्यतावच्छेदकरूपावच्छिन्नवाचकत्व' 'स्वनिष्ठशक्ततावच्छेदकरूपभिन्नरूपावच्छिन्नत्वै'तदुभयसम्बन्धेनेति नेदं लाघवं रप्रत्याहाराभावबोधकमिति, तन्न,—'यवरलै'-तच्चतुष्टयनिरूपिता वाचकता—यण्पदे यपदे च प्रसक्ता,—तत्र लाघवाद्यपद एव तन्निरूपितवाचकत्वं स्वीकृत्य यपदेनैव व्यवहरणीयं, न यण्पदेन, यण्पदशक्त्यकल्पनेन लाघवात्, अत एव—'एकाचो बश'-इत्यत्र 'झष् झषन्तस्ये'ति वक्तुं युक्त'मिति शेखरः स्वरसतः सङ्गच्छते । तथा च-'अर्धमात्रालाघवानुरोधेने'-त्यस्य-'लण्सूत्रे णकारो न करणीयः, अकारस्याकारेण प्रत्याहारसिद्धे'रित्यर्थो बोध्यः । यत्तु-लण्सूत्रे णकाराऽभावे—'हयवरलट्'इत्येवं त्रयोदशैव सूत्राणि करणीयानीति शेखराभिप्रायमाहुः, तन्न । अट्प्रत्याहारे लकार-

१. "वैयाकरणनये शक्तिर्बोधजनकत्वस्वरूपा, जनकत्वञ्च स्वरूपयोग्यतारूपमिति तस्याः सर्वदैव सत्त्वम् । 'ईश्वरेच्छा रूपा शक्ति'रिति वादिनां तार्किकाणां मतेपीश्वरेच्छाया नित्यतया शक्तिर्नित्ये"ति शब्देन्दुशेखरलघुजटाजूटे—**वैयाकरणकेसरिणः** ।

धेन 'य'प्रत्याहारेणैव व्यवहरेत् । किञ्चानुबन्धानामच्प्रत्याहारे ग्रहणाभावे—'आचाराद-प्रधानत्वाल्लोपश्च बलवत्तर' इति भाष्योक्तस्य—तृतीयहेतोरव्यापकत्वापत्तिः,

❀ अभिनव-चन्द्रिका ❀

इतीदमसङ्गतमिति वाच्यं, लण्सूत्रे णकारोच्चारणं न कर्त्तव्यमिति ग्रन्थतात्पर्येण—यण्पदयपदयोः पर्यायत्वाभावेन परिभाषाया अप्रवृत्त्या ग्रन्थसङ्गतेः ।

**अव्यापकत्वापत्तिरिति ।** न च हेतोरव्यापकत्वं गुणः, व्यापकत्वे हि हेतुर्व्यभिचारी स्यादिति

❀ चिदस्थिमाला ❀

'**भाष्योक्ते**'त्यत्रान्वयः । **इति**=इत्यत्र । तृतीयहेतोः='लोपस्य बलवत्त्वा'दिति हेतोः । **अव्यापकेति ।**

❀ ज्योत्स्ना ❀

**बन्धानामिति ।** 'प्रत्याहारे ग्रहणाभावे'इति पाठः । क्वचि'दच्प्रत्याहारे'इति पठ्यते, तन्न, हल्प्रत्याहारे

❀ सदाशिवभट्टीयम् ❀

त्यादौ'य इकोचि' 'इणो यण्' इत्यादौ—'य इण:' 'यणादिपर'मित्यादौ च 'यादिपर'मित्यादिन्यासेन लाघवमिति भावः । यत्र तु 'इग्यणः'. 'यणो मय' इत्यादौ 'यस्ये'त्यादिन्यासे न लाघवं, तत्र तत्रास्तु णकारेणैव, अत एव 'बहुष्वि'त्युक्तं, न सर्वेषु इति । एतेन—'प्रत्युत गौरव'मित्यपास्तम् । ननु णोच्चारणम्—'अयोपधात्' 'योऽचि' 'ङेर्य' इत्यादौ दोषाभावाय—यकारेणाकारेण न प्रत्याहार'—इति ज्ञापनार्थं, ययणोः पर्यायत्वाल्लाघवाभावश्चेत्यत आह—**किञ्चानुबन्धेति । हेतोरव्यापकत्वेति ।** 'अनुबन्धाः अच्प्रत्याहार-

❀ वरवर्णिनी ❀

ग्रहणापत्तौ 'सरलाना'मित्यादौ णत्वापत्तेः । यत्तु—'अर्धमात्रालाघवानुरोधेने'त्यस्य—'ल' इति पृथक्सूत्रे णकारो न करणीय इति तात्पर्यमाहुस्तदपि न । अणुदित्सूत्रेऽण्पदस्थाने—'आ' इति करणे, इण्पदघटितेषु 'य' इति करणे च—'आ सर्वनाम्नः' 'योऽची'त्यादाविव—वर्णग्रहणं, प्रत्याहारग्रहणं वेति सन्देहापत्तेः, तदपनयनाय व्याख्यानान्तराश्रयणे च लाघवानवकाशादिति—'' शब्देन्दुशेखरजटाजूटे प्राहुः ।

यत्तु श्रीजयदेव**मिश्राः**—'' इण्पदस्थाने'—'इ-अ' पदम्, अण्पदस्थाने—'अ-अ'पदं प्रयोज्यम्—'' इति शेखराशयमाविश्चक्रुः, तन्नासम्यं रोचते,—'अ अ' इत्यादौ—प्रत्याहारग्रहणापत्तेः, व्याख्यानादिना तत्र निर्णयस्वीकारेऽपि 'इ-अ'इत्यादौ यणापत्तेः, 'अ-अ'इत्यादौ सवर्णदीर्घापत्तेश्च । तत्रापि सौत्रत्वाद्या-श्रयणे तु महदेव गौरवम्, अतः—**श्रीबालशास्त्रि**चरणोक्तमेव शेखरतात्पर्यं युक्तमिति—**गौडाः** ।

**आचारादिति ।** 'तृषिमृषिकृषे'रित्यादौ ककारादौ परतो यणाद्यकरणरूपात् । अस्य च कालिकेन हेतुना । वस्तुतस्तु मृषेरिकारे पाणिन्युच्चरितत्वेन साधुत्वमनुमाय—'साधुत्वविशिष्ट—यण्बोधकशास्त्रविषयत्व -वि-शिष्टेक्त्व—विशिष्टोत्तरत्व'रूपहेतुना कृषेः ककारे **पक्षे**—ऋलक्सूत्रघटककककाराबोध्यत्वमनुमीयते,तादृशानुमित्यु-त्तरं 'तुल्यवित्तिवेद्यत्व'न्यायेन 'ऋलक्'घटके ककारे तादृशलक्ष्यस्थककाराबोधकत्वं निश्चीयते । ततश्च तादृशबोध-कत्वाभावहेतुकाऽनुबन्धपक्षक—स्ववृत्तिश्रावणप्रत्यक्ष-विषयतावच्छेदकधर्मावच्छिन्नबोधकत्वाभावसाध्यकानुमि-तिरुत्पद्यते । प्राधान्यञ्च—बोधकत्वेन शङ्करतात्पर्यविषयत्वरूपम् । तदेवम्—'अनुबन्धाः प्रत्याहारघटकत्वा-भाववन्तः, बोधकत्वेन महेश्वरतात्पर्यविषयत्वाभावात्, यत्तत्त्वेन तात्पर्यविषयत्वाभाववन्न तत्तद्घटकम्' इति व्यतिरेकानुमितिरप्रधानत्वहेतुका बोध्या । अनुमितेः पूर्वं निश्चितसाध्यवतः सपक्षस्यानिर्णयेनान्वयानुमिते-रसम्भवात् । यद्वा—घटपदे तादृशहेतोः सम्भवेन प्रत्याहारघटकत्वाभावात्तत्रान्वयव्याप्तिरपि सम्भवतीत्य-न्वयानुमितिरपि बोध्येति—**जटाजूटे—श्रीबालशास्त्रि**चरणाः । विस्तरस्तु शब्देन्दुशेखरा**भिनवराज-लक्ष्म्या**मनुसन्धेयः । **लोपश्चेति ।** चो हेतौ, बलवत्तरलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादित्यर्थः ।

**अव्यापकत्वापत्तिरिति ।** ननु साध्यापेक्षया हेतोरव्यापकत्वमिष्टमेव, काऽऽपत्तिः ? । अत एव'धूम-

१. ननु णकारोच्चारणमकारेण सह रप्रत्याहार एव भवति न यणादिरितिज्ञापनार्थम्, तेन'ङेर्यः'

ॐ वरवर्णिनी ॐ

वान्वहे'त्यादौ नानुमितिरिति चेदत्र वाग्देवतावतारा: श्री'विश्वनाथा'परनामधेया: श्रीबालशास्त्रिचरणाः— 'पक्षतावच्छेदकावच्छेदेनानुमितित्वावच्छिन्नं प्रति पक्षतावच्छेदकव्यापकत्वं हेतोरपेक्षित'मिति नियमस्तथा-चात्रानुबन्धत्वावच्छेदेन साध्यतया हेतोरव्यापकत्वापत्तिर्दोषः, इयमेवापत्तिस्तार्किकै'र्भागासिद्धि'रित्युच्यते । तथा च प्रयोगः—'अनुबन्धाः बोध्यत्वाभाववन्तः, लोपशास्त्रोद्देश्यतावच्छेदकाक्रान्तत्वात्, यन्नैवं नन्नैवं, यथा—'अइउ'ण्घटकोऽकारः, नेमे तथा, तस्माद्बोध्यत्वाभाववन्तः ।''

अथ चतुर्दशसूत्रीघटकानुबन्धत्वावच्छेदेनानुमितिस्वीकारे—'अइउ'ण्सूत्रघटके णकारे 'हलन्त्य'सूत्र-प्रवृत्तये हल्प्रत्याहारजन्यबोधविषयत्वस्यैव तत्र स्वीकरणीयतया व्यभिचारः, हेतोर्लोपशास्त्रीयोद्देश्यता-वच्छेदकाक्रान्तत्वस्य तत्र णकारे सत्त्वेपि—साध्यस्य तादृशप्रत्याहारजन्यबोधविषयत्वाभावस्यासत्त्वात् । हेतोस्तत्रा-स्वीकारे तु णकारस्याण्प्रत्याहारे ग्रहणापत्तिरेव दोषः । न च 'स्वघटितसमुदायावच्छिन्न—बोध्यता—निरूपित-बोधकतावत्प्रत्याहार-जन्यबोध-विषयत्वाभाव' एव साध्यः । स्वम्=अनुबन्धः, अवच्छेदकता च घटकत्वसम्बन्धा-वच्छिन्ना, अवच्छिन्नत्वञ्च घटकत्वस्वरूपमिति—अइउण्घटकणकारे—[स्वं णकारः, तद्घटितः समुदायः—'अ-इ-उण्' इत्यादिरकारादिश्रान्तः समुदायः, तद्घटका अकारादयः, तन्निष्ठबोध्यतानिरूपिता या बोधकता, तद्वान्प्रत्याहारः—अणादिप्रत्याहारः,] तज्जन्यबोधविषयत्वाभावस्य साध्यस्य सत्त्वान्न व्यभिचारः । हल्प्रत्याहारे च स्वघटितसमुदायावच्छिन्नबोध्यतानिरूपितबोधकतावत्त्वाभावेन हल्प्रत्याहारजन्यबोधविषयत्वस्य तत्र पक्षे सत्त्वेपि न दोष इति वाच्यम् । लणो णकारे स्वघटितहकारादिलान्तसमुदायघटकबोध्यतानिरूपितबोधकता-वद्धल्प्रत्याहारजन्यबोधविषयत्वस्य सत्त्वेन व्यभिचारस्य दुरुद्धरत्वात् ।

न च 'स्वाघटितसमुदायावच्छिन्नबोधकप्रत्याहारजन्यबोधविषयत्वाभाव' एव साध्यः । प्रकृते स्वं-णकारस्तदघटितः समुदायः—'एओङ्ऐऔ'जित्यादिः, तद्घटकबोधकैङादिप्रत्याहारजन्यबोधविषयत्वा-भावो लणो णकारे । हकारादिलान्तसमुदायस्तु स्वेन णकारेण घटित एवेति न दोष इति वाच्यं, यण्प्रत्या-हारस्यापि स्वेन णकारेण घटिततया—लणो णकारे हल्प्रत्याहारजन्यबोधविषयत्ववत्—यण्प्रत्याहारजन्यबोध-विषयत्वस्याप्यापत्तेः । 'अइउ'ण्घटके णकारे स्वाघटितसमुदायावच्छिन्नबोधकझलादिप्रत्याहारजन्यबोधविषय-त्वाभावेपि—अण्प्रत्याहारजन्यबोधविषयत्वस्याप्यापत्तेश्चेति चेत्, उच्यते—स्वविशिष्टसमुदायावच्छिन्नबोध्य-त्वाभावस्य साध्यत्वेनादोषात्। वै० 'स्वघटितत्व' 'स्वविशिष्टाघटितत्वो'भयसम्बन्धेन । वैशिष्ट्ये वैशिष्ट्यञ्च— 'स्ववृत्तिरूपवत्त्व' 'स्वभिन्नत्वै'तदुभयसम्बन्धेन । स्वम्—अइउणिति णकारः, तद्घटितत्वमकारादिचान्त-समुदायेऽस्ति, एवं—स्वविशिष्टो-ञमङणनम्घटको णकारस्तदघटितत्वमपि अकारादिचान्तसमुदायेऽस्तीति निरुक्तोभयसम्बन्धेन—स्वविशिष्टो यः-अकारादिचान्तसमुदायस्तद्घटकबोध्यत्वाभावस्य णकारे सत्त्वान्न व्यभि-चारः । एवं स्वम्—अइउण्घटको णकारस्तद्भिन्नः, स्ववृत्तिरूपवांश्च—ञमङणनम्घटको णकारः, तद्घटितत्व-स्यैव हलादिप्रत्याहारे सत्त्वेन स्वविशिष्टाघटितत्वस्य हादिलान्तसमुदायेऽसत्त्वात्स्वविशिष्टसमुदायावच्छिन्नत्वस्य णकारेऽभावात्तद्बोध्यत्वाभावासिद्ध्या हल्प्रत्याहारजन्यबोधविषयत्वेऽपि न तत्र अइउण्घटकणकारादौ व्यभिचारः।

---

'यस्य हलः' 'योची'त्यादौ न प्रत्याहारग्रहणम् । किञ्च—'यणो मयो द्वे वाच्ये' इत्यादौ णकारेण, 'इको-यणची'त्यादावकारेण च प्रत्याहार आश्रयणीय इति कल्पने गौरवं प्रसज्यते । 'योची'त्यादौ यवर्णमा-त्रस्यैव ग्रहणं न प्रत्याहारस्येत्यादौ व्याख्यानाश्रयणे महदेव गौरवमतो रप्रत्याहाराश्रयणे न किञ्चिद्बाधकमिति कैयटानुसारिणस्तदेतदरुचेराह—**किञ्चानुबन्धानामिति** ।

१. अनुबन्धत्वसमानाधिकरणतत्तदनुबन्धव्यक्तित्वावच्छेदेनानुमितौ गौरवाच्चतुर्दशसूत्रीघटकानुबन्ध-त्वावच्छेदेनानुमितेराश्रयणीयतया लण्सूत्राकारस्यानुनासिकत्वे इत्सञ्ज्ञायोग्यत्वरूपानुबन्धत्वरूपपक्षतावच्छे-दकाक्रान्तत्वेपि हेतोस्तत्राभावेन पक्षतावच्छेदकावच्छिन्ने हेतोरभावात्—भागासिद्धिः स्पष्टैवेति भावः ।

❀ वरवर्णिनी ❀

एवमश्प्रत्याहारे णकारग्रहणसिद्धिः। 'स्वविशिष्टाघटितत्व'मित्यत्र स्वविशिष्टो वर्णश्च बोधकत्वेन निश्चितो ग्राह्यः, तेनेण्प्रत्याहारे न णकारग्रहणापत्तिः। अन्यथा–स्वम्–अइउण्घटको णकारस्तद्भिन्नत्वं तद्वृत्तिरूपवत्त्वञ्च लण्घटकणकारे—इत्युभयसम्बन्धेन स्वविशिष्टो—लण्घटको णकारस्तदघटितत्वस्येकारादिणान्तसमुदायेऽभावेन स्वविशिष्टसमुदायावच्छिन्नत्वस्य णकारेऽभावादिण्बोध्यत्वाभावस्य साध्यत्वाभावेनेण्प्रत्याहारे णग्रहणं दुर्वारमेव। तथाविवक्षणे च—लणइउण्घटकणकारयोर्बोधकत्वेन निश्चयस्याभावादन्यतरणकारस्यान्यतरणकारे वैशिष्ट्याभावान्न दोषः।

केचित्तु—'स्वविशिष्टवर्णाघटितसमुदायावच्छिन्नबोधकप्रत्याहारजन्यबोधविषयत्वाभाववत्त्व'मेव साध्यं, वैशिष्ट्यञ्च–'स्वेतरत्व', 'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वो'भयसम्बन्धेन। अइउण्घटकणकारेऽइउण्घटकणकारनिष्पन्नाण्प्रत्याहारजन्यबोधविषयत्वापत्तिनिरासायाद्यः सम्बन्धः। अइउण्घटकणकारे हल्प्रत्याहारजन्यबोधविषयत्वस्य सत्त्वाद्व्यभिचारवारणाय द्वितीयः सम्बन्धः। लणो णकारे इण्प्रत्याहारजन्यबोधविषयत्वस्य निरासाय—द्वितीयसम्बन्धे अनुबन्धत्वानाश्रयत्वस्यापि निवेशान्न दोषलेशोपि। तदेवं—'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मसमानाधिकरणानुबन्धत्वानाश्रयत्व'सम्बन्धेन स्वविशिष्टो यो वर्णस्तदघटितसमुदाये'त्याद्युक्त्यैव सामञ्जस्यात्स्वभिन्नत्वं न देयमेवेत्याहुः। तदप्यसदुक्तानुवादमात्रमिति **गौडाः**।

ननु लणो णकारेऽलशादिप्रत्याहारजन्यबोधविषयत्वस्याप्यापत्तिरस्त्येव, स्वविशिष्ट-ञमङणनमित्येतद्घटकणकारघटितत्वेन स्वविशिष्टाघटितत्वाभावेन-अकारादिशकारान्तादिसमुदायस्य स्वविशिष्टत्वाभावादिति चेन्न। लक्ष्यदोषाभावेन तदापत्तेरकिञ्चित्करत्वात्।

**ननु** रप्रत्याहारवादिनां प्राचामपि न तृतीयहेतोरव्यापकत्वं,--हल्प्रत्याहारसिद्ध्यनन्तरमैऔजिनिच्चकारस्येत्सञ्ज्ञायामच्प्रत्याहारसिद्ध्योपदेशेऽजनुनासिक इत्यनेनेत्सञ्ज्ञायां लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वस्यापि लणोऽकारे सत्त्वादिति चेन्न, 'पर्वतो वह्निमान्धूमा'दित्यादौ--पर्वते वस्तुतो धूमसत्त्वेऽपि तत्र धूमे धूलीपटलत्वभ्रमेऽनुमितेरनुदयाद्धूलीपटलेऽपि धूमत्वभ्रमे वह्न्यनुमितेरुदयाच्च-वस्तुतो हेतुसत्ताया अनुमितावप्रयोजकत्वेन हेतुज्ञानस्यैव कारणताया वक्तव्यतया—'लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वस्यैव हेतुतायाः प्रकृते स्वीकारादित्सञ्ज्ञायोग्यत्वरूपानुबन्धत्ववति लणोऽकारे हल्प्रत्याहारसिद्धेः प्राक् साध्यस्य–तादृशप्रत्याहारजन्यबोधविषयत्वाभावस्य सत्त्वेपि तादृशज्ञानविषयत्वरूपहेतोरभावेनाव्यापकत्वापत्तेः सुस्थत्वात्। **ननु** लणोऽकारेऽजादिप्रत्याहारसिद्ध्युत्तरकालभाविनः-लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानस्य—विषयतायाः स्वरूपसम्बन्धविशेषात्मिकायास्तत्र लणोऽकारेऽजादिसिद्धिपूर्वकालेऽपि सत्त्वाद्धेतोर्नाव्यापकत्वमिति चेन्न, 'यदनुबन्धे—यत्प्रत्याहारजन्यबोधविषयत्वाऽभावो विवक्षितस्तत्प्रत्याहारसिद्धिसमानकालिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वस्यैव हेतुतया तत्राऽकारे तादृशहल्प्रत्याहारसिद्धिसमानकाले, तादृशज्ञानविषयत्वरूपस्य हेतोरभावेनाऽव्यापकत्वापत्तेः सुस्थत्वात्। **नचेश्वरज्ञानस्य** सर्वविषयकतया देवदत्तसमवेतहल्प्रत्याहारसिद्धिसमानकालिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकेश्वरीयज्ञानविषयत्वस्य लणोऽकारे सम्भवादव्यापकत्वापत्तिर्नास्तीति वाच्यम्। 'तत्तत्प्रत्याहारज्ञानविशिष्ट–लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकजन्यज्ञानविषयत्व'स्यैव हेतुत्वेनादोषात्। वै० 'स्वसमानकालिकत्व' 'स्वसमवायितत्तत्पुरुषसमवेतत्वो'भयसम्बन्धेन। **ननु** रप्रत्याहारमनभ्युपगच्छतो नागेशभट्टस्यापि 'झभञ्'-घटकञकारे तृतीयहेतोरव्यापकत्वापत्तिः, हल्प्रत्याहारसिद्धिकाल एव झल्प्रत्याहारस्यापि सिद्धौ बाधकाभावेन 'झभ'ञ्घटकञकारे तदानीमित्त्वज्ञानाभावाल्लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वात्मकहेतोरभावादिति चेन्न, 'यदनुबन्धा यादृशप्रत्याहाराबोध्यत्वेन विवक्षितास्तादृशप्रत्याहारज्ञानविशिष्ट—लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्व'स्य हेतुत्वं, वै० 'स्वप्रयोजकज्ञानप्रयोज्यत्व'स्वप्रयोज्यज्ञानाप्रयोज्यत्वै'तदुभयसम्बन्धेन। तथा च—

तत्र लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेःप्रागच्पदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाभावेन, लणित्यकारस्येत्सञ्ज्ञालोपयोरभावेन—प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता

❀ अभिनव-चन्द्रिका ❀

वाच्यं, 'हेतोरव्यापकत्वापत्ति'रित्यस्य–पक्षतावच्छेदकाव्यापकत्वापत्तिरित्यर्थः। तथा च हेतोः पक्षतावच्छेदकाऽव्यापकत्वे भागाऽसिद्ध्या भाष्यासङ्गतिरित्याशयात्। अत्रानुमानश्चेत्थम्—"अनुबन्धाः

❀ चिदस्थिमाला ❀

पक्षतावच्छेदकावच्छिन्नवृत्तित्वरूपव्यापकत्वाऽभावापत्तिरित्यर्थः। तदुपपादयति—**तत्रेत्यादिना**। **तत्रेति**। 'मते' इति शेषः। नन्वेवं ह्रस्वानुनासिकाऽकारस्य तत्र प्रवेशेऽपि न दोषो, लक्ष्याभावादत आह—**प्रत्याहारेष्विति**। तत्सूत्रेऽण्ग्रहणखण्डनायेति भावः। एतेन'तत्रानुनासिकपाठेऽपि, लक्ष्येऽनुनासिकसत्त्वेपि ततो

❀ ज्योत्स्ना ❀

ग्रहणाभावस्येह विवक्षितत्वात्। ननु हल्प्रत्याहारे सत्यप्यनुनासिकाकारस्य ग्रहणे 'मामाँस्त्रायस्वे'त्यत्र न दोषः, 'अणुदि'दिति ग्राहकशास्त्रघटकाणपदशक्तिग्रहकाले इत्सञ्ज्ञालोपाभ्यां तदसन्निधानात्सवर्णग्रहणाभावादत आह—**प्रत्याहारेषु जातीति**। अनिनेः क्विप्य'नुनासिकस्य क्वी'ति दीर्घे सम्बुद्धौ

❀ सदाशिवभट्टीयम् ❀

ग्रहणगृह्यमाणताशून्याः, प्रत्याहारसिद्धेः प्राग्लुप्यमानत्वा'दित्यनुमितौ हेतोःपक्षतावच्छेदकावच्छिन्नवृत्तित्वरूपव्यापकत्वाभावापत्तिरित्यर्थः। तदुपपादयति–**तत्रेत्यादि-लोपयोरभावेत्यन्तेन**। मम त्वकारेऽनुबन्धत्वस्यैवाभावेन न तत्त्वापत्तिः। ननु–'अक्षु प्रत्याहारार्था अनुबन्धा' इति भाष्यादच्बोधकसूत्रस्थानुबन्धत्वं

❀ वरवर्णिनी ❀

अकाररूपोऽनुबन्धो झल्प्रत्याहारबोध्यत्वेन विवक्षित इति—[ झल्प्रत्याहारज्ञानप्रयोजकलकारधर्मिकेत्त्वप्रकारकज्ञाना-ऽऽदिरन्त्येतिवाक्यार्थज्ञानादि—प्रयोज्यत्वस्य, झलादिप्रत्याहारज्ञानप्रयोज्य—लक्ष्यधर्मिकसाधुत्वप्रकारकादिज्ञान—प्रयोज्यत्वाभावस्य च सत्त्वात्—] तादृशझल्प्रत्याहारज्ञानविशिष्ट'झय'त्रितिअकारधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तप्रकारकज्ञान-विषयत्वस्य हेतोस्तत्र सत्त्वेन नागेशमतेऽव्यापकत्वापत्तेरभावात्। रप्रत्याहारवादिनां प्राचान्तु—लण्घटकाकारधर्मिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वज्ञाने—हल्प्रत्याहारज्ञानप्रयोजकलकारधर्मिकेत्त्वप्रकारकज्ञान-प्रयोज्यत्वस्य परम्परया सत्त्वेऽपि–हल्प्रत्याहारज्ञानप्रयोज्यैऔजितिसूत्रघटकचकारधर्मिकेत्त्वज्ञानाच्प्रत्याहारज्ञानादि—प्रयोज्यत्वस्यैव सत्त्वेन स्वप्रयोज्यज्ञानाप्रयोज्यत्वाभावेन द्वितीयसम्बन्धाभावादुक्तोभयसम्बन्धेन वैशिष्ट्यविरहेणाव्यापकत्वापत्तिः सुयोजैवेतिदिक्। विस्तरस्तु शब्देन्दुशेखरटीकायाम**भिनवराजलक्ष्म्यामनु**सन्धेयः।

**ननु** त्वदुक्तरीत्या हल्प्रत्याहारसिद्धेः प्राग्लणोऽकारस्येत्सञ्ज्ञालोपयोरभावेऽप्यण्प्रत्याहारसिद्धिसमये इत्सञ्ज्ञालोपयोरकारापहारसम्भवान्न हल्प्रत्याहारेऽकारग्रहणापत्तिः, किञ्च—ग्रहणकशास्त्रे आक्षरसमाम्नायिकानामेव ग्रहणेनानुनासिकाकारस्याण्त्वविरहाद्दीर्घसानुनासिकाकारस्य ग्रहणं न सम्भवतीति—न 'मामांस्त्रायस्वे'त्यत्र दोषदानमुचितम्, **किञ्च**-त्वदुक्तरीत्या लणोऽकारस्य सानुनासिकस्य कथञ्चिदण्त्वस्य वक्तुं शक्यत्वेऽपि लक्ष्यस्थाकारस्य व्यक्तिपक्षे ततो भिन्नतया–हल्त्वाभावा'न्मामांस्त्रायस्वे'त्यत्र न दोषः सम्भवतीत्यत आह—**जातिग्रहणेति**। अन्यथा'ऽवात्ता'मित्यत्र 'झलो झली'तिसकारलोपो न स्यात्, व्यक्तेर्भेदादिति भावः।

सिद्धान्तितत्वेन—हल्प्रत्याहारे लणित्यकारप्रवेशो—मामँस्त्रायस्वे'त्यत्रानुनासिकपक्षे-ऽनुस्वारापत्तिर्दुर्वारा ।

ॐ अभिनव-चन्द्रिका ॐ

प्रत्याहारजन्यबोधविषयत्वाऽभाववन्तः, 'तस्य लोप'इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात्" ।

न चा'इउ'णित्यादिघटकणकारादिषु अल्प्रत्याहारजन्यबोधविषयत्वस्य, हल्प्रत्याहारजन्यबोधविषयत्वस्य च सत्त्वेन प्रकृतसाध्यस्याऽभावेन प्रकृतहेतोश्च सत्त्वेन प्रकृतहेतुर्व्यभिचारीति—न तस्य साध्यसाधकत्वमिति वाच्यं, 'स्वेतरो यः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तदबोधकप्रत्याहारजन्यबोधविषयत्वाभाव'स्य साध्यत्वेनाऽदोषात् । अल्हल्प्रत्याहारौ च—अनुबन्धणकारादौ—तर—स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्न—'अमङणन'मित्यादिघटकणकारादिबोधकाविति तयोः प्रकृतसाध्यदले प्रवेशानर्हत्वात् ।

अथ वा—"अनुबन्धाः प्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयत्वाभाववन्तः, 'तस्य लोप' इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात्", तथा च हलादिप्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयताया अनुबन्धणकारादावभावेऽपि अननुबन्धणकारादौ सत्त्वेन सर्वणकारादीनां हल्त्वादिसिद्धिः ।

ॐ चिद्स्थिमाला ॐ

व्यक्तिभेदेन भिन्नत्वान्न दोष' इत्यपास्तम् । **अकारेति** । अकारजातीत्यर्थः । हे आन् ! मां त्रायस्वेति लक्ष्यार्थः । अनितेः क्विबन्तस्य **आनिति** रूपम् । ननु किमनुनासिकत्वसमानाधिकरणजातिनिर्देशः ? उत-ह्रस्वत्वसमानाधिकरणजातिनिर्देशः ? । तत्राद्ये आह—**अनुनासिकेति** । तस्य हल्त्वेन ततः पूर्वमकारस्य

ॐ ज्योत्स्ना ॐ

नलोपाभावे 'आ'नितिरूपम् । 'मामँस्त्रायस्वे'ति ह्रस्वपाठे त्वन्ततेरञ्जेर्वा संयोगान्तलोपः । तदा जातिग्रहणपक्षोपादाने प्रयोजनं 'सोऽस्ती'त्यत्र बोद्धव्यम् । ननु'मामँस्त्रायस्वे'त्यत्र मोऽनुस्वाराप्रसङ्गः,—

ॐ सदाशिवभट्टीयम् ॐ

पक्षतावच्छेदकं न तु केवलानुबन्धत्वम् , अकारे च तदभावान्नाऽव्यापकत्वं हेतोः । किञ्च प्रत्याहारसिद्धेः प्रागित्यस्य कतरोऽर्थः ? यावत्प्रत्याहारसिद्धेः प्राग्लुप्यमानत्वमर्थः, ? उत यत्प्रत्याहारे यदनुबन्धग्रह आपाद्यते तत्प्रत्याहारसिद्धेः प्रागित्यर्थः ?, नाद्यः—हल्प्रत्याहारसिद्धेः प्राक्चादेरपि लुप्यमानत्वाभावात् । द्वितीये तु भाष्येऽजित्युक्त्या विशिष्यैव पक्षतावच्छेदकत्वस्य वाच्यतया लणित्यत्रत्याकारे तदभावान्न[1] तदापत्तिरतो[2] लक्ष्यासिद्धिमाह—**प्रत्याहारे**त्यादिना—**आपत्तिश्चे**त्यन्तेन । चकारोऽव्यापकत्वापत्तेः समुच्चायकः । **तवादि**-तृतीयान्तान्तस्य ग्रन्थस्य च मध्यमणिन्यायेन पूर्वोक्तापत्तावुत्तरयोश्च तयोरन्वयः । वस्तुतो हेतुद्वयाद-व्यापकत्वापत्तिरित्यर्थः, शेषं पूर्ववत् ।

नन्वनुनासिकत्वसमानाधिकरणजातेर्निर्देशः ? उत ह्रस्वत्वसमानाधिकरणजातेः ?, तत्राद्ये आह—

ॐ विषमपदविवृतिः ॐ

सानुनासिकाकारस्यानण्त्वात्तेन दीर्घसानुनासिकग्रहणं न सम्भवतीत्याशङ्क्याह,—**जातिग्रहणस्येति** ।

**मामिति** । 'आ'निति—'अ'शब्दस्य द्वितीयाबहुवचनं, तस्य 'नश्छव्यप्रशा'निति रुत्वे 'आँ' इति रूपम् । **यद्यपि**—जातिपक्षे निरनुनासिकाकारस्यापि हल्त्वं सुवचं, तथापि सानुनासिकोच्चारण-बलात्सानुनासिकस्यैवाच्त्वजात्यवच्छिन्नस्य हल्त्वमित्यभिप्रेत्य सानुनासिकाकारे रुत्वमापादितं, वस्तुत

१. तदभावात्=पक्षतावच्छेदकाभावात् । २. तदापत्तिः=हेतोरव्यापकत्वापत्तिः ।

'सोऽस्ती'त्यादौ सुलोपाद्यापत्तिश्च ।

अत एव 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ने'त्यनेन 'प्रत्याहारे=वर्णसमाम्नाये

ॐ अभिनव-चन्द्रिका ॐ

न च लण्सूत्रस्थाकारेऽच्प्रत्याहारसिद्धेः प्रागनुबन्धत्वस्याभावेन न हेतोः पक्षतावच्छेदकाव्यापकत्वापत्तिरिति वाच्यं, प्रकृतेऽनुबन्धत्वयोग्यत्वस्य पक्षतावच्छेदकत्वेन हेतोरव्यापकत्वापत्तेः सत्त्वादिति दिक् । **सुलोपाद्यापत्तिश्चेति** । न च 'तत्तदो'रिति सूत्रारम्भसामर्थ्येनाऽकारस्य हल्त्वं नेति कल्प्यते, अन्यथा 'स शम्भु'रित्यादौ हल्ङ्यादिलोपे 'एतत्तदो'रिति सूत्रवैयर्थ्यस्य स्पष्टत्वादिति वाच्यं, तद्वैय-

ॐ चिदस्थिमाला ॐ

'मोनुस्वार' इत्यनेनेति भावः । अन्ये आह—**सोऽस्तीति** । 'एतत्तदो'रित्यनेनेति भावः । इदञ्च **कौस्तुभा**द्यनुरोधेन, वस्तुतो गुणाभेदकत्वस्य व्यापकजातिनिर्देशस्य च भगवदभिमतत्वेन सर्वत्र दोष इति बोध्यम् ।

यद्यपि 'सोऽस्यादि'रिति ज्ञापकरूप आचारोऽत्र सम्भवति, तथापि तदपेक्षयेष्टं व्यापकत्वं तृतीयस्य भञ्ज्येनेति नायमित्सञ्ज्ञक इति सिद्धम् । अनित्सञ्ज्ञकत्वमेव द्रढयति—**अत एवेति** । तस्यानित्सञ्ज्ञकत्वादेवेत्यर्थः ।

ॐ ज्योत्स्ना ॐ

अवसानेऽनुस्वारलिपेः सर्वत्र दर्शनेन मोऽनुस्वारेऽनुवर्त्तमान'हली'त्यस्याजभावोपलक्षणत्वात्, अत एव व्याकरणान्तरेऽचि परतो मकारश्रवणार्थं 'स्वरेम'इति सूत्रमारब्धम् । यद्वाऽम्प्रत्याहारसापेक्षरुप्रवृत्त्युत्तरप्रसङ्गिनोऽनुस्वारस्य निमित्तभूते हलि अस्मदशक्तिग्रहवेलायां निवृत्तस्यानुनासिकाकारस्य प्रवेशासम्भव इत्यरुचेराह—**सोऽस्तीत्यादाविति** । ननु यथा 'स्थूलं गामानये'त्युक्ते—न कृशस्यानयनं भवति, विशिष्टव्यक्तिस्थाया एव जातेराश्रयणात्, एवमनुनासिकाकारेण निरनुनासिकस्य ग्रहणन्न भविष्यतीत्यत आह—**अत एवेति** । वार्तिके'ऽनुबन्धानामज्ग्रहणे'ष्वित्यस्य—अच्प्रत्याहारग्राहकसूत्रेषु

ॐ सदाशिवभट्टीयम् ॐ

**अनुनासिकेति** । अन्य आह—**सोस्तीति** । वस्तुतो गुणाभेदकत्वस्य, व्यापकजातिनिर्देशस्य च भगवदभिमतत्वेन सर्वत्र दोष इति बोध्यम् । एवञ्च 'सोऽस्यादि'रितिनिर्देशरूपाचारोऽत्र सम्भवति, तथापि तदपेक्षयेष्टं व्यापकत्वं तृतीयस्य भञ्ज्येनेति नायमित्सञ्ज्ञकं इति सिद्धम् । अनित्सञ्ज्ञकत्वमेव द्रढयति—**अत एवेति** । वार्तिकार्थस्तु—गृह्यन्ते एभिस्तानि—**ग्रहणानि**, अचां ग्रहणानि=ग्राहकाणीति यावत्, तेषु='**अइउ**'-

ॐ विषमपदविवृतिः ॐ

आनुनासिक्यगुणस्येत्सञ्ज्ञार्थतया कृतार्थत्वान्निरनुनासिकस्यापि हल्त्वेन ग्रहणमित्याह—**सोस्तीति** ।

**केचित्तु**—'हलन्त्य'मित्यत्र हल्पदेन सानुनासिकाकारग्रहणसम्भवेपि 'मोनुस्वार'इत्यत्र हल्पदेन न तस्य ग्रहणं, ततः **पूर्वमुपदेशे**जित्यस्य वाक्यार्थसम्भवे इत्सञ्ज्ञालोपाभ्यां तदपहारात्, 'नाज्झलावणुदि'दित्यनयोः सूत्रयोरजण्पदाभ्यामाक्षरसमाम्नायिकानामेव ग्रहणेऽप्यन्यत्र दीर्घादीनामपि ग्रहणवत् । एतेन वल्प्रत्याहारेऽप्यकारस्य ग्रहणापत्तौ 'अयत'इत्यादौ 'लोपो व्यो'रिति लोपापत्तिः परास्तेत्या**हुः** ।

**अत एवेति** । लण्सूत्रस्थाकारस्येत्सञ्ज्ञालोपयोरनङ्गीकारेण '**लोपश्च बलवत्तर**'इति तृतीयहेत्व-

ॐ वरवर्णिनी ॐ

**सुलोपाद्यापत्तिश्चेति । नचाकारस्य** हल्त्वाद्धल्ङ्यादिलोपेनैव सिद्धे'एतत्तदो'रिति व्यर्थमिति वाच्यम्, तत्र ङ्याब्ग्रहणसामर्थ्येनाच्त्वहल्त्वोभयानाक्रान्तस्य हलो ग्रहणेनादोषादित्य**स्मद्गुरुचरणाः** ।

**ननु** 'प्रत्याहारेऽनुबन्धाना'मित्यत्र प्रत्याहारपदेनाच्प्रत्याहारस्यैव ग्रहणं न तु प्रत्याहारमात्रस्येति न हेतोरव्यापकत्वं रप्रत्याहारवादिमते इत्यरुचेराह—**अत एवेति** । लणोऽकारस्य निरनुनासिकत्वादेव, रप्रत्याहारस्याभावादेव चेत्यर्थः । तत्र=हेतुकोटौ ।

य एतेऽक्षु=अज्बोधकसूत्रेषु—प्रत्याहारार्था अनुबन्धाः क्रियन्ते—तेषामज्ग्रहणेन ग्रहणं कस्मान्ने'त्यर्थकेनाच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे। भाष्ये च 'अइउ'णित्यादि-सूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता।

ॐ अभिनव-चन्द्रिका ॐ

र्थ्येन लाघवाल्लण्सूत्रस्थाऽकाराऽनुनासिक्याऽप्रामाण्यकल्पनस्यैव ज्यायस्त्वात्। न चैवमपि रेफादिषु जातझल्त्वादेरिव लण्सूत्रस्थाऽकारे जातहल्त्वस्यापि निवृत्तिर्भविष्यतीति न दोषः, अन्यथा झल्प्रत्या-हारसिद्धिवेलायां द्वितीयं'हलन्त्य'मित्यस्य वाक्यार्थबोधाभावेन 'शषस'रित्यत्र रेफादिषु इत्सञ्ज्ञालोप-योरभावेन रेफस्य झल्ग्रहणेन ग्रहणे-'गीर्भ्या'मित्यादौ जश्त्वाद्यापत्तिरिति वाच्यम्, इत्सञ्ज्ञालोपाभ्यां झल्त्वादेर्निवृत्तावपि-उपजीव्यविरोधेन हल्त्वस्यानिवृत्तेः, हल्त्वमुपजीव्य प्रवर्त्तमानाया 'उपदेशेऽजनु-नासिक इ'दितीत्सञ्ज्ञायाः, 'तस्य लोप'इति लोपस्य च,—लण्सूत्रस्थाकारवृत्तिहल्त्वनिवृत्तिं प्रत्यनि-मित्तत्वात्। वस्तुतस्तु—लण्सूत्रस्थाऽकारस्यानुनासिक्येऽपि भाष्योक्ततृतीयहेतोर्नाव्यापकत्वापत्तिः, पक्षतावच्छेदकाऽनुबन्धत्वमनुबन्धयोग्यत्वमित्युक्त्वाऽव्यापकत्वापत्तिदानस्यानुचितत्वात्। 'तस्य लोप'-इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तियोग्यत्वस्य हेतुत्वेनाऽव्यापकत्वापत्तेरभावाच्च।

**न हल्प्रत्याहार इति।** वस्तुतो नेदं साधकं लण्सूत्रस्थाकारस्यानुनासिक्याभावे,—इगादिप्रत्या-

ॐ चिदस्थिमाला ॐ

भाष्योक्तं वार्त्तिकार्थमाह—**य एत इत्यादि।** 'य एते' इत्यतः प्राक् 'प्रत्याहारे वर्णसमाम्नाये' इत्यपपाठः, पौनरुक्त्यापत्तेर्भाष्यविरोधाच्च। **उद्योतग्रन्थस्तु** प्राचीनानुसारिकौस्तुभानुरोधेनेति बोध्यम्। 'अज्ग्रहणे'ष्वि-त्यत्र कर्मणि ल्युट्, अच्सञ्ज्ञाग्राह्येषु—अकारादिष्विति तदर्थः, तदाह—**अक्ष्विति।** तत्फलितमाह—**अजिति।** 'प्रत्याहारे' इति—'निमित्तात्कर्मयोग' इति तत्र[1] सप्तमी, फलं हि तत्र निमित्तं, प्रत्याहारस्य फलत्वञ्च—तत्करणस्य[2] तत्सिद्धिविषयकेच्छाधीनत्वात्[3]। अत एव'क्रियमाणाना'मिति शेषः, तत्र प्रत्याहारस्य सञ्ज्ञारूपस्य समूहस्य अवयवेन अनुबन्धेन करणकर्मणा सह समवायरूपयोगसत्त्वात्, तदाह—**प्रत्याहारार्था इति।** उक्तहेतो-रेवाह—**क्रियन्त इति।** प्रत्यासत्तिन्यायलभ्यं शेषं पूरयति—**अजिति।** अच्सञ्ज्ञयेत्यर्थः। नन्विदमुप-लक्षणं वाच्यम्, अन्यत्रापि क्वचित्फलसम्भवादत आह—**न हलिति।** एतत्प्रतिपादन एव तात्पर्यं न तत्प्रतिपादने, अन्यथैतदाधिक्यं स्पष्टमेव, त्वन्मते तु सकलप्रत्याहारमूलभूतत्वाद्धलंशे एव, तदादौ वा शङ्का-समाधानौचित्येन मूलत्यागानौचित्यमिति तदसङ्गतिः स्पष्टैव। तत्र मानान्तरमाह—**भाष्ये चेति।** **वास्य**=वार्त्तिकस्य, अन्यथा तदुपादानं व्यर्थमेव स्यादिति भावः। आद्ययोरव्यापकत्वं ध्वनयितुं स्पष्टत्वात्प्रथम-

ॐ ज्योत्स्ना ॐ

पठितानामनुबन्धानां प्रत्यासत्त्याऽक्षु ग्रहणं कस्मान्नेत्यर्थः। तत्फलितं भाष्याक्षरानुसारेण व्याचष्टे—

ॐ सदाशिवभट्टीयम् ॐ

णादिसूत्रेषु। अधिकरणे सप्तमी। प्रत्याहारेऽनुबन्धानां=अजादिसञ्ज्ञार्थमनुबध्यमानानां—णादीनामित्यर्थः। 'निमित्तात्कर्मयोग' इति सप्तमी, फलं हि तत्र निमित्तं, प्रत्याहारस्य फलत्वञ्च—तत्करणस्य तत्सिद्धिविषये-च्छाधीनत्वात्। कर्मयोगस्तु प्रत्याहारस्याजादिसञ्ज्ञारूपस्य समूहस्य अवयवेनानुबन्धेन—कर्मणा णादिना समवायरूपयोगसत्त्वाद्बोध्य इति। 'य एत' इत्यतः प्राक् 'प्रत्याहारे वर्णसमाम्नाये' इत्यपपाठः, पौनरुक्त्या-पत्तेर्भाष्येऽभावाच्च। **न हल्प्रत्याहारे इति।** त्वन्मते तु सकलप्रत्याहारमूलभूतत्वाद्धलंशे एव तदाशङ्का-समाधानौचित्येन तदसङ्गतिः स्पष्टैव। नन्विदं भाष्यं हशादिषु टादिग्रहणानापादनादुपलक्षणतया त्वयापि

१. तत्र=भाष्यवार्त्तिके। २. तत्करणस्य=अनुबन्धकरणस्य। ३. तत्सिद्धिः=प्रत्याहारसिद्धिः।

तत्र प्राधान्यं—प्रत्याहारेषु ग्रहणार्थत्वरूपम्, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणामेव तथोपदेश इति प्राधान्यात्तेषामेव सञ्ज्ञित्वमिति भाष्ये स्पष्टम्।

न च हशादिप्रत्याहारे 'ट'ग्रहणस्यापत्तिरिति वाच्यं, हकारादिषु पुनः-पुनरकारो-

❀ अभिनव-चन्द्रिका ❀

हार शङ्काया अकरणवत्—हल्प्रत्याहारे शङ्काया अकरणेऽपि क्षतिविरहात्। वक्ष्यमाणहेतूनां सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वेन—'भाष्ये अजिति प्रत्याहारमात्रोपलक्षण'मित्यस्यावश्यं वक्तव्यत्वाच्च। 'न चोदाहरणमादरणीय'मित्यभियुक्तोक्तेश्च। न चा'ऽप्राधान्या'दितिहेतो'र्हयवर'डित्यादिस्थाऽनुबन्धेष्वभावेन सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वं निरुक्तहेतूनां नास्तीति वाच्यम्, अनुबन्धानां महेश्वरकृतत्वेन, तदितरस्य च श्रुतित्वेन वेदघटकत्वेन प्राधान्यमिति'हयवर'-डित्यादिसूत्रस्थाऽनुबन्धेष्वपि 'अप्राधान्या'दिति हेतोः सत्त्वात्। वस्तुतस्तु—लण्सूत्रस्थाऽकारस्यानुनासिक्यप्रामाण्ये—तस्य श्रुतिघटकत्वादस्य हेतोः पक्षतावच्छेदकाव्यापकत्वं बोध्यम्। न चैवमपि'स्वौजसमौ'डित्यादिसूत्रस्थानुबन्धेष्वप्राधान्यादिति हेतोरभावेन न सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वमस्येति वाच्यम्, 'अप्राधान्या'दिति हेतोः सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वाभावेऽपि, 'लोपा'दिति हेतो'राचारा'दिति हेतोश्च सामान्यतः प्रत्याहारजन्यबोधविषयत्वाभावसाधकत्वेन—'अच्पदं प्रत्याहारमात्रोपलक्षण'मिति वक्तुं शक्यत्वात्। सुबादिप्रत्याहारेषु अनुबन्धग्रहणे क्षतिविरहाच्च। एवं-भाष्ये 'अइउ'णित्यादिसूत्रचतुष्टयोपादानं प्रत्याहारनियामक-

❀ चिदस्थिमाला ❀

मुपेक्ष्य मध्यमहेतुं व्याचष्टे—**तत्रेति**। वार्त्तिकस्थमध्यमहेतुशरीरे इत्यर्थः। **प्रत्याहारेष्विति**—अर्श-आद्यजन्तं, तद्घटकेष्वित्यर्थः। अन्यादृशप्राधान्यस्याभीष्टसाधकस्य दुर्वचत्वादाह—**ग्रहणेति**। तदप्याचार्याचारसंसिद्धं न, अपि तु तथापाठसामर्थ्यादेव सिद्धमित्याह—**हल्षु चेति**। तथा=ग्रहणार्थः। **तेषामेवेति**। अचामेव,'हलामेव चेत्यर्थः। 'तत्र-तत्रे'ति शेषः। ननूपलक्षणता वाच्येत्युक्तं, सा च स्वरांश इव व्यञ्जनांशेऽप्यवश्यं वक्तव्या, हशादौ टग्रहणे'देवष्टीकते' इत्यादावुत्वप्राप्तिसम्भवात्। आद्यहेतुभ्यां तु वारणाऽसम्भवः, एवञ्च हलंशेऽपि सा उपलक्षणत्वेन बोध्येति—'अत एवे'ति—ग्रन्थासङ्गतिरत आह—**न चेति**।

❀ ज्योत्स्ना ❀

**य एत इत्यादि**। तत्रा'ज्ग्रहणेने'त्यस्याज्बोधकेनाणगादिशब्देनेत्यर्थः। **ग्रहणार्थत्वरूपमिति**। तच्च 'तुल्यजातीयांस्तुल्यजातीयेषूपदिशत्यचोऽक्षु हलो हल्ष्वि'तिवक्ष्यमाणभाष्यादवगन्तव्यम्। **अनभिधा-**

❀ सदाशिवभट्टीयम् ❀

नेयम्, 'अजि'त्युक्तिस्तु आपाद्यमानग्रहणकानां प्राथम्यादिति नास्माकं प्रतिकूलमित्याशङ्कते—**न च**

❀ विषमपदविवृतिः ❀

विषयत्वादेवेत्यर्थः। 'अप्रधानत्वा'दिति-द्वितीयहेतोरव्यापकतामाशङ्कते—**न चेति**। **पुनः-पुनरिति**। 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवती'ति भाष्योक्तन्यायेन पुनः-पुनरकारोच्चारणसार्थक्यादयुक्तमेतत्। हश्प्रत्याहारे तु न टकारग्रहणम्, 'यत्तुल्यजातीयाँस्तुल्यजातीयेषूपदिशती'ति भाष्यस्य—अन्तःस्थानामन्तःस्थेषु पञ्चमानां पञ्चमेषु चतुर्थानां चतुर्थेषु तृतीयानां तृतीयेषु द्वितीयानां द्वितीयेषु

❀ वरवर्णिनी ❀

**ननु** नागेशमतेऽपि अच्प्रत्याहारमात्रेऽनुबन्धग्रहणापादनाद्धशादिषु टादिग्रहणानापादनाद्भाष्यवार्त्तिकविरोध एवेत्याशङ्क्य समाधत्ते—**न चेति**।

च्चारणेन—उच्चारणार्थवर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्, तद्विषयप्रयोगाणामनभिधानाच्च । तस्मादस्यानुनासिकत्वमप्रामाणिकम्, 'उरण्रपर' इत्यत्र

### ॐ अभिनव-चन्द्रिका ॐ

सूत्रमात्रोपलक्षणम्। तेषामेव सञ्ज्ञित्वमिति । अन्ये तु "—'आदिरन्त्येने'त्यत्र श्रुत्यादि-साजात्याच्छ्रुतिघटकानामेव हलादिसञ्ज्ञा, नानुबन्धानाम्, अत एव—हशादिप्रत्याहारे न 'ट'ग्रहणा-पत्तिः–" इत्याहुः ।

**तद्विषयप्रयोगाणामिति ।** हशादिप्रत्याहारे 'ट'ग्रहणे तद्घटितशास्त्रविषयघटितानां 'रामो-टीकते' इत्यादिप्रयोगाणामित्यर्थः । एतेन—'रामष्टीकते' इत्यादिप्रयोगाणां 'कोयष्टिकष्टीकते'इत्यादि-महाकविप्रयोगादनभिधानस्याभावेनेदमसङ्गतमित्यपास्तम् । **पुनः–पुनरिति** । न च वक्ष्यमाण-

### ॐ चिदस्थिमाला ॐ

**तद्घटितेति ।** हल्घटितेत्यर्थः । यद्वा उच्चारणार्थवर्णघटितानां प्रत्याहारे इत्यर्थः । न च 'न पुनरन्तरेणे'ति भाष्योक्तेस्तच्चारितार्थ्यं, तद्भाष्याशयस्य **भावप्रकाशे**ऽन्यथाप्रतिपादितत्वात् । यथा पूर्वाऽचं गृहीत्वाऽन्त्यानु-बन्धानामक्लिष्टस्पष्टोच्चारणोपपत्तिस्तथा 'हयवे'त्यादिरूपेण तदुपपत्तौ याधकारोच्चारणवैयर्थ्याच्च । अत एव 'पुनः-पुनरिति वीप्सा । अभ्युपेत्याप्याह—**तद्विषयेति ।** टविषयेत्यर्थः । यद्वा–"ननु मध्यममाधिपक्षे आचारस्यान-ङ्गीकारणोक्तहेत्वसम्भवोऽत आह—**तद्विषयेति ।** तदभ्युपेत्याप्याह—**चेति** । तेन दोषान्तरसङ्ग्रहः, सचेत्थं—टादेरुपदिष्टत्वात्तत्र न ग्रहणं, यदि तत्राऽपि ग्रहणमिष्टं स्यात्तर्हि तथैव द्विस्तमुपदिशेत्, हवत्, यदि 'लाघवाय तथोपदेश' इत्युच्येत तर्हि **कङ्योरन्यतरवैयर्थ्यापत्तिस्तस्य** स्थानेऽन्यस्य सुवचत्वात्, एवं **टस्यापि**, न चान्यग्रहणं नैवेष्टमिति हेत्वसिद्धिः, नियमार्थतया वैयर्थ्यमपि नेति वाच्यं, **चस्य** सवर्णसवर्णग्रहणं, **कङ्योरेव**, **टणयोरेव** च ग्रहणं, **तपयोः** कस्याप्यग्रहणमिति वैरूप्ये बीजाभावात् । 'ऐऔ'जिति सूत्रस्यापि प्लुतव्यावृत्त्यर्थतया नियमार्थतापत्तेश्च । इष्टानुरोधेन तत्र तथेति चेदत्रापि वैयर्थ्येनानिष्टनियमस्वीकारापेक्षया तदभावकल्पनमेवोचितम्–" इति । उपसंहरति-**तस्मादिति ।** नन्वेव**मुरणि**त्यादौ का गतिरत आह-**उरणिति ।**

### ॐ ज्योत्स्ना ॐ

**नाच्चेति ।** 'काश्मर्या कृतमाल्मुद्गतदलं कोयष्टिकष्टीकते'इति मालत्यां प्रयोगदर्शनाच्चिन्त्यमेतत् ।

**अप्रामाणिकमिति ।** इदमपि चिन्त्यम्, उच्चारणार्थानामित्सञ्ज्ञायाः स्वयं वक्ष्यमाणत्वाद्'हये'-

### ॐ सदाशिवभट्टीयम् ॐ

**हशादीति ।** आदिनेण् । एवञ्च'रामष्टीकते' 'अट्स्वि'त्यत्रात्वषत्वे स्यातामिति भावः । **तद्घटितेति ।** हल्घटितेत्यर्थः । यद्वा-**तेन**=उच्चारणार्थवर्णेन घटिताः=सहितास्**तद्घटिता** हादिशब्दास्तेषां-**प्रत्याहारे**= तद्बोधक इत्यर्थः । इणादेरपि हादिबोधकत्वेन तत्त्वात्तत्रापि न तेषां ग्रहणम् । अजादीनान्तु न तत्त्वमिति न तत्राऽयं समाधिः, एतदर्थमेव 'तद्घटिते'त्युक्तम्, अन्यथा **प्रत्याहारे**त्येव वदेत् । न च'पुनःपुन'रिति भाष्योक्तेस्तच्चारितार्थ्यं, यथा पूर्वाचं गृहीत्वान्त्यानुबन्धानामक्लिष्टत्वस्पष्टत्वोपपत्तिस्तथा हयवरे'त्याद्युपपत्तौ याधकारोच्चारणवैयर्थ्यात् । अत एव 'पुनः-पुन'रितिवीप्सितम् । ननु तदुच्चारणेनोच्चारणार्थवर्णरहितानां तादृश-प्रत्याहारे न ग्रहणमिति ज्ञापने ममापि [उपलक्षणत्वं वदतः] न प्रतिकूलमत आह—**तद्विषयेति ।** प्रयोगाभाव एव भाष्यादितात्पर्यं न तूपलक्षणत्वे इति भावः । ननु 'राजाहःसखिभ्यष्ट'ज्, 'अतष्ठा'बित्यादिप्रयोगादुपलक्षण-त्वे एव भाष्यतात्पर्यमतो बाधकाऽभावेपि–साधकाभावान्नानुनासिकत्वमित्याशयेनोपसंहरति—**तस्मादिति ।**

### ॐ विषमपदविवृतिः ॐ

प्रथमानां प्रथमेषूष्मणामूष्मसूपदेशस्य ग्रहणार्थत्वं नेतरेषामितरे'ष्वित्यर्थकत्वात् । 'अचोऽक्षु हलो हल्ष्वि'ति भाष्यस्योपलक्षणार्थत्वान्न कश्चिद्दोषः ।

**अनभिधानाच्चेति** । 'कोयष्टिकष्टीकत'इति मालत्यां प्रयोगदर्शनेनायुक्तमेतदिति केचित् ।

'ल'ग्रहणं कर्तव्यमेव—–, ऋलृवर्णयोः सावर्ण्यवदित्याहुः ।

※ अभिनव-चन्द्रिका ※

भाष्येणाऽचं विना व्यञ्जनस्योच्चारणासम्भवेनाकारोच्चारणस्य न वैयर्थ्यमिति वाच्यं, प्रथमहलनन्तरमचमुच्चार्य पुनर्व्यञ्जनद्वयानन्तरमच उच्चारणेऽपि बाधकाऽभावेन प्रतिव्यञ्जनोत्तरमकारोच्चारणवैयर्थ्यसद्भावात् ।

※ चिदस्थिमाला ※

'सावर्ण्यव'दिति दृष्टान्तेन यथा सावर्ण्यस्यावश्यकत्वं तथा नस्येति, वार्त्तिकतुल्यत्वं नस्येति—च सूचितम् । अत्रत्यं तत्त्वं सर्वं मत्कृतरप्रत्याहारखण्डने प्रसिद्धमिति नेह लिखितं, ततो बोध्यम् ।

※ ज्योत्स्ना ※

त्वाद्यकारस्याप्यनुनासिकत्वस्य स्वमतेऽवश्यवक्तव्यत्वाद्दोषतादवस्थ्यस्य सत्त्वात् । नचोच्चारणमात्रार्थ-

※ सदाशिवभट्टीयम् ※

वस्तुतस्तु–"ननु साजात्येन टस्य प्राधान्याद्ग्रहणं स्यादित्याशङ्क्य–'न च हशे'ति । 'अनभिधानाच्चे'ति–चेनेन एवारुचे'र्लोपश्च बलवत्तर'इति हेत्वन्तरसमुच्चयः । पूर्वोक्तारुचेराह—तस्मादिति–" इत्यर्थः । यद्वा–

※ विषमपदविवृतिः ※

अन्ये तु 'हशि चे'ति शास्त्रदृष्ट्या त्रैपादिकभावकार्यमात्रस्याऽप्लुतग्रहणसामर्थ्येन सिद्धत्वकल्पनात्पर-

※ वरवर्णिनी ※

**आहुरिति । परे तु**—इत्सञ्ज्ञावत्त्वस्यैवानुबन्धत्वेन हल्प्रत्याहारसिद्धेः प्राक् लण्घटकाकारेऽनुबन्धत्वस्यैवाऽभावेन पक्षतावच्छेदकानाक्रान्तत्वान्न तृतीयहेतोरव्यापकत्वं प्राचीनमते दोषः, किञ्च नागेशमतेऽपि उच्चारणार्थानामित्सञ्ज्ञालोपाभ्यामेवापहारस्य सिद्धान्तितया 'हयवरे'त्यादिसकलाकारेष्वपि तृतीयहेतोरव्यापकत्वापत्तिः, 'मामांस्रायस्वे'त्यादिष्वनुस्वाराद्यापत्तिश्च । तस्मात्—हकारादौ प्रतिवर्णमकारोच्चारणसामर्थ्यादजादिप्रत्याहाराणां स्वाद्यवर्णसजातीय-मध्यग-वर्ण-बोधकत्वं स्वीकृत्यानुबन्धानां प्रत्याहारेषु ग्रहणाभावो वाच्यः । साजात्यञ्च—बोधकत्वेनाचार्यतात्पर्यविषयत्वेनैवेति 'हयवर'डित्यादिघटकाकारवल्लण्घटकाकारे बोधकत्वेनाचार्यतात्पर्यविषयत्वस्याभावान्न 'मामांस्रायस्वे'त्यादावनुस्वाराद्यापत्तिरिति—'र'प्रत्याहारस्वीकार एव युक्तः, 'उरण्रपर'इत्यत्र लकारानुच्चारणलाघवा"दित्याहुरस्मद्**गुरुचरणाः श्रीकेहिरामशास्त्रिणः ।**

"—श्री**बालशास्त्रि**गुरुचरणास्तु–'रप्रत्याहारस्वीकारे न कापि क्षतिः,'अतो ले'ति सूत्रे लकरोच्चारणन्तु —'रपदं रेफलकारोभयविषयकबोधं जनय'त्विति पाणिनितात्पर्यस्यानित्यत्वबोधकं, तेन 'रदाभ्यां' 'रषाभ्या'मित्यादौ रपदेन लकारग्रहणं न, तस्माच्छेखरोक्त आद्यो दोषो न युक्तः । 'यप्रत्याहारेणैव व्यवहरे'दित्यपि न युक्तम्, 'इणो यण्' 'इणः ष'इत्यादौ व्याख्यानात्सन्देहाभावेपि सर्वत्र व्याख्यानाश्रयणे गौरवात्, णकारेण प्रत्याहारे तु व्याख्यानानाश्रयणान्महल्लाघवम् । किञ्च–व्याख्यानाश्रयणेन 'इणो य'णित्यादावभीष्टसिद्धिवत्सर्वत्र व्याख्यानेनैव सिद्धौ इत्सञ्ज्ञा–प्रत्याहारादयो न सन्त्वित्यस्यापि कल्पनापत्तेः, 'नासूया कर्त्तव्या यत्रानुगमः'इत्यादिभाष्याच्च णकारणैव यणादिप्रत्याहारे दोषाभावाच्च । लण्सूत्रस्थाकारे उपलक्षणविधया लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वस्य सत्त्वान्न तृतीयहेतोरव्यापकत्वापत्तिरपि । 'इ-उ' इति समुदायस्याजादिसञ्ज्ञावारणाया**दिरन्त्येने**त्यस्य मध्यगवर्णबोध्यानां सञ्ज्ञेत्यर्थस्यावश्यकतया प्रकृते—'प्रत्याहारेऽनुबन्धाना'मितिभाष्यादाचार्यशैल्याश्च—हल्प्रत्याहारस्थानामचां बोध्यमेव नास्तीत्यपि वक्तुं शक्यत्वाच्च । 'सोऽस्ती'त्यादौ सुलोपाद्यापत्तिश्च'सोऽस्यादिरितिच्छन्दसः' इत्यादिनिर्देशाद्वारणीयेति—रप्रत्याहारखण्डनपरः शेखरग्रन्थोऽसङ्गत एवे'त्याहुः—' इति शब्देन्दुशेखर—**लघुजटाजूटे** वैयाकरणकेसरिणः—**शास्त्रिपादाः ।**

ननु 'हये'त्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गोऽत आह—**हकारादिष्विति**। 'न पुनरन्तरेणाच्चं व्यञ्जनस्योच्चारणमपि भवती'ति—'उच्चैरुदात्तः' इतिसूत्रस्थभाष्यात्, 'एषा ह्याचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयाँस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्षु' इति—'प्रत्याहारेऽनुबन्धाना'मित्यत्र भाष्याच्चेति भावः।

## ॐ अभिनव-चन्द्रिका ॐ

[**शास्त्राबोधितेति**। शास्त्रजन्यशाब्दबोधविषयीभूतसाधुत्वाभाववदित्यर्थः, तेन 'क्-द्'इत्यादे-'रनुकरणञ्चानितिपर'मितिसञ्ज्ञाशास्त्रानुमितसाधुत्वस्य सत्त्वेऽपि अनेनाऽसाधुत्वेन तस्य बाधान्न दोषः।] **उच्चारणमपि भवतीति**।—कैमुतिकन्यायेन। तेषां साधुत्वन्तु दूरे एवेति भावः।

## ॐ चिद्स्थिमाला ॐ

**हल्त्वेति**। तस्याननुबन्धत्वेन प्रागुक्तरीत्या वारणासम्भवात्, विशिष्टेन[1] च लक्षणया शुद्धहल्प्रतीति-रिति न दोषः, न च तदर्थमेव[2] सः 'राम' इत्यादौ संयोगान्तलोपापत्तेः, असकृदुपदेशवैयर्थ्यापत्तेश्चेतिभावः।

तत्र हेतुमाह—**न पुनरिति**। **उच्चारणमपीति**। अक्लिष्टस्पष्टोच्चारणमपीत्यर्थः। ननु तथाऽपि निःसन्देहाय तथैवोच्चारणमास्तामत आह—**एषा ह्येति**। आचार्यस्य=अनादिपुरुषस्य, शैली=समाधानपूर्विका प्रवृत्तिः। एवञ्चान्यत्र सञ्ज्ञिविशेषसमर्पणायोपात्तत्वादत्र तस्यासञ्ज्ञित्वमेवेति भावः।

## ॐ ज्योत्स्ना ॐ

त्वादग्रहणम्, प्रत्याहारमात्रार्थत्वस्यान्यत्र तुल्यत्वात्, प्रत्याहारेऽनुनासिकाकाराव्यवहितपूर्ववर्णा-

## ॐ सदाशिवभट्टीयम् ॐ

हशादिग्रहणे टादिग्रहणं कथं नेत्यस्य सङ्ग्रहाय **कौस्तुभोक्त**मेव व्याख्यानमुचितं—वार्तिकस्य, भाष्येऽक्ष्वित्यप्य-जादिशब्देष्वित्यर्थकं, सूत्रचतुष्टयोपादानमपि चतुर्दशसूत्र्या उपलक्षणम्। 'अक्षु हल्षु च समाधिवैषम्यं कुत' इति शङ्कायास्तवाऽपि दुःसमाधेयत्वेन—'तदुपलक्षणत्वे चतुर्णामेव ग्रहणं कुत'इत्यादि मां प्रति मा[3] चोदीः। अनुबन्धानां ग्रहणस्यानिष्टत्वे तान्नैवोच्चारीदिति शङ्कानिरासाय—**भाष्ये**—'प्रत्याहारार्था' इति।

एवञ्चानुनासिकत्वं प्रतिजानतो [प्रत्याहारवादिनः] न शङ्कापरभाष्यविरोधः। तृतीयहेतोरव्यापकत्वा-पत्तिस्तु तवापि दुष्परिहरेति, हल्प्रत्याहारसमकालमेव वलादिप्रत्याहारसिद्धौ प्रतिबन्धकाभावेन वलादि-प्रत्याहारेषु यकारादिप्रवेशस्य दुर्वारत्वादित्याशयेन शङ्कते—**न चेति**। **हशादी**त्यादिना वलादीनाम्। **टग्रहणमुपलक्षणं यादेः**। उभयमपि दूढयति—**न पुनरित्यादिना**। तृतीयहेतोर्व्यापकत्वं समर्थयतः **कौस्तुभकृ**तोपीदमावश्यकमेवेतिभावः—इत्याशयेन शङ्किते दूषणान्तरमाह—**हकारादिषु पुनःपुनरित्या-दिना**। 'वक्तुं शक्यत्वा'दित्यस्य—अग्रे—'लकारस्येणादिसञ्ज्ञानापत्तेरनुनासिकत्वप्रतिज्ञानैष्फल्यापत्तेश्चे'ति भावः। **अप्रामाणिकमिति**। अनङादिषु प्रयोगसमवायित्वभियाऽनुनासिकत्वाङ्गीकारेष्यावश्यकेन 'सोस्ये'-त्यादिनिर्देशेन प्रत्याहारबोध्यत्ववारणेनेह तत्त्वे मानाभाव इति। अत एव अइउण्सूत्रे **उद्योते**—विधेयविषये उच्चारणार्थस्यानुनासिकत्वमावश्यकमित्युक्तमिति भावः—इति दिगित्याहुः। **तुल्यजातीयेति**। ननु 'तुल्य-जातीये'त्यत्र किन्त्वेन साजात्यं विवक्षितम्? 'अज्झल्त्वाभ्या'मिति तु न युक्तम्, अन्योऽन्याश्रयापत्तेः,

## ॐ विषमपदविवृतिः ॐ

त्वाद्विसर्गे इत्याहुः। **आहुरिति**। अत्र पाठकक्[4]कृतप्रत्याहारमण्डनखण्डनमसमञ्जसं शब्देन्दुशेखर-

१. विशिष्टेन=अनुनासिकत्वविशिष्टेनाकारेण। २. तदर्थमेव=ग्रहणार्थमेव, सः=अकारः।

३. दोषस्योभयोस्तुल्यत्वात्, तादृशदोषोद्घाटनं तव नोचितमित्यर्थः।

४. पाठकः=लक्ष्मणपाठकः।

स्यादेतत्—'न विभक्ता'वित्यादेः सार्थक्याय—'हलन्त्य'मित्यन्यो'पदेशेऽन्त्यं हल् इ'दित्यर्थस्यावश्यकत्वेन 'हलन्त्यम्' 'आदिरन्त्येने'त्यनयोः परस्परापेक्षत्वेनान्योन्याश्रयाल्लकार इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं पाणिनेरयुक्तम्, । न च 'हयवरे'त्यादेरावृत्त्या

❀ अभिनव-चन्द्रिका ❀

ननु 'हलन्त्य'मित्यस्य 'हल्सूत्रान्त्यमि'दित्येवार्थ इति नाऽन्योन्याश्रय इत्याशङ्क्याह—**न विभक्ताविव्यादेरिति** । **अन्योन्याश्रयादिति** । स्वज्ञप्त्यधीनज्ञप्तिकत्वमन्योन्याश्रयसामान्यलक्षणं, तथा च 'हलन्त्य'मित्येतज्जन्यवाक्यार्थबोधाधीनज्ञप्तिकत्वमादिरन्त्येनेत्यस्य, 'आदिरन्त्येने'त्येतज्ज्ञप्त्यधीनज्ञप्तिकत्वं 'हलन्त्य'मित्यस्येत्यन्योन्याश्रयः ।

❀ चिदस्थिमाला ❀

**'हलन्त्य'** मितिसूत्रावृत्तिमवतारयति—**स्यादेतदि**त्यादिना । नन्वष्टाध्यायीस्थस्य 'हलन्त्य'मित्यस्य हलितिसूत्रेऽन्त्यमित्यादित्येवार्थ इत्यन्योन्याश्रयसम्भव एव नात आह—**न विभेति** । **आदिनो**'पदेशे-ऽजि'त्यस्याजादिपदघटितविधिसूत्राणाञ्च परामर्शः, तदा हि—हल्प्रत्याहारस्यैव सिद्ध्याऽजादिप्रत्याहारस्या-ऽसिद्ध्या तेषां वाक्यार्थबोधाभावेन नैरर्थक्यं स्पष्टमेव । आवश्यकत्वं—परस्परापेक्षत्वे हेतुः, तच्चाऽन्यवहिते[1], अन्योन्याश्रयोऽयुक्तत्वे हेतुः । कस्य चिदुक्तिं खण्डयति—**न चेति** । 'हयवरे'त्यादेः, 'ह'लित्यस्याक्षरसमाम्ना-यिकस्यावृत्तस्यार्थमाह—**शषेति** । तन्मध्ये इष्टानुरोधेनेष्टोद्देश्यविधेयभावाङ्गीकारादिति भावः । अपिना परेण

❀ ज्योत्स्ना ❀

तिरिक्ताग्रहणज्ञापनस्य पुनः-पुनरकारोच्चारणफलत्वेन वक्तुं शक्यत्वाच्च । तदेतदाहुरित्यस्वरसमूचितं निगूढमाकूतं विद्वद्भिराकलनीयम् ।

❀ सदाशिवभट्टीयम् ❀

साजात्ये सति ते सञ्ज्ञे, तयोश्च सत्योः साजात्यमितिचेच्छृणु, औकारावृत्त्यच्त्वाव्याप्यधर्मानवच्छिन्नत्वेन । अचि (—साजात्यम्) । अच्त्वाव्याप्येण्त्वादिमादायासम्भववारणायाद्यम्, तदवृत्त्यक्त्वादिमादाय तद्वारणाय द्वितीयम् । हकारवृत्तिहल्त्वाव्याप्यधर्मानवच्छिन्नत्वेन हलि तत् । तदव्याप्यादृत्वादिमादाय तदवृत्तिय-ण्त्वादिकमादाय च तद्वारणायोभयम् । अज्झलपदाभ्यां स्वरव्यञ्जनयोर्विवक्षणाच्चेत्याहुः । **न विभक्तावित्या-देरिति । आदिनो**'पदेशे'जित्यस्य स्वपूर्वस्य संग्रहः । 'हलन्त्य'मित्येतद्वाक्यार्थजिज्ञासायामुपस्थितपूर्वोत्तर-सूत्रयोः सार्थक्यसम्पादके वाक्यार्थे निष्पन्ने पश्चाद्धल्पदार्थः कः ? इति विशेषजिज्ञासाया**मादिरन्त्येने**त्येनद्वा-क्यार्थायाऽऽवृत्तिरिति भावः । प्रकृतसूत्रस्थभाष्यमपीहानुकूलम् । **अन्ये** तु—प्रथम'मादिरन्त्येने'त्येतद्वाक्यार्थ-जिज्ञासायामुत्पन्नातविरोधिन्यायेन कृत्रिमत्वज्ञानाभावेन कृत्रिमाऽकृत्रिमेत्यस्याप्रवृत्त्या च हलितिसूत्रेऽन्त्यमिदि-त्यर्थे ततो 'न विभक्ता'वित्यादिवैयर्थ्यानुसन्धाने आवृत्त्याऽर्थान्तरस्य युक्तत्वादिदमसत्, भाष्यन्त्वेकदेश्युक्तमेव-

❀ वरवर्णिनी ❀

**स्यादेतदिति** । एतत्सम्भाव्यत इत्यर्थः । सम्भावनायां लिङ् । **सार्थक्यायेति** । 'हलिति सूत्रस्या-न्त्यमित्स्या'दित्यर्थे तु'न विभक्ता'वित्यादेर्वैयर्थ्यं स्पष्टमेव, विभक्तिस्थतकादेरित्सञ्ज्ञायाः केनापि प्राप्तेर-भावात् । **अन्योन्याश्रयादिति** । स्वज्ञप्त्यधीनज्ञप्तिकत्वमन्योन्याश्रयत्वम् . प्रकृते **स्वं**—('हलन्त्य'मिति-वाक्यार्थज्ञानप्रयोज्यः) इत्पदार्थः, तज्ज्ञप्त्यधीनज्ञप्तिकत्वं हल्पदार्थस्य । एवं स्वं—हल्पदार्थः, तज्ज्ञप्त्यधीन-ज्ञप्तिकत्वमित्पदार्थस्येति समन्वयः । **हल्सञ्ज्ञापीति** । न च नवसूत्रीमुद्दिश्य दशमेन हलितिसूत्रेण

१. तच्च=परस्परापेक्षत्वञ्च, अव्यवहिते=अन्योन्याश्रये, 'हेतु'रित्यनुषज्यते । **'अयुक्तत्वे'**—'हेतु'रित्यनुषज्यते ।

'शषस'रित्यन्तं समुदायमुद्दिश्य—'ह'लित्यनेन हल्सञ्ज्ञाऽपि विधेयेति वाच्यं, दशसूत्रावृत्तौ गौरवात्। ननु—'उपदेशे इदन्त्यम्', 'अच्', 'अनुनासिकः'—इति सूत्रत्रयमस्तु, अजित्यनन्त्यार्थं, तृतीयेऽजित्यनुवृत्तिसामर्थ्यादच्चेदिद्भवति तर्ह्यनुनासिक एवेति नियमाश्रयणाद्रु-प्रभृतौ न दोषः। योगविभागसामर्थ्याच्चानन्तरस्येति न्यायं बाधित्वा व्यवहितस्यापि तेन

❀ अभिनव-चन्द्रिका ❀

**गौरवादिति**। चिन्त्यमिदं-गौरवस्य सापेक्षत्वेनान्योन्याश्रयपरिहारान्तरस्याद्याप्यदर्शितत्वेनैतच्छङ्कासमाधानादेरसङ्गतत्वात्, 'तस्मात्पाणिनेरयुक्त'मित्यस्यानन्तरम्—"अतः सूत्रावृत्त्या तं परिहरति—'हलन्त्य'मित्यर्त्ता" ति लेखनीयं, तदनन्तरं 'न चे' त्यादिशङ्कासमाधानादिः।

❀ चिदस्थिमाला ❀

समुदायेन यथाश्रुतार्थबोधनसमुच्चयः। अन्यस्य कस्य चिदुक्तिं खण्डयति—**नन्विति**। अन्त्यास्तु पूर्वेणैव सिद्धत्वादाह—**अजिति**। नन्वेवमाद्यसूत्रेण रुधान्वादावन्त्यस्येत्वापत्तिरत आह—**तृतीये इति**। 'अनुनासिक' इति सूत्रे इत्यर्थः। अनन्त्यानुनासिकहल इत्त्वविधानेन सूत्रसाफल्यसम्भवादाह—**अजित्यनुवृत्तीति**। अनुवृत्तावप्युक्तरीत्या वाक्यभेदेन तस्य विधायकत्वेऽनुवृत्तिर्व्यर्था, तां विनाऽपि तस्य सिद्धत्वात्। प्रकारान्तरेणाऽनुवृत्तस्याजित्यस्य विधायकत्वन्तु कथमपि दुर्वचं, तदेतदभिप्रेत्याह—**सामर्थ्यादिति**। 'भूसुवोस्तिङी'ति ज्ञापकान्महाव्याहृतिसूचनद्वारा मङ्गलार्थं तस्यादावुपादानाच्च भूधातौ दोषाभावादाह—**रुप्रभृताविति**। '**स्मृ**' इत्यादिवदादेर्मित्त्वसामर्थ्यात्, '**छिद्**' इत्यादौ तत्र तस्यानन्त्यत्वात्, '**ग्लै**' इत्यादे'रादेच उपदेश' इति ज्ञापकात्, '**पा**' इत्यादेः 'आतां सङ्के'त्यादिज्ञापकान्न दोष इति यद्यपि सुवचं, तथापि **रु** इत्यादौ दोषसत्त्वात्, **प्रभृति**ग्रहणमत्र प्रकारार्थं, तस्यैवोक्तिस्त्वशोकवनिकान्यायेन। तरुवाचकत्वेन प्रसिद्धस्य'द्रु'—रित्यस्यासिद्धिप्रसङ्ग इति बोधयितुं चेति भावः। नन्वेवमपि द्रु-रु-प्रभृतौ दोष एव, अनन्तरस्येति न्यायेन 'अच्'स्यैव तेन नियमाऽङ्गीकारात्, न हि तत्र तस्य प्राप्तिरपि त्वाद्यस्यात आह—**योगेति**। अन्यथाऽनुनासिक इत्येकयोगेन विधिर्नैवेष्टार्थसिद्धौ तदानर्थक्यं स्पष्टमेव। **च**स्त्वर्थे, एवमग्रेऽपि। **तेन**=तृतीयसूत्रेण।

नन्वेवमपि 'अनुनासिकश्चेदिद्भवति तर्ह्यजेवे'ति विपरीतनियमः कुतो न, तावतापि तृतीयसूत्रस्य सार्थक्य-

❀ ज्योत्स्ना ❀

**रुप्रभृताविति**। शब्दार्थकरुधातुप्रभृतिष्वित्यर्थः। **न दोष इति**। 'उपदेश'इति प्रथमसूत्रेणेत्सञ्ज्ञा-

❀ सदाशिवभट्टीयम् ❀

त्याहुः। **दशसूत्रावृत्ताविति**। अन्यथा हकारादेः सञ्ज्ञा? उत अकारादेः? इति दुर्निश्चेयं स्यादिति भावः।

**रुप्रभृताविति**। 'अशोकवनिका'न्यायेनैतदुक्तिः, ज्ञापकादिना निवारणे तु 'तुरुस्तुशम्ये'त्यादिज्ञापकैक्यमपि व्यावर्त्येनेत्याहुः।

❀ विषमपदविवृतिः ❀

व्याख्यायां **चन्द्रिकायां** बोध्यम्। **आवृत्त्येति**। हलित्यनेनोद्देश्यविधेयभावेन हल्सञ्ज्ञाविधानार्थमेकम्। 'आदिरन्त्येने'त्यनेनैकवाक्यतया यरादिप्रत्याहारार्थमपरमिति भावः। **रुप्रभृताविति**। 'रु शब्दे'इत्यादौ।

❀ वरवर्णिनी ❀

हल्सञ्ज्ञाविधानेऽपि आवर्त्तमान'ह'लितिसूत्रस्थलकारस्येत्सञ्ज्ञाया अबोधनाद्धल्झलादिप्रत्याहारासिद्धिरिति वाच्यं, लण्सूत्रस्थलकारस्य तादृशसमुदायघटकतया—हल्सञ्ज्ञायां तद्वृत्तिजात्याश्रयाणां सकललकाराणां हल्त्वाद्धलन्त्यमित्यनेनेत्सञ्ज्ञायाः सम्भवाद्धलादिप्रत्याहारनिष्पत्तौ बाधकाभावात्।

नियमः । 'मिद्चोन्त्या'दिति ज्ञापकाच्च न त्रिपरीतनियमः, एवञ्च हल्ग्रहणमपि व्यर्थ-मन्योन्याश्रयश्च न ।

न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः, तथा च तत्र–तत्र भाष्यम्—'अपाणिनीयन्तु भवती'ति वाच्यं, कल्प्यमानन्यासस्य लघुत्वेऽस्यादोषत्वात्–, 'सूत्रभेदं तमुपाचरन्ति यत्र तदेवाऽन्यत्सूत्रं क्रियते, भूयो वा, यदि तदेवोपसंहृत्य क्रियते—नासौ सूत्रभेदः' इति 'अच उपसर्गात्तः' इति सूत्रभाष्यात् । 'नासौ सूत्रभेद' इत्यस्य—'दोषाये'ति शेषः, सति सम्भवे दृष्टद्वारैवाङ्गानामदृष्टार्थत्वमिति तदाशयः ।

❀ **अभिनव-चन्द्रिका** ❀

**अदृष्टार्थत्वमिति** । न च 'सामर्थ्ययोगान्न हि किञ्चिदत्रे'ति भाष्येण पूर्वं किञ्चिच्छुद्धाऽदृष्टार्थवत्, किञ्चिद्दृष्टाऽर्थवदिति व्यवस्थापितम्, अत्र चाङ्गानां दृष्टद्वारैवाऽदृष्टार्थत्वं–'सूत्रभेदं तमुपाचरन्ती'ति भाष्येण व्यवस्थाप्यत इति परस्परभाष्यविरोध इति वाच्यम्, एतद्भाष्यस्य सिद्धान्त्युक्तित्वेन, तस्य चैकदेश्युक्तित्वेनादोषात् । वस्तुतस्तु 'लाघवादेवमेव न्यायः

❀ **चिद्स्थिमाला** ❀

लाभात्, एवञ्च रुप्रभृतौ दोष एव, अत आह—**मिदिति** । हलामनुनासिकानां तथा सती त्वाभावेन मितोऽसम्भवादिति भावः । प्रकृतमाह–**एवञ्चेति** । एवमर्थकसूत्रत्रयकरणे चेत्यर्थः, **अपिना**—प्रागुक्तगुरुभूतदशसूत्र्यावृत्तिपरिग्रहः । चेन तन्त्रावृत्त्यादिपरिग्रहः, एवञ्च सम्पूर्णसूत्रावृत्तिः किमर्थमिति भावः । **सूत्रभेदे इति** । ततो भेदे इत्यर्थः । तथा च=सूत्रतो भेदे तद्धानिमभिप्रेत्य च प्रवृत्तम् । अन्यथाऽपाणिनीयत्वोक्तेर्निस्सारत्वापत्तिः स्यात्, अदोषत्वात् । **त्वेस्य**=अपाणिनीयत्वस्य । हेत्वसिद्धिं परिहरति—**सूत्रेति** । उपाचरन्ति=कथयन्ति । तदेव=तदर्थकमेव । भूयो वा=तदपेक्षयाऽधिकं । तद्विशिष्टं वा, उपसंहृत्य=संक्षिप्य । ननु तावतापि वस्तुतः सूत्रभेदोऽस्त्येवेति भाष्यासङ्गतिरेवात आह—**नासाविति** । ननु कथं स न दोषाय, ततो जायमानस्य केवलाऽदृष्टस्यतोऽसिद्धेः, एवञ्च तदावश्यकत्वमत आह—**सतीति** । एवञ्च यदि शुद्धाऽदृष्टार्थकत्वं भवेत्तदा भवदुक्तं स्यात्तदेव न, दृष्टन्तु–कल्प्यमानलघुन्यासादेव, न तत इति तथा दुर्वचमिति भावः । 'सति सम्भवे'इत्यनेन प्रत्याख्यानस्थले शुद्धदृष्टार्थत्वमेवेति सूचितम् । **तदाशयः**= नासौ सूत्रभेद' इति वदतो भगवत आशयः । **अत एव**=तत्र तेषां तद्वारैव

❀ **ज्योत्स्ना** ❀

रूपो दोषो नेत्यर्थः । **ज्ञापकाच्चेति** । 'अनुनासिकश्चेदिद्भवति तद्वर्जेवे'ति नियमेन नुमादीनामित्वानापत्तेर्'मिदचोऽन्त्या'दिति ज्ञापकत्वमित्यर्थः । **तदाशय इति** । पूर्वपक्ष्यभिप्रेतनद्भाष्याशय इत्यर्थः । 'माहेश्वराणी'ति प्रतीके पाणिनिसूत्रन्यासस्य शुद्धाऽदृष्टार्थत्वव्यवस्थापनात् 'नासौ सूत्रभेद'इत्यस्य दृष्टप्रयोजनकोऽसौ न भवति, केवलादृष्टप्रयोजनकः सूत्रभेदो भवत्येवे'ति तु परमार्थः । प्रकाश-

❀ **वरवर्णिनी** ❀

**सामर्थ्यादिति** । अच्पदानुवृत्तिविरहे तु मनितादौ मकारादेरित्सञ्ज्ञार्थं तद्विधायकमेव स्यादिति भावः । 'उपदेशे इदन्त्य'मित्यनेनापि रुप्रभृतौ नेत्त्वमित्याह—**व्यवहितस्यापीति** ।

**मिदचोन्त्यादिति** । इदमुपलक्षणं—'ञ्नित्यादिर्नित्यम्' 'अचोञ्णिती'त्यादेरपि । **विपरीतेति** । 'अनुनासिकश्चेदिद्भवति तर्ह्यजेवे'ति वैपरीत्येन नियमे 'मिदचोऽन्त्या'दित्यादेर्वैयर्थ्यं स्यात्, मकारादेरनुनासिकतयाऽज्भिन्नतया च नियमाक्रान्तत्वादित्त्वाप्राप्तेर्मितामसम्भवादित्याशयः । उपाचरन्ति - वर्णयन्ति, 'आचार्या' इति शेषः । तदेव=तावत्प्रमाणकमेव, अन्यत्=अन्यथा, सन्निवेशभेदेनेति यावत् । भूयो वा=ततोऽधिकं वा । उपसंहृत्य=संक्षिप्य, अल्पप्रमाणम् । सूत्रभेदस्यानुपूर्वीभेदे स्पष्टं प्रतीतेराह—**दोषायेतीति** । **दृष्टद्वारैवेति** । तेनानुपूर्वीभेदेऽप्यदृष्टहानिर्नाशङ्क्येत्याशयः । **अतिगौरवमिति** । अप्राप्तकल्पना-प्राप्तबाधादिदोषत्रययुक्तो हि नियमः, एवञ्च नियमाश्रयणेऽतिगौरवं स्पष्टमेवेत्याशयः ।

अत एव तत्र-तत्र ज्ञापकपरसकलभाष्योच्छेदो नेति चेन्न, योगविभागनियमज्ञापका-श्रयणेऽतिगौरवात्, न हि 'वर्णाभिव्यक्तिजनक-कण्ठाद्यभिघातगौरवमेवादर्त्तव्यं, न तु ज्ञानजनकमनोव्यापारगौरव'मिति—राजाज्ञाऽस्ति ! ।

न च 'सह आ=समन्ताद्, एति=गच्छतीति—सहेता=मध्यमो वर्ण'इत्यर्थ इत्यतो नान्योन्याश्रय इति वाच्यम्, अन्योन्याश्रय-तत्परिहारादीन् वदता भाष्यकारेण—

---

❀ अभिनव-चन्द्रिका ❀

पाणिनिना कस्मान्न कृतः ? इति पूर्वपक्ष्याशय इति नापाणिनीयत्वशङ्कालेशः, नापि परस्परं भाष्य-विरोधः, एवमेव सर्वेषु लघुन्यासपूर्वपक्षेषूह्यमिति दिक् । आ समन्तादिति । 'ओमाङोश्चे'ति पररूपे 'सहेते'इति रूपसिद्ध्यर्थमिदम् । अतः सूत्रावृत्त्येति । इदं 'न चे'त्यतः प्रागेव वक्तव्यमित्यवोचाम ।

❀ चिदस्थिमाला ❀

तदर्थत्वादेव । ननु न मात्रा-पदगौरवमत आह—न हीति । अस्य-'अस्ती'त्यत्रान्वयः । वर्णनित्यत्वा-दाह—वर्णाभीति । नारायणादिस्वीयसिद्धान्तमतं खण्डयति—न चेति । सहेति । युगपदि-त्यर्थः । आङोऽर्थमाह—सममिति । 'एती'त्यस्यार्थमेवाह—गच्छतीति । बुद्धिविषयमिति भावः । क्वचि 'देती'त्यस्यापि पाठ एव, युक्तश्च सः । एवं योगार्थमुक्त्वा रूढ्यर्थमाह—मध्येति । आद्यन्तसमभि-व्याहाराच्चास्य लाभः । 'स्वं रूप'मित्यनुवृत्त्याऽऽदेः सञ्ज्ञा, वृद्धिगुणादिसञ्ज्ञास्विव सामानाधिकरण्यात्स-ञ्ज्ञात्वावगतिः तथा च मध्यमो वर्णः-अन्त्येन सहित आदिरणित्यादिसञ्ज्ञको भवतीत्यर्थः फलितः । 'सहेते'ति रूपसिद्धिस्तु आ-एतेत्यत्रैङिपरे'ति पररूपं कृत्वा ओमाङोश्चे'ति पररूपकरणेन बोध्या । एतद्रूपसिद्ध्यर्थ-मेवाङः प्रश्लेष इति बोध्यम् ।

नान्योन्येति । नान्योन्याश्रयशङ्केत्यर्थः । 'एवं सती'त्यस्य तत्रानिर्देशादिति भावः । शङ्काया अज्ञानतः सम्भवायाह—तत्परीति । आदिनाऽऽक्षेपतथोक्त्यादिपरिग्रहः । कटीवीत्यत्रेति । 'कटी'त्यत्र वी'त्यत्र चेति भावः । इङ् अध्ययने' इक् स्मरणे'इत्यनयोर्नित्यमधिपूर्वकत्वादनुल्लेखः ।

❀ ज्योत्स्ना ❀

कृन्मतं दूषयति-'न चेति । 'इण्गताविक्यतश्चे' त्यपपाठो—बृहच्छेखरे दर्शनात्, इण आङा 'एत्येधत्यू'ति वृद्धेर्दुर्वारत्वादिति तत्रैव दूषितत्वाच्च । 'पूर्वं धातुरुपसर्गेण युज्यत'इति पक्षेऽन्तरङ्गत्वादाद्गुण

❀ सदाशिवभट्टीयम् ❀

मनोव्यापारगौरवमिति । नन्वत्र किं गौरवं ? योगविभागप्रयुक्तं तु न, आवृत्तिङ्कुर्वता त्वयापि वाक्यार्थद्वयस्वीकारात्, नियमप्रयुक्तन्तु—हल्पदाकरणेन निमातव्यम्, ज्ञापकन्त्वावृत्तिसत्त्वे 'न विभक्तौ'-त्याद्याश्रयणीयमेवेति न तत्कृतमपि, तर्कितन्यासेऽन्योऽन्याश्रयशङ्कैव नोदयत इति चेत्सत्यम्, अनन्तरन्याय-बाधे योगविभागसामर्थ्याश्रयणे तत्सत्त्वात्, तस्मादपाणिनीयदोषाद्दुष्टोयं न्यास इति बोध्यम् ।

मध्यमो वर्ण इति । वृद्धिगुणादिसञ्ज्ञास्विव सञ्ज्ञात्वावगतिः सामानाधिकरण्यात्, तथा च मध्यमो वर्णः

---

❀ वरवर्णिनी ❀

आ इति । 'ओमाङोश्च'तिपररूपप्रवृत्तये आङ उपादानम् । सहेतेति—सहेतृशब्दस्य प्रथमैकवचने-रूपमिति तत्त्वम् । इत्यर्थ इति । सहेता—मध्यमो वर्णः—अन्त्यसहितादिसञ्ज्ञकः स्यादित्यर्थः, [अणादिसञ्ज्ञः स्यादिति यावत्] सहेता सञ्ज्ञी, आद्यन्तौ सञ्ज्ञेति भावः । अनन्वितार्थत्वं—समन्ताद्गम-नाभावात् । चो—हेतौ । यतोऽनन्वितार्थत्वमतो—व्यर्थत्वमित्यर्थः ।

'कटी' 'वी'त्यत्र प्रश्लिष्टादीङ्ताविस्यतश्च 'सहाऽऽङ्'पूर्वात्तृजभावबोधनात् । किञ्च योगमर्यादया तत उक्तार्थालाभः, 'आ समन्ता'दित्यस्यानन्वितार्थत्वं—व्यर्थत्वञ्च, रूढौ तु न मानमतः सूत्रावृत्त्या तं परिहरति—**हलन्त्यमिति** ।

भाष्येऽप्यन्योन्याश्रयमाशङ्क्य—'हलन्त्यमित्सञ्ज्ञं भवति, लकारश्चेद्भवतीति वक्तव्य'-मित्युक्त्वा-'एकशेषनिर्देशाद्वा सिद्धम्, हल् च हल् च हल्—हलन्त्यमित्' इत्युक्तम्। तस्यायं भावः,—'कृतैकशेषेण हल्पदेन सम्बन्धसामान्यषष्ठ्या समासोऽन्त्यशब्दस्य च द्वन्द्वान्ते

ॐ अभिनव-चन्द्रिका ॐ

**षष्ठ्येति** । अयं च ग्रन्थः 'आदेशप्रत्यययो'रिति सूत्रस्थशब्दरत्नेन साकं विरुणद्धि, तत्र हि—

ॐ चिदस्थिमाला ॐ

**सहाङ्पूर्वादिति** । अनेन केवलादाङ्पूर्वाच्च तत्सत्ता बोधिता । **तृजिति** । तार्च्छील्यादेरभावा-त्तृनस्त्वप्रसङ्ग एवेति भावः । **बोधनादिति** । एतेन—'नवीना'स्त्वित्यारभ्य 'नास्तीत्याहु'रित्यन्तेनैतन्मन-लेखनानन्तरं'—'तन्न, एवं सति वृद्ध्या सहैते'ति रूपापत्तेः । वस्तुतस्तु सह आयतीति सहेता, इट-किट-कटीत्यत्र प्रश्लिष्टस्य भविष्यतीति'—'आदिरन्त्येने'त्यत्र **कौस्तुभे** दृश्यमानः काचित्कः पाठः परास्तः ।

एवं योगरूढिपक्षे दोषमुक्त्वा—शुद्धयोगपक्षे तत्साधारणं दोषमाह—**किञ्चेति** । 'यत' इति शेषः । सर्वत्राग्रेप्येवम् । आङो रूपसाधनार्थमावश्यकत्वादाह—**आ समन्तादित्यस्येति** । इदमग्रेप्यन्वेति । 'उपपादनमध्ये'इति शेषः । **चेन**-इण्धातुपक्षे रूपासिद्धिसमुच्चयः, एत्येधेति'वृद्धेर्जागरूकत्वात् । नन्वसता-प्यवयवार्थेन रथन्तरादिवद्व्युत्पादनं साधुत्वार्थमत आह—**रूढौ त्विति** । शुद्धरूढौ त्वित्यर्थः । कोशादि-तात्पर्यग्राहकाभावादिति भावः । **अतः**=प्रकारान्तरस्यासम्भवात् । **तम्**=अन्योन्याश्रयम् । सम्पूर्णसूत्रा-वृत्तिर्भगवतोप्यभिमतेत्याह—**भाष्येप्येति** । **वक्तव्यमितीति** । अस्यान्त्ये एव सम्बन्धः । कैयटीयव्याख्या-नस्य दूष्यत्वादाह—**तस्येति** । 'अन्त्यशब्दस्ये'त्यस्य मध्यमणिन्यायेनान्वयः । **चो** व्युत्क्रमे, अन्वय-श्च । कर्मधारये त्वन्त्यशब्दस्य पूर्वनिपातापत्तिः, आद्ये प्रथमानुपपत्तिश्च । यथा कथञ्चिदुपपादनापेक्षयाऽ-

ॐ सदाशिवभट्टीयम् ॐ

अन्त्येन सहादिसञ्ज्ञको भवतीत्यर्थः । रूपसिद्धिस्त्वा एत इत्यत्रैङीति पररूपं कृत्वौमाङोश्चेति पररूपकरणेन बोध्या, अत एवाङत्र । **रूढौ तु न मानमिति** । नचावृत्तौ यन्मानं तदेव मानन्तत्रेति वाच्यं, शङ्कापर-भाष्यादितस्तदभावानुमितेरित्यूह्यमिति । यत्त्वत्र प्रकरणे द्विवचनेनैव निर्देष्टव्यं स्यादिति **पाठकस्तन्न**,'नपुंसक-

ॐ विषमपदविवृतिः ॐ

**इण्गताविति** । इदं चिन्त्यं-तस्मिन्ने'त्येधत्यूठ्'स्वितिवृद्धौ सहेतेतिरूपानिष्पत्तेः। **व्यर्थत्वं चेति** । चेन–'अमङणे'ति णादिभिरणादिप्रत्याहारापत्तिर्बोध्या । **सम्बन्धसामान्येति**। अवयवावयविभावस्ये-

ॐ वरवर्णिनी ॐ

**सम्बन्धसामान्येति**—निरूप्यनिरूपकभावसम्बन्धार्थकेत्यर्थः । 'हल्रूपान्त्य'मित्यत्र हल्यपि व्यपदेशिवद्भावेन—हल्निरूपितान्त्यत्वस्यारोपादन्त्यत्वे हल्निरूपितत्वस्य सम्भवात् । एवं राहावपि स्वनिरूपितावयवत्वारोपेण 'राहोःशिर' इत्यादावपि निरूपितत्वं सुलभम् । नचावयवावयविभावार्थक-षष्ठ्या–एव समासेऽपि न दोषः, 'हल्सूत्रान्त्य'मित्यर्थे 'हल्रूपान्त्य'मित्यर्थे चावयवावयविभावस्यैव षष्ठ्यर्थ-तया भानादिति वाच्यम् । 'हल्सूत्रान्त्यमि'दित्यर्थे—मुख्यस्य, 'हल्रूपान्त्य'मित्यर्थे 'राहोःशिर' इति वदारोपितस्य च—अवयवावयविभावस्य—भानेन मुख्यत्वारोपितत्वभेदेन सम्बन्धभेदाभ्युपगमात् ।

**एकशेषनिर्देश इति** । **परे** तु सम्पूर्णसूत्रावृत्तिरेव भाष्यसम्मता, एकशेषस्तु न युक्तः, हल्सूत्रबोधक-

१. उदयङ्करपाठकः ।

श्रूयमाणस्यैवोभयत्रान्वयः, एवञ्च हल्सूत्रान्त्यं हल्रूपान्त्यञ्चेति बोधः, अन्त्ये—'राहोः शिर' इतिवत्षष्ठी'ति । अत्रोच्चारयितुरेकशेषनिर्देशोबोद्‌धुस्त्वावृत्त्या बोधः । 'हसमीपो

### ❀ अभिनव-चन्द्रिका ❀

'एकापि षष्ठी विषयभेदाद्भिद्यते'इति मूलं खण्डयित्वा—'प्रत्ययपदं—प्रत्ययावयवे लाक्षणिक'मित्या-द्युक्तम्, अत्र च मनोरमोक्तमेवाश्रितमिति तद्विरोधः स्पष्ट एव । वस्तुतश्चिन्त्य एवायं ग्रन्थः—षष्ठ्या सम्बन्धत्वेन सम्बन्धद्वयावगाहिबोधस्यानुभवसिद्धव्युत्पन्नत्वाभावात् । अत एव राजपुरुषः

### ❀ चिदस्थिमाला ❀

न्यत्र क्लृप्तगतिरेवोचितेति भावः । **एवञ्च**=तथान्वये च । **यद्यप्या**गन्तूनामिति न्यायेन तस्यान्त्ये निवेश-स्तथापि 'श्रौतक्रमा'दिति न्यायेन, तस्यादावावश्यकतया चाह—**हल्सूत्रान्त्यमिति** ।

ननु द्विर्नायवाक्यार्थे षष्ठ्यनुपपत्तिरत आह—**अन्त्येति** । नन्वेवमप्यावृत्त्यलाभेन कथं सम्मनि-दानमत आह—**अत्रोच्चेति । आवृत्त्येति** । पूर्वं तज्ज्ञानाभावेन क्रमिकबोधस्यैव वाच्यतयाऽऽवृत्तेर्बोद्धुरा-वश्यकत्वात् । एवञ्च कण्ठतस्तथा नोक्तमपि तदभिमतमेव, अत्र पक्षे पदद्वयावृत्तेरुक्तरीत्याऽऽवश्यकत्वे षष्ठ्यर्थान्वयक्लेशोऽन्त्ये इति तमसहमानो **मूलकृ**दावृत्तिमेव सम्पूर्णस्य दर्शितवान् । नन्वेवं भाष्यव्याख्याने

### ❀ सदाशिवभट्टीयम् ❀

मनपुंसकेने'त्येकवचनं, तस्याप्येकशेषस्थानापन्नत्वात् । स्पष्टश्चेदं प्रकृतसूत्रे कैयटे एव । नन्वेवमपवादबोधा-त्पूर्वमुत्सर्गवाक्यस्य लक्ष्यसंस्कारकत्वोपपत्तावुदासीनविषय इवापवादविषयेपि प्रवृत्त्यापत्तौ 'पश्चाद्भुक्तवन्तम्प्रति-ब्रूयान्मा भुक्था इति तेन किंकृतं स्या'दिति 'स्थानेन्तरतम' सूत्रभाष्योक्तन्यायबोधितापवादशास्त्रवैयर्थ्यापत्तिमूलकेन

### ❀ विषमपदविवृतिः ❀

कत्वेऽप्येकत्र तस्य मुख्यत्वमपरत्र तस्यारोपितत्वमित्येतावता भेदमाश्रित्येदमुक्तमिति ध्येयम् । नचा-स्यामवस्थायां सहविवक्षाया असम्भवादेकशेषस्याप्यसम्भव इति वाच्यम्, 'एकशेषनिर्देशाद्वा सिद्धं

### ❀ वरवर्णिनी ❀

हलपदार्थस्यान्त्यपदार्थेनान्वयेऽपि—अद्य यावत्-हकारादिलान्तसमुदायबोधकहलपदशक्तिग्रहाभावेन—तस्या-न्त्यशब्देनान्वयविरहेण—अन्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वस्यैकदा हलपदार्थयोरसम्भ-वेन—एकधर्मावच्छिन्ननिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपसाहित्यविरहात् । **नच** पाणिने-र्द्वितीयहलपदार्थज्ञानस्यापि तदानीं सत्त्वात्साहित्यसम्भव इति वाच्यं, 'करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग'इत्यादिना **हलन्त्यसूत्रशब्दरत्ने**ऽस्य दूषितत्वात् । **नचैकस्य** हलपदार्थस्य ज्ञानात्तत्रान्त्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतामाश्रित्य बोधे जाते, पश्चात्क्रमेण द्वितीयहलपदार्थे ज्ञातेऽ-परो बोध इति वाच्यं, बोधद्वयस्यान्त्यपदावृत्तिमन्तरेणासम्भवेन प्राचीनमतानुप्रवेशापत्तेः । **किञ्च**—हलपदवाच्यत्वेन यथाकथञ्चिद्धलपदार्थज्ञानादेकशेषसम्भवेपि—द्वितीयहलपदनिष्ठशक्तेरद्य यावदज्ञातत्वेनेतपदा-र्थोपस्थित्यभावात्पूर्वं पदार्थद्वयविषयको बोधो वक्तुमशक्यः, 'खले कपोत' न्यायेन—बोधद्वयस्यैकदैवोदयात् । 'राजपुरप्रवेश'न्यायेन क्रमिकबोधाङ्गीकारादवान्तरबोधेपि—तद्बोधे एकहलपदार्थस्य भानाभावादित्याहुः ।

**द्वन्द्वान्त इति** । अन्तशब्दः समीपार्थः । **उभयत्रान्वय इति** । एकधर्मावच्छिन्नान्वयित्वरूप-साहित्ये एव द्वन्द्वविधानात्प्रत्येकान्वयाभावे द्वन्द्वस्यासाधुत्वापत्त्या प्रत्येकमन्वयोऽभ्युपेयते, इत्येतद्युक्ति-मूलक एव 'द्वन्द्वान्ते'इति न्यायः, सा च युक्तिरेकशेषेऽपि समेति तत्रापि तथान्वय उचित एव । एकशेषस्य द्वन्द्वापवादतया तथौचित्याच्चेति भावः । **समीप इति** । फलाभावादत्रार्थेऽन्त्यपदासम्बन्धो-बोध्य इतिकैयटाशयः ।

लकार इत्, हल्रूपान्त्यञ्चे'ति कैयटोक्तव्याख्यायान्तु–'हल् इत्सञ्ज्ञम्भवति, हलन्त्यञ्चे'दिति वदेदित्यूह्यम् ।

नन्वेवमपि 'न विभक्तौ'विति विभक्तिपदवोद्ध्यसुप्तिङ्बोधो 'हलन्त्य'मिति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एवेति चेन्न, अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात् ।

❀ अभिनव-चन्द्रिका ❀

इत्यादौ—सम्बन्धत्वेन रूपेण स्व-स्वामिभाव–जन्य-जनकभावयोर्भानं न भवति, प्रकृते तेन रूपेण सम्बन्धभाने तु–'एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वयबोधेच्छारूप'सहविवक्षाया अभावेनैकशेषाप्राप्तेः । 'सहविवक्षाया असम्भवा'दिति प्रतीकस्थशब्दस्तूक्तदिशा सहविवक्षाया असम्भवाच्च । **अन्योन्याश्रयस्तदवस्थ एवेति** । न च प्रकृते चक्रकमित्यन्योन्याश्रयकथनमसङ्गतमिति वाच्यम्, उभयोरप्येकरूपेणैव दूषकतायाः सत्त्वेन क्षतिविरहात् ।

❀ चिदस्थिमाला ❀

सर्वावृत्तिलाभस्तदैव न, कैयटेनान्यथा व्याख्यातत्वादत आह—**हसमीपइति** । हस्य-ल्-हलिति समास इति भावः । **व्याख्यायान्त्विति** । 'भगवदभिमतायां'मिति शेषः । समासानुपपत्त्यादिदोषान्तरमप्यन्यत्र स्पष्टं, तदाह—**इत्यूह्यमिति** ।

**एवमपि**=उक्तान्योन्याश्रयपरिहारेऽपि । **इति विभक्तीति** । इतिसूत्रघटकविभक्तीत्यर्थः । सुबादिसिद्धिस्तदधीनत्वाद्वाक्यार्थबोधाय च तस्यावश्यकत्वमिति भावः । तद्बोधश्च = 'हलन्त्य'मिति वाक्यार्थबोधश्च । **—पवादेति** । 'न विभे'ति निषेधेत्यर्थः । नन्वपवादवाक्यार्थज्ञानमेव प्रति-

❀ ज्योत्स्ना ❀

इत्यपि न, तृद्धरनवकाशत्वात् । **इत्यूह्यमिति** । यद्यपि–भाष्ये हल्च हल्च हलित्येकवचननिर्देशाच्छास्त्रप्रयोगसंस्कारफलको विभक्त्यन्तैकशेषो विवक्षितः । स च 'द्विर्वचनेऽची'त्यादावसहविवक्षायामिव प्रकृतेऽन्त्यपदार्थसापेक्षस्यापि भवतीति 'हलन्त्यमि'दित्येतावन्मात्रादन्त्यं हल्, हल् चेत्सञ्ज्ञं भवतीत्यर्थद्वयस्यापि कोडीकारः । सहविवक्षासद्भावाच्च हलित्येकशब्दप्रयोगः, यत्र च नास्ति सहविवक्षा

❀ वरवर्णिनी ❀

**ऊह्यमिति** । परे तु हसमीपो लकार इत्यर्थेपि अन्त्यपदसम्बन्ध आवश्यक एव, अन्यथा 'हल विलेखने' इत्यत्र लस्येत्वापत्तिः, अन्त्यपदसम्बन्धे तु तत्सामर्थ्यादुपदेशान्त्यस्यैव ग्रहणान्न दोषः, तत्राकारस्यैवोपदेशान्त्यत्वादिति—तत्राप्यन्त्यपदसम्बन्धार्थमेव कैयटेन च तथा नोक्तमिति,—**शेखरश्चिन्त्य एवेत्याहुः** । **अन्योन्याश्रय इति** । नन्वत्र—'हलन्त्य'मित्युत्सर्गवाक्यार्थबोधो 'न विभक्तौ'वित्यपवादवाक्यार्थबोधोत्तरं, तद्बोधश्च विभक्तिपदार्थज्ञानाधीनः, विभक्तिपदार्थज्ञानञ्च सुप्तिङ्पदार्थज्ञानाधीनं, सुप्तिङ्पदार्थज्ञानन्तु 'आदिरन्त्येने'तिवाक्यार्थबोधाधीनं, तद्बोधश्चेत्पदार्थज्ञानाधीनः, तच्च हलन्त्यमिति ज्ञानाधीनं, तच्च 'न विभक्तौ'वितिवाक्यार्थज्ञानाधीनमिति चक्रकमेवेति चेत्सत्यम्, चक्रकेऽन्योन्याश्रये च स्वप्रयोज्यप्रयोज्यत्वरूपस्यैव दोषतयाऽन्योन्याश्रयसाधर्म्याच्चक्रकेऽपि तत्पदप्रयोग इत्यवधेयम् । **विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेयः** । **पदपदार्थोपस्थिताविति** । शाब्दबोधे तात्पर्यनिश्चयत्वेनैव कारणत्वं, न तु तात्पर्यप्रमात्वेन, तदेवमपवादवाक्यार्थ-बोधात्पूर्वं हलपदे तात्पर्यप्रमात्वविरहेऽपि तात्पर्यनिश्चये बाधकाभावादुत्सर्गवाक्यार्थबोधः सम्भवत्येवेत्याशयः । अपवादवाक्यार्थबोधात्पूर्वमुत्सर्गेण दध्यत्रेत्यादौ यणादिकार्यं मास्तु, उत्सर्गवाक्यार्थबोधे तु न किमपि बाधकं पश्याम इति तत्त्वम् ।

न ह्यभावज्ञाने प्रतियोगिज्ञानस्येव प्रतियोगिज्ञानेऽभावज्ञानस्य कारणता कस्यापि सम्मता, प्रतियोगिज्ञानं विना निषेधवाक्यार्थाऽसम्भवाच्च ।

'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' इत्यस्य त्वयं भावः—'लक्षणैक-

❀ अभिनव-चन्द्रिका ❀

**प्रतियोगिज्ञानस्येवेति** । चिन्त्यमिदम्—'अभावः पदार्थः' 'अभावः प्रमेयः' 'अभावश्चतुर्विधः' इत्यादौ प्रतियोगिज्ञानाभावेपि अभावज्ञानस्य जायमानत्वेनाभावज्ञानत्वेन प्रतियोगिज्ञानत्वेन कार्यकारणभावस्याप्रामाणिकत्वात् । न च प्रतियोगिविशेषिताभावज्ञानं प्रतियोगिज्ञानमन्तरा न भवतीति प्रतियोगिज्ञानं—प्रतियोगिविशेषिताऽभावज्ञानं प्रति कारणं, तथा च मूलस्थाभावज्ञान इत्यस्य प्रतियोगिविशेषिताभावज्ञान इत्यर्थ इति नासङ्गतिरिति वाच्यं, विशिष्टबुद्धित्वेन कार्यकारणभावस्य क्लृप्तत्वेन तेनैव प्रतियोगिविशेषिताऽभावबुद्ध्युपपत्तौ निरुक्तकार्यकारणभावस्य निर्युक्तिकत्वात् ।

अन्ये तु—'नञ्पदार्थतावच्छेदकं यद्विलक्षणं रूपं, तेन रूपेणाभावज्ञानं प्रतियोगिज्ञानमन्तरा न सम्भवति, अत एव 'ने'त्युक्तौ 'किं ने'ति जिज्ञासावश्यमुदेति, तथा चा'भावज्ञाने'इत्यस्य नञ्पद-वाच्यतावच्छेदकविलक्षणरूपेणाभावज्ञाने इत्यर्थ इति नासङ्गति'रित्याहुः । **निषेधवाक्यार्थासम्भ-**

❀ चिदस्थिमाला ❀

बन्धकमत आह—**प्रतीति** । **वाक्यार्थेति** । तज्ज्ञानेत्यर्थः । नन्वेवमपवादबोधात्पूर्वमुत्सर्ग-वाक्यस्य लक्ष्यसंस्कारकत्वापत्तावुदासीनविषये इवापवादविषयेपि प्रवृत्त्यापत्तौ 'पश्चाद्भुक्तवन्तं प्रति प्रब्रूयान्मा भुक्था—इति किं तेन कृतं स्या'दिति '**स्थानेन्तरतम**' इति सूत्रभाष्योक्तन्यायबोधितापवादशास्त्र-वैयर्थ्यापत्तिमूलकेन—प्रातिपदिकार्थसूत्रभाष्यपठितेन—'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा' इति न्यायेनोत्सर्गवाक्यार्थबोधात्पूर्वमपवादवाक्यार्थबोधस्यावश्यकत्वसूचनेन प्रागुक्तरीत्या सुप्तिङ्निष्पत्त्यभावेना-न्योन्याश्रयस्तदवस्थ एवात आह—**पूर्वं ह्येति** । इयं लक्षणैकचक्षुष्काशयेत्याशयेनाह—**लक्षणैकेति** ।

❀ ज्योत्स्ना ❀

तत्रैकशब्दप्रयोगो न कृतः । 'द्विर्वचनञ्च 'द्विर्वचनञ्च—द्विर्वचनं, द्विर्वचने कर्तव्ये द्विर्वचनेऽचिप्रत्यये' इति यथेति कैयटोक्तव्याख्यायास्तात्पर्यं शक्यं वर्णयितुम् । सम्बन्धसामान्यार्थकषष्ठ्याऽन्त्यशब्दस्य

❀ सदाशिवभट्टीयम् ❀

प्रातिपदिकार्थसूत्रभाष्यपठितेन 'पूर्वं'मित्यादिन्यायेनोत्सर्गवाक्यार्थबोधात्पूर्वमपवादवाक्यार्थबोधस्यावश्यकत्व-सूचनेन प्रागुक्तरीत्या सुप्तिङ्निष्पत्त्यभावेनान्योऽन्याश्रयस्तदवस्थ एवात आह—**पूर्वं ह्यपवादेत्यादि** । इति

❀ वरवर्णिनी ❀

**निषेधवाक्यार्थेति** । सङ्केतसम्बन्धेनेत्पदस्याप्रसिद्धत्वात्—अप्रसिद्धप्रतियोगिकाभावज्ञानस्य च नैयायिकै-रनङ्गीकारात्ताद्दशेत्पदाभावबोधनासम्भवादित्यर्थः । नचो'पदेशेजनुनासिक'इत्यस्य वाक्यार्थबोधे बाधका-भावेन सङ्केतसम्बन्धेनेत्पदवत्त्वस्य प्रसिद्धेस्तत्प्रतियोगिकाभावबोधनं सम्भवतीति वाच्यम्, हलन्त्यमिति वाक्यार्थबोधात्पूर्वमच्पदार्थज्ञानाभावेनोपदेशेऽजित्यस्यापि वाक्यार्थासम्भवात् । नचालीकप्रतियोगिकाभावस्य नैयायिकमतेऽभावेपि शाब्दिकमते तत्सत्त्वे बाधकाभाव इति वाच्यम्, प्रतियोगिज्ञानं विना निषेधस्य=निषेधशास्त्रजन्यबोधस्य योऽर्थः=फलं—लक्ष्ये प्रवृत्तिः, तदसम्भव इत्यर्थेनादोषात् ।

**न च** 'न विभक्तौ' वित्यत्रेदित्यस्यानुवृत्तेः श्रवणेन्द्रियेणैव प्रतियोगिनः प्रत्यक्षस्य सम्भवात्, घटकत्व-सम्बन्धेन वाक्ये तत्प्रसिद्धेश्च 'न विभक्तौ'वित्यस्य वाक्यार्थबोधः सुलभ इति वाच्यम्, घटकत्वसम्बन्धेने-त्पदस्य प्रसिद्धावपि सङ्केतसम्बन्धेनेत्पदाप्रसिद्धेः, येन सम्बन्धेन यदभावः प्रत्याय्यस्तेनैव सम्बन्धेन प्रति-योगिप्रसिद्धेरावश्यकत्वात् । **लक्षणैकचक्षुष्कस्येति** । लक्षणं=पाणिनिसूत्रमेव, एकं=प्रधानं, चक्षुः=

चक्षुष्कस्य उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यव-स्थानापत्त्या,—'भुक्तवन्तम्प्रति मा भुक्था' इति वाक्यस्येव—अपवादशास्त्रवैयर्थ्यापत्त्या

❀ अभिनव-चन्द्रिका ❀

**वाच्येति** । इदमपि चिन्त्यं,—'न विभक्ता'वित्यादावित्पदस्यानुवृत्तत्वेन श्रवणेन्द्रियेणैव प्रनियोगि-ज्ञानस्य जायमानत्वेन पाणिनिमङ्केतसम्बन्धावच्छिन्नेत्पदवत्त्वावच्छिन्नप्रनियोगिनाकाभावबोधस्य 'हलन्त्य'मिति वाक्यार्थबोधात्प्रागपि 'न विभक्ता'वित्यादेः शाब्दबोधसम्भवात् । निषेधसाफल्याय निषेध्यबोधसापेक्षत्वेपि निषेधवाक्यार्थबोधं प्रति निषेध्यवाक्यार्थस्य कारणत्वे मानाभावाच्च ।

**उद्देश्यतावच्छेदकावच्छिन्न इति** । अयं भावः-असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधया-

❀ चिदस्थिमाला ❀

अस्य—बुद्धि-पर्यालोचन-निर्णय-संस्कारेष्वन्वयः । 'प्रागुक्तरीत्योत्सर्गवाक्यार्थबोधस्य जातत्वेनापवादवाक्यार्थ-बोधात्पूर्वे'मिति शेषः । **उद्देश्यतेति** । 'उत्सर्गशास्त्रीये'त्यादिः । **सर्वत्र**=उदासीनविषये, अपवादविषये च ।

**विषयेति** । लक्ष्यभेदेत्यर्थः । अनापत्त्या=अनुपपत्त्या । क्वचित्तथैव पाठः । ननु तदा तस्यैव वैयर्थ्यमिति तदनुपपत्तिदोषो न युक्तोऽनस्तदेवाह—**भुक्तेति** । 'वाक्यस्येवापवादशास्त्रस्य वैयर्थ्यापत्त्या चापवादशास्त्र-

❀ ज्योत्स्ना ❀

समासाभिप्रायकव्याख्याने तु'इरयो रे'इत्यत्रेव न्याय्ये एकशेषे—हल्च हल्च हलौ, हलन्त्यमिदिति द्विवचनेनैव निर्देष्टव्यं स्यात्तथापि हसमीपो लकार इत्यर्थे हस्य लिति षष्ठीसमासानापत्तिः, सामीप्यस्या-षष्ठ्यर्थत्वादित्यादि दीक्षितोक्तदूषणोपलक्षणमेतदितीह परमार्थः । वस्तुतो 'ग्रामकूपो' 'गङ्गातीर'-मित्यादिसमासात्सामीप्यार्थप्रतीतेरानुभविकत्वेनैषोऽप्यदोष इत्यन्यत्र विस्तरेण निरूपणाद्यावद्बाधं साधु।

'भुक्था इति पाठः, लुङि श्नमभावात् । न च निरनुबन्धे माशब्दे उपपदे लङि भविष्यति, तस्य स्वयमनङ्गीकारात् । ननूत्सर्गकृतसंस्कारबुद्धावप्यपवादशास्त्रारम्भसामर्थ्याज्जातनिवृत्त्या नाव्यवस्थेत्यत आह—**इति वाक्यस्येवापवादशास्त्रस्येति** । नैरर्थक्यस्य साधारणधर्मस्य गम्यमानत्वादप्रयोगः ।

❀ सदाशिवभट्टीयम् ❀

**वाक्यस्येवापवादशास्त्रस्येति**। 'वाक्यस्येवापवादशास्त्रस्य वैयर्थ्यापत्त्या चापवादशास्त्रपर्यालोचनेने'त्येव पाठः

❀ वरवर्णिनी ❀

प्रमाणं यस्य-तस्य तथाभूतस्येत्यर्थः । अलौकिकज्ञानरहितानां पाणिनिसूत्रमात्रावलम्बनेनैव साधुत्वासाधुत्वे निश्चिन्वतामस्मादृशामिति यावत् । पाणिनिप्रभृतयो लक्ष्यैकचक्षुषः, वयं लौकिकास्तु लक्षणैकचक्षुष्का इति तत्त्वम् । एतन्मते यणादिविधायकैस्तत्तच्छास्त्रैर्यणादिघटितस्य साधुत्वबोधनेऽपि 'मदुत्तरप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साधु' इत्येवम्'**नचि** चे'त्यनेन बोधितस्य द्वित्वस्यापि साधुत्वमभ्यनुज्ञायते, अतोऽत्र पूर्व-पूर्वशास्त्रबोधिते साधुत्वेऽप्रामाण्यग्रहोऽवश्यमभ्युपेय इति सर्वं सुस्थम् । उद्देश्यतावच्छेदका-वच्छिन्ने=उद्देश्यमात्रे, असति बाधके उद्देश्यतावच्छेदकव्यापकताया एव विधेये भानात् । नन्वपवादशास्त्र-सम्भावनाया बाधकस्य सत्त्वादुद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयो न भविष्यति, किन्तु उद्देश्यता-वच्छेदकसामानाधिकरण्येनैवेति—अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेर्न दोष इत्यत आह—**विषयव्यव-स्थानापत्त्येति** । उद्देश्यतावच्छेदकसामानाधिकरण्येन । प्रवृत्तौ । कदाचिदपवादविषयीभूतं लक्ष्यमपि संस्कुर्यादद्य यावदुभयोर्विषयाणां याथातथ्येनानिर्देशात्, किञ्चोद्देश्यतावच्छेदकसामानाधिकरण्येन शास्त्र-प्रवृत्तौ कदाचिदसंस्कृतमपि लक्ष्यमापद्येतेत्यव्यवस्थापत्तिरित्युद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वय-

चापवादशास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय,—तदविषयं तत्तल्लक्ष्यं तत्तद्विषयवाक्योपप्लवद्वारोत्सर्गेण संस्करोति, अन्यथा विकल्पापत्ति'रिति। यद्यपि 'भुक्तवन्तं प्रती'ति न्यायो लुगादिना जातनिवृत्तेर्व्यभिचरितस्तथापि तत्राप्यनुत्पत्तिरेवेति न दोषः,

❀ अभिनव-चन्द्रिका ❀

न्वय इति सिद्धान्तः। 'अवच्छेदकावच्छेदेन विधेयान्वय' इत्यस्य—उद्देश्यतावच्छेदकव्यापकत्वं विधेये, विधेयसंसर्गे वा नियमतो भासते इत्यर्थः, तथा च सर्वत्रोत्सर्गप्रवृत्तौ उत्सर्गापवादयोर्विषयव्यवस्था न स्यादिति। **तदविषयमिति**। उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा उत्सर्गेण संस्कारः कर्त्तव्य इति भावः।

**लुकानुत्पत्तिरेवेति**। न च 'भवे'त्यादौ हेर्लुक्यपि सिपः श्रवणं स्यात्, एवं रीत्या सर्वत्रा-

❀ चिदस्थिमाला ❀

पर्यालोचनेने'ति पाठः। **शास्त्रेति**। तद्वाक्यार्थबोधनिश्चयेनेत्यर्थः। अत्रास्यैव बोधस्य लक्ष्यसंस्कारकत्वादाह-**तद्विषयेति**। तदविषयम्=अपवादशास्त्राविषयं। निषेधेन, महावाक्यार्थबोधेन वा तस्य तत्त्वनिर्णयादिति भावः। अयमपि बोधो न लक्ष्यसंस्कारक इत्याह—**तत्तदिति**। 'तत्तदर्थविभाग'इति यदिदं साधु, एवं सर्वत्र बोध्यम्। अयं द्वारभूतोपप्लवोऽपवादवाक्यस्थलेऽपि बोध्यः—सति सम्भवे। **संस्करोतीति**। अत्र लक्षणैकचक्षुष्क एव कर्त्ता, अत एव क्त्वोपपत्तिरिति भावः। ननु वैयर्थ्यापत्ताविष्टापत्तिरत आह—**अन्यथेति**। तथाङ्गीकारे वैयर्थ्यापत्तिरित्युक्तरीत्यनङ्गीकार इत्यर्थः। **विकल्पेति**। शास्त्रत्वाविशेषात्सर्वथा वैयर्थ्यस्य दुर्वचतया शास्त्रद्वयप्रामाण्यादिति भावः। **निवृत्तेरिति**। 'स्वीकारा'दिति शेषः।

❀ ज्योत्स्ना ❀

**अन्यथा विकल्पेति**। सर्वथा शास्त्रबाधस्य जातनिवृत्तौ प्रसङ्गाद्विकल्पापत्तिरिति भावः। **तत्रेति**। लुगादिविषय इत्यर्थः। **न्यायानङ्गीकारेऽपीति**। अत्रापि 'तत्रे'ति सम्बन्धः।

❀ विषमपदविवृतिः ❀

हल्च हल्च ह'लिति भाष्यप्रामाण्येनाऽसहविवक्षायामप्येकशेषकल्पनादित्यूह्यमिति कैयटोक्तव्याख्यैव युक्ता,मुख्यारोपितयोरेकषष्ठ्यर्थत्वाभावात्। भाष्याक्षराण्यपिकथञ्चिदेतदानुगुण्येनैवयोज्यानीतिबोध्यम्।

❀ वरवर्णिनी ❀

आवश्यक इति भावः। **तदविषयमिति**। अयम्भावः—वाक्यार्थबोधः पूर्वं विधिशास्त्रस्य, पश्चान्निषेधशास्त्रस्य, परन्तु लक्ष्ये प्रवृत्तिः पूर्वं निषेधस्य, ततोऽवशिष्टेषु लक्ष्येषु विधेः। 'पूर्वं ह्यपवादा'इत्यत्र—प्रवृत्त्यवधिकमेव पूर्वत्वं पश्चात्त्वञ्च गृह्यते इति।

बुद्ध्यारूढाः=प्रवर्त्तनीयत्वप्रकारकज्ञानविषयाः, प्रवर्त्तनाय बद्धसन्नाहा इति यावत्। **तत इति**। अपवादविषयं प्रकल्प्य, अपवादप्रवृत्तेः पूर्वमेव उत्सर्गः प्रवर्त्तत इत्यर्थः। **तत** इतिदिग्योगलक्षणा पञ्चमी। कैयटमते—प्रकल्प्य=अपवादविषयनिर्माणं कृत्वा, ततः=तं परित्यज्य, उत्सर्गः प्रवर्त्तत इत्यर्थः, ल्यब्लोपे हि पञ्चमी। यथा—यून इत्यादौ—युवन्—असित्यत्र यकारस्य **श्वयुवेति** सम्प्रसारणे—'न सम्प्रसारणे'इति निषेधप्रवृत्त्यसम्भवः, परस्य—वस्य—सम्प्रसारणे तु सम्प्रसारणपरत्वसम्भवा'न्न सम्प्रसारणे'इति निषेधप्रवृत्तिसम्भव इति—पूर्वयणि अपवादविषयत्वसम्भावनया स्वप्रवृत्त्ययोग्यतां, परयणि तदसम्भावनया स्वप्रवृत्तियोग्यताञ्च सम्भाव्य, अपवादविषयं विहाय परयणो वकारस्य—सम्प्रसारणं भवति, तथैव सर्वत्रापवादविषयं सम्भाव्य—प्रकल्प्य, तं परित्यज्योत्सर्गशास्त्रं प्रवर्त्तत इति **कैयटाशयः**।

न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्त्वाच्च। 'अभिनिविशन्त' इत्यन्य—बुद्ध्यारूढा भवन्ती-त्यर्थः । लक्ष्यैकचक्षुष्कस्तु—तत्तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्योत्सर्गेण लक्ष्यसंस्कारञ्जानीते, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः । तदुक्तम्—'प्रकल्प्य वापवादविषयं तत उत्सर्गः प्रवर्तते' इति । प्रकल्प्य=परित्यज्य ।

## ॐ अभिनव-चन्द्रिका ॐ

देशस्य लुकि स्थानिनः श्रवणापत्तिरिति वाच्यं, लुग्विधायकशास्त्राणां तात्पर्यग्राहकत्वं स्वीकृत्य तत्तदादेशविधायके 'सेर्ह्यपिच्चे'त्यादौ 'लोट्स्थानिकसित्त्वाद्यवच्छिन्नस्य स्थानेऽदन्ताङ्गाव्यवहितो-त्तरत्वाभावविशिष्टो हित्वाद्यवच्छिन्नो भवती'ति,—'अभ्यासत्वावच्छिन्नमुद्दिश्यादौ नरहल्निवृत्तिपूर्वक आदिहल् शिष्यत' इति 'हलादिःशेष'इत्यत्रेवार्थस्वीकारेण—सित्त्वावच्छिन्नस्य स्थानित्वेन सकलसिन्नि-वृत्तिर्भवतीत्यदोषात् । 'लुग्वा दुहे'त्यादिविभाषालुग्विषये च–'दन्त्यावात्मनेपदाव्यवहितपूर्वत्वविशिष्ट-दुहाद्यव्यवहितोत्तरत्व' 'स्वाभावत्वे'तदन्यतरविशिष्टक्सत्वावच्छिन्नः च्लित्वावच्छिन्नस्य स्थाने भवतीति यत्र क्सोऽनुत्पन्नस्तत्रत्यं दुहाद्यव्यवहितोत्तरत्वाभावसामानाधिकरण्यमादाय क्स-तदभावतदन्यतर-घटितरूपं भवतीति च्लित्वावच्छिन्नस्य स्थानित्वेन तस्य कुत्रापि श्रवणं न भवतीति न दोषः,

वस्तुतस्तु लुकाऽनुत्पत्तेरन्वाख्यानं चिन्त्यमेव, अन्यादेशेष्विव स्थानिघटितस्य साधुत्वबुद्धिः प्रसक्ता आदेशघटिते साध्वीति बोध्यं, तेन ज्ञाननिवृत्तेरभावेन 'भुक्तवन्तं प्रती'तिन्यायविषयत्वाभावात् । भावरूपादेशविषये च स्थानिपदार्थोऽन्यादृशः, लुग्विषये चान्यादृश इत्यत्र प्रमाणाभावात्, भावा-

## ॐ चिदस्थिमाला ॐ

**तत्रापि**=लुगादिविषयेऽपि । एवञ्च प्रागुक्तरीत्या तदन्यविषयता नास्तीति न व्यभिचारस्तदाह—**न दोष इति**।

अभ्युपेत्याप्याह—**न्यायेति** । प्रागुक्तरीत्येति भावः । ध्वनितं चेदमर्थवत्सूत्रे भाष्ये इति तत्रैवोद्योते स्पष्टम् । ननु नायं परिभाषार्थः, 'अभिनिविशन्ते' इत्युक्त्याऽऽदौ तद्बुद्ध्या तत्प्रवृत्तिरित्यस्यैव ततो लाभादत आह—**अभीति** । एवञ्च—हि=यतः, उक्तहेतोः, पूर्वमपवादाः=अपवादशास्त्राणि । अनेन परिभाषाज्ञापक-मपि सूचितम् । एवञ्च सर्वथाऽनवकाशत्वविषयोऽयम् । अभिनिविशन्ते=बुद्ध्यारूढा भवन्ति, पश्चादुत्सर्गा-लक्ष्यं संस्कुर्वन्तीति परिभाषार्थो बोध्यः । **एतेनोक्ता**न्योन्याश्रयपरिहाराय अपवादसिद्ध्युपयोग्यन्यविषये एवा-पवादबोधात्पूर्वमुत्सर्गस्य न लक्ष्यसंस्कारकता, अपवादसिद्ध्युपयोगिनि तु तद्बोधात्पूर्वमपि सेत्यवश्यं वाच्यं, **न विभक्ता**वित्याद्यपवादारम्भसामर्थ्या'दित्यपास्तम्, उक्तयुक्तेः । द्वितीयमते दोष एव नेति पूर्वतो वैलक्षण्यं प्रतिपादयन्मतान्तरमाह—**लक्ष्यैकेति** । **तच्छास्त्रेति** । अपवादशास्त्रेत्यर्थः । **तत्त**-दित्यपपाठः, वीप्साया अनुपयोगात्, बह्वपवादस्थलाशया वा वीप्सा, यावदपवादाशया वा । अन्त्ये—'उत्सर्गेणे'त्यस्य—उत्सर्गत्वावच्छिन्नेनेत्यर्थः, एवमपवादेत्यत्रापि । ननु लक्ष्यैकचक्षुष्कस्य लक्षणापेक्षैव नेति कथन्तेन तत्संस्कारोऽत आह—**तस्यापीति** । लक्ष्यैकचक्षुष्कस्यापीत्यर्थः, **अपि**रुक्तसमुच्चायकः, एवेन तदन्यथा धर्मोत्पत्तिनिरासः । स्पष्टञ्चेदं पस्पशाह्निके । इदमपि तत्र गमकमिति भावः । **वा**=अथवा, 'विषय'—मित्यग्रे—'तत'इति शेषः, अपवादशास्त्रपर्यालोचनात्प्रागपीति तदर्थः । 'अभिनिविशन्ते'इत्यस्य तद्घटक-स्यार्थमाह—**प्रवर्त्तत इति** । 'अपवादविषयं प्रकल्प्य=बुद्ध्यारूढं कृत्वा, ततः=तदनन्तरम्, उत्सर्गः प्रवर्त्तते'—इत्यर्थाङ्गीकारे तु पूर्वतो भेदो न स्यात्, इष्टापत्तौ 'वा'ग्रहणासङ्गतिरत आह—**परीति**।

## ॐ सदाशिवभट्टीयम् ॐ

इत्यन्ये । **न्यायानङ्गीकारेपीति** । ननूक्तलुगादिस्थले तथा सुवचत्वेपि 'तस्य लोप' इति विषये नैवं वक्तुं

यत्तु—'प्रकल्प्य वे'त्यस्यायमर्थः,—यथा 'न संप्रसारण' इति वचनात्परस्य यणः पूर्वं सम्प्रसारणं, पूर्वस्य तु तन्निमित्तः प्रतिषेधः' इति—अभ्यस्तसञ्ज्ञासूत्रे कैयटः, तन्न, 'न सम्प्रसारणे' इति सूत्रस्थभाष्यविरोधात्। तत्र हि 'एतदेव ज्ञापयति परस्य—न पूर्वस्येति, यद्वा सम्प्रसारणाश्रयस्य प्रतिषेधः—' इत्याद्युक्तम्, न हि न्यायेन सिद्धे एव-

ॐ अभिनव-चन्द्रिका ॐ

देशविषये च भावघटिते साधुत्वं, लुगादिविषये चाऽभावघटिते साधुत्वं बोध्यते इत्येव विशेष इति दिक्।

**सम्प्रसारणाश्रयस्य प्रतिषेध इति**। 'न सम्प्रसारणे' इति सूत्रमकृत्वा 'सम्प्रसारणाच्चे'त्यत्र 'सम्प्रसारणादसम्प्रसारणे' इति न्यासं कृत्वा पूर्वरूपमेव निषेद्धव्यमिति भावः, न च 'एष यूनः पश्ये'त्यत्र यणादेशस्य स्थानिवद्भावादेतत्तदोरिति लोपो न स्यात्, हल्परकत्वाभावादिति वाच्यं, 'सम्प्रसारणाश्रयस्य प्रतिषेध'इति भाष्यप्रामाण्येनैतादृशप्रयोगाणामनभिधानात्।

ॐ चिदस्थिमाला ॐ

अत एव प्रसङ्गादेतदर्थाभिप्रायां कैयटोक्तिं खण्डयति—**यत्त्विति**। अर्थः=प्रयोजनं, तदाह—**यथेति**। **सम्प्रसारणमिति**। 'प्रवर्त्तत' इति शेषः। एवमग्रेपि। **अभ्यस्तेति**। उभे अभ्यस्त'मिति सूत्रे इत्यर्थः। 'तत्र ही'त्यस्य 'उक्त'मित्यत्रान्वयः। एतदेव='न सम्प्रसारणे' इति सूत्रमेव। **न पूर्वस्येति**। 'आदा'विति शेषः। तेन न पूर्वं पूर्वस्य भवतीत्यर्थः। पश्चात्प्राप्तन्तु तेन निषिध्यते, लक्ष्यभेदाच्च न **लक्ष्ये लक्षण**-स्येति न्यायसञ्चार इति भावः। लक्षणया निर्वाहे ज्ञापकत्वं नेत्याशयेनाह—**यद्वेति**। प्रथमान्तसम्प्रसारण-पदस्य तदाश्रये लक्षणया सम्प्रसारणनिषेधाभावेन युगपदुभयत्र सम्प्रसारणोत्तरं पूर्वत्र तदाश्रयपररूप-निषेधे यणेष्टसिद्धिरिति भावः। पूर्वस्यैव प्रथमं प्रवृत्तिरित्यपि पक्षे आह—**आदीति**। सप्तम्यन्तस्य सम्प्रसा-रणपदस्य लक्षणया-तदाश्रये यणि परतः पूर्वस्य तन्निषेधः, पूर्वत्र बहुव्रीहिरत्र षष्ठीतत्पुरुषः, षष्ठी सम्बन्ध-

ॐ ज्योत्स्ना ॐ

**यत्त्विति**। अत्र पक्षे 'प्रकल्प्ये'त्यस्यात्मानं अपवादविषयं परिकल्प्येत्यर्थः। 'श्वयुवे'त्यादिरुत्सर्गो 'न सम्प्रसारण' इत्यादेरपवादस्य विषयो यथा भवति तथा कृत्वेति यावत्। तदाह—**यथेत्यादि**।

ॐ विषमपदविवृतिः ॐ

**कैयट इति**। तन्मते चापवादविषयं प्रकल्प्य=सम्पाद्येत्यर्थः। तथा च यथापवादविषयसम्पत्ति-

ॐ वरवर्णिनी ॐ

ननु 'परस्य यणः पूर्वं सम्प्रसारणं, पूर्वस्य तन्निमित्तः प्रतिषेधः' इति फलितार्थप्रदर्शनमात्रं कैयटो-पाध्यायानां, तत्त्वतस्तु 'न सम्प्रसारणे' इति **प्रकल्प्ये**त्यादिपरिभाषाज्ञापकमेवेत्यतो भाष्यान्तरविरोधं दर्शयति—**यद्वेति**। सम्प्रसारणाश्रयस्य=सम्प्रसारणं निमित्तीकृत्य जायमानस्य 'सम्प्रसारणाच्चे'ति पूर्व-रूपस्य, प्रतिषेधः=निषेधः। तेन 'यून' इत्यादौ पूर्वस्य यणः सम्प्रसारणेऽपि पूर्वरूपाभावे पुनर्यणि 'यून' इति सेत्स्यत्येवेति भाष्यकृदाशयः। सम्प्रसारणाश्रयस्य पूर्वरूपस्य प्रतिषेधे—'एष यूनः पश्ये'त्यत्र जातस्य यणोऽचः **परस्मिन्निति** सूत्रेण स्थानिवद्भावाद्धल्परत्वाभावादेतत्तदोरिति सुलोपो न स्यादिति प्रकृतभाष्य-मेकदेश्युक्तिरिति तु न शङ्क्यम्, वाक्यसंस्कारपक्षे उक्तदोषस्य सम्भवेऽपि पदसंस्कारपक्षेऽचः पूर्वत्वेन दृष्टस्य विधेरसम्भवेन दोषाभावात्। बह्वृचि—बह्वयून इत्यत्र यणापत्तिरपि,—सुबन्तात्तद्धितोत्पत्तेर्मूल एवोक्ततया—'न पदान्ते'ति स्थानिवद्भावनिषेधाद्वारणीया, पदेऽन्तः—पदान्त इति सप्तमीसमासस्यापि 'न पदान्त'सूत्रे स्वीकारादिति शब्देन्दुशेखरा**भिनवराजलक्ष्म्यां** विस्तरः। तदर्थः='पूर्वं ह्यपवादा' इति न्यायार्थः। उक्तयुक्तेः=पदपदार्थोपस्थितौ शाब्दबोधे बाधकाभावरूपयुक्तेः।

मुक्तिरुचिता, तस्मान्न्यायस्य मदुक्त एव विषय इति बोद्धव्यम्। यदपि—'अपवादवाक्यार्थ विना नोत्सर्गवाक्यार्थ इति तदर्थ' इति, तदपि न, उक्तयुक्तेः। 'न विभक्तौ तुस्माः' इति शास्त्रस्थतुस्मपदार्थज्ञानमात्रेण पादीनामेतद्विषयत्वाभावबुद्ध्या तेषु हलन्त्यसूत्रप्रवृत्त्या

❀ **चिदस्थिमाला** ❀

सामान्ये इति भावः। विरोधमुपपादयति—**न हीति**। न्यायेन—'उक्ते'त्यादिः। एवमग्रेपि। **मदुक्त एवेति**। अत एव 'तत उत्सर्ग' इत्याद्यक्षरानुगुण्यमपीति भावः। **तदर्थ इति**। उक्तवचनद्वयार्थ इत्यर्थः। **उक्तयुक्तेरिति**। आकाङ्क्षादिसत्त्वे पदपदार्थयोरुपस्थितौ तद्बोधे प्रतिबन्धकाभावादित्यर्थः। 'अभिनिविशन्ते' 'अपवादविषयं' 'ततः' इत्यादिपदस्वारस्यभङ्गापत्तेः, परिभाषाद्वयवैयर्थ्यापत्तेश्चेत्यपि बोध्यम्।

नन्वेवमन्यत्रोत्सर्गापवादस्थले निर्वाहेऽपि प्रकृते प्रथमपक्षे द्वितीयपक्षे चान्योन्याश्रयदोषाभावेपि प्रथमपक्षे परिभाषाविरोधस्तदवस्थः, तत्र तदविषयत्वनिश्चयार्थं तद्विषयलक्ष्यसंस्कारनिर्णयार्थमपवादशास्त्रपर्यालोचनावश्यकत्वस्य प्रागुक्तत्वेनात्रोत्सर्गकृतलक्ष्यसंस्कारबुद्धि विना तत्पर्यालोचनाऽसम्भवेन—'अपवादवाक्यार्थज्ञानोत्तरमुत्सर्गकृतलक्ष्यसंस्कार' इति परिभाषार्थासम्भवादत आह—**न विभक्ताविति**। एतच्छास्त्रघटकोद्देश्यविशेष्यभूतपदार्थविशेषज्ञानेत्यर्थः। **मात्रपदेन** वाक्यार्थबोधव्यावृत्तिः, तदानीमितरसकलकारणसत्त्वेऽपि विभक्तितदर्थाज्ञानात्तदसम्भव इति भावः। पादीनां=सुबादिप्रत्याहारघटकानाम्। **एतदिति**। 'न विभक्ता' विरित्यर्थः। **बुद्ध्या**=निश्चयेन। **तेषु**=पादिषु। एवञ्च नापवादवाक्यार्थज्ञानं पूर्वमपेक्षितं सर्वत्रेति नान्योन्याश्रयः। नचैवमपि प्रगुक्तग्रन्थविरोध एवेति वाच्यम्, अपवादशास्त्रघटकसम्भावितपदार्थविशेषज्ञानमात्रेण-लक्ष्यसंस्कारः—साधुत्वं—यस्मात्तं लक्ष्यसंस्कारजनकं तद्विषयमिति पूर्वग्रन्थार्थात्। असम्भावितस्थले प्रकृतेऽगत्यैवमङ्गीकारेप्यन्यत्रापवादे सम्भावितस्थले तथैवाङ्गीकाराच्च। एतेन—"उपदेशे इदन्त्यम्', 'अच्', 'अनुनासिक' इति न्यासेपि **पूर्वं हीत्य**स्यावतरणोक्तरीत्या तत्कालेऽच्पदार्थनिष्पत्त्यभावेनान्योन्याश्रयस्तदवस्थः, न च—'एतेने'त्यादि—'सामर्थ्या'दित्यन्तप्रागुक्त्या न दोषः, विभिन्नविभक्तिनिर्देशेन योगविभागेन च अज्विषयनियमस्य सर्वनियामकत्वेनापवादत्वनिर्णया'दित्यपास्तम्। नचैवमपीतः प्राक् सुप्प्रत्याहाराऽसिद्ध्या कथमादौ समास एवेति वाच्यं, 'वर्णोपदेशकालेऽजादिसञ्ज्ञानामनिष्पादा'दिति **कैयटखण्डककौस्तुभा-**

❀ **ज्योत्स्ना** ❀

**मदुक्त एवेति**। न चास्मदुक्तार्थन्यायस्य 'न सम्प्रसारणे'इत्यादिर्विषयः, परस्य लक्ष्ये सम्प्रसारणप्रवृत्तेः प्राक्तदीयवाक्यार्थघटकपदार्थस्यैवासम्भवात्स्वरूपलाभमप्राप्तस्यापवादत्वेन वक्तुमशक्यत्वात्। 'न विभक्ता'वित्यादौ तु पदार्थबोधो न सम्भवतीति विशेषः। **उक्तयुक्तेरिति**। पदपदार्थबोधे सति वाक्यार्थबोधे बाधकाभावो युक्तिः।

❀ **सदाशिवभट्टीयम्** ❀

शक्यमिति दोष एवेत्याशङ्क्याह-**सुलभमिति दिगिति। दिगर्थस्तु**—'तुसभिन्ना हल इत'इति प्रथमवाक्यार्थेन

❀ **विषमपदविवृतिः** ❀

**स्तथैवोत्सर्गेण** प्रवर्त्तितव्यमित्यर्थः। **प्रतिषेध इति**। तन्निमित्तत्वमित्यर्थः। **एवमुक्तिरिति**। 'एतदेव ज्ञापयती'त्याद्युक्तिः। नन्वेवं सञ्ज्ञाहकवाक्यार्थबोधे 'हलन्त्यं' 'न विभक्ता'वित्यनयोरन्योन्याश्रयाभावेपि लक्ष्यसंस्कारके उपप्लूयमानवाक्यार्थबोधेऽन्योन्याश्रयः सुस्थ एव, अपवादवाक्यार्थबोधं विना तद्विषयपरिहारेणोत्सर्गवाक्यार्थोपप्लवायोगात्। यद्वा—'न विभक्ता'वित्येतद्वाक्यार्थबोधे तद्विषयपरिहारेणैतस्य प्रवृत्तिः, एतत्प्रवृत्तौ सुप्तिङादिप्रत्याहारसिद्धिः, तत्सिद्धौ च 'न विभक्ता'वित्येतद्वाक्यार्थबोध इत्यन्योन्याश्रय इत्यत आह—**न विभक्ताविति। पदार्थज्ञानमात्रेणेति**। तथा च 'न विभक्ता'वित्ये-

सुप्तिङ्रूपविभक्तिपदार्थज्ञानं सुलभमिति दिक् । अत्राप्युपदेश इति सम्बध्यते, तद्धल-लभ्यमर्थमाह—**सूत्रे इति ।**

**आदिरन्त्येन ।** आदिरिति किम्?, अन्त्यशब्देन पूर्वेषामाक्षेपादिगादिप्रत्याहारे-

**❀ अभिनव-चन्द्रिका ❀**

**उपदेश इति सम्बध्यत इति ।** अत एव 'हल विलेखने' इति धातोर्लस्य नेत्त्वम् ।

**❀ चिदस्थिमाला ❀**

यक्तरीत्या निर्वाहात्, तदाह—**दिगिति ।**

'सूत्रे' इत्यस्य निर्मूलत्वं निराचष्टे—**अत्राप्युपेति ।** आवृत्त—'हलन्त्य'मिति सूत्रेऽपीत्यर्थः । अपि-द्वितीयसूत्रसमुच्चायकः, मूलाशयवर्णनमिदं तद्रीत्या, न तु—सिद्धान्त इति बोध्यं । मूलमते करणे घञोऽभावा-दाह—**तद्धलेति ।** 'आद्योच्चारणविषये हली'त्युक्तौ तद्विषयतायास्तत्रैव सत्त्वेन तल्लाभात्, अत एव 'तदर्थ-माहे'ति नोक्तं, स्वमते तदनुवृत्तेरेवासत्त्वादिति भावः । **आदिरिति किमिति ।** तदभावेऽप्यन्त्यपदेनाक्षेपा-त्तल्लाभः, नन्वेवमपि शाब्देऽन्वयप्रतियोगित्वानापत्तिस्तथाऽनुपस्थितेरिति वाच्यं, व्युत्पत्तिवैचित्र्येण क्वचित्त-दङ्गीकारात् । एवञ्च 'स्वस्य चे'त्यनेन परामर्शोऽपि सूपपादः । एतेन सञ्ज्ञासमर्पणार्थमादिग्रहणमिति **रत्नाकरोक्त**मपास्तमिति प्रश्नः । **अन्त्येति ।** अन्त्यत्वस्य पूर्वनिरूपितत्वेनाद्यऽनिरूपितत्वात्पूर्वेषामेवाक्षेपो नादेरिति 'इदन्त्यसहितः पूर्वः प्रत्यासत्त्या पूर्वेषां सञ्ज्ञे'त्यर्थलाभेनेगादाविकारादेरिव तत्सहितपूर्वत्वेना-

**❀ सदाशिवभट्टीयम् ❀**

पादीनामित्त्वं,ततो विभक्तिपदार्थनिश्चये 'विभक्तिस्थतुस्मभिन्ना हल इत' इति द्वितीयवाक्यार्थेनाविभक्तिस्थतुस्माना-मित्त्वमिति । नन्वेवं **नाज्झला**वित्यत्रापि 'आक्षरसमाम्नायिका अचो हलश्च मिथो न सवर्णा' इति—प्रथमवाक्या-र्थेप्यणुदित्सूत्रबोधानन्तरम्—'अचस्तद्गृहीताश्च हल्भिर्मिथो न सवर्णा' इति द्वितीयो वाक्यार्थः स्यादेव, तथाचा-कारश्लेषो व्यर्थः, वाक्यापरिसमाप्तिप्रतिपादकभाष्यासङ्गतिश्चेति चेन्न । 'न विभक्ता'वित्यादौ विभक्तिग्रहण-सामर्थ्यात्, द्वितीयवाक्यार्थाङ्गीकारेप्यन्यत्र तदङ्गीकारे मानाभावात् । स्पष्टा चेयं रीतिः प्रकृतसूत्रे शब्दरत्ने 'यथा-सङ्ख्य सूत्रसामर्थ्येन तत्र तथाङ्गीकारेप्यत्र तथा कल्पने मानाभावा' दित्यादिना । नन्वेवमपि 'हलन्त्य' मित्यस्य बोधकाले 'उपदेशेऽ'जिति 'नाज्झला'वित्यनयोर्बोधाभावेना'णुदि'दित्यस्य वाक्यार्थाज्ञानेनोदितः सवर्णग्राह-कत्वाभावान्न **विभक्ता**वित्यत्र तुशब्दस्य तवर्गबोधकत्वाभावेन तज्ज्ञानासम्भवाद्विभक्तिस्थनकारस्येत्वापत्तिः पकारस्येव दुर्वारा, तुशब्दस्तु **तिथोरि**तिवदुच्चारणार्थोकारेण तकारमात्रबोधक इत्येव स्यादिति चेन्न, परस्मिन्नि-त्यादिनिर्देशैरिहत्यहल्पदस्य नकारभिन्नतत्परत्वनिश्चयात् । एवं सति वर्गग्रहणं व्यर्थमिति चेदस्तु तथा । **नाज्झला**वित्येतस्य प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकत्वमिति मते-तुशब्दस्योदित्सञ्ज्ञकत्वमितिमते च-उदितः सवर्ण-

**❀ विषमपदविवृतिः ❀**

तद्वाक्यार्थबोधाभावेपि तद्घटकप्रतियोगिसमर्पक'तुस्मा'इतिप्रथमान्तपदार्थज्ञानमात्रेण पादीनां तद्भिन्नत्वेन तन्निषेधाविषयत्वग्रहेण तत्रेत्सञ्ज्ञाप्रवृत्तिः सुलभेत्याशयः । 'अणुदि'दित्यत्रोदिदिति कादीनां सञ्ज्ञेति बोध्यम् । **तद्धललभ्यमिति ।** तेन 'हल-विलेखने'इति धातौ लस्य नेत्वम्, उपदेशेनन्त्यत्वादिति भावः ।

**❀ वरवर्णिनी ❀**

**पूर्वेषामिति ।** अन्त्यशब्देन—आदेरेवाक्षेप इत्यत्र मानाभावादन्त्यवर्णघटितसमुदायमात्रस्याक्षेपे-अन्त्येनेता सहितो वर्णः—अन्त्याक्षिप्त—स्वनिष्ठचरमावयवतानिरूपकसमुदाय—घटकबोध्यानां सञ्ज्ञा स्यादि-त्येवार्थः स्यात्, एवञ्चेगादिप्रत्याहारेऽकारादिग्रहणापत्तिरित्युत्तराशयः ।

ऽकारादिग्रहणं मा भूदिति । एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु आदीनां ग्रहणं मा भूदिति–'अन्त्येने'ति । 'आदिः'–'अन्त्येने'त्युभयोपादाने तु न दोषः । लोके 'अयमादिरन्त्यो वे'त्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः । 'परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिः' 'पूर्वस्मिन्सति यस्मात्परो नास्ति सोऽन्त्य' इति—अकारादिग्रहणे

### ❀ अभिनव-चन्द्रिका ❀

**अकारादिग्रहणमिति** । आदिपदाभावे इगादिपदानां ककारनिष्ठचरमावयवनानिरूपकसमुदायघटके, तादृशसमुदायघटकबोध्ये वा शक्तिबोधनेन इगादिप्रत्याहारेऽकारादीनां ग्रहणं स्यादिति भावः । **आदीनां ग्रहणमिति** । 'अन्त्येने'तिपदाभावे—इणादिपदानामिकारनिष्ठावयवयवनानिरूपकसमुदायघटके, तादृशसमुदायघटकबोध्ये वा शक्तिबोधनेनेणादिप्रत्याहारे आदीनां ग्रहणं स्यादिति भावः । **यस्मात्पूर्वो नास्तीति** । स्वघटकपूर्वो नास्तीत्यर्थः, तेन 'घटपटा'वित्यादौ पटशब्दघटकपकारात्पूर्वं घटशब्दाकारस्य सत्त्वेऽपि पकारे पटशब्दादित्वमक्षतम्, एवं 'परो नास्ती'त्यत्रापि स्वघटकःपरो नास्तीत्यर्थ इति घटशब्दानन्तरं पटशब्दाकारसत्त्वेऽपि पूर्वोक्तस्थले घटशब्दाकारे न तदन्त्यत्वक्षतिः । 'स्वघटकत्व' 'स्वघटकाव्यवहितपूर्वत्व' 'स्वघटकाव्यवहितोत्तरत्वाभाववत्त्वे'तत्रितयसम्बन्धेन स्वविशिष्टत्वम्-आदित्वम् । एवं–'स्वघटकत्व' 'स्वघटकाव्यवहितोत्तरत्व' 'स्वटकाव्यवहितपूर्वत्वाभाववत्त्वे'तत्रितयसम्बन्धेन स्वविशिष्टत्वमन्त्यत्वं फलतीति तत्त्वम् ।

### ❀ चिदस्थिमाला ❀

कारादेरपि ततः पूर्वत्वेन तत्सञ्ज्ञित्वापत्तौ ग्रहणापत्तिरिति भावः । एतेना'दिना नियमेनान्त्यस्यैवाक्षेपे मानाभावेन मध्यमस्याप्याक्षेपे मध्यमेनेता सहित आदिस्ततः परेषामपि सञ्ज्ञा स्यात्, एवमन्त्येनेता सहितो मध्यमस्ततः पूर्वेषामपि सञ्ज्ञा स्यादिति तयोर्ग्रहणमिति' **कौस्तुभोक्तं**, 'तत्सूत्राशयवर्णनमात्रम्, आदिरिता सहित इत्युक्तेऽपि सन्दंशपतितन्यायेन मध्यस्थानामेव सञ्ज्ञित्वावगतेस्तदधिकस्योपस्थापकाभावा' दिति तत्खण्डक**रत्नाकरोक्तं** चापास्तम्, उक्तयुक्तेः । उक्तां सर्वां रीतिमन्यत्रातिदिशति—**एवमिति** । इणः परणकारेणैव सत्त्वस्य वक्ष्यमाणत्वादाह—**आदीनामिति** । **एतेनान्त्येनेति** किं ? सुट्प्रत्याहारष्टाटकारेण माभूदिति **वृत्त्युक्तं**, 'यद्यपि टान्तसङ्घस्य टाटकारोऽन्त्य एव, तथापि व्यवसितान्त्यत्वविरहः, 'इह-ह्यन्तत्वप्रयुक्तेत्सञ्ज्ञा यस्य तेन प्रत्याहारोऽन्त्यग्रहणसामर्थ्यात्, नहि टाटकारे 'हलन्त्य'मिति प्रवर्त्तते' **इति** सुडनपुंसकेति सूत्रे **हरदत्तोक्तम्**, अत्र तथा **दण्डयुक्तं**,'टाटकारस्य टाङ्सीत्यादौ विशेषणार्थत्वेनापूर्वान्तत्वात्, औटष्टस्यानन्यार्थतया प्रत्यासत्तेश्च तेनैव प्रत्याहारसिद्धावन्त्येनेति व्यर्थ'मिति **कौस्तुभ–रत्नाकराद्युक्तं** चापास्तम्, उक्तयुक्तेः, प्रत्यासत्तिन्यायाद्व्याप्तिन्यायस्य प्राबल्याच्च । ननूभयोपादानेऽपि उक्तरीत्या दोष एवात आह—**उभयोपादाने त्विति** । एतदग्रे 'न दोषो लोके' इति पाठः, अत एव पञ्चम्यन्तहेतूक्तेरित्यादेश्च

### ❀ सदाशिवभट्टीयम् ❀

ग्राहकत्वस्य पूर्वमपि सम्भवेनादोषाच्च । मतान्तरेपि लोपादिनेव जातनिवृत्तेरङ्गीकाराच्च । **न विभे**त्यत्र तु लुप्तनिर्दिष्टो नकार इत्यस्यापि वक्तुं शक्यत्वाच्च । **आदिरन्त्येन** । 'उभयोपादाने तु' एतदग्रे 'न दोषो लोके'

### ❀ वरवर्णिनी ❀

**परे तु**—तथा सति'अणिगादिप्रत्याहाराणां पृथक्पृथगुपकल्पितानां वैयर्थ्यापत्तिः' 'एओङ्'–'ऐऔ'-जित्याद्यनेकानुबन्धकरणस्य वैयर्थ्यापत्तिश्च, तस्मादन्यतरोपादानेन सिद्धौ स्पष्टार्थमेवोभयोरुपादान'मित्याहुः ।

**स आदिरिति** । समुदायविशिष्टत्वमादित्वं, वै० 'स्वघटकत्व' 'स्वघटकपूर्वत्व' 'स्वघटकोत्तरत्वा-

—इकारणकारादीनामाद्यन्तत्वस्यैवानापत्तेः ।

अत्राद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदाय आक्षिप्तः सञ्ज्ञी, तस्य चैकत्र लक्ष्ये प्रयोगाभावात्प्रत्येकं सञ्ज्ञित्वम् । अन्त्यस्य तु न तत्कार्यं, तस्येत्सञ्ज्ञालोपा-

❀ अभिनव-चन्द्रिका ❀

**आद्यन्तत्वस्यैवानापत्तेरिति** । अकारादिसमुदायनिरूपितादित्वादेरिकारादावभावादिति भावः। **समुदाय आक्षिप्त इति** । वाक्ये वाक्यैकदेशन्यायेन 'आदिरन्त्येने'ति सूत्रकृतोच्चारणादिति भावः।

❀ चिदस्थिमाला ❀

सङ्गतिः। प्रतीतिर्लक्षणावश्यकत्वे हेतुः, 'सोऽन्त्य इति लक्षणस्यावश्यकत्वे' इति पाठः,'सती'ति तस्य शेषः। **अकारादीति** । इगिणादिनेति भावः । आदिनाऽजादिपरिग्रहः । अत एवाह—**णकारेति** । अनापत्तेः= अप्राप्तेः, उक्तलक्षणनाक्रान्तत्वात्। नन्वेवमपि कथं सञ्ज्ञिलाभः, न च मनोरमायामुक्तत्वादत्रोक्तिर्न, प्रतिज्ञा-भङ्गापत्तेरिति वाच्यं, तदयुक्तत्वेन विलक्षणयुक्तेरत्र वाच्यत्वादत आह—**अत्रेति** । प्रकृतसूत्र इत्यर्थः । आक्षेप-बीजमाह—**अवयवेति । स्वेति** । आद्यन्तेत्यर्थः । एतेन—"सञ्ज्ञास्वरूपानन्तर्भूतयोराद्यन्तयोः स्वघटितसमुदायाक्षेपकत्वेऽपि, तदन्तर्भूतयोस्तयोः—सञ्ज्ञायाः पारार्थ्यनियमात्स्वाघटितसमुदायस्यैवाक्षेप—" इति **मन्दोक्त**मपास्तं, तावतापि तस्य तदनुपपादकत्वात्, तृतीयौचित्याच्चेति दिक् । **तस्य च**=उक्तस्य समुदायस्य च, 'युगप'दिति शेषः । **लक्ष्य इति** । एतेन 'वर्णसमाम्नाये तथा सत्त्वादिदमयुक्त' मित्य-पास्तं, सिद्धानुशासकत्वाच्छास्त्रस्य कार्यार्थसञ्ज्ञायास्तत्राफलत्वाच्च । **प्रत्येकमिति** । 'आनर्थक्यात्तदङ्गे'ष्विति न्यायादिति भावः । सञ्ज्ञित्वमात्रे बाधकाभावादाह—**न तत्कार्यमिति** । न सञ्ज्ञित्वप्रयुक्तं कार्य-मित्यर्थः । 'आचारा'द'प्रधानत्वा'दित्यनयोरसार्वत्रिकत्वादाह—**तस्येदिति** । नन्वेवं भाष्यादिविरोधोऽत

❀ सदाशिवभट्टीयम् ❀

इति पाठः । प्रतीतिर्लक्षणावश्यकत्वे हेतुः, लक्षणस्यानापत्तौ हेतुत्वबोधकः—**सोऽन्त्य इतीति** ।

❀ वरवर्णिनी ❀

भाववत्त्वे'तत्रितयसम्बन्धेन । एवमन्तत्वमपि समुदायविशिष्टत्वमेव, वै० 'स्वघटकत्व' 'स्वघटकोत्तरत्व' 'स्वघटकपूर्वत्वाभाववत्त्वे'तत्रितयसम्बन्धेन । यत्समुदायनिरूपितञ्चादित्वमन्तत्वञ्च वक्तव्यं तत्स्वत्वम् । समन्वयश्च—'घट'इतिसमुदायघटकतया, तद्घटकककारादिपूर्वतया, तद्घटकोत्तरत्वाभाववत्त्वेन च—घकार आदिरित्युच्यते, एवमन्यत्रापि बोध्यमित्यस्म**द्गुरुचरणाः** ।

**अकारादीति** । आदिना—अकारादिः । इगिणादिप्रत्याहारे—अकारअकारादिग्रहणे इकारादेर्निरुक्ताद्य-न्तत्वस्यैवानापत्तिरित्यर्थः । 'आद्यन्तत्वस्यैवानापत्ते'रित्येतत्—अग्रिमे 'समुदाय आक्षिप्तः सञ्ज्ञी'त्यत्र—हेतुरिति'तु—**श्रीबालशास्त्रि**चरणाः । **समुदाय एव सञ्ज्ञेति** । "वस्तुतस्तु आदिरेव वाचकः, अन्त्यस्तु तादृशार्थद्योतक एव, तथा च—आद्यन्तोभयसमुदायस्यादेरन्त्यस्य च प्रातिपदिकत्वं, शक्ति-लक्षणा—द्योतकतैतदन्यतमसम्बन्धेनार्थवत्त्वस्यैव प्रातिपदिकसञ्ज्ञासूत्रे विवक्षणात् । 'इक' इत्यादौ सुबुत्प-त्तिश्च 'वृक्षप्रचलन'न्यायेन समुदायादेव । यद्वा—'सह'ग्रहणादेव समुदायाद्विभक्तिः । समुदायबोधकत्व-प्रतिपादकोऽन्त्यः **शेखरग्रन्थस्तु**—अणुदित्सूत्रस्थेन—आदेर्बोधकत्वमित्याशयक**शेखरग्रन्थेन** विरुद्ध इति चिन्त्य एव—" इति **जटाजूटे** विस्तरः ।

भ्यामपहारात् । एतत्फलितकथनमेव भाष्ये, मूले च—**स्वस्य च रूपस्येति** । स्वमित्यनुवृत्तिपरत्वेन व्याख्यानन्तु हेयमेव, अनुवृत्तौ फलाभावात् । इतेति किं ?— 'अमङणने'ति णकारादिभिः प्रत्याहारो मा भूदिति । 'सह'ग्रहणाच्च समुदाय एव सञ्ज्ञेति समुदायादेवेक इत्यादौ विभक्त्युत्पत्तिर्नादिमात्रात्, न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारात्

※ अभिनव-चन्द्रिका ※

**समुदाय एव सञ्ज्ञेति** । 'इ'गित्यादिसमुदायः सञ्ज्ञेत्यर्थः । परे तु–"सहग्रहणाच्चादेरेव सञ्ज्ञा, नन्वादेरेव सञ्ज्ञा चेदिक इत्यादौ विशिष्टाद्विभक्तिरनुपपन्नेत्यत आह-'समुदाय एव सञ्ज्ञे'ति । 'समुदाय' इति सप्तम्यन्तं, 'सञ्ज्ञे'त्यस्य प्रातिपदिकसञ्ज्ञेत्यर्थः । तथा च सहग्रहणेनेतां तात्पर्यग्राहकत्वबोधनेनार्थवत्सूत्रोक्तार्थवत्त्वस्य समुदाय एव सत्त्वेन नादिमात्राद्विभक्त्युत्पत्तिः । अत एव 'प्रत्याहारावयवर्णेऽणुदित्सूत्रं चरितार्थ'मिति तत्र-तत्रत्यग्रन्थः सङ्गच्छते, अन्यथा इगादिपदेषु इकारादेरनर्थकत्वेन–ककारादिचिह्नेन तस्याऽण्त्वेपि अष्टादशानां बोधो न स्यादित्यणुदित्सूत्रेणग्रहणं व्यर्थमेव स्यादित्याहुः ।

**व्यक्तिपक्ष एवमेवेति** । चिन्त्यमिदं, जातिपक्षेऽप्यत्रत्यतत्रत्यव्यक्त्योर्भेदेनादिरित्यस्यादिसहश:,

※ चिदस्थिमाला ※

आह —**एतदिति** । एवेनानुवृत्तिनिरासः । मूले=कौमुद्यां । कैयट–दीक्षित–रत्नाकर–दण्ड्याद्युक्ति खण्डयति—**स्वमित्यनुवृत्तीति** । 'स्वं रूप'मित्यत इति भावः । **फलाभावादिति** । सध्यानुबन्धानां तत्त्ववारणायोक्तप्रकारस्यावश्यकत्वेन, तेनैवैतद्वारेण एतन्मात्रवारक—तदनुवृत्तौ फलाभावादित्यर्थः । अत एवैतत्सूत्रप्रत्याख्यानसङ्गतिः, अधिकं शब्दरत्ने भावप्रकाशे च स्पष्टं तत एव बोध्यम् । **इतेति किमिति** । अस्य चतुर्दशसूत्र्येकवाक्यतया तत्तत्सूत्रान्त्यस्य ग्रहणेन, तस्य चेत्त्वस्यैव सत्त्वादिति—प्रश्नः । यत्तु 'रप्रत्याहारो यथा स्यादिति–इतेति'ति **कौस्तुभ रत्नाकर-दण्ड्यादयस्तन्न**, तस्य खण्डितत्वादत आह—**अमेति** । 'इगादि'रित्यादिः । तदेकवाक्यत्वेऽपि तत्तत्सूत्रान्त्यस्यैव ग्रहणे मानाभावेन विवक्षितसमुदायान्त्यत्वस्य अमङणेति णादावपि सत्त्वं, 'परस्मिन्सती'त्यादिलक्षणमपि विवक्षानिबन्धनमत एवेगादिप्रत्याहारसिद्धिः, अन्यथान्त्यवदादेरपि तत्तत्सूत्रादेरेव ग्रहणेन तदसिद्धिः स्पष्टैव । नचैवं सिद्धान्तेऽपि सुडिति प्रत्याहारष्टाटकारेण कुतो न, प्रत्यासत्तेर्व्याप्तिन्यायस्य प्राबल्येन तस्य तत्र विशेषणार्थतया पूर्वान्तत्वाभावेऽपि तदापत्तेरिति वाच्यं, मिथःसमभिव्याहारादन्त्यपदे स्वरितत्वप्रतिज्ञया वाऽन्त्यत्वप्रयुक्तेत्सञ्ज्ञावत्त्वैव तदङ्गीकारादिति भावः । ननु 'अन्त्यस्येत्सञ्ज्ञादिनाऽपहारात्'आदेरेव सञ्ज्ञात्व'मिति **कैयटदूषणाय** कौस्तुभे उक्तत्वेन तत एव विभक्तिः स्यान्न समुदायादिति 'इक' इत्यादि निर्देशानुपपत्तिरत आह—**सहेति** । अन्यथा तदर्थयोगे

※ सदाशिवभट्टीयम् ※

**इतेति किमिति** । अस्य चतुर्दशसूत्र्येकवाक्यतया तत्सूत्रान्त्यस्य ग्रहणेन तस्य चेत्त्वस्यैव सत्त्वादिति प्रश्नः । **मा भूदिति** । तदेकवाक्यत्वेपि सूत्रान्त्यस्यैव ग्रहणे मानाभावेन विवक्षितसमुदायान्त्यत्वस्य णादावपि सत्त्वम्, 'परस्मिन् सती'त्यादिलक्षणमपि विवक्षानिबन्धनम्, अत एवेगादिप्रत्याहारसिद्धिः, अन्यथा तत्तत्सूत्रादेरेव ग्रहणे तदसिद्धिः स्पष्टैव । **एतेन** 'पूर्वस्य दीर्घोण' इत्यादिज्ञापकाधीन प्रत्याहारस्तदवधिकानामेव ग्रहणे सिद्धेऽन्त्यपदसामर्थ्यात् सूत्रान्त्यग्रहणेन सिद्धे इतेति सुत्यजम्, एवं ह्यन्योऽन्याश्रयश्च नेत्यपरं लाघव'मित्यपास्तम् । एवं'चेग्हस्व'इत्यादिज्ञापकाच्चोवधिस्तदवधिकानामेव पूर्वेषामाक्षेपे सिद्धे आदिग्रहणसामर्थ्यात्सूत्रादेरेव ग्रहणापत्त्येगाद्यसिद्धिप्रसङ्गात्, ज्ञापकात्सूत्रावयवप्रत्याख्याने बहूपप्लवापत्तेश्च । **सूत्रेषु**—वर्णसमाम्नायसूत्रेषु । **तदभावादिति** ।

※ वरवर्णिनी ※

**न चेति** । 'आदिरन्त्येने'त्यस्य न 'वर्णसमाम्नायघटकादि'रित्यर्थो युक्तः, इगादिप्रत्याहारे—

'आदिरन्त्येने' त्यसङ्गतं, सूत्रेष्वित्सञ्ज्ञायामपीगादिशब्देषु तदभावात्, 'अन्त्येने' त्यस्येदन्त्य-सदृशेनेत्यर्थात्, व्यक्तिपक्षे एवमेवौचित्यात्, सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञेत्याहुः।

ॐ **अभिनव-चन्द्रिका** ॐ

'अन्त्येने' त्यस्यान्त्यसदृशेनेत्यर्थस्यावश्यकत्वात्। ननु 'इणादिप्रत्याहारे आदीनां ग्रहणं माभू'दित्य-सङ्गतं, पूर्वणकारेणादिप्रत्याहारे ऋकारादिग्रहणस्याप्यनिष्टत्वादित्याशङ्क्य सिंहावलोकनन्यायेन समाधत्ते—**इण इत्येव सिद्ध इति। पूर्वनिपातापत्तेरिति**। हल्त्वं जातिरिति कल्पे हल्पदस्य जातिशब्दत्वात्सञ्ज्ञाशब्दत्वाद्वेति भावः। **कर्मधारययोग्यानामिति**। यत्र समासे तदभावे वा विशेषो नास्ति, तादृशकर्मधारययोग्यपदानामित्यर्थः। एतेन 'निपात एका' जित्यादौ व्यभिचारादि-

ॐ **चिदस्थिमाला** ॐ

तृतीयाविधानेन तथैव तदर्थलाभे तदानर्थक्यं स्पष्टमेव। एतेन **सहग्रहणमिति**त्यस्याप्राधान्यसूचनार्थमन्यथेत्थ-म्भूतलक्षणे तृतीया स्यादित्यपास्तम्, इक **इत्यादि**निर्देशानुपपत्तेः। चो वाक्यालङ्कारे, त्वर्थे वा। सूत्रेषु=वर्ण-समाम्नायस्थेषु, **इगादीति**। 'इको य'णित्यादिस्थेष्विति भावः। नन्वेवं प्रत्याहारसिद्धिरेव न स्यादत आह—**अन्त्येनेत्यस्येति**। तस्योक्तार्थलक्षणायामन्त्यपदं तात्पर्यग्राहकमिति भावः। एवमादिशब्देऽपि तत्सदृशे लक्षणा बोध्या, तद्धनयन्नाह—**व्यक्तीति**। एतेना'दित्वान्त्यत्वयोरत्र स्वतः सत्त्वेन तल्लक्षणा नोचिता, इतेलस्यैव तु सोचिते' त्यपास्तम्। ननु प्रत्यभिज्ञया ऐक्यस्यैव लाभेन किमर्थं सदृशे लक्षणाऽत आह—**सादृश्येति**। **चात्र**=व्यक्तिपक्षे। **तत्त्वेति**। अभेदेत्यर्थः। **आहुरिति** सूचितारुचिर्बीजन्तु—जातिपक्षे सिद्धान्ते

ॐ **सदाशिवभट्टीयम्** ॐ

लोपस्य सामर्थ्यादभावे फलाभावात्सञ्ज्ञापि नेत्यर्थः। **यत्तु** शक्तिग्रहात्पूर्वमर्थवत्त्वाभावेन प्राति-पदिकत्वाभावाद्व्यवसितान्त्यत्वाभावेन सञ्ज्ञाप्राप्तिरेव नेति, तन्न, यत्र सति प्रातिपदिकत्वे परिष्कृतार्थवत्त्व-म्भावि तत्र सञ्ज्ञेति तदर्थात्। अन्यथा राम इत्यादावपि सति प्रातिपदिकत्वे परिष्कृतार्थवत्त्वमित्यात्माश्रयः स्यात्। 'आदिरन्त्येने'तिशक्तिग्राहकप्रवृत्तिस्तु न फलम्, इकादिषु कादेरित्त्वेपि चतुर्दशसूत्रीसम्बन्धिविव-क्षितान्त्यस्याभावेनेदन्त्यसदृशेनेत्यर्थावश्यकतया सञ्ज्ञाविरहेपि तत्प्रवृत्तेरित्याह—**अन्त्येनेत्यस्येदन्त्येति**। ननु तत्तत्सूत्रेषु लोपाभावस्य सामर्थ्यात्कल्पनापेक्षया चतुर्दशसूत्र्यामेवोच्चारणसामर्थ्यात्तदभावः कल्प्यताम्, एवं झन्तपदे लक्षणाश्रयणं न, हलि अकारग्रहाभावायावश्यकाचारात्तेषां प्रत्याहारवाच्यतापि नेति चेन्न, व्यक्तिपक्षे कृत्स्नसूत्रस्थस्येगादिशब्दस्थस्य कृत्स्नस्य भेदात्तथार्थावश्यकत्वेन तदेकवाक्यतया जातिपक्षेपि तथैवोचितत्वात्, तथा सति 'लोपश्च बलवत्तर' इति भाष्यासङ्गतिप्रसङ्गश्च, तदेतदाह—**व्यक्तीति**।

ॐ **विषमपदविवृतिः** ॐ

**इदन्त्यसदृशेनेत्यर्थ इति**। प्रत्याहारनिष्पत्तिकाले ऽन्त्यस्यासत्त्वेपि तस्य स्मरणमात्रेण तत्सादृश्य-ज्ञानमिगादिशब्दघटककादिषु सुलभमित्याशयः। **व्यक्तिपक्ष इति**। 'प्रत्युच्चारणं वर्णव्यक्तिर्भिन्ने'ति पक्ष इत्यर्थः। अत्र सादृश्यानुयोगिन समुदायाघटकत्वेपि तत्प्रतियोगिनस्तथात्वात्—तेनैव समुदा-

ॐ **वरवर्णिनी** ॐ

इकारककारादेर्वर्णसमाम्नायघटकत्वस्य विरहात्, कादेरन्त्यस्येत्त्वाभावाच्च, तस्माद'न्त्यबोध्येन सहित आदि-बोध्य' इत्येवमर्थो वाच्यः, सोऽपि न सम्भवति, बोधविषयत्वाभावरूपलोपविधायकेन 'तस्य लोप' इति शास्त्रेण वर्णसमाम्नायघटकतादृशककारादौ बोधकताया एवाभावस्य बोधनादित्याशयकः—**न चेत्यारभ्य—तदभावादित्यन्तः शङ्काग्रन्थः**, 'अन्त्येनेते'त्यस्येदन्त्यसदृशेनेत्यर्था**दित्युत्तरग्रन्थाशयः**।—" इति **बाल-शास्त्रिचरणाः**। **सदृशेनेति**। सादृश्यञ्च—स्ववृत्ति—श्रावणप्रत्यक्षविषयतावच्छेदककत्वादिधर्म-वत्त्वेन।

**औचित्यादिति**। व्यक्तिपक्षे यत्किञ्चिद्व्यक्तेरेव वर्णसमाम्नायस्थाकारादिबोध्यत्वेनानेकककारादिव्य-

'अचि श्नुधात्वि'तिसूत्रे 'इण' इत्येव सिद्धे 'य्वो'रिति निर्देशादिण्परेणैवेति लण्सूत्रे भाष्ये स्पष्टम् ।

**हलन्त्यम्** । अत्र पदद्वयं,समासेऽन्त्यशब्दस्य पूर्वनिपातापत्तेः । कर्मधारययोग्य-

❀ **अभिनव-चन्द्रिका** ❀

दमसङ्गतमित्यपास्तं, समासाभावे एकोऽजिति समासे एकाजिति तत्र विशेषस्य सत्त्वात् । चिन्त्य-मिदम्, 'इदितो नुम्' 'अशिनी'त्यादौ समासकृतविशेषाभावेऽपि समासदर्शनात्, चक्षिङ्धातौ नुम्वारणायेदित इत्यत्र 'आदेच उपदेशेऽशिती'त्यत्रेत्सञ्ज्ञकशकारादावित्यर्थलाभाय तत्र च कर्म-धारस्यावश्यकत्वात् । अत एव एद्यात्वं न भवति ।

❀ **चिदस्थिमाला** ❀

लक्षणानुपयोगः, इगादिशब्देषु तदभावेऽपि जातेरैक्यात्तत्वस्य सत्त्वादिति । नन्विणादिप्रत्याहारेषु ऋकारादीनां ग्रहणं मास्त्विति वाच्ये आर्दीनामिति किमित्युक्तमत आह—**अचीति** । **परेणैवेति** । णेनेति शेषः । यत्तु —''सूत्रमेते वर्णवद्बलपदार्थः प्रसिद्ध एव, युक्तश्चैतत्, अन्यथा व्याकरणज्ञानविकलानां तज्ज्ञानं न स्यात्, यणादयस्तु शास्त्रमात्रोपयुक्ता इति तेषां तदबोधे इष्टापत्तिः, भाष्येऽन्योन्याश्रयशङ्कासमाधानादि सर्वं शास्त्रसिद्धस्यैव शास्त्रे ग्रहणमित्यभिमानेन, लश्चेति वक्तव्यमित्यस्याप्ययं भावः,—'हलन्त्यं—ल्' इति न्यासः कार्यः, उपदेशेऽन्त्यं हल्–लश्चेद्भवतीति तदर्थः, तत्रान्त्यवाक्ये लस्येत्त्वे लोपसम्भवः, एवञ्च संयोगान्तलोपो दुर्लभ इति तत्तोग्मादिचिन्त्यमिति । यद्वा मास्तु प्रश्लेषः—सूत्रशाटकन्यायेन न सः, भाष्ये-ऽनुक्तमपीदं तुल्यन्यायत्वादिहाश्रित'मिति **मन्दः**, तन्न, पाणिनेः पूर्वं तज्ज्ञानेऽपि तदाशयेन प्रयोगाभावस्य शब्दरत्ने प्रतिपादितत्वात्, वार्त्तिककृद्भाष्यकृदादीनामपि तज्ज्ञानस्य त्वदुक्तरीत्या सम्भवेनाभिमानेन प्रवृत्तौ बीजाभावाच्च । तद्विकलपदेनान्यशास्त्राध्ययनशीलानामेव ग्रहणं तेषां, तदबोधे इष्टापत्तेश्च, आगोपालादि तदन्यग्रहणे तेषामबोधस्यैवोपलम्भाच्च, अन्यत्रेत्सञ्ज्ञार्थं कृतलप्रश्लेषेण स्वस्य तत्त्वे फलाभावाच्च, लुप्तनि-र्दिष्ट इत्यनुक्तेश्च, स्वस्मिन्नपि प्रवृत्तौ स्वस्यासत्त्वेनेष्टार्थालाभाच्च, पूर्वत्रासिद्धमितिवत्, सूत्रशाटकन्यायस्य वाक्यापरिसमाप्तिन्यायविरोधितात्राप्राप्तेति दिक् ।

❀ **ज्योत्स्ना** ❀

**अचि श्न्विति** । एतत्समानानुपूर्वीकःकिञ्चिदक्षरव्यत्यासेनाणुदिदित्यत्र ग्रन्थो दृश्यत

❀ **सदाशिवभट्टीयम्** ❀

नन्विणादिप्रत्याहारे आर्दीनां ग्रहणं माभूदिति कथमुक्तम्, ऋकारादीनि वक्तव्यम्, अत आह—**अचीति**—अन्ये-ऽवतारयन्ति । **हलन्त्यम्** । **सिद्धत्वादिति** । 'अलोन्त्यात्' 'हलोऽनन्तरा' 'तत्पुरुषः समानाधिकरण' 'निति

❀ **वरवर्णिनी** ❀

क्तिभिरिगादिप्रत्याहारानापत्त्या—आदिरित्यादेः—आदिसदृश इत्येवमर्थ आवश्यक इति **भावः** ।

**परे तु**—'आदिबोध्य इत्यर्थे तु इकारादिव्यञ्जनमात्रस्यैव बोध्यतयाऽकारविशिष्टहकारादेर्बोध्यत्वाभावेन हलादिप्रत्याहारासिद्धिर्न स्यात्, अतो जातौ व्यक्तौ वा पक्षे आदिसदृश इत्येवार्थो वाच्य इति—व्यक्ति-पक्षमात्रे तथोक्तिश्चिन्त्यैवे'त्याहुः । **परेणैवेति** । असन्दर्भ एवायं ग्रन्थ इति **परे** ।

**पदद्वयमिति** । लाघवादिति शेषः । समासे तु समासशक्तेः पृथक्स्वीकारे गौरवं स्पष्टमेव । हलिदमित्यनुगतप्रतीते'र्हल्त्वं जातिः, तत्समभिव्याहृतस्यान्त्यपदस्य तद्विशेषणतया पूर्वनिपातापत्ति-रभिहिता । ननु–'अन्त्यमिदमन्त्यमिद'मित्यादिप्रतीत्यनुरोधादन्त्यत्वमपि जातिरिति क पूर्वनिपातप्रसङ्ग इत्यरुचेराह—**कर्मधारयेति** । **केचित्त्वन्त्यपदवद्धलपदमपि गुणवाचि**, हकारादिलान्तसमुदायघटकवाचक-त्वाद्धल इत्युभयोर्गुणवाचकतया पूर्वनिपातानियमस्यैव लाभादेवारुचिमाविश्चक्रुः।

पदानां समासाभावस्य सूत्रकारशैलीसिद्धत्वाच्च । यद्यपि सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त्यो भवति तथाप्य'न्त्यपदोपदेश'पदाभ्यां प्रत्यासत्त्याऽज्ञातस्वस्वरूपज्ञापकोच्चारण-

---

※ अभिनव-चन्द्रिका ※

**अज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदायमिति ।** स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक-धर्मावच्छिन्नविधेयताप्रयोजकतापर्याप्त्यधिकरणसमुदायमित्यर्थः । स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक-धर्मपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिका या-स्ववृत्तिश्रावणप्रत्यक्षविषयता-वच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकता-तद्वान् समुदाय इति यावत् । एतेन-प्रत्येकमपर्याप्तस्य समुदाये पर्याप्त्यसम्भवात्-'दध्न'जित्यादावनन्त्यनकारे इत्सञ्ज्ञा दुर्वारेत्यपास्तं, 'दध्न'च्छब्द-त्वावच्छिन्नविधेयताप्रयोजकतापर्याप्त्यनुयोगितायाः—'दध्न'जितिसमुदायवृत्तिषट्त्वस्यावच्छेदकत्वेन, 'दध्न्'शब्दपर्याप्त्यनुयोगितायाश्च 'दध्न्'इत्येतद्वृत्तिचतुष्ट्वस्यावच्छेदकत्वेन—'दध्न्'शब्दत्वपर्याप्त्यनु-योगितावच्छेदकचतुष्ट्वधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य दध्नच्छशब्दत्वावच्छिन्नविधेयताप्रयो-जकतायामभावेनाऽदोषात् । न चैवमपि'दध्न्'शब्दवृत्तित्वविशिष्टदध्नच्छब्दत्वावच्छिन्नविधेयता-प्रयोजकतापर्याप्त्यनुयोगितावच्छेदकं दध्नवृत्तिचतुष्ट्वमिति—'विशिष्टं शुद्धान्नातिरिच्यते'इति न्यायेन

※ चिदस्थिमाला ※

**समासेऽन्त्येति ।** कर्मधारये इत्यर्थः । तस्य यौगिकत्वेन विशेषणत्वादिति भावः । ननु तत्प्रकरणम-नित्यमत आह—**कर्मेति ।** 'प्राय'इत्यादिः, अत एवैकाजित्यादिसङ्गतिः, 'हलोऽनन्तरा'इत्यादावविति भावः । **भवतीति ।** तथा चातिप्रसङ्गः, अन्त्यग्रहणन्त्वादिव्यावृत्त्या सफलमिति भावः । अत एव मूलरीत्याह—**अन्त्यपदोपदेशपदेति ।** उपात्तानुवृत्ताभ्यामित्यर्थः । सिद्धान्ते तु अन्त्यग्रहणसामर्थ्या-देव तदर्थलाभ इति नोपदेशपदानुवृत्तिः, एतदर्थमेव प्रत्यासत्त्येत्युक्तं, 'षः प्रत्यये'त्यादिज्ञापकान्नादेरिति न तद्व्यावृत्त्यर्थमन्त्यग्रहणमिति स्पष्टं भाष्यादौ । उपदेशशब्दस्य बहुव्रीहिणा कालपरत्वादेराह—**प्रत्यासत्त्येति ।** इह=हलन्त्यमित्यत्र, नत्वन्यत्र, अत एवादिरित्यत्रैतत्पदं सार्थकम् । अत्र मानान्तरमपि

※ ज्योत्स्ना ※

इत्यन्यतरत्र लेखकदोष इहैव वेति वोध्यम् । **सूत्रकारशैलीसिद्धत्वादिति ।** 'निपात एकाच्' 'अपृक्त एकाल्', 'अजादेर्द्वितीयस्ये'त्यादौ समासदर्शनात्प्रायोवादोऽयम् । ननु सुप्तिङ्गोध्यानुबन्धविनिर्मुक्त-

※ सदाशिवभट्टीयम् ※

कृत्यनौ' 'पिति कृती'त्यादाविति भावः ।

※ विषमपदविवृतिः ※

याक्षेपः सुलभः । **आहुरित्युत्तरम्**'**चि**'**इ**त्**धात्वित्यारभ्य स्पष्टमित्यन्तो** ग्रन्थः प्रक्षिप्तः, प्रकृतासङ्गतेः । एवंविधेनाग्रिमग्रन्थेन पुनरुक्तेश्च । **समासाभावस्येति ।** 'निपात एकाजना'ङित्यादौ कर्मधारयदर्श-

---

※ वरवर्णिनी ※

**समासाभावस्येति ।** उद्देश्यत्वविधेयत्वान्यतरविषयताप्रयोजकानामिति शेषः । तेन 'निपात एकाज्' 'अपृक्त एकाल्'इत्यादौ समासेऽपि न दोषः, तत्र प्रत्ययपदस्यैव निपातपदस्यैव चोद्देश्यताप्रयोजकत्वात् । **यद्यपीति ।** तथाच—वृणाक इत्यादौ 'वृङःषाक'न्नितिषाकनः ककारस्यापीत्सञ्ज्ञायां कित्त्वाद्गुणनिषेधापत्तिरिति भावः । **प्रत्यासत्त्येति ।** उपदेशेऽन्त्यमित्यर्थे—उपदिश्यमानान्त्यमित्यर्थोऽर्थादेव लभ्यत इति भावः ।

**अज्ञातेति ।** स्ववृत्ति-श्रावणप्रत्यक्षविषयताच्छेदकधर्मा—ऽवच्छिन्नविधेयता—प्रयोजकं पदमुपदेशशब्दार्थ इति जटाजूटकृतः ।

विषयसमुदायं प्रत्यन्त्य इह गृह्यते, अत एव–मकारेत्सञ्ज्ञापरित्राणार्थस्थमोरुकारश्चरितार्थः, समुदायोपदेश एव सर्वत्र ऋपितात्पर्येणाऽवयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूप-

### ❀ अभिनव-चन्द्रिका ❀

'दध्न'च्छब्दत्वावच्छिन्नविधेयताप्रयोजकतापर्याप्त्यनुयोगितावच्छेदकं तदपि भवतीति'दध्न्'शब्दत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिका—दध्नच्छब्दत्वावच्छिन्नविधेयताप्रयोजकता जातेति—अनन्त्यनकारादेरित्सञ्ज्ञा दुर्वारैवेति वाच्यं, 'दध्न्'विशिष्टाधिकरणत्वस्य, दध्नच्छब्दत्वावच्छिन्नविधेयताप्रयोजकताधिकरणत्वस्य च क्लृप्तत्वेन क्लृप्ताभ्यामाभ्यामधिकरणत्वाभ्यामेवोपपत्तौ'दध्न्'वृत्तित्वविशिष्टदध्नच्छब्दत्वावच्छिन्नविधेयताप्रयोजकताया अनिरिक्ताधिकरणत्वस्य कल्पनायां प्रमाणाभावेन विशिष्टपर्याप्त्यादेरभावेनादोषात्। स्पष्टञ्चेदं 'कालाध्वनो'रित्यत्र **व्युत्पत्तिवादे**। वस्तुतस्तु वैयाकरणमतेऽवयवावयविनोरिव प्रत्येक–समुदाययोरपि परस्परं भेदः स्वीक्रियत इति समुदायपर्याप्तं नैव प्रत्येकं पर्याप्नोतीति न कोपि दोषः। अत एव "समुदायस्य सखिरूपत्वाभावात्–'असखी'तिनिषेधाप्रवृत्तेर्घिसञ्ज्ञे"ति **कौमुदी** सङ्गच्छते। अत एव समास-ग्रहणस्य नियामकत्वं भाष्योक्तं सङ्गच्छते, अन्यथा–'राजन्–ङस्' इत्यस्य प्रत्ययान्ततदादित्वेन, 'पुरुष–सु' इत्यस्यापि प्रत्ययान्ततदादित्वेन तत्समुदायोऽपि–प्रत्ययान्ततदादिरिति तदसङ्गतिः स्पष्टैवेति दिक्।

**ऋषितात्पर्येणेति**। अयं भावः—'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणान्त्यं, 'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिका या स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यता—तादृशविशेष्यतावदन्त्यमिति वा 'हलन्त्य'मित्यादेरर्थः, अन्यत्सर्वं पूर्वोक्तदिशावसेयम्।

### ❀ चिदस्थिमाला ❀

ध्वनयितुमाह—**अत एवेति**। तादृशसमुदायान्त्यग्रहणादेवेत्यर्थः। इत्सञ्ज्ञायाः परित्राणमिति पञ्चमीसमासः, 'सुप्सुपे'तीति बोध्यम्, अन्यथोकारे इत्सञ्ज्ञया लुप्ते नत्वात्तत्प्राप्त्योकारवैयर्थ्यं स्पष्टमेव। नन्वेवमपि तद्विषयत्वस्य समुदायवदवयवेऽपि सत्त्वेन प्रत्यासत्त्या समुदायान्त्यग्रहणमेव कुतोऽत आह—**समुदेति**।

**नान्तरीयकतयेति**। 'उच्चारणेऽरी'ति शेषः, तेषाम्=अवयवोच्चारणानाम्। ननूपदेशशब्दस्य बहुव्रीहिणाऽन्यथा वा कालपरत्वेपि तद्रूपाधारस्य कर्त्रन्वयद्वारा प्रधानक्रियान्वयस्य न्याय्यत्वेनाद्योच्चारणकाले इत्सञ्ज्ञाभवनमित्यर्थलाभः, स च बाधितः, तत्कालात्पूर्वमनभिव्यक्त्या तत्काले इत्सञ्ज्ञाया दुर्वचत्वात्, तत्कालेऽभिव्यक्तौ तु तदनन्तरकाले सोचिता, अत एव 'नाज्झलौ'विति सूत्रभाष्यसङ्गतिः, किञ्चाइउणितिणादा-

### ❀ सदाशिवभट्टीयम् ❀

'इत्सञ्ज्ञायाः परित्राणे'ति पञ्चमीसमासः। **नान्तरीयेति**। अन्यनिष्पादकतया निष्पाद्यत्वेनेत्यर्थः।

### ❀ विषमपदविवृतिः ❀

नादयुक्तमेतत्। **नान्तरीयकतयेति**। अन्तरा=विना–भवोऽन्तरीयः, गहादित्वाच्छः। ततः स्वार्थिकः कः, नशब्देन समासश्च। प्राधान्यादित्सञ्ज्ञाभवनक्रियायामुपदेश इत्यस्यान्वयभ्रमवारणायाह–

---

### ❀ वरवर्णिनी ❀

इत्सञ्ज्ञापरित्राणम्=इत्सञ्ज्ञाविरहः। न चावयवेषु ऋषितात्पर्याभावे तेषामुच्चारणं व्यर्थं स्यादत आह—**नान्तरीयेति**। व्यापकतयेत्यर्थः। अवयवोच्चारणं विना समुदायोच्चारणस्य कर्तुमशक्यत्वादेव तदुच्चारणं, न तु तत्र मुनेस्तात्पर्यमित्याशयः।

ज्ञापकत्वाभावात्। **उपदेशेऽन्त्यमिति**। तत्र विद्यमानमन्त्यमित्यर्थः। तेन 'अइउ'णित्यादौ णादीनां हल्प्रत्याहारसिद्ध्युत्तरं तत्सिद्धिः, अन्यत्र त्वन्तरङ्गत्वात्प्राय उच्चारणेनाभिव्यक्तस्य

## ※ चिदस्थिमाला ※

विदर्मपि दुर्वचमत आह—**तत्र विद्यमानमन्त्यमिति**। आद्योच्चारणकाले विद्यमानं तादृशमन्त्यं हलित्यर्थः। एतेन—सप्तम्युपपत्त्यर्थ 'विद्यमानमित्यस्याध्याहार'इत्यपास्तं, तद्धनयंस्तत्फलमाह—**तेनेत्यादिना**। तदध्याहारेणेत्यर्थः, तथा च यत्र यदेत्सञ्ज्ञाशास्त्रप्राप्तिस्तदा तत्र सेति तदर्थकोपदेशपदेन तदव्यवहितोत्तरकालो लक्षणीय इति सर्वत्र तात्सिद्धिस्तदाह—**अइउणित्यादाविति**। **णादीनामिति**। 'लभिन्नाना'मिति शेषः। तस्य तु सूत्रान्तरेणोपदेशाव्यवहितकाले एव सा, तदाह—**हलिति**। तत्=इत्सञ्ज्ञा, 'नाज्झला'विति सूत्रभाष्यन्तु लान्यणाद्यन्यविषयमित्याह—**अन्यत्रेति**। लान्य-णादिभिन्ने इत्यर्थः, अत एव पूर्ववैलक्षण्यबोधकस्तुशब्दः, तत्र भाष्येऽनुक्तं हेतुमाह—**अन्तरिति**। 'जशः शी'त्यादावसम्भवादाह—**प्राय इति**। 'उच्चे'त्यस्य 'आद्ये'त्यादिः। **अभीति**। ज्ञातस्य सञ्ज्ञाविधानादिति भावः।

## ※ सदाशिवभट्टीयम् ※

'उच्चारणेपी'ति शेषः, **तेनेति**। अध्याहारेणेत्यर्थः, आद्योच्चारणकाल इत्सञ्ज्ञाभवनमित्यर्थे तु न स्यात्, तत्रार्थे बाधश्च। तत्कालात्पूर्वमनभिव्यक्तया तत्काल इत्सञ्ज्ञाया दुर्वचत्वात्, **नाज्झला**विति सूत्रभाष्यविरुद्धत्वाच्च।

## ※ विषमपदविवृतिः ※

**तत्र विद्यमानमिति**। 'क्रियामात्रं कालोपाधि'रिति मते उपदेशशब्द आद्योच्चारणपरः, मतान्तरे लक्षणया तदधिकरणकालपरः। तेनैधादीनां धादेर्नेत्वं, उपदेशेऽनन्त्यत्वात्, प्रधानक्रियान्वये तु तद्दुर्वारम्। यद्यप्य 'धिकरणसप्तम्यन्तस्य साक्षात्कर्तृकर्मणोरेवान्वयः, तद्वारा क्रियान्वय'इति वक्ष्यमाणस्वसिद्धान्तरीत्या 'विद्यमान'इत्यध्याहारो नात्रावश्यकः, अत एवाक्षेषु शौण्ड इत्यत्र प्राचां विद्यतिक्रियाध्याहारो नव्यैर्दूषयिष्यते, तथाप्येधादेर्धस्येत्त्ववारणायाप्रधानान्त्यविशेषणतया विद्यतिक्रियाध्याहारः कृतः। न चैवं 'क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारेणैवे'ति कारकप्रकरणस्थशेखरविरोधः, साक्षादन्वयस्यैवात्र स्वीकारादिति वाच्यम्, तस्याक्षशौण्डस्तिष्ठतीत्यादिविषयत्वात्। यत्र हि कर्तृकर्मविशेष्यतया क्रिया भासते तत्र तद्वारैव सप्तम्यन्तस्य क्रियान्वयसम्भवे क्रियान्तराध्याहारो न युक्तः, साक्षादप्रधानक्रियायामन्वयश्चायुक्तः। अक्षशौण्डपदयोः समासानापत्तेः। यत्र तु कर्तृकर्मक्रिये तद्विशेषणे, यथा–कटे शेते देवदत्तः स्थाल्यां पक्व ओदन इत्यादौ, तत्र तु साक्षादेव क्रियान्वयः। 'तत्र विद्यामानमन्त्य'मित्यत्रापीत्थमेव, एवम'क्षेषु शौण्डस्य वस्त्र'मित्यादावप्यध्याहृतविद्यतिक्रियायामेव सप्तम्यन्तार्थस्यान्वय इत्यलं प्रसक्तानुप्रसक्त्या। यद्यप्येधादेर्धकारादिरुपदेशे विद्यमानाकारस्येत्सञ्ज्ञोत्तरमन्त्यश्चेत्युक्तव्याख्यायामप्येधादौ धस्येत्सञ्ज्ञा दुर्वारा, तथाप्याद्ये वयसि धनी देवदत्त-इत्यादाविव धर्मिपारतन्त्र्येणोपदेशकालावच्छिन्नान्त्यत्वमपि भासते इति न कश्चिद्दोषः। **तेनेति**। उपदेश इत्यस्येत्सञ्ज्ञाभवनक्रियायामन्वयं विहायान्त्यपदार्थान्वयिविद्यतिक्रियायामन्वयकरणेनेत्यर्थः।

**अन्यत्र त्विति**। 'ऋहलोर्ण्य'दित्यादौ। तत्पूर्वमपि हल्प्रत्याहारसिद्धिसम्भवादिति भावः। **अन्तरङ्गत्वादिति**। तेन 'न धातुलोप' इतिसूत्रस्थ–'धातुग्रहणं किं? लूञ् लविते'ति भाष्यं सङ्गच्छते। धातुसञ्ज्ञायाः क्रियावाचकत्वज्ञानाधीनत्वेन बहिरङ्गत्वात्। **सिद्ध्युत्तरमिति**। वर्णोपदेशकाले तदव्यवहि-

## ※ वरवर्णिनी ※

**तेनेति**। आद्योच्चारणकाले तु इत्सञ्ज्ञाविधायकहलन्त्यसूत्रवाक्यार्थबोधाभावान्नेत्त्वप्राप्तिः, तत्र विद्यमानमन्त्यमित्यर्थे तु किञ्चित्क्षणाविलम्बेनापीत्त्वे न क्षतिः, उपदेशकालिकविद्यमानत्वस्य हल्प्रत्याहारसिद्ध्युत्तरकालेऽपि सम्भवादिति भावः। अन्यत्र=अक्षरसमाम्नायातिरिक्ते–'भवतष्ठक्छसा'वित्यादौ।

तदव्यवधानेनैवेत्सञ्ज्ञा, पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव, 'उपदेशोत्तरकाल इत्सञ्ज्ञे'-ति 'नाज्झला'विति सूत्रभाष्यात्। 'धु'डित्यादौ सानुबन्धाद्विभक्तिस्तु—तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा, इत्सञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्रानर्थक्यात्तदुपस्थाप्य एव। स्पष्टश्चेदं—'तित्स्वरित'मित्यत्र कैयटे।

❀ चिदस्थिमाला ❀

**तदव्यवेति**। पदपर्यालोचनकाल इति भावः, यथोद्देशपक्षे चेदमत एवाह—**पदार्थोपेति**। अनुबन्धविनिर्मुक्तस्यैव पदार्थस्योपस्थितिरित्यर्थः ; **गुरुकुलवत्समासः**। **सूत्रभाष्यादिति**। उत्तरत्वस्याव्यवहितत्वगर्भस्यैव विवक्षणादिति भावः। नन्वेवं तस्य लोपेन तच्छब्दात्तदुपस्थितिर्वाच्येति तस्यार्थवत्त्वात्ततो विभक्तिरुचिता, अनुबन्धस्तु तदग्रे वाच्योऽत आह—**धुडिति**। सूत्र इत्यर्थः। तत्र सञ्ज्ञायामपि लोपो न, उच्चारणसामर्थ्यात्। अन्यथा तत्स्वरूपप्रतिपत्तिरेव न स्यादिति भावः।

तदाह—**तेनैवेति**। सानुबन्धेनैवेत्यर्थः। एवमग्रेपि। नन्वेवं तत्रेत्सञ्ज्ञाऽपि न स्यात्तत्राफलत्वादत आह—**इत्सञ्ज्ञेति**। तस्याः कार्यमित्यर्थः। **कैयट इति**। तत्र हि—'तिर्ता'ति वार्त्तिकप्रत्युदाहरणे **किरतीति** प्रतीके—"इत्सञ्ज्ञा सूत्रोपात्त एव प्रवर्तते, उपदेशोत्तरकाले तद्विधानात्, लोपद्वारा च तस्याऽसत्त्वं प्रत्याख्ये प्रतिपाद्यते, पदार्थोपस्थितेरनुबन्धविनिर्मुक्ताया एव जायमानत्वात्, ततश्च 'द्विरेफो भ्रमर'इतिवच्छब्दार्थयोरभेदोपचारात्सञ्ज्ञी सञ्ज्ञाधर्मेण कथ्यते" इत्युक्तम्। नन्वेवं व्याकरणस्य विकार इत्याद्यर्थे 'अनुदात्तादेश्चे'त्यञि आद्युदात्तवैयाकरणशब्दे 'ञित'इत्यन्तोदात्तत्वापत्तिः, वैयाकरणशब्दस्तु—लित्स्वरेणाद्युदात्त'करण'शब्दस्याञ समासे समासान्तोदात्तबाधक—'तत्पुरुषे तुल्यार्थे'तिपूर्वपदप्रकृतिस्वर—बाधके—**गतिकारकोपेति**-तस्मिन्नेव स्वरे, पुनरपि 'वि'ना समासे, तेनैव तस्मिन्स्वरे आद्य

❀ ज्योत्स्ना ❀

पदार्थानां विभक्तित्वेऽन्तरङ्गत्वाज्जमादौ सादेरित्सञ्ज्ञालोपौ प्रसज्ज्येयातां, निषेधसूत्रस्य तु प्राग्दिर्शयिषु

❀ सदाशिवभट्टीयम् ❀

**तदव्यवधानेति**। यथोद्देश इदम्, अनुबन्धविनिर्मुक्तस्यैव पदार्थोपस्थितिरित्यर्थः, गुरुकुलवत्समासः।

नन्वेवमन्त्यस्य लोपेन तच्छच्छब्दात्तदुपस्थितिर्वाच्येति तस्यैवार्थवत्त्वात्ततो विभक्त्युत्पत्तिरुचिता, अनुबन्धस्तु तदग्रे वाच्योऽत आह—**धुडितीति**। तत्रेत्सञ्ज्ञायामपि लोपो न, उच्चारणसामर्थ्यात्, अन्यथा

❀ विषमपदविवृतिः ❀

तोत्तरकाले च हल्प्रत्याहारस्यासिद्धिरिति भावः। **प्राय इति**। मनिनादेर्नकाराद्यभिप्रायेण **प्रायःपदं**, तत्र हि तवर्गान्तर्गतत्वेन निषेधविषयत्वसम्भावनया 'न विभक्तौ'विति वाक्यार्थबोधोत्तरमेव तत्रेत्सञ्ज्ञा। एवं–सुपः पकारे ऽपि, विभक्तिघटकत्वेन निषेधविषयत्वसंशयात्। **तस्यैवार्थवत्त्वादिति**। **तेनैवेति**। इदमयुक्तम्–सानुबन्धकेनानुबन्धविनिर्मुक्तोपस्थितेरसंम्भवात्। आर्धधातुकस्ये'ड्त्यादौ उपदेशोत्तरमेवेत्सञ्ज्ञालोपाभ्यामपहारे जश्त्वानापत्तेश्च, तस्माद्वाक्यार्थबोधोत्तरमेव विधेयत्वप्रतिपत्त्युत्तरमेवेत्सञ्ज्ञालोपौ, 'उपदेशोत्तरकाले इत्सञ्ज्ञे'ति भाष्यमप्येवमेव कथं चिन्त्यम्।

**अन्ये** तूच्चारणं परिनिष्ठितस्यैवोच्चारणोत्तरमेव तदपहारेण काकस्येव न शब्दबोध्येतत्याहुः। **तदुपस्थाप्य एवेति**। 'कितिचे'त्यादौ तद्बोध्य इत्यर्थ इति भावः।

❀ वरवर्णिनी ❀

**इत्वकारेति**। वस्तुतस्तु चित्त्वस्यादिरन्त्येनेति सूत्रप्रवृत्तये चारितार्थतया बोधकवृत्तिचित्त्वस्य बोध्ये आरोप एव नेति शङ्कावसर एव नेति तत्त्वम्।

वैयाकरणे चित्स्वरस्तु न, तस्यैचकारसदृशत्वेऽपि तत्त्वाभावात्। विभक्त्यादि-सञ्ज्ञापि–सूत्रान्तर्गतानामेवेति,–तत्रैव 'न विभक्तौ'वित्यादीनां प्रवृत्तिः, अत एव—"–'इदम इ'शित्यादावणत्वात्सवर्णग्रहणं प्राप्तम'प्रत्यय'इत्यनेन निषिध्यते–" इति भाष्योक्तं सङ्गच्छते। यत्त्वनेकाल्सूत्रे 'इशि शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्व'मिति

❀ चिदस्थिमाला ❀

उदात्तः, असमस्तविषयत्वाद्गतिर्गताविल्यनुदात्तो न–अत आह—**वैयाकरण इति**। तच्छब्द इत्यर्थः। **तस्येति**। ऐचश्चस्येत्यर्थः, तस्य प्रत्ययमात्रस्वरत्वन्तु न, मानाभावात्, प्रतिपादितमिदं प्राक्। नन्वेवं 'न विभक्तौ'वित्यादीनामानर्थक्यं स्यात्, इत्त्वकाले विभक्तिसञ्ज्ञाया अभावादत आह–**विभक्त्यादीति**। आदिना प्रत्ययादिपरिग्रहः, एवेन—पदार्थोपस्थितिविषयादिन्यावृत्तिः। **तत्रैव**—इत्सञ्ज्ञाविषये सूत्रोपात्ते एव। उक्तार्थे भाष्यसम्मतिमप्याह–**अत एवेदमिति**। पदार्थोपस्थितेरनुबन्धविनिर्मुक्तत्वादेवेत्यर्थः, अन्यथा तदानीमनण्त्वेनाशङ्कासमाधानयोरसङ्गतिः स्पष्टैव। प्रत्ययग्रहणस्यादेशाद्युपलक्षकत्वादाह—**अप्रत्यय इत्येति**। उक्तार्थे भाष्यविरोधं परिहरति—**यत्त्विति**। अनेकाल्सूत्रे शिद्ग्रहणाभावेऽपि शित्करणादेवेशि सर्वादेशत्वमित्यर्थः। यद्यपि स न श्रवणार्थ इति **शित्करणा**दित्युक्तं, तथापि तस्य फलान्तराभावात्पूर्व-मित्सञ्ज्ञामकृत्वाऽनेकाल्त्वात्सर्वादेशे तत इत्सञ्ज्ञेति तदाशयस्य वाच्यत्वेन पूर्वविरोध इति भावः।

**तस्य**=भाष्यस्य। 'इत्सञ्ज्ञकशकारे'ति—बहुव्रीहिः, इत्सञ्ज्ञा च विशेषणं, अत एव साम्प्रतिकालाभोऽत आह—**भूतेति**।

❀ ज्योत्स्ना ❀

चरितार्थत्वमत आह—**विभक्त्यादिसञ्ज्ञापीति**। 'चुटू इत्यादा'वित्यादिपदात् 'लशक्वतद्धिते'

❀ सदाशिवभट्टीयम् ❀

स्वरूपप्रतिपत्तिरेव न स्यादिति भावः। **वैयाकरणेति**। व्याकरणशब्दाद्विकारेऽनुदात्तादेश्चेत्यञि आद्युदात्तवैय्याकरणशब्दे **चित** इत्यन्तोदात्तत्वापत्तिरित्यर्थः। यद्यपी'त्वेपि प्रत्याहारसिद्धिरूपफलसत्त्वेनानर्थ-क्याभावात्तदुपस्थाप्ये न तत्कार्य'मितिसमाधानं वक्तुं शक्यं, तथापि न्याय्यसमाधिमाह—**तत्त्वाभावेति**। प्रातिपदिकान्तत्वात्तु न तत्त्वं, यत्र सञ्ज्ञा तत्र फलाभावेन तद्विषयेत्सञ्ज्ञाशास्त्रीयवाक्यस्यानुपप्लवात्। धुडा-दौ तु तत्तदनुबन्धसामर्थ्याद्वाक्यमुपप्लवते- इति तत्सामर्थ्यादुपस्थाप्ये कार्यमिति बोध्यम्। **न विभक्तावित्य**-स्यानर्थक्यं परिहरन्नुपजनिष्यमाणेति न्यायमूलकमर्थमाह–**विभक्त्यादीति**। आदिना—प्रत्ययपरिग्रहः, यत्र तु सुङ्स्योरौट्सुपोर्न **विभक्तौ**त्यस्य न प्राप्तिस्तत्र त्वनुबन्धविनिर्मुक्तस्यैव विभक्त्यादिसञ्ज्ञा, पूर्वमित्सञ्ज्ञाया अप्रवृत्तौ बीजाभावादिति बोध्यम्। **अत एवेति**। पदार्थोपस्थितेरनुबन्धविनिर्मुक्तत्वादेवेत्यर्थः। अन्यथा तदा-नीमनण्त्वादाशङ्कासमाधानयोरसङ्गतिः स्पष्टैव। 'अप्रत्यय'इत्यस्य आदेशाद्युपलक्षकत्वादेवाह—**अप्रत्यय**

❀ विषमपदविवृतिः ❀

**तत्त्वाभावादिति**। इदं चिन्त्यम्—अत्राऽपीत्सञ्ज्ञाप्रवृत्तौ बाधकाभावात्। 'चितः सप्रकृते-र्बह्वकजर्थ'मिति वार्तिकस्वारस्येन चिति प्रत्यय एव तत्प्रवृत्त्या न दोष इति तु वक्तुं युक्तमिति **केचित्**। कुण्डिनचि चित्स्वराप्रवृत्तिररुचिबीजम्। **भाष्योक्तमिति**। इदञ्च भाष्यमनुबन्धानां

❀ वरवर्णिनी ❀

**विभक्त्यादीति**। स्वौजसित्यादिसूत्रान्तर्गतानामेव सुप्पदार्थत्वादिति भावः। **अन्ये तु**—बोध्यस्यैव सञ्ज्ञा, बोधके इत्सञ्ज्ञाभावश्चोपसञ्जनिष्यमाणन्यायादित्याहुः। **अत एव**=बोधके एवेत्सञ्ज्ञायाः स्वीकारा-देव। **इशो** बोध्यत्वे त्वस्याण्बोधकत्वाभावाद्भाष्यासङ्गतिरेव। **यत्त्विति**। अनुबन्धविनिर्मुक्तस्यैव बोध्यत्वेऽने-काल्त्वाभावात्सर्वादेशता न स्यादिति–भाष्यविरोध इति **शङ्का**, शकारकरणसामर्थ्याद्बोध्यबोधकयोरभेदाध्य-

भाष्ये उक्तं,—तस्येत्सञ्ज्ञकशाकारकरणाद्भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमित्यर्थ इति न तद्विरोधः ।

अत्र केचित्—"अनुबन्धा अनेकान्ताः=अनवयवाः, यो ह्येकान्तः न कदाचित्

❀ अभिनव-चन्द्रिका ❀

**भूतपूर्वानेकाल्त्वमादायेति** । अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्ये आरोपात्,अनेकाल्वृत्ति-धर्मावच्छिन्नविधेयताश्रयः सर्वस्य स्थाने भवती'त्यनेकाल्शित्सर्वस्ये'ति स्यार्थकरणाद्वा, बोधकवृत्त्यनेकाल्वादेः स्थानिवद्भावेनादेशे—बोध्ये आरोपाद्वेति भावः । न चानेकाल्त्वादेरल्त्वव्याप्यधर्मघटितत्वेन 'अनल्विधा'विति निषेधान्न स्थानिवद्भाव इति वाच्यं, 'न ल्यपी'ति ज्ञापकेनाऽल्त्वव्याप्यधर्म-

❀ चिदस्थिमाला ❀

प्रसङ्गादाह—**अत्रेति** । अनुबन्धविषय इत्यर्थः, 'अनेकान्ता' इत्यस्य व्याख्या—**अनवेति** । 'प्रकृत्यादी'त्यादिः । तत्त्वं व्यतिरेकमुखेनोपपादयति—**यो ह्येकान्त इति** । शाखादिरित्यर्थः । छेदनेन

❀ सदाशिवभट्टीयम् ❀

**इत्यनेनेति** । **अनवयवा इति** । उपस्थापकानवयवा इत्यर्थः । **कदाचित्तन्नेति** । तदुपस्थाप्ये इत्यर्थः ।

❀ विषमपदविवृतिः ❀

प्रयोगानमवायित्वात्,प्रयोगसमवायिनश्चाण्त्वाद्ग्रहणकशास्त्रप्रवृत्त्यापत्तिरित्यभिमानेन । नव्यमतेपीशि समुदायस्यैवार्थवत्त्वेन तदेकदेशेकारस्य निरर्थकत्वादणुदित्सूत्राप्राप्तेः । अत्र **केचिदित्यारभ्याहु-रित्यन्तो** ग्रन्थोऽस्मत्कृतत्रिपथगायां विवृतः ।

❀ वरवर्णिनी ❀

वसायादनेकाल्त्वान्न भाष्यविरोध **इत्युत्तरम्** । 'पादस्य लोपोऽहस्त्यादिभ्य'इत्यादौ तु कल्पकाभावान्नाभेदा-रोपः, तदेवमनुबन्धघटिते एव बोधकत्वम्, बोध्यता तु—अनुबन्धरहितस्येति निर्गलितोऽर्थः ।

—'बोध्यत्वमिव बोधकत्वमप्यनुबन्धविनिर्मुक्तस्यैवे'ति वदतां केषाञ्चन मतमुत्थापयति—**केचिदिति** ।

**अनुबन्धा अनेकान्ता इति** । तथाचात्र'अनुबन्धा बोधकावयवत्वाभाववन्तः, बोधकावयवत्वेनोपलब्धि-विषयत्वाभावा'दित्यनुमानप्रयोगः, हेतोः प्रसिद्धत्वादेवात्राप्रयोगः । हेतुतावच्छेदकरूपेण हेतोरेवासिद्ध्या हेतु-साधनायैव तु—'**विधेये कदापी**'त्यादिग्रन्थः । तदेवं हेतुसाधनाय द्वितीयोऽनुमानप्रयोगः—'अनुबन्धाः, बोधकानवयवाः, बोध्यावयवत्वेनोपलब्धिविषयत्वाभावा'दित्येवंरूपः सूचितः । एवञ्च प्रथमानुमाने हेतुः प्रसिद्धत्वान्नोक्तः, तादृशहेतोः साधनाय यद्द्वितीयमनुमानं, तस्यैव—'विधेये कदाप्यदर्शना'दिति हेतुरिति बोध्यम् । प्रथमानुमाने—'विधेयेऽदर्शना'दित्यस्यैव हेतुत्वे तु हेतुसाध्ययोर्वैयधिकरण्यं स्यात् । एतेन—'अनुबन्धा अनेकान्ता'इति प्रतिज्ञानन्तरं 'विधेये कदाप्यदर्शना'दित्यस्य हेतोरनुक्तेस्तर्कशास्त्रनियमविरुद्ध-मिदमिति केषां चिदुक्तिः समाहिता, 'विधेये कदे'त्यस्य पूर्वानुमानहेतुत्वस्यैवाभावात् । अपरानुमानस्यायं हेतुरित्यन्यदेतत् । **परे** तु—"बोध्य-बोधकयोरभेदाध्यवसायेन वैयधिकरण्यविरहात्—'विधेये कदे'-त्येव हेतुः, 'प्रतिज्ञोत्तरं हेतु'रिति च न नियमः, तथा च—'अनुबन्धाः—बोधकावयवत्वाभाववन्तः, विधेयावयवत्वेनोपलब्धिविषयत्वाभावा'दित्येवानुमानप्रयोगः—"इत्याहुः ।

ननु गुणपदघटकगकारस्य विधेयेऽकारादावदर्शनाद्बोधकावयवत्वरूप-साध्याभाव-वति गुणपदघटक-गकारे-बोध्यावयवत्वेनोपलब्धिविषयत्वाभावरूपस्य हेतोर्वर्त्तमानतया व्यभिचारः । किञ्च-'प्रत्युच्चारणं शब्दो भिद्यते' इत्यभ्युपेयते चेद्**दुसिञ्क्रिच्य** इति सूत्रस्थसन्घटकसकारस्यापि—लक्ष्यस्थसकाराद्भिन्नतया—विधेये-ऽदर्शनाद्व्यभिचारः, प्रत्युच्चारणं शब्दो न भिद्यते चेन्मतिन्घटकानुबन्धनकारे भागासिद्धिः, इत्सञ्ज्ञकनकारस्य मकाराकारोत्तरवर्त्तिनकारस्य चैक्येन मतो नकारस्य च बोध्यावयवत्वेनोपलब्धिविषयत्वस्यैव सत्त्वेन ताद-

❀ वरवर्णिनी ❀

शविषयत्वाभावरूपहेतोः पक्षैकदेशे नकारेऽसम्भवात्, पक्षतावच्छेदकावच्छेदेनानुमितौ—हेतोः पक्षैकदेशावृत्तित्वस्यैव भागासिद्धित्वादिति चेत्,—स्ववृत्ति-श्रावणप्रत्यक्षविषयतावच्छेदकधर्मा-ऽवच्छिन्नबोधकावयवत्वाभावस्यैवात्र साध्यत्वेनाभिमततया,—गुणे—स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक—गुणत्व—धर्मावच्छिन्नबोधकत्वस्यैव विरहेण [अत्वादिनाऽन्यतमत्वादिनैव वा तस्य बोधकत्वात्—] तदतिरिक्तताहृशोदासीनबोधकानवयवत्वस्य गकारेऽक्षततया व्यभिचाराभावात्। ननु—ईदृशानुमितेः—'अनुबन्धः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नबोधकावयवो न वे'ति संशय एव प्रतिबध्यो न तु—'अनुबन्धो बोधकावयवो नवे'ति सन्देह इति प्रकृतसंशयानिवर्त्तकतयेदृशाऽनुमितेरप्रयोजकत्वम्, किञ्च—'सनि बोधकता नवे'त्ति सन्देहप्रयुक्तो हि नकारे बोधाकावयवत्वसन्देहः, विधेयतावच्छेदकता च 'स'त्वे निश्चिता,—इति स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मोच्छिन्नबोधकानवयवत्वस्य सनो नकारे स्वतः सिद्धत्वात्तत्साधने सिद्धसाधनमितिचेत्

—अत्रास**द्गुरुचरणाः**—'अनुबन्धाः स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकपदानवयवाः, स्वघटितघटकप्रयोज्यविधेयतावच्छेदकधर्माभावा'दित्येवानुमितिः । 'गुप्तिज्किद्भ्यः स'न्नित्यत्र—स्वम्—अनुबन्धो नकारः, तद्घटितः—'सन्' इति, तद्घटक—सकार—वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदको धर्मः—'स'त्वम्, तादृशधर्मावच्छिन्नविषयताप्रयोजकं पदं—सन्पदं, तदनवयवत्वमनुबन्धे साध्यते, तत्र च अनुबन्ध—नकार—घटित—सन्-घटक—सकार—प्रयोज्यविधेयतावच्छेदक—सत्वधर्मस्याप्यभाव इति लक्षणसमन्वयः । णिनि—मनिनादौ भागासिद्धिवारणाय हेतुदले विधेयतावच्छेदको धर्मश्च—विशेष्यविशेषणभावापन्नशृङ्खलोपनिबद्धयावत्पदार्थसङ्कुचितो ग्राह्यः । तेन—मनिनादिस्थले—तादृशो धर्मो मन्त्वेन्त्वादिः, तदभावस्यानुबन्धनकारेकारादौ सत्त्वान्न भागासिद्धिदोषः ।

गुणपदघटकगकारे च—स्वं गकारस्तद्घटितं गुणपदं, तद्घटकमपि व्यपदेशिवद्भावेन गुणपदमेव, तद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदको धर्मो गुणत्वं, तद्धर्मावच्छिन्नविधेयताप्रयोजकपदं न गुणपदं, अदेङ्निष्ठविधेयताया अत्वादिनाऽन्यतमत्वेन वाऽवच्छिन्नतया गुणत्वेनावच्छिन्नत्वाभावात्, किन्तूदासीनं पदान्तरं तथा, तदनवयवत्वस्य च तत्र सत्त्वान्न व्यभिचारः । साध्यदले—तादृशविषयता च—स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण साक्षादवच्छिन्ना ग्राह्या, तेन 'आद्गुण'इत्यनेन सङ्केतसम्बन्धेन गुणपदवतो विधानाद्गुणपदावच्छिन्नादेङ्निष्ठविधेयतायाः परम्परया गुणत्वावच्छिन्नत्वेपि न गकारे व्यभिचारः । **न चैवमपि** गुणपदघटके गकारे—स्वं—गकारस्तद्घटित—गुणपद—घटकाऽकार—वृत्ति—श्रावणप्रत्यक्षविषयतावच्छेदको धर्मोऽत्वं, तेन साक्षादवच्छिन्ना—अकारनिष्ठा विषयता, तत्प्रयोजकं पदं—गुणपदं,-तदवयवत्वस्यैव—सत्त्वेन पुनरपि व्यभिचारस्तदवस्थ एव,**किञ्च**—स्वं सनो नकारस्तद्घटिताऽष्टाध्यायी, तद्घटकं—'गुप्तिज्किद्भ्यः स'न्निति सूत्रं तद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताया अप्रसिद्धिः, **किञ्च**—स्वं सनो नकारस्तद्धटितं सप्तम्यन्तं 'सनी'ति, तद्घटक इकारस्तद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मादेरप्रसिद्धिरिति वाच्यम्, 'स्वघटित—पदाघटित—विभक्त्यघटित-घटक—स्वेतरयावद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकपदानवयवा'इत्यस्य साध्यदलेविवक्षणेनादोषात् । **नन्वेमपि** कुक्मुम्घटकानुबन्धककारमकारयोः कत्वमत्वरूपाविधेयतावच्छेदकधर्माभावस्य हेतोरसत्त्वाद्भागासिद्धिरिति चेन्न, बोधकानवयवत्वेन निश्चितोत्तरत्वाभाववत एवानुबन्धस्य पक्षतया विवक्षणेन—कुगादिघटकानुबन्धककारे बोधकानवयवत्वेन निश्चितो य उच्चारणार्थकोकारस्तदुत्तरत्वस्यैव सत्त्वेन पक्षतावच्छेदकानाक्रान्तत्वेनादोषात् । **नन्वेवं**—कुक्—मुम्घटकमकाराद्यनुबन्धानां बोधकानवयवत्वसाधकं किमितिचेत्—'कुक्—मुमनुबन्धौ बोधकानवयवौ, बोधकावयवोत्तरत्वविशिष्ट—बोधकानवयवोत्तरत्वा' दित्यनुमानेनैव तथा निर्णयादित्याहुः ।

**श्रीबालशास्त्रिचरणास्तु**"—अनुबन्धाः स्वघटितघटकप्रयोज्यस्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदक-

तत्रोपलभ्यत एव, अयन्तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात्, 'हलन्त्य'मित्य-

❀ अभिनव-चन्द्रिका ❀

घटितधर्मे 'अनुबन्धघटितबोधकाऽवृत्ती'तिविशेषणेनादोषात् । यत्तु–'अनेकाल्बोधकबोध्यस्सर्वस्य स्थाने भवती'त्यर्थेन औश्पदबोध्यौकारादेस्सर्वादेशत्वं भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्व'मिति शेखरस्यात्रैव तात्पर्यमिति, तन्न 'लोपानुनासिकादेशादेरपि सर्वादेशत्वापत्तेः। विधेये कदाप्यदर्शनादिति । न च हेतुवाक्यस्य पूर्वं लेखनौचित्येनेदमसङ्गतमिति वाच्यम्, 'अनुबन्धा बोधकनिरूपितावयवत्वाभाववन्तः, बोधकावयवत्वेनोपलब्धिविषयत्वाभावा'दिति पूर्वानुमाने हेतोः स्पष्टत्वादनुक्तेः, तत्रासिद्धत्वपरिहारायैतद्धेतुलेखनात् । वस्तुतस्तु–'स्वघटितपदाघटितविभक्त्यघटितघटकत्वेनरयावद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्माच्छिन्नविषयताप्रयोजकनिरूपितावयवत्वाभाववन्त' इति साध्यदलम्, 'स्वघटितपदाघटितघटकप्रयोज्यविधेयतावच्छेदको यो विशेष्यविशेषणभावापन्नशृङ्खलोपनिबद्धयावत्पदार्थसङ्कुचितो धर्मस्तदवच्छिन्नत्व' 'स्वघटितपदाघटितघटकप्रयोज्यविधेयताख्यविषयताऽवच्छेदकधर्म-

❀ चिद्स्थिमाला ❀

तत्रानुपलम्भादाह—**कदाचिदिति अयन्तु**=अनुबन्धत्वावच्छिन्नस्तु, **न तथा**=नावयवः । **तदर्थेति !** तद्घटितार्थेत्यर्थः, यद्वाऽवयवित्वेनाभिमतार्थेत्यर्थः । तथा चानुपलम्भकयत्नं विना तत्रान्यत्र चोपलभ्यमानोऽनवयवः, तं विना तत्रैवोपलभ्यमान एव यः सोऽवयव इति भावः । नन्वेवमित्त्वस्यैवाभावेन मूले कुठार एव स्यादत आह—**हलन्त्यमिति** । उभयत्र लक्षणेति भावः । नन्वेवमपि वृत्तिर्न स्यात्सम्बन्धा-

❀ वरवर्णिनी ❀

धर्मावच्छिन्नविधेयताकबोधप्रयोजकावयवत्वाभववन्तः, 'स्वघटितघटकप्रयोज्यस्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयतावच्छेदकधर्मवत्त्व' 'स्वघटितघटकप्रयोज्यस्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकावच्छिन्नविधेयताकबोधप्रयोजकावयवेतरनादृशबोधकानवयवानुत्तरत्वं तदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताक-'स्वाभाववत्त्वात्' इत्येव सकलसाधारणी अनुमितिः । वस्तुतस्तु–एवमनुमितौ हेतुतावच्छेदककोटावन्यतरत्वप्रवेशे जगत्प्रवेशापत्त्या गौरवमिति–'अनुबन्धाः स्वविशिष्टवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण साक्षादवच्छिन्नविधेयताप्रयोजकपदघटकत्वाभाववन्तः, स्वविशिष्टविधेयतावच्छेदकधर्माभावा'दित्येवानुमितिः, साध्यकोटौ–अनुबन्धवैशिष्ट्यञ्च–'स्वेतरत्व' 'स्वघटितपदघटकप्रयोज्यविधेयताप्रयोजकावयवत्व' 'स्वघटितपदघटकानुबन्धेतरत्वै'तत्त्रितयसम्बन्धेन । हेतुकोटौ वै० 'स्वघटितपदघटकप्रयोज्यत्व' 'स्वघटितघटकपदपर्याप्तश्रावणप्रत्यक्षविधेयतावच्छेदकधर्मावच्छिन्नत्वो'भयसम्बन्धेन । स्वम्—अनवयवत्वेनाभिमतम् । कुगादावन्त्य इवादावपि कादौ हेतुसाध्ययोः सत्त्वान्न व्यभिचारः । साध्यतावच्छेदककोटौ—'स्वेतरत्व'–निवेशात्कुगाद्यककारे हेतोर्न व्यभिचारः । तत्रैव द्वितीयसम्बन्धदानात्स्वविशिष्टमुदासीनककारमादाय कुगाद्यककारे न व्यभिचारः । तृतीयसम्बन्धनिवेशात्तत्रैवान्त्ये ककारे न व्यभिचारः । वैशिष्ट्यघटके द्वितीयसम्बन्धे 'पदाघटिते'ति निवेशाद्वुञ्छ'णितिसूत्रविहितकगवयवकशब्दे—त्रितयसम्बन्धेनापि स्वविशिष्टं तत्सूत्रघटकं कविधायकं कशब्दमादाय न व्यभिचारः । धर्मे 'स्वविशिष्टनिरूपितपर्याप्तत्व'निवेशात् सन्घटकसकारादौ 'स्वविशिष्टाकारवृत्तिविधेयतावच्छेदकसमुदायत्वमादाय न व्यभिचारः । स्वविशिष्टपर्याप्तधर्मस्य श्रावणप्रत्यक्षविषयतावच्छेदकीभूतस्य विवक्षणात्सङ्केतसम्बन्धेन विधेयतावच्छेदकीभूतगुणपदपर्याप्त्यधिकरणीभूताकारस्य गकारविशिष्टत्वेप्याङ्गुण इत्यादिघटकगुणादिपदघटकगकारादौ न व्यभिचारः । हेतुतावच्छेदकीभूतविधेयतायां प्रथमसम्बन्धोपादानात्–विधायकमन्पदघटकनकारूपानुबन्धे स्वघटितपदपर्याप्तधर्मावच्छिन्नां मनिन्पदप्रयोज्यां मन्निष्ठविधेयतामादाय हेतोर्न पक्षतावच्छेदकाव्यापकत्वम् । तत्रैव द्वितीयसम्बन्धदानात्कुगाद्यनुबन्धककारे णिन्याद्यनुबन्धेकारे च न भागासिद्धिः–"इत्याहुः । विस्तरस्तु शब्देन्दुशेखराभिनवराजलक्ष्म्यामनुसन्धेयः ।

त्रान्त्यशब्दः—परसमीपबोधकः, 'चुटू' इत्यादावादिशब्दः पूर्वसमीपबोधकः, 'अनकालिशि'-दित्यादौ समीपे सामीप्यमूलकावयवत्वारोपेण बहुव्रीहिः, स्पष्टञ्चेदमु'पदेशोऽ'जिति सूत्रे भाष्ये, 'मपर्यन्तस्ये'ति सूत्र कैयटे च। तेन डा-णलादाविशादौ च न दोषः, अत एव 'उपदेशोऽजि'ति सूत्रे 'उपदेश'ग्रहणं चरितार्थम्, तद्धि 'अभ्र आँ अटित' इत्यादा-'वादितश्चे'तीट्प्रतिषेधाभावाय, अनेकान्तत्वे हि तत्प्राप्तिरित्याहुः।

### ॐ अभिनव-चन्द्रिका ॐ

वदुत्तरो यः—स्वघटितपदाघटितघटकप्रयोज्यविधेयतावच्छेदकधर्माभाववान्—तदनुत्तरत्वे'तदुभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावादिति हेतुदलं लेखनीयम्। तेन सर्वामष्टाध्यायीं गृहीत्वा'भ्यस्तञ्चि'ति वा गृहीत्वा नाप्रयोजकत्वशङ्का। न वा गुणशब्दगकारे, स्थाम्नोऽकार इत्यत्र ककारे वा व्यभिचारः। न वा सर्वामष्टाध्यायीं गृहीत्वा सन्सकारे 'सुप्यजातौ णिनि'रित्यत्रन्येकारे, कुकि ककारे च भागाऽसिद्धिः, न वा काश्यादिभ्यष्ठञ्ञिठावित्यत्र ञिठ्प्रत्ययठकारे व्यभिचारः। विस्तरस्तु **परिभाषेन्दुचान्द्रिकायां** द्रष्टव्यः। **परसमीपबोधक इति**। चिन्त्यमिदं, शिल्किदित्यादौ बहुव्रीह्युपपत्तये समीपेऽवयवत्वारोपस्यावश्यकत्वात्। एवं 'परशब्दः पूर्वसमीपबोधकः' इत्यपि चिन्त्यमेव। **अभ्र आँ अटित इत्यादाविति**। ननु दध्नचश्चकारेणानुबन्धेषु स्वसमभिव्याहृतनिरूपितमवयवत्वमारोपणीयम्,

### ॐ चिदस्थिमाला ॐ

भावात्, सामीप्ये तु न वृत्तिरिति स्पष्टमेवात आह—**अनेकालिति**। 'बुन्छणि'त्यादौ ञित्वप्रयुक्तकार्यं-पूर्वस्यैवे'त्यादि तु व्याख्यानतो निर्णेयं, तदाह—**स्पष्टञ्चेदमिति**। **तेन**=लक्षणारोपकृतबहुव्रीह्यङ्गीकारेण।

भिन्नसूत्रविषयत्वात्कोटिद्वयेनाह—**डाणलेति**। अत्र ज्ञापकान्तरमप्याह—**अत एवोपेति**। अनुबन्धाना-मनेकान्तत्वादेवेत्यर्थः। 'अभ्र ऑ अप' इत्यत्र फलाभावादाह—**अभ्र आँ अटित इति**। तत्त्वमुपपादयति-**अनेकान्तेति**। हि=यतः।

### ॐ ज्योत्स्ना ॐ

'आदिर्ञिटुडवः', 'षः प्रत्ययस्ये'ति। **तेनेति**। आद्यन्तपदयोः पूर्वपरसमीपबोधकत्वाश्रयणेनेत्यर्थः।

### ॐ सदाशिवभट्टीयम् ॐ

यथा वृश्चत्यादौ चकारादिः। सुवृडादौ संयोगान्तलोपेनापहारादुक्तं—**कदाचिदिति**। **न दोष इति**।

### ॐ वरवर्णिनी ॐ

केचित्तु—'स्वघटित—पदाघटित—विभक्त्यघटित—पदघटकानुबन्धेतरयावद्वर्णघटितसमुदाय—पर्याप्तधर्मा-वच्छिन्नविषयताप्रयोजकानवत्व'स्यैव साध्यता, तेन 'स्थाम्नोऽकार'इत्यादौ—स्व—ककार—घटिताकारघटकाकार-वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकात्वावच्छिन्नविषयताप्रयोजकाकारपदावयवत्वस्यैव ककारे सत्त्वेन—अनवयवत्वस्याभावेन साध्याभाववति ककारे—हेतोः सत्त्वेऽपि न व्यभिचारः, तादृशयावद्वर्णघटित-समुदायपर्याप्तधर्मत्वस्याकारत्वे एव सत्त्वेन तदवच्छिन्नविधेयताप्रयोजकत्वस्य चाकारपदे विरहेण (अत्वा-वच्छिन्नविधेयताप्रयोजकत्वस्यैव तत्र सत्त्वात्) तादृशोदासीनपदानवयवत्वस्य ककारेऽक्षतत्वा'दित्याहुः।

'बुन्छ'णित्यादौ णित्वप्रयुक्तं कार्यन्तु—छस्यैव न तु ककारस्य, द्वयसचश्चकारस्य पूर्व-परोभयसमी-पत्वेनोभयनिरूपितावयवत्वारोपेणोभयोश्चित्त्वे—सिद्धे पुनः दघ्नचश्चकारकरणस्य वैयर्थ्यापत्त्या—'स्ववि-शिष्टेऽनुबन्धे एव स्वावयवत्वमारोप्यत'इत्यर्थस्य ज्ञापनात्। वै० 'स्वाघटितपदाघटकत्व' 'स्वसमीपत्वो'-भयसम्बन्धेन। 'लोपश्चे'त्यत्र प्रश्लिष्टस्य शित्यस्य पृथक्पदत्वेन लोपाघटितशित्येतत्पदघटकत्वस्यैव शकारे व्यपदेशिवद्भावेन सत्त्वेऽपि—अनतिदिष्टघटकत्वस्यैवात्र सम्बन्धघटकतयोपादानान्न दोषः।

परंतु "–एकान्ता एव, शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काका-दिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते, नैवमयम्। किञ्चानवयवत्वे ण-श-कप्रत्ययादौ णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात् । एवमन्त्यत्वाभावाद्दिशादेः शस्येत्त्वानापत्तिः ।

ॐ अभिनव-चन्द्रिका ॐ

स्वाघटितं यत्पदं तद्घटकनिरूपितमवयवत्वं नारोपणीयम्। अथवा स्वघटितं–यत्पदाऽघटितं पदं–तद्घ-टकनिरूपितमवयवत्वमारोपणीयमितिकल्पितकल्पद्वयेऽपि—अद्धातुनिरूपितावयवत्वारोपस्य प्राप्तिरे-ति चेन्न । दत्तचक्षकोरण स्वविशिष्टे स्वनिरूपितावयवत्वमारोप्यत इति कल्पनेनादोषात् । वैशिष्ट्यञ्च 'स्वघटकत्व' 'स्वाघटितं यदनुबन्धेतरघटितं पदं तद्घटकत्वो'भयसम्बन्धेन । परे त्विति ; अयं भावः 'तदर्थभूते विधेये कदाप्यदर्शनादिति हेतुरातञ्चादितकारादौ व्यभिचरितः, वक्ष्यमाणहेतुना सत्प्रतिपक्षितः, 'अनवयवत्वनिश्चयाधीनः सर्वोपिऽवयवत्वारोपः, तदधीना इत्सञ्ज्ञा,तदधीनश्च लोपः, तदधीनश्च तदर्थभूते विधेये कदाप्यदर्शनं, तदधीनश्चावयवत्वनिश्चय' इति चक्रकेणासिद्धिग्रस्तश्च । नचैकान्तवादिमतेऽपि 'नानुबन्धकृत'मित्यादिपरिभाषात्रयं वक्तव्यमिति वाच्यम्, शित्करणेनानुबन्ध-घटितबोधकत्वनयो येऽनुबन्धत्वघटितातिरिक्ता आनुपूर्वीभिन्नाश्च ये धर्मास्तन्निमित्तककार्ये कर्तव्ये अनुबन्धा अविद्यमानवद्भवन्तीति कल्पनेनाऽदोषादिति । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भा-च्चेति । नचायं हेतुः–पृथिव्यादिगुणे गन्धादौ व्यभिचरित इति वाच्यं, साङ्ख्यमतवद्वैयाकरणमतेऽपि अतिरिक्तद्रव्याभावेन साध्यस्यापि सत्त्वात् । नचैवमप्युत्पन्नविनष्टघटे व्यभिचार इति वाच्यं, तत्रोप-लब्धिसम्भावनाविषयत्वाभावस्य हेतुत्वेनाऽदोषात् । वस्तुतस्तु नायं हेतून्यासपरो ग्रन्थः–किन्तु अनुनिद्धत्वप्रतिपादनपरः, हेतुश्च विभक्तिनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटकत्वादिति दिक् ।

ॐ चिदस्थिमाला ॐ

पूर्वमते केचिदिति सूचितामरुचिं प्रतिपादयन्सिद्धान्तमाह—परे त्वेकान्ता एवेति । अवयवा एवेत्यर्थः । ननु तदभावसाधकहेतोरुक्तत्वात्कथं तत्त्वमत आह—शास्त्रे इति । तत्रोपेति । विधेयबोधके एवेत्यर्थः । एतेन विधेयेऽनुपलम्भेऽपि क्षत्यभावः सूचितः । अत एवाह— अन्यत्रेति । इदमपि व्यतिरेकमुखेनोपपादयति—अनवेति । हि=यतः । एकेति । संयोगादिनेत्यर्थः । नैवमयमिति । अनुबन्धत्वावच्छिन्नो न तादृशसम्बन्धेन सर्वत्रोपलभ्यत इत्यर्थः । एवं तद्धेतुनिरासेन साधितेऽवयवत्वे साधकान्तरमप्याह—किञ्चेति । नन्वनयोः प्राक् गतिरुक्तेवात आह-–उक्तार्थेति ।

ॐ ज्योत्स्ना ॐ

'डा-णलादा'वित्यादिपदात् ष्फ-टुनदीनां ग्रहणम् । शास्त्रे = 'इदम इश्' इत्यादौ, तत्र = इशित्या-दिरूपबोधके । अन्यत्रेति । यदवयवत्वेनोच्चारितस्ततोऽन्यत्रेत्यर्थः । अनुपलम्भाच्चेति । ननु यथा वन–व्रण–वृक्षादिषूपलभ्यमानस्यैकस्य वकारस्य तत्तदवयवत्वं, तथैशोशादौ शकारादेरित्यवयवत्वसाध-कस्य ततोऽन्यत्रानुपलब्धिरूपहेतोर्व्यभिचारित्वम्, अत्रोपाध्यायाः,—'भिन्नसमुदायविषयं तत्र–तत्र वर्णान्तरमेव तदित्य'इञ'णिति सूत्रे शकुनिभाष्यव्याख्यानावसर उपपादित'मित्याहुः । ननु 'वुञ्छ-ण्के'त्यत्र अकारो वुञाब्द इव ततोऽन्यत्रोपलभ्यत एवेत्यत आह—अनवयवो हीति । एकजातीय-

ॐ सदाशिवभट्टीयम् ॐ

इत्त्वाभावरूप इत्यर्थः । सर्वादेशत्वाभावरूपश्च सः । डादिव्यतिरिक्त इत्यर्थः, तत्र सर्वादेशत्वं तु प्रश्लेषेणैव,

ॐ विषमपदविवृतिः ॐ

विधाविति । इदमयुक्तम्—'न विधौ परः शब्दार्थ' इति न्यायविरोधात् 'न्नित्या-

उक्तार्थलाक्षणिकत्वे तु—लक्षणैव दोषः । किञ्च—दध्नचश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम् । अत एव 'वुञ्छण्कठ'जितिसूत्रविहित-के णित्त्वप्रयुक्तवृद्धिर्न । 'तस्य लोप' इति भाष्ये—'एकान्तत्वमेव न्याय्य'मित्युक्तेश्च । 'उपदेशेऽ'जितिसूत्रे उपदेशग्रहणन्तु-स्पष्टार्थमेव—"इत्याहुः । सर्वत्रानुबन्धसहितनिर्देशे विधौ—'गुप्तिज्किद्भ्य'इत्यादौ 'नकारेत्स-ञ्ज्ञकः सो भवती'त्यादिक्रमेण बोधः । अनुवादे 'सन्यत' इत्यादौ च—'नकारेत्सञ्ज्ञके

❀ अभिनव-चन्द्रिका ❀

नकारेत्सञ्ज्ञकस्सो भवतीति । वस्तुतस्तु—अनुवादे 'सन्यत' इत्यादावेवेतादृशार्थस्योपयोगो न तु विधेयसमर्पकस्थले,'गुप्तिज्किद्भ्यस्स'नित्यादौ सो भवतीत्यर्थेपि क्षतिविरहात्। अत एवाऽऽटश्चे-त्यादेर्नाऽसङ्गतिः, टकारेत्सञ्ज्ञकाऽकारादचि परत इत्यर्थादिति भावः ।

न च 'लिहा इहे'त्यादौ 'दाण्डा इहे'त्यादावपि टकारेत्सञ्ज्ञकाकारादच्परत्वेन वृद्धिः स्यादिति वाच्यम्, इत्सञ्ज्ञकटकाराऽव्यवहितपूर्ववर्तिआकारबोध्यादचि परत इत्यर्थेनादोषादिति । एवं 'टिड्ढे' त्यस्येत्सञ्ज्ञकणकाराऽव्यवहितपूर्ववर्ती य अस्तद्बोध्यान्ताच्चेति चार्थ इति 'लिहा इह' 'दाण्डा इहे'त्यादौ टाटापोष्टकारेत्सञ्ज्ञकत्वेपि, णप्रत्ययस्य णकारेत्सञ्ज्ञकत्वेपि च न ङीप्प्रसङ्गो न च वृद्धिप्रसङ्ग इत्य-दोषात् । अत एव 'नार्च्छालिके णेपी'तिसङ्गच्छते । अस्मिन्मते च 'तस्य लोप'इतिलोपपदस्य शाब्दबोधविषयत्वाभाव इत्येवार्थ इति दिक् ।

परे तु—अनुबन्धविनिर्मुक्तपदार्थोपस्थितौ प्रमाणाभावाल्लोकप्रसिद्धम'दर्शनं लोप'इति सूत्रसङ्केति-तमर्थं विहाय लोपपदस्य शाब्दबोधविषयत्वाभावार्थकत्वे प्रमाणाभावाच्च—इत्सञ्ज्ञालोपौ लुगादिवल्लक्ष्ये एव प्रवर्त्तेते, बोध्यावयवत्वमेकान्तत्वं, बोध्यानवयवत्वमनेकान्तत्वमित्येव सिद्धान्तः । मूलन्तु न युक्तं

❀ चिदस्थिमाला ❀

दोषान्तरमाह—किञ्चेति । अत एव=तस्यैव न्याय्यत्वादेव । उक्तार्थं भाष्यसम्मतिमप्याह—तस्येति । इति सूत्रभाष्ये इत्यर्थः । नन्वेवमुपदेशग्रहणस्य का गतिरत आह—उपेति । एतेन—"उपदेशे किम् ? अग्निचित्—सोमसुत्"—इति वृत्तिकृदुक्तम्, "अत्र तत्त्वे लोपः स्यात्, न च तुको वैयर्थ्यं, आगतेत्यादौ साफल्यात्, न च क्विपः पित्त्वं व्यर्थम्, अग्निचितावित्यादौ साफल्यात्—" इति मिश्रोक्तं[1], तथैव दण्डयुक्तं, "उपदेशे किं—क्वनिपो नकारस्य माभूत्, नान्तलक्षणदीर्घस्तु सखेत्यादौ विभक्तिहेतुकानङि सफलः, अप्रत्यय-त्वेन नित्स्वराभावात्तत्र न सा, न च रपरत्वनिवृत्तिस्तत्फलं, तस्य तत्त्वे तस्य दुर्वारत्वादिति"—रत्नाकरोक्तञ्च प्रत्युक्तं, वक्ष्यमाणरीत्या तत्रानतिप्रसङ्गात्,—आद्ये फलाभावात्, लोपस्य फलाभावात्, बहिरङ्गत्वेन सुलोपा-सिद्धत्वेनानन्तत्वेनानतिप्रसङ्गात्, सुलोपात्प्राक् तस्यामग्निचितावित्यादौ तुल्यत्वाच्चेति दिक् । स्फुटीभविष्यति चेदम् । 'पदार्थोपस्थितिरनुबन्धे'त्याद्युक्तेर्विधौ वाक्यार्थबोधमाह—सर्वत्रेति । 'अनुबन्धे'ति—बहुव्रीहिः । विधाविति—जातावेकवचनं । तत्र हलन्त्यमिति प्रवृत्त्या आह—नकारेत्सञ्ज्ञक इति । चोऽप्यर्थे ।

❀ ज्योत्स्ना ❀

सम्बन्धेन=संयोगसम्बन्धेन । नैवमयमिति । ञकारस्य वुशब्देन साकमुत्तरोच्चारणविषयत्वं सम्ब-न्धः, छशब्देन तु पूर्वोच्चारणविषयत्वमिति नैकजातीयसम्बन्धस्तत्रेति भावः । इत्याहुरिति । ननो

❀ सदाशिवभट्टीयम् ❀

एकान्तत्व इवानेकान्तत्वेपि यन्निष्ठव्यवसितत्वमादायेत्सञ्ज्ञा तत्कार्यं तत्रैवेत्यङ्गीकाराच्च न वैयर्थ्यमत आह—

❀ विषमपदविवृतिः ❀

दिर्नित्य'मित्यादेर्निद्बोध्यार्थकत्वेन सो भवतीत्यर्थेऽपि स्वरसिद्ध्या 'नकारेत्सञ्ज्ञक' इति विशेषणवैय-

१ पदमञ्जर्यां हरदत्तमिश्रोक्तम् । २. तत्त्वबोधिनीकृदुक्तम् ।

सशब्दे परे' इत्यादिक्रमेण बोधः। स्पष्टञ्चेदं निष्ठासञ्ज्ञासूत्रे भाष्ये। अत एवाऽऽटश्चे-त्यादेर्नासङ्गतिः। अन्यथा यत्राऽऽट् सूत्रे, तत्र नाच्परो, नेष्यते च तत्र वृद्धिः। यत्र प्रयोगे इष्यते वृद्धिस्तत्र नाऽऽडिति तदसङ्गतिः स्पष्टैव। अन्त्यङ्किम्? वाचालः।

❀ अभिनव-चन्द्रिका ❀

निष्प्रयोजनत्वेन काकदन्तपरीक्षातुल्यत्वात्। अनुवादे 'मन्यन'इत्यादौ गुरुतरधर्मावच्छिन्नलक्षणा-स्वीकारापत्तेश्च। विशिष्टाद्विभक्तिदर्शनेन बोधकावयवत्वस्य निश्चितत्वेन सन्देहानुपपत्तेश्च। अत एव भाष्ये 'एकान्तस्तत्रोपलम्भा'दित्येव हेतुस्तत्रोक्तः, न च य एव संशायकः स एव कथं निर्णायकः स्यादिति वाच्यम्, वह्निसंशायकधूमादिहेतोरिव लाघवरूपानुकूलतर्केणास्य हेतोर्निश्चायकत्वसम्भवात्। नन्व 'उपदेशोत्तरकालेत्सञ्ज्ञे'तिभाष्यविरोध इति वाच्यम्, तस्य भाष्यस्य 'वाक्यापरिसमाप्ति'-न्यायप्रदर्शकत्वेन तत्रोत्तरोत्तरं प्रति पूर्वपूर्वं कारणं बोधयितु'मुपदेशोत्तरकाला इत्सञ्ज्ञे'त्याद्युक्तेः। 'हलन्त्य'मिति वाक्यार्थबोधं प्रति 'अइउण्' इत्याद्युपदेशज्ञानं कारणमिति प्रतिपादयितुं तद्भाष्यप्रवृत्त्या बोधक एव इत्सञ्ज्ञालोपाविलर्थस्यैतस्माद्भाष्यादलाभाच्च। न च 'इदम इश्'अण्-त्वात्सवर्णग्रहणं प्राप्नोती'तिभाष्यविरोध इति वाच्यम्, 'उपदेश इति किं? अभ्र आँ अटितः' 'पदे किम्, तन्त्रयुतम्' 'लोपश्चे'तिद्विशाकारको निर्देश' इत्यादिभाष्यवदस्यापि भाष्यस्य अनेकान्त-पक्षाभिप्रायत्वेनादोषात्। 'प्रत्याहाराद्यवर्णेषु—'अणुदि'त्सूत्रं चरितार्थ'मिति वदता नागेशेन'दं भाष्यमेकदेश्युक्ति' रित्यस्यावश्यं वक्तव्यत्वाच्चेत्याहुः। अन्ये तु बोधकावयवेष्वनुबन्धेषु बोध्यावयवत्वमा-रोप्यते इत्येकान्तः। अनारोपश्चानेकान्तः। अत एव 'प्रत्याहाराद्यवर्णेषु अणुदित्सूत्रं चरितार्थं'-मिति तदुक्तं सङ्गच्छते। तथाहि—बोधकावयवे 'कलृ'मित्यत्र ककारे बोध्यैकपदावयवत्वस्यारोपे 'अयं ककार इत्सञ्ज्ञकककाराऽभिन्न' इति ज्ञातुं शक्यत्वात्ककारचिह्नेनायमिकारोप्यणिति ज्ञातुं शक्यत इति ककारादिचिह्नेन प्रत्याहाराद्यवर्णेऽणुदित्सूत्रं चारितार्थमिति सङ्गच्छते। अन्यथा प्रत्याहा-राद्यवर्णानामनण्त्वेन सवर्णबोधानुदयात्तदसङ्गतिः स्पष्टैव। अत एव 'आदिरन्त्येने'ति सञ्ज्ञा आदेरेवेति चेद्विशिष्टाद्विभक्तिः कथमिति शङ्कायाः प्रत्याहारेऽनुबन्धानां द्योतकत्वेनार्थवत्सूत्रोक्ता-र्थवत्त्वं विशिष्टस्यैवेति समाधानं मनसि निधाय समुदाये एव प्रतिपदिकसञ्ज्ञेत्यर्थकः 'सहग्रहणा-त्समुदाय एव सञ्ज्ञे'त्यादि शेखरः, 'इदम इश्-अण्त्वात्सवर्णग्रहणं प्राप्नोती'ति भाष्यम्,'अण्सवर्णा-न्गृह्णातीति', घटित इत्यध्याहारः, तेनाणघटितं स्वादिसवर्णान्गृह्णातीत्यर्थफलकः स्वग्रन्थश्च सङ्गच्छते।

❀ चिदस्थिमाला ❀

यद्यप्यत्र नेत्सञ्ज्ञाशास्त्रप्रवृत्तिस्तथापि लक्षणयाऽऽह—**नकारेत्सञ्ज्ञक इति**। मुख्यार्थबाधादेरिति भावः।

अत्र मानमाह—**स्पष्टमिति**। तत्र हि—'प्रायोगिकरूपाभावे औपदेशिकं रूपं गृह्यते—'इत्युक्तम्। **अत एवेति**। ईदृशबोधाङ्गीकारादेवेत्यर्थः। 'अन्यथे'त्यस्या'ऽसङ्गता'वन्वयः। **नाच्पर इति**। 'आण्नद्या' इत्यत्रेति भावः। 'आडजादीना'मित्यत्र तत्परत्वसत्त्वादाह—**नेष्यते चेति**। **वाचाल इति**। सति तत्त्वे-

❀ ज्योत्स्ना ❀

ऽन्यत्रानुपलम्भेनावयत्वानुमानमात्रमिह सारम्। लाघवपक्षपाती त्वनेकान्तत्वपक्ष इति **परिभाषाप्रदी-पार्चिषि** विस्तरेण निरूपितम्।

❀ सदाशिवभट्टीयम् ❀

**तस्य लोप इति**। **नकारेत्सञ्ज्ञक इति**। नकारेत्सञ्ज्ञकबोध्यस्तदभिन्न इत्यर्थः। एवमग्रेपि।

❀ विषमपदविवृतिः ❀

र्थ्यात्। एवमनुवादेपीत्यग्रिमग्रन्थोऽप्ययुक्तः। बोधके एव नकारेत्सञ्ज्ञकत्वस्य पूर्वमुक्तेः। **तत्र नाच्पर इति**। आट आकार इति शेषः।

हल्किम् ? चिरिणोतीत्यादौ धातोरन्त्यस्य मा भूत् ।

**आद्योच्चारणमिति ।** आद्यमुच्चारणमित्यर्थः, भावे घञिति भावः । तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्त्तकाचार्याणामेव । आद्यत्वञ्च—अज्ञातस्वस्वरूपज्ञापकत्वम् । उपस्याद्यर्थत्वाद्दिशेरुच्चारणक्रियत्वात् । अत एव 'एकाच उपदेशे' इति सूत्रे कैयटेनोक्तम्—'इत्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते'—इति । 'आदेच' इति सूत्रेऽपि—'येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः'—इति । तत्र सूत्रे भाष्येऽपि—'उद्देशश्च

ॐ अभिनव-चन्द्रिका ॐ

अस्मिन्कल्पे चैकान्तत्वं न निष्प्रयोजनं,सन्यत इत्यादौ लक्षणाद्यभावेन प्रयोजनसत्त्वात्—इत्याहुः।

**वाचाल इति ।** न च चालित्येव सिद्धे 'आलच'इति गुरुनिर्देशात्—लकारस्य नेत्सञ्ज्ञेति वाच्यम्। 'तनोतेर्डे उः सन्वच्चे'त्यत्रेवात्रापि सन्ध्यभावकल्पनापत्तेः, ज्ञापकेन सूत्राक्षरखण्डनस्यायुक्तत्वाच्च ।

**अज्ञातस्वस्वरूपज्ञापकत्वमिति ।** स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमित्यर्थः ।

ॐ चिदस्थिमाला ॐ

'लिती'ति स्वरः स्यादन्तरङ्गत्वात्, चित्त्वन्तु व्यर्थमेव स्यादिति भावः । एतेन—'सद्मेत्यादौ 'सर्वधातुभ्यो मनि'न्निति मनिनो मस्य तत्त्वेऽन्त्यादचः परो मित्स्या'दिति **दण्डयुक्तमपास्तम्** । उणादिनामव्युत्पन्नत्वात्, अत एव तत्पर्यन्तधावनम्, एवमग्रेऽपीति बोध्यम् । **चिरिणोतीति ।** अत्रापि तत्त्वे 'इदित' इतिनुमापत्तिः । एतेन 'भू'इत्यस्य तत्त्वे 'भविते'त्यादावूदित्वादिड्विकल्पापत्तिरिति **दण्डयुक्तमपास्तं**, प्रागुक्तरीत्या तत्राऽदोषात्, तत्रैवं सति 'भू' इत्युक्तेरफलत्वापत्तेः, 'भूसुवो'रित्यादेरानर्थक्यापत्तेश्चेति दिक् । द्वितीयोच्चारणादावतिप्रसङ्गापत्त्या षष्ठीसमासाऽसङ्गतिं ध्वनयन्नाह—**आद्यमिति ।** वक्ष्यमाणरीत्या नेदं युक्तमिति ध्वनयन्नाह—**भावे इति ।** नन्वत्रापि कर्त्रन्तरमादायातिप्रसङ्ग एवात आह—**तच्चेति ।**

नन्वाद्यत्वस्यापि द्वितीयोच्चारणनिरूपितत्वेनोक्तदोषस्तदवस्थ एवात आह—**आद्यत्वञ्चेति ।** ततस्तल्लाभोपायमाह—**उपेति ।** इमं पक्षं समूलयति—**अत एवेति ।** अन्यथा तस्य शास्त्रवाचितया तथोक्त्यसङ्गतिः स्पष्टैव । नन्वेतावताऽऽद्योच्चारणार्थत्वं न लब्धमत आह—**आदेच इति ।** 'कैयटेनोक्त'मित्यस्याऽनुषङ्गः ।

अत्र भाष्यसम्मतिमप्याह—**तत्रेति ।** 'आदेच'इत्यत्रेत्यर्थः । 'उक्त'मित्यस्यानुषङ्गः । यदि तच्छास्त्रपर-

ॐ ज्योत्स्ना ॐ

ननु 'तौ सत्', 'निष्ठे'त्यादिभिरनुबन्धविनिर्मुक्तस्य सञ्ज्ञाविधानाददोषः, 'स्यादेष दोषो यदी-

ॐ वरवर्णिनी ॐ

**चिरिणोतीति ।** न च हल्ग्रहणाभावे—'उपदेशेऽ'जित्यस्य वैयर्थ्येन 'अचेदिद्भवति तर्ह्यनुनासिक एवे'ति नियमाश्रयणादत्र न दोष इति वाच्यम्, विपरीतनियमापत्तेः, ज्ञापकादिना तद्वारणे तु गौरवमेव दोषः ।

**अज्ञातस्वस्वरूपेति ।** 'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताकबोधप्रयोजकतात्पर्यप्रयोज्योच्चारणजनककृतिविषय उपदेशपदार्थ'इति फलितोऽर्थः । तादृशोच्चारणमात्रस्योपदेशपदार्थत्वे तु—उच्चारणे वृत्तिनियामकसम्बन्धेनान्त्यहलोऽविद्यमानत्वादुपदेशे विद्यमानमित्यर्थासङ्गतिः स्यात्, अतः कृतिविषयत्वपर्यन्तानुधावनमिति जटाजूटे **श्रीबालशास्त्रिचरणाः ।**

प्रातिपदिकानां नोपदेशः—' इति। प्रकृतसूत्रे भाष्येऽपि—'प्रत्यक्षमाख्यानमुपदेशः'—इत्युक्तम्। तस्य चोक्त एवार्थः।

परे तु—'उपदेश इति किमर्थम्? 'अभ्र आँ अपः' कः पुनरुद्देशो-पदेशयोर्विशेषः?—इति भाष्ये उक्तम्। यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि 'लटः सद्वा' 'निष्ठे'तिविहितानां शतृशानच्क्तक्तवतूनाम-

❀ अभिनव-चन्द्रिका ❀

**प्रत्यक्षमाख्यानमिति।** तत्त्वञ्च—प्रत्यक्षविशिष्टविषयताश्रयत्वम्। वै० 'स्वनिरूपितविषयतावच्छेदकधर्मावच्छिन्नत्व' 'स्वजन्यशाब्दबोधीयत्वै'तदुभयसम्बन्धेन। शास्त्रमात्रविषयत्वन्तु—ताभि-न्युच्चरितपदविशिष्टविधेयताश्रयत्वम्। वै० 'स्वजन्यशाब्दबोधीयत्व', 'स्ववृत्तिश्रावणप्रत्यक्षविषयता-वच्छेदकधर्मावच्छिन्नत्वै'तदुभयसम्बन्धेन'। यथा गां सक्थिनि कर्णे वा गृहीत्वोपदिशति—'अयं गौः' इति—तत्र शाब्दबोधस्य शक्तिग्रहात्मकप्रत्यक्षजन्यत्वेन, प्रत्यक्षीयविषयतावच्छेदक-गोत्वादि-धर्मावच्छिन्नविषयताकत्वेन च लक्षणसमन्वय इति दिक्। **लटः सद्वेति।** चिन्त्यमेतत्,—

❀ चिदस्थिमाला ❀

तदा तत्र प्रातिपदिकग्रहणात्तदसङ्गतिः स्पष्टैव। ननु तत्र तथैकारादि प्रकृते किमत आह—**प्रकृतेति।** तृतीयपादस्थगन्तोक्तोपदेशेऽजित्यर्थः। **यद्वा**—व्याख्येयत्वेन प्रकान्तोपदेशपदत्वाभावविभूतोपदेशेऽजित्य-र्थः। ननु तत्रान्यथोक्तेः कथमत्र सङ्गतिरित्यत आह—**तस्येति।** मूलाद्यसङ्गतिं स्वमतसिद्धान्तमाह—**परे त्विति। अप इति।** 'उद्देशे योऽनुनासिकस्तस्य माभू'दिति शेषः। **उक्तमिति।** 'उपदेशेऽ'जिति सूत्रे इति भावः। प्रथमप्रश्नाशयस्य कैयटेनोक्तत्वेन प्रकृतानुपयुक्तत्वेन च द्वितीयप्रश्नाशयं तदनुक्तमाह—**यदी-त्यादिना—प्रश्न** इत्यन्तेन। **प्रत्यक्षमिति।** आख्याने प्रत्यक्षत्वस्याविशिष्टत्वादिन्द्रियगोचरार्थस्य यदाख्यानं स उपदेश इत्यर्थः। **गुणैरिति।** प्रत्येकं साधारणप्रसिद्धधर्मोपादानेन यत्प्रतिपादनं स उद्देश इत्यर्थः। बहुत्व-

❀ सदाशिवभट्टीयम् ❀

**प्रकृतसूत्रेति।** व्याख्येयत्वेन प्रकान्तोपदेशपदत्वाभावविभूतोपदेशेऽजित्यर्थं इत्याहुः। **अन्ये** त्वनुवर्तमाने शतृशानचाविति पुनस्तद्ग्रहणेन लट्स्थानिकत्वादिरूपधर्मसम्बन्धत्यागवत्त्वमित्यन्यकत्वरूपधर्मसम्बन्धस्यापि

❀ वरवर्णिनी ❀

**प्रत्यक्षमाख्यानमिति।** तत्त्वञ्च—प्रत्यक्षविशिष्टबोधजनकत्वं, वै० 'स्वीयविषयतावच्छेदकरूपा-वच्छिन्नत्व' 'स्वप्रयोज्यत्वै'तदुभयसम्बन्धेन। 'इयङ्गौ'रित्यत्र गोपदजन्यबोधे—प्रत्यक्षविषयतावच्छेदक-गोत्वा-ऽवच्छिन्नत्वम्, 'इयङ्गौ'रितिवचनोत्तरं—तद्व्यक्तित्वावच्छिन्नस्य प्रत्यक्षोत्तरमेव बोधस्यानुभवसिद्धत्वेन प्रत्यक्षप्रयोज्यत्वमपि बोध इति समन्वयो बोध्यः। एवं सञ्छब्देऽपि—सत्पदजन्यबोधे—प्रत्यक्षविषयता-वच्छेदकसत्त्वावच्छिन्नत्वं, सच्छब्दविषयश्रावणप्रत्यक्षप्रयोज्यत्वमपि तज्जन्यबोध इति लक्षणसमन्वयः।

'अभ्र आँ आपः' इत्यत्र तु—'आङोऽनुनासिक' इत्येतच्छास्त्रघटकानुनासिकपदविषयकप्रत्यक्षीयविषयता-वच्छेकानुनासिकत्वावच्छिन्नत्वस्यानुनासिकपदजन्यबोधेऽभावेन न लक्षणसमन्वयः। [ अनुनासिकपदेन हि—अनुनासिकपदार्थविषयक एव बोधो न त्वनुनासिकत्वरूपानुपूर्व्यवच्छिन्न इति भावः ]। 'सास्ना-लाङ्गूलवती गौ'रित्यत्र तद्वाक्यश्रवणोत्तरं गोत्वावच्छिन्नविषयकप्रत्यक्षाभावेन स्वीयविषयतावच्छेदकरूपा-वच्छिन्नत्वाभावेन, प्रत्यक्षप्रयोज्यत्वाभावेन च नोपदेशत्वलक्षणसमन्वयः। एवं 'लटः सद्वा' 'निष्ठे'त्यादिसूत्र-विहित-शतृशानच्क्तक्तवत्वादीनाम् 'अभ्र आँ अपः' इतिवदुपदेशत्वाभावेन तद्घटकशकारादीनामित्सञ्ज्ञा-नापत्तिः, एवं निपातनानुमितक्यबादीनां कादेरित्त्वानापत्तिरिति नागेशाशय इति **श्रीबालिशमिश्र**चरणाः।

**निष्ठेति।** 'यत्र निष्ठापदं तत्र क्तक्तवतू उपतिष्ठेते' इत्येवं 'क्तक्तवतू निष्ठे'त्यस्यार्थं स्वीकृत्य परिभाषा-

वयवस्येत्सञ्ज्ञानापत्तिः । तथा 'राजसूयसूर्य' 'चित्याग्निचित्ये'त्यादिनिपातनानुमित-क्यबादिनां पादेरित्त्वानापत्तिः । 'वदः सुपी'त्यत्रोच्चारितस्तु नैतत्सम्बन्धी । अत एव

❀ अभिनव-चन्द्रिका ❀

—'तौ स'दित्यनेन शकारऋकारेत्सञ्ज्ञकस्यातः, शकारचकारेत्सञ्ज्ञकस्यानस्य च 'ता'वित्यनेन परामर्शात्तयोरेव सञ्ज्ञायां दोषाभावात् । **क्यबादीनामिति** । इदमपि चिन्त्यमेव,—पकारेत्सञ्ज्ञक—ककारेत्सञ्ज्ञक'य'प्रत्ययस्यैव निपातनानुमानेनाऽदोषात् । वस्तुतस्तु—'कालेभ्यो भववत्'—'चरणेभ्यो धर्मवत्' इत्याद्यतिदेशशास्त्रविहितप्रत्ययानामित्सञ्ज्ञानापत्तिः । 'स्ववृत्तिश्रावण-प्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्व' 'स्वजन्यशाब्दबोधीयत्वो'भयसम्बन्धेन पाणिन्युच्चरितपद-

❀ चिदस्थिमाला ❀

मविवक्षितम् । **अवयवेति** । तत्त्वावच्छिन्नस्येत्यर्थः । दोषान्तरमाह—**तथेति** । **चेत्यादीत्यादिना**–'सिध्य-पुष्या'वित्यादिपरिग्रहः । न च 'वदः सुपी'त्यत्रोच्चारितस्यैव तत्रानुमानेन तस्योपदेशादिष्टसिद्धिरिति नान्य-दोषोऽत आह—**वद इति**। प्रकृतिविशेषसम्बद्धत्वादिति भावः । इदमाद्येऽपि बोध्यम् । इदं द्रढयति–**अत**

❀ ज्योत्स्ना ❀

त्सञ्ज्ञा आदेशं प्रतीक्षेते'ति'नस्मिन्नि'तिसूत्रस्थवक्ष्यमाणभाष्योक्तन्यायतौल्यादित्यत आह—**तथा**

❀ सदाशिवभट्टीयम् ❀

त्यागात्सानुबन्धयोरेव परामर्शः, तदुक्तं वार्त्तिककृता'तौ'वचनमसंसर्गार्थ'मिति, भाष्यकृतापि तथैव व्याख्यातम्, अत एव कैयटेनापि 'शतृशानचो रूपमात्रं परामृश्यत इति लट्स्थानिकत्वादिधर्मासम्बद्धयोरपि सञ्ज्ञा भवती-त्यर्थ' इति वदताऽऽदिशब्द उपात्तः, सच्छब्देन तयोर्विधानानन्तरमनुबन्धानामित्सञ्ज्ञा भवत्येवेत्यलम् । एवं 'क्तक्तवतू निष्ठे'त्यादावपि न दोषः, 'अनुबन्धविनिर्मुक्तस्यैवोपस्थिति'रिति नियमस्य विधेयत्वेनोपस्थितप्रत्यया-द्यनुबन्धविषये एव स्वीकारेण श्रुतनिष्ठासञ्ज्ञासम्बन्धस्याऽश्रुतेत्सञ्ज्ञासम्बन्धादन्तरङ्गत्वात्प्राबल्येन चानुबन्ध-विशिष्टस्यैव सञ्ज्ञाविधानात्, अत एव 'सुब्विभक्त्यादिसञ्ज्ञा सूत्रान्तर्गतानामेवे'ति प्रागुक्तं, सञ्ज्ञाविषये सर्व-त्रैवमेवेति न दोषलेशाशङ्कापि । स्यादेष दोष इति न्यायोपि विषमः, अनुत्पन्नस्य सन आदेशविधानानुपपत्त्या वाक्यभेदे सति प्रथमवाक्येनोत्पन्नस्य सनः प्राप्तेत्सञ्ज्ञा द्वितीयवाक्यविहितादेशं न प्रतीक्षते इति पूर्वपक्षि-णोक्तं, वाक्यभेदे गमकाभावं मनसि निधायोपदेशपदानुवृत्तिमभिप्रेत्य च सिद्धान्तिना नानुत्पन्ने सनि प्रकृत्या भवितव्यं, यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रकरणिनं भविष्यतीत्युक्तं, तथाच तत्र वाक्य-भेदसत्त्वाद्विधेयत्वेनोपस्थितप्रत्ययविषयेत्सञ्ज्ञयादेशप्रतीक्षणाभावेपि श्रौतनिष्ठासञ्ज्ञासंबन्धमन्तरङ्गमित्सञ्ज्ञा प्रती-

❀ वरवर्णिनी ❀

त्वाङ्गीकारे निष्ठेत्यादौ क्तक्तवत्वोरुपस्थितावित्सञ्ज्ञायाः सौलभ्यं, 'निष्ठा शी'ङिति कित्त्वनिषेधाज्ज्ञापकाच्च क्तादावुपदेशत्वकल्पनात्ककारस्येत्त्वं सुलभम्, ककारस्येत्त्वाभावे कित्त्वनिषेधवैयर्थ्यं स्पष्टमेवेत्यतोऽरुचेराह—**तथा राजेति** ।

**निपातनानुमितेति** । पाणिन्युच्चरितत्वरूपहेतुनाऽनुमितेन साधुत्वहेतुना तत्तत्साधुत्वविशिष्टं क्यबादि-रूपं कार्यमनुमीयत इत्यर्थः । तदेवं—'राजसूयशब्दः किञ्चिद्वचनबोधितसाधुताकः, पाणिन्युच्चरितत्वात्' 'राजसूयशब्दः—'राजोपपदसुधातोः क्य'बितिवचनबोधितसाधुतावान्, वचनान्तराबोधितसाधुताकत्वे सति किञ्चिद्वचनबोधितसाधुकत्वा'दिति प्रयोगो बोध्य इति **श्रीबालशास्त्रिचरणानामाशयः** ।

**नैतत्सम्बन्धी**=नैतद्विहितबोधकः । 'राजोपपदसुधातूत्तरक्यब्बोधकत्वाभावा'दिति शेषः । अत एव=एकसम्बन्धिनोन्यसम्बन्धित्वविरहादेव, अन्यशब्दसम्बन्धेन तदर्थस्यापि भेदादेवेति यावत् ।

'तस्यापत्यमन इञ्' इति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूपशेषत्वमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम्, एवम् 'अभ्र आँ अप' इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः कः ? इति प्रश्नः ।

तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्य तद्व्यावृत्तये तत्सङ्ग्रहाय च—'उपदेशनेऽजनुनासिक इति वक्तव्यं, किं पुनरुपदेशनं ? शास्त्रम्'—इत्युक्तं वार्त्तिककृता । तत शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहो'ऽभ्र आँ' इत्ये-

ॐ अभिनव-चन्द्रिका ॐ

विशिष्टविधेयत्वनाश्रयत्वरूपप्रत्यक्षाख्यानलाभावात् । गृह्यन्ते इति । न च प्रातिपदिकग्रहणेनैव

ॐ चिदस्थिमाला ॐ

एवेति । अनुवृत्त्यादिकं विनाऽन्यस्याऽन्याऽनन्वयित्वादेवेत्यर्थः । सेऽन्यशब्देति । अदन्तान्यप्रकृतीत्यर्थः । इदञ्च मूलेऽपि तत्र स्पष्टम् । अत्रेति । प्रक्रान्तोपदेशपदलाभावधिभूतोपदेशेऽजित्यत्रेत्यर्थः । इतिहेना, 'मैवं त्यसौ पदादने'ऽन्वयः । लोकेति । 'इयन्वका व्याख्याने—'उद्दिष्टो मेऽनुवाक' इति तत्र व्यवहारः, मार्गप्रश्ने—'अमुष्मिन्नवकाशे हस्तदक्षिणो ग्राह्य'इत्यादि गुणैः प्रापने—'उपदिष्टो मे पन्था' इति च । अपिनोक्तयुक्तिसमुच्चयः । नन्वेवं तद्व्यावृत्तावपि न तत्सङ्ग्रहः, सूत्ररूपशास्त्रे तेषामनुच्चारणादत आह—तत्रेति । वार्त्तिकोक्तावित्यर्थः । तस्य करणसाधनत्वेन योगरूढत्वात्क्रमेण नावाह—प्रयोगेति । तत्रैव

ॐ ज्योत्स्ना ॐ

राजसूयेति । अत्रापि निपातनादेवेत्सञ्ज्ञा भविष्यतीत्यस्मादाह—सङ्कीर्णत्वमुपपाद्येति । तच्च साक्षाद्व्याख्यातेऽपि मन्त्रे 'उद्दिष्टो मे मन्त्र'इति व्यवहारात्, 'कुण्डली देवदत्त'इति गुणैः प्रापितेऽप्यु'पदिष्टो मे देवदत्त'इति च कादाचित्कव्यवहारात् । तथा च-'अभ्र आँ अप'इत्यादौ गुणैः प्रापितेऽनुनासिके इत्सञ्ज्ञातिव्याप्तिर्दुःपरिहरेति भावः । ननूच्चारणक्रियायाम्—'आँ'इत्यनुनासिकाकारस्य निपातत्वरूपोपाधिपरिच्छिन्नस्य विषयत्वेन करणत्वात्—अभ्र आँ—इत्यत्रातिव्याप्तितादवस्थ्यमत आह—प्रयोगशासनकरणभूता इति । प्रयोगस्य=प्रयुज्यमानस्य परिनिष्ठितस्य, शासने=साध्वनुशासने-करणभूताः, न तु परिनिष्ठिता इत्यर्थः । एवञ्च 'आँ'इत्यस्य परिनिष्ठितत्वमेव, न परिनिष्ठित-

ॐ सदाशिवभट्टीयम् ॐ

क्षेत्ने, तद्भाष्यस्यैकदेशयुक्तित्वाच्च । ननु कार्यकाल एकवाक्यतया विधानाद्विधेयत्वेनोपदेशत्वमेव वक्तव्योरिति वाच्यं, यथोद्देशे तदभावादिति । पक्षद्वयेपि वाक्यैकवाक्यतया विधेयत्वाभावाच्च । निपातनादित्वकल्प-

ॐ वरवर्णिनी ॐ

परे तु—"चिन्त्यमेतत्,—'वदः सुपी'त्यत्रोच्चरितस्य क्यप एतद्विधेयतावच्छेदकावच्छिन्नत्वेनैतत्सम्बन्धित्वात्, अन्यशब्दसम्बन्ध्यपत्यार्थस्यानुक्तत्वप्रतिपादकाकरविरोधस्तु न, तत्र शेषपदस्यानुपयुक्तपरतयाऽन्यशब्दसम्बन्ध्यपत्यार्थस्योपयुक्तत्वाभावेन तस्याकरस्य योजनीयत्वात्—"इत्याहुः । केचित्तु—'स्वरूपबोधकत्वाभावेनोपदेशत्वविरहान्ङमुडादौ टादेरित्त्वानापत्तिर्दोष' इत्याहुः ।

विशेषः क इति । कृतेष्युपदेशग्रहणे 'अभ्र आं अप' इत्यादौ दोषसद्भावे—उपदेशग्रहणं किमर्थमित्यर्थः । सङ्कीर्णत्वमिति । 'वस्तुतो लोके नानयोः सङ्कीर्णता, किन्तु यत्राचार्यः सम्यङ्न बोधयति तत्रोद्देशसादृश्यादेव—'उद्दिष्टो मेऽनुवाक'इति गौणः प्रयोगः, मार्गोपदेशे च निर्देशसौष्ठवादेवोपदेशसादृ-

१ 'निपातनैः किं किं न क्रियते' इति भाष्योक्तिः ।

तद्व्यावृत्तिश्च सिद्धा । तस्य च वार्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम् । किञ्च हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ—'भवतष्ठक्छसा'वित्यादिविहितेष्वित्सञ्ज्ञानापत्तिः, परस्य सत्त्वेन कादेरन्त्यत्वाभावात् । यदि तूपदेशो प्रत्ययत्वादि-

❀ अभिनव-चन्द्रिका ❀

सिद्धे इतरग्रहणं व्यर्थमिति वाच्यम्, तत्र परिगणनसार्थक्यार्थं 'प्रातिपदिकपदं तद्बोधकपर'-मित्यर्थस्यावश्यकत्वेनेतरसार्थक्यात् । **अन्त्यत्वाभावादिति** । चिन्त्यमिदं—'ठक्छसा'वित्येतदन्त्यत्वाभावेपि ठक्-निरूपितान्त्यत्वस्य ककारे सत्त्वेन दोषाभावात् । वस्तुतस्तु—चित्रङि ङकारे

❀ चिदस्थिमाला ❀

रूढौ मानमाह—**हलन्त्येति**,—मकारं विहाय सूत्रानुकरणम्, एवमग्रेऽपि । **व्यावृत्तिरिति** । 'उच्चरित' इत्यध्याहारे धात्वादावुच्चारितानुनासिकस्येत्सञ्ज्ञेत्यर्थात् । अन्यथा शास्त्रविहिताऽनुनासिकत्वस्य तत्रापि सत्त्वादतिप्रसङ्गनादवस्थ्यमेवेति भावः । नन्वेतावता किं मूले दूषणमत आह—**तस्येति** । एवञ्च भाष्यविरोधाद्भावे घञा तथार्थोक्तिरयुक्तेति भावः । नन्वगतिकगतिबाहुलकाश्रयणमेव तत्र दोष इति तदेकदेश्युक्तिरेवात आह—**किञ्चेति** । मूलोक्तरीत्यैवाह—**पदानुवृत्ताविति** । 'पूर्वस्मिन्नपि यस्मात्परो नास्ति सोऽन्त्य' इति प्रागुक्तत्वादाह—**परस्येति** । छादेरित्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

नन्तु तादृशवचनकल्पनाद्वरु, अगतिकगति च । य एव तु न, पित्त्वालाभादित्याहुः । **भगवता कृतमिति** । एवञ्च भावे घञा तथार्थोक्तिरयुक्तेति भावः । ननु बाहुलकाश्रयणमेव दोष इति तदेकदेश्युक्तिरेवात आह—**किञ्चेति** । **य** एव तु न पित्त्वालाभादिति पाठो विचारणीयः । **भावेति** । करणसाधनानुवृत्तौ तु विहितस्यापि शासनकरणत्वेन तत्स्यादपीति भावः । **विहितेति** । उपस्थापकस्योपदेशे विद्यमानत्वेपि प्रक्रियावाक्यसमवायिनस्तत्त्वाभावादिति भावः । ननूपस्थापक एव सञ्ज्ञालोपयोः प्रवृत्त्या निरनुबन्धकस्यैव प्रयोगसमवायित्वमिति न दोषोऽत आह—**परस्येति** । **एतेन**—विहिते परस्यासत्त्वेन कादेरन्त्यत्वाद्धितुसाध्ये

❀ विषमपदविवृतिः ❀

**अत्र ऑं अप इत्येतद्व्यावृत्तिरिति** । नन्वस्याप्यादेशत्वात्कथमेतद्व्यावृत्तिरिति—चेन्न, स्वयमेव परिनिष्ठितप्रयोगरूपत्वेन प्रयोगशासनकरणत्वरूपोपदेशनशब्दार्थाभावादित्याशयात् । **कैयटे तु**—'शास्त्रे उच्चारितोऽनुनासिकः स इत्सञ्ज्ञक'इत्युक्तम् ।

❀ वरवर्णिनी ❀

स्यादु'पदिष्टो मे पन्था' इति गौणः प्रयोग' इत्याहुरस्मद्गुरवस्त्रिपाठिचरणाः । **सिद्धेति** । 'ऑं' इत्यस्यादेशत्वेपि तस्य प्रयोगशासनकरणत्वं नास्ति,यत 'ऑं' इत्ययमादेशः स्वयमेव जायते—साधुतां याति' न तु कश्चित्प्रयोगं शास्तीति तस्य नेत्सञ्ज्ञेति भावः । **इत्सञ्ज्ञानापत्तिरिति** । 'हलन्त्य'मित्यस्य—'उपदेशे विद्यमानो य उपदेशघटकवर्णाव्यवहितपूर्वत्वाभावविशिष्टो हल्' इत्येवमर्थं मत्वायं ग्रन्थः, यदि तु—उपदिश्यमानसमुदायविशिष्टत्वमन्त्यत्वं, वै० 'स्वघटकत्व' 'स्वघटकवर्णप्रागभावाधिकरणक्षणावृत्तित्वे'तदुभयसम्बन्धेनेत्युच्यते, ठकारनिरूपितबोधकतायाष्ठक्शब्दे, छकारनिरूपितबोधकतायाश्च छश्शब्दे सत्त्वात् प्रत्यक्षविशिष्टबोधजनकत्वरूपोपदेशत्वस्य ठक्यपि छस्यपि च सत्त्वेन तदन्त्यककारादेरित्सञ्ज्ञायां न किञ्चित्प्रतिबन्धकमित्युच्यते तदा नायं दोष इति—**श्रीबालशास्त्रि**चरणानामाकूतमस्मत्**पितामह**चरणाः **श्रीस्नेहिरामशास्त्रिण** आविश्चक्रुः ।

विशिष्टान्त्य इदित्यर्थ' इत्युच्यते तदोपदेश इति व्यर्थम्, अन्त्यपदसामर्थ्येनैव तल्लाभात्। अत एवात्र सूत्रे उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽत्र ओँ अटित इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम्।

न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे–'व्यवसितान्त्यमिति वक्तव्यं, के पुनर्व्यवसिताः?–धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः'इतिवार्त्तिकाद्यनुत्थानमिति वाच्यं, समुदायद्वाराऽवयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात्। भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम्। तत्रानुबन्धविशिष्टानां धातुत्वादिं

❀ अभिनव-चन्द्रिका ❀

प्राचीनोक्ताऽज्ञातस्वस्वरूपज्ञापकत्वरूपोपदेशत्वाभावेनेत्सञ्ज्ञानापत्तिर्बोध्या। उपदेशे प्रत्ययत्वादि-

❀ चिदस्थिमाला ❀

**विशिष्टान्त्य इदिति**—षष्ठीतत्पुरुषः। **व्यर्थमिति**। 'हलन्त्य'मित्यत्रेति शेषः, एवञ्चाफलत्वान्नानुवृत्तिरिति भावः। अत एवाह—**अन्त्येति**। प्रागुक्तमिदम्। इदं द्रढयति-**अत एवात्रेति**। प्रागुक्तरीत्योपदेशेऽजितिसूत्र इत्यर्थः। **अस्थितेति**। तस्य दुष्टत्वस्य प्रागुक्तत्वादिति भावः। **स्वमते** मूलरीत्या प्रसक्तभाष्यविरोधं परिहरति—**न चेत्यादिना**। **सिद्धे इति**। तदन्त्यान्यव्यावर्त्तने सिद्धे इत्यर्थः। **आदिना** तद्व्याख्यानपरभाष्यपरिग्रहः। **लोपेति**। 'अन्यथे'त्यादिः। उक्तहेतोरेवाह—**इत्याशयादिति**। तदनुवृत्ति वदतो मते वार्त्तिकाद्याशयादित्यर्थः।

अत एव सिद्धान्तमाह—**भाष्येति**। **चस्त्वर्थे**—पूर्ववैलक्षण्ये। **सामर्थ्येनेति**। 'उक्तार्थलाभात्त'दिति शेषः। अत्र मते तु तस्यास्वरितत्वादेव शङ्केति बोध्यम्। ननूपदेशे एवेत्सञ्ज्ञा, ततो धात्वादिसञ्ज्ञेत्यर्थस्य 'न धातुलोप' इति सूत्रे भाष्ये उक्तत्वेन कथमिष्टसिद्धिरेवं सतीत्यत आह—**तत्रेति**। व्यवसित-

❀ ज्योत्स्ना ❀

करणत्वमतो नोक्तदोष इति भावः। **सामर्थ्येनैवेति**। आदिव्यावृत्त्यर्थमन्त्यस्येत्येतद्भविष्यतीति करणघञन्तोपदेशपदानुवृत्तिं विना न तत्र गत्यन्तरमस्तीति चिन्त्यमेतत्। 'न धातुलोप' सूत्रस्थभाष्यविरोधं दीक्षितोक्तं परिहरति—**तत्रानुबन्धेति**।

❀ सदाशिवभट्टीयम् ❀

पित'इत्यपास्तम्। **सामर्थ्येनेति**। आदेरपि व्यपदेशिवत्त्वात्तत्त्वमेवेति न तद्व्यावृत्तये। इदमेवाभिप्रेत्य 'सर्वोपि हलं तं समुदायं प्रत्यन्त'इत्युक्तं भाष्ये। ननु श्वन्नित्यादिप्रातिपदिकव्यावृत्त्या नानुवृत्तिवैयर्थ्यमत आह—**अत एवेति**। **अनुत्थानेति**। एवं मन्यते—तस्य भावघञन्तत्वे आद्योच्चारणे विद्यमानमन्त्यमित्याद्यर्थे उच्चारणस्यान्त्यमिति प्रत्यासत्तेराश्रयितुमशक्यत्वात्, यत्किञ्चित्समुदायान्त्यस्यापि प्राप्नोतीत्यु-

❀ वरवर्णिनी ❀

**अनुत्थानमिति**। भावघञि तु आद्योच्चारणे विद्यमानमन्त्यं हलित्यर्थे कस्यान्त्यमितिनिरूपकांशजिज्ञासायां यत्किञ्चित्समुदायान्त्यमित्यस्यैव लाभेन तद्वार्त्तिकोत्थानं सम्भवति,करणे घञा शास्त्रपरत्वे तु प्रत्यासत्त्या शास्त्रान्त्यस्यैव लाभेन न तद्वार्त्तिकोत्थानमित्याशयः **शङ्कितुः**। समुदायद्वाराऽवयवस्यापि तत्करणतया करणसाधनोपदेशपदानुवृत्तावपि तदन्त्यस्येत्त्वापत्तिरिति दोषोऽस्त्येव, व्यवसितान्त्यग्रहणे तु व्यवसितत्वपर्याप्त्यधिकरणीभूतसमुदायान्त्यस्यैव तत्र ग्रहणान्न दोष इति वार्त्तिकोत्थानमित्युत्तराशयः–**इति भट्टाः**। पर्याप्तिलाभो वार्त्तिकफलमिति तत्त्वम्। व्यवसितान्त्यं=धात्वादिना परिच्छिन्नान्त्यम्।

धातुत्वादियोग्यघटितत्वाद्बोध्यम् । निपातानां द्योतकत्वेन, 'ब्राह्मणवसिष्ठ'न्यायेन पृथग्ग्रहणम् । व्यवसितत्वञ्च—'धातुत्वादिना परिच्छिन्नत्वा'दिति कैयटः । एवञ्चो-श्विदादिप्रातिपदिकान्त्यस्यापि लोपः प्राप्नोतीति 'प्रातिपदिकानां प्रतिषेधो वाच्योऽक्-द्धितान्तानाम्' इति वार्त्तिककृतोक्तम् । कुम्भकार इत्यादावपवादविषयपरिहारेणोत्सर्ग-

॥ अभिनव-चन्द्रिका ॥

शिष्टान्त्यमिति । प्रत्ययादिबोधकान्त्यमिति यावत् । **बोध्यमिति** । वस्तुतस्तु-धात्वादिपदं धा-दिबोधकमिति व्याख्यातत्वेन एवं व्याख्यानं निरर्थकम् । **ब्राह्मणवसिष्ठन्यायेनेति** । निपातस्यापि तिपदिकबोधकत्वेन प्रातिपदिकग्रहणेनैव सिद्धे निपातग्रहणं प्रपञ्चार्थमिति भावः । **परिच्छिन्न-ादिति** । विशिष्टत्वादित्यर्थः । **प्रातिपदिकानां प्रतिषेधो वाच्य इति** । न च चित्रङो ङकारस्य काकारिक'डित्यत्र टकारस्य चेत्सञ्ज्ञा न स्यादिति वाच्यम् ,स्त्रवृत्तिः प्रातिपदिकवृत्तिश्च यानुपूर्वी ता-

॥ चिद्स्थिमाला ॥

ार्थशरीरे इत्यर्थः । नन्वेवमपि तत्र निपातपदोक्तिर्व्यर्था, प्रातिपदिकत्वादेव सिद्धेरत आह–**निपातेति** । र्थवत्सूत्रे शक्तिलक्षणान्यतररूपवृत्तेरेव निवेश इति भावः ।

द्योतनाया अपि तत्र निवेशावश्यकत्वस्यान्यत्रोक्तत्वादाह–**ब्राह्मेति** । अनेन'गोबलीवर्द'न्यायो नास्तीति चितं, तच्च भावप्रकाशे स्पष्टम् । 'व्यवसित'पदस्य निश्चितपरत्वभ्रमं व्यावर्त्तयति—**व्यवेति** । शास्त्र-ता तेन तत्त्वेन(धातुत्वादिना) बोधितत्वादित्यर्थः । उक्तार्थे साधकान्तरं ध्वनयन्नाह–**एवं चोदेति** । तत्सा-र्थ्येन तेषां ग्रहणे चेत्यर्थः । **आदिना** शकृदादिपरिग्रहः । ननु शकृति ऋतः प्रत्ययत्वात्'ति'दित्यत्र प्रत्यय-हणेऽपि दोष इति चेदत्र **कैयटः**—'एतावव्युत्पन्नौ । यद्यपि 'शकेर्ऋति'निति व्युत्पाद्यते, तथाप्युपदेशे कारोन्त्यो न भवतीतीत्सञ्ज्ञा नेति । वस्तुतस्तु आद्यस्य (उदश्वितः) व्युत्पत्तावपि तस्य (तकारस्य) तुका निष्पन्न-ात्प्रत्ययानवयवत्वादिदोषत्वात्तत्राऽव्युत्पन्नत्वोक्तेर्न फलं, द्वितीयस्त्वव्युत्पन्न एव, तेषां तत्त्वस्यैव सिद्धान्ति-त्वात्, तदननुवृत्तेर्भाष्याभिमतत्वाच्चेति बोध्यम् । ननूक्तरीत्या पूर्वमित्सञ्ज्ञा, ततः प्रातिपदिकसञ्ज्ञेति थमत्र निषेधप्रसक्तिरत आह—**अपवादेति** । वार्त्तिकोक्तनिषेध इत्यर्थः । —**णोत्सर्गेति** । 'हलन्त्य'-

॥ सदाशिवभट्टीयम् ॥

ष्ठत एव तत् । शास्त्रपरत्वे तु प्रत्यासत्त्या शास्त्रान्त्यस्यैव स्यादित्यनुत्थितिरिति । **धातुत्वादिनेति** । स्त्रकृता तेन तत्त्वेन बोधितत्वादित्यर्थः । पचादौ चान्तस्यैव तत्त्वेन चान्त्यस्य तात्पर्यस्य तत्रैव सत्वात् । त्पर्यग्रहे बीजन्तु थमुप्रत्यय उकारः । ननु व्यवस्थितपक्षे प्रयोजनदातृभाष्यन्तवैव प्रातिकूलम्, अनुत्तरार्थ-हि तत्रैव क्षोदं कृत्वा न कर्तव्यमित्येव ब्रूयादिति, मम तूत्तरार्थमावश्यकतया लाघवाभावेन क्षोदो न त इति—साधकमेवातोऽननुवृत्तौ साधकान्तरमाह,–**एवञ्चेत्यादिना**, अस्यानुत्थानमेव **स्यादित्यन्तेन** ।

॥ वरवर्णिनी ॥

**घटितत्वादिति** । बोध्यबोधकयोरभेदाध्यवसाय इति भावः । धातुत्वादियोग्यबोधकत्वादिति तु युक्तम्, त एव'लोपश्चे'ति प्रश्लिष्टशकारस्यादेशबोधकत्वेनेत्सञ्ज्ञासिद्धिः, डमुडित्यत्र टकारस्यागमबोधकत्वाच्चेत्सञ्ज्ञा-द्धिः । व्यवसितत्वं=परिनिष्ठितम्, धातुत्वादिना–अनतिप्रसक्तेन,**परिच्छिन्नत्वात्**=विशिष्टत्वात् । नन्वत्र आँ टेत इत्यत्रास्थितपक्षे प्रयोजनमुक्त्वा-'तत्तर्हि कर्त्तव्यं ? न कर्त्तव्य'मित्यादिना भाष्ये तदग्रे शङ्काया अकरणा-तरार्थमुपदेशपदमिति ज्ञायते, एवञ्च तद्भाष्यं नास्माकं प्रतिकूलं, प्रत्युत तवैव प्रतिकूलं–'तत्तर्हि कर्त्तव्यं ? कर्त्तव्यम्-एकान्ता अनुबन्धा इति''–इत्येवमनुक्तेरित्यतो मानान्तरमाह–**एवञ्चेति–भट्टाः** । भावसाधनोपदे-नदस्योत्तरसूत्रेऽनुवृत्तेरभावाद्व्यवसितान्त्यग्रहणे चेत्यर्थः । '**प्राप्नोती**'त्यस्य—'व्यवसितान्त्यत्वा'दित्यादिः ।

**परिहारेणेति** । 'उपसञ्जनिष्यमाण'न्यायादिति भावः । नन्वेवमपि व्यवसितपदार्थे भविष्यदपवाद-

प्रवृत्तेः पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति—'अक्च्'दित्यादि । तच्च 'फलाभावा-न्नेत्सञ्ज्ञे'त्यादिना भाष्ये प्रत्याख्यातम् । अत्राद्योच्चारणार्थकोपदेशपदानुवृत्तौ त्वस्य वार्त्तिकस्यानुत्थानमेव स्यात् । 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति 'आदेच्' इति-सूत्रभाष्ये उक्तेः । एतद्भाष्यैकवाक्यतया पस्पशाह्निकान्तस्थे 'अग्रहणप्रातिपदिकानामुपदेशः

ॐ अभिनव-चन्द्रिका ॐ

द्दशानुपूर्व्यवच्छिन्नविषयताप्रयोजकानां प्रातिपदिकानां प्रतिषेधो वक्तव्यः, 'अक्च्'दित्यादि तात्पर्य-ग्राहकमित्यर्थेनादोषात् । तथाहि 'चित्र'ङित्यादि चित्रशब्दत्वावच्छिन्नबोधकं, चित्रशब्दत्वं च न स्ववृत्त्यानुपूर्वी, या च चित्रङ्शब्दत्वरूपा स्ववृत्त्यानुपूर्वी, सा च न प्रातिपदिकवृत्तिरिति न दोषः । न च 'उदश्वितोन्यतरस्या'मित्यादौ इत्सञ्ज्ञालोपाभावप्रयोज्यं स्ववृत्त्यानुपूर्व्यच्छिन्नविषयताप्रयोजक-त्वम्, एतन्निषेधप्रवृत्तिप्रयोज्यौ चेत्सञ्ज्ञालोपाभावौ—इत्यन्योन्याश्रय इति वाच्यम् । इत्सञ्ज्ञा-लोपाभावसम्भावनाप्रयोज्या या स्ववृत्तिप्रातिपदिकवृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्व-

ॐ चिदस्थिमाला ॐ

मितीत्यर्थः । **कत्व इति** । 'प्रातिपदिकेनेनिषेधेन तदभावात्'(इत्वाभावात्)इति शेषः । **तच्चेति** । 'प्राती'-तिवार्त्तिकमित्यर्थः । निति प्रत्ययग्रहणात्स्वरिताऽप्राप्तेराह—**फलेति** । आदिना लोपः । नत्र्योक्तार्थे साध-कत्वमेवञ्चेत्यनेनोक्त्वा विपक्षे बाधकत्वमप्याह—**अत्रेति** । 'हलन्त्य'मित्यत्रेत्यर्थः । नन्वन्यत्र भाष्ये तेषामुप-देशस्यापि प्रतिपादनात्तदुत्थितिः सङ्गतैव, किञ्च भाष्ययोर्मिथो विरोधोऽत आह—**एतदिति** । '**आदेच**'इति सूत्रस्थो'द्देशश्चे'त्यादिभाष्येत्यर्थः । 'सम्भवत्येके'ति न्यायादिति भावः । **स्थेऽग्रहणेति** । गणादावपठितेत्यर्थः ।

ॐ ज्योत्स्ना ॐ

प्रत्याख्यातमिति । न च 'राजे'त्यादौ नित्स्वरः फलं, निदन्तत्वाभावात् । न च व्यपदे-शिवद्भावः, 'अप्रातिपदिकेने' ति निषेधात् । प्रत्ययविधिविषयः स निषेध इति चेत्, एवन्तर्हि करणघञन्तोपदेशपदानुवृत्तिमन्तरेण नान्यदिहावलम्बनं पश्यामः । न चैवमपि दोषः, प्रातिपदि-कत्वेन राजन्नित्यादेरुपदेशत्वादिति वाच्यं, शास्त्रपरोपदेशपदस्य यथाश्रुतत्वेन प्रातिपदिकस्य तत्त्वा-नङ्गीकारात् । 'साधूपदेशकरणीभूते शास्त्रे धातुत्वाद्युपाधिपरिच्छेदयोग्यघटितत्वेन उच्चारितो यस्त-

ॐ सदाशिवभट्टीयम् ॐ

**फलाभावेति** । अत्र यथा फलाभावस्तथा विवरणतोऽवसेयः । अवसेय्यते चास्माभिः कालेन । **स्थेग्रहणेति** ।

ॐ विषमपदविवृतिः ॐ

**पूर्वं प्रातिपदिकत्वे इति** । अनुबन्धविनिर्मुक्तपदार्थोपस्थितिरित्यनेनापि विरुणद्धि इति बोध्यम् । 'यदा मञ्जकादिनिवृत्त्यर्थं प्रातिपदिकानामुपदेशः कर्त्तव्य इति तदाऽयं प्रतिषेध' इति कैयटोक्तं वार्तिको-त्थानबीजं दूषयितुमाह—**एतद्भाष्येति** । नच प्रातिपदिकानां प्रतिषेधे चित्रङादीनामपीत्सञ्ज्ञाना-

ॐ वरवर्णिनी ॐ

विषय-कुम्भकारणित्येतदतिरिक्तत्वेन सङ्कोचेऽपि—अण्प्रत्ययमात्रस्य प्रत्ययत्वेन व्यवसितत्वात्कुम्भकारणित्येत-दपवादविषयसमुदायातिरिक्तत्वाच्चेत्सञ्ज्ञासिद्धावकृत्तद्धितग्रहणं व्यर्थम्, भविष्यदपवादविषयघटकातिरिक्तत्वेन सङ्कोचे तु न मानं, न च फलं किञ्चिदपि पश्यामः । किञ्च—'खट्वाक्रीती'त्यादौ भविष्यत्क्रीतान्तप्रातिपदिक-घटकातिरिक्तत्वेनाजाद्यतष्टाबित्यत्र सङ्कोचापत्तौ खट्वेत्यत्र टाबभावापत्तिरिति चेन्न—आचारक्विबन्तादशब्दा-द्घञ्नि पूर्वं पूर्वविप्रतिषेधेनाल्लोपे निष्पन्नेऽशब्दे, अस्यापत्यमिरित्यत्र च भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचादिञो ञकारस्येत्त्वानापत्तेः, अतोऽकृत्तद्धितग्रहणं कर्त्तव्यमेवेति **शास्त्रिपादाः** । कारणसाधनोप-

र्यो—मञ्चकोमञ्चक इति मा भू'दिति भाष्ये उपदेशशब्दो ग्रहणं—कर्त्तव्यमित्यर्थकः।
नुवादरूपमेव सन्देहनिवर्त्तकमिति बोद्ध्यम्।

नन्वेवं 'तस्मिन्निति निर्दिष्टे' इति सूत्रे—'षष्ठीप्रकल्पकत्वं तस्ये'ति पक्षे 'गुप्तिज्किद्भ्यः'
दावपि षष्ठीप्रक्लृप्त्यापत्तिः, न च सनः सनेवादेशो भविष्यतीति बाधकाभाव
वाच्यम्, 'उपदेशे इत्युच्यमाना इत्सञ्ज्ञा न प्रकल्पेत'—इत्युक्तं भाष्ये, तद्विरुद्ध्येता
देशपदाननुवृत्ताविति चेन्न, तस्यैकदेश्युक्तित्वेनासाधकत्वात्। तथा हि—तत्र

❀ अभिनव-चन्द्रिका ❀

ावना तादृशसम्भावनाविषयीभूतानां प्रातिपदिकानां प्रतिषेधो वक्तव्यः। अक्रादित्यादि

❀ चिदस्थिमाला ❀

शशब्द' इति. बहुव्रीहिः—'उपदेशः कर्त्तव्य' इति शब्द—इत्यर्थः। तच्च=ग्रहणञ्च। अनुवा-
। प्रक्रियया तेषां सिद्धत्वादिति भावः किमर्थं तस्य करणमत आह—सन्देहेति। 'वर्णादी'त्यादिः।
चाननुवृत्तिस्तस्य सिद्धा, तत्र शङ्कते—नन्वेवमिति। तस्य भावसाधनतया तथार्थकत्वाभाव इत्यर्थः।
था चरमेण पौनरुक्त्यापत्तिः,। अस्य तद्विरुद्ध्येतेत्यत्राऽन्वयः। सूत्र इति। 'भाष्ये उक्त'मित्यत्रा-
:। तस्येतीति। सूत्रद्वयस्येत्यर्थः, सूत्रद्वयस्य युगपद्धृतत्वात्। इत्युच्यमानेत्सञ्ज्ञेति। इत्यनुवर्त्यं
यमानेत्यर्थः। हि=यतः। तत्र=सूत्रद्वये।

❀ ज्योत्स्ना ❀

बन्धिन'इति प्रदीपदर्शितसूत्रार्थाङ्गीकारेण सकलेष्टसिद्धेरिति तत्त्वम्।
दीक्षितोक्तं दूषणान्तरं परिहर्त्तुमुपन्यस्यति—नन्वेमिति।

❀ सदाशिवभट्टीयम् ❀

दावपठितेत्यर्थः। उपदेशशब्द इति। बहुव्रीहिरयम्—'उपदेशः कर्त्तव्य' इति शब्द
र्थः। नन्वेवमिति। तस्य भावसाधनतया तथार्थकत्वाभाव इत्यर्थः। अन्यथा चरमेण पौनरुक्त्या-
:। इत्युच्यमानेति। इत्यनुवर्त्य विधीयमानेत्यर्थः। तत्र=सूत्रद्वयेत्यादावित्यादिना बहोर्लोपेति।

❀ विषमपदविवृतिः ❀

रिति वाच्यम्, एतच्चात्रयुक्तं—यदित्कार्याभावादित्सञ्ज्ञा न स्याद्यत्रेत्कार्यं भविष्यति तत्रेत्सञ्ज्ञा,
ग्राऽऽगस्तिकौण्डिन्ययोरगस्तिकुण्डिन'जित्यग्रिमभाष्येण वार्तिकारम्भे कुण्डिनचश्चकारस्येत्सञ्ज्ञा

❀ वरवर्णिनी ❀

दानुवृत्तौ, सर्वथोपदेशपदाननुवृत्तौ च भाष्यविरोधमाशङ्कते-नन्वेवमिति। तस्येति। 'तस्मिन्निति'-
ादिती'ति सूत्रद्वयस्येत्यर्थः। सप्तमीनिर्देशेन यत्र कार्यं तत्र सप्तम्यन्तार्थान्वय्यर्थकं, पञ्चमीनिर्देशेन च
कार्यं तत्र पञ्चम्यन्तार्थान्वय्यर्थकं पदं षष्ठ्यन्तं बोध्यमित्यर्थ इति तदाशयः। ननु पञ्चम्यन्तार्थान्वयिनः
स्य षष्ठ्या विपरिणामेपि सामर्थ्याद्गुपादिभ्यः परं सनमनुमाय तस्य स्थाने आन्तरतम्यात्सनेवादेशो
यतीति न कोऽपि दोष इति षष्ठीप्रक्लृप्तौ बाधकाभाव इत्यत आह—उपदेश इति। न प्रक-
ति। आन्तरतम्याज्जातस्य सनः पाणिन्यनुच्चरित्वादिति भावः। अननुवृत्तौ=भावघञन्तो-
पदाननुवृत्तौ। तस्य=तस्मिन्नितिसूत्रभाष्यस्य। एकदेश्युक्तित्वं दर्शयति—तथाहीति।

'ङमो ह्रस्वादची'त्यादौ—यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते तत्र–किं पूर्वस्य कार्यमथ परस्येति सन्देहे–परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवानिति सिद्धान्तिनोक्तम्।

तत एकदेशिना—'यथार्थं वा षष्ठीनिर्देशः कर्त्तव्य' इति समाधानान्तरमुक्तम्। 'यथाविषयं प्रगुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या'इति तदर्थः । तेषु सप्तमीनिर्देशस्य क्वचित्पूर्वत्र क्वचिदुत्तरत्राऽऽवश्यकत्वेनोभयनिर्देशे गौरवेणैषैकदेश्युक्तिः ।

❀ अभिनव-चन्द्रिका ❀

तात्पर्यग्राहकमित्यदोषात्। **सन्देह इति**। न च ह्रस्वाऽव्यवहितोत्तरत्वविशिष्टो यो ङम् तदन्तं यत्पदं तदव्यवहितोत्तरत्वविशिष्टः अजादिपदाव्यवहितपूर्वत्वविशिष्टो य उदासीनस्तस्य ङमुडित्यर्थे इति सन्देह एव तावन्न सम्भवतीति वाच्यम्, 'तस्मि'न्निति 'तस्मा'दितिपरिभाषयोर्योऽशः सिद्धो बाधितो वा तदंशानुपस्थितेः सिद्धान्तसिद्धान्तत्वेनोभयोरपि षष्ठ्यंशोपस्थापकत्वे प्रयोजनविरहादन्यतरोपस्थापितषष्ठ्यंशस्य श्रुतानुमितपरिभाषया सूत्रोपात्तङमादावेवान्वयेन विनिगमनाविरहेणासन्देहापत्तेः । **पञ्चमीनिर्देशो बलवानिति** । 'तस्मादित्युत्तरस्ये'तिपरिभाषायाः प्रकृते

❀ चिदस्थिमाला ❀

आदिना 'बहोर्लोप' इत्यादिसूत्रपरिग्रहः । **यत्रेति**—पूर्वेण समानाधिकरणम्। **अथेति**—पक्षान्तरे। 'उभयनिर्देश' इत्यस्या अनपूर्वत्वायाह—**परत्वेति**। यद्यपि भाष्येऽनवकाशत्वादित्येवोक्तं, तथापि तदुदाहरिष्यमाणोदाहरणविशेषापेक्षम्, अत एव 'ङः सी'त्यादौ द्वयोरनवकाशत्वेऽपि न क्षतिरिति भावः। यथार्थमित्यत्रार्थशब्दो न प्रयोजनादिवाचीति सूचयन्—तस्य कैयटोक्तार्थमेवाह—**यथाविषयमिति**। यथाप्रदेशमित्यर्थः, यत्र पूर्वस्य कार्यन्तत्र पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्यं, यत्र परस्य कार्यं तत्र परबोधकशब्दस्य षष्ठ्यन्तस्य तथेति यावत्। तदाह—**प्रागुक्तेषु कार्यिण इति**। प्रदेशेष्वित्यर्थः। षष्ठ्या=षष्ठ्यैव। तेषु=प्रागुक्तेषु सूत्रेषु। 'ङःसी' त्यादावुभयोरप्यनवकाशत्वादाह—**क्वचिदिति**। 'गोन'इत्यादौ 'सर्वनामस्थाने'इति सप्तमी पूर्वत्र=इतोत्सर्वनामस्थाने इत्यत्र—चरितार्था, 'ङम' इत्यादावर्चीनि सा उत्तरत्र

❀ ज्योत्स्ना ❀

**क्वचित्पूर्वत्रेति**। 'इतोत्सर्वनामस्थाने' 'गोतो णि'दित्यादौ। **क्वचिदुत्तरत्रेति**। 'ङमो ह्रस्वादचि ङमुण्नित्यं, मय उञो वो वे' त्यादौ।

❀ सदाशिवभट्टीयम् ❀

**यत्रेति** पूर्वेण समानाधिकरणम्। नत्र खलु=स्थानिनि,–हेतुमाह **उपेति**। एवञ्च षष्ठीप्रक्लृप्तः प्रागेव परन्त्वान्तरङ्गत्वेनोपदेशोत्तरकालं सूत्र एवेत्सञ्ज्ञोच्चारितस्य कार्यन्तु प्रयोग एवेति निरनुबन्धकस्यैव प्रत्ययत्वेन

❀ वरवर्णिनी ❀

**तत्र किं पूर्वस्येति**। न च—ह्रस्वात्परो यो ङम्, तदन्तं यत्पदं तस्मात्परस्याजव्यवहितपूर्वत्वविशिष्टस्योदासीनस्य कस्य चिन्ङमुडित्यर्थे न सन्देह इति वाच्यं, 'ङम'इत्यादावुभाभ्यां **षष्ठ्यंशोपस्थितेः** फलाभावेनैकेनैव षष्ठ्यंशोपस्थितिर्वाच्या, सा च केनेति सन्देहोपपत्तेः, उभयोरेकस्य गुणप्रधानभावे च न किञ्चिद्विनिगमकमिति च तदाशयः। **बलवानिति**। एवञ्च—स एव षष्ठ्यंशोपस्थापक इति तदाशयः।

**यथाविषयमिति**। 'ङमो ह्रस्वा'दित्यादौ कार्यिणः—अजादयः षष्ठ्यन्ता एव वाच्याः, किं प्रकृत्येत्यर्थः। **उभयनिर्देश इति**। 'घेर्ङिति'—'आण्नद्या ङितः'। 'ङमो ह्रस्वादचो ङमुट्'—'मय उञो वो वाऽचि' 'आमः सर्वनाम्नः सुट्'—'आमि त्रेस्त्रयः'। 'आने मुक्'–'आनस्येदास' इत्येवमुभयनिर्देशे गौरवमित्यर्थः। प्रक्लृप्तिपक्षे कल्पितस्यादेशस्य उच्चारणाभावादुच्चारितस्यापूर्वोच्चारणाभावादित्सञ्ज्ञा न स्यादत आह–

ततःपरेणैकदेशिना—षष्ठीपदानुवृत्त्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य
गथार्थं वा षष्ठी'त्येकदेश्युक्तिः प्रत्याख्याता। षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्व-
रणाय परत्वानवकाशत्वयोरेकः पूर्वपरयोरिति पूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे
ापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः। ततः पूर्वेणैकदेशिना तत्पक्षे गुप्तिजित्यादौ
ोषः शङ्कितः।

ततः षष्ठीप्रक्लृप्तिवादिनैकदेशिनोक्तम्—'स्यादेष दोषो यदीत्सञ्ज्ञा आदेशं
तीक्षेत!, तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति, 'उपदेश'
ति हीत्सञ्ज्ञोच्यते'—इति। एवञ्च त्वदुक्तिर्व्याहतेत्याशयः।

तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्य—'अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवित-
यम्, यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यति' इति
माधानान्तरं कृतम्। तत्र परत्वविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात्प्रवृत्त्य-

## ॐ चिदस्थिमाला ॐ

य उञो वो वेत्यत्रेति भावः। **षष्ठीति**। 'षष्ठी स्थाने' इत्यतः। आदिना—तस्मादित्यस्य परिग्रहः, र्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीत्यर्थः, एवमग्रेऽपि। हेत्वन्तरमाह—**उभयोरिति**। ुगप'दिति शेषः। **काशत्वयोरि**त्यस्या'वश्यकत्वे'ऽन्वयः। पक्षान्तरमाह—**एक इति**। **इति**=इत्यत्र। त्पक्षे=प्रकल्पकत्वपक्षे। **दोषः**=प्रागुक्तरूपः। **षष्ठीति**। परेणेत्यर्थः। **स्यादिति**। 'तदे'त्यादिः। **तत्र**= थानिनि। **खलु**=निश्चयेन। तत्र हेतुमाह—**उपेति**। **हि**=यतः। षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वा- ोपदेशोत्तरकालं सूत्र एवेत्सञ्ज्ञा उच्चारितस्य, कार्यन्तु प्रयोग एवेति तत्र निरनुबन्धकस्यैव प्रत्ययत्वेन धानात्सशब्द एव तत्कार्यभागिति तदादेशस्य कुतः सानुबन्धकतेति भावः। हेतूक्तेर्भावमाह—**एवञ्चेति**। थोक्तौ चेत्यर्थः।—**ननुवृत्तिमिति**। अत एवेयं सिद्धान्त्युक्तिः। 'हलन्त्य'मित्यत्रेति भावः। **तत्र**='गुप्ति' ेति सूत्रे। **विशिष्टेति**। अनुत्पत्तौ 'धातोः परस्ये'ति वक्तुमशक्यत्वादिति भावः। **प्रवृत्त्यन्तरेति**। पुनः

## ॐ ज्योत्स्ना ॐ

**उभयोः प्रकल्पकत्ववारणायेति**। तत्र पर्यायेण प्रकल्पकत्ववारणाय परत्वानवकाशत्वयोराश्रयणं, ुगपत्प्रकल्पकत्ववारणाय तु ज्ञापकाश्रयणं, यदाह **प्रदीपकृत्**—सूत्रद्वये प्रमाणत्वाद्द्वे भवेतां प्रकल्पिके। ष्ठ्या विभक्त्यास्तेनात्र ज्ञापकार्थत्वमाश्रितम्—इति। पूर्वस्य परस्य च कार्यविधायकत्वपक्षे तु ापकत्वस्य नोपयोगः, कार्यित्वनिमित्तत्वयोरेकत्र युगपदसम्भवादितीह तात्पर्यम्। 'ज्ञापकस्य चावश्य- त्वा'दिति पाठः। 'चे' ति पाठेऽपि वाशब्दश्चार्थे व्याख्येयः। **उपदेशपदाननुवृत्तिमभिप्रेत्येति**। येवमित्सञ्ज्ञालोपयोरित एव सुशकत्वान्नास्ति पूर्वः पक्षस्तत्किमर्थं समाधानप्रयासः, सति चास्मिन्स-

## ॐ वरवर्णिनी ॐ

**'थवेति**। अनुमानेन वचनान्तरं कल्पयित्वा तस्य वचनान्तरस्य विधेयताप्रयोजकत्वेऽस्यैव विधाय- तोचितेति विधानं विना न प्रक्लृप्तिः, स्थानिनः सनोऽसिद्धत्वात्, विधानानन्तरन्तु हेत्वभावान्नानुमिति- ति भावः। **कृतसामर्थ्येति**। उद्देश्यसम्पत्तये वाक्यान्तरकल्पनमपेक्ष्य कॢप्तवाक्येनैव सनो विधाने घवात्कॢप्तवाक्येनैव सनो विधाने च पञ्चम्युपक्षयात्पञ्चम्यन्तराभावाच्च न प्रकॢप्तिरिति भाष्यतात्पर्यम्। ञ्च=उपदेशपदानुवृत्तिपरभाष्यस्यैकदेश्युक्तित्वस्य सिद्धौ च।

न्तराभावान्नास्ति तस्याः प्रकल्पकत्व'मिति तदर्थं कैयट आह। एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्तिकस्यैकदेश्युक्ततद्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितम्, लक्ष्यासिद्धेश्च। 'अइउ'णित्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात्प्रातिपदिकत्वम्। चित्रङश्चोः कुरित्यादेरपि प्रातिपदिकत्वम्। लोपश्चेत्यत्रापि शकारस्य स्वरूपे-

❀ अभिनव-चन्द्रिका ❀

पघ्यंशोपस्थापकत्वमिति भावः। **बोधकत्वेनेति**। चिन्त्यमिदम्—क्रमेण श्रावणप्रत्यक्षबोधजनकत्वेऽपि क्रमविषयकशाब्दबोधजनकत्वाभावात्, 'अइउ'णितिसमुदायस्या'त्वावच्छिन्नः साधु'-रित्यादिक्रमेण प्रत्येकं बोधजनकत्वेन समासकृतनियमेन वाक्ये प्रातिपदिकत्वाभावाच्च, प्रातिपदिकत्वेपि धात्वादीनां पृथक्परिगणनसार्थक्याय प्रातिपदिकबोधकमित्यवश्यं वक्तव्यत्वेनेत्सञ्ज्ञाप्राप्त्यभावात्। वस्तुतस्तु-धातुप्रातिपदिकनिपातागमादेशप्रत्यया इति न परिगणनं किन्तूदाहरणमात्रं, तथाच-यत्किञ्चिद्बोधकतापर्याप्त्यधिकरणान्त्यं हलिति 'हलन्त्य'मित्यस्यार्थेन णकारस्येत्सञ्ज्ञालोपयोरपि णत्वस्येत्सञ्ज्ञालोपयोरभावेन तेन रूपेणोपस्थितस्वसमीपवर्त्युकारादिबोधकत्वात्। अथवा उणित्युकारबोधकमिति वा णकारादेरित्सञ्ज्ञा बोध्या, व्यपदेशिवद्भावेन स्वस्यापि स्वान्त्यत्वात्। **प्रातिपदिकत्वमिति**। तद्बोधकत्वमित्यर्थः। 'चोःकु'रित्यादौ कुपदबोध्यककारादीनां प्रातिपदिकत्वात्।

❀ चिद्स्थिमाला ❀

प्रवृत्तौ मानाभावादिति भावः। **तस्याः**=पञ्चम्याः। मनोरमादिकं खण्डयति—**एवञ्चेति**। तस्य तत्त्वेनासाधकत्वे चेत्यर्थः। **प्रकृतेति**–प्राग्वत्। **तद्दिति**। 'तस्मि'न्नितिसूत्रस्येत्यर्थः। अनौचित्ये हेत्वन्तरमाह—**लक्ष्येति**। 'ठक्छसा'वित्यादिविहितेत्यर्थः। ननु अत्र व्यवसितान्त्यग्रहणे सूत्रस्य तत्रापाठात्तदन्तस्येत्सञ्ज्ञा न स्यादत आह—**अइउणिति**। क्रमविशिष्टे समूहे तस्य शक्तिरिति भावः। परोक्तदोषानुद्धरति—**चित्रङित्यादिना**। 'उपदेश'शब्देन करणव्युत्पत्त्या धात्वादिरूपशास्त्रस्यैवो'पदेशेऽ'जिति सूत्रेऽपि ग्रहणादाह—**चोरिति। कत्वमिति**। तदन्त्यत्वन्तु व्यपदेशिवद्भावेनेति भावः। नन्वनुबन्धानामनेकान्तत्वे एतत्सम्भवेऽपि नैकान्तत्वे, तत्र मुख्येऽवयविन्येव बहुव्रीहेरस्य तदनवयवत्वात्, 'एवञ्चेदमेक-

❀ ज्योत्स्ना ❀

माधाने सत्यामप्युपदेशपदानुवृत्तौ दोषाभावादनुपपन्नमेव तत्, सत्यं, सत्यामेवोपदेशपदानुवृत्तावभ्युपगम्य प्रकल्पकत्वं प्रागुक्तमेकं समाधानमिदानीं तु प्रकल्पकत्वमेव निरस्यते तत्कुतस्तरां दोष इति लाघवात्प्रयोजनान्तराभावाच्चोपदेशपदानुवृत्तिरभिप्रेतेत्युच्यते इत्याशयः। **शकारस्य स्वरूपेणेति**।

❀ सदाशिवभट्टीयम् ❀

विधानात्तशब्द एव तत्कार्यभागिति तदादेशस्य कुतः सानुबन्धकतेति भावः। **लक्ष्येति**। शानचि च

❀ विषमपदविवृतिः ❀

न स्यादित्येवंपरेणास्यापि दोषस्य दत्तप्रायत्वात्। **लक्ष्यासिद्धेश्चेति**। भावे घञन्तत्वेपि लक्ष्यसिद्धिप्रकारश्चन्द्रिकायामुपपादितो द्रष्टव्यः। **लोपश्चेति**। इदमनुबन्धा अनेकान्ता'इति पक्षाभिप्रायेण

❀ वरवर्णिनी ❀

**प्रवृत्तस्येति**। एतेन प्रकृतोपयोगितया बलवत्त्वं सूचितम्।

---

१. 'अकृत्तद्धितान्ताना'मित्यस्याश्रूयमाणकृत्तद्धितान्तामित्यर्थः,। तेनोदश्विदादौ क्विपः सर्वापहारिलोपादश्रूयमाणकृदन्तत्वान्नेत्त्वम्,। 'चो कु'रित्यादौ न तथेति भवत्येव सञ्ज्ञा, कुम्भकार इत्यत्र तु श्रूयमाण एवाणिति न तत्रेत्सञ्ज्ञाप्रतिषेधः—इति—**श्रीधरः**।

प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु 'लोपो यी'त्यतो लोपग्रहणे-
। पुनर्लोपग्रहणात्सर्वादेशत्वं बोद्ध्यम् । 'एकाच उपदेश' इत्यत्रत्यः
चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । 'एकाच उपदेश' 'आदेच
:त्यादौ तु भावसाधन एवेति सुधियो विभावयन्त्वित्याहुः ।
; शास्त्रेऽनुनासिकोच्चारणाभावात्तत्त्वज्ञानं दुर्लभमत आह—**प्रतिज्ञेति** ।
यानुनासिक्यवन्त इत्यर्थः । 'पाणिनीया' इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा

**❀ अभिनव-चन्द्रिका ❀**

**त्वमिति** । चिन्त्यमिदं—'लोपश्चे'त्यत्र शकारस्य प्रातिपदिकत्वेपि तद्बोधकत्वाभावात्,
त एव समाधिः—'चोः कुः' 'लोपश्चे'त्यादावपि बोध्य इति दिक् ।

**❀ चिदस्थिमाला ❀**

ने नैव दोषोऽयमिति सूचयन्नाह—**अनुबन्धानामिति** । नन्वेवं प्रागुक्तप्रथमकैयटस्य का गति-
**एकाच इति** । अपिना—मूल-मनोरमादिसमुच्चायः । नन्वेवमपि अन्यत्रोक्तस्य तस्य का गति-
**अन्योऽपीति** । 'आदेच' इति सूत्रस्थकैयटस्य तत्सूत्रस्थतत्परत्वेन युक्तत्वादाह—**तज्जातीय**
। एव तत्सूत्रस्थभाष्यविरोधोऽपि न, उपदेशेऽजितिसूत्रभाष्यन्तु व्याख्यातमेव, तद्ध्वनयन्नाह-
। । 'उपदेशेऽत्वत इत्यादौ'त्विति पाठः । 'आदेच उपदेशे इत्यादौ तु' इत्यपपाठः, तत्र
त्पन्नत्वात् । आदिना—'प्रत्यक्षमाख्यानमुपदेशः, 'उद्देशश्च प्रातिपदिकानां नोपदेशः'इत्यादि-
**ास्त्र इति** । धात्वादावित्यर्थः । **तत्त्वेति** । अनुनासिकत्वाननुनासिकत्वविवेकेत्यर्थः । अनुनासिक-
एवमग्रेऽपि । 'प्रतिज्ञा'शब्दे 'आतश्चोपसर्गे' इति कर्मण्यङ् । अत एव तेन समानाधिकरण-
अधिकरणस्तदे तत्स्फुटयति—**प्रतिज्ञेति** । अत एवाऽऽसुब्वत इति वत्—(आनुनासिक्यवन्त इति)
**दण्डी**—'पाणिनीया' इत्यस्य तत्प्रोक्तशास्त्राध्येतार इत्यर्थ इति, तन्न, छन्दोब्राह्मणाभिन्ने तथा
त्, अर्थाऽसङ्गतेश्च, एतद्ध्वनयन्नाह—**पाणीति** । पाणिनि शब्दश्च भाष्यवार्त्तिककृतोरप्युपल-
नाह—**प्रभृतीति** । एतेन—पाणिनीया—इत्यस्य तत्प्रोक्तशास्त्राध्येतार इत्यर्थं मत्वा—
कत्वाभावेनेदमुत्तरमसङ्गतमिति—**मन्दोक्तमपास्तम्** । **वर्णा इति** । वर्णविशेषा इत्यर्थः ।

**❀ ज्योत्स्ना ❀**

ति भिन्नं पदं, श् इति च, पूर्वस्य विभक्तिसकारस्य श्चुत्वेन द्विशकारको निर्देशः । अनु-
कान्तत्वपक्षे शिदिति बहुव्रीहिः समीपेऽवयवत्वारोपेणोपपादनाल्लोपस्य शित्वमिति भावः ।
तत्वपक्षे तत्र समाधानान्तरमित्याह—**एकान्तत्वे त्विति** ।

**❀ सदाशिवभट्टीयम् ❀**

क्ष्यमाणेत्यादिलक्ष्यासिद्धेरित्यर्थः । 'लटः सद्वे'तिविहितत्वेनाद्योच्चारणाभावात् । **एकाच इति** ।
' इत्यादा'विति पाठः । 'आदेच'इत्यपपाठः । तस्य तत्र कर्म्मव्युत्पन्नत्वात् ।

**❀ वरवर्णिनी ❀**

**इति** । अत्र 'प्रातिपदिकानां प्रतिषेध' इति निषेधस्तु न, तस्य प्रातिपदिकविशिष्टानामित्यर्थकतया
त्वात्, वै० 'स्वविषयकबोधप्रयोजकत्व' 'स्वाघटकाघटितत्वै'तदुभयसम्बन्धेनेत्यत्यस्मद्गुरुचरणाः ।
परे तु—'भवतष्ठ'गित्यादौ 'लटः सद्वा' 'निष्ठे'त्यादौ च दोषस्य निराकृतत्वात्, चित्रङादौ
कल्पयित्वा तस्य ङिति लक्षणां कृत्वा—चित्रेति प्रातिपदिकात् क्यच्स च ङिदित्यर्थेन
षाभावात्, चोः कुरित्यादौ शास्त्रान्तरीयसञ्ज्ञात्वोपगमेनेत्संज्ञकत्वस्योपपादयितुं शक्यत्वात्,
श्लेषसामर्थ्यादेवेत्वकल्पनाच्च न प्राचीनमते कश्चिद्दोषः । तस्माद्भावसाधनतैव दीक्षितोक्ता,
साधनत्वे तु—अइउणित्यादौ विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यादित्याहुः ।

इत्यर्थः। प्रतिज्ञा चायमेवमिति कथनं, वर्णानां तत्त्वज्ञापको व्यवहारश्च, ताभ्यां तज्ज्ञानं सुलभमिति भावः। प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्त्तार एवेति दिक्। **निर्देशादिति।** तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भावः। न चेत्त्वविधानसामर्थ्याद्यणभावः सिद्धः, तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात्। साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात्। 'निर्देशा'दित्यस्य–'तन्मूलभूतेत्त्वविधान-

ॐ अभिनव-चन्द्रिका ॐ

**इति भाव इति।** न चा'नुनासिक'इत्यादौ 'यस्येति'लोपान्न यण्प्राप्तिर्नापीत्त्वप्राप्तिरिति शेखरोक्तमसङ्गतमिति वाच्यं, 'यचि भ'मित्यत्र यकारमाहचर्येण अच्त्वहल्त्वोभयानाक्रान्त एवाज्गृह्यते इति भसञ्ज्ञाया अप्राप्त्या यस्येतिलोपस्याप्रवृत्तेः। वस्तुतस्तु नासिकाशब्दो नात्यन्तस्वार्थिककनन्तः, किन्तु णासृधातुप्रकृतिकण्वुलन्तः, अत एव 'घोणा नासा च नासिके'तिकोशः सङ्गच्छते। अन्यथा नासेत्यनेनैव सिद्धौ स्वार्थककनन्तोपादानं व्यर्थं स्यात्पर्यायस्वार्थिककनन्तानां कोशे अदर्शनात्।

ॐ चिदस्थिमाला ॐ

उद्देश्यभूतमिदं। सकलग्रन्थेषु न्यूनताध्वननाय सङ्ग्रामादिसङ्ग्रहाय चाह—**अयमिति। व्यवेति।** पाणिन्यार्दात्यादिः। अत एवाह—**ताभ्यामिति।** 'प्रत्येक'मिति शेषः, एवेनैतदध्येतृव्यावृत्तिः। एतेन 'वृत्तिकारादिव्यवहारात्तथे'तिसकलग्रन्थकारोक्तमपास्तम्। अत्र प्राचोक्तमयुक्तमिति स्पष्टमन्यत्र, तदाह—**दिगिति।** तत्र=प्रत्याहारेषु। **सिद्ध इति।** एवञ्च कथं तन्निर्देशस्य ज्ञापकत्वमिति भावः। 'यस्येति चे'ति लोपस्तु न, परत्वेन विशेषविहितत्वेन च ह्रस्वत्वेनादौ बाधात्, अनन्तरमपि न—सकृद्गतिन्यायात्, विकारान्यानुपूर्व्यैक्येन 'लक्ष्ये लक्षण'मिति न्यायाच्च, इतोऽपीत्त्वानन्तरमपि न, नासाशब्दात् के तस्य सिद्धेः। एतेन—'तदभावोप्यत एवे'ति **रत्नाकरोक्तमपास्तम्।** तस्यापि=इत्त्वविधिसामर्थ्यस्यापि। तत्र हेतुमाह—**साक्षादिति।** नन्वेवं मूलासङ्गतिरेवात आह—**निर्देशादिति। तन्मूलेति।** निर्देशस्य

ॐ सदाशिवभट्टीयम् ॐ

**यणापत्तिरिति।** शाकलेन निर्देशोपपत्तिस्तु न, भत्वात्। नन्वेवं 'यस्ये'तिलोपापत्तिर्वाच्येति चेन्न, परत्वप्रत्याहारग्रहणसामर्थ्याभ्यां 'केण' इति ह्रस्वेन बाधात्, अनन्तरमपि न, 'सकृद्गता'विति न्यायात्। इदञ्च नासाशब्दात्केऽभिप्रेते, 'णासृ–शब्दे' इत्येतस्माण्वुलि तु न शङ्काकलङ्कलेशोऽप्यत एवाह-**इति भाव इति।** वस्तुतः 'कोसौ प्रत्याहारो यत्रेतां ग्रहण'मित्यवतरणं बोध्यम्।

ॐ विषमपदविवृतिः ॐ

तत्पक्षे शकारस्यादेशबोधकसमीपे शकारोच्चारणमात्रेण शिष्टाङ्गीकारादिति बोध्यम्।

**आनुनासिक्यवन्त इति।** [ ८० पृष्ठे ] 'न कर्मधारयान्मत्वर्थीय'इति नाश्रितम्, **'असुब्वत'** इति भाष्यप्रयोगेण क्वचिल्लाघवानादरात्। **यणापत्तिरिति।** वस्तुत आङ्गत्वाद्यस्येति लोपापत्तिर्द्रष्टव्या, नचेत्त्वं तदपवादः, इकारलोपानपवादत्वात्, कारिकादौ चारितार्थ्याच्च।

ॐ वरवर्णिनी ॐ

**अनुनासिकोच्चारणेति।** इदानीं लोकेऽनुनासिकोच्चारणसम्प्रदायस्य लुप्तत्वादित्यर्थः **अयमेवेतिकथनम्**='अयमनुनासिक' इत्यादिकथनम्। **व्यवहारः**=अत्यय इत्यादौ विसर्गादिदर्शनम्। **ताभ्याम्**=उपदेशव्यवहाराभ्याम्। **"प्रतिज्ञा**—चायमनुनासिक इत्यादि भाष्योक्तवाक्यजन्यः शाब्दबोधः, तत्तत्कार्यदर्शनरूपहेतुप्रयोज्या इत्सञ्ज्ञकत्वसाध्यिकाऽनुमितिश्चे"ति **जटाजूटकृतः।** **यणापत्तिरिति।** न च ककारस्याच्त्वेऽनुनासिकशब्दे ककारे परतो भत्वात्-यणं बाधित्वा यस्येति लोप इत्त्वेनापादनीयमिति वाच्यम्,

सामर्थ्यादित्यर्थ' इति तात्पर्यम् । आदिना—तृषिमृषिकृशेरेकःपूर्वेत्यादिसङ्ग्रहः ।

ननु'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' इति वार्त्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः 'प्रत्याहारेष्विता'मित्यनुपपन्नमत आह—**आदिरन्त्येनेतीति** । वार्त्तिके ताद-र्थ्यात्ताच्छब्द्यमिति भावः ।

**ऊकालोऽज्** । कुक्कुटरुते–उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ताः । 'ऊ' इति एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो—व्याख्यानात्, तेन स्वोच्चारणकालसदृशो-लक्ष्यते । स कालो यस्येति बहुव्रीहिः, तत्फलितमाह—**उश्च ऊश्च ऊ३श्चेति** । ननु

❀ अभिनव-चन्द्रिका ❀

**एकद्वित्रिमात्राणामिति** । न च स्वरूपसूत्रे शेखरे 'एकादिदशान्तानां द्वन्द्वैकशेषावन-भिधानान्न भवत'इति वक्ष्यमाणत्वेनेदमसङ्गतमिति वाच्यं, सङ्कलितसङ्ख्यातात्पर्येण द्वन्द्वैकशेषौ

❀ चिदस्थिमाला ❀

मूलभूतेत्यर्थः । अस्याशाब्दत्वादाह—**तात्पर्यमिति** । ज्ञापकान्तरमस्तीत्याह—**आदिनेति** । आदिना—'उणादयः' 'पापाणके' इत्यादिपरिग्रहः । **एतेनोक्तारुचिसत्त्वादेवादी**त्युक्तमिति **रत्नाकरा**द्युक्तमपास्तम् । सुयोजत्वे सम्भवति तथोक्तेरयुक्तत्वात्, अत एव 'तात्पर्य'मित्युक्तम् । मूलकृदादिमतेनाह—**ननु प्रत्येति** । —**नुपपन्नमिति** । तत्र तद्ग्रहणस्य सत्त्वेन ब्रह्मणाऽपि तदभावस्य दुर्वचत्वादिति भावः । अत एवाह—**इति भाव इति** । 'ननु कोऽसौ प्रत्याहारो यत्रेतां न ग्रहणं, लोक-शास्त्रान्तरप्रसिद्धार्थस्तु न, अस-म्बद्धत्वात्, शास्त्रेऽत्र तु न परिभाषितोऽत आह—आदिरितीति'—तु व्याख्यानं सिद्धान्ते बोध्यम् । मूले-**व्यवह्रियन्ते इति** । उक्तवार्त्तिकभाष्यादाविति भावः । ननु वर्णसमाम्नाये कण्ठादिक्रमसत्त्वेन 'आकाल' इत्युचितमत आह—**कुक्कुटेति** । तच्छब्दभूतोकारे एवेत्यर्थः । तेन तथैव युगपत्क्रमेणोच्चारणादिति भावः । क्रमबोधने तात्पर्येण, 'सङ्ख्याया अल्पीयस्या' इत्यनेन च तस्य पूर्वनिपातः, एवमग्रेऽपि । अत्रादौ न प्लुतनिर्देशः, 'विभाषा पृष्टे'ति हिशब्देकारस्य प्लुतविध्यानर्थक्यापत्तेः, निर्देशासङ्गतेश्च । अत एव न मध्ये ऽपि तस्य निवेशः, 'अतो दीर्घे'इत्यादि वैयर्थ्यापत्तेश्च, मध्यमोत्तमयोर्वैपरीत्यमपि न, उक्तहेतोः, ओमभ्यादाने' इत्यस्यानर्थक्यापत्तेश्च, पूर्वमध्यमयोरपि वैपरीत्यमुक्तरीत्या न, तदेतदभिप्रेत्याह—**क्रमेणेति । प्रश्लेषेति** । तेन निर्देश इत्यर्थः, न तु दीर्घ एव, सञ्ज्ञात्रयकरणसामर्थ्यात्, विशिष्टैका तु न सञ्ज्ञा, प्रयोजनाभावात्, सञ्ज्ञाकरणस्य लघ्वर्थत्वाच्च, तदाह—**व्याख्यानादिति** । अत एव सञ्ज्ञा-सञ्ज्ञिनोः क्रमोऽपि, महासञ्ज्ञाकरणात् । एतेन यथासङ्ख्यसूत्रमिहैवोपन्यस्तुं युक्तमित्यपास्तम् । तेन= ऊपदेन । **सदृश इति** । एतेन 'कालो लक्ष्यत' इति सकलग्रन्थकारोक्तमपास्तं, तथापि सामानाधिकरण्याऽ-सम्भवात् । वः कालो यस्येति विग्रहः, 'काल' इति जात्याख्यायामेकवचनं, तस्य वैकल्पिकत्वाद् 'व'इति बहुवचनं, तत्फलितमाह—**स काल इति** । उद्देश्यतावच्छेदककोटिप्रविष्टतयोकारादेरपि ह्रस्वादिसञ्ज्ञा बोध्या 'अज्झलोः प्रतिषेध'इतिवत् । भाष्ये'दीर्घप्लुतयोस्तु ह्रस्वसञ्ज्ञाप्रसङ्ग'इत्युक्तं, तद्रीत्याशङ्कते—**नन्विति** ।

❀ सदाशिवभट्टीयम् ❀

**एकद्वित्रिमात्रेति** । एका द्वे तिस्रश्च मात्रा यस्य तस्य भावस्तत्त्वमिति–वाग्दृषदप्रिय इतिवदनेकपदो बहुव्रीहिः । एवमुत्तरत्रापि । एतेनैकादिदशान्तानां द्वन्द्वैकशेषयोरनभिधानस्य वक्ष्यमाणत्वेनेदमसङ्गतमि-त्यपास्तम् । **व्याख्यानेति** । अत्रादौ न प्लुतदीर्घौ, अन्त्ये न दीर्घः, 'ओमभ्यादाने' इत्यारम्भात् । अज्झलोः प्रतिषेध' इतिवत्—ह्रस्वसंज्ञा-दीर्घप्लुतयोरपि प्राप्नोतीति भाष्ये उक्तन्तद्रीत्याशङ्कते—**नन्विति** ।

❀ विषमपदविवृतिः ❀

**ऊकालोच्** । **एकद्वित्रिमात्रकत्वेति** । एकादिनवान्तानां द्वन्द्वस्यासाधुतायाः स्वेन वक्ष्यमाणतया

'उकालो ह्रस्व' इति वाक्येऽण्त्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां प्रदाय प्रद्ध्ये-त्यादौ 'ह्रस्वस्ये'ति तुक्स्यादिति चेन्न । 'ऊ अ'जित्येवाज्ग्रहणसामर्थ्यादूसदृशोऽ-जित्यर्थे सादृश्यस्य व्याख्यानात्कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं कालग्रहणम्—'उच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा, न तु तेन गृहीतसम्बन्धिकालसदृशकाल-स्यापी'त्यर्थेनादोषात् । तदुक्तं भाष्ये—'यावत्तपरकरणं तावदत्र कालग्रहणम्'—इति ।

ॐ अभिनव-चन्द्रिका ॐ

नेत्यर्थे तात्पर्येणादोषात् । **अण्त्वात्सवर्णग्रहणेति** । न च ककारादिचिह्नाभावेन अण्त्वा-भावात्कथमणुदित्सूत्रप्रवृत्तिरिति वाच्यम्, व्यासज्यवृत्तिधर्मानवच्छिन्ना कालघटितधर्मा-नवच्छिन्ना च या अण्वृत्तिविषयता तादृशविषयताप्रयोजकं पदं स्वबोध्यान्सवर्णा-

ॐ चिद्स्थिमाला ॐ

अन्यथोच्चारितस्यैव प्रत्यायकत्वात्सूत्ररीत्या भाष्यरीत्या च मिथःसमभिव्याहाराद्व्याप्यजाति-ग्रहणेन शङ्कैव नोदेति, अत एव 'कालशब्दः प्रत्येकं परिसमाप्यते' इत्युक्तं भाष्ये, 'तत्रैतत्स्यात्—उकारात्परः कालशब्दो न श्रूयते इत्यत आह—**प्रत्येकं चे'त्येवं** कैयटेनावतारितं चेतीति बोध्यं । वाक्ये=प्रथमवाक्ये । **अण्त्वादिति** । अनेन द्वितीयवाक्यादौ शङ्कानिरासः, यत्नाधिक्येन व्यापकजात्यविवक्षणाच्चे-त्यपि बोध्यम् । **सञ्ज्ञायामिति** । अत्र पक्षे शब्दसाम्येन यथासङ्ख्यं बोध्यं, न च तत्तत्सञ्ज्ञया बाधः, एकसञ्ज्ञाधिकारादन्यत्र समावेशस्येष्टत्वात्, यत्तु—'तथासत्यभ्यासस्य ह्रस्वविधौ दीर्घप्लुतयोरप्यापत्ति'रिति **रत्नाकरस्तन्न**, 'आपोऽन्यतरस्या'मिति विकल्पविधानेन ह्रस्वविधाने द्विमात्राऽविधानस्य ज्ञापनेन, 'प्लुतश्च विषये स्मृत' इत्युक्तेस्त्रिमात्रस्याऽविधानेन च विधिमात्रे दोषाभावात्, तथा चाऽनुवादे दोषस्तद्ध्व-नयन्नाह—**प्रदायेति** । 'स्वानहं गच्छामी'त्यादौ ङमुट् स्यादित्यपि बोध्यम् । **ऊ अजिति** । स्पष्टार्थं सन्धिर्न, अत्राचा ते न विशेष्यन्ते, तेषान्तत्त्वस्याव्यभिचरितत्वेन तद्वैयर्थ्यापत्तेः, एवं सत्युकाराणामेव सञ्ज्ञित्वेन सञ्ज्ञाविधानवैयर्थ्यापत्तेश्च, विधिष्वेव तद्ग्रहणेनेष्टसिद्धेः, अपि तु तैरच्, तत्र मुख्यसमानाधिकरण्यस्वीकारे प्रोक्तदोषद्वयाल्लक्षणया सामानाधिकरण्यं, तत्र च सादृश्यान्तरस्याऽसम्भवाद्व्याख्यानाच्च कालकृतस्यैव तस्य ग्रहणमिति भावः, तदाह—**वाज्ग्रहणेति** । **त्यर्थे**—'लब्धे' । **सिद्धे**—'इष्टे' । **उच्चारितेति** । 'प्रथमवाक्ये' इत्यादिः, वर्णेत्यर्थः । कालशब्दस्य प्रत्येकं परिसमाप्तिरिति भावः । **तेनेति** । तत्रोच्चारितवर्णेन गृहीतवर्णे-त्यर्थः । 'इत्यर्थकमित्यदोषा'दिति, पाठः । इति सूत्रार्थकमिति तदर्थः । **तपरेति** । अन्यत्रेति भाव इति केचित्, उदूकाल इत्येवमत्रैवेति भाव इत्यन्ये । अत एव 'सिद्धन्तु तपरनिर्देशा'दिति प्रागुक्तं, तत्र—न च 'तपरस्तत्का-लस्ये'तिवत्कालपरस्तत्कालस्येति सूत्राभावात्कथं समत्वमिति वाच्यं, एककार्यपरत्वादेवमुक्तेः, तत्तूपपादित-मेव । इदमपि प्राग्वद्युक्तमेव, अत एवाग्रे भाष्ये पक्षान्तराण्युक्तानीति बोध्यम् । यत्त्व'ज्ग्रहणमच्समुदाय-निवृत्त्यर्थ'मिति भाष्ये रत्नाकरादौ चोक्तं तदसदिति ध्वनयन्—कालग्रहणादुक्तार्थेप्यन्यत्र द्वितीयवाक्यातिप्रस-ङ्गेन दोष एवेत्याह—**न चेति** । 'तथापी'ति शेषः, 'निपात एका'जित्यत्रैकग्रहणेन ज्ञापितत्वादिति भावः ।

ॐ सदाशिवभट्टीयम् ॐ

अन्यथोच्चारितस्यैव प्रत्यायकत्वात्सूत्ररीत्या भाष्यरीत्या च मिथः समभिव्याहाराद् व्याप्यजातिनिर्देशसत्वेन शङ्कैव नोदयति । 'ऊ अ'जिति समाहारद्वन्द्वः, भिन्ने च पदे । असन्धिस्तु शाकल्येनासन्देहार्थः । दीर्घपाठे तु 'इत्यर्थकमित्यदोषा'दिति पाठः । 'अदसोसे'रित्यत्र वक्ष्यमाणरीत्या निर्देशोपपत्तिः, असन्धिः संहिता-विवक्षया शाकल्यह्रस्वेनेदानीं दीर्घस्यापि विधानाद्वा । इदानीं ह्रस्वशासनानामकिञ्चित्करत्वं तु भाष्य एव

ॐ विषमपदविवृतिः ॐ

एकद्विकरणे हेतुरिति वदयमप्यसाधुरेव । तावदत्र कालग्रहणमिति । अन्ये तु—छन्दस लक्षणे-

न चाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात्तितउच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति पत्तिरिति वाच्यं, ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात्। अन्तरङ्गत्वेन ह्रस्वत्वनिमित्त-यतुक एव प्राप्तेश्च। अज्ग्रहणं प्रतक्ष्येत्यादौ—ह्रस्वस्येति तुग्व्यावृत्त्यर्थम्।

**उच्चैरु।** नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः। श्रुतिप्रकर्षस्याऽव्यवस्थित-त्व, किन्तु स्थानकृतम्। 'उच्चै'रित्यधिकरणशक्तिप्रधानम्। अधिकरणत्वञ्चोच्चारणं प्रति।

❀ अभिनव-चन्द्रिका ❀

ाती'तिग्राहकशास्त्रस्यार्थेनादोषात्, विवेचयिष्यते चेदमग्रे। **वर्णग्रहणे जातिग्रहणस्येति।** ावर्णत्वव्याप्यजात्यवच्छिन्नग्रहणं यत्र तादृशजात्यवच्छिन्नमात्रारब्धसमुदाये सा जातिरति-यते इत्येतदर्थकवर्णग्रहणे जातिग्रहणमिति परिभाषयेतिभावः। **तितउच्छत्रमिति।** ऊकालोऽजि-ाच्त्वजात्यवच्छिन्नग्रहणस्य सत्त्वेनाच्त्वजात्यवच्छिन्नमात्रारब्धे 'अ-उ'इतिसमुदाये अच्त्व-ारतिदेशेन तस्य दीर्घसञ्ज्ञायां'पदान्ताद्वे'तिविकल्पेन तुगापत्तिरितिभावः। **असार्वत्रिकत्वादिति।** ,तस्तु—एतत्परियाषाया अस्वीकारेपि न क्षतिः। न च 'धीप्सती'त्यादौ 'दम्भ इच्चे'तिकित्त्वं दितिवाच्यम्, 'वञ्चिस्वपी'त्यत्र भाष्ये,—'वच्यादिभ्यो विहिते किती'त्युक्तत्वेन सत्यपि कि-क्षत्यभावात्, **पूर्वोत्तरसाहचर्येण धातोरेव ग्रहणाच्च।** **न च** 'नपुंसकस्य झलचः'इति सूत्रे-ये ऊर्गित्यादौ नुम्वारणाय 'अच्'इत्यावर्त्य अचः परो यो झल्तदन्तस्येत्यर्थः, तथा च एतत्परि-ाया अभावे 'तङ्क्षी'त्यादौ नुम्न स्यात्, अचः परो यो झल् तदन्ताङ्गस्याभावादिति वाच्यम्। 'नपुं-स्य न यमः'इतिन्यासेनादोषात्। यत्तु—न च श्रायसावित्यादावुगिल्लक्षणनुमापत्तिः, त्परिभाषाभावे वृद्ध्यादेशेऽच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगितापर्याप्तस्थानिता-

❀ चिदस्थिमाला ❀

**त्वादिति।** 'अओर्दीर्घत्वा'दिति शेषः। अनुवृत्त्यर्थमाह—**दीर्घादिति।** परत्वात्तुग्विकल्पापत्तिरित्यर्थः, श्चेष्यते, न च तदभावे नित्यस्तुग्दुर्वारः, सकृद्गतिन्यायात्, अप्राप्तावसरत्वाच्च, पुनः प्रसङ्गविज्ञान-दृशे विषये नेति—अचश्चेति सूत्रे कैयटे व्यक्तं, तत्त्वन्तु गदातोऽवगन्तव्यम्। सार्वत्रिकत्वेऽप्याह— **तरिति।** तदीयनिमित्तमध्ये तन्निमित्तस्य प्रविष्टत्वादिति भावः। 'ह्रस्वत्वे'ति बहुव्रीहिः, 'नाजानन्तर्ये' त्वनित्या, नास्त्येव वा, अत आह—**अजिति**। उत्तरार्थमपि बोध्यम्।

ननु स्थानादिलाभः कथमत आह—**नात्रेति**। ननु तस्य तेन कथं लाभोऽत आह—**उच्चैरिति।** चोच्चदेशाधिकरणवृत्तिरजित्यर्थः। **चोच्चारणमिति**। साक्षात्परम्परया वा, प्रत्यासत्तेः, कारकाणां

❀ सदाशिवभट्टीयम् ❀

म्। **तुगापत्तिरिति**। न चैतदभावे नित्यविधिर्दुर्वारः, सकृद्गतिन्यायाभिप्रायकतया भाष्ययोजनं ोक्तन्तु दूषितमन्यत्रेति वाच्यं, प्राप्तविभाषाणां—निषेधरूपतया निषेधानां बलीयस्त्वान्नित्यविधेरपि द्धत्वात्। नचानन्तरस्येति न्यायेन ह्रस्वप्रयुक्तस्य न निषेध इति वाच्यम्, योगविभागो मास्तु, त्यत्रैव दीर्घादित्यस्यापकर्षोस्तु, उभयत्रविभाषा चेयमिति भगवतोभिप्रायात्। कैयटमते दूषणान्तरं यितुमाह—**अन्तरङ्गेति**। स्पष्टञ्चेदं भाष्ये। **उच्चैरु**। तेषां तत्त्वेपि क्षत्यभावदाह—**ह्रस्वेरेति**।

❀ विषमपदविवृतिः ❀

ापरत्वेन वर्णपरत्वाभावान्नाणुदित्सूत्रप्रवृत्तिरित्याहुः। **तितउच्छत्रमिति। ननु वर्णाद्वर्णान्तरोच्चा-** र्धमात्राकालव्यवायस्य स्वीकारेण अ इत्यस्य न द्विमात्रत्वमिति चेन्न, **वर्णोच्चारणाधिकरणकालस्य** ात्राकालत्वेनादोषात्। तदेतदभिप्रेत्य वक्ष्यते—**अज्ग्रहणमिति**। **अन्तरङ्गत्वेनेति**। कार्यिणोपि

तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह—**ताल्वादीति** । इदं प्राचामनुरोधेन । वर्णसमाम्नायेऽकारस्य प्राथम्यात्कण्ठादीति वक्तुमुचितम्, एवमन्यत्रापि बोध्यम्। प्रयत्न-प्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः। **अजिति।** 'ऊकाल'इत्यतस्तदनुवर्त्तते । उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ

### ❀ अभिनव-चन्द्रिका ❀

कलस्याभावेन 'अचः परस्मि'न्निति स्थानिवत्त्वाप्रवृत्तेरिति वाच्यम्, अच्त्वपर्याप्त्यनुयोगितावच्छेदक-धर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानितावच्छेदककादेशःस्थानिवदिति अचःपरस्मिन्नित्यस्यार्थेनादोषात्। प्रकृते च स्थानितावच्छेदकं यत्पूर्वत्वं परत्वं तत्पर्याप्त्यनुयोगितावच्छेदकीभूतं पूर्वपराण्वृत्तितद्व्यक्तित्वं, तदेवाच्त्वपर्याप्त्यनुयोगितावच्छेदकमिति स्थानिवत्त्वं सुलभम्। नचैवं णिलोपादेः स्थानिवत्त्वं स्यात्—अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मस्य स्थानितावच्छेदकणित्वपर्याप्त्यनुयोगितावच्छेदकत्वादितिवाच्यं, 'णेरनिटी'त्यस्य ण्यन्ताङ्गान्त्यालो लोप इत्यर्थेन स्थानितावच्छेदकाल्त्वपर्याप्त्यनुयोगिताया अच्त्वपर्याप्त्यनुयोगितायाश्च एकस्यैव धर्मस्यावच्छेदकत्वेनादोषात्। वस्तुतस्तु णित्वस्येकारेपि पर्याप्तत्वेन न कोपि दोष इति सुधियो विभावयन्तु। **सभागत्वे एवेति।** तत्तत्स्थानेषु भागत्रयकल्पनां कृत्वोर्ध्वभागे वाय्वाघातेनोत्पन्नोऽजुदात्तः, अधोभागे वाय्वाघाते तेनोत्पन्नोऽजनुदात्तः, ऊर्ध्वभागे आहत्याधोभागाहतेनोच्चरितोच्स्वरितः, भागत्रये वाय्वाघातेनोत्पन्नोच प्रचय इति भावः।

### ❀ चिदस्थिमाला ❀

तथैव क्रियान्वयनियमात्। **तच्च**=तथोच्चारणञ्च। **ताल्वादीनामिति**। तत्रैवोच्चारणसम्भवात्, भागं विना तथा दुर्वचत्वाच्चेति भावः। प्राचां=प्रक्रियाकृताम्। **अन्यत्रापि**='तुल्यास्ये'ति सूत्रवृत्तावपि। एतेन—'तालुन आदिस्ताल्वादिः, स आदिर्यस्येति बहुव्रीहिः, तत्पुरुषबहुव्रीह्योरेकशेषो वा—'इतिपरास्तम्, आद्ये विध्यभावात्, क्लिष्टत्वाच्च, स्वायत्ते शब्दप्रयोगे एवमुक्तेर्निष्फलत्वाच्च। **प्रयत्नेति**। 'कायाग्निने'ति शेषः। ऊर्ध्वभागे=मूर्ध्नि, स्थानोर्ध्वभागे वा। इदं सर्वमग्रेऽपि बोध्यम्। **वर्त्तत इति**। 'अचश्चे'त्यत्रानुवृत्त्यर्थं तस्य स्वरितत्वस्यावश्यकत्वात्, वस्तुतोऽत्रानुवृत्तौ न फलमिति ध्वनयन्नाह—**उदात्तेति**। **लोकेति**। अत्रैव सूत्रे भाष्ये स्पष्टमिदम्। तेषान्तत्त्वमभ्युपेत्यापि क्षत्वभावमाह—**हल्स्वरेति**। 'स्वरविधा'

### ❀ ज्योत्स्ना ❀

**प्राचामनुरोधेनेति**। 'अनुक्षरन्ति काकुदं'[1]मिति पस्पशाभाष्योपदर्शितश्रुतौ वर्णाभिव्यक्तिस्थानस्य तालुत्वप्रतिपादनेन तस्यैव प्राधान्यमुपगच्छतामनुरोधेनेत्यर्थः। काकुदं=तालुवित च भाष्ये।

**उदात्तत्वादीनामज्धर्मताया एवेति**। अस्य 'वस्तुत'इत्यादिः, बृहच्छेखरे तथा दर्शनात्, नातः पूर्वग्रन्थस्यासम्बद्धत्वशङ्केति बोध्यम्। स्पष्टञ्चेदं भाष्ये। नन्वेवमप्यच इति षष्ठ्यन्तानुवृत्तिरावश्यकी-राजदृषदित्यादौ समासान्तव्यञ्जनस्य स्वरवारणायेत्यत आह—**हल्स्वरप्राप्ताविति**।

### ❀ सदाशिवभट्टीयम् ❀

तेषां तत्त्वे हि स्वरविधायकैर्हलां स्थाने हलो विधेयेरन्निति दोषो वाच्यः, स एव न, तत्स्थानिनोऽभावात्,

### ❀ विषमपदविवृतिः ❀

**निमित्तत्वमाश्रित्येदम्**। **स इति**। ऊर्ध्वभागप्रतिहतवायुव्यञ्जितोऽजित्यर्थः। **हल उदात्तादि**-सञ्ज्ञायां बाधकाभावं चाह—**हल्स्वर इति**। तथा च हल उदात्तादिसञ्ज्ञायां किं बाधकं,

1 सुदेवो असि वरुण! यस्य ते सप्त सिन्धवः, अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव" इति भाष्योदाहृत ऋक्।

व्यञ्जनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोध्यम् । **आये इति** । यच्छब्दः 'फिषोऽन्त' इत्यन्तोदात्तः, जस्सुप्त्वादनुदात्तः, 'एकादेश उदात्तेने'त्येकार उदात्तः । **अर्वाङिति** । अभिमुखवाच्यव्युत्पन्नं 'फिषोऽन्त' इत्यन्तोदात्तम् । आद्यस्य शेषनिघातेनाऽनुदात्तत्वम् । अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम् । एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह—**वर्णधर्माविति** । बाहुलकादधिकरणे घञ् । अर्श आद्यजित्यन्ये । इयं त्रिसूत्री स्पष्टार्था, लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात् ।

**ह्रस्वग्रहणमिति** । ह्रस्वपदघटितग्रहणमित्यर्थः । **अतन्त्रमिति** । स्वशास्त्रसङ्केतितरूपे-

---

**ॐ अभिनव-चन्द्रिका ॐ**

**अर्श आद्यजिति** । भावघञन्तादिति शेषः । 'करणाधिकरणयोश्चे'ति ल्युटा बाधादिति भावः ।

**ॐ चिदस्थिमाला ॐ**

विलस्यार्थान्तरसत्त्वादत्रानुल्लेखः । चेदम्=अजितिपदम्, एतेन—"इदं प्रकृतसूत्र-समासस्येति-सूत्रस्थभाष्यविरुद्धं, तत्र हि—'हल्स्वरे'त्येव स्वीकार्यं, न तु 'स्वरविधा'वित्यादि,—'उदश्वित्वान् घोष' इत्यादौ तथा सति मतुप उदात्तत्वप्रसङ्गात्. कथं हलां स्वरप्राप्तिः, उच्चैरित्यत्र तन्निवृत्तमित्युक्तम्—"-इति रत्नाकरोक्तमपास्तम् । **आये इतीति** । आकारो निपातत्वादाद्युदात्तः । वेदभाष्यानुरोधेनाह—**अर्वाङिति** । अत एवाह—**फिषोऽन्त इति** । आद्यस्य=तदकारस्य । सम्भवात्पक्षान्तरमाह—**अर्वन्तमिति** । 'समासस्ये'त्येतदपवादत्वादाह—**कृदुत्तरेति** । 'गतिकारकोपे'तिविहितेनेत्यर्थः ।—**दात्तत्वमिति** । शेषं प्राग्वदिति भावः । **विरोधादिति** । तथा च पूर्वसूत्राभ्यां धर्मिपरावनुवृत्तावपि इह लक्षणया धर्मपराविति भावः । इतरेतरद्वन्द्वेऽपि वर्त्तिपदार्थयोः प्रकारत्वे तद्धर्मयोरपि प्रकारत्वेन, तत्समूहे भावप्रत्ययेन मूले 'उदात्तानुदात्तत्वे' इत्यस्योपपत्तिः, अत एव 'तस्य भाव'इति सूत्रे कैयटेनोक्तं"—'धवखदिरत्व'मित्यादौ जातिसमुदाये भावप्रत्ययः—" **इति** । तस्य च समुदायस्यानुद्भूतावयवत्वे एकवचनम्, उद्भूतावयवत्वे द्विवचनाद्यपीत्याकूतम् । भाष्योक्तं पक्षमाह—**अर्श इति** । भावघञन्तादिति भावः । अस्यापि बाहुलकादविशिष्टत्वादाह—**अन्ये इति** । **स्पष्टार्थेति** । स्पष्टं चेदं 'तस्यादित' इत्यत्र कैयटे । शुक्लादितुल्याश्चोदात्तादयः । एतेन"-वर्णधर्मपरत्वेन प्रसिद्धानां तेषां धर्मिपरत्वमनया बोध्यते-"इत्यपास्तम् । अत्रत्यमूलादेरसाङ्गत्यादन्यथा योजयति—**ह्रस्वपदेति** । मूले बहुव्रीहिरिति भावः । ननु सूत्रे किं कर्मधारयः ? एकदेशिसमासो वा ? अन्त्येऽपि,—स्वशास्त्रसङ्केतितस्य ह्रस्वशब्देन ग्रहणम् ? उत मात्राकालिकमात्रस्य ?, नाद्यः,—ह्रस्व-प्लुत-स्वरिताऽसंग्रहापत्तेः, पूर्वनिपातवैपरीत्यापत्तेश्च, कर्मधारययोग्यपदानां प्रायशः समासाभावाच्च, न द्वितीयः,—दीर्घ-प्लुत-स्वरिताऽसङ्ग्रहापत्तेः । ह्रस्वशब्दस्य मात्राकालिकेऽचि सङ्केतितत्वात्, अन्त्ये ह्रस्वशब्दोच्चारणं व्यर्थं, स्पष्टार्थमर्धमात्रमित्यस्यैव सुवचत्वादत आह—**स्वशास्त्रेति** । मात्राकालिकोऽच् तथा, तत्सम्बन्धि तद्घटितं यद्विशिष्टरूपं तद्धर्मस्तेनाऽबोधकमित्यर्थः, मात्राकालिका-

**ॐ सदाशिवभट्टीयम् ॐ**

अचोपि नानन्तरतमत्वात् । यद्यपि तेषां तत्त्वे 'यतोनाव'इति ज्ञापकं न सम्भवति, तथापीयं वाचनिक्यावश्यकीति भावः । **विरोधादिति** । तथा च पूर्वत्र धर्म्मिपरयोरपि इह लक्षणया धर्म्मपरतेति भावः । इतरेतरद्वन्द्वेपि वर्त्तिपदार्थयोः प्रकारत्वे तद्धर्म्मयोरपि प्रकारतेति तत्समूहे भावप्रत्ययेन मूले 'उदात्तानुदात्तत्वे'इत्यस्योपपत्तिः । 'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढ'इति भाष्यतो विशिष्टरूढेरेव लाभादाह—**ह्रस्वपदेति** । मूले बहुव्रीहिरिति भावः । **स्वशास्त्रेति** । रूप्यत इति रूपोऽर्थः, स्वशास्त्रसङ्केतितः

णाबोधकमित्यर्थः । किन्त्वर्धमात्रास्वरूपार्थबोधकमिति भावः । एवञ्च–दीर्घादिष्वप्यर्धमात्रैवो-दात्ता । इत आरभ्य नवसूत्र्या 'अ अ' इत्यतः प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः । सर्वञ्चेदं भाष्ये स्पष्टम् । 'अर्धमुदात्त'मिति वृत्तिस्तु—सत्या सत्यभामेतिवद् व्याख्येया । 'उत्तरार्ध'मित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः । वेदे तु यथाप्रयोगं प्रातिशाख्यादस्माच्च व्यवस्था । **तस्य चेति** । अनुदात्तस्येत्यर्थः । **उदात्तेति** । उदात्तस्वरितयोः परत्वे सतीत्यर्थः । तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव । **अन्यत्र**—उदात्तस्वरितयोः परत्वाभावे । **प्रातिशाख्ये इति** । लोके त्वनुदात्त एवेति भावः । ह्रस्वस्वरितमुदाहरति—**क्वेति** । 'किमो'दित्यत्, 'क्वाती'ति क्वादेशे 'तित्स्वरितम्' इति स्वरितः । दीर्घं तमुदाहरति—**रथानामिति** । **येऽरा इति** । 'स्वरितो वाऽनुदात्ते पदादा'वित्येकारः स्वरितः । 'नोदात्तस्वरितोदय'मिति निषेधस्तु—'उदात्तादनुदात्तस्य स्वरित' इत्यस्यैवानन्तरस्येति न्यायात् । स्वरितपरमुदाहरति—**शतचक्रमिति** । अहेरित्यर्थेऽह्यः । वृत्रस्येत्यर्थः । 'छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः' इति वचनाद् गुणाभावः ।

❀ चिदस्थिमाला ❀

त्ववदर्थत्वेनाबोधकमिति यावत्, उक्तदोषात् । अन्यदोषमूरीकृत्याह—**किन्त्विति** । तत्फलमाह—**एवञ्चेति** । 'लोके'इति शेषः । अत एव वक्ष्यति—'वेदे त्वि'ति । अत एव 'तस्ये'ति ग्रहणं सफलं, तद्धि दीर्घादिस्वरितसंग्रहार्थं, तथाऽर्थे तु स न स्यात्, न च षष्ठीकल्पनार्थं, सम्बन्धिशब्दत्वादेव सिद्धेः, न च त्रिपादीस्थस्वरितसंग्रहाय तत्, अन्यथाऽसिद्धत्वात्स न स्यात्, भाष्यरीत्या तदभावात्, तदेतद्ध्वनयन्नाह—**इत इति** । अत एवैकश्रुतिं प्रति स्वरितस्य सिद्धत्वाद्—'इमं मे'इत्यादौ स्वरित'मे'शब्दात्परेषां गमित्यादीनामेकश्रुतिः, तदाह—**सर्वञ्चेदमिति** । तदुक्तं भाष्ये—''अर्धह्रस्वशब्दोऽर्धमात्रायां रूढः, ततः प्रमाणे मात्रचो लुक्—''इति । एतेन—'तथा **दण्डिरत्नाकरा**द्युक्तं,–'समं स्यादिति सिद्धेऽर्धग्रहणमपि व्यर्थ' मिति चरमोक्तं चापास्तम् । तैत्तिरीये लोकवत्सत्त्वादाह—**अस्माच्चेति** । एवञ्च ऋग्वेदान्यपरमिदमिति सिद्धम् । अस्येत्यनुक्त्वाऽप्रक्रान्तस्वरिताभ्रमेऽपि उदात्ताऽभ्रमायाह—**अनुदात्तेति** । बहुव्रीहौ परशब्दस्य द्वेधा पूर्वनिपातापत्तेराह—**उदात्तेति** । नन्वेवमन्यापेक्षया परत्वेऽन्यानुदात्तस्यापि तत्त्वापत्तिरत आह—**तयोरिति** । 'प्रत्यासत्त्ये'ति भावः । अत एवाह—**उदात्तेति** । प्रातिशाख्यसमाख्याबललब्धमर्थमाह—**लोके त्विति** । तं=स्वरितम् । द्वयोरपि फिट्स्वरेणान्नोदात्तत्वादाह—**येऽरा इतीति** । इत्यत्रेत्यर्थः । **स्वरित इति** । पाक्षिक इति भावः । असिद्धत्वन्तूक्तरीत्या नात एवाह—**नोदात्तेति** । **परमिति** । 'स्वरित'मिति शेषः । यत्तु **दण्डी**—'अह व्याप्ता'वित्यतः कर्मणि ण्यत्, तित्वात्स्वरितत्वं, सञ्ज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः—' इति, तन्न, तस्या अभावात्, तद्ध्वनयन्नाह—**अहेरिति** । तथा च

❀ ज्योत्स्ना ❀

**अह्य इति** । **षष्ठ्यन्तमित्यर्थः** । **गुणाभाव इति** । 'घेर्ङिती'त्यनेन । **इति स्वरित इति** ।

❀ सदाशिवभट्टीयम् ❀

मात्राकालिकास्वरूपोऽर्थो यस्मिन्मात्राकालिकाजरूपेऽर्थे तेनाऽबोधकं, तस्याबोधकमिति यावत् । कर्मणो हेतुत्वविवक्षया तृतीयेत्यन्ये । **केचित्तु** तादृशभाष्यानुपालम्भात्, प्रमाणमेव **ह्रस्वस्यादावितिह्रस्वुक्तेश्च मूले** तत्पुरुषेपि न बाधकम् । वस्तुतस्त्वस्य प्रमेयपरत्वेपि जानुदघ्नमितिवन्मात्रचि तस्य लुकि दीर्घस्वरितादि-

❀ विषमपदविवृतिः ❀

**न तावदचः स्थाने उदात्तस्य हल आपत्तिः**, आन्तर्यतोऽच **एवोदात्तस्य** प्रवृत्तेः, नापि **हल्स्थाने**

'उदात्तस्वरितयो'रिति स्वरितः। 'उदात्तयणो हल्पूर्वा'दिति तु न, छान्दसत्वात्। यच्छब्दः 'फिष' इत्यन्तोदात्तस्तदेकादेशश्च वा स्वरितः। **स इति**। उदात्तादिह्रस्वादिसञ्ज्ञक इत्यर्थः।

**मुख—**। उच्यतेऽसौ वचनः, बाहुलकात्कर्मणि ल्युट्। 'मुखसहिता नासिके'ति

### ❀ चिदस्थिमाला ❀

वेदभाष्ये''—'अयं ह्री'ति षडर्चस्य षोडशसूक्तस्यानादेशपरिभाषया इन्द्रो देवता, तत्र—'यं सुपर्णः परावतः श्येनस्य पुत्र आभरत्। शतचक्रं योऽह्यो वर्त्तनि'रिति (ऋक्) चतुर्थी,। श्येनस्य=ताक्ष्र्यस्य, पुत्रः=तनयः, सुपर्णो, यं=सोमं, परावतः=परागतान्, दूरात्=द्युलोकात्, आभरत्, कीदृशं तं—'शतचक्रं, शतमिति बहुनाम, तस्य कर्त्तारं, मूलविभुजादित्वात्कः, यद्वा शतकरणसाधनं, बहुयागनिष्पादनमित्यर्थः। 'घञर्थे कविधान'मिति कः, 'कृञादीनां के'इति द्वित्वम्। यः=सोमः अह्यः=अहेर्वृत्रस्य, वर्त्तनिः=वर्त्तयिता, 'प्रेरयिता—''इत्युक्तम्। यच्च'प्यहिरिव भोगैः' 'अहिं वृत्र'मित्यादावाद्युदात्तत्वं पठ्यमानं ग्रामादित्वाद् वृषादित्वाद्वा भवति, 'इगन्ताना'मिति तु न, तत्र 'जनपदशब्दाना'मित्यनुवृत्तेः, एवञ्चो'दात्तादनुदात्ते'ति स्वरिते, तत्स्थानिकत्वाद्यण'उदात्तस्वरितयो'रिति अकारस्य स्वरितत्वेऽपि, स्वरविधौ व्यञ्जनस्याऽविद्यमानवत्त्वेनोदात्तादिति स्वरितत्वेऽपि वा, तस्याऽसिद्धत्वेन शेषनिघाताऽप्रवृत्त्या 'स्वरितो वे' त्यस्याऽप्रवृत्त्या पूर्वस्वरिताऽसिद्धिरत्र पक्षे,तथापि उञ्छादित्वेन, घृतादित्वेन वान्तोदात्तत्वमत्राऽहिशब्दस्य। यद्वा 'मकरवरूढे'त्यग्रिमेण 'च्छन्दसि चे'त्यनेन तदन्यार्थकेन लक्ष्यानुसारादादिर्द्वितीयं वोदात्तमित्यर्थकेनात्र तत्त्वं, तथा च यण उदात्तस्थानिकत्वात्तस्य स्वरितत्वे 'स्वरितो वे'त्यस्य प्रवृत्त्येष्टसिद्धिरिति तेषामाकूतं, तदेतदभिप्रेत्य सामान्यत आह—**उदात्तस्वरितयोरिति। छान्दसत्वादिति**। तत्र सर्वकार्याणां व्यवस्थितत्वादित्यर्थः। यदि तु दण्डयुक्तपक्षेऽपि छान्दसत्वाद्वृद्ध्यभावस्तर्हि सोऽपि पक्षो युक्तः, अत एव तत्रैव—'अह गतौ, अह्यः=गन्तव्यः, वर्त्तनिर्मार्गभूतः, इति पक्षान्तरत्वेनोक्तं, तत्रापि तथा वृद्ध्यभावसाधनन्तु चिन्त्यमेवेति दिक्। **वा स्वरित इति**। 'स्वरितो वे'त्यनेनेति भावः। अनन्तरत्वादुदात्तादिसञ्ज्ञकस्यैव परामर्श इति भ्रमवारणायाह—**उदात्तेति**। यद्यपि भाष्ये करणे ल्युटि 'शक्यं श्वु'दितिवत्पदसंस्कारपक्षे सिद्धेन वचनपदेन बहुव्रीहिरित्युक्तं, तथापि बहुव्रीहितस्तत्पुरुषस्य लघुत्वाद्वाक्यसंस्कारपक्षेऽनिर्वाहाच्च तन्न युक्तमिति ध्वनयन्नाह—**उच्यते इति**।

### ❀ ज्योत्स्ना ❀

'अहिरिव भोगै'रित्यादावाद्युदात्ततया पठ्यमानस्याहिशब्दस्य शेषनिघाते 'उदात्तादनुदात्तस्य स्वरित' इति तस्य स्वरिते'न मुन'इत्यत्र नेति योगविभागाद्वा छान्दसत्वाद्वा असिद्धत्वाभावे आदेः पुनः शेषनिघाते यणि अयं स्वरितो, न त्वहिशब्दः स्वरितान्तः उदात्तान्तो वा स्वतन्त्रोऽस्तीति भावः। **इति तु नेति**। स्वरितेऽप्युदात्तोऽस्तीति प्राचभाष्यरीत्येदं, वस्तुतः उदात्तस्वरितयोरित्यादावेवं सति स्वरितग्रहणवैयर्थ्यप्रसङ्गाच्छास्त्रे उदात्तसञ्ज्ञकस्यैव ग्रहणौचित्यसिद्धान्ताच्छङ्कासमाधाने निर्दले। अत एवा 'नुदात्तस्य च यत्रोदात्तलोप'इत्यस्य स्वरितलोपे न प्रवृत्तिः-

### ❀ सदाशिवभट्टीयम् ❀

संग्रहे भाष्ययोजने च कैय्यटादीनां रूढिस्वीकारो मुधेति प्राहुः। **उदात्तस्वरितयोरिति**। यद्यप्यस्याद्युदात्तत्वं ग्रामादित्वाद्भवति, एवञ्चोदात्तानुदात्तेति स्वरिते तत्स्थानिकत्वाद्यण 'उदात्तस्वरितयो'रित्यकारस्य स्वरितत्वेपि स्वरविधौ व्यञ्जनस्याविद्यमानत्वेनोदात्तेति स्वरितत्वेपि वा तस्याऽसिद्धत्वेन शेषनिघाताप्रवृत्त्या 'स्वरितोवे' त्यस्याऽप्राप्त्या पूर्वस्वरितासिद्धिरत्र पक्षे, तथापि उञ्छादित्वादन्तोदात्तत्वमेवाहिशब्दस्य, तथा च

विग्रहः । तया वचन इति,—'साधनं कृते'ति समासस्तदाह—**मुखसहितेत्यादि** । मुखेति किम्? यमानुस्वाराणामेव प्रसज्येत, एवञ्चाङोऽनुनासिक इत्यत्रानुस्वारः स्यात् । नासिकेति किम्? शक्तेत्यादौ 'अनुदात्तोपदेश' इत्यादिना कलोपो मा भूत् ।

**अष्टादशेति** । यद्यपीदं न व्यक्तिपक्षे—व्यक्तीनामानन्त्यात्तथाप्यष्टादशधर्मवत्त्वमकार-जातीयादेरित्यर्थः । ह्रस्वत्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदम्बोध्यम् । एवमग्रेऽपि । **ऌवर्णस्येति** । विवृतस्येत्यर्थः । तेन 'ॡति ऌ वे'ति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । **दीर्घाभावादिति** । अत एव तुल्यास्यसूत्रे

❀ अभिनव-चन्द्रिका ❀

**इति विग्रह इति** । वस्तुतस्तु'मुखसहितया नासिकये'ति न विग्रहः, किन्तु मुखद्वितीयया नासिकयेति, अन्यथोत्तरपदलोपस्य नित्यत्वे मुखसहितनासिकयेतिमूलस्यासङ्गत्यापत्तेरिति **साम्प्रदायिकाः** । **अन्ये** तु मुखपदं मुखसहिते लाक्षणिकं, सूत्रस्य शाकपार्थिवादौ पाठे न मानं, नापि प्रयोजनमित्याहुः ।

**यमानुस्वाराणामिति** । प्रसादवासिन्यायमबुध्वायं ग्रन्थ इति बोध्यम् । **न व्यक्तिपक्ष इति** । चिन्त्यमिदं, जातिपक्षेपि व्यक्तीनामानन्त्येन धर्मैरेवाष्टादशविधत्वस्योपपादनीयतया पक्षद्वयेपि कौमुदीसामञ्जस्यात् । ननु स्वसमभिव्याहृतपदार्थतावच्छेदकमिथोविरुद्धयावद्धर्मबोधनस्य विधापदार्थत्वेन ह्रस्वत्वादयोऽष्टावेव धर्मा इतिविधापदार्थानुपपत्तिरित्यत आह-**तत्समानाधिकरणेति** ।

❀ चिदस्थिमाला ❀

एतेन 'मूलं फलितार्थकथनपर' मिति **दण्डिरत्नाकरोक्तं**, भाष्यरीत्या **दण्डयुक्तञ्चापास्तम्** । समाहारद्वन्द्वे मुखनासिकमिति स्यादत आह—**मुखसहितेति** । **तयेति** । अधिकरणस्यापि 'स्थाल्यां पच्यते' इतिवत्करणत्वं, यद्वा मुख्यं करणत्वमेवेत्यन्यत्र स्पष्टम् । यद्यप्यत्र सूत्रेण समाससिद्धिस्तथाप्यन्यार्थं वार्त्तिकस्यावश्यकत्वमिति सूचनायाह—**साधनमिति** । यमानां विशिष्य प्रातिशाख्ये विधानादाह—**इत्यत्रानुस्वार इति** । इत्यनेन तस्य लक्ष्ये इत्यर्थः, । 'अनुनासिकस्य क्वी'त्यादावनुवादे त्वप्रतिपत्तिरेव स्यादिति भावः । '**शक्तेत्या**-दा'विति पाठः । 'शक्तेत्यादा'विति पाठे क्तान्तसम्बोधनपरतया योज्यम् । **नन्त्यादिति** । 'नापि व्यापकजातिपक्षे, तस्या एकत्वादि'त्यपि बोध्यम् । अत **एव** व्याप्यजातिपक्षेण समाधत्ते—**तथाप्यष्टेति** । तत्स्वरूपस्याप्यतत्त्वादाह—**अकारजातीयादेरिति** । आदिनेकारजातीयादिपरिग्रहः । इदमपि न वास्तवमित्याह—**ह्रस्वत्वेति** । तुल्यास्यसूत्रस्थभाष्याविरोधायाह—**विवृतेति** । अत्र मानमाह—**अत एवेति** । आदिना

❀ ज्योत्स्ना ❀

रिति स्पष्टं षाष्ठे **प्रदीपे** । **इति समास इति** । **इदं** वृत्तिकाराद्यनुरोधेन । भाष्ये तु 'करणे ल्युट्, बहुव्रीहिश्च समास' इत्युक्तम् । नन्वष्टादशत्वं धर्माणामनुपपन्नं, ह्रस्वत्वादयस्त्रयस्त्रय उदात्तादयोऽनुनासिकश्चेति सप्तानामेव तेषामुपलम्भादत आह–**भेदमाश्रित्येति** । **रूढत्वेऽपि सूत्रे लौकिकमास्यं**

❀ सदाशिवभट्टीयम् ❀

यण उदात्तस्थानिकत्वात्तस्य स्वरितत्वे 'स्वरितो वे'ति प्रवृत्त्येष्टसिद्धिः । **इति समास इति** । **इदं** वृत्तिकाराद्यनुरोधेन, भाष्ये तु 'करणे ल्युट् कुक्कुटाण्डवद्बहुव्रीहिश्च समास' इत्युक्तम् । **बहुव्रीहित**-स्तत्पुरुषो लघुरित्यभिप्रायो मूलस्येत्याहुः । **ह्रस्वत्वादीनामिति** । स्वसमानाधिकरणोदात्तत्वापेक्षयेत्यर्थः । **कत्वादीनाञ्चेति** । दीर्घत्वादिसमानाधिकरणोदात्तत्वाद्यपेक्षयेत्यर्थः । अत **एवा'ष्टा**-

❀ विषमपदविवृतिः ❀

तस्यापत्तिर्हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानवत्त्वादित्यर्थः । **शक्तेति** । क्तान्ताद्वापि बोध्यम् । **विवृत**-

भाष्ये 'ॢति सवर्णे' इत्यनेन पक्षे द्विलकारकाभावे 'अकः सवर्णे' इति दीर्घत्वे 'होतॄकार इति ऋकारघटितप्रयोगः सङ्गच्छते। **ह्रस्वाभावादिति**। इदमेओङित्यादौ भाष्ये स्पष्टम्। गानरोदनादौ चतुर्मात्रार्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः। अत एवानुदात्ततरस्यानुक्तिः। एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणं,—तस्या लोकेऽपि सत्त्वात्।

**तुल्यास्य-**। तुल्यावास्यप्रयत्नौ यस्येत्यर्थः। आस्ये भवमास्यं, व्याख्यानात्।

❀ अभिनव-चन्द्रिका ❀

'उदात्तत्वविशिष्टानुनासिकत्वविशिष्टह्रस्वत्व'मित्यादिक्रमेणाष्टादशविधत्वमिति भावः। **एकश्रुतेरिति**। अस्याः 'प्रचय'इत्यपि व्यवहारः।

**तुल्याविति**। न च 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति नपुंसकैकशेषेण 'तुल्या'विति-पुंल्लिङ्गनिर्देशोऽसङ्गत इति वाच्यम्, प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधकत्वरूपशब्दतन्त्रविषय एव एकशेषशास्त्रप्रवृत्त्या प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधकत्वरूपार्थतन्त्रस्य प्रकृते स्वीकारेणादोषात्। 'प्रत्यर्थं शब्दनिवेश'इतिभाष्यस्य–प्रतिप्रवृत्तिनिमित्त-

❀ चिदस्थिमाला ❀

आदिना—ऐ औच् इत्यादिपरिग्रहः। उभयसाधारणमाह—**गानेति**। अत्राद्यादिनाऽऽगमशास्त्रीय-मातृकान्यास–राणायनीयशाखास्थ'सुजाते एश्वे'त्यादिपरिग्रहः। द्वितीयादिना दीर्घविवृतत्वर्णमात्रिकेजादिपरिग्रहः।

एतेन पूर्वत्र तथानुक्तत्वान्न्यूनता,दोषश्चेत्यपास्तम्। **नोक्ता इति**। चतुर्मात्रादय इत्यर्थः। प्रक्रियादशायां तत्सत्त्वे मानाभावाच्चेत्यपि बोध्यम्। **अत एवेति**। उक्तहेतुगणादेवेत्यर्थः। यद्यप्येकश्रुतावपीदं सम्भवति, तथापि तत्र किञ्चिद्वैलक्षण्यादाह—**एकेति**। त्रैस्वर्याभावरूपत्वेऽदोषादाह—**स्वरान्तरेति**। **इदमिति**। प्रागुक्तं सर्वं तस्या अप्युपलक्षणमित्यर्थः। अपिना वेदपरिग्रहः।

व्यधिकरणत्रिपदबहुव्रीहिनिरासाय, प्रयत्नशब्दस्य पुंस्त्वमेवेति ध्वननाय चाह—**तुल्याविति**। अत एव प्रत्येकसाम्यमादाय न सावर्ण्यम्, अत एव चा'कः सवर्णे'इत्यादौ सवर्णग्रहण'मिकोऽसवर्णे' इत्यादावसवर्णग्रहणञ्च चरितार्थम्। नन्वास्यशब्देन कथं कण्ठादिस्थानग्रहणमत आह—**आस्ये भवमिति**। 'शरीरावयवाद्य'दिति यत्। ननु मुख्यमेवोष्ठावधि-काकलकपर्यन्तं तत्कुतो नेति चेन्न, आस्यपदोपादान-वैयर्थ्यापत्तेः, इत एव–( तुल्य आस्ये प्रयत्नो यस्येति–)–व्यधिकरणबहुव्रीहिर्न, तदाह—**व्याख्येति**।

❀ ज्योत्स्ना ❀

न गृह्यते इत्याह-**आस्ये भवमिति**। 'स्थानमेवे'त्यनेनास्यभवानां वायुसंयोगानां व्युदासः। कौस्तुभोक्तं

❀ सदाशिवभट्टीयम् ❀

दशधाभिन्नामवर्णस्य प्रतिपत्तिं वक्ष्यामी'ति पस्पशान्तिमभाष्यं सङ्गच्छते। **ऋकारघटित इति**। स एवेत्यर्थः। तत्सत्त्वे तदघटितमपि प्रयुञ्जीत। यथाश्रुतं तु न सङ्गतम्। किञ्च 'ॠति ॡ वे'त्यस्य प्रत्याख्यानमपि तदभाव एव सङ्गच्छते, अन्यथा ऌकारवदीषत्स्पृष्टमपेक्ष्य ऌकारवतो विवृतस्यान्तरतमत्वात्स एव स्यादिति तदसङ्गतिः स्पष्टैव। **तुल्यास्येति**। **तुल्याविति**। अत एव प्रत्येकं साम्यमादाय न सञ्ज्ञा, 'अकःसवर्णे'इत्यादौ

❀ विषमपदविवृतिः ❀

**स्येत्यर्थ इति**। मातृकायां लीषत्स्पृष्ट एव ऌकारो दीर्घ इति भावः। **लोक इति**। 'प्लुतावैच इदुतौ' वित्येतद्विषयः। चतुर्मात्रास्तु छान्दसा इति भावः।

**तुल्यास्यप्र**। **यजुष्येकेषामिति**। नन्वत्र प्रयत्नभेदादेव न सावर्ण्यमित्यरुचेराह—

तच्च—वर्णोपयोगित्वात्स्थानमेव, प्रयत्नस्य पृथगुपादानात् । प्रकृष्टो यत्नः—आभ्यन्तरः । तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात् । जनकत्वं षष्ठ्यर्थः । तत्तत्कार्यगत-

## ❀ अभिनव-चन्द्रिका ❀

निष्ठप्रकारतं शब्दनिवेश इति भावः । प्रकृते च—तुल्यत्वनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधस्यैव जननात्, अनेकशब्दप्रयोगस्याप्राप्तत्वाच्च । जनकत्वं षष्ठ्यर्थ इति । अत एव वर्णेऽपि-

## ❀ चिदस्थिमाला ❀

ननु स्थानमपीति वाच्ये 'स्थानमेवे'त्ययुक्तं, तत्त्वस्य प्रयत्नेऽपि सत्त्वादत आह–प्रयत्नेति । 'प्र'फलमाह—प्रकृष्टेति । प्रयोगः प्राग्वत् । जनकत्वमिति । जन्यताविशिष्टमिति भावः । वर्णानां जन्यतामते इदं, नित्यत्वपक्षे त्वभिव्यञ्जकत्वं तथेति बोध्यम् । ननु प्रयत्नस्य स्वतो भेदेन तत्त्वेऽपि 'दैत्यारि'रित्यादौ कार्यव्यक्तिभेदेऽपि स्थानस्यैकत्वात्तुल्यत्वस्य भेदघटितत्वपक्षे सावर्ण्याऽप्रसक्त्या कथं दीर्घोऽत आह–तत्तदिति ।

## ❀ सदाशिवभट्टीयम् ❀

सवर्णग्रहणाच्च । ननु वर्णोपयोगित्वेन हेतुना तालादेर्व्यावृत्तावपि प्रयत्नस्य तत्त्वेनाव्यावर्तनादेवेत्यसङ्गतमत आह–पृथगुपेति । शब्दोऽनित्य इति नयेऽस्यैव सम्भवादाह–जनकेति । अन्ये तु–ननु यत्नप्रयत्नशब्दयोः प्रयत्नमात्रे रूढत्वात्पर्यायत्वेन 'लाघवाद्यत्नेति वाच्ये प्रोपादानमधिकसंग्रहार्थ'मित्यस्य वक्तुमशक्यत्वेन

## ❀ वरवर्णिनी ❀

**स्थानमेवेति** । 'ननु प्रयत्नस्याप्यास्येऽवच्छेदकत्वसम्बन्धेन जायमानतया प्रयत्नग्रहणं व्यर्थमेवेति चेन्न, अवच्छेदकत्वसम्बन्धावच्छिन्नवर्णनिष्ठजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकतावच्छेदकधर्मवत एवास्यभवपदेन विवक्षिततया—प्रकृते ककारादिवर्णानां समवायेन गगने उत्पद्यमानानामपि अवच्छेदकत्वेन कण्ठ एवोत्पद्यमानतया तादृशतादात्म्यसम्बन्धावच्छिन्नजनकतायाः कण्ठादावेव सत्त्वेन प्रयत्ने तदभावात् । अवच्छेदकत्वसम्बन्धावच्छिन्नाया जनकतायाः प्रयत्ने सत्त्वेऽपि तादात्म्यसम्बन्धावच्छिन्नाया जनकताया-आत्मनि सत्त्वेन तत्राभावात् । तादृश्या जनकतायाः कण्ठादावेव सत्त्वा'दिति **वदन्ति** । न च यो जनकः स एव तादात्म्येन तदवच्छेदक इति उदात्ताकारादिनिष्ठतादृशजन्यतानिरूपितायास्तादृशतादात्म्यसम्बन्धावच्छिन्नजनकतायाः कण्ठोर्ध्वभागत्वादावेव सत्त्वेन तद्वतां तुल्यत्वाभावादनुदात्तोदात्ताकारादेः सावर्ण्यानापत्तिरिति चेन्न, प्रयत्नसाहचर्याद्यावदास्यभवस्यापि वर्णविभाजकधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत एव तौल्ये सावर्ण्यस्वीकारेण—कत्वादेरेव तथात्वादुदात्तत्वादीनाञ्च वर्णविभाजकधर्मत्वाभावादित्यपि वदन्ति । परे तु 'स्वजनकस्थानजन्यत्व' 'स्वाजनकस्थानाजन्यत्वो'भयसम्बन्धविशिष्टसम्बन्धप्रतियोगित्वसम्बन्धेन वर्णविशिष्टो वर्णः सवर्ण इत्यर्थः । वै० 'स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्व' 'स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्व' 'स्ववृत्तिसंसर्गतावच्छेदकरूपावच्छिन्नत्व' 'स्वभिन्नत्वै'-तच्चतुष्टयसम्बन्धेन । सम्बन्धश्च—स्वघटितवाक्यप्रतिपाद्यतया तात्पर्यविषयीभूतो ग्राह्यः, तात्पर्यज्ञानन्तूद्बोधकान्तरादेवेति नान्योन्याश्रयः । एतच्चतुष्टयसम्बन्धेन सम्बन्धविशिष्टसम्बन्धविशिष्टत्वमेव च परस्परपदार्थः । द्वितीयसम्बन्धवैशिष्ट्यञ्च—प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन । स्वघटितवाक्यप्रतिपाद्यस्य सम्बन्धस्य ग्रहणात्सम्बन्धान्तरविशिष्टसम्बन्धान्तरवत्त्वेपि—यत्र चैत्रो मैत्रं ताडयति न मैत्रश्चैत्रं ताडयति, तत्र 'परस्परं ताडयती'ति न प्रयोगः । न च यत्र स्वं नत्वाचैत्रः कालान्तरे पुनः स्वं नमतिं तत्र तथाप्रयोगापत्तिः । कालान्तरीणस्य स्वप्रतियोगिकसम्बन्धस्यापि भेदादिति वाच्यं, 'स्वीयानुयोगितासामानाधिकरण्य' 'स्वीयप्रतियोगितावैयधिकरण्यो'भयसम्बन्धेन स्वविशिष्टप्रतियोगित्वं प्रथमः सम्बन्धः, 'स्वीयप्रतियोगितासामानाधिकरण्य' 'स्वीयोनुयोगितावैयधिकरण्यो'भयसम्बन्धेन स्वविशिष्टानुयोगिताकत्वं द्वितीयः सम्बन्धो विवक्ष्यते इत्यत्रैव 'स्वभिन्नत्व'सम्बन्धदानस्यामि-

भेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः । वस्तुतः 'सादृश्यं न भेदघटित'मिति भाष्यसम्मतमिति न कश्चिद्दोषः । स्पष्टञ्चेदं भाष्ये । तदाह—**ताल्वादीति** । शिक्षायाङ्कण्ठादीनाङ्कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपेणैवाऽऽस्यशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोद्धव्यम् । यस्यैतद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः । 'यजुष्येकेषा'मिति निर्देशाद्यावदास्यभवतुल्यत्वं ग्राह्यम् । अत एवैचोः

---

### ॐ अभिनव-चन्द्रिका ॐ

त्यव्यवहितप्राक्कालिकत्वरूपप्रकर्षो गृह्यते इति भावः । **यावदास्यभवतुल्यत्वमिति** । तत्त्वञ्च 'स्वजनकयावत्स्थानप्रयत्नजन्यत्व' 'स्वाजनकस्थानप्रयत्नाजन्यत्वै'तदुभयसम्बन्धेन स्वविशिष्टत्वम् । अत्राद्यसम्बन्धोपादानेन एकारसावर्ण्यमिकारे न । यावत्पदस्यापीदमेव फलम् । द्वितीयसम्बन्धोपादानेन इकारसावर्ण्यमेकारे न । अथवा स्वविशिष्टः सवर्णसञ्ज्ञको भवतीति सूत्रार्थः । वै० 'स्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नव्याप्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नव्यापकतावत्त्व'

### ॐ चिदस्थिमाला ॐ

अस्योपपत्तिरन्यतो बोध्या । इदमपि पररीत्येति ध्वनयन्सिद्धान्तमाह—**वस्तुत इति** । यथा चैतत्तथा मञ्जूषायां स्पष्टम् । **एतेनात्र** द्वौ तुल्यशब्दौ तन्त्रेण निर्दिष्टौ, तत्रैकः सदृशवाची, अपरो लक्षणयैकत्वसङ्ख्यावाची, तत्र चास्ये सादृश्यायोगात्प्रयत्ने चैकत्वायोगात्सम्भवानुरोधेनैकस्थानं सदृशप्रयत्नं च सवर्णमित्यर्थ इत्यपास्तम् । उक्तरीत्या निर्वाहात्तन्त्रलक्षणयोराश्रयणे मानाभावाच्च, तदेतद्ध्वनयन्नाह—**स्पष्टमिति** । प्रागुक्तं सर्वमित्यर्थः । **तदाहेति** । प्रागुक्तं सर्वमाहेत्यर्थः । कार्यगतभेदारोपं विनाऽपि निर्वाह इति ध्वनयन्नाह—**शिक्षायामिति** । **कण्ठादीनामिति** । एतेनास्यशब्दस्य तद्धितान्तत्वस्फुटीकरणाय–ताल्वादीत्युक्तं मूले, न तु कण्ठादीति, तथा सति 'कण्ठ आदिरवयवो यस्ये'तिव्युत्पत्त्या प्राथमकल्पिकास्यप्रतीतिरपि स्यात् । **एतेन** वर्णसमाम्नाये, मातृकान्यासादौ चाकारस्य प्राथम्येन, स्थानप्रयत्नविवेके कण्ठस्थानस्यैव प्रथमत उक्तत्वेन च 'कण्ठादी'त्येव वक्तुमुचितमित्यपास्तम् । **एवेनावान्तर**धर्मव्यावृत्तिः । एतेन 'वर्णानां स्वरूपतो भेदाय कण्ठादिष्वप्यवान्तरस्थानभेदस्यावश्यकत्वेन भेदघटिततुल्यत्वस्य न क्षति'रित्यपास्तम् । **भवेति** । तद्भवार्थकास्यशब्देनेत्यर्थः । **आद्ययेति** । तथाचोपस्थितत्वेन ततोऽन्तरङ्गत्वादेतद्भेदारोपेणैव निर्वाहे न कार्यगतभेदारोप इति भावः । ननु तुल्यशब्दस्य ससम्बन्धिकत्वात् 'यस्य येने'तिलाभेऽपि 'यस्यैतद्द्वयं येन वर्णेन तुल्य'मिति मूलमयुक्तमेवात आह—**यस्यैतदिति** ।

ननु किं यावत्स्थानसाम्यमिष्टमुत यत्किञ्चित्स्थानसाम्यमत आह—**यजुष्येकेषामिति** । अन्यथा यणम-

### ॐ ज्योत्स्ना ॐ

यत्किञ्चित्स्थानतौल्यपक्षं दूषयितुमाह—**इति निर्देशादिति** ।

### ॐ सदाशिवभट्टीयम् ॐ

'रूढियोगे'ति न्यायेन यत्नसामान्यग्रहणमेव स्यादत आह—**जनकेति** । तथाच प्रयत्ने जनकत्वग्रहे यत्नसामान्यस्य जन्यप्राग्वर्तित्वरूपजनकत्वबाधात् योगार्थो एवाश्रीयन्ते, 'भूमौ पङ्कजमुत्पन्न'मिति यथेत्याहुः ।

**निर्देश इति** । इदञ्च विवृतत्वव्याप्यानां सञ्ज्ञाऽनुपयुक्तत्वमिति सत्तरीत्योक्तम् । 'सप्त प्रयत्ना' इति भाष्यरीत्याप्याह—**अत एवैचोरिति** । एकारैकारयोर्मिथ इत्यर्थः ।

---

### ॐ वरवर्णिनी ॐ

प्रायेणोक्तदोषाभावात् । द्वितीयसम्बन्धवैशिष्ट्यनियामिके प्रतियोगित्वानुयोगित्वे–प्रतियोगिभूतसम्बन्धप्रतियोगिताव्यधिकरणीभूते आद्ये इत्याहुः । विस्तरस्त्वस्मत्कृतशब्देन्दुशेखराभिनवराजलक्ष्म्यामनुसन्धेयः।

सावर्ण्यमाशङ्क्य–'नैतौ तुल्यस्थानौ' इति भाष्ये समाहितम्। अत एव वल्योर्न सावर्ण्यम्। तेन 'तद्वानासा'मित्यादौ 'तोर्लि'ति न। अत 'एव प्रयत्नशब्देन यत्नमात्रग्रहण'मिति पक्षे यत्किञ्चित्प्रयत्नभेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेत्यर्थो 'झरो झरि सवर्णे' इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये। तेन स्थानांशे 'यावत्स्थानसाम्ये' इत्येव स्वारसिकोऽर्थ इति प्रतीयते।

न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थं, प्रयत्नस्याप्यास्यभवत्वादिति वाच्यं, ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः, तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्य-

❀ अभिनव-चन्द्रिका ❀

'स्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नव्यापकतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नव्याप्यतावत्त्वे' न-दुभयसम्बन्धेन। अत्र प्रथमसम्बन्धदानेन इकारसावर्ण्यमेकारे न, स्वमकारोऽवच्छेदकतासम्बन्धेन स्वाधिकरणं कण्ठः। तद्वृत्तिर्योत्यन्ताभावः—न त्ववच्छेदकतासम्बन्धेनाकारात्यन्ताभावः, किन्त्वीकारस्यात्यन्ताभावः, तत्प्रतियोगित्वन्तत्र नत्वाकारे इति प्रथमसम्बन्धसङ्गतिः। एवमवच्छेदकतासम्बन्धेन अकाराभाववान्–ताल्वादिरवच्छेदकतासम्बन्धेन तदवृत्तित्वमकारे इति द्वितीयपदसम्बन्धसङ्गतिः। अथवा स्वविशिष्टः सवर्णसञ्ज्ञको भवति, वै०'स्वनिष्ठजन्यतानिरूपितजनकताविशिष्टजनकतानिरूपितजन्यतावत्त्वसम्बन्धेन, जनकतावैशिष्ट्यञ्च—'स्वव्यापकत्व' 'स्वव्याप्यत्वो' भयसम्बन्धेन। अत्र प्रथमसम्बन्धदानेन एकारसावर्ण्यमिकारे न, द्वितीयसम्बन्धदानेन इकार-

❀ चिदस्थिमाला ❀

न्यत्र सावकाशं बाधित्वा सवर्णदीर्घः स्यात्। **नैताविति**। ताल्वादिस्थानस्याधिक्यात्, तथा च यावत्स्थानैक्यपरं तद्भाष्यमिति तात्पर्यम्। अत एव=अत एव च। एवमग्रेऽपि। इष्टापत्तिं निराचष्टे—**तेनेति**। तयोरसावर्ण्येनेत्यर्थः। उक्तार्थे गमकं ध्वनयन्नाह—**तद्वानासामिति**। आदिना 'तद्वस्त्वि'त्यादिपरिग्रहः। **इति नेति**। इतिपरसवर्णो नेत्यर्थः। मात्रं कार्त्स्न्ये। **भेदे**–सति। **सवर्णेति**। अन्यथा तादृशसावर्ण्यस्य स्वस्य स्वस्मिन्नेव सत्त्वेन यथासङ्ख्येन निर्वाहे व्यावर्त्त्याऽधिकसङ्ग्रहयोरभावेन तदसङ्गतिः स्पष्टैव। **साधित इति**। यदि स्थानांशे तथा–( यत्किञ्चित्साम्यं )–इष्टं स्यात्तर्हि प्रयत्नांशेऽपि ( यत्किञ्चित्साम्यं तथैव ) प्राप्तमेवेति ज्ञापकेन तत्साधनप्रयासवैफल्यमेवेति भावस्तदाह—**तेनेति**। **साम्ये इति**। 'सवर्णसञ्ज्ञे'ति शेषः। **यावदिति**। **एतेनान्यतरसाम्येऽपि** तदापत्तेश्चिन्त्यमिदमिति **कैयटाद्युक्तमपास्तम्**। **व्यर्थमिति**। तद्धितान्ताऽऽस्यपदोपादानादेव सर्वलाभादिति भावः। नन्वेवमपि तद्वैयर्थ्यमपरिहृतमेव, अत आह—

❀ ज्योत्स्ना ❀

**सवर्णग्रहणेन ज्ञापकेनेति**। झरो झरीत्येव वक्तव्ये यथासङ्ख्यनिरासार्थं तत्र सवर्णग्रहणं—'शिण्ढी' त्यत्र डकारपरतो लोपार्थं—यावत्प्रयत्नसाम्ये सवर्णसञ्ज्ञायां डकारढकारयोस्तद्भेदात्सावर्ण्याभावादनर्थकं स्यादिति भावः।

**साधितो भाष्ये इति**। यद्यपि भाष्ये 'सवर्णसंज्ञावचनमनर्थकं स्या'दित्येवोक्तं 'तथापि सवर्णसंज्ञया

❀ सदाशिवभट्टीयम् ❀

**कण्ठादीनामेवेति**। वायुसंयोगादीनामेवेति तु न, तद्वानासां वाग्रादय ? ['वाऽन्यस्य'] इत्यादिनिर्देशात्। **अन्येतु**–प्रयत्नसमभिव्याहारादास्यभवमपि करणमेव, तत्त्वञ्च कण्ठादेरेव न वायुसंयोगस्य, व्यापारवत्त्वरूपकरणत्वाभावात्। कण्ठादेस्तु संयोग एव स इत्याहुः। **एतेन** वायुसंयोगव्युदासाय ज्ञापकान्तरस्य तवाप्यावश्य-

❀ विषमपदविवृतिः ❀

**तद्वानासामिति**। अनेन यावत्स्थानसाम्य एव सवर्णसञ्ज्ञेत्यत्रायं निर्देश एव ज्ञापक इति सूचितं भवति। **ह्रस्वदीर्घयोरिति**। इदमुपलक्षणम्–उदात्तानुदात्तयोरित्यपि बोध्यम्। ननु 'मात्राकालिकत्वा-

त्वात् । तस्मादास्यभवानाङ्कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किं ? तर्षा । 'झरो झरी'ति लोपो मा भूत् । प्रयत्नेति किं ? वाक्श्चोतति । प्रेति किं ? शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात् ।

कस्य किं स्थानमित्याशङ्कायामाह—**अकुहेति** । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽपि तथा, अकारादीनामुच्चारणे

---

**ॐ अभिनव-चन्द्रिका ॐ**

- सावर्ण्यमेकारे न । **कण्ठव्यापार आवश्यक इति** । चिन्त्यमिदं—कण्ठव्यापारावश्यकत्वेपि तत्स्थानकत्वे प्रमाणाभावात्, अन्यथा सर्ववर्णोच्चारणे उरोमूर्धादिव्यापारावश्यकत्वेन सर्वेषामुरस्यमूर्धन्यत्वापत्तेः, इकारैकारयोरपि सावर्ण्यापत्तेश्च । त्वदुक्तरीत्या इकारस्यापि कण्ठस्थानिकत्वेन यावदास्यभवतुल्यत्वस्य

**ॐ चिदस्थिमाला ॐ**

**तस्मादिति** । एतेन वायुसंयोगव्यवच्छेदः, एतेन—'प्रत्येकव्यापारनिरासार्थमुभयोरुपादानं, तेनो'भय-साम्ये सत्येव सञ्ज्ञा नान्यतरसाम्येऽपी'ति **कैयटकौस्तुभो**क्तं, तत्खण्डनाय-'ज्ञापकेनापि प्रत्येकव्यापारनिरास इतीदमयुक्त'मित्यन्योक्तं, 'विनिगमकाभावादुभयसाम्ये एवैतत्प्रवृत्तौ प्रयत्नग्रहणं चिन्त्यम्, अन्यथा सत्यपि तस्मिन्नन्यतरसाम्ये प्रवृत्त्यापत्तिः, द्वन्द्वोपात्तसाहित्यविवक्षायां तु एकपदोपात्तत्वेनास्मन्मते सुतरां तद्विवक्षायाः सुवचत्वा'दिति **रत्नाकरो**क्तं चापास्तम् । **लोप इति** । इदमग्रेऽपि बोध्यं । तत्रैव=वाक्श्चोततीत्यत्रैव । 'दोष'इति पाठः । तस्य च—'माभू'दिति शेषः । दोषा'दिति पाठे—'प्रेति कि'मित्यग्रे—'इति तु ने'ति शेषो बोध्यः । **आवश्यक इति** । तथा च सर्वेषां तत्त्वे वाच्ये विशिष्यैवमुक्तिरयुक्तेति भावः । स्पष्टत्वायाह—**चकारेति** । एतेनेकारत्यागे बीजं चिन्त्यमित्यपास्तम् । अपिना कण्ठव्यापारः ।

**ॐ ज्योत्स्ना ॐ**

वचन'मिति समासाभिप्रायेण प्रदीपकृतैवं व्याख्यातमिति भावः । **कण्ठादीनामेवेति** । प्रयत्नभिन्नास्यभवत्वव्याप्यजातिविशेषवद्यावत्तौल्यग्रहणज्ञापनद्वारा कण्ठादीनामेव ग्रहणमिति बोधनायेत्यर्थः । एवं त्वास्यभवत्वव्याप्ययावद्वायुसंयोगतौल्यमेव कुतो न गृह्यते विनिगमनाविरहादिति चिन्त्यमेतत् । प्रत्युत यत्किञ्चिदास्यभवतौल्यविवक्षाज्ञापकं शक्यते वक्तुमिति **कौस्तुभोक्तो** यत्किञ्चित्स्थानतौल्यपक्ष एव ज्यायान् । नचैवं ङमामपि परस्परं सावर्ण्यप्रसङ्गः, तत्तत्कण्ठादिस्थानमारभ्य नासिकापर्यन्तगामिनीनां तत्तदन्तरालरूपाणां रेखाणां तत्तत्स्थानत्वेन स्थानैक्याभावात् । न चैवं कङयोरपि तदनापत्तिः, तत्तद्रेखारम्भककण्ठादीनां तत्तद्रेखाभेदाभावात्, 'अनुस्वारस्य ययि परसवर्ण' इति वक्तव्ये ययीति व्यापकप्रत्याहारनिर्देशाज्ज्ञापकात्, स्पष्टञ्चेदमनुनासिकसंज्ञासूत्रे भाष्यकैयटयोः । एतेनेकारोकारलकारादी-

**ॐ सदाशिवभट्टीयम् ॐ**

कत्वे तदक्तत्वैव तेन तदभिन्नानां यावतामास्यभवानां ग्रहणबोधनेनेष्टसिद्धौ प्रयत्नग्रहणं व्यर्थमेवेत्यपास्तम् ।

**तत्रैव दोषादिति** । **केचित्तु**—आस्यशब्देनास्यभवत्वव्याप्यजातिविशेषवद्यावत्तौल्यं विवक्षितमिति साहचर्याद्यत्नशब्देनापि यत्नत्वव्याप्यजातिविशेषवद्यावत्तौल्यविवक्षणेनादोषात्स्पष्टार्थं **प्रो**पादानमित्याहुः ।

नन्वनेनापूर्वकादीनां कण्ठस्थानत्वे तुल्यस्थानत्वात् सवर्णपदशक्तिग्रहे कुशब्दस्य तद्रा-

**ॐ विषमपदविवृतिः ॐ**

दिरूपह्रस्वत्वादिकं'त्विति वक्ष्यमाणग्रन्थेनास्य विरोधः, तत्र ह्रस्वत्वादिजनकयत्नस्यास्य बाह्यत्वोक्तेरिति चेन्न, तज्जनकयत्नानां बाह्यत्वेपि तत्तत्स्थानस्थितवायुसंयोगानामास्यान्तर्गतत्वाविरोधात् । **तथापीति** । नन्विकारैकारयोः सावर्ण्यं दुर्वारम्, इकारस्यापि कण्ठताल्वत्वादिति चेन्न । विवृततरत्वादिप्रयत्नभेदेन सावर्ण्यस्य वारयितुं शक्यत्वात् । अत एवैदैतोर्न सावर्ण्यम् । किञ्च वस्तुतः कण्ठस्थानत्वं न साव-

तु नेति भावः । कचयोस्तु न सावर्ण्यं, यावत्स्थानसाम्याभावात् , भिन्नस्थानकथन-वैयर्थ्यापत्तेश्च । अत्र कण्ठपदं कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरं, तेन 'कण्ठया-वहौ' 'जिह्वामूले तु कुः प्रोक्त' इति शिक्षया न विरोधः । 'जिह्वामूलीयपदस्य च—वर्ण-विशेषे रूढिरिति न व्यवहारातिप्रसङ्गः । अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्तद्वर्णोत्पत्तेः प्राक्तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्थानत्वनिर्णये-

❀ अभिनव-चन्द्रिका ❀

सत्त्वात् । यद्देशावच्छेदेन वाय्वाघातेन वर्णो जायते तत्तस्य स्थानमिति स्वोक्तिविरोधाच्च । **जिह्वामूल-स्थानोभयपरमिति** । अन्यतरेति वक्तुं युक्तम् । **रूढिरिति** । योगरूढिरित्यर्थः ।

❀ चिदस्थिमाला ❀

तथा=आवश्यकः । **नेतीति** । तथा चाकारादीनां तदेव स्थानमन्येषान्तु स्थानद्वयमिति भावः । एवं सति प्राप्तातिप्रसङ्गं वारयति—**कचयोरिति** । ननु 'जिह्वामूले तु कुः प्रोक्त' इति शिक्षोक्तेरत्र कुग्रहणमयुक्तं, न च वृत्त्यादिप्रामाण्येन शिक्षास्थजिह्वामूलपदस्य लक्षणया स्वसमीपदेशकण्ठबोधकत्वमत एवातिप्रसङ्गवारणाय तस्य रूढित्वकल्पना नेति लाघवमिति वाच्यं, मानाभावात् । न चात्र कण्ठपदं लक्षणया तत्परमेवेति वाच्यम् , अहयोः कण्ठ्यत्वस्य तत्रोक्तत्वेन तद्विरोधापत्तेरत आह—**अत्रेति** । लक्षणेतिभावः । 'समीपे'-त्यनेन तत्र मूलं प्रदर्शितम् । **शिक्षयेति**—समूहपरम् , एवं सत्यतिप्रसङ्गं निराचष्टे—**जिह्वेति** । **चस्त्वर्थे** । 'रूढिर्योगमपहरती'ति न्यायोऽत्रानुसन्धेयः । इदं द्रढयति—**अत एवेति** । तस्य तत्र रूढेरेवे-त्यर्थः । अन्यथा कोरपि तत्त्वात्–( जिह्वामूलीयत्वात् ) तस्य च, वर्णसमाम्नाये सत्त्वात्तदर्थं ( ≍क≍पादि- ) –शब्दान्तरेण गणने कार्ये सामान्यतस्तेन ( जिह्वामूलीय– ) शब्देन तत्र ( अयोगवाहेषु जिह्वामूलीय– ) गणनासङ्गतिः स्पष्टैव । नन्वनेनापूर्वकादीनां कण्ठस्थानत्वे बोधिते तुल्यस्थानत्वात्सवर्णपदशक्तिग्रहे कुशब्दस्य तद्ग्राहकत्वमणुदित्सूत्रेण बोधनीयमिति कथमत्र वाक्ये कुशब्देन पञ्चानामुपस्थितिरत आह—**तत्तदिति** । **निर्णये इति** । तथाच तस्य प्राग्जातत्वेनाक्षतिरिति भावः । नन्वेवमेतदुक्तिर्व्यर्थाऽत आह–

❀ ज्योत्स्ना ❀

नामेकारौकारादिभिः सावर्ण्यापत्तिर्दत्तोत्तरा, कण्ठताल्वाद्यन्तरालरूपाणां कण्ठताल्वादिपदवाच्यानाम-प्यतिरिक्तस्थानत्वस्य सुवचत्वात् । 'यजुष्येकेषां' 'तद्वानासा'मित्यादिनिर्देशानामत्रैव प्रमाणत्वात् । एवञ्च ऐचोः परस्परं सवर्णसंज्ञा कस्मान्नेतिप्रश्नेन तौ तुल्यस्थानाविति यथाश्रुतभाष्यसङ्गतिः । एतेन 'ए ऐ तु कण्ठताल्व्यौ' 'दन्तोष्ठ्यो वः स्मृतो बुधै'रित्यादि शिक्षापाठो व्याख्यातः । अन्तरालोपलक्षणवाचिपद-समुदायातिरिक्तस्यान्तरालवाचित्वाभावात्तत एव प्रत्ययविधानात् । अनुनासिकस्थानान्तरालवाची तु नासिकाशब्द एवेति तेषां नासिकाव्यवहार इति विशेषः । 'दन्तोष्ठ्य'इत्यादिपाठस्तु प्रायः पुस्तकेषु न दृष्टः । न चैवमष्टौ स्थानानि इति शिक्षोक्तसङ्ख्यानियमभङ्गः, तावत्सङ्ख्यातिरिक्तानामुपलक्षकत्वाभावे तात्पर्यात्, बृहच्छेखरे साम्यस्यैवाङ्गीकाराच्चेतिदिक् । 'यकारादीनामुच्चारणे तु तथा ने'ति पाठः । यत्किञ्चित्स्थानतौल्यपक्षे कचयोः सावर्ण्याभावार्थमाह—**भिन्नस्थानकथनेति** । 'सूत्रे आस्यग्रहण-वैयर्थ्यापत्तेश्चे'त्यपि द्रष्टव्यम् । जनकस्थाने जनकत्वारोपमूलकरणत्वस्य स्थानत्वव्याप्यतया करणत्वाभ्युप-गमेन स्थानत्वाभावोक्तिं दूषयति—**कण्ठादीनामपीति** । अनुनासिकाकारादीनां नासिकास्थान-

❀ सदाशिवभट्टीयम् ❀

हकत्वमणुदित्सूत्रेण बोधनीयमिति कथमत्र वाक्ये कुशब्देन पञ्चानामुपस्थितिस्तत्राह=**तत्तदिति** ।

❀ विषमपदविवृतिः ❀

र्थ्योपयुक्तम्, किन्तु शिक्षायां तथोक्तमेव तदेतदभिप्रेत्याह—**भिन्नस्थानकथनेति** ।

ऽप्यकुहेत्यादिकथनं साधारणधर्मबोधनायानुवादकं, न त्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम्। विसर्जनीयपदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम्। अत एव 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षया न विरोधः। **दन्ता इति**। दन्तसंयुक्तदेशा इत्यर्थः। अतो भग्नदन्तस्याप्युच्चारणं भवत्येव। 'उश्च परच ध्मायेते अनेन तत्र भव' इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह—**उपूपेति**। रूढत्वाच्च न व्यवहारातिप्रसङ्गः। **नासिका चेति**। चेन स्वस्ववर्गानुकूलं तात्वादि गृह्यते। अत एवैषां प्रातिशाख्ये 'नासिकायां भव' इत्यर्थकनासिक्यशब्देन व्यवहारः।

यत्तु—'अनुस्वारयमानां च नासिका स्थानमिष्यते।'

—इति शिक्षोक्तेरेषां नासिका करणम्। किञ्च—स्थानत्वे कङ्योः सावर्ण्यानापत्तिः, यावत्स्थानैक्याभावात्। यत्किञ्चित्स्थानैक्येन तत्त्वे तु—ञमामपि परस्परं सावर्ण्यापत्तिरिति, तन्न। कण्ठादीनामपि करणत्वस्यैव 'अस्यन्त्यनेन वर्णान्' इति भाष्यात्प्रतीतेः। स्थानत्वव्यवहारस्तु—वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वाऽऽरोपेण।

❀ अभिनव-चन्द्रिका ❀

**वायुसंयोगाधार इति**। 'एतेन यद्यपि सर्ववर्णोच्चारण'इत्यादि ग्रन्थोऽसङ्गत इति बोध्यम्। **अग्रहणबोधनादिति**। परे तु निरनुनासिकाकारोपलम्भेन आकारादीनां यथानासिकास्थानं तथा ङकारादीनामपि निरनुनासिक्यकगकाद्युपलम्भेन नासिकास्थानम्। न च ङकारादिरेव निरनुनासिको गकार इत्यत्र प्रमाणाभाव इति वाच्यम्,'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण'इति भाष्यस्यै-

❀ चिदस्थिमाला ❀

—**प्यकुहेत्यादीति**। **साधारणेति**। अकारादीनां कण्ठस्थानत्वादीति भावः। **न त्विति**—उक्तदोषात्। ननु विसर्जनीयमात्रस्य कण्ठ्यत्वे शिक्षाविरोधोऽत आह—विसर्जेति। **साहचर्यात्**=उपक्रान्ताकारसमभिव्याहारात्। यथाश्रुतन्तु न युक्तमित्यन्यत्र स्पष्टम्। एवञ्चेकाराद्युत्तरस्य तस्य तत्तत्स्थानं बोध्यम्। यथाश्रुतेऽनुपपत्त्या लक्षणयाह—**दन्तेति**। तत्सम्बद्धाः प्रदेशा इत्यर्थः। तद्भावमाह—**अत इति**। ध्मायेते=उच्चार्येते। नन्वेवमुपयोरप्यनेन शब्देन व्यवहारः स्यादत आह—**रूढेति**। ननु शिक्षायामुक्तत्वान्नासिकायाः स्थानत्वं निर्मूलमत आह—**अत एवैषामिति**। ञादीनामित्यर्थः। 'भवे'त्यर्थकेति पाठः। 'भव'इत्यर्थकेति पाठान्तरम्, अनुकरणत्वमुभयथापि। तथाच व्यवहारान्यथानुपपत्त्या तत्त्वं समूलमिति भावः। **खण्डनकृदायुक्तिं** खण्डयति—**यत्त्विति**। **स्थानत्वे इति**। 'नासिकाया'इत्यादिः। तथाच 'त्वङ्करोषी'त्यादौ परसवर्णङाद्यनापत्तिरिति भावः। तत्त्वे तु=सावर्ण्याङ्गीकारे तु। **पत्तिरिति**। तथा च 'त्वन्नयसी'त्यादौ ङाद्यापत्तिरपीति भावः। **भाष्यात्**=करणव्युत्पत्तिप्रदर्शकात्। नन्वेवं केषाञ्चित्स्थानत्वेन, केषाञ्चित्करणत्वेन व्यवहारे बीजाभावोऽत आह—**स्थानत्वेति**। 'कण्ठादीना'मित्यादिः। वर्णानां नित्यत्वादाह-**वर्णाभीति**। ताल्वादौ=कण्ठादौ। आरोपबीजमाह—**वर्णजनकेति**। वर्णाभिव्यक्तिजनकेत्यर्थः।

❀ ज्योत्स्ना ❀

त्वानुक्त्या न तस्याः स्थानत्वमित्याशङ्कानिरासाय हेतुं तत्राह—**वर्णाभिव्यक्तीत्यादि**।

❀ सदाशिवभट्टीयम् ❀

साहचर्यात्=उपक्रान्ताकारसमभिव्याहारात्। यथाश्रुतं तु न युक्तमिति स्पष्टमेव। ध्मायेते=उच्चार्येते। अत एव=नासिकायाः स्थानत्वादेव। **वर्णजनकेति**। तदभिव्यक्तिजनकेत्यर्थः। **संयोगाधारेति**। वर्णाभिव्य-

❀ विषमपदविवृतिः ❀

**एषामिति**। ञमङणनानामित्यर्थः। ञमङणनानामपि नासिकास्थानत्वे शिक्षायामेषां तत्स्थानानुक्त्या

तत्तत्स्थानजिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ, तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः । वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च—कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको यत्नो—गुणशब्देनोच्यते । अकारादिनिष्ठानुनासिक्यस्य 'भेदकत्वाद्गुणस्ये' त्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या । एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाकारादीनां नासिकास्थानं नोक्तं मूले । 'एकोऽयमात्मोदकन्नाम तस्य गुणभेदादन्यत्वं भवति, अन्यदिदं शीतमन्यदिदमुष्ण'-

❀ चिदस्थिमाला ❀

**जिह्वाग्रादीत्यदिना**—मध्यादिपरिग्रहः । **वर्णोत्पत्त्येति** । व्यापारवदसाधारणकारणत्वेन मुख्यं तत्र तत्त्वमिति भावः । अन्यत्र गौणं तत्त्वमित्याह—**तत्सम्बन्धेति** । नन्वेवं बाह्यस्य न सङ्ग्रहोऽत आह—**वर्णाभीति** । बाह्यत्वं निरूपयति—**कण्ठेति** । आदिना—सङ्कोचादिपरिग्रहः, सामानाधिकरण्येनान्वयः । यत्तु "एवं विभागे नासिकायाः स्थानत्वलाभेऽपि गुणत्वस्यालाभाद्वृद्धिसूत्रस्थभाष्यविरोधापत्तिः, तस्मात्सा न स्थानं, न च स्थानमपि तत्रत्यगुणपदेन विवक्षितम्, अपसिद्धान्तात्, 'नैतौ तुल्यस्थाना' वित्यादिभाष्यविरोधादनिष्टप्रसङ्गात्, अनुनासिकसञ्ज्ञाविधेर्नैष्फल्याच्च । एतेन 'यत्किञ्चित्स्थानसाम्ये सति यावत्प्रयत्नसाम्यं सावर्ण्यहेतुरितीहैव सूत्रे भाष्ये स्पष्ट'मिति **कौस्तुभोक्तं** निरस्त'मिति—"**रत्नाकरस्तं** खण्डयति—**अकारादीति** । 'भेदकत्वा'दिति भाष्यग्रन्थः । त्पन्नेषु=अकारादिषु । **तद्रूपेति** । आनुनासिक्यरूपेत्यर्थः, अत एव नासिकामनु=पश्चाद्गत इति योगसङ्गतिः, एवञ्च पटुत्वादिवत्स धर्मो गुणरूप एवेति तत्त्वं, न तूक्तरीत्येति न भाष्यविरोध इति भावः । यत्तु **खण्डनकृ**दादिभि'र्व्यापारमात्रेण तस्याः स्थानत्वेऽनुनासिकाकारादीनामपि तत्त्वप्रसङ्ग इति तदनुक्त्या न्यूनतादोषो मूले' इति, तत्खण्डयति—**एवञ्चेति** । उक्तरीत्योक्तव्यवहारोपपत्तौ चेत्यर्थः । **गुणेति** । तथा च गुणिजनकत्वाभाव इति भावः । अत आह—**अनुनासिकेति** । तद्व्यवहारस्य तत्रैव तथा प्राक्प्रतिपादितत्वादिति भावः । नन्वेवं भाष्योपपादने नियामकाभावेन तदुक्तरीतिरेव कुतो नात आह—**एकोऽयमिति** । **दृष्टान्तेति** । 'भेदकत्वे'त्यादिः । अत्र जात्यात्मना नैकत्वमभिमतं, तथा सति तस्या व्यक्तिभेदादेव भेदोपपत्तेर्गुणकृतभेदपर्यन्तधावनाऽसङ्ग-

❀ सदाशिवभट्टीयम् ❀

त्यवच्छेदकत्वावच्छिन्नताद्दृशसंयोगाधारतायास्ताल्वादावेव सत्वात्र संयोगस्योभयनिष्ठत्वेपि वर्णजनकवायौ

❀ विषमपदविवृतिः ❀

न्यूनता स्यादिति भावः । **जिह्वाग्रादाविति** । अत्र तद्व्यवहारः प्रातिशाख्ये 'य्वोर्लघुप्रयत्नतर'इत्यत्र च बोध्यः । तत्र हि लघुतरः प्रयत्नो जिह्वाग्रादिर्यस्योच्चारण इति विग्रहे जिह्वाग्रादीनां प्रयत्नशब्देन व्यवहारात् । **लघुतरत्वञ्च**—शिथिलत्वं । कव्योः सावर्ण्ये 'आनुनासिक्यमेषामधिको गुण' इति भाष्येण—नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य प्रयत्नशब्देनाग्रहणबोधनरूपा युक्तिर्वक्ष्यमाणा गुणशब्दस्य सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपार्थबोधकत्वे गुणशब्देनापि सूचिता भवति इत्यभिप्रेत्याह—**वर्णाभिव्यक्त्यनन्तर इति** । ननु गुणशब्दस्योक्तार्थकत्वे वृद्धिरादैजितिसूत्रस्थस्य 'भेदकत्वाद्गुणस्ये'त्यस्यापि तथैवार्थः स्यात्, तथा चै'कोयमात्मोदकं नाम, तस्य गुणभेदादन्यत्वं भवति, अन्यदिदमुष्णमन्यदिदं शीत'मिति दृष्टान्तभाष्यमसङ्गतं स्यात्, तेन तस्य धर्मार्थकत्वलाभादित्याशङ्क्य गुणपदस्यानेकार्थत्वेन समाधानमभिसन्धायाह—**अकारादिनिष्ठेति** । तद्धुदात्तत्वादीनां गुणत्व-

ति दृष्टान्तपरभाष्येण तथैव प्रतीतेः । आत्माऽत्र द्रव्यम् । उदात्तत्वादीनां गुणत्वव्यव-
रस्तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोद्धव्यम् । ङादीनान्तु
ुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनि-
नाविरहेणोभयोः स्थानत्वम् । 'अनुस्वारयमानाञ्चे'ति शिक्षायां चेन ङादीनामपि सङ्ग्रह
ते युक्तम । अत एव 'कण्ठ्योऽकार'इत्याद्युक्त्वा 'नासिक्यान्नासिक्ययमानुस्वारानिति
ानानी'त्युक्तं प्रातिशाख्ये । 'नासिक्या–ङञणनमा' इति तद्व्याख्यातारः । कङ्योः
वर्ण्यन्तु भवत्येव । 'आस्ये तुल्यदेशप्रयत्नम्' इति वार्त्तिके—किमास्योपादाने प्रयोजन-
ति प्रश्ने—'प्रयत्नविशेषणमास्योपादान'मित्युक्त्वा—तद्व्यावर्त्यत्वेन ब्राह्यप्रयत्नान्प्रदर्श्य—

---

❀ चिद्स्थिमाला ❀

ापत्तेः, किन्तु व्यक्तिकृतं, तदाह—**आत्मात्रेऽति** । नन्वेवमपि उदात्तत्वादीनां गुणत्वव्यवहारो
भ्यादिकृतोऽसङ्गतः, तेषां वर्णोत्पत्तिप्रागभावित्वात् , आस्यान्तर्गतत्वाच्च, अत आह—**उदेति । रूपेति**।
द्रूपसादृश्यमात्रेणेत्यर्थः, 'धर्मरूपं सादृश्य'मिति मतेनेदम्, 'अतिरिक्तं सादृश्य'मिति मते तु—तद्रूपणी-
न=तत्कृतेन तेन ( सादृश्येन ) इति बोध्यम्, एतदर्थमेव पूर्वं मध्यमविशेषणद्वयम्, अन्यथा स्वरूप-
दायाऽऽद्यस्य, बाह्यत्वायाऽन्त्यस्यावश्यकत्वेऽपि मध्यमतदाधिक्यं स्पष्टमेवेति भावः । नन्वकारादि-
ज्यता ङादीनां कुतो नात आह—**ङादीनान्त्विति** । नन्वेवं शिक्षाविरोधोऽत आह—**अनु-
स्वारेति । युक्तत्वमेव प्रतिपादयति—**अत एवेति** । ङादीनां तत्स्थानत्वादेवेत्यर्थः । आदिना—'तालव्य
कार'इत्यादिपरिग्रहः । अन्यथा—'इति स्थानानी'त्यसङ्गतिः स्पष्टैव । ननु तत्र तत्पदेनान्य एवाभिमतोऽत
ह—**नासिक्या इति** । नन्वेवं यावत्स्थानैक्याभावेन कङ्योः सावर्ण्यं न स्यादिति आह—**कङ्यो-
ति । आस्य इति** । 'सूत्रे तस्याऽतद्धितान्तत्वेन व्यधिकरणत्रिपदबहुव्रीहौ प्राप्तातिप्रसङ्गवारणाय कृते'-
त्यादिः । **प्रश्ने इति** । देशविशेषणत्वे फलाभावादिति भावः । **प्रयत्नेति** । सौत्रत्वाद्द्वन्द्वसाधुत्वमिति

❀ ज्योत्स्ना ❀

**तथैव प्रतीतेरिति** । पार्ष्ठिकोत्पन्नगुणत्वस्यैव प्रतीतेरित्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

ानत्वव्यवहारातिप्रसङ्गः । **रूपसादृश्येनेति** । एतदर्थमेव पूर्वं बाह्यलक्षणे मध्यमविशेषणद्वयम् ।
न्यथा स्वरूपभेदायाद्यस्य बाह्यत्वायान्त्यस्यावश्यकत्वेपि तद्वैफल्यं स्पष्टमेव । अत एव=ङादीनां स्थानत्वादेव,

❀ विषमपदविवृतिः ❀

व्यवहारानुपपत्तिः, स्वाश्रयवर्णजनकस्थानविशेषावच्छिन्नवायुसंयोगातिरिक्तस्य तज्जननेऽनुपयोगा-
त्यत आह—**उदात्तत्वादीनामिति** । नचोदात्तत्वांशे उक्तदृष्टान्तभाष्य एव स्वारसिकत्वेन
दात्तत्वांशेन स्वारसिकमिति वाच्यं, तस्यानुनासिक्यांशे कथंचियोजनीयत्वात् । उदात्तत्वादीनां
वर्ण्यानुपयुक्तत्वं तूदात्तादिजनकयत्नस्येत्यादिना वक्ष्यमाणं द्रष्टव्यम्। नन्वेवं ङादीनामपि स्वरूपोत्पत्तौ
ण्ठाद्यवच्छिन्नवायुसंयोगस्यैव हेतुत्वं, तद्गतानुनासिक्यजनने तु नासावच्छिन्नवायुसंयोगस्य हेतुत्वमिति
ङ्योरपि तुल्यस्थानत्वं नासिकाया आस्यान्तर्गतत्वेपि सुवचमिति तस्यास्तद्बहिर्भावोपपादनप्रयासो
र्थ इत्याशङ्क्याह–**ङादीनामिति** । नन्वेवं शिक्षायां ङादीनां नासिकास्थानानुक्त्या न्यूनतेत्याश-
ाह—**अनुस्वारेति**। एतेन प्रथमदूषणं निराकृतं वेदितव्यम्। द्वितीयं निराचष्टे—**कङ्योस्त्विति** ।

'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण' इति भाष्येण तस्य बाह्यप्रयत्नत्वोक्त्याऽत्र सूत्रे नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहणबोधनात्। 'नासिका आस्यबाह्ये'ति वदतां मते तद्ग्रहणाभावाच्च।

अत एव बाह्यप्रयत्नानुपक्रम्य—

"अमोऽनुनासिका न ह्रौ नादिनो ह झषः स्मृताः।
ईषन्नादा यणश्चैव श्वासिनस्तु खफादयः॥
ईषच्छ्वासाँश्चरो विद्यात्—" इत्युक्तं शिक्षायाम्।

---

**ॐ चिदस्थिमाला ॐ**

भावः, तस्य=आनुनासिक्यस्य, प्रक्रमाद्गुणशब्दोक्तेश्चेति भावः। **तत्रत्येति**। नासिकास्थेत्यर्थः। 'नाऽग्रहणस्ये'ति व्यस्तः पाठः। समस्ते पाठे उभयोरप्येकदेशान्वयो गुरुकुलादिवच्छेषषष्ठ्या समासश्च। बोधने,—भाष्यस्य कर्तृत्वेन, उक्तेः करणत्वेनान्वयः। अन्यथा तत्र स्थाने तत्कथनवैयर्थ्यापत्तिः, आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव हि तत्र प्रक्रान्तम्, अत एव च 'गुण' इत्युक्तम्, अधिकमुद्योतादौ स्पष्टम्। 'नासिकाऽऽस्यान्तर्गते'ति कैयटादिसम्मतपक्षेणेदम्, अत एवाह—**नासिकेति**। भाष्यादिसम्मतत्वादयमेव पक्षो युक्त इत्युद्योतादौ स्पष्टम्, अत एव बहुवचनोक्तिः। तस्य प्रयत्नत्वं द्रढयति—**अत एवेति**। तस्य तत्त्वादेवेत्यर्थः, अन्यथा तदुपक्रमेण तत्समभिव्याहारेण च 'अमोऽनुनासिका' इत्युक्त्यसङ्गतिः स्पष्टैव। **न ह्राविति**। भिन्ने पदे, 'हे'ति पादपूरणे। तत्र

**ॐ सदाशिवभट्टीयम् ॐ**

अन्यथा स्थानिनीत्यस्यासङ्गतिः स्पष्टैव। **बाह्यप्रयत्नत्वोक्त्येति**। अन्यथा—आस्यग्रहणव्यावर्त्यानां सावर्ण्याऽनुपयुक्तानां प्रदर्शनप्रक्रमेण तत्कथनवैयर्थ्यापत्तिः। **अग्रहणबोधनेति**। नासिकाया आस्यपदेन ग्रहणे तु तत्रत्यप्रयत्नस्यास्यपदव्यावर्त्यत्वोक्तिरसङ्गता स्यात्, तत्रत्यप्रयत्नस्याग्रहस्तु अधिको गुण इत्युक्त्या गुणानामभेदकत्वेनेति वक्ष्यमाणरीत्या बोध्यः। इदं च नासिकाऽऽस्यान्तर्गतेतिमते मणिमन्त्रादिन्यायेन तद्ग्रहे प्रतिबन्धकत्वं भाष्यस्योक्तम्। वस्तुतः सा तद्बाह्यैवेति निरूपितं विस्तरादुद्योते, तत एव बोध्यं—तदाह—**वदतामिति**। बहुवचनेनास्यैव भाष्यसम्मतत्वं ध्वनयति।

**ॐ विषमपदविवृतिः ॐ**

**अत एव बाह्येति**। नासिकाया आस्यशब्देन तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहणादेवेत्यर्थः।

**अन्ये तु**—'मुखनासिकावचन' इतिसूत्रे—"मुखनासिकमावचनमस्य—मुखनासिकावचनः, किमिदमावचनम्, ? ईषद्वचनमावचनं, किञ्चिन्मुखवचनं किञ्चिन्नासिकावचन"मिति भाष्येण—'भागस्य मुखेनोच्चारणाद्भागस्य नासिकये'तिकैयटग्रन्थेन च—ङादीनां भागतो नासिकास्थानत्वं, भागतो मुखस्थानत्वमिति पक्षोऽवतिष्ठते। "मुखोपसहिता वा नासिका वचनमस्य सोयं मुखनासिकावचन" इति भाष्येण,—'मुखस्य नासिकायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्येति दर्शयतीति' कैयटेन च—मुखनासिकयोरन्तरालं स्थानान्तरमेवेत्यपरः पक्षः। "मुखद्वितीया वा नासिका वचनमस्ये"तिभाष्येण—'यदा तु सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते' इति कैयटेन च सर्वभागावच्छेदेन मुखेन नासिकया चोत्पत्तिरिति तृतीयः पक्षः। त्रिष्वपि पक्षेषु नासिका नास्यान्तर्गतेति स्पष्टमेव। किञ्च—"मुखग्रहणं किमर्थं ? नासिकावचनोऽनुनासिक इत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत, अथ नासिकाग्रहणं किमर्थं ? मुखवचनोऽनुनासिक इत्युच्यमाने कचटतपानामेव

नादेति-संवारघोषयोरुपलक्षणम्। श्वासेति-विवाराघोषयोः। न ह्यावित्युपलक्षणम्-
: सर्वस्य प्लुतऌकारस्य च अनुनासिकस्यादर्शनादित्यलम्।

एदैतोरित्यादौ लोकानुभवसिद्धार्थानुवादके तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं
यम्। तथा च पाणिनीयशिक्षा—

ॐ अभिनव-चन्द्रिका ॐ

ामाणत्वादित्याहुः। ऐचः सर्वस्येति। अनुपलम्भादिति भावः। वस्तुतस्तु रैनौशब्देन नहः समासे
भ्यां ण्यन्ताभ्यां क्विपि रैश्छिन्धि नौश्छिन्धीत्यादौ नश्छव्यीतिरुत्वे अनुनासिके च तदुपलम्भेन

ॐ चिदस्थिमाला ॐ

तां निराचष्टे-नादेतीत्यादि। घोषयोः-तयोरपि। एवमग्रेऽपि। अन्विति। 'तस्ये'त्यादिः, अणोऽप्रेत्य-
नेत्यादिवत्तत्र विध्यभावात्, एवं चोभयत्र द्वादशत्वोक्तिः सम्भावनाभिप्राया, न तु सत्ताऽभिप्रा-
बोध्यम्। 'अनुस्वारोत्तमा अनुनासिका' इति तैत्तरीयप्रातिशाख्यं, 'यमानुस्वारनासिक्यानां नासिके
नासिकाश्चोत्तमाः' इति कातीयप्रातिशाख्यं, वर्गोत्तमाः=ङञणनमा अनुनासिका भवन्ति, चशब्दा-
त्वस्थानाद्यपरित्यागद्वारेण नासिकास्थानं द्वितीयमेषामित्यर्थः' इति तद्भाष्यञ्चात्रानुकूलम्। 'नासिके'
स्य-द्वे रन्ध्रे स्थानमित्यर्थः। एतेन"—अचां यणामिव ङमामपि नासिकाव्यापाराऽसहकृतं कण्ठादिकमेव
नं, न तु स्थानद्वयं, पाणिनिशिक्षायामनुक्तत्वात्, 'अमोऽनुनासिका' इति बाह्यप्रयत्नप्रकरणे पाठाच्च,
ा तृतीया'इत्यादिभाष्योक्त्या कातीयादिवचनद्वयस्य तत्तच्छाखामात्रविषयत्वाच्चेति"—रत्नाकरोक्तमपा-
्। एवं तैत्तरीयप्रातिशाख्ये—'नासिक्या नासिकास्थाना मुखनासिक्या वे'त्युक्तत्वात्तत्र मतद्वयं
यं, नासिक्या नम्-यमानुस्वारास्तत्र भवाः, उद्देश्यसमर्पकमिदम्। 'मुखनासिक्या'इत्यस्य यथोपपत्तिस्तथा
प्रभायाम्। मुखस्यस्थानत्वादत्रानुक्तिः, तदाह—अलमिति।

लोकेति। प्लुतानामपि तत्र तत्स्थानत्वानुभवात्। अत्र मानान्तरमप्याह—तथा चेति।

ॐ ज्योत्स्ना ॐ

ऐचः सर्वस्येति। 'एच'इति त्वपपाठः। 'हसे हसने' 'टुओश्वी'त्यादावैकारौकारयोरनुनासिकत्व-

ॐ सदाशिवभट्टीयम् ॐ

त्वस्थानेति। प्रयत्नातपृथक्स्थानस्यास्यपदेन कथनेत्यर्थः। एतेन भिन्नस्थानकथनस्यान्तरतम्य-
ोक्षोपयोगित्वादननुभवसिद्धानुवादरूपत्वाच्च कलादिदोषज्ञानोपयोगित्वाच्चेदमसदित्यपास्तम्। ऐचः
र्वस्येति। एच इति त्वपपाठः, हसे इत्यादावनुनासिकत्वप्रतिज्ञानात्। यत्तु 'परिनिष्ठिते प्रयोगे' इति
 कृत्वा हसे इत्यादौ प्रक्रियायान्तत्सत्वेपि न क्षतिरित्याहुरत एवादर्शनादित्युक्तन्तत्वसत्वादिति,—तन्न
यक्, 'हसे हसने' इत्यादीनां अपरिनिष्ठितत्वस्य वक्तुमशक्यत्वेन भुक्तेपीति न्यायावतारात्। हस्वलका-
ापि गम्लादावेव सम्भवेन प्लुतेत्युत्तरग्रन्थासामञ्जस्याच्च। अत्र पाठे सर्वस्येत्युक्तिस्तु प्रयोगभेदाभिप्रायेण।

लकारस्य चेति। चेन दीर्घप्लुतऋकारयोः संग्रहः। स्पष्टञ्चेदं स्थानेऽन्तरतमसूत्र उद्योते। सेयं सिद्धस्य
रेतच्छ्रद्धालुभिरादर्त्तव्या, तत्त्वन्तु ग्रन्थकृद्वेद। अनुवादेति। एवं चात्र तत्प्रवृत्तावपि अनुभवेन स्थानैक्य-
ायासमकालयोरपि सञ्ज्ञा स्यादेवेति वैफल्यादप्रवृत्तिः। अपूर्वबोधकत्वे त्वस्य सङ्कोचे तत्राप्रवृत्तिरेव

ॐ विषमपदविवृतिः ॐ

ज्येते"ति भाष्येण नासिका नास्यान्तर्गतेति स्पष्टमेवोक्तं भवति, नासिकायास्तदन्तर्भूतत्वे नासि-
स्थानानां यमानुस्वाराणामपि मुखवचनत्वेन कचटतपानामेवेत्यवधारणासङ्गतेः। 'प्रासादवासि'
येन मुखग्रहणखण्डनपरभाष्येण च नासिका नास्यान्तर्गता, मुखनासिकावचनमिति सूत्रमपि
सेकार्यं आस्यबहिर्भावे समञ्जसम्। तथाच—सानुनासिकाकारादीनां चोभयावच्छिन्नवायुसंयो-

"कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
ए ऐ तु कण्ठ्यतालव्यावो औ कण्ठोष्ठजौ स्मृतौ ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च ॥
हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥"—इति ।

यत्तु—'दन्तोष्ठादि समुदितं स्थान'मिति, तन्न । शिक्षायां 'दन्त्योष्ठ्य'-

ॐ चिदस्थिमाला ॐ

'लसा' इति पाठः । ननु उरसः स्थानत्वे उक्तेऽपि तद्विषयो नोक्तोऽत आह—हकारमिति । 'पूर्वोक्तै-रसंयुतं तं कण्ठ्यमाहु'रिति द्वितीयवाक्यार्थः । एतेन 'अकुहे'त्यत्रापि हकारस्तदसंयुत एव विवक्षितः, अन्यथा एतद्विरोधापत्तेरिति सूचितम् । ननु मूले एकादश स्थानान्युक्तानि, तस्य चाशयः—'समुदितमति-

ॐ सदाशिवभट्टीयम् ॐ

फलं स्यादिति भावः । एतेन 'वृद्धिर्यस्या' 'अकुहे'त्यादावनुवादेपि तत्प्रवृत्त्यङ्गीकाराच्चिन्त्यमित्यपास्तम् ।

ॐ विषमपदविवृतिः ॐ

गेनैव स्वरूपोत्पत्तिः । आनुनासिक्यं तूभयेषां धर्मः, इयांस्तु विशेषः—अकारादीनामानुनासिक्या-दयो न नियताः, ङकारादीनान्तु नियता इति । अनुस्वारयमानां चेति शिक्षायास्तेषां नासिकैव स्थानमि-त्यर्थः । गुणशब्दस्तु धर्मपर एव, तथैव लोकप्रसिद्धेः । सावर्ण्यानुपयुक्तत्वं तु न गुणशब्दार्थः, मानाभावात्, 'एकोयमात्मोदकं नाम तस्य गुणभेदादन्यत्वं भवत्यन्यदिदमुष्ण'मिति भाष्यस्वारस्येन च गुणशब्दो धर्मपर इति लभ्यते । आन्तरतम्यपरीक्षोपयुक्तश्चेति विशेषणवैयर्थ्यञ्च । नच पृथक्-पृथक् द्वयप्रवृत्तिनिमित्तत्वेपि तद्विवक्षितुं शक्यम्, त्वन्मते आभ्यन्तरप्रयत्नानामपि गुणत्वापत्तेः, स्थानार्थगुणप्रमाणकृतमित्यभियुक्तोक्तौ प्रमाणस्य पृथक्करणं ब्राह्मणवसिष्ठन्यायेन । यद्वा पाणिनीय-शिक्षायां यस्य यस्य वर्णस्य यद्यत्स्थानमुक्तं तत्तदेवास्यशब्देन गृह्यते, पञ्चमानां च नासिकास्थानानु-क्त्या न तस्यास्यशब्देन ग्रहणम् । 'अनुस्वारयमानाञ्चे'ति—चशब्दोऽवधारणे, स च भिन्नक्रमः, नासिकैव स्थानमित्यर्थः । तथा च यस्य वर्णस्य पाणिनीयशिक्षायामुक्तं स्थानं वर्णान्तरस्यापि तत्रोक्तं तद्द्वयं परस्परं सवर्णसञ्ज्ञं भवतीति तुल्यास्यसूत्रार्थः । वलयोस्तु न सावर्ण्यम् । शिक्षोक्तकण्ठादि-स्थानपर्याप्तस्थानताया एव सवर्णसञ्ज्ञोपयोगित्वात् । नचैवं कङयोः सावर्ण्यानापत्तिः, शिक्षान्तरे ङकारस्य नासिकास्थानत्वोक्त्या कण्ठपर्याप्तस्थानत्वाभावादिति वाच्यम्, पाणिनीयशिक्षोक्ततत्तत्स्थानकत्वे सति तदुक्ततदितरस्थानराहित्यस्यैव तत्पर्याप्तस्थानकत्वशब्दार्थत्वेन विवक्षितत्वात् । शिक्षान्तरोक्तस्य च प्रायेणैतच्छास्त्रीयकार्यनिर्वाहानुपयुक्तत्वात् । अत एवाइउण्सूत्रे'ऽकारस्य विवृतोपदेशः कर्तव्य'इति वार्तिकभाष्ये सङ्गच्छेते, अन्यथा शिक्षान्तरे अकारस्य विवृततरोक्त्या तदसङ्गतिः स्पष्टैव । यावत्साम्यं तु न तुल्यशब्दार्थः, 'तेजसा सूर्यतुल्यो ब्राह्मण' इत्यादौ यत्किञ्चित्साम्येपि तुल्यशब्दप्रयोगदर्शनात् । 'छ्वे'तिसूत्रे 'उदोष्ठ्ये'तिसूत्रे च पर्याप्तिर्न विवक्षितेति अदुह्वहि वुवूर्षतीत्यादौ न दोष इत्याहुः ।

समुदितमिति । तदेव स्थानत्वपर्याप्त्यधिकरणमित्यर्थः, तथा च न वलयोः सावर्ण्यमित्यर्थः ।

'कण्ठ्यतालव्या'वित्यादौ तत्र भव इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः । 'दन्तोष्ठ्य'-मित्यादि त्वसङ्गतमेव, स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छरीरावयवसमुदायस्य शरीराव-यवत्वाभावात् । एतेन—'दन्तोष्ठरूपमतिरिक्तं स्थान'मित्यपास्तम् । 'अष्टौ स्थानानी'ति-प्रतिज्ञाविरोधाच्चेति दिक् ।

सूत्रे प्रशब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह—**प्रयत्नो द्विधेति** । क्वचिद्यत्न इत्येव पाठः । **चतुर्धेति** । **यत्तु**—

'स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् ।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥'

—इति शिक्षावाक्याद्विवृततरविवृततमयोः प्रतीत्या, नाज्झलाविति सूत्रभाष्यादूष्मणा-मीषद्विवृतत्वस्य च प्रतीत्या चतुर्धेत्यसङ्गतमिति, तन्न । नाज्झलाविति सूत्रेण विवृतत्व-

ॐ अभिनव-चन्द्रिका ॐ

चिन्त्यमेतत् । **स्वाङ्गसमुदायस्येति** । स्वाङ्गसमुदायवाचकस्येत्यर्थः । **स्वाङ्गत्वाभावादिति** । स्वाङ्गवाचकत्वपर्यायस्याभाववदित्यर्थः । **शरीरावयवसमुदायस्येति** । तद्वाचकस्येत्यर्थः । **शरी-**

ॐ चिदस्थिमाला ॐ

रिक्तं स्थानमिति, एवञ्च शिक्षायां कथमष्टावित्युक्तिरत आह—**यस्विति** । **विहितेति** । 'शरीरावे'त्यनेन । इदानीं तत्राभवत्वादिति भावः । अर्वाचीनप्रयोगमुक्तार्थसाधकत्वेन प्राचोक्तं खण्डयति—**दन्तो-ष्ठ्यमिति** । तत्प्रयोगसाधनाय कौस्तुभावुक्तं खण्डयति—**एतेनेति** । दन्त्योष्ठ्यमित्यादितत्प्रयोगा-साधनेनेत्यर्थः । एवञ्च शिक्षाया उपपत्तावपि मूलमयुक्तमेव, ततो न्यूनाधिक्यसत्त्वादिति बोध्यम्, तदाह—**दिगिति** । ननु प्रयत्नपदस्याभ्यन्तरपरत्वस्य प्रागुक्तत्वेन तस्य वक्ष्यमाणभेदासम्भवेन मूलमयुक्त-मत आह—**सूत्र इति** । प्रयत्नयोः=तच्छब्दयोः । **प्रतीत्या चेति**—सचः पाठः । **सूत्रेणेति** । अन्यथा तदानर्थक्यं स्पष्टमेव, एवञ्च सूत्रमतेनेदम् । नचैवं संवृतोक्तिरधिका, 'अअ'इति शास्त्रविधेयत्वेन

ॐ ज्योत्स्ना ॐ

प्रतिज्ञानात् । **अतिरिक्तं स्थानमिति** । नैतदन्तरालस्यातिरिक्तस्थानत्वे दूषणमपि तु दन्तौष्ठसमुदा-यस्य विशिष्टस्य शुद्धातिरिक्तत्वे । पूर्वन्तु विशिष्टस्य शुद्धानतिरिक्तत्वमुक्तमिति ततोऽस्य भेदः ।

ॐ सदाशिवभट्टीयम् ॐ

'तेभ्योपि विवृतावेङा'वित्यादिवाक्यान्तरेण एचां विवृततरत्वाद्युक्तेरन्याचामीषद्विवृतत्वसमानाधिकरणेष-

ॐ विषमपदविवृतिः ॐ

**प्रत्येकमिति** । अत एव 'आग्नेयं चतुर्धा करोती'त्यस्याग्नीषोमीयेऽप्रवृत्त्यो'र्भौ वा ऽविशेषा'दिति कात्यायनसूत्रस्याप्रामाण्यं जैमिनिनोक्तं, वस्तुतो देवतार्थकतद्धितस्यैन्द्राग्न्यादौ चतुर्धाकरणादिवारणाय तथा स्वभावाङ्गीकारेपि इतरतद्धिते तथाऽनङ्गीकारात् । अत एव देवदत्तस्य तद्भार्यायाश्चापत्ये दैव-दत्तिरित्याद्यप्रयोगः, प्रतिज्ञाविरोधाच्चेत्युक्तरीत्याऽदुद्वहि वुवूर्षतीत्याद्यसिद्धिरिति दूषणं द्रष्टव्यम् ।

**नाज्झलाविति सूत्रेणेति** । वस्तुतस्तूष्मणामीषद्विवृतत्वेपीषत्स्पृष्टऌकारलकारयोः सावर्ण्ये होतॄकार इत्यत्र तोॢ्ँति परसवर्णापत्त्या तयोस्तदभावाय नाज्झलाविति सूत्रस्यावश्यकत्वात् । अधिकं 'नाज्झला'विति सूत्रेऽस्मत्कृतव्याख्यायां **कौस्तुभप्रभायां** बोध्यम् । **स्पर्शेत्यादेः** क्रमेण स्पृष्टेष-

व्याख्यानामेषां सवर्णसञ्ज्ञानुपयुक्तत्वबोधनमित्याशयात् । भाष्यमते तु सन्तु सप्त प्रयत्नाः । एवञ्चैदैतोश्च न सावर्ण्यप्रसक्तिः, प्रयत्नभेदादिति बोद्धव्यम् । नाज्झलाविति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत्तस्यैव बोधकम् । अत एव भाष्ये तन्न वक्तव्यमिति नोक्तम् । स्पृष्टादीनामाभ्यन्तरत्वन्त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गत-तत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्व-र्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोद्धव्यम् । तत्र बहूनामेकस्थानत्वेऽपि कस्य चिदुच्चारणे सम्यक्स्पर्शः कस्य चिदीषदिति शिक्षाकारोक्तिमनुभवञ्चानुसृत्य विवेक्तव्यम् । 'प्रयतन' मिति नपुंसके भावे ल्युट् । 'प्रयत्न'मित्यपपाठः, नङन्तस्य पुंस्त्वात् । तथा च शिक्षा– 'स्वराणामूष्मणाञ्चे'त्याद्यनन्तरम्—

"अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ताः—"इति ॥

अचोऽस्पृष्टाः–स्पर्शाभावरूपविवृतत्ववन्तः । 'यणस्त्वीष'दित्यनेन–तेषामीषत्स्पृष्टत्व-

❀ अभिनव-चन्द्रिका ❀

रावयवत्वाभावादिति । तद्वाचकत्वपर्याप्त्यभावादित्यर्थः । अपपाठ इति । चिन्त्यमिदं,

❀ चिदस्थिमाला ❀

तदुक्तेः । तदेतत्, आशयपदसूचितामरुचिञ्च ध्वनयन्नाह–**भाष्येति** । एवञ्च=सप्तप्रयत्नाङ्गीकारे च । एवञ्च तदर्थं ज्ञापकानुसरणं व्यर्थमिति भावः । अत्र पक्षे 'नाज्झला'विति सूत्रं प्रत्याख्यातमिति भ्रमं निराचष्टे-**नाज्झलावितीति** । तस्यैव=प्रयत्नभेदस्यैव ।

**पर्यन्तरूपेति** । पर्यन्तदेशरूपेत्यर्थः, आदिना उपाग्रादिपरिग्रहः । विकाससङ्कोचरूपकार्यकर-विवारसंवारभेदायाह—**दूरेत्यादि** । अत्र=स्पृष्टादीनाम्मध्ये । **इति**=इत्यादि । **शिक्षेति** । अनुपदमेव स्फुटीभविष्यतीयम् । अत्र सर्वत्र मानमाह—**तथा चेति** । 'पाणिनीये'तिशेषः । **स्पर्शा-भावेति** । तथा च दूरावस्थानलाभः । इत्यनेन=तुशब्दयच्छब्दमात्रघटितेन, पूर्वोत्तरसाहचर्यादिति भावः ।

❀ ज्योत्स्ना ❀

**प्रयत्नमित्यपपाठ इति** । 'जानीया'दिति क्रियाध्याहारस्तु साधारणभवतिक्रियाध्याहाराद्गुरु-रिति मन्यते । **ईषदित्यनेनेति** । विशेषतो विशेष्यानुक्त्या स्पृष्टा इत्यस्यानुवृत्तेरिव स्पृष्टा इत्यस्या-प्यपकर्षादुभयोरपि विशेष्यत्वादिति शेषपूरणमिह बोध्यम् । किन्त्वचोऽस्पृष्टा इति–पूर्ववाक्येनाचां पुनर्विवृतत्वबोधनं किमर्थमिति चिन्त्यं, 'स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृत'मित्यनेनैव तस्य बोधनात् । तस्मादयमत्रार्थः—'तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव चेति'वाक्यान्तरेणैचां विवृततमत्वाभिधानात्ततोऽन्येषां स्वराणां स्पृष्टत्वमीषत्प्राप्तम्—'अचोऽस्पृष्टा'इत्यनेन निषिध्यते, 'यणस्त्वीष'दित्यादि त्वचां विवृतत्वस्येव हलां स्पृष्टत्वस्य नियमप्रदर्शकम्, 'ईष'दित्यत्र स्पृष्टा इत्यस्यापकर्षादितिबोध्यम् ।

❀ सदाशिवभट्टीयम् ❀

त्स्पृष्टत्वधर्मस्य प्रसक्तस्य निषेधमुखेन पूर्ववाक्यविहितविवृतत्वबोधे एव तात्पर्य्यादाह—**रूपविवृतत्वेति** । अपूर्वबोधने हि स्वराणां विवृतमित्यनेन पौनरुक्त्यं स्यादित्याहुः । **यणस्त्विति**—वाक्ये स्पृष्टा इत्यस्य

मीषद्विवृतत्वञ्च बोधितम् । नेम इत्यर्थे । तेन शलामीषद्विवृतत्वं यणपेक्षयाऽधिकविवृतत्वञ्चेति बोद्धयम् । अत्र शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति यणां चवर्गादिभिर्न सावर्ण्यम् । तेनाञ्चित इत्यादौ न यादिः परसवर्णः ।

**विवृतमेवेति** । प्रक्रियादशायां विवृतत्वम्प्रतिज्ञेयमित्यर्थः । तेन दण्डाढकादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण सावर्ण्याभावात्स न स्यादिति भावः । दीर्घाकारस्य विवृततरत्वन्तु पाणिनिशिक्षायामुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् ।

तस्य प्रयोगे संवृतत्वे मानमाह—**अ अ** । प्रयत्नभेदाद्दीर्घाभावः । अत्रोद्देश्ये सव-

ॐ **अभिनव-चन्द्रिका** ॐ

जानीयादित्यध्याहारेण न तस्य पुंस्त्वेपि क्षतिरिति विरहात् ।

ॐ **चिदस्थिमाला** ॐ

शलामीषत्स्पृष्टत्वस्यार्धस्पृष्टत्वस्य चाभावादसङ्गतिं परिहरति—**नेमेति** । **ईषदिति** । अजपेक्षयेति भावः, अत एवाह—**यणपेक्षेति** । **अत्रेति** । तेषां भेदेन कथने सतीत्यर्थः । एवञ्चाऽसावर्ण्येऽस्य हेतुत्वं फलति ।

ननु तस्य संवृतत्वस्य—प्रयोगाच्छिक्षान्तरात्, 'अ अ'इति सूत्रान्तराच्च लाभेऽपि विवृतत्वस्यैवाऽसिध्या कथमवधारणगर्भोक्तिरत आह—**प्रक्रियेति** । सर्वत्रेति भावः । स्पष्टञ्चेदमइउणितिसूत्रभाष्ये । अन्यथा=सर्वत्र तत्प्रतिज्ञाया अभावे । दीर्घेण=आकारेण । ननु 'विवृतकरणाः स्वरास्तेभ्य ए ओ, ताभ्यामप्यै औ, ताभ्यामप्याकारः, संवृतोऽकारः'इत्यन्यशिक्षोक्तेराकारस्य विवृततरत्वलाभेन तस्य विवृतत्वप्रतिज्ञायामपि सावर्ण्याऽसिद्धिस्तदवस्थैवेत्यकारस्य विवृततरत्वं प्रतिज्ञेयमत आह—**दीर्घेति** । अत एव अइउण्सूत्रस्थभाष्यवार्त्तिकादिसङ्गतिः, अन्यथाऽतिप्रसङ्गापत्तिश्च, तदाह—**दिगिति** । तस्य=ह्रस्वाकारस्य । सूत्रे'सुपा'मिति सुपो लुक् । **प्रयत्नेति** । आद्यस्य विवृतत्वात्, द्वितीयस्य संवृतत्वात् । सूत्र-

ॐ **सदाशिवभट्टीयम्** ॐ

सम्बन्धात्तेषामीषद्विवृतत्वं शाब्दस्पर्शाऽपेक्षयेषत्स्पृष्टत्वमार्थसमाजग्रस्तं,तत्सर्वमाह—**इत्यनेनेत्यादिना** । **शलामीषदिति** । ईषत्वमजपेक्षया । **अत्रेति** । तेषां भेदेन कथने सतीत्यर्थः । एवञ्च सावर्ण्येऽस्य हेतुत्वं फलितम् । **अ अ** । **प्रयत्नेति** । प्रयत्नभेदादक्षरसमाम्नायस्थाकारेणाग्रहादच्त्वाभावान्न दीर्घोऽत एव गुणोपि नेति भावः । समासस्तु दीर्घश्चाऽच्च तयोरभाव इति । प्रयत्नभेदस्याद्दीर्घयोरभाव इति भावः । प्रयोज्यत्वं षष्ठ्यर्थः । सिद्धान्तभूतजातिनिर्देशे संवृतावर्णस्याच्त्वे संहिताऽविवक्षया गुणो नेति । दीर्घस्तु अङ्गद्वयविरहान्न । एकसूत्रे संहितानियमे तूद्देश्ये लुगिव सुपां सुलुगिति ङसः सुरेव, तस्य रुत्वयत्वलोपाः, तदसिद्धत्वान्न गुणादि । उत्वन्तु न,अतीति विवृतनिर्देशादिति बोध्यम् ।

ॐ **विषमपदविवृतिः** ॐ

त्स्पृष्टविवृतसंवृतव्याख्यानरूपत्वम् । **ईषद्विवृतत्वञ्चेति** । ईषत्स्पृष्टत्वमित्यर्थः । **यणामिति** । यणामीषत्स्पृष्टत्वे स्पृष्टत्वस्यापि व्यापकधर्मस्य सत्त्वेन यकारस्य चवर्गेण रेफस्य टवर्गेण सावर्ण्यापत्तिः, तथाच स्थानांश इव प्रयत्नांशेपि यावत्साम्यमेव विवक्षितमिति भावः । **अञ्चित इति** । ननु यकारगतानुनासिक्यस्य नासिकास्थानत्वेपि यकारस्य तत्स्थानत्वाभावान्न तस्यानुस्वारेण स्थानत आन्तर्यम्, किन्तु ञकारस्यैवेति स एव प्रवर्तते,अत एव 'भुङ्क्ते इत्यत्र ञकारः परसवर्णो ने'ति विवरणे उक्तमित्यरुचेराह—**आदाविति** । तेन 'यरोऽनुनासिक' इत्यत्र सवर्णग्रहणाकर्षेपि चतुर्मुख इत्यादौ णकारापत्तिर्न । **प्रयत्नभेदादिति** । ननु अनेनैव विवृतस्य संवृतादेशे तस्यासिद्धत्वेनोत्तरोप्यकारो विवृतदीर्घो दुर्वार इति चेन्न, अअ इति पृथङ्निर्देशेनोत्तराकारस्य मूलत एव संवृतत्वकल्पनात् ।

र्णग्रहणं, जातिनिर्देशो वा न, व्याख्यानात् । अधिकारत्वे फलमाह–**त्रिपाद्यामप्राप्त**
अन्यथा 'गोधुङ्भा'नित्यत्र षत्वजश्त्वानुनासिकेषु—भष्भावानापत्तिरिति भावः

### ❀ अभिनव-चन्द्रिका ❀

**व्याख्यानादिति** । 'सुपि चे'त्यादिसूत्रादिभिर्दीर्घविधानरूपव्याख्यानादित्यर्थः, अन्यथा रामाभ्यामित्यादौ–अनेन संवृतादेशे तद्वैयर्थ्यं स्पष्टमेवेति दिक् । **षत्वजश्त्वानुनासिकेष्विति** । प्राप्तेष्विति शेषः । तथा च घत्वे—नित्यत्वाज्जश्त्वं बाधित्वा अनुनासिके—भष्भावो न स्यादिति भावः । यत्तु—'घत्वे पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वे नित्यत्वादनुनासिके भष्भावो न स्या'दिति मूलं लापयन्ति, तन्न, चक्रकापत्तेः, तथाहि—,गोदुह् मदिनि दशायां घत्वे जाते–अपवादत्वाज्जश्त्वं बाधित्वा भष्भावः प्राप्तः, तं बाधित्वा नित्यत्वादनुनासिकः प्राप्तः, तं बाधित्वा पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वं प्राप्तं, तद्बाधित्वा अपवादत्वाद्भष्भावः,

### ❀ चिदस्थिमाला ❀

मतेनाह—**सवर्णेति** । भाष्यमतेनाह—**जातीति** । व्यापकजातीत्यर्थः । तथाचाकारादीनामप्ययमादेशः स्यादिति भावः । **व्याख्यानादिति** । यथोद्देशपक्षेऽस्याऽसिद्धत्वेन तदप्रवृत्तेः, कार्यकाले तु तपरनिर्देशा-देकशेषनिर्देशाद्वा सिद्धेरित्यर्थः ।

अतिदेशविधित्वे फलस्य मनोरथादिसिद्धेः स्पष्टत्वादाह—**अधीति** । अन्यथा=नत्वानङ्गीकारे, तत्व-मात्राङ्गीकारे । यत्त्वेवं सति प्रशाननड्वानित्यादौ'मोनो धातो'रित्यस्य, 'संयोगान्तस्य लोप' इत्यस्य च सिद्धत्वेन नलोपापत्तिः, नत्व-नुम्विध्योः सम्बुद्धौ चारितार्थ्या'दिति **दण्डी**, तन्न, 'नह्येकमुदाहरण'मिति-न्यायेन सामान्यशास्त्रवैयर्थ्यापत्त्या तत्रेष्टसिद्धेरत आह—**गोधुङ्भानित्यत्रेति** । इत्यादावित्यर्थः । आदिना 'गुडलिण्मा'नित्यादिसंग्रहः । सिद्धान्ते—'जश्त्वासिद्धत्वाद्घत्वे, जश्त्वानुनासिकयोरसिद्धत्वाद्भष्भावेऽनु-नासिकस्याऽसिद्धत्वाज्जश्त्वेऽनुनासिक'—इतिप्रक्रिया । हस्य झयनन्तर्भूतत्वाद्घादेरसिद्धत्वाच्च षत्वस्याऽ-प्राप्तिरेव, तद्रीत्यैवाह—**घत्वेत्यादि** । अयम्भावः—तादृशविधिपक्षे त्रिपाद्यामप्रवृत्तौ गोदुह्मदित्यादौ षत्वजश्त्वयोरेव प्राप्तावपि षत्वस्य पदान्ते सर्वथा निरवकाशत्वेन जश्त्वबाधकत्वेनादौ घः, ततः परत्वेन भष्भावादन्तरङ्गत्वेनानुनासिकाचादौ जश्त्वं, सर्वथाऽनवकाशत्वादेव स्वस्य पूर्वं प्रवृत्तिरिति बाधस्थले बाधके कृते, सति हेतावुत्सर्गप्रवृत्तेरङ्गीकारात्, ततः शिष्टेऽनुनासिके कृतेऽझषन्तत्वेन भष्भावो न स्यादिति ।

ननु सिद्धान्ते प्रोक्तप्रक्रियायामपि नात्र पक्षे सा वक्तुं शक्या, वैषम्यात्, तथाहि—प्रागुक्तरीत्या जश्त्वा-त्प्राग्घत्वेऽपि—तदुत्तरमनुनासिकतोऽन्तरङ्गजश्त्वतो—'येननाप्राप्ति'न्यायेन–, सर्वथा निरवकाशत्वेन च बाधकत्वेन षत्व-भष्भावयोरेव प्राप्तिः । नचाऽन्त्यस्य तत्त्वेऽपि षत्वस्य 'नसा'विति भविषये, तडित्वानित्यादौ तदविषये चारितार्थ्येन कथं नत्वमिति वाच्यं, तावन्मात्रफलकत्वे'त'इत्येव सिद्धे सामान्यसूत्रस्य 'नह्येक'-मितिन्यायेनाचारितार्थ्यात् । 'तसा'वित्यत्र'द'प्रश्लेषे तु अत्रापि तथा बोध्यम् । एवञ्च तयोर्मध्येऽविरोधेन

### ❀ ज्योत्स्ना ❀

**व्याख्यानादिति** । तेन दीर्घाकारस्य न संवृतोऽकार इति भावः । **षत्वजश्त्वानुना-सिकेष्विति** । जश्त्वं त्वनुनासिकेन परत्वाच्च बाध्यते, 'प्रत्यये भाषाया'—मित्यनेन

### ❀ सदाशिवभट्टीयम् ❀

**पूर्वत्र । घत्वेत्यादि** । अयम्भावः—गोदुह्–मदितिस्थिते पदान्ते षत्वस्य जश्त्वापवादत्वात्ततः प्राग्घ-त्वम् । औपदेशिकझषन्ते भुदादौ युगपत्प्रवृत्त्यान्तरङ्गजश्त्वमपवाद चारितार्थ्यात्—भष्त्वात्पूर्वमिण्ङ्शीना-

### ❀ विषमपदविवृतिः ❀

**घत्वजश्त्वानुनासिकेष्विति** । ननु घत्वे कृते जश्त्वमपवादत्वाद्बाधित्वाऽनुनासिकश्चान्त-

वस्तुतो घत्वे कृते 'झय' इति वत्वापत्तिर्दोषः। न च ततः परत्वाज्जश्त्वानुनासिकत्वयो-

ꙮ अभिनव-चन्द्रिका ꙮ

—इति। तस्मादन्तरङ्गपरिभाषाया अनित्यत्वात्रिपाद्यां तदप्रवृत्तेर्वा चक्कं समाधेयमिति पूर्वोक्तरीतिरेवाश्रयणीयेति दिक्। **परे** तु—'पूर्वत्रासिद्ध'मित्यस्याधिकारत्वाभावेपि न क्षतिः, न च त्रिपाद्यां पूर्वदृष्ट्या परस्यासिद्धत्वं न स्यादिति वाच्यं, 'विप्रतिषेधे पर'मित्यत्र ययोर्बाध्यबाधकभावस्तयोरेव पौर्वापर्यं बाधप्रयोजकं, न तु विप्रतिषेधसूत्रावधिकं पौर्वापर्यं तत्र बाधप्रयोजकं, तद्वदत्रापि असिद्धत्वाश्रयावधिकमेव पूर्वत्वं गृह्यते, न त्वेतत्सूत्रावधिकमित्यदोषात्। न च सपादसप्ताध्याय्यामपि परासिद्धत्वप्रसङ्ग इति वाच्यं, सपादसप्ताध्याय्युत्तरमेतत्सूत्रप्रणयनेन, 'श्त्वुत्वं धुटि सिद्ध'मिति वार्तिककरणेन च त्रैपादिकशास्त्रमेवैतत्परिभाषाप्रवृत्तौ लिङ्गमिति स्वीकारेणादोषात्। अधिकारत्वे प्रतिसूत्रमावृत्तौ गौरवाच्चेति प्राहुः। **वत्वापत्तिरिति**।

ꙮ चिदस्थिमाला ꙮ

परत्वस्य, तुल्यत्वेन नित्यत्वस्य, मिथोऽविषये मिथश्चारितार्थ्येनापवादत्वस्य चाभावेप्यल्पापेक्षत्वेनान्तरङ्गत्वादन्त्यादनुनासिकाच्च पूर्वं वत्वापत्तिः, एवञ्चोक्तरीत्या ततो भष्भाव-जश्त्वा-नुनासिकानां क्रमेण प्रवृत्त्या 'गोधुङ्वा'नित्यादि स्यादिति—स एव दोषो देयः। किञ्च सर्वथा निरवकाशत्वेन बाधोत्तरमुत्सर्गप्रवृत्तावप्यन्यत्र बाध्याप्रवृत्तिरितिसिद्धान्तादत्र वत्वेन,—जश्त्वस्य येननाप्राप्त्या, भष्भावानुनासिकयोरन्तरङ्गत्वेन,—बाधात्—भष्भावादीनामप्राप्त्या वत्वमेव स्यादिति तथैव वाच्यमिति घत्वेत्यादि चिन्त्यमिति चेद्—अत एव'इति भाव'इत्यनेनारुचिसूचकेन तं पृथक्कृत्य सिद्धान्तमुक्तरूपमाह—**वस्तुत इति**। 'घत्वे'इत्युपलक्षणं—ढत्वस्यापि। उक्ताशयानामिज्ञः शङ्कते—**न चेति**। ततः=वत्वात्। 'यक्षानु-

ꙮ ज्योत्स्ना ꙮ

विधीयमानस्य तस्य पदान्तत्वसापेक्षाज्जश्त्वतो बहिरङ्गत्वात्। **भष्भावापत्तिरिति**। न च पदान्ते भष्भावो जश्त्वमपवादत्वाद्बाधत इति वाच्यम्, औपदेशिकझषन्ते भुदित्यादौ चरितार्थः- आनुदेशिकझषन्ते 'गोधुङ्वा'नित्यादौ 'हकारावस्थायां प्रसक्तं जश्त्वं भवन्युत हकारस्य घकारे कृते पश्चात्प्राप्तोऽप्यवादो भवती'ति सन्देहे भष्भावो भवतीत्याशयात्। 'बुधमनोहरा'कारमतमुक्त्वा सिद्धान्तमाह—**वस्तुतो घत्वे कृते इति**। अत्र पक्षे घत्वोत्तरं वत्वात्प्राग्जश्त्वप्रसक्तिस्तु न प्रदर्शिता, परत्वस्येवान्तरङ्गत्वस्यापि त्रिपाद्यां स्वमते सर्वथा प्रवृत्त्यभावसिद्धान्तात्। नन्वधिकारपक्षे त्रिपाद्यां

ꙮ सदाशिवभट्टीयम् ꙮ

मिति न्यायेन धातूपसर्गयोः कार्यस्येव पूर्वोत्पन्ननिमित्तकत्वेनान्तरङ्गत्वाज्जश्त्वम्, अनुनासिकात्वपरनिमित्तकत्वेनान्तरङ्गत्वात्। सिद्धान्ते तु'—जश्त्वाऽनुनासिकत्वयोरसिद्धत्वात्—भष्भावेऽनुनासिकस्यासिद्धत्वाज्जश्त्वेऽनुनासिक—'इति प्रक्रिया। घादेरसिद्धत्वाद्वत्वस्य त्वप्राप्तिरेवेति। **घत्वे कृत इति**। उक्तरीत्या। **वत्वेति**। जश्त्वस्यापरनिमित्तकत्वेनान्तरङ्गत्वेप्यनुनासिकस्य परत्वेपि—वत्वस्य 'ककुद्मान्''तडित्वा'नित्यत्र भत्वात्तदप्राप्तियोग्ये चारितार्थ्येन वेदेऽनुनासिकाभावपक्षे त्वनेनापवादत्वाभावेपि प्रतिपदोक्तत्वादनुनासिकतोऽपरनिमित्तकत्वेनान्तरङ्गत्वाच्चोभाभ्यां पूर्वं वत्वप्रवृत्तिरिति भावः। प्रत्याहारग्रहणसामर्थ्यादित्यन्ये। उक्ताशयमजानानस्तुल्यबलत्वं जानानः शङ्कते—**न चेति**। वत्वचारितार्थ्यन्तूक्तमेव। 'यक्षानुरूपो बलि'रिति न्यायेन समा-

ꙮ विषमपदविवृतिः ꙮ

रङ्गत्वाद्बाधित्वा भष्भावे न कश्चिद्दोष इत्यरुचेराह—**वस्तुत इति**। **परत्वाज्जश्त्वेति**। न च 'झय' इति वत्वं जश्त्वानुनासिकत्वयोरपवादः, तान्ते चरितार्थत्वात्, तत्र 'तसौ मत्वर्थे' इत्यनेन भत्वाज्जश्त्वाय-

१. सिद्धान्तकौमुदीटीका। २. 'प्रत्यये भाषायां नित्य'मिति लोके एव 'गोधुङ्वा'नित्यत्र नित्यमनुनासिको न वेदे इति भावः।

स्तदप्राप्तिरिति वाच्यं, 'विप्रतिषेधे पर'मित्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः। 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'त्यनेन तस्या यथोद्देशत्वस्यैव बोधनात्। अन्यथा परस्यासिद्धत्वेऽपि विप्रतिषेधसूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्या अपि कार्यकालपक्षे तेनाकर्षणापत्तेः। अत एव भाष्ये वत्वमेवापादितम्। अधिकारत्वादेव—'श्चुत्वं धुटि सिद्धं वाच्य'मित्यादि चरितार्थम्। एवञ्च यत्रानुवृत्तिस्तस्यासिद्धत्वं, पूर्वत्वञ्च क्व चित्सपादसप्ताध्याय्याः, क्व चित्सूत्रान्तरसहितायाः। तत्रायमर्थः—'हो ढ' इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः—'हस्य ढो भवति, इदञ्च शास्त्रं पूर्वत्रासिद्ध'मिति। अत एव 'न मु ने'

## ॐ चिदस्थिमाला ॐ

रूप'इति न्यायेन पाक्षिकसिद्धान्तं प्रसङ्गात्प्रतिपादयन्समाधत्ते—**विप्रेति**। नन्वेवमपि कार्यकाले लोप एवात आह— **पूर्वत्रेति**। तस्याः='विप्रे'ति परिभाषायाः। एवं प्रागग्रेऽपि। एवेन—कार्यकालत्वव्यवच्छेदः। इदञ्च'सकृद्गती'तिन्यायपक्षावलम्बिनोक्तं, 'पुनः प्रसङ्गे'ति पक्षे तु प्रागुक्तमेव शरणम्।

ननु कथन्तेन तत्त्वबोधनमत आह—**अन्यथेति**। तेन तदबोधन इत्यर्थः। **सिद्धत्वेपीति**। सिद्धान्तेऽपि पूर्वदृष्ट्येति भावः। **परीति**। परिभाषान्तराणामित्यर्थः। 'इवास्या अपी'ति पाठः। **तेनेति**। परेणेत्यर्थः, तथा च तदसङ्गतिः स्पष्टैव। तथा च सिद्धान्ते मनोरथे लोप एव स्यात्, न उत्वमिति भावः। इदानीं भाष्यासङ्गतिरपीति ध्वनयन्नुक्तहेतोरेव उक्ताशयकमुक्तदोषं द्रढयति—**अत एवेति**। अधिकारत्वे वार्त्तिकसम्मतिमपि ध्वनयन्फलान्तरमाह—**अधीति**। एवं सति स्वगृहे वाक्यार्थस्य न फलमित्याह—**एवञ्चेति**। अधिकारविधित्वे चेत्यर्थः। तस्य तदा पूर्वत्वस्य दुर्वचत्वादाह—**तस्यासिद्धत्वमिति**।

एवं सति प्रथमवाक्यार्थासङ्गतिं परिहरति—**क्व चित्सपादेति**। प्रथमसूत्रेऽनुवृत्ताविदम्। सङ्ग्राहकवाक्ये कस्य चिद्ग्रहणे मानाभावेनोपस्थितत्वाविशेषात्सर्वस्यैव ग्रहणादिति भावः। द्वितीयादावाह—**क्व चित्सूत्रान्तरेति**। तत्र द्वितीयपक्षे योजयति—**तत्रायमिति**। **अस्योपस्थिताविति**। विशिष्टसूत्रस्याधिकारत्वेनेति भावः। अत एवाह—**वाक्यभेदेनेति**। इतिरन्वयसमाप्तौ। उक्तार्थे ज्ञापकमपि सूचयन्नाह—**अत एवेति**। वाक्यभेदेन तथान्वयाङ्गीकारादेवेत्यर्थः। आदिना—'न मुटादेश'इत्यादिवार्त्तिकसङ्ग्रहः।

## ॐ ज्योत्स्ना ॐ

कार्यकालत्वादुपस्थितस्यापि 'विप्रतिषेधे पर'मित्यस्य—प्रयोजनालाभः, पूर्वं प्रत्यसिद्धत्वादतस्तत्र तदप्रवृत्तावपि स्वतन्त्रविधिपक्षे तदप्रवृत्तौ मानाभावः, सफलत्वादत आह—**अत एव भाष्ये इति**। **सूत्रान्तरसहिताया इति**। यथा शत्रन्तस्य भवतेः सौ संयोगान्तलोपे दीर्घनलोपौ संयोगान्तलोपस्यासिद्धत्वान्न भवतः। **वाक्यभेदेनान्वय इति**। विधेयभेदे वाक्यभेदस्योचितत्वादिति भावः। ननु 'पूर्वकार्यं प्रत्यसिद्धत्वविशिष्टो ढो भवती'त्येवं विशिष्टविधेयभेदाभावाद्वाक्यभेदाभावात्पदैकवाक्यतयैवान्वयोऽस्त्वित्यत आह—**अत एवेति**। अयम्भावः—यद्यत्र पदैकवाक्यता स्या-

## ॐ सदाशिवभट्टीयम् ॐ

धत्ते—**विप्रेति**। **अन्यथेति**। कार्यकाले त्रिपाद्यां विप्रतिषेधसूत्रोपस्थितौ विप्रतिषेधरूपनिमित्तनाशक'पूर्वत्रे'त्यनेन विप्रतिषेधसूत्रस्य बाधः? उत असिद्धत्वनिरूपकपूर्वस्यासिद्धिसम्पादनद्वारा विप्रतिषेधसूत्रस्य तत्प्रतिबन्धकत्वमित्यत्र विनिगमनाविरहापत्तिरिति भावः। **एतेनाधिकारत्वे यथोद्देशत्वे विधित्वे** सपादत्रिपाद्योर्विप्रतिषेधाभावाऽनुवादेनेन वार्त्तिकसामञ्जस्येनेदमसङ्गतमित्यपास्तम्। अत एव= तस्या यथोद्देशत्वादेव। **वत्वमेवेति**। वत्वसम्भावनापत्त्युभयापादने त्वरुचिनयाऽपि नेयं स्यादिति भावः। **द्वितमिति**। अन्यथा पक्षद्वयसाधारणत्वेन तदनापत्तिरेवापादिता स्यात्। **यत्रानुवृत्तिरिति**। एवञ्चाधिकारत्वे त्रिपाद्यामपीत्यादिफलितमिति भावः। स्वदेशे वाक्यार्थबोधे फलाभावेपि पदार्थोपस्थितौ प्रतिबन्धकाभावेन तत्सत्वादाह—**सपादेति**।

## ॐ विषमपदविवृतिः ॐ

प्राप्तेः। इदमुपलक्षणमधिकारत्वाभावे गोमानित्यादौ नलोपाद्यापत्तेः। **अत एव नमुने इति**। अत

इत्यादिभिस्तन्निषेध उपपद्यते । 'पूर्वत्रे'ति सङ्ग्राहकमेव । शृङ्गग्राहिकयैव तु तत्तच्छास्त्रं प्रति तस्यासिद्धत्वं प्रतिपाद्यते । तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रा-

※ अभिनव-चन्द्रिका ※

प्रतिपदोक्तत्वादिति भावः । **श्रृङ्गग्राहिकयैवेति** । तत्तच्छास्त्रमनूद्य तद्दृष्ट्याऽसिद्धत्वं बोध्यते इत्यर्थः । वस्तुतस्तु पूर्वत्वेन रूपेण सामान्यलक्षणप्रत्यासत्त्या पूर्वदृष्ट्याऽसिद्धत्वबोधनेनोपपत्तौ चिन्त्यमिदम् । न च 'न मुन' इति निषेधासङ्गतिरिति वाच्यम्, 'अदसोसे'रित्येकवाक्यतापन्नपूर्वत्रा-सिद्धमित्यत्रत्यपूर्वपदार्थे 'आङो ना स्त्रियाम्' 'टाङसि' 'अकस्सवर्णे' एतद्भिन्नत्वेन 'न मुन' इति निषेधेन सङ्कोचेनादोषात् । एवं 'नलोपस्सुप्स्वरे'त्यनेनापि सुप्स्वरादिविधिभिन्नशास्त्रभिन्नत्वेन 'नलोपः प्रातिपदिके' तिसूत्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्रत्यपूर्वपदार्थे सङ्कोच इति न दोषः । एवं 'श्चुत्वं धुटी'तिवार्तिकेन श्चुत्वविधायकैकवाक्यतापन्नपूर्वत्रेत्येतद्धटकपूर्वपदार्थे 'ङस्सि धु'डित्येत—

※ चिद्स्थिमाला ※

**तन्निषेध इति** । शास्त्रासिद्धत्वनिषेध इत्यर्थः । अन्यथा मुत्वविध्यनन्तरमेव 'न ने' इत्येव ब्रूयात्, एतेन तत्रैतदुपस्थितौ पदैकवाक्यतयाऽन्वयेन पूर्वकार्यं प्रत्यसिद्धत्वविशिष्टो ढो भवतीति वाक्यार्थः, विशिष्टविधौ विशेषणविधेरार्थिकत्वान्नमुने इत्यादिभिरसिद्धत्वनिषेधोपपत्तिः, तर्हि स्वविषये तत्तच्छास्त्राणां विशेष्यविधित्व-मात्रं बोध्यते इत्यपास्तम्, उक्तहेतोः, शाब्दनिषेधे—नशाब्दस्यैव निषेध्यत्वौचित्यात्, कार्यासिद्धत्वे तथा सुवचत्वेऽपि सिद्धान्ते तथा दुर्वचत्वाच्च । नन्वेवमपि नेष्टसिद्धिः, सर्वसपादसप्ताध्याय्या एकत्राप्राप्तेः, एवञ्चापवादस्य सर्वत्रासिद्धत्वे उत्सर्गं प्रत्यप्यसिद्धत्वापत्तिः, तदभावेऽन्यत्राप्यसिद्धत्वानापत्तिरत आह—**पूर्वत्रेतीत्यादि** । **तस्येति** । यत्रानुवृत्तिस्तस्येत्यर्थः, यत्तु—**खण्डनकृदादिः** "—असिद्धं=प्रागेव न जात-मित्यर्थः, एवञ्च कार्यासिद्धत्वेऽपि 'मनोरथ'इत्यादावुत्त्वे कार्ये रलोपस्य प्रागेवाऽप्रवृत्तौ रोरुत्वस्याप्रती-घातात्तत्सिद्धिरप्रत्यूहैव, किञ्च सत्यपि शास्त्रे, जातेऽपि च कार्ये, शास्त्रप्रामाण्यात्कार्यमात्रेऽभावारोपेण रोरुत्वेन तथे"ति, तदसत्, सूत्रपाठे कार्यापाठात्, पूर्वशास्त्रविहितत्वादिरूपपूर्वत्वाद्याश्रयणे लक्षणापत्तेश्च,

※ ज्योत्स्ना ※

तुल्यन्यायान्न मुन इत्यनेनापि तथैव स्यादिति—स्याद'दसो से'रित्यत्रासिद्धत्वविशिष्टमुत्वं ने कर्तव्ये न स्यादिति—, न स्यात्—'अमुने'ति । न चैव'मदसोसे'रित्यस्यानन्तरं 'न ने' इत्येव क्रियेतेति 'न मुन' इत्यतेद्विशेषणीभूतस्यासिद्धत्वस्य निषेधकं भविष्यति, न विशिष्टस्य मुत्वस्यापि, सामर्थ्या-दिति वाच्यं, वाक्यभेदेनान्वये सामर्थ्यकल्पनागौरवाभावात् । फलमुखे गौरवं न दोषायेति चेत्, कार्यासिद्धत्वपक्षे विशिष्टविधेः सम्भवेऽपि शास्त्रासिद्धत्वे तदसम्भवात्, शास्त्रासिद्धत्वमपेक्ष्य कार्यासिद्धत्वस्य गुरुभूतत्वात् । सन्निवेशविशेषवाचिना पूर्वत्रेत्यनेन आञ्जस्यतः शास्त्रबोधनाच्छास्त्र-विहितत्वेन कार्यबोधने लक्षणापत्तेर्वक्ष्यमाणन्यायेन मुत्वप्रवृत्त्यनन्तरं तत्कार्यस्यासिद्धत्वेऽपि पररूपाप्रवृत्तौ घिसञ्ज्ञाया अभावेन नाभावाप्रसक्त्या सूत्रवैयर्थ्यापत्तेः । उक्तसामर्थ्येन शास्त्रासि-द्धत्वस्यैव कल्प्यत्वाच्चेति दिक् । **सङ्ग्राहकमेवेति** । उपस्थिततद्विशेषाणां सङ्ग्राहकमित्यर्थः ।

※ सदाशिवभट्टीयम् ※

**आदिभिरिति** । आदिपदबहुवचनोपपत्तिस्तु 'न मुटादेश'इत्यस्य'नलोपे'तिनियमरूपस्य च निषेधस्य सत्वान्निर्वाह्या।

※ विषमपदविवृतिः ※

एव=वाक्यभेदेनान्वयादेव । तन्निषेधः=असिद्धत्वनिषेधः । पदैकवाक्यतयाऽन्वये तु 'अदसोसे'रित्या-दिनाऽसिद्धत्वविशिष्टस्य मुत्वस्य विधानेन 'न मुने' इत्यनेनापि तथाविधस्य मुत्वस्यैव निषेद्धव्यत्वे-

१ प्रातिस्विकरूपेणैतत्प्रत्येतदसिद्धमित्यर्थः । पूर्वत्वेन पूर्वमात्रमनुगमय्येति वार्थः ।

सिद्धत्वं भवत्येव । **असिद्धमिति** । सिद्धं=निष्पन्नं, प्रवृत्तम् । 'सिद्धश्च प्रत्ययविधा'[1] वित्यादौ तथा दर्शनात् । तद्भिन्नम्—असिद्धमनिष्पन्नमप्रवृत्तम् । यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं निवर्त्तकत्वञ्च दृष्टं—, तथापीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोध्यम् । अत्र कार्यासिद्धत्वेऽमू इत्याद्यसिद्धिः । 'अद अ औ' इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि 'देवदत्तहन्तृहत' न्यायेनाकाराभावेन पररूपाद्यनापत्तिः । अतिदेशस्याऽऽरोपरूपत्वान्निरधिष्ठानारोपासम्भ-

❀ अभिनव-चन्द्रिका ❀

द्भिन्नत्वेन च सङ्कोचः, एवमपवादशास्त्रैकवाक्यतापन्नपूर्वत्रेत्येतद्घटकपूर्वपदार्थं उत्सर्गशास्त्रभिन्नत्वेन सङ्कोच इति दिक् । **आहार्यज्ञानस्येति** । बाधज्ञानसमानकालिकेच्छाजन्यज्ञानस्येत्यर्थः । **पररूपाद्यनापत्तिरिति** । नच मुत्वस्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन तत्स्थान्यकाराभावेऽपि अदस्शब्दाद्याकारेण त्यदाद्यत्वनिष्पन्नाकारस्य पररूपं भवत्येवेति कथं पररूपानापत्तिरिति वाच्यम् । इष्टपररूपाद्यनापत्तिरिति तस्यार्थेनादोषात् । वस्तुतस्तु मुत्वशास्त्रेण 'स्वघटितं साधु तदितरत्सर्वमसाधु' इतिबोधनेन अ अ औ इत्यस्यासाधुत्वेन यत्किञ्चिद्बोधितसाधुत्वकत्वस्यैव सर्वशास्त्रप्रवृत्त्या यथाश्रुतमेव साधु । मुत्वस्यासिद्धत्वेपि तदधिकरणकालस्य असिद्धत्वे प्रमाणाभावेन अर्धमात्राधिककालशून्यत्वरूपसंहिताया आद्यकारान्त्याकारयोरभावेन पररूपआद्यभावाच्च । परे तु—कार्यासिद्धत्वस्वीकारेऽपि 'पूर्वत्रासिद्ध'मित्यस्य—त्रैपादिकं शास्त्रं न प्रवृत्तं, तत्कृता स्थानिनिवृत्तिर्न जाता—इति सम्भावनायां

❀ चिदस्थिमाला ❀

दोषान्तरकथनद्वारा तदेतद्ध्वनयन्नाह—**सिद्धमित्यादिना** । यावदर्थमाह—**प्रवृत्तमिति** । एवमग्रेऽपि । 'सिद्ध शब्दार्थे'त्यत्र सिद्धशब्दस्यान्यार्थत्वादाह—**सिद्धश्चेति** । नञः समासघटकत्वेन भेदार्थकत्वादाह—**तद्भिन्नमिति । ज्ञानस्यैवेति** । निश्चयस्यैवेत्यर्थः । तथानुभवेन नथैव कार्यकारणभावोन्नयनात्, तदाह—**दृष्टमिति** । पीह=व्याकरणे । **शास्त्रेति** । पूर्वत्रासिद्धमितिशास्त्रेत्यर्थः । **आहार्येति** । बाधकालिकेच्छाजन्यनिश्चयोऽपीत्यर्थः । तथा सति कस्य चित्प्रवृत्तिः कस्य चिदप्रवृत्तिरित्याशयेनाह—**शास्त्रस्येति** । अत्र=प्रकृतसूत्रे । 'मनोरथा'सिद्धिस्तु न, तत्र दर्शनाभावरूपे लोपेऽभावारोपस्य दर्शनारोपरूपत्वात्, द्वितीयाभावस्य प्रथमाभावप्रतियोगिरूपत्वस्य प्राचां मते सत्त्वात्सूत्रसामर्थ्यादस्यैवात्राङ्गीकारात् । 'देवदत्ते'तिन्यायेऽभावप्रतियोगिकाभावस्यैव देवदत्तादिपदस्वारस्येन विषयत्वात्, तदेतद्ध्वनयन्नाह—**अमू इत्याद्यसिद्धिरिति** । आदिना'अमी'इत्यादिपरिग्रहः । तामेवाह—**अदेति** । **परत्वादिति** । उक्तरीत्येति भावः । यत्तु न्यायानङ्गीकारेऽयन्दोष इति **मान्याः**[2], तदसदिति भावप्रकाशे स्पष्टं, तद्ध्वनयन्नाह—**देवेति । पररूपाद्येति** । आदिना वृद्ध्यादिसङ्ग्रहः । **अतीति** । 'सिद्धेऽसिद्धत्वातिदेशा'दित्यादिः । **रोपासम्भवेनेति** । 'पूर्वत्रे'तिसूत्रोदाहरणसम्पत्त्यै उक्तरीत्या लक्ष्ये'इति शेषः । एतेन—'वस्तुतः कार्या-

❀ ज्योत्स्ना ❀

**पररूपाद्यनापत्तेरिति** । आदिना अकारौकारयोर्वृद्धौ मुस्थानिकत्वद्विर्मुत्वञ्च गृह्यते ।

❀ सदाशिवभट्टीयम् ❀

**परत्वादिति** । शब्दान्तरप्राप्त्योभयोरप्यनित्यत्वात् । अन्तर्गततयावन्निमित्तकत्वेनापरनिमित्तकत्वेनोम-

❀ विषमपदविवृतिः ❀

नामुनेत्यत्र मुत्वानापत्तिः । असिद्धत्वस्य प्राधान्येनाविहितत्वेन तन्निषधायोगात् । **शास्त्रप्रवृत्ताविति** ।

---

१. 'सिद्धश्च प्रत्ययविधौ पुंवद्भाव' इति हि–वार्त्तिकं, फलमस्य–दरदोऽपत्यं स्त्री—दरत्, तस्या अयं दारदीय इत्यत्र पूर्वमेव पुंवद्भावे वृद्धत्वाच्छः । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' 'स्त्र्यमगधे'त्यणोऽतश्चेति स्त्रियां लुक् । पुंवद्भावेऽणिनिमित्तकवृद्धौ वृद्धसञ्ज्ञा सुलभेति तत्त्वम् । २. **कौमुदी**टीकायां **नागेश**गुरवो **हरि**दीक्षिताः ।

वेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु—यत्राप्यन्तरङ्गत्वात्त्रैपादिकं प्रवृत्तं तत्रापि—तत्तच्छास्त्रे एवाभावारोपेण तन्निवृत्तिबुद्धेरभाव, आदेशबुद्ध्यभावो, लक्ष्ये

## ॐ अभिनव-चन्द्रिका ॐ

'यद्भवति तद्भवति, यन्न भवति तन्न भवती'त्यर्थकरणेन 'अमू' इत्यादौ मुत्वे जातेऽपि–'मुत्वं न कृतं, तत्कृता स्थानिनिवृत्तिर्न जाते'ति सम्भावनया—पररूपे जाते सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तौ वृद्धौ तद्घटकमात्रोद्देश्यकविकाराभावेन तल्लक्ष्यत्वाभावात्पुनर्मुत्वे अमू अमी इत्यादिसिद्धिः ।

न च 'पूर्वत्रासिद्ध'मित्यस्य तादृशार्थकत्वे प्रमाणाभाव इति वाच्यं, हर एहीत्यादौ लोपस्यासिद्धत्वेऽपि स्थानिबुद्धेरभावेन पूर्वत्रासिद्धमित्यस्य वैयर्थ्यापत्त्या एतादृशार्थकल्पनात् । न च 'अमूदृक्' 'अमूभ्याम्' 'अमीभि'रित्यादौ तद्घटकमात्रो द्देश्यकविकारसत्त्वेन तल्लक्ष्यत्वस्य सत्त्वेन पुनर्मुत्वं न स्यादिति कार्यासिद्धत्वपक्षोऽसङ्गत इति वाच्यम्, 'नमुने' इति निषेधेन मुत्वे 'लक्ष्ये लक्षण'न्यायो न प्रवर्त्तते इति कल्पनेनादोषात् । अन्यथा अद् अ औ इत्यस्यां दशायां परत्वान्मुत्वे तस्यासिद्धत्वात्पररूपे लक्ष्ये लक्षणन्यायेन मुत्वाप्राप्त्या इनादेश–गुणयोः कृतयोर्मुत्वे च नादेशप्राप्त्यभावेन तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । **त्रैपादिकं प्रवृत्तमिति** । चिन्त्य-

## ॐ चिदस्थिमाला ॐ

सिद्धत्वेऽपि न दोषः, शास्त्रयोः स्वतोऽविरोधेन तस्य कार्यद्वारकत्वात्, अन्यथाऽनिप्रसङ्गः । 'मनोरथ'-इत्यादौ विरोधप्रयोजकीभूतकार्याऽसिद्धौ शास्त्रस्य सिद्धत्वेऽपि नपुंसकतुल्यत्वात् । **एतेन** "—अमू इत्याद्यसिद्धिः प्रत्युक्ता । 'अमी'इत्यत्रै'त ई'दितिसामर्थ्यादेवेत्वोत्तरं मुत्वस्य सुवचत्वात् । वार्तिकविरोधस्तु न—उत्तरस्य कार्यस्याभावादितिव्याख्यानात् । न च न्यायविरोधः, एकत्र विषये स्वस्वकार्यद्वारा प्रसक्तविरोधयोः शास्त्रयोः परशास्त्रीयकार्यस्यासिद्धत्वेन स्थानिनो निवृत्त्यभावात् । भाष्ये तु न्यायमवष्टभ्य शास्त्राऽसिद्धत्वमादृतं, तदप्राप्तिमभिप्रेत्य प्राचा निष्कर्ष आदृत—"इति **रत्नाकरो**क्तिरपास्ता, उक्तहेतोः, उक्तरीत्या तदभावोपपादकहेत्वसिद्धेश्च, उक्तरीत्या लाघवेनैत **ईदि**त्यस्य शास्त्रासिद्धत्वे ज्ञापकत्वस्यौचित्याच्च, न्यायस्याऽनित्यत्वन्तु मूलाभावादयुक्तमित्यन्यत्र स्पष्टमिति दिक् । ननु सिद्धान्तेऽपि क्वचित्कार्यासिद्धत्वमेवावश्यकम्, अन्यथेष्टाऽसिद्धेः, एवञ्च सर्वत्रैकरूप्याय तथैवास्त्वत आह—**शास्त्रेति । तु**रुक्तवैलक्षण्ये, 'न दोष'इत्यत्रान्वयः । **अन्तरङ्गत्वादिति** । स्वनिमित्तस्यैवादौ सत्त्वादित्यर्थः । न त्वन्तरङ्गपरिभाषाविषयः, त्रैपादिकेऽन्तरङ्गे सर्वथा तदप्रवृत्तेर्भाष्यसम्मतत्वात् । यदि त्वन्तरङ्गत्वादिव्यवहारस्य परिभाषामूलकत्वस्यैवा**चः परेति** भाष्ये ध्वनितत्वमित्युच्यते,तर्हिस्तु क्रमेणान्वाख्याने 'पट्व्या'इत्यादाविव लोकन्यायसिद्धान्तरङ्गत्वस्यात्रापि विषयः । नच तद्भाष्यविरोधः, 'नाजानन्तर्य' इतिवज्जानबहिरङ्गस्य सिद्धता यत्र तद्विषयकत्वस्य तत्राभ्युपगमात् । तत्सन्दर्भपर्यालोचनया तथैव प्रतीतेः । 'असिद्धं' 'पूर्वत्रासिद्ध'मित्यनयोर्युगपत्प्राप्तौ प्रत्यक्षेणानुमानिकबाधसम्भवाच्च, प्रकृते तु न तथेति दिक् । एतेन तद्भाष्य-स्वग्रन्थ-विरुद्धमिदमित्यपास्तम् ।

## ॐ ज्योत्स्ना ॐ

**यत्राप्यन्तरङ्गत्वादिति** । यथौजढदिलादौ ढत्वादौ कृते हृतशब्दस्य द्विर्वचनम् ।

## ॐ सदाशिवभट्टीयम् ॐ

योरप्यन्तरङ्गत्वात् । 'अत इति''अदस' इति सत्वेनोभयोरपि प्रतिपदोक्तत्वात्–परत्वेनैव व्यवस्थेति भावः । ननु शास्त्रासिद्धत्वेपि अनित्यत्वेन तन्न्यायाप्रवृत्तिरवश्यं वाच्या, अन्यथा पिपठीरित्यत्र पूर्वप्रवृत्तिकत्वेन षत्वे

शास्त्रासिद्धत्वेप्युक्तन्यायेन सकारबुद्धेरभावद्रुत्वं न स्यादिति कार्यासिद्धत्वेपि तदप्रवृत्त्या न दोष इत्यत आह—**शास्त्रेति । तन्निवृत्तीति** । स्थानिनिवृत्तिरित्यर्थः । एवञ्च सकारनिवृत्तिबुद्धेरभावेन तत्सत्त्वात्त्स्यादेवेति भावः ।

## ॐ विषमपदविवृतिः ॐ

तेनाग्नी३इतीत्यत्र प्लुते प्रवृत्तेऽपि तस्यासिद्धत्वात्प्रगृह्यसञ्ज्ञाप्रवृत्तिः । **अन्तरङ्गत्वादिति** ।

जातत्वबुद्ध्यभावश्च । जायमानं कार्यन्त्वादेशे एव स्थानिबुद्ध्या प्रवर्त्तते । 'न हि रजत-भ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयती'ति न दोषः । यत्र तु सहप्रसङ्गस्तत्राप्रवृत्ति-रेव,—अभावारोपात् । न च 'पूर्वत्र ने'त्येव सूत्रमस्त्विति वाच्यम्, पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे 'नलोपः सुपि'ति सूत्रासङ्गतेः, तद्धि नियमार्थम्, त्वद्रीत्या 'राजन्—अश्व' इत्यस्यां दशायाङ्कस्यापि पूर्वशास्त्रस्याप्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते 'भुक्तवन्त'मिति न्यायेनैतदप्रवृत्तौ राजाश्वे दीर्घसिद्ध्या नियमानुपयोगात् । 'राजभ्या'मित्यादावपि दीर्घा-

❀ अभिनव-चन्द्रिका ❀

-सिद्धं, तादृशप्रयोगस्याभावात् । न च पिपठिषतेः क्विपि पिपठीरित्यादावन्तरङ्गत्वात्षत्वे तस्यासिद्धत्वा-द्रुत्वे तादृशलक्ष्यसम्भव इति वाच्यम्, षत्वस्यासिद्धत्वात्क्विपि अतो लोपे सुप्प्रत्यये हल्ङ्यादि-लोपे पदान्तत्वेन षत्वस्यैवाप्राप्तेः । एतन्मूलकमेव पठ्यते 'असिद्धशास्त्रप्रतिबन्धकसापादिकशास्त्रप्रवृत्ति-सम्भावनायां पूर्वं त्रैपादिकं न प्रवर्त्तते' इति । **यत्र तु सह प्रसङ्ग इति** । सर्वत्र सहप्रसङ्ग एवेति 'यत्रा-प्यन्तरङ्गत्वात्त्रैपादिकं प्रवृत्त'मित्यादौ नोपयोग इत्यरुचिर्बोधितेतिदिक् । अत्रेदं चिन्त्यं—'पूर्वत्रे'त्येव सूत्रमस्तु, 'आमन्त्रित'मितिसूत्रादविद्यमानवदित्यनुवर्त्तते इति ।

❀ चिद्स्थिमाला ❀

दीक्षितादिसम्मतोऽयं ग्रन्थ इति **केचित्** । **प्रवृत्तमिति** । 'पूर्वमेवे'ति शेषः । एवेन—कार्यव्यवच्छेदः । **तन्निवृत्तीत्ति** । स्थानिनिवृत्तिबुद्धेरभाव इत्यर्थः । विनिगमनाविरहात्सम्भावितमाह—**आदेशेति** ।

नन्वेवं कार्यमेव न स्यादत आह—**जायेति** । बुद्धेरन्यथात्वेऽपि तस्यैव सत्त्वात् । अत्र हेतुं लौकिक-माह—**न हीति** । 'अपि'सूचितमाह—**यत्र त्विति** । 'शास्त्रयो'रिति शेषः । **अप्रवृत्तिरेवेति** । 'परस्य आदौ' इति शेषः । मात्रादिलाघवादाह—**न चेति** । 'एव'मिति शेषः । शास्त्रासिद्धत्वस्येष्टत्वे इति तदर्थः ।

**नेत्येवेति** । पूर्वत्र जातस्य तत्कालप्राप्तस्य च निषेध इत्यर्थेनोभयत्रापीष्टसिद्धेरिति भावः । ननु 'पूर्वत्रे' त्यस्य-पूर्वशास्त्रप्राप्तावित्यर्थः, ? उत पूर्वशास्त्रविषयत्वसम्भावनायामित्यर्थः ?, तत्राद्ये दोषमाह—**पूर्वेति** । **निषेध इति** । 'तदन्यतरस्ये'ति शेषः । नलोपोत्तरं पूर्वशास्त्रप्राप्तिसत्त्वेऽपि जातस्य निषेधो दुर्घट इति पुनर्निषेधो नेत्याह—**भुक्तेति** । **नैतदिति** । निषेधेत्यर्थः । नन्वेवं तदकरणलाघवमेवेति तत्रेष्टापत्तिरेवात आह—**राजभ्यामिति** । उक्तरीत्यैवेति भावः । द्वितीये दोषमाह—**पूर्वेति** । बहुव्रीहिः, पूर्वशास्त्रविषय-केत्यर्थः, एवमग्रेऽपि । अत्र पक्षे न सूत्रासङ्गतिः, 'राजाश्व'इत्यादौ नलोपे दीर्घरूपविषयस्य सम्भावितत्वेन

❀ ज्योत्स्ना ❀

**यत्र त्विति** । अमीत्यादौ । **एतन्निषेधाप्रवृत्ताविति** । 'पूर्वत्र ने'त्यस्य—निषेधस्याप्रवृत्तावित्यर्थः । **एतदप्रवृत्ताविति** । 'पूर्वत्र ने'त्यस्याप्रवृत्तावित्येवेहाप्यर्थः । पूर्वत्र पूर्वशास्त्रप्राप्तिर्हेतुरुत्तरत्र

❀ सदाशिवभट्टीयम् ❀

**पूर्वत्र नेति** । अत्र न्यासे निषेधानां बलीयस्त्वेन 'प्रकल्प्ये'ति न्यायेन चान्तरङ्गस्य पूर्वमप्रवृत्तिरेवेति बोध्यम् । नन्वेवं तदकरणलाघवमेवेति तत्रेष्टापत्तिरेवाऽत आह—**राजभ्यामिति** ।

❀ विषमपदविवृतिः ❀

पूर्वत्रासिद्धनिमित्तकत्वादित्यर्थः । **वस्तुतोऽस्यान्तरङ्गशब्दार्थत्वाभावात्**, उदाहरणाभावाच्चासङ्गत-मेतत् । सपादसप्ताध्यायीस्थकार्यसम्भावनायां त्रैपादिकस्याप्रवृत्तेः । 'अग्नी इती'त्यादावपि यथोद्देश-पक्षाश्रयणेन प्लुतात्पूर्वमेव प्रगृह्यसञ्ज्ञा शास्त्रप्रवृत्तौ नियामकमिति । **पूर्वोक्तं त्वणोऽप्रगृह्यस्येति सूत्रस्य-**

पत्तेश्च। 'पूर्वशास्त्रविषयसम्भावनाया'मित्यर्थे राजभ्यामित्यादौ नलोपे सुब्विधि-दीर्घ-विषय-सम्भावनया सर्वथा नलोपानापत्तेरिति दिक्।

**बाह्यप्रयत्न इति** । काकलकाधस्ताद्गलविवरविकास-सङ्कोच-श्वासोत्पत्ति-ध्वनिविशेष-रूपनाद-तद्विशेषरूप-घोषाल्पघोष-प्राणाल्पत्व-महत्त्व-रूपकार्यकरत्वमेषाम्। तथाहि—

"आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते—" इति शिक्षायामुक्तम् ।

---

ॐ **चिदस्थिमाला** ॐ

तत्र निषेधाभावार्थत्वादत आह—**राजभ्यामिति** । 'पूर्वत्र कार्ये एव निषेधो न कृते'इत्यर्थेऽपि प्रागुक्त-रीत्या 'राजभ्या'मित्याद्यसङ्गतिः, सूत्रासङ्गतिश्च। एतेन—"कार्यासिद्धत्वेऽपि नायमतिदेशः, किन्तु कार्यस्या-सिद्धत्वम्=अनिष्पन्नत्वं प्रतिपाद्यते, तत्र निष्पन्नस्य अनिष्पन्नताया ब्रह्मणापि दुष्करतया प्रागप्रवृत्तिरेव प्रति-पाद्यते इति न दोषः"—इत्यपास्तम्, उक्तयुक्तेः, तदाह—**इति दिगिति** ।

ननु कथं विवारादीनां बाह्यत्वं, विवारत्वादिकञ्चात आह—**काकलकेति** । **अधस्तादित्यनेन** तस्यास्यबहिर्भावः सूचितः । 'विकाससङ्कोचे'ति पाठः । **तद्विशेषेति** । नादविशेषेत्यर्थः । 'अघोषे'त्यत्र नञोऽल्पार्थत्वादाह—**अल्पघोषेति** । तद्रूपेत्यर्थः । **कार्येति** । तथा चोक्तरूपास्यबहिर्भूतकार्यकरत्वाद्व-र्णाभिव्यक्त्यनन्तरभावित्वाच्च बाह्यत्वं, तत्तत्कार्यकरत्वाच्च विवारत्वादिकमिति भावः । आस्यबाह्यदेश-स्थत्वेन तु न बाह्यत्वमेषां, 'नाभिप्रदेशात्प्रेरितो वायुरूर्ध्वमाक्रामन्, मूर्ध्नि प्रतिहतो=निवृत्तः सन्, तत्तत्स्थानान्याहत्य, ध्वनीनभिव्यज्य, तत्काल एव स्पृष्टतादीनुत्पाद्य, वर्णानभिव्यज्य, यत्नविशेषसहायेन गलविवरविकासादीन् करोती'तिसिद्धान्तात् । अत एव न शिक्षाविरोधस्तद्ध्वनयन्नाह—**तथाहीति** । कर्तृत्व-प्रवृत्त्यादेरनात्मधर्मत्वादाह—**आत्माऽन्तःकरणमिति** । साङ्ख्यरीत्येदं, त्रयाणामुल्लेखात् । अनु-

ॐ **ज्योत्स्ना** ॐ

'भुक्तवन्त'मितिन्यायो हेतुर्विशेषः । 'ध्वनिविशेषरूपनादतद्विशेषे'ति पाठः, बृहच्छेखरे तथा दर्शनात्। 'युङ्क्ते' इत्यत्रान्तःकरणं कर्तृ, तत्परिणामो मनः—कर्म, तत्परिणाम इच्छा—करणम् ।

ॐ **सदाशिवभट्टीयम्** ॐ

**दिगिति** । तेन 'किम्वुक्त'मित्यादावनुस्वारादौ कर्तव्ये वत्वादेर्निषेध इत्यस्य सङ्ग्रहः । **वाक्यभेदेति** । नन्वस्तु पदैकवाक्यता तावतापि 'नमुने' इति सूत्रेऽधिकारादसिद्धपदसम्बन्धे 'मु असिद्धं ने'त्याशयात्, मुभाव-निष्ठासिद्धत्वस्यैवानेन निषेधः, न मुभावस्येति चेन्न। पदैकवाक्यतापक्षेऽदसोऽसेरित्यत्रोपस्थितावसिद्धपदस्य मुभा-वेनाऽन्वयेऽसिद्धत्वविशिष्टमुभावस्य विधानात्तत्रानेनासिद्धत्वनिवृत्तौ सन्नियोगशिष्टमुभावस्यापि निवृत्त्यापत्तेः । वाक्यैकवाक्यतायान्त्वसिद्धत्वं शास्त्रस्यैवेति न मुत्वस्य तत्सन्नियोगशिष्टत्वम् । नचैवं नाभावे कर्तव्ये सिद्ध-त्वनिवृत्त्या मुत्वस्यापि निवृत्तौ—कृते नाभावेऽसिद्धत्वनिवृत्तिबोधकस्य—निष्फलत्वापत्त्या सन्नियोगेति न्यायबाध इतिवाच्यं, गौरवात्कार्यासिद्धत्वापत्तेश्चेत्याहुः । कार्यस्य शास्त्रजज्ञानवेलायामसिद्धत्वमिति पक्षे 'न मु"नलोपः' 'श्चुत्वं धु'डित्याद्यक्षरस्वारस्येपि भाष्यागृहीतत्वान्नाश्रितस्स इति बोध्यम् । **बाह्यप्रयत्ना इतीति** । एषां बाह्यत्वं विवारत्वादिकञ्चोपपादयति—**काकलेति** । **अधस्तादित्यनेनास्यबाह्यत्वं सूचितम्** । 'अघोषे'त्यत्र नञोऽल्पार्थकत्वादाह—**अल्पघोषेति** ।

'आत्मा=अन्तःकरणं, संस्काररूपेण स्वगतानर्थान्बुद्ध्या=स्ववृत्त्या, समेत्य=एकबुद्धिविषयान्कृत्वा तद्बोधनेच्छया मनो युङ्क्ते करोति, तदिच्छावन्मनः—कायाग्निञ्जाठरमग्निमभिहन्ति, सः—कायाग्निः, सोदीर्णः—स मारुतः उदीर्णः ऊर्ध्वं प्रेरित—इत्यादिस्तदर्थः। एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति। ततो यत्नविशेषेण गलविवरविकासादीन्करोति। तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते। गलविवरविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति। मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्त्वकृतमिति—नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेर-

❀ चिदस्थिमाला ❀

भवस्य नष्टत्वादाह—**संस्कारेति**। तत एव तदर्थमाह—**स्ववृत्त्येति**। **समेत्येति**णो रूपमिति नैकीकरणमर्थ इत्याह—**एकेति**। अर्थानां वक्तुमिच्छाया असम्भवादाह—**तद्बोधेति**। 'युङ्क्ते' इत्यन्तर्भावितण्यर्थमित्याह—**युक्तं करोतीति**। 'मन' इत्यस्य मध्यमणिन्यायेनान्वय इत्याह—**तदिति**। 'सोदीर्ण' इति प्रतीकं, तत्स्पष्टार्थं सप्रतीकं प्रत्येकं व्याचष्टे—**समेति**। फलितमाह—**एवञ्चेति**। तथा तदर्थे चेत्यर्थः। एतेन—ये 'वर्णाभिव्यक्त्यनन्तरं मूर्ध्नि प्रतिहतो=निवृत्त—'इति वदन्ति, तेषां शिक्षाविरोधः स्पष्ट एवेति सूचितम्। ततः=तदभिव्यक्त्यनन्तरं। विशेषेण=तत्सहायेन। तत्र=तयोर्मध्ये। **तत्तत्कार्येति**। स्पर्शादित्वरूपेत्यर्थः। **देशे कार्येति**। काकलकाधस्ताद्गलविवरे विकासादिरूपेत्यर्थः। **इतिः**—फलितार्थसमाप्तौ। नन्वेवं ह्रस्वादीनां कुत्रान्तर्भावोऽत आह—**मात्रेति**। **कृतमिति**। तथा चोक्तकारणा-

❀ ज्योत्स्ना ❀

**उत्पन्नयत्नेति**। 'युङ्क्ते'इति धातुना तिङा वोच्यमानयत्नेत्यर्थः। अत एव 'युङ्क्ते'इत्यस्य व्याख्यानं—'युक्तं करोती'ति यत्नार्थककरोतिना कृतम्, एवमन्यत्र बोध्यम्।

❀ सदाशिवभट्टीयम् ❀

अर्थानां वक्तुमिच्छाया असम्भवादाह—**तद्बोधेति**। नन्वेवं ह्रस्वादिजनक एकः, स्पर्शादिजनक एकः, अग्न्यादिघातजनक एक इति एकैकस्य वर्णस्य प्रयत्नत्रयं प्रयत्नद्वयं वा जनकमिति तात्पर्यम्, तच्च संहितासूत्रभाष्यविरुद्धं, तत्र हि स्वोत्पादितवर्णनाशावधि प्रयत्नस्थितिः, ततस्तं प्रयत्नमुपसंहृत्य द्वितीयप्रयत्नोत्पत्तिरिति प्रथमवर्णनाशकाले द्वितीयवर्णोत्पादकप्रयत्नोत्पत्तिकाले च वर्णविरामसत्त्वात्प्रतिवर्णं विरामसंज्ञा प्राप्नोतीत्याशङ्कितं, तस्यचायं भावः,—नाभिरूपैकदेशावच्छेदेनानेक—प्रयत्नोत्पत्तिर्युगपद्बाधितेति,एवञ्चैकस्यैव प्रयत्नस्याग्न्याघातह्रस्वादिस्पर्शादिजनकत्वमिति स्पष्टमेवायातमिति,—तदेतत्सकलं मनसि निधाय शङ्कते—

❀ विषमपदविवृतिः ❀

वक्ष्यमाणशेखरदिशोपपन्नम्। **सोदीर्ण इति**। 'सोचि लोपे चे'दिति सुलोपः। **उदीर्ण इति**। ऋ गतावित्यस्योत्पूर्वस्य रूपम्। **आत्मान्तः करणमिति**। इदमसङ्गतम्-आत्मपदस्य जीवपरत्वे बाधकाभावात्। **इच्छयोत्पन्नयत्नेति**। इच्छयोत्पन्नो यत्नो यस्मिन्निति विग्रहः। तथा च 'विवक्षयेत्ये'तत् यत्नेनेत्येतस्याप्युपलक्षणमिति भावः। **ततो यत्नविशेषेणेति**। इद'मेक एव यत्नः कार्यजनको वर्णनाशकश्चे'ति 'परः सन्निकर्षः' इति सूत्रस्थभाष्यविरुद्धम्। तस्मात्तेनैव यत्नेनेति वक्तुमुचितम्। औपा-

ग्रति कश्चिदधिकमिति—तस्य वायुप्रेरणारूपकार्यमास्यबाह्यदेशमिति तदपि बाह्यमेव। अत एव अइउण्सूत्रे भाष्ये—'ह्रस्वत्वादिजनकयत्नस्यास्यविशेषणेन सवर्णसूत्रेऽग्रहण'मित्युक्तम्। यद्यपि—'एक एव यत्नः सर्वकार्यजनको वर्णनाशकश्चे'ति 'परः सन्निकर्ष' इति सूत्रे भाष्ये उक्तं—तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा व्यवहार इति बोध्यम। उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेऽपि—उदात्तादिशब्दैर्विना बोधितानां तेषाम्—'अनङुदात्त' इत्यनेनाविवक्षाबोधनात्सवर्णसञ्ज्ञानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम्। इदं—ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम्।

**शर इति**। शषसाः। अनुप्रदानं—बाह्यप्रयत्नः। **विवृण्वते इति**। तदभिव्यक्त्यु-

॥ अभिनव-चन्द्रिका ॥

तथा व्यवहार इति। वस्तुतस्तु सर्वप्रयत्नजनकमहाप्रयत्नैक्येऽप्यनुभवसिद्धानामनेकेषामवान्तरप्रयत्नानामपलपितुमशक्यत्वाच्चिन्त्यमिदम्। भाष्यन्तु—सर्वप्रयत्नजनकमहाप्रयत्नैक्यमादाय प्रवृत्तमिति न तद्विरोध इति दिक्।

॥ चिदस्थिमाला ॥

भावान्न क्वाप्यन्तर्भावः, अत एव तुः प्रयुक्तः। एवमाशङ्क्य समाधत्ते—**इतीति**। 'यद्यपि तथापी'ति शेषः। इतिः—हेतौ। **तस्य**=यत्नस्य। **तदपि**=ह्रस्वत्वादिकमपि। अपिना—उक्तम्। अत्र मानमाह—**अत एवेति**। तस्य तत्त्वादेरेवेत्यर्थः। **आस्यविशेषेति**। 'आस्ये तुल्यदेशप्रयत्न'मितिपक्षे—'आस्ये' इतितद्विशेषणेनेत्यर्थः। सवर्णसूत्रे=तत्सञ्ज्ञाविधायकसूत्रे। भाष्यविरोधं परिहरति—**यद्यप्येक एवेति**।

नन्वेवमप्युदात्तादीनामत्रोक्तिरयुक्ता, प्रागुक्तरीत्या तेषामाभ्यन्तरत्वस्यैव लाभादतः प्रागुक्तमाह—**उदात्तेति**। आदिना गमकान्तरस्यापि समुच्चयः। **तेषाम्**=उदात्तादीनाम्। **इत्यनेन**=इत्यत्रत्योदात्तग्रहणेन। मूलीयन्यूनतां निराचष्टे—**इदमिति**। अयोगवाहनिरासाय आह—**शषसा इति**। अत एव यमविसर्गादेः पृथग्ग्रहणम्, अत एवानुस्वारस्य श्वासादयो नेत्याहुः। [ मूले—**एते एवे**त्यन्वयः। ] 'अनुप्रदान'शब्दस्वारस्यात्तत्प्रदत्वं नार्थ इत्याह—**अन्विति**। तथाच तत्प्रयत्नका इति तदर्थो बोध्यः। नन्वेषां

॥ ज्योत्स्ना ॥

**सर्वकार्यजनक इति**। स्वोत्पादितवर्णनिष्ठ-ह्रस्वत्व-दीर्घत्वादिसर्वकार्यजनक इत्यर्थः। **वर्णनाशकश्चेति**। **अत्रापि** स्वोत्पादितवर्णनाशक इत्यर्थः। 'येनैव यत्नेनैको वर्ण उच्चार्यते, तेनैव विच्छिन्ने तस्मिन्वर्णे उपसंहृत्य तं यत्नमन्ययत्नमुपादाय द्वितीयः प्रवर्तते'इति हि'परःसन्निकर्ष' इतिसूत्रे भाष्यम्। **अविवक्षाबोधनादिति**—अविवक्षा च प्रत्यसत्त्या शास्त्रीयकार्ये बोध्या। तेन

॥ सदाशिवभट्टीयम् ॥

**यद्यपीति**। अयोगवाहनिरासायाह—**शषसेति**। अत एव विसर्गादेः पृथग्ग्रहणमत एवानुस्वारस्य श्वासादयो न। **अनुप्रदानं बाह्ये**ति। उद्योते तु श्वासोऽनुप्रदीयते यैरित्यर्थ उक्तः, रूढौ मानन्तु

॥ विषमपदविवृतिः ॥

धिकभेदाभिप्रायेण वा कथञ्चिद्योज्यम्। **वायुप्रेरणारूपमिति**। अल्पवायुमहावायुप्रेरणारूपमित्यर्थः। **अविवक्षेति**। कार्यानुपयोगित्वमित्यर्थः। **अत एवेति**। पूर्वत्वाभावादेवेत्यर्थः। तथा च 'वर्गेष्वाद्याश्चत्वार एव यमा' इति प्राचीनविवरणं तत्सदृशार्थकतया योज्यमिति भावः। ननु राज्ञां मज्ज्ञामित्यादौ ष्टुत्वं न स्यात्, यमेन व्यवधानादिति चेन्न, 'अशरीरं यमं प्राहु'रित्यादिवचनेन यमादीनामशरीरोक्त्या तद्व्यवधानस्याकिञ्चित्करत्वात्।

त्तरञ्जायमाने कण्ठविवराविकासे तेषां कर्तृत्वविवक्षा बोध्या। विवार एषां प्रयत्न इति भावः। **अन्ये त्विति**। वर्गतृतीयचतुर्थपञ्चमाः, तद्यमा, हकारानुस्वारौ, यरलवा इत्यर्थः। नादभागिनः–तत्प्रयत्नकाः। यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामुक्तिः। अल्पासवः–अल्पप्राणाः, यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति। **वर्गेष्विति**। 'विद्यमानाना'मिति शेषः। **चतुर्णामिति**। निर्धारणे षष्ठी, 'अन्यतमा'दिति शेषः। **पूर्वसदृश इति**। सादृश्यं—यत्नकृतम्। अत एवायोगवाहेषु यमानां गणनं भाष्ये, 'चत्वारश्च यमाः स्मृताः' इति पाणिनिशिक्षा च

ॐ अभिनव-चन्द्रिका ॐ

**चत्वारश्च यमा इति**। कचटतपानां पञ्चमे परत एको यमः, द्वितीयानाम्पञ्चमे एकः, तृतीयानां पञ्चमे-

ॐ चिदस्थिमाला ॐ

नन्वेषां करणत्वेन कथं कर्तृत्वमत आह—**तदभीति**। वर्णाभीत्यर्थः। **तेषां**=वर्णानाम्। '**कण्ठ**'मित्यस्य पूर्वान्वय इति भावः। मूलादिन्यूनतां निराचष्टे—**वर्गेति**। अत्र प्रकरणे सर्वत्रैवमेव बोध्यम्। एतेन—तथा दण्डथाद्युक्तमपास्तम्। प्राग्वदाह—**तदिति**। आधिक्यं निराचष्टे—**यद्यपीति**। 'खयादिष्वघोषाद्यन्यतमे'ति पाठः। एवं हशादिष्वपि बोध्यम्। 'द्विषु घोषाघोषान्यतरे'ति पाठे—'खयादिष्वि'त्यत्रादिना हशादेरपि परिग्रहः। शास्त्रानुरोधेन तथा द्वन्द्वप्रयोगेऽपि यथासम्भवं योगो, न यथासङ्ख्येन। 'द्विषु घोषाघोषान्यतरे'ति पाठेऽप्येवं, यद्वा–तदा-'हशखयादि'ष्विति पाठः (एवञ्च यथासङ्ख्येनान्वयात्समासः सुलभः)। मूले—**वर्गयमगा इति**। वर्गगा यमगाश्चेत्यर्थः। वस्तुतस्तत्त्वस्याभावादाह=**इवेति**। वर्गेष्वेव यमानां स्थितिरित्यर्थभ्रमवारणाय—सप्तम्युपपत्तये चाह—**विद्येति**। बहुवचनात्सर्ववर्गस्थास्ते ग्राह्याः, अत एव तथा वक्ष्यति—**तत्र वर्गाणा**मित्यादिना—**मूल** एव। नन्वेवमपि प्रयोगे युगपच्चतुर्णां स्थित्यभावेन लक्ष्यविरोध एवात आह—**निर्धेति**।

**अन्यतमादिति**। एतेन परशब्दयोगे 'चतुर्भ्यः' इति पञ्चम्युचितेत्यपास्तम्। नात्र यथासंख्यमिष्टमिति ध्वनयन्नाह—मूले—**पञ्चमे परे इति**। अन्यथा 'पञ्चमेषु परे'ष्वित्युक्तं स्यात्। 'आद्गुण'इत्यादाविव पूर्वपरयोः स्थाने इत्यर्थभ्रमवारणायाह—**मध्य** इति–व्याख्यायाम्। **यत्नकृतमिति**। न तु कत्वादिधर्मकृतमिति भावः। एतेन—'वर्गपञ्चमयुक्ताः प्रथमादयो यमा'इति **विवरणो**क्तमपास्तम्। **अत एवेति**।

ॐ ज्योत्स्ना ॐ

सवर्णसञ्ज्ञायास्तथाविधत्वात्तस्य तथात्वेन तस्याः सम्भवेऽप्युदात्तस्य उदात्त इत्याद्यान्तरतम्यस्य लौकिकत्वेन तत्र नाविवक्षेत्यादि **परिभाषाप्रदीपार्चिषि** विस्तरः। 'पूर्वसदृश'इत्यस्य पूर्वेण सदृश एव न पूर्वः, नाप्युत्तरसदृशः, पूर्वेणैव च सदृश इति–तत्रावधारणान्तरप्रतीतेरर्थद्वयं, तत्राद्ये विनिगमकमाह—**अत एवेति**। एतेन'वर्गपञ्चमयुक्ताः प्रथमादयो यमा' इति प्राचीनविवरणकृदुक्तिः परास्ता। अन्त्येऽप्याह—**शिक्षा च सङ्गच्छत इति**।

ॐ सदाशिवभट्टीयम् ॐ

तुल्यास्यादिसूत्रस्थभाष्यमेव। **यद्यपीति**। 'खयादिष्वघोषाऽन्यतमे'ति पाठः। **एवं हशादिष्वपीति** बोध्यम्। 'घोषाऽघोषाऽन्यतरे'ति पाठे खयादिष्वित्यत्रादिना हशादिपरिग्रहः। शास्त्रानुरोधेन **तथा द्वन्द्व**प्रयोगेऽपि। यथासम्भवयोगो न यथासङ्ख्येन। वर्गेष्वेव यमानां स्थितिरिति भ्रमवारणाय षष्ठ्यौचित्यात्सप्तम्युपपत्तये चाह—**विद्येति**। नन्वेवमपि प्रयोगे युगपच्चतुर्णां स्थित्यभावेन लक्ष्यविरोध एवात आह—**निर्द्धेति**।

**अन्यतमादिति**। **एतेन** परशब्दयोगे चतुर्भ्य इति पञ्चम्युचितेत्य**पास्तम्**।

सङ्गच्छते। अयञ्च वेदे एव तदाह—**प्रातिशाख्ये इति। अन्येषामिति।** अचाम्, उक्तान्यहलाञ्चेत्यर्थः। **यरलवाश्चेति।** चेनाचामपि ग्रहणम्। 'सुपां सुलुगि'ति सूत्रे 'इकारस्यान्तर्यतो दकार' इति भाष्यात्—घोषसंवारनादाल्पप्राणत्वमचाम्। अन्यथा तदौ पर्यायेण स्याताम्, अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम्। अचां घोषत्वं 'परः सन्निकर्ष' इति सूत्रे भाष्येऽपि स्पष्टम्। **अन्ये इति।** द्वितीयचतुर्थौ, तद्यमौ, शषसहा, अयोगवाहाश्चेत्यर्थः। जिह्वामूलीययमादीनां स्थानबाह्यप्रयत्नकथनन्तु—स्वरूपनिर्णयाय, न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति बोद्धयम्। **अनुपयुक्ता इति।** तुल्यास्यसूत्रे

❀ **अभिनव-चन्द्रिका** ❀

एकश्चतुर्थानाम्पञ्चमे एकः-इति सङ्कलनया चत्वार इति भावः। **अन्यथेति।** घोषसंवारनादाऽस्वीकारे-

❀ **चिदस्थिमाला** ❀

धर्मकृतसादृश्यानङ्गीकारेण यत्नकृतसादृश्याङ्गीकारात्, परसादृश्यानङ्गीकारेण पूर्वसादृश्याङ्गीकाराच्चैवेत्यर्थः। उभयत्र—'सङ्गच्छते' इत्यस्यैवास्याप्यन्वयः। अन्यथा पठितैरेव तेषां (यमानां) ग्रहणे तत्र ग्रहणासङ्गतिः,परसदृशत्वेऽपि तेषां पञ्चत्वेन तदुक्तचतुष्ट्वसङ्ख्याविरोधापत्तिश्चेति भावः। चतुष्ट्वोपपत्तिस्तु प्रथमयमत्वादिना बोध्या। ननु सिद्धान्तेऽपि तेषां विंशतित्वेन चतुष्ट्वमनुपपन्नमेवेति चेन्न, वर्गप्रथमत्वादिना तथोक्तं, पञ्चत्वसङ्ख्याव्यवच्छेदे तात्पर्यात्। **शाख्ये इतीति।** एतेन 'तद्-नमन'मित्यादौ यमेन व्यवधानाद्'यरोनुने'त्यस्याप्रवृत्त्यापत्तिरित्यपास्तम्, उक्तयुक्तेः, तत्राप्यखण्डपद एव तदुत्पत्तेश्चेति बोध्यम्।

प्राग्वदाह—**अचामिति।** एवमग्रे सर्वत्र बोध्यम्। अचान्तत्वे मानमाह—**सुपामिति।** 'भाष्ये' अन्वयः। **दकार इति।** 'आर्द्रेचर्म'न्नित्यादौ लुग्ग्रहणप्रत्याख्यानाय पूर्वसवर्णेन साधनावसरे इति भावः। उक्तं द्रढयति—**अन्यथेति।** अल्पप्राणत्वमात्राङ्गीकारेण तन्नितयानङ्गीकार इत्यर्थः। अनङ्गीकारे= त्रितयमात्राङ्गीकारे। **स्पष्टमिति।** तत्र हि—'हादाविरामः संहिते'ति न्यासे 'कुक्कुटः' 'पिप्पली' 'पित्त' मित्यत्र—'स्पर्शानामघोषाणाञ्च संयोगेऽसंन्निधानात्संहिता सञ्ज्ञा न स्या'दित्युक्त्वा,—'किमुच्यते' 'संयोग' इति, अथ यत्रैकः पचतीतिएकः पूर्वपरयोर्ह्रादेन प्रच्छाद्यते—इत्युक्तं। 'द्वयोरकारयोर्घोषवतोर्मध्ये चकारो घोषवानिव लक्ष्यते'इत्यर्थ इति **कैयटः**।

ननु जिह्वामूलीयादेः स्थानादिकथनं व्यर्थमफलत्वादत आह—**जिह्वेति।** क्रमस्य बोध्यत्वादस्य पूर्वनिपातः, अत एव यथाक्रममाह—**स्थानेति। सावर्ण्यान्तेति** च। आदिना—सावर्ण्यनिवृत्तिपरिग्रहः। ननु तद्ग्रहणेऽपि लोकवत्तेनोभयोर्ग्रहणमस्तु, यत्तु—'तथा सति कादीनां मिथः सावर्ण्यानापत्ति'रिति—**दण्डी।** तन्न, क्वापि सर्वप्रयत्नसाम्यासम्भवात्, पूर्वं ज्ञापकेन 'किञ्चित्प्रयत्नभेदेऽपि किञ्चित्प्रयत्नसाम्यमादाय सवर्णसञ्ज्ञे'ति भाष्यसाधितार्थस्योक्तत्वाच्च,—अत आह—**उपेति।** हि= यतः। तथा च 'झरो झरी'ति लोपापत्तिरिति भावः। गुणशब्दत्वस्य, क्रियाशब्दत्वस्य च व्यवच्छेदा-

❀ **ज्योत्स्ना** ❀

**इति भाष्यादिति।** एवं हि तत्र भाष्यम्—'लुकि किमुदाहरणम् ?, आर्द्रेचर्मन्, लोहितेचर्मन्, नैतदस्ति, पूर्वसवर्णेनाप्येतत्सिद्धं, न सिद्ध्यति,—यद्यत्र पूर्वसवर्णः स्यादान्तर्यतो दकारः प्रसज्येते'ति। 'जिह्वामूलीययमादीनाम्'-आदिना अनुस्वारविसर्गादिः। **सावर्ण्यान्तरतम्यपरीक्षादाविति।** आदिना सावर्ण्यकार्यम्। **शचयोरपीति।** तेन'वाक्श्चोतती'त्यादौ 'झरो झरी'ति

❀ **विषमपदविवृतिः** ❀

**अयोगवाहा इति।** द्वितीयचतुर्थयमभिन्ना इत्यर्थः। **जिह्वामूलीय इति।** उपध्मानीयस्य स्थानकथनं तूपध्मानीयोपधस्योब्जेर्जस्त्वेन बकरार्थं कथं चिद्भवतीति भावः। **यमादीनामिति।**

प्रशब्दग्रहणात् । उपयुक्तत्वे हि श-छयोरपि सावर्ण्यं स्यादिति भावः। आन्तरतम्यपरीक्षा च–'घोषवत'इत्यादिना तत्र तत्र स्फुटीभविष्यति । **स्पर्शाः**–तत्पदव्यवहार्याः । अन्तस्था-शब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः । **ऊष्माण इति** । ऊष्मा वायुस्तत्प्रधाना इत्यर्थः । एवं 'सोष्माण'इत्यस्य 'वायुना सह वर्त्तन्त इत्यर्थ' इति प्रातिशाख्यभाष्ये स्पष्टम्। यद्यपि वर्गद्वितीयचतुर्थयोरपि 'स्थानेन्तरतम'सूत्रभाष्यादूष्मत्वं, तथापि 'विवृतमूष्मणा'मित्यत्रैत एव गृह्यन्ते। अन्यथा कण्ठ्यादीनां सावर्ण्यानापत्तौ 'नाज्झला'वि-

ॐ अभिनव-चन्द्रिका ॐ

इति भावः । ननु तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नान्वयस्याव्युत्पन्नत्वादाह–**स्पर्शपदव्यवहार्या इति** ।

ॐ चिदस्थिमाला ॐ

याह–**तत्पदेति** । कप्रत्ययान्तत्वं निराचष्टे–**आदन्त इति** । विजन्त इति भावः । स च न शुद्धरूढ इत्याह–**स्पर्शोष्मणोरिति** । 'ऊष्मपदव्यवहार्या'इत्यर्थे भाष्यप्रातिशाख्यविरोधापत्तेराह–**ऊष्मा वायुरिति** । अत एव तदेकवाक्यतामाह–**एवमिति** । उक्तवदित्यर्थः । अत एवाह–**यद्यपीति** । **भाष्यादिति** ।–"तमग्रहणात् ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः–वाग्घसति, अन्यथा सोष्माणः सोष्माण इति द्वितीयाः, नादवन्तो नादवन्त इति चतुर्थाः प्रसज्येरन्–" इति भाष्यादित्यर्थः । अन्यथा=तयोरपि ग्रहणे । **कण्ठ्यादीनामिति** । 'मिथ' इति शेषः । आभ्यन्तरयावत्प्रयत्नसाम्याभावादिति भावः । आंशिकं चेदं, तदाह–**नाज्झलाविति** । 'स्वरा'इत्यस्य प्रागवदर्थं हृदि निधाय तत्र हेतु-

ॐ ज्योत्स्ना ॐ

शकारस्य लोपो न । न च महाप्राणप्रयत्नभेदः, यावत्प्रयत्नसाम्यस्य सावर्ण्यानुपयुक्तत्वात् । क्वचित् 'शछयो'रिति पाठः, तदा महाप्राणतासाम्यमप्यायाति । तत्र'राजंश्छिन्धी'त्यनुस्वारस्य हल्त्वमाश्रित्योक्तलोपः प्रत्युदाहरणीयः । **आदन्त इति** । क्विबन्तो विजन्तश्चेत्यर्थः । यद्वा 'आतश्चोपसर्गे' इत्यङन्तादाप् । नचाङ्विधा'वकर्तरि च कारके'इत्यनुवृत्त्या तस्य कर्तर्यविधानाद्वक्ष्यमाण-कर्तृव्युत्पत्तिविरोधः, अन्तर्भावितण्यर्थात्तिष्ठतेः कर्मणि प्रत्यये तस्य फलितत्वात्। 'आबन्त'इति बृहच्छेखरे पाठदर्शनादेवं व्याख्याया उचितत्वात् । 'अन्तस्थैश्चापि संयुत'मित्यकारान्तपाठे'सुपि स्थ' इति कप्रत्ययः । **कण्ठ्यादीनां सावर्ण्यानापत्ताविति** । यद्यपि घकारस्योष्मत्वाद्विवृतत्वाधिक्येऽपि स्पृष्टत्वमात्रसाम्यात्ककारेण सावर्ण्यं वक्तुं शक्यं, सवर्णसञ्ज्ञायां यावत्प्रयत्नसाम्यस्य ज्ञापकेन निराकृतत्वात्तथापि बाह्यप्रयत्नसाम्यनिराकरणे तत्तात्पर्यम्, आभ्यन्तरयावत्साम्यन्त्वपेक्षितमेवेत्याशयः ।

ॐ विषमपदविवृतिः ॐ

आदिपदेनानुस्वारविसर्गौ । अत्र यमानुस्वारयोर्नासिकास्थानकथनम्–'अथ मुखग्रहणं किमर्थं? नासिकावचनोऽनुनासिक इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येते'ति भाष्योक्तदिशा मुखग्रहणव्यावृत्तिबोधनाय । **आदन्त इति** । 'स्थः कचे'ति कप्रत्ययान्तोऽदन्तस्ततष्टाप्, नित्यस्त्रीलिङ्गोऽयम्, 'अन्तस्थाभिश्च संयुत'मिति शिक्षावाक्यानुरोधादिति भावः । एतेन विश्वपाशब्दवदादन्तत्वे 'ईषत्स्पृष्टमन्तस्थाना'मिति निर्देशासङ्गतिरित्यपास्तम् । **स्पर्शोष्मणोरिति** । मातृकापेक्षयेदम् । **नाज्झलावित्यादिनिर्देशेनेति** । चझयोः सावर्ण्याभावे ह्रस्य स्थाने झः पूर्वसवर्णो न स्यादिति भावः ।

त्यादिनिर्देशासङ्गतिरिति भावः । **अचः स्वरा इति** । उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः । तद्धर्मत्वादुदात्तादयोऽपि 'स्वरा' इत्युच्यन्ते । **कपाभ्यामिति**—खफयोरप्युपलक्षणम् । अं अः इत्युपलक्षणमिकारादेरपि । तदाह—**अचः पराविति** ।

**ऋलृवर्णयोरिति** । आ च लृवर्णश्चेति विग्रहः, 'ऋत्यक' इति प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे लृकारपाठः, अन्यथा तस्यासत्त्वशङ्कयाऽस्य वचनस्यैवाशक्यत्वं स्यात् । ध्वनितञ्चेदम् 'एओ'ङितिसूत्रशेषे भाष्ये । तत्र हि 'सँय्यन्ते'त्यादौ 'हलोनन्तरा'

❀ अभिनव-चन्द्रिका ❀

तथा च स्पर्शपदेन स्पर्शपदव्यवहारत्वेनोपस्थितिः । एवमुत्तरत्रापि बोध्यम् । आ च लृवर्णश्चेति । ननु 'आ च आ च रलौ' इति मनोरमोक्तं विहाय किमिति द्वितीयः प्रकार आश्रीयते इतिचेच्छृणु न पदान्ताः परेऽणः सन्ती'ति भाष्यप्रामाण्येन लृकारान्तानामनभिधानेन आ च आ चेतिविग्रहस्य वक्तुमशक्यत्वात् ।

❀ चिदस्थिमाला ❀

माह—**उदेति** । स्वपूर्वाद्राजतेर्ड इति भावः । स्पष्टञ्चेद'मुच्चैरुदात्त' इत्यत्र भाष्ये । नन्वेवमुदात्तादीनां कथन्तत्त्वमत आह—**तद्धर्मेति** । **ऋलृवर्णयोरिति** । अत्र—'आ च आ चे'त्यादिमनोरमाद्युक्तपक्षाङ्गीकारे रूपसिद्धिः क्लिष्टेत्यन्यथा आह—**आच लृवेति** । वार्त्तिके दीर्घं वारयति—**ऋत्यक इतीति** ।

नन्वेवं सावर्ण्यादृकारेण लृग्रहणे सिद्धेराकारादिवत्तदुपदेशो व्यर्थोऽत आह—**एतदिति** । एतद्बोधार्थमेवेत्यर्थः । तस्य=लृकारस्य । **अशक्यत्वमिति** । तदभावादिना पदार्थोपस्थित्यभावेन बोधाजनकत्वेनासम्बद्धत्वेनाकरणीयत्वमित्यर्थः । नन्वेतादृशं न क्वापि दृष्टमत आह—**ध्वनितमिति** । 'तत्र ही'त्यस्य 'उक्त'मित्यत्राप्यन्वयः । 'आदा'वित्यस्य='न प्राप्नोती'त्यत्रान्वयः । 'सूत्रे'इत्यस्य-'ग्रहणा'दित्यत्रान्वयः । अस्थित-

❀ सदाशिवभट्टीयम् ❀

**निर्देशासङ्गतिरिति** । यद्यपि यावत्स्थानसाम्यमिव यावत्प्रयत्नसाम्यविवक्षामन्तरेणापि निर्देशसङ्गतिस्तथापि यावत्प्रयत्नसाम्यानङ्गीकारे खकारहकारयोरपि सावर्ण्यापत्तौ देवः खनतीत्यादौ 'हशि चे'त्युत्वापत्तिः, 'कर्त्तरि भुवः खिष्णुजि'त्यादिनिर्देशासङ्गतिश्च । एवञ्च यत्किञ्चित्प्रयत्नसाम्ये इदमसङ्गतं, यावत्साम्ये मूलोक्तमसङ्गतमिति तात्पर्यम् ।

**ऋलृवर्णयोः** । एतदर्थमेव=तद्बोधार्थमेव । **असत्त्वमिति** । तदभाववादिना पदार्थोपस्थित्यभावेन बोधाजनकत्वेनाऽकरणीयत्वमित्यर्थः । नचानुपदेशत्वमात्रेणाऽसत्त्वशङ्कायामाकारादीनामपि सा स्यादिति वाच्यम्, अक्षरसमाम्नाये जातिनिर्देशसत्त्वेनात्वादिजातेराकारादिषु सत्त्वात्, ऋकारे लृत्वजातेरभावादिति

❀ वरवर्णिनी ❀

**लृवर्णश्चेति** । 'आ च आ चे'त्यादिमनोरमोक्तविग्रहस्तु—'न पदान्ताः परेऽणः'इति भाष्यात् लृकारान्तात्सुबुत्पत्तेरनभिधानान्नोचितः, अन्यथा गमुलित्यादौ तत्सम्भवेन 'न ही'त्यादिभाष्योक्तिरसङ्गतैव स्यात् । न चैवं—'लाकृति'रित्यादेरनभिधानापत्तिः,—'अवसानकार्यभाजः परेऽणः पदान्ता न सन्ती' त्यत्रैव भाष्यतात्पर्येण लाकृत्यादीनामनभिधाने प्रमाणाभावात् । एवञ्च सुप्रकृतिकलृशब्दस्यानभिधाने प्रमाणाभावान्मनोरमोक्तं युक्तमेवेति **जटाजूटकृतः** । केचित्तु लृकारान्तेभ्यः पञ्चम्येकवचने उलित्यादौ पदान्तानामवसानकार्यभाजान्तादृशानां सम्भवेन—पञ्चमीषष्ठीविधायकानेकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने लृकारान्तातिरिक्तत्वेन सङ्कोचापेक्षया स्वौजसितिसामान्यशास्त्रे सङ्कोचे लाघवात् लृकारान्तेभ्यः सुबुत्पत्तेरेवानभिधानमिति **नागेशाशयमाहुः** । न च नागेशनये 'लृवर्णस्ये'त्यत्रापि समासानापत्तिरिति वाच्यम्, तस्याखण्डपदत्वस्वीकारेण क्षतिविरहादित्यसद्गुरुवरिवस्यापाठिचरणाः ।

इति सूत्रे '–प्रत्याहारघटकेष्वपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादेरणुदित्सूत्रेण यादिग्रहणेन ग्रहणाद्द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोती–'त्याशङ्क्य मात्रिकव्यञ्जनानुपदेशादनुपदिष्टस्यासत्त्वादसत्प्रतिपत्तेरशक्यत्वान्नाणुदित्सूत्रेण तद्ग्रहणमित्युक्तम् ।

न च क्लृ३प्तशिखेत्यादावनृत इति निषेधाल्लुतानापत्तिः, ऋल्वर्णयोः पृथगनुबन्धत्वकरणेन क्वचित्परस्पराग्राहकत्वकल्पनेनादोषात् ।

❀ अभिनव-चन्द्रिका ❀

ग्रहणकशास्त्रप्रवृत्त्येति । व्यासज्यवृत्तिधर्मावच्छिन्ना या कालघटितधर्मानवच्छिन्नाण्वृत्तिविषयता तादृश-

❀ चिदस्थिमाला ❀

पक्षाभिप्रायेणेयं शङ्केति सूचयितुमाह—प्रत्याहारेति । तद्बोध्यघटकानुच्चारितद्विर्नीयादिवर्णेष्वपीत्यर्थः । आदिना-वद्वयादिविधिः, संयोगसञ्ज्ञादिः । असदिति । अत्र शास्त्रे प्रक्रियादशायामित्यर्थः । तद्ग्रहणम्= मात्रिकद्वयाद्यात्मकव्यञ्जनग्रहणम्।वस्तुत इयमेवमानुपूर्वीका श्रुतिरेवान्यार्थमुपदिष्टेति नानर्थक्यशङ्केति बोध्यम्। एवं सति वार्त्तिककृतदोषमुद्धरति—न चेति । लृकारोपदेशस्योक्तरीत्या साफल्येन तस्य ज्ञापकत्वं नेति (हेतोः)—तथा कौस्तुभाद्यसाङ्गत्यध्वननाय आह—ऋल्वर्णयोरिति । क्वचित्=अनिष्टस्थले । प्रकारान्तरेण

❀ ज्योत्स्ना ❀

द्विव्यञ्जनाश्रय इति । संयोगसञ्ज्ञारूपः न प्राप्नोतीति, 'वर्णैकदेशा वर्णग्रहणेन न गृह्यन्त' इत्युक्तेरिति भावः । अदोषादिति । 'लृकारोपदेशःसावर्ण्यानित्यत्वे ज्ञापक' इति कौस्तुभाद्युक्तं त्वयुक्तम्, फलस्योपदर्शितत्वात् । किन्त्वाकारादीनामप्यसत्त्वशङ्का कस्मान्न भवति,शिष्टोपदेशादिति चेत्,

❀ सदाशिवभट्टीयम् ❀

वदन्ति । संय्यन्तेत्यादाविति । आदिना कुक्कुटादिपरिग्रहः । द्विव्यञ्जनेति । मात्रादिरयं, स च कुक्कुटादौ संयोगगुरुसञ्ज्ञाप्लुतादिरूपः, संय्यन्तेत्यादौ चा'नर्चा'ति द्वित्वरूपः, तस्य द्विव्यञ्जनाश्रयत्वं प्रकृतलक्ष्याभिप्रायम् । 'हलोनन्तरा' इति सूत्रोपन्यासस्तु कुक्कुटाद्यनुरोधादिति बोध्यम् । एतेन— परसवर्णस्यासिद्धत्वादनुस्वारं हलमादाय संयोगसञ्ज्ञादिः सेत्स्यतीति तदसङ्गतमित्यपास्तमिति वदन्ति ।

वस्तुतस्तु 'अनुपदिष्टत्वा'दित्यस्य 'शिष्टै'रिति शेषो, न तु 'महेश्वरेणे'ति,तथा सति अयोगवाहानामदुष्णत्वमृतिऋवेत्यादेः कर्तुमशक्यत्वस्य ब्रह्मणापि दुर्वारत्वात्। 'वृत्तिसमवायार्थ उपदेश'लृकारोपदेशो यदृच्छे'-त्यादिकं चोपलक्षणतां विना नोपपद्येत । किञ्चाकारादिसत्त्वस्य जातिनिर्देशेनोपपादने मात्रिकव्यञ्जनादेरनत्त्व-मुपपादयितुमशक्यमिति चिन्त्यमेवेदमित्याहुः । तदपरे न क्षमन्ते—चतुर्दशसूत्रीनिर्दिष्टजात्याक्रान्तत्वस्याऽसत्त्वशङ्कानिवर्त्तकत्वे मात्रिकाऽर्द्धमात्रिकव्यञ्जनसाधारणयत्वादिजातेस्तत्र निर्दिष्टत्वेनानुपदेशान्मात्रिकव्यञ्जनासत्त्वप्रतिपादकै'रेओङ्'सूत्रस्थभाष्यविरोधात्तस्माच्छिष्टोपदेश एवासत्त्वशङ्कानिवर्त्तक इत्येव भाष्यकृदाकूतम् । किञ्चानुवादोपि सन्देहनिवर्तक एवेति प्रागुक्तत्वेन तस्य च लृकारे बहुशः प्रदर्शनेन चिन्त्यमेवे·

❀ विषमपदविवृतिः ❀

अशक्यत्वं स्यादिति । इदमयुक्तम्—अयोगवाहानां दीर्घादीनां सानुनासिकयवलानां दुःस्पृष्टसञ्ज्ञकलकारस्येषत्स्पृष्टऋकारलृकारयोश्चासत्त्वापत्तेः । अक्षरसमाम्नाये एषामनुपदिष्टत्वात्। एओङ्सूत्रस्थ'मनुपदिष्टं सत्कथं विज्ञातुं शक्य'मिति भाष्यन्तु–वेदलोकसाधारण्येन सावर्ण्यानित्यत्वज्ञापकत्वायोगात् । न च स्थानेन्तरतमसूत्रेण निर्वाहः, वकारस्य स्थाने लृकारस्वरूपसम्प्रसारणापत्तेः, तस्माद्वकारस्य लृकाराभावाय वर्णोपदेशे लृकारपाठ इत्येव तत्त्वम् ।

पृथगनुबन्धत्वेति । गम्लृ सृप्लृ गतौ, एजृ भ्राजृ दीप्तावित्यादौ । ओकारस्यौ-

**अकारहकारयोरिति** । 'एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्व'मिति मते–एकारशकारादीनामप्युपलक्षणमिदम् । एतेन 'नाक्शलौ'इत्येव सूत्रयितुमुचितमित्यपास्तम् । 'हशि चे'त्येव सिद्धे'ऽतोरो'रित्याकारे व्यावृत्त्यर्थम् । सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं

❀ अभिनव-चन्द्रिका ❀

विषयताप्रयोजकं स्वबोध्याण्सवर्णान्गृह्णातीति ग्रहणकशास्त्रस्यार्थादिति भावः ।

**तालव्यत्वमिति** । केवलतालव्यत्वमित्यर्थः । एवमुत्तरत्रोष्ठत्वमित्यत्रापि । नचेकारैकारयोरुकारौकारयोः सावर्ण्यापत्तिर्यावदास्यभवतुल्यत्वस्य सत्त्वादिति वाच्यम्, इकारोकारयोर्विवृतत्वेन एकारौकारयोश्च विवृततरत्वेनाभ्यन्तरप्रयत्नैक्याभावेनादोषात् । **अपास्तमिति** । 'एकारशकारयोस्तालुमात्रजन्यत्व'मितिमते मावर्ण्यापत्तेरिति भावः । न च शकारस्येषद्विवृतत्वेन इकारस्य विवृतत्वेन

❀ चिदस्थिमाला ❀

तत्र तद्वारणन्तु गौरवग्रस्तमिति स्पष्टं भाष्ये । नाञ्झलाविति सूत्रपाठसार्थक्यायाह—**एकारस्येति** । 'शुद्ध'मिति शेषः । एवमग्रेऽपि । **मत इति** । 'तालव्यावकारचवर्गाविकारैकारौ यकारः शकारः, शेषः ओष्ठोपपाद्य'इति बह्वृचप्रातिशाख्यमते इत्यर्थः । आदिबहुवचनाभ्यामैकारशकार–ओकारोपध्मानीय-औकारोपध्मानीयपरिग्रहः, फलन्तु–'पर्यङ्के शेते' 'करवावहै शयनं' 'गोᳲपानं' 'गौᳲ पठती'त्यादावयाद्यापत्तिः । कौस्तुभाद्युक्तिं खण्डयति—**एतेनेति** । उक्तदोषेणेत्यर्थः । किञ्च यत्किञ्चित्स्थानसाम्यमिति मते हैजदेर्मिथः सावर्ण्यापत्त्या गोभ्यां गोदुह्वाविलादौ ढत्वाद्यापत्तेः । एतेन नाच्शराविलेव सुवचमिति **रत्ना-**

❀ ज्योत्स्ना ❀

लृकारेऽपि तथैव प्राप्नोतीति चिन्त्यमेतत् । **एकारशकारादीनामपीति** । अत्रादिपदग्राह्यश्चिन्त्यमिति पण्डितैकशेष-**शेषश्रीशिवराम**पण्डिताः । वस्तुतस्तत्र पक्षे एकारस्यैकारेण सावर्ण्याभावाय विवृततरत्वादिरूपप्रयत्नभेदस्यावश्यवक्तव्यत्वात्तत एवैकारशकारयोरपि सावर्ण्याप्रसङ्ग इत्युपलक्षणलोक्तिरेव चिन्त्या । कुतस्तर्हि 'नाक्शला'वितिसूत्रकृता न कृतमिति चेत् 'नाज्झला'वितिन्यासे गौरवाभावेनाविशेषात्, व्यक्तिज्ञानगौरवमस्त्येवेति चेन्न, सूत्रे सवर्णदीर्घनिर्देशादंशे परस्परं सावर्ण्यनिषेधाभावेऽप्येजंशे एकारैकारयोरोकारौकारयोर्वाक्यभेदेन तत्सद्भावार्थमज्ग्रहणस्य सत्त्वात् । हल्प्रत्याहारस्य प्रत्याहारान्तरोपजीव्यत्वेन तद्ग्रहणस्यैव योग्यत्वाच्चेति दिक् ।

नन्व'तोरोरप्लुतादप्लुते हशी'तिन्यासादकारहकारयोः सवर्णसंज्ञया 'शिवोऽर्च्य' इति सिद्धावतीति वचनमज्झलोः सावर्ण्याभावबोधकमिति 'नाज्झला'वित्यनर्थकमत आह–**'हशि चेत्येव सिद्धे**

❀ सदाशिवभट्टीयम् ❀

दमाभाति । **अन्ये** तु वस्तुत एवमानुपूर्वीका श्रुतिरेवेयमिति—**नानर्थक्यशङ्केति**—समर्थयाञ्चक्रुः, तदाकूतं किमिति तु संशयितमेव ? । अत एव तदुपदेशप्रयोजनगणनावसरे एतन्नोक्तं भाष्यकैयटयोः ।

**नाज्झलौ** । **मत इति** । 'तालव्याविकारचवर्गाविकारैकारौ यकारः शकारः शेष औष्ठ्योपपादयितव्य' इति बह्वृचप्रातिशाख्यमते इत्यर्थः । **एकारादीना**मित्यादिबहुवचनाभ्यामेकारशकार ओकारोपध्मानीयादिपरिग्रहः, सूत्रमते विवृतत्वव्याप्यानां संज्ञानुपयुक्तत्वस्योक्तत्वादनयोर्विवृतरत्वादिना भेदेपि तत्प्राप्तिर्बोध्या । अत्र मते 'यजुष्येकेषा'मित्यादिनिर्देशादैऔजित्यारम्भादैचाभिवेकारकारैयोः स्थानसाम्येपि सञ्ज्ञा न । 'स्वरानुस्वारोष्मणामस्पष्ट'मिति तत्रैव प्रातिशाख्ये प्रयत्नस्यैक्यस्योक्तत्वेन च संज्ञाप्राप्तिर्बोध्या । अत्र वदन्ति–एवमपि नाच्शलाविति तु न सूत्रितं, शलां परस्परं सवर्णसंज्ञानिषेधापत्तेः, यथाश्रुतन्यासेतु–पूर्वसवर्णकरणान्नेति । **हशि चेत्येव सिद्ध इति** । एतदवतरणस्य **पाठकग्रन्थे**ऽतीतिवचनमित्यस्यानुवर्त्य योगविभागेन

❀ विषमपदविवृतिः ❀

**ष्ठ्यत्वमिति** । एतच्च प्रकृतानुपयुक्तत्वादुपेक्ष्यम् । **एकारशकारादीनामिति** । **अन्ये** त्वाकारहकार-

दर्शयति—**आकारसहित इति** । अत एव 'वेला'विति निर्देश उपपद्यते । समाहारद्वन्द्वे तु टच्प्रसङ्गः, अज्झलिति समाहारद्वन्द्वं कृत्वा आपदेन द्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति भावः । अत एव भाष्ये प्रयत्नभेदेनैषां सावर्ण्याभावः साधितः । **एतेषु**

ॐ अभिनव-चन्द्रिका ॐ

आभ्यन्तरप्रयत्नैक्याभावान्न दोष इति वाच्यं, सूत्रकृन्मते दोषसत्त्वात् । वस्तुतस्तु 'एकारादीनां केवलौष्ठ्यत्व'मितिमते इकारैकारयोः सूत्रकृन्मते सावर्ण्यस्य दुर्वारत्वेन केवलौष्ठयत्वादि न सूत्रकृतां मतमिति–'एकारशकारयोरप्युपलक्षण'मिति मूलं चिन्त्यमेवेति–नाज्झलाविति न्यासे न कोपि दोष इति दिक् । **सावर्ण्याभावः साधित इति** । स्यादेतत्–भाष्यकारमते प्रयत्नभेदेन अज्झलोः सावर्ण्याभावेपि सूत्रकृन्मते कथं सावर्ण्याभावः ?, न 'च तुल्यास्य'सूत्रे 'नाज्झला'विति निषेधेन अज्झल्-भिन्नत्वेन सङ्कोचेन नाज्झलोः सावर्ण्यप्रसक्तिरिति वाच्यम्, एवं तर्हि अचां हलामपि परस्परं सवर्ण-सञ्ज्ञानापत्तिरिति चेन्नैवम् अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णसञ्ज्ञं भवति, हल्भिन्नेन तुल्यास्य-प्रयत्नं हल्भिन्नं सवर्णसञ्ज्ञं भवतीति नाज्झलाविति तात्पर्यग्राहकेनावृत्त्या तुल्यास्यसूत्रस्यार्थद्वयकरणे-नादोषात् । अत्र प्रथमवाक्येन हलां, द्वितीयवाक्येन च अचां सवर्णसञ्ज्ञा बोध्या । अथवा स्वविशिष्ट-

ॐ चिदस्थिमाला ॐ

**करोक्त**मपास्तम्, हकारासङ्ग्रहाच्च । प्रकारान्तरेण वारणन्तु गौरवपराहतमिति दिक् । नाच्शलाविलेव सूत्रयितुमुचितमिति यथा न, तथा कौस्तुभव्याख्याने स्फुटीकृतम् । ननु सावर्ण्यपक्षे'ऽतोरो'रित्यत्राप्लुत इति व्यर्थं, 'हशि चे'ति सिद्धेरनस्तत्तदभावज्ञापकमिति मास्तु नाज्झलाविति—सूत्रमत आह—**हशीति** । **तोरोरिति** । अत्राऽप्लुते इत्यंश इत्यर्थः । अन्यांशस्त्वनुवृत्त्यर्थं आवश्यकः । न च हकारेऽतोरोरित्येव सिद्धि-रास्तां तत्र पक्षे, एवञ्च 'यशि चे'त्येव पठितुं युक्तमिति 'हशिचे'त्ययुक्तमिति वाच्यं, तपरकरणादाकार इव हकारेऽपि पूर्वसूत्राऽप्रवृत्तेः । अगतिकगति-क्लिष्टसमासाङ्गीकारे बीजमाह—**सूत्र इति** । अत एव= आकारप्रश्लेषादेव, अनेन तत्र मानमुपदर्शितम् । आकारस्याऽचा समाहारेप्येकवद्भावादग्रे तथा द्वन्द्वेन द्विवचनोपपत्तिरित्याशयेनाह—**समाहारेति** । युक्त्यन्तरं खण्डयति—**अज्झलिति** । **'द्वन्द्वे तु'**— 'इतरेतरे'त्यादि । अपिर्हलसमुच्चयद्वारा दृष्टान्तबोधकः । अन्यथा तस्य तेन सह विवक्षाया असम्भवाद्द्वन्द्वो न स्यात् । अत्र प्रुतस्यापि प्रश्लेषे भाष्यं प्रामाणमिति सूचयंस्तत्रेष्टापत्तिं निराचष्टे—**अत—एवेति** । तस्य तैः सावर्ण्यस्येष्टत्वादेवेत्यर्थः, तथा च द्वयोः प्रश्लेषेण तयोस्तेनैव तदनिष्टत्वमिति भावः । एकपदे एव दोष-

ॐ ज्योत्स्ना ॐ

**इति** । **व्यावृत्यर्थ मिति** । 'श्व आगन्ते' त्यादौ । तथा चोक्तज्ञापकेन सूत्रप्रत्याख्याने इहैव

ॐ सदाशिवभट्टीयम् ॐ

विधानमित्यर्थः—इति न शङ्काकलङ्कलेशः । **व्यावृत्यर्थमिति** । अत्ववति चेदत्येवेति नियमद्वारेति भावः । तपरकरणेन दीर्घवद्ध्रस्वाकारेपि व्यावर्त्यत्वान्नानेन न सिद्धिः । **सावर्ण्यं न स्यादिति** । परवल्लिङ्गमिति नपुंस-कत्वापत्तिर्बोध्या । **अत एवेति** । प्रश्लेषादेवेत्यर्थः । एकपदे एव दोषसम्भवेन पदद्वयपर्यन्तधावनं व्यर्थमिति

ॐ विषमपदविवृतिः ॐ

योरादिपदेन ग्रहणमित्याहुः । अत्रादिशब्दग्राह्यं चिन्त्यमिति **केचित्** । यजुष्येकेषामिति-निर्देशादिकारैकारयोर्न सावर्ण्यम् । नन्वकारहकारयोः सावर्ण्ये शिवोऽर्च्य 'इत्यादौ हशि चे'त्येव सिद्धे **'ऽतोरो'रिति व्यर्थं, तस्मात्तयोस्तन्नेत्याशङ्क्याह—हशि चेत्येवेति** । तथा च अकारहकारयोरपि सवर्णसञ्ज्ञासत्त्वादाकारे परतोऽपि 'हशि चे'त्युत्ले प्राप्ते ह्रस्वाकार एवेति नियमार्थमतो रोरिति

**परेष्विति** । इदमुपलक्षणम्,—'एतेषु विद्यमानस्ये'त्यपि बोद्ध्यं, तेन हकारादीनामकारादिषु परतो दीर्घादिसङ्ग्रहः । **अच्त्वं स्यादिति** । अच्पदबोद्ध्यत्वं स्यादित्यर्थः। इदं 'प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्ति'रिति मते, व्यक्तिपक्षे च बोद्ध्यम् ।

**अणुदि** । अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । 'सवर्णस्ये'त्यस्य—'बोधक'

❀ अभिनव-चन्द्रिका ❀

स्सवर्णसञ्ज्ञको भवति । वै० 'स्ववृत्ति—अच्त्वाभावविशिष्टात्वाभावविशिष्टाच्त्वाभावहल्त्वाभावै'तदन्यतरस्तद्वत्त्वं स्वनिष्ठजन्यतानिरूपितजनकताविशिष्टजनकतानिरूपितजन्यतावत्त्वै'तदुभयसम्बन्धेन । जनकतावैशिष्ट्यञ्च 'स्वव्यापकत्व''स्वव्याप्यत्वै'तदुभयसम्बन्धेनेत्यदोषात् । अथ वा वृत्तौ 'मिथ'इति पूर्वान्वयि, तथा च मिथः तुल्यास्यप्रयत्नं सवर्णसञ्ज्ञं भवतीति सूत्रार्थः । मिथःपदार्थश्च—सम्बन्धविशिष्टसम्बन्धसम्बन्धित्वं । वै० 'स्वप्रतियोगितासमानाधिकरणानुयोगितानिरूपकत्व' 'स्वानुयोगितासमानाधिकरणप्रतियोगितानिरूपकत्व''स्वभिन्नत्व' 'स्ववृत्तिसंसर्गतावच्छेदकरूपवत्त्वै'तच्चतुष्टयसम्बन्धेन । देवदत्तो यज्ञदत्तं नमस्करोति, यज्ञदत्तश्चैत्रं नमस्करोति, तत्र 'देवदत्तयज्ञदत्तौ परस्परं नमस्कुरुत' इति प्रयोगवारणाय आद्यम् ।'तत्रैव यज्ञदत्तं चैत्रो नमस्कुरुते' इति वारणाय द्वितीयं,देवदत्तो यत्रात्मानं नमस्करोति तत्र परस्परन्नमस्करोतीतिप्रयोगवारणाय तृतीयं, देवदत्तो यत्र यज्ञदत्तं नमस्करोति, यज्ञदत्तश्च देवदत्तं ताडयति तत्र 'परस्परं नमस्कुरुत' इति प्रयोगवारणाय चतुर्थम् । प्रकृते चानुयोगिकत्वप्रतियोगित्वे च अभिष्ठे हल्निष्ठे वा विवक्षिते, न तु अज्निष्ठा प्रतियोगिता हल्निष्ठा चानुयोगिता, न वा हल्निष्ठा प्रतियोगिता अज्निष्ठानुयोगिता । अत्रैव नाज्झलाविति-तात्पर्यग्राहकमित्यदोषादिति दिक् ।

**बोधक इति शेष इति** । 'घटकतये'ति शेष इत्यपि बोध्यम् । तथा च अण् उदिच्च घटक-

❀ चिदस्थिमाला ❀

सम्भवेन पदद्वयपर्यन्तधावनं व्यर्थमिति सूचयितुमाह—**इदमिति** । ननु अच्शब्दस्य सञ्ज्ञाशब्दत्वेन तदुत्तरभावप्रत्ययान्तेन शब्दस्यैव बोधनादनन्वयापत्तिरत आह—**अच्पदेति** । इदं=हकारादौ तेन तत्त्वापादनम् । घटकेष्वपि=तद्बोध्यघटकानुच्चारितद्वितीयादिवर्णेष्वपि । **मत इति** । 'अज्झलोः प्रतिषेधे शे'त्यादिवदतो वार्त्तिककृतो मत इत्यर्थः। अन्यथा ह्रस्य तत्त्वेऽपि इकारादेरनुच्चारितत्वेन शादेस्तत्त्वाप्राप्त्या हकारादीनामित्याद्युक्त्यसङ्गतिः स्पष्टैव ।'मते' इत्यनेनारुचिः सूचिता—नायं सिद्धान्तः, उच्चारितस्यैव तत्त्वमित्यणुदित्सूत्रभाष्यविरोधादितिरूपा । **व्यक्तीति** । जातिपक्षे दोष एव न, इत्वशत्वादिजातेर्भेदात्, तत्सूत्रे जातिपक्षस्याभावाच्च, एवञ्च तदा तथोक्त्यसङ्गतिरेवेति भावः । ननु मूलोक्तः सञ्ज्ञासञ्ज्ञिभावो न युक्तः, विभिन्नविभक्तिकत्वात्, किञ्च 'सिद्धं धर्मिण'मित्यादिन्यायविरोधादत आह—**अणमिति** । सम्बद्धविधेयानुपादानादिदमपि कथमत आह—**सवर्णेति** । अर्थविशेष्यकशक्तिग्रहवत्पदविशेष्यकस्यापि तस्य स्वीकारात् । एवमन्य-

❀ सदाशिवभट्टीयम् ❀

सूचयितुमाह—**उपलक्षणेति** । भावप्रत्ययान्तस्य सञ्ज्ञाशब्दपरत्वादनन्वयोऽत आह—**बोध्येति** । इदं=शकारादिसंग्राहकस्य 'हकारादी'त्यादिपदस्योपादानम् । जातिपक्षे तु जातेर्भेदात् शङ्कैव नेति भावः ।

❀ विषमपदविवृतिः ❀

सूत्रमिति भावः । **अत एव भाष्य इति** । आकारप्रश्लेषादेवेत्यर्थः । **अणमुद्दिश्येति** । तेन सञ्ज्ञायाः

❀ वरवर्णिनी ❀

**अणमुद्दिश्येति** । अथ कोऽर्थोऽस्य सूत्रस्य ? 'अण्सवर्णान्गृह्णाती'त्यर्थे व्यक्तिपक्षे'ऽस्य च्वा'वित्यादावकारस्याण्त्वाभावेन सवर्णग्रहणानापत्तौ 'मालीभवती'त्यादावीत्त्वानापत्तेः, जातिपक्षेऽपि—उच्चारित-

इति शेषः । आदेशादौ सवर्णग्रहणवारणायाह—प्रतीयते इति ।

परे तु–'प्रत्ययग्रहणमेकदेशानुमत्या 'भाव्यमानेन सवर्णानां ग्रहणं ने'ति परिभाषां

### ॐ अभिनव-चन्द्रिका ॐ

तया सवर्णान्गृह्णातीति सूत्रार्थः। अण्घटितमुदिच्च स्वादिसवर्णान्गृह्णातीति यावत् । एतेन "—'न चाणुदित्सूत्रं व्यर्थं, प्रत्याहाराद्यवर्णेषु ककारादिचिह्नेन स एवायमिति प्रत्यभिज्ञयाऽण्वादणुदित्सूत्रं चरितार्थ'मिति शेखरोऽसङ्गतः । प्रत्याहाराद्यवर्णस्य अनर्थकत्वेन तज्जन्योपस्थित्या शाब्दबोधाजननात्–"इत्यपास्तम्। इगादिपदानां घटकतया स्वादिसवर्णग्राहकत्वेन शाब्दबोधे बाधकाभावात् ।

### ॐ चिदस्थिमाला ॐ

त्रापि बोध्यम्। यत्तु,–रत्नाकरकृत्"—'कृत्रिमाकृत्रिमे'तिन्यायेन तत्सञ्ज्ञकस्यैव ग्रहणेनादेशादीनामनिषेधे 'वृतो वेत्यादिन्यर्थम्–अतो यौगिकादर–" इति तन्न, द्वयोः प्रसिद्धत्व एव तन्न्यायसञ्चारात्, तद्धनयन्नाह–आदेशादाविति। आदिना आगमपरिग्रहः,मूलादेस्तदनुयायिरत्नाकरादेश्च चिन्त्यत्वं ध्वनयितुं सिद्धान्तमाह-परे त्विति । एकदेशेति। परिभाषायां भाव्यमानत्वेनाभिमतप्रत्ययादेशागमसमूहैकदेशप्रत्ययस्यात्रोच्चारणेन तदंशे निषेधसम्मत्येत्यर्थः। ज्ञापयतीति। न च स्वस्मिन् चारितार्थ्याभावः, भाव्यमानः प्रत्ययभिन्न एवेतिभ्रमनिवर्तकत्वात्, उदिदंशे परिभाषाया अप्रवृत्तिरित्याञ्जस्येन बोधनार्थत्वाच्च । उदित्साहचर्येण विधेयांशेऽणंशस्य प्रवृत्तेरेव हि तस्य वैयर्थ्यं ज्ञापकत्वमूलम्, अन्यथा प्रत्ययमात्रांशे निषेधांशासाफल्ये ज्ञापकस्यानङ्गतिरेव–'वाक्येवाक्यैकदेश'इति न्यायेन'श्नसा श्ये'तिज्ञापकैकाज्ग्रहणवद् 'गतिकारके'ति ज्ञापकाऽतिङ्ग्रहणवच्च

### ॐ वरवर्णिनी ॐ

स्यैव प्रत्यायकतया–'इको यणची'त्यादाविगादिबोध्योकारादिभिरण्त्वेऽपि सवर्णग्रहणानापत्तेस्त्वोदिभ्य इत्यादिनिर्देशासङ्गतेश्च । 'अण्बोधकं पदं सवर्णग्राहक'मित्यपि नार्थः, 'अस्य च्वा'वित्यादावपदस्ये'को यणची'त्यादाविगादिपदस्याणबोधकत्वेन दीर्घाकारेकारादेर्ग्रहणेऽपि—उकारादेरनुच्चारितस्य दीर्घादिग्राहकत्वानुपपत्तेरनुद्धारात् । किञ्च—यत्किञ्चित्सवर्णग्रहणवारणाय—'अण्बोधकं स्वबोध्या'नित्येवमर्थस्यावश्यमाश्रयणीयत्वेन—इगादेः समुदितस्यैव सहग्रहणात्सञ्ज्ञात्वे—स्वसवर्णाप्रसिद्ध्या दीर्घेकारादिग्रहणानापत्तेः । नचा'ण्बोधकं स्वबोध्यसवर्णान्गृह्णाती'त्यर्थस्वीकारेणोक्तदोषविरह इति वाच्यम्, अशादिपदस्याप्यण्बोधकपदतया स्वबोध्यजकारादिसवर्णचकारादेरपि ग्रहणापत्तौ 'देवाश्चरन्ती'त्यादौ यत्वापत्तेः । नचाण्मात्रबोधकं पदमित्याद्यर्थे न दोष इति वाच्यम्, अशादिपदस्यातथात्वेन दीर्घाकारादिग्रहणानापत्तेः । न चा'ण्बोधकं स्वबोध्याण्सवर्णान्गृह्णाती'त्यर्थेन न दोषः, जकारादेरण्त्वाभावादिति वाच्यं, प्रत्ययादिपदानामपि—अण्बोधकत्वेन स्वबोध्याण्सवर्णग्रहणापत्तेः, अर्थवत्सूत्रन्तु हिरुगादौ चरितार्थमिति न 'तदारम्भसामर्थ्याद्राम इत्यादौ न दोष'इति वक्तुं शक्यम् । 'व्यासज्यवृत्तिधर्मावच्छिन्नविषयत्वाप्रयोजकं यदण्बोधकं पद'मित्यर्थे—प्रत्ययादिपदानां मिस्स्यसादिवृत्तिप्रत्ययत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नविषताप्रयोजकतयाऽप्रयोजकत्वविरहेणोक्तदोषाभावेपि—ह्रस्वदीर्घादिपदैरुदात्तादिपदैश्च स्वसवर्णग्रहणापत्तिर्दुर्वारैवेति चेदत्रास्मद्गुरुचरणाः"—

—'अण्विशिष्टं पदं स्वबोध्याण्सवर्णान्गृह्णाती'त्यर्थः । वै० 'स्वघटितत्व"स्वसमभिव्याहृतानुबन्धेतरवर्णाघटितत्वो'भयसम्बन्धेन । नातो ह्रस्व-प्रत्ययादिपदेऽतिप्रसङ्गः—"इति श्रीक्षेहिरामशास्त्रिणः । केचित्तु—अणिनष्ठवर्णत्वव्याप्यधर्मावच्छिन्नवर्णविशिष्टं पदं स्वबोध्याण्सवर्णान्गृह्णातीत्यर्थः, वै० 'स्वावयवकत्व' 'स्वाघटितवर्णद्वयारब्धसमुदायाघटितत्वो'भयसम्बन्धेन । तथा च—अणिनष्ठो वर्णत्वव्याप्यो धर्मोऽत्वादिः, तदवच्छिन्नोऽकारस्तदावयवकत्वं, तादृशाकारेतरवर्णद्वयारब्ध-चटादि-समुदायाघटितत्वञ्चाजादिप्रत्याहारे सुलभमिति तत्र लक्षणसमन्वयः । अकारे तु व्यपदेशिवद्भावेन स्वावयवकत्वसत्त्वाल्लक्षणसमन्वयः । प्रत्ययवि–ह्रस्वोदात्तादिपदादौ च तादृशसम्बन्धविरहान्न दोषः । स्वस्यापि स्वव्याप्यत्वे तु–'स्वभिन्नत्व'मपि वर्णत्वव्याप्यधर्मे विशेषणीयम्—" इत्याहुः । अन्ये तु—'अशब्दसञ्ज्ञे'त्यनुवर्त्य प्रत्ययादिपदेषु दोषं निरस्यन्ति,

ज्ञापयतीति युक्तम् । प्रत्ययपदस्य तदर्थत्वन्तु न युक्तं—वार्तिककृता टित्किन्मित्सूपसङ्ख्यानोक्तेः । भाष्यकृता चा'प्रत्ययग्रहणमेतत्परिभाषाज्ञापक'मित्युक्तेः । 'ज्यादादीयसः' इति सूत्रे भाष्ये ध्वनितमिदम् । तत्र हि—"किमर्थमादित्युच्यते ? 'ज्याद' इत्येवोच्यतां, का

❀ अभिनव-चन्द्रिका ❀

सद्ग्रहणेन आदेरेव सञ्ज्ञात्वेन प्रत्याहाराद्यवर्णस्यानर्थक्याभावाच्च । **ज्ञापयतीति** । न च पुनरपि

❀ चिदस्थिमाला ❀

'ज्ञापयती'त्यस्य बोधयतीत्यर्थकत्वाच्चेति भावः । ननूक्तक्लेशान्नेदं युक्तमिति मूलोक्तमेव युक्तमत आह—**प्रत्ययेति** । न तु तस्य तत्त्वं युक्तमित्यन्वयः । अत एवोभयसाधारणहेतूक्तिरग्रे । **तदर्थेति** । विधीयमानार्थकत्वमित्यर्थः । **उपेति** । निषेधेत्यादिः । ननु अज्ञात्वा वार्तिककृता तथोक्तमत आह—**भाष्येति** । **उक्ते**रित्यग्रे **चो** योज्यः, अन्यथा तदसङ्गतिः स्पष्टैव । नन्वियमप्येकदेशयुक्तिरस्तु, किञ्चाप्रत्ययग्रहणस्यान्यत्रेवात्र न स्वारसिकं ज्ञापकत्वं, किञ्चोपायस्योपायान्तरादूषकत्वमत आह—**ज्यादादीति** । **चो** 'ध्वनित'मित्यग्रे

❀ ज्योत्स्ना ❀

दोषः प्रसज्येतेति भावः । **परे त्वप्रत्ययग्रहणमिति** । अस्य 'व्यर्थ म'दिति वाक्यशेषः । वैयर्थ्यञ्च—प्रत्ययसञ्ज्ञाया अन्वर्थत्वा'त्सनाशंसे'त्युकारग्राह्यदीर्घस्यार्थाप्रत्यायकत्वेन तदप्रवृत्त्या विधातुमशक्यत्वादिति भाष्योक्तमनुसन्धेयम् । **इति युक्तमिति** । सत्यपि ज्ञापके प्रत्ययग्रहणस्य कथं स्वस्मिंश्चरितार्थतेत्यत्रेदञ्चिन्त्यम् । **भाष्यन्तु**—'ज्ञापयती'त्यस्य रूढ्यर्थप्रतिक्षेपेणान्वर्थताश्रयणपूर्वकं

❀ सदाशिवभट्टीयम् ❀

**अणुदित् । ज्ञापयतीति** । 'गतिकारके'तिवद्बोधयतीत्यर्थः, अतो न सार्थक्यप्रश्नावसरः । ननु वार्तिकस्योपदेशन इति वदज्ञानेन प्रवृत्तिरत आह—**भाष्येति** । ननु भाष्यमपि योगरूढ्या परिभाषार्थं बोधयतीत्यर्थकमत आह—**ज्यादेति** । एवञ्च शब्दार्थसम्बन्धनिश्चयस्य ऋष्यनुभवसिद्धत्वेन तदनुक्त्या

❀ विषमपदविवृतिः ❀

सञ्ज्ञिनः पूर्वमुच्चारणं न दोषाय । तस्या एवोद्देश्यत्वादिति सूचितं भवति । **एतत्परिभाषाज्ञापकमिति** । 'स्थालीपुलाक'न्यायेनैकदेशानुमत्येति बोध्यम् । दूषणान्तरं चाह—**जातिपक्षे इति** ।

❀ वरवर्णिनी ❀

इगादिपदेषु 'स्वादिभ्यश्चे'त्यादिनिर्देशा**द्दीर्घाज्जसी**त्यादिज्ञापकाच्च न दोष इति तदाशयः—" इति **गौडाः** ।

गुरुवर**श्रीबालशास्त्रि**चरणास्तु—'साक्षात्परम्परया वा व्यासज्यवृत्तिधर्मावच्छिन्नविषयत्वाप्रयोजकं यदणबोधकं पदं तत्स्वबोध्याणसवर्णान्गृह्णाती'त्येवार्थः, प्रत्ययादिपदे प्रत्ययपदजन्यबोधविषयतावच्छेदकत्वस्य व्यासज्यवर्त्तिन्येव प्रत्ययत्वे सत्त्वान्न दोषः, [ भिसादौ प्रत्ययत्वस्य व्यासज्यवृत्तित्वात् ] । 'साक्षात्परम्परये'त्युक्तेर्गुणपदवत्त्वादिना बोधकगुणादिपदादपि न सवर्णग्रहणापत्तिः, गुणादिपदस्य प्रत्येकमकारादिनिष्ठविषयताप्रयोजकतया साक्षाद्व्यासज्यवृत्तिधर्मावच्छिन्नविषयत्वाप्रयोजकत्वेऽपि व्यासज्यवृत्तिह्रस्वपदत्वादिरूपानुपूर्व्याऽपि परम्परया ह्रस्वादिपदप्रयोज्यविषयतावच्छेदकत्वात्—" इत्याहुः । एतन्नये 'कालघटितधर्मानवच्छिन्ने' त्युक्तेर्नावश्यकतेति महदेव लाघवमित्यस्म**त्पितृ**चरणाः । विस्तरस्त्वस्मत्कृत**शब्देन्दुशेखराभिनवराजलक्ष्म्यां** द्रष्टव्यः ।

**टिदिति** । लविता, बभूव, अनड्वानित्यादौ पक्षे इडादयो दीर्घा अपि प्राप्नुवन्ति, नुक् कदाचिदनुनासिकोऽपि प्राप्नोतीति टिदादीनामपि प्रतिषेधः करणीय इति वार्तिकार्थः । ननूपदेशने इति वार्तिकवत्तदर्थाज्ञानेनैवेदं वार्तिकं प्रवृत्तमित्यरुचेराह—**भाष्यकृतेति** । 'कृत्रिमाकृत्रिम'न्यायेनाप्रत्ययपदेन प्रत्ययभिन्नस्य ग्रहणमित्याशङ्कया वार्तिकोत्थानम्, ज्ञापकपदस्य बोधनार्थकतया सूत्राक्षरमर्यादयैव तदर्थलाभाद्वार्त्तिकं व्यर्थमित्याशयेन च भाष्यं प्रवृत्तमिति न प्राचीनमते तद्विरोध इत्यरुचेराह—**ज्यादेति** । **परे तु** "अस्यापि भाष्यस्य कृत्रिमन्यायप्रवृत्तिशङ्कयैव प्रवृत्तिरित्येवं तज्ज्ञापनसम्भवान्न प्राचीनमते तद्विरोधः"—**इत्याहुः** ।

रूपसिद्धिः? आन्तर्यतो दीर्घस्य दीर्घो भविष्यति, एवन्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा—'भाव्यमानेन'—" इत्यादि। त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिः।

जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयं, व्यक्तिपक्षे गुणाभेदकत्वप्राप्तश्च वारणीयं, तेन 'घटव'दित्यादौ नानुनासिको वकारः। एतेन—'ऽणुदिदित्येव सिद्धेऽण्ग्रहणेन यण्सु गुणभेदकत्वं ज्ञाप्यते' इति परास्तम्—'इत्याहुः।

ॐ अभिनव-चन्द्रिका ॐ

'ज्याद ईयस' इत्येवोच्यतां, लोपेनैव सिद्धेऽकारादेशविधानसामर्थ्येन पररूपाप्रवृत्त्या सवर्णदीर्घेण ज्यायानिति रूपसिद्धेरिति वाच्यं, वृद्धशब्दाण्ण्यन्तात्क्विपि ज्यादेशे वृद्धौ पुंकि ईयसुनि श्रवणार्थमकारोच्चारणस्य चारितार्थ्यात्। दीर्घोच्चारणेन द्विमात्रिक एव विधेय इति पाणिनितात्पर्यावधारणेन पाणिनितात्पर्यविषयीभूतद्विमात्रिकविधानाय दीर्घोच्चारणसार्थक्येन स्वांशे चारितार्थ्यन्नास्तीति वक्तुम-

ॐ चिदस्थिमाला ॐ

योग्यः। इदम्=प्रत्ययपदस्य तदर्थत्वायुक्तत्वम्। का रूपेति। अदादेशे 'अतो गुणे' इति पररूपापत्तिः, न च विधिवैयर्थ्यं, ज्येयानित्यस्य वारणार्थत्वादिति भावः। 'अणुदि'त्सूत्रेण सवर्णग्रहणेऽपि 'स्थानेऽन्तर' इति दीर्घ एव, न ह्रस्व इति पररूपाप्राप्त्या सवर्णदीर्घेण रूपसिद्धिरित्याशयेन समाधत्ते—आन्तर्यत इति। अत एवात्र तपरः कृतः। इदमेव=आद्ग्रहणमेव। अत्रैवकारोल्लेखेन 'स्वस्मिश्चारितार्थ्येन स्वारसिकज्ञापकतास्यैव नत्वन्यस्ये'ति—'अणुदित्सूत्रे च ज्ञापयतीत्यस्याद्ग्रहणं सामान्यापेक्षं ज्ञापकमितिबोधनाय तत्सिद्धान्तं बोधयतीत्यर्थ' इति च सूचितम्। स्यादीत्यस्यैत्युक्तमिति शेषः। त्वदुक्तेति। प्रत्ययपदस्य मूलोक्तेत्यर्थः। स्थाने। तृतीयान्तपाठः क्वचित्। हिस्त्वर्थे। पूर्वपक्षस्याज्ञानकृतत्वादाह—सिद्धान्तेति। त्वदुक्तस्यैव सिद्धान्तत्वेन वक्तव्यत्वात्। एवञ्च शब्दार्थसम्बन्धनिश्चयस्य कस्यनुभवसिद्धत्वेन तदनुक्त्या तस्य तदर्थत्वमप्रामाणिकमत एवोपायस्योपायान्तरेत्यविषयत्वं, तत्रैकदेश्यनुक्तित्वञ्च। न च अत्राप्येकदेश्युक्तित्वं, तत्कल्पकभाष्यान्तरानुपलम्भादिति भावः। तत्सत्त्वेऽपि परिभाषावश्यकतामाह—जातीति। अपिरुक्तपक्षसमुच्चायकः। अनयैव—न तूक्तार्थकाप्रत्यय इत्यनेन, असम्भवात्, उदिदंशे एव तच्चारितार्थ्यापत्तेश्च, एकयोगनिर्दिष्टत्वात्। ननूदिदंशे सिद्धान्तवदसम्बन्धेनागत्या योगविभागेन जातिपक्षे तेनापि वारणसम्भवस्तपरसूत्रवदत आह—व्यक्तीति। अन्यथा शास्त्रिगाण्रूपशास्त्रप्राप्तिरेव वार्णाया स्यात्राशास्त्रगुणभेदकत्वप्राप्तिरिति दोषस्तदवस्थ इति भावः। वकार इति। 'मादुपधायाः' इत्यनेनेति भावः। कृष्ण—कौस्तुभाद्युक्तिं खण्डयति—एतेनेति। उक्तरीत्योक्तसमूलपरिभाषाया आवश्यकत्वेन,

ॐ ज्योत्स्ना ॐ

बोधयतीति प्रदर्शितरीत्यैव नेयमिति परिभाषाप्रदीपार्चिषि निरूपितं विस्तरात्। ननु मात्रिकेण द्विमात्रिकस्य ग्रहणं मात्रिकत्वादिरूपतत्तत्कार्यस्य तत्तत्स्थानेष्वारोपाद्भेदघटिततौल्यस्य

ॐ सदाशिवभट्टीयम् ॐ

तस्य तदर्थकत्वमप्रामाणिकमिति भावः। एतेनेति। आवश्यकपरिभाषया 'घटव'दित्यादिसिद्धौ ज्ञापने फलाभावेनेत्यर्थः।

ॐ विषमपदविवृतिः ॐ

'अप्रत्यय' इत्यस्याविधीयमानार्थकत्वे तु जातिपक्षप्राप्तस्य निषेधो न स्यात्, 'अनन्तरस्ये'ति न्यायात्, तस्य पर्युदासत्वाच्चेति भावः। परास्तमिति। तथा चाणुदित्सूत्रे चाण्ग्रहणमेव कार्यम्, 'हयवरट्'सूत्रस्थम्-'अथ किमर्थमन्तस्थानामण्सूपदेशः क्रियत' इति भाष्यं त्वेकदेश्युक्तिरिति भावः।

ननु 'चो'रित्यादावनुवादे कथमुदित्त्वमिति चेन्न, व्याकरणान्तरे एषामुदित्सञ्ज्ञकत्वेनादोषात् । उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वे तस्यापि शास्त्रत्वेनेत्त्वप्रवृत्तेः सुलभत्वाच्च । चो भिन्नक्रम इत्याह—**उदिच्चेति** । यद्यपि समुदायसवर्णिनोऽप्रसिद्धास्तथापि तदवयव-चादि-सवर्णा एवात्र तत्सवर्णा बोद्ध्याः। ह्रस्वाकाराद्यो[दि]रपि काल-पुरुषाद्युपाधिभेदेन

-

ॐ **अभिनव-चन्द्रिका** ॐ

शक्यत्वाच्च । दीर्घोच्चारणं विनापि 'ज्याया'निति रूपसिद्धिर्भवतीति पूर्वपक्षान्तरमेतत् । **चादि-सवर्णा इति** । एतत्साहचर्येण—अण्पदं अण्घटकपरमिति—तदपि खादिसवर्णानेव गृह्णातीत्यपि

ॐ **चिदस्थिमाला** ॐ

व्यक्तिपक्षेऽपि गुणाभेदकत्वप्राप्तस्य तया वारणसम्भवेन भेदकत्वज्ञापने फलाभावेन, सिद्धान्ते तस्यैवासत्त्वेन चेत्यर्थः । **सिद्धे इति** । यवलांशे गुणानामभेदकत्वान्निर्वाह इति भावः । 'चो'रित्यादावुदित्करणादप्रत्ययस्योदिदंशेऽसम्बन्ध इति ध्वनयितुमाह—**नन्विति** । कुगादौ तु न तद्ग्रहः, 'उकारमात्रेत' इति व्याख्यानात् । एतेन 'तस्योच्चारणार्थत्वाच्चे'ति **रत्नाकराद्युक्तम**पास्तमिति भावः । **कथमिति** । आद्योच्चारणरूपोपदेशाभावादिति भावः । तत्र मूलमतेन समाधत्ते—**व्याकेति** । एषां=चादीनाम् ।

सिद्धान्तमतेनाह—**उपेति** । तस्यापि=अनुवादस्यापि । अपिः–विधेयसमुच्चायकः । **शास्त्रत्वेनेत्वेति** । तद्याप्यप्रातिपदिकत्वेनेत्यर्थः । **चो भिन्नेति** । न च स्वसमुच्चायकः, सवर्णत्वेनैव तल्लाभात् । एतेन 'चात्स्वरूपस्ये'ति **रत्नाकराद्युक्त**मपास्तमिति भावः । यत्तु—उदिदित्यतद्गुणसंविज्ञानो बहुव्रीहिः—तेन चोरित्यादौ चादीनामेव सञ्ज्ञात्वम्, अन्यथोक्तरीत्योकारस्य पदपर्यालोचनदशायामेव निवृत्तत्वेन सूत्रस्यासम्भवदुक्तिकत्वापत्तेरिति, तन्न,—निमित्तसत्त्वेन तद्गुणत्वस्यैव सत्त्वात्, अनन्तरार्थेऽसमासाच्च, तद्ध्वनयन्नाह—**यद्यपीति** । **समुदायेति** । इत्सञ्ज्ञकोकारविशिष्टेत्यर्थः । स्थानप्रयत्नभेदादिति भावः । **सवर्णिन इति** । अत्र सवर्णशब्दो धर्मपरः, **तच्छब्दे**नोभयत्रोक्तरूपसमुदायपरामर्शः । ननु ह्रस्वाद्योरकाराद्योः कथं मिथः सवर्णत्वम् ? भेदघटिततुल्यत्वाभावेनातुल्यस्थानत्वात्, तथा च **चस्त**थैव व्याख्येयोऽत आह—**ह्रस्वेति** । कार्यस्यैक्येन 'कार्यभेदा'दिति प्रागुक्तयुक्तेरसम्भवादाह—**कालेति** । अन्यत्रानिष्टत्वस्येष्टस्य

ॐ **ज्योत्स्ना** ॐ

सावर्ण्यप्रयोजकस्य सत्त्वादस्तु, न तु मात्रिकस्यापीत्यत आह—**ह्रस्वाकाराद्यो[दि]रपीति** ।

ॐ **सदाशिवभट्टीयम्** ॐ

**सुलभत्वादिति** । अत्र पक्षे कुक्—टुक्—नुम्—तुक्—धुडादौ न दोषः, 'उकारमात्रेदिति' व्याख्यानात्, 'परेश्च घाङ्के'त्यादाविव स्वरूपपरत्वं वा । **सवर्णिन इति** । सवर्णशब्दोऽत्र धर्मपरः । **चादीति** । इशादाविव नव्यमतेऽनुवादेपि इत्सञ्ज्ञालोपप्रवृत्तौ प्रतिबन्धकाभावेनोकारविनिर्मुक्तस्यैव चादेरुपस्थित्या न्यायसिद्धमिदमित्य**न्ये** । उकाररूपावयवसवर्णानां चुशब्दो न ग्राहकः, 'न विभक्तौ' वितिनिषेधेन सोरुकारस्येत्त्वानापत्त्याऽऽद्गुण इत्यादिनिर्देशासङ्गतेः । ननु यथाश्रुत एव स्वरूपपरिचायक आस्तां किं भिन्नक्रमत्वेनात आह—**ह्रस्वेति** । 'दैत्यारि'रित्यादौ दीर्घाद्यर्थमारोपस्यावश्यकत्वादिति भावः ।

ॐ **विषमपदविवृतिः** ॐ

**सवर्णस्य चेति** । चकारादसवर्णस्यापीत्यर्थः स्यादित्यत आह—**चो भिन्नक्रम इति** । **ग्राहकसूत्र**

स्थानेषु भेदमारोप्य तुल्यस्थानत्वं सूपपादम्। **अत्रेति**। ग्राहकसूत्र एवेत्यर्थः। व्याख्यानादिति भावः। 'उपसर्गादृती'त्यादितपरकरणादिति तु न युक्तम्, लृकारग्रहणेन चारितार्थ्यात्। एवमिणपि—परेणैव, 'अचि श्नु'ति सूत्रे—'इण' इत्येव सिद्धे 'य्वो'रिति गुरुनिर्देशाद्व्याख्यानाच्चेति लण्सूत्रे भाष्ये स्पष्टम्। नन्वेवम्—'अस्य च्वा'वित्यादौ सवर्ण-

### ❀ अभिनव-चन्द्रिका ❀

बोध्यम्। **ग्राहकसूत्र एवेति**। एतेन तपरसूत्रे अण्ग्रहणानुवृत्तिकल्पे तत्राप्यण्पदे परणकारेणैव प्रत्याहार इति बोध्यते।

### ❀ चिदस्थिमाला ❀

यथाश्रुतादलाभा'त्सर्वं वाक्य'मिति न्यायेनाह—**ग्राहकेति**। अत्र ज्ञापकमुर्ऋदित्यत्र तकारः, स हि चुरादिण्यन्तात्कृतधातोर्लुङि चङि अचीकृतदित्यत्र दीर्घऋकारस्थाने ह्रस्व एव यथा स्यादित्येतदर्थः। पूर्वेणात्राण्ग्रहणे तु उद्देश्ये विधेये चानण्त्वाच्छिन्नकालाग्रहणेन तस्य स्थानित्वादेशत्वयोरप्रसक्त्या व्यर्थं तत्स्यात्। न च तपरसूत्रेण लग्रहणार्थं तत्, स्थानेऽन्तरतमेतिवारणेन तद्ग्रहणे फलाभावात्। न चैवमपि विधेयत्वात्स्वस्मिन्नचारितार्थ्यम्, 'अण्कर्मणि चे'ति सूत्रस्थभाष्यप्रामाण्येन प्रतिप्रसवविधेर्युक्ततया तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात्। कृते तु तस्मिन् भाव्यमानतापीत्यन्यदिति—तदेतदभिप्रेत्याह—**व्याख्यानादिति**। ज्ञापकादित्यर्थः। यद्वा उपदेशपरम्परात इत्यर्थः, एतदुभयसङ्ग्रहार्थमेव **व्याख्यानादित्युक्तम्**। **रत्नाकरदर्पणव्याद्युक्ति** खण्डयति— **उपेति**। आदिना 'ऋत उ'दित्यादिपरिग्रहः। एतेन लृवर्णस्य ऋवदित्यतिदेशपक्षे तस्य तत्त्वसम्भव इति **मन्दोक्तमपास्तम्**, तस्य मुनित्रयानुक्तत्वात्, अत एव सावर्ण्यवचनेन समानजात्यतिदेशमेव वक्ष्यति, तस्य प्रत्याख्यानप्रकारत्वाच्च।

प्रसङ्गादाह—**एवमिति**। **गुर्विति**। एकमात्रापदकृतेत्यादिः। ज्ञापकमुक्त्वा उपदेशपरम्परामाह—**व्याख्यानाच्चेतीति**। **एवमिति**—अणुदित्सूत्राङ्गीकारे इत्यर्थः। आदिना 'अकः सवर्णे' इत्यादिपरिग्रहः—सूत्र-

### ❀ ज्योत्स्ना ❀

**लृकारग्रहणेनेति**। अण्ग्रहणानुवृत्तिमभिप्रेत्येदम्, वस्तुतः सूत्रमते लृकारस्य ऋकारेण सावर्ण्याभावेन ग्रहणाभावाद्वार्तिकमतेऽण्ग्रहणाभावेन सन्देहाभावाच्चिन्त्यमेतत्। प्रत्याहारे=इगादौ। तत्प्रत्यभिज्ञानेन=वर्णसमाम्नायस्थत्वप्रत्यभिज्ञानेन। ननूच्चारितस्य सञ्ज्ञास्वरूपान्तर्भावेण टि-घु-भाद्यन्तर्गत-

### ❀ सदाशिवभट्टीयम् ❀

**लृकारग्रहणेति**। 'यो ह्युत्सूत्रं कथयति नादो गृह्येते'ति भाष्यग्रन्थेन, 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके' इति **हरिग्रन्थेन** च तयोः सावर्ण्यस्य सूत्रमतेपि सत्त्वात्। वार्तिकमतेपि—पूर्वेणाण्ग्रहणपक्षे एकारादावाकृतिनिर्देशप्राप्तसवर्णग्रहणाभावायाप्रत्यय इत्यंशवन्नियमार्थमावश्यकत्वेन सत्त्वादण्ग्रहणस्य—तन्मतेऽप्ययं ग्रन्थो बोध्यः। 'लृवर्णस्य ऋव'दिति तु प्रत्याख्यानप्रकार इति—प्रकृते नावसरस्तस्येति सर्वमवदातम्।

**अन्ये तु** तपरकरणस्य परेणाण्ग्रहणं बोधयित्वा ग्रहणकशास्त्रप्रवृत्त्याऽष्टादशानां ग्रहणं प्रापय्य तपरसूत्रप्रवृत्त्या तद्बाधकल्पनया चारितार्थ्यकल्पनापेक्षया ऋलृवर्णयोः सावर्ण्यबोधनद्वारा तत्प्रवृत्त्या तद्ग्रहणेन साफल्यकल्पनाया एव लघुत्वादिति भावः। अत एव 'न युक्त'मित्येवोक्तं, न तु 'चिन्त्यमपास्तं' वा, तत्र 'तत्रे'त्यादीत्याहुः।

### ❀ विषमपदविवृतिः ❀

**एवेति**। एतन्नियमपरे तपरसूत्रेपि बोध्यम्। **इति तु न युक्तमिति**। तपरसूत्रेऽण्पदानुवृत्तौ तु युक्तमेवैतत्। अत्र परेणाण्ग्रहणे 'उर'दिति तपरकरणं भाष्योक्तमपि ज्ञापकं बोध्यम्। तदुपपादन-

ग्रहणं न प्राप्नोति, अण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन,—णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णोपस्थितेषु—उच्चारिताभेदेन गृहीतेषु-सूत्रस्य चारितार्थ्येन,—व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेन—प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेन्न, जातिपक्षाश्रयणेनादोषात् ।

❀ अभिनव-चन्द्रिका ❀

चारितार्थ्येनेति । 'अण्घटितं स्वादिसवर्णान्गृह्णाती'ति सूत्रार्थात्, 'आदिरन्त्येने'तिसूत्रेण सञ्ज्ञादेरेवेति स्वीकाराद्वेति भावः । एतेन 'एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नम् अपरशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानम्प्रतिबध्नातीति प्रतिबध्यप्रतिबन्धकभावमूलक'सकृदुच्चरित'न्यायेन प्रत्याहाराद्यवर्णेन अष्टादशोपस्थितावपि-प्रत्याहारनिष्ठशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानस्य प्रत्याहाराद्यवर्णविषयकशाब्दबुद्धेः प्रतिबन्धकत्वेनेदमसङ्गत'मित्यपास्तं, प्रत्याहारस्थले स्वाद्यवर्णे पृथक्शक्त्यभावेन निरुक्तप्रतिबध्यप्रतिबन्धकभाव स्यतन्मूलकसकृदुच्चरितन्यायस्य च विषयाभावादिति दिक् । जातिपक्षाश्रयणेनादोषादिति । परे तु-'अण्बोधकं सवर्णान्गृह्णाती'ति सूत्रार्थः । 'आदिरन्त्येने'तिसूत्रबोधितमञ्ज्ञा मध्यगबोध्यानामेव । ननु 'इको यणची'त्यादौ अण्बोधकपदसवर्णाप्रसिद्ध्या सवर्णग्रहणं न स्यात् । न चाऽण्बोधकं स्वबोध्यसवर्णान्गृह्णातीति न दोष इति वाच्यम्, अशादिप्रत्याहारस्थले स्वबोध्यदादिसवर्णतादिनामपि ग्रहणापत्तेश्च । न चाण्मात्रबोधकं स्वबोध्यसवर्णान् गृह्णातीति न दोष इति वाच्यं, तत्रैव स्वबोध्यादिसवर्णदीर्घाकारादिग्रहणानापत्तेरिति चेन्न । 'अण्बोधकं

❀ चिदस्थिमाला ❀

सामर्थ्याद्भविष्यतीति शङ्कां निराचष्टे—णकारादीति । प्रत्याहारे=तद्घटके । तदिति । आक्षरसमाम्नायिकेत्यर्थः । तत्रत्येति । प्रत्याहारस्थेत्यर्थः । येति । आक्षरसमाम्नायिकेष्विति शेषः । नन्वेवमप्यनुच्चारितत्वात्कथं ग्रहणमत आह—उच्चारितेति । भेदेनेति । अनण्त्वादिति शेषः । अप्रवृत्तावन्वयः । प्रकृते=अस्य च्वावित्यादौ । आदिग्राह्यं तदपीति प्रकटयन् आद्येत्युक्तिव्यावर्त्यमाह—प्रत्येति । घटकेति । तद्बोध्यघटकेत्यर्थः । अत्रोक्तहेत्वसङ्गमादन्यहेतुमाह-चोच्चारीति । तदभेदेन गृहीतेत्यादि-लक्षणापक्षस्य मनोरमाधृतस्यासाङ्गत्यं ध्वनयितुमाह—जातीति ।

❀ ज्योत्स्ना ❀

वन्न बोधकत्वमत आह—तत्रत्याद्यवर्णोपस्थितेष्विति । ननूपस्थितस्योच्चारितत्वाभावादग्राहकत्वमत आह—उच्चारिताभेदेनेति । 'न ऋदिल्लृदित्प्रयुक्तकार्यसङ्करो यथा व्यक्तिपक्षे' [ मूले १२९ पृष्ठे ] इति चूर्णिकान्तःपाठः । जातिपक्षे ग्राहकसूत्रेऽण्ग्रहणाभावात्सत्यपि हकाराकारयोः सावर्ण्ये न ग्रहणमत आह—

❀ विषमपदविवृतिः ❀

प्रकारस्तु कौस्तुभप्रभायां बोध्यः । न प्राप्नोतीति । अत्र हेतुर्व्यक्तिपक्षे—तत्रत्यात्रत्यव्यक्त्योर्भेदेनेत्येतावानेव, चारितार्थ्येनेत्यन्तस्तु अण्ग्रहणसार्थक्यप्रदर्शनपरः । नन्वाद्यवर्णेष्युरणित्यादौ कथं ग्रहणकशास्त्रप्रवृत्तिः ? व्यक्तिपक्षे पाणिन्युच्चारितस्याक्षरसमाम्नायस्थाद्भेदादित्यत आह—णकारादिचिह्नेनेति । नन्वा'दिरन्त्येने'त्यत्र सहग्रहणात्समुदायस्यैव सञ्ज्ञात्वं, तथा चाणित्यत्राकारस्य निरर्थकत्वात्कथं तत्राणुदित्सूत्रप्रवृत्तिरित्यत आह—तत्रत्येति । ननूपस्थितस्यानुच्चारितत्वात्कथं प्रत्यायकत्वमत आह—उच्चारिताभेदेनेति । नन्वेवं च 'णकारादिचिह्नेने'ति पूर्वग्रन्थो ऽसङ्गतः, अण्पदेन वर्णसमाम्नायस्थानामेवोपस्थितेः । आद्यवर्णोपस्थितेरिति तु असङ्गतमनुपयुक्तञ्च । तस्य निरर्थकत्वेनानुपस्थापकत्वादिति चेन्न । प्रत्याहाराद्यवर्णे णकारादिचिह्नेनाक्षरसमाम्नायस्थाभेदग्रहणं विनोच्चारिताद्यवर्णाभेदेनाक्षरसमाम्नायस्थस्य ग्रहणासम्भव इत्याशयात् । प्रकृते इति । 'अस्य च्वा'वित्यादौ । दूषणान्तरं चाह—प्रत्याहारघटकेति । तत्र हेतुमाह—उच्चारितस्यैवेति ।

अत एवानेकतकारादीनां झल्त्वादिसिद्धिः । सूत्रेऽण्ग्रहणं च न कार्यम् । 'ऋऌवर्णयोः सावर्ण्य'मित्यनेन समानजातित्वस्यैवातिदेशेनो'पसर्गादृती'त्यादौ न दोषः, एतद्व्यतिरिक्तसवर्णे समानजातित्वसत्त्वात् । पृथगनुबन्धकरणाच्च न ऋदिलृदिद्प्रयुक्तकार्यसङ्करः । अत्र पक्षे अइउण्सूत्रशेषोक्तभाष्यरीत्या तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियाम-

❀ अभिनव-चन्द्रिका ❀

पदं स्वबोध्याणसवर्णान् गृह्णातीति—अर्थेनादोषात् । नचैवमपि अथवदित्यत्रत्वप्रत्ययपदस्य अकारादिणान्तसमुदायघटकबोध्योकारादिबोधकत्वेन तत्रापि-स्वबोध्यो य अकारादिणान्तघटकबोध्यः-'सनाशंसभिक्ष उ'रित्यादिः, तत्सवर्णग्रहणे–हाहा हूहू इत्यादावपि 'अप्रत्यय'इति पर्युदासापत्तिरिति वाच्यं, व्यासज्यवृत्तिधर्मानवच्छिन्ना या अण्वृत्तिविषयता तादृशविषयताप्रयोजकं स्वबोध्याणसवर्णान्गृह्णातीत्यर्थेन प्रत्ययत्वस्य व्यासज्यवृत्तित्वेनादोषात् । नचैवमपि 'ह्रस्वस्य पिती'त्यादौ ह्रस्वादिपदस्य व्यासज्यवृत्तिधर्मानवच्छिन्नाण्वृत्तिविषयताप्रयोजकत्वेन सवर्णग्रहणे प्रदायेत्यादौ तुगाद्यापत्तिरिति वाच्यं,कालघटितधर्मानवच्छिन्ना व्यासज्यवृत्तिधर्मानवच्छिन्ना च या अण्वृत्तिविषयता तादृशविषयताप्रयोजकं स्वबोध्याऽणसवर्णान्गृह्णातीत्यर्थेनादोषात् । अत एव भाष्ये अनणि झलादिप्रत्याहारे एव दोषो दत्त इत्याहुः ।

❀ चिदस्थिमाला ❀

तद्द्रढयितुमस्यावश्यकतामाह—अत एवेति । जातिपक्षाश्रयणादेवेत्यर्थः । एवेन लक्षणाव्यवच्छेदः । सिद्धिरिति । अत एवावात्तामित्यादौ कोपः, सूत्रस्य तु–अभित्था इत्यादिरवकाश इति भावः ।

नन्वेवमाद्यवर्णेऽप्यत एव सिद्धिरिति सूत्रं व्यर्थमत आह—सूत्रे इति । यत्त्वत्र पक्षेऽण्ग्रहणस्थाने ऋग्रहणं कार्यमिति कौस्तुभरत्नाकरादयस्तत्खण्डयितुमाह—ऋऌवर्णयोरिति । एतेन ऋऌसाधारणजात्यभावात्कथं जातिपक्षे सिद्धिरित्यपास्तम् । इदञ्च ऋष्युक्त्यनुरोधेन गौरवमनुसृत्योक्तं, लाघवेन तदननुरोधे तु सावर्ण्यवचनस्थाने तस्य 'ऋव'दित्यतिदेशेन सिद्धिरत एव न शब्दरत्नविरोध इति बोध्यम् ।

समानेति । 'अन्यत्रान्यशब्दे'ने'ति न्यायेनेति भावः । तदेवाह—एतदिति । अकारादावचीत्यर्थः । एतेनैतद्भिन्ने कखादौ सावर्ण्ये सत्यपि तदभावाच्चिन्त्यमिदमित्यपास्तम् । नन्वेवं मिथः साङ्कर्यापत्तिरत आह–पृथगिति । चस्त्वर्थे । नन्वेवमपि विधेयेऽपि दोषोऽतः सूत्रेऽण्ग्रहणमित्युक्तिस्वारस्यं प्रकटयन्—कौस्तुभरत्नाकराद्युक्त्यसाङ्गत्यं ध्वनयंश्चाह—अत्र पक्षे इति । जातिपक्षे इत्यर्थः । 'व्यक्तिपक्षे इवात्र पक्षेऽपी'ति पाठान्तरम् । भाष्यरीत्या=भाष्यबलात् । तत्र तथोक्तत्वेन तस्य दृष्टान्तत्वमित्याह-तपरेति । अप्रेति । तुल्य-

❀ सदाशिवभट्टीयम् ❀

समानजातित्वस्यैवेति । समानो वर्णो=जातिरित्यर्थः । स्वार्थे ष्यञ् । 'वर्णाश्रमाचारवा'नित्यादौ वर्णपदेन जातेर्व्यवहारादिति भावः । होतृकारे दीर्घस्तु अकोकीति न्यासेन सुवचः । अत्रैव पक्षे शाकल्यप्रतिबन्धस्तु न फलम्,–'ऋत्यक' इत्यस्याप्रवृत्तेः । इदञ्च ऋष्युक्त्यनुरोधेन गौरवमनुसृत्योक्तम् । लाघवादरे तु 'ऌवर्णस्य ऋव'दिति शब्दरत्नोक्तमनुसन्धेयम् । एतद्व्यतिरिक्तेति । आकारादावचीत्यर्थः । अच्त्वेन

❀ विषमपदविवृतिः ❀

अण्ग्रहणञ्चेति । चेन 'नाज्झला'विति सूत्रसङ्ग्रहः । ननु ऋऌवर्णयोःसावर्ण्येपि ऋकारेण न ऌकारग्रहणं, विभिन्नजातित्वात्, सावर्ण्ये तु होतृ ऌकार इत्यत्रा'कःसवर्णे' दीर्घो स्यादित्याशङ्क्याह—ऋऌवर्णयोरिति । ननु समानजातित्वनिर्देशे सावर्ण्याभावाद्धोतृऌकार इत्यत्र सवर्णदीर्घो न स्यादित्यत आह—एतद्व्यतिरिक्तेति । तथा च सावर्ण्यमपि–समानजातित्वाव्यापकत्वात्समानजातित्वातिदेशेनातिदिष्टमिति भावः । ननु ऋऌवर्णयोः सावर्ण्यस्याविधानेन पृथगनुबन्धकरणेन कस्यानित्यत्वं ज्ञाप्यमित्यत आह—पृथगिति । 'अत्र पक्षे' इति पाठः । 'व्यक्तिपक्षे' इति त्वपपाठः,अनन्वयात् ।

क्तवतवदप्रत्यय इत्यस्य योगविभागेन—तत्प्राप्तसवर्णग्रहणनिषेधकत्वात्—'त्यदादीनामः' इत्यादौ विधेये न दोषः । एवं—गुणाभेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य बोध्यम् । अत एव 'घटव'दित्यादौ मतोर्मस्य नानुनासिको वकारः । **सामर्थ्यादिति ।** 'एचोऽयवायावः' इत्यादौ स्थानेऽन्तरतमसूत्रेणैव निर्वाह इति वक्ष्यते । 'न य्वाभ्या'-मित्यत्र ऐऔ स्वरूपेण पाठ्यौ, 'वृद्धिरादैजि'इत्यत्राप्यैङित्येव पाठ्यं, तत्र गुणसूत्रे च परस्परसवर्णसञ्ज्ञावादिमते चतुर्णां ग्रहणसत्त्वात् । अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तन्मूल-

❀ **चिदस्थिमाला** ❀

न्यायादिति भावः । एकयोगे उदिदंशे एव सम्बन्धापत्तिरत आह—**योगेति ।** 'भाव्यमानेने'ति परिभाषा-बोधनद्वारेति शेषः । **तदिति ।** जातिग्रहणेत्यर्थः । अस्यावश्यकतां ध्वनयितुं व्यक्तिपक्षे इव जातिपक्षे फलान्तरमाह—**एवमिति ।** तुल्यायुक्त्या=योगविभागेनेत्यर्थः । विनिगमनाविरहादिति भावः । **अत एवेति ।** उभयप्राप्तनिषेधकत्वादेवेत्यर्थः । अन्यथा जातिग्रहणप्राप्तवारणेऽप्येवंरीत्या स दुर्वार एवेति भावः ।

यद्यप्यन्यतरसामर्थ्यादिति युक्तम्—तथापि प्रथमोपस्थितत्वेनान्तरङ्गत्वात्तदेवास्त्वित्याशयेनाह—मूले-**ऐऔजिति ।** यथास्थितसूत्राशयेनाह—**तेनैव इति ।** नन्वेवमेङोयवेति पाठे यथासङ्ख्यमिष्टं न स्यात्, 'स्थानेऽन्तरे'ति तु न, एकारैकारयोरयायोर्मिथोऽव्यवस्थानुपपत्तेरत आह—**एचोयवेति ।** 'विवृतावर्णस्य विवृतावर्ण' इत्यादेर्वक्ष्यमाणत्वादिति भावः । नन्वेवमपि 'न य्वाभ्या' मित्यावैङिति पाठे विधेयत्वात्तयोरग्रहणेऽनिष्टं स्पष्टमेवात आह—**न य्वाभ्यामिति ।** नन्वेवमपि 'वृद्धिरादैच्' इत्यादौ का गतिरत आह—**वृद्धिरिति ।** अपिः पूर्वसमुच्चये । तत्र=वृद्धिसञ्ज्ञासूत्रे । यत्तु सत्यपि सावर्ण्ये गुणवृद्धिसञ्ज्ञयोः प्रतिनियतनिर्देशसामर्थ्यादेव सवर्णग्राहकत्वाभावः सुवच इति **रत्नाकरस्तन्न**, सामर्थ्यात्साङ्कर्याभावेऽपि वैपरीत्येन—साफल्यस्यापि सुवचत्वात्, तद्ध्वनयन्नाह—**चतुर्णामिति ।** ननु तर्ह्येतदर्थमेव सूत्रमस्तु, किञ्च बहुषु स्वरूपेण पाठे गौरवम्, किञ्चैवम्-पूर्वपक्षसिद्धान्तयोः मूलोक्तयोर्निर्दलत्वापत्तिः-तद्धि पूर्वपक्षे सिद्धान्तदूषणातिरिक्त-दूषणकत्वम् आस्ति चात्र वक्ष्यमाणं तत्, अत एव सिद्धान्ते निर्दलत्वमत आह—**अत्रैतदिति ।** मूले-'ऐऔजि'तिसूत्रवैयर्थ्योपन्यासेनेत्यर्थः । **तन्मूलेति ।** 'ऐऔजि'तिसूत्रवैयर्थ्यमूलकस्येत्यर्थः । ननूक्त-

❀ **सदाशिवभट्टीयम्** ❀

सादृश्यात् । अतः कखादौ भिन्नजातीयेन सत्यपि सावर्ण्ये न दोषः । **योगविभागेनेति ।** 'भाव्यमानेने'ति परिभाषाबोधनद्वारेति भावः । अस्याऽऽवश्यकतां ध्वनयितुं व्यक्तिपक्ष इव जातिपक्षेपि फलान्तरमाह—**एवमिति ।** तुल्ययुक्त्या योगविभागेनेत्यर्थः । विनिगमनाविरहादिति भावः । अस्य फलं-प्रागुक्तमपि दार्ढ्याय स्मरति—**अत एवेति ।** उभयप्राप्तनिषेधकत्वादेवेत्यर्थः । अन्यथा जातिग्रहणप्राप्तवारणेप्येवंरीत्या स दुर्वार एवेति भावः । एवञ्चैवमित्यादिग्रन्थावश्यकत्वं विषयभेदात्, एवञ्च क्वचिदेवमित्यादिग्रन्थादर्शनं प्रामादिकमिति बोध्यम् । यद्यप्य'न्यतरसूत्रसामर्थ्या'दिति युक्तं वक्तुं, तथापि प्रथमोपस्थितत्वेनान्तरङ्गत्वात्त-देवास्त्वित्याशयेनाह—मूले-**ऐऔजिति ।** यथास्थितसूत्राशयेनाह—**तेनैच इति ।** ननु सूत्रसत्त्वे जाति-पक्षे जातीनां चतुष्टं व्यक्तिपक्षे शक्यार्थमादाय यथासङ्ख्यमिष्टं च सिध्यति, तदभावे कथमत आह—**एचोऽयवेति ।** नन्वेवमपि 'न य्वाभ्या'मित्यादौ एङिति पाठे विधेयत्वात्तयोरग्रहणे एङोश्च विधानेऽप्यनिष्टं स्पष्टमेवात आह—**न य्वेति ।** नन्वेवमानुपूर्वीका श्रुतिरेवाऽन्यार्थमिति—न तद्वैयर्थ्यमत आह—**अत्रैत-**

❀ **विषमपदविवृतिः** ❀

**तस्य सर्वस्येति ।** संयोगान्तलोपादेः । **शब्दबोध्यो वर्ण इति ।** इदमयुक्तम्-उच्चारितस्यैव प्रत्यायकत्वात्, इण्प्रत्याहारे प्लुतैचोऽघटकत्वापत्तौ ततः परस्य षत्वानापत्तेश्च । भाष्यप्रामाण्यात्त-

१. ननु ऐ औजिति सूत्राभावेऽनुपदिष्टत्वात्तयोरसत्त्वं प्रसज्येतेतिचेन्न । 'एओ-ऐऔ'जित्येव सिद्धेऽ-नुबन्धद्वयकरणसामर्थ्यादित्येव मूलाशयेनादोषादिति **श्रीगुरुचरणाः ।**

कस्य गुणवृद्धिसञ्ज्ञाविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यस्य, 'प्लुतावैच' 'एचोऽप्रगृह्यस्ये'त्यत्र तद्ग्रहणवैयर्थ्यस्य च सङ्ग्रहो बोध्यः । प्रयत्नभेदेनाप्यसावर्ण्यमेतयोः प्रागुक्तं न विस्मर्त्तव्यम् ।

**यद्यपीति** । इदं व्यक्तिपक्षे,–"वर्णानामुपदेशस्तावदुपदेशोत्तरकालेत्सञ्ज्ञा, तदुत्तरकालमादिरन्त्येनेति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरकालमणुदिदिति, एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानाङ्ग्रहणं भवति, न चात्रे'कारः शकारं गृह्णाती–"ति 'नाज्झला'वितिसूत्रभाष्योक्त'वाक्यापरिसमाप्ति'न्यायादित्यर्थः । अयं भावः–'आदिरन्त्येने'ति प्रत्याहारसिद्धौ 'नाज्झला'वित्येतद्वाक्यर्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसञ्ज्ञाबोध्यनिश्चये अणुदित्सूत्रेण तावतां ग्रहणं बोधनीयम्, अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेनाणुदिच्छास्त्रजबोधानापत्तिः,—न चैतद्वाक्यार्थ-

❀ अभिनव-चन्द्रिका ❀

**अणुदिच्छास्त्रजबोधानापत्तिरिति** । **न स्वस्मिन्नपि स्वाङ्गे इति** । स्वं प्रति, स्वं कारणं प्रति वा स्वस्य कारणत्वासम्भवादिति भावः, अन्यथा आत्माश्रयान्योन्याश्रयाद्यापत्तेः ।

❀ चिदस्थिमाला ❀

रीत्यास्यापि साफल्यमत आह—**प्लुतावैचइति** । **तदिति** । प्रत्याहारद्वये इत्यर्थः । एवं मूलं कथञ्चित्संयोज्य सिद्धान्तमतेनाह—**प्रयत्नेति** । एतेनैवमानुपूर्वीका श्रुतिरेव चतुर्दशसूत्रीति अन्यार्थमावश्यकत्वेनेदं चिन्त्यमित्यपास्तम् । जातिपक्षेऽण्ग्रहणस्यैवाभावादाह—**इदमिति** । तत्र हेतुमाह—**वर्णानामिति** । उपदेशः=आद्यमुच्चारणम् । तावत्=आदौ, तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्तकानामिति बोध्यम् । **कालेत्सञ्ज्ञेति** । ज्ञातस्य सञ्ज्ञाविधानात् । तदपि तदव्यवधानेनैव, पदार्थोपस्थितिरपि पश्चादिति भावः । **तदुत्तरकालमिति** । सामान्ये नपुंसकम् । प्रत्याहारः='आदि'रितिसूत्रैकवाक्यतयाऽगादिसञ्ज्ञारूपः । **सवर्णसञ्ज्ञेति** । इष्टविषये तत्सञ्ज्ञित्वग्रहः । **तदुत्तरेति** । सवर्णपदबोध्यनिश्चयोत्तरकालं तत्सूत्रमकारादिभिःस्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयतीत्यर्थः । **एतेनेति** । सर्वसमूहयुक्तेना'णुदित्सूत्रे'णेत्यर्थः । समूहस्याप्युक्तरीत्या परम्परयोपयोगादिति भावः । अन्यत्र=समुदितघटकान्या'कः सवर्णे'इत्यादावविधेये इति शेषः । **नचात्र**=नहि 'नाज्झला'वित्यत्र । इदं वार्तिकरीत्येति नोच्चारेन इत्यणुदित्सूत्रभाष्यविरोधः । **वाक्यापरीति** । स्वस्वाङ्गान्यतरबोधकाले–समुदितवाक्यार्थापरीत्यर्थः । सवर्णपदार्थनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमिति यावत् । तथा च—साकाङ्क्षतयार्थवद्वाक्यस्याप्यपरिसमाप्तिरिति—भावः । नन्वेतावताऽन्यत्र केवलेन ग्रहणंनेत्येव लभ्येत, किञ्च—समुदायमध्ये निषेधस्याप्रवेश इति कथं तत्र तेन तदग्रहणमत आह–**अयमिति** । **निश्चये इति** । अनेन प्रतियोगिज्ञानार्थं ततः प्राक् तस्य सामान्यतो बोधोऽस्त्येवेति सूचितम् । अन्यथा=सामान्यबोधोत्तरं निषेधाद्यपर्यालोचने । **नापत्तिरिति** । तत्सन्देहस्य प्रतिबन्धकत्वादिति भावः । **नचैतदिति** । नहि

❀ ज्योत्स्ना ❀

**इदं व्यक्ति पक्ष इति** । ननु ढत्वस्यासिद्धत्वात्संयोगान्तलोप एवेह वक्तुमुचितोऽत आह—

❀ सदाशिवभट्टीयम् ❀

**दिति** । ननु समुदायमध्ये निषेधस्याप्रवेशात्कथन्तेन तत्रैतदग्रहणमत आह—**अयं भाव इति** । अच्पदं विहायाणित्युक्तिसाफल्यायाह—**गुणा इति** । **अन्ये तु** जातेः पदार्थत्वेपि गुणानां भेदकत्वे सूत्रमावश्यकमित्यवतारयामासुः ।

बोधात्प्राक् तन्निश्चय'—इति । **होढ इति** । हकारेणाऽऽकारग्रहणे सति यद्यत्प्राप्नोति तस्य सर्वस्याप्युपलक्षणमिदम् । ननु यण्सवर्णिनामप्रसिद्धेरज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह—**यवला इति** । 'अमो ऽनुनासिका न ह्रा'विति शिक्षोक्तेर्यण इति नोक्तम् । तेन सँय्यन्तेत्यादौ परसवर्णनिष्पन्नानुनासिकयवलाना'मनचिचे'ति द्वित्वं सिद्ध्यति । 'हलो यमा' मिति लोपस्तु वैकल्पिकः । अत्रेदं बोद्धयम्—'व्यक्तिः पदार्थो गुणा भेदका' इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति ।

'अतो भिस'इत्यादौ तपरकरणा'त्सहिवहो'रितिसूत्रस्थवर्णग्रहणाद्व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह—**तः पर इत्यादिना** । वर्णग्रहणे तु-तत्सामर्थ्यादत्वावच्छिन्न-सर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तिः । आद्योदाहरणम्—'अतो भिस'इति, अन्त्योदाहरणं—'वृद्धिरादै'जिति । यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्ध-

ॐ अभिनव-चन्द्रिका ॐ

**बहुव्रीहिपञ्चमीतत्पुरुषाविति** । आवृत्त्या अर्थद्वयस्वीकारादिति भावः ।

ॐ चिदस्थिमाला ॐ

'नाज्झला'विलेतदित्यर्थः । **तन्निश्चय इति** । सवर्णपदबोध्यनिश्चय इत्यर्थः । तथा च सामान्यतो—विधिबोधस्य प्राक्सत्त्वेऽपि तन्निश्चयाभावात्तत्र तदप्रवृत्तिरिति भावः । ननु ढत्वादीनामसिद्धत्वात्सर्वत्र संयोगान्तलोप एव वक्तुमुचितोऽत आह—**हकारेणेति** । एतेन"—अनादरेण,'संयोगान्तलोपो झलो लोपः' इति पक्षेण वा तथोक्तमिति-उक्तरीत्या वाग्घरित्यादौ 'झयो ह' इति घः—इति, **कौस्तुभमनोरमा**द्युक्तं चिन्त्य"मिति च **रत्नाकरोक्त**मपास्तम् । 'उपलक्षणत्वात्, हस्य झल्त्वाच्च । अत एवाह—**सर्वस्याप्युपेति** । 'अनुनासिके'तिग्रन्थस्यैदैतोरित्यादिग्रन्थेन विच्छेदादव्यवहितसङ्गत्यभावाद्व्यवहितसङ्गतिमाह—**नन्विति** । ननु-'अइउण्'सूत्रभाष्यादौ 'यणः सानुनासिकाः'इत्युक्तेरत्र तथैव कुतो नोक्तमत आह—**अम इति** । 'न ह्रा'विति भिन्ने पदे, अत एव 'हयवरट्'सूत्रस्थभाष्यसङ्गतिः । तथा च—तद्भाष्यादि तद्भिन्नपरमिति भावः । तत्फलमाह—**तेनेति** । पठितशुद्धानामुभयग्राहकत्वेन तेषां यत्वेनेत्यर्थः । **परेति** । 'वा पदान्ते'तीत्यादिः । लोपेन द्वित्वस्य न फलमिति खण्डयति—**हल इति** । अत्र चेदमेवाज्ग्रहणं व्याख्यानं—वा मानम् । जातिपक्षेऽण्ग्रहणप्रत्याख्यानादाह—**व्यक्तिरिति** । अच्पदं विहायाणित्युक्तिसाफल्यायाह—**गुण इति** ।

अस्यासिद्धान्ततां ध्वनयितुमाह—**अभीति** । बहुव्रीहौ मानमाह—**अत इति** । द्वितीय मानमाह—**सहीति** । अथ वर्णग्रहणस्य प्रत्याख्यानादुभयसाधारणं मानमाह—**व्याख्येति** । तत्रादिनेति भावः । एतेन तथा **रत्नाकरा**द्युक्तमपास्तम् । ननु वर्णग्रहणे कृतेऽपि—अस्य तात्परत्वात्प्रवृत्तिर्दुर्वारेति स्वसिन्नचारितार्थ्यमेवेति कथमादौ तदुक्तिसम्भवोऽत आह—**वर्णेति** । तेनेति शेषः । 'यावता विने'ति न्यायादिति भावः । **अन्त्यविति** । आकारार्थन्तु न तत्, तस्यानण्त्वाद्गुणानामभेदकत्वाद्दीर्घनिष्ठव्याप्यजातिनिर्देशाच्चेति भावः । उभयोदाहरणन्तु—'अदेङ्गुण'इति बोध्यम् । द्वितीये शङ्कते—**यद्यप्यत्र सञ्ज्ञेति** । तथा च सञ्ज्ञिनामतत्त्वात्—कथं तन्निमात्रव्यावृत्तिरिति भावः । न च=नहि । तस्य सार्द्धद्विमात्रत्वात्—सिद्धान्ते सवर्णपदानुवृत्तेराह—**तत्सवर्ण इति** । **वा**—इवार्थे चार्थे वा । गुणानां भेदकत्वेनासन्देहार्थे—

ॐ ज्योत्स्ना ॐ

**हकारेणाकारस्येति** । '**बहुव्रीहिपञ्चमीतत्पुरुषाविति** । अत्र तत्पुरुषपदञ्च सञ्ज्ञापरं, भाष्ये 'पञ्चमीतियोगविभागाभावेन तदसम्भवात्, किन्तूत्तरपदार्थप्रधानस्तत्पुरुष इति लक्षणपरम्, अतः 'सुप्सुपे'ति समासेऽपि न दोष इति भावः । **वर्णग्रहणेत्विति** । 'सहिवहो' रित्यत्र । सञ्ज्ञा=

स्तथापि तपरकरणाद्भाष्यप्रामाण्याच्च 'तात्परशब्दबोध्यो वर्णः स्वसमकालग्राहक'इत्यर्थेनाऽदोषः। इदञ्च विद्ध्यर्थमेव–अण्ग्रहणाननुवृत्तेः। गुणानां भेदकतयाऽनणि विधित्वेऽपि 'वृद्धिरादै'जित्यादावाकारांशे सावकाशेनानेना'तो भिस'इत्यादौ परत्वेना'णुदि'त्सूत्रबाधः। सङ्ख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टतयेह विरोधस्य सत्त्वात्। गुणानामभेदकत्वे

❀ अभिनव-चन्द्रिका ❀

**इत्यर्थेनादोष इति।** 'तः परो यस्मात्तात्परश्च तद्घटकाद्युच्चारणाधिकरणीभूतकालसदृशकालवांश्च यः स्वबोध्यसवर्णस्तं गृह्णाती'ति न दोष इति यावत्। यथा 'अतोभिस''अनोऽ'मित्यादौस्वघटकाकारोच्चारणाधिकरणीभूतकालसदृशकालवृत्तिस्वबोध्यसवर्णस्य ह्रस्वाकारादेरेव ग्रहणमिति न दोषः।

❀ चिदस्थिमाला ❀

तया च पूर्वार्थत्वसम्भवात्–'अदे'ङित्यत्रैतद्युक्तेर्दुर्वचत्वतया चाह—**भाष्येति**। 'इदं तर्हि प्रयोजनमान्तर्यत'इत्यादिवृद्धिसूत्रस्थभाष्येत्यर्थः। एतेन—'तपरकरणसामर्थ्यादृशब्दसञ्ज्ञानिषेधाद्वा न सवर्णग्रहणमिति' **कौस्तुभाद्युक्तमपास्तम्**। उक्तयुक्तेः, तस्य प्रत्याख्यानाच्च। वार्तिकमतमाह—**इदञ्चेति।** तपरसूत्रञ्चेत्यर्थः। व्यक्तिपक्षे इति भावः। यद्यप्यणनुवृत्तौ नियामकत्वसम्भवः, तथापि लाघवान्नियमतो विधेर्ज्यायस्त्वमित्याह—**अणिति।** व्यक्तिपक्षेऽपि गुणाभेदकत्वपक्षे विध्यनुपयोगादाह—**गुणानामिति।** अयमुभयत्र हेतुः। नन्वेवम्–'अतो भिस' इत्यादावष्टादशग्रहणापत्तिरत आह–**अनणि विधित्वेऽपीति।** अणुदित्सूत्रस्य तु 'अक' इत्यादौ सावकाशता स्पष्टैव। ननु मिथोऽविषये सावकाशत्वेऽप्यविरोधात्कथं विप्रतिषेधसूत्रसञ्चारोऽआह—**सङ्ख्येति।** गौण्या मुख्याया वा उत्तरसङ्ख्यायाः पूर्वसङ्ख्याबाधकत्वादिति भावः। स्पष्टञ्चेदम्—अइउण्'सूत्रे भाष्ये। ननु तत्पक्षेऽपि गुणाभेदकत्वेनेदं सुवचमत आह—**गुणेति।** तदा तदननुवृत्तावनण्यनुपयोगेऽपि अणंशे तेन समकालस्यापि ग्रहणाप्राप्तावपि निरवकाशत्वेनानेन अणुदिदितिबाधेनास्य प्रतिप्रसवविधित्वमेवेति भावः। ननु तद्गुणसंविज्ञानबहुव्रीहिणा अदित्यादि-

❀ ज्योत्स्ना ❀

ऐजित्येवं रूपा। **तपरकरणादिति।** आकारार्थं तु तत्रेति वक्ष्यते। तात्परशब्दबोध्यः=ऐकाराकाररूपः। **ननु तपरसूत्रस्य विधित्वेऽतोभिसित्यादावणुदिदित्यष्टादशानामपि ग्रहणं प्राप्तोत्येवेत्यत आह—गुणानां भेदकतयेत्यादि।** ननु विरोधे सति परत्वेन बाधः, विप्रतिषेधे परं कार्य'-मिति वचनात्, न चेह तथेत्यत आह—**सङ्ख्याकृतेत्यादि। परस्परपरिहारेणैवेति।** त्रिपुत्रे द्विपुत्रव्यवहाराभावादित्यर्थः। **विरोधस्येति।** षट्त्वाष्टादशत्वयोरित्यर्थः। 'गुणानामभेदकत्वन्तु

❀ सदाशिवभट्टीयम् ❀

**तपरस्त।** नन्वदेङित्यत्र तपरत्वं पूर्वत्र कृतार्थमत आह—**भाष्यप्रमाण्येति। अनवकाशत्वादिति।** तदा तदननुवृत्तावनण्यनुपयोगेपि अणंशे तेन समकालस्यापि ग्रहणप्राप्तावपि निरवकाशत्वेनानेनाणुदिदिति बाधेनास्य प्रतिप्रसवविधित्वमेवेति भावः। ननु तद्गुणसंविज्ञानेनादित्यस्य सञ्ज्ञात्वमत

❀ विषमपदविवृतिः ❀

परकरणाच्च तात्परशब्दः स्वबोध्यसमकालग्राहक इति तूचितम्। **सङ्ख्याकृतव्यवहारस्येति।** इदमयुक्तम्–, आकडाराधिकारादन्यत्र सञ्ज्ञयोर्बाध्यबाधकभावाभावात्। न च स्वतो विरोधरहितयोस्तद्बहिर्भूतयोर्बाध्यबाधकभावाभावेपि स्वतो विरुद्धयोस्तदबहिर्भूतयोरपि सोऽस्त्येवेति वाच्यं, सङ्कोचे मानाभावात्। किञ्च–'तपरः षण्णां सञ्ज्ञा' 'अण्त्वष्टादशानां सञ्ज्ञे'त्युक्त्या—सवर्णग्राहकत्वतात्कालिकसवर्णग्राहकत्वयोरविरोधेन च–विप्रतिषेधशास्त्राप्रवृत्तिः। एतेन—'गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध' इत्यग्रिमग्रन्थोऽप्यपास्तः। तस्मादण्ग्रहणानुवृत्त्या नियमार्थ एवायं युक्तः,

त्वनवकाशत्वाद्बाध इति बोद्ध्यम् । अत्रावध्यवधिमतोः साजात्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टाद्विभक्त्युत्पत्तिः सौत्रत्वाद्बोध्या । 'तत्कालस्ये'त्यस्य—तदुच्चारणकालसमकालस्येत्यर्थस्तदाह—**समकालस्यैवेति** । एवकारो—न्यायसिद्धबाध्यबाधकभावस्यानुवादक इति

❀ चिदस्थिमाला ❀

विशिष्टस्य सञ्ज्ञात्वमत एव ततो विभक्तिस्तत्र, एवञ्च तत्समकालाप्रसिद्ध्या सूत्रं मूकं स्यादत आह—**अत्रेति ।** तपरसूत्रे इत्यर्थः । **वध्यवधीति** । तथा च षष्ठ्यर्थबहुव्रीहौ तत्सम्भावनायामपि—अत्र स एव न, किन्तु पञ्चम्यर्थे बहुव्रीहिरिति तथा दुर्वचमिति न दोष इति भावः । वर्णस्यैव='अत' इत्याद्येकदेशस्यैव । विशिष्टात्= अदित्यादिनः—'अतोभिसः इत्यादाविति भावः । विवरणविव्रीयमाणयोर्विरोधं खण्डयति—**तत्कालेति ।** तत्पदस्य तदुच्चारणकालसदृशे लक्षणा, कालपदेन बहुव्रीहिरिति भावः । ननु विधित्वे एवासङ्गतिरत

❀ ज्योत्स्ना ❀

नैतद्विषय' इति पाठः । सूत्रवैयर्थ्यप्रसङ्गात्तपरेषु गुणानामभेदकत्वमेनेत्यर्थः । एवञ्चाकारांशे गुणान्तरविशिष्टानां ग्राहकस्यैक्षु परत्वाद्बाधकत्वोक्तिर्नानुपपन्नेति भावः । क्वचित्पठ्यते—'गुणानामभेदकत्वेत्वनवकाशत्वाद्बाध' इति, तत्रापि षष्ठ्यर्थे सप्तमी, व्याख्यानाद्गुणानामभेदकत्वस्य बाध इत्युक्तार्थ एव पर्यवसानं बोध्यम् । एतेनानवकाशत्वेन बाधकत्वोक्तिर्वक्ष्यमाणनियमार्थत्वोक्तिविरोधाच्चिन्त्येति परास्तम् । **यदपि**—नियमाद्विधेर्बलीयस्त्वं मन्यमाना नियमार्थत्वोक्तेरेव चिन्त्यतामाहुस्तन्न, अपवादस्यापि सामान्यवाक्यशक्त्यवच्छेदकत्वेन नियमानतिरेकात् । नियमवाक्यानां विधिमुखेन प्रवृत्तेः सर्वसम्मतत्वात् । एतावान् परमपवादनियमयोर्भेदो यदनेकस्मिन्शेषिण्येकस्य शेषस्य प्राप्तौ तत्रैव शेषिविशेषे शेषान्तरविधानेऽपवादत्वं, यथाऽऽ'हवनीये जुहोती'त्यनेनानेकेषु होमेष्वेकस्याऽऽहवनीयस्य प्राप्तौ होमविशेषे 'पदे जुहोती'त्यनेन विधीयमानस्य पदस्य । नियमस्त्वेकस्मिन्शेषिण्यनेकस्य शेषस्यानेकस्मिन्शेषिण्येकस्य वा शेषस्य प्राप्तौ, तत्र शेषिणि शेषविशेषे वा तस्य शेषस्य विधाने, यथा पुरोडाशार्थे एकस्मिन्व्रीहौ प्राप्तयोर्नखविदलनावहननयोर्व्रीहीनवहन्ती'त्यनेनावहननरूपशेषविशेषस्य तत्र विधाने । यथा चे'मामगृभ्णन्नशनामृतस्येत्यश्वाभिधानीमादत्त' इत्यनेन लिङ्गादश्वगर्दभरशनयोरेकस्य मन्त्रस्य प्राप्तावश्वरशनारूपशेषिविशेषे पुनस्तस्य विधान इति ।—तद्वत्प्रकृतेऽणुदिदित्यनेनैकस्मिन्समकालासमकालग्राहकत्वप्राप्तौ पुनस्तत्र समकालग्राहकत्वान्नियमत्वमेवास्य वक्तुं युक्तं, भाष्येऽपि तथैवोक्तमित्यन्यदेतत् । कौस्तुभोक्तं दूषयति—**अत्रेति । साजात्येनेति ।** 'पाटलिपुत्रकात्पूर्वोऽय' मित्युक्ते देशप्रतीतेरेव दर्शनात् । **न्यायसिद्धेति ।** ननु चेह परत्वाद्बाध्यबाधकभाव उपक्रान्तस्तत्र शास्त्रसिद्धेति वक्तव्यम् ? । एवं मन्यते—विप्रतिषेधसूत्रे यदि विधिपक्षस्तदा परशास्त्रप्रवृत्तौ निमित्तसद्भावात्पूर्वशास्त्रेण प्रवर्त्तितव्यं ततश्च 'समकालस्यैवे ति नियमो न लभ्यस्तदर्थमेवं वक्तव्यं, पूर्वशास्त्रप्रवृत्तिः प्रथमप्रवृत्तायाः परशास्त्रप्रवृत्तेः वैयर्थ्यसम्पादिका चेत् न तया प्रवर्त्तितव्यमिति न्यायानुसरणस्यैव नियमनिश्चायकत्वाभिप्रायेण—**न्यायसिद्धेत्युक्तमिति ।**

❀ सदाशिवभट्टीयम् ❀

एव ततो **विभक्तिरेवञ्च** तत्समकालाऽप्रसिद्ध्या सूत्रं मूकं स्यादित्यत आह—**अत्रेति** । एवञ्च षष्ठ्यर्थबहुव्रीहौ तत्सम्भवेऽप्यत्र पञ्चम्यर्थे स इति न दोष इति भावः । **साजात्येनेति ।** इदमुपलक्षणं, पञ्चम्यर्थबहुव्रीहिविग्रहप्रदर्शनपरभाष्यस्य । **एतेन**—पञ्चमीसमासे एङादिशब्दस्यावधित्वेनाङ्गीकारादतोऽसदित्य**पास्तम्** । गमकात्तत्र त्यागेपि अत्र त्यागे मानाभावाच्च । नचैवं वृत्तिमत्त्वेपि तकारापेक्षत्वात्पारिभाषिकार्थ-

भावः । जातिपक्षे तु नियमार्थमेव—सवर्णग्रहणानुवृत्तेः । एवं 'गुणानामभेदकत्व'मिति—'वृद्धिरादै'जितिसूत्रभाष्यसम्मत—सिद्धान्त—पक्षेऽपि नियमार्थमेव ।

इदम्—'आद्गुणः' इत्यादौ विभक्तितकारे न प्रवर्त्तते, 'उपसर्गादृती'ति तपरकरणात् । 'ऋदोर'बित्यादौ दकार एवेति न दोषः । स च—पञ्चमीसमासाभावे तकार इवोच्चारणार्थो,

ॐ अभिनव-चन्द्रिका ॐ

**नियमार्थमेवेति** । स्यादेतत्—यत्र गुणानां भेदकत्वे 'अतो भिस ऐ'मित्यादौ परत्वात्तपर-

ॐ चिदस्थिमाला ॐ

आह—**एवेति** । **न्यायेति** । परत्वादित्यर्थः । भाष्यमतमाह—**जातीति** । तुरुक्तवैलक्षण्ये ।—ननु नदाण्ग्रहणभावेन कथं तत्त्वमत आह—**सवर्णेति** । 'तपरः सवर्णस्य चेत्सर्वस्य जात्याश्रयतया ग्राहकस्तर्हि स्वसमकालस्यैवे'त्यर्थः । एवञ्च—यद्व्यक्तिमुपादाय जातिनिर्देशस्तद्भिन्नकालव्यक्तियुतजात्यग्रह इति फलितम् । **एवमिति** । अत्र पक्षे 'जात्याश्रयतये'त्यस्य स्थाने गुणाभेदकत्वेनेति बोध्यम् । एवं सिद्धान्तमुक्त्वा पक्षद्वयातिप्रसङ्गं निराचष्टे—**इदमिति** । नन्वेवमपि 'ऋदो'रित्यादौ तात्परत्वादतिप्रसङ्ग एवात आह—**ऋदोरिति** । ननु एवं किं फलं तस्मात आह—**स चेति** । दकारश्चेत्यर्थः । **साभावे इति** । एकदेशयुक्ततपक्षे इत्यर्थः । विनिगमनाविरहादाह—**मुखेति** । नन्वेवमपि प्राचां मतेऽतिप्रसङ्ग

ॐ ज्योत्स्ना ॐ

ननु स्वसमकालानां भिन्नजातीयानामिकारादीनां ग्रहणार्थं विध्यर्थतैव कस्मान्नेत्यत आह—**सवर्णेति** । यद्यपि—सवर्णग्रहणानुवृत्तिर्विधिपक्षेऽप्यस्ति, तथापि—नियमार्थतापक्षस्तां विना

ॐ सदाशिवभट्टीयम् ॐ

वत्त्वं तस्य नेति वाच्यं, तत्र विभक्तीतरस्य—प्रकृतिप्रत्ययान्यतरस्य वृत्तिमतो वा ग्रहीष्यमाणत्वात् । नन्वेवनप्यवयवात्—सन्निपातपरिभाषया न लुप्, समुदायात्तु 'धु'ङित्यत्रैव सुलभमिति चेत्सत्यम् । **नियमार्थेति** । 'तपरः सवर्णस्य चेत्सर्वस्य जात्याश्रयतया ग्राहकस्तर्हि स्वसमकालस्यैवे'त्यर्थः । एवञ्च यद्व्यक्तिमादाय जातिनिर्देशस्तद्भिन्नकालव्यक्तियुक्तजात्यग्रह इति फलितम् । **एवञ्चेति** । अयं भावः—व्यक्तिपक्षे पक्षद्वयेपि परत्वानवकाशत्वाभ्यामणुदित्सूत्रबाधेन विधित्वेपि सूत्रसार्थक्यमेवेति लाघवात्तत्र तदेवाश्रितम्, अत्र तु पक्षे विधित्वे बाध्यशास्त्रस्याभावेन जातिनिर्देशेनासमकालग्रहणस्य दुर्वारतया व्यर्थमेव स्यादिति—नियमार्थत्वं पक्षद्वयेपीति । **अन्ये तु**—जातिपक्षाश्रयणेपि गुणानां भेदकत्वेन नियामकत्वं दुर्घटमित्यत आह—एवञ्चेति । ननु जातिपक्षाश्रयणसामर्थ्यादेव गुणान्तरयुक्तस्यापि ग्रहणं भविष्यति, अन्यथा ह्रस्वत्वादिगुणानामपि भेदकत्वात्—तत्पक्षाश्रयणं व्यर्थं स्यादिति—किमर्थं गुणाभेदकत्वं नियमार्थमङ्गीक्रियतेऽत आह—**सिद्धान्तेति** । तथाच तस्यैव सिद्धान्तभूतत्वेन तेनैवोपपत्तौ जातिपक्षाश्रयणसामर्थ्योपवर्णनं निष्फलमिति सूचितम् । **'पक्षेपी'**त्यपिः समुच्चये, तेन जातिपक्षसंग्रहः । एवञ्च गुणाभेदकत्वमितिपक्षसहिते जातिपक्षे नियामकं सूत्रमिति तात्पर्यमित्याहुः । अत्र व्याख्यानेऽक्षरस्वारस्यभङ्गो बोध्यः । **न प्रवर्तते इति** । प्रवृत्तौ तु 'रमेश'इत्यत्रैव स्यात्, तपरमिन्नस्तत्कालस्येत्युक्तत्वादुपेन्द्र इत्यत्रैव स्यादिति भावः । **उच्चारणार्थं इति** । ऋकारोच्चारणार्थं इत्यर्थः । तदभावे तु सन्धिप्रवृत्त्या न स्यादिति । एवञ्चासन्देहायेति यावत् । विनिगमनाभावादाह—**मुखसुखेति** ।

ॐ विषमपदविवृतिः ॐ

'गोतो णि'दित्यादौ तु तकारोच्चारणसामर्थ्याद्दकारोऽविवक्षितः । **सिद्धान्तपक्षेपीति** । **इदं**—'गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध' इति पूर्वग्रन्थेन विरुद्धं,—तत्र विधित्वमङ्गीकृत्यानवकाशत्वाद्बाधोक्तेः । **पञ्चमीसमासाभावेति** । 'एओङ्' 'ऐऔ'जिति सूत्रे—'किं दकारे प्रयोजनम् ?

मुखसुखार्थो वा । तपरसूत्रे दकारप्रश्लेषपक्षे तु—धकारादिस्थानिको दकारो बोध्यः ।

**वृद्धिरा** । वृद्धिः, आत्, ऐजिति पदत्रयमिति—न समासान्तादिप्रवृत्तिशङ्का ।
तपरकरणमसन्देहार्थतया पूर्वार्थम्, प्रकृतसूत्रे भाष्येऽत्र शास्त्रे गुणानामभेदकत्वं ज्ञाप-

ॐ **अभिनव-चन्द्रिका** ॐ

सूत्रेण बाध इत्यनुपपन्नम्, एवं गुणानामभेदकत्वपक्षे च तपरसूत्रं नियमार्थमित्यनुपपन्नम् ।—'अणुदित्तपरसूत्रयोः सङ्केतग्राहकत्वेन वैयाकरणमते शब्दानां नित्यत्वेन बोधजनकतारूपशक्तेरपि नित्यत्वेन नित्ययोः परस्परं बाधायोगात् । एकस्मिन्पदे नानाशक्तिमत्त्वे बाधकाभावाच्च । अत एवाकडारेतिसूत्रं पाणिनिना प्रणीतम्, एकस्यैव कृत्कृत्यादिनानासञ्ज्ञादर्शनाच्चेति चेन्मैवं, अणुदित्तपरसूत्रयोस्तात्पर्यग्राहकत्वेनादोषात् । तथाहि—'अतो भिस ऐसि'त्यादावणुदित्सूत्रेणाष्टादशसु तात्पर्यं प्रसक्तं–तपरसूत्रेण षट्सु च, तत्र तं विना तात्पर्यद्वयावधारणस्यावश्यकत्वाद्गुणानां भेदकत्वे परत्वात्तपरसूत्रेण षट्सु तात्पर्यमवधार्यते । गुणानामभेदकत्वादौ च नियामकत्वेन तत्तात्पर्यमवधार्यते इति ।

ॐ **चिदस्थिमाला** ॐ

एवात आह—**तपरेति** । 'पक्षे त्वि'त्यनेन तस्यासिद्धान्तत्वं सूचितम् । यथा चैतत्तथा **प्रभादौ** स्पष्टम् । आदिना थसङ्ग्रहः । 'ऋदो'रित्यत्रेति भावः । 'कृतमनयो'रित्यादिभाष्यस्यान्यथोपपत्तेः । पस्पशाभाष्यानुरोधेनाह—**वृद्धिरिति** । लाघवमप्यत्रेत्याह—**न समेति** । समाहारद्वन्द्वपक्षाश्रयिकेति भावः । आदिनेतरेतरद्वन्द्वे द्विवचनपरिग्रहः । एतेन तथा **कौस्तुभरत्नाकरदण्डव्या**द्युक्तमपास्तम् । ननु पूर्वत्रानुपयोगे 'ऐच्' इत्येवास्तु सन्देहनिवृत्तिर्व्याख्यानतः सन्धिशास्त्रस्येदानीमसिद्धत्वात्सन्धिरेव वा न भविष्यति, अत आह—**तपरेति** । व्याख्यानमगतिकगति-'अइउण्'इत्यादौ सन्ध्यभावप्रतिपादककैयटखण्डनरीत्या तत्सम्भवश्चेति भावः । नन्वसन्देहार्थतयेति कुतः, गुणानां भेदकत्वे समकालसर्वग्राहकत्वस्यैव सम्भवादत आह—**प्रकृतेति** । ''वृद्धिरादैच्'' इत्यर्थः । अत्र=व्याकरणे । ज्ञापकात्—'अनडुहात्त'इत्युदात्त-

ॐ **ज्योत्स्ना** ॐ

नैव सम्भवतीत्यभिप्रायेणेह तदनुवृत्तिरुक्तेति बोध्यम् । **दकारप्रश्लेषपक्षे त्विति** । तुना-ऽरुचिः सूचिता,—तद्बीजन्तु—'दिव उ' दित्यस्य दकारप्रश्लेषमूलभूतस्य प्रयोजनाभावः, 'द्युभ्या' मित्यादा'वुदात्तस्वरितयोर्यण' इति स्वरितव्यावृत्त्यर्थमवश्यं वक्तव्येनोदात्तनिपातनेनैव तित्स्वरितस्यापि व्यावृत्तिसिद्धेरिति—**परिभाषाप्रदीपार्चिषि** विस्तरेण निरूपितम् ।

'**समासान्तादी**' त्यादिपदादितरेतरयोगे द्विवचनप्रसङ्गसङ्ग्रहः, किन्त्वत्र पक्षे वृद्धिशब्दः प्रत्येकं तन्त्रेणावृत्त्या वा योजनीयः ।

"—समाहारद्वन्द्वोऽनित्यत्वाच्च न समासान्त–" इति पक्षे पुनः–समाहारस्यैकत्वात्तदर्थान्वये

ॐ **सदाशिवभट्टीयम्** ॐ

**वृद्धिरा** । 'कृतमनयो'रिति भाष्यस्याऽन्यथोपपत्तेः । पस्पशास्थभाष्यानुरोधेनाह–**पदत्रयेति** । अत एव कुत्ववत्समासान्तोऽत्र भाष्ये नापादितः ।

ॐ **विषमपदविवृतिः** ॐ

अथ किन्तकारे ?, यद्यसन्देहार्थस्तकारो दकारोपी'ति भाष्यस्य—पञ्चमीसमासतदभाववादिपरतया कैयटेन योजितत्वात्तदनुसारेणेदं, न तु पञ्चमीसमासस्य पाक्षिकत्वाभिप्रायेण । **धकारस्थानिक इति** । इदमप्ययुक्तं—दकारांशे पञ्चमीसमासानाश्रयणेनादोषात् ।

कादाश्रित्य सवर्णग्रहणार्थत्वाभावस्योक्तत्वात् । 'कृष्णौत्कण्ठ्यं' 'गङ्गौघ' इत्यादौ त्रिमात्रव्यावृत्तये—परार्थमपि । वृद्धिशब्दोऽत्र पदपरोऽर्थपरत्वासम्भवात् । 'आदैचो वृद्धिपदाऽभिन्ना' इति वाक्यार्थः, पदपदार्थयोस्तादात्म्यस्याङ्गीकारात् । 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वादित्यन्यत्र विस्तरः ।

ॐ अभिनव-चन्द्रिका ॐ

तादात्म्याङ्गीकारादिति । न च मधुशब्दोच्चारणे जिह्वाया माधुर्यप्रसङ्गः, अस्यादिशब्दोच्चारणे जिह्वाया भेदनप्रसङ्ग इति वाच्यं । 'भेदसहिष्णुरभेद'इत्यत्र वास्तवो भेद इति स्वीकारेणादोषात् । अभेदस्तु इतरेतराध्यासाच्छब्दार्थप्रत्ययानां भासत इति मञ्जूषायां निरूपितं, अत एव'शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञान'मिति पातञ्जलसूत्रं सङ्गच्छते । अत एव शब्दे पृष्टेपि 'गौ'रिति वदति, अर्थेपि 'गौ'रिति, ज्ञाने पृष्टेपि 'गौ'रिति । वस्तुतस्तु-शब्दार्थयोरात्यन्तिकाभेदस्वीकारेपि न क्षतिः । न च पूर्वोक्तमाधुर्यादिदोषप्रसङ्ग इति वाच्यं,

ॐ चिदस्थिमाला ॐ

ग्रहणात् । सवर्णेति । 'समकाले'ति शेषः । एतेन 'त्' इति जश्त्वार्थं चतुर्थं भिन्नपदमिति प्रत्युक्तम्, पूर्वार्थत्वेन तस्य सिद्धत्वात्, उक्तभाष्यविरोधाच्च । उक्तत्वादिति । किञ्च केवलपरार्थत्वे जश्त्वं न स्यात्, न केवलं तदर्थं येन पाणिनेरशक्तापत्तिरित्याह—कृष्णाविति । त्रिमात्रेति । नदादीत्यर्थः । क्वचित्-थैव पाठः । परार्थमपीति । कार्यकाले यथोद्देशे चेति भावः । स्फुटीभविष्यति चैतदनुपदमेव । एतेन 'यथोद्देशे एवेद'मिति कौस्तुभाद्युक्तमपास्तम् । त्वासम्भवादिति । इतोऽन्यस्य शक्तिग्राहकस्याभावादिति भावः । नन्वेवमनन्वयापत्तिः, समानविभक्तित्वाद्बाधाच्च भेदाभेदयोरसम्भवादत आह—आदैच इति । अङ्गीकारे हेतुमाह—रामेति । आदिना'हिरण्यपूर्वं कशिपु'मित्यादिपरिग्रहः, अत एवायं शुक्ल इतिवदयं डित्थ इत्यादिव्यवहारोऽत एव च—सञ्ज्ञाशब्दोत्तरभावप्रत्ययार्थत्वं पदस्य ।—स्पष्टञ्चेदं भाष्यादौ । अत्रादैजुद्देशेन वृद्धिपदाभेदो विधेयः, वैपरीत्यन्तु न, पदेनार्थस्मरणाय सम्बन्धज्ञानविधया शक्तिग्रहोपयोग इति—अर्थविशेष्यकशक्तिग्रहस्यैवास्यौचित्यात् । उद्भिदा यजेत, विष्णुर्नारायण' इत्यादौ चैवमेव बोधः, सञ्ज्ञासञ्ज्ञिभावस्तु फलितार्थो—न शाब्दः, अभेदस्य व्यावर्त्यव्यानैकत्वरूपविशेषणविशेष्यभावस्य च तयोरभावात्तत्र पर्यसानात्,तदाह—इत्यन्यत्रेति । मञ्जूषादावित्यर्थः ।

ॐ ज्योत्स्ना ॐ

नास्ति तन्त्राद्यपेक्षेत्यन्यत्र विस्तरः । तादात्म्यस्येति । भेदसहिष्णोरभेदस्येत्यर्थः । एतेनाग्निशब्दाद्युच्चारणे मुखदाहाद्यापत्तिरिति परास्तम् । अन्यत्र विस्तर इति । मञ्जूषायाम् ।

ॐ सदाशिवभट्टीयम् ॐ

पिनाकिन इत्यादाविति । आदिना'हिरण्यपूर्वं कशिपु'मित्यादि ।

ॐ विषमपदविवृतिः ॐ

'त्रिमात्रचतुर्मात्रव्यावृत्तये' इति युक्तः पाठः ।

अन्यत्र विस्तर इति । मञ्जूषादौ विस्तर इत्यर्थः । वस्तुतस्तु पदपदार्थयोस्तादात्म्यमयुक्तं, 'वह्नि'रित्युक्ते मुखे दाहापत्तेः । न च भेदाभेदयोरङ्गीकारेणोक्तदोषनिस्तारः, भेदमात्राङ्गीकारेणोक्तदोषनिरसनोपपत्तौ—अभेदाङ्गीकारे मानाभावात् । 'रामेति द्व्यक्षरं नामे'ति लक्षणया—ऽर्थपरम् । 'आदैचो वृद्धिपदाभिन्ना'—इति वाक्यार्थ' इत्यप्ययुक्तम्, तथा सति शक्तिग्राहकत्वानुपपत्तेः । अभेदस्य त्वया संसर्गत्वानङ्गीकाराच्च । 'तत्पदाभिन्नत्वेन तच्छक्यत्वानुमानात् परम्परया शक्ति-

वृद्धिशब्दस्य सञ्ज्ञात्वन्तु—व्याख्यानात् । विधेयत्वेऽपि तस्य पूर्वपाठो मङ्गलार्थः । 'अपृक्त एका'लित्यादौ तथा करणं—विधेयस्य प्रथमं प्रयोगेऽसाधुत्वभ्रमनिवारणायेति भाष्ये स्पष्टम् । सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया

ॐ अभिनव-चन्द्रिका ॐ

नैयायिकादिमतेऽपि कालिकादिसम्बन्धेन मुखे मधुनस्सत्त्वेन माधुर्यप्रसङ्गात्कारणतावच्छेदक-सम्बन्धेन कारणसत्ताया एव कार्ये नियामकत्वेन शब्दस्य मुखे अवच्छेदकत्वसम्बन्धेन सत्त्वेन—तदभिप्रायार्थस्य तेन सम्बन्धेन सत्त्वेऽपि—कारणतावच्छेदकसंयोगसम्बन्धेन मुखे मध्वादेरभावेनादोषादिति दिक् ।

ननु 'वृद्धिपदमर्थबोधकं, पदत्वात् गोपदवत्'इत्यनुमानेनैव वृद्धिपदे आदैचां वाचकत्वं गृहीतुं शक्यते । नच अर्थत्वेनाऽऽदैज्वाचकत्वग्रहेऽपि आदैच्त्वेनादैज्वाचकत्वग्रहाय सूत्रं विधायकमिति वाच्यं,'वृद्धिपदमादैच्त्वावच्छिन्नवाचकं आदैजितराबोधकत्वे सति अर्थबोधकत्वा'दित्यनुमानेन तत्त्वे-

ॐ चिदस्थिमाला ॐ

नन्वादैचामेव सञ्ज्ञात्वेनोक्तविपरीतं यथाश्रुतमेव कुतो नोक्तमत आह—**वृद्धीति** । तस्यैवेत्यर्थः । **व्याख्यानादिति** । एकस्यानेकसञ्ज्ञाकरणेऽत्र प्रयोजनाभावादिरूपादित्यर्थः । नन्वेवं तस्य परपाठोऽयुक्तः इति नानुपूर्व्यव्यत्ययकल्पनेति लाघवमत आह—**विधेयेति** । 'वर्णसमाम्नायस्तु न पाणिनिकृतः' इति प्रागेवोक्तम् । 'अपृक्तसञ्ज्ञाया'मित्यादिभाष्यवार्तिकविरोधाद्'पृक्त एका'लितिपरिभाषे'ति**कैयटो** न युक्त इति ध्वनयितुमाह—**अपृक्तेति** । आदिना—'स्वं रूपं' 'तपरः' 'येन विधि'रित्यादिपरिग्रहः । तथा करणं=पूर्वपठनम् । **विधेयस्येति**,—पूर्वोत्तरान्वयि । ''—'सर्वे सर्वार्थवाचकाः' इति पक्षे नियामकत्व-मेतेषाम्, अत एव 'व्यवहाराय नियम इत्यादिसङ्गतिः, 'स्वेच्छया सञ्ज्ञाः क्रियन्त' इति पक्षे तु विधित्व'मिति—'' **कौस्तुभादयः**, तदसदिति ध्वनयन्नाह—**सर्वेति** । इदञ्च—तदभ्युपेत्योक्तम् । वस्तुन-

ॐ सदाशिवभट्टीयम् ॐ

'अपृक्तसञ्ज्ञाया'मित्यादिभाष्यवार्तिकविरोधादपृक्त एकालितिपरिभाषे'ति **कैयटो** न युक्त इति–सूचयन्नाह–**अपृक्तेति** । आदिना 'स्वं रूप' 'न्तपरः' 'येन विधि'रित्यादि । अत एव=तासामनित्यत्वव्यवहारादेव । अन्यथाऽकृत्रिमत्वादसङ्गतिः स्पष्टैव । ननु त्रिमात्रादिव्यावृत्त्या यत्परार्थत्वमुक्तं तद्यथोद्देशे सम्भवति तदा स्वगृहे वाक्यार्थबोधेनाविधेयाण्त्वेन सवर्णग्रहणसम्भवात्,—न तु कार्यकाले, तदाविध्येकवाक्यतया विधेयाण्त्वेन

ॐ विषमपदविवृतिः ॐ

ग्राहकत्व'मित्यपि न,वृद्धिपदाभेदतद्वाच्यत्वयोः सहचारग्राहकमानाभावात्-तयोर्व्याप्तिग्रहासम्भवात्, वृद्धिसूत्रे भाष्ये साक्षात्सञ्ज्ञासञ्ज्ञिभावस्यैव वाक्यार्थत्वोक्तेश्च । तद्भाष्यं चोपपादयिष्यामः । तस्मा-'दादैचो वृद्धिपदवाच्या'इत्येव वाक्यार्थः, आदैचां वृद्धिपदस्य च वाच्यवाचकभावस्य संसर्गमर्यादया भानाङ्गीकारात् । न च 'समानविभक्तिकनामार्थयोरभेदेनैवान्वय' इति व्युत्पत्तिभङ्गः, 'प्रतीत-पदार्थकतदर्थयोरभेदान्वयः, अप्रतीतपदार्थकतदर्थयोस्तु वाच्यवाचकभावेनान्वय' इति व्युत्पत्त्यङ्गी-कारात् । तदुक्तं भाष्ये–'इदं खल्वपि भूयः सामानाधिकरण्यम्, एकविभक्तिकत्वञ्च द्वयोश्चैतद्भवति, कयोर्विशेषणविशेष्ययोर्वा सञ्ज्ञासञ्ज्ञिनोर्वा, तत्रैतत्स्याद्विशेषणविशेष्य इति,तच्च न, द्वयोर्हि प्रतीत-पदार्थकयोर्विशेष्यविशेषणभावो भवति,—न चादैच्छब्दः प्रतीतपदार्थकः तस्मात्सञ्ज्ञासञ्ज्ञिना-वेवे'ति । **वाच्यवाचकत्वेऽपीति** । **सर्वार्थवाचकत्वेऽपीति** । सर्वस्य शब्दस्य सर्वत्रार्थे सङ्केतयितु-

सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञापकतया—विधित्वम् । किञ्च—'सर्वे सर्वार्था' इत्यभ्युपगमो योगिदृष्ट्या नास्मद्दृष्ट्या, सर्वशब्दानामर्थानाञ्च विशिष्य ज्ञानाभावात् । सामान्यतस्तथा ज्ञानञ्च—न बोधोपयोगि, शास्त्रन्त्वस्मदाद्युद्देशेनैव प्रवृत्तमिति बोद्ध्यम् । तत्रैव सङ्केत-ग्राहकशास्त्रकरणं–स्वेच्छयैवेत्येषां 'यदृच्छा'शब्दत्वेन व्यवहारः, 'स्वेच्छया सञ्ज्ञाः क्रियन्त' इति च । एतदुपदेशरूपसङ्केताग्राक्तत्र सञ्ज्ञात्वाग्रहेण तासामनित्यत्वव्यवहारः ।

अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाग्रहणरूपनियमः 'कृत्रिमाकृत्रिम'न्याय-मूलतयोक्तः सङ्ख्यासञ्ज्ञासूत्रे भाष्ये । आर्थिकमेवामुं नियममादाय सञ्ज्ञासूत्रेषु नियमत्व-व्यवहारो—'व्यवहाराय नियमः सञ्ज्ञायाः सञ्ज्ञिनि क्वचि'दित्यादिना—कृतः ।

॥ अभिनव-चन्द्रिका ॥

नापि ज्ञातुं शक्यत्वादित्यरुचेराह–**किञ्चेति** । विशेषधर्मपुरस्कारेणेत्यर्थः । **सामान्यज्ञानमिति** । सामान्यधर्मप्रकारकं ज्ञानमित्यर्थः । **न बोधोपयोगीति** । न विशेषधर्मप्रकारकबोधोपयोगीत्यर्थः ।

॥ चिदस्थिमाला ॥

स्तदेव नेत्याह—**किञ्चेति** । **अर्थानामिति** । सर्वेषामित्यर्थः । 'विशिष्ये'त्युक्तिफलमाह—**सामान्यत-स्तथेति** । शब्दत्वेनार्थत्वेन सर्वार्थवाचकत्वादिप्रकारकं ज्ञानमित्यर्थः । नन्वस्तु स योगिदृष्ट्या तथापि तान्प्रत्येव शास्त्रं सफलमेवात आह—**शास्त्रन्त्विति** । तेषां साध्वसाधुविवेकस्य तत एव ज्ञातत्वेनाफलत्वा-दिति भावः । तत्र विरोधाभावात्सर्वग्रन्थैकवाक्यतामाह—**तत्रैवेत्यादिना** । तत्रैव–आदैजाद्यर्थे एव, नत्वन्यत्र ।—अत्र इच्छैव नियामिकेति भावः । तेषाम्=सञ्ज्ञाशब्दानाम् । **इति चेति** । 'व्यवहार'—इत्यस्यानुषङ्गः । सङ्केतात्=तद्ग्रहात् । तत्र=वृद्ध्यादिपदे । तासाम्=सञ्ज्ञानाम् । अत एव=तासामनित्यत्व-व्यहारादेव । **प्रकरणादिति** । तस्याभिधानियामकत्वस्य हर्यादिग्रन्थे स्पष्टत्वादिति भावः । अनेन नियमे शाब्दत्वं वारितम्, अत एवाग्रे **एवोक्तिः** ।

**न्यायेति** । न्यायस्य मूलत्वेनेत्यर्थः । अन्यथाऽकृत्रिमत्वात्तदसङ्गतिः स्पष्टैव । नन्वेवं 'व्यवहाराय नियम' इत्यादिहरिग्रन्थासङ्गतिरेवात आह—**आर्थिकमिति** । तत्र सङ्केतग्राहके कृते तत्तत्सङ्केतज्ञानरूप-प्रकरणवशात्तस्यैवोपस्थितिर्नान्यस्येति फलितमित्यर्थः । **कृत इति** । हरिणेति शेषः । इदञ्च—'विशेषण-विशेष्यव'दित्यनेन सूचितमित्यन्यत्र स्पष्टम् । नन्वेवं सम्बन्धानित्यतया 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिक-विरोध एवात आह—**वाचकेति** । **तद्धिति** । वाचकत्वेत्यर्थः । नन्वेवमपि टि–घु–भादीनां कथं साधुत्व-

॥ ज्योत्स्ना ॥

**न बोधोपयोगीति** । इदं चिन्त्यं,—'घटाः' इति समान्याकारस्य तस्य बोधो-पयोगित्वदर्शनात्, नीलपीतादिव्यक्तिविशेषबोधः प्रकरणादिसहकारेण शक्तेरवच्छेदादिति चेत्समं प्रकृतेऽपि, 'सर्वं विष्णुमयञ्जग'दित्यादौ सर्वादिशब्दोपस्थितेऽर्थे गत्यन्तराभावाच्चेति विस्तरेण निरूपितं मञ्जूषाविषम-टिप्पण्यामस्माभिः । **तत्रैवेति** । आदैजादिशब्देष्वित्यर्थः । 'संङ्केतग्राहके'त्यस्य वृद्ध्यादिपदे' त्यादिः । **आसाञ्चेति** । स्वेच्छया कृतानां सञ्ज्ञानामित्यर्थः ।

॥ विषमपदविवृतिः ॥

मशक्यत्वादिति भावः । **सामान्यतस्तथा ज्ञानमिति** । 'घटशब्दो जातिमद्वाचकशब्दार्थस्य वाचक' इत्येवंरूपेण शक्तिग्रहेपि घटपदेन घटत्वविशिष्टार्थाबोधात् । **प्रकरणादिति** । प्रकरणस्य स्वविषयविषयकशाब्दबोधे हेतुत्वादन्यार्थाग्रहणमर्थसिद्धम् ।

वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः। आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमित्यन्यत्र विस्तरः।

कार्यकालपक्षे 'मृजेर्वृद्धि'रित्यादौ वृद्धिपदार्थजिज्ञासायां 'वृद्धिरादै'जित्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधिवाक्यार्थबोधः। अत एव 'ष्यङः सम्प्रसारण'मिति सूत्रे भाष्ये—'कार्यकालं सञ्ज्ञापरिभाषं, 'भस्ये'त्युपस्थितमिदं भवति—'यचि भमिति' —इत्युक्तम्। 'ईदूदे'दिति सूत्रे भाष्येऽपि—'कार्यकालं सञ्ज्ञापरिभाषं, 'प्रगृह्यः प्रकृत्ये'-

### ॐ अभिनव-चन्द्रिका ॐ

**तदर्थबोधरूप इति**। परम्परया अनाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकज्ञानोपयोगी बोधरूप इत्यर्थः।

अत **एवेति**। सञ्ज्ञाशास्त्राणां वाक्यैकवाक्यतयैव विधिवाक्यान्वयादित्यर्थः।

### ॐ चिदस्थिमाला ॐ

मनादित्वाभावात्, व्याकरणसंस्कृतत्वाभावाच्च, अनपभ्रष्टतारूपं तु तत्र तदुपयोग्यत आह—**आसाञ्चेति**। टि-घु-भादिसञ्ज्ञानामित्यर्थः। एतेन 'सञ्ज्ञाशास्त्राणामेतच्छास्त्रेऽनेन शब्देनैते एवे'तिनियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीज'मिति **कौस्तुभाद्युक्तमपास्तम्**। उक्तरीत्या विधित्वे सम्भवति नियमत्वायोगात्, तद्ध्वनयन्नाह—**इत्यन्यत्रेति**। मञ्जूषादावित्यर्थः। ननु त्रिमात्रादिव्यावृत्त्या यत्परार्थमुक्तं तद्यथोद्देशे सम्भवति, तदा स्वगृहे वाक्यार्थबोधेनाविधेयाण्त्वेन सर्वणग्रहणसम्भवात्—न तु कार्यकाले—तदा विध्येकवाक्यतया विधेयाण्त्वेन तदसम्भवात्, अतः सिंहावलोकनन्यायेनाह—**कार्येति**। **अपिर्यथोद्देश**पक्षसमुच्चायकः। प्रदेशेन सह वाक्यैकवाक्यत्वेऽपि वस्तुतो भिन्नवाक्यतोभयत्र समानेति भावः। तत्र तत्र तामाह—**मृजेरिति**। **वृत्ते इति**। पदार्थोपस्थितेस्सत्त्वादिति शेषः। एवञ्च वाक्यैकवाक्यत्वेऽपि पदैकवाक्यत्वाभावेन—तत्र तस्याभिधेयत्वं सुस्थमेवेति भावः। नन्वत्रैव किं मानम्, पदैकवाक्यताया एकदेशोपस्थित्या सम्भवादत आह—**अत एवेति**। वाक्यभेदादेवेत्यर्थः। अस्य त्रिष्वन्वयः। **भस्येत्युपेति**। प्रकरणप्राप्ते तत्रेत्यर्थः। 'भपदार्थजिज्ञासाया'मिति शेषः। एवमग्रेऽपि। अस्य भाष्यस्यैकदेश्युक्तित्वादेवाह—**ईदूदेदितीति**।

### ॐ ज्योत्स्ना ॐ

**शिष्टप्रयुक्तत्वादिति**। तथा च देशभाषानुसारेण क्रियमाणानां 'कूची' 'मञ्ची'त्यादीनां साधुत्वं नेति भावः। कौस्तुभकारास्तु—साध्वसाधुबहिर्भूतत्वं तेषामभ्युपगच्छन्ति, तन्मतपरिष्कारो **मञ्जूषाविधमटिप्पण्यां** द्रष्टव्यः।

### ॐ सदाशिवभट्टीयम् ॐ

तदसम्भवादतः सिंहावलोकनन्यायेनाह—**कार्येति**। **अपिर्यथोद्देशपक्षसमुच्चायकः** प्रदेशेन सह वाक्यैकवाक्यत्वेपि वस्तुतो भिन्नवाक्यतोभयत्र समानेति भावः। तत्र तत्र तामाह—**मृजेरिति**। **वृत्ते इति**। 'पदार्थोपस्थितेस्सत्त्वा'दिति शेषः। एवञ्च वाक्यैकवाक्यत्वेपि पदैकवाक्यत्वाभावेन तत्र-कार्यकाले तस्याऽविधेयत्वं सुस्थमेवेति भावः। नन्वत्रैव किं मानं ? पदैकवाक्यताया एकदेशोपस्थित्या सम्भवादत आह—**अत एव भाष्येति**। वाक्यभेदादेवेत्यर्थः।

### ॐ विषमपदविवृतिः ॐ

**अत एव ष्यङिति**। सम्पूर्णसञ्ज्ञाशास्त्रोपस्थितेरेवेत्यर्थः।

त्युपस्थितमिदं भवति—'ईदूदेद्द्विवचनं प्रगृह्य'मिति' । 'निष्ठे'ति सूत्रे कैयटोऽपि—'निष्ठे' त्युक्ते सञ्ज्ञावाक्यं—'क्तक्तवतू निष्ठे'ति स्मर्यते'इत्याह । अत्र पक्षे एकत्र शक्तिग्रहे वृत्तेऽपि 'तत्प्रदेशस्थस्यैव तत्रार्थे शक्ति'रिति सम्भावनया प्रदेशान्तरस्थे बोधो न स्यादिति सर्व-प्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं विधिवाक्यार्थबोधः । यथोद्देशे तु एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः । एतेन "—कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव, आदैच्पदार्थस्य वृद्धि-विशेषणतया विधेयत्वेन सवर्णग्रहणाप्रसक्तेः । 'यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते' इति क्रमेण सञ्ज्ञासूत्राणामर्थात्—"इत्यपास्तमित्यन्यत्र विस्तरः ।

❀ अभिनव-चन्द्रिका ❀

**इत्याहेति** । अयं भावः—सञ्ज्ञाशास्त्राणां वाक्यैकवाक्यतयैवान्वयं विहाय पदैकवाक्यतया पदार्थै-कवाक्यार्थतया वाऽन्वयस्वीकारे'यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते' इतिसञ्ज्ञाशास्त्राणामर्थस्वीकारेण विधिप्रदेशे वृद्धिपदश्रवणेनादैजुपस्थितावपि तदर्थस्य विधिवाक्यार्थानन्वयप्रसङ्गइति । **सर्वप्रदेशेष्विति**। सञ्ज्ञाशास्त्राणां साध्वनुशासकत्वान्नैष्फल्यज्ञानेनोपक्षाबुद्धौ सञ्ज्ञाशास्त्रजबोधरूपशक्तिग्रहसंस्कारस्य लुप्तत्वात्पुनः शक्तिग्रहार्थमेकत्र विधिप्रदेशे सञ्ज्ञाशास्त्रोपस्थितावपि तज्जनितशक्तिग्रहजसंस्कारस्य उपेक्षाबुद्ध्यभावात्, प्रतिविधिप्रदेशमावृत्त्या सञ्ज्ञाशास्त्राणां वाक्यार्थबोधे फलाभावाच्च, सामान्यधर्माव-च्छिन्ने एव शक्तेर्गृहीतत्वाच्च—चिन्त्यमिदम् ।

❀ चिदस्थिमाला ❀

**इतीति** । 'उक्त'मित्यस्यानुषङ्गः । भवदवलम्बभूतेनापि-[ **कैयटेनापि** ]-तथोक्तमित्याह—**निष्ठेतीति** । नन्वेवं को विशेषः पक्षयोरत आह—**अत्र पक्षे इति** । कार्यकालपक्षे इत्यर्थः । **स्थे**-'तद-र्थस्ये'ति शेषः । एकदैव—एकत्रैवेत्यपि बोध्यम् । **दण्डि-कृष्ण-कौस्तुभर-त्नाकरा**द्युक्तिं खण्डयति—**एतेनेति** । पक्षद्वयेऽपि तदर्थमुक्तरीत्या तपरत्वस्यावश्यकत्वेनेत्यर्थः । **वृद्धीति**—बहुव्रीहिः । ननु पदैक-वाक्यतयान्वये तत्र सूत्रोपस्थितौ वृद्धिपदस्य सञ्ज्ञासूत्रस्थस्यानन्वयप्रसङ्गः, सञ्ज्ञासूत्रानर्थक्यञ्चात आह—**यत्रेति** । उपस्थाप्यस्योपस्थापकेन वृद्ध्यादिपदेन 'मृजेर्वृद्धि' 'यस्ये'त्यादौ वृत्त्या बोधनात्परं सञ्ज्ञासूत्वव्यव-हारः, । न चैवं 'वृद्धिर्यस्ये'त्यादावादैचामुपस्थितौ सवर्णग्रहणं दुर्वारमिति तपरत्वमावश्यकमिति वाच्यम्, तादृशलक्ष्याभावेनेष्टापत्तेरिति भावः । क्रमेण=रीत्या । किञ्च'अथसञ्ज्ञे'त्यादिप्रकृतसूत्रस्थवार्तिकाऽन्यथातत्प्र-त्याख्यानपरभाष्यद्वयविरोधः, किञ्च—'मृजे'रित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसम्पत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाभावेन तत्रैक्यपरिभाषानुपस्थित्यापत्तिः, किञ्चोपस्थाप्यार्थस्य वृत्त्या बोध-नात्सञ्ज्ञासूत्रत्व'मिको गुणे'त्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः । किञ्च—वृद्ध्यादिपदैर्वृत्त्या बोधनं दुरुपपादमिति दिक् । तदाह—**इत्यन्यत्रेत्ति** । **उद्योतादा**विल्यर्थः—**अत्रेति** ।

❀ सदाशिवभट्टीयम् ❀

**इत्याहेति** । वक्ष्यमाणरीत्या यच्चीत्यादेरंशस्यैवोपस्थितेर्वक्तव्यतया सर्वत्र सर्वोपस्थितिकथनासङ्गतिः स्यादिति भावः । **यथोद्देशे त्विति** । अत्र तु न तत्सम्भावना, केवलं स्वदेशे वाक्यार्थत्वात् । **वृद्धिविशेषणेति** । बहुव्रीहिरयम् । **विधेयत्वेनेति** । 'वृद्धिर्यस्ये'त्यादावनुवादे तु न दोषः, तादृशलक्ष्या-भावादिति भावः ।

❀ विषमपदविवृतिः ❀

**एतेनेति** । उक्तभाष्यविरोधेनेत्यर्थः ।

१. भट्टोजीदीक्षितगुरवः प्रक्रियाप्रकाशादिकाराः शेषश्रीकृष्णाः ।

अत्रातद्भावितानामपि आदैचां ग्रहणं, तेन शालीयासिद्धिः ।

**भूवादयो** । क्रियावाचिनः किम्? विकल्पार्थक'वा'शब्दस्य निपातस्य धातुत्वेऽप्रातिपदिकत्वात्सुबभावे पदत्वानापत्तेः, तदुक्तौ तु न दोषः, वार्थस्य विकल्पस्य भूत-

❀ अभिनव-चन्द्रिका ❀

भूवादयो धातवः । भूवादयश्च—भूवादयश्च भूवादयः—इतितन्त्रेणायं निर्देशः । एकश्चादिशब्दः प्रकारार्थः, अपरश्च प्रभृत्यर्थः, विशिष्टाऽऽवृत्तिश्च,—भूसाहचर्याद्वाशब्दोऽनव्यय एव गृह्यते, वाशब्दसाहचर्याच्च भूशब्दोऽसत्त्ववाची गृह्यते,—इति परस्परसाहचर्यात् तादृशः क्रियावाच्येव सम्भवतीति क्रियावाचिन इत्यर्थलाभाय,एकपदोपस्थापितयोः परस्परं भेदेनैवान्वयस्य व्युत्पन्नत्वेन भूवाप्रभृतयो ये भूवासदृशाः—इत्यभेदान्वयलाभाय, एकरूपावच्छिन्नस्य एक-

❀ चिदस्थिमाला ❀

'वृद्धिरादै'जित्यत्र वृद्धिशब्देनाविहितानामपीत्यर्थः । तद्भावितानामेव ग्रहणे मानाभावात्, शालीयाद्यसिद्धेश्चेति भावः । अपिना—तद्भावितानां सङ्ग्रहः । तदाह—**तेनेति** । उभयग्रहणेनेत्यर्थः । आदिना ताव-द्भार्यादिसंग्रहः । द्वन्द्वैकशेषघटितबहुव्रीहिमभिप्रेत्याह—**क्रियेति** । 'इति ने'ति शेषः । एवमग्रे सर्वत्र । 'आतोनाप'इत्युक्ते 'याः पश्यमी'त्यादावदोषान्**मनोरमारत्नाकरदण्ड्या**दिग्रन्थानामस्वाङ्गत्वं ध्वनयितुमाह—**विकल्पेति** । यत्तु—वातीत्यादिप्रयोगापत्तिरिति**रत्नाकर**स्तन्न, तदर्थस्य कालासम्बन्धेन लडाद्यप्राप्तेरत आह—**त्वेऽप्रातीति** । नन्वेवमपि दोषः, विकल्पस्य विकल्पयतीत्यादौ क्रियात्वदर्शनादत आह—**तदुक्तौ त्विति** । 'क्रियावाचिन' इत्युक्तौ त्वित्यर्थः । **वार्थस्येति** । अनेन विकल्पयतीत्यादौ—तत्त्वं सूचितम् । **भूतेति** । वर्तमानस्याप्युपलक्षणम् । नन्वेमप्यस्त्यादीनां धातुत्वानापत्तिः, तदर्थस्याक्रियात्वात्—

❀ ज्योत्स्ना ❀

**पदत्वानापत्तेरिति** । इदं चिन्त्यं—निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं, तत्रानर्थकग्रहणं न कर्त्तव्यं, 'निपातः प्रातिपदिक'मिति प्रकृतसूत्रभाष्येणैवानूद्यमानार्थस्यैव दूषितत्वात्, तस्मादौणादिकाऽव्युत्पन्नदिव्शब्दस्य धातुत्वे स्वादयो न स्युरिति भाष्योक्तमेव प्रत्युदाहरणीयम् । **क्रियात्वाभावादिति** । भूत-भविष्यत्कालपरिच्छिन्नत्वं हि क्रियात्वं, 'क्रियाभेदाय कालस्तु सङ्ख्या

❀ सदाशिवभट्टीयम् ❀

**भूवादयः किमिति** । 'इति ने'ति शेषः । एवमग्रेपि । ननु निष्पाद्यत्वरूपसाध्यत्वेन प्रतीयमानत्वस्य क्रियात्वेनाऽस्त्यर्थस्य क्रियात्वं न स्यादत आह—**अस्त्याद्यर्थेति** । 'भूप्रभृतयो भूसदृशा' इति तु नोक्तं, शब्दप्रभृत्यर्थकादिभूयोगे एकशेषे प्रमाणलाभानापत्तेरित्याहुः । **पदत्वानापत्तेरिति** । अत्र **पाठकाः**[1], "—इदं चिन्त्यं—निपातस्यानर्थकस्य प्रातिपदिकत्वं बोधितं तत्राऽनर्थकग्रहणं न कर्त्तव्यं, निपातः प्रातिपदिकम्—"**इत्याद्याहुः** । वस्तुतस्तु—वार्तिककर्त्रैकदेशिना तथोक्तम् । 'अर्थव'त्सूत्रे 'ऽथवे'त्यादिना—'अधिपरी'ति ज्ञापकेनाऽनर्थकानामप्यर्थवत्कार्यं भवति—इत्युक्त्वा तत्तत्प्रत्याख्यानेन तस्य तदुक्तित्वध्वननात् । अत एव—'अनर्थकग्रहणं न करिष्यते—' इति 'सति कुड्ये चित्र'मिति न्यायेन प्रौढित्वसूचकमुक्तम् । **नन्वथवे**त्यादिभाष्यात्तस्य पक्षान्तरत्वेन न तत्प्रत्याख्यानबोधकमिति चेत्—पूर्वत्रोक्त्यैवोत्तरपक्षबोधनात्प्रत्याख्यानस्यैव युक्तत्वात्, परन्तूद्योते ज्ञापकस्य शैथिल्यमुक्तमित्याहुः । "यद्यपि—भाष्ये प्रसज्यप्रतिषेध उक्तस्तथापि

❀ विषमपदविवृतिः ❀

**भूवादयो धातवः** । **कालसम्बन्धाभावेनेति** । तथाच कालपरिच्छिन्नत्वं क्रियात्वं, तच्च साक्षात्क्रियायामेवेति 'कालाः परिमाणिने'ति प्राचीनग्रन्थेषु स्फुटम् । **एतेन**—न तावद्धात्वर्थत्वं क्रियात्वं, 'क्रियावाचित्वे ज्ञाते सति धातुत्वज्ञानं, धातुवाच्यत्वे च क्रियात्वज्ञान'मित्यन्योन्याश्रयात्,

१. **शेखरटीका**विशेषकर्त्तारो **लक्ष्मणपाठकाः** । 'वस्तुत'स्त्वित्यादिग्रन्थोपि तत्रत्य एवेति प्रतीमः ।

भविष्यत्कालसम्बन्धाभावेन क्रियात्वाभावात् । अस्त्याद्यर्थस्यापि तत्त्वं भूतभविष्यत्काल-सम्बन्धात् । भ्वादयः किम् ? 'आणवयति' 'वट्टयती'त्यादीनां धातुत्वे शास्त्रविषयतया साधुत्वापत्तेः । सूत्रशेषे भाष्ये स्फुटमेतत् । स्तम्भ्वादीनामुदित्त्वेन धात्वधिकारविहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमानान्न तेषु दोषः ।

❀ अभिनव-चन्द्रिका ❀

रूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षालाभाय च । क्रियावाचिनः किमिति । क्रियावाचकत्वञ्च—साध्यत्वविशिष्टत्वं, वे० च 'स्वावच्छिन्ननिरूपितशक्ति-पर्याप्त्यधिकरणत्व' 'स्वावच्छिन्नेतरनिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चारिताऽघटितत्व' 'स्वावच्छिन्ननिरूपितशक्तिनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वै, तत्रितयसम्बन्धेन । आद्य-सम्बन्धदानेन भूयते इत्यादिभावतिङन्तस्य न क्रियावाचकत्वम् । द्वितीयसम्बन्धदानेन दरिं द्रातीतिदरिद्रा इत्यस्य न क्रियावाचकत्वम् । तृतीयसम्बन्धदानेन विकल्पार्थकवा-शब्दस्य न क्रियावाचकत्वम् । साधुत्वापत्तेरिति । आणवयतीत्यादौ धातुसञ्ज्ञायामपि-सञ्ज्ञाशास्त्राणां साधुत्वविधायकत्वाभावात् कथं साधुत्वापत्तिरिति वाच्यम्, 'भू सत्तायाम्' इत्याद्यनेकशास्त्राणां साधुत्वानुशासकत्वे महागौरवेण 'भूवादय'इत्यस्यावृत्तिं कृत्वा धातुसञ्ज्ञाविधायकत्वस्य साधुत्वविधायकत्वस्य च स्वीकारेणादोषात् । अत्रैव मानमाह–सूत्रशेषे भाष्य इति ।

❀ चिदस्थिमाला ❀

निष्पाद्यत्वरूपसाध्यत्वेन प्रतीयमानत्वस्यैव तत्त्वादत आह-अस्त्याद्येति । तत्त्वम्=क्रियात्वम् । पूर्ववदाह— भ्वादय इति । आज्ञापयतीत्यर्थे आद्यं प्राकृतम् । वर्त्तयतीत्यर्थे द्वितीयम् । आदिना वर्धयतीत्याद्यर्थे वड्ढयतीत्यादेः परिग्रहः । अपभ्रंशानामपि स्वातन्त्र्येणैव बोधकत्वाङ्गीकारात्–क्रियावाचकत्वम् । न हि साधु-त्वासाधुत्वे नियते, किन्त्वन्यादृशे इति स्पष्टम्—मञ्जूषायाम् । अत्र प्रकृतिभागस्य धातुत्वापत्तिर्बोध्या— अत एव तिङुत्पत्तिर्नोपादिता, ततस्तस्याः सत्त्वादत एवाह–शास्त्रेति । अप्रामाण्यशङ्कानिरासायाह– सूत्रेति । प्रकृतेत्यादिः । नन्वेवं स्तम्भ्वादीनां धातुत्वानापत्तिस्तेषां भ्वादावपाठादत आह—स्तम्भ्वा-दीति । आदिना जु-पस-ऋति–चुलुम्पादिपरिग्रहः । उदित्त्वेनेति । नन्वधातुत्वेऽपि प्रातिपदिकत्वात्सु-प्युदित्करणं नुमाद्यर्थं स्यात्, एतेन तथा—रत्नाकरदण्ड्याद्युक्तमपास्तमत आह–धात्वधीति । 'जृस्तम्भु' 'स्तम्भुस्तुम्भु' 'जुचङ्क्रम्य' 'भञ्जपसाश्च' 'ऋतेरीयङ्' 'अनेकाच्ग्रहणं चुलुम्पाद्यर्थं' 'कण्ड्वादिभ्य' इत्यादिविहित-प्रत्ययादिरूपाणि कार्याणि बोध्यानि । आदिना–तत्प्रकृतिकत्ल्यनुवादेनाङ्विधानस्य, सार्वधातुके परे विकरण-

❀ ज्योत्स्ना ❀

सर्वस्य भेदिके'त्युक्तेरिति भावः । 'स्तम्भ्वादीना'मित्यादिपदात्—'जुचङ्क्रम्ये'त्यत्र पठितस्य–जोः, 'जपजभे'त्यत्र पठितस्य–पसः, 'ऋतेरीय'ङित्यादौ पठितस्य ऋतिप्रभृतेश्चुलुम्पान्दोल–प्रेङ्खोल-प्रभृतीनां सङ्ग्रहः । तत्र–स्तम्भ्वादीनां केषाञ्चिदुदित्त्वेन, जुप्रभृतीनां केषाञ्चिद्धात्वधिकार-विहिततत्कार्योद्देश्यत्वेन, चुलुम्पप्रभृतीनामन्येषान्तु—धात्वधिकारविहितकार्योद्देश्यत्वादिना चे-त्यादिपदग्राह्येण—'बहुलमेतन्निदर्शन' मिति बहुलग्रहणेन स्थितपाठभ्रंशानुमानमिति बोध्यम् ।

❀ विषमपदविवृतिः ❀

नापि–लिङ्गसङ्ख्याकारकानन्वयि तत्, निपातसञ्ज्ञकवाशब्दार्थेऽपि तत्सत्त्वेनोक्तदोषानिस्तारात् । नापि—साध्यतया प्रतीयमानत्वं तत्, धात्वर्थे तथात्वस्य, निपातार्थे तदभावस्य च शपथैकनिर्णेयत्वादित्यपास्तम् । साध्यत्वेन प्रतीयमानत्वस्यापि धात्वर्थमात्रवृत्तित्वसमर्थनसम्भवाच्च ।

१. 'आणवेदि' 'वट्टेदी'त्यत्रापाद्यमाने इमे रूपे । २. लिडादौ क्विबादेः कर्त्रर्थकत्वेऽपि तस्योच्चारणा-भावाल्लक्षणसमन्वयो बोध्यः ।

**प्राग्रीश्च** । 'अधिरीश्वरे' इत्यभिव्याप्य प्राग्निपाता इत्यधिकारः । 'प्राङ्निपाताः सन्तो गत्यादिसञ्ज्ञका'इत्यर्थः । तेन ताभिः समावेशः, 'अधिरीश्वरे' विभाषा कृञी'—त्यत्र निपातपदसम्बन्धश्च सिद्धः । एषां द्योतकत्वं, वाचकत्वञ्च यथाकार्यं, यथाप्रयोगं बोद्ध्यमित्यन्यत्र विस्तरः । 'असत्त्वे' इति पर्युदासो लाघवादित्याह—**अद्रव्येति** ।

॥ चिदस्थिमाला ॥

विधानस्य च संग्रहः । नन्वेतैरनेकवचनकल्पने गौरवमत आह—**स्थितेति** । 'रीश्वरात्प्रा'गित्यर्थेऽधेः कर्मप्रवचनीयसञ्ज्ञकस्य निपातसञ्ज्ञा न स्यात्, अग्रे समावेशश्च न स्यात्, अतोऽन्यथा व्याचष्टे—**अधिरीश्वर इति** । ल्यब्लोपे पञ्चमी । प्राग्ग्रहणमेकसञ्ज्ञाधिकारेऽपि गत्यादिसञ्ज्ञासमावेशार्थमित्याह—**प्रागिति** । तदर्थमाह—**प्रागिति** । आदिनोपसर्ग-कर्मप्रवचनीयसञ्ज्ञापरिग्रहः । व्युत्क्रमेणोभयफलमाह—**तेनेति** । ल्यब्लोपे पञ्चम्याः, प्रागित्यस्याधिकाराऽन्तर्गतत्वस्य चाश्रयणेनेत्यर्थः । ताभिः=गत्यादिसञ्ज्ञाभिः । 'निपातसञ्ज्ञाया' इति शेषः । प्रकारान्तरेण समावेशसाधनं तु गुरुभूतमतिप्रसक्तञ्च तद्धिताणादौ । तथा च 'विषिञ्चती'त्यादौ षत्वं, सुपो लुक्च सिद्धः । ननु रीश्वरशब्दात्प्रागित्यर्थेऽपि ततोऽधेः पूर्वत्वान्न दोष इति चेन्न, तद्घटितसूत्रात्प्रागित्यर्थस्यैव सूत्रकारशैलीसिद्धत्वात्, एवमपि विभाषेत्यत्र दोषापत्तेश्च । एतेन "—आवृत्त्या प्राक्पदस्य तत्र पक्षेऽपि नत्थेति अधिकारस्य लाघवार्थतया सञ्ज्ञाविशेषानुक्ताविव प्रवृत्तेर्युक्तत्वात्,—प्रतिसूत्रं सम्बन्धस्यैवाभावेन सूत्रस्य तदनुपपत्त्या तदभावेऽपि रीश्वरशब्दस्यानर्थकत्वेनार्थस्यानवधित्वेन तस्यानवधिमत्त्वेन सूत्राणामेव तत्त्वस्यावश्यकत्वेन गत्यादिसञ्ज्ञानान्तदबाधकत्वात्समावेशः,—'प्राग्दीव्यत'इत्यादौ तु वैपरीत्यमितीआऽण्बाध इति च **रत्नाकरोक्तमपास्तम्** । तदेतद्ध्वनयन्प्राप्तविभाषात्वेन 'विभाषा कृञी' त्यत्र 'अधिरीश्वरे'इत्यस्यानुवृत्तेराह—**विभाषेति** । इत्यत्र=इत्युभयत्र । यत्तु महासञ्ज्ञया 'नियमेन पातयन्ति स्वार्थमन्यस्मिन्'—इत्यर्थलाभेनैषां द्योतकत्वमेवेति, तन्न, तस्याः प्राचामनुरोधित्वात् । अत एव पादपूरणार्थानामपि सञ्ज्ञा, बहुवचनं तु–निपतनं='निपातः'–अनेकेष्वर्थेषु—येषामित्यर्थे आद्यच्सूचनद्वारा निपातानामनेकार्थत्वबोधकं, तद्ध्वनयन्नाह—**एषामिति** । कार्यस्यापि—प्रयोगाश्रयत्वादाह—**यथा प्रेति** । एतेनो'पसर्गाणां द्योतकत्वं तद्भिन्ननिपातानां वाचकत्व'मिति **नैयायिकोक्तमर्धजरतीयानौचित्येन** 'सर्वेषां द्योतकत्वं वाचकत्वञ्चेति'—**दीक्षिताद्युक्तञ्च** परास्तं, तदाह—**इत्यन्यत्रेति** । मञ्जूषादावित्यर्थः । यद्यपि भाष्ये प्रसज्यप्रतिषेध उक्तः—तथापि स न युक्तः,—वाक्यभेदासमर्थसमासापत्तेस्तद्ध्वनयन्नाह—**असत्त्वे इति** । नन्वेवं भाष्योक्तप्रसज्यप्रतिषेधफले 'विप्रातीति विप्र' इत्यत्रातिप्रसङ्गः, तत्र प्रशब्दस्य क्रियाविशिष्टद्रव्यवाचकत्वात्समुदायस्य च द्रव्यभिन्नत्वात्तदन्यत्र वर्तमानत्वात्, इष्टापत्तिस्तु न–अव्ययसञ्ज्ञायां तदन्तविधिसत्त्वेन तदन्तस्याव्ययत्वे सुपोऽश्रवणापत्तेरत

॥ ज्योत्स्ना ॥

**इत्यभिव्याप्येति** । 'रीश्वरा' दिति ल्यब्लोपे इयं पञ्चमीति भावः । **एषामिति** । प्रादीनां, चादीनाञ्चेत्यर्थः । **यथाकार्यमिति** । 'अनुभूयते सुखं' 'साक्षात्क्रियते घट' इत्यादौ द्योतकत्वम्, 'अहंयु'रित्यादावस्मदाद्यर्थवाचकत्वं, वाचकत्वमन्तरेण कर्मलकारयुस्प्रत्ययादीनामसम्भवादिति भावः। नन्वेवं 'शरैरुस्रैरिवे'त्यादौ इवादीनां सादृश्यवाचकत्वमादाय तदन्वय्युस्रादिभ्यस्तृतीया कदाचिन्न प्राप्नोति, षष्ठी च स्यादत आह—**यथाप्रयोगमिति** । तथा च तत्र षष्ठ्यादिघटितप्रयोगाणामनभिधानात्तादृशस्थले वाचकत्वकल्पना नेति भावः ।

॥ सदाशिवभट्टीयम् ॥

स न युक्तः, वाक्यभेदासमर्थसमासापत्तेस्तद्ध्वनयन्नाह—**असत्त्वे इति** । नन्वेवं भाष्योक्तप्रसज्यप्रतिषेधफले 'विप्रातीति—**विप्र' इत्यत्रातिप्रसङ्गस्तत्र** प्रशब्दस्य क्रियाविशिष्टद्रव्यवाचकत्वात्समुदायस्य च द्रव्यभिन्नत्वात्तदन्यत्र वर्त्तमानत्वात्, इष्टापत्तिस्तु न, अव्ययसञ्ज्ञायां तदन्तविधिसत्त्वेन तदन्तस्याव्ययत्वे सुपो-

विशेष्यतया द्रव्यभिन्नार्था इत्यर्थः। तेन क्रियाविशिष्टद्रव्यवाचिनां त्रिप्रादिघटकप्रादीनां न। चादयः किम्? स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति।

**उपसर्गाः**। योगग्रहणं—'यदर्थे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वादी'त्यर्थबोधनाय। तेन 'विगताः सेचका अस्माद्विसेचको ग्राम'इत्यादौ षत्वं न।

**गतिश्चेति**। 'च' उपसर्गसञ्ज्ञासमावेशार्थः। तेन 'प्रतिप्रणीन'मित्यादौ गतित्वात्

### ❀ अभिनव-चन्द्रिका ❀

**विशेष्यतया द्रव्यभिन्नार्था इति**। लिङ्गसङ्ख्यान्वयितानवच्छेदकं यद्रूपं तद्रूपेतररूपावच्छिन्नविषयकबोधतात्पर्येणानुच्चरिता इत्यर्थः। तेनात्यन्तनिरर्थकानामपि निपातसञ्ज्ञा सिद्धिरिति दिक्। **तम्प्रत्येवोपसर्गत्वादीति**। 'जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्व'मिति स्वीकारादिति भावः।

### ❀ चिदस्थिमाला ❀

आह—**विशेष्येति**। अत्र सत्त्वशब्देन 'सतो भावः सत्त्व'मिति साध्यावस्थापन्नक्रियारूपा सत्ता नोच्यते, चादीनां तदवाचित्वात्—किन्तु 'सीदन्ति–क्रियागुणादयो यस्मि'न्निति व्युत्पत्त्या द्रव्यं तदाह–**द्रव्येति**। **वृत्तित्वे इति**। 'सति तत्त्वा'दिति शेषः। एतेन प्रातरादीनां केषाञ्चिदेव तत्त्वापत्तिर्न सर्वेषामिति सूचितम्। **मा भूदितीति**। इष्टापत्तिस्तु न–'अन्तरिच्छन्ति' 'प्रातारत्न'मित्यादिवैदिकप्रयोगविरोधापत्तेः अद्रव्यार्थाः किं? पशुः। एवो गन्ता–'क्रियाया'मित्येवोक्तार्थलाभादाह–**योगेति**। आदिना गत्यादि। **बोधनायेति**। प्रत्यासत्तिन्यायसञ्चारबोधनद्वारेति भावः। **प्रतिगता इति**। 'विगता' इति क्वचित्पाठः। क्रियायोगे किम्? अधिसेचकं, विभक्त्यर्थेऽव्ययीभावः–अत्रो'पसर्गा'दिति षत्वम्। निपातसञ्ज्ञायास्तस्य सिद्धत्वादाह–**उपसर्गेति**। अन्यथैकसञ्ज्ञाधिकारात्पर्यायः स्यात्, इष्टापत्तिस्तु न, 'अभिषावक' इत्यादौ षत्वविकल्पापत्तेः–तदेतच्छ्वनयन्नाह—**तेनेति**। 'गतिरन्तर'इत्यस्य विषयत्वायाह—**प्रतीति**। अत्र प्रस्य

### ❀ ज्योत्स्ना ❀

'प्रतिगताः सेचका अस्मात्प्रतिसेचक'इति पाठः। 'प्रसेचक' इति लपपाठः, इणः परत्वाभावात्षत्वाऽप्राप्तेः, अत एव भाष्ये-'विसेचक' इत्युदाहृतम्।

### ❀ सदाशिवभट्टीयम् ❀

ऽश्रवणापत्तेरत आह—**विशेष्येति**। 'अत्र सत्त्वशब्देन सतो भावः—**सत्त्वमिति** साध्यावस्थापन्नक्रियारूपा सत्ता नोच्येत, चादिनान्तदवाचित्वात्, किन्तु सीदन्ति क्रियागुणादयो यस्मिन्निति व्युत्पत्त्या द्रव्यन्तदाह—**द्रव्येति**'भट्टा आहुः। **गतिश्च**। **प्रतिप्रणीतमिति**। प्रसङ्गादनन्तर इत्यस्य व्यावर्त्यप्रदर्शनाय **प्रतीति**। अत्र प्रस्य तत्समावेशो बोध्यः। 'प्रकृतिव'दित्यतिदेशेन ङुगो लुकि तु निरित्यादौ रुत्वादिस्यादत आह—**प्रेति**। यथासम्भवं लौकिकालौकिकान्यतरप्रयोगानुकरणानीत्यर्थः।

### ❀ विषमपदविवृतिः ❀

**अभिव्याप्येति**। [पृष्ठे १४४] आङोऽध्याहार इति भावः। **विप्रादिघटकेति**। विपूर्वात्प्रा पूरण इत्यस्मात्कर्तरि के रूपमिति भावः। **इत्यर्थबोधनायेति**। अयं भावः,—'क्रिये'ति लुप्ततृतीयान्तं, 'योग'-इति–पदान्तरस्याध्याहारः–'स्तोदचुने' त्यादिवत्। सूत्रस्थं 'योग'पदं च,–अर्शआद्यजन्तं प्राद्यन्वयिधात्वर्थपरं विषयसप्तम्यन्तम्। तथा च 'क्रियया युक्ताः प्रादयः स्वान्वयिक्रियाविषये क्रियावाचकं

'गतिरनन्तरः' इति स्वरः, उपसर्गत्वाण्णत्वञ्च सिद्ध्यति ।

**प्रादयः** ।—इति योगविभागस्तु क्रियायोगाभावेऽपि निपातत्वाय । एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गणसूत्रेणेति दिक् । 'प्रपरे'त्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः । **निस्दुसिति** । अत्रेदं बोद्ध्यं—सान्तग्रहणे रान्तस्याग्रहणमेव, यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणेऽपि न सान्तग्रहणं, तद्दृष्ट्या रुत्वस्यासिद्धत्वात् ।

यत्र तु रुत्वस्य सिद्धत्वं, यथा—षत्वणत्वयोः—तद्विषयोपसर्गत्वप्रतिषेधपरे—'दुरः षत्वणत्वयो'रिति वार्त्तिके कृतरेफसान्तस्यापि ग्रहणम् । 'षत्वणत्वयो'रित्यस्य' तद्विधायक-

❀ अभिनव-चन्द्रिका ❀

**सुबनुत्पत्तेरिति** । शक्त्या लक्षणया वाऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वस्याभावेन प्रातिपदिकसञ्ज्ञाया अभावादिति भावः । ननु प्रतिपदोक्तस्य दुर एव ग्रहणं स्यान्न तु कृतरुत्वदुस इत्यत

❀ चिदस्थिमाला ❀

तत्समावेशः । **णत्वञ्चेति** । 'उपसर्गादसमासेपी'ति भावः । **तत्त्वायेति** । 'तेषा'मित्यादिः । तेन 'प्रगत आचार्यः प्राचार्यः'—इत्यादौ–अव्ययपूर्वपदप्रकृतिस्वरसिद्धिः । **नन्वेवमुपसर्गेति** चाद्यन्तर्गणसूत्रे व्यर्थमत आह—**एतदिति** । वौद्ध–**प्रादय** इति योगविभागसिद्धत्वेनाभिमतमेवेत्यर्थः । सूत्रपाठापेक्षया गणपाठस्य पूर्वत्वस्य—'पूर्वपरावरे'तिसूत्रभाष्ये स्पष्टत्वादत एव गणपाठमाश्रित्य—**तद्धितश्चे**त्यादि-प्रत्याख्यातं 'तद्धितश्चे'तिसूत्रे । भाष्ये योगविभागस्य वैयर्थ्यन्तु न, पाणिनिरज्ञतापत्तेः । लाघवात्—' भाष्यकृताऽप्रत्याख्यानाच्च । भाष्यारूढत्वादनार्षत्वशङ्कापि तत्र न । एतेन'**उपसर्गे**तिचाद्यन्तर्गणसूत्रेणैव तत्र निपातत्वसिद्धेर्योगविभागो व्यर्थः'—इति**कौस्तुभा**द्युक्तमपास्तम् । तदाह—**दिगिति** । 'प्रकृतिव'-दित्यतिदेशेन सुब्लुगपेक्षया लाघवात्–क्वचिदनिष्टाद्यापत्तेश्चाह—**प्रेति** । यथासम्भवं लौकिका लौकिकान्यतरप्रयोगानुकरणानीति भावः । **निस्दुसितीति** । एतेन मूले एवमेव पाठः सूचितः । 'एकस्या आकृते'रिति न्यायात् । एतेनान्यथा पठन् **दण्डी** प्रत्युक्तः । **रत्नाकरा**द्यसङ्गतिं ध्वनयन्सिद्धान्तमाह—**अत्रेदमिति** । **सान्तेति** । 'निसस्तपता'वित्यादावित्यर्थः । स्वरूपभेदादिति भावः । एतद्ग्रहणेऽर्धजरतीयत्वेन पूर्वतो वैषम्यमाह—**यत्र त्विति** । यस्मिन्शास्त्रे प्रवर्तयितव्ये त्वित्यर्थः । एवमग्रेऽपि । 'निरः कुषः' इत्यादाविति भावः । **अपि**रुक्तसमुच्चायकः । असम्भवनिरासाय वक्ष्यमाणार्थसङ्गतये च मध्ये विषयमाह—**यथेति** । **तदिति** । 'यत्रे'ति परामृष्टषत्वादिशास्त्रे इत्यर्थः। **कृतरेफेति**–'स'विशेषणम् । अपिना रान्तसमुच्चयः । ननु 'षत्वणत्वयो'रितिवार्तिके कार्यानिर्देशात्तयोः कर्त्तव्ययोस्तत्प्रतिषेध इति वार्तिकार्था-

❀ ज्योत्स्ना ❀

**यत्र तु रुत्वमसिद्धन्तत्रेति** । यथा 'निरः कुषः' 'सुदुरोरधिकरणे' इत्यादौ । नचैव'मेकाच उपदेश' इत्यनन्तरं 'निरः कुषोऽनिष्ठाया'मिति लघुभूतन्यासेन सिद्धे 'स्वरतिसूती'ति विकल्पप्रकरणे–'निरः कुषः' 'इण्निष्ठाया'मिति गुरुभूतन्यासवैयर्थ्यम्, उपसर्गद्वयेन रूपद्वयस्य सिद्धत्वादिति-वाच्यम्, 'अनिष्ठाया'मिति पर्युदासेन कृत्स्वेव प्रसङ्गात्, 'न निष्ठाया' मिति पृथग्योगेन

❀ विषमपदविवृतिः ❀

प्रति उपसर्गसञ्ज्ञका' इति । 'विगताः सेचका' इति पाठः । **अभेदविवक्षेति** । इदं प्राचामनुरोधेन, स्वमते तदभावस्य वक्ष्यमाणत्वात् । **सान्तग्रहण इति** । 'निसस्तपता'वित्यादौ ।

शास्त्रयो'रित्यर्थात्। अत एव सुषामादिषु दुष्ठुशब्दपाठः सार्थकः, स हि 'अपदुःसुषु स्थः कुः' इति दुरपूर्वकस्थाधातोः कुप्रत्यये साधुः। अन्यथा दुस्पूर्वकात्कुप्रत्यये 'उपसर्गा'दित्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। न चास्य रूढत्वेनावयवार्थाभावादुपसर्गत्वा-

❀ अभिनव-चन्द्रिका ❀

आह—**तद्वैयर्थ्यं स्पष्टमेवेति**। न च दुरपूर्वकात्स्थाधातोः कुप्रत्यये मत्वार्थं सुषामादिषु-दुष्ठुशब्दपाठ आवश्यकइति वाच्यं। स्वपदुस्सुस्थ इति न्यासेन रोः सुपि इति नियमात् दुरो-ग्रहणमेवेतिज्ञापकस्य सुस्थत्वात्।

❀ चिदस्थिमाला ❀

वार्तिकस्योपसर्गसञ्ज्ञासूत्रस्थत्वलाभेन तद्दृष्ट्या रुत्वस्यासिद्धत्वात्कथं सिद्धत्वमत आह—**षत्वेति**। एवञ्च वार्तिकस्य तत्सूत्रस्थत्वलाभेन तद्दृष्ट्या रुत्वस्य पूर्वत्वेन सिद्धत्वमिति भावः। न प्रागुक्तोऽर्थः—किन्त्वयमेवेति कृतरेफसान्तग्रहणमपि नत्रावश्यकमित्यत्र मानमाह—**अत एवेति**। तत्र कृतरेफ-सान्तस्यापि ग्रहणादेवेत्यर्थः। कुरित्यनुवृत्तिलभ्यम्। **साधुरिति**। अयं सर्वलिङ्गः,—अन्यथा उक्तरीत्या तत्र रान्तमात्रग्रहणे सान्तस्यैव ग्रहणं, तत्र तथास्वरूपनिर्देशादित्याह—**दुसिति**। अस्य तत्र तदप्रतिषेधादिति भावः। **अर्थाभावादिति**। क्रियायोगाभावेनेतिभावः। अभ्यर्हितत्वात्प्रतिष्ठाशब्दस्य

❀ ज्योत्स्ना ❀

निषेधस्य निषेधकरणे तु तदनुवृत्तिरुत्तरत्रापि सम्भाव्येत, नापि च लाघवमिति भावः। **अपि-ग्रहणमिति**। तत्फलन्तु 'दुःसेधती'त्यत्र षत्वं कदापि नेति भावः। **अत एवेति**। वार्तिके कृतरेफ-सान्तस्यापि ग्रहणादेव। 'अपदुस्सुषुस्थः कु रि'तिसूत्रे द्विसकारपाठः, प्रतिपदोक्तसान्तानुकरणा-द्रान्ते तदभावः, तद्ध्वनयन् ज्ञापकमुपपादयति—**अन्यथा दुस्पूर्वकादिति**। एतेन—'दुरुपपदे यदा कुप्रत्ययस्तदा वार्तिकेन निषेधे प्राप्ते षत्वार्थं 'दुष्ठु'पाठश्चरितार्थः'—इत्यपास्तम्।

❀ सदाशिवभट्टीयम् ❀

**अन्यथा दुसिति**। स्वपयोर्दुसि च स्थः कु रित्यसन्दिग्धन्यासेन दुसेव कुप्रत्ययोऽङ्गीक्रियतात्र दुरीति—सुषामादिषु दुष्ठुशब्दस्त्यज्यतामिति भावः। 'यावता विनानुपपन्न'मिति प्रतिपदोक्तपरिभाषापि नेत्यपि बोध्यम्। ननु—

❀ विषमपदविवृतिः ❀

**यत्र तु रुत्वमसिद्धमिति**। इदमयुक्तम्, **इण्निष्ठायामिति**—सूत्रस्थभाष्यविरोधात्, तथाहि—'इडित्यनुवर्तमाने पुनरिड्ग्रहणं किमर्थं ? नित्यार्थमारम्भः, नैतदस्ति प्रयोजनम्, सिद्धात्र विभाषा 'निरः कुष' इत्यनेन, तत्रारम्भसामर्थ्यान्नित्योऽपि विधिर्भविष्यति, नात्र पूर्वेण विभाषा प्राप्नोति, किं कारणं ? 'यस्य विभाषे'ति प्रतिषेधात्, तत्रारम्भसामर्थ्याद्विभाषा लभ्येत,—पुनःपुनरि-ड्ग्रहणादिडेवेति। "इण्निष्ठायां तत्र यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध" इति भाष्यकृता सिद्धान्ति-तत्वात्। निरः कुषो निष्ठाया 'यस्य विभाषे'ति प्रतिषेधेपि निरः कुषो निष्ठाया इट्सम्भवेन 'निष्कु-षितं' 'निष्कुष्ट'मिति रूपद्वयस्य सिद्धौ 'नात्र पूर्वेण विभाषा प्राप्नोती'ति भाष्यासङ्गतेः। इड्ग्रहणे क्रिय-माणेप्युक्तरीत्येड्विकल्पापत्त्या पुनरिड्ग्रहणादिडेवेति भाष्यासङ्गतिश्च। उक्तरीत्या विकल्पप्राप्तावि-ण्निष्ठायामिति सूत्रवैयर्थ्यं च। तस्मादिण्निष्ठायामिति सूत्रारम्भसामर्थ्यादुक्तभाष्यप्रामाण्याच्च, यत्र रुत्वस्यासिद्धत्वं सिद्धत्वं वा तत्र सर्वत्र रान्तग्रहणे सान्तग्रहणं व्यर्थमेव—"इत्युक्तं तद्वैयर्थ्यं स्पष्टमेवेति।

ननु रेफान्तदुर्पूर्वकात्स्थाधातोः कुप्रत्यये षत्वाभावघटितप्रयोगवारणाय सुषामादिषु दुष्ठुशब्द-पाठइति चेन्न, 'अपसुदुःषुस्थ' इति न्यासे रेफान्तस्य 'रोः सुपी'ति नियमेन विसर्गाप्राप्त्या सान्त-पूर्वकात्स्थाधातोरेव कुप्रत्ययविज्ञानेनादोषात्।

१. अन्यथा=रान्तमात्रग्रहणे। तदा तत्रोभयोरपि ग्रहणं स्वरूपानिर्देशादित्याह—**दुसिति**—इति पाठान्तरम्।

भावः, अत्यन्तरूढेषु प्रतिष्ठा–निष्ठादिषु षत्वानापत्तेः। अर्थवत्त्वारोपेण चेत्–प्रकृतेऽपि। दुसः पाठस्तु 'दुरयते' इत्यादौ रुत्वासिद्ध्या लत्वाभावार्थ इति दिक्।

**न वेति**। इतिर्लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत्। यथा 'गवित्ययमाह'-त्यादावनुकरणे। इह तु 'स्वं रूप'मिति परिभाषणाच्छब्दपदार्थकस्यार्थपदार्थकत्वकृत्। क्व चिदितेर्न पदार्थविपर्यासकत्वं यथाऽनुवादवाक्ये। स च न-वा-शब्दाभ्यां प्रत्येकं

## ❀ अभिनव-चन्द्रिका ❀

**न वेति विभाषा**।'अभावविकल्पयोर्विभाषासञ्ज्ञा स्या'दितिवृत्तिरुचिता, मूलोक्तवृत्तिस्तु न युक्ता, प्रथमान्तद्वयाऽसमभिव्याहृतस्य, समासाघटकस्य च अत्यन्ताभावार्थकत्वेन निषेधार्थकत्वाभावात्।

## ❀ चिदस्थिमाला ❀

पूर्वनिपातः। तत्र समाधत्ते—**अर्थवत्त्वेति**। साधुत्वाय रथन्तरादिवद्व्युत्पत्तेरावश्यकत्वात्।

**प्रकृतेऽपीति**। 'तर्हि''सम'मित्याद्यन्तौ। ननु 'निरः कुषः' 'सुदुरोरधिकरणे' 'निसस्तपता'वित्यादि-निर्देशात्त्रितयस्य सफलस्य सत्त्वेऽपि दुसः पाठोऽफलोत आह—**दुस इति**। न चैवमपि निर्मूलः स इति वाच्यम्, 'उपसर्गस्यायता'वित्यात्र तथा **वामनोक्तेः**। 'हयवरट्'सूत्रेऽयोगवाहप्रकरणस्थभाष्यो-क्तेश्च, शास्त्रस्य प्रयोगमूलकत्वाच्च। एतेन'–दुस् नास्त्येव, तेषामिव तस्य सूत्रादावव्यवहृतत्वात्। वामनादीनां प्रमाद एवेति,—**केनचिदुक्तम्**, ''–रान्तग्रहणे सान्ताग्रहणं, तथाचेण्निष्ठायामिति निरः परस्य कुषो निष्कुषित इति सिद्धेऽपि निसो निष्कुष्ट इत्यपि स्यात्—अथ निरः कुषः—इति पूर्वेणैवोक्तरूपद्वय-सिद्धाविण्निष्ठायामित्यस्य वैयर्थ्यप्रसङ्गाद्रुत्वं नासिद्धमिति नोक्तदोषः। न च 'यस्य विभाषा' इति निषेधबाधनार्थता तस्येति वाच्यम्, निष्ठायामित्येतावतैव सिद्धे पुनरिड्ग्रहणेन–'इण्निष्ठाया'मित्यस्य नित्यताया अपि ज्ञापनात्–इति चेत्तर्हि तावतैव 'निसस्तपता'वित्यादौ सान्तग्रहणे रान्ताग्रहणमिति निष्टपति निस्तपतीत्यादिरूपद्वयापत्तिः। तथा दुरो ग्रहणं नेति रान्ते एव 'न सुदुर्भ्या'मिति निषेधेऽपि सान्ते उपसर्गादितिपूर्वेण नुमः प्राप्त्या दुर्लभो दुलम्भ इति रूपद्वयापत्तिः। षत्वविधौ—**सुविनिर्दु**रित्यत्र तु रुत्व-सिद्ध्या सान्तस्यापि ग्रहणे 'दुःसुषुपतु'रिति एकमेव रूपम्। 'लक्षणप्रतिपदोक्ते'त्यस्यानित्यत्वेन तत्राप्रवृत्तेः, तस्माद्यथाप्राप्तमुचितमेव, अनभिधाने तु न मानम्–प्रादौ रान्तसान्तयोर्भिन्नपाठवैयर्थ्यञ्च। तेन 'दुरः षत्वे'त्यत्र दुर एव ग्रहणं न दुस इति तत्रापि षत्वणत्वतदभावघटितरूपद्वयम्–''इति **रत्नाकरोक्तं**, 'निसादिचतुर्णां लौकिकप्रयोगस्थानामनुकरण'मित्य**न्योक्त**ञ्चापास्तम्। तदाह—**इति दिगिति**।

इति साफल्यमाह—**इतिरिति**। नान्यादृशमिमिति भावः। लोके प्रागुक्तं न सार्वत्रिकमित्याह—**क्वचिदितिर्न पदार्थेति**। **कत्वकृदिति**। उपस्थितत्वादिति भावः। एवमग्रेऽपि। इह तु=व्याकरणे तु। परिभाषणं—शब्द-पदार्थकत्वे हेतुः। **इतीतेरिति**। इदमेवेतेरित्यर्थः। अस्योदाहरणमाह—**यथेति**। 'मृगो धावती'ति 'पश्य'–इत्यादाविति भावः। स च=इतिश्च। यद्यखण्डनिपातो निषेधार्थो 'नवा' शब्दो गृह्येत तर्हि सञ्ज्ञा-करणानर्थक्यं, विभाषाप्रदेशेषु नेत्यस्यैवौचित्यात्—तदाह—**नवेति**। 'वा'मात्रसम्बन्धेऽप्युक्तदोष

## ❀ ज्योत्स्ना ❀

**न पदार्थविपर्यासकत्वमिति**—'न'शब्दसहितः पाठः। **यथाऽनुवादवाक्य इति**।

## ❀ सदाशिवभट्टीयम् ❀

'निरः कुषः''सुदुरोरधिकरणे' 'निसस्तपता'वित्यादिनिर्देशात्–त्रितयस्य सफलस्य सत्त्वेऽपि दुसः किं फलमत आह—**दुसः पाठेति**।

सम्बध्यते, व्याख्यानात् । तेन नवाशब्दयोरर्थौ सञ्ज्ञिनौ । 'स्वं रूप'मित्यस्य प्रत्याख्याने त्वितिशब्दो व्यर्थ एव, अर्थे कार्यस्याबाधात् । तयोरेव सञ्ज्ञित्वे तु 'विभाषा श्वे' रित्यादौ नवाशब्दावादेशौ स्याताम् । प्राप्तविभाषासु नास्योपयोगः, तासां पक्षे निवृत्तिमात्रफलऽकत्वात् अप्राप्तविभाषास्वपि न, तासां पक्षे विधिमात्रार्थत्वात् । अप्राप्तत्वेन निषेधाऽसम्भवाच्च, तस्मादुभयत्र विभाषार्थमिदम् । 'विभाषा श्वे'रित्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्, कित्सु तु नित्यमेव सम्प्रसारणं स्यात् । निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु । उभयथा प्रवृत्तिस्तु—वैरूप्याद्वाक्यभेदा-

ॐ अभिनव-चन्द्रिका ॐ

अत एव गङ्गां निषेधयतीत्यादितात्पर्येण 'गङ्गां ने'त्यादि न प्रयुज्यते । इतिशब्दो व्यर्थ एवेति । वस्तुतस्तु 'स्वं रूप'मित्यस्य प्रत्याख्यानेपि इतिशब्दो न व्यर्थो, न वा इतेः पदार्थविपर्यासकत्वं, 'निषेधविकल्पौ विभाषासञ्ज्ञा'वितितात्पर्येण 'वा विभाषे'ति वाक्यस्य निराकाङ्क्षत्वात् । अत एव 'निषेधः पदार्थः''अभावः प्रमेय' इत्यादितात्पर्येण 'न पदार्थः''वा प्रमेय'इत्यादि न प्रयुज्यते,तस्मादितेः सर्वनामत्वेन इतेरेवनिषेधविकल्पार्थकत्वं, नवेतितात्पर्यग्राहकमित्येव रमणीयः पन्थाः । 'गविन्त्य-यमाहे'त्यनुकरणस्थलेप्येवमेव । अत एव 'नारद इत्यबोधी'त्यादौ नारदपदान्न द्वितीया,अन्यथा नारद-स्यैव बोध्यं प्रति कर्मत्वेन सा दुर्वारा स्यात्। मम तु इतिपदमेव नारदार्थकं, नारदपदञ्च तात्पर्य-ग्राहकम्, इतिशब्दादुत्पन्ना द्वितीया लुप्तेति न कोपि दोष इति सुधियो विभावयन्तु । 'व्यक्तिपक्षे 'विभाषा श्वे'रित्यादौ पित्सु विधिमुखेन प्रवृत्तिः, किन्तु निषेधमुखेन प्रवृत्तिर्लक्ष्यानुसारात्प्रतिलक्ष्यं लक्षणोपप्लवः क्रियत इति सूत्रमनावश्यकम्। जातिपक्षे तु सूत्रमावश्यक'मिति कैयटोक्तं न युक्तमिति

ॐ चिदस्थिमाला ॐ

एवेत्याह—व्याख्यानादिति । अर्थौ=निषेधविकल्पाख्यौ । सूत्रमतेनेदमुक्तमिति ध्वनयितुमाह—स्वं रूपमिति । तत्प्रत्याख्यानसाधकयुक्तिरप्यत्र नास्तीत्याह—अर्थे इति : ननु तत्सूत्रसत्त्वेऽपीतिर्मास्तु, शब्दे कार्यस्य बाधादत आह—तयोरेवेति । नवाशब्दयोरेवेत्यर्थः । नवाशब्दाविति । 'पर्यायेण, युगपद्वे'ति शेषः । निराकाङ्क्षत्वात्सम्प्रसारणग्रहणाननुवृत्तेः। एतेन 'नवाशब्द आदेशः स्या'दिति दूषणश्चु-क्तमपास्तम् । क्वचिदेवास्या उपयोगो न सर्वत्रेत्याह—प्राप्तेत्यादिना । 'विभाषोपपदेने'त्यादिप्राप्तविभाषा-स्वित्यर्थः । निवृत्तिमात्रेति । भावांशस्य सिद्धत्वादिति भावः। अप्राप्तेति । 'विभाषोर्णो'रित्यादिष्वित्यर्थः ।

विधिमात्रेति। अभावांशस्य सिद्धत्वात्। सम्भवाद्दोषान्तरमाह—अप्राप्तेति । तत्त्वं लक्ष्ये उपपादयति—विभाषेति । अत्र किति सम्प्रसारणं प्राप्तमकिति न तत्राह—यदीति । नित्यमेवेति । यजादित्वादितिभावः । 'प्रवृत्तौ त्विति' पाठः । उभयथेति । पित्सु विधिमुखेन कित्सु निषेधमुखेनेत्यर्थः। वैरूप्याद्वाक्येति। वैरूप्य-लक्षणवाक्यभेदापत्तरित्यर्थः । लिट्त्वेनोपस्थापकलिट्पदात्—पित्त्वकित्त्वरूपविरुद्धधर्मद्वयेन लिडुपस्थितिं कृत्वा तथा वक्तव्यत्वादिति भावः । चेन भावतात्पर्यकतालाभेन विधिमुखेनैव प्रवृत्तेरितिदोषसमुच्चयः ।

ॐ ज्योत्स्ना ॐ

'इति हेतुस्तदुद्भव' इत्यादौ यथा । वैरूप्यादिति । एकेन वाक्येन भिन्नरूपयोर्विधि-निषेधयो-'

ॐ सदाशिवभट्टीयम् ॐ

नवेति वि । ननु तत्सूत्रसत्त्वेपीतिर्मास्तु शब्दे कार्यस्य बाधादत आह—तयोरेवेति । प्राप्तेति । 'विभाषोपपदेन प्रे'त्यादिषु । अप्राप्तेति । 'विभाषोर्णो'रित्यादिषु ।

पत्तेश्चाशक्या। सञ्ज्ञाकरणे तु श्रुतक्रमानुरोधात्पूर्वं किन्तु निषेधस्ततः क्विदक्विद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति 'पक्षे भवती'त्येकरूपेण विधिमुखेनैव विकल्पः।

भाष्यकृतस्तु–एवं हि 'हृक्रोरन्यतरस्या'मित्यादावनुपपत्तिर्विभाषापदाभावात्। 'इति-शब्दस्य 'विभाषे'त्यत्रापि सम्बन्धाद्विभाषापदार्थः सञ्ज्ञे'ति तु न युक्तम्, अर्थे सञ्ज्ञात्वस्यादृष्टत्वात्। 'अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञे'त्यपि न युक्तम्, एकस्यार्थस्य समान-फलकानेकसञ्ज्ञाकरणस्य 'अनाकृतिः सञ्ज्ञा' इति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्का-रात्। तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति—विभाषापदघटितेऽपि तथैवास्तु, किं सूत्रेणेति—जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्युः।

❀ अभिनव-चन्द्रिका ❀

मनसि निधायाह–**जातिव्यक्तिपक्षयोरिति**।

अयम्भावः—सञ्ज्ञाहकवाक्ये यदि विधिमुखेन प्रवृत्तिस्तर्हि उपप्लुतवाक्येऽपि विधिमुखेनैव प्रवृत्तिः स्यात्। यदि सञ्ज्ञाहकवाक्ये निषेधमुखेन प्रवृत्तिस्तर्हि उपप्लुतवाक्येष्वपि निषेधमुखेनैव प्रवृत्तिः

❀ चिदस्थिमाला ❀

यद्वा एकत्र तथा सत्याह—**वैरूप्यादिति**। आवृत्तावाह—**वाक्येति**। आर्थिकमाह—**किस्त्विति**। ननु लिट्पदादनेन रूपेणोपस्थितिः। एतेन '—सिद्धान्तेपि वैरूप्यलक्षणवाक्यभेदापत्तेस्तुल्यत्वादिदम-युक्तम्–'इत्यपास्तम्। **ऐकरूप्यमिति**। वैरूप्यैकरूप्ये अत्र विषयकृते ग्राह्ये इति भावः। एकरूपेण=लिट्त्वेन। एवं हि=तदर्थं सूत्राङ्गीकारे हि। **अनुपेति**। अभ्यवपूर्वस्य हृञोऽदनार्थत्वाद्विकारार्थस्य कृञोऽकर्मकत्वा-द्वतीत्यादिना तत्र कर्मत्वे प्राप्तेऽर्थान्तरे चाप्राप्ते तदारम्भेणोभयत्र विभाषात्वस्य तत्रेष्टत्वादितिभावः। **विभाषेति**। तस्यैव पदस्य सञ्ज्ञात्वादिति भावः। तत्र वैरूप्योद्धारफलक**दण्ड्याद्युक्ति** खण्डयति—**इतीति**। 'मध्यमणिन्यायेने'ति भावः। **पदार्थ इति**। एवञ्च 'हृक्रोरि'त्यादौ तस्य सत्त्वान्नानुपपत्ति-रिति भावः। **अर्थे इति**। कार्पीति भावः। **कौस्तुभाद्युक्तिं** खण्डयति—**अर्थेति**। मात्रं कार्त्स्न्ये। ननु विभाषापदमेव, तथा च नानुपपत्तिस्तत्रेति भावः। तत्यादेः कृदाद्यनेकसञ्ज्ञास्वीकारादाह—**समानेति**। **अनाकृतिरिति**। अभिन्नत्यर्थः। वृद्धिशब्दस्यैव सञ्ज्ञात्वं, नादैच्छब्दयोरित्यर्थसाधकमिदं भाष्यम्। तस्मात्=तत्रानुपपत्तेरन्यथाऽनुद्धारात्। तत्र='हृक्रोरि'त्यादौ—**उभयेति**। 'उक्तदोषमङ्गीकृत्ये'ति शेषः। 'घटितेष्वपी'ति पाठः। **तेपीति** पाठे–जातावेकवचनं, तथैव=लक्ष्यानुसारेण तमङ्गीकृत्योभयमुखेन प्रवृत्तिरेव। **सूत्रेणेतीति**। प्रकृतेत्यादिः। एवमग्रेऽपि। यत्तु—**रत्नाकरः**—"जातिपक्षे क्वचित्साफल्यस्ये-ष्टत्वेनाव्यापकत्वेन लक्षणस्यैकत्वेनैतदभावे प्रागुक्तरात्या दोष इत्येतदावश्यकत्वं, व्यक्तिपक्षे तु प्रतिलक्ष्यं लक्षणभेदेनोभयरूपेणापि प्रवृत्त्युपपत्तेर्व्यर्थमिद''मिति, तत्खण्डयति—**जातीति**। व्यापकत्वमव्यापकत्वं साफल्यमसाफल्यञ्चोभयत्र तुल्यमिति भावः। स्पष्टञ्चेदमन्यत्र।

❀ ज्योत्स्ना ❀

विधातुमशक्यत्वादिति भावः। विधेयभेदाद्वाक्यभेदाङ्गीकारे तु स एव दोष इत्याह—**वाक्य-भेदापत्तेश्चेति**। **प्रत्याचख्युरिति**। अत्रेदं चिन्त्यम्,—'अशिष्यो वा विदितत्वा'दिति प्रत्या-

❀ विषमपदविवृतिः ❀

**श्रुतक्रमानुरोधादिति**। यद्यपि शब्दस्य विरम्य व्यापाराभावस्तथापि शाब्दबोधोत्तरकालिको बोद्धृणां प्रतिपत्तिक्रमोऽयमित्यदोषः। व्यक्तिपक्षे तु—'लक्ष्यभेदेन लक्षणभेदात्क्वचित्किञ्चिल्लक्षणं विधिमुखेन प्रवर्त्तते इतीष्टसिद्ध्या सूत्रं न कर्त्तव्यमिति' **कैयटोक्तमयुक्तमित्यभिप्रेत्याह— जातिव्य-क्तिपक्षयोरुभयोरपीति**।

**स्वं रूपं श** । 'स्वं रूप'मित्यस्य 'बोध्य'मिति शेषो, व्याख्यानात्तदाह—**सञ्ज्ञीति** । 'राज्ञो य'दित्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासम्भवाच्च तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् ।

तत्र स्वशब्द आत्मीयत्वेनार्थमाह, रूपशब्देन शब्दस्वरूपम्, एतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्य—उक्तयुक्तेः, किन्तु शब्दविशेषणम् । एवञ्च—'अर्थविशिष्टः शब्दः

ॐ अभिनव-चन्द्रिका ॐ

स्यात्, उभयमुखेन प्रवृत्तिस्तु गौरवाद्वाक्यभेदप्रसङ्गाच्च युक्तेति । आत्मीयत्वेनेति । यदर्थतात्पर्येण यच्छब्दमुच्चार्यते स तस्यात्मीयोऽर्थ इति, 'स्वविषयकबोधतात्पर्येणोच्चरितत्व'सम्बन्धेन शब्दं प्रति अर्थस्य विशेषणत्वमिति स्वशब्द आत्मीयत्वेनार्थमाहेति व्याख्यानाल्लभ्यते, नतु 'रूप्यते बोध्यत इति रूपमर्थं' इति कैयटोक्तव्याख्यानेनेतिभावः । **अर्थविशिष्टःशब्द इति** । वै०'स्वविषयकबोधजनकत्व-

ॐ चिदस्थिमाला ॐ

**स्वं रूपमिति** । इदं न सञ्ज्ञापरं, पूर्वनिर्देशात्, 'रूपग्रहणेनार्थस्यापि विवक्षे'ति भाष्यविरोधापत्तेश्च, अत एव 'शब्दस्य स्वं, रूपं वा—स्वरूपान्यतरस्य सञ्ज्ञे'त्यपि नार्थः । अर्थे क्वापि सञ्ज्ञात्वस्यादृष्टत्वाच्च । शब्दार्थान्यतरस्य सञ्ज्ञात्वसञ्ज्ञित्वलाभेन इष्टार्थालाभापत्तेश्च । विभिन्नविभक्तित्वादसमानाधिकरण्याच्च,—तथा वाक्यार्थासम्भवाच्च । 'रूपं शब्दस्य सञ्ज्ञे'ति भाष्ये तु सञ्ज्ञाशब्दः सञ्ज्ञायते—इति व्युत्पत्त्या सञ्ज्ञिपरत्वेन बोध्यपरः । अत एव सञ्ज्ञासूत्रमेवेदमिति न । तत्प्रकरणस्य विच्छिन्नत्वाच्च । नेदं हृदि निधायाह—**व्याख्यानादिति** । तदाह=तत्फलितमाह ।

अस्योदाहरणमाह—**राज्ञ इति** । शब्दद्वारा सम्भवादाह—**प्रातीति** । **न्वयेति** । 'अभेदे'त्यादिः । **सम्भवाच्चेति** । 'सामर्थ्येन विनिगमनाभावेन बहुलक्ष्यसंस्कारानुरोधेन चे'ति शेषः । **तदर्थकेति** । राजार्थकेत्यर्थः । मात्रशब्दः कार्त्स्न्ये । **सूत्रं**—'प्रकृते'त्यादिः । **तत्र**=सूत्रे । ननु रूपग्रहणवैयर्थ्यापत्त्या शब्दस्वरूपरूपात्मवाची न स्वशब्दोऽत आह—**स्वेति** । **स्वरूपमिति** । 'गृह्यते' इति शेषः । ननूभयोर्गोश्रृङ्गवत्समप्रधानयोः सञ्ज्ञित्वांऽशे आनर्थक्यम्, उक्तदोषापत्तिश्चातो विशिष्टस्य तत्त्वं वाच्यं, तत्र विनिगमकाभावप्राप्तमाह—**तत्रार्थ इति** । तत्र=तयोर्मध्ये । विशेष्यशब्दो विशेष्यलिङ्गः । **उक्तयुक्तेरिति** । असम्भवादिरूपयुक्तेरित्यर्थः । **शब्देति**—षष्ठीतत्पुरुषः । 'विशेषण'शब्दोऽजहल्लिङ्गः । एवञ्च=तस्य तद्विशेषणत्वे च । न चैवं

ॐ ज्योत्स्ना ॐ

ख्यानभाष्ये 'वा'शब्दस्वारस्येन तस्य पाक्षिकत्वलाभात्प्रकारान्तरेण तद्व्याख्याया अनौचित्यमिति । न च 'ह्रक्रोरन्यतरस्या'मित्यादावनुपपत्तिः, अर्थाक्षिप्तशब्दमात्रस्य सञ्ज्ञात्वेन दत्तोत्तरत्वात्, न च समानफलकानेकसञ्ज्ञात्वं, लाघवेन सर्वत्र 'वे'त्येव वक्तव्ये गुरुभूततन्निर्देशानामर्थैक्ये शब्दकृतगौरवानादरज्ञापकत्वेन फलैक्याभावात्, तस्मात्—'व्यक्तिपक्षे लक्ष्यभेदेन लक्षणभेदात्सञ्ज्ञावैयर्थ्यं, न जातिपक्षे' इति—प्रदीपकृत्प्रदर्शितरीत्यैव भाष्यं व्याख्येयमिति सम्यगालोचयामः ।

ॐ सदाशिवभट्टीयम् ॐ

**स्वं रूपम्** । इदं न सञ्ज्ञापरं, पूर्वनिर्देशात्, रूपग्रहणेनार्थस्यापि 'ग्रहणविवक्षये'ति भाष्यविरोधापत्तेश्च । रूपं शब्दस्य सञ्ज्ञेति भाष्ये तु सञ्ज्ञाशब्दः—सञ्ज्ञायते इति व्युत्पत्त्या बोध्यपरः । **नियमार्थमिति** । आर्थिकनियमार्थमित्यर्थः । शाब्दस्तु न, 'नवे'त्यादावगतेः । ननूभयोर्गोश्रृङ्गवत्समप्रधानयोः संज्ञित्वांशे आनर्थक्यमुक्तदोषापत्तिश्चातो विशिष्टस्य तत्त्वं वाच्यं, तत्र हि विनिगमकमाह—**अर्थो नेति** । नन्वेवमप्यशब्दसञ्ज्ञेतिव्यर्थमर्थे कार्यस्य बाधादत आह—**दाधेति** ।

सञ्ज्ञी'त्यर्थवद्ग्रहणपरिभाषा सिद्धा । अत्र चार्थः—कल्पितान्वयव्यतिरेककल्पितः, प्रकृति-प्रत्ययादिबोध्यः—शास्त्रीयोऽपि । स च मुख्यः प्रसिद्धश्चेति—'गौणमुख्यन्यायो' 'ऽभिव्यक्त-पदार्था ये' इति न्यायश्च सिद्धः । अत एवेयं विशिष्टरूपोपादान एव, इदं सूत्रञ्च । तत्रैवार्थोपस्थितेस्तत्रैवानियमप्रसक्तेश्च, न तु वर्णग्रहणे—इत्याकरे स्पष्टम् । 'दाधा घु'

❀ अभिनव-चन्द्रिका ❀

प्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्व' सम्बन्धेन'स्वविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितत-त्तत्सूत्रोच्चरितपदवृत्त्यानुपूर्वीपर्याप्त्यनुयोगिनावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिका च या विशेष्यता तादृशविशेष्यताविशिष्टतात्पर्यायविषयता'सम्बन्धेन वा । वै०'स्वसमनियतत्व' 'स्वसमाना-समानाधिकरणानुपूर्वीव्याप्यधर्मावच्छिन्नत्वो'भयसम्बन्धेन । विस्तरस्तु परिभाषेन्दुशेखरचन्द्रि-कायां द्रष्टव्यः । **विशिष्टरूपोपादान एवेति** । तच्च-आनुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम् ।

❀ चिदस्थिमाला ❀

प्राचामुदाहरणे पशुरपत्यमित्यादौ दोष एवेति वाच्यं, लौकिकव्युत्पत्त्योपस्थितार्थे कार्यबाधे तदर्थकानेक-शब्दग्रहणे प्राप्ते एवार्थविशिष्टोपस्थितशब्द एव सञ्ज्ञीत्येतदर्थमस्याङ्गीकारात् । नन्वेवमप्यन्तरङ्गत्वा-द्राजन्शब्दस्यैव ग्रहणं भविष्यति, प्रकारत्वेनोपस्थितशब्दत्यागे मानाभावादिति वाच्यम् । उक्तन्याय-सिद्धार्थानुवादकेनैव सूत्रेण शब्दार्थविषये क्वचिदुक्तन्यायाप्रवृत्तेरपि ज्ञापनात्, इतोऽपि 'जनपदे लुप्' 'तस्यापत्य'मित्यादौ न दोषः । ननु सूत्रे लौकिकार्थस्य ग्रहणेन परिभाषायाञ्च शास्त्रीयग्रहणेन कथमनेन तत्सिद्धिरत आह—**अत्र चेति** । प्रकृतसूत्रे चेत्यर्थः । तदर्थवत्तयोरपि वस्तुतोऽसत्त्वादाह—**कल्पितेति** । **अपि**र्लौकिकसमुच्चायकः, अत एवैतत्सूत्रसाफल्यम् । स च=अर्थश्च । **मुख्य इति** । मुखमिव प्रधान-त्वान्मुख्यः-प्रथम इत्यर्थः । तन्मूलकमेवाभियुक्तोक्तमाह—**अभिव्यक्तेति** । **अत एवेति** । मुख्य-प्रसिद्धान्यतराग्रहणादेवेत्यर्थः । अस्याग्रेऽप्यन्वयः । इयम्=अर्थवदितिपरिभाषा**विशिष्टेति** । उपात्तम्—विशि-ष्टार्थोपस्थापकं विशिष्टरूपं यत्र—कार्ये एवेत्यर्थः । स्पष्टञ्चेदं परिभाषेन्दुशेखरे । **सूत्रञ्चेति** । चेन 'गौणेत्यादि न्यायसमुच्चयः । अत एव प्रातिपदिककार्ये तदप्रवृत्तिः । 'विशिष्टरूपोपादाने एवे'त्यस्यानुषङ्गः । 'प्रवर्त्तत'इतिशेषः । उभयत्र हेतुद्वयमाह—**तत्रैवेत्यादि** । एवव्यवच्छेद्यमाह—**न त्विति** । आकरे= कैयटादौ । ननु एवमपि—'अशब्दसञ्ज्ञे'तिव्यर्थम्, 'उपसर्गे घो'रित्यादावर्थे कार्यस्य बाधादत आह—**दाधेति** । वैपरीत्यन्तु न, आत ईत्वादिविधानेन घुधातौ तदसम्भवात् । बाधस्यावास्तवत्वस्य वक्ष्य-

❀ ज्योत्स्ना ❀

**प्रकृतिप्रत्ययादीति**,—आदिपदान्नियतप्रयोगोपसर्गादिग्रहणम् । **शास्त्रीयोऽपीत्यपि**ना-लौकिको ग्राह्यः, तत्र प्रकृत्युदाहरणं—'मत्त'इत्यादावदो जग्ध्याद्यभावः । प्रत्ययोदाहरणम्—'ऋतीयते' इत्यादावियङ्वयवयङन्तस्य द्वित्वाद्यभावः । उपसर्गोदाहरणं-'गर्मुत्स्थान'मित्यादा-'उदःस्थास्तम्भो'रित्यादिना पूर्वसवर्णाद्यभाव इत्यादूह्यम् । 'अपि' शब्दोक्तं लौकिकमर्थं विभजते—**स चेति** । 'मुख्य' इत्यनेनामुख्यस्य गौणलाक्षणिकस्य व्यावृत्तिः, 'प्रसिद्ध' इत्यनेनाऽप्रसिद्धस्य सञ्ज्ञाभूतस्य व्यावृत्तिः । आद्योदाहरणम्—अग्निसोमसदृशावित्यर्थे'ऽग्निसोमौ माणवका'वित्या-दावीत्वषत्वाद्यभावः । अन्त्योदाहरणं,—सञ्ज्ञा-श्वशुरस्यापत्यमित्याद्यर्थे 'श्वाशुरि'रित्यादौ 'राजश्व-शुराद्य'दित्यादेरभावः । **न तु वर्णग्रहण इति** । तेन 'दध्यश्नाती' त्यादौ न यणाद्यनुपपत्तिरिति

❀ विषमपदविवृतिः ❀

**स्वं रूपं शब्दस्य** । **कल्पितान्वयव्यतिरेकेति** । पदस्याखण्डत्वेन तत्र प्रकृतिप्रत्ययान्वय-

इत्यस्य ई हल्यघो'रित्यादौ चारितार्थ्येनो'पसर्गे घो'रित्यादौ 'स्वं रूप'मित्यनेन परत्वा-द्बाधशङ्कावारणार्थम्—**अशब्दसञ्ज्ञेति**। नात्र षष्ठीतत्पुरुषः, कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाप्रवृत्तौ 'कर्मण्यणि'त्यादौ स्वरूपग्रहणापत्तेः, किन्तु सप्तमीतत्पुरुषः। शब्दपदेन च—शब्दशास्त्रन्तदाह। **शब्दशास्त्रे इति**।

भाष्ये तु—अर्थे कार्यस्य बाधेऽप्युपस्थितत्वाद्राज्ञ इत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रम्। उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयसम्भवेन चार्थवत्परिभाषापि सिद्धा। लक्ष्यानुसारात्तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणाच्च षान्तसङ्ख्यावाचकषप्शब्दस्य षट्सञ्ज्ञाकरणेन शब्दशास्त्रीयसञ्ज्ञायां स्वरूपाग्रहणज्ञापनाच्च—'उपसर्गे घोरि'त्यादावदोषेणा-

❀ अभिनव-चन्द्रिका ❀

**उपस्थितत्वादिति**। शब्दे अर्थे च खण्डशक्तिस्वीकारेण पदेनैव पदपदार्थयोरुभयोरप्युपस्थितत्वादित्यर्थः। **प्रकारतया भासमानस्येति**। 'स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्व'सम्बन्धावच्छिन्नप्रकारतया भासमानस्येत्यर्थः। अस्मन्मते च प्रत्येकस्मात्समुदायस्समुदायाच्च प्रत्येकमतिरिच्यते इति समुदायपर्याप्तं न प्रत्येकं पर्याप्नोतीति न कस्या अपि

❀ चिदस्थिमाला ❀

माणत्वादाह—**शङ्केति**। तथा च घुशब्दे इत्यसात्त्यादितिभावः। **पत्तेरिति**। अर्थं कार्यस्य बाधसत्त्वात्। **शास्त्रमिति**। यथाश्रुते बाधाल्लक्षणेति भावः। लुप्तषष्ठ्यन्तश्चैतत्। इदञ्च सूत्राशयवर्णनमात्रमित्याशयेनाह—**भाष्ये त्विति**। 'उक्त'मित्यत्रान्वयः। यद्यपीदमुक्तन्यायस्य क्वचिदप्रवृत्ति ज्ञापकमिति प्रागुक्तं तथापि तत्रार्थे कार्यस्याबाधेन ज्ञापने फलाभावः—इत्याशयेनान्याग्रहणाय हेतुगर्भं विशेषणमाह—**उपेत्यादि**। एवेनान्यव्यवच्छेदः। नन्वेवं परिभाषासिद्ध्यभावापत्तिरत आह—**उपेति**। ननु तत्र कार्यबाधात्त्यागोऽत आह—**तस्येति**। **अविनोक्तरीत्योक्तन्याययोः** सिद्धौ समुच्चीयेते। निषेधार्थमपि नेत्याह—**लक्ष्येति**। तदनुसारिणं प्रत्याह—**तत्तदिति**। अप्रकरणं प्रत्याह—**षान्तेति**। **ज्ञापनादिति**। अन्यथा 'नान्ताः ष'डिति-करणेऽपि उक्तरीत्या तस्यैव ग्रहणमिति तद्वैयर्थ्यं स्पष्टमेवेति भावः।

❀ ज्योत्स्ना ❀

भावः। **चारितार्थ्येनेति**। 'घु'शब्दस्याकारान्तत्वाभावा'त्स्वं रूप'मित्यस्याऽप्राप्त्या'दाधाघ्वि'त्यस्य तथात्वमिति भावः।

❀ सदाशिवभट्टीयम् ❀

'आदिरन्त्ये'त्यस्य परत्वादेतदुपन्यासः। **परत्वेति**। 'तक्रकौण्डिन्य'न्यायेन तु न सर्वबाध्यत्वमस्य, 'अतिशदन्ताया' इत्यनेन सञ्ज्ञिनोक्तेन तदभावज्ञापनात्। **बाधेति**। सञ्ज्ञाद्वयप्रयुक्तकार्याश्रययोर्भेदाद्विरोधाभावेन समावेशस्तु नापादितः, षान्तस्य षट्सञ्ज्ञाकरणेन तदभावज्ञापनात्। 'आकाडरा'दिति नियमात्। अन्यत्र स उचित इति तु न युक्तं, सञ्ज्ञाया एकत्वात्। सञ्ज्ञिनोश्च भेदादिति। 'एका सञ्ज्ञे'तिहि सूत्रं, नत्वेकः सञ्ज्ञी इति च। अस्य परत्वेपि प्रतिपदोक्तत्वात्ताः स्युरेवाऽत आह—**शङ्केति**। **कर्मसञ्ज्ञादेरिति**। आसां परत्वेप्यन्तरङ्गत्वादियमेव स्यादिति भावः। तासां

❀ विषमपदविवृतिः ❀

व्यतिरेकौ कल्पिताविति भावः। **ई हल्यघोरिति**। नात्र शब्दस्य रूपग्रहणसम्भवः, तस्याकारासम्भवात्। **प्रकारतया भासमानस्येति**। 'न सो ऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इत्यभियुक्तोक्त्या शाब्दबोधेऽर्थे शब्दस्वरूपस्य प्रकारतया भानाभ्युपगमात्।

'ऽशब्दसञ्ज्ञे'त्यपि व्यर्थमित्युक्तम् । अत एव जनपदा-ऽपत्य-पशु-देवतादिशब्देषु न दोषः । अत एव च वृक्षादिषु विशेषाणां ग्रहणं 'स्वे पुष' इत्यत्र—पर्यायाणां, विशेषाणां, स्वरूपस्य च ग्रहणं, 'सभा राजे'त्यत्र पर्यायाणामेव ग्रहणं, 'पाक्षि-मत्स्यमृगान्हन्ती'त्यादौ मृगपक्षिणोः पर्यायाणां, विशेषाणां, स्वरूपस्य च ग्रहणं, मत्स्यपदेन—स्वरूपस्य, विशेषाणां, मीनरूपपर्यायस्य च ग्रहणं—सिद्ध्यति । अन्यथा तदर्थं यत्नः कर्त्तव्यः । 'परेश्च घाङ्कयो'रित्यत्र 'घ'शब्देन स्वरूपग्रहणं, 'नदी-पौर्णमासी'त्यत्र 'नदी'पदेन च स्वरूपग्रहणं सिद्ध्यति । लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः । ज्ञापकपक्षेऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वान्न दोषः । अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक् ।

---

### ❀ अभिनव-चन्द्रिका ❀

शङ्काया अवसर इति दिक् । **इति दिगिति** । दिगर्थस्तु—प्रत्याख्यानमिदमेकदेश्युक्तिः । शक्य-लक्ष्यभेदेन अर्थानामानन्त्येन यावन्तोऽर्थास्तावदावृत्तेरावश्यकत्वेनातिगौरवात् । 'अणिञोः' 'केण' इत्यादौ प्रकृत्यसमभिव्याहारे प्रत्ययैरर्थानामनुपस्थित्या अनर्थकेपि प्रवृत्त्यापत्तेश्च । 'प्रत्ययाप्रत्यय'-परिभाषाया अभावेन च राकेत्यादौ 'केण' इति ह्रस्वो दुर्वार एव स्यादिति दिक् ।

### ❀ चिदस्थिमाला ❀

**अपिना**—विधिः । अत एव=सूत्राभावादेव । अर्थे कार्याबाधात् । अत्र द्वन्द्वोत्तरपदद्वन्द्वोत्तरपदो द्वन्द्वः । नन्वयं दोषः—सूत्रमतेऽप्यत एव नेति प्रागुक्तमेवात आह—**अत एव चेति** । उक्तोऽर्थः । 'सिद्ध्यति'द्वयेऽस्या-न्वयः। सर्व**ग्रहणानां—सिद्ध्यतीत्य**त्रान्वयः। वृक्षादिषु=विभाषा वृक्षमृगे'तिसूत्रपठितेषु । विशेषाणां=तेषामेव । पक्षिणोरिति सप्तमी षष्ठी वा । ग्रहणं सिद्ध्यतीति पाठः। प्रत्येकमन्वयाच्च **चः**। क्वचित्सचः पाठः । अन्यथा= सूत्रसत्त्वे । अर्थे कार्यस्य बाधसत्त्वेनोपस्थितस्वरूपस्यैव ग्रहणापत्तेरिति भावः । तदर्थं=प्रागुक्ताभीष्ट-सिद्ध्यर्थम् । यत्नः—झित्सिदित्यादिरूपो भाष्ये एव स्पष्टः । एवञ्च—गौरवं स्पष्टमेव । न केवलं तावदेव, किन्त्वन्यदपि गौरवमिति—पृथक् शब्दशास्त्रीयसञ्ज्ञास्थले आह—**परेश्चेति** । अन्यथात्राप्युपायान्तर-करणे गौरवमिति भावः । ननु सूत्राभावेऽपि कथमुक्तेष्टार्थसिद्धिः अर्थे कार्यबाधेऽपि तद्वाचकसर्व-शब्दस्योपस्थितशब्दस्यैव वा ग्रहणापत्तेः । किञ्च—'परेश्चे'त्यादौ प्रकरणज्ञापकाभ्यां सञ्ज्ञिग्रहणापत्तेः । यद्यपि सामर्थ्यात्परिशब्दाच्चरतमपोः कल्पनेऽपि नदीपदेन शास्त्रीयसञ्ज्ञिग्रहणे पौर्णमास्यादिग्रहण-वैयर्थ्यापत्तिः । नियमार्थन्तु न नदीपदं, वैयर्थ्यापत्तेः, तथापि लौकिककनदीविशेषवाचकानां गङ्गादीनां ग्रहणापत्तिरत आह—**लक्ष्येति** । चस्त्वर्थे । नन्वेवमपि ज्ञापकपक्षे कथं तत्र निर्वाहोऽत आह—**ज्ञापकेति । अपिः**—प्रागुक्तमुख्यपक्षसमुच्चायकः । उक्तपरिभाषां समूलयति—**अत एवेति** । ज्ञापकसिद्ध-स्यासार्वत्रिकत्वादेवेत्यर्थः। तृतीयान्तस्य प्रत्याख्यानेऽन्वयः। **सिद्धम्**=विद्यमानं, वचनम्=। अशब्दसञ्ज्ञे'ति ।

### ❀ सदाशिवभट्टीयम् ❀

चारितार्थ्यन्तु 'कर्मणो रोमन्थे'त्यादावूहनीयम् । प्रत्यासत्तिसिद्धार्थानुवादकत्वेन यथाकथञ्चित्सूत्रसार्थक्येपि निषेधस्तु व्यर्थ एवात आह—**लक्ष्येति** । ननु लक्ष्यानुसारादिना सिद्धप्रत्याख्यानं न युक्तमत आह—**अत एवेति** । लक्ष्यानुसारस्य तवाप्यावश्यकत्वादेवेत्यर्थः । **अत एव भगवतेति** । तत्सिद्धस्यासार्वत्रि-कत्वादेवेत्यर्थः । सिद्धं विद्यमानं वचनम्—अशब्दसञ्ज्ञेति । अन्यथा प्रत्याख्यानपक्षेपि तद्दोषसत्त्वादसङ्गतिः स्पष्टैवेति दिक् ।

**येन वि** । 'येने'ति करणे तृतीया, 'विधि'रिति भावे किः । कर्मात्र विधेयं, कर्त्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव । यत्तु 'करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणमिति लब्ध'मिति, तन्न । 'सुप्तिङ्विभक्तौ न लक्षणे'त्यस्य सर्वसम्मतत्वात् । किं बहुना—येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानं

ॐ अभिनव-चन्द्रिका ॐ

**येन विधि** । येनेति करणे तृतीया, तेन परतन्त्रो लक्ष्यते । परतन्त्रश्च व्यापारवान्भवति, शब्दे चेतरव्यावृत्तिरूपो व्यापारः, तादृशव्यापारस्योद्देश्येऽभावादुद्देश्यतावच्छेदकं गृह्यते, स चेतरव्यावृत्तिरूपो व्यापारोऽन्तरङ्गत्वादभेदेनैव विवक्ष्यते । अभेदेन व्यावर्तकं विशेषणमेवेत्यत आह—मूले—**विशेषणमिति** । एतदेवाऽभिप्रेत्य भाष्ये उक्तम्—'अन्येनान्यस्य विधिर्भवती'त्यादिना । न चा'नुदात्तौ सुप्पितौ' 'द्वितीयाटौस्स्वेन' इत्यादावभेदेनेतरव्यावृत्तिरूपव्यापारवत्त्वात्तदन्तविधिना 'अनुदात्तान्तौ सुप्पितौ भवतः' 'अनुदात्तान्त एनादेशो भवती'त्यर्थः स्यादिति वाच्यम्, अनुदात्तादेर्विधेयतावच्छेदकत्वेन विधेयस्यासिद्धत्वात्, वाक्यार्थबोधात्प्राग्विधेयविशेषणे अभेदेनेतरव्यावृत्तिरूपव्यापारवत्त्वस्याप्यसिद्ध्या तदन्तविध्यप्रवृत्तेः । जाते वाक्यार्थबोधे आकाङ्क्षाया अभावेन पुनरप्रवृत्तेश्चेति दिक् । **येषां प्रत्ययानामिति** । अपत्याद्यर्थे विहितानामित्यर्थः । **येषां शब्दाना-**

ॐ चिदस्थिमाला ॐ

अन्यथा प्रत्याख्यानपक्षेऽपि तद्दोषस्य तुल्यत्वात्तदसङ्गतिः स्पष्टैव, तथा च परिभाषायां ज्ञापकपदं न्यायस्याप्युपलक्षणं, न्यायज्ञापकसिद्धानामपि केषांचित्कथनमन्येषां तेषामनित्यत्वज्ञापनाय, यथा—'तत्स्थानापन्ने'तिन्यायसिद्धं स्थानिवत्सूत्रं, 'अदोजग्धि'रितिज्ञापकसिद्धञ्च तत्रा'नन्विधावि'ति । एवञ्च प्रकरणपक्षेऽपि न दोषः । किञ्च—परेश्चे'त्यादौ सामर्थ्यात्तदनित्यत्वा'त्परौ व'इत्यादिशास्त्राच्च तत्पक्षे तदग्रहणं, 'नदी'त्यादौ प्रकरणाल्लौकिकनद्यग्रहणे सति पौर्णमास्यादिग्रहणात्स्वरूपग्रहणम् । किञ्च मृगपक्षिणोरिति प्रागुक्तं कैयटादिरीत्या न तु सिद्धान्तस्तत्र मृगांशे विशेषणमेव ग्रहणं, पक्ष्यंशे मत्स्यवत्प्राय इति स्पष्टं प्रभायामिति तत एव बोध्यन्तदाह—**दिगिति** । **करणे** इति । न तु हेतौ, कारकविभक्तेर्न्याय्यत्वात्, नापि कर्तरि, कृद्योगे षष्ठ्या बाधात्, उभयोरप्रयोगादुभयप्राप्तावित्यस्याप्राप्तिः । **विधिरिति** । 'कर्मणि किरन्यथा तदनुपादानात्साकाङ्क्षतापत्तेरत एव 'नोभयप्राप्ति'रिति **दण्ड्यायुक्तिं** खण्डयति–**विधिरितीति** । तदुक्तहेतुं निराचष्टे—**कर्मेति** । अत्र शास्त्रे विधेयं कर्माचार्यः कर्ता चेत्युभयं प्रसिद्धत्वाल्लभ्यत एवेत्यर्थः । एवञ्च विधानस्य कर्तृकर्मणोः साकाङ्क्षत्वेऽपि प्रसिद्धत्वाद्विशेषलाभेन साकाङ्क्षतानिवृत्तिः, एवमपि यदि तथोच्येत तर्हि कर्त्रंशे सानुपपत्तिस्तदवस्थैव, अर्धजरतीयन्तु अनुचितमेव । तथा च विधेयकर्मकमाचार्यकर्तृकं यत्करणकं विधानं तत्तदन्तस्य सञ्ज्ञेत्यर्थ इति भावः ।

**कौस्तुभदण्ड्यायुक्तिं** खण्डयति—**यदि त्विति** । 'परतन्त्र'मिति कर्त्रधिष्ठितस्यैव तत्वात् । **पारतन्त्र्यमिति** । तच्च वैवक्षिकं न तु वास्यादीनामिव स्वरूपत इति भावः । अस्माकं न केवलं सुप्तिङ्विभक्त्यावेवेदं किन्त्वन्यत्रापीत्याह—**किं बहिति** । **अर्थेति** । यस्मिन्नित्यादिः । अपिः—शक्तिसमुच्चायकः । कथं तर्हि सिद्धान्ते

ॐ ज्योत्स्ना ॐ

'परश्च—पुंयोगादित्यादी'ति पाठः, 'प्रत्ययः पुंयोगा'दिति पाठेऽपि–'प्रत्यय'इत्यनेन माहचर्या-

ॐ सदाशिवभट्टीयम् ॐ

**येन वि** । अस्माकं न केवलं सुप्तिङ्विभक्त्यावेवेदं, किन्त्वन्यत्रापीत्याह—**किं बहुनेति** ।

ॐ विषमपदविवृतिः ॐ

**येन विधिः** । **सर्वसम्मतत्वादिति** । उपलक्षणमेतत्—'विधि'रित्यस्यानन्वयापत्तेः ।

कृतं शास्त्रेण—तेषामन्यत्रार्थे, तदर्थे चान्येषां—लक्षणयाऽपि साधुत्वाभावस्य 'प्रत्ययः' 'पुंयोगा'दित्यादिभाष्यतो लाभात्। करणस्य व्यापारवत्त्वनियमादन्येषाञ्च व्यापाराभावाद्विशेषणमेवात्र करणतृतीयान्तेनोच्यते। तस्य चेतरव्यावृत्तिकरणमेव—व्यापारः। तदुक्तं भाष्ये—'येनेति करणे एषा तृतीयाऽन्येन चान्यस्य विधिर्भवति, यथा चैत्रस्य

❀ अभिनव-चन्द्रिका ❀

मिति। यथा 'अपरस्पराः क्रियासातत्ये' इति सातत्यार्थे विहितानामपरस्परादिशब्दानामित्यर्थः। **अन्यस्मिन्नर्थइति**। अपत्याद्यन्यस्मिन्नर्थे इत्यर्थः। **तदर्थे चान्येषामिति**। हितार्थप्रत्ययानामपरपरादिशब्दानां च अपत्य-क्रियासातत्याद्यर्थे इत्यर्थः। **व्यापारवत्त्वनियमादिति**। अयं भावः—शब्दे चेतरव्यावृत्तिरूपव्यापार इति-। सचान्तरङ्गत्वादभेदेनैवेति विशेषणमिति लभ्यते इति। एतदेवाभिप्रेत्य आह—**शब्दानां विशेषणत्वेनेति**। **इतरव्यावृत्तिकारणमेवेति**। 'अभेदेनैवे'ति शेषः।

❀ चिदस्थिमाला ❀

विशेषणलाभोऽत आह—**करणस्येति**। अन्येषां=अन्यत्यशब्दरूपविशेषणरूपकरणभिन्नानां स्थान्यादीनाम्। **च व्यापेति**। व्यापाराभावाच्चेत्यर्थः। **एवेनोक्तिव्यवच्छेदः**। **वात्र**=प्रकृतसूत्रे उक्तहेतोरेवाह—**तृतीयान्तेनोच्यति**। गौणलक्षणयेति भाव। व्यापारवत्त्वमेवोभयसाधारणः सादृश्यप्रयोजको धर्मस्तदाह—**तस्य चेतरेति**। विशेषणस्य त्वित्यर्थः। नन्वयं विशेष्येपीत्यत आह—**तदुक्तमिति**। तथा च भाष्यप्रमाण्यात्तथैवेति भावः। **येनेतीति**। येनेत्येषा करणे इत्यर्थः। अन्यस्य सम्बन्धी विधिः=विधेयं विधत्ते देवदत्तः। विधत्ते पाणिनिः। यद्यपि 'अचो यदि'त्यादौ न तस्य कार्यं नापि तस्मिन्परत इति—'यस्मात्परत' इति तृतीयकोटिरपि वक्तुमुचिता, तथापि'परश्चे'त्यनेन प्रकृत्यवयवत्वस्य तेषु बोधनादन्यस्येति शेषषष्ठ्यैव सङ्ग्रहस्तदाह—**अन्येन चेति**। तत्र तावन्मात्रेण द्वितीयाऽलाभादाह—**अन्यस्येति**। तत्र=तेषां मध्ये। तादृशं=

❀ ज्योत्स्ना ❀

न्परश्चेति लक्ष्यते। तत्र 'परश्चे'ति सूत्रे भाष्ये—बभ्रोरपत्यमित्यर्थे 'बाभ्रव्य' इति यञो विधाने कृते तत्र बभ्रुशब्दस्य लक्षणया शक्त्या वा साधुत्वाभाव उक्तः,—यदाह हरिः—'सोयमित्यभिसम्बन्धात्तद्धितेन विना यदि। बभ्र्वादयः प्रयुज्यन्ते नापत्ये नियमो भवेत् ॥' इति। 'पुंयोगा'दिति सूत्रभाष्येऽपि—'प्रष्ठादिशब्दानां प्रस्थानकर्तृत्वादेः प्रवृत्तिनिमित्तस्य प्रायेण पुंधर्मत्वात् स्त्रियां वृत्त्यभावात्सम्बन्धित्वविवक्षायां 'तस्येद'मित्यणो लुग्वक्तव्यः, ततश्च स्त्रीवृत्तित्वान्ङीष्, नह्यन्तरेण तद्धितस्य लुकं परार्थे शब्दो वर्तेत' इत्युक्तं, लक्षणया तद्धितान्तार्थे प्रष्ठादिशब्दानां साधुत्वे तु तदसङ्गतिः। **अन्येन चान्यस्य विधिर्भवतीति**। अन्यस्य सम्बन्धी यो विधिः=विधीयमानः—स अन्येन कृत्वा भवति,=सामान्यसम्बन्धित्वव्यावृत्तिपूर्वकं विशेषसम्बन्धित्वेन भवतीत्यर्थः। **यथा चैत्रस्येति**। चैत्रसम्बन्धी विधीयमानो यः सङ्ग्रामः स हस्त्यश्वरथपदातिभिः कृत्वा चित्राजातसामान्यसम्बन्धित्वव्यावृत्तिपूर्वकं हस्त्यश्वादिस्वामि-चित्राजात-सम्बन्धित्वेन भवतीति हस्त्यश्वादीनां सङ्ग्रामविधाने करणत्वमित्यर्थः। यद्वा—दार्ष्टान्तिके व्यापाराऽसम्भवादितरव्यावृत्तिकरणमेव व्यापारः,दृष्टान्ते तु समूहसम्पादनादिरूपः सः, हस्त्यश्वादिव्यापारस्य सम्भवात्तमा-

❀ सदाशिवभट्टीयम् ❀

**अन्यत्रार्थे इति**। अत्र मानं—'कर्तृकर्मणोः कृति' 'अर्यः स्वामी'त्याद्यर्थनिर्देशः, इतरत्र लक्षणया साधुत्वे तु तद्वैयर्थ्यं स्पष्टमेव। द्वितीये मानमाह—**प्रत्यय** इत्यादिना। उक्तहेतोरेव, अत आह—**तृतीयान्तेनेति**। गौणलक्षणयेति भावः। मम तु न तद्विरोधः, विशिष्टार्थानुशासकाभावात्। बोधस्य तत्प्रकारकस्यैवाङ्गीकाराच्च, नन्वयं विशेष्येपीत्यत आह—**तदुक्तमिति**। तथाच भाष्यप्रामाण्यात्तथेति भावः। **धातोर्य-**

सङ्ग्रामं हस्त्यश्वादिभिर्विधत्ते, एवम्—'अचो य'दिति—अचा धातोर्यतं विधत्ते' इति। 'अन्येन चान्यस्ये'त्यनेन यस्य कार्यं यस्मिन्परतश्च तयोरकरणत्वं दर्शितम्। 'अन्यस्ये'-त्य'न्यस्मि'न्नित्यस्याप्युपलक्षणम्। तत्र शब्दोपस्थितविशेष्यस्य तादृशं विशेषणमेव तदन्त-ग्राहकम्। क्वचित्सति गमके तादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिः। तच्चान्तरङ्गत्वात्समानाधिकरणमेव। तत्र तदन्तविधौ सति तथा विशेषणत्वयोग्यताप्येत-

### ॐ अभिनव-चन्द्रिका ॐ

**अकरणत्वं दर्शितमिति।** अभेदेनेतरव्यावृत्तिरूपव्यापाराभावादित्यर्थः। **अन्यस्मिन्नित्यस्याप्युपलक्षणमिति।** अन्यस्मादित्यस्याप्युपलक्षणं बोध्यम्। एतत्तत्त्वं प्रागेवाऽवोचाम।

### ॐ चिदस्थिमाला ॐ

शब्दोपस्थितम्। इदं प्रायिकमित्याह–**क्वचिदिति।** 'सर्वादीनां'त्यादावित्यर्थः। तत्र हि वार्तिकमेव गमकम्। तादृशं=शब्दानुपस्थितम्। शब्दानुशासनप्रस्तावादाह–**शब्देति।** तच्च=विशेषणाञ्च। अन्तरङ्गत्वात्=शीघ्रो-पस्थितिकत्वात्। एवेन व्यधिकरणव्यच्छेदः। नन्वेव'मिनह'नित्यादावविंशे तदन्तविधिर्न स्यात्, बाधा-दिनेगमित्यनन्वयेन तस्य तत्समानाधिकरणविशेषणत्वाभावादत आह–**तत्रेति।** समानाधिकरणानां मध्ये

### ॐ ज्योत्स्ना ॐ

दार्येव सङ्ग्रामविधाने तेषां करणत्वं, करणत्वसामान्येन च दृष्टान्तत्वमिति बोध्यम्। **अचा धातोरिति।** धातुसम्बन्धित्वेन विधीयमानस्य यतोऽचा कृत्वा धातुसामान्यसम्बन्धित्वव्यावृत्ति-

### ॐ सदाशिवभट्टीयम् ॐ

**तमिति।** अवध्यवधिमद्भावः षष्ठ्यर्थः। अत एव यस्मात्पर इति तृतीयकोटिर्नोपलक्षिता, सम्बन्धसामा-न्यषष्ठ्यैव तल्लाभात्। **उपलक्षणमिति।** अत एव 'स्योन' इत्यस्यासिद्धिमाशङ्क्यैतदुक्तिः सङ्गच्छते। अन्यथा यणि ऊतशब्दानाश्रयणात्—तदसङ्गतिः स्पष्टैव। वार्तिकेपि 'येने'त्यस्य सम्बन्धात्तस्यापि विशेषणे एव प्रवृत्तिः। 'जराया जर'सित्यादावपि अङ्गाद्युद्दिश्य जराशब्दादिभिर्जरसादेशविधानान्नासङ्गतिः। वस्तुतो जराशब्दस्यादेशेपि उद्देश्यतायाः शब्दमर्यादयाङ्गे एव सत्त्वात्। नन्वेवमपि इकोयणित्यादौ शब्द-रूपं विशेष्यमादाय स्यादेवेति भाष्यासङ्गतिरत आह—**तत्रेति।** ननु यस्मिन्परतो विधिस्तस्याकरणत्वे

### ॐ विषमपदविवृतिः ॐ

**अचा धातोर्यतं विधत्त इति।** अत्र–चैत्रसमशीलो धातुः, सङ्ग्रामसमशीलश्च यत्, हस्त्यादिसमशीलो–ऽच्, सेनापतिसमशीलश्चाचार्यः। 'हस्त्यश्वादिभिर्विधत्ते' इत्यत्र–सेनापतिः कर्त्ता। तत्र यथा चैत्रस्य सङ्ग्रामोत्पत्तौ हस्त्यश्वादयः करणमेवं धातोर्यदुत्पत्तावच्करणम्। यत्र धातावन्तेऽच्तत्रैव यत उत्पत्तेः। भाष्ये उदाहरणान्तरञ्च 'देवदत्तस्य समाशं (=भोजनं) शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्त' इति। 'अन्येन चान्यस्ये'त्यस्याचा धातोर्विधिरित्यर्थः। नन्वन्येन चान्यस्येत्यनेन कार्यसम्बन्धिभि-न्नस्यैव करणत्वसूचनेपि यस्मिन्परतः कार्यं तस्याकरणत्वं कथं दर्शितम्? न्वान्यस्येति सम्बन्ध-सामान्यषष्ठ्या धातुप्रातिपदिकयोः पञ्चम्यन्तार्थयोरिव सप्तम्यन्तार्थस्यापि सङ्ग्रह इति वाच्यम्, 'अन्यस्ये'त्यस्योद्देश्यत्वार्थकषष्ठ्यन्तत्वेन प्रत्ययविधौ पञ्चम्यन्तार्थस्योद्देश्यत्वेन तेन तस्य सङ्ग्रहेपि सप्तम्यन्तार्थस्याऽसङ्ग्रहादित्यत आह—**अन्यस्मन्नित्यस्यापीति।** ननु सप्तम्यन्तार्थस्याकरणत्वे एतदपवादो 'यस्मिन्विधि'रित्यपि सप्तम्यन्ते न प्रवर्त्तेतेति चेन्न, सप्तम्यन्तं विना तस्या विषया-भावात्, साक्षात्कार्यिनिमित्तस्य विशेष्यस्यैवाकरणबोधनाच्च।

**अन्ये तु**—"विधि'रिति कर्मणि किः, तदन्तस्येति सम्बन्धिन उपादानात्तस्येत्यध्याहारः। तथाचायं सूत्रार्थः—'यत्सम्बन्धी यो विधिर्यत्कार्यं यत्करणकं तदन्तस्य तस्य बोध्य'मिति। 'अचोय'दितिधातुसम्बन्धी यद्विधिरच्करणक इति तदन्तस्य धातोः सम्बन्धी स बोध्यः। तदन्त-

प्रवृत्तौ निमित्तम्। अत एव 'इनह'न्नित्यादौ इनंशे तदन्तविधिः। न हि 'इन्—अङ्ग'-मित्यन्वयो भवति। 'तदन्तस्ये'त्यस्य—तदन्तशब्दस्येत्यर्थः। नन्वेवम् 'एरजि'ति 'अय' इत्यत्र न स्यादत आह—**स्वस्य चेति**। 'स्व'मित्यनुवृत्तं षष्ठ्या विपरिणम्यते इति भावः। 'स्वं रूप'मित्यस्य प्रत्याख्याने तु—'तस्य-तदन्तस्य चे'ति पाठ्यमिति बोध्यम्।

### ❀ अभिनव-चन्द्रिका ❀

**विशेषणत्वयोग्यतापीति**। अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितं, सम्बन्धानवच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितं वा स्वबोध्यार्थनिष्ठचरमावयवतानिरूपकपरं बोध्यमिति 'येन विधिस्तदन्तस्ये'त्यस्य वाक्यार्थबोधस्वीकारादिति भावः। **पाठ्यमिति**। चिन्त्यमिदम्—'व्यपदेशिव'दितिपरिभाषयैव सिद्धेः तदन्तस्य चेतिपाठेऽपयोगाभावात्।

### ❀ चिदस्थिमाला ❀

इत्यर्थः। **तथेति**। तत्समानाधिकरणेत्यर्थः। **भवतीति**। बाधात्। अत एव 'स्वस्य चे'त्यंशस्येद्वंशेविषयेऽप्रवृत्तिः। 'तदन्तस्ये'ति न तत्पुरुष इत्याह—**तदन्तेति**। 'स्वं रूप'मित्यतोऽनुवृत्त्या शब्दानुशासनप्रस्तावाद्वा शब्दस्येति लब्धम्। अत एव यच्छेदेन तस्य ग्रहणम्। **अय इति**। इणो रूपम्। **चेति पाठ्यमिति**। अन्यथा

### ❀ ज्योत्स्ना ❀

पूर्वक्रमजन्तधातुसम्बन्धित्वेन विधानं भवतीत्यस्त्यचस्तत्र करणत्वमिति भावः। **तच्चान्तरङ्गत्वादिति**। एतेन 'यस्य कार्यं यस्मिन्परतश्च तयोरकरणत्व'मित्युक्तौ हेतुरुक्तः। 'तदन्तस्य तस्य

### ❀ सदाशिवभट्टीयम् ❀

'वान्तो यी'त्यादौ नद्यादिविधिर्न स्यात्, अत उभयस्यावधारणबीजमाह—**तच्चान्तरङ्गेति**। **पाठ्यमिति**।

### ❀ विषमपदविवृतिः ❀

**स्येति**—सम्बन्धसामान्ये षष्ठ्यन्तमिति—प्रत्ययविधौ प्रकृतेरादेशविधौ स्थानिन आगमविधावागमिनः सङ्ग्रहः। तथा च देवदत्तस्य समाशं शरावैरोदनेन च यथा यज्ञदत्तः प्रतिविधत्ते यथा धातोर्यतमचा शास्त्रं विधत्ते। 'इकोयणि'त्यादौ तु न तदन्तविधिः, यत्सम्बन्धी विधिर्यत्करणकः स तदन्तस्य, तस्येत्यनेन कार्यसम्बन्धिभिन्ने करण एव तदन्तविधिप्रवृत्तितल्लाभात्। इदञ्च कार्यसम्बन्धिनो व्यधिकरणविशेषणे करणे न प्रवर्तते, कार्यसम्बन्धिनः करणत्वासम्भवात्। एवं—यत्र कार्यसम्बन्धिनि समानाधिकरणात्तत्त्वमसम्भवि तत्रापि न तदन्तविधिः। एवञ्च'तदन्तस्ये' त्युक्तिबलात् समानाधिकरणविशेषणरूपमेव करणं पर्यवस्यति। 'तयोरकरणत्वं दर्शित'मिति मूलोक्तं तु न युक्तम्, 'इक' इत्यनेनानिकोऽचीत्यनेन हल्परकेकश्च व्यावृत्तिकरणत्वसम्भवात्। 'तच्चान्तरङ्गत्वात्समानाधिकरणमेवे'त्यपि न, 'शब्दतो विशेषण'मित्युक्तौ ह्यन्तरङ्गत्वात्समानाधिकरण एवेति कथञ्चिल्लभ्येत। 'येने'ति शब्देन हि करणमेवात्रोपात्तम्, अन्तरङ्गत्वमपि। अन्तरङ्गत्वञ्च यत्र द्वयोर्ग्रहणासम्भवः, किन्त्वन्यतरस्यैव, तत्र ह्यन्यतरस्य ग्रहणं नियामकं, प्रकृते तु द्वयोरपि ग्रहणसम्भवेनान्तरङ्गत्वनियामकसकृदुच्चारितशब्दस्यैकार्थकत्वेऽपि प्रतिलक्ष्यं तस्य प्रवृत्तेः। समानाधिकरणत्वे प्रायेण तदन्तविध्युत्तरकालिकसम्भावनासमधिगम्यत्वाविशेषणत्वस्याचो यदित्यादेरनेकाक्ष्वपि प्रवृत्तेः। तदन्तत्वसम्बन्धित्वं चात्र परम्परयापि बोध्यं, तेनोतश्च प्रत्ययादित्यत्र हेरेव साक्षात्कार्यसम्बन्धित्वेप्यङ्गस्य परम्परया तथात्वान्न दोषः। एवं 'तथा विशेषणत्वयोग्यतापी'त्यसङ्गतम्,—समानाधिकरणविशेषणत्वस्य तदन्तविधिप्रयोजकतायाः सूत्राक्षरास्पर्शानादिति दिगित्याहुः। **तस्यचेति पाठ्यमिति**। ननु व्यपदेशिद्भावेन सिद्धेरिदं व्यर्थमिति चेन्न।

**समासप्रेति** । विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम्, एवञ्च 'द्वितीयाश्रित' इत्यादौ श्रितादयोऽधिकारप्राप्त'समर्थ'रित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके लक्षणया 'सुपे'त्यनेनान्वयः । तेन 'कृष्णं परमश्रित' इत्यत्र न समासः । 'नडादिभ्यः फगि'त्यादावपि नडादि—विशेष्यं, प्रातिपदिकं—विशेषणमिति 'सौत्रनाडि'रित्यत्र न फक् । **उगिदिति** । तेना'तिभवती'त्यत्र 'उगितश्चे'ति ङीप्, 'दाक्षि'रित्यत्र अत इञ्च सिद्धः । एवञ्चोक्तनिषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण—'गृह्यमाणप्रातिपदिकेन तदन्तविधिर्नास्ती' त्यनेनैकवाक्यत्वलाभात् ।

### ❀ अभिनव-चन्द्रिका ❀

**विशेष्यभूता इति** । वस्तुतस्तु श्रितादिपदस्य स्वप्रकृतिकसुबन्तलाक्षणिकतया नास्ति विशेष्यविशेषणभावस्य व्यत्यास इति बोध्यम् । स्वयमेवाग्रे तथैव वक्ष्यमाणत्वात् ।

**एकवाक्यत्वलाभादिति** । परिभाषैकवाक्यतया वार्तिकस्य गृह्यमाणप्रातिपदिकविषयत्वम्, वार्तिकैकवाक्यतया परिभाषायाः प्रत्ययविधिविषयत्वम्, उगिद्वर्णग्रहणभिन्नत्वे सति प्रत्ययभिन्नत्वं गृह्यमाणप्रातिपदिकत्वमिति च लभ्यत इति भावः । अत एव

### ❀ चिदस्थिमाला ❀

लोकन्यायसिद्धव्यपदेशिवद्भावस्य वचनेनानेन बाधः स्यादिति भावः । वचनार्ङ्गीकारे गौरवादाह—**विशेषणेति** । **समर्थैरिति** । 'कृतविभक्तिवचनविपरिणामे'त्यादिः । नन्वेवं 'सुप'इत्यस्य कथमन्वय, न हि तेषां सुबन्तत्वसम्भवः । यद्यपि सम्बुद्धौ स्त्रियाञ्च तत्त्वसम्भवस्तथापि शास्त्रस्याल्पविषयत्वापत्तिरत आह—**तस्येति** । विशेष्यस्येत्यर्थः । एतेन सम्बुद्ध्यन्तं टाबन्तञ्चोदाहर्तव्यमिति **कैयटकौस्तुभाद्युक्तमपास्तम्** । व्यत्यासफलमाह—**तेनेति । न फगिति** । किन्त्वत इञिति इञ्, अनुशतिकादित्वादुभयपदवृद्धिः । **उगिदितीति** । मूले वर्जमित्यत्र 'द्वितीययाञ्चे'ति णमुल् । उगिता वर्णेन च यत्र किञ्चिद्विशिष्यते तत्र तेन तदन्तविधिर्भवत्येवेत्यर्थः । तस्य फलमाह-**तेनेति** । सूत्रे तु सर्वादिपठितभवतुशब्दे अस्यापत्यमिरित्यत्रापि सफलेऽपित्वं तु बाह्वत्युत्तरार्थम् । **एवञ्चोक्तेति** । व्यत्यासबोधकत्वे च । समासप्रेतीत्यर्थः । समासांशे गमकाभावादाह—**प्रत्येति** । विषये=तत्रैव । **प्रत्ययेति** । सपूर्वोत्तेतिधर्मिग्राहकमानादिति भावः । अस्याग्रेऽन्वयः । अनेन=न्यायेन । '**एकवाक्यत्वेति** ।

### ❀ सदाशिवभट्टीयम् ❀

अन्यथा लोकन्यायसिद्धस्य व्यपदेशिवद्भावस्य वचनेन बाधः स्यादिति भाव इत्याहुः । वस्तुतस्त्विदं चिन्त्यं, तदन्ते कार्यबोधनेन सार्थक्येन बाधकत्वायोगात्, 'व्यपदेशिव'दितिपरिभाषावतरणस्यस्वग्रन्थविरोधाच्च । पृथग्योगस्य दृष्टफलाभावेन प्रत्याख्यातत्वेऽप्युत्तरत्रानुवृत्तौ बाधकाभावाच्च । **तस्यचेतिपाठफलन्तु** 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यस्य विषये 'रोणी'त्यादौ बोध्यम् । **प्रत्ययांशे इति** । समासांशे तु न

### ❀ विषमपदविवृतिः ❀

'वनो र च' 'रोणी'त्यादौ व्यपदेशिवद्भावाप्रवृत्तेः, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधात् । **गृह्यमाणप्रातिपदिकेति** । ननु किमिदं गृह्यमाणत्वम् ? न तावदानुपूर्वीविशेषरूपेणोपादीयमानत्वम्, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' 'वृद्धाच्छ': 'जनपदतदवध्योश्च' 'द्विगोर्ष्ठंश्चे'त्यादौ तदन्तविधिनिषेधानापत्तेः । नापि यथाकथञ्चिदुपादीयमानत्वम्, उगिद्वर्णग्रहणेष्वपि निषेधापत्तेः । नाप्युगिद्वर्णग्रहणभिन्नत्वम् । 'उगिद्वर्णे' इति त्वेकदेशानुवाद इत्युत्तरग्रन्थासङ्गतेरिति

'उगिद्वर्णे'ति त्वेकदेशानुवाद इति बोध्यम् । अत एव 'वनो र च'त्यादौ 'प्रत्ययग्रहणे तदन्तग्रहण'मित्यस्य नायं निषेध इति दिक् ।

**विरामः** । भावे घञ् । शब्दानुशासनप्रस्तावादाह—**वर्णानामिति** । उच्चारणाभाव इत्यर्थः । स च व्याख्यानात्किञ्चिद्वर्णोच्चारणानन्तरकालिक एव गृह्यते । प्रदेशाः—

❀ अभिनव-चन्द्रिका ❀

'यञिञोश्चे'त्यनेन निषेध इति दिक् । **उच्चारणाभाव इति** । ननु यत्र देवदत्तेन 'रामा'दित्युच्चरितं, यज्ञदत्तेन च 'घट'इत्युच्चरितं, तत्रावसानसञ्ज्ञा न स्यात्, उच्चारणाभावस्याभावादिति चेन्न, वर्णविशिष्टोऽभावोऽत्रमानसञ्ज्ञो भवतीत्यर्थेनादोषात् । वै० 'स्वकर्मकोच्चारणकर्तृपुरुषोच्चरितवर्णप्रति-

❀ चिदस्थिमाला ❀

'सम्भवतीति'न्यायादिति भावः । नन्वेवमुगिद्वर्णेति व्यर्थमेव, तत्र प्रातिपदिकग्रहणाभावादत आह—**उगिदिति । एकदेशेति** । अगृह्यमाणप्रातिपदिककसूत्रसमूहैकदेशेत्यर्थः । **अत एवेति** । तदेकवाक्यतया 'प्रत्ययाविधा'वित्यस्य गृह्यमाणप्रातिपदिकविषयत्वादेवेत्यर्थः । नायं=प्रत्ययविधावितीति । अत एव प्रत्ययविधिभिन्नेऽप्युत्रित्यादौ नेनापि तदन्तविध्युक्तिः, परमस्वसेत्यादिलक्ष्यञ्च प्रकृतसूत्रभाष्ये सङ्गच्छते । अतएवोक्तनिषेधवत्तस्य निषेधस्य न कथनं वार्तिककृता । एवञ्च वार्तिकतः परिभाषाभिन्नेति प्राचोक्तमयुक्तं । गृह्यमाणेत्यस्य च विशिष्य तत्तद्रूपेणोच्चार्यमाणेत्यर्थस्तदाह—**इति दिगिति** । करणघञ्पक्षे बाहुलकमाश्रयणीयं, प्रदेशे विषयभेदात्सप्तमीभेदापत्तिश्चात आह—**भावे इति** । नित्यत्वविभुत्वपक्षे तदभावस्य बाधाजन्यत्वपक्षेऽपि कारणतः पूर्वं तत्सत्वादतिप्रसङ्गापत्तिरत आह—**उच्चारणेति** । उत्पत्तेराभिव्यञ्जनस्यवोच्चारणस्याभाव इत्यर्थः । स च=तदुच्चारणाभावस्तु । 'अवसान इत्यन्वर्थसञ्ज्ञया तल्लाभ' इति **रत्नाकरो**क्तिरयुक्ता, अस्या लौकिकत्वादत आह—**व्याख्यानादिति** । लक्ष्यविरोध-तत्तच्छास्त्रानर्थक्योभयमूलकादित्यर्थः । **कालिकएवेति** । एवेनोभयव्यवच्छेदः । तेन दत्तः रसो रथः अन्धः इत्यादौ चर्त्वविसर्गानुनासिकादि न ।

❀ ज्योत्स्ना ❀

चे'ति पाठः । **उक्तनिषेध** इति । 'समासप्रत्ययविधौ प्रतिषेध' इत्येषः । **इत्यस्य नायमिति** । अन्यथा वन्प्रत्ययमात्रस्य ङीष्प्रकृतित्वं स्यात्, 'प्रातिपदिका'दित्यस्य तु विरोधात्तत्रासम्बन्ध एव स्यादिति भावः । यदितूत्तरसूत्रेषु प्रातिपदिकादित्येतत्सम्बन्धस्यावश्यकत्वा 'द्वनोरचे'त्यत्रापि सम्बन्धः, तत्सामानाधिकरण्यानुरोधाच्च 'वन' इत्यनेन शब्दस्वरूपविशेष्यमादाय तदन्तविधिर्न त्वयं निषेध इत्युच्यते तदा वन्नन्तेन प्रातिपादकस्य विशेषणात्पुनस्तदन्ताविधिरिष्टोऽप्युक्तव्याख्यानाश्रयणेऽस्मान्निषेधान्न स्यादिति बोध्यम् ।

शब्दानां नित्यत्वादाह—**उच्चारणेति । वर्णवदिति** । उच्चारितप्रध्वंसिनां नित्यविभूनां वा वर्णानामिवेत्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

मानमिति भावः । शब्दानां नित्यत्वादाह—**उच्चारणेति** । तच्च वर्णोत्पत्तितद्व्यञ्जनान्यतररूपम् । ननु तदभाववत्ताबुद्धिं प्रति तद्वत्ताबुद्धिः—प्रतिबन्धिकेति हरिरित्यादावुच्चारणसत्त्वेन तदभावात्तदसिद्धिरत आह—**स चेति** । फलान्तरमपि दुर्बलं भाष्योद्योताभ्यामवगन्तव्यम् । **व्याख्येति** । सञ्ज्ञातत्त्वद्विधिवैयर्थ्यलक्ष्यासिद्धिमूलकादित्यर्थः । **परः संनिकर्षः । प्रायः परेणेत्यादि** । अयम्भावः—परनिरूपित-

❀ विषमपदविवृतिः ❀

चेन्न । 'प्रातिपदिकत्वव्याप्यधर्मपुरस्कारेणोपादीयमानत्व'मित्यर्थेनादोषात् । **प्रत्ययग्रहणेति** । सोप्येतन्मूल इति भावः । वाचनिकः स इत्यन्ये ।

**विरामोऽवसानम्** । वर्णानां नित्यत्वादभावासम्भवादाह—**उच्चारणेति** ।

"वाऽवसाने" इत्यादयः। अभावस्यापि बुद्धिकृतं पौर्वापर्य—वर्णवत्। परशब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वादत आह—**अतिशयित इति**। स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायेन रहितः। तेन तद्व्यवायेन वाक्योच्चारणे सञ्ज्ञा न। सन्निकर्षश्च प्रायः परेण। क्वचित्पूर्वेणापि। अत एवावसानकार्याणां संहिताधिकारे पाठः। न चात्रमान-

❀ अभिनव-चन्द्रिका ❀

योगिकत्व' 'अर्धमात्राधिककालाव्यवायेन—स्वकर्म्मकोच्चारणकर्तृपुरुषोच्चरितवर्णावधिकपूर्वत्वाभाववत्त्वै'तदुभयसम्बन्धेन। प्रकृते च अर्धमात्राधिककालाव्यवायेन यज्ञदत्तोच्चरितवर्णावधिकपूर्वत्वेपि देवदत्तोच्चरितवर्णावधिकपूर्वत्वाभावान्न दोषः। यत्र देवदत्तेन 'घटा'दित्युच्चरितं, तेनैवार्धमात्राधिककालव्यवायेन 'पटा'दित्युच्चरिन्तत्र अवसानसञ्ज्ञासिद्धये अर्धमात्राधिककाल-

❀ चिद्स्थिमाला ❀

नन्वेवममूर्तत्वेन तत्र परत्वव्यवहारः कथमत आह—**अभावेति**। **वर्णवदिति**। उच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानामित्यर्थः। **अव्यभीति**। यत्किञ्चिदपेक्षयान्यत्वस्य सार्वत्रिकत्वादितिभावः। तस्यार्थमाह—**स्वभावेति**। तथाच परग्रहणमवग्रहादिनिवृत्तये। मात्राकालो ह्यवग्रहः। अन्यथा सन्निकर्षस्य पुरुषभेदेनाव्यवस्थितत्वात्तत्रापि स्यात्। परग्रहणे तु तत्सामर्थ्यात्सर्वापेक्षया न्यूनस्यार्धमात्राकालव्यवायकस्य सन्निकर्षस्य ग्रहणान्न दोषः। अतएव पदे न दोषः, तत्र तस्यानित्यत्वात्। तद्ध्वनयन्नाह—**तद्व्यवायेन वाक्योच्चेति**। तदन्यार्धमात्राकालव्यवायेनेत्यर्थः। एतेन पुरुषभेदेन सन्निकर्षस्याव्यवस्थिततया सूत्रारम्भसामर्थ्यादेवोक्तसन्निकर्षलाभे परग्रहणसामर्थ्यात्पूर्वपरयोः सन्निकर्ष एव संहितेत्यवसानविषये नेयमित्यपास्तं, तदाह—**सन्नीति**। परेण=तेनैव। प्रायःपदस्वारस्यमाह—**क्वचिदिति**। कार्याणां

❀ ज्योत्स्ना ❀

**क्वचित्पूर्वेणाऽपीति**। अवसानविषय इत्यर्थः। अवसानकार्याणां='वाऽवसाने' इत्यादीनां,

❀ सदाशिवभट्टीयम् ❀

मनान्तरीयककालाव्यवायेन पूर्वत्वं संहिता, तथैव पूर्वनिरूपितञ्च परत्वं, विनिगमनाविरहात्। संहितायामिति च प्रदेशे—कार्थिविशेषणं तदाश्रयत्वमेवञ्च तद्विषयतदुभयमपि निमित्तोपादाने तन्निरूपितमेव प्रत्यासत्तेः, अनुपादाने तु यत्किञ्चिन्निरूपितं कस्याप्यप्रत्यासन्नत्वात्। तदुपादाने यथा—'इको यणचि' 'झयो हो'। आद्ये अज्निरूपितं इङ्निष्ठं पूर्वत्वं सा, द्वितीये हनिष्ठं झय्निरूपितं परत्वं सा। अनुपादाने तु यथा—'वावसाने' इति। तत्र सप्तमीनिर्देशानां बहुत्वादुक्तं—**प्राय इति**। पञ्चमीनिर्देशानामवसानकार्याणां चाल्पत्वादुक्तं—**क्वचिदिति**। न्यायसिद्धेर्यें लिङ्गमप्याह—**अत एववावसाने इति**। अत एव वासुदेववाचकाकारस्य संबुद्धाव इत्यत्रानुनासिकः, र इत्यत्र न विसर्गः, द इत्यत्र चर्त्वञ्च। ननु 'विसर्जनीयस्य स' इति—सूत्रभाष्यपर्यालोचनया पूर्वत्र तानीष्यन्त एव, तथाच तत्र भाष्यं–संहितासंज्ञाया प्रकर्षगतिर्विज्ञायते–साधीयो यः परः सन्निकर्ष इति, कश्च साधीयः? यः पूर्वपरयोरिति। तस्यायं भावः—उपात्तपूर्व-

❀ विषमपदविवृतिः ❀

**वर्णवदिति**। 'यावद्ब्रह्म विष्ठितं तावती वा'गिति श्रुत्या वर्णानां सर्वदेशकालवृत्तित्वेन दैशिककालिकक्रियासम्भवादिति भावः। **परः सन्निकर्ष इति**। वर्णाद्वर्णान्तरोच्चारणेऽर्धमात्राकालव्यवायस्य नित्यत्वेन तदधिककालव्यवायराहित्यमेव—**परः सन्निकर्ष** इत्यभिप्रेत्याह—**स्वभावसिद्धेति**। **संहिताधिकार इति**। 'तयोर्य्वावचि संहिताया'मित्यधिकार

पाठेनाकडारसूत्रस्य स्वशास्त्रीयसञ्ज्ञामात्रविषयत्वकल्पनात्। एते तु न तथा, लोकेऽपि सत्त्वात्। तदुक्तं वार्त्तिककृता–'संहितावसानयोर्लोकविदितत्वात्' इति। न चावसानकार्येषु संहिताधिकारासम्बन्ध एवास्तु, अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यं, सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वात्। ध्वनितश्चेदं–'विसर्जनीयस्य सः' इति सूत्रे भाष्ये। सन्निकर्षः सामीप्यम्।

**ॐ चिद्स्थिमाला ॐ**

रेवाह—**तदधीति**—शास्त्रीयमात्रसञ्ज्ञेत्यर्थः। मात्रपदव्यवच्छेद्यमेवाह—**एते तु न तथेति**। संहितावसानसञ्ज्ञे तु न स्वशास्त्रीये एवेत्यर्थः। फलाभावात्तत्र तदसम्बन्धेन परेणैव सर्वत्र सन्निकर्षे न कश्चित्पूर्वेणापीत्याशयेनाशयान्तरमेव—तस्याशङ्कते **न चेति**। **सत्यमिति**। पूर्वोक्तरीत्येति भावः। **ध्वनितमिति**। तत्र हि अनवकाशत्वाद्बाधपक्षे परग्रहणात्पूर्वपरविषयसन्निकर्षे संहितासञ्ज्ञेति पक्षे

**ॐ ज्योत्स्ना ॐ**

तदधिकारे=संहिताधिकारे। **अग्रे चेति**। 'तोर्लि'त्यादौ। **मण्डूकप्लुतिरस्त्विति**। 'अग्निचिल्लुनाती'त्यादौ परसवर्णाद्यभावायेत्यर्थः। **अयुक्तत्वादिति**। एतेन वर्णानां विरामे 'वृक्ष' इत्यादौ संहितावसानसञ्ज्ञयोः समावेश इत्युक्तम्। किन्तु प्रकृतसूत्रस्थभाष्यकैयटविरुद्धमिदं, तत्र हि—'वर्णाद्वर्णोच्चारणे प्रतिवर्णं विरामसद्भावादवसानसञ्ज्ञया परत्वात्संहितासञ्ज्ञाया बाधः प्राप्नोती' त्याशङ्क्य—'वृक्ष' इत्यादौ वर्णान्तरानुच्चारणे 'सावकाशामनवकाशा संहितासञ्ज्ञा बाधते' इत्युक्तं, तदुक्तन्यायेन सञ्ज्ञयोः समावेशे तद्विरोधः स्पष्ट एव। **ध्वनितश्चेदमिति**। तत्र हि 'वृक्षः' 'प्लक्षः' इत्यादौ विसर्जनीयस्य सकारः कस्मान्न भवती'त्याशङ्क्य—'संहिताया'मित्यनुवृत्त्या

**ॐ सदाशिवभट्टीयम् ॐ**

सागत्वात्, अत एव समाधौ सूत्रस्यैव सङ्कोचः। नन्वेकस्यैव सञ्ज्ञेतितदर्थात्—कथं तस्यापि प्राप्तिरिह सञ्ज्ञिनोर्भेदादिति चेत्सत्यम्, सञ्ज्ञाद्वयप्रयुक्तकार्यस्यैकवर्णवृत्तित्वेन सञ्ज्ञिनोरप्यैक्यमभिप्रेत्य भाष्ये बाध्यबाधकभावोक्तिरिति कैयट एव स्पष्टत्वात्। वस्तुतस्तु न तत्प्राप्तिरिति सिध्यत्येवायासं विनैव समावेश इति बोध्यम्। शङ्कित्रभिनानानुसारेणैवोत्तरयति—**तदिति। अयुक्तत्वादिति**। इदमुपलक्षणं,—पूर्वोक्तलक्ष्यासिद्धेरपि। **एतेन** सादेशे खरीत्यस्य मण्डूकानुवृत्तिरेकदेशे स्वरितत्वप्रतिज्ञा च तव, मम तु सूत्रद्वये संहितायामित्यस्य मण्डूकगतिरिति सममेवेत्यत्य**पास्तम्। परेणैव संहितेति** बहुतरगौरवप्रदर्शितत्वाच्च। **केचित्तु** पूर्वोक्तप्रत्याख्यानेन तेषामनभिधानकल्पनायथाश्रुतं साध्वित्याहुः।

**ॐ विषमपदविवृतिः ॐ**

ज्द्विर्वचनोद्देश्यतावच्छेदकमजादिधातुत्वं, प्रथमैकाच्द्विर्वचनोद्देश्यतावच्छेदकं–धातुत्वमात्रम्। न च तथा प्रकृते, अवसानसञ्ज्ञोद्देश्यतावच्छेदकं वर्णोच्चारणाभावत्वं, संहितासञ्ज्ञोद्देश्यतावच्छेकं तु वर्णयोरर्धमात्राधिककालकृतव्यवधानराहित्यमिति कथमनयोर्बाध्यबाधकभावः? किञ्चास्तु सञ्ज्ञाभिन्नस्थले यथातथाभूतयोरपि बाध्यबाधकभावः, सञ्ज्ञयोस्त्वेकसञ्ज्ञिकत्वे एव बाधकत्वम्–अत एव 'राजपुरुष' इत्यादौ समुदायगतभसञ्ज्ञया राजञ्शब्दे पदत्वबाधो न। अत एवोत्तरपदत्वे चे'ति वार्तिकप्रत्याख्यानावसरे 'ऽजादिस्वादिषु पूर्वं भसञ्ज्ञं भवत्येतद्घटकं यदस्ति तदपि भसञ्ज्ञक'-मित्याकरे उक्तम्। किञ्चाऽऽशब्दात्सम्बुद्धौ 'वाक्यैकदेशे वाक्यप्रयोग' इति न्यायेन प्रयुज्यमानेऽवसानसञ्ज्ञा चरितार्था, एकवर्णात्मकत्वेन वर्णद्वयासत्त्वेन संहितासञ्ज्ञाया अप्रवृत्तेः। तत्रावसानसञ्ज्ञाफलन्त्व'णोप्रगृह्यस्ये'त्यनुनासिकप्रवृत्तिरिति दिक्। **स्वशास्त्रसञ्ज्ञामात्रेति**। इदमप्ययुक्तम्—एवं सति गुरुलघुसञ्ज्ञयोरपि बाध्यबाधकभावानापत्तेः, तयोरपि तच्छन्दशास्त्रादिप्रसिद्धत्वेन लोकविदितत्वात्। नचेष्टापत्तिः, बन्धुशब्दस्य शब्दान्तरेण द्वन्द्वे 'लघ्वक्षरं पूर्व'मिति पूर्वनिपातस्याचिक्षणदित्यादौ 'दीर्घो लघो'रिति दीर्घस्य चानापत्तेरिति दिक्।

**सुप्तिङ्** । सुबिति—सुपः पकारेण प्रत्याहारो-व्याख्यानात् । यद्यपि 'प्रत्ययग्रहणे तदन्तग्रहण'मित्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम्, 'प्रत्ययेन स्वप्रकृत्यवयवकसमुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधि'रिति न युक्तम्। 'इया'नित्यादौ

ॐ अभिनव-चन्द्रिका ॐ

अत्र चैतच्छङ्कासमाधानपरम्भाष्यमेव मानमिति दिक्। **व्याख्यानादिति** । ङीप्ङीषोः पृथक्करण-सामर्थ्यात्, ङीनिति नित्करणात्, 'सितिचे'तिसूत्रकरणात्, प्राग्दिशोविभक्तिकरणात्, प्रथमोपस्थित-त्यागे मानाभावाच्चेतिभावः । **शब्दरूपमिति** । 'तदादी'ति शब्दरूपमित्यर्थः । **समुदायेनेति** । प्रति-

ॐ चिदस्थिमाला ॐ

चा'णो प्रगृह्यस्ये'त्यत्रोभयानुवृत्त्या दोष उक्तः । सन्निकर्षश्च न संयोगसमवायादिसम्बन्धः, गुणानां मिथस्तद-भावात् । नित्यविभुद्रव्यतापक्षेऽपि न, अजसंयोगनिराकरणात्, अत आह—**सामीप्यमिति** । ननु सुबिति न सप्तमीबहुवचनं, तिङ्साहचर्यात्, नापि कपः पकारेण प्रत्याहारः, स्वादिष्वित्यादिपदानर्थक्यापत्तेः अन्यथा 'सुपी'त्येव वदेत् । नापि टाबादिपकारेण, ङ्याप्प्राती'त्यत्र ङ्याब्ग्रहणवैयर्थ्यापत्तेः । पट्वीत्यादौ 'घेङिती'तिगुणापत्तेश्चात आह—**सुबितीति । उक्तेरिति** । परिभाषाप्रकरणे इति भावः । विशेष्या-सत्त्वादाह—**शब्देति** । तत्प्रस्तावादिति भावः । एतेन वाचनिकत्वं परिभाषार्थस्य निरस्तम्। **कौस्तुभाद्युक्तिं**-

ॐ ज्योत्स्ना ॐ

परिहृत्य,—'इको यणची'त्यादौ कार्यिनिमित्तयोरुभयोरुपादानं तयोरेव संहिताया ग्रहणवत्प्रकृते निमित्तानुपादानेऽपि कार्यिमात्रोपादानात्पूर्वेणापि संहिताया ग्रहणाद्दोषतादवस्थ्यमुक्त्वा—एवं तर्हि—अनवकाशाऽवसानसञ्ज्ञा,—संहितासञ्ज्ञां बाधिष्यते, संहितासञ्ज्ञायां वा परग्रह-णात्प्रकर्षावगमात्परेण साकं पूर्वसन्निकर्षस्य संहितात्वलाभात्तदभाव—इति प्रकारद्वयेन पुनः परिहृत्य—भाष्ये उक्तं,—यद्येवानवकाशाऽवसानसञ्ज्ञा—संहितासञ्ज्ञां बाधते, तथापि संहितासञ्ज्ञायां प्रकर्षगतिर्विज्ञायते, उभयथा दोषो भवति, इष्यन्ते इत उत्तरमवसाने सांहिताकार्याणि, तानि न सिध्यन्ति,—'अणोऽप्रगृह्यस्यानुनासिक—' इतीति । व्याख्यातञ्च-सञ्ज्ञयोः समावेशाभिप्रायकतया तदिदं प्रदीपेनेति–, न प्रागुपदर्शितसंहितासञ्ज्ञासूत्रस्थभाष्य-विरोधः । वृक्ष इत्यादौ वर्णान्तरानुच्चारणे परेण संहिताया अभावेऽपि पूर्वेण तस्याः सद्भावाभ्युपगमात्सञ्ज्ञाद्वयेऽनवकाशत्वतौल्यात्तस्यैकदेश्युक्तित्वादित्याशयात् । वस्तुतस्त्वाष्ट-मिकभाष्यमेकदेश्युक्तिः,—अततेर्डः—अइत्यत्रावसानसञ्ज्ञावकाशस्य प्रदर्शयितुं शक्यत्वेन प्राथमिकभाष्यविरोधस्य दुष्परिहरत्वात्, अवसाने संहिताकार्यसिद्धेर्मण्डूकप्लुत्योपाध्यायैः प्रदर्शितत्वाच्च । वृक्ष इत्यादौ दोषवारणार्थं 'विसर्जनीयस्य स' इत्यत्र खरीत्यनुवृत्तये मण्डूकानुवृत्तिं विना तत्रापि गत्यन्तराभावाच्च, अस्मन्मते तु परेणैव संहितेत्याश्रयणात्सत्वप्राप्त्यभावात्खरीत्य-नुवृत्तेर्नापेक्षेति दिक् । अन्तग्रहणस्यार्थविशेषज्ञापकत्वोपपादनायाह—**यद्यपीति** । कैयटोक्तं दूषयति—**प्रत्ययेनेत्यादि** । कैयटमतोज्जीवनं तु तन्मतश्रद्धालुभिः परिभाषाप्रदीपार्चिष्युपपादित-

ॐ सदाशिवभट्टीयम् ॐ

**सुप्तिङन्तम्** । सुप्तिङित्यस्य प्रत्याहारत्वे तिङ्साहचर्यस्य, 'न ङिसम्बुद्ध्यो'रिति ज्ञापकस्य चोद्योतो-क्तस्य सम्भवेपि टाप्डाप्ङीप्चाप्यप्पाशप्कल्पप्सुच्कप्तमप्पकारेणेत्यत्र तदसम्भवात्, तदपहायोभय-साधारणमाह—**व्याख्येति** । 'स्वादि'ष्वित्यादिग्रहादित्येके । नच तिङ्साहचर्यादेकसूत्रोपात्त एव सुबपीति वाच्यम्, क्यङ्ष्यङ्ङां सत्त्वात्तत्रापि व्याख्यानस्य शरणीकरणीयत्वात् । सुब्ग्रहात्तिङेकसूत्रोपात्त एवेत्यपि **केचित्** । **यद्यपीति** । **उक्तेरिति**—पञ्चम्यन्तस्य शब्दरूपविशेष्याध्याहारे हेतुत्वम् । **शब्देति**

ॐ विषमपदविवृतिः ॐ

**सुप्तिङन्तम्** । **सुपः पकारेणेति** । न तु टापः कपो वा—पकारेणेत्यर्थः ।

तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात्, आक्षिप्तस्य शाब्देऽनन्वयाच्च। तथापि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावज्ञापनार्थमन्तग्रहणम्। तेन घसञ्ज्ञा तरसमपोरेव न तदन्तस्य। तेन 'गौरीब्राह्मणितरे'त्यत्र न ह्रस्वः। एतन्निषेधसामर्थ्यादेव

### ॐ अभिनव-चन्द्रिका ॐ

योगित्वं तृतीयार्थः, तस्य च व्यभिचारपदार्थतावच्छेदकेऽभावेऽन्वयः। **अनन्वयाच्चेति**। शक्त्या लक्षणया व्यञ्जनया सादृश्यज्ञानेन वा उपस्थितस्यैव शाब्दबोधविषयत्वस्वीकारादिति भावः। **ज्ञापनार्थमिति**। सञ्ज्ञानिष्ठविधेयतानिरूपिता या प्रत्ययमात्रवृत्तिसाक्षादुद्देश्यता तत्प्रयोजकं पदं यत्र तत्र तदादिविषयकतदन्तग्रहणाभावज्ञापनार्थमित्यर्थः। **गौरीब्राह्मणीतरेति**। न च 'पुंवत्कर्म-

### ॐ चिदस्थिमाला ॐ

खण्डयति—**प्रत्ययेनेति**। सुप्तिङ्रूपेणेत्यर्थः। **स्वप्रकृतीति** द्वन्द्वः। **तद्विशेषेति**। सुप्तिङोस्तादृशसमुदायविशेषणत्वेनेत्यर्थः। इति त्विति पाठः। व्यतिसे इतिप्रयोगस्याभावादाह—**इयानिति**। आदिना इरित्यादिपरिग्रहः। **तस्य**—प्रत्ययस्य। ननु प्रक्रियायां तत्सत्त्वेन न व्यभिचारोऽत आह—**आक्षिप्तेति**। 'प्राय' इत्यादिः। **न ह्रस्व इति**। 'गौरीशब्दस्ये'ति शेषः। ब्राह्मणीशब्दस्य तु भवत्येवेति भावः। नन्वेवमपि

### ॐ सदाशिवभट्टीयम् ॐ

तदादीत्यत्राऽन्यपदार्थजिज्ञासायां तदध्याहारस्यावश्यकत्वात्, गुणानाञ्चेति न्यायाच्चेति भावः। **एतेन**—तदादेरिति विशेष्यमादायैव तत्सिद्धौ तदध्याहारो मुधेत्यपास्तम्। पूर्वं सामानाधिकरण्यासम्भवेन तद्विशेषणतया तत्कल्पने क्लेशाच्च। किञ्च प्रत्ययग्रहणे तदादीति विशेष्यमादाय तदन्तविध्यङ्गीकारेऽपञ्चम्या इत्यस्यापूर्वत्वं स्यात्, तस्य प्रत्ययविशेषणतयाऽन्वयासम्भवात्। शब्दरूपस्य तु तस्योभयरूपेणाऽन्वयसम्भवेन विशेषणविशेष्यभावे कामचारेण तत्रैवं तात्पर्यग्राहकं तन्मतेपि नापूर्वम्। नन्वलौकिकेऽव्यभिचारात्सम्भव एवात आह—**आक्षिप्तस्येति**। अनुमितस्येत्यर्थः। शब्दरूपविशेष्यस्य त्वध्याहारादन्वयो भवत्येव, तव तु प्रत्ययेनेति हेतूपादानादाक्षेपपदेनानुमितिरेवाभिमतेति भावः। **तेन गौरीति**। षष्ठीतत्पुरुषोऽयमतो न पुंवदिति **केचिदाहुः**। **वस्तुतो** घसञ्ज्ञासूत्रे स्त्रीलिङ्गे समानाधिकरणे ह्रस्व इत्युक्तेर्बहुव्रीहिरेवायम्। गौरीत्यत्र 'सञ्ज्ञे' ति न पुंवत्त्वम्, अथवा 'कन्या कुमारी गौरी तु नग्निकानागतार्तवे'ति कोशाद्वयोवाचकोयम्, तत्र जातिकार्यं विकल्पेनेष्यतेऽतो जातेश्चेति निषेधान्न पुंवत्त्वम्। 'प्रत्ययग्रहणे चापञ्चम्या' इति वार्तिके कैयटेऽपञ्चम्या इत्यस्य दूषयत्तार्णेति प्रयोजनमुक्त्वा सञ्ज्ञाविधौ तर्हि तदन्तविधि

### ॐ विषमपदविवृतिः ॐ

शब्दादुपस्थितस्यैव शाब्दबोधे ऽन्वयात्, अन्यथा 'घटमानये'त्युक्ते समवायसम्बन्धेन घटशब्दसम्बन्धितयोपस्थितस्याकाशस्य शाब्दबोधेऽन्वयापत्तेः। 'द्वार'मित्यादौ तु 'पिधेही'ति शब्दस्यैवाध्याहारः। नन्वेवं 'ल्यब्लोपे'त्यस्य निर्विषयत्वम्, अन्विताभिधानवादाङ्गीकारात्। स्पष्टं चेदं 'सर्वादीनि सर्वनामानी'ति सूत्रे भाष्ये, तथाहि,"—नेदं सञ्ज्ञाकरणं पाठविशेषणमिदं सर्वेषां यानि नामानि तानि सर्वादीनि सञ्ज्ञोपसर्जनेति विशेषणेऽवतिष्ठते। यद्येवं सञ्ज्ञाश्रयं यत्कार्यं तन्न सिध्यति, 'सर्वनाम्नः स्मै'—अन्वर्थग्रहणं तत्र विज्ञास्यते सर्वेषां यन्नाम तदन्तस्य 'ङेः स्मै' इति। यद्येवं—'सकलं कृत्स्नं जग'दित्यात्रापि प्राप्नोति,—एतेषां च शब्दानामेकैकस्य स स विषय इति कैयटश्चैतेषां चापीति। ततश्च 'सर्वस्मिन्नोदन' इत्यादौ ओदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति, सामानाधिकरण्यादनयोरिति। **गौरीब्राह्मणीतरेति**। नेदं परिनिष्ठितं, किन्तु ह्रस्वापादनाय

प्रदेशेष्वपि न तदन्तविधिः । न च ज्ञापितेऽपि व्यर्थं, पदप्रदेशे प्रत्ययग्रहणे

**ॐ अभिनव-चन्द्रिका ॐ**

धारये'ति पुंवद्भावे उक्तं रूपं न स्यादिति वाच्यं, गौरी ब्राह्मणितरा इति स्थिते पुंवत्त्वं बाधित्वा 'घरूपे'तिह्रस्वापत्तिरित्यर्थेनादोषात् । 'दशवर्षा भवेद्गौरी'ति यमस्मृतेर्गौरीशब्दस्य वयोवाचकत्वेन वयोवाचकानां वैकल्पिकजातिवाचकत्वस्योक्तत्वेन बहुव्रीहिसमासस्वीकारे 'जातेश्चे'ति-पुंवत्त्वनिषेधेनोक्तरूपसिद्धेश्च। यत्तु षष्ठीतत्पुरुष इति, तन्न, घरूपसूत्रे 'समानाधिकरणे'इत्यनुवृत्त्या तत्र दोषकथनासङ्गत्यापत्तेः । स्पष्टञ्चेदं 'तरप्तमपौ घ' इति सूत्रे भाष्ये । **एतन्निषेधसामर्थ्यादिति** । न च घरूपेत्यत्र उत्तरपदविशेष्यकतदन्तविधे'रुत्तरपदाधिकार' इतिपरिभाषया निषेधात्तदादि-विशेष्यकतदन्तविधेश्च 'प्रत्ययग्रहणेचे'तिनिषेधात् 'गौरीब्राह्मणीतरे'त्यादौ ह्रस्ववारणाय निषेधस्सार्थक इति वाच्यम्, रात्रेः कृती'त्यादौ 'उत्तरपदाधिकार' इति निषेधाप्रवृत्तये प्रत्ययवृत्त्यानुपूर्व्य-वच्छिन्नविषयताप्रयोजकं यत्र तत्रैव तत्प्रवृत्तेरावश्यकत्वेन 'घरूपे'त्यत्रोत्तरपदविशेष्यकतदन्त-विधिनिषेधस्य एतन्निषेधसामर्थ्यादेव वक्तव्यत्वात् । न च 'रदाभ्यां निष्ठातो न' इत्यत्र 'प्रत्ययग्रहणे चापञ्चम्या, इति निषेधात्, क्तान्ततदादेः क्तवत्वन्तदादेः निष्ठासंज्ञाऽभावाय सञ्ज्ञाविधावितिनिषेध-स्सार्थक इति वाच्यम्, प्रत्ययमात्रग्रहणाभावेन तदन्तविधेः प्राप्तिविरहात् । न चैवमपि 'षः प्रत्य-यस्ये'त्यत्र तदन्तविध्यभावाय निषेधस्सार्थक इति वाच्यं, तत्र प्रत्ययपदस्य प्रत्ययबोधकत्वा-

**ॐ चिदस्थिमाला ॐ**

'घरूपे'त्यत्र तदन्तविधावुक्तदोषस्तदवस्थ एवान आह–**एतदिति** । सञ्ज्ञाविधावित्यर्थः । **पदेति** । 'प्रत्ययोरेव पदसञ्ज्ञायामपी'त्यादिः । यस्मिन्ज्ञापिते तस्य चारितार्थ्यं तत्तेन ज्ञाप्यमिति सिद्धान्तादिति भावः । **प्रकृतीति** । 'स्वादिष्वसर्वे'त्युक्तेरिति भावः । **प्रत्ययेति** । तन्मात्रेत्यर्थः । ननु प्रकृते तदभावे तदन्तांश-

**ॐ ज्योत्स्ना ॐ**

मनुसन्धेयम् । **गौरीब्राह्मणीतरेति** ।। समासार्थप्रदर्शकवाक्यप्रदर्शकमिदम् , समासे तु पुंवद्भावेन गौरब्राह्मणितरेति भवितव्यमिति प्राहुः । **एतन्निषेधेति**–कर्मधारयः, 'सञ्ज्ञाविधा'विल्ये-तन्निषेधेत्यर्थः । प्रदेशेषु=घरूपेत्यादिषु । **न तदन्तविधिरिति** । इदञ्च 'प्रत्ययग्रहणे चापञ्चम्या' इति वार्त्तिकस्थितप्रदीपेन, प्रदीपोद्योते—स्वकृतव्याख्यानेन च विरुध्यत इति परिभाषा-प्रदीपार्चिषि विस्तरः । **पदप्रदेशे इति** । अस्य—'प्रत्यययोरेव पदसञ्ज्ञायामपी'त्यादिः ।

**ॐ सदाशिवभट्टीयम् ॐ**

निषेधस्य किं फलमित्याशङ्कितम्, एवञ्च तत्सामर्थ्यात्–प्रदेशेषु तदभावे वृषत्तीर्णेति सिद्धौ नेदमसाधारण-मस्य प्रयोजनमिति च तदाशयः । ततश्च यदि सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य सञ्ज्ञा स्यात्, प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तक्रुद्धेति समाहितं, घादिभिरुत्तरपदस्य विशेषणादिति भावः । एवं च कुमारीगौरब्राह्मणितरेत्यत्र कुमार्या ह्रस्वः प्रसज्येतेति तद्व्यावृत्त्या चरितार्थमितिसङ्गतमेव प्रयोजनमिति तदाशयस्तत्र समाधेः फल्गुत्वात्—कैयटक्ङटाक्षयन्सिद्धान्तत्वेन शङ्कां नाटयति—**एतन्निषेधेति** । पूर्वोक्तप्रयोजनन्तु न सति सम्भवे उत्तरपदेत्यस्य विशेषणत्वात् । अत एव तदधिकारे प्रत्ययग्रहणे एव निषेध आरब्धस्तस्य प्रत्ययविशेषणत्वासम्भवात् । **नचेति** । यद्यपि 'सामर्थ्यान्न भविष्यती'ति–समाधिरनुपद-

**ॐ विषमपदविवृतिः ॐ**

कल्पितमलौकिकमेव, परिनिष्ठितत्वे गौरीशब्दे पुंवद्भावापत्तेः । ननु घसञ्ज्ञायां तदन्तविध्यभावेपि प्रदेशेषु तदन्तविधौ पुनरुक्तदोषतादवस्थ्यमित्याशङ्क्याह–**एतन्निषेधेति** । इदमप्ययुक्तम्—सञ्ज्ञाविधौ तदन्तविध्यभावे'घरूपे'त्यत्रापि न तदन्तविधिः । 'हृदयस्य हृल्लेख' इत्यत्राण्ग्रहणेन

तदन्तग्रहणेनैव सिद्धेरिति वाच्यं, पदत्वस्य प्रकृतिसाधारणतया पदग्रहणे प्रत्यय-ग्रहणस्यैवाभावात् । 'यस्मात्प्रत्ययविधि'रित्याद्यनुवृत्तेः पदसमुदायस्य न पदत्वम् । 'इया'मित्यादौ यस्मात्प्रत्ययविधिस्तदादितद्धितान्तत्वं व्यपदेशिवद्भावेन बोध्यम् ।

### ❀ अभिनव-चन्द्रिका ❀

भावेन तदन्तविधेः प्राप्त्यभावादिति दिक् । न पदत्वमिति । वस्तुतस्तु 'अदग्धदहने' तिन्यायेन तदादीत्यनुवृत्तेः प्रयोजनं चिन्त्यम् । व्यपदेशिवद्भावेनेति । इयानित्यादौ मुख्यधर्मवद्घटकत्व-मुख्यधर्मवदसमभिव्याहृतत्वरूपासहायत्वस्य सत्वात् । वस्तुतो व्यपदेशिवद्भावेन घटकत्वघटितत्वा-तिरिक्तधर्मानतिदेशेन प्रकृते स्थानिवद्भावेनैव तद्धितान्ततदादित्वस्योपपन्नतया चिन्त्यमिदम् ।

### ❀ चिदस्थिमाला ❀

निषेधे प्राप्ते तद्ग्रहणेन तल्लाभेऽपि तदादीत्यंशस्यालाभेनानिष्टं स्यादतस्तिरिभाषासञ्चाराभावादत आह—यस्मादिति । 'अत्र सूत्र' इत्यादिः । आदिना तदादिपरिग्रहः । यद्यपि भिन्नमूले द्वे ते परिभाषे ऽसंनियोग-शिष्टे इति तन्मात्रनिषेधेऽपि तदुपस्थितिः सम्भवत्येव, तथापि लाघवादत्र सम्भवात्तन्मूलावम्बनमेव कृतम् । न पदत्वमिति । ततोऽविहितत्वादिति भावः । नन्वेवमन्यत्र तदावश्यकत्वे कार्यकालपक्षे इयानित्यादौ कथं प्रातिपदिकत्वमत आह—इयानिति । तत्वस्याशास्त्रीयत्वात्कथं तेन तत्त्वमत आह—तेनेति ।

### ❀ ज्योत्स्ना ❀

प्रकृतिसाधारणतयेति । स्वादिष्वित्यनेन प्रकृतेरपि तद्विधानादिति भावः । इत्यादीति । 'यस्मा-त्प्रत्ययविधिस्तदादि प्रत्यय' इति भाष्योक्तयोगविभागलभ्यस्य 'प्रत्यये गृह्यमाणे यस्मात्प्रत्यय-विधिस्तदादीत्युपतिष्ठत' इत्यर्थस्यानुवृत्तेरुपस्थितेरित्यर्थः । नन्वेवं 'कृत्तद्धिते'ति सूत्रेऽपि प्रत्यय-ग्रहणाद्यस्मात्प्रत्ययविधिस्तदादीत्येतदुपस्थित्या इयानित्यत्र प्रातिपदिकसञ्ज्ञा न स्यादत आह—इयानित्यादाविति । तदादितद्धितान्तत्वमिति । तत्फलञ्च प्रातिपदिकसञ्ज्ञेति बोध्यम् ।

### ❀ सदाशिवभट्टीयम् ❀

मुक्तो वक्तव्यस्तथापि तत्प्राप्तिरेव नेति न्याय्यं समाधिमाह–पदत्वेति । तत्रत्योद्योतस्य'भाव'इत्युक्त्या प्रदी-पाशयप्रतिपादकत्वान्न तद्विरोधः । अन्ये तु—'स्वरूपव्याक्रियैव पराक्रिये'ति न्यायेन शङ्कात्वेनैवानुवादोऽत एव तदव्यवधानेनैव शङ्कासमाधानान्तरं च सङ्गच्छत इत्याहुरिति दिक् ।

यद्वा–"ननु सञ्ज्ञाविधावित्यत्र सम्बन्धसामान्यषष्ठ्या समासेन प्रदेशेपि तन्निषेधः परिभाषयैव सिध्य-तीति सामर्थ्येन तद्वारणांविफलङ्कर्मषष्ठ्या समासविशिष्टज्ञापने त्वन्तग्रहणसार्थक्यं दुर्वचमित्याशयेन शङ्कते—नच ज्ञापितेपी'ति । अन्येतु–"नन्वत्रोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्तीति तदन्तविधेः प्राप्तिरेव न, नचद्वितीयतदन्तविधेरभाव एव तया कल्प्यस्तथा सत्यणन्ते उत्तरपदे इत्यर्थापत्तौ द्वार्द इत्यस्यासिद्धि-रिति चेन्न, 'रात्रेः कृती'त्याद्यर्थं यत्र प्रत्ययस्य विशिष्योक्तिस्तत्रैव तत्प्रवृत्तेर्वाच्यतया तदप्रवृत्तेः । नन्वेवमपि रदाभ्यामित्यादौ प्रत्ययग्रहणे चापञ्चम्या इति तदन्तविधेरप्राप्तेश्चारितार्थ्यान्न सामर्थ्यमिति चेन्न, रदाभ्यामि-त्यस्य प्राधान्यात्तकारविशेषणतया निषेधाप्रवृत्तेरत एव चरितमित्यादौ न नत्वं, नच'स्फायःस्फीनिष्ठाया' मित्यत्र निष्ठान्ते इत्यर्थवारणाय पञ्चम्यन्तावध्याक्षेपेण प्रत्ययग्रहणेचेति तदन्तविध्यभावात्तत्र चारितार्थ्य-मिति वाच्यम् । अनयैव रीत्या तदन्तविध्यभावे सिद्धे आक्षेपे मानाभावात् । न च 'क्लिशः क्त्वानिष्ठयो'रित्यत्र क्त्वांशे प्रत्ययग्रहणेचेति निषेधात्तदभाववन्निष्ठांशेपि तदभावात्तत्र चारितार्थ्यम्, उक्तरीत्यैव निष्ठांशे तदभावेतत्साहचर्यात्—क्त्वांशेपि तदभाव–"इत्याहुः । इत्या-द्यनुवृत्तेरिति । सनाद्यन्तेत्यादावुक्तरीतेरसम्भवात्—परिभाषैकदेशोपस्थितेरावश्यकत्वेन स्वरितत्वप्रति-ज्ञानं मुधेत्याहुस्तन्न, अङ्गमितियोगविभक्ते तत्सम्बन्धाय तत्त्वस्यावश्यकत्वात्, बृहत्युपस्थितेरप्युक्तत्वाच्च न क्षोदः । नन्वेवमप्यत्र तदावश्यकत्वे कार्यकाले इयानित्यादौ कथम् प्रातिपदिकत्वमत आह—इयानिति ।

तेनाशास्त्रीयस्याप्येकाच्त्वादेरतिदेशात्। 'विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहायेऽपि कर्त्तव्यानी'ति तदर्थात्। अत एवे'यन्मात्र'मित्यादौ वत्वन्तात्स्वार्थे इति मात्रच्सिद्धिः।

❀ चिदस्थिमाला ❀

व्यपदेशिवद्भावेनेत्यर्थः। इयायेत्यादाविति भावः। 'एकस्मि'न्निति परिभाषान्तर्गतमिति सूचयितुं तदर्थमाह—**विशिष्टेति। व्यवहारेति।** न तु शास्त्रीयधर्म एवेत्यर्थः। अत एव नदतिदेश इति भावः। अपिर्विशिष्टसमुच्चायकः। अत एव=तदादित्वादेस्तेन लाभादेव। एकस्मिन्नित्यस्य व्यावर्त्यं सूचयन् तदन्तर्गतत्वस्य

❀ सदाशिवभट्टीयम् ❀

इदञ्चान्यथासिद्धंसुब्लुगर्थं पूर्वं प्रवृत्तायाःसञ्ज्ञायाः एकदेशविकृतन्यायेनात्रातिदेशात्। नहि कार्यकाले उपदेशेनैवैकवाक्यता नानिर्देशेनेत्यत्र मानमस्तीति, स्पष्टं चादोऽत्रैव **बृहति,** क्षोदिष्यते चास्माभिरप्युपरिष्टात्।

❀ विषमपदविवृतिः ❀

सप्तम्यन्ते प्रत्ययग्रहणे तदन्तविध्यभावज्ञापनात्। सञ्ज्ञाविधौ तु 'घरूपे'त्यत्र पुनस्तदन्तविधिर्दुर्वारः, सप्तम्यन्ते प्रत्ययग्रहणाभावेनोक्तनिषेधाप्रवृत्तेः। किञ्च प्रगृह्यत्वस्य प्रत्ययाप्रत्ययसाधारणतया प्रदेशे तदन्तविध्यभावेने'दूदेद्द्विवचनमि'त्यादौ सञ्ज्ञाविधाविति निषेधश्चरितार्थ इति क्व सामर्थ्यमित्येषा दिक्। **इत्याद्यनुवृत्तेरिति।** यद्यपि तदन्तांशाप्रवृत्तावपि 'प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादी'त्युपतिष्ठते इति परिभाषाबलेनापि पदसमुदायस्य पदत्वं वारयितुं शक्यम्, तथाप्यनुवृत्त्याऽपि निर्वाहप्रदर्शनपरमेतत्। 'सर्वस्य द्वे' इति सूत्रे कैयटेऽप्येवमेवोक्तम्। ननु इयानित्यत्रैकदेशविकृतन्यायेन स्थानिवद्भावेन वा प्रातिपदिकत्वं सुलभमत आह—**अत एवेति। इदं** सर्वमयुक्तं—प्रकृतिसत्त्वघटितस्य यस्माद्विहितस्तदादित्वस्य व्यपदेशिवद्भावसाध्यत्वात्। अवयवत्वतद्याप्यान्तत्वादित्वव्यवहारमात्रस्य तदतिदेशसाध्यत्वात्। अत एवासिद्धवत्सूत्रे भाष्ये 'अस्तनय्य गत' इत्यादावल्लोपस्यासिद्धत्वादयादेशाभावमाशङ्क्य व्याश्रयत्वेन समाहितम् त्वद्रीत्या त्वसिद्धत्वेपि स्वात्मगतलघुपूर्वत्वमादायायादेशसिद्ध्या तदसङ्गतिः। अत एव च हरिशब्देनादन्तत्वम्।

नन्वेवं 'पूर्वादिनिः' 'सपूर्वाच्चे'ति सिद्धे योगविभागो 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति परिभाषाज्ञापनार्थ इत्याकरासङ्गतिरिति चेन्न, सपूर्वादिति पूर्वशब्दस्य पूर्वावयववाचित्वात्, सपूर्वादित्यस्य प्रातिपदिकविशेषणत्वात्। एवमे'कगोपूर्वा'दित्यत्रापि पूर्वादित्यस्य सामर्थ्यात्पूर्वान्तादित्यर्थः। अन्यथा व्यस्तेऽप्यापत्तेः। 'इयन्मात्र'मित्यादौ त्व'न्तरङ्गानपि विधीन्बलिरङ्गो लुग्बाधत' इति न्यायेन 'यस्ये'ति लोपं बाधित्वा पूर्वं मात्रच्प्रत्ययस्ततो लोप इति न कश्चिद्दोषः। एवमस्यापत्यमिरेर्युवापत्यमायन इत्यादौ 'यञिञोश्चे'ति फक्सिद्धिरपि बोध्या। नन्वस्य मात्रचः फकश्चान्तरङ्गनिमित्तविनाशकलुक्प्रयोजकत्वाभाव इति चेत्सत्यम्, प्रक्रियायामुपसर्गसमानाकार इत्येतद्व्याख्यावसरे 'यस्माद्विहित' इत्यनेनाधिकव्यावृत्तिरेव न तु न्यूनव्यावृत्तिरिति शेखरोक्तस्थलेषु दोषाभावात्।

नन्वेवं हरिष्वित्यादौ सोः पदत्वापत्तिः, 'हलि सर्वेषा'मिति निर्देशेन 'सात्पदाद्यो'रित्यत्र सातिग्रहणेन चाधिकस्य यस्माद्विहितस्तदादेः सङ्ग्रहसम्भवे न्यूनस्यापि व्यावृत्तिकल्पनात्। 'सुमनायत' इत्यादौ तु पृथक्करणेन स्वादेः क्यङ्प्रकृतिघटकत्वासम्भवादधिकस्य सङ्ग्राह्यत्वासम्भवेन न्यूनव्यावृत्त्यभावः। एतेन व्यतिस इत्यादौ 'तिङ्ङतिङः' इति निघातो व्याख्यातः, 'असे' इत्यस्य स्थाने से इत्यादेशकल्पनाद्वाऽर्थवत एवादेशत्वादभावस्यानर्थकत्वेनादेशत्वासम्भवात्। हरिष्वित्यादावेकस्मिन्नित्यस्याभावेपि सोः पदत्वमुक्तरीत्या वारयितुं शक्यमित्येकस्मिन्निति व्यर्थमिति चेन्न,

१. बृहति=बृहच्छब्देन्दुशेखरे। क्षोदः=तत्त्वनिर्णयाय विचारः।

'हरिषु' इत्यादौ सोऽस्तु नैवं पदत्वं, 'हलि सर्वेषामि'ति निर्देशेन समहाये तत्प्रवृत्तेः। 'निजौ चत्वार एकाचः' इति भाष्यन्त्वभ्युपेत्यवादेन। ध्वनितञ्चेदम्—'आदेच उपदेशे' 'तास्यनुदात्ते'दित्यादौ भाष्ये। तत्र हि—'ढौकते' इत्यौकारस्य 'हत' इत्यादावकारस्यै-जन्तोपदेशत्वमकारान्तोपदेशत्वं व्यपदेशिवद्भावेनाशङ्क्य 'अथवना व्यपदेशिद्भाव' इत्युक्तम्।

❀ अभिनव-चन्द्रिका ❀

**अभ्युपेत्यवादेनेति**। इदं भाष्यं यथा सङ्गच्छते, मूलोक्तं च सर्वमसङ्गतमिति च—विस्तरेण परिभाषेन्दुचन्द्रिकायां निरूपितम्। न च 'ढौकत'इत्यादावौकारे एजन्तोपदेशत्वस्य हतइत्यादा-वकारेऽदन्तोपदेशत्वस्य व्यपदेशिवद्भावेनाशङ्कापरम्—'आदेच उपदेश'सूत्रस्थं भाष्यं विरुध्यते इति वाच्यं, तस्यैकदेश्युक्तित्वेनादोषात्। 'ढौ'इत्यत्रैजन्तत्वस्य, 'ह' इत्यत्रादन्तत्वस्य सत्त्वेन उपदेश-त्वस्य व्यपदेशिवद्भावेनानियतया तद्विहाय केवलौकारे अकारे च उभयधर्मातिदेशाशङ्काकरणेन तस्य

❀ चिदस्थिमाला ❀

समूलत्वमाह—**हरीति**। नैवं=व्यपदेशिवदित्यंशेन। यद्यपि लोकन्यायसिद्ध एवायमप्यर्थस्तथापि ज्ञापकमपि तदंशेऽस्तीत्याह—**हलीति**। निर्देशेन=तेनापि। नन्वेवं'निजौ चत्वार'इति भाष्यात्तन्निरिकारस्यासहायत्वा-भावेन तत्रैकाच्त्वानुपपादनादत आह—**निजाविति**। 'एकस्मि'न्नित्यस्यापर्यालोचनेन समहाये तत्प्रवृत्ति-मभ्युपेत्येत्यर्थः। **दित्यादाविति**नोभयपरामर्शः। तत्र हि=सूत्रद्वये हि। यथासङ्ख्यमन्वयः। प्रत्येकमन्व-यात्र चः। चस्त्वर्थे। **तदर्थ इति**। तथाचार्थवत्पदेनासहायत्वमेवोपलक्ष्यते, बोध्यबोधकभावसम्बन्धे मतुप्।

❀ सदाशिवभट्टीयम् ❀

ध्वनितश्चास्य तत्त्वम्वत्वन्नात्स्वार्थे इति प्रयोजनान्तरं वदता ग्रन्थकृता। न्यायसिद्धमप्यर्थं प्रमाणयति—**हलि सर्वेति**।

❀ विषमपदविवृतिः ❀

सभासन्नयनशब्दस्य वृद्धत्वाभावाय, दरिद्रातेरिवर्णान्तत्वाभावाय च तदावश्यकत्वात्। **समहाये इति**। असहायत्वं=मुख्यव्यपदेशभागघटकत्वं। नन्वेवं 'कुम्भकारेभ्य' इत्यादौ 'कृन्मेजन्त' इति सूत्रे भाष्येऽव्ययत्वमापाद्य सन्निपातपरिभाषया समाहितं—तदेतदसङ्गतम्, एकारस्य मुख्यै-जन्तत्वव्यपदेशभागघटकत्वादिति चेन्न, कृत्त्वसमानाधिकरणमुख्यैजन्तत्वव्यपदेशभागघटकत्वेना-सहायत्वस्य सूपपादत्वात्। अत एव खट्वेइत्यादौ व्यपदेशिवद्भावेन द्विवचनस्यैदन्तत्वा-त्प्रगृह्यत्वम्, द्विवचनत्वसमानाधिकरणे तदन्तत्वं व्यपदेशभागघटकत्वस्य तत्र सत्त्वात्। एतेन 'निजौ चत्वार एकाच' इति भाष्यमपि योजितं वेदितव्यम्। धात्वव्यवत्वविशिष्टैकाच्त्वव्यपदेशस्य निजावप्यमुख्यत्वेन तद्घटकेकारे मुख्यधात्ववयवत्वविशिष्टैकाच्त्वव्यपदेशभागघटकत्वस्य सत्त्वात्।

**ध्वनितश्चेदमिति**। समहाये व्यपदेशिवद्भावाप्रवृत्तिरित्येतत्प्रमेयमित्यर्थः। **असहाय एवेति**। यद्यपीयायेत्यादावपि प्रत्ययः सहायोऽस्त्येव, तथापि प्रकृतिघटकः स्वसजातीयः सहायो नास्ति—एतावतैवासहायत्वव्यपदेशः। 'एकाकी हयमारुह्य जगामे'त्यादौ विजातीयहयरूपसहायसत्त्वेपि तथा व्यपदेशदर्शनात्। तथाचार्थवता व्यपदेश इत्यत्रार्थवत्पदमर्थवत्सहचरितासहायत्वे लाक्ष-णिकमिति भावः।

'यो वर्णोऽर्थवांस्तेन व्यपदेशिवद्भावः, वर्णस्यार्थवत्त्वञ्चेयायेत्यादावसहाये एव, न तु प्रकृते—इति तदर्थः। एवञ्चैकस्मिन्नित्यस्यार्थवतेत्यनेनोक्त इति दिक्।

**हलोऽनन्तराः**। 'गर्गाः शतं दण्ड्यन्ता'मित्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव सञ्ज्ञा, न प्रत्येकम्। 'अनन्तरा' इत्युक्तेश्च। तस्य विशेषणताया एवौचित्यात्।

### ॐ अभिनव-चन्द्रिका ॐ

नत्त्वस्यावश्यकत्वाच्चेति दिक्। **समुदाये शतदण्डनवदिति**। उद्देश्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकविधेयतावत्त्वस्य सञ्ज्ञासु नियतत्वेन,-प्रकृते सञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदकसाहित्यपर्याप्त्यनुयोगितावच्छेदकं यद्धित्वं तदेव संयोगसञ्ज्ञापर्याप्त्यनुयोगितावच्छेदकमिति द्वयोरेव संयोगसञ्ज्ञेति भावः। **अन्तरा इत्युक्तेश्चेति**। अयं भावः—'अनन्तरा

### ॐ चिदस्थिमाला ॐ

अर्थबोधकशब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यते इति तदर्थ इति बोध्यम्। तदाह-**एवञ्चेति**। **स्यार्थवतेति**। एतेन 'योर्थवान् तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं-वर्णरूप एकाजिति **कैयटाद्युक्तमपास्तं**, तस्य भाष्यरीत्या मूख्यव्यवहारत्वात्। एवञ्चार्थवतेतिपरिभाषान्तरमित्यपास्तं तदाह-**इतिदिगिति**। **दण्डनवदत्रेति**। तत्र यथा समुदाये शतदण्डनं तत्तात्पर्यविषयस्तथा प्रकृतसूत्रेऽपि समूहस्यैव सञ्ज्ञा तथेत्यर्थः। ननु 'ब्राह्मणभोजन'न्यायेन प्रत्येकमेव विनिगमनाविरहात्कुतो नात आह-**अनन्तेति**। नच समूहसत्त्वे एव प्रत्येकं यथा स्यान्न तदभावे इत्येतदर्थमनन्तरा इति वाच्यं, बहुवचनेनैवोक्तार्थसिद्धेः,अन्यथा हलित्येव ब्रूयात्। नन्वेवमपि कदाचिदानन्तर्यस्य समूहे सत्त्वेन तमादायान्यत्रातिप्रसङ्गस्तदवस्थ एवात आह-**तस्येति**। आनन्तर्यस्येत्यर्थः। **एवेनो**पलक्षणत्वव्यवच्छेदः। सम्भवतीति न्यायादिति भावः। **कैयटकौस्तुभदण्ड्याद्युक्ति** खण्डयति—

### ॐ ज्योत्स्ना ॐ

**औचित्यमदिति**। अविद्यमानमन्तरं वर्णशून्यकाल एषामिति वा, अविद्यमाना अन्तरा मध्ये वा एषामिति—समासद्वयेऽपि संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात्—येषां वर्णशून्यकाल-

### ॐ सदाशिवभट्टीयम् ॐ

**हलोन**। ननु ब्राह्मणभोजनन्यायेन प्रत्येकमेव किं न स्यादत आह—**अनन्तरेति**। अयम्भावः—हलित्येकवचनेनैव वर्णग्रहणे जातिग्रहणात् हलन्ताच्चेत्यत्रेवाजव्यवहितहल्समुदायस्य सिद्धौ समूहबोधकैकशेषबोधकं बहुवचनं ब्राह्मणभोजनन्यायेन प्रत्येकं सञ्ज्ञायामनर्थकं स्यात्। ननु वर्णग्रहणे जातिग्रहणेपि लिडित्यत्रासमुदायेपि प्राप्नोत्यतः समुदाये एव प्रत्येकं यथा स्यात् केवले माभूदित्येवमर्थं बहुवचनमिति चेत्तत्राह—**अनन्तरेति**। बहुवचनेन केवलव्यावृत्तावनन्तरग्रहणं व्यर्थमेव स्यात्, अतोऽनन्तरग्रहणेनैव केवलव्यावृत्तावतिरिच्यमानं बहुवचनं प्रकृतार्थसाधकमेव। ननु केवलेपि कदाचिदानन्तर्यस्य दृष्टत्वेन कथमनन्तरा इत्यनेन तद्वारणमत आह—**तस्य विशेषणतेति**।

### ॐ विषमपदविवृतिः ॐ

**हलोनन्तराः**। नन्वानन्तर्यस्योपलक्षणत्वे एकस्यापि हलो हलन्तरानन्तर्योपलक्षितस्य स्यादेव सञ्ज्ञा, उपलक्षणत्वञ्च सञ्ज्ञिकोट्यप्रविष्टे सति सञ्ज्ञिव्यावर्तकत्वमित्याशङ्क्याह-**विशेषणताया एवेति**। विशेषणत्वञ्च सञ्ज्ञिकोटिप्रविष्टत्वम्। यथोक्तं **मधुसूदनेन** "-सर्पज्ञानस्य भयकम्पादिजनकत्वे सर्पस्यापि तज्जनकत्वम्। सर्पादेर्ज्ञानविशेषणत्वसम्भवे उपलक्षणत्वायोगा"दिति। तत्रोपलक्षणत्वञ्च—भयादिजनकव्यावर्तकत्वे सति भयादिजनककोट्यप्रविष्टत्वं, **वस्तुतस्त्वे**'तदनन्तरो ब्राह्मणो भोज्यता'मित्युक्ते आनन्तर्यस्य तत्प्रतियोगिनश्च कार्यान्वयादर्शनात्,

यत्तु 'संयुज्यन्ते वर्णा यत्रेत्यन्वर्थसञ्ज्ञाबलात्न प्रत्येकं संज्ञा' इति, तन्न । 'घटपटौ संयुज्येते यत्रे'त्यादौ संयुज्यमानपदार्थातिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्युक्तत्वेन तद-तिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य सञ्ज्ञापत्तावनिष्टापत्तेः । महासञ्ज्ञा तु प्राच-

❀ अभिनव-चन्द्रिका ❀

इन्यस्य अव्यवहिता इत्यर्थः । तत्र—व्यवहितत्वं—यत्किञ्चित्पदार्थविशिष्टद्वित्वाश्रयत्वम् । वं० 'स्वावधिकाव्यवहितोत्तरत्वसामानाधिकरण्य' 'स्वावधिकाव्यवहितपूर्वत्वसमानाधिकरण्यो'भय-सम्बन्धेन, तथा च तादृशव्यवहितत्वं द्वित्वनिष्ठमेवेति 'संयोगवद्विप्रयोगोपि विशेषावगतिहेतु'-रिति न्यायेन 'अवत्सा आनीयता'मित्यत्रेवाव्यवहितभिन्नौ द्वावेव गृह्येते इति द्वयोरेव संयोगसञ्ज्ञेति ।

❀ चिदस्थिमाला ❀

**यत्त्विति** । यत्र=समुदाये । **सञ्ज्ञेति** । संयोग इति सञ्ज्ञेत्यर्थः । **कस्यैवेति** । समूहस्यापि प्रका-रतया वर्तिपदार्थत्वादिति भावः । शुद्धतदन्याकाशग्रहणे बाधादाह—**तद्घटितेति** । परमार्थतः पदस्यासत्त्वादाह—**वाक्येति** । नन्वेवं महासञ्ज्ञाकरणं व्यर्थमत आह—**महेति** । यद्यपि संयोगा-न्तौ यस्येत्येवं व्याख्यानेन लोपः सुवारस्तथापि वृत्तावुपसर्जने सङ्ख्याभानाभावेन तथा व्याख्यानमेव

❀ ज्योत्स्ना ❀

सम्भावना, मध्यवृत्तिवर्णसम्बन्धित्वे सम्भावना वा, तेषां वर्णशून्यकालाभावे मध्यवृत्तिवर्णसम्बन्धि-त्वाभावे वा सञ्ज्ञेति समुदायस्य सा विज्ञायत इति भावः । **कैयटाद्युक्तं दूषयितुमुपन्यस्यति— यत्त्विति । अनिष्टापत्तेरिति** । वस्तुतस्तु 'द्रष्टृदृश्ययोः संयोगो हेयहेतु'रिति योगसूत्रादौ सम्पूर्वस्य युजेः सम्बन्धमात्रार्थकत्वदर्शनात्समुदायसमुदायिनोः सम्बन्धः संयोगपदेनेह विवक्षितः, स च समुदायातिरिक्तसमुदायिप्रतीतिं नान्तर्भावयति, 'व्रीहयः संयुज्यन्तेऽस्मिन्राशा'वित्यत्र यथेति

❀ सदाशिवभट्टीयम् ❀

**अतिरिक्तस्यैवेति** । अत एवैकाजित्यादिव्यवहारोऽसहाये भेदारोपेण कृतो भाष्ये, तदेतन्मन्यते 'व्यपदेशिवदेकस्मि'न्निति । प्रकृते तु ससहायत्वान्न सः, अन्वर्थत्वे चाभेदबाधादनन्तरहल्समुदायवति विशिष्टलक्षणेतिभावेनाह—**पदेति** । ननु बाधात्ससहाये व्यपदेशिवद्भाव एवाङ्गीक्रियते न लक्षणेति चेन्न, लिडित्यत्रापि व्यपदेशिवद्भावेन सञ्ज्ञापत्तेः, सन्ततापेक्षयाऽधिकमात्राणां दृष्टार्थकत्वकल्पने गौरवाच्च ।

**वाक्येति** । पदभिन्नपदघटितसमुदायोत्र वाक्यशब्देन विवक्षितस्तेन याहि माधव उपेक्षसे किं मामित्यादौ वोपेक्षस इत्यादेः संयोगत्वे थकाराकारस्य गुरुत्वे प्लुतापत्तिरिति भावः । यद्वाऽत्र बहुवचनेन समूहस्य सञ्ज्ञाविधानान्न ब्राह्मणभोजनन्यायावसर इति सम्भवेदुपेक्षा, यदि तद्बहुत्वे स्यात्, प्रकृते जात्याख्यायामित्यनेनैकस्मिन्नपि तस्य सम्भवादत आह—**अनन्तरा इत्युक्तेश्चेति** । जातौ चानन्तर्यबाधात्तस्य वैयर्थ्यमिति भावः । ननूपलक्षणत्वेन तत्सार्थक्यमत आह—**विशेषणेति** । **अनिष्टेति** । 'व्रीहयः संयुज्यन्तेऽस्मिन्राशा'वित्यत्र वर्तिपदार्थस्यैवान्यपदार्थत्वाङ्गीकारेपि विनिगमकाभाव इति भावः ।

❀ विषमपदविवृतिः ❀

आनन्तर्यविषयविषयिभावस्वस्वामिभावादिप्रतियोगिनामुपलक्षणत्वमेव । यत्र हि विशेषणत्वो-पलक्षणत्वयोर्दर्शनं तत्र विशेषणत्वमेव न्याय्यमिति **न्यायविदः** । न हि आनन्तर्यादिप्रतियोगिनां विशेषणत्वं कुत्रापि तान्त्रिकाणां सम्मतम् । एतेन—सर्पादेर्भयजनकत्वोक्तिरप्यपास्ता ।

**व्युत्पन्नत्वेनेति** । इदमप्ययुक्तं—'व्रीहयः संयुज्यन्ते यत्र राशा'वित्यादावुक्तनियम-व्यभिचारात् । यद्यपि 'घटपटौ संयुज्येते यत्रे'त्यत्र घटपटातिरिक्तस्यैवान्यपदार्थतया प्रतीतिः,

मनुरोधादेव। तेन 'सुदृषद्ब्राती'त्यत्र संयोगान्तलोपो नेत्यन्यत्र विस्तरः।

'हल'इति बहुवचनं सौत्रम्। यद्वा—हलौ च हलश्चेत्येकशेषः—'स्वरितात्संहितायामि'-ति सूत्रे'ऽनुदात्ताना'मिति पदे नथैकशेषस्य भाष्ये करणात्। तेन द्वयोरपीति—'शिक्षे'त्यादौ'गुरोश्च हलः' इति अप्रत्ययः सिद्ध्यति। यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव

ॐ अभिनव-चन्द्रिका ॐ

सौत्रमिति—वस्तुतस्तु हलौ च हलौ च हलौ चेत्येकशेषेण द्वयोरेव संयोगसञ्ज्ञेति पक्षेपि

ॐ चिदस्थिमाला ॐ

दुर्वचं, तदाह—**अन्यत्रेति**। भाष्यादावित्यर्थः। नन्वेवं बहूनामेव स्याद्द्वयोर्न स्यादत आह—**हल इतीति**। यत्तु जातौ बहुवचनमिति**दण्ड्या**दयस्तन्न। तथा सति प्रत्येकापत्तेरवारणात्, विशेषणान्वयासम्भवाच्च,व्यक्तिद्वारा तदन्वये तदाश्रयणवैयर्थ्याच्च, सूत्रस्थ प्रत्याख्यानाच्चात आह-**सौत्रमिति**। अनेकत्वार्थकमित्यर्थः। तथाचान्यत्रैवं प्रयोगो नेति भावः। सौत्रत्वकल्पने गौरवादाह—**यद्वेति**। यद्यपि नत्रैकस्याप्युल्लेखस्तथाप्यनन्तरा इत्यादिवलात्तथा प्रकृते नेष्टं तदाह—**हलौ चेति**। **द्वयोरिति**। 'शुद्धे'-त्यादिः। अपिर्बहुस्थलीयद्विसमुच्चायकः। **कैयटकौस्तुभदण्ड्या**द्युक्ति खण्डयितुमाह—**यत्रापीति**।

ॐ ज्योत्स्ना ॐ

शक्यत एव **कैयटोपाध्याय**प्रभृतीनामाशय इति सदसद्विवेकिभिर्विचारणीयम्। 'हल इति जातौ बहुवचनं, जात्याख्यायामिति वचना'दित्युपाध्यायाः, एवं तु लाघवादेकवचनेनैव निर्देश उचित इत्यस्वरसं तत्र मत्त्वाह—**बहुवचनं सौत्रमिति**। व्यक्तिपक्षे प्याह—**यद्वेति**। ननु 'संस्वर्यते' 'गोमान् करोति''निर्ग्लान' इत्यादौ बहूनामपि संयोगसञ्ज्ञायाः फलं द्वयोः सा माभूदिति गुणादिकमेषु

ॐ सदाशिवभट्टीयम् ॐ

किञ्च समूहस्यैव प्रकारतया वर्तिपदार्थत्वेन व्यपदेशिवद्भावे तथा व्यवहारेपि प्रकृते ससहायत्वान्न तथेति बोध्यम्। ननु द्वयोर्न स्यादत आह–**हल इति**। आश्रयगतं बहुत्वं धर्मे आरोप्य जात्याख्येत्यस्य प्रत्याख्यानात्। प्रकृते आरोपेण तत्त्वाङ्गीकारेपि पुनरपि द्वयोर्न स्यादतः—**सौत्रमिति**। अनर्थकमिति भावः। एकहलस्तु न, आनन्तर्यमित्युक्तेः। **यद्वा हलौ च हलश्चेति**। उभयोरेकशेषः,प्राचामनुरोधात्। स्वमते-बहूनां संयोगत्वे फलाभावस्य वक्ष्यमाणत्वादुभयोरेकशेषं न फलम्। किन्तु हल्च हल्च हल्च हल इत्येव, तत्र त्रयाणां समूहे फलाभावात्तदवयवेऽवतरन्ती द्वयोः समूहे पर्यवस्यति, नत्वेकस्मिन्–अनन्तराइत्युक्तेः। हलावित्येव सिद्धे बहुवचनं तु व्यर्थमेव, मात्रालाघवार्थं वा, 'हलावनन्तरा'वित्युक्तेरेकमात्रागौरवादिति

ॐ विषमपदविवृतिः ॐ

'व्रीहयः संयुज्यन्ते यत्रे'त्यत्र व्रीहीणामेव तथा प्रतीतिस्तथापि प्रकृते हलां विशेष्यत्वेन व्रीहयः संयुज्यन्ते यत्रेतिवदेव व्यवस्था युक्ता। **तद्घटितेति**। हल्पदस्योक्तव्युत्पत्त्यनुरोधेन हल्पदं तद्घटिते लाक्षणिकं स्यादिति भावः। **हलौ च हलश्चेति**। 'स्वरितात्संहिताया'मिति सूत्रस्थभाष्यप्रामाण्येन द्विवचनबहुवचनान्तयोरेकशेषः, शिष्यमाणं च द्वित्वविशिष्टहलोर्बहुत्वविशिष्टहलां च बोधकमिति भावः। **फलाभावादिति**। भूयादित्यत्र तु 'स्को'रिति सुटो निवृत्तौ पश्चात्तेनैव यासुटस्सस्य निवृत्तिरिति भावः। इदमप्ययुक्तं—मङ्क्त्यादौ संयोगादिलोपानापत्तेः, अन्त्यात्पूर्वो मस्जेमिदिति वार्तिकेन जकारात्पूर्वं नुम्प्रवृत्तेः। नच जकारे झलि परतो द्वयोः संयोगमाश्रित्य सलोपः सुलभः, सङ्गीत्यधिकारेण झलादौ प्रत्यय एव तत्प्रवृत्तेः। 'भूयास्ता'मित्यादौ तु द्वयोः सकारयोः

न बहूनाम्, झलि परे संयोगादिलोपविधानात्। 'बहूनामपी'ति चिन्त्यमेव, फलाभावात्। तत्र-तत्राङ्गपदधात्ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम्। आनन्तर्यं—व्यवधानाभावो, व्यवधानञ्च विजातीयेनैवेत्याशयेनाह—

॥ अभिनव-चन्द्रिका ॥

बहुवचनमुपपद्यते। फलाभावादिति। न च मग्न इत्यादौ 'मस्जिनशो'रिति नुमि बहूनां संयोगसञ्ज्ञाभावे 'स्कोः'रिति लोपो न स्यादिति वाच्यं, मकारजकारयोर्मध्ये नकारसत्त्वेपि अन्तकर्तृकव्यव-

॥ चिदस्थिमाला ॥

एवंव्यवच्छेद्यमेवाह—न बह्विति। आनर्थक्यापत्तेरिति शेषः। एतद्व्यवच्छेद्यत्वं द्वयोर्बोध्यम्। तत्र हेतुमाह—झलीति। यदि तत्र बहूनामेव स्यात्तदा झलि परे संयोगादिलोपविधानं व्यर्थं, नहि तत्र परे तत्सम्भवः, तत्सहितस्यैवैतत्प्रवृत्तेरिति भावः। नन्वेवं नहि बहूनामेवेति न वाच्यं, बहूनामपीति तु वाच्यं, पदान्तसंयोगमादायैव तत्र फलसम्भवादत आह—बहूनामपीति। तदुक्तिरेवेयम्। अपिरन्वर्थत्वादिसमुच्चायकः। ननु फलमुक्तमेव, न च झलीत्येव तत्र सिद्धं, तदन्यत्र तदावश्यकत्वादत आह—तत्रेति। 'वान्यस्ये'त्यादिः। कार्याणां तत्तदधिकारस्थत्वा'त्संयोगादे'रित्यादावाद्यन्तशब्दयोरवयववाचितया बहुव्रीहिणा तदवयवसंयोगस्यैवाश्रयणमित्यङ्गादेरादावन्ते वा व्यञ्जनत्रयाद्यभावात्तत्र फलाभावात्तदप्रवृत्तौ द्वयोःकथं न स्यादिति

॥ ज्योत्स्ना ॥

न स्यादत आह—तत्र तत्रेति। 'ऋतश्च संयोगादेर्गुणः' 'संयोगान्तस्य लोपः' 'संयोगादेरातो धातोर्यण्वतः' इत्यादावित्यर्थः। तादृशस्येति। 'मस्वयत' इत्यादौ मकारसकारवकारप्रभृतिसंयोगाश्च नाङ्गाद्यवयवा इति मत्यामपि बहूनां सञ्ज्ञायां फलाभावः स्पष्ट एव। न च बहूनामपीतिसामर्थ्यादुक्तलक्ष्येषु स माभूत्, 'स्वयंत' इत्यादावुपसर्गयोगाभावे तत्तद्विधीनां चारितार्थ्यात्, 'बहूना'मित्यस्य चायमर्थः,—केषुचिल्लक्ष्येषु बहूनामेव केषुचिल्लक्ष्येषु द्वयोरेवेतीति वाच्यम्, विध्यस्पृष्टस्य प्रयोजनत्वाभावात्, अङ्गपदधातुभिः संयोगस्य विशेषणात्, सामर्थ्यात्तथा कल्पनात्तदाह—भाष्ये स्पष्टमिति। एतेन—'षस सस्ति स्वप्ने' इत्यदादौ पठ्यमानस्य 'संस्ति, सस्ति, संस्तः'—इत्यादौ 'स्कोः'रितिलोपाभावार्थं बहूनां सञ्ज्ञेत्यपास्तम्। नचैवमपि वल्गयत्यादिभ्यः क्विपि संयोगादिलोपः प्रयोजनं स्यादिति वाच्यम्, अल्लोपणिलोपयोः स्थानिवद्भावात्, 'पूर्वत्रासिद्धे न स्थानिव'दित्यस्य संयोगादिलोपे प्रतिप्रसवात्, 'क्वौ लुप्त' मित्यस्य चासार्वत्रिकत्वादित्याहुः। शेषनारायणस्तु—'बहूनां समवाये बहूनामेव संयोगसञ्ज्ञा, भाष्येऽविद्यमानमन्तरमेषां, अविद्यमाना अन्तरा एषा'मिति विग्रहद्वयेन बहूनां द्वयोश्च सञ्ज्ञायाः सूत्रेण क्रोडीकारमुक्त्वा—'एवमपि बहूनामेव प्राप्नोति, यान् हि भवानत्र द्वयोरिति षष्ठ्या प्रतिनिर्दिशति एषामन्येन व्यवायेन भवितव्य'मिति व्यवस्थापनात्, संस्वयत इत्यादौ तूक्तरीत्या सामर्थ्याद्द्वयोरेवे'त्याह।

॥ सदाशिवभट्टीयम् ॥

बोध्यम्। चिन्त्यमेव फलाभावादिति। ननु मङ्क्ता मङ्क्तुमित्यत्रान्त्यात्पूर्वमिति संयोगादिलोपः फलमस्त्येव, न च जकारे झलि सः, सर्वातिवार्तिकेन झलादौ प्रत्यये तद्विधानादिति चेन्न। मस्जोपि मिदन्त्यात्पर एवास्तु, नचैवं मग्न इत्यादौ नलोपानापत्तिरिति वाच्यं, नलोपविधायके एव मङ्क्त्वेत्युक्त्या दोषाभावात्। यद्वा नुम विधायके एव योगविभागोस्तु, नशो झलि मस्जेः स इति। मस्जेः सकारस्य नुमादेश

॥ विषमपदविवृतिः ॥

श्रवणमिष्टमेव। एवञ्च सति 'त्र्यादिषु वर्णेषु संयुक्ते'त्विलाद्यमियुक्तव्यवहारा अपि सङ्गच्छन्ते इत्येषा दिक्। इति तूचितेति। अग्भिरित्युक्तावकप्रत्याहारसंशयापत्तिरिति भावः। वस्तुतस्तु-

१. महाभाष्यटीका-( सूक्तिरत्नाकर- ) कर्त्ता।

**अज्भिरिति** । अत्र कुत्वं न्याय्यम् । अत एव हयवरट्सूत्रे—'अचोऽक्षु' इति भाष्यप्रयोगे कुत्वं दृश्यते । 'स्वैरव्यवहिता' इति तूचिता वृत्तिः । हलः किम्? तितउदेव । अत्र 'गुरो'रिति प्लुतः स्यात् । अनन्तराः किम्? द्रप्सम्? अत्र सकारमकारयोः संयोगत्वे 'स्को'रिति लोपः स्यात् ।

---

॥ चिदस्थिमाला ॥

भावः । चोऽभावादित्यग्रे योज्यः । द्वयोरकरणे तु गोमान्करोतीत्यादौ संयोगान्तलोपो न स्यादित्यादि बोध्यम् । अत्र प्रयोगे अकः प्रयोगभ्रमवारणायाह—**अत्रेचेति । तितउदेवेतीति** । तितउना दीव्यतीत्यर्थः । अत्र हल्ग्रहणाभावे इति अनन्तरा इति आवश्यकं बहुव्रीहिणा च समूहस्यैव ग्रहणे मानाभावादज्झल्समूहस्य 'तउ' इत्यस्यापि संयोगसञ्ज्ञायां तत्र परे तीतिकारस्य 'गुरो'रिति प्लुतापत्तिस्तदाह—**अत्रेति** । यदि तु अच एवान्यपदार्थत्वेन गृह्यन्ते इति दुराग्रहस्तर्हि 'तितउभ्या'मित्यादौ संयोगान्तलोपापत्तेर्हल्ग्रहणापकर्षपक्षेऽभावेन कौस्तुभायुक्ततत्त्यागेऽपि 'राम अइउणं पश्ये'त्यादौ दोषो बोध्यः। कौस्तुभदण्ड्याद्युक्ते 'पनम' मित्यादौ 'स्को'रित्यत्र 'झलो झलि'त्यतो झलीत्यनुवृत्तिपक्षेऽपि सिद्धान्ते तयोर्झलः परयोर्लोपविधानेन दोषाभावादाह—**द्रप्समिति** । सिद्धान्ते तु नत्र तदसम्बन्धेन तदपि प्रत्युदाहरणं बोध्यम् । इदं यथाश्रुते बोध्यं, यदि तु बहुवचनेनैवोक्तार्थलाभस्तदा समूहसञ्ज्ञार्थमेवं-

॥ ज्योत्स्ना ॥

अत्र पक्षे तु वक्ष्यतेः क्विपि 'क्वौ लुप्त'मिति स्थानिवत्त्वनिषेधात्सकारस्य संयोगादिलोपो बहूनां सञ्ज्ञायाः फलं बोध्यमित्यलम् । **कुत्वं न्याय्यमिति** । अत्र वदन्ति—'न मुन' इत्यत्र 'ने' ति योगविभागात्क्वचित्पूर्वत्रासिद्धत्वाभावात्परत्वाज्जश्त्वेनेह कुत्वबाधः, जश्त्वोत्तरं तु न कुत्वं, सकृद्गतिन्यायात् । यद्वा-गव्यूतिशब्दे वलोपाभावार्थं स्वप्रदर्शितरीत्या सञ्ज्ञात्वभङ्गापत्तेर्न कुत्वं, सति तस्मिन्सञ्ज्ञान्तरत्वप्रतीतेस्तत्प्रच्छादनात् । अत एवा'ल्पाच्तर'मित्यादिनिर्देशाः सङ्गच्छन्ते । 'अचोऽक्षु' इति भाष्ये तु तुल्यजातीयांस्तुल्यजातीयेषूपदिशतीति पूर्वं प्रक्रान्तत्वात् हलो हल्ष्वित्युत्तरग्रन्थेनैकधर्मावच्छिन्नानां तेषां ग्रहणौचित्याच्च सञ्ज्ञान्तरप्रतीत्यभावेन तदप्रच्छादनात्कुत्वमिति । केचित्तु सञ्ज्ञापूर्वकस्य विधेरनित्यत्वादेवमादौ कुत्वं नेति व्याचक्षते ।

**प्लुतः स्यादिति** । प्रत्येकं संयोगसञ्ज्ञापक्षे उकारे संयोगे परतः पूर्वतकारस्येत्यर्थः। समुदितानां संज्ञेति पक्षे त्वत्रैव संयोगान्तलोपस्योपलक्षणमिति बोध्यम् । यत्तु 'हल्ग्रहणाभावेऽज्झलसमुदायस्य संयोगसञ्ज्ञाविधानात्तस्मिन्परतस्तिशब्देकारः प्लुतः स्यादिति समुदितानामिति पक्षेपीदं चोद्यं सम्यगेवे'ति, तन्न, अनन्तरा इत्युक्तेर्विजातीयव्यवधौ तदनिष्टेः, विजातीयेनाव्यहिता अचो हलो वा संयोगसञ्ज्ञाः स्युरिति सूत्रार्थादिति दिक् । **द्रप्समिति** । 'द्रप्सं दधि घनेतर' दित्यमरः । भाष्ये तु 'पनस' मित्युदाहृतं तदिह किमर्थमुपक्षितमिति चिन्त्यम् । यत्तु बृहच्छेखरे 'स्कोरिति

॥ सदाशिवभट्टीयम् ॥

इत्यर्थः, भ्रस्जो रोपधेत्यत्रेव सकारस्य निवृत्तिरिति बोध्यम्। **प्लुतः स्यादिति**। यत्तु **पाठकः**—'समुदितानामिति पक्षेपीदञ्चोद्यंसम्यगेवे' त्यन्तमनूद्य तत्रानन्तरा इत्युक्तेर्विजातीयव्यवधौ तदनिष्टेरिति, तच्चिन्त्यं, तकाराकारोकारयोर्व्यवधानाभावात् । तितउ इन्द्र इत्यादावसंहितया निर्देशे 'अउ' इत्यनयोः संयोगसञ्ज्ञावारणेनानन्तरा इत्यस्य सार्थक्याच्च । **द्रप्समिति** । भाष्ये तु 'पनस'मित्युदाहृतं, झलपदानुवृत्त्या झलन्तसंयोगादे-

॥ विषमपदविवृतिः ॥

'अल्पाच्तरं' 'नाज्झलौ' 'अजादी गुणवचनादेव' 'ऊकालोज्झस्व''उपदेशे ऽजनुने'त्यादिनिर्देशेनाच्पदेन पदान्ते कुत्वाभावकल्पनेनादोषात्, सुप्प्रत्ययपरतस्तु कुत्वं भवत्येव, 'अक्षि'ति भाष्यप्रयोगात् । अत एवाच्सन्धिग्रहणेन ग्रहणमच्कार्याणि यथा स्युरित्यादयो भाष्यकाराणामभियुक्तानां च प्रयोगा उपपद्यन्ते । **तितउदेवेति** । इदं प्रत्येकं सञ्ज्ञापक्षे, समुदाये संयोगसञ्ज्ञायां तु

**संयोगे गुरु** । 'भेत्ते'त्यादौ गुणस्तु क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणाद्बोध्यः । **इति सञ्ज्ञेति** । प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां सञ्ज्ञानां प्रकरणमिति=समाप्तमित्यर्थः । तेनाम्रेडितप्रगृह्यभसञ्ज्ञालोपसञ्ज्ञाद्यनुपन्यासेऽपि न क्षतिः ।

ॐ अभिनव-चन्द्रिका ॐ

धानशून्यत्वस्य सत्त्वेन तयोः संयोगसञ्ज्ञायां बाधकाभावात् । **भूतपूर्वलघूपधेति** । स्यादेतत्–, भूतपूर्वेति लघौ विशेषणमुत लघूपधांशे ? नाद्यः, गुतेत्यादौ गुणापत्तेः । नाप्यन्त्यः, इन्दाञ्चकारेत्यादौ गुणापत्तेरिति चेन्मैवं, क्नोः किलेन प्रकृत्यवयवप्रत्ययावयवोभयारब्धसंयोगनिमित्तिका गुरुसञ्ज्ञा लघुसञ्ज्ञां न बाधत इति कल्पनेनादोषात् । अन्येतु क्नोः कित्त्वेन प्रत्ययोपदेशकाले यो लघूपधस्तस्यैको गुण इति भेत्त्वादौ न दोषः । न च नोनोर्ति-मोमोर्तीत्यादौ 'रात्लोप' इति

ॐ चिदस्थिमाला ॐ

ननु, वस्तुतत्वं तु **प्रभातोऽ**वगन्तव्यमिति बोध्यम् । ननु भिद् नेत्यवस्थायां गुरुत्वात्कथं गुणोऽत आह—**भेत्तेत्येति** । ननु अन्यत्र साम्प्रतिके सति अत्र तदाश्रयणमयुक्तमत आह—**क्नोरिति** । **लघूपधेति** । भूतपूर्वलघूपधस्यापि ग्रहणादित्यर्थः । **सन्धीति** । आद्यव्यावर्त्यमाह—**आम्रेडितेति** । द्वितीयव्यावर्त्यमाह—**प्रगृह्येति** । क्रमस्य विवक्षितत्वान्न भस्य पूर्वन्निदेशः । 'अष्टाध्यायीसूत्रविहिते'त्यादिः । उभयसन्धानप्रयुक्तविलक्षणातन्यथासिद्धकार्योनाधारसकारणानामित्यर्थः । यत्तु लोपसञ्ज्ञा नोपन्यस्ता, अन्वर्थत्वादेवार्थबोधेन शक्तिग्राहकत्वात्, तत्रन्तु प्रसक्तादर्शनस्यैव मा यथा स्यादित्येतदर्थमिति, तन्न, अतिप्रसङ्गापत्तेरतः पृथगाह–**लोपेति** । आदिना वृद्धसञ्ज्ञादिपरिग्रहः । न क्षतिः=न न्यूनता । तथा च सञ्ज्ञा-

ॐ ज्योत्स्ना ॐ

सूत्रे पञ्चम्यन्तस्य झल इत्यनुवृत्तिपक्षे झलः परयोः स्कोर्लोप इत्यर्थात्पनसमित्यत्र तदप्राप्तेर्द्रप्समित्युदाहरण' मित्युक्तं, तन्न, 'भ्रष्टः' 'शक्ते'त्यादौ लोपाप्रसङ्गात्, फलाभावाच्च । 'संयोगान्तस्य लोप' इति सूत्रे भाष्यकैयटानुरोधात्तु झल इति षष्ठ्यन्तानुवृत्तिस्तत्रेति लभ्यते । फलन्तु 'काक्यर्थं, वाश्यर्थमित्यत्र संयोगादिलोपाभावः, संयोगादिलोपलले'त्यत्र च संयोगादिलोपग्रहणं न कर्त्तव्य मिति पक्षे परं 'पनसा'दित्युदाहरणीयमिति तु वक्तव्यम् । **भूतपूर्वलघूपधग्रहणादिति** । वस्तुतः समप्रवृत्तया गुरुसञ्ज्ञया लघुसञ्ज्ञाया बाधेऽप्यन्तरङ्गायास्तस्या बाधे मानाभावो 'ऽपवादो

ॐ सदाशिवभट्टीयम् ॐ

लोपविधानेन प्रकृते तद्वारणे तु सदित्यादौ तदापत्तिर्बोध्या । **कित्वेनेति** । 'अपवादोपी'ति न्यायस्य तु नायं विषयः, अपरनिमित्तकत्वेन सर्वत्रैवान्तरङ्गत्वादन्यत्र चारितार्थ्याभावात् । **भूतपूर्वलघूपधेति** । भूतपूर्वो यो लघुस्तदुपधेत्यर्थः । धर्मिग्राहकमानेन लघुत्वांशेप्युपधात्वेपि तदाश्रयणे मानाभावात् । **एतेन** कुण्डति व्युच्छतीत्यादावागमप्रवृत्तेः पूर्वं लघुत्वसत्त्वादङ्गविशेषणत्वेनुमितस्य गुणापत्तिरित्यपास्तम् । नन्वेवमपि हरिमेतीति हरीत्, स इवाचरति हरीततीत्यादावतिप्रसङ्ग एवेति वाच्यं, हलन्तेभ्य आचारक्विपोऽनभिधानात्, मौनपूर्विकलघुत्वाश्रयणेपि स्थानिद्वारकतदाश्रयणे मानाभावाच्च । **सन्धिकार्येति** । टिसञ्ज्ञा तु न तथा, तत्र

ॐ विषमपदविवृतिः ॐ

वाच्ये संहिताया अविवक्षायां तितउ आगच्छेत्युदाहर्तव्यम् । न च संहिताया अविवक्षायां सन्निकर्षाभाव इति वाच्यम्, एवमपि 'तितओ इती'त्युदाहरणसम्भवात् । अत्र हि 'संम्बुद्धौ शाकल्यस्ये'ति प्रगृह्यत्वम् । **लोपसञ्ज्ञेति** । यद्यपि (लोपसञ्ज्ञा) 'एतत्तदो' 'रोरी'त्यादिसन्धिकार्योपयोगिनी लोप-

'अ अ' इत्याद्युपन्यासस्तु प्रासङ्गिकः ॥ इति सञ्ज्ञाप्रकरणम् ॥

❀ अभिनव-चन्द्रिका ❀

लोपे प्रत्ययोपदेशकाले लघूपधत्वाभावाद्गुणो न स्यादिति वाच्यं, यङ्लुकश्छान्दसत्वेन छन्दस्यापाद्यमानरूपाभावात् । न चैवमपि तुर्विधातोर्वनिपि 'लोपो व्यो'रिति लोपे तोर्वेत्यादौ गुणो न स्यात्प्रत्ययोपदेशकाले लघूपधत्वाभावादिति वाच्यं, 'लोपो व्यो'रिति सूत्रे वकारप्रत्याख्यानपरभाष्यप्रामाण्येन एतेषामनभिधानादित्याहुः । 'भूतपूर्वो यो लघुस्तदुपधस्येत्येवार्थः' न च गुतेत्यादौ गुणश्शङ्क्यः, 'गाङ्कुटादिभ्य'इत्यत्र विहितविशेषणस्वीकारेण ङादेशस्य क्ङित्वात्क्ङिति-चे'ति निषेधादिति परे । ❀ **इति सञ्ज्ञाप्रकरणम्** ❀

❀ चिदस्थिमाला ❀

नामैवेदं प्रकरणमित्यर्थो न तु सञ्ज्ञानामिदमेवेतीति बोध्यम् । एतेन 'अइउणि'त्याद्युपन्यासोऽयुक्त इत्यपास्तं, तेषां सञ्ज्ञासूत्रत्वस्य प्रागुक्तत्वाच्चेति दिक् । ❀ **इति सञ्ज्ञाप्रकरणम्** ❀

❀ ज्योत्स्ना ❀

यद्यन्यत्रे' ति न्यायादन्तरङ्गस्य परेण बाधनाच्च न परत्वेनापि स इति तत्त्वम् । **न क्षतिरिति** । सौत्रसन्ध्युपयोगिनीनामित्यपि विशेषणीयम्, एतेन शकन्ध्वादिपररूपोपयोगिन्याष्टिसञ्ज्ञाया अनुक्त्या दोष तादवस्थ्यमिति प्रत्युक्तम् । ❀ **इति सञ्ज्ञाप्रकरणम्** ❀

❀ सदाशिवभट्टीयम् ❀

टिपदानुक्तेरिति शिवम् । ❀ **इति शेखरविवृत्तिसंग्रहे सञ्ज्ञाप्रकरणम्** ❀

❀ विषमपदविवृतिः ❀

सञ्ज्ञा । यदि च सन्धिकार्ये कार्यितया निमित्ततया वा नोपयोगिनी सा सञ्ज्ञेति ब्रूषे, तर्हि वृद्धिसञ्ज्ञापि न तथेति वक्तव्या, भवति च 'सोचि लोपे चेत्' 'ढ्रलोप'इत्यनयोर्लोपसञ्ज्ञापि निमित्ततयोपयोगिनी । किञ्च—लघुसञ्ज्ञा न कथञ्चिदपि सन्धिकार्योपयोगिनी । यदि च गुरुसञ्ज्ञाबाध्यतया तदुपन्यासस्तर्हि पदसञ्ज्ञाबाधकतया भसञ्ज्ञाऽप्युपन्यस्यताम् । किञ्च—'स्वादि'ष्विति पदसञ्ज्ञापि माभ्यामित्यादौ सन्धिकार्योपयोगिनीति तदनुपन्यासान्न्यूनता, एवं टिसञ्ज्ञाया अनुपन्यासेनापि न्यूनता, एवं निपातसञ्ज्ञापि न सन्धिकार्योपयोगिनीति सापि न वक्तव्या स्यात्, एवं सम्प्रसारणसञ्ज्ञा—'संप्रसारणाच्चे'ति सन्धिकार्योपयोगिनीति—वक्तव्या, तथापि 'प्रायेण सन्धिकार्योपयोगिनीनां सञ्ज्ञानां प्रकरणं प्रायेण समाप्त'मित्यर्थान्न कश्चिद्दोषः । शेखरोक्तविशेषणे तु व्यर्थे एव तद्दानेप्यननुगमादिति सर्वेष्टसिद्धिः ।

❀ **इति विषमपदविवृतौ शेखरव्याख्यायां सञ्ज्ञाप्रकरणम्** ❀



**इको गुण** । परिभाषेयं—व्याख्यानात् । **गुणवृद्धिशब्दाभ्यामिति** । गुणवृद्धि-ग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः । अनुवर्त्तमानञ्च सञ्ज्ञिपरमेव स्यात्; सञ्ज्ञाकरणेनान्यत्र सञ्ज्ञिपरत्वात् । यद्वा—तदप्यनुवर्त्य गुणो वृद्धिरिति

ॐ अभिनव-चन्द्रिका ॐ

**अथ परिभाषाप्रकरणम्** । **व्याख्यानादिति** । 'नापि तच्छेषो नापि तदपवादो अन्यदेवेदं परिभाषान्तरमसम्बद्धमनया परिभाषये'ति प्रकृतसूत्रस्थभाष्यादिति भावः । **सामर्थ्यादिति** । तेन च अदेङ्निष्ठविधेयताप्रयोजकगुणपद—आदैज्निष्ठविधेयताप्रयोजकवृद्धिपदे—तदन्यतरघटिते शास्त्रे 'इक' इति षष्ठ्यन्तपदमुपतिष्ठत इत्यर्थः स्वीक्रियते । विधेयतायामदेङ्निष्ठत्व-आदैज्निष्ठत्वविशेषण-दानाद्गुणवृद्धिसञ्ज्ञासूत्रयोर्नास्याः प्रवृत्तिः । विधेयत्वनिवेशा'दतो गुणे'वृद्धिर्यस्याचा'मित्यादौ नास्याः प्रवृत्तिः, पदनिवेशा'त्यदादीनामः, 'पथिमथ्यृभुक्षामात्' इत्यादौ नास्याः प्रवृत्तिः ।

**सञ्ज्ञिपरमेव स्यादिति** । यस्मात्तदनुवर्तते तदीयविधेयतावच्छेदकरूपेतररूपावच्छिन्न-

ॐ चिदस्थिमाला ॐ

**इको गुण** । नेदं सञ्ज्ञासूत्रं, सञ्ज्ञयोः कृतत्वात्, असम्भवाच्च । नापि विधिः, तत्तद्विधिवैयर्थ्या-पत्तेः, पूर्वोत्तरसाहचर्येण परशास्त्रोपकारकत्वनिर्णयाच्च । नापि नियमः, वाक्यभेदापत्तेस्तथा नन्तित्प्रकरणे पाठौचित्याच्च । नाप्यतिदेशः, असम्भवात् नाप्यधिकारः, तथा सतीको गुणवृद्धी इति पाठौचित्यात्, 'प्रत्ययः' 'परश्चे'त्यादौ तु विधेयभेदाद्युक्तो विभागः, 'एकाचो द्वे' इत्यादावुद्देश्यभेदात्तथा, अतः पर्यवसितमाह—**परीति** । **व्याख्येति** च । **गुणवृद्धिग्रहणसामर्थ्यादिति** । भाष्यानुरोधेनाह—**गुणेति** । **सामर्थ्यादिति** । 'शब्दव्यापाराश्रयणमिति मूलोक्तं फलित'मिति शेषः । नन्वनुवृत्त्या न सिद्धि-स्तयोस्तत्र शब्दपरत्वादत आह—**अनुवर्तेति** । शब्दाधिकारादिति भावः । **करणेनान्यत्रेति** । तद्बोधकसूत्रादन्यत्रेत्यर्थः । मन्दमत्यनुग्रहायाग्रिमभाष्यानुरोधेनासताप्यवयवार्थेन व्युत्पादनवदाह—**यद्वेति** । तदपि=गुणवृद्धिग्रहणम् । **गुणो वृद्धिरितीति** । 'इत्येव'मित्यध्याहृत्य गुणो वृद्धिरित्येवं ये गुणवृद्धी

ॐ ज्योत्स्ना ॐ

**परिभाषेयमिति** । न तु विधिः, तत्तद्विधीनां वैयर्थ्यापत्तेरिति भावः । **इति भाव इति** । अस्मिन्पक्षे गुणवृद्धिपदस्य गुणवृद्धिशब्दबोध्याकारादिषु लक्षणेति भावः । ननु पूर्वसूत्रयोर्गुणवृद्धि-पदस्य सञ्ज्ञापरत्वादनुवृत्तावपि सञ्ज्ञिबोधनार्थमुपक्षीणस्येहत्यगुणवृद्धिपदस्य सामर्थ्याभावात्कथं लक्षणेत्यत आह—**अनुवर्त्तमानञ्चेति** । **यद्वेति** । अस्मिंस्तु पक्षेऽनुवर्त्तमानगुणवृद्धिपदस्य वाक्येऽन्वयप्रवेशसिध्यर्थं 'हन्तीति पलायत'इत्यादौ हेत्वर्थकतया दृष्टस्येतिशब्दस्याक्षेपपूर्वकमर्थ-

ॐ सदाशिवभट्टीयम् ॐ

**इको गुण** । विधित्वेपि 'मिदेर्गुण' इत्यादीनामनिकि विधानेनार्गुण इत्यादीनां नियमार्थत्वेन च चारिता-र्थ्यसम्भवादाह—**व्याख्यानेति** । **सामर्थ्यादिति** । तेन तत्पदविहितयोर्लक्षणा बोध्या । स्वबोध्ये तु नेयं, 'त्यदादीनाम'इत्यादौ दोषात् । **सञ्ज्ञिपरमेवेत्यादि** । शब्दाधिकार इति भावः । इदञ्च गुणवृद्धिपदा-

ॐ विषमपदविवृतिः ॐ

**इको गुण** । **सञ्ज्ञाकरणेनेति** । 'वृद्धिरादै'जिति सूत्रे'ऽदेङ् गुण'इति सूत्रे च वृद्धिगुण-सञ्ज्ञयोः सञ्ज्ञिविशेषे सङ्केतकरणेनान्यत्रोच्चारिताभ्यां ताभ्यां सञ्ज्ञिन एव प्रतीतेरित्यर्थः । पूर्वं सञ्ज्ञाशास्त्रप्रणयनात्—सञ्ज्ञासूत्रे सञ्ज्ञाशब्दस्य शब्दस्वरूपपरत्वेपि ततोऽन्यत्र सञ्ज्ञित्वमेव, सञ्ज्ञि-विशेषे ततः पूर्वं शक्तिग्रहात् । **तदप्यनुवर्त्येति** । गुणवृद्धिग्रहणमनुवर्त्येत्यर्थः । अनुवर्त्तमानञ्च

योजनयैतल्लाभः। 'स्वादिषु' इति सूत्रेऽनुवृत्त'पद'पदस्य सञ्ज्ञापरताया एव दृष्टत्वात्।
'ष्णान्ते'ति सूत्रे सङ्ख्यापदस्य तदन्तत्वासम्भवादर्थपरतेति बोध्यम्। लक्षणप्रतिपदोक्त-

### ❀ अभिनव-चन्द्रिका ❀

विधेयताके सञ्ज्ञिपरत्वेव स्वादित्यर्थः। तेन 'स्वादिष्वि'तिसूत्रेऽनुवर्तमानपदपदस्य सञ्ज्ञा-शब्दपरत्वेपि न क्षतिः। तत्र 'सुप्ति'ङितिशास्त्रीयविधेयतावच्छेदकरूपेतररूपावच्छिन्नविधेयताकत्व-

### ❀ चिदस्थिमाला ❀

इति शब्दयोजनयेत्यर्थः। एतल्लाभः=तृतीयान्तघटितमौलवाक्यार्थलाभः। ननूक्तरीत्या तयोरत्रानुवृत्तयोरर्थपरत्वात्कथमयं वाक्यार्थोऽत आह—**स्वादीति**। उचितार्थाधिकारानुरोधादिति भावः। तथा चोक्तनियमस्तत्त्वावच्छिन्नादन्यत्रोपात्ततज्जातीयशब्दान्तरविषयक इति बोध्यम्। नन्वेवं क्वचिद्दोषापत्तिरप्यत आह—**ष्णान्तेतीति**। **तदन्तत्वेति**। षान्तत्वनान्तत्वेत्यर्थः। एतेनानुवृत्तयोस्तयोरसमस्तयोरेकवचनान्तयोर्द्विवचनान्तसमस्तैकदेशभूतगुणवृद्धिविशेषणत्वासम्भवेन शाब्दमूलोक्तपक्षासम्भवः, 'न हि भवति चैत्रमैत्रौ दण्डी स्रग्वी'ति चिन्त्यमिदमित्यास्ताम्। अत्रत्यं तत्त्वं छायातो बोध्यम्। यत्तु—'विभाषा दिक्समासे' इति सूत्रवल्'लक्षणे'तिन्यायेन निर्वाह इत्यनुवृत्त्यैव सिद्धे गुणवृद्धिग्रहणं चिन्त्यप्रयोजनमिति प्राञ्चः, तत्खण्डयति—**लक्षणेति**। तत्र=परिभाषायां। 'गातिस्थे'त्यादौ 'पै'इत्यस्याग्रहणायाह—**साक्षादुच्चेति**। 'विभाषा दिक्-

### ❀ ज्योत्स्ना ❀

पदार्थकेहत्यगुणवृद्धिपदेनान्वय इति विशेषः। गुणवृद्धिपदहेतुकार्थोपस्थितिविषये गुणवृद्धी इत्येवं हि तदार्थः। **गुणो वृद्धिरिति योजनयेति**। इतिशब्दस्य गुणवृद्धिपदाभ्यामुभाभ्यामन्वयः, गुण इति, वृद्धिरिति च योजनयेत्यर्थः। भाष्योक्तं व्यवस्थापयितुं परानुसारिबृहच्छेखरोक्तिं दूषयति—**लक्षणप्रतिपदोक्तपरिभाषयात्विति**। 'साक्षादुच्चरितस्ये'त्यर्थकरणे प्रयोजनं–'गातिस्थाघुपे'त्यत्र साक्षाद्धातुपाठपठितस्य 'पा पाने' इत्यस्य ग्रहणं भवति न तु 'पै शोषणे' इत्यस्य कृतात्वस्य। 'साक्षात्तत्तच्छब्दानुवादेन विहितस्ये'त्यर्थकरणस्य फलं—'विभाषा दिक्समासे बहुव्रीहा'-

### ❀ सदाशिवभट्टीयम् ❀

नुवृत्तिमभिप्रेत्य। अदेङादैच्पदानुवृत्तिकरणे त्वर्थाधिकारेणापीष्टसिद्धिरिति बोध्यम्। **योजनयेति**। इतेः प्रत्येकमन्वयः, उच्चार्येति शेषः, तस्य च विधानेऽन्वयः। अतो न द्वन्द्वाऽसाधुत्वं, गुणो गुणो वृद्धिर्वृद्धिरिति योजने तु तत्त्वं स्यात्। एतल्लाभः=तृतीयान्तघटितमौलवाक्यार्थलाभः। ननूक्तरीत्या तयोरत्रानुवृत्तयोरर्थपरत्वात्कथमयं वाक्यार्थोऽत आह—**स्वादीति**। उचितार्थाधिकारानुरोधादिति भावः। तथा चोक्तनियमस्तत्त्वावच्छिन्नादन्यत्रोपात्ततज्जातीयशब्दान्तरविषयक इति बोध्यम्। नन्वेवं क्वचिद्दोषापत्तिरप्यत आह–**ष्णान्तेतीति**। **तदन्तत्वेति**। षान्तत्वनान्तत्वेत्यर्थः। **एतेनानुवृत्तयोरसमस्तयोरेकवचनान्तयोर्द्विवचनान्तसमस्तैकदेशभूतगुणवृद्धिविशेषणत्वासम्भवेन** शाब्दमूलोक्तपक्षासम्भवः, नहि 'भवति चैत्रमैत्रौ दण्डी स्रग्वी'तीति–चिन्त्यमिदमित्य**पास्तम्**। अत्रत्यं तत्त्वं छायातो बोध्यम्। यत्तु 'विभाषा दिक्समास'इति सूत्रवल्लक्षणेति न्यायेन निर्वाह इत्यनुवृत्त्यैव सिद्धे गुणवृद्धिग्रहणं चिन्त्यप्रयोजनमिति **प्राञ्चस्तत्खण्डयति—लक्षणेति**। तत्र=परिभाषायाम्।

### ❀ विषमपदविवृतिः ❀

शब्दस्वरूपपरमर्थाधिकारानुरोधादिति भावः। पूर्वं गृहीतशक्तिकस्य न शब्दस्वरूपपरत्वं, किन्तु यत्रार्थे सङ्केतस्तत्परत्वमेवेति नियमादिदमप्ययुक्तमित्याशङ्क्य स नियमोऽप्यसिद्ध इत्याह—**स्वादिष्विति**। नियमस्तु सञ्ज्ञाशास्त्रायत्र सञ्ज्ञापदमनुवर्तते तद्भिन्नस्थल एवेति भावः। ननु सञ्ज्ञासूत्रादनुवर्त्तमानसञ्ज्ञापदस्यार्थाधिकारानुरोधाच्छब्दस्वरूपपरत्वाङ्गीकारे 'ष्णान्ते'ति सूत्रे—

परिभाषया तु नात्र निर्वाहः। तत्र 'प्रतिपदोक्तस्ये'त्यस्य—साक्षादुच्चारितस्येति, साक्षात्तत्त-च्छब्दानुवादेन विहितस्येति वाऽर्थात्। ध्वनितञ्चेदमत्रैव भाष्ये। अस्याश्चविधेयसमर्पक-

ॐ अभिनव-चन्द्रिका ॐ

स्याभावात्। सञ्ज्ञिपरत्वादिति। अत्रापि पूर्ववदेवार्थः। इष्टत्वादिति। वस्तुतस्तु पूर्वोक्तदिशा अनुपपत्तेरभावेन पूर्वकल्प एव ज्यायान्। अर्थादिति। अयं भावः—प्रतिपदोक्तत्वेनाभिमतं यच्छास्त्रं, लाक्षणिकत्वेनाभिमतं च यच्छास्त्रं तादृशशास्त्रद्वयीयविधेयतावच्छेदकरूपावच्छिन्नोद्देश्यता-कत्वरूपलक्षणप्रतिपदोक्तपरिभाषालिङ्गस्याभावात्। यत्किञ्चिच्छास्त्रविशिष्टत्वरूपप्रतिपदोक्तत्वस्य चाभावाद्वेति भावः। वै० 'स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्व''स्वीयोद्देश्यतावच्छेदकमत-र्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्वोभयसम्बन्धेन। वै० 'स्वावच्छिन्नत्व' 'स्वावच्छिन्न-प्रयोज्योद्देश्यतानिरूपितत्वे'तदन्यतरसम्बन्धेन। प्रकृते च—'इकोगुणे'तिशास्त्रीयोद्देश्यता-वच्छेदकरूपावच्छिन्नविधेयताकत्वस्य 'मिदेर्गुण'इत्यादावभावान्न लक्षणप्रतिपदोक्तपरिभाषया निर्वाह इति ध्येयम्। विधेयसमर्पकेति। 'अदेङ्' 'आदैच्'एतदन्यतररूपविधेयसमर्पकेत्यर्थः।

ॐ चिदस्थिमाला ॐ

समासे''तत्पुरुषे तुल्यार्थे'त्याद्यनुरोधेनाह—साक्षात्तत्तदिति। शीघ्रोपस्थितिकत्वेन द्वयोरनुगम इति भावः। अत्रैव=इको गुणेत्यत्रैव, गुणवृद्धिग्रहणसामर्थ्यादित्यनेन, अन्यथा नैव निर्वाहे तावत्पर्यन्तगमनं निर्बीज-मिति भावः। परिभाषाया लिङ्गवत्त्वनियममादाह—अस्याश्चेति। चेनार्थश्चेतिसूत्रसमुच्चयः। तत्रापि तथा वक्ष्यमाणत्वात्। समर्पकेति। नत्वेन पूर्वेणेत्यर्थः। एतेन विधेयेति इत्यधिकमित्यपास्तम्।

ॐ ज्योत्स्ना ॐ

त्यत्र साक्षाद्दिक्शब्दानुवादेन 'दिङ्नामान्यन्तराल'इत्यनेन विहितस्यैव दक्षिणपूर्वेत्यस्य दिक्स-मासस्य ग्रहणं, न तु या दक्षिणा सा पूर्वा यस्योन्मुखस्येत्यर्थकदक्षिणपूर्वेत्यस्याप्य'नेकमन्यपदार्थे' इत्यनेन विहितस्येति। इति वार्थादिति। एवञ्च 'त्यदादीनाम'इत्यादावकारस्य साक्षादुच्चारणेन लाक्षणिकत्वाभावात्परिभाषानुपस्थानमिति भावः। ननु शास्त्रे प्रतिपदोक्तत्वं नाम शास्त्रमात्र-सङ्केतितधर्मेण साक्षादुपात्तत्वं, तदभावे तु यथाकथञ्चिदित्याश्रयणादस्तीह परिभाषासञ्चारोऽत आह—ध्वनितञ्चेदमिति। अयं भावः-यद्युक्तप्रकारेणेह परिभाषा प्रवृत्त्या'त्यदादीनाम'इत्यादावति-

ॐ सदाशिवभट्टीयम् ॐ

गानिस्येत्यादौ पै इत्यस्याग्रहणाय 'साक्षादुच्चरिते'ति।'विभाषा दिक्समासे' 'तत्पुरुषे तुल्यार्थे'त्याद्यनुरोधेनाह—साक्षात्ततदिति। शीघ्रोपस्थितिकत्वेन द्वयोरनुगम इति भावः। साक्षादुच्चारितस्येति। नन्वेवं सखीमतिक्रान्तोऽतिसखिरित्यादावनङादिकं स्यात्, प्रातिपदिकस्य कुत्रापि साक्षादुच्चारणाभावादिति वाच्यं, 'साक्षादुच्चारितस्ये'त्यस्य गुणैरप्राप्तिरस्येत्यत्र तात्पर्यात्। इति वार्थादिति। नन्वेवं गमयतीत्यादौ 'दीर्घे न स्थानिव'दिति निषेधः स्यात्, वृद्धेरपि दीर्घत्वादिति वाच्यम्, 'अनुस्वारदीर्घज'शित्यत्र पूर्वोत्तर-साहचर्येण तच्छब्दविहितस्यैव तस्य ग्रहणात्, 'ण्यल्लोपा'वितिवार्तिकेऽपीयङादिसाहचर्यादन्यतरोपादाने उभयत्र न स्यादित्युभयोपादानम्। एवं वृद्ध्यौत्वेत्यत्रापि बोध्यम्। ध्वनितमिति। अत एव

ॐ विषमपदविवृतिः ॐ

ऽनुवर्त्तमानसञ्ज्ञापदस्यापि तथात्वापत्तिरित्याशङ्क्याह—ण्यन्तेति। इति वार्थादिति। 'इति चार्था'दिति युक्तः पाठः। आद्यस्योदाहरणं—'विभाषाप' इति, अन्त्यस्योदाहरणं—'विभाषादि-क्समासे'—इति। तत्र हि—दिक्शब्देन दिग्वाचकशब्दाननूद्य विहितसमासस्यैव ग्रहणं, प्रकृते तु 'मिदेर्गुण'इत्यादावपि गुणशब्देन गुणसञ्ज्ञकाननूद्य न कश्चिद्विहित इति न प्रतिपदोक्तपरि-भाषावसर इति भावः। ननु लाक्षणिकत्वं विलम्बोपस्थितिकत्वं, प्रतिपदोक्तत्वं च झटित्युपस्थि-तिकत्वम्, 'त्यदादीनाम' इति च न झटित्युपस्थितिकं, गुणशब्देनाकारादेरविधानादित्युक्तपरि-भाषायैवोक्तार्थिकया निर्वाहे तस्या भवदुक्तार्थो नोचित इत्याशङ्क्याह—ध्वनितञ्चेति। तत्र

गुणवृद्धिपदश्रुतिर्लिङ्गं तदाह—**विधीयेते इति ।** अत एव 'अतो गुणे' 'वृद्धिर्यस्ये' त्यादौ न दोषः । एतेन—'शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या यत्र ते पदे तत्रेदमुपतिष्ठते इत्यर्थेन 'त्यदादीनामः' इत्यादिव्यावृत्तौ सिद्धायामिह गुणवृद्धीति

※ अभिनव-चन्द्रिका ※

अत एव 'वृद्धिरादैजदेङ्गुण'इत्यादौ नास्याः प्रवृत्तिः । न चैवमपि 'ओर्गुण'इत्यादौ एतत्प्रवृत्तिर्दुर्वारैवेति वाच्यं,'अचो ञ्णिती'त्यत्र अज्ग्रहणसामर्थ्येन वर्णरूपस्थानिनो यत्र निर्देशस्तत्र नेयमुपतिष्ठत इति कल्पनेनादोषात् । न चैवं 'पुगन्तलघूपधे'त्यत्र एतत्परिभाषानुपस्थितिप्रसङ्गः, भिनत्तीत्यादौ गुणवारणाय पुकि अन्तः पुगन्तः, लघ्वी चासौ उपधा च लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधं, तस्य पुगन्तलघूपधस्येत्यर्थस्य शेखरे भाष्ये च कृतत्वेन वर्णरूपस्थानिनोनिर्देशादिति चेन्न । 'अचो ञ्णिती'त्यत्राऽज्ग्रहणसामर्थ्येन अच्त्वव्याप्यधर्मपुरस्कारेण यत्र वर्णरूपः स्थानी निर्दिश्यते तत्र नेयमुपतिष्ठत इति कल्पनेनोपधात्वस्याऽच्त्वाव्याप्यत्वाभावात् । पुगन्ते'तिसूत्रे बहुव्रीहिस्वीकारात्, समाहारद्वन्द्वस्य तच्छेषपक्षोपपादनावसरे एव भाष्ये उक्तत्वेनादोषाच्च ।

न चैवं 'वाह ऊठि'तिसूत्रस्थज्ञापकपरभाष्यासङ्गतिः 'नाजानन्तर्य'इतिनिषेधेन स्वांशे चारितार्थ्याभावादिति वाच्यं, व्यञ्जनव्यवधानेऽचापि अन्यानन्तर्याभावेन 'नाजानंतर्य'इत्यस्याप्रवृत्तेरिति दिक् । 'विधौ परिभाषोपतिष्ठते नानुवादे' इति परिभाषाया प्रधानविधिसंस्कारे कर्तव्ये यावती परम्परा नाप्राप्ता ततोऽधिकपरम्परा परिभाषाप्रवृत्तिं न प्रयोजयतीति यावत् । ननु 'मिदेर्गुण'इत्यादि-

※ चिदस्थिमाला ※

इत्यादाविवास्यानुवादे इति शेषः । एतेन=अनुवादनिरासार्थं तत्त्वेन गृहीतस्यैव लिङ्गत्वेन तदर्थमर्थपरयोस्तयोः सूत्रे आवश्यकत्वेन तत एव हि तदध्याहारः, अन्यथा स एव न स्यादिति भावः । **पूर्वयोः**=तत्सूत्रस्थयोः । तत्रेदम्=इक इति पदम् । **वृद्धीतीति ।** शब्दपरत्वात्प्रगृह्यत्वादि न । 'प्रकृति-

※ ज्योत्स्ना ※

व्याप्तिपरिहारः कृतः स्यात्स्यादेव भाष्यकृत्कृतगुणवृद्धिपदानुवृत्तिवैयर्थ्यमिति साक्षादुच्चारणं यथा

※ सदाशिवभट्टीयम् ※

'क्तोऽधिकरणे चे'त्यादि विहिते क्ते निष्ठाप्रयुक्तकार्यं, 'लटःशतृ'विहितयोः सत्कार्यं, शालादौ वृद्धकार्यं, 'पचन्ती'त्यादौ गुणकार्यम् । तत्रादिशब्देन 'यणो मय'इति रेफस्य द्वित्वं, दीर्घपदाविहितेपि शालादीनामाकारे 'दीर्घं चे'ति गुरुत्वं, ह्रस्वपदाविहितेपि देवदत्तादिपदघटकह्रस्वे 'संयोगे गु'र्विति गुरुत्वञ्च

※ विषमपदविवृतिः ※

चेत्थं भाष्यं—'सञ्ज्ञाविधाने नियमः, सञ्ज्ञया ये विधीयन्ते तेषु नियमः, किं वक्तव्यमेतत् ? न हि कथमनुच्यमानं गंस्यते ?, गुणवृद्धिग्रहणसामर्थ्यात्,तथाच द्यौः, पन्था, स, इममित्यादौ न दोष'इति । यदि चोक्तपरिभाषया निर्वाहः स्यात्तदा सञ्ज्ञया विधाने इत्युक्तप्रकारोऽनर्थकः स्यात्, तेन मन्यामहे लक्षणप्रतिपदोक्तयोर्मदुक्त एवार्थो भाष्यकृतोऽभिप्रेत इति । **तदाहेति ।** 'गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते' इत्यस्य 'गुणवृद्धी भवत इत्यर्थके गुणवृद्धिपदे यत्र श्रूयेते' इत्यर्थ इति भावः । एवमचश्चेत्यत्रा'प्यज्भवतीत्यर्थकानि ह्रस्वदीर्घपदानि यत्र श्रूयन्ते'इत्यर्थः । **एतेन**-गुणवृद्ध्योर्लक्ष्ये विधाने न तत्रेक्पदोपस्थितिः स्यादित्यपास्तम् । **अत एवेति ।** तथा च

व्यर्थम्' इत्यपास्तम् । एतन्मूलक एव 'विधौ परिभाषोपतिष्ठते नानुवादे' इत्युद्घोषः । एवञ्च पदोपस्थापकपरिभाषाविषये 'विधीयते' इत्यस्यैवाध्याहारो बोध्यः। एवञ्च 'तस्मिन्निति निर्दिष्टे' 'षष्ठीस्थाने' इत्यादेरनुवादेऽपि प्रवृत्तिः । तेन 'प्रत्ययस्थात्कात्पूर्वस्य' 'उदात्तस्वरितयोर्यणः' इत्यादौ न दोषः । 'उदीचामातः स्थाने' इति स्थानेग्रहणन्तु स्पष्टार्थ-

❀ अभिनव-चन्द्रिका ❀

वाक्यार्थबोधमन्तरा 'इकोगुणवृद्धी'इतिशास्त्रीयोद्देश्यतावच्छेदकधर्मप्रकारकज्ञानं न सम्भवति । एतत्परिभाषावाक्यार्थबोधमन्तरा च विधिवाक्यार्थबोधो न सम्भवतीत्यन्योन्याश्रय इत्याशङ्क्याह— **विधेयसमर्पकत्वनिर्णय इति** ।

❀ चिद्‌स्थिमाला ❀

वं दिति त्वनित्यमिति भावः । ननु विधाविति तन्न्यायेनैव निर्वाहे इदं व्यर्थमत आह—**एतदिति** । तत्त्वेन गृहीतायास्तस्या लिङ्गत्वेत्यर्थः । एतेन तस्याः स्वातन्त्र्येण परिभाषात्वनिरासः, अत एव उद्घोष इति विशेष्यमुक्तम् । नन्वेव'मचश्चे'त्यादौ दोष एवात आह—**एवञ्चेति** । तस्य तन्मूलकत्वेनातिरिक्तत्वे चेत्यर्थः । एवमग्रेऽपि । **परीति** । तद्रूपपरिभाषाविषये इत्यर्थः। **प्रत्ययस्थादिति** । आपीति ककारविशेषणमिति भावः । कात्पूर्वस्येत्यत्राव्यवहितत्वांशसञ्चारोपि बोध्यः । द्वितीयस्य लक्ष्यमाह—**उदात्तेति** । 'तयात्र विधीयते इत्यस्य लाभः, स्थानेग्रहणं च तज्ज्ञापकमिति **दण्डयाद्युक्त**मसङ्गतमिति ध्वनयन्नाह—**उदीचामिति** ।

❀ ज्योत्स्ना ❀

कथञ्चिदेव भगवतोऽभिप्रेतमिति । इत्यपास्तमिति । एतेन 'विधीयते' इति पदाध्याहारेण वाक्यार्थबोधे इहत्यं गुणवृद्धिग्रहणमेव लिङ्गमिति सूचयति । तदाह—**एवञ्चेति** । अचश्चेत्यत्र तु ह्रस्वदीर्घप्लुतइत्यनुवृत्त्यैव सिद्धेऽजित्यनुवृत्तिस्तथाध्याहारे लिङ्गमिति बोध्यम् । **स्पष्टार्थमेवेति** । वस्तु-

❀ सदाशिवभट्टीयम् ❀

सिद्ध्यति । **अपास्तमिति** । 'विधीयते'इत्यध्याहारे च पुनर्गुणवृद्धिग्रहणमेव मानमिति भावः । नचैवमपि सम्पूर्णपूर्वसूत्रद्वयाऽनुवृत्तिः क्रियते तत्रोभयानुवृत्तिसामर्थ्यादपेक्षितार्थो भविष्यतीति तद्वैयर्थ्यमेवेति वाच्यं, 'विधीयते' इत्यस्याध्याहारेपि यत्र गुणपदमस्ति 'मिदेर्गुण'इत्यादाव'तोगुण'इत्यादौ च,—यत्र चादेङस्ति. 'त्यदादीनाम'इत्यादावुभयत्रापि प्रवृत्तिसम्पादनेनोभयानुवृत्तेः सार्थक्यात् । 'अचश्चे'त्यत्र व्याख्यानेन निर्वाहेपि प्रकृते तदाश्रित्य सिद्धप्रत्याख्याने 'नासूये'ति 'पङ्क्तिविंशती'तिसूत्रभाष्योक्त्या न चमत्कारकारी ।

**विधौ परीति** । लिङ्गस्य विधेयविशेषणत्वे इत्यर्थः । पदस्यापि प्रकारतया भानात्प्रकृते न दोष इतिबोध्यम् । **अनुवादेपि प्रवृत्तिरिति** । कर्मणि घञ् । अनूद्यमानविशेषणविशेषणत्वे स्वस्य लिङ्गस्येत्यर्थः । **तेनेति** । पदोपस्थापकप्रकृतपरिभाषाद्वयाऽतिरिक्तपरिभाषाणामनुवादेपि प्रवृत्त्यङ्गीकरणेनेत्यर्थः । **प्रत्ययस्थेति** । 'आपी'त्यस्य ककारविशेषणत्वेपीत्यर्थः । **इत्यादौ न दोष इति** । आदिना 'अल्लोपोन' इति । तत्र यजादिनानकारं विशेषयित्वाऽऽकारस्य लोपवारणं भाष्योक्तं विरुध्येत परिभाषासत्त्वे इति बोध्यम् । **स्पष्टार्थमेवेति** । परिभाषामङ्गीकुर्वतस्तव मते 'विधीयते' इत्यध्याहारे तात्पर्यग्राहकं प्रकृत-

❀ विषमपदविवृतिः ❀

भवन्ति शालीय इत्यादौ च न दोषः, अन्यथा एधे औपगवीय इत्यादावेव तौ स्यातामिति भावः । **इत्यपास्तमिति** । नन्व'तो गुण'इत्यत्र गुण इति प्रथमान्तं पदं न श्रूयत इति न दोष इति चेन्न, वृद्ध्यंश एव दोष इत्यभिप्रायात् । **प्रत्ययस्थादिति** । आपि परे इदं ककारस्य विशेषणमिति भावः । **तदन्तस्येति** । 'वृद्धिर्यस्ये'त्यादौ तु यच्छब्दसममिव्याहाराद्वृद्धमिति विधेयनिर्दे-

मेव । तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्व-निर्णयः । अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता । तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः । इयञ्चैधितेत्यादौ

### ※ चिदस्थिमाला ※

नन्वेवमप्यनुवादे इव विधावपि पदश्रवणकाले कथं तत्त्वेन ग्रह इति समतैव विध्यनुवादयोरत आह—**तत्रेति** । तेषां मध्ये इत्यर्थः । तदन्तस्य=गुण इत्यादेः । **निर्णय** इति । यद्यपि 'वृद्धिर्यस्ये'त्यादावपि सास्ति, तथापि यच्छब्दस्य तत्र तत्प्रतिबन्धकत्वमेवञ्च सामान्यतो लक्ष्यासंस्कारकबोधस्तावदस्त्येवेति भावः। **पदानामिति** बहुवचनं सूत्रभेदाभिप्रायम् । **अन्वयितेति** । अर्थद्वारेति भावः । तदेतद्धनयन्—'अत एवे'त्यस्यार्थमाह—**तदर्थेति** । गुणादिपदार्थस्य वाक्यार्थानन्वयित्वे इत्यर्थः, **नोपेति** । तद्वाचकस्येति भावः।

नन्विदं सूत्रं नात्सन्ध्यक्षरनिवृत्त्यर्थं, ज्ञापकेन तत्र तदप्रवृत्तेः, नचोत्तरार्थं योगविभागानर्थक्यादत आह—**इदञ्चैधीति** । इक इति परिभाषासूत्रञ्चेत्यर्थः । **इयञ्चे**ति पाठे प्रकृतपरिभाषा चेत्यर्थः, 'स्वीक्रियते' इति

### ※ ज्योत्स्ना ※

तस्तु परिभाषाज्ञापनार्थं स्थानेग्रहणमावश्यकं—उक्तसूत्रयोरुक्तरीत्या दोषाभावेपि प्रतिदीव्न इत्यादौ व्यवहिताकारस्य स्थानिवत्वाद्वलोपाद्यभावार्थमचः परस्मिन्नित्यादेः संस्कारस्यानया परिभाषयावश्यापेक्षणात् । अतएवाचःपूर्वात्वमपि तत्र व्यवहितसाधारण्येन गृह्यते इति सिद्धान्तः । एवं 'द्विर्वचने चीत्यादावचि पूर्वत्वमित्यादि । किंत्विको गुणेत्यत्र गुणवृद्धिग्रहणेनुवर्त्तमाने पुनर्गुणवृद्धिग्रहणमचश्चेत्यत्र ह्रस्वदीर्घप्लुतग्रहणेनुवर्तमानेज्ग्रहणञ्च तदनित्यत्वे ज्ञापकं भवतीत्युदात्तस्वरितयोर्यण इत्यादौ न दोष इति परिभाषाप्रदीपार्चिषि विस्तरः ।

### ※ सदाशिवभट्टीयम् ※

सूत्रे गुणवृद्धिग्रहणमेवेत्यर्थः। न च मम 'विधा'विति परिभाषाऽनित्यत्वबोधनार्थन्तत्, तेनो'दात्तस्वरितयो'-रित्यादौ न दोष इति वाच्यं, एवं सति नामनङ्गीकृत्यैव स्थानेग्रहणेन परिभाषासामान्यस्यैव चानित्यत्व-ज्ञापनेन स्वाभीष्टस्य साधयितुमुचितत्वात् । नन्वेवं पदोपस्थापकत्वे 'मिदेर्गुण' इत्यादौ दोष एव स्थान-षष्ठीनिर्णयस्येव गुणवृद्धिपदे विधेयसमर्पकत्वग्रहस्यापि वाक्यार्थबोधादनन्तरभावित्वेनालोन्त्यपरिभाषापे-क्षयाऽस्याप्यन्तरङ्गत्वाभावादित्याशङ्क्याह—**तत्रेति** । वाक्यार्थबोधपर्यालोचनेपि विधेयत्वग्रहे प्रतिबन्धका-भावविशिष्टप्रथमान्तपदमात्रदर्शनेन तत्त्वज्ञानं सुलभमिति भावः। 'वृद्धिर्यस्ये'त्यादौ च यच्छब्दयोगस्य प्राथम्यस्य च प्रतिबन्धकत्वं बोध्यं, प्राथम्यञ्च प्रथमान्तपदापेक्षयैव, तेन 'गुणो यङ्लुको'रित्यादौ न दोषः । तेन 'चेच्छिद्यने' इत्यादावनन्त्येको गुणसिद्धिः । 'परश्वी परशुञ्चे'त्यादौ तु प्राप्तत्वादिपर्यालोचनं प्रतिबन्धकम् । प्रथमायास्तत्त्वमेवेत्यर्थः, न तु प्रथमायामेव तत्त्वमिति । तेन परशुमित्यादौ न दोष इति

### ※ विषमपदविवृतिः ※

शाब्द—वृद्धिपदस्य प्रथमान्तत्वेऽपि यद्विधेयसमर्पकत्वनिर्णय इति । **एतेन**—गुणवृद्ध्योर्विधेयत्वस्य वाक्यार्थबोधोत्तरकालिकत्वेन तदुत्तरमेवास्योपस्थित्याऽलोन्त्यस्येत्यस्यापि तदुत्तरमेवोपस्थित्या तस्यानेन बाधः स्यादित्यपास्तम् । वाक्यार्थबोधात्पूर्वमपि यच्छब्दासमभिव्याहृतप्रथमान्तत्वेन 'मिदेर्गुण'इत्यादौ गुणपदस्य विधेयसमर्पकत्वनिश्चयसम्भवेनास्यालोन्त्यपरिभाषातः पूर्वमेव प्रवृत्तेः ।

व्यञ्जनानां गुणव्यावृत्त्यर्थं, 'भिन्न'मित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पादनार्थञ्चेति दिक् ।

**प्लुतशब्दैरिति** । 'ऊकाल' इति सूत्राद्ध्रस्वदीर्घप्लुत इति अजिति चानुवर्त्तते । ह्रस्वेत्यादिपदञ्च तृतीयया विपरिणतमिति भावः । तेन 'दिव उत' 'अष्टन आ विभक्ता'वित्यादावेतदनुपस्थितिः । शेषं प्राग्वत् ।

---

## ॥ अभिनव-चन्द्रिका ॥

**इति दिगिति** । दिगर्थस्तु—'जनेड'इत्यादौ डित्त्वविधानसामर्थ्येन एधितेत्यादौ व्यञ्जनस्य गुणो न भवति, क्ङोः किन्करणेनाऽनिग्लक्षणस्यापि निषेधो भवतीति भिन्नमित्यादौ न दोष इतीयं परिभाषा न कर्त्तव्या । न च 'लैगवायन'इत्यादावपि निषेधः स्यादिति वाच्यं, गित्साहचर्येण धातुविहितप्रत्ययोरेव क्ङितोर्ग्रहणेनादोषात् । वस्तुतस्तु कर्मोणिङि कामयते, प्रच्छब्दाण्णिङ्गा पाययते इत्यादौ (?) वृद्धिनिषेधाभावायेग्लक्षणत्वसम्पत्तयेचेयं परमावश्यकी ।

**अचश्च** । अज्निष्टविधेयताप्रयोजकह्रस्वदीर्घप्लुतान्यतमपदघटिते शास्त्रे अच इति पदमुपतिष्ठत इत्यर्थः । विधेयतायामज्निष्टत्वदानादूकालोजित्यादौ नास्योपस्थितिः । विधेयत्वनिवेशात्—'ह्रस्वस्य पिति' 'दीर्घादि'त्यादौ नास्याः प्रवृत्तिः । पदनिवेशात्—'पथिमथ्यृभुक्षामात्' 'दिव उत्' 'अष्टन आ'इत्यादौ नास्योपस्थितिः ।

## ॥ चिदस्थिमाला ॥

शेषः : नन्वत्रापि **कौस्तुभरत्नाकरादि**रीत्या ज्ञापकेन निर्वाहोऽत आह—**भिन्नमिति** । आदिनान्वतुर्वीदित्यादिपरिग्रहः । अत एव तस्या'दिग्ग्रहणङ्क्नर्व्यमिग्लक्षणवृद्धिरेधितव्येति' भाष्यं सङ्गच्छते । किञ्चानाद्' इत्येतत्सिध्यर्थमिदमवश्यं वक्तव्यं परिभाषात्वेन, यथा चैतत्तथा भावप्रकाशादौ प्रतिपादितम् । किञ्च व्यञ्जनस्य निवृत्त्यर्थमप्यावश्यकम्,उणादीनामव्युत्पत्तिपक्षस्य भाष्यसिद्धान्तित्वेन उर्ओडित्वस्य डित्त्वनेर्मुट्चइत्यादेश्च ज्ञापकत्वासम्भवात् । एतेन **कौस्तुभरत्नाकराद्युक्तं** सर्वमपास्तम् । अत एव भाष्ये व्यञ्जनार्थमिदं स्थापितम् । निर्दिष्टस्थानिकत्वा'दचो ञ्णिती'त्यादावप्रवृत्तिः, विधिष्वत्र पक्षे यथान्वयस्तथा स्पष्टमन्यत्र, तदाह-**दिगिति** । 'ह्रस्वादीनामावृत्ति'रिति **रत्नाकरोक्तिनिरासायाह—अजिति चेति** । नेयमनुकरणत्वात् सञ्ज्ञापरत्वादाह—**ह्रस्वेत्यादीति** । स्पष्टप्रतिपत्त्यर्थञ्चेदं, तेन न पूर्वग्रन्थविरोधः । पूर्वसूत्राविषयवारणार्थत्वेनैवं व्याख्यानं सफलमित्याह—**दिव इति** । यद्यप्याकारो वृद्धिरिति तद्विषयत्वं, तथापि असम्भवात्तत्र तदप्रवृत्तिरिति भावः । **शेषमिति** । विधीयते इत्यस्य लाभः, अच इति षष्ठ्यन्तं पदमित्यस्योपपत्तिः, 'निर्दिष्टस्थानिकेऽनुपस्थितिः' 'सम्भवन्ती'ति न्यायेन'ह्रस्वो नपुंसके'इत्यत्र सामानाधिकरण्येनान्वयः, तेन 'सुवाक् ब्राह्मणकुल'मित्यादौ नातिप्रसङ्गः । 'शमामष्टाना'मित्यादौ तदसम्भवाद्वैयधिकरण्येनैवान्वयः, 'वाक्यस्य टे'रित्यत्र सामानाधिकरण्यसम्भवेपि टिग्रहणसामर्थ्याट्टेरच इत्यर्थलाभः । अन्यथाऽलोन्त्यपरिभाषया सिद्धे तदानर्थक्यं स्पष्टमेव, तेनायुष्मानेधीन्द्रवर्मन्नित्यादिसिद्धिरिति सर्वमित्यर्थः ।

## ॥ सदाशिवभट्टीयम् ॥

बोध्यम् । **अचश्च** । **शेषमिति** । पदोपस्थापकत्वं शब्दव्यापाराश्रयणं विधीयते इति पदाध्याहारश्च, तेन 'ह्रस्व' इति सूत्रे 'त्यदादीनाम' इत्यादौ 'छे चे' त्यादौ च न दोषः, अन्यथा परत्वादलोन्त्यस्य प्रवृत्तौ चिच्छेदेति न सिध्येत्, 'त्यदादीनाम' इत्यत्वमन्त्यस्य न स्यात्, 'श्रीपच्छत्र'मित्यत्रैव तुक् स्यात्,

**आद्यन्तौ** । यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न प्राप्नोति तथापि समूहयोरन्वयबोधोत्तरं 'यथासङ्ख्य'मितिसूत्रारम्भसामार्थ्यात्पुनः प्रत्येकान्वयः । लोके त्वेवं रीत्या प्रयोगोऽसाधुरेवेति भाष्ये स्पष्टम् । अत्रैव यथासङ्ख्यसूत्रोपन्यासो युक्तः ।

## ॐ अभिनव-चन्द्रिका ॐ

**असाधुरेवेतीति** । वस्तुतस्तु एकरूपावच्छिन्नस्य एकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वय-बोधेच्छाया एव सहविवक्षापदार्थत्वेन टित आद्यवयवे कित अन्तावयवेऽन्वयेपि अन्वयिता-वच्छेदकीभूतत्वस्यैक्येन सहविवक्षाया अबाधितत्वेन द्वन्द्वः साधुरेव । अत एवाजाविधनौ देवदत्त-यज्ञदत्तावित्यादौ 'न ज्ञायते कस्य अजाधनंकस्य अविधन'मित्येवोक्तम्, न त्वसाधुत्वम् । अत एव एकद्विदारगुः, एकद्वित्रिकलत्रपुत्रपशुमान्, वानप्रस्थयतिब्रह्मचारिणां भागिनः—क्रमेणाचार्य-सन्छिष्यधर्मभ्रात्रेकतीर्थिन इत्यादिनिर्देशास्सङ्गच्छते । किञ्च मूलोक्तदिशा मिलितानामेकत्रान्वयबोधेच्छा यदि सहविवक्षा तर्हि धवखदिरौ छिन्धि घटपटौ नीलावित्यादौ द्वन्द्वानापत्तिः । धवनिष्ठविभागस्य खदिरनिष्ठविभागभिन्नतया पटनिष्ठनैल्यस्य घटनिष्ठनैल्यभिन्नतया एकत्र मिलितानामन्वयाभावात् । ननु यथासङ्ख्यसूत्रसहकारेण 'आद्यन्तौटकिता'वित्यादेः कीदृशो वाक्यार्थ इति चेच्छृणु । 'स्वनिष्ठा-

## ॐ चिदस्थिमाला ॐ

**नैकत्रेति** । प्रत्येकान्वयस्य लक्ष्यसंस्कारकतयेष्टत्वेन सम्भावितस्यापि लक्ष्यासंस्कारकत्वेनानिष्टत्वात् । तथाच सहविवक्षा नेति भावः । इतरेतरद्वन्द्वेपि साहित्यं विशेष्यमित्याह—**समूहेति** । एवञ्च मिलितस्येत्यत्र भावे क्तो बोध्यः, एवञ्च सहविवक्षासत्त्वात् द्वन्द्वोपपत्तिरिति भावः । नन्वेवं कथं लक्ष्यसंस्कारोऽत आह—**बोधोत्तरमिति** । व्यस्तस्थले स्थानाख्यलौकिकप्रमाणेनैव क्रमान्वयस्य सिद्धत्वादाह—**यथासङ्ख्यमिति** । शास्त्रीयप्रयोगे एवेति भावः । अत एवाह—**लोके त्विति** । गमकाभावात्, तथाच 'विकृताविकृता देहं घ्नन्ति ते वर्द्धयन्ति चे'ति वाग्भट्टप्रयोगादिकं चिन्त्यमिति भावः । अत एवाह—**अत्रैवेति** । इतः प्रागेवेत्यर्थः,

## ॐ ज्योत्स्ना ॐ

**असाधुरेवेति** ।'लोचनाधरकृताहृतरागे' त्यादौ तु साहित्यावच्छिन्नान्वयमात्रेण साधुत्वं, विवक्षितार्थ-प्रतीतिस्तुपार्ष्णिकी प्रकरणादिना भविष्यति,एवं विकृताऽविकृता देहं घ्नंति तेवर्तयंति चेति वाग्भटश्लोकादौ चशब्दबोधितसाहित्यावच्छिन्नत्वस्य तत्रापिसद्भावात् । चशब्दाप्रयोगेत्वयुक्तमेवेति भावः ।

## ॐ सदाशिवभट्टीयम् ॐ

न देवच्छत्रमित्यादाविति बोध्यम् । **आद्यन्तौ टकितौ** । **नैकत्रान्वय इति** । विशेषणतया विशेष्यतया चेत्यर्थः । आद्ये सविशेषणत्वाद्द्वन्द्वो न स्यात्, अन्त्ये साहित्याभावादेकशेषो न स्यादिति बोध्यम् । **द्वन्द्वो न प्राप्नोतीत्यत्र**,—द्वन्द्वपदमेकशेषस्याप्युपलक्षणम् । **परत्वादमुं बाधत इति** । न च कित्प्रत्यये

## ॐ विषमपदविवृतिः ॐ

**आद्यन्तौ** । **सूत्रारम्भसाभर्थ्यादिति** । न च 'हलो यमा'मित्यादौ तच्चरितार्थम्, लोके उपस्थिति-क्रमेणान्वयस्य क्लृप्ततया तेनैव निर्वाहात् । सञ्ज्ञाया निर्देशेषु लोकन्यायेन सिद्धेर्यथासङ्ख्यसूत्रे भाष्ये उक्तत्वेन सञ्ज्ञया द्वन्द्वेन च निर्देशे एतत्सूत्रारम्भसामर्थ्येनैव क्रमेणान्वयस्य वक्तव्यत्वात् ।

**लोके त्वेवमिति** । समूहयोरन्वयबोधोत्तरं पुनः प्रत्येकान्वयविवक्षया प्रयोगोऽसाधुरिति भावः । तथा च 'तीर्णदग्धाब्धिलङ्क' इति प्रयोगोऽसाधुरिति **केचित्** । **अन्ये** त्वत्रा'जाविधनौ देवदत्त-यज्ञदत्तावित्युक्तौर्न ज्ञायते कस्याजाधनं कस्याऽवय' इति भाष्यस्वरसात्-द्वन्द्वगर्भबहुव्रीह्यर्थस्य समूहस्य द्वन्द्वार्थसमूहेनान्वयोत्तरं न प्रत्येकमन्वयः । परस्य द्वन्द्वार्थयोस्तु प्रत्येकमन्वयो भवत्येवे-त्याहुः । **भाष्ये स्पष्टमिति** । तथा च भाष्ये—'यद्यपि तावल्लोके एष दृष्टान्तो, दृष्टान्तस्यापि

द्वन्द्वान्ते श्रूयमाणस्येच्छ्व्दस्य प्रत्येकं सम्बन्धः। 'पुरस्तादपवाद'न्यायेन स्थानेयोगत्वस्यायमपवादः। प्रत्ययपरत्वन्तु परत्वादमुं बाधते। तेन चरेष्टादयः परा एव भवन्ति। अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते, तदाह—**यस्योक्ताविति।**

### ॐ अभिनव-चन्द्रिका ॐ

पेक्षाबुद्धीयविषयता-सजातीयाऽपेक्षाबुद्धिविषयता-वत्त्व'-'स्वप्रतियोगिकसंसर्गमर्यादाप्रयोज्यसर्गवत्त्वो'भयसम्बन्धेन यथासङ्ख्यस्थले सर्वत्र विशेषणत्वं, विषयतासाजात्यञ्च विषयतायां—स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व, 'स्ववृत्ति—यत्स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टत्वावच्छिन्नधर्मिताल' 'स्ववृत्ति स्वनिरूपकाऽपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वैतदन्यतरवत्त्वैतदुभयधर्मेण। प्रकृते च टिन्निष्ठापेक्षाबुद्धिविषयतासजातीयापेक्षाबुद्धिविषयता आदिनिष्ठैवापेक्षाबुद्धिविषयता भवति, न त्वन्तनिष्ठा, तथा हि—टिन्निष्ठा यापेक्षाबुद्धिविशेषाविषयता—'टिदेकः एतद्विशिष्टः किदेकः' इत्याकारकापेक्षाबुद्धीया, तन्निरूपकापेक्षाबुद्धिः प्रागुक्ता, तन्निष्ठा या जनकता तन्निरूपिता या जन्यता द्वित्वे, तादृशजन्यतावच्छेदिका सङ्ख्यात्वव्याप्यजातिः द्वित्वत्वं, तदवच्छिन्नजन्यता आद्यन्तवृत्तिद्वित्वनिष्ठा जन्यता, तन्निरूपितजनकता-'आदिरेकस्तदेकत्वविशिष्टोन्त एक'इत्याकारकापेक्षाबुद्धिनिष्ठजनकता, तादृशजनकतानवच्छेदकत्वस्य; एवं स्वं पूर्वोक्तापेक्षाबुद्धीयविषयता तन्निरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितएकत्वानवच्छिन्नधर्मिता'यमेक'इत्याकारकापेक्षाबुद्धीयाऽयम्पदार्थनिष्ठाधर्मिता, तादृशधर्मितात्वस्य, स्ववृत्तित्वस्य च आदिनिष्ठापेक्षाबुद्धिविषतायां सत्त्वात्।

अन्तनिष्ठापेक्षाबुद्धिविशेषविषयतायां टिन्निष्ठापेक्षाबुद्धिविशेषविषयतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वस्य सत्त्वेऽपि, टिद्वृत्ति यत्स्वनिरूपकापेक्षाबुद्धीयैकत्वप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वंतस्यासत्त्वात्। [स्वनिष्ठापेक्षाबुद्धिविशेष्यतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतानिरूपितजन्यतावच्छेदकद्वि-

### ॐ चिदस्थिमाला ॐ

प्रथमोपस्थितत्वादिति भावः। टितो लाभायाह—**द्वन्द्वान्त इति।** तस्यात्र प्रत्येकपर्याप्तार्थवाचकत्वाद्व्यासज्यवृत्तिधर्मावच्छिन्नवाचकस्य तु तादृशस्य न तथा, यथा'ऽग्नीषोमौ देवते'त्यादाविति बोध्यं, 'नासिकावचन'मित्यादिनिर्देशात्। बाध्यविशेषचिन्ताश्रयणेनाह—**पुरस्तादिति।** स्यादयं=योगः। एवमग्रेऽपि।

ननु 'गापोष्टक्' 'व्रीहिशाल्योर्ढ'गि त्यादौ प्रत्ययत्वागमत्वयोः समावेशेऽपि तत्प्रयुक्तकार्यस्य इनम्वदबाधितत्वेन सामगो व्रैहेय इत्यादौ न दोषोऽत आह—**चरेष्टादय इति।** आदिना ल्युडादयः। अत एव=स्थानेयोगत्वमात्रापवादत्वादेव। यत्र=सूत्रे। वस्तुतस्तदभावाज्ज्ञातायास्तस्या निवारणासम्भवाच्चाह—**सम्भेति।** **तत्रैवेदमिति।** एतेन षष्ठीत्यपकर्षेण षष्ठ्यन्तस्य निर्दिश्यमानस्याद्यन्तावित्यर्थादस्य लाभ इत्यपास्तं,

### ॐ सदाशिवभट्टीयम् ॐ

उभयोरपि समावेशसम्भवाद्विरोधाऽभावेन विप्रतिषेधसूत्राप्रवृत्तावन्त्यत्वेन धातुत्वे 'आधिं प्रधिं पश्ये'त्यादावेरनेकाच इति वाच्यं, तेन तस्यैवावध्यवधिभङ्गावस्यावयवावयविभावस्य च लोकतन्त्रविरुद्धत्वात्, प्रकृतसूत्रभाष्यन्त्वेकदेश्युक्तमिति बोध्यम्। नन्ववयविनः सूत्रेऽनुपादानादाद्यन्तपदाकाङ्क्षितोऽन्वयी-

### ॐ विषमपदविवृतिः ॐ

पुरुषारम्भो निवर्त्तको भवति, कः? सङ्ख्यातानुदेशो नामे'ति। **परत्वादिति।** इदमयुक्तं—'प्रत्ययः' 'परश्चे'त्यस्य पदैकवाक्यतयाऽन्वयस्य वक्ष्यमाणत्वेन वाक्यार्थबोधात्पूर्वमेव प्रवृत्तेः। अस्य च 'टकितौ यमुद्दिश्य विहितौ तदाद्यन्तौ भवत'इत्यर्थेन वाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोर्यौगपद्या-

आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः। यथासङ्ख्यसिद्धमर्थमाह—**क्रमादिति**। इताविति किम्? टुक् पर्यायेणाद्यन्तयोर्मा भूत्।

**ॐ अभिनव-चन्द्रिका ॐ**

त्वरूपजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वस्याभावादिति? दिक्।] एतत्सर्वमभिप्रेत्याह—**यथासङ्ख्यसिद्धमर्थमिति**।

**ॐ चिदस्थिमाला ॐ**

त्र मानाभावात्। नन्वेवमपि प्रकृत्यर्थलाभः कथमत आह—**आद्यन्तेति**। **टुगिति**। ङ्णोरिति विहितः। एतेन'टगिति बुध्वा 'पूर्वापरविरोधाच्चिन्त्यमिद'मिति **मन्दोक्त**मपास्तम्। यद्यपि'नित्यः परयणादेश' इति भाष्यसिद्धान्तरीत्यानिष्टमेव स्यात्तथापि 'क'सामर्थ्यादिष्टमपि इत्याशयेनाह—**पर्यायेणेति**। यद्यप्येवं सति कुकः ककारेण ज्ञापकेनेतोरेतयोस्तदर्थत्वं, न तु श्रूयमाणयोरिति सुवचं, तथापि तस्य विशेषापेक्षत्वं सम्भाव्येतेतीद्ग्रहणमावश्यकम्। एतेन 'नित्यः परेति रीत्या शब्दपरविप्रतिषेधेन निर्वाहात्पर्यायो न, किञ्चो-क्तज्ञापकेन निर्वाहे इद्ग्रहणं चिन्त्यप्रयोजनमेवे'ति **मन्दोक्त**मपास्तम्। इयं परिभाषा सञ्ज्ञा चेति पक्षद्वयं, तत्राद्यपक्षेणात्रोपन्यासः। ननु पूर्ववद्विशेषचिन्तैवात्रास्त्विति सामान्यचिन्ताङ्गीकारे किं मानं?, न च श्रमो मित्वं मानमिति **रत्नाकरदण्ड्या**द्युक्तं युक्तं, तस्य श्रवणार्थत्वात्। न च 'श्वाने'ति सूत्रं तथेति

**ॐ सदाशिवभट्टीयम् ॐ**

कस्तत्राह—**आद्यन्ताक्षिप्त इति**। तदाकाङ्क्षित इत्यर्थः। **यच्छब्दार्थ इति**। 'यत्र टिकितौ तत्राद्यन्त-पदोपस्थिति'रिति सूत्रार्थेन तत्र तत्र षष्ठ्यन्तस्य सत्त्वेन तदन्वयेन नैराकाङ्क्ष्यमिति भावः। **इताविति-किमिति**। मत्वर्थीयेनिना 'टकिना'विति वक्तव्यं, कुकश्च ककारो न कार्य इति लाघवं, पदलाघवञ्च, धुडादौ टोच्चारणेनोपदेशे टकारवान् ककारवांश्चेत्यर्थ इति प्रश्नः। **पर्यायेणेति**। [१]टुकि टकारवत्त्वककारवत्त्वोभय-सत्त्वादित्यर्थः। इदमुपलक्षणम्—अप्रतिपत्तेरपि। तत्रोक्तप्रेष्यदृष्टान्तेन सत्वेनोभयोरपि प्राप्त्या विरोधात्समावे-शाऽसम्भवेन विप्रतिषेधसूत्रभाष्योक्ततृजादिदृष्टान्तेन तस्या अपि प्राप्तेः। बहिरङ्गेण सिध्यतीत्य'चः परस्मि'न्निति सूत्रभाष्योक्तरीत्याऽनिष्टमेव तु नापादितम्, उभयोरपि विशिष्टापेक्षत्वेन तत्त्वाभावात्। शब्दपरविप्रतिषेधाश्रयणे तु न मानमिति भावः। तदाश्रयणे तु 'शुषः क' 'आदेश्च कः' 'धान्तस्य टः'? 'राज्ञः क च' 'खरि च' 'वावसाने' 'वाक्' 'ष'डित्यादौ दोषो बोध्यः। यद्वा—तदपि मास्तु, टकावाद्यन्तयोः सञ्श्लेवार्थः, धुडादौ च धु इति पृथक्पदं, ट इति च। आद्यं स्वरूपपरं नपुंसकं, धुट् भवति धकार आद्यावयव इत्यर्थः, यत्र चाट्सकारादावुच्चारणार्थष्टकारस्तत्राद्यादेशापत्त्या पृथक्पदत्वा-सम्भवस्तत्र कर्मधारयो बोध्यः। परनिपातस्तु अनित्यत्वात्प्रकरणस्य। पूर्वोक्तैर्जश्वरादिपदैर्विहिते तु नाति-प्रसङ्गः, उच्चारितस्यैव प्रत्यायकत्वात्। यत्र चादौ मध्ये च 'तवकममकौ' 'ठस्येकः' 'क्तान्तात्क' इत्यादौ तत्रापि जश्त्वाभावेन समासाभावनिर्णयेन न दोषः, यत्र चा'देश्च क'इत्यादावुच्चारणार्थवर्णरहितस्तत्रापि विशेष्यानुक्त्या आदिर्भवतीत्याद्यर्थासम्भवेन 'परश्च वे'त्यादाविव व्याख्यानेन च स्वरूपपरत्वमेवेति न दोष इति प्रश्नाशयः। **पर्यायेणेति**। विशेष्यानुपादानेपि प्रकारतयोपस्थितस्वरूपस्यैव तत्त्वं स्यात्।

**ॐ विषमपदविवृतिः ॐ**

भावात्। **यथासङ्ख्यं सिद्धमिति**। ननु 'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्या'दिति न्यायविरोध इति चेन्न, एतत्सूत्रभाष्यप्रामाण्येनो'भयनिर्देशे पञ्चमीनिर्देशो बलवानन्तरङ्गत्वा'दिति तत्र भाष्योक्त्या'ऽऽदेः परस्ये'ति सूत्रे'ऽपवादविप्रतिषेधात्सर्वादेशो भविष्यती'ति भाष्येण च तन्न्यायस्यैतच्छास्त्रेऽनाश्रयणबोधनात्। अत'एवो 'रण्पर' 'इग्यणः सम्प्रसारण'मित्यादौ 'षष्ठी-स्थाने' इत्यादेः प्रवृत्तिः। **पर्यायेणेति**। इदमप्ययुक्तम्—इताविल्यस्याभावे 'टकावाद्यन्तौ भवत' इत्यर्थे-ऽनुबन्धविनिर्मुक्तपदार्थोपस्थितेः स्वसिद्धान्तत्वेनाद्यवयवस्यैवाप्तेः, इडादौ टकारोच्चारणासामर्थ्ये-

१. अत्रायं ग्रन्थस्त्रुटितो विपर्यस्तश्च भाति। २. 'टुकि टकारवत्वककारवत्वोभयसत्त्वेनोभयोरपि प्राप्त्या विरोधात्समावेशासम्भवेन विप्रतिषेधसूत्रभाष्योक्ततृजादिदृष्टान्तेनेत्यर्थः। इदमुपलक्षणम्—अप्र-तिपत्तेरपि। तत्रोक्तप्रेष्यदृष्टान्तेन तस्या अपि प्राप्तेः'—इति पाठान्तरम्।

**मिद्चो** । अयं व्याप्यसामान्यचिन्तया स्थानियोगत्व-प्रत्ययपरत्वयोरपवादः । 'तृणह' इति निर्देशात् । **निर्धारणे इति** । 'यस्य समुदायस्य मिद्विहितः तस्याचां मध्ये' इत्यर्थः । सौत्रमेकवचनमिति भावः । **तस्यैवेति** । यस्य विहितस्तस्यैवेत्यर्थः । अत एव

❀ अभिनव-चन्द्रिका ❀

**निर्धारण इति** । निर्धारणपञ्चम्यर्थश्च—यथा 'नृणां द्विजः श्रेष्ठ' इत्यादौ श्रेष्ठ्ये नृसमुदायस्य—'स्वघटकवृत्तित्वं' 'स्वघटकद्विजेतरयावद्वृत्तित्वं'चैतदुभयसम्बन्धेन वैशिष्ट्यम्. तथा प्रकृतेपि अन्त्यत्वे अच्समुदायस्य—स्वघटकवृत्तित्वं स्वघटकान्त्याजितरयावद्वृत्तित्वञ्चेति ।

यत्तु कारकशेखरे 'नृणां द्विज' इत्यादौ नृसमुदायस्य द्विजे'स्वघटकवृत्तित्व''स्वघटकद्विजेतरयावद्वृत्तित्वो'भयसम्बन्धेन स्वविशिष्टश्रेष्ठ्यवत्त्वमिति, तन्न, **'अचोन्त्यादिटी'**तिसूत्रस्थस्वग्रन्थविरोधात्, तथाहि तत्रहि अन्त्यादी'ति गमकत्वात्समास इत्युक्तं, भवन्मते चान्त्यत्वे अन्वयाभावेन निर्धार्यमाणाच्येवान्वयेन गमकत्वादित्यस्यासङ्गत्यापत्तेः । निर्धारणहेतोः श्रैष्ठ्यादेः सम्बन्धघटकत्वेन श्रेष्ठादिपदानां निरर्थकत्वापत्तेश्च, उद्देश्यविधेयभावानुपपत्तेश्च, विधेयश्रैष्ठ्यादेः उद्देश्यतावच्छेदकसंसर्गघटकत्वात्पुरुषोत्तम इत्यादौ 'न निर्धारणे'षष्ठीसमासनिषेधमाशङ्क्य'यतो, निर्धार्यते यश्च निर्धारणहेतुः, यश्च निर्धार्यमाणस्तद्बोधकपदत्रयसन्निधान एव 'यतश्च निर्धारण'इति सूत्रं प्रवर्तत इत्युक्त्वा 'उत्तमः पुरुषस्त्वन्य'इत्यादिगीतासहकारेण कर्मधारयसमासपरकैयटादिग्रन्थविरोधाच्च । भवन्मते निर्धार्यमाण एव निर्धारणपञ्चम्यर्थान्वयेन सामर्थ्याभावादेव षष्ठीसमासाप्राप्तेरिति दिक् । **एकदेशे**

❀ चिदस्थिमाला ❀

**रत्नाकरोक्तं** युक्तं, सामर्थ्यात्तस्य व्यवधानेऽपि प्रवृत्तेरत आह—**तृणेति** । 'तस्यैवे'त्यस्य योन्त्यइत्यनेनान्वयस्यैकाच्स्थलेऽव्याप्तिरनेकाच्स्थले यत्किञ्चित्समुदायमादायातिव्याप्तेश्च निरासायाह—**यस्येति** ।

यत्तु 'जात्यैकवचन'मिति **रत्नाकरदण्ड्यादयस्तन्न**, तथा सत्यन्यत्रापि तथा प्रयोगापत्तेरत आह—**सौत्रमिति** । उक्तहेतोरेव व्याचष्टे—**यस्येति** । समुदायस्येत्यर्थः । ननु यथाश्रुते 'अवयवावयव' इति न्यायेन निर्वाहे तथा व्याख्याने किम्मानमत आह—**अत एवेति** । समुदायावयवत्वाङ्गीकारादेवे-

❀ सदाशिवभट्टीयम् ❀

तथा च टुकि आद्यन्तत्वस्य यौगपद्यासम्भवेन टस्यैव पर्यायेण तत्त्वापत्तिः, संज्ञिभेदान्न शब्दपरविप्रतिषेध इत्युत्तराशयः ।

**मिद्चोऽन्त्यात्परः** । मस्य श्रवणार्थत्वेनापि सार्थक्यसम्भवादाह—**निर्देशेति** । नन्वक्षरसमाम्नायेऽचां मध्येऽन्त्य औकार एवेत्यतिप्रसङ्गोऽव्याप्तिश्चेत्यत आह—**यस्य समुदायस्येति** । एतेन तस्यैवेति द्वितीयतच्छब्देन परामर्शात् प्रथमस्य प्रक्रान्तत्वं बोधितम् । **सौत्रमिति** । निर्धारणविभक्तेः समूहवाचकादुत्पत्तेर्वक्ष्यमाणतयाऽच्पदे एकशेषावश्यकत्वेन तस्य च समाहारद्वन्द्वविषयेऽप्राप्त्या बहुवचनं द्विवचनं च तत्र न्याय्यं, 'कारके' इति सूत्रस्थवक्ष्यमाणभाष्यमपि न्यायसिद्धे एवार्थे लिङ्गम् । समाहारद्वन्द्वे तु निर्धारणविभक्तेरिष्टापत्तिस्तु न, भाष्यस्यापूर्वार्थकल्पकत्वे मानाभावात् । एतेन तत्र तत्र सौत्रकल्पनापेक्षया प्रकृतनिर्देशेन तद्भाष्यस्य सप्तमीसङ्कोचकत्वमेवोचितम् । 'षष्ठी शेष' इत्यस्यापि सङ्कोचकल्पने मानाभावादित्यपास्तम् । **यस्य विहितस्तस्यैवेति** । अन्त्याच्स्तु न परामर्शः, ततः परत्वस्य तदवयवत्वस्य चैकत्र विरुद्धत्वात् । न्याय्येऽर्थे लिङ्गमप्याह—**अत एवेति** । परग्रहणं कुर्वतः सूत्रकृतोपि समुदायभक्तत्वमेव

❀ विषमपदविवृतिः ❀

नेत्सञ्ज्ञकटकारादिसम्बन्धिनष्टकारान्तस्य वाऽऽदित्वादिबोधनं तु क्लिष्टमितीद्धरणं सार्थकमिति बोध्यम् । **मिद्चोन्त्यात्** । **निर्देशादिति** । उपलक्षणमेतत्—श्नमो मित्त्वस्य । **सौत्रमेकवचनमिति** । 'कारके' इत्यत्र 'निर्धारणसप्तम्यन्तत्वे कारकेष्विति वदे'दिति भाष्येण निर्धारणार्थकविभक्तेर्बहुवचनरूपाया एव विभक्तेः साधुत्वबोधनादिति भावः । **इति भाष्यमिति** । 'मिद्चोन्त्या'दिति

'समुदायभक्तो नोत्सहतेऽवयवस्येगन्ततां विहन्तुमि'ति भाष्यं सङ्गच्छते । **अन्तावयव इति** । पूर्वसूत्रात्समस्तमप्यन्तपदमेकदेशे स्वरितत्वप्रतिज्ञाबलादनुवर्त्तते इति भावः । 'मुञ्चती'त्यादिविषये तु फलाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः ।

### ❀ अभिनव-चन्द्रिका ❀

**स्वरितत्वप्रतिज्ञानादिति** । वस्तुतस्तु एकदेशे स्वरितत्वप्रतिज्ञाने न मानं, नापि फलं,'मिदचोन्त्या'दित्यत्र परशब्दस्य अवयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन परत्वेऽवधितयान्त्याचोऽवयवत्वेन च निरूपितत्वसम्बन्धेन यस्य मिद्विहितस्तस्य च अन्वयस्वीकारेण मुञ्चतीत्यादावनुपपत्त्यभावात् ।

### ❀ चिदस्थिमाला ❀

त्यर्थः । एवञ्च 'पञ्चारत्नीनी'त्यादा'विगन्तकाले'ति स्वरसिद्धिरन्यथोत्तरपदस्यापि नान्तत्वापत्त्या स न स्यादिति भावः । 'कोसौ नुम् ? अन्त्यादचः पर' इति प्राचां व्याख्यानमसदिति ध्वनयन्नाह— **मुञ्चतीति** । ननु समुदायान्तावयवत्वसम्पत्तिरेव फलमत आह—**अयोग्यत्वादिति** । तेषां अन्त्यादचः परस्मिंस्तदन्तावयवत्वस्य बाधितत्वादित्यर्थः । **अंशेति** । परत्वांशप्रवृत्तिस्त्वस्त्येव, अन्यथान्त्यस्य

### ❀ ज्योत्स्ना ❀

**इति भाष्यमिति** । पञ्चारत्नीनीत्यादाविगन्तेति स्वराभावमाशङ्क्येदमुक्तम् । **इत्यंशाप्रवृत्तिरिति** । इदमन्त्याजवयवनुमादेर्नास्ति समुदायावयवत्वमित्यभिप्रेत्य । तदाश्रयणे तु सङ्घातभक्तोसा'विति भाष्यस्यान्यथापि व्याख्यातुं शक्यत्वात्तस्यैवेत्यस्यान्त्याच एवेत्यर्थो व्यर्थकल्पनानाश्रयणञ्च । नचावयवावयवस्यसमुदायावयवत्वे घटादेः स्वावयवेष्विव स्वावयवावयवेष्वपि समवेतत्वाच्चाक्षुषाभावप्रसङ्गः

### ❀ सदाशिवभट्टीयम् ❀

सम्मतम्, अन्यथा 'मिदचोऽन्त्यस्ये' त्येव वदेत् । ननु तथैवास्तु किमन्त्याजवयवत्वेऽसाधारणं दूषणमिति चेत्, अङ्गिनिष्ठधर्मस्य विशिष्टेऽतिदेशेन तत्तत्कार्यापत्त्या तत्र तत्र परिभाषानित्यत्वप्रयुक्तं गौरवमिति गृहाण । **इति भाव इति** । तथा वक्तुर्मूलकृत इति भावः। वस्तुतस्तु'उरण्रपर' इति सूत्रे स्वयं वक्ष्यमाणरीत्या परशब्दस्यैवावयववाचकत्वेन 'पूर्वं नाभेः कायस्ये'त्यत्रेवान्त्याजवधिकपरत्ववान् समुदायाऽवयवो मिदिति सूत्रार्थः, तदनुवृत्तिप्रतिपादकसूत्रद्वयस्थभाष्यन्त्वेकदेश्युक्तमिति बोध्यम् । यद्वान्त्यपर्याय एकः परशब्दः, पञ्चमीप्रयोजको दिग्वाचकश्चापरो, नत्वेकस्यैवोभयार्थकत्वम्,उक्तभाष्यात् । प्रकृते च पञ्चमीनिर्देशाद्दिग्वाकत्वनिर्णयेनानुवृत्तेरावश्यकत्वमिति प्रकृतसूत्रस्थसकलग्रन्थतात्पर्यम् । परशब्दे तु अन्तपर्याये बाधकाभावात्तथैव वक्ष्यते । तत्सूत्रस्थभाष्यन्त्वेकदेशे स्वरितत्वप्रतिज्ञायाः क्लृप्तत्वादुपायान्तरपरमितिबोध्यम् । वस्तुतस्तु अनुवृत्तिपरसूत्रद्वयस्थभाष्यविरोधान्मानाऽभावाच्च पूर्वपरशब्दयोर्नावयवस्वांशेपि शक्तिः, 'उरण्रपर' इति सूत्रस्थावयववाचिनेत्यस्य वस्तुतस्तद्वाचिनेत्यर्थः, न तु तत्त्वेनेति, अत एवाग्रे 'अनुनासिकात्पर' इति विहितस्यावयवत्वे मानाभाव इति वक्ष्यते, ऐचोरपि हरदत्तमतेनावयवत्वं वक्ष्यते। 'पूर्वं नाभे' रित्यादौ तु षष्ठीवाच्योऽवयवावयविभाव इति बोध्यमिति सर्वं**वदातम्** ।

ननु समुदायनिरूपितत्वचरमत्वोभयविशिष्टावयवत्वस्यान्तपदार्थत्वेन विशिष्टस्यायोग्यत्वेपि अवयवत्वमात्रबोधकस्य योग्यत्वात्तत्राह—**फलाभावादिति** । तन्मध्यपतितन्यायेनैव तत्त्वासिद्धेरिति भावः । विशिष्टाभिप्रायेणाह—**अयोग्यत्वादिति** । **इत्यंशाऽप्रवृत्तिरिति** । ननु विनिगमकाभावादन्त्याऽचः परत्वांशस्यैव प्रवृत्तिरस्त्विति चेन्न, तद्बोधनवैयर्थ्यस्यैव गमकत्वात् । न च हलन्तेऽप्रवृत्तिरेव तद्बोधनफलम्, तावन्मात्रफलकत्वे 'मिदजन्तस्ये'त्येव ब्रूयादिति भावः ।

परिभाषाणामनियमे नियमकारिणीत्वादाह—**अनिर्धारितेति** । तेन 'उदुपधाया गोहः' इत्यत्र स्थानेयोगत्वं न, उपधापदसन्निधानेनावयवषष्ठीत्वनिर्णयात् ।

### ❀ अभिनव-चन्द्रिका ❀

**निर्णयादिति**। 'स्वघटकत्व' 'स्वघटकान्त्यालवधिकाव्यवहितपूर्वत्वो'भयसम्बन्धेन यत्किञ्चित्समुदायविशिष्टत्वमुपधात्वमेवञ्च उपधात्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन येन सम्बन्धेन निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकपदसमभिव्याहृतषष्ठ्याः तद्रूपानुयोगिकतत्सम्बन्धेतरसम्बन्धाबोधकत्वादिति

### ❀ चिदस्थिमाला ❀

स्यादिति भावः । अनुवृत्त्याद्यभावाचल्लाभोपायमाह—**परीति** । **इत्यत्रेति** । इत्यादावित्यर्थः, तेन 'शास इद्'ङित्यादिपरिग्रहः । **योगत्वं नेति** । 'गोह इति षष्ठ्या' इति शेषः । 'उपधाया' इत्यत्र तु तत्त्वमस्त्येवेति भावः । तदेवाह—**उपधेति** । अन्यथा तस्य, सर्वधातूपधायाश्च स्थाने स्यादिति भावः। 'स्थानरूपसम्बन्धः

### ❀ ज्योत्स्ना ❀

वायुवनस्पतिसंयोगचाक्षुषवारणार्थं स्वाश्रयसमवेतत्वसम्बन्धेन चाक्षुषाभावस्य तच्चाक्षुषे प्रतिबन्धकत्वकल्पनावश्यकत्वादिति वाच्यं, त्रसरेणोरचाक्षुषप्रसङ्गात्, त्रसरेण्वन्यसच्चाक्षुषं प्रति प्रतिबन्धकत्वकल्पने तु गौरवं, तादृशचाक्षुषाभावस्य संयोगचाक्षुषे प्रतिबन्धकत्वकल्पनामात्रेणापि वायुवनस्पतिसंयोगचाक्षुषवारणस्य सुशकत्वात् ।

न च 'टघुटघुलौ तुट् च'ति तुटष्टित्त्वेन सिद्धे टघुटघुलोष्टित्करणाज्ज्ञापकादवयवावयवस्य समुदायावयवत्वाभावः, तत्फलं तु 'पठिता विद्ये'त्यत्र ङीबभाव इति वाच्यम्, धेटष्टित्वमादाय जायमानस्य स्तनन्धयीतिङीपोऽप्रसङ्गात् । न च धेटष्टित्वसामर्थ्यात्सः, कल्पनागौरवात् । टघुटघुलोष्टित्करणात्तु साक्षादवयविनि स्वप्रयुक्तकार्यसम्पादनेन चरितार्थस्यावयवव्यवयविनि स्वप्रयुक्तकार्यप्रयोजकत्वाभावज्ञापनेनापि 'पठिता विद्ये'ति ङीबभावस्य वक्तुं शक्यत्वात् । अत एव यासुटो ङिद्वचनस्य समुदायविशेषकत्वादुच्यादुप्यादित्यादौ सम्प्रसारणम्, तत्र साक्षादवयविनि स्वप्रयुक्तकार्यस्य कस्याप्यभावात् । न ह्यत्र सामर्थ्यं वक्तुं शक्यते, 'भिद्या'दित्यादौ क्ङितीति परसप्तमीपक्षे गुणनिषेधेन चरितार्थत्वात् । ध्वनितश्चेदं 'क्ङिति चे'त्यत्र भाष्यकैयटयोः । नुमोऽन्त्याजवयवत्वं तदवयवमकारस्य प्रयोजनं, नकारस्तु साक्षादवयविनि स्वावयवत्वप्रयुक्तकार्यस्यासम्पादकत्वात्समुदायावयवो भवत्येव । नन्वेवमपि पञ्चारत्निशब्दावयवत्वमिवारत्निशब्दावयवत्वमपि नुमः स्यादितीगन्तोत्तरपदकत्वाभावात् स्वराप्रसङ्गाद्भाष्यविरोधस्तदवस्थ इति चेन्न, यत्सङ्घातावयवत्वेनोपात्तस्यावयवस्य योऽवयवः स तत्सङ्घातस्याप्यवयव इति विज्ञानादङ्गावयवान्त्याजवयव-

### ❀ विषमपदविवृतिः ❀

सूत्रस्थ'मिति शेषः। **परिभाषाणामिति** । इदमप्ययुक्तम्–'अलोन्त्यस्यादेः परस्ये'त्येतयोरनियामकत्वात् । तयोरभावे इत्यस्यानन्त्यस्यादेरनादेश्चाप्राप्तेः सन्देहे ऽनियमः । 'नचावयवषष्ठ्यादिषु सन्देह' इति प्रकृतसूत्रस्थं भाष्यं तु सामान्येनार्थोपदेशस्य संशयस्थल एव प्रवृत्तिरित्यभिप्रायकम् । "लौकिकोयं दृष्टान्तः–तद्यथा,–लोके कश्चित्कञ्चित्पृच्छति 'ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिश'त्विति, स तमाचष्टे'ऽमुष्मिन्नवकाशे हस्तदक्षिणो गृहीतव्य' इति 'यस्तत्र तिर्यक्पथो भवति न तत्र सन्देह इति नासावुपतिष्ठते, एवमिहापि सन्देहे नियम" इति भाष्येण तथैव लाभात्। यद्वा–पाक्षिकप्राप्तिकबाधेनोपपत्तौ नियतप्राप्तिकबाधो न न्याय्य इत्यभिप्रायकं भाष्यम् । **निपातनात्साधुत्वस्येति** । स्थानत्वस्यैव सम्बन्धत्वे तु स्थानं योगोऽस्या इति वदेदिति भावः । सम्बन्धस्य प्रतियो-

'स्थानेयोगे'त्यस्य स्थानपदार्थनिरूपितसबन्धार्थिकेत्यर्थः। 'स्थानेन योगो यस्या' इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात्। 'अस्तेरनन्तरे'इत्यादेरपि अनन्तरादिनिरूपित-सम्बन्धे इत्येवार्थः। षष्ठीमात्रोच्चारणे स्थानपदाध्याहार इत्यन्यत्र विस्तरः।

**प्रसङ्ग इति**। 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मित्यादौ तथा दर्शनात्। भावे ल्युट्—

❀ अभिनव-चन्द्रिका ❀

भावः। **तन्निरूपितसम्बन्धार्थिकेति**। स्थानपदार्थानुयोगिकसम्बन्धार्थिकेत्यर्थः। एवमग्रेपि।

**तथा दर्शनादिति**। स्थानपदार्थश्च 'वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रम-विषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारक-ज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता'। स्थानपदार्थतावच्छेदकवृत्तित्वान्वयिनिरूप्यनिरूकभावः षष्ठ्यर्थः। तथा च 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मित्यादौ दर्भनिरूपितवृत्तित्ववती या विशेष्यतावच्छेदकतावच्छेदकता तादृशावच्छेदकताकं यत्—'दर्भकरणकं प्रस्तरणमि-ष्टसाधनत्वप्रकारकभ्रमविषयः' इत्याकारकं ज्ञानं, तादृशज्ञानीयविशेष्यतावच्छेदकं यत्—प्रस्त-रणत्वं, तदवच्छिन्नविशेष्यताकं—इष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं यज्ज्ञानं—'शरक-रणकप्रस्तरणमिष्टसाधनत्वप्रकारकप्रमाविषय'इत्याकारकं ज्ञानं, तादृशज्ञानीयविशेष्यतावच्छे-दकतावच्छेदकता शरेष्विति लक्षणसमन्वयः। 'एव'मिको यणची'त्यादावपि—इन्निरूपित-वृत्तित्ववती या विशेष्यतावच्छेदकतावच्छेदकता 'इक्कर्मकोच्चारणं इष्टसाधनत्वप्रकारकभ्रमविषय'इत्या-

❀ चिदस्थिमाला ❀

षष्ठ्यर्थः' इति **रत्नाकरा**द्युक्तिं खण्डयति—**स्थाने योगेत्यस्येति**। **निरूपितेति**। आदेश्यादेशभावादिरूपे-त्यर्थः। **साधुत्वेति**। एत्व-व्यधिकरणबहुव्रीह्योरित्यादि। अन्यथा समानाधिकरणबहुव्रीहिणैव निर्वाहे तदसङ्गतिः स्पष्टैवेति भावः।

नन्वेव'मस्तेरनन्तरे'इत्यादिभाष्यासङ्गत्यापत्तिस्तेन तेषां तत्त्वालाभादत एव तत्र सामीप्याद्यनेक-सम्बन्धसम्भावनायां तत्स्थाने स इत्यर्थलाभ इति **रत्नाकरोक्तं** सङ्गतमत आह—**अस्तेरिति**। **अनन्तरा-दीति**। अनन्तरादिपदार्थनिरूपिताव्यवहितवृत्तित्वरूपास्धातुसम्बन्धे षष्ठीत्यर्थः। एवेन तदभिमत-व्यावृत्तिः। एतेन मतुप्सूत्रभाष्यप्रामाण्येन सामीप्यादेरषष्ठ्यर्थत्वादिदं चिन्त्यमित्यपास्तम्। **नन्वेवमिको यणित्यादौ** स्थानपदाभावात्कथमुक्तार्थलाभोऽत आह—**षष्ठीति**। 'अनिर्धारितसम्बन्धविशेषे'त्यादिः। अध्याहारे चेदमपि तात्पर्यग्राहकम्। आदिनानन्तरादिपदपरिग्रहः। तदाह—**अन्यत्रेति**। उद्योतादावित्यर्थः।

अप्रसिद्धत्वात्तत्र मानमाह—**दर्भाणामिति**। आभिचारिके कर्मणीदमुक्तम्। तेषां प्रसङ्गे इत्यर्थः। यत्तु तिष्ठन्त्यस्मिन् शब्दा इति व्युत्पत्त्या स्थानमर्थः, 'अस्तेर्भू' रित्यादेरस्तेरर्थे भूः प्रयोक्तव्य इत्यादिवाक्यार्थ इति तन्न, 'इको यणची' त्यादावव्याप्तेस्तच्छनयन्नाह—**भावे इति**। 'अर्थवत्येव स्थान्यादेशभावः' इति

❀ ज्योत्स्ना ❀

नुमोऽङ्गावयवत्वेऽप्यङ्गावयवारान्निशब्दावयवत्वे प्रमाणाभावादिति दिक्। **भाष्ये उक्तत्वादिति**।

❀ सदाशिवभट्टीयम् ❀

**षष्ठीस्थाने योगा**। **निरूपितसम्बन्धेति**। स च विषयविषयिभावादिः। **उक्तत्वादिति**। स्थानस्य सम्बन्धत्वे तत्र व्यधिकरणविग्रहप्रदर्शनमफलं स्यादिति भावः। **अध्याहार इति**। **जगन्नाथ-पण्डितराजस्तु**—अस्यैव सप्तम्यन्तस्य स्थानेपदोपस्थापकत्वमाह—**'योगेति**—कर्मणि घञ्, सप्तम्यन्तं स्थाने इत्यनुकृष्य स्थाने या युज्यत इत्यर्थ' इत्यादिना। तदा न निपातनक्लेश इति बोध्यम्। **प्रसङ्ग इतीति**। स

❀ विषमपदविवृतिः ❀

गितानुयोगितान्यतरसम्बन्धेन द्विष्ठत्वनियमात्स्थानस्य चातथात्वादिति भावः। **दर्भाणां स्थाने इति**। इष्टिविशेषे इदम्। **शराश्च**-स्थूलास्तृणविशेषाः। **प्रस्तरो**-मुष्टिविशेषः।

स्थानशब्दे । प्रसङ्गश्च सति सम्भवेऽर्थवत एव, अर्थप्रत्यायनार्थं शब्दप्रयोगात् । 'इको य'णित्यादेरप्यरेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्तरयकारघटितः प्रयोक्तव्य-

❀ अभिनव-चन्द्रिका ❀

कारकज्ञानीया, तादृशज्ञानीयविशेष्यतावच्छेदकं यदुच्चारणत्वं, तदवच्छिन्नविशेष्यताकं यदिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकं ज्ञानं—'यण्कर्मकोच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयः' इत्याकारकं ज्ञानं, तादृशज्ञानीयविशेष्यतावच्छेदकं यदुच्चारणत्वं, तदवच्छिन्नविशेष्यताकं यत् 'यण्कर्मकोच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयः' इत्याकारकमिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानं, तादृशज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतावान्यणित्यादिबोधः। नच 'जराया' इत्यादिविकल्पस्थले स्थानपदार्थत्वानुपपत्तिः, विकल्पस्थले स्थानिनोऽपि साधुत्वेन 'जराकर्मकोच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयः' इत्याकारकज्ञानस्याभावादिति वाच्यम्, स्थानपदस्य वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतायाम्, इष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकत्वे च खण्डशक्तिस्वीकारेण विकल्पस्थले चेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकत्वरूपखण्डस्य मोषस्वीकारेणादोषात् । अत एवा'नेन महामूर्खेण यण्स्थाने इक्प्रयुक्तः' 'शराणां स्थाने

❀ विद्वत्स्थिमाला ❀

सिद्धान्तस्य सम्भवाभिप्रायकत्वमित्याशयेनाह—**प्रसङ्गश्चेति** । नन्वेव'मिको य'णित्यादौ का गतिरत आह—**इको यणिति** । न च यः कश्चित्तद्घटितः स्यात्, विधेयान्यश्रूयमाणवर्णत्यागे मानाभावात्, तस्य तदर्थबोधनासमर्थत्वाच्च । **इतीति** । 'अर्थ' इत्यस्यानुषङ्गः ।

❀ ज्योत्स्ना ❀

स्थानं=योगस्तद्रूपः सम्बन्धो यस्या वाच्य इति समानाधिकरणबहुव्रीहिणा सिद्धे स्थानेन योगो यस्या इति व्यधिकरणबहुव्रीहिप्रदर्शनं 'षष्ठ्या वाच्यः स्थानादिरर्थो नास्ती'ति सूचयतीति भावः ।

**सति सम्भवे इति**।'इको यणची'त्यादौ त्वगत्यानर्थकस्यापि प्रसङ्गः। वस्तुतस्तत्रापि न दोष इत्याह—**इको यणित्यादेरिति**। **इकारबुद्धिप्रसङ्ग इति** । अस्मिन्पक्षेत्वनर्थकस्यापि प्रसङ्गो ज्ञेय इति विशेषः।

❀ सदाशिवभट्टीयम् ❀

चाहार्यज्ञानरूपापत्तिरूपः, **स्थानित्वञ्च** तद्विषयतापर्याप्त्यधिकरणत्वम्, आदेशत्वञ्च तत्सत्ताव्याप्यसत्तापर्याप्त्यधिकरणत्वम् । यद्वाऽऽपत्तिविषयबुद्धिविषयतापर्याप्त्यधिकरणत्वं—**स्थानित्वम्** । आपत्तिसत्ताव्याप्यसत्ताश्रयबुद्धिविषयतापर्याप्त्यधिकरणत्व**मादेशत्वम्** । अतएवाऽपवादे उत्सर्गकृतमतिदेशेन प्राप्तस्य प्रकारान्तरेण वारितं भाष्ये । अथवा-स्थानपदान्वितत्वं—स्थानपदार्थनिरूपितसम्बन्धवाचकप्रत्ययप्रकृत्यर्थत्वमिति यावत्। स्थानपदान्वितसत्ताव्याप्यसत्तान्वयित्वमादेशत्वम् । अत एव स्थानिवत्सूत्रे कैयटे-'ऽपवादप्रसङ्ग'स्त्विति प्रतीकमुपादाय बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भाव इत्युक्तं, तत्र 'यदि'त्युक्त्याऽन्यथोत्सर्गकृतप्रसङ्गो नास्तीति सूचितं, तच्च तयोरुक्तलक्षणत्वे एव सङ्गच्छते ।

**प्रसङ्गश्चेति**।'इह शास्त्रे गृह्यते' इति शेषः। **सतिसम्भवेइति**।'सार्थक्यस्ये'ति शेषः। 'अचः परस्मि'न्नित्यादौ तु तदसम्भवादनर्थकप्रसङ्गोपि गृह्यते इति भावः । बीजमाह—**अर्थप्रत्यायनार्थमिति** । अयं भावः—नित्यत्वानुरोधेन तस्यैव सोऽन्तस्यापि तस्य स्वीकारे तत्त्वं स्यात्, पदस्य वाक्यस्य च

❀ वरवर्णिनी ❀

**प्रसङ्गश्चेति**। इदमत्र तत्त्वम्—'इको यणची'त्यादौ यत्र स्थान्यादेशभावस्तत्र 'इक्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयतावत्' 'यण्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयताव'दिति च ज्ञानद्वयम्, आद्यज्ञानीया विशेष्यता च-इक्कर्मकोच्चारणनिष्ठा, विशेष्यतावच्छेदकता च—कर्मत्वनिष्ठा, तदवच्छेदकता च इन्निष्ठा । स्थानपदार्थतावच्छेदकवृत्तित्वे च निरूपितत्वसम्बन्धेनेगादेरन्वयः, वृत्तित्वञ्च—विशेष्यतावच्छेदक-

इत्यर्थः । 'एरु'रित्यादेश्च 'तेस्तु'रिति, अतो न शब्दनित्यताहानिः ।

❀ अभिनव-चन्द्रिका ❀

दर्भाः प्रस्तरिता' इत्यादावपि स्थानपदार्थोपपत्तिरिति दिक् । अन्ये तु अभाव एव स्थानपदार्थः, प्रतियोगितयाऽभावान्वयि प्रयोज्यत्वं षष्ठ्यर्थः, अभावस्य च स्यादितिलिङर्थेष्टसाधनत्वेन्वयः, तथा च इकोयणचीत्यादौ इक्प्रयोज्यत्वाभाववदिष्टसाधनत्ववान् यणिति बोधः । विकल्पस्थले स्थानपदार्थाऽभावस्य विकल्पपदार्थाभावेन्वयः । तथा जराया जरसित्यादौ जराप्रयोज्यत्वाभावाभाववदिष्टसाधनत्ववान् जरसिति बोधः । तथा च अभावाभावस्य प्रतियोगिरूपत्वेन विकल्पस्थले स्थान्यपीष्टसाधनमादेशोपीष्टसाधनमित्युभयोरपि साधुत्वं सिध्यतीत्याहुः ।

तेस्तुरिति । 'भवती'त्यस्य स्थाने भवत्वित्यादिप्युपलक्षणम्, अन्यथा शब्दानित्यत्वं

❀ चिदस्थिमाला ❀

**अत इति** ।'तत्प्रसङ्गे'इत्युक्तेरित्यर्थः । अत एव 'सर्वे सर्वपदादेशा' इति सिद्धम् । च्लिसिजादिसङ्ग्रहाय 'सति सम्भवे' इति । नन्वेवं साक्षादवयवानामेव षष्ठीनिर्दिष्टत्वस्य विधेयत्वस्य चानर्थक्यापत्तिरत आह—

❀ सदाशिवभट्टीयम् ❀

नित्यत्वं, तदवयवस्य प्रसङ्गस्वीकारेऽनित्यत्वं स्पष्टमेव । **तेस्तुरिति** । इदञ्च न शाब्दं, किन्तु फलितं, सर्वत्र स्थानिवाचकादेशवाचकयोस्तद्घटिते लक्षणयेकारघटितस्योकारघटित इत्येवं क्रमेणैकरूप एव शाब्दोऽर्थ इति बोध्यम् । **अतो नेति** । तद्घटितं लक्षणाङ्गीकारादेवेत्यर्थः, तेस्तुरितिकल्पनादेवेति तु नार्थस्तेन पचत्वित्यादेः समुदायस्यानित्यत्वावारणात्, तत्कल्पनन्तु प्रत्ययादेरपि कल्पितार्थत्वेन तन्नित्यत्वसंरक्षणद्वारा प्रक्रियानिर्वाहमात्रफलकं न त्वन्यथासिद्धमन्यत्फलमस्ति, पचतेः पचतु रित्यनेनैव तदनित्यत्वस्यापि परिहारात् ।

❀ वरवर्णिनी ❀

तावच्छेदकतायामन्वेति । स्थानपदार्थघटकीभूतचरमविशेष्यतावच्छेदकतावच्छेदकताया आश्रयत्वेनादेशेऽन्वयः । तथा च इग्निरूपितवृत्तितावती या 'इक्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयताव'दिति ज्ञानीया—**उच्चारण**निष्ठविशेष्यतानिरूपित—**कर्मत्व**निष्ठावच्छेदकतानिरूपिता इग्निष्ठा विशेष्यतावच्छेदकतावच्छेदकता, तादृशविशेष्यतावच्छेदकतावच्छेदकतानिरूपकं यत्—'इक्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकभ्रमविषयताव'दिति ज्ञानं, तादृशज्ञानीयां या उच्चारणनिष्ठा विशेष्यता, तदवच्छेदको धर्मः—उच्चारणत्वं, तादृशोच्चारणत्वावच्छिन्नविशेष्यतानिरूपकञ्च यत्—'यण्कर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयताव'-दितिज्ञानं, तादृशज्ञानीया—विशेष्यता—**उच्चारण**निष्ठा, तदवच्छेदकता—**कर्मत्व**निष्ठा, तदवच्छेदकता (विशेष्यतावच्छेदकतावच्छेदकता)—यण्निष्ठेति लक्षणसमन्वयः ।

विकल्पस्थले 'जराया जर'सित्यादौ तु—'वृत्तिविशेष्यतावच्छेदकतावच्छेदकतानिरूपक—(प्रथमज्ञानीय)—विशेष्यताविशिष्ट—(द्वितीयज्ञानीय—)—विशेष्यतावच्छेदकता'प्रसङ्गपदार्थः । वै० 'स्वावच्छेदकोच्चारणत्वावच्छिन्नत्व' 'स्वप्रयोजकशास्त्रप्रयोज्यत्व' 'स्वनिरूपितप्रकारताविशिष्टप्रकारतानिरूपित्वै'तत्रितयसम्बन्धेन । प्रकारतावैशिष्ट्यञ्च—'स्वावच्छेदक—साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्व—घटक—साधुत्व—प्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वा—ऽवच्छिन्नत्व' 'स्वावच्छेदक—साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वा—ऽवच्छिन्नत्वै'तदन्यतरसम्बन्धेन । '**इको** यणची'त्यादौ पूर्वोक्तप्रथमज्ञानीया उच्चारणत्वावच्छिन्ना विशेष्यता—इग्निष्ठावच्छेदकतानिरूपितकर्मत्वनिष्ठावच्छेदकतानिरूपिकैव, तद्वैशिष्ट्यञ्च तादृशद्वितीयज्ञानीयोच्चारणत्वावच्छिन्नविशेष्यतायामक्षतं—द्वयोरेकशास्त्रप्रयोज्यत्वादुच्चारणत्वावच्छिन्नत्वाच्चेति—(प्रकारतविशिष्टप्रकारतानिरूपितत्वस्यापि सत्त्वाच्च)—लक्षणसमन्वयः । 'जराया' इत्यादिना—'जराकर्मकं जरस्कर्मकञ्चोच्चारणमिष्टसाधनत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यताव'दित्येव बोध्यत इति प्रकारताविशिष्टैव प्रकारतेति तत्रापि समन्वय इत्यस्मत्पितृचरणा न्यायाचार्याः **श्रीशिवनारायणशास्त्रिणः** । विस्तरस्त्व**भिनवराजलक्ष्म्या**मनुसन्धेयः ।

किञ्चेकारबुद्धिप्रसङ्गे यकारबुद्धिरित्यर्थः । अत 'एवाचः परस्मिन्नि'त्यादि सङ्गच्छते । स्पष्टञ्चेदं 'दाधा घ्वि'तिसूत्र-स्थानिवत्सूत्रयोर्भाष्ये ।

**स्थानेऽन्त ।** 'षष्ठी'त्यनुवृत्त्या 'यत्र स्थानषष्ठी तत्रेदमुपतिष्ठते' इति विध्येकवाक्यतयैवास्य नियामकत्वं, न तु विहितानां नियमः, 'भुक्तवन्त'मितिन्यायविरोधात् । फलितमाह—**प्रसङ्गे इति । सदृशतम इति ।** अर्थात्प्राप्यमाणानां मध्ये एव । अत एव 'गङ्गोदक'मित्यादौ त्रिमात्रो न । तमप्किम् ? 'वाग्घरि'रित्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो—वर्गद्वितीयो मा भूत्, किन्तु नादवान्महाप्राणश्चतुर्थो 'घ' एव यथा स्यादिति । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्तु—दीर्घेषु यणसिद्ध्या दुष्ट इति

❀ अभिनव-चन्द्रिका ❀

दुर्वारं स्यात् । **सदृशतम इति ।** तत्त्वञ्च—'स्ववृत्तित्व', 'स्वस्थानिकादेशवृत्तित्व' 'स्वस्थानिकादेशत्वेनाभिमतेतरयावदादेशावृत्तित्वे'तत्त्रितयसम्बन्धेन स्वविशिष्टत्वम् । स्वपदेनात्र स्थानी । अत एव 'इको यणची'त्यादिना ऌकारस्य वकारो न । **दीर्घेषु यणसिद्धेति ।** सप्तम्यन्तपाठे हि—'स्ववृत्तित्व' 'स्वघटितदलभिन्नदलीयवृत्तित्व''स्वघटितदलभिन्नदलीयस्वस्थानित्वेनाभिमतस्थानीतरस्थान्यवृत्तित्वे'

❀ चिदस्थिमाला ❀

**किञ्चेकेति । स्पष्टञ्चेदमिति ।** तत्राद्ये हि 'प्रणिदारयर्तीत्यादौ णुत्वाभावाय कृतं 'समानशब्दप्रतिषेध' इति वार्तिकमर्थवत्परिभाषया खण्डयित्वा 'प्रणिदापयती'त्यत्र तथैवाव्याप्तिमाशङ्क्य—'न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते'इत्याद्युक्त्वा नित्येष्वागमशासनमयुक्तमित्याशङ्क्य नित्येष्वादेशशासनं यथाबुद्धिविपरिणामेन तथात्रापीत्याशयेना'देशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकास्तत्कथं सर्वे सर्वपदे'त्याद्युक्तम् । एवमन्त्येऽपि ।

लघुभूतं शाब्दार्थमाह—**षष्ठीति । स्थाने षष्ठीति ।** तदर्थनिरूपितसम्बन्धे षष्ठीत्यर्थः । अत्रेदम्=अन्तरतम इति पदम् । **एकेति**—पदैकेत्यर्थः । एवव्यवच्छेद्यमेवाह—**न त्विति । स्थाने**=स्थितौ सत्यामन्तरतम इत्यर्थादिति भावः । तथा च वाक्यैकवाक्यतेति बोध्यम् । ननु न विहितानां नियमः, उक्तयुक्तेः, किन्तु 'उरणि'तिवत्प्रसङ्गावस्थायामेवानेन वाक्यैकवाक्यतया'ऽलोन्त्यस्ये'त्यादिवन्नियम इति मूलं शाब्दार्थपरमेवास्त्विति चेन्न, 'गङ्गोदक'मित्यादौ दोषापत्तेस्तदेतद्ध्वनयन्नाह—**अर्थादिति । अत एव**=तेषां मध्यस्यकरणादेव । तथानुक्तौ तु तत्प्रसङ्गेऽप्राप्यमाणेऽपि सदृशतमः स्यादिति भावः । **दीर्घेषु**='सुद्ध्युपास्य' इत्यादिस्थलेषु । एतेन—तन्त्रादिनो-

❀ ज्योत्स्ना ❀

सङ्गच्छत इति । समुदायादेशत्वे त्वजादेशत्वाभावात्तदसङ्गतिरिति भावः । **स्पष्टञ्चेदमिति ।** 'दाधा-

❀ सदाशिवभट्टीयम् ❀

तदनित्यत्वस्यापि परिहारात् । **बुद्धिप्रसङ्ग इति ।** स्थान्यादेशसमर्पकयोः स्वबुद्धिलक्षकत्वमिति भावः । **इत्यप्यर्थ इति !** अपिना लक्ष्यार्थबोधात्पूर्वभाविन 'इकारस्योकार' इत्यादेः शक्यस्य सङ्ग्रहः, अतो न किञ्चेति चेन पौनरुक्त्यम् । इदन्तु बोध्यं—प्रक्रियायै आवश्यकतद्घटितलक्षणयैव नित्यत्वस्यापि संरक्षणे सिद्धे बुद्धिलक्षकत्वस्य निष्फलत्वात्, नहि बुद्धिलक्षणया पचतीत्यादेः पदत्वं साधयितुं शक्यत इति । **अत एवेति ।** शक्यार्थाङ्गीकारादेवेत्यर्थः । आदिना 'न पदान्त' सूत्रपरिग्रहः ।

**स्थानेऽन्तरतमः । विरोधादिति ।** तुल्यन्यायात्तसिद्धिरित्यादेरपि सम्भवात्पदोपस्थापकस्य तत्त्वं सूचितम् । **तमप्किमिति ।** येन केनचित्साद्दृश्यस्य केवलान्वयित्वादन्तग्रहणसामर्थ्यात्प्रकर्षलाभे सिद्धे तदर्थमिति प्रश्नाशयः । **यथा स्यादिति ।** यथा—ज्ञापिते चारितार्थ्याभावेप्यणुदित्सूत्रीयाप्रत्ययपदस्य

❀ विषमपदविवृतिः ❀

**किञ्चेति ।** अस्मिन्पक्षे शब्दानित्यत्वं रेखागवयन्यायेन समाधेयम् ।

भाष्ये स्पष्टम् । **यत्रानेकेति** । स्थानेग्रहणे एकदेशानुवृत्त्याऽनुवर्त्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे—सति सम्भवे—स्थानत एवान्तरतम इत्यर्थमिति भावः । **स्थानत इति** । स्थानेनेत्यर्थः । तत्र स्थानतः—'इको यणचि' इति । अर्थतः—'तृज्वत्क्रोष्टुरि'ति । इह क्रोष्टुशब्दस्थाने पक्तृशब्दो नादेशः । गुणतस्तु—'वाग्घरि'रित्यादौ । प्रमाणतः 'अदसो ऽसे'रित्यादौ ।

**तस्मिन्निति** । अत्र 'तस्मिन्नि'ति उत्तरत्र 'तस्मा'दिति च सप्तम्यन्तपदपञ्चम्यन्तपदार्थकः स्वतन्त्रस्य सर्वनाम्नो—निर्देशो व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च;

❀ अभिनव-चन्द्रिका ❀

तत्रितयसम्बन्धेन आदेशविशिष्टत्वमन्तरतमत्वम् । तथा च प्रकृते अर्धमात्राधिककालशून्यत्वमेव तादृशं स्यादिति दीर्घे यण्न स्यादिति भावः ।

**तृज्वत्क्रोष्टुरिति** । वस्तुतस्तु तृज्वद्विधायकत्रिसूत्र्याः प्रयोगनियमार्थत्वेन अर्थत इत्यस्योदाहरणम्। आनुमानिकस्थान्यादेशकल्पे 'इको यणची'त्यादि बोद्धव्यम् । इह 'सुधी उपास्य' इत्यस्य स्थाने 'मध्वरि'रिति नादेशः । **अदसोऽसेरितीति** । ह्रस्वव्यञ्जनयोश्चान्तरतम्यं सार्धमात्रान्यूनकालिकत्वमिति

❀ चिदस्थिमाला ❀

भयमपीत्यप्यपास्तम् । **भाष्ये स्पष्टमिति** । एतेन 'त्वादिभ्य' इत्यादिज्ञापकात्सोऽप्यदुष्ट इति **रत्नाकरो**क्तमपास्तम्।

( अत्र मानमाह—**स्थाने इति** । वृत्त्या=अन्यत्र दृष्ट्या । तृतीयया=तदन्तेन ।)[1] ननु ततस्तन्मात्राङ्गीकारे द्वितीयवाक्यार्थ एव स्यान्न तु पूर्ववाक्यार्थः, 'सकृदुच्चरित'इति न्यायात्, अत आह—**वाक्येति** । आवृत्त्येति भावः । तत्रानुवृत्तार्थमाह—**प्रसङ्गे इति** । 'आदेशानां''स्थानिनो जायमान' इत्याद्यन्तौ । सति सम्भवे इत्यनेना'सम्भवेऽन्यस्यापि ग्रह'इति सूचितं, यथा ·वाग्घरिरित्यादौ । अत्रत्यविपरिणतार्थमाह—**स्थानत इति** । अयञ्च सामर्थ्यात्ताल्वादिस्थानपरः, एवेनान्यान्तर्यव्यावृत्तिः । **इत्यर्थकमिति** । इत्यर्थनिष्पत्तिजनकमित्यर्थः । अत एव क्त्वोपपत्तिः । न चानेकविधान्तर्ये सत्त्वे एव मानाभावेन किमर्थं वाक्यभेदः ? तथा चाननुवृत्तौ मौल एवार्थोनुवृत्तौ प्रसङ्गे स्थानकृतान्तर्यवानित्येवार्थस्तत इति वाच्यम्, तमप्ग्रहणस्यैव मानत्वात्, अन्यथोक्तफलासम्भवेन तदानर्थक्यं स्पष्टमेव । पञ्चम्यन्तत्वेन विपरीतार्थभ्रमनिरासायाह—**स्थानेनेत्येति** । **सप्तेति** । इष्ट्यावदित्यादिः । स्वतन्त्रस्येत्यनेनानुकरणत्वस्य **दीक्षितायुक्त**स्य निरासः । **व्याख्यानादिति** । 'एङ्ह्रस्वा'दित्यादाविवाङ्क्षेपे तत्र चाक्षेपकखञणोःसम्बन्धेन 'हे यौष्माकीण ! असम्यं देही'त्यादौ खञः परस्यादेशनिवृत्तिसिद्धौ स्वरूपग्रहणे फलाभावेन 'न ह्येक'मिति न्यायेन तत्रैव **पूर्वस्येत्यादेः** सुकरत्वेन चास्य वैय्यर्थ्यापत्तेरित्यर्थः । ननूत्तरसूत्रे नेदं सम्भवति, तत्र बहुषु फलसत्त्वात्तत्र सर्वत्राक्षेपकाभावाच्चेनानिर्वाहाच्च, अत आद्यसाधारणायाह—**बहुलक्ष्येति** । अत एव

❀ सदाशिवभट्टीयम् ❀

भाव्यमानपरिभाषाज्ञापकत्वं तथास्य तमपोप्यनेकविधान्तर्यसत्ताबोधकत्वमित्युत्तराशयः । 'तृज्वत्क्रोष्टु'रिति सूत्रे क्रोष्टुरिति षष्ठ्यन्तमिति भावः । 'स्त्रीपुंवच्चे'त्यादौ तु षष्ठ्याः स्थाने प्रथमा, स्पष्टञ्चेदं स्थानिवत्सूत्रे कैयटे । 'तुन्नन्तात्प्रथमे'त्यादिवक्ष्यमाणग्रन्थास्तु प्रकृतसूत्रप्रत्याख्याने लोकन्यायेन सिद्धिरित्यभिप्रायेण, नहि तत्रापि 'यत्र स्थानेषष्ठी'त्यर्थोस्ति । सूत्रारम्भे पूर्वविप्रतिषेधवार्तिकस्थतृज्वद्भावग्रहणस्य यथा साफल्यं तथा तत्रैव वक्ष्येत । **तस्मिन्निति** । **पदार्थक इति** । इदञ्च इतिशब्दमपर्यालोच्य, तत्पर्यालोचने तु यथार्थस्तथा वक्ष्यति। **स्वतन्त्रस्येति**। अनुकरणस्येतिशब्दपारतन्त्र्यात्,अस्य तत्त्वं तत्र तत्र तथार्थेन तत्तद्रूपेण शक्ति-

❀ विषमपदविवृतिः ❀

**तृज्वत्क्रोष्टुरिति** । यद्यपि नात्र स्थानषष्ठी, तथापि वर्तिं विहाय प्रथमायाः षष्ठ्यर्थत्वमङ्गीकृत्य

१. () एतदन्तर्गतः पाठः—'आवृत्त्येति भाव' इत्यनन्तरं क्वचित्पठ्यते ।

न तु तत्तत्पदपरम्,—अन्यथा 'तस्मिन्नणि च' 'तस्मान्नुडचि' 'तस्माच्छसो न' इत्यत्रैव प्रवर्त्तेयाताम् । सप्तमी तु 'सप्तम्यन्तानामेव तच्छब्दार्थत्व'मिति बोधनाय, तद्बोध्यार्थस्य 'निर्दिष्टे' इत्यनेन सामानाधिकरण्याय च । 'इति'शब्दः पुनस्तस्य तदर्थपरत्वं बोधयति । निःशब्दो नैरन्तर्ये, दिशिरुच्चारणे । एवञ्च 'सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्य'मिति वाच्योऽर्थः । एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्त-

❀ अभिनव-चन्द्रिका ❀

बोध्यम् । **पूर्वस्य कार्यमिति** । न च 'सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्य'मिति वाक्यार्थबोधस्वीकारे हि—अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टमुद्दिश्य पूर्वत्वं विधीयते इति प्रतीयेत, तच्चानुपपन्नम्, अव्यवहितोच्चारितसप्तम्यन्तार्थोपश्लिष्टस्य केनाप्यसिद्धत्वादिति वाच्यं, तदुद्देश्यान्यथानुपपत्त्यार्थापत्तिमूलक-सप्तम्यन्तार्थे उपश्लिष्टस्य कार्यमव्यवहितोच्चारिते पूर्वस्य बोध्यमित्येवमुद्देश्यविधेयभाववाक्यान्तर-कल्पनेनादोषात् ।

परे तु—'तस्मिन्निति'त्यादौ तस्मिन्नित्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तानामनुकरणं, तथा चौप-

❀ चिदस्थिमाला ❀

स्वं रूपमित्युक्तेस्तत्परमन्यथा नेत्याह—**न तु तत्तत्पदेति** । तत्रानन्वयं वारयति—**अन्यथेति** । **शसो न इति** । 'तस्मान्नुड्द्विहलः' इत्यपि बोध्यम् । फलं तु अचि उक्तमेव, अन्यत्र तु अर्थमनर्थ, चैत्रानश्वः, चैत्राऽऽनृजे, उच्चरत आनुपलभ्ये गौरित्यादि बोध्यम् नन्वेवं सप्तमी व्यर्था, साधुत्वार्थं सोरेवौचित्यात्, अत आह—**सप्तमी त्विति** । तेषामेव पाणिनिबुद्धिस्थत्वमित्यत्र तात्पर्यग्राहकत्वेनानुवादिकेयमित्यर्थः । एवमुत्तरसूत्रेऽपि बोध्यम् । यत्र सप्तम्यर्थबोधस्तत्रैव तदुपस्थितिरिति बोधायापि सा,—अत एव 'तेष्वपि' 'तस्मान्नुडचि' 'ङसि' इत्यादौ नोपस्थितिः । 'वर्णा'त्यादिसप्तम्याः पष्ठ्यर्थत्वात् । एतेन 'सप्तमीनिर्दिष्टे-पूर्वस्ये'ति सूत्रं युक्तमित्यपास्तम् । 'सप्तमीशब्देन यो निर्दिष्ट'इत्यापत्तेश्च,—तदेतद्ध्वनयन्नाह—**तद्बोध्येति** । अत्रत्यतत्पदबोध्याचोत्याद्यर्थस्येत्यर्थः । अन्यथा भिन्नविभक्तित्वात्तन्न स्यात् । एवञ्च निर्दिष्टे इति विशेषणे इवात्रापि विशेष्येऽधिकरणत्वबोधार्थं सावश्यकेति भावः । नन्वेवमितिर्व्यर्थोत आह—**इतीति** । तस्य=अचीत्यादेः । एवं पदार्थमुक्त्वा मूलानुक्तं वाच्यवाक्यार्थमाह—**एवञ्चेति** । ननु किं परिभाषा लिङ्गमतः सर्वलब्धमाह—**एवञ्चैतदिति** ।

❀ ज्योत्स्ना ❀

च्वि'ति सूत्रे भाष्ये 'सर्वे सर्वपदादेशा' इति न्यायादाद्यः पक्षः, स्थानिवत्सूत्रे 'कार्यविपरिणामाद्वे'ति द्वितीयः पक्षः किञ्चेत्यादिनात्रोपन्यस्तः, (स्पष्टमुक्तमिति भावः ।) तदर्थपरत्वं **बोधयतीति** ।

❀ सदाशिवभट्टीयम् ❀

ग्राहकानपेक्षणेन वा । **इत्यत्रैवेति** । 'तस्मिन्' 'तस्मा'त्पदघटित एवेत्यर्थः । **बोधनायेति** । तत्सत्त्वे उपस्थित्या तस्यैव प्रकृत्यर्थत्वनिर्णय इति भावः । **समानेति** । इदञ्च न फलं पदोपस्थापकत्वे, किन्त्वाच-मेवेति बोध्यम् । **पुनस्तस्येति** । त्वर्थे पुनरिति, विशेषे वा, इतिशब्दाभावे सप्तम्या उपस्थिततरत्वेन प्रकृतेस्तदर्थकत्वमेव गृह्यतेऽतस्तस्य तदर्थपरत्वे तात्पर्यग्राहक **इतिः** । एतेन 'शब्दपरस्यार्थपरत्व'मित्यस्य शब्दतात्पर्येणोच्चारितस्यार्थतात्पर्यकत्वमित्यर्थः, तच्च विरुद्धम्, एकशब्दोच्चारणविलम्बे तात्पर्य-भेदाऽसम्भवादिति परास्तम् ।

**दिशिरुच्चारण । इति** । अवसानकार्ये प्रत्ययलोपे प्रत्ययलक्षणविषये चास्य बाधादेतदंशविकलैवेय-

❀ विषमपदविवृतिः ❀

क्रोष्टुशब्दस्थाने तृजन्त आदेश इत्यभिप्रेत्येदम् । **इतिशब्द इति** । **इदमयुक्तम्**, इतिशब्दस्य—स्वसमभिव्याहृतपदे पदार्थविपर्यासकारित्वं स्वभावो, न तु तद्बोध्यस्य शब्द-

पदस्य पञ्चम्यन्तपदस्य चार्थो लिङ्गम् । अत्र सूत्रे उपश्लिष्टपदाध्याहारेण 'निर्दिष्टे' इति औपश्लेषिकेऽधिकरणे सप्तम्येवोचिता—'उपपदविभक्ते'रिति न्यायात्, न तु सति-

## ॐ अभिनव-चन्द्रिका ॐ

श्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटिते शास्त्रे 'निर्दिष्टे पूर्वस्ये'त्युपतिष्ठते। एवं 'तस्मादिति' इत्यत्रापि तस्मादिति दिग्योगलक्षणपञ्चम्यन्तानामनुकरणं,तदेवं दिग्योगलक्षणपञ्चम्यन्तपदघटिते शास्त्रे'निर्दिष्टे उत्तरस्ये'त्युपतिष्ठते । 'निर्दिष्टे' इत्युभयत्र सतिसप्तमी । अथवा 'तस्मिन्निति'परिभाषायामितिपदमौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टसम्बन्धिकार्यपरम्,एवं'तस्मा'दितिपरिभाषायामपि इति-पदं दिग्योगलक्षणपञ्चम्यन्तार्थान्वयिसम्बन्धिकार्यपरं, 'तस्मि'न्निति 'तस्मा'दिति च निरुक्तार्थतात्पर्यग्राहके । तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टं कार्यमव्यवहितपूर्वसम्बन्धि बोध्यम् । एवं दिग्योगलक्षणपञ्चम्यन्तार्थान्वयिसम्बन्धि कार्यमव्यवहितोत्तरसम्बन्धि बोद्धव्यमिति क्रमेण परिभाषयोर्वाक्यार्थबोधः । न च 'इको यणची'त्यत्र अचि इत्यौपश्लेषिकाधिकरणबोधिका सप्तमी, एवम् 'उदः स्थे' त्यादौ 'उद' इति दिग्योगलक्षणा पञ्चमीत्यत्र नियामकाभावादेतत्परिभाषाद्वयीयोद्देश्यासिद्धिरिति वाच्यम्, एतदुद्देश्यान्यथानुपपत्त्या 'असति प्रमाणान्तरेऽस्मिञ्छास्त्रे यानि सप्तम्यन्तानि तानि सर्वाण्यौपश्लेषिकाधिकरणबोधकानि, यानि च पञ्चम्यन्तानि तानि सर्वाणि दिग्योगलक्षणानी'ति कल्पनेनादोषात्। एतन्मूलकमेव पठ्यते—'तस्मिन्नितिपरिभाषायां जागरूकायां सतिसप्तम्याश्रयणमयुक्त'मिति । एतन्मूलिकैवो'पपदविभक्त्यर्थे कारकविभक्त्यर्थे च यत्र तात्पर्यं प्रसक्तं तत्र कारकविभक्त्यर्थे एव तात्पर्यं कल्पनीय'मित्येतदर्थिका—'व्याख्यानत' इति परिभाषाशेषभूता—'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति परिभाषा 'तत्र च दीयते' इति कैयटे पठ्यते इति प्राहुः ।

**औपश्लेषिकाधिकरण इति** । वस्तुतस्तु 'निर्दिष्टे' इति सतिसप्तम्येव । 'निर्दिष्टे' इति विधेयकोटिप्रविष्टत्वेन तस्मिन्नित्यनेन सामानाधिकरण्यासम्भवात् । 'उपपदविभक्ते'रितिन्यायस्तु अनित्यत्वान्न प्रवर्तते । 'सतिसप्तम्याश्रयणमशक्य'मित्येतत्तत्त्वन्तु प्रागेवावोचाम ।

## ॐ चिदस्थिमाला ॐ

ननु वाच्यार्थे उपश्लिष्टस्येत्यधिकमत आह—**अत्रेति** । एवव्यावर्त्यमेवाह—**नत्विति** ।

## ॐ ज्योत्स्ना ॐ

एवन्तु तस्मिन्नित्येतावन्मात्रस्यैव सप्तम्यन्तार्थबोधकत्वमस्तु कृतमधिकेनेतिशब्देनेति चिन्त्यमेतत् ।

तस्मात्तस्मिन्नित्येतस्माच्छब्दपरादुत्तर इतिशब्दो हेतुपरः, सप्तम्यन्तशब्देन निर्दिष्टे निरन्तरोच्चारणविषयत्वेन बोधिते उपश्लिष्टस्य पूर्वस्य कार्यं भवतीत्यर्थः । यद्वा तस्मिन्निति

## ॐ सदाशिवभट्टीयम् ॐ

मुपतिष्ठते । वस्तुतस्तूच्चारणार्थकत्वे फलाभावात्समानार्थकत्वेपि न क्षतिः । 'जनपदे लु'बित्यादौ च

## ॐ विषमपदविवृतिः ॐ

स्वार्थपरत्वव्यवस्थापनं, तस्मादितिशब्दः कार्यिकार्योभयस्थापको निपातानामनेकार्थत्वात् । **तच्छब्दः** सप्तम्यन्तार्थपरामर्शकः । तथा च सप्तम्यन्तार्थोपश्लिष्टस्य कार्यिणो यत्कार्यमिति—तस्मिन्नितीत्यस्यार्थः । 'निर्दिष्ट' इत्यादेश्च—सप्तम्यन्तार्थेऽव्यवहितोच्चारितपूर्वस्य तद्बोध्यमित्यर्थः । एवं 'तस्मा'दित्यस्याप्यर्थो बोध्यः । यद्वा—इतिशब्दः प्रकारे, एवं प्रकारेण वर्तमानं कार्यमिति । **अर्थो लिङ्गमिति** । न तु स्वरूपसती सप्तमी पञ्चमी च निमित्तम् । 'यस्मिन्विधि' रित्यादेस्तु—स्वरूपसती सप्तमी निमित्तं, तेन 'नेड्वशी'त्यादौ तदुपस्थितिः, एतदुपस्थितिश्च । **'उपपदविभक्ते'रिति** । कारकविभक्तिसम्भवे उपपदविभक्तिर्न न्याय्येत्यपि तन्न्यायार्थ इति भावः ।

सप्तमीति 'तत्र च दीयते' इति सूत्रे कैयटे स्पष्टम् । 'स्नुक्रमो'रिति सूत्रे कैयट आह—'तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्य'मिति । उपश्लेषः—समीपवृत्तित्वं, तच्च वर्णयोर्बौद्धं द्रष्टव्यम् । एवम्—'इको यणची'त्यादावर्ग्ययमेवेति 'संहिताया'मिति सूत्रे भाष्ये ।

तत्रोपश्लेषः पूर्वस्यैव परस्याव्यवहितस्यैव व्यवहितस्य चेति—पूर्वस्यैवेति नियमार्थमिदम्, अव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात्क्वचित्सतीत्यध्याहारात्सत्सप्तम्याश्रयणे नास्याः प्रवृत्तिरिति—'श्नान्नलोप' इत्यत्र भाष्ये उक्तम् ।

अत एव 'कर्तृकर्मणोः कृती' त्यत्र नास्याः प्रवृत्तिः, 'कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठी'ति तदर्थात् । 'तस्मा'दिति सूत्रे–'निर्दिष्टे' इति निर्दिष्टादित्यर्थकं, विभक्तिविपरिणामात् । सा चोत्तरस्येतिदिग्योगलक्षणा इति–दिग्योगलक्षणपञ्चम्यामेव

ॐ अभिनव-चन्द्रिका ॐ

**निर्दिष्टादित्यर्थकमिति** । इदं चिन्त्यमिति पूर्वमेव निरूपितम् ।

ॐ चिद्स्थिमाला ॐ

नानान्तरमाह—**स्नुक्रमोरिति** । तथा च तदनुरोधेनात्रापि तथेति भावः । **बौद्धमिति** । उत्पत्त्योदः क्षणिकत्वादिति भावः । **एवमिति** । अत्रैवेत्यर्थः । इयमेव=औपश्लेषिकाधिकरणसप्तम्येव । **भाष्ये इति** । 'स्पष्ट'मिति शेषः । नत्र=तदङ्गीकारे । नियमद्वयस्यैकवाक्यत्वाऽलाभाद्भेदेनाह—**अव्यवेति** । अत एव=अत्र तत्सप्तम्यङ्गीकारादेव । एवमग्रेऽपि । ननु प्राक्कैयटोक्तरीत्या दुर्लभमिदमत आह—**अलक्ष्येति** । अत एवाह—**क्वचिदिति** । 'अयं सप्तम्यर्थ' इति भ्रमनिरासायाह—**सतीत्येति** । 'क्वचि'दित्युक्तस्थलं निरूपयन्नाह—**अत एवेति** । 'इती'त्यग्रे'ऽनुवृत्त'मिति शेषः । अत एव तस्मादित्यनेन सामानाधिकरण्यमिति भावः । सा च=निर्दिष्टादित्यादिघटकपञ्चमी चेत्यर्थः। **रस्येतीति**। 'श्नने'रिति

ॐ ज्योत्स्ना ॐ

शाब्दज्ञानानुकरणं, तस्य च निर्दिष्टपदबोध्ये निरन्तरोच्चारणविषयत्वेन बोधेऽभेदेनान्वयः । ततश्चाचीत्याद्याकारकसप्तम्यन्तपदतदर्थोभयविषयं यत्तदभिन्नं निरन्तरोच्चारणविषयत्वेन यज्ज्ञानं

ॐ सदाशिवभट्टीयम् ॐ

ओपश्लेषिकसप्तम्यभावादानन्तर्यबाधाच्च न दोषः । **बौद्धमिति** । अयम्भावः—सामीप्यं पौर्वापर्यं च कालिकं दैशिकञ्चेति द्विविधम्, तच्च युगपदवस्थितानामेवेति शब्दे यौगपद्यासम्भवेन द्वयोरप्यसम्भवेऽप्येकबुद्धौ विषयतयाऽनेकेषामपि यौगपद्यसम्भवः । यद्यपि लोके 'चैत्रात्पूर्वः फाल्गुन' इति भिन्नकालिकयोरपि कालिकं पौर्वापर्यमस्ति तथापि शास्त्रे न तथा वक्तुं शक्यं, प्रत्ययनिमित्तककार्याणां प्रत्ययोत्पत्तेः पूर्वमपि कालिकतत्परत्वमादाय प्रवृत्त्यापत्तौ बहूपप्लवापत्तेरिति । स्पष्टञ्चेदं संहितासञ्ज्ञासूत्रे भाष्यकैयटोद्योतेषु । **कर्तृकर्मणोरिति** । 'प्रत्ययलोपे प्रत्ययलक्षण'मित्यत्राप्येवम् । तत्र परसप्तमीत्वे व्यवहितस्य ततः परस्य च कार्यं न

ॐ विषमपदविवृतिः ॐ

**बौद्धमिति** । वर्णानां सर्वदेशकालवृत्तित्वादिति भावः । **इयमेवेति** । औपश्लेषिकेऽधिकरणे सप्तम्येवेत्यर्थः । ननु 'प्रत्ययः', 'परश्च', गाङ्कुटादिभ्य'इत्यदावंशविशेषविकल्पपरिभाषोपस्थितौ परिभाषाणां नियमत्वं न सम्भवति, प्रत्ययार्थान्वितप्रकृत्यर्थबोधासम्भवेन पञ्चम्यर्थांशविकलनियमशरीर-

तत्प्रवृत्तिः। 'उदः स्था' इत्यादौ च 'उद्' इति दिग्योगलक्षणा पञ्चमी। तत्रानियत-दिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति–'तस्मा'दित्यनेन नियम्यते। 'अव्य-वहितोच्चारितात्पञ्चम्यन्तात्परस्ये'ति तदर्थः। तत्फलितमाह—**सप्तमीनिर्देशेनेत्यादि।**

यदि तु अर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपदं संहिताधिकारश्च विफल इति 'संहिताया'मिति सूत्रे भाष्ये स्पष्टम्।

'अवग्रहे च सम्प्रदाय एव शरण'मिति आनङादिविषये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक्। अकृतव्यूहपरिभाषा त्वनित्या, नास्त्येव वा। 'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्य'मिति भाष्येण—तदनुरोधेन शास्त्रासङ्कोचस्य शास्त्रकरणा-भावस्य च स्पष्टमुक्तत्वाच्च। एतेन संहिताधिकारस्तद्बहिर्भूतानामर्धमात्राधिककाल-व्यवाये प्रवृत्तिज्ञापनार्थः, तेनाग्नाविष्णू इत्यादाववग्रहे आनङादिसिद्धिरित्यपास्तम्।

### ॐ अभिनव-चन्द्रिका ॐ

**अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येतीति।** अत्रापि पूर्ववदर्थापत्त्या दिग्योगलक्षणपञ्चम्य-न्तार्थान्वयिनो यत्कार्यं तदव्यवहितसम्बन्धि बोद्धव्यमिति वाक्यन्तरकल्पनेन नोद्देश्यासिद्धिः, एतत्परिभाषाविधेयन्तु परसम्बन्धित्वमेवेतिभावः।

### ॐ चिदस्थिमाला ॐ

शेषः। नन्वेवमपि लक्ष्ये न तथात आह—**उदः स्थेत्यादाविति।** चोऽप्यर्थे। कारकविभक्तेर्हि न सम्भव इति भावः। सा चाध्याहारं विना नेत्याह—**तत्रेति।** तस्यां सत्यामित्यर्थः। द्वितीयनियममपि सूचयन्नाह—**अव्यवेति।** तदर्थः=तद्वाच्योऽर्थः। **तदिति।** उक्तार्थेत्यर्थः। 'अनेन व्यवधानं वर्णकृतमेव हेयं संहिताधिकारादत एव मूले 'वर्णान्तरेणेत्युक्तम्'—इति **रत्नाकरदण्ड्या**द्युक्तिरसङ्गतेति ध्वनयितुमाह—**यदि त्विति।** नन्वेवमवग्रहे संहिताधिकारस्थानामप्रवृत्तिस्तद्भिन्नानां प्रवृत्तिरिति व्यवस्था कथमत आह—**अवग्रहे चेति। आनङादीति।** तद्बहिर्भूतत्वात्। अन्यत्र=तदधिकारस्थकार्ये। ततः=आदेशात्।

नन्वाद्येऽकृतव्यूहपरिभाषयादेशो न स्यादतो **दीक्षित**मतेनाह—**अकृतेति।** सिद्धान्तमाह—**नास्त्येव वेति।** आनङादिकं तत्राभ्युपेत्येदं, वस्तुतस्तदेव नेति नार्द्धजरतीयमित्याह—**न लक्षणेनेति।** तदनुरोधेन=पदकारानुरोधेन। **कौस्तुभकृद्दण्ड्या**द्युक्तिं खण्डयति—**एतेनेति।** अवग्रहे उक्तरीत्या निर्वाहात्संहिताधिकाराभावस्य भाष्ये स्पष्टत्वेनेत्यर्थः। वैय्यर्थ्यन्तु तस्योक्तरीत्यैव बोध्यम्। **नार्थ इति।** 'कृत' इति शेषः। आदिभ्यां तेनोरासन्तामित्यादौ नसादिपरिग्रहः। **विकलेति।** तस्योपादानात्, अत एव

### ॐ ज्योत्स्ना ॐ

तद्विषये उपश्लिष्टपूर्वस्येत्यादि, शेषं पूर्ववदिति व्याख्येयम्। तत्फलितमाह—**सप्तमी-निर्देशेनेत्यादीति।** 'सप्तमीनिर्दिष्टे पूर्वस्ये'ति तु नोक्तं, सप्तमीशब्देन निर्दिष्टे इत्यर्थात्'सप्तम्यां जनेर्ड'इत्यादावेवैतत्प्रवृत्त्यापत्तेः। एतेन—वर्णान्तरेणाव्यवहितस्य पूर्वस्येति वृत्तिरयुक्ता, निर्दिष्ट इति सप्तम्या वर्णान्तरेणाव्यवहितोच्चारिते पूर्वस्येति हि वक्तुं युक्तमित्यपास्तम्। आदिपदात्तस्यापि फलितार्थकथनपरत्वेन विवक्षितत्वात्। ननु परिभाषाणां नियमव्यवहारोऽनुपपन्नः, विध्यङ्गभूत-

### ॐ सदाशिवभट्टीयम् ॐ

स्यादिति बोध्यम्। **निर्दिष्टपदमिति।** उत्तरसूत्रे एव निर्दिष्टादितिकर्त्तव्यमिति भावः। यद्वा—इहाध्याहृतोपश्लिष्टस्येतस्यैवानुवृत्त्या विपरिणामः। **अधिकारश्चेति।** तदधिकारत्रयम्, सञ्ज्ञासूत्रं चेति। **एतेनेति।** प्रत्याख्यानभाष्येण बहिर्भूतानामधिककालव्यवाये प्रवृत्तेरनिष्टत्वानुमानेनेत्यर्थः। **आनङादीति।**

'प्रत्ययः' 'परश्च'इत्यादौ तूत्तरांशविकल्प तस्मादिति परिभाषा प्रवर्त्तते। तेन न प्रत्यया व्यवहिताः । अत एव 'छन्दसि परेऽपि, व्यवहिताश्चे'ति सूत्रं सार्थकम्। आगमविधावपि 'आने मुगि'इत्यादौ तस्मिन्निति परिभाषया पूर्वसम्बन्धित्व-निर्णयः। अत एवात्र 'पूर्वस्ये'त्यादि न स्थानषष्ठी। तत्तद्विधिभिरेव सम्बन्धस्य निर्णी-तत्वेन 'षष्ठी स्थाने' इत्यस्याप्रवृत्तेः । 'गाङ्कुटादिभ्य' इत्यादावपि षष्ठ्यंशविकलैत-त्परिभाषाप्रवृत्तिर्बोद्धया। परिभाषाणां नियमत्वन्तु—यदि परिभाषासूत्रं न स्यात्तदा व्यव-

❀ अभिनव-चन्द्रिका ❀

**उत्तरांशविकलेति** । तस्मिन्निति तस्मादिति परिभाषाद्वयविषये यावानंशः सिद्धो बाधितो वा भवेत्तमंशं विहायान्यांशोपस्थापकत्वस्वीकारादिति भावः। अत्रैव प्रमाणमाह—**व्यवहिताश्चेतिसूत्रं सार्थकमिति** । अन्यथा 'ते प्राग्धातो'रित्यत्र प्राक्पदसत्त्वेनोत्तरत्वांशानु-पस्थितौ 'सन्नियोगशिष्ट'न्यायेनेतरांशस्याप्यनुपस्थितौ व्यवहितप्रयोगः सिद्ध एवेति तद्वैयर्थ्यं स्पष्ट-मेव। तस्मिन्निति तस्मादिति परिभाषाद्वयस्याप्यव्यवहितत्वं पूर्वत्वम्,(विधेयान्वयि)षष्ठ्यर्थः, अव्यव-हितत्वमुत्तरत्वं तादृशः षष्ठ्यर्थश्चेति प्रत्येकमंशत्रयं विधेयम्। तत्र 'शि तुक्' 'पदान्ताद्वे'-त्यादौ तस्मिन्नितिपरिभाषया अंशत्रयोपस्थितिः । 'इको यणची'त्यादौ षष्ठ्यंशस्य सिद्धत्वेन तद्रहितांशद्वयोपस्थितिः। एवन्तस्मादिति परिभाषया-'ङमो ह्रस्वादची'त्यादावंशत्रयोपस्थितिः, 'उदः स्थे'त्यादौ षष्ठ्यंशस्य सिद्धत्वादंशद्वयोपस्थितिः । प्रत्ययाधिकारे षष्ठ्यंशस्य बाधितत्वादु-त्तरांशस्य सिद्धत्वात्केवलाव्यवहितांशोपस्थितिरिति दिक्। अत एवेति। अत्समुदायबोधकपदोत्तरं

❀ चिदस्थिमाला ❀

तुः प्रयुक्तः । तत्र मानमाह—**अत एवेति**। परादिशब्दोल्लेखे तदंशरहितैतत्प्रवृत्त्यङ्गीकारादेवेत्यर्थः।

तत्रैतत्प्रवृत्तिस्थलमनुवृत्त्यर्थमाह—**छन्दसीति**। ज्ञापकमाह—**व्यचेति**। यद्यप्याने इत्यादावुभय-निर्देशस्तथापि सप्तम्या अचारितार्थ्येन पञ्चम्याश्च पूर्वत्र चारितार्थ्येन मूलवैपरीत्यात्तद्वैपरीत्यमित्याह—**तस्मिन्नितीति**। अत एवात्र—तत्र तन्निर्णयेष्टत्वादेवानयोः। आदिनोत्तरस्येत्यस्य परिग्रहः । ननु सत्यं तथेष्टत्वं, तथापि 'षष्ठीस्थाने' इत्यस्य प्रवृत्तिः केन वारणीयाऽत आह—**तत्तदिति** । 'गुणाना'मिति-न्यायेनाप्रवृत्तेश्चेत्यपि बोध्यम्। **षष्ठ्यंशेति**। उत्तरस्येति षष्ठीमात्रांशे इत्यर्थः। तथा च परत्वाव्यवहित-त्वयोर्लाभः। अन्यथा पञ्चमीसत्त्वेनार्थान्तरासम्भवेनानिष्टमपि पक्षे स्यादिति भावः। एतेन तत्राग्निनः प्रत्ययस्य परस्यैव सम्भवेन प्रत्यासत्त्या गाङादिप्रकृतिकस्यैव तस्य ग्रहणेन चानियमाप्रसक्त्यैतदप्रवृत्ति-रेवेष्टेत्यपास्तम्। ननु परिभाषाणां कथं नियमत्वं, तासां विध्यङ्गत्वेन तदुपस्कृतविधेर्लक्ष्यसंस्कारकत्वेन व्यवहितादौ प्रवृत्तेरेवाभावादत आह—**परीति**। 'सूत्र'मिति जातावेकवचनम्। आदिना परादिग्रहणम्। अपिनाऽव्यवहितादिसमुच्चयः। **स्यादिति**। केवलविधेरेवेति भावः। **एतावतेति**। अनेन प्रसिद्धनियमत्व-

❀ ज्योत्स्ना ❀

त्वेन ताभिरुपस्कृतस्य निष्पन्नमूर्त्तेर्लक्ष्यसंस्कारकत्वस्वीकारेण व्यवहितादौ प्रवृत्तेरेवाभावादत आह—**परिभाषाणां नियमत्वे त्विति**।

❀ सदाशिवभट्टीयम् ❀

आदिना पदात्परस्य युष्मदाद्यादेशादयः। **छन्दसीति** । एतेन परत्र व्यवहितार्थत्वं व्युदस्यति।

❀ विषमपदविवृतिः ❀

स्योपपादयितुमशक्यत्वादुक्तविषयद्वये परिभाषायां नियामकत्वासम्भवादित्यत आह—**परिभाषाणा-मिति**। यद्वा—'पतिः समास एवे'त्यादिनियमाविषये हरिशब्दादौ चरितार्थाया घिसञ्ज्ञायाः

हितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् ।

**अलोऽन्त्यस्य** । 'षष्ठी स्थाने'इत्यनुवर्त्तते, तदाह—**षष्ठीत्यादि** । स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः । स्थान इत्यादि किम् ? इट् तृच ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति साहचर्यादल इति षष्ठ्यन्तम्, अन्त्यस्याल इत्यर्थः । अल इति किम् ? 'पदस्ये'ति विधीयमानं 'वसुस्रंसु' इति दत्वं—स्वनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् । 'स्थाने विधीयमान' इति प्रत्यासत्तिलब्धम्; एवञ्चाल एवेति, अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गम् । अत एव 'इतोऽ'-दित्यादौ नास्याः प्रवृत्तिः । 'पथ्यादीना'मित्यस्यावयवषष्ठीत्वादित इत्यस्याल्समुदायोत्तरत्वाभावाच्च ।

---

ॐ **चिदस्थिमाला** ॐ

व्यवच्छेदः । आसाञ्च न परिसङ्ख्यारूपं नियमत्वमपि तु—आर्थनियमत्वं,—'व्रीहीनवहन्ती'त्यादिवत्तदाह—**इति दिगिति** । **इत्यनुवर्त्तत इति** । इत्युभयमित्यर्थः । सूत्रद्वयादिति भावः । **निर्दिष्टान्त्येति** । निर्दिष्टेत्यध्याहारलभ्यं, तथा निर्दिष्टो यस्तदन्त्यस्येत्यर्थः । एतेन 'षष्ठीनिर्दिष्टान्त्यस्ये'ति मूले पाठः सूचितः । षष्ठीनिर्दिष्टो यस्तदन्त्यस्येत्यर्थः । 'षष्ठीनिर्दिष्टोऽन्त्यस्ये'ति तु अपपाठः । एतेन—स्थानषष्ठीनिर्दिष्टस्य य उच्यते सोऽन्त्यस्यालः स्थाने स्यादित्यर्थः इति **दण्ड्युक्तमपास्तम्** । **स्थानेत्यादि किमिति** । स्थाने इत्यस्यानुवृत्तिः किमर्थमित्यर्थः । न चाल इतिसौत्रत्वाज्जसन्तमादेशविशेषणं, लोपानामन्त्यादेशत्वानापत्तेः । तथा च 'लोपःपिबते'रित्यादौ दोषः, अन्त्यस्येतिसाहचर्याच्च, स्वनडुद्भ्यामित्यादौ दोषाच्च । तदेतद्ध्वनयन्नाह—**अन्त्यस्येत्यादि** । **पदस्ये**तीत्यस्याधिकृत्येति शेषः । अनेन तदन्तविधिः सूचितः । नन्वनुवृत्त्यादिना—स्थानेत्यादिलाभेऽपि—'स्थाने विधीयमान' इति कुतो लब्धमत आह । **स्थाने इति** । **वेति** । चेति पाठः । परिभाषाणामनियमे नियमकारिणीत्वादाह—**अलिति** । यथा'त्यदादीनामः' इत्यादाविति भावः । **लिङ्गमिति** । एवञ्च—'तदुत्तरं यत्र स्थाने षष्ठी तत्रान्त्यस्याल इत्युपतिष्ठत' इति वाच्योऽर्थः । एवमन्यत्रापि यथासम्भवं बोध्यम् । मूलं तु फलितार्थ-

ॐ **सदाशिवभट्टीयम्** ॐ

**अलोन्त्यस्य** । **स्थाने विधीयमान इति** । 'अलोन्त्यस्ये'त्यनेन तस्यावयवषष्ठीत्वकल्पनात् कथमिदं ? तस्मात्पूर्वसूत्रे षष्ठीपदस्य सम्भावितस्थानयोगकस्य सत्त्वात्तत्रापि तस्यैवानुवृत्त्या फलतीदम् ।

ॐ **विषमपदविवृतिः** ॐ

पतिशब्दे तेन नियम उपपद्यते, प्रकृते तु तस्मिन्निति परिभाषार्थं विना 'इको य'णित्यादीनां वाक्यार्थबोधमात्रेण लक्ष्यसंस्कारकत्वमेव नेति कथं नियामकत्वमित्यत आह—**परिभाषाणामिति** । अथवा—साक्षाल्लक्ष्यसंस्कारकयोः 'शेषो घ्यसखि' 'पतिः समास' इत्येतयोर्भवतु नियम्यनियामकभावः, परिभाषाणां तु विधिवाक्येन सह वाक्यार्थबोधमन्तरा न लक्ष्यसंस्कारकत्वमिति न नियामकत्वसम्भव इत्यत आह—**परिभाषाणामिति** । यद्वा परिभाषाणामङ्गत्वेनाङ्गीभूतप्रधानविधिसङ्कोचकत्वे लक्षणनियामकत्वासम्भव इत्यत आह—**परिभाषाणामिति** ।

**अलोन्त्य** । **ऋकारात्पूर्व इति** । 'आद्यन्तौ टकितौ''वलोन्त्ये'त्यनयोः समावेशः स्यादिति भावः । **नियमद्वयमिति** । इदमयुक्तं—सिद्धे सत्यारम्भाभावात् । **अन्ये** त्व'नेकाल्शित्सर्वस्ये'त्यस्यारम्भसामर्थ्यादेकालादेशस्य स्थानषष्ठीनिर्दिष्टावयवस्थानकत्वं कल्पयित्वा नियामकत्वं वर्णयन्ति, तन्न

**ङिच्च** । अनेकाल्त्वार्थमिदम् । **आदेरिति** । आदेरल इत्यर्थः । तेन 'द्वीन'मित्यादौ पान्तसमुदायस्य नेत्वम् । अत्र 'परस्ये'त्यावर्त्तते, तेन परत्वबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेदम् । तेन 'नित्यं ङित' इत्यादौ न दोषः । तत्र विकरण-व्यवधाने प्रवृत्तये—'धातो'रित्यस्य विहितविशेषणत्वात् ।

ॐ अभिनव-चन्द्रिका ॐ

स्थानषष्ठी अस्या लिङ्गमिति स्वीकारादेवेति भावः । **न दोष इति** । नच 'नित्यं ङित'इत्यादौ विकरणव्यवधानेऽपि प्रवृत्तये 'धातो' रिति विहितविशेषणं, वस्तुनो धातोः परो ङिन्नास्तीति नावृत्त्युपयोग इति वाच्यम्, 'क्सस्याची'त्यादावेतदप्रवृत्तये 'परस्ये'त्यस्यावृत्तेरावश्यकत्वात् ।

ॐ चिदस्थिमाला ॐ

परमेवान एवात्र तदनुवृत्तिरावश्यिकेति भावः । 'अत एवे'त्यस्यार्थमाह—**यथेति** । एतद्घटकविभक्ते-रित्यर्थः । **इतइत्यस्य**—एतद्घटकङसः । एतेन **रत्नाकरादि** न्थे न्यूनता ध्वनिता । पूर्वेण सिद्धत्वादाह—**अनेकालिति** । तद्धनयन्नाह—मूले–**सर्वस्येत्यस्येति** । अल इत्यनुवृत्तेराह—**आदेरिति** । **नेत्वमिति** । ईकारो नेत्यर्थः । अन्यथान्त्यालिभन्नस्यादित्वेन ग्रहणे समूहस्यापि ग्रहणादपस्तदापत्तिरिति भावः । विशेष-माह—**अत्रेति** । **आवर्तत इति** । तृतीयान्तेन विपरिणमने चैकमित्यपि बोध्यम् । तदाह—**तेनेति** । प्रागुक्तरीत्या परादिशब्दस्यार्थपरत्वात् सूत्रद्वये भिन्नशब्दोक्त्याऽन्यशब्दसङ्ग्रहायाह—**बोधकेति** । स्थानपदस्यैकदेशस्य मण्डूकप्लुत्याऽनुवर्तनादाह—**परस्य स्थाने इति** । ननु 'धातो'रित्यधिकारात्तेन विधिस्तत्राप्यस्त्येवेत्येवमप्यतिप्रसङ्ग एवात आह—**तत्रेति** । यथा च तस्य तत्रावश्यकत्वं तथा स्पष्टी-भविष्यति । यद्यपीत्सञ्ज्ञायोग्यशकारवत्त्वमेव शित्त्वम्, अनुबन्धत्वयोग्यत्वमेव च तत्र तत्त्वमिति,—इत्याद्य-प्युदाहरणमिति दूरधावनं व्यर्थं, तथापि शङ्काद्यर्थमाह—**इदमिति** । **कौस्तुभाद्युक्तिरसङ्गतेति** ध्वन-

ॐ ज्योत्स्ना ॐ

**धातोरित्यस्य विहितविशेषणत्वादिति** । यदि तु फलाभावाद्धातोरित्यस्यानुवृत्तिस्तत्र न क्रियते, कृतायामपि वा व्याख्यानात्सम्बन्धसामान्यषष्ठी साश्रीयते तदा परस्येत्यावृत्तेरत्र

ॐ सदाशिवभट्टीयम् ॐ

को भवतीत्याशङ्क्याह—**विधीयेति** । परिभाषाणां फलविशेषसत्त्व एव प्रवृत्तिरित्येतल्लभ्यमाह—**अल्समुदायेति** । षष्ठीसमासेनाल्बोधकसमुदायेत्यर्थः । न त्वस्य फलेऽभिनिवेशः कार्य्यः । **परस्य स्थाने इति** । परत्वविशिष्टस्य स्थाने इत्यर्थः । **विहितविशेषणत्वादिति** । यद्यपि विहितपदाध्याहारे

ॐ विषमपदविवृतिः ॐ

युक्तम् । इतः पूर्वं नियमेनानेकालित्यस्य वाक्यार्थबोधकल्पने तद्वैयर्थ्यमूलकोक्तार्थकल्पने चाति-गौरवेण लघुभूतविधित्वस्यौचित्यात्, परिभाषाणामनियमे नियमकारिणीत्वमपवादस्तु यदि परि-भाषात्वसामानाधिकरण्येन तदोमिति ब्रूमः । यदि तदवच्छेदेन तदुक्तिस्तदा निर्युक्तिकः प्रवादो न प्रेक्षावद्भिरादर्त्तव्य इति ब्रूमः । **परस्येत्यावर्तत इति** । इदमप्ययुक्तं, 'विभाषा दिक्समासे' इत्या-दाविव परशब्देन परत्वबोधकशब्देन वा परस्य यद्विहितं तत्रैवैतत्प्रवृत्त्याऽऽवृत्तिवैयर्थ्यात् । 'तस्मात्प-रस्ये'ति लघुन्यासस्सम्भवात् 'तस्मादित्युत्तरस्ये'ति न्यासाभिप्रायेणेदं कथञ्चिद्योज्यम् । 'भूतपूर्वानेकाल्त्व

**अनेकाल्शित्** । शित उदाहरणम्—'इदम इश्' । ननु शकारोच्चारणसामर्थ्याद्भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थं, किञ्च सानुबन्धकनिर्देशे यथा नाल: स्थानित्वं 'भोभगो' इति सूत्रे भाष्ये उक्तं, तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति तद्यर्थम् । 'विधौ निर्दिष्टो योऽनेकाल्स सर्वस्ये'ति सूत्रार्थः । उद्देश्यत्वविधेयत्वा-

ॐ अभिनव-चन्द्रिका ॐ

आवृत्त्या च परत्वावच्छिन्नोद्देश्यताश्रयस्य यत्कार्यं तदादेरल इत्यर्थः । **भूतपूर्वानेकाल्त्वमिति** । अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्ये आरोपस्य स्वीकारात्, अनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्य स्थाने भवतीत्यनेकाल्सूत्रार्थस्वीकाराद्वा, औश्वृत्त्यनेकाल्त्वस्य स्थानिवद्भावेन औ इत्यत्रानयनाद्वेत्यन्यत्र विस्तरः । **नालः स्थानित्वमिति** । 'अल' इत्यस्याल्त्वव्याप्यधर्मस्येत्यर्थः । 'स्थानित्व'मित्यस्य स्थानितावच्छेदकत्वमित्यर्थः । **आदेशत्वमपीति** । आदेशतावच्छेदकत्वमित्यर्थः । **सूत्रोपात्तस्यैवेति** । सूत्रोपात्तवृत्तिधर्मस्यैवेत्यर्थः । अन्यथाऽनुबन्धविनिर्मुक्तपदार्थोपस्थितिस्वीकारेणादेशत्वं स्थानित्वञ्चानुबन्धविनिर्मुक्तस्यैवेति यथाश्रुतशेखरोऽसङ्गतः स्यात् । अन्ये तु'बोधकावयवेष्वनुबन्धेषु बोध्यावयवत्व'मिति स्वीकारेण सानुबन्धकादेशस्थले स्थानित्वादेशत्वयोर्व्यासज्यवृत्तित्वेन 'नालः स्थानित्व'मित्यस्य—नाल्पर्याप्तं स्थानित्वमित्यर्थः । 'आदेशत्वं सूत्रोपात्तस्यैवे'त्यस्य—आदेशतापर्याप्तिः—सूत्रोपात्तानुबन्ध—तद्बोध्यादेशैतदुभयत्रेत्यर्थ इत्याहुः । **विधौ निर्दिष्टो योऽनेकालिति** । 'विधा'वित्यस्य—विधिशास्त्रे इत्यर्थः । 'निर्दिष्टोऽनेका'लित्यस्य—

ॐ चिदस्थिमाला ॐ

यितुं शङ्कते—**नन्विति** । इशः शस्य कार्याभावादित्सञ्ज्ञायाः अभावेनानेकाल्त्वात्सिद्धिरिति, तन्न, तथा सति शस्य श्रवणापत्तेरत आह—**शकारोच्चेति** । **भूतेति** । साम्प्रतिकाभावादिति भावः ।

ननूच्चारणार्थतया प्रत्ययत्वशङ्कानिरासार्थतया च तत्साफल्यं, विभक्त्युच्चारणे लाघवाभावो'ऽशोकवनिका' न्यायेन 'तकार एव कार्य' इति शङ्काऽभावश्चात आह—**किञ्चेति** । **निर्देशे इति** । सानुबन्धकस्थानिनिर्देशे इत्यर्थः । प्रकृताशयेनाह—**अल इति** । एवञ्चान्यत्रापि तथा बोध्यम् । **स्थानित्वमिति** । 'इती'ति शेषः । **तत्**=शिदिति । नन्वेवमपि प्रयोगे जायमानो नानेकाल्त आह—**विधाविति** । विध्येकवाक्यतयाऽध्याहारेण च लब्धमिदम् । नन्वेव'मणुदि'त्सूत्रे भाष्ये उक्तम्—"अत्यल्पमिदमुच्यते—अप्रत्ययटित्किन्मिदादेशा इति वक्तव्यम् । आदेश–इदम इश्, इत–इति" तद्विरुध्येत । नहि तस्याण्त्वं–येनातिप्रसङ्गः

ॐ विषमपदविवृतिः ॐ

मादाये'त्युक्तमुपपादयति—**विधाविति** । ननु किमिदं विधौ निर्दिष्टत्वं ? न तावदनेकाल्पदबोध्यत्वं, 'खरवसानयोर्विसर्जनीय'इत्यादिविहितविसर्जनीयलोपानुनासिकोदात्तादीनामपि सर्वादेशत्वापत्तेः । नापि—इशादिपदजन्यप्राथमिकोपस्थितिविषयत्वं, तथा सति सानुबन्धस्यैव विधेयत्वापत्तेः, पदार्थोपस्थितिशाब्दबोधयोः समानविषयकत्वेनैव कार्यकारणभावादिति चेन्न, द्वितीयपक्षाङ्गीकारेणादोषात् । न च तत्पक्षोक्तदोषः 'गङ्गायां घोष'इत्यादावपि गङ्गापदेन प्रथमोपस्थितप्रवाहस्य शाब्दबोधे भानवारणाय—शाब्दबोधस्य प्राथमिकपदार्थोपस्थित्या समानविषयकत्वानङ्गीकारात् । यदि च प्रवाहोपस्थितिर्न शाब्दबोधकारणं, या च कारणं–तीरोपस्थितिः–सा शाब्दे शाब्दबोधेन समानविषयैवेति ब्रूषे–तर्हि प्रकृतेपि या सानुबन्धकोपस्थितिर्न सा शाब्दबोधकारणं, या च कारणं साऽनुबन्धविनिर्मुक्तविषयिणी पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैवेति ग्रन्थोऽपि शाब्दबोधकारणो-

ख्यविषयतया बोधविषयता तु अनुबन्धाविनिर्मुक्तस्येति नाणुदित्सूत्रभाष्यविरोधः। 'श्वसो'-रिति लोपस्य—'लोपो यी'ति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः। 'अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्त'मिति चेन्न, 'नानुबन्धकृतमनेकाल्त्व'मिति ज्ञापनेन चारितार्थ्यात्। तेन 'दिव औ'दित्यादीनां न सर्वादेशत्वम्। अस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते। 'नानेकाल्शि'दिति तु नोक्तम्, 'अनन्तरस्ये'ति न्यायेन 'आदेः परस्ये'त्यस्यैव निषेधापत्तेः। **परत्वादिति**। आदेः परस्येत्यस्यावकाशः—

❀ अभिनव-चन्द्रिका ❀

निर्दिष्टवृत्तिरनेकाल्वृत्तिर्यो धर्मस्तद्धर्मावच्छिन्नविधेयताश्रय इत्यर्थः। **उद्देश्यत्वविधेयत्वाख्यविषयतयेति**। 'धान्येन धनवा'नितिवदभेदस्तृतीयार्थः, तस्य च बोधविषयतायामन्वयः, अन्यथा शाब्दबोधे उद्देश्यतानिरूपकत्वविधेयतानिरूपकत्वयोस्सत्त्वेऽपि उद्देश्यताविधेयताविषयकत्वे माना-भावाद्यथाश्रुतमसङ्गतं स्यात्, उद्देश्यत्वविधेयत्वयोरपदार्थत्वेन शाब्दबोधासम्भवात्, पदजन्यपदार्थो-पस्थित्यभावे शाब्दबोधानङ्गीकाराच्चेति दिक्।

परे तु—यथा मीमांसकनये ज्ञानमात्रे मितिमातृभासकत्वं मितिविषयकमात्रविषयकसंशयस्य कदाप्यनुदयात्स्वीक्रियते, तथा विषयत्वाविषयकस्य संशयस्य कदाप्यनुदयाद्विषयताविषयकत्वमपि ज्ञानमात्रे स्वीक्रियते, तथाच उद्देश्यत्वविधेयत्वाख्यविषयतयेत्यत्र तृतीयार्थो विषयत्वम्। तस्य निरूपितत्वसम्बन्धेन शाब्दबोधेऽन्वयः, प्रकृत्यर्थस्य च निष्ठत्वसम्बन्धेन तृतीयार्थविषयतायामन्वयः। तथाच—उद्देश्यत्वविधेयत्वाख्यविषयत्वनिष्ठविषयतानिरूपकबोधीयविषयताऽनुबन्धविनिर्मुक्तपदार्थे एवेति यथाश्रुतमेव सङ्गतमित्याहुः। **चारितार्थ्यादिति**। अनुबन्धघटितबोधकवृत्तयो ये अनुबन्ध-

❀ चिद्स्थिमाला ❀

स्यादत आह—**उद्देश्येति**। एतेपि तद्विशेषरूपे इति ध्वनयन्नाह—**विषेति**। नन्वेवमपि 'श्वसो'-रितिलोपस्य सर्वादेशत्वार्थं शित्त्वमावश्यकमत आह—**श्वसोरिति**। **लोपो यीति**। इत्यतो लोपपदे प्रकृते इत्यर्थः। नन्वेवमप्यनुबन्धानामनेकान्तत्वात्कथमनेकाल्त्वमत आह—**अनुबन्धानामिति**। **नानुबन्धेति**। अनुबन्धत्वयोग्यकृतमित्यर्थः। इत्सञ्ज्ञायोग्यशकारवत्त्वमेव च शित्वं सूत्रे, एवञ्च 'जसः-शी'त्याद्यप्यस्यैव लक्ष्यमित्यन्यत्र स्पष्टम्। नन्वौतस्त उच्चारणार्थो नानुबन्ध एवेति कथमत आह—**अस्य चेति**। वक्ष्यते=तत्रैव सूत्रे। **नारायणगुरूक्तं** खण्डयति—**नानेकालिति**। पदलाघवेऽपि मात्रा-लाघवमिति भावः। यत्तु **रत्नाकरः**—अन्त्यस्यादेरित्युभयानुवृत्त्योभयनिषेधेन यद्यपि तथा सुकरं, तथापि पारिशेष्यान्मध्ये अल्यनुपसंहारापत्तौ जस्भिसाद्यकारेकारादौ औशैसादेरापत्तिरिति तथा दुर्वचमिति तन्न, उभयानुवृत्तौ मानाभावात्। उभयत्र स्वरितत्वे मण्डूकप्लुतौ च गौरवं च। निर्दिश्यमाने'ति न्यायेन निर्वाहाच्च, षष्ठीबोधितसमूहनिष्ठस्थानित्वत्यागे मानाभावाच्च। तद्ध्वनयन्नाह—**अनन्तरेति**।

❀ विषमपदविवृतिः ❀

पस्थितिपर इति समानम्। तदेतदभिप्रेत्याह—**उद्देश्यत्वविधेयत्वाविषयतयेति**। 'धान्येन धनवा'नित्यादिव'त्प्रकृत्यादिभ्य' इत्यभेदे तृतीया। शित्त्वस्य प्रयोजनान्तरमाशङ्क्य निराकरोति—**श्वसोरिति**। नन्वनुबन्धानामनेकान्तत्वे इशादेरनेकाल्त्वाभावेन सर्वादेशत्वासिद्ध्या शिदिति सार्थक-मित्याशङ्क्याह—**अनुबन्धानामिति**। **ज्ञापनेनेति**। ननु ज्ञापितेपि शकारोच्चारणसामर्थ्यादनुबन्ध-कृतमप्यनेकाल्त्वमादाय सर्वादेशत्वं भविष्यतीति पुनः शिद्ग्रहणं व्यर्थमिति चेन्न, अनुबन्धकृता-ऽनेकाल्त्वस्य सर्वादेशत्वप्रयोजकत्वे सिद्धे शकारोच्चारणसामर्थ्येनाद्यादेशत्वस्यापि कल्पनापत्तेः, इत्सञ्ज्ञकशकारस्याद्यादेशत्वे सर्वादेशत्वे च निमित्तत्वाभावविशेषादिति दिक्। **इत्यादीनामिति**।

'द्व्यन्तरुपसर्गेभ्यो'—द्वीपम्। 'शित्सर्वस्य'—'इदम इश्' । एवम् 'अतो भिस' इत्यादिविषये 'अनेका'लित्यनेनादेः परस्येति परत्वाद्बाध्यते । एतेन 'ङिच्चे'त्यत्र 'ङिदेवानेकालन्त्यस्ये'ति नियमेन सिद्धेऽनेकाल्ग्रहणं व्यर्थमित्यपास्तम् ।

**स्वरितेन** । इत्थम्भूतलक्षणे तृतीया। स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमज्झल्साधारणं स्वररूपमाधिक्रियमाणपदघटकाज्निष्ठं वा । तच्चानुनासिक्यवत्प्रतिज्ञागम्यम्। विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः, क्वचित्पूर्वत्रापि । 'कियद्दूरमधिकार' इत्यत्रासति गमके व्याख्यानमेव शरणम्। किञ्च स्वरितेनाधिकारगतिः,—तेन 'गोस्त्रियो'रित्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम्।एतेन'व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति, आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य

---

❀ **अभिनव-चन्द्रिका** ❀

घटितातिरिक्ता आनुपूर्व्यतिरिक्ताश्च धर्मास्तन्निमित्तके विधौ कर्तव्ये अनुबन्धा अविद्यमानवद्भवतीति कल्पनेन चारितार्थ्यादिति भावः । **तृतीयेति** । वैशिष्ट्यं तृतीयार्थः, तथा च स्वरितत्वविशिष्टमधिक्रियते इति सूत्रार्थः, तत्फलितमाह—**स्वरितत्वज्ञाप्य इति** । 'स्वरितत्वं—स्वरविशेष' इति पक्षेऽप्याह—**अज्निष्ठं वेति** । **बहिरङ्गशास्त्रीयेति** । अत्र बहिरङ्गत्वमुपलक्षणं, न विशेषणम् । एवमुत्तरसूत्रेऽन्तरङ्गत्वमप्युपलक्षणमतो नान्योन्याश्रय इति भावः ।

❀ **चिदस्थिमाला** ❀

शिति तदुक्त्वाऽनेकालिति मौलादिसङ्ग्राह्यं तदाह—**एवमिति** । एतेन=आदेरिति बाधकतयाऽनेकालित्यस्येष्टत्वेन । एतदभावेऽन्यथा तस्य साफल्याभावादाह—**ङिदेवेति** । **इत्थमिति** । अत्रेत्यादिः । तदर्थश्च ज्ञाप्यत्वं, स्वरितशब्दश्च धर्मपरस्तदाह—**स्वरितत्वेति** । अधिकारपदार्थमाह—**विनीति** ।

**साधारणमिति** । तथा च विशिष्टनिष्ठमत एव दोषेतिविशेषणमुक्तमिति भावः । 'कूष्मकल्पनात्'इति न्यायेनाह—**स्वरेति** । अत्र पक्षे मूले युक्तत्वं परम्परया बोध्यम् । ननु साम्प्रतं तथा पाठाभावेन कथं तज्ज्ञानमत आह—**तच्चेति** । तथा च 'प्रतिज्ञानुनासिक्या' इतिव'त्प्रतिज्ञास्वरिताः पाणिनीयाः' इत्यपि प्राचोक्तमिति बोध्यम् । अपकर्षसङ्ग्रहायाह—**प्रायेणेति** । तत्फलमाह—**क्वचिदिति** । **असतीति** । 'अङ्गस्ये'त्यादौ । 'प्राग्दीव्यत' इत्यादौ तु गमकमेवेति भावः । अत एव सूत्रस्यार्थान्तरमाह—**किञ्चेति** । अर्थः प्राग्वत् । अधिकारशब्दो लाक्षणिकः, अधिकारगतिः=अधिकारज्ञानम् । किञ्चाधिकः कारः=कृतिर्यत्पूर्वं सत्परं बाधते, तथा च पूर्वविप्रतिषेधाः सर्वे सङ्गृहीतास्तत्र स्वरितपाठात् । किञ्चाधिकः कारोऽधिकं कार्यं,—गौणेऽपि शास्त्रप्रवृत्तिस्तेन गौणाधारादेष्यधिकरणादिसञ्ज्ञासिद्धिरिति स्पष्टमत्रैव सूत्रे भाष्ये, तदाह—**इत्याद्याकरादिति** । एतेन=किञ्चेत्यादिना अर्थान्तरकथनेन । सप्तम्यन्तच्छेदेन व्याख्यानं तु ( भाष्यीय ? ) मूलव्याख्यानतुल्यमित्याह—**व्याख्येति** । नन्वेमप्यन्यसम्बन्धनिवृत्त्यर्थमावश्यकमेवेदं सूत्रमत आह—**आकाङ्क्षायामिति** । अन्यतराकाङ्क्षायामुभयाकाङ्क्षायाञ्चेत्यर्थः । ननु परत्वादेर्बाधकत्वे एव मानाभावेना-

❀ **ज्योत्स्ना** ❀

प्रयोजनाभावः । **क्वचित्पूर्वत्रापीति** । एतेन तत्र तत्तत्पदापकर्षा व्याख्याताः ।

❀ **विषमपदविवृतिः** ❀

'आदि'पदेना'र्वणस्तृ''ससजुषोरु'रित्यादेः सङ्ग्रहः । **एतेनेति** । ऐसि 'आदेःपरस्ये'त्यस्य प्राप्तत्वेनेत्यर्थः ।

न्याय्यत्वाच्च किं सूत्रेणे' त्यपास्तम् । स्पष्टश्चेदं भाष्ये । **परनित्येति** । परं विप्रतिषेधे ... द्रूलवत्। नित्यं=कृताकृतप्रसङ्गि, तद्विपरीतमनित्यम्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् ।

अन्तर्मध्ये—बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि—निमित्तानि यस्य तदन्तरङ्गम्। तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं—बहिरङ्गम्। तस्य बलवत्त्वेबीजमाह—**असिद्धमिति** । इयञ्च—'वाह ऊडि' ति सूत्रेण ज्ञापिता। यद्यपि 'प्रत्यङ्गवर्त्ती लोको दृश्यते. मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति, ततः सुहृदां, ततः सम्बन्धिनामि' ति-न्यायमूलकत्वमस्या 'अचः परस्मिन्नि' ति भाष्ये उक्तं, तथापि तेन न्यायेन युगपत्प्राप्तिविषय-तैव स्यात्, ज्ञापकेन तु सर्वविषयता बोध्यते इति 'वाह ऊठ्' इति सूत्रे कैयटे स्पष्टम् ।

ॐ अभिनव-चन्द्रिका ॐ

**इयञ्चेति** । न च 'ऊडिद'मित्यादिना 'विश्वौह' इत्यादौ स्वरार्थमूठ्ग्रहणमावश्यकमिति वाच्यं, 'वाहष्टित्' 'वाहष्ठ्' इति न्यासेन वा सिद्धे ऊठ्ग्रहणस्य ज्ञापकत्वात्, 'ठिदिद'मिति न्यासेन विश्वौह इत्यादौ स्वरसिद्धेश्च । यत्तु—'ह्रस्व एव उठि विधातव्ये दीर्घोठ्ग्रहणं ज्ञापकं, स्वरविधायकेऽपि ह्रस्व एव पाठ्यः, 'ज्वरत्वरे'त्यत्र 'उ-उठ्'इति प्रश्लिष्य उठ् ह्रस्व एव विधातव्य इति 'जूर' इत्यादौ न दोषः । 'एत्येधत्यूठ्'स्वि इत्यत्र ह्रस्व एव पठ्यते इति जनानवर्तीति जनौरित्यादौ न दोषः । एवं च्छ्वोरित्यादिना प्रश्लेषेण ह्रस्व एव विधीयते इति मव्यधातोः क्विपि 'मौ'रित्यादौ न दोष इति, तन्न । आवयतेः क्विपि औरित्यस्यासिद्धत्वापत्तेः, वार्णपरिभाषया सवर्णदीर्घगुणवृद्ध्योरापत्तेः । नच 'नाजानन्तर्य' इति परिभाषया निषेधात्त्वांशे चारितार्थ्यं नास्तीतिवाच्यं, व्यञ्जनव्यवधानेन 'नाजा-नन्तर्य' इति परिभाषाया अप्रवृत्तेः ।

ॐ चिदस्थिमाला ॐ

पवादः परत्वाद्बाध्यते इत्युभयमयुक्तमत आह—मूले—**परनित्यान्तरङ्गेत्यादि** । 'विप्रे'ति सूत्रं विध्यर्थं नियमार्थं वेत्यपरिभाषात्वादत्र न लिखितं, तदेतद्ध्वनयन्परस्य बलवत्त्वे बीजमाह—**परमिति** । 'पूर्वा'दित्यादिः। पूर्वस्य परं बाधकमित्यर्थः। नित्यस्वरूपमाह—**कृतेति** । प्रतियोगिज्ञानायाह—**तद्विपेति** । तस्य तत्त्वप्रयोजकत्वं न वाचनिकं किन्तु युक्तिसिद्धमिति कथयंस्तस्य तत्त्वे बीजमाह—**तत्रेति** । नित्यानि-त्ययोर्मध्ये इत्यर्थः । **तदिति** । अभावेत्यर्थः । **युक्तमिति** । उपस्थितिलाघवादिति भावः । इति= इदम्। तस्य=नित्यस्य। तथा चावश्यकत्वं तद्बीजमितिसिद्धम्। वाक्यार्थबोधे पदार्थज्ञानस्य हेतुत्वादादौतमाह—**अन्तरिति** । अन्तःशब्दार्थमाह—**मध्ये इति** । कस्येत्याकाङ्क्षयामाह—**बहिरिति** । उपस्थितत्वा-दिति भावः । **शास्त्रीयेति** । तद्घटकेत्यर्थः । साकाङ्क्षत्वात् शेषपूरणेनाह—**अन्तर्भूतेति** । अङ्गशब्दः सन्धिविशेषस्य शरीरावयवस्य वा न वाचकः, किन्तूपकारकवाचीत्याह—**निमित्तेति** । बहुवचनं लक्ष्याभिप्रायं, शब्दस्वरूपाणीत्यर्थः । शब्दशास्त्रे तस्य प्राधान्यात्। तेनार्थादिनिमित्तकस्य न बहिरङ्गत्वा-दीति भावः । उक्तरीत्यैवाह—**तदीयेति** । अन्तरङ्गशास्त्रघटकेत्यर्थः । इदं शेषपूरणलब्धं,वाहेः—बहिर्भूता-न्यङ्गानि यस्येत्यर्थः । तदाह—**अन्तर्भूताङ्गेति** । तत्त्वं चोक्तवैपरीत्येन, तथा च 'परस्परापेक्षया व्याप्यनिमित्तकमन्तरङ्गं व्यापकनिमित्तकं बहिरङ्ग'मित्युत्सर्गः, अल्पनिमित्तकं बहुनिमित्तकमिति यावत्। विस्तरस्तु गदायां बोध्यः । तस्य=अन्तरङ्गस्य अस्याः । समूलत्वमाह—**इयञ्चेति** । **ज्ञापितेति** । ऊठ्ग्रहणेत्यादिः ।

न्यायसिद्धेऽर्थे ज्ञापकानुपयोगो भाष्यस्य भाष्यान्तरविरोधश्चेत्याशङ्कते—**यद्यपीति** । **प्रत्यङ्गेति** । अन्तरङ्गेत्यर्थः । **शरीरेति** । तस्य सुखादिसाक्षात्कारायतनत्वात् । **सुहृदामिति** । सुहृत्त्वस्य प्रथमो-पस्थितिहेतुत्वात् । **सम्बन्धिनामिति** । अवश्यकर्तव्यत्वात् । **स्यादिति** । तत्र तथैव सत्त्वादिति भावः । **सर्वेति** । तथाचान्तरङ्गे कार्ये जातं तत्कालप्राप्तञ्च बहिरङ्गमसिद्धमित्यर्थः । तस्य तत्त्वमुपपाद-

अन्यथा वाहः सम्प्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे 'वृद्धिरेचि'इति वृद्धौ प्रष्ठौह इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति—न 'अयजे इन्द्र' मित्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्याद्बलवान् ।

**अकृतेति** । न कृतो विशिष्ट ऊहः तर्को—निमित्तविनाशेऽपि कार्यस्थितिरूपः,—यथा दण्डविनाशेऽपि—घटस्थितिः,—स यैस्ते इत्यर्थस्तदाह—**निमित्तमित्यादि** । तत्प्रयुक्तं कार्यं जातमपि न कुर्वन्ति=नोच्चारयन्तीत्यर्थ इति कैयटादयः ।

अन्ये तु व्यूहोऽन्तरङ्गशास्त्रं, बहिरङ्गापोहनरूपत्वात् ,तत्—निमित्तविनाशं दृष्ट्वा—

ॐ अभिनव-चन्द्रिका ॐ

नचैवमपि सम्प्रसारणास्यासिद्धत्वेऽपि पूर्वरूपस्य तत्त्वाभावान्न स्वांशे चारितार्थ्यमिति वाच्यम्, 'हल' इति ज्ञापकेन सम्प्रसारणस्थानिककार्ये सम्प्रसारणत्वातिदेशेन सम्प्रसारणस्थानिकपूर्वरूपस्याप्यसिद्धत्वादिति दिक् ।

**निमित्तविनाशेऽपीति** । निमित्तविशिष्टविनाशे इत्यर्थः । वै० च'स्वप्रतियोगिकत्व'-'स्वस्थानिकादेशप्रतियोगिकत्वै'तदन्यतरसम्बन्धेन । अत एव 'समर्थाना'मिति सूत्रे समर्थग्रहणं स्वांशे चरि-

ॐ चिदस्थिमाला ॐ

यति—**अन्यथेति** । अस्या अभावे इत्यर्थः । **गुण इति** । 'लघूपधे'त्यादिः । सत्यां त्वेतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यादिति तदावश्यकत्वमिति भावः । नन्वस्या एव सर्वविषयत्वेऽस्याः सापवादत्वादयजे इन्द्रमित्यादौ दोषोऽत आह—**नाजेति** । **नान्तर्येति** । 'परी'ति पाठः । तज्ज्ञापकेनासिद्धमित्यस्या अनित्यत्वमेव ज्ञाप्यते, लाघवादत एव 'विप्रे'तिसूत्रादन्यत्र भाष्ये क्वापि तस्या अनुल्लेखः । एतेना'न्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय' इति परिभाषान्तरं निरपवादं तत्साधकमित्यपास्तम् । उक्तरीत्या सिद्धेरेनामाश्रित्य **विप्रेति**सूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च । तदाह—**परीति** । **वचनेति** । तथा च तदप्राप्तियोग्येऽचारितार्थ्यमेव तस्य बाधकत्वे बीजमिति भावः । आदौ सयुक्तिकत्वात्कैयटादिरीत्याऽर्थमाह—**न कृत इति** । वेर्थमाह—**विशिष्ट इति** । वैशिष्ट्यमेवाह—**निमित्तेति** । निमित्तकारणेत्यर्थः । अत एवात्र दृष्टान्तं मध्ये आह—**स इति** । तर्क इत्यर्थः । **यैरिति** । पाणिनिप्रभृतिप्रोक्ताध्येतृभिरित्यर्थः । तदनुरोधेनैवान्यथा भासमानं मूलमन्यथा व्याचष्टे—**तत्प्रयुक्तमिति** । विनाशोन्मुखत्ववन्निमित्तप्रयुक्तमित्यर्थः । अपरिजातसमुच्चायकस्तस्योच्चारणस्यैवाप्राप्तेः, कृतमपि कार्यं निवर्तयन्तीत्यर्थः । 'निमित्तापाये 'नैमित्तिकस्याप्यपायः' इति यावत् । यद्यपि द्वितीयपक्षे—न कृतो विशिष्टः—शास्त्रप्रवृत्तिविषय ऊहो—निश्चयो यैरित्यन्यत्र व्याख्यातं, तथापि लाघवादाह—**व्यूहोऽन्तरङ्गेति** । यद्यपि विशिष्ट ऊहो येषु तानि व्यूहानि=अन्तरङ्गशास्त्राणि, ऊहस्तर्कः, स च बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशरूपः, तानि न कृतानि यैरित्यर्थं इत्यन्यत्र व्याख्यातन्तथापि लाघवादाह—**बहिरङ्गापोहनेति** । बहिरङ्गेण तच्छास्त्रणापोह्यते दूरीक्रियते निमित्तविनाशद्वारा यत्तद्रूपत्वादित्यर्थः । तथा चात्र 'कर्मणि ल्युट्, व्यूह इत्यत्र च कर्मणि घञिति भावः । **तदिति** । अन्तरङ्गशास्त्रमित्यर्थः । 'भाविनिमित्तविनाशे सती'त्यध्याहारः । बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते ऽन्तरङ्गं नेत्यर्थः । तदाह—**निमित्तेति** । भाविनमपीति भावः । अत एवाह—**पूर्वमपीति** । **अपिरनन्तरसमुच्चये** । तदानीं तस्य प्राप्तेरेवाभावात् । **अन्येत्वित्यनेनारुचिः सूचिता**, तद्बीजन्तु आद्यपक्षस्य लोकसिद्धत्वेनानपूर्वत्वेन ज्ञापकानपेक्षत्वेन लाघवायुक्तत्वं, नास्य—तद्वैपरीत्यात् । लोके हि द्विविधं निमित्तं दृष्टं,—स्वस्थितौ कार्यस्थितिसम्पादकम्, स्वास्थिता-

ॐ ज्योत्स्ना ॐ

**परिभाषेन्दुशेखरे विस्तर इति**।'अचः परस्मि'न्निति सूत्रकैयटादौ तु'नाजानन्तर्य'परिभाषापवादभूतन्यायासिद्धान्तरङ्गबलीयस्त्वमवश्याश्रयणीयमिति लभ्यते, तन्मतपरिष्कारः परिभाषाप्रदीपा-

पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ॥ **इति परिभाषाप्रकरणम्** ॥

**ॐ अभिनव-चन्द्रिका ॐ**

नार्थमिति परिभाषेन्दुशेखरे स्पष्टमिति दिक् । **निष्फलेति** । वस्तुतस्तु 'वैभाजित्रं घटमेवुषो' रित्याद्यर्थं साऽत्यन्तमावश्यकीति परिभाषेन्दुचन्द्रिकायां विस्तरः । ॐ **इति परिभाषाप्रकरणम्** ॐ

**ॐ चिदस्थिमाला ॐ**

वपि तत्स्थितिसम्पादकत्र । तत्राद्यं यथा न्यायनयेऽपेक्षाबुद्धिः स्वस्थितौ द्वित्वरूपकार्यस्थितिनियामिका, तन्नाशे-द्वित्वनाशाभ्युपगमात् । तथा वेदान्तिनये प्रारब्धसत्त्वस्य संसारस्थितिनियामकत्वं, तन्नाशेन तन्नाशात् । तथोपाधिसत्त्वस्य स्फटिकलौहित्यादिनाशनियामकत्वं । द्वितीयं यथा—दण्डादि, तन्नाशेऽपि घटनाशा-दर्शनात् । शास्त्रे तु लक्ष्यानुरोधाद्व्यवस्था । भाविनि यथाकथंचिन्निमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो, नापि सम्प्रतिपन्नो दृष्टान्तः । समर्थग्रहणस्यापि लोकसिद्धार्थज्ञापनेन चरितार्थ्यसम्भवे लोकसिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति । वस्तुतस्तु पदावधिकेऽन्वाख्याने भेद्धन् असिनिस्थिते इट्सम्प्रसारणयोः प्राप्तौ—प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वेन पूर्वं सम्प्रसारणे—वलादित्वाभावादिटः प्राप्तिरेव न, लक्ष्यानुरोधाच्च—तत्र पदावधिकमेवान्वाख्यानमिति तत्सिद्धिरत एव भाष्ये क्वाप्यस्या अनु-ल्लेखः—इतीयं नास्त्येव । एतज्ज्ञापकानि प्राग्वत् । विस्तरस्तु परिभाषेन्दुशेखरे द्रष्टव्य इति बोध्यं, तदाह— **इयमिति** । मूले—**इति परिभाषाप्रकरणमिति** । अष्टाध्यायीस्थपरिभाषाणां प्रकरणमिति=समाप्त-मित्यर्थः । परनित्यान्तरङ्गेत्यादि तु—प्रासङ्गिकं, तेन परिभाषाप्रकरणस्थपरिभाषाणामत्रानुपन्यासेऽपि न क्षतिः । ॐ **इति परिभाषाप्रकरणम्** ॐ

**ॐ ज्योत्स्ना ॐ**

र्चिषि विस्तरेण निरूपितः । **परिभाषेन्दुशेखरे निरूपितमिति** । इयमपि परिभाषा यथा भाष्य-सम्मतावश्यकर्तव्या च तथा परिभाषाप्रदीपार्चिर्द्रष्टव्यः । ॐ **इति परिभाषाप्रकरणम्** ॐ

**ॐ सदाशिवभट्टीयम् ॐ**

पञ्चम्युपपत्तये परशब्दस्याप्यध्याहार इत्यङ्गसञ्ज्ञासूत्रे उद्योते उक्तम्, तथापि तत्र परो यो विहित इत्यर्थादुप-लक्षणपरत्वम् । प्रकृतसूत्रस्य तु मुख्यविशेषणत्वे प्रवृत्तिरिति न विरोधः । ॐ **इति परिभाषाप्रकरणम्** ॐ

**ॐ विषमपदविवृतिः ॐ**

**इतिपरिभाषेति** । ननु'रणपरो', 'यथासङ्ख्य'मित्यादिपरिभाषाणामनुक्त्या न्यूनता, नामामपि प्रथमाध्यायस्थत्वात् सन्धिकार्योपयोगित्वाच्च, किञ्च ज्ञापकन्यायसिद्धानां वाचनिकीनां च कासाञ्चि-त्त्यागः, कासाञ्चिदुपादानमर्धजरतीयं, 'इको गुणवृद्धी'इत्यादीनां सन्धिकार्यानुपयुक्तानां चात्र कथनं व्यर्थमिति चेन्न । प्रथमाध्यायस्थानां प्रायेण सन्धिकार्योपयोगिनीनां सञ्ज्ञानां प्रायेण कथनस्य प्रक्रान्तत्वे तथाभूतानां परिभाषाणामपि प्रायेण कथनं कर्तव्यमित्यभिप्रायेण तासां कथनस्य कृत-त्वात् । 'परनित्यान्तरङ्गाना'मिति तु 'परत्वादनेन बाध्यत' इत्येतदुपपादनायेत्यादि क्रमेण सूत्रभिन्न-परिभाषाकथनस्योपपत्तिः कथञ्चिच्चिन्त्या । ननु किमिदं परिभाषात्वं ? न तावत्स्वोत्तरत्वेनैरपेक्ष्येण विध्युपकारकत्वं, सञ्ज्ञाशास्त्रेष्वतिव्याप्तेः, नापि–शक्तिग्राहकभिन्नत्वे सति तत्त्वम्, 'षष्ठीस्थाने योगा', 'यस्मिन्विधिः' 'प्रत्ययग्रहणे यस्मात्स' इत्यादिष्वव्याप्तेः, किञ्च–'स्थानिवदादेश' इत्या-द्यतिदेशेष्वतिव्याप्तेः । यदि चातिदेशभिन्नत्वे सति तत्त्वं तत्, तदा'ऽसिद्धं बहिरङ्गमन्तरङ्गे' इत्यादिष्वव्याप्तेरिति चेन्न । सञ्ज्ञातिदेशयोरपि परिभाषात्वस्याङ्गीकारात् उक्तपरिष्कारस्य निर्दुष्ट-त्वात् । तथाचाहुः—परितो व्यापृतां भाषां परिभाषां प्रचक्षते' इति । 'सञ्ज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्चे'त्यभियुक्तोक्तौ सञ्ज्ञातिदेशयोः पृथगुक्तिर्ब्राह्मणवसिष्ठ-न्यायेनेत्येषा दिक् । ॐ इति **प्रथमाध्यायस्थानां परिभाषाणां प्रायेण प्रकरणं समाप्तिमियात्**

## ॥ अथ अच्सन्धिप्रकरणम् ॥

**स्यादिति** । कार्यशब्दवादे इदम् । **संहितायां विषये इति** । कार्यि-निमित्तयोः संहितायां विषयभूतायामित्यर्थः । **स्थानत इति** । इदं यथासङ्ख्यसूत्रे भाष्ये स्पष्टम् । 'जातिपक्षे यथासङ्ख्येनापि निर्वाह' इति स्थानेऽन्तरतमसत्रे भाष्ये स्पष्टम् ।

अनुनासिकस्थानेऽपि निरनुनासिक एव, विधीयमानत्वेन सवर्णाग्राहकत्वात् । गुणाभेदकत्वपक्षोऽपि न विधेयाण्विषये । दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम् । अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः ।

---

### ❀ चिद्स्थिमाला ❀

**इको यणचि** । सिद्धान्तेऽसम्भवादाह—**कार्येति** । ननु संहितायामित्यत्र विषयसप्तमीति संहिताविषये इति वाच्ये पुनरुक्तिरयुक्ताऽतः सम्बन्ध्याकाङ्क्षाशान्तये सशेषपूरणमाह—**कार्यीति** । तयोरभेदेनान्वय इति भावः । मूलं समूलयति—'**इदमिति** । इदमपि व्यक्तिपक्षे' इति सूचनद्वारा **मनोरमादण्ड्यादि**-ग्रन्थासाङ्गत्यसूचनायाह—**जातीति** । अपिस्तस्यैव समुच्चायकः । एतेन 'लाकृति'रित्यादौ वकारवारणाय प्राथमिकबोध एव परिभाषाद्वयस्याप्यङ्गीकारः, एतदाशयकमेवोक्तसूत्रद्वयभाष्यमिति **रत्नाकरोक्त**-मपास्तम्, उक्तहेतोः, अन्यूनानतिरिक्तस्थानकादेशलाभे नाधिकस्थानकस्य प्रवृत्त्य तत्र दोषाभावाच्च । नन्वेवं सानुनासिकानुकरणे कृते 'दधि अत्रे'त्यादौ 'स्वौज'सित्यादौ चानुनासिकस्थाने सानुनासिको न स्यात्, शुद्धस्योपादानादत आह—**अनुनेति** । नन्वेवमपि गुणाभेदकत्वं दुर्वारमेवात आह—**गुणेति** । प्रतिपादितमिदमधस्तात् । एतेन सानुनासिकप्रतिपादनपराः सर्वेषां ग्रन्थाः परास्ताः । **मनोरमारत्नाकर**-**दण्ड्या**दिग्रन्थासाङ्गत्यध्वननायाह—**दीर्घादीनामिति** । एतेन व्यक्तिपक्षनिरासस्तत्र कथमपि सर्वत्रा-निर्वाहस्तदेवाह—**अत एवेति** । जातिपक्षाश्रयणादेवेत्यर्थः । तत्फलन्तु—'अवात्ता'मित्यादौ सलोपः । सूत्रन्त्व'भित्था' इत्यादौ सावकाशम् । अन्यथैकव्यक्तेरुपादानादन्यतरस्यैव तत्त्वं स्यादिति भावः । ननु मास्तु

### ❀ ज्योत्स्ना ❀

नन्व'णो प्रगृह्यस्ये'त्यवसानेऽनुनासिकस्य दधिशब्दस्यानुकरणे 'दधि अत्रे'त्यत्रानुना-सिकयण्प्रवृत्तये जातिपक्षे स्थानत आन्तर्यस्यावश्याश्रयणीयत्वान्न यथासङ्ख्यसूत्रेण निर्वाहोऽत आह—**अनुनासिकस्थानेऽपीति** ।

### ❀ सदाशिवभट्टीयम् ❀

**इको यणचि** । संहिताया अविवक्षया न णुट् । ननु पूर्वेणापि संहिताया उक्तत्वात् 'दधि आनये'ति-प्रयोगानापत्तिरेकपदे तन्नित्यत्वेन धकारेण तस्याः सत्त्वात्, 'संहिताया'मित्यस्य विषयसप्तमीत्वेन विषये इति पुनरुक्तश्चात आह—**कार्येति** । **विषयभूतेति च** । अधिक्रियमाणविषयसप्तम्यन्तत्वस्फुटीकरणाय समानाधिकरणं सत्सप्तम्यन्तद्वयमिति भावः । विषयशब्दोऽजहल्लिङ्गः ।

### ❀ विषमपदविवृतिः ❀

**इको यणचि** । ननु यथासङ्ख्यशास्त्रेण न निर्वाहः, 'स्वौज'सित्यत्रानुनासिकस्य स्थाने तादृश-यण्प्रवृत्तये स्थानत आन्तर्यस्यावश्याश्रयणीयत्वादित्याशङ्क्याह—**अनुनासिकस्थानेपीति** । ननु तिबादिसूत्रेण 'लस्योच्चारणप्रसङ्गे विघटितस्साधु'रिति बोधयितुमशक्यं, तत्स्थानिककार्यान्तराणा-

'ल्वादय' इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक् । व्याकरणस्य साध्वनुशासनत्वन्तु शब्दनित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या 'मृजिप्रसङ्गे मार्जिः साधुर्भवती'त्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन 'यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत्साध्वि'-त्यर्थापत्तिकल्प्यवाक्येन बोद्ध्यम् । कार्यशब्दवादे तु पूर्वभाष्योन्नीतानादितात्पर्यवशात्तत्कल्पनं बोद्ध्यम् । एतेन—स्थानत आन्तर्यादितिकथनेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्यादित्यपास्तम् । स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात् 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः ।

### ※ अभिनव-चन्द्रिका ※

अनादितात्पर्यवशादिति । वस्तुतस्तु कार्यशब्दवादेऽपि शास्त्रस्य शब्दोत्पादकत्वासम्भवात्तात्वादेरेव शब्दोत्पादकत्वेन साधूनामसाधूनाञ्च शब्दानां सिद्धतया शास्त्रस्य साधुत्वपर्यन्तं तात्पर्यकल्पनेन नित्यशब्दवाद इव मृजिप्रसङ्गे मार्जिः साधुर्भवति इत्यवश्यं वक्तव्यम् । **स्थानत आन्तर्यस्येति ।** स्थानशब्द अत्र आद्यजन्तः, तथा च स्थानिप्रतियोगिकान्तर्यस्य सर्वतो बलवत्त्वादित्यर्थः । एतद्दूषणेनैवेति । सप्तम्यन्तपाठे स्ववृत्तित्व'स्वघटितदलभिन्नदलीयवृत्तित्व' 'स्वघटितदलभिन्नदलीयस्वस्थानित्वेनाभिमतस्थानीतरस्थान्यवृत्तित्वं' तन्त्रितयसम्बन्धेनादेशविशिष्टधर्मवत्त्वादेशः इत्यर्थ

### ※ चिदस्थिमाला ※

दीर्घादिषु यणत आह—**ल्वादेति** । दिगर्थस्तु शब्दरत्नादौ स्पष्टः । ननूक्तमुख्यार्थाङ्गीकारे शास्त्रस्य साध्वनुशासनत्वमिति सिद्धान्तभङ्गापत्तिरत आह—**व्याकेति** । करणे ल्युट् । **पत्त्येति**—वाक्यकल्पने हेतुत्वेनान्वेति । ननु प्रकारान्तरेण शास्त्रसार्थक्यमास्तामत आह—**मृजीति** । वाक्यस्वरूपमाह—**यदिहेति ।** शास्त्रे इत्यर्थः । **परीति** । नित्यविभ्युदेशनावच्छेदकानाक्रान्तेनानुपूर्वीरूपेणेत्यर्थः । ज्ञाप्यं=बोधकं स्वरूपम् । **अर्थेति** । तद्रूपप्रमाणकल्प्येत्यर्थः । ननु भवत्वेवं तत्पक्षे, मूलोक्तपक्षे तु का गतिरत आह—**कार्येति** । तत्र पक्षेऽपूर्वकार्यकरणेन साफल्येन शास्त्रस्यावैयर्थ्यादाह—**पूर्वेति** । पाणिनेरिति भावः । तदिति । उक्तवाक्येत्यर्थः । जात्याश्रयणस्य फलान्तरं ध्वनयन्प्राचोक्तं खण्डयति—**एतेनेति** । अस्यार्थमाह—**स्थानत इति** । यत्तु यत्र स्थानप्रमाणभेदे कार्यभेदश्चेत्यादौ तत्रैव तस्य बलवत्त्वं न तु समुचिते इति चिन्त्यमेतदिति मन्दस्तन्न, प्रथमान्तपाठे कार्यभेदलाभेऽपि सप्तम्यन्तपाठे स्थानिभेदलाभेन तत्प्रवृत्तेः सत्त्वाद्दोषान्तरमाह—**स्थानेन्तरेति** । चोन्ते योज्यः । **विध्यर्थ इति** । वाक्यभेदेन विधेः

### ※ ज्योत्स्ना ※

परिनिष्ठितेन=परिनिष्ठित्या । ननु कार्यशब्दवादे कार्यसम्पादनेन चरितार्थस्य शास्त्रस्य कथं साध्वनुशासनत्वं, परिनिष्ठितस्यैव हि साधुत्वव्यवहारेण यणादीनां तत्तदभावादत आह—कार्यशब्दवादे त्विति । एतेनेति । यथासङ्ख्याश्रयणेनेत्यर्थः । आन्तरतम्याश्रयणेपि न दोष इत्याह—स्थानत आन्तर्यस्येति । तथा च तस्यान्याद्दशान्तर्यानपेक्षेति भावः ।

### ※ सदाशिवभट्टीयम् ※

परिनिष्ठितेन—रेखागवयन्यायेन । बोध्यम्=बोधकं शब्दस्वरूपमित्यर्थः । **एतेनेति ।** मुख्यजातिपक्षे यथासङ्ख्यसूत्रेण परत्वाद्बाधात् 'स्थानेन्तरतम'इत्यस्याप्रवर्तनेनेत्यर्थः । व्यक्तिपक्षेप्याह—**स्थानत इति ।** अन्यानपेक्षस्वप्रयुक्तकार्यप्रवर्तकत्वेनेतरबाधकत्वेनैव हि तस्य प्राबल्यं वाच्यम्, तथा सति तत्त्वं भज्येतेति भावः । नन्वेकत्र स्थानेऽनेकान्तर्यतोऽनेकप्राप्तौ यत्रानेकविधमित्यस्य विषयोऽत आह—**सप्तम्यन्तेति ।**

### ※ विषमपदविवृतिः ※

मंपि सत्त्वादित्यत आह—**यदिह परिनिष्ठितमिति** । इह=लक्ष्ये-, प्रवृत्तियोग्यसकलशास्त्रविषये । एतेन=यथासङ्ख्यशास्त्रेण स्थानेन्तरतमसूत्रापेक्षया परेण व्यवस्थाङ्गीकारेण । **सर्वत इति** । यत्र

---

१. 'परिनिष्ठितेने'त्यपि पाठः—२. नैयायिकानां मते शब्दानामनित्यत्वेन योग्यविभुविशेषगुणानां

चो विध्यर्थः । ध्वनितश्चेदमेओङ्सूत्रे भाष्ये तदाह—**द्वे वा स्त इति।** सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः । अवसाने द्वित्वसिद्धयेऽनचीति प्रसज्यप्रतिषेधस्तदाह—**न त्वचीति** । इदं द्वित्वं षाष्ठद्वित्ववद्भिःप्रयोग एव, यर इत्यादेरध्याहृतोच्चारणक्रियानिरूपितकर्मषष्ठीत्वस्यौचित्यात् । **इति धस्येति।**

❀ **अभिनव-चन्द्रिका** ❀

स्वीकारेण प्रकृते एकमात्राधिककालशून्यत्वविशिष्टताल्वस्थानजन्यत्वरूपतादृशधर्मस्य दीर्घेऽभावाद्ग्रहणापत्तेर्न भावः ।

**कर्मषष्ठीत्वस्यौचित्यादिति** । 'उपपदविभक्ते'रिति न्यायादिति भावः ।

❀ **चिदस्थिमाला** ❀

शब्दत्वसूचक इत्यर्थः । **श्चेदं हयवट्सूत्रे भाष्ये इति।** तत्रत्ययोगवाहानामविशेषेण पाठपक्षे पञ्चफलानां मध्ये द्वित्वफलोपपादनावसरे 'उरःकः उरःपः, अनचि च–अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवती'त्युक्तम् । अन्यथा तथोक्त्यसङ्गतिः स्पष्टैव । **एओङ्सूत्रे** इत्यपपाठस्तत्र तदप्रसङ्गात् । अत्रैव द्विर्वचने 'यणो मय' इति वदता वार्तिककृता तद्व्याख्यात्रा भगवतापीदं ध्वनितम् । यर इत्यतो वानुवृत्तौ मानमाह—**सूत्रेति** । तस्य निषेधप्रकरणे पाठादाह—**द्वित्वाभेति ।** एवञ्च निषेधविधिविकल्पः फलित इति सा त्रिसूत्री एततात्पर्यिकैव स्वस्वमतप्रसक्तदोषपरिहारार्थेति तत्वम् । **अवसाने इति** । वाक् वागिति भाष्योदाहृते । अन्यथा लाघवाद्धलीत्येव वदेदिति भावः । **प्रसज्येति** । तथा च प्रसिद्धदोषेष्टापत्तिरेवेति भावः।

'स्थाने द्विर्वचनपक्षे लक्ष्यभेद' इति खण्डनकाराद्युक्त्यसाङ्गत्यध्वननायाह—**इदमिति** । अष्टमिकवर्णद्वित्वमित्यर्थः । तत्रत्यपदद्वित्वे स्थाने द्विर्वचनत्वस्यैव युक्तत्वादाह—**षाष्ठेति ।** 'उपपदविभक्ते'रितिन्यायेनाह—**यर इति** । आदिना यण इत्यादिपरिग्रहः । **षष्ठीत्वेति**—बहुव्रीहिः। 'सर्ववाक्यं सावधारण'मिति

❀ **सदाशिवभट्टीयम्** ❀

**अनचिच** । 'चेदमेओङ्सूत्रादा'विति पाठः। तत्र हि सन्ध्यक्षरेषु तपरोपदेश इति पक्षे प्लुतादिष्वज्विधिरिति वार्तिकम् ।अनचि च–अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोतीत्युक्तम् । आदिना हयवरट्सूत्रं, तत्राप्ययोगवाहानामविशेषेण पाठपक्षे पञ्चफलीमध्ये द्वित्वरूपफलोपपादनावसरे, 'उरःक इत्यत्रानचि च–अचः परस्य यरो द्वे भवत इति द्वित्वं सिद्धं भवती'त्युक्तम् । प्रकृतसूत्रेपि 'यणो मय' इति वदता वार्त्तिककृतापीदं ध्वनितमिति व्याचख्युः । ननु शाकल्यमते द्वित्वनिषेधादेव रूपद्वयसिद्धौ वापदानुवृत्तिर्व्यर्थेत्यत आह—**शाकल्येति** । एवञ्च तन्मतेऽभावघटितस्य साधुत्वेपि अन्यमते न स्यादतोऽनुवृत्तिरिति भावः । **अन्ये त्वनुवृत्तिमपेक्ष्य** लाघवादाहेत्यवतारयन्ति । **प्रसज्येति** । 'अच परस्मि'न्निति सूत्रशेषे उद्योते तु पर्युदासपक्षोपि समर्थितः । 'स्थाने द्वित्वपक्षे लक्ष्यभेद' इति खण्डनकाराद्युक्तिं खण्डयति—**इदमिति** । आष्टमिकं वर्णद्वित्वमित्यर्थः । **पद इति** । आदिना 'यणो मयः' 'शरः खय' इति । **षष्ठीत्वेति** । बहुव्रीहेस्त्वः । **न्यत्रवीति** । अत्र यथा 'ह्रस्वो नपुंसक' इति सूत्रस्थभाष्यविरोधो न तथा तत्रैवोद्योते स्पष्टम् ।

❀ **विषमपदविवृतिः** ❀

प्रमाणकृतमादेशान्तरं यथा 'चेते'त्यादौ यकार एकारश्च, तत्र स्थानत आन्तर्यं बलवत् । यत्रापि स्थानप्रमाणोभयकृतमेकं केवलस्थानकृतं चापरं स्थान्यादेशान्यतरत् तत्राऽपि स्थानकृतान्तर्यमेव व्यवस्थापकमिति स्थानेन्तरतमसूत्रस्यार्थ इत्यभिमानः । **सूत्रकृतेति** । वस्तुतो 'यरोऽनुनासिक'

स्वोत्तरगुणनाश्यत्वादच्परत्वासम्भवेन साधुत्वकल्पनमप्राप्तमिति विचार्याह—**पूर्वेति** । तत्पक्षे निमित्तसन्निधानासम्भवान्सृजिप्रसङ्ग इति भाष्यासङ्गत्या पूर्वापरीभावकल्पनद्वारा 'इकारोच्चारणे यकार उच्चारणीयः, पूर्वपूर्वदृष्टप्रयोगात्' इत्यनुमानेन साध्वनुशासनं विधेयमित्यस्मत्पितामहचरणाः **श्रीस्नेहिरामशास्त्रिणः** ।

न तु द्वित्वे पूर्वयस्थाने जश्त्वनिष्पन्नदस्यापि, 'लक्ष्ये लक्षण'मिति न्यायात् विकारान्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम् ।

स्थान्यादेशयोर्भेदात्स्वं रूपमित्युक्तेश्च—'तत्स्थानापन्नस्तद्धर्मं लभते, यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते' इति लोकन्यायेन

## ॐ अभिनव-चन्द्रिका ॐ

**न लक्ष्यभेद इति।** 'स्वीयप्राथमिकप्रवृत्तौ उपयोगित्वेनाऽऽश्रीयमाणो यावाञ्छब्दसमुदायः—तद्घटको यस्तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्ति-भिन्नप्राप्तिविषयाऽघटितत्वं' तल्लक्ष्यत्वमिति स्वीकारादिति भावः । प्रकृते च—जश्त्वनिष्पन्नदकारस्य निरुक्तसमुदायाघटकत्वेऽपि निरुक्तसमुदायघटकमात्रोद्देश्यकविकारभिन्नत्वस्याभावात्तल्लक्ष्यत्वमेवेति दिक्।

**स्थान्यादेशयोर्भेदादिति।** लौकिकस्थान्यादेशापेक्षया शास्त्रीयस्थान्यादेशयोर्वैलक्षण्यादित्यर्थः। तथाहि—यदर्थं यो यस्य स्थाने नियुज्यते स तत्कार्यमेव करोति, यथा याजनार्थं गुरोः स्थाने नियुक्तः शिष्यो याजनं करोति, तथाऽर्थबोधनाय शब्दप्रयोगात्स्थानिना योऽर्थो बोध्यते तत्स्थाने प्रयुक्त आदेशस्तदर्थमेव बोधयेन्नान्यत्कार्यमिति स्थानिवत्सूत्रम् । **स्वं रूपमित्युक्तेश्चेति।** अयं भावः—गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा अग्रासनादीन्येव लभते, न तु स्वरूपाश्रितोच्छिष्ट-भोजनसंवाहनादि, एवं प्रकृतेऽपि 'आवधिष्ट'त्यादौ स्वरूपाश्रितमात्मनेपदं न स्यात् ।

## ॐ चिद्स्थिमाला ॐ

न्यायेन लक्ष्यावधारणव्यवच्छेद्यं खण्डनकृद्रत्नाकरादिग्रन्थाभाक्तत्यध्वननायाह—**नत्विति** । धस्येति शेषः । तस्यासिद्धत्वं तु न, 'पूर्वत्रासिद्धीय'मित्युक्तेः । बहिरङ्गपरिभाषायास्तु त्रैपादिकेऽप्रवृत्तिरेव । अपिर्धस्यैव समुच्चायकः । ननु विकारतो व्यक्तिभेदेन कथं लक्ष्यैक्यमत आह—**विकारेति** । तत्कृतान्यत्वेनेत्यर्थः । अन्यथोदवोढामित्यादावुदवह् म् नामित्यवस्थायां सिज्लोपादेरसिद्धत्वाद्धलन्तेति वृद्धावोकारे 'उक्तन्यायेन न वृद्धिः पुन'रिति—सिचि वृद्धिरिति सूत्रभाष्यविरोधापत्तेः, पूर्वमकारस्य तत ओकारस्येति लक्ष्यभेदसत्त्वात्, तस्मात्तदनङ्गीकारः । एतेन ततो दस्य द्वित्वमिति तदुक्तमपास्तं, तदाह—**अन्यत्रेति** । शब्दरत्नादावि-त्यर्थः । लक्षणप्रतिपदोक्तपरिभाषया स्थानिकार्यमादेशे नेति न युक्तमतिदेशविषये तदप्रवृत्तस्तत्ेोद्धनय-न्नाह—**स्थान्यादेशेति** । स्वरूपभेदादित्यर्थः । नन्वेवमपि 'तत्स्थानापन्न' इति न्यायेन स्यादेवात आह—**स्वंरूपमिति** । तत्प्रत्याख्यानपक्षेऽपि तत्प्रकारो बोध्यः । अस्य 'न स्यादि'त्यत्रान्वयः । तमेव प्राप्ति-प्रकारमाह—**तत्स्थानेति** । स्थाने=प्रसङ्गे । आदिना पूजादि । **न्यायेनेति** । 'प्राप्त'मिति शेषः ।

## ॐ ज्योत्स्ना ॐ

**न लक्ष्यभेद इति** । 'उदवोढा'मित्यादौ उद वह् सुताममिति स्थिते सिज्लोपादेरसिद्धत्वाद्धलन्त-लक्षणायां वृद्धौ 'सहिवहोरो'दित्योत्वे लक्ष्ये लक्षणस्येतिन्यायेन पुनर्वृद्धिर्नेति'सिचि वृद्धि'रिति सूत्र-भाष्यविरोधादिति भावः । **स्थान्यादेशयोर्भेदादिति** । स्थान्यादेशयोर्भेदात्स्थानिकार्यमादेशे न स्यात् । लोकन्यायाश्रयणे तु स्वं रूपमित्युक्तेर्न स्यादिति योज्यं, स्पष्टश्चेदं भाष्ये ।

## ॐ सदाशिवभट्टीयम् ॐ

**स्थानिवदा** । 'अन'लित्यस्य पर्युदासत्वे स्थान्यलिभन्नाश्रयविधावित्यर्थे 'व्यूढोरस्केने'त्यादौ दोषः, विशेषणन्तु खट्वाभिरित्यादौ ह्रस्वत्वानतिदेशेनसादिव्यावृत्त्या चरितार्थं, प्रकृतसूत्रे 'प्रतिषेध' इति

स्थानिकार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् । **न तु स्थान्यलेति** । प्रत्यासत्तिन्याय-लब्धमिदम् ।

आदेशस्य स्थानिभूतो योऽल्,—तत्स्थानिसबन्धी च योऽल्,—तद्वृत्तिधर्माश्रये नेत्यर्थः ।

ॐ अभिनव-चन्द्रिका ॐ

**प्रत्यासत्तिन्यायलब्धमिदमिति** । न च 'स्थानिवदादेश'इत्यत्र स्थानिपदापेक्षया आदेशपदस्यैव प्रत्यासन्नत्वेनेदमसङ्गतमितिवाच्यम्, 'अग्निहोत्रं जुहोति' 'यवागूं पचती'त्यत्रेव पाठक्रमादर्थक्रमस्य बली-यस्त्वेन अर्थक्रमे स्थानिपदस्यैव सन्निहितत्वात् । **आदेशस्य स्थानिभूतो योऽलिति** । स्यादेतत्—'रामाये' त्यादौ स्थानिभूतो योऽल् एकारस्तद्वृत्ति सुप्त्वं, तन्निमित्तकत्वाद्दीर्घस्यानल्विधाविति निषेधः स्यादिति चेन्मैवम् । स्थानिशब्दस्य सम्बन्धिशब्दत्वेन आदेशलाभे पुनरादेशपदोपादानं स्थानितायामल्त्वव्याप्य-धर्मावच्छिन्नत्वलाभार्थमित्यदोषात् । तथाचाल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्त-के विधौ न स्थानिवदित्यर्थः पर्यवसन्नः । 'ङेर्य'इत्यादौ स्थानितावच्छेदकं ङेत्वं तच्च नाल्त्वव्याप्यमिति रामायेत्यादौ न दोषः । नन्वेवमपि वाक्यसंस्कारपक्षे 'राम ए अत्रे'त्यत्र अल्त्वव्याप्यो धर्म एत्वं, तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं, तन्निमित्तको विधिः—यादेशविधिरिति पुनरप्यनल्वि-धाविति निषेध इति चेन्न, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूत-

ॐ चिदस्थिमाला ॐ

अनल्विधाविति—प्रसज्य प्रतिषेधो न पर्युदासः, स्थान्यल्भिन्नालाश्रयविधावित्यर्थे 'व्यूढोरस्केन' 'तन्वन्ती'त्याद्य-सिद्ध्यापत्तेः, स्थान्यलाश्रितविध्यन्यविधावित्यर्थे बभूविवेत्याद्यसिद्ध्यापत्तेस्तदाह—**न त्विति** । यद्यपि 'कष्टाये'-ति ज्ञापकलभ्यमिदं, तथापि ततो लाघवादाह—**प्रत्यासत्तीति** । तदर्थमाह—**आदेशेति** । इदमपि प्रत्या-सत्त्यैव लब्धम् । **तदिति** । आदेशेत्यर्थः । 'तद्वृत्तिधर्माश्रयेनेत्यर्थः' इति पाठः । तदन्यतरवृत्तीत्यर्थः । अत एवादे-

ॐ ज्योत्स्ना ॐ

**प्रत्यसत्तीति** । आदेशः स्थानिवदनल्विधाविति वाक्यार्थप्रत्यासत्तिरिह विवक्षिता, शब्दतस्त्वादेश एव प्रत्यासन्नः—'स्थानिवदादेशोऽनल्विधा'विति ।

ॐ सदाशिवभट्टीयम् ॐ

भाष्याऽसङ्गतिश्वात आह—**न तु स्थानीति** । **प्रत्यासत्तीति** । तत्स्वरूपन्तु प्रकृतसूत्रस्थभाष्यप्रदीपोद्योतेषु स्पष्टम् । वस्तुतः फलानुरोधाल्लाघवाच्च पर्युदासोऽयं, भाष्यन्तु फलितार्थकथनपरमत एव शास्त्रीये कार्ये एव तत्प्रवृत्तिः, तथा च तस्य तत्त्वेऽयं सूत्रार्थः पर्यवसितः—'अनल्वृत्तिधर्मत्वेन स्थानितावद्वृत्तिकः, अल्मा-त्रावृत्तिः, अनल्मात्रावृत्तिधर्मोऽघटितश्च यो धर्मस्तदाश्रये तद्वृत्तिनिरुक्तेतरधर्मानाश्रये च विधौ कर्त्तव्ये स्थानिव-द्भवनीति । मूर्द्धाभिषिक्तव्यावृत्तय इत्थम्—'वृक्षस्तत्रे'त्यादावतिव्याप्तिवारणायाद्यं धर्मविशेषणम्, अत्र मानन्तु 'भोभगो'इति सूत्रस्थं भाष्यम् । अग्रहीदित्यत्रेकारस्येट्त्वेन स्थानिता, तस्य चेट्शब्देपि सत्त्वादनल्वृत्तित्वमिति तदतिदेशो भवत्येव । ग्रहोऽलिटीत्यत्राऽनियमत्वे मानाभावेनाचश्चेत्यस्य परिभाषात्वेनानुपस्थितेः, उपस्थितावप्य-

ॐ विषमपदविवृतिः ॐ

इत्यतो वाग्रहणानुवृत्तिर्बोध्या । **प्रत्यासत्तीति** । ननु स्थान्यपेक्षयाऽऽदेश एव प्रत्यासन्न इति चेन्न, सूत्रे आदेशस्य प्रत्यासन्नत्वेपि शाब्दबोधाय कल्प्यमाने 'आदेशः स्थानिव'दिति वाक्ये

ॐ वरवर्णिनी ॐ

**आदेशस्य स्थानीति** । स्थानिभूताल्वृत्तिधर्माश्रये आदेशस्य विधौ कर्त्तव्ये स्थानिवद्भावो न भवती-त्यर्थः । एतदर्थफलन्तु—'धिन्वन्ती'त्यत्रेडभावः, वकाररूपादेश-स्थानिभूतोकारवृत्त्यार्द्धधातुकत्वरूपधर्माश्रयी-भूतत्वादिड्विधेरनल्विधाविति निषेधात् । न चैवमनुबन्धविनिर्मुक्तपदार्थोपस्थित्या—स्थानिभूतोऽल—एका-

❀ अभिनव-चन्द्रिका ❀

धर्मनिमित्तके स्थानिवत्त्वेन्यर्थेन गुलावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य आदेशे अभावेनादोषात्। नन्वेवं हल्ङ्याबिति सूत्रविरोधः, ङ्याब्ग्रहणेऽदीर्घ इति वार्तिकविरोधः, हल्ङ्यादिसूत्रीयदीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधः, 'कृन्मेजन्त' इतिसूत्रस्थभाष्यवार्तिकविरोधः, 'ग्रहोलिटी'तिसूत्रस्थभाष्यविरोधश्च। तथाहि—अतिखट्वो निष्कौशाम्बिरित्यादौ 'गोस्त्रियो'रितिसूत्रे अन्त्यस्योपस्थित्या अल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य—आरोपः'ह्रस्व आत्ववान् ङीत्ववान्' इत्याकारकस्तत्प्रकारीभूताप्त्वङीत्वनिमित्तकत्वाद्धल्ङ्यादिलोपस्य स्थानिवत्त्वनिषेधात्, दीर्घग्रहणस्य, ङ्याब्ग्रहणेऽदीर्घ इति वार्तिकस्य, ङी ई आ आप्—इति प्रश्लेषस्य चोपयोगाभावात्।

एवमाधये चिकीर्षवे कुम्भकारेभ्यो नगरकारेभ्य इत्यादौ 'घेर्ङिति' 'बहुवचने झल्येत्'-इत्यत्रालोन्त्यस्योपस्थित्याल्त्वव्याप्याल्त्वावच्छिन्नस्थानितानिरूपितादेशनाश्रयगुणेकारधर्मिकारोपप्रकारीभूतकृत्त्वनिमित्तकत्वेनाव्ययसञ्ज्ञायामनल्विधाविति निषेधात्—'अनिकारोकारप्रकृति'रितिवार्तिकस्य, सन्निपातपरिभाषया तत्प्रत्याख्यानस्य चासङ्गत्यापत्तेः। एवमग्रहीदित्यादौ 'ग्रहो लिटी'त्यत्राच्परिभाषोपस्थित्याल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतेट्निमित्तकत्वेन 'इट ईटी'ति सलोपस्य स्थानिवत्त्वाप्रवृत्त्या स्थानिवद्भावेन तत्र लोपकथनस्यासङ्गत्यापत्तेरिति चेन्नैवम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूत

❀ चिदस्थिमाला ❀

शिन्यलि आश्रीयमाणे प्रतिषेध इति भाष्यं सङ्गच्छते। वस्तुतोऽत्र लाघवात्पर्युदास एवोचितस्तत्स्पष्टीकृतमत्रैव भावप्रकाशे। मूलन्तु मूलाद्यनुरोधेन। एतेन 'प्रसज्यप्रतिषेध एवाय'मिति रत्नाकरोक्तमपास्तम्। भाष्यादिग्रन्थास्त्वत्रोदासीनाः। पर्युदासेऽप्यार्थिकनिषेधमादाय प्रतिषेधव्यवहाराङ्गीकार इति बोध्यम्। अत एव शास्त्रीयकार्ये एवायं स्थानिवद्भाव इत्यत्र सूत्रे शास्त्रीयकार्यस्याभावातिदेशो नेति नायक इत्यादिसिद्धिरत एव 'किरतौ लवने'इत्यादिनिर्देशसङ्गतिरत एव यथेष्टं वाक्यशेषाध्याहारो नेति बोध्यम्।

❀ सदाशिवभट्टीयम् ❀

जभित्रस्येट इडभित्रस्याच इति वाऽर्थादिट्त्वेन स्थानिता भवत्येव। अत्र चात्रत्यं भाष्यं मानम्। एवं 'सास्री इमे' इत्यादावप्यौकारस्याङ्त्वेन सा, तस्य चौट्इत्यत्र सत्त्वादनल्वृत्तित्वं, तेन कार्यकालपक्षे स्वादित्वातिदेशेन सत्वेऽल्लोपः, द्विवचनत्वातिदेशे प्रगृह्यत्वञ्च। एवं रामायेत्यादावेकारस्य ङेशब्दवृत्तिङेत्वेन सेति सुप्त्वातिदेशः। अनिखट्वो निष्कौशाम्बिरित्यत्राकारेकारयोः स्त्रीप्रत्ययत्वेनाप्त्वादिना वा सा, गोस्त्रियोरिति ह्रस्वविधौ प्रतिलक्ष्यं वाक्यभेदात् प्रतिप्रत्ययविधायके विषयेऽनियमेपि टाबादिविषयकेषु तदभावेनाचश्चालोन्त्यस्येत्यनयोरनुपस्थितेः, उपस्थितावप्युक्तरीतेर्वा तेनाप्त्वादेरतिदेशः। अत एव 'हल्ङ्या'बित्यत्र दीर्घग्रहणं, 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्तिकञ्च सङ्गच्छते। आकारादिप्रश्लेषश्च। अतिखट्वायेत्यत्राकारस्य 'सुपि चे'ति दीर्घविधावत्वेन स्थानित्वात्तस्य'चाच्छब्देपि सत्त्वादनल्वृत्तित्वं। तपरसूत्रस्थं तु तपरबोध्य इत्यर्थ इति—तद्वृत्याप्त्वातिदेशे 'याडाप'इति स्यादतो'ङ्याब्ग्रहणेऽदीर्घ' इति वक्तव्यमित्यत्रत्यं भाष्यं सङ्गच्छते।

---

❀ वरवर्णिनी ❀

रस्तद्वृत्तिसुप्त्व-धर्माश्रयनया'रामाये'त्यादौ'सुपि चे'ति दीर्घानापत्तिरिति वाच्यं,'स्थानिभूताल्वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्माश्रये विधौ न स्थानिव'दित्येवमनल्विधावित्यस्यार्थस्वीकारेण 'ङेर्य'इतिशास्त्रीयस्थानितायाश्च ङेत्वावच्छिन्नतया ङेत्वस्य चाऽल्त्वव्याप्यधर्मत्वाभावेनादोषात्। [ एत्वन्तु न स्थानितावच्छेदकं, स्थानषष्ठीप्रकृत्यर्थतावच्छेदकङेत्वधर्मस्यैव प्रकृते स्थानितावच्छेदकत्वात् ]। न चैवमपि वाक्यसंस्कारपक्षे 'राम-ए-अर्पये'त्यत्र यादेशस्थानिभूतो योऽल् एकारस्तद्वृत्तिरल्त्वव्याप्यो धर्म-एत्वं-

ॐ अभिनव-चन्द्रिका ॐ

धर्मेण साक्षावच्छिन्ना या उद्देश्यता तदुद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थेन हल्ङ्यादिलोपे ङीत्वाप्त्वयोरव्ययसञ्ज्ञायां क्त्वत्वस्य सलोपे इट्त्वस्य चोद्देश्यताया परम्परयावच्छेदकत्वेन तत्र कर्त्तव्येऽनल्विधावित्यस्याप्राप्त्याऽदोषात्। नचैवं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वनिवेशोऽनुपयुक्तः। रामायेत्यादौ एकाररूपाल्निष्ठस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतसुप्त्वेन 'सुपि चे'ति दीर्घोद्देश्यतायाः साक्षादनवच्छिन्नत्वादिति वाच्यं, 'रमाया'मित्यादौ याडर्थं तन्निवेशस्यावश्यकत्वात्। तथाहि—इकाररूपाल्निष्ठस्थानितानिरूपिताऽऽदेशताश्रयाम् धर्मिकारोपप्रकारीभूतङिद्वचनत्वेन 'याडाप' इतिशास्त्रीयोद्देश्यतायाः साक्षादवच्छिन्नत्वात्। नचैवमपि दाम्नी इत्यादौ द्विवचनत्वातिदेशो न स्यात्। 'औङ आपः' इत्यत्र औङित्यस्यौकारविभक्तेः सञ्ज्ञात्वेन अल्त्वव्याप्यो य औत्वरूपो धर्मस्तद्धर्मावच्छिन्ना या औकारनिष्ठा स्थानिता तादृशस्थानितानिरूपिता या ईकारनिष्ठाऽऽदेशता तादृशादेशताश्रयधर्मिको य आरोपः 'ईकारः द्विवचनत्ववा'नित्याकारकस्तादृशारोपप्रकारीभूतो यो द्विवचनत्वरूपो धर्मस्तद्धर्मेण साक्षादवच्छिन्ना या 'ईदूदेद्विवचन'मिति शास्त्रीयोद्देश्यता तदुद्देश्यताके विधौ स्थानिवत्त्वस्य निषिद्धत्वादिति वाच्यम्, अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्ना या स्थानिता तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तदुद्देश्यताके विधौ न स्थानिवदिति अनल्विधावित्यस्यार्थेन 'औङ आप' इत्यत्र—तस्मादिति परिभाषोपस्थाप्यं विशेष्यम्, औङ इति विशेषणमिति स्वीकारेण अल्त्वव्याप्यौत्वधर्मेण 'औङ आपः' इतिशास्त्रीयस्थानितायाः साक्षादनवच्छिन्नत्वेनदोषाभावात्।

ॐ सदाशिवभट्टीयम् ॐ

एतेनाद्यविशेषणे 'ह्रस्वो नपुंसके' 'कृन्मेजन्तः' 'स्थानिवदादेशे'इतिसूत्रभाष्यविरोधः, तथाहि—आद्ये चातिखट्वाय, अतिखट्वार्थं, अतिखट्वेभ्य इत्यत्र दीर्घैकादेशैत्वेषु सत्सूपसर्जनह्रस्वत्वमाशङ्क्य बहिरङ्गासिद्धत्वात्समाहितम्,त्वद्रीत्याकारवृत्तित्वात्स्त्रीप्रत्ययत्वातिदेश एव नेति। द्वितीये तु—'आधये' 'चिकीर्षवे' 'कुम्भकारेभ्य' इत्यत्र सन्निपातपरिभाषयाऽव्ययसञ्ज्ञा वारिता, त्वद्रीत्या क्त्वाऽन्तातिदेशात्प्राप्तिरेव नेति। तृतीये 'ङ्याब्ग्रहणेऽदीर्घ'इति वार्तिकेऽदीर्घ इत्युक्तं, तद्धि खट्वा इत्यत्र सुलोपार्थमाप्त्वातिदेशाय, त्वद्रीत्या कृतेपि प्राप्तिरेव नेतीत्यपास्तम्। अतिखट्वार्थम्, अतिखट्वा—उभयत्राप्यकाराऽऽकारयोः सवर्णदीर्घविधौ पूर्वत्वेन परत्वेन च स्थानित्वात् तस्य चानल्वृत्तित्वात्, आद्ये पूर्वान्तत्वेनाप्त्वस्य सुलभत्वाच्च, अन्त्ये परादित्वेन आप्त्वाच्चातिदेशस्य निषेधो मा सम्भाव्यतामित्यदीर्घे इति विशेषणमित्युद्योते स्पष्टमुक्तेश्च। स्वं रूपमित्यस्याविषये तत्स्थानेति लौकिकन्यायेन सिद्धेर्वक्ष्यमाणतया क्त्वातिदेशस्य सुलभत्वात्। पूर्वस्मादपि विधौ स्थानिवत्त्वप्रवृत्त्या स्थानिनि भवन्त्याः कृत्सञ्ज्ञाया आदेशे एव प्रवृत्तेश्च। अन्तरङ्गे कृत्वे बहिरङ्गगुणादेरसिद्धत्वेनाग्नी इत्यादौ प्रगृह्यत्वस्येव तद्बुध्यादेशे सुलभत्वाच्च। एवमन्यदप्यूह्यम्। अन्यच्चेदं-नन्वाद्यविशेषणेऽतो लोप इति सूत्रस्थभाष्यविरोधः,तत्र हि 'ण्यल्लोपयोरियङादिभ्यः पूर्वविप्रतिषेधो वक्तव्यो न वक्तव्यः सन्त्वत्रैते विधयः, एतेषु कृतेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति, नैवं शक्यम्, इयङि अन्तलोपः प्रसज्येते'त्युक्तम्। नच त्वियङादिविधावल्त्वेन स्थानितेतिप्राप्तिरेव नेतीति चेन्न। पञ्चमीसमासाभिप्रायकत्वादस्य, इदमेकदेश्युक्तमित्युद्योते स्पष्टमुक्तत्वाच्च। नन्वेवमपि कुमारीमिच्छन् कुमारीत्यत्रा-

ॐ वरवर्णिनी ॐ

तद्धर्मावच्छिन्नस्थानिता,—एकारे, तदधिकरणम् एकारस्तद्वृत्तिर्धर्म. सुप्त्वं, तदाश्रयो विधिः 'सुपि चे'ति दीर्घविधिस्तस्मिन्कर्तव्ये स्थानिवत्त्वं न स्यादिति वाच्यं, 'स्थानिभूताल्वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधार्मिकारोपप्रकारीभूतधर्मनिमित्तके विधौ न स्थानिव'दित्यर्थेन—अल्त्वव्याप्यैत्त्वावच्छिन्न-

ॐ वरवर्णिनी ॐ

स्थानितानिरूपितादेशताया अयादेश एव सत्त्वेन तदाश्रयधर्मिके च आरोपः 'अयादेशः सुब्वत्' इति तत्प्रकारीभूतधर्मस्य सुप्त्वे विरहेण क्षत्यभावात्। 'यकारः सुब्वदि'त्यारोपे सुप्त्वस्य तत्रावृत्तेः यकारेऽल्त्वव्याप्यधर्मावच्छिन्नस्थानितायाः अभावेन तादृशारोपस्य प्रवर्तितुमशक्यत्वात्। अर्थदन्तर्धर्मके तु भूयाननर्थ आपद्यते, तथाहि—अतिखट्व इत्यत्र स्थानिवद्भावेनाप्त्वमादाय प्राप्तस्य सुलोपस्य वारणार्थं 'हल्ङ्याब्भ्यो दीर्घा'दिति दीर्घग्रहणं व्यर्थम्, 'अतिखट्वाये'त्यत्र स्थानिवत्त्वाभावार्थं 'ङ्याब्ग्रहणे दीर्घभिन्न-आदेशो न स्थानिव'दित्यर्थकं 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्तिकञ्च निष्फलं, 'ङी-ई, आ-आ'विति प्रश्लिष्य दीर्घग्रहणस्य तद्वार्तिकस्य च प्रत्याख्यानपरं भाष्यञ्चासङ्गतम्, 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वविधौ 'अचश्चे'ति परिभाषयाऽच्पदोपस्थित्या 'अतिखट्व'इत्यादौ ह्रस्वस्थानी—आकारस्तद्वृत्तिरल्त्वव्याप्यो धर्मः अच्त्वं, तदवच्छिन्ना स्थानिता आकारनिष्ठा, तन्निरूपितादेशता ह्रस्वनिष्ठा, तदाश्रयधर्मिक आरोपः 'ह्रस्व आप्वत् स्या'दित्यादिः, तत्प्रकारीभूतो धर्म आप्त्वङीत्वादिरूपः, तादृशधर्मावच्छिन्नोद्देश्यताकत्वस्य हल्ङ्यादिलोपे सत्त्वेनानल्विधाविति निषेधेन स्थानिवत्त्वाप्राप्तेः [एवञ्च दीर्घग्रहणादेः प्रश्लेषादिरूपोपायादेश्च वैयर्थ्यं स्पष्टम्]।

किञ्च आधिशब्दाच्चिकीर्षुशब्दाच्च चतुर्थ्येकवचने 'आधये' 'चिकीर्षवे' इत्यत्र 'घेर्ङिती'त्यत्रालोन्त्य-परिभाषोपस्थित्या स्वस्यापि स्वव्याप्यत्वस्य स्वीकारादल्त्वव्याप्याल्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयगुण-धर्मिक—'गुणः कृत्त्वव'दित्यकारका—ऽऽरोपप्रकारीभूतकृत्त्वनिमित्तक'कृन्मेजन्त' इति शास्त्रविहिताव्ययसञ्ज्ञायां कर्तव्यायां स्थानिवद्भावस्यानल्विधाविति निषेधादेवाव्ययसञ्ज्ञाप्राप्तिरूप दोषाभावेन 'अनिकारोकारप्रकृते'रिति वार्तिकस्य सन्निपातपरिभाषया तत्खण्डनपरभाष्यस्याप्यसङ्गतिः, एवं 'कुम्भकारेभ्य'इत्यादावपि 'बहुवचने झल्ये'त्येत्वे कृते प्राप्ताया अव्ययसञ्ज्ञाया वारणपरभाष्यवार्तिकादिवैयर्थ्यमपि, एवमग्रहीदित्यत्र स्थानिवत्त्वेन सिज्लोपसाधनमपि भाष्यकृतोऽसङ्गतं—'विशिष्टं ह्येषोऽनल्माश्रयत इटं नामे'ति। किञ्च 'ङः श्यां प्रतिषेधो वाच्य' इति वार्तिकवैयर्थ्यं, 'ज्ञाने' इत्यादौ श्यादेशविधायक-'नपुंसकाच्चे'तिशास्त्रीयस्थानिताया अल्त्वव्याप्यौङ्त्वधर्मावच्छिन्नतया स्थानिवत्त्वाप्राप्त्या श्यादेशे सुप्त्वविरहेण 'यचि भ'मिति भत्वाप्राप्त्या 'यस्येति चे'ति लोपप्राप्तेरेवाभावात्। किञ्च,—यण्शास्त्रीयोद्देश्यताया इक्त्वेनावच्छेदात्स्थानिवत्त्वाप्रवृत्त्या 'वैयाकरण'इत्यत्रेकारवृत्तिपदान्तत्वनिमित्तक ऐजागमो न स्यात्। किञ्च कार्यकालपक्षे 'राम'इत्यादौ विसर्गोऽपि न स्यात्, 'ससजुषो'रिति शास्त्रीयस्थानितायाः तादृशधर्मेण सत्वेनावच्छेदात्स्थानिवत्त्वाप्रवृत्त्या रुसम्बन्धिरेफे सुप्त्वाभावेन कार्यकालपक्षे पदत्वाभावादिति चेन्नैवम्। 'स्थान्यवयवाल्वृत्त्यल्त्वव्याप्यधर्मा-वच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ न स्थानिव'दित्यर्थस्वीकारे—तादृशाप्त्वङीत्वादिधर्मेण हल्ङ्यादिशास्त्रीयोद्देश्यतायाः परम्पर-यैवावच्छेदेन साक्षादनवच्छेदाद'तिखट्व' इत्यादावनल्विधा'वित्यस्य प्राप्त्यभावेन स्थानिवद्भावेनाप्त्वा-द्धल्ङ्यादिलोपादिप्राप्तौ तद्वारणाय दीर्घग्रहणादेरावश्यकतया तद्वैयर्थ्याभावात्।

एवमेव—'कृन्मेजन्त' 'इट ईटी'त्यादावपि कृदन्तत्वसत्वादिधर्मैरेव साक्षादवच्छेदेन कृत्त्वेट्त्वादि-तादृशधर्मैस्तदुद्देश्यतायाः परम्परयैवावच्छेदेनानल्विधावित्यस्याप्रसक्तेन न तद्ग्रन्थासङ्गतिरित्यवधेयम्। 'यचि भमिति'सुप्तिङन्त'मितिशास्त्रीयोद्देश्यतायाः (कप्प्रत्ययावधि—) स्वादित्व—सुप्त्वादिधर्मेण परम्परयै-वावच्छिन्नतया न 'ज्ञाने'इत्यादावुक्तदोषः। वैयाकरण इत्यत्रापि लक्ष्यानुरोधात्—यत्ववत्वादिधर्मेणैव-तदुद्देश्यतायाः साक्षादवच्छिन्नत्वेन—अल्त्वव्याप्यधर्मावच्छिन्नस्थानिता निरूपितादेशताश्रय—पदान्तत्व—धर्मेण साक्षादवच्छिन्नत्वाभावेन क्षत्यभाव इति जटाजूटकृद्—श्रीबालशास्त्रि—दुण्ढिभट्टानामभिप्रायः।

'आरे'त्यत्र शङ्कासमाधानपरोऽग्रिमशेखरग्रन्थस्तु साक्षात्पदनिवेशमबुध्वैव प्रवृत्तः, उपायस्योपायान्तरा-दूषकत्वाद्देति न पूर्वापरविरोधः। एतेन—'हलादिः शेष'इतिशास्त्रीयोद्देश्यताया आदिहल्त्वेनैव साक्षाद-

## ॐ अभिनव-चन्द्रिका ॐ

परे तु अल्पर्याप्तस्थानिनानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ स्थानिवन्नेत्येवार्थः स्वीक्रियते। नचैवं 'रमायां' 'सर्वस्या'मित्यादौ याट्स्याटौ न स्याताम्, 'अनुबन्धविनिर्मुक्तपदार्थोपस्थिति'रिति सिद्धान्तेन स्थानिताया अल्पर्याप्तत्वा-

## ॐ सदाशिवभट्टीयम् ॐ

'कृत्वावे' तिङ्घे 'इच्छयाबि'ति नुलोपो न स्यात्, अच्त्वेन स्थानिनेति ङीप्त्वाऽनतिदेशादिति चेन्न। अप्रनिमित्तकत्वेनान्तरङ्गे लोपे ङीघंऽयासिद्धत्वात्। पञ्चमीसमासेन स्थानिवत्वाच्च। नन्वेवमप्यपश्योऽधावन् मृग इत्यादौ मिपो रुत्वे उत्वे गुणे पूर्वरूपे च कृते तिङ्ङतिङ इति निघातः स्यात्, सकारवृत्ति-

## ॐ वरवर्णिनी ॐ

वच्छिन्नत्वादभ्यामत्वेन परम्परयैवाऽवच्छिन्नतयाऽनल्विधावितिनिषेधाप्रवृत्तेः स्थानिवत्त्वेनैव सिद्धौ शङ्कासमाधयोरसङ्गतिरिति परास्तम्।

न चैवं साक्षात्त्वनिवेशेऽल्त्वव्याप्यधर्मावच्छिन्नत्वस्य स्थानिनायां निवेशो व्यर्थः, तादृशनिवेशाभावेऽपि 'रामाये'त्यादावेकाररूपाल्निष्ठस्थानितानिरूपितादेशताश्रययकारधर्मिकारोपप्रकारीभूतधर्मेण सुप्त्वेन 'सुपि चे' तिशास्त्रीयोद्देश्यतायाः परम्परयैवावच्छिन्नत्वेनानल्विधावित्यस्याप्राप्त्या दोषाभावादिति वाच्यं, 'रमाया'मित्यत्रैकाररूपाल्निष्ठस्थानितानिरूपितादेशताश्रयाऽऽम्धर्मिक—'आम् ङित्ववान्स्या'दित्याकारकारोपप्रकारीभूतङित्त्वधर्मेण साक्षादवच्छिन्नोद्देश्यताके याटि कर्त्तव्ये स्थानिवद्भावनिषेधापत्तेः। 'अल्त्वव्याप्यधर्मावच्छिन्नत्व'निवेशे तु न दोषः, ङित्त्वस्याल्त्वव्याप्यत्वाभावादितिचन्द्रिकायां स्पष्टम्।

न चैवमपि 'लोम्नी अत्रे'त्यत्र'दूदे'दितिप्रगृह्यसंज्ञाशास्त्रीयोद्देश्यतायास्तादृशारोपप्रकारीभूतद्विवचनत्वधर्मेण साक्षादवच्छिन्नतयाऽनल्विधावितिनिषेधेन द्विवचनत्वातिदेशो न स्यादिति वाच्यम्, औङ्त्वस्यौङ्यपि सत्त्वेन तस्याल्त्वव्याप्यधर्मत्वाभावेन 'नपुंसकाच्चे'तिशास्त्रीयस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वाभावेन निषेधाप्रवृत्तेः। चन्द्रिकाकारास्तु—एतद्दोषपरिहाराय स्थानितायामपि साक्षात्त्वं न्यवीविशन्।

परे तु—स्थानितायामेव साक्षात्त्वानिवेशेनैव पूर्वोक्तसकलदोषनिरासे 'उद्देश्यतायां'तन्निवेशो मुधैव, तथाहि—'अतिखट्व'इत्यादौ 'गोस्त्रियो'रिति सूत्रे निर्दिश्यमानपरिभाषाप्रवृत्त्योपसर्जनस्त्रीप्रत्ययान्ततदाद्यन्तनिर्दिश्यमानस्य ह्रस्व इत्यर्थेनानियमाभावादनियमे नियमकारिण्या अलोन्त्यपरिभाषाया अप्रवृत्त्याऽल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नस्थानिताया अभावेन स्थानिवत्त्वप्रसक्त्या सूत्रभाष्यवार्तिकादिसङ्गतेः। 'गोस्त्रियो'रित्यत्रालोन्त्यसूत्रप्रवृत्तावपि तदुपस्थाप्यालो निर्दिश्यमानविशेषणतयाऽल्त्वेन साक्षादवच्छिन्नस्थानिनाया अभावादनल्विधावितिनिषेधाप्रवृत्त्या स्थानिवद्भावप्रसङ्गादुक्तभाष्यादिसङ्गतेश्च।

एवमेव 'बहुवचने झल्ये'त्यत्रापि अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नस्थानिताया अभावान्न पूर्वोक्तभाष्यासङ्गतिरित्याहुः। विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेयः। 'धिन्वन्ती'त्याद्यर्थमाद्यार्थस्वीकारेऽपि 'प्रदीव्ये'त्यत्र स्थानिवद्भावादिडापत्तिरतः प्राचीनामिमतमर्थमप्याह—तत्स्थानिसम्बन्धी चेति। एवञ्च स्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्मघटितधर्माश्रये विधौ न स्थानिवदित्यर्थेन 'प्रदीव्ये'त्यत्र वलादित्वलक्षणे इटि तन्निषेधान्न दोषः।

तदेवं स्थान्यल्विशिष्टे विधौ न स्थानिवदित्यर्थः, वै० 'स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्व' 'स्ववृत्त्यल्त्वव्याप्यधर्मघटितादिदिष्टितधर्मावच्छिन्नोद्देश्यताकत्वै'तदन्यतरसम्बन्धेनेति नागेशमते निष्कृष्टोऽर्थः, सम्बन्धविधायाऽर्थद्वयस्यानिवेशान्न-सकृदुच्चरितन्यायभीत्याऽऽवृत्त्यादिक्लेशः। आद्यस्य फलं—धिन्वन्ति। द्वितीयस्य तु—प्रदीव्येति। स्पष्टञ्चेदमभिनवचन्द्रिकायामिति सङ्क्षेपः। प्राचीनामिमतार्थपरिष्कारप्रकारोऽभिनवराजलक्ष्म्यामनुसन्धेयः।

### ॥ अभिनव-चन्द्रिका ॥

दिति वाच्यं, बोधकवयवेषु अनुबन्धेषु बोध्यावयवत्वमारोप्यते इति 'एकान्ता अनुबन्धा' इत्यस्य तात्पर्येण प्रकृते च ककारेकारेभ्यस्त्वाभावेन स्थानिताया अव्याप्तत्वाभावात्। नचैवं 'मात्रे' 'कौमे' इत्यादौ दोषो दुरुद्धरः, स्थानिताया अव्याप्तत्वादिति वाच्यं, 'मन्त्राविव' विलक्षणत्वेन ईदूदेदित्यस्य ईदूदेदन्तं यद्द्विवचनं तदन्तं शब्दरूपं तत् प्रगृह्यमित्यर्थेन 'मात्रे' इत्यादौ स्थानिताया अव्याप्तत्वेऽपि तादृशस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकाऽऽरोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञोद्देश्यतावच्छेदकत्वात्। एवञ्च स्थानितायामल्व्याप्यधर्मावच्छिन्नत्वनिवेशो विफल एवेत्याहुः।

तत्स्थानिसम्बन्धी च योऽल्विति। [१।१।५६] स्थानिसम्बन्ध्यल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं नेति यावत्। न च रमायेत्यादौ 'सुपि च' इति दीर्घानापत्तिः। स्थानी एकारस्तत्सम्बन्धी यो ऽल् व्यपदेशिवद्भावेन स एव, तद्वृत्तिर्यो धर्मः—सुप्त्वं तन्निमित्तकत्वाद्दीर्घे कर्तव्ये स्थानिवत्त्वनिषेधादिति वाच्यम्, अल्वृत्तिधर्मे अल्व्याप्यत्वस्य विशेषणेनादोषात्। नचैवमपि 'प्रपठ्य' इत्यादौ वलादित्वस्यातिदेशापत्तिः, वलादित्वे स्थानिसम्बन्ध्यल्वृत्तित्वस्याल्व्याप्यत्वस्य च सत्त्वेऽपि इटो वलादित्वनिमित्तकत्वेन वलादिनिमित्तकत्वाभावेन निषेधाप्राप्तेरिति वाच्यं, स्थानिसम्बन्धी योऽल् तद्वृत्तिर्योऽल्व्याप्यो धर्मस्तद्घटितधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेति द्वितीयार्थस्वीकारेणादोषात्।

नचैवमपि प्रभूविवेत्यादावतिव्याप्तिः, स्थानी यो वस्, तत्सम्बन्धी अल् वकारस्तद्वृत्तिर्यो धर्मो वलादित्वं—तन्निमित्तक इडिति स्थानिवत्त्वनिषेधादार्धधातुकत्वस्यातिदेष्टुमशक्यत्वादिति वाच्यम्, अल्व्याप्यधर्मघटितधर्मे 'अतिदिदिक्षित' इति विशेषणदानेन अतिदिष्टव्यार्धधातुकत्वे अल्व्याप्यधर्मघटितत्वाभावेनादोषात्। यथाल्व्याप्यधर्मघटितो धर्मो—वलादित्वं, न सोऽतिदिदिक्षित इति। ननु 'स्थानिसम्बन्धी'तिविशेषणदानं विफलमिति चेदिष्टापत्तिरेवेति दिक्।

### ॥ सदाशिवभट्टीयम् ॥

तिङ्त्वस्य त्वन्मते रेफेऽनतिदेशादग्रे प्लुतोऽसम्भवेनातिङन्तात् परत्वादिति चेन्न। रुत्वस्यासिद्धत्वेन रेफ एव तद्ध्यगसाद्वर्त्यबुद्ध्या तिङ्सञ्ज्ञाया–अग्नी इत्यत्र प्लुते प्रगृह्यत्वस्येव–पुनः प्रवृत्त्याऽग्रे प्लुतोऽसम्भवात्। एवमतृणेडित्यादौ हल्ङ्यादिलोपविषये हल्त्वेन तत्त्वेऽपि सुप्त्वादिनापि स्थानितेति स्थानिवत्त्वं प्रवर्तत एवेति बोध्यमिति दिक्।

रमाभ्यां रामायेत्यादावतैच्त्वयोस्तथात्वादातिदेशे ऐस् अवादिश्च स्यातामतो द्वितीयं धर्मविशेषणम्। अत्र च नानमाकारप्रश्लेषेण ङयाप्सहचरितोऽदीर्घ इति वार्तिकप्रत्याख्यानपरं भाष्यञ्च। अन्यथाऽऽप्त्वादेरिवात्त्वेत्वयोरप्यतिदेशः प्राप्नोत्येवेति तदसङ्गतिः स्पष्टैव। अल्वृत्तिरित्येवोक्तौ त्वाप्त्वेट्त्वयोरातिदेशो न स्यादतस्तन्मात्र इत्युक्तम्। अत्र मानम्पूर्वोक्तं भाष्यमुन्नेयम्।

प्रदीव्येत्यादौ वलादित्वातिदेशः स्यादतस्तृतीयं धर्मविशेषणम्। अत्र मानं विधिग्रहणं भाष्यञ्च, प्रदीव्येत्यत्रैव तथाविधार्धधातुकत्वाश्रयत्वादिक्लिप्तेरतिदेशः स्यादतस्तद्वृत्तीत्यादिना विधिर्विशेषितः, अत्र मानं भाष्यप्रयोगादिकं यथायथमूह्यम्। क्षोदिष्यते चेदं यथाध्यापनम्। अत्रेदमवधेयम्—लस्येत्यधिकृत्य विहितेषु तिबादिषु लकारवृत्तिलिट्त्वादेरतिदेशो भवत्येव, उच्चारणार्थत्वेपि लत्वस्थानल्वृत्तित्वानपायात्, तेन चक्र इत्यादावादेशोत्तरं द्वित्वसिद्धिः, रैवतिकादौ यस्येतिलोपसिद्धिश्च, 'ठस्येक' इत्यत्र वर्णनिर्देशस्यैव सिद्धान्तात्। अत एव किति लिटि विधीयमानावित्वाऽस्यासलोपौ कृतार्थौ। नचैवं 'वर्णनिर्देशेत्वल्विधित्वान्माषिकिके कादेशो ने'ति ठस्येक इति सूत्रस्थभाष्यविरोध इति वाच्यम्, विशिष्टनिर्देशेपि ठमात्रस्यैवोद्देश्यताबोधविषयत्वेन तस्य चाल्मात्रवृत्तित्वादतिदेशाभावेन कादेशाऽप्राप्तेरिति। स्थानिभूत इति। व्यपदेशिवद्भाव-

अत एव रेफस्थानिकविसर्गस्य रुशब्दत्वं न स्थानिवत्त्वेनेति 'भोभगो' इत्यत्र भाष्ये स्पष्टम्। ऋधातोर्द्वित्वेऽभ्यासस्योरदत्त्वेऽरित्यस्य हलादिःशेषस्तु—अरित्यस्य पुनः 'पूर्वोऽभ्यासः' इत्यनेनाभ्यासत्वात्। तस्यापि द्विरुक्तधातुपूर्वभागत्वात्। प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात्।

※ अभिनव-चन्द्रिका ※

द्विरुक्तधातुपूर्वभागत्वादिति। ननु 'देवदत्तौ पेचतु'रित्यादौ देवदत्तावित्यादेरपि द्विरुक्तपूर्वभागत्वेनाभ्याससञ्ज्ञापत्तिः, न च 'देवदत्ता'वित्यादेरभ्याससञ्ज्ञायामपि न दोषः, अभ्यासकार्याणामभ्याससञ्ज्ञाप्रयोजकप्रत्ययनिमित्तकत्वेन—'ह्रस्वः' इत्यादेरभ्याससञ्ज्ञाप्रयोजकप्रत्ययनिमित्तकाङ्गावयवाभ्यासस्याचो ह्रस्वो भवतीत्यर्थेन प्रकृतेरभ्यासकार्यप्राप्त्यभावादिति वाच्यम्, एवमपि ऊर्णुनाव ऊर्णुनुविषतीत्यादौ ऊर्णु इत्यस्य अभ्याससञ्ज्ञायां ह्रस्वाद्यापत्तेरिति चेन्न। द्विर्वचनीयविधेयताश्रय—द्विवचनीयोद्देश्यताश्रयैतदुभयमात्रारब्धसमुदायघटको यो द्विर्वचनीयविधेयताश्रयावधिकपूर्वत्वविशिष्टः सोऽभ्याससञ्ज्ञको भवतीत्यर्थेनादोषात्। प्रकृते च 'अर्-ऋ' इत्यत्र एकदेशविकृतन्यायेन तादृशसमुदायत्वं बोध्यम्। अथवा द्विर्वचनीयविधेयताश्रय-द्विर्वचनीयोद्देश्यताश्रयैतदुभयमात्रारब्धसमुदायसमभिव्याहृतवर्णाघटितो यो द्विर्वचनीयविधेयताश्रयावधिकपूर्वत्वविशिष्टः सोऽभ्याससञ्ज्ञको भवतीति 'पूर्वोऽभ्यास' इत्यस्यार्थेन 'अर्-ऋ' इति समुदाये एकदेशविकृतन्यायेन तत्त्वानयनाभावेऽपि न क्षतिरिति दिक्।

※ चिदस्थिमाला ※

तत्राद्यार्थं समूलं सफलमाह—अत एवेति। आद्यार्धाङ्गीकारादेवेत्यर्थः। तथा च तत्राल्ग्रहणं व्यर्थमेवेति भावः। नन्वेवमोरित्यादावरादेशे यथोद्देशपक्षेऽपि सम्पूर्णविकारत्वेनैकदेशेतिन्यायाप्रवृत्त्याऽभ्यासत्वं दुर्लभमिति हलादिः शेषो न स्यादत आह—ऋधातोरिति। त्वादिति। 'बोध्य' इति शेषः। ननु ययोर्द्वित्वं तत्पूर्वभागस्यासत्त्वात्कथं तत्त्वमत आह—तस्यापीति। 'एकदेशे'तिन्यायेनोच्चारितयोर्द्वयोः शब्दस्वरूपयोः सत्त्वमित्याह—द्विरुक्तेति। ननु येषां न तथा ज्ञानं तेषां का गतिरत आह—प्रक्रियेति। तस्य

※ सदाशिवभट्टीयम् ※

सिद्धमिदं स्पष्टप्रतिपत्तये उक्तं, स्पष्टञ्चेदमत्रैवोद्योते। अत एव रेफेति। आद्यार्धाङ्गीकारादेवेत्यर्थः। एवमेवाग्रे। पुनःपूर्वेति। 'लक्ष्ये लक्षणस्ये'ति नात्र, सञ्ज्ञाविषये तदप्रवृत्तेः प्रगृह्यसञ्ज्ञाप्रकरणे भाष्ये स्पष्टत्वात्। तस्यापीति। अभ्यासस्यानर्थकत्वाद् ऋ इत्यस्याऽर् ऋ इत्यादेशे स्थानिवद्भावेन द्विरुक्तधातुत्वम्, पूर्वभागत्वन्त्वार्थसमाजग्रस्तम्। तथाज्ञानेति। स्थान्यादेशभावज्ञानस्य इत्यर्थं इत्याहुः। परेत्वत्र अगात्मीयातिदेशो भवति। अन्ये तु तत्स्थानापन्नेति लौकिकन्यायेनाल्वृत्तेरपि पूर्वभागत्वस्यातिदेश इत्याहुः। एवं ह्यभ्यासत्वमेव कुतो नातिदिष्टमिति।

※ विषमपदविवृतिः ※

स्थानिनः प्रत्यासन्नत्वमित्याशयात्। अत एवेति। 'तन्मात्रवृत्ती'त्यनिवेश्य 'तद्वृत्ती'त्येवं निवेशादेवेत्यर्थः। पुनरिति। सञ्ज्ञासु लक्ष्ये लक्षणस्येति न्यायानाश्रयणादिति भावः। तस्यापीति।

※ वरवर्णिनी ※

द्विरुक्तधातुपूर्वेति। वस्तुतस्तु 'पूर्वोऽभ्यास'इत्यस्य द्वित्वशास्त्रविशिष्टोऽभ्याससञ्ज्ञः इत्यर्थः। वै० 'स्वप्रयोज्यविधेयताश्रयावधिकपूर्वत्वं' 'स्वप्रयोज्योद्देश्यताविशिष्टत्वै'तदुभयसम्बन्धेन। वै० 'स्वाश्रयत्व' 'स्वाश्रयनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वै'तदुभयसम्बन्धेनेति न 'देवदत्तौ देमतु'रित्यादौ कोपि दोष इत्यस्मद्गुरवञ्चिपाठिपादाः।

अत एव 'चिन्त्यन्ते' [illegible], उरणरपरत्वं [illegible] तुक्[illegible] [illegible]ऽनतिदेशात् ।

॥ अभिनव-चन्द्रिका ॥

इत्येनेति । ननु 'चिन्त्यन्ते' इत्यादौ न दोषः, [illegible]ऽनिमित्तकत्वेनान्तरङ्गत्वात् [illegible] [illegible] [illegible] । न च [illegible]निमित्तकत्वे [illegible]समुदायो [illegible] विषयः । अत एव 'सुस्युत्ति' 'दुद्युते' इत्यादौ [illegible] न भवतीति वाच्यम्, अन्तर्भूतनिमित्तकत्वान्तरङ्गत्वस्य [illegible] सत्त्वेनापर-[illegible]न्तरङ्गत्वस्य द्वित्वे सत्त्वेन [illegible] [illegible] द्वित्वे च [illegible] [illegible] 'अचोऽन्त्यनन्तर्यनिमित्तककार्यप्रवृत्त्युत्तरं यदन्तरङ्गं प्राप्नोति तत्र कर्तव्ये बहिरङ्गासिद्धत्वं [illegible] इति परिभाषया निषेधात् । अत एवाश्वर्युरित्यादौ 'लोपो व्यो' रिति लोपो न ।

किञ्च एः अजः—यजन्तस्यायत्वं याजिरित्यादौ 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामै' जिति ऐजभाव आद्यार्थकानचिविधावित्यस्य प्रयोजनम् । तथाहि—'न य्वाभ्या'मिति सूत्रे पूर्वाविति विधेयविशेषणम् । तथाचान्त्यव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य आरोपः 'पदान्ततया'नित्याकारकः, तादृशारोपप्रकारीभूतपदान्तत्वेन ऐच्शास्त्रीयोद्देश्यता साक्षादव-च्छिन्नेति निषेधप्रवृत्तिः [illegible] । न च 'चिन्त्यन्ते'त्यादौ [illegible] [illegible] [illegible] नेति वाच्यम्, [illegible] [illegible] [illegible] । अत एव 'भवति'त्याद-[illegible] सिद्धेति [illegible] [illegible] [illegible] स्यादिति दिक् ।

अत्रेदमवधेयम्—अरेत्यादौ पुनरभ्याससञ्ज्ञायाः प्रयोजनं चिन्त्यम् । न च अन्त्यव्याप्य-धर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूताभ्यासत्वनिमित्तकत्वाद्धलादिःशेषस्यान-चिविधाविति निषेधः स्यादिति वाच्यं, 'हलादिः शेष' इत्यत्राभ्यासादेरेव हल उद्देश्यत्वेन तादृशप्रकारीभूताभ्यासत्वेन उद्देश्यतायाः साक्षादनवच्छिन्नत्वात् । अभ्यासत्वावच्छिन्नमुद्दिश्य आदिर्हल् शिष्यते इत्युक्त्वा शेषपदानस्य 'पूर्वोऽभ्यास' इत्यस्य निरुक्तार्थकरणस्य चानुचितत्वात् । अत एव 'चेच्छिद्यते' इत्यत्र हलादिःशेषो न । अन्यथा पूर्वोक्तदिशा तुग्विशिष्टस्याभ्याससञ्ज्ञायाः सत्त्वेन स दुर्वारः स्यात् । मम तु द्विर्वचनीयोद्देश्यताश्रयस्यैवाभ्याससञ्ज्ञेति तुग्विशिष्टे सा नेति न दोषः । दीर्घस्यैव तुगिति यदागमपरिभाषायाः प्राप्तिरेव नेति तथापि न दोषः । अवयवावयवन्यायस्य लौकिकत्वेनानित्यत्वादप्रवृत्त्या तेनापि न दोषः । अवयवावयवस्यानङ्गीकारे यदागमपरिभाषाया अनित्यत्वान्न दोष इति परे ।

किञ्च अनल्विधावित्याद्यार्थस्योपयोगोऽपि न । नच चिन्त्यन्तीत्यत्रेडभावाय स आवश्यक इति वाच्यम्, अन्तरङ्गपरिभाषया गतार्थत्वात् । न च 'नाजानन्तर्ये' इति निषेध इति वाच्यम्, अचोऽन्त्यानन्त-र्यनिमित्तकं यदन्तरङ्गम्प्राप्नोति तदुत्तरकालिकान्तरङ्गप्राप्त्यभावेन तदप्रवृत्तेः । तस्या असत्त्वाच्च । सत्त्वे वा तस्या अनित्यत्वाच्च । अत एव 'जगदम्बात्रे'त्यादौ ह्रस्वो न । नचैवमपि 'याजि'रित्यत्रैजागमाभा-वाय सोऽर्थ आवश्यक इति वाच्यम् । 'न य्वाभ्या'मित्यत्र पदान्तयकारवकारयोरुद्देश्यत्वेनान्त्यव्याप्ये-त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतपदान्तत्वधर्मस्यैजागमीयोद्देश्यतायाः

॥ चिदस्थिमाला ॥

द्वितीयं प्रयोजनमाह—**अत एवेति** । उक्तोर्थः । तत्फलमाह—**उकारेति** । अन्यथासिद्धिखण्डनेनेदं

॥ विषमपदविवृतिः ॥

इदं चिन्त्यं—द्विरुक्तोत्तरभागानुपूर्व्यवृत्तित्वस्य 'देवदत्तयज्ञदत्तौ देभतु'रित्यादौ सत्त्वाद्देवदत्तादेर-प्यभ्याससञ्ज्ञापत्तिः । अभ्यासकार्येऽनल्विधिकारेण तद्दोषवारणे तु ऊर्णुनावेत्यत्र 'ह्रस्वो' 'हलादिः

यत्त्वत्रेण्निवृत्तये स्वविधावपि स्थानिवत्त्वमपरविधाविति न्यासेन साधितं भाष्ये, सा त्वेकदेश्युक्तिः, असिद्धवत्सूत्रेण सिद्धस्याऽऽयन्नासन्नित्यादेस्तत्फलत्वेनोपन्यासात्। अस्यापि 'अचः पूर्वत्वविज्ञाना'दिति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च। प्रदीव्येत्यादौ च वलादिलक्षण इण्न। 'स्थान्य'त्वित्युक्तेर्बभूविवे-

❀ अभिनव-चन्द्रिका ❀

साक्षादनवच्छेदकत्वेन ऐयजिरितिरूपस्यैवष्टत्वात्। न चैवमपि 'भोभगो' इति सूत्रस्थभाष्यविरोध इति वाच्यम्। तस्य भाष्यस्य र इत्यनुवृत्तिपरतया कथञ्चिद्योजयितुं शक्यत्वात्। तस्यैकदेश्युक्तित्वनादोषाच्च। अत एव 'साम्नी' इत्यादौ प्रगृह्यत्वं सिध्यति, अन्यथा 'सञ्ज्ञाविधा'विति निषेधात्प्रगृह्यसञ्ज्ञायां द्विवचनत्वस्य साक्षादुद्देश्यतावच्छेदकत्वेन दोषो दुरुद्धर एवेति दिक्।

**स्थान्यत्वित्युक्तेरिति**। स्थान्यत्वविशिष्टधर्मघटितधर्मनिमित्तके विधौ कर्तव्ये स्थानिवन्नेत्यर्थः। वै० 'स्ववृत्तित्व' 'स्ववृत्त्यल्त्वव्याप्यत्व'–'स्वस्थानिकादेशावयवाल्वृत्तित्वै'तत्त्रितयसम्बन्धेन। यत्तु'स्ववृत्तित्व' 'स्वस्थानिकादेशावयवाल्वृत्तित्व' 'स्ववृत्त्यल्त्वव्याप्यत्व' एतत्त्रितयसम्बन्धेनाल्विशिष्टत्वमिति—तन्न। बभूवतुरित्यादौ आदेशावयवे तकारे वत्वस्य सत्त्वेनानल्विधाविति निषेधाप्रवृत्त्या इडापत्तेः।एतत्सर्वमभिप्रेत्याह—**बभूविवेत्यादाविति**। वस्तुतस्तु अल्त्वव्याप्यधर्मघटितधर्मे 'अतिदिदिक्षित' इति-

❀ चिदस्थिमाला ❀

द्रढयति—**यत्त्वत्रेण्निवृत्तये इति**। अपिः–पूर्वविधिसमुच्चायकः। ननूपायस्योपायान्तरादूषकत्वात्कथं तत्त्वमत आह—**अस्यापीति**। तन्वन्तीत्यादेरपीत्यर्थः। **वार्त्तिके**=तत्प्रतीके। न चैवं तेनैव निर्वाहः, अत एव कौस्तुभसङ्गतिरेवञ्च नेदमाद्यर्थासाधारणफलमिति वाच्यं, तदनङ्गीकर्तृमूलमते दोषध्रौव्यात्, एतदर्थमेव तदङ्गीकारे यूष्ण इत्यत्रत्यमनोरमविरोधापत्तेः। कथं तर्हि तन्वन्तीति पञ्चमीसमासलक्ष्यं प्राग्दत्तमिति चेद्धरदत्तमतेनेत्यवेहीति। **कौस्तुभसिद्धान्तविरोधापत्तेस्तदङ्गीकर्तृमतेऽपि** अनित्यतया, अपीपचन्नित्यादिलक्ष्यविशेषमात्रपरत्वाद्वात्रानिर्वाहाच्च। न चात एव बहिरङ्गस्य यणोऽसिद्धत्वान्निर्वाहः **कौस्तुभादावुक्त एवेति वाच्यम्**, अङ्गात्परस्य वलाद्यार्धधातुकस्येडित्यर्थेन तस्यापि तत्त्वादिति भावः।

द्वितीयार्थफलमाह—**प्रदीव्येत्यादौ चेति**। चोन्ते योज्यः।प्रत्यासत्तिलभ्यार्थफलमाह—**स्थान्यत्विति**। अतिदेशेनार्द्धधातुकत्वादिति भावः। यद्यपि रामायेत्यादावेव फलं तथापि तत्र कष्टायेति ज्ञापकात्सिद्धिरि-

❀ ज्योत्स्ना ❀

**कैयटेनोक्तत्वाच्चेति**। **स्थानिभूतादच उकारात्पूर्वं यदङ्गं तस्मान्निमित्तत्वेनाश्रितादित्यर्थाश्रयणेनेत्यर्थः**। '**स्थानिसम्बन्धी योऽ'**त्विति द्वितीयार्थाश्रयणे प्रयोजनमाह—**प्रदीव्येत्यादौ चेति**।

❀ सदाशिवभट्टीयम् ❀

**कैयटेनोक्त्वाच्चेति**। नन्वेतस्वया फलत्वेन कथमुक्तमिति चेन्न, पञ्चमीसमासानङ्गीकारकर्तृमूलमते तत्सत्त्वात्। भविष्यतीत्याद्यसिद्धान्तरङ्गासिद्धत्वमिड्विधौ नेति तेनाप्यस्या सिद्धिः। अन्यफलमाह—**प्रदीव्येति**। अन्यथा'न ल्यपीति'लिङ्गादशास्त्रीयस्य क्त्वस्येव वलादित्वस्याप्यतिदेशः स्यादिति भावः। अत एव न प्रपठ्येतीत्युक्तम्। **बभूविवेति**। यन्निमित्तेति प्रत्यासत्तिफलं दातुङ्क्ष्टायेत्यस्य

❀ विषमपदविवृतिः ❀

शेष' इत्यनयोरनापत्तिः। एवमेधामासेत्यादावेधामित्यस्य तत्त्वापत्तिः। **अस्यापीति**। 'धिन्वन्ती' त्यस्यापि। एतेन—'धिन्वन्ती'ति प्रयोजनमपि शिथिलमिति सूचितम्। नव्यानां त्वयं भावः—'काचित्कपञ्चमीसमासं विनैव धिन्वन्तीत्यस्य सिद्धौ गुरुभूततन्मात्रवृत्तिधर्माश्रय इत्यर्थो नोचित इति।

त्यादौ वलादिलक्षणेट्सिद्धिः । न हि तत्र वलादित्वं स्थानिनो लभ्यं, किन्तु स्वाश्रयमेव । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्य-लसाधारणधर्मत्व एव निषेधप्रवृत्तेः । प्रकृते चाऽऽर्धधातुकत्ववैकल्यप्रयुक्ताऽप्राप्तिः तत्स्था-न्यल्साधारणं, यच्च तादृशवल्त्वघटितं वलादित्वं—न तद्वैकल्यप्रयुक्ताऽप्राप्तिरिति बोध्यम् ।

प्रत्यासत्त्या च शास्त्रीयकार्ये एव स्थानिवत्त्वं, तेन—नायकसिद्धिः ।

ॐ अभिनव-चन्द्रिका ॐ

विशेषणदानेन सर्वनामसङ्ग्रहस्येदं सर्वं विफलमेवेति बोध्यम् । स्थान्यल्साधारणधर्मत्व एवेति । धर्मे स्थान्यल्साधारण्यञ्च—स्थान्यल्वृत्तित्वे सति अल्मात्रवृत्तित्वम् ।

नायकसिद्धिरिति । स्यादेतत्—अचः परस्मिन्नित्यत्रेवात्रापि अशास्त्रीयस्यातिदेशो भवतु,

ॐ चिदस्थिमाला ॐ

त्याशयेनाह—बभूविवेति । आदिना कृदिल्मित्यादिपरिग्रहः । अत एव आह—वलादीति । तदेवाह—नहीति । तत इत्यर्थः । तत्र स्थान्यल्सम्बन्धे तु अत्रापि निषेधः स्यादिति भावः । नन्वेवमपि स्थान्यलाश्रयविधौ नेत्यर्थेन बभूविवेत्याद्यसिद्धिरेव द्विविधनिमित्तत्वस्य तत्र सत्त्वादत आह—यन्निमि-त्तेति । 'प्रत्यासत्त्ये'त्यादिः चार्थेनि । स्थानिवद्भावेन [illegible] आर्धधातुक-[illegible] प्रवृत्त्या [illegible] भावः । [illegible] स्थान्यल्साधारणं [illegible] वल्त्वेति । न तदिति । [illegible] कैयटकौस्तुभकृदादिभिः [illegible] सूत्र-त्वमूरीक्रियते [illegible] दृष्टत्वादृष्टि [illegible] अत एव पूर्वं [illegible] यदुक्तं, स्पष्टञ्चेदम् [illegible] अत एव [illegible] नापि पूर्वग्रन्थ-विरोध इति । केचित्तु द्वितीयव्याख्यानाभ्युपगमे [illegible] तदनुरोधेन इति न कोऽपि विरोध इत्याहुः । विशेषमाह—प्रत्यासत्त्या चेति । प्रतिपादितमनुवदन्नेव । नायकेति ।

ॐ ज्योत्स्ना ॐ

न तत्स्थान्यलसाधारणमिति । स्वाश्रयघटकत्वेन स्थान्यवयवाल्वृत्तेरपि समवायेन तादृशाल्घ-टितसमुदायवृत्तित्वादार्धधातुकत्वस्येत्यर्थः । वल्त्वं तु नैतादृशमिति भावः । एवन्तु रेफवृत्तिरुत्वस्य-रुशब्देऽपि सत्त्वेन तस्य स्थान्यलसाधारणत्वादतिदेशो न प्राप्नोतीति प्रागुक्तस्वसिद्धान्तविरोधश्चिन्त्य-मेतदिति परिभाषाप्रदीपार्चिषि विस्तरः ।

नायकसिद्धिरिति । आयादेशप्रतिबन्धकत्वरूपस्याशास्त्रीयस्य स्थानिकार्यस्यानतिदेशेनेति भावः ।

ॐ सदाशिवभट्टीयम् ॐ

त्यागः । ननु वलादित्वस्य वस्यादि सत्त्वात्स्यादेव निषेधोऽतः प्रत्यासत्त्या प्रतिपादयति—नहीति । स्थान्यलिति । स्थानिनोऽल् तदसाधारणो धर्मो यस्मिन् तस्य भावे इत्यर्थः । असाधारणेत्युक्तौ रेफस्थानिकेति पूर्वग्रन्थविरोधात्प्राचामनुरोधेनेत्येके । द्वितीयार्थाभिप्रायेणेत्यन्ये । वस्तुतस्तु 'शब्दत' इति वक्ष्यमाणत्वेन तद्विरोधाभावात्, समानफलकत्वाच्च युक्तैव सेत्यवोचाम । अत एव प्रकृतसूत्र उद्योते 'यत्र शास्त्रे विशेष्यतया विशेषणतया वा ऽऽदेशस्य स्थानिभूतोऽल् तत्स्थानसम्बन्धी च योऽल्तन्मात्रवृत्ति-धर्माश्रयणं तत्र विधौ निषेध' इत्युक्तिः सङ्गच्छते । न हि तत्र द्वितीयार्थाभिप्रायकता वक्तुं शक्या । ननु 'भोभगो'रिति सूत्रस्थभाष्यविरोध इति, तन्न, अनुनासिकोकारघटितरुत्वस्य रेफमात्रवृत्तित्वेन रेफस्थानिक-

ॐ विषमपदविवृतिः ॐ

'स्थानिसम्बन्धी च योऽ'लित्यस्य फलमाह—प्रदीव्येति । उपदेशाप्रवृत्तौ=शास्त्राप्रवृत्तौ । 'यच्च तादृशवल्त्वघटित'मिति समस्तपाठः । तादृशेति च वल्त्वविशेषणम् । कार्ये एवेति । न तु कार्या-

प्राधान्यात्कार्यातिदेशोऽयम् । 'शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः'

❀ अभिनव-चन्द्रिका ❀

शब्दाधिकाराश्रयणे गौरवात् । 'स्थानिव'दित्यस्यादेशे स्थानिवृत्तिधर्मसम्भावनायां यद्भवति तद्भवति यत्र भवति तत्र भवतीत्यर्थः । अत एव देवयतेः क्विपि द्यूरित्यत्रायादेशप्रतिबन्धार्थमुत्तरसूत्रेण स्थानिवत्त्वं न । नच 'एषो गमयती'त्यस्यासिद्धिः, गमादेशे स्थानिवृत्तिधर्मसम्भावनायामपि गकारे हल्त्वानपायादेतत्तदोरिति लोपापत्तेरिति वाच्यम्, 'एष गमयती'तिरूपस्यैवेष्टत्वात् । अत एव 'सम्प्रसारणादसम्प्रसारणे'इति न्यासेन 'न सम्प्रसारणे सम्प्रसारण'मितिसूत्रप्रत्याख्यानं सङ्गच्छते । अन्यथा सूत्रसत्त्वे'एष यूनः पश्ये'ति प्रत्याख्याने च यणः स्थानिवत्त्वात्सुलोपाभावे उत्त्वे च 'एषो यूनः पश्ये'ति फलभेदेन प्रत्याख्यानासङ्गत्यापत्तेः । मम तु 'एतत्तदो'रिति लोपप्रतिबन्धार्थमत्रः परस्मिन्निति स्थानिवत्त्वं नेति कल्पनान्न दोषः । नचैवपि 'इयायेत्यादौ स्थानिवत्त्वे इयङ् न स्या'दिति परिभाषेन्दुशेखरस्थशङ्काया असङ्गतिरिति वाच्यम्, इष्टापत्तेरिति चेन्मैवम्, एकविंश इत्यादौ 'तिविंशते'रिति लोपस्य पररूपप्रतिबन्धार्थं स्थानिवत्त्वापत्तेरिति दिक् ।

प्राधान्यादिति । स्यादेतत्—'राम ङे' इत्यस्यां दशायां 'सुपि चे'ति शास्त्रस्य तद्विहितदीर्घरूपकार्यस्य वा प्राप्त्यभावेन शास्त्रकार्यातिदेशयोरसम्भवादिदमसङ्गतम् । किञ्च पूर्वापरविरुद्धश्चायं ग्रन्थः । शास्त्रातिदेशमुपक्रम्य—'रामायेत्यादौस्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घ' इत्यनेन निमित्तातिदेशस्यैवोक्तत्वादिति चेत्—अत्र केचित्—'प्राधान्यात्कार्यातिदेशोय'मित्यतः प्राग् 'यद्यपी'ति पूरणीयम् । 'अभिन्नरूपत्वं सूचित'मित्यनन्तरं—'तथापि एतदुभयं न, असम्भवा'दिति पूरणीयम् । 'तत्रानपेक्षितार्थसन्निधान' इत्यत्र 'किन्त्वि'त्यादिः । 'अनपेक्षितार्थे'त्यत्र अर्थपदेन—सामग्री गृह्यते । तथा च यत्कार्यं प्रति या सामग्री तदभावेऽपि तत्तन्निमित्तमेवानेनातिदिश्यते इति निमित्तातिदेश एवात्रेत्याहुः । अन्ये तु यथाश्रुतोऽपि ग्रन्थः सङ्गत एव । नच 'राम ए' इत्यस्यां दशायां 'सुपि चे'ति शास्त्रस्य दीर्घरूपकार्यस्य वा प्राप्त्यभावेन कथं ग्रन्थसङ्गतिरिति वाच्यम्, 'आदिरन्त्येने'ति शास्त्रस्य, तद्विहितसुप्सञ्ज्ञारूपकार्यस्य वा प्राप्त्या ग्रन्थस्य सङ्गतत्वात् । प्रधानकार्यातिदेशासम्भवेऽप्रधानकार्यस्याप्रधानशास्त्रस्य वाऽतिदेष्टुं शक्यत्वात् । अत एव 'तत्तन्निमित्तरूपकार्यव्यवहार एवानेन' इतिग्रन्थेनाप्रधानकार्यातिदेश एवोक्तः । अत एव च 'रामाये' त्यत्र 'स्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घ' इति ग्रन्थेन सुप्सञ्ज्ञारूपं कार्यमेवातिदेक्ष्यते इत्याहुः ।

परे तु स्थानिनि आदेशवृत्तिधर्मसम्भावनया यच्छास्त्रं यत्कार्यं वा प्राप्नोति तदादेशेऽपि भवतीति स्थानिवदित्यस्यार्थः । आदेशवृत्तिधर्मप्रकारकस्थानिविशेष्यकसम्भावनाप्रयोज्यप्रवृत्तिसम्भावनाविषयीभूतं शास्त्रं कार्यं वा आदेशे प्रवर्तते इति यावत् । तथा च 'राम ए 'इत्यस्यां दशायाम्—'अयम् एशब्दो यदि यञादिः स्यात्तर्हि सुपिचेति शास्त्रस्य तद्दीर्घस्य वा प्रवृत्तिः स्यादितिसम्भावनाऽस्तीति यथाश्रुतमेव सम्यक्' । अत एवा'नपेक्षितार्थसन्निधाने' इत्यग्रिमः ग्रन्थः सङ्गच्छते । न च 'तत्तन्निमित्तरूपकार्यव्यवहार एवे'त्युत्तरग्रन्थासङ्गतिरिति वाच्यम्, तत्तन्निमित्तं यस्य तादृशं यद्दीर्घादिरूपं कार्यं तद्व्यवहार इत्यर्थकरणेनादोषात् । 'कार्यन्तु स्वशास्त्रेणैवे'-त्यस्य कार्यज्ञानं स्वशास्त्रेणैवेत्यर्थः । न चैवमपि रामायेत्यादौ -'स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घ' इत्यग्रिमग्रन्थासङ्गतिरिति वाच्यम्, 'स्थानिवत्त्वेने'त्यस्य 'सुपि चेति दीर्घ' इत्यत्रा-

❀ चिदस्थिमाला ❀

तदार्दीत्यर्थः । विशेषान्तरमाह—प्राधान्यादिति । अत्र शास्त्रातिदेशेऽपि न बाधकमित्याह—

अत्राऽऽद्यपक्ष एव भाष्यसम्मतः । अत्रैव 'स्थान्यल्विधिप्रतिषेधे कुरुवधपिबां प्रतिषेधो वक्तव्य' इत्येतदुपपादनावसरे—'स्थानिवद्भावादङ्गसञ्ज्ञा' स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोती'त्यादिभाष्योक्तेरिति बोद्ध्यम् ।

एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि । अत एवेष्टवद्भावेनातिदिष्टभत्वस्य 'वर्णाश्रयत्व'मित्यादिव्यवहारः । सर्वातिदेशेष्विदं तुल्यम् । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं—शास्त्रीयमेव, प्रत्यासत्तेः ।

❀ अभिनव-चन्द्रिका ❀

**यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिरिति** । यन्निमित्ताभावप्रयोज्यशास्त्राप्रवृत्तिरित्यर्थः । न च 'पट्भ्र्यो'मित्यादौ णिलोपे स्वादित्वाजादित्वोभयाभावप्रयुक्ता 'यचि भ'मित्युपदेशाप्रवृत्तिरिति तदतिरिक्तनिमित्तकत्वेनेष्ठवद्भावे वर्णाश्रयत्वाभावाद्भसञ्ज्ञा स्यादेवेति कथं जश्त्वमिति वाच्यम्, 'यन्निमित्तवैकल्ये'त्यत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् । तथाहि—गिरिष्ठवद्भवतीत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्यापकीभूतो धर्मः-स्वादित्वरूपो धर्मो-न त्वजादित्वरूपो भूयिष्ठ इत्यादौ तदभावेन व्यभिचारादिति न दोषः ।

नन्वेवमपि 'यचि भ'मित्यत्र यचीति द्वन्द्वनिर्देशेन भसञ्ज्ञायां यकारादित्वाजादित्वेतदन्यतरत्वेन

❀ चिदस्थिमाला ❀

तेषां=दीर्घादिकार्याणाम् । **अत्रेति** । अनयोर्मध्ये इत्यर्थः। **अत्रैवेति** । प्रकृतसूत्रे एवेत्यर्थः । 'अत एवे'त्यपपाठः, असम्बद्धत्वात् । **स्थान्यलिति** । तत्र पक्षे इत्यर्थः । तत्र हि किं स्थान्यलाश्रये कार्ये निषेधोऽथालमात्राश्रये इति संशयः कृतः । आदिनाऽदुपधत्वपरिग्रहः । अग्रे—**आदिना** वृद्धिपरिग्रहः । स्थानिवत्वात्सुप्सञ्ज्ञा, स्वाश्रयञ्च यजादित्वमित्यादिपरिग्रहः । किञ्चिदित्युक्तिं सफलयन्विशेषान्तरमाह—**एवमिति** । उक्तवदित्यर्थः । **अपिनो**पदेशसमुच्चयः । अस्य फलमाह—**अत एवेष्टेति** । न केवलमत्रैवेदमित्याह—**सर्वेति** । विशेषान्तरमाह—**यन्निमित्तेति** । अत एव तासौ नित्यानिट्वादेर्नो-

❀ ज्योत्स्ना ❀

**वर्णाश्रयत्वमित्यादिव्यवहार इति** । तेनान्तर्वर्तिविभक्त्या प्रवृत्तस्य पदत्वस्य लुप्ते णिचि प्रत्ययलक्षणेन भत्वेन बाधकमिति 'न पदान्त'सूत्रे मनोरमायां स्पष्टम् । **तन्निमित्तं शास्त्रीयमेवेति** । तेनादेर्घस्लादेशे जघसिथेत्यत्र स्थानिनि दृष्टस्य तासौ नित्याऽनिट्त्वस्याशास्त्रीयस्यानेनानतिदेशा 'द्युपदेशेऽत्वत'इतीण्निषेधाभावे क्रादिनियमान्नित्यमिडिति भावः ।

❀ सदाशिवभट्टीयम् ❀

सिद्धत्वात् । **अत एवेति** । 'अत्रैवे'ति पाठः । 'उक्ते'रिति पञ्चम्यन्तस्याग्रे सत्त्वात् । **शास्त्रीयमेवेति** ।

❀ विषमपदविवृतिः ❀

**इदं तुल्यमिति** । तन्निमित्तातिरिक्तेत्युक्तमित्यर्थः । **शास्त्रीयमेवेति** । अत एव स्थानिभूतादचः पूर्वत्वेन दृष्टत्वं,तासौ नित्यानिट्त्वं च नातिदिश्यते । वस्तुतस्त्वशास्त्रीयमप्यतिदिश्यत एव, कथमन्यथा 'प्रदीव्ये'त्यादौ वलादित्वस्यातिदेशप्रसक्तिः । नन्वेवम् उवयिथेत्यादौ तासौ नित्यानिट्त्वमादायेड्विकल्पापत्तिरिति वाच्यम्, 'वस्तुतस्तासि सत' इत्यर्थाश्रयणेनादोषात् । अन्यथा 'तास्व'दित्यनेनैव सिद्धौ 'तासी'त्यस्यानुवृत्तिवैयर्थ्यं, नन्वेवं 'कण्डूति'रित्यत्र ऊडनापत्तिरिति वाच्यं, स्थानिभूतादचः पूर्वत्वस्य वलादित्वस्यैव विशेषणतयाऽघटितत्वेनादोषात् ।

१. आद्यः=अप्रधानातिदेशपक्षः । २. पट्ठशब्दादाचक्षाणण्यन्तात्क्विपि णिलोपे भ्यामि रूपमेतत् ।

स्थानिवदित्युक्तेः सम्बन्धिशब्दमहिम्नैवाऽऽदेशलाभे आदेशग्रहणं—श्रौतस्थान्या-देशभावस्यैव ग्रहणमिति शङ्कावारणाय ‘एरु’रित्यादौ शब्दानित्यत्ववारणाय ‘सर्वे सर्वपदादेशा’ इति न्यायेन कल्प्यमानस्य ‘तेस्तु’रित्यानुमानिकादेशस्यापि सङ्ग्रहार्थम्। तेन ‘पचत्वि’त्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम्।

ननु तोस्त्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैव सिद्धम्, तदुक्तं ‘प्राग्दीव्यतोऽणि’ति सूत्रे भाष्ये—‘दीव्यतिशब्दैकदेशादीव्यच्छब्दानुकरण-मिद’मित्युक्त्वा—‘किमर्थं विकृतनिर्देशः? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा

## ॐ अभिनव-चन्द्रिका ॐ

निमित्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकत्वव्यापकत्वमस्त्येवेति पुनरपि तद्दोषतादवस्थ्य-मेवेति वाच्यम्, यत्त्वित्यत्र ‘य’ इति लुप्तसप्तम्यन्तं पृथक्पदमिति स्वीकारेणादोषात्। अत एव ‘द्वन्द्वाच्चुदषहान्तात्समाहारे’ इति समासान्तष्टजत्र न कृतः। अथवा ‘यन्निमित्तकत्वे’त्यत्र निमित्त-पदेन—[illegible] — न कोऽपि दोषः। तथा हि—[illegible] [illegible] दिक्।

सम्बन्धिशब्दमहिम्नैवेति। सम्बन्धिशब्दत्वं—निरूपके निरूपकाकाङ्क्षाजनकत्वं [illegible]-बोधकत्वम्। प्रकृते च स्थानिवदस्य स्थानित्ववति शक्तत्वेन स्थानिना च निरूपकांशे निरूपका-काङ्क्षेति आदेशलाभ इति भावः। तेस्तुरिति। इदमुपलक्षणम्—‘भवतो’त्यादेः स्थाने भवत्वित्यादे-शादेरपि। ‘एरु’रित्यस्य—इवर्णान्तस्य उवर्णान्त आदेशो भवतीत्यानुमानिकस्थान्यादेशभावकल्पनेऽर्थः, अन्यथा शब्दानित्यत्वं दुरुद्धरं स्यादिति दिक्।

एतदेव ज्ञापयत्याचार्य इति। न च दीव्यतिशब्दत्वस्याकपरिमाणसमनियतत्वेन तस्यातिदेशासम्भवात्कथं ज्ञापकत्वमिति वाच्यम्, दीव्यतिशब्दवृत्तिबोधजनकत्वस्य तान्तेऽतिदेश-सम्भवेन ज्ञापकत्वस्य सुस्थत्वात्। एकदेशविकृतत्वं च—यादृशसमुदायैकदेशावच्छेदेन

## ॐ चिदस्थिमाला ॐ

तिदेश इति वक्ष्यतीत्यादिपरग्रन्थसङ्गतिः (?)। वारणायेति। यद्यपि समुदायविकारे सुतरां नित्यत्वहानिस्त-थापि अर्थवत्त्वेन स वाच्यस्तस्यैव प्रसङ्गसम्भवादिति बुद्धिविपरिणाम एवेति विकार एव नेति तात्पर्यं, तदाह—**सर्वे सर्वेति**। पदमिहार्थवत्,—यौगिकत्वात्। कल्प्यमानत्वादेवाह—**अनुमानिकस्थान्यादेशभावस्येति**। **घटकादेशस्यापीति**। अपिना मुख्यसमुच्चयः। अन्यथा तु तस्यैव ग्रहणं स्यान्न तु तस्यापि, प्रत्यक्षत्वेन प्राबल्यात्। तेन=तिङ्त्वातिदेशेन। तथा च विधानसिद्धिः। अत्र पाठान्तरं न युक्तमिति बोध्यम्। आदेशग्रहणं व्यर्थमेवेति शङ्कते—**नन्विति**। ‘पुच्छे शुनि श्वत्वे’ति पाठः। **वल्लोकेति**। तद्विशिष्टलोकेत्यर्थः। हेतुगर्भमिदं विशेषणम्।

**न्यायेनैवेति**। ‘एकदेशविकृतमनन्यव’दिति न्यायेनेत्यर्थः। अत एव भाष्ये पठ्यते ‘एकदेशविकृतस्या-नन्यत्वात्सिद्ध’मिति। एवेनादेशग्रहणव्यवच्छेदः। नन्वस्यात्राश्रयणे न मानमुक्तभाष्यन्तु शास्त्रीयन्याया-श्रयतयापि सुयोजमत आह—**तदुक्तमिति**। **विकृतेति**। इकाराभावरूपविकारविशिष्टनिर्देश इत्यर्थः। **एतदेवेति**। लोकसिद्धार्थाश्रयणमेवेत्यर्थः। एतेनायं न्यायोऽपि स्थानषष्ठीनिर्दिष्ट एवेत्यपास्तम्, तत्रैव प्रवृत्तौ मूलशैथिल्येनोक्तभाष्यासङ्गत्यापत्तेः। **भवत्येवेति**। एवञ्चैकदेशविकृतोऽप्यर्थबोधकः।

एकदेशविकृतमनन्यव'दिति । अत एवात्र विकारोऽप्यशास्त्रीयोऽपि । अत एव आयसशब्दादण्णन्ताद्विवचने आयसावित्यत्र वृद्धौ कृतायां सान्तस्योगित्त्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम्—पूर्वसम्बन्धिविधित्वेनाचः परस्मिन्निति स्थानिवत्त्वेन वारितो- 'ऽचः परस्मि'न्निति सूत्रे भाष्ये । एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम् ।

अन्तादिवत्सूत्रे भाष्यकैयटयोरपि—'गुडोदक'मित्यादावेकादेशे कृते दकशब्दस्यानेन

### ❀ अभिनव-चन्द्रिका ❀

विकारो जातस्तत्समुदायविशिष्टत्वम् । समुदायत्वं०—'स्वघटकोद्देश्यकविकारप्रतियोगीतरयावद्घटितत्व'- 'स्वघटकोद्देश्यकविकारप्रतियोग्यघटितत्व'—'स्वघटकोद्देश्यकविकारघटित्व'—'स्वविशिष्टाघटितत्वै'तच्च- तुष्टयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च 'स्वाघटकत्व'—'स्वघटकमात्रोद्देश्यकविकाराघटकत्वै' तदुभयसम्बन्धेन । विस्तरस्तु परिभाषेन्दुचन्द्रिकायां द्रष्टव्य इति दिक् । **अत एवेति** ।'प्राग्दीव्यत'

### ❀ चिदस्थिमाला ❀

अन्यथा न्यायेन शब्दस्वरूपाभेदप्रतिपादनेऽपि उक्तरीत्यार्थावबोधकत्वेनार्थस्यावधित्वं न स्यादिति तात्पर्यम् ।

**अत एवेति** । लोकसिद्धार्थस्य तेन ज्ञापितत्वादेवेत्यर्थः । तत्रोभयोरभावादिति भावः । **रोप्यशेति** । **अपिना** कार्यसमुच्चयः । अग्रि**मापिना** शास्त्रीयसमुच्चयः । उक्तन्यायाश्रयणे मानान्तरम- प्याह—**अत एवेति** । तत्र पूर्वस्येति सम्बन्धसामान्ये षष्ठी, न तु स्थानषष्ठीति सूचयन्नाह— **पूर्वसम्बन्धित्वेनेति** । 'अत एवे'त्यस्यार्थसूचयन्नाह—**एतदिति** । एवञ्च तत्रोभयासङ्गतिः स्पष्टैव । शास्त्रीयन्यायेन यथा न निर्वाहस्तथान्यत्र स्पष्टम् । एतदेव ध्वनयन्नन्यदपि तत्र मानमाह—**अन्ता- दीति** । 'उक्त'मित्यत्राग्रिमस्यान्वयः । पूर्वान्तवत्त्वेनौकारान्ते पूर्वपदत्वादाह—**दकेति** । इदञ्च तत्र पूर्वान्त-

### ❀ ज्योत्स्ना ❀

**अत एवात्रेति** । लोकन्यायसिद्धत्वादशास्त्रीयस्यातिदेशादित्यर्थः । आनुमानिकादेशस्थानि- वत्त्वेनैतदर्थक्रोडीकारे तु शास्त्रीयकार्य एव प्रत्यासत्त्या तत्प्रवृत्त्यौचित्येनैतदसङ्गतिरिति भावः ।

ननु भूयोऽवयवदर्शनं न जातिव्यञ्जकं, वस्त्राद्यावृतकायत्वेन वैरूप्यं प्रापितस्य मुखमात्रदृश्यस्या- ध्यात्मिकवायुसंयोगिश्चात्मनस्तावदवयवमात्रादपि श्वत्वजातेर्व्यञ्जनात्,प्रकृते च तेरिकारस्योकारेणाच्छा- दनात्सत्यपि वैरूप्ये पचदित्यादौ सङ्ख्याकारकाद्यवगमादिकारापगमे तकारमात्रादपि तित्वजाते-

### ❀ सदाशिवभट्टीयम् ❀

तत्त्वं च शास्त्रबोध्यतापर्याप्त्यधिकरणत्वं, त्रित्वादेरतिदेशाय 'विधियते'ति नोक्तम् । **दुर्लभमिति** । नचाण्- निमित्तिका सान्ते सुलभेति वाच्यं, प्रत्यासत्त्या सर्वनामस्थाननिमित्तिकायाश्चाश्रयाणान्नुम्विधौ । न च कार्यकाले अश्री इत्यत्रैव यथोद्देशेपि औ इत्यत्र पूर्वान्तवत्त्वेनाण्त्वे परादिवत्त्वेन सर्वनामस्थानत्वेन पुनःसञ्ज्ञाप्रवृत्त्या तन्निमित्तिकापि सुलभैव सेति वाच्यम्, एवमप्यणुविधानावधित्वस्य श्रेयसित्यत्र सत्त्वेन आयसमित्यत्र न्यायं विना दुर्लभत्वात्, न वानुमानिकेन स्थानिवत्त्वेन तल्लाभः, 'श्रे'त्यस्याप्यर्थवत्त्वेन तस्य स्थानि- धर्मत्वाभावादिति दिक् ।

### ❀ विषमपदविवृतिः ❀

**दकशब्दस्येति** । तत्र भाष्ये 'पूर्वोत्तरपदनिमित्तककार्यात्प्रागन्तरङ्गोप्येकादेशो ने'त्यपि समाधानान्तरमुक्तम् ।

न्यायेनोदकशब्दत्वमाश्रित्य 'उदके केवले' इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दानित्यत्वन्तु रेखागवयन्यायेन समाधेयम्। 'अनन्यव'दित्यस्य—अन्यवदित्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेन्न। अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ नित्यप्रवर्तितन्यायेनानुपपादनात्। किञ्च निङ्सञ्ज्ञायामित्वादिसूत्रोपात्तपरिच्छिन्न-परिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूनेऽधिके वा शास्त्रव्यापारं

### ॐ अभिनव-चन्द्रिका ॐ

इत्यत्र शास्त्रीयविकाराभावेऽपि एकदेशविकृतन्यायस्वीकारादेवेत्यर्थः। **उदकशब्दत्वमाश्रित्येति**। वस्तुतस्तु उदकशब्दत्वस्याक्तपरिमाणमनियतत्वेनेदं भाष्यमेकदेश्युक्तिः। 'गुडोदक'मित्यादौ 'पूर्वो-त्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न' इति परिभाषया स्वरात्पूर्वं गुणाप्रवृत्तेश्च। **अन्यसादृश्यनिषेध इति**। 'सादृश्यं न भेदघटित'मिति प्रकृते नासङ्गतिरित्यन्यत्र विस्तरः।

**परिच्छिन्नपरिमाणनिष्ठतयेति**: परिच्छिन्नपरिमाणत्वञ्च सङ्ख्यात्व-परिमाणत्वैतदन्यतरव्याप्यधर्म-प्रकारकप्रतीतिविषयतानिष्ठप्रतियोगितानिरूपितप्रतियोगितावच्छेदकविषयताश्रयत्वम्। तदवच्छिन्नप्रतीतं सङ्ख्यावत्त्वादि...। [illegible] ... इति तत्त्वमिति यावत्। वस्तुतस्तु निङ्सञ्ज्ञा परिच्छिन्नपरिमाणनिष्ठत्वेऽपि परिच्छिन्नपरिमाण-त्वानियतत्वाभावाच्चिन्त्यमेतत्। परिच्छिन्नपरिमाणनिष्ठत्वं ... न्यायस्य निर्विषय-त्वापत्तेरिति दिक्।

### ॐ चिदस्थिमाला ॐ

वस्तुकल्पकथनावसरे उक्तम्। नन्वेवं शब्दानित्यत्वापत्तिरत आह—**शब्दानामिति**। रेखागवयादिनिष्ठ-जातेरवयवत्वलक्षणत्वेऽपि यथा तद्बोधकत्वं तथा प्रक्रियादशायां क्रियमाणविकारस्य तदलक्षणत्वेऽपि पारमार्थिकनित्यतद्बोधकत्वमिति भावः। नन्वनन्यवदित्यस्यान्यभिन्नवदित्यर्थेऽसम्भवो वैयर्थ्यञ्चास्यात आह—**अनन्येति**। नन्वेवमन्यसादृश्यनिषेधेऽप्यन्यत्वसत्त्वादन्यदोषस्तदवस्थ एवात आह—**तत्रेति**। एकदेशविकृते इत्यर्थः। अन्यत्वाभावः=अन्यत्वनिषेधः। फलितान्यत्वाभावादेव विकृतादर्थ-बोधः। अन्यथा शक्तताऽवच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यादिति मञ्जूषायां स्पष्टम्। प्रकृतान्वेषणा-'र्द्धस्यान्यथात्वे' इति न्यायमूलमाह—**जातीति**। दोषान्तरमाह—**किञ्चेति**। **परिमाणेति**। आनु-पूर्वीविशेष इत्यर्थः। **परिमाणेति**। परिच्छेदकमात्रेत्यर्थः। अत एव द्रोणादिवत्सङ्ख्याया अपि भाष्ये

### ॐ ज्योत्स्ना ॐ

व्यञ्जनस्य दृष्टत्वात्तुशब्देऽपि तेनैव तादृशजातिर्व्यज्यत इति वक्तुं शक्यते इत्यस्वरसादाह—**किञ्चेति**।

### ॐ सदाशिवभट्टीयम् ॐ

**परिच्छिन्नेति**। प्रातिस्विकरूपेण बोधितं परिमाणमानुपूर्वीविशेषो यस्यार्थस्य तद्वाचकेत्यर्थः।

### ॐ विषमपदविवृतिः ॐ

**परिच्छिन्नपरिमाणेति**। गुडोदक'मित्युक्तं भाष्यं तु अभ्युपेत्योक्तिरिति भावः। **लौकिकन्या-यानाश्रयणे पूर्वपक्षस्योत्थानमेव न स्यादिति पूर्वग्रन्थाशयः।**

विनाऽप्रवृत्तेर्येन विधिरिति सूत्रेऽङ्गसञ्ज्ञासूत्रे च भाष्ये उक्ततया तदभावात्। न्यूनाधिकत्वञ्च—वैरूप्यस्योपलक्षणम्।

न च 'तण्डुला'नित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्न-

❀ चिदस्थिमाला ❀

दृष्टान्तत्वेनोल्लेखः। **भाष्य इति**। तत्र हि पञ्चद्रोणादिदृष्टान्तेन सर्वकादौ जातिव्यञ्जकभूयोऽवयवदर्शनस्य सत्त्वेऽपि सर्वाद्यानुपूर्वीविशेषोपादनेन क्रियमाणसर्वनामसञ्ज्ञायास्तत्र तत्त्वतदन्तत्वयोरभावेनाभावनाशङ्क्य 'तदेकदेशभूतं तद्ग्रहणेने'तिपरिभाषया समाहितम्। यदि तत्र तत्प्रकृतिस्तद्धिकगङ्गादिसत्वेऽपि शुनः श्वत्ववदकजधिकस्य सर्वकस्य सर्वशब्दत्वमक्षतमेवेति भाष्यासङ्गतिरतस्तथेति तदाकूतमिति भावः।

**तदभावादिति**। 'प्रकृते' इत्यादिः। शास्त्रव्यापाराभावेन तिङ्त्वासम्भवादित्यर्थः। समसङ्ग्रहायाह—**न्यूनेति**। विशेषान्तरं वक्तुं शङ्कते—**न चेति**। 'अन्तादिवच्चे'तिसूत्रं स्थानिवत्सूत्रेण गतार्थमिति मतेन पूर्वसङ्गतिमाह—**स्थानीति**। एरुरितिवदत्रापि स्थान्यादेशाभाव इति आदेशग्रहणेन तद्वदत्रापि स इति भावः। अत्रापिना सूचितं—वस्तुतो नानेन तस्य गतार्थत्वमिति—तस्यैव विषयो नास्य। किञ्च पूर्वपरयोरिति द्विवचननिर्देशेन प्रत्येकमुभयोः स्थानित्वेऽपि प्रत्ययत्वस्य तत्स्थानिवर्णाधर्मत्वम्, अनुमानिकस्थान्यादेशाभावकल्पनेऽपि प्रत्येकं तयोः समुदाययोः स्थानित्वे मानाभावेनान्यत्र दोषापत्तेश्च तथा दुर्वचत्वात्। तस्य स्थानिवत्त्वेन प्रत्ययत्वमित्यपि न, अल्वृत्तित्वादिति बोध्यम्। यद्यपि लान्ते 'एकदेशे'ति न्यायेन यस्माद्विहितत्वं, तथापि शास्त्रीयकार्याभावेन परादिवत्त्वेनानित्यस्य प्रत्ययत्वम्, अप्रत्यय इति हि पर्युदासोऽन्यथा प्रसिद्धदोषापत्तेः। न च प्रत्ययत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं दुर्वचमिति न तत्त्वं, प्रातिपदिकत्वाभावस्य अशास्त्रीयत्वेनात्राभावातिदेशाभावेन च तत्र स्थानिवत्त्वस्य दुर्वचत्वात्। किञ्च विरोधाभावेनातिदिश्यमानधर्ममादाय भेदाभावो दुर्निरूपः। अन्यथा ब्राह्मणवत्त्वेऽतिदिष्टक्षत्रियस्याब्राह्मणत्वानापत्तेरित्याशयेनाह—**स्वत इति**।

❀ ज्योत्स्ना ❀

**भाष्ये उक्ततयेति**। एवं हि तत्र भाष्यं–"या एताः सर्वाद्युपादानेन परिच्छिन्नपरिमाणाः सञ्ज्ञाः कृतास्ताः कथमकजादिविशिष्टे भविष्यन्ति? यथा लोके द्रोणादिसञ्ज्ञाधिके न्यूने वा न सम्भवतीति।

❀ सदाशिवभट्टीयम् ❀

**तदभावादिति**। ननु गङ्गाप्रविष्टनदीदृष्टान्तसिद्धत्वेनाकोरिति प्रतिषेधज्ञापितेन 'यन्मध्ये'तिन्यायेनाक्परिमाणानां धात्वादिशब्दानां सश्मश्रुके साकच्के यथा प्रवृत्तिस्तथाऽश्वपुच्छदृष्टान्तसिद्धेन प्राग्दीव्यदितिज्ञापितेनानेनापि तिङ्त्वातिदेशः कुतो नेति चेन्न, वैषम्यात्, अक्परिमाणानामधिके प्रवृत्तिमन्तराऽकोरित्यादेर्न सार्थक्यं, प्राग्दीव्यदित्यस्यार्थबोधकत्वाद्यतिदेशेन सार्थक्यमिति। नन्वेवमङ्गसञ्ज्ञा चाप्यक्परिमाणानामित्यङ्गसञ्ज्ञासूत्रस्थभाष्यादङ्गत्वस्याक्परिमाणनिष्ठतयाऽनतिदेशे श्रायसाविति पूर्वं भाष्यं विरुध्येत, तथा जरात्ववदुदकत्वाऽनतिदेशे द्वितीयं भाष्यं विरुध्येत, तथा 'प्राग्दीव्यतोऽ'णितिसूत्र उक्तपरिभाषां ज्ञापयित्वा तेनैव पदत्वे सिद्धे पचत्वित्यादौ स्थानिवत्सूत्रोक्तमेकदेशविकृतोपसङ्ख्यानञ्चोदितं तन्न कर्त्तव्यमिति भाष्यकैयटादिकमपि विरुध्येतेति चेन्न। श्रायसाविति भाष्येणाद्यस्यैकदेश्युक्तत्वात्। पूर्वोत्तरेतिपरिभाषया पूर्वमेव स्वरप्रवृत्त्या द्वितीयस्यापि तथात्वात्। रूपान्यत्वाच्चेतिप्रकृतसूत्रे भाष्य एव प्रत्याख्यानस्य दूषितत्वेन तृतीयस्यापि तथात्वात्। अक्परिमाणे उक्तन्यायाऽप्रवृत्त्यसाधारणफलन्तु—सजुषमाचष्टे सग् इत्यत्र रुत्वाभावः। आनुमानिकस्तु न, जुषोऽप्यर्थवत्त्वेन सजुष्ट्वस्य स्थानिधर्मत्वाभावादित्याहुः। इदुदुपधेभ्यो णिच्तु परमनभिहितोऽन्यैरिति दिक्।

**तण्डुलेति**। सति तत्त्वे न लोपः स्यात्। ननु नादेशविधेर्न स इत्यत आह—**आदाविति**। तेन स्मिन्नन्तसङ्ग्रहः, अत्र हि 'सर्वस्मिञ्शय'इत्यत्राल्लुकि नलोपेपि सञ्ज्ञाविधौ तस्यासिद्धत्वेन संयोगगुरु-

त्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम्, अतिदेशस्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात्। अत एव 'जही'त्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो हेर्लुग्न। सिद्धत्वासिद्धत्वयोर्विरोधात्। असिद्धवत्सूत्रं तु 'शाधी'त्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम्।

न चाप्रत्यय इत्यस्य पर्युदासत्वे—शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति

ॐ अभिनव-चन्द्रिका ॐ

**प्रातिपदिकत्वापत्तिरिति**। ननु तण्डुलानीत्यादौ 'तस्माच्छसो न' इति नकारादेशस्य विधानसामर्थ्यादेव नलोपो न भवतीति को दोषः? न च 'सर्वस्मि'न्नित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वे नलोपापत्तिः,स्मिन्निति नकारोच्चारणन्तु 'सर्वस्मिञ्शय' इत्यादौ 'शयवास' इति सप्तम्या अलुकि सञ्ज्ञाविधौ नलोपस्यासिद्धत्वात्संयोगसञ्ज्ञायां 'संयोगे गुरु' इति गुरुसञ्ज्ञायां 'गुरोरनृत' इति प्लुतार्थञ्चरितार्थमिति वाच्यम्, 'इकोऽचिविभक्ता'विति सूत्रस्थभाष्यप्रामाण्येन नलोपस्यासिद्धत्वात्संयोगसञ्ज्ञा न भवति, संयोगसञ्ज्ञायां वा तन्निमित्तकगुरुसञ्ज्ञामादाय 'गुरोरनृत' इति प्लुतो न भवतीति वा कल्पनेनादोषात्। अन्यथा 'त्रपुणय' इत्यत्र नुमि नलोपे तस्यासिद्धत्वात्संयोगसञ्ज्ञायां गुरुसञ्ज्ञायां 'गुरो'रिति प्लुताभावायाचार्यस्यावश्यकत्वेन भाष्योक्तज्ञापकता भज्येतेति चेत्सत्यम्। नकारोच्चारणसामर्थ्येन शास्त्रबाधकल्पनादेवाऽतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावतापत्तस्यैवौचित्यात्।

**अतिदिश्यमानधर्मविरुद्धेति**। अत्र विरुद्धत्वञ्च तदभाववत्तानिश्चयमुद्रया ग्राह्यम्, न तु तदभावव्याप्यवत्तानिश्चयमुद्रया। अन्यथाऽधुरित्यादौ 'विभाषा घ्राधे'ङित्त्वगर्थमतिदिश्यमानं यद्वेत्त्वं तदभावव्याप्यं यत्स्वाश्रयमादन्तत्वं तत्प्रयुक्त 'आत' इति जुस् न स्यादिति दिक्।

**स्थानिवत्त्वं दुर्लभमिति**। वस्तुतस्तु शास्त्रीयत्वं–शास्त्रस्थपदप्रतिपाद्यत्वमिति प्रत्ययान्तभिन्नत्वस्य शास्त्रस्थाऽप्रत्ययपदप्रतिपाद्यत्वेनेयमाशङ्का न सङ्गतेति दिक्।

ॐ विदुस्थिमाला ॐ

**पत्तिरिति**। तथा सत्युक्तरीत्या पदत्वान्नलोपापत्तिरिति भावः। **स्वाश्रयेति**। अतिदिश्यमानेष्टधर्मप्रयुक्तकार्याभावाज्झकारादित्यर्थः। अत एव 'ब्राह्मणव'दित्यादौ तद्विरुद्धप्रयुक्तमवपानादीनिवृत्तिर्न युद्धादेः। उक्तमेव विशदयति—**अत एवेति**। उक्तार्थस्य तत्स्वभावसिद्धत्वादेवेत्यर्थः। नन्वेवं तदान-

ॐ ज्योत्स्ना ॐ

**पर्युदासत्वे इति**। अयं भावः-पर्युदासे हि प्रत्ययान्तत्वरूपनिमित्तान्तर्गतस्य प्रत्ययत्वस्य शास्त्रीयत्वेऽपि तत्कार्यस्य प्रातिपदिकत्वाभावरूपस्य सूत्रेणाविधानादशास्त्रीयत्वं, प्रसज्य प्रतिषेधे तु प्रत्ययान्तस्य प्रातिपदिकत्वाभावः सूत्रेणैव विधीयते इति तस्य शास्त्रीयत्वं स्यात्। ननु वाच्यवृत्त्या प्रातिपदिकत्वाभावस्य मास्तु शास्त्रीयत्वं, तात्पर्यतस्तथात्वं तु पुनस्तस्य केन निवर्त्तनीयम्। अत एव पर्युदासे प्रतिषेधोगम्य इति शास्त्रकृतां व्यवहार इति चेद्धन्तैवमचीत्यादिविशेषणद्वारा हल्याद्यभावस्यापि शास्त्रतात्पर्य-

ॐ सदाशिवभट्टीयम् ॐ

सञ्ज्ञयोः 'सी'तांकारस्य प्लुतत्वेन नोच्चारणस्य सार्थक्यमिति। **प्रत्ययान्तत्वेपीति**। कृतपूर्वसवर्णे आसित्यादावादिवत्त्वेन प्रत्ययत्वं, तत अनुमानिके आनादौ स्थानिवत्त्वेन प्रत्ययत्वं, तदन्तत्वन्त्वर्थसमाजग्रस्तमिति बोध्यम्। विशिष्टातिदेशस्तु न, अशास्त्रीयत्वात्। **त्वापत्तिरिति**। एवमचिनवमित्यादौ पित्त्वाऽतिदेशेपि ङित्वापत्तिरिति बोध्यम्।

वृत्त्यं, 'वेः स्कन्देरनिष्ठाया' मिति षत्वविधायके तिङन्तेषु षत्वाभावायाऽऽवश्यकेन, न्यायेन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन—पर्युदासलभ्याशास्त्रीयेऽपि शास्त्र-तात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । 'विस्कन्न' इत्यादौ हि निष्ठानत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात् । तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्या-नादेवोक्तार्थसिद्धिरिति बोध्यम् ।

**ॐ चिदस्थिमाला ॐ**

ऐक्यमत आह—**असिद्धेति** । वत्त्वं=वत्त्वमेव । तत्र विवादादाह—**न्याय्येनेति** । भाष्यासम्मतत्वादाह—**वृत्त्यादीति** । एतेनाप्रामाण्यनिरासः । कार्येऽपि=कर्तव्ये । **देशेति** । तत्प्रवृत्तीत्यर्थः । वाच्यवृत्त्या प्राति-पदिकत्वाभावस्य शास्त्रबोध्यत्वाभावेऽपि तात्पर्यतः शास्त्रविषयत्वेन शास्त्रीयत्वमेवात एव 'पर्युदासे प्रतिषेधो नास्ति' इति शास्त्रकृतां व्यवहार इति भावः । तस्य तत्त्वमाह—**विस्कन्न इति** । हि=यतः । पूर्वत्वात् । पक्षे नाफल्यभ्रमनिरासायाह—**नित्येति** । अनुमानिकादेशमादायाह—**स्थानीति** । वृत्त्यादीत्यनेनारुचिः सूचिता, तद्बीजन्तु तत्र न भाष्यानुग्रहः । अत एवा'नुविपरिभ्य' इति सूत्र इव तत्र भगवता पर्युदासप्रसज्य-प्रतिषेधयोः फलभेदो न विचारितस्तस्माद्विपूर्वस्यास्य तिङ्यप्रयोगः,-सषत्वो वा प्रयोग इति तदेतद्धृदि निधायाह—**तस्येति** । उक्तहेतोरेव तुः । 'पक्षिमत्स्यमृगा'नित्यादिनिर्देशानां सौत्रत्वेनोपपत्तेराह—**लक्ष्येति** । एतेनार्चीत्यादिविशेषणेन हलि अयाद्यभावस्यापि शास्त्रतात्पर्यविषयत्वेन तस्यापि शास्त्रीयत्वा-लवन इत्यादिनिर्देशासङ्गतिरिति परास्तं, पर्युदासस्थले एव तथाङ्गीकारात् । **कौस्तुभ**कारादिमतमुक्तार्थस्य

**ॐ ज्योत्स्ना ॐ**

विपयत्वेन शास्त्रीयत्वान्नायकादौ दोषतादवस्थ्यमिति । **तिङन्तेषु षत्वाभावायेति** । **अनिष्ठायामिति** । पर्युदासान्निष्ठाभिन्ने कृत्यप्रत्यय एव तत्प्रवृत्तेरिति भावः । ज्ञापकशरीरे पर्युदासलभ्येति विशेषणा-न्नायकादौ न दोषः । अचीत्यादिविशेषणाद्धल्यायाद्यभावस्य शास्त्रतात्पर्यविषयत्वेऽपि पर्युदासालभ्य-त्वादिति बोध्यम् । **स्थानिवत्त्वेनैव निष्ठात्वस्येति** । निष्ठात्वरूपनिमित्तस्य शास्त्रीयस्य सत्त्वेऽपि तत्कार्यस्य षत्वाभावरूपस्याशास्त्रीयत्वात्स्थानिवत्त्वाप्रवृत्तेर्विस्कन्न इत्यादौ दोषस्य पुनरपि सत्त्वादनिष्ठायामिति ज्ञापकमुक्तार्थे भवति । ननु किञ्चिन्निमित्तवैकल्येऽपि यथा स्थानिवत्त्वेनैव तत्तत्कार्यं विधेयमिति पक्षस्तदास्तु ज्ञापकं, यदा तु तत्तन्निमित्तरूपं कार्यमात्रं स्थानिवद्भावो विधत्ते तदा पुनर्निष्ठात्व-रूपनिमित्तस्य षत्वाभावप्रयोजकस्य शास्त्रीयत्वादतिदेशसम्भवात्कथं ज्ञापकम् ? एवञ्च तण्डुलानि-त्यादावपि प्रत्ययत्वरूपं निमित्तमात्रमतिदिश्यते, प्रत्ययान्तत्वं त्वार्थसमाजग्रस्तम्,एवं प्रातिपदिकत्वा-भावोऽपीति चेन्न । निमित्तातिदेशपक्षेऽपि निमित्तं कस्येति विधेयाकाङ्क्षायां निमित्तस्येव तस्यापि शास्त्रीयस्यैव ग्रहणौचित्यादित्याशयात् ।

**लक्ष्यानुसारिव्याख्यानादेवेति** । इयमगतिकगतिरभ्युपगमवादेन । वस्तुतस्तु तण्डुलानित्यादौ

**ॐ सदाशिवभट्टीयम् ॐ**

**स्थानिवत्त्वेनैवेति** । निष्ठात्वस्यात्कपरिमाणनिष्ठतया श्वपुच्छदृष्टान्तासिद्धेनासिद्धिरिति भावः । न चानिष्ठायामित्यस्य न निष्ठाव्यावृत्तिः फलं किन्तु कृत्त्वेन सादृश्यग्रहणात्तिङन्तव्यावृत्तिरेवेति कथं ज्ञापकतेति वाच्यं,तन्मात्रफलकत्वे कृतीत्येव वक्तव्यत्वात् । **प्रसज्येति** । अस्य बीजमाख्यातशेखरतोवसेयम् । **लक्ष्यानु-सारीति** । न च भृशादिसूत्रेऽच्वेरिति पर्युदासो ज्ञापक इति वाच्यम्, अभूततद्भावे प्रवर्तनेन सार्थ-क्यात् । नह्यत्र तदेव वक्तुं युक्तं, गौरवात् । नन्विदुदुपधेति सूत्रेऽप्रत्ययपर्युदासो ज्ञापकः, न हि प्रत्ययावयवत्वं स्थानिवत्वाद्वारकं वितर्गेऽस्तीति । नच मिसि एकदेशविकृतन्यायेन, अत्कपरिमाणत्वात् । नापि तत्स्थानापन्नेति लौकिकेन, प्रकृतसूत्रीयोद्योतोक्तरीत्या विभक्तित्वस्येव प्रत्ययत्वस्यापि स्वं रूपमित्येतद्वि-षयत्वाविशेषात् । न च तदविषयः प्रत्ययावयवत्वमेवातिदिश्यतां, तथा सति तथैव फलानां सिद्धा

केचित्तु भाष्ये 'तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धे-रयमतिदेशः स्वं रूपमित्येतच्छास्त्रसत्त्वाद्धन्तेः कार्ये वधौ न स्यादिती'त्युक्तम् । एवञ्च 'स्वं रूप'मितिशास्त्रविषये तेन सिद्धिरिति सूचितम् । एवञ्चाशास्त्रीयस्यापि धर्मस्याति-देशो भवत्येव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयो-

### ॐ चिदस्थिमाला ॐ

स्वारसिकत्वेन न ज्ञापकाद्यपेक्षेति । त्ववादाह—केचिदिति । भाष्ये इति । 'उक्त'मित्यत्रान्वयः । वधौ=तद्विषये । इतीत्युक्तमिति=एतदर्थं इत्युक्तमित्यर्थः । एवञ्च=तथोक्तौ च । सिद्धावन्वयः । तेन=लोकन्यायेनैव

### ॐ ज्योत्स्ना ॐ

न दोषः, 'येन विधि'रिति शास्त्रात्प्रत्ययशब्दसङ्केतितत्वस्य प्रत्ययान्तस्य शास्त्रीयत्वावगमात् । उक्तरीत्या प्रत्ययत्वरूपशास्त्रीयनिमित्तमात्रातिदेशेन दोषाभावाच्च । निमित्तनिमित्तिनोरुभयोरपि शास्त्रीययोरेव ग्रहणे तु न प्रमाणम्, शास्त्रीयनिमित्तमात्रातिदेशेन सकललक्ष्यसौष्ठवात् । अत एव लाघवाद्भाष्यकृताङ्गीकृतो-ऽयं पक्षः । निमित्तवैकल्येऽपि तन्निमित्तं कार्यं शास्त्रीयमतिदेशेन क्रियते इति पक्षे तावत् नित्याऽ-नित्यत्वरूपाशास्त्रीयनिमित्तकस्य शास्त्रीयणित्त्वधर्मस्य 'जयमिथे' त्यादावप्रवृत्तये तत्रान्तरोऽपि निमित्तस्या-शास्त्रीयस्यैवापेक्षणेन गौरवात् । न चैवं 'निराद्ये'त्यत्र जग्धेर्वात्यादित्यत्र वधश्चैकदेशविकृतन्यायेन आस्या तन्निवृत्तेऽप्यपेक्षितत्वात्परस्मिन्निति शास्त्रीयातिदेशस्य 'स्थानिभूतादचः पूर्वत्व'स्याशास्त्रीय निमित्तस्य स्थानिवत्त्वेनेष्यमाणेऽतिदेशो न स्यात्, स्थानिभूतादचःपूर्वत्वस्य तन्निमित्तस्याशास्त्रीय-त्वादिति वाच्यम् । न हि स्थानिभूतादचः पूर्वत्वमतिदेशे निमित्तं किन्तु पूर्ववृत्तिधर्मः, स्थानिभूतादचः पूर्वत्ववद्वृत्तिधर्मावच्छिन्नोद्देश्यके विधाविति कृदतिङितिसूत्रभाष्यकृता ध्वनितसूत्रार्थाश्रयणात् । न च धर्मोऽदित्वहतित्वरूपः—शास्त्रीयोदेहन्तेश्च प्रकृतित्वेनोपदेशात् । एतेन न धातुलोपसूत्रप्रत्याख्यानपक्षे लोलुवादौ लघूपधगुणवारणमशक्यं, यङ्कारसत्त्वे उवङो भावादकारलोपे उवङः स्थानिभूतादचः पूर्वत्वाभावेनाकारलोपस्य स्थानिवत्त्वाभावादिति हरदत्तोक्तं दूषणमपास्तम् । उवङन्तस्थानिलोलु-इत्यूकारान्तवृत्तिधर्मस्याङ्गत्वस्य स्थानिभूतादचः पूर्वत्ववद्वृत्तेः शास्त्रीयस्यातिदेशेनादोषात् । अत एव 'नपदान्त'सूत्रे 'शिण्ढि'इति परसवर्णोदाहरणं सङ्गच्छते, स्थानिभूतादचः पूर्वत्ववति श्नम्नकार वर्त्तमानस्य प्रकृत्यवयवत्वस्य मिदचोऽन्त्यादितिशास्त्रगम्यस्या'वयवावयवः समुदायावयवो भवती'ति-न्यायात्पदावयवत्वप्रयोजकस्यानुस्वारेऽवश्यापेक्षणात् । अनुस्वारविधौ परसवर्णविधौ च पदस्ये-त्यवयवषष्ठ्यन्तानुवृत्तेः सिद्धान्तात् । तर्हि 'ब्राह्मणकण्डूति'रिति'नपदान्त'सूत्रे भाष्ये कथमुदाहृतम्, अल्लोपस्योक्तरीत्या स्थानिवद्भावादुवङि कृते ऊठोऽप्रसङ्गात्, उच्यते,—ऊठो दीर्घत्वात्तस्मिन् कर्त्तव्ये निषेधात्, न हि दीर्घशब्देन तद्भावितग्रहणं, मानाभावात्, लोलुवे गुणो दीर्घ एवेति चेन्न, दीर्घत्ववन्मात्रवृत्तिधर्माश्रयविधौ निषेधाङ्गीकारात्, गुणत्वस्यैकमात्राकारसाधारणत्वेनाऽग्रहणात् । अत एव 'पापचक' इत्यादौ न निषेधः, वृद्धित्वस्याऽर्द्धतृतीयमात्रासाधारणत्वेन दीर्घग्रहणेनाग्रहणात् । ननु च दीर्घग्रहणं प्रत्याचक्षाणेन वार्त्तिककृता त्रैपादिक एव दीर्घस्तत्र गृहीतः, न, 'चिण्णमुलो' रितिसूत्रे सपादसप्ताध्यायीस्थदीर्घग्रहणमङ्गीकृत्य भाष्यकृता तत्प्रत्याख्यानात् । यद्वा—'अङ्ग-

### ॐ सदाशिवभट्टीयम् ॐ

ज्ञापकानुपयोगादिति चेन्न, उक्तार्थो ज्ञाप्यतामसमर्थसमासो वेति सन्देहे लक्ष्यस्यैवानुसर्त्तव्यत्वादिति भावः।

**अशास्त्रीयेति** । प्रत्ययान्तत्वेत्यर्थः । यातिरिति सिध्यर्थे वरेग्रहणज्ञापितसम्भावितप्रत्ययत्वादिक-

यदि प्राप्नोति । एवञ्च न कश्चिद्दोषः । 'न पदान्ते'ति सूत्रे 'ब्राह्मणकण्डूति'रित्युदाहरणाच्च क्वचित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिचि तस्य स्थानिवत्त्वादुवङि यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः ।

अत एवार्थवत्सूत्रशेषेऽप्रत्यय इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च 'काण्डे' इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वादोषः शङ्कितो, न तु स्वाश्रयाप्रत्ययान्तत्वेन

ॐ अभिनव-चन्द्रिका ॐ

**यणि वेति** । द्विधा हि कण्ड्वादय इत्युक्त्या धातुत्वकल्पे उवङ्, प्रातिपदिकत्वकल्पे यणिति विवेकः । **अत एवेति** । पर्युदासलभ्यागार्ग्रीयेऽपि शास्त्रीयवदतिदेशस्वीकारादेवेत्यर्थः । **काण्डे इत्यत्रेति** । न च लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाप्राप्त्या इयमाशङ्काऽयुक्तैवेति वाच्यम् । **गुणस्य** स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकत्वेनाश्रीयमाणसमुदायघटकमात्रोद्देश्यकविकारभिन्नत्वेन तल्लक्ष्य-

ॐ चिदस्थिमाला ॐ

प्रागुक्तेन । एवञ्च=अत्र तेन सिद्धौ च । **न कश्चिदिति** । प्रागुक्त इत्यर्थः । अनाश्रयणस्थलमाह—**न पदान्तेति । इत्युदेति** । वलोपस्येति भावः । **च**: 'क्षत्रियकण्डूति'रितीत्युदाहरणसमुच्चायकः । तत्र हि= यत्र उक्तलक्ष्ये । **न स्या**दित्यत्रान्वयः । कण्डूयतेः=यगन्तात्क्यजन्ताद्वा । क्तिचि=तस्मिन्परतः । अल्लोपे तन्निषेधेन यलोपे चेत्यपि बोध्यम् । **माणे इति** । अचः परेतिस्थानिवत्त्वादकारेण व्यवधानादिति शेषः । तथा च वलोपस्यापि तत एव प्राप्त्या हलि चेति दीर्घे कण्डूवृतिः कण्डूतिरिति वा स्यादिति भावः । अत्राचिर्वीजन्तु स्वं रूपमित्यस्य प्रत्याख्यातत्वेन तथा दुर्वचं, तदतिदेशे न पदान्तेति सूत्रातिरिक्ते फलाभावश्च, तस्य तन्मात्रविषयकत्वेनासार्वत्रिकत्वञ्चात एवान्यत्रातिप्रसक्तिरपीति बोध्यम् । प्रागुक्तार्थं द्रढयति—**अत एवेति** । तत्रातिदेशप्रवर्तनादेवेत्यर्थः । अन्यथा प्रसज्यप्रतिषेधे वाच्ये तदसङ्गतिः स्पष्टैव । अस्याग्रेप्यन्वयः । अत एव च, अन्यथा तावत्पर्यन्तधावनासङ्गतिः स्पष्टैव । एवं तस्य तत्स्वभावसिद्धत्वे

ॐ ज्योत्स्ना ॐ

वृत्तेःपुनर्वृत्तावविधिर्निष्ठितस्ये'ति परिभाषया लोलुवादीनामुवङि परिनिष्ठितानां लघूपधगुणेन भविष्यति, ब्राह्मणकण्डूतेरुवङि परिनिष्ठितत्वाभावादूठ्भविष्यति, निरायेत्यादौ तु वृद्धौ कृतायां णिलोपे दोषाभावः, ण्यल्लोपाविति वचनस्य णिस्थानिकवृद्धिमात्रबाधकत्वात्, अत्र पक्षे शिण्ढीति सवर्णग्रहणे नोदाहरणं, किन्तु हरितशब्दादाचख्याणणिजन्ताद्विचि हरिल्लुनातीति, क्विप्तु नोदाहर्त्तव्यः, 'क्ङिलगुपधात्वे'ति निषेधादिति दिक् ।

ॐ सदाशिवभट्टीयम् ॐ

मादाय—**उवङीति** । प्रकृते तदनाश्रयणेपि यणेष्टसिद्ध्यतीत्याशयेनाह—**यणिति** । अन्यथेतिमात्रनिवेशे तु भोगभो इति भाष्ययोजनैव तत्फलं बोध्यम् ।

ॐ विषमपदविवृतिः ॐ

**एवञ्च न कश्चिद्दोष इति** । 'न चाप्रत्यय इत्यस्ये'त्युक्तदोषो नेत्यर्थः । क्वचित्तदनाश्रयणं=लौकिकन्यायानाश्रयणम् । **उवङि यणि वेति** । 'कण्डूये'त्यस्य यगन्तत्वे उवङ्, क्यजन्तत्वे यणिति विवेकः । 'द्विधा हि—कण्ड्वादयो—धातवः, प्रतिपदिकानि चे'त्यभियुक्तोक्तेः ।

**अतएवार्थवत्सूत्रेति**। अतिदिश्यमानधर्मविरुद्धेत्युक्तशास्त्रार्थाङ्गीकारादेवेत्यर्थः। **अत्र च**='इट ईटी' त्यत्र । नन्वग्रहीदित्यत्र दीर्घे इट्त्वं दुर्लभं, 'प्रदीव्ये'त्यादाविव शब्दतः स्थानितयोपात्तसमुदाय इडिति तदवयवेकाररूपात्वृत्तीट्त्वरूपधर्माश्रये दीर्घविधौ स्थानिवत्त्वस्य दुर्लभत्वादिति चेन्न, स्थान्यवयवात्वृत्तित्वमित्यत्र मात्रपदनिवेशेनादोषात् । यद्वा—समुदायसत्तादशायां तदवयवात्वृत्तित्वं विवक्षितमिति न कश्चिद्दोषः ।

'क्षियो दीर्घा'दिति सूत्रे भाष्येऽपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्यभाव इति स्फुटम् । तत्र हि क्षिय इत्यत्रेयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य—'एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते' इति समाधायातिदिश्यमानधर्मविरुद्ध-स्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेण-'अथाप्येतन्ने'त्याशङ्क्य 'निर्देशसामर्थ्याद्विभक्ति'रित्युक्तम् । असिद्धवत्सूत्रे च कैयटे स्फुटमेतत् ।

यत्तु गाङ्कुटादिसूत्रे, भाष्ये—'सृजिदृशो'रित्यत्राकितीति पर्युदासात्सिसृक्षतीत्यत्र 'हलन्ताच्चे'ति कित्त्वातिदेशेऽपि अमागममाशङ्क्य—प्रसज्यप्रतिषेधाश्रयणेन समाहितं, तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोद्धव्यम् । 'अनल्विधा'विति विधिग्रहणादलाश्रये विधावित्यर्थायत्र विधौ शब्दतः स्थानि-स्थान्यवयवान्यतराल्वृत्तिधर्मवतस्तेन तस्मात्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया विशेषणतया वा अलाश्रयणं तत्र निषेधः । व्यूढोरस्केन, द्यौः, द्युभ्यां, क इष्टः, प्रपठ्येत्युदाहरणानि ।

❀ अभिनव-चन्द्रिका ❀

त्वाभावात् । अलाश्रये विधावित्यर्थादिति । अल्विशिष्टविधावित्यर्थः । वै० 'साक्षात्स्व-वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताक-त्व'—'स्ववृत्त्यतिदिदिक्षिताल्त्वव्याप्यधर्मघटितधर्मनिमित्तकत्वं' तदन्यतरसम्बन्धेन । [ साक्षा'दित्यस्य—'अवच्छिन्ने'त्यत्रान्वयो बोध्यः । ]

शब्दतः स्थानीति । अल्त्वव्याप्यधर्मावच्छिन्नस्थानिताश्रय इत्यर्थः, अल्पर्याप्तस्थानिताश्रय इत्यर्थो वा । अन्यतराल्वृत्तिधर्मेति । 'तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण-साक्षादवच्छिन्नोद्देश्यतासामानाधिकरण्य'—'स्ववृत्त्यल्त्वव्याप्यत्व'—एतदन्यतरसम्बन्धेन धर्मेऽन्य-

❀ चिदस्थिमाला ❀

भाष्यमपि मानमित्याह—क्षिय इति । 'तत्र ही'त्यस्योक्तमित्यत्रान्वयः । दीर्घे स्वीक्रियमाणे सति । कानां=शब्दानाम् । निवृत्तेरिति । अन्यार्थमिति शेषः । स्फुटं=स्फुटतरम् । अत एवात्रिऽस्योल्लेखः । नन्वेवं सृजि-दृशोरित्यत्र पर्युदासेऽपि प्रोक्तरीत्यागमाप्राप्तौ सिसृक्षतीत्यादौ तदाशङ्का न युक्ता, तस्या अज्ञानेन कृतत्वेऽ-प्यन्यथासिद्धान्तोक्तिरयुक्तैवात आह—यत्त्विति । कुटादीतिसूत्रे इत्यर्थः । अपिर्विरोधे । उक्तहेतोरेवाह—प्रसज्येति । तस्य प्रसिद्धदोषेणासिद्धान्तत्वसूचनायाह—वार्तिकेति । एवञ्च तदप्यज्ञानविलसितमेवेति भावः । नन्वनल इत्युक्त्वैव सम्बन्धसामान्यषष्ठ्या समासचतुष्टयफललाभे विधिग्रहणं व्यर्थमत आह—अनल्विधावितीति । 'उत्तरपदलोपिसमासाङ्गीकारा'दिति शेषः । अलाश्रये इति । अलाश्रितविधि-मात्रे इत्यर्थः । तेन तद्द्वारा संकलाल्विधिपरिग्रह इति । प्रधानन्यायबाधाङ्गीकारेण यथाकथञ्चिदा-श्रयस्यैव तस्यापि लाभस्तदाह—तेनेति । विशेष्यतयाऽऽश्रयणप्रकारमुक्त्वा विशेषणतयाऽऽश्रयणप्रकार-माह—तदादेरिति । आदिना 'तदा'वित्यादिपरिग्रहः । तया चेति पाठः । वेति पाठे—वा समुच्चये ।

उद्देशक्रमेणोदाहरणमाह—व्यूढोरस्केनेति । अतिदिश्यमानेति । प्रागुक्तरीत्या सकारे स्वतोऽभिन्न-त्वात्कथं णत्वप्राप्तिर्निषेधादिति शङ्का नेति भावः । द्युभ्यामिति । अत्र सूत्रे विशेषातिदेशस्यापि वक्ष्यमा-णत्वान्नात्र दोष इति भावः । क इष्ट इति । यद्यपीदं रूपं स्थानिवत्त्वेनोत्वे गुणाऽऽदेशे पाक्षिकलोपेन सिध्यति, तथापि पक्षे कविष्टः स्यात्कयिष्ट इति त्विष्यते इति भावः । प्रपेति । तत्र वलादिलक्षणेण्न ।

'शब्दत' इत्युक्तेरग्रहीदित्यादौ 'इट ईटी'ति सिद्ध्यति । दीर्घविधावत्र च 'इट' इति समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्य-ल्विधित्वं स्यात् । अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि क्त्वः सत्त्वा-द्धलादित्वस्य तद्विशेषधर्मत्वादुपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे विशेषानतिदे-शेन सिद्धौ—विशेषणतयाऽल्आश्रयणे निषेध—इत्येतत्प्रतिपादकस्यानल्वित्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्यात् । हलादिकिङ्निमित्तकेत्त्वप्रतिषेधका'न ल्यपी'ति लिङ्गाच्च

❀ अभिनव-चन्द्रिका ❀

तरान्वृत्तित्वं विवक्षितमिति भावः । इट ईटीति सिध्यतीति । 'ग्रहोऽलिटी'तिसूत्रीयस्थानिताया इट्त्वावच्छिन्नत्वेन स्थानितावच्छेदकेऽल्त्वव्याप्यधर्मत्वस्य, अल्पर्याप्तस्थानितावच्छेदकत्वस्य वा-ऽभावात्, तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतेट्त्वस्य च इट इटीतिशास्त्रीयोद्देश्य-तायाः साक्षादनवच्छेदकत्वाच्चेति भावः ।

**विशेषानतिदेशेनेति** । सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो भवति न तु सादृश्यप्रतियोगितावच्छेदकधर्माव्यापकधर्मस्येत्यर्थः । **न ल्यपीति लिङ्गाच्चेति** । वस्तुतस्तु विशेषा-

❀ चिदस्थिमाला ❀

देवाः सन्तीत्यत्रेव नात्राल्त्वेन स्थानितेति सूचनायाह—**दीर्घेति** । अन्यथा=शब्दत इत्यस्याभावे । विधि-ग्रहणं विनिगमनाविरहाद्विशेषातिदेशमपि बोधयतीत्याह—**अत्र सूत्रे इति** । नान्यत्र, तन्न्यायादिति भावः । अपिना सामान्यातिदेशसमुच्चयः । **अन्यथेति** । तदनङ्गीकारे इत्यर्थः । 'यत' इत्यादिः । अपिना तच्छून्यपरिग्रहः, **मान्याद्यनुरोधेनाह—उपस्थितेति** । उपस्थितसामान्यधर्मैरित्यर्थः । **तद्व्यापकेति** । तदाक्षिप्ततद्व्यापकसामान्यधर्मैश्चेत्यर्थः । निर्देशे=तत्सम्भवे । अन्यथा तु तस्याप्यतिदेश इति बोध्यम् । देशेन= इति न्यायेन । सामान्योपस्थापकसामग्रीकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्य बीजमिति तत्त्वम् । तया=तयापि । प्रधानन्यायबाधेनेति भावः । तस्योक्तरीत्या सिद्धिरित्याह—**स्यानल्वित्येवेति** । नल्यपीति लिङ्गात् न्यायोऽनित्यस्तेनात्र विशेषातिदेशोपीत्याह—**हलादीति** । 'प्रदाये'त्यादावित्यादिः । कित्त्वं-

❀ ज्योत्स्ना ❀

**शब्दत इत्युक्तेरिति** । इदं व्यर्थं, स्थान्यल्साधारणधर्माश्रयणे निषेधप्रवृत्तेरवश्यवक्तव्य-तया, उपस्थापके—इट्शब्दे, तदुपस्थाप्ये—प्रयोगस्थेकारमात्रे वर्त्तमानस्य—टकारोपलक्षितेत्त्वरूप-स्येट्त्वस्याल्साधारणत्वाभावेन निषेधाप्रवृत्तेरिति **परिभाषाप्रदीपार्चिषि** विस्तरः । नन्वेवमपि दीर्घविधावच्परिभाषोपस्थानादच एव स्थानित्वमिट्त्वजन्तराणां व्यावर्त्तक इति विशेषकार्य-त्वादिण्न प्राप्नोति, सामान्यातिदेशे विशेषानतिदेशात् । तथा 'प्रदीव्ये'त्यत्र गुणनिषेधो न प्राप्नोति, 'देवित्वे'त्यादावकितोऽपि क्त्वः सम्भवात्कित्त्वस्यापि न स्यादतिदेशोऽत आह— **अत्रेत्यादि** । **सामान्यातिदेश इति** । लोकेऽपि ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्य'-मित्युक्ते—सामान्यं यद्ब्राह्मणकार्यं तदतिदिश्यते, न यद्विशिष्टं,—माठरे कौण्डिन्ये वा—। **लिङ्गाच्चेति** । 'प्रदाये'त्यादौ क्त्वाविशेषधर्मस्य कित्त्वस्यानतिदेशादेवेत्त्वाऽप्राप्तौ विशेषातिदेशज्ञापकत्वं तस्येति

❀ विषमपदविवृतिः ❀

**लिङ्गाच्चेति** । कित्त्वस्य क्त्वाविशेषधर्मत्वात् । अस्माल्लिङ्गादेवाशास्त्रीयधर्मातिदेशोऽपि । कित्त्वस्याशास्त्रीयत्वात् ।

अनुबन्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामनेकान्तत्वात् । एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात् । "नानुबन्धकृतमनेकान्त्व'मिति ज्ञापयती"ति भाष्ये'ऽल्त्वव्यवहाराभावबोधनद्वारे'ति शेषः ।

❀ अभिनव-चन्द्रिका ❀

नतिदेशेऽपि न क्षतिः । 'स्थानिवदादेशे' इत्यस्य सङ्ग्रहवाक्यतया 'तदादेशस्तत्स्थानिवद्भवती' त्यतिदेशवाक्यकल्पनाया आवश्यकत्वेन 'प्रदाये'त्यादौ 'अयं ल्यवेतन्क्त्वावद्भवती'त्यतिदेशवाक्ये सादृश्यप्रतियोगितावच्छेदकैतत्क्त्वात्वव्यापकत्वस्य कित्त्वे सत्त्वेन न ल्यपीत्यस्य वैयर्थ्याभावात्, फला-भावाच्च । अत एव जजागरतुरित्यादौ गुणः सिध्यति । अन्यथाऽऽहतुरित्यादावतुनः स्थानिनो ङित्तोऽपि सत्त्वेन तन्मतेऽतुम् तत्सद्भवतीत्यतिदेशवाक्यकल्पनया विशेषधर्मातिदेशस्वीकारेण च 'असिन्विणगल्ङिङ्त्वि'त्युक्त्या गुणनिषेधो दुर्वारः स्यात् ।

**अल्त्वव्यवहाराभावज्ञापनद्वारेति ।** अनुबन्धघटितबोधकवृत्तयो येऽनुबन्धत्वघटितातिरिक्ता आनुपूर्व्यातिरिक्ताश्च धर्मास्तन्निमित्तके कार्ये अनुबन्धा अविद्यमानवद्भवन्तीतिज्ञापनद्वारेत्यर्थः । तथा च प्रकृते कित्त्वस्यानुबन्धत्वघटितत्वेन तद्यतिरिक्तोऽल्त्वव्याप्यधर्मघटितो धर्मोऽल्विधि-त्वरूपो धर्मस्तद्धर्मनिमित्तकेऽनल्विधाविति निषेधे कर्तव्येऽनुबन्धककारस्याविद्यमानत्वान्नदोष इत्यर्थः । वस्तुतस्तु—'नल्वर्'ति लिङ्गेनाल्त्वव्याप्यधर्म—इत्यदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकाति-रिक्तत्वेन विशेषणान्न दोष इति दिक् ।

❀ चिद्स्थिमाला ❀

क्त्वाविशेषधर्मैः, सेटः क्त्वस्तदभावात् । नन्वेवमप्येव विधिग्रहणसाफल्ये ऽनुबन्धकार्येष्वनल्विधा'विति निषेधः स्यात्तेषां कित्त्वादिना सर्वत्र विशेषणतयाश्रयणात्तथा च तत्र स्थानिवत्त्वाप्रवृत्त्या कित्त्वाप्राप्त्या 'न ल्यपी'ति व्यर्थमेवात आह—**अनुबन्धेति** । तुरुक्तवैलक्षण्ये । यत्तु तेन तत्र तदप्रवृत्तेरपि ज्ञापनाद्वैलक्षण्यं, किञ्चानुबन्धानामनेकान्तत्वेऽन्तरङ्गत्वादित्यनुक्ताविनापहारात्तत्प्रवृत्तिरनेकान्तत्वे तु दोषसम्भावनैव नेति **कैयटदण्डिकृष्णकौस्तुभरत्नाकरादयस्तत्र,** मानुबन्धकनिर्देशे पक्षद्वये तद्रहितस्य न स्थानिता, किन्तु समुदितस्येत्यर्थस्यान्यत्र प्रतिपादितत्वेन तथोक्तेर्दुर्वचत्वात् । तस्य तज्ज्ञापकत्वेन वक्ष्यमाणरीत्या साफल्यात्त-थोक्तेरनन्यगतित्वाच्च, तस्य तत्त्वस्य तत्र भाष्यानुक्तत्वाच्च, वक्ष्यमाणज्ञापकेनैकार्थज्ञापनेनैवोभयसिद्धिरिति ततो गौरवाच्च । तदेतद्धनयन्नाह—**अनुबन्धानामनेकान्तत्वेपीति** । अपिना—सिद्धान्तभूतैकान्तत्व-परिग्रहः । यथा स्थानिता सूत्रोपात्त तथादेशतापीति शिद्ग्रहणं व्यर्थमनेकान्त्वेनैव सिद्धेरित्यर्थस्य प्रागुक्तत्वेन तदाशयेनाह—**शिदिति** । तेषाम्=अनुबन्धानां । नन्वेवं भाष्यविरोधोऽत आह—**नानुबन्धेति** । शिद्ग्रहणेनेत्यादिः । एतेन प्रागुक्तस्वग्रन्थविरोधोपि परिहृतः । तत्र निषेधाप्रवृत्तौ भाष्याभिमतत्वमाह—

❀ ज्योत्स्ना ❀

भावः । नन्वेवमपि कित्त्वस्य विशेषणत्वेनाल्विधित्वा'दनल्विधा'विति निषेधप्रवृत्तौ तद्वैयर्थ्य-मेवेत्यत आह—**अनुबन्धकार्ये त्विति** । 'अनुबन्धानामनेकान्तत्वात्, एकान्तत्वेऽपी'तिपाठः, अनुबन्धानामनेकान्तत्वे एकान्तत्वेऽपी'त्यपपाठः । तस्य शिद्ग्रहणस्य ज्ञापकत्वाभावात्,

❀ सदाशिवभट्टीयम् ❀

**अल्व्यवहारेति** । नचात्र पक्षेऽशिर्तीत्यत्र कर्मधारये नदादिविधिर्न स्यादिति वाच्यम्, असत्यपि तत्रेति शकारेऽव्यवहिते पर इत्यर्थेन शवादौ तस्य लोप इत्यस्य स्थानिवत्वात्तत्परत्वेन एशादौ त्वेकारादि-नाऽव्यवधानेनेष्टसिद्धौ बाधकाऽभावात् । अत्र पक्षे आदेच इति सूत्रस्थस्यात्रापि शश्शिद्भवतीति भाष्यस्य

❀ विषमपदविवृतिः ❀

**अल्त्वव्यवहाराभावेति** । इदं चिन्त्यं । नदटष्टकारमादाय 'नद' इत्यत्र हल्ङ्यादिलोपप्रसङ्गात् ।

ध्वनितञ्चेदं—'क्ङिति च' 'गाङ् लिटि' 'हलः श्नः' इति सूत्रेषु भाष्ये । तत्राऽऽद्ये—'यासुटो ङिद्वचनान्ङिदादेशा ङितो न इति ज्ञाप्यते'इत्युक्तम् । द्वितीये—गाङो ङित्त्वस्य सानुबन्धकादेशे इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितञ्च ज्ञापकम् । अन्ये—शानचः शित्त्वस्य सार्वधातुकादेशेऽनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तम्, उक्तदूषणैरेव दूषितञ्च । अन्यथाऽनल्विधाविति निषेधेन तत्त्वाप्राप्त्या ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोध्यम् ।

---

**ॐ चिद्स्थिमाला ॐ**

**ध्वनितमिति** । तत्र तदप्रवर्तनमित्यर्थः । **भाष्येति**—जातावेकवचनं, ङिद्वचनादिति हेतौ पञ्चमी, तेनेत्यर्थः । **कादेशेति** । तस्यादेशे इत्यर्थः । एवमग्रेऽपि । **सिद्ध्येति** । प्रयोजनाभावाच्चेत्यपि बोध्यम् । **नुबन्धेति** । स्थानिवत्त्वेनानुबन्धप्रयुक्तकार्याभावज्ञापकत्वमित्यर्थः । **उक्तेति** । उक्तप्रभृतिदूषणैरेवेत्यर्थः । बहुवचनेन प्रयोजनाभावस्य हेरपित्त्ववैयर्थ्यस्य गाङो ङित्त्ववैयर्थ्यस्य'पिच्च ङिन्ने'त्यादेश्च परिग्रहः । एवेन दोषान्तरनिरासः । **दूषितञ्चेति** । उक्तज्ञापकमितिशेषः । ध्वनितत्वमुपपादयति—**अन्यथेति** । तत्र तदप्रवृत्त्यनङ्गीकारे इत्यर्थः । **तत्त्वेति** । ङित्त्वादीत्यर्थः ।

नन्वेतानि ज्ञापकानि वार्तिककृदुक्तानि न सिद्धान्तभाष्याभिमतानि, सूत्रद्वये भगवतैव द्वयोर्दूषितत्वादसाधारणफलाभावाच्च । आद्यं यद्यपि तत्र न दूषितमत एव तावन्मात्रमेव प्रागुक्तं, तथापि तृतीये सिद्धान्तभूतेनावश्यकेन चरमोक्तेन 'पिच्च ङिन्ने'त्यादिना दूषितमेवेति यासुटो ङित्त्वं पिदर्थं सावकाशमिति तस्य न ज्ञापकता, गाङो ङित्त्वं शानचः शित्त्वं च भाष्ये एव तत्र प्रत्याख्यातमिति तयोरपि न ज्ञापकतेत्येकदेश्युक्तित्वेन तदसङ्गतिर्नानिष्टात आह—**तिबाद्येति** । तेषां तदनिष्टत्वे तदसिद्धिदोषेण तत्खण्डनासङ्गतिः स्पष्टैवेति भगवतस्तदभिमतमिति भावः । आदिना उक्तसर्वपरिग्रहः । स्थानिपद-

**ॐ ज्योत्स्ना ॐ**

स्पष्टं चेद'मनेकाल्शि'दिति सूत्रे, 'स्थानिव'त्सूत्रे च **शब्दकौस्तुभे** । **इति बोध्यमिति** । वस्तुतस्तु 'नानुबन्धकृतमनेकाल्त्व'मिति भाष्यस्य शेषपूरणेन व्याख्याने प्रमाणाभावः, अनुबन्धकार्येऽनल्विधाविति निषेधाऽप्रवृत्तौ ज्ञापकन्तु-'न ल्यपी'त्येव, अन्यथा क्त्वादेशे ल्यपि कित्त्वस्याल्विधित्वादेवाऽप्राप्तौ तद्वैयर्थ्यापत्तिरिति स्पष्टं **शब्दकौस्तुभे** । यद्वा-स्थानिवत्सूत्रीयप्रदीपोक्तदिशैकान्तत्वपक्षेऽप्यन्तरङ्गत्वादुपदेश एवानुबन्धलोपादादेशे प्रवृत्तिकाले तदसन्निधानात्तद्वृत्तिधर्मस्य स्थान्यल्वृत्तित्वाभावादुक्तज्ञापने प्रयोजनाभावः, न च शब्दतः स्थान्यवयवाल्वृत्तिधर्मवत आश्रयणेऽनल्विधाविति प्रतिषेधात्, क्त्वः कित्त्वस्य च तथात्वादस्ति प्रयोजनमिति वाच्यं, प्रमाणा-

**ॐ सदाशिवभट्टीयम् ॐ**

शवयव इत्संज्ञकशकार इत्यर्थो बोध्यः । 'आदेच'इति सूत्रस्थशेखरस्तूपाध्यायानुरोधी । नन्वेवं देवश्चोर इत्यादौ टिलोपस्य स्थानिवत्त्वाद्धल्ङ्यादिलोपः स्यात्, तथा 'विमलदिवी'त्यादौ शलोपस्य तत्त्वाद्धलि लोपः स्यात् । प्राचां मते त्वनुबन्धमात्रवृत्तिधर्मवदुद्देश्यकेऽनल्विधाविति निषेधो न प्रवर्त्तते ज्ञापकसाजात्यादिति न दोष इति चेन्न । ममापि हल्ङ्यादिसूत्रादिषु ङ्याबादिग्रहणेनानुबन्धमात्रावृत्तिधर्मप्रयुक्तं कार्यमनुबन्धादेशे नेत्यर्थज्ञापनेनादोष इत्याशयात् । **अन्ये** तूक्तज्ञापकेन क्वचिद्व्यवहारोपीतीत्येव ज्ञाप्यते, लक्ष्यानुसाराच्च व्यवस्था, एवं इयुत्तरग्रन्थविरोधोपि न, अत एवौङ आप इत्यत्र भाष्ये ङितीत्यत्र यस्मिन्विधिरित्यस्य सञ्चार इत्याहुः । नन्वेवं प्राचीनमतात्किं लाघवमितिचेत्—शृणु, 'प्राचा हि' 'नानुबन्धे'ति 'अनुबन्धकार्ये'ति 'लाश्रयमनुन्धकार्ये'ति 'क्वचिन्निषेधप्रवृत्ति'रिति वा वचनत्रयी ज्ञापनीया, मया तद्द्वयीति । ननु भाष्यस्य शेषपूरणेन व्याख्याने किं मानमत आह—**ध्वनितमिति** । अन्यथाऽऽदेशे तत्कार्यमप्राप्य तत्परिहारयत्नविचारोऽसङ्गतः स्यात् । मम त्वनेकाल्सूत्रे कृतत्वान्नासङ्गतिरिति भावः ।

**अचः पर** । आदेशग्रहणमनुवर्तते, तदनुरोधाद्च इति स्थानषष्ठी, परस्मिन्नि-त्यादेशविशेषणन्तदाह—**परनिमित्त इत्यादि** । अच एवादेश इत्यर्थः ।

ॐ अभिनव-चन्द्रिका ॐ

**अच एवादेश इति** । अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिक-स्थानिनाक आदेश इत्यर्थः । अच्त्वप्रतियोगिका या पर्याप्तिस्तदीया याऽनुयोगिता तदवच्छे-दकीभूतो यो धर्मस्स एव—स्थानिताप्रतियोगिका या पर्याप्तिस्तदीयानुयोगितावच्छेदकोऽप्यपेक्षित इति यावत् । यथा 'निगाल्यते' 'कथयती'त्यादौ अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्म इकारवृत्तितद्व्यक्तित्वम्-अकारवृत्तितद्व्यक्तित्वञ्च, तदेव, णिलोपीयस्थानितापर्याप्त्यनुयोगितावच्छेदक-मल्लोपीयस्थानितापर्याप्त्यनुयोगितावच्छेदकमिति लक्षणसमन्वयः । यत्तु-अच्त्वव्याप्यधर्मावच्छि-न्नस्थानितानिरूपितादेशताश्रय इति 'अच एव आदेश' इत्यस्यार्थ इति, तन्न । 'निगाल्यते' इत्यादौ णिलोपस्य स्थानिवत्त्वानापत्तेः । अत एवाच इति चरितार्थम् । अन्यथा 'यायावर'इत्यादौ यलोपस्य स्थानिवत्त्वेनैव 'आतो लोप इटि चे'ति आतो लोपानापत्त्या वरे-ग्रहणवैयर्थ्येन,'धिन्विकृण्व्यो-रिति सूत्रे लोपेनैव सिद्धे अकारविधानेन च हलादेशो न स्थानिवदिति कल्पनेन सर्वसामञ्जस्ये तद्वैयर्थ्यं स्पष्टमेव । यत्तु पिस्धातोरिगुपधलक्षणे के तदन्तादाचारक्विपि तदन्तात्कर्तरि क्विपि तस्मादाचारक्विपि, तस्मात् 'स्येशभाम' इति वरचि गुणार्थमतो लोपस्य स्थानिवत्त्वाभावाय वरे इति चरितार्थमिति, तन्न, हलन्तेभ्य आचारक्विपोऽनभिधानात् । यदपि हन इत्यादौ नलोपस्य स्थानिवत्त्वेनैव अतो लोपाप्राप्त्या तत्रातो लोपवारणाय क्तस्यार्द्धधातुके इत्यस्यावृत्त्याऽऽर्द्ध-धातुकोपदेशे यदकारान्तमित्यर्थस्य वैयर्थ्येन 'हलादेशो न स्थानिव'दित्युक्तयैव सामञ्जस्ये अज्ग्रहण-सामर्थ्यादेव निरुक्तार्थलाभ इति तन्न, राधातोः के तस्माण्णिचि चङि अरीरधदित्यादौ लोपवारणायार्द्धधातुकोदेशकाले यदकारान्तमित्यर्थस्यावश्यकत्वात् । अत एव नाग्लोपीतिसूत्रे प्रत्याहारग्रहणं चरितार्थम्, अन्यथाऽज्झलादेशस्यापि स्थानिवद्भावेनैव ह्रस्ववारणे तद्वैयर्थ्यं

ॐ चिदस्थिमाला ॐ

लभ्यत्वे गौरवादाह—**आदेशेति** । गुणानामिति न्यायेन तदप्राप्तेराह—**तदन्विति** । तद्योगे तस्या एव सम्भवादिति भावः । उक्तहेतोरेव तसिन्निर्दीत्यस्याप्रवृत्त्या सतिसप्तमी, तेन 'सिद्धसाध्ये'ति न्यायेन तस्या ज्ञापकत्वार्थकत्वेन ज्ञापकत्वस्य सम्बन्धं विनाऽनुपपत्त्या विषिशास्त्रकृतनिमित्तत्वमादाय पर्यवसानेन वा निमित्तत्वं फलतीत्याशयेनाह—**परेति** । आदिसङ्ख्याजादेश इत्यस्यार्थः । सर्वं वाक्य-मितिन्यायेनाह—**अच एवेति** । एवेनाज्झलादेशव्यावृत्तिस्तत्फलमाह—**तेनेति** । पूर्वसूत्रतो विशेषमाह—

ॐ ज्योत्स्ना ॐ

भावेन तस्य परिभाषाप्रदीपार्चिषि दूषितत्वादिति दिक् । **अच एवेति** । न त्वज्झलसमुदा-

ॐ सदाशिवभट्टीयम् ॐ

**अचः पर** । **अच एवेति** । इदञ्च प्रकृतसूत्रे भाष्ये स्पष्टम् । 'नाग्लोपी'ति सूत्रभाष्यन्त्वेक-

ॐ विषमपदविवृतिः ॐ

**अचःपरस्मिन्** । **परनिमित्त इति** । 'परस्मि'न्नित्यस्यौपश्लेषिकसप्तम्यन्तस्याज्विशेषणत्वे तु 'न पदान्ते'ति सूत्रे चर्ग्रहणवैयर्थ्यं, 'जक्षतु'रित्यत्र स्थानिवत्त्वाप्राप्तेः । स्थानिवत्त्वं सिद्ध्यतीत्यु-

ॐ वरवर्णिनी ॐ

**अच एवेति** । नन्वत्रा'च एवादेश' इत्यस्य-पर्याप्तिनिवेशपरतया व्याख्याने-एकादेशे स्थानिवद्भावाना-

१. 'सिद्धसाध्यसमभिव्याहारे सिद्धः साध्यायोपयुज्यते' इति हि न्यायः ।

तेन मरुतमाचष्टे मारयतीत्यादौ वृद्धिः । अत्र सूत्रे प्रयोगे योऽच्स्थानिक इत्यर्थः । न तु

ॐ अभिनव-चन्द्रिका ॐ

स्पष्टमेवेति । नच चङ्परनिर्ह्रासे स्थानिवत्त्वस्य प्रतिषिद्धत्वात्प्रत्याहारग्रहणं व्यर्थमितिवाच्यम्, एवं तर्हि—चङ्परनिर्ह्रासे-स्थानिवत्त्वनिषेधस्यैव प्रकृतार्थज्ञापकत्वसम्भवात् । न चापीपटदित्यादौ ह्रस्ववारणाय तन्निषेधसार्थक्यमिति वाच्यं, नाग्लोपीति सूत्रे प्रत्याहारग्रहणकरणेन स्थानिवत्त्वेनैव सर्वत्र दोषवारणात् । 'अवीवद'दित्यादावच्त्वव्याप्यधर्मावच्छिन्नस्थानिताकत्वाभावेन स्थानित्वाप्राप्त्या च 'चङ्परनिर्ह्रास'इत्येतद्द्वयर्थ्यस्य स्पष्टत्वात् । वस्तुतस्तु पर्याप्तेरौत्सर्गिकत्वेन निरुक्तार्थलाभे तत्र तत्र ज्ञापकानुसरणं व्यर्थमेवेति दिक् ।

**प्रयोगे योऽच् तत्स्थानिक इति** । अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताक-

ॐ सदाशिवभट्टीयम् ॐ

देशस्वीकारेति तत्रैवोक्तेति स्पष्टम् । **मारयतीति** । इदुदुपधेभ्यो णिच्चोऽनभिधानन्तु लुङ्येवेति **णौ चङीति** सूत्रस्थेऽवोनरीत्या इत्यन् । सामान्येन निजन्त नेति **प्रदीपरीत्या** तु—भवन्तमाचष्टे भावयतीति बोध्यम् ।

ॐ वरवर्णिनी ॐ

पत्तिः, तत्र पूर्वत्वपरत्वोभयत्वावच्छिन्नस्थानिताया व्यासज्यवृत्तित्वेनाच्पर्याप्तत्वाभावादिति चेन्न । 'अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतधर्मावच्छिन्नस्थानिताकादेशो न स्थानिव'दित्यर्थस्वीकारेण,—एकादेशस्थले अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतपूर्वत्वपरत्वावच्छिन्नैव स्थानितेति-दोषावसरविरहात् ।

एतेन—"श्रायसाविंत्यत्र नुममाशङ्क्य स्थानिवद्भावेन वारणपरप्रकृतसूत्रभाष्यविरोधात्, 'प्लायते' इत्यत्र–'उपसर्गस्यायता'वित्यस्य—'अयतिपरो य उपसर्गस्तदवयवरेफस्य लत्व'मित्यर्थे स्थानिवद्भावेनोपसर्गस्यायतिपरत्वसम्पादनपरतत्सूत्रभाष्येण च विरोधा—'दच एवादेश' इति शेखरोऽसङ्गतः,—" इत्यपास्तम् । **केचित्तु** "–वर्णग्रहणे जातिग्रहणेन—'तद्वर्णत्वव्याप्यधर्मावच्छिन्नमात्रारब्धसमुदायवृत्तिधर्मे तद्वर्णत्वव्याप्यधर्मप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वमारोप्यते, एवञ्च—एकादेशीयस्थानिताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसमुदायत्वेऽच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वारोपेण स्थानिवद्भावो निर्बाधः—"इत्याहुः ।

न च ध्वनेरनुकरणादटिच्छब्दाड्डाचि द्वित्वे–'नित्यमाम्रेडिते डाचो'तिवार्तिकेन–'डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूप'मित्यर्थकेन तकाराकारयोः पररूपे 'अटि-अटाकरोती'ति जाते यणि 'अव्यटाकरोती'ति रूपं भवति, तत्रेदानीं यण्न स्यात्, त्वदुक्तार्थेऽपि पररूपस्य स्थानिवद्भावापत्तेरिति वाच्यं, तत्र 'अटि-अटाकरोती'त्यस्यैवेष्टत्वात् । यद्वा अज्मात्रादेश इत्यर्थः, अज्वृत्तिस्थानितानिरूपिता, अजितरवृत्तिस्थानित्वानिरूपिता च याऽऽदेशता तदाश्रयः स्थानिवदिति यावत् । एवञ्च न तत्र तत्र स्थानिद्भाव इति 'अव्यटाकरोती'त्यत्र न दोषः ।

'अच एवादेश' इत्येवमर्थस्वीकारे प्रमाणन्तु—प्रकृतसूत्रेऽज्ग्रहणमेव, तथाहि—'वेक्रियः' 'लोलुव' इत्यादौ यङ्लुकः स्थानिवत्त्वेनैव गुणनिरासे पुनर्न धातुलोप इति गुणनिषेधविधानमेव ज्ञापयति–'परनिमित्तो हलादेशो न स्थानिव'दिति । एवञ्चा'चः परस्मि'न्नित्यत्राऽज्ग्रहणं व्यर्थं सदेव पर्याप्तिघटितेदृशार्थे मानम् । ईदृशार्थे स्वीकृते तु यङ्लुकोऽज्झलादेशतया स्थानिवद्भावाप्राप्त्या गुणनिषेधाय 'न धातुलोप'इति सफलम् ।

यत्तु'—लोलुव इत्यादौ स्थानिवद्भावादेव गुणाप्राप्तौ 'न धात्वि'ति सूत्रं व्यर्थं सद'च एवादेश' इत्यर्थे ज्ञापकमिति, तन्न । जीवेरदानुप्रत्यये 'जीरदानु'रित्यत्र वलोपे प्राप्तस्य गुणस्य निषेधाय 'न धातुलोप' इत्यस्य चारितार्थ्यात्, वलोपस्य स्थानिवद्भावेन तत्र गुणनिषेधसम्भावना तु न, तस्याच्स्थानिकाऽऽदेशाभावादिति **परे** ।

॥ वरवर्णिनी ॥

**केचित्तु**-क्नादेर्वनिपि यलोपे-क्नावेत्यत्र, क्नूयेर्विचि यलोपे क्नूरित्यत्र वा गुणनिषेधाय 'न धातुलोप' इति चरितार्थमतो नेदृशार्थे तज्ज्ञापकत्वं सम्भवति, अतो 'न धात्वि'ति सूत्रं-'हलादेशो न स्थानिव'दित्यत्रैव ज्ञापकम्, तथा ज्ञापिते तु प्रकृतसूत्रेऽज्ग्रहणं व्यर्थमिति तदेव पर्यालोचितार्थं ज्ञापकमिति प्राहुः।

**केचित्तु**—काननमाख्यत्—अचकानत्, भानुमाख्यत्—अबभानत्, वारि आख्यत्—अववारत्, रामामाख्यत्—अररामदित्यादौ—णौ लुप्तस्याऽकारादेः स्थानिवद्भावादेव 'णौ चङी'ति ह्रस्वाप्राप्तौ 'नाग्लोपी'ति सूत्रेऽग्लोपिग्रहणं व्यर्थं सत् 'च एवादेश' इत्यर्थं ज्ञापकं, ज्ञापिते तु-राजानमाख्यत्—अरराजदित्यत्राज्झलादेशस्य स्थानिवत्त्वाप्राप्तौ तत्र ह्रस्वनिषेधार्थमग्ग्रहणं चरितार्थमित्याहुः,—तत्र; निनउशब्दादाचक्षाणण्यन्ताल्लुङि टिलोपे, वृद्धौ, पुके, चङि णिलोपादिषु च—अनुनावदित्यत्र ह्रस्वाभावायाग्ग्रहणस्य चारितार्थ्येन तस्य ज्ञापकत्वासम्भवात्। अत्र हि—स्थानिभूतादुकारात्पूर्वत्वेन दीर्घाकारस्याऽदृष्टत्वात्स्थानिवद्भावप्राप्तिरेव नेति। एवं 'देव ऋ'शब्दाण्णिचि 'अत उपधाया' इति वृद्धौ टिलोपेन ऋकारलोपे लुङि अदिदेवदित्यत्रापि 'नाग्लोपी'त्यस्य सार्थक्यं द्रष्टव्यम्। किञ्च राश्च मश्चेति द्वन्द्वनिष्पन्नरामशब्दाण्णिचि लुङि—अरराममदित्यत्र ह्रस्वनिषेधार्थमग्ग्रहणं चरितार्थं, स्थानिवद्भावेन तु न निर्वाहः, पदान्तविधित्वेन ह्रस्वे कर्त्तव्ये 'न पदान्ते'ति निषेधादिति **जटाजूटे—श्रीबालशास्त्रिचरणाः। अन्ये तु**—'धिन्विकृण्व्यो'रिति सूत्रेण लोपे विधातव्ये अकारविधानमेव हलादेशो न स्थानिवदित्यत्र ज्ञापकम्, अकारविधानं हि तत्र गुणाभावाय, हलादेशस्यापि स्थानिवद्भावे तु लोपविधानेऽपि तस्य स्थानिवत्त्वाद्गुणाभावे सिद्धेऽकारविधानं व्यर्थं स्यादिति। 'हलादेशो न स्थानिव'दिति ज्ञापिते च प्रकृतसूत्रेऽज्ग्रहणं व्यर्थमिति तत्सामर्थ्यादच एवादेश' इत्यर्थो लभ्यते'—इत्याहुः।

**वाचालास्तु** ''—'ठस्येकादृकौ'इत्यत्राज्ग्रहणमच एवादेशो न स्थानिव'दित्यत्र ज्ञापकं, नहि 'पडिक'इत्यादौ पडङ्गुलिदत्तशब्दाट्ठकि डुलिदत्त'मात्रलोपेऽकारस्य 'यस्येति चे'ति लोपे तस्य स्थानिवत्त्वाऽकारान्ते सत्त्वेपि पकारान्ते पदत्वेन जश्त्वसम्पत्तये। अज्झलादेशस्य स्थानिवत्त्वे तु—अङ्गुलिदत्तलोपेऽपि स्थानिवत्त्वाज्जश्त्वसिद्धौ तदर्थमेव-'' इत्याहुः। अत्रत्यं तत्त्वमस्मत्पितामहचरणविरचितायां **लघुशब्देन्दुशेखरत्रिपुरसुन्दर्यां, श्रीबालशास्त्रिकृते बृहज्जटाजूटे,** मत्कृतशब्देन्दुशेखराभिनवराज**लक्ष्म्याञ्च** निरूपितन्तत एवावधारणीयमिति **सङ्क्षेपः।**

नन्व'च एवादेशो न स्थानिव'दित्यर्थस्य 'मरुतमाचष्टे मारयती'ति फलं न सम्भवति, इदुदुपधेभ्यो णिचोऽनभिधानेनेदृशरूपस्यैवासम्भवात्। तत्र णिजनभिधाने मानन्तु''—'नाग्लोपी'तिसूत्रेऽगिति प्रत्याहारग्रहणा'दृद्धेर्लोपो बलीया'निति ज्ञाप्यते'' इति भाष्यमेव। [ इकारोकारान्तवारिभान्वादिशब्दाण्णिचि हि—परत्वादचो ञ्णितीति वृद्धावैकारौकारयोरेव लोपेनाऽग्लोपाभाव एव, अकारान्तादृकारान्ताल्लृकारान्ताच्च णिचि परत्वाद्वृद्धौ टिलोपेऽकारलोप एव, एवञ्चाकारमात्रलोपे एव निषेधप्रवृत्त्याऽगिति प्रत्याहारग्रहणं व्यर्थमेवेति 'वृद्धेर्लोपो बलीया'नित्यत्रार्थे ज्ञापकं भवति। ज्ञापिते तु भान्वादिशब्देभ्य आचक्षाणणिचि उकारादिलोपेनागिति प्रत्याहाराश्रयणं सफलमेवेति भाष्याशयः ]। यदि मरुदादिशब्देभ्य इदुदुपधेभ्योऽपि णिच्स्यात्तदा तत्र गुणवृद्ध्यादेरभावेनागिति प्रत्याहाराश्रयणे निषेधः, अकारमात्रोक्तौ तु न निषेध इति फलभेदाद्भाष्योक्ता 'वृद्धेर्लोप'इत्येतज्ज्ञापकता भज्येतेति [ तदेवं—मरुतमाचष्टे—मारयतीत्यादि लक्ष्याभाव इति ]।

'उक्तभाष्यप्रामाण्यात्तादृशणिजन्ताल्लुङ एवाभावः कल्प्यते न णिजभाव, इति तु न युक्तं, लुङ्विधायकनानाशास्त्रेषु तादृशसङ्कोचापेक्षया 'प्रतिपादकाद्धात्वर्थे' इति णिज्विधायके एव सङ्कोचकल्पने लाघवात्। न च सामान्यत इदुदुपधेभ्यो णिचोऽनभिधाने—'स्रग्विणमाचष्टे-स्रजयती'ति भाष्योक्तिविरोधस्तस्येदुपधतया णिचोऽसम्भवादिति वाच्यं, विनो लुकि 'अङ्गवृत्ते पुनर्वृत्तावविधि'रिति परिभाषया वृद्धेरप्राप्त्या लुङि—ह्रस्वे तदभावे वा विशेषाभावेन तत्र णिजनभिधानकल्पनस्य निष्फलतया दोषाभावादिति

सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थस्तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति। अत एव चङ्परनिर्ह्रासे ण्यन्ताण्णिचि—'अवीवद'दित्यादिसिद्ध्यर्थो निषेधः सार्थकः।

अच इति किम्? आगत्य। मलोपस्य स्थानिवत्त्वात् 'ह्रस्वस्ये'ति तुग्न स्यात्।

ॐ अभिनव-चन्द्रिका ॐ

पर्याप्तिकस्थानिताक इत्यर्थः। न तु सूत्रे स्थानित्वेनोपात्तजिति। अच्त्वव्याप्यधर्मावच्छिन्नस्था-निताक इत्यर्थो नेत्यर्थः। आगत्येति। नच सूत्रे आदेशपदश्रवणात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्याऽऽदेशविधौ स्थानिवदित्यर्थ इति वाच्यं, 'वेमिदि ब्राह्मणकुलानी'त्यादौ नुमापत्तेः।

ॐ चिदस्थिमाला ॐ

अत्रेति। ननु तथार्थस्योक्तफलसत्त्वेऽपि तत्रैव किं मानमत आह—अत एवेति। उक्तार्थाङ्गीकारादेवे-त्यर्थः। निर्ह्रासे कर्तव्ये एकस्य णिचो निमित्तत्वादाह—ण्यन्तादिति। निषेध इति। मलोपस्येति।

ॐ ज्योत्स्ना ॐ

यस्येत्यर्थः। णिलोपादेरिति। 'णेरनिटी'ति सूत्रे। णेरच्त्वेपणानुपादानादिति भावः। 'अनेन

ॐ वरवर्णिनी ॐ

चेदत्र के चित्—'मरच्छब्दादाचक्षाणणिजन्ताल्लुटि मारयतीत्यादौ फलं बोध्यं, मूले 'मरतमाचष्टे'इत्येव पाठ'मित्याहुः। अन्ये तु—'यश आचष्टे याशयति, भवन्तमाचष्टे भावयतीत्यादौ वृद्धिरिति फलं, मूलन्तु तदुपलक्षण'मित्याहुः। अथ 'वृत्रहणमाचष्टे वृत्रहयती'ति भाष्योदाहरणे वृद्धेरकरणेन, 'दूरमाचष्टे दवयती'त्यादौ भाष्यकृता वृद्ध्यकरणाच्च—'प्रातिपदिकप्रकृतिकणिज्निमित्तककार्यप्रयोज्योपधात्ववतोऽत उपधाया इति वृद्धिर्न'ति कल्पनान्मारयतीत्यादौ वृद्धिरसाधुरेव, उरुं—वरयति, स्रग्विणं—स्रजयति 'अल्पं—कनयती-त्यादौ सञ्ज्ञापूर्वकविधित्वादनित्यतया न वृद्धिरिति दीक्षितोक्तम्, 'अङ्गवृत्तपरिभाषया न वृद्धि'रिति कैयटो-क्तमपि उपायस्योपायान्तरादूषकत्वान्नास्माकं मते विरुणद्धीति चेत्—'मृ'शब्दस्योच्छब्देन समासे यणि 'म्रुच्छब्दाण्णिचि—म्रुतमाचष्टे मारयतीत्यादावचोञ्णिती'ति वृद्धेः फलत्वेनादोषात्। मूलेऽपि 'म्रुतमाचष्टे'इत्येव पाठः, 'मरुतमाचष्टे'इति तु—लेखकप्रमादादिति—जटाजूटे स्पष्टम्।

मैथिलास्तु—ऋच्छतीति ऋट्, ततः पूर्वं बहुचि—बहु-ऋडित्यत्र 'ऋत्यक' इति प्रकृतिभावे आच-क्षाणणिचि टिलोपे वृद्धौ 'बाहयती'त्यत्रा'चोञ्णिती'ति वृद्धिः फल'मच एवादेश'इत्यर्थस्येति प्राहुरिति सङ्क्षेपः। विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेयः।

पर्वतीयास्तु—'णिज्निमित्तककार्यप्रयोज्ये'त्यादिनैव वृद्धिनिषेधे सिद्धेऽल्लोपस्य स्थानिवत्त्वेन वृद्धि-वारणपरभाष्यासङ्गत्या 'णिज्निमित्ते'तिवचने कार्यपदेन लोपेतरकार्यग्रहणमिति—मरुतमाचष्टे मारयति, मरमेतीति मरेत्, तमाचष्टे वा मारयतीत्यत्र न दोष इत्याहुः। तन्न रोचयामहे, कथयतीत्यत्राल्लो-पस्य स्थानिवत्त्वेन वृद्धिवारणपरभाष्यस्योपायान्तरमात्रपरत्वेन तद्बलेन तथाकल्पने मानाभावात्। विपरीतं 'स्रजयति''वृक्षवयति''वृत्रहयती'त्यादौ तथाकल्पने वृद्ध्यापत्तेः। तद्वारणाय नानाक्लेशकल्पनायान्तु—'तदिदं महतो वंशस्तम्बाट्टङ्कानुकर्षण'मित्याभाणकविषयापत्तिर्दुरुद्धरा। तस्मान्म्रुतमाचष्टे मारयतीत्यत्राचो ञ्णितीति वृद्धिरेव 'अच एवादेश' इत्यर्थाश्रयणस्य—फलं श्रीबालशास्त्रिचरणोक्तं निर्दुष्टमाश्रयणीयमिति गौडाः।

मैथिलास्तु—'वृद्धेर्लोपो बलीया'निति भाष्योक्तं('नाग्लोपी'त्यत्र प्रत्याहारग्रहणज्ञापितं)नापूर्व-वचनं, किन्तु लोपस्य नित्यत्वमूलकमेव बलवत्त्वमनेन बोध्यते,(न तु लोपस्य परिभाषिकं बलवत्त्वं भाष्याभिप्रेतं,) तदेवं 'वृत्रहयती'त्यादौ कृताकृतप्रसङ्गित्वमात्रेण वृद्धिलोपयोरुभयोरपि नित्यतया समबलतया परत्वा-द्वृद्धौ टिलोपे लक्ष्ये लक्षणन्यायेन पुनर्वृद्ध्यप्राप्त्या न दोष इति। मरुतं मरातं वाचष्टे इत्यादौ तु पूर्वं वृद्धेरप्राप्त्या नित्यत्वाल्लोपे कृते पश्चाद्वृद्धौ रूपसिद्धिरप्रत्यूहैव, अत एव श्रीशब्दादणि श्रायमित्यत्र यस्येति-लोपात्परत्वादादिवृद्धिरेव। 'वृद्धे'रिति वचनस्य नित्यत्वमूलकत्वेपि तत्र ज्ञापकोपन्यासस्तु भाष्ये—क्वचित्कृ-ताकृतप्रसङ्गित्वेऽप्यनित्यतेति स्वीकारमात्रेणेति प्राहुः।

परस्मिन्निति किम् ? युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति ।

पूर्वविधाविति किम् ? नैचयः। निपूर्वाच्चिञः क्विप्रत्यये आतो लोपे तस्य स्थानिवद्भा-वाभ्यच्त्वव्यपदेशविरोधात्स्वाश्रयह्रस्वनिवृत्तौ इगनापत्तेरिति दिक् । अत्र स्थानिनि

---

### ॐ अभिनव-चन्द्रिका ॐ

अत एवादेश इत्यर्थं प्रमाणमाह—अत एवेति । युवजानिरिति । नच निङादेशे स्थानिवद्भा-वेनाऽऽकारबुद्धावपि नकारे वल्त्वाभावाद्यलोपो निर्बाधः । किञ्च 'जायाया यो नि'रितिन्यासेनादोषः, जायाशब्दघटकयाशब्दस्य निरित्यादेशः स्यादित्यर्थेन न्यादेशस्याच्पर्यासस्थानिताकत्वाभावादिति वाच्यम्, वैयाघ्रपद्य इत्यादौ पदादेशप्रतिबन्धार्थं लोपस्य स्थानिवत्त्वापत्तेरिति दिक् ।

ह्रस्वत्वव्यपदेशविरोधादिति । सङ्ख्यान्वय्याप्यकिञ्चिद्धर्मप्रकारकनिश्चयस्य सङ्ख्यान्वय्यान्यधर्मा-न्तरप्रकारकसंशयसामान्यप्रतिबन्धकत्वादित्यर्थः । यत्र भवतीति । स्यादेतत् । देवयतेः क्विपि दयूरित्यादौ स्थानिनि वकारे सति अभवतोऽप्यादेशस्य लोपादेशेऽप्यभावापत्तिः । नचादेशे

### ॐ चिदस्थिमाला ॐ

'वा ल्यपीति' स्यादिः स्वाश्रयनिवृत्तेरप्यनिष्टत्वादिति भावः । ननु 'युवजानि'रित्यत्र न फलं, यलोपे निषेधात्, प्रकारान्तरेण भाष्ये दूषितत्वाच्च, अत आह—वैयाघ्रेति । व्याघ्रस्येव पादावस्येति बहुव्रीहौ 'पादस्य लोप' इति लोपे तस्यादिस्व इति 'पादः पदि'ति पद्भावं न स्यादित्याशयः । अत्र तस्य स्थानिवत्त्वात्पद्भावो न स्यात् । इदमेवाह प्रतिनिदृष्ट्या द्व्यच्त्वेति । तेन 'सुत्वा' वेत्यादावुक्तेन हि त्रिपुत्रे द्विपुत्रं व्यपदेशं लभते इति भावः । इगिति । 'इगन्तस्येति दर्शनस्यादेः' । 'अनापत्ति'रिति पाठः । 'अनापत्ते'रिति पाठे—प्राग्वदेव्यम् । नन्वेवमपि विधिग्रहणं व्यर्थं, पूर्वस्येत्युक्तत्वेन कार्यं इत्यस्याक्षेपेण निर्वाहादिति चेन्न, पञ्चमी-समासार्थं, वक्ष्यमाणफलद्वयार्थं च तदावश्यकत्वात्, तदाह—द्विगिति । अत्र=प्रकृतसूत्रे । अतिदेशेऽन्वयः ।

ननु यलोपादिग्रहणाज्ज्ञापकार्थेष्टं वाक्यशेषाध्याहारेण स्थानिसम्बन्धिभावाभावोभयातिदेशाङ्गीकारेऽपि कथमादेशप्रयुक्तवाक्यगमन आह—स्थानीति । अजादेशोऽज्वत्कार्यं लभते न, लभते चेति वाच्यार्थः ।

### ॐ सदाशिवभट्टीयम् ॐ

**यलोपो न स्यादिति** । यलोपे निषेधस्तु लोपाजादेश एवेति बोध्यम् ।

### ॐ विषमपदविवृतिः ॐ

त्तरम् । अत एव 'चङ्परनिर्ह्रासे' इति पाठः । अग्रिमदेशेऽस्य पाठस्तत्सङ्गतः । **यलोपो न स्या-दिति** । 'यलोपे न स्थानिव'दिति निषेधस्तु न, 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिव'-

---

### ॐ वरवर्णिनी ॐ

**केचित्तु** "—'जायाया जानि'रिति न्यस्यन्ति, तन्न । जायाशब्दादाचक्षाणण्यन्तात्क्विपि टिलोप-णिलोप-यलोपेषु निष्पन्नस्य 'जा' शब्दस्य सुन्दरीशब्देन बहुव्रीहिसमासे 'एकदेशविकृत'न्यायेन तस्य जायाशब्दतया निङादेशे 'सुन्दरीजि'रिति, जान्यादेशे 'सुन्दरीजानि'रिति फलभेदेन तथा न्यासस्य कर्तुमशक्यत्वात् । यद्यपि णिलोपस्य स्थानिवद्भावेन जायान्तोत्तरपदकबहुव्रीह्यभावेन तत्र निङादेशः सिद्धान्तेऽपि नेष्यत इति न फलभेदस्तथापि तथा निष्पन्न'जा'शब्दस्य ईशब्देन समासे गुणे एकादेशस्य पूर्वान्तवद्भावेन 'जे' शब्देऽपि जायाशब्दत्वेन ततो बहुव्रीहौ स्थानिभूतणिजिकारात्पूर्वत्वेन दृष्टस्य विधेरभावेन स्थानिवद्भावविरहेण फलभेदस्य तादृशन्यासे दुरुद्धरत्वा"-दिति वदन्ति । **परे**'त्वर्थविकारेऽक्तपरिमाणे च 'एकदेशविकृत'न्यायप्रवृत्तेर्दुर्वचनया तादृशस्थले जायाशब्दत्वस्यैवाभावात्फलभेदविरहेण तथान्यासे न दोष इति वैयाघ्रपद्योऽस्य प्रत्युदाहरण'मित्याहुः। **केचित्तु**—'हरिणे'त्यत्र नादेशस्य 'स्थानिवद्भावेन यणापत्ति-रिति परस्मिन्निती'त्याहुः, 'सन्धिकार्ये सन्निपातपरिभाषाऽनित्या, 'तेने'त्यादिनिर्देशा'दिति तेषामाशयो बोध्यः । तेन तया परिभाषया 'हरिणे'त्यादौ न यणादिरिति वदन्तः समाहिताः—इति **गौडाः** ।

सति यद्भवति तदादेशेऽपि भवति, स्थानिनि यन्न भवति तदादेशेऽपि नेति भावाभावयोरुभयोरप्यतिदेशः । तत्र भावोदाहरणं—निगाल्यते इति । अन्त्योदाहरणं पटयतीत्यादि । स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेति च तदर्थः । लघूपधत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहुः ।

**स्थानिभूतादच इति** । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः । 'पूर्वविधा'वित्यस्य—पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थः, तेन पूर्वपरयो-

❀ अभिनव-चन्द्रिका ❀

स्थानिवृत्तिधर्मसम्भावनायां यद्भवति तद्भवति यन्न भवती तन्न भवतीत्यर्थेन न दोषः, अत एव प्रकृतसूत्रस्थं 'परस्मिन्निति किं ? युवजानिः, नैतदस्ति प्रयोजनं, न्यादेशघटकं नकारमादाय लोपो भविष्यति' इति भाष्यं सङ्गच्छते इति वाच्यम्, 'एषो गमयती'त्यादावेतत्तदोरिति सुलोपापत्तेरिति चेन्मैवम् । 'स्थानी न निवृत्त आदेशो न जात इति सम्भावनायां यद्भवति, तद्भवति, यन्न भवति तन्न भवती'त्यर्थेनादोषात् ।

परेतु—आदेशे स्थानिवृत्तिधर्मसम्भावनायां यद्भवति, तद्भवति, यन्न भवति तन्न भवति इत्येवार्थः । अत एव परस्मिन्निति किं युवजानिरित्येतत्फलखण्डनपरभाष्यं सङ्गच्छते । नच 'एषो गमयती'त्यादौ सुलोपापत्तिरिति वाच्यम्, इष्टत्वात् । अत एव 'एष यूनः पश्ये'त्यादौ 'न सम्प्रसारणे' इति सूत्रसत्त्वे 'सम्प्रसारणादसम्प्रसारणे' इति कल्पे च न फलभेदः । नचेयायेत्यादौ स्थानिवद्भावेनेयङ् स्यादिति शङ्काया असङ्गतिरिति वाच्यम्, युक्तिबलाद्वस्तुसिद्धौ कस्य चिद्ग्रन्थकृतो विपरीतलेखनस्याबाधकत्वेनेष्टापत्तेरित्याहुः ।

❀ चिदस्थिमाला ❀

चस्त्वर्थे । नन्वेवं कथमन्त्ये निर्वाहः, वृद्धेर्लोपानिमित्तकत्वादत आह—**लघूपधत्वेति** । ह्रस्वाकारोपधत्वेत्यर्थः । ननु परस्मिन्नित्यस्यापि सूत्रे श्रवणमत आह—**व्याख्येति** । 'किरतौ लवने' इत्यादिनिर्देशमूलकादित्यर्थः । अन्यथा गुणनिमित्तकल्युडपेक्षया पूर्वस्य गुणस्य स्थानिवत्त्वादवादेशो न स्यादिति भावः । पूर्वत्वमुपलक्षणं, न तु विशेषणमिति तात्पर्यम् । विधिग्रहणफलमाह—**पूर्वेति** । सम्बन्धसामान्ये षष्ठी, 'गुणाना'मिति न्यायेन तदप्रवृत्तेः, अत एव 'श्रायसा'वित्यत्र नुम्न, 'एकदेशे'ति न्यायेन

❀ ज्योत्स्ना ❀

स्थानिवत्त्वं सिध्यती'त्येतदनन्तरम्—'अत एव चङ्परनिर्ह्रासे ण्यन्ताण्णिचि अवीवददित्यादि सिद्ध्यर्थो निषेधः सार्थक' इति,—ततो'ऽच इति किम् ? आगत्य मलोपस्य स्थानिवत्त्वाध्द्रस्वस्येति तुङ् न स्या'दिति पाठः । 'तुङ्न स्या'दित्यस्यानन्तरम्—'अत एवे'त्यादिपाठस्तु अशुद्धः, सङ्गत्यभावादिति शेषश्रीशिवरामपण्डिताः । वयन्तु कल्पयामः—'अन्त्योदाहरणं पटयतीत्यादी'त्युत्तरग्रन्थानन्तरम'त एवे'त्यादिः 'सार्थका'न्तः पाठो, बृहच्छेखरे तथा दर्शना'दिति । **लघूपधत्वसम्पादनद्वारेति** । अत्र लघूपधशब्दोऽदुपधपरः, वृद्धेर्लघूपधनिमित्तकत्वाभावादित्याहुः । **तस्यैवेति** । अच इत्यर्थः ।

❀ विषमपदविवृतिः ❀

दित्युक्तेः । **निगाल्यत इति** । इदं 'वव्रश्चे'त्यादेरुपलक्षणम् । 'पूर्वविधा'वित्यत्र 'षष्ठी स्थानेयोगे'ति न प्रवर्तते, षष्ठ्या अश्रवणात् । अत एव 'अचः किमागत्ये'ति भाष्यं सङ्गच्छते । सवर्ण-

विधौ न । तेनाऽऽरतुरित्यादौ 'ऋच्छत्यॄता'मिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम् । एकस्योक्तोर्थः । द्वितीये भावे किः । सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भावः, पूर्वसम्बन्धिभावे—तत्स्थितौ स्थानिवदित्यर्थः । अत एवैनेय इत्यादौ 'यस्येति चे' ति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः । अत एव नपदान्तसूत्रे पञ्चेन्द्राण्यो देवता

ॐ अभिनव-चन्द्रिका ॐ

आरतुरित्यादाविति । ननु पूर्वस्यैव विधाविन्यर्थेऽपि प्रकृते न दोषः । तथाहि—ऋ अतुम् इत्यस्यां दशायां द्वित्वं बाधित्वा पूर्वं गुणे पश्चाद्द्वित्वे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवत्त्वाप्राप्तेः । नच 'द्विर्वचनेऽची'ति निषेधात्कथं द्वित्वात्पूर्वं गुणप्रवृत्तिरिति वाच्यम्, द्वित्वनिमित्ततापर्याप्त्यधिकरणीभूतसमुदायघटकाच्पर्याप्तनिमित्तताकत्वस्य गुणेऽभावेन 'द्विर्वचनेऽची'ति निषेधस्याप्राप्तेः । नच चिकीर्षामीत्यादौ चिकीर्ष—अ—मि इति स्थिते वार्णपरिभाषया दीर्घे पूर्वस्यैव विधावित्यर्थाभावे 'अतो गुणे' इतिपररूपापत्तिरिति वाच्यम्, 'नहि रजतत्वभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयती'ति न्यायेन पररूपेऽपि आकारस्यैव जायमानत्वादिति चेन्मैवम्, अन्धातोर्विचि पटुशब्देन समासे तस्माच्छसि पट्वन इत्यादौ 'अचः परस्मिन्नि'ति स्थानिवद्भावेन संयोगसञ्ज्ञाया अभावेन 'न संयोगाद्वमन्तादि'ति निषेधानापत्तेः । 'पूर्वस्यैव विधा'वित्युक्तौ तु न दोषः । 'पूर्वस्यैव विधा'वित्यस्य हि—पूर्वत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकोद्देश्यताके विधावित्यर्थेन संयोगसञ्ज्ञायाः पूर्वपरोभयोद्देश्यकत्वादिति दिक् ।

ॐ चिदस्थिमाला ॐ

सान्तस्य सुविरूपिताङ्गत्वात् । कर्मणि किप्रत्यय इति भावः । तस्यैव फलान्तरमाह—वस्तुत इति । तन्त्रमिति । बोद्धुः श्रोतुश्च शब्दतन्त्रमित्यर्थः । विधाननिरासायाह—भाव इति । भाव इत्यन्तार्थमाह—तदिति । अस्य फलमाह—तदिति । द्वितीयार्थाङ्गीकारादेवेत्यर्थः । एवमग्रेऽपि । पञ्चम्यन्तार्थः प्रतिबन्धेऽन्वेति । उक्तार्थे सफले मानमाह—अत एवेति । पञ्चेन्द्र इतीति । अन्यथा 'सास्य देवते'त्यणो 'द्विगोर्लुगनपत्ये' इति लुकि'लुक्तद्धिते'ति ङीषो लुकि तस्य स्थानिवत्त्वेन तथाप्राप्तनिवृत्तिप्रति-

ॐ सदाशिवभट्टीयम् ॐ

दीर्घे न स्थानिवत्त्वमिति । दीर्घविधौ निषेधस्तु लोपाजादेश एवेति भावः । पूर्वविधिशब्द इति । सूत्रघटकविधिशब्द इत्यर्थः । सम्बन्धसामान्येति । कर्मप्रत्ययान्तस्य तेनैव तत्सम्भवात् । कर्तृषष्ठ्यन्तेन तदभ्युपगमे तु पूर्वस्य व्यावृत्तिप्रसङ्गः। कर्मषष्ठ्या तु न तत्सम्भवः। भावप्रनीति तद्विवरणेनाकर्मकत्वात् । षष्ठीस्थाने इत्यस्य तु न प्रवृत्तिः, एकार्थीभावापन्नत्वात्, 'षष्ठ्यन्तस्य गुणान्ना'मिति न्यायाच्चेति भावः ।

ॐ विषमपदविवृतिः ॐ

दीर्घ इति । इदं प्रयोजनमन्यथासिद्धम्, 'अभ्यासकार्यप्रतिबन्धकस्तदुत्तरखण्डस्थाजादेशः स्थानिवद्भावो ने'त्यनेन सिद्धेः । उक्तार्थफलं तु'श्लेष्म३घ्ने'त्यत्र संयोगसञ्ज्ञायां स्थानिवत्त्वाभावः । नकारस्थितिरिति । वस्तुतस्तु धर्मिग्राहकमानात्सन्नियोगशिष्टन्यायो लुग्विषय इति नात्र दोष

१. 'वस्तुतस्तु'इत्यस्य 'किश्चे'त्यर्थः, नतु पूर्वोक्तेऽरुचिरिति परे ।

अन्य पञ्चेन्द्र इति लुकि न स्थानिवदित्यस्योदाहरणं दत्तं भाष्ये। अन्यथा तत्र पूर्वत्वेन दृष्टस्य सम्बन्धिनः कस्य चिद्विधेयस्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गतिःस्पष्टैव।

प्रकृतसूत्रेऽपि भाष्ये 'कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं सङ्गृहीतमिति भावसाधनो विज्ञास्यते, पूर्वस्य—विधानं प्रति=पूर्वस्य भावं प्रति—स्थानिव'दित्युक्तम्।

तत्र 'भावसाधन' इत्यस्य—सोऽपीत्यर्थः। पूर्वत्वञ्च—व्यवहिताऽव्यवहितसाधारणम्,

ॐ अभिनव-चन्द्रिका ॐ

सोऽपीत्यर्थ इति। वस्तुतस्तु स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ=स्थितौ कर्तव्यायामित्यर्थास्वीकारेऽपि न क्षतिः, नच 'लुकि न स्थानिवत्' पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः' इति भाष्यासङ्गतिः, स्थानिभूतादचः पूर्वत्वेन दृष्टस्याऽऽनुकः कस्यापि विधेरभावात्, किञ्च ऐनेयः, श्यैनेय इत्यादौ स्थानिभूतादचः पूर्वत्वेन दृष्टस्य नकारस्य कस्यापि विधेरभावेन स्थानिवत्त्वाप्रवृत्त्या तन्निवृत्त्यापत्तिरिति वाच्यं, स्थानिभूतादचः पूर्वत्वेन दृष्टयोरानुग्नकारयोः 'सन्नियोगशिष्टानामन्यतरापाये' इति न्यायेन लोपे कर्तव्ये तत्प्रतिषेधार्थं स्थानिवद्भावप्रवृत्तेः सूपपादत्वात्। अत एव 'कर्मसाधनस्य विधिशब्दस्योपादानेन सर्वमिष्टं सङ्गृहीतमिति भावसाधनो विज्ञास्यते' इति भाष्ये—अपिशब्दो न श्रूयत इति बोध्यम्।

ॐ चिदस्थिमाला ॐ

बन्धेन नत्सन्नियुक्त आनुक् श्रूयतेति भावः। लुकि नेति। 'किलु'गिति वार्तिकव्याख्यावसरे इति भावः। अन्यथा=उक्तार्थानङ्गीकारे। तत्र='पञ्चेन्द्र'इत्यत्र। स्पष्टञ्चमकान्तरमाह—प्रकृतेति। 'उक्त'मित्यत्रान्वयः। आदेशस्यावधित्वेन सम्बन्धपक्षे स्वविधौ स्थानिवद्भावप्रयोजनानामायनादीनां साधनार्थमिदमुक्तं, तत्र न निषेधे एवं सति एवकारघटितयथाश्रुतकैयटासाङ्गत्यं ध्वनयन्प्रागुक्ते न्यूनतया प्राप्तभाष्यविरोधं परिहरति—तत्रेति। भाष्ये इत्यर्थः। एतेन प्रथमार्थमात्रप्रतिपादकरत्नाकरादिग्रन्थाः परास्ताः।

ॐ ज्योत्स्ना ॐ

सोऽपीत्यर्थ इति। 'अपरविधाविति वक्तव्य'मिति वार्तिकस्य—स्वविधावपि स्थानिवद्भावफलकस्य—प्रत्याख्यानाय भावसाधनविधिशब्देन कर्मषष्ठ्या समासं व्याख्याय आयन्नासान्नित्यादाविणस्योर्यण्लोपयोः कृतयोर्धिन्वन्तीत्यादौ विकरणोकारस्य यणि च कृते क्रमादाऽभविष्यति, इण्न भविष्यतीति भाष्यकृतोपसंहृतं, न तु सम्बन्धसामान्यषष्ठ्यन्तेनापि, तादृशानामनुपक्रमात्, सम्बन्धसामान्यषष्ठ्या स्थानेयोगत्वस्य स्वमतेऽनुवादेऽपि प्रवृत्त्यङ्गीकारेण तस्य दुर्वारत्वाच्चेति चिन्त्यमेतत्। ऐनेयः, पञ्चेन्द्र इत्यादौ तु न दोषः, अकृतव्यूहपरिभाषया नकाराऽऽनुकोर्निवृत्त्या तयोः कर्त्तव्ययोः स्थानिवद्भावप्रवृत्तेः सुसङ्गतत्वादित्याहुः।

ॐ सदाशिवभट्टीयम् ॐ

कस्य चिद्विधेयस्याभावादिति। न च यस्येति लोपस्तथा, स्पष्टञ्चेदं तत्रैव प्रदीपोद्योतयोरिति वाच्यं, वार्तिकमते कतीत्यादौ स्थानिवत्त्वेन प्राप्तगुणादिवारणाय नलुमतेति सूत्रे बाध्यसामान्यचिन्तावश्यम्भावेनाचः परस्मिन्नित्यस्यापि निषेधात्। आनुकि तु न सः, प्रत्यये परतः पूर्वकार्याभावात्। वार्तिकोदाहरणस्य नद्रीत्यैव दातव्यत्वात्। नियमत्वमिति भाष्यमतेपि निषेधमुखेन प्रवृत्तिरिति पक्षे तस्या आवश्यकत्वाच्च, विधिमुखेन प्रवृत्तिरिति पक्षेपि श्रविष्ठादिपरित्यागेनानुक्पर्यन्तं धावतो भगवत आनुक एवाभिप्रायविषयत्वात्। एवं स्थिते चिन्त्यमिति ब्रुवन्तोऽमान्याः। इत एवारुचेराह—प्रकृतसूत्रेपीति। सोपीति। ननु कर्तृषष्ठ्यन्तपूर्वशब्देन भावार्थकविधिशब्देन समासे

ॐ विषमपदविवृतिः ॐ

इति तत्रैवैयर्थ्यम्। विधेयस्याभावादिति। इदं चिन्त्यं-'यस्ये'ति लोपस्य विधेयस्य सत्त्वात्। भावसाधन इति। इदं भाष्यमेकदेश्युक्तिः, फलाभावात्।

अव्यवहितग्रहणे मानाभावात्, स्वरे निषेधाच्च । तेन 'पटयती'ति सिद्धम् । प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वप्राप्तिः ।

**न पदान्त** । अत्र द्विर्वचनसवर्णादिग्रहणं–'वतिघटितान्यातिदेशानां त्रिपाद्यामपि

❀ अभिनव-चन्द्रिका ❀

**अन्यातिदेशानामिति** । इदं फलितार्थकथनं, शाप्यांशस्तु–'वतिघटितातिदेशास्त्रिपाद्यां प्रवर्तन्ते' इत्येव । अन्यथाऽन्यातिदेशानां वतिघटितानां त्रिपाद्यां प्रवृत्तावपि स्वांशे चारितार्थ्यं दुर्निरूपं

❀ चिदस्थिमाला ❀

**मानाभावादिति** । अनुवादत्वान्नियोगशिष्टत्वाच्च 'नत्वा'दित्यव्यवधानांशाप्रवृत्तेरिति भावः । ननु अनुवादेऽपि परिभाषाप्रवृत्तिस्वीकारादुत्तरांशविकलाऽव्यवधानांशस्याप्यन्यत्र प्रवृत्तिस्वीकाराच्चिदमयुक्तमत आह—**स्वरे इति** । 'नोनी'त्यादावित्यर्थः । द्वित्वाऽप्रमाणाह—**प्रकृते चेति** । 'सुद्ध्युपास्य' इत्यादाविन्यर्थः । स प्रसज्यप्रतिषेध इति प्रागुक्तमेव । **चस्त्वर्थे** ।

**न पदान्त** । नन्वत्र द्विर्वचनसवर्णादिग्रहणं व्यर्थमेषां त्रिपादीस्थत्वेन तत्र कार्ये स्थानिवत्त्वस्यैवाऽनन्तेनसिद्धत्वादत: सूत्रमन्थाऽ—**अत्रेति** । पदान्त वरे-यलोप-स्वरग्रहणस्यापि योगादिकत्वेनावश्यकत्वाद्—**द्विर्वचनेति** । 'गाङ्कुटे'त्यादिनिरासायाह—**वर्तीति** । अङ्के चारितार्थ्याय नियमतेन तेन निषेधस्यास्तत्फलितमाह—**न्यातीति** । 'अचः परे'त्यर्थः । त्रयाणां कर्मधारयः, । **अपिना-**

❀ ज्योत्स्ना ❀

**वतिघटितान्यातिदेशानामिति** । वतिघटितानां 'अचःपरस्मि'न्नित्येतस्मादन्येषां-स्थानिवदादेशोऽनादिवच्चेत्यादीनामित्यर्थः । अन्यग्रहणा'दचः परस्मि'न्नित्यस्य त्रिपाद्यां प्रवृत्त्यभाव इति

❀ सदाशिवभट्टीयम् ❀

पूर्वत्वस्य विधानोत्तरकालिकस्य चाश्रयणे सञ्ज्ञायां भाविपूर्वत्वस्याप्यभावात्तत्र कर्त्तव्येऽयं न स्यादिति सम्बन्धसामान्यषष्ठ्या समासो विज्ञायेत इति पडिकादेरपि सिद्धिरितिप्रदीपोक्तरीत्या सर्वेष्टसिद्धौ मास्तु नन्त्रादिः, भाष्यञ्च यथाश्रुतमेवास्त्विति चेन्न, अनाश्रीयमाणायामपि प्रकृतावतिदेशज्ञापनाय द्वितीयस्यावश्यकत्वात् । स्पष्टञ्चेमत्रैव भाष्यप्रदीपोद्योतेषु । ध्वनितञ्चेदं विधिग्रहणं स्वाश्रयनिरासार्थमिति प्रतीके–'एवोऽप्यर्थ'इति वदता उद्योते । ज्ञापकान्तरेण तत्साधने तु नास्तु नन्त्रादिर्ध्वनितञ्चेदं केचिदिति वदता तत्रैवोद्योते । इदन्तु चिन्त्यम्,–अस्तु कर्मसाधन एव, ऐनेयेऽपि सन्नियोगेति परिभाषया पूर्वसम्बन्धिनो निवृत्तिर्विधेयेति न दोषः । परिभाषायामतिदेशप्रवृत्तिस्तु–वेतस्यानित्यत्वैकदेशविकृतन्यायेन रुत्वाभावायावश्यिका । अपरविधावित्यादिभाष्यन्त्वेकदेश्युक्तिरित्युक्तमेव, वैयाकरणे आयादेशापत्तेश्च तस्य तत्त्वमिति । यत्त्वत्र पञ्चमीसमासेनातिदेशप्रसक्तिमाशङ्क्य समाहितमुद्योते–'ऐज्विधानसामर्थ्यान्न भवति स्थानिवत्त्वमिति परे'इति । तस्यायं भावः—सति स्थानिवत्त्वे पदान्तयकारवकारासम्भवेन विधिवैयर्थ्यात्—ऐज्विषये तदप्रवृत्तिरिति । एतेनादेशे पठनीय इत्यर्थं बुध्वा गौरवादुत्तरत्र चारितार्थ्यादिदमसङ्गतमिति यद्दूषयां-चक्रुस्तदपास्तम् ।

**न पदान्त । घटितान्येति** । इदञ्च फलकथनम्, न तु ज्ञाप्यशरीरम्,'अन्यत्र धातुग्रहणे' इत्यादि-

❀ विषमपदविवृतिः ❀

**न पदान्त । वतिघटितान्येति** । 'असिद्धं बहिरङ्ग'मित्यस्य व्यावृत्तये–'वतिघटितेति । 'अचः परे'त्यस्य व्यावृत्तये–'ऽन्ये'ति । वतिघटिता ये'ऽचः परे'त्यतोऽन्येऽतिदेशास्तेषामित्यर्थः । इदं

प्रवृत्तिबोधनार्थम् । तेन 'राम' इत्यादौ विसर्गादिसिद्धिः। अत्र—विधिशब्दो भावसाधनः ।

※ अभिनव-चन्द्रिका ※

स्यात्। **भावसाधन इति**। वस्तुतस्तु कर्मसाधनत्वेऽपि कर्मधारयसमासस्वीकारेण पदचरमावयवादि-रूपविधेये कर्तव्ये इत्यर्थे न कोऽपि दोष इति बोध्यम् । **परपदस्थाजादेशस्यैवेति**। अत एव प्रत्यैपिषन्देवदत्ता इत्यादौ जुस्प्रतिबन्धार्थं पररूपस्य न स्थानिवत्त्वनिषेध इति बोध्यम् ।

**वेतस्वानित्यादाविति** । नच 'तसौ मत्वर्थे' इति भसञ्ज्ञाया बाधात्पुनरपि रुत्वशङ्का भाष्योक्ताऽसङ्गतेति वाच्यम्, अस्मादेव भाष्यप्रामाण्यात्परम्परया पदचरमावयवसाधकस्य स्थानिवत्त्वस्यानेन न निषेध इति कल्पनेनादोषात्। तथाहि—'तसा'विति भसञ्ज्ञायां कर्त्तव्यायां टिलोपस्थानिवद्भावस्य भसञ्ज्ञाप्रतिबन्धद्वारा पदसञ्ज्ञासम्पादनद्वारा रुत्वसम्पादकत्वेन परम्परया पदचरमावयवसाधकत्वेन निषेधाऽप्रवृत्त्या स्थानिवत्त्वेन भसञ्ज्ञाया अप्रवृत्तिः । पदसञ्ज्ञा-प्रतिबन्धार्थं स्थानिवत्त्वन्तु न भवति । अस्मादेव भाष्यप्रामाण्यात्परम्परया पदचरमावयव-प्रतिबन्धकस्याप्यनेन निषेध इति कल्पनेन पदसञ्ज्ञाप्रतिबन्धद्वारा रुत्वप्रतिबन्धकत्वेनानेन निषेधात्। अत एव षडिक इत्यादौ जश्त्वसिद्धिः । तथाहि—षडङ्गुलिदत्तशब्दाट्ठचि 'ठाजादा-वूर्ध्वं द्वितीयादच' इति 'ङ्गुलिदत्त'स्य लोपे 'यस्येति च'ेति अल्लोपे भसञ्ज्ञाप्रतिबन्धार्थमल्लोपस्था-निवद्भावस्य पदसञ्ज्ञासम्पादनद्वारा जश्त्वसाधकत्वेनानेन निषेधाभावे स्थानिवत्त्वेन भसञ्ज्ञाया

※ चिदस्थिमाला ※

तदन्यसमुच्चयः । अन्यत्वेन 'अन्तादि'दित्यादिवत्प्रथमसूत्रस्यापि सङ्ग्रह इति ध्वनयन्नाह—**तेनेति**। यथा चैतत्तथा मनोरमादौ स्पष्टम्। **आदिभ्यां** 'राम'मित्यादावनुस्वारादे'रमी क्षीरपेणे'त्यादावीत्वणत्वादेश्च परिग्रहः। ननु 'विधिशब्दः कर्मसाधनः, शेषषष्ठ्या समास'इत्येवास्त्विति चेन्न, द्विर्वचनादिभिरनन्व-यापत्तेः, तदनुरोधात्कर्मधारये 'विधि'शब्दस्य पूर्वनिपातापत्तेः, 'पदान्ते'त्यत्र दोषापत्तेश्च, एकेन विधिशब्देन समासद्वयासम्भवाच्च, वैरूप्यापत्तेश्च, लक्ष्यासिद्धेश्च, तदेतद्ध्वनयन्नाह—**अत्रेति**। चरन्तानां

※ ज्योत्स्ना ※

'पूर्वत्रासिद्धे न स्थानिव'दित्यस्यार्थतः सिद्धिरुक्ता। यद्यप्येवं सति ज्ञापके चारितार्थ्यं दुर्निरूपं, तथापि द्विर्वचनादिग्रहणं 'पूर्वत्रासिद्धे न स्थानिव'दित्येतस्यैकदेशानुवाद इतीह तात्पर्यार्थः। यद्वा—अन्यातिदेशानां त्रिपाद्यां सर्वथा प्रवृत्तिः 'अचः परस्मि' न्नित्येतस्य तु क्वचिदप्रवृत्तिः क्वचित्प्रवृत्ति-

※ सदाशिवभट्टीयम् ※

वदिति बोध्यम्। **विसर्गादिसिद्धिरिति** । अन्यथा रुत्वे कृत एकदेशविकृतन्यायाऽप्रवृत्त्याऽपदत्वा-द्विसर्गो न स्यात्, कार्यकालमाश्रित्येदम्, अन्यत्र तु रान्ते एव रुत्वासिद्ध्योपदेशप्रवृत्त्या सिद्धमिष्टम्।

※ विषमपदविवृतिः ※

फलितार्थकथनं, न ज्ञाप्यांशकथनं; स्वस्मिंश्चारितार्थ्याभावप्रसङ्गात् । ज्ञाप्यांशस्तु—'वतिघटितातिदेशानां त्रिपाद्यां प्रवृत्ति'रिति; तेन'स्थानिवदादेशः', 'अन्तादिवच्चे'त्यनयोस्त्रिपाद्यां प्रवृत्तिः। 'अचः परे'त्यस्य तु न प्रवृत्तिः, द्विर्वचनादिग्रहणस्य त्रैपादिकोपलक्षणत्वात्। **भावसाधन इति**। 'विधि-

※ वरवर्णिनी ※

**भावसाधन इति**। विपूर्वकधाधातोर्विधेत्वमर्थः, प्रयोजकत्वं सप्तम्यर्थः, तस्य स्थानिवद्भावेऽन्वयः। पदान्तस्य विधिरिति समासात्कर्मषष्ठ्याऽत्र वृत्तित्वमर्थः, तदेवं पदचरमावयववृत्तिविधेयताप्रयोजकः स्थानिवद्भावो न भवतीति भावसाधनेत्यर्थः। कर्मसाधने तु विधेयत्वं धात्वर्थः, आश्रयत्वं प्रत्ययार्थः, पदान्तपदोत्तरशेषषष्ठ्या निरूपकांशे साकाङ्क्षविधेयतानिरूपितोद्देश्यत्वमर्थः, एवञ्च—'पदान्तनिष्ठोद्देश्यता-निरूपितविधेयताश्रय[वृत्तिविधेयता]प्रयोजकः स्थानिवद्भावो न' इत्यर्थो लभ्यते ।

पदान्तेत्यत्रान्तशब्दश्चरमावयववाची । कर्मषष्ठ्या समासः । तेन 'एषो यन्हसती'त्यादा- 'वेतत्तदो'रिति सुलोपो न । इणः शतरि यन्निति रूपम् । तत्र यणः स्थानिवत्वात् । उत्वे च न स्थानिवत्, अनेन निषेधात् । स्पष्टञ्चेदं भाष्ये इति—भाष्यप्रदीपोद्द्योते निरूपितम् ।

❀ चिदस्थिमाला ❀

द्वन्द्वे 'द्वन्द्वान्ते' इति न्यायेन विधिशब्दस्य प्रत्येकं सम्बन्धादाह—**कर्मेति** । मतान्तरमाद्यसाङ्गत्यं ध्वनयन्लक्ष्यसिद्धिमाह—**नैष इति** । स्पष्टार्थमाह—**इण इति** । यन्तीति भावः । तत्र=लोपे कार्ये । यणः='इणो य'णिति विहितस्य । तथा चाहल्परत्वान्न लोप इति भावः । **आदिना** 'एषां वश्वः' राजानो यन्ती'त्यादि परिग्रहः । नन्वत्र पदसंस्कारपक्षेऽनादिष्टादचः पूर्वत्वेनाऽदृष्टत्वात्स्थानिवत्त्वस्यैवाप्राप्तिरिति कथमिदं व्याख्यानफलमिति चेन्न, 'वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते' इति पक्षे तत्त्वस्य सत्त्वात् । न हि पदान्तरनिरपेक्षमेव पदमिह शास्त्रे संस्क्रियते इति नियमः, 'युष्मद्युपपदे' इत्याद्यसङ्गत्यापत्तेः तेन एवोत्वघटितप्रयोगोऽन्यथा विसर्गघटितप्रयोगापत्तिः, 'अक्रुते'ति तु नास्त्येव, तदेतद्ध्वनयन्नाह—**उत्वे चेति** । इदञ्च पदचरमावयवप्रतिबन्धकस्थानिवद्भावनिषेधोदाहरणम् । अन्यथा तु यथात्र

❀ सदाशिवभट्टीयम् ❀

**स्पष्टञ्चेदमिति** । प्रकृतसूत्रे तु भावसाधनत्वमात्रं, न तु प्रकृते फलं । ननु वेतस्वानित्यत्र रुः प्राप्नोति, यथेहेशेऽन्तर्वर्तिविभक्त्या स्वादिष्विति वाऽकारान्ते प्रवृत्तस्य पदत्वस्यैकदेशविकृतन्यायेन सान्ते सत्त्वात् । कार्यकालपक्षेऽप्युक्तन्यायेन तदादित्वनिर्दिश्यमानोपदेशद्वयेन सान्ते तत्त्वमिति—तत्र कर्त्तव्ये स्थानिवत्त्वं तु नाऽनेन निषेधात्, अनेन च साक्षात्परम्परया वा सूत्रोपात्तप्रतिबन्धकं तत्प्रापकञ्च प्रतिषिध्यते स्थानिवत्त्वम् । तत्र च साक्षात्प्रतिबन्धकम्—एषो यन्तीति । साक्षात्प्रापकं—कानि सन्तीति । परम्परया प्रतिबन्धकं द्वेधा, साधकप्रतिबन्धात् प्रतिबन्धकप्रवर्तनाद्वा, आद्ये वेतस्वानित्यत्र पदसञ्ज्ञाप्रतिबन्धकः । सिद्धान्ते तु एतदुदाहरणं मृग्यम् । द्वितीये रलावित्यत्र प्रकृतिभावप्रवर्तनात्परम्परया प्रापकं प्रतिबन्धकत्वात् । यथा सिद्धान्ते वेतस्वानित्यत्र भत्वरूपप्रतिबन्धप्रतिबन्धकस्य सान्ते प्रतिबन्धाद्रुत्वप्रापकत्वमतिदेशस्य । नचैवं पडिकासिद्धिः, लोपविधानादिति पञ्चमेऽत्र चोद्योते स्पष्टम् । अत्र मानन्तु रुत्वापादकं 'भसञ्ज्ञात्र

❀ विषमपदविवृतिः ❀

ष्वि'ति बहुवचनन्तु विधेयभेदेन विधिभेदात् । वस्तुतः कर्मणि क्तिः, कर्मधारयः समासः । तत्र= सुलोपे । 'स्थानिवत्त्वा'दित्यस्य 'सुलोपो ने'त्यनेनान्वयः । उत्वे चेति । इदं चिन्त्यं-रोः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्तस्योत्वे स्थानिवत्त्वाप्रसक्तेः । परे तु—पदान्तस्य स्थाने इत्यर्थः शङ्कितुमशक्यः, पदान्तस्य स्थाने विधौ द्विर्वचनादेश्च विधौ इत्यर्थाश्रयणे वैरूप्यापत्तेः,'एषो य'न्नित्यसाधुः, परत्वा-

---

❀ वरवर्णिनी ❀

**एषो यन्निति** । इदं वाक्यसंस्कारपक्षे एव भावसाधनफलं, पदसंस्कारपक्षाङ्गीकारे तु—'षडिक' इत्यादौ जश्त्वसिद्धिः फलम् । किञ्च—मानोरः—मान्वः, तत आचारक्विबन्तात्कर्त्तरि क्विपि अल्लोपे 'मान्व' इत्यादौ 'लोपो व्यो'रिति वलोपे कर्त्तव्ये स्थानिवद्भावनिषेधो नेत्यपि फलं बोध्यम् । एवं-नाव उः—नावुः, ग्लाव उः—ग्लावुः, तयोरोसि 'ग्लाव्वोः' 'नाव्वो'रित्यादौ वलि लोपो न, यणः स्थानिवत्त्वात् । कर्म-साधने तु तन्निषेधाल्लोपापत्तिः, अन्तरङ्गपरिभाषा तु वलि लोपे नैव प्रवर्त्तते । किञ्च—सुपथिञ्छन्दा-णिणिचि टिलोपे 'सुपथ्'इत्यस्य अशब्देन समासे पुनर्णिचि टिलोपेनाकारलोपे तस्य स्थानिवत्त्वात्पुनष्टिलोपो न भवति, कर्मसाधने तु —स्थानिवत्त्वनिषेधे पुनष्टिलोपो दुर्वार इत्यवधेयमिति **श्रीबालशास्त्रिचरणाना-माशयमस्मत्पितामहचरणाः श्रीस्नेहिरामशास्त्रिण** आहुः ।

अत्र पदेऽन्त इति सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति 'वेतस्वा'नित्यादौ न दोषः। न चैवमपि 'पूर्वत्रासिद्धीये न स्थानिव'दिति निषेधोऽत्र दुर्वारः। 'पदेऽन्त' इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र

❀ अभिनव-चन्द्रिका ❀

अप्रवृत्तेर्जश्त्वम्। पदसञ्ज्ञाप्रतिबन्धकस्थानिवत्त्वन्तु न, तस्य पदसञ्ज्ञाप्रतिबन्धद्वारा जश्त्वप्रतिबन्धकत्वेनानेन निषेधादिति दिक्।

❀ चिदस्थिमाला ❀

न निर्वाहस्तथा स्पष्टम् **भावप्रकाशे। भाष्ये इति**। प्रकृतसूत्रस्थ एवेति भावः। सिद्धान्तमाह—**अत्रेति**। तथा च पदे परतश्चरमावयवस्य पदसम्बन्धिन एव प्रत्यासत्त्या ग्रहणेन पदचरमावयवकर्मकविधौ कर्तव्येऽर्थात्परपदस्थाऽजादेशो न स्थानिवदित्यर्थस्यैव तत्र पक्षे लाभेन तदेकवाक्यतया षष्ठीतत्पुरुषपक्षेऽपि तथैव बोध्यं, तदाह—**तेनेति**। अन्यथान्तर्वर्तिविभक्तिमाश्रित्य पदत्वाद्रुत्वं स्यात्, स्थानिवत्त्वं तु न, तत्पक्षे निषेधात्, तथा च 'कानि सन्ती'त्याद्येव 'पदान्तविधा'वित्यस्योदाहरणं, नेदृशानीति गूढाकूतम्। **चैवमपि**=उक्तार्थेनोक्तनिषेधाप्रवृत्तावपि। यद्यपि 'पूर्वत्रासिद्धे ने'त्येव वार्तिकं तथापि तत्तधिकारभवशास्त्रपरमित्याशयेनाह—**पूर्वत्रासिद्धीये नेति**। तथा च भगवत उक्तप्रयासनैष्फल्यमेवेति भावः। अत एव अन्यथा समाधत्ते—**पदेन्तमिति**। तत्र='वेतस्वा'नित्यादौ। उक्ताशयेनैवाह—

❀ ज्योत्स्ना ❀

रपि, तेन 'तस्य दोष' इतिवचनस्यापि सङ्ग्रहः। क्वचित्प्रवृत्तिसम्भावनानिराकरणार्थश्च द्विर्वचनादिग्रहणस्य चारितार्थ्यमित्याहुः।

❀ सदाशिवभट्टीयम् ❀

बाधिका भविष्यती'ति 'अथवे'त्यादि च भाष्यमिति यथायथमूहनीयम्। स्पष्टश्चेदमत्रैवोद्योते इति चेत्तत्र सिद्धान्तरीत्या समाधत्ते—**अत्र पदे इति। प्रत्यासत्त्येति**। पद इत्यत्र परपदस्योपस्थितत्वात्तत्स्थ एवादेशो गृह्यते इति भावः। अत्र चाभ्यस्तसञ्ज्ञासूत्रस्थं भाष्यं लिङ्गमपि, तत्र हि यत्र खण्डद्वयश्रुतिस्तत्रैव सञ्ज्ञार्थमुभे ग्रहणं कुतो न, अत एव ऐर्त्सन्नित्यादौ जुस्त्वेत्याशङ्क्य—स्थानिवत्वाज्जुस्त्व भविष्यतीति न तदर्थन्तदित्युक्तम्। अन्यथा ऐर्त्सन्नित्यत्र स्थानिवत्त्वनिषेधाज्जुस्स्यादिति तद्वारणाय तत्स्यादिति तद्वारणाय तस्यावश्यकत्वेन तदसङ्गतिः स्पष्टैव। एतेनात्र पदान्तसाधकस्यापि पदान्तग्रहणेन ग्रहणमित्यत्र किं फलमिति प्रश्ने दिवितिप्रातिपदिकादाचक्षाणण्यन्ताद्विचि अश्वशब्देन समासे पदत्वेपि प्राप्तस्थानिवत्त्वनिषेधे उत्वेद्यश्वसिद्धिरिति फलं पर प्रदर्शयन्तः स्वयं परमपदयन्तः परास्ताः। **वेतस्वानिति**। इदञ्च प्रत्यासत्तिमन्तरापि

❀ विषमपदविवृतिः ❀

नित्यत्वाच्च सुलोपस्य न्याय्यत्वात्। **न च तत्र** स्थानिवद्भावः—'पादस्य लोप' इति लोपस्येव सुलोपस्यापि पदचरमावयवत्वात्, लक्ष्यानुरोधेन पदसंस्कारपक्षस्यैवात्राश्रयणाच्च। अत एव 'य एवास्मि स सन्यजे'ति श्रौतप्रयोगः 'एष य'शिति छान्दोग्यप्रयोगश्च सङ्गच्छते। लोकेपि 'स स'-त्रित्येव प्रयुज्यते नतु सः सन्नितीत्याहुः। **न दोष इति**। ननु पदेऽन्त इति सप्तमीसमासे ड्मतुपः पदत्वाभावेनैव'वेतस्वा'नित्यत्र दोषवारणे परपदस्थाजादेश इत्यस्य नोपयोग इति चेन्न, 'वेतस्वा' नित्यादावित्यादिपदेनाऽपीपचन् देवदत्तयज्ञदत्तविष्णुमित्रा' इत्यस्य ग्रहणेन तत्रोक्तार्थस्योपयोग-

पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात्। अत एव 'महिष्मा'नित्यत्र जश्त्वं न। सूत्रे जश्पदेन 'झलां जश् झशी'त्यस्यैव ग्रहणं, चर्सन्निहितस्यैव ग्रहणौचित्यात्।

ॐ अभिनव-चन्द्रिका ॐ

**पदचरमावयवविधायकातिरिक्तस्यैवेति।** ननु 'पिपठीर्भ्या'मित्यादौ रुत्वप्रतिबन्धकस्थानिवत्त्वस्य निषेधो न स्यात्, 'ससजुषो रु'रित्यस्य पदचरमावयवविधायकत्वेन 'पूर्वत्रासिद्धीये ने'त्यस्याप्रवृत्तेः। न च 'वेतस्वा'निति भाष्यप्रामाण्येन तद्धितनिमित्तकपदसञ्ज्ञावच्चरमावयवविधायकातिरिक्तत्वेन 'पूर्वत्रासिद्धीये न स्थानिव'दित्यत्र सङ्कोचाश्रयणे दोष इति वाच्यं, पिपठीष्ट्वमित्यादौ तद्धितनिमित्तकपदसञ्ज्ञाया एव सत्त्वेन रुत्वप्रतिबन्धार्थं स्थानिवत्त्वप्रवृत्तौ 'र्वो'रिति दीर्घापत्तेरितिचेन्न। प्रत्ययविशिष्टपदसञ्ज्ञावच्चरमावयवविधायकातिरिक्तत्वेन सङ्कोचस्य विवक्षणीयतया दोषाभावात्। वै०—'स्वप्रयोज्यत्व'—'स्वप्रयोज्यकार्यप्रयोज्यत्वो'भयसम्बन्धेन। अस्ति च 'वेतस्वा'नित्यादौ पदसञ्ज्ञायां ड्मतुप्प्रयोज्यत्व—ड्मतुप्प्रयोज्यटिलोपप्रयोज्यत्वोभयसम्बन्धेन वैशिष्ट्यमिति न दोषः। पिपठीर्भ्यां पिपठीष्ट्वमित्यादौ तु पदसञ्ज्ञायां भ्याम्प्रयोज्यत्वस्य सत्त्वेऽपि तत्प्रयोज्यकार्याप्रयोज्यत्वास्याभावात्, क्विप्प्रयोज्यातोलोपरूपकार्यप्रयोज्यत्वस्य सत्त्वेऽपि क्विनिमित्तकत्वस्याभावान्न दोषः। मूलन्तु लोपनिमित्तप्रकत्ययनिमित्तकपदसञ्ज्ञावत्परं—'पदचरमावयवे'ति 'पद'पदमिति रीत्या योज्यमिति दिक्।

लोपनिमित्तप्रत्ययनिमित्तकपदसञ्ज्ञावच्चरमावयवविधायकातिरिक्तत्वेन 'पूर्वत्रासिद्धीये' इत्यत्र सङ्कोचे फलमाह—महिष्मानिति। ननु महिष्मानित्यादौ 'न पदान्त'सूत्रेण जश्विधौ स्थानिवत्त्वनिषेध-इत्याशङ्क्याह-'झलां जश् झशी'त्यस्यैवेति। ननु अतद्धित इति वार्तिकारम्भतत्प्रत्याख्यानयोःफलैक्याय

ॐ चिदस्थिमाला ॐ

**पूर्वत्रासिद्धे इति।** अस्यावश्यकतामाह—**अत एवेति।** तदन्यस्यैव तस्य ग्रहणादेवेत्यर्थः। उक्तरीत्या हि 'झलां जशोऽन्त'इत्यस्यात्र प्राप्तिरिदानीं तस्याऽप्राप्तिः, 'पदान्तविधा'वित्यस्य तु प्राग्वद्विषय एवायं नेति, स्थानिवत्वाज्जश्त्वं नेति भावः। नन्वेवमपि जश्त्वं जश्विधाविति निषेधो दुर्वार एवेति स्यादेवात आह—**सूत्रे इति।** 'प्रकृते'त्यादिः। **चर्सन्नीति।** अत्र सूत्रे सान्निध्यपाठेन यस्य चर्विधिसान्निध्यं तस्यैव ग्रहणमिति 'झलां

ॐ ज्योत्स्ना ॐ

**जश्त्वं नेति।** वस्तुतो 'झलां जशोऽन्त' इत्यत्र झला पदस्य विशेषणाज्झलन्तपदस्यालोन्त्यस्य जश्वि-

ॐ सदाशिवभट्टीयम् ॐ

सिद्धम्, तथापि 'पिपठीरत्रे'ति 'प्रत्यैषिषन्निवे'त्यादौ तु तत्फलं बोध्यम्। **अतिरिक्तस्यैवेति।** धात्वनवयवो यः पदचरमावयवस्तद्विधायकातिरिक्तेत्यर्थः। तेन 'पिपठी'रिति सिद्धः, यद्वा पदशब्देनात्र यस्य स्थानिवद्भावः प्रतिषिध्यते तादृशादेशहेतुभूतप्रत्ययनिमित्तकपदसञ्ज्ञावत् गृह्यते, तेन 'तिरश्चा' 'पिपठीःकल्प'मित्यत्रापि न दोषः, अन्यथोत्तरग्रन्थविरोधश्च नेत्याहुः। **शीत्यस्यैवेति।** अत एव पदान्तविधिं प्रति न स्थानिवद्-

ॐ विषमपदविवृतिः ॐ

सत्त्वात्। तत्र हि पदे परतोऽन्ते जुस्, अजादेशस्तु न परपदस्थः। **पदचरमावयवविधायकातिरिक्तस्येति।** नचैवं 'पिपठी'रित्यत्र रुत्वं न स्यादिति वाच्यं, 'पूर्वत्रासिद्ध' इत्यस्याप्रवृत्तावपि 'कौ लुप्त'मित्यस्य प्रवृत्त्या दोषाभावात्। एतेन 'पिपठीर्भ्या'मित्यादिप्रयोगा उपपादिता विज्ञेयाः।

नचैवमपि 'गर्दभमाचष्टे गर्दभयति, ततः क्विपि गर्ध'बित्यत्र जश्त्वायनापत्तिः, न हि तत्र 'कौ लुप्त'मित्यनेन निर्वाहः, अल्लोपस्य क्विनिमित्तत्वाभावादिति वाच्यं, 'न पदान्त'सूत्रस्थभाष्यप्रामाण्येन ड्मतुपि त्रैपादिके कर्त्तव्ये 'पूर्वत्रासिद्धे ने'त्यस्याऽप्रवृत्तिरित्यर्थाश्रयणेन सर्वसामञ्जस्यात्।

'वेतस्वान्' 'महिष्मा'नित्यनयोः पूर्वत्रासिद्धेत्यस्याप्रवृत्तावपि 'जश्विन स्थानिव'दित्यस्य प्रवृत्त्या जश्त्वं दुर्वारमित्याशङ्क्याह—**सूत्रे जश्पदेनेति।** इदं चिन्त्यं, 'गर्धब्वा'नित्यत्र जश्त्वानापत्तेः।

'कार्यकालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्त्तत'इति वक्ष्यते इति—न तयाऽस्य सिद्धिः। 'गोचे'त्यादौ 'गतिकारकोपपदाना'मित्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः। 'उत्तरपदत्वे चे' ति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न दोषः। 'पदे' इति पदत्वयोग्योपलक्षणं वा। अत्रेदं भाष्यमपि मानम्।

अत्र पदचरमावयवादिसाधकः प्रतिबन्धकश्च स्थानिवद्भावो निषिद्ध्यते,

## ❀ अभिनव-चन्द्रिका ❀

'पदव्यवायेऽपी'त्यत्र पदपदं पदत्वयोग्यप्रातिपदिकपरमित्यवश्यं वक्तव्यत्वेन 'माषकुम्भवापेने'त्यादौ दोषाभावेन 'उत्तरपदत्वे चे'त्यत्र कार्यित्वनिवेशो विफलः। तथाच 'गोचे'त्यादौ सुबुत्पत्त्यनन्तरं समासेऽपि 'उत्तरपदत्वे चे'ति निषेधात्कथं 'न पदान्ते'ति निषेध इत्याशङ्क्याह—**पदत्वयोग्योपलक्षणं वेति**। **साधक इति**। अत्र साधकत्वं साक्षाद्विवक्षितम्, अत एव 'वेतस्वा'नित्यादौ रुत्वशङ्का भाष्योक्ता सङ्गच्छते। अन्यथा भसञ्ज्ञाप्रतिबन्धकस्य तत्प्रतिबन्धद्वारा पदसञ्ज्ञासम्पादनेन परम्परया रुत्वसाधकस्य स्थानिवत्त्वस्याप्यनेन निषेधे तदसङ्गतिः स्पष्टैव। **प्रतिबन्धकश्चेति**। अत्र च प्रतिबन्धकत्वं साक्षात्परम्परया च ग्राह्यम्। अत्रापि 'वेतस्वा'नित्यत्र रुत्वशङ्कापरभाष्यमेव मानम्। अन्यथा पदसञ्ज्ञाप्रतिबन्धकस्य तत्प्रतिबन्धद्वारा पदचरमा-

## ❀ चिदस्थिमाला ❀

जशोऽन्त' इत्यस्याग्रहणमिति भावः। कौस्तुभाद्युक्त्यसाङ्गत्यं ध्वनयन्नाह—**कार्येति**। अपिना यथोद्देशपक्षसङ्ग्रहः। अस्य='वेतस्वान्' 'महिष्मा'नित्यादेः। नन्विदमयुक्तं 'गतिकारके'ति सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेनोत्तरस्यापदत्वाद्गोचेत्यादावल्लोपस्य स्थानिवत्वेनावङापत्तेरत आह—**गोचेत्यादाविति**। 'न दोष' इत्यत्रान्वयः। नन्वेवमप्ययुक्तमेवो'त्तरपदत्वे चे'ति प्रत्ययलक्षणप्रतिषेधेन तस्यापदत्वस्य तदवस्थत्वादत आह—**उत्तरपदेति**। तस्य नित्यत्वेऽप्याह—**पदे इति**। सप्तमीसमासे इति भावः।

**अत्रेदमिति**। अर्थत्रये सप्तमीसमासपरं प्रागुक्तमपीत्यर्थः। **अपिना**—प्रागुक्तयुक्तिसमुच्चयः। सिद्धान्तान्तरमाह—**अत्रेति**। 'साक्षात्परम्परया चे'ति शेषः। आदिना द्विर्वचनादिपरिग्रहः। **प्रतीति**।

## ❀ ज्योत्स्ना ❀

त्यर्थेन सिद्धे अन्तग्रहणात्पदान्तस्यैव झलो जश् भवति न तु लोपे कृते पदान्तस्यापीत्यस्यार्थस्य कोडीकाराज्जश्त्वप्राप्तिरेव न, नतरां तत्र कर्तव्ये-स्थानिवद्भावनिषेधो, नापि 'पूर्वत्रासिद्धे'चेति। यत्र तु पूर्वत्रासिद्धं प्राप्तं—यथा वेतस्वानित्यत्र रुस्तत्रापि प्रागुक्तरीत्या संयोगादिलोपादाविव क्वचित्कार्यकालपक्षे त्रिपाद्यामपि 'अचः परस्मि'न्नित्येतत्प्रवृत्तिसम्भावनया तं निषेधमविचार्य 'पदेऽन्तः पदान्त' इति सप्तमीसमासाभ्युपगमेन निषेधो भाष्य उक्त इति दिक्।

## ❀ सदाशिवभट्टीयम् ❀

त्युपक्रम्य 'ब्रह्मबन्ध्वि'त्यत्र जश्त्वं प्राप्नोतीत्युक्तम्। अन्यथा जश्पदेन निषेधस्य दुर्वारत्वात् प्रकृते विचारो निष्फलः स्यादिति बोध्यम्।

## ❀ विषमपदविवृतिः ❀

ननु पदचरमावयवसाधकस्थानिवद्भावस्यैव 'न पदान्ते'ति निषेधः,—यथा 'गोचे'त्यादौ, तथा च 'वेतस्वा'नित्यत्र स्थानिवद्भावो न तत्साधकः, किन्तु रुत्वप्रतिबन्धक इति—न तस्य 'न पदान्ते'त्यनेन निषेध इति 'पदेऽन्त' इत्यर्थाश्रयणेन तत्र दोषवारणपरभाष्यं न सङ्गच्छत एवेत्याशङ्क्याह—**प्रतिबन्धकश्चेति**।

विनिगमनाविरहात् । एतत्सूत्रभाष्य-क्रमेणिङित्यादिसूत्रभाष्यैः 'पूर्वत्रासिद्धे न स्थानिव'-दित्यवष्टभ्य वरे-यलोप-स्वर-दीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति लभ्यते ।

ॐ अभिनव-चन्द्रिका ॐ

वयवत्वप्रतिबन्धकस्थानिवत्त्वस्यानेन निषेधाभावे पदसञ्ज्ञाया एवाभावेन तदसङ्गतिः स्पष्टैव ।

अत्रेदं बोध्यं—साक्षात्पदचरमावयवसाधकः, परम्परया पदचरमावयवसाधकः, साक्षात्पदचरमावयवप्रतिबन्धकः, परम्परया पदचरमावयवप्रतिबन्धकश्चेति चतुर्विधः स्थानिवद्भावः प्राप्तः। तत्र साक्षात्पदचरमावयवसाधकः, साक्षात्पदचरमावयवप्रतिबन्धकः, परम्परया पदचरमावयवप्रतिबन्धकश्च स्थानिवद्भावोऽनेन निषिध्यते न तु परम्परया पदचरमावयवसाधकः स्थानिवद्भावः, तत्र साक्षात्पदचरमावयवसाधकस्थानिवत्त्वनिषेधे सध्रीच इत्युदाहरणम् । अत्र हि 'अचः' इत्यल्लोपस्य स्थानिवद्भावः साक्षात्पदचरमावयवसाधकः । साक्षात्पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलम्-'एषो यन् हसती'ति । अत्र 'इणो य'णिति यणादेशस्य स्थानिवत्त्वं साक्षात्पदचरमावयवत्वप्रतिबन्धकम् ।

ननु पदसंस्कारपक्षे तत्र स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्राप्तिः। नच देवदत्तस्य नः-देवदत्तनः, तस्मादाचारक्विबन्तात्क्विपि तस्मादौप्रत्यये देवदत्तन् औ इति स्थिते साक्षात्पदचरमावयवदीर्घप्रतिबन्धकस्थानिवत्त्वस्य निषेधः फलमिति वाच्यम्, दीर्घविधौ तन्निषेधात्, 'क्वौ लुप्तं न स्थानिव'दिति निषेधाच्च । नच दीर्घपदेन त्रैपादिकदीर्घस्यैव ग्रहणादिदं फलं सम्यगेवेति वाच्यम्, मानाभावादिति चेन्नैवम् । पयस् ऋ इत्यस्मादाचारक्विबन्तात् 'अप्रत्ययात्' इत्यनेन अप्रत्यये गुणे तस्य स्थानिवद्भावः साक्षात्पदचरमावयवत्वप्रतिबन्धक इति पयोऽरा इति फलस्याभिप्रेततयाऽदोषात् । परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलं 'दध्यारः' 'दध्यर्च' इति । अत्र हि 'कर्मण्य'णिति अण्निमित्तकवृद्धिगुणयोः स्थानिवद्भावः 'ऋत्यक' इति प्रकृतिभावसम्पादनद्वारा यण्प्रतिबन्धकः। 'परम्परया पदचरमावयवसाधकस्थानिवत्त्वस्य निषेधो न भवती'त्यस्य फलं-'प्रडिक' इति। अत्र हि भसञ्ज्ञाप्रतिबन्धार्थं स्थानिवद्भावः पदसञ्ज्ञासम्पादनद्वारा पदचरमावयवत्वसम्पादकः। नच 'पूर्वत्रासिद्धीये ने'ति निषेधः शङ्क्यः, लोपनिमित्तप्रत्ययनिमित्तकपदसञ्ज्ञावचरमावयवविधायकातिरिक्तत्वेन सङ्कोचस्योक्तत्वेनादोषात्। नन्वेवमपि वागाशीर्दत्तो वाचिक इत्यादौ जश्त्वापत्तिरिति वाच्यम्, 'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः' इति 'आशीर्दत्त'-शब्दस्य लोपेनादोषात् । 'षडिक' इत्यादौ 'षषष्ठाजादिवचनात्सिद्धमि'ति 'डुलिदत्त'स्य लोपे जश्त्वम्भवत्येवेति दिक्।

दीर्घग्रहणवर्जमिति । नच जनावित्यादौ दीर्घविधौ स्थानिवद्भावनिषेधात् 'सर्वनामस्थाने च'

ॐ चिदस्थिमाला ॐ

'त'दित्यादिः । तत्राद्यस्योदाहरणं-'कार्ती'त्यादि । द्वितीयस्य तु प्रागुक्तमेव । अथ भाष्यमतेनाह—एतदिति ।'भाष्यै'रिति हेतौ तृतीया, 'लभ्यते' इत्यत्रान्वयः । यद्यपि-भाष्ये 'वरेयलोपस्वरवर्जं'मित्येवोक्तं तथापि दीर्घोऽपि तत्रोपलक्षणत्वेन बोध्य इत्यन्यत्र प्रतिपादितमित्याशयेनाह—दीर्घेति । प्रत्येति ।

ॐ ज्योत्स्ना ॐ

इति लभ्यत इति । अस्मिन्पक्षे स्थानिवत्सूत्रस्य त्रिपाद्यामपि प्रवृत्तौ ज्ञापकं 'भोभगो–इति सूत्रे-

ॐ विषमपदविवृतिः ॐ

क्रमेणिङित्यादीति । आदिपदेन-'चिण्णमुलो'रिति सूत्रस्थं भाष्यम् । इदञ्च दीर्घग्रहणवर्जमित्यंशे साधकम्। ननु 'द्विर्वचनग्रहणा'दित्ययुक्तं, द्विर्वचननिषेधस्यात्र कर्तव्यता-

**निषेध इति** । द्विर्वचनग्रहणात्पूर्वत्रासिद्धे इति निषेधाद्वेति भावः ।

**दकार इति** । स्थानत आन्तर्यादिति भावः ।

**अदर्शनम्** । 'स्थाने' इति वर्त्तते, प्रसङ्गे सतीति तदर्थस्तदाह—**प्रसक्तस्येति** । शास्त्रतोऽर्थतो वेति भावः । अत्र दृशिर्ज्ञानसामान्ये । तत्र ज्ञानस्यावर्जनीयत्वेन तत्सामग्र्यन्तर्गता उच्चारणकृता सत्ता निषिद्ध्यते । तत्र प्रत्ययलोपे शास्त्रतोऽर्थतश्च प्रसक्तो-

ॐ अभिनव-चन्द्रिका ॐ

इति दीर्घापत्तिरिति वाच्यम् । आयसावित्यत्रैवाङ्गसञ्ज्ञाप्रतिबन्धार्थं स्थानिवत्त्वेन नान्ताङ्गाभावेन दीर्घाप्राप्तेः । 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिव'दिति वार्त्तिकाद्वा । अत एव ण्यन्ताण्णौ अर्हीडि अर्हेडीत्यादौ 'चिण्णमुलो' रिति दीर्घे कर्तव्ये स्थानिवत्त्वं नेति दिक् ।

**सत्ता निषिध्यते इति** । वस्तुतस्तु उच्चारणाभाव एव अदर्शनपदार्थः, सत्ताया अवर्जनीयत्वात् । **अनुत्पत्तेरेवान्वाख्यानमिति** । नचाकृतेत्यादौ 'ह्रस्वादङ्गा'दिति सिचो लोपे च्लेः

ॐ चिदस्थिमाला ॐ

'भगवते'त्यादिः । यद्यप्यचः परेति दृष्ट्या त्रिपाद्या असिद्धत्वान्न तस्याप्युपयोगस्तथाप्यत्र पक्षे न्यायसिद्धानुवादः, प्रागुक्तफलसिद्ध्यर्थमिति बोध्यम् । मूलस्थेतिना सूत्रपरामर्शेऽपि तत्र केन निषेध इत्याशङ्कायामाह—**द्विरिति** । भाष्यरीत्याह—**पूर्वत्रेति** । ननु'द'एव कुतः ?, प्रयत्नसाम्येनान्यस्यापि प्रसङ्गादत आह—**स्थानत इति** । **स्थाने इति** । 'स्थानेऽन्तरतम'इत्यतः । तदाह=तत्फलितमाह । 'ल्यब्लोपे'इत्यादिसङ्ग्रहायाह—**अर्थत इति** । लक्ष्यभेदेन विकल्पः । ननूकरीत्या शब्दस्यैव प्रसङ्गलाभेन तस्य चाक्षुषत्वस्याबधित्वेन कथं तददर्शनस्य सञ्ज्ञात आह—**अत्रेति** । तथा च तस्य ज्ञानसामान्याभावो लोप इति फलितम्, अत एव ल्यबन्तपदस्याध्याहारविषये 'ल्यब्लोप'इत्यस्य न प्रवृत्तिः । नन्वेवं लोपविधिना तस्य तदभावो बोधनीयः, स च बाधितोऽत आह—**तत्रेति** । लोपविधायके इत्यर्थः । तत्र शब्दज्ञानस्य श्रावणस्यैव प्रसिद्धत्वादाह—**तत्सामेति** । तथा च तन्निषेधस्य तत्सामग्रीनिषेधपर्यवसानं, मानसं स्मरणा-

ॐ ज्योत्स्ना ॐ

ऽश्ग्रहणम्, विसर्जनीयस्य त्रैपादिकत्वेन स्थानिवत्सूत्रदृष्ट्याऽसिद्धत्वात्स्थानिवत्त्वाप्रवृत्तौ यत्वाप्राप्तेर्देवाः सन्तीत्यादेः सिद्धेरिति बोध्यम् । **अवर्जनीयत्वेनेति** । विषयसन्निधाने 'ज्ञानं मे मा जायता'-मितीच्छायां सत्यामपि तदभावस्य कर्तुमशक्यत्वेनेत्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

**द्विर्वचनग्रहणादिति** । तत्प्रतिबन्धकप्रवर्तकातिदेशस्याप्यनेन निषेधाङ्गीकारादिति भावः ।

**अदर्शनम्** । शास्त्रतोनुबन्धादीनाम्, अर्थतो ल्यबन्त इति बोध्यम् । उभाभ्यां प्रसक्तिं

ॐ विषमपदविवृतिः ॐ

दित्यरुचेराह-**पूर्वत्रासिद्धे इति** । **अनुत्पत्तेरेवेति** । 'प्रक्षालनाद्धि पङ्कस्ये'ति न्यायात् ।

ॐ वरवर्णिनी ॐ

**शास्त्रतोर्थतो वेति** । आद्योदाहरणं—वारि-राजेत्यादि, तत्र हि—स्वौजसित्यादिना सोः प्रसक्तिः । अन्त्योदाहरणं—'श्वशुराज्जिह्रेती'ति, अत्र हि 'वीक्ष्ये'त्यस्यार्थतः प्रसक्तिः । **तत्सामग्रीति** । ज्ञाने—विषयविधया कारणीभूता या तत्तच्छब्दोच्चारणप्रयोज्या सत्ता, तदभावो लोपपदार्थ इत्यर्थः । 'निषिध्यते' इति तु—'राजे'त्यादौ शब्दतः प्रसक्तोच्चारणाभिप्रायेण, श्वशुराज्जिह्रेती'त्यादौ तु—उच्चारणस्यैव प्रसङ्गविरहेणोच्चारणनिषेधासम्भव इति तत्त्वम् ।

च्चारणस्य लोपविधानेन तस्य तस्मिन्विषयेऽनुत्पत्तेरेवान्याख्यानं प्रत्ययलक्षणार्थमिति बोद्धव्यम् । अर्थस्यैषा सञ्ज्ञा—व्याख्यानात् । यत्तु—'प्रसक्तस्येति किं? ग्रामे तिष्ठतीत्यादौ 'ल्यब्लोपे' इति पञ्चम्यापत्तेः । अस्ति चात्र ल्यपोऽदर्शनम् । शास्त्रतोऽर्थतश्च न तत्प्रसक्तिरिति न दोष'इति, तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमी-विधानेन तस्यात्राप्राप्तेः । तत्त्वे तु अस्त्येवार्थतो ल्यबन्तस्य प्रसक्तिः । तस्मात्त्रपु इत्यत्र

❀ अभिनव-चन्द्रिका ❀

श्रवणापत्तिरिति वाच्यं, 'च्लेः सिजि'त्यस्य—'च्लित्वावच्छिन्नस्य स्थाने झलादिप्रत्ययाव्यवहित-पूर्वत्वविशिष्टं यत् ह्रस्वान्तमङ्गं तदव्यवहितोत्तरत्वाभाववान्सिच्त्वावच्छिन्नो भवती'त्यर्थात् । 'ह्रस्वादङ्गा'दिति च तात्पर्यग्राहकमिति प्रागेवावोचाम । वस्तुतस्तु भावरूपादेश इव अभावरूपादेशे-ऽपि स्थानिघटितेऽसाधुत्वं आदेशघटिते साधुत्वमित्यन्यत्र विस्तरः । त्रपु इत्यत्रेति । नच प्रत्ययलक्षणेन पित्कृद्धावपि ह्रस्वान्ततदादित्वाभावात्कथं तुगापत्तिरिति वाच्यं, 'लिट्त्रपु' इत्यादौ प्रत्ययलक्षणेन कृत्परत्वस्य, स्वतश्च पित्कृन्निरूपिततदादित्वस्य सत्त्वेन प्रसक्तस्येति पदाभावे तुगापत्तेः । मूलन्तु लिट्-त्रपु इत्यादेरुपलक्षणतया योजनीयम् ।

विनिगमनाविरहादिति । चिन्त्यमिदं, विनिगमनाविरहेण तात्पर्यानिर्णये शाब्दबोधस्यै-वानुत्पत्तेः । किन्तु—भाष्ये उभयथा व्याख्याकरणेन आवृत्त्यार्थद्वयं स्वीक्रियत इति बोध्यम् ।

❀ चिदस्थिमाला ❀

त्मकं वा तज्ज्ञानं त्विष्टमेव, अत एव 'स्मृत एवानुबन्धः कार्यसाधक' इति ग्रन्थकर्तां व्यवहारः । एतेन श्रवणस्य श्रोतृव्यापारत्वेन तस्यैव तत्र निषेधः स्यान्न प्रयोक्तृव्यापारस्योच्चारणस्येतिदण्डयुक्तमपास्तमिति भावः ।

नन्वेवं शब्दानित्यत्वापत्तिर्मुक्तवन्नमितिन्यायेन जातानिवृत्त्या शास्त्राप्रामाण्यापत्तिश्चात आह—तत्रेति । उक्तोर्थः । ''प्रत्ययलोपे 'इत्यस्य 'प्रत्ययलक्षणार्थ'मित्यत्रान्वयः । सकललक्ष्याभिप्रायः समुच्चयः । एतेन जातनिवृत्तिव्यवच्छेदः । अवयवलोपशास्त्रैरपि तत्तदवयवरहितस्यैव तत्तद्विषये प्रत्ययत्वादि बोध्यत इति भावः ।

नन्विदमयुक्तं, स्वं रूपमितिवचनाच्छब्दस्य सञ्ज्ञाप्रसङ्गेन तदर्थस्याप्रसङ्गादत आह—अर्थस्यैवेति । महासञ्ज्ञाकरणसामर्थ्यात्, लोपनं लोप इति हि तदर्थः । नहि शब्दो लोपनक्रियेनिकैयटादयः । वस्तुतस्तु प्रसक्तादर्शनस्येत्यर्थलाभार्थं स्थानेपदस्येव नवनीतन इतिशब्दस्याप्यनुवृत्तिः सुलभेति, तथा भाष्योक्तमेव युक्तं, लुप्ल छेदने इति धात्वर्थानुसारेणान्वर्थत्वासम्भवादिति बोध्यम् । किञ्च स्वं रूपमित्यस्य प्रत्याख्याने तदननु-वृत्तावपि यत्रार्थे कार्यबाधस्तत्र तच्छब्दग्रहणमत एव कर्मादीनामर्थसञ्ज्ञात्वं, लक्ष्यानुसारिव्याख्यानेन सर्वेष्टसिद्धिस्तदाह—व्याख्यानादिति । कौस्तुभाद्युक्तिं खण्डयति—यत्त्विति । ग्रामाधिकरणिका स्थितिरिति तदर्थः । पत्तिरिति पाठः । पत्तेरिति पाठे प्राग्वद्बोध्यं । चो ह्यर्थे । तदुक्तौ तु नापत्तिरित्याह—शास्त्रेति । चः समुच्चये । तेन—ल्यब्लोपे इति वार्तिकेन । एवमग्रेऽपि । तदर्थनिरूपिताधिकरणत्वे तु इष्टापत्तिः पञ्चम्या इत्याह—तत्त्वेत्विति । एवञ्च तेनापि न वारणमिति भावः । ननु तर्हि किन्तस्य प्रत्युदाहरण-मत आह—तस्मादिति । तस्यायुक्तत्वादित्यर्थः । 'तदभावे' इति शेषः । ननु पित्कृता प्रकृत्या-

❀ सदाशिवभट्टीयम् ❀

दर्शयन् प्रत्ययलोपविषये निषेध एव कुतो नेत्याशङ्कां दूरीकुर्वन्नाह—तत्रेत्यादिना । यथाश्रुते त्वश्रवणाय लोपावश्यकत्वेन प्रत्ययलक्षणार्थमित्यस्यासङ्गतिः । प्रसक्तस्येति किमिति । 'इति तु ने'ति शेषः, कौस्तुभे पञ्चम्यापत्तेरित्येव पाठात् । तत्त्वेत्विति । ग्रामस्य ल्यबन्तार्थनिरूपिताधिकरणत्वे त्वित्यर्थः । दिगिति ।

क्विपोऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः । कृत्प्रत्ययेन प्रकृत्याक्षेपस्तु न, अत्रैव प्रकृतिं विनाऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासम्भवात् ।

**इति पक्षे इति** । विनिगमनाविरहादिति भावः । द्वित्वस्य त्रैपादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव दद्ध्यत्रेति भाष्ये उदाहृतम् । **धकारयकारयोरिति** । तेन विसर्गादिद्वित्वेनाधिक्ये ऽपि न क्षतिः । **द्विधमिति** । द्विधत्वं प्रक्रियायां बोद्ध्यम् ।

### ॐ अभिनव-चन्द्रिका ॐ

ननु पूर्वधस्य जश्त्वेन दकारे द्विधमित्यनुपपन्नमित्यत आह—**प्रक्रियायां बोध्यमिति** । **तद्विषयत्वाच्चेति** । चो हेतौ । यतोऽन्याकृतिकरणे भिन्नार्थत्वसम्भावनाविषयोऽयं न्यायोऽतः नार्थकानेकव्यक्तिविषयोऽयं न्याय इति भावः ।

### ॐ चिदस्थिमाला ॐ

क्षेपेणापि तुको वारणमत आह—**कृदिति** । उद्योतादिव्यक्तदोषान्तरसत्त्वेऽपि निष्कृष्टं दोषमाह—**अत्रैवेति** । यद्यपि पक्षद्वयस्य भाष्यारूढत्वं तथापि तत्रैव किं मानमित्याशङ्कायामाह—**विनीति** । कौस्तुभरत्नाकराद्युक्तिं खण्डयति—**द्वित्वस्येति** । पक्षद्वयेपि तत्र तदप्रवृत्तेर्भाष्यसिद्धान्तादिति भावः ।

अत्र मानान्तरमाह—**अत एवेति** । मयः परस्य यणो द्वित्वे इति भावः । पुनर्द्वित्वस्य कथमप्यप्राप्तेर्मनोरमादौ प्रतिपादितत्वेन **रत्नाकरदण्ड्या**दिग्रन्थासङ्गतिरितिध्वनयन्नाह—**तेन विसर्गादीति** । आदिना सपरिग्रहः । नन्वेकस्य जश्त्वेन दकारे प्रयोगे न द्विधत्वमत आह—**द्विधत्वमिति** । तथा भौतपूर्वकं प्रयोगे तत्त्वमिति भावः । **'द्विध'**मित्यग्रिमप्रतीकमिति

### ॐ सदाशिवभट्टीयम् ॐ

एङ्ह्रस्वादित्यत्रैव प्रत्ययग्रहणपरिभाषोपस्थानेनैतद्वारणे तु सोमसुत्रपु इति प्रत्युदाहर्त्तव्यम् । अत्र हि सुनोतेः प्राप्तस्य क्विपोऽदर्शनस्य सुनोतेरग्रे इव त्रपुशब्दादग्रेपि सत्त्वेन तस्यापि लोपसञ्ज्ञायां प्रत्ययलक्षणेन त्रपुशब्दादग्रेऽपि क्विब्बुद्धिसत्त्वेन तद्बुद्ध्यवधित्वस्य सुनोतावविवादात् । तदादित्वस्य त्रपुशब्दान्ते सम्भवादक्षतिः । कृदतिङ्सूत्रभाष्योक्तरीत्या धातुपदानुवृत्त्या तद्वारणे तु 'सोमसुत्पुत्रीयती'त्यादौ दोषो बोध्यः । यत्तु **विवरणे**—नियमाभावान्न परिभाषोपस्थानन्तुग्विधावित्युक्तम् । तस्यायं भावः—सोमसुदाद्यर्थमावश्यके प्रसक्तानुवर्त्तनेऽनियमो नेति तेनैव त्रपुसिद्धिर्नान्यथेति भाष्याशय इति भाष्यानुयायित्वादुद्योतस्यासूया न विधेया । ननु प्रत्ययलक्षणस्य नियमार्थत्वात्स्थानित्वेन तुगापादनीयस्तच्चापवादे उत्सर्गकृतवारणाय षष्ठीनिर्दिष्टस्यैवेति न प्रकृते इति चेन्न । प्रसक्तानुवृत्तावुक्तविषये एव विध्यर्थसम्भवेन नियमार्थत्वस्यैवायोगादित्यादि दिगर्थो बोध्यः । **विनिगमनेति** । भाष्यारूढत्वा-

### ॐ विषमपदविवृतिः ॐ

**प्रक्रियादशायामिति** । परिनिष्ठिते तु जश्त्वेन दकार इति भावः ।

### ॐ वरवर्णिनी ॐ

**तुगापत्तिर्दोष इति** । ननु त्रपु इत्यादौ प्रत्ययलक्षणेन क्विप्प्रत्ययातिदेशेऽपि त्रपु इत्यस्यातिदिष्टक्विसदादित्वविरहेण न तुगापत्तिरिति चेन्न । प्रत्ययसत्ताव्याप्यसत्ताकनिखिलधर्मातिदेशस्याभिप्रेततया तदादित्वातिदेशस्यापिलाभेन तुगापत्तेः सत्त्वात् । **सदाशिवभट्टास्तु**—'त्रपु' इति—'अग्निचित्रपु' 'सोमसुत्रपु' 'लिट्—त्रपु' इत्यादेरुपलक्षणं, तेन चित्सुदादिपदोत्तरवर्तमानस्य क्विपस्त्रपुपदोत्तरमतिदेशेन तन्निरूपिततदादित्वस्य चा'ग्निचित्रपु'इत्यादौ स्वतः सिद्धत्वेन तुगापत्तिरतः **प्रसक्त**पदम् । तुग्विधौ 'धातो' रित्यस्यानुवृत्तौ तु 'सोमसुत्—सुति'रित्यस्योपलक्षणमेतदित्याहुः ।

'एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यती'ति 'कृञ्चानुप्रयुज्यते' इति सूत्रभाष्योक्तन्यायेनैकस्य द्वित्वे परस्य तदभावोऽनुचित इति न वाच्यम्। सार्थकानेकविषये तन्न्यायाङ्गीकारात्। यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयत्वाच्च। 'हलो यमा'मिति लोपे द्वित्वाभावे चैकयमेव रूपम्।

**नादिन्या।** 'यरोऽनुनासिके' इत्यतो 'यर' इति वर्तते। 'पुत्रशब्दस्ये'त्यवयव-

❀ चिदस्थिमाला ❀

सूत्रयन्दशङ्कते—**एकस्या इति।** 'यतोऽत' इति शेषः। यत एकस्या आकृतेः=स्वरूपस्य प्रयोगश्चरितः=कृतोऽतो द्वितीयस्यास्तृतीयस्याश्च नेत्यर्थः। चश्चतुर्थ्यादिसमुच्चायकः। अत्र मानमाह—**कृञ्चेति।** तत्र हि रूपाभावन्यपरप्रयोगमाशङ्क्यानया सन्दृष्ट्यान्यथैव सिद्धान्तितम्, अत एव 'गवां स्वामी अश्वानाञ्चे'त्येव, न तु अश्वेषु चेत्यापि। एवञ्च तथा प्रयोगेऽसाधुरिति तात्पर्यम्। कैयटेनास्य वेदप्रसिद्धकत्वमपि तत्रोक्तं तत्रापि्ककर्तविषयशास्त्रविधेयसाधनानेकत्वे एवायम्। अत एव व्रीहिसाधनकप्रयोगे तन्नाशे न यवोपादानं, किन्तु तत्सदृशनीवाराद्युपादानमेव। तत्र हि सादृश्यात्तद्बुद्ध्युदयेन तत्प्रयोगनिर्वाहात्। अन्यथा तु तत्र तद्बुद्ध्यनुदयेन तदुपक्रान्तक्रियानिर्वाहो न स्यात्। एवं 'खादिरे बध्नाती'त्यादावपि बोध्यम्। भिन्नपदविषयोऽयं न्यायो नैकपदविषयः, वेदेष्वनेकद्रव्यविषये एव यज्ञान्तीयेन प्रक्रमस्तज्जातीयादानमिति नियम इत्यन्ये। अत एव 'सर्वस्य द्वे' इत्यत्रादौ द्वित्वमिति पक्षे द्रोग्धा स्नेग्धेत्यत्र घत्वढत्वयोरापत्तिरिति भाष्यकारोक्तं दूषणं सङ्गच्छते। सर्वं चेदं प्रयोगपदेन सूचितमिति बोध्यम्।

इयं शङ्काऽग्रेऽपीति सूचयन्नाह—**नैकस्येति।** परशब्दोऽन्यार्थः। प्रयोगपदस्वारस्यादेवाह—**सार्थकेति।** साभिधेयानेकविषयत्वे सफलानेकत्वे, चेत्यर्थः। अर्थबोधनार्थं शब्दप्रयोगात्, फलार्थं प्रयोगानुष्ठानाच्चेति भावः। वास्तवं न्यायबीजं ध्वनयन्समाधित्वमाह—**यत्रेति। भिन्नार्थत्वेति। भिन्नाभिधेयकत्वस्य** भिन्नफलकप्रयोगान्यत्वस्य चेत्यर्थः। अस्ति च तत्र 'गवां स्वामी अश्वेषु चे'त्युक्ते तत्स्वामी तत्र निष्ठतीत्यर्थान्तरप्रतीतिः, तन्नाशे तदुपादाने तत्प्रतीतिश्च। तथाच लोकवेदसिद्धप्रतिपत्तिलाघवमूलकोऽयं न्याय इति तत्त्वम्। अत एवालङ्कारिका ईदृशे विषये क्रमभङ्गं दोषमाहुः। न चैवं प्रकृते इति भावः। उक्तार्थमेवाह—**हल इति। वर्त्तत इति।** निषेधस्य प्राप्तिपूर्वकत्वादत्र इत्यस्यानुवृत्तिर्नोक्ता। नन्वेवं वृत्त्यसङ्गतिरत आह—**पुत्रेति।** 'वृत्ता'वित्यादिः।

❀ सदाशिवभट्टीयम् ❀

दित्यपि बोध्यम्। **आकृतेरिति।** स्वरूपस्येत्यर्थः। चरितः=कृत इत्यर्थः। अधिकमुद्योततोऽवसेयम्।

❀ विषमपदविवृतिः ❀

**सार्थकेति।** वस्तुतो'ऽभावो नाकृति'रिति तन्न्यायविषयो नात्र। **भिन्नार्थत्वसम्भावनेति।**

❀ वरवर्णिनी ❀

**एकस्या इति।** प्रकृते एकस्या द्वित्वाकृतेर्यकारविषये प्रयोगे यकारस्यापि द्वित्वमेवोचितम् तु द्वित्वाभाव इति शङ्काशयः। **सार्थकेति।** योऽर्थो यया शब्दाऽऽकृत्या प्रतिपादयितुमुपक्रान्तस्तयैवासौ निर्वाह्यो न त्वन्यशब्दाकृत्येति कैयटोक्तेरिति भावः। तदेवं 'येन सम्बन्धेन यदर्थान्वितयदर्थबोधतात्पर्येण यादृशानुपूर्व्यवच्छिन्नः पूर्वं प्रयुक्तस्तेन सम्बन्धेन तदर्थान्विततदर्थबोधतात्पर्येण तादृशानुपूर्व्यवच्छिन्नस्यैव पश्चात् प्रयोग' इति भाष्योक्तन्यायार्थो बोध्यः, अत एव 'स्वामीश्वरे'ति सूत्रेण षष्ठीसप्तम्योर्द्वयोरपि साधुत्वेपि 'गवामश्वानाञ्च स्वामी'त्येव प्रयुज्यते, न तु 'गवामश्वेषु च स्वामी'ति बोध्याः।

षष्ठी। 'आदिर्नाशब्दे परे' इति च प्राधान्याद्यर एव विशेषणम्। सूत्रे 'आदिनी'ति ङ्यन्तानुकरणं लुप्तसप्तमीकम्। अत एव 'तत्परे चे'त्यस्या'ऽऽदिनीशब्दो यस्मात्परस्तत्र परे' इत्यर्थं हरदत्तो व्याख्यत्। अद्धातौ माधवोऽप्येवमेव—'। ईदृशाक्रोशस्य स्त्रीष्वेव

ॐ चिद्स्थिमाला ॐ

अत एव तत्रैवाह—**आदिनीति**। अत एव चः। एतेन मूले तथैव पाठः सूचितः। 'उभयत आश्रयणे' इत्यस्य निर्मूलत्वेनासम्भवस्य दुर्वचत्वादाह—**प्राधान्यादिति**। एतेन पुत्रादिर्नात्यादावुभयत इति निषेधात्तस्य तत्परत्वं दुर्लभमित्यपास्तम्, अत एव पुत्र्यादिनीत्यत्र लिङ्गविशिष्टेनि प्राप्तोऽपि निषेधो न, तत्रैकरेफमात्रव्यवाये साफल्येनानेकव्यवायेऽप्रवृत्तेः। न च तत्राप्यचः परेति स्थानिवत्त्वे नानेकव्यवायः, यस्येतिलोपस्य स्थानिवत्त्वस्य तत्रापि तुल्यत्वात्पूर्वत्रासिद्धे इति निषेधाच्च। श्रौतं तद्व्यवधानन्तु तत्रापि तुल्यमेव, रेफयकारयोस्तु तत्र रेफस्येव प्राप्तिरेव नेति बोध्यम्। नन्वा-'दिर्नाशब्देपर'इति वृत्तिरयुक्ता, सूत्रे नान्तप्रकृतिकसप्तमीसत्त्वात्, अतएव 'तत्परे चे' त्यत्ररत्नाकरदण्ड्यादिभिस्तथा व्याख्यानमत आह—**सूत्रे इति**। 'छन्दोव'दिर्तीष्टेरिति भावः। भाष्यादौ तथानुक्त्या तद्रूपगमकाभावादत्रान्यसम्मनिमाह—**अत एवेति**। न केवलं परसम्मत्येव तथा, युक्तितोऽपीत्याह—**ईदृशेति**। आक्रोशमात्रन्त्वन्यत्रापीति भावः। 'प्रायेणे'ति शेषः। अत एव तथा भाष्योदाहरणसङ्गतिः। **तदाहेति**। तत्सर्वमाहेत्यर्थः। **पुत्रादिनीतीति**। 'सुप्यजाता'वितिणिनिः। एतेना'चो रहाभ्यां द्वे' 'नाचि च' 'आदिन्याक्रोशे पुत्रस्ये'ति वाच्ये नञ्द्वयोपादानेन नञ्घटितवाक्यस्यानित्यत्वकल्पनेन स्त्रियामेव प्रवर्त्तते नान्यत्र, न च वैपरीत्यं कुतो न, उदाहरणपरभाष्यविरोधापत्तेरित्यपास्तम्। नञ्घटितमनित्यमित्यस्यासत्त्वाच्च, नञ्द्वयोपादानन्तु स्पष्टार्थमेव, यद्यपि प्रकृतसूत्रसाहचर्यादत्रोपसङ्ख्यातत्वाच्च 'वा हते'ति स्त्रियामेव प्रवर्त्तते इति सुवचं तथापि तत्र तत्साधकयुक्तेरत्रापि सम्भव इत्याशयेनाह—**तदाहेति**। वार्त्तिके लाघवादुक्तरीत्यानतिप्रसङ्गाच्च तथोक्तिः। पुत्रो हतो ययेत्यादिबहुव्रीहिः। आहिताग्न्यादिः। 'अस्वाङ्गपूर्वपदाद्वे'तिङीष् नादिन्येति

ॐ सदाशिवभट्टीयम् ॐ

**नादिन्या**। **प्राधान्येति**। अत एव पुत्र्यादिन्यां लिङ्गविशिष्टपरिभाषया नातिप्रसङ्गः। नाव्यवहितातिरिक्तव्यवायात्। 'नाचि च, आदिन्याक्रोशे पुत्रस्ये'त्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थमित्याहुः।

ॐ विषमपदविवृतिः ॐ

**यथा** 'गवामश्वेषु च स्वामी'त्यत्र। **पर एवेति**। तेन लिङ्गविशिष्टपरिभाषया 'पुत्र्यादिनी'त्यत्र न द्वित्वनिषेधः, 'येननाव्यवधान'न्यायेनैकवर्णव्यवधान एव तत्प्रवृत्तेः। किञ्च—पुत्रशब्दस्य विशेषणत्वे 'उभयत आश्रयणे नान्तादिव'दिति निषेधात्पुत्रशब्दस्यादिनीपरत्वमेकदेशविकृतन्यायेनोपपादनीयं स्यात्, एकदेशविकृतन्यायश्चाक्षपरिमाणे न प्रवर्त्तते, यर्विशेषणत्वे तु पूर्वान्तवद्भावेन पुत्रशब्दत्वं, परादिवद्भावेन चादिनीशब्दत्वं, पौर्वापर्याश्रयणे एवोभयत आश्रयण इति निषेधः। 'अचः परस्मिन्निति स्थानिवत्वं 'पूर्वत्रासिद्ध'मिति निषिद्धम्। न चादिनीशब्दस्य यर्विशेषणत्वे 'यणो मय' इति रेफस्य प्राप्तं द्वित्वमेव निषिध्येत, तस्यादिनीशब्दपरत्वात्, तच्छब्दस्य तदभावादिति वाच्यम्, अचः परस्य यर इत्यर्थाश्रयणेनादोषात्। 'नेमौ रहौ कार्यिणा'विति भाष्येण रेफस्य द्वित्वकार्यित्वाभावाच्च। **अतएव=ङ्यन्तानुकरणत्वादेव**। **आदिनीशब्दो यस्मादिति**। **अन्यथा**'ऽदिन्शब्दो यस्मा'दिति वदेत्।

ॐ वरवर्णिनी ॐ

**लुप्तसप्तमीकमिति**। आर्थिकार्थकथनमेतत्, वस्तुतस्तु एवं सति—'ईदूतौ च सप्तमी'ति प्रगृह्यत्वापत्तिः, 'यः शिष्यते' इति न्यायेनादिनीतीकारान्तेन सप्तम्यर्थबोधनात्, अतोऽत्र 'सुपां सुलु'गिति ङेरादेश इत्येवोचितम्। आकारादेशे तु न प्रगृह्यत्वापत्तिः, सप्तम्या ईकारान्तत्वाभावात्।

दर्शनाच्च । आक्रोशो निन्दा, तदाह—**पुत्रादिर्नीति** । नाऽऽक्रोशेऽस्य श्रौत्येव दर्शना-दाह–**पुत्रहतीति** । 'अनक्षि चे'ति सिद्धे—'पुत्रस्य क्रान्ते चेद्धनजग्धयोरेव, आक्रोश एवे'ति नियमार्थमिदम् ।

**संयुक्तेष्विति** । 'त्रिप्रभृति'ष्विति सूत्रे वर्णानां सजातीयानामेव ग्रहणं, परस्पर-साहचर्यात् । न च तथाचः सम्भवन्ति । अत एवं'अचो रहाभ्या'मिति सार्थकम् ।

※ अभिनव-चन्द्रिका ※

**अचो रहाभ्यामिति सार्थकमिति** । नचाग्रे त्रिप्रभृतिवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इति वक्ष्यमाणत्वेन **'अचो रहाभ्या'**मित्यनेन चाऽचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वित्वविधानेनोभयोरेकविषयत्वाभावेन सजातीयत्रिप्रभृतिवर्णग्रहणेऽपि न 'अचो रहाभ्या'-मित्यस्य वैयर्थ्यमिति वाच्यम्, 'नेमौ रहौ कार्यिणौ किन्तर्हि ? निमित्तं द्विर्वचनस्ये'ति भाष्य-प्रामाण्येन निमित्तविषयत्वेतरद्विर्वचनीयविषयताश्रयत्वेन ग्रहणे कर्त्तव्ये रेफस्याविद्यमानवद्भावेनोभयो रेकविषयत्वसत्त्वेनादोषात् ।

※ चिदस्थिमाला ※

सूत्रनाधेस्याय ह–**क्रान्ते चेदिति** । अनेन पुत्रादिर्नेत्यादौ दोषाभावः सूचितः । एतेन—'हनजग्धयोः परतः पुत्रशब्दस्यैवे'ति नियमः—इति दण्डयुक्तमनास्तम् । अदुष्टहर्नेत्यादौ दोषानत्तेश्च, लाघवान्मनान्तरमाह—**आक्रोश एवेनीति** । ननु संयुक्तेष्वित्यस्य नानुवृत्त्यादीति कथं तल्लाभोऽत आह—**त्रिप्रेति** । प्रकमादाह—**वर्णानामिति** । **परस्परेति** । 'रामार्जुनगतिस्तयो'रितिवदिति भावः । ननु एवमपि हलोनेव ग्रहणासिद्ध्या विशिष्य तदुक्तिः कथमत आह—**न चेति** । न हीत्यर्थः । तथा=द्वित्वप्राप्तियोग्य-यविशिष्टाः । [ निषेधाद्द्वित्वस्यायनसम्बन्धस्य क्लृप्तत्वात्, एतेनाच एवाप्राप्तेः, शाकटायनस्य नित्यानुवाद-कत्वेनान्यतने द्वित्वातात्पर्येण तत्र तत्सम्भव ? इत्यपास्तम् । ] अत्र ज्ञापकनप्याह—**अत एवेति** ।

※ ज्योत्स्ना ※

एकस्य द्वित्वे परस्येति यकारादेरित्यर्थः । **इति सार्थकमिति** । अच इत्यननुवृत्तिं शाकटायन-ग्रहणस्य च पूजार्थतामभिप्रेत्येदमुक्तम् । यद्वा–विकल्पार्थत्वेऽपि नञोऽननुवृत्तिरुभयत्र विभाषा चेत्याशयः ।

※ सदाशिवभट्टीयम् ※

**आक्रोश एवेति** । अत्राहुः—'श्रुत एव एवकारान्वय' इति 'महाभ्रंगे'तिसूत्रस्थोद्योतानुकर्तात्याऽऽक्ष-नियम एव युक्तः, नोचेत्तयोस्तस्मिन्पुत्रस्यैवेति तृतीयः कुत उपेक्षित इति चिन्त्यमिदमिति । **त्रिप्रभृ** । **अत एवेति** ।

※ विषमपदविवृतिः ※

**पुत्रहतीति** । पुत्रो हतो ययेति विग्रहः । 'बहुव्रीहेश्चान्तोदात्तात्' 'अस्वाङ्गपूर्वपदाद्वे'ति ङीष् । **अत एवेति** । सजातीयानां ग्रहणादेवेत्यर्थः । इदं चिन्त्यं–विजातीयानां ग्रहणेऽप्यचः परस्य यर इत्यर्थस्य

※ वरवर्णिनी ※

**त्रिप्रभृतिष्विति** । 'त्रितयाद्यात्मकसमुदायघटकस्य अचः परस्य यरो द्वे वा न स्त'इत्यर्थः । एवं चतुष्टयात्मकसमुदायादावपि बोध्यम् । **परस्परेति** । 'सजातीयारब्धसमुदायस्य विजातीयारब्धसमुदा-यस्य च बोध्यत्वप्रसङ्गे सजातीयारब्धसमुदायस्यैव बोध्यत्वेन तात्पर्यविषयत्व'मित्यर्थकसहचरिताऽसहचरित-योः सहचरितस्यैवेति परिभाषान्तरादित्यर्थः । **नच तथेति** । यद्यपि–'तितउ अत्रे'त्यत्राचां सम्भवस्तथापि तत्सम्बन्ध्यचो यत्त्वाभावादचस्तथा न सम्भवन्तीत्यर्थः । **अत एव=प्रकृतपक्षे सजातीयारब्धसमुदायस्य**

निर्धारणे सप्तमी, 'अच' इत्यनुवर्त्तते, 'त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे न स्त' इत्यर्थः। तेनेन्द्रः राष्ट्रमित्यत्र नकारषकारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः। 'अनचिच'

ॐ चिदस्थिमाला ॐ

सजातीयग्रहणादेवेत्यर्थः। अन्यथा तत्सूत्रविषये तदुपात्तसामान्यवर्णत्रयावश्यकत्वात्सर्वत्र तत्प्राप्तद्वित्व-स्थानेन ( त्रिप्रतिसप्तम्यधिकरणसप्तम्या वा आदिषु वर्णनात्रिषु द्वित्वं वा नेत्यर्थकेन ) निषेधे तदानर्थक्यं स्पष्टमेव [ मन्युक्तर्नोत्यौ। नन्वेवमनर्चाति निषेधस्य नित्यं यत्वेन न ज्ञापकत्वमिति भावः। अनेनापि 'निषेधविकल्प' इति न्यायेन द्वित्वं विकल्पेन विधीयते। सर्वत्रेत्यनेनैव सिद्धे तदानर्थक्यमेवातस्तत एवाह—**निर्धेति**। अस्य त्रिनदविषयत्वात्। अपरे तु वृत्तिरनेन गर्भिनेता। नन्वेमपि तन्मध्यस्थयरो द्वे वा नेत्यर्थेन इन्द्र इत्यादौ दकारादेरप्राप्तद्वित्वस्यापि उक्तरीत्या नकारादेरिव निषेधविकल्पापत्त्या पक्षे द्वित्वाप-त्तिरेवं वहूञ्जीत्यादौ नस्याचोरिति प्राप्तस्य निषेधापत्तिरत आह—**अच इति**। सूत्राणां षद्वित्वषत्वस्यैव सम्मतत्वात्। तच्च श्रुतत्वात् यर एव विशेषणमेवं सति वृत्तेः शाब्दार्थमाह—**त्रीति**। तेन अचीत्यनु-वर्तने न द्वित्वे परसवर्णस्य सिद्धत्वादाह—**नकारेति** ?[1] ] **प्राप्तेति**। अनचीतीत्यादिः। एतोनोक्त-

ॐ सदाशिवभट्टीयम् ॐ

विजातीयग्रेह त्रिप्रभृतीत्यस्यायमर्थः—अचः परस्य त्र्यादिषु वर्णेषु मध्ये यरो द्वित्वं वेति। ततश्च हर्यनुभवेऽप्यनेन सिद्धौ किन्तेनेतीति भाव इत्याहुः। अत्र तिस्रोऽसङ्गतयः—अचः परस्यानेन प्रतिषेधस्तेन रहाभ्याम्परस्य विधि-

ॐ वरवर्णिनी ॐ

ग्रहणादेव, 'अच'इत्यस्यानुवर्त्तनादेव च। विजातीयारब्धसमुदायघटकयकारस्य 'त्रिप्रभृति'ष्वित्यनेनैव द्वित्वे सिद्धे'ऽचो रहे'ति व्यर्थं स्यादिति भावः। **परे तु**—''बाध्यसामान्यचिन्तया 'त्रिप्रभृति'ष्विति-सूत्रघटका(ऽनुवृत्ताऽ)ज्पदप्रयोज्यविषयतायाः—'अनचीचे'ति'अचो रहे'ति सूत्रद्वयघटकाच्पदपप्रयोज्यविषय-ताऽन्यनरत्वेन व्यापिका 'वाक्क्'इत्यादाव'चो रहे'त्यस्याप्राप्तावपि 'अनची'त्यस्य प्राप्तेः सत्त्वात्। एवञ्च व्यापकविषयताश्रये व्याप्यविषयत्वाश्रयातिरिक्तत्वेन सङ्कोचे 'त्रिप्रभृति'ष्विति सूत्रघटकाच्पदप्रयोज्याविष-यताश्रयत्वेन सङ्कोचः स्यादिति 'अचो रहे'तिसूत्रं व्यर्थं स्यात्। 'हर्यनुभव'इत्यादौ त्रिप्रभृतिष्वित्यस्यैव प्रवृत्तेरतः सजातीयारब्धसमुदाय एव ग्राह्यः,। सजातीयानामेव ग्रहणे तु—'सजातीयत्रिप्रभृतिवर्णा-रब्धसमुदायघटकस्याचः परस्य यरो द्वे वा न स्त' इत्यर्थक'त्रिप्रभृति'ष्विति सूत्रघटकाच्पदप्रयोज्याविषयताया 'हर्यनुभवो' 'नह्यस्ति' इत्यादिष्वभावेन'अचो रहे'ति सूत्रघटकाच्पदप्रयोज्यविषयतायाश्च सत्त्वेना'ऽचो रहे'ति सूत्रं सफल''मित्याहुः।

**केचित्तु**—'नेमौ रहौ कार्यिणा'विति भाष्यप्रामाण्येन—'अचो रहाभ्या'मित्यस्य—अचः पराभ्यां रहाभ्यां परस्य यरो यथा द्वित्वं भवेत्तथा कर्त्तव्यमित्यर्थमेकं कल्पयित्वा द्वित्वविषये रहयोरविद्यमानव-द्भावं प्रकल्प्य—'अचः परस्य यरो द्वे वा स्त' इत्येवमर्थान्तरेण 'हर्यनुभवः' इत्यादौ तेनैव 'अचोरहे'त्यनेन द्वित्वं विधीयते। 'अनची'ति निषेधस्तु—'च'प्राप्तद्विर्वचनस्यैवेति'हर्य्यनुभव'इत्यादौ न तेन निषेध इति रेफस्याविद्यमानवद्भावाधकारस्य द्वित्वं सिद्धम्। 'अचो रहे'तिसूत्रीयाच इति वाक्येन यत्र रहयोरविद्यमानवद्भावस्तत्रैव द्वित्वं नान्यत्रेति 'दधि' 'मध्वि'त्यादौ न धकारस्य तेन वचनेन द्वित्वापत्तिः, तदेवं स्थिते विजातीयारब्धप्रकृतसमुदायस्य ग्रहणे'ऽचो रहे'ति सूत्रीयाच इति द्वित्वविधायकवाक्यस्य वैयर्थ्यं, 'हर्यनुभव'इत्यादौ रेफस्याविद्यमानवद्भावाधकारस्यैव द्वित्वमच इत्यनेन विधेयं, तस्य च 'त्रिप्र-भृति'ष्विति द्वित्वनिषेधो वाच्य इति समानविषयत्वाद्बाधकतया निषेधस्यैव तत्र प्रवृत्तेरित्याहुरिति—श्रीबालशास्त्रिचरणाः।

१. [ ] एतदन्तर्गतः पाठोऽसंलग्न इव भाति, असार्वत्रिकश्च।

'सर्वत्र शाकल्यस्ये'त्येव सिद्धे इदं सूत्रद्वयं विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोद्धव्यम् । 'यरोऽनुनासिके' इत्यतो 'वे'त्यनुवृत्त्या'ऽनचि'त्येव सिद्धे तु सूत्रत्रयमपि तथेति बोद्धव्यम् ।

**अचो र** । 'अच' इति श्रुतत्वाद्व्याख्यानाच्च रहाभ्यां सम्बध्यते । 'तस्मादित्युत्तरस्ये'त्येतल्लभ्यमाह—**अचः पराभ्यामिति** । **वा यमीति** । 'झयो ह' इत्यतो'ऽन्यतरस्या'मित्यनुवृत्तेरिति भावः । 'दीर्घादाचार्याणा'मित्युत्तरम्—'अनुस्वारस्य ययि' 'वा पदान्तस्य' 'तोर्लि' 'उदःस्था' 'झयो हो' 'शश्छोऽटी'ति षट्सूत्रीपाठोत्तरं—'झलां जश् झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणो प्रगृह्यस्ये'ति पञ्चसूत्र्याः पाठ इति—भाष्यसम्मताष्टाध्यायीपाठे तु—वावसाने इत्यतोऽनुवृत्तिर्बोध्या । स्पष्टञ्चास्य वैकल्पिकत्वं लण्सूत्रे भाष्ये ।

**आदित्य इति** । आदित्यशब्दाच्छेषार्थण्यान्ताद्देवतार्थे ण्यः । 'यस्येति च'-

❀ अभिनव-चन्द्रिका ❀

**भाष्यसम्मताष्टाध्यायीपाठ इति** । अत एव 'उत्कन्दो रोग' इत्यादौ 'उदः स्थास्तम्भो'रिति सूत्रस्थेन 'उत्पूर्वस्कन्देरुपसङ्ख्यान'मिति वार्त्तिकेन पूर्वसवर्णे कर्त्तव्ये 'खरि चे'ति चर्त्वसिद्धिः । अन्यथा चर्त्वं प्रति थस्यासिद्धत्वात्तद्दुर्लभं स्यादिति बोध्यम् । **शेषार्थण्यान्तादिति** ।

❀ चिदस्थिमाला ❀

दोषनिरासः । 'अनचिचे'त्यत्र विकल्पाननुवृत्तौ तल्लाभायाह—**सर्वत्रेति** । अत एव मनोरमायां तथोक्तम् । इदं=पूर्वोत्तरं, स्वस्वमतप्रच्युतिदोषपरिहारार्थमिति तत्त्वम्, एतेनोत्तरत्र शाकटायनग्रहणानुवृत्त्यैव सिद्धौ शाकल्यादिग्रहणं व्यर्थमित्यपास्तमिति सूत्राशयः । **श्रुतत्वादिति** । 'श्रुतानुमितयो'रिति न्यायादिति भावः । ननु तत्त्वेऽपि सान्निध्याद्रेफस्यैव विशेषणं स्यात्, किञ्चोत्तरसूत्रानुरोधेन यर एव विशेषणमुचितमत आह—**व्याख्येति** । अग्रेऽगत्या तदन्वयेऽप्यत्र प्रत्यासत्त्यादित्यागे मानाभावादित्यर्थः ।

अनुवादे इत्यस्यासार्वत्रिकत्वादाह—**तस्मादिति** । एतेन "परशब्दाध्याहारेणेदं लब्धं, न तु परिभाषया, 'नानुवादे' इत्यस्या जागरूकत्वात्"—इति **प्रकाशोक्तं**, "स्थानेग्रहणेन परिभाषाणामनित्यत्वमात्रं ज्ञाप्यते, न तु सेति इष्टस्थले प्रवृत्तिरेवेति न दोष" इति **रत्नाकरोक्तम्**, " अचः परस्य रेफहकाराभ्यां परस्य यर इति वाच्योऽर्थः, न च पृथङ्निमित्तता स्यादिति वाच्यम्, चकाराभावेन स्पष्टप्रतिपत्तयेऽचो द्वेऽनचि, रहाभ्यामित्येव न्यासे कार्ये ईदृशन्यासेन च तदभावकल्पनात् । तत्राणुरपीतिन्यायेन विधेयसन्निहितत्वेन रहाभ्यामित्यत्रैव निर्दिष्टांशबाधः । 'अचः' इत्यंशे तु सामर्थ्यात्तद्बाधः, व्यवधानञ्चोपस्थितरेफहकारकृतमेव गृह्यते, नान्यकृतं, तदेतत्फलितमाह—**अचः पराभ्यामिति** । एतेनानुवादे परिभाषाणामनुपस्थितेरिदमनुपपन्नमित्यपास्तम्—" इति **केनचिदुक्तञ्च** परास्तम् । '**इति** भाव'इत्यनेन सूचितामरुचिं प्रकटयन्नाह—**दीर्घादिति** । अत एव तुः । यत्त्वत्राण्ग्रहणं ज्ञापकमिति, तन्न । तस्य प्रत्याख्यानात् । तथाच व्याख्यानमेव शरणम्, तच्छ्रनयन्नाह—**स्पष्टमिति** । अपत्यार्थे ण्ये 'आपत्यस्ये'ति सिद्धत्वादाह—**शेषार्थेति** । भवा-

❀ सदाशिवभट्टीयम् ❀

रिति क विषयैक्यमित्येका, शाकटायनमते प्रतिषेधादन्यत्र तत्सार्थक्यमित्यपरा, अनन्तरत्वा'दनचिचे'त्येव प्रतिषिध्येतेति तृतीया । तत्रानन्तरस्यापवादत्वेपि परत्वादस्यापि बाध्यत्वमित्यन्ता शुद्धतरा, 'पूर्वत्रासिद्धीयमद्वित्व' इति निषेधात् । आद्ये त्वभिमानकल्पनमन्तरा दुरुद्धरे इति मन्यते । **भाष्यसम्मतेति** । 'उदःस्था' 'शश्छोटी'

❀ वरवर्णिनी ❀

**न स्त इति** । नादिन्येत्यतो नेत्यनुवृत्तेः । **प्राप्तद्वित्वस्यैवेति** । **एवेन**—'राष्ट्रशब्दे षकारोत्तरटकारस्य 'शरः खय' इति द्वित्वस्य न निषेधविकल्प' इति सूचयति ।

ण्यल्लोपेऽनेन यलोपः । 'आपत्यस्ये'ति तु न । आपत्यत्वाभावात् । हल इति किं ? शय्या । यमामिति किं ? आर्ध्नोत् । यमीति किं ? रामाभ्याम् ।

**एचोऽय** । 'इचोऽचि यणयवायावः' 'अवावौ यि प्रत्यये' इति सूत्रयितुमुचितमित्याहुः । यथासङ्ख्यसूत्रलब्धमर्थमाह—**क्रमादिति** । उदात्तादिगुणयुक्तानामन्यगुणकव्यावृत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोध्या । एतदेवाभिप्रेत्य यथासङ्ख्यसूत्रे भाष्ये प्रकृतसूत्रे स्थानेऽन्तरतमसूत्रेण व्यवस्थोक्ता—'संवृतावर्णस्य संवृतावर्णो विवृता-

❀ अभिनव-चन्द्रिका ❀

अपत्यार्थण्यान्नादेवतार्थे ण्यप्रत्ययेतु 'आपत्यस्ये'ति यलोपे स्वतो द्वियकारकत्वं दुर्लभमिति भावः। **संवृतावर्णस्य संवृतावर्ण इति** । तालुस्थानिकेकारसदृशघटितसंवृतावर्णघटितस्य तालुस्थानिकघटितसंवृतावर्ण-

❀ चिद्स्थिमाला ❀

इत्यर्थः । तदेवाह—**अपत्येति** । न च स्थानिवत्त्वं, पूर्वत्रेतिनिषेधात् । नन्वेवं हूहूयति तोष्ट्रयत इत्यादौ 'वान्तो यी'ति यण्प्रसङ्गो यथासङ्ख्यसत्त्वादत आह—**अवावाविति** । मात्रालाघवस्यावान्तरपदत्वमादायापि पदलाघवस्य च सत्त्वेऽपि अपाणिनीयत्वादिरूपारुचिराहुरित्यनेन सूचिता । नन्वेवं यथासङ्ख्यसूत्रमत्रैवोचितं लिखितुमिति चेन्न । अन्यार्थमत्रैवावश्यकया'स्थानेऽन्तरतम' इत्यनयैव निर्वाह इति सूचनार्थं तदनुपन्यासात् । एवञ्च 'क्रमा'दिति फलितार्थकथनं, तद्ध्वनयन्नाह—**उदात्तेति** । अत्र भाष्यसम्मतिं, तत्र तद्विरोधञ्चाह—**एतदिति** । **भाष्ये इति** । उक्तावन्वयः । 'प्रकृत सूत्रे'इत्यस्य 'व्यवस्थाया'-

❀ सदाशिवभट्टीयम् ❀

त्युत्तरम'भ्यासे चर्च'ेति प्रतीकधारणात्तस्य तत्सम्मतत्वमनुमीयत इति भावः । **हलो यमाम्** । अत्र पर्वयतेः पर्व्-वाति, शुक्रयतेः शुक्र् राति, शुक्लयतेः शुक्ल्-लाति, चर्मयते चर्म्-माति, वृङं वृङ्ञ्चाचष्टे, विच्, वर्ङ् ङ्क्ते वर्ञ्-ञुहुवे इत्युदाहरणानि बोध्यानि । वर्णयतेर्वर्ण्-णिचमाहेत्यपि । तत्र'न पदान्ता''हलोऽण''इत्यनेन मोनुस्वारेण च केषां चिन्निराकरणेप्यन्यानि निराबाधानीत्याहुः। **अवावौ यीति** । वान्त इतिन्यासेनापि व्यपदेशिव-

❀ विषमपदविवृतिः ❀

वच्यमाणत्वेनाचोरहाभ्यामित्यस्य वैयर्थ्याभावात् । 'शेषार्थे'त्यस्य फलमाह—**आपत्यस्येति** । **यमामिति किमिति** । 'हलः परस्य लोप' इत्युक्तावर्ध्यवधिमतोः साजात्याद्धल एव लोपो भविष्यतीत्याशयः । इतरांशे=इकारोकारांशे । नन्वयाद्यादेशे संवृतस्य श्रूयमाणस्यापि शास्त्रदृष्ट्याऽसिद्धत्वाद्विवृतत्वमेवेति चेन्न । एतद्भाष्यप्रामाण्येनासिद्धत्वाभावकल्पनात् । किञ्च सवर्णसञ्ज्ञादृष्ट्या 'अ अ' इति विहितस्य संवृतस्यासिद्धत्वेपि स्थानेन्तरतमसूत्रदृष्ट्या नासिद्धत्वं, तस्य लोकन्यायसिद्धार्थानुवादकत्वस्य भाष्यसम्मतत्वात् । लौकिकन्याये च सञ्चारणीये नासिद्धत्वं, 'यस्मिन्विधि'

❀ वरवर्णिनी ❀

**संवृतावर्णस्येति** । एकारादिपूर्वभागेऽकारसदृशे संवृतत्वमित्यर्थः । अयमाशयः—संवृतप्रयत्नजन्यः संवृताकारो भिन्नः, विवृतप्रयत्नजन्यश्च स भिन्नः, तत्र 'अ अ' इति सूत्रसामर्थ्यात्संवृताकारजनकतावच्छेदकीभूते संवृतत्वे विवृताकारजनकतावच्छेदकत्वमारोप्यते, अत एवाकाराकारयोः सावर्ण्याद्दण्डाढकादौ दीर्घसिद्धिः, 'स्थानेऽन्तरतम'सूत्रे च तादृशाकारादिनिष्ठं संवृतत्वमेवोपयोगीति—'संवृताकारस्य संवृताकार' इति सङ्गच्छते । एतेनै'चो यवायाव' इति सूत्रदृष्ट्या 'अ अ' इति संवृतत्वविधायकशास्त्रस्याऽसिद्धतयाऽयाद्यादेशानां न संवृताकारघटितत्वमिति तादृशमान्तरतम्यं वक्तुमशक्यमित्यपास्तम् । **दण्डिभट्टा**स्त्वन्यथैव समादधुः ।

उपरागात्=आधिक्येन प्रतीयमानात् । ग्रहणं=ज्ञानम् । यथा पाञ्चभौतिके मनुष्यदेहे पार्थिवभागस्याधिक्येन मानमित्याशयः ।

र्णस्य विवृतावर्ण' इति। एतद्भाष्यप्रामाण्येन ए-ओ इत्यनयोरकारांशे संवृतत्वम्, इतरांशे विवृततरत्वं, तदुपरागाच्च न संवृतत्वस्य पृथग्ग्रहणम्। ऐ-औ इत्यनयोस्त्वकारांशेऽपि विवृतत्वमेवेति बोध्यम्।

**तस्य लो।** 'उपदेशेऽ' जित्यत इदित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धौ 'तस्य'ग्रहणं सर्वलोपार्थम्। तेन ञिटुडूनामन्त्यस्य लोपो न। 'नाऽनर्थके' इति परिभाषा तु भाष्ये प्रत्याख्यातैवेति दिक्। **न भवतीति।** फलाभावादिति भावः।

### ॐ अभिनव-चन्द्रिका ॐ

घटितः, ओष्ठस्थानिकोकारसदृशघटितसंवृतावर्णघटितस्य ओष्ठस्थानिकवकारघटितसंवृतावर्णघटित इत्यर्थः। एवं 'विवृतावर्णस्य विवृतावर्ण' इत्यस्य—तालुस्थानिकेकारसदृशघटितविवृतावर्णघटितस्य तालुस्थानिकघटितविवृतावर्णघटितः, ओष्ठस्थानिकघटितविवृतावर्णघटितस्य ओष्ठस्थानिकघटित-विवृतावर्णघटित इत्यर्थः। यथाश्रुतं तु न युक्तम्। केवल विवृतावर्णघटितत्वादौ खेनरयावदादेशाप्रवृत्तित्वस्याभावेन स्थानेऽन्तरतमसूत्रोक्ताऽऽन्तरतम्यस्यासम्भवात्। नच 'अ अ' इतिसूत्रविहित-संवृतस्यासिद्धत्वेन 'संवृतावर्णस्य संवृतावर्ण' इत्याद्यसङ्गतमिति वाच्यम्, संवृतस्यासिद्धत्वेऽपि संवृतप्रयत्नजन्यत्वस्यासिद्धत्वाभावात्, संवृतप्रयत्नजन्यत्वविशिष्टघटिततालुस्थानजन्यघटितस्य संवृत-प्रयत्नजन्यत्वविशिष्टघटिततालुस्थानजन्यघटित आदेशो भवतीत्यादिक्रमेणार्थेनादोषात्।

### ॐ चिदस्थिमाला ॐ

मन्वयः। नन्वकारस्य विवृतोपदेशस्यैव शास्त्रे करणात्संवृतावर्णस्येत्ययुक्तमतः कैयटाद्यसङ्गतिं ध्वनयन्नाह—**एतदिति।** प्रकर्षावधिमाह—**ऐ औ इत्यत इति।** संवृतत्वं=तत्त्वमेव। इतरांशे=इकाराद्यंशे एव।

नन्वेवं लोके प्रयोगे तद्वत्तस्यापि स्पष्टमवभासः स्यादत आह—**तदुपेति।** चस्त्वर्थं, तस्य भूयस्त्वेन तेन तस्याभिभव इति भावः। **अपि**नेतरांशसमुच्चयः। अत एव वैलक्षण्यसूचकस्तुः। प्रकर्षानुपयोगाच्छिक्षाद्यनुरोधाच्चाह—**विवृतेति।** तत्र तु तावन्मात्रेण न सिद्धिरिति—प्रकर्षाश्रयणमिति भावः। भाष्ये='अलोऽन्त्या'दिति सूत्रस्थे। एतेन 'नयैव सिद्धे तस्य ग्रहणं व्यर्थमेवे'ति प्राचोक्तमपास्तम्। तदाह—**दिगिति।** **फलभावादिति।** लोपान्यलोपद्वारकफलाभावादित्यर्थः। लोपमात्रन्तु न फलमित्यन्यत्र स्पष्टम्।

### ॐ सदाशिवभट्टीयम् ॐ

द्भावेन तदन्तत्वाद्ग्रहः स्यादिति मन्यते। **तस्य लो।** **विपरिणामेति।** लोपस्य कर्मसाधनत्वे तु नायम्। **दिगिति।** नन्वादिर्ञिटुडूनामिति न्यासेन व्यञ्जनस्योपदेशेऽजित्यत्रचश्चेत्त्वे 'टुविनोऽश्वि'त्यादावुभयतो ग्रहणेन सिद्धौ किन्तस्य ग्रहणेनेति चेच्छृणु, उदित्वा'दुदितो वे'त्यस्य प्रसङ्गः, तत्र कर्म-

### ॐ वरवर्णिनी ॐ

**अन्त्यस्य लोपो नेति।** न चेत्पदस्य प्रथमान्तस्य षष्ठ्या विपरिणामो न क्रियते, किन्तु लोप इति कर्मसाधनः, तेन '**इत्लुप्यते**' इत्येव 'लोप' इति सूत्रस्यार्थः, एवञ्चात्समुदायबोधकपदोत्तरषष्ठ्या एवाभावेनालोन्त्यपरिभाषाऽप्रवृत्तौ नान्त्यस्येत्त्वापत्तिरिति नस्येति व्यर्थमिति वाच्यम्, 'नाभि नभञ्चे'ति वार्त्तिकेन गुणा अभेदका इति पक्षे उदात्तान्तनाभिशब्दस्थानेऽनुदात्तान्तनभादेशवारणायार्थिकेऽपि षष्ठ्यर्थबोधे 'स्थानेऽन्तरतम' इति परिभाषाप्रवृत्तेरावश्यकतयाऽलोन्त्यपरिभाषाया अपि आर्थिकषष्ठ्यर्थबोधे प्रवृत्तेर्दुर्वारतया नाभिशब्दस्य स्थाने नभ आदेश इति वदितस्थ्यकस्य लोप इत्यार्थिकषष्ठ्यन्तार्थबोधस्य प्रकृतेऽपि सम्भवेन तत्परिभाषाप्रवृत्त्यापत्तेः।

**वान्तो** । 'येन विधि'रित्यस्यापवादभूतया 'तस्मान्नुडची'त्याद्यर्थमावश्यिकया वाचनिक्या 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्त्तिककृदुक्तपरिभाषया लब्धमर्थमाह-**यकारादाविति** । **ओदौतोरिति** । 'ओदौतोरिति वक्तव्य'मितिवार्त्तिकमूला-

❀ अभिनव-चन्द्रिका ❀

**तस्मान्नुडचीत्याद्यर्थमावश्यिकयेति** । यत्तु यान्तप्रत्ययासम्भवादेव यादौ प्रत्यये इत्यर्थो भविष्यतीति तस्मान्नुडचीत्याद्यर्थमावश्यिकयेत्युक्तिर्नागेशस्यायुक्तैवेति, तन्न। गोमयमततीति गोमयात्, तस्माण्णिचि टिलोपे लटि गोमययतीत्यादौ यान्तप्रत्ययसम्भवेनपरिभाषाऽऽश्रयणं विनाऽसिद्धेः ।

केचित्तु—प्रत्ययाव्यवहितपूर्वत्वविशिष्टौ यकाराव्यवहितपूर्वत्वविशिष्टौ च यावोदौतौ तयोरवावौ भवतइति सूत्रार्थ इति नात्र यस्मिन्विधिरिति परिभाषाऽऽवश्यकीत्याहुस्तन्न । 'भानो यान्ति'त्यादौ प्रत्ययलक्षणेन प्रत्ययाव्यवहितपूर्वत्वस्य स्वतश्च यकाराव्यहितपूर्वत्वस्य सत्त्वेनावादेशापत्तेः।

यत्तु सर्वत्र 'प्रत्ययावयवे यकारे'इति वैयधिकरण्यान्वयेनोपपत्तौ इयं परिभाषैव नाऽऽवश्यकीति, तन्न, सम्भवति समानाधिकरण्येनान्वये वैयधिकरण्यान्वयस्यान्याय्यत्वात् । परिभाषाज्ञापकानां वैयधिकरण्यान्वयज्ञापनेऽपि उष्ट्रगोयुगमित्यादौ अवादेशस्य 'परमकाव' इत्यादौ 'कोः कत्तत्पुरुषेऽची'ति कदादेशस्य चाऽऽपत्तेश्च । 'परमकाव' इति तु कुत्सितः ऊः कूः, तस्मादणि तदन्तेन परमशब्देन समासे रूपमितिबोध्यम् ।

परे तु गव्युगजिति वक्तव्ये ओकारोच्चारणान्नोष्ट्रगोयुगमित्यत्राऽवादेशापत्तिः । न चोष्ट्रगो-युगमततीत्युष्ट्रगोयुगात्, तस्माण्णिजन्ताण्णिचि णिलोपटिलोपयोस्ततः पुनः क्विपि यलोपे तच्चरि-तार्थमिति वाच्यम्, इदुदुपधेभ्य आचक्षाणणिचोऽनभिधानेनैतादृशरूपस्यैवासम्भवात् । 'कोःक'दिति सूत्रे रथादिसाहचर्येण कुशब्दाघटितस्यैवोत्तरपदस्य ग्रहणेन परमकाव इत्यत्रापि दोषा भावाच्चेति दिक् ।

**वाचनिक्येति** । भाष्ये वचनरूपेण पठितयेत्यर्थः । अत्र 'न ल्यपी'ति, 'कौः कत्तत्पुरुषे' इत्येव सिद्धे 'रथवदयोश्चे'ति, 'अनेकवचने झल्ये'दित्येव सिद्धे 'बहुवचने झल्येत्,' 'ओसि चे'ति सूत्रद्वयकरणञ्च ज्ञापकमिति परिभाषेन्दुचन्द्रिकायां विस्तरः ।

**परिभाषयेति** । तदर्थस्तु—अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितमल्मात्रवृत्ति-विषयताप्रयोजकं सप्तम्यन्तं पदं स्वबोध्यार्थनिष्ठाऽऽद्यवयवतानिरूपकसमुदायस्य सञ्ज्ञा भवतीति ।

❀ चिदस्थिमाला ❀

स्वरूपसती सप्तमी एतत्प्रवृत्तौ निमित्तमिति सूचयन्नाह—**तस्मादिति** । आदिना 'नेड्वशि कृती'त्यादिपरिग्रहः । वार्त्तिककृदुक्तत्वादेवाह—**वाचेति** । एतेनान्यथास्य सिद्धिरिति प्राचोक्तमपास्तम् । यथा चैतत्तथा प्रति-

❀ ज्योत्स्ना ❀

**परिभाषालभ्यमिति** । परिभाषार्थस्तु—यस्मिन्सप्तम्यन्ते अल्रूपे ग्रहस्य=सप्तम्यन्तार्थनिमित्तता-

❀ सदाशिवभट्टीयम् ❀

धारयस्त्वशङ्यः,'उवुन्दिर्''उतृदि'रित्यादीनामसङ्ग्रहापत्तेरित्यादिर्दिगर्थोऽवसेयः। **वान्तो** । **मानाभावेति** ।

❀ विषमपदविवृतिः ❀

रिति परिभाषां विनैव यान्तप्रत्ययासम्भवाद्यादावित्यर्थो भविष्यतीत्याशङ्क्याह—**तस्मान्नुडिति** । **वाचनिक्येति** । इदं चिन्त्यं—'न ल्यपी'ति लिङ्गेन तत्सिद्धेरिति केचित् । **यस्मिन्विधिरिति** ।

व्याख्यानादिति भावः। 'पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णय'इति 'स्थानेऽन्तरतम'सूत्रस्थकैयटोक्तन्तु न युक्तम्, वान्तज्ञानाय सूत्रपर्यालोचनस्याऽऽवश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात्। यथासङ्ख्यसूत्रसहकारेण बोधोत्तरं तयोस्तत्त्वनिर्णयात्। अन्तरतमपरिभाषया निर्वाहे तु—लक्ष्यपर्यालोचनकाले तन्निर्णयः। अत एव 'पूर्वसूत्रे स्थानिविशेषलाभो यथासङ्ख्यसम्बन्धात्, इह तु निमित्ताभावात्तल्लाभाभावः' इति षष्ठे प्रकृतसूत्रे कैयटः? **गव्यमिति**। भत्वाद्वलोपो न। यीति किं? गोभ्याम्। प्रत्यये किं? गोयानम्।

## ❀ अभिनव-चन्द्रिका ❀

**बोधोत्तरमिति**। वस्तुतस्तु 'एचोऽयवायाव' इत्यादेर्यथासङ्ख्यसूत्रसहकारेण 'स्वस्थानिकत्व'—'स्वविशेष्यकापेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावत्त्वं'तदुभयसम्बन्धेन एचोऽयादिषु सम्बन्धः। विषयतासाजात्यञ्च विषयतायां—'स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व'—'स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वावच्छिन्नधर्मितात्व'—'तादृशैकत्वानवच्छिन्नधर्मितात्व-तदन्यतरवत्त्व' एतदुभयधर्मेण इति पुनर्यथासङ्ख्यसूत्रसहकारेण बोधान्तरस्य नापेक्षेति चिन्त्यमेतत्।

न च सहविवक्षाया अभावाद्द्वन्द्वासाधुत्वमिति वाच्यम्, एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वयसत्त्वेन तस्याः सत्त्वात्। **प्रकृतसूत्रे कैयट इति**। एवञ्च पूर्वपरविरुद्धत्वात् पूर्वकैयटश्चिन्त्य इति भावः। 'हलि सर्वेषा'मित्यत्र यकारस्यैवानुवृत्तिमभिप्रेत्याह—**लोपः शाकल्यस्येति वेति**।

## ❀ चिदस्थिमाला ❀

पादितं भावप्रकाशे। मनोरमा-रत्नाकर-दण्ड्याद्युक्तेरसाङ्गत्यध्वननायाह—**पूर्वेति**। **वान्तेति**। वान्तपदार्थेत्यर्थः। ननु तत्पर्यालोचने तदपि स्यादत आह—**यथेति**। तथा च सामान्यतो ज्ञातोऽपि वाक्यार्थबोधो नैतदुपयोगीति भावः। ननु न तत्सहकारेण बोधावश्यकत्वं, प्रागुक्तरीत्या 'स्थानेऽन्तरतम' इत्यनयैव निर्वाहादत आह—**अन्तरेति**। एवञ्च तत्रापि न मानमिति भावः। कैयटयोर्मिथो विरोधमपि सूचयन्नाह—**अत एवेति**। ओदौतोरिति वार्त्तिकोपपादकोऽयं ग्रन्थः। [यद्यप्यस्य सूत्रस्य पूर्वसूत्रनियामकत्वेन तत्रौदोतोरित्यस्य सत्त्वेनात्र धातोरोदौतोश्चेद्वान्तादेश इति अनुचितो मूले तथा निलाप्यवेनावस्मिन्निमि-

## ❀ ज्योत्स्ना ❀

ग्रहस्य करणे=अर्थाद्व्यावृत्तिकरणे विशेषणे—यो विधिः स तदादौ बोद्धव्यः—'इति। विशेषस्तु **परिभाषाप्रदीपार्चिषि** द्रष्टव्यः।

**न युक्तमिति**। आचार्यपारम्पर्याच्छिष्याणामनुक्रमेणैव सूत्रतद्वाक्यार्थयोरध्ययनतात्पर्यपर्यालोचने प्रायशो दृष्टे। अत एव 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरा'नित्यादेरुपिसम्भव

## ❀ सदाशिवभट्टीयम् ❀

ननु यथा वान्तपदे सामान्यतः श्रुते विशेषाकाङ्क्षायां पूर्वसूत्रपर्यालोचनं तथा स्थानिजिज्ञासया वाक्यार्थपर्यालोचनमावश्यकमिति चेन्न। स्थानिजिज्ञासायामेच इति श्रुतेन तस्याः शान्तावपि विशेषस्थान्यंशे निराकाङ्क्षत्वेन तदलाभादित्याहुः। पदपर्यालोचनेऽर्थावगतिर्जातैवात आह—

## ❀ विषमपदविवृतिः ❀

सप्तम्यन्ते विशेषणेऽल्शब्दे उपादीयमाने यस्मिन्नलि यो विधिः स तदादौ इत्यर्थः। 'हलि सर्वेषा'-

ननु 'गव्यूति'रित्यत्र वस्य 'हलि सर्वेषा'मिति 'लोपः शाकल्यस्ये'ति वा लोपः स्यादत आह—**वान्त इत्यत्रेति** । न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यं, निमित्तत्वानाक्रान्ते विषये कार्यित्वस्य चारितार्थ्यात् ।

तक्रकौण्डिन्यन्यायश्चानवकाशविषयो विधेयविषयश्चेति स्पष्टं 'तद्धितेष्वचा'मिति सूत्रे

ॐ अभिनव-चन्द्रिका ॐ

**कार्यित्वस्य चारितार्थ्यादिति** । परे तु विषयतयोर्यत्र व्याप्यव्यापकभावस्तत्रैव तक्रन्याय-प्रवृत्तौ–वलन्तप्रयोज्यनिमित्तविषयतायाः, 'व्यो'रित्येतत्प्रयोज्यस्थानितायाश्च सामानाधिकरण्यस्यैव दुरुपपादत्वेन 'नात्र तक्रन्यायविषय' इत्येव लेखनीयम् । **विधेयविषयश्चेति** । विभिन्नविभिन्नविधेयता-निरूपितोद्देश्यदलीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । अथवा विधेययोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च सम्बन्ध उद्देश्यो-द्देश्यतावच्छेदकादेर्विधेयेन साकं यः सम्बन्धः तत्तुल्यवित्तिवेद्यसम्बन्धो बोध्य इत्यन्यत्र विस्तरः ।

अत्रेदं तत्त्वम्,–एकविनियोगोद्देशेन प्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकपदप्रति-पाद्य वच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्ना-

ॐ चिदस्थिमाला ॐ

[तेसर्व्यकवचनस्यानुरोधेनैचश्चेदित्युक्तम् ?][1] । उक्तरीत्या गव्यमित्यत्र लोपाप्राप्तेराह—**ननु गव्यूतिरिति** । तस्यासिद्धत्वात्तत्र वकारग्रहणाननुवृत्तेश्चाह—**लोप इति** । एतेन विपरीतं **रत्नाकरो**क्तिरपास्ता । न च 'त्यदादीनाम' इत्यत्रैव वार्तिकद्वयपाठेन भवदभिमतसिद्धावत्र पाठसामर्थ्यादेव न वलोप इति प्रश्लेषादि वैयर्थ्यमिति वाच्यम्, उपायस्योपायान्तरादूषकत्वात् । प्रश्लेषतः सामर्थ्यकल्पितापूर्ववचनाङ्गीकारे गौरवात्, सामर्थ्येन सर्वथा शास्त्रबाधकल्पनापेक्षया पाक्षिकबाधकल्पनस्यैवौचित्येन तावतैव तस्य साफल्येन पाक्षिक-लोपापत्तेर्दुर्वारत्वात् । अङ्गाधिकारे पाठे तदन्तविध्यापत्तौ गोशब्देनाव्ययीभावे तद्धितार्थविषयतत्पुरुषे समाहारद्वन्द्वे चैकदेशेतिन्यायेनेतरेतरद्वन्द्वे स्वतश्च गोऽन्तत्वस्य सत्त्वेन तस्य पूतौ तदादेशापत्त्या अनिष्ट-रूपापत्तेश्चेतिदिक् । **बाध इति** । तथा च सूत्रे वद्वयश्रवणापत्तिरिति भावः । तदप्राप्तियोग्येऽचारि-तार्थ्यस्य तद्वीजत्वादाह—**निमित्तत्वेति** । ननु 'येन ने'ति न्यायेन बाधे तथा सत्त्वेऽपि प्रकृते 'तक्र-कौण्डिन्य' न्यायेन बाधोऽत आह–**तक्रेति** । **चेन**–'येन ने'तिन्यायसमुच्चयः । **सूत्रे इति** । तत्र हि क्रौष्ट्रो

ॐ ज्योत्स्ना ॐ

इति तु **कैयटोपाध्यायानामाशयः** । **निमित्तत्वबाध इतीति** । तथा च 'लोपो व्यो' रित्यस्य वकारे परतोऽप्रवृत्त्या वान्त इति निर्देशासङ्गतिरिति भावः । **निमित्तत्वानाक्रान्त इति** । वकारभिन्ने रेफादावित्यर्थः । 'अन्यथा रलीत्येव वदे'दिति बृहच्छेखरोक्तं तु न युक्तम्, भवेवेत्यादाविव यकारस्य वकारे परतो लोपानां काव्यमीमांसकैरुक्तत्वेन प्रकृते यत्र इव तत्तदर्थापत्तेः । **विधेयविषय इति** । इदमभ्युच्चयमात्रं, वस्तुतस्तत्र यावदप्राप्तं तावद्विधेयं

ॐ सदाशिवभट्टीयम् ॐ

**यथेति** । 'हलि सर्वे'इत्यत्र वग्रहणासम्बन्धात्तस्यासिद्धत्वाच्चाह—**लोपः शेति** । **विधेयविषयश्चेति** । अयं

ॐ विषमपदविवृतिः ॐ

मित्यत्र वग्रहणं नानुवर्त्तते इत्यभिप्रेत्याह—**लोपः शाकल्यस्येति** । **निमित्तत्वानाक्रान्ते इति** । यथा प्रकृते—पूर्ववकारे । न हि ततः पूर्वं लोपकार्यी तिष्ठति येन तस्य निमित्तत्वं स्यात्, 'अचो रहाभ्या'मित्यत्र तु रेफे द्वित्वनिमित्ते नियमेन द्वित्वकार्यित्वं प्राप्नोति । **विधेयविषयश्चेति** । 'अचो रहाभ्या'मित्यनेन रेफस्य द्वित्वनिमित्तत्वमपूर्वं बोध्यमिति विधेयमेवेति भावः ।

१. [ ] एतदन्तर्गतः पाठोऽसंलग्नः प्रमादापतितो भाति ।

यङ्विधायके च भाष्ये। अन्ये 'उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यं, क्रियासमभिहारे च नैतेभ्यो यङा भवितव्य'मिति भाष्ये चेन 'विशेषासम्प्रत्यया'दित्यनुकृष्यते। अन्यथा—तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासम्प्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः। निरूपयिष्यते चेदं यङन्ते। तस्य च वार्त्तिकेऽनुवृत्त्या यूतौ श्रयमाणवकारान्त आदेश इत्यर्थः। सूत्रे तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावात्;

❀ अभिनव-चन्द्रिका ❀

तिरिक्तत्वेन सङ्कोचो भवतीत्यत्र तात्पर्यग्राहकेण—धर्मयोर्यत्र व्याप्यव्यापकभावस्तद्विषयेण—'माठरपरिवेषण'न्यायेन कार्यित्वेन निमित्तत्वबाधः कस्मान्नेति शङ्कैवात्रोचिता। समाधानमपि—तस्यानित्यत्वम्, विभिन्नवाक्यघटकपदप्रतिपाद्यतावच्छेदकधर्मयोर्यत्र व्याप्यव्यापकभावस्तद्विषयोऽयं न्याय इति नात्र तत्प्रवृत्तिरिति वा वक्तुमुचितमिति दिक्।

❀ चिदस्थिमाला ❀

जागत' इत्यादावन्त्योपधावृद्ध्योर्निषेधवचनमुक्त्वोक्तन्यायेन तयोरादिवृद्ध्या बाधमाशङ्क्य दृष्टान्ते'नाप्राप्तिसत्त्वेऽपि इह सौश्रुत इत्यादौ तयोरप्राप्त्या तदभाव' इत्युक्तम्। 'सामान्यविशेषभावो बाधहेतुः, स चेह नास्ती'ति कैयटः। निमित्तांशे तत्सत्त्वेऽपि कार्यांशे तदभाव इति तदाकूतम्। आद्ये स्पष्टत्वादाह—अन्ये इति। 'धातोरेकाच' इत्यत्रेत्यर्थः। उत्तरयोरिति। नित्यं कौ, लुपसदेत्यनयोरित्यर्थः। तस्याग्रेऽप्यनुवृत्तिरिति भावः।

ननु तेभ्यः क्रियासमभिहारे नित्यं यथा स्यादिति तदावश्यकमत आह—क्रियेति। समुच्चयाभावादाह—चेनेति। अन्यथा तस्य सावकाशविषयत्वादौ क्रियासमभिहारादेर्यङ्द्योत्यतया तद्वृत्तेर्धातोरित्यर्थेनानुवाद्यत्वं न विधेयत्वं, क्रियासमभिहाराविवक्षायां चारितार्थ्यञ्च, तत्रापि तत्प्रवृत्तौ तेन सिद्ध्या तदानर्थक्यमिति नित्यग्रहणं प्रत्याख्यातं, तदाह—निरूपेति। प्रकृतमाह—तस्य चेति। प्रक्लिष्टवस्य चेत्यर्थः। यूताविति। गोरित्यादिसामर्थ्यलभ्यमर्थमाह—श्रूयेति। सूत्रे=तद्विषये। तस्य प्रत्यये प्रवृत्तिः, स च द्विविधः, तद्धितः, कृच्च, तत्राद्ये आह—गव्यादाविति। भत्वेनेति। 'बाधेने'ति शेषः। द्वितीये

❀ ज्योत्स्ना ❀

न ह्यग्निर्दग्धं दहतीतिप्राप्ताप्राप्तविवेकन्यायेन—'रक्तं पटं वये'त्यादावेकद्वित्रिविधीनां काव्यमीमांसकैरुक्तत्वेन प्रकृते यङ इव तत्तदर्थानामप्यस्ति तद्वद्वकारस्य विशेषणशब्देन कार्यित्वबोधनादत एव 'रहाभ्यामिति विशेषतः श्रुतेन निमित्तभावेन तयोः कार्यित्वबाध' इति भाष्ये उक्तम्। स्पष्टञ्चेदं 'धात्वंश'इति प्रतीके मनोरमाशब्दरत्नयोः। विस्तरस्तु परिभाषाप्रदीपार्चिषि द्रष्टव्यः। न पदान्त-

❀ सदाशिवभट्टीयम् ❀

सङ्कोचो निष्फलः। आद्येनैव सर्वसामञ्जस्यादित्याहुः। अन्ये इति। उत्तरयोः='नित्यङ्कौटिल्ये' 'लुपसदे'त्यनयोः। विग्रहेण वृत्तिप्रतिपाद्यविशेषयोः कौटिल्यगर्हयोः शक्तिस्वभावेनासम्प्रत्ययान्नित्यग्रहणमनर्थकम्। 'क्रियासमभिहारे तद्वारणाय त'दित्यपि—न, गत्यर्थकात्तत्रापीष्टत्वेन लुबादिभ्यश्च यङेव न, स्वभावेन समभिहाररूपविशेषाप्रत्ययेन तद्वारणस्य सुकरत्वादित्यादि तिङन्तशेखरे द्रष्टव्यमित्याहुः।

❀ विषमपदविवृतिः ❀

**विशेषासम्प्रत्ययादिति**। 'कुटिलं व्रजती'ति वाक्यात्कुटिलं पन्थानं गच्छतीत्यस्यैव प्रतीतिर्न तु कौटिल्यविशिष्टव्रजनरूपविशेषस्य सम्प्रत्ययः शब्दस्वाभाव्यादित्यर्थः। **अनुकृष्यत इति**। अनुकृष्यमाणस्य च यङन्तेन क्रियासमभिहाररूपविशेषासम्प्रत्ययादित्यर्थः।

लव्ये स्वत एव तदभावाल्लोपाप्राप्तेः । गोशब्दादिभ्यः क्यजादावपि—'नः क्ये' इति नियमेन पूर्वस्य पदत्वाभावात् । एवन्तर्हि वार्तिके एव प्रश्लेष उचित इत्याशयेनाह—**छकाराद्येति** । 'लोपो व्यो'रिति सूत्रे वकारप्रत्याख्यानन्तु लौकिकोदाहरणाभावेन तदर्थतया बोद्धयन् । अत एव 'इको गुणे'ति सूत्रे "–'अतो ल्रान्तस्ये'त्यत्र लुप्तनिर्दिष्टो वकार–" इत्युक्तं भाष्ये । शास्त्रीयसौत्रप्रयोगार्थन्तदिति तदाशयः । न चैवं 'विष्णवे' इत्यादौ 'तस्य लोप' इति दुर्वारं, गव्यूतावुच्चारणस्य चारितार्थ्यादिति वाच्यं, 'गत्रि च युक्ते' इत्यादिनिर्देशैर्वारणात् ।

परे तु—सा पूर्वपक्ष्युक्तिरिति न वकारप्रश्लेषो लोपेनोचितः । किञ्च च्छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ । अध्वपरिमाणेऽपि सञ्ज्ञा-

ॐ अभिनव-चन्द्रिका ॐ

**सञ्ज्ञात्वभङ्गापत्तेरिति** । नच 'पूर्वपदात्सञ्ज्ञाया'मित्यस्य 'कृतणत्वेन यत्र सञ्ज्ञात्वाऽवगमस्तत्रैव णत्व'मित्यर्थेन सञ्ज्ञात्वभङ्गभयेन रघुनाथादिशब्दे णत्वाभावेऽपि 'हलि सर्वेषां' 'लोपः शाकल्यस्ये'त्यत्र सञ्ज्ञायामित्यस्याभावेन यत्र कृतणत्वेन सञ्ज्ञावगम इत्याद्यर्थालाभाद्दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण लौकिकगव्यूतौवलोपो दुर्वार इति वाच्यम्,अध्वपरिमाणबोधकत्वमुपजीव्यप्रवृत्तस्यावादेशस्याध्वपरिमाण-

ॐ चिदस्थिमाला ॐ

आह—**लव्ये इति** । **स्वत एवेति** । तदप्राप्तेरेवेत्यर्थः । उभयमिन्नेपि तत्र न फलमित्याह—**गोशब्देति** । आदिना क्यङ्परिग्रहः । एवं पूर्वपक्षाशयं प्रतिपाद्योत्तरपक्षमवतारयति—**एवं तर्हीति** । तत्रैवं फलसत्त्वे चेत्यर्थः । लाघवादिति भावः । ननु 'लोपो व्यो'रित्यत्र वकारस्य प्रत्याख्यानात्कथमिष्टसिद्धिरत आह—**लोप इति** । इदं प्रमाणयति—**अत एवेक इति** । सिच्यन्तरङ्गत्वाङ्गीकारेऽलावीत्यादिसिद्ध्यर्थमिति भावः । लौकिकत्वनिरासायाह—**शास्त्रीयेति** । अनतिप्रसङ्गायाह—**सौत्रेति** । **न चैवमिति** । वार्तिके उक्तरीत्या तथार्थाङ्गीकारे इत्यर्थः । आदिना–सजातीयपरिग्रहः । मूलं खण्डयति—**परे त्विति** । **सेति** । 'इको गुणे'ति सूत्रस्थेत्यर्थः । सिच्यन्तरङ्गस्य न्यायेन बाधात्तस्य तत्त्वमिति स्पष्टमन्यत्र । एवञ्च वकारप्रत्याख्यानसङ्कोचो न युक्त इति लोपाप्राप्त्या नेष्टसिद्धिस्तदाह—**नवेति** । नन्वस्तु प्रकारासङ्गतिस्तथापि तत्र लोपकरणं कथमत आह—**किञ्चेति** । तत्रादावाद्यवार्तिकविषये आह—**छन्दसीति** । द्वितीये आह—**अध्वेति** । अध्वपरिमाणेऽपि तत्र गव्यूतौ सञ्ज्ञात्वभङ्गापत्तेर्न वलोप इत्यन्वयः । तत्र हेतुमाह—**सञ्ज्ञेति** । 'यतोऽन' इत्याद्यन्तौ । एवमन्यत्रापि दृष्टमावश्यकमित्याह—

ॐ विषमपदविवृतिः ॐ

**लौकिकोदाहरणेति** । छन्दसि तु जीवे रदानुकि जीरदानुः स्त्रिवेरास्त्रेमाणमित्युदाहरणमस्त्येवेति भावः । **व्यवस्थितत्वादिति** । व्यवस्थित विकल्पत्वादित्यर्थः ।

ॐ वरवर्णिनी ॐ

**नः क्य इति** । जगद्विदितपाण्डित्यप्रकर्षाः **शेषावतारगुरुवरश्रीहरिनारायणत्रिपाठिचरणास्तु**— "गां नयतीति गोनीः,=गोपः, गोन्यमाचष्टे गोनयति, गोनयतीति–गोन्=गवाध्यक्षः । तं गोनमिच्छति–गव्यतीत्यत्र नान्तत्वेन 'नः क्ये' इति पदत्वान्नलोपेऽवादेशे च वलोपाभावार्थं सूत्रेऽपि प्रश्लेष आवश्यकः । पदसञ्ज्ञायां नलोपस्यासिद्धत्वात्पदत्वम् , अवादेशे तु नलोपो नासिद्धः, 'नलोपः सुप्स्वरे'तिनियमादिति चिन्त्य एवायं ग्रन्थ"—इत्याहुः ।

शब्दोऽयम्, तत्र सञ्ज्ञात्वभङ्गापत्तेर्न वलोपः। यथा रघुनाथेति सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याभावः। सर्वनामशब्दे णत्वाऽऽशङ्का तु—तस्य सञ्ज्ञाविशेषे आधुनिकविनियोगाच्छास्त्रानुसारिशब्दस्यैव विनियोग उचित-इत्यभिप्रायेण। निरूपितश्चैतत्सर्वादीनीतिसूत्रे भाष्यप्रदीपोद्द्योते इत्याहुः। निरूपयिष्यते चेदं 'पूर्वपदात्सञ्ज्ञाया'मिति सूत्रे।

### ॐ अभिनव-चन्द्रिका ॐ

बोधकत्वविघातकलोपप्रवृत्तिं प्रत्यनिमित्तत्वेन सन्निपातपरिभाषया वकारलोपाप्राप्त्या वकारप्रश्लेषो व्यर्थ इत्यदोषात्। केचित्तु त्रिपाद्यां सन्निपातपरिभाषाया अप्रवृत्त्या 'लोपो व्यो'रिति लोपेन वकारप्रश्लेष आवश्यक एवेत्याहुः। परे तु–आत्थेत्यादौ थले कृते ईडादिवारणाय त्रिपाद्यामपि क्वचित्तस्याः प्रवृत्तिरित्याहुः।

### ॐ चिदस्थिमाला ॐ

यथेति। 'पूर्वपदात्सञ्ज्ञाया'मिति प्राप्तस्येत्यर्थः। नन्वेवं सर्वनामशब्दे णत्वाशङ्कायां भाष्यविरोधोऽत आह—**सर्वेति**। युक्तिसम्भवेनाज्ञानकल्पना नोचितेत्याशयेनाह—**तस्येति**। तत्र चिरन्तनमतत्वादाह—**आधुनिकेति**। 'दीनीति सूत्रे' इति पाठः। एतेन सञ्ज्ञापूर्वक इति 'लोपः शाकल्यस्ये'त्यस्यव्यवस्थितविभाषात्वाद्वा नलोप इति प्रकाशरत्नाकराद्युक्तमपास्तम्।

### ॐ विषमपदविवृतिः ॐ

**इत्याहुरिति**। परे तु 'लोपो व्यो'रिति सूत्रे वकारप्रत्याख्यानमेकदेश्युक्तिः, इको गुणेति सूत्रस्थभाष्यविरोधात्, अत एव 'न पदान्त'सूत्रे 'वृक्ष'विन्यत्र 'पदान्तस्य स्थाने इत्यर्थे 'लोपो व्यो'रिति लोप आपादितो दीक्षितेन। लण्सूत्रे च 'वृक्षव् करोती'त्यत्र 'लोपो व्यो'रिति लोपस्याग्रिमशेखरे आशङ्किष्यमाणत्वाच्च। अत एव—

'सुधे सुधेवाऽरिवधात्सुराणां सुका रणे लाघवतश्च रामः।
विशेषणे द्वे य इहादिकर्तुर्वेदेदधीती स हि कैयटीये॥'—

—इत्यभियुक्तोक्तिः सङ्गच्छते। तत्र हि 'सुधे' 'सुक'रिति धिन्विकृण्विभ्यां विचि गुणे रूपम्। न च 'सुधे' इत्यत्र 'न धातुलोप' इति गुणनिषेधः शङ्क्यः, आर्धधातुकत्वनक्षाप्यान्यतररूपेणार्द्धधातुकनिमित्तके लोप एव तत्प्रवृत्तेः, अन्यथा 'न धातुलोपे'त्यस्य प्रत्यास्यानेन फलभेदापत्तेः। 'अगुषी'दित्यादौ तिन्निमित्तकगुणवारणाय लघूपधाद्विहिने प्रत्यये गुण इत्यर्थे तत्र गुणो दुर्लभः, अत एव च 'च्छ्वोः शू'डिति सूत्रे भाष्ये–'ऊठ्छिले ऊट् आदिः कस्मान्न भवति? अस्तु

### ॐ वरवर्णिनी ॐ

**रघुनाथेतीति**। 'पूर्वपदात्सञ्ज्ञाया'मित्यनेन सञ्ज्ञात्वसम्पादकणत्वस्यैव विधानेन रघुनाथादौ सञ्ज्ञात्वविनाशकणत्वादेरप्रवृत्तेर्युक्तत्वेऽपि 'अध्वपरिमाणे चे'त्यस्य—'अध्वपरिमाणबोधकोऽवादेशो भवति, न तद्भञ्जक' इत्येवमेवार्थस्य स्वीकारेण गव्यूतिरित्यत्राध्वपरिमाणबोधकावादेशस्य प्रवृत्तावपि पश्चा'ल्लोपः शाकल्यस्ये'ति प्राप्तस्य लोपस्य वारणमशक्यमिति चिन्त्योऽयं ग्रन्थ इति **श्रीबालशास्त्रिचरणा**नामाशयमस्मत्पितामहचरणाः **श्रीसनेहिरामशास्त्रिण** आविश्चक्रुः। **गौडास्तु**—'परम्परयाऽवादेशस्य सञ्ज्ञाभञ्जकत्वाल्लोपसम्भावनयाऽवादेशो न स्यादिति वार्तिकारम्भसामर्थ्यादेव लोपो नेत्याहुः। **मान्यास्तु**—'रघुनाथशब्दोऽयं न सञ्ज्ञाशब्दः, किन्तु यौगिक एवायं, रघुवंशादौ बहुशो योगार्थतात्पर्येणैव प्रयोगाणामुपलम्भादिति चिन्त्योऽयं शेखर' इत्याहुः।

धातोस्त । 'धातो'रित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्तथा च 'गव्य'-मित्यत्र न स्यात्, 'ओयते' इत्यत्र च स्यात्। तदभावे सामान्यतो नियमापादनन्तु योग-विभागैवकारवैयर्थ्यापत्तेरयुक्तम् । 'तन्निमित्तस्य चेद्धातोरेवे'ति नियमे बाभ्रव्यासिद्धे-

## ❀ अभिनव-चन्द्रिका ❀

**धातोस्तन्निमित्तस्यैव** । नच 'न यर्की'त्येव सूत्रमस्त्विति वाच्यम्, भूधातोर्विचि तस्माद्धितार्थे यति 'भोय'मित्यादौ वान्तादेशापत्तेः । **प्रातिपदिकविषयो नियमः स्यादिति** । स्यादेतत्–'नियामक-शास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नाति-रिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवती'ति सिद्धान्तः । तथा 'च प्रातिपदि-कमात्रविषय' इति ग्रन्थेन–यकारादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टप्रातिपदिकावयवैच्त्वं सङ्कोच्यताव-च्छेदकमिति लभ्यते । न च यकारादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टधात्ववयवैच्त्वं सङ्कोच्यतावच्छेदकं कस्मान्नेति वाच्यम्, बाभ्रव्यादौ व्यभिचारेण निरुक्तरूपे नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वा-लाभात् । एवञ्च 'वान्तो यि प्रत्यये'इत्यत्र तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचे वान्तो यीति सूत्रमेव व्यर्थं स्यादिति चेन्मैवम्, ओयते औयतेत्यत्र वान्तादेशार्थं तच्चरितार्थ्येनादोषात् । न चैवमपि धातु-ग्रहणसत्त्वे धातोरेचश्चेदित्यादिमूलग्रन्थतो धात्ववयवत्वविशिष्टयादिप्रत्ययाव्यवहितपूर्वविशिष्टैच्त्वा-वच्छिन्नातिरिक्तत्वेन सङ्कोच इति फलति, तथा च गव्यतीत्यादौ वान्तादेशानापत्तिरिति वाच्यम्, यादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टैजन्तधातोश्चेत्तर्हि तन्निमित्तस्यैवेति नियमस्वीकारेणादोषात् । नच तथा सति एजन्तस्थाने वान्तादेशापत्तिः, निर्दिश्यमानपरिभाषया वारणात्। **इत्यरुचेराहेति** । वस्तुतस्तु 'नाजानन्तर्ये' इति निषेधादियमरुचिरसङ्गतेति केचित् । परे तु–'सा परिभाषा नास्त्येवेति दोष'इत्याहुः ।

## ❀ चिदस्थिमाला ❀

**मात्रपदेन सामान्यनियमव्यवच्छेदः । स्यादिति ।**—सम्भावनायान्तथा चैच इत्यनुवृत्त्या 'यादौ प्रत्यये परे प्रातिपदिकस्यैचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैवे'ति नियमेन बाभ्रव्यादिसिद्धिरिति भावः । तत्रादौ त्वव्याप्तिमाह—**तथा चेति** । अतिव्याप्तिमाह—**औयत इति** । प्राचोक्तिं खण्डयति—**तदभावे इति** । धातुग्रहणाभावे इत्यर्थः । **सामेति** । एचो यादौ प्रत्यये चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैवेतीत्यर्थः । **पत्तेरिति** । विशिष्टस्य विधिनैव तत्फललाभादिति भावः । एतेन मूले फलानुक्तत्वाद्धातुग्रहणं व्यर्थमित्यपास्तम् । **इष्टतोऽवधारणार्थं** एवकार इत्याह—**तन्निमित्तेति** । एव इत्यर्थः । तच्छब्देनासम्भवात्सन्निहितोऽपि धातुर्न परामृश्यते किन्तु यादिप्रत्यय इति भावः । 'नहीं'ति शेषः । **बाभ्रेति** । ओयत इत्यादौ धातोस्तन्निमित्तस्याप्यापत्तेश्चेत्यपि बोध्यम् । क्विबन्त-

## ❀ सदाशिवभट्टीयम् ❀

**धातोस्त** । 'न यर्की'ति तु न सूत्रितम् । जनावि साधुर्जनौयमित्यत्रावादेशापत्तेरित्याहुः । मम तु तन्निमित्तत्वाभावाद्धातुसंशब्दनेन विहितप्रत्ययपरत्वाभावाच्च न सः । अत एव क्विबन्तभूशब्दा'त्तत्र साधु'-रिति यति—भोयमित्येव ।

## ❀ विषमपदविवृतिः ❀

आदिर्लोपो व्योरिति वकारस्य लोपो भविष्यती'त्युक्तं भाष्ये । तत्रैव कैयटे–क्विग्रहणाननुवृत्तिपक्षे दिवे-र्यङ्लुकि 'देदेती'त्युक्तम् । छन्दसि सर्वविधीनां वैकल्पिकत्वमाश्रित्य–'गव्यूति'रित्यत्र वलोपवारणं त्वगतिकगतिः । 'लोकेऽध्वपरिमाणे सवकारेणैवाध्वपरिमाणप्रतीत्या वलोपो ने'त्यपि शिथिलम् । न हि 'पूर्वपदा'दित्यत्रेव 'सवकारेणाध्वपरिमाणे गम्ये वान्तादेश' इत्यर्थोऽस्ति । वस्तुतः 'पूर्वपदा'-दित्यत्रापि 'सणत्वेन सञ्ज्ञायां गम्यमानाया'मित्यर्थो न युक्तः । 'अग' इत्यस्य वैयर्थ्यापत्तेः, रघु-नाथादौ क्षुभ्नादित्वाण्णत्वं नेत्याहुः ।

स्तद्वारणायैवकारः। **लाव्यमित्यादि।** अत्र गुणवृद्ध्योर्यण्णयनिमित्तकत्वेनैचो यादिप्रत्ययनिमित्तकता। **तन्निमित्तस्येति किमिति।** सूत्रमेव किमर्थमिति प्रश्नः। **ओयत इति।** वेञः कर्मणि लटि यकि यजादित्वात्संप्रसारणेऽकृत्सार्वेति दीर्घे अङा सहाऽऽद्गुणः। नधातुलोपसूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे गुणोऽसिद्ध इत्यरुचेराह—**औयतेति।** तस्मादेव कर्मणि लङि आडागमे वृद्धिः पूर्ववत्।

**क्षय्यज।** क्षि क्षये, जि जये, इत्यनयोरेव ग्रहणं, न तु क्षीष् हिंसायाम्, क्षै जै क्षये, इत्यनयोर्व्याख्यानात्। अत एव 'क्षिज्योरेवेच' इति भाष्ये उक्तम्। **तस्मै प्रेति।** क्रयार्थे वस्तुनि क्रय्य इति निपात्यते इत्यर्थो, व्याख्यानाद्गुणभूतस्यापि तदा

ॐ चिदास्थमाला ॐ

भूशब्दाद्धितार्थे उगवेति यति सत्यभिधाने—भव्यमिति भवत्येव, धातोः कार्याभावेन 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवती'ति परिभाषाया अप्राप्तेः। एतेन—'धातोः स्वरूपग्रहणे' इति परिभाषया नियमस्य धातुप्रत्ययविषयकत्वेन तत्र न वान्तादेश इत्यपास्तम्। तत्पाठस्य प्रसङ्गमिति(?)त्यागा वनुगतो त्यमागमापादनेन भाष्ये दूषितत्वादिति बोध्यम्। **अत्रेति।** तेनैव रूपेण निमित्तेत्यत्र नाग्रह इति भावः।

यद्यपि एवरहितप्रश्नेनैकदेशे प्रश्न इति मूलतो लभ्यते, तथापि तद्द्वारा समुदायप्रश्ने तात्पर्यं, तदभावे नियमासम्भवे सूत्रस्यैव वैयर्थ्यादित्याह—**सूत्रमेवेति।** पूर्वेणैव सिद्धेरिति भावः। **न धात्विति।** नन्वित्यादिः। तत्र ह्यार्धधातुकग्रहणस्य लोपविशेषणत्वपक्षे उपेद्धादौ दोषमाशङ्क्य 'बहिरङ्गो गुणोऽन्तरङ्गो वा नलोप' इत्युक्तम्। 'पक्षभेदेनोदाहरणद्वय'मिति प्राचोक्तिं खण्डयन्पक्षयोरेकवाक्यतयाऽनुभूयते मुक्तमित्यादिसाधिकया लब्धमर्थमाह—**बहिर्भूतेति।** यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं तद्विशिष्टोपसर्गनिमित्तत्वात्तदन्तरङ्गं, यत्तु न तथा—तत्र 'पूर्वागतसाधननिमित्तकमेवान्तरङ्ग'मिति पश्चादागतोपसर्गनिमित्तकत्वेन तयोः कार्यस्य बहिर्भूतेत्यर्थः। **वृद्धिरिति।** आटश्चेतीति भावः। एवव्यवच्छेद्यमेवाह—**नत्विति।** **इत्यनयोरिति।** इत्यर्थकयोरित्यर्थः। व्याख्याने मूलमाह—**अत एवेति।** अन्यथा तथा निर्देशासङ्गतिः स्पष्टैवेति भावः। सूत्रार्थमाह—**क्रयार्थ इति।** ननूभयमप्ययुक्तं, सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वेन प्रत्ययार्थपरामर्शौचित्यादिति चेन्न, तथाहि सति यदि स एवार्थस्तदर्थ इति तत्पुरुषः तदा क्रय्यशब्दः स्वार्थे वर्तेत इत्यर्थलाभेन तदर्थलाभेन तदर्थग्रहणं व्यर्थं स्यात्। अथ सोऽर्थो यस्येति बहुव्रीहिस्तथापि शब्दे शब्दस्य वृत्त्यभावादनर्थकमेव तत्स्यात्तस्मात्सामर्थ्याद्गुणभूतस्यापि तस्य विनिमयलक्षणस्य ग्रहणम्, 'अर्थेने'ति समासस्तदतदभिप्रेत्याह—**व्याख्यानादिति।** तदा=तच्छब्देन। उक्तमेव व्यतिरेकमुखेन द्रढयति—

ॐ सदाशिवभट्टीयम् ॐ

**औयत इति।** नन्वत्रापि वान्तादेशे बहिरङ्गयकोऽसिद्धत्वं, रियतीत्यत्र यथेति चेन्न। एतादृशान्तरङ्गत्वस्य जातबहिरङ्गासिद्धत्वनियामकत्वं नेति परत्रोक्तत्वात्। अत एव क्षीयत इत्यादौ यकि दीर्घादि सिध्यतीत्याहुः।

यद्यप्यत्र सूत्रे धातोरोदौतोश्चेदिति व्याख्येयं, नियमस्य तत्रैव प्रवृत्तेस्तथापि तन्निमित्तस्येत्येकवचनानुरोधादेवमुक्तमित्याहुः। क्षय्य हिंसायामित्यस्याग्रे 'इत्यस्ये'ति शेषः। अतो नाग्रिमद्विवचनासङ्गतिः, क्षय्येत्यत्र प्रकृतिभूतयोरेककोटितया वा। ननु सानुबन्धकत्वादयं न ग्राहिष्यतेऽत आह—**क्षै इति।** लक्षणप्रतिपदोक्तेत्यस्य तु नायं विषयः, प्रतिपदोक्तानुपूर्व्यश्रुतेः। **व्याख्येति।** एचोभावादित्यपि बोध्यम्। **क्रय्यस्त।** शाब्दमर्थमाह-**क्रयार्थे वस्तुनीति।** व्याख्यानात्—**गुणेति।** तच्च=तदर्थेति विशेषणासङ्गतिरूपम्,—अत्रैव सूत्रे प्रदीपोद्योतयोः स्पष्टम्। अत्र मते क्रीणातिः क्रयार्थः क्रय्ये। स च द्रव्यदानपूर्वकधान्याद्यादानम्। एवञ्च क्रेतृकर्तृक्रियाश्रयो धान्यमित्यर्थकं 'क्रेतृभिः क्रय्यन्धान्य'मिति सिध्यति। केचिन्मते तु सोत्र विक्रयः, स च लाभेच्छया द्रव्यादानपूर्वकधान्यादानम्, एवञ्च विक्रेतृभिः क्रय्यं क्रेतृभिः क्रेयमित्येव व्यवस्थितमिति बोध्यम्। ननु विनि-

परामर्शः। क्रयार्थत्वञ्च—फलोपधानरूपं, 'तदर्थे' इति विशेषणात्तदाह—**क्रेतार इति।** योग्यतामात्रग्रहणे त्वव्यावर्त्तकं तत्स्यादिति भावः। केचित्तु—स्वीयं धान्यादि दत्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम्। यत्र तु स्वयं दत्त्वा परकीयधान्यादिग्रहणं तत्र धान्यं क्रेयम्। द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं, किन्तु धान्यादेरेव, शक्तिस्वभावात्। भाष्यस्वरसोऽप्येवमेवेत्याहुः।

### ❀ अभिनव-चन्द्रिका ❀

**द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वमिति।** वस्तुतस्तु द्रव्येऽपि क्रय्यत्वक्रेयत्वव्यवहारोऽस्त्येव।

### ❀ चिदस्थिमाला ❀

**योग्यतेति। तदिति।** 'तदर्थे' इति विशेषणमित्यर्थः। क्रय्यशब्दे क्रीणातिर्विक्रये वर्तते विक्रयश्च लाभेच्छया द्रव्यग्रहणफलकं धान्यादिदानं, तदाह—**स्वीयं धान्यादीति।** क्रेयशब्दे तु स क्रये, स च धान्यार्थिभिर्द्रव्यं दत्वा ग्रहणं, तदाह—**यत्र त्विति। स्वीयं द्रव्यमिति।** 'स्वय'मिति पाठे—आत्मनेत्यर्थः। 'क्रियते' इति शेषः। नन्वेवं रीत्या द्रव्येऽपि व्यवहारः स्यादत आह—**द्रव्ये त्विति।**

**शब्दशक्तीति।** क्रय्यादिपदशक्तीत्यर्थः। अत्र मते बोधे एव विशेषो न तु फले इति बोध्यम्।

### ❀ सदाशिवभट्टीयम् ❀

मयाश्रयत्वाविशेषाद्द्रव्येपि प्रयोगद्वयं स्यादत आह—**द्रव्येति।** इदं च मतद्वयेपि बोध्यम्। **स्वरसेति।** 'क्रेयं नो धान्यं, न चास्ति क्रय्य'मिति प्रत्युदाहरणस्वरसेत्यर्थः। **आहुरिति।** तस्य ममापि योजयितुं शक्यत्वमरुचिः।

### ❀ विषमपदविवृतिः ❀

तदा=तत्स्थेन तच्छब्देन। **तत्र धान्यं क्रय्यमिति।** तत्पुरुषविषये तद्धान्यं क्रय्यमित्यर्थः। तत्पुरुषं प्रति तद्धान्यं क्रय्यमिति फलितं। **तत्र धान्यं क्रेयमिति।** तत्पुरुषम्प्रति धान्यं क्रेयमिति फलितम्। **द्रव्येति।** मूल्यभूतस्वर्णरूप्यादिद्रव्ये इत्यर्थः।

### ❀ वरवर्णिनी ❀

**फलोपधानरूपमिति। परे तु**—'क्रयणक्षणाव्यवहितपूर्वक्षणेऽपि फलोपधाननिश्चयाभावात्क्रयणोत्तरन्तु तस्य स्वत एवाभावादिदं क्वापि न स्यात्, स्वरूपयोग्यग्रहणे तु 'तदर्थे' इत्यव्यावर्त्तकं स्यादतः शेखरोऽयश्चिन्त्य एव। तादर्थ्यन्त्वत्र—'तदिच्छाधीनेच्छाविषयत्व'रूपं ग्राह्यमिति 'क्रेतारः क्रीणीयु'रित्यादौ सर्वसामञ्जस्य'मित्याहुः। 'क्रय्य'मित्यस्य,—'विक्रेतु'रिति शेषः। 'क्रेय'मित्यस्य,—'क्रेतु'रिति शेषः।

**धान्यादेरेवेति।** क्रेतृविक्रेत्रुभयेच्छाधीनेच्छाविषयत्वस्य मुख्यस्य धान्यादावेव सत्त्वेन तेषामेव तत्त्वव्यवहारः, धान्यक्रेतुः कार्षापणादिविक्रयेच्छा, धान्यविक्रेतुश्च धान्यसमर्पणपुरस्सरं कार्षापणादिक्रयणेच्छा त्वार्थिकी न मुख्येति **नागेशभट्टानामाशयः।** एतेन—'वस्तुतस्त्वि'त्यादिना **दण्डिभट्टानामत्रारुचि**प्रदर्शनमाशयाज्ञानमात्रविजृम्भितमिति तदनुसरन्तोऽन्येपि समाहिताः। **परेतु**—'द्रव्ये तु न क्रय्यत्व'मित्यस्य—सुवर्ण—रजतादौ, नाणक—कार्षापणादौ, मणि—मौक्तिकादौ चापामरं द्रव्यपदेन प्रसिद्धे, न क्रय्यत्वं=न क्रय्यपदव्यवहार्यत्वं, विक्रेता रत्नापणिकादिस्तत्र न क्रय्यपदं प्रयुङ्क्ते इति यावत्। अतएव लोकास्तद्रत्नजातं न धान्यादिवत्प्रकामं बहिः प्रसारयन्तीति। एवं—न—क्रेयत्वं=तत्र रत्नादौ क्रेता न क्रेयशब्दं प्रयुङ्क्ते, किन्तु संग्राह्यादेयादिशब्दानेव प्रयुङ्क्ते इत्यर्थमाहुः। एतेनेदानीमपि कार्षापणादीनापणे प्रसारयन्तीत्यादिनाऽनार्यव्यवहारबलेन विपरीतं साधयन्तः समाहिताः। यत्त्वा'र्या अप्येवमाचरन्ती'ति—तत्तुच्छं, परानुकरणमात्रसाराणामनार्यव्यवहारमहमहमिकयाऽनुवर्त्तमानानामेव तथा व्यवहारो न शिष्टानामिति वक्तुं शक्यत्वादिति केचित्। अन्ये तु काव्यादौ रत्नादिप्रसारणस्यापि वर्णनाद्रत्नादेरपि धान्यादिवत्प्रसारणादिव्यवहारानुमानात्तत्र क्रेयत्वक्रय्यत्वयोर्न विरोध इत्याहुः।

**लोपः शा** । भोभगोअघोअपूर्वस्येत्यशीति चानुवर्त्तते, तत्रौकारान्तस्वोतो गार्ग्यस्येति बाधकमित्याशयेनाह—**अवर्णपूर्वयोरिति** । व्योरित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राक्पाठात्तत्क्रमेणाह—**यवयोरिति** । 'स तस्मा आचष्टे' इत्यादिभाष्यप्रयोगादत्र रोरित्यस्यासम्बन्धः । इदं सूत्रं लघुप्रयत्ने न । शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् । अवर्णेति किं ? गौर्यत्र । पदान्तयोः किं ? हरये ।

अशि किं ? वृक्षं वेतीति वृक्षवीः, क्विप्, तमाचष्टे इति—ण्यन्ताद्विच् । वृक्षव्

ॐ अभिनव-चन्द्रिका ॐ

अत एव 'लोके' आपणे प्रसारिताः पणाः क्रय्या विक्रेतुः, केतुश्च केया इति व्यवहारो भवत्येव । एवं रजतसुवर्णादावपि तथा व्यवहारो भवत्येवेति सूचनाय केचिदित्याहुः ।

**शाकटायनमते इति** । अयं भावः—ऋषिविशेषघटितशास्त्रबोधितं साधुत्वं ऋषिविशेषो न जानाति, सामान्यतो बोधितं साधुत्वन्तु सर्वे एव जानन्ति । तथा च व्योर्लघ्विति शास्त्रबोधितं शाकटायनमते तत्साधुत्वं शाकल्यो न जानातीति तयोर्लोपो न ।

ॐ चिदस्थिमाला ॐ

वैरूप्यापत्तिस्तदर्थं इत्यत उक्तार्थालाभश्चात्रारुचिबीजम् । समस्तत्वादाह—**भो इति** । विवरणविरुध्यमाणयोर्विरोधं परिहरति—**व्योरिति** । ननु प्राग्वद्रोरित्यस्यानुवृत्त्या तत्स्थानिकयोरित्यर्थे वकारांशे बाधेऽपि यकारांशे पर्यवसानेन हर एहीत्यादौ प्राप्तेरेवाभावेन मूलमयुक्तमेवात आह—**स तस्मा इति** । वैकल्पिकत्वेन विधानसामर्थ्यं दुर्वचमत आह—**शाकटेति** । **गौरिति** । गौरी अत्रेत्यर्थः । **क्विबिति** । एतं मत्वोठ् तु न, टिलोपस्य

ॐ सदाशिवभट्टीयम् ॐ

**लोपःशा** । **भोभगोइति** । अयं भावः—गौर्यत्रेति व्यावृत्तयेऽपूर्वस्येति तावदनुवर्तनीयमेव व्योरित्यत्रापि, ततश्च भोयच्युतो न सिध्येदतो भोभगो इत्यपि स्वरितयितव्यं, स्नूनवादीनामनभिधानेनो-नो गार्ग्यस्येत्यत्रासम्बन्धे दोषाभावेपि हलित्यत्रावर्णमात्रसम्बन्धे दोषस्य स्पष्टत्वात् ।

वस्तुतस्तु 'ओतो गार्ग्यस्ये'त्यत्रापि दोषः, एयर्थः यर्थः शम्भो यर्थ इत्यत्र भो इत्याद्यनुवृत्तेरभावे लोपापत्तिरूपः । न च स गुण एवेति वाच्यम्, ओतोगेति सूत्रे भाष्ये, सिद्धे लोपे नित्यार्थमिद'मित्युक्तं तद्विरोधात् । अन्यथाऽप्राप्ते विध्यर्थमेव वदेदत एव तत्र वक्ष्यति—**भाष्यानुसारिणस्त्विति** । एवं **इश्च** उश्च यू, तदर्थं य्वर्थमित्यत्र लोपवारणाय 'हलि सर्वेषा'मित्यत्राप्युभयानुवृत्तिरावश्यकी । एतेन नञो-भयनिवृत्त्येष्टसिद्धिरित्यपास्तम् । दध्यानयेत्यादीनामिवैषामनभिधानस्यावश्यकत्वात् । 'अचिश्नुधातुभ्रुवां य्वो'रिति निर्देशेनेष्टापत्तेः कर्तुमशक्त्वादिति ।

ननु अश्ग्रहणानर्थक्यं, नह्यत्र रुरस्तीत्यश्ग्रहणप्रत्याख्यानपरसिद्धान्तभाष्ये रुग्रहणादत्र सूत्रे रुसम्बन्धेन तत्स्थानिकयस्यैव लोपोनेन स्यात् । अन्यथान्यत्राभावादित्युक्तोक्तरीत्या नन्न व्याख्यत् । कार्यिणोऽभावादिति वक्ष्यमाणरीत्या सामान्यत एव वदेदत आह—**स तस्मा आ इति** । **असम्बन्ध इति** । एवं च रुपदमुपलक्षणमिति न तद्विरोध इति भावः । यद्वा 'भोभगो' इति सूत्रशेषोवोतोक्तवृक्षवादिव्यावृत्तये **'हलि सर्वेषा'** मित्यत्र रुपदसम्बन्धेन रुस्थानिकयस्यैव ग्रहणमिति पक्षान्तरेऽत्रापि सम्बन्धः स्यादत आह—'स तस्मेति' ।

ॐ विषमपदविवृतिः ॐ

**लोपः शाकल्यस्य** । **बाधकमिति** । गार्ग्यग्रहणस्य पूजार्थत्वेन नित्यं तदिति भावः । **शाकल्यमत इति** । अत एव 'कौ बाहू का ऊरू'इति शाकलानां वकाररहितः पाठः, तैत्तिरीयाणां

ॐ वरवर्णिनी ॐ

**लघुप्रयत्न इति** । परे तु नागेशमते लघुप्रयत्नेऽस्याप्रवृत्तावपि—'भोयच्युते'त्यादौ लघुप्रयत्नरहितमेकं रूपं, लघुप्रयत्नादेशस्य वैकल्पिकतया तदभावेऽनेन लोपविकल्पे रूपद्वयमिति यानि त्रीणि रूपाणि

करोति । क्विपि तुक् स्यात् । विज्निमित्तको 'लोपो व्यो'रिति लोपस्तु न । णिलोपटिलोपयोः स्थानिवत्त्वात् । प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाभावेन, परपदस्थाजादेशाभावेन च, लोपस्य पदचरमावयवत्वाभावेन च 'नपदान्त'इतिनिषेधाप्रवृत्तेः । एतेन कनिमित्तको वलोपोऽत्र दुर्वार इत्यपास्तम् । किञ्च स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वासिद्ध्यात्र निषेधाप्रवृत्तिः । 'स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं तन्निर्णये च स्थानिवत्त्वाभावज्ञान'मित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम् । इदञ्च नपदान्तसूत्रे भाष्ये स्पष्टम् ।

न च पदसञ्ज्ञायां टिलोपस्य स्थानिवत्त्वाद्वस्य पदान्तत्वमेव नास्तीत्यशीति व्यर्थमिति

❀ अभिनव-चन्द्रिका ❀

एतेनेति । णिलोपटिलोपयोः स्थानिवत्त्वेनेत्यर्थः ।

❀ चिदस्थिमाला ❀

णिलोपस्य बहिरङ्गासिद्धत्वात् । ननु पुनरपि क्विबेव कुतो नात आह—**क्विपीति** । 'क्वौ विधि'मिति स्थानिवत्त्वनिषेधात्, उक्तवैपरीत्येनात्र बहिरङ्गासिद्धत्वं न । नन्वेवमपि विच्चि 'लोपोव्यो'रिति वलोपापत्तिरेव सूत्रनने आह—**विजिति** । 'क्वौ लुप्त'मित्यस्यासार्वत्रिकत्वात्तन्निमित्तकलोपे एव प्रवृत्तेश्चात्राप्रवृत्तिरिति सूचयन्नाह—**टिलोपेति** । ननु 'न पदान्ते'ति निषेधोऽत आह—**प्रातीति** । ननु 'सुबन्ताण्णि'जिति हरदत्तादिमतेऽन्तर्वर्तिसुपा तत्त्वमेकदेशेतिन्यायेन वान्तेऽपि सुलभमेवात आह—**परेति** । इदञ्च कर्मणि क्तिप्रत्यये शेषषष्ठीसमास इति पक्षे तत्प्राप्तिमभ्युपेत्य, वस्तुतस्तु सपक्ष एवायुक्त इति तदप्राप्तिरेवेत्याह—**लोपस्येति** । **एतेनेति** । अन्यान्ययुक्तिद्वयेन तदप्रवर्तनेनेत्यर्थः । अन्यथा तथा पदत्वाभावेऽपि क्विबुत्तरसुब्निमित्तकपदत्वसत्त्वेन स स्यात् । न चातिदिष्टभत्वेन पदत्वबाधः, णिचो लुप्तत्वात् । न च स्थानिवत्त्वम्, अल्विधित्वात् । न चाचः परेति णिलोपस्य तत्त्वेन तत्त्वं, तस्य स्थानिवत्त्वस्य 'न पदान्ते'ति निषेधप्रतिबन्धद्वारा पदान्तस्थानिकवलोपप्रतिबन्धकतया तत्रापि 'न पदान्ते'ति निषेधात् । णिलोस्येव टिलोपस्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वानिवृत्तेः, 'प्रकल्प्य वापवादविषय'मिति न्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानिवत्त्वाप्रवृत्तेश्चेति भावः । किञ्चान्तरङ्गभसञ्ज्ञयोक्तरीत्या बहिरङ्गपदत्वस्यासिद्धत्वेन बाधायोगात् । **इत्यपास्तमिति** । इत्यप्यपास्तमित्यर्थः ।

**किञ्चेति** । 'यत' इतिशेषः । नास्य=वस्य । अत्र=वृक्षव् करोतीत्यत्र । नन्वेवमपि तत्र तदप्रवृत्तिः कुतोऽत आह-**स्थानीति** । **तत्रेति** । वलोपे इत्यर्थः । निषेधस्येति भावः । **पदेति** । बहिर्भूतसुनिमित्तिकायामित्यर्थः ।

❀ ज्योत्स्ना ❀

सूत्रे कर्मसाधनो विधिशब्दः, स्थानषष्ठ्या समास इति पक्षमभ्युपगम्य वृक्षवित्यत्र निषेधाप्रवृत्तिमाह—**किञ्चेति** । **स्पष्टमिति** । भावसाधनविधिशब्दाश्रयणे वेतस्वानित्यत्र रुःप्राप्नोतीत्याशङ्क्य—'ननु

❀ सदाशिवभट्टीयम् ❀

**क्विपि त्विति** । णिचः पूर्वभाविनमाश्रित्य तु न, ऊठो बहिरङ्गत्वेन टिलोपस्यासिद्धत्वात् **एतेन केति** । आद्यान्ययुक्तिद्वयेन 'पदान्ते'ति निषेधाप्रवर्तनेनेत्यर्थः । अन्यथा बहिर्भूतसुपापादत्वात् स्यादेवेत्याहुः ।

❀ विषमपदविवृतिः ❀

सवकारःपाठः । **एतेनेति** । वलोपे स्थानिवत्त्वेनेत्यर्थः । **अन्योन्याश्रय इति** । यथाऽस्य न

❀ वरवर्णिनी ❀

भवन्ति, तान्येव लघुप्रयत्नेऽस्य प्रवृत्त्यङ्गीकारेऽपि भवन्ति, तथाहि—लघुप्रयत्नलोपे तद्रहितमेकं, लोपविकल्पात्तत्सहितमेकं, लघुप्रयत्नस्यापि विकल्पाच्छुद्धयकारसहितमेकमिति शेखरोऽयं काकदन्तपरीक्षामनुकरोतीत्याहुः ।

**माननिति** । अत्रत्योऽन्योन्याश्रयप्रतिपादकः शेखरो'न पदान्ते'त्यत्र कर्मसाधनो विधिशब्दस्तेन पदचरमावयवोद्देश्यके विधावित्यर्थ'इत्यसिद्धपक्षे बोध्यः, अन्यथा 'वेतस्वा'नित्यत्रापीत्थमेवान्योन्याश्रयात्त-

वाच्यम्। 'पूर्वत्रासिद्धीय'इति निषेधात्। साक्षात्, पदत्वादिद्वारकपरम्परया वा पूर्वत्रासिद्धीय-प्रापकस्य तत्प्रतिबन्धकस्य वाऽतिदेशस्य तेन निषेधादिति केचित्।

परे तु—'न पदान्ता हलोऽणः सन्ती'ति लण्सूत्रस्थभाष्याद्वृक्षवादेरनभि-

❀ अभिनव-चन्द्रिका ❀

**निषेधादिति**। साक्षात्पूर्वत्रासिद्धीयसाधकस्य, परम्परया पूर्वत्रासिद्धीयसाधकस्य, साक्षात्पूर्वत्रासिद्धीयप्रतिबन्धकस्य, परम्परया पूर्वत्रासिद्धीयप्रतिबन्धकस्य च स्थानिवद्भावस्यानेन निषेधः। तत्र साक्षात्साधकस्योदाहरणं—किमु सन्ति। अत्र 'श्नसोरल्लोप'इत्यल्लोपस्य स्थानिवद्भावः पूर्वत्रासिद्धीयस्य 'मय उञो वो वा' इति वत्वस्य साक्षात्साधकः। एवं वृक्षस्य वः, वृक्षवः, तस्मात् ण्यन्ताद्विचि 'वृक्षव्' इत्यत्र णिलोपटिलोपयोः स्थानिवद्भावः—साक्षात्पूर्वत्रासिद्धीयस्य 'लोपः शाकल्यस्ये'ति वलोपस्य साधकः। परम्परया पूर्वत्रासिद्धीयसाधकस्योदाहरणं-पिपठीस्तत्रेति। अल्लोपस्य स्थानिवद्भावः पदसञ्ज्ञाप्रतिबन्धद्वारा षत्वसाधकः। साक्षात्प्रतिबन्धकस्योदाहरणं-राज्ञ इति। अत्राल्लोपस्य स्थानिवद्भावः साक्षात् श्चुत्वप्रतिबन्धकः। एवं पौरोहित्यं काव्यमित्यादौ यस्येति लोपस्य स्थानिवद्भावः साक्षात्-'अनचि चे'ति द्वित्वप्रतिबन्धकः। एवं शो तनूकरणे इत्यस्मात् 'घञर्थे कविधान'-मिति कप्रत्यये वाक्शब्देन समासे तस्माण्ण्यन्तात्क्विचि 'तितुत्रे' इतीडागमनिषेधे वाक्श्चिरित्यादौ टिलोपादेः स्थानिवद्भावः साक्षात्पूर्वत्रासिद्धीयस्य श्चुत्वस्य प्रतिबन्धकः। परम्परया प्रतिबन्धकस्योदाहरणं—पिपठीरिति। अत्राल्लोपस्य स्थानिवद्भावः पदसञ्ज्ञाप्रतिबन्धद्वारा रुत्वप्रतिबन्धक इति दिक्। **हलोऽणः सन्तीति**। अत एव कत्रादेरनभिधानम्। नचैवमपि रेफान्तानां गिरादी-

❀ चिद्स्थिमाला ❀

ननु पदसञ्ज्ञायां यथोद्देशत्वस्यैव सिद्धान्ततयाऽत्रैपादिकत्वेन कथं तत्प्रवृत्तिरत आह—**साक्षादिति**। अन्यपरम्पराया वारणायाह–**पदत्वादीति**। आदिना भत्वपरिग्रहः। विकल्पः प्रयोगभेदेन। **केचिदि**त्यनेन सूचितामरुचिमाह—**परे त्विति**।

❀ ज्योत्स्ना ❀

चैवं विज्ञायते यः सम्प्रति पदान्त' इति भाष्यं, तत्र किमपेक्षया सम्प्रतीत्यतः कैयट आह—**स्थानि-**

❀ सदाशिवभट्टीयम् ❀

ननु पदादिसञ्ज्ञायां यथोद्देशस्यैव सत्त्वात्कथं पूर्वत्रासिद्धत्वमत आह–**साक्षादिति**। अन्यपरम्परावारणायाह—**पदत्वादीति**। आदिना भत्वम्। साक्षात्प्रतिबन्धकातिदेशोदाहरणे राज्ञि श्चुत्वं। पदत्वद्वारकपरम्परया प्रतिबन्धकस्य तु—पिपठीरिति। उभयरीत्या प्रापकस्य तूदाहरणं मृग्यमनन्यथासिद्धम्। 'तत्प्रतिबन्धके'ति पाठः। **न पदान्ता इति**। लण्सूत्रस्थभाष्यात्पदान्ता हलोऽणो न सन्तीतिहेतोर्वृक्षवादेरनभिधान-

❀ विषमपदविवृतिः ❀

पदान्तसूत्रस्थशब्दरत्नेनाविरोधस्तथा तट्टीकायामस्माभिर्निरूपितम्। **पदत्वादिद्वारकेति**। आदि-

❀ वरवर्णिनी ❀

पदान्तेति निषेधाप्रवृत्तौ तदर्थं पदे इति सप्तमीसमासेन परपदस्याजादेश इत्यर्थाश्रयणं भाष्यकृतामसङ्गतमेव स्यात्। सिद्धान्तभूते भावसाधनपक्षे तु वेतस्वानित्यत्र—नान्योन्याश्रयशङ्का, रुत्वरूप–पदचरमावयवकर्मकविधेः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवद्भावनिषेधप्रतिबन्धकपदान्तकर्मकविधित्वाभावरूपकार्ये कर्त्तव्ये स्थानिवद्भावाप्रवृत्तेः। कर्मसाधने तु–पदान्तसकारस्य रुत्वविधानेन रोः पदचरमावयवत्वग्रहाच्च पदान्तेति निषेधप्रवृत्त्या स्थानिवद्भावनिषेधात्पूर्वं सकारे पदान्तत्वाग्रहात्, तद्ग्रहे च पदान्तोद्देश्यकविधित्वाभावेन निषेधाप्रवृत्तेः सकारादेः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वमस्त्येवेति तस्य निषेधप्रतिबन्धकपदान्तत्वाभावरूपकार्ये कर्त्तव्ये स्थानिवद्भावरूपकार्ये स्थानिवद्भावप्रवृत्तेरन्योन्याश्रयो युक्त एवेत्याहुः।

**पूर्वत्रासिद्धीये इति**। विनिगमनाविरहाच्चतुर्विधस्थानिवद्भावप्रतिबन्धकोऽयमित्याशयः। तत्र साक्षा-

धानमेव। 'भोभगो' 'इति सूत्रेऽशूग्रहणमनर्थकमन्यत्राभावा'दिति वार्त्तिकाच्च। अशो-ऽन्यत्र तन्निमित्तकार्यकार्यिणोऽभावादिति तदर्थः। 'न ह्यन्यत्र रुरस्ती'ति तद्व्याख्यानभाष्ये रुग्रहणमुपलक्षणम्। एतदाशयमजानानेनैकदेशिना—'उत्तरार्थं हलि सर्वेषामिति,—वृक्षव् करोतीत्यत्र मा भू'दित्युक्तम्। अस्य चैकदेश्युक्तित्वं लण्सूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम्। अत एव भाष्ये 'उत्तरार्थ'मित्युक्त्वा 'हलि सर्वेषा'मित्यत्रैव प्रयोजनमुक्तम्। 'हलि सर्वेषा'मित्यत्र वकारनिवृत्त्यैवात्र तद्वारणसम्भवान्न तत्राप्यश्ग्रहणस्य प्रयोजनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः।

ॐ अभिनव-चन्द्रिका ॐ

नामनभिधानं स्यादिति वाच्यम्, पदान्ता हल्रूपा 'अणोऽप्रगृह्यस्ये'त्येतदनुनासिककार्यभाजः परेऽणो न सन्तीति भाष्याशयेनादोषात्।

ॐ चिदस्थिमाला ॐ

गमकान्तरमाह—भोभगो इतीति ननु कथं तत एतल्लाभोऽत आह—अशोऽन्यत्रेति। तन्निमित्तककार्यस्य—कार्यिणः=स्थानिनोऽभावादित्यर्थः। नन्वेवं भाष्यविरोधोऽत आह—नह्यन्यत्रेति। उत्तरभाष्यविरोधं परिहरति—एतदिति। अत एव=तेषामनभिधानादेव। एवेन 'लोपः शाके'त्यस्य व्यवच्छेदः। अन्यथा तत्रापि फलसत्वेन तावत्पर्यन्तधावनासङ्गतिरेवेति भावः।

प्रकारान्तरेणापि तस्यैकदेश्युक्तित्वमाह—हलीति। एतेन तत्र प्रयोजनोक्तिरुपलक्षणमेतस्यापीति न

ॐ ज्योत्स्ना ॐ

वत्त्वनिषेधाद्विना यः सिद्धः पदान्तस्तस्य विधौ स्थानिवत्त्वनिषेधो, यथा कानि सन्ति कौ स्त इति। इह तु सकारः स्थानिवत्त्वनिषेधाद्विना पदान्तत्वेनासिद्ध इति भवत्येव स्थानिवद्भाव इत्यपदान्तत्वात् सस्य रुत्वाभाव इति वृक्षवादेरनभिधानमेवेति लण्सूत्रभाष्ये न पदान्ताः परेऽणः सन्तीति पाठस्तस्मात्, 'ननु चेदमस्ति कर्तृ हर्तृ इति' तदुत्तरभाष्यात्पराणुदाहरणसद्भावस्य प्रदर्शनाच्च चिन्त्यमेतत्। 'भोभगो' इति सूत्रभाष्यतात्पर्यवर्णनं तु परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम्।

ॐ सदाशिवभट्टीयम् ॐ

मेवेति योजना। तत्र हि भाष्ये'ऽण्ग्रहणसामर्थ्यात्पूर्वेणा'णोऽप्रगृह्यस्ये'त्यत्राण्, अन्यथाऽच इत्येव वदे' दित्युक्तम्। अभिधाने त्वेषान्तदसङ्गतिः स्पष्टैवेति तत्रैवोद्योते स्पष्टम्। यथाश्रुतपाठस्य कौस्तुभे दूषितत्वादेवं व्याख्यायते। अष्टमे कैयटस्याप्ययमेवाशयः। उक्तभाष्येति। उक्तार्थतात्पर्यकभाष्य इत्यर्थः।

ॐ विषमपदविवृतिः ॐ

पदेन पदत्वाभावः। 'परम्परया वे'त्येतत्प्रापकस्य, प्रतिबन्धकस्य वेत्युभयत्रान्वयि। अत्र च स्थानिवद्भावः पदत्वाभावसम्पादनद्वारा पूर्वत्रासिद्धीयप्रतिबन्धक इति बोध्यम्। वस्तुतस्तु पूर्वत्रासिद्धीय इत्यस्यैवमर्थकरणे फलस्य प्रमाणस्य चाभावः। ननु पाचयतेः पाक्, याजयतेर्याट्, पिपठिषतेः पिपठीरित्यादौ कुत्वादिप्रवृत्तिः फलम्, अन्यथा तत्र पदसञ्ज्ञायां चकारादेः पदान्तत्वाभावेन कुत्वाद्यनापत्तेरिति चेन्न। कार्यकालपक्षे पदसञ्ज्ञाया अपि पूर्वत्रासिद्धीयत्वेनादोषात्। 'हलोऽणः सन्ती'ति भाष्ये क्वचि'त्परेऽणः सन्ती'ति पाठः। इत्याहुरिति। परे तु—'भोभगो' इति सूत्रे भाष्ये 'वृक्षव् करोति' प्रयोगस्य कण्ठत एव पठितत्वेनानभिधानोक्तिः साहसादेव। न पदान्ता हलोऽणः

ॐ वरवर्णिनी ॐ

त्पूर्वत्रासिद्धीयप्रापकोदाहरणं—क इवाचरणं—क्तिः, पुंसः क्तिः—'पुंक्ति'रित्यत्र अकारलोपस्य स्थानिवत्त्वात्पुमः खयीति रुत्वं न। न पदान्तसूत्रेण पदचरमावयवविधित्वान्निषेधे तु स्वार्थिककप्रत्ययान्त'पुंक'

**कानि सन्तीति ।** वाक्यसंस्कारपक्षेऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्व-मादायान्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेः स्थानिभूतादचः पूर्वत्वं बोध्यम् ।

**एकः पूर्व ।** 'गुण' इत्यादेर्विधेयसमर्पकत्वेन तत्रैकत्वसङ्ख्याया विवक्षणेनोभयोः

❀ अभिनव-चन्द्रिका ❀

**विधेयसमर्पकत्वेनेति ।** नच 'सूत्रे लिङ्गवचन'मिति परिभाषया एकत्वविवक्षा कर्तुं न शक्यते इति वाच्यं, तस्या अनुवाद्यविषयत्वात् । अत एवात्रैकग्रहणप्रत्याख्यानपरं भाष्यं सङ्गच्छते । **एकग्रहणं स्पष्टार्थमिति ।** नचैकत्वसङ्ख्याविवक्षणेऽपि एकत्वसङ्ख्यायाः केवलान्वयित्वे-नाव्यावर्तकत्वात्पूर्वपरयोः स्थाने गुणद्वयं दुर्वारं स्यादिति वाच्यं, स्वसजातीयद्वितीयभेदप्रतियोगि-तानवच्छेदकैकत्वस्यैकवचनार्थत्वेनादोषात् । साजात्यञ्च-'स्वप्रकृत्यर्थतावच्छेदकवत्त्व'—'स्वसमभिव्या-हृतपदार्थसंसर्गित्वो'भयधर्मेण । तथा च 'गङ्गोदक'मित्यादौ गुणद्वये एकवचनस्य स्वप्रकृत्यर्थतावच्छेदकं यत् सङ्केतसम्बन्धेन-गुणपदं, तद्वत्त्वं, स्वसमभिव्याहृतपदार्थौ यौ पूर्वपरौ, तत्संसर्गित्वमेतदुभयधर्मेण

❀ चिदस्थिमाला ❀

ततोऽनभिधानमिति नैकदेश्युक्तित्वं तस्येत्यपास्तम् । एतेन तथा **मनोरमारत्नाकरदण्ड्या**द्युक्तमपास्तम् ।

तत्साधकतन्निषेधोदाहरणमाह—**कानीति ।** नन्वस्त्वत्र प्रागुक्तरीत्या वाक्यसंस्कारपक्षस्तथापि इयल्लोप-विध्योर्युगपत्प्रवृत्त्येकारस्यानादिष्टादचः पूर्वत्वाभाव एव । न च परत्वान्निर्वाहः, मिथः परिहारेण लब्धा-वकाशयोः समवस्थितयोरेकत्र लक्ष्ये युगपत्प्राप्तिरूपविरोधाभावेन तदप्रवृत्तेः । नित्यत्वमप्युभयोः समम् । न च वाचः क्रमवृत्तितया यौगपद्यमपि नेति वाच्यम्, तथापि वैपरीत्यापत्तेरित आह—**वाक्येति ।** अपिना पदसंस्कारपक्षसमुच्चयः । तस्यानेकविधत्वादाह—**पूर्वोपेति ।** एतन्मूलक एव

❀ ज्योत्स्ना ❀

**वाक्यसंस्कारपक्षेऽपीति ।** अयं भावः—यद्यप्यस्मिन्पक्षे विरोधाभावेन सर्वशास्त्राणां युगपत्प्रवृत्त्या

❀ विषमपदविवृतिः ❀

सन्तीत्यत्र च 'कार्यभाज इति शेष' इति कैयटेनैव लण्सूत्रे विस्पष्टमुक्तत्वेन वृक्षवादेरनभिधाने

❀ वरवर्णिनी ❀

शब्दादाचारक्विबन्तात् क्तिनि 'पुंक्ति'रित्यत्र फलं बोध्यम् । एवं वन्दधातोः क्विपि संयोगान्तलोपे वनि-त्यस्य तच्छब्देन समासे तस्मादाचक्षाणणिजन्तात् क्विपि टिलोपणिलोपयोः—वन्निरित्यत्र णिलोपस्य स्थानिवत्त्वादम्परत्वेन नश्छव्येति रुत्वं नेत्यपि फलं—**श्रीबालशास्त्रि**चरणा आहुः । द्वितीयं-पिपठीस्त्वत्रे-त्यत्र स्थानिवद्भावेन पदत्वप्रतिबन्धद्वारा फलं न । तृतीयम्—अन्तशब्दादाचारक्विबन्तात्कर्तरि क्विप्यल्लोपे सौ हल्ङ्यादिलोपे संयोगान्तलोपे अनितस्य शम्भुशब्देन योगे 'अन्छम्भुरित्यत्र शितुगिति तुक्सिद्धिः । एवं राश इत्यत्र श्चुत्वमपि बोध्यम् । चतुर्थं—पिपठीरिति **जटाजूटकृतः** ।

**वाक्यसंस्कारपक्षेऽपीति ।** पदसंस्कारपक्षे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्येकारेऽभावात्रिकारस्य यण्, वाक्यसंस्कारपक्षेऽपि स्थानिवद्भावनिषेधान्न यणित्यपिपदेन ध्वनितम् । **परे तु**—वाक्यसंस्कार-पक्षेऽन्तरङ्गपरिभाषा न प्रवर्तेत इति शङ्कायां—पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वसत्त्वात्प्रवर्तत एवेत्या-शयेन—'वाक्यसंस्कारपक्षेऽपी'ति ग्रन्थ इत्याहुः ।—"ननु वाक्यसंस्कारपक्षेऽपि साध्यत्वेन पूर्वं क्रिया-प्रयोक्तृबुद्ध्यारूढा भवति । तस्याश्च निरूपकाकाङ्क्षायां ततः कारकाणि साधनतया बुद्ध्यारूढानि भवन्तीति तद्वाचकशब्दानामपि तेनैव क्रमणोपस्थितिरिति 'सन्ती'त्यस्यैव पूर्वमुपस्थितत्वादल्लोपस्यैवान्तरङ्गत्वमिति कथ-मिकारादेस्तत्त्वमिति चेन्न, प्रयोक्त्रिच्छायाः सर्वतो बलवत्त्वेन—येन क्रमेण तदिच्छा तेनैव क्रमेण शब्दो-पस्थित्या—'कानी'त्यस्यैव पूर्वं यत्र प्रयोक्त्रिच्छा तत्र इयादीनामन्तरङ्गत्वस्य वक्तुं शक्यतया स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्य सूपपादत्वादिति—" **श्रीबालशास्त्रि**चरणानामाश्रममस्तपितामहचरणा आविश्चक्रुः ।

पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूल्योः कटं कुर्वित्यादित इवोभयसम्बन्ध्येक-विधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् ।

ॐ अभिनव-चन्द्रिका ॐ

स्वसजातीयं-गुणद्वयं भवतीति-तन्निष्ठो यो भेदः पूर्वगुणवृत्तिः-'परगुणवृत्त्येकत्ववान्ने'त्याकारको भेद-स्तादृशभेदप्रतियोगितावच्छेदकं तदेकत्वं जातम्, एवञ्चालनीन्यायेन परगुणवृत्तिर्यो भेदः 'पूर्वगुणवृत्त्येकत्ववान्ने'त्याकारकस्तादृशभेदप्रतियोगितावच्छेदकं तदेकत्वं जातमिति-न पूर्वपरयोः स्थाने गुणद्वयम् । एकस्मिन् गुणे तु स्वसजातीयस्य एव गुणो जात इति स्वस्मिन् 'स्ववृत्त्येकत्ववान्ने-' त्याकारकभेदाभावाद्गुणे 'घटो ने'त्यादिभेदस्यैव सत्त्वेन तादृशभेदप्रतियोगितावच्छेदकं घटत्वादिकम्, अनवच्छेदकमेवैकत्वं जातमिति लक्षणसमन्वयः । अत एव 'पशुना यजेते'त्या-दावनेकपशुकरणकयागान्नादृष्टसिद्धिः ।

ननु स्वप्रकृत्यर्थतावच्छेदकपशुत्वस्य स्वसमभिव्याहृतयागसंसर्गित्वस्य च यागीयपशुषु सर्वेषु सत्त्वात्स्वसजातीयाः सर्वेऽपि यागीयपशवो जातास्तथाच चालनीन्यायेन सर्वाण्येवैकत्वानि स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकानि जातानीति कथमेकैकपशुकरणकनानायागादृष्टसिद्धि-रिति चेत्, अत्र केचित्—'पशुना यजेत' इत्यादावेकवचनार्थैकत्वस्य स्वाश्रयपशुकरणकत्वं—स्वानाश्रयपश्वकरणकत्वमेतदुभयसम्बन्धेन धर्मिपारतन्त्र्येण यागेऽन्वयस्वीकारेणैकपशुकरणकयागाद-दृष्टसिद्धिः, अनेकपशुकरणकयागाच्चादृष्टासिद्धिश्चेत्याहुः ।

परे तु-साजात्यघटकं स्वसमभिव्याहृतपदार्थसंसर्गित्वञ्च-स्वसमभिव्याहृतपदार्थतावच्छेदकधर्म-पर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नससर्गित्वरूपं विवक्षितम् । तथा च 'पशुना यजेते'त्यादौ स्वसमभिव्याहृतपदार्थतावच्छेदकं यत् यागत्वं, तत्पर्याप्त्यनुयोगितावच्छेदकं, तद्व्यक्तित्वं, तदवच्छिन्न-संसर्गित्वं-तद्यागीयपशावेव, न तु यागान्तरीयपशाविति-एकैकपशुकरणकनानायागादृष्टसिद्धिः ।

नचैवमपि यागत्वपर्याप्त्यनुयोगितावच्छेदकं यागान्तरगतं तद्व्यक्तित्वमपि, तदवच्छिन्नसंसर्गित्वं

ॐ चिदस्थिमाला ॐ

'वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार' इत्युद्घोषः । स्पष्टञ्चेदमन्यत्र ।

यत्तु रत्नकारः—एकग्रहणमावश्यकमन्यथा तयोः पृथक् स्थानित्वेनादेशद्वयं स्यात्, 'रदाभ्या'"मुभौ साभ्यासस्ये'ति वत् । न च मीमांसकमर्यादया निर्वाहस्तस्या अत्रानाश्रयणात्, अन्यथा बहुदोषापत्तिरिति स्पष्टमन्यत्र, तस्मादेकग्रहणमेवेह तदनाश्रयणे मानमिति । तन्न, अग्नीषोमाभ्यामित्यादौ द्वन्द्वोत्तरचतुर्थ्या समुदिते तत्समुदाये वा एकप्रदेयनिरूपितैकदेवतात्वबोधवत्पूर्वपरयोरित्यत्र द्वन्द्वोत्तरषष्ठ्या एकविधेयनिरूपितत-न्निष्ठैकस्थानित्वबोधेनादेशद्वयाप्रसक्तेः । 'रदाभ्या'मित्यादौ तु गमकवशात्तथेति न दोष इत्यन्यत्र स्पष्टं,तद्ध्वनय-न्नाह—गुणे इति । आदिना वृद्ध्यादिपरिग्रहः। तत्र=विधेये, पश्वेकत्ववत् । ननु नेदं सर्वथात्राश्रीयते दोषबाहु-ल्यादिति चेन्न, सर्वथानाश्रयणेऽपि लक्ष्यानुसारिव्याख्यानेन क्वचिदाश्रयणात्तदेतद्ध्वनयन्नाह -नोभयोरिति ।

एकेति । 'द्वन्द्वनिर्देशा'दित्यादिः । अन्यथा पृथगेव वदेत् । किञ्च सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्या-य्यत्वम् । पूल्योरिति । अत्रैकशेषस्तत्र द्वन्द्व इति विशेषोऽन्यत्सर्वं तुल्यम् । अत्रेतरेतरद्वन्द्वनिर्देशेन प्रत्येकमपि

ॐ ज्योत्स्ना ॐ

शिभावस्याकारसमवधाने सत्त्वात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्यैकारस्य यणोऽविधानात्स्थानि-वत्त्वाप्राप्त्या निषेधो न प्राप्नोति, तथापि श्रुतवर्णक्रमादेव संस्कारकल्पनम्, अन्तरङ्गत्वात्. अत्र च पदान्तग्रहणस्यैतदुदाहरणपरं भाष्यमपि मानमित्याहुः ।

ॐ विषमपदविवृतिः ॐ

प्रमाणाभावाच्च । 'वृक्षक्करोती'त्यत्र चाशीत्यनुवृत्त्या 'हलि सर्वेषा'मित्यस्याप्रवृत्तौ वकारस्य न कार्य-

❀ अभिनव-चन्द्रिका ❀

यागान्तरीयपशावप्यस्त्येवेति दोषस्तदवस्थ एवेति वाच्यं, एकत्वविशिष्टपदार्थसंसर्गित्वस्य विवक्षितत्वात्। वै० 'स्वनिष्ठविषयतानिरूपितविषयताश्रयत्वतात्पर्यविषयत्व'सम्बन्धेन। यागान्तरस्य च एतदेकत्वविषयतानिरूपितविषयताश्रयत्वतात्पर्यविषयत्वाभावान्न दोषः। यद्यपि एतदेकत्वविशिष्टयागीयपशुपदार्थनिष्ठभेदप्रतियोगितावच्छेदकत्वं यागान्तरीयपशुगतैकत्वस्याप्यस्ति एव, तथा तदेकत्वविशिष्टयागान्तरीयपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वमेतदेकत्वस्यापीति नैतावताऽपि दोषोद्धारः सम्भवति, तथापि 'स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकत्व' 'स्वतादात्म्यो'भयाभाववत्त्वस्य एकत्वे विवक्षणान्न दोषः। एतदेकत्वे तदेकत्वविशिष्टयागान्तरीयपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽपितत्तादात्म्याभावेन उभयाभावस्य सुलभत्वात्। नन्वेवमनेकपशुकरणकयागादप्यदृष्टसिद्ध्यापत्तिः, सर्वेषां पशुगतानामेकत्वानां निरुक्तोभयाभावस्य सुलभत्वादितिचेत्, अत्रोच्यते—स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टान्यत्वमेकत्वे विशेषणीयम्। वै०स्वविशिष्टनिष्ठभेदप्रतियोगितावच्छेदकत्व स्वविशिष्टवृत्तित्वोभयसम्बन्धेन। उभयत्र स्वं०–स्वावच्छिन्नसंसर्गित्व स्वसमभिव्याहृतप्रकृत्यर्थतावच्छेदकवत्त्वोभयसम्बन्धेन। एकयागीयानेकपशुसमवेतानां सर्वेषामेकत्वानां यागगततद्व्यक्तित्ववैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन सत्त्वान्न तद्विशिष्टान्यत्वमिति नानेकपशुकरणकयागाददृष्टसिद्धिः। एकैकपशुकरणकानेकयागेभ्यश्चादृष्टसिद्धिः सुलभा। तत्र भिन्नभिन्नयागसम्बन्धिपशुसमवेतानामेकत्वानां तत्तद्यागगततद्व्यक्तित्ववैशिष्ट्यस्यासत्त्वेन तदन्यत्वस्य सुलभत्वात्। यत्तद्व्यक्तित्वमादाय भेदप्रतियोगितावच्छेदकत्वं तदादाय न तद्विशिष्टपदार्थवृत्तित्वं, यदादाय तद्विशिष्टपदार्थवृत्तित्वं तदादाय न तद्विशिष्टनिष्ठभेदप्रतियोगितावच्छेदकत्वमिति न कस्यापि एकत्वस्य तद्विशिष्टत्वमिति। न चैवमेकस्यां शालायां यत्र बहवो ब्राह्मणा भुञ्जते तत्रास्यां शालायां ब्राह्मणो भुङ्क्ते इति प्रयोगापत्तिः। भोजनत्वस्य प्रत्येकपर्याप्तत्वेन भोजनत्वपर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्वावच्छिन्नसंसर्गित्वस्य प्रकृत्यर्थतावच्छेदकब्राह्मणत्वस्य च प्रत्येकं ब्राह्मणे एव सत्त्वेन किञ्चिद्भोजनगततद्व्यक्तित्ववैशिष्ट्यस्य पूर्वोक्तरीत्या कस्मिन्नपि एकत्वेऽसत्त्वेन तदन्यत्वस्य सुलभत्वादिति वाच्यम्, स्वसमभिव्याहृतपदार्थतावच्छेदको यो यो धर्मस्तत्पर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टान्यत्वस्य विवक्षणेन प्रकृते च शालात्वस्यापि तथात्वात् तत्पर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्ववैशिष्ट्यस्यैव ब्राह्मणगतेषु सर्वेषु एकत्वेषु सत्त्वेन तदन्यत्वस्याभावादापत्तेरयोगात्। नचैवमपि यत्र शालायामेको ब्राह्मणो भुङ्क्तेऽपरश्च स्वपिति तत्रास्यां शालायां ब्राह्मणो भुङ्क्ते इति प्रयोगो न स्यात्, ब्राह्मणद्वयस्यापि पूर्ववत्स्वसजातीयत्वादिति वाच्यम्, स्वसमभिव्याहृतप्रकृत्यर्थेत्यादिप्रथमसम्बन्धस्थाने स्वसमभिव्याहृतैकवचनार्थनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकवत्त्वस्य विवक्षणात्। तथा च प्रकृते भोजनकर्तृत्वविशिष्टब्राह्मत्वस्यैवाननिप्रसक्ततया धर्मितावच्छेदकत्वेन तस्य च स्वापकर्तृत्वविशिष्टब्राह्मणेऽसत्त्वेनाऽदोषः। नन्वेवमपि सम्पन्नो व्रीहिरित्यादौ स्वप्रकृत्यर्थतावच्छेदकव्रीहित्वस्य स्वान्वयितावच्छेदकत्वेन तात्पर्यविषयीभूतक्षेत्रत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नसंसर्गित्वस्य च सर्वव्रीहिव्यक्तिषु सत्त्वात्स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकान्येव सर्वाण्येकत्वानि जातानीति तत्रैकवचनार्थैकत्वानुपपत्तिः। न च येन सम्बन्धेनैकत्वान्वयस्तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदो विवक्षितः। तथा च प्रकृते स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेनैकत्वस्य व्रीहावन्वयेन तत्र स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेन स्ववृत्त्येकत्ववान्नेति भेदस्याभावेन न दोष इति वाच्यम्। 'सम्पन्नो व्रीहि'रित्यादौ स्वसजातीयनिष्ठस्वाश्रयव्रीहित्ववत्त्वसम्बन्धेन स्वनिष्ठैकत्ववान्नेतिभेदस्याप्रसिद्ध्या दोषतादवस्थ्यादिति चेन्न। स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकताऽनवच्छेदकसंसर्गनिष्ठावच्छेदकतानिरूपकप्रकारताश्रयैकत्वमेकवचनार्थ इति वक्तव्यत्वात्। ननु व्रीहियवोभय-

**उरण्** । 'उः स्थाने' इति 'षष्ठीस्थाने' इतिपरिभाषया लब्धम्, 'उदात्तस्वरित-योर्यण' इतिवत् । 'स्थानेऽन्तरतम' इत्यतः—'स्थाने'ग्रहणमनुवर्त्तते, तस्य लक्षणया

ॐ अभिनव-चन्द्रिका ॐ

सम्पत्तिदशायां 'सम्पन्नो व्रीहि'रिति प्रयोगो दुर्वार एव, यवे प्रकृत्यर्थतावच्छेदकवत्त्वस्य अन्वयितावच्छेदकवत्त्वस्य वाऽभावेन तमादाय भेदप्रतियोगितावच्छेदकत्वस्य व्रीहिनिष्ठैकत्वे उपपादयितुमशक्यत्वादिति चेन्नस्वप्रकृत्यर्थतावच्छेदकवत्त्वञ्च—स्वप्रयोगप्रयोजकबुद्धिविषयतावच्छेद-कावच्छिन्नधर्मवत्त्वमिति विवक्षणेनादोषात् । 'स्वप्रयोजके'त्यस्य वाचकविभक्तिप्रयोजकेत्यर्थः । तथाहि उत्तेषु धान्येषु किं किं सम्पन्नमिति प्रश्ने धान्यत्वव्याप्यजात्यच्छिन्नं बोधयानीति तात्पर्येण 'सम्पन्नो व्रीहि'रिति वाक्यप्रयोगात्स्ववाचकविभक्तिप्रयोगप्रयोजकबुद्धिविषयतावच्छेदकं यद् धान्य-त्वव्याप्यजातित्वं तद्वत्त्वस्य निरुक्तस्वसमभिव्याहृतपदार्थसंसर्गित्वस्य च व्रीहाविव यवेऽपि सत्त्वेन व्रीहित्वे व्रीहित्वव्याप्त्येकत्ववान्नेतिभेदाभावेन न दोषः । अत एव यत्र व्रीहियवावुभौ सम्पन्नौ तत्र सम्पन्नो व्रीहिरिति न प्रयोगः । तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव व्रीहिगैतकत्वेषु सत्त्वात् । निरुक्तैकत्वमेवैकपदप्रवृत्तिनिमित्तं बोध्यम् । एतच्छङ्कासमाधानादिकं प्रकृतेऽप्यतिदेष्टव्यमित्याहुः ।

स्वसमभिव्याहृतपदार्थसंसर्गित्वेनैव साजात्योक्तौ तु 'पशुना यजेत' इत्यादौ स्वसमभि-व्याहृतपदार्थयागसंसर्गित्वस्य पुरोडाशादावपि सत्त्वेन स्वसजातीयं यत् पुरोडाशादिकं तन्निष्ठभेद-प्रतियोगितावच्छेदकमेवैतत्पशुवृत्त्येकत्वं जातमित्येकपशुकरणकयागादप्यदृष्टसिद्धिर्न स्यात् । स्वप्र-कृत्यर्थतावच्छेदकवत्त्वमात्रोक्तौ तु—स्वप्रकृत्यर्थतावच्छेदकपशुत्वस्य सर्वपशुषु सत्त्वेन—यागीयपश्व-तिरिक्तसामान्यपशुनिष्ठभेदप्रतियोगितावच्छेदकमेव यागीयपशुगतमेकत्वं जातमिति एकपशुकरण-कयागादप्यदृष्टसिद्धिर्न स्यादिति दिक् ।

**यण इतिवदिति** । अनेन 'विधौ परिभाषोपतिष्ठिते नानुवादे' इति परिभाषाऽसङ्गतेति

ॐ चिदस्थिमाला ॐ

स्थानिवत्त्वं बोध्यम् । अन्यथा समाहारद्वन्द्वेनैव निर्दिशेत । अत एवैकादेशस्य ऋकारस्थानिकत्वेन रपरत्व-सिद्धिरित्यन्यत्र स्पष्टम् । यत्तु—अनुवादे परिभाषाणामनुपस्थितेः 'षष्ठी स्थाने' इत्यतः स्थानेग्रहणमनुवर्तत इति **रत्नाकरदण्डिप्रभृतयस्तन्न**, उक्तयुक्तेः तस्य, समस्तत्वाच्च, तदतद्धनयन्नाह—**षष्ठीति** । एतत्प्रकार-स्यावश्यकतयाह—**उदात्तेति** । यत्तु रत्नाकरः-'स्थानेऽन्तरे'त्यतोऽनुवृत्तं प्रथमान्तेन विपरिणम्यते, स च प्रसङ्गः, एवञ्च उः स्थाने प्रसज्यमानोऽण्रपरो भवतीति वाक्यार्थः । वस्तुतस्तु लाघवादेकवाक्यतायामुः-स्थानेऽण्रूपो रपरो भवतीति वाक्यार्थसम्भवादिदं व्यर्थं, ङमुडिति वद्भगिति वक्तव्ये परग्रहणसामर्थ्याच्च । एवञ्चारायादेशौ भवत इत्यर्थः । न च सर्वादेशतापत्तिः, वर्णद्वयान्यसमुदायरूपस्थानिनोऽभावात् ।

न चैवमपि 'ऋत इद्धातो'रित्यादौ ऋदन्तस्य धातोरित्यर्थलाभात्तत्स्त्वमिति वाच्यम् , विशेषणविशेष्यभावे कामचारेणान्यथा व्याख्यानात् । न चैवमपि उपधायाश्चेति व्यर्थम् । अङ्गाक्षिप्तप्रत्ययेन ऋकारे विशेषिते तस्मिन्निति परिभाषया व्यवहिते सत्यप्राप्तौ तदारम्भादिति, तन्न, प्रसङ्गशब्दे भावघञः सिद्धन्तित्वेनो-कार्थासम्भवाद्विभक्तिविपरिणामे गौरवाच्च । किञ्चैकवाक्यता किम्पदैकवाक्यताऽभिमतोत वाक्यैक्यवा-क्यता? नाद्यः, उद्देश्यविधेयभेदेन तदसम्भवात् । पदोपस्थितिपक्षाङ्गीकारेऽपि त्वदुक्तवाक्यार्थस्य दुर्वचत्वात् । 'ऋत इद्धातो'रित्यादौ साफल्ये सत्याद्गुण इत्यादौ दोषापत्तेश्च । नान्त्यः, उक्तवाक्यार्थासम्भवात्, परग्रहणस्य वक्ष्यमाणरीत्या साफल्यात् । ऋत इद्धातोरित्यादौ तयोस्तथा विशेष्यविशेषणभावेऽपि अङ्गाधिकारस्थत्वेन तस्य च विशेषत्वस्यैव नियतत्वेन इदन्तस्याङ्गस्य धातुरूपस्येत्यर्थापत्तावुक्तदोषतादवस्थ्यात् । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तथा विशेषणविशेष्यभावासम्भवेनोत्तरसूत्रवैयर्थ्यापत्तेश्च, तदतद्धनयन्नाह—**स्थानेऽन्तरेति** ।

ॐ सदाशिवभट्टीयम् ॐ

**उरण् । लक्षणयेति** । तस्य तत्र ताल्वादिस्थानबोधकत्वादिति भावः । वस्तुतस्तु आवश्यकस्वरितत्वप्रतिशकस्य

प्रसङ्गावस्थायामित्यर्थस्तदाह—**रपरः सन्नेवेति**। 'रपर' इत्यवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिस्तेनास्यावयवत्वात् 'यदागमा' इति न्यायेन विशिष्टस्य गुणवृद्धित्वेन 'ऋकारस्य गुणवृद्धी अरारावेवे'ति नियमोपपत्तिः। अत एव 'रदाभ्या'मिति सूत्रे 'थलि च सेटी'ति सूत्रे च भाष्ये—'गुणो भवति वृद्धिर्भवतीति—रेफशिरा गुणवृद्धिसञ्ज्ञकोऽभिनिर्वर्त्तते'—इत्युक्तम्। 'उः स्थानेऽण् प्रसज्यमान एव रपरो भवति. पूर्वभक्तश्च रेफ इत्यर्थ' इति कैयटः। अवयवत्वं वाचनिकमेव तत्सादृश्यबोधनपर्यवसायि।

### ❀ अभिनव-चन्द्रिका ❀

ध्वनितम्। **अवयववाचिनेति**। अवयवत्वविशिष्टपरत्वावच्छिन्नवाचिनेत्यर्थः। **षष्ठ्यर्थे बहुव्रीहिरिति**। तथा च 'रपर' इत्यस्य–रेफनिष्ठावयवतानिरूपकः, रेफनिष्ठपरत्वावधितावांश्च प्रसङ्गावस्थायामण् भवतीति सूत्रार्थः। **नियमोपपत्तिरिति**। वस्तुतस्तु रेफविशिष्टे गुणत्वाद्यभावेऽपि न

### ❀ चिदस्थिमाला ❀

लाघवादाह—**तस्येति**। तदाह=फलितमाह। यत्तु अन्तपदस्य 'मिदचोऽन्त्या'दित्यत्रैवात्राप्यनुवृत्तिस्तेन गुणादिशब्दैर्योण्विहितस्तस्यान्तावयव इत्यर्थेन नियमोपपत्तिरिति, तन्न, गौरवात्, वाक्यभेदापत्तेश्च, क्लिष्टत्वाच्च, अन्यथोपपत्त्या फलाभावाच्च। तदेतद्ध्वनयन्नाह—**रपरइति**। इत्यत्रेत्यर्थः। अवयववाचित्वादेवाह—**षष्ठ्यर्थे इति**। अस्य=रेफस्य। प्रकृतोपयोगादाह—**विशिष्टस्येति**। यथा चैतत्तथा स्पष्टमन्यत्र। अन्यथा सर्वत्रान्तरतम्याभावस्य तुल्यत्वादनियमः स्यादिति भावः। उक्तार्थे संमतिमाह—**अत एवेति**। तदर्थाङ्गीकारादेवेत्यर्थः। तत्रत्यकैयटं फलितार्थकथनपरमाह—**उः स्थाने इति**। ऋत इद्धातोरित्यादौ तथार्थेऽपि 'अलोऽन्त्यस्य' 'निर्दिश्यमाने'ति परिभाषाभ्यामविरोधेन समाविशन्तीभ्यामिष्टसिद्धिः, एतेना'ने मुगि'ति मुग्विधिसामर्थ्याद्वर्णग्रहणे 'यदागमा'इत्यस्याऽप्रवृत्तिरित्यपास्तम्। उक्तभाष्यविरोधादिना ततस्तदनित्यत्वस्यैवाङ्गीकारात्। ननु शाखाया शाखान्तरावयवत्वव्यवहारादर्शनाद्वर्णस्य वर्णान्तरं कथमवयवोऽत आह—**अवयवेति**। न च सिद्धपदार्थस्य वचनसहस्रेणापि बोधनं दुर्वचमत आह—**तत्सादृश्येति**।

### ❀ सदाशिवभट्टीयम् ❀

'षष्ठी स्थाने'इत्यत्रत्यस्थानपदस्यात्रानुवृत्तिः। एवञ्चाधिकं स्वरितत्वं लक्षणा च न, तथा भाष्यं त्वेकदेश्युक्तिरित्यत्रैवोद्योते स्पष्टम्। यद्यप्यारारादिरूपेण विधानेऽभक्तत्वादिशङ्कैव नास्ति, तथाप्यणमनूद्य रपरत्वमिति पक्षमाश्रित्य भाष्ये पक्षत्रयं चिन्तितम्, अन्तग्रहणमनुवर्त्य पूर्वान्तत्वपक्षश्च स्थापित इति **कौस्तुभे** कटाक्षयन्नाह—**रपर इत्यवयवेति**। ननु 'रेफशिरे'त्यादिभाष्यम'नूद्य रपरत्व'मिति पक्षेणातद्गुणसंविज्ञानबहुव्रीहिणा वा सुयोज्यमिति चेन्न, प्रकरणविरोधादतस्तत्रत्यं कैयटमाह—**स्थान इति**। न केवलमाकरग्रन्थ-

### ❀ विषमपदविवृतिः ❀

भात्त्वम्। यद्वा 'न पदान्ता हलोण' इत्यस्य 'दोषसम्पादका' इति शेषः। तेन हरयिह विष्णविहेत्यादौ पदान्तहल्रूपाणां सत्त्वेऽपि न क्षतिः। 'वृक्षस्करोती'त्यत्राशील्यनुवृत्त्या न दोष इति स्पष्टमेव भाष्ये उक्तम्। 'वकारनिवृत्त्यैवात्र तद्वारणसम्भवा'दिति तु न युक्तम्। द्वन्द्वनिर्दिष्टयोरेकदेशानुवृत्त्यसम्भवात्। अत एव द्वन्द्वनिर्दिष्टैकारस्य निवृत्त्यर्थ'मदसो मा'दिति सूत्रे माद्ग्रहणं कृतम्। 'भोभगो' इति सूत्रस्थश्चिन्त्यमेतदिति कैयटग्रन्थस्तु–लण्सूत्रस्थश्लोकादिशोपपत्तिचिन्तनं कार्यमित्येवं

अन्यथा वर्णस्य वर्णान्तरावयवत्वं हलन्त्याच्चेतिसूत्रभाष्योक्तरीत्याऽसङ्गतं स्यात्। पञ्चम्यर्थे बहुव्रीहिणाऽनवयवत्वे तु—गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात्। गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यादित्युक्तानियमानुपपत्तिः। अत एव वव्रे इत्यादौ हलादिःशेषसिद्धिः। अभ्यासावयवस्यैवानादेस्तेन निवृत्तेः।

एतेनाणमनूद्य रपरत्वं विधीयते इति परास्तम्। उक्तनियमानुपपत्तेः। अत्र पक्षे क्व रपरत्वं?

❀ अभिनव-चन्द्रिका ❀

र्णनि:, ऋकाराकारयोर्मूर्धन्यावयवकत्वस्य सत्त्वेन तेनैवाऽऽन्तर्येण ऋकारस्याऽरारावेवेति नियमोपपत्तेरित्यन्यत्र विस्तरः। **उक्तनियमानुपपत्तिरिति**। अत्रेदं तत्त्वम्—'उरण् रपर' इत्यत्र

❀ चिदस्थिमाला ❀

'अन्यत्रान्यशब्दः प्रयुज्यमानो विनार्थं' इति न्यायादिति भावः। अन्यथा=उक्तार्थानङ्गीकारे। अवयवत्वं=स्वारसिकम्। **भाष्योक्तेति**। तत्र हि–अन्तशब्दस्य समीपवाचित्वं नावयववाचित्वं तस्य तत्त्वस्याभावादित्युक्तम्।

उक्तमेवार्थं व्यतिरेकमुखेन प्राचामसङ्गतिं ध्वनयन्द्रढयति—**पञ्चेति**। परशब्दः समीपदेशवाचीति व्यवस्थाविषय इति भावः। एवेन विशिष्टव्यवच्छेदः। उक्तहेतोरेवाह—**रेफेति**। तत्र हेतुमाह—**अत एवेति**। विशिष्टे तत्त्वाङ्गीकारादेवेत्यर्थः। तत्रादिशब्दस्यावयववाचित्वेन तस्य सत्त्वस्य सत्त्वेनेतरनिवृत्तौ तात्पर्येणादिभिन्नस्य तदवयवस्यैव तत्र ग्रहणमित्यन्यथानुपपत्तिः स्पष्टैव। तदाह—**अभ्यासेति**।

स्वतन्त्रविधायकत्वं दूषयति–**एतेनेति**। तदर्थमाह–**उक्तेति**। स्वतन्त्रविधिपक्षे कैश्चिद्दत्तं दूषणं खण्डयति–**अत्र पक्षे इति**। स्वतन्त्रविधिपक्षे इत्यर्थः। यत्तु वृद्धिरारालैच्, अरलदेङ् गुणः, ऋत इर्, उरोष्ठ्येत्येव सिद्धे

❀ ज्योत्स्ना ❀

**हलन्त्याच्चेति सूत्रे भाष्येति**। तत्र ह्येवमुक्तं—हलन्त्याच्चेत्ययुक्तोऽयं निर्देशः। कथं हि नामैको हलन्त्यं स्यादन्यस्यान्त्य इति। व्याख्यातञ्च प्रदीपे–अन्यस्यान्त्य इत्यनेनात्यन्तभेदमनयोर्दर्शयतीति। **आदेशानेव रलपरानिति**। 'वृद्धिरारालादैच्' 'अरलदेङ्गुण' 'ऋतइर्' 'उरोष्ठ्ये'त्यादीति भावः। किन्त्वेवं सत्यनेकरेफलकारपरोच्चारणायपेक्ष्य सूत्रकरणे किं गौरवमिति चिन्त्यम्।

❀ सदाशिवभट्टीयम् ❀

विरोध एवापि तु लक्ष्यविरोधोपीत्याह—**अत एव वव्रे इति**। अभ्यासस्य नैरर्थक्यान्नात्रानुमानिकादेशस्य स्थानिवत्त्वेनाभ्यासत्वलाभोऽर्धविकाराच्च नैकदेशविकृतन्यायेनापीति भावः। यदि त्ववयवत्ववादिनाप्यत्र अक्रियाज्ञानवतामित्युक्तरीत्यैव पुनरभ्यासत्वं वाच्यमिति ममापि तद्रीत्या नोक्तदोष इत्युच्येत, तदा तु गीरित्यत्र रेफान्तधातोरभावाद्दीर्घो न स्यात्। आनुमानिकादेशावसरस्तु न प्राप्ताऽप्राप्तविवेकन्यायेनास्य रेफमात्रविधायकत्वेन तदननुमानादित्यत्रैवोद्योते स्पष्टम्। तथा माहिस्मते पिपरुरित्यादावभ्यस्तानामादिरिनि स्वरोऽपि फलम्, अन्यथा रेण व्यवायान्न स्यादित्यादिभाष्योक्तमनुसन्धेयमिति दिक्। यद्यपि भाष्येऽन्तपदानुवृत्त्या पूर्वान्तत्वमुक्तं न परशब्दस्यावयववाचकत्वेन, तथापि अन्तपदस्य रेफेऽन्वयात्सौत्रसमासकल्पनामपेक्ष्येदं लघ्विति भावः। अत एव परादित्वपक्षो नाशङ्कितोऽत्र। **नियमानुपपेति**। आन्तर्यविशेषण त्रयाणामापत्तेरिति भावः। कौस्तुभं कटाक्षयति—**अत्र पक्षे इति**। **सम्भवादिति**। अयम्भावः—

❀ विषमपदविवृतिः ❀

पर इत्याहुः। **इतिवदिति**। अनूद्यमानविशेषणेऽपि सा परिभाषा प्रवर्तत इति भावः। **वव्रे इति**। स्थानिवत्सूत्रे आरेत्यादौ स्वोक्तदिशा द्विरुक्तपूर्वभागस्य पुनरभ्यासत्वेऽनादेस्तेन निवृत्तेश्चिन्त्यमेतदिति केचित्। **अत्र पक्षे इति**। अणमनूद्य रपरत्वं विधीयत इति पक्षे इत्यर्थः। **रलपरानिति**।

ऋ लपरत्वमिति व्यवस्थाऽनुपपत्तिस्तु न, रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासम्भवात् । **तत्रान्तरतम्यादिति** । स्थानत इति भावः । रेफादि-द्वाराऽऽदेशस्यापि मूर्धादिस्थानत्वात् । 'तत्र–तत्राऽऽदेशानेव रलपरानुच्चार्येदं सूत्रं न कार्य'मिति तु न वाच्यम्, 'आप्ज्ञप्यृधामीत्' 'भृञामि'दित्यादौ दोषापत्तेः ।

### ❀ अभिनव-चन्द्रिका ❀

परशब्दः शुद्धपरत्वावच्छिन्नवाचक एव ! रः परो यस्मादिति पञ्चम्यर्थे बहुव्रीहिः । नच 'ऋकारस्य गुणवृद्धी अरारावेवे'ति नियमानुपपत्तिरिति वाच्यम्, 'अनान्तर्यमेवैतयोरान्तर्य'मितिभाष्येण दत्तोत्तरत्वात् । न चैकारादावप्यनान्तर्यसत्त्वेन सोऽपि स्यादिति वाच्यम्, 'खट्वेत्तिल'—'खेतरया-वदादेशाद्वृत्तिल'—'खदलभिन्नदलीयवृत्तिल'—एतत्त्रितयसम्बन्धेन स्वविशिष्टस्थानप्रयत्नजन्यत्वा-द्यान्तर्यसत्त्वेनाऽनान्तर्यस्य एकारादावभावात् । नचैवमपि 'अचो ञ्णिती'त्यादावकारनिरूपिता-ऽऽन्तर्यस्याऽऽकारे सत्त्वेनानान्तर्याभावादकारस्याऽऽरित्येवेति नियमो न स्यादिति वाच्यम्, 'अचो ञ्णिती'त्यत्र 'अत उपधाया' इति सूत्रादत इत्यनुकृष्य माठरपरिवेषणन्यायेनाच्पदार्थे-ऽकारातिरिक्तत्वेन सङ्कोचं कृत्वा वाक्यभेदेन वृद्धिविधानेनादोषात् । नचैवमपि 'गुणो भवति वृद्धिर्भवति, रेफशिरा गुणवृद्धिसञ्ज्ञकोऽभिनिर्वर्तते' इतिभाष्यविरोध इति वाच्यं, 'गुणवृद्धि-सञ्ज्ञकः रेफशिरस्कः सन्नभिनिर्वर्तते' इत्यर्थकरणेनाविरोधात् । नचैवमपि 'वव्रे' इत्यादौ रेफस्या-भ्यासानवयवत्वेन हलादिःशेषानापत्तिरिति वाच्यं, स्थानिवत्सूत्रस्थशेखरोक्तदिशा वरित्यस्य पुनरभ्याससञ्ज्ञायां हलादिःशेषस्य सुवचत्वादिति दिक् । **भृञामिदित्यादाविति** । 'भृञामिर्' इत्युच्यमानेऽपि हलादिःशेषेण रूपसिद्धौ चिन्त्योऽयं दोष इति केचित् ।

### ❀ चिदस्थिमाला ❀

उरण्रपर इति सूत्रं व्यर्थमिति तन्मते खण्डयति—**तत्र तत्रेति** । **आविति** । अत्रापि तथा पाठे आद्ययोरपि तदापत्तिस्तदपाठे ऋधोपि तदभावापत्तिरुभयपाठे गौरवापत्तिरेवं 'भृञामि'दित्यत्रापि तथा

### ❀ ज्योत्स्ना ❀

**आप्ज्ञप्यृधामीदिति** । अत्रेदिति यथाश्रुते इर्त्सतीति न सिद्ध्येत्, तदर्थमीरि रपरे क्रियमाणे

### ❀ सदाशिवभट्टीयम् ❀

अत्रापि पक्षे प्राप्नोति न्यायेन पूर्वान्तौ रलौ विधीयेते, तत्रान्तरतमपदानुवृत्त्यान्तरतमौ तौ भवतः । साधा-रणधर्मस्तु अवयवावयविभावतादात्म्यान्यतरसम्बन्धेन यो लकारवान्—प्रसज्यप्रसञ्जकभावतादात्म्यान्यतर-सम्बन्धेन तत्सम्बन्धित्वम् । यद्वा ऋस्थानिकाणः स्थानेन्तरतमो रपर एव विधीयते, साद्दृश्यन्तु प्रसज्य-प्रसञ्जकभावतादात्म्यान्यतरसम्बन्धेन लवत्सम्बन्धित्वमिति । प्रतिपत्तिगौरवात्तूक्तम्—**सम्भवेति** । **मूर्द्धादी-त्यादि न कार्यमिति** । अयम्भावः—यथान्यासेऽष्टौ मात्रा, गुणादिसञ्ज्ञाविधौ रलपरोच्चारणेऽप्यष्टावेव वर्द्धन्त इति यद्यपि समम्, 'ऋत इ'दित्यादौ तकारेण रेफो निमेय इति सोऽपि सम एव । तथापि 'आनङृत' इत्यत्र नङ्योः प्रयोजनाभावान्न वक्तव्याविति लाघवमेवं लपरश्चेति वाक्यं न वक्तव्यमिति च । तथा योग-विभागाभाव-प्रतिपत्तिगौरवाभावौ च लाघवमिति । **भृञामिदित्यादाविति** । अयम्भावः—यथान्यासे-

### ❀ विषमपदविवृतिः ❀

'वृद्धिरादै''जदेङ्गुण'इति सूत्रयोराराल्लौ अरलौ च विशिष्य निर्देष्टव्यौ । 'ऋत इद्धातो'रित्यादौ तु रपरः पाठ्यः । **भृञामिति** । इदं न युक्तम् । अभ्यासे हलादिः शेषेणानादेर्हलो निवृत्तेर्विशेषाभावात् ।

### ❀ वरवर्णिनी ❀

**आदेशानेवेति** । परे तु तथोच्चारणे–'रै'शब्दादाचारक्विबन्तादिवि नपुंसकह्रस्वे–'रि'शब्दे इकारे

अत्राण् पूर्वेणैव, 'प्रशास्तृणा'मिति निर्देशात्। वस्तुतो रप्रत्याहाराभावेन 'रपर' इत्यस्य स्थाने 'लपर' इति पठनीयमिति—'लपरत्वं वक्ष्या'मीति तुल्यास्यसूत्रभाष्याल्लभ्यते।

**झरो झ** । 'झयो हे'त्यतो 'वाऽवसाने' इत्यतो वा विकल्पोऽनुवर्त्तते। हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम्। **लोपे इति** । ऋधधातोर्झर इति भावः।

❀ अभिनव-चन्द्रिका ❀

वाऽवसाने इत्यतो वेति। भाष्यसम्मताष्टाध्यायीपाठरीत्येदमुक्तम्। 'झर'इत्यनेन ऋधेर्धस्ये-न्युच्यमाने 'पूर्वत्रासिद्धीयमद्वित्व' इति शङ्कासमाधानादेर्नोपयोग इति सूचितम्।

❀ चिद्स्थिमाला ❀

पाठेऽन्त्ययोरपि तदापत्तिरन्यथाचस्यापि तदभावापत्तिरुभयपाठे गौरवापत्तिः। यद्यपि तत्र हलादिः शेषेण श्रवणान्न दोष उभयथापि, तथापि माडादौ हलादिरित्यस्य व्यापारकल्पने प्रक्रियादिगौरवापत्तिः, साधुत्व-बोधकप्रक्रियाभेदेन तदभावापत्तिश्चेति भावः। आदिना 'ऋत उ'दित्यादिपरिग्रहः। गमुलित्यादेः कपिलका-दित्वात्साधनन्तु पृषोदरादित्वेनैव सर्वसिद्धौ सम्पूर्णशास्त्रस्यैव प्रत्याख्यानापत्तिरिति भावः। एवं सति वृद्ध्यादिसूत्रेऽपि गौरवं बोध्यम्। रप्रत्याहारस्य खण्डिततत्वात् सिद्धान्तमाह—**वस्तुत इति**। लभ्यत इत्यत्रान्वयः।

कैयटादिमतेनाह—**झय इति**। सिद्धान्तमते नाह—**वावसेति**। उभयसङ्ग्रहायैवाह—**विकल्प इति**। प्राचामसङ्गतिं ध्वनयन्नाह—**हयेति**। प्रकृतत्वादाह—**ऋधधातोरिति**। ननु द्वित्वे लोपाभावेऽपि त्रिधत्वा-

❀ ज्योत्स्ना ❀

आप्ज्ञपोरीप्सति ज्ञीप्सतीति न सिध्यत इति भावः। 'भृञामि'दित्यस्योपन्यासश्चिन्त्यः। इदिति यथा-श्रुतपाठे दोषाभावात्। रपरपाठेऽपि हलादिशेषो भविष्यति। रेफोच्चारणसामर्थ्यान्न भविष्यतीति चेत्तर्हि मापाठि रपरः, नह्यशुद्धं पठित्वा कुचोद्यं कर्तुमुचितम्। **भाष्याल्लभ्यत इति**। अत्र यद्वक्तव्यं तदुक्तं प्राक्।

❀ सदाशिवभट्टीयम् ❀

'बिभर्त्ती'त्यस्य हलादिशेषस्मृतिपूर्वकप्रयोगेऽभ्युदयः। मिमिते जिहीत इत्यादेस्तु तदपूर्वके अत्र न्यासे तत्र रपरोच्चारणे सर्वत्रापि तत्पूर्वक एव तस्मिन् स स्यात्। अपरे तु बिभर्त्तीत्यत्रापि तदपूर्वके स स्यादिति। सनाथयिष्यते चेदं ग्रन्थकृत्सम्मतिदानेन। आदिना—ऋत उत्, सर्वत्राद्दृष्टन्यत्ययश्च संगृह्यत इति दिक्।

वस्तुतस्तु शङ्कायां तत्रतत्रेति वीप्सासत्त्वात्तदनुरोधेन भृञामिदित्यत्र दोष उक्तस्स च सर्वादेशत्वापत्ति-लक्षणः, सूत्रारम्भे तु सन्निपातपरिभाषया न, मातुरित्यत्राप्ययं बोध्य इति। 'उरणोर'गिति तु न सूत्रितं, चाकर्तीत्यत्राभ्यासस्य कित्त्वेन 'दीर्घोऽकित' इति दीर्घानापत्तेः। 'तत्प्रकरणस्थकित एव वर्जन'मिति वक्ष्य-माणं माधवादिमतं तु न न्याय्यम्, मानाऽभावात्। नुक्-रीक्-रुक्-रिक्-एषां सर्वेषां वर्जनानापत्तेर्बोध्यसा-मान्यचिन्ताया आवश्यकत्वात्। सत्यभिधाने च्छायत इत्येव। वस्तुतस्तु अकिद्ग्रहणस्याऽभ्यासविकार इति परि-भाषाज्ञापकतापरभाष्यप्रामाण्येनाभ्यासनिमित्तककित एव ग्रहणमिति दीर्घोऽकित इत्यत्रोद्योते स्पष्टत्वादत्र न्यासे न दोष इति। तत्प्रामाण्यात्तु हाको हाङश्चानभिधानान्न यङ्लुकावित्यप्युद्योते तत्सूत्र उक्तन्तदा तु दोष इति। **झरो**। कैयटमतेनाह—**झयेति**। भाष्यसम्मतपाठ आह—**वावसेति**। उभयसङ्ग्रहायाह—

❀ वरवर्णिनी ❀

स्थानिवद्भावेन वृद्धित्वातिदेशे 'वृद्धाच्छ' इति छप्रत्ययापत्तिः, 'घटक'शब्दे च—'मितां ह्रस्व'इति ह्रस्वाकारस्य स्थानिवत्त्वेन वृद्धित्वातिदेशे च वृद्धकार्योपत्तिः। सम्प्रति आरादेरपि वृद्धितया वृद्धित्वस्यात्मात्र वृत्तिधर्मत्वाभावेनाऽनल्विधाविति निषेधासम्भवादित्याद्यपि दोष इत्याहुः।

**असतीति** । 'द्वित्वाभाव' इत्यनुकृष्यते । **त्रिधमिति** । त्रिधकारत्वं–प्रक्रियाभिप्रायेण । न च 'द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्ध'मित्यर्थकेन 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्वमितीदमयुक्तमिति वाच्यं, फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति, तदनन्तर-ञ्जश्त्वप्रवृत्तेः । तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । **पञ्चमीति** । विनिगमकाभावादिति भावः । अत एवास्य वैकल्पिकत्वम् ।

ॐ अभिनव-चन्द्रिका ॐ

**प्रक्रियाभिप्रायेणेति** । परिनिष्ठिते 'झलां ज'शिति जश्त्वेन दस्यैव श्रवणादिति भावः । **तदनादरणादिति** । नच 'पूर्वत्रासिद्ध'मिति द्वित्वस्यासिद्धत्वाज्जश्त्वे दस्यैव द्वित्वमिति मूलासङ्गतिरिति वाच्यम्, तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्तेः । नचैवमपि 'विप्रतिषेधे पर'मिति परत्वाज्जश्त्वे पुनरपि मूलासङ्गतिरिति वाच्यं, तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्त्या प्रथमोपस्थितद्वित्वप्रवृत्तौ बाधकाभावादिति दिक् । **विनिगमकाभावादिति** । चिन्त्यमिदम् । विनिगमकाभावेन तात्पर्य-

ॐ चिदस्थिमाला ॐ

स्कथमिदमत आह—**द्वित्वाभावे इति** । तथा च द्वित्वलोपयोरभावे इत्यर्थः । यत्तु—"धातुधस्य परिभाषया जश्त्वे कृते द्वित्वमिति प्रक्रियायामपि तत्त्वाभावेन भूतपूर्वगत्या प्रयोगे तत्त्वं दुर्लभमिति–त्रिधमिति चिन्त्यम्"–इति खण्डनकृत्तत्खण्डयति–**न चेति** । यत्तु वर्णद्वित्वे नास्य प्रवृत्तिर्द्वित्वे परसवर्णत्वं सिद्धं वाच्यं संयन्तेत्यादौ त्रियकारार्थमिति वार्तिकोक्तेरत एव 'णत्वं द्वित्व'मिति कौमुदीसङ्गतिरिति तन्न, वाक्क् वागिति-भाष्योक्तलक्ष्यासिद्ध्यापत्तेः । यथा चैतत्तथा स्पष्टं भावप्रकाशे । **इत्यर्थकेनेति** । विध्यर्थतात्पर्यकेण । 'द्वित्वे पूर्वत्र परमसिद्धं ने'त्यर्थस्तु न, असमर्थसमासाद्यापत्तेः, निषेधविधौ गौरवाच्च । स्पष्टञ्चेदमन्यत्र । 'पूर्वत्रा-सिद्धीय'मिति गहादित्वाच्छः । तदधिकारभवशास्त्रत्वमस्याः लिङ्गम् । यत्र तत्त्वं तत्राद्वित्वे इत्युपतिष्ठते इत्यस्यार्थः । तत्र पूर्वत्रासिद्धमित्यधिकारप्राप्तं, 'सम्भवति सामानाधिकरण्ये' इति न्यायेनाद्वित्वे इति पूर्वत्रेत्यत्रान्वेति, तेन परस्य द्वित्वस्याप्यसिद्धत्वं भवतीति भावः । **इत्यनेन**=वार्तिकेन । **तदनन्तर-मिति** । अत एव 'यणो मय' इति वचनान्तरेण पुनर्द्वित्वेन निष्पन्नस्य चतुर्थस्यानुक्तिः । ननु तस्य वार्तिक-त्वेन फले विशेषनिरपेक्षत्वेन कथमिदमत अनादरे हेतुमाह—**तस्येति** । उक्तवचनस्येत्यर्थः । यद्यपि वार्तिककृदुक्तमिदं तथापि परिभाषावृत्तिकृद्भिरस्य तत्त्वमुक्तमिति तदुक्तं परिभाषेति–न दोषः । **परीत्यनेन** पर्जन्यवल्लक्षणप्रवृत्तिरित्यस्या सञ्चारः सूचितः । नियामकत्वमेव हि परिभाषात्वं, नियमश्च फलविशेषायैवेति यत्र फलाविशेषस्तत्राप्रवृत्तिः, अत एव 'व्रीहीनवहन्ती'त्यादौ दृष्टफले विशेषाभावान्नियमजन्यादृष्टं कल्पयन्ति वाक्यार्थविदः । कृष्णलेषु तु नावघातः, दृष्टफलाभावात् । दृष्टद्वारैव चादृष्टकल्पनेति बोध्यम् ।

**फलविशेषे एवेति** । यत्र पूर्वत्रासिद्धप्रवृत्तौ तन्निषेधे वा फले विशेषस्तत्रैवेत्यर्थः । एतेन भाष्योक्तं खण्डनकारोक्तं रत्नाकरोक्तं मन्दोक्तं चापास्तमिति भावप्रकाशे स्पष्टं, तदाह—**इत्यन्यत्रेति** । शब्दरत्ना-दावित्यर्थः । **अत एवेति** । पक्षभेदादेवेत्यर्थः । एवेनानुवृत्त्यादिनिरासः, इदञ्चानर्चीत्यत्र वेत्यस्या-

ॐ सदाशिवभट्टीयम् ॐ

**विकल्प इति** । **इत्यर्थकेनेति** । विध्यर्थतात्पर्यकेण, न तु द्वित्वे पूर्वत्रपरमसिद्धं नेत्यर्थकेन । असमर्थसमा-सापत्तेरिति भावः । पूर्वन्द्वित्वेऽसकृज्जश्त्वम् । अन्यथा सकृदेवेति प्रक्रियायां विशेषसत्त्वादाह–**रूप इति** ।

**प्रवृत्तेरिति** । आष्टमिकवर्णद्वित्वस्य द्विःप्रयोगत्वे व्यक्तिभेदेन चासकृत्प्रवृत्तेरित्यर्थः । **परिभाषात्वेति** । वार्तिकत्वेपि परिभाषावृत्तिकृद्भिस्तत्त्वेनोक्तत्वादिति भावः । एवन्तु विप्रतिषेधसूत्रस्यापि परिभाषात्वस्योक्तत्वात् विप्रतिषेधपदं किमर्थमिति चेच्चिन्तयिष्यते । यणो मय इति द्वित्वे चतुर्थमपि बोध्यम् । **अत एवेति** । एवेनानुवृत्त्युदासः । इदञ्चानर्चीत्यत्र वेत्यस्यासम्बन्धपक्षे,

ॐ विषमपदविवृतिः ॐ

**अत एवास्येति** । इदं चिन्त्यम् । विनिगमनाविरहेणार्थद्वयपरत्वेऽपि विकल्पालाभात् । अर्थद्वयपरत्वं

**कृष्णैकृति** । कृष्णेति सम्बुद्ध्यन्तं पृथक्पदमिति कश्चित् ।

**एत्येध** । ऊठत्राऽऽदेश एव, व्याख्यानात् । एचीति नोठो विशेषणमूठस्तत्त्वासम्भवात् । 'एत्येधत्यो'रिति योगं विभज्य तयोरेवैचीति विशेषणस्य भाष्ये कृतत्वाच्च, तदाह-**एजाद्योरिति।** एतिरत्र इणेव, प्रसिद्धत्वात् । उपैतीत्यादौ वृद्धिरेचीत्यनेन गतार्थत्वमाशङ्क्याह–**पररूप-**

❀ अभिनव-चन्द्रिका ❀

निर्णयाभावाच्छाब्दबोधस्यैवानापत्तेः । तस्माद्भाष्ये पक्षद्वयस्यापि स्थितत्वेनाऽऽवृत्त्या 'यणो मय' इति वार्तिकस्यार्थद्वयस्वीकारादिति बोध्यम् । **अत एवेति** । पक्षद्वयस्यापि भाष्ये स्थितत्वादेवेत्यर्थः ।

ननु 'कृष्णैकल'मित्यादौ 'पूरणगुणे'ति निषेधात्षष्ठीसमासो न स्यादित्याशङ्क्याऽऽह— **पृथक् पदमिति** । **कश्चिदिति** । अत्रारुचिबीजन्तु—अनित्योऽयं गुणेन निषेधः 'तदशिष्यं सञ्ज्ञाप्रमाणत्वा'दिति निर्देशादित्यस्य मूले एव स्फुटीकरणादिति बोध्यम् । **तत्त्वासम्भवादिति** ।

❀ चिदस्थिमाला ❀

ननुवृत्तिपक्षे बोध्यम् । तदनुवृत्तौ तु तत्रास्योपसङ्ख्यातत्वात्ततोऽपि तत्त्वं बोध्यम् ।

**कश्चिदिति** । क्रियाद्वयाध्याहारादिप्रयुक्तगौरवादिकमत्रारुचिबीजम् । एतेन तथा दण्डयुक्तमपास्तम् । तस्मात्–'सञ्ज्ञाप्रमाणत्वा'दित्यादिनिर्देशेन गुणेन निषेधानित्यस्यान्यार्थमावश्यकतया तेन षष्ठीतत्पुरुषः । एवमग्रेऽपीति तत्त्वम् । ननूठ उपघाते इत्यस्य भ्वादावेकीयमतेन पठ्यमानस्य दीर्घादेः कुतो न ग्रहणमत आह– **ऊठत्रेति** । अत्रानुकार्यानुकरणयोरभेदविवक्षया तत्प्रयुक्तकार्यं न, सूत्रे तु तद्भवत्येव । तथा सत्यल्पाच्तरत्वेन पूर्वनिपातौचित्यं, तदाह—**व्याख्येति** । **एचीतीति** । अनुवृत्तमित्यादिः । **तत्त्वेति** । एजादित्वेत्यर्थः । यत्तु रत्नाकरः—आ अवतीत्यवनेः क्विप्यूठि एजादित्वसम्भवादिदं चिन्त्यं, तस्मान्मिथः साहचर्यादेवैजाद्योर्ग्रहणं तयोर्न त्वचीत्यनुवृत्त्येति, न च तत्र वृद्धिरेचीति सिद्धिरोमाङोश्चेत्यनेन बाधात् । अनेन तु सामर्थ्याद्बाध्यते इति, तन्न । वृद्धिसूत्रस्थकैयटोक्तेस्तस्यानभिधानात् । किञ्च ओमाङोरित्येतद्बाधकल्पनापेक्षया सामर्थ्येन यद्येवोठ् विशेष्येत तदा येन नेतिन्यायेनात्रैवोमाङोरिति बाधित्वा स्यादिति–विश्वौह इत्यादि न स्यादिति । 'वाह ऊठ्'सूत्रभाष्याभिमतेष्टनिष्ठलक्ष्यानुरोधेन चैचीत्यस्योडंशे सम्बन्धाकल्पनस्यौचित्यात् । अत एव वार्तिकादिसङ्गतिस्तद्धनयन्सम्भवमभ्युपेत्याप्याह—**एत्येधत्योरिति** । एवे-नोठो व्यवच्छेदः । ननु वी गतीत्यादौ प्रश्लिष्टस्यापि ग्रहणमत्र कुतो नात आह—**एतिरिति** । **प्रसिद्धेरिति** । अभिव्यक्तेति न्यायादिति भावः । एधतिसाहचर्येणाप्रश्लिष्टसानुबन्धकस्यैव ग्रहणाच्चेत्यपि बोध्यम् । आदिना–उपैधत इत्यस्यैव परिग्रहः । **आशङ्क्येति** । तदाशङ्कां हृदि निधायेत्यर्थः । नन्वेवं 'पररूपापवाद'

❀ ज्योत्स्ना ❀

**फलविशेष एव प्रवृत्तेरिति** । 'तदनन्तरं जश्त्वप्रवृत्ते'रित्यत्र हेतूपदर्शनमिदम् ।

**कश्चिदिति** । प्रक्रियाप्रकाशकृन्मतमिदम्, 'पूरणगुणे'तिनिषेधात्समासालाभादिति तदाशयः । 'सञ्ज्ञाप्रमाणत्वा'दित्यादिनिर्देशैस्तन्निषेधानित्यत्वज्ञापनाद्दोषाभाव इति ह्यत्रास्वरसः। **व्याख्यानादिति**। न तूठ उपघात इति भ्वादावेकीयमतेन पठित इति भावः । **प्रसिद्धत्वादिति** । तेन वी गतीत्यत्र-

❀ सदाशिवभट्टीयम् ❀

तत्सत्त्वेतु ततोपि तत्त्वं बोध्यम् । **कश्चिदिति** । 'पूरणगुणे'ति सूत्रे सिद्धान्तयिष्यमाणरीत्येदमेव युक्तं, न त्वत्रास्वरसोद्भावनम् । जनौरित्यत्र सम्भवादाह—**एत्येधत्योरिति** । **इणेवेति** । 'इणीकारादौ प्रतिषेध' इति वार्तिकारम्भात्सानुबन्धकत्वेऽप्यस्य ग्रहणमिति भावः । ननूभयोरास्त्विति चेन्न, आरम्भप्रत्याख्यानयोः फलभेदापत्तेरित्याहुः। **तीत्याद्राविति** । आदिनोपैधत इत्येव । आशङ्क्य=तदाशङ्कां

❀ विषमपदविवृतिः ❀

तु तत्रावृत्त्यादिना बोध्यम् । **पृथक् पदमिति** । 'पूरणगुणे'ति षष्ठीसमासनिषधादिति भावः । **इणेवेति** । न तु वीगतीत्यत्र प्रश्लिष्ट इत्यर्थः ।

**गुणेति** । एत्येधत्योरेङि पररूपस्योठि चाऽऽद्गुणस्येति विवेकः । **उपैधते इति** । अत्र न सर्वादेशः । 'एत्येधत्याद्यवयवेऽची'त्येवं क्रमेण सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षणसूत्रस्थभाष्यस्वरसः । 'वृक्षे शाखे'तिवदेत्येधत्यूठ्स्विति सप्तमी बोध्या ।

**प्रष्ठौह इति** । प्रष्ठं वहतीत्यर्थे वहेण्वौ ततः शस्यूठि सम्प्रसारणे पूर्वरूपेऽनेन वृद्धिः ।

❀ अभिनव-चन्द्रिका ❀

नचावयतेः क्विपि औरित्यादावेजादिरूठ् सम्भवतीति वाच्यम्, 'एत्येधत्यो'रिति योगं विभज्य एचीत्यस्य तत्रैव विशेषणपरभाष्यप्रामाण्येनैतस्यानभिधानात् । 'विश्वौह' इत्यादौ वृद्ध्यर्थं भगवता एचीत्येत्येधत्योरेव विशेषणमित्युक्तनया चैतस्यानभिधाने न मानमिति परे । **सूत्राणामर्थादिति** । केचित्तु एजाद्येत्येधत्योरित्येव सूत्रार्थः । न च सर्वादेशत्वापत्तिरिति वाच्यम्, 'अलोऽन्त्यस्य' 'आदेः परस्य' इत्येताभ्यां सर्वादेशत्ववारणात्सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वाच्च

❀ चिदस्थिमाला ❀

इत्येवोचितं, तत्र तस्यैव गुणबाधकवृद्धिं बाधित्वा प्रसक्तेरिति चेन्न । प्रसङ्गादूठंशेऽपि फलोक्तेः, अत एव नेतैव गतार्थत्वाद्व्यर्थोयं योग इति **रत्नाकरोक्तमपास्तम्** । तदेतद्ध्वनयन्नाह—**एत्येधत्योरिति** । चो व्युत्क्रमे, अत एव गुणस्य परनिपातः, सूत्रे क्रमबोधने शङ्काप्रसङ्गक्रमबोधने च तात्पर्यात् । अन्यत्रादोषादाह—**अत्रे-ति** । ऐकरूप्यायाह—**एत्येधेति** । 'एजादी'त्यादिः । अचीत्यप्यनुवर्तते इति भावः । सूत्रेत्युपलक्षणं वार्तिकानामपि । **अर्थादिति** । तात्पर्यार्थादित्यर्थः । सप्तमीस्वरसादिति भावः । एतेनादेः परस्येत्येव सिद्धि-रिति नैवं वर्णनमुचितमित्यपास्तम् । परस्यैव विधाने तत्प्रवृत्तेः । मूलादिसकलग्रन्थासङ्गतिं ध्वनयन्नाह—**अयमेवेति** । शाब्द इत्यर्थः । **प्रत्ययेति** । अनुस्वारं विहाय प्राग्भागानुकरणं, तत्र हि सूत्रप्रयोजन-कथनावसरे वार्तिकोक्तविध्यर्थत्वफलखण्डनावसरे प्रत्याख्यानवाक्युक्तदोषाणां परिहारावसरे गव्यर्थात्यत्र नात्वमतो नैवं विज्ञायतेऽम्यचीति, कथं तर्हि ? अच्प्रधानं, तद्विशेषणमम्, अमोऽवयवेऽचीत्यर्थ इति तदादिविध्यभावः । तत्र वर्णनिमित्तमात्वं न प्रत्ययनिमित्त मिति दोषाभाव इति **कैयटः** । नन्वेवं षष्ठ्युचिताऽत आह—**वृक्षे इति** । अवयविनोऽधिकरणत्वविवक्षयेति भावः । एवं सर्वत्र बोध्यम् । **ण्वाविति** । 'वहश्चे'त्यनेनेति भावः । सम्प्रसारणपूर्वरूपे=तत्प्रयुक्तपूर्वरूपे इत्यर्थः ।

❀ ज्योत्स्ना ❀

प्रश्लिष्टस्य न । **भाष्यस्वरस इति** । तत्र 'द्यौतोम्शसो'रित्यत्राचीत्यमीति चानुवर्तते, अमीत्येतद-चीत्येतस्य विशेषणमतस्तदादिविध्यप्रवृत्तेरेकादेशो वर्णाश्रय इत्युक्तम् । एजादावित्यर्थेऽपि-

❀ सदाशिवभट्टीयम् ❀

हृदि निधायेत्यर्थः । **विवेक इति** । अत एव मूले गुणस्य परनिपातः । इणि निर्दिश्यमानपरिभाषया इष्ट-सिद्धेराह—**अत्रेति** । ऐक्यरूप्यादाह—**एत्येधत्योरिति** । 'सूत्रे'त्युपलक्षणं, वार्तिकस्यापि । आदेः परस्येति कुतो न समाहितमत आह—**अयमेवेति** । परस्यैव विधाने तत्प्रवृत्तिरित्यन्ये । तत्र मानफले मृग्ये । **लक्षणसूत्रेति** । मकाररहितानुकृतिरेषा । **ऊठि सम्प्रसारणे इति** । तत्सञ्ज्ञके ऊठीत्यर्थः ।

❀ विषमपदविवृतिः ❀

'**वृक्षे शाखे**'ति । न्यायनयेऽवयवस्यावयविन्याधारत्वप्रसिद्धावपि लोकेऽवयविनोप्यवयवाधारत्वं प्रसिद्धमिति भावः ।

**प्रेदिधदिति** । परे तु—'इर्णीकारादौ प्रतिषेध' इति वार्त्तिके एधत्यनुपादानात् 'न त्वेधतेरव्यभिचारा'दितिवृत्तेश्चास्यानभिधानमेव । 'एत्येधत्योरेचीति विशेषण'-मिति भाष्यस्यैधत्यंशे सम्भवमात्रेणोपरञ्जकतया विशेषणमित्याशय इत्याहुः । 'उपैधयते' इत्यादावपि वृद्धिर्भवत्येव, प्रकृतिभागस्यैधूपत्वात् । किञ्च—एत्येधत्यवयवेऽचीत्यर्थः प्रत्ययलक्षणसूत्रभाष्यसम्मत इति—अत्र न दोषः । **पुरस्तादिति** । 'पुरस्तादपवादा

## ❀ अभिनव-चन्द्रिका ❀

मूलोक्तमेव युक्तमिति प्राहुः । **इत्याहुरिति** । परे तु 'यथोत्तरं मुनीनां प्रामाण्य'मिति परिभाषया 'इर्णीकारादा'विति वार्त्तिके इर्णत्येधतेरप्युपलक्षणम् । मूलोक्तं तु न युक्तम्, वार्तिकानुसारेणै-धत्यंशे एचीत्युपरञ्जकमितिकल्पनापेक्षया भाष्यानुसारेण वार्त्तिके उपलक्षणतया व्याख्यानस्यैव

## ❀ चिदस्थिमाला ❀

मप्तम्यन्तपाठे उठ्विशेषणम् । मूलादिग्रन्थान् खण्डयति—**परे त्विति** । नन्वेवं योगविभागेन वार्तिकप्रत्या-ख्यानपरभाष्यविरोधोऽत आह—**एत्येधत्योरिति** । ननु प्रत्याख्यानपरभाष्याप्रामाण्याद्वार्तिके इण्-ग्रहणनु लक्षणमित्येव कुतो नेति चेन्न । तथा सत्यन्यत्र तस्यार्थस्यानुक्तत्वेनात्रैव वक्तव्यत्वेन तदनुक्त्या भगवता वार्तिककृदुपहासस्यान्यत्रैवात्राकरणेन चोपक्रमस्यैव प्राबल्येनात्र तथा दुर्वचत्वादिति बोध्यम् ।

ण्यन्तस्य शब्दान्तरत्वेनैधूपत्वाभावान्नातिप्रसङ्गस्तत्रेति तदंशे तदर्थमेवेति वृत्त्यादिग्रन्थासङ्गतिं ध्व-नयन्नाह—**उपैधयत इति** । आदिना प्रैदिधिषते इत्यादिपरिग्रहः । अपिना मूलोक्तशुद्धधातुरूपपरिग्रहः । तत्र दीक्षितमतेनाह—**प्रकृतीति** । सिद्धान्तमतेनाह—**किञ्चेति** । 'यत' इति शेषः । एवं चावश्य-कत्वादचीत्यस्याप्यनुवृत्तिस्तत्राह—**एत्येधेति** । एवञ्च तदीयस्यैचो निमित्तत्वेऽपि तस्यानिमित्तत्वमेवेति भावः । एतेन—वृत्तिमाधवग्रन्थखण्डकैरुपैधयते इत्यादौ दोषो नोद्भावितोऽस्फूर्तिवशादिति **जगन्नाथोक्तं**, प्रकृतिभागस्यैधूपत्वेऽप्यनर्थकत्वेनानतिप्रसङ्गान्मनोरमादि चिन्त्यं, भाष्याद्याशयस्तु 'तन्मध्यपतित' न्यायेन दनावधिकस्यार्थवत्तया एधतिग्रहणेन ग्रहणादतिप्रसङ्ग इतीति **रत्नाकरोक्तञ्चापास्तम्**, उक्तयुक्तेः, तस्या अनित्यत्वात्, एत्यादीनामुपलक्षणत्वाद्विशेषणतयाऽग्रहणात् । भाष्यादियोजकत्वद्रीत्यापि मनोरमायाः सुयोजत्वात्, वर्णविशेष्यत्वेन ग्रहणे तदप्रवृत्तेश्चेति दिक् । न्यायस्वरूपमाह—**पुरस्तादिति** । अस्य

## ❀ ज्योत्स्ना ❀

निर्दिश्यमानपरिभाषया दोषाभाव इति परिभाषाप्रदीपार्चिषि विस्तरः । **वृद्धिर्भवत्येवेति** । **शेषनरहरिस्त्वे**त्येधूठ्स्वित्येव सिद्धे श्तिप्श्पोर्निर्देश आर्धधातुकाविषयैधतेर्वृद्धिनिमित्तताद्योतनार्थः । अत उपैधयत इत्यादौ न वृद्धिरिदमेवाभिप्रेत्य ण्यन्तस्य शब्दान्तरत्वमिह पुरस्कृतं माधवाचार्यै-रिति **बुधमनोहरायां** व्याचष्टे । एवं त्विणेधत्यूठ्स्वित्येव वक्तव्ये एतीति निर्देशो व्यर्थ इति चेत्, वीगंतीत्यत्र प्रश्लिष्टस्य ग्रहणार्थः स्यादिति । 'प्रसिद्धत्वादेतिरत्रेणेव गृह्यत' इति व्याख्यानं चिन्त्यम् ।

## ❀ सदाशिवभट्टीयम् ❀

'सम्प्रसारणपूर्वे'ति पाठे—तत्प्रयुक्तपूर्वेत्यर्थः । **अनभिधानेति** । ननु प्रत्याख्यानभाष्याद्वार्त्तिके इण्पदमुप-लक्षणमित्येव कुतो नेति चेन्न, एवं सति अन्यत्रास्यार्थस्यानुक्तत्वेनात्रैव वक्तव्यत्वेन तदनुक्त्या भगवता-

## ❀ विषमपदविवृतिः ❀

ण्यन्तस्य शब्दान्तरत्वमभ्युपेत्य 'तुष्यतु दुर्जन' इति न्यायेनाह—किं चेति । **एधत्यवयवत्वे इति** । तत्त्वेन दृष्टे इत्यर्थः ।

अनन्तरान्विधीन्बाधन्ते नोत्तरा'निति न्यायः। अवश्यं स्वपरस्मिन्बाधनीये भेदेनापेक्षायां प्रथमोपस्थितबाधेनाकाङ्क्षानिवृत्तिर्हि तद्बीजम्। **असाधुरेवेति**। आङ्गिणोरेकादेशस्य पूर्वान्ततयाऽऽङि पररूपेण बाधादिति भावः। **अर्थवद्ग्रहणे इति**। अस्या बीजं-'स्वं रूप'मिति सूत्रे उक्तम्। **पररूपे प्राप्ते इति**। 'पूर्वन्धातुः साधनेन युज्यत'इति सिद्धान्तादिति भावः।

❀ अभिनव-चन्द्रिका ❀

ज्यायस्त्वात्। तथा च 'इदिध' दित्यस्यानभिधाने न मानमित्याहुः। **भेदेनेति**। विशेषेणेत्यर्थः। **आकाङ्क्षानिवृत्तिरिति**। 'विप्रती' तिसूत्रबाधे मानाभाव इत्यपि बोध्यम्।

❀ चिदस्थिमाला ❀

युक्तिसिद्धत्वमाह—**अवश्यमिति**। अपवादभिन्नेऽपवादेन तत्त्वादेव बाधनीये इत्यर्थः। **भेदेनेति**। 'येन ने'त्यत्र यदा येनेत्यस्य स्वेतरेणेत्यर्थः। अपवादेतरत्वावच्छिन्नेनेति यावत्। स्वमपवादः,—तदा स्वविषये स्वेतरद्यद्यत्प्राप्नोति तत्सर्वं बाध्यं तदन्यास्यलक्ष्याभावादितीयं—'बाध्यसामान्यचिन्ते'त्युच्यते। यदा तु येनेत्यस्य तल्लक्षणेनेत्यर्थः। शास्त्रविशेषेणेति यावत्। प्राधान्यात्कार्येणेत्यर्थतो वा,—तदा बाध्यविशेषचिन्ता तत्र द्वितीयपक्षे कार्येणेत्यस्य कार्यविशेषेणेत्यर्थेऽपि कार्यतावच्छेदको यो विशेषधर्मस्तदवच्छिन्नसर्वकार्यग्रहणसम्भवात्पररूपत्वावच्छिन्ने कार्ये प्राप्ते आरभ्यमाणाया अस्या वृद्धेः पररूपबाधकत्वे पूर्वयुक्त्या तेन न्यायेन निर्णीते किंशास्त्रविहितस्येत्येवमवान्तरकार्यविशेषचिन्तायामित्यर्थः। **बाधेनेति**। चारितार्थ्ये पश्चादुपस्थितबाधे इति शेषः। **निवृत्तिरिति**। विप्रतिषेधशास्त्रबाधे मानाभावश्चेत्यपि बोध्यम्। मूले—**अवेहीति इति**। 'अवेहि मां किङ्कर'मिति रघुकाव्ये इत्यर्थः। पूर्वान्तवत्तयेति पाठः। आङ्त्वे हेतुरयं

सीरदेवाद्युक्तेरसाङ्गत्यं ध्वनयन्नाह—**अस्या इति**। तत्प्रत्याख्यानपक्षे उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवे त्यागायोग इत्यर्थः। ननु पूर्वं धातुरुपसर्गेणेति पक्षे न पररूपप्राप्तिः, किन्तु गुणस्येति मूलमयुक्तमत आह—**पूर्वमिति**। तस्यैतदेकवाक्यत्वार्थमन्यार्थकत्वेन सिद्धान्तत्वेऽपि यथाश्रुतस्य सकलसम्मतस्यासिद्धान्तत्वमिति ध्वनयन्नाह—**सिद्धान्तादिति**। अत एव प्रत्ययान्तरूपैकदेशस्य निमित्तता वार्त्तिकोक्ता सङ्गच्छते, अन्यथा तदसङ्गतिः स्पष्टैव। तपरकरणं नेहार्थ, दीर्घऋकारादेर्धातोरसम्भवात्। नचोपकारीतीत्यत्र वृद्धिवारकतया साफल्यं, धातुपाठपठितधातोरेवेह ग्रहणात्, प्रसिद्धत्वात्, उत्तरसूत्रस्यपि वक्ष्यमाणरीत्याऽप्रवृत्तिः। अत एव वृत्तिकृतोत्तरसूत्रे एव फलमुक्तम्। एतेन तथा रत्नाकरोक्तमपास्तम्'

❀ ज्योत्स्ना ❀

**अस्यां बीजमिति**। सीरदेवोक्तं राजेः पृथग्भ्राजिग्रहणं ज्ञापकं तु मनोरमायामुपपादितं—शब्दरत्नोक्तदूषणनिराकरणेन परिभाषाप्रदीपार्चिषि व्यवस्थापितं तत एव बोद्धव्यम्।

❀ सदाशिवभट्टीयम् ❀

वार्त्तिककृदुपहासस्यान्यत्रैवात्राकरणेन चोपक्रमस्य प्राबल्येनात्र तथा दुर्वचत्वात्। **निवृत्तिरिति**। तथा सावकाशत्वे विप्रतिषेधशास्त्रबाधे मानाभावश्चेत्यपि बोध्यम्। **पूर्वान्तवत्तयेति** पाठ इत्याहुः। ननु 'पूर्वं धातुःसाधनेने'ति नयेऽस्य सार्थक्येन नयान्तरेऽन्तरङ्गत्वात् रूपान्तरं स्यादत आह—**पूर्वं धातुरिति**। पररूपोद्देश्यतावच्छेदकाक्रान्त एव वृद्धिप्राप्त्या न मूलासङ्गत्यावतरणं युक्तं, यथाश्रुतस्य तु लक्ष्याऽसिद्ध्या

❀ विषमपदविवृतिः ❀

**भेदेनापेक्षायामिति**। इदं बाध्यमित्यपेक्षायामित्यर्थः। सर्वं बाध्यमिति विवक्षायां तु नायं न्यायः। यथाचि रादेशे। **पूर्वं धातुरिति**। अत्र चेदमपि लिङ्गमिति भावः।

**उपसर्गादृति** । तपरकरणादुपऋकारीयतीत्यादौ 'वा सुपी'ति न वृद्धिः । सौत्र–ऋतिस्तु न गृह्यते, व्याख्यानात् । आदित्यनुवृत्तेन तदन्तविधिरित्याह–**अवर्णान्तादिति** । 'यस्मिन्विधि'रिति परिभाषयाह—**ऋकारादाविति** । पूर्वपरयोस्तयोः समुदाययोरन्त्याद्योर्वर्णयोरेकादेश इत्यर्थः । 'उपसर्गावयवाकाराद्धात्ववयवे ऋकारे तयोः पूर्वपरयोर्वृद्धिरित्युचितम् । 'गते'रिति तु नोक्तम् । 'अच्छर्छती'त्यादौ दोषात् ।

**अन्ता** । इह 'पूर्वपरयो'रिति वर्तते, यथासङ्ख्यञ्च, अन्तादिशब्दावुपस्थितैकादेश-

❀ अभिनव-चन्द्रिका ❀

**उपऋकारीयतीत्यादाविति** । उपऋकारयति उपऋकाराति—इत्यस्याप्युपलक्षणम् । **उचितमिति** । वस्तुतस्तु अवर्णान्तादुपसर्गादृकारादौ धातावित्यर्थेऽपि 'अलोऽन्त्यस्य' 'आदेः परस्ये'त्येताभ्यां सर्वादेशतावारणान्मूलोक्तमेव युक्तमिति बोध्यम् ।

**अच्छर्च्छतीति** । 'अच्छ गत्यर्थे'ति गतित्वम् । **अन्तादिवच्च** । इह 'एकः पूर्वपरयो'रिति वर्तते,

❀ चिदस्थिमाला ❀

तदेतद्ध्वनयन्नाह—**तपरेति** । आदिनैतत्सजातीयपरिग्रहः । **वा सुपीति** । पदच्छेदाभिप्रायमनुकरणम् । ननु 'ऋतेरीय'ङितिसूत्रपठितस्यैव ग्रहणं कुतो नात आह—**सौत्रेति** । **व्याख्येति** । आदचीतिवर्णप्रकरणमूलादित्यर्थः । **वृत्तेनेति** । विशेषणेन 'येन विधि'रिति शेषः । अल्ग्रहणे इत्यस्याल्बोधक इत्यर्थो न तु स्वरूपेणाल्मात्रोच्चारणे इत्यर्थः । एवञ्च तद्बोधकोच्चारसप्तमी तन्निमित्तं, न तु वर्णमात्रात्परैव, सा च प्रागुक्तरीत्याऽस्ति, तदेतद्ध्वनयन्नाह—**यस्मिन्निति । परिभाषयेति** । लब्धमिति शेषः । समुदायादेशापत्त्या यथाश्रुतासङ्गतेराह—**पूर्वेति । तयोरिति** । अवर्णान्तोपसर्गऋकारादिधात्वोरित्यर्थः । सिद्धान्तमतेनाह—**उपेति** । अवयविनोऽपादानत्वविवक्षया वर्णनिष्ठपरशब्दयोगस्य तत्र विवक्षया वा पञ्चमी । सप्तमी तु प्राग्वदिति भावः । मात्रपदलाघवादाह—**गतेरितीति** ।

**इहैकः पूर्वेति** पाठः । तत्रैक इत्युद्देश्यकोट्यन्तर्गतं, पूर्वपरयोरिति विधेयकोट्यन्तर्गतम् । यद्वा '**इह पूर्वे**'त्येव पाठः । तस्य प्रत्याख्यानात् । प्रत्यासत्त्योद्देश्यलाभः । तत्राह—**यथेति । अन्तादीति** । अवयवत्वेन

❀ सदाशिवभट्टीयम् ❀

असिद्धान्तत्वं ध्वनयन्नाह–**सिद्धान्तेति । तपरकरणेति** । यद्यप्युपऋकारयतीत्यत्र प्रकृतसूत्रे एव फलं देयम्, तथापि परत्रैव फलप्रदर्शनपरवृत्तिप्रामाण्येनैधत्यादिसाहचर्याच्च गणपठितस्यैव धातोरत्र ग्रहणमिति भावः । भाष्यानुग्रहस्त्वत्र मृग्यः । **वा सुपीति** । पदच्छेदाऽभिप्रायेणानुकरणमिदम् । **व्याख्यानादिति** । धातुग्रहणाभावे 'प्रर्षभवन'मित्यत्रातिव्याप्तिदानपरप्रकृतसूत्रस्थभाष्यरूपादित्यर्थः । **परिषयेति** । लब्धमिति शेषः ।

समुदायादेशापत्त्या यथाश्रुतासङ्गतेराह—**पूर्वेति । अन्त्याद्ययोरिति** । अलोन्त्यस्यादेः परस्येति परिभाषाभ्यां लब्धमिदम् । सिद्धान्तमतेनाह—**उपसर्गेति** । तात्स्थ्यात्ताच्छब्द्यमिति भावः । निर्दिश्यमानपरिभाषाप्रापकत्वेन यथाश्रुते मूलं सङ्गच्छेत, लक्ष्ये च निर्बाधे कथं लक्षणावैयधिकरण्यगर्भितस्यास्यौचित्यमिति चिन्त्यमेतत् । **अन्तादिव** । एकग्रहणप्रत्याख्यानादाह—**इह पूर्वेति** । क्वचित्तु इहैक. पूर्वेतिपाठः ।

❀ विषमपदविवृतिः ❀

**अन्तादिवच्च** । **पूर्वपरशब्दौ चेति** । तथा च पूर्वपरयोरित्यन्ताद्योर्विशेषणम् । यद्वा पूर्वपरयोरित्यध्याहृतव्यवहारान्वयी, तथा चान्तादिवर्णवत्स्वघटितसमुदाये प्रातिपदिकत्वादिव्यवहारानादेशः सम्पादयति । 'समुदायस्यान्तादिभ्या'मित्यग्रिमशेखरस्वारस्येन तु—पूर्वपरयोरस्यान्तादिपदार्थेऽन्वय इति लभ्यते । अन्त्यपक्षे तु समुदायेत्यस्य ये व्यवहारा इत्यनेनान्वयः । षष्ठ्यर्थो निष्ठत्वम् । अत्र च वति'स्तेन तुल्य'मित्यनेन ।

स्थानिपरौ। पूर्वपरशब्दौ च तद्घटितसमुदायपरौ। एवञ्च–'पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः–प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्य भवन्ति, न तु तद्वर्णमात्रवृत्तयोऽत्व–ह्रस्वत्वादय' इत्यर्थस्तत्फलित-

### ❀ अभिनव-चन्द्रिका ❀

यथासङ्ख्यञ्च सम्बन्धः। पूर्वपदमेकादेशपूर्वस्थानिचरमावयवके लाक्षणिकमेवं परपदमेकादेशपरस्थान्याद्यवयवके लाक्षणिकम्, तथा चैकादेशः–एकादेशपूर्वस्थानिचरमावयवकसमुदायस्यान्तवत्स्यात्, एवमेकादेशः—एकादेशपरस्थान्याद्यवयवकसमुदायस्यादिवत्स्यादिति सूत्रार्थः। एकादेशनिष्ठचरमावयवतानिरूपकसमुदाये एकादेशपूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्तधर्मा अतिदेष्टव्याः, एवमेकादेशनिष्ठाद्यवयवतानिरूपकसमुदाये एकादेशपरस्थानिनिष्ठाद्यवयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्तधर्मा अतिदेष्टव्या इति यावत्। 'तद्वच्चे'त्येव सिद्धे 'अन्नादिवच्चे'ति सूत्रकरणादर्थवत्पर्याप्तत्वेनलाभः। 'तद्वच्चे'त्युच्यमाने–एकादेशस्थानिपर्याप्तधर्मस्यातिदेशः स्यात्। तथा च खट्वाभिर्मालाभिरित्यादौ भिस ऐसाद्यापत्तिश्च स्यात्। एतन्मूलकमेवोच्यते–'न वा अनाद्रूप्यातिदेशा'दिति। अन्यथा वचनेन वचनान्तरप्रत्याख्यानस्यायुक्तत्वाद्वर्णाश्रयेऽन्नादिवत्त्वप्रतिषेधो वक्तव्यो, वक्तव्यः, न वा अनाद्रूप्यातिदेशादिति प्रत्याख्यानमसङ्गतं स्यात्। एतत्सर्वम्मनसि निधाय वक्ष्यति-**प्रातिपदिकत्वेत्यादि**। **एकादेशस्थानिपराविति**। एकादेशपूर्वस्थानिचरमावयवकैकादेशपरस्थान्याद्यवयवकपरावित्यर्थः। **तद्घटितसमुदायपराविति**। एकादेशचरमावयवकाएकादेशपराद्यवयवकसमुदायपरावित्यर्थः। यथाश्रुतन्तु न युक्तम्, एकादेशघटितस्वाश्वशब्दे पूर्वान्तवद्भावेन एकादेशपूर्वस्थानिचरमावयवकसमुदायवृत्तिस्वशब्दत्वस्यातिदेशे तस्मादीरिन्शब्दे परे स्वादीरेरिणो'रिति

### ❀ चिद्स्थिमाला ❀

त्यादिः। उक्तहेतोरेव प्रत्यासत्तिलभ्यमाह—**उपस्थितकेति**। अत एवाह—**पूर्वपरेति**। तदोभयपरामर्शः। तत्तदिति पाठान्तरम्। यत्किञ्चित्समुदायस्येष्टत्वे तु तदनुवृत्तिर्व्यर्था स्यादिति भावः। शाब्दमर्थमाह–**एवञ्चेति**। एवं पदार्थशुद्धौ चेत्यर्थः। 'परस्य च समुदे'ति पाठः। 'च'शून्यपाठे–गामश्वमिति वत्समुच्चयः। तत्र तृतीयान्ताद्वतिरित्याह—**स्यान्तादीति**। पार्थक्याभावे स्वस्यैवाभावात्सादृश्यानुपपत्तेराह—**पृथगिति**। असंहितायामिति भावः। एक इत्येकादेशविशिष्टपरं, प्रत्यासत्तिलभ्य वा,

### ❀ सदाशिवभट्टीयम् ❀

**वर्त्तेते इति**। अन्यथा वर्णवृत्तिधर्मस्यातिदेशः स्यात्, समुदायनिष्ठस्य च न स्यात्। **स्थानिपराविति**। अवयवत्वेन बोधकाविति समुदायाक्षेपकत्वमनयोः, समुदायश्च पूर्वपर एवान्तादी च तत्स्थानिभूतावेवेति भावः। अन्यथा कृते एकादेशेऽवशिष्टपूर्वसमुदायस्य योऽन्तो वर्णभिन्नः तन्निष्ठसमुदायस्यातिदेशः स्यात्। तथाच परमपादस्य अः परमपादा इत्यादौ विभक्त्येकादेशात्प्रागेकादेशरहितपूर्वसमुदायान्तः पादिति तद्धर्मातिदेशे 'पादःपदि'ति पद्भावः स्यात्। अचः परेति स्थानिवत्त्वं तु न, पूर्वमात्रविधित्वाभावात्। निर्दिश्यमानपरिभाषा तु स्थानिवद्भावे इवान्तवद्भावेऽपि न, अत एव खट्वे, खट्वायाः, खट्वयोरित्यादौ परादिवद्भावेन आप्त्ववत्याकारे 'आङि चाप' इत्यादिनैत्वसिद्धिः। तत्र स्थानिवत्त्वेन त्वाप्त्वन्दुर्लभम्, अनल्वृत्तिधर्मवत्त्वेन स्थानितावद्वृत्तिकत्वाभावात्। अत एव प्रकृतसूत्रभाष्ये खट्वेत्यत्र परादिवत्त्वेन हल्ङ्यादिलोपः साधित इति भावः। **तद्घटितेति**। तदा उभयोः परामर्शः। परस्य च समुदायस्येति पाठः। विनापि चमन्वयेन समुच्चयो वा। पार्थक्याभावे उपमानस्यैवाभावात्सादृश्यासङ्गतेराह—**पृथगिति**। **कृतैकेति**। एक

माह—**योऽयमित्यादि** । तेन रामावित्यादौ परादिवत्त्वेन औ इत्यस्य सुप्त्वे, पूर्वमान्तस्यैकदेशविकृतन्यायेन प्रकृतित्वे, यस्माद्विहितस्तदादितदन्तत्वमार्थसमाजग्रस्तमिति पदत्वसिद्धिः । तद्वर्णमात्रवृत्तिधर्मानतिदेशात्खट्वाभिरित्यत्राऽत्वनिबन्धन ऐस्न, 'अयजे इन्द्र'मित्यादौ सवर्णदीर्घश्च न । अत एव तुक्यसिद्धवचनं चरितार्थम् । अन्यथाऽधीत्ये-

❀ अभिनव-चन्द्रिका ❀

त्यद्यापत्तेः । **तद्वर्णमात्रवृत्तिधर्मानतिदेशादिति** । अन्तादिवर्णवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशादित्यर्थः । **तुक्यसिद्धवचनञ्चरितार्थमिति** । नचाधीयेत्यादौ तुग्वारणायासिद्धवचनञ्चरितार्थम्, अन्यथा पूर्वान्तवद्भावेन ह्रस्वत्वस्य परादिवद्भावेन तदादित्वस्य चातिदेशेन तुग्दुर्वारः स्यात्, नचोभयत आश्रयणे नान्तादिवदितिनिषेधात्तुकोऽप्राप्त्याऽसिद्धवचनं व्यर्थमेवेति वाच्यम्, एतन्मते उभयत आश्रयण इत्यस्याभावादिति वाच्यम्, अन्तरङ्गे तुकि कर्तव्ये पदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वेन बहिरङ्गस्य सवर्णदीर्घस्यासिद्धत्वेनादोषात् । न च 'नाजानान्तर्ये' इतिनिषेध इति वाच्यम्, तस्या असत्वात्, सत्त्वे वा यत्र बहिरङ्गासिद्धत्वमन्तरङ्गशास्त्रप्रवृत्तिप्रयोजकन्तत्रैव तत्प्रवृत्तिस्वीकारेणाक्षद्यूरित्यादौ बहिरङ्गासिद्धत्वस्यान्तरङ्गवलिलोपप्रवृत्तिवदधीयेत्यादौ बहिरङ्गासिद्धत्वस्यान्तरङ्गप्रवृत्ति-

❀ चिदस्थिमाला ❀

तदित्याशयेनाह—**कृतैकेति** । पूर्वस्य परस्य चेत्यर्थः । एवञ्च विशिष्टनिष्ठधर्मस्यैवातिदेशः । तद्व्यवच्छेद्यमाह—**न तु तद्वर्णेति** । अन्तादीत्यर्थः । एकादेशमात्रे इति भावः । विशिष्टञ्च वर्णेयुक्तमयुक्तं वेत्यन्यदेतत् । अन्तादियुक्तपूर्वपरावयवितुल्यः कृतैकादेशः स इति परमार्थः । विशिष्टपर्याप्तस्य साम्प्रतं तद्वृत्तेरप्यनिदेशस्येष्टत्वादाह—**मात्रेति** । एवमग्रेऽपि । अत एवाह—**अत्वह्रस्वत्वेति** । मात्रपदं सफलयन्नेवास्यार्थस्य फलमाह—**तेनेति** । उक्तार्थाङ्गीकारेणेत्यर्थः । ननु मूलोक्तस्यैव शाब्दत्वमिति तस्यैवातिदेशोऽस्तु तावतापि रामावित्यादिसिद्धेरत आह—**तदिति** । अस्यात्विध्यर्थत्वे रत्नाकरदण्ड्याद्युक्तदोषोऽपि नेत्याह—**अयजे इति** । स्पष्टार्थं पुनर्नञुक्तिः । उक्तार्थे मानमाह—**अत एवेति** । उक्तार्थाङ्गीकारादेवेत्यर्थः । '**तुक्ये'ति**—तत्र कार्ये तस्यासिद्धत्वबोधकं वचनं, तुग्ग्रहणमेवेत्यर्थः । **अन्यथा**=अन्तादिवदिति पदस्वारस्येन

❀ सदाशिवभट्टीयम् ❀

इत्येकादेशविशिष्टपरं, प्रत्यासत्तिलभ्यं वा तदिति भावः । **न तु तद्वर्णेति** । ससहाये व्यपदेशिवत्त्वाऽभावेन वर्णस्य समुदायत्वाभावादिति भावः । **मात्रवृत्तय इति** । इदमुपलक्षणम्—तद्घटितानामदन्तत्वादीनामपि । तेन खट्वाभिरित्यादावदन्तत्वातिदेशोपि नेति बोध्यम् । मात्रपदं सफलयन् द्वितीयार्थस्य फलमाह—**तेन रामेति । पूर्वं मान्तेति** । इदं प्राचीनवासनया, व्यपवर्गानपेक्षणेनान्तादिवत्त्वाभावेप्यस्य सिद्धिः । ननु यत्र पूर्वः परो वा वर्णः ससहायस्तत्रोक्तरीत्या तद्वृत्तिधर्मातिदेशो मास्तु, यत्र त्वसहायस्तत्र तद्वृत्तेरपि धर्मस्यातिदेश इष्यत एव, यथा शिवेहीत्यत्राङ्त्वं, खट्वेत्यत्राप्त्वञ्च । एवं चायज इन्द्रमित्यादौ न्यायसाम्यादिक्त्वादेरप्यतिदेशः कुतो नेति चेत्त्राह—**अत एवेति** । आदिवत्त्वेन । अन्तवत्त्वेन तूक्तरीत्या तदतिदेशो न प्राप्नोतीति भावः । प्रदीपकृद्रीत्या सूत्रं स्थापयति—**क्षीरेस्यादि । भवत्येवेति** । कृते-एकादेशेऽवशिष्टः 'प्' इति पूर्वस्तच्चरमावयवत्वातिदेशे यदागमन्यायेनोत्तरपदवत्त्वमेकाच्त्वं स्वाश्रितमित्यर्थसमाजग्रस्तं तदिति तद्भावः । अनेन विशिष्टातिदेशस्तु दुर्लभोऽस्मात्रवृत्तिधर्मघटितत्वादस्याप्यप्राप्तेः, एनेत्यत्र

❀ विषमपदविवृतिः ❀

**एकादेश इति** । प्रथमान्तश्रवणात् । कृतैकादेशस्येति तु फलितार्थकथनम् । **औ इत्यस्येति** ।

❀ वरवर्णिनी ❀

**तुक्यसिद्धवचनमिति** । **परे** तु—"यत्तु—'अधीये'त्यादौ तुगभावार्थन्तच्चरितार्थम्, तत्र हि अधिपूर्वकादीङ्धातोर्ल्यपि दीर्घे तस्यासिद्धत्वाद्ध्रस्वात्परत्वाभावान्न तुगिति, तन्न, एकत्रैकस्मिन्धर्मिणि 'एकादेश-

त्यादावादिवत्त्वेन ह्रस्वत्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। तदुक्तं 'वर्णाश्रये चान्तादिवत्त्वप्रतिषेधो वक्तव्यो, न वाऽताद्रूप्यातिदेशा'दिति । अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादिति तदर्थः । 'क्षीरपेणे'त्यादावेकारविशिष्टे एकाजुत्तरपदत्वं भवत्येव ।

❀ अभिनव-चन्द्रिका ❀

प्रयोजकत्वाभावेनादोषादिति दिक् । अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादिति । अन्तादिवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशादित्यर्थः । एकाजुत्तरपदत्वं भवत्येवेति । स्यादेतत्—एकाजुत्तरपदत्वस्य अन्तादिवृत्तिवर्णमात्रवृत्तिधर्मघटितत्वेन कथं पे इत्यत्रातिदेशः ? । न चान्तादिवर्णविशिष्टधर्मघटितधर्मस्यातिदेशो न भवतीति ताद्रूप्यानतिदेशादित्यस्यार्थः, अन्तादिवर्गेव० 'स्ववृत्तित्व'

❀ चिद्स्थिमाला ❀

पूर्वपरान्तादितुल्य एकादेश इति मूलोक्तार्थाङ्गीकारे । एवं सूत्रमन्यतिमुक्त्वा भाष्यादिसम्मतिमप्याह—तदुक्तमिति । 'वार्तिककृते'ति शेषः । श्रये इति । 'विधा'विति शेषः । उक्तरीत्या सूत्रादेव तथार्थलाभ इति नेदमपूर्ववचनं कार्यमित्याह—न वेति । अताद्रूप्येति च्छेदः । नवा वक्तव्यं ताद्रूप्यस्यान्तादिवर्णमात्रवृत्तिधर्मस्यानेनातिदेशाभावादित्यर्थस्तदाह—अन्तादीति । मात्रपदेन तद्घटितसमुदायवृत्तिधर्मव्यावृत्तिः,तद्धेतुककार्ये एतदतिदेशस्येष्टत्वात् । नतीति । अनेन सर्वतः पश्चान्नञ्समास इति सूचितम् ।

यद्यप्यस्याप्यनल्विधावनिष्टत्वं तथापि स्थानिवद्भावेन गतार्थमिदमिति मनोरमादिसकलग्रन्थासङ्गतिरेव, तदेनच्छनयन्नाह—क्षीरेति। विशिष्टे=पूर्वसमुदाये । तथा च प्रागुक्तरीत्या नेत्यस्य विभक्तित्वमिति भावः । नन्विदमपि तेनैव सिद्धमत आह—स्थानीति । अत्र तु तन्मात्रवृत्तिधर्मानतिदेशः, उक्तरीत्या नेदृशस्य

❀ ज्योत्स्ना ❀

एकाजुत्तरपदत्वं भवत्येवेति । पे इत्येकारान्ते उत्तरपदत्वं नास्तीत्यतिदेशेन तदेवानीयते ।

❀ सदाशिवभट्टीयम् ❀

परादिवत्त्वेन विभक्तित्वं, व्यपवर्गानपेक्षणेनोभयत इत्यस्याप्रवृत्तेः,एकदेशविकृतन्यायेन तु नेत्यत्र नत्वं दुर्लभम्, अक्परिमाणनिष्ठत्वाद्विभक्तित्वस्येत्याहुः । एकाच्त्वं स्वाश्रितम्, उत्तरपदत्वमात्रन्तु प्रार्थ्यते, तत्र चानल्विधाविति निषेधो दुर्लभः, स्थानिसम्बन्धिवर्णानाश्रितत्वादितिरीत्या प्रदीपस्योद्योत एव दूषितत्वाद्विधेरेवाप्राप्तत्वेन निषेधपर्यन्तं प्रदीपकृतो धावनं व्यर्थमिति च ध्वनयन्स्वरीत्या सूत्रं सफलयति—किञ्चेत्या—

❀ विषमपदविवृतिः ❀

तस्यैकादेशघटितत्वं व्यपदेशिवद्भावेन । तद्वैयर्थ्यमिति । अधिपूर्वाद्दैवादिकाद्दीङ्गताविति धातोः

❀ वरवर्णिनी ❀

स्थान्याद्यवयवकसमुदायवृत्तिधर्मे' 'एकादेशस्थान्यन्तावयवकसमुदायनिष्ठधर्मे'तदुभयस्यातिदेशानङ्गीकारेण—'ई'वृत्तिकृत्तदादित्वस्य, उपसर्गेकारवृत्तिह्रस्वत्वस्य च ( समुदितस्योभयस्य ) ईकारेऽतिदेशाभावेन ह्रस्वान्ततदादित्वविरहादेव तत्र तुगप्राप्त्या तस्य वार्तिकफलतया वक्तुमशक्यत्वात् । पूर्वोक्तोभयधर्मस्यैकत्र धर्मिण्यतिदेशाभावादेव अशब्दस्य अन्शब्देन बहुव्रीहिसमासे डापि टिलोपे दीर्घे 'आः' इत्यत्र सुप्तदादित्वस्य आप्तदादित्वस्य चैकत्राशब्देऽतिदेशाभावान्न हल्ङ्यादिलोपः । अत एव च 'आ-आ'विति प्रश्लिष्य 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्तिकखण्डनं भाष्यकृतः सङ्गच्छते, अन्यथा हे—अनिखट्व अः 'अनिखट्वा' इत्यत्र आप्तदादित्व-सुतदादित्वोभयधर्मस्य खट्वाशब्देऽतिदेशे लोपप्राप्त्या तद्वारणाय तस्य वार्तिकस्य चारितार्थ्येन तत्प्रत्याख्यानमसङ्गतं स्या''दित्याहुः ।

स्थानिवद्भावेन तु नैतल्लभ्यम्, अप्राधान्येनालाश्रयणात्। किञ्च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति—भीं ई भिय इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः। धातुत्वस्यैकादेशस्थानिधर्मत्वाभावात्। आनुमानिकादेशकल्पकवाक्यमन्तादिघटितसमुदायस्यैकादेशघटित आदेश इत्येव, न तु प्रत्येकं तयोः स्थानित्वबोधकं, तथा सति स्वाश्वशब्दस्य

ॐ अभिनव-चन्द्रिका ॐ

'स्ववृत्तिवर्णत्वव्याप्यत्व'—'स्वस्थानिकादेशवृत्तित्वे'तत्त्रितयसम्बन्धेन। तथा च एकाजुत्तरपदत्वघटकाच्त्वे स्वस्थानिकादेशवृत्तित्वस्यैव सत्त्वान्न दोष इति वाच्यम्, 'उत्तरपदाद्यच्त्वस्य ताद्रूप्यानतिदेशेन अतिदेशो न भवती'ति परिभाषेन्दुशेखरविरोधेन एतस्यार्थस्य वक्तुमशक्यत्वादिति चेन्मैवम्। 'स्ववृत्तित्व''स्ववृत्तिवर्णत्वव्याप्यत्व' 'स्वाभाववत्व'—एतत्त्रितयसम्बन्धेन स्वविशिष्टधर्मघटितधर्मो नायातीत्यर्थकरणेनादोषात्। अभावश्च स्वस्थानिकादेशवृत्तित्व, स्वनिष्ठा या अभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकता, सम्बन्धानवच्छिन्नप्रकारतावच्छेदकता वा तदवच्छेदकत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, अथवा अन्तादिवृत्तिवर्णमात्रवृत्तिरशाब्दबोधजनकशक्तिज्ञानीयमुख्यविशेष्यतावच्छेदकश्च यो धर्मस्तद्घटितो धर्मो नायातीत्यर्थइति न दोषः। विस्तरस्तु परिभाषेन्दुचन्द्रिकायान्द्रष्टव्यः। परे तु क्षीरपेणेत्यादौ उत्तरपदत्वमेव पूर्वान्तवद्भावेनानीयते, एकाच्त्वन्तु स्वतः

ॐ चिदस्थिमाला ॐ

तस्य तन्निष्ठत्वस्य निर्विवादत्वात्। इदमेव ततोऽत्र वैलक्षण्यम्। एवं मनोरमादिरीत्याप्यावश्यकत्वमुक्त्वा सिद्धान्तरीत्याप्याह—**किञ्चेति**। 'अन्यथे'ति शेषः। ननु तथा वाक्यकल्पनया निर्वाहोऽत आह—**आनुमानिकेति**। **वाक्यमिति**। तदपीत्यर्थः। **समुदेति**। पूर्वपरसमुदायेत्यर्थः। अत एवाह—**घटितेति**। तयोः=पूर्वपरसमुदाययोः, मानाभावादिति भावः। विपक्षे बाधकमप्याह—**तथा सतीति**।

ॐ ज्योत्स्ना ॐ

नत्वेकाच्त्वपि, यथाऽरुदितामित्यत्र वलादित्वमिति स्थानिवद्भावेनास्याप्यन्यथासिद्धेः प्रदीपकृत्प्रदर्शितोदाहरणनिराकरणावसरे हरदत्तमिश्रैरुपपादनाच्चिन्त्यमेतत्। एतेनोत्तरपदत्वेन रूपेणोत्तरपदसम्बन्धित्वमपि विशिष्टातिदेशं विना दुर्लभमिति कथञ्चिदाशयकल्पनं केषाञ्चित्प्रत्युक्तम्। अयं त्विह विस्मयः—'क्षिप्ते प्रदीपोद्देशेन हरदत्तेन दूषणे। अप्राप्य तमिहायातं हैडिम्बन्यायतः कथम्?॥'

तथा हि—एकादेशात्प्राग्यौ पूर्वपरौ तद्घटितसमुदायधर्मः कृतैकादेशेऽतिदिश्यते—इत्युक्तसूत्रार्थमाश्रित्य हरदत्तोक्तं दूषणं प्रवर्तते, नत्विहैव प्रदीपकृतासौ सूत्रार्थ आश्रितः, क्षीरपेणेत्यत्र कृते एकादेशे ततः प्राग्भागान्तावयवत्वमतिदिश्यत इति तदुक्तेः। एवञ्च पकारमात्रे उत्तरपदत्वं सिद्धमिति न तदपेक्षा। एकाच्त्वं तु तत्र नास्तीति तदर्थमतिदेशोऽपेक्ष्यते। नचैतत्स्थानिवद्भावाल्लब्धुं शक्यमिति तदाशयः। न च वृक्षावित्यादौ परादिवद्भावार्थमर्थान्तरमपि तत्राश्रितमिति व्यापकत्वात्तदेव सर्वत्रास्त्विति तदवस्थो दोष इति वाच्यं, यथोक्तप्रकारे दोषाभावात्। किञ्च वृक्षावित्याद्युदाहरणस्य स्थानिवद्भावेनान्यथासिद्धेस्तदर्थमर्थान्तराश्रयणे प्रमाणाभावात्। अनन्यसिद्धस्य क्षीरपेणेत्याद्युदाहरणस्य सिद्धये तदुक्तार्थस्य प्रत्यासत्तिलभ्यस्य बलवत्त्वात्। परादिवद्भावस्य तर्हि मुख्योदाहरणं किं भविष्यतीति चेत्—'उपसर्गस्यायता'वित्यत्रायतिपरस्योपसर्गरेफस्य लकार इति पक्षे प्लायते पलायत इति। तत्र ह्येकादेशे कृते ततः परभागाद्यवयवत्वं तस्यातिदिश्यते—रेफस्यायतिपरत्वसम्पादनार्थम्। 'अयति-

ॐ सदाशिवभट्टीयम् ॐ

दिना। अन्ये तु 'समुदायस्येती'त्यन्तस्य मध्यमणिन्यायेनोभयान्वयित्वात्—'न तल्लभ्य'मित्यत्र हेत्वन्तरमाहुः। **भिय इत्यादाविति**। आदिनोद्योतोक्तक्षीरपेणेत्यस्य संग्रहः। मनोरमादेः पूर्वापरविरोधं सूचयंस्तन्मतेनाह—

स्थानिवत्त्वेन स्वशब्दतया तत इरिच्शब्दे वृद्ध्यापत्तेः । किञ्च भवत्सम्मतस्य 'उभयत आश्रयणे नान्तादिव'दित्यस्यासङ्गतौ भवत्सम्मता'ऽभीया'दित्याद्यसिद्धिः । स्थानिवत्त्वं तूभयत आश्रयणे इष्यत एव । अन्यथाऽचः परस्मिन्नित्यस्याप्युभयत आश्रयणेऽप्रवृत्त्यापत्तौ प्लायत इत्याद्यसिद्धिरिति दिक् ।

## ॥ अभिनव-चन्द्रिका ॥

सिद्धमेवेति न कोऽपि दोष इत्याहुः । दिगिति । तदर्थस्तु स्थानिवत्सूत्रेणैव अन्तादिवच्चेतिसूत्रं गतार्थम् । न च क्षीरपेणेत्यादौ एकाजुत्तरपदत्वस्य अल्विध्याश्रयधर्मघटितत्वेन अनल्विधाविति निषेधादतिदेशो न स्यादिति वाच्यम्, परे लित्यादिना दत्तोत्तरत्वात् । नच भिय इत्यादौ इयङ् न

## ॥ चिदस्थिमाला ॥

तत्कल्पकस्यार्थवत्त्वस्य तत्रापि सत्त्वेन मानत्वात्तथैव तत्कल्पने चेत्यर्थः । मतान्तरमाह: पूर्वपरविरोधं सूचयंस्तन्मतेनाह—किञ्चोभेति । इत्यस्येति । लोकसिद्धस्येत्यर्थः । ननूभयत आश्रयणे न स्थानिवदित्येवैतदभावे कल्प्यतेऽत आह—स्थानीति । अत्र हेतुमाह—अन्यथेति । तत्र तदनिष्टत्वे इत्यर्थः मत इत्यादिः । 'असिद्धे'रिति पाठे तु नास्योपयोगः । पूर्वसूत्रे दोषाभावादाह—अचः परेति । विनिगमनाविरहादिति भावः । अयताविति न रेफविशेषणं, तथा सति अव्यवधाने एव प्रवृत्तिसम्भवेन व्यवधाने प्रवृत्त्यनापत्तेः, तस्मादयतिविशेषणम्,अत एवोपसर्गस्यायताविति सूत्रे उक्तार्थे प्लायत इत्यादावेकादेशे कृते व्यपवर्गाभावाल्लत्वं न स्यादित्याशङ्क्यैकदेशिनान्तवद्भावाद्व्यपवर्ग इति उक्ते परेणैकदेशिन उभयत आश्रयणे नान्तादिवदित्युक्तेऽचः परेति स्थानिवत्त्वाद्व्यपवर्ग इति सिद्धान्तिनोक्तं, तदेतद्धृदि निधायाह—प्लायत इति । ननु परसूत्रस्य तत्र प्रवृत्तावपि अस्य गतार्थत्वं पूर्वसूत्रेणेति तद्विषय एव निषेधकल्पनमिति न कोऽपि दोष इति चेन्न, अभीयादित्यादौ श्नसस्थान्यादेशभावस्य वर्णयोरेव सत्त्वेनानिष्टस्यैवाप्राप्तेस्तथा तत्कल्पनेऽपि प्रागुक्तरीत्या विशिष्टस्य स्थानित्वेऽपि प्रत्येकं तयोः स्थानित्वे मानाभावाच्च । स्पष्टा चेयं रीतिरुपसर्गादसत्यूह्योरित्यस्य प्रोह्यते इत्यादौ गुणे कृते प्रवृत्तिवारणपरभाष्ये । अत एव सिद्धान्तेऽन्तादिवद्भावनिषेधेऽपि पूर्वसूत्रकृतस्थानिवद्भावप्रयुक्तातिप्रसङ्गो न । नन्वेवमपि अचः परेति स्थानिवत्त्वाद्दोष एवेति वाच्यम्, स्वविधौ तस्याप्रवृत्तेः । किञ्चैतत्सत्त्वे उभयत आश्रयणे इत्यस्य भाष्योक्तन्यायसिद्धत्वसङ्गतिः, अपूर्ववचनाङ्गीकारे गौरवं,तद्विरोधश्च । किञ्चोभयत इत्यस्यैकदेश्युक्तित्वेऽपि प्रागुक्तरीत्यैतस्यावश्यकत्वमेव । यथा चैवं सत्यभीयादित्यस्य सिद्धिस्तथा तिङन्ते मूले एव स्फुटं भविष्यति । अचः परेत्यस्य तत्र प्रवृत्तेरेव पादिकः, औदवाहिः इत्यादावनेन पदाद्यापादनपरमचः परेति सूत्रभाष्यकैयटादिकं सङ्गच्छेत । तस्मात्प्राधान्येन तन्मात्रवृत्तिधर्माश्रयेऽस्या प्रवृत्तिरिति ततो वैलक्षण्येनास्यावश्यकत्वमत एव भाष्ये न प्रत्याख्यातमेवञ्च ते चिन्त्या एवेति दिक् । तदाह—दिगिति । यत्तु धातूपसर्गकार्यत्वेन वृद्धे-

## ॥ ज्योत्स्ना ॥

रस्योपसर्गस्य यो रेफस्तस्य लकार इति पक्षान्तरे एकदेशविकृतन्यायाद्यकारमात्रेऽयतित्वातिदेशा-

## ॥ सदाशिवभट्टीयम् ॥

**किञ्चोभे इति** । **असङ्गताविति** । सूत्रसत्त्वे त्वन्तादिशब्दाभ्यां पूर्वपरशब्दाभ्यां च विरोधस्य पुरःस्फूर्तिकत्वात्तदसङ्गतिरिति भावः । ननूभयत आश्रये न स्थानिवदित्यपूर्वमारभ्यते तत्राह—**इष्यत एवेति** । **दिगिति** । दिगर्थ इण्धातुस्थशेखरादवसेयः ।

## ॥ विषमपदविवृतिः ॥

क्तो ल्यपि तुगभावार्थमसिद्धवचनस्य चारितार्थ्याच्चिन्त्यमेतदिति केचित् । **इष्यत एवेति । इदं** चिन्त्यम् । स्थानिवत्सूत्रप्राप्तस्थानिवत्त्वस्यैवोभयत आश्रयण इत्यनेन निषेधाङ्गीकारादिति । **इति दिगिति** । अन्ये त्विदं देवदत्तस्येदं यज्ञदत्तस्येत्यादावग्निमिदमित्यस्योत्तरान्वयित्वेन देवदत्तस्ये-

**निर्देशादिति** । न च 'कर्त्तरि चर्षी'त्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावेन न विसर्ग इति वाच्यम्, गुणस्येव पदद्वयसम्बन्धिरेफखरात्मकवर्णद्वयाश्रितत्त्वेन विसर्गस्यापि तत्त्वात् । परनिमित्तकत्वमप्युभयोः समम् ।

ॐ अभिनव-चन्द्रिका ॐ

स्यात्, धातुत्वस्य स्थान्येकदेशवृत्तित्वेन तस्य स्थानिवत्सूत्रेणातिदेष्टुमशक्यत्वादिति वाच्यम्, 'अर्थवत्येव स्थान्यादेशभावविश्रान्ति'रिति सिद्धान्तसिद्धत्वेन 'भिय' इत्यादौ इकारप्रश्लेषेण भी इत्यस्य ई इत्यस्य चोभयोरर्थवत्त्वेन भी इत्यस्य स्थाने भी इत्यादेशः । ई इत्यस्य स्थाने ई इत्यादेशः, भीई इत्यस्य स्थाने भी इत्यादेश इत्यानुमानिकस्थान्यादेशानां स्थानेऽन्तरतमपरिभाषासहकारेण कल्पनेन भीवृत्तिधातुत्वस्य स्थानिवत्सूत्रेण भी इत्यादेशेऽतिदेष्टुमशक्यत्वात् ।

ननु स्वाश्वशब्दे निरुक्तदिशा स्वशब्दत्वातिदेशे तस्मादीरिञ्छब्दे परे वृद्ध्यापत्तिरिति वाच्यम्, स्वाश्वशब्दे स्व इत्यस्य अश्व इत्यस्य समुदायस्य चार्थवत्त्वेऽपि 'स्थानेऽन्तरतम'परिभाषासहकारेण स्व इत्यस्य स्थाने स्वा इत्यादेशः, अश्व इत्यस्य स्थाने आश्व इत्यादेशः स्व-अश्वइत्यस्य स्थाने 'स्वाश्व' इत्यादेश इति कल्पनेऽपि स्वशब्दत्वस्य स्थान्येकदेशवृत्तित्वेन स्वाश्व इत्यादेशेऽतिदेष्टुमशक्यत्वात् । न चैवमपि अमी इत्यादौ ईत्वन्न स्यादिति वाच्यम्, अद ई इति स्थिते अद इत्यस्य स्थाने अदे इत्यादेशः' ई इत्यस्य स्थाने ए इत्यादेशः, अद ई इत्यस्य स्थाने अदे इत्यादेश इतिकल्पनेन ईकारवृत्तिबहुवचनत्वस्य ए इत्यत्रातिदेष्टुं शक्यत्वेन ईत्वस्य सुवचत्वात् । नचार्थवदर्थकानल्विधाविति निषेधः शङ्क्यः, तस्यानङ्गीकारात् । अङ्गीकारे वा आरोपप्रकारीभूतबहुवचनत्वस्य साक्षादुद्देश्यतानवच्छेदकत्वाच्च । न चान्तादिवत्सूत्राभावे 'उभयत आश्रयणे नान्तादिव'दित्यस्यासङ्गतिः, नच स्थानिवत्त्वस्यैव तन्निषेध इति वाच्यं, 'प्लायत' इत्यादौ लत्वानापत्तेरिति वाच्यम्, 'उभयत आश्रयणे न स्थानिव'दिति स्थानि-

ॐ चिदस्थिमाला ॐ

रन्तरङ्गत्वाद्बहिरङ्गत्वेन समाधानं दुर्वचम् । वस्तुतो धातूपसर्गनिमित्तवृद्ध्यपेक्षयोपसर्गावयवमात्रनिष्ठपदान्तत्वनिमित्तकविसर्गेऽन्तरङ्गत्वमस्त्येवेति तदप्यत्र समाधानं सुवचमिति, तन्न, तस्याप्रयोजकत्वात् । वृद्धेरपि वर्णनिमित्तकत्वात् । उभयनिमित्तकत्वस्योभयत्र तुल्यत्वादीदृशस्य तत्त्वस्यान्यत्र निरस्तत्वादतिप्रसङ्गापत्तेश्च । तदेतद्ध्वनयन्नन्यथा शङ्कते—**न चेति** । गुणशास्त्रेणापवादद्वयानपेक्षणात्पदद्वयाश्रितत्वेन तत्त्वस्य दुर्वचत्वादाह—**सम्बन्धिवर्णद्वयेति** । ननु नैवं तत्त्वं तत्राश्रीयते, किन्त्वन्यथेति तत्त्वं तत्रास्त्येवेत्यत आह—**परेति** । एतेनान्यथैव तद्वारणेन ज्ञापकपर्यन्तानुधावनं व्यर्थमित्यपास्तम् । इदञ्च त्रिपाद्यां तत्प्रवृत्तिम-

ॐ ज्योत्स्ना ॐ

न्परत्वं ततः प्राग्भागेलन्तवद्भावादुपसर्गत्वात्प्लायत इत्यादेरपि नास्त्यादिवद्भावोदाहरणत्वं तथापि आ अयते आयत इत्येकादेशं कृत्वा पश्चान्निर्दुरोर्योगे निलायते दुलायत इत्यनयोस्तदुदाहरणत्वं भविष्यति, एकादेशेन व्यवधानादुपसर्गस्यायतिपरत्वात् । नच्चैवमादावानुमानिकादेशस्य स्थानिवद्भावादन्यथासिद्धिः, स्वशब्दघटितस्थान्यादेशे स्वत्वातिदेशानभ्युपगमवदयतिघटितस्थान्यादेशेऽयतित्वातिदेशाप्रवृत्तेस्तुल्यत्वादित्याहुः ।

ॐ विषमपदविवृतिः ॐ

दमिति स्थानिसमुदायस्य निरर्थकत्वेन देवदत्तस्येदमित्यादेशकल्पना न तत्र सम्भवति, अर्थवत्येवानुमानिकस्थान्यादेशभावविश्रान्तेः । तथा च तत्रेष्टानुरोधेन देवदत्तस्येति वेदमिति वादेशः कल्पनीयः । एवं स्वाश्वशब्देपि । तत्र हि 'स्वा'इत्यादेशकल्पना'ऽऽश्व' इत्यादेशकल्पना वा स्यात् ।

कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वं या-न्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्यासिद्धत्वप्रतिपादनम्? । न चानया पूर्वं या-सिद्धत्वादभावेन तं प्रति परासिद्धत्वं 'पूर्वत्रे'त्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः । एवञ्च विरोधात्कार्यकालपक्षेऽपि

## ॐ अभिनव-चन्द्रिका ॐ

वत्सूत्रस्यैव निषेध इति स्वीकारेणादोषादिति दिक् । **पूर्वम्प्रतीति** । सापादिकपरिभाषाद्यात्रम्प्रती-त्यर्थः । **परस्येति** । त्रैपादिकान्तरङ्गस्येत्यर्थः । **अन्तरङ्गाभावेनेति** । अन्तरङ्गत्वप्रकारकज्ञानाभावे-नेत्यर्थः । **पूर्वस्येति** । सापादिकबहिरङ्गस्येत्यर्थः ।

## ॐ चिदस्थिमाला ॐ

भ्युपेत्योक्तम् । वस्तुतस्तदेव नेति प्रतिपादयितुं यथोद्देशे तत्राप्रवृत्तिः, कार्यकाले तु तत्र प्रवृत्तिरेवेति कैयटादिसकलग्रन्थासङ्गतिं ध्वनयन्नाह—**किञ्चेति** । तदसिद्धत्वरूपहेत्वभावादिति भावः । **इदमपि** तदीत्या, अपिना सिद्धान्तभूतानुपस्थितिसमुच्चयः । **पूर्वमिति** । पूर्वत्रासिद्धमित्यनेनेति भावः । **तस्येति** । **बहि-रङ्गस्य पूर्वस्येत्यर्थः** । तत्रोपस्थितयाऽनयेति भावः । ननु कार्यकालपक्षमाश्रित्य तत्रैतदुपस्थितिसामर्थ्येन पूर्वत्रासिद्धमित्यस्य बाधः, अत एव नार्कुटादौ न विसर्ग इति नोक्तदोष इति चेन्न । तथा सति कार्यमुन यथोद्देश-

## ॐ सदाशिवभट्टीयम् ॐ

**उपस्थितावपीति** । अत्र पक्षे परिभाषादृष्ट्या त्रिपाद्यसिद्धत्वरूपप्रतिबन्धकाऽभावादिति भावः । **कथमिति** । न च पूर्वत्र कर्तव्ये परासिद्धत्वेपि तत्र कृते तदसिद्धत्वे मानाभाव इति पञ्चानामित्यत्र वक्ष्यमाणरीत्या जातगुणादेरसिद्धत्वमनयेति युज्यत एवेति वाच्यम् 'न भकुर्छुरा'मिति कुर्ग्रहणेन पूर्वत्रेत्यस्य विषयसप्तमीत्वबोधनेन पूर्वदृष्ट्या परमसिद्धमित्येव तदर्थात् । अन्यथा कुर्वन्नित्यादावृदिति तपरत्वसामर्थ्यादेव गुणस्येव दीर्घस्यापि व्यावृत्तौ किन्तेन? । अत एव 'चन्चूर्यते' इत्यादौ दीर्घ-सिद्धिः । अन्यथा 'चन्चूर्ती'त्यत्र गुणस्येव दीर्घस्यापि उरण्रपरस्थान इति तपरत्वेन निवृत्तिः स्यात् । विसर्जनीयसूत्रस्थं भाष्यमपीह मानम्, उत्तरग्रन्थस्त्वरुचितया नेष्यत इति दिक् । **विनिगमना-विरहेति** । पूर्वत्रेत्यस्याधिकारत्वेन प्रागेव प्रवृत्तिः । श्रुतत्वं च विनिगमकमपि बोध्यमन्यत्रोक्तम् ।

## ॐ विषमपदविवृतिः ॐ

तथा चानुमानिकस्थान्यादेशभावे एकादेशविषये प्रत्येकं स्थानित्वेपि एकादेशान्ते पूर्ववृत्तिधर्मस्य तदादौ परवृत्तिधर्मस्य स्थानिवद्भावेन लाभो, न तु वैपरीत्येन, अत्रैवान्तादिवच्चेति तात्पर्यग्राहकम् । एवञ्च आश्वशब्देऽश्वशब्दत्वं स्थानिवद्भावेन स्यान्न खशब्दत्वमिति न दोषः । भिय इत्यादौ तु भीशब्दत्वं स्थानिवत्त्वेन स्यादेव । आनुमानिकस्थान्यादेशभावे एकादेशघटिते धातुत्वानयन-सम्भवात् । क्षीरपेणेत्यत्र तु पे शब्दे आनुमानिकस्थान्यादेशभावमाश्रित्योत्तरपदत्वमात्रमानीयत इति णत्वसिद्धिरिति भावः । एवञ्च सत्यन्तादिवद्भावस्य स्थानिवत्सूत्रमूलकतया 'न वा ताद्रूप्यानतिदेशा'दिति प्रतिषेधखण्डनं सूपपद्यते । अत एव स्थान्यग्रहणेऽदीर्घे इति स्थानिवत्त्वनिषेधेऽदीर्घग्रहणं चरितार्थम् । एकाजुत्तरपदत्वस्यान्तवद्भावेनातिदेशे खट्वा-भिरित्यादावदन्तत्वस्याप्यतिदेशापत्तिः । पूर्वपरघटितसमुदायस्येत्यर्थेन तु न वा ताद्रूप्यातिदेशा-दिति वार्तिकार्थस्य तु न क्रोडीकारः । रामाविव्यादौ भवदुक्तदिशा व्यपदेशिवद्भावो नाभिरित्यत्र

तदनुपस्थितिरेव त्रिपादीस्थेऽन्तरङ्गे उचिता। अत एव विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा—'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वा'दितीत्युक्तम्। एवञ्च तत्र-तत्र वचनान्येव कार्याणि, ज्ञापकानुसरणं वा कर्त्तव्यम्। अत एव 'निगाल्यते' इत्यादौ

❀ अभिनव-चन्द्रिका ❀

**अयुक्तोऽयं परिहार इति**। न च युक्तोऽयं परिहार इत्यर्थो न्याय्यः, अन्यथा 'निष्ठानत्वमवृद्धेः' 'नुमनौ प्रतिषेधः'। 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' 'यणः प्रतिषेधो वाच्यः', 'विसर्जनीयोऽनुत्तरपदे' इत्याद्यनेकवचनस्वीकारे गौरवादिति वाच्यम्, आर्तत्, आर्मतीन्' चक्रयकैत्, प्लायते, प्राह्णिणोत्, कलं त्रार्नाति कलत्राः—तस्माण्ण्यन्तात्क्विपि कलत्रित्याद्यर्थं तत्तद्वचनानामावश्यकत्वेन गौरवस्य समन्वात्। अत एव भविष्यति, सर्वेषां, रामाणां, राज्ञामित्यादौ षत्वणत्वश्चुत्वादिकं सिध्यति। अन्यथा अन्तरङ्गे णत्वादौ कर्तव्ये इट्, सुट्, नुट्, अल्लोपादेरसिद्धत्वेन षत्वादिकन्न स्यादिति दिक्।

**विसर्जनीयप्रतिबन्ध इति**। 'विसर्जनीयोऽनुत्तरपदे' इति वार्तिकेनेत्यर्थः। अत्रोत्तरपदमर्थवत उपलक्षणम्। तथा च अर्थवद्विशिष्टस्य रेफस्य विसर्गो न भवतीति तदर्थः। वै०'खाव्यवहितपूर्वत्व'-'खान्तरप्रत्ययनिमित्तकत्वो' भयसम्बन्धेन। अत एव नार्कलिपिरित्यादौ न दोषः। अथवा यं खरन्निमित्तीकृत्य विसर्गो जायते तद्विशिष्टरेफस्य विसर्गो न भवति। वै०'खनिमित्तकत्व,-खाव्यवहितपूर्वोच्स्थानिकत्वे'तदुभयसम्बन्धेन। अत एव 'दास्याः पुत्रः', 'होतुः पुत्र' इत्यादौ न दोषः। अत एव 'कर्तरि चर्षी' त्यादिनिर्देशास्सङ्गच्छन्ते।

❀ चिदस्थिमाला ❀

पक्षमाश्रित्य तेनास्या बाधः स्वीकार्य? इत्यत्र विनिगमकाभावेन तथोक्तेर्दुर्वचत्वात्। तदाह—**न चानयेति**। प्रक्रान्तया'ऽसिद्धं बहि'रित्यनयेत्यर्थः। **एवं हीति**। अनया पूर्वासिद्धत्वेन पूर्वत्रेत्यस्य प्रवृत्तिप्रतिबन्धस्तेन च परासिद्धत्वे तन्निरूपितबहिरङ्गत्वाभावादेतत्प्रवृत्तिप्रतिबन्ध इत्येवं द्वयोर्मिथोविरोधेन द्वाभ्यां मिथः-प्रवृत्तिप्रतिबन्धे क्रियमाणे इत्यर्थः। हि=यतः। अन्यतराप्रवृत्तेरिष्टत्वेऽप्यन्यतराप्रवृत्तेरनिष्टत्वमिति विरोध-सूचकोऽपिः। **दुर्वार इति**। परत्वादिति भावः। एवञ्च=तस्य दुर्वारत्वे च। विरोधात=उक्तरूपात्। अपिर्यथोद्देशसमुच्चये। उक्तेऽर्थे भाष्यसम्मतिमप्याह—**अत एवेति**। तत्र तदनुपस्थितेरौचित्याद्धेवेत्यर्थः। 'कार्यकालपक्षमेवोपक्रम्ये'ति शेषः। अनेनोपसंहारस्य यथोद्देशपरत्वं निरस्तम्। **विसर्जनीयेति**। खरवसानयोरिति **सूत्रे** इत्यर्थः। **इमामिति**। एवं हीत्याद्युक्तामित्यर्थः। एवोऽप्यर्थे। तेन 'पूर्वं प्रती'ति प्रागुक्ताया वक्ष्यमाणायाश्च समुच्चयः। 'इतीत्युक्त'मिति पाठः। सिद्धान्तिनेति भावः। त्रिपादीस्थेऽन्तरङ्गे कार्येऽयं परिहारः—संयोगान्तस्य रदाभ्यामित्यादौ यत्रयत्रोक्तः-स सर्वो न युक्त इति तदर्थः। तदाशयमिष्टलक्ष्यनिर्वाहार्थमाह—**एवञ्चेति**। तस्यायुक्तत्वे चेत्यर्थः। **वचनेति**। 'विसर्जनीयोऽनुत्तरपदे' इत्यादीनी-

❀ सदाशिवभट्टीयम् ❀

**इमामेवेति**। एवं हीत्याद्युक्तामिति भावः। 'लक्षणत्वादितीत्युक्त'मिति पाठः। **अनुसरणं वेति**। झल-

❀ विषमपदविवृतिः ❀

पूर्वान्तवद्भावेनात्वादिदेशे ऐसादेशापत्तिरित्याहुः। **ज्ञापकानुसरणं वेति**। 'तस्मादित्युत्तरस्ये'ति निर्देशाज्ज्ञापकात्त्रिपादीस्थेन्तरङ्गेप्यन्तरङ्गपरिभाषा क्वचित्प्रवर्तते इति दध्यत्रेत्यत्र न संयोगान्तलोपः, बहिरङ्गयणोऽसिद्धत्वात्। परे तु पूर्वत्र कर्त्तव्ये परस्यासिद्धत्वेऽपि तत्र कृते परस्यासिद्धत्वे मानाभावः। एवमेव हलसन्ध्यन्ते शब्दरत्ने स्पष्टमेवोक्तम्। तथा च नार्कुटादौ पूर्वस्याः कृतत्वेन ताम्प्रति परस्य विसर्गस्यान्तरङ्गस्य पूर्वत्रेत्यनेन सिद्धत्वबोधनमशक्यम्। तथा च बाधकभावात् अन्तरङ्गपरिभाषा कार्यकालपक्षे परिभाषान्तरवत् त्रिपाद्यां प्रवर्तत एव। विसर्जनीयसूत्रे शेखरोक्त-

लत्वाद्यर्थं 'तस्य दोष' इति वचनमेवारब्धम्, अन्यथाऽन्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे–चक्र्यत्र माषवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव।

यत्तु लक्ष्यानुरोधात्कार्यकालपक्षे उपस्थितयाऽन्तरङ्गपरिभाषयाऽऽनुमानिक्या प्रत्यक्षसिद्धस्यापि 'पूर्वत्रे'त्यस्य बाध इति, तन्न लक्षणैकचक्षुषामादरणीयम्। अत एव 'उर'णिति सूत्रे–'रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो–नार्कुटाद्यर्थ'-

ॐ अभिनव-चन्द्रिका ॐ

अत्र निमित्तता तद्भावभाविताभात्रेण। एवञ्च 'अन्तवद्भावेन पदान्तरेफस्य न विसर्गः' इतिवचनान्तरं न कल्पनीयं भवतीत्यपरमनुकूलम्। विस्तरस्तु परिभाषेन्दुचन्द्रिकायां द्रष्टव्य इति दिक्।

ॐ चिदस्थिमाला ॐ

त्यर्थः। लाघवादाह—**ज्ञापकेति**। झल इत्यपकर्षादेरप्युपलक्षणमिदम्। उक्तस्य सिद्धान्तभाष्याशयत्वे गौरवमिष्टापत्त्या परिहर्तुमाह—**अत एवेति**। तत्रैतदसञ्चारादेवेत्यर्थः। **लत्वेति**। अचीति वा लत्वे इत्यर्थः। आदिशब्दः प्रकारे, अत एव चक्र्यत्रेत्यादिसङ्गतिः। **रब्धमिति**। वार्तिककृतेति भावः। **अन्येति**। तत्रैतत्प्रवृत्तावित्यर्थः। वैलक्षण्यसत्त्वेन भेदमाह—**चक्र्यत्रेति**। सिद्धे च कैयटाद्युक्तिं खण्डयति—**यत्त्विति**। अपिर्विरोधे। तथा च युक्त एव स परिहार इति भावः।

**चक्षुषामिति**।–कर्तुः शेषत्वविवक्षया षष्ठी। उक्तार्थं द्रढयति—**अत एवोरणिति**। भाष्ये इत्यत्रान्वयः। नन्वेवमपि लक्ष्यैकचक्षुषा तदादर एवेति चेन्न, भगवदतिरिक्ते तत्त्वाभावाच्छास्त्रस्यास्मदादौ[illegible]प्रवृत्तेश्च। किञ्च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तस्य ततः प्राबल्यस्य लोकतन्त्रान्तरसिद्धत्वेन तेनास्या अनुमानिक्या बाधस्यै-

ॐ ज्योत्स्ना ॐ

**ज्ञापकानुसरणं वा कर्तव्यमिति**। 'उभयथर्क्षु'त्यादीत्यादिः। एवं 'र्वी'वूतौ च सप्तम्यर्थे' 'दाधा घ्वदाप्' 'यूस्त्र्याख्यौ'वित्यादिनिर्देशेषु संयोगादिसंयोगान्तलोपादरकरणा-'न मुन' इत्यत्र नेति योगविभागे तात्पर्यग्राहकात् त्रिपाद्या बहिरङ्गपरिभाषादृष्ट्याऽसिद्धत्वबोधनाच्च काप्यनुपपत्तिः। अत एव बहिरङ्गपरिभाषाया अप्रवृत्तौ युक्तिमुक्त्वा 'अतः किं? अतोऽयुक्तः परिहारो 'न वा बहिरङ्गलक्षणत्वा'दिति पूर्वरूपं कृत्वाऽवहित्या प्रदर्शिता भगवता, न तु न युक्त इति नञः पृथगुपादानं स्पष्टं कृतम्। यद्व्याख्यत्प्रदीपकारः–'यदा तु लक्ष्यदर्शनवशाद्बहिरङ्गपरिभाषाश्रीयते–यथा चक्रकेष्विष्टतो व्यवस्था, तदा युक्त एव परिहारो 'न वा बहिरङ्गलक्षणत्वा' दिती'ति। लक्ष्यस्यानुमेयस्य–नेति योगविभागस्य–दर्शनमनुमापकं यत्–'सप्तम्यर्थे' 'ख्याख्या'वित्यादिनिर्देशस्तद्वशादित्यर्थः। ध्वनितं चेदं 'संयोगान्तस्य लोपः' इति सूत्रे भाष्ये–तदाह—इति-

ॐ विषमपदविवृतिः ॐ

युक्तिमुपजीव्य प्रवृत्तम्–अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वा'दिति भाष्यं शिथिलमेव, युक्तेः शैथिल्यात्। अत एव शिथिलयुक्तिमूलकस्यो 'भौ वाऽविशेषा'दिति कात्यायनसूत्रस्यानुष्ठापकलक्षणशैथिल्यं जैमिनिनोक्तम्। 'उभावाग्नेयाग्नीषोमीयपुरोडाशौ चतुर्धा कर्तव्यावविशेषात्, 'आग्नेयं चतुर्धा करोती'ति श्रुतौ अग्निदेवताकपुरोडाशे चतुर्धाकरणस्योक्तत्वेनोभयोरपि पुरोडाशयोरग्निदेवताकत्वाविशेषा'दिति तत्सूत्रार्थः। तत्र चाविशेषादिति युक्तिः शिथिला, ऐन्द्राग्ने चतुर्धाकरणवारणाय श्रुतावाग्नेयपदेनाग्निपर्याप्तदेवताकत्वस्यैव विवक्षितत्वात्। 'तस्य दोष'इति तु बहिरङ्गासिद्धत्वेन सिद्धौ व्यर्थमेव। एवञ्च तत्र–तत्र वचनानि न कार्याणीति महल्लाघवम्। तस्मादित्युत्तरस्येत्यादिज्ञापकं वा 'क्वचित्त्रिपाद्यां कार्यकालपक्षे बहिरङ्गपरिभाषा प्रवर्तत' इत्यर्थेऽनुमन्तव्यमिति न

मित्युक्तं भाष्ये इति दिक् ।

**उपसर्गेणेवेति** । तत्सञ्ज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः । प्रकृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः–प्रर्द्ध इत्यत्र न । **पुनरिति** । प्रकृतसूत्रे भाष्ये स्फुटमेतत् । **सुब्धाताविति** । सुबन्तप्रकृतिके धातावित्यर्थः । तुल्यास्यसूत्रे उपाकारीयतीत्यादेरेतदुदाहरणत्वस्य

ॐ अभिनव-चन्द्रिका ॐ

**क्रियायोगनिमित्तत्वादिति** । जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमत्वमुपसर्गत्वमिति स्वीकारेण जन्यत्वस्य जनकांशे नित्यसाकाङ्क्षत्वेन क्रियाविशेषविषयकबोधस्य धातुजन्यतया धातोराक्षेप इति भावः । **प्रत्यासत्त्येति** । यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं प्रादीनां तद्धातुनिरूपितोपसर्गत्वन्तेषामिति प्रगत ऋद्धः प्रर्द्ध इत्यादौ गमधातुजन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वेन प्रशब्दस्य गमधातुनिरूपितोपसर्गत्वमेव, नतु ऋधधातुनिरूपितोपसर्गत्वमिति न वृद्धिरिति भावः । **सुबन्तप्रकृतिकधाताविति** । सुबन्तप्रकृतिकप्रत्ययान्त-

ॐ चिदस्थिमाला ॐ

वैचित्र्येण तथा वक्तुमेवाशक्यम् । एवञ्च तथा हरदत्ताद्यर्वाचीनानां तथोक्तिस्तत्र तत्रासङ्गतैवेति बोध्यं, तदाह—**दिगिति** । पूर्वपक्षे हेतुमाह—**तत्सञ्ज्ञेति** । नन्वेमपि सिद्धान्तासङ्गतिः, प्रगत ऋषभ प्रर्षभ इत्यादौ ऋकारादिधात्वयोगेऽप्यन्तर्भूतक्रियायोगेनोपसर्गत्वसत्त्वेन तत्रानतिप्रसङ्गायोक्तरीत्या सामान्यतस्तदाक्षेपेऽपि प्रगत ऋच्छकः प्रर्च्छक इत्यादिवारणफलेकष्टधातुविशेषलाभाय च तस्यावश्यकत्वादत आह—**यदर्थे इति** । तत्र क्रियायामित्येव वाच्ये योगग्रहणादिदं लब्धम् । अत्र यथा 'गतिकारकोपे'ति सूत्रस्य शब्देन्दुशेखरविरोधो न तथा तत्रैव परे त्वित्यादिना स्फुटम् । तत्र तद्वारणायाह—**प्रकृते चेति** । **रादीति** । धात्वित्यर्थः । एवञ्च तत्र वारणेन वारणार्थतदुक्तार्थसाधकमनोरमादिग्रन्थस्याप्ययमेवार्थः । एतेनासम्बद्धत्वादयुक्तमिति रत्नाकराद्युक्तमपास्तमिति स्पष्टं भावप्रकाशे । **स्फुटमेतदिति** । एतेन न माङ्योगे इतिसूत्रे भाष्येऽजादीनामटा सिद्धमित्युक्त्वाऽऽटश्चेतिसूत्रं विधायास्यपोहसर्तीत्यत्र वृद्धिमाशङ्क्य धातावित्यपकृष्य समाहितत्वेन तस्य साफल्याद्योगविभागे मानाभाव इति परास्तम् । अत्रैव तथा स्फुटत्वात् । अत एव धातावित्युभयोः शेष इति भाष्ये उक्तम्, अन्यथा तत्रैव कुर्यादिति न मिथो भाष्ययोर्विरोध इति बोध्यम् । **प्रकृतिके इति** । सुबन्तप्रकृतिक-

ॐ ज्योत्स्ना ॐ

**दिगिति** । दिगर्थोऽत्र न दूषणस्य पुष्टिरपि तु भूषणस्येत्याहुः । **सुबन्तप्रकृतिके धातावित्यर्थ इति** । न तु सुबन्ते धातावृगित्यादावित्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

त्यपकर्षस्याप्युपलक्षणमिदम् । दीक्षितकटाक्षयति-**तत्सञ्ज्ञयेत्यादिना** । नन्वन्तर्भूतक्रियायोगनिमित्तकोपसर्गत्ववति प्रर्षभादौ योऽतिप्रसङ्गस्तद्भङ्गाय तदित्यत आह—**यदर्थेति** । नन्वसति धातुग्रहणे ऋकारनिरूपितोपसर्गत्वस्याप्रसिद्धत्वात्प्राद्युपलक्षकं तत्स्यादित्यतिप्रसङ्ग एवात आह—**प्रत्यासत्त्येति** । तन्निरूपितस्याप्रसिद्धत्वेपि तद्घटितनिरूपितग्रहणं प्रत्यासन्नमिति भावः । कृतेपि धातुग्रहणे यदर्थेत्युक्तार्थस्यावश्यकत्वं ध्वनयन्नृषभं त्यजति-**ऋद्ध इति** । धातुग्रहणस्याटश्चेत्युत्तरार्थताया 'न माङ्योगे' इति सूत्रे भाष्ये उक्तत्वेन कथमिति दूषणाभासम्परिहरति-**प्रकृतसूत्रेति** । **सुबन्तप्रकृतिकेति** । तत्प्रकृतिकक्यजादिघटित इत्यर्थः ।

ॐ विषमपदविवृतिः ॐ

कश्चिद्दोष इत्याहुः । **सुबन्तप्रकृतिके इति** । न तु सुबन्ते धातावित्यर्थः । तथा सति ऋत **धातोः**

भाष्ये उक्तत्वात् । शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्ततया—तत्प्रकृतिके इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं, तदिच्छति—उपर्षभीयतीत्यत्र तु न वृद्धिः, उपेत्यस्यानुपसर्गत्वात् । अत्रापि धातावित्यनुवर्त्य वाक्यभेदेन व्याख्येयं, तेन सुब्धातावपि न प्रकृतिभावः । **प्रार्षभीयतीति** । अत्र 'शरोऽचि'त्यस्यानुपन्यासेन व्यञ्जनात्परस्ये-

❀ अभिनव-चन्द्रिका ❀

धातावित्यर्थः । यथाश्रुतन्तु न युक्तं, धातौ सुबन्तप्रकृतिकत्वस्य क्वाप्यदृष्टत्वात् । **धातुप्रकृतिकत्वेनेति** । धातुसञ्ज्ञाप्रयोजकप्रत्ययप्रकृतिकत्वेनेत्यर्थः । अन्यथा धातौ प्रत्ययत्वस्याभावेन एतदुक्तिरसम-

❀ चिद्स्थिमाला ❀

क्यजादिघटिते इत्यर्थः । ननु सुबन्ते धातावित्यर्थ एव कुतो नात आह—**तुल्यास्येति** । नन्वेवमपि 'सुबन्तावयवके' इत्येवार्थो दण्डिरत्नाकराद्युक्तः कुतो नात आह—**शास्त्रे इति** । **धातविति** । तत्सञ्ज्ञाप्रयोजकक्यजादिप्रकृतित्वेनेत्यर्थः । तथा चाक्लृप्तकल्पना नेति न्यायात्तथैव तदुक्तिर्युक्तैवेतिभावः । प्रर्षभतीत्यादावाचारक्विबन्ते प्रर्षभयतीत्यादावाख्यानण्यन्ते चेदं न प्रवर्तते, सुब्धातुत्वाभावात् । यत्तु दण्डी—सुबन्तस्य धातोरसम्भवान्न तथार्थः, यद्यपि ऋज गतावित्यादेः क्विपि तत्सम्भवस्तथापि तपरकरणव्यावर्त्यप्रसिद्धिरिति नामधातुरेवेह गृह्यते इति, तन्न, ॠकारशब्दादाचारक्विबन्तात्कर्तरि क्विपि व्यावर्त्यप्रसिद्धेः । यच्च ऋतीत्यनुवृत्तं श्रूयमाणसुपीत्यस्यैव विशेषणं नाक्षिप्तधातोस्तेन ऋकारादिसुबन्तप्रकृतिके इत्यर्थः । तेन ऋषभस्य समीपमुपर्षभं, तदिच्छति—उपर्षभीयतीत्यत्र न वृद्धिः, ऋषभशब्दस्यान्तर्वर्तिविभक्त्या सुबन्तत्वेऽपि क्यचस्तत्प्रकृतिकत्वाभावात्, धातुसञ्ज्ञानिमित्ते प्रत्यये कृते उपसर्गस्य पृथक्करणाद्धातुत्वं परं 'ऋषभीय'शब्दस्यैव, अत एवोपार्षभीयतेत्यादावुपात्पूर्वं नाडिति, तन्न, पूर्वत्र क्लृप्तत्वेन तद्विशेषणत्वस्यैवोचित्यात् । धातुसञ्ज्ञाप्रयोजके प्रत्यये चिकीर्षिते उपसर्गसमानाकारपूर्वपदस्य पृथक्करणेन क्यचस्तत्प्रकृतिकत्वसत्त्वाच्च—अत्रापि अपि आटि न दोषः । एवञ्च तत्र दोष एवात आह—**ऋषभेति** । **उपेत्येति** । 'क्यजन्तं प्रतीत्यादिः' । **प्रार्षेति** । अत्राचोरिति न द्वित्वं, 'शरोऽची'ति निषेधात्, नन्वेवं तदुपन्यासौचित्यमत आह—**अत्रेति** ।

❀ ज्योत्स्ना ❀

**धातुप्रकृतिकत्वेनोक्ततयेति** । 'सुपआत्मन' इत्यादिनेत्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

सुबन्तावयव इत्येव कुतो नोक्तमत आह—**शास्त्र इति** । **धातुप्रकृतिकत्वेनेति** । तत्सञ्ज्ञाप्रयोजकक्यजादिप्रकृतिकत्वेनेत्यर्थः । सूत्रे सुप्पदं लक्षणिकमिति भावः । उपार्षभपुरुषतीत्यत्र तु नित्यमेव वृद्धिः ।

ननु 'आत' इति सूत्रे वक्ष्यमाणरीत्या सुबन्तोपश्लिष्टः सन्य ऋकारादिधातुपश्लिष्ट इत्यर्थात् सुबन्तावयवकधातावित्यर्थो न्यायसिद्ध इति लक्षणैव निर्मूलेति चेन्न । तथा सति सुबन्तधातुभयनिरूपितोपसर्गत्वस्य उपार्च्छ इत्यादौ सम्भवेन तत्रैव स्यादिति तुल्यास्यसूत्रभाष्यासङ्गत्या तस्यैव मानत्वात् । नहि सति सम्भवे तदघटितनिरूपितं ग्रहीतुमुचितम् । उक्तार्थे लक्षणा, अवयवलक्षणेत्यत्र भाष्यानुग्रहः परश्चिन्तनीयः ।

ऋतीति सुबन्तविशेषणमित्युपर्षभीयतीत्यस्य सिद्धिरित्युक्तं खण्डयति—**ऋषभेति** । ऋकारादेर्धातुत्वेन त्वदुक्तार्थासङ्गतेरित्यपि बोध्यम् । **अत्रापि धातावििति** । अत एव ह्रस्वादुपसर्गाद्वृद्धिविप्रतिषेधेनेति वार्तिकं सामान्यतः सूत्रद्वयविषयकतया प्रवृत्तं धातावित्येतत्सामर्थ्यात्प्रत्याख्यानम् । **ऋत्यक इति** सूत्रे भाष्ये उपार्च्छतीति तदुदाहरणन्तु वा सुपीत्युदाहरणोपलक्षणम् । न माङ्योग इति सूत्रस्थस्य धातावित्यु-

❀ विषमपदविवृतिः ❀

क्विपि सुप्येव प्रवृत्तिः स्यात् । **उपर्षभीयतीति** । नन्वन्तरङ्गत्वादेवात्र पूर्वं गुणस्य प्रवृत्त्या न वृद्धिरिति चेन्न । उपसर्गसमानाकारं पूर्वपदं धातुसञ्ज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत

कस्यानेकस्य वोच्चारणे विशेषाभावेन 'अचो रहाभ्या'मित्यस्य तन्निषेधस्य चानावश्यकता सूचिता । **वाक्यभेदेनेति** । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते । 'एवे चे'ति-वार्त्तिकं सूत्रे धातावित्यनुवृत्तेरारब्धम् । अवधारणं—नियमः । एवशब्दस्य द्योत्यमर्थद्वयम्—अवधारणमसम्भवरूपानवक्लृप्त्यादि च, तयोरन्त्योऽत्र एवशब्दार्थ इत्यभिप्रेत्याह-**अनक्लृप्तावेवेति** । क्वेव भोक्ष्यसे ? इत्युक्तेः—स्थलसङ्कीर्णत्वादिना नास्ति सम्भवस्तत्र भोजनस्येति गम्यते ।

**अचोऽन्त्या** । 'अच' इति निर्धारणे षष्ठी । अन्ते भवोऽन्त्यः । 'अन्त्यादी'ति

❀ **अभिनव-चन्द्रिका** ❀

ज्ञा स्यात् । **तत्प्रकृतिक इति** । धातुसञ्ज्ञाप्रयोजकप्रत्ययप्रकृतिक इत्यर्थः । **निर्धारणे षष्ठीति** । स्वार्थसमुदायस्य 'स्वघटकत्व', 'स्वघटकान्त्याजितरयावदज्वृत्त्यन्तत्ववत्त्वै'तदुभयसम्बन्धेन अचि, 'स्वघटकवृत्तित्व', 'स्वघटकान्त्याजितरयावदज्वृत्तित्वै'तदुभयसम्बन्धेन अन्त्यत्वे वा अन्वयः । **गमकत्वादिति** । बोधजननसमर्थत्वादित्यर्थः । अन्यत्वस्य निरूपकांशे नित्यसाकाङ्क्षत्वेन यत्किञ्चित्पदार्थनिष्ठप्रकारतानिरूपितनित्यसाकाङ्क्षेतरनिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति

❀ **चिदस्थिमाला** ❀

**स्यैकस्येति** । व्यञ्जनस्येत्यर्थः । **न दृश्यत इति** । एतेनौतोमिति सूत्रे भाष्ये ध्वनितमित्यपास्तम् । तथाच मूलादि चिन्त्यमेवेति भावः । **अनुवृत्तेरिति** । एतदारम्भसामर्थ्यादोम्यारम्भाच्च मण्डूकप्लुत्येति भावः ।

निपातानां द्योतकत्वाशयेनाह—**द्योत्यमिति** । षष्ठ्यन्तस्य विशिष्टेऽन्वयः । असम्भवरूपत्वमनवक्लृप्तेरेव विशेषणम् । आदिनाऽमर्षादिपरिग्रहः । तत्राद्ये निषेधादाह—**तयोरिति** । ननु कथं ततोऽसम्भवप्रतीतिस्तद्बोधकाभावादत आह—**क्वेति** । **षष्ठीति** । सौत्रमेकवचनं, तदाह—**मूलेऽचां मध्ये इति** । एतेन जातावेकवचनमिति दण्डयुक्तमपास्तम् । अन्यत्रापि तस्य प्रवृत्त्यापत्तेः । नन्वन्त्यशब्दस्य सापेक्षत्वात्कथं समासोत आह—**गमकेति** । गुरुकुलमितिवन्नित्यसापेक्षत्वादिति भावः । मूले **सीमन्त इति**—नान्तस्य डाबन्तस्य ग्रहणं, षष्ठीतत्पुरुषः । **केशेति** । विलक्षणरचनाविशिष्टकेशेष्वित्यर्थः । तथा च वार्तिकं—**सीमान्तः केशेष्विति** । अपत्ये इञो

❀ **ज्योत्स्ना** ❀

**उच्चारणे विशेषाभावेनेति** । व्यञ्जनानामज्व्यतिरेकेण कालान्तरं नास्तीति मतेनेदम् वस्तुतस्तत्सूत्र-

❀ **सदाशिवभट्टीयम्** ❀

भयोः शेष' इति भाष्यस्य तूपसर्गादृत्योरित्यादिरर्थ इति भावः । **विशेषाभावेनेति** । इदमासिद्धवदादिसूत्रेषु भाष्ये स्पष्टम् । **न दृश्यत इति** । यत्तु 'ओतोम्शसो'रिति सूत्रे उद्योते—केचित्त्वत्र सूत्रे सुब्ग्रहणमनुवर्तते वाग्रहणं निवृत्तमिति भाष्ये उक्तं तत्र निवृत्तपदस्वारस्यादपि स्वरितत्वमस्त्येव, तत्फलन्त्वेङि पररूपमित्यत्रानुवृत्य वाक्यभेदेन व्याख्यानमित्याहुरित्याद्युक्तं तदरुचिग्रस्तमिति स्पष्टमेव, तथा सत्यत्र न सम्बध्यत इत्येव ब्रूयादुत्तरत्रावश्यकसम्बन्धस्य निवृत्त्ययोगात्, निवृत्तस्य सम्बन्धायोगात्, तस्मादननुवृत्तिरेव । निवृत्तिस्तत्र भाष्यार्थ इति तत्रैवोद्योते स्पष्टम् । **धातावित्यनुवृत्तेरिति** । ननु विश्वौह इत्यादौ संप्रसारणे गुणे एज्लक्षणवृद्ध्यैव सिद्धावूड्विधानं बहिरङ्गपरिभाषां ज्ञापयतीति वाह ऊठ्सूत्रस्थभाष्यादुपसर्गादित्यस्य मण्डूकानुवृत्तावपि धातावित्यनुवृत्तिः किमर्था इति चेन्न, तथा सति एङ्निरूपितोपसर्गत्वाप्रसिद्ध्या प्राग्रुपलक्षको माभूदित्येतदर्थत्वात् । उचितं तूपसर्गादित्यनुवृत्तेरित्येव । क्लृप्त्यादीत्यादिनाप्यर्थः । **अचो** । **षष्ठीति** । यावदन्त्यपदस्याव-

❀ **विषमपदविवृतिः** ❀

इत्यङ्गीकारेणादोषात् । एवे चेत्यत्र वक्तव्यपदाभावेन सूत्रत्वभ्रमं निराकर्तुमाह—**वार्तिकमिति** । **गमकत्वादिति** । वृत्त्यघटकपदार्थान्वितस्वार्थावगमकत्वेन शिष्टप्रयुक्तत्वादित्यर्थः ।

गमकत्वाद्बहुव्रीहिः । **मार्त्तण्ड इति** । मृतण्डादागतो—मार्तण्डः । अणिविषये एव पररूपम् । ननु मार्त्तशब्दान्त्याच्तकाराकारः स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न । एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः । एतन्मूलकमेव 'व्यपदेशिवदेकस्मि'न्निति पठ्यते इत्यलम् । वस्तुत आरोपस्य नात्रोपयोगः,

ॐ अभिनव-चन्द्रिका ॐ

मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणमिति कार्यकारणभावमूलक-'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेने'तिन्यायस्याऽप्रवृत्तेरिति भावः। **आरोपस्येति**।'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठ'मिति पतञ्जलिलक्षितविपर्ययात्मकज्ञानस्येत्यर्थः । तच्च नैयायिकमत इवान्यथाख्यातिरेव । तदभाववद्विशेष्यकतत्प्रकारकं ज्ञानमिति यावत् । यथा रामायेन्यादौ सुप्त्वाभाववत्-'य'-शब्दविशेष्यकं

ॐ चिदस्थिमाला ॐ

बाधकत्वादिदमर्थं छस्य बाधकत्वादाह—**मृतण्डादिति** । ननु मृताण्डादिति वाच्ये मृतण्डादिति कथमत आह—**अणिविषये एवेति** । विषयता च भावित्वेन, एवञ्च मृतण्डेति कृतेऽपि आदिवृद्धिरिति भावः । सिद्धप्रयोगाशयेनाह—**मार्तेति** । एवञ्च टिसञ्ज्ञाया एवाभावे कथं पररूपमिति भावः । आदित्वोपपत्तये आह—**तदवयवेति** । **एतदिति** । समुदायरूपत्वाद्यारोपमूलकं परिभाषारूपं वचनमित्यर्थः । एवेन मूलान्तरादिव्यवच्छेदः । यथैकस्मिन् पुत्रे तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारो यथा च 'शिलापुत्रकस्य शरीर'मित्यादावेकस्मिन् शिलापुत्रके वयःकृतावस्थानामपि प्राणिनिष्ठत्वेन वस्तुतस्तत्राभावादारोपितानेकावस्थाभिरनेकावस्थाविशिष्टशिलापुत्रकत्वैकावस्थाविशिष्टशिलापुत्रकत्वादिरूपसमुदायरूपत्वाद्यारोपेणानेकावस्थाविशिष्टशिलापुत्रकस्यैकावस्थाविशिष्टमिदं शरीरमवयव इत्यादिव्यवहारो लोके तथैवायेत्यादावेकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धमेवेदमिति यावत् । अत एवाशास्त्रीयस्याप्यनेनातिदेशोऽत एव भवत्यादावकृत्वादिसिद्धिस्तथा चैतदर्थं तथावश्यं वाच्ये इयायेत्यादावप्ययमेव प्रकार इति तदर्थं कैयटादिग्रन्थोक्तिरयुक्तैवेति स्पष्टं परिभाषेन्दुशेखरादौ। सजातीयसहायशून्ये मुख्यव्यवहारवत्कार्यं भव,भवतीति परिभाषार्थस्तदाह—**इत्यलमिति** । सकलप्राचीनग्रन्थासङ्गतिं ध्वनयन्सिद्धान्तमाह—**वस्तुत इति । शब्देति** ।

ॐ ज्योत्स्ना ॐ

प्रामाण्याद्यज्ञानानामपि पृथक्कालान्तरमस्त्येवेति संस्कर्तेत्युदाहरणे वक्ष्यते । **मृतण्डादागत इति** । 'मृतेऽण्डे भवो मार्तण्ड' इति तु व्युत्पत्तिः प्रदर्शयितुं युक्ता । 'मृतेऽण्ड एष एतस्मिन्यदभूत्ततो मार्तण्ड इति व्यपदेश' इति तन्निर्वचनस्य भागवते प्रदर्शितत्वात् । 'मृते अचेतने एष सूर्यो वैराजरूपेण यस्मात्प्रविष्ट' इति तद्व्याचष्टे—श्रीधरः । अण्डं=ब्रह्माण्डं । 'महाभारते मोक्षधर्मेषु बुधशापवशाददितेरुदरस्थितो गर्भो निश्चितनो ममार, बहिर्निःसृतस्तु पश्चाच्चैतन्यमवापेति मार्तण्ड-

ॐ सदाशिवभट्टीयम् ॐ

यविनं प्रति साकाङ्क्षत्वेपि निर्धारणावधिम्प्रत्यनाकाङ्क्षत्वादित्याहुः। **मृतण्डादागत इति** । भागवतादिप्रसिद्धमपि भवरूपार्थं भगवतोऽनित्यत्यप्रसङ्गात्त्यक्त्वा आगत इत्युक्तम् । अलमर्थः परिभाषेन्दुशेखरादवसेयः ।

ॐ वरवर्णिनी ॐ

**वस्तुत इति** । केचित्तु—आरोपविकल्पयोः पर्यायशब्दत्वमेव, तथाहि—योगमते प्रमा—विपर्यय-विकल्पभेदेन वृत्तिस्त्रिविधा । तत्र—'स्वात्मकज्ञान—तद्विशेष्य—तद्वाचकशब्दै-रन्त्रितयावलम्बिनी यथार्थज्ञानात्मिका'—**प्रमा** । 'प्रमादिबाधकप्रतिबध्यो भ्रमास्यस्तदभाववति तत्प्रकारकज्ञानात्मको—**विपर्ययः**, 'इच्छाजन्यः प्रमादिप्रतिबन्धकाप्रतिबध्य आरोपापरपर्यायस्तदभाववति तत्प्रकारकज्ञानरूपो' **विकल्पः**, —इति सिद्धान्तादतः शेखरोऽयमसङ्गत—**इत्याहुः** । **योगागमविशारदास्तु**-'प्रमाण—विपर्यय—विकल्प—निद्रा स्मृत्याख्यासु-पञ्चसु वृत्तिषु—'स्व-स्वविषयीभूतार्थवाचकशब्दोभयावलम्बिनी, रजतत्व-समवाय-रजतादि-

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति पतञ्जल्युक्तेरर्थाभावेऽपि विकल्पात्मकं ज्ञानमत्र, तदपि लक्ष्यानुरोधाच्छास्त्रप्रवृत्त्युपयोगीति बोध्यम्। 'पतञ्जलि'रिति तु—अञ्जलेः

ॐ अभिनव-चन्द्रिका ॐ

तुच्छप्रकारकं ज्ञानं यथा। विकल्पात्मकज्ञानमिति। वस्त्वविषयकत्वे सति शब्दज्ञानोभयविषयकं ज्ञानमित्यर्थः। यथा पुरुषस्य चैतन्यम्, राहोश्शिरः, वन्ध्यापुत्र इत्यादिज्ञानम्। एवं रामायेत्यादौ यञादिसुब्रूपवस्तुशून्यत्वेऽपि 'यशब्दः यञादिसु'विति शब्दज्ञानोभयमात्रविषयकज्ञानेनैव दीर्घः सिध्यतीति आरोपस्य नोपयोग इति भावः। ननु समासार्थं पतञ्जलिशब्दस्य मयूरव्यंसकादौ पाठस्यावश्यकत्वेन तत्रैव निपातनादितशब्दस्य लोपेनैव तद्रूपोपपत्तौ शकन्ध्वादिषु एतत्पाठोऽनावश्यक इत्यभिप्रेत्याह—**इति विग्रह इति**।

ॐ चिदस्थिमाला ॐ

'यत' इत्यादि। पुंप्रयत्नेनावश्यनिरोद्धव्यप्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपपञ्चवृत्तीनां मध्ये विकल्पलक्षणमिदं। शब्दश्च ज्ञानञ्च शब्दज्ञाने ते अनुपातिनी=जनके यस्य स—शब्दज्ञानानुपाती, श्रोतुः श्रूयमाणशब्दहेतुकः—प्रयोक्तुः पदार्थोपस्थितिहेतुको बाधनिश्चयेऽपि कलहादौ शशशृङ्गादिप्रयोगे उत्प्रेक्षादौ च सर्वानुभवसिद्धश्च वस्तुशून्यो=बाधितविषयःप्रत्ययो विकल्पाख्या वृत्तिरित्यर्थः। अपिना प्रमाणसमुच्चयः। यथा चैतत्तथाऽन्यत्र स्पष्टं सकलम्। नन्वेवमपि पतञ्जलिरित्यस्यासिद्धिस्तत्र द्विविधज्ञानेनानिर्वाहान्मनीषेत्यादौ प्रमाणेन शकन्धुरित्यादौ विकल्पज्ञानेन निर्वाहोऽनः सिद्धान्तप्रसङ्गात्तत्र—सिद्धान्तं सकलग्रन्थासङ्गतिं ध्वनयन् सिंहावलोकनन्यायेनाह—**पतञ्जलिरिति**। अत एव तुः। नन्वेवं निपातनानां बाधकत्वस्यैवाङ्गी-

ॐ ज्योत्स्ना ॐ

पदव्युत्पत्तिः प्रदर्शिता। मृतेऽण्डे जातो मृत्वा जात इत्यर्थ इति तद्व्याख्यातारः। **पतञ्जल्युक्तेरिति**। पतञ्जलिप्रणीतयोगसूत्ररूपत्वादेतस्य तथात्वम्। **शब्दज्ञानमनु** पश्चात्पतति=जायते—शब्दश्रवणानन्तरं यज्जायत इत्यर्थः। 'शब्दज्ञानानुपाती'त्यनेन भ्रमस्य व्यावृत्तिः, 'वस्तुशून्य' इत्यनेन तु प्रमायाः।

ॐ सदाशिवभट्टीयम् ॐ

**शब्दज्ञानानुपातीति**। पुंप्रयत्नेनावश्यं निरोद्धव्यप्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपपञ्चवृत्तीनां मध्ये विकल्पलक्षणमिदं, शब्दश्च ज्ञानं च शब्दज्ञाने तेऽनुपातिनी जनके यस्य सः, श्रोतुः श्रूयमाणशब्दहेतुकः प्रयोक्तुः पदार्थोपस्थितिहेतुको बाधनिश्चयेऽपि कलहादौ शशशृङ्गादिप्रयोगे उत्प्रेक्षादौ च सर्वानुभवसिद्धश्च वस्तुशून्यो बाधितविषयः प्रत्ययो विकल्पाख्या वृत्तिरित्यर्थः। 'शब्दज्ञाने'त्यादि-'उक्ते'रित्यन्तस्य मध्यमणिन्यायेन—उपयोगाऽभावे तादृशज्ञानसत्तायां च हेतुत्वेनान्वयः। अत्र=व्याकरणे। यत **इति** शेषो वा इत्याहुः। सिंहावलोकितन्यायेन विशेषं वक्तुमाह—**पतञ्जलिरितीति**। एतेन पतन्नञ्जलेरिति विगृह्णन् रत्ना-

ॐ विषमपदविवृतिः ॐ

**शब्दज्ञानानुपातीति**। **शब्दज्ञानोत्तरमेव जायमान इत्यर्थः**। **पतञ्जलिना—वृत्तयः—पञ्च, तस्य**

ॐ वरवर्णिनी ॐ

बाह्यपदार्थावलम्बिनी, बौद्धपदार्थानवलम्बिनी, रजते—इदं रजतमित्याकारिका यथार्था वृत्तिः'—**प्रमा**। अन्य-वृत्तिरजतत्वादिधर्मपुरस्कारेण शुक्त्यादिधर्मिका-शुक्ताविदं रजतमित्याकारिकाभ्रमात्मकज्ञानरूपाऽपरा **विपर्यया**-ख्या वृत्तिः। शब्दज्ञानानवगाहिनी बाह्यवस्त्वनवगाहिनी बौद्धपदार्थमात्रावगाहिनी—'वन्ध्यापुत्रः' 'शशशृङ्ग'-मित्याद्याकारिका **विकल्पाख्या** वृत्तिः। इयं द्विधा—इच्छाजन्या बाधकाबाध्या, अन्यथाजनिता बाधकबाध्या-चेति। तत्राद्या तार्किकैरारोप इत्युच्यते। एवञ्चैकस्मिन्नप्यकारे समुदायत्वारोपेणान्यपदार्थः सुलभ' इत्याहुः। इतोऽधिकं **श्रीबालशास्त्रि**चरणबद्धे **जटाजूटे**, तदनुसारिण्यां **श्रीस्नेहिरामशास्त्रि**चरणकालितायां **त्रिपुरसुन्दर्या**ञ्चानुसन्धेयम्।

पतित इति विग्रहे मयूरव्यंसकादित्वात्समासे तत्रैव निपातनादितशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु । गोनर्ददेशे कस्य चिदृषेरञ्जलेः सन्ध्याकरणसमये पतित इत्यैतिह्यात् ।

**ओत्वोष्ठयोः** । अत्र समर्थपरिभाषा नोपतिष्ठते, 'समासेऽङ्गुलेः सङ्ग' इत्यादौ

❀ अभिनव-चन्द्रिका ❀

अनेन पतन्ति अञ्जलयो यास्मिन्नमस्कायत्वादिति विग्रहे तु शकन्ध्वादिषु पाठ आवश्यक इति सूचितम् । अञ्जलेः पतित इति विग्रहे प्रमाणन्दर्शयितुमाह—'ऐतिह्यादिति । परिभाषाप्रवृत्तिरर्थीका-

❀ चिदस्थिमाला ❀

काराराथा प्रयोगो न स्यादत आह—**पृषोदेति** । एवञ्चास्येदमुदाहरणमेव नेति मूलादि चिन्त्यमेवेति भावः । ननु तथैव कुतो नात आह—**गोनर्देति** । पर्वतरूपे इत्यर्थः । अत एव भगवान्भाष्यकारः पतञ्जलिर्गोनर्दीयपदवाच्य इति तत्र-तत्र भाष्ये एव स्फुटम् । असर्यमाणवक्तृकत्वादाह—**ऐतिह्यादिति** । यत्तु 'समर्थः पदविधि'रित्यस्योद्देश्यकोटौ पदगन्धसत्त्वे प्रवृत्तेरङ्गीकारेणैकार्थीभावपरतया भाष्यादौ तस्याव्याख्यानेन चौत्वादेरवर्णान्तस्य समासे एवैकार्थीभावसम्भवेन तथैव समासे प्रवृत्तिसिद्धौ समासग्रहणं व्यर्थमिति तत्खण्डयति—**अत्र समर्थेति** । विसर्गप्राग्भागानुकरणम् । परिष्कृतं दोषमाह—**समासेऽ-**

❀ ज्योत्स्ना ❀

**इतशब्दस्य लोप इति** । एवन्तु शकन्ध्वादिगणेऽस्य पाठे प्रयोजनं चिन्त्यम् । तशब्दस्य लोप

❀ सदाशिवभट्टीयम् ❀

करः कटाक्षिनो, लडर्थस्य बाधात् । **तल्लोपे इति** । इत्मुत्लक्षणं जश्त्वाभावस्यापि,एवञ्चात्र गणेऽस्य पाठोऽनार्ष इति भावः । यद्वा'इतशब्दस्य लोप' इत्यत्राकार उच्चारणार्थः, एवञ्चागम्य कोरेऽकारस्य त्वनेन पररूपे तस्य स्थानित्वान्न जश्त्वम् । अन्यथा 'पाठोऽनार्ष' इति माक्षादेव वदेत् । समासार्थं मयूरव्यंसकादित्वस्यावश्यकत्वेन पृषोदरादित्वकल्पनं किमभिप्रेत्येति तु चिन्त्यम् ।

अन्ये तु मयूरव्यंसकादित्वात्समासेऽत्रपाठादितशब्दस्य पररूपेऽर्द्धाधिकविकारेण जश्त्वाभावाज्जश्त्वाभावे सिद्धमिदम्, नह्यत्र टेरित्युपात्तमस्तीत्याहुः । केचित्तु—मयूरव्यंसकादित्वादेव मितशब्दस्यतमादेशमाहुः । **ओत्वोष्ठ** । ओष्ठस्य परनिपातः—प्रकरणानित्यत्वात् । समासग्रहणवैयर्थ्यं परिहरति—**अत्र समेति** । वस्तुतस्तु तदुपस्थानेपि न तद्वैयर्थ्यञ्चाल ओष्ठ'यितुं शक्तस्य ओष्ठामित्युमित्यादावुपपदेन क्यजन्तप्रकृतिकतुमुनन्तस्यैकार्थीभावसत्त्वेन तत्रातिप्रसङ्गवारणेन तत्सार्थक्यात् । तदयं भावः—अत्र तदुपस्थाने यत्रावर्णस्य ओष्ठादिना सामर्थ्यङ्कुम्भकारोष्ठ औपगवोष्ठ इत्यादौ—तत्रैव समासः

❀ विषमपदविवृतिः ❀

इत्युपक्रम्यारोपात्पृथग्विकल्पात्मिकां वृत्तिमुक्त्वा तल्लक्षणमिदं सूत्रं प्रणीतम् । तदुदाहरणं तु 'चैतन्यस्य स्वरूपं''घटस्य स्वरूप'मित्युक्तं तद्भाष्यकृता । तत्र हि चैतन्यस्वरूपपदार्थयोरभेदेन तत्सम्बन्धरूपं यद्वस्तु तच्छून्यमविद्यमानं यस्य विषयः स विकल्प इत्यर्थः। अत्र मार्तण्ड इत्युदाहरणविषये'ऽचोन्त्यादि टी'ति शास्त्रं विकल्पात्मकज्ञानजनकमिति तात्पर्यम् । परे तु सङ्ग्राहकशास्त्रस्यान्यत्र चारितार्थ्यादेतद्विषये वचनाभाव उपप्लव एव न स्यात्, विकल्पात्मकज्ञानजननं तु दूरतराम् । किञ्च सम्बन्धांशे एव विकल्पात्मकं ज्ञानं, न तु आदित्वांशे । विकल्पात्मकज्ञानस्य शास्त्रप्रवृत्त्युपयोगित्वञ्च निर्मूलम् । अत एवाद्यन्तवत्सूत्रे भाष्ये'ऽपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्नर्थं आद्यन्तवद्भावेने'ति वार्तिकमतमुपन्यस्यं 'गोनर्दीयस्त्वाह—सत्यमेतत्सति त्वन्यस्मिन्निति स्वमतेन सूत्रारम्भ एव कार्य' इत्युक्तमित्याहुः । **इति शब्दलोप इति** । 'इति जश्त्वाभावे चे'त्यपि पूरणीयम् ।

**सन्ध्याकरणसमय इति** । सर्परूपेणेति शेषः । **ओत्वोष्ठयोः** । ननु अत्र समर्थपरिभाषोपस्थिता-

समासग्रहणेन 'प्रदविधि'रिति सूत्रस्वरसेन, भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैवैतत्परिभाषाप्रवृत्तिस्वीकारात्। ओत्वोष्ठादिमात्रस्य पदत्वाभावात्। अवर्णादोत्वोष्ठयोरचि तद्घटितसमासे इत्यर्था'दन्त्योष्ठ्यो वः स्मृत' इतिप्रयोगसिद्धिः। अन्यथा प्रत्यासत्त्यौत्वाद्युत्तरपदकसमास एव प्रवृत्त्यापत्तौ तदसङ्गतिः स्पष्टैव। ओतुर्विडालः।

## ❀ अभिनव-चन्द्रिका ❀

रादिति। पदसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकत्वरूपपदविधित्वस्य ओत्वोष्ठयोरित्यत्राभावादिति भावः। अत एव 'समासेऽङ्गुलेः सङ्ग' इत्यत्र

## ❀ चिदस्थिमाला ❀

ङ्गुलेरिति। नन्वस्तु तस्यापि वैयर्थ्यमत आह—पदेति। स्वरसशब्दो धर्मपरः। नन्वेवमपि सुबन्तत्वेनेत्यस्य कथं लाभोऽत आह—भाष्यादिस्वारस्येन चेति। सूत्रभेदेन विकल्पः। साक्षादित्यनेन कोट्यन्तर्गतत्वनिरासः। नन्वत्र तत्त्वेनोद्देश्यता कुतो नात आह—ओत्वोष्ठादीति। मात्रपदेन सुबादिव्यावृत्तिस्तत्वेनैव मूलादिमते निमित्तत्वस्यात्रोल्लेखात्। एतेनोक्तयुक्त्यैव समासे लब्धे समासग्रहणमोत्वोष्ठयोरुत्तरपदत्वे एव प्रवृत्त्यर्थम्, इदानीं तेनोत्तरपदाक्षेपात्तद्रूपयोरुत्तरपदयोरित्यर्थात्पदविधित्वमपीत्यन्यदेतदिलपास्तम्, उक्तयुक्तेः, दन्त्योष्ठ्य इत्यादिप्रयोगविरोधाच्च, तदेतद्ध्वनयन् सिद्धान्तरीत्याह—अवर्णादिति। घटितत्वञ्च यथाकथञ्चिन्नतूत्तरपदत्वेनैवेति भावस्तदाह—दन्त्य इति। अन्यथा=तद्घटितेत्याद्यर्थानङ्गीकारे। नञर्थस्यावश्यकत्वादाह—प्रत्येति। त्यापत्तौ=प्रवृत्तिप्राप्तौ। 'बिडालसुतौष्ठव्रणस्ते' इत्यादौ वृद्धिरेवेत्यपि

## ❀ ज्योत्स्ना ❀

इति तु वक्तुमुचितम्। तत्रैव तत्परिभाषाप्रवृत्तिस्वीकारादिति। एतेनौ'त्वोष्ठयोः समासेवे'त्यत्र समासग्रहणवैयर्थ्यशङ्का प्रत्युक्ता। प्रयोगसिद्धिरिति। 'दन्तोष्ठ्य' इति तु प्रचुरः पाठस्तत्र कृत-

## ❀ सदाशिवभट्टीयम् ❀

स्यान्नतु दन्त्योष्ठ्यादौ पदादेरकारस्यानर्थकत्वेन सामर्थ्याभावादिति समासविधावव्याप्त्या 'सर्वस्य द्वे' इत्यादावतिव्याप्त्याह—सुबन्तत्वेन चेति। इदं चाभ्युपेत्य। वस्तुतः पदविधित्वं। वस्तुतस्तदेव नेत्याह—ओत्वोष्ठादीति। मात्रशब्दः कात्स्न्र्ये। श्यामादौ तत्त्वेपि जसादिषु तदभावादिति भावः। अत्र

## ❀ विषमपदविवृतिः ❀

वस्य वासुदेवस्यौष्ठ इति समासे एवेदं स्यान्न बिम्बोष्ठ इत्यादौ, तत्राकारस्यानर्थकत्वेनोष्ठेनासामर्थ्यादिन्याशङ्क्याह—अत्र समर्थेति। पदत्वेनेति। एतस्योदाहरणं मृग्यम्। प्रत्युत 'युष्मदस्मदोः षष्ठी'त्यादिसूत्रेषु 'पदस्य पदा'दित्यधिकारेणैतत्परिभाषाप्रवृत्तावसामर्थ्ये आदेशानापत्तिः। परमव इत्यादावेव स्यात्प्रवृत्त्यापत्तिश्चेत्यपि बोध्यम्। सुबन्तत्वनेति। तिङन्तत्वेन चेत्यपि बोध्यम्। तेना'ख्यातमाख्यातेने'त्यादावप्येतत्परिभाषोपस्थितिः सिद्धा। तद्धितविधौ प्रातिपदिकत्वेनोद्देश्यत्वेऽपि 'घकालतने'ष्वित्यादिज्ञापकेन 'स्वार्थे परिपूर्ण'मिति न्यायेन चार्थिकं सुबन्तत्वेनोद्देश्यत्वं, नहि शब्दस्तेन रूपेणोद्देश्यत्वे एव तत्प्रवृत्तिरित्यत्र किञ्चिन्मानम्। तत्रैवेति। तेना'न्यादितरे' त्यादौ न तत्प्रवृत्तिः। ओत्वोष्ठादिमात्रस्येति। 'ओत्वोष्ठयो'रादिरोकारस्तन्मात्रस्य पदत्वाभावादित्यर्थः। एतदुत्तरं–'तदुत्तरपदके समासे इत्यर्थासम्भवा'दिति शेषः। तद्घटितेति। अवर्णौत्वोष्ठसम्बन्ध्यच्–एतदुभयघटितेत्यर्थः। अन्यथेति। अजाद्योरोत्वोष्ठयोरित्यर्थे इत्यर्थः। अयम्भावः–

**ओमाङोः** । अत्र एङीति नानुवर्त्तते, तेनेषदर्थकाऽऽङा सह ऋषभशब्दस्य समासेऽद्य–अर्षभ इत्यत्र पररूपेऽद्यर्षभसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः, प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकमिदञ्च मध्येऽपवादन्यायेनावेहीत्यादौ वृद्धेरेव बाधकं स्यादिति वाच्यम्, लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ताश्रयणात् । अन्यत्र प्रतिपदविधित्वस्य बलवत्त्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च ।

---

❀ अभिनव-चन्द्रिका ❀

समासग्रहणञ्चरितार्थम् । मूलोक्तन्तु न युक्तम्, यङादिविधौ, ण्वुल्विधौ स्वार्थिकतद्धितविधौ च पदत्वेन सुबन्तत्वेन वा साक्षादवच्छिन्नोद्देश्यताकत्वस्याभावेन समर्थपरिभाषाऽनुपस्थितिप्रसङ्गादिति-

❀ चिदस्थिमाला ❀

बोध्यम् । एतेनात्रेत्यादि पदत्वाभावादित्यन्तमनूद्य–तन्न, ओत्वोष्ठादिमात्रस्याप्यन्तर्वर्तिसुपा पदत्वेन सावपि पदं भवतीति भाष्यात्पदत्वेन वा समर्थपरिभाषोपस्थितिसम्भवात् । वस्तुतस्तत्र शक्तं पदं गृह्यते, अन्यथा 'समर्थः पदे'तिसूत्रस्थभाष्यासङ्गतेरिति मन्दोक्तमपास्तम् । असम्बद्धत्वात्, द्वितीयपक्षस्यासिद्धान्तत्वात्, तत्र शक्तपदग्रहणे 'एङि पररूप'मित्यादावपि तत्प्रवृत्त्यापत्त्या प्रेजते इत्यस्यासिद्ध्यापत्तेः । भाष्यार्थानवबोधाच्चेति दिक् । अत्र चकारो व्यर्थः, नचैङीत्यनुकर्षणार्थः, अचर्ष्यादित्यादावनिष्टापत्तेस्तद्ध्वनयन्नाह–**अत्रैङीतीति** ।

हरदत्तोक्तिं खण्डयितुमाह—**न चात्रेति** । ननु प्रतिपदविधित्वेनापवादत्वात्पररूपेण दीर्घबाधोऽत आह—**प्रतिपदेति** । चस्त्वर्थे । एवमग्रेऽपि । नन्वेवमिदं व्यर्थं, शिवेहीत्यादावपि वृद्ध्याक्रान्तत्वादत आह—**इदञ्चेति** । बाध्यविशेषचिन्तेतिभावः । 'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरा'निति न्यायः । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यं तद्बीजम् । लक्ष्यैकचक्षुष्कमते, बाध्यविशेषचिन्तापक्षे च आह—**अन्यत्रेति** । हे रमे स्वाम्यि इत्यादावित्यर्थः । अत एवाधे प्रतिपदोक्तत्वात्पूर्वभेत्वे आकारप्रश्लेषाद्धल्ङ्याब्भ्यादिलोपो न प्राप्नोतीत्याशङ्क्य'एङ्ह्रस्वा'दिति लोपेन तत्समाहितम् । **बलवत्त्वे इति** । निरव-

❀ ज्योत्स्ना ❀

पररूपायत्प्रत्यय इत्यस्मदुपदर्शितप्रकारे न काचिदनुपपत्तिः । **बलवत्त्वे प्रयोजकतादर्शनेनेति** ।

❀ सदाशिवभट्टीयम् ❀

चाभावेपि हेत्वन्तरतयैव व्याख्यानं सम्यक्, बृहति तद्दर्शनात् । **स्पष्टवेति** । एवञ्च प्रयोगानुरोधाद्व्याप्तिन्यायाश्रयणमिति भावः । **अन्यत्र प्रतिपदेति** । अत्र यद्वक्तव्यं परिभाषेन्दुशेखरविवृतिसंग्रहे तदुक्तं,

❀ विषमपदविवृतिः ❀

ओत्वोष्ठयोः परत्वेनाश्रयणे हि प्रत्यासत्त्या तदुत्तरपदके समासे एवास्य प्रवृत्तिः स्यात् । अत्र त्वोत्वोष्ठयोरजेव परत्वेनाश्रितः, तेनौष्ठस्य व्रणः ओष्ठव्रणः, वृषलस्यौष्ठव्रणः—वृषलोष्ठव्रण इत्यात्रापि पररूपं भवति । न ह्यत्रोष्ठशब्द उत्तरपदं—किन्त्वोष्ठव्रणशब्दः, समर्थपरिभाषानुपस्थितेर्दन्त्योष्ठ्यो वृषलोष्ठव्रण इत्यपि प्रयोजनं योज्यम् । नह्यत्र दन्तस्य ओष्ठेन सामर्थ्यमस्ति, तयोः परस्परमनन्वयात् । एवं सङ्गस्य कार्यं–सङ्गकार्यम्, अङ्गुलेः सङ्गकार्यमङ्गुलिसङ्गकार्यमित्यत्रापि षत्वं भवत्येव । अङ्गुलिशब्दघटकेणः परस्य सङ्गमकारस्य षत्वमित्यर्थाश्रयणेन प्रकृतसाम्यात् । **ईषदर्थेति** । तेन 'निपात' इति न प्रकृतिभावः । 'ऋत्यक' इति पाक्षिकप्रकृतिभावस्तु स्यादेव । ननु आ ऋषभ इत्यत्र 'ऋत्यक' इति प्रकृतिभावे पश्चादद्यशब्देन सम्बन्धे तेन सवर्णदीर्घे च पश्चादृत्यक इत्यस्य पाक्षिकत्वादप्रवृत्तौ गुणेन अद्यर्षभीयसिद्धिरिति चेन्न । तस्मिन्नेव लक्ष्ये प्रथमं भावोपक्रमे पश्चात्प्रकृतिभावस्याभावायोगात् । अन्यथा शुशुवतुरित्यादौ वैकल्पिकत्वा'द्विभाषा श्वे'रित्यस्य पूर्वमप्रवृत्तौ द्वित्वे 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेध' इति अभ्यासलक्षणसम्प्रसारणाप्रवृत्तौ

अव्यक्तशब्दार्थो—**ध्वनेरिति** । अविद्यमानकत्वादिशब्दस्येत्यर्थः । तस्य चाच्छब्दोऽनुकरणे एव सम्भवतीत्याह—**अनुकरणस्येति** । अत्रालोन्त्यस्येति न प्रवर्त्तते, 'नानर्थके' इति निषेधात्, 'आम्रेडितस्य वे'ति वक्तव्ये 'नाम्रेडितस्ये'त्यारम्भाद्वा ।

अत इति किं ? वटगिति ।

**नाम्रेडित** । 'अव्यक्तानुकरणस्ये'ति, 'अत' इति च वर्त्तते । अव्यक्तानुकरणा-

ॐ अभिनव-चन्द्रिका ॐ

[इक्] । **कत्वादिशब्दस्येति** । अविद्यमानकादिशब्दस्येत्यर्थः । कत्वादेवर्णत्वव्याप्यजातित्वे शब्दत्वाभावात् । 'नानर्थक'परिभाषाप्रत्याख्यानेऽपि उपायमाह—**आरम्भाद्वेति** ।

ॐ चिदस्थिमाला ॐ

कार्यत्वाभावेऽपि परादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकत्वेरूपे इत्यर्थः । अत एव परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथःप्रसङ्गे परबलीयस्त्वमिति 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रस्थकैयटीयपाठः सङ्गच्छते । अत एव पूर्वत्र परग्रहणं सफलम्, अन्यथा 'एङ्येङ्'इत्येव ब्रूयात् । एतेन 'चकारस्य पुनर्विधानार्थत्वान्न दोष' इति हरदत्तोक्तमपास्तम् । ननु सूत्रे षष्ठीतत्पुरुषः ? कर्मधारयो वा ? नाद्यस्तदा तदनुकरणस्य ध्वनिरूपस्यैव सम्भवेन तस्याच्छब्दासम्भवात् । नान्त्यः, अनुकरणशब्दानर्थक्यापत्तेरितिचेन्न, तत्सामर्थ्यात्प्रथमपक्षस्यैव ग्रहणात् । नचोक्तदोषस्तत्सामर्थ्यादेव तदनुकरणस्य वर्णसमूहरूपस्यैव ग्रहणात् । नच तस्यानुकरणत्वासम्भवः, सजातीयस्यैव तत्त्वादिति वाच्यम्, सजातीये प्रत्यभिज्ञया तत्त्वस्यैव सत्त्वेनानुकरणत्वस्य दुर्वचत्वेन भेदे एव तस्य वाच्यत्वेन सर्वसाम्ये भेदाभावेन शब्दत्वादिसाम्येन तस्य तत्त्वसम्भवात्तदेतदभिप्रेत्य व्याचष्टे—**अव्यक्तेत्यादि** । अविद्यमानकत्वादीति बहुव्रीहिः । **त्याहेति** । इत्याशयेनाहेत्यर्थः । **अनुकरणस्येतीति** । परिस्फुटाकारादिवर्णकस्येत्यर्थः । तत्प्रत्याख्याने ऽाह—**आम्रेडितेति** । तस्य तदन्यव्यावृत्त्यर्थत्वस्य स्फुटत्वादाह—**वटगितीति** । एतेन प्राचोक्तं चिन्त्यमिति ध्वनितं, यथा चैतत्तथा स्पष्टमन्यत्र । चेनेताविलस्य समुच्चयः । 'सूत्रमनुवर्तत' इति वक्तव्ये एवमुक्तिर्वैचित्र्याय, पूर्वतोऽत्र विलक्षणान्वयो द्वयोरिति सूचनाय च, तथाहि—सा चाम्रेडितस्येत्यनेन व्यधिकरणषष्ठी, साचान इत्यनेनेति, तदेवाह—**अव्यक्तेति** । ननु मूलेऽन्त्यस्य तकारमात्रस्येति व्याख्यानेन तथैव सूत्रे

ॐ ज्योत्स्ना ॐ

वस्तुतस्त्वन्तरङ्गन्यायमूलकं प्रतिपदविधेर्बलवत्त्वमिति **परिभाषाप्रदीपार्चिःप्रदर्शितरीत्यनुसरणे** नास्ति दोषस्योक्तिसम्भव इति बोध्यम् । **अनुकरण एवेति** । नचैवमनुकरणस्येति व्यर्थम्, तदभावे

ॐ सदाशिवभट्टीयम् ॐ

वक्ष्यते चाम्रेऽपि । **अव्यक्तानु** । अविद्यमानेत्यादिबहुव्रीहिपूर्वपदः कर्मधारयः । **इत्याहेति** । इत्याशयेनाहेत्यर्थः । **अत इति किमिति** । इदं चिन्त्यम्, तदभावे विशिष्टानुकरणस्यादेशः प्राप्नोतीति प्रश्नस्य निरालम्बनत्वादिष्टस्यैवासिद्धेः । **मूले पटितीति** । अत्रैकदेशविकृतन्यायेन पदत्वाज्जश्त्वं न, अचः परेति स्थानिवत्त्वादज्झल्स्थानिकत्वेपि अज्मात्रस्थानिकत्वात, कृष्णार्द्धिरित्यादौ ऋवर्णस्थानिकत्ववत् । नपदान्तेतिनिषेधस्तु परपदमात्रस्याजादेश एव, अत एव घटानयनमित्यादौ जश्त्वादि नेत्याहुः ।

**नाम्रे । अत इति चेति** । चेनेताविति सूत्रमनुवर्त्त इति तु वक्तव्यम् ।

ॐ विषमपदविवृतिः ॐ

पश्चाद्विभाषा श्वोरित्यस्योत्तरखण्डे प्रवृत्तौ शिशुवतुरिति रूपापत्तेः । अव्यक्तशब्दस्य ध्वनौ योगं दर्शयति—**अविद्यमानेति** । अविद्यमानं व्यक्तं—कत्वादिधर्मो—यत्र सोऽव्यक्त इति विग्रह इति भावः । **अनुकरण एवेति** । तथा च सूत्रेऽनुकरणशब्दः स्पष्टार्थ इति भावः । 'अत इति किं वट'गित्यप-

वयवीभूताम्रेडितावयवाच्छब्दस्येत्यर्थः। 'नाम्रेडितस्य तस्तु वे'ति न सूत्रितं, वैचित्र्यार्थम्। फलकल्पनाभिनिवेशस्तु न युक्तो, भाष्यानुक्तेः। अत एव 'तदधीते तद्वेदे'ति सूत्रे 'द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्ये'ति भाष्ये उक्तम्। 'लाघवानवधानलक्षणोऽत्र प्रमाद' इति कैयटः। क्व तदवधानं? क्व तदनवधानमिति तु—भाष्यकृदुक्तप्रयोजनं तदवधानमन्यत्रान्यदिति निर्णेयम्। ननु डाचोऽभावादेतदप्राप्तिरत आह—**बहुलवचनादिति।**

**तस्य परम्।** अवयववाचिपरशब्दयोगेऽत एव ज्ञापकात्षष्ठी। 'तस्य'ग्रहणं

॥ अभिनव-चन्द्रिका ॥

ज्ञापकादिति। परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन परत्वेऽवधितयाऽन्वयविवक्षायां पञ्चमी, अवयवत्वे निरूप्यनिरूपकभावसम्बन्धेनान्वयविवक्षायां षष्ठीति भावः। अवयवत्वविशिष्टपूर्वत्वावच्छिन्नवाचकपूर्वशब्देऽप्येवम्बोध्यम्। अत एव परन्नाभेः कायस्य, पूर्वन्नाभेः कायस्येत्यादिप्रयोगाः।

॥ चिदस्थिमाला ॥

कार्ये एव सूत्रवैयर्थ्यापत्तिर्दोषोऽत आह—**नाम्रेडीति।** तत्र हेतुगर्भं विशेषणमाह—**वैचित्र्यार्थमिति।** पदलाघवाभावेन मात्राप्रतिपत्तिलाघवसत्त्वेऽपि सर्वत्र तथैव वाच्यमित्येवंरूपनियमाभावसूचनार्थमित्यर्थः। यत्तु "नाम्रेडितस्येत्यंशस्यान्वाचयशिष्टत्वज्ञापनार्थं तथोक्तं, तेन पटत्पटदित्यादावन्त्यस्य वा पररूपं भवत्येव, एतेन नाम्रेडितस्य अन्त्यस्य वेति योगद्वयेनैव पूर्वस्य नित्यत्वे उत्तरस्य वैकल्पिकत्वे च सिद्धे तुशब्दो व्यर्थ इत्यपास्तम्। निषेधोऽच्छब्दमात्रविषयो, द्वितीयं तकारान्तकाराद्यन्तमात्रविषयमिति विषयविशेषस्य स्पष्टतया बोधनार्थं तस्य सत्त्वात्, एवञ्च 'पट पट इत्याहे'त्यादावन्त्याकारस्य परस्य पररूपे 'पटपटेत्याहे'—त्यपि पक्षे बोध्य—"मिति, तत्खण्डयति—**फलेति।** इदं द्रढयति—**अत एवेति।** अन्यथा तत्रापि तदनुक्तस्य फलस्य सम्भवात्तदसङ्गतिः स्पष्टैव। वृद्धिसूत्रस्थभाष्याविरोधाय प्रकृतसङ्गमये चाह—**लाघवेति।** अतति प्रसङ्गात् आह—**क्वेति।** अत एव तुग्रहणं वैलक्षण्यायावश्यकमिति तत्रापि न तथा प्रयोगः पक्षे इति बोध्यम्।

**एतदिति।** डीप्त्याद्यभावान्नित्यवीप्सयोरित्यस्याप्राप्तिरेवेति भावः। ननु परशब्दस्य दिशि दृष्टत्वेन पञ्चम्युचिताऽत आह—**अवयवेति। त एवेति।** निर्देशरूपादेवेत्यर्थः। यत्तु तस्य ग्रहणमनेनात्प्रकरणद्विरुक्तपरस्यैव सञ्ज्ञा यथा स्यात्, प्रकरणान्तरद्विरुक्तपरस्य माभूदित्यर्थम्। अन्यथा (मूलोक्त) व्याख्यानरीत्या वैयर्थ्यं स्पष्टमेवेति, तत्खण्डयति—**तस्येति।**

॥ ज्योत्स्ना ॥

भभदन्ताद्युच्चारिताव्यक्तशब्द एव स्यादिति भावः। **फलकल्पनाभिनिवेशस्त्विति।** नाम्रेडितस्येत्यंशस्यान्वाचयशिष्टत्वद्वारा पटत्पटदितीत्यादौ पररूपमन्त्यस्य भवतीत्येवंरूप इत्यर्थः।

ननु द्विस्तद्ग्रहणमधीयान-विदुषोः पृथग्ग्रहणार्थम्, अन्यथा यस्तदधीते वेद च तत्रैव स्यादिति वृत्तिकारादिभिर्द्विस्तद्ग्रहणस्य प्रयोजनमुक्तमेवेत्यत आह—**क्व तदवधानमित्यादि। पाठावृत्त्येति।**

॥ सदाशिवभट्टीयम् ॥

**फलकल्पनेति।** नाम्नेडितेत्यंशस्यान्वाचयशिष्टत्वज्ञापनद्वारा 'पटत् पटदिती'त्यादौ पररूपमन्त्यस्य भवतीति फलकल्पनाभिनिवेश इत्यर्थः। **तस्य प। सिद्धेरिति।** पूर्वाभ्यास इत्यत्रैवेति भावः। अन्योऽपेक्षितं फलमन्यथा साधयति—**अन्यदिति।** तस्य सञ्ज्ञायां 'शुद्रसन्निभ' इत्यादौ 'आम्रेडितं भर्त्सने' इति प्लुतापत्तिरित्याहुः।

॥ विषमपदविवृतिः ॥

पाठः। शङ्कासमाधानयोर्निर्दलत्वात्। **फलकल्पनेति।** पटदितीति शब्दान्तस्यानुकरणे द्वित्वे

स्पष्टार्थं, 'द्वे' इत्यनुवर्त्य षष्ठ्या विपरिणामेन सिद्धेः। अन्याद्विरुक्तपरस्य तु न सञ्ज्ञा, अष्टमे 'सर्वस्ये'त्येतत्प्रकरणे सञ्ज्ञाकरणात्।

**झलाञ्ज**। अन्तग्रहणं 'झली'ति निवृत्त्यर्थम्। सर्वोपकारकतया च प्रकरणान्तेऽस्य लेखः। एतेन 'श्र'दित्यत्रैव लेख उचित इत्यपास्तम्।

अज्झलोः सावर्ण्यनिषेधादाह—**अचि किमिति। अनिष्पत्तेरिति**। 'नाज्झला'-विति सूत्रविषयनिर्णयेऽपवादविषयपरिहारेण तत्तद्वर्णीयसवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रबोध्यतया एतद्बोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वानिष्पत्तेरित्यर्थः।

---

❀ **अभिनव-चन्द्रिका** ❀

स्सज्ञच्छन्ने। अत एव रेफानुस्वारैर्चामवयवत्वावच्छिन्नविधेयताश्रयत्वरूपागमत्वसिद्धिरिति दिक्।

**विपरिणामेनेति**। पूर्वोऽभ्यास इत्यत्रेवेति भावः। मूले **पदान्त इति**। पदान्तानां झलामित्यर्थः। अन्यथा सरितावित्यादौ पदान्तो यत्ताविति तत्र विद्यमानत्वाज्झलो जश्त्वं दुर्वारं स्यादिति बोध्यम्। **परिहारेणेति**। अपवादशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचेनेत्यर्थः। प्रकृते च सङ्कोचप्रकारं पूर्वमेवावोचाम। **अनिष्पत्तेरिति**। असम्भवादिति भावः। तथा हि सवर्णपदशक्तिनिश्चयस्य अणुदित्सूत्रजबोधे कारणत्वेन नाज्झलाविति शास्त्रजबोधाधीनत्वेन तत्कालेऽष्टादशबोधकारणत्वस्याणुदित्सूत्रेऽसम्भवादिति।

❀ **विदस्थिमाला** ❀

उक्तफलस्यान्यथासिद्धिमाह—**अन्येति**। प्रकरणान्तरे इत्यर्थः। ननु स्कोरित्यतोऽन्तपदानुवृत्तिः क्लृप्तैवेति न व्यर्थमत आह—**अन्तेति**। 'पुन'रित्यादिः।

**झलीति**। तेन तदाकाङ्क्षेण पदस्येत्यस्यैव सम्बन्धः सूचितो न तस्योक्तरीत्येति पदान्त इत्यस्य लाभः। एतेन फलान्तरं कैश्चिदुच्यमानं निरस्तम्। ननु श्रदित्यत्रैवेदं लेख्यमत आह—**सर्वोपेति च**। **चो** वाक्यालङ्कारे। हल्सन्धिप्रकरणे स्मर्यमाणत्वादाह—**लेख इति**। प्रथमोपस्थितत्वाद्वैपरीत्यं न। एतेन तथा केषांचिदुक्तिः, शिशपाचोद्यमेतदित्युक्तिश्च परास्ता। ननु वाक्यार्थज्ञाने पदार्थज्ञानस्याभावज्ञाने प्रतियोगिज्ञानस्य च कारणत्वेनोभयतः प्राग्विधिवाक्यार्थज्ञानस्यावश्यकत्वेऽपि निषेधवाक्यार्थज्ञानानपेक्षत्वात्कथमिदमत आह—**नाज्झलावितीति**। **पवादेति**। निषेधस्यापि बाधकतासाधर्म्येण तत्त्वव्यवहारादिति भावः।

**वाच्येति**। तत्प्रकारकनिश्चयोत्तरमित्यर्थः, तद्वाच्यस्य निश्चयोत्तरमित्यर्थो वा। अनेन सामान्यतः ततः प्राग्बोधोऽस्त्येवेति सूचितम्। **बोध्यतेति**। विषयभेदेन बाधकासम्भावनया प्रतिबन्धकाप्रामाण्यसन्देहाभावात्प्राक् निषेधपर्यालोचने तु बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन तस्य प्रतिबन्धकत्वेनाणु-

❀ **सदाशिवभट्टीयम्** ❀

'तस्य' ग्रहणाभावे 'क्षिप्रक्षुद्राणां पर'मित्यादिनिर्देशादवयववाचियोगे षष्ठीति बोध्यम्। **झलाञ्ज**। **निवृत्त्यर्थमिति**। स्कोर्ग्रहणं तत्सम्बन्धेपीतरव्यावर्त्तकमिति निवृत्तिबोधने समर्थम्। अत एव 'दधस्तथोश्चे'ति सूत्रे भाष्ये 'झली'त्यनुवर्त्य 'तथोश्चे'ति प्रत्याख्यातम्। 'झलीति मण्डूकप्लुत्यानुवर्तत' इति तत्सूत्रीयोद्योतस्तु पक्षान्तरपरः। 'तत्सामर्थ्यात्तन्निवृत्ते'ति वक्ष्यमाणमूलन्तु सूत्रमते इति बोध्यम्। तदनुवृत्तिस्तु 'क्विन्प्रत्ययस्य कु'रित्यादावनिष्टार्थैव स्यादिति भावः। नन्वेवं 'क्विन्प्रत्ययस्य कुरन्ते' इति न्यस्यतां, प्रकृते च झलीत्यस्य सम्बन्धोऽस्तु, एवञ्च झशि विधायकम्मास्तु, खरि तु चर्त्वे न विशेषः। झपरे पदान्तो झल् तु असम्भवी, अभ्यासे चर्चेत्यादिचतुःसूत्री त्विहैव पाठ्या, तत्रैव वा, जश्पदं झलामिति च न कर्त्तव्यमिति चेन्न। तथा सति बुद्ध्युपास्य इत्यादौ द्वित्वस्यासिद्धत्वे झलो झल्परत्वाभावेन जश्त्वानापत्तेः। षड्स्वित्यत्रेव शुष्कं इत्यत्र जश्त्वापत्तेश्च। खरि चर्त्वस्य झलि जश्त्वापवादत्वे तु पक्वादौ दोषो बोध्यः। ननु 'झष-

सूत्रस्थसवर्णपदानुवृत्तिमभिप्रेत्याह—**ऋति सवर्ण इति ।** तत्फलं दध्यृकारादावेतदप्रवृत्तिः । एतद्विधेययोरइउणसूत्रानन्तरं पाठादच्त्वं, तेन तयोः स्थाने प्लुतसिद्धिस्तयोश्च न रपरत्वम् । **द्विमात्रमिति ।** अत एव 'अकः सवर्णे' इत्यनेनैव ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदाचिद्रेफद्वयगर्भस्य, विवृतत्वान्तर्येण कदाचिद्विवृतस्य, ऌकारे ऌकारवत्तान्तर्येण कदाचिद्द्विऌकारस्य, कदाचिद्विवृतत्वसाम्येन

### ॐ अभिनव-चन्द्रिका ॐ

**न रपरत्वमिति ।** अणुदित्सूत्रानन्तरमेतयोः पठेनाण्त्वाभावादिति भावः । **अत एवेति ।** द्विमात्रिकत्वादेवेत्यर्थः ।

### ॐ चिदस्थिमाला ॐ

दित्सूत्रजबोधानापत्तिः । नहि नाज्झलाविति वाक्यार्थबोधात्प्राक् सवर्णपदबोध्यनिश्चयस्तथा च विधिवाक्यार्थबोधस्य निषेधीयात्ततः प्रागावश्यकत्वेऽपि तन्निश्चयाभावात्तत्र तदप्रवृत्तिरिति भावः। **यैतदिति ।** नाज्झलाविति प्रकान्तेत्यर्थः । एतेन स्वरूपतस्तस्य सत्त्वेन मूलमयुक्तमित्यपास्तम् । ननु वार्तिकपाठो न तथा, किञ्च तथा सत्यग्रे पुनस्तदुक्त्यसङ्गतिरत आह—**सूत्रस्थेति ।** एवञ्चाग्रेऽपि स्पष्टार्थं तदुल्लेखः । **तत्फलमिति ।** अन्यथाऽक इत्यनुवृत्तेस्तत्रापि स्यादिति भावः । नन्वनयोः प्रसिद्धतो भेदेन कथमच्त्वादि, अन्यथा वार्तिकवैयर्थ्यमेवात आह—**एतदिति ।** यत्त्वनयोरयोगवाहेषु पठेनाच्त्वात्प्लुतसिद्धिरिति **कौस्तुभकारादयस्तत्र,** अनयोः प्रयोगविशेषनिष्ठत्वेन बहुप्रयोगानिर्वाहकत्वेन तत्सञ्ज्ञायां मानाभावाद्गौरवात्, आश्रयस्थानत्वापत्तेः, हान्त्कारादौ रपरत्वापत्तेश्च । अत एव परिगणनं भाष्योक्तं सङ्गच्छते, तदेतद्ध्वनयन्नाह—**अइउण्सूत्रेति ।** **च नरपेति ।** रपरत्वाभावश्चेत्यर्थः । तत्र मानमाह—**अत एवेति ।** द्विमात्रत्वादेवेत्यर्थः । 'प्रत्याख्यान'मित्यत्रान्वयः । एतेन 'दीर्घे प्राप्ते ह्रस्वो विधीयते' इति प्राचोक्तमपास्तम् । स्थानत आन्तर्यस्याविशिष्टत्वादाह—**रेफद्वयेति ।** प्रत्येकमेकरेफत्वादिति भावः । **गुणेति ।** तत्र गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रस्य ग्रहणादिति भावः । **रेफद्वयेति ।** अस्यैकस्य तद्वत्त्वात् । उक्तहेतोरेवाह—**विवृतेति ।** दीर्घविधेर्ह्रस्वा-

### ॐ ज्योत्स्ना ॐ

स्वतन्त्रऋकारऌकाराभ्यामनयोर्ग्रहणं तु न भवति, तयोर्विवृतत्वादनयोश्चेषत्स्पृष्टत्वात् प्रयत्नभेदात् । अनयोरर्धतृतीयमात्रत्वमिति मतेऽप्यूकालोऽज्झिति भाष्योक्तयोगविभागेन 'य ऊकालः

### ॐ सदाशिवभट्टीयम् ॐ

स्तथो'रिति सूत्रे भाष्येऽत्वान्त इति योगविभागमाश्रित्य तत्रत्यमथ इति प्रत्याख्यानकथनस्य झलीति निवर्तने सामर्थ्यमिति चेन्न । तदभावेपि 'जश् झला'मिति योगविभागेन तत्प्रत्याख्यानसम्भवादिति दिक् । **अकः स ।** **अपवादेति ।** बाधकसाम्यान्निषेधेऽप्यपवादत्वव्यवहारः । **अइउण्सूत्रेति ।** **ऋलृक्सूत्रानन्तरम्पठतो रत्नाकरस्याशयश्चिन्त्य** इति भावः । **नरपरत्वमिति ।** अनयोरयोगवाहत्वमङ्गीकुर्वतः **कौस्तुभकृतो** मते तु रपरत्वापत्तिस्तेषामिकारात्प्राक्पाठादिति भावः । **विवृतत्वसाम्येन रेफवत्तासाम्ये-**

### ॐ विषमपदविवृतिः ॐ

**पटदिति** पटदितीत्यत्राम्रेडितघटिततकारस्य द्वित्वाभावः अन्त्यस्येत्यस्य फलमिति **फलकल्पना-**भिनिवेश इत्यर्थः । **अइउण्सूत्रानन्तरमिति ।** इदं चिन्त्यम् ' तयोरिक्प्रत्याहारे प्रवेशापत्तेः । ऋलृक्सूत्रानन्तरं तयोः पाठस्तूचितः । **ऌकारे इति ।** 'ऋकारात्परत' इति शेषः । **तादृशस्येति ।**

रेफवत्तासाम्येन च तादृशस्य ऋकारस्य सिद्ध्या विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयं 'तुल्यास्ये'ति सूत्रे भाष्ये प्रत्याख्यातम् ।

**द्वौ रेफाविति ।** अत्रापि तदेव भाष्यं मानम् । द्विरेफत्वे हि रेफद्वयवति स्थानिन्ययं, लकारवत्यपर इति व्यवस्था सिद्ध्यति । **अभित इति ।** 'द्वौ रेफा'वित्यनुषज्यते, तच्च द्वितीयान्तम् , अभितः पदयोगात् ।

एओङ्सूत्रे भाष्ये मातॄणामित्यादौ णत्वादिसिद्ध्यर्थमवश्यमङ्गीकर्त्तव्ये 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति पक्षे—प्रऌय खट्वाभिर्वाचा तरतीत्यादौ तुगैस्द्वयज्लक्षण-

॥ अभिनव-चन्द्रिका ॥

**सिद्ध्येति ।** विनिगमनाविरहेण मूर्धस्थानजन्यत्वविशिष्टविवृतत्वस्य, मूर्धस्थानजन्यत्वविशिष्टरेफद्वयवत्त्वस्य च आदेशद्वयनियामकत्वादिति भावः । एवं ऌकारांशेऽपि मूर्धस्थानजन्यत्वविशिष्टविवृतत्वस्य दन्तस्थानजन्यत्वविशिष्टलकारद्वयवत्त्वस्य चादेशद्वयनियामकत्वं बोध्यम् । वार्तिकद्वयविधेययोरभितोऽज्भक्तिसत्त्वे प्रमाणमाह—**एओङ्सूत्रे इत्यादि । अत एवेति ।** ह्रस्वऋकारद्वयस्थानिकमेव पूर्ववार्त्तिकविधेयं साधु । एवं ह्रस्वऋकार–ह्रस्वऌकारोभयस्थानिकमेव पर-

॥ चिदस्थिमाला ॥

ऽप्राप्त्याऽन्त्यस्य दीर्घस्याभावादाह—**द्विलकारस्येति ।** सम्भवादाह—**रेफेति । प्रत्येति ।** अन्यथा तदसङ्गतिः स्पष्टैव । एतेन 'वार्तिके सवर्णपदस्यावश्यकत्वेन सूत्रेऽकीत्यस्य करणे विपरीतं गौरव'मिति 'सुवचो'-परि **खण्डनकृदुक्तम्** , 'उक्ताशयस्तु न भाष्यविरोधान्नहि दीर्घसंज्ञार्थं वर्णसमाम्नाये पाठः कर्तव्य इति भाष्यं सङ्गच्छते' इति **रत्नाकरोक्तश्चापास्तम्** । तदेव=उक्ततुल्यास्यसूत्रस्थमेव । तदेवाह-**द्विरेफेति** । हि=यतः । अन्यथा प्रत्याख्याने विवृतत्वसाम्यस्यैकरेफवत्त्वसाम्यस्य चाविशेषादव्यवस्थैवानयोर्मिथः स्यादिति भावः । तसन्तं भक्तेर्विशेषणं नतु विशेष्यमिति साकाङ्क्षत्वादाह—**द्वाविति** । पूर्वत्र प्रथमान्तत्वादाह—**तच्चेति** । 'अभित' इत्यस्य यद्यप्युभयतः इत्यर्थस्तथाप्यत्र लक्षणया सर्वत इत्यर्थः । अत एवाज्भक्तेरित्येकवचनम् , अन्यथा तदसङ्गतिः स्पष्टैव, तदेतद्ध्वनयन्–इदानीमन्यथालेखसत्त्वादभित इत्युक्तमिति शङ्कामपनुदति—**एओङिति । 'सूत्रे'** इत्यस्य भाष्ययोरन्वयः । 'भाष्ये' इत्यस्य–करणादावन्वयः । आदिभ्यां चक्ऌपे आनृजे इत्यादौ लत्वादिपरिग्रहः । यद्यपि सन्ध्यक्षरेष्वपि दोषस्तथापि वक्ष्यमाणरीत्या तत्र परिहारासम्भवात्प्रकारान्तरेण भाष्ये परिहारादत्र त्यागस्तदेतद्ध्वनयन्नाह—**प्रऌयेति । शङ्काया इति ।** 'करणव'दित्यत्रान्वयः।

॥ सदाशिवभट्टीयम् ॥

**न चेति ।** अन्यतरोक्तावीषत्स्पृष्टऋकारोपि स्यादिति भावः । **प्रत्याख्यातमिति ।** द्विमात्रत्वाभावे दीर्घसञ्ज्ञाभावात्तदसङ्गतमेव स्यादिति भावः। **व्यवस्था सिध्यतीति ।** ननु लकारवति पूर्वोक्तरीत्या विवृतत्वरेफवत्त्वसाम्याद्विवृतऋकारः, ईषत्स्पृष्टऌकारस्तु लकारवत्त्वसाम्यात्स्यात् । ईषत्स्पृष्ट ऋकारस्तु रेफवत्वसाम्यात्प्राप्नोति नान्तरतम इति कथं सङ्करप्राप्तिरिति चेन्न । एकरेफवत्त्वे ह्युक्तरीत्या रेफवति (-लकाररेफवति-) लकारवति चास्याप्राप्त्याक्षरसमाम्नाये पाठसामर्थ्येन भवन्नव्यवस्थया स्यादित्याशयात् । द्विरेफत्वे तु सामर्थ्यविरहेण न सङ्कर इति भावः । यद्वा स्थानेन्तरमे इति सप्तम्यन्तपाठे द्विरेफवत्त्वाभावे सङ्करः प्राप्नोति, यथा 'होतृ ऌकार' इत्यत्रैकरेफवत्त्वाद्धोतृ ऋकार इत्यत्र लकाराभावत्वादन्यतरगुणकृतान्तर्यमादायोभयत्रापीषत्स्पृष्टप्रवृत्तेरिति । **'अभित' इतीति ।** अभित इत्यस्य यद्यप्युभयत इत्यर्थस्तथापीह

॥ विषमपदविवृतिः ॥

विवृतत्वादिमत इत्यर्थः । **प्रत्याख्यातमिति ।** 'ऌऋवर्णयोः सावर्ण्यमाश्रित्ये'ति शेषः । **ननु** ऋकारस्य लकारे परे विवृतऋकार एव स्यान्नत्वीषत्स्पृष्टऌकारः, ततोऽपि विवृते धर्मद्वयकृतान्तर्येणान्तरतम-

गानां शङ्कायाः,'दीर्घा'दिति तुग्विधानसामर्थ्य-तपरकरणसामर्थ्य-नौद्यच इतिसूत्रस्थनौग्रहणसामर्थ्यैर्भेदेनाप्रतिभासमानेषु वर्णावयवेषु अवयवसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत्—प्रातर्ऋतमित्यत्र रोरीत्यस्य तद्लृकार इत्यादौ तोर्लीत्यस्य च शङ्कासमाधानाकरणेन 'यत्तद्रेफात्परं भक्ते'रिति हयवरट्सूत्रस्थभाष्येण च ऋलृ-

ॐ चिदस्थिमाला ॐ

**दीर्घादितीति।** योगविभागेनेति भावः। विशिष्य ज्ञापने गौरवान्नान्यपवृक्तस्येति वार्तिकैकवाक्यतया आह—**भेदेनेति।** अकरणे दृष्टान्तः—**करणवदिति। शङ्केति।** शङ्कासमाधानयोरकरणेनेत्यर्थः। नन्वेवमपि पूर्वत्रैवाज्भागसत्तासिद्धिरत आह—**यत्तदिति।** रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ। इति भाष्येण

ॐ सदाशिवभट्टीयम् ॐ

सर्वत इत्यर्थो बोध्योऽत एव भक्तेरित्येकवचनं सङ्गच्छते। **सामर्थ्यैरिति।** इदञ्चिन्त्यम्—द्वन्द्वे इति शब्दद्वयप्रवेशः कथमिति। शङ्कासमाधानयोरकरणेनेत्यर्थकैकदेशे षष्ठयन्तद्वयार्थस्यान्वयमभिप्रैति। नन्वेवमादितस्तद्भागोऽस्तु, परत्र तु तत्सत्त्वे किम्मानमत आह—**यत्तदिति।** रेफाद्भक्तेरित्येते समानाधिकरणे पञ्चम्यौ। रेफरूपभागात्पर यत्तेन व्यवधानादित्यर्थः। '**हयवरट्सूत्रस्थे**'त्यपपाठः, एओङ्सूत्रस्थत्वादस्य।

**भाष्येण चेति।** चेन 'कुलङ्कृतं रमत' इत्यत्र रोरीत्यस्य, लकार इत्यत्र यणो मय इत्यस्य च शङ्कासमा-

ॐ विषमपदविवृतिः ॐ

त्वात्। एवं गमॄनित्यत्र लकारवत्तान्तर्येणेषत्स्पृष्टो दुर्वार इति चेन्न। ऋलृक्सूत्रानन्तरं पाठस्य होॡकार इत्यत्राच्त्वासिद्धिद्वारा प्लुतार्थत्वेन पाठसामर्थ्येन यत्किञ्चिदान्तर्यपरिपन्थिदीर्घलकारस्य लक्ष्ये प्रवृत्त्यङ्गीकारात्। गमॄनित्यत्र त्वीषत्स्पृष्टस्य शङ्कैव नास्ति, पूर्वसवर्णत्वाभावात्। एवं धातॄणामित्यत्रेषत्स्पृष्टदीर्घस्य न शङ्का, रेफद्वयाघटितत्वविवृतत्वरूपधर्मद्वयकृतान्तर्यस्य विवृते एव सत्त्वात्।

ननु 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः। यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥ अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ। दुस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव चेति' शिक्षाविरोधः, ईषत्स्पृष्टयोरनयोराधिक्यात्। तत्र दुःस्पृष्टो ऌकारो मातृकान्यामेपि, नैतौ परिगणितौ। तथा हि तत्र षोडश स्वराः, पञ्चविंशतिः स्पर्शाः, यादयोऽष्टौ ल–क्षेति द्वयं, मङ्कलनयैकपञ्चाशद्वर्णा भवन्तीति चेन्न। तुल्यास्यसूत्रस्थभाष्यवार्तिकप्रामाण्येनैतयोरपि तत्र पूरणात्। यथाऽऽम्नायेमातृकापाठे चाविद्यमाना अपि यमा उक्तशिक्षाबलाद्वर्णराशिषु पूर्यन्ते तथा शिक्षायामपरिगणितोऽपि दीर्घऌकारो मातृकापाठे पठ्यते। परे तु त्रिषष्टिश्चतुःषष्टिर्वेति सङ्ख्या धर्मकृता न तु व्यक्तिकृता, वर्णानां प्रत्युच्चारणे भेदपक्षेऽसम्भवात्। तथा चामितोऽज्भक्तिसंहितरेफघटितत्वतादृशकालघटितत्वरूपधर्माभ्यां द्वाभ्यां विवृतयोरीषत्स्पृष्टयोश्च ऌकारवर्णयोर्द्वित्वम्। एवमेव त्रिमात्रचतुर्मात्रयोः 'प्लुतावैच इदुता'विति सूत्रे भाष्ये विस्पष्टमुक्तयोरेओङ्सूत्रभाष्येण 'त्रिमात्रचतुर्मात्रा आदेशा माभूव'न्नित्यनेन सूचितयोर्द्विमात्राधिकत्वेनानुगमेन प्लुतमध्येऽन्तर्भावान्नाधिक्यम्। मत्तभिधाने गमॄणामित्यत्र विवृतत्वसाम्येन विवृतो दीर्घऋकारो लकारवत्तान्तर्येणेषत्स्पृष्टऋकारश्च पर्यायेण भवतः। एवं मातृकापाठे पठितोऽपि दीर्घऌकारो विवृतो न भवति, तस्योच्चारयितुं शक्यत्वेपि तुल्यास्यसूत्रस्थभाष्यकैयटप्रामाण्येन तस्य शास्त्राविधेयत्वात्। मात्रिक एकारस्तु उच्चारयितुमशक्यत्वान्नास्त्येवेत्याहुः। **रेफात्परं भक्तेरिति।** रेफाद्भक्तेः परं न तत्क्वचिदपि व्यपवृक्तमिति तदर्थः। एतद्भाष्येण तु रेफात्परतोप्यज्भक्तिरस्तीत्यागतम्। **हयवरट्सूत्रस्थेति।** एओङ्सूत्रस्थेत्युचितम्।

क्सूत्रस्थयोरर्धमात्राऽभागस्यामितः क्लृप्तत्वेन तथैवोचितत्वादिति भावः । **द्वौ लकाराविति** । हल्द्वयवत्पूर्वसाहचर्यादिति भावः । अत्र ह्रस्वऋकारद्वयस्थानिकैकादेशे एव पूर्वस्य साधुत्वं, ह्रस्वऋकारलृकारस्थानिकैकादेशे एवोत्तरस्य साधुत्वम् । अत एव लृति न ऋकारो नाप्यृति लृकारः । अत एव वार्तिके ऋतीति तपरकरणमुत्तरवार्तिके लृतीति च चरितार्थम् । तुल्यास्यसूत्रे भाष्ये यदेतदृतीति एतदृत इति वक्ष्यामीत्येतत्, वचनाश्रयणेन ऋलृवर्णयोः सावर्ण्यं न कार्यमिति च सङ्गच्छते । उपस्थितरेफीयप्रयत्न-

ॐ **अभिनव-चन्द्रिका** ॐ

वार्त्तिकविधेयं साधु इति स्वीकारादेवेत्यर्थः । अत्रैव प्रमाणमाह—**अत एवेत्यादिना**। **भाष्यादावुक्त-**

ॐ **चिदस्थिमाला** ॐ

चे'ति पाठः । 'इति 'हयवरट्' सूत्रस्थभाष्येण चे'त्यपपाठः, मूलाशुद्धेः । इदञ्च तत्रैवाग्रहणपक्षे 'रषाभ्या' मित्यत्र ऋकारग्रहणं कर्तव्यं, ग्रहणपक्षे 'रषाभ्या'मित्येव सिद्धमित्युक्त्वा—न सिध्यति यत्तरेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोतीत्युक्तम् । अर्धमात्रेति बहुव्रीहिः, तद्ध्वननायैवाह—**अज्भागस्येति । तथैवोचीति** । क्लृप्तकल्पनेति न्यायेन प्रकृतेऽपीति भावः । अत्र तथा गमकाभावादाह—**हल्द्वयवदिति** । वार्तिकपक्षेऽतिप्रसङ्गं निराचष्टे—**अत्रेति** । अनयोर्मध्ये इत्यर्थः । **कादेशे इति** । प्राप्ते इति शेषः । पक्षे इति भावः । एवमग्रेऽपि । तथा भाष्योदाहरणात् । एतेन गम्लृलकार इत्यादौ चरितार्थमुत्तरवार्तिकं तत्र न प्रवर्तेतेत्यपास्तम् । अस्य फलान्तरमाह—**अत एवेति** । तथैव साधुत्वाङ्गीकारादेवेत्यर्थः । यत्त्वयमर्थो व्यवस्थितविभाषया लब्ध इति, तन्न, तासां परिगणनात्, तदेतद्ध्वनयन्नन्यथा स्थलत्रये मानान्याह—**अत एवेति** । उक्तार्थस्येष्टत्वादेवेत्यर्थः । अस्योभयत्रान्वयः ।

**वार्तिके इति** । 'आद्ये' इत्यादिः । यदि दीर्घेऽपि परतः स्यात्तर्हि तदानर्थक्यं स्पष्टमेव । इदमुपलक्षण-मुत्तरस्यापि । लृग्रहणस्यावश्यकत्वादाह—**लृतीति** । यदि तपरकरणाद्दीर्घे परतोऽप्रवृत्तावपि तत्काल-सवर्ण-सर्वग्रहणात्सङ्करः स्यात्तर्हि विधेयद्वयकमाद्यवार्तिकमेव कार्यमिति भावः । नन्वेवमप्युभयत्र प्रथमह्रस्वस्यैव न लाभोऽत आह—**तुल्यास्येति** । **इत्येतदिति** । उक्तहेतोरुक्तवचनद्वये इत्यर्थः । सावर्ण्यस्य होतृ-लकार इत्यत्र दीर्घसिद्धि फलमुक्त्वा अनेनैव सिद्धिमुक्त्वा सवर्णे इत्यनुवर्त्यमन्यथा दध्युरादावतिप्रसङ्ग इति सावर्ण्यमवश्यमङ्गीकार्यमित्युक्त्वा यदेतदित्यादि—ऋकारस्य ऋकार एव सवर्ण इति ऋत्येव भविष्यतीत्याशयकमुक्त्वा—ततो 'लृति लृवा' 'ऋत' इत्येव, इदञ्चासवर्णार्थं, तेन लृति रूपद्वयं सिद्धमिति सावर्ण्यं न कार्यमिति पूर्वपक्षिणोक्तञ्च सम्मतं सङ्गच्छते चेत्यर्थः । उभयत्राद्ययोर्दीर्घयोर्ग्रहणे तु तदरुङ्गतिः स्पष्टैव । एतदेकवाक्यतयैव प्रागुक्ते सिद्धान्तभूतैतद्वचनद्वयप्रत्याख्यानपक्षेऽपि न कोऽपि दोषः । एतेन गृमॄन् गमॄणां धातॄणामित्यादावेतौ दुर्वारावित्यपास्तम् । षाष्ठकैयटाद्युक्तसंवृतत्वनिरासायाह—**उपेति** । एतेन यः

ॐ **ज्योत्स्ना** ॐ

स एवाच्सञ्ज्ञको भवतीत्यर्थेन सञ्ज्ञानिषेधादिति भावः । **उत्तरस्य साधुत्वमिति** । व्यवस्थितविभाषाश्रयणादिति भावः । ननु भाष्यकृत्परिगणितातिरिक्ता व्यवस्थित-विभाषा न सन्तीत्यत आह—**अत एव वार्तिके इति** । तथा च भाष्यतात्पर्यविषयाणामपि-

ॐ **सदाशिवभट्टीयम्** ॐ

धानाकरणस्य संग्रहः । आरम्भप्रत्याख्यानयोः फलभेदं योजयति—**अत्रेत्यादिना** । अनयोरित्यर्थः । **ऋतीति** । **तपरकरणेति** । इदञ्च न्यायसिद्धमपि भङ्ग्यन्तरेणोक्तम् । **लृतीति** । अन्यथा 'ऋति ऋल वे'त्येव ब्रूयादिति भावः । पूर्वस्य ह्रस्वत्वे मानमाह—**तुल्यास्येति** । वार्तिकस्य तद्वयस्याच्त्वं वक्ष्यामीति तृतीयस्य

ॐ **विषमपदविवृतिः** ॐ

तत्रैव तथा भाष्यदर्शनात् । 'न ऋकार ईषत्स्पृष्ट' इति शेषः । **नाप्यृतीति** । 'लृकारा'दिति शेषः ।

त्यागे मानाभावादीषत्स्पृष्टाविमौ । विवृतत्वे हि विवृतऋकारऌकाराभ्यामनयोरपि ग्रहणे'ऽकः सवर्णे' इत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः ।

**एङः** । पदान्तात् किम् ? भवति ।

**सर्वत्र वि** । 'प्रकृत्याऽन्त' इति सूत्रात्प्रकृत्येत्यनुवर्त्तते । प्रकृतिशब्दोऽत्र स्वभाववाची, 'दुस्त्यजा प्रकृति'रित्यादौ तथा दर्शनात् । प्रकृत्या स्वभावेनावस्थानमित्यर्थः ।

अत एव प्रकृतिभावे न पूर्वरूपं, नाप्ययादय इति भावः । 'नान्तः पाद'मिति पाठे त्वनेन सूत्रेण 'गोशब्दस्य यत्प्राप्तं तन्ने'ति व्याख्यानेन–'नान्तः पाद'मित्यनेनैव पूर्वरूपत्वादिकं विकल्पेन निषिद्ध्यत इति बोद्ध्यम् ।

**अवङ्** । स्फोटोऽयनं यस्य सः, स्फोटप्रतिपादक इत्यर्थः । 'स्फौटायनस्ये'ति पाठे नडादित्वं कल्प्यम् । स्फोटायनोऽवङः स्मर्त्ता, अन्यस्तु तदभावस्येति स्मृत्यन्तरा-

❀ अभिनव-चन्द्रिका ❀

**मिति । 'अथ नित्यग्रहणं किमर्थ'मित्यादिना भाष्य इत्यर्थः ।**

❀ चिदस्थिमाला ❀

कश्चित्प्रयत्नोऽस्त्वित्यपास्तम् । ननु प्रसिद्धऋकारीयो विवृतप्रयत्न एवास्तु, अत **एवाह—विवृतेति** । हि=यतः । **सिद्धाविति** । प्रागुक्तरीत्या रूपद्वयसिद्धावित्यर्थः । वार्त्तिकस्य=तद्द्वयस्य । सुबन्ते इत्यानितिनियमेन दोषाभावादाह—**भवतीति** । न च 'ङसि ङसोश्चे'त्यस्य 'अपदान्ताच्चेन्ङसिङसोरेवे'ति नियामकत्वान्न दोष इति वाच्यम्, 'विभक्तौ चेन्ङसिङसोरेवे'ति नियमेनापि तस्य साफल्यस्य सुवचत्वात् । एतेनोक्तरीत्या सिद्धे उत्तरार्धं स्पष्टार्थमिहैव कृतमिति **मनोरमारत्नाकरा**शुक्तमपास्तम् । **प्रकृत्यान्तरितीति** । अत्र पाठे षाष्ठं भाष्यं मानम् । तस्याऽनेकार्थत्वादाह–**प्रकृतिशब्दोऽत्रेति** । न तु सर्वत्रेति भावः । 'प्रकृतिभाव'इत्यस्य सशेषपूरणसमासस्यार्थमाह—**प्रेति** । भावार्थोऽवेति । एतेन प्रकृत्येत्यनेन गोरिति षष्ठ्यन्तमन्वयायोग्यमित्यपास्तम् । अत एव=उक्तार्थकस्य तस्यानुवर्तनादेव । भावे–सति । अन्यथा नदसङ्गतिः स्पष्टैव ।

**नान्तरिति** । 'इको गुणे'तिसूत्रभाष्यसम्मते इति भावः । **त्वनेनेति** । पाठान्तरैकवाक्यत्वायानन्तरस्येति न्यायानङ्गीकारेण बाध्यसामान्यचिन्ताङ्गीकारेण 'सुजाते' 'अश्वसूनृते' इत्यादौ तेन तयोर्नित्यनिषेधवदित्यर्थः । आदिना अयादिपरिग्रहः । **निषीति** । एतेन 'पूर्वरूपमेव विकल्प्यत' इति **मनोरमा**युक्तं, 'अष्टावनरन्यायेन तत्र पठितदोष' इत्यन्योक्तञ्चापास्तम् । उक्तयुक्तेः, तन्न्यायानाश्रयणाच्च ।

अयनं=परायणं, प्रतिपाद्यम् । 'कस्तस्येत्यर्थं' इति पाठः । **कल्प्यमिति** । स्फोटस्य ऋषेरपत्य-

❀ ज्योत्स्ना ❀

व्यवस्थितविभाषात्वमिष्यत इति भावः । **वार्तिकस्य वैयर्थ्यापत्तिरिति** । यद्यप्यर्धतृतीयमात्रत्व-

❀ सदाशिवभट्टीयम् ❀

चेत्यर्थः । **वैयर्थ्यापत्तेरिति** । इदञ्च वाशब्दश्चार्थ इति मते, स्पष्टञ्च तस्य तदर्थकत्वन्तुल्यास्यसूत्रस्थभाष्यप्रदीपोद्योतेषु । विकल्पार्थत्वे तु दीर्घेत्यनुवृत्त्यैव सिद्धौ विधेयनिर्देशस्य वैयर्थ्यम्बोध्यम् । एतेन विवृतत्वेपि नित्ये प्राप्ते विकल्पार्थं वचनं, तेन पक्षे यणादेशः फलमिति परास्तम् ।

**एङः पदा । भवतीति** । ननु भवतेरिति निर्देशोपष्टम्भेनापदान्तात् ङसिङसोरेवेति नियमात्सिद्धमिदमिति

❀ विषमपदविवृतिः ❀

ऌकार ईषत्स्पृष्टः । विषयविशेष एव पूर्वस्य साधुत्वं, विषयविशेष एवोत्तरस्य साधुत्वमिति व्यवस्था-

नुसन्धानद्वारेणात्र विकल्पो बोद्धयः। **निवृत्तमिति** । अत एव'इन्द्रे इति सामर्थ्यान्नित्य'-मिति भाष्यादावुक्तम् । **गवाग्रमिति** । सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घ इति

❀ चिदस्थिमाला ❀

मित्यर्थः । ननु अचि परे पदान्ते गोरवङ् साधुरित्यर्थे प्राधान्यादवङः साधुत्वं स्फोटायनेन स्वीकृतं न सर्वैरिति स्मृत्यन्तरानुसन्धानद्वारेण तस्यैव विकल्पापत्तिरिति कथं पक्षेऽवङोऽभाव इति चेन्न । साधुत्वस्यापौरुषेयतयाऽविकल्प्यत्वेनावङः श्रुतत्वेन लङादिषु प्रयोगासमवायिषु श्रुतसम्बन्धस्यैव कल्प्यत्वेन न श्रुतावङैव सम्बन्धेन तदुपपत्तेस्तदेतदभिप्रेत्य आह—**स्फोटेति** । णात्र—न तु सर्वत्र । 'एतेन विभाषानुवृत्तेस्तत्पूजार्थ'मिति **दीक्षितदण्ड्याद्युक्तं**, 'तथैव सिद्धे तद्ग्रहणाद्व्यवस्थितविभाषे'ति**मन्दो-क्तञ्चापास्तम्** । कार्यशब्दमते तु न विकल्पसिद्धिर्न हि तन्मतेनावङ् कृतो नान्येनेति स्मृत्यन्तरानु-सन्धानेन विकल्पो व्याख्यातुं शक्यः । अन्येनोत्पादितस्य पुनरुत्पादनायोगात्, पाणिनिकृत-कार्यान्तराणामप्यन्येनाकरणात्सर्वत्र विकल्पापत्तेर्देवदत्तेन घटः कृतो न विष्णुनेत्येतावता घटोत्पत्ते-र्विकल्पापत्तेश्च । साधुत्वं त्वर्थापत्तिकल्प्यवाक्येनैवेति बोध्यम् । 'निवृत्तौ व्याख्यानमेव शरण'मिति दण्ड्युक्तेरसाङ्गत्यं ध्वनयन्नाह—**अत एवेन्द्रेतीति** । एतेन मौलः सचः पाठोऽप्युपेक्ष्य इति-सूचितम् । आदिना कैयटादिपरिग्रहः । अन्यथा तस्यावश्यकत्वेन तदसङ्गतिः स्पष्टैव । ननु 'सन्निपाते'त्य-नेन दीर्घो न स्यादत आह—**सन्तीति** । 'कष्टाये'ति ज्ञापकादिति भावः । इदं समूलयंस्ताः परिगण-

❀ ज्योत्स्ना ❀

**पक्षेऽपि नास्ति वार्तिकस्य वैयर्थ्यम्—तथाप्यूकाल्त्वाभावादनयोर्दीर्घसञ्ज्ञा न स्यात्—तदर्थमपि-**

❀ सदाशिवभट्टीयम् ❀

चेन्न । 'अनुबन्धादौ चेत्तयोरेवे'तिनियमे औपगवासिद्धेः । 'वर्णका तान्तवे' 'अनुगवमायामे' इत्यादिनिर्देशा-श्रयणेपि'शस्मिन्ने चेत्तयोरेवे'तिनियमापत्त्या इरेशब्दस्य शसि इरय इत्यस्यासिद्धिरेवेति भावः। प्रतिपत्तिगौरवन्तु स्पष्टमेवोत्तरार्थमस्यावश्यकत्वादन्तग्रहणं स्पष्टार्थम्, एङन्तात्पदान्तादित्यर्थेप्यलोन्त्यपरिभाषया सिद्धेः। सर्वत्रे-त्यादावपि प्रत्यासत्त्या सिद्धेः। **अवङ् स्फो।** अयनम्परायणम्प्रतिपाद्यमिति यावत्। **'कस्तस्येत्यर्थे'** इति पाठः । **स्फोटायनोवङ् स्मर्तेति** । विभाषापदानुवृत्तेस्तयोभयसारकत्वाचिन्त्यमेतदत एव प्लुतप्रगृह्येतिसूत्रे नित्य-ग्रहणङ्किमर्थं ? विभाषा माभूत्, पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तमिति भाष्ये पूर्वस्मिन्योग इत्येकवचनं सङ्गच्छते, निवृत्तपदस्वारस्यञ्च। तत्र **कैयटोपि**–पूर्वस्मिन्निति। इन्द्रे चेत्यत्रेत्यर्थ इति–व्याख्यत्। तत्रोद्योते-प्यारम्भसामर्थ्यादिति भाव इत्युक्तम् । अत एव सामर्थ्यान्नित्यमित्युत्तरग्रन्थसङ्गतिः । स्फोटायनग्रहणस्य पूजार्थत्वे हि तत्सङ्गच्छतेऽन्यथा मतान्तरे तस्मिन् तत्सिद्धये तस्यावश्यकत्वात्तदसङ्गतिः स्पष्टैव । **भाष्या-दाविति।** यद्यपि कण्ठरवेण भगवता नैवमुक्तन्तथापि पूर्वस्मिन्नेव निवृत्तमिति निर्हेतुकं वदन्नुक्तं हेतुं प्रसिद्धत्वादभिप्रैतीति भावः । उक्तभाष्यस्य योगविभागसामर्थ्यान्नित्यमित्यभिप्रायकत्वेनापि सुयोजत्वा-दुक्तमादाविति । तेन वृत्त्यादिपरिग्रहः, अत एव गवोद्घादयः प्रयोगा भाष्ये सङ्गच्छन्त इति दिक् ।

**अनित्यत्वाविति** । अनेन यथा सन्निपातपरिभाषाशेषस्थपरिभाषेन्दुशेखरविरोधो न तथा तत्रैव तद्वि-वृतिसङ्ग्रहे स्पष्टम्। **देवत्रातेत्यादि** । 'तुदविदे'ति नत्वं सञ्ज्ञायान्न। देवेत्युपलक्षणं–भवत्रातादेः । क्रिया-शब्दे वा, अचि विभाषे'ति लत्वं–प्राण्यङ्गे नित्यं, विषेनैव, क्रियाशब्दे वा। 'विभाषा ग्रह'इति णो जलचरे नित्यं

❀ विषमपदविवृतिः ❀

**ऽङ्गीकारादेव। वस्तुत लृकारात्परत ऋकारस्य प्रयोगे न मानम्। उक्तव्यवस्थाङ्गीकारे प्रमाणमाह—अत एव वार्तिके इत्यादिना–सङ्गच्छत इत्यन्तेन । अत एव=ह्रस्वऋकारद्वयेत्यादिव्यवस्थाङ्गी-कारादेव। अयनं यस्येति । स्फोटस्यायन आश्रय इति षष्ठीतत्पुरुष इति केचित्। अन्यस्तदभाव-**

बोध्यम् । **व्यवस्थितेति** । 'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः । तेन प्राण्यवयवे ने'ति 'शाच्छो'रिति सूत्रे भाष्ये स्पष्टम् । 'अग्नीत्प्रेषणे' इति सूत्रे 'अग्नीदग्नीन्विहरे'त्यत्र एतद्व्यावृत्त्यर्थं वार्त्तिककृद्बहुलग्रहणघटितं न्यासं कृतवान् । तत्प्रत्याख्यानाय भाष्ये कृतेन विभाषेति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वं ध्वनितम् । तथा 'अजेर्व्यघञपोरिति च व्यवस्थितविभाषे'ति

## ॐ अभिनव-चन्द्रिका ॐ

**व्यवस्थितविभाषयेति** । तत्त्वञ्च-विभाषाशास्त्रीयोद्देश्यनावच्छेदकव्याप्यरूपव्यापकभावाभावान्यतरविधायकत्वम् । **देवत्रात इति** । 'नुदविदोन्दत्रा' 'अचि विभाषा' 'लृटः सद्वा' 'सर्वत्र

## ॐ चिद्स्थिमाला ॐ

यति–**देवेति** । 'नुदविदोन्दत्रे'ति नत्वं सञ्ज्ञायां न भवति । देवग्रहणं तन्त्रं'पलक्षणार्थं, 'क्तिक्तौ चे'ति क्तः, तेन भवत्रात इत्यादावपि तत्त्वान्नत्वं न, यदातु क्रियाशब्दत्वाणन्त्रात इति, तदा नत्वविकल्पः । 'अचि विभाषे'ति लत्वं प्राण्यङ्गे नित्यं, विषे नैव, क्रियाशब्दे तूभयं । 'विभाषा ग्रह' इति णप्रत्ययो जलचरे नित्यं, रविगुर्वादिरूपे ज्योतिषि पचाद्यजेव, क्रियाशब्दे तूभयम् । 'लक्षणहेत्वो'रितिशत्रादिविधिर्हन्तीति पलायते इत्यादाविति प्रयोगे न भवति । ते=नत्वादयो मिथः=एकस्मिन्विषये, न विकल्प्यन्ते, किन्तु विषयभेदेनेत्यर्थः । वातायने नित्यमवङ्, प्राण्यङ्गे गोरक्षि गोऽक्षीति, गवाक्षं–गोक्षमित्यादौ विकल्पः । 'शाच्छो'रिति इत्वं व्रतविषये नित्यं, तेन संशितो ब्राह्मण इत्यस्यापि सिद्धिः, अन्यत्र विकल्प इति बोध्यम् । प्रकृते आह—**तेनेति** । **नेदं परिगणनमिति** । तत्रस्थत्वेन भाष्योक्तान्यसङ्ग्रह इति ध्वनयन्नाह—**अग्नीदिति** । 'न्यासं कृतवा'नित्यत्रान्वयः । **एतदिति** । अग्नीदिति प्लुतेत्यर्थः । **घटितमिति** । नर्थोक्तेऽनतिप्रसङ्गाय 'ओश्रावयाश्रावयोः परस्य चे'ति न्यासान्तरे कृतेऽन्यसङ्ग्रहाय 'बहुलमन्यत्रापी'ति न्यासान्तरमित्यर्थः । **एतदिति** । उभयेत्यर्थः । तदव्यवहितेऽग्रिमे 'विभाषा पृष्टे'तिसूत्रे इति भावः । **ध्वनितमिति** । अन्यथा बहुलग्रहणसत्त्वे ओश्रावयाश्रावयाभ्यामन्यत्राग्नीत्प्रेषणे बहुलं प्लुतस्तत्रापि तत एव नादेर्न परस्य, अपि त्वन्त्यस्यैव, नत्र

## ॐ ज्योत्स्ना ॐ

फलान्तराश्रयणे गौरवं स्यादतो द्विमात्रत्वमीषत्स्पृष्टत्वमिति पक्षोऽत्राङ्गीकृतः ।

## ॐ सदाशिवभट्टीयम् ॐ

सूर्यादौ न, क्रियाशब्दे वा । 'लक्षणहेत्वो'रिति शत्रादिविधिर्हन्तीति पलायन इत्यादाविति शब्दप्रयोगे न । ते =नत्वादयो मिथ एकस्मिन् विषये न विकल्प्यन्ते, किन्तु विषयभेदेनेत्यर्थः । एवं वातायने नित्यमवङ्, प्राण्यङ्गे न, गवाक्षमित्यत्र वा । शाच्छोरितीत्वं व्रतविषये नित्यं–संशितो ब्राह्मणः, अन्यत्र वेति बोध्यमित्याहुः ।

नेदम्परिगणनन्तेन भाष्योक्तान्यसङ्ग्रह इत्याह—**अग्नीदिति** । **एतदिति** । अग्नीदिति प्लुत इत्यर्थः । **घटितमिति** । उक्तोदाहरणेनतिप्रसङ्गाय 'ओश्रावयाश्रावयोः परस्य चे'ति न्यासान्तरे कृतेऽन्यसङ्ग्रहाय 'बहुलमन्यत्रापी'ति न्यासान्तरमित्यर्थः । **विभाषेति** । तदग्रिमे'विभाषा पृष्टे'तिसूत्रेत्यर्थः । **ध्वनितमिति** । अन्यथा बहुलग्रहणसत्त्वे ओश्रावयाश्रावयाभ्यामन्यत्र बहुलं प्लुतस्तत्रापि तत एव नादेर्न परस्यापि त्वन्त्यस्य नित्यं, योगविभागे तु नैव व्यवस्थेति प्रत्याख्यानासङ्गतिरिति भावः । **इति च व्यवस्थितेति** ।

## ॐ विषमपदविवृतिः ॐ

**स्येति** । अन्योऽवङो न स्मर्त्तेत्युक्तौ–तदभावस्य स्मर्त्तत्यर्थाल्लभ्यते इति भावः । **देवत्रात इति** । अत्र पक्षे नत्वं न । गलः—अत्र पक्षे लत्वाभावो न । ग्राहः–अत्र पक्षेऽञ् न । **इतियोगे सद्विधिः**,

'अजेर्व्री'तिसूत्रे भाष्ये स्पष्टम् । न च व्यवस्थितविभाषयेन्द्रे नित्यावङि सिद्धे 'इन्द्रे चे'-ति व्यर्थमिति वाच्यं, भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः ।

**इन्द्रे च** । क चिद्भाष्यपुस्तके 'च'शब्दरहितः पाठः । इन्द्रावयवेऽचीत्यर्थस्तेन षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे 'गवेन्द्रयज्ञ' इत्यादाववङ्सिद्धिः। अन्यथा वाक्ये गोशब्द-स्येन्द्रपरत्वासम्भवेन समासाक्षेपादिन्द्रशब्दस्योत्तरपदत्व एव प्रवृत्तिः स्यात् ।

❀ चिदस्थिमाला ❀

तु नित्यं, योगविभागे तु नैवं व्यवस्थेति प्रत्याख्यानासङ्गतिरिति भावः । स्पष्टान्तामाह—**तथेति** । अयं भाष्यसमुच्चायकः । चो व्यवस्थितविभाषासमुच्चायकः। पूर्वसूत्राद्वेत्यनुवर्त्य–प्रवेतुं, प्रवीतः, संवीतिः, समाजः समजः, उदाजः,उदजः, समजनमुदजनं,समज्या, प्राजितेति सिद्ध्यर्थं तत्त्व स्पष्टं तत्रोक्तम् । सकलग्रन्थासाङ्गत्यं ध्वनयन्नाह—**नचेति** । परिगणितविषयातिरिक्तविषयकाणामप्यङ्गीकारे इति भावः । परिगणितविषय-कान्यप्रागुक्तसङ्ग्रहायाह—**भाष्योक्तेति** । तत्तद्विषयकेत्यादिः । एतेन 'तयैव सिद्धे तद्व्यर्थमिति त्याज्य-मेवे'ति **दण्डयुक्तम्**, 'अस्मास्तत्त्वस्य भाष्यादिसम्मततवेन ज्ञापितेपि सार्थक्याभावेन ज्ञापनासम्भवादिदम-युक्तमेवत्रोक्तरीत्या व्यर्थमेवेद'मिति **मन्दोक्तं** चापास्तमुक्तयुक्तेर्लक्ष्यभेदेन लक्षणभेदेन–ऐक्येपि–तत्रांशे एव तत्त्वस्य स्फुटमङ्गीकारादन्यथा गवाग्रमित्यादावपि तथा स्यादिति दिक् । भाष्यसिद्धान्तमाह—**इन्द्रावेति** । सप्तमी तु प्राग्वत् । अचीत्यनुवृत्तिसामर्थ्यादिदं लब्धं, तदुक्तं भाष्ये–नैवं विज्ञायते—इन्द्रेचेति ? कथं तर्हि? अचोचीन्द्रे इति । यथाचैतत्तथा **स्पष्टमुद्योते** । ननु उत्तरपदाक्षेपे गमकाभावाद्यथाश्रुतव्याख्यानेनैव तत्रापि सिद्धिरिति किमर्थमनुवृत्त्या प्राग्वद् व्याख्यानमत आह—**अन्यथेति** । तथा व्याख्यानानङ्गीकारे इत्यर्थः। **वाक्ये इति**। विभक्त्या व्यवधानात्। द्वयोरनुकरणे तु न प्राप्तिरभिव्यक्तेति न्यायादिति भावः। **क्षेपा-दिति** । तथात्र तेनोत्तरपदाक्षेपः, तदाह–**स्योत्तरेति** । एवेनोक्तस्थलव्यावृत्तिः । न चेदानीमपि वाक्येऽ-सम्भवात्समासाक्षेपस्तुल्य इति तदाक्षेपे उत्तरपदेन्द्रावयवेचीत्यर्थापत्तौ दोषतादवस्थ्यमिति वाच्यम्, आक्षे-

❀ सदाशिवभट्टीयम् ❀

तेन ण्वुलादौ नित्यम्, क्तादौ वा, घञपोर्नेति भावः । **इन्द्रे चेति व्यर्थमिति** । इतोपि ग्रन्थस्वरसात् स्फोटायनग्रहणस्य पूजार्थतैव लभ्यते । **अप्रामाणिकमिति** । यं यं विषयमुपादाय यस्य यस्य व्यवस्थित-विभाषात्वमुक्तन्तदितरविषयकस्य तस्य तस्य तत्त्वमप्रामाणिकमिति भावः । **परत्वासम्भवेनेति** । विभक्त्या व्यवधानादिति भावः । अनुकरणे त्वभिव्यक्तेति न्यायादिति भावः । यत्तदेतेभ्य इत्यादा-वत्त्ववदनुकरणस्य प्रकृतिवद्भावे सम्भवोऽस्त्येवेति । **समासाक्षेपेति** । तेन चोत्तरपदाक्षेपः, सिद्धान्ते त्वजनु-वृत्तिसामर्थ्येन न तदाक्षेप इति भावः । इदञ्च नव्यरीत्या मनो नारोहति, तथापि भाष्योक्तमित्येतावता सन्तोष्टव्यमिति दिक् । अन्येत्विदम्प्राचामनुरोधेनोक्तं, स्वमते तूत्तरपदेत्यस्याध्याहारस्तत्फलञ्च त्रिपदद्वन्द्व-बहुव्रीह्योर्गविन्द्रदेवदत्ता गविन्द्रप्रिय इत्यादावप्रवृत्तिरत एव प्रकृतसूत्रे इन्द्रादाविति वक्तव्यमित्युक्तं, तस्य चायं भावस्त्रिपदेऽतिव्याप्तिवारणायाजादाविन्द्रशब्द उत्तरपद इत्यर्थे गवेन्द्रयज्ञेऽव्याप्तिरत इदं वक्तव्यन्त-दर्थस्त्विन्द्रस्यादिर्योऽच् तदादावुत्तरपद इति नाव्याप्तिरितीन्द्रशब्दे योऽच् तदादावुत्तरपद इत्यर्थमाश्रित्य

❀ विषमपदविवृतिः ❀

=शतृशानचोर्विधिः। **मिथः**=एकैकस्मिन्नर्थे ते=नलादिविधयो न विभाष्यन्ते=न विकल्प्यन्ते, किन्त्व-र्थभेदेनैव भावाभावयोर्व्यवस्थेत्यर्थः । **अप्रामाणिकत्वज्ञापनार्थं इति** । वस्तुतो व्यवस्थितविभाषाया अगतिकगतिकत्वज्ञापनार्थम् । **इन्द्रेचेति** ? । एवमेव विकल्पे प्राप्ते नित्यार्थविधयः सङ्गच्छन्ते ।

'प्लुतप्रगृह्या' इत्यस्य 'प्रकृत्ये'ति पाठे त्व सामञ्जस्यमस्त्यत आह—अथ प्रकृतीति । न चैतद्घटकपदार्थज्ञानाय प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम्, 'इन्द्रे च'त्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितमेतत्सूत्रलेखनात् । तत्र नित्यग्रहणे तदव्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह—प्लुताः प्रगृह्याश्च वक्ष्यन्ते इति । अचीत्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राच्यनयोः प्रकृतिभाव-स्तदज्निमित्तकार्यस्यैव तेनाभाव इत्यर्थलाभार्थं, तेन जानु उ अस्य रुजति—जानू अस्ये-त्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव । एहि कृष्णेति । 'दूराद्धूते चे'ति प्लुतः । अत्र

※ अभिनव-चन्द्रिका ※

विभाषा' 'शाच्छोः' एतानि कारिकोक्तलक्ष्यविषये व्यवस्थितविभाषया प्रवर्त्तन्ते इत्यर्थः

आक्षेपादिति । श्रुतार्थापत्त्येति भावः । भवत्येवेति । नच'प्लुतप्रगृह्या'इत्येव सिद्धे अचीत्यनुवृत्तिसामर्थ्यादेव यदज्निमित्तकः प्रकृतिभावः तदज्निमित्तकसन्धिकार्यस्यैवाभावोऽनेन भवतीति—जानु उ अस्य रुजति—जान्वस्य रुजतीत्यादौ न दोष इति सूत्रेऽजिति व्यर्थ-

※ चिदस्थिमाला ※

स्यानुपपत्तिमूलकत्वेन पूर्वत्र तथा सत्त्वेऽपीदानीं तदभावेन तत्र मानाभावेन तथार्थासम्भवात् , अन्यथानु-वृत्तिवैयर्थ्यापत्तेश्चान्यथा भाष्यविरोधापत्तेश्च । एतेन 'तथा दोषादिर्न चिन्त्यं, तस्मादीतामुच्यन्तादेन निर्वाहो-ऽर्थवत्परिभाषया वे'ति मन्दोक्तमपास्तमुक्तयुक्तेः । गौणत्वस्याप्रधानत्वान्यस्य तत्र ग्रहणाद्प्राधान्येन तस्या अप्यप्रवृत्तेः, अन्यथा भाष्यविरोधापत्तेश्चेति दिक् । यत्तु दण्डिरत्नाकरादयः "-अथ प्रकृतीत्यतराङः, सर्वत्रेति प्रागेव तस्योक्तत्वात् । यद्वाऽवङ् इन्द्रेचेतिसूत्रद्वयं तत्प्रकरणस्थमपि तद्वाच्यं वाच्यं, नाम्नां तदविधानात् , नच प्रकृतिभावापवादत्वादवङनुवृत्त्यर्थत्वात्तत्प्रकरणस्थत्वं, पूर्वरूपापवादत्वस्यापि तुल्यत्वात् । तत्प्रकरण-पाठस्य च गोशब्दानुवृत्त्यर्थत्वात् । एवञ्च स्वलेख्यप्रकृतिभावप्रकरणाद्बहिरत्सूत्रद्वयं लिखितं, तत्प्रसङ्गात्सर्व-त्रेति सूत्रमपि तत्रैवेति सिद्धस्य गतिर्बोध्या-"इति, तदसदिति ध्वनयन्नाह-प्लुतेति । एतेन पाठान्तरव्यव-च्छेदः । अध्याहाराद्यापत्तेर्बाध्यसामान्यचिन्ताश्रयणाच्चेति भावः । पूर्वत्र तूभयथापि अन्यसङ्गावेऽप्याबा-भावेनान्वयः प्रागुक्त एवैतदर्थमिति बोध्यम् । एतेन 'अयं ग्रन्थः सर्वत्रेतिसूत्रात्पूर्वमेव वक्तुं युक्त' इत्यपास्तम् ।

उत्तरग्रन्थमवतारयति—नचैतदिति । पदार्थबोधस्य वाक्यार्थधीहेतुत्वात् । व्युत्क्रमेणाह—प्रेति । आदिना प्लुतपरिग्रहः । तदेवाह—तत्र हीति । हि=यतः । तदिति । नित्यग्रहणेत्यर्थः । अचीति ।

※ सदाशिवभट्टीयम् ※

तत्प्रत्याख्यानमित्याहुः । प्लुतप्र । वैपरीत्येनाह—प्रगृह्यत्वेति । वैयर्थ्यमिति । पूर्वसूत्रे नित्यग्रहणं पठद्भिरुत्तरसूत्रेऽपठनादिदश्चिन्त्यम् । इह भाष्ये पठितमिति प्रामाणिकमिति वाशयः । अनुवर्तमानेति । जानु उ रुजतीत्यादौ पूर्वेण सन्धिवारणार्थमिति भावः । तेन जानू इति । नन्वणिञ्दीनामित्युक्तरीत्या-सिद्धमेवेदमिति वाच्यम्, उ अस्येत्यनयोः पूर्वं सम्बन्धे पश्चाज्जानुपदसम्बन्धे प्रकृतिभावस्यैवान्तरङ्गत्वात् ।

वाग्रहणेति । विभाषाग्रहणेत्यर्थः । बाधकेति । परत्वादिति भावः । यद्यपि नेति वाच्ये प्रकृत्येत्युक्त्वा पूर्वेषां सर्वेषामिव परस्यापि ह्रस्वस्याभावः । 'नान्तःपादे'ति पाठेऽपि बाध्यसामान्यचिन्तया सिद्धः, अन्यथा-ऽनन्तरसन्धिकार्यस्यैव निवृत्तिः स्यान्न तु सर्वेषां, तथापि ऋत्यक इत्यत्रापि बाध्यसामान्यचिन्तावश्यकत्वेन 'हरी ऋच्छत' इत्यत्रापवादविप्रतिषेधाद्ध्रस्वः स्यात् । तदर्थं नित्यग्रहणम्, इकोऽसवर्णे इत्यत्र तु न बाध्यसामान्य-

※ विषमपदविवृतिः ※

सामञ्जस्यमिति । नेति पाठे तु प्लुतप्रगृह्याणामिति षष्ठीनिर्देशः स्यादिति भावः । प्लुतप्रगृह्या । जानू अस्येति । नन्वत्र स्थानिवत्त्वेन प्रगृह्यत्वं वाच्यन्तच्च दुघटं, नव्यमते तस्याल्धर्मवृत्तित्वादिति

प्लुतस्याऽऽश्रयात्सिद्धत्वं बोध्यम् । **नित्यमिति किमिति ।** वाग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः । **मा भूदिति ।** नित्यग्रहणसामर्थ्येन पुनर्विधानाद्बाधकविषयेऽप्ययमेवेति भावः ।

**इकोऽसवर्णे ।** 'एङ'इत्यतः 'पदान्ता'दित्यनुवृत्तं—प्रथमया विपरिणम्यत इत्याह—**पदान्ता इति । वेति ।** ह्रस्वयणोर्विधानसामर्थ्यात्तु न विकल्पसिद्धिः । अपदान्तादौ यणश्च रितार्थत्वात् । **सामर्थ्यादेवेति ।** चेन प्रकृतिभावाकर्षणेऽपि 'ऋत्यक' इत्यत्र चानुकृष्टत्वेन तदसम्बन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्याऽऽवश्यकत्वेन चकारो व्यर्थ

❀ **अभिनव-चन्द्रिका** ❀

मिति वाच्यम्, जानु उ जानू इत्यत्र प्रकृतिभावाभावायाऽचीत्यनुवृत्तेस्तार्थक्येन वैयर्थ्याभावान्निरुक्तार्थकल्पनासम्भवात् । **अयमेवेति ।** ननु 'इको यणचि' पदस्य शाकल्यस्य ह्रस्वः' 'ऋत्यक'इत्येवसूत्रत्रयमस्तु, तथा च हरी एताविन्यादौ परत्वादयमेव प्रकृतिभावो यथा स्यादिति नित्यग्रहणं व्यर्थं, नच 'इक' इत्यपि व्यर्थम्, 'ह्रस्वस्य पिति' 'दीर्घा'दितिसूत्राभ्यां ह्रस्वदीर्घानुवृत्त्यैव सिद्धेः । 'हे दैत्य अत्रे'त्यादौ परत्वात्सवर्णदीर्घेण बाधान्न यणिति वाच्यम्, यातिरित्यादौ स्थानिवद्भावेन यणापत्तेः । पूर्वस्यैव विधौ स्थानिवद्भावेन सवर्णदीर्घाप्राप्त्या सवर्णदीर्घप्रवृत्तियोग्यसवर्णात्वावच्छिन्नातिरिक्ताच्परकत्वस्य सत्त्वात् । गोमयशब्दादाचारक्विबन्तात्क्तिचि अतोलोप—यलोपयोर्गोमतिरित्यादौ यणापत्तेश्चेति चेन्मैवम्, 'अप्लुतवदुपस्थिते' इत्यत्रासवर्णग्रहणानुवृत्तये यथाश्रुतन्यासस्यावश्यकत्वात् । अत एव 'ई चाक्रवर्मणस्ये'ति सूत्रस्थ-ई-ग्रहण—तत्प्रत्याख्यानयोर्न फलभेद इति दिक् ।

**चानुकृष्टत्वेनेति ।** वस्तुतस्तु अस्य चकारस्यानुवृत्त्यर्थकत्वेन निवृत्त्यर्थकत्वाभावाच्चानु-

❀ **चिदस्थिमाला** ❀

इको यणचीत्यतः । 'अज्निमित्ते'ति बहुव्रीहिः । तेन=प्रकृतिभावेन । ञो 'निपात' इति प्रगृह्यत्वं । ननु प्लुतस्यासिद्धत्वमत आह—**अत्रेति ।** प्रकृतिभावे इत्यर्थः । **श्रयादिति ।** तमनूद्यैतद्विधानात् । 'अतो रो'रितिवत् । प्लुतभावीति तु न व्याख्यातं, लक्षणायां मानाभावात् । 'सुश्लोका इती'त्यादौ एकादेशेन प्लुतनिवृत्त्यप्रसङ्गाच्चेति **हरदत्तादयः ।** ननु नित्यग्रहणं वाननुवृत्त्यर्थमिति स्पष्टतया प्रश्नासङ्गतिः, अज्ञानेन प्रश्नेपि तथोत्तरे वाच्येऽन्यथोत्तरासङ्गतिरत आह—**वाग्रहणेति ।** नन्वेतदर्थकेन तेन कथं तन्निवृत्तिरत आह—**नित्येति ।**

**बाधकेति ।** परत्वात् । प्रथमया=तदन्तेन । यत्तु शाकल्यग्रहणमुत्तरार्थं ह्रस्वयणोर्विधिसामर्थ्यादेव पर्यायसिद्धेः । सवर्णेचि दीर्घविधानेनासवर्णे एव तद्विषयत्वादिति, तत्खण्डयति—**ह्रस्वेति ।** आदिना 'वाप्यश्व' इत्यादिपरिग्रहः । तथाच ह्रस्वस्य तदपवादत्वापत्तिरिति भावः । एवेनोक्तप्रकारस्याश्रयणीयत्वं सूचित-

❀ **ज्योत्स्ना** ❀

**अपदान्तादाविति ।** गौर्यावित्यादौ । आदिपदाद्वाप्यश्व इति समासादिर्गृह्यते । **एतेनेति ।** पदान्त-

❀ **सदाशिवभट्टीयम्** ❀

चिन्तावश्यकत्वं, तद्विषये यण एव प्राप्तेरिति बोध्यम् । **प्रथमयेति ।** तदन्तेनेत्यर्थः । सर्वत्रेत्यादौ सप्तम्यन्ततया विपरिणतत्वेन, 'दिव उ' दित्यत्रापि तथैवोपयोक्ष्यमाणत्वेन चेहैव विपरिणामः किमर्थं इति चिन्त्यम् । अथवेकः पदान्तस्य प्रकृत्यावस्थानमित्यर्थे सर्वत्र षष्ठ्यैव विपरिमाणोऽस्तु ।

❀ **विषमपदविवृतिः** ❀

चेत्सत्यम् । परादिवद्भावेनैव प्रगृह्यत्वाङ्गीकारात् । **अपदान्तादाविति ।** आदिपदेन समासादौ ।

इति भावः । **भाष्ये स्थितमिति** । 'प्रकृतसूत्रे' इति शेषः । एतेन 'ह्रस्वाभावे प्रकृतिभावार्थं चकार' इति न्यासाद्युक्तमपास्तम् । 'चक्री अत्रे'ति तु संहिताया अविवक्षायां बोद्ध्यम् । 'न समासे सिति चे'ति वार्त्तिकम् । **पार्श्वमिति** । 'पर्श्वा णसु-वक्तव्य' इति णस् । 'सिति चे'ति पदत्वम् ।

**ऋत्यकः** । सवर्णार्थमनिगर्थश्चेदम् । होतृ ऋकारः । ब्रह्म ऋषिः । **आर्च्छदिति** । आटो धात्ववयवत्वेनापदान्तत्वादिति भावः । एतेन 'आटश्चे'ति पुनर्वृद्धिविधानार्थेन चेन उस्योमाङ्क्षु पररूपबाधवत्प्रकृतिभावस्यापि बाधेनेष्टसिद्धिरित्यपास्तम् ।

**समासेऽपीति** । व्याख्यानादिति भावः । **सप्त ऋर्षीणामिति** । 'दिक्सङ्ख्ये' इति समासः ।

---

ॐ अभिनव-चन्द्रिका ॐ

कृष्टपरिभाषाया अप्रवृत्तेश्चिन्त्यमेतत् । **वाचकस्येति** । प्रत्यभिवादे नामगोत्रान्यतरोच्चारणस्य

ॐ चिदस्थिमाला ॐ

न्तदाह—**चेनेति** । अत्रेति शेषः । तथा च-एवासङ्गतिरिति भावः । **तदसम्बन्ध इति** । तदाऽन्वितेत्यर्थः । ननु 'लुटि च क्लृप' इतिसूत्रभाष्येऽनुवृत्त्यर्थं सर्वचकाराः प्रत्याख्याता एवेत्येवमुक्तिरसङ्गतेति चेन्न । विधेयान्तरासमभिव्याहृतानामेव तेषां तत्र प्रत्याख्यानेन तत्समभिव्याहारे तावन्नैवाकाङ्क्षाशान्तेः पृथगन्वन्वय-सम्भावनया तदावश्यकत्वप्राप्तेरनदेतद्ध्वनयन्नाह—**प्रकृतेति** । एतेन व्याख्यानमपास्तम् । ननु ह्रस्वस्य वैकल्पिकतया तदभावे प्रकृतिभावार्थं चकारस्तेन चक्री अत्रेत्यादिसिद्धिस्तस्यापि तत्त्वात्पक्षे चक्र्यत्रेत्यपीति चेन्न । भाष्यप्रामाण्येन तदभावे तदभावात्, भाष्यविरुद्धसूत्राशयकल्पनापेक्षया तथैव तत्सौचित्यात्, तदाह–**एतेनेति** । भाष्यविरोधेनेत्यर्थः । नन्वेवं कथं तस्य सिद्धिरत आह—**चक्रीति** । यत्तु इको यणीति इग्ग्रहणादिको यणेव क्वचिद्यथा स्यादित्यर्थकाद्वाप्यश्व इत्यादिसिद्धमन्यथा ह्रस्वदीर्घानुवृत्त्या प्लुते प्रकृतिभावात्, अवर्णादौ गुणादेर्बाधकत्वात्सिद्धे किन्तेनेति, तन्न, वचनं विना विषयविवेकाज्ञानेन तदसम्भवाद्, गौरवात्, पचनीत्याद्यर्थत्वाच्च । तदेतद्ध्वनयन्नाह—**न समेति** । वार्त्तिकमित्येकवचनेन भाष्ये एकं वार्त्तिकमिति सूचितम् । **पार्श्वमितीति** । पर्शूनां समूह इत्यर्थः । **पदत्वमिति** । तेन भत्वनिमित्तक 'ओर्गुण' इति गुणो न । ननु इकि पूर्वेण सिद्धिरिति ऋत्यस्येत्येवास्तु, किञ्चाकोऽनवर्णे इत्येकसूत्रमेवास्त्वत आह—**सवर्णेति** । अत एव सप्तर्षीणामित्यत्र 'न समास' इति निषेधो नेति भावः । तयोः क्रमेण लक्ष्य आह—**होत्रिति** । आडोऽभ्रमायाह—**आट इति** । **एतेनेति** । उक्तरीत्या प्राप्तेरेवाभावेनेत्यर्थः । विनिगमनाविरहस्तु न,

ॐ ज्योत्स्ना ॐ

ग्रहणानुवृत्त्या आर्च्छदित्यादेर्व्यावर्त्तनेनेत्यर्थः । **इत्यपास्तमिति** । न चान्यार्थमवश्यवक्तव्ययोक्तयुक्त्यैवा-

ॐ सदाशिवभट्टीयम् ॐ

**प्रकृतसूत्रेति** । लुटि चेति सूत्रस्थचकारप्रत्याख्यानपरम्भाष्यन्तु विधेयान्तरासम्बद्धचकारविषयकमिति बोध्यम् । **एतेनेति** । भाष्यविरुद्धकल्पनापेक्षया सामर्थ्यसिद्धार्थानुवादकत्वस्य चकारे उचितत्वेनेत्यर्थः । 'वार्त्तिक'मित्येकवचनेन भाष्ये एकं वचनमिति सूचितम् । **अपास्तमिति** । पदान्तादित्यनुवृत्तिर्बहुकृच्छ्रकेत्यत बहुच्यातिप्रसङ्ग-भङ्गायावश्यकीति भावः । **व्याख्यानादिति** । तदुदाहरणे मानाभावादित्यर्थः । **प्रकरणेति** । प्रतिज्ञया तात्पर्य-

ॐ विषमपदविवृतिः ॐ

**वार्त्तिकमिति** । वक्तव्यपदाभावात्सूत्रत्वभ्रमवारणायेदम् । **एतेनेति** । पदान्तग्रहणानुवृत्त्यैवार्च्छ-दित्यादेर्व्यावर्त्तनेनेत्यर्थः । **अपास्तमिति** । नचान्यार्थमवश्यमाश्रयणीयेन चकारेणैव प्रकृतिभाव

प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य 'प्लुतप्रगृह्या' इतिसूत्राकाङ्क्षित-प्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तत्वात्प्लुतप्रकरणमारभते—**वाक्यस्य टेः ।** वाक्यस्ये-त्यभावे पदस्य टेरित्यर्थेऽनन्त्यस्यापि पदस्य टेः प्लुतः स्यात् । तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव सम्भवतीति न दोषः । टिग्रहणाभावे प्लुतश्रुत्योपस्थिताच्परिभाषयाऽ-जन्तस्यैव स्यात् । टिग्रहणे तु तत्सामर्थ्याट्टिनाऽचो विशेषणाद्व्यञ्जनान्तस्यापि भवति ।

**प्रत्यभिवादे ।** प्रणामादिभिराशिषं वाच्यमानो गुर्वादिर्यत्प्रतिसम्भाषते तत्प्रत्य-भिवादः, न त्वाशीर्वचनं, शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाशूद्रे इत्यस्य वैयर्थ्यापत्तेः । अत एव भाष्ये 'अशूद्रे इति किं ? कुशल्यसि तुषजके'त्युक्तम् ।

---

❀ अभिनव-चन्द्रिका ❀

नियतत्वेन वार्तिकेन स्वरूपग्रहणं, भोशब्दांशे त्वसम्भवात् स्वरूपग्रहणमेव, न पर्यायग्रहण-

❀ चिदस्थिमाला ❀

तदनुवृत्तेः क्लृप्तत्वात्। अनन्तरस्येति न्यायेन तस्य पररूपमात्रबाधकत्वात्। बह्वृचि वह्वृच्छकइत्यादिव्यावृत्यर्थं तस्यावश्यकत्वाच्च ।

**व्याख्यानादिति** । ज्ञापकपरभाष्यप्रामाण्यात्तित्साहचर्याच्च तस्य पूर्वसूत्रमात्रविषयकत्वात् । तद्वदस्याभावे मानाभावाच्चेत्यर्थः । **प्रकरणेति** । प्रतिज्ञया तत्र तात्पर्यबोधनात् । **प्रकृतीति** । लौकिक-मिति भावः । **द्वयमिति** । तावत एव सत्त्वादिति भावः । **प्रथमोपेति** । पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्ग-त्वादित्यर्थः। एतेन प्रथमत्याग इतिन्यायस्यात्रानाश्रयणादिदं चिन्त्यमित्यापास्तम् । टेरित्येति पाठः। **पदस्येति** । तस्याधिकृतत्वादितिभावः । **त्यर्थे**=तदापत्तौ । अपिनेष्टान्त्यसमुच्चयः । नन्वेवं टिग्रहणं व्यर्थं, तस्यान्त्या-स्याच एव तत्प्रवृत्तेरत आह—**टीति** । सम्भवतीति न्यायेनाह—**अजन्तस्यैवेति ।** नपुंसकह्रस्वत्ववदिति भावः । 'तत्सामर्थ्या'दितिपाठः। टिग्रहणसामर्थ्यादिति तदर्थः । अन्यथा 'त'दित्यादिः। एवञ्च न तन्न्यायप्रवृत्तिस्तदाह—**टिनेति** । विशेषणात्=विशेष्यीकरणात् । एवमग्रेपि । **तस्यापीति** । वाक्यस्येति भावः । एवम्प्रागपि बोध्यम् । यत्तु **हरदत्तदण्डिरत्नाकरादयः**—आशीर्वचनं प्रत्यभिवादः । तत्रैव प्रसिद्धत्वात्तथा च शूद्रभिन्नविषयकाशीर्वाद-वृतिवाक्यमित्यर्थं इति, तन्न, भाष्यविरोधात् , तदाह—**प्रणामेति** । आशिषं=तदादिकं, यदर्थरूपं बोध-यितुमिति शेषः । वचनं=तन्मात्रं । नन्वत्र न मानमत आह—**अत एवेति** । एतेनायुष्मानेधि तुषजकेति तदुक्तमपास्तं, तथाचाशीर्वादरूपं कुशलादिप्रश्नरूपं वाभिवादयितर्यनुग्रहद्योतकं वाक्यमात्रं

❀ ज्योत्स्ना ❀

च्छदित्यादेर्व्यावृत्तिसिद्धौ पदान्तग्रहणानुवृत्तिर्गौरवग्रस्तेति वाच्यम् , 'अनन्तरस्ये'ति न्यायेन पररूप-

❀ सदाशिवभट्टीयम् ❀

बोधनात् । **द्वयमिति** । तावत एव सत्त्वादिति भावः । 'वाक्यस्य टेरिती'ति पाठः । **अनन्त्यस्यापीति** । एकवचनन्तु प्रत्यभ्युद्यमानस्य हूयमानस्यैव प्लुतः प्राप्नोतीत्यभिप्रेत्य । सूत्रद्वयेन—यत्तु-भाष्ये वाक्ये यावन्ति पदानि तेषां सर्वेषां प्लुतः प्राप्नोतीत्युक्तं, तत्त्वेतद्द्वयातिरिक्तविषयकमिति भावः । **अचो विशेषणेति** । तदनु-पस्थितिस्तु न, टेर्विशिष्टस्य प्लुतापत्तेः । 'नित्यादा'विति पाठः। **प्रगृह्यस्येति** । 'सूत्रेणे'ति पाठः । सप्तम्यन्तपाठे

❀ विषमपदविवृतिः ❀

वारणे पदान्तग्रहणानुवृत्तौ गौरवमिति वाच्यम्, 'दिव उ'दित्युत्तरार्थं तदनुवृत्तेरावश्यकत्वात् । 'अनन्तरस्ये'ति न्यायेन पुनर्वृद्धिविधानस्य पररूपमात्रबाधनार्थत्वाच्च । ईषदसमाप्त ऋच्छको-बह्वृच्छक

**अभिवाद्ये इति**। नमस्कारादिपूर्वमाशीरादि याचयमानस्यर्थः। 'आयुष्म'न्नित्यायुष्मत्त्वस्य विधेयत्वात्सम्बोधनविभक्त्यभावः। **एधीति**। 'भवे'त्यस्याप्युपलक्षणम्। प्रत्यभिवादे शर्मादिप्रयोगो न नियतः। 'प्लुतोऽप्रगृह्यस्ये'ति सूत्रे प्रत्यभिवादेऽन्तस्यैचः प्लुतविधानात्। 'आयुष्मानेधि अग्निभूता३इ' इति भाष्ये तदुदाहरणाच्च। शर्मादिप्रयोगे तु तद्वैव प्लुतः। 'शर्मान्तं नाम ब्राह्मणस्ये'त्यादिस्मृत्या तस्य नामावयवत्वबोधनात्। **स्त्रियां नेति**। स्त्रिया अपि नाम्नाऽभिवादे—प्रत्यभिवादे इत्यर्थस्य भाष्यसम्मतत्वादिति भावः। **नाम गोत्रं वेति**। अभिवाद-प्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धे। तत्राधिकृतस्य 'पदस्ये'त्यस्य 'प्रत्यभिवादे' इत्यनेन विशेषणात्

ॐ चिदस्थिमाला ॐ

प्रत्यभिवादशब्देनोच्यते इति भावः। अत एवाह—**पूर्वकमाशीरादीति**। 'नित्यादा'विति पाठः। आदिना—स्त्रीलिङ्गपरिग्रहः। तस्या अनुवादविषयत्वात्, स्पष्टञ्चेदमन्यत्र। न च 'एधि'त्यस्ते क्वेऽपि—'आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने' इति मनूक्तिविरोध इति वाच्यं, तत्र 'भवे'त्यस्याऽर्थपरत्वात्तद्ध्वनयन्नाह—**एधीतीति**। नन्वेवं 'शर्मान्तं नाम ब्राह्मणस्ये'त्यादि स्मृतिविरोध एवात आह—**प्रत्येति**। 'सूत्रेणे'ति पाठः। सप्तम्यन्तपाठे—'वृत्तिकृते'ति शेषः। **प्रत्येति**। तदंशविषयवाक्ये। भाष्यसम्मतमित्यत्राह—**आयुष्मानिति**। 'ना इनी'ति पाठः। **तदिति**: प्रत्यभिवादांशेत्यर्थः। नैयत्यादस्वारस्यादाह—**शर्मादीति**। नन्वेवं वक्ष्यमाणविरोधोऽत आह—**शर्मान्तमिति**। तस्य=शर्मादेः। 'शर्मान्त'मित्यत्र तद्गुणसंविज्ञानबहुव्रीहिरन्तशब्दश्चरमावयववाचीति भावः। 'न स्त्र्यभिवादयेत पादोपसङ्ग्रहणमेव कुर्यादि'ति केचित्। अन्ये तु—साऽभिवादयतेऽपि, न तु स्वनाम गृह्णाति, एवञ्च प्रत्यभिवादेऽपि तद्भाव एवेति, तदसदिति ध्वनयन्नाह—**स्त्रिया अपीति**। तत्र तथोदाहरणादिति भावः। 'मूलोक्तस्य न्यायसिद्धत्वं न त्वपूर्वत्व'मिति प्रतिपादयंस्तत्र तत्प्रयोगे मानमाह—**अभीति**। एवेन तदन्यव्यवच्छेदः। 'असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेदि'ति मनुराद्ये मानं, द्वितीये तु मनुरुक्त एव। तत्र 'नाम'पदं गोत्रस्याप्युपलक्षणं, स्मृत्यन्तरात्। नन्वेतावता तयोस्तयोरन्यतरप्रयोगलाभस्तथापि तयोस्तदन्तत्वलाभः कथमत आह—**तत्रेति**। सूत्रे इत्यर्थः, तद्वाक्ये इत्यर्थो वा। ननु तद्वृत्तित्वं न तन्मात्रस्य, किन्तु वाक्यस्येति

ॐ ज्योत्स्ना ॐ

मात्रबाधकत्वात्पुनर्विधानार्थचकारस्येत्याशयात्। **उपलक्षणमिति**। 'आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने' इति मनूक्तेरिति भावः। तर्ह्येधिप्रयोगे किं मूलमिति चेत्, मनूक्तौ—भवेत्यस्यार्थपरत्वेन व्याख्यानात्। तत्रापि किं गमकमिति चेदायुष्मानेधीति भाष्यकृदुदाहरणमित्येवेति—बोध्यम्। **स्मृतिषु प्रसिद्धे इति**। 'असौ नामाहस्मीति स्वं नाम परिकीर्तये'दिति मनूक्तौ 'नामे'त्यस्य

ॐ सदाशिवभट्टीयम् ॐ

'वृत्तिकृते'ति शेषः। **प्रत्यभिवादेन्त्यस्यैव इति**। प्रत्यभिवादविषयवाक्यावयवस्यैव इत्यर्थः। ननु तत्प्रयोगे कथं नामान्तं वाक्यमत आह—**अवयवस्येति**। एवञ्च शर्मान्तशब्देन्तशब्दश्चरमावयववाची, तद्गुणबहुव्रीहिरिति भावः। नन्वेवमन्यतरप्रयोगस्य लाभेपि तस्य तदन्तत्वकाभः कथमत आह—**तत्राधीति**। स्पष्टञ्चेद-

ॐ विषमपदविवृतिः ॐ

इत्यर्थं तु पदान्तग्रहणस्यावश्यकत्वाच्च। **उपलक्षणमिति**। 'आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने' इति मनूक्तेः। तर्ह्येधीति प्रयोगे किम्मूलमिति चेत्, आयुष्मानेधीति भाष्योदाहरणमेवेत्यवेहि। **स्मृतिष्विति**। 'असौ नामाहमस्मीति स्वं नाम परिकीर्तये'दित्यादि मनुस्मृतिषु।

१ तयोः=नामगोत्रयोः, तयोः=अभिवाद-प्रत्यभिवादयोः। तयोः=नामगोत्रयोः।

प्रत्यासत्त्या प्रत्यभ्युद्यमानार्थवाचकस्यैव प्लुत इति भावः । तत्र नामशब्देन द्वादशेऽह्नि पित्रादिकृतं गृह्यते । अत एवा'ऽऽयुष्मान् भव दण्डि'न्नित्यादौ प्लुतो नेति स्पष्टं भाष्ये । **भोराजन्येति** । भोःशब्दस्य राजन्य-वैश्यवाचकनाम्नश्च टेः प्लुतो वेत्यर्थः । भोःशब्दस्याप्राप्ते, इतरयोस्तु नामत्वात्प्राप्ते—विभाषेयम् ।

**दूराध्दूते** । यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोद्ध्यमानो न शृणोति किन्त्वधिकं प्रयत्नमपेक्षते—तावद्दूरम् । दूरादाह्वानञ्च दूराद्बोधनस्योपलक्षणं, न तु सम्बोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य सम्बोधनस्योपलक्षणम् । 'आगच्छतु भवान्देवदत्त' इत्येवमाह्वानस्यापि सम्भवात् । अत एवाऽऽकडारसूत्रे नदी-गुरुसञ्ज्ञयोः समावेशे 'ब्रात्सीवन्धु'रित्यत्र 'गुरो'रिति प्लुतो, 'नदी वन्धुनी'ति पूर्वपदान्तोदात्तत्वञ्च

ॐ अभिनव-चन्द्रिका ॐ

मिति भावः । **विभाषेयमिति** । उभयत्र विभाषेयमित्यर्थः । **सम्बोधनस्येति** । प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वस्वरूपसम्बोधनस्य नोपलक्षणमित्यर्थः ।

ॐ चिदस्थिमाला ॐ

नत्तस्य विशेषणमत आह—**प्रत्यासत्त्या चेति** । एवञ्च तत्सम्बन्धिनो वाक्यसम्बन्धित्वाय वाक्यान्तरत्वं तयोरावश्यकमिति भावः । तत्र=न्यायसिद्धे वचने । कृतं=कृतमेव । 'द्वादशेऽह्नि पिता नाम कुर्यात्', 'शर्मान्तं नाम ब्राह्मणस्ये'त्यादिश्रुति-स्मृत्याद्युक्तत्वात् । एतेन बोधकशब्दमात्रव्यावृत्तिः, तत्फलमाह—**अत एवेति** । स्वरूपास्वरूपग्रहणकृतवैरूप्याय व्याचष्टे—**भोःशब्देति** । उक्तहेतोरेवाह—**नाम्नश्चेति** । 'प्लुतो वेत्यर्थ' इति पाठः । अत एवाह—**भोःशब्देति** । अनामगोत्रत्वात् । अत एव भाष्यकृताऽपि तत्राऽप्राप्तिं मत्वा सर्वस्यैव नाम्नः प्रत्यभिवादे भोः—शब्द आदेशः, 'अपर आहे'त्यादिनोक्तः, 'इन्द्रवर्मा'दौ च न तथानुक्तेः । अत एव 'शर्म-वर्मादेर्नामाऽनर्भाव' इति प्रागुक्तम्, अत एव शर्मान्तटेर्नित्यं प्लुतसिद्धिः । एतेन—'वैरूप्येण व्याख्याने न मान'मित्यपास्तम् ।

दूरत्वस्यानियतत्वादाह—**यावतीति** । **प्राकृतेति** । स्वाभाविकेत्यर्थः । **द्वयोपेति** । तन्मात्रस्येत्यर्थः । एवञ्च तत्सत्त्वानियमः, आह्वानमस्तु, मास्तु वेति भावः । मनोरमा-दण्डि-रत्नाकरादिसकलग्रन्थान्दूषयति—**न त्विति** । नियतस्योपलक्ष्यत्वं, नाऽनियतस्येत्याशयेनाह—**आगेति** । एवञ्चाह्वानमात्रे तस्यैवाऽसत्त्वात्कथं तत्त्वमिति भावः । नन्विष्टानुरोधेन तथोच्यतेऽत आह—**अत एवेति** । मदुक्तार्थाङ्गीकारादेवेत्यर्थः । **कडारेति** । रेफान्तमनुकृत्यागन्तुनाऽकारेण निर्देशः । **प्लुत इति** । अनन्त्यस्य गुरोरीकारस्येति भावः ।

ॐ सदाशिवभट्टीयम् ॐ

तत्रैव भाष्ये । स्वरूपास्वरूपग्रहणकृतविशेषाय व्याचष्टे—**भोःशब्देति** । प्लुतो वेति पाठः । **दूराद्बोधनस्योपेति** । तन्मात्रस्येत्यर्थः । नियतस्योपलक्षणं नत्वनियतस्येत्याशयेनाह—**आगच्छतु इति** । **कडारसूत्रेति** ।

ॐ विषमपदविवृतिः ॐ

अत्र नामपदं—गोत्रस्याप्युपलक्षणम् । **दण्डिन्नित्यादाविति** । 'दशम्युत्तरकालं जातस्य पुत्रस्य नाम विदध्याद्घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरि प्रतिष्ठितं, तद्धि प्रतिष्ठिततमं भवति, द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धित'मिति कल्पसूत्रे तद्धितान्तस्य नामत्वप्रतिषेधादिति भावः । **दूराध्दूते च** । 'दूरान्तिकार्थेभ्य' इति प्रातिपदिकार्थमात्रे पञ्चमी, ल्यब्लोपनिमित्ता वा ।

फलमुक्तं भाष्ये । अन्यथाऽत्र सम्बोधनाभावेन 'गुरो'रित्यस्याप्राप्त्या तदसङ्गतिः स्पष्टैव ।
उपलक्षणत्वादसत्यप्याह्वाने भवति, तदाह—सक्तूनित्यादि । अत्रापि दूराद्धूते इत्येतदनुवृत्तस्य पदस्येत्यस्य विशेषणं, तेन ह्वयमानार्थवाचिनः पदस्यैव टेः प्लुतः, तच्च रूढं यौगिकं वेत्यन्यदेतत् ।

हैहेप्र । हैहयोः सम्बोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां सम्बोधनदर्शनेन च तयोरपि ह्वयमानार्थपदत्वाद् 'गुरोरनृत' इत्येव सिद्धे नियमार्थमिदमित्याह—

॥ अभिनव-चन्द्रिका ॥

अत एवेति । सूत्रे 'दूराद्धूते' इति बोधनमात्रस्य उपलक्षणमिति स्वीकारादेवेत्यर्थः ।
गुरोरनृत इत्येव सिद्ध इति । न च 'गुरोरनृत' इत्यस्य उद्देश्यतावच्छेदकं ह्वयमानार्थबोधक वाक्यघटकं यत्पदं तत्सम्बन्धि ऋद्भिन्नानन्त्यगुरुत्वन्तत्सम्बन्धि टित्वञ्च. 'हे हे' इत्यनयोरिदयना-

॥ चिदस्थिमाला ॥

अन्यथात्रेति । तदुक्तार्थाङ्गीकारे—प्रकान्ते 'वात्सीबन्धु'रित्यत्रेत्यर्थः । अपिना—तत्समुच्चयः । सक्तूनिति । अत एवातो रोरिति सूत्रे 'सुस्रोता ३ अत्र त्वमसी'त्युदाहृतम् । पूर्ववदाह—अत्रापीति । पूर्ववदत्र नियामकाऽभावेनाविशेषादाह—तच्चेति । पदञ्चेत्यर्थः । पित्रादिसङ्केतितनामप्रकृतिक, पाचकशब्दादिप्रकृतिकञ्चेत्यर्थः । मूलादिरीत्याह—हैहयोरिति । अस्यानुपयोगादाह—केवलेति । नामग्रहणनिषेधस्थले इति भावः । अपिनेतरसाहित्यसमुच्चयः । 'ह्वये'ति बहुव्रीहिः । एवमग्रेऽपि । ननु 'वाक्यस्य टे'रित्युक्तेः

॥ ज्योत्स्ना ॥

गोत्रोपलक्षणत्वादिति भावः । केवलाभ्यामपि ताभ्यां सम्बोधनदर्शनेनेति । 'आगच्छ हे' इत्यादौ ।

॥ सदाशिवभट्टीयम् ॥

रेफान्तमनुकृत्यागन्तुनाकारेण निर्देशो बोध्यः । असत्यपीति । अत एवातो रोरिति सूत्रे 'सुस्रोता ३ अत्र त्वमसी'त्युदाहृतं भाष्ये, ननु तत्र दूरत्वस्याविवक्षाया वक्ष्यमाणत्वेन किमर्थं योगविभागेन विधानं, 'गुरोरनृत'इत्येव सिद्धमिति चेन्न । भोः शिव ३ भव ३ इत्यादौ गुरोरभावेन, नपुंसके कर्तृ हर्तृ इत्यादौ ऋकारसत्वेन भो अ ए ओ इत्यादौ अनन्त्याभावेनाद्यांशस्याप्राप्त्याऽऽदेरित्यंशस्यापि मन्त्रियोगशिष्टन्यायेनाप्रवृत्तेः । तत्र दूरत्वस्याविवक्षाया वक्ष्यमाणत्वेनेह तु तद्विवक्षणेन विभागावश्यकत्वाच्च । हैहे । सम्बोधनदर्शनेनेति । नामग्रहणनिषेधस्थल इति भावः । गुरोरनृत इत्येवेति । उक्तरीत्या तस्यानन्त्याभावेनाप्राप्तेरिदं चिन्त्यम् । अत एव पूर्वेण ह्वयमानार्थस्य विधानेनाप्राप्त्या वचनमिति कैयटे । उद्योतकारोऽपि 'दूराद्धूते चे'ति सूत्रान्तरेण सिद्धे किमर्थमित्यत आहेत्यवतारितवान् । हैहेन्त इति ।—बहुव्रीहिस्तत्पुरुषश्च तु नद्ये-

॥ विषमपदविवृतिः ॥

हैहेन्त इत्येवेति । न च 'वाक्यस्य टे'रित्यधिकारादन्तग्रहणवैयर्थ्यम् , तदभावे हैहेग्रहणस्यान-

॥ वरवर्णिनी ॥

हैहेप्रयोगे । 'वाक्यघटकह्वयमानार्थकपदावयवो यो गुरुस्तस्य प्लुत' इति 'गुरोरनृत' इत्यस्यार्थः । एवञ्च 'हे रामे'त्यादावेकारस्यापि ह्वयमानार्थकपदघटकतया 'गुरोरनृत' इत्यनेनैव सिद्धाविदं नियमार्थमिति तात्पर्यम् । ननु हैहे इत्यस्य वाक्यविशेषणतया तदन्तविधौ हैहेशब्दान्तवाक्यघटकहैहेशब्दयोरित्यर्थाद्धे रामेत्यादौ प्लुतो न स्यादित्यत आह—हैहेऽन्ते इति । अयम्भावः—'हैहेशब्दान्तवाक्यावयवयोः—प्रत्यासत्त्या—हैहयो'रित्यर्थक—'हैहेऽन्ते' इत्येव सिद्धे प्रयोगग्रहणसामर्थ्यात्तदन्तविध्यभावेन वाक्यावयवहैहयोरित्यर्थेन हे रामेत्यत्रापि प्लुतसिद्धिरिति । न च 'हैहेऽन्ते' इत्यनुचितं, हैहयोरित्युक्तेऽपि तदन्तविधिनोक्तार्थलाभसम्भवादिति वाच्यं, निर्दिश्यमानपरिभाषाप्रवृत्तये 'हैहेऽन्ते' इत्यस्यौचित्यात् ,

**हैहयोरेवेति** । 'हैहेऽन्ते' इत्येव सिद्धे प्रयोगग्रहणादनन्त्ययोरपि । तदाह—हे ३ **रामेति** । केचित्तु एकं हैहेग्रहणमनन्त्यार्थम् , अन्यथा 'वाक्यस्य टे'रित्यधिकारादन्त्य-

### ॐ अभिनव-चन्द्रिका ॐ

वच्छेदकं—हूयमानार्थबोधकवाक्यघटकं यद्धैहेपदं तत्सम्बन्धि टित्वं । तथा चानयोः सामानाधिकरण्यस्यैवाभावाद्व्याप्यव्यापकभावस्य दूरापास्तत्वेन 'नियम्यत्वेनाभिमतशास्त्रीयोद्देश्यतावच्छेदकव्याप्यरूपावच्छिन्नोद्देश्यताकत्वे सति—नियम्यत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वनियामकत्व'मिति नियामकत्वलक्षणस्य प्रकृतेऽभावादिदमसङ्गतमिति वाच्यम्, आह्वानविषयकवाक्यघटक-

### ॐ चिद्‌स्थिमाला ॐ

कथं 'हे रामेर्ता'त्यत आह—**हैहेऽन्त इति** । बहुव्रीहिः, तत्पुरुषो वा, तयोरन्तत्वे सतीत्यर्थः । 'एव'-व्यावर्त्यमाह—**प्रयोगेति** । 'हैहयो'रिति नियमार्थ—राकारव्यावृत्त्यर्थमिति भावः । मूलादि दूषयन्सिद्धान्तमाह—**केचित्त्विति** । **एकमिति** । आद्यमित्यर्थः । प्रयोगग्रहणफलस्य स्वतन्त्रस्य वक्ष्यमाणत्वादाह—**हैहे इति** । प्रत्यासत्त्या 'तयोरेव प्रयोग'इत्यर्थलाभ इति भावः । नन्वेवमपि 'प्रयोगे' इति व्यर्थं,

### ॐ ज्योत्स्ना ॐ

नचैवं स्वसमभिव्याहृतपदशक्त्युपस्थापकत्वाभावादनयोर्द्योकत्वानुपपत्तिरिति वाच्यम्, स्वघटितवाक्यार्थान्वययोग्यपदार्थाक्षेपकत्वरूपस्य द्योतकत्वस्यात्र विवक्षितत्वात् । तथात्वञ्च 'हे' इत्यस्य सम्बोधनपदार्थाक्षेपकत्वात् , 'प्रादेशं विपरिलिखती'त्यत्र वेर्विमानक्रियाक्षेपकत्वाद्द्योतकत्वं यथा । प्रादेशं विमाय परिलिखतीत्यर्थादित्याहुः । **हैहेन्ते इत्येव सिद्धे इति** । न च वाक्यस्य टेरित्यधिकारादन्त इत्यस्य वैयर्थ्यमिति वाच्यम् , तदभावे हैहेग्रहणस्यानन्त्यार्थकत्वापातात् । ततः किमिति चेन्नियमार्थता न स्यादिति—हे रामेत्यादौ हूयमानार्थकान्त्यपदटेः प्लुतेन समावेशः स्यात् । पुनर्हैहयोरिति किमर्थं स्यादिति चेदप्रतिपत्तिजनकमेव स्यादिति माकारि तत् । अथवा हैहयोः सम्बन्धि

### ॐ सदाशिवभट्टीयम् ॐ

रन्तत्वे सतीत्यर्थः । अत्रेदं बोध्यं—हैहयोर्हूयमानार्थकत्वे 'हैहयो'रिति न्यासे वाक्यावयवयोस्तयोष्टेश्चः प्लुत इत्यर्थे हे ३ रामेत्यादौ विध्यर्थ स्यात्, तदन्तवाक्ये तु पूर्वेण सिद्ध एव सः, तदादौ वाक्ये हैहेटि—वाक्यटिप्लुतयोः समावेशः परं दोषः । हैहेन्तवाक्यावयवहूयमानार्थपदटेः प्लुत इत्यर्थे राम हे इत्यादावनिष्टोनन्त्यपदटेः प्लुतः सूत्रस्य फलं स्यात् , आदिभूतयोस्तयोरिष्टः प्लुतो न सिध्येदनन्त्यपदटि—अन्त्यहैहेटि—प्लुतयोरनिष्टः समावेशश्च स्यात् । अन्तयोर्हैहयोः परमिष्टः प्लुतः पूर्वेण सिध्यति । 'प्रयोगे हैहयो'रिति न्यासे त्वारम्भादेवानन्त्यग्रहे सिद्धेऽन्त्यानन्त्ययोः प्लुतार्थङ्क्रियमाणात्प्रयोगग्रहणान्नियमार्थत्व सम्पद्यते इति

---

### ॐ वरवर्णिनी ॐ

अन्यथा निर्दिश्यमानपरिभाषया 'हेराम—कृष्ण हे' इत्यत्र वाक्यादेर्हे इत्यस्य न स्यात् । ननु 'गुरोरनृत' इत्यत्र 'दूराद्धूते' इत्यनुवृत्त्या तस्य पदविशेषणत्वेन 'हूयमानपदार्थवाचकपदान्तवाक्यावयवहूयमानार्थकपदावयवगुरो'रित्यर्थात्प्रत्यासत्त्या 'यादृशहूयमानार्थकपदान्तं वाक्यं तादृशपदावयवगुरो'रित्यर्थेन हे रामेत्यत्राऽप्राप्तप्लुतविध्यर्थत्वेनास्य नियमार्थत्वालाभ इति चेदुच्यते,—वाक्यघटकप्रयुज्यमानयोर्हैहयोरित्यर्थको 'हैहेप्रयोगे' इत्येको योगो—हे राम इत्यत्र विध्यर्थः । ततो 'हैहयो'रिति द्वितीयो योगः, स च नियमार्थ इत्याशयात् । हैहेघटितवाक्यावयवगुरोश्चेत्प्लुतस्तर्हि हैहेघटकगुरोरेवेति नियमसूत्रार्थः । इत्थञ्च 'गुरोरनृत' इत्यत्र हैहेघटितवाक्यातिरिक्तत्वेन सङ्कोच इति शेखरकृतां निगूढमाकूतमिति — **श्रीशिवकुमारशास्त्रि**चरणा व्यावर्णयामासुरिति—शेषावतारा अस्मद्गुरवः **श्रीत्रिपाठिचरणा** व्याचक्षते ।

योरेव तयोः स्यात्, तदाह—**हे३ रामेति**। प्रयोग इति तु—यत्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याभावादनर्थकयोरपि तयोः प्लुतार्थं, तदाह—**राम हे३ इति**। अन्यथाऽप्रयुक्तयोः प्लुतासम्भवात्तद्वैयर्थ्यं स्पष्टमेव। 'हैहयो'रिति तु—तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थम्। नियमे तु न मानम्। तेनात्र प्लुतसमावेशः, एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः।

❀ अभिनव-चन्द्रिका ❀

ऋद्धिमानन्त्यगुरुत्वं तत्सम्बन्धिटित्वञ्च—'गुरोरनृत' इत्यस्योद्देश्यतावच्छेदकमित्यङ्गीकारेण प्रकृत-सूत्रस्य नियामकत्वसौलभ्यादिति दिक्। **प्रयोग इति तु इति**। अयम्भावः-'हैहयो'रित्येव सूत्र-मस्तु, हैहेशब्दान्तं यद्वाक्यं तदवयवनिर्दिश्यमानावयवटेरित्यर्थः। तथा च द्विर्नायं हैहेग्रहणं

❀ चिदस्थिमाला ❀

नह्यप्रयुक्तयोः प्लुतः सम्भवतीत्यत आह—**प्रयोगेति**। तयोः=सम्बोधनद्योतकयोर्हैहे इत्येतयोः। **तेनै-वेति**। सम्बोधनविभक्त्यन्तेनैवेत्यर्थः। **तयोरिति**। 'द्वौ ब्राह्मणा'वित्यादिवत्प्रयोग इति भावः। अन्यथा =उक्तरीत्यनङ्गीकारे। नन्वेवमपि हैहयोरिति व्यर्थं, प्रत्यासत्त्या तयोरेव विधानादत आह—**हैहयो-रिति**। तदभावे 'दूराद्धूते' इत्यस्यानुवृत्त्या पूर्ववद्धूयमानार्थकपदस्यैव टेस्तयोरन्त्यानन्त्यत्वयोः सतोः स्यान्नतु प्रत्यासत्तिन्यायेन, तथा तदभावे नियामकत्वं दुर्लभमेव, सूत्रन्त्वगुरोः करणेन सफलमिति भावः। पूर्वेणाऽसिद्धिमाह—**हूयेति**। तयोराभिमुख्यरूपसम्बोधनद्योतकत्वादिसत्त्वेऽपि तत्त्वाभावः स्फुट एव, नामगोत्रयोरेव तद्वृत्तित्वात्; अत एव 'तच्च रूढ'मिति प्रागुक्तविरोधो नेतिभावः। **विध्यर्थमिति**। तत्त्वसूचकमित्यर्थः। उक्तहेतोरेवाह—**नियमे त्विति**। तथाच मूलोक्त एवकारोऽयुक्त-स्तदाह—**तेनेति**। पूर्वेण हूयमानार्थकपदस्य टेः प्राप्तेरिति भावः। अत्र **केचिदित्यनेना**ऽरुचिः सूचिता,

❀ ज्योत्स्ना ❀

हूयमानार्थकानन्त्यपदस्यापि प्लुतार्थं स्यादिति राम हे इत्यादौ प्लुतसमावेशः स्यात्। सति तु प्रयोगग्रहणे हैहयोरित्येको योगो नियमार्थः। 'हैहेप्रयोग' इति योगान्तरे च-हैहयोरित्यस्यानु-वृत्त्याऽनन्त्ययोस्तयोरेव प्लुत इति सकलेष्टसिद्धिरित्याशयः। **अन्यथेति**। प्रयोगग्रहणस्यानर्थक-हैहयोः प्लुतार्थत्वाभावे इत्यर्थः। **तद्वैयर्थ्यं स्पष्टमेवेति**। सति तु प्रयोगग्रहणे तत्सामर्थ्या-दानर्थक्ये सत्यपि प्रयोगस्तयोश्च प्लुतसिद्धिरिति भावः। **अप्राप्तेर्विध्यर्थमिति**। अन्यथा राम हे

❀ सदाशिवभट्टीयम् ❀

सर्वेष्टसिद्धिः। प्रथमे पक्षे प्रत्यासत्त्या द्वितीयार्थे त्वभिमते आद्यार्थवारणाय-हैहेन्ते इत्येव वदेत्। 'हैहेप्रयोगे' इत्युक्ते त्वन्त्यानन्त्यसाधारणे तत्प्रयोगे हूयमानार्थवाक्यपदस्य टेः प्लुत इत्यर्थादिष्टे सिद्धेपि समावेशः स्या-दिति यथान्यासमेव रमणीयम्। 'प्रयोगे हैहयो'रिति तु सुवचं, 'कालाध्वनोरत्यन्तसंयोग' इतिवत्प्रत्यासत्त्या सर्वेष्टसिद्धिः। **अन्त्ययोरेवेति**। इदञ्चिन्त्यम्, हैहेन्ते इत्येव सिद्धे प्रयोगग्रहणेनोभयार्थत्वसिद्धेः। **अनर्थक-योरपीति**। अयं भावः—एकं हैहेग्रहणं—नामग्रहणनिषेधविषये एहि हे इत्यादौ हूयमानार्थकत्वाभावादप्राप्ते विध्यर्थम्। अपरं च हे रामेत्यादौ वाक्यादित्वादप्राप्ते विध्यर्थम्। अर्थवत्परिभाषाबाधे च न मानमतः **प्रयोगेति**। तस्यानर्थकत्वं च सखीशब्दे खीशब्दस्येव ततोऽर्थबुबोधयिषाविरहात्। एतेन द्योतितत्वेन द्यो-त्याभावादित्यसङ्गतं, द्योत्यभेदाभावेपि द्योतकसमुच्चयस्य बहुशो दृष्टत्वादित्यपास्तम्। बुबोधयिषाविरह-प्रतिपादनेस्योपयोगात्, अनर्थकस्यापि पदत्वं तु निपातस्यानर्थकस्येत्यनेनास्त्येवेति बोध्यम्। वाक्यपदन्तु टेरेव विशेषणं, नान्त्यस्य? तदवयवत्वोपयोगः। क्वचित्तु तन्मध्यपतितेति तत्त्वमस्त्येव, पदत्वाभावादिति। आभिमुख्यरूपसम्बोधनद्योतकत्वेपि तत्त्वाभावः। नामगोत्रयोरेव तद्वृत्तित्वादत एव 'तच्च रूढ'मिति

यत्तु-अयं हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति, तन्न। शिव हे इत्यादौ तस्याप्राप्तेस्तन्न्यायविषयाभावात्।

**गुरोर।** 'दूराद्धूते' इत्यनुवर्त्तते, तेन दूराद्बोधन एव प्रवृत्तिः,-तदाह— **दूराद्धूत इति।** दूरत्वञ्चात्राविवक्षितं, तेन प्रत्यभिवादे 'भोराजन्ये'त्यस्य विषयेऽप्यस्य प्रवृत्तिः। तद्विषयेऽप्युपलक्ष्यबोधनसत्त्वात्। सर्वप्लुतप्रकरणस्य तु न शेषः। तथा हि सति 'वाक्यस्य टे'रित्यनेन सहैवास्याप्यधिकारत्वमेव कुर्यात्। एतत्त्रयविषयमेवेद-मिति प्रकृतसूत्रे 'अनुदात्तम्प्रश्नान्ते'ति सूत्रे च वृत्तौ स्पष्टम्। 'अपि'शब्दो यथाप्राप्त-

---

**❀ अभिनव-चन्द्रिका ❀**

निर्दिश्यमानपरिभाषाया अप्रवृत्तये। 'हैहेऽन्तस्ये'त्यनेनैव निर्दिश्यमानपरिभाषाया अप्रवृत्तौ सिद्धायां द्वितीयहैहेग्रहणं-तदन्तविध्यभावाय। 'हैहेऽन्ते हैहयो'रित्येव सिद्धे प्रयोगग्रहणमनर्थकहैहयोरपि

**❀ चिदस्थिमाला ❀**

नन्वेजन्तु—'यद्यपि सर्वं भाष्य-कैयटारूढं, तथापि वैकल्पिकेषु भावानुष्ठानौचित्येन ( शास्त्रा ? ) 'हैहयोः प्रयोगे'इत्येव प्रत्यासत्तिन्यायेन, षष्ठ्युच्चारणसामर्थ्येन च तयोरेव प्लुतसिद्ध्या तद्व्यर्थमेवे'ति।

समावेशं समर्थयन्नेवकारसमर्थनं केनचित्कृतं खण्डयति—**यत्त्विति।** न्यूनत्वाद्यथाश्रुतमूलासङ्गतेराह— **दूरत्वञ्चेति।** अयोगविभागाभिप्रायेण विकल्पसाम्याद्विशिष्याह—**भोराजन्येति।** नन्वनेन सर्वत्र शास्त्रान्तरैः प्लुतेऽनन्त्यस्य तस्य स कुतो नेति तदुल्लेखाद्यसङ्गतिरत आह—**सर्वेति। स्याप्येति।** 'गुरो-रनृत' इति सूत्रस्यापीत्यर्थः। **एवेन**—विधित्वव्यवच्छेदः। अत्र मानमप्याह—**एतत्त्रयेति।** 'प्रत्यभि-वादे' 'दूराद्धूते च' 'है हेप्रयोगे' एतत्त्रयेत्यर्थः। भाष्यादिरुदासीनत्वादाह—**वृत्ताविति।** तत्राद्ये उक्तं— "प्रत्यभिवादे 'दूराद्धूते चे'त्येवमादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यते" इति। अन्त्ये च

**❀ ज्योत्स्ना ❀**

इत्यादौ सामर्थ्यादनन्त्यस्यापि हूयमानार्थकस्यैव स्यादिति भावः। **एतत्त्रयविषयमेवेदमिति।** 'प्रत्यभिवादेऽशूद्रे' 'दूराद्धूते च' 'हैहेप्रयोगे हैहयो'रित्येतत्त्रयविषयमित्यर्थः। **वृत्तौ स्पष्टमिति।**

**❀ सदाशिवभट्टीयम् ❀**

प्रागुक्तविरोधो न। **आहुरिति।** उक्तान्यस्वरसबीजानि। समावेशं समर्थयन्नेवकारसमर्थनं खण्डयति— **यत्त्विति।** यत्तु 'गुरोरनृत' इत्यस्य भिन्नपदत्वेपि प्रवृत्तिरिति, तन्न। 'अनुदात्त'मित्यनेन सिद्धे एकैकग्रहण-क्लिमर्थमिति भाष्यविरोधात्। **गुरोरनृ। अविवक्षितमिति।** इदञ्च न भाष्यसम्मतम्-अत एव प्रकृतसूत्रे भाष्ये 'लघोरन्त्यस्य प्लुतप्रसङ्गो दूराद्धूतेचे'ति विशिष्योक्तम्। सूत्रशेषस्य-'एकैकग्रहणमनुदात्तं प्रश्नान्ता-भिपूजितयोरिति विहितप्लुतसमावेशाभावार्थम्-'इति भाष्यस्य तु-एतद्विहितप्लुतमनूद्यानुदात्तत्वरूपगुणमात्रन्तेन विधीयत इत्याशयः, तदेतद्वक्ष्यति **वृत्तौ स्पष्टमिति। भोराजन्येति।** अयोगविभागमभिप्रायेण विकल्प-साम्याद्विशिष्योक्तिरित्याहुः। **एतत्त्रयेति।** प्रत्यभिवादे' 'दूराद्धूते' हैहेप्र'एतत्त्रयेत्यर्थः। इदं केचित्तु मते। पूर्वमते तु 'भोराजन्ये'ति त्रित्वं बोध्यम्। **वृत्ताविति।** तत्राद्ये उक्तं-प्रत्यभिवादे प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यते इति। अन्त्ये च नानुदात्तमित्यादिना लाघवादनुदात्तत्वादिगुणविधानेन प्लुतः, स च दूराद्धूत इत्यादिभिरेवेत्युक्तम्।

**❀ विषमपदविवृतिः ❀**

न्यार्थतापात इत्याशयात्। **एतत्त्रयविषयमेवेति।** 'प्रत्यभिवादे शूद्रे', 'भोराजन्यविशां वेति वाच्यं', 'दूराद्धूतेचे'त्येतत्त्रयविषयमित्यर्थः। **वृत्तौ स्पष्टमिति।** प्रकृतसूत्रे चैवं वृत्तिग्रन्थः-प्रत्यभिवादे

टिसमुच्चयार्थः। यदि तु गुरोः सन्निधानादन्त्यो गुरुरेव समुच्चीयेत, तदाऽन्त्यलघुमति-अनन्त्यगुरावेतस्य, अन्त्यलघौ 'दूराद्धूते चे'त्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः। एकैकग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात्। तेन यत्रान्त्योऽपि गुरुरनन्त्यगुरुद्वयं वा—तत्रैव पर्यायः स्यात्। व्याख्यानाच्चैतदर्थलाभः। **अनन्त्यस्यापीति**। अपिना-ऽन्त्यस्य गुरोरगुरोश्चेत्यर्थः। **पर्यायार्थमिति**। अन्यथा समावेशः स्यादिति भावः। 'अनुदात्तं पद'मिति तु त्रिपाद्यां न प्रवर्तत इति तत्रैव वक्ष्यते। 'प्राचा'मिति तु पक्षे सर्वेषां प्लुताभावार्थम्। **विकल्पत इति**। सा च व्यवस्थितविभाषा। तेनाग्नीद-ग्नीन्विहरेत्यादौ 'अग्नीत्प्रेषणे' इति न। भाष्ये तु 'विभाषापृष्टे'ति सूत्रे 'विभाषे'ति योग-

❀ अभिनव-चन्द्रिका ❀

प्लुतार्थमिति। **व्याख्यानाच्चेति**। अनन्त्यस्यापीत्येतत्सामर्थ्यादित्यर्थः। **अन्यथा** एकैकग्रहण-सामर्थ्यादेतद्विहितप्लुतपर्यायस्य सिद्धत्वादेतद्वैयर्थ्यं स्पष्टमेव। **वक्ष्यत इति**। 'अनुदात्तं पद'मिति

❀ चिदस्थिमाला ❀

'अनुदात्त'मित्यादिना लाघवादनुदात्तत्वादिगुणमात्रं विधीयते, न प्लुतः, स च 'दूराद्धूते' इत्यादिभि-रेव—"इत्युक्तम्। प्रकृतत्वादाह—**टीति**। इदमेव प्रतिपादयति—**यदि त्विति**। 'अब्रुवन्' इति-वदाह—**लघुमतीति**। वाक्ये इत्यर्थः। आदिशब्दः प्रकारे, बहुवचनं स्पष्टार्थम्। नन्वेकैकग्रहणात्तद-भावोऽत आह—**एकैकेति**। अत्रैव करणादिति भावः। अपिनाऽनन्त्यसमुच्चयः। आदिना त्रयादि-परिग्रहः। ननु सान्निध्यात्तथैवाऽर्थोऽस्तु, समावेशे इष्टापत्तिरत आह—**व्याख्येति**। 'टे'रित्यस्य प्रकृतत्वेन वाक्यान्त्यस्य प्राप्तत्वेनोपस्थितत्वादनन्त्यसमभिव्याहारेण तेन तत्समुच्चयस्यैवौचित्यादित्यर्थः। अत एवा-'ऽनन्त्यस्यापी'त्यग्रे 'गुरो'रिति न पठितं सूत्रे। एतेन—'तेनाऽगुरुरेव समुच्चीयते' इत्यपास्तम्। उक्तमेव व्याख्यानेन विशदयति—**अपिनान्त्येति**। एतेन—मूले—'क्वचित्तस्यानन्त्यस्यापि गुरो'रिति पाठः सूचितः। यत्तु—"अनन्त्यग्रहणं व्यर्थं, पृथग्योगकरणसामर्थ्येनैवाऽनन्त्यस्य सिद्धेः, अन्यथा 'दूराद्धूते' इत्यनेन सहैव पठेत्—"इति **रत्नाकरः**, तन्न, तथा सति 'तक्रकौण्डिन्य'न्यायेनान्त्यस्य गुरोः प्लुतानापत्तेः, तेनैव न्यायेनानन्त्यगुरुकेऽन्त्यलघोष्टेः प्लुतानापत्तेश्च। एकैकग्रहणन्त्वनन्त्यगुरूणामेव पर्यायार्थं स्यादिति दिक्। नन्व'नुदात्तं पद'मिति परिभाषणात्र समावेशोऽत आह—**अनुदात्तमिति**। अत एव तन्त्र-

❀ ज्योत्स्ना ❀

'प्रत्यभिवादेऽशूद्रे' 'दूराद्धूते' इत्यादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यत इति हि तत्रोक्तम्। न न्वेकस्योदात्ते प्लुते कृतेऽपरस्मिन्ननुदात्तं पदमित्यस्य प्रवृत्त्या समावेशो दुर्लभोऽत आह—**अनुदात्तम्पदमिति त्विति**। **त्रिपाद्यां न प्रवर्तत इतीति**। सपादसप्ताध्यायीस्थानुदात्तं

❀ सदाशिवभट्टीयम् ❀

**अन्त्यलघुमतीति**। अब्रुवत इति वस्साधु। वाक्ये इति शेषः। **चेत्यादीनामिति**। आदिः प्रकारे, बहुवचनं स्पष्टार्थम्। **न प्रवर्तत इति**। स्वरितत्वादित्यादि, तत्रैव शेखरे क्षोदिष्यते। प्रवृत्तावप्युदात्तानुदात्त-

❀ विषमपदविवृतिः ❀

दूराद्धूतेचेत्यादिना यः प्लुतो विहितस्यैवायं स्थानिशेष उच्यत इति। आदिना—भोराजन्येत्यस्य सङ्ग्रहः। 'अनुदात्तं प्रश्नान्ते'ति सूत्रे—'नानेन प्लुतो विधीयते, किन्तु दूराद्धूतादिषु विहितस्य प्लुतस्यानुदात्तगुणमात्रं विधीयत'इति। **एतद्विहितानामेवेति**। एतदभ्यनुज्ञातानामेवेत्यर्थः। पूर्वं-वृत्ति-ग्रन्थेनास्य स्थानिविशेषमात्रलाभादिति बोध्यम्। **त्रिपाद्यां न प्रवर्तत इति**। तद्व्यतस्तित्करणात्।

विभागो दर्शितः। साऽपि व्यवस्थितविभाषेति कैयटः। अत एव—'ओश्रावये परस्येति वक्तव्य'मिति वचनस्य—'अग्नीदग्नी'नित्यादौ प्लुतनिवृत्तये कृतस्य—विभाषेति योगविभागेन प्रत्याख्यानं भाष्योक्तं सङ्गच्छते। एवञ्च भाष्यसम्मतैषा व्यवस्थितविभाषेत्याहुः।

'अप्लुतव'दित्युक्त्या प्लुत इत्यध्याहारस्तदाह—**प्लुतोऽप्लुतवदिति। प्लुत एव निषिद्ध्येतेति।** तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्ततेत्यर्थः। प्रसज्य-प्रतिषेधेन व्याख्यानन्तु न युक्तं, गौरवात्। किञ्च तथा सति प्लुतप्रकरणे एव

❀ अभिनव-चन्द्रिका ❀

परिभाषाया उदात्तस्वरितान्यतरविधायकशास्त्रत्वस्य लिङ्गत्वेन–त्रिपाद्या असिद्धत्वात्—उदात्त-स्वरितविधायकशास्त्रत्वप्रकारकज्ञानाभावादेतस्यास्त्रिपाद्यामप्रवृत्तावुदात्तप्लुतश्रवणाभावाय एकैकग्रहण-मावश्यकमिति भावः। **प्रत्याख्यानमिति**। 'अग्नीदग्नीन्विहर' इत्यत्रातिव्याप्त्यभावेऽपि 'ओश्रावये परस्य चे'ति वार्तिकस्य ओ ३ श्रावय, आ ३ श्रावय इत्यादावव्याप्तत्वादिति भावः। **गौरवादिति।**

❀ चिदस्थिमाला ❀

सिनस्व, यतोऽनाव' इति च चरितार्थम्। आद्ये हि–'अन्त' इति वर्त्तते, अन्यथा ऽऽद्यविषये पुनः शेष-निघातेन सिद्धावन्त्यविषये पुनस्तदापत्त्या तद्वैयर्थ्यं स्पष्टमेव, अत एव षाष्ठभाष्यसङ्गतिरित्यन्यत्र स्पष्टं, तदाह—**तत्रैवेति**। नन्वेवं 'प्राचा'मिति व्यर्थमत आह—**प्राचामिति। सा चेति**। यथा चैतत्तथा प्रागुक्तम्। यत्तु—"'प्रत्यभिवादे' इत्यारभ्याऽग्नीदित्यन्तोऽत्र सर्वपदेन ग्राह्यो नाग्रिमस्तत्र विभाषाग्रह-णादत्र करणाच्चे'ति, तदसदिति मूलमसङ्गतं, भाष्ये तथा नोक्तत्वात्तत्फलस्यान्यस्य प्रतिपादितत्वात्तस्य स्वस्व-मतप्रच्युतिदोषपरिहारार्थत्वाच्चेति च–ध्वनयन्नाह—**भाष्ये त्विति**। ननु कण्ठतस्तथा भाष्ये नोक्तमत आह—**अत एवेति**। तस्यास्तत्त्वादेवेत्यर्थः। 'ओश्रावयाश्रावयोः परस्य वेती'ति पाठः। 'अग्नी'दित्यस्य स्थाने इति भावः। **सङ्गेति**। अन्यथा प्रत्याख्याने पक्षे तस्य दुर्वारत्वेन तयोः फलभेदापत्त्या तदसङ्गतिः स्पष्टैव। एतेन"—'प्रत्यभिवादे' इत्यनेनाऽप्यसम्बन्धः, अत एव'भोराजन्ये'ति वार्तिके 'वा' ग्रहणं सफलम्, अन्यथा विकल्पस्यानेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव, अत एव च—'अविद्वांस' इति भाष्यं सङ्गच्छते" इत्यपास्तम्, उक्तयुक्तेः। वार्तिके विकल्पस्यैतत्सिद्धार्थकथनपरत्वात्। भाष्यन्तु वैकल्पिकेषु भावानुष्ठानौचित्येन शास्त्राज्ञाननिन्दामात्रपरमिति दिक्। अननुवृत्त्यादेराह—**अप्लुतेति**। स्वस्मिन्स्व-सादृश्यस्यासम्भवादिति भावः। पर्युदासस्य युक्तत्वेन 'अप्लुत एव विधीयेते'ति पाठस्य युक्तत्वेऽपि वृत्ति-पाठोऽप्यार्थिकार्थपरतया सुयोज इति ध्वनयितुं तथा दृश्यमानपाठमपि व्याचष्टे—**तदिति**। आदेश-मात्रस्य स्थानिनिवर्त्तकत्वस्य दृष्टत्वादिति भावः। एवञ्च फलितस्तन्निषेध इति तात्पर्यम्। ननु प्रसज्यप्रति-षेध एवास्तु, अत एव तथा वृत्तावुक्तं, जातस्यापि लोपादिनेव निवृत्तिरिति तद्भावः, अन्यथा 'नचे'त्यादि-दोषापत्तिरत आह–**प्रसज्येति। गौरेति**। असमर्थसमासापत्ते'र्भुक्तवन्त'मिति न्यायविरोधापत्तेश्चेत्यर्थः।

❀ सदाशिवभट्टीयम् ❀

प्लुतसमावेशाभावाय तदित्यपि बोध्यम्। **परस्य चेतीति** पाठः। **वक्तव्यमिति**। 'अग्नी'दित्यस्य स्थाने इति भावः। **सङ्गच्छत इति**। अन्यथा प्रत्याख्यानपक्षे तस्य दुर्वारत्वेन फलभेदापत्त्याऽसङ्गतिः स्यादिति भावः।

ननु गुरोश्चानृत एकैकस्य प्राचा'मित्येवास्तु–अनृतो गुरोश्चादेः प्लुत इत्यर्थादिति चेन्न। अगुरुसमुच्चायक-तापि स्यादिति वकाराकारस्यापत्तेः, नचैवं गुरुग्रहणं व्यर्थमिति वाच्यं, गुर्वभाववत्पदव्यावृत्त्या चरितार्थ-त्वात्। सिद्धान्त इव व्याख्यावलम्बने तु न कश्चिद्दोषः। **अप्लुतव। अप्लुतस्य प्लुतविधानेनेति**। पर्यु-दासात्। **ह्रस्वस** दीर्घस्य चेत्यर्थः। न चान्तरतम्याद्दीर्घ एव स्यादिति वाच्यं, दीर्घ **इत्येव** वाच्यं

नोपस्थिते इति वदेत् । न च पर्युदासेऽग्नी३ इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा

## ❀ अभिनव-चन्द्रिका ❀

असमर्थसमासस्य क्रियाध्याहारस्य चावश्यकत्वादिति भावः । **इति वाच्यमिति** । न च कार्यातिदेश-

## ❀ चिदस्थिमाला ❀

अत एवाह—**किञ्चेति** । 'यत' इति शेषः । लाघवादिति भावः । नन्वेवमपि दोषात्तस्याग इत्याशयेन-सिद्धान्तेऽप्याह—**नचेति** । वृत्तिकारोक्तिरियम् । यत्तु **दण्ड्याद्यः**—'अप्लुतकार्ये यणादिके'इति

## ❀ सदाशिवभट्टीयम् ❀

एवमुक्त्वाऽन्तरतमपरिभाषाबाधात् । इदं चाप्लुत एव विधीयेतेति पाठानुपलम्भमालम्ब्य : **नोपस्थित इतीति** । तद्विधावनुपस्थित इत्युक्ते तु पर्युदासादवसाने न स्यात् प्लुत इति भावः । नन्विह प्रकरणे पाठे सर्वस्यापि निषेधः, त्रिपाद्यान्तथा न्यासे त्वन्यतमस्य स्यात । यदि तु वाक्यस्य टेरित्यनेन सहास्याप्यधिकारत्वं क्रियेत तदा सोमसु३दिति दे३वदत्तेत्यनुवृह्णीतीत्यादावपि प्लुतो न स्यात्तत्तद्विधायकैरपि सम्बन्धात्, इह पाठे तु न निषिध्यते, उपस्थितस्य व्यवहितत्वादिति चेन्न । इह न्यासेपि बाध्यविशेषचिन्ताया वक्तुं शक्यत्वात् । यद्वा त्रिपाद्यामेव 'वाक्यस्य टे'रित्यतः प्राक् 'नोपस्थिते प्लुत' इति निषेधविधिरस्तु, ततो वाक्यस्य टेः प्लुत इत्यनुवर्तते । एवञ्चानारभ्य विधिसधीनस्यास्य सर्वप्रतिषेध-कत्वमिदम्प्रतिषेधस्यैवेत्याशयात् । **वदेदिति** । मन्मते तु अग्नी इति अग्नि इति इतिप्रयोगद्वयतादेशपक्षे, निषेधे तु दीर्घघटित एवेति फलभेदात्तथा नोक्तम् । नचादेशेऽल्विधित्वेन प्रगृह्यत्वानतिदेशेन सन्धिकार्यप्रवृत्तौ अग्नी-तीत्येकमेव स्यादिति वाच्यम्, एवमपि पञ्चमीसमासेन स्थानिवत्त्वात्, आदेशस्य बहिरङ्गासिद्धतया प्रकृति-भावप्रवृत्तेर्निष्प्रत्यूहत्वादिति भावः । नन्वेवं सिद्धान्तेपि 'इन्द्रे च' 'इको सव' 'ऋत्यकः' 'आङोना' प्रगृह्या अचि' 'प्लुताश्चाक्रवर्मणस्य' 'नोपस्थिते' 'दिवउ'दितिन्यासः कुतो न कृतः, एवं हि शाकलविषये परत्वादेव प्रकृतिभावः सिद्ध इति नित्यग्रहणं न कर्त्तव्यमित्यपरं लाघवमिति चेन्न । तथा सति निषेधानां बलीयस्त्वेन प्रगृह्यत्वप्रयुक्तप्रकृतिभावस्याप्युपस्थिते निषेधापत्तेः । स्पष्टं चेदं नासिलादीत्यत्र शेखरे । नचादेशविधाने प्रगृह्यप्रयुक्तप्रकृतिभावेनादेशनिवृत्तौ भाष्योक्तदूषणानवतारः, निषेधस्य तु प्रकृतिभावाप्रतिबध्यत्वेन प्लुतश्रवणं न स्यादिति तदवतार इति वाच्यं, वक्ष्यमाणरीत्यादेशस्य बहिरङ्गत्वेनासिद्धतया प्रकृतिभावानिवर्त्यत्वात् । प्रकृतिभावेन स्वरूपसद्विकारानिवृत्तिरिति तु वक्तुमप्यशक्यं, 'निपात एका'जितिसूत्रे हलन्तस्य प्रगृह्यत्वेनैव दोष इति भाष्योक्तिविरोधात् । त्वद्रीत्या पुरोस्तीत्यादौ रुत्वाप्रवृत्त्यापत्तौ दोषसत्त्वात् । रुत्वस्याज्निमित्तत्वा-भावेन प्रकृतिभावाप्रतिबध्यत्वे तु पूर्वत्रासिद्धमित्यस्य बाधे मानाभावादिति बोध्यम् । नचैवमप्युत्वस्या-ज्निमित्तत्वेन प्रतिबन्धापत्तौ रुत्वस्यासिद्धत्वेन सा नेति **प्रदीपोद्योतयोरुक्तं** तु न सम्यक् । असिद्धत्वेपि सान्तबुद्ध्या प्रवर्त्तमानौ सन्ध्याप्रकृतिभावौ रान्त एव प्राप्तौ, तत्र च रान्तबुद्ध्या प्रवृत्तमुत्वं पश्यन्तौ तत्प्रति-बध्नीयातामेव, तन्निमित्तारोरदर्शनेपि तत्प्रवृत्तिदर्शने प्रतिबन्धकाभावात् । अग्नी इत्यत्रानुनासिकविधेर्द्विमात्र-त्वाग्रहेपि प्रगृह्यत्वप्रवृत्तिग्रहवदिति वाच्यं, यद्बुद्ध्या प्रकृतिभावप्रवृत्तिः तस्य योऽकारस्तत्प्रतिबन्ध

## ❀ विषमपदविवृतिः ❀

**अप्लुतवदुपस्थिते । इति वदेदिति । यत्तु प्लुतनिषेधस्य त्रिपादीस्थत्वेनासिद्धत्वा'त्प्लुतप्रगृह्या' इति प्रकृतिभावे संहिताकार्यं न स्यात्, प्लुतनिषेधस्तु श्रवणार्थं स्यादिति, तन्न । प्रकृतिभावदृष्ट्या प्लुतस्याश्रयात्सिद्धत्वेन तस्य च लक्ष्येऽदर्शनेन प्रकृतिभावाप्रवृत्तेः, न हि निषेधो न दृश्यत इत्ये-तावता तेन लक्ष्येऽप्रवृत्तिः, प्लुतो लक्ष्येऽस्तीति बुद्धिः प्रकृतिभावशास्त्रस्य सम्भवतीति ।**

**न च पर्युदासेऽप्येतद्दूषणतौल्यं, किं च'प्लुतप्रकरणोत्तरं नोपस्थिते'इत्युक्ते संहिताया-मित्यस्य सम्बन्धो न स्यात्तेन च 'तयोर्य्वावची'त्यतः संहितायामित्यस्य सम्बन्ध इति वाच्यम्, एवमपि पर्युदासे प्लुतस्योदात्तस्य स्थाने आन्तर्यादप्लुतादेश उदात्तो भवति**

परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम् । शब्दत इतिशब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वात् । 'अप्लुतव'दित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः । प्लुतेऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात् । भाष्ये 'प्लुत-

ॐ अभिनव-चन्द्रिका ॐ

पक्षे 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तदतिरिक्तसर्वनिमित्तकत्वमतिदेशस्ये'ति सिद्धान्तेन प्रगृह्यः प्रकृत्येत्यनेन प्रगृह्यभिन्नत्वेन 'अकस्सवर्ण' इत्यत्राक्पदार्थे सङ्कोचात्प्लुतभिन्नत्वातिरिक्तसवर्णाजव्यवहितपूर्वत्वविशिष्टप्रगृह्यभिन्नाक्त्वस्य अप्लुतवद्भावे निमित्तत्वेन इमे शङ्कासमाधाने निर्दले इति

ॐ चिदस्थिमाला ॐ

व्याख्यानं उक्तरीत्योक्तस्थले यणादिकार्यं स्यात्ततश्च वत्करणप्रयोजनं यणादिकमेव स्यात्तस्मात्प्लुतकार्यं प्रकृतिभावरूपं,—न करोति, न भवनीति वाऽर्थ इति वृत्युक्तव्याख्यानमेव युक्तं, तच्च प्रागुक्तोभयसङ्ग्रहायाह—नेत्येति । उक्तरीतिमनुसृत्याह—प्लुते इति । नन्वेवं भाष्यविरोधोऽत आह—भाष्ये इति ।

ॐ ज्योत्स्ना ॐ

पदमित्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वादिति भावः । इतिवदिति । एवं तु प्लुतनिषेधस्य त्रिपादीस्थत्वेनासिद्धत्वात्-'प्लुतप्रगृह्या' इतिप्रकृतिभावे संहिताकार्यं न स्यात्, प्लुतनिषेधस्तु श्रवणार्थः स्यात्—सुश्लोक इतीति । न च प्रसक्तस्य प्लुतस्यानेन निषेधो न तु जातस्य निवृत्तिरितीह प्लुत एव लक्ष्ये न प्रवृत्तः कुतस्तरां तत्प्रयुक्तः प्रकृतिभाव इति वाच्यम्, प्रसक्तनिषेधे 'पूर्वत्रासिद्ध'मिति शास्त्रबाधप्रसङ्गात्त्रैपादिकबाधकशास्त्रेण जातनिवृत्तेरेव सति सम्भवे कर्तुं योग्यत्वात् । जातस्य निवृत्तिकल्पने गौरवं तु पाक्षिकं निषादस्थपत्यधिकरणरीत्या फलमुखत्वाददुष्टम् । अत एव रामा-

ॐ सदाशिवभट्टीयम् ॐ

अत्र तु स्वबुद्ध्या प्रवृत्तिरस्य विकार इति । नन्वेवम्–एहि स्वर् हरिन् गच्छति, एहि देवदत्त पचतेऽयं, पाहि शिव ओ नमस्करोमि त्वामित्यादौ बहिरङ्गसन्धिकार्यस्य प्रकृतिभावेन वारणं न स्यादिति चेत्सत्यम्, इष्टापत्तेः, अनिष्टत्वे ग्राहकप्रमाणोपलम्भे तु बहिरङ्गासिद्धत्वाऽनित्यत्वमेव शरणम् । गौरवस्य फलमुखत्वं प्रतिपादयन्सिद्धान्ते शङ्कते—न च परीति । अन्तरङ्गत्वादिति । वस्तुतस्तु शास्त्रकार्यातिदेशयोरुभयोरप्यतिदिश्यमानकार्यस्योपदेशदेशानतिक्रमात्प्रकृतिभावस्यैव परत्वेन प्रवृत्त्या न कश्चिद्दोषः । एतेन—'अतिदेशप्राप्तकार्यस्यासिद्धत्वात्कथं प्रकृतिभावनिवर्त्यत्व'मित्यपास्तम् । तदेतद्ध्वनयन् वक्ष्यति—सादृश्यविधानस्यैवेति । प्लुते कृतेपीति । 'तस्यासिद्धत्वात्पूर्वं प्रगृह्यत्वेपी'त्यादिः ।

ॐ विषमपदविवृतिः ॐ

नोपस्थिते इत्युक्तौ उदात्तस्य श्रवणं न स्यादिति विशेषः । मन्मते संहिताया इत्यस्य सम्बन्धासम्बन्धाभ्यां विशेषः । वत्करणेऽप्युक्तन्यायेन पर्युदासमेव स्थिरीकृत्य शङ्कते—न चेति । परत्वादिति । प्लुतत्वप्रयुक्तप्रकृतिभावापवादत्वेऽपि प्रगृह्यत्वप्रयुक्तप्रकृतिभावानपवादत्वाद्विप्रतिषेधोपपत्तिः । इदमयुक्तम्—शास्त्रातिदेशे दीर्घस्य परत्वभावात्कार्यातिदेशेऽपि स्थानिवत्सूत्रे परिवीरित्यत्रोक्तातिदेशात्तस्य तत्त्वाभावात् । अन्तरङ्गत्वादिति । इदमप्ययुक्तम्–'न धातुलोप' इति सूत्रेऽन्तरङ्गनिषेधदृष्ट्या गुणस्यासिद्धत्वेनोपेद्ध इत्यादौ गुणः प्रवर्त्तत इति भाष्योक्तरीत्या प्रकृतिभावेन दीर्घबाधानापत्तेः । किञ्च वत्करणाभावेऽप्यप्लुतशब्देन प्लुतस्य स्थाने विहितस्य दीर्घस्योक्तदिशा वारणे वत्करणवैयर्थ्यं तदवस्थम् । वस्तुतस्तु प्रकृतिभावेन तु स्वापेक्षबहिरङ्गस्यापि निवृत्तिः, 'उपसर्गादृती'ति सूत्रे धाताविति योगविभागेन पुनर्वृद्धिविधानाज्ज्ञापकात् । तेन सुखार्त इत्यत्र पक्षे वृद्धिनिवृत्तिसिद्धेरिति एका दिक् । न शब्दमर्यादया लाभ इति । इदमप्य-

कार्यप्रतिषेधार्थ'मित्युक्तिस्तु—फलितार्थाभिप्रायेणैवेति बोद्धव्यम् । **प्रगृह्याश्रये इति ।** प्लुते कृतेऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत्तद्वत् प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु 'प्रकृतिवदनुकरणमि'त्यतिदेशात्तत्त्वमिति भावः ।

'किम्मया कर्त्तव्य'मिति पृष्ट आह—**चिनु ही ३ इदमिति ।** 'विभाषा पृष्टप्रतिवचने हे'रिति प्लुतः । इदंशब्दोऽत्र वाक्यान्तरस्थ इति हेरिकारस्य वाक्यटित्वम् ।

**ॐ अभिनव-चन्द्रिका ॐ**

वाच्यम्, परत्वात्प्लुतवद्भावेन 'प्रगृह्यः प्रकृत्ये'त्यस्य बाधादवैदिकेतिशब्दाव्यवहितपूर्वत्वविशिष्टप्लुतभिन्नप्रगृह्यभिन्नत्वेनाक्पदार्थे सङ्कोचादवैदिकेतिशब्दाव्यवहितपूर्वत्वविशिष्टप्लुतभिन्नो यः प्रगृह्यः, तद्भिन्नोयोऽक् तादृशाक्त्वमेवाप्लुतवद्भावे निमित्तमिति शङ्काशयः । अन्तरङ्गत्वात्प्रगृह्यः प्रकृत्येत्यनेन बाधात्सामान्यतः प्रगृह्यभिन्नत्वेनाक्पदार्थे सङ्कोचात्सवर्णाजव्यवहितपूर्वत्वविशिष्टप्रगृह्य-

**ॐ चिदस्थिमाला ॐ**

अत एव—'प्लुत एव निषिध्यते'त्येव पाठो मूले इति बोध्यम् । ननु प्लुतस्य प्रगृह्यत्वं दुर्लभं तत्र दीर्घाणामेव ग्रहणेन तेषाञ्चानण्त्वेन सवर्णग्राहकत्वादत आह—**प्लुते इति ।** 'प्लुतः प्रकृत्ये'तिशापकात्स्वरसन्धिषु प्लुतस्य सिद्धत्वेपि प्रगृह्यसञ्ज्ञाया अतत्त्वेन तस्याऽसिद्धत्वादादौ प्रगृह्यत्वे ततः प्लुत इत्यर्थः । अपिना—तद्भावसमुच्चयः, त्रिमात्रेऽपि द्विमात्रबुद्धेरप्रतिघातादिति भावः । नन्वेवमप्यनुकरणेऽसिद्धत्वाभावेन कथन्तत्त्वमत आह—**अनुकेति ।** तत्त्वम्=असिद्धत्वं, प्रगृह्यत्वं वा । यत्तु रत्नाकरादिः—'किंमयाचेतव्यमिति प्रश्न' इति, तन्न, इदमित्यस्य वाक्यान्तरस्थत्वेन विशेषप्रश्नासम्भवात्, तदेतद्ध्वनयन् सामान्यप्रश्नमाह—**कर्त्तव्यमिति । चिन्विति**—लोडन्तं, 'ही'त्यव्ययम् । यत्तु—'अनन्त्यस्येति प्लुत' इति, तन्न, ततो विभाषेत्यस्य विशेषविहितत्वात्तस्याऽसिद्धत्वाच्च, तदेतद्ध्वनयन्नाह—**विभाषेति । वाक्यटित्वमिति ।** अन्यथा 'वाक्यस्य टे'रित्यधिकाराद्धिशब्देकारस्यातथात्वान्न स्यादिति भावः । खण्डयितुं

**ॐ ज्योत्स्ना ॐ**

दित्यत्र 'जश्त्वं' 'वावसाने'इति साधनक्रमसिद्धान्तः । 'जश्त्व'मित्यस्य 'बाधिते'तिशेषपूरणेन तत्र करिष्यमाणं व्याख्यानं तु निर्युक्तिकं, रत्नमुडित्यादौ जश्त्वाप्रवृत्तिप्रसङ्गग्रस्तत्त्वं, ज्ञापकञ्चात्र वत्करणमेव । अन्यथोक्तरीत्या 'नोपस्थिते' इत्येव वक्तव्येऽप्लुत इत्युक्तिरप्लुतसादृश्यविधानार्था भविष्यतीति वत्करणं व्यर्थमेव स्यादिति चिन्त्यमेतत् । यद्यप्यप्लुत इति प्लुतसदृशविधाने प्लुतस्थाने दीर्घेण भवितव्यं, प्रसज्यप्रतिषेधे तु प्लुतनिषेधे ह्रस्वेन भाव्यं,तथापि सत्येकादेशे नास्ति तत्र फले विशेष इति न तत्र निर्भरः कृतः । **इतिभाव इति ।** न चैवमपि प्लुतस्यासिद्धत्वे प्लुतात्पूर्वमेव प्रगृह्यसञ्ज्ञायां ततः प्लुते त्रिमात्रे यथोद्देश्यपक्षे द्विमात्रत्वेन पश्यन्त्या अपि सञ्ज्ञायाः पुनः प्रवृत्तौ बीजाभावेनाल्विधित्वात्स्थानिवद्भावस्य दुर्लभत्वेन चामी ३ इतीत्यादौ प्रगृह्याश्रयप्रतिभावो दुर्लभ एवेति वाच्यम्, अन्तरङ्गत्वात्प्लुतस्य प्रागेव प्रवृत्तेः, यथोद्देशपक्षे षाष्ठपरिभाषादृष्ट्या त्रिपाद्या-

**ॐ सदाशिवभट्टीयम् ॐ**

**दीर्घत्वबुद्धिवदिति ।** अनुनासिकप्रतिबन्धाय पुनः सञ्ज्ञाप्रवृत्तये तद्बुद्धेरावश्यकत्वादिति भावः । **प्रगृह्यत्वमिति ।** प्रकृतिभावदृष्ट्येति भावः । **तत्त्वमिति ।** प्रगृह्यत्वमित्यर्थः । 'चेतव्य'मिति प्रश्ने इदमित्येकवाक्यस्थमेव युक्तमतः सामान्यतः पृच्छति—**कर्त्तव्यमिति ।** 'चिनु' इति लोडन्तम् । 'ही'त्य-

**ॐ विषमपदविवृतिः ॐ**

युक्तम् । 'अचः परस्मि'न्नितिव'तृतीयादिषु भाषितपुंस्क'मितिवच्चाप्लुतो यथा प्लुतकार्यं न प्रवर्त्तयति

**उभयत्र विभाषेयमिति**। उपस्थिते प्राप्तेऽनुपस्थिते चाप्राप्ते इत्यर्थः। विभाष्यते विकल्प्यत इति–विभाषा। 'गुरोश्च हल' इत्यप्रत्यये टाप्। 'न वेति विभाषाया'-मिति भाष्यप्रयोगात्। भाष्ये तु 'किमर्थमिदमुच्यते? अनुपस्थितार्थं, तत्र ईग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्याप्लुतवदित्येव, इदमपि सिद्धं–वशा इयं–वशेय' मित्युक्तम्। तद्बलेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणेऽपि नित्याप्लुतवद्भाव एवेष्टः। प्रत्याख्याने नित्याप्लुतवद्भावस्य 'येन नाप्राप्ति'न्यायेन वैकल्पिकतद्बोधिताभावांशबाध-कत्वात्। 'उपस्थिते इत्यस्य निवृत्त्या परविप्रतिषेधादुभयत्र विभाषेय'मिति–कैयटस्य

ॐ अभिनव-चन्द्रिका ॐ

भिन्नाक्त्वमेवाप्लुतवद्भावे निमित्तमिति समाधातुराशय इत्यदोषात्। अपवादविषये सङ्कुचित-सङ्कोचो न भवतीति सिद्धान्तादिति दिक्। **कैयटस्य प्रमाद इति**। परे तु 'अप्लुतवदुपस्थिते' इति सूत्रे 'इकोऽसवर्णे' इति सूत्रादसवर्ण इत्यनुवर्त्तते। अत एव चिनुहीदमित्यादौ ईग्रहणसत्त्वे

ॐ चिदस्थिमाला ॐ

स्वारसिकमर्थमाह—**उपस्थिते इति**। वा–प्राप्ते अप्राप्ते च। वक्ष्यमाणार्थसिद्धये 'विभाषे' त्यस्याव्ययत्वं निराचष्टे-**विभेति**। नवेतीति द्वयोर्विभाषयोर्मध्ये 'पयसस्तु विभाषये'त्याद्यपि बोध्यम्। मूलासङ्गतिं भाष्यविरोधात्प्रतिपादयन्सिद्धान्तमाह–**भाष्ये** त्वित्यादि—**अन्ये** इत्य-न्तेन। अत एव तुः। एवमुपक्रमभाष्यमुक्त्वाऽग्रिमभाष्यमाह—**तत्रेति**। सूत्रे इत्यर्थः। **चाक्रेति**। आचार्यस्येत्यर्थः। **वदिति**। 'भवती'ति शेषः। फलभेदे प्रत्याख्यानाऽसङ्गत्या तदेकवाक्यतायै सूत्रमते आह—**तद्बलेनोपेति**। तृतीयान्तार्थमाह—**प्रत्येति**। 'सुश्लोकेतीत्यादाविव 'चिनुहीति' त्यादावपीति शेषः। **चैकेति**। तस्मादुभयत्र विभाषात्वं भाष्यविरुद्धमिति भावः। नन्वेवं कैयटविरोधोऽत आह—**उपेति**। स्य=तस्य तु। एतेन 'वक्ष्यमाणरीत्या कैयटोऽपि सुयोज'इत्यपास्तम्।

ॐ ज्योत्स्ना ॐ

असिद्धत्वेऽपि लोकन्यायसिद्धान्तरङ्गबलवत्त्वस्य त्रिपाद्यामप्रवृत्तौ हेत्वभावस्य परिभाषाप्रदीपा-र्चिषि विस्तरेण निरूपणात्। षाष्ठपरिभाषाया अपि यथा त्रिपाद्यां प्रवृत्तिस्तथा तूक्तं प्राक्।

ॐ सदाशिवभट्टीयम् ॐ

ध्यम्। **विभाषेति**। 'अनन्त्यस्यापि प्रश्ने'त्यस्यासिद्धत्वादनेनैव न्याय्य इति भावः। **टाबिति**। न त्वव्ययमिति भावः। **नवेतीति**। द्वयोर्विभाषयोर्मध्ये प्राप्ताऽप्राप्तविभाषयेत्यपि बोध्यम्।

**ईचाक्र**। वृहति तु 'नार्थ' इत्यस्य—चाक्रवर्मणस्येत्येतत्सम्बन्धेन नार्थः–न सकलप्रयोजनसिद्धि-रित्यर्थः। अयं भावः—'ई' इति पृथक् पदं कार्यम्, 'उपस्थिते' इति वर्त्तते, पूर्वेण सिद्धे विकल्पार्थ-मिदं, ततः 'चाक्रवर्मणस्ये'ति, अयमेव च सूत्राशयः, एवञ्च सूत्रभाष्ययोर्न विरोधः, भाष्याविरोधेन सूत्रस्येव सूत्राविरोधेन भाष्यव्याख्याया उचितत्वाच्च। एतेन भाष्ये ईग्रहणसत्त्वे 'वशेयं'मित्यसिद्धिवत् 'चिनुहीती'त्यादौ नित्याप्लुतवद्भावासिद्धिर्नोक्ता, नापि पूर्वविप्रतिषेधारम्भगौरवमित्यपास्तम्। 'कैयटस्य प्रमाद' इत्येव प्रामादिकमित्युक्तम्।

ॐ विषमपदविवृतिः ॐ

तथा प्लुतोपील्यभावातिदेशाङ्गीकारेणोक्तार्थलाभसम्भवात्। तदेतदभिप्रेत्य भगवद्भ्यां भाष्यकार-वार्तिककाराभ्यामुक्तम्—'वद्वचनं प्लुतकार्यप्रतिषेधार्थं, वद्वचनं क्रियते–प्लुतकार्यप्रतिषेधार्थ'मिति।

प्रमादः । मूलन्तु इतिशब्दभिन्ने वैदिकेतिशब्दे चेत्येवम्परतया कथञ्चिद्व्याख्येयमित्यन्ये । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभागितीयमिति निर्देशः ।

विशेषणेन तदन्तविधिमाश्रित्याह—**ईदूदेदन्तमिति** । **द्विवचनमिति** । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः । एदन्तमिति व्याख्याने फलमाह—**पचेते इति** ।

**निपात ए** । निपात इति किम् ? चकारात्र । प्रत्ययस्य शास्त्रकल्पितार्थव-

ॐ अभिनव-चन्द्रिका ॐ

विकल्पेनाप्लुतवद्भावः । प्रत्याख्यानपक्षेऽपवादत्वान्नित्याप्लुतवद्भाव इति फलभेदो न । अत एव 'नित्यग्रहणं किमर्थ'मिति भाष्योक्तः प्रश्नः सङ्गच्छते । अन्यथा 'इको यणची'त्यनन्तरं 'पदस्य शाकल्यस्य ह्रस्वः' 'ऋत्यक' इत्येवमेव सिद्धे तदसङ्गतिस्स्पष्टैव । एवञ्च यथाश्रुतं मूलमेव युक्तम्, कैयटस्यापि प्रमाद इति प्राहुः । **इति भाव इति** । वस्तुतस्तु ईदूदेदन्तं यद्द्विवचनं तदन्ततदादि प्रगृह्य-

ॐ चिदस्थिमाला ॐ

नेन तथाहेत्युक्त्या तथा दुर्वचत्वात्, एवमपि मूलसङ्गतिरित्याह—**मूलन्त्विवति** । अत एव तुः । एतेनैतौ प्राप्तेऽन्यत्राऽप्राप्ते' इति **दण्डि-रत्नाकरादि**व्याख्यानमपास्तम् । प्राप्ताऽप्राप्तविभाषायामेव तत्प्रयोगस्य स्वारसिकत्वादाह—**कथञ्चिदिति** । नन्विदंशब्दस्योद्देश्यसमर्पकत्वेनोद्देश्यस्य च योग-सूत्रान्यतररूपत्वेन स्त्रीलिङ्गनिर्देशासङ्गतिरत आह—**उद्देश्येति** । अत एव 'स कर्ते'ति 'स शब्द' इत्यादि च सङ्गच्छते । ननु 'प्रत्ययग्रहणे' इति तदन्तविधिरत्रापि कुतो नात आह—**सञ्ज्ञेति** । तेन 'कुमार्यगार'मित्यादौ नेति स्पष्टमन्यत्र । ननु हरी इत्यादावीकारादेर्द्विवचनरूपत्वान्निष्प्रयोजनव्यपदेशिवद्भावप्रवृत्तिजगौरवनिरासाय तथैव व्याख्यानमस्त्वत आह—**एदन्तमिति** । एवञ्चैतदर्थं तदावश्यकत्वेऽवैरूप्याय तत्रापि तथेति तत्रातिदेशेन निर्वाह इति भावः । एतेनैकारांशे द्वितीयोदाहरणानर्थक्यं परिहृतम् । ननु वर्णग्रहणेऽपि तत्प्रवृत्तेरर्थवत एव ग्रहणमिति तदभावेपि नात्र दोषोऽत आह—**प्रत्येति** ।

ॐ ज्योत्स्ना ॐ

**अप्रत्यये टाविति** । तदव्ययमिति भावः । **इत्यन्ये इति** । वस्तुतः पूर्वविप्रतिषेधकल्पनेन गौरवप्रसङ्गाद'नुपस्थितार्थ'मिति भाष्यस्य-तदर्थमपील्यर्थ उचितः । तत्र 'ई ३ ग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्ये'त्यादि तदुत्तरभाष्ये चा'विशेषेणे'त्यस्य-स्थान्यंशे निमित्तांशे चाविशेषेणेत्यर्थाद्'प्लुतवच्चाक्रवर्मणस्ये'तावत्सूत्रस्य करणसूचनादुपस्थिते इत्यंशस्यापि ग्रहणवदानर्थक्यस्य सूचनात्फले विशेषाभावेन कैयटमतस्य सद्युक्तिकत्वादित्याहुः । नन्विदंशब्दस्योद्देश्यसमर्पकत्वमुद्देश्यस्य चाप्लुतवदित्यादेर्योगरूपता सूत्ररूपता वा, उभयथापीयमिति स्त्रीलिङ्गनिर्देशोऽनुपपन्नोऽत आह—**उद्देश्येति** । अत एव'णेरणा'विति सूत्रे कर्माकारपरामर्श्यपि तच्छब्दः स कर्तेति वाक्ये विधीयमानकर्तृलिङ्गभाग्भवतीत्याहुः । नन्वनाङिति पर्युदासादर्थवत्त्वेनैव च सादृश्यग्रहणात्केवलस्य प्रत्ययस्य प्रयोगाभावादानर्थक्याच्चकारात्रेत्यत्र न दोषोऽत आह—**प्रत्ययस्येति** । न च स्वातन्त्र्येण प्रयोगार्हत्व-

ॐ सदाशिवभट्टीयम् ॐ

**इत्यन्ये इति** । वस्तुतः पूर्वविप्रतिषेध एव युक्तः योगपरत्वे सूत्रपरत्वे वा इयमित्यसङ्गतमत आह—**उद्देश्येति** । उक्तं प्राक् । **निपात ए** । पर्युदासादर्थवद्‌गृह्येनात आह—**प्रत्ययेति** । नन्वेवं क्वापि बहुव्रीहिर्न स्यादत आह—

ॐ विषमपदविवृतिः ॐ

**ईदूदेत्** । एकारस्य गङ्गे इत्येकमेवोदाहरणमुपन्यस्य पुनरुदाहरणान्तरोपन्यासस्य फलं वक्तुमवतारयति—एदन्तमिति ।

त्वात् । एकाजिति कर्मधारयो वर्त्तिपदार्थप्रधानत्वेनान्तरङ्गत्वात्, 'व्याहरति मृगः' इत्यादिनिर्देशाच्च । तेन 'प्रेद'मित्यादौ न दोषः । तदाह—**एकोऽजिति । आङ्वर्ज इति ।** पर्युदासस्यौचित्यात् । अत एवैकाज्नाङिति नासूत्रि । वासुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे आ आत्-अमित्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन

❀ अभिनव-चन्द्रिका ❀

सञ्ज्ञमित्यर्थेऽपि न दोषः । नच 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'तिव्युत्पत्तिविरोध इति

❀ चिदस्थिमाला ❀

'प्रेद'मित्याद्येकग्रहणव्यावर्त्यं'मिति दण्डयुक्तेरसाङ्गत्यं ध्वनयन्बहुव्रीहिर्नेत्याह—**एकेति ।** विषयभेदेनापवादत्वस्य 'पूर्वकालैके'त्यस्य दुर्वचत्वादाह—**वर्त्तीति ।** नन्वेवं तेन क्वापि बहुव्रीहिर्न स्यादत आह—**व्याहेति ।**

प्रसिद्धदोषाभावाय-**पर्युदेति ।** एतेन-''वृजेर्ण्यन्तात्कर्मणि घञ्, बहुव्रीहिः, आङ्भिन्न इति तदर्थ इति, 'प्रगृह्य'इत्यग्रे योज्यम्, आङ् वर्जनीयः, तस्य नेति यावत्-'' इति **दण्डि-रत्नाकराद्युक्तमयुक्तमि**ति च सूचितम् । सूत्रसम्मतिमप्याह—**अत एवैकेति ।** यत्तु—''नायं पर्युदासः, किन्तु प्रसज्यप्रतिषेधः, अग्रे 'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्योक्तेः, अन्यथा पूर्वेणैव सिद्धौ तदसङ्गतिः स्पष्टैव, वक्ष्यमाणरीत्या पदद्वयवैयर्थ्यापत्तिश्च । किञ्च फले विशेषः, तथा हि—'अम्—इनः—एत'इति रूपं प्रतिषेधपक्षे, तस्य स्थानिवत्त्वादाङ्त्वेन प्रगृह्यत्वनिषेधात् । पर्युदासे तु स्वनोऽनाङ्त्वात्स्थानिवत्त्वेन निपातत्वाच्च प्रगृह्यत्वं दुर्वारमेव । परादिवत्त्वेन तद्भिन्नत्वन्तु न लभ्यमशास्त्रीयत्वात् । एवममित्यादौ प्रगृह्यत्वात्पूर्वान्तवत्त्वेन पदान्तत्वात्पूर्वरूपानापत्तिः'' इति **दण्डि-रत्नाकरा**दयस्तत्खण्डयंस्ततः पर्युदासे आदौ फलविशेषं प्रतिपादयति—**वासुदेवेति ।**

❀ ज्योत्स्ना ❀

रूपमर्थवत्त्वं पर्युदासेन लभ्यम्, आङो निपातत्वेन द्योतकत्वात्स्वातन्त्र्येण प्रयोगाभावादुक्तरूपार्थवत्त्वस्यैव ग्रहीतुमुचितत्वात् । एतेन 'वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः प्रत्ययार्थवत्त्वादिविचारो व्यर्थं' इति परास्तम् । **औचित्यादिति ।** 'पर्युदासादेवाङ्सदृशाज्रूपनिपातलाभे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणज्ञापकमिति भाष्यसङ्गतिः । न चैवमाहो—उताहो—इत्याद्योदन्तनिपातसमाहाराभ्युपगमादेकनिपातत्वं निरस्य—तत्र 'निपात एका'जित्येव सिद्धे ओदित्यनर्थकमित्याशङ्क्य-आ उ ओ इत्यत्र पूर्वान्तवद्भावादनाङिति प्रतिषेधे प्राप्ते प्रतिषिद्धार्थोऽयमारम्भ इति भाष्यविरोधः, स्वत आङ्भिन्नत्वप्रयुक्तकार्यस्य प्रगृह्यत्वस्य पूर्वान्तवद्भावादतिदिश्यमानाङ्त्वविरोधित्वादप्रवृत्तावपि परादिवद्भावादुकारग्रहणेन ग्रहणात्तत्प्रवृत्तेर्निष्प्रत्यूहत्वादिति वाच्यम्, तस्य भाष्यस्यैकदेश्युक्तित्वात् । अत एव गोऽभवदित्यादौ प्रगृह्यसञ्ज्ञावारणायौतश्च्विप्रतिषेध इति वार्तिककृता वचनमारब्धं, भाष्यकृता च गौणमुख्यन्यायेन प्रत्याख्यातं सङ्गच्छत इत्याहुः ।

**अमिति ।** अव्ययीभावत्वेन क्लीबत्वान्नपुंसकह्रस्वे रूपम् । **प्रगृह्यत्वं नेति ।** तत्फलन्तु अ इतः

❀ सदाशिवभट्टीयम् ❀

**व्याहरतीति । आ आत्—अमिति ।** समाससञ्ज्ञासमकालं दीर्घे ततो नपुंसकह्रस्वः । 'उ' पदे तु लुकः प्राक् दीर्घप्राप्तिरेव नेत्यन्तरङ्गत्वाद्ध्रस्वे ततो दीर्घ इति नादसोसेरिति सूत्रीयशेखरविरोधः । यदि 'से'

❀ विषमपदविवृतिः ❀

**अर्थवत्त्वादिति ।** अनाङिति पर्युदासेनार्थवत एव ग्रहणादिति भावः । एतेने-'दमदसोरको'रिति प्रतिषेधेन वर्णग्रहणेऽर्थवत्परिभाषाया अप्रवृत्तिज्ञापनादिदमप्ययुक्तमित्यपास्तम् । पर्युदासपक्षे दोषमाशङ्क्य निराकरोति—**वासुदेवेति । अमिति ।** अत्र प्रगृह्यत्वेऽपि

पूर्वान्तवत्त्वेन निपातत्वेऽपि प्रगृह्यत्वन्न । पूर्वान्तवत्त्वेनाऽऽङ्त्वातिदेशेऽतिदिश्यमान-धर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्वभावसिद्धत्वात् । ओदिति सूत्रे आ उ ओ, इत्यत्र अनाङिति–'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्यन्तु पर्युदासेऽपि गम्यस्य प्रतिषेधस्य सत्त्वान्नानुपपन्नम् । अनाङिति पर्युदासादेव निपातैकाज्रूपत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम् ।

### ॥ अभिनव-चन्द्रिका ॥

वाच्यम्, गभीरायां नद्यां घोषः'इमौ ह्रस्वादची'त्यत्रैव द्विवचनपदमेव ईदूदेदन्तं यद्विवचनन्तदन्त-तदादिपरम्, ईदूदेदिति तात्पर्यग्राहकमिति स्वीकारेणादोषात्। सञ्ज्ञाविधाविति परिभाषा तु फलाभावान्न स्वीक्रियते इत्यन्यत्र विस्तरः । **चकारान्नेति** । अत्र णलो माभूदित्यर्थः । **अन्तरङ्गत्वादिति** । निषादस्थपत्यधिकरणन्यायादिति बोध्यम् । **सत्यभिधाने इति** । अपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्व-नपुंसकह्रस्वे पश्चात्सवर्णदीर्घे आमित्येव स्यादिति बोधनाय 'सत्यभिधाने' इत्युक्तम् । **विरुद्धेति** ।

### ॥ चिद्स्थिमाला ॥

आदिना 'एन' इत्यादिपरिग्रहः । **पूर्वान्तेति** । निपातत्वार्थन्तदावश्यकत्वे तेन तस्यापि लाभ इति भावः । यद्वा–पर्युदासेऽपि निषेधस्य गम्यत्वेन शास्त्रीयकार्यादेः सत्त्वादिति बोध्यम् । **सिद्धत्वा-दिति** । एवञ्च न तत्र तद्भिन्नत्वप्रयुक्तं कार्यमिति तदैक्यमेवेति भावः । प्रथमदोषमुद्धरति—**ओदितीति** । अनाङिति प्रतिषेधविषये आङनाङोरेकादेशे तत्प्रतिप्रसवार्थ इत्यर्थः । द्वितीयदोषमुद्धरति—**अनाङितीति** । भगवताऽप्रत्याख्यानत्वादाह—**स्पष्टार्थमिति** । एतेन–'निपातग्रहणमुत्तरार्थ'-मिति दीक्षित-दण्ड्याद्युक्तम्, 'एकाज्रनिपातमात्रस्य प्रगृह्यत्वार्थमेकाज्ग्रहणं, तेन गौणानाम्

### ॥ ज्योत्स्ना ॥

एन इत्यत्र प्रकृतिभावो नेति भावः । **अतिदेशस्वभावसिद्धत्वादिति** । न च परादिवद्भावादा-ङ्भिन्नत्वग्रहः, उभयत आश्रयणेऽन्तादिवद्भावविरहादिति सङ्क्षेपः । **स्पष्टार्थमिति** । **अन्यथा** आङ्भिन्नार्थवन्निपातत्वेनापि सादृश्यग्रहणे 'कमीमिदु'इत्यनर्थकोकारे प्रगृह्यत्वानापत्तिरिति भावः ।

**अच्समुदायग्रहणाभावे सिद्धे इति** । अनाङिति पर्युदासादजन्तनिपातस्य प्रेदं ब्रह्मेत्यादेरपि

### ॥ सदाशिवभट्टीयम् ॥

शब्दे वक्ष्यमाणरीत्या पदत्वाभावान्न प्रकृतिभावप्रसक्तिस्तत्यपि तत्त्वे इत्युच्यते, यद्वा अमू–इतः एतः, आ ओः–उ,'उ अस्ति वक्त्री'त्यादौ तत्प्रसक्तिर्बोध्या । आगत उ, ओरानन्दो वानन्द इत्यादौ तत्प्रसक्तेश्च । एतेन नपुंसकह्रस्वे स्वमतेऽस्विर्विधित्वान्निपातत्वारोहः कथमिति समाहितम् । **प्रगृह्यत्वं नेति** । तत्त्वे तु अमित्यत्र 'अमि पूर्व' इति पूर्वरूपं न स्यादिति भावः । **स्वाश्रयेति** । ननु स्वाश्रयधर्मप्रयुक्तकार्याभा-वेपि परादिवद्भावेनाङ्भिन्नत्वातिदेशे तत्वन्दुर्वारम्, 'अशास्त्रीयत्वात्तत्वानतिदेश' इत्योत्सूत्रीयोक्तोक्तन्न युक्तम्, अर्थवत्सूत्रशेषे भाष्ये 'काण्डे'इत्यादौ पूर्वान्तवत्त्वेन प्रत्ययान्तभिन्नत्वातिदेशस्योक्तत्वात् । **स्पष्टा-र्थमिति** । अन्यथा दीर्घत्वादिनापि सादृश्यं गृह्येतेति भावः । **सिद्धिरिति** । इकः परो यो हल् इत्येव सिद्धेऽन्तग्रहणाद्व्यवहिताव्यवहितसाधारणं सामीप्यमिति तु वक्तुमशक्यं, यियक्षतीत्यादौ कित्त्वे सम्प्र-

### ॥ विषमपदविवृतिः ॥

पदान्तत्वाभावेन प्रकृतिभावाप्रवृत्तेरयुक्तमेतत् । नचाम् इत एत इत्यत्र प्रकृतिभावापत्तिरित्याशयः, अव्ययीभावस्य समासान्तरघटकत्वे विवादादिति केचित्। ए आ ई एतीत्यत्र प्रकृतिभावापत्तेरित्यन्ये।

**नानुपपन्नमिति**।अन्ये त्वनाङिति प्रसज्यप्रतिषेध एव, 'यदयमनाङिति प्रतिषेधं शास्ती'ति प्रकृत-

स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावादजित्येवाऽच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थम्, तेन 'धिप्सती'त्यादिसिद्धिरिति भाष्ये स्पष्टम्। जातिग्रहणार्थमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थः। तेन तितउशब्दैकदेशस्य 'अउ' इत्यस्यानुकरणे 'अउ अकरो'दित्यत्र 'अनुकरणञ्चानिती'ति निपातत्वेऽपि प्रगृह्यत्वाभाव एकग्रहणफलम्बोद्धयम्। ननु ङकारस्य

❀ अभिनव-चन्द्रिका ❀

अत्र विरुद्धन्वन्तदभाववत्तानिश्चयमुद्रया न तु तदभावव्याप्यवत्तानिश्चयमुद्रया, अत एवाधुरित्यादौ 'विभाषा घ्राधे'ङिति लुगर्थमतिदिश्यमानधेट्त्वविरुद्धस्वाश्रयादन्तत्वप्रयुक्त'आत'इतिशास्त्रेण जुस्भवतीति दिक्। **स्वाङ्गत्वाभाववदिति**। स्वाङ्गत्वपर्याप्त्यभाववदित्यर्थः। **अच्त्वाभावादिति**। अच्त्वपर्याप्त्यभावादित्यर्थः। **वर्णग्रहणे इति**। यस्मिञ्छास्त्रे यादृशवर्णत्वव्याप्यजात्यवच्छिन्नग्रहणन्तत्रेत्यर्थः। **जातिग्रहणार्थमिति**। तादृशजात्यवच्छिन्नमात्रारब्धसमुदाये तादृशजातेरतिदेशादित्यर्थः। धिप्सतीति। 'हलन्ताच्चे'त्यत्र वर्णत्वव्याप्यहल्त्वजात्यवच्छिन्नग्रहणसत्वात्तादृशहल्त्वजात्यवच्छिन्नमात्रारब्ध'म्भि'ति समुदाये हल्त्वातिदेशेन कित्त्वं सिद्ध्यतीति भावः। स्यादेतत्—'इग्वतो झल्' इति 'इको झल्''हलन्ताच्चे'त्युभयस्थाने न्यासः क्रियते इति इयम्परिभाषा निष्फला।

❀ चिदस्थिमाला ❀

'ई अभव'दित्यादौ सञ्ज्ञासिद्धि'रित्यन्योक्तम्, 'अङिदित्येव सूत्रङ्कार्य' मित्यपरोक्तञ्चापास्तम्। तथा लब्धस्य तत्रानुवृत्तिसम्भवात्, प्रतिषिद्धार्थमारम्भेण तद्विषयत्वलाभात्, 'देवोऽसि' 'वायवायाही'त्यादौ लक्षणप्रतिपदोक्तपरिभाषया निर्वाहात्, अत एव तत्र प्रगृह्यत्वस्यानिष्टत्वात्, गौणमुख्यन्यायाद्भाष्यानुक्तत्वादत्राच्व्यन्तप्रतिषेधानुक्त्या तेषामनभिधानसूचनात्, तेषामप्रसिद्धत्वादल्पत्वात्, तथा न्यासे मात्रालाघवस्यासार्वत्रिकस्य सत्त्वेपि पदलाघवाभावात्, निपातपदावश्यकत्वापत्त्या गौरवाच्चेति दिक्। एतेन—पदद्वयघटितन्यासकरणेन सूत्रकृतः, ओत्सूत्रस्थभाष्यप्रामाण्येन भगवतश्च लक्ष्यभेदस्य सम्मतत्वात्तत एव तत्प्रयोगस्य प्रामाणिकत्वात्, अन्यथा तद्विरोधापत्तेश्च चिन्त्यमि'मिति तदुक्तमपास्तम्। यतो न प्रत्याख्यातं किन्तु स्पष्टार्थमत आह—**स्वाङ्गेति**। तस्य प्रत्येकपर्याप्तत्वात्। यथा चैतत्तथा स्फुटीभविष्यति। एतेना'ऽजित्येकत्वविवक्षया समुदायनिरास' इति दण्ड्याद्युक्तमपास्तम्। स्वस्मिंश्चारितार्थ्यलब्धमर्थमाह—**अन्यत्रेति**। **भाष्ये इति**। एतेना'ऽपृक्तसञ्ज्ञायामेकग्रहणस्योक्तार्थज्ञापकतामाश्रित्यैकाज्ग्रहणं सुत्यजम्, अत एव मनोरमायां निपातग्रहणस्यैव फलमुक्तं, न तु एकाज्ग्रहणस्ये'ति दण्डयुक्तमपास्तम्। नन्वेवमपि तत्र कार्यबाधात्तदाश्रयैकव्यक्तावेव कार्यमिति दोषतादवस्थ्येनाफलत्वमेवात आह—**जातीति**। अनतिप्रसङ्गायाह—**पात्तेति**। **बोध्यमिति**। एतेन—''अच्–समुदायग्रहणशङ्कानिरासार्थम्, अन्यथा 'अइउ–

❀ ज्योत्स्ना ❀

ग्रहणाभावे सिद्धे इति बोध्यम्। एतेनैकग्रहणस्य स्पष्टार्थत्वोक्तिरनास्थयेत्युक्तं भवति, तदाह—**एकग्रहणफलं बोध्यमिति**। अर्थवद्ग्रहणपरिभाषामूलिकाया गौणमुख्यपरिभाषाया विशिष्टरूपोपादान-

❀ सदाशिवभट्टीयम् ❀

सारणापत्तेः। अनल्विधावित्यादौ तु सामर्थ्यान्न जातिग्रहणमित्यर्थ इति। अन्यथा जातिग्रहणेपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसङ्गतिरेव, प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्यावक्तव्यत्वात्।

❀ विषमपदविवृतिः ❀

सूत्रस्थभाष्यात्, 'प्रतिषेधार्थोयमारम्भ' इत्योत्सूत्रस्थभाष्याच्च प्रसज्यप्रतिषेध एवायं, तेन आ ई ए इ

कान्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह—**वाक्यस्मरणयोरिति**। वाक्य-शब्देन स्वार्थगतमनभिमतत्वम्। स्मरणं—विस्मृतस्य स्मृतिविषयता। **एवङ्किल तदिति**—स्मृतार्थनिर्देशः।

'निपात' इत्यनुवृत्तमोदित्यनेन विशेष्यत इत्याह—**ओदन्त इति**। निपातसञ्ज्ञा

❀ अभिनव-चन्द्रिका ❀

न च यियक्षतीत्यादौ कित्त्वापत्तिरिति वाच्यं, इग्वतो धातोर्विहितो झलादिः सन् किदित्यर्थेना-दोषात्। 'वचि स्वपी'त्यत्र विहितविशेषणस्य भाष्ये उक्तत्वेन अर्थवत्त्वस्य धातुत्वस्य च उत्तरखण्ड एव सत्त्वेन प्रकृते कित्त्वेपि अर्थवद्यजादिविहितकितोऽभावेनादोषाच्च। ननु 'इग्वतो झ'लिति 'लिङ्-सिचा'वित्यत्रानुवर्त्तनात् नेर्षीष्ट कोपीष्टेत्यादावपि कित्त्वापत्तिः, न चैतत्परिभाषाया अभावे उर्ज्जीत्यादौ नुमभावाय 'नपुंसकस्य झलच' इत्यत्राचपदस्यावृत्त्या अचः परो यो झल् तदन्तस्य नुमिति भाष्योक्तार्थे तक्षीत्यादौ नुमनापत्तिः, अचः परो यो झल् तदन्ताभावादिति वाच्यं, 'नपुंसकस्य न यमी'ति न्यासेनादोषादिति चेन्मैवम्, वर्णग्रहणे जातिग्रहणमित्यस्याभावे श्रायसा-वित्यादा'वचः परस्मि'न्नित्यस्याचमुदायेऽन्त्वपर्याप्तेरभावेनाच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मा-वच्छिन्नानुयोगितकपर्याप्तिकस्थानिताकत्वस्य वृद्धावभावेनाप्राप्त्या नुमापत्तेः।

❀ चिदस्थिमाला ❀

अपेहीत्यादौ 'समुदायैकाज्द्विर्वचन' न्यायेन समुदायसंज्ञैव स्यान्नावयवानां, सिद्धान्ते तु—'तक्रकौण्डिन्य'-न्यायाऽनित्यत्वात्प्रगृह्येऽपि परे प्रकृतिभाव" इति कैयटाद्युक्तं, "वर्णग्रहणे तदन्तविधावजन्तनिपाते अतिव्याप्तिनिरासार्थन्त"दिति रत्नाकरदण्ड्याद्युक्तञ्चापास्तं, समुदायसञ्ज्ञयाऽवयवानामननुग्रहात्, हलन्ते सत्यपि तत्त्वे फलाभावेनाजन्त एव सिद्ध्या व्यावर्त्याभावेन तत्सामर्थ्यादजूपस्यैव ग्रहणात्। न च 'पुरोऽस्ती'-त्यादौ प्रकृतिभावेन रोरुत्वं न स्यादिति वाच्यं, प्रगृह्यसञ्ज्ञां प्रति रुत्वासिद्ध्या रेफान्ते तत्त्वाभावेना-ऽदोषात्। न च मान्तनिष्ठतत्त्वस्यैकदेशेतिन्यायेन रेफान्तेऽपि सत्त्वेन तत्त्वात्तन्न स्यात्, सञ्ज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वासिद्ध्या तदप्रवृत्तेः, सान्ते तु न किञ्चिदपि सिद्धकाण्डस्यफलं यत्प्रकृतिभावेन व्यावर्त्यम्, वैपरीत्यशङ्का तु पर्युदासादेव नेति दिक्। **काप्येति**। प्रयोगे इत्यर्थः। **स्वार्थेति**। वाक्या-र्थेत्यर्थः। पूर्वमेवं नामंस्थाः सम्प्रति त्वेवं मन्यसे इत्यर्थपर्यवसाने हि पूर्वोक्तार्थस्यानभिमतत्वं स्फुटमेवाव-गम्यते इति भावः। पूर्ववदेवं किलेत्यादेरनुयोगाशङ्कां हृदि निधायाह—**एवमिति**। आकारप्रतिपाद्यार्थेत्यर्थः। एतेन'स्मरणद्योतक' इति सामान्यतो मनोरमा-रत्नाकर—बोधिन्याद्युक्तमपास्तम्। उक्तहेतोरेवाह—**निपात-इति**। एतेन पूर्वविरुद्धमिदमित्यपास्तम्। ननु च्व्यन्तेऽति प्रसङ्गोऽत आह—**निपातेति**। 'सती'त्यनेना-

❀ ज्योत्स्ना ❀

विषयसौविद्याच्च्व्यन्ते प्रगृह्यसञ्ज्ञावारणायौदितिसूत्रे तस्याः प्रवृत्तये विशिष्टरूपोपादानमस्तीति वक्तव्यं, तच्च कीदृशमित्याशङ्कायामाह—निपातसञ्ज्ञेत्यादि। तथा च 'आत्महन्त' इत्यादौ महत इत्यादि-

❀ सदाशिवभट्टीयम् ❀

**स्मृतार्थेति**। आकारप्रतिपाद्यार्थेत्यर्थः।

❀ विषमपदविवृतिः ❀

अत्रेत्यत्र परादिवद्भावेन प्राप्तमपि प्रगृह्यत्वं न। गम्यमानप्रतिषेधाभिप्रायकत्वं तु न युक्तम्। 'ओषु यातं मरुत' इत्यादौ परादिवद्भावेन प्राप्तप्रगृह्यत्वस्य निषेधकाभावेन प्रवृत्तिसौलभ्येन 'प्रतिषेधार्थीय-मारम्भ ओषु यातं मरुत' इत्यादि भाष्यग्रन्थसन्दर्भासङ्गतेः। न च प्रतिषेधार्थत्वे 'ओतश्चि'-

चादिपदोपस्थितचादीनां—सति सम्भवेऽर्थवतामेवेति—सार्थकनिपातानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति—गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति—गोऽभवदित्यादौ च्व्यन्ते नास्य प्रवृत्तिः। एवञ्च कार्यकालपक्षेऽपि 'च्व्यन्ता निपाता' इत्यस्यानुपस्थितिरेतत्परिभाषावशात्। अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वात्। अत एवानर्थकेऽपि निपाते सा सञ्ज्ञा सिद्ध्यति।

❀ अभिनव-चन्द्रिका ❀

वस्तुतस्तु—अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानितावच्छेदकादेशः स्थानिवदिति अचः परस्मिन्नित्यस्यार्थेन श्रायसावित्यादौ न दोषः। न च निगाल्यत इत्यादौ णिलोपस्य स्थानिवत्त्वञ्च स्यात्, स्थानित्वावच्छेदकणित्वस्य 'णि'इत्येतत्समुदायपर्याप्तत्वादच्त्वस्य इकारपर्याप्तत्वाच्चेति वाच्यं, णित्वस्य 'णी'तिसमुदायवत् इकारेऽपि पर्याप्तत्वेनाच्त्वपर्याप्त्यनुयोगितावच्छेदकं यत् इकारवृत्तितद्व्यक्तित्वं तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य स्थानितावच्छेदकणित्वे सत्त्वेनादोषादिति सुधियो विभावयन्तु।

**चादीनामिति**। न च निपातपदस्य चत्वात्वादिनानाधर्मावच्छिन्नशक्तत्वेन नानार्थत्वेन

❀ चिदस्थिमाला ❀

सम्भवेनैषामपीति सूचितम्। अत एवाह—**सार्थकेति**। **पस्थितिरिति**। तथा च लौकिकार्थवत्त्वयोग्यपदाश्रये न्यायप्रवृत्तिरिति सिद्धान्तविषयताऽस्ति, अत एव वर्णग्रहणादौ तदप्रवृत्तिस्तदाह—**गौणेति**। यद्यप्यन्यत्र निपातग्रहणे सर्वग्रहणमिष्टं, तथापि इह शब्दाधिकारेण भाष्यप्रामाण्यादर्थवत्परिभाषैतत्परिभाषयोः प्रवृत्तिः, अत एव'निपात' इति सूत्रं विहाय-'ओ'दिति सूत्रे एव—'ओतश्च्व्यन्तस्य प्रतिषेध'इति वार्तिकारम्भस्तदाह—**प्रकृतेति**। 'अदोऽभव'दित्यादौ लक्षणप्रतिपदोक्तपरिभाषया निर्वाहादाह—**गोऽभवदिति**। एतेन "तस्या विशिष्टरूपोपादानविषयत्वात् 'भानोऽत्रे'—त्यादि तत्प्रत्युदाहरण''मिति **रत्नाकराद्युक्तमपास्तं**, प्रकृतसूत्रभाष्यविरोधापत्तेः। नन्वेवमपि कार्यकालपक्षेऽत्र तदुपस्थितिसामर्थ्यात्स्यादेव ग्रहणमत आह—**एवञ्चेति**। अपिना यथोद्देशपक्षसमुच्चयः। **'एवञ्चे'**त्यस्यार्थमाह—**एतदिति**। नन्वेवमुक्तरीत्याऽतिप्रसङ्गोऽत आह—**अव्ययेति**। आदिना प्रातिपदिकसञ्ज्ञादिपरिग्रहः। ननु असम्भवे तत्र तत्त्वस्येष्टत्वादाह—**निपाते इति**। एतन्मूलार्थवत्परिभाषाया अप्रवृत्त्येदं द्रढयति—**अत एवेति**। ननु तस्मिन्निति बाधे मानाभावेनौचित्या-

❀ ज्योत्स्ना ❀

विशिष्टानुपूर्व्यवच्छेदेन विशिष्टं रूपं साक्षादुपादीयते, एवमिहापि निपातपदोपस्थितं 'चे'त्यादिविशिष्टं रूपमुपादीयत एवेति परिभाषाप्रवृत्तिरक्षतेति भावः। **अनित्यत्वादिति**। अयमभ्युपगमवादः। वस्तुतस्तु साक्षादेकदेशद्वारा वा विशिष्टरूपोपादाने गौणमुख्यन्यायप्रवृत्तिः। निपातपदोपस्थितचादीनां तु न तथात्वमित्यव्ययसञ्ज्ञाविषये न तत्प्रवृत्तिः। प्रगृह्यसञ्ज्ञायां त्वोदन्त इत्येतदेव विशिष्टरूपोपादानमिति वाच्यं, तेन दोषः। अत एव गौर्वाहीको गां वाहीकमानयेत्यादौ णित्वात्वयो-

❀ सदाशिवभट्टीयम् ❀

**अव्ययसञ्ज्ञादाविति**। आदिना 'निपात एका'जिति प्रगृह्यत्वं, तेन **'ई** अभव'दित्यादौ प्रगृह्यत्वम्। अत एवोदित्यत्रैव च्व्यन्तप्रतिषेध उक्तः, प्रत्याख्यातश्च न्यायेन। **अनित्यत्वादिति**। नन्वव्ययसञ्ज्ञायाः कथं पदकार्यत्वं, येनानित्यत्वमवलम्ब्यत इति चेच्छृणु, पदकार्यविषयकोऽयं न्याय

❀ विषमपदविवृतिः ❀

प्रतिषेध इति वार्त्तिकानुत्थानमिति वाच्यम्, प्रतिषिद्धार्थाया अपि ओदन्तस्य प्रगृह्यसञ्ज्ञायाः प्रतिबन्धकाभावेनादो भवतीत्यत्रापि प्राप्तेः। **ओत्**। **च्व्यन्ते नास्य प्रवृत्तिरिति**। यद्यपि निपात-

त्रपो इतीत्यादौ प्रगृह्यत्वमाह—**सम्बुद्धिनिमित्तक इति** । सम्बुद्धिपर इति व्याख्याने तु सोऽपि लुप्तत्वेन तत्परत्वाभावः स्यात् । न लुमतेति निषेधनित्यत्वं चानित्य-

❀ अभिनव-चन्द्रिका ❀

सकृदुच्चरितन्यायेनावृत्तिमन्तरा सर्वेषां बोधानापत्तिरिति वाच्यं, चकारादि-आत् इत्येतदन्त-

❀ विद्वत्सिथमाला ❀

सम्बुद्धिपर इति व्याख्यानमेव सुशकं वक्तुमिति मूलमसङ्गतमत आह—**त्रपो इतीति** । ननु निषेध-नित्यत्वेन तत्परत्वमत आह—**न लुमतेति** । तथा च—लक्ष्यानुरोधेन तदप्रवृत्तिस्तथा व्याख्यानञ्च । एतेना-ऽनुत्पन्नाकारविशेषणत्वान्निमित्तसप्तमी, 'क्विति चे'ति वदिति **रत्नाकरोक्तमपास्तम्** । तत्रापि तत्प्रवृत्ति

❀ ज्योत्स्ना ❀

प्रवृत्तिर्गौणमुख्यन्यायेन प्राप्ता पदकार्यविषयत्वाभ्युपगमेन निवारिता **कैयटोपाध्यायैः** । एवञ्च गौणलाक्षणिकत्र्यादिशब्दे त्रयादेशादि प्रवर्तत एव । न चैवं सञ्ज्ञात्र्यादिशब्देऽपि तत्प्रसङ्ग इति वाच्यम्, 'अभिव्यक्तपदार्था ये' इति न्यायेन तद्वारणात् । गौणमुख्यपरिभाषायां गौणलाक्ष-णिकत्वरूपगौणत्वस्य ग्रहणेन सर्वनामप्रकरणरीत्या च प्रातिपदिककार्येऽपि तत्प्रवृत्त्यङ्गीकारेण तत-स्तस्य भेदादुभयोरप्यर्थवत्परिभाषामूलकत्वाच्च गौरवाभावात् । न चैवं सञ्ज्ञाश्वशुरादौ 'टाऽर्ना' त्यादीनामप्रसङ्गः, अदन्तादिभ्यैर्वविशिष्टरूपोपादानस्य तत्र सत्त्वादिति वाच्यं, विशिष्टानुपूर्व्यवच्छे-देन विशिष्टरूपोपादान एव तत्प्रवृत्तेरभ्युपगमात् । इदमपि **गौणमुख्यन्यायात्तस्य** पृथक् मूलमिति **परिभाषाप्रदीपार्चिषि** विस्तरेण निरूपितम् । निरर्थकनिपातेऽव्ययसञ्ज्ञाप्रवृत्तिस्तु तत्र पाठसामर्थ्या-देवेति दिक् । **अगतिकगतिरिति** । नचैवं लुनाति-पुनातिप्रभृतीनां विचि गुणे 'एङ्ह्रस्वा' दिति

❀ सदाशिवभट्टीयम् ❀

इत्यस्य—यस्य शब्दस्य वस्तुतः पदत्वविशिष्टस्यैव यत्कार्यप्रयोजकत्वं प्राप्नोति तत्र कार्ये तस्य गौणार्थकस्य न ग्रहणमिति न्यायार्थ इत्यर्थः । अस्ति च च्व्यन्तस्य पदत्ववत एवाव्ययत्वप्रयोजकत्वं, 'प्रत्ययोत्तरपदयो' रित्यादौ तु त्वदीयादौ पदत्वाविशिष्टस्यापि युष्मदादेः प्रयोजकत्वदर्शनात्त्वद्भवतीत्यादिसिद्धिरिति परि-भाषेन्दुशेखरविवृतिसङ्ग्रहे विस्तरः । अत्र एतत्परिभाषेत्यस्य एतन्मूलभूतार्थवत्परिभाषेत्यर्थः, तदाह—**अतएवानर्थकेति** । सा सञ्ज्ञा=निपातेति प्रगृह्यसञ्ज्ञा ।

**सम्बुद्धौ शा** । **त्रपो इतीति** । ननु सम्बुद्धित्वस्य हल्त्वेनस्थानिनावद्वृत्तिकत्वात्सर्वत्रैव ततरत्वं दुर्लभमिति चेन्न, 'नियमस्य विधिमुखेन प्रवृत्ति'रिति पक्षे प्रत्ययलक्षणेन सौलभ्यात् । सौ 'शाकल्ये'ति सिद्धे सम्बुद्धिग्रहणं प्रगृह्यत्वे 'न लुमते'त्यस्याप्रवृत्तिज्ञापनार्थं, तेन मिथो इतीत्यत्रातिव्याप्तिवारणेन सम्बु-द्धिग्रहणं चरितार्थं, फलञ्च त्रपो इतीति—सूत्रकृन्मतं, न तु निमित्तसप्तमीत्याहुः । ननूपस्थित इत्येव कुतो नोक्तमिति चेन्न, उत्तरत्र इताविन्येव यथा सम्बध्यते, वेदे ॐ यथा स्यादिति । **रत्नाकरस्त्ववैदिके** इति

❀ विषमपदविवृतिः ❀

**पदेन चादीनामर्थवतामेवोपस्थितिरिति चाद्यंशे गौणमुख्यन्यायकार्यं प्रवर्त्तताम्** । **च्व्यन्तांशे तु न विशिष्टरूपोपादानमित्यर्थवद्ग्रहणपरिभाषागौणमुख्यन्याययोर्न प्रवृत्तिः** । **च्व्यन्ते मुख्यार्था-सम्भवश्च** । **तथापि चाद्यंशे विशिष्टरूपोपादानमात्रेण प्रवर्त्तमानगौणमुख्यन्यायोऽमुख्यार्थके च्व्यन्ते प्रगृह्यसञ्ज्ञां व्यावर्त्तयति भाष्यप्रामाण्यादित्याशयः** । **अन्ये तु गोभवदित्याद्यर्थं ओतश्च्विप्रत्ययप्रति-षेध इति वार्तिकमारब्धव्यमेव** । **तत्प्रत्याख्यानपरं भाष्यं त्वेकदेशिनः** । **ऋषिशापादिनाऽगौरेव गौः समभवत्तत्र च्व्यन्ते मुख्यार्थस्यैव सत्त्वे निपातसञ्ज्ञाया गौणमुख्यन्यायेन वारणासम्भवात्** ।

न च तत्रार्थे च्विरेव नेष्यत इति वाच्यम्, तथा सति 'सञ्ज्ञोपसर्जनीभूतास्तु न सर्वादय' इत्यादि-

गतिः । इताविति किम् ? पटोऽत्र । अनार्षे किम् ? ब्रह्मबन्धवित्यब्रवीत् । संहिताया विवक्षायामप्यवादिरहितप्रयोगार्थमिदम्। तद्विवक्षा च—वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा । तदधिकार्द्धमात्राकालव्यवायेनोच्चारणेच्छा च—तदविवक्षेति बोद्धव्यम् ।

ॐ अभिनव-चन्द्रिका ॐ

समुदायघटकजन्यबोधविषयतावच्छेदकधर्मावच्छिन्ने शक्तिस्वीकारेणादोषात् । उच्चारणेच्छेति । वस्तुतस्तु अर्धमात्राधिककालाव्यवायेन उच्चारणेच्छा–संहिताविवक्षा, अर्धमात्राधिककालव्यवाये-

ॐ चिद्स्थिमाला ॐ

स्वीकारात् । ब्रह्मेति । एतेन मूलेऽस्याऽपाठः सूचितः । नन्विदं व्यर्थं, संहिताया अविवक्षायां 'विष्णो इती'त्यस्य सिद्धेः, समासे तु नास्य प्रवृत्तिः, तत्र हि—सुब्लुकि तन्निमित्तौकाराभावात् , सम्बुद्ध्यन्तेन प्रायोऽसमासाच्च, अत आह—संहितेति । आदिना वलोपपरिग्रहः । तदेव प्रतिपादयति—तदिति । अधिकस्याप्यैच्छिकत्वनिरासायाह—अर्द्धमात्रेति । सङ्गत्यर्थमुक्त इति सम्पूर्णैक-

ॐ ज्योत्स्ना ॐ

सम्बुद्धिलोपे 'लो इति' 'पो इती'त्यादावव्याप्तिः, ओकारस्य सम्बुद्धिनिमित्तकत्वाभावात् । न च 'गोतो णि'दित्यत्र गकारस्याविवक्षितत्वाण्णिद्वद्भावे वृद्धौ च लौः पौरित्येव तत्रेष्यते, लाक्षणिकौकारे तदप्रवृत्तेः, 'न वर्णग्रहणे' इति निषेधस्तु वर्णप्राधान्यविषयः, अत एवादोऽभवदित्यादावोदित्यनेन च्व्यन्ते प्रगृह्यसञ्ज्ञा लक्षणप्रतिपदोक्तपरिभाषया वारिता भाष्ये इति वाच्यम्,'अचः परस्मि'न्नित्यत्र भाष्यविरोधेन तदनभिधानस्योपाध्यायैः प्रदर्शितत्वात् । इदं तु स्यात्—सम्बुद्धिग्रहणमेवेह किमर्थमिति । न चाहो इतीत्यादौ परत्वाद्विकल्पाभावार्थं तदिति मनोरमोक्तिर्युक्ता, ओदिति नित्यसञ्ज्ञायाः पदान्तरनिरपेक्षत्वेनान्तरङ्गत्वात् । न च कार्यकालपक्षे पदान्तरवृत्त्यजपेक्षप्रकृतिभावेनैकवाक्यत्वादुभयोः साम्यमिति वाच्यम् , एवमपि पदान्तरवृत्त्यज्मात्रापेक्षनित्यसञ्ज्ञातस्तद्घटितेतिशब्दसापेक्षविकल्पस्य बहिरङ्गत्वात् । परत्वाद्विकल्पप्रवृत्तौ पुनःप्रसङ्गविज्ञानान्नित्यसञ्ज्ञायां फले विशेषाभावात्सम्बुद्धिग्रहणानर्थक्यमिति तु न युक्तम् । यत्र परशास्त्रप्रवृत्तौ पूर्वशास्त्रप्रवृत्तिः वाक्यप्रवृत्तां परशास्त्रप्रवृत्तिं बाधते तत्र पुनः प्रसङ्गविज्ञानाभावसिद्धान्तस्या'चश्चे'ति सूत्रे प्रदीपप्रदर्शितस्य परिभाषाप्रदीपार्चिषि परिष्कृतत्वादिति । अत्राहुः—निपातपदाननुवृत्तये

ॐ सदाशिवभट्टीयम् ॐ

शेषः । अनार्षे इत्यनुवृत्तेर्वृत्तावुक्तत्वादिति व्याख्यत्, तत्तु चिन्त्यमेव, 'उकारश्चेतिकरणेन युक्तो रक्तोपृक्तोद्भावित, इति प्रातिशाख्यविरोधात् । वस्तुतो वेदे आपाद्यमानरूपाभावेनानार्षे इति व्यर्थमेवेति तु न, छान्दसेतिपरकलौकिकौदन्ते दोषात् । अत एवेतिसामानाधिकरण्याय तद्धितः सार्थकः । अत्र 'ओः शाकल्यस्ये'ति सुवचन्तु न, अ उ ओ इत्यत्रापि उवर्णस्थानिकत्वेन दोषात् । अवादीति । आदिपदं चिन्त्यार्थकम्[1] । इदमिति । सूत्रमित्यर्थः ।

ॐ विषमपदविवृतिः ॐ

वार्तिकभाष्यविरोधापत्तेः । च्व्यन्तांशे विशिष्टरूपोपादानाभावेन मुख्यार्थासम्भवेन च गौणमुख्यन्यायप्रवृत्त्यसम्भवाच्चेत्याह—निपात इति किमिति । मिथो इतीत्यत्र प्रगृह्यत्वं माभूत् । यत्तु देवोसीति प्रत्युदाहरणं बृहच्छेखरे दत्तं, तन्न । अदोऽभवदित्यादाविव लक्षणप्रतिपदोक्तपरिभाषया वारणसम्भवात् । ब्रह्मबन्धविति । वेदे आपाद्यमानप्रयोगाभावेन प्रगृह्यत्वस्य वैकल्पिकत्वेन चानार्षे इति व्यर्थमिति केचित् । तदधिकार्द्धमात्राकाल इति । ततोऽप्यधिककालव्यवधानेनोच्चारणन्तु अर्थ-

१. 'आदिपदं चिन्त्यप्रयोजन'मिति पाठान्तरम् ।

**उञः** । अत्रोञ् निपात एव । 'उञ ऊँ' इत्येकसूत्रत्वे तु–शाकल्यग्रहणाननुवृत्तौ 'ऊँ इती'त्येकमेव स्यात्, प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात् । 'उ इति' 'विती'ति च न स्यात् । आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोद्धव्यम् । प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्तत्वया विधेयविशेषणत्वे मानाभावात् । शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँ आदेशस्य विकल्पे 'ऊँ इति' 'विती'ति सिद्ध्यति, न तु

॥ अभिनव-चन्द्रिका ॥

नोच्चारणेच्छा तदविवक्षा । यथाश्रुतन्तु न युक्तम् । अर्धमात्रान्यूनकालेनोच्चारणस्थले संहितात्वानापत्तेः । **निपात एवेति** । लक्षणप्रतिपदोक्तपरिभाषयेति भावः ।

॥ चिदस्थिमाला ॥

सूत्रप्रदर्शकम् । अत एवाह—**अत्रेति** । 'उञ ऊँ' इत्यत्रेत्यर्थः । **निपात एवेति** । न प्रत्याहारः, उञ्ग्रहणसामर्थ्यात्, अन्यथा—हल्सु विशेषाभावादुच्ग्रहणमेव कुर्यात्, उञ्निपाते ञकारोच्चारणसामर्थ्याच्चेति भावः । ननु पाणिनिनैकसूत्रत्वेन पठितमिति किमिति मूले योगविभागोऽत आह—**उञ ऊँ इति** । अननुवृत्तौ=तत्पक्षे । नन्वेवमपि यणादेशेन सानुनासिकवकारघटितमेव स्यान्न तूक्तमत आह—**प्रगृह्येति** । प्रकरणेन=तत्पाठेन । अन्यथा तदानर्थक्यं स्पष्टमेव । अतएव चः । 'एव'व्यवच्छेद्यमाह–**उ इतीति** । 'इती'त्यस्यात्रापि सम्बन्धः । **प्रगृह्यस्येति** । सञ्ज्ञारूपोऽर्थः । षष्ठी त्वादेशापेक्षयेति न दोषः । नन्वेवमपि स्थानिनि तत्त्वेऽपि आदेशे न तत्त्वमल्विधित्वेन स्थानिवद्भावाभावादत आह—**आदेशे इति** । सहविधानेऽपि वाचः क्रमवृत्तित्वात्सम्भवानुरोधेनादौ सञ्ज्ञा, तत आदेशः, अल्विधित्वन्तु न, सुप्त्ववदिति तत्त्वमितिभावः । एतेन—"स्थानिवत्त्वेन 'निपात एका'जिति प्रगृह्यत्व"मित्यपास्तम् । नन्वेवं गौरवादादेशेनैव तत्सम्बन्धोऽस्त्वत आह—**प्रगृह्येति** । परम्परयात्रापि तत्सत्त्वादाह—**साक्षादिति** । 'पूर्वत्रे'ति शेषः ।

॥ ज्योत्स्ना ॥

इह सम्बुद्धिग्रहणमिति । तदभावे हि तदनुवृत्त्याहो इतीत्यादावेव विकल्पापत्तिरिति । अत्र शब्दरत्नकृतः—निपातपदसम्बद्धौग्रहणानुवृत्त्यैव सिद्धौ 'ओच्छाकल्यस्येतावनार्षे' इति न्यासेन पुनरोद्ग्रहणान्निपातपदनिवृत्तौ सम्बुद्धिग्रहणं वैचित्र्यार्थमिति । अत्र वदन्ति—स्वरादिपठिते मिथो इतीत्यत्रैवं सति विकल्पापत्तिरिति । अत्रायं शब्दरत्नकृदाशयः—पुनरोद्ग्रहणान्निपातभिन्नस्यैव प्रतिपदोक्तभिन्नस्याप्योकारस्येह ग्रहणान्मिथो इतीत्यत्रादोष इति । किन्त्वेवंव्याख्याने प्रमाणमपश्यता भगवता सूत्रकारेणेह सम्बुद्धिग्रहणं कृतमिति तत्त्वम् । निपात एवेति । न तु कृतसम्प्रसारणो

॥ सदाशिवभट्टीयम् ॥

**उञः** । **निपात एवेति** । न तु प्रत्याहारः, तथा सति उजित्येव ब्रूयात् । नापि कृतसम्प्रसारणस्य वेञो, लाक्षणिकत्वादिति भावः । **स्थानिवद्भावेनेति** । अप्रहीदित्यादाविट्त्वस्येवेति भावः । **मानाभावादिति** । यद्यपि सामानाधिकरण्येनान्वयस्य पूर्वं क्लृप्तत्वेन उञ इति श्रुतत्वादादेशेनैव सम्बध्यत इति न्याय्यं, कैयटोक्तेश्च, उञ इत्येतदावृत्त्यभावप्रयुक्तलाघवानुरोधेन प्रगृह्यसञ्ज्ञकश्चेति भाष्योक्तिस्वारस्येन च सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वेनास्यादेशविशेषणत्वमेव

॥ विषमपदविवृतिः ॥

त्रोधानुपयोगित्वाच्छिष्टसंप्रदायावरोधाच्च हेयमेवेति भावः । **उञः** । **निपात एवेति** । न तु प्रत्याहारः । उजित्येव वक्तव्ये ञकारोच्चारणसामर्थ्येन क्विबन्तस्य कृतसम्प्रसारणस्य वेञ इति–शब्दपरत्वेऽपि न प्रगृह्यत्वस्योपयोगः, तुक्प्रवृत्तेः, नाप्युमादेशः, तुगन्तस्यानिर्दिश्यमानत्वात् ।

मानाभावादिति । इदमयुक्तम् । 'उञ'इत्यस्यावृत्त्या स्थानषष्ठ्यन्तत्वस्य वाच्यवाचकभावसम्बन्धार्थ-

'उ इती'ति । प्रगृह्यत्वविकल्पेन पक्षे तदभावेऽपि अस्य तात्पर्यात्, एतदभावे 'निपात एका'जित्यस्याप्रवृत्तेः । तदुक्तं भाष्ये—योगविभागं प्रदर्श्य—'किमर्थो योगविभागः ? शाकल्य-मते 'ऊँ' विभाषा यथा स्यात्, 'ऊँ इति' 'उ इति'। अन्येषामाचार्याणां मतेन 'विती'ति। अनेन हि योगविभागस्य 'उ इती'ति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते। अतो योगविभागेन व्याचष्टे—**उञ इति ।** उञो वाचकं पदं प्रगृह्यमित्यर्थः ।

❀ अभिनव-चन्द्रिका ❀

**तात्पर्यादिति** । अस्य प्राप्तविभाषात्वेन पक्षेऽभावविधायकत्वादिति भावः । सूत्रे षष्ठ्युपपत्तये आह—**उञो वाचकमिति ।** एवञ्च सूत्रे वाच्यवाचकभावः षष्ठ्यर्थ इति भावः ।

❀ चिदस्थिमाला ❀

तथाचा'ऽकृते'न्यायेनात्रापि तथैवेति भावः । न च दीर्घोच्चारणसामर्थ्याद्यणभावे एतत्प्रकरणपाठो व्यर्थ एवेति वाच्यम्, असंहितायां साफल्यात् । अनुवृत्तिपक्षे आह—**शाकल्येति** । पूर्वमनसमुच्चायकोऽपिः ।

नन्वनेन विकल्पेनोभयोरभावपक्षे 'निपात' इति प्रगृह्यत्वेन 'उ इती'त्येव स्यान्न तु 'विती'ति—इदम-युक्तमत आह—**प्रगृह्येति** । तस्यापीत्यर्थः । अत एवाग्रिमाऽपिसङ्गतिः । तेन वादेशादिसमुच्चयः ।

'तात्पर्य'मप्रवृत्तौ हेतुः । 'तदुक्त'मिति व्युत्क्रमेणान्वयः । अत एव ल्यबुपपत्तिः । अनुवृत्तिपक्षेऽयं ग्रन्थ-स्तदाह—**शाकेति** । **अनेनेति** । तस्य तत्त्वविवक्षया तृतीया, हेतौ वा । भाष्येणेत्यर्थः । हि=यतः ।

एतेना 'नुवृत्तिपक्षे उक्तरीत्या तयोः सिद्धिर्न तु 'वीती'त्यस्य, अतो योगविभाग'इति **रत्नाकरदण्ड्याद्यु-क्तमपास्तम्** । **अत इति** । उभयथाऽपि तत्रासिद्धेरित्यर्थः । **उञ इतीति** । मौलविभक्तसूत्रप्रतीकमिदम् ।

नन्वेवं समानाधिकरण्याद्यभावात्कथं सञ्ज्ञा-सञ्ज्ञिभावोऽनस्तस्य फलितार्थत्वं ध्वनयञ्छाब्दार्थमाह—**उञ इति** । अध्याहारोऽन्वयायेति भावः । तस्य शब्दपरत्वस्यैव सत्त्वादाह—**पदमिति** ।

❀ ज्योत्स्ना ❀

वेञ्धातुरिति भावः । **तदभावेऽप्यस्य तात्पर्यादिति** । शाकल्यातिरिक्तमते प्रगृह्यत्वमुञो ने-त्यर्थे तात्पर्यादित्यर्थः । उञ इत्यनेन प्रगृह्यमित्यस्यानन्वयादाह—**उञो वाचकमिति ।** प्रगृह्यपद-स्य धर्मपरत्वे तु लक्षणाप्रसङ्गाद्गौरवमिति भावः । **स्पष्टमेव लभ्यत इति** । योगविभागाभावपक्षे

❀ सदाशिवभट्टीयम् ❀

न्याय्यम्, तथापि वक्ष्यमाणभाष्याऽनुरोधेनोद्देश्यत्वस्य विशेषणत्वमेव युक्तम्, लक्ष्यविसंवादाच्चेति स्फुटीभविष्यति। **न तु उ इतीति ।** न च निरनुबन्धकोकारमादाय तत्सिद्धिः, उ इतीत्यस्मात्सानुबन्धकप्रती-तेरपीष्टत्वादिति **स्पष्टमुद्योते ।** न च ऊँभावाभावपक्षे शाकल्यह्रस्वेन उ इति वितीति सिध्यतीति वाच्यं, योगविभागाभावे ऊँविधौ शाकल्यपदस्य यथाश्रुतत्वेन शाकल्यान्यमते च शाकल्यह्रस्वस्य नाप्राप्त्या ऊँभावस्य तक्रकौण्डिन्न्येतिन्यायेन 'भोभगो' इति सूत्रभाष्योक्तरीत्या तत्र तत्कृते उन्त्वाभावेन सार्थक्या-भावेन न्यायाप्रवृत्तौ तु सर्वथानिरवकाशत्वेन वा शाकल्यह्रस्वबाधकत्वात् । तदभावपक्षे तदप्राप्तेश्च ।

❀ विषमपदविवृतिः ❀

कल्पकल्पने गौरवेण प्रथमान्तार्थेऽस्याभेदेनान्वयस्य क्लृप्तत्वेन च विधेयविशेषणत्वस्यैवोचितत्वात् ।

**स्पष्टमेव लभ्यत इति ।** अन्ये तु योगविभागाभावे प्रगृह्यत्वस्योआदेशस्य च शाकल्यमतेन युग-पत्प्रवृत्तौ तन्मते 'ऊँ इती'ति रूपं तदन्यमते 'उ इति' प्रगृह्यत्वस्य 'निपात एकाजना'ङिति सामान्य-शास्त्रप्रणयनेन तदन्यमतेऽपि सत्त्वनिश्चयेन स्मृत्यन्तरानुसन्धानद्वारा प्रगृह्यत्वांशे विकल्पा-सम्भवेनादेशांशे एव स्मृत्यन्तरानुसन्धानद्वारा विकल्पपर्यवसानापत्तेः । यथा 'ऋतो भारद्वाजस्ये'

शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते, तदाह—उञो इनौ वेत्यादि। विकल्पानुवृत्तौ हि 'निपात एके'त्येव सिद्धे इदं व्यर्थमेव स्यात्। एवञ्च प्रमादितोऽयम्। 'ऊँ' इत्यत्र शाकल्यप्रगृह्यपदयोरसम्बन्धे उञ इत्यर्थाधिकाराद्प्रगृह्यस्यैवादेशः तस्य 'इको यणी'ति यणि 'ऊँ इती'त्यस्यासिद्धिः। दीर्घोच्चारणवैयर्थ्यापत्तिश्च। विकल्पमात्रसम्बन्धेऽपि

## ॐ चिदस्थिमाला ॐ

त्रितयमित्यर्थः। मतेन—''सञ्ज्ञाविधानद्वयमनुवर्त्तेत'' इति रत्नाकरोक्तमपास्तम्। अत्रान्ययोगव्यवच्छेदस्पष्टत्वाद्बाधफलमाह—विकल्पेति। हि=यतः। ननु योगविभागेऽपि 'ऊँ' इति सूत्रे वा-ग्रहणानुवर्त्त्य, पूर्वविकल्पस्तु तानर्थ्यादादेश एव तत्कार्यप्रवृत्त्या 'ऊँ इति' 'विती'ति रूपद्वयार्थं भविष्यति, आदेशस्य स्थानिवत्त्वेन प्रकृतिभावाप्रवादेन 'मय' इत्यनेनान्तरतम्यादनुनासिकत्वस्य सुलभत्वेन 'किञ्चि'त्यपि सिद्धमत आह—इत्यत्रेति। शब्दाधिकारे इष्टकल्पनासम्भवादाह—अर्थाधिकारादिति।

## ॐ ज्योत्स्ना ॐ

शाकल्यमते—उँ इतीति रूपं सिद्धमेवेति—न तदंशेऽपूर्वविधानम्। एवं शाकल्यातिरिक्तमते—वितीत्यस्यापि सिद्धत्वान्न तदंशेऽपि तथात्वम्। उ इतीति—तु शाकल्यमते न कदापि प्राप्तमिति—तदेव योगविभागस्य फलमित्युक्तभाष्यात्स्पष्टमेव लभ्यत इति भावः। यद्यपि निरनुबन्धकोकारमादाय 'उ इती'त्यस्य सिद्धत्वाद्योगविभागो निरर्थकस्तथापि 'उ इती'त्यतः सानुबन्धकबोधस्यापीष्टत्वेन तदनापत्तिरिति निष्कर्षः। उपाध्यायास्तु—योगविभागस्य फलं वितीति रूपमित्याहुः। तथा ह्येकयोगे उञ इति श्रुतेरादेशेनैव सम्बध्यते न प्रगृह्यसञ्ज्ञयेति ना 'निपात एका'जिति—नित्यैव—उञो भविष्यतीति शाकल्यश्रुत्यनुवृत्त्याऽऽदेशे विकल्पिते रूपद्वयेनैव भाव्यमिति।

उ इति। अत्र पक्षे उ इतीत्यस्य शाकल्यातिरिक्तमते सिद्धत्वेऽपि शाकल्यमते तदसिद्धिरिति तदपि

## ॐ सदाशिवभट्टीयम् ॐ

इत्यन्वितीति। योगविभागे कृते ऊभावपक्षे शाकल्यह्रस्वेन 'उइती'ति चतुर्थं रूपं सम्भवति न वेति चेच्छृणु, परत्वान्नरङ्गत्वात्स्यात् ऊँभावात्प्राक् शाकल्ये क्षतिरेव न। ऊँभावे न सः। प्रतिपदोक्तत्वात्तु न तत्प्राप्तिः, हरौ

## ॐ विषमपदविवृतिः ॐ

त्यस्या'चस्तस्य'दिति सामान्यशास्त्रप्रणयनेन कृदन्ते स्मृत्यन्तरानुसन्धानद्वारा तद्विकल्पबोधफलम्। न च प्रगृह्यपदानुवृत्तिवैयर्थ्यं, तस्योत्तरत्रानुवृत्त्यर्थत्वेनोपपत्तेः। तथा चैकयोगत्वे शाकल्यमते उँ इत्येकमेव स्यात्। तदेतदुक्तं भाष्ये—'शाकल्यस्य चाचार्यस्य मतेन उँ इति विभाषा यथा स्यात्—उँ इति, उ इतीति। तदन्यमतेन 'निपात एका'जिति नित्यं प्रगृह्यत्वात् उ इतीति स्यात्। तदेतदुक्तं भाष्ये—अन्येषामाचार्याणां मतेन—वितीति। योगविभागेन उञ इत्यनेन प्रगृह्यत्वस्य शाकल्यमते विधानेन योगविभागेन सिद्धप्रगृह्यसञ्ज्ञाविज्ञानसामर्थ्यात्स्मृत्यन्तरानुसन्धानद्वारा सामान्यशास्त्रसत्त्वेऽपि प्रगृह्यत्वांशे विकल्पः सिध्यति। द्वितीययोगेन तु सति प्रगृह्यत्वे एवादेशविकल्पः, तत्रापि शाकल्यग्रहणानुवृत्तिसामर्थ्यात्। ननु शाकल्यग्रहणानुवृत्तिः सति प्रगृह्यत्वे एवादेशो यथा स्यान्न त्वप्रगृह्यत्वे इत्येवमर्थं स्यात्, न स्याद्दीर्घोच्चारणसामर्थ्येन प्रगृह्यपदानुवृत्तिसामर्थ्येन च, सत्येव प्रगृह्यत्वे आदेशकल्पनासम्भवात्। तस्माद्द्वितीययोगे शाकल्यानुवृत्तिः सति प्रगृह्यत्वे आदेशविकल्पार्थेत्येव तत्त्वमित्याहुः। दीर्घोच्चारणवैयर्थ्यापत्तिश्चेति। असंहितायां तस्य चारितार्थ्याच्चिन्त्यमेतदिति केचित्। विकल्पमात्रसम्बन्धेऽपीति। शाकल्यपदसम्बन्धे

'ॐ इती'त्यस्यासिद्धिरिति–विधानसामर्थ्यात्प्रगृह्यपदसम्बन्धः । प्रगृह्यपदमात्रसम्बन्धे-ऽर्थाधिकारादप्रगृह्यस्य नित्ये ॐआदेशे 'ॐ इती'ति, प्रगृह्यस्य 'उ इती'ति सिद्धेऽपि 'विती'ति न सिद्ध्येत् । तदाह—**उञ इतौ दीर्घोऽनुनासिक** इत्यादि । अत्र विशिष्टस्य विधिरिति न वाक्यभेदः । न च प्रगृह्यत्वमादेशश्च शाकल्यमते इति

## ॐ अभिनव-चन्द्रिका ॐ

**विशिष्टस्य विधिरिति** । 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यत्रेवात्रापि प्रगृह्यसञ्ज्ञकत्व-

## ॐ चिदस्थिमाला ॐ

अस्य मुख्यत्वात्सञ्ज्ञा-सञ्ज्ञिभावस्यैव तत्रासत्त्वादिति भावः । दोषान्तरमाह—**दीर्घाच्चेति** । मात्र-पदेन प्रगृह्यान्यव्यवच्छेदः । **अपिरुक्तसमुच्चायकः** । यणापत्त्येति भावः । पक्षद्वयेऽप्याह—**विधानेति** ।

**नन्वेवं** तस्यैव सम्बन्धोऽस्तु, मास्तु च विकल्पसम्बन्धोऽत आह—**प्रगृह्येति** । मात्रपदेन विकल्प-निरासः । अत एवाह—**नित्ये इति** । **तीति** । इतीति चेत्यर्थः । तस्मादुभयोरनुवृत्तिः । एतेन—प्रगृह्यत्वाननुवृत्तावादेशमात्रविकल्पे प्रगृह्याप्रगृह्ययोर्द्वयोरप्युञोरादेशापत्तौ प्रगृह्यादेशे प्रकृतिभा-वेनेष्टसिद्धावप्यप्रगृह्यादेशेऽस्य सवर्णोऽनुनासिको वकारः स्यात्, तदनुवृत्तौ तु प्रगृह्यत्वमप्यनेन विधीयते इति न दोषः, शाकल्याननुवृत्तौ तु उञ्मात्रस्यानेन नित्ये ॐ आदेशे 'ॐ इती'त्येकमेव रूपं स्यात् । 'प्रगृह्य'मिति प्रथमान्तस्य षष्ठ्यन्ततया विपरिणामं कृत्वा स्थानिविशेषणत्वं स्वीकृत्य प्रगृह्यस्योञ ॐ इति हरदत्तोक्तव्याख्यायान्तु 'ॐ इतीति' विती'ति च द्वे एव रूपे स्यातां, न तु 'उ इतीति, तस्मात्तदनुवृत्त्या-ऽऽदेशविकल्पे रूपत्रयसिद्धि'रिति कैयट–दीक्षित–दण्डि-रत्नाकराद्युक्तमपास्तम्, उक्तयुक्तेः, विपरिणामे मानाभावात्, दोषान्तरस्यान्यत्र स्पष्टत्वाच्चेति दिक् । दीर्घोच्चारणन्तु प्रागुक्तरीत्या सफलम् । एतेन—दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावसिद्धौ किं प्रगृह्यत्वेने'त्यपास्तम् । नन्वनेन सञ्ज्ञाऽऽदेशोभयविधाने वाक्यभेदापत्तिरत आह—**अत्रेति** । क्रमेणाह—**प्रगृह्येति** । उभयत्रापि तदनुवृत्तेरुक्तत्वादाह—

## ॐ ज्योत्स्ना ॐ

योगविभागस्य फलम् । मुख्यफलन्तु वितीत्यस्य सिद्धिरिति बोध्यम् । युक्तञ्चैतत्—उ इतीत्यस्यैव सिद्धिर्योगविभाग इति प्रागुपदर्शितमतस्य भाष्याभिमतत्वे तु 'किमर्थो योगविभागः?—उञः प्रगृ-ह्यसञ्ज्ञार्थः—उ इती'त्येव ब्रूयादिति दिक् । **तस्येको यणीति** । न चादेशविधानसामर्थ्याद्यण-भावः, शास्त्रबाधकल्पनमपेक्ष्य प्रगृह्यपदसम्बन्धस्यैव योग्यत्वादित्याशयात् । यद्वक्ष्यति—**विधानसा-मर्थ्यात्प्रगृह्यपदसम्बन्ध इति** । **दीर्घोच्चारणवैयर्थ्यापत्तिश्चेति** । असंहितायां तदुच्चारणस्य चारितार्थ्याच्चिन्त्यमेतत् । **प्रगृह्यत्वमादेशश्चेति**। उञ इति विभक्तसूत्रेण प्रगृह्यत्वम्, ॐ—इत्यनेन

## ॐ सदाशिवभट्टीयम् ॐ

एतावित्यत्रेव प्रकृतिभावेन बाधादिति । **वैयर्थ्यापत्तिरिति** । संहिताऽविवक्षया तु न सार्थक्यमिताविति सप्तम्या निर्देशसत्त्वेन तद्विरहे उपश्लेष एव नेति पूर्वमुक्तत्वात् । विधिवैयर्थ्यन्तु नोक्तं, प्रतिपदोक्तत्वात्, अत्र कृते शाकल्येनानुनासिके ह्रस्वे साफल्यात् । **विकल्पमात्रेति** । शाकल्यपद इत्यर्थः । **विधानेति**

## ॐ विषमपदविवृतिः ॐ

प्रगृह्यपदस्यासम्बन्धे इत्यर्थः । **अर्थाधिकारादिति** । इदमयुक्तम्-उञिति पदस्याप्रगृह्यत्वे शक्त्यभा-वात् । तस्मात्प्रगृह्यस्यादेशे योगविभागवैयर्थ्यापत्तेः । अप्रगृह्यस्यैवादेश इति वक्तुं युक्तम् ।

तयोरेकप्रयोगे एव प्रवृत्तिः स्यादिति वाच्यं, योगविभागसामर्थ्येन शाकल्यमते एव भावाभावकल्पनात् । वस्तुत उञनुवादेन सञ्ज्ञाऽऽदेशयोः सह विधानमेव न्याय्यम् । आदेशे स्थानिवद्भावात्प्रगृह्यकार्यम् । भाष्ये 'प्रगृह्यसञ्ज्ञकश्चे'त्यपि स्थानिवद्भाव-लब्धार्थस्वरूपकथनमिति न्यायविदो विचारयन्तु ।

**मय उञो** । व्याख्यानादत्र मय् प्रत्याहारः । अस्य त्रैपादिकत्वेनासिद्धत्वान्न 'प्लुतप्रगृह्या' इत्यनेन बाधः । **नानुस्वार इति** । 'किं विती'त्यादौ प्रगृह्यसञ्ज्ञाऽभावे-ऽस्यासिद्धत्वादि'को यणि'ति यणि अनुस्वारो भवत्येव ।

ननु 'यः शिष्यते स लुप्यमानार्थाभिधायी'ति न्यायेन गौरीशब्दस्य सप्तम्यर्थ-वृत्तित्वेऽपीकारस्य तत्त्वाभावोऽत आह—**ईदूदन्तमिति** । शब्दस्वरूपस्य विशेष्य-त्वात्तदन्तविधिरिति भावः । **मामकी तनू इति** । प्रगृह्येष्विति शब्दप्रयोगस्य पदकारै-र्नियमितत्वात्पदपाठे प्रगृह्यत्वफलमत्र बोद्ध्यम् । ईदूतौ किं ? अग्ना भवाति । सप्तम्या डादेशः । तपरत्वमसन्देहाय । सप्तमीति किम् ? धीती, मती । ह्रस्वान्ताभ्यान्तृतीयैक-

ॐ अभिनव-चन्द्रिका ॐ

विशिष्ट 'ऊँ'इत्यादेशो विधीयत इति भावः । **विचारयन्त्विति** । उभयोः सह विधाने वाक्यभेदापत्त्या गौरवाद्विशिष्टविधानमेव न्याय्यम् । अत एव भाष्ये 'प्रगृह्यसञ्ज्ञकश्चे'त्यनेन विशिष्टविधानमेव बोधितमिति—विचारणा । **प्रगृह्यफलमिति** । **मामकी इति तनू इति**—

ॐ चिदस्थिमाला ॐ

**शाकेति** । तथा च पक्षे 'विर्ती'त्यस्य सिद्धावपि 'उ इती'ति न स्यादिति भावः । **भावेति** । ऊँआदेश-स्येति भावः । प्रागुक्तरीत्या मूलासङ्गतिं ध्वनयन्स्विसिद्धान्तमाह—**वस्तुत इति** । न्याय्य'मित्यत्रान्वयः । प्रागु-क्तरीत्यैवाह—**आदेश इति** । अत्र भाष्यविरोधं परिहरति—**भाष्ये इति** । **स्वरूपेति** । 'दीर्घोऽनुनासिक' इतिवदिति भावः । ननु मयुधानोर्ग्रहणं कुतो नात आह—**व्याख्येति** । बहुलक्ष्यसंस्कारानुरोधमूलकादित्यर्थः ।

नन्वयमप्रगृह्यपक्षे, प्रगृह्यपक्षे प्रकृतिभावेनास्य बाधादत आह—**अस्येति** । 'किम्वुक्त'मित्यादौ प्रगृह्यसञ्ज्ञाया 'निपात' इत्यनेन नित्यत्वादाह—**किं वितीति** । 'सञ्ज्ञाऽभावे'इत्यत्राकारप्रश्लेषः । **तत्त्वाभाव इति** । तस्य सप्तम्यप्रकृतित्वेन तदर्थानन्वितत्वादिति भावः । **शब्देति** । शब्दानुशासनप्रस्तावात् । सप्तम्यर्थे इत्यु-पात्तार्थाक्षिप्ततद्वाचकशब्देत्यर्थः । नन्वत्र संहितायां न प्रगृह्यत्वस्य प्रयोजनमत आह—**प्रगृह्येष्वितीति** । 'त्वा वां तनू ऋत्वेनाधमाना'मित्यत्र संहिताकालेऽप्यस्ति तत्, तथापि तत्र 'ऋत्यक' इति प्रकृतिभावेनैव सिद्धं, छन्दसि आपाद्यरूपाभावात्पक्षे दोषो नेति भावः । **डादेश इति** । 'सुपा'मितीति भावः । एवमग्रेऽपि । अत्रापि प्राग्वत्पदपाठे दोषो बोध्यः । दीर्घत्वेनानण्त्वादाह—**तपरत्वमिति** । अर्थग्रहणफलस्य पृथग्वक्ष्यमाणत्वादाह—**सप्तमीतीति** । प्रकृते दीर्घान्तत्वभ्रमनिरासायाह—**ह्रस्वान्तेति** । 'परस्ये'ति शेषः । जातावेकवचनं, लुक् तु न,

ॐ ज्योत्स्ना ॐ

चादेश इत्यर्थः । **न्यायविदो विचारयन्त्विति** । प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततया विधेयविशेषणत्वे मानाभावो हि न्यायः । 'प्रगृह्य'मित्यस्य प्रथमान्तसमानाधिकरणपदेनैवान्वयः पूर्वत्र दृष्ट इति तथैवेहापि न्याय्यमिति तु विधेयविशेषणवादिनामाशयः । उपाध्यायास्तु—प्रगृह्यपदमनुवर्त्य विभक्तिविपरिणामेन षष्ठ्यन्ततया उञ इत्यस्य विशेषणमिति व्याचक्षते । तन्मते वाक्यभेदकल्पनागौरवशङ्कापि नास्तीति विशेषः । **मय्प्रत्याहार इति** । न तु धातुरिति भावः ।

ॐ विषमपदविवृतिः ॐ

विचारयन्त्विति । इदमयुक्तमित्युक्तम् । **मय्प्रत्याहार इति** । न तु धातुः । **वैजात्येति** । तच्च तदन्त-

वचनस्य पूर्वसवर्णे सवर्णदीर्घः। **अर्थग्रहणञ्चेति**। न च तदभावे 'ईदूदे'दितिवदीदूदन्ता या सप्तमीत्यर्थापत्तिः। तथा च ययीत्यादावेव स्यात्, एकादेशस्य परादिवद्भावेन सप्तमीत्वात्, न तु 'गौरी'त्यादाविति—तत्सिद्ध्यर्थन्तदावश्यकमिति वाच्यम्, 'ईदूतौ सप्तमी प्रगृह्यम्' 'अदसः' 'एच्च द्विवचन'मित्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेक्षया वैजात्यबोधनात्, ऊकारांशेऽसम्भवाच्च—'सञ्ज्ञाविधा' वितितदन्तग्रहणनिषेधाप्रवृत्त्या 'ईदूदन्तं सप्तम्यन्त'मित्यर्थेनेष्टसिद्धेरिति प्रश्नः। 'ययी'त्यादेरनभिधानमेवेति परे।

**वृत्ताविति**। अर्थग्रहणसामर्थ्यात्सप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थेनात्र तत्संसृष्टा-

ॐ अभिनव-चन्द्रिका ॐ

इत्यादावित्यर्थः। **असन्देहायेति**। अनण्त्वेन सवर्णाग्रहणादिति भावः। **अनभिधानमेवेति**। 'ईदूतौ सप्तमीत्येवे'त्यादिप्रकृतिसूत्रस्थभाष्यप्रामाण्यादिति भावः। **सप्तम्यर्थमात्रे पर्यवसन्नमिति**। तत्त्वञ्च सप्तम्यर्थविशिष्टत्वम्। वै० 'स्वनिरूपितशक्तिपर्याप्त्यधिकरणत्व'—'स्वानुयोगिनिरूपितशक्त्यधिकरणत्व'—'स्वप्रतियोगिनिरूपितशक्तिपर्याप्त्यधिकरणत्वै'तत्त्रितयसम्बन्धेन'। 'वाप्यश्व' इत्यादौ 'वापी'त्यत्र सप्तम्यर्थाधाराधेयभावनिरूपितशक्तिपर्याप्त्यधिकरणत्वस्य स्वप्रतियोगिवापीत्वावच्छिन्न-

ॐ चिदस्थिमाला ॐ

ह्रस्वश्रवणापत्तेः। 'अर्थे' इत्यनेन प्रधानाप्रधानन्यायेनार्थग्रहणसामर्थ्येन च विभक्त्यर्थस्यैव ग्रहणमिति भावः। **तदिति**। समासघटकेत्यर्थः। **ययीत्यादाविति**। आदिना 'पपी'त्यादिपरिग्रहः। ननु व्यपदेशिवद्भावेन तदन्तत्वेपि न सप्तमीत्वमत आह—**एकेति**। एवव्यवच्छेद्यमाह—**न त्विति**। **इतिर्हेतौ**। **तदिति**। तत्रापि तत्सिद्ध्यर्थमित्यर्थः। वाप्यश्व इत्यादिव्यावृत्त्यर्थं तु न, वाप्यादिपदानामाधेयाश्वादिरूपार्थवृत्तित्वेपि 'अधिकं प्रविष्टं न तु तद्धानि'रिति न्यायेन सप्तम्यर्थवृत्तित्वानपायेन तस्या दुर्वारत्वादिति भावः।

**इत्येवेति**। एवमेव लघुभूतसूत्रत्रयेणेत्यर्थः। **न्यासेति**। सूत्रत्रयेत्यर्थः। **वैजात्येति**। 'प्रकृतसूत्रे' इत्यादिः। ननु प्रकरणतो वैजात्यं दुर्वचं, प्रकरणस्यैकत्वात्, सूत्रतो वैजात्यन्त्वत्रापि सममिति कथं तेन सिद्धान्तभूतेनोक्तार्थबोधनमत आह—**ऊकारांशे इति**। ऊकारान्तसप्तम्या असम्भवादित्यर्थः। अप्रवृत्ता हेतुरयम्। तद्वदीकारांशेऽप्यसम्भव एवेति कथयन्सिद्धान्तमाह—**ययीत्यादेरिति**। प्रकृतसूत्रस्थभाष्यप्रामाण्यादेवेत्यर्थः। यथा चैतत्तथा स्फुटीभविष्यति। एतेन 'वाप्यश्व' इत्यादावपि सप्तम्यर्थोऽस्त्येवेति नार्थोऽर्थग्रहणेनेति प्रश्न' इति दण्डयुक्तमपास्तम्। तथार्थस्यैवासम्भवादवधारणार्थमात्रपदेनाधेयव्यावृत्तिर्न तु प्रकृत्यर्थस्येत्याह—**तत्संसृष्टेति**। अपिना तत्समुच्चयः। तथा च विशिष्टे पर्यवसानं,

ॐ ज्योत्स्ना ॐ

**तपरत्वमसन्देहायेति**। इदमभेदकत्वपक्षे। भेदकत्वपक्षे तु गुणान्तरयुक्तानां सञ्ज्ञाप्रवृत्त्यर्थन्तपर-

ॐ विषमपदविवृतिः ॐ

विधिसद्भावकृतम्। 'न चे'त्यारभ्ये'ती'त्यन्त इत्येको ग्रन्थः। **अनभिधानमिति**। 'नचास्तीदूतौ सप्तमी'ति प्रकृतसूत्रस्थभाष्यादिति भावः। **आधेयार्थे वृत्तिरिति**। एकार्थीभाववत्तेन समासे वापी-

ॐ वरवर्णिनी ॐ

**अर्थग्रहणसामर्थ्यादिति**। जहत्स्वार्था वृत्तिर्नाम—एकार्थीभावः, अजहत्स्वार्था वृत्तिर्नाम—व्यपेक्षेति मनसि निधाय प्रवृत्तभाष्यमतेनायं ग्रन्थः। अर्थग्रहणसामर्थ्यात्सप्तम्यर्थनिरूपितशक्त्यधिकरणेकारान्तौकारान्तौ प्रगृह्याविल्यर्थेन जहत्स्वार्थायां वृत्तौ एकार्थीभावे पूर्वपदस्यार्थाभावेन समुदायस्याऽपर्याप्त्या पूर्वपदे सत्त्वेऽपि सप्तम्यर्थनिरूपितशक्तेः पर्याप्त्या तत्राऽसत्त्वान्न प्रगृह्यत्वम्। अजहत्स्वार्थायान्तु वापीपदस्य वाप्यधिकरणक

धेयार्थेऽपि वृत्तेन दोषः। 'सञ्ज्ञाया'मिति समासे जहत्स्वार्थायां वृत्तौ पूर्वपदस्यान-र्थक्येऽपि 'सुप्सुपे'ति समासे अजहत्स्वार्थायां प्रसक्तदोषस्योक्तरीत्यैव वारणमिति भावः।

'गौरी अधिश्रित' इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणत्वान्वय इति गौर्याधि-

ॐ अभिनव-चन्द्रिका ॐ

निरूपितशक्तिपर्याप्त्यधिकरणत्वस्य च सत्त्वेऽपि स्वानुयोगित्वावच्छिन्ननिरूपितशक्त्यधिकरणत्वस्यापि एकार्थीभाववादिमते सत्त्वेन स्वानुयोगिनिरूपितशक्त्यनधिकरणत्वस्याभावान्न दोषः। मूलोक्तन्तु न युक्तं-'गौरी'त्यादौ 'गौरी'त्यस्य गौरीत्वावच्छिन्नार्थवृत्तित्वेन सप्तम्यर्थमात्रपर्यवसन्नत्वाभावात्।

ननु 'गौरी'त्यादौ गौरीपदस्य आधाराधेयभावसम्बन्धेन गौरीत्वावच्छिन्नविशिष्टे लाक्षणिकतया सप्तम्यर्थानुयोगिनिरूपितशक्त्यधिकरणत्वस्यैव सत्त्वेन कथं सप्तम्यर्थविशिष्टत्वं निरुक्तसम्बन्ध-त्रयेणेत्यत आह—**अधिकरणत्वान्वय इति**। **अप्रतीतिमात्रमिति**। अत्यन्तरूढेषु 'जहत्स्वार्था तु तत्रैव

ॐ चिदस्थिमाला ॐ

प्रकृत्यर्थविशिष्टसप्तम्यर्थाधिकरणमात्रे इति प्रकृतिप्रत्ययार्थोभयविशिष्टोत्तरपदार्थवृत्तित्वादत्र न भवतीति भावः। 'जहत्स्वार्थवृत्तिपक्षे पूर्वोत्तरपदयोवर्णवदानर्थक्यादिदं सिद्ध'मिति **रत्नाकरोक्तिं** खण्डयन्नाह—**सञ्ज्ञायामिति**। 'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी' त्युक्तेरिति भावः। सकलग्रन्थकारोक्त्य-साङ्गत्याय उत्तरपदस्यार्थवत्त्वस्य तत्रापि सत्त्वादाह—**पूर्वपदेति**। **सुप्सुपेति**। अस्य वैकल्पिकत्वात्, अत एव न रूढिरिति भावः। अत एवाह—**अजहदिति**। नन्वेवं गौरीत्यादावधिकरणकारकस्य क्रियान्वयावश्यकत्वेन तस्याश्चानुयानत्वेन? तत्र तस्य लक्षणावश्यकत्वेन न तन्मात्रपर्यवसन्नत्वमित्यव्याप्तिः। किञ्च विरुद्धविभक्तिरहितनामार्थतया भेदेनान्वयायोगादभेदान्वयाय तेषान्तदधिकरणके लक्षणावश्यकत्वेन सप्तम्यर्थमात्रपर्यवसन्नत्वाभावः। 'लुप्तस्मरणाच्छाब्दबोध' इति वादिनां मते सप्तम्यर्थपर्यवसन्नत्वमेव नेत्यत आह—**गौरीति**। गुणभूतक्रियायामपि तदन्वयस्यान्यत्र स्पष्टतरत्वात्प्राचां मतेनेदम्। किञ्च 'राज्ञो देव-दत्तस्य यज्ञदत्त' इत्यादौ प्रकारद्वयेनाप्यन्वयदर्शनेन लोपादिद्वारा लक्षणाया एवान्वाख्यानेन तेषां सप्तम्यर्थ-मात्रलक्षणया तत्पर्यवसन्नत्वेन भेदान्वये बाधकाभावः। भेदाऽभेदान्वयबोधे च तात्पर्यमेव नियामकम्।

ॐ विषमपदविवृतिः ॐ

पदस्य वाप्यधिकरणकाश्वरूपार्थोपस्थितिजनकत्वादिति भावः। **समासे जहत्स्वार्थायामिति**।

---

ॐ वरवर्णिनी ॐ

लक्षणयाऽऽधेयार्थस्याधिक्येऽपि इकारान्तस्य सप्तम्यर्थनिरूपितशक्तेः पर्याप्त्यधिकरणत्वेन प्रगृह्यत्वं स्यादिति।

अजहत्स्वार्थवृत्तिं स्वीकुर्वतां मतेऽर्थग्रहणेन सप्तम्यर्थमात्रवृत्तिशक्त्यधिकरणेकारोकारान्तौ प्रगृह्यावित्यर्थेनाधे-यार्थस्याधिक्यान्नात्र प्रगृह्यत्वम्। ननु 'सप्तम्यर्थवृत्तिशक्त्यधिकरणत्वे सति सप्तम्यर्थेतरवृत्तिशक्त्यनधिकरणत्व'-मित्यर्थस्य मात्रपदमहिम्ना लाभा'त्सोमो गौरी अधिश्रित'इत्यत्र प्रकृत्यर्थस्याधिक्येन सप्तम्यर्थमात्रवृत्तिशक्त्य-नधिकरणत्वेन प्रगृह्यत्वं न स्यादिति चेन्न। प्रकृत्यर्थेतरो यः सप्तम्यर्थेतरस्तद्वृत्तिशक्त्यनधिकरणत्वे सति सप्तम्यर्थवृत्तिशक्त्यधिकरणत्वमित्यर्थस्वीकारेणादोषात्। अन्ये त्वेकार्थीभावे एव यत्र वृत्तिघटकपदानामर्थ एव न सा जहत्स्वार्था वृत्तिः, यत्र तु पूर्वोत्तरयोः पदयोः पृथगर्थोऽस्ति साऽजहत्स्वार्था वृत्तिः, यथा वापीपदं वापीत्वावच्छिन्नवाचकम्, अश्वपदमश्वत्वावच्छिन्नवाचकम्, वाप्यश्वपदं वाप्यधिकरणकाश्ववाचकमिति। उभयविधयोरपि वृत्त्योः प्रगृह्यत्वाभावाय सप्तम्यर्थनिरूपितशक्तिपर्याप्त्यधिकरणेकारोकारान्तौ प्रगृह्यौ स्त इति वाक्यार्थेन जहत्स्वार्थायां वृत्तौ वृत्तिघटकपदयोरर्थाभावेन न दोषः। समुदायस्यापर्याप्त्या वापीपदे विद्यमानत्वेऽपि सप्तम्यर्थनिरूपितशक्तिपर्याप्त्यधिकरणत्वाभावान्न दोषः। एवमजहत्स्वार्थायामपि वापीपदस्य वापीत्वावच्छिन्नवाचकत्वेऽपि पर्याप्त्या सप्तम्यर्थस्य तत्राभावाददोषो बोध्य इति श्रीत्रिपाठिगुरुचरणा आहुः।

करणके लक्षणायां मानाभाव इति—न तत्र दोषः। **वाप्यामश्व इति**।—'सुप्सुपे'ति समासः, 'सञ्ज्ञाया'मिति वा। ननु 'सञ्ज्ञाया'मिति समासे वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासत्वेन विग्रहोऽनुचित इति चेन्न। तेषु समाससमानार्थकवाक्याभावेन नित्यसमाससदृशत्वेऽपि नित्यसमासत्वाभावात्, विभाषाधिकारबाधे मानाभावात्। नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाभाव एव। अत्र तु पृथक्प्रयोगेऽपि तद्बोध्यविशिष्टार्थाप्रतीतिमात्रमित्याहुः।

**अणोऽप्र**। अण इति किं? कर्त्तृ हर्त्तृ। अत्राण्पूर्वेणैव—व्याख्यानात्। 'आगच्छतमग्नी' इत्यादौ प्लुतस्यासिद्धत्वात्ततः प्रागेव यथोद्देशत्वात्प्रगृह्यत्वे जाते पश्चात्प्लुते

**ॐ अभिनव-चन्द्रिका ॐ**

रूढिर्यत्र विरोधिनी'त्यभियुक्तोक्त्या जहत्स्वार्थवृत्तेरेव स्वीकारादिति भावः। **व्याख्यानादिति**।

**ॐ चिदस्थिमाला ॐ**

यथा चैतत्तथाऽन्यत्र स्पष्टम्। **णके इति**। क्रियारूपाभिधेये इत्यर्थः। 'इकोऽसवर्णे' इति सूत्रस्थकैयटानुरोधेनाह—**सुप्सुपेति**। फलभेदविशेषं वक्तुं प्रकृतसूत्रस्थकैयटानुरोधेनाह—**सञ्ज्ञायामिति**। **सत्त्वेनेति**। इदञ्च शाकलसूत्रे कैयटे स्फुटम्। वाक्यस्य सत्त्वादाह—**समानार्थेति**। नित्याधिकारपाठादाह—**नित्यसमासत्वेति**। ननु तदभावेपि तत एव तत्त्वं कुतो नात आह—**विभाषेति**। तदधिकारपाठ एव हि तद्बाधे मानं, न चात्र तथेति भावः। तथा चात्र गौणं तत्त्वं, न तु मुख्यमत एवोक्तसादृश्यमुपपन्नमित्याह—**नित्येति**। हि=यतः। मात्रपदेन तद्व्यवच्छेदः। अत एव तत्सादृश्यात्तथा तत्त्वं, न तु तथेति दिक्। ननु परणकारेण प्रत्याहारेऽस्याप्यण्त्वमेवात आह—**अत्रेति**। **व्याख्येति**। 'अप्रगृह्ये'ति पर्युदासेन हलामप्रवृत्त्या लाघवायाऽच इत्येव वाच्येऽण्ग्रहणसामर्थ्यमूलकादित्यर्थः। ननु मौलः पर्युदासो न युक्तः, 'आगच्छतं हरी'इत्यत्र प्लुतस्य नव्यरीत्याऽऽश्रयेणारम्भते स्थानिवत्त्वेन प्रगृह्यत्वेऽपि स्वाश्रिततदन्यत्वस्यापि सत्त्वादनुनासिकापत्तेः, तस्मात्प्रसज्यप्रतिषेधोऽयम्। एतेन तथा **हरदत्तोक्तिरप्यपास्तेति रत्नाकरस्तदसत्**, 'अतिदिश्यमाने'त्यादिप्रागुक्तेस्तद्ध्वनयन्नाह—**आगच्छतमग्नी इति**। कैयटादिवर्णितयथोद्देशपक्षस्वरूपाभिप्रायकोयं ग्रन्थ इति ध्वनयन्नाह—**यथोद्देशेति**। एतेन 'तदा फलाभावात्कथं प्रवृत्ति'रिति, 'कार्यकालेऽन्त्रागमने तस्यानसिद्धत्वमिति कथमेत'दिति च परास्तम्।

**ॐ ज्योत्स्ना ॐ**

करणमी'दूदेदि'त्येत्रैवेति बोध्यम्। **इति केचिदिति**। 'हलोऽनन्तरा' इति सूत्रोक्तरीत्या सञ्ज्ञा-

**ॐ सदाशिवभट्टीयम् ॐ**

प्राचीनमतेनेदम्। तत्र हि शाकल्यह्रस्वेप्यस्य सार्थक्येन तत्र तक्रन्यायेनायं ह्रस्वबाधक इति नात्र कृतेऽ-

**ॐ विषमपदविवृतिः ॐ**

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति भावः। **मानाभाव इति**। न च नामार्थयोरभेदान्वय इति व्युत्पत्तिभङ्गः, गौरीपदार्थाधिकरणस्य भेदसम्बन्धेनाधिश्रयणेऽन्वयाङ्गीकारात्। तथा च लक्षणाऽवश्यकीति चेन्न। दधि पश्येत्यादिवदुपपत्तेः। न च तत्रेवात्रापि विभक्तिस्मरणेन शाब्दबोधे सप्तम्यर्थे पर्यवसन्नत्वं दुरुपपादम्। न चाधिश्रयणक्रियायामेव गौरीपदबोध्याधिकरणस्यान्वय इति बृहच्छेखरोक्तं युक्तम्, नामार्थधात्वर्थयोरपि साक्षाद्भेदेनान्वयस्याव्युत्पन्नत्वादिति वाच्यम्, आधेयार्थानुपस्थापकत्वे सति सप्तम्यर्थोपस्थितिजनकत्वस्य 'सप्तम्यर्थे पर्यवसन्न'शब्दार्थत्वात्। प्रकृते च लुप्तविभक्तिस्मृतिहेतुत्वेन गौरीपदस्यैव सप्तम्यर्थोपस्थितिजनकत्वात्। 'पञ्चकम्प्रातिपदिकार्थ' इति

तस्याप्यनुनासिकप्रतिबन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः। सञ्ज्ञायाः कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम्। स्थानिवत्त्वन्तु न, प्लुतस्थान्यवृत्तिधर्मत्वेनाविधित्वात्। पूर्वसवर्णे कृते द्विवचनत्वन्तु—परादिवद्भावेन। तेन ताद्रूप्यानतिदेशेऽप्येतद्धर्मातिदेशाङ्गीकारात्। अत एव 'रामा'वित्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितम्—'अन्तादिव'दित्यत्र भाष्ये—इति स्पष्टमाकरे।

अच्सन्धिरिति। 'सिद्धमनच्त्वा'दिति वार्तिकप्रयोगेण, 'अल्पाच्तरमि'ति सौत्रप्रयोगेण, 'कथमनच्त्वमि'ति भाष्यप्रयोगेण च—वृत्तिघटकाच्पदे पदान्तकार्यस्य तत्सन्निधानेन श्चुत्वस्य चाभावो बोध्यते इति केचित्॥

इति स्वरसन्धिः॥



॥ अभिनव-चन्द्रिका ॥

लण्सूत्रस्थभाष्यप्रामाण्यादित्यर्थः। अल्वृत्तिधर्मत्वेनेति। अल्त्वव्याप्यधर्मावच्छिन्नस्थानिनिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मत्वेनेत्यर्थः। अल्विधित्वादिति। वस्तुतस्तु 'अप्रगृह्यस्ये'त्यत्र प्रसज्यप्रतिषेधस्वीकारेऽसमर्थसमासकल्पनया क्रियाध्याहारेण च गौरवात्प्रसज्यप्रतिषेधस्य चान्याय्यत्वाल्लाघवेन पर्युदासस्यैव युक्तत्वादल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतप्रगृह्यत्वस्य 'अणोप्रगृह्यस्ये'त्येतच्छास्त्रीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेना'नल्विधा'वित्यस्याप्राप्त्या स्थानिवद्भावेनैव प्रगृह्यत्वं सुलभमिति दिक्। ननु 'प्लुतो द्विवचनत्वा'दित्याकारकारोपेऽल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिके प्रकारीभूतद्विवचनत्वस्य प्रगृह्यसञ्ज्ञाशास्त्रीयोद्देश्यतायाः साक्षादवच्छेदकत्वेना 'नल्विधा'विति निषेधात्कथं द्विवचनत्वमित्यत आह-परादिवद्भावेनेति। ताद्रूप्यानतिदेशेऽपीति। अन्तादिवृत्तिवर्णमात्रवृत्तिधर्मघटितधर्मानति-

॥ चिदस्थिमाला ॥

प्रगृह्येति। 'प्लुतपक्षेऽफलत्वेपि तदभावपक्षेऽनुनासिकप्रतिबन्धेन फलवत्ता'त्यादिः। तस्यापीति। तद्दृष्ट्या तत्र द्विमात्रत्वबुद्धेरिति भावः। नन्वेवमपि कथं पुनः प्रवृत्तिरत आह—सञ्ज्ञाया इति। 'लक्ष्ये-लक्षण'मिति तु विध्यादिविषयकमिति भावः। ननु स्थानिवत्त्वेनैव सिद्धे किमर्थमयं प्रकारोऽत आह—स्थानीति। नन्वेकादेशे उक्तरीत्या अस्थानिवत्त्वेन द्विवचनत्वमेव नेति कथनादेव प्रगृह्यत्वमत आह—पूर्वेति। ननु तेनापि ताद्रूप्यातिदेशो नेष्टोऽत आह—तेनेति। वर्णमात्रवृत्तिधर्मस्य तेनानातिदेशेऽपि अस्याऽतत्त्वेनातिदेशसम्भवात्। इदं द्रढयति—अत एवेति। साधारणधर्मातिदेशाङ्गीकारादेवेत्यर्थः। यथा चैतत्तथाऽधस्तात्प्रतिपादितमन्यत्र च स्फुटम्। आकरे इति। कैयटादावित्यर्थः।

नन्व'च्सन्धि'रित्यत्र कुत्व-श्चुत्वे उचिते, अत आह—सिद्धमिति। सवर्णसञ्ज्ञाप्रकरणे इति भावः। सूत्रपाठे प्राधान्यादेवमुक्तं, 'यथोत्तरं मुनीना'मितिन्यायेनाग्रे व्यत्ययः। एवमग्रेपि। 'अचोऽक्षु' इत्यादिभाष्यप्रयोगनिर्वाहायाह—वृत्तिघटकेति। एतेन 'स्पष्टप्रतिपत्त्यर्थं तदकरण'मिति दण्ड्युक्तमपास्तम्। वस्तुतस्तेषामार्षत्वेनोपपत्तेरुक्तज्ञापने ताद्दशकत्वफलाभावाद'चोऽक्षु' इति भाष्यप्रयोगेण पदान्तरसमभिव्याहारेण स्फुटप्रतीतौ तत्प्रवृत्तेरपि बोधयितुं शक्यत्वेनात्र सन्धिपदसमभिव्याहारसत्त्वादेव

॥ विषमपदविवृतिः ॥

पक्षे गौरीपदस्यैवाधिकरणशक्त्युपस्थापकत्वाद्वा। पुनः प्रवृत्ताविति। कार्यकालपक्षाश्रयणेन तु न

# अथ हल्सन्धिः ।

**स्तोश्चु** । 'स्'-इति 'श्'-इति च लुप्तविभक्तिके भिन्ने पदे । **योग इति** ।

ॐ अभिनव-चन्द्रिका ॐ

देशेऽपीत्यर्थः । **अच्पद इति** । 'आदिरन्त्येने'तिसूत्रबोधितसञ्ज्ञामात्रस्योपलक्षणमिदम् । अत एवा'णुदित्'इत्यादौ ङमुडभावादिसकलेष्टसिद्धिरिति ।

ॐ इति स्वरसन्धिः ॐ

ॐ चिदस्थिमाला ॐ

भरि 'आलुञ्चन्दसहने' इत्यादौ सौत्रत्वादेरेवावश्यकत्वेनात्रापि तथैवोपपत्तावीदृशकल्पने मानाभावाच्चेद-नयुक्तमिति बोध्यन्नदाह—**केचिदिति** ।

ॐ इति स्वरसन्धिः ॐ

**स्तोः** । नन्वत्र स्थान्यादेशयोः समाहारद्वन्द्वे क्लीबत्वापत्तिः, इतरेतरयोगे द्विवचनापत्तिः, नच सौत्रं पुंस्त्वमिति सर्वैरुक्तत्वाल्लिङ्गस्य लौकिकत्वेन तद्व्यत्ययस्योकाल इतिवाड्कितीव्यत्ययतो लाघवेनौचित्यमित्याशय-कात्र दोष इति वाच्यं, साहित्यस्य विशेष्यत्वेन तद्विवक्षासम्भवेनानिष्टापत्तेः, तदङ्गीकारे तत्कृतगौरवाच्च । **एतेन** 'सहितशब्दस्य शाकपार्थिवादित्वाल्लोप' इति **रत्नाकरोक्तं**, 'लिङ्गमशिष्य'मित्येव सिद्धे मनोरमा-शेखरश्च चिन्त्यः, तत्कल्पने, छन्दसत्वकल्पने च गौरवादिति **मन्दोक्तश्चापास्तम्** । उक्तहेतोः, आशया-नवबोधादिष्टेः सत्त्वाच्च, अत आह—**सितीति** । एकरूपत्वाय निमित्तांशेपीदमेव बोध्यम् । एकमुत्तर-

ॐ ज्योत्स्ना ॐ

त्वभङ्गापत्तेर्नेह कुत्वश्चुत्वे इति तु परमनिष्कर्षोऽत्र विवक्षितः ।

ॐ इत्यच्सन्धिः ॐ

'स्तोरिति समाहारद्वन्द्वः, सौत्रं पुंस्त्व'मिति प्राचीनव्याख्याने गौरवम्मत्वा व्याचष्टे—**लुप्त-विभक्तिके भिन्ने पदे इति। श्चुनेति** । विनापि सहयोगं 'सहयुक्त'इत्यनेन तृतीया, सहार्थश्च सहचारः, एकस्मिन्प्रयोगे द्वयोरेव स्थितिरूपः । स चाव्यवहितयोरेव ग्राह्यः, 'चिततूलभारि'ष्विति निर्देशात् । एवं 'ष्टुने'त्युत्तरत्रापि, 'तमडन्यतरस्या'मितिनिर्देशात्, अतो 'योग'इति वृत्तेः परिष्कारमाह—**संयोग**

ॐ सदाशिवभट्टीयम् ॐ

नुनासिकह्रस्व इति पूर्ववन्न सार्थक्यं, स्वमते तु पूर्ववद्दीर्घविधानेत्यर्थः । **इति शेखरविवृतिसङ्ग्रहेऽच्सन्धिः**।

**स्तोश्चुनेति । लुप्तेति** । आद्ये 'सुपो धा'त्विति, अन्त्ये हल्ङ्याबितीत्यन्ये । रुत्वे विसर्गे चानु-पपत्त्यभावेपि जश्त्वाभावाय च्छान्दसत्वातिदेशस्यावश्यकत्वेन तत एव लुक्कल्पने लाघवम् । एकपदत्वे तु चार्थे तत्प्रवृत्तिरपि यथासङ्ख्यमनन्वयाद्दमकसाध्यैव, 'कृत्तद्धित' 'सुपो धातु' 'च्छन्दोवत्सूत्रे'ति बहूनामनुसन्धाने गौरवमित्यभिप्रेत्याह—**भिन्ने इति** । 'युवोरनाका'वितिसूत्रे भाष्य-

ॐ विषमपदविवृतिः ॐ

निर्वाहः । 'अणोऽप्रगृह्यस्ये'त्येतद्देशस्थप्रगृह्यसञ्ज्ञाहष्ट्या प्लुतस्य सिद्धत्वेन प्लुतात्पूर्वं प्रगृह्यसञ्ज्ञा-नापत्तेः ।

ॐ इत्याचार्यराघवेन्द्रकृतविषमपदव्याख्यायां स्वरसन्धिः समाप्तिमियात् ॐ

संयोग इति तदर्थः। तेन 'चित'मित्यादौ न दोषः। अत्र 'पदस्ये'त्यधिकृतमपि न सम्बध्यते। 'शा'दिति ज्ञापकात्। तेन याच्ञा सिद्धा। शात्परस्य स्तोः श्चुत्वनिषेधकात् 'शा'दिति लिङ्गादेव निमित्तकार्यिणोर्यथासङ्ख्यं न। एवमुत्तरसूत्रेऽपि—'तोः षी'ति ज्ञापकान्न तत्। शकारचवर्गौ स्त इति। 'यथासङ्ख्य'मिति शेषः। हरिश्शेते

अभिनव-चन्द्रिका

न सम्बध्यत इति। सामानाधिकरण्येन न सम्बध्यते इत्यर्थः। अत एव 'पदस्ये'त्यधिकृतं वैयधिकरण्येन सम्बध्यत'इति अग्रिमग्रन्थेन 'अत एव सादेः पदस्येति नार्थ' इति परिभाषेन्दुशेखरग्रन्थेन च न विरोधः। यथासङ्ख्यं नेति। अनेन स्थान्यादेशयोर्यथासङ्ख्यमस्त्येवेति सूचितम्। एवमुत्तरसूत्रेऽपि

ॐ चिदस्थिमाला ॐ

सूत्रेऽपि। 'सत्या' 'भीम' इतिवन्निर्देश इत्याह—संयोगे इति। तदर्थः=अध्याहारलभ्यस्य योगे इत्यस्यार्थः। संयोगश्चाव्यवहितयोरेवेत्याह—तेनेति। आदिना 'कट्टैल'मित्यादिपरिग्रहः। तेनेत्तरत्राप्येवमेवेति सूचितम्। ननु पदस्येत्याधिकारेण पदान्तयोरनयोरित्यर्थेन चितमित्यादौ दोष एव न, अत आह—अत्रेति। फलमप्याह—तेनेति। अतिदेशेनानुकरणे स्तोत्वादाह—सिद्धेति। एवमुत्तरसूत्रेऽपि 'न पदन्ता' दितिज्ञापकात्तदसम्बन्धो बोध्यः। यथासङ्ख्यमिति। 'नश्चदधने'त्यादेरप्यनादितया नसादाव

ॐ ज्योत्स्ना ॐ

इति। तदर्थ इति। तेन याच्ञा सिद्धेति। पदस्येत्यस्य सम्बन्धे तु पदान्तयोः सकारतवर्गयोरित्य-

ॐ सदाशिवभट्टीयम् ॐ

'इतरेतरयोगे सौत्रो लोप' इति ग्रन्थस्तु कयोर्युवोरिति सूत्रस्थभाष्यानुरोधादिति न तद्विरोधः। अत्र पक्षे प्रत्येकं स्वरितत्वं प्रतिज्ञेयं—ष्टुनेत्यत्रानुवृत्तये। तदपि स्वरितत्वस्याज्झल्साधारणदोषरूपत्वे। अजिष्टस्वररूपत्वे तु एकपदत्वमेव न्याय्यमित्याहुः। 'योग' इति वदतो मूलकृतो मते संहिताधिकारसत्त्वे निमित्तकार्यिणोः संहिताविरहादेव चितादौ न दोषः, तत्प्रत्याख्याने तु स्यादेवात आह—संयोग इति। नन्वेवमपि 'तस्मिन्नि'तिसूत्रे भाष्ये 'निर्दिष्टे' इत्यस्य समिधावित्यत्र यण् नेति प्रयोजनमुक्तम्। तत्र ततोरनायां चा'चि यणित्युक्ते व्यवहितेपि प्राप्नोती'त्युक्तम्, तदुभयमप्यसङ्गतं, संहिताविरहादेव यणोऽप्राप्तेरिति चेन्न। नात्यन्तविप्रकृष्टवर्णसन्निकर्षस्यापि संहितासञ्ज्ञाप्रयोजकत्वात्, साक्षात्सन्निकर्षग्रहणे मानाभावात्। अत एव 'नचवाहे'ति सूत्रे युक्तग्रहणम्। अत एवै'कपदे संहिता नित्ये'ति यथाश्रुतं सङ्गच्छतेऽन्यथा ययोरस्ति तयोरस्त्येव, ययोर्नास्ति तयोर्नास्त्येवेति व्याख्येयं स्यात्। पदस्येति। 'पदान्तस्ये'ति णत्वनिषेधकसूत्रादपरोऽनुनासिके इत्यर्थेनाधिकृतमपीति भावः। अत एवै'कादिश्चैकस्ये'ति सूत्रे'ऽदुट् कर्तव्य' इत्याशङ्क्य—'पदान्तस्येति विधीयमानमनुनासिकत्वं न स्या'दित्युक्तम्। पदान्तस्येत्युक्तिस्वरसभङ्गप्रसङ्गान्नास्य 'न पदान्ताट्टो'रित्यतोऽनुवृत्तिरित्यभिप्रायकत्वं, विभक्तिविपरिणामापत्तेश्च। अन्तपदानुक्तिस्तु तस्य तत्रानावश्यकत्वसूचनाय। ष्टुनेत्यत्र तु 'नपदान्ता'-दितिज्ञापकादसम्बन्धः। एतेन पदाधिकारस्या'पदान्तस्य मूर्द्धन्य' इत्येतदवधिकत्वाभिन्नमेतदित्यपास्तम्।

यथासङ्ख्यमिति। शेष इति। स्थानेऽन्तरतमपरिभाषया सिद्धिरित्यपि बृहच्छब्दरत्नोक्तमनुसन्धेयम्। लघुशब्दरत्ने आन्तरतम्येन लघुनोपायेन सिद्धेस्त्वादिपदैरनादिसिद्ध–'तथे'त्यादिकर्मेणैवोपस्थितिरित्येव कुत

ॐ विषमपदविवृतिः ॐ

स्तोश्चुना श्चुः। पदस्येत्यधिकृत्येति। इदमयुक्तम्—'अपदान्तस्य मूर्धन्य' इतः प्रागेवैतदधिकारसमाप्तेः। सम्बन्धेपि वा 'ङः सी'त्यादाविव वैय्यधिकरण्येनान्वयेऽदोषाच्च। शादिति ज्ञापकादिति। विश्नमाचष्टे विश्नचेत्यादौ सम्बुध्यन्ते पदान्ते शात्परतवर्गसम्भवेनेदमप्ययुक्त-

**इति**। 'वा शरी'ति विसर्गाभावे शः। **सचिदिति**। चुत्वस्यासिद्धत्वाज्जश्त्वेन दत्वे तस्य चुत्वेन जकारे चर्त्वमिति बोध्यम्। तयोरत्रालेखस्तु वैचित्र्यार्थः। **विश्न इति**। 'यजयाचयतविच्छप्रच्छरक्षो न'ङिति नाङि 'च्छ्वोरि'ति शादेशो ङित्त्वाद्गुणाभावः। 'प्रश्ने चासन्नकाले' इति निर्देशात्सम्प्रसारणाभावः।

**न पदान्ता**। 'पदाट्टो'रित्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। **टोः किमिति**। षकार-

ॐ अभिनव-चन्द्रिका ॐ

बोध्यम्। **स्पष्टार्थमिति**। अयम्भावः—पदसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसञ्ज्ञाशास्त्रीयोद्देश्यता-

ॐ चिदस्थिमाला ॐ

यस्मैपदानामित्यादौ सूत्रान्तरक्रमेणैव नत्। चादिशब्दैरनादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितैरिति भावः।

ननु 'वा शरी' त्येतद्दृष्ट्याऽसिद्धत्वादस्य कथमत्रेदमत आह—**वा शेति**। **श इति**। 'विसर्जनीयस्ये'-ति सस्येत्यादिः। नन्वेवं 'झलां जशोन्ते' 'खरि चे'त्यनयोरत्र लेख उचितोऽत आह—**तयोरिति**। **वैचित्र्येति**। अत्र तयोरभावेप्यदोष इति सूचनार्थमित्यर्थः। प्रश्नशब्देऽधिकमाह—**प्रश्ने इति**। 'बाध-कान्येव निपातनानी'तिभावः। एवं रीत्या सूत्रखण्डनन्तु न, विश्न इत्याद्यर्थं ज्ञापनार्थञ्चावश्यकत्वात्। एतेन—'बाधकान्यपि तानी'तिपाक्षिकादोषाय सूत्रमित्यपास्तम्। **टोरिति**। अस्य विशेषणत्वेन टवर्गान्ता-त्पदादित्यर्थादिति भावः। **स्पष्टार्थमिति**। पदविधित्वाभावसम्पादनद्वारा समर्थपरिभाषाऽनुपस्थाकत्वं तु नाऽनामित्यस्य वैयर्थ्यापत्तेर्युक्त्यन्तरस्य वक्ष्यमाणत्वाच्चेति भावः। **पदान्तेति**। 'त्विट्तिष्ठती'त्यादाविति-भावः। एवञ्च स न व्यावृर्त्य इति तात्पर्य्यम्। अत्र तेन षत्वं, न तु वास्तवः स इति सूचयन्नाह—

ॐ ज्योत्स्ना ॐ

थापत्त्याऽत्र दोष इति भावः। **वैचित्र्यार्थमिति**। जश्त्वचर्त्वयोः प्रवृत्तिमन्तरेणापि 'साचि'-दित्यादेः सिद्धिरितीह वैचित्र्यं विवक्षितम्। **निर्देशात्सम्प्रसारणाभाव इति**। न च तत एव ज्ञापकात् श्चुत्वाभावस्यापि सिद्धौ 'शा'दिति व्यर्थमिति वाच्यं, विश्न इत्यर्थत्वादित्याशयात्।

**स्पष्टार्थमिति**। अटा सह वर्तमानः साट्, साट्—'सिद्धः'इत्यादावेकादेशे कृते एकदेशविकृतन्यायेन यत्र वर्ग(र्ण) एव पदं तत्रैव स्यान्न तु षट् सन्त इत्यादावपि, न च तदन्तविधिः, 'प्रातिपदिकान्तस्य' 'संयोगान्तस्ये'त्यन्तग्रहणान्निपाद्यां पदग्रहणे प्रायेण तदभावकल्पनात्। 'पयस्स्थितिः' 'पृथक्स्थाते'-त्यादौ स्कोर्लोपाभावस्य तत्फलत्वात्। 'ङमो ह्रस्वा'दित्यादौ क्वचित्तदन्तविधिकल्पनेऽपि प्रकृते तत्सद्भावे प्रमाणाभाव इति ह्यत्र स्पष्टोऽर्थः। इदमपि अन्तग्रहणमुक्तार्थे ज्ञापकमित्यपि वदन्ति।

ॐ सदाशिवभट्टीयम् ॐ

भाष्ट्तमिति चेत्स्पष्टार्थम्। **प्रश्ने चेति**। 'ब्राह्मणाभ्यां कृतं देही'तिवत्तन्त्रमत्र, 'प्रश्नशब्दे प्रश्ने चे'तीत्यर्थः। **स्पष्टार्थमिति**। 'पदान्ताट्टे'त्यत्र वक्ष्यमाणरीत्या तु न सार्थक्यं, त्रैपादिकत्वेन समर्थपरिभाषाया अप्रवृत्तेः। पदत्वेन हेतुत्वेप्युद्देश्यताविरहाच्च। **टोःकिमिति**। परान् अत्ततीति पराष्टीकत इत्यादौ तु न दोषः।

ॐ विषमपदविवृतिः ॐ

मिति केचित्। **वैचित्र्यार्थ इति**। जश्त्वचर्त्वयोः प्रवृत्तिमन्तरेण सचिदित्यादिसिद्धिरिह वैचित्र्यम्।

**निर्देशादिति**। न च तत एव श्चुत्वाभावसिद्धौ शादिति व्यर्थम्। विश्नाद्यर्थत्वात्। यत्तु नासिकास्थानाधिक्येन तोरित्यादिना पञ्चमीग्रहणमाशङ्क्य शादिति निषेधाल्लिङ्गात्तुल्यास्यसूत्रे नासि-कास्थानभिन्नं तात्वादिस्थानं गृह्यत इति कश्चिदुक्तवान्, तन्न। 'जश्त्वं', 'श्तिपाशपे'त्यादौ च श्चुत्व-निषेधाय शादित्यस्यावश्यकत्वात्। 'दिक्सङ्ख्ये सञ्ज्ञाया'मिति नियमादाह—**स्पष्टार्थमिति**।

पदान्ते जश्त्वविधानात्प्रसङ्गः । 'हल्वत्तदा'विति [illegible] इत्युक्तम् ।
**षण्णवतिरिति** । षडधिका नवतिरिति विग्रहः । षण्णवते इति पृथक्पदे ।

**यरोनु** । पदान्तस्येति किं ? वेद्मि, बध्नाति । **स्पर्शे चरितार्थं इति** । उपलक्षणमिदं—वलयोरपि प्रवृत्तेः । एतच्च जातिपक्षे स्पष्टमेव । व्यक्तिपक्षेऽपि तदव-

❀ अभिनव-चन्द्रिका ❀

वच्छेदकरूपावच्छिन्नसम्पादकविधित्वम्पदविधित्वं, तादृशं नात्रेति । असिद्धत्वादिति सतीत्यसमिति स्थिते जश्त्वम्बाधित्वा अपवादत्वाद्रुत्वे, विसर्गे, सत्वे, षत्वे च विसर्गसत्वषत्वानामसिद्धत्वाज्जश्त्वमिति भावः । रुत्वात्प्राक् षत्वन्तु न, रुत्वदृष्ट्या तस्यासिद्धत्वात् । **पृथक्पदे इति** । 'दिक्सङ्ख्ये सञ्ज्ञाया'-मितिनियमादिति भावः । **वेद्मि बध्नातीति** । इदमुपलक्षणं—चक्लनतुर्जग्मनुरित्यादेः । नच 'रदा-भ्या'मिति दकारस्य नत्वविधानं व्यर्थं सद्'पदान्तस्य यद्यनुनासिकस्तर्हि निष्ठाव्यवहितपूर्वत्वविशिष्ट-दस्यैवे'ति नियमान्नोक्तदोष इति वाच्यं, 'दस्य यदि भवति तर्हि निष्ठायामेवे'ति नियमस्य 'दस्य यदि भवति तर्ह्यपदान्तस्यैवे'ति विपरीतनियमस्य चाप्यापत्तेः, 'क्षुण्ण' इत्यादौ णत्वार्थं दस्थाने नकारादेशस्य चारितार्थ्याच्च । अन्यथा 'प्रत्यये भाषाया'मित्यनुनासिकस्यासिद्धत्वाण्णत्वं दुर्लभं स्यादिति दिक् । **वलयोरपीति** । इदमुपलक्षणं—यकारस्यापीति । अत एव 'मय्याँश्चिनोषि'

❀ चिदस्थिमाला ❀

**ह्रस्वादिति** । समाहारद्वन्द्वे नपुंसकत्वापत्तेरितरेतरयोगे द्विवचनापत्तेराह—**षडधिकेति** । यत्तु 'सङ्ख्ये' तिस्वरासिद्ध्या चिन्त्यमिद'मिति **प्रकाशकरात्**, समासभेदेन स्वरभेदे इष्टापत्तेः । असञ्ज्ञात्वेन कर्मधार-यासम्भवात् षष्ठीसमासे क्लिष्टत्वादाह—**पृथगिति** । मूलादिरीत्या मूलायन्यूनतां परिहरति—**वलयोरिति** । कमल्सुरारिः, वृक्षव् आनित्यादाविति शेषः । एतेन 'वृक्षवृनेने'ति दण्डयुक्तमपास्तं, लोपो व्योरित्यस्य प्रवृत्तेरिति **केचित्** । स्थानिवत्त्वेन तदप्रवृत्त्या तदपि युक्तमेवेत्यन्ये । **वेद्मीति** । वच्मीति पाठान्तरम् । इय-वरट्सूत्रस्थकौस्तुभानुरोधेनाह—**एतच्चेति** । व्यक्तिपक्षे तु प्रतिलक्ष्यं लक्षणभेदेन रेफविषयकलक्षणस्या-

❀ ज्योत्स्ना ❀

**पृथक्पदे इति । न तु कर्मधारयः । 'दिक्सङ्ख्ये सञ्ज्ञाया'मिति नियमादिति भावः । वलयोरपि**

❀ सदाशिवभट्टीयम् ❀

ष्टुनेत्यनुवर्त्य टवर्गान्तात्पदादित्यर्थः । एवं षोष्यनुवृत्तिः स्यादिति चेत्तत्राह—**षकारस्यापि पदान्ते इति** । षत्वस्येति । इदमुपलक्षणं- विसर्गसत्वयोरपि । एवञ्च त्रयाणामसिद्धत्वे रुत्वस्य त्वपवादत्वात्सिद्ध त्वेनाझलत्वाज्जश्त्वाभाव इत्युक्तेश्चाभाव इति भावः । एतेन षत्वासिद्धत्वेपि सकारबुद्ध्या तत्प्रवृत्तिर्दुर्वारे-त्यतोऽपवादत्वेन बाधात्तदभाव इति वक्तव्ये एवमुक्तिश्चिन्त्येत्यपास्तम् । **वेद्मीति** । इदं वार्तिकप्रत्युदाहरणं, सूत्रस्य तु 'शङ्खध्मः' 'भद्र' इत्यादि बोध्यम् ।

❀ विषमपदविवृतिः ❀

**षडिति । भिन्नं पदमिति । स्पष्टार्थमिति । समर्थसूत्रस्थकैयटरीत्या पदान्तविधित्वमेव न पद-**

❀ वरवर्णिनी ❀

**स्पर्शे चरितार्थ इति** । सर्वत्र-'स्ववृत्तित्व'-'स्वघटितदलघटकत्वेतरयावद्वृत्तित्व'-'स्वघटितदल-भिन्नदलघटकावृत्तित्वै'तत्त्रितयधर्म आनन्तर्यनियामकः । यत्र व्यावृत्तिरपेक्षिता तद्दलघटकस्य स्वपदेन ग्रहणं भवति । यथा प्रथमान्तपाठेऽन्तरतम आदेशो भवतीत्यर्थेऽन्तरतम इत्यादेशस्य विशेषणम्, आदेशस्तु विशेष्य इति विशेषणेन विशेष्ये व्यावृत्तिस्वीकारादादेशे व्यावृत्तिर्युक्तेति आदेशदलघटकस्य स्वपदेन ग्रहणम् ।

व्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लत्र एव नेति बोध्यम् । स्पष्टञ्चेदमिको यणची'त्यत्र कैयटे । परे तु—स्थानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतद्युक्तेरुक्तिसम्भव एव न । तस्मात् 'अनुस्वारस्ये'ति सूत्रात्सवर्णग्रहणमपकृष्य परः सवर्णोऽनुनासिको भवतीत्यर्थान्न दोषः । तदुक्तं भाष्ये, 'रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो, न वक्तव्यो, रेफोष्मणां सवर्णा न सन्तीत्याहुः ।

ॐ अभिनव-चन्द्रिका ॐ

'कमलाँश्चिनोषि,' 'दध्याँश्चिनोषी'त्यादौ 'नच्छवी'ति रुत्वेऽनुनासिके चानेन विकल्पो भवति । वस्तुतस्तु 'म पदान्ताः परेऽणः सन्ती'ति लण्सूत्रस्थभाष्यप्रामाण्येन च रूपलक्षणमित्येव वक्तव्यम् । न च सप्तम्यन्तपाठे एतद्ग्रन्थप्रवृत्त्या तत्पाठे-'स्ववृत्तित्व'-'स्वेतरयावत्स्थान्यवृत्तित्व,'-'स्वदलभिन्नदलीयवृत्तित्वै'-तन्नितयसम्बन्धेन—आदेशविशिष्टधर्मवत्त्वरूपान्तर्यस्य ग्राह्यतया इदमसङ्गतम्, तालुस्थानजन्यत्वादौ निरुक्तवैशिष्ट्याभावादिति वाच्यम्, 'एतन्मुरारि'रित्यादौ घोषप्रयत्नवत्त्वविशिष्टा-ल्पप्राणप्रयत्नवत्त्वविशिष्ट स्पृष्टप्रयत्नवत्त्वविशिष्ट-दन्तस्थानजन्यत्वे, 'दध्याँश्चिनोषी'त्यादौ घोषप्रयत्नवत्त्वविशिष्ट-अल्पप्राणप्रयत्नवत्त्वविशिष्ट—ईषत्स्पृष्टप्रयत्नवत्त्वविशिष्ट-तालुस्थानजन्यत्वादौ च स्थानिवैशिष्ट्यस्य सत्त्वेनादोषात् ।

**सवर्णा न सन्तीति** । 'अनुनासिका' इति शेषः । एतेन रेफस्य 'रेफ एव सवर्णोऽस्तीति इदमसङ्गत'मित्यपास्तम् । अत्रेदमवधेयं,—प्रथमान्तपाठे—'स्ववृत्तित्व' 'स्वेतरयावदादेशावृत्तित्व'

ॐ चिद्स्थिमाला ॐ

चारितार्थ्यात्तत्रापि प्रवृत्तिर्दुर्वारैवेति तदाश्रयणं, तत्र तु मूलरीत्या न दोष इति भावः । इको यणिति सूत्रस्थकैयटरीत्या तत्पक्षेऽपि मूलं सुयोजमित्याह—**व्यक्ताविति** । **चेदमिति** । अव्यवहितोक्तमित्यर्थः । तत्र हि द्रव्येऽपि पदार्थे उत्सर्गापवादभावः सन्दिग्धत्वाश्रयोस्त्येवेति तेनोक्तम् । मूलादि दूषयति—**परे त्विति** । निर्विसर्गसूत्रानुकरणम् । सुद्ध्युपास्य इत्यादौ यणभावापत्त्येति भावः । **सवर्ण इति** । स्थानिन इति भावः । **त्यर्थादिति** । तत्करणादित्यर्थः । अत एव ल्यबुपपत्तिः । **तस्मादिति** । 'अत्र न दोष' इत्यत्रान्वयः। तदर्थतोनुवदति—**रेफ इति** । विषयसप्तमी । एतेन भाष्ये रेफस्येति सम्बन्धसामान्ये षष्ठी सूचिता । यद्यपि भाष्येऽत्र द्वित्वे इत्यप्युक्तं, तथापि तस्यात्रानुपयोगात्त्यागः । यद्यपि परसवर्णेप्येवं, तथापि समाधेरैक्यादाह—**परेति** । 'रेफोष्मणा' मित्यस्य चानुनासिकोऽनुस्वारोन्तरतमश्च सवर्णो नास्तीत्यर्थः । अतएव ऊष्मग्रहणं सार्थकम्, अत एव च मह्यिष्मानित्यादौ सूत्ररीत्या स्थानप्रयत्नोभयान्तर-

ॐ ज्योत्स्ना ॐ

**प्रवृत्तेरिति** । 'वृक्षवँ् नेता' 'कमलँ् नमन'मित्यादाविति बोध्यम्। **युक्तेरुक्तिसम्भव एव नेति** ।अपरे तु 'पारेगङ्गं गेहाद्गेहात्स्थविरतमान्ब्राह्मणानामन्त्रये'त्युक्ते यो यो यत्र यत्र गृहे स्थानेन वयसा च स्थविरतमस्त्वेन निर्णीतस्तस्य तस्य ततस्ततो गेहादामन्त्रणं विधीयमानं—गृहान्तरे स्थानमात्रा-

ॐ सदाशिवभट्टीयम् ॐ

**वलयोरपि प्रवृत्तेरिति** । दध्याँस्तिष्ठतीत्यादौ यस्यानुनासिको यकारस्तु न, सन्निपातपरिभाषाविरोधात्, अतो न न्यूनता । यद्वा य्च वश्च वं, वं च लश्च वलौ, तयोरित्यर्थः। मूलरीत्या चेयं मूलन्यूनतापरिहृतिः, स्वमते हलामणामनभिधानात् । **रेफेऽनुनेति**। यद्यपि भाष्ये द्वित्वमप्युक्तं, तथापि प्रकृतेऽनुपयोगात्त्यागः, परसवर्णस्तु

ॐ विषमपदविवृतिः ॐ

विधित्वमिति बोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थमिति केचित् । **यरोऽनुना** । **सवर्णा न सन्तीति** । एतदुत्तर'माहु'रिति शेषः ।

चिन्मयमिति। स्वार्थिकः 'तत्प्रकृतवचने' इति मयट्। तत्र नदीति वाक्यभेदेन

ॐ अभिनव-चन्द्रिका ॐ

'स्वदलभिन्नदलीयवृत्तित्वे' तन्निरूपसम्बन्धेन स्थानिविशिष्टधर्मवत्त्वरूपमान्तर्यं ग्राह्यम्। 'अनान्तर्य-

ॐ चिदस्थिमाला ॐ

तमङकारसम्भवेऽपि नानुनासिकः सः, नाज्झलाविति निषेधेन सवर्णत्वाभावात्। अधिकमुक्तमन्तै-स्पष्टम्। एतेन—तथा सकलग्रन्थकारोक्तमपास्तम्। 'तन्नित्या'द्'इति पाठः। यत्तु—'नित्यं वृद्धे'त्यत्र नित्य-मितियोगविभागात्स्वार्थे मयट्—इति रत्नाकरस्तन्न, योगविभागस्य भाष्यानारूढत्वात्, सामानाधिकर-ण्यस्य तथापि दुर्लभत्वाच्च, तदेतद्ध्वनयन्नाह—स्वार्थिक इति। तत्प्रकृतवचनादिति केचित्। वस्तुतः

ॐ ज्योत्स्ना ॐ

द्वयोमात्राद्वा स्थविरत्वेन सम्भावितस्यापि तस्य तदितरस्य तत आमन्त्रणं निवर्तयति। जातिपक्षे

ॐ विषमपदविवृतिः ॐ

अन्ये तु तुल्यास्यप्रयत्नमिति सूत्रं यस्मात्प्रत्ययविधिरिति वत् 'यत्रानुनासिको विधीयते तत्र तुल्यास्यमित्युपतिष्ठते' इत्यर्थकतया परिभाषारूपमपि, अनुनासिकपदानुवृत्तेः। 'अनुस्वारस्य ययी'-त्यत्र च मण्डूकप्लुत्याऽनुनासिकपदमनुवर्त्तते, तेन चतुर्मुखः कुण्डं रथेनेत्यादौ न दोषः। न च महिष्मानित्यत्र यकारस्य ङकारापत्तिः, तस्य ङकारस्य यकारेण सूत्रमते स्थानप्रयत्नोभयसाम्या-दिति वाच्यं, भाष्यमते प्रयत्नभेदेनादोषात्। जश्त्ववारणाय अल्लोपस्य स्थानिवत्त्वप्रवृत्तेरावश्यक-तया तेनैवानुनासिकवारणसम्भवाच्च। न च रेफे सानुनासिकेषत्स्पृष्टस्य प्रसङ्ग इति वाच्यं, तस्य सानुनासिकत्वे मानाभावात्। यद्वा कैयटोक्तरीत्या स्थानेन्तरतमपरिभाषोपस्थाना-द्दोषाभावः। न च रेफे स्थानप्रयत्नाभ्यामन्तरतमस्य ताभ्यामन्तरमस्य चाप्राप्त्याऽन्तरतमपरि-भाषाया अनुपस्थितिरिति वाच्यम्, व्यक्तिपक्षे प्रतिलक्ष्यमन्तरतमानन्तरतमयोः प्राप्तावेव तदु-पस्थितावपि जातिपक्षे कतिपयलक्ष्येषु तयोः प्राप्तिमात्रेणान्तरतमपरिभाषोपस्थानस्य दुर्वारत्वात्। णकारस्य स्थानेन रेफान्तर्येपि आभ्यन्तरप्रयत्नेन तदभावान्नान्तरतमत्वम्, स्थानप्रयत्नाभ्यामान्तर्यं हि अन्तरतमत्वम्। एवं कुण्डं रथेनेत्यत्रापि अनुस्वारस्य स्थाने न रेफः। रेफस्यानुस्वारेण स्थान-साम्याभावेनान्तर्याभावात्। तथा चायं निष्कर्षः—'यत्र स्थानप्रयत्नाद्यनेकधर्मकृतान्तर्यसम्भवस्तत्र शास्त्रे तमप्प्रत्ययघटितमन्तरतम इत्युपतिष्ठते', 'यत्र त्वेकैकधर्ममात्रकृतान्तर्यसम्भवस्तत्र तम-ब्रहितमन्तर इत्युपतिष्ठते'। यत्र तस्याप्यसम्भवस्तत्र नोपतिष्ठते एव परिभाषा। नचैवं नेतेत्या-दावेव गुणः स्याच्च चेतेत्यादाविति वाच्यम्, एकारस्य प्रमाणत ईकारान्तर्याभावेपि स्थानप्रयत्नाभ्या-मिकारान्तर्येणान्तरतमत्वाक्षत्याऽदोषात्। न हि सर्वैरान्तर्यं तमवर्थः, किं तु स्थानप्रयत्नाभ्यामपि। न-चैवं ह्रस्वेकार एव यण्स्यान्न दीर्घे, तस्य स्थानप्रमाणाभ्यामान्तर्येण तमप्प्रत्ययघटितपरिभाषोप-स्थितेः। एवं षट् सज्जन्तीत्यादौ षजयोर्जश्त्वानापत्तिः, स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे जश्त्वचा-रितार्थ्यात्। एवं पाद्धनती(पाद्धन्ती?)त्यादौ झयो ह इति पूर्वसवर्णानापत्तिः। स्थानप्रयत्नाभ्यामन्त-रतमे वाग्घरिरित्यादौ तस्य चारितार्थ्यादिति वाच्यम्, त्वादिभ्य इति निर्देशेन झय्प्रत्याहार-परित्यागेन हल्प्रत्याहाराश्रयणेन व्याख्यानेन च तत्र व्यक्तिपक्षाश्रयणेनादोषात्। तत्र पक्षे दीर्घादि-व्यक्तिष्वन्तरतमानन्तरतमयोरसम्भवेन सकलाङ्गसहिताया उक्तपरिभाषाया अनुपस्थितेः। सवर्ण-ग्रहणापकर्षस्तु न 'रेफोष्मणां सवर्णा न सन्ती'ति भाष्याभिप्रेतः, तत्र तत्र 'प्रत्ययादित्युभयोः शेष' इत्यादिभाष्येणापकर्षस्य भाष्यकारासम्मतत्वावगमात्। दूरेतरां बहुसूत्रैर्व्यवहितेऽपकर्षः, दंशनमित्यादौ उक्तरीत्या परसवर्णवारणसम्भवात्—ययीति न कर्त्तव्यमित्याशयेन रेफोष्मणामिति भाष्ये ऊष्मग्रहणमित्याहुः। प्राचुर्यस्य स्वसमानाधिकरणस्वसजातीयाल्पत्वसापेक्षत्वनियमादाह—स्वार्थिक इति। वस्तुतस्तु 'प्रचुरप्रकाशो रवि'रित्यादौ उक्तनियमव्यभिचारात्प्राचुर्येपि मयट् सूपपादः।

क चित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम्। अत एव 'चिन्मयं ब्रह्मे'ति सामानाधिकरण्यम्। 'चिन्मात्र'मिति क्वाचित्कोऽपपाठः, मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात्। मयूरव्यंसकादिष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात्। **निपातनादिति**। 'यवादिगणे 'ककुद्मा'निति प्रकृतिप्रत्ययसमुदायः पठ्यते' इति मतेनेदम्।

---

॥ अभिनव-चन्द्रिका ॥

नैवैतयोरान्तर्य'मित्यत्राभावप्रतियोगिभूतमान्तर्यञ्च—निरुक्तत्रितयसम्बन्धेन स्थानिविशिष्टत्वे सति आदेशविशिष्टो यो धर्मस्तद्वत्त्वमेव ग्राह्यम्। चेता स्तोतेत्यादौ तादृशो धर्मस्तालुस्थानजन्यत्वादिरेव प्रसिद्धः, कृष्णर्द्धिरित्यादौ च ऋकाराकारयोस्तदभाव इति समन्वयः। 'अचोञ्णिती'त्यादावत इत्यपकर्षणेन 'माठरपरिवेषण'न्यायेन अकारातिरिक्ताच एव ग्रहणम्, नातः कण्ठस्थानजन्यत्वरूपं—( निरुक्तरीत्या स्थान्यादेशविशिष्टं )—धर्ममादाय तदभावस्य ऋकाराकारोभयवृत्तित्वविरहेण—आन्तर्यस्यैव सत्त्वेन—'अनान्तर्यमेवैतयोरान्तर्य'मिति भाष्यासङ्गतिरापादयितुं

॥ चिदस्थिमाला ॥

'ऽथ स्वार्थिका' इत्यस्य प्रायिकत्वम्, अत एव 'प्रकारवचने'इत्यादिविषये (वाच्य)वाचकताप्रतीतिस्तस्मादधिकरणेऽर्थे एव मयडिति मूलोक्तं प्रथमव्याख्यानं तत्रत्यमयुक्तम्। एवं सति प्रकृते तमुपपादयति—**तत्रेति**। अर्थादेव पूर्ववत्तल्लाभादिति भावः। एकवाक्ये तदलाभादाह—**वाक्येति**। अतएव तत्र तदिति सफलम्। इदं समर्थयते—**अत एवेति**। अन्त्यन्तस्वार्थिकमयडङ्गीकारादेवेत्यर्थः। इतेन 'मयड्वैतयो'रिति विकारावयवयोः स इत्यपि निरस्तम्। **उपपत्त्यभावादिति**। तत्र परिच्छेदकमात्रस्य प्रमाणपदेन ग्रहणेऽपि चिच्छब्दस्यातथात्वात्। नन्वेवं कथं मयूरव्यंसकादिगणे तत्पाठोऽत आह—**मयूरेति**। तत्र=अस्मिन् चिन्मात्रशब्दे। ननु यवादिगणे दान्तप्रकृतिमात्रपाठेन तदनिपातनात्स दुर्वारः, न च नत्र सति अझयन्तत्वेन वत्वाप्राप्त्या पाठनैष्फल्यम्, अस्यासिद्धत्वात्। यत्तु तथा सति नान्तमेव तत्र पाठ्यं न तु दान्तमिति, तेन तन्निपातनं मतुप्प्रकृतिभूतस्य तस्य नान्तत्वनिपातनेऽपि अन्यत्र दान्तप्रयोगस्य निर्बाधत्वादिति **दण्डी**, तन्न। तत्रैव तान्निपातने मानाभावात्, 'ककुन्नयन'मित्यादौ दोषापत्तेश्चात आह—**यवादीति**। 'मतेनेद'मित्यनेन मतान्तरमपि सूचितं, तच्चान्यत्र स्फुटम्। प्राचामसाङ्ग-

॥ ज्योत्स्ना ॥

तथैव योग्यत्वादिति षाष्ठभाष्योक्तन्यायसजातीयन्यायादिहापि 'पदान्ते यरः स्थानेऽन्तरतमानुनासिकान्भावये'त्युक्ते यो यो णकारादिर्यत्र यत्र टकारादौ यरि स्थानप्रयत्नाभ्यामन्तरतमत्वेन निर्णीतस्तस्य तस्य तत्र तत्र भावनं विधीयमानं चतुर्मुखो महिष्मानित्यादौ यरन्तरे स्थानमात्रसाम्यादान्तर्यवतो णकारस्यान्यस्य च भावनं निवर्तयतीत्यस्ति युक्तेरुक्तिसम्भव इत्याहुः। केचित्तु सञ्ज्ञापूर्वकत्वादस्य विधेरनित्यत्वात्क्वचिदप्रवृत्तिमङ्गीकृत्योक्तातिव्याप्तिं, यवादिगणे दकारनिपातनाच्च निराचक्रुः। अन्ये तु व्यवस्थितविभाषात्वाङ्गीकारादुक्तदोषद्वयं परिहरन्तश्चिन्मयमित्याद्यर्थं 'प्रत्यये भाषायां नित्य'मित्यस्यापि वचनस्याकर्तव्यतां ब्रुवते। **एवार्थमात्रशब्देनेति**। एवकारार्थकमात्रशब्देनेत्यर्थः। **इतिमतेनेदमिति**। वैकल्पिकेषु भावानुष्ठानं धर्माधिक्य-

॥ सदाशिवभट्टीयम् ॥

सन्धेरैक्यादुक्तः। **मतेनेदमिति**। प्रकृतिपाठेपि चत्वाकरणान्निपातनमिति तु न युक्तम्। त्यदादिष्वपि तथा-

॥ विषमपदविवृतिः ॥

**समानाधिकरण्यमिति**। प्राचुर्ये मयटि तु—'अन्नमयो यज्ञ' इत्यादावन्नयज्ञयोरिव चिद्ब्रह्मणोर्भेद एव

**उदः स्था।** 'तस्मादित्युत्तरस्ये'ति परिभाषालभ्यमर्थमाह—**उदः परयोरिति। अत्राघोषस्येति।** समनियतत्वेनान्यतमग्रहणं बाधकाभावेन इवासविवारयो-स्त्यागेऽपि न न्यूनतेति बोध्यम्। **थस्यासिद्धत्वादिति।** त्रिपाद्यां चर्त्वादिति भावः। 'हलो यमा'मितिसूत्रोक्तभाष्यसम्मताचार्यपाठे तु—थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव। अत एव 'उत्पूर्वस्कन्दे रोगे उपसङ्ख्यानम्, उत्कन्दो रोग' इति भाष्यं सङ्गच्छते। सूत्रन्तु प्राचामनुरोधेनेति नरे। न चेदं सूत्रं व्यर्थं—'झलो

॥ अभिनव चन्द्रिका ॥

शक्यते। नचैकारौकारयोस्तालुस्थानजन्यत्व—कण्ठतालुस्थानजन्यत्वादावभावप्रन्धियोस्वान्तर्य-घटकस्थानिवैशिष्ट्येपि निरुक्तादेशवैशिष्ट्याभावादान्तर्याभावस्य सत्त्वेन (अनान्तर्यरूपान्तर्यसत्त्वेन) तादृशधर्ममादाय 'ऋकारस्य वृद्धिररारावैवे'ति नियमानुपपत्तिरिति वाच्यम्, ऐकारनिष्ठविवृता-वर्णसदृशघटितत्वविशिष्ट-कण्ठतालुजन्यत्वे, औकारनिष्ठविवृतावर्णसदृशघटितत्वविशिष्टकण्ठौष्ठस्थान-जन्यत्वे च स्थानिवैशिष्ट्यस्य आदेशवैशिष्ट्यस्य च सत्त्वेनान्तर्याभावस्याभावादिति दिक्।

**न न्यूनेति।** 'अशोकवनिका'न्यायेन अन्यतमत्वेऽवलम्बितमिति भावः। **अनेन ज्ञापनादिति।**

॥ चिद्स्थिमाला ॥

त्याह—**तस्मादिति।** कैश्चिदुद्भाविनां न्यूनतां परिहरति—**समेति।** तथाच नातिप्रसङ्गादिति भावः। **तमेति।** त्रयाणां मध्ये कस्यचिद्ग्रहणे इत्यर्थः। एतेन—सस्य पूर्वसवर्णेन तस्तस्य लोपे एकतं, तदभावे द्वितं, द्वित्वे त्रितमिति प्राचोक्तमपास्तं, मूलाशुद्धेः। असङ्गतिं वक्तुमादावादायनाह—**त्रिपाद्यामिति।** तामेवाह—**हल इति सूत्रोक्तेति।** सूत्रीयभाष्येत्यर्थः। अत्र मानान्तरमप्याह—**अत एवोत्पूर्वेति।** आद्य-वार्तिकस्य छान्दसत्वेन तद्विषयेऽन्ये इदमुत्कन्देत्यत्र तत एव दोषाभावादाह—**रोगे इति।** अत्रत्यं पूर्व-सवर्णविधायकं वार्तिकमिदम्, अस्यारम्भसामर्थ्याल्लोकेऽपि प्रवृत्तिः, अन्यथोत्पूर्वस्य स्कन्देश्छन्दस्युपसङ्ख्यान-मित्येव सिद्धे रोगेत्यस्य वैयर्थ्यं स्पष्टमेव। नह्यत्र लोपसम्भावनापि, तथाच चर्त्वेन द्विनं रूपम्, अन्यथा भाष्यविरोधः स्पष्ट एव। एतेन तथाभाष्योदाहरणात्थलोप इति **रत्नाकरोक्तं,** 'तत्प्रामाण्येन नेतियोगविभा गेनासिद्धत्वेन सिद्ध'मित्यन्योक्तं चापास्तम्। **सूत्रमिति।** उदःस्थेतीत्यर्थः। यत्तु—थद्वयश्रवणार्थमिति,

॥ ज्योत्स्ना ॥

फलकमित्येतदनभ्युपगम्येदम्। तदभ्युपगमे तु यवादिपाठप्रयोज्ये मतुपो वत्त्वाभावे तत्प्रयुक्त-कार्यं ककुच्छन्दे दकारस्य यत्प्राप्तं त'द्वावसाने'—इत्येतत्प्रवृत्त्या तान्तनिर्देशे कर्तव्ये ककुदिति दकारान्तप्रकृतिमात्रनिर्देशेनापि वारयितुं शक्यत इति बोध्यम्। 'ककुद्वत्ककुदं श्रेष्ठे वृषाङ्गे राज-लक्ष्मणी'ति विश्वः। **इति भाष्यमिति।** 'उदःस्थास्तम्भो'रितिसूत्रस्थमित्यर्थः। **सङ्गच्छत इति।** अन्यथा तत्रापि थस्यासिद्धत्वाच्चर्त्वाभावे थकारस्य श्रवणप्रसङ्ग इति भावः। **प्राचामनुरोधेने-**

॥ सदाशिवभट्टीयम् ॥

त्यापत्तौ तत्कुलमित्यादौ चर्त्वानापत्तेः। तस्मात् नाम्नो भावानुष्ठाने गणपाठे चेति। **थस्यासिद्धत्वेति।** एवञ्च पूर्वमेव चर्त्वस्य सकारे प्रवृत्तत्वात् तस्य लक्ष्यस्येति पुनर्न चर्त्वमिति भावः। [illegible] बोध्यम्। एतेन सकारकृत्य स्यादिति न शङ्क्यम्। **[illegible]मिति।** [illegible]

॥ विषमपदविवृतिः ॥

त्याशामेदरूपं सामानाधिकरण्यमित्यर्थः। **हलो यमां यमीति सूत्रे इति।** 'हलो यमां यमी'ति

झली'त्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यं, झलादौ प्रत्यये तेन लोप इत्यर्थस्यानेन ज्ञापनात् । 'उदस्था'दित्यत्र तु—निर्दिश्यमानपरिभाषया निर्दिश्यमानादेरेव स्थानित्वान्न दोषः । 'झय' इति पञ्चमीत्याह—**झयः परस्येति** । 'पूर्वस्ये'त्यनुवर्त्तते ।

---

### ॐ अभिनव-चन्द्रिका ॐ

अनेन 'सञ्जीनि वक्तव्य'मितिवार्तिकस्यापूर्वमिति बोध्यते । वस्तुतस्तु सूत्रसत्त्वे एकतकारथकारद्वयघटितं रूपं, सूत्राभावे 'झलो झली'तिलोपे तकारथकारोभयघटितं रूपमिति फलभेदेन 'झलो झली'तिसूत्रस्य वैकल्पिकत्वेन पक्षे सकारघटितरूपाभावाय च सूत्रसार्थक्या'दुदः स्थे'ति सूत्रसिद्धं सञ्जीति वार्तिकं न भवतीति बोध्यम् । **न दोष इति** । न च 'उदः स्थास्तम्भो'रित्यत्र विशिष्टरूपोपादानसत्त्वेनार्थवत्परिभाषोपस्थित्या आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वादुदस्थादित्यादौ स्थाशब्दे स्थापदप्रयोज्यार्थवत्स्थाशब्दत्वावच्छिन्नशाब्दबोधीयविषताया अभावेन, 'अस्था'शब्दे 'षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयत्वे सति षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्व'-रूपनिर्दिश्यमानत्वस्य सत्त्वेन च कथं न पूर्वसवर्णापत्तिरिति वाच्यम् , 'यदागमपरिभाषा लक्षणा-

### ॐ चिदस्थिमाला ॐ

तत्र, उक्तरीत्या चर्त्वेन तदभावात्. तदेतद्ध्वनयन्नाह—**झलादाविति** । स्पष्टं चेदं 'परेश्च घाङ्के'ति सूत्रे कैयटे । ननूदस्थादित्यत्र यदागमा इति न्यायेनाड्विशिष्टस्य स्थात्वात्पूर्वसवर्णापत्तिः, 'स्थानप्रयत्नाभ्या'मित्यादि तूक्तरीत्या दुर्वचमत आह—**उदस्थादिति** । **स्थानित्वादिति** । 'आदे'रित्यनेन तत्त्वबोधनादित्यर्थः । उद इत्यस्य विशिष्टविशेषणत्वेन तेन तत्र प्राप्तावपि तद्बोधितस्थानित्वस्य तेन निरासेन निर्दिश्यमानस्यैव तत्त्वबोधनेन तेनादेरित्यस्य समावेशेन तदादेरेव ग्रहणमिति भावः । स्पष्टश्चेदं पादः पदित्यत्र भाष्येऽन्यत्र च । एतेनेदं सर्वं चिन्त्यं, 'थ'युतस्य 'त'त्रययुतस्य च रूपस्यासिद्धेः, 'धि चे'तिवन्निर्वाहेऽस्यानुपयोगात् । 'लोपाभावे थश्रवण'मिति सर्वग्रन्थविरोधात् , भाष्ये कण्ठतस्तथा पाठानुक्तेः, भाष्ये 'उदः', 'उदःपूर्वत्वे' इत्यादेर-'भ्यासे चर्चे'त्यनन्तरस्यस्यापि लेखकप्रमादेन पूर्वम्पाठात् । एकतपाठस्योपलभ्यमानवार्तिकेन द्वितस्यैव सिद्ध्या छान्दसवर्णलोपाङ्गीकारे गौरवेण वार्तिकं विनैव तत्स्वीकारौचित्याच्चे'ति **मन्दोक्तमपास्तम्**, उक्तयुक्तेः । वैपरीत्यनिरासायाह—**झय इति** । 'नाज्झला'वित्यादिनिर्देशात् , तथा च तस्मादिति प्रवृत्तिरिति भावः । यदि तु 'सवर्ण'इत्येवोच्येत-तस्य तत्त्वस्य क्लृप्तत्वात्-तर्हि रेफोष्मणामिति भाष्याद्धस्य ह एव-स्यात्, तथाच वचनवैयर्थ्यापत्तिरत आह- **पूर्वेति** । तदपीत्यर्थः । सामर्थ्यात्तस्य तत्त्वकल्पनादितिभावः ।

### ॐ ज्योत्स्ना ॐ

**तीति** । 'उदःस्था' 'शश्छोटी'त्यनन्तरम्—'अभ्यासे चर्चे' त्येतद्याचक्षाणानाम् भाष्यकृतां मते तु तद्विरोध इति भावः । **उत्थानस्य सिद्धेरितीति** । 'झलो झली'त्यत्र विकल्पाननुवृत्तेरेकतकारस्य

### ॐ सदाशिवभट्टीयम् ॐ

दकारस्य तकारेणोत्थानं साध्यन्तचान्तरेण यत्नं सिध्यतीति । सजातीयानेकव्यञ्जनोच्चारणे विशेषो नेत्यवलम्बने तु यथाश्रुतमेव युक्तम् । उदस्थादित्यत्र तु न सार्थक्यमित्याह—**उदस्थेति** । **तङ् स्य इति** ।

### ॐ विषमपदविवृतिः ॐ

सूत्रेऽस्माभिरुक्ते इत्यर्थः । एतेन 'हलो यमां यमी'ति सूत्रस्य भाष्यकृताऽनुपादानादिदमसङ्गतमित्यपास्तम् । 'नादिन्याक्रोश'- इत्युत्तरं क्रमेणो'दःस्थास्तम्भोः,' 'शश्छोटि,' 'अभ्यासे चर्च,' 'झरो झरी'ति सूत्राणाम्भाष्यकृतोपादानात्तथा पाठो भाष्यकृत्सम्मत इति भावः । **ज्ञापनादिति** । व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषाभावात्पूर्वत्रासिद्धमद्विर्वचन इति द्वित्वदृष्ट्या पूर्वसवर्णस्य थस्य

**घोषवत इति** । समनियतत्वेऽपि विनिगमनाविरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम् ।

**झय इति** । 'पदान्ता'दित्यपि बोद्धव्यम्। तेन 'विरप्शं' मित्यादौ छत्वं न। **जकारे कृते इति** । 'छत्व'मिति शेषः । पूर्वोक्तभाष्यसम्मताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात् ।

**मोऽनु** । 'पदस्ये'त्यधिकृतं 'म' इत्यनेन विशेष्यत इत्याह—**मान्तस्येति** । 'हलि सर्वेषामि'त्यतो 'हली'त्यनुवर्त्तते । हलि किं ? राममाश्रय ।

**नश्चा** । चेन मोऽनुकृष्यते । अपदान्तस्य किं ? राजन्याहि । **यशांसीति** । यशश्शब्दाज्जसः शौ 'नपुंसकस्ये'ति नुमि 'सान्ते'ति दीर्घः । **आक्रंस्यते इति** । क्रमेर्लृट्, 'आङ उद्गमने' इति तङ्, स्यः ।

**अनुस्वारस्य** । 'परे'ति लुप्तषष्ठीकं पृथक्पदम् । अत एव 'उदःस्थे'त्यादौ सवर्णग्रहणानुवृत्तिः, 'यरोनुनासिक' इत्यत्र तदपकर्षश्च सिद्धः । 'ययी'ति स्पष्टार्थम्।

---

※ अभिनव-चन्द्रिका ※

त्राह्निके'तिस्वीकारेण सूत्रे स्थापदं स्थाविशिष्टे लाक्षणिकं, वैशिष्ट्यञ्च 'स्वघटितत्व' 'स्वविशिष्टाघटितत्वो'भयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च—'स्वाघटकत्व' 'स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयाघटकत्वो'भयसम्बन्धेन। तथा च प्रकृते निरुक्तोभयसम्बन्धावच्छिन्नप्रकारताख्यशाब्दबोधीयविषयतायाः स्थाशब्दे सत्त्वेन अस्थाशब्दे निरुक्तनिर्दिश्यमानत्वस्याभावेनादोषादिति दिक् । **विरहादिति** । व्याप्तिन्यायादिति भावः । **विरप्शमिति** । इदमुपलक्षणं—'चक्ष्या'-वित्यादेरपि । अन्यथा 'विरप्स'मित्यादौ छान्दसत्वादेव दोषाभावेन 'पदान्ता'दित्यस्य वैयर्थ्यापत्तेः।

※ चिदस्थिमाला ※

एतेन 'पूर्वसवर्णोऽध्याहार्य'इतिप्राचोक्तं, 'पूर्वतस्तदनुवृत्ति'रितिरत्नाकरोक्तञ्चापास्तम् । पूर्वविरोधं परिहरति—**समेति** । तस्य पूर्वत्राविशिष्टत्वादशोकवनिकान्यायेन सुपरिहरत्वाच्चाह—**स्वरूपेति** । पूर्वत्र तदविवक्षेति भावः । अनतिप्रसङ्गाय न्यूनतां निराचष्टे—**पदान्तादिति** । **तेनेति** । लोकेऽपीति भावः । आदिना 'विरप्शी'त्यादिपरिग्रहः । विपूर्वाद्रपेरौणादिकौ श-शिनौ । एतेन 'पदान्ता'दिति मूले न पाठ इतिसूचितम् । यथाश्रुतमूलासङ्गतिं निराचष्टे—**छत्वमिति** । ततश्चर्त्वम् । एतेन नश्चस्यन्तस्य मूले पूर्वत्रान्वयः सूचितः, व्युत्क्रमेणोक्तिस्तु वैचित्र्यार्था । एतेन 'पूर्वं छत्वोल्लेखेऽपि चुत्वतोऽसिद्धचर्त्वदृष्ट्या तस्यासिद्धत्वात्तदुत्तरं छत्वमिति प्रक्रिया बोध्ये'त्यपास्तम् । **शब्दे इति** । 'प्रकृतिभूते सर्ता'ति शेषः । धातोः परस्मैपदित्वादाह—**आङ इति** । अत एव 'स्नुक्रमो'रिति नेट् । मनोरमादिसर्वग्रन्थासङ्गतिं ध्वनयन्नाह—**परेति** । अत्र प्रागुक्तभाष्यमेव मानमिति ध्वनयन्नाह—**यर इति** । सिद्धिश्चेत्यर्थः । आदिना कंतादिपरिग्रहः ।

※ सदाशिवभट्टीयम् ※

इदञ्च 'विकरणान्नियमो बलीया'निति नये । 'विहितविशेषणं लाघवस्यायाञ्च सनासी' इति नवे त्वादौ स्यः। यथा-

※ विषमपदविवृतिः ※

सिद्धत्वात्परत्वात्पूर्वसवर्णप्रवृत्त्या सकृद्गतिन्यायेन पश्चाद्द्वित्वाप्राप्तौ द्वितकारस्य रूपस्य लोपपूर्वसवर्णयोरविशेषाद्वेत्ति भावः । **अनुस्वारस्य ययि** । ननु शकारसवर्ण ईकारः प्रसिद्ध इत्यासङ्गाह—प्रयत्नभेदेनेति ।

'दंशन'मित्यादौ तु न दोषः, शकारसवर्णाप्रसिद्धेः; प्रयत्नभेदेनाज्झलोः सावर्ण्याभावात् । अचि अनुस्वाराभावात् ।

**मो राजि** । 'ने'ति सिद्धे 'म' इत्युक्ति'र्हे मपरे' इत्येतद्विषये 'प्रशाम्ह्मलयती'त्यादौ 'मो नो धातो'रिति नत्वबाधनार्था, निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात् । ध्वनितञ्चेद'मेतदोऽन्', 'अमो म'शिति सूत्रयोर्भाष्ये ।

**हे मपरे** । 'मपरे' इति बहुव्रीहिः, न तु तत्पुरुषोऽसम्भवात् । 'मोऽनुस्वार' इत्यतो 'म' इत्यनुवर्त्तते ।

ॐ **अभिनव-चन्द्रिका** ॐ

**अप्रसिद्धेरिति** । 'यरोऽनुनासिक' इत्यतोऽनुनासिक इत्यस्यात्रानुवृत्त्या शकारसवर्णानुनासिकाप्रसिद्धेरिति भावः । **बहुव्रीहिरिति** । पञ्चम्यर्थे इति भावः ।

ॐ **चिदस्थिमाला** ॐ

ननु सूत्रमते ईकारशकारयोः सावर्ण्यस्य सत्त्वेन स प्रसिद्ध एवात आह—**प्रयत्नेति** । यथोत्तरं मुनीनां प्रामाण्यात् । एतेन 'सूत्रमते तदावश्यकमेवे'ति दण्डयुक्तमपास्तम् । नन्वेवं शल्यदोषेऽप्यचि दोष एवात आह—**अचीति** । ननु 'न राजी'त्येव वाच्यं, अनुस्वारनिषेधेनैवेष्टसिद्धेरत आह—**तीति** । **यत्तु**–'समशब्दादाचक्षाणणिजन्तादाचारक्विबन्ताद्वा कर्तरि क्विपि सम्राडित्यत्र नत्वाभावोऽत्रैव फलमिति, तन्न, अभिव्यक्तेतिन्यायेनोपसर्गस्यैव समोऽत्र ग्रहणात् । तदेतद्ध्वनयन्नाह—**हे मेति** । **नार्थेति** । तदर्थापीत्यर्थः । अत एवाह—**स्यैवेति** । ननु तत्रापि 'न ष'ड्त्यित्रेवात्र व्याख्यानान्न दोषोत आह—**ध्वनितमिति** । तत्र हि 'मो राजी'त्यनुस्वारादिबाधनार्थमित्युक्तम् , एवञ्चागत्या तत्र तथाङ्गीकारेप्यत्र तथा दुर्वचं, भाष्यविरोधापत्तेः । एतेन 'मस्य मविधानमनुस्वारनिवृत्त्यर्थ'मिति **दण्डिरत्नाकरा**द्युक्तं, 'न षडित्यत्रेव सिद्धेरिदं चिन्त्यमिति तथैव वाच्यम् , एवं शर्परे इत्यत्रापीति तत्र मनोरमोक्तमपि चिन्त्यमेवे'ति **मन्दोक्त**ञ्चापास्तम् । **भाष्ये इति** ।—जातावेकवचनम्, **बहुव्रीहिरिति** । न तु पञ्चमीतत्पुरुषोऽसम्भवादिति भावः । **म इत्येति** । स्थानिसमर्पकमिति भावः ।

ॐ **ज्योत्स्ना** ॐ

तस्य द्वित्वे द्वितकारकस्य च सिद्धौ त्रितकारकस्यासिद्धेश्चिन्त्यमेतत् । **शकारसवर्णाप्रसिद्धेरितीति** । न च दीर्घ ईकारः शकारस्य सवर्णः प्रसिद्ध इति वाच्यं, सूत्रकारमते तत्सद्भावेऽपि पञ्चधा प्रयत्नाङ्गीकर्तॄणां भाष्यकाराणां मते तदभावात्, तदाह—**प्रयत्नभेदेनाज्झलोः सावर्ण्याभावादिति** । ईषद्विवृत-विवृतत्वयोर्भेदेन तयोस्तदभावादित्यर्थः । विजातीयसवर्णाप्रसिद्धावपि सजातीयवर्णस्य रेफे सुप्रसिद्धत्वात् । न च सप्तम्यन्तपाठेनेह निस्तारः, तस्य दूषितत्वात् । अन्तरतमानन्तरतमयोः स्थानित्वप्रसङ्गेऽन्तरतमस्यैव स्थानित्वनियामकेन तेनानुस्वारमात्रस्थानिविषये नियन्तुमशक्यत्वात् । न च 'यरोऽनुनासिकेऽनुनासिको वे'त्यतोऽनुनासिकग्रहणानुवृत्त्या परसवर्णस्यानुनासिकस्यैव विधानाददोष, इति **नरहरे**रुक्तियुक्ता । तुल्ययुक्त्या 'दंशन'मित्यादौ शकारस्यापि व्यावृत्तौ पुनरपि 'यमी'त्यस्य वैयर्थ्यप्रसङ्गात् । अत्राहुः—सूत्रमतेऽनुनासिकदीर्घेकारशकारयोः सावर्ण्याङ्गीकाराद्दंशनमित्यादौ तद्व्यावृत्तये यमीत्यस्यावश्यवक्तव्यत्वात् । 'भाष्यमते पञ्चधा प्रयत्नाङ्गीकारात्तदभाव' इति चेदनुनासिकग्रहणानुवृत्तिरपि कुत्र तत्रोक्ता ? क्व च व्याख्यातृमिस्त-

यथासङ्ख्य । सम्यक् ख्यानं—सङ्ख्या, क्रमवैशिष्ट्येन ज्ञानम् ।

॥ अभिनव-चन्द्रिका ॥

यथासङ्ख्यमिति । अनुपूर्वकदिशधातोः—पश्चाद्भवज्ञानमर्थः । एवमुन्पूर्वकदिशधातोः—सिद्धज्ञानमर्थः । एवम्—प्रतिनिर्पूर्वकदिशधातोः-अपूर्वज्ञानमर्थः । अस्मात्कर्मणि घञि—अनुदेशोद्देश,—प्रतिनिर्देश,—शब्दानां क्रमेणाकाङ्क्षाभास्यसम्बन्ध–उद्देश्यताश्रय–विधेयताश्रयः अर्थाः । तथा च सूत्रेऽनुदेशपदेनोपस्थितिपश्चाद्भवशाब्दबोधविषयीभूताकाङ्क्षाभास्यसम्बन्ध उच्यते। अनोः पश्चादर्थकत्वात्, दिशेर्ज्ञानार्थकत्वाच्च। 'समाना'मिति चावर्त्तते। एकत्रानुयोगित्वमपरत्र प्रतियोगित्वञ्च षष्ठ्यर्थः। 'समाना'मित्यस्य—तुल्यसङ्ख्यावतामित्यर्थः। 'यथासङ्ख्य'मित्यस्य—सङ्ख्याकर्मकातिक्रमणकर्तृत्वाभाववानित्यर्थः। तथा च–तुल्यसङ्ख्यावत्प्रतियोगिकः, तुल्यसङ्ख्यावदनुयोगिकश्चाकाङ्क्षाभास्यसम्बन्धः—सङ्ख्याकर्मकातिक्रमणकर्तृत्वाभाववान्भवतीति वाक्यार्थः ।

॥ चिदस्थिमाला ॥

एकत्वादिरूढस्य सङ्ख्याशब्दस्य ग्रहणे वाक्यार्थानुपपत्तेर्यौगिकत्वमाह—सम्यगिति । 'सङ्ख्यान-

॥ ज्योत्स्ना ॥

दमिप्रायत्वेन वर्णिता ? कथं तर्हि कुण्डं रथेनेत्यत्र परसवर्णो वारणीयः ? इति चेत्—वङ्करोर्घात्यादावनुस्वारस्येत्यस्यान्तरतमङकारादिविधानेन चरितार्थस्य कुण्डं रथेनेत्यनन्तरतमरेफविधाने सामर्थ्याभावात्, प्रागुक्तषाष्ठभाष्योक्तन्यायसजातीयन्यायात् । तदेतद्—'रेफोष्मणां सवर्णा न सन्ती'-त्येतद्भाष्यमुपादाय–'अनुस्वारपरसवर्णविधाने हि–'स्थानेऽन्तरतम' परिभाषोपस्थानात्, रेफस्य णकारोऽन्तरतमो नाप्यनुस्वारस्य रेफ' इति व्याख्यानेन प्रदीपकृता सूचितमित्यलम् ।

॥ सदाशिवभट्टीयम् ॥

सङ्ख्यमनु । सङ्ख्याशब्दस्य ज्ञानार्थतेति—साङ्ख्यशब्दे स्वार्थे तद्धित इति भावः । 'नामनतो'ति पाठः ।

॥ विषमपदविवृतिः ॥

यथासङ्ख्यमनु । 'सङ्ख्या—सङ्ख्यानं' गणनमुच्यते । अनुदेशशब्दस्य सम्बन्धिशब्दत्वा-

॥ वरवर्णिनी ॥

यथासङ्ख्यमनुदेशः । अस्यार्थः—समसङ्ख्यकानामनुदेशः—पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः—यथासङ्ख्यम्–अर्थात्सङ्ख्याकर्मकातिक्रमणकर्तृत्वाभाववान्—भवतीति । सजातीयकमानुयोगिनाकप्रतियोगिनाको भवतीति यावत् । साजात्यञ्च प्रथमत्व-द्वितीयत्वादिना । यथा–'एचोऽयवायाव'इत्यनेन प्रथमत्ववत एकारस्य-स्थाने प्रथमत्ववान्—अयादेशो भवति,—द्वितीयत्ववत ओकारस्य—द्वितीयत्ववान्—अवेव । नन्वत्र ओकारो द्वितीय ऐकारस्तृतीय इत्यर्थे किं गमकम्—विपरीतमेव कुतो नेति चेन्न—द्वितीयादिपदघटकपूरणप्रत्ययमाहात्म्येनैतादृशार्थलाभात् । पूरणप्रत्ययार्थश्चापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितमुख्यविषयताश्रयत्वम् । अपेक्षाबुद्धिस्त्वत्र यथा–'अयमेकः एतदेकत्वविशिष्टविशिष्टोऽयमेक इति इमौ द्वा'विति द्वित्वोत्पादिकाऽपेक्षाबुद्धिः । त्रित्वोत्पादिकाऽपेक्षाबुद्धिर्यथा–'इमौ द्वावेतद्द्वित्वविशिष्टविशिष्टोऽयमेक इति इमे त्रय इति' । 'अयमेकोऽयमेकोऽयमेकइतीमे त्रय' इति नैयायिकोक्ताऽपेक्षाबुद्धिस्तु न साध्वी, द्वितीयतृतीयेत्यादिपूरणप्रत्ययार्थसाङ्कर्यापत्तेः । द्वित्वोत्पादकाऽपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वमित्यादिप्रकारेण द्वितीयत्वादिकम्बोध्यम् । पूरणप्रत्ययार्थविशेष्यतायां मुख्यतानिवेशेन प्रथमे पूरणप्रत्ययार्थो न, अन्यथाऽयमेक इति कथनेनैकत्वावच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यतायाः सत्त्वेन तत्रापि तत्त्वं स्यात्। तथाच समसङ्ख्यकानां पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः प्रतियोगिविशिष्टानुयोगिको भवतीत्यर्थः— वै० 'स्वनिरूपितमुख्यत्वादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासजातीयविशेष्यताश्रयत्व'सम्बन्धेन। साजात्यञ्च 'मुख्यत्वा मुख्यत्वै'तदन्य-

❀ अभिनव-चन्द्रिका ❀

सङ्ख्यात्र क्रमः। क्रमश्चापेक्षाबुद्धिविशेषविषयता। आकाङ्क्षाभास्यसम्बन्धे सङ्ख्याकर्मकातिक्रमणकर्तृत्वञ्च-स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम्। तदभावश्च—स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम्।

साजात्यञ्च—'स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व' 'स्ववृत्ति-स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टावच्छिन्नधर्मिताल' 'स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वै'तदन्यतरवत्त्वै'तदुभयधर्मेण।

यथा 'समूलाकृतजीवेषु हन्कृञ्ग्रह' इत्यादौ तुल्यसङ्ख्यावत्समूलाकृतजीवप्रतियोगिकः, तुल्यसङ्ख्यावद्धन्कृञ्ग्रहानुयोगिकश्च य आकाङ्क्षभास्याव्यवहितोत्तरत्वादिः सम्बन्धस्तत्र—स्वप्रतियोगि-समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्धनुयोगिकत्वम्, एवं-स्वप्रतियोगि-कृत-वृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावत्कृञनुयोगिकत्वम्, स्वप्रतियोगिजीववृत्त्यपेक्षाबुद्धिविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्ग्रहानुयोगित्वमित्यतः—सङ्ख्याकर्मकातिक्रमणकर्तृत्वाभावः इति समन्वयः।

---

❀ वरवर्णिनी ❀

तरसम्बन्धेन। यथाऽत्र प्रतियोगिनावेकारौकारौ, तद्वृत्तिसङ्ख्योत्पादिकापेक्षाबुद्धिः—'अयमेक एकारः, एतदेकत्वविशिष्टविशिष्टोऽयमेक ओकारः, इतीमौ द्वौ'इत्याकारिका, तदीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यता उभयोरेकारौकारयोः, तयोर्मध्ये प्रथमे प्रकारतासमानाधिकरणत्वादमुख्या, तत्सजातीया या अय्निष्ठा एकत्वनिष्ठप्रकारतानिरूपिताऽमुख्या विशेष्यता, तदाश्रयः अय्, स अनुयोगी यस्यैतादृशः पूर्वोक्तः 'सम्बन्धो भवति। एवम्—एकारौकारवृत्तिद्वित्वसङ्ख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता मुख्यविशेष्यता-ओकारे, तत्सजातीयमुख्यविशेष्यताश्रयः—अव्, तदनुयोगिकश्च सम्बन्धो भवतीति समन्वयो बोध्यः।

अत्रेदं विचार्यते—एतादृशार्थस्वीकारेऽपि-एकारौकाररूप-प्रतियोगि-वृत्तिद्वित्वसङ्ख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता या ओकारनिष्ठा मुख्यविशेष्यता तत्सजातीया या त्रित्वसङ्ख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता आय्निष्ठामुख्यविशेष्यता, तदाश्रय आय् तदनुयोगिकोऽपि स्यादिति ओकारस्यादेशः स्यादिति। अत्रोच्यते—समसङ्ख्यानामनुदेशः प्रतियोगिविशिष्टविशेष्यताश्रयानुयोगिको भवति। वै० 'स्ववृत्तिसङ्ख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासजातीयत्व'—'स्ववृत्तिसङ्ख्यात्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितत्वै'तदुभयसम्बन्धेन। साजात्यञ्च—'मुख्यत्वामुख्यत्वै'तदन्यतरसम्बन्धेन। अथ वैकत्वावच्छिन्नत्वैकत्वानवच्छिन्नत्वै-तदन्यतरसम्बन्धेन साजात्यम्। केचित्तु—द्वितीयसम्बन्धस्थानेऽपि—'स्ववृत्तिसङ्ख्योत्पादकपेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितत्वेति'सम्बन्धान्तरमाहुः। फलन्तुल्यमेवेति। एवञ्च ओकारस्य नायादेशः। तथाहि—अय्अव्आय्वृत्तियो त्रित्वोत्पादिका—'इमौ अयवौ द्वौ, एतद्द्वित्वविशिष्टविशिष्टोऽयमेक आय्—इतीमे त्रयोऽयवाय'इत्याकारिकापेक्षाबुद्धिस्तन्निष्ठजनकतावच्छेदको धर्मो त्रित्वोत्पादिकापेक्षाबुद्धित्वम्, स धर्म एकारौकाररूपप्रतियोगिवृत्तिना सङ्ख्यात्वव्याप्यद्वित्वत्वधर्मेणावच्छिन्नाद्वित्वसङ्ख्यावृत्तिजन्यतानिरूपिताया 'अयमेक एतदेकत्वविशिष्टविशिष्टोऽयमेक इतीमौ द्वौ' इत्याकारिकापेक्षाबुद्धिवृत्तिजनकता, तदवच्छेदको नेति न दोष इत्यलमिति—पण्डितैकशेष-शेषावतार-गुरुवरश्रीत्रिपाठिचरणा आहुः।

'यत्साङ्ख्यैः प्राप्यते स्थानमि'त्यत्र सङ्ख्याशब्दस्य ज्ञानार्थताया दृष्टत्वात्। तामनतिक्रम्य--यथासङ्ख्यम्। अनुदेशः—पश्चाद्वचवाक्यार्थबोधकालिकः सम्बन्धः। साम्यं—सङ्ख्यया, योग्यत्वाद्याख्यानाच्च। एवञ्च समसङ्ख्यानां सम्बन्धो—येन क्रमेण पदज्ञानं

ॐ अभिनव-चन्द्रिका ॐ

सङ्ख्याकर्मकातिक्रमणकर्तृत्वञ्च—'स्वप्रतियोगिसमूलवृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावत्कृञ्ग्रहेतदन्यतरानुयोगिकत्वमिति। हन्निष्ठापेक्षाबुद्धिविशेषविषयतायाः—समूलनिष्ठापेक्षाबुद्धिविशेषविषयतासजातीयत्वात्, कृञ्ग्रहनिष्ठापेक्षाबुद्धिविशेषविषयतायाश्च समूलनिष्ठापेक्षाबुद्धिविशेषविषयताविजातीयत्वात्।

तथाहि—कृञ्निष्ठापेक्षाबुद्धिविशेषविषयतायां—'समूल इत्येकः, एतद्विशिष्टोऽयमेकः' इत्याकारकापेक्षाबुद्धीयसमूलनिष्ठापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदिका या सङ्ख्यात्वव्याप्यद्वित्वत्वजातिः, तदवच्छिन्नाया हन्कृञ्निष्ठद्वित्वनिष्ठा जन्यता, तादृशजन्यतानिरूपिता 'हन्नित्येकः, एतद्विशिष्टोऽयं कृञ्नेकः' इत्याकारकापेक्षाबुद्धिनिष्ठा जनकता, तदवच्छेदकत्वस्य सत्त्वेऽपि—समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्तिपूर्वोक्तापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्याभावात्तद्विजातीयत्वम्। एवं ग्रहनिष्ठापेक्षाबुद्धिविशेषविषयतायां समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्ति-स्वनिरूपकनिरुक्तापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नत्वस्य सत्त्वेऽपि, समूलनिष्ठापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यद्वित्वत्वजात्यवच्छिन्नहन्कृञ्वृत्ति—द्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्याभावात्, हन्निष्ठापेक्षाबुद्धिविशेषविषयतायाश्च समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसङ्ख्यात्वव्याप्यजात्यवच्छिन्नहन्वृत्तिद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य, समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्ति-स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्य च सत्त्वान्निरुक्तलक्षणसमन्वयो बोध्यः। एवमन्यत्राप्यूह्यमिति दिक्।

क्रमवैशिष्ट्येन ज्ञानमिति। वस्तुतस्तु सङ्ख्यात्र क्रमः। क्रमश्चापेक्षाबुद्धिविशेषविषयतेति

ॐ चिदस्थिमाला ॐ

सङ्ख्या, गणना क्रम' इति कैयटाद्युक्तार्थत्यागे बीजमाह—यदिति। 'तामनती'ति पाठः। 'तदनती'ति वा। 'तमती'ति पाठे—तत्प्रकारः क्रमो ग्राह्यः। 'अनुदेशः—पश्चादुच्चार्यमाणसम्बन्ध' इति कैयटाद्युक्तार्थाङ्गीकारे-'परस्मैपदाना'मित्यादौ तादृशानां स एव नेति दोषोऽत आह—पश्चादिति। पदज्ञानाद्यनन्तरमित्यर्थः। एतेन—कर्मणि घञ् सूचितः। समशब्दो न समपर्यायः, सुडापत्तेस्तद्ध्वनयन्नाह—साम्यमिति। तस्यातिप्रसङ्गा-

ॐ ज्योत्स्ना ॐ

तमतिक्रम्येति। 'सङ्ख्यानं सङ्ख्या—गणना क्रम' इतिसङ्ख्यापदनिर्वचनस्य बृहच्छब्देन्दुशेखरे कृत-

ॐ सदाशिवभट्टीयम् ॐ

'तदनती'ति वा। 'त'मितिपाठे—तत्प्रकारः क्रमो ग्राह्यः। ननु प्रसिद्धसङ्ख्याग्रहणेऽपि न दोषः, तत्सङ्ख्यापूरकस्य तत्सङ्ख्यापूरकेणान्वये तदनतिक्रम इत्येव वक्तुं शक्यत्वादिति चेन्न। प्रथमत्वस्य प्रसिद्धसङ्ख्यारूपत्वाभावात्। सम्बन्धो येनेति। 'सम्बन्ध' इत्यस्यानन्तरं 'यथाक्रममित्यर्थ' इति शेषः।

ॐ विषमपदविवृतिः ॐ

दुद्देश्य आक्षिप्तस्तेनायमर्थः। 'समानां—समसङ्ख्यानाम्मध्ये यथागणनमुद्देशिभिः सहानुदेशिनः सम्बध्यन्ते' इति कैयटोक्तन्तु न युक्तं, 'समूलाकृतजीवेषु,' 'हलो यमा'मित्यादौ उद्देश्यानामपि

पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः सम्बन्धस्तेषामित्यर्थः। फलितमाह— **समसम्बन्धीति**। यद्यपि स्थानाख्यलौकिकप्रमाणादेव सिद्धं, तथापि 'परस्मैपदानाम्'

**ॐ अभिनव-चन्द्रिका ॐ**

लेखनीयम्। 'क्रमवैशिष्ट्येन ज्ञान'पर्यन्तानुधावने फलाभावात्। बोधकालिकः=वृत्तिबोधविषय इत्यर्थः। **सङ्ख्ययेति**। अपेक्षाबुद्धिविशेषविषयतयेत्यर्थः। **समसङ्ख्यानामिति**। तुल्यापेक्षाबुद्धिविशेषविषयतावतामित्यर्थः। **पदादुपस्थितिरिति**। पदनिष्ठशक्तिग्रहप्रयोजकशास्त्रे येन

**ॐ चिदस्थिमाला ॐ**

दाह—**व्याख्येति**। उपस्थितत्वादित्यर्थः। शब्दार्थमाह—**एवञ्चेति**। पदार्थत्रयज्ञाने चेत्यर्थः। समानो योऽनुदेशः स यथासङ्ख्यमिति योजनया लब्धमाह—**समेति**। 'सम्बन्धो यथासङ्ख्य'मिति पाठः। तत्रार्थस्योक्तत्वादन्ते व्युत्क्रमेण व्याचष्टे—**येनेति**। उभयोरपि तत्र कारणत्वेनोल्लेखः। **तेनैवेति**। कारणतुल्यत्वात्कार्यस्येति भावः। एतेन 'सङ्ख्याशब्देन क्रमो लक्ष्यते'इति रत्नाकरोक्तमपास्तम्। **फलीति**। 'न'दित्यादिः। **स्थानाख्येति**। 'शत्रु'मित्यादिवत्तथापाठेनैवेत्यर्थः। अत्रोपस्थित्या अर्थतः सत्त्वादाह—

**ॐ ज्योत्स्ना ॐ**

त्वात्क्रमेणेहापि पुंलिङ्गो निर्दिष्टः, स्त्रीलिङ्गस्य नपुंसकस्य वा निर्देशस्त्विहोचितः। **येन क्रमेण पदज्ञानं पदादुपस्थितिर्वेति**।आद्योदाहरणं—'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः'। अन्त्योदाहरणम्—"परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" हलो यमां यमि लोपः' इत्यादि। **इत्यर्थ इति**। उपाध्यायास्तु—सङ्ख्यानं सङ्ख्या, गणनमुच्यते, तदनतिक्रम्य यथासङ्ख्यमनुदेशः—पश्चादुच्चारितैः सम्बन्धः, अनुदेशशब्दस्य सम्बन्धिशब्दत्वात्समानामित्यस्य समसङ्ख्यानामुद्देशिनामित्यर्थलाभः। तथाच समसङ्ख्यानामुद्देशिनामनुदेशिभिः सम्बन्धो-यथागणनं—प्रथमस्य प्रथमे-द्वितीयस्य द्वितीये इत्यादिरूपेणेति पार्यन्तिकोऽर्थ इत्याहुः। **स्थानाख्यलौकिकप्रमाणादेवेति**। तच्च स्थानेऽन्तरतमसूत्रे भाष्ये—"यान्येतानि गोयुक्तानि सङ्घुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दङ्कुर्वन्ति, एवं तावच्चेतनावत्सु। अचेतनेष्वपि—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्द्ध्वमारोहति, पृथ्वीविकारः पृथ्वीमेव गच्छत्यान्तर्यत—"इत्यादिना सूत्रप्रत्याख्यानायानेकधा प्रदर्शितम्। अत एव 'शत्रुं मित्रं विपत्तिञ्च जये'त्यादौ क्रमेण क्रमिकाणामन्वयबोधः पुरुषप्रयत्नविशेषं विनापि सार्वजनीनः सङ्गच्छत इत्याहुः।

**सिद्धमिति**। 'इको यणि'त्यादौ 'परस्मैपदानाम्' 'एचोऽयवायाव' इत्यादाविति। 'हलो यमां

**ॐ विषमपदविवृतिः ॐ**

परस्परं यथासङ्ख्यस्येष्टत्वादित्यभिप्रेत्याह—**सम्यक्ख्यानमिति**। वस्तुतस्तु कैयटोक्तार्थ एव युक्तः। सर्वस्योद्देश्यस्य सर्वानुदेशः प्राप्नोतीति यथासङ्ख्यसूत्रस्थभाष्यस्वरसात्। अनुदेशपदस्याजहत्स्वार्थलक्षणया विधेय-तदन्वय्युभयपरत्वान्नोक्तस्थलेषु दोषः। **सम्बधो नेति**। 'सम्बन्ध' इत्यपपाठः। **पदज्ञानं पदादुपस्थितिर्वेति**। आद्यस्योदाहरणं—'समूलाकृते'त्यादि। द्वितीयोदाहरणं—'परस्मैपदाना'मित्यादि। **स्थानाख्येति**। स्थानमत्र क्रमः। 'स्थानाच्चेतिसंयोगा'दिति सूत्रे आध्वरमीमांसकैस्तथैव व्याख्यातत्वात्। एतेन स्थानमधिष्ठानमित्यभिप्रेत्य यदुदयङ्करपाठकेनोक्तं"—तच्च स्थानेन्तरतमसूत्रे यान्येतानि सङ्घुष्टकानि भवन्ति तान्यन्योन्यं पश्यन्ति शब्दं कुर्वन्ति, एवन्तावत् चेतनावत्सु। अचेतनेष्वपि लोष्टःक्षिप्तोवायुवेगङ्गत्वा नैव तिर्यग्गच्छति न चोर्ध्वमारोहति, पृथिवीविकारः पृथ्वीमेव गच्छतीत्यादिना सूत्रप्रत्याख्यानायानेकधा प्रदर्शितम्-"इति,तत्पूर्वमीमांसाऽनध्ययनविजृम्भितमिति स्पष्टमेव। **लौकिकेति**। 'शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जये'त्यादौ लोके क्रमेणान्वयदर्शनादिति भावः।

'एचोऽयवायाव' इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थम्, 'आद्यन्तौ टकिता'वित्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमान्वयबोधनार्थञ्चेदम्। एवञ्च तत्र यथासङ्ख्येनान्वयबोधकवाक्यकल्पना एतत्प्रामाण्यात्, ततश्च बोध

❀ अभिनव-चन्द्रिका ❀

क्रमेण पदज्ञानमित्यर्थः। यथा 'परस्मैपदाना'मित्यादौ परस्मैपदनिष्ठशक्तिग्रहप्रयोजकं यत्तिप्सञ्ज्ञेति शास्त्रं, तत्र येन क्रमेण पदविषयकं श्रावणप्रत्यक्षं तेनैव क्रमेण णलादयो भवन्ति। एवं 'येन क्रमेण पदज्ञान'मित्यस्यापि-येन क्रमेण पदविषयकं श्रावणप्रत्यक्षमित्यर्थो बोध्यः। यथाश्रुतन्तु न युक्तम्–परस्मैपदपदेन सङ्केतसम्बन्धेन परस्मैपदवतामनुपस्थित्या क्रमेणोपस्थितेरभावात्। **स्थानाख्यलौकिकप्रमाणेति**। यथा प्रतिपदि सुवर्णन्दीयतां, द्वितीयायां रजतन्दीयतां, तृतीयायां वस्त्रन्दीयतां,

❀ चिदस्थिमाला ❀

**शब्दत इति**। इदमेवात्र निमित्तम्, अन्यथा 'स्यतासी'इत्यादौ दोषापत्तेः। नन्वस्तु एवं तथापि तदनुरोधेनार्थसाम्येऽपि प्रवृत्तिरस्तीति नेदं फलमत आह—**आद्यन्तावि**ति। साहित्ये=विशेष्यभूते। **अप्राप्तेति**। द्वन्द्वस्तु प्राथमिकबोधमादाय साधुः। यद्यपि समासेन उपस्थितिरेकैव, तथाप्येतत्सूत्रारम्भसामर्थ्येनोपसर्जनावयवकृतं क्रमं गृहीत्वा यथासङ्ख्यसूत्रप्रवृत्तिरत्र शास्त्रे इति पृथग्वाक्यकल्पनया बोधान्तरं कल्प्यते। एवञ्चेदं सूत्रं द्वन्द्वसमासनिर्दिष्टसम्बन्धिनोस्तथान्वयेऽपि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे, तेन लोके 'आद्यन्तौ वर्णानां विप्रशूद्रा'वित्यादेर्न साधुत्वं, तदाह—**एवञ्चेति**। अस्योक्तफलकत्वे चेत्यर्थः। तत्र=आद्यन्तावित्यादौ। **वाक्येति**। वाक्यान्तरेत्यर्थः। **ततश्चेति**। तस्माच्च तादृशो

❀ ज्योत्स्ना ❀

यमि लोप' इत्यादेरुपलक्षणमिदम्। अनयोस्तु 'स्थानेऽन्तरतम' इति सूत्रेणापि निर्वाह इति स्पष्टं भाष्ये। **अप्राप्तक्रमान्वयबोधनार्थमिति**। अत एव 'अजाविधनौ देवदत्तयज्ञदत्ता'वित्युक्त

❀ सदाशिवभट्टीयम् ❀

**शब्दत सूत्रान्तरेति**। शब्दतः सूत्रान्तरस्थमर्थेत अत्रोपस्थितमित्यर्थः। ननूक्तलौकिकप्रमाणस्यार्थसाम्येपि प्रवृत्तिरस्तु, अतः फलान्तरमाह—**आद्यन्तावि**ति।

❀ विषमपदविवृतिः ❀

**परस्मैपदानामित्यादि**। 'परस्मैपदाना'मित्यत्र क्रमेण नोद्देश्यवाचकपदानामुपादानं नापि परस्मैपदपदादुद्देश्यानाङ्क्रमेणोपस्थितिः। किन्तु युगपदेव सर्वे सञ्ज्ञिनः प्रत्याय्यन्त इति न स्थानाख्यलौकिकप्रामाण्याद्व्यवस्थासम्भवः। एवन्द्वन्द्वे न क्रमेणान्वयः, तथान्वये द्वन्द्वस्यैवासाधुत्वात्, सहविवक्षायान्तस्य विधानात्। ननूक्तपरिभाषयापि कथमत्र व्यवस्था? येन क्रमेण पदज्ञानम्पदादुपस्थितिर्वेत्युक्तपरिभाषार्थस्योक्तरीत्या परस्मैपदानामित्यत्रासम्भवात्, एवं'मेचोऽयवायाव' इत्यत्रापि, एतेन 'पदादुपस्थिति'रित्यस्य 'परस्मैपदाना'मित्युदाहरणमित्यपास्तं, किञ्च परस्मैपदशब्देन तिबादीनामिव शतृक्वसोरुपस्थित्या न सङ्ख्यासाम्यम्, 'आद्यन्तौ टकिता'वित्यत्रापि ययोरर्थयोराद्यन्ताभ्यां क्रमेणान्वयो न तयोः क्रमेणोपस्थितिः, नापि तद्बोधकपदयोः क्रमेणोपादानं 'टित्किता'वित्यनुक्तेः। ययोः क्रमेणोपादानं टकारककारयोर्न तयोराद्यन्ताभ्यां क्रमेण सम्बन्ध इति चेत्सत्यं, कैयटोक्तार्थाश्रयणेनादोषात्। तथा हि लादेशानां परस्मैपदसञ्ज्ञाविधानेन तज्ज्ञानार्थं तिबादिसूत्रानुसन्धाने तत्र परस्मैपदानां तिबादीनाङ्गणनाक्रमेणोद्देश्यानुद्देशिनोः सम्बन्धाङ्गीकारात्। शतृक्वसोः परस्मैपदत्वेपि असन्निहितत्वात्सन्निहितानां तिबादीनाञ्च नवत्वात्सङ्ख्यासाम्योपपत्तिः। 'आद्यन्ता'वित्यत्रापि टकारस्य प्रथमोपादानात्तद्घटितस्य टितः प्रथमं गणना, पश्चात्कित इति–गणनाक्रमेणैव सम्बन्धः। असहविवक्षायामपि द्वन्द्वस्य साधुत्वञ्च। नव्यमतेऽपि तिबादिसूत्रस्थक्रममादाय परस्मैपदानामित्यत्र टित्किद्घटकटकारककारयोः क्रमेणोपादानमादाया'द्यन्तौ टकिता'वित्यत्र च यथासङ्ख्यशास्त्रप्रवृत्तिः कथं चिदुपपादनीया। **यथासङ्ख्येनान्वय इति**। सङ्ख्यामनतिक्रम्य। करणल·

इति बोद्धव्यम्। अत्र स्वरितेनेत्यपकृष्यते, इति 'ल्यत्यादि'त्यादौ नातिप्रसङ्गः। तत्र प्रतिपत्तिकालिकमेव सङ्ख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति 'अमङणन'मिति सूत्रे भाष्ये स्पष्टम्।

ॐ अभिनव-चन्द्रिका ॐ

चैत्रेण प्रतिपदि गन्तव्यं, मैत्रेण द्वितीयायां, विष्णुमित्रेण तृतीयाया'मित्युक्तौ एतस्मै इदन्देयमित्यनुक्तावपि-चैत्राय सुवर्णमेव दीयते, मैत्राय रजतमेव, विष्णुमित्राय वस्त्रमेव यथा दीयते तद्वदिति भावः। **कल्पनेति** वस्तुतस्तु टित आद्यवयवे, कितोऽन्तान्तावयवेन्वयेऽप्येकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षायाः सत्त्वाद्वन्द्वस्य सूपपादत्वेन नास्ति वाक्यान्तरकल्पनोपयोग इति बोध्यम्। **नातिप्रसङ्ग इति**। स्वरितत्वाभावादिति भावः। अत्रेदन्तत्त्वम्-

ॐ चिदस्थिमाला ॐ

बोध इत्यर्थः। अनतिप्रसङ्गाय भाष्याद्यनुक्तमेवाह—**अत्रेति**। तथा च यत्र तत्त्वं तत्रैवैतदिति न तदभाववति तत्रातिप्रसङ्गः। अपकर्षसामर्थ्यादेव लौकिकस्याप्यप्रवृत्तिः। तेन क्वाधिकारः? क्व यथासङ्ख्यमिति तु व्याख्यानतो निर्णेयम्। ननु सङ्ख्यासाम्यं लक्ष्यसंस्कारवेलायां शब्दतोऽर्थतश्च 'स्यतासी'इत्यादौ नेति कथ तत्राह—**तत्रेति**। विध्यादिष्वित्यर्थः। **भाष्ये इति**। तत्र हि अकारेण प्रत्याहारमाश्रित्य मः प्रत्या-

ॐ ज्योत्स्ना ॐ

न ज्ञायते कस्याजा धनं? कस्यावय? इति भाष्ये उक्तम्। 'राजपुरोहितौ स्वाराज्यकामौ यजेयाता'मित्यत्र तु साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयबोधः प्राथमिकः, पार्ष्ठिकस्तु प्रकरणादिवाशाद्राजा स्वर्गकामो यजेत, पुरोहितश्च राज्यकामो यजेतेत्यन्वयबोध इत्यदोषः। प्रतिपत्तिकालिकं=प्राथमिकवाक्यार्थबोधकालिकम्। **प्रवृत्त्युपयोगीति**। तेन 'स्यतासी लृलुटो'रित्यादौ लशब्देन लृङ्लृटोर्द्वयोः पश्चादुपस्थितावपि न दोषः। **अमङणनमिति सूत्रभाष्ये इति**। तत्र हि मकारप्रत्या-

ॐ विषमपदविवृतिः ॐ

विवक्षया तृतीयेति केचित्। सङ्ख्यामनतिक्रम्यान्वयबोध इत्यर्थस्याविवक्षितत्वेन तृतीयार्थस्यानुपयोगेनान्वयासम्भवेन चायुक्तमेतदित्यन्ये। भाष्ये तु 'सङ्ख्यातानुदेश'इत्युक्तम्। तस्यार्थः—सङ्ख्यातं गणितन्तत्क्रमेणानुदेशो=विधिरित्यर्थः। **अपकृष्यत इति**। तथा च यत्र स्वरितेन युक्तं शब्दस्वरूपं तत्रैव यथासङ्ख्यशास्त्रम्प्रवर्तते इत्यर्थः। नन्वेवमप्य'नुदात्तङित आत्मनेपद'मित्यादौ सङ्ख्यातानुदेशो दुर्वारः, आत्मनेपदशब्दे उत्तरत्रानुवृत्त्यर्थं स्वरितत्वस्यावश्यकत्वादिति चेन्न। ययोर्यथासङ्ख्यमन्वयस्तयोर्द्वयोरपि स्वरितत्वसत्त्वे एवैतच्छास्त्रप्रवृत्त्याऽनुदात्तशब्दे तदभावेनादोषात्।

**ल्यत्यादित्यादाविति**। नन्वत्र ययोरन्वयः ल्यत्ययोरकारस्य च तयोर्न सङ्ख्यासाम्यं, ययोश्च सङ्ख्यासाम्यं ल्यत्ययोर्ङसि ङसोश्च, न तयोस्साक्षादन्वय इति न सङ्ख्यातानुदेशः प्राप्नोति। एवमेवा'नुदात्तङितः', 'रादाभ्यान्निष्ठातः', 'श्नसोरल्लोपः', 'ङसिङसोश्च', 'विदिभिदिच्छिदेः कुरच्', 'अवेतृस्त्रो', 'रोपधेतोः', 'क्रतुयज्ञेभ्यश्चे'त्यादावपि न सङ्ख्यातानुदेशः। 'अनुदात्तङित' इत्यस्य 'लस्ये'त्यनेन 'रदाभ्या'मित्यस्य 'त'इत्यनेन,'सार्वधातुक' इत्यस्या'त' इत्यनेन,'ङसिङसो'रित्यस्या'ती'त्यनेन ताच्छीलादीनां कुरचा, 'कारणाधिकरणयो'रित्यस्य घञा, 'पथिदूतयो'रित्यस्य उञा, व्याख्यानभवयोष्ठञा साक्षादन्वयादिति चेन्न। परम्परासबन्धेप्यस्य प्रवृत्तेः। अन्यथा 'समूलाकृतजीवेषु' 'स्यतासी लृलुटो'रित्यत्रापि एतदप्रवृत्त्यापत्तेः। तत्र हि 'लृलुटो'रित्यस्य 'धातो'रित्यनेन, समूलादीनां च णमुला साक्षादन्वय इत्याशयात्। इदञ्च व्यक्तिभेदेऽपि धर्मसाम्यमात्रेण प्रवर्त्तते। तेन 'स्यतासी लृलुटोः' 'नन्दिग्रहिपचादिभ्य' इत्यादौ सङ्ख्यातानुदेशः सिध्यति। लृलुटोर्नन्द्यादीनां भेदेपि लृलनन्द्यादित्वरूपधर्मसाम्यात्। **भाष्ये स्पष्टमिति**। तत्र हीत्थं भाष्यम्—'किमर्थमिमावनुनासिकावुभावनुबध्येते,

एते यवला निरनुनासिका एव, विधीयमानत्वेन सवर्णाग्राहकत्वात् । जाति-ग्रहणप्राप्तस्यैव गुणाभेदकत्वप्राप्तस्यापि 'अप्रत्यय' इत्यनेन निषेधाच्च । एवं 'मय उञः' इत्यत्रापि । अत एव मतोर्मस्य नानुनासिको वकारः, अन्यथा 'तद्वानास'-मित्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः ।

**चयो द्वितीया इति** । 'नादिन्याक्रोशे' इत्यत्र भाष्ये इदम् । एतत्सामर्थ्या-

### ॐ अभिनव-चन्द्रिका ॐ

इदं सूत्रत्वधर्मसाम्ये एव प्रवर्त्तते, न तु व्यक्तिसाम्ये, व्यक्तीनामानन्त्येन तत्साम्यस्य दुरुपपाद-त्वात् । **इत्यत्रापीति** । अत एव 'किम् उँ उक्त'मित्यादौ अनुनासिकस्यापि स्थाने 'मय उञः' इति वकारो निरनुनासिक एवेति भावः । **तद्वानासामिति** । नच 'नमौ मत्वर्थे' इत्यत्र दकारप्रश्लेषा-द्भत्वेन पदत्वबाधादनुनासिकाप्राप्त्या नेदं प्रमाणमिति वाच्यम्, 'प्रत्ययस्था दिति सूत्रस्थासुत्वेन

### ॐ चिद्स्थिमाला ॐ

ख्यानो, लक्ष्यासम्भवान्नातिप्रसङ्ग इत्युक्तञ्च । अन्यथागमिनां तावतां प्रयोगेष्वसत्त्वेनागमानाञ्च तावतां सत्त्वेन तदसङ्गतिः स्पष्टैव । सकलग्रन्थासङ्गतिं ध्वनयन् सिद्धान्तमाह—**एते** इत्याद्यापत्तिरित्यन्तेन । तत्र ताव-द्व्यक्तिपक्षे आह—**विधीयेति** । सिद्धान्तपक्षद्वये आह—**जातीति** । प्रतिपादितमिदमादौ । प्रसङ्गात्सिंहा-वलोकनन्यायेनाह—**एवमिति** । एवञ्च तत्रत्यमनोरमादिकं चिन्त्यमिति बोध्यम् । दार्ढ्याय प्रागुक्तमेवाह—**अत एवेति** । निषेधेन तदग्रहादेवेत्यर्थः । एतेन 'सर्वग्रन्थविरोधादिदं चिन्त्यम्, 'अप्रत्यय'इत्यस्य सूत्र मात्रविषयकत्वात् 'यण्वत''स्तद्वा'नित्यादिनिर्देशान्मतोर्मस्यानुनासिको ने'तिमन्दोक्तमपास्तम्, उक्तयुक्तेः । इदं=वार्तिकम् । नन्वेवमनेन द्वितीये चर्त्वं दुर्वारमत आह—**एतदिति** । ननु प्रातिशाख्यविरोधात्कथ-

### ॐ ज्योत्स्ना ॐ

ख्याने 'ञमो ह्रस्वा'दित्यत्र 'ञ्णो ह्रस्वादचि ङञु'डिति न्यासे पदान्तयोर्झकारभकारयोरभावात् पञ्चागमास्त्रय आगामिन इति वैषम्यात्सङ्ख्यातानुदेशस्याप्रवृत्तिमुद्भाव्यैवमुक्तम् । **गुणाभेदकप्राप्तस्या-पीति** । अत्र यद्वक्तव्यं तदुक्तम् । ननु'ष्मोदय'मिति प्रातिशाख्यविरोधा'त्सुगण्ठ्षष्ठ' इत्यादौ द्वितीयो

### ॐ विषमपदविवृतिः ॐ

न ञकार एवानुबध्यते, कथं ङमो ह्रस्वादची'ति? एतदप्यस्तु ञकारेण, नैवं शक्यं,झकारभकारयोरपि पदान्तयोर्झकारभकारौ आगमौ स्याताम् । न झकारभकारौ पदान्तौ स्तः, एवमपि पञ्चागमास्त्रय आगमिनो वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति । सन्तु तावदेषामागमानामागमिनः सन्ति, झकार-भकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यत इति । **नित्यानुनासिकापत्त्येति** । ननु तद्वानित्यत्र नानुनासिकः, कण्ठावच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मो-त्पत्त्येत्यादिस्वग्रन्थपर्यालोचनया वकारस्य नासिकास्थानलाभावेन मुखसहितनासिकयोच्चार्यमाणवर्ण-त्वाभावात् अनुनासिकसञ्ज्ञाया अभावादनुनासिकादिप्रत्ययपरत्वाभावेन च कथमनुनासिकापत्तिः । 'आङोऽनुनासिको' यरोनुनासिक इत्यादौ तु लोकसिद्धानुनासिक्यगुणस्यैव विधानमिति न कश्चिद्दोष इति चेत्सत्यम् । वर्णमात्रस्य नासावच्छिन्नवायुसंयोगेनानुत्पत्तावप्यानुनासिक्यगुणविशिष्टस्य तथा त्वेनानुनासिकसञ्ज्ञेत्याशयेनास्य कथं वियोजनीयत्वात् । **एतत्सामर्थ्यादिति** । इदमयुक्तम्—अप्परा वत्सा इत्यादावेतस्य चारितार्थ्यात् । तत्र हि अप्पूर्वात्सर्तेरसिः वदे सः, ततश्चर्त्वे एव सस्य सिद्ध-

देतत्कृतद्वितीयस्य न चर्त्वम् । 'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाज'-मिति प्रातिशाख्ये'ऽपदान्तभाज'मिति चर्त्वासिद्धत्वलब्धार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चयोऽलाभात्। अत्र तु कृते न जश्त्वप्राप्तिरस्यासिद्धत्वात्। 'अप्सरा' 'वथ्सा'इति भाष्योदाहृते छान्दसत्वाच्चर्त्वस्यासिद्धत्वं न। एवञ्च प्रातिशाख्ये'ऽपदान्तभाज'मित्युत्सर्गः। यद्वा तयोरव्युत्पन्नत्वं, न त्वप्पूर्वात्सर्त्तेरसिर्वदेः सो वेत्यन्यत्र विस्तरः ।

### ❀ अभिनव-चन्द्रिका ❀

इतिभाष्यप्रयोगस्य प्रमाणत्वात् । अन्यथा 'प्रत्यये भाषाया'मिति नित्यमनुनासिकन्दुर्वारं स्यात् ।

### ❀ चिदस्थिमाला ❀

मत्र द्वितीयोऽत आह—**ऊष्मोदयमिति** । यत्तु—'प्रातिशाख्य'मितिसमाख्याबलेन तस्य च्छन्दोमात्रविषयत्वं, लिट्स्वित्यादौ तु चर्त्वासिद्धा द्वितीयस्य प्राप्तिरेव न, अत एव भाष्येऽ'प्सरा'इति—अस्योदाहरणं दत्तं, तत्र हि अप्सु सरन्तीत्यर्थे अप्पूर्वात्सर्तेरसिर्विहित इति पस्य पदान्तत्वं स्पष्टमेवेति, तन्न, 'सम्भवत्येके'तिन्यायेन तथा दुर्वचत्वात्, तस्यान्यथोपपत्तेश्च । तदेतद्ध्वनयन्नाह—**चर्त्वेति** । 'चयो द्वितीया'इति दृष्टयेति भावः । **पदान्ते इति** । 'प्राय'इति शेषः । **चय इति** । 'विना चर्त्व'मित्यादिः । अत्र तु=द्वितीये तु।

द्वितीयदोषमुपपादयति—**अप्सरा इति** । वदेः से, अपः पस्य पदान्तत्वेन जश्त्वे च—चर्त्वस्यावश्यकत्वादाह—**चर्त्वेति** । एतेनात्र मान्याद्युक्तमपास्तम् । सिद्धान्तमाह—**यद्वा तयोरिति** । पाणिन्यभिमताव्युत्पत्तिपक्षस्यैव भाष्याभिप्रेतत्वात् । व्युत्पत्तावपि पक्षान्तरमाह—**न त्विति** । किन्तु भाष्यप्रामाण्यात्त्वप्पूर्वात् प्साधातोरसिरङ्, नलोपश्च, पतेः सः, आदेर्वं इति व्युत्पत्तिः । तत्राद्यं स्पष्टं निरुक्ते तद्भाष्ये च । उणादेर्भाष्यविरुद्धत्वस्य बहुश उपलम्भेऽप्यप्रामाणिकत्वादिति भावः । एवञ्च तस्य सार्वत्रिकत्वेऽपि तदेकवाक्यतायां न दोषलेशः, वस्तुतो नैकवाक्यता युक्तेति प्रपञ्चितं भावप्रकाशे, तथा च सर्वे ग्रन्था अयुक्ता एवेतिबोध्यम्, तदाह—**अन्यत्रेति** । उभयनिर्देशे पञ्चमीनिर्देशस्य बलवत्त्वेन 'ङ'इति पञ्चमी

### ❀ ज्योत्स्ना ❀

न प्राप्नोतीत्यत आह—**ऊष्मोदयमिति** । **सप्तमी षष्ठ्यर्थे इति** । एतेना'नवकाशेन सीतिसप्तमीनिर्देशेन 'ङ' इति सन्दिग्धपञ्चमीनिर्देशस्य बाधनाङ्स्य धुट् प्राप्नोति, न चो'भयनिर्देशे पञ्चमीनिर्देशो बलीया'निति वाच्यम्? , तत्किं वचनं परत्वहेतुकबाधमूलकम्?, उत अनवकाशस्यापि बाधकं स्वतन्त्रं? नाद्यः—पूर्वपरयोस्तुल्यबलत्वस्य तत्प्रवृत्तौ प्रयोजकत्वादन्यतरस्य निरवकाशत्वे तदसम्भवात् । नान्त्यः—'शि तु'गित्यादावपि तत्प्रवृत्त्यापत्ते'रित्यपास्तम् । 'सी'ति सप्तमीनिर्देशस्यापि लाघवार्थत्वेन सन्दिग्धपञ्चमीनिर्देशतुल्यबलत्वाच्च । अत्र तु पक्षे सकारे परे यो ङकारस्तस्मात्परस्य धुडिति सूत्रार्थो, ङात्परस्य सस्येति तु फलितार्थकथनं, ङ इति पञ्चमीनिर्देशेन पूर्वस्येति षष्ठ्यंशमात्रस्य बाधकल्पनादित्याहुः । नन्वेवमपि सीत्यस्य पदस्येत्येतद्विशेषणत्त्वात्तदादिविधौ सादेः पदस्येत्यर्थप्रसङ्गस्तथा च षट्त्स्वित्यत्र धुडप्रसङ्गः, सप्तमीनिर्देशेन पूर्वस्य कार्ये एव तदादिविधिप्रवृत्तिरिति तु न,'तस्मान्नुडची'त्यादौ दोषापत्तेः । विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव तदादिविधि-

### ❀ विषमपदविवृतिः ❀

त्वाश्रयणेनैतस्य प्रवृत्तेः । तयोरव्युत्पन्नत्वेपि 'खरि चे'त्येतदपवादत्वादेवास्मिन्कृते न तस्य प्रवृत्तिः । ऊष्मोदयम्=ऊष्मपरम् ।

ङः सि । 'सी'ति सप्तमी षष्ठ्यर्थे, व्याख्यानात् । तदाह—**सस्येति** । 'पदस्ये'त्य-नुवर्त्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः । **पदान्त इति** । धुड्विधस्य चर्त्वे लक्ष्यभेदात्पुनर्डस्य चत्वम् ।

**नश्च** । **नकारान्तादिति** । 'पदस्ये'त्यनुवृत्तं पञ्चम्या विपरिणम्यत इति भावः । वैयधिकरण्येनैवान्वय इति ङमुट्सूत्रस्थभाष्यस्वरसः । **नस्य पदान्तस्येति** । अपदान्तनकारेऽनुस्वारप्रवृत्त्या फलितार्थप्रदर्शनमिदम् । 'नान्तस्य पदस्ये'त्युचितम् ।

**चतुष्टयमिति** । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारछकार—छकारशकार—घटितरूपद्वयाधिक्ये अशा-नुस्वारविसर्गाणां द्वित्वविकल्पेनाधिक्येऽपि न क्षतिः ।

॥ अभिनव-चन्द्रिका ॥

**षष्ठ्यर्थे इति** । षष्ठ्यंशविकल—नस्मिन्निति परिभाषोपस्थित्या सकाराव्यहितपूर्वत्वविशिष्टो यो ङकार-स्तदव्यवहितोत्तरत्वविशिष्टस्य धुडित्यर्थेन सामञ्जस्याच्चिन्त्यमिदम् । लक्ष्यभेदादिति । स्वीयप्राथमिक-प्रवृत्तावुद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावाञ्छब्दसमुदायस्तद्घटको यः तद्घटकमात्रोद्देश्यक-विकारघटकातिरिक्तः, तद्घटकोद्देश्यकागमघटकातिरिक्तश्च,—तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्यु-त्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वं यत्तल्लक्ष्यत्वं तस्याभावादिति भावः । **नकारान्तादितीति** । सकाराव्यवहितपूर्वत्वविशिष्टो यो नकारस्तदन्ताव्यवहितोत्तरत्वविशिष्टस्येत्यर्थः । **वैयधिकरण्येनैवेति** । वच पयांसि यशांसीत्यादावपि धुडापत्तिरिति वाच्यम्, धुटोऽसिद्धत्वादनुस्वारे नकाराभावेन

॥ चिद्स्थिमाला ॥

स्वार्थ एवेति फलितमाह—**सीतीति** । **व्याख्येति** । पूर्वसूत्राप्रवृत्तेरित्यर्थः । एतेन प्रकल्पकत्वपक्षाशये-नात्र व्याख्यानं सर्वेषामपास्तं, तत्पक्षस्य भाष्ये दूषितत्वात् । यत्तु 'पदस्ये'ति विभक्तिविपरिणामेन 'ङ' इत्यस्य विशेष्यं, 'सम्भवती'तिन्यायात्, ङात्परस्य सान्तपदस्यासम्भवात्, भाष्योदाहरणसङ्गत्यापत्तेश्चेति, तन्न । ङमुट्सूत्रस्थभाष्यविरोधापत्तेः, तद्ध्वनयन्नाह—**पदेति** । साक्षादुद्देश्यविशेषणत्वस्य क्लृप्तत्वादाह—**सेति** । **लक्ष्येति** । खर्परझल्त्वावच्छिन्नमात्रं हि तस्य लक्ष्यं, नाधिकं मानाभावात् । एवञ्च लक्ष्यभेदः स्पष्ट एव ।

मूलं दूषयति—**वैयधीति** । 'ङमो ह्रस्वा'दित्यत्र सम्बन्धावश्यकत्वे मध्येऽपि नदौचित्यमिति भावः । सामानाधिकरण्येऽपि तस्य क्लृप्तविशेष्यत्वानुरोधेनाह—**नान्तस्येति** । 'अलोन्त्यस्ये'त्यस्याप्रवृत्त्या 'सस-जुषो'रितिवत्फलितार्थकथनत्वासम्भवात्, वैयधिकरण्ये तु पदावयवस्येत्येव लभ्यते, ननु पदान्तस्येति मूलं चिन्त्यमिति भावः । अधिकसत्त्वात्रेयं परिसङ्ख्येत्याह—**वक्ष्येति** । अत एव चोत्तरार्द्धे तदुक्तिः । तेन= तथा मूलाशयेन । 'न क्षति'रित्यत्रान्वयः । तत्र तावत्तुक्पक्षे रूपद्वयवृद्धिमाह—**तुक इति** । तस्य जश्त्वं तु न, असिद्धत्वात्, अत एव श्चुत्वोत्तरमपि तत्र । एतेन तुकस्तस्य पदान्तत्वाच्चुत्वासिद्धा जश्त्वे ततश्चु-त्वेन जे तस्य चर्त्वेऽपि तस्यासिद्धत्वाद्द्वितीयस्य प्राप्तिरेव नेति परास्तम्, उक्तयुक्तेः । '**शश्छोटी**'ति छत्वविकल्पे-नाह—**शकारेति** । उक्तव्याख्यावश्यकत्वायाह—**अशेति** । एतेन 'चतुष्ट्वं श्लोकस्य शेष-कृष्णीयपद्-चन्द्रिकास्थत्वेन तदनुरोधेनोक्तं, वस्तुत उक्तरीत्या रूपषट्कं बोध्य'मिति **रत्नाकरोक्तम्**, 'अत्र रूपद्वयवृद्धि-

॥ ज्योत्स्ना ॥

रिति परिभाषेन्दुशेखरोक्तमपि न युक्तम् । 'तीषसहे'त्यत्र दोषापादने तस्य परिभाषाप्रदीपार्चिषि विस्तरेण दूषितत्वादित्यत आह—**वैयधिकरण्येनान्वयादिति** । **भाष्यस्वरस इति** । '**ङमो-**

ङमो। 'पदस्ये'त्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यते इत्याह—**तदन्तं यत्पदं तस्मादिति**। तत्र 'ङम्'—स्वयं 'ह्रस्वा'दितिविशेषणसम्बन्धमनुभूय पद-विशेषणत्वेन तदन्तपर इति भावः। 'ङम' इति पञ्चमीबलादचीति सप्तमी षष्ठ्यर्थे, तदाह—**अच इति**। सप्तमीनिर्देशस्तु लाघवार्थः, 'ङम उत्तरस्याच' इति 'तस्मि'न्निति-सूत्रस्थभाष्यात्। ङमन्तं यत्पदमिति किम्? 'अनिती'त्यादौ ङमुण्मा भूदिति।

भाष्ये तु विभक्तिव्यत्ययप्रकल्पने गौरवात्पदावयवङमः परस्येति वैयधिकरण्यमेवोक्तम्।

---

❀ अभिनव-चन्द्रिका ❀

धुट्टोऽप्राप्तेः। ङमो ह्रस्वात्। **सम्बन्धमनुभूयेति**। 'गम्भीरायान्नद्यां घोष' इत्यत्र नदीपदं गाम्भीर्य-विशिष्टनदीतीरे लाक्षणिकं, गम्भीरायामिति तात्पर्यग्राहकमिति यथा तथा ङम्पदमेव ह्रस्वा-त्परत्वविशिष्टो यो ङम् तदन्ते लाक्षणिकं, ह्रस्वादिति तात्पर्यग्राहकमिति भावः। **षष्ठ्यर्थ इति**। वस्तुतस्तु अजव्यवहितपूर्वत्वविशिष्टो यो ङम् तदन्तं यत् पदं तदव्यवहितोत्तरस्य ङमुडित्यर्थेन

❀ चिदस्थिमाला ❀

बोध्ये'ति दण्डयुक्तश्चापास्तं, आदिद्वित्वेनाधिक्यात्। **सामेति**। ङम इति पञ्चम्यन्तेनेति भावः। पञ्चम्या = तदन्तेन। 'गुणः कृतात्मसंस्कार' इति न्यायेनाह—**तत्रेति**। उक्तवाक्ये इत्यर्थः। अन्यथा सर्वेष्टसिद्धेरिति भावः। 'पदे'ति षष्ठीतत्पुरुषः। एतेन विभक्त्यर्थान्वयार्थं तदन्तस्य 'ङम्' पदेन वृत्त्योपस्थितेरावश्यकत्वेन पदार्थैकदेशत्वात् ङमि ह्रस्वान्वयो न स्यादित्यपास्तम्, उक्तयुक्तेः। उभयनिर्देशे इति न्यायेनाह—**ङम इति**। **लाघवेति**। वक्ष्यमाणफलार्थश्च इत्यपि बोध्यम्। पदविषयकप्रश्ने हेतुमाह—**ङम इति**। यद्वा उक्तव्याख्याने भाष्यसम्मतिमप्याह—**ङम इति**। अनितीति तिङन्तम्। मूलादिसकलग्रन्था-सङ्गतिं प्रतिपादयन् सिद्धान्तमाह—**भाष्ये त्विति**। विभक्तिविपरिणामेत्यर्थः। तदुक्तातिप्रसङ्गं निराचष्टे—

❀ ज्योत्स्ना ❀

ह्रस्वा'दित्यत्र वैयधिकरण्येनान्वयस्यावश्यवक्तव्यत्वादिहापि तथैवोचितमिति तदाशयः(-स्वरसः)।

**लाघवार्थ इति**। उत्तरत्र='मय उञ'इत्यत्रानुवृत्त्यर्थश्चेत्यपि बोध्यम्। एवञ्चानवकाशत्वात्सप्तमी-

❀ सदाशिवभट्टीयम् ❀

**ङमो ह्रस्वात्**। पञ्चम्या = तदन्तेन। तत्र=उक्तवाक्ये। एतेन विभक्त्यर्थान्वयाय तदन्ते ङम्पदशक्त्या पदार्थैकदेशत्वात् ङमि ह्रस्वान्वयो न स्यादित्यपास्तम्। **लाघवार्थ इति**। प्रकृतोत्तर-सूत्रयोरावश्यकविभक्तिद्वयस्य युगपदुच्चारयितुमशक्यत्वेनान्यतरत्र तद्व्यत्ययस्यावश्यकत्वे इहैव तत्कल्पनं लाघवोद्देशेनेति भावः। ननु सप्तमीनिर्देशे इहाऽचीत्यस्याच इत्यर्थकल्पनमेकम्, उत्तरत्र चाच इत्यर्थकस्यात्रीत्यर्थकत्वकल्पनमपरमिति ज्ञानगौरवेणार्द्धमात्रागौरवस्य निमातव्यत्वात्, प्रकृतानुगुणप्रत्ययोच्चारणे कार्ये सप्तम्युच्चारणसामर्थ्यात्, यथाश्रुतैव ङम इत्यस्यानिश्चितविभक्त्यन्तस्य षष्ठ्यन्ततां निर्णाययेदत आह—**ङम उत्तरेति**। अतो मात्रालाघवमेवाश्रितम्, टाङसीति सूत्रस्थ-भाष्येण मात्रालाघवस्यैवाभ्यर्हितत्वबोधनादिति च गूढो भावः। अन्ये तु पदविषयकप्रश्ने हेतुमाहे-

❀ विषमपदविवृतिः ❀

**ङमो ह्रस्वादचि**। **आवृत्त्येति**। इदमयुक्तम्—ङमंशे पदस्येत्यस्य वैय्यधिकरण्येनान्वयस्या-ऽनुपयोगात्। पदाधिकारस्य विशेष्यत्वादिति भाष्यन्तु अधिकारप्राप्तस्य त्यागायोगादुपरञ्जक-

'दण्डिने'त्यत्र ङमुडभावो–मण्डूकप्लुत्या 'उञि च पदे' इत्यतः 'पदे' इत्यनुवर्त्याजादेः पदस्य ङमुडित्यर्थेन बोद्धव्यः। 'पदस्ये'त्यस्यावृत्त्या सम्बन्धेऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव तदादिविधिप्रवृत्त्या तदलाभः स्यात्। एतदर्थमेवार्चीति सप्तमी-निर्देशः। ङमन्तं यत्पदमित्यर्थेऽपि परमदण्डिनेत्यादावेतद्वारणाय 'पदे' इत्यनुवृत्तिराव-

ॐ अभिनव-चन्द्रिका ॐ

सामञ्जस्याच्चिन्त्यमेतत्। वैयधिकरण्यमेवेति। वस्तुतस्तु इदम्भाष्यमेकदेश्युक्तिः, 'अनिती'त्यादौ पदावयवङमव्यवहितोत्तरत्वविशिष्टाचः सत्त्वेन ङमुडापत्तेः। नच 'उञि च पदे' इति सूत्रात्पद इत्यनुवर्त्त्य 'अजादिपदाव्यवहितपूर्वत्वविशिष्टः पदावयवो यो ङम् तदव्यवहितोत्तरत्वविशिष्टस्य ङमु'डित्यर्थेन न दोष इति वाच्यम्, अश्वस्य पुत्रोऽश्वपुत्रः, न अश्वपुत्रोऽनश्वपुत्र इत्यादौ ङमुडापत्तेः, अश्व इत्यस्याजादिपदत्वान्नुटश्चानश्वपुत्र इति पदावयवत्वाच्च। नच ङम इत्यस्यावृत्तिं कृत्वा ङनन्तपदावयवो यो ङम्—अजादिपदाव्यवहितपूर्वत्वविशिष्टः—तदव्यवहितोत्तरस्य ङमुडित्यर्थेन न दोष इति वाच्यम्, एवमप्यनश्वपुत्रराजन्नित्यादौ ङमुटो दुर्वारत्वात्। ङमन्तमनश्वपुत्रराजन् इति यत्पदन्तदवयवत्वस्य नुटि सत्त्वादश्व इत्यस्याजादिपदत्वाच्च। तस्माद्ध्रस्वात्परो यो ङम्, तदन्तं यत्पदमिति सामानाधिकरण्येनैवान्वय इति निष्कर्षः। अत एव वृषणश्व इत्यादौ णुट्न। नच भाष्योक्तायाः पदे इत्यस्यानुवृत्तेर्वैयर्थ्यमिति वाच्यम्, परमदण्डिनावित्यादौ कार्यित्वनिवेशेन उत्तरपदत्वे चेति निषेधाप्रवृत्त्या तदनुवृत्तेर्ङमुडभावायावश्यकत्वात्। तदलाभः स्यादिति। सामानाधिकरण्येनान्वयबोधं प्रति समानविभक्तिकत्वस्य तन्त्रत्वेन पदे ङम इत्यनेन तादृश-बोधालाभादिति भावः।

ॐ चिदस्थिमाला ॐ

दण्डीति। मध्येऽसम्बन्धायाह—मण्डूकेति। अर्थेन=तत्करणेन। नन्वावश्यकानुवृत्तिकपदस्ये-त्यस्यावृत्त्यैवोक्तार्थलाभे किमिति गुरुभूततथाकल्पनाऽत आह—पदेति। अचीत्यनेनापीति भावः। तत्त्वे एवेति। 'आर्धधातुकस्ये'ड्वलादेरित्यादिग्रहणसामर्थ्यात्। अत एव 'ङःसी'त्यादौ सादेः पदस्येति नार्थः। एतदिति। पदे इत्यनुवृत्त्यैवोक्तार्थलाभार्थमित्यर्थः। एवेनोक्तफलव्यवच्छेदस्तस्या-गतिकगतित्वात्। तत्प्रवृत्तौ च स्वरूपसती सप्तमी निमित्तमिति नात्र दोषः। अत एव 'नेड्वशी'त्यादौ वशादेः कृत इत्यर्थलाभः। नन्वेवं गौरवस्याविशिष्टत्वान्मूलोक्तमेवास्त्वत आह—ङमन्तमिति।

ॐ ज्योत्स्ना ॐ

निर्देशस्य बाधकत्वशङ्का प्रत्युक्ता। एतदर्थमेवेति। लाघवार्थत्वं तु न युक्तम्। उच्चारणकृतगौरवस्य ज्ञानगौरवेण निमातव्यत्वात्। 'मय उञ' इत्युत्तरत्र सूत्रे सप्तमीनिर्दिष्टानुवृत्तेरावश्यकत्वाच्चिन्त्यमेतत्।

ॐ सदाशिवभट्टीयम् ॐ

त्यवतारयन्तोऽग्रिमग्रन्थान्वयमिच्छन्ति। मण्डूकेति। दशसङ्ख्यामसम्बन्धादिति भावः। आवृत्त्येति। एतत्फलन्त्वश्वस्य पुच्छमश्वपुच्छं, न अश्वपुच्छमनश्वपुच्छमित्यत्र ङमुडभावः। अजादेरश्वस्य पदत्वेऽपि ङमन्त-स्य पदत्वाभावाच्चिन्त्यम्। 'अनुवृत्तपदस्थेत्यस्याचीत्यनेन विशेषणत्वेऽपी'ति प्रकृतसूत्रोक्तोवोतीवस्यैव सम्ब-न्धत्वात्। एतदर्थमेवेति। पूर्वोक्तरीत्या लाघवाभावेनात्र व्यत्ययकल्पनमेतदर्थमेव, स्वरूपसत्सप्तम्यास्तत्प्र-वृत्तौ निमित्तत्वादिति भावः। नन्वेवं व्यत्ययप्रयुक्तं गौरवं तवाप्यविशिष्टं, मण्डूकानुवृत्तिश्चाधिकेति मूलोक्त-मेवास्त्विति चेत्तत्राह–ङमन्तेति। एतदसाधारणफलन्तु–परमाट्तिरिति। अटतेः क्विप्, अट्, परमेण

ॐ विषमपदविवृतिः ॐ

तयाऽन्वयप्रदर्शनपरम्। वस्तुतस्तु पदस्येति विशेषणस्य प्रयोजनं वक्ष्यामः। उभयोः सप्तम्यन्तत्वे एवेति। इदमप्ययुक्तम्। 'तीषसहे'त्यादौ तदादिविध्यनापत्तेः। 'ङःसी'त्यादौ

त्यस्येव। अन्तर्वर्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात्। 'उत्तरपदत्वे चे'ति प्रत्यय-लक्षणनिषेधस्तु न, 'माषकुम्भवापेने'त्यादौ 'पदव्यवायेऽपीति'निषेधसिद्धये तस्य

❀ अभिनव-चन्द्रिका ❀

अत एवार्द्धधातुकस्ये'डिति सूत्रे आदिग्रहणञ्चरितार्थम्। नच यत्र विशेषणविशेष्ययो-रुभयोः सप्तम्यन्तत्वं तत्रैव 'यस्मिन्विधि'रितिपरिभाषाया प्रवृत्तिरित्यस्य नोपयोग इति वाच्यम्, इष्टापत्तेः। कार्यित्वमिति। नच 'पूर्वदण्डिप्रिय' इत्यादौ 'दण्डि'न्नित्यत्र उत्तरपदत्वे इति निषेधा-प्रवृत्तये उत्तरपदं मध्यमपदत्वानाक्रान्तमिति वक्ष्यते। तथा च माषकुम्भवापेनेत्यादौ 'कुम्भे'त्यस्य मध्यमत्वाक्रान्तत्वा'दुत्तरपदत्वे' इति निषेधाप्रवृत्त्या णत्वनिषेधस्य सूपपादत्वेन कार्यित्वनिवेशो विफल इति वाच्यं, यद्वृत्त्यारम्भकसुब्निमित्तिका पदसञ्ज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमिति परिष्कारेणादोषात्। वै० 'स्वघटकत्व' 'स्वघटकार्थवदव्यवहितपूर्वत्व', 'स्वघटकार्थवदव्यवहितोत्तरत्वै'-तन्त्रितयसम्बन्धेन। तथाहि—'पूर्वदण्डिप्रिय' इत्यादौ 'पूर्व सु दण्डिन् सु प्रिय सु' एतद्वृत्त्यारम्भक-सुब्निमित्तिका पदसञ्ज्ञा 'दण्डि'न्नित्यस्य चिकीर्षिता, तद्वृत्तिघटकप्रियाव्यवहितपूर्वत्वस्य, तद्वृत्तिघटक-पूर्वाव्यवहितोत्तरत्वस्य च सत्त्वाद्दण्डिन्निति निरुक्तमध्यमत्वाक्रान्तमेवेति न प्रत्ययलक्षणनिषेधः।

'माषकुम्भवापेने'त्यादौ तु वृत्तिद्वयम्, तत्र 'माष आम्, कुम्भ सु' इत्येतद्वृत्तिघटकार्थवदव्यवहित-पूर्वत्वस्याभावान्न कुम्भेत्यस्य पूर्ववृत्तिवैशिष्ट्यम्। 'माषकुम्भ अस् वाप' इत्याकारकवृत्तिवैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन कुम्भपदे सत्त्वेऽपि न तद्वृत्त्यारम्भकसुब्निमित्तिका पदसञ्ज्ञा चिकीर्षितेति—'कुम्भे'त्यत्र प्रत्ययलक्षणलार्थमुत्तरपदत्वे इति निषेधाप्रवृत्तये 'कार्यित्व'निवेश आवश्यकः। नचैवमपि 'अतद्धित' इति वार्तिकप्रत्याख्यानाय 'पदे यो व्यवाय' इति सप्तमीसमास आश्रितो भाष्ये, तथा च 'माषकुम्भवापेन' 'क्षीरपवापेने'त्यादौ फलभेदवारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्त-व्यम्। अन्यथा 'गतिकारकोपपदाना'मिति सुबुत्पत्तेः प्रागेव समासेन—आद्योदाहरणे—पदे परतो यो व्यवायस्तस्याभावेन, अन्त्ये पदे परतः, पदेन व्यवायस्य चाभावेनारम्भप्रत्याख्यानयोः फलभेदो दुर्वारः स्यात्। तथाच 'माषकुम्भवापेने'त्यादौ 'कुम्भ' इत्यत्र पदत्वयोग्यत्वस्य सत्त्वाण्णत्वनिषेधसिद्ध्या

❀ चिदस्थिमाला ❀

'आवश्यकत्वे'ति पाठः। ननु विशिष्टस्य मत्वेन न पदत्वमत आह—अन्तरिति। ननु निषेधेन निर्वाहः सर्वैरुक्त एवाह—उत्तरेति। तत्रैवेति। प्रत्यासत्त्येत्यपि बोध्यम्। तेनेति। उक्तवार्तिकोक्तेनेत्यर्थः। एते-

❀ सदाशिवभट्टीयम् ❀

समासे परमाट्। ततोऽशब्देन षष्ठीसमासे—परमाडः। तत आचारक्विप्, ततः क्विच्, 'तितुत्रे'तिनेट्। अतो-लोपः, अत्रान्तर्वर्तिसुपा पदत्वात्'नपदान्ता'दितिष्टुत्वनिषेधः। पदान्तत्वनिमित्तकत्वेपि न पदान्तादिति निषेधे उत्तरपदस्य कार्यित्वाभावेनेष्टसिद्धिः। नेस्यादाविति। आदिना अति बन्धने, क्विप्, अन्, अन्तः

❀ विषमपदविवृतिः ❀

पदाधिकारस्य विशेषणत्वेन लिट्त्स्वित्यादौ धुट्सिद्धावस्यार्थस्यार्थस्यानुपयोगाच्च। वलादे-रित्यादिग्रहणन्त्वचि स्नु इति वद्वलि परत आर्धधातुकस्येत्यर्थप्रतीतिवारणाय। पदस्येत्यधिकृत-स्यानुवृत्त्यैव निर्वाहे भाष्यकारीयमण्डूकप्लुत्या 'उञि च पदे' इत्यतः पदे इत्यस्यानुवृत्त्याश्रयण-न्तु ङम इत्यस्य षष्ठ्यन्तत्वाश्रयणेनाजादौ पदे ङमो ङमुडित्यर्थाभिप्रायकम्। ङम इत्यस्य पञ्चम्य-न्तत्वे हि अचीत्यस्य षष्ठ्यन्तत्वकल्पना स्यात्। अजादेः पदस्य ङमुडित्यर्थे तु प्रत्यङ्ङर्थ इत्यादौ समासे ङमुडापत्तिः। आद्यन्तौ टकितावित्येतदेकवाक्यतयाऽस्यापि पदादिविधि-त्वात्। अपदादिविधावित्यत्रोपपदविभक्तेरिति न्यायेन कर्मषष्ठीत्वस्यैवापत्तेः। कार्यित्व-

यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । 'तेन निषेधेन सिद्धमि'त्येतन्मूत्रस्थभाष्योक्ति-

अभिनव-चन्द्रिका

कार्यित्वनिवेशो विफल इति वाच्यं, अटतीत्यट्, परमश्चासावट् च परमाट् . तस्मादाचारक्विबन्तात् क्विर्चि'तितुन्रे'तीडभावे परमाट्तिरित्यादौ ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात् ।

नचैवमपि 'यद्वृत्त्यारम्भके'त्यादि नोच्यते, किन्तु सामान्यतः 'स्वघटकत्व,' 'स्वघटकार्थवदव्यवहितपूर्वत्व,' स्वघटकार्थवदव्यहितोत्तरत्वे' तत्रियसम्बन्धेन वृत्तिविशिष्टत्वं मध्यमत्वमित्युच्यते । तथाच परमाट्तिरित्यादौ वृत्तिघटक-ति-प्रत्ययाव्यवहितपूर्वत्वस्य, वृत्तिघटकपरमाव्यवहितोत्तरत्वस्य च सत्त्वान्मध्यमत्वमेवेति 'परमाट्टि'रित्येव स्यान्न तु परमाट्तिरिति, उत्तरपदत्वे इति निषेधाप्रवृत्तेः, तथाच कार्यित्वनिवेशो विफल इति वाच्यं, 'परमलोम्निशयः', 'परमलोम्निचर' इत्यादावुत्तरपदत्वे इति निषेधप्रवृत्तये निरुक्तत्रितयसम्बन्धेन यद्वृत्त्यारम्भकसुब्निमित्तिका पदसञ्ज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमित्यस्यावश्यवक्तव्यत्वात् । अन्यथा 'लोम'न्नित्यस्य मध्यमत्वाक्रान्तत्वेन निषेधाप्रवृत्त्या नलोपो दुर्वारः स्यात् । 'पञ्चगवधन'इत्यादौ 'पञ्चन् जस् , गो-जस् , धन-सु' एतद्वृत्त्यारम्भकसुब्निमित्तकपदसञ्ज्ञायाश्चिकीर्षितायां तद्वृत्तिघटक–टजव्यवहितपूर्वत्वस्य सत्त्वेऽपि तस्यानर्थकत्वेन तद्घटकार्थवद्धनाव्यवहितपूर्वत्वस्य च गोशब्देऽभावात् गोपदं मध्यमत्वानाक्रान्तमेवेति न पूर्वरूपापत्तिः ।

नच 'परमदण्डिप्रिय' इत्यादौ दण्डिंन्नित्यस्य निरुक्तमध्यमत्वानाक्रान्तत्वात्कथन्नलोप इति वाच्यं, परमदण्डिप्रकृतिकसुपः प्रत्ययलक्षणेन तन्सिद्धेः, परमदण्डिन्नित्यस्य मध्यमत्वानाक्रान्तत्वेऽपि उत्तरपदत्वस्याभावात् । नचैवमत्रयंः भृगव इत्यादावुत्तरपदत्वाभावादुत्तरपदेतिनिषेधाप्रवृत्त्या प्रत्ययलक्षणेन पूर्वरूपापत्तिर्दुर्वारेति वाच्यं, वार्त्तिके उत्तरपदं वृत्तिचरमावयवपरमिति स्वीकारेणादोषादिति दिक् ।

### ॐ चिदस्थिमाला ॐ

नैवञ्जातीयका अन्येऽपि ग्रन्थास्तथेति सूचितम् । किञ्चापदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तकविधावेव

### ॐ सदाशिवभट्टीयम् ॐ

अः, षष्ठीसमासे संयोगान्तलोपे अनः । तत आचारक्विप्लिट् आम् , अनाच्चकारेति । अर्वाहऽमन्तस्य पदत्वेप्यजादेः पदत्वाभावान्ङमुण्न युक्तः । तत्रैवेति । इदमुपलक्षणम् ।–अपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेव तत्प्रवृत्तेरित्यस्य । तदसाधारणफलन्तु गणयतेर्विच् गण् , हिनस्तेः क्विप् हिन्–गण्णश्वः, हिन्नश्व इति समासे ङमुट्प्रवृत्तिः । अत एव तत्र नन्वटितं वचनं नियमार्थमुक्त्वा नपदान्तविधाविति भाष्येचक्तम् । अत एव सावपि पदमित्यनेन न फलभेदः । अन्यथा वचनारम्भे गणश्वे न प्राप्नोति ङमुट् , प्रत्याख्याने तु स स्यादेव । अत एव 'तस्मान्नुडची'ति सूत्रे भाष्ये नुकि ङमुडापादितः । अन्यथा तदसङ्गतिः स्पष्टैव । यत्तु नञ्चुमतेतिसूत्रे उद्योतेउक्तं–पदान्तस्थानिके विधावित्यर्थ इति, तच्चिन्त्यम् । परमबुधाविवावसिद्धापत्तेरिति केचित् । बुध् इति

### ॐ विषमपदविवृतिः ॐ

मिति । पदत्वे इत्यस्य पदत्वप्रयुक्ते कार्ये इत्यर्थ इति भावः । इदमुपलक्षणम्—अपदादिविधाविति पर्युदासेन पदान्तविधावेवैतत्प्रवृत्तेः । ननु पूर्वदण्डिप्रिय इत्यादौ नलोपार्थमावश्यकेन मध्यमत्वानाक्रान्त इति विशेषणेनैव माषकुम्भवापेनेत्यत्र पदव्यपायेपीति निषेधःसिध्यतीति उत्तरपदस्य यत्र कार्यित्वमित्यर्थाश्रयणं व्यर्थमिति चेदत्राहुः,—'यणादिपर'मिति निर्देशेन मध्यमत्वानाक्र-

१ अत्रेरपत्यानीत्यर्थे 'इतश्चे'ति ढकोऽत्रिभृग्विति लुकि अत्रय इति रूपम् । एवं भृगव इत्यत्रापि बोध्यम् ।

स्त्वेकदेशिन इति दिक् । 'इको यणची'ति सौत्रो निर्देशः ।

❀ अभिनव-चन्द्रिका ❀

परे तु यद्वृत्त्यारम्भकसुन्निमित्तिका पदसञ्ज्ञा तद्वृत्तिविशिष्टत्वम्—वृत्तिचरमावयवत्वम् । वै० 'स्वघटकत्व', 'स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्वै'तदुभयसम्बन्धेन । अत्रयो भृगव इत्यादौ स्वघटकत्वं व्यपदेशिवद्भावेनेति तत्रापि लक्षणसमन्वयः । 'यद्वृत्त्यारम्भके'त्युक्त्या 'परमलोम्निचरः' 'परमलोम्निशय' इत्यादावर्थवन्ङीप्रत्ययाव्यहितपूर्वत्वस्य सत्त्वेऽपि 'परम सु लोमन् सु' इत्येतद्वृत्त्यारम्भकसुन्निमित्तकपदसञ्ज्ञायाः चिकीर्षितत्वेन ङौ तद्वृत्तिघटकत्वस्याभावेन न लोमन्नित्यस्य वृत्तिचरमावयवत्वरूपोत्तरपदत्वहानिः । द्वितीयसम्बन्धदानेन 'पूर्वदण्डिप्रिय' इत्यत्र दण्डिन्नित्यस्य नोत्तरपदत्वम् । 'अर्थव'दित्युक्त्या पञ्चगवधन इत्यादौ गो इत्यत्र नोत्तरपदत्वहानिः । पञ्चन् जस् गो जस् धन सु इत्येतद्वृत्त्यारम्भकसुन्निमित्तकपदसञ्ज्ञायाश्चिकीर्षितत्वेऽपि तद्वृत्तिघटके टचि अर्थवत्त्वाभावात् । तद्वृत्तिघटकार्थवद्धनाव्यवहितपूर्वत्वाभावस्य सत्त्वाच्च । अत एव 'बहुसेचा'-वित्यादौ बहुच्पूर्वकसेजित्यस्योत्तरपदत्वसिद्धिः । एवञ्च कार्यित्वनिवेशो विफल एव । 'माष-

❀ चिदस्थिमाला ❀

तत्प्रवृत्तिरिति 'न लुमताङ्गे'तिसूत्रे भाष्ये स्पष्टम् । एवञ्च तदेव शरणं तदाह—**दिगिति** । **सौत्र इति** ।

❀ ज्योत्स्ना ❀

**एकदेशिन इतीति । सौत्रो निर्देश इति** । यदा तु 'पदव्यवाये'पीति सूत्रे पदशब्देन पदत्वयोग्यः स्वातन्त्र्येण प्रयोगार्हो गृह्यते, यथोत्तरपदत्वे चेति निषेधप्रत्याख्यानाय 'सुप्तिङन्त'मिति

❀ सदाशिवभट्टीयम् ❀

समुदायस्यापि पदान्तत्वेन तस्य स्थाने भुग्विधानमिति न दोष इत्याशयकमित्यन्ये । **एकदेशिन इति** । उक्तभाष्यविरोधात्, नलुमतेति सूत्रस्थ-न लोपादिविधौ प्लुत्यन्ते इति वार्तिकस्थभाष्यविरोधाच्चेति भावः । स्पष्टञ्चेदं प्रकृतसूत्रे नलुमतेति सूत्रे चोद्योते । अत्रेदञ्चिन्त्यतइति वार्तिकोक्तेः प्लुतेऽपरत्र वार्तिकाप्रवृत्तौ सुकरिणौ, सुसर्पिषावित्यादौ णत्वषत्वयोः प्रत्याख्याने न्यायप्राप्तयोः कथं सिद्धिरारम्भ इति । प्लुत्यन्तइतिवार्तिकदूषकभाष्यं-दूषणान्तरोपलक्षणमिति तु युक्तमुत्पश्यामः । **सौत्र इति** । संहिताया अविवक्षयान्तु 'इको य'णित्यत्र इशिचे-

❀ विषमपदविवृतिः ❀

न्तेत्यस्य पूर्वपदाघटकत्वविशिष्टं यन्मध्यमत्वं तदनाक्रान्ते इत्यर्थः । तत्फलं तु प्रत्यङर्थकृतमित्यादौ न ङमुट् । एवञ्च माषकुम्भस्य वाप इति विग्रहे पूर्वपदाघटकत्वविशिष्टमध्यमत्वानाक्रान्तत्वस्य कुम्भपदे सत्त्वेन प्रत्ययलक्षणप्रतिषेधवारणायोत्तरपदस्य यत्र कार्यित्वमित्यर्थ आवश्यक इति । नचैवमुक्तवार्तिकप्रत्याख्यानेन फलभेद इति वाच्यम्, तत्पक्षेपि यणादिपरमितिनिर्देशेन प्रत्यङर्थकृतमित्यादौ ङमुडभावकल्पनात् । नचैवं कर्मधारयपूर्वपदके परमदण्डिप्रिय इत्यादि-बहुव्रीहौ नलोपानापत्तिरिति वाच्यम्, परमदण्डीति समुदायगतपदत्वमादाय तत्सिद्धेः ।

न च पदव्यवायेऽपीत्यत्र पदपदं पदत्वयोग्यपरम्, 'न पदान्ते'त्यादौ तथैव स्वेन व्याख्यातत्वात्, तथा च कार्यित्वनिवेशो व्यर्थ इति वाच्यम्, पदत्वयोग्यत्वं यदि—प्रादिपदिकसञ्ज्ञकत्वन्तदा पिब भवेति यस्यां क्रियायां पिबभवा, सुन्दरा पिबभवा येषां सुन्दरपिबभवानामित्यादौ पिबेत्यादेः प्रातिपदिकत्वाभावेन पदव्यवायेपीति निषेधानापत्तेः । यदि च प्रातिपदिकत्वतिङन्तत्वैतदन्यतराश्रयत्वं—तदा गौरवम् । माषकुम्भवापेनेत्यत्र 'गतिकारकोपपदाना'मित्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासाश्रयणेन पदपदस्य पदत्वयोग्यार्थकत्वाभावेपि न दोषः । स्पष्टीभविष्यति चैतत्सर्वं-समासप्रकरणे शेखरे । **सौत्रो निर्देश इति** । यत्तु 'तयोर्य्वावचि संहिताया'मिति संहिताधिकारस्य

रुप्रकरणे इति । अत एव 'समः सुटी'त्यादौ प्रश्लेषेण संविधानमिति

॥ अभिनव-चन्द्रिका ॥

कुम्भवापेने'त्यादौ यथा णत्वनिषेधस्स्यात्तथा पूर्वमेवोपपादितम् । अत एव प्रकृतसूत्रार्थप्रतिपादयिषया प्रवृत्तं प्रकृतसूत्रस्थं–परमदण्डिनावित्यादौ 'उत्तरपदत्वे'ति निषेधान्ङमुण्णेति–भाष्यं सङ्गच्छते। नच 'उञि च पदे'इति सूत्रस्थभाष्यासङ्गतिरिति वाच्यं, तस्यैकदेश्युक्तित्वेनादोषात्, प्रकृतसूत्रभाष्यस्य एकदेश्युक्तित्वकल्पनापेक्षया तस्य तदुक्तित्वस्य न्याय्यत्वात् । नच परमाट्निरित्यादौ

॥ चिदस्थिमाला ॥

तथाचान्यत्र भवत्येव । अत एव नित्यमित्युक्तम्, एतेनाणादीत्यत्राप्यण्णादीति पाठः सूचितः, असन्देहाय तत्र तथा पाठः । एतेन तन्निर्देशादयं क्वचिन्नेति, 'इकोचि य'णित्येव वक्तुं युक्तमिति चापास्तम्। अत एव= रुप्रकरणे ततः पूर्वस्य तस्येष्टत्वादेव । अन्यथा सादेशे तदभावापत्त्या तदसङ्गतिः स्पष्टैव । उक्तमिति । तेनैवेष्टसिद्धौ 'स'मिति वार्तिकं न कार्यमिति भावः । तदेवं न्यूनतां परिहरन्प्रतिपादयति—रोः पूर्वेति ।

॥ ज्योत्स्ना ॥

सूत्रात्–'यचिभ'मित्यत्र सुबन्तमित्यनुवर्त्य यजादावसर्वनामस्थाने परतो यस्माद्यजादिप्रत्ययविधिस्तदादिसमुदायस्य तदवयवसुबन्तस्य च भत्वविधानात्सुवाचेत्यादौ वागित्यादेः, सुवाचावित्यादौ तु 'स्वादि'ष्विति योगं विभज्य ततो'ऽसर्वनामस्थाने यची'ति पृथक् छित्त्वा यजादौ सर्वनामस्थाने पूर्वं पदं नेत्येवमुत्तरपदस्य पदत्वे वारिते । दधिसेचावित्यादौ षत्वनिषेधार्थं 'सात्पदाद्यो'रिति सूत्रे पदशब्देन पदादादिः–पदादिरिति—भाष्योक्तपञ्चमीसमासपक्षस्तूपलक्षणम्, पदादित्येव वक्तव्ये आदिग्रहणसामर्थ्यात् । अन्यथा 'बहुसेचा'वित्यत्र बहुच्पूर्वविषये षत्वाभावार्थे वचनान्तरकरणे गौरवापत्तेः । 'न पदान्त'सूत्रे पदेऽन्तः पदान्त इति सप्तमीसमासनिरूपणावसरे स्वयमप्युक्तार्थतयैव व्याख्यातत्वाच्च। यद्वा 'पूर्वदण्डिप्रिय' इत्यादौ नलोपाभाववारणार्थमुत्तरपदत्वे चेति वार्तिके मध्यमपदत्वानाक्रान्तोत्तरपदग्रहणस्यावश्यवक्तव्यत्वान्माषकुम्भवापेनेत्यादौ प्रत्ययलक्षणनिषेधाप्रवृत्तेः 'पदव्यवायेऽपी'तिनिषेधसिद्धिरित्युच्यते—तदोत्तरपदस्य कार्यित्वे एव वार्तिकप्रवृत्तिकल्पने मानाभावात्तन्मूलिका भाष्यग्रन्थे एकदेश्युक्तित्वकल्पनाप्यप्रामाणिकीत्याहुः ।

सौत्रो निर्देश इति । इदञ्चिन्त्यं–'तयोर्य्वावचि संहितायां'मिति संहिताधिकारस्थत्वमुटो वाक्ये संहि-

॥ सदाशिवभट्टीयम् ॥

त्युत्वमपि न स्यात् । पदभेदेन विवक्षाविवक्षे इति तु न युक्तम्, संहितया सूत्रकृत्पाठीदिति सर्वसम्मतत्वात् । यदि सूत्रकृता ङमुट् कृतःस्यात्तदा पदकारेणानुपूर्वीसूत्रमध्ये न भङ्गा स्यादित्याहुः । अत एवेको गुणेति सूत्रेऽद्योतेऽउक्तम्–एकयोगत्वञ्च संहितापाठादेवेति । यदा यदा पदे व्यवाय इति सप्तमीसमासः, अतद्धित इत्यस्य प्रत्याख्यानायाश्रीयते, तदा वापेनेत्यादेर्मध्यमपदत्वानाक्रान्तस्य पदत्वमेष्टव्यन्तञ्चान्यथा न सिध्यतीत्यर्थं कार्यित्वेतिवक्तव्यम् । कृद्ग्रहणपरिभाषाया अनित्यत्वात्तल्लाभः । पदपदं पदत्वयोग्यपरमिति तु न युक्तम् । बहुलक्षणापत्तेः। इदञ्च न्यायसिद्धम् । पदादिविधेरुत्तरपदसम्बन्धित्वेन तद्भिन्नस्याप्युत्तरपदसम्बन्धिनो ग्रहणात् । वार्तिकार्थस्तु अपदादिविधाविति विषयसप्तमी । विषयता च कारके इतिवज्जनकतारूपा, एवञ्च पदादिविधिभिन्नजनकोत्तरपदत्वे प्रतिषेध इति । यदि तु स्वातन्त्र्यमवलम्ब्य 'उञि च पदे' इत्यस्य प्रयोजनं संमृग्यते, तदा पदाधिकारस्य व्यधिकरणान्वयज्ञापनमेवान्तग्रहणस्यैवेति गृहाण । स्पष्टञ्चेदमुञि चपदे इति सूत्रे उद्योते । अत्रानुना । अत्रेति । सर्वनाम्ना प्रकरणपरामर्शे मानमाह—अत एवेति ।

॥ विषमपदविवृतिः ॥

प्रक्रान्तत्वेपि वाक्ये च संहिताया वैवक्षिकत्वेन ङमुटभावोपपत्तौ इदमसङ्गतमिति, तन्न । वाक्ये संहिताया वैवक्षिकत्वेपि संहिताधिकारस्थकार्योघटितनिर्देशस्य प्रायशोऽनुपलम्भेन संहितायां निर्देशप्रयोजनाभावेन च संहिताया अविवक्षाकल्पनायोगात् । नन्वेवमजादौ पदे ङमो

भाष्ये उक्तम्। 'रोः पूर्वस्ये'त्युपलक्षणं रुप्रकरणविधेयस्य। एवमुत्तरत्र रोः पूर्वस्मादित्यपि।

**ॐ अभिनव-चन्द्रिका ॐ**

कार्यित्वनिवेशाभावे ङमुडनिषधो न स्यादिति वाच्यम्, अस्य लक्ष्यस्याप्रमितत्वेनेष्टापत्तेः कर्तुं शक्यत्वात्। लेढीनि लिट्, परमश्चासौ लिट् च परमलिट्। तस्मादाचारक्विबन्ताद्वनिपि 'परमलिह्वा'इत्यादीनामेवास्यापि आरम्भप्रत्याख्यानयोः फलभेदवारणाय अनभिधानस्यैव न्याय्यत्वाच्च। अन्यथा उत्तरपदत्वे इत्यारम्भकल्पे परमलिह्वेति, प्रत्याख्याने च परमलिड्वेति फलभेदः स्यादिति दिगित्याहुः। **प्रकरणविधेयस्येति**। रुप्रकरणीयविधेयाव्यवहितपूर्वस्येत्यर्थः।

**ॐ चिदस्थिमाला ॐ**

इत्यत्र रोरितीत्यर्थः। प्रसङ्गादाह—**एवमिति**। इत्यपि=इत्यत्रापि। मनोरमादिसकलग्रन्थासङ्गतिं ध्वनयन्

**ॐ ज्योत्स्ना ॐ**

तस्या अनित्यत्वादेवाप्रवृत्तेः-सौत्रत्वकल्पनाया निष्प्रमाणत्वात्। यद्वा सौत्रः=सूत्रसम्बन्धी निर्देशो= ङमचो नैरन्तर्येण. ज्ञापकः='इकोचि य'णिति कर्तव्ये 'इकोयणची'तिन्यास आगमशासनानित्यत्वस्य ज्ञापक इत्यर्थः। तत्फलन्तु—सागरं तर्तुकामस्य'—'अणादिसंज्ञार्थानि'। 'अप्लुतकार्यं यणादिकं करोति'। **उपलक्षणमिति**। आदिशब्दसामर्थ्यात् पदत्वयोग्यस्य स्वातन्त्र्येण प्रयोगार्हपदस्योपलक्षणमित्यर्थः।

**ॐ सदाशिवभट्टीयम् ॐ**

**ऊक्तमिति**। रुत्वपक्षे नानुनासिकाद्यापत्तिर्नोक्तेत्यपि बोध्यम्। रुत्वविधावित्यर्थे तु तदसङ्गतिः स्यादिति

**ॐ विषमपदविवृतिः ॐ**

ङमुडित्यर्थं भाष्यमम्मते 'प्रत्यङर्थ' इत्यत्र ङमुडापत्तिः। उत्तरपदस्य कार्यित्वाभावेन प्रत्ययलक्षणनिषेधादिति वाच्यम्, उणादयो बहुलमिति निर्देशेन ङमुटि उत्तरपदस्य कार्यित्वेऽपि प्रत्ययलक्षणनिषेधाश्रयणात्। अन्ये तूणादयो बहुलं', 'यणादिपरं', 'सनाशंसभिक्ष उ'रित्यादिनिर्देशेन ङमुटोऽनित्यत्वं ज्ञाप्यते। तेनाणादिसञ्ज्ञार्थानि, अप्लुतकार्यं यणादिकं करोति, यङन्तप्रक्रियेत्यादिप्रयोगाणां सिद्धिः। 'न पदान्त', 'सोपदादौ', 'पदव्यवायेपी'त्यादौ पदपदं पदत्वयोग्यपरम्। यद्वा 'गतिकारकोपपदाना'मित्यस्यानित्यत्वेन सुबन्तेनैव समासाङ्गीकारात् पदपदं यथाश्रुतार्थकमेव। उत्तरपदस्य कार्यित्वे एवेति निवेशस्तु प्रकृतसूत्रस्थभाष्यविरुद्ध इति माषकुम्भ इत्यादौ न दोष इत्याहुः।

ननु गणेशो वनेश इत्यादावसमासे ङमुट् दुर्वारः, परादिवद्भावेनैश इत्यस्याजादिपदत्वान्ङमः परत्वाच्च। न च पञ्चमीसमासाश्रयणेन वा स्थानिवद्भावः। 'पूर्वत्रासिद्धे न स्थानिव'दिति तन्निषेधात्। न च त्रिपाद्यां नान्तादिवद्भावः, क्षीरपेणेत्याद्यसिद्धेरिति चेन्न। पदाऽवयवङमोऽभावेनादोषात्। न च पूर्वान्तवद्भावेनैकारान्तस्य पदत्वम्, उभयत आश्रयणेनान्तादिवदिति निषेधात्। तस्य पौर्वापर्याश्रयणकत्वेऽपि पदेत्यस्यावृत्त्याऽजादौ परे यत्पदं तदवयवस्य ङमः पदे परतो ङमुडित्यर्थाश्रयणेनोक्तनिषेधप्रवृत्तेः सुलभत्वात्। 'पदावयवङमः परस्याजादेः पदे ङ'मिति व्याख्यानेपि यथाकथञ्चिदत्र ङम्विशेषणस्य पदस्य विशेष्यपदस्य विशेष्यपदभिन्नस्यैव ग्रहणेनादोषात्। एतेन 'ङमः पदस्येति विशेषणं व्यर्थ'मित्यपास्तम्। नचैकदेशविकृतन्यायेन नान्तस्य पदत्वम्, 'अनच्क इन्द्रः सम्पन्न' इत्यादिभाष्यप्रामाण्येन 'समासान्ते' इत्यादिनिर्देशेन चैकादेशरहिते एकदेशविकृतन्यायेन पदत्वाद्यप्रवृत्तेः। तेन 'वनान्तः' 'सान्त' इत्यादौ नलोपरुत्वादि न।

**अत्रानुनासिक। अत एवेति।** अत्रेत्यनेन रुप्रकरणस्यैव ग्रहणं न तु रोरेवेति हेतोरेवेत्यर्थः। न च 'समःसुटी'त्यादिना रोर्विधानेऽत्रेत्यनेन रोर्ग्रहणसंविधानेपि तस्यैवेति रुप्रकरणग्रहणेनेदं तत्साधकमिति वाच्यम्। 'समःसुटी'त्यत्र सकारप्रश्लेषपक्षेपि 'दीर्घादटी'त्यनेन रोरेव विधेयत्वात्। अन्यथा

अयमधिकारः । तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिर्न तु 'मतुवसो'रित्यत्र, तत्सूत्रस्थवार्त्तिकयोश्च । अत्रेति तु-रुप्रकरण एवास्य सम्बन्धो, न त्वग्रे–'ढो ढे लोप' इत्यादावित्यर्थसूचनार्थ–स्पष्टार्थमेव । तुशब्दः–परस्य नित्यं रुत्वं पूर्वस्य वाऽनुनासिक इति विशेषद्योतनार्थः । 'पूर्वस्ये'त्यस्य च–रुस्थानिनः पूर्वस्येत्यर्थो बोद्धव्यः ।

**अनुनासिकात्पर इति** । अत्र–'अनुनासिका'दिति ल्यब्लोपे पञ्चमी, व्याख्यानात् । अयमागमोऽनवयव एव, अवयवत्वे मानाभावात् ।

ॐ अभिनव-चन्द्रिका ॐ

**वार्त्तिकयोश्चेति** । अत एव 'हरिवो मेदिनं त्वा' 'भोः, भगोः, अघो'रित्यादौ नानुनासिक इति भावः । **रुस्थानिनः पूर्वस्येति** । अत एव 'समः सुटी'त्यनेन सकारादेशकल्पेऽनुनासिकसिद्धिरिति भावः । वस्तुतस्तु एतत्प्रकरणविधेयाव्यवहितपूर्वत्वविशिष्टस्येत्यर्थो बोध्यः । अत एव 'समो वा लोप' इति-कल्पेऽप्यनुनासिकः सिध्यति, अन्यथा रुस्थान्यव्यवहितपूर्वत्वस्याभावात्स न स्यात् । **मानाभावादिति** ।

ॐ विद्वत्स्थिमाला ॐ

सिद्धान्तमाह—**अयमिति** । **तेनोत्तरेति** । अन्यथा पूर्वमेव पठेत् । एवव्यवच्छेद्यमाह—**नन्विति** । तद्विषये इत्यर्थः । ननु तत्सूत्रस्योदाहरणस्य भाष्ये दत्तत्वेन तत्र प्रवृत्ताविष्टापत्तिरत आह—**तत्सूत्रस्थेति** । 'वन उपसङ्ख्यानं', 'विभाषा भव'दित्यनयोरित्यर्थः । तदुदाहरणे भाष्येऽनुनासिकाद्यनुच्चारणात् । विधित्वे तु एतद्प्रकरणे इत्यर्थकाऽत्रग्रहणात्प्रवृत्तिर्दुर्वारैवेति भावः । नन्वेवमत्रग्रहणानर्थक्यं सर्वैरुक्तमधिकारादेव तल्लाभादत आह—**अत्रेति त्विति** । पूर्वत्राप्राप्तत्वादेवाह—**नत्वग्रे इति** । वाशब्दवत्तुशब्दोपि स्पष्टार्थ एवेत्याह—**तुशब्द इति** । **विशेषेति** । तस्य स्फुटतया द्योतनार्थ इत्यर्थः । अत एव **तुवाशब्दौ मूले नोक्तौ** । ननु लोपपक्षे रुप्रकरणविधेयतो न पूर्वत्वं, तस्याऽभावरूपत्वादत आह—**पूर्वेति** । एतेनात्रविधिरेव युक्त इत्यादि रत्नाकराद्युक्तमपास्तमिति स्पष्टं **भावप्रकाशे** । **ल्यबिति** । दिग्योगलक्षणा तु नात्र, 'अनुस्वारपरोऽनुनासिकः पूर्वस्य तु वे'ति न्यासेन सिद्धावनुनासिकात्पर इत्यस्य वैयर्थ्यापत्तेस्तदाह—**व्याख्येति** । सकलग्रन्थासङ्गत्यायाह—**अयमिति** ।

ॐ ज्योत्स्ना ॐ

'यङन्तप्रक्रिये'त्यादिप्रयोगाणां सिद्धिः । तथाच निर्देशाः–'आनङ् ऋतः', 'अनङ् सौ', 'उणादयो बहुलम्', 'यणादिपरं गुणः', 'सनाशंसभिक्ष उ'रित्यादयः । विस्तरस्तु परिभाषाप्रदीपार्चिषि प्रदर्शिष्यते । **रुस्थानिनः पूर्वस्येतीति** । लोपपक्षेऽनुनासिकसिद्ध्यर्थमिदम् । 'विसर्जनीयस्य स'इत्यत्र मण्डूका-

ॐ सदाशिवभट्टीयम् ॐ

भावः।अत्रपक्षे रुप्रकरणे वक्ष्यमाणार्थकमिदमधिक्रियते इतीत्यर्थो बोध्यः । **रोःपूर्वस्येतीति** । इत्यत्र रोरितीत्यर्थः । पूर्वत्वञ्चाव्यवधानगर्भं, व्याख्यानात् । तेन चक्रिंस्त्रायस्वेत्यत्र चकाराकारस्य न । एवं परत्र परमपि ।

**इत्यपीति** । इत्यत्रापीत्यर्थः । स्पष्टञ्चेदं सर्वं 'समःसुटी'त्यत्र प्रदीपोद्योतयोः । ननु तत्सूत्रोदाहरणस्य भाष्ये दत्तत्वेन तत्र तत्प्रवृत्ताविष्टापत्तिरत आह–**तत्सूत्रस्थेति** । ननु अधिकारपक्षे–तत्तत्सूत्रैकवाक्यतया समोन्त्यस्यालो रुस्स्यात्पूर्वस्य तु वानुनासिक इत्याद्यर्थात् रोः पूर्वस्येत्यसङ्गतं, तस्य विधेयत्वात्तत्रैवावधित्वेनोपादानासम्भवादत आह–**पूर्वस्येत्यस्य चेति** । 'लोपपक्षेऽनुनासिकसिद्ध्यर्थमाहे'त्यवतरणन्न युक्तम्, अभावस्यापि बुद्धिकृतं पौर्वापर्यं वर्णवदिति शेखरविरोधात् । **अयमागमेति** । प्रत्ययव्यावृत्तये

ॐ विषमपदविवृतिः ॐ

'महाँ इन्द्र' इत्यत्र सत्वस्यासिद्धत्वादप्रवृत्तौ रूपासिद्धेः । वस्तुतस्तु सकारप्रश्लेषपक्षे'ऽत्रे'त्यस्य

खरीति। विसर्गाक्षिप्तस्याप्यवसानस्य न सम्बन्धो, व्याख्यानात्।

❀ अभिनव-चन्द्रिका ❀

चिन्त्यमिदं, सूत्रे परशब्दस्य अवयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन 'उरण्रपरः' 'न य्वाभ्या'मित्यत्रेवानुस्वारेऽवयवत्वावच्छिन्नविधेयताश्रयत्वरूपागमत्वस्वीकारे बाधकाभावात्। अत एव 'महाँ इन्द्र' इत्यादौ 'भोभगो'इति यत्वं सिद्ध्यति। अन्यथा अनुस्वारविशिष्टस्य अपदेन यदागम-

❀ चिदस्थिमाला ❀

कस्य चिदुपमर्देन अविधानात्तद्वन्मध्ये जायमानत्वाच्च तत्सदृशत्वेनागमत्वेऽपि परशब्दस्य समीपपरदेशस्थ-वृत्तित्वेन प्रसिद्धत्वेन पञ्चम्यन्तसाहचर्येण च तस्यैवात्र ग्रहणेनावयववाचित्वाभावेन तद्वदत्र गमका-भावादित्यर्थः। अत एव प्रकारान्तरेण 'पूर्वस्मात्पर' इत्येव व्याख्यातम्, न त्वनुवृत्त्या 'पूर्वस्य पर' इति।

एतेन 'अनुवृत्त्या विभक्तिविपरिणामेन स्वयं व्याख्याय-मनोरमोक्तं लौकिकन्यायापेक्ष-(तदनपेक्ष)मिति दण्डशु-क्तमपास्तम्। एवमैजागमेऽपि बोध्यम्। खरीत्यस्य मण्डूकप्लुत्येकदेशस्वरितत्वप्रतिज्ञाभ्यामनुवृत्तौ गौरवा-त्तस्यापि तत्रैव पर्यवसानाच्चाह—**विसर्गेति। व्याख्येति।** लक्ष्यानुरोधमूलकादित्यर्थः। अपूर्ववार्त्तिककरणे

❀ ज्योत्स्ना ❀

नुवृत्तिः, खर इवावसानस्यापि प्रसज्यते, तद्व्यावृत्तये व्याख्यानं यदि प्राचीनमतेऽवश्यमपेक्षितं तद्वरं मण्डूकानुवृत्तिक्लेशमन्तरेणैव विसर्गाक्षिप्तयोः खरवसानयोर्व्याख्यानादवसानस्य व्यावृत्ति-

❀ सदाशिवभट्टीयम् ❀

आगमत्वस्यावयवत्वघटितत्वेपि। ध्वनितञ्चेदं वृद्धिसञ्ज्ञासूत्रे उद्योते। इतरानुपमर्देन जायमानत्वादस्य तत्त्वेन-व्यवहारः। अवयवत्वे त्वभिमते पूर्वस्येत्यनुवर्त्य पूर्वस्यावयवः पर इत्येव व्याख्यत्, न पञ्चम्या। तत्फलन्तु अनुस्वा-रस्य द्वित्वम्। अन्यथा 'यदागमे'तिन्यायेन विशिष्टेऽच्त्वादचः परत्वाभावेन तन्न स्यात्। यत्र त्वागमस्यापि द्वित्वं दृश्यतेऽनित्यत्वन्तत्र न्यायस्य। प्रकृते तु न्यायसिद्धत्वादस्यार्थस्यैवमेवोक्तम्। एवमैजागमेपि बोध्यमित्याहुः। किञ्चैचोरवयवत्वेऽभिमते 'नय्वाभ्यां पदान्ताभ्यान्तयोश्चैच्वृडि'तिन्यासेन ङमिवैच्चं विदध्यात्। प्रकृते चानु-स्वारकर्म्। **क्षिप्तस्याप्यवसानस्य न सम्बन्ध इतीति।** विसर्गेणानुमितस्य प्रत्यय इत्यादिरूपा-द्व्याख्यानात्तत्कारेण सम्बन्धो नेत्यर्थः। स च स्वप्रयोज्यविसर्गस्थानिकत्वरूपः, खरस्तु नाक्षेपः, फलाभावात्। अत एव खरसम्बन्ध इति नोक्तम्। 'अवसाने न सत्व'मित्येव तु नोक्तं, सर्वत्राक्षेपं वदता इह क्लेशः किमर्थं सोढव्य इत्युपहसितुम्। किञ्चेङ्ह्रस्वात्, उरदित्यादौ शाब्दे भानमपेक्ष्यमिह तु नेति आक्षेपे न दोषः। अत एव प्रकृत-सूत्रे भाष्ये 'सत्व एव कर्तव्ये विसर्गविधानाच्चावसानखरोरुभयोरविसर्गः। अवसान एव कुतो नेति चेत्, शर्पर इति ज्ञापकादिति गृहाणे'त्युक्तं, ततो 'हलीत्यनुवर्तते'इति पक्षान्तरमुक्तम्। ततः 'खरीत्यनुवर्तत'इति च पक्षान्तर-मुक्तम्। एषां पक्षाणां फलभेदमज्ञायावसाने विसर्गं सम्पाद्य पश्चादजादिपदसम्बन्धेऽकृतव्यूहपरिभाषामनङ्गी-कुर्वताऽनभिधानमेवाश्रयणीयम्। तदेतन्मनसिकृत्योक्तं शब्दरत्ने 'सत्यभिधाने हरिः—अयमिति सविसर्गमपि

❀ विषमपदविवृतिः ❀

सप्रकरणे इत्येवार्थो, न तु रुप्रकरणे इति। 'कानाम्रेडिते' इत्यत्र रुप्रकरणस्य विच्छिन्नत्वेन तद्वि-षयेऽनुनासिकानापत्तेः। अधिकारपक्षे रोः पूर्वस्येत्यर्थोऽसम्भवी, 'परस्य नित्यं रुत्वं पूर्वस्य तु वा-नुनासिक' इत्युक्तरीत्या रुणा सहैवानुनासिकविधानकाले रोरभावादत आह—**रोः पूर्वस्येत्यस्येति।**

**अनवयव एवेति।** आगमत्वञ्च प्रत्ययादेशभिन्नत्वे सति साक्षाल्लक्ष्यसंस्कारकतया शास्त्रविहित-त्वम्। एवमेव 'न य्वाभ्या'मितिसूत्रविहितयोरप्यनवयवत्वम्। 'न य्वाभ्या'मिति पञ्चमीनिर्देशेन पूर्व-शब्दस्य तत्रावयववाचित्वाभावात्। अनेन इत्त्व अच-यजं, तस्यापत्यं-ऐयजिः, तस्यच्छात्रा इत्यर्थेऽणेव, न तु च्छ इति भावः। **विसर्गाक्षिप्तेति।** इदमयुक्तम्—आक्षिप्तस्य शाब्देऽनन्वयात्।

१- अन्त्यावयवत्वाय कितमनुस्वारमित्यर्थः।

**सो वक्तव्य इति**। 'समः सुटी'त्यादिसूत्रत्रये 'स' इत्युपसङ्ख्येय—'समः सुटी'त्यत्र मकारं प्रक्लिष्य वा—एतैः सकार एव विधेय इत्यर्थः। एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः। स्पष्टञ्चेदं भाष्ये। विसर्गस्येत्यनेन सत्वविधाने तु गौरवं स्फुटम्। **लोपस्यापीति**। यत्तु—

'उपधारञ्जनं कुर्यान्नमो रुकरणे सति।
लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्॥'

उपधारञ्जनम्=अनुनासिकानुस्वारागमरूपम्। ननोः=नकार-मकारयोः। प्रकृति-भावोदाहरणं—नृन्पाहि—इति। तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषयमिति भावः। अत एव भाष्ये—'समादिषु सत्वं वक्तव्य'मित्युक्तम्। रुत्वपक्षे चानुनासिकाद्या-पत्तिर्दोषत्वेन नोक्ता। ननु लोपपक्ष एव द्वित्वेन द्विमकारस्य सिद्धत्वात्

---

**ॐ अभिनव-चन्द्रिका ॐ**

न्यायेन ग्रहणाभावे यत्नं दुरुपपादं स्यादिति दिक्। **व्याख्यानादिति**। 'खरवसानयोरिति' इत्यत्र

**ॐ चिदस्थिमाला ॐ**

गौरवादाह—**सम इति**। 'सम इत्यस्याग्रेऽनुवृत्ति'रिति तु न, मध्ये सम्बन्धस्यानिष्टत्वादत आह—**इत्यादीति**। आदिना 'पुमः' 'कानाम्रे'इति सूत्रद्वयपरिग्रहः। ततोऽपि लाघवादाह—**सम इति**। 'काना'-मित्यत्र मण्डूकप्लुतिरिति भावः। एवेन रुत्वव्यवच्छेदः। नन्वेवमपि रुत्वादि कुतो नात आह—**एवञ्चेति**। एतैस्तद्विधाने चेत्यर्थः। **तत्तदिति**। सत्वादीनामित्यर्थः। **भाष्ये इति**। 'सम' इति सूत्रे इति भावः। ननु 'वार्तिकेन विसर्गस्य सत्व'मिति सर्वसम्मतं किमिति त्यक्तमत आह—**विसर्गेति**। ऋक्प्रातिशाख्यादि-विरोधं परिहरति—**यत्तु—उपेति**। रुकरणे=क्रियमाणे रौ। **वा**—चार्थे। प्रकृतिभावोऽत्र पाक्षिकी स्वाभाविक्य-वस्थितिर्न तु शास्त्रीयस्तदाह—**प्रकृतीति। प्रातीति**। तत्समाख्यावलेनेति भावः। **तदिति**। ऋगित्यर्थः। इदं द्रढयति—**अत एवेति**। तस्य तच्छाखामात्रविषयत्वादेवेत्यर्थः। अस्योभयत्रान्वयः। अन्यथा रुसाध्यप्रयोगाणां सत्वेनासिद्ध्या तदसङ्गतिस्स्पष्टैव। ननु तयोरनिष्टत्वादेव सत्वमुक्तमत आह—**रुत्वेति**। चोक्ते योज्यः।

**ॐ ज्योत्स्ना ॐ**

कल्पनमित्याह—**विसर्गोक्षिप्तस्यापीति**। **अवसानस्य न सम्बन्ध इति**। अपिना समुच्चितस्य खरस्तु सम्बन्धो भवत्येवेत्यर्थादुक्तं भवति। अत्र हेतुमाह—**व्याख्यानादिति**। वस्तुतस्तु मण्डूका-

**ॐ सदाशिवभट्टीयम् ॐ**

साध्वेवे'ति। अपूर्वकरणे गौरवादाह—**समःसुटीति**। अत्र सपदस्यैवाग्रे सम्बन्धो,न मध्ये सम्बन्धाभावात्। अत आह—**इत्यादीति**। त्रिसूत्र्यां 'स' इति वक्तव्यमिति भावः। ततोऽपि लाघवादाह—**सम इति**। अत्र पक्षे मध्येऽसम्बन्धो व्याख्यानात्। **प्रकृतिभावे वेति**। वा शब्दश्चार्थे। प्रकृतिभावोऽत्र स्वाभाविक्यवस्थिति-र्न तु शास्त्रीयस्तदाह—**प्रकृतीति**। **प्रतिशाख्यत्वादिति**। तत्समाख्यावत्त्वेनेति भावः। वस्तुतस्तत्रापि 'लोपे' इति पूर्वान्वयि, 'वा'शब्द एवार्थ इति न कश्चिद्दोष इत्याहुः। **असिद्धत्वादिति**।

**ॐ विषमपदविवृतिः ॐ**

किन्तु भाष्योक्तरीत्या निर्वाहो बोध्यः। केचित्त्ववसाने रेफस्य विसर्जनीयः, खरि तस्य सो विधेयः, 'शर्परे' इत्यादि विसर्गस्थानिकं कार्यं रेफस्यैव विधेयमित्याहुः। **अप्राप्तिरेवेति**। 'अत्र विसर्गे प्राप्ते' इति मूलं, 'पुमः खय्यी'ति सूत्रे 'पक्षभेदेन ॅकॅपयोः पत्वस्य च प्राप्ता'विति मूलं यदि सत्वं न विधीयते किन्तु रुत्वमेव तदेत्यर्थकमेवेति बोध्यम्। अतएव=रुप्रकरणस्य ग्रहणादेव। दोषत्वेन नोक्तेति। इदमुपलक्षणम्, 'समो वा लोपमेक' इत्यस्य। संस्कर्ता सँस्स्कर्तेत्यनुनासिकाऽ-

'समः सुटी'ति व्यर्थमित्यत आह—**त्रिसकारकमपीति** । 'स्को'रिति लोपस्तु न—अस्यासिद्धत्वात् । 'पुनर्द्वित्वेन त्रिसकारस्य सिद्धि'रिति तु न युक्तं, 'लक्ष्ये लक्षणस्ये'ति न्यायात् । एतेन—'समः सुटी'त्यत्र 'वे'ति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धे 'अनुनासिकात्पर' इति व्यर्थम्—'इत्यपास्तम् ।

ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावोऽत आह—**अनुनासिकवतामिति** । तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्यादिति भावः ।

हयवरट्सूत्रभाष्योक्ते शर्षूपसङ्ख्याने फलमाह—**अनुस्वारवतामिति** । अपिना—कस्य सङ्ग्रहः । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह—**वचनान्तरेणेति** । 'यणो मय' इत्यनेन । एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः । पूर्वत्रासिद्धत्वेन

ॐ चिदस्थिमाला ॐ

वेदे क्वचिदनुनासिकाभावविशिष्टः प्रयोगो दृश्यते चेच्छान्दसत्वेन साध्यः । वस्तुतस्तु तत्रापि 'लोपे' इति पूर्वान्वय्येव, **वा** एवार्थे इति न कश्चिद्दोष इति बोध्यम् । **रस्य**=तस्यापि । लोपेन तदसत्त्वं निराचष्टे—**स्कोरिति** । अस्य='सम' इत्यस्य । अत एव 'झलो झली'त्यपि न, सिच एव तेन लोपाच्च । झलादौ प्रत्यये इत्यर्थाच्च । ननु तदपि पुनर्द्वित्वेन सिद्धमिति तद्वर्थता तदवस्थैवात आह—**पुनरिति** । एतेन=त्रिसकारकरूपासाधनेन । नन्वनुनासिकपक्षे तत्सिद्धावप्यनुस्वारपक्षे तस्यानच्त्वात्तेन व्यवधानाच्च द्वित्वाप्राप्त्या कथं तत्सिद्धिरत आह—**मूलेऽनुस्वारेति** । प्रकृताभिप्रायेणाह—**ननु व्यञ्जनादिति** । बहुव्रीहिरप्यन्यत्र बोध्यः । **विशेषाभाव इति** । तेषामज्व्यतिरेकेण फलान्तराभावादेव च सूत्रं व्यर्थमेवेति भावः । **इदमिति** । 'शरःखय' इतीत्यर्थः । तद्भाष्यन्तु दुर्लक्ष्यो विशेष इति तात्पर्यकं, न सर्वथा तदसत्त्वप्रतिपादकमिति न तद्विरोध इति भावः । **शर्षूपेति** । अकारोपरि तस्य फलन्तूक्तमेव, अत एव प्रागुभयोल्लेखः । मूले—**सकारेति** । 'अचोरे'तीति भावः । नन्वेवमपि—तन्न्याप्रवृत्तिः कुतो नात आह—**एकस्यैवेति** । हि=यतः ।

ननु वचनयोर्युगपत्क्रमेण वा प्रवृत्तौ एकस्यैव विधानापत्तिर्द्वे इत्यस्य सङ्ख्येयपरत्वेन शब्दद्वयस्योच्चारण-साध्यत्वेन तस्य बुद्ध्यारोहावश्यकत्वेन, 'पर' इत्यादिषष्ठ्या कारकविभक्तित्वस्य न्याय्यत्वेन चोच्चारणे इत्यध्याहारेणोच्चारणद्वयस्यैव विधेयत्वादत आह—**पूर्वत्रेति** । 'पूर्वत्रासिद्धीय'मिति तु न, फलाविशेषात् । एवञ्च

ॐ ज्योत्स्ना ॐ

दुरुक्तिक्लेशः स्वेन दूषयितुमयोग्यः, आक्षिप्तस्य शाब्दान्वयप्रतियोगितायाः क्षमते निराकृतत्वात् । परमनिष्कर्षे तु 'खरी'त्येतत्सम्बन्धस्यापि यथा न प्रयोजनं तथा संहितासूत्रे प्रागेवोपपादितम् ।

**इति व्यर्थमितीति** । संस्स्कर्तेति सानुस्वारत्रिसकारकस्य पुँस्कोकिल इत्यादेरुत्तरसूत्रे वाग्रहणानुवृत्त्या चान्यथासिद्धावपि—शार्ङ्गिँश्छिन्धि, नॄः पाहि, कांस्कानित्याद्यर्थं सूत्रस्य सार्थक्याच्चिन्त्यमेतत् । 'नन्वीरनि प्रकृते 'घसेः किच्चे'ति व्युत्पादिते क्षीरशब्दे—चर्त्वस्यासिद्धत्वात्खय्परत्वाभावेनैव

ॐ सदाशिवभट्टीयम् ॐ

झलादेः प्रत्ययत्वाभावाद्व्यर्थमेव स्यादिति । तद्भाष्यन्तु अदुर्लक्ष्यो विशेषोनास्तीत्यर्थकम् , न तु सर्वथा तदसत्त्वप्रतिपादकमिति न तद्विरोधः । नन्वेवं 'प्रार्षभीये'तिप्रतीके'ऽचोरह्वेत्यस्यानावश्यकता सूचिते'तिग्रन्थेन विरोधः, तत्रानावश्यकतेत्यस्य—मूलपठनकर्तुः सूक्ष्मोच्चारणे विशेषाऽविशेषज्ञानासम्भवेन प्रकृतमूलग्रन्थेऽनावश्यकतेत्यर्थकरणेनादोषात् । न तु सर्वथाऽनावश्यकता । नन्वनयोर्युगपत्प्रवृत्तावेकस्यैव द्विरुच्चारणस्योभाभ्यां साधुत्वं बोध्येतेतात आह—**पूर्वत्रासिद्धत्वेनेति** । 'पूर्वत्रासिद्धीयम-

पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यत इति-त्रितस्य निर्वाहो बोद्धयः । 'अनचि च'त्यत्र 'यणो मय' इत्यस्योपसङ्ख्यानात् 'अचो रहाभ्या'मित्यतस्तस्य परत्वं बोद्धयम् ।

**पुमः ख** । 'अम्परे'इति बहुव्रीहिः । **कुप्वोरिति** । 'कुप्वो'रितिसूत्रविधेययो-रित्यर्थः । 'इदुदुपधस्ये'ति सूत्रे'ऽप्रत्ययस्ये'त्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः ।

**अव्युत्पत्तीति** । तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः । **पत्वेति** । इद-मनुनासिकपक्षे । अनुस्वारपक्षे तु—'कुप्वो'रित्यस्यैव प्राप्तिः । अनुस्वारव्यवधानेनो[दु]पध-त्वाभावात् । **पुंक्षीरमिति** । क्षरधातोरुपधाया इत्वेऽच्प्रत्यये क्षीरमिति भावः ।

**नश्छवि** । 'अप्रशा'निति षष्ठ्यर्थे प्रथमा ।

**नॄन्पे** । 'नॄ'निति द्वितीयान्तानुकरणम् । षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वान्न ।

॥ अभिनव-चन्द्रिका ॥

सिद्धे 'विसर्जनीयस्य स'इत्यारम्भसामर्थ्यादिति भावः । **बहुव्रीहिरिति** । पञ्चम्यर्थ इति भावः

॥ चिद्स्थिमाला ॥

क्रमेणैव प्रवृत्तिरिति भावः। प्रयोगमनवाद्यन्यव्यवछेदकत्वकारणक सिद्धत्वेनारम्भस्यैकस्यैवागन्तूनामन्ते इति-न्या-येन विधितात्पर्यविषयत्वेन सिद्धत्वस्त्वपक्षे आह—**द्वितीयस्येति** । सामर्थ्यादाह—**तयोर्मध्ये इति** ।

नतु तस्य वार्तिकत्वेन कथं पूर्वापरभावोऽत आह—**अनचीति** । **बहुव्रीहिरिति** । परग्रहणसामर्थ्या-दिति भावः । विसर्गसङ्ग्रहायाह—**कुप्वोरिति** । मनोरमादिग्रन्थासङ्गतिं ध्वनयन् सिद्धान्तगत्यैव मूलस्य युक्तत्वमाह—**इदुदुपधेति** ।'कविभिः कृत'मित्याद्यनुरोधेनास्यावश्यकत्वमिति भावः । **विभागेति**। तस्यैवाभावादित्यर्थः । यथाश्रुतमूलासङ्गतिं परिहरति—**इदमिति** । तथाच षत्वस्यापि प्राप्ताविति तदर्थो बोध्यः । ननु 'पुंक्षीर'मित्यत्र 'घसेःकिच्च'तीरनि कित्त्वादुपधालोपे 'खरी'तिचर्त्वस्यासिद्धत्वात्खय्परत्व-मेव न । नचाव्युत्पत्तिपक्षः, तथाऽपि पक्षान्तरे दोष एव । 'पुंक्षय' इत्यादिप्रत्युदाहरणसम्भवेऽपि मूला-

॥ ज्योत्स्ना ॥

नैतत्प्राप्तिरित्याशङ्क्य–'क्षरतेर्घसेर्वे'तिनिरुक्तप्रामाण्यात्क्षरतेरच्चि बाहुलकादीकारे प्रत्युदाहरणमेतदित्याह–

॥ सदाशिवभट्टीयम् ॥

द्वित्वे' इत्येतदभिप्रायकं 'परत्वान्तरङ्गत्वाभ्यां यणोमयइत्यस्यैव पूर्वप्रवृत्ति'रिति समाधानान्तरं बृहच्छेखरोक्तं-तु नोक्तम्। फले विशेषाभावेन तदप्रवृत्त्याऽस्यैव न्याय्यत्वात् । विसर्गसङ्ग्रहायाह—**कुप्वोरिति** । द्विवचना-पपत्तिस्तु ककारे पकारे च द्वयोर्द्वयोरेव प्राप्त्या बोध्या । एवमेव भाष्येपि बोध्यम् । **इदमिति** । एवञ्च षत्व-स्यापि प्राप्ताविति तदर्थो बोध्यः। **नो[दु]पधेति** । अन्त्यादलोऽव्यवहितपूर्वस्यैव सा सम्भवेति भावः। **उपधत्वे-**

॥ विषमपदविवृतिः ॥

-नुस्वारघटितरूपस्योदाहरणत्वेन प्रदर्शनादित्यपि बोध्यम् । **पूर्वं प्रवृत्त्येति** । इदमयुक्तम्—'पूर्वत्रासिद्धीयमद्विर्वचन' इति परिभाषया परद्वित्वस्यैव पूर्वं प्रवृत्तेर्युक्तत्वात्त्रितस्य निर्वाह इति ।

केचित्तु 'एकस्यां व्यक्तौ'विति न्यायेन न पुनर्द्वित्वम् , लक्षणपदस्य कार्यार्थकत्वात्। अत एव सोषुप्यतेः सनि सोषुप्तिषत इति । अत द्वित्वस्योक्तन्यायेनाप्रवृत्त्या भाष्यकारीयानभ्यासग्रहणप्रत्या-ख्यानस्य निर्वाह इत्याहुः । **सूत्रविधेययोरिति** । तयोर्विधायकस्य शास्त्रान्तरस्याभावादिदं व्यर्थम् ।

ननु 'घसेः किच्च'तीरनि कित्त्वादुपधालोपे जातस्य चर्त्वस्यासिद्धत्वात्खय्परत्वमेव नास्तीत्याशङ्क्याह–

एवं कानित्यत्रापि । **चादिसर्ग इति** । 'शर्परे' इति सूत्रात्तदनुकर्षश्चेनेति भावः ।

**येन नेति**। 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक' इति न्यायेनेत्यर्थः।

❀ अभिनव-चन्द्रिका ❀

**प्रकृतिप्रत्ययविभागाभावादिति** । प्रकृतिप्रत्ययविभागज्ञानप्रयोज्यकार्याभावादित्यर्थः । **अवश्यप्राप्ताविति** । अवश्यंशब्दपर्यायावश्यशब्देन प्राप्तिशब्दस्य समासः । अत एवा'वश्यकाधमर्ण्ययो'रिति निर्देशः सङ्गच्छते, अन्यथा-अवश्यंशब्दस्य योपधत्वाभावाद्योपधादिति वुञनापत्तेः ।

बाध्यत्वे बीजञ्च-बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयताविशिष्टान्यतमत्ववद्विषयताप्रयोजकपदघटितत्वम् । वै० 'स्वव्यापकतावच्छेदकत्व', 'स्वव्यापकतावच्छेदकवैशिष्ट्याभाववत्त्वो' भयसम्बन्धेन । द्वितीयसम्बन्धे वै० 'स्वव्यापकत्व', स्वव्याप्यत्वाभाववत्त्व, 'स्वाश्रयव्यधिकरणविषयतावृत्तित्वे'तन्त्रितयसम्बन्धेन । मूलन्तु प्राचामनुसारेण । 'वासः क्षौम'मित्यादौ यथा जिह्वामूलीयो न भवति तथान्यत्र निरूपितम् । **तदप्राप्तियोग्येऽचारितार्थ्यमिति** । इदमुपलक्षणम् ।

❀ चिद्स्थिमाला ❀

सङ्गतिरेवातः 'क्षीरं क्षरते'रिति निरुक्तानुरोधेनाह—**क्षरेति** । अन्वयायाह—**प्रेति** । तयोर्भेदविवक्षया, 'प्रकृतिव'दित्यस्यानिलत्वेन चाह—**षष्ठ्या इति** । नन्वेवं नलोपापत्तिरत आह—**नलोप इति** । तुरप्यर्थे । 'खरवसानयो'रित्यस्य बहुदूरत्वादाह—**शर्परे इति** । एतेन स्थानिभूतविसर्गः पक्षेऽनेन स्थाप्यते इत्यपास्तं, तस्य समुच्चायकत्वात् । न्यायस्वरूपमाह—**येन नेति** । सन्दिग्धत्वात्कान्तार्थमाह—**येनेति** । कर्त्तरि

❀ ज्योत्स्ना ❀

**क्षरधातोरित्यादि** । [३८१पृष्ठे] **विषयभेदे कथं बाधकत्वमिति** । समानफलकत्वं वा विरोधो वा बाध्य-

❀ सदाशिवभट्टीयम् ❀

'त्वे चे'ति ह्रस्वः । यद्वा ऊपधेति च्छेदो बहुव्रीहिश्च । **सौत्रत्वाच्चेति** । विभक्त्युत्पत्तये जातप्रातिपदिकत्वमादाय प्राप्तनलोपस्य प्रकारान्तरेणाशक्यवारणात् । एतेन 'प्रकृतिव'दितिप्रत्ययान्तत्वेनाप्रातिपदिकत्वान्न लोप इत्यपास्तम् । 'क्षिय' इत्यतो वैलक्षण्यं स्पष्टमत्र सूक्ष्मदृशाम् । लुगर्थं सौत्रत्वस्यावश्यकत्वाच्च ।

[बृहच्छेखरे तु—"ननु वचनयोर्युगपत्प्रवृत्तौ क्रमेण वा प्रवृत्तावेकस्यैव विधानापत्तिः। 'द्वे'इत्यस्य सङ्ख्येयपरत्वेन शब्दद्वयस्योच्चारणसाध्यत्वेन तस्य बुद्ध्यारोहावश्यकत्वात्,यर इति षष्ठ्याः कारकविभक्तित्वस्य न्याय्यत्वाच्च,उच्चारण इत्यध्याहारेणोच्चारणद्वयस्यैव विधेयत्वादिति चेन्न । पूर्वत्रासिद्धत्वात्परत्वाद्वा शास्त्रयोः क्रमेण प्रवृत्तिः । तत्र प्रयोगसमवाय्यन्यवर्णोच्चारणवदेकतकारोच्चारणस्य सिद्धत्वेनैकस्यैव विधितात्पर्यविषयता, तत्रैकस्य द्वितीयोच्चारणस्यैकेन साधुत्वबोधनेपि द्वितीयेन तयोर्मध्येऽपरस्य द्वितीयोच्चारणस्यासाधुत्वबोधने क्षत्यभावादिति दिक्—" इत्युक्तम् ।]

**कुप्वोः**।अत्र ≍क≍प इति विधेयं, ककारस्येत्त्वे लोपेन निवृत्तिः। अयमादेश एव, साहचर्यात्। उच्चारणसामर्थ्यान्न गः। ककारोच्चारणं हि जिह्वामूलीयोच्चारणाय, न हि गकारे तत्सम्भवति । द्वितीयेऽकारस्यानुनासिकत्वेन निवृत्तिः। परस्य पूर्ववत् । 'उच्चारणार्थवर्णरहिते लक्षणे'ति शब्दरत्नोक्तन्तु न युक्तम्। स्वमते विधेयबोधके लक्षणानङ्गीकरात् । प्रसङ्गान्न्यायार्थमाह—**येन नेत्यादेरिति** । अस्य न्यायस्य सर्वथा निरवकाशत्व-

❀ विषमपदविवृतिः ❀

**क्षरधातोरिति** । 'क्षीरं क्षरतेर्वा घसेर्वे'ति निरुक्तप्रामाण्यादिति भावः । 'अवश्यं प्राप्ता'विति पाठः ।

१. उकारोपधत्वाभावादिति तदर्थः। एवञ्चोपसर्जनत्वाद्ध्रस्व इति तत्त्वम्। 'नोदुपधे'त्येव क्वचित्पाठः।

२. [ ] एतच्चिह्नान्तःस्थः पाठः—३८१ पृष्ठीय-सदाशिवभट्टीयद्वितीयपङ्क्तौ 'न्यास्यत्वा'दित्यनन्तरमुचितः, चिदस्थिमालायान्तथैवोपलब्धेः, औचित्याच्च ।

'येन ने'त्यादेर्यत्कर्तृकाऽवश्यप्राप्ताविल्यर्थः, नन्द्वयस्य प्रकृतार्थदाढ्यर्बोधकत्वात्। 'प्राप्त' इति भावे क्तः। तदप्राप्तियोग्यविषयेऽचारितार्थ्यं हि बाधकत्वे बीजम्। तदुक्तं 'शर्पूर्वाः' इति सूत्रे भाष्ये-"शर्पूर्वा इत्येतद्धलादिः शेषस्य बाधकम्। ननु विषयभेदे कथं बाधकत्वम्? इदं तावदयं प्रष्टव्यः—यदि तन्नोच्येत किमिह स्यात्? हलादिःशेषश्चेत्-नाप्राप्ते तस्मिन्नारम्भादिदं तद्बाधकं भविष्यति-"इति। 'अजादेर्द्वितीयस्ये'ति सूत्रे भाष्येऽपि स्फुटमेतत्।

ॐ अभिनव-चन्द्रिका ॐ

तदप्राप्तियोग्येऽचारितार्थ्यविशिष्ट—कृते चारितार्थ्यस्य, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टकृतेऽचारितार्थ्यस्य, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्ट-कृतेऽचारितार्थ्यविशिष्टोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैयर्थ्यसम्भावनायाः, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टोत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावनायाश्च। तत्र प्रथमबीजेन स्वप्रवृत्तियोग्यातिरिक्तत्वेन, द्वितीयचतुर्थाभ्याम्—स्वप्रवृत्तियोग्यातिरिक्तत्वेन, स्वविधेयघटितातिरिक्तत्वेन च,

ॐ चिदस्थिमाला ॐ

तृतीया, सतिसप्तमी चेति भावः। अवश्यत्वलाभर्थं तमाह—नन्द्वयेति। अत एव 'येन प्राप्ते' इति नोक्तम्। उक्तार्थसाधनायाह—प्राप्ते इति। कर्माद्यधातुप्रयोगाऽन्वयायोग्यत्वादिति भावः। एवञ्च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाध इति बोध्यम्।

अत्र हेतुमाह—तदप्रेति। सामान्यशास्त्राप्रेत्यर्थः। हि=यतः। न तु विरोधादिति भावः। सप्तम्यन्तेन सूचितं तत्रैव कालादिभेदेन चारितार्थ्ये एव बाध इति बोध्यम्। अन्यथा सर्वथानवकाशत्वेनैव बाधे सिद्धे एतत्कथनादिवैयर्थ्यापत्तिः। अस्ति चात्र सत्वप्रवृत्तेः पूर्वमस्य चारितार्थ्यं सम्भवात्, ततो विसर्गस्य सत्त्वेऽपि जिह्वामूलीयादिविधिना तत्सम्भवात्। अत्र सम्मतिमाह—तदुक्तमिति। इदमिति। 'यत्' इत्यादिः। तत्र हि प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीय-

ॐ ज्योत्स्ना ॐ

बाधकभावे प्रयोजकः, यथा 'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याये'त्युक्तावोदनोपसेकरूपस्य फलस्य तुल्यत्वाद्दध्नस्तक्रेण बाधः। यथा च वेदे 'नैवारश्चरुर्भवति, नैवारश्चरुर्नखावपूताना'मित्युक्ते-तुषविमोकरूपस्य फलस्य तुल्यत्वाद्व्रीहीनवहन्तीति सामान्यतः प्राप्तस्यावहननस्य नखावपवनेन बाधः। तथा विरोधमात्रात्क्वचिद्बाध्यबाधकभावः, यथा'ष्टाश्रिर्यूपो भवति वाजपेयस्य चतुरस्र'इत्यष्टाश्रित्वस्य चतुरस्रत्वेन। प्रकृते च विषयभेदात्समानफलकत्वाभावः। नापि विरोधः, शास्त्रतात्पर्यविषयभूतायामितरनिवृत्तौ परस्परविरोधसद्भावेऽपि शब्दजन्यप्रतीतिविषये आदिभूतहलः सर्पूर्वखयश्च शेषे शास्त्रयोस्तदभावात्। सिद्धान्ते तभ्यासावयवसंस्कारकत्वमात्रेणोभयोः समानफलकत्वाद्बाध्य-

ॐ सदाशिवभट्टीयम् ॐ

रूपसिद्धबाधकत्वमात्रानुवादकत्वे वक्ष्यमाणभाष्यासङ्गतिरत'स्तक्रकौण्डिन्ये'ति न्यायसिद्धस्याऽप्यनुवाद इति वक्तव्यम्। एवञ्च तदुभयसाधारणं बीजमाह—तदप्राप्तीति। उक्तन्यायेन तदपवादौ मा भूताम्, अनयोरसिद्धत्वात्। तस्मिन् कृते तु स्याताभेवेति शङ्कते—न चेति। नन्वर्थाधिकारात्खरवसानयोरिति विहितस्यैव

ॐ विषमपदविवृतिः ॐ

'लुम्पेदवश्यमः कृत्ये' इति कृत्य एव लोपस्मरणादिति बोध्यम्। भावे क्त इति। 'नपुंसके भावे क्त'

**न तु शर्परं इति** । न चास्य विसर्गस्य≍क≍पौ दुर्वारौ, किञ्चास्यैव तौ स्यातां, 'खरवसानयोरि'ति विहितस्य तु एतयोरसिद्धत्वात्सत्वमेव स्यादिति वाच्यं, 'शर्परे' इति सूत्रं 'कुप्वो'रित्यत्रानुवर्त्य शर्परयोः कुप्वोः–≍क≍पयोरपवादो–विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात् । स्पष्टञ्चेदं भाष्ये ।

ॐ अभिनव-चन्द्रिका ॐ

तृतीयेन स्वप्रवृत्तियोग्यस्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन, पञ्चमेन भविष्यदपवाद-

ॐ चिदस्थिमाला ॐ

द्विर्वचनेन बाध उक्तः । अपिना मिदचोन्त्यादिति सूत्रभाष्यादिपरिग्रहः । अधिकं परिभाषेन्दुशेखरे द्रष्टव्यम् । खण्डनकाराद्युक्तदोषमुद्धरति—**नचेत्यादिना** । 'वासः क्षौम'मित्यादौ शर्परे **इति** विहित-विसर्गस्यापीत्यर्थः । अपिना 'खरवे'तिविहितनत्समुच्चयः । एतदग्रे समागतेन विसर्जनीयस्येत्यनेन नस्यैव परामर्शे विनिगमकाभावादिति भावः । विनिगमका**नन्तरे**तिन्यायसत्वेरे त्वाह—**किञ्चेति** । अस्यैव शब्दाधिकारेण परामर्श इति भावः । विहितस्येत्यस्य—सत्वमेवेत्यन्वयः ।

**असिद्धत्वादिति** । सत्वनद्वृष्टयेति शेषः । तदाह—**सत्वमेवेति** । विसर्जनीयस्येतीति भावः । एक-वाक्यत्वासम्भवादाह—**वाक्येति** । एतेन 'शर्परे ने'त्येव सूत्रं कार्यमित्यपास्तम् । अधिकमग्रे द्रष्टव्यम् ।

ॐ ज्योत्स्ना ॐ

बाधकभावः । एवमन्यत्रापि यथायथमुपपादनीयं, विस्तरस्तु परिभाषाप्रदीपार्चिषि निरूपितो द्रष्टव्यः ।

ॐ सदाशिवभट्टीयम् ॐ

स्यातामित्यत आह—**किञ्चेति** । अयम्भावः—अर्थाधिकारे सत्वस्यासिद्धत्वस्य च बाधः कर्तव्य इति हेतोः शब्दाधिकार आश्रीयते । **अनुवर्त्येति** । 'ने'त्येव सिद्धे विसर्जनीयवचनाद्बाध्यसामान्यचिन्तेति तु न युक्तं, बाध्यसामान्यचिन्ताङ्गीकारेऽ'नचि चे'ति द्वित्वस्याप्यनापत्तेः । नचेष्टापत्तिः, मानाभावात् ।

न चानुवृत्त्या वाक्यभेदेन व्याचक्षाणस्य तवापि 'इदुदुपधस्ये'ति षत्वबाधाय तच्चिन्तावश्यकत्वेन द्वित्वबाधो दुर्वार इति वाच्यम्, अनुवर्त्य वाक्यभेदेन 'कुप्वो'रित्यस्य सम्बन्धेन कवर्गपवर्गयोर्बाधप्राप्तावपीतरत्र बाधकल्पने मानाभावात् । वस्तुतस्त्वर्थाधिकारपक्षैकवाक्यतया शब्दाधिकारपक्षेपि न बाध्यसामान्य-चिन्ताश्रयणं, द्वित्वबाधाबाधाभ्यां फलभेदात् । किन्तु 'कुप्वो'रित्यत्रैवोत्तरत्राप्यनुवर्त्य व्याख्येयम् । कुप्वो-रित्यतः परश्चार्थाधिकार एवेति स्पष्टमुद्योते । परत्येथतीति सूत्रस्थ—परेतु—मतरीत्यानभिधानमुक्तन्तन्न युक्तं पश्यामः, 'कुप्वो'रित्यत्र चाद्विसर्गलाभानापत्तेः। तथा वक्तुमशक्यत्वाच्च । ननु चेन पक्षे षत्वं निषिध्यता-मित्युक्तमेवेति चेन्न, तथा सति 'सोपदादौ' 'इणः षः' 'कस्कादिषु' 'इदुदुपधस्ये'त्यादीनां षत्वनिषेधपक्षे चरितार्थानां≍क≍पबाधकत्वानापत्तेः । चाद्विसर्गविधाने त्वर्थाधिकारात्**खरवेति** विहितविसर्गस्यैवादेश इति चारितार्थ्याभावाद्बाधकमेव । निषेधे तु स एवेति सार्थक्यं स्यादेव । उत्तरत्राधिकारे मानन्तु सर्पिष्कुण्डिका-शब्दपाठस्य ज्ञापकत्वप्रतिपादकपरं भाष्यम् । अन्यथा पक्षप्राप्त≍क≍पबाधनेन चारितार्थ्यात्तदस-ङ्गतिः स्यात् । **अदोषादिति** । एवञ्च शब्दाधिकारेपि बाधमन्तरा सार्थक्याभावादर्थाधिकार एवेति भावः । शर्परे विहितस्य षत्वमपि नेत्युद्योते स्पष्टम् । यद्यपि 'शर्परे' इति सूत्रे स्थानिबोधकस्य विसर्जनीयपदस्य 'खरवसानयो'रित्येतन्मात्रविहितबोधकत्वेनार्थाधिकारेणात्रापि तादृशविसर्गस्यैव ग्रहणेन 'शर्परे' इति विहिते

ॐ विषमपदविवृतिः ॐ

इति विहितः, 'गत्यर्थाकर्मके'ति विहितो वा सकर्मकेभ्योऽपि भवतीति भावः । अत्र यद्वक्तव्यं

वार्त्तिके कान्ग्रहणं शक्यमकर्तुमित्याह—यद्वेति । एवं सम्ग्रहणमपि त्यक्तुं शक्यम् । पुम्ग्रहणं त्वावश्यकमेव । अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः । एष्विण इति । गणे कृतमत्वषत्वानामेव पाठादिति भावः । ≍क≍पयोरपवाद इति । 'तद्धिहितविसर्गस्यापी'त्यपि बोध्यम् । 'काँःकानि'ति वीप्सायां द्वित्वम् ।

## ॐ अभिनव-चन्द्रिका ॐ

विषयातिरिक्तत्वेन चोत्सर्गे सङ्कोचो बोध्यः । विस्तरस्तु परिभाषेन्दुचन्द्रिकायां द्रष्टव्यः ।

## ॐ चिदस्थिमाला ॐ

एवमिति । अनया रीत्येत्यर्थः । तस्याकृतिगणत्वादिति भावः । नन्वतः कृकमीत्यग्रे 'इणः षः' इत्यस्यात इति दर्शनाद्विवृत्त्या कथमिदमत आह—गणे इति । तथा च यथापठितसाधुत्वबोधनमेवानेनेतिभावः । एतेनेणः इत्यनुवर्तते इति दण्डिरत्नाकराद्युक्तं, संपुमोर्वार्तिकेनैव सत्वमिति त्रयाणां पाठेन सर्वमपि वार्तिकं त्युत्यजमिति—पुंस्कोकिल इत्यादौ षत्वापत्तेः तन्नेति च दण्डयुक्तं चापास्तम् । ननु कुप्वोरिति विहितपाक्षिकविसर्गेऽस्य चारितार्थ्यात्कथं तदपवादत्वमिति चेन्न । अर्थाधिकारेण 'खरवे'तिसूत्रमात्रविहितविसर्गस्यैव सत्वाद्यङ्गीकारात् । एवं 'सोपदादा'वित्यादपि तयोरपवादः । एवञ्च मूलसुत्रलक्षणमवश्यं वाच्यं, तदाह—तद्धिहीति । मूले—कस्क इति । 'कः काऽत्रे'ति-

## ॐ ज्योत्स्ना ॐ

पदान्तत्वमिति । एवञ्च 'झलाञ्जशोऽन्त' इत्यनेन विधीयमानं पदान्ते जश्त्वं नानुपपन्नमिति भावः । भाष्ये ध्वनितमेतदिति । तत्र हि 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्त' इति पक्षे आलृयेत्यत्र 'ह्रस्वस्य-

## ॐ सदाशिवभट्टीयम् ॐ

प्रसक्तिरेव न, तथापि पूर्वत्रासिद्ध इत्येतद्बाधकल्पनापेक्षयाऽर्थाधिकारत्याग एव युक्त इति भावः । एतेन 'कस्कादिषु चे'तिसूत्रेऽनुवृत्तविसर्जनीयपदस्यान्यानुज्जीवितविसर्गपरत्वमवश्यं वक्तव्यम्, अन्यथा तस्य ≍क≍पादेशबाधकत्वानुपपत्तिः । ≍क≍पादेशप्राप्तियोग्ये तत्सूत्रविहित'चादिसर्ग' इत्युज्जीवितविसर्गेऽस्य चरितार्थस्य सत्वस्य जिह्वामूलीयबाधकत्वानापत्तेरित्यपास्तम् । तस्य निरुक्तरीत्याऽस्यापि दोषस्य शङ्काप्रवेशात् 'शर्परे ने'ति सूत्रगार्थे विसर्गग्रहणेन बाधकद्वितीयसूत्रसम्पादनद्वारा जिह्वामूलीयबाधस्य वक्तुं शक्यत्वेपि स्वदेशस्थेन द्वितीयवाक्यार्थेन जिह्वामूलीयस्य बाधकल्पने 'पूर्वत्रासिद्ध'मित्येतद्बाधकल्पनापत्त्यात्रैवानुवर्त्य वाक्याधिकरणम् । एतेनानुवृत्त्यभावेपि बाधकताबीजसत्त्वेन किमर्थमुत्तरत्राऽनुवृत्तिरित्यपास्तम् । षत्वापत्तेरिति । 'पुंस्काम्यती'त्यादाविति भावः । इदन्तु बोध्यम्—कांस्कान्, संस्कृत इति गणे पाठ्यमिति । अत्र किं लाघवमिति तु चिन्त्यम् । नन्व'तः कृकमी'त्यत्र 'इण' इत्यस्य विच्छेदात्कथमिदमित्याह—गणे इति । नन्वेवं 'पुम्ग्रहणं त्वावश्यकमेवे'ति कथमुक्तं, तत्र यथापठितसाधुत्वस्य वक्तव्यत्वेन प्रकृते कृतषत्वपाठेपि दोषानवकाशादिति चेन्न । 'कांस्का'नित्यादेरनुस्वारानुनासिकोपेतयोः पाठेन 'संस्कृत' इति पाठेन च निखिलरूपसङ्ग्रहेपि पुंशब्दविषयेऽनन्तप्रयोगाणां पाठकल्पने गौरवापत्तेः । 'षत्वापत्ते'रितिपूर्वग्रन्थस्तु दोषोपलक्षणमित्याहुः । केचित्तु पुंम् इति पठित्वा 'कुप्वो'रिति सम्बन्धादतिप्रसङ्गं निराकृत्य—यद्वा 'पुमः सः' 'अपदादौ' 'इणः ष'इति संन्यस्य तस्याप्यनावश्यकतां ब्रुवते । वस्तुतः 'सम्पुका'निति पठित्वा एतेषां विसर्गस्येति व्याख्यानेन न कोप्यतिप्रसङ्ग एवेति बोध्यम् । वस्तुतस्तु 'यद्वे'तिवदतो मूलकारस्य कस्कादेराकृतिगणत्वात् सत्वमित्येव तात्पर्यं, न तु त्रयाणां पाठे, सूत्रत्रये सपदकर्तव्यतापेक्षया प्रत्युत गौरवेण पक्षान्तरानुत्थितिप्रसङ्गात् । तथा च पुंशब्दे षत्वापत्तिरिति सर्वमनाविलम् । विसर्गपक्षे सार्थक्यात्कथमिदमित्याह—तद्धिहितेति । 'अर्थाधिकारा'दित्युक्तं प्राक् । यद्वा शब्दाधिकारे उत्तरविधीनां सर्वथा निरवकाशत्वेन

**संहितायाम्** । संहिता च—स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम् । ततोऽधिकार्धमात्राकालेनोच्चारणे एतदधिकारोक्तकार्यव्यावृत्तये इदम् । तदधिककालव्यवाये तु न साधुत्वं, नापि बोध इष्यते इति—वृद्धा इति; तेषां शास्त्रविषयतैव नास्ति भावः ।

**छे च** । 'छे' इत्यकार उच्चारणार्थः, तेनाच्छिन्नमित्यत्र तुक् । 'ह्रस्वस्य पिती' त्यतो 'ह्रस्वस्ये'ति 'तु'गिति च वर्त्तते । **जश्त्वेनेति** । स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः, एवं नञ्पूर्वाच्छादयतेर्डे अच्छशब्द इति पदान्तत्वं **बोध्यम्** । स्पष्टश्चेदममरटिप्पणे ।

---

ॐ अभिनव-चन्द्रिका ॐ

**उच्चारणमिति** । अर्द्धमात्राधिककालाव्यवायेनोच्चारणमित्यर्थः । **षष्ठ्यर्थे पञ्चमीति** । वस्तुतस्तु

ॐ चिद्स्थिमाला ॐ

नाटकप्रयोगस्तु संहिताया अविवक्षया बोध्यः, अस्य तदधिकारे पाठात् । **संहितायामिति** । यद्यपीदमिकोयणचीत्यतः प्रागेव वक्तव्यं, तथापि सूत्रक्रमानुरोधेनात्रोक्तम् । ननु वर्णव्यवाये तस्मिन्नितीति सिद्धं, तच्छून्यकालव्यवाये तु तथानुष्ठितज्योतिष्टोमादेः फलाजनकत्ववत्तेषां तत्त्वेनासाधुत्वेन शास्त्राप्रवृत्त्याऽयं व्यर्थ इति चेन्न, सूत्रमते तद्यवेतस्यापि साधुत्वबोधनद्वारा तद्व्यावृत्त्याऽस्य साफल्यात् । अत एवावग्रहादौ संहिताधिकारबहिर्भूतानङादिसिद्धिस्तदाह—**संहिता चेति** । एतेन पूर्वविरुद्धमिदमित्यपास्तम् । उक्तहेतोराह—**एतदिति** । नन्वेवमतिप्रसङ्गापत्तिरत आह—**तदधिकेति** । मुहूर्तादीत्यर्थ । ननु स्वच्छशब्दस्य निर्मले रूढत्वात्तस्यापदान्तत्वेन कथं जश्त्वमत आह—**स्वेति** । **के इति** । 'सति निष्पन्न'इति शेषः । एवमग्रेऽपि । स्वच्छेति सुपूर्वकस्येति पक्षे आह—**एवमिति** । ननु माङ् माने इत्यस्य ग्रहणं कुतो न, माच्छन्दइत्यादि-

ॐ ज्योत्स्ना ॐ

पिती'ति तुक्प्राप्नोतीति दूषणमुक्त्वोक्तं—नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति, 'न दीर्घे ह्रस्वाश्रयो विधिर्भवती'ति—यदयं दीर्घाच्छे तुकं शास्ति, नैतदस्ति ज्ञापकमस्ति ह्यन्यदेतस्य वचने प्रयोजनं, किं ?'पदान्ताद्वे'तिवक्ष्यामीति, यर्त्ताहि योगविभागं शास्ति, इतरथा हि 'दीर्घात्पदान्ताद्वे'त्येव ब्रूयादिति । छकारस्य तुग्विधाने त्वेतद्विरोधः स्पष्ट एव । नच दीर्घादव्यवहितपरश्छकारादव्यवहितपूर्वस्तुग्भवतीति सूत्रार्थे परिभाषयोर्विरोधाभावेन देशविशेषप्रवल्लृप्तिसिद्ध्या च ज्ञापकानुपयोगः । दीर्घाच्छस्य छे दीर्घस्येति षष्ठ्यंशप्रकल्पने तयोर्विरोधस्तु न । 'प्रत्ययस्था'दितिसूत्रस्थप्रकाशोक्तरीत्या 'क्ङिति चे'ति सूत्रस्थकौस्तुभोक्तरीत्या चानुवादे परिभाषाणामप्रवृत्त्या तदंशस्य तत्राप्रवृत्तेः । विधेयविशेषणे तु परिभाषयोरवकाशः–'इको यणचि' 'उदस्था'दित्यादाविति वाच्यं, विधेयविशेषणतापक्षस्य 'प्रत्ययस्था'दितिसूत्रे मनोरमाशब्दरत्नाभ्यां दूषितत्वेन सामर्थ्यादनुवादेऽपि तयोः परिभाषयोः प्रवृत्त्य-

ॐ सदाशिवभट्टीयम् ॐ

≍क≍पवाधकत्वम् । तक्रकौण्डिन्यन्यायेन तु तद्विहितविसर्गबाधकत्वं बोध्यम् । **संहितायाम्** । इको यणचीत्यतः प्रागेवेदं युक्तमुपन्यस्तुं यद्यपि, तथापि पाठक्रमादत्रोक्तमित्याहुः । **छ्यतेः क इति** । 'सति निष्पन्ने'

ॐ विषमपदविवृतिः ॐ

तत्रिपथगायामुक्तम् । **सवर्णकाल इति** । वर्णसहितकाल इत्यर्थः । **तदधिकेति** । स्वारसिकार्धमात्राकालायोधिकोऽर्धमात्राकालस्तदधिकेत्यर्थः ।

**आङ्मा ।** आङ्साहचर्यान्माङव्ययमेव । **दीर्घस्यायमिति ।** वक्ष्यमाणज्ञापकाद्व्याख्यानाद्वा 'दीर्घा'दिति पञ्चम्यर्थे षष्ठीति भावः । एओङ्सूत्रभाष्ये ध्वनितमेतत् ।

**चेच्छिद्यत इति ।** तुको हलादिःशेषस्तु न । अभ्याससंज्ञानिवृत्तिकाले स्थानिद्वारा साक्षाद्वा सन्निहितानां हलामेव तेन निवृत्तेः । अत एव 'नुगत' इत्यादि चरितार्थम् ।

**दीर्घात्पदान्ताद्वेति ।** पदान्तस्य दीर्घस्येत्यर्थः । योगविभागोऽनयोरेओङ् इति सूत्रे भाष्ये स्पष्टः । 'दीर्घान्तस्य पदस्ये'त्यर्थेन सिद्धेऽन्तग्रहणं पदान्तविधित्वमस्य,—

❀ अभिनव-चन्द्रिका ❀

यकांशार्थकल—तस्मादिति—परिभाषोपस्थित्या दीर्घाव्यवहितोत्तरत्वविशिष्टेयश्छकारः तदव्यवहितोत्तरत्वविशिष्टस्य तुगित्यर्थेन सामञ्जस्याचिन्त्यमेतत् । **निवृत्तेरिति ।** नच चेच्छिद्यत इत्यादौ स्थानिवत्सूत्रोक्तदिशा तुग्विशिष्टे द्विर्वचनीयविधेयताश्रयावधिकाव्यवहितपूर्वत्वस्य एकदेशविकृतन्यायेन द्विर्वचनीयोद्देश्यताश्रय–द्विर्वचनीयविधेयताश्रयै'तदुभयमात्रारब्धसमुदायघटकत्वस्य च सत्त्वेन पुनरभ्याससञ्ज्ञायाः सुलभत्वेन अभ्याससञ्ज्ञाप्रवृत्तिकाले सन्निहितत्वात्तुको हलादिः शेषो दुर्वार इति वाच्यम्, 'तुगतोऽनुनासिकान्तस्ये'तिशास्त्रारम्भसामर्थ्येन हलनुबन्धकागमानां हलादिः शेषो न भवतीति कल्पनेनादोषात् । 'हलनुबन्धके' इत्युक्त्या चकारेत्यादौ रेफागमस्य हलादिशेषो भवत्येवेति दिक् । **पदान्तस्य दीर्घस्येति ।** वस्तुतस्तु पदान्तदीर्घाव्यवहितोत्तरत्व-

❀ चिदस्थिमाला ❀

लक्ष्यमसम्भवात् । तत्र माङः कित् । अत एव धातोर्ङित्वेऽपि टाबन्तस्याङित्वान्न तुगित्यपास्तम् । अत आह—**आङिति ।** तेन न तत्र नित्यस्तुक्, किन्तु 'पदान्ताद्वे'ति विकल्प एवेति भावः । ननु न तज्ज्ञापकम्, अस्यापदान्तविषयत्वात्, तद्विषयस्योत्तरसूत्रस्य वैकल्पिकत्वाच्च, तत्रादोषादत आह—**व्याख्यानादिति ।** एतेन तथा प्रतिपादनं, 'दीर्घमनती'त्यादिप्रतिपादनञ्च रत्नाकरीयमपास्तम् । व्याख्याने मूलं ध्वनयन्नाह—**ओदिति ।** तत्र हि 'वर्णैकदेशानां वर्णग्रहणेन ग्रहण'पक्षे आलूयेत्यादौ 'ह्रस्वस्य पिती'ति तुकमाशङ्क्य–'छे चे'त्येव सिद्धे 'दीर्घा'दिति तुग्विधानं ज्ञापकं–'न दीर्घावयवस्य ह्रस्वत्वप्रयुक्तस्तु'गिति समाहितम् । **सञ्ज्ञेति ।** यथोद्देशे, कार्यकाले वेति भावः ।

आरत्यार्थमाह—**स्थानीति ।** प्रयोगभेदेन विकल्पः । अत्र मानमाह—**अत एवेति ।** उक्तरीत्यैव क्रमेणाह—**पदान्तेति ।** ननु प्रकृतसूत्रे 'इको यणची'ति सूत्रभाष्यादेकसूत्रत्वमिति लभ्यत इति कथं मूले भेदेनोक्तिरत आह—**योगेति ।** तत्र हि प्रागुक्तज्ञापकवर्णनावसरे 'पदान्ताद्वे'ति विकल्पार्थं सार्थक्यमुक्त्वा,

❀ ज्योत्स्ना ❀

ङ्गीकारेण दोषसद्भावाज्ज्ञापकस्यावश्यापेक्षणादिति दिक् । **स्थानिद्वारा साक्षाद्वेति ।** 'जहारे'त्यादौ ह इति ऋकारस्थानिकरेफस्य स्थानिद्वारा, पपाचेत्यादौ चकारादेः साक्षात्; न त्वेवं पम्फुल्यत इत्यादौ नुगादेरिति भावः । **भाष्ये स्पष्ट इति ।** इदं भाष्यं समनन्तरमेव प्रदर्शितम् । **समर्थपरिभाषानु-**

❀ सदाशिवभट्टीयम् ❀

इति शेषः । ननु न तज्ज्ञापकं तस्यापदान्तविषयत्वात्तद्विषयस्योत्तरसूत्रस्य वैकल्पिकत्वाच्चेत्यत आह—

❀ विषमपदविवृतिः ❀

**अव्ययमेवेति ।** न तु धातुरित्यर्थः । **ध्वनितमेतदिति ।** तत्र हि 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्त' इति पक्षे आलूयेत्यत्र ह्रस्वस्येति तुकमाशङ्क्याचार्यप्रवृत्तिर्ज्ञापयति न दीर्घे ह्रस्वाश्रयो विधिर्भवति, यदयं

न पदविधित्वमितिबोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थम् । तेनासामर्थ्येऽप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः । ॥ इति हल्सन्धिः ॥

❀ अभिनव-चन्द्रिका ❀

विशिष्टो यश्छकारस्तदव्यवहितपूर्वत्वविशिष्टस्य तुगित्यर्थो बोध्यः । **कैयट इति** । अनेन पदसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकत्वरूपपदविधित्वस्याभावात्समर्थपरिभाषानुपस्थित्या एकार्थीभावाभावेऽपि तुग्भवत्येवेति अन्तग्रहणं स्पष्टार्थमेवेत्ययं कैयटश्चिन्त्य एवेति बोधितमिति दिक् ॥ ❀ **इति हल्सन्धिप्रकरणम्** ❀

———❀———

❀ चिदस्थिमाला ❀

'यत्तर्हि योगविभागं करोति,इतरथा दीर्घात्पदान्ताद्वेत्येव ब्रूया'दित्युक्तम् । **द्वारेति** । अत्रेति शेषः । **समर्थेति** । विसर्गप्राग्भागानुकरणम् । **तेनेति** । 'तिष्ठतु कुमारी छत्रं मैत्रस्ये'त्यादाविति भावः । एवं रीत्या 'न पदान्ता'दित्यत्र अन्तग्रहणं न सफलं, पदविधिरित्यनेन निषेधान्यविधेरेव ग्रहणेन तत्रादोषात् , तेन 'दुष्टाः षट्सन्तस्य' इत्यादावपि तत्सिद्धिः, अत एव तत्स्पष्टार्थमित्येव प्रागुक्तम् । एतेन पूर्वविरुद्धमिति केन चिदुक्तम् , 'अत्रेव तत्रापि तस्य फल'मिति दण्डयुक्तञ्चापास्तम् । **कैयट इति** ।—सूचितारुचिबीजन्तु यावता चेदानीं पदगन्धोस्तीत्यादि तत्रोपपदमिति सूत्रस्थभाष्यविरोधरूपमिति बोध्यम् ।

❀ **इति हल्सन्धिप्रकरणम्** ❀

———❀———

❀ ज्योत्स्ना ❀

**पस्थित्यर्थमिति** । 'समर्थसूत्रे एकार्थीभावलक्षणं व्यपेक्षालक्षणञ्चेत्युभयविधं सामर्थ्यं गृह्यते' इति मते, 'वाक्य इव वृत्तौ व्यपेक्षैव नत्वेकार्थीभावः सामर्थ्यं ग्राह्य'मिति मते च बोध्यम् । 'एकार्थीभावलक्षणमेव सामर्थ्यं तत्र गृह्यत' इति मते तु विनाप्यन्तग्रहणं वाक्ये संहिताविरहपक्षे भावफलकात्संहिताधिकारात्प्रागेतस्मिन्सूत्रे कर्तव्ये संहिताधिकारे करणात्समर्थपरिभाषोपस्थित्यभावात्कुमारीच्छादयतीत्यत्र व्यपेक्षायामिव—'तिष्ठतु कुमारी छादयति देवदत्त' इति व्यपेक्षाविरहेऽपि वैकल्पिकतुक्सिद्धेर्नार्थोऽन्तग्रहणेनेति स्वतन्त्राः । अन्ये तु—सूत्रेऽन्तग्रहणाभावे दीर्घरूपस्य पदस्य वैकल्पिकस्तुक् स्यात्—ईच्छादयतीत्यादौ । यद्वा एकपदावयवयोर्निमित्तनिमित्तिनोः सन्निपात एव स स्यात् । चेच्छिद्यत इत्यादौ दीर्घेण पदस्य विशेषणाद्दीर्घान्तस्य पदस्येत्यर्थस्तु दुर्लभः, 'नलोपः प्रातिपदिकान्तस्ये'त्यादावन्तग्रहणात्तदन्तविध्यभावज्ञापनद्वारा पदस्येत्यस्य प्रायेणावयवषष्ठीत्वज्ञापनाद्भाष्यकृदुपन्यस्तादित्याहुः । ❀ **इति हल्सन्धिप्रकरणम्** ❀

———❀———

❀ सदाशिवभट्टीयम् ❀

**व्याख्यानेति** । **अभ्यासप्रवृत्तिकाल इति** । यद्यपि स्थानिवत्सूत्रोक्तरीत्या पुनस्तत्कालोऽस्त्येव, तथापि तत्सञ्ज्ञाप्रयोजकं द्वित्वमिह विवक्षितमिति बोध्यम् । ❀ **इति शेखरविवृतिसङ्ग्रहे हल्सन्धिप्रकरणम्** ❀

———❀———

❀ विषमपदविवृतिः ❀

दीर्घादिति छे तुकं शास्तीत्युक्तम् । यदि च च्छस्यायं तुक् स्यात्तदा न पूर्वेण तुक्सिद्धिः, तेन ह्रस्वस्य तुग्विधानादिति बोध्यम् । **स्थानिद्वारेति** । इदमुरदित्येतदभिप्रायम् । ❀ **इति हल्सन्धिप्रकरणम्** ❀

## ॥ अथ विसर्गसन्धिः ॥

**विसर्जनीयस्य सः ।** प्रागेव व्याख्यातमपि विसर्जनीयस्येत्यनुवृत्तिप्रदर्शनाय स्मारितम् । 'खपरे' इति बहुव्रीहिः । विशेष्यस्याकाङ्क्षितत्वात् विसर्जनीयाक्षिप्तः खरेव । विसर्गस्य विसर्गविधौ फलमाह—**न त्वन्यदिति** । अन्यदेव विवृणोति—**इहेति** । **त्रैरूप्यमिति** । विकल्पद्वयसत्त्वादिति भावः ।

**सोप । अपदाद्योरिति** । सूत्रे सौत्रत्वादेकवचनम् । **अनव्ययस्येति** । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं, व्याख्यानात् । तेनोपपयस्काम्यतीत्यादौ सत्व-

ॐ अभिनव-चन्द्रिका ॐ

अथ विसर्गसन्धिः । **बहुव्रीहिरिति** । पञ्चम्यर्थ इति शेषः । **व्याख्यानादिति** । **अव्ययी-**

ॐ चिदस्थिमाला ॐ

**विसर्जनी** । पौनरुक्त्यं परिहरति—**प्रागिति** । एवमन्यत्रापि यथायथं बोध्यम् । **बहुव्रीहिरिति** । न तु कर्मधारयः, परग्रहणवैयर्थ्यापत्तेः । 'अनुवृत्त्या तस्य सत्व'मिति सर्वोक्तं प्रागुक्तरीत्या न युक्तमिति ध्वनयन्नाह—**विशेष्यमिति** । अवसानव्यावृत्त्यर्थमाह—**खात्रयेति** । प्रागुक्तरीत्या विसर्जनीयग्रहणस्यावश्यकत्वेन 'तस्येदं फल'मिति सकलग्रन्थासङ्गतेराह—**विसर्गेति** । तस्य तद्विधौ फलाभावादितरव्यावृत्तिरेव फलमिति भावः । **इहेति** । 'वा शरि' 'खर्परे शरि'त्यर्थः । **सौत्रत्वादिति** । एवञ्च तत्रैव तथा प्रयोगो नान्यत्र । एतेन व्यत्ययेनैकवचनमिति, प्रत्येकसम्बन्धादेकवचनमिति, तत्तट्टीकाकृदुक्तरीत्याद्यनुवर्त्य व्याख्यानेन तदिति, अन्यदपि दण्डिरत्नाकराद्युक्तमपास्तम् । यथा चैतत्तथा स्पष्टं भावप्रकाशे । **स्येतीति** । नन्वेवमव्ययीभाव-स्थले सत्वं न स्यादत आह—**अत्रेति** । **व्याख्येति** । अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचारा इति परि-गणनमूलकादित्यर्थः । तत्र चोपचारशब्देनातः कृकमीति सत्वमेव गृह्यते, अत एव तत्रानुत्तरपदस्थस्येति

ॐ ज्योत्स्ना ॐ

**विसर्जनीयाक्षिप्तः खरेवेति** । अत्र यद्वक्तव्यं तत्प्रागुक्तम् । **अव्ययीभावश्चेत्यत्र भाष्य इति** । यद्यप्युपकुम्भंमन्य इत्यादावनव्ययस्येति मुम्प्रतिषेधादिरप्रवृत्तये तत्र सूत्रे लुङ्मुखस्वरो-

ॐ सदाशिवभट्टीयम् ॐ

**सोपदादौ** । ननु 'सः प्रत्यये' इत्येव सूत्र्यताम्, उरः केणेत्यादौ तु यथाश्रुतेऽपि नेष्टमिति चेन्न । तथा सति उरःकाम्यजर्त्तीत्यादौ प्रत्ययाऽनुकरणेऽतिदेशेन प्रत्ययत्ववत्त्वौपदेशिकपदत्ववति सत्वापत्तेः । न च तदादेरित्यस्योपस्थित्या विसर्गान्तस्य तदादेः सत्वं प्रत्यये इत्यर्थान्नोक्तदोष इति वाच्यम्, तथाप्युत्तरसूत्रे इणः परस्य विसर्गान्तस्य तदादेः ष इत्यर्थापत्त्या दधि सर्पिष्पाशमित्यत्रैव स्यात्, न सर्पिष्पाशमित्यत्रेति । पदस्येति तु सिद्धान्ते व्यधिकरणमेवेति न दोषः । श्रुतानुमितपरिभाषया

ॐ विषमपदविवृतिः ॐ

यद्यपि विसर्गस्यापि हल्त्वेन हल्सन्धावेवास्यान्तर्भावः, एवं स्वादिसन्धेरपि, तथापि ब्राह्मण-वसिष्ठन्यायेन श्रोतॄणां प्रतिपत्तिसौकर्याय पृथक्कथनम् । श्रोतारो हि विसर्गस्थानिककार्यसन्देहे विसर्गसन्धिप्रकरणमवेक्ष्य निश्चिन्वन्ति । एवं स्वादिस्थानिककार्यसन्देहेऽपि । **अनुवृत्तिप्रदर्शना-येति** । वस्तुतस्तु विसर्गस्थानिकसन्धिकार्याणामुक्तरीत्यैव श्रोतृप्रतिपत्तिसौकर्याय तत्र कोडीकार-स्यावश्यकतया पुनरुक्तिः । अत एव पूर्वमुक्तमपि 'झलां जशोऽन्ते' इति हल्सन्धौ पुनरुक्तम् । वक्ष्यति पूर्वमुक्तमपि—'कस्कादिषु चे'ति शास्त्रम् । यद्यपि 'झलाञ्जशोन्ते' इति शास्त्रं संहिताधिकारस्थं, तथापि वर्णान्तरेण संहितायां 'वाक्सान' इत्यादावप्रवृत्त्या जश्त्वश्रवणं निर्बाधमित्येतावता सन्धिकार्यत्व-मस्य । अत एव तादृगेव वागीशश्चिद्रूपमित्युदाहृतमित्यलं प्रसक्तानुप्रसक्तया । **खरेवेति** । नावसानम् ।

सिद्धिरिति स्पष्टम्—'अव्ययीभावश्चे'त्यत्र भाष्ये । **गीःकाम्यतीति** । 'वाःकाम्यती'-त्यस्याप्युपलक्षणमिदम् ।

**इणः षः** । 'इदुदुपधस्ये'त्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादौ सत्वनिवृत्त्यर्थं, गीष्पाशं दोष्कल्पमित्याद्यर्थश्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च सम्बद्ध्यते।

❀ अभिनव-चन्द्रिका ❀

भावस्याव्ययत्वे लुब्मुखस्वरोपचारा इति भाष्यपरिगणनादिति भावः । **उपलक्षणमिदमिति** ।

❀ चिदस्थिमाला ❀

सम्बन्धेनोपचारग्रहणं भगवता प्रत्याख्यातं, तदाह—**स्पष्टमिति**। 'इणः षः' इत्यस्यैतदपवादत्वेन, गौरवेण च मूलस्य, सकलग्रन्थानाञ्चासङ्गतेराह—**वाः काम्येति**। गीःकाम्यतीत्यत्र विसर्जेति सत्वमपि न, विसर्गयुक्त-भाष्योदाहरणात् ।

ननु सर्पिष्पाशमित्यादाविदुदुपधस्येत्येव सिद्धे इदं व्यर्थमत आह—**इदुदुपेति** । सोपदादाविति दृष्ट्येति भावः । अत एवाह—**सत्वेति** । तदविषयमेवाह—**गीष्पाशमिति**। अन्यथा पूर्वेणात्र सत्वं स्यादिति भावः। क्रमेण व्यावर्त्यत्रयमाह—**तेनोञ्चैरिति** । ननु तद्धदेतत्रयार्थत्वमपि कुतो

❀ ज्योत्स्ना ❀

पचारा इति परिगणनमाश्रितं, तत्रोपचारशब्देन विसर्गस्थानिकः सकारो गृह्यते इत्य'तः कृक-मिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'त्यनेनोपपयःकार इत्यादावव्ययविसर्गस्य सत्वनिवृत्तिरिवोप-पयःकाम्यतीत्यत्रापि तन्निवृत्तिः फलमिति वक्तुं शक्यं, तथापि अव्ययीभावस्याव्ययत्वे प्रयो-जनसामान्याभावमङ्गीकृत्य परिगणनाव्ययसञ्ज्ञयोः प्रत्याख्यानपक्षे—उपपयःकार इत्यत्रानुत्तरपद-स्थस्येत्यनुवृत्तेः सत्वाभावोपपादनात्, उपपयःकाम्यतीत्यत्र सत्वाप्रवृत्तये यत्नान्तरस्याकथनाच्च तत्र सत्वाभ्युपगमात्परिगणनपक्षेऽप्युपचारशब्देना'तःकृकमी'ति सूत्रविहितोपचारस्यैव ग्रहण-सिद्धिरित्याशयः । अन्ये पुनः प्रत्याख्यानपक्षे मुखस्वरनिवृत्तये न व्ययमव्ययं भवतीत्यन्वर्थ-सञ्ज्ञाविज्ञानादव्ययीभावस्य क्वचिदव्ययसञ्ज्ञातिदेशस्यावश्यकत्वादुपपयःकाम्यतीत्यत्रापि सत्वा-प्रवृत्तेः परिगणनारम्भपक्षेण समानफलकतां ब्रुवते । **इत्यस्याप्युपलक्षणमिति** । एवं-'इणःष'इत्यनेनासङ्कीर्णोऽस्य विषयः प्रदर्शितः। 'अनव्ययस्येत्यादी'त्यादिपदात् 'काम्ये रोरेवे' त्यस्य ग्रहणम् ।

❀ सदाशिवभट्टीयम् ❀

श्रुतत्वादिण इति—विसर्गविशेषणमिति । इणः परविसर्गान्ततदादेरित्यर्थाङ्गीकारणोक्तदोषवारणे तु काम्यज-लौकिकप्रक्रियावाक्यीयप्रकृतिप्रत्यययोः प्रत्येकानुकरणे तत्त्वसत्त्वेन तत्र दोषाच्च । **इणः षः** । 'इच' इत्येव सूत्रयितुमुचितम् । **सस्येति** । अनुवृत्तस्य 'स' इत्यस्य षष्ठ्या विपरिणाम इति भावः । अत्र पक्षे षस-

❀ विषमपदविवृतिः ❀

तस्याभावरूपत्वेन वैजात्यादित्यर्थः । **अव्ययीभावश्चेत्यत्र भाष्ये इति** । तत्र हि 'अव्ययी-भावस्याव्ययत्वे 'उपपयःकार' इत्यादौ सत्वाभावः प्रयोजनमित्युक्त्वा—नैतदस्ति प्रयोजनम्, अनुत्तर-पदस्थस्येति प्रतिषेधो भविष्यती'त्युक्तम्। तेनानव्ययस्येति वार्तिकेन सत्वप्रतिषेधेऽव्ययत्वं नेति लक्ष्यत इति भावः। वस्तुतस्त्वव्ययीभावस्याव्ययत्वे प्रयोजनं—लुब्मुखस्वरोपचारा इति परिगणनारम्भ-तत्प्रत्याख्यानयोः फलैक्यायैतस्याऽभिधानम् । वाःकाम्यतीत्येतस्याप्यनभिधानम्। 'सोपदादा'विति सूत्रे 'रोःकाम्ये' इति वाच्यं, किं प्रयोजनं ? नियमार्थं-'पयस्काम्यति', क्व माभूत् ? 'गीः कम्यती'-ति भाष्यात् । अन्यथा सङ्ग्राह्योदाहरणं सत्वस्य, व्यावर्त्यं तु षत्वस्यापीत्यर्धजरतीयापत्तिः ।

**इणःषः** । इदुदुपधस्येत्येव सिद्धे इदं व्यर्थमित्याशङ्क्याह—**इदुदुपधस्येति**। इति च सम्बध्यत **इति**।

तेनोच्चैःकल्पं, दोः फत्य, गीः काम्यतीत्यादौ षत्वं न । अत एव–'अत्र प्रकरणे सर्वत्र सत्वमेव विधेयम्, इण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्व'मिति भाष्योक्तपक्षा-न्तरं सङ्गच्छते । 'विसर्जनीयस्थानिके'त्युक्त्या पुँस्पुत्र इत्यादौ न दोषः, तत्र हि मस्थानिकः सः। अत्र विसर्जनीयस्येत्यनुवृत्त्यैतदर्थलाभः ।'अनव्ययस्ये'त्यादि त्वत्र पक्षे तु न सम्बध्यते, तेन द्विष्कृतं दुष्काम्यतीत्यादौ षत्वसिद्धिः । 'गीःकाम्यती'त्यादौ सकारा-भावादेव न दोषः । अपदादाविति च न सम्बध्यते । तेन दुष्करोतीति षत्वसिद्धिः । परन्त्वयं पक्षोऽसङ्गतः, उत्तरसत्वस्यासिद्धत्वेन 'निष्कृतमि'त्यादौ षत्वासिद्धेः ।

❀ अभिनव-चन्द्रिका ❀

वस्तुतस्तु 'सोऽपदादावित्यत्र काम्ये रोरेवेत्यस्य' इणः ष इत्यत्र काम्ये रोरेवेत्यस्य चैकमेव गीःकाम्य-तीति फलम्, अन्यथा सोऽपदादावित्यत्र तदभावे सत्वम्, 'इणः ष' इत्यत्र च तदभावे षत्वं दुर्वारं स्यात् । एवञ्चोपलक्षणतया व्याख्यानं हेयमेवेति दिक् । असङ्गत इति । परे तु 'इडाया वे'-त्यतः प्राग्इणः ष इति सूत्रङ्कर्तव्यम्, इण उत्तरस्य विसर्गस्थानिकसकारस्य षो भवतीति तदर्थः । 'विसर्गस्थानिके'त्युक्त्या पुंस्पुत्र इत्यादौ मकारस्थानिकविसर्गस्य न षः । 'समः सुटि' 'पुमः खय्य-म्परे' 'कानाम्रेडित' इति सूत्रत्रयेण सकारस्यैव विधानेन तस्यासिद्धत्वाद्वत्वाद्यभावे विसर्गस्थानिक-

❀ चिदस्थिमाला ❀

नात आह—अत एवेति । षत्वस्यैष्टत्वादेवेत्यर्थः । 'आदा'विति शेषः । तदास्याप्रामे-स्ताह—इण इति । ततः परस्य तिवत्यर्थः । अन्यथा तत्पक्षे तेषु सत्वाभावेन षत्वा-भावात्फलभेदापत्तिः स्पष्टैव । स इति । प्रतिपादितमिदमधस्तात् । ननूक्तार्थस्य साफल्येऽपि लाभः कथं, स इत्यनुवृत्तस्य षष्ठ्यन्ततास्वीकारेणार्थस्य वाच्यत्वादत आह—अत्रेति । अत एवाग्रे मण्डूकप्लुतिः वल्लसम्बन्धत्यागश्च न । चस्त्वर्थे । आदिना कान्ते इत्यस्य परिग्रहः । अत्र पक्षेऽत्रेति । भाष्योक्तपक्षान्तरे प्रकृतसूत्रे इत्यर्थः । तेनेति । अन्यथाद्ये 'द्विस्त्रिरि'ति सत्वेऽन्ययोरि'दुदुपधे'ति षत्वेऽप्रत्ययत्वादन्त्ये दुरो रान्तत्वेन तदप्रकृतिकत्वाच्च तदनापत्त्या तदसङ्गतिः स्पष्टैव । प्रागुक्तातिप्रसङ्गोऽपि नेत्याह–व्युत्क्रमेण-गीरिति । आदिना पूर्वयोः परिग्रहः । एतेनोच्चैः कमित्यादौ षत्वं दुर्वारमित्यपास्तम् । द्विष्कृतमित्यादौ कृदन्तेन समासेऽपदादित्वस्य सत्वेन तस्य तदसम्बन्धासाधकत्वाद्धेदेनाह–अपदे ति । तीतीति । इत्यन्ता-वित्यर्थः । अयं पक्षान्तरभूतः । 'सोपदादा'विति तु दुर्वचं, पयस्पाशमित्यादौ दोषापत्तेः । एतेनासिद्धत्वे

❀ ज्योत्स्ना ❀

'द्विष्कृतं दुष्कृत'मिति पाठः । उत्तरसत्वस्येति । 'इदुदुपधस्य' 'द्विस्त्रि'रित्यादिना विहि-तस्येत्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

पदयोरग्रे मण्डूकानुवृत्तिर्नेति बोध्यम् । पूर्वोक्तातिप्रसङ्गो नेति व्युत्क्रमेणाह–गीःकाम्येति । करोतीति । 'इत्यादा'विति शेषः । प्रकृतसूत्रे उद्योते तु एवं पाठ एव । असिद्धेरिति । यथाश्रुतेनैव सिद्धेर्विभक्तिविपरि-

❀ विषमपदविवृतिः ❀

अतएव 'रोःकाम्ये'इत्यस्य गीःकाम्यतीति विसर्गघटितं भाष्ये व्यावर्त्यं प्रदर्शितम् । अन्यथा सत्वस्या-प्रवृत्तावपि षत्वस्य प्रवृत्त्यापत्त्या तदसङ्गतिः । अत एवेति । अनव्ययस्येत्यादेरुत्तरसूत्रे सम्बन्धा-देवेत्यर्थः । सस्यानेन षत्वमिति । 'कुप्वोः परयो'रिति शेषः । 'अपदादा'(विधा)विति चेत्यारभ्य 'षत्वसिद्धि'रित्यन्तो ग्रन्थः पूर्वेण गतार्थः । असङ्गत इति । षत्वप्रकरणान्ते 'इणः ष' इत्यस्य पाठे

'प्रकरणे प्रकरणमसिद्धं न योगे योग' इति पक्षस्तु नास्त्येव, ज्ञापकासम्भवादिति—'उपसर्गादसमासेऽपी'त्यत्र निरूपयिष्यामः। 'विसर्जनीयस्यैव पत्व'मिति मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः।

❀ अभिनव-चन्द्रिका ❀

सकारस्याभावा'त्सोऽपदादावि'त्यारभ्य 'इणः ष' इत्यतः प्राक्तनैः सर्वैः सूत्रैः सकार एव विधेयः। तथा च कुत्रचित्स एव, कुत्रचित्ष एव, क्वचिदुभयमनुवर्त्तते इति कल्पना न कर्त्तव्या। किञ्च 'इणः ष' इत्यत्रानन्वयस्येति वाच्यं, 'काम्ये रोरेवे'तिवार्तिकद्वयसम्बन्धश्च न कर्तव्यो भवति, 'अपदादा'वित्यत्र स्वरितत्वञ्च कल्पनीयं भवतीति महालाघवम्। उच्चैः कल्पम्, दोःपश्य, गीः काम्यतीत्यादौ विसर्गस्थानिकसकारस्यैवाभावेन षत्वाप्राप्तेः। एतेन परन्त्वयं पक्षोऽसङ्गत इत्युक्तिरेवासङ्गतेतिप्राहुः।

**नास्त्येवेति**। भोश्छिन्धि, भगोश्छिन्धि, अघोश्छिन्धि, हरिवश्छिन्धीत्यादौ 'वन उपसङ्ख्यानं' 'विभाषाभव'दिति वार्त्तिकदृष्ट्या 'नश्छव्री'ति रुत्वस्यासिद्धत्वाभावात्परत्वात्तेन रुत्वेऽवस्यौकारादेशानापत्तेः, अनुस्वारानुनासिकयोरापत्तेश्च दुर्वारत्वेन 'प्रकरणे प्रकरण'मिति पक्ष आश्रयितुन्न शक्यत इति भावः। **अन्यत्र विस्तर इति**। वस्तुतस्तु प्रत्ययभिन्नविसर्गस्येदुदुपधस्य ष

❀ चिदस्थिमाला ❀

पूर्वविहितसत्वे एवैतत्प्रवृत्त्या तथैव सिद्धे स इत्यादिकल्पनावैयर्थ्यापत्तिरिति, तन्नेत्यपास्तम्। ननु प्रकरणे प्रकरणमसिद्धमिति पक्षाभिप्रायेण भाष्यमत आह—**प्रकेति**। ननूपसर्गादसेतिसूत्रे'ऽसमासेऽपी'ति तज्ज्ञापकं, तथाहि पूर्वपदात्सञ्ज्ञायामित्यतः 'पूर्वपदा'दित्यनुवृत्त्या तदाक्षिप्तसमासे एव माभूदिति हि तद्व्याख्यानतः तन्निवृत्तौ तु तद्व्यर्थम्। तत्रासञ्ज्ञायां पूर्वपदादिति नियमव्यावर्तितणत्वप्रतिप्रसवाय समासासमासयोर्विशिष्यविधानार्थं तत्, पूर्वपदादितिदृष्ट्यो'पसर्गादसमासे' इत्यस्यासिद्ध्या नियमेन व्यावृत्तेर्दुष्करत्वादेवञ्च तज्ज्ञापकमेवेति चेन्न। 'रषाभ्या'मित्यत्र 'समानपदे' इत्यस्याखण्डपदे इत्यर्थेन पूर्वपदादित्यस्य विध्यर्थत्वेन तस्य तत्त्वासम्भवात्। एवञ्च तत्स्पष्टार्थमेव तदाह—**ज्ञापकेति**।

**यथेति**। एतेनोभयं सर्वत्र स्यादित्यपास्तं, व्याख्यानतो निर्वाहात्। अत्र पूर्ववार्तिकानुवृत्तौ 'यथाज्ञायिनि'चेन्यत्र ग्रन्थविरोधो न तथा तत्रैव स्फुटीभविष्यति। तदाह—**इत्यन्यत्रेति**।

❀ ज्योत्स्ना ❀

**निरूपयिष्याम इति**। ज्ञापकं हि असमासेऽपि ग्रहणम्, अविशेषादुपसर्गाण्णत्वविधानेनैव समासे चासमासे च णत्वसिद्धौ तद्वैयर्थ्यं प्राप्तम्—'पूर्वपदात्सञ्ज्ञाया'मेवेतिनियमात्समासेऽप्राप्तेः परिहरणीयम्। नियमं प्रति उपसर्गादित्यस्यासिद्धत्वे पुनर्वैयर्थ्यात्प्रकरणे प्रकरणस्यासिद्धत्वं विना नोपपद्यत इति। तदेतद्यदि'रषाभ्या'मितिसूत्रे लाघवात्समानग्रहणमकृत्वा पदे इत्येतावतैव समासासमासपदयोः सर्वत्रैव णत्वप्राप्तौ 'पूर्वपदात्सञ्ज्ञाया'मित्यनेन नियमः क्रियते; यस्तु नियमाद्विधेर्बलीयस्त्वं मन्यमानः समानग्रहणात्समानमेव यन्निमित्तनिमित्तिनोर्भिन्नाधिकरणत्वाभाववत्पदं तत्रैव यथा स्यादित्याश्रयणाद्ग्रामनामेतिवाक्ये इव

❀ सदाशिवभट्टीयम् ❀

णामेन व्याख्यानसामर्थ्यात्परेषां नासिद्धत्वमिति षत्वं सिध्यतीति। अयमपि पक्षः प्रकृतसूत्रे उद्द्योते सिद्धान्तितः। 'इडाया वा' इत्युत्तरम्, 'इणः ष' इति पठित्वा इष्टसाधनपरो बृहच्छेखरस्तु प्रकारा(शा?)शयासमर्थक-

❀ विषमपदविवृतिः ❀

तु न कश्चिद्दोष इत्याहुः। **प्रकरणेति**। षत्वसत्वयोर्विधेययोर्भेदेऽपि कुप्वोरिति निमित्तैक्यात्प्रकरणैक्यं बोध्यम्।

**नमस्पु** । इत उत्तरमपदादाविति न सम्बध्यते, अनन्तरत्वात् । **साक्षात्प्रभृतिष्वादिति** । 'ऊर्यादित्वाद्गतित्वं, स्वरादिपठितस्य तु गतित्वाभावः । तेन साक्षात्प्रभृतिषु च्व्यर्थवचनेऽपि न क्षति'रित्यन्ये ।

**इदुदु** । 'अप्रत्ययस्ये'ति पर्युदासो, लाघवात् । तत्र प्रत्ययपदं तत्सम्बन्धिपरं, तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः । अत एव 'कविभिः कृत'मित्यादौ न षत्वम् । स्पष्टञ्चेदं

॥ अभिनव-चन्द्रिका ॥

इति सामानाधिकरण्येनान्वयेऽपि न क्षतिः । न च कविभिः कृतमित्यादौ षत्वं दुर्वारं स्यात्, विसर्गस्य प्रत्ययभिन्नत्वादिति वाच्यम्, 'प्रत्ययस्य लु'गिति सूत्रात्प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे 'प्रत्ययलोप'इति सूत्रे प्रत्ययग्रहणसामर्थ्येन षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियत इत्यर्थेन प्रत्ययावयवे विसर्गेऽपि तादृशविषयतायाः स्वीकरणीयतया प्रत्ययभिन्नविसर्गाभावेनादोषात् । 'प्रत्ययपदं तत्सम्बन्धिपर'मिति शेखरस्तु' यत्र पर्युदस्यमानो वर्णः,पर्युदाससमर्पकश्च यत्र समुदायबोधकं पदं तत्र तत्पदन्तदवयवे लाक्षणिकम् । यथा 'नश्छव्यप्रशान्','शेषो घ्यसखि','अत्वसन्तस्य चाधातो'रित्यादौ, एवं प्रकृतेऽपीत्याशयेन लापनीयः । **विस्तर इति** । मातुः कृपेत्यादौ विसर्गस्य अन्तादि-

॥ सिद्धान्तरत्नमाला ॥

वत्वेनादावित्यर्थः । **इत उत्तरमिति** । इत आरभ्येत्यर्थः । **व्याख्येति** । लक्ष्यमूलकादित्यर्थः । मूलादिसकलग्रन्थासङ्गतेः सिद्धान्तमाह—**ऊर्यादीति** । द्वितीयरूपसिद्ध्युपायमाह—**स्वरादीति** । अस्मिं दोषं सूचयन्नाह—**तेनेति** । **लाघवेति** । वाक्यभेदासमर्थसमासाश्रयणापत्तेः । सकलग्रन्थासङ्गतिध्वनयाय सिद्धान्तमाह—**तत्रेति** । पर्युदासे इत्यर्थः । अस्मिः करोतीत्यादौ व्यपदेशिवद्भावेन निर्वाहः । **स्पष्टमिति** । एतेनात्र हरदत्तमनोरमादण्डिरत्नाकरादिभिर्यदुक्तं तदपास्तम् । यथा चैतत्तथा रत्नं भाव-

॥ ज्योत्स्ना ॥

समासेऽपि णत्वाप्राप्तिं ब्रूते, तदा पूर्वपदादित्यस्य विध्यर्थत्वाज्ज्ञापकत्वासम्भवः । युक्तञ्चैतत्,–अन्यथा 'माषकुम्भवापेने'त्यादौ 'पदव्यवायेऽपी'त्यनेन वैकल्पिकणत्वप्रतिषेधेऽपि नित्यणत्वप्राप्तेर्वारणाय यत्नान्तरमाश्रयणीयं स्यात् । उपाध्यायास्तु—भाष्योक्तज्ञापकत्वस्योपलक्षणत्वेन न्यायात्प्रकरणस्यासिद्धत्वं व्यवस्थापयन्ति; प्रकरणस्यार्थवद्वाक्यत्वात्तदन्तर्गतानां योगानामानर्थक्याद्योगे योगस्यासिद्धत्वायोगात् ।

॥ सदाशिवभट्टीयम् ॥

त्वादनादेय एव । **इत उत्तरमिति** । इत आरभ्येत्यर्थः । **गतित्वाभाव इति** । इदञ्चिन्त्यं, तस्य कुतो न गतिसञ्ज्ञेति । एवं स्वरादिपाठवैयर्थ्यन्तु न, क्रिया(कृञो)योगेऽव्ययसञ्ज्ञार्थकत्वादस्य । एवञ्च नमः करोतीति विसर्गघटितप्रयोगसिद्ध्यर्थं विकल्पेन सञ्ज्ञा स्यादिति साक्षादादिषु पाठ एव युक्तः । उपलभ्यते च तथैव साम्प्रतम् । तस्माद्देवान्नमस्करोतीति भाष्यप्रयोगात्–च्व्यर्थवचनस्य प्रायिकत्वमेव युक्तम्, नमःशब्देऽसम्भवाद्वा । एवञ्च'ऊर्यादिगणे(स्वरादौ च?) पाठेऽपि विकल्पफलसिद्धि'रिति साक्षात्प्रभृतीति सूत्रस्थशेखरोऽपि चिन्त्य एवेत्याहुः । अन्ये तु 'स्वरादिपठितस्य गतित्वाभाव' इत्यस्यायं भावः–'देवेभ्यो नमः' 'देवान्नमस्करोती'तिदर्शनाद्वाचको द्योतकश्चेति द्विविधो नमःशब्दः, ऊर्यादिषु द्योतकस्यैव ग्रहणं, क्रियायोगे इत्यर्थाधिकारानुगुण्यात् । यदा नमःशब्दः स्वार्थमभिधत्ते, करोतिरुत्पत्तिं—तदा नमःकरोतीति सविसर्गमितीत्याहुः ।

॥ विषमपदविवृतिः ॥

**नमस्पुरसोर्गत्योः । गतित्वाभाव इति** । 'कृञो योगाभावे' इति शेषः । कृञो योगे तु ऊर्यादित्वेन निपातत्वात्स्वरादिपाठं विनैवाव्ययत्वसिद्धिः । तथा च 'नमः करोती'ति

भाष्ये इत्यन्यत्र विस्तरः। **एकादेशशास्त्रेति** । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्रनिमित्तकत्वं बोद्ध्यम् । स्पष्टञ्चेदमत्र सूत्रे, 'उरण्रपर' इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः। 'प्रत्ययभिन्नसम्बन्धिन' इति तु नार्थः, 'अग्निः करोती'-त्यादावपि प्रत्ययभिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः । तपरकरणं किम् ? गीः करोति। उपधाग्रहणं व्यर्थम्, 'उपधाग्रहणं न करिष्यते, इदुद्भ्यान्तु परं विसर्जनीयं विशेषयिष्याम' इति ह्यवरट्सूत्रभाष्योक्तेः ।

### ❀ अभिनव-चन्द्रिका ❀

वद्भावेन प्रत्ययसम्बन्धित्वेन षत्वाप्राप्त्या एतज्ज्ञापनस्य नोपयोग इति तत्त्वम् । **षत्वापत्तेरिति** । न च 'प्रत्ययभिन्नसम्बन्धिविसर्गस्य ष' इत्यर्थे सर्वत्र प्रत्ययभिन्नसम्बन्धित्वाद्विसर्गस्य सर्वत्रैव षत्वं स्यादित्यप्रत्ययस्येति व्यर्थं स्यात्तत्सार्थक्याय प्रत्ययभिन्नप्रातिपदिकावयवेदुपधस्य विसर्गस्य ष

### ❀ चिदस्थिमाला ❀

प्रकाशादौ । तदाह—**इत्यन्यत्रेति** । षष्ठ्यन्तपाठेन विसर्गविशेषणत्वलाभेनैकादेशे तत्त्वेऽपि तस्य साक्षाद-तत्त्वादाह—**एकादेशेति** । तन्निष्पन्नादेशघटकेरेफेत्यर्थः । ननूक्तवचनार्थे एव न मानमत आह—**स्पष्टमिति** । तत्र हि 'इह कस्मान्न भवति ? पितुः करोति, 'अग्ने'ति षत्वं प्राप्नोति, अप्रत्ययविसर्जनीयस्येत्यु-च्यते—प्रत्ययविसर्जनीयश्चायं, लुप्यतेऽत्र प्रत्ययाविसर्जनीयो रात्सस्येती'त्युक्तम् । लुप्यते इत्यादेरयमर्थः—प्रत्यय-विसर्जनीयत्वेन यस्तवाभिमतः स लुप्यते=न दृश्यते, स्थानिनः प्रत्ययस्यैव लोपादिति। उक्तज्ञापनेन त्रिपाद्या-मप्यन्तवत्त्वप्रवृत्तिरेव ज्ञाप्यतेऽत एवामी क्षीरपेणेत्यादिसिद्धिः, तेन षत्वाभावः सिद्धः, एवञ्च मूलमार्थिका-र्थकथनपरमिति शब्दरत्नादौ स्पष्टं, तदाह—**इत्यन्यत्रेति** । ननु पर्युदासेप्येतदर्थमन्यार्थाङ्गीकारस्तस्येति न ज्ञापकोपयोगोऽत आह-**प्रत्ययेति** । आदिना 'कविभिः कृत'मित्यादेः परिग्रहः। **गीरिति** । पूः करोती-त्यपि बोध्यम्। एतेन मूले वृत्तौ तदनुक्तेर्न्यूनता ध्वनिता । **व्यर्थमिति** । 'इदुद्भ्यामप्रत्ये'त्येव कार्यं, तच्च पञ्च-म्यन्तं, ताभ्यां परस्य तस्येत्यर्थः। तदाह-**इदुदिति** । तृतीयान्तमिदं । तुर्यत इत्यर्थे—अकरणे हेतुत्वसूचकः। परं= परत्वेन । इदं चायोगवाहानामविशेषेण पाठपक्षे उपधासञ्ज्ञारूपोक्तप्रयोजनखण्डनाय भगवतोक्तम् । परा-

### ❀ ज्योत्स्ना ❀

**इति तु नार्थ इति** । तुनारुचिः सूचिता,—तद्बीजन्तु प्रत्ययसम्बन्धिभिन्ने लक्षणा-मपेक्ष्यात्र पक्षे लाघवम् । वैयधिकरण्यान्वयेन प्रत्ययभिन्नसम्बन्धिन इत्यर्थलाभात् । अप्रत्यय

### ❀ सदाशिवभट्टीयम् ❀

मूले-**पुरः प्रवेष्टव्या इति** । न चास्य लाक्षणिकत्वं, 'पूर्वाधरावराणामसिपुरधवश्चैषा'मितिव्युत्पादितस्यापि लाक्ष-णिकत्वात् । यदा तु नमःसाहचर्यात्पुरोऽव्ययं, पुरःसाहचर्यान्नमस् गतिरेवेत्युच्यते; तदा स्पष्टार्थकृतिग्रहण-मिति वदन्ति। **इदुदु** । **तत्सम्बन्धिपरमिति** । एतद्बीजं 'प्रत्ययलोप'इति सूत्रे वक्ष्यते । नन्व'ग्निः करो'ती-त्यत्र विसर्गे कथं प्रत्ययत्वं, सस्य षत्वेन रत्वेन वा स्थानित्वादिति चेन्न । 'तत्स्थानापन्ने'तिलौकिकन्यायेन तद्धर्मातिदेशात् । प्रत्ययसञ्ज्ञाया यथोद्देशेपि अग्नी इत्यत्र प्रगृह्यत्ववत्पुनः प्रवृत्त्यङ्गीकारेण विसर्गे सुबुद्ध्यो-न्देशत्वेनैव प्रत्ययत्वाद्वा । तत्सम्बन्धित्वं वा विलक्षणं स्वीकार्यम् । **इत्यादाविति** । आदिना 'स्युःपा' डिल्यमरप्रयोगः । मनोरमायां विसर्गपाठस्तु पूर्वापरविरुद्धः । **तुनार्थ इति** । विसर्गे वैयधिकरण्येनान्व-यादिति भावः । **षत्वापत्तेरिति** । ननु प्रत्ययभिन्नस्य प्रत्ययसदृशस्य ग्रहणे सादृश्यञ्चार्थवत्त्वे सति

### ❀ विषमपदविवृतिः ❀

विसर्गघटितमसाध्विति भावः । नमःशब्दांशे गतेरित्यस्य सम्बन्धफलन्तु क्रियायोगाभावे बोध्यम् ।

**तिरसोऽन्य**। अत्र गतिग्रहणं नानुवर्त्तते, परत्वेन तिरस्कारशब्दप्रयोगात्। अन्तर्भाव्य तिरसो गतित्वात्।

**द्विस्त्रि**। 'कृत्वोऽर्थे' इति न विसर्गविशेषणं, चतुःशब्देऽसम्भवात्; किन्तु द्विरादीनामित्याह—**वर्तमानानामेषामिति**। 'इसुसो'रितिसूत्रवक्ष्यमाणरीत्या 'सुच' इति सूत्रयितुमुचितम्; सुजन्तान्तस्य पदस्येत्यर्थात्।

**चतुष्कपाल इति**। 'इदुदुपधस्ये'ति नित्यं षः। चतुःशब्दोऽव्युत्पन्न इति—'अप्रत्ययस्ये'ति पर्युदासो न। अत एव 'चतुष्पाद्भ्यो ढ'ञित्यादिनिर्देशाः सङ्गच्छन्ते। 'चतुष्पञ्चादा'वित्यत्रापि षत्वं भवत्येव।

### ❀ अभिनव-चन्द्रिका ❀

इत्यर्थेनाग्निः करोति, कविभिः कृतमित्यादौ न दोषः। विसर्गस्य प्रत्ययभिन्नसमुदायसम्बन्धित्वेऽपि प्रातिपदिकावयवत्वाभावादिति वाच्यम्; 'ओजोभिः कृतम्' 'सख्युः पुत्र' इत्याद्यलुक्समासे प्रत्ययभिन्नसम्बन्धित्वात्प्रातिपदिकावयवत्वाच्च विसर्गस्य षत्वापत्तेः। **सुच इति सूत्रयितुमिति**।

### ❀ चिद्स्थिमाला ❀

भवेषादि पाठः। एतेनान्तर्दिसमुच्चयः। एतेनानुवृत्तिपक्षो माधवकौमुदीयुक्तः परास्तः। **विसर्गेति**। प्राधान्यादिति भावः। ननु सम्पूर्णसूत्रस्थाने 'सुच' इति न्यासे सुजन्तस्य पदस्येत्यर्थेन परमद्विष्करोतीत्यादौ 'प्रत्ययग्रहण' इतिपरिभाषया न स्यादत आह—**वक्ष्येति**। विशेष्यसत्त्वेऽपि शब्दस्वरूपं विशेष्यमादायादौ तदन्तविधौ पुनस्तेन तदन्तविधिरिति भावः। इदञ्च तत्रैव स्फुटीभविष्यति। तदाह—**सुजन्तान्तेति**।

अस्योभयत्र विभाषात्वन्ध्वनयन्नाह—**इदुदुपधेति**। ननु 'चतेरुर'निति व्युत्पत्त्या कथं तत्प्राप्तिरत आह—**चतुरिति**। मन्त्रभाष्यसम्मतत्वात्तत्पक्षस्येति भावः। तत्र सम्मतिमाह—**अत एवेति**। आदिना 'चतुष्पादो गर्भिण्ये'त्यादिसमुच्चयः। यत्त्वेवं सति मनोरमादिग्रन्था मूलीयस्वप्रयोगविरुद्धा अतो हरदत्तोक्तं वैयधिकरण्यमवश्यं स्वीकार्यम्, एवञ्च चतुष्कपाल इत्यत्र कस्कादेराकृतिगणत्वात्षत्व'मिति **दण्डी**, तत्खण्डयति—**चतुष्पञ्चेति**।

### ❀ ज्योत्स्ना ❀

इत्यस्य च पर्युदासत्वात्प्रत्ययभिन्नप्रत्ययसदृशाखण्डसमुदायबोधकत्वात्तदवयवविसर्गस्य षत्वविधानेन—'अग्निः करोती'त्यादौ च दोषाभावादित्याहुः। **सुच इति सूत्रयितुमुचितमिति**। इदं

### ❀ सदाशिवभट्टीयम् ❀

अर्थवदवयवकभिन्नत्वेन। 'कविभिः कृत'मित्यादौ तथाभूते भिसवयवत्वाद्दोषवारणाय सत्यन्तम्, एवञ्च न दोष इति चेन्न। तदपेक्षया सामानाधिकरण्यानुरोधेन लक्षणाया एवोचितत्वात्। **द्विस्त्रिश्चेति**। **असम्भवादिति**। पदविशेषणत्वाच्चेत्यपि बोध्यम्। ननु प्रत्ययग्रहणे तदादिविधिनियमात्परमद्विष्करोतीत्यत्र न स्यादत आह—**वक्ष्यमाणरीत्येति**। 'वनो र चे'त्यत्रेव पदविशेषणत्वात्तदन्तविधिद्वयमिति भावः। **उचितमिति**। उभयत्र विभाषेयम्। पूर्वेण्चतुःकरोतीत्यत्र 'इदुदुपधे'ति प्राप्तविधिष्यते, तत ऐकरूप्यं प्रापितेषु द्विरादिषु—वा विधीयते, 'ह्रक्रोरन्यतरस्या'मितिवत्। अत्र मानम्—'तिरसःसुचोऽन्यतरस्या'मिति न्यासेपि यथायथं षत्वसत्वयोरन्यत्रेवात्रापि सम्बन्धेनोपपत्तौ योगविभाग एव। न च योगविभागा-

### ❀ विषमपदविवृतिः ❀

**द्विस्त्रिश्चतुरिति**। इति शब्द—एषामित्यर्थे। **वक्ष्यमाणरीत्येति**। शब्दस्वरूपं विशेष्यमादाय सुजन्तस्ये-

न चे'दुदुपधस्य सस्य यो विसर्ग'इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम्।

❀ अभिनव-चन्द्रिका ❀

नच चतुष्करोति, चतुः करोतीत्यादौ 'द्विस्त्रिश्चतु'रिति षत्वस्यासिद्धत्वादिदुपधस्येति नित्यषत्वा-

❀ चिदस्थिमाला ❀

**नचेद्विति** । अयोगवाहानामविशेषेण पाठपक्षे उपधासञ्ज्ञारूपदत्तफलखण्डनायोपधाग्रहणमिति प्रागुक्तपक्षात्प्रथमपक्षत्वेन तत्रोक्तमिदम् । इदुदुपधस्य पदस्यावयवो यः सकारस्तस्येत्यर्थः । अस्यो-पपत्तिश्छायायां स्पष्टा । तत्र 'स'ग्रहणं विसर्गस्याप्युपलक्षणमित्याह—**विसर्गेति** । उपलक्षणत्वेन

❀ ज्योत्स्ना ❀

चिन्त्यम्, 'चतुः करोती'त्यत्र त्रिपाद्यां पूर्वं प्रति परस्यासिद्धत्वेन—इदुदुपधस्येति—नित्यषत्वापत्तेः ।

❀ सदाशिवभट्टीयम् ❀

निषेधमुखेनैव प्रवृत्त्या चतुःशब्दमात्रविषयकत्वमेव किं न स्यादिति वाच्यं, योगविभागेन 'न भवती'-त्यर्थकल्पनेपि तिरसित्यत्र कल्पस्य 'वा भवती'त्यर्थस्य त्यागे मानाभावात्, योगविभागेनानिष्टापादनस्यानु-चितत्वाच्च । ननूक्तरीत्या 'कृत्वोर्थे' इति न्यासेपि दोषः सुचच इति चेन्न, तत्र न्यासे कृत्वोर्थांशे इदुदुप-धेतिविशेषणान्वयेन द्वन्द्वाप्राप्त्या 'तिरसोऽन्यतरस्यां कृत्वोर्थे' इति व्यस्तपाठे वाक्यार्थद्वयावश्यम्भावेनैक-योगे विभागे वा साम्येन सामर्थ्याभावात् । सामर्थ्यावलम्बनस्यावश्यकत्वे 'सुच'इत्यत्रैव लाघवाच्च । अप्राप्तविभाषात्वे तु चतुःकरोतीत्यत्रास्यासिद्धत्वान्नित्यं षत्वमिदुदुपधस्येति स्यात् । अन्ये तु कस्कादिषु भ्रातुष्पुत्रशब्दपाठेन लोपनिमित्तरेफस्थानिकविसर्गस्येदुदुपधेति षत्वं नेति ज्ञापनादित्याहुः ।

अपरे तु प्रत्ययावयवभिन्नस्येत्यर्थे विध्यर्थत्वात्पाठो न ज्ञापक इत्याहुः । अत्र न्यासे विसर्गान्ते सुजन्तत्वन्तु भूतपूर्वगत्या, सुच्त्वस्य स्थान्यल्वृत्तित्वात्सुजन्तत्वस्याशास्त्रीयत्वादतिदेशाभावेन साम्प्रतिकाभावात् ।

यत्तु इदुदुपधेतिसूत्रं कस्कादिषु चेत्यतः प्राक् पाठ्यमित्याशयः, अतः 'सुच'इत्यस्य नासिद्धत्वं, 'कृत्वोर्थे' इति त्वनुवृत्त्यनुरोधात्तदुत्तरमेवेत्यसिद्धिरेवेति, तन्न । विकल्पप्रवृत्त्यनन्तरं नित्यविधेरभावपक्षे दुर्वारत्वात् । 'नमस्पुर' 'समासेऽनुत्तरपदस्थस्य' 'अतः कृ' 'अधः शि' 'इसुसोःसामर्थ्येऽन्यतरस्यान्तिरसः' 'कृत्वोर्थे' 'इदुदुपधस्य नित्यमप्रत्ययस्य' 'कस्कादिषु'—( इति—) एवं तत्रापि शक्यत्वाच्च । **पदस्येत्यर्थादिति**। विस-र्गान्तस्येत्यपि पदविशेषणं बोध्यम् । जायमानं षत्वमलोन्त्यस्येत्यन्त्यस्य । 'पदस्य यो विसर्ग'इति वैयधिक-रण्ये तु 'ओजोभिः कृतं द्वि'रित्यादौ मध्यमस्य षत्वं स्यात्। 'ओजःसहोम्भसी'ति तृतीयाया अलुक्। वस्तुतो 'द्विवचनबहुवचनयोरलुक् न, अनभिधाना'दिति 'अलुगुत्तर' इति सूत्रभाष्योक्तेरीदृशः प्रयोगे एव नेति बोध्यम्। सूत्रे—इतिकरणं किं ? कृत्वोर्थे विद्यमानस्य विसर्गस्य द्विवारं त्रिवारं चतुर्वारं षो माभूत् । 'अपत्यं पशु'रिति वदर्थेऽसम्भवात्स्वरूपमित्यस्या(प्र)वृत्तिः स्यात् । 'द्विस्त्रिश्चतु'रिति न्यासे तु न लाघवमिति वदन्ति । **न चेदुदुपधस्येति** । अयोगवाहानामविशेषेण पाठपक्षे उपधासञ्ज्ञारूपदत्तफलखण्डनायोपधा-ग्रहणमिति प्रागुक्तपक्षात्प्रथमपक्षत्वेन तत्रोक्तमिदम् । इदुदुपधस्य पदस्यावयवो यः सकारस्तस्येत्याद्य-

❀ विषमपदविवृतिः ❀

ति पुनः पदस्येति विशेष्यमादाय सुजन्तान्तस्येति, तेन परमद्विष्करोतीत्यत्र षत्वसिद्धिः । **सुच इति सूत्रयितुमिति**। ननु 'चतुः करोती'त्यत्रैतस्यासिद्धत्वादि'दुदुपधस्ये'ति नित्यं षत्वापत्तिः, यथा-न्यासे तु विशिष्य 'चतुर्ग्रहणेन नित्यषत्वस्य बाधः । न च व्युत्पत्तिपक्षे प्रत्ययविसर्जनीयत्वात्तद-प्राप्तिः, 'चतुष्कपाल'मित्यादिसिद्धयेऽव्युत्पत्तिपक्षस्यैवाश्रयणीयत्वात्। न च 'प्रकरणे प्रकरणमसिद्धं न तु योगे योग' इति पक्षाश्रयणेन निर्वाहः, तस्यैतद्ग्रन्थकृदनभिमतत्वात् । न च द्विःकरोति त्रिःकरोतीत्यनयोरिसुसोरित्येव सिद्धे चतुःकरोतीत्यत्र नाप्राप्तेऽस्यापवादत्वं, 'द्विःपाक' इत्यादौ समासे सामर्थ्यविरहात् इसुसोरित्यस्याप्राप्तौ अस्यावश्यकत्वादिति चेन्न । 'कृत्वोर्थे' इत्यस्य स्थाने 'सुच' इति सूत्रयितुमुचितमित्याशयात्। यद्वा 'सुच'इत्युत्तरं 'चतुर' इति न्यासः, सुजन्तस्य चतुरः

विसर्गस्य पाठाभावेनोपधात्वासम्भवात्, तत्स्थानिनिमित्तत्वमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात्। अत एव 'नमः सुटी'ति सूत्रभाष्ये 'संपुङ्कानामित्यनेन कविर्विरर्वाक्यत्वाशङ्क्य—'तुम्फलेऽ'स्यत्र प्रत्यापादनं सङ्गच्छते।

न च 'कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग' इत्यर्थान्न 'पञ्चकृत्वः-करोती'त्यादौ दोषः, नापि 'चतुष्करोती'त्यादावव्याप्तिरिति—'द्विस्त्रिश्चतु'रिति व्यर्थमिति वाच्यं, 'कृत्वोऽर्थे' इत्यस्यासिद्धत्वेन चतुःशब्दे 'इदुदुपधस्ये'ति नित्यषत्वापत्तेः।

'प्रकरणे प्रकरणमसिद्ध'मिति पक्षस्तु—'उपसर्गादसमासेऽपी'ति सूत्रे कैयटे, 'पूर्वपदा'दिति

**ॐ अभिनव-चन्द्रिका ॐ**

प्राप्तिः, 'मुच' इति सूत्रस्य-विसर्गस्य प्रत्ययसम्बन्धित्वेन 'इदुदुपधस्ये'तिषत्वाप्राप्त्या द्विष्करोति, द्विःकरोतीत्यादौ चारितार्थ्येनापवादत्वाभावादिति वाच्यम्: 'द्वित्रिभ्यां सुचः', 'चतुरो लोपश्चे'ति न्यासेन चतुष्करोतीत्यादौ विसर्गस्य प्रत्ययसम्बन्धित्वेन नित्यषत्वाप्राप्त्याऽदोषादिति दिक्।

**ॐ चिदस्थिमाला ॐ**

व्याख्याने मानमाह—**अत एवेति**। **पदत्वेति**। 'इदुदुपधे'ति भावः। अन्यथा तस्य तत्स्थानिकत्वादसङ्गतिः स्पष्टैव। अत एव प्रागुक्तद्विर्निर्णयपक्षैक्यमित्यपि बोध्यम्: ननु 'कृत्वोर्थे' इत्येव सूत्रमस्तु, पदस्येत्यधिकारप्राप्तम्, इदुदुपधस्येत्यनुवर्तते, इत्याशयेन शङ्कते—**नचेति**। 'इदुदुपधस्ये'त्यस्य फलमाह—**न पञ्चेति**। दोषः=अतिव्याप्तिः। तस्य पदविशेषणत्वस्य फलमाह—**नापीति**। **अव्याप्तिरिति**। तदभावेऽन्यथागत्या विसर्गविशेषणतया प्राप्तेत्यर्थः। तयोरप्रत्ययेति निषेधविषयत्वादाह—**चतुरिति**। ननूपसर्गादसमासेऽपी' त्यत्रासमासेऽपी'ति ज्ञापिते'प्रकरणे प्रकरणमसिद्ध'मिति पक्षे नायं दोषोऽत आह- **प्रकेति**।

**ॐ ज्योत्स्ना ॐ**

नच 'द्विःकरोति' 'त्रिःकरोती'त्यत्रेव 'चतुः करोती'त्यत्रापि व्युत्पत्तिपक्षे प्रत्ययविसर्जनीयत्वात्तदप्राप्तिः, तस्य पक्षस्य ग्रन्थकृदनभिमतत्वात्। नापि 'प्रकरणे प्रकरणमसिद्धं न योगे योग' इति पक्षोऽपि ग्रन्थकृतोऽभिमतो येनासिद्धत्वं न स्यात्। नच 'द्विःकरोति', 'त्रिःकरोति'—इत्यनयोरिसुमोरित्येव सिद्धे 'चतुष्करोती'त्यत्र नाप्राप्तेरस्यापवादत्वमिति वाच्यम्: 'द्विःपाक' इत्यादौ समासे सामर्थ्यविरहादप्राप्तेरस्यावश्यकत्वान्नाप्राप्तेरभावात्। नच 'नित्यं समासे' इति नित्यद्विः, 'परमद्विः—पाक' इत्यादावुत्तरपदस्थे तदसम्भवात्। विस्तरस्तु परिभाषाप्रदीपार्चिषि द्रष्टव्यः। **नित्यषत्वापत्तेरिति**।

**ॐ सदाशिवभट्टीयम् ॐ**

र्थः। एतदुपपत्तिश्छायायां स्पष्टेत्याहुः। तत्र विसर्गग्रहणं विसर्गस्थान्युपलक्षकमित्याह—**विसर्गेति**। **संपुंकानामित्यनेनेति**।=एषां शब्दानाम्, इत्यनेन=समः सुटीत्यादिसूत्रत्रयेणेत्यर्थः। **इत्येवेति**। 'सूत्रमस्त्वि'ति शेषः। **नित्यं षत्वापत्तेरिति**। 'उकारानुवृत्तिसामर्थ्यात्तद्बाध' इति प्रकृतसूत्रस्थप्रदीपोक्तन्तु न युक्तम्, इकारानुवृत्त्या स्वरितत्वस्तार्थक्यात्, उकारे पृथक् स्वरितत्वे मानाभावात्।

**ॐ विषमपदविवृतिः ॐ**

षत्वमिति तदर्थं इति न कश्चिद्दोषः। **स्थानिनिमित्तमिति**। तथा च सत्वेति रेफस्याप्युपलक्षणभावः। **नित्यषत्वापत्तेरिति**। अन्ये तु लाघवाद्द्विस्त्रिरित्येव वक्तव्ये कृत्वोर्थप्रत्ययान्तसामान्ये प्रवृत्त्यर्थं कृत्वोर्थग्रहणाच्चतुःकरोतीत्यत्र नित्यषत्वं बाधित्वा विकल्पप्रवृत्तेरिति न कश्चिद्दोषः। स्पष्टं चेदं प्रकृतसूत्रे कैयटे। अथवा 'सुच' इत्येव वक्तव्ये कृत्वोर्थग्रहणाच्चतुःशब्देपि षत्वम्। 'सुच' इत्युक्तौ हि निर्दिश्यमानपरिभाषया सुचो विसर्गस्यैव षत्वं स्यात्, न चतुःशब्दविसर्गस्येति कृत्वोर्थे-

मूत्रे भाष्ये च दूषित एव । 'उपसर्गा'दिति सूत्रे चोपपादयिष्यते ।

किञ्च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणेऽव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्यात्, न सम्पूर्णसपादसप्ताध्याय्याम् । किञ्चास्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः ।

ॐ अभिनव-चन्द्रिका ॐ

दूषित एवेति । 'भोरिछन्धि'भगोरिछन्धि, अघोरिछन्धि' 'हरिवाश्छिन्धी'त्यादौ अनुनासिकानुस्वारयोरापत्तेः, अवस्योकारादेशस्य चानापत्तेरिति भावः । नन्वव्यवहितप्रकरणस्यैव पूर्वदृष्ट्याऽसिद्धत्वे 'अ अ'इत्येतत्पर्यन्तानुवृत्तिप्रयोजकस्वरितत्वकरणं व्यर्थं स्यात्, किञ्च प्रतियोगासिद्धत्वकल्पेऽप्यर्थदोषस्तुल्य इत्यत आह—किञ्चेति । दुर्वारमिति । यथा 'प्राग्दी-

ॐ चिदस्थिमाला ॐ

दूषित एवेति । दूषितप्राय एवेत्यर्थः। 'पूर्वपदा'दित्यस्य—विध्यर्थत्वस्य तत्र सिद्धान्तत्वेन प्रतिपादनेन तत्पक्षे प्रागुक्तरीत्या ज्ञापकत्वासम्भवेन मूलशैथिल्यात्, प्रागुक्तसिद्धान्तमतेन 'निष्कृत'मित्यादौ षत्वसिद्ध्या भाष्योक्तपक्षान्तरे तत्र षत्वसिद्धिरूपज्ञापकफलस्य तत्र कैयटेनैव निरस्तत्वाच्च, अत आह—उपेति । चोन्ते योज्यः। अत्रैव ग्रन्थे इति भावः। नन्वेवमपि न्यायात्तत्पक्षाङ्गीकारः कैयटेनोक्त एवात आह—किञ्चेति । प्रकरणानां भिन्नत्वेन विशेषसत्त्वादनन्तरेतिन्यायेनेति भावः । नन्विदं सिद्धान्तेऽपि तुल्यमत आह—किञ्चास्येति ।

विनिगमनाविरहादाह—प्रतिसूत्रमिति । अत एवा'धिकारः पुनः प्रतिसूत्रं तस्या निर्देशार्थं इति योगे योगे उपतिष्ठते' इति भाष्यं सङ्गच्छते । एतेन कैयटोक्तस्तद्बीजभूतो न्यायः प्रकरणस्यार्थवत्त्वात्तदन्तर्गतयोगानामानर्थक्यरूपो निरस्तः, तेषां प्रत्येकमानर्थक्ये मानाभावात् । स्वस्वसाध्यप्रयोगसाधनेन सार्थक्याच्च । यदि तु 'द्विस्त्रि'रित्येव साहचर्यात्सिद्धे गुरुभूत'कृत्वोर्थे'इत्युक्त्या तत्र विद्यमाने इदुदुपधीयविसर्गमात्रेऽस्य प्रवृत्तिबोधनेन तत्सामर्थ्याच्चतुःशब्दांशे नित्यषत्वापवादोऽयमिति 'इदुदुपधे'त्यनुवृत्तेरिदुपधांशे तदप्राप्तावप्युदुपधांशे नाप्राप्तिसत्त्वेन तदपवादत्वं सुवचमेवेति वा विज्ञायते,तदा द्विरादिग्रहणं शक्यमकर्त्तुं, तत्राप्यन्यथा विकल्पसिद्धेः । ध्वनितञ्चेदं भाष्यकैयटादौ । अत एव प्रागुक्त'सुच'इति न्यासे नायन्दोषः । एतेन 'इसुसो'रित्यादि—'विस्तर'इत्यन्तं चिन्त्यं, भाष्यकैयटयोरपि दूषितत्वात् । 'कृत्वोऽर्थे' इति न्यासोक्तदोषस्य 'सुच'इति न्यासेऽपि सत्त्वात्। तद्दूषणपूर्वकपरपक्षखण्डने एव दूषितशब्दप्रयोगात्। प्रथम'किञ्चे'ति दोषस्य भवन्मतेऽपि सत्त्वात् । प्रकरण एवोपस्थित्या 'प्रतियोगमनुपस्थितेश्च'—इति मन्दोक्तमपास्तम् । उक्तयुक्तिगणात् । तदाह—इत्यन्यत्रेति ।

ॐ ज्योत्स्ना ॐ

इदं चिन्त्यम् ,—लाघवाद्द्विस्त्रिरित्येव वक्तव्ये कृत्वोऽर्थप्रत्ययान्तसामान्ये प्रवृत्त्यर्थका-

ॐ सदाशिवभट्टीयम् ॐ

'द्विस्त्रिरित्येव वक्तव्ये कृत्वोर्थग्रहणसामर्थ्यात्तद्बाध' इत्यपि न , इतिशब्दोपादानफलस्य प्रागुक्तत्वात् । तत्करणे तु विपरीतगौरवापत्तेः क्व तत्सामर्थ्यमिति । दूषित एवेति । दूषितप्राय इत्यर्थः । सूत्रे चेति । चोऽन्ते योज्यः । किञ्च पूर्वत्रेति । सिद्धान्ते तु 'वृद्धिरादै'जित्यारभ्य स्वावधिकः स्वाव्यवहितश्च समूहः पूर्वशब्दार्थः । स्वव्यवहितपूर्वग्रहणे तु ततः परत्वस्य सपादसप्ताध्याय्यामपि सत्त्वेन तत्राप्यसिद्धत्वापत्तेः । स्वस्मात्परग्रहणे तु त्रिपाद्यामनन्तरं पूर्वं प्रति अन्तरं नासिद्धं स्यात् । समूहदृष्ट्याऽसिद्धत्वे फलाभावात् प्रतियोगं पर्यवस्यति तादिति भावः । इत एवारुचेराह—किञ्चास्येति । सप्ताध्याय्यामिति । 'सपादे'त्यादिः । प्रतिसूत्रमिति । अतएवाऽधिकारः पुनः प्रतिसूत्रं निर्देशार्थं

ॐ विषमपदविवृतिः ॐ

ग्रहणं कृतम् । एतेन 'सुच' इति सूत्रयितुमुचितमित्यपास्तम् । न च सुचतुष्पञ्चाशदिति सुजर्थे-

**इसुसोः** । अत्रेसुसोः प्रातिपदिकावयवयोर्ग्रहणं, तेन 'पेचुः काष्ठैः', 'सख्युः पाकः', 'कविभिः कृतं'मित्यादौ षत्वं न । 'नित्यं समासे' इति सूत्रोदाहरणे समासविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात्, साहचर्याच्च । इसुसन्तपदावयवविसर्गस्येत्यर्थः, पदस्येत्यधिकारात् ।

❀ अभिनव-चन्द्रिका ❀

च्यन' इत्यादौ अवधिसाजात्यादर्थपुरस्कारेण प्रत्ययविधायकेष्वेवाङादेरधिकारः । एवं 'प्रकरणे प्रकरणे एवानुवर्त्तनं' इत्येतज्ज्ञापकलिङ्गाभावान्स्त्रियामित्यादेरिव अस्यापि प्रतिसूत्रमनुवृत्ति-दुर्वारेति भावः । **प्रातिपदिकावयवयोरिति** । इत्साहचर्यादुस् तिङन्तावयवो गृह्यते । तादृशो स्साहचर्याच्चेस् सुबन्तावयवो गृह्यते । एतेन प्रातिपदिकावयवयोर्ग्रहणमित्यर्थाल्लब्धमिति

❀ चिदस्थिमाला ❀

अवयवयोः—तयोरेव । लक्ष्यानुरोधस्य मुख्यबोधकत्वं ध्वनयन्नादौ तस्य फलमाह—**तेनेति** । तत्र **हेतुमाह—नित्यमिति** । **समासेति** । तत्सञ्ज्ञाविषये तदुदाहरणे इत्यर्थः । **साहेति** । 'तत्सूत्रे'त्यादिः । मूलासाङ्गत्यायाह—**इसुसन्तेति** । अत्र'सुसोः प्रत्यययोरर्थवतोश्च ग्रहण'मिति **कैयट-दीक्षितादयः**, अत एव पूर्वसूत्रस्योभयत्र विभाषात्वम् । सर्वमेतद्धनुरोधेन 'इसुस्विषये व्युत्पत्तिपक्षस्यैवा-वश्यकत्व'मिति तेषामाकूतम्, अत एवैतत्प्रागभिविभाषेति तदनुरोधेनाह—**नचेति** । 'प्रत्यये'त्यर्थानुवादः।

❀ ज्योत्स्ना ❀

क्त्वोऽर्थग्रहणाच्चतुः करोतीत्यत्र नित्यपत्वं बाधित्वा विकल्पप्रवृत्तेः । स्पष्टश्चेदं प्रकृतसूत्रे भाष्यकैयटयोरिति परिभाषाप्रदीपार्चिषि विस्तरः । **साहचर्याच्चेति** । अलाक्षणिकात्तिङन्तेस्साहच-

❀ सदाशिवभट्टीयम् ❀

इति योगे योगे उपतिष्ठते' इति भाष्यम् । **इसुसोरिति** । **सख्युरिति** । लाक्षणिकत्वेनास्य व्यावृत्तिर्बोध्या । **कविभिरिति** । अव्युत्पत्तिपक्षेऽर्थवानिससम्भवीति भावः । **साहचर्यादिति** । उत्तरसूत्रविषये समास-रूपप्रातिपादिकावयवयोरेवेसुसोः सम्भवेनेहापि तथाभूतयोरेव ग्रहणं, तथाभूतयोः सुप्तिङ्भिन्नयोरेव सम्भव इत्येतत्साहचर्यादुत्तरसूत्रेऽपि सुप्तिङ्भिन्नयोरेव ग्रहणमिति—'ओजोभिः कृतं' 'सख्युः पाक' इत्या-दावलुकि, चक्रुः पेचुरिति सततं यत्राभिधीयते सा 'चक्रुःपेचु'रित्यादौ च नोत्तरसूत्रप्रवृत्तिरिति बोध्यम् । तिङ्भिन्नेन साहचर्यादुस् तिङ्भिन्नः, सुबवयवभिन्नप्रतिपदोक्तोसा साहचर्यादिसपि तथैवेति भावः । **पदावय-वेति** । फलितार्थकथनमिदं, वाच्यार्थस्त्विसुसन्तावसर्गान्तं यत्पदं तदन्तस्याल आदेश इति । तेनो'जोभिः

❀ विषमपदविवृतिः ❀

**बहुव्रीहौ षत्वानापत्त्या 'सुच'इति सूत्रयितुमशक्यमेवेति 'कृत्वोर्थे' इत्यस्य न 'सुच'इत्यनेन समान-फलकत्वमिति वाच्यम्, 'कृत्वोर्थे' इत्युक्तावप्यस्यासिद्धत्वेन'इदुदुपधस्ये'ति नित्यषत्वस्यैवोक्तस्थले प्रवृत्त्या फलभेदाभावात् । तदेतदभिप्रेत्य वार्तिककारभाष्यकाराभ्यां द्विस्त्रिश्चतुर्ग्रहणं प्रत्याख्यात-मित्याहुः । इसुसोः साम । तयोरेव सम्भवेनेति । अव्युत्पत्तिपक्षाश्रयणेनेदम् । इदमयुक्तम्—तदाश्रयणे हि जग्मुः पेचुरिति यस्यां क्रियायामित्या'ख्यातमाख्यातेने'ति समासे 'नित्यं समासे इति षत्वापत्तेः । एवं 'षष्ठ्या आक्रोशे' इत्यलुकि 'सख्युःपुत्र' इत्यत्रापि षत्वापत्तिः । 'सुपीः पचति' 'सुभूः पचती'त्यादौ प्रातिपदिकावयवयो'रिसुसोः सामर्थ्ये' इति षत्वापत्तिः । तस्मादिसुसोः सामर्थ्ये इत्येतद्विषये व्युत्पत्तिपक्ष एवाश्रयणीयः । तथा सति 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' 'अर्थवद्ग्रहणे नानर्थकस्य' 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्ये'ति परिभाषाभिः, 'सख्युःपाक'**

न च प्रत्ययग्रहणपरिभाषया परमसर्पिष्करोतीत्यादौ षत्वानापत्तिः, अवयवस्ये-सुसन्तत्वेऽपि 'उत्तरपदत्वे चे'ति निषेधेनापदत्वादिति वाच्यम्; 'अनुत्तरपदस्थस्ये'ति निषेधेन क्व चिदुपात्तविशेष्यसत्त्वेऽपि शब्दरूपं विशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपं विशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया इसुसन्तान्तस्येत्यर्थेनादोषात्। अत एव 'वनो र चे' त्यादौ न दोषः। 'ब्राह्मणस्य

अभिनव-चन्द्रिका

भावः। **साहचर्यादिति**। निरुक्तसाहचर्यादिति भावः। **षत्वानापत्तिरिति**। इसन्ततदादे-रुसन्ततदादेर्विसर्गस्य ष इत्यर्थेन षत्वानापत्तिः। किञ्चाधिकृतपदस्येत्यनेन सामाना-धिकरण्येनान्वयेपि धर्मिणः सिद्धत्वेन तदादित्वधर्ममात्रोपस्थित्या 'इसन्तमुसन्तम्, इसुस् च यस्मा-द्विहितौ तदादित्वविशिष्टं पदं तत्सम्बन्धिविसर्गस्य ष' इत्यर्थेनादोषादिति भावः। ननु 'परम-सर्पिष्करोती'त्यादौ प्रत्ययलक्षणेन 'सर्पि'रितिपदम्, इस् यस्माद्विहितः तदादित्वविशिष्टञ्चेति षत्व-विकल्पो दुर्वार इत्यत आह—**उत्तरपदत्वे चेति**। **शब्दरूपं विशेष्यमिति**। तदादिरूपं शब्दमि-त्यर्थः। **शब्दरूपं विशेष्यमिति**। उक्त एवार्थः। **इसुसन्तान्तस्येति**। इसन्तमुसन्तं यत्तदादि तदन्तं यत्पदं तस्येत्यर्थः। **न दोष इति**। वन्नन्तं यत्तादादि तदन्तात्प्रातिपदिकादित्यर्थादिति-भावः। मूले—**व्यपेक्षेति**। तत्त्वञ्च यत्किञ्चित्पदविशिष्टत्वम्, वै० 'स्वघटितत्व' 'स्वप्रयोज्य-विषयतानिरूपितविषयताप्रयोजकपदघटितत्व' 'स्वप्रयोज्यविषयतानिरूपितत्वाभाववद्विषयता-

❀ चिदस्थिमाला ❀

नन्ववयवस्येसुसन्ततया निर्वाहोऽत आह—**अवयवेति**। निष्कृष्य व्यपेक्षायां मानाभावादेवाह—**उत्तरेति**। तस्य कार्यित्वस्य पदान्तविधित्वस्य च सत्त्वात्। **निषेधेनेति**। उत्तरसूत्रस्थेनेति भावः। उपात्तत्वञ्च तत्रोक्त्याऽनुवृत्त्यादिना वेत्यन्यदेतत्। आक्षिप्तस्य प्रायः शाब्देऽनन्वयादाह—**शब्दरूप-मिति**। आदायेति भावः। अर्थकस्य—इसुसोरित्यस्य। तस्यावश्यकतामाह—**अत एवेति**। ननु 'सापेक्ष-

❀ सदाशिवभट्टीयम् ❀

कृन' 'सर्पिष्करोती'त्यत्र पूर्वस्य न। पूर्वोक्तरीत्या तस्यासत्त्वाच्च, तयोर्व्यपेक्षाविरहाच्च। अत्रेसुसोः प्रत्ययो-रर्थवतोश्च ग्रहणमिति कैयटदीक्षितौ।• अत एव पूर्वसूत्रस्योभयत्र विभाषात्वं, सर्पिषा यजुषेत्यादौ षत्वा-येसुस्विषये व्युत्पत्तिपक्ष एवेति तदाकूतम्। अत एवेयमप्राप्तविभाषेति। तदनुरोधेनाह—**नचेति**।

निष्कृष्य व्यपेक्षायां मानाभावादाह—**उत्तरपद इति**। तस्य कार्यित्वस्य वस्तुतः पदान्तविधित्वस्य च सत्त्वात्। उपात्तत्वञ्च तत्रोक्त्यानुवृत्त्या वेत्यभिप्रेत्याह—**उपात्तेति**। **ज्ञापनेनेति**। ननु 'पूर्वसर्पिःप्रिय' इत्यादौ मध्यमपदत्वाक्रान्ते उत्तरपदेति निषेधाप्राप्त्येसन्तस्य पदत्वेन निषेधश्चरितार्थ इति वाच्यं, समा-सेन पूर्वपदाध्याहारेणेसन्तस्य पूर्वपदत्वाभाव इति ज्ञापकपरभाष्याशयात्। अध्याहारफलन्तु परमसर्पिः प्रियं यस्येति त्रिपदेऽप्रवृत्तिः। अन्ये त्वं'थ चेत्कृदन्तमेतत्ततोऽधिकेनैवमेव भवेत्प्राप्तिरिति भाष्यस्य परम-

❀ विषमपदविवृतिः ❀

इत्यादौ न षत्वम्। परस्परसाहचर्येण कृतोरेवेसुसोर्ग्रहणात्—'पेचुः काष्ठै'रित्यादावपि न षत्व-मित्येव युक्तम्। व्युत्पत्तिपक्षमाश्रित्य शङ्कते—**नचेति**। **इसुसन्तान्तस्येत्यर्थेनेति**। 'अनुत्तर-पदस्थस्ये'त्यनेन। 'पदस्ये'त्यस्य—वैयधिकरण्येनान्वयकल्पनात्परमसर्पिष्करोतीत्यादौ षत्वमित्यपि बोध्यम्। **न कर्तव्यमेवेति**। अन्ये तु—'अयामन्ताल्वाय्येत्न्विष्णु'ष्विति 'तितुत्रतथसि' इति (वदतः) पाणिनेर्व्युत्पत्तिपक्षोपि सम्मतः, 'नित्यं समास' इतिसूत्रे नित्यग्रहणाच्च। अव्युत्पत्तिपक्षे हि

सर्पिष्करोती'त्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं, तस्यैकार्थीभावसामर्थ्यविषयत्वात् । 'अधात्त्वभिहितं समानाधिकरणमसमर्थव'दित्युक्तेः 'सर्पिः कालक'मित्यादौ न षत्वम् । 'अधात्वभिहित'मित्युक्तेः 'सर्पिष्पीयते' इत्यत्र षत्वसिद्धिः । धातुसहचरितप्रत्ययाभिहितार्थेन समानाधिकरणमसमर्थवत्तेति तदर्थः ।

ॐ अभिनव-चन्द्रिका ॐ

प्रयोजकपदाघटितत्व, 'स्वनिष्ठशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतशक्तिपर्याप्त्यनधिकरणत्वं'तच्चतुष्टयसम्बन्धेन । प्रत्येकपदेऽतिव्याप्तिवारणाय आद्यसम्बन्धद्वयम् । 'तिष्ठतु सर्पिः पिव त्वमुदक'मित्यादावतिव्याप्तिवारणाय तृतीयसम्बन्धोपादानम् । समासेऽतिव्याप्तिवारणाय चतुर्थसम्बन्धोपादानमिति दिक् । **एकार्थीभावेति** । तत्त्वञ्च—यत्किञ्चिच्छक्तिविशिष्टत्वम् । वैं० 'स्वपर्याप्त्यधिकरणघटितत्व' 'स्वनिरूपकेतरनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्व' 'स्वग्रहप्रयोज्यग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्वं'तत्त्रितयसम्बन्धेन । यथा 'राजपुरुष'इत्यादौ—राजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरण—राजपद—घटितत्वम्, राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकेतर—पुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं, राजत्वावच्छिन्ननिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वञ्च वर्त्तते इति लक्षणसमन्वयः । आद्यसम्बन्धद्वयं स्वरूपकथनपरं नतु व्यावर्त्तकम् । तृतीयसम्बन्धोपादानं वाक्येऽतिव्याप्तिवारणायेति दिक् ।

**अधात्वभिहितं समानाधिकरणमसमर्थवदिति।** धातुप्रकृतिकप्रत्ययप्रयोज्यत्वाभाववती या विशेष्यतानादृशविशेष्यतानिरूपिता या अभेदसम्बन्धावच्छिन्ना ( सम्बन्धानवच्छिन्ना वा ) प्रकारता, तादृशप्रकारताप्रयोजकं तादृशप्रकारतानिरूपितविशेष्यताप्रयोजकं वा व्यपेक्षारूपसामर्थ्याभाववदित्यर्थः । धातुप्रकृतिकप्रत्ययप्रयोज्यत्वाभाववत्त्वस्य विशेष्यतायां विशेषणदानेन—सर्पिष्पीयत इत्यादौ नासामर्थ्यं, तेपदप्रयोज्यविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वस्य सर्पिःपदे सत्त्वेऽपि तेपदार्थकर्मत्वनिष्ठविशेष्यतायां धातुप्रकृतिकतिङ्प्रत्ययप्रयोज्यत्वाभावस्याभावात् । **धातुसहचरितेति** । धातुप्रकृतिकेत्यर्थः । **प्रत्ययाभिहितार्थेति** । तिङ्वाच्यार्थ इत्यर्थः । **समाना-**

ॐ विद्वत्स्थिमाला ॐ

मसमर्थव'दिति वचनेन 'चैत्रस्य सर्पिष्करोती'त्यादाविष्टषत्वविकल्पो न स्यादत आह—**आद्येति** । नन्वेवं 'समानाधिकरणमसमर्थव'दित्यस्यापि तद्विषयत्वेन 'सर्पिःकालक'मित्यादावपि षत्वविकल्पापत्तिरत आह—**अथेति** । अस्योभयविषयत्वमिति भावः । नन्वत्र न धातुनाभिधानमत आह—**धातुसहेति** । **अर्थेन=**

ॐ सदाशिवभट्टीयम् ॐ

सर्पिःकुण्डिके'त्युपक्रम्य प्रवृत्तस्य, तथा 'वाक्येपि तर्हि न प्राप्नोति, परमसर्पिःकरोती'ति भाष्यस्य चैतन्ने एकार्थीभावव्यपेक्षयोरभाव इत्येवाशयो, न 'तूत्तरपदे' इति निषेधेनेसन्तस्य पदत्वाभाव इति—मध्यमपदत्वाक्रान्तत्वेन प्लुतात्परत्र सत्त्वेन च तन्निषेधाप्रवृत्तेरित्याहुः । **तदन्तार्थकस्येति** । इसुसित्यस्येत्यर्थः । **धातुसहचरितेति** । इदं समर्थसूत्रकैयटानुरोधेन, 'स्तुक्रमो'रिति सूत्रस्थभाष्यरीत्या

ॐ विषमपदविवृतिः ॐ

'नित्यं समास'इत्यस्य षत्वप्रतिषेधमात्रफलकत्वेन नित्यग्रहणवैयर्थ्यं स्पष्टमेव । किञ्चाव्युत्पत्तिपक्षस्यैवाश्रयणे 'जग्मुः पेचु'रिति यस्यां क्रियायामित्याद्युक्तदोषापत्तेः । तदेतदभिप्रेत्य 'नित्यं समासे'

यदा तु—सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं, पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति 'आयनेयीनी'ति सूत्रे भाष्ये स्पष्टमुक्तेः, तत्र हि 'शङ्ख' इत्यादावादेशानाशङ्क्य— 'उणादीनां प्रतिषेधो वक्तव्यः, प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्ध'मित्युक्तम्, 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति सूत्रं व्याकरणान्तररीत्यैव, 'सर्वनामस्थान'-मितिमहासञ्ज्ञावत्। अत एव भाष्ये 'उणादयोऽव्युत्पन्नानी'त्येवोक्तम्, न तु 'अनेकार्था अपि धातव' इतिवदव्युत्पन्नान्यपीत्युक्तं, तदा—'इदुदुपधस्ये'ति नित्ये षत्वे प्राप्तेऽनेन विकल्प इति। प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः—'परमसर्पिष्करोती'त्यादौ षत्व-विकल्पः सिद्धः। 'नित्यं समासे' इति सूत्रमनुत्तरपदस्थस्येतिप्रतिषेधार्थम्। नित्य-ग्रहणन्तु न कर्त्तव्यमेव; समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः। 'सर्पिषे'त्यादौ षत्वं त्वत्र पक्षे क्वचिदन्यदेवेत्यर्थकाद्बहुलग्रहणादिति स्पष्टं भाष्ये। **व्यपेक्षेति।**

❀ अभिनव-चन्द्रिका ❀

**धिकरणमिति।** तिङ्प्रयोज्यविशेष्यतानिरूपितसम्बन्धानवच्छिन्नप्रकारताप्रयोजकं, तादृशविशे-ष्यताप्रयोजकं वेत्यर्थः। **विकल्प एवेतीति।** अव्युत्पत्तिपक्षेऽपि 'इसुसो' रित्यस्य 'इदुदुपधे'ति-षत्वापवादत्वात्, इसुसोरित्येतद्दृष्ट्या 'कस्कादिषु चे'त्यस्यासिद्धत्वाच्च विकल्प एवेति भावः। एवञ्च

❀ चिदस्थिमाला ❀

कर्मादिना। तृतीयार्थे प्रथमा, प्रसज्यप्रतिषेधश्च। सिद्धान्तमाह—**यदा त्विति।** 'तदे'त्यनेना-न्वयः। तदेवाह—**तत्र हीति।** 'उक्त'मित्यत्रान्वयः। आदेशान्—ईनादीन्। **वक्तव्य इति।** ''न वक्तव्यः, 'ऋतेरीय' ङिति ज्ञापकान्न धातुप्रत्ययानामादेशा'' इति शेषः। अत एवाग्रे चः। नन्वेव-मयामन्तेत्यस्य का गतिरत आह—**अयेति।** अस्या रीतेरावश्यकतामाह—**सर्वेति।** **भाष्ये इति।** 'सिद्ध'मित्यग्रे तत्रैवेति भावः। एवव्यवच्छेद्यमेवाह—**न त्विति।** इतिर्हेतौ। अत्र पक्षे द्रोष एव नेति न ज्ञापकोपयोगो नापि तस्य तत्त्वसम्भव इत्याह—**प्रत्ययेति।** नन्वेवं समासे 'इदुदुपधे'ति सिद्धमिति 'नित्य'मितिसूत्रं व्यर्थमत आह—**नित्यमिति।** तेन प्राप्तेस्तथा च तत्र स प्रसज्यप्रतिषेध इति भावः। नन्वेवमपि नित्यग्रहणं व्यर्थमेवात आह—**नित्येति।** नन्वत्र पक्षे 'सर्पिषे'त्यादौ का गतिरत आह—**स्पष्टं भाष्य इति।** 'आदेशप्रत्यययो'रितिसूत्रे—अत्र पक्षे तत्र दोषमाशङ्क्य—एवं तर्हि

❀ ज्योत्स्ना ❀

र्यादित्यर्थः। **बहुलग्रहणादिति।** **स्पष्टं भाष्ये इति।** वस्तुतस्तु पाणिनेर्न केवलमव्युत्पत्तिपक्ष एव 'तितुत्रे'त्यादावुणादीनामपि केषाञ्चिन्निमित्तत्वेनोपादानात्। 'उणादयोऽव्युत्पन्नानी'त्यस्य लक्ष्या-

❀ सदाशिवभट्टीयम् ❀

निङाङ्कर्मादिद्योतकत्वे तु यथाश्रुतमेव सम्यगिति तत्रैवोद्योते स्पष्टम्। **नेति।** इदं फलितार्थप्रदर्शनम्। पर्युदासस्य न्याय्यत्वेन धात्वभिहितभिन्नमसमर्थवदित्यर्थः। ननु समानाधिकरणं धात्वभिहितं समर्थवदित्येवास्तु 'समानाधिकरणं चेद्धात्वभिहितमेवे'ति नियमादिष्टसिद्धेरिति चेन्न। 'धात्वभिहितञ्चे-त्समानाधिकरणमेवे'ति विपरीतनियमापत्त्या 'सर्पिः पाठकः पिबती'त्यादौ षत्वापत्तेः। **वक्तव्य इति।** 'न वक्तव्यः, ऋतेरीयङिति ज्ञापकान्न धातुप्रत्ययानामादेशा'इति शेषः। अतएवाग्रे चः पठ्यते भाष्ये। **नित्यग्रहणन्त्विति।** समासग्रहणन्तूत्तरार्थमिति भावः। ननु व्युत्पत्तिपक्षे'ऽनुत्तरपद-

❀ विषमपदविवृतिः ❀

इति सूत्रे भगवता भाष्यकृतोक्तम्—'अथ चेत्कृदन्तमेत'दिति। 'अथ चेत्सविज्ञान'मित्यादिना

व्याख्यानात्। एकार्थीभावसामर्थ्यग्रहणे 'परमसर्पिःकुण्डिके'त्यादौ समासे विकल्पापत्तिः। 'अनुत्तरपदस्थस्ये'ति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः।

नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह— **कस्कादिष्विति**। एतेन 'तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्व'मित्यपास्तम्। **व्यपेक्षाविरहेऽपीति**। 'आनय सर्पिष्कुण्डिका तिष्ठती'त्यादौ। **व्यपेक्षायामिति**। 'इदं सर्पिष्कुण्डिकाया' इत्यत्र। प्रत्ययभिन्नविसर्गस्येत्यर्थम्—'इदुदुपधस्ये'त्यत्र व्याचक्षाणानां व्याख्यादशक्तां मतेऽव्यपेक्षायां तेन सिद्धेरिति भावः। एतेन 'कस्कादिपाठस्याव्य-

ॐ अभिनव-चन्द्रिका ॐ

'व्यपेक्षायां नित्यार्थश्चे'ति मूलग्रन्थोऽपि व्याख्यादर्शनेन एव बोध्यः। अन्यथा कस्कादिषु तत्पाठस्य

ॐ चिद्स्थिमाला ॐ

न ह्लवचनात्सिद्ध'मित्युक्तम्, उणादय इति सूत्रे इति भावः। **व्याख्येति**। लक्ष्योत्तरसूत्रीयसमासग्रहण-मूलकादित्यर्थस्तदेवाह—**एकार्थीभावेति**। ननूत्तरसूत्रेण जायत एवात आह—**अनुत्तरेति**। **नन्वनेनैवेति**। 'नित्यं समासे' इत्यनेनैवेत्यर्थः। एतेन=तत्र चारितार्थ्येन। **अपास्तमिति**। अत एवा'नुत्तरेति किं? 'परमसर्पिःकुण्डिके'ति भाष्यं सङ्गच्छते। अन्यथा तद्विरोधोऽपि स्पष्ट एव। गणे समासैकदेशपाठे मानाभावाच्च। पूर्वफलस्यासम्भवाद्द्वितीयफलमुक्तं मूले, तदपि न सिद्धान्तकथनमित्याह—**प्रत्ययेति**। सामानाधिकरण्येनान्वय इति भावः। तेन=इदुदुपधेत्यनेन। खण्डनकारोक्तिं खण्डयति—**एतेनेति**। तत्रा-

ॐ ज्योत्स्ना ॐ

नुरोधात्—क्वचिद्व्युत्पत्तिकार्यं न लभन्त इत्येवार्थ इत्यादि परिभाषाप्रदीपार्चिषि विस्तरः।

ॐ सदाशिवभट्टीयम् ॐ

स्यस्ये'ति पर्युदासात्। समासे लब्धे किमर्थं समासग्रहणमिति चेच्छृणु, पर्युदासेन पदात्परपदस्थस्यैवेत्यादेरपि वक्तुं शक्यत्वेन—आनय सर्पिः पठत्ययं, परमसर्पिः कुण्डिकेत्यादावेव स्यादिति। **भाष्ये इति**। एवञ्च 'निष्टपु सर्पिष्पिब त्व'मित्यादौ 'सर्पिष्कालक'मित्यादौ च नित्यं षत्वं न्याय्यम्। भाष्ये सविसर्गपाठस्तु व्युत्पत्तिपक्षाभिप्रायेणेति बोध्यम्। **व्याख्यानादिति**। तच्च 'नित्यं समासे' इति सूत्रे भाष्ये स्पष्टम्।

**सिद्धेरिति। भाव इति**। अयं भावः—असमासे व्यपेक्षाविरहेऽपि षत्वार्थ' इति वक्तुः प्रत्ययसम्बन्धिभिन्नविसर्गस्य षत्वमित्येवार्थः सम्मतो व्युत्पत्तिपक्षश्च, अन्यथा व्यपेक्षाविरहेऽपि प्रत्ययाभिन्नविसर्गस्येत्यर्थे 'इदुदुपधेति' षत्वसिद्ध्या षत्वार्थं इत्यस्यासङ्गतेः। व्याख्यादर्शरीत्याह—**व्यपेक्षायामिति**। एवञ्च षत्वार्थ इत्ययङ्ग्रन्थः सिद्धान्तभूतः, अयं त्वन्यदीयः। एवं नायं सर्वग्रन्थ एकमतानुसारीति भावः। तथा चाऽस्थिनपरमतेऽपि गणे पाठो नित्यार्थ आवश्यक इति तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्वमिति वक्तुरतिमन्दत्वसूचनाय अप्यर्थकश्चः पठितः। 'इदुदुपधे'तिसूत्रस्थमनोरमाग्रन्थस्तु व्याख्यादर्शानुसारेणेति न तद्विरोधः।

एकमतानुसारेण सर्वो ग्रन्थो योज्य इत्याग्रहे त्वित एवारुचेराह—**व्यपेक्षायामितीति**। योज्यमित्याह—

ॐ विषमपदविवृतिः ॐ

पक्षान्तरस्याप्यवलम्बनं तु प्रौढिवादमात्रं, तदेतदभिप्रेत्य 'अव्युत्पत्तिपक्षे त्वाश्रीयमाणे सर्पिषेत्यादि न सिद्ध्यतीति व्युत्पत्तिपक्ष एवेसुसन्तस्याश्रयणीय' इति 'नित्यं समासे' इति सूत्रे कैयटेनोक्तम्। आदिपदेन 'भिन्दुः पेचु'रित्यादिपूर्वोक्तदोषसङ्ग्रहः। किञ्चेसुसोर्विषयेऽव्युत्पत्तिपक्षाश्रयणे 'सर्पिःकालक'मित्यादावसामर्थ्यादनेन षत्वाप्रवृत्तावि'दुदुपधस्ये'ति नित्यं षत्वापत्तिः। एवं 'देवदत्तस्येदं सर्पिः फाण्टमिदं यज्ञदत्तस्ये'त्यत्रेदुदुपधस्येति षत्वापत्तिः। कस्कादिषु सर्पिष्कुण्डिकाशब्द-पाठस्तु व्यपेक्षायां तदभावेऽसमासे च नित्यार्थः। असमासे व्यपेक्षाविरहे चेदुदुपधस्येति

पेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित' इत्यपास्तम् । प्रत्यय-सम्बन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति—व्यपेक्षायां विकल्प एवेति बोद्ध्यम् ।

**अतः कृ** । कृशब्देन तदादिग्रहणं, समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । 'विष्वग्देवयो'रिति सूत्रे वप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात् ।

'अयस्कुम्भी'त्यादौ लिङ्गविशिष्टपरिभाषया सत्वं बोद्ध्यम् । **भास्कर इति** । तपरकरणात् 'अतः कृ'इत्यस्याप्राप्तिः । *** इति विसर्गसन्धिः ***

**ॐ अभिनव-चन्द्रिका ॐ**

व्यपेक्षाविरहेऽसमासे चारितार्थ्येनासिद्धत्वाद्व्यपेक्षायां विकल्पो दुर्वारः स्यात् । **तदादिग्रहणमिति** । सम्बन्धानवच्छिन्ना (अभेदसम्बन्धावच्छिन्ना वा) या प्रकारता तादृशप्रकारताप्रयोजकं धातुबोधकसप्तम्यन्तम्पदं स्वबोध्यार्थावयवकपरं बोध्यमित्यर्थिकया'धातुग्रहणे तदादिविधि'रिति परिभाषयेति भावः । **धातोरिति** । धातुबोधकसप्तम्यन्तस्येत्यर्थः । **विशेषणत्वे इति** । सम्बन्धानवच्छिन्नविशेष्यताप्रयोजकत्वे इत्यर्थः । अधः शिरसी पदे । अधस्पदं शिरस्पदञ्च पदशब्दे परे सत्वं लभते इति सूत्रार्थः । ※ इति विसर्गसन्धिः ※

**ॐ चिद्स्थिमाला ॐ**

चारितार्थ्येनेत्यर्थः । **तस्येति** । 'कस्कादी'त्यस्यासिद्धत्वादि'सुसो'रितिविकल्प इत्यर्थः । तथाच व्याख्यादर्शानुसारेण मूलम् । एतेन रत्नाकरदण्ड्याद्युक्तमपास्तम् । अत एव सिद्धान्तमाह—**प्रत्ययेति** । उक्तरीत्येति भावः । ननु विशेष्याभावात्कथं तदन्तविधिरत आह—**समासेति** । नन्वेवमपि वचनाभावात्कथं तदत आह—**विष्वगिति** । नन्वत्र 'समासेनुत्तरे'त्यस्यानुवृत्त्या विसर्गान्तस्य पूर्वपदत्वबोधनेन तदाक्षिप्तोत्तरपदस्य प्रत्यासत्त्या कंसादिरूपस्यव ग्रहणेनायस्कुम्भीत्यादौ सत्वं न स्यादत आह—**अयसिति** । पुनरुपन्यासे बीजं ध्वनयन्नाह—**तपरेति** । एतेन 'सौत्रक्रमानुरोधेन पुनरुपन्यास' इति रत्नाकरोक्तमपास्तम् ।

※ इति विसर्गसन्धिः ※

**ॐ ज्योत्स्ना ॐ**

इति बोध्यमिति । यदा तु 'प्रकरणे प्रकरणस्यासिद्धत्वं न योगे योगस्ये'ति पक्षस्तदा परत्वाद्विकल्पं बाधित्वा व्यपेक्षायामित्यार्थः पाठ इत्यपरो मूलकृदभिप्रायः । ※ इति विसर्गसन्धिः ※

**ॐ सदाशिवभट्टीयम् ॐ**

**विकल्पेति** । तदभावे नित्यविधिस्तु न, विकल्पविधीनां सति सम्भवे नवेतीत्यारम्भेणोभयत्र विभाषात्वात् । न च सिद्धत्वम्,आश्रयात् । 'असिद्धत्वाद्विकल्प'इत्यापाद्यमानग्रन्थस्तु चिन्त्य एव । यद्वा साहचर्य्येण विकल्पविषयेऽप्राप्तत्वादिति तदर्थः । **आक्षिप्तेति** । लक्ष्यानुरोधादध्याहृत्येत्यर्थः । पुनरुक्तौ बीजमाह—**तपरेति** ।

**ॐ इति शेखरविवृतिसङ्ग्रहे विसर्गसन्धिः ॐ**

**ॐ विषमपदविवृतिः ॐ**

षत्वासिद्धेरित्याहुः । **व्यपेक्षायां विकल्प एवेति बोध्यमिति** । इदमयुक्तम्—विकल्पेन मुक्ते कस्कादित्वान्नित्यषत्वप्रवृत्तेः सुलभत्वात् । किञ्चाव्युत्पत्तिपक्षस्यैव स्वेनाश्रयणेनाव्यपेक्षायामिदुदुपधस्येत्यनेनैव षत्वसिद्ध्या व्यपेक्षायां पाठसामर्थ्येनैव नित्यषत्वसिद्धिः । ननु 'परमसर्पिःकुण्डिके'त्यत्र कस्कादित्वात्षत्वं दुर्वारम् । नचानुत्तरपदस्थस्येति प्रसज्यप्रतिषेधाश्रयणेन 'कस्कादिषु' चेति विहितस्यापि षत्वस्य निषेध इति वाच्यं, निषेधदृष्ट्या तस्यासिद्धत्वेन तन्निषेधासम्भवादिति चेन्न । 'प्रकरणे प्रकरणमसिद्ध'मिति तत्पक्षाश्रयणेन प्रसज्यप्रतिषेधाश्रयणसामर्थ्येन वा षत्वमात्रस्य निषेधाङ्गीकारात् । अत्र चा'नुत्तरपदस्थस्येति किं ? 'परमसर्पिःकुण्डिके'ति भाष्यं मानम् । न चैवं 'परमसर्पिष्कल्प'मित्यत्रे'णः ष' इत्यस्यापि निषेधापत्तिः, कवर्गपवर्गघटिते एव समासे 'अनुत्तरपदस्ये'ति—निषेधप्रवृत्तेः । न च 'परमसर्पिष्कल्पपुत्र'मित्यत्र निषेधापत्तिः, प्रत्यासत्त्या कवर्गाद्युत्तरपदकसमास एवोक्तनिषेधप्रवृत्तेः । ※ इति विसर्गसन्धिः ※

## ॥ अथ स्वादिसन्धिः ॥

यत्तु 'स्वौज'सित्यत्र रुरेव पाठ्यः, सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति, तन्न । यशोऽत्र-त्यादौ रोरसिद्धत्वादुत्वानापत्तेः, 'अतो रो'रित्यस्य प्रथमैकवचने चारितार्थ्यात् । तद्ध्वनयन्नाह—**स्वौजसमेति**। 'पदस्ये'त्यनुवृत्तं ससजुभ्यां विशेष्यते, तेन तदन्तविधिः । आदेशान्तर्भावेऽन्यस्येत्यन्यस्य । तत्फलितमाह—**पदान्तस्येत्यादिना** । 'सजू'रित्यत्र व्यपदेशिवद्भावेन सिद्धिः । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्ने'ति परिभाषाद्वयं प्रत्ययविधिविषयमिति--'असमासे निष्कादिभ्य' इत्यत्र भाष्ये स्पष्टम् । इदञ्चास्य तत्त्वादः । श्रेयानित्यादौ रुत्वस्यासिद्धत्वात्संयोगान्तलोप एवेति दिक् ।

ॐ अभिनव-चन्द्रिका ॐ

उत्वानापत्तेरिति । न च 'स्वौजसमौ'डिति न्यासे रामर् इत्यस्यां दशायां विसर्गस्यासिद्धत्वात् 'सुपि चे'ति दीर्घो दुर्वार इति स एव दोषो देय इति 'यशोत्र'त्यादौ उत्वानापत्तिरूपदोषपर्यन्तानुधावनं किमर्थमिति वाच्यं, 'सुपि चे'त्यादावपि चेतिन्यासेन तृतीयादावेव प्रवृत्त्या राम इत्यादौ दीर्घापत्तिरूपदोषवारणात् । **प्रत्ययविधिविषयमिति** । इदमुपलक्षणम्—सूत्रोपात्तमन्तपदम्, आदिपदं वा—प्रातिपदिकमात्रग्रहणञ्च यत्र तद्विषयत्वं-व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्येत्यस्य,

ॐ चिदस्थिमाला ॐ

प्राचोक्तं खण्डयति—**यत्त्विति** । **रुरेवेति** । रुत्वसूत्रस्यान्यार्थमावश्यकत्वेप्यत्र प्रक्रियालाघवार्थमिति भावः । **प्रथमैकेति** । तत्रोकारानुबन्धस्तु यत्वविधावुभयग्रहणेन सफल इति भावः । मूलासङ्गतिं परिहरति—**पदेति** । नन्वेवं सजूरित्यत्र न स्यात्पदाधिकारे पदस्य विशेष्यत्वेन तदन्ते कार्यप्रवृत्तेरत आह—**सजूरिति** । 'स्वं रूप'मित्यस्य प्रत्याख्याने इदम् । एतेन 'सजू'रित्यस्य सिध्यर्थं सजुःशब्दोऽत्पदमित्येवान्वय इति **प्रकाशकृदुक्तमपास्तं**, तद्ध्वनयन्नाह—**व्ययेति** । **भाष्ये इति** । तत्र असमास-ग्रहणप्रयोजनकथनावसरे—'आर्हादगोपुच्छे'त्यत्र तदन्तविधौ 'परमगोपुच्छिक'मित्यत्र ठक्प्रतिषेधाठञ्फलमित्युक्त्वा तत्खण्डनाय—विधौ प्रतिषेधः 'प्रतिषेधश्चाय'मित्युक्तम्। **जश्त्वेति** । एतद्विषये तस्य नाप्राप्तेः सत्त्वात् । एतेन मूलेऽस्याऽपाठः सूचितः। अत एवाह—**श्रेयानिति** । दिगर्थस्तु—शब्दरत्नभावप्रकाशयोः स्पष्टः। ननूत्व-

ॐ ज्योत्स्ना ॐ

**कृतेत्वस्मिन्निति** । सूत्रे इत्यर्थः । **व्याख्यानादिति** । [४०६ पृष्ठे] सप्तसु विभक्तिषु प्रथमे ये विभक्ती

ॐ सदाशिवभट्टीयम् ॐ

**रुरेवेति** । 'राम' इत्यादौ 'सुपि चे'ति दीर्घस्तु न, अनाप्यक इत्यत्रेवापि चेति न्यासात् । नन्वेवं 'ड्याप: सो'रिति निष्कर्षे 'हे प्रियचत्व' इत्यत्र 'रात्सस्ये'ति नियमात्संयोगान्तलोपाप्राप्त्या 'रोरी'ति लोपे 'ढ्लोप' इति दीर्घापत्तिरिति चेन्न । तस्य निष्कर्षस्य दूषयिष्यमाणत्वात्। **चारितार्थ्यादिति** । 'अप्लुता'-दित्यस्य तु न सामर्थ्यं, 'वात्सीबन्धु'रिति भाष्योपष्टम्भेनाऽसम्बुद्धावपि प्लुतप्रवृत्तेरुक्तत्वेन 'आयातु भवान् देवदत्ताऽहं गच्छामी'त्यादौ चारितार्थ्यात् । 'हलोऽनन्तराःसंयोगान्तलोपो रोरुत्वे' इति ज्ञापकान्नासिद्धत्वमिति चेदापीति न्यासे न किञ्चिल्लाघवमिति बोध्यम् । 'ससजुषोरु'रित्यत्रोकाराऽ-नुबन्धस्तु यत्वविधावुभयग्रहणाभावार्थं इति तत्सामर्थ्यादसिद्धत्वं नेति न वक्तुं युक्तम्। **भाष्ये स्पष्टमिति** । अत्रत्यन्तत्त्वं परिभाषेन्दुशेखरविवृतिसङ्ग्रहे स्पष्टम्। **जश्त्वेति** । बाध्यविशेषचिन्तायां

ॐ विषमपदविवृतिः ॐ

**कृतेत्वस्मिन्निति**। सूत्र इत्यर्थः। **सुब्विभक्त्योर्ग्रहणमिति**। सप्तसु विभक्तिषु ये प्रथमे विभक्ती इत्यर्थः

**यत्वस्यापवाद इति।** 'यदीदं न स्यात्तर्हि यत्वं प्राप्नोती'त्येतावता। कृते त्वस्मिन् यत्वस्यासिद्धत्वादुत्वगुणयोर्यत्वाप्राप्तिरेवेति भावः।

**प्रथमयोः।** व्याख्यानात्प्रथमयोरित्यनेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणम्,

### ॐ अभिनव-चन्द्रिका ॐ

उगिद्भिन्नत्वे सति प्रत्ययभिन्नत्वे सति वर्णभिन्नत्वं ग्रहणवत्प्रातिपदिकत्वमित्येतद्विषया ग्रहणवत्परिभाषा–इत्यस्य च। अत एव 'रोणी' 'अग्रान्त' 'अनुदात्तादेरं'त्रित्यादिविषये आद्या, 'उगितश्च' 'अत इञ्' 'यञिञोश्चे'त्यादौ द्वितीया च न प्रवर्त्तते इति दिक्। 'यत्वस्यापवाद' इति कौमुदीपाठः प्रक्षिप्त इति बोध्यम्। **सुब्विभक्तेरिति।** इदमत्राकूतं–'प्रथमयो'रित्यस्य प्रथमत्वविशिष्टयोरित्यर्थः। प्रथमत्वविशिष्टप्रथमाद्वितीयागतं द्वित्वं द्विवचनार्थः। प्रथमत्वञ्च–यादृशसङ्ख्याविशिष्ट-

### ॐ चिदस्थिमाला ॐ

दृष्ट्या यत्वस्यासिद्धत्वेनैतद्विषये तस्य नाप्राप्त्यभावेन कथं तत्त्वमत आह–**यदीदमिति।** सूत्रमित्यर्थः। एवमग्रेऽपि। एकशेषस्य द्वन्द्वापवादकत्वमिवेति भावः। **उत्वगुणयोरिति।** रोरुत्वादेशेऽव्यवहितक्षणे गुणप्रवृत्तिः, तथा चातिदेशस्य कार्यार्थत्वादुत्वे रुत्वं नातिदिष्टमिति तत्स्थानिकगुणे रुत्वं स्थानिवत्त्वेन नायास्यतीति भावः। कृते त्वस्मिन् यत्वस्यासिद्धत्वादुत्वगुणयोः कृतयोरुत्वाप्राप्तिरित्येतावतेति भावः। वक्ष्यमाणरीत्याल्विधित्वस्याभावादुत्वे कृते स्थानिवत्त्वेन स्यादतो 'गुणे'त्युक्तम्। एतेन "–ननूत्वे कृते तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादत आह–**यत्वस्यापवाद इति।** विधानसामर्थ्यादुत्वं यत्वस्य बाधकमित्यर्थ–"इति दण्डयुक्तम्; "ननु परत्वाद्यत्वं स्यादत आह–**भोभगो इति।** येन नाप्राप्तिन्यायादिति भावः–"इति रत्नाकरोक्तञ्चापास्तम्। उक्तयुक्तेः। 'वा सुपी'त्यतः 'सुपी'त्यनुवृत्तेर्न तिङ्प्रत्ययस्य ग्रहणं, सुपामप्यादितः प्रत्यययोर्न ग्रहणं, 'तस्माच्छसो नः' इति लिङ्गात्, 'इको य'णित्यतोऽचीत्यधिकाराच्च। यद्यपि शिवोच्चैं इत्यादावुत्वे कृते प्रथमस्याप्यच्त्वमस्ति, तथापि नादिचीति निषेधः। हरिः करोतीत्यादौ तु विसर्गस्यासिद्धत्वान्नैव प्रवृत्तिरतः प्रथमा च प्रथमा चेत्येकशेषेणैकः स्वार्थपरो द्वितीयो लक्षणया द्वितीयापरस्तदाह–**व्याख्येति। दीर्घेति।** 'अकः सवर्णे'इत्यतो-

### ॐ सदाशिवभट्टीयम् ॐ

'येन नाप्राप्ति'न्यायेनेति भावः। बाध्यसामान्यचिन्तायान्तु श्रेयानित्यादौ सुलोपं बाधित्वा रुत्वे यणः प्रतिषेधारम्भात्, झलो लोपाद्वा स न स्यादिति भावः। **दिगित्युक्त्या** बाध्यसामान्यचिन्तायां भाष्योक्तपक्षान्तराणां सङ्ग्रह इति बोध्यम्। **उत्वगुणयोरिति।** ननु कृतेप्युत्वे तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादत आह—**गुणेति।** तत्र कृतेऽपूर्वत्वाभावात्तदप्राप्तिरिति भावः। **व्याख्यानेति।** तच्च प्रकृतसूत्रभाष्यादिषु **स्पष्टम्। स्पष्टार्थमिति।** रूढिप्रयोजनयोरभावेन लक्षणया प्रयोगस्यान्याय्यत्वादिति भावः। प्रकृतसूत्रे उद्द्योते स्पष्टमिदम्। **अदीर्घत्वादिति।** यद्यपि 'बहुश्रेयसी'नित्यादौ दीर्घोपि सम्भवति,

### ॐ वरवर्णिनी ॐ

**प्रथमयोरिति।** इदमत्रावधेयम्—'एषु दश प्रथमान्भोजये'त्यादि सर्वानुभवसिद्धलोकव्यवहारेण 'स्वौज'सित्यादावपि प्रथमत्वं प्रथमायामिव प्रथमाद्वितीया–प्रथमाद्वितीयातृतीया–प्रथमाद्वितीयातृतीया-चतुर्थ्यादिसमुदायेऽप्यस्त्येव। परन्तु 'प्रथमयोः पूर्वसवर्णे' इत्यत्र–व्याख्यानाद्वितीयान्तसमुदायवृत्तिप्राथम्यमिह विवक्षितमिति प्रथमयोरित्यत्र नैकशेषावश्यकता।

तथा च यादृशसमुदायनिरूपितं प्राथम्यं विवक्षितं तादृशमुदायविशिष्टत्वं प्रथमत्वमिति तत्त्वम्। वै० 'स्वघटकवृत्तित्व' 'स्वघटकवृत्तिसङ्ख्योत्पादकापेक्षाबुद्धीयधर्मितावच्छेदकत्व' 'स्वारम्भकविशिष्टभिन्नत्वै'-तत्रितयसम्बन्धेन। सम्बन्धघटकवै० 'स्वावृत्तित्व' 'स्वोत्तरवृत्तित्वो'भयसम्बन्धेन। प्रथमयोरिति द्विवचनार्थस्तु—स्वप्रकृत्यर्थतावच्छेदकीभूतसङ्ख्यायामभेदेनान्वेति, स्वाभिन्नसङ्ख्याश्रयत्वसम्बन्धेन प्रकृत्यर्थे वा।

तदाह–**प्रथमाद्वितीययोरिति** । पूर्वग्रहणं किम्? 'अग्नी' इत्यत्र पक्षे परसवर्णो मा भूदिति । दीर्घग्रहणन्तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहणन्तु स्पष्टार्थम् । पूर्वस्यादीर्घत्वात्पूर्वजातीय इत्यर्थेनेष्टसिद्धेरिति स्पष्टं भाष्ये । **आद्गुण इति** । 'नौ म'दिति निर्देशेन भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भावः ।

ॐ अभिनव-चन्द्रिका ॐ

निरूपितं प्रथमत्वं वक्तव्यं—तत्सङ्ख्याविशिष्टत्वम् । वै० 'स्वजनकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितानाश्रयत्व', 'स्वप्रयोजकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताश्रयत्वे' तदुभयसम्बन्धेन यथा प्रकृते–सप्तत्वविशिष्टविभक्तिसमुदायनिरूपितत्वं प्रथमत्वं वक्तव्यं, तज्जनिकापेक्षाबुद्धिः, 'इमाः सप्त, एतद्विशिष्टेयमेके'ति, तदीयैकत्वनिष्ठप्रकारतानिरूपितधर्मिताश्रयत्वं–सप्तम्यां, तदनाश्रयत्वं–प्रथमाद्वितीयात्मकसमुदाये । एवं–स्वप्रयोजिका यापेक्षाबुद्धिः–'इमे द्वे, इमाश्चतस्रः, एतद्विशिष्टेयमेके'ति: तदीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदताश्रयत्वमपि प्रथमाद्वितीयात्मकसमुदाये वर्त्तते–इति लक्षणसमन्वयः । सप्तम्यां प्रथमत्ववारणाय प्रथमसम्बन्धोपादानम् , अन्यथा 'षष्ठीसप्तम्यौ द्वे, प्रथमाद्वितीयातृतीयाचतुर्थ्यश्चतस्रः, एतद्विशिष्टेयं पञ्चम्येका' इत्याकारकापेक्षाबुद्धेरपि सप्तत्वसङ्ख्योत्पत्तिप्रयोजकतया तदीयैकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकतायाः सप्तम्यां सत्त्वेन अतिव्याप्तिर्दुर्वारा स्यात् । प्रथमां विहाय मध्यसमुदायेऽतिप्रसङ्गवारणाय द्वितीयसम्बन्धोपादानम् । **अदीर्घत्वादिति** । 'गौरी'रित्यादौ पूर्वस्य दीर्घत्वेऽपि तद्व्यक्ते-

ॐ चिदस्थिमाला ॐ

नुवृत्तमिति भावः । नन्वेवं सवर्णग्रहणं व्यर्थं, पूर्व इत्येव दीर्घपदानुवृत्त्या, जातिपरत्वेन च सिद्धेरत आह–**सवर्णस्येति** । **पूर्वस्येति** । ननु दीर्घान्तशब्दे चारितार्थ्येन कथमिष्टसिद्धिरिति चेन्न, 'नादिचि' 'दीर्घाज्जसि' चे'तिनिषेधस्य जागरूकत्वात्क्वचित्तद्वर्णदीर्घेणेष्टसिद्धेरत्वविषयतापातात् , 'रामा' इत्यादावनेगुण इत्यस्यापत्तेश्च । नन्वेवमपि गमृतित्यादौ पूर्वलृकारजातीयदीर्घाभावात्स न स्यात्, सवर्णग्रहणे तु तत्सामर्थ्याद्ॠकारसिद्धिः, इदमेव सवर्णग्रहणं लृकारस्य दीर्घाभावे, ऋलृवर्णयोः सावर्ण्ये च ज्ञापकमिति चेन्न, तेन समानजातित्वानिर्देशस्यैवोक्तत्वेनादोषात् । लेखने उपयोगमाह—**तौसदिति** । यत्तु 'देवदत्तन्यायानित्यत्वज्ञापनाय सानिर्देश इत्यपवादे निषिद्धेऽपत्रोत्सर्गस्य स्थिति'रिति

ॐ सदाशिवभट्टीयम् ॐ

तथापि 'दीर्घाज्जसि' चेत्यत्र दीर्घग्रहणाददीर्घस्याऽपि ग्रह इष्ट इति भावः । **इष्टसिद्धेरिति** । गमृतित्यादौ सत्यभिधाने साजात्यानिर्देशादिष्टसिद्धिरिति भावः । 'नादिचिनिर्देशाद्देवदत्तन्यायाऽनित्यत्व'मिति कस्य चिदुक्तिक्कटाक्षयति—**ताविति** । **तुनान्नेति** । नौविन्यत्रेत्यर्थः । सति तत्प्रवृत्तौ तेन तदनित्यत्वज्ञापनं

ॐ वरवर्णिनी ॐ

परे तु''—समुदायविशिष्टावच्छेदकताश्रयत्वं प्राथम्यम् । वै० 'स्वघटकवृत्तिसङ्ख्योत्पादकापेक्षाबुद्धीयधर्मितानिरूपितत्व' 'स्वविशिष्टक्रमावच्छेदकत्वो'भयसम्बन्धेन । स्ववैशिष्ट्यञ्च क्रमे—'स्वघटकवृत्तित्व' 'स्वादित्वविशिष्टत्वो'भयसम्बन्धेन । आदित्ववैशिष्ट्यञ्च–'स्वघटितत्व' 'स्वविशिष्टक्रमाघटितक्रमभिन्नत्वो'भयसम्बन्धेन । क्रमे वै०'स्वाश्रयोत्तरवृत्तित्व' 'स्वाश्रयोत्तरपूर्ववृत्तित्वो'भयसम्बन्धेन । अपेक्षाबुद्धिश्च—'इयमादिः प्रथमा एका, एतद्विशिष्टेयं द्वितीयारूपा द्वितीया—इतीमे द्वे' । 'इमे द्वे, एतद्विशिष्टेयमेका तृतीयारूपा तृतीये'त्याद्याकारिका ग्राह्या, तेन तादृशावच्छेदकतायां क्रमावच्छिन्नत्वं सूपपन्नम् । एतेन प्रथमातृतीयात्मकस्य, द्वितीयातृतीयात्मकस्य च समुदायस्य न प्रथमत्व''मिति श्रीबालशास्त्रिचरणा आहुः । इतोऽधिकमस्मत्पितामहचरणकृतशब्देन्दुशेखरत्रिपुरसुन्दर्यान्द्रष्टव्यम् ।

देवदत्तहन्तृहतन्यायस्य तु नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवनं, देवदत्तहननप्रसक्तहनने त्वस्यैव देवदत्तजीवनम् । प्रकृते तु न हननस्थानीया [गुण] वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्य निषेधे बाध्योज्जीवने न बाधकमिति । स्पष्टञ्चेदं 'स्वादिष्वि'ति सूत्रे कैयटे ।

**सुस्रोत इति** । सुस्रोतश्शब्दः कस्य चित्सञ्ज्ञा । सम्बुद्धौ 'दूराद्धूते चे'ति प्लुतः । **तत्सामर्थ्यादिति** । प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः । 'आश्रयात्सिद्ध'

**❀ अभिनव-चन्द्रिका ❀**

र्विधातुमशक्यत्वाच्चेत्यपि बोध्यम् । **अनाश्रयणादिति** । वस्तुतस्तु 'भ्रष्टावसर'न्यायस्यास्मिञ्शास्त्रे विषय एव नेति वक्तव्यम् । तथाहि—शास्त्रस्यावसरो नाम—तदीयोद्देश्यतावच्छेदकाक्रान्तिः । तथा च 'शिव उ अर्च्य'—इति स्थिते पूर्वसवर्णस्य 'नादिची'तिनिषेधेन पूर्वसवर्णदीर्घीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेनाद्गुण इत्यत्र सङ्कोचाभावेन गुणशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेनावसरस्याऽभ्रष्टत्वात् । एवं 'त—औ' इति स्थिते पूर्वोक्तदिशा वृद्धिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेन 'तौ स'दित्यादिनिर्देशासङ्गतेरभावाच्च । **नात्र प्रवृत्तिरिति** । नात्र विषय इत्यर्थः । 'देवदत्त-

**❀ चिदस्थिमाला ❀**

**दण्डी** । तदसदित्याह—**देवेति** । अत्र हेतुमाह—**देवेति** । हि=यतः । नोज्जीवनं -देवदत्तस्येति शेषः । **जीवनमिति** । 'न्यायशरीर'मितिशेषः । तत्र द्वितीयमेव प्रकृते तावित्यत्र,नाद्यमित्याह—**प्रकृते इति** । तुरप्यर्थे । अत एवाह-**वृद्धिहन्तुरिति** । गुणहन्तुरितिपाठे शिवोऽर्च्यइत्याशयेन योज्यं, तत्र हेतुमाह-**प्रसक्तेति** । यतइत्यादिः । ने इति भिन्नं पदम् । इतिर्हेतौ । यौगिकेऽर्थबाधादकारान्तभ्रमनिरासायाह—**सुस्रोतासिति** । विशेषणसामर्थ्यादित्यर्थनिरासायाह—**प्रतीति** । ननु तथैवार्थः कुतो नात आह—**आश्रयादिति** । नन्वेवं पयोऽिस्यादौ वक्ष्य-

**❀ ज्योत्स्ना ❀**

इत्येवं रूपव्याख्यानादित्यर्थः । **वृद्धिहन्तुरिति** । प्रकृतलक्ष्ये 'गुणहन्तु'रिति वक्तव्ये 'वृद्धिहन्तु'रित्युक्ती-

**❀ सदाशिवभट्टीयम् ❀**

संम्भवेदपीति भावः । **देवदत्तजीवनमिति** । इति न्यायशरीरमित्यर्थः । **प्रकृत इति** । तावित्यत्रेत्यर्थः । **बाधकमितीति** । **इतिर्हेतौ** । एवं स्वस्वविषयज्ञानं शास्त्रद्वयसन्निधावेकापनोदेप्येकस्य प्रवृत्तेर्निर्बाधत्वात् भ्रष्टावसरन्यायस्याप्ययं न विषय इति तदनाश्रयणज्ञापकतापि कथमस्य निर्देशस्येति चिन्त्यमेतत् ।

यौगिकार्थबाधादाह-**कस्य चिदिति** । 'अत्वसन्तस्ये'ति दीर्घे तपरव्यावर्त्यत्वादाह—**सम्बुद्धाविति** । **तत्सामर्थ्यादितीति** । प्रतिषेधोपादानसामर्थ्यात्सिद्धः प्लुत इति **कैयटः** । 'विशेषणोपादानेन प्लुतविध्येकवाक्यतापन्नपूर्वत्रेति पूर्वशब्देनोत्वविध्यग्रहणमिति ज्ञाप्यते' इति तत्तात्पर्य्यम्, तच्चिन्त्यं, तथा सति तपरकरणेनैव व्यावृत्तिसिद्धौ प्रवर्तकतया निवर्तकतया वाऽचारितार्थ्यस्य दुर्वारत्वात् । अप्लुतादप्लुते

**❀ विषमपदविवृतिः ❀**

**गुणवृद्धिहन्तुरिति** । यद्यपि वृद्धिग्रहणं न प्रकृताभिप्रायेण, प्रकृते गुणस्यैव प्राप्तेः । नापि पूर्वसवर्णदीर्घबाध्यकार्यसामान्यप्रदर्शनाभिप्रायेण, यणपररूपयोरनुक्तेः, तथापि 'नादिची'त्येतद्विषये भ्रष्टावसरन्याया प्रवृत्त्युपपादनाय तद्विषये प्रवर्त्तमानपूर्वसवर्णदीर्घबाध्यकार्यसामान्यप्रदर्शनमिति न कश्चिद्दोषः । **कस्य चित्सञ्ज्ञेति** । इदं हूयमानार्थकनाम्न एव प्लुत इति भ्रमेण । वस्तुतस्तु नाम्न एव ग्रहणे प्रमा-

इति भाष्योक्तेः । पयस्यटतीति. पयो इटतीत्यर्थे—'आगच्छ हे पयो३इट्' 'आगच्छ हे पयो३दे'त्यादावेकपदस्थवर्णद्वयमात्रापेक्षमन्तरङ्गमुत्वं प्रति वाक्यस्थपदान्तरसापेक्ष-

॥ अभिनव-चन्द्रिका ॥

हन्तृहन्त्यादिविषयाभावमेवोपपादयति—हननप्रसक्तेत्यादिना । आश्रयात्सिद्धमिति । स्यादेतत्—'अप्लुते' इत्युक्त्या प्लुतस्यासिद्धत्वं न भवतीति कल्पने स्वांशे चारितार्थ्यं दुर्निरूपं, तपरकरणेनैव प्लुतव्यावृत्त्या 'अप्लुतात्' 'अप्लुते' इत्यस्य च व्यावर्त्त्यालाभादिति चेन्मैवम्, अप्लुतादितिपञ्चम्यन्त-प्रयोज्या या प्लुतभिन्नत्वावच्छिन्नविषयता, एवमप्लुते इति सप्तम्यन्तप्रयोज्या या प्लुतभिन्नत्वावच्छिन्न-विषयता तादृशविषयतासाधकमसिद्धत्वञ्च भवतीति कल्पनेनादोषात् । तथाहि—'एहि सुस्रोता ३ अत्र स्नाहि' 'तिष्ठतु पय अ३ग्निदत्ते'त्यादौ निरुक्तविषयतासाधकासिद्धत्वस्याभावेऽपि 'अत' 'अतो' इत्येतत्पदप्रयोज्यैकमात्रिकत्वविशिष्टत्वावच्छिन्नविषयतासाधकासिद्धत्वस्य सत्त्वादुत्वं दुर्वारं

॥ चिदस्थिमाला ॥

मागरीत्या प्लुतो न स्यादत आह—पयस्यटतीति । अत्राद्ये क्विप्, अन्त्ये 'आतोऽनुपे'ति कः । एकपदेति । समस्तेत्यर्थः । अतएव वर्णद्वयं स्थानिभिन्नं ग्राह्यम् । हेतुगर्भमिदं विशेषणम् । एवमग्रेऽपि । पदान्तरेति । आगच्छेतीत्यर्थः । स्यासिद्धत्वादिति । असिद्धम्बहिरङ्गमितीत्यर्थः । अत एवाह—उत्वे इति । आदा-वित्यादिः । अन्यथा=असिद्धम्बहिरित्यस्याप्रवृत्तौ । सिद्धत्वादिति । उक्तरीत्येति भावः । एतेनासिद्धत्वा-भावश्च तद्विशेषणस्यैव : तेन ज्ञापितेऽपि तस्मिन्तपरकरणेनैव व्यावृत्तिसिद्धेरस्य चारितार्थ्याभावात्कथं ज्ञापकत्वं, यस्मिञ्ज्ञापिते यस्य चारितार्थ्यं तेनैव ज्ञाप्यमिति सिद्धान्तादिति परास्तम् । अप्लुतादप्लुते इति विशेषणद्वयं प्लुतासिद्धत्वाभावप्रतिपादनद्वारा तपरकरणकृतप्लुतव्यावृत्त्यनुवादकमिति न दोष इति तु मान्याः ।

॥ ज्योत्स्ना ॥

कर्त्ता रामावित्यस्येदं व्याख्यानमिति भ्रमेण । हे पयो३इट्, हे पयो३देति—हे शब्दप्रयोगोऽशुद्धः । 'हैहेप्रयोगे' इतिनियमात्, अत एव भाष्ये स न पठित इत्याहुः । परिभाषादृष्ट्या=षाष्ठपरिभाषा-

॥ सदाशिवभट्टीयम् ॥

इत्यनयोरन्यतरस्य वैयर्थ्यापत्तेश्च । अत एव सः—उच्चारणं—रुच्चारणमिति—षष्ठीसमासे—सुस्रोतसः रुच्चारण-मिति पुनस्तत्र सस्य रुत्वे रोरीति लोपे दीर्घत्वे 'सुस्रोता रुच्चारण'मिति भवति । अत्र 'हशि चे'त्युत्वं न, उमन्तसकारस्थानिकरुत्वस्यासिद्धत्वेन हश्परत्वाभावात् । रुत्वविध्येकवाक्यतापन्नपूर्वत्रासिद्धमिति पूर्व-ग्रहणेनोत्वविध्यग्रहणमिति कल्पने तु—तदापत्तिर्दुर्वारा स्यात् । किञ्चैवमथाधिकारात्सर्वत्रैत्याग्रहे मनोरथोपि न स्यात् । अत्र च ज्ञापकत्वपरत्वे कृतेऽप्यप्लुत इति कृतं, तदाह—प्रतियोगित्वेनेति । एवञ्चा-श्रयात्सिद्धत्वं वदतो ज्ञापकत्वमनङ्गीकुर्वतो मम—न पूर्वोक्तानुपपत्तिरिति भावः । ज्ञापकस्थले एव वक्तुं शक्यत्वात् । 'विशेषणद्वयं प्लुताऽसिद्धत्वाभावप्रतिपादनद्वारा तपरकरणकृतप्लुतव्यावृत्त्यनुवादकमिति न दोष' इति मान्याः । हे पयोऽडिति । केचित्तु मते 'हैहेप्रयोग'इति सूत्रस्य विध्यर्थतोक्तरीत्या हेशब्दप्रयोगः, अन्यथा 'हैहयोरेवे'ति नियमान्न स्यादिति । एकपदे इति । समस्तस्येत्यर्थः । वर्णद्वयं—स्थानिभिन्नं ग्राह्यम् ।

॥ विषमपदविवृतिः ॥

णाभावात् । तच्च रूढं लौकिकं वेति 'दूराद्धूते चे'तिसूत्रस्थस्तत्रभन्त्याद्यौगिकेपि प्लुतः प्रवर्त्तते । आश्रयणसामर्थ्यादिति । ननु त्रिपाद्यां 'रोः सुपी'त्यस्यानन्तरम् 'अत उरती'त्येव पाठ्यमिति चेन्न । उत्वस्यासिद्धत्वेन गुणानापत्तेः । मनोरथ इत्यत्रोत्वस्यासिद्धत्वेन 'रोरी'ति लोपापत्तेश्च ।
यद्यप्यप्लुतादिति विशेषणसामर्थ्येन प्लुतस्य सिद्धत्वेऽप्लुत इति व्यर्थं,तथापि तत्सामर्थ्येन दूराद्धूते-चेत्यस्य सिद्धत्वेपि गुरोरनृत इत्यस्य सिद्धत्वे मानाभाव इत्याशयेनाप्लुत इत्युक्तं सूत्रकृता ।

प्लुतस्यासिद्धत्वादुत्वे प्लुतासिद्धिः । अन्यथा प्लुतस्योत्वदृष्ट्या सिद्धत्वात्परत्वात्प्लुते आद्येऽप्लुतपरत्वाभावादन्त्येऽप्लुतात्परत्वाभावादुत्वं न स्यात् । परिभाषादृष्ट्या बहिरङ्गासिद्धत्वेऽपि न क्षतिः । स्वदृष्ट्याऽसिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसम्भवात्, स्वदृष्ट्याऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् । अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभाव इव कं प्रत्यसिद्धत्वं प्रतिपाद्येत ? । तत्राद्ये—'वाक्यस्य टे'रित्यट्शब्दाकारः प्लुतः,

### ❀ अभिनव-चन्द्रिका ❀

स्यादिति—अप्लुतादिति, अप्लुते इति च स्वांशे चरितार्थमिति दिक् । उत्वे **प्लुतसिद्धिरिति** । आश्रयात्प्लुतस्य 'पूर्वत्रे'त्यनेनासिद्धत्वस्याभावकल्पनेऽपि बहिरङ्गासिद्धत्वाभावकल्पने मानाभावादिति भावः । एतेन बहिरङ्गशास्त्रत्वमन्तरङ्गपरिभाषाप्रवृत्तौ लिङ्गमित्यपास्तम् । आगच्छ पयो३ट्, आगच्छ पयो३देत्यादावन्तरङ्गपरिभाषादृष्ट्या त्रैपादिकत्वेन प्लुतस्यासिद्धत्वाद्बहिरङ्गशास्त्रत्व-

### ❀ चिदस्थिमाला ❀

प्लुते इति । आद्ये 'दूराद्धूते च'ेति, अन्त्ये 'गुरोरनृत'इतीति—स्फुटमनुपदमेवाग्रे । आद्येऽप्लुतेति : बहुव्रीहिः । ननु त्रैपादिके बहिरङ्गपरिभाषाया अप्रवृत्तेः सिद्धान्तात्कथमेतदत आह—**परीति** । अर्थस्याबाधादिति भावः । तदाह—**स्वदृष्ट्येति** । तत्तात्पर्यमाह—**स्वदृष्ट्येति** । **परमिति** । परम्प्रत्यपीत्यर्थः । उक्तसिद्धान्तस्तु त्रैपादिकान्तरङ्गविषयो न बहिरङ्गविषय इत्याह—**अन्तरङ्गेति** । परिभाषादृष्ट्येति भावः । **प्रतिपाद्येति** । यत्र द्वयोरप्यन्तरङ्गत्वं बहिरङ्गत्वं वा तत्रेत्यर्थः । अत एव तत्र तत्र त्रैपादिकेऽन्तरङ्गे इत्येव भाष्यसिद्धमुक्तं, न तु बहिरङ्गे इतीति बोध्यम् । नन्वत्र केन प्लुतोऽत आह—**तत्राद्ये** इति । तयोर्मध्ये इत्यर्थः । दूराद्धूते चेती भावः। ननु प्रतियोगित्वेन प्लुतस्याश्रयणसाम-

### ❀ ज्योत्स्ना ❀

दृष्ट्या । **बहिरङ्गस्येति** । प्लुतस्येत्यर्थः । असिद्धत्वेऽपि—'पूर्वत्रासिद्ध'मित्यनेन । परं प्रति=उत्वं प्रति । अत्र लोकन्यायं प्रमाणयति—**स्वदृष्ट्येति** । अन्तरङ्गस्य=त्रिपादीस्थस्य । 'असिद्धत्वे तु'—सपाद-

### ❀ सदाशिवभट्टीयम् ❀

अन्यथा वर्णत्रयापेक्षित्वेन द्वयेत्यसङ्गतं स्यात्, स्थानिनो निमित्तत्वानाश्रयणाच्च । हेतुगर्भञ्चेदं विशेषणम् । **उत्वे इति** । 'आदा'वित्यादिः । **परत्वादिति** । इदञ्च कार्यकालतायां, यथोद्देशे तु त्रिपाद्या असिद्धत्वाद्विप्रतिषेधसूत्रस्य तत्राप्रवृत्तिः । तत्र सूत्रे 'यथोद्देश एवे'ति ग्रन्थस्तु फलाभावात् कार्यकालता नेत्येवं परः सिद्धान्ते । अयन्तु अन्यथाकोटिप्रविष्ट इति पूर्वपक्षग्रन्थाभिप्राय इति न विरोध इति बोध्यम् । यद्वा वक्ष्यमाणरीत्या स्वदृष्ट्याऽसिद्धस्यापि परस्य पूर्वं प्रति सिद्धस्य बलीयस्त्वबोधनेन प्रतिबन्धकमित्याहुः ।

ननु त्रैपादिकेऽन्तरङ्गपरिभाषा नेति सिद्धान्तितत्वात्कथमिदमित्याह—**परिभाषेति** । **न क्षतिरिति** । अयं भावः—अन्तरङ्गशास्त्रमस्या लिङ्गमित्युक्तत्वादियं परिभाषा 'बहिरङ्गं मा पश्ये'ति प्रतिपादयति अन्तरङ्गं प्रतीति—गृहीतोपदेशमुत्वम् प्लुतं कथं पश्येत् । यथा जाततत्त्वसाक्षात्कारेण मिथ्यात्वेन जगन्मिथ्येति गृह्णता शिष्यं प्रति 'जगन्मिथ्ये'त्युपदिश्यते तद्वदिति । परं प्रति=अन्यम्प्रति । नन्वेवं 'राज्ञ' इत्यादौ श्चुत्वानापत्तिरल्लोपस्यासिद्धत्वादत आह—**अन्तरङ्गस्येति** । **प्रतिपाद्येति** । यम्प्रतिपाद्यते=उपदिश्यते तद-

### ❀ विषमपदविवृतिः ❀

प्लुतस्याश्रयणसामर्थ्येन पूर्वत्रासिद्धमित्यसिद्धत्वं बाध्यते न तु 'असिद्धं बहिरङ्गमन्तरङ्गे' इतीत्यभिप्रेत्याह—**पयसीति** । अन्यथा=आश्रयणसामर्थ्येनास्यासिद्धत्वमात्रबाधने । नन्वन्तरङ्गस्यासिद्धत्व इव परिभाषादृष्ट्या बहिरङ्गस्यासिद्धत्वेपि परिभाषा न प्रवर्तेत इत्यशङ्क्याह—**परिभाषादृष्ट्येति** । स्वदृष्ट्याऽसिद्धस्य परम्प्रत्यसिद्धत्वप्रतिपादनसम्भवं लोकदृष्टान्तेनोपपादयति—**स्वदृष्ट्येति** । स्वदृष्ट्या विद्यमानस्य घटादेः परं प्रत्यविद्यमानत्वप्रतिपादनदर्शनादित्यर्थः । **प्रतिपाद्याभाव इति** ।

अन्त्ये रेफदकारसंयोगपरत्वेनाकारस्य गुरुत्वात् 'गुरो'रिति प्लुतः । आश्रयेण तु येन नाप्राप्तिन्यायेन, प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते, न त्विदम्। 'सुत्रोत' इत्यादौ चैकवाक्यमात्रसापेक्षत्वात्प्लुतोऽन्तरङ्गो, भिन्नवाक्यस्थाकारसापेक्षत्वाद्वृत्वं बहिरङ्गमिति स्पष्टं भाष्ये ।

**उकारानुबन्धेति** । उकारेत्सञ्ज्ञकरेफस्येत्यर्थ इति भावः । तेन देव रुहीत्यादौ न दोषः ।

❀ अभिनव-चन्द्रिका ❀

प्रकारकज्ञानाभावेनैतदप्रवृत्तौ उत्वदृष्ट्या प्लुतस्य सिद्धत्वेन परत्वात्प्लुते उत्वानापत्तेरिति दिक् ।

**प्रत्यक्षत्वेनेति** । लिङ्गापेक्षया श्रुतेः 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षा' दिति जैमिनिसूत्रेण बलवत्त्वादिति भावः । **इति भाव इति** । वस्तुतस्तु 'अतो रो'रितिसूत्रे

❀ चिदस्थिमाला ❀

र्थ्यात्पूर्वत्रासिद्धमित्यसिद्धत्ववदसिद्धम्बहिरङ्गमित्यसिद्धत्वमपि कुतो न बाध्यते इत्यत आह—**आश्रयणे त्विति** ।

युक्त्यन्तरमाह—**प्रत्यक्षेति** । नन्वेवंरीत्योत्वापत्तिः 'सुस्रोता' इत्यादावप्रीति—तदानर्थक्यापत्तिरेवात आह—**सुस्रोता इति** । मात्रपदव्यावर्त्यं सूचयन्नाह—**भिन्नेति** । एवञ्चोक्तवैलक्षण्येन त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्त्या न तदापत्तिरिति न दोषोऽत एव तुल्यमाह—**भाष्ये इति** । 'उकारानुबन्धे'ति बहुव्रीहिं सूचयन् तदासंभवं कथयन्प्रातस्त्रेत्यादावुकारविशिष्टग्रहणाद्वारणे तथोक्तिसाफल्यायाह—**उकारेत्सञ्ज्ञकेति** । 'रो'रित्यस्येति भावः । तत्फलमाह—**तेनेति** । आदिना 'तत्मूल'-

❀ ज्योत्स्ना ❀

समाध्यायीस्थबहिरङ्गदृष्ट्या । **स्पष्टं भाष्ये इति** । 'अतो रोरप्लुतादप्लुते' इतिसूत्रे इत्यर्थः । एतेन "प्लुत-

❀ सदाशिवभट्टीयम् ❀

भावे इत्यर्थः । इदञ्च यथोद्देशे त्रैपादिकेऽन्तरङ्गेऽसिद्धत्वे प्रतिबन्धकम् । कार्यकालतायान्तु पूर्वत्रासिद्धमित्यनेन विरोधादिकं ग्रन्थान्तरतोऽवसेयम् । **स्पष्टं भाष्ये इति** । नन्वेव'मेकादेशात् प्लुतो विप्रतिषेधेने'ति 'प्लुतप्रगृह्या' इति सूत्रभाष्योक्तविप्रतिषेधाऽनुपपत्तिरन्तरङ्गबहिरङ्गयोर्विप्रतिषेधायोगादिति चेन्न । 'देवदत्ता ३ असि गच्छामि ३ अह'मित्यादौ तयोः समत्वेन तद्योगात् । यत्र तु न तथा-'एहि कृष्णा ३ अत्र गौश्चरती'त्यादौ तत्रास्तामन्तरङ्गत्वात्प्लुत इति तत्रैवोद्योते स्पष्टम् । 'अनन्त्यस्यापि प्रेति' पूर्वोदाहरणयोः प्लुतो बोध्यः । नन्वनुबन्धन इति व्युत्पत्त्योकारपररेफस्य ग्रहणेन प्रातस्त्रेत्यादिव्यावृत्तावपि रुधातोरवारणमत आह—**उकारेत्सञ्ज्ञकेति** । अनुनासिकनिर्देशादीदृशार्थलाभः । तत्रैव किं मानमिति

❀ विषमपदविवृतिः ❀

प्रतिपत्तिक्रियायाः सकर्मकत्वेन प्रतिपाद्यरूपकर्मणोऽभावे यथाऽनिष्पत्तिर्भोज्याभावे भोजनस्येव तथान्तरङ्गं प्रत्यसिद्धत्वप्रतिपादिका परिभाषाऽन्तरङ्गादर्शने कम्प्रत्यसिद्धत्वं प्रतिपादयेत् ? । उत्वं प्रतीव तद्देशस्थपरिभाषां प्रत्यपि प्लुतासिद्धत्वमित्यन्ये । पूर्वत्रासिद्धमित्यसिद्धत्वस्यैवाश्रयणसामर्थ्याद्बहिरङ्गासिद्धत्वस्यापि कुतो न बाध इत्याशङ्क्याह—**आश्रयेण त्विति** । **प्रत्यक्षत्वेन चेति** । पाणिनिना साक्षादुच्चारितत्वेनेत्यर्थः । तथा च प्रत्यक्षस्य प्रथमोपस्थितस्य बाधेनोपपत्तावानुमानिकस्य विलम्बोपस्थितिकस्य बाधकल्पना न युक्तेति भावः[1] । **स्पष्टम्भाष्ये इति** । 'अतो रोरप्लुता'दिति सूत्रे इत्यर्थः । ननु 'प्लुतप्रगृह्या' इति सूत्रे प्लुतस्य सिद्धत्वज्ञापनद्वारा एकादेशात्प्लुते विप्रतिषेधेन कृते प्रकृतिभावः देवदत्त ३ अत्र त्वमसीति भाष्यस्य कैयटेन प्लुतस्यैकपदाश्र-

---

१ आनुमानिकस्मृतिरूपप्रमाणमपेक्ष्य प्रत्यक्षश्रुतेः प्रमाणस्य बलवत्त्वाच्चेत्यपि बोध्यम् ।

**भोभगो** । 'रोः सुपी'त्यतो 'रो'रिति वर्त्तते, न तु 'रो री'त्यतो 'र' इति, प्रातरत्रेत्यादावतिप्रसङ्गात् । अशब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह—**एतत्पूर्वस्यति** । नन्वेवं पूर्वरूपापत्तिरत आह—**असन्धिरिति** । भगो—अघोशब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः ।

इदं प्राचामनुरोधेन । वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिर्न्याय्य एवेति बोद्ध्यम् ।

### ❀ अभिनव-चन्द्रिका ❀

'रो'रित्यनुनासिकोकारविशिष्टमुच्चरितमिति—रोरित्यस्य रुत्वावच्छिन्नस्येत्यर्थेऽपि 'देव रुही'त्यादौ अनुनासिकविशिष्टरोरभावान्न दोष इति बोध्यम् । **रान्तानामनुकरणमिति** । 'विभाषा भव'दिति-वार्त्तिकनिष्पन्नानामपि ग्रहणार्थं रान्तानामनुकरणमित्युक्तमिति भावः ।

### ❀ चिद्स्थिमाला ❀

मित्यादिपरिग्रहः । **द्वन्द्वेनेति** । पूर्वनिपातप्रकरणमनित्यमिति भावः । इदमेकारान्तानुकरणं सूत्रे इति पक्षे, तदाह—**नन्वेवमिति** । मूले—**सौत्र इति** । सूत्रे कृतः, 'कृतलब्धे'त्यण् । एतेनानुकरणं-चानितीतिनिपातसञ्ज्ञायामोदिति प्रगृह्यत्वेऽसन्धिर्न्याय्य एवेति **रत्नाकरोक्तमपास्तम्**, तस्य कृञ्योगे एव प्रवृत्तेः । इदञ्चण्डयति—**इदमिति** । भाष्यस्वरसविरोधापत्तेरिति भावः । तत्सिद्धमेवाह—**वस्तुत इति** । लक्षणवशसम्पन्नरान्तावस्थानामेवेत्यर्थः । एवञ्च तन्त्रेण—लाक्षणिकत्वाविशेषादुभयेषां—वार्तिकनिष्पन्नानां निपातानाञ्च ग्रहणं, प्रभोरित्याद्येकदेशानान्तु नानर्थकत्वात् । एवेन—सान्तौकारान्तपक्षयोर्व्यावृत्ति, एतत्फलमानुषङ्गिकमाह—**असन्धिरिति** । 'एवञ्चे'त्यादिः । सूत्रे इत्यस्यानुषङ्गः न्याय

### ❀ ज्योत्स्ना ❀

प्रगृह्या'इति सूत्रे प्लुतस्य सिद्धत्वज्ञापनद्वारा एकादेशात्प्लुते विप्रतिषेधात्कृते प्रकृतिभावः 'देवदत्त३ अत्र त्वमसी'तिभाष्योक्तेरुपाध्यायैः—प्लुतस्यैकपदाश्रयत्वादन्तरङ्गत्वादादेशस्य तु पदद्वयापेक्षत्वाद्बहिरङ्गत्वाच्चिन्त्यतोक्ता,—प्लुतस्यापि वाक्यत्वसम्पादकपदान्तरसापेक्षतयैकादेशसमत्वांच्चिन्त्यमेव चिन्त्यम्—''

### ❀ सदाशिवभट्टीयम् ❀

चेत्, व्याख्यानमेव गृहाण । 'इको गुणे'तिनिर्देशाद्धितोरर्थवतो रोर्ग्रहणाद्यशोऽत्रेत्यत्रोत्वं न स्यादिति न वाच्यम् । **अशब्दान्तद्वन्द्वेनेति** । पूर्वनिपातप्रकरणमनित्यमिति भावः । **मूले—असन्धिः सौत्र इति** । **सूत्रे** कृतः सौत्रः, कृतलब्धेत्यण् । नचा'नुकरणञ्चानितिपर'मिति निपातत्वे 'ओ'दिति प्रगृह्यत्वेऽन्याय्यत्वमेव सन्धेरिति वाच्यं, तस्य कृञो योगे एव प्रवृत्तेः । न च 'प्राग्दीव्यतोऽणि'त्यत्रेवैकदेशविकृतन्यायेन निपातत्वातिदेशः,—उभयाऽनुकरणेऽप्यन्यतराऽनुकार्यनिष्ठधर्मातिदेशस्य 'भवतेर' इति सूत्रे शेखरे ध्वनितत्वादिति वाच्यं, निपातत्वस्योक्तपरिमाणनिष्ठत्वात्, भगोअघोशब्दयोर्निपातत्वानङ्गीकाराच्च । **वस्तुत इति** । अघोशब्दान्तद्वन्द्वे सूत्रतः षष्ठीलुक् । नन्वेवं सौत्रत्वस्यावश्यकत्वे कुतोऽस्यावास्तवत्वमिति चेन्न,

### ❀ विषमपदविवृतिः ❀

यत्वादन्तरङ्गत्वेनैकादेशस्य तु पदद्वयापेक्षत्वेन बहिरङ्गत्वेन चिन्त्यतोक्तौ—प्लुतस्यापि वाक्यत्वसम्पादकपदान्तरसापेक्षत्वादेकादेशस्य समत्वाच्चिन्त्यमेव चिन्त्यमिति—विवरणोक्तिर्निरुध्यते, वाक्यस्य टेः प्लुतार्थं देवदत्ता इत्यस्यादावेहीति शेषपूरणस्यावश्यकत्वात् । वाक्यद्वयसापेक्षैकादेशस्यैवमपि बहिरङ्गत्वादिति चेत्सत्यम् । भाष्यकारेण तु परत्वेनान्तरङ्गत्वेन वा पूर्वं प्लुतप्रवृत्तौ विशेषाभावादन्तरङ्गत्वं स्थितमप्युपेक्ष्य विप्रतिषेध उपन्यस्तः । **न दोष इति** । आदेः परस्येत्यादेः स्यादिति भावः । **भोभगो इति** । **दीर्घे इति** । तत्राचश्चेति परिभाषा नोपतिष्ठते, फलाभावा-

**नह्ययमिति**। इदमर्वाचामनुसारेण। भाष्ये तु'—रेफस्य विसर्गस्थानित्वेन तद्वृत्तित्वाश्रयमर्यादमल्विधित्व, स्थान्यन्तवृत्तिधर्माश्रयत्वात् । 'अग्रही'दित्यत्र च दीर्घे कोटौ चेट्त्वेनैव निवेश इति विशेषः, अतः पयःस्वित्यादौ दोषः । तत्र हि

ॐ अभिनव-चन्द्रिका ॐ

**अर्वाचामनुसारेणेति**। वस्तुतस्त्वनल्विधावित्यस्यायथार्थास्वीकारेण मूलं सम्यगेव, 'धिन्वन्ती'त्यादौ पञ्चमीसमासेन स्थानिवद्भावाप्रसरः परनिमित्तकत्वेन बहिरङ्गत्वाद्वा न दोषः। एः अजो यजः, तस्यापत्यमि-यजिरित्येव भवति, न तु याजिरिति न तदर्थमप्याद्यार्थस्वीकारः, अल्व्याप्येकत्वावच्छिन्नस्थानिनानिरूपितादेशनाश्रयकारधर्मिकारोपप्रकारीभूतपदान्तत्वस्य पुंजागमीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेना-यार्थकानल्विधावित्यस्याप्रवृत्तेः । अत एव 'मामको' इत्यादौ स्थानिवद्भावेन द्विवचनत्वातिदेशात् प्रगृह्यत्वं सिद्ध्यति, अन्यथा अल्व्याप्यौकारविभक्तित्वावच्छिन्नस्थानिनाश्रयैकारधर्मिकारोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसञ्ज्ञीयोद्देश्यतायाः साक्षादवच्छेदकत्वेन स्थानिवत्त्वाप्राप्त्या द्विवचनत्वाभावेन प्रगृह्यत्वं दुर्लभं स्यात् । न चाद्यार्थकानल्विधावित्यस्यास्वीकारे प्रकृतसूत्रस्थभाष्यविरोध इति वाच्यं, 'हल्ङ्या'बितिसूत्रवार्त्तिकभाष्यविरोधेन 'कृन्मेजन्त'सूत्रस्थवार्त्तिकभाष्यविरोधेन 'ग्रहोऽलिटी'ति सूत्रस्थभाष्यविरोधेन एतस्यैकदेश्युक्तित्वेनादोषात् । न च स्थानितायामल्व्याप्यधर्मावच्छिन्नत्वस्य उद्देश्यतायां प्रकारीभूतधर्मेण साक्षादवच्छिन्नत्वस्य च निवेशात्तोक्तभाष्यविरोध इति वाच्यं, तदुभयनिवेशस्य निष्फलत्वाद्यार्थकानल्विधावितिस्वीकारोपेक्षया तदुभयमनिवेश्य एतस्यैकदेश्युक्तित्वकल्पनाया एव ज्यायस्त्वादिति दिक् । **रेफस्येति** । रेफत्वस्येत्यर्थः । **विसर्गस्थानित्वेनेति** । विसर्गीयस्थानितावच्छेदकत्वेनेत्यर्थः । **तद्वृत्तित्वाश्रयमर्यादेति** । अल्व्याप्यरत्वावच्छिन्नस्थानिनानिरूपितादेशता-

ॐ चिदस्थिमाला ॐ

प्रवर्ततीति । ननु सौत्रः । अनेनौकारान्तानुकरणपक्षे शास्त्रबाधे मानाभावाल्लाघवाच्च सन्धिरेव न्याय्य इति सूचितम् । अत्र पक्षे कृतबहुव्रीह्यपूर्वशब्देन भोगादीनां द्वन्द्व इति केचित् । अगत्या वाक्यभेदस्य सौत्रषष्ठीलुकश्च स्वीकार इति तत्त्वम् । एतेनोक्तदोषद्वयभियौकारान्तानुकरणपक्ष एव युक्त इति रत्नाकरोक्तमपास्तं, भाष्यस्वरसविरोधापत्तेः । एवञ्च तथा रत्नाकरदण्ड्याद्युक्तमपास्तम् । सर्वथाऽप्रयोजकत्वादाह—**इदमर्वाचामिति** । भाष्यविरोधापत्तेरितिभावः । तदेव ध्वनयन्नाह—**भाष्ये त्विति** । **विसर्गेति** ।—षष्ठीतत्पुरुषः । अपिना तद्वृत्तिधर्मान्तराश्रयकसमुच्चयः । असाधारणत्वनिवेशो नेति तु प्राक्प्रतिपादितमेव, तदाह—**स्थान्यलिति** । मनोरमाद्युक्तं दृष्टान्तवैषम्याद्विघटयति—**अग्रहीदिति** । चस्त्वर्थे । **अन्त्ये दोष इति** । अग्रहणाभावे इति भावः । तत्तुल्यकक्षत्वभ्रमं वारयंस्तत्र हेतुमाह—

ॐ ज्योत्स्ना ॐ

इति विवरणोक्तिः प्रत्युक्ता, वाक्यस्य टेः प्लुतार्थं देवदत्त ३ इत्यस्यादावेहाति शेषपूरणस्यावश्यकत्वाद्वाक्यद्वयसापेक्ष्यैकादेशस्यैवमपि बहिरङ्गत्वात् । पश्चात्प्रवर्त्तमाने एकादेशेऽजानन्तर्याश्रयणात्तदन्तरङ्गाप्रवृत्तिरिति तु भगवतोऽभिप्रायः स्यादिति दिक् । **भाष्ये त्विति** । **'भोभगो'** इति सूत्र-

ॐ सदाशिवभट्टीयम् ॐ

अत्र पक्षेऽर्थवत्परिभाषासञ्चारेण विभोरिदं सुप्रभगोरिदमघोरिदमित्यादेर्वारणात् । ओदन्ताऽनुकरणे त्वसम्भवात्तत्सञ्चारो न स्यात् । यद्वा सान्तरान्तोभयाऽनुकरणस्य मूलकृतोक्तत्वात् सान्तपक्षस्य भाष्यासम्मतत्वसूचनाय **वस्तुत** इत्युक्तम् । अत एव **'मतुवसो'**रिति सूत्रे भोशब्दस्य विभक्तिप्रतिरूपकनिपातत्वमु-

ॐ विषमपदविवृतिः ॐ

दिति भावः । तथा च स्थानषष्ठ्यन्तपदजन्यप्राथमिकोपस्थितिविषय इडिति समुदाय एवेति न

'रोः सुपी'ति विसर्गः। नियमशास्त्राणि च विधायकान्येव वाच्यवृत्त्या, आर्थिकार्थ-मादाय तु निषेधकानीति। तत्रापि 'रो रेफस्य विसर्ग' इत्यर्थे त्वग्रहणं व्यर्थम्—' इत्युक्तम्। नन्वेवं 'हे रामे'त्यादौ सम्बुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्या-न्यधर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न, आनुमानिकादेशस्य रामेत्यस्य स्थानिवद्भावेन सुबन्तत्वस्य, तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः। प्रत्ययलक्षणेनापि

❀ अभिनव-चन्द्रिका ❀

श्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकमपीत्यर्थः। **विधायकान्येवेति**।

❀ चिदस्थिमाला ❀

**तत्र हीति**। यत इत्यर्थः। अत्र हेतुमाह—**नियमेति**। चोऽप्यर्थे। नच वाच्यवृत्त्या तत्त्वे निषेधकत्वव्यवहारासङ्गतिरत आह—**अर्थिकार्थमिति**। इतिंना फलोक्तिं समाप्य खण्डयति—**तत्रापीति**। 'रोः सुपी'त्यत्रापीत्यर्थः। 'रोरी'त्यतो' र इत्यनुवृत्तेः। **त्वर्थे त्विति**। तदङ्गीकारे त्वित्यर्थः। **व्यर्थमिति**। उत्तरार्थत्वस्याप्यभावादिति भावः। प्रतिपादितञ्चैतत्सर्वं सविशदं भावप्रकाशे नन्वेवमुक्त-रीत्याऽल्विधित्वाङ्गीकारे 'रामाये'त्यादौ प्रागुक्तरीत्या दोषाभावादाह—**हे राम इत्यादाविति**। तथाच 'तिङ्ङतिङ' इति निघातासिद्धिरिति भावः। नन्वेवमपि विशेषणतयाऽलाश्रयणाद्दोष एवात आह—**तत्प्रयुक्तेति**। पदत्वादिरूपेत्यर्थः। तात्सिद्धेः=पदत्वादिसिद्धेः। नन्वेवमप्यत्र सस्यार्थवत्त्वेन न तत्कल्प-नैवेति कथं निर्वाहोऽत आह—**प्रत्ययेति**। अप्यन्तस्य मध्यमणिन्यायेनान्वयः। तेनापि तत्सिद्धेरित्यर्थः। नियमशास्त्राणां विधिमुखेन प्रवृत्तेरिति भावः। नन्वेवं कथं तेनापि सिद्धिरल्धर्मत्वादत आह—

❀ ज्योत्स्ना ❀

इत्यर्थः। तुनाऽरुचिः सूचिता—तद्बीजन्तु 'वारिणी' इत्यादौ ईकारान्ते द्विवचनत्वानतिदेशा-

❀ सदाशिवभट्टीयम् ❀

त्कम्, विभक्त्यन्तञ्च वार्तिकनिष्पन्नं रान्तमेवेति तत्सदृशत्वेन रान्तस्यैव निपातत्वसिद्धिः। सान्तनिपात-सत्त्वे तु मानाभावः। इदमेवाभिप्रेत्य शब्दरत्ने 'भाष्यस्वरसोप्येवमेवे'त्युक्तम्। 'सान्ताऽनुकरणे रान्तानां न स्या'दित्यपि शब्दरत्नोक्तमनुसन्धेयम्। **लोपे चेति**। एतेनासाधारणनिवेशस्य सम्मतिं सूचितवान्।

**नियमशास्त्राणीति**। नन्वत्वग्रहणाभावे यत्वार्थं सूत्रस्यावश्यकत्वेन कथं नियमार्थकत्वमिति चेन्न, तावन्मात्रफलकत्वे प्रक्रियालाघवाय भोभगोइत्यनन्तरमिदं पठित्वाऽनेन यत्वमेव विदधीतेति। **निषेधका-नीति**। इति=हेतोः—पयःस्वित्यादौ दोष इत्यन्वयः। **हे रामेत्यादाविति**। आदिना 'तेजस्विन्-पाह्नी'त्यादि पदत्वासिद्धिरिति, तथा च पदात्परत्वाभावे 'पाह्नी'त्यस्य निघातो न स्यात्, तेजस्विन्नि-त्यस्याविद्यमानत्वात्। रामेत्यत्र 'नामन्त्रित'इति निषेधेन तत्त्वाभावात्–हेशब्दाश्रयोपि न सः। इयं शङ्का कार्यकालपक्षेपि स्फुटैव। यथोद्देशेपि नित्यत्वाल्लोपे तदसिद्धिरेव। प्रकृते लोपेन तदनुत्पत्तेरेवान्वाख्यानाद्वा।

**सुबन्तत्वेति**। न च विशेषणतयाऽलाश्रयणम्। अल्मात्रवृत्तिधर्मघटितेत्युक्तत्वात्। इदञ्च निमित्त-रूपकार्यातिदेशपक्षे। विधेयरूपकार्यातिदेशेप्याह—**तत्प्रयुक्तेति**। **प्रत्ययलक्षणेनापीति**।–पूर्वान्वयि।

❀ विषमपदविवृतिः ❀

तत्र स्थानिवत्त्वनिषेधः। **हे रामेति**। इदमुपलक्षणं, राम इत्यत्रापि पदत्वासिद्धेः, सुप्त्वस्य विसर्गस्य स्थान्यल्वृत्तित्वात्। **आनुमानिकेति**। राम इत्यत्रापि रेफान्तस्य स्थानिविसर्गान्ते आदेश इति भावः। नन्वेवं स्थानिवद्भावेन सुबन्तत्वलाभ इत्ययुक्तम्, नियमशास्त्राणां विधि-मुखेन प्रवृत्तेस्त्वयैवाभ्यर्णमुक्तलेन प्रत्ययलक्षणेनैव सुबन्तत्वस्य वक्तुमुचितत्वादिति तटस्थशङ्कां परिहरति—**प्रत्ययलक्षणेनापीति**। अपिरुक्तशब्दार्थे। एवञ्च 'राजपुरुष' इत्यादावपि स्थानि-

न प्रत्ययवृत्तिधर्मलाभः । लक्षणपदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तक-व्यवहारस्य चाऽतिदेशात् ।

एवं 'दीर्घाहो निदाघ' इत्यादौ हल्ङ्याादिलोपे उत्तरीत्या स्थानिवि

❀ अभिनव-चन्द्रिका ❀

विधायकत्वमित्यर्थः । नियमशास्त्राणां विधिमुखेन निषेधमुखेन च प्रवृत्तिर्भवति, यत्र विधिमुखेन प्रवृत्तिर्न सम्भवति तत्र निषेधमुखेनैव प्रवृत्तिः । यथा 'हन्तेरपूर्वस्ये'त्यत्रत्यापूर्वस्येतिशास्त्रस्य, यथा वा 'तपस्तपः कर्मकस्यैवेति प्रत्याख्यानात् कृतस्य-'तप' इतियोगविभागनियामकस्य 'तपः कर्मकस्यैवे'त्यस्य, यथा वा 'बहुव्रीहौ वेति प्रत्याख्यानात् कृतस्य-'अनो बहुव्रीहे' रित्यनुवृत्तिमहितस्य 'अन्यतरस्यामिति विभक्तयोगस्य नियामकस्य 'उपधालोपिनो वे'त्यस्य च निषेधमुखेनैव प्रवृत्तिः। तत्र विधिमुखेन प्रवृत्तिस्तु न सम्भवति, नियम्यनियामकयोरुभयोर्लक्ष्यासम्भवात्। निषेधमुखेन प्रवृत्तौ तु 'अपूर्वस्ये'त्यस्या-पूर्वभिन्नहन्तेर्नस्य णत्वन्नेत्यर्थः । अपूर्वस्य तु 'हन्ते'रित्यनेन । 'तपःकर्मकस्यैवे'त्यस्य तपःकर्मका-तिरिक्तनपधातोः कर्मवद्भावो नेत्यर्थः । तपःकर्मकस्य तु 'तप' इत्यनेन भविष्यति । 'उपधालोपिनो वे'त्यस्य उपधालोपिभिन्नबहुव्रीहेर्ङीब्न भवतीत्यर्थः । उपधालोपिनि तु 'अन्यतरस्या'मित्यनेन भविष्यतीति 'बहुव्रीहौ वे'ति न कर्त्तव्यम्। यत्र तु उभयमुखेन प्रवृत्तिः सम्भवति तत्र विधिमुखेनैव प्रवृत्तिः, यथा प्रकृते—'रोः सुपी'त्यत्र रुभिन्नसप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टरेफस्य विसर्गो न

❀ चिदस्थिमाला ❀

न प्रत्ययेति । तेनापि न प्रत्ययमात्रवृत्तिरित्यर्थः । लक्षणेति । अन्यथा 'प्रत्ययव'दित्येव वदेदितिभावः । कार्येति । पदत्वादिरूपस्येत्यर्थः । उक्तरुचैवाह—तन्निमित्तकेति । पदत्वादिव्यवहारस्येत्यर्थः । उक्तप्रकारद्वयमन्यत्राप्याह—एवमिति । उक्तरीत्येति । प्रथमप्रकारेणेत्यर्थः । प्रवृत्तावन्वयः ।

❀ ज्योत्स्ना ❀

गुरुत्वानापत्तिः, तस्य स्थान्यलौकारवृत्तित्वेनाल्विधित्वात् । मूलोक्तानुसारेण भाष्याक्षरयोजना-प्रकारस्तु परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितस्तत एव बोद्धव्यः । लक्षणपदोपादानेनेति । 'स्थानिव'दित्यनुवृत्त्या 'प्रत्ययलोपे प्रत्ययः स्थानिव'दित्येतावतैव 'प्रत्ययलोपे प्रत्ययव'दितिन्यायेन च तत्सिद्धेरिति भावः । प्रत्ययनिमित्तककार्यस्येति । प्रकृतिसम्बन्धिन इत्यर्थः । अत एव नखं-भिन्नो नखभिन्न इत्यादौ नैत्त्। नचैवमपि स्थानिवद्भावोऽत्र कस्मान्न भवति ? 'स्थानिवदादेश' इति सूत्रेऽभावरूपादेशस्याग्रहणात्। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वाद्वा । तन्निमित्तकव्यवहारस्य वेति। प्रत्ययपरत्वादेरित्यर्थः । अतिदेशादिति। एतेन राजपुरुष इत्यत्रापि स्थानिवद्भावेनैवोक्तरीत्या पदत्व-

❀ सदाशिवभट्टीयम् ❀

ननु तेन सुप्त्वमेव कुतो नातिदिश्यते, तत्राह—न प्रत्ययेति । तन्निमित्तकव्यवहारस्य वेति । स चाशास्त्रीयोपि, दोषाभावात्, सङ्कोचे मानाभावाच्च । एवमिति। यथाऽत्रहीदित्यत्रेट्त्वेन स्थानिवेति

❀ विषमपदविवृतिः ❀

वत्त्वेनैव राजेत्यस्य पदत्वमित्याशयः । यद्वा वार्तिकमते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेन 'वर्णाश्रय' इत्यस्य वर्णमात्रवृत्तिधर्माश्रय एव प्रवृत्त्या तन्मते प्रत्ययलक्षणसूत्रेण सिद्धिमाशङ्क्य निराकरोति—प्रत्ययलक्षणेनापीति । व्याख्या पूर्ववत् । वार्तिकमते लक्षणपदस्य वैयर्थ्यादिदमापाततः । तन्निमित्तकार्यस्येति । 'प्रकृतिसम्बन्धिन' इति शेषः । अत एव 'नखनिर्भिन्न' इत्यादावैत्त् न । तथा च पदसञ्ज्ञायाः प्रकृतिप्रत्ययोभयसम्बन्धित्वेन प्रत्ययलक्षणसाध्यत्वमित्यर्थः । प्रत्ययस्य कार्य-कोटौ प्रवेशेन पदसञ्ज्ञानिमित्तत्वाभावात् । उक्तरीत्येति । आनुमानिकस्थान्यादेशभावाश्रय-

जायमानस्यासुपीति रुत्वनिषेधस्यादेशे दीर्घाहन्शब्देऽतिदेशेन प्रवृत्त्या न रेफ इति दिक् ।

ॐ अभिनव-चन्द्रिका ॐ

भवतीति निषेधमुखेन प्रवृत्तिः । सप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टरेफातिरिक्तत्वेन 'खरवसानयो'रित्यत्र सङ्कोचं कृत्वा विधिमुखेन प्रवृत्तिरपि सम्भवतीति विधिमुखेनैव प्रवृत्तिः । अत्र चेदमेव भाष्यं मानमिति दिक् ।

तस्मिन्द्वेरिति । वस्तुतस्त्वल्त्वव्याप्यहल्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयलोपधर्मिकारोपप्रकारीभूतसुप्त्वस्य पदमञ्जरीयोद्देश्यतायाः साक्षादवच्छेदकत्वेन अनल्विधावित्यस्याप्राप्त्या श्रौतादेशे श्रौतस्थानिवृत्तिसुप्त्वस्य स्थानिवत्त्वेन सुलभतया आनुमानिकस्थान्यादेशभावकल्पनापर्यन्तमनुधावनं व्यर्थमिति बोध्यम् ।

दिगिति । दिगर्थस्तु-'रोःऽसुपी'त्यस्य सुबव्यवहितपूर्वत्वविशिष्टाहन्शब्दस्य रेफादेशो न भवतीत्यर्थेन 'दीर्घाहो निदाघ' इत्यादौ अल्त्वव्याप्यहल्त्वावच्छिन्नस्थानितानिरूपिता-

ॐ चिदस्थिमाला ॐ

हदत्र प्रागुक्तद्वितीयमतेन । एवं द्वितीयप्रकारेणापि बोध्यम् । ज्ञानेत्यादावाद्यप्रकार एव बोध्यः । एवञ्च-मनोरमादिसकलग्रन्था अयुक्ता एव, तदाह—दिगिति । इतरसकलग्रन्थासङ्गतिं प्रतिपादयन् मूलं खण्डयति—परेत्विति । प्रागुक्तमिदम् । ननु अनुक्तत्वात्कथं तेन रुत्वमत आह—एषानिति । 'मतुवसो'रिति सूत्रस्थत्वात् । परिभाषालब्धमाह—अन्त्येति । 'नानर्थक' इत्यस्याः प्रत्याख्यानादाह—

ॐ ज्योत्स्ना ॐ

सिद्धिर्न प्रत्ययलक्षणेनेति भावो लभ्यते । न रेफ इतीति । प्रत्ययलक्षणस्य त्विह सम्भवेऽपि स्थानिवत्त्वेन सिद्ध्युक्तिः प्रत्ययलक्षणसूत्रस्य नियमार्थत्वसूचनार्था, पूर्वत्र तु स्थानिवत्त्वमेवेति विशेषः । वस्तुतस्त्वनपेक्षितार्थसन्निधानस्य तत्तन्निमित्तरूपकार्यव्यवहारस्यैव स्थानिवत्सूत्रेणातिदेशात्तथा-

ॐ सदाशिवभट्टीयम् ॐ

तद्वृत्तीद्त्वातिदेशात् सलोपस्तथेत्यर्थः । उक्तरीत्येति । अनल्निष्ठधर्मत्वेन सुप्त्वादिनेत्यर्थः । हलिति तु सुतिसीनां विशेषणमिति भावः। उक्तरीत्या यत्स्थानी तत्रेत्यन्वयः । स्थानिनि=सकारे जायमानस्य, 'सावपि पद'मिति पक्षे प्राप्तरुत्वाभावाय प्रवर्तमानस्यादेशे=लोपे परतो (नतूत्तरेण समानाधिकरणम्)तत्र परेऽतिदेशेन प्रवृत्त्या दीर्घाहन्शब्दे न दीर्घ इति योजना । दिगिति । दिगर्थस्तु—हल्ङ्याबितिसूत्रे सुत्वादिना स्थानितेति

ॐ विषमपदविवृतिः ॐ

णेनेत्यर्थः । तथा च दीर्घाहन् स् इत्यस्यां दशायां यथा 'ऽसुपी'ति रुत्वनिषेधस्तथादेशेप्यानुमानिकस्थान्यादेशभावस्य समुदायविश्रान्ततयाऽल्न स्थानीति नानल्विधाविति निषेधः प्रवर्तत इति भावः । यद्यपि राजेत्यादौ सुलोपे दीर्घो न स्यादित्यपि शङ्कितव्यं, तथापि परत्वाद्दीर्घस्य लोपात्पूर्वं प्रवृत्तिरिति समाधानसम्भवेनानुमानिकस्थान्यादेशभावाश्रयणेन समाधानक्लेशस्य नोपयोगः । दीर्घाहो निदाघ इत्यत्र तु रुत्वस्यासिद्धत्वापूर्वं लोप इति आनुमानिकस्थान्यादेशभावाश्रयणक्लेश आवश्यक इति विशेषः । नचैवं चित्रायां जातश्चित्र इत्यत्र ङीप्प्रसङ्गः । आनुमानिकस्थान्यादेशभावे आश्रीयमाणेऽलः स्थानिवत्त्वाभावात् । यदि च स्थान्यवयवाल्वृत्तिधर्माश्रयकत्वेना'नल्विधा' विति निषेध इत्युच्यते, तदा स प्रकृतेपि समान इति वाच्यम् , 'स्थान्यल्वृत्ती'त्येतदंशे मात्रपदानिवेशेपि स्थान्यवयवाल्वृत्तीत्येतदंशे तन्निवेशेनादोषात् । अन्ये तु—स्थानिवदादेश इत्यत्र स्थानिपदं निवर्त्यपरमेव, लोकत एतत्सिद्धं, तद्यथा—लोके यो यस्य प्रसङ्गे भवति लभतेऽसौ तत्कार्याणीति स्थानिवत्सूत्रस्थभाष्यस्वारस्येन प्रसङ्गिन एव स्थानिपदार्थत्वलाभात्, स्थानमस्यास्तीति स्थानीति व्युत्पत्तेश्च, उत्तरसूत्रानुरोधाच्च । तत्र हि णिलोपस्य स्थानिवद्भावाय स्थानिपदं

**तेषां गेरिति** । इदञ्च—निपातनाख्याय 'विभाषा भव'दिति वार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेन । परे तु—तेषामपि रोरित्यर्थः । अपिना 'विभाषा भवद्भगवदघवतामोच्च वस्ये'ति वार्त्तिकनिष्पन्नसङ्ग्रहः । 'एषामन्त्यस्य रुः स्यादवस्य चौकारः

### ❀ अभिनव-चन्द्रिका ❀

देशनाश्रयत्वेनथ भेकारोनप्रकारीभूतसुत्वस्य रेफनिषेधशास्त्रीयोद्देश्यतायाः साक्षादनवच्छेदकत्वेन स्थानिवत्त्वेन, प्रत्ययलक्षणेन वा सुत्वानिदेशादसुपीति निषेधाद्रत्वाभावे रुत्वे च न दोष इति दिक् ।

### ❀ चिदस्थिमाला ❀

अत्रेति । ननु अन्यतरस्यां कारादिवदिष्टसिद्धौ किमर्थमेव व्याख्यानमुभयग्राहकमतः प्रकारान्तरेण मूलाधसङ्गतिं

### ❀ ज्योत्स्ना ❀

भूतस्य चात्र सुप्परत्वस्याशास्त्रीयत्वादतिदेशाभावाच्चिन्त्यमेतत् । **अन्यत्रेति** । मनोरमादिग्रन्थेषु ।

### ❀ सदाशिवभट्टीयम् ❀

श्रौतेपि तत्र न दोषः । अन्यथा प्रपठ्येत्यादावतिदेशत्वात्स्यादिति सार्म्री लोम्नी रामायेत्यादिरनुसन्धेयः । एतेन सुप्परत्वस्याशास्त्रीयत्वात्कथमतिदेश इति, आनुमानिकेपि कथमत्विर्धानामनिर्देशः, अन्यथा यकाम इत्यादौ वलि लोपः स्यादिति चापास्तम् । **मतेनेति** । अन्यथा वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकत्वेन निपातत्वमिति भाष्योक्तमनायाससाध्यं मार्गमपहायाकृतिगणत्वेन चाद्यन्तर्भावनं न कुर्यादिति भावः।

**त्रयाणामिति** । ननु निपातभोःशब्देनैव सर्वेषां फलानामन्यथासिद्धिं प्रदर्श्य द्वयोरेवावश्यकत्वमुक्तं शब्दरत्ने, तत्कथमुच्यते त्रयाणामावश्यकत्वमिति चेच्छृणु, वार्तिकविहितस्यौकारस्य सिद्धत्वेन नेत्स्वाश्रयात्सिद्धत्वेनातःपररोः सत्त्वेनोत्वे ओत्वस्यासिद्धत्वेनातः परत्वादाद्गुणे पूर्वरूपे भो अच्युतेत्यादेः

### ❀ विषमपदविवृतिः ❀

निवर्त्यपरमेव । 'अग्रहीत्—विशिष्टं ह्येषोऽलमाश्रयते इटं नामे'ति स्थानिवत्सूत्रस्थभाष्ये 'एष' इत्यनेन लोपः परामृश्यते । भोभगो इति सूत्रस्थभाष्यं, तदनुसारी स्थानिवत्सूत्रस्थः 'ग्रहोऽलिटि दीर्घ' इत्यत्रेट एव स्थानित्वं नाच इति कैयटग्रन्थश्च—प्रौढिवादेनैव प्रवृत्ते, उक्तभाष्यादिविरोधात् , बहुलक्ष्यासिद्धेश्च । तथा हि वारिणी इत्यत्र द्विवचनत्वस्य स्थान्यल्वृत्तित्वेनातिदेशेनादेशे तदलाभे प्रगृह्यत्वानापत्तिः। ईकारग्रहणं तु हरी इत्यादौ चरितार्थम्। 'अन्तादिव' त्सूत्रस्याल्मात्रवृत्तिधर्माश्रयके विधावप्रवृत्तावप्यल्वृत्तिधर्माश्रयके विधौ प्रवृत्तेः । किञ्चैवं सति ईर्णमित्यत्र दीर्घः, वीगतीत्यत्र प्रश्लिष्टस्य गुणे उपेतीत्यत्रै 'ङि पररूप'मिति पररूपम् । 'आदीध्ये' इत्यत्र 'एरनेकाच' इति यण् , ऊवे इत्युत्तमपुरुषे उवङादेशश्च न स्यात् । धातुत्वप्रत्ययत्वादीनां स्थान्यल्वृत्तित्वात् । किञ्च राजेत्यादौ नित्यत्वाद्धल्ङ्यादिलोपे दीर्घानापत्तिः । एवं 'दीर्घाह्नो निदाघे'त्यत्र हल्ङ्यादिलोपे रत्वापत्तिः । न चानुमानिकस्थान्यादेशभावाश्रयणेना 'सुपी'ति निषेधः, अह्नोयमाह्न इत्यादौ रत्ववारणाय पदस्येत्यनुवृत्त्याऽहन्शब्दान्तस्य पदस्य रत्वमित्यर्थावश्यकत्वेन दीर्घाहन् सु इत्यस्यां दशायां रत्वस्याप्रसक्त्या तन्निषेधस्याप्यप्रवृत्त्या स्थानिवद्भावेन हल्ङ्यादिलोपे जाते निषेधस्यातिदेष्टुमशक्यत्वात् । सावपि पदं भवतीति पक्षेपि रत्वनिषेधयोः त्रैपादिकत्वेन लोपात्पूर्वमप्रवृत्तेः । किञ्चानुमानिकस्थान्यादेशभावाङ्गीकारेपि श्रौतस्थान्यादेशभावस्य त्यागाभावेन श्रौतस्थान्यल्वृत्तिसुत्वप्रयोज्यसुबन्तत्वरत्वनिषेधयोरत्विधित्वेन 'हे राम' 'हे दीर्घाह्नो निदाघे'त्यादावनापत्तिः । तदेतदभिप्रेत्य—'उच्चारणकाले यः श्रुतः स स्थानित्वेनाश्रीयते न तु प्रतिपत्तिकाले इति मन्यते' इति कैयटेनोक्तं, भोभगो इति सूत्रे प्रत्ययलक्षणेनापीत्युक्तमप्ययुक्तम् ,

सम्बुद्धा'विति तदर्थः । अत्रग्रहणसामर्थ्यात् 'अलोऽन्त्यस्ये'ति नेति बोध्यम् । वार्त्तिक-निष्पन्नानां त्रयाणां भोःशब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमित्याहुः ।

**व्योर्लघु ।** यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् 'य्वो'रित्युचितं, तथापि 'लोपो व्योरि'तिलोपवारणाय सौत्रत्वमाश्रयणीयं स्यात्, अतो 'व्यो'रित्युक्तम् । लघुतरः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नतरः । अन्यपदार्थसम्बन्धोत्तरं वर्त्तिपदार्थप्रकर्षविवक्षया साधु । प्रयत्ने लघुतरत्वञ्चैषां शैथिल्यजनकत्वमेव । **लघूच्चारणाविति** । लघुतरोच्चारणा-

ॐ **अभिनव-चन्द्रिका** ॐ

**सामर्थ्यादिति** । 'नानर्थक'इतिपरिभाषायाः प्रत्याख्यानादेवमुक्तिः । **साधुरिति** । वस्तुतस्तु लघुः प्रयत्नो यस्य स लघुप्रयत्नः । लघुगतप्रकर्षप्रयोज्यलघुप्रयत्नत्वद्गतप्रकर्षविवक्षायां 'सूक्ष्मवस्त्रतर' इतिवद्विशिष्टात्तरपि लघुप्रयत्नतरशब्दः साधुरिति बोध्यम् । **शैथिल्यजनकत्वमेवेति** । वस्तुतस्तु अनेन शास्त्रेण पादमात्रिकयोरेव विधानादेतज्जनकप्रयत्ने एतद्गतशैथिल्यजनकत्वं बोध्यम् । कारणवैलक्षण्ये कार्यवैलक्षण्यस्यावश्यकत्वादिति केचित् । **लघुतरोच्चारणाविति** । एतद्विधेययोः

ॐ **चिदस्थिमाला** ॐ

प्रतिपाद्यन्नाह—**वार्त्तिकेति** । कोशानुक्तत्वात्तयोरप्रामाणिकत्वादाह—**भोःशब्देति** । अन्यत्र=शब्द-रत्नादौ । सकलग्रन्थासङ्गतिप्रदर्शनायाह—**लघुतर इति** । स चान्तरतम्याद्वस्य वो यस्य य इत्येव, तदुक्तं-मूले-**वयाविति** । स्वल्पत्वनिरासायाह—**प्रयत्ने इति** । चैषां=जिह्वाग्रादीनाम् । **शैथिल्येति** । अपटुत्वेत्यर्थः । उक्तरीत्यैव न्यूनतां निराचष्टे—**लघुतराविति** ।

ॐ **ज्योत्स्ना** ॐ

ननु वर्त्तिपदार्थस्य प्रकर्षान्यपदार्थाभ्यां युगपदन्वये 'विप्रतिषेधे पर'मिति परत्वात्तरपि, ततो बहुव्रीहौ लघुतरप्रयत्न इति स्यादत आह—**अन्यपदार्थसम्बन्धोत्तरमिति** । तथा च

ॐ **सदाशिवभट्टीयम्** ॐ

सिद्धिरिति फलसत्त्वादिति। इदन्तु चिन्त्यम्–'भोभगो'इति सूत्रे 'ओतो गार्ग्यस्ये'तिवत् 'ओत आद्योशी'त्येव सिद्धे पूर्वग्रहणं किमर्थम् । एवं हि पञ्चमीनिर्देशादव्यवधानांशस्यानायासेन लाभो यथान्यासे तु भगोअघो-ग्रहणेन ज्ञापकेन साध्यते इत्यपि गौरवमिति । **व्योर्लघु । सौत्रत्वादिति** । समाहारद्वन्द्वविषये एकशेषा-

ॐ **विषमपदविवृतिः** ॐ

पञ्च सप्त राजपुरुष इत्यादौ प्रत्ययलक्षणेन पदत्वमित्यस्य प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्थ भाष्ये ग्रन्थसन्दर्भेलब्धस्यानुपपत्तेः । उक्तभाष्यप्रामाण्येनास्मन्मते लक्षणपदेन हि प्रत्ययस्थानिकमै-सादिकमेव वार्यते न तु पदत्वादिकमपि, तथा सति नखनिर्भिन्न इत्यादावैसादेरिव पञ्चेत्यादौ पदत्वस्याप्यनापत्तिः । प्रत्ययलोपे प्रत्ययनिमित्तकमेव कार्यं भवति न तु तदुद्देश्यकमिति भवन्मते नियमपर्यवसानादित्याहुः । ननु वर्तिपदार्थस्य तरबर्थप्रकर्षेणान्यपदार्थेन च युगपदन्वये परत्वा-त्तरपि ततो बहुव्रीहौ लघुतरप्रयत्न इति स्यादत आह—**अन्यपदार्थसम्बन्धोत्तरमिति** । तथा च वार्तिकम्–'पूर्वपदार्थातिशये आतिशायिके कृते बहुव्रीहिः, सूक्ष्मवस्त्रतराद्यर्थ'इति । पूर्वविप्रतिषेधे-नेति तद्भावप्रदर्शनं कैयटेन कृतम् । पूर्वविप्रतिषेधे प्रमाणं तु लघुप्रयत्नतर इति निर्देश एव । एतन्मते तु अन्यपदार्थसम्बन्धोत्तरमेव वर्त्तिपदार्थातिशयविवक्षा, अभिधानस्वाभाव्यात् । तेन सूक्ष्मवस्त्रतरादिसिद्धिः । 'अत्रापि प्रमाणं लघुप्रयत्न इति निर्देशः । अत्र कैयटोक्तमेव युक्तम् । वृत्तपदार्थे विशेषणान्वयकल्पनाभावात् । **वर्त्तिपदार्थप्रकर्षविवक्षयेति** । शक्यतावच्छेदकगतस्यैव

त्यर्थः । सूत्रे सौत्रत्वादेकवचनम् । वकारोदाहरणम्—'असावादित्य' इति वृत्तिः ।

**ओतो** । 'व्यो'रित्यत्र यकारसाहचर्याद्वकारोऽपि धात्वनवयव एव । अत्राप्यर्थाधिकारा-त्तथैव । तेन 'स्मृतोवच्युते'त्यादौ न दोषः—तदाह—**यस्येति** । तादृशवस्यासम्भवा-दिति भावः । 'भोभगो' इति तु नानुवर्त्तते विच्छेदात्,—तद्ध्वनयन्नवक्ष्यति—'पदान्तस्य

❀ अभिनव-चन्द्रिका ❀

पादनान्तिकत्वादिति भावः। यकारसाहचर्यादिति। 'व्योर्लघुप्रयत्नतर' इतिसूत्रविषये धात्ववयवपदान्त-

❀ चिदस्थिमाला ❀

**वृत्तिरिति** । अत्रारुचिबीजं भाष्यानुक्तत्वमिति । मूलादिरीत्या व्याचष्टे-**व्योरिति** । व्योर्लघुवितिसूत्रे स्वर्थः । **व एवेति** । 'गृह्यते' इति शेषः । **अत्रेति** । 'ओत' इत्यत्रापीत्यर्थः । अधिकारात्=तदनुरो-धात् तथैवेति शेषः । **न दोष इति** । नातिप्रसङ्ग इत्यर्थः । स्मृतं वातीति स्मृतावास्तमाचक्षाणः स्मृतोवि-त्यादौ तदवयवत्वात् । आदिना'गोवच्युते'त्यादिपरिग्रहः । **तदाहेति** । तत्राप्रसङ्गं तदन्यासम्भवञ्चाभिप्रेत्या-हेत्यर्थः । एवञ्च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशस्यानुवृत्तिरिति भावः । **असम्भवादिति** । सामान्यतो रत्नाकराद्युक्तिसङ्गतेति ध्वनयन्नाह—**तादृशेति** । **विच्छेदादिति** । 'लोपः शाके'त्यनेनेति भावः । तयोः

❀ ज्योत्स्ना ❀

वार्तिकं-'पूर्वपदातिशये आतिशायनिकाद्बहुव्रीहिः—सुकृतवत्तरात्तराद्यर्थ' इति । 'पूर्वविप्रतिषेधेने'-ति—तद्भावप्रदर्शनञ्च प्रदीपकृतोक्तम् । पूर्वविप्रतिषेधे तात्पर्यग्राहकस्तु—'लघुप्रयत्नतर' इत्य-यमेव निर्देश इति बोध्यम् । **स्मृतोवच्युतेत्यादाविति** । उः=शम्भुः—स्मृतो येन स—स्मृतौः ।

❀ सदाशिवभट्टीयम् ❀

प्रवृत्तेराद्गुण इत्यादाविवेकेनैवादेशेनोभयोर्निवृत्त्यापत्तिरन्यथा स्यादिति भावः । एवमेव 'जश् झशि' 'सस-जुषो रुः' 'त्यदादीनामः' 'व्रीहिशाल्योर्ढ'गित्यादौ बोध्यः । तत्र कुतो न सौत्रत्वमुक्तमिति चिन्त्यम् । यद्वा भोभगो इतिसूत्राद्यग्रहणानुवृत्त्या यकारस्यैवादेशत्ववारणाय व्योरित्यावर्त्योभयोरादेशत्वमिति लब्धित्वेन तद्विशेषणस्यावश्यकत्वेन सौत्रत्वं विना गत्यन्तराभावादित्याशय इति । **वृत्तिरिति** । अत्रास्वरसबीजन्तु 'रो'रित्यनुवर्त्य रोः स्थाने यौ तयोरित्यर्थेनात्राप्राप्तिरेवेति । वग्रहणन्तु 'लोपः शाकल्यस्ये'त्युत्तरार्थमेवात एव हरयिह विष्णविहेत्यत्रैतत्सूत्रोल्लेखः । स्पष्टञ्चेदं भोभगोरिति शेषोद्द्योते ।

**ओतो गार्ग्यस्य** । **यकारसाहचर्यादिति** । अत्रेदं चिन्त्यम्-'त्वमचकायत्रे'त्यादौ दस्य रुत्वे यत्वे तथाभूतस्यापि यस्य सम्भवात्कथमेतदिति । एरर्थो यर्थः, तमिच्छति यर्थीयतीत्यादौ तत्सम्भवाच्च । **विच्छे-**

❀ विषमपदविवृतिः ❀

शक्यतावच्छेदकतावच्छेदकगतस्यापि प्रकर्षस्य तरबर्थत्वादिति भावः। **ओतोगा** । **साहचर्यादिति** । यद्यपि स्मृतावच्युतेत्यत्र 'व्यो'रिति लघुप्रयत्ने वकारे कर्तव्ये स्थानिवद्भावाच्च वकारः पदान्तः, 'पूर्वत्रासिद्धे न स्थानिव'दित्यस्य पदचरमावयवातिरिक्तविषयकत्वस्योक्तत्वात् । तथा च साहचर्या-श्रयणस्य 'स्मृतोवच्युते'त्यत्र नोपयोगः, तथापि जनानवतीति जनौस्तस्यापत्यं 'जनावपत्य'मित्यादौ धात्ववयववकारस्य ग्रहणवारणाय यकारसाहचर्यस्यावश्याश्रयणीयत्वमित्यभिप्रायेणेदम् । वस्तुतो-ऽयुक्तमेतम्—'स्मृतोवे'त्यत्रैव एतेर्विच् एरानयनमयनयनमित्यत्र धात्ववयवयकारस्य सम्भवात् । एवं नयतेर्विजन्तस्यानयनशब्देन समासे धात्ववयवयकारसम्भवो बोध्यः । **स्मृतोवच्युतेति** । स्मृतं वेतीति स्मृतोवीस्तमाचष्टे इत्यर्थे णिजन्ताद्विचि रूपम् । स्थानिवद्भावस्तु न, लोपस्य पदचरमा-वयवत्वेन पूर्वत्रासिद्धे नेत्यस्य प्रवृत्तेरिति भावः । वस्तुत ईदृशानामभिधाने दृढं मूलं न पश्यामः ।

किं ? तोयमिति। इदं लघुप्रयत्नयोर्न, गार्ग्यश्रुतेः,—तदाह—**अलघुप्रयत्नस्येति** । **पूजार्थमिति** । व्याख्यानादिति भावः । तादृशश्च भोसादिपूर्वक एवेत्याशयेनाह—**भो अच्युतेति** ।

भाष्यानुसारिणस्तु—भो इत्याद्यनुवृत्तेः स्मृतोवित्यादौ न दोषः । तस्यानभिधानाच्च । अपूर्वस्येति तु ओत इत्यनेन विरोधान्न सम्बध्यते । 'लोपः शाकल्यस्ये' त्येव 'भोभगो' इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः ।

**उञि च** । भोइत्यादिपूर्वस्य पूर्वेण सिद्धेराह— **अवर्णपूर्वयोरिति** । एतदपि नित्यमेव । अत्रापि गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैव लोपः । एतेन—भोइत्यादिपूर्वे

ॐ **अभिनव-चन्द्रिका** ॐ

यकारस्यासम्भव इति भावः । **स्मृतोवच्युतेति** । स्मृतां वातीति वेतीति वा स्मृतोवाः, स्मृतोवीः, ताभ्यां ण्यन्ताभ्यां क्विपि अच्युतशब्देन योग इति भावः । **गार्ग्यश्रुतेरिति** । ऋषिविशेषघटितसूत्रस्य ऋषिविशेषघटितसूत्रबोधितसाधुत्वाज्ञानादिति भावः । **अनभिधानाच्चेति** । 'न पदान्ताः परेऽणः सन्ती'ति लण्सूत्रस्थभाष्यप्रामाण्यादिति भावः। **गार्ग्यग्रहणानुवृत्त्येति**। तथा

ॐ **चिदस्थिमाला** ॐ

सम्भवादाह—**यत्नयोरिति** । **गार्ग्येति**। शाकटायनमते तत्सत्त्वेन गार्ग्यमते तदभावात् । एतेन 'विधानसामर्थ्यात्तस्य ने'ति **रत्नाकरदण्ड्याद्युक्तमपास्तम्** । 'लोपः शाकल्ये'त्यनेनागतार्थत्वायाह—**नित्यमिति—मूले**। अन्यथा तेनैव तदनुवृत्त्या सिद्धे एतद्वैयर्थ्यं स्पष्टमेव । एवमारम्भसामर्थ्यान्नित्यत्वे सिद्धे गार्ग्यग्रहणवैयर्थ्यं परिहरति—**गार्ग्येति** । नच स्वमतप्रच्युतिदोषाभावार्थं तत् , द्वाभ्यां लोपस्यैव स्मृतत्वे तद्वाक्येऽन्यग्रहणेन तयोरन्यतराग्रहणात् । नच वैपरीत्यं कुतो न, 'निषदावौपम्ये'ति निर्देशेन तस्य तत्त्वानुमानात् । तदाह—**व्याख्येति** । उक्तहेतोरेवाह—**तादृशश्चेति** । **चस्त्वर्थे** । मूलादिसर्वग्रन्थान्दूषयति—**भाष्येति** । तत्र रत्नाकराद्यनुरोधेन तत्त्वसत्त्वमभ्युपेत्याह—**स्मृतोविति** । वस्तुतस्तत्सत्त्वमेव नेत्याह—**तस्येति** । 'वृक्ष'वादितुल्यत्वात् । नन्वेवं गोत इति व्यर्थमत आह—**अपूर्वेति** । एवञ्च तदवयवादोकारादित्यर्थः । भोराद्यनुवृत्तिः पूर्वसूत्रेऽपि बोध्येति ध्वनयन्नाह—**लोप इति** । प्राग्वदुपपत्तिर्बोध्या । **पूर्वेण**=ओतो गार्ग्यस्येत्यनेन । ननु विकल्पार्थमत्रानुवृत्तिर्भोरादेरत आह—**एतदपीति** । अपिना पूर्वसूत्रसमुच्चयः । तद्वदस्याप्यारम्भसामर्थ्यात्तत्त्वमिति भावः । नन्वेवमपि तेनालघुप्रयत्नलोपे सिद्धेऽपि लघुप्रयत्नलोपार्थमत्रापि भोरित्याद्यनुवृत्तिरपि स्यात्, अत एव हलि सर्वेषामित्यत्र मण्डूकानुवृत्तिरपि न, नच लघुप्रयत्नविधिर्व्यर्थः, उञ्भिन्नेऽशि चारितार्थ्यादत आह—**अत्रापीति** । पूर्ववदाशयः। वृक्षवादेरन-

ॐ **ज्योत्स्ना** ॐ

स्मृतां वातीति—स्मृतोव्, वृक्षव्वद्रूपम् । **भोभगो इत्याद्यनुवृत्त्येति** । 'लोपः शाकल्यस्ये'त्यत्र

ॐ **सदाशिवभट्टीयम्** ॐ

**दादिति** । 'लोपःशाकल्यस्ये'त्यत्रेति भावः । तत्र हि शाकल्यस्यैवेत्यर्थसत्त्वाद्भोसस्तु गार्ग्यादिमतेपि लोपसत्त्वेन वाच्यार्थविरोधान्न सम्बन्ध इति भावः । **भोसादिपूर्वक इति** । उच्चारणार्थाकारेण निर्देशः, अतो न रुत्वादि । **भाष्यानुसेति** । अत्र यद्वक्तव्यन्तल्लोपः शाकल्यस्येत्यत्रोक्तम् ।

ॐ **विषमपदविवृतिः** ॐ

**गार्ग्यश्रुतेरिति** । शाकटायनमते एव लघुप्रयत्नयोर्विधानाद्गार्ग्यमते तदभावात् । **इत्याद्यनुवृत्तेरिति** । 'लोपः शाकल्यस्ये'त्यत्र । न च शाकल्यभिन्नमते लोपो नेति स्मृत्यन्तरानुसन्धाने गार्ग्य-

लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम् । वकारोदाहरणन्तु–'असा उ एकाग्नि' रिति वृत्तिः । उत्तरार्थमिति । ङमो 'ह्रस्वादचीं'त्यर्थमित्यर्थः । एतत्तत्रैव निरूपितम् । 'हलि सर्वेषा'मित्यादौ तु न सम्बद्ध्यते, व्यवहिते ङम इत्यत्रैव प्रयोजनकथन-परभाष्यप्रामाण्यात् । अत एव 'लिट्त्सु' इत्यादौ धुडादयः । अन्यथा सादौ पदे इत्यर्थान्न स्युः । अत एव 'माभ्या'मित्यादौ 'हलि सर्वेषा'मिति लोपसिद्धिरिति दिक् ।

हलि स । 'भोभगो' इत्याद्यनुवर्त्तते । तत्रौकारात्परस्य लघूच्चारणस्यैवानेन लोपः । अलघूच्चारणस्य तु 'ओत' इत्येव सिद्धम् । अपूर्वं तमयोरपि । न चापूर्वालघुप्रयत्न

### ❀ अभिनव-चन्द्रिका ❀

चेत्सूत्रस्य कृपिविशेषघटितत्वेन कृपिविशेषघटित'व्योर्लघु'–इतिसूत्रबोधितसाधुत्वस्याज्ञानाल्लघु-प्रयत्नयोर्न भवतीति भावः । उत्तरार्थमितीति । स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वी-मत्पदघटितशास्त्रविधेयत्वरूपप्रतिपदोक्तत्वस्य वेष्विष्पक्षोकारेऽभावादिति भावः । ङमो ह्रस्वाद-चीत्यर्थमिति । वस्तुतस्तु तत्रापि न प्रयोजनमिति तत्रैव निरूपितमिति तत एवावधार्यताम् । 'उञि च पदे'इत्यत्र पदेग्रहणन्तु अनेकान्तपक्षे 'उञी'त्वस्य 'इत्सञ्ज्ञकञकाराव्यवहितपूर्ववर्त्तिबोध्ये उशब्दे'

### ❀ चिदस्थिमाला ❀

भिधानात् । 'वृक्ष उ एकाग्नि'रिति रत्नाकरोक्तेरसाङ्गत्यादाह—वकारोदेति । सा नङ्गनचिर्बोध्या । ह्रस्वा-त्परो यो ङम् तदन्तं यत्पदमित्यादिव्याख्यानात्तत्रापि लोपदोषोऽत आह—एतदिति । तथा व्याख्यानेन-निर्वाहस्य तत्र प्रतिपादितत्वात् । एतेन—'तेनैव सिद्धे मूलमतत्वं चिन्त्य'मिति रत्नाकरदण्ड्याद्युक्तमपा-स्तम् । ननूत्तरार्थत्वेऽव्यवहिते 'हलि सर्वेषा'मित्यत्रापि सम्बन्धः स्यादत आह—हलीति । अत एव= तत्प्रामाण्यादादिशब्दग्राह्येषु 'डः सी'त्यादावसम्बन्धादेव । सादौ पदे=सादेः पदस्य । अत एवेति । अन्यथा हलादौ पदे इत्यर्थापत्तौ तत्र तदभावान्न स्यात् । नच तत्र विकल्प एव, तत्प्रामाण्येन तत्र नित्य-लोपस्यैवेष्टानुमानात् । एतेन—'ङम' इत्यत्रोक्तरीत्या फलाभावेऽपि 'हलि सर्वेषा'मित्यत्रैव फलं वृक्षव्भ्या-मित्यादौ नित्यलोपवारणरूपमुक्तरीत्या । नच तत्र कार्ये टिलोपस्य स्थानिवत्त्वं, पूर्वत्रासिद्धे नस्थिवेषा'दिति रत्नाकरोक्तमपास्तम् । उक्तहेतोः, वकारस्य तत्राननुवृत्तेश्च, तेषामनभिधानाच्च । नचैवमपि वेञः क्विपि सम्प्रसारणादौ तुकि च उदितिरूपं, 'षत्वतुको'रित्यसिद्धत्वन्तु न, 'पदान्तपदाद्यो'रिति वचनात् । एव 'तन्वयु'दित्यत्र पदसञ्ज्ञकस्याप्युत्तः सत्त्वादिहार्थमेव पदग्रहणमस्तु, प्रतिपदोक्तपरिभाषाप्यत एव न प्रवर्तते, एवञ्च मूलोक्तमयुक्तमिति वाच्यम् , तत्प्रामाण्येन तत्रापि लोपस्य नेष्टत्वादिति दिक् । तदाह–दिगिति । भोभगो इति । मण्डूकप्लुत्येति भावः । तत्राविति । तेषां मध्ये इत्यर्थः । तुर्यत इत्यर्थः । परिशेषादाह—लघ्विति । अपूर्वस्येति भावः । 'लोप' इति पाठः । तस्याऽनन्वयादाह—करणेनेति ।

### ❀ ज्योत्स्ना ❀

तथानुवृत्त्येत्यर्थः । सिद्धान्ते त्वोकारान्ते नित्येनानेन लोपेन बाधादवर्णमात्रविषयं 'लोपः

### ❀ सदाशिवभट्टीयम् ❀

हलिस । उभयोरपीति । अन्यमते चरितार्थस्यासिद्धत्वादादेशे तदुक्तं लोप इत्याशयः । सर्वेषां

### ❀ विषमपदविवृतिः ❀

मते लोपाभावापत्त्या गार्ग्यः स्वस्मान्मतात्प्रच्युतः स्यादिति वाच्यम् , शाकल्याभिन्नो यो गार्ग्य-भिन्नस्तन्मते लोपो नेति स्मृत्यन्तरानुसन्धानकल्पनोपपत्तेरित्याशयात् । तदनुवृत्तिरिति । भो इत्या-द्यनुवृत्तिरित्यर्थः । हलि सर्वेषाम् । अपूर्वोलघुप्रयत्न इति । शाकटायनमते एव लघुप्रयत्न-

अस्यासिद्धत्वात् 'लोपः शाकल्यस्ये'ति प्राप्नोतीति वाच्यं, लघुप्रयत्नस्यैवानेन लोपे 'व्यो'रिति सूत्रेऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चालघुप्रयत्नयोरेव लोपः स्याद्योरित्यर्थाधिकारादिति वाच्यम् , ऋषि-मात्रग्रहणार्थस्य 'सर्वेषा'मित्यस्य वैयर्थ्यापत्तेः, विकल्पस्य विच्छिन्नत्वेन नित्यत्व-सिद्धेः । अत्र च यकार एवानुवर्त्तते, न वकारः; वृत्तौ तथैवोक्तेः, फलाभावात्, 'अन्यपरे' इत्यादिनिर्देशाच्च । अन्यथा तत्र सौत्रत्वाद्याश्रयणीयं स्यात्तदाह—**लघ्वलघूच्चारणस्य यस्येति ।**

### ❀ अभिनव-चन्द्रिका ❀

इत्यर्थेन वेञ्धातुनिष्पन्नोकारस्येत्सञ्ज्ञकञकाराव्यवहितपूर्ववर्त्तिवेशब्दबोध्यत्वेन तत्रातिव्याप्तिवारणायेति

### ❀ चिदस्थिमाला ❀

**नचेति** । 'एव'मिति शेषः । अपूर्वे सम्भवादाह—**प्रयत्नयोरेवेति** । एवेन—तन्निरासः । ननु न तदृषि-मात्रग्रहणार्थमपि तु विकल्पाननुवृत्तिद्वारा नित्यार्थमत आह—**विकल्पेति** । शाकल्यपदप्रतिपाद्यस्येत्यर्थः । सूत्रद्वयेनेति भावः । चो वाक्यालङ्कारे । ननु निर्मूलत्वेनायुक्तमत आह—**फलेति** । वृक्षवादेरनभिधाना-दितिभावः । सूत्रसम्मतिमप्याह—**अन्यपरे इति** । आदिना निपातनादिपरिग्रहः । **तदाहेति** । तदेतत्सर्वं हृदि निधायाहेत्यर्थः । एतेन—"मूलं हरदत्तानुरोधेन, वस्तुतो वकारस्याप्यनुवृत्तिः, 'वृक्षव्-हसती'त्यत्र लोपे इष्टापत्तेरनभिधाने मानाभावात् । अत एव 'वृक्षव्करोती'त्यत्रातिप्रसङ्गवारणाय अचि हलीति व्याख्यानं भगवतः सङ्गच्छते"—इति **रत्नाकरोक्तमपास्तम्** । हलीति तु देवा इहेत्यादौ नित्यलोपाभावार्थमुत्तरार्थञ्च । देवा नम्या इत्यादौ 'लोपो व्यो'रिति न, तं प्रति यत्वस्यासिद्धत्वात् ।

### ❀ ज्योत्स्ना ❀

शाकल्यस्ये'तीति भावः । **तद्बाधादिति** । 'प्रकरणे प्रकरणमसिद्धं न योग योग' इति पक्षे

### ❀ सदाशिवभट्टीयम् ❀

ग्रहणबोधितशाकटायनमतविहितनिरवकाशलोपेन बाधादादेशाप्रवृत्तौ स्थानिनो लोपेनोभयोरदर्शनमिति 'वा'इति प्राप्नोतीति यवयोः शाकल्यस्यैव मते लोपः,यवयोर्हलि सर्वेषां मते लोप इत्यनयोर्विरोधेन रत्नमु-ट्स्वित्यादौ जश्त्वचर्त्वयोरिव सिद्धशास्त्रेण व्यवस्थापत्तौ मतान्तरे तदभावापत्त्या विकल्पापत्तिरिति भावः । एतेन तदभावे नित्यविधिर्दुर्वारतया शङ्का निर्दलेत्यपास्तम् । **अचीतिकरणेति** । 'मोऽनुस्वार' इत्यत्र हलीति कर्त्तव्यं, सर्वेषांग्रहणं योगविभागश्च मास्त्वित्याशयः । यथान्यासे एव सर्वेषांग्रहणवैयर्थ्यं स्यादिति कुतो नोक्तमिति चेच्छृणु, गार्ग्यस्येत्यस्यासम्बन्धाय तदावश्यकत्वादिति । एवं सति सर्वेषामिति वाक्यार्थविरोधः स्यादिति चेन्न, तस्योपायान्तरत्वात् । **वैयर्थ्यापत्तेरिति** । पूर्वोक्तोऽचीतिन्यास एवास्तु, सर्वेषामिति मा-स्त्विति चेत्, इष्टापत्तेः । अन्येतु 'ञमि च पद' इत्यत्रानुवृत्तगार्ग्यपदं न पूजार्थं, मानाभावात्, उत्तर-सूत्रेपि नित्यत्वार्थकसर्वेषांग्रहणाच्च, किन्तु विकल्पार्थं,तेनालघुप्रयत्नेपि विकल्प इति सूत्रकाराशयं वर्णयन्ति । पूर्वोक्तरीत्या फलसत्त्वादाह—**अन्यपरेति** । ननु शब्दत्वेन सादृश्यग्रहेपि न दोषः, येन विधिरित्यत्र

### ❀ विषमपदविवृतिः ❀

विधानेन शाकल्यमते तदभावदिति भावः । 'प्रकरणे प्रकरणमसिद्धं न योगे योग' इति पक्षे तु नायं दोषः । **तद्बाधादिति** । वस्तुतस्तु 'लोपः शाकल्यस्ये'त्यस्याभावे 'हलि सर्वेषा'मित्यस्य प्रवृत्त्या दोषाभावादयं प्रयासो व्यर्थ एव । **फलाभावाच्चेति** । 'वृक्षव् करोती'त्यादावशीत्यनुवृत्त्या-

**न तु सुपीति** । पर्युदासे हि सुप्सदृशे प्रत्यय एव स्यात् , एवञ्चाहर्भातीत्यत्र न स्यात् । यदि तु सुब्भिन्ने शब्दे स्यात्—'दीर्घाहो निदाघे'त्यत्रापि स्यात् । सुबन्ते-त्यर्थस्तु न । 'उत्तमैकाभ्या'मित्यादिनिर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभाव-ज्ञापनात् । लक्ष्यानुरोधेन क्वचित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणताया एवाश्र-यणाच्च । अत एव 'रदाभ्यां निष्ठे'त्यादौ न दोषः । **अहरहरिति** । 'नित्यवीप्सयोः'

❀ अभिनव-चन्द्रिका ❀

दिक् । **ज्ञापनादिति** । अवध्यंशे नियमाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नप्रत्ययमात्रवृत्तिविषयता-प्रयोजकं तदादिविशेष्यकतदन्तविधिप्रयोजकत्वेत्यर्थकं'प्रत्ययग्रहणञ्चापञ्चम्या'इतिनिषेधादिति भावः । **शब्दस्वरूपस्येति** । तदादिरूपस्येत्यर्थः । **विशेषणताया इति** । तदादेः परो यस्सुप् तदव्यवहित-पूर्वत्वविशिष्टाहन्शब्दस्य रो न भवतीत्यर्थादिति भावः । **अत एवेति** । रेफान्तो दान्तश्च यः तदादिस्तदव्यवहितोत्तरत्वविशिष्टा या निष्ठा तदवयवो यो निर्दिश्यमानः तदादेस्तकारस्य नकारादेशो भवतीत्यर्थस्वीकारादेवेत्यर्थः । **न दोष इति** । अनुनासिकादशब्दादाचारक्विवन्तात् 'क्विप्क्रौञ्चे'ति

❀ चिदस्थिमाला ❀

देवा यान्तीत्यादौ वत्वरत्वाभावेन तदर्थमस्यावश्यकत्वाच्च । अत एव द्विर्नायं तन्मूले उक्तम् । पदान्तस्य किं ? गव्यम् । गव्यूति' रित्यत्र यथा न तथोक्तम्। प्रत्ययत्वेन सादृश्ये आह—**प्रत्यये एवेति** । शब्दत्वेन सादृश्ये आह—**यदि त्विति** । **स्यादिति** । 'तद्धं' निषेधः । ननु प्रत्ययग्रहणे तदन्तग्रहणात्सुबन्तभिन्ने तत्सदृशे इत्यर्थस्य दुर्वारत्वेन नाव्याप्त्यतिव्याप्ती । यद्यपि—तथाप्यदोभ्यामित्यादौ समन्नायत्वेन 'स्यपे' त्यस्याप्रवृत्त्या दोष एवेति ध्वनयन्–सिद्धान्ते प्रसज्यप्रतिषेधेन तथार्थाभावे निमित्तमाह—**सुबन्ते इति** । **उत्तमैकेति** । अन्यथोकरीत्या 'सुपि चे'त्यत्रापि यञादिसुबन्ते इत्यर्थापत्त्या दीर्घो न स्यादिति भावः ।

नन्वेवं ज्ञापनेऽपि रदाभ्यामित्यादौ दोष एव, किञ्च 'येन विधि'रित्यत्र पठितप्रत्ययग्रहणे इत्ये-तद्घटकतदन्तांशापवादभूतया 'प्रत्ययग्रहणे चापञ्चम्या' इत्यनया विशेषणविशेष्यभावव्यत्यासतात्प-र्यकया निर्वाहे किमपूर्वज्ञापनेनात आह—**लक्ष्येति** । अनेन 'ङ्याब्भ्य' इत्यादौ न दोष सूचितम् । **क्वचिदिति** । यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधनाय परिगृह्यते तत्रेत्यर्थः । आदिना स्य-तेत्यादिपरिग्रहः ? । **न दोष इति** । इषत्तीर्णेत्यादौ धातुतकारादेर्न नत्वापत्तिरित्यर्थः । प्रकृते च

❀ ज्योत्स्ना ❀

सिद्धत्वं नैव प्राप्तमिति बोध्यम्। **इत्यादिनिर्देशैरिति** । तदन्तविधिना 'सुपि चे'त्यत्र सुबन्त इत्य-र्थादुत्तमैकाभ्यामिति दीर्घाप्राप्तौ निर्देशानुपपत्तिरिति भावः । **इत्यादौ न दोष इति** ।

❀ सदाशिवभट्टीयम् ❀

'स्वस्य चे'ति पाठेन सुब्भिन्ने शब्दे सुबन्ते इत्यर्थेनाहोभ्यां दीर्घाहोनिदाघेत्यादिसिद्धेरत आह—**सुबन्ते इति** । वस्तुतः 'स्वस्य चे'त्यस्य वाचनिकत्वेप्यसहायस्यैव स्वस्य रूपस्य सत्त्वा, 'मन्त्रेषु' 'सर्वेषा'मित्यादि-लिङ्गादिति अहोभ्यामित्यत्र दोष एवेति बोध्यम् ।

❀ विषमपदविवृतिः ❀

ऽस्याप्रवृत्तिः, वृक्षव् हसतीत्यादेस्त्वनभिधानम्, द्वयोरपि वाऽनभिधानमिति भावः । **निर्देशैरिति** । 'सुपि चे'त्यत्र तदन्तविधौ दीर्घानापत्तेरिति भावः । **निष्ठेत्यादाविति** । रदाभ्यां परस्य निष्ठान्तस्य यस्तकार इत्यर्थे इषत्तीर्णेत्यादौ धातुतकारस्य ततः पूर्वतकारस्य च नत्वापत्तिरिति भावः । वार्त्ति-

रिति द्वित्वम्। 'न लुमते'ति निषेधात्सुप्परत्वाभावः।

**गतमहो रात्रिरिति।** केचित्तु भाष्ये आतिदेशिकस्याहोरात्रस्यैवोदाहरणात्, 'न लोपः प्रातिपदिकान्तस्ये'ति सूत्रे 'न हि रूपरात्ररथन्तरेषु रौ रे वा विशेषोऽस्ती'त्यत्र प्रायेण रात्रेति पाठाच्चेदृशानामनभिधानमेवेत्याहुः। **अनन्यत्वादिति।** रात्रिशब्दत्वाक्षतेरिति भावः। अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह-**विसर्गापवाद इति।**

**ढ्रलोपे।** नायं तत्पुरुषोऽनीयरि चचारेत्यादौ च दोषापत्तेः। नापि बहुव्रीहि-

॥ अभिनव चन्द्रिका ॥

क्तप्रत्यये 'एकाच'इतीडभावे अतो लोपे दृषच्छब्देन योगे 'दृषत्त'इत्यादाविति भावः। **सुप्परत्वाभाव इति।** असुपीतिप्रसज्यप्रतिषेधस्वीकारेण लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिरूपिताङ्गसञ्ज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्ना च या उद्देश्यता तादृशोद्देश्यतात्कत्वस्यासुपीतिनिषेधे सत्त्वादिति भावः। **रात्रिशब्दत्वाक्षतेरिति।** वस्तुतस्तु अक्तपरिमाणे एकदेशविकृतन्यायाप्रवृत्त्या स्थानिवद्भावेन रात्रिशब्दत्वमत्र बोध्यम्। **ढ्रलोपे।** केचित्तु लुप्यतेऽसाविति बाहुलकात्कर्मणि घञ्। ढश्च रश्चानयोः समाहारः ढ्रं, सचासौ लोपश्चेतिविग्रहः। निपातनाड्ढ्रशब्दस्य पूर्वनिपातः। तथाच लुप्यमानढ्राव्यवहितपूर्वत्वविशिष्टाणो दीर्घ इति सूत्रार्थः। पूर्वग्रहणन्तु स्पष्टार्थमेव। न च पूर्वत्वविशिष्टस्याणो दीर्घ इति वाक्यार्थबोधः स्यादिति वाच्यं, लुप्यमानढ्राद्युत्तरपदाव्यवहितपूर्वत्वविशिष्टाणोऽसम्भवात्। किञ्च'ढ्रलोप'इतिदृष्ट्या'रोरि' 'ढोढे लोप' इत्यनयोरसिद्धत्वस्य

॥ चिदस्थिमाला ॥

तस्मिन्निपिपरिभाषया सुपि परे इत्यर्थे तस्य नियमेनावधिसाकाङ्क्षत्वेनाऽह इत्यादेरेव चोपस्थितत्वेनावधित्वेनान्वयात्पञ्चम्यन्तस्य तद्विशेषणत्वं स्पष्टमेव। एवं 'सुपि चे'त्यादावुपस्थिताङ्गादेरेव तत्त्वं बोध्यम्। अधिकं परिभाषेन्दुशेखरादौ सुव्यक्तन्तत एव बोध्यम्। **त्वाभाव इति।** इदमग्रेऽपि बोध्यम्।

मूलं दूषयति—**केचित्त्विति। आतीति।** एकदेशेतिन्यायप्रवृत्तेरिति भावः। ननु 'न चोदाहरणमादरणीय'मित्युक्तेरिदमयुक्तमत आह—**नलोप इति। प्रायेणेति।** अनेन पाठान्तरसत्तापि सूचिता। इयमेवात्रारुचिः। ननु समासान्तस्याविकारत्वेन कथं तन्न्यायसञ्चारोऽत आह—**रात्रीति।** समाहारद्वन्द्वादित्यर्थः। **रात्रीति।** हलन्ते इति भावः। ढ्रत्यत्राकार उच्चारणार्थ इत्याशयेनाह—**नायमिति।** वर्तिपदार्थप्रधानत्वेनान्तरङ्गत्वात् षष्ठीतत्पुरुष इत्यर्थः। **नीयरीति**-। 'पचनीय' मित्यादाविति भावः। ननु नायं प्रतिपदोक्तो रलोपः, किञ्च तथैव पठेदत आह—**चचारेत्यादाविति।** अत्र लक्ष्यसंस्कारकवाक्योपप्लवेन

॥ ज्योत्स्ना ॥

'रदाभ्या'मित्यत्र हि निष्ठान्तस्य यस्तकार इत्यर्थे दृषत्तीर्ण इत्यादौ दोषः स्यात्। **अनीयरीति।**

॥ सदाशिवभट्टीयम् ॥

**ढ्रलोपे।** ननु रिरस्तु न दोषस्तत्र रेफं परित्यज्य पकारादेरप्यनबन्धुं शक्यत्वात्,'उपोत्तमं रिती'त्यत्रोपोत्तमं तितीति वाच्यमित्यत आह—**चचारेति। दोषापत्तेरिति।** न च लक्षणप्रतिपदोक्तपरिभाषया निस्तारः,

॥ विषमपदविवृतिः ॥

पदार्थस्य वृत्त्यघटकविशेष्यान्वयायोगाश्च तदन्तविधिरिति केचित्। 'सप्तमीस्थ' इत्यादाविव तदन्तविधिप्राप्तेरित्यन्ये। **न लुमतेति निषेधादिति।** तत्राङ्गपदम्पूर्वोपलक्षणं, रेफविधानसामर्थ्यात्त्रिपाद्यामपि प्रवृत्तिरिति भावः। ननु 'अहन्' 'सुपि र' इतीत्येव न्यासोऽस्तु लाघवादिति चेन्न, गुरुन्यासेन क्वचिदसुप्यपि रुत्वकल्पनात्। तदेतत्पठ्यते—**रूपरात्रिरथन्तरेष्विति।** अकारान्ते

व्यधिकरणत्वात् । अनो णिजन्तात्कर्मण्यण्युपपदसमास इत्याह—**दरेफावित्यादि ।** भाष्ये तु व्यधिकरणबहुव्रीहिरेव दर्शितः। न च 'अजघा' इत्यादौ 'सिपि धातो'रिति रुत्वस्य, 'लीढ' इत्यादौ ढत्वादीनां, 'पितृ राज्य'मित्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वाच्यम्, ढग्रहणेन लण्सूत्रे 'अजघा' इति भाष्योदाहरणेन च तत्तच्छास्त्रैक-वाक्यतापन्नपूर्वत्र सिद्धमितिसूत्रस्थपूर्वग्रहणेनैतत्सूत्राग्रहणबोधनात् । **अणः किमिति ।** अच इत्येव सिद्धमिति प्रश्नः । तृंह इति पाठे 'नकारजावनुस्वारपञ्चमा'विति वृद्धोक्तेः 'अनिदिता'मिति नलोपे 'तृढ' इति रूपम् । अत्राप्यूर्वेणैव व्याख्यानात् ।

**विप्रतिषेधे ।** विप्रतिपूर्वात्कर्मव्यतिहारे वर्त्तमानात्सेधतेर्घञि परस्परविरोधार्थो विप्रतिषेधशब्दस्तत्र नित्यस्यावश्यकतयाऽन्तरङ्गस्य ज्ञापकादिनाऽपवादस्य वचनप्रामाण्या-

॥ अभिनव-चन्द्रिका ॥

बाधो न वक्तव्यो भवतीत्यपरमनुकूलम्भवति, लोपात्प्रागेव दीर्घप्रवृत्तेरित्याहुः । **नलोपे इति ।** 'तृन्हू'इत्येवोपदेशः,'त्रेन्नय'इत्यत्र, 'येर्ङ्गती'ति गुणादिवदनुस्वारादिना 'तृंहू' इति रूपस्य सम्पन्नत्वेन नकारघटित एव धातुत्वाङ्गत्वादेः सत्त्वादिति भावः । **व्याख्यानादिति ।** लण्सूत्रस्थभाष्यरूपा-व्याख्यानादिति भावः । **विप्रतिषेधे परम् ।** विप्रतिषेधे किम् ? पराऽनित्यापेक्षया पूर्वस्य नित्यस्य,

॥ चिदस्थिमाला ॥

तस्य तत्त्वमस्ति । नचाभ्यासान्तरत्वेन निर्वाहः, अभ्यासविकारेषु बाध्यबाधकभावाभावेन युगपत्प्रवृत्तेराकृत्वा-त्वाद्वा पर्जन्यवल्लक्षणप्रवृत्तेरित्याशयेन ह्रस्वे ततो दीर्घे विकारान्तरानुपूर्व्येकत्वेन 'लक्ष्ये लक्षण'मितिन्यायेन पुनस्तदप्राप्तेः। आदि-ग्रहे पपार निर्तारेत्यादौ दोषाच्चेति भावः। **लोपस्येति ।** लोपस्य चासिद्धत्वादित्यर्थः । तथा च ढ्लोप एव नेति एतदप्राप्तिरिति भावः । पुना रमत इत्यादौ रग्रहणस्य साफल्यादाह—**ढेति ।** अत एवास्य विशेषा-पेक्षत्वे तदंशे युक्त्यन्तरमाह—**तत्तदिति ।** सिपिधातो रुर्वेत्यादीत्यर्थः । 'अच' इतिपरिभाषोपस्थि-त्यैतल्लाभः । इत्सु फलाभावात् । अत एवाह—**व्याख्येति ।** एतेन कृतेऽपि तत्र दोषतादवस्थ्यमित्यपा-स्तम्। 'सेधतेः=षिध गत्या'मित्यतः । 'भावे' इति शेषः । **परस्येति ।** विविधं प्रतिकूलं गमनमि-

॥ ज्योत्स्ना ॥

'तव्यत्तव्यानीयर' इत्यनेन विहित इत्यर्थः । **ज्ञापकादिनेति ।** ज्ञापकञ्च—**ओमाङिति**

॥ सदाशिवभट्टीयम् ॥

प्रत्यक्षसिद्धपूर्वत्रासिद्धमित्यस्य बाधापेक्षया लक्षणप्रतिपदोक्तपरिभाषाबाधस्यैवोचितत्वादिति भावः । **भाष्ये त्विति ।** अयं भावः—कर्मण्यणि 'अदर्शनं लोप' इत्यनेन सङ्केतितस्य ग्रहणमित्यस्य वक्तुं शक्यत्वेन प्रसक्ताप्रसक्तसाधारणदर्शनाभावस्य लुब्धात्वर्थत्वेन ग्रहणापत्तौ शिव इहेत्यादौ भावरूपातिदेशेपि स्थान्य-दर्शनसत्त्वेन तज्जनके इतिशब्दे पूर्वस्य दीर्घापत्तिः । नच यलोपासिद्धत्वेन न तत्परत्वं, पूर्वपदे-नैतत्सूत्राग्रहस्येष्टत्वात् । मम तु प्रसक्तादर्शनस्यैव शास्त्रे लोपपदार्थत्वेन भावरूपेण चादेशेन स्थानिप्रसङ्ग-स्यैव बाधेन प्रसक्तदर्शनविरहेण सम्भवैव नेति न दोष इति। स्पष्टं चेदं लोपसञ्ज्ञासूत्रे भाष्ये। **सिपिधातो-रिति ।** इत्यनुवर्तमाने 'दश्चे'त्यर्थः। **विप्रतिषेधे । परस्परेति ।** अन्यथा सर्वथा विरोधाभावे सन्देहाभावेन

॥ विषमपदविवृतिः ॥

रान्ते परत्वादतो लोपस्येकारोकारान्ते च गुणस्य प्रवृत्त्या न दोषः। **चचारेत्यादौ चेति ।** नन्वन्तरङ्ग-त्वाद्दीर्घेऽभ्यासह्रस्वत्वेन सिद्धमिति चेन्न । ऊखतुरित्यादावपि सवर्णदीर्घे ह्रस्वापत्तेः । यदि च तत्र वार्णादाङ्गमिति पूर्वं ह्रस्वस्ततो दीर्घस्तर्हि प्रकृतेपि समः समाधिः । **विप्रतिषेधे परङ्कार्यम् । आव-श्यकतयेति ।** अङ्कुसाभावकस्याभावकल्पनायोगादिति भावः। **तद्विषोऽस्य विषय इति ।** ननु नित्या-

द्बाधकत्वे स्थिते तद्भिन्नोऽस्य विषय इत्याह—**तुल्यबलेति** । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसम्भवि स्वकार्यसमर्पणञ्च सः । तत्र प्रायेणैकस्य कार्यद्वययोगकृतेऽसम्भवे एतस्य प्रवृत्तिः । यथा 'वृक्षेभ्य' इति । तत्र हि दीर्घैत्वयो-र्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । क्व चित्केवलासम्भवेऽपि, यथा 'शिष्टा' दित्यादौ । अत्र हि तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः ।

**ॐ अभिनव-चन्द्रिका ॐ**

परवहिरङ्गापेक्षया पूर्वान्तरङ्गस्य च बलवत्त्वं यथा स्यात्। अन्यथा लौकिकन्यायमूलक'पराश्रितं बलव'-दिति न्यायापेक्षया, 'ओमाङोश्चे'त्याङ्ग्रहणलिङ्गकासिद्धपरिभाषापेक्षया च (लिङ्गापेक्षया) श्रुतस्य 'परं कार्य'मितिवचनस्य प्राबल्येन 'तुदति''सुलुनी'इत्यादौ परत्वाद्गुणनुमोरापत्तिः । विप्रतिषेधपदसत्त्वे तु निरुक्तविषये तुल्यबलविरोधाभावादेतदप्रवृत्त्या न दोष इति दिक् । **युगपदसम्भवीति** । सर्वशास्त्रेण स्वविधेयघटिते साधुत्वस्यान्यत्र चासाधुत्वस्य बोधनात्पूर्वपरशास्त्राभ्यां परस्परेण परस्परविधेयघटितयोरसाधुत्वबोधनेनासम्भव इति भावः । **स्वस्वनिमित्तानन्तर्यासम्भव इति** । वस्तुतस्तु चिन्त्यमिदम्—तत्तन्निमित्तानामावृत्त्या उद्देश्यविधेयोभयविशेषणत्वकल्पने मानाभावा-त्फलाभावाच्च । न च तत्तन्निमित्तस्यावृत्त्या उद्देश्यविधेयोभयविशेषणत्वाकल्पने आनुमानिक-स्थान्यादेशभावकल्पे 'इको यणची'त्यादेरजव्यवहितपूर्वत्वविशिष्टेग्घटितस्थाने यण्घटितं भवती-त्यादिक्रमेणार्थेन 'सुधी उपास्य'इत्यस्य स्थाने 'सुद्ध्य्' इति यान्तादेशापत्तिरिति वाच्यं, तत्तन्निमि-त्तस्याऽऽवृत्त्या 'इको यणची'त्यादेः 'अजव्यवहितपूर्वत्वविशिष्टेग्घटितस्य स्थाने अजव्यवहित-पूर्वत्वविशिष्टयण्घटितं भवती'त्यादिक्रमेणार्थस्वीकारेऽपि 'सुधी उपास्ये'त्यस्य स्थाने उदासीन-'दध्यानये'त्यादेरादेशापत्तेर्दुर्वारत्वात् । स्थानेन्तरतमपरिभाषया एतद्वारणन्त्वस्माकमपि तुल्यमिति आवृत्त्या तत्तन्निमित्तस्य उभयत्रान्वयो विफल इति दिक् । **स्वस्वनिमित्तानन्तर्यासम्भव इति** ।

**ॐ चिदस्थिमाला ॐ**

त्यर्थकन्येति भावः । तत्र=मिथोविरोधविषये । अपिना लोकन्यायपरिग्रहः । तुल्यबलविरोधशब्दार्थ-माह—**द्वयोरिति** । शेषत्वविवक्षया षष्ठी, कार्येऽन्वयो वा । असम्भवित्वमपि तस्यैव विशेषणम् । चस्त्वर्थे । तत्र=तस्मिन्सति । **युगपदिति** । 'आ—ए' इति, 'ए—आ' इति चेत्यर्थः । 'प्रायेणे'त्यस्य फलमाह—**क्वचिदिति** । एकस्य कार्यद्वययोगशून्ये इत्यर्थः । आदिना शा-परिग्रहः । 'वत्वेने'तिपाठः ।

**ॐ ज्योत्स्ना ॐ**

सूत्रे आङ्ग्रहणं, 'वाह ऊ'डित्यत्रोड्ग्रहणञ्च । आदिपदात्—, 'अचः परस्मि'न्निति सूत्रोक्तो

**ॐ विषमपदविवृतिः ॐ**

न्तरङ्गादीनां ज्ञापकन्यायाभ्यां बाधकत्वं, परस्य तु विप्रतिषेधे परमिति प्रत्यक्षवचनकृतं तदिति प्रत्यक्षवचनस्य ज्ञापकन्यायादितः प्राबल्यादिदमयुक्तमिति चेत्सत्यम् । तुल्यबलविरोधस्य विप्रति-षेधशब्दार्थत्वाङ्गीकारेणादोषात् । तदेतदभिप्रेत्यात्र सूत्रे भगवता भाष्यकृतोक्तम्—'द्वौ प्रसङ्गौ यदान्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतः स विप्रतिषेध' इति । तत्रान्यार्थावित्यनेनापवादव्या-वृत्तिः । 'युगपत्प्राप्नुत' इत्यनेनान्तरङ्गव्यावृत्तिः । तद्धि परस्मात्पूर्वमेव प्राप्नुते, न तेन युगपत् । इदं नित्यव्यावर्तकस्योपलक्षणं विशेषणम् । कैयटस्तु अत्र सूत्रे कार्यमित्यर्हार्थे कृत्यः, करणार्हं कार्यं, तुल्यबलञ्च करणार्हमिति नित्यानित्योत्सर्गापवादान्तरङ्गबहिरङ्गेषु अस्य सूत्रस्याव्यापार इत्याह—**स्वस्वनिमित्तानन्तर्यासम्भव इति** । निमित्तं विधेयविशेषणमिति भावः । **सकृद्गताविति** ।

यद्यपि तातङादेः स्थानिवत्त्वेनाग्स्येव नत्, तथापि अतिदेश आदेशप्रवृत्त्युत्तरमेव, न तु तत्प्रवृत्तिकाले इति युगपदसम्भवोऽस्त्येवेति परत्वात्तातङि सकृद्गतिन्यायेन न शादेशः। स्पष्टश्चेदं सर्व प्रकृतसूत्रे 'इको गुणवृद्धी' 'अदसो मा'दित्यादावाकरे। तत्र युगपदुभयोः कार्ययोरसम्भवात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम्—परमेवेति। तेन 'तिसृणा'मित्यत्र यौगपद्यासम्भवेन परत्वात्तिस्रादेशे पुनः स्थानिवत्त्वेन त्रयादेशो न।

ॐ अभिनव-चन्द्रिका ॐ

यत्किञ्चिदङ्गाव्यवहितोत्तरत्वविशिष्टयोस्तुह्योः स्थाने यत्किञ्चिदङ्गाव्यवहितोत्तरत्वविशिष्टस्तातङ् भवतीति 'तुह्यो'रित्यस्य, ह्यव्यवहितपूर्वत्वविशिष्टशासः स्थाने ह्यव्यवहितपूर्वत्वविशिष्टः शो भवतीति 'शा हा'वित्यस्यार्थेन च 'शिष्टा'दित्यादौ प्रकृतिप्रत्यययोर्युगपत् शातातङोः प्रवृत्तौ—शादेशे ह्यव्यवहितपूर्वत्वस्य, तातङि-यत्किञ्चिदङ्गाव्यवहितोत्तरत्वस्य चाभावात्केवलनिमित्तानन्तर्यासम्भवः। 'वृक्षेभ्य' इत्यादौ तु 'सुपि' चेत्यस्य यञादिसुबव्यवहितपूर्वत्वविशिष्टादन्ताङ्गस्य यञादिसुबव्यवहितपूर्वत्वविशिष्टो दीर्घो भवतीति, 'बहुवचने झल्ये'त्यस्य च झलादिबहुवचनसुबव्यवहितपूर्वत्वविशिष्टादन्ताङ्गस्य झलादिबहुवचनसुबव्यवहितपूर्वत्वविशिष्ट एकारो भवतीत्यर्थेन च दीर्घत्वयोर्युगपत्प्रवृत्तौ केवलाऽसम्भवः, स्वस्वनिमित्तान्तर्यासम्भवश्चेति भावः।

ननु शिष्टादित्यादौ स्थानिवद्भावेन ह्यव्यवहितपूर्वत्वस्य, शादेशे यत्किञ्चिदङ्गाव्यवहितोत्तरत्वस्य च तातङि सत्त्वेन कथं स्वस्वनिमित्तानन्तर्यासम्भव इत्यभिप्रेत्याशङ्कते—**यद्यपीत्यादिना**। **न तु तत्प्रवृत्तिकाले इति**। तथा च अतिदेशप्रवृत्तिकालिकं तत्प्राक्कालिकञ्च स्वस्वनिमित्तानन्तर्यासम्भवमादाय विप्रतिषेधसूत्रं प्रवर्तते इति भावः। **न शादेश इति**। तातङ्विधायकशास्त्रेण

ॐ चिद्स्थिमाला ॐ

वत्वे इति पाठ मतिमद्धर्मी। तत्=स्वस्वनिमित्तानन्तर्यम्। **मेवेति**। प्रवर्तते इतिशेषः। **युगपदिति**। उक्तरीत्येति भावः। कैयटादिसंमतमाह—**आकरे इति**। तत्र हि अवतरणोक्त आद्ये उक्तस्ततो द्वितीये यद्यपीत्यतः प्राक्तनो नावश्यं द्विकार्ययोग एव विप्रतिषेधः, किन्त्वसम्भवोपीत्यादिनोक्तः, यद्यपीत्याद्युक्तस्तृतीये उक्त इति बोध्यम्। यत्तु कैयटादिसकलग्रन्थकाराः व्यक्तिपक्षे 'नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिर्जातिपक्षे विध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरिति तदन्यत्र सम्यग्दूषितं, ततः एवावधार्यम्। तस्माल्लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसम्मतमार्ग एव युक्तः। अत एव कुरुत्वमिति कैयटोक्तसकृद्गतिन्यायोदाहरणमसङ्गतिरन्यथा कुरुशब्दाढ्ढेलुगिति वचनस्य तातङभावपक्षे चारितार्थ्येऽपि कुरुशब्दाद्देस्तातङिति वचनस्यानवकाशत्वेन विप्रतिषेधाप्रसक्त्या तदसङ्गतिः स्पष्टैव। तदेतद्ध्वनयन्नाह—**तत्रेति**। तुल्यबलविरोधविषये इत्यर्थः। अन्यतराविषये। चरितार्थयोरेकत्र लक्ष्ये इति शेषः। असम्भवप्रसङ्गयोरविरोधाय कार्यशास्त्रयोर्निवेशः। **असम्भवादिति**। विरोधादिति भावः। बाधकाभावेनेतिशेषः। तथा चोत्सर्गापवादवैधर्म्यम्। अयञ्च पर्यायप्रसङ्गे हेतुर्वचनद्वयप्रामाण्यादिति भावः। ननु शास्त्रप्रसङ्गोऽपि कार्यार्थ एवेति कार्ययोर्युगपदसम्भवे कथं शास्त्रयोः प्रसङ्गोऽत आह—**तृजादीति**। एवञ्च युगपदसम्भवः, पर्यायेणोभयप्रसङ्ग इति तात्पर्यं। तथा च पक्षे प्राप्ततन्त्रान्तरप्रसिद्धनियमविधिरेवायमित्यप्राप्तांशपरिपूरकत्वमेतस्येतरनिवृत्तिस्त्वार्थीति। तद्द्योतक एवकार इति

ॐ सदाशिवभट्टीयम् ॐ

षष्ठीस्थाने इत्यस्येवास्यापि प्रवृत्त्यभावे सिद्धे विप्रतिषेधपदवैयर्थ्यापत्तिस्तेनासिद्धत्वविषयेऽन्यतरविरोधेपि परस्परविरोधभावेन नास्य प्रवृत्तिः। **प्रवृत्तिकाल इति**। तदवच्छिन्ने काले इत्यर्थः। तत्प्राक्काले उत्तर-

तत्पठ्यते—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ।

यद्वा—यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा

❀ अभिनव-चन्द्रिका ❀

स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च 'शा ह्रा'वित्यत्र सङ्कोचादिति भावः। **आकर इति**। कैयट इत्यर्थः। **पर्यायेणेति**। अयम्भावः—'असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति सिद्धान्तः। अवच्छेदकावच्छेदेन विधेयान्वय इत्यस्य—उद्देश्यतावच्छेदकव्यापकत्वं विधेयेविधेयसंसर्गे वा नियमतो भासते इत्यर्थः। तथा च 'ण्वुल्तृचा'वित्यादौ धातुत्वव्यापकत्वस्य ण्वुल्त्वादिना ण्वुलादौ बाधाण्ण्वुलादीनामन्यतमत्वेन व्यापकत्वं वक्तव्यम्। न च तद्भिन्नभिन्नरूपा-न्यतमत्वस्य विशेष्यविशेषणभावे विनिगमनाविरहेण नानाविधत्वात्तेषु सर्वेषु तेनैव हेतुना व्यापक-तावच्छेदकत्वं स्यादिति वाच्यं, 'यादृशसङ्ख्याविशिष्टानामन्यतमत्वं वक्तव्यन्तत्सङ्ख्याका ये तद्भेदा तादृशभेदात्यन्ताभाववत्त्वं तदन्यतमत्व'मितिपरिष्कारेणादोषात्। यादृशविधेयेतरो यस्तादृशोद्देश्य-तावच्छेदकावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयः तदनधिकरणं तत्तदुद्देश्यतावच्छेदकाधिकरणं तद्वृत्त्यत्यन्ताभावाप्रतियोगित्वं तदुद्देश्यतावच्छेदकव्यापकत्वं तस्मिन्विधेये। यथा 'ण्वुल्तृचा'वि-त्यादौ ण्वुल्त्वावच्छिन्ने धातुत्वव्यापकत्वं वक्तव्यं, तत्र ण्वुल्त्वावच्छिन्नातिरिक्तः धातुत्वावच्छिन्नोद्देश्यता-निरूपितविधेयताश्रयो यस्तृजादिस्तदनधिकरणं यद्धातुत्वाधिकरणं 'कारक' इति, तद्वृत्त्यत्यन्ताभा-वाप्रतियोगित्वं ण्वुलीति लक्षणसमन्वयः। स्यादेतत्—विकल्पशास्त्रे इव 'ण्वुल्तृचा'वित्यादावपि उद्देश्यतावच्छेदकसामानाधिकरण्येनैवान्वयः स्वीक्रियतां, किमुद्देश्यतावच्छेदकावच्छेदेन विधेयान्व-येन? न च 'ण्वुलतृचा'वित्यादावुद्देश्यतावच्छेदकसामानाधिकरण्येनान्वयस्वीकारे केवलधातुमात्रस्य 'पच्''मुच्'इत्यादिप्रयोगापत्तिरितिवाच्यं, 'वर्तमाने ल'डित्यस्य वर्तमानकालेतरकालाविवक्षायां लट्प्रत्ययो भवतीत्यर्थेन तादृशापत्तेरसम्भवात्। नचैवमपि 'स्वौजसमौ'डित्यादौ उद्देश्यतावच्छे-दकप्रातिपदिकत्वसामानाधिकरण्येन स्वादिविधानेन च निर्विभक्तिकप्रातिपदिकप्रयोगापत्तिरितिवाच्यम्, 'एकत्वे एकवचन'मित्यस्यैकत्वेतरसङ्ख्याया अविवक्षायामेकवचनमित्यर्थेनैकवचनस्य दुर्वारत्वेन तादृशप्रयोगाऽसम्भवात्। अत एव 'सुन्दरं पचती'त्यादौ निरर्थकैवचनोपपत्तिरितिचेन्मैवं, 'रीगृ-दुपधस्ये' त्यनुवर्त्तमाने'रुग्रिकौ'इत्यत्र उद्देश्यतावच्छेदकयङ्लुगन्तसम्बन्ध्यभ्याससम्बन्धिऋदुपधत्वसा-मानाधिकरण्येन विधेयान्वये रुक्रिक्रीक् एतदघटितलक्ष्यस्यापि साधुत्वापत्तेरिति दिक्। **यौगपद्यासम्भवेनेति**। तिस्रादेशघटिते त्रयादेशघटिते च पूर्वपराभ्यां परस्परेण साधुत्वाऽसाधुत्वयोर्विधानादिति भावः। **त्रयादेशो नेति**। 'त्रेस्त्रय'इत्यत्र तिस्रादेशप्रवृत्तियोग्यातिरिक्तत्वेन, तिस्रादेशघटितातिरिक्त-

❀ चिदस्थिमाला ❀

बोध्यम्। **सकृदिति**। गतौ=गत्वभिन्ने—तादृशप्राप्त्यभिन्ने—विप्रतिषेधे सति, सकृदेकवारं=यद्बाधितं तद्बाधितमे-वेत्यर्थः। यथेत्यस्य न करोतीत्यत्रान्वयः। ननु तदाज्ञोल्लङ्घनेन तावचारितार्थोवत आह—**तुल्येत्यादि-करोतीत्यन्तेन**। तथाच तुल्यबलत्वादेव पर्यायेणैव प्रेरणया प्रेष्यस्य मिथोऽविरुद्धकार्यकरणेन स्वामिनौ

❀ सदाशिवभट्टीयम् ❀

काले च तत्सत्त्वेपि तत्काले तदसम्भवरूपविरोधस्यैतत्प्रवृत्तौ नियामकत्वं भाष्यात्स्वीक्रियते इति भावः।

❀ विषमपदविवृतिः ❀

यद्बाधितमित्यनान्वेति। गतौ=युगपत्प्राप्तौ। पुनः प्रसङ्गविज्ञानबीजमाह—**यद्वेत्यादिना**। **लक्ष्यप्रेष्य-योरिति**। वस्तुतस्तु भृत्यसदृशं लक्ष्यं, प्रेषणक्रियासदृशी संस्कारक्रिया, पर्यायेण कार्यकरणस्थानापन्नञ्च शास्त्रविहितकार्यस्वीकारः। तथा च यथा तुल्यबलयोरेको भृत्यो युगपत्प्रेषितो पूर्वं नानादिग-

तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तद्वोभयोर्न करोति, यौगपद्यासम्भवात्, तथा शास्त्रयोर्लक्ष्यप्रेप्स्ययोः क्वचिल्लक्ष्ये यौगपद्यासम्भवादप्रतिपत्तौ प्राप्तायामिदं 'परं भवती'ति विद्ध्यर्थम्। तत्र कृते यदि पूर्वस्यापि निमित्तमस्ति तदा तदपि भवत्येव। तदुच्यते—'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति। यथा 'भिन्धी'त्यत्र परत्वात्तातङि पुनर्धिर्भवति। अत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य वा न

ॐ अभिनव-चन्द्रिका ॐ

त्वेन सङ्कोचादिति भावः। उभयोर्न करोतीति। 'यद्यविरोधार्थी'ति शेषः। अत एव 'यद्यविरोधार्थी तदोभयोर्न करोती'ति भाष्ये दृश्यते। यौगपद्यासम्भवादिति। उक्त एवार्थः। तदपि भवत्येवेति। तिसृगामित्यादौ नुड्विधायकशास्त्रे तिस्रादेशप्रवृत्तियोग्यतातिरिक्तत्वेन सङ्कोचादिति भावः।

पुनर्धिर्भवतीति। चिन्त्यमिदम्। 'भिन्ता'दितिरूपासिद्धेः। नच 'भिन्धी'त्येकमेव रूपं भवति, ननु 'भिन्ता'दिति वाच्यं, 'भिन्ता'दित्यादिसिद्धये परत्वात्तातङि धिभावमाशङ्क्य सकृद्गतिन्यायेन समाधानपरस्थानिवत्सूत्रभाष्यवार्तिकविरोधात्। न च तुह्योरितिशास्त्रस्य वैकल्पिकत्वेन भावाभावोभयविधायकत्वात्तद्विधेयाभावेन धेर्बाधो माभूदित्येवं परतया

ॐ चिदस्थिमाला ॐ

चरितार्थौ यथा तद्वदिति भावः। एकत्र तदसम्भवादाह—नानेति। तत्रापि प्रदेशे सम्भवादाह—दिक्ष्विति। यौगेति। यौगपद्येनासम्भवादित्यर्थः। लक्ष्यप्रेप्स्येति।—बहुव्रीहिः। अन्यत्र प्रेष्यस्थानीयलक्ष्ये चरितार्थयोरित्यर्थः। तत्र=परस्मिन्। यथा चात्र 'अचश्चे'ति सूत्र—भाष्यकैयटादिविरोधो न तथा प्रतिपादितं गदायाम्। ननु बुद्धिविपरिणामस्य सिद्धान्तत्वेन वास्तवस्थानसम्बन्धः क्वापि न, प्रकृते उभयबुद्धिप्राप्तावपि वाचः क्रमवृत्तित्वादैच्छिकक्रमेण स्थितिः सम्भवतीति प्राचामनुरोधेनोक्तमिदमयुक्तमत आह—स्वाङ्गरूपेति। ननु कार्यस्य प्रयोगरूपैकदेशस्थत्वेन कथं

ॐ ज्योत्स्ना ॐ

लोकन्यायः। परत्वात्तातङि पुनर्धिर्भवतीति। इदं स्थानिवत्सूत्रस्थभाष्यविरुद्धम्। तत्रहि लोडादेशे—'शाभाव-जभाव-धित्व-हिलोपैत्वप्रतिषेध' इति वार्तिकेन-शिष्टात्-हतात्'-भिन्तात्—कुरुतात्—स्तादित्युदाहरणेषु तातङि परत्वाल्लोडादेशे कृते—प्राप्तानां शाभावादीनां प्रतिषेधं विधाय—सकृद्गतिन्यायेन वार्तिकं—प्रत्याख्यातम्। किञ्चैवमादौ यदि पुनःप्रसङ्गविज्ञानं स्यात्प्रथमप्रवृत्तपरशास्त्रप्रवृत्तिर्लक्ष्ये बाधिता स्यात्, तस्मात्सकृद्गतिन्याय एव व्यवस्थापक इति—'अचश्चे'त्यत्र प्रदीपे स्पष्टम्। भिन्धीति तु तातङभावपक्षे बोध्यम्।

पुनः प्रसङ्गविज्ञानोदाहरणं तु—खट्वायामित्यत्र परत्वान्ङेरामि कृते निमित्तसद्भावाद्याडित्यधिको

ॐ सदाशिवभट्टीयम् ॐ

पुनर्धिर्भवतीति। तदभावपक्षे इति भावः।

ॐ विषमपदविवृतिः ॐ

धिकरणत्वेन युगपदसम्भवि कार्यद्वयं न करोति, तथा तुल्यबलयोः शास्त्रयोः संस्कार्यं लक्ष्यं युगपदसम्भवि तद्विहितकार्यद्वयं न भजतीत्यर्थः। 'स तयोः पर्यायेण कार्यं करोति' इत्यन्तो भाष्यग्रन्थस्तु विभिन्नकालिकाविरोधि कार्यद्वयं तु लक्ष्यं भजत्येवेति प्रसङ्गाद्वक्तुं तत्र दृष्टान्तप्रदर्शनपरम्। युगपदसम्भवस्य तत्राभावेन दृष्टान्तासङ्गतेः। 'इह भवता द्वौ हेतू व्यपदिष्टौ तृजादिभिस्तुल्यं पर्यायः प्राप्नोतीति अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात्। तद्यथा द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयत' इत्यग्रिमभाष्यग्रन्थासङ्गतेश्च। पुनर्धिर्भव-

सम्भव इति भाष्ये स्पष्टम् । कार्ये परत्वञ्च—परशास्त्रविहितत्वम् । कार्यकालपक्षेऽप्यष्टाध्यायीपाठपरत्वमेव नियामकम् । अत एव 'ङमो ह्रस्वा'दित्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषयोः प्रवृत्त्या एकदेशस्थत्वेऽपि परत्वात् 'तस्मादित्युत्तरस्ये'त्यनेनैव व्यवस्थेति सङ्गच्छते । त्रिपादीस्थेन शास्त्रेण विरुद्धपरिभाषाद्वयमध्ये परैव काल्यते=

❀ अभिनव-चन्द्रिका ❀

अयङ्ग्रन्थो योजनीय इति वाच्यम्, तुह्योरितिशास्त्रस्याप्राप्तविभाषात्वेनाभावस्य सिद्धत्वात्तद्विधानासम्भवेन भावस्यैव विधयकत्वात् । अन्यथा 'मुचोऽकर्मकस्ये'त्यस्यापि भावाभावोभयविधायकत्वे मुमुक्षते वत्सइत्यादौ 'अत्रलोप'इत्यभ्यासलोपापत्तिः। यत्तु भिन्धीति भिन्धकीत्यस्योपलक्षणम्, तत्र परत्वाद्धादेशेऽकज्नस्यादिति तन्न, 'भिन्धकी'त्यादौ अन्तरङ्गत्वादकचि धित्वन्न स्या'दितिभाष्यविरोधात् ।

❀ चिदस्थिमाला ❀

परत्वमत आह—**कार्ये इति** । नच विप्रेतिसूत्रं प्रति त्रिपाद्या असिद्धत्वेन कथमत्र प्रवृत्तिरितिवाच्यम्, अस्याः परिभाषात्वेन कार्यकालपक्षेऽदोषात् । न चैवमपि कार्यकालपक्षे ङम इत्यादावुपस्थित्या द्वयोरेकदेशस्थत्वेन कथं तत्र परत्वमिति वाच्यम्, अष्टाध्यायीपाठकृतपरत्वाश्रयणेनादोषात् । नहि कार्यकालपक्ष इत्येतावता तदपैति, अन्यथा सर्वेषां शास्त्राणां प्रयोगार्थत्वेन तद्रूपैकदेशस्थत्वात् क्वापि परत्वं न स्यत् । तदेतदप्रेत्याह—**कार्यकालेति** । अपिना यथोद्देशसमुच्चयः । एवेन तत्रत्यव्यवच्छेदः । अत्र मानमाह—**अत एवेति** । आदिना ङःसीत्यादिपरिग्रहः । **परीति** । तस्मिन्निति तस्मादित्यनयोः । अन्यथा द्वयोरेक-

❀ ज्योत्स्ना ❀

विस्तरः परिभाषाप्रदीपार्चिषि द्रष्टव्यः। 'यथोद्देशपक्षे च परिभाषयोः पौर्वापर्येण कार्यकालताया'मिति प्रदीपग्रन्थं दूषयितुमुपक्रमते—**कार्यकाल पक्षेऽपीति** । अष्टाध्यायीपाठकृतपरत्वमेव नियामकमिति, ननु तत्पक्षे प्रदेश एव परिभाषाणां वाक्यार्थबोधात्सञ्ज्ञानामिव स्वदेशत्यागादुभयोरेकदेशस्थत्वेन परत्वाभाव इति भावः । तत्रोपष्टम्भकमाह—**अत एवेति** । **इति सङ्गच्छत इति** । यथा-

❀ विषमपदविवृतिः ❀

तीति । इदमयुक्तम्, स्थानिवत्सूत्रस्थभाष्यविरोधात् । तत्र हि भिन्तादित्यत्र परत्वात्तातङि धिभावमाशङ्क्य सकृद्गतिन्यायेन समाहितम् । किञ्चैवं भिन्तादिति रूपस्य विलयापत्तिः ।

अत्र कश्चिद्विकल्पशास्त्राणामभावेपि तात्पर्यं स्वीकृत्य तातङि पुनर्द्धिर्भवतीत्यस्य तातङभावे पुनर्द्धिर्भवत्यर्थमुक्त्वा'ऽत्र तातङ्धिभावयो'रित्याद्यग्रिमग्रन्थस्तु विकल्पघटकतातङ्विधिना धिभावस्य विरोधोपपादनायेत्याह,—तत्तुच्छम् । विकल्पशास्त्राणामभावे तात्पर्ये हि 'यस्येति सङ्घातग्रहणं चेत् क्यस्य विभाषायां दोषो भवति, यदा लोपस्तदा सर्वस्य लोपः, यदाऽलोपस्तदा सर्वस्यालोप' इति 'यस्य हल' इति सूत्रस्थभाष्यानुरोधात्कल्प्यम् । तच्च भाष्यं सूत्रान्तरस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति 'यस्य हल'इति सूत्रे विवरणे नव्यैरुक्तम् । तथा च तत्र तथा वदन् शून्यहृदय इव तद्विरुद्धं कथमत्र वदेत् । पुनःप्रसङ्गोदाहरणन्तु 'ईजतु'रिति । तत्र हि परत्वात्सम्प्रसारणम् । यत्तु—'एतदुहारणं खट्वायामिति, अत्र हि परत्वादामि कृते पुनः प्रसङ्गविज्ञानाद्याट्—'इति पाठकेनोक्तं, तत्तुच्छम् । निरवकाशत्वेनैवाम्प्रवृत्तेः, निरवकाशत्वेन बाधे पश्चादुत्सर्गप्रवृत्तेर्याडिति न कश्चिद्दोषः । स्पष्टं चेदं नव्यग्रन्थेषु । ननु कार्यकालपक्षे तस्मिन्निति परिभाषाया 'ङमो ह्रस्वादची'त्यत्र तत्संस्कारार्थमुपस्थिताया निरवकाशत्वेन कथं तस्मादित्युत्तरस्येत्येतद्बाध्यत्वम् ?, न हि तत्रोपस्थितया विध्यन्तरं संस्कि-

आकृष्यते न पूर्वेति तत्त्वम् ।

सञ्ज्ञानां तु कार्यकालपक्षे प्रदेशे एव वाक्यार्थेन तद्बोधोत्तरमेव विरोध-प्रतिसन्धानं, कार्यज्ञानञ्चेति तत्रत्यपरत्वमेवैतत्सूत्रप्रवृत्तौ बीजम् । अत एव 'कार्यकालपक्षेऽयादिभ्यः परैव प्रगृह्यसञ्ज्ञा' इति 'अदसो मा'दिति सूत्रे भाष्ये उक्तम् । परिभाषाणान्तु तत्पक्षे नैदेशस्थत्वेऽपि स्वस्वदेशेऽर्थबोधोऽस्त्येवेति तासां पाठ-कृतमेव तत्—एतत्सूत्रप्रवृत्तौ नियामकमिति बोध्यम् ।

यद्यपीयं परिभाषा तथापि कार्यग्रहणेन कार्यमात्रग्रहणा'त्तस्मि'न्निति 'तस्मा'दितिपरि-भाषयोरपि व्यवस्थापिका । कार्यकालपक्षेऽपि नैषा इक्परिभाषादिवद्विद्ध्येकवाक्यतयाऽ-ङ्गत्वात्स्वकार्यनिष्पादिका, किन्तु वाक्यभेदेनैव कार्यं व्यवस्थापयति । यथा—'वृक्षेभ्य'

ॐ अभिनव-चन्द्रिका ॐ

तस्मात्तिसृणामित्यादौ स्त्वात्तिस्रादेशे नुट्न स्यादित्यस्योपलक्षणं बोध्यम् । **प्रदेशे एवेति** । विधिप्रदेश एवेत्यर्थः । **वाक्यार्थेनेति**—साक्षात्परम्परया वा अनाहार्याप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधु-त्वप्रकारकज्ञानोपयोगिवाक्यार्थबोधेनेत्यर्थः । **अत एवेति** । यत्र निरुक्तवाक्यार्थबोधो जायते स एव शास्त्रस्य स्वीयो देश इति स्वीकारादेवेत्यर्थः । **अर्थबोध इति** । निरुक्तवाक्यार्थबोध इत्यर्थः ।

ननु 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वा'दितिन्यायेन 'विप्रतिषेधे पर'मितिपरिभाषया 'तस्मिन्निति''तस्मा'दितिपरिभाषयोर्व्यवस्था नोचितेत्यभिप्रेत्याशङ्कते—**यद्यपीत्यादिना** । समाधत्ते-**तथापीति** । **कार्यग्रहणेनेति** । 'विप्रतिषेधे पर'मित्येतावतैव सिद्धे कार्यग्रहणसामर्थ्यादित्यर्थः । **व्यवस्थापयतीति** । बाधबीजप्रकरणशेषत्वादिति भावः । **अप्रवृत्तेरिति** । परशास्त्रमेतत्परिभाषा-

ॐ चिदस्थिमाला ॐ

देशस्थत्वेन तस्य त्रिपादीस्थत्वेन च तदसङ्गतिः स्पष्टैव । तत्तात्पर्यमाह—**त्रिपेति** । नन्वेवं सञ्ज्ञास्थले-ऽपि तथा स्यादत आह—**सञ्ज्ञानान्त्विति** । **तत्रत्येति** । प्रदेशस्थ इत्यर्थः । अत्र मानमाह—**अत एवेति । परैवेति** । पूर्वं पाठेऽपि तत्र वाक्यार्थबोधाभावादिति भावः । एवेन सञ्ज्ञास्थले क्वचित्पाठकृतं पूर्वत्वं विद्यमानमपि एतत्सूत्रप्रवृत्तौ न नियामकमिति सूचितम् । नन्वेवं परिभाषास्थलेऽपि कुतो नात आह—**परीति । तदिति** । कार्यकालेत्यर्थः । अपिना यथोद्देशसमुच्चयः । **यद्यपीति** । तथाच 'गुणाना'मिति न्यायेन विध्यङ्गत्वौचित्येन कथं तन्नियामकत्वमिति भावः । **कार्येति** । कार्यमात्रे प्रवृत्ति-बोधनार्थं हि तत्, अन्यथा 'विप्रतिषेधे पर'मित्येव वदेदित्यतति भावः । विशेषमाह—**कार्येति** । आदिनाचश्चेत्यादिपरिग्रहः । **नेवैति** । प्रागुक्तरीत्या कार्यविरोधज्ञानोत्तरमेवास्या प्रवृत्त्या तद्बोधादेः

ॐ ज्योत्स्ना ॐ

चैतद्भाष्यस्यैकदेश्युक्तित्वेन प्रदीपकृन्मतोज्जीवनं, तथा परिभाषाप्रदीपार्चिर्द्रष्टव्यः । **सञ्ज्ञानान्त्विति** । अत्रापि यद्वक्तव्यं तत्परिभाषाप्रदीपार्चिष्युक्तम् । **स्थान्यलसाधारणधर्माश्रयण एव स्थानिवद्भाव-**

ॐ विषमपदविवृतिः ॐ

यते, येन सावकाशत्वं स्यादित्याशङ्क्याह—**त्रिपादीस्थेनेति** । तथा च तस्या बाधो नाम विधि-**शास्त्रेणानाकर्षणमेवेति** भावः । **प्रदेश एवेति** । विधिदेश एवेत्यर्थः । अत्र प्रमाणं तु सञ्ज्ञाशास्त्रा-नुसन्धानं विना विधिवाक्यार्थबोधानिष्पत्तिः । '**अयादिभ्यः परैव प्रगृह्यसञ्ज्ञे**'ति भाष्यम् । **यद्यपीयम्परिभाषेति** । न कार्यमिति शेषः । **एवञ्चेति** । प्रतिद्वन्द्विभावापन्नकार्यद्वयनिमित्तकले-

इत्यत्रत्वदीर्घत्वयोः प्राप्तयोः परमेत्वं प्रवर्तयति ।

एवम्—'असिद्धं बहिरङ्ग'मित्यादयोऽपीति 'खरवसानयो'रित्यत्र कैयटे स्पष्टम् । एवञ्च 'विप्रतिषेधे' इत्येषा यथोद्देशैवेति स्थितम् । त्रिपाद्यां कार्यकालपक्षेऽप्यप्रवृत्तेः । पूर्वदृष्ट्या परावस्थानाभावादित्यन्यत्र विस्तरः ।

**इति लोपे इति ।** 'उत्वं नित्य'मिति तु न, 'भोभगो' इतिसूत्रोक्तरीत्या लोपस्याल्विधित्वात्, स्थानिवत्त्वेन तद्धर्मातिदेशेऽपि उच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावेन लोपे तदप्राप्तेश्च ।

**एतत्तदोः** । अनुकार्यस्वरूपभङ्गभिया कोशे इवैकशेषाभावः । 'एतत्तदोरनन्तर'

ॐ अभिनव-चन्द्रिका ॐ

प्रवृत्तौ लिङ्गमिति स्वीकारेण परशास्त्रत्वप्रकारकज्ञानाभावादिति भावः । **अल्विधित्वादिति ।** अल्त्वव्याप्यरत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतरुत्वेन साक्षादवच्छिन्नोद्देश्यताकत्वादुत्वविधायकस्येत्यर्थः । **उच्चारणप्रसङ्गरूपेति ।** चिन्त्यमिदम्, वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयकत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकतारूपे स्थानपदार्थे उच्चारणस्याप्रविष्टत्वात् । किञ्च स्थानपदार्थस्योच्चारणघटितत्वे 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मित्यादौ स्थानपदार्थत्वानुपपत्तिरिति दिक् । **एकशेषाभाव इति ।** चिन्त्यमिदम्—एतत्तदोरित्यनयोः त्यदादिघटकैतत्तच्छब्दबोधकत्वेऽपि त्यदाद्यर्थाबोधकत्वेन 'त्यदादीनां मिथः सहोक्ता'

ॐ चिद्स्थिमाला ॐ

प्रागावश्यकत्वात् । एतदर्थमपि कार्यग्रहणम् । इति=इत्यत्र । प्रसङ्गादाह—**एवमिति** । एतद्वाक्यभेदेनैव व्यवस्थापकास्ते न्याया इत्यर्थः । तत्राप्यन्तरङ्गत्वादिज्ञानार्थं विरोधज्ञानार्थञ्च प्राक् तदावश्यकत्वात् । एवं सति फलितमाह—**एवञ्चेति** । तथैव=कार्यव्यवस्थापकत्वे चेत्यर्थः । अत्र हेतुमाह—**त्रिपाद्यामिति** । अपिः प्राग्वत् । तत्र हेतुमाह—**पूर्वेति** । शास्त्रान्तरे इत्यर्थः । वस्तुतस्तु 'आकडारा'धिकारस्थपदसञ्ज्ञाविषये यथोद्देशपक्ष एवेति तन्त्रत्यपरत्वेनैव बाध्यबाधकभावः । पदादिपदानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः । किञ्च सर्वत्र पाठकृतपरत्वमेवैतन्नियामकं, 'परैव प्रगृह्ये'त्यत्र सञ्ज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते । आशयानभिज्ञस्याग्रे प्रश्नः—'कथ'मिति । एकदेशिन एवोत्तरं 'कार्यकाल'मित्यादीति । तदाह—**इत्यत्रेति** । ननु नित्यत्वादुत्वमत आह—**उत्वमिति** । **लोपस्याप्यल्विधीति ।** अपिनोत्वपरिग्रहः । अभ्युपेत्याह—**स्थानीति** । ननु सूत्रे एकशेषः कुतो न, प्रकृतिवदित्यस्य प्राप्तेः । नच तस्यानित्यत्वं तावताप्यत्राप्रवृत्तौ मानाभावात् । नच सौत्रत्वादप्रवृत्तिस्तथा सति वृत्तौ तथा प्रयोगासङ्गत्यापत्तेरत आह—**अनुकार्येति** । अस्यावश्यकतां ध्वनयन्नाह—**कोशे इति** । पञ्चम्यभावेन पर

ॐ ज्योत्स्ना ॐ

निषेधोऽन्यथा 'अग्नी' इत्यादौ प्रागुक्तदोष इत्यस्वरसात्समाधान्तरमाह—**स्थानिवत्त्वेनेति** ।

ॐ सदाशिवभट्टीयम् ॐ

**एतत्तदोरनन्तर इति । सु इति ।** प्रत्ययग्रहणात्तदन्तग्रहणसत्त्वेन तदादीत्यस्योपस्थित्यै-

ॐ विषमपदविवृतिः ॐ

चेत्यर्थः । **यथोद्देशैवेति** । 'परोक्षा क्रिये'त्यादिवदर्शं आद्यजन्तमेतत् । नन्वसति ङमो ह्रस्वादचीत्यत्रैतत्प्रवृत्त्यनापत्तिः, तथा चोभयनिर्देशे पञ्चमीनिर्देशो बलवानिति भाष्यासङ्गतिरिति चेन्न । त्रिपादीस्थेन तयोराकर्षणेपि उक्तरीत्या त्रिपादीस्थत्वाभावेन विप्रतिषेधशास्त्रदृष्ट्या तयोरसिद्धत्वस्य 'पूर्वत्रासिद्ध'मित्यनेन बोधनासम्भवेन तयोर्विषये विप्रतिषेधेत्यस्य प्रवृत्तेर्निर्बाधत्वादित्याशयात् ।

इत्यर्थः। तेन 'परमस ददाती'त्यादौ न दोषः। गौणे तु न दोषः, तत्र त्यदाद्यत्वाभावेन हल्ङ्याब्भ्यादिलोपस्य दुर्वारत्वात्। 'सु'इति प्रथमैकवचनमेव, व्याख्यानात्।

**अनञ्समासे किमिति।** तस्य पूर्वपदार्थप्रधानत्वादुपसर्जनत्वात्त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः। उत्तरपदार्थप्रधानः स इत्युत्तरम्।

**सोऽचि।** 'स'मिति प्रथमान्तस्य लुप्तषष्ठीकमनुकरणम्। **सेमामविड्ढीति।** द्वादशाक्षरपादा जगती च्छन्दः। **स एवमुक्त्वेति।** लोपेऽत्र पादापूर्त्तेर्न लोप इति भावः।

**अवधारणन्त्विति।** वृद्धैर्व्याख्यातमवधारणन्त्वित्यर्थः। **बहुलेत्यादि।** गमकान्तरा-

ॐ अभिनव-चन्द्रिका ॐ

विति शास्त्रस्याप्राप्तिः। प्राधान्येन प्रसिद्धस्वीयसर्वार्थवाचकानामेव त्यदादीनां तत्र ग्रहणात्।

किञ्च'कोश इवे'ति दृष्टान्तोऽप्यसङ्गतः,'विष्णुर्नारायण'इत्यादिकोशे एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्नेऽन्वयबोधेच्छारूपमहविवक्षाया अभावेन 'विरूपाणा'मिति शास्त्राप्राप्तेः।

**अनन्तर इति।** न च 'परमः स ददाती'त्यादौ परमोत्तरसोरपि तच्छब्दानन्तरत्वेन लोपापत्तिरिति वाच्यम्, एतच्छब्दसाहचर्येण तच्छब्दानन्तरस्यापि परस्य ग्रहणेनादोषात्। ननु एतत्तदर्थगतसङ्ख्याभिधायिनः सोर्लोप इति, तत्र, 'परमः स ददाति' 'तत्कल्प'मित्यादौ परमपदोत्तरसोः कल्पबुत्तरसोश्च तदर्थगतसङ्ख्याभिधायित्वेन लोपापत्तेः। न च 'स्वाव्यवहितोत्तरत्व' 'स्वार्थगतसङ्ख्याभिधायित्वो'भयसम्बन्धेन एतत्तद्विशिष्टसोर्लोप इत्यर्थे इति न दोष इति वाच्यं,'स्वार्थगतसङ्ख्याभिधा-

ॐ चिदस्थिमाला ॐ

इति, विहिते इति वा व्याख्यानं दुर्वचम्,अवयवत्वन्त्वसम्भाविनमेव,सोःप्रत्ययत्वात्। नचार्थद्वारकसम्बन्धेनान्वयो, गौरवादत आह—**एतत्तदोरनन्तर इति।** पश्चादव्यवहितसमीप इत्यर्थः। अन्यथा समीप इत्येव वदेत्। अत एव रामः स इत्यादौ नातिप्रसङ्गः, एतच्छब्दसाहचर्याच्च, अनञ् समासे इति लिङ्गाच्च। अनन्तर इति चाध्याहारलभ्यम्। विहितविशेषणत्वपक्षे कैश्चिदुक्ते प्राप्तं दोषमुद्धरति—**तेनेति।** उक्तव्याख्यानेनेत्यर्थः। नन्वेवं गौणेऽपि स्यादत आह—**गौणे त्विति।** एवञ्च तत्रेष्टापत्तिरिति भावः।

**सु इतीति।** अनेन पृथक्पदत्वं सूचितम्। **व्याख्येति।** उत्तरत्र तस्यैव सम्भवेनानुनासिकोकारविशिष्टत्वात्तुनानादित्यर्थः। **उपेति।** उत्तरस्येत्यादिः। तथा च तदर्थमेवेति भावः। **उत्तरेति।** तथाचागौणत्वेनात्वे तदप्राप्त्यैतद्वारणाय तदिति भावः। **लुप्तेति।** सौत्रत्वादितः। एतेन 'षष्ठीस्थाने प्रथमे'ति रत्नाकरोक्तमपास्तम्, अतिप्रसङ्गापत्तेश्च। एतेन सूत्रे तद एव ग्रहणं, न कंसादेः सस्य,एतत्तदोरिति पूर्वसूत्रसाहचर्यादनर्थकत्वाच्चेत्यपि तदुक्तमपास्तं, गौरवाच्च। 'प्रभृति'मित्यन्त एव पाद इति भ्रमनिरासायाह—**द्वादशेति।** 'ईशिषे' इति तच्छेषो बोध्यः। **लोप इति।** षष्ठेनानेनेत्यादिः। सन्धेः प्रसङ्गादिति भावः। तथा यस्य तेन लोपात्र स्वरसन्धिरिति तात्पर्यम्। मूलं परमताभिप्रायं न सिद्धान्त इति सूचयन्नाह—**वृद्धैरिति। गमकान्तरेपि**=अनुवृत्तिवैयर्थ्यादिरूपेत्यर्थः। एतेन तत एव लाभे तावत्पर्यन्तधावनं व्यर्थमित्यपास्तम्। अस्य युक्तत्वात्तात्पर्यमाह—**एवञ्चेति।** अन्यथानुपपत्त्या तदनुवृत्त्यावश्यकत्वे चेत्यर्थः। **क्वचित्**=सास्मा अरं बाहुभ्यां यत्पिताकृणोत्, सोहमाजन्म इत्यादौ। मूलाभिमतत्वमप्यस्येत्याह—**सर्वमिति।** एतेन सोऽहमित्याद्यर्थं तथा व्याख्याने सास्मा इत्यादौ सुलोपानापत्तिर्बहुलग्रहणानुवृत्त्या-तदुपपादने तु सोऽहमित्यादेरपि तत एव सिद्धया किमवधारणेनेति खण्डनकृदाद्युक्तमपास्तम्। नच सास्मा

भावादिति भावः। एवञ्च तदनुवृत्त्यैव क्वचिदप्रवृत्तौ सिद्धायामवधारणपरतया व्याख्यानं व्यर्थमिति भावः। सर्वमेतदवधारणन्त्विति–तुना सूचितमित्यलम् ॥

## ॥ इति स्वादिसन्धिः ॥

[ ॥ इति पञ्चसन्धिप्रकरणम् ॥ ]

---

### ❀ अभिनव-चन्द्रिका ❀

यिल'सम्बन्धस्य वैयर्थ्यापत्तेः। व्याख्यानादिति। 'सु'इत्यत्रानुनासिकोच्चारणादिति भावः। **लुप्तषष्ठीकमिति**। अन्यथा 'ससोची'ति स्यादिति भावः।

इति स्वादिसन्धिः।

### ❀ चिदस्थिमाला ❀

इत्यत्र प्रकृत्यान्त इति पूर्वरूपाभावेन न पादपूर्त्तिः। 'सोयमागा'दित्यादाविवात्रापि प्रातिशाख्येन सिद्धेः। यथाचैतत्तथा प्रतिपादितं भावप्रकाशे। तदाह—**इत्यलमिति**।

❀ इति स्वादिसन्धिः ❀ ❀ पञ्चसन्धिप्रकरणम् ❀

### ❀ ज्योत्स्ना ❀

**अनन्तरमित्यर्थ इति**। एवञ्चात्रत्यैतद्ग्रहणस्यार्थवत्परिभाषाज्ञापकत्वं **बुधमनोहराकारोक्तं** नानुपपन्नं भवति। ❀ इति स्वादिसन्धिः। ❀

### ❀ सदाशिवभट्टीयम् ❀

तदन्ततदादेरनन्तरस्य लोप इत्यर्थेन 'रामः स ददाती' त्यादौ न दोष इति बोध्यम्।

❀ इति शेखरविवृतिसङ्ग्रहे स्वादिसन्धिः ❀

### ❀ विषमपदविवृतिः ❀

'**इति लोपे प्राप्त**'इति निर्मूलम्, पूर्वत्रासिद्धमित्यस्यापर्यालोचनदशायां बोध्यम्। **एतत्तदोः**। प्रकृतिवदनुकरणमित्यतिदेशेनैकशेषमाशङ्क्याह—**अनुकार्येति**।

❀ इति स्वादिसन्धिः ❀

इति पण्डितराजश्री १०८ श्रीस्नेहिरामशास्त्रिणां पौत्रेण, प्रतिवादिभयङ्कर–न्यायाचार्य–
श्री १०८ श्रीशिवनारायणशास्त्रिणां पुत्रेण, सतीसार्वभौम–राजलक्ष्मी–गर्भसम्भूतेन,
साकेतपुरनित्यविहारि–श्रीछविरराधाकृष्णजीपोद्दारलब्धर्ज।विकेन,
श्रीगुरुप्रसादशास्त्रिणाऽऽकलितायां शब्देन्दुशेखरवरवर्णिन्यां
पञ्चसन्धिप्रकरणम्।

॥ श्रीगणेशाय नमः ॥

टीकापञ्चकोपेतः, टिप्पणीविराजितः—

# लघुसिद्धान्तकौमुदी ॥

## अजन्तपुंलिङ्गप्रकरणम् ।

स्वादिविधौ प्रातिपदिकाधिकारात्तां सञ्ज्ञामाह—**अर्थवदिति** । अधातुरित्यादिः पर्युदासो—लाघवात् ।

---

### ❀ अभिनव-चन्द्रिका ❀

अर्थवत् । सन्धिप्रकरणेन सङ्गतिं प्रदर्शयितुमाह—**स्वादिविधावित्यादिना** । **लाघवादिति** । प्रसज्यप्रतिषेधे हि असमर्थसमासकल्पना, वाक्यभेदः, क्रियाध्याहारश्च कर्तव्यो भवतीति गौरवमिति भावः । स्यादेतत्—'अधातु'रित्यस्य धातुभिन्न इत्यर्थः । तथा च धातोरपि धातुघटोभयभेदमादाय धातुभिन्नत्वेन 'अधातु'रिति पर्युदासो व्यर्थः । नच 'अधातु'रित्यस्य—धातुत्वावच्छिन्नप्रतियोगिताकभेदवानित्यर्थः । तथा च 'धातुघटोभयन्ने'त्याकारकभेदस्य धातुनिष्ठप्रतियोगिताकत्वेऽपि धातुत्वावच्छिन्नप्रतियोगिताकत्वस्याभावात्तं भेदमादाय न दोष इति वाच्यं, 'धातुघटोभयं ने'त्याकारकभेदीयप्रतियोगितायाः धातुत्व-घटत्व-द्वित्वैतत्त्रितयावच्छिन्नत्वेन 'प्रतियोगिता धातुत्वावच्छिन्ना ने'ति वक्तुमशक्यत्वेन पूर्वोक्तभेदमादाय दोषस्य दुरुद्धरत्वात् । नच 'अधातु'रित्यस्य-धातुत्वमात्रावच्छिन्नप्रति-

### ❀ चिद्स्थिमाला ❀

स्वादिसन्ध्युत्तरं तद्विधिमपास्य प्रातिपदिसञ्ज्ञाकलनने सङ्गतिमाह—**स्वादीति** । **प्रातिपदिकेति** । ङ्याब्ग्रहणं त्वन्यार्थमिति मूलादौ स्फुटमेव । एतेन 'ङ्याप्योप्यधिकारात्तस्य च प्राथम्यात्सूचीकटाहन्यायाच्च स्त्रीप्रत्ययप्रकरणमादौ वक्तुमुचित'मित्यपास्तम् । अतएव—'स्वादिविधौ ङ्याप्प्रातिपदिकादित्यधिकृतं, तत्र किमिदं प्रातिपदिकमिति जिज्ञासायां प्रथमं तल्लक्षणमाहेति रत्नाकरायुक्तावतरणमयुक्तमिति भावः । **तां सञ्ज्ञामिति** । 'तज्जिज्ञासाया'मित्यादिः । **अधातुरिति** । आरोपितो धातुरित्यादिर्वाच्योर्थः । 'धातुभिन्न'मित्यादि तु फलितोऽर्थः । अतो न पुंस्त्वानुपपत्तिः । आदिनाऽप्रत्यय इत्यस्य सङ्ग्रहः । **लाघवादिति** । वाक्य-

### ❀ ज्योत्स्ना ❀

स्वादिसन्धिरुक्तस्तत्रोत्तरग्रन्थेन सङ्गतिं वक्तुमुपक्रमते—**स्वादिविधाविति** ।

### ❀ सदाशिवभट्टीयम् ❀

**स्वादिविधौ प्रातिपदिकाधिकारादिति** । ङ्याब्ग्रहणं त्वन्यार्थमिति भावः । एतेन—ङ्याप्योप्यधिकारात्तस्य च प्राथम्यात्सूचीकटाहन्यायात्स्त्रीप्रत्ययप्रकरणमादौ वक्तुमुचितमित्यपास्तम् । तद्विधानपि प्रातिपदिकाधिकाराच्च । **तां सञ्ज्ञामिति** । तत्सञ्ज्ञाविधायकं सूत्रमित्यर्थः । यथाश्रुतेऽर्थवदि-

### ❀ विषमपदविवृतिः ❀

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** । 'अर्थवदधातुरति प्रातिपदिक'मित्येव सूत्रं कार्यम् । तिमित्यारभ्य सुपः पकारेण प्रत्याहारः । तद्धितग्रहणमोत्तरत्र न कार्यम् । यद्य'र्थवदति अतिरधातु-प्रातिपदिक'मित्यस्त्विति, तन्न, आद्ये प्रत्याहारतिन्नायाश्रयणे तिपः पकारेण प्रत्याहारापत्तेः । व्यासि-

प्रत्ययान्तमिति । आवर्तिते प्रत्ययपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् ।

❀ अभिनव-चन्द्रिका ❀

योगिताकभेदवानित्यर्थः । तथा चोभयाभावीयप्रतियोगितायाः धातुत्वेतरघटत्वाद्यवच्छिन्नत्वेन स भेदो धर्त्तुं न शक्यते इति नोक्तदोष इति वाच्यं, धातुत्वस्यापि धातुत्वघटत्वोभयभिन्नत्वेन धातुत्वावच्छिन्ना धातुत्वेतरधर्मानवच्छिन्ना या प्रतियोगिता तादृशप्रतियोगिताकभेदस्यैवाप्रसिद्धेरिति चेन्नैवम्, 'अधातु'रित्यस्य—धातुत्वपर्याप्ता या अवच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेदवानित्यर्थः । तथाच निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायाः धातुत्व–घटत्व–द्वित्वेषु त्रिषु व्यासज्यवृत्तित्वेन धातुत्वपर्याप्तत्वाभावेनादोषात् । नच प्रत्येकमपर्याप्तस्य समुदाये पर्याप्त्यसम्भवात् समुदायस्य च प्रत्येकानतिरेकात्–'धातुत्वादिषु त्रिषु पर्याप्ता प्रतियोगितावच्छेदकता केवलधातुत्वे पर्याप्ता ने'ति वक्तुमशक्यत्वेन उक्तदोषतादवस्थ्यमिति वाच्यम्, अवयवावयविनोरिव प्रत्येकसमुदाययोरपि परस्परमस्मन्मते भिन्नत्वेन दोषाभावात् । अत एव समासग्रहणस्य भाष्योक्तनियामकत्वं सङ्गच्छते । अन्यथा प्रत्ययान्ततदादिसमुदायरूपसमासस्यापि प्रत्ययान्ततदादित्वेन तदसङ्गतिः स्पष्टैव ।

अथवा 'अधातु'रित्यस्य धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकभेदवानित्यर्थः । तथाच निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायाः धातुत्वादित्रितयपर्याप्तत्वेन निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां त्रित्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य सत्त्वेऽपि धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिकपर्याप्तिकत्वस्याभावेनादोषात् । नचैवमपि धातुत्ववृत्तित्वविशिष्टोभयाभावीयप्रतियोगितावच्छेदकतायाः धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वेन 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायेन शुद्धनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकताया अपि धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वेनोक्तदोषतादवस्थ्यमिति वाच्यं, 'धातुत्वं धातुत्वनिरूपितवृत्तित्वविशिष्टवत्' 'धातुत्वं निरुक्तोभयाभावीयप्रतियोगितावच्छेदकतावत्'–इत्याकारकप्रतीतिभ्यां क्लृप्तेन पर्याप्तिद्वयेनाधिकरणताद्वयेन चोपपत्तौ अतिरिक्तधातुत्ववृत्तित्वविशिष्टनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकताधिकरणत्वस्य अतिरिक्ताया धातुत्ववृत्तित्वविशिष्टनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकतापर्याप्तेश्च कल्पने मानाभावेन धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य धातुत्ववृत्तित्वविशिष्टनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायामपि विरहेण शुद्धनिरुक्तोभयाभावीयप्रतियोगितावच्छेदकतायां सुतरामभावेनादोषादिति दिक् । नच 'प्रतियोग्यवृत्तिधर्म एव भेदीयानुयोगितावच्छेदको भवती'ति नियमेन प्रकृतेऽनुयोगितावच्छेदकार्थवत्त्वस्य प्रतियोगिनि धातावपि सत्त्वेन 'धातुभिन्नमर्थव'दिति कथं बोधः? अत एव 'घटो न द्रव्य'मित्यादिप्रतीतिर्न भवतीति वाच्यं, भेदविधेयक-

❀ चिदस्थिमाला ❀

भेदाऽसमर्थसमासाभावप्रयुक्तलाघवादित्यर्थः । आवर्तित इति । बोद्धृबोधार्थं, तथाच सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः । अप्रत्ययपदे इति । तदेकदेशप्रत्ययांशे इत्यर्थः । अनकारपाठस्त्वयुक्तः । नञ् आवृत्त्यभावेनोभय-

❀ ज्योत्स्ना ❀

प्रत्ययस्य यत्र सञ्ज्ञेति । 'सञ्ज्ञाविधौ प्रत्ययग्रहणे' इत्युक्तेः । प्रत्यासत्तिलभ्यमिदम् । मूलोक्तं

❀ विषमपदविवृतिः ❀

न्यायाश्रयणे तु कपः पकारेण तदापत्तेः । द्वितीये तु 'तन्त्रे'त्यादौ वि तत्वेन प्रातिपदिकत्वानापत्त्या तद्धितग्रहणस्यावश्यकतया न लाघवम् । आवर्तिते इति । स्वमते प्रत्ययपर्युदासाभावात्प्राचां मतेनेदम् । प्रत्ययस्य यत्र सञ्ज्ञेति । धर्मिग्राहकमानबलादिति भावः । अन्ये तु 'कृदतिङ्', 'षः प्रत्ययस्य', 'तद्धितश्चासर्वविभक्ति'रित्यादावपि निषेधप्रवृत्तेरिष्टत्वेनायुक्तमेतत् । अन्यथा 'व्यतिसे' इत्यादावेव निषेधः प्रवर्तेत । षडित्यादावेव च–इत्सञ्ज्ञा प्रवर्तेत । तस्मात्तद्धितान्तस्य प्रातिपदिक-

'सञ्ज्ञाविधा'विति निषेधस्तु—प्रत्ययस्य यत्र सञ्ज्ञा तद्विषय इति भावः । अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वम्—एतत्सञ्ज्ञाफलभूतविभक्तीतरसमभिव्याहारान-

**ॐ अभिनव-चन्द्रिका ॐ**

स्थले तादृशनियमस्वीकारेण प्रकृते धातुभेदस्य प्रातिपदिकसञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यता-वच्छेदकत्वेनादोषात् । अत एव 'अघटं द्रव्यमानये'त्यादिप्रयोगाः सङ्गच्छन्ते । अन्ये तु 'प्रतियोगि-वृत्तिरेव धर्मोऽनुयोगितावच्छेदको भवती'ति सर्वत्र नियमः । किन्तु प्रतियोगिवृत्तिरपि धर्मो भेदा-न्वयितावच्छेदको भवत्येव । अत एव 'अर्थवदधातुः' 'अघटं द्रव्यमानये'त्यादिप्रयोगाः सङ्गच्छन्ते ।

नचैवंरीत्या 'घटो न द्रव्य'मित्यादिप्रयोगापत्तिरिति वाच्यम्, अभावविधेयकस्थले 'उद्देश्यता-वच्छेदकावच्छेदेन विधेयान्वय' इति सिद्धान्तेन उद्देश्यतावच्छेदकद्रव्यत्वादिव्यापकत्वस्य भेदे बाधितत्वेनादोषादित्याहुः । **प्रत्ययस्य यत्र सञ्ज्ञेति** । 'सञ्ज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यता-प्रयोजकं यत्प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तत्—तदादिविशेष्यकतदन्तविधिप्रयोजकत्वे'ति 'सञ्ज्ञाविधा'वित्यस्यार्थस्वीकारेण प्रकृते प्रत्ययपदस्य सञ्ज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यता-प्रयोजकमिति न तदन्तविधिनिषेध इति भावः । **एतत्सञ्ज्ञाफलभूतेति** । चिकीर्षित—प्रातिपदिक-

**ॐ चिदस्थिमाला ॐ**

त्वान्वयाप्रसक्तापत्तेः । **प्रत्ययस्येति** । तस्येव तमुद्दिश्येत्यर्थः । **तद्विषये इति** । तद्विषये एवेत्यर्थः । 'इति भाव' इति सूचितं प्रत्ययपर्युदासस्वैफल्यरूपानरुचिं कथञ्चितुनाह- **अत्र सूत्रे इति** । अस्मिन्सूत्रे इत्यर्थः । द्वैतद्वयनोक्तिफलन्तूभयत्रापि स्पष्टतया तत्सम्पादनं, तेन मूलकृद्दृष्टवैयर्थ्यनिरासध्वननम् । **एतत्सञ्ज्ञा-फलभूतेति** । प्रातिपदिकसञ्ज्ञासाध्येत्यर्थः । 'फलीभूते'त्यपपाठः । तेन तिङ्गन्तद्भिन्नविभक्तिव्यावृत्तिः । अत्र

**ॐ ज्योत्स्ना ॐ**

प्रत्ययपर्युदासं प्रत्याख्यातुमाह—**अत्रेति** । 'पुत्रीयती'त्यादौ तिङ्विभक्तीतरसमभिव्याहारस्य पुत्रीयेत्यादि-तानपेक्षणादतिव्याप्तेः—'एतत्सञ्ज्ञाफलीभूते'तिविभक्तेर्विशेषणम् । वस्तुतस्तु धातुप्रत्ययपर्युदासाभ्यामेव तत्रातिव्याप्तेर्वारणादुक्तविशेषणं परिशेषसिद्धार्थानुवादकमात्रम् । अत एव शब्दरत्ने नैतदुपात्तमित्याहुः ।

**ॐ सदाशिवभट्टीयम् ॐ**

त्वेनेताभेदो बाधितः स्यात् । **अत्रेति । केचित्त्वेतत्सञ्ज्ञाफलभूतविभक्तिभेदकूटविशिष्ट—स्वव्यभिचारिक-**प्रत्ययप्रकृत्यन्यतर—समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम् । 'देवदत्तो भवति' 'देवदत्तो गार्ग्य' इति समुदायस्याप्रत्ययान्तस्याधातोश्च विभक्तिप्राग्भूतस्य सञ्ज्ञावारणायैतत्सञ्ज्ञाफलभूतत्वेन विभक्ति-विंशेषिता । अर्थवत्त्वमादाय चिकीर्षिता या सञ्ज्ञा तत्फलेत्यर्थः । 'देवदत्तो गार्ग्य' इत्यत्र गार्ग्यप्रकृतिकस्य सुपो गार्ग्य इत्येतन्निष्ठसञ्ज्ञाफलभूतत्वेपि चिकीर्षित—'देवदत्तो गार्ग्य'इत्येतन्निष्ठसञ्ज्ञाफलभूतत्वाभावान्नाति-व्याप्तिः । एतेन 'सुबितरे'त्युक्त्यैव तिङ्विभक्तिव्यावृत्तौ सिद्धायां विशेषणं व्यर्थमित्यपास्तम्, 'खट्वे'त्या-दावव्याप्तेश्च । सिद्धान्ते तु विभक्तिग्रहणं प्रत्ययोपलक्षणमिति खट्वादौ न दोषः । चालिनीन्यायेनासम्भव-वारणाय—'भेदकूटे'ति । ननु—उभयभेदमादायासम्भववारणाय—'विभक्तित्वेतरधर्मानवच्छिन्नप्रतियोगिताकत्व'-स्मेदकूटविशेषणमवश्यं देयमेवेति—अत एव तत्तद्भेदमादाय न दोषः,—'तत्तद्भेदस्य विभक्तित्वेतरतत्तद्रूप-धर्मावच्छिन्नत्वात्किमर्थं भेदकूटे'तिचेत्—अत्रैव तात्पर्यात् । 'साङ्कुटिनम्प्रक्षिम'मित्यादौ 'सङ्कुटिन्'पक्षि'इत्ये-तेष्वणमपेक्ष्याव्याप्तिवारणाय—**स्वव्यभिचारिकत्वेन प्रत्ययो विशेषितः** । नन्वलौकिकप्रक्रियावाक्ये 'पाकेन

**ॐ विषमपदविवृतिः ॐ**

**सञ्ज्ञाविधिः कल्प्यते इत्याहुः । मूलोक्तं प्रत्ययपर्युदासं प्रत्याख्यातुमाह—अत्रेत्यादिना । एत-त्सञ्ज्ञाफलभूतेति । इदं वस्तुस्थितिकथनं, न तु अर्थवत्त्वशरीरघटकं, फलाभावात् । अत एव**

—पेक्षया लोकेऽर्थविषयकबोधजनकत्वम् ।

❀ अभिनव-चन्द्रिका ❀

सञ्ज्ञाफलभूतेत्यर्थः । विभक्तौ प्रातिपदिकसञ्ज्ञाफलभूतत्वमुपलक्षणन्न तु विशेषणमतो नान्योन्याश्रय', अन्यथा'र्थवत्त्वज्ञानाधीना प्रातिपदिकसञ्ज्ञा, तदधीनञ्चार्थवत्त्वज्ञान'मित्यन्योन्याश्रयो दुर्वारः स्यात् । तथाच 'वस्तुतः प्रातिपदिकसञ्ज्ञाफलभूते'त्यादिलक्षणं फलितम् ।

स्यादेतत्, खट्वा, पक्त्रिमम्, साङ्कूटिनमित्यादौ खट्व—पक्त्रि—साङ्कूटिन्—इत्यादीनामेतत्सञ्ज्ञाफलभूतविभक्तीतरेषां टाप्—मप्—अणां समभिव्याहारेणैव अर्थविषयकबोधजनकत्वादर्थवत्त्वन्न स्यादिति चेन्मैवम् । 'एतत्सञ्ज्ञाफलभूतविभक्ति'पदं प्रत्ययमात्रोपलक्षणमितिस्वीकारेणादोषात् । नचैवमपि प्रकृतसूत्रस्थभाष्यविरोधः । तथाहि—'अप्रत्यय इति किम् ? अपि काकः श्येनायते, माभूदेवमधातुरिति पर्युदासो भवती'त्युक्तम्, एतच्चानुपपन्नम्, एतत्सञ्ज्ञाफलभूतप्रत्ययेतर-

❀ चिदस्थिमाला ❀

स्वरूपकीर्तनं, नत्वस्य लक्षणे निवेशः, फलाभावात्। नच ऊर्णुनुवतुरित्यादौ धातोस्तत्त्वापत्त्या 'लघावन्त'इति स्वरापत्तिः। एवमूर्णुत इत्यादावपि तस्य तत्त्वे 'इगन्तानां च द्व्यषा'मित्याद्युदात्तत्वापत्तिरिति वाच्यम्, अहन्नित्याद्यर्थमावश्यकधातुपर्युदासेनैव तत्र वारणात् । अत्र यस्य यस्य प्रातिपदिकसञ्ज्ञा चिकीर्षिता तस्य तस्य यावद्विभक्तिभिन्नं यद्यावत्,—तदपेक्षयेत्यर्थः। तेन 'चालनी'न्यायेन न दोषः। तद्भिन्नं च साजात्यात्प्रकृति-

❀ सदाशिवभट्टीयम् ❀

निर्वृत्त'मित्यत्र स्वव्यभिचारित्वमिति तन्न । 'स्वव्यभिचारिके'त्यत्र स्वं व्यभिचारि यस्य सः । यस्य प्रातिपदिकसञ्ज्ञा चिकीर्षिता स स्वपदार्थः। तत्त्वं च—यत्र यद्व्यभिचारित्वमानेयं तदसमवायि—परिनिष्ठित—समवायिस्वन्तत्र तत् । अस्ति च 'देवदत्तो गार्ग्य'इत्यत्र तथा । सुप्रत्ययव्यभिचारित्वं 'देवदत्तो गार्ग्य'इत्यत्रानेयं, नादृशो यः सुस्तदसमवायित्वम् अमाद्यन्ते—देवदत्तो गार्ग्यम्, राज्ञः पुरुषमित्यादौ—परिनिष्ठिते देवदत्तो गार्ग्यस्यस्य समवायित्वात् । साङ्कूटिनादौ तु सङ्कूटिन्पक्त्र्यादीनामण्मबाद्यसमवायिपरनिष्ठितसमवायित्वं नास्तीति नाव्याप्तिः । 'पञ्चनावप्रिय'इत्यत्र समुदायोत्तरस्वाद्यपेक्षत्वेन टजन्तस्य यथा न प्रातिपदिकत्वन्तथा 'साङ्कूटिनं' 'पक्त्रिम'मित्यादौ तदपेक्षत्वेनार्थवत्त्वाभावेन तन्न स्यादतः प्रत्ययाव्यवहितत्वेन प्रत्ययो विशेषणीयः। यस्यार्थवत्त्वमानेयं तस्य, अपेक्ष्यमाणप्रत्ययस्य च मध्ये प्रत्ययोर्व्यवधायको न चेदिति तदर्थः ।

सर्वत्र विभक्त्यवयवमादायासम्भववारणाय, 'मूलकेनोपदंश'मित्यादौ सोपपदके उपपदापेक्षत्वेनाव्याप्तिवारणाय, 'पश्चाञ्चक्रे' इत्यादौ चाऽनुप्रयुज्यमानापेक्षत्वेनाव्याप्तिवारणाय च, निभसङ्काशादीनामुत्तरपद एव प्रयुज्यमानानां पूर्वपदा(र्था)पेक्षत्वेनाव्याप्तिवारणाय च, उपसर्गाणां धात्वपेक्षत्वेनाव्याप्तिवारणाय च प्रत्ययेतिनिवेशः। प्रत्ययमात्रे कृदादावतिव्याप्तिवारणाय प्रकृतीति। धातुप्रत्ययान्तयोर्विभक्त्य(न)पेक्षत्वेन तत्र दोषाभावात्तदकरणलाघवानुरोधेन विभक्त्यपेक्षयेत्युक्तौ तु 'मधु' 'लिङि'त्यादिकेष्वश्रूयमाणविभक्तित्वेन विभक्त्यनपेक्षयार्थबोधकेष्वव्याप्तिवारणाय नञर्थद्वयनिवेशः । केवलकृदादीनामपि विभक्त्यनुसन्धानापेक्षत्वेन केवलकृदादिष्वतिप्रसङ्गभङ्गाय 'एतत्सञ्ज्ञाफलभूतविभक्त्यनुसन्धानेन लोकेऽर्थबोधकत्व'मिति नोक्तमिति सर्वमवदात-

❀ विषमपदविवृतिः ❀

शब्दरत्ने एतत्सञ्ज्ञाफलभूतेति न दृश्यत इति केचित्। वस्तुतस्तु 'ओदनं पचती'त्यादावोदनं पचेति समुदायस्यार्थवत्त्वेन प्रातिपदिकत्ववारणायैतत्सञ्ज्ञेति । तत्समुदायस्य तिङ्रूपविभक्त्यपेक्षयाऽर्थबोधजनकत्वेपि तदितराऽनपेक्षयाऽर्थबोधजनकत्वात्प्रातिपदिकं प्राप्तम् । 'एतत्सञ्ज्ञे'त्युक्तौ तु एतत्सञ्ज्ञाफलभूतविभक्तीतरतिङपेक्षयैवार्थबोधजनकत्वात्तद्वारणम् । पचेत्यस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावात् । एतेनैतत्सञ्ज्ञाफलभूतेति व्यर्थमेव, शब्दरत्नेऽदर्शनादिति पाठकोक्तमपास्तम् । शब्दप्रयोजनानुरोधेन तस्य पूरणीयत्वात् । एवं च 'देवदत्तस्य पुत्र' इत्यत्र 'स्य पुत्र' इति समुदाये षष्ठ्यर्थस

❀ अभिनव-चन्द्रिका ❀

तिङ्समभिव्याहारेणैव 'देवदत्ते'त्यस्य लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्त्वेन प्रातिपदिकसञ्ज्ञा-या अप्राप्त्या प्रतिषेधस्यानुक्तत्वादिति वाच्यम्, एतत्सञ्ज्ञाफलभूतप्रत्यय-तिङ्-एतदन्यतरेत्यादि-लक्षणस्वीकारेणादोषात्। ननु 'एधाञ्चक्रे'इत्यादौ 'एधा'मित्यस्य एतत्सञ्ज्ञाफलभूतप्रत्यय-तिङ्-एतदन्यतरेतर-'चक्रे'-इत्येतत्समभिव्याहारेणैव लोके अर्थविषयकबोधजनकत्वेनार्थवत्त्वं स्यात्, न च पदेतरस्यापि लक्षणघटकत्वेन न दोष इति वाच्यम्, 'पचतावप्रिय' इत्यादौ 'पचतो'-त्यस्यार्थवत्त्वेऽन्युनरग्रन्थविरोधात्। न च 'एधा'मित्यस्यार्थवत्त्वाभावेऽपि न क्षतिः, नचार्थवत्त्वाभावेन पदत्वानापादधाञ्चक्रे इत्यादौ अनुस्वारो न स्यादिति वाच्यं, 'नश्चापदान्तस्ये'-त्यनेनानुस्वारसिद्धेरिति वाच्यम्, एधाञ्चक्रे इत्यादौ 'तिङ्ङतिङ' इति निघातानापत्तेः, वैकल्पिकपरसवर्णानापत्तेश्च। नचैतत्सञ्ज्ञाफलभूतप्रत्यय तिङ्-स्ववृत्त्येकार्थीभावाभाववत्पदं-तदन्यतमेतरेत्यादिलक्षणस्वीकारेण एधामित्यस्यार्थवत्त्वं, पचतावित्यस्य तदभावश्च निष्प्रत्यूहमिति वाच्यम्। 'मूलकेनोपदंश'मित्यादौ स्ववृत्त्येकार्थीभावाभाववत्पदेतर-मूलकेनेत्येतत्समभिव्याहारेणैव उपदंशमित्यस्य लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्त्वानापत्तेः। नच स्ववृत्तिप्रातिपदिकत्वाभाववत्पद-तिङ्-एतत्सञ्ज्ञाफलभूतप्रत्यय-एतदन्यतमेत्यादिलक्षणस्वीकारेण न कापि क्षतिरिति वाच्यम्। अर्थवत्त्वपरिष्कारे प्रातिपदिकत्वप्रवेशेऽन्योन्याश्रयापत्तेरिति चेन्मैवम्। स्ववृत्तिसमासत्वाभाववत्पद-तिङ्-एतत्सञ्ज्ञाफल-भूतप्रत्यये-तदन्यतमेतरसमभिव्याहारानपेक्षया लोके अर्थविषयकबोधजनकत्वमिति परिष्कारेणादोषात्।

❀ चिदस्थिमाला ❀

तन्त्रान्यतरत्वेनैव ग्रहणे तेन क्वचिदादेरागमादित्वेनिक्षत्वेऽपि न क्षतिरिति बोध्यम्। दधि-मधु-लिडि-

❀ विषमपदविवृतिः ❀

उत्तरपदार्थेऽन्वयेनार्थवत्त्वेऽपि न प्रातिपदिकत्वं, विभक्तीतरपष्ठीप्रकृत्यपेक्षयैव लोकेऽर्थबोधजनकत्वेन परिष्कृतार्थवत्त्वाभावात्। समासग्रहणकृतनियमेन तु नास्य वारणं, षष्ठ्याः स्वातन्त्र्येण प्रयोगानर्हत्वात्। अत्र वदन्ति-एवंविधार्थवत्त्वग्रहणे खट्वशब्दस्य प्रातिपदिकत्वानापत्तिः, विभक्तीतरटाद्यपेक्षयैव खट्वशब्दस्यार्थबोधकत्वात्। टाविधानं त्वनियतलिङ्गे चरितार्थम्। विभक्तीतरवाचकविवक्षणेपि एधाञ्चकारेत्यादावेधामित्यस्य प्रातिपदिकत्वानापत्तिः, चकारेत्येतदपेक्षयैव लोके तस्यार्थबोधकत्वात्। यदि विभक्तीतरो वाचकः प्रत्ययो विवक्ष्यते-तदा 'पचतावप्रिय'इत्यादौ 'पचतोव'-त्यस्य प्रातिपदिकत्वापत्तिः, प्रियशब्दापेक्षया तस्यार्थबोधकत्वेपि प्रियशब्दस्याप्रत्ययत्वात्। एवं प्रत्ययस्यापि। यदि च विभक्तीतरत् यत्स्वगतवृत्त्याश्रय इत्युच्यते, तदा हरिष्वित्यादौ प्रत्ययस्य प्रातिपदिकत्वापत्तिः। प्रकृत्यपेक्षया तस्यार्थबोधकत्वेपि प्रकृतेरतादृशत्वात्। 'हारिद्रविण' इत्यादौ णिजन्तस्य प्रातिपदिकत्वानापत्तिश्च, तस्य स्वगतवृत्त्याश्रयाद्येत्रणपेक्षयैवार्थबोधकत्वात्।

यदि च विभक्तीतरयत्स्वसमवेतसञ्ज्ञाश्रयीभूतं-तद्विवक्ष्यते; प्रियशब्दश्च स्वसमवेतसमाससञ्ज्ञाश्रयः। चकारेत्ययं तु न तथा। 'हरिष्वि'त्यादौ प्रकृतिभागस्तु तथाविधपदत्वाश्रय इति प्रत्ययस्य तदपेक्षयाऽर्थबोधकत्वेन प्रातिपदिकत्वव्यावृत्तिः। एवञ्च 'कुम्भकारे'त्यत्र 'कारे'त्यस्य न प्रातिपदिकत्वमिति स्त्रीप्रत्ययप्रकरणस्थशेखरविरोधोपि। स्वसमवेतसमासत्वाश्रयकुम्भेत्येतदपेक्षयैवार्थबोधकत्वात्। तथा च 'द्रष्टुं भुक्त्वा व्रजती'त्यादौ तुमुनन्तादीनां प्रातिपदिकत्वसिद्धिः। स्वनिष्ठार्थबोधकत्वप्रयोजकत्वस्य यातीत्यादेः स्वनिष्ठसञ्ज्ञानाश्रयत्वादित्युच्यते, तदा मालाकालका(दाक्षित्या)दौ

❀ वरवर्णिनी ❀

**इदमत्र तत्त्वम्**,—'अत्र सूत्रे वृत्तिमत्त्वमर्थवत्त्वमुत्तरसूत्रे च-( शब्दाधिकाराश्रयेण )—'एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्व'रूपमर्थवत्त्वं,—"न केवला कृतस्तद्धिता वा अर्थवन्त"इत्यादि भाष्योक्ते'

अन्यथाऽधातुरिति पर्युदासेन व्याख्यानादर्थवत्त्वेनैव सादृश्यग्रहणेन सिद्धे-

ॐ अभिनव-चन्द्रिका ॐ

तथाहि—एधाञ्चक्रे इत्यादौ चक्रे इति स्ववृत्तिसमासत्वाभाववत्पदं, तदितरसमभिव्याहारानपेक्षया अर्थबोधकत्वान्नार्थवत्त्वक्षतिः । अथ 'तन्निभः' 'कुम्भकार' इत्यादौ निभकारादीनां पञ्चनावेत्यस्येवोक्तरीत्यार्थवत्त्वन्न स्यात् । नच पूर्वपदेतरत्वस्यापि लक्षणे निवेशेन नोक्तदोषः, अतएव 'एधामासतुःकल्प'मित्यादौ 'आसतुःकल्प'मित्यादेरर्थवत्त्वं सिध्यतीति वाच्यं, 'हरिष्वि'त्यादौ सोरपि निरुक्तार्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यतापत्तेः । नच पूर्वपदशब्देन समासावयवस्यैव पूर्वपदस्य ग्रहणान्न दोष इति वाच्यं, 'पञ्चनावप्रियपुत्र'इत्यादौ प्रियेत्यत्र समासघटकपूर्वपदेतरत्वस्याभावेन पञ्चनावेत्यस्यार्थवत्त्वापत्तेः । नच नियतपूर्वत्ववत्सुबन्तमेव लक्षणघटकपूर्वपदेन

ॐ चिदस्थिमाला ॐ

त्यादेः सङ्ग्रहाय नञर्थद्वयनिवेशः । अन्यथा लाघवाद्विभक्तिसमभिव्याहारापेक्षयेत्येव वदेत् । 'लोके' इत्यनेन प्रसिद्धिसूचकेन कल्पितत्वव्यावृत्तिः । तत्र मानमाह—**अन्यथेति** । ईदृशार्थवत्त्वानङ्गीकारे इत्यर्थः । **अधातुरितीति** । विकरणादीनामनर्थकप्रत्ययानां दर्शनात्तत्पर्युदासानुपन्यासः ।
**व्याख्यानादिति** । बहुलक्ष्यसंस्कारानुरोधमूलकादिति भावः । यद्वा अनेकार्थसम्भवेऽभियुक्तव्याख्यानस्यैव प्रामाण्यमिति 'लण्' सूत्रे आकरे स्पष्टत्वेन सुप्तिङन्तमिति सूत्रस्यार्थवत्पदानुवृत्तिसामर्थ्यवर्णनपराग्रतष्टीकाकारवक्ष्यमाणभाष्यमूलकादिति भावः । **अर्थवत्त्वेनैवेति** । एवेनातत्त्वार्थकत्वादिव्यावृत्तिः । एतेन तेनापि सादृश्यसम्भवाद्घटादौ प्रातिपदिकत्वं न स्यादतोऽर्थवद्ग्रहणमिति खण्डनकृदुक्तमपास्तम् । **सिद्धेरिति** ।

ॐ ज्योत्स्ना ॐ

'**अधातुरित्यादिपर्युदासेने**'तिपाठः । आदिपदात्प्रत्ययान्तपर्युदासः । एवञ्च 'तत्पर्युदासः सार्थक' इत्युत्तरग्रन्थे तत्पदेन पर्युदासद्वयग्रहणमुपपद्यते । क्वचिद्'धातुरितिपर्युदासेने'त्येवादिशब्दरहितः

ॐ विषमपदविवृतिः ॐ

स्वालेत्यादेः प्रातिपदिकत्वानापत्तिः । तस्य स्वगतसमासत्वानाश्रयकालाद्यपेक्षयैवार्थबोधकत्वात् । एवं प्राच्छेदित्यादेः प्रातिपदिकत्वानापत्तिः, स्वगतसमासत्वाश्रयकृच्छकाराद्यपेक्षयैवार्थबोधकत्वात् ।
किञ्चोत्तरसूत्रेऽपि एवंविधार्थवत्त्वस्यैव विवक्षणीयतया प्रागुक्तसर्वपक्षेष्वपि तद्धितसमासयोः प्रातिपदिकत्वानापत्तिः । अलौकिके प्रक्रियावाक्ये एव प्रातिपदिकत्वस्य वक्तव्यतया तस्य लोके सर्वथाऽर्थाबोधकत्वादिति । अत्रोच्यते—अन्तिमः पक्ष एव साधीयान् । 'स्वाला कालका'दौ तु न दोषः । समाससञ्ज्ञार्थं स्वालादेः सुबन्तत्वस्यावश्यकतया ततः पूर्वमेव प्रातिपदिकत्वप्रवृत्तेः । तस्याञ्च दशायां कालकादेः स्वगतसञ्ज्ञानाश्रयत्वात् । एवं 'मूलकेनोपदंश'मित्यादावप्यदोषो बोध्यः, 'मूलकेने'त्यादौ समाससञ्ज्ञातःपूर्वं स्वगतसञ्ज्ञानाश्रयत्वात् । अलौकिकप्रक्रियावाक्ये तु स्वप्रकृतिकपरिनिष्ठितनिष्ठम् ईदृशार्थवत्त्वमारोप्य प्रातिपदिकत्वं निर्वाह्यम् । यद्वा विभक्तीतरत् शास्त्रे यत्स्वप्रकृतिनिमित्ततया नाश्रीयते तदेव प्रगृह्यते । प्रत्ययस्य प्रकृतिस्तथाविधा, पञ्चगवेति समासस्य च धनेति तथाविधमुत्तरपदे विहितसमासमुपजीव्य टचः प्रवृत्तेः । तेनैधां-खट्व-भुक्त्वा-हारिद्रविण इत्यादौ न दोषः । चकारेति तिङन्तस्य

ॐ वरवर्णिनी ॐ

रिति—प्राचां मतं—प्रत्ययपर्युदासशब्दाधिकाराश्रयणा-ऽर्थवत्त्वद्वयाभ्युपगमादिगौरवेण कटाक्षयन्नुभयसूत्रसाधारणन्तदाह—**एतत्सञ्ज्ञेति** । यस्यार्थवत्त्वं चिकीर्षितं तदेतत्पदेन ग्राह्यम् । तथाच—एतस्य=रामशब्दादेः, या सञ्ज्ञा=प्रातिदिकादिसञ्ज्ञा, तत्फलभूता विभक्तिः—उत्पत्स्यमाना स्वादिविभक्तिः, तदितरो-घटादिः, तत्समभिव्याहारानपेक्षयैव लोके रामेत्यादितो दशरथापत्याद्यर्थविषयकबोधस्य जननादर्थवत्त्वं

## ॥ अभिनव-चन्द्रिका ॥

विवक्षितमिति नोक्तदोष इति वाच्यं, क्विबन्ताच्चकास्शब्दात्सुपि 'चकास्ति'त्यत्र नोऽर्थवत्त्वा-पत्त्या प्रत्ययपर्युदासकर्तव्यतापत्तेरिति चेन्न, एतत्सञ्ज्ञाफलभूतप्रत्यय—'सि'—स्ववृत्तितत्तास्वा-भाववत्पद—स्वादिष्विति पदत्वानाश्रयनियतपूर्वत्ववत्सुबन्तं—तदन्यतमेतत्समभिव्याहारानपेक्ष्य लोके अर्थविषयकबोधजनकत्वमर्थवत्त्वमितिपरिष्कारेणादोषात्। 'स्वादिष्विति पदत्वानाश्रये'त्युक्त्या 'चका-स्ति'त्यादौ न दोषः। 'नियते'त्युक्त्या 'पञ्चनावप्रियपुत्र' इत्यादौ न दोष इति दिक्। बोधजनकत्वमिति। 'शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्ये'ति शेषः। अत एव 'गवित्ययमाहे'त्यादौ गवित्यस्य अनुकार्यानुकरणयोरभेदविवक्षया सादृश्यज्ञानाधीनोपस्थित्यर्थविषयकबोधजनकत्वेऽपि निरुक्तार्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन सुबन्तत्वाभावान्न वलोपः। स्यादेतत्, बोधजनकता—स्वरूप-योग्यता वा फलोपधायकता वा गृह्यते? नाद्यः, व्यावर्त्याभावेनार्थवद्ग्रहणवैयर्थ्यापत्तेः। नाप्यन्त्यः, यादृशस्थले योग्यताज्ञानाद्यभावदशायां शाब्दबोधो न जातः तत्रार्थवत्त्वानापत्तेरिति चेन्मैवम्, 'अर्थविषयकबोधतात्पर्येणोच्चरितत्व'मिति—अर्थविषयकबोधजनकत्वस्य परिष्कारेणादोषात्।

नचैवमपि सूत्रेऽर्थवद्ग्रहणवैयर्थ्यम्, धनवनादेरर्थविषयकबोधतात्पर्येणोच्चरितत्वेन 'तद्घटकनका-रादिर्नोच्चरित' इति वक्तुमशक्यत्वादिति वाच्यं, 'स्वविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपित-तात्पर्यविशेष्यतापर्याप्त्यधिकरणत्व'मित्यर्थवत्त्वघटकबोधजनकत्वस्य परिष्कारेणादोषात्। नचैवमपि प्रत्येकमपर्याप्तस्य समुदाये पर्याप्त्यसम्भवेन प्रतिवर्णं सञ्ज्ञाया दुरुद्धरत्वेनार्थवद्ग्रहणवैयर्थ्यमिति वाच्यम्, अवयवावयविनोरिव प्रत्येकसमुदाययोरपि भेदस्वीकारेणादोषात्। अत एव भाष्योक्तं समासग्रहणस्य नियमार्थत्वं सङ्गच्छते। अन्यथा प्रत्ययान्तपदादिसमुदायस्यापि प्रत्ययान्ततदादित्वेन तदसङ्गतिः स्पष्टैव। अन्ये तु अर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपिततात्पर्यविशेष्यतापर्याप्त्य-नुयोगितावच्छेदकधर्मवत्त्वमर्थविषयकबोधजनकत्वम्। तथाच 'धनं' 'वन'मित्यादौ धनपदं धनत्वाव-च्छिन्नं बोधयत्वित्याकारकतात्पर्यीयबोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतापर्याप्त्यनुयोगितावच्छे-दकं धनवृत्तिसमुदायत्वमेव न तु धकारादिवृत्तितद्व्यक्तित्वमिति न दोषः।

नचैवमपि धकारनिरूपितवृत्तित्वविशिष्टा या पूर्वोक्ततात्पर्यीया विशेष्यता, तादृशविशेष्यता-पर्याप्त्यनुयोगितावच्छेदकं धकारादिवृत्तितद्व्यक्तित्वमिति—'विशिष्टं शुद्धान्नातिरिच्यते' इतिन्यायेन निरुक्ततात्पर्यीयशुद्धविशेष्यतापर्याप्त्यनुयोगितावच्छेदकमपि धकारादिवृत्तितद्व्यक्तित्वं भवत्येवेति—प्रतिवर्णं सञ्ज्ञा दुर्वारेत्यर्थवद्ग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यं, 'धकारनिरूपितवृत्तित्वविशिष्ट-

## ॥ ज्योत्स्ना ॥

पाठः। तत्रायं भावः,—प्रत्ययान्तपर्युदासात्कल्पितार्थसमुदायार्थेनार्थवतो बहुज्विशिष्टिस्येवाहज्ञि-त्यादेरपि तथाभूतस्य सञ्ज्ञानिवारणार्थं धातुपर्युदासेनावश्यारब्धव्येन सादृश्यात्पुनरर्थवतो ग्रहणं प्राप्नोतीति। एवं तु 'तत्पर्युदासःसार्थक' इत्युत्तरग्रन्थे तत्पदेन ततोऽपि प्राक्तन-ग्रन्थे'ऽधातुरित्यादिः पर्युदास'इत्यत्रोपात्तं पर्युदासद्वयं ग्राह्यम्। ननु नञिव युक्तन्यायानित्यत्व-

---

## ॥ वरवर्णिनी ॥

रामादेः सुपपन्नम्। यद्यपि स्वादिप्रकृतिमात्रस्य रामादेर्न बोधजनकत्वन्तथापि सम्भावितत्तत्रास्त्ये-वेति न लक्षणानुपपत्तिः। 'हरिषु'इत्यादौ सुप एतत्सञ्ज्ञाफलभूतविभक्तीतर—हर्यादिरूपप्रकृति—सम-भिव्याहारापेक्षयैवार्थबोधजनकतया निरुक्तार्थवत्त्वविरहेणैव दोषविरहे प्रत्ययपर्युदासो विफल एवेति नागेशा-शयः। 'विभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्व'मित्येतावन्मात्रोक्तौ—'राज्ञः पुरुषः'

## ॐ अभिनव-चन्द्रिका ॐ

दान्निरुक्ततात्पर्यविशेष्यतावा'नित्याकारकप्रतीतिद्वयान्यथानुपपत्त्या क्लृप्ताभ्यां पर्याप्तिभ्यामधिकरणत्वा-भ्याञ्चोपपत्तौ निरुक्तप्रकारादिवृत्तित्वविशिष्टतात्पर्यविशेष्यताया अतिरिक्ताधिकरणत्वपर्याप्त्योः कल्पने मानाभावेनादोषात्। नन्वेवमपि 'धनपदाद्धनत्वावच्छिन्नं बोद्धव्य'मित्याकारकबोधविषयत्वप्रकारक-तात्पर्येण, 'धनमानयेति वाक्यं धनकर्मकानयनं बोधयतु' इत्याकारकवाक्यधर्मिकतात्पर्येण, 'धन-मानयेतिवाक्याद्धनकर्मकानयनं बोद्धव्य'मित्याकारकवाक्यार्थधर्मिकतात्पर्येण वा यत्र धनादिपद-मुच्चरितं तत्र निरुक्तार्थवत्त्वं न स्यात्; बोधजनकत्वप्रकारकत्वस्य तादृशबोधविषयत्वप्रकारक-तात्पर्ययोरभावात्, वाक्यधर्मिकतात्पर्यस्थले च पदे विशेष्यत्वपर्याप्तेरभावादिति वाच्यम्, अर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपिततात्पर्यविशेष्यताविशिष्टतात्पर्यविशेष्यतापर्याप्त्यनुयोगि-तावच्छेदकधर्मवत्त्वमर्थवत्त्वपरिष्कारान्तर्गतमर्थबोधजनकत्वमितिस्वीकारणादोषात्। वै० 'स्वसा-मानाधिकरण्य', 'स्वावच्छेदकधर्मव्यापकानुपूर्वीव्याप्यधर्मावच्छिन्नत्वो'भयसम्बन्धेन। तथाच पूर्वोक्तबोधविषयत्वप्रकारकतात्पर्यीयजन्यत्वसम्बन्धावच्छिन्नधनादिपदनिष्ठप्रकारताख्यविषयतायां, वाक्यधर्मिकतात्पर्यीयधनादिनिष्ठविशेष्यतावच्छेदकताख्यविषयतायां, वाक्यार्थधर्मिकतात्पर्यीय-धनादिनिष्ठजन्यत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकताख्यविषयतायाञ्च 'धनपदं धनत्वावच्छिन्नं बोधयत्वि'त्याकारकबोधजनकत्वप्रकारकतात्पर्यविशेष्यताया निरुक्तवैशिष्ट्यसत्त्वान्न दोष इति दिक्।

अन्ये तु यस्यार्थवत्त्वं वक्तव्यं तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरसमभिव्याहारान-पेक्षया लोके अर्थविषयकबोधजनकत्वमर्थवत्त्वं पूर्वोत्तरसूत्रद्वयसाधारणं बोध्यम्। तथाच प्रत्ययानां तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरप्रकृतिसमभिव्याहारेणैव लोके अर्थविषयक-बोधजनकत्वादर्थवत्त्वाभावेन प्रत्ययपर्युदासो विफलः। अतएव 'अपि काकः श्येनायते'इति भाष्यं सङ्गच्छते। 'श्येनाये'त्यस्य 'श्येनाय'निष्ठोद्देश्यतानिरूपितविधेयताश्रयतिङ्प्रत्ययेतरसमभिव्या-हारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वात्। अत एव 'पञ्चनावप्रिय' इत्यादौ 'पञ्चनावे'त्यस्य नार्थवत्त्वं, पञ्चनावनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतर–प्रिय–समभिव्याहारेणैव पञ्चनावेत्यस्य लोकेऽ-र्थविषयकबोधजनकत्वात्। अतएव 'एधाञ्चक्रे' इत्यादौ 'एधा'मित्यस्यार्थवत्त्वं सिध्यति, चक्रे इत्यस्य एधान्निष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तदितरसमभिव्याहारानपेक्षया एधामित्यस्य लोकेऽर्थ-विषयकबोधजनकत्वात्।

---

## ॐ वरवर्णिनी ॐ

इत्येद्धटकीभूत–'राज्ञः पुरुषे'ति समुदायस्य पुरुषोत्तर–सु–विभक्तीतर–घटपटादि- समभिव्याहारान-पेक्षयैवार्थबोधजनकत्वात्–अर्थवत्त्वापत्तिरत—'एतत्सञ्ज्ञाफलभूते'ति विभक्तिविशेषणमुपात्तम्। एवञ्च,–राज्ञःपुरुषे'त्येतत्सञ्ज्ञाफलभूतोत्पत्स्यमान·सुविभक्ती·तर–पुरुषोत्तरसुविभक्ति–समभिव्याहारापेक्षयैव 'राज्ञः पुरुषे'त्यस्य बोधजनकतया नार्थवत्त्वमिति न सुपो धात्विति सुपो लुगापत्तिर्दोषः। लिङ्–धुग्–दधि–मध्वित्यादौ विभक्त्यनपेक्षयैवार्थबोधजनकत्वादर्थवत्त्वं न स्यादतोऽत्र–'एतत्सञ्ज्ञाफलभूतविभक्तिसमभिव्याहारा-पेक्षये'त्येवमनुक्त्वा नञ्द्वयोपादानमादृतम्। 'रामे'त्यादेरेतत्सञ्ज्ञाफलभूतविभक्तीतर–क्रियावाचकास्त्यादि-पदापेक्षयैवार्थबोधजनकत्वाद्रामेत्यस्यार्थवत्त्वं न स्यादतः 'समभिव्याहार' पदोपादानम्। समभिव्याहारश्च नियतपौर्वापर्यम्, एवञ्च क्रियावाचकास्त्यादिपदानां पूर्वापरीभावनियमस्यानङ्गीकारा'द्घटोऽस्ति'–'अस्ति घट'इत्येवमनैयत्येनापि तत्प्रयोगान्नास्त्यादीनां समभिव्याहार इति नोक्तदोषः।

'एतत्सञ्ज्ञे'त्यत्र च–एतस्य सञ्ज्ञेति षष्ठीतत्पुरुषः। एतद्वृत्तित्वविशिष्टसञ्ज्ञाफलभूतेत्यर्थः। तेन–'अधातुरिति किम्? अपि काकः श्येनायते'इति भाष्यं स्वरसत उपपद्यते। कर्मधारये तु–एतत्सञ्ज्ञापदेन·

॥ [illegible] ॥

प्रातिपदिकसञ्ज्ञाया एव प्रवृत्तेः–प्रातिपदिकसञ्ज्ञाफलभूत-स्वादिविभक्त्य [illegible] र्थबोध-जनकत्वेन निरुक्तार्थवत्त्वविरहादेव प्रातिपदिकसञ्ज्ञाऽप्रवृत्त्याऽनुपपत्त्य [illegible] भावात् ।

न च षष्ठीतत्पुरुषेऽपि–'देवदत्तो गार्ग्य' इत्यत्र [illegible] 'गार्ग्य' इत्यस्य तद्धितान्तत्वादिनाऽत्र प्रातिपदिकत्वमिति भाष्योक्तं [illegible]-कथनमनुपपन्नमेव, 'देवदत्त' 'गार्ग्य' इत्यस्य—एतद्वृत्तित्वविशिष्ट—प्रातिपदिकसञ्ज्ञा–फलभूते-तरस्यमान–स्वादिविभक्तीतर–गार्ग्यपदोत्तरसु–समभिव्याहारापेक्षयैवार्थबोधजनकतयाऽर्थवत्त्वाभावेन तत्र प्रातिपदिकत्वापत्तिनिरासासम्भवादिति वाच्यं, 'देवदत्तो गार्ग्य' इत्यत्र सुरहित–'गार्ग्य' इत्यस्य निरुक्तार्थवत्त्वेन–'अर्थवदन्तं यत्तद्धितान्त'मित्यर्थक'कृत्तद्धित'ेति सूत्रेण गार्ग्यवद्देवदत्तो गार्ग्येत्यस्यापि तदापत्तिरित्याशयेन भाष्यसङ्गतेः । 'लोके' इत्युपादानात्—'हरिष्वि'त्यत्र शास्त्रे सोः प्रकृत्यनपेक्षयाऽर्थ-बोधजनकत्वेऽपि नार्थवत्त्वं, लोके सोस्तथा विरहादिति तत्त्वम् । ननु खट्वा गौरी रमेत्यादौ खट्व गौर–रमेत्यादेरर्थवत्त्वं न स्यादेतत्सञ्ज्ञाफलभूतविभक्तीतर-टाप्ङीबादि-समभिव्याहारापेक्षयैव खट्व-रम-इत्यादेरर्थ-विषयकबोधजनकत्वात् , तत्र विभक्तिपदं प्रत्ययोपलक्षणमिति न दोष इति वाच्यम् , 'इन्द्राणी' 'वरुणानी'-त्यादावेतत्सञ्ज्ञाफलभूतप्रत्ययेतराऽऽनुक्समभिव्याहारापेक्षयैव लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्त्वानापत्ते-रिति चेन्न । विभक्तिपदस्य प्रत्ययागमोभयोपलक्षणत्वेनादोषात् । अन्ये तु—विभक्तिपदं व्यर्थमेव, 'एत-त्सञ्ज्ञाफलभूतेतरे'त्येनावश्यैव साम्प्रतत्वादित्याहुः ।

'एधाञ्चक्रे' इत्यत्रैतत्सञ्ज्ञाफलभूतेतर–चक्रे–पदसमभिव्याहारापेक्षयैव तथात्वेनार्थवत्त्वं न स्यादेवञ्चैधामि-त्यत्र सुबनुत्पत्त्या पदत्वाभावेन 'तिङ्ङतिङ'इति निघातानापत्तिः,'वा पदान्तस्ये'ति परसवर्णविकल्पानापत्तिश्च, अतः–'एतत्सञ्ज्ञाफलभूतेतरो यः पदेतर' इति निवेशः कार्यः । नन्वेवं 'रामेषु'इत्यादौ सोरप्यर्थवत्त्वापत्तिः, एतत्सञ्ज्ञाफलभूतेतरो यः पदेतरो घटादिस्तत्समभिव्याहारानपेक्षयैवार्थबोधजनकत्वात् , 'रामे'त्यस्य सम-भिव्याहारेण सोरर्थबोधजनकत्वेपि तस्य 'स्वादिष्वसर्वनामस्थाने'इति पदत्वेन पदेतरत्वाभावादिति वाच्यम् , एतत्सञ्ज्ञाफलभूतेतरो यः–'सुप्तिङन्तं पद'मिति शास्त्रविहितपदसञ्ज्ञकेतर' इत्येवं लक्षणस्वीकारेण 'रामेषु'इत्यत्र 'रामे'त्यस्य 'सुप्तिङन्त'मितिपदसञ्ज्ञकत्वाभावेनादोषात् । न चैवमपि 'परमहरिष्वि'त्यादौ हरिशब्दस्यान्तर्वर्त्तिविभक्त्या सुप्तिङन्तमिति पदत्वादेतत्सञ्ज्ञाफलभूतेतरो यः सुप्तिङन्तमितिपदसञ्ज्ञकेतरो घटादिस्तत्समभिव्याहारानपेक्षयाऽर्थविषयकबोधजनकत्वात्सुपोऽर्थवत्त्वापत्तिरिति वाच्यं, सुपाऽर्थबोधे जननीये परमहरिसमभिव्याहारस्यैव कारणत्वेन तस्य च सुबन्ततदादित्वाभावेन प्रत्ययलक्षणेनापि 'सुप्तिङन्त'-मित्यनेन पदत्वाऽसम्भवेन सोरर्थवत्त्वापत्तेरसम्भवात् ।

नन्वेवमत्रेरपत्यमात्रियः, मधोरपत्यं माधवः, ततः सप्तमीबहुवचने सुपि 'अत्रिभृगुकुत्से'ति गोत्रप्रत्ययलुकि अत्रिषु मधुषु इत्यत्रान्तर्वर्त्तिविभक्त्याऽत्रिमधुशब्दस्य सुप्तिङन्तमितिपदसञ्ज्ञकतया एतत्सञ्ज्ञाफलभूतेतरो यःसुप्ति-ङन्तमिति पदेतरो घटादिस्तत्समभिव्याहारानपेक्षयैवार्थबोधजनकत्वेन सुपोऽर्थवत्त्वापत्तिरिति चेन्न, 'एतत्सञ्ज्ञा-फलभूतेतरो यः स्वादिष्वितिपदत्वानाश्रयपदेतर' इत्यादिक्रमेणार्थवत्त्वस्वीकारेणात्र्यादिशब्दानां स्वादिष्वितिपद-त्वाश्रयतया–स्वादिष्वितिपदत्वानाश्रय-घटादिपदेतरोऽत्रिशब्दो मधुशब्दश्च–तत्समभिव्याहारापेक्षयैवार्थबोध-जनकत्वेन सोरर्थवत्त्वापत्त्यभावात् । एवं निवेशे च 'एधाञ्चक्रे'इत्यत्र–एतत्सञ्ज्ञाफलभूतेतरो यः स्वादि-ष्वितिपदत्वानाश्रय–'चक्रे' इति पदेतरो-घटादिस्तत्समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वेनैधा-मित्यस्यार्थवत्त्वमिति समन्वयोऽपि बोध्यः ।

यत्तु—'एतत्सञ्ज्ञाफलभूतेतरो यस्तिङन्तेतरः–'इत्येवं निवेशादत्रिषु मधुषु इत्यादावेतत्सञ्ज्ञाफलभूते-तर–तिङन्तेतर–स्वप्रकृतिभूतात्रिमध्वादिसमभिव्याहारापेक्षयैव तथात्वेन सुपो नार्थवत्त्वम् , 'एधाञ्चक्रे' इत्यत्र तु

❀ वरवर्णिनी ❀

—एतत्सञ्ज्ञाफलभूतेतरो यश्चक्रे इति, स न तिङन्तेतरः, किन्तु तिङन्त एवेति घटपटादिकमुदासीनमादायार्थवत्त्वं सूपपादमिति—'एतत्सञ्ज्ञाफलभूतेतरो यः स्वादिष्वितिपदत्वानाश्रयपदेतर' इत्येवंरीत्या गुरुनिवेशादरो व्यर्थ इत्याहुः । तन्न । अ इवाचर—अ, अ—अभवाव इति सततं यस्मिन्कर्मणि तत्—आभवावम् । तेषु—आभवावेषु—इत्यत्र—'आख्यातमाख्यातेने'ति समासे परादिवद्भावेन 'आभवावे'ष्वित्यस्य समुदायस्य तिङन्ततया—'एतत्सञ्ज्ञाफलभूतेतर—तिङन्तेतर-घटाद्युदासीनसमभिव्याहारानपेक्षयाऽर्थबोधजनकत्वात्सुपोऽर्थवत्त्वापत्तेः । किञ्च—'नत्विभ'इत्यादौ कोशादिप्रामाण्यात्पूर्वपदसमभिव्याहृतानामेव निभादीनामर्थबोधजनकत्वस्वाभाव्योपगमेन तत्सञ्ज्ञाफलभूतेतर—तिङन्तेतर—तत्पदादिसमभिव्याहारापेक्षयैवार्थबोधजनकत्वादर्थवत्त्वानापत्त्या स्वाद्यनुत्पत्तिप्रसङ्गात्समासानापत्तेः । तदेवम्—'एतत्सञ्ज्ञाफलभूतेतर—स्वादिष्वितिपदत्वानाश्रयपदेतर—समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्व'मर्थवत्त्वं पर्यवसन्नम् ।

नन्वेवमपि—'पञ्चगवधन' इत्यादावेतत्सञ्ज्ञाफलभूतेतर—स्वादिष्वितिपदत्वानाश्रय धनपदेतर-घटादि—समभिव्याहारानपेक्षयाऽर्थबोधजनकत्वात्पञ्चगवेतिटजन्तमात्रस्यार्थवत्त्वापत्तिरिति चेन्न, 'एतत्सञ्ज्ञाफलभूतेतर-स्ववृत्तिसञ्ज्ञानाश्रयपदेतरे'त्यादिरीत्याऽर्थवत्त्वस्वीकारेण 'पञ्चगवे'त्यस्य स्ववृत्तिसमाससञ्ज्ञानाश्रयोदासीनघटादिपदेतर-धनपद-समभिव्याहारापेक्षयैवार्थबोधजनकत्वादर्थवत्त्वविरहेण निरुक्तदोषनिराससम्भवात् । नन्वेवमपि 'कुम्भकार'इत्यत्रैतत्सञ्ज्ञाफलभूतेतर—स्ववृत्तिसञ्ज्ञानाश्रयोदासीनघटादिपदेतर-कुम्भपद—समभिव्याहारेणैवार्थबोधजनकतयाऽर्थवत्त्वानापत्तिरिति प्रातिपदिकत्वविरहेण ढकोऽप्राप्त्या—'अन्यथा कुम्भकारेयोऽप्यापद्येते'ति शेखरासङ्गतिर्दुरुद्धरेति चेन्न, 'एतत्सञ्ज्ञाफलभूतेतर—स्ववृत्तिसञ्ज्ञानाश्रयपदेतर—पूर्वपदेतर—समभिव्याहारानपेक्षये'त्येवंरीत्याऽर्थवत्त्वपरिष्कारेण 'कुम्भे'त्यस्य पूर्वपदेतरत्वाभावेनोदासीनमादायार्थवत्त्वस्योपपादनीयतया शेखरसङ्गतेः स्पष्टत्वात् ।

'एतत्सञ्ज्ञाफलभूतेतरो यः—स्ववृत्तिसञ्ज्ञानाश्रयस्वोत्तरेतरस्तदितरसमभिव्याहारानपेक्षये'त्यादिरीत्या लक्षणस्वीकारस्तु कुम्भकारादौ स्वोत्तरेतर—पूर्वपदेतरोदासीनसमभिव्याहारानपेक्षयाऽर्थबोधजनकतया कारादेरर्थवत्त्वोपपादनेऽपि—'हरिषु' इत्यादौ—स्ववृत्तिप्रातिपदिकसञ्ज्ञानाश्रय—स्वोत्तरेतर—हरिपदेतर—घटादिसमभिव्याहारानपेक्षया तथात्वात्सुपोऽर्थवत्त्वापत्त्या-नोचित इत्यस्मद्गुरुचरणाः पण्डितैकशेष—शेषावतार—श्रीहरनारायणत्रिपाठिपादा आहुः ।

'पक्त्रिम'मित्यादौ 'पक्त्रि'इत्यस्य या प्रातिपदिकसञ्ज्ञा, तत्फलभूतेतरः स्ववृत्तिप्रातिपदिकसञ्ज्ञानाश्रय-घटादिपदेतर-पूर्वपदेतरः—सु(विभक्ति)स्तत्समभिव्याहारापेक्षयैवार्थबोधजनकत्वेन 'पक्त्री'त्यस्यार्थवत्त्वानापत्त्याऽप्रातिपदिकत्वान्मप्प्रत्ययो न स्यादिति तु नाशङ्कनीयं, तादृशसुविभक्तेरपि 'पक्त्रि' इत्येतद्वृत्तिप्रातिपदिकसञ्ज्ञाप्रयोज्यत्वस्य परम्परयाऽक्षततया एतत्सञ्ज्ञाफलभूतत्वेन तदितरत्वाभावेनार्थवत्त्वस्य सुलभत्वात् ।

अथैवमपि 'एधामासतु.कल्प'मित्यत्र 'आसतुःकल्पे'त्यस्यार्थवत्त्वं न स्यात् , तथाहि—स्वम्—आसतुरिति, तद्वृत्ति—पदसञ्ज्ञा-ऽनाश्रयपदं—न—एधामितिपदं, पाणिनिसङ्केतसम्बन्धेन पदवत्त्वरूपपदत्वस्य तत्रापि सत्त्वात्, किन्तूदासीनं पदं, तदितर—(-समासाऽऽवयवरूप-)—पूर्वपदेतर—'एधा'मित्येतत्समभिव्याहारापेक्षयैव लोकेऽर्थविषयकबोधजनकत्वादिति चेदत्र केचित्—'एतत्सञ्ज्ञाफलभूतेतरो यः स्वादिष्वितिपदत्वानाश्रयपूर्वपदेतर-स्ववृत्तिसञ्ज्ञानाश्रयपदेतरस्तभिव्याहारानपेक्षये'त्येवंरीत्याऽर्थवत्त्वस्वीकारेण 'एधा'मित्यस्य स्वादिष्वितिपदत्वानाश्रयपूर्वपदतया तदितरत्वाभावेनासतुःकल्पेत्यस्यार्थवत्त्वसौलभ्यमित्याहुरित्यस्मद्गुरवस्त्रिपाठिपादाः । अत्रत्यं तत्त्वमस्मत्कृतशेखराभिनवराजलक्ष्म्यां, श्रीबालशास्त्रिगुरुवरकृते शेखरजटाजूटे, तदनुगामिन्यास्मत्पितामहचरणकृतशेखरत्रिपुरसुन्दर्याञ्च द्रष्टव्यः ।

रुत्तरसूत्रे कृदादीनामनर्थकानामप्रसिद्धेस्तद्वैयर्थ्यं स्यात् ।

॥ अभिनव-चन्द्रिका ॥

स्यादेतत्—'मूलकेनोपदंश'मित्यादौ 'उपदंश'मित्यस्यार्थवत्त्वन्न स्यात् । 'उपदंश-मित्यस्य उपदंशनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतर'मूलकेने'त्येतत्समभिव्याहारेणैव लोकेऽर्थ-विषयकबोधजनकत्वात् । एवम्–'एधानामनुःकल'मित्यादौ 'आनतुःकल'मित्यस्यार्थवत्त्वन्न स्यात् । अन्यत्रार्धधातुके अस्धातोः प्रयोगाभावेना'मनुःकल'निष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरैधामि-त्येतत्समभिव्याहारेणैवा'मनुःकले'त्यस्य लोकेऽर्थविषयकबोधजनकत्वादिति चेन्मैवम्, यस्यार्थवत्त्वं वक्तव्यं तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रय–स्वादिष्विति पदत्वानाश्रयपूर्वपदे–तदन्यतरेतरसमभि-व्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमिति परिष्कारेणादोषात् । पूर्वपदे 'स्वादिष्विति-पदत्वानाश्रये'त्युक्त्या 'हरिषु' 'चञ्चास्ति'त्यादौ मोर्नार्थवत्त्वम् । नच 'पञ्चनावप्रियपुत्र' इत्यादौ 'पञ्च-नावे'त्यस्यार्थवत्त्वं स्यात्, 'प्रिये'त्यस्य पूर्वपदत्वादिति वाच्यं, 'पूर्वपदे'त्यत्र 'नियतपूर्वत्ववत्पदे'त्यस्य

॥ चिदस्थिमाला ॥

अत्र सूत्रेऽनर्थकव्यावृत्तिसिद्धेरित्यर्थः । ननूत्तरसूत्रेऽनर्थकनिवृत्त्यर्थं तदस्त्वत आह—**उत्तरेति** । स्वार्थिकानामपि तत एवार्थवत्त्वमिति भावः । **तद्वैयर्थ्यमिति** । अर्थवत्पदवैयर्थ्यमित्यर्थः ।

॥ ज्योत्स्ना ॥

फलं 'वेस्कन्देरनिष्ठाया'मित्यनेन विहितषत्वस्य तिङन्तेष्वपि प्रवृत्तिः । अन्यथा निष्ठामद्देशेषु कृदन्ते-

॥ विषमपदविवृतिः ॥

टापः व्रजतीति तिङन्तस्याध्येत्रणश्चामन्तादिति निमित्ततया शास्त्रेऽनाश्रयणात् । 'कर्मण्य'णित्यस्य 'कर्मोपपदसञ्ज्ञकं भवति, धातोश्चा'णिति वाक्यार्थे निमित्तीभावस्यानाश्रयणेपि 'तत्रोपपदं सप्तमीस्थ'-मित्येतदेकवाक्यतया 'कुम्भे'त्यादेः कर्मणोऽण्निमित्ततयाऽऽश्रयणमस्त्येव । 'तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्यय' इति तदर्थात् । तेन 'कारेत्यस्य न प्रातिपदिकत्व'मिति स्त्रीप्रत्ययस्थशेखरोपपत्तिः । वस्तुतस्तु

॥ वरवर्णिनी ॥

**परेत्वेवं व्याचक्षते—अर्थवदितीति** । 'अर्थाच्चासन्निहिते' इति इनिप्रत्ययस्तु न शक्यः, द्रव्यवाचकस्यैव तत्र ग्रहणात्, तादृशार्थे चायमेव निर्देशो लिङ्गम् । **अधातुरित्यादिरिति** । 'परव-ल्लिङ्गं द्वन्द्वतत्पुरुषयो'रित्यनेन धातुपदस्यैव लिङ्गविधानान्न तत्पुरुषस्य विशेष्यनिघ्नत्वम् । **पर्युदास इति** । धातुभिन्नो धातुसदृश इत्येवंरूपः । 'धातुभिन्न' इत्यस्य–धातुनिष्ठप्रतियोगिताकभेदवानित्यर्थः । प्रतियोगि-तायां धातुनिष्ठत्वविशेषणेपि धातुत्वावच्छिन्नत्वं विशेषणं देयम् । तेन भूधातुनिष्ठप्रतियोगिताकभेदस्य एध-धातौ सत्त्वेपि नाऽव्याप्तिः । धातुनिष्ठत्वविशेषणेन–'धातुत्वेन घटो ने'ति व्यधिकरणधर्मावच्छिन्नप्रति-योगिताकभेदमादाय नाव्याप्तिः । ननु 'धातुत्वावच्छिन्ने'त्यस्य–धातुत्वनिष्ठावच्छेदकतानिरूपिकेत्यर्थः, 'धातुघटोभयं ने'त्युभयभेदीयप्रतियोगितावच्छेदकताया धातुत्वे घटत्वे द्वित्वे च सत्त्वेन धातुत्वेपि सत्त्वा-द्दूषणं तदवस्थमेव । न च तदितरधर्मावच्छिन्नत्वविशेषणेन न दोष इति वाच्यं, धातुत्वस्यापि 'धातुत्व-घटोभयं ने'त्युभयभेदीयधातुत्वनिष्ठप्रतियोगिताकभेदवत्त्वेन प्रतियोगितायाश्च धातुत्वावच्छिन्नत्वेन इतर-धर्मानवच्छिन्नत्वस्याऽसम्भवात् । न चैवं धातुत्वपर्याप्तावच्छेदकताकप्रतियोगिताकभेदवदित्यर्थः । ततश्चात्र उभयभेदीयप्रतियोगितावच्छेदकता धातुत्वघटत्वद्वित्वेतत्त्रितये पर्याप्ता न तु धातुत्वे इति न दोष इति वाच्यं, प्रत्येकमपर्याप्तस्य धर्मस्य समुदाये पर्याप्त्ययोगेन धातुत्वेपि अवच्छेदकतापर्याप्तेः सत्त्वादिति चेन्न । धातुत्वगतं यदेकत्वं तादृशैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकप्रतियोगिताकभेदवदित्यर्थात्— 'धातुघटोभयं ने'त्युभयभेदीयप्रतियोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं तत्त्रितयगतं

न च 'नञिवयुक्त'न्यायानित्यत्वज्ञापनार्थं तत्, तदनित्यत्वज्ञापने भाष्यसम्मतदृढतरफलाभावात् । 'अहन्' 'काण्डे' इत्यादावेतत्साध्यविभक्त्यनपेक्षत्वेऽपि

ॐ अभिनव-चन्द्रिका ॐ

निवेशनादोषात् । अत एव 'नञिभः' 'कुम्भकार' इत्यादौ कार-निभादीनामर्थवत्त्वं सिध्यति, 'निभसंकाशनीकाशप्रतीकाशे' त्यादिकोशप्रामाण्येन निभादीनां पूर्वपदसमभिव्याहाराभावेऽसाधुत्वेऽपि, उपपदसमासस्य नित्यत्वेन तदभावे कारादीनामप्रयोगेऽपि तदितरसमभिव्याहारानपेक्षणादित्याहुः । **भाष्यसम्मतदृढतरफलाभावादिति** । 'भाष्यसम्मते'त्युक्त्या-'अनची'त्यत्र पर्युदासस्वीकारेऽपि नञिवयुक्तन्यायानित्यत्वेन वागित्यादिद्वित्वसिद्धेः फलसत्त्वेऽपि भाष्ये प्रसज्यप्रतिषेधस्यैव स्वीकारेण नैतन्नञिवयुक्तन्यायानित्यत्वस्य फलमिति बोधितम् । 'दृढतरे'त्युक्त्या-'वेः स्कन्देरनिष्ठाया'मित्यस्य एतन्न्यायानित्यत्वात्तिङन्तेऽपि प्रवृत्तिरूपफलसत्त्वेऽपि 'तिङन्ते षत्वं जायते न वे'-त्यत्र नियामकाभावान्नैतदनित्यत्वस्य दृढतरं फलमिति बोधितम् । ननु 'एतत्सञ्ज्ञाफलभूतविभक्तिसमभिव्याहारापेक्षया लोकेऽर्थविषयकबोधजनकत्व'मित्यनेनैव सिद्धे नञ इतरपदस्य चोपादानं व्यर्थमित्याशङ्क्याह—**अहन्काण्डे इत्यादि** ।

ॐ चिदस्थिमाला ॐ

तथाच तत्सामर्थ्यादुक्तार्थलाभ इति भावः । एतेनात्र सूत्रे ईदृशार्थग्रहणे मानाभाव इत्यपास्तम् ।

अत्र सूत्रे एव तत्सफलमिति शङ्कते—**नच नञिवेति** । 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' । नञ्युक्तमिवयुक्तं वा यत्किञ्चिद्दृश्यते तत्र तस्माद्भिन्ने तत्सदृशेऽधिकरणे=द्रव्ये कार्यं विज्ञायते, हि=यतः तथार्थावगतिरस्ति, नह्यब्राह्मणमानयेत्युक्ते लोष्ठमानीय कृती भवतीत्यर्थः । तत्=अर्थवत्पदम् । यत्किञ्चित्फलसत्त्वादाह—**भाष्येति** । नन्वीदृशार्थवत्त्वग्रहे धातुप्रत्ययान्तपर्युदासौ व्यर्थौ, तयोस्तत्त्वाभावादत आह—**अहनिति** । एतेन—'विभक्तीतरानपेक्षत्वे सत्यन्वयव्यतिरेकाभ्यां प्रत्यायकत्व'मर्थवत्त्वम्, एवञ्चाधातुग्रहणमपि सुत्यजम्, विभक्तीतरकृदादिसापेक्षत्वेन धातोः प्रशस्तार्थवत्त्वाभावादिति **रत्नाकरोक्तमपास्तम्** । **एतत्साध्येति** । प्रातिपदिकसञ्ज्ञासाध्येत्यर्थः । **अनपेक्षत्वेपीति** । 'विभक्तिसमभिव्याहारापेक्षये'ति लघुभूतनिवेशे तु तत एव वारणे तदानर्थक्यापत्तिरेवेति भावः । तथाचान्यसङ्ग्रहार्थं नञर्थद्वयघटितमेव तन्निविष्टं, तदाह—**तदितरेति** ।

ॐ ज्योत्स्ना ॐ

ष्वेव तत्प्रवृत्तिः स्यादतः फलभावोक्तिरयुक्तेत्याशङ्क्य फलं-भाष्यसम्मतत्वेन विशेषयति—**भाष्यसम्मतेति** । एवञ्च न्यायाप्रवृत्तौ भाष्यसम्मत्यभावात्तत्र तत्प्रवृत्तोर्वृत्त्यादिसम्मतत्वाच्च कृदन्तेष्वेव षत्वप्रवृत्तिः ।

ॐ विषमपदविवृतिः ॐ

'सन्नियोगशिष्ट'न्यायेनैव 'तास्मिंश्च सत्येव वक्ष्यमाणः प्रत्यय' इत्यर्थलाभे 'तत्रे'त्यस्य तदर्थकस्यानाश्रयणेन 'कुम्भे'त्यस्य शास्त्रे न निमित्तत्वेनाश्रयणमिति—स्त्रीप्रत्ययस्थशेखरोऽसङ्गत एव । 'गतिकारकोपपदाना'मित्यत्रोपपदग्रहणं सार्थकं, 'दधिसेचा'वित्यादौ दधीत्याद्युपपदस्य सुबन्तेन समासश्चोपपद्यते ; तेन मूलकोपदंशमित्यत्रोपदंशमित्यस्य प्रातिपदिकत्वसिद्धिः । प्रादीनामुपसर्गसञ्ज्ञायां धातोर्निमित्तत्वेपि प्रयोगेऽनिमित्तत्वान्न दोषः । 'ते प्राग्धातो'रित्यत्र सञ्ज्ञानियमपक्षाश्रयणात् ।

नन्वेतत्सञ्ज्ञाफलभूतविभक्त्यपेक्षया लोकेऽर्थबोधजनकत्वमित्येतावदेवास्तु, कृतं नञ्द्वयप्रवेशेनेत्यत आह—**अहन्निति** । तथा चाधातुरित्यादिपर्युदाससार्थक्याय नञ्द्वयप्रवेश इति भावः । न च नञ्द्वय-

ॐ वरवर्णिनी ॐ

त्रित्वं न तु धातुत्वगतमेकत्वं, न्यूनवृत्तित्वात्, अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वस्वीकारो नान्यस्येति न दूषणम् । अत्र नैयायिकाः-'प्रतियोग्यवृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वम्' 'अनुयोगिता-

तदितरानपेक्षत्वमस्त्येवेति तत्पर्युदासः सार्थकः । न च तत्केवलप्रत्ययस्य ।

ॐ चिद्स्थिमाला ॐ

विभक्तीनरेत्यर्थः । तत्पर्युदास इति । धातु-प्रत्ययान्तपर्युदास इत्यर्थः । अर्थवत्-सूत्रस्थेन प्रकृत्यर्थ-वत्त्वनिर्वचने यदि लघुभूतनिवेशेनाहन्काण्डे इत्यादावतिव्याप्तिरित्युच्यते तर्हि पर्युदासद्वयानर्थक्येऽपि तद्व्या-घनङ्गुहापत्तिरतो नञर्थद्वयघटितमेव तत्रागिति सम्मतमिति न तदानर्थक्यमित्याह—सार्थक इति । अत एवे-त्तरसूत्रे कृत्तद्धितग्रहणं सफलम् । कृत्तद्धितग्रहणं नियमार्थमाश्रित्य तत्प्रत्याख्यानं भाष्ये- इत्यन्यदेतदिति भावः। अत एव सूत्रकृतः प्रत्ययपर्युदासो नाभिमतः, भाष्यकृतोऽपि तथा; अनुक्तत्वात्। एवञ्च स व्यर्थ एवे-त्याह—न चेति । नहीत्यर्थः। तत्=उक्तप्रकारसार्थकत्वं, तथार्थकत्वस्य तत्सम्मतत्वादिकत्वम्। केवलप्रत्ययस्येति।

ॐ ज्योत्स्ना ॐ

अत एवा'कर्तरि च कारके सञ्ज्ञाया'मिति सूत्रे भाष्ये'ऽकर्तरीति कर्तृग्रहणस्य कारकस्य ग्रहणात्-कारकग्रहणं न कर्तव्य'मित्युक्तम् । नन्वेमपि अर्वतः पदान्यर्वन्पदानीत्यत्र विभक्तिलुकि त्रादेशो न प्राप्नोति, 'असा'वित्यनेन नञा युक्तेन सोरन्यसदृशविभक्तेरेव तन्निमित्तत्वापातात् । नचेष्टापत्तिः, मतुबन्ततामाश्रित्य त्रादेशप्रत्याख्यानपरभाष्येण तान्तप्रयोगस्य विभक्तिलुक्यपि सम्मतत्वा'-दित्याशङ्क्य भाष्यसम्मतेर्दार्ढ्यप्रयोजकत्वाभावेन परिहरति—दद्वेति । तस्यायं भावः,—उक्तप्रत्याख्यानरीत्या तान्तस्यानियमेन प्रयोगे प्राप्तेऽपि सूत्रारम्भपक्षेणैकवाक्यतया सौ नञ्पूर्वे च प्रयोगो यथा नेष्यते—तथा विभक्तिलुक्यपीति । तथाच श्रीहर्षः—'वाहैरलुप्यत सहस्र-

ॐ सदाशिवभट्टीयम् ॐ

मिति परिष्कुर्वते । नच तत्केवलप्रत्ययस्येति । 'अलुतप्रकृतिकस्ये'त्यादिः। अत 'इयान्''इ'त्यादौ तत्सत्त्वेपि न क्षतिः, अन्यथा तत्रैवातिव्याप्तिवारणार्थं प्रत्ययपर्युदासः स्यात्। तस्य तु व्यपदेशिवद्भावेन प्रत्यया-

ॐ विषमपदविवृतिः ॐ

प्रवेशोऽधातुरिति पर्युदासश्च मास्त्विति वाच्यं, 'दधि पश्य' 'राजपुरुष' इत्यादौ 'दधि' 'राजे'त्यस्य प्रातिपदिकत्वानापत्तेः । नचेति । नहीत्यर्थः । यद्यप्यस्यापत्यमिर्व्यतिसे इत्यादौ केवलप्रत्ययस्या-

ॐ वरवर्णिनी ॐ

वच्छेदकस्यैव विशेष्यतावच्छेदकत्व'मितिनियमद्वयम् । अत एव 'मनुष्यो न ब्राह्मण' इति न प्रयोगः, मनुष्यत्वस्य प्रतियोगिब्राह्मणवृत्तित्वात्। एव प्रकृतेपि अर्थवत्त्वस्य प्रतियोगिधातुवृत्तित्वाद्धातुभिन्नमर्थवदिति-विशेष्यविशेषणभावो न सम्भवतीत्याहुस्तन्न, 'प्रतियोगिवृत्तिधर्मस्यैव अनुयोगितावच्छेदकत्व'मितिनियमस्य भेदविधेयकस्थले एव स्वीकारात्, अत एव 'ब्राह्मणभिन्नं मनुष्यमानये'तिप्रयोगोपपत्तिः । यद्वा—द्वितीयनियमो नाश्रीयते इति न दोषः । अत्रापि पूर्वोक्तप्रयोग एव प्रमाणम् । प्रत्ययान्तमितीति । ननु प्रत्ययान्तपर्युदासो विफलः, प्रत्ययपर्युदासेनैव गतार्थत्वात् , प्रत्येकवृत्तिधर्मावच्छिन्नप्रतियोगिताक-व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदस्यानङ्गीकारेण तस्यापि प्रत्ययत्वादिति चेन्न; तादृशभेदस्या-नङ्गीकारेपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदस्याङ्गीकाराद । उक्तभेदस्यानङ्गीकारे बीजञ्च—'घटपटौ न घट' इत्यत्र अनुयोगितावच्छेदकावच्छेदेन प्रतियोगितावच्छेदकता-पर्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदाऽप्रतीतिरेव । अनुयोगितावच्छेदकं घटत्वं पटत्वं द्वित्वञ्च, तत्र पटत्वद्वित्वाधिकरणे तादृशभेदप्रतीतावपि घटत्वाधिकरणे भेदाप्रतीत्या तद्व्यापकत्वाभावाद । 'घटपट-मठा न घटपटौ'इत्यत्र प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणो धर्मः पटत्वघटत्वविशिष्टं द्वित्वं, तद्धर्मा-वच्छिन्नप्रतियोगिताकभेदस्य घटत्वाधिकरणे पटत्वाधिकरणे मठत्वाधिकरणे त्रित्वाधिकरणे च प्रतीत्या तादृशभेदानङ्गीकारे मानाभावः। अत एव 'समुदायस्य सखिरूपत्वाभावेने'त्यादिव्याख्यातं मूलकृता ।

तदुक्तं—'सङ्ख्याया अतिशदन्ताया' इति सूत्रे भाष्ये—'न हि लोके केवलेन प्रत्ययेनार्थो गम्यते, केन तर्हि ? सप्रकृतिकेने'ति । हरिरप्याह—

'धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते ।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ।' इति

ॐ चिदस्थिमाला ॐ

ननु 'व्यतिसे' इत्यादावलौकिकप्रक्रियावाक्ये प्रत्ययान्तत्वेन पर्युदासेऽप्यस्तेर्लोपे 'से' इति प्रत्ययमात्रस्य प्रशस्तार्थवत्त्वात्सञ्ज्ञापत्तिरिति तत्पर्युदासोऽप्यावश्यक इति वाच्यं, 'से' इत्येतावन्मात्रेणार्थानवगमेन सोपसर्गादेव तदवगमेन प्रत्ययमात्रस्यातथात्वात् । व्यपदेशिवद्भावेन प्रत्ययान्तपर्युदासप्राप्तेश्च । अत एव तत्र पदत्वसिद्धिः, लोके तत्प्रयोगस्यैवाभावाच्चेति दिक् । विशुद्धानां=केवलानां, प्रत्ययरहितानामिति यावत् । लौकिकः=लोकविदितः । **न विद्यते इति** । तावन्मात्रप्रयोगाभावादिति भावः । एवमग्रेऽपि । चोऽप्यर्थे, 'कृत्तद्धिताना'मित्यग्रे योज्यः । **अलौकिक इति** । लौकिको नास्तीत्यर्थः । 'असूर्य'मित्यादिसामान्यापेक्ष-ज्ञापकादसमर्थसमास इति केचित् । वस्तुतस्तु नञर्थकोऽकारोऽत्र, तेन पदभेद एवेति बोध्यम् । तदन्तस्य= कृत्तद्धितान्तस्य । तथैव=लौकिक एव । एवकारेण शास्त्रवासनाकल्पितान्वयव्यतिरेकाभ्यां व्यवस्थापनीयैव

ॐ ज्योत्स्ना ॐ

दृगर्वगर्वे'इति नान्तमेव तत्र प्रयुक्तम् । स्यादेतत्-'अनचि चे'त्यत्रानचीत्यनेनाजन्यसदृशहलः प्रत्यायनादवसाने द्वित्वं न प्राप्नोतीति तत्र द्वित्वं नञिवयुक्तन्यायानित्यत्वफलं भवितुमर्हति । नचेदं भाष्यसम्मतिप्रयोज्यदार्ढ्याभाववत्,-वाक्क वाग्ग्-इत्यवसाने द्वित्वस्य भगवता कण्ठरवेणैव प्रदर्शितत्वादित्याशङ्क्यातिशायिकप्रयोगेण समाधत्ते—**तरेति** । व्याख्यानात्, 'सुडनपुंसकस्ये'-त्यादिज्ञापकादसमर्थसमासस्य क्वचिदङ्गीकाराच्चोक्तस्य फलस्यान्यथासिद्धत्वादिति भावः । **विशुद्धाना-मिति** । प्रत्ययरहितानां केवलानामित्यर्थः । **लौकिकोऽर्थो न विद्यत इति** । धात्वादीनां विशुद्धाना-

ॐ सदाशिवभट्टीयम् ॐ

न्तत्वात् प्रत्ययान्तपर्युदासेनैव सञ्ज्ञावारणाच्च, पूर्वं जाताया आतिदेशेन सत्त्वेऽपि न क्षतिः ।

ॐ विषमपदविवृतिः ॐ

प्युक्तार्थबोधकत्वमस्ति तथाप्याद्ये तद्धितान्तत्वेन प्रातिपदिकत्वमिष्टमेव, अत्यन्तु प्रत्ययान्तपर्युदासेनापि व्यावर्त्यम् । तथा च प्रातिपदिकत्वाल्लक्ष्यप्रत्ययान्तपर्युदासाव्यावर्त्येदृशार्थबोधकं न किञ्चित्प्रत्यय-सञ्ज्ञकमस्तीति तात्पर्यम् । **विशुद्धानां** = प्रत्ययरहितानाम् । 'कृत्तद्धिताना'मित्यादेः—कृत्तद्धितानां

ॐ वरवर्णिनी ॐ

एवञ्च प्रकृते प्रत्ययत्वस्य व्यासज्यवृत्तित्वेन तदवच्छिन्नप्रतियोगिताकभेदस्य प्रत्ययान्ते सत्त्वात्प्रत्ययान्त-पर्युदासः सार्थक इति बोध्यमित्यस्मद्गुरुचरणाः ।

अत्र प्राचीनमते पूर्वसूत्रेऽर्थवत्त्वं 'शक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यबोधतात्पर्येणोच्चरितत्वम्', उत्तरसूत्रे 'एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्व'मिति उभयविधस्वीकारे गौरवं, शब्दाधिकारस्वीकारे च । किञ्च प्रत्ययपदस्यावृत्तौ गौरवमर्थवद्ग्रहणवैयर्थ्यं चेत्यत आह—**अत्र सूत्रे इति** । **एतत्सञ्ज्ञेति** । अत्र केचित्-'एतत्सञ्ज्ञे'त्यत्र एषा चासौ सञ्ज्ञेति समासः ? एतस्य सञ्ज्ञेति वा ? नाद्यः, राज्ञः पुरुष इत्येतद्घटक-'राज्ञः पुरुषे'त्यस्य प्रातिपदिकसञ्ज्ञापत्तेः, प्रातिपदिकसञ्ज्ञाफलभूतविभक्तीतरानपेक्षत्वेन अर्थवत्त्वात् । न च समासग्रहणनियमेन तद्व्यावृत्तिः, उत्तरभागस्य 'पुरुषे'त्यस्य स्वातन्त्र्येण प्रयोगानर्हत्वेन नियमानाक्रान्तेः ।

अत एव पदसञ्ज्ञासूत्रेऽन्तग्रहणस्य सञ्ज्ञाविधौ तदन्तविध्यभावज्ञापकत्वे

ॐ अभिनव-चन्द्रिका ॐ

अत एवेति । सूत्रद्वयसाधारणनिरुक्तार्थवत्त्वस्वीकारादेवेत्यर्थः । प्रत्ययेऽत्वनिष्ठ्यासिदाना-

ॐ चिदस्थिमाला ॐ

शास्त्रव्यवस्थाहेतुरर्थवत्ता तेषां सर्वेषामस्तीति ध्वनितम् । अत एव=सूत्रद्वये तत्सामर्थ्यात्तथार्थवत्त्वस्याभिन-नत्वादेव । पदसञ्ज्ञेति । 'सुप्तिङन्त'मिति सूत्रे इत्यर्थः । ज्ञापकत्वे इति । सति सप्तमी । वर्तते

ॐ ज्योत्स्ना ॐ

मिति–पूर्वत्रैव 'कृत्तद्धितानामर्थश्च केवलाना'मित्युत्तरत्राप्यन्वेति । 'अलौकिक'इत्येतत्तु-'प्राग्विभक्ते-स्तदन्तस्य तथैवार्थो न विद्यते' इत्युत्तरत्रैवान्वेति । विभक्तेः प्राक्=पूर्वभागे विद्यमानस्य तदन्तस्य=कृत्त-द्धितान्तस्य, अलौकिकः=शास्त्रीयोऽर्थस्तथैव=धात्वादीनामिव नास्तीत्यर्थः । अत्र कृत्तद्धितान्तस्य

ॐ सदाशिवभट्टीयम् ॐ

अत एव पदेति । सूत्रद्वये तत्सामर्थ्यात्तथार्थवत्त्वस्याभिन्नत्वादेवेत्यर्थः । अत एव भाष्यकैयटोभयोप-न्यासः, भाष्यमात्रोपन्यासे तूत्तरत्रैव तथार्थवत्त्वं लभ्येत, कैयटाच्च यथा लाभः पूर्वत्र तथार्थवत्त्वस्य तथा

ॐ विषमपदविवृतिः ॐ

केवलानां प्रकृत्यसमभिव्याहृतानामर्थो लौकिकः=लोके प्रतीयमान इत्यर्थः । प्राग्विभक्तेः=विभक्त्यु-त्पत्तेः प्राक् । तदन्तस्य=कृत्तद्धितान्तस्य । तथैवार्थः=लौकिकोऽर्थः—न विद्यत इत्यत्रान्वयः ।

ॐ वरवर्णिनी ॐ

'देवदत्तो गार्ग्य'त्यस्य प्रत्ययग्रहणपरिभाषया व्यावृत्तिपरभाष्यलापनाय 'उत्तरभागे स्वातन्त्र्येण प्रयोगार्हत्वस्य निवेशः, अन्यथा तत्रापि नियमेनैव वारणात्परिभाषया कृतस्य वारणस्यासङ्गतिःस्पष्टैव । किञ्च 'अपि काकः श्येनायते'इत्यत्र प्रत्ययान्तपर्युदासाभावे श्येनायेत्यस्य प्रतिपदिकत्वापादनपरभाष्याऽसङ्गतिः, प्रातिपदिकसञ्ज्ञा-फलभूतविभक्तीतरतिङ्विभक्तिसापेक्षत्वेन अर्थवत्त्वाभावात् । नाप्यन्त्यः 'देवदत्तो गार्ग्ये'तिसमुदायस्य पत्तन्निष्ठो-द्देश्यतानिरूपितविधेयताश्रया या सञ्ज्ञा तत्सञ्ज्ञाफलभूता विभक्तिरागामिनी विभक्तिस्तदितरा गार्ग्यप्रकृतिका विभक्तिस्तदपेक्षत्वेन अर्थवत्त्वाभावादेवाप्राप्त्या परिभाषया कृतस्य वारणस्यासङ्गत्यापत्तेरितिचेन्न, अर्थवदन्तं यत्तद्धितान्तमित्यर्थेन भाष्यसङ्गतेः स्पष्टत्वात् । नच प्रत्ययनिष्ठोद्देश्यतया सञ्ज्ञाविधाविनिनिषेधापत्तिरिति वाच्यं, तस्या अनित्यत्वात् । केचित्तु एषा चासौ सञ्ज्ञेति कर्मधारयेपि न दोषः । 'देवदत्तेन कृत'मित्यत्र तु न दोषः, नियमार्थमुत्तरभागे स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वनिवेशे विभक्तीतरानपेक्षयेति विशेषणं देयं, तेनैव चात्रापि नियमसिद्धेरिति । 'देवदत्तो गार्ग्ये'त्यत्र तु 'गार्ग्ये'त्यस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वेपि समुदायस्य वक्ष्यमाणार्थवत्त्वाभावान्न नियमप्रसक्तिरिति न दोष इत्याहुस्तन्न । 'देवदत्तो गार्ग्य'इतिसमुदायघटक-'देवदत्तो गार्ग्ये'त्यस्येव 'राजा पुरुष' इत्यत्रत्य–'राजा पुरुषे'त्यस्यापि वक्ष्यमाणार्थवत्त्वाभावेन नियमा-प्रसक्त्या दोषस्य सत्त्वात् । 'विभक्तीतरसमभिव्याहारानपेक्षये'त्यत्र विभक्त्यपेक्षत्वोक्तौ दधीत्यादीनामर्थ-वत्त्वानापत्तिः । समभिव्याहारपदाभावे सर्वस्य वाक्यस्य क्रियां विना परिसमाप्तेरभावेन क्रियापेक्षत्वेन रामपदादीनामपि अर्थवत्त्वानापत्तिः । अत्र विभक्तिपदं प्रत्ययोपलक्षणन्तेन खट्वा पक्त्रिममित्यादौ न दोषः । अत्र पदेतरत्वमपि विशेषणं देयं, तेनैधांचक्रे इत्यत्रैधामित्यस्य प्रातिपदिकत्वसिद्धिः, 'तन्निम' इत्यत्र च निमशब्दस्य च तत्सिद्धिः । अन्यथा विभक्तीतर–चक्रे–तदित्यनयोरपेक्षत्वेनार्थवत्त्वाभावात्पद-

'कृत्तद्धितेति सूत्रेऽन्तग्रहणं कर्त्तव्यं ? न कर्त्तव्यम्—अर्थवदिति वर्त्तते, कृत्तद्धितान्तश्चैवार्थवत्, न केवलाः कृतस्तद्धिता वा' इति भाष्यमुपादाय—'शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्ति-वैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते' इति कैयटेनोक्तम्। 'लौकिकं यत्पदं तदर्थस्य प्रत्यासन्नः शास्त्रकृत्कल्पित-स्वादिप्रकृतेरर्थः—प्रत्ययान्तेषु=सुबन्तेषु योभिव्यक्ततरो लक्ष्यते बोद्धृभिः स' इत्यन्वयः।

यत्तु प्रत्ययान्तेष्वित्यस्य कृदाद्यन्तेष्वित्यर्थ इति, तन्न, तावन्मात्रेण कस्याप्यर्थस्याभि-

## ❀ चिदस्थिमाला ❀

**इति**। अनुवर्तते इत्यर्थः। **अर्थवदिति**। अर्थवत्पदगृहीतार्थवदित्यर्थः। **उपादायेति**। "लौकिकार्थवत्त्वा-श्रयणे कृत्तद्धितान्तस्यापि तत्त्वाभावादर्थवद्ग्रहणात्तदन्तस्यापि न स्यात्। प्रागुक्तशास्त्रीयार्थवत्त्वाश्रयणे तु तदन्तवत्कृत्तद्धितानामपि केवलानां तत्त्वमस्तीति तेषां सञ्ज्ञापत्तिः। नचे फलाभावः, 'ङ्याप्प्रातिपदिका'-दित्यादौ शब्दरूपविशेष्यमादाय तदन्तविध्याश्रयणेन फललाभसम्भवात्। तथा चोभयथापि भाष्यानुपपत्तिः" इति समाशङ्क्य चेत्यपि बोध्यम्। **शास्त्रीयार्थेति**। कल्पितप्रकृतिप्रत्ययाद्यर्थेत्यर्थः। **वैयर्थ्येनेति**। कृत्तद्धितयोस्तादृशार्थवत्त्वाव्यभिचारादिति भावः। अग्रेऽनुवृत्तिपदं स्पष्टार्थम्। यथाश्रुतासङ्गतेराह—**लौकिक-मिति**। तदर्थस्य=प्रशस्तस्य। प्रत्यासन्नः=अव्यवहितसमीपोऽपि। कृत्तद्धितप्रत्ययार्थस्तु न तादृशः, कल्पितावयवार्थत्वात्तस्य। तदाह—**अप्रत्येति**। **लक्ष्यते इति**। सुबर्थत्वात्प्रातिपदिकसञ्ज्ञायाः सुपो द्योतकतया तत्रैव स लक्ष्यते न तु तद्रहिते इत्यर्थः। विवरणकाराद्युक्तिं खण्डयति—**यत्त्विति**।

## ❀ ज्योत्स्ना ❀

प्राग्विभक्तेरलौकिकार्थनिषेधेन विभक्त्यन्तस्य पूर्णलौकिकार्थवत्त्वं तत्प्राग्भागस्य च लौकिकार्थप्रत्यासन्नत्वं

## ❀ विषमपदविवृतिः ❀

एवञ्च कृत्तद्धितान्तस्य विभक्त्यपेक्षया लोके बोधजनकत्वेपि विभक्तीतरानपेक्षत्वाद्युक्तार्थवत्त्वं सुस्थमिति ध्वन्यते। लौकिकार्थप्रत्यासन्नत्वञ्च कृत्तद्धितान्तार्थस्य विभक्तीतरानपेक्षया प्रतीयमान-त्वात्। विभक्त्यन्तार्थो हि लौकिकः, सर्वथेतरनैरपेक्ष्येण लोके प्रतीयमानत्वात्। कृदन्तार्थस्तु

## ❀ वरवर्णिनी ❀

नापत्तिः। नच पदेतरत्वनिवेशे 'पञ्चगवधन' इत्यत्र 'पञ्चगवे'त्यस्य प्रातिपदिकत्वापत्तिः, धनशब्द-सापेक्षत्वेपि पदेतरनिरपेक्षत्वादितिवाच्यं, स्ववृत्तिप्रातिपदिकत्वाभावत्पदेतरत्वस्य निवेशात्। अत्र तु पञ्चगववृत्तिप्रातिपदिकत्ववदेव धनपदं, तदभाववच्च उदासीनः, तदितरं धनपदं, तत्समभिव्याहारा-पेक्षत्वमिति न दोषः। एवं सति तन्निभ इत्यत्र दोषवारणाय पूर्वपदेतरत्वं निवेश्यम्।

ननु रामेषु इत्यत्र दूषणं दुर्वारं, सो रामशब्दापेक्षत्वेपि पदेतरानपेक्षत्वात्। पदत्वे 'सुप्तिङन्तमिति-विहितत्व'विशेषणेन तु न निर्वाहः, कन्लुबन्तचञ्चाशब्दात्सप्तमीबहुवचने 'चञ्चासु' इत्यत्र अन्तर्वर्तिविभक्त्या सुप्तिङन्तमितिपदत्वेन दूषणस्य तदवस्थत्वात्। स्वादिष्वितिपदत्वानाश्रयत्वनिवेशेपि 'पचाञ्चक्रेकल्प'-मित्यत्राव्याप्तिः, 'चक्रे' इत्यस्य स्वादिष्वितिपदत्वादिति चेन्न। यस्य प्रातिपदिकत्वं चिकीर्षितं, व्यावर्तनीयं वा तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रय–स्वादिष्वितिपदत्वानाश्रयपूर्वपदैतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमिति परिष्कारेणादोषादित्यपरे प्राहुः। विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेयः।

श्रीगुरुचरणास्तु–सूत्रद्वयेऽपि वृत्तिमत्त्वमेवार्थवत्त्वं, तत्त्वञ्च वृत्तिविशिष्टत्वं, वै० 'स्वपर्याप्त्य-धिकरणत्व' 'स्वनिरूपकार्थविषयकबोधतात्पर्येणोच्चरितत्वै'तदुभयसम्बन्धेन। रामशब्दादिघटकरेफादावर्थ-वत्त्वाभावायाद्यः सम्बन्धः। रामशब्दान्त्याकारादौ वासुदेवरूपार्थमादायार्थवत्त्ववारणाय द्वितीयः सम्बन्ध इत्याहुरिति सङ्क्षेपः।

व्यक्तेरप्यभावेनाभिव्यक्ततरत्वस्य सुतरामभावात्। अर्थवत्सूत्रेऽप्येवमेवेति–'अनुवृत्तिसामर्थ्या'-दित्यनेन सूचितम्, अन्यथा 'तत्सामर्थ्या'दित्येव वदेत्। पूर्वसूत्रे यादृशार्थवत्त्वग्रहोऽत्राप्यनुवृत्तिसामर्थ्यात्तादृशार्थवत्त्वस्यैव ग्रहः, शास्त्रीयार्थग्रहणे तु तदनुवृत्तिर्व्यर्था स्यादिति तद्भावः।

किञ्च पूर्वसूत्रे सामान्यतोऽर्थवत्त्वग्रहणे न किञ्चित्फलं–प्रत्ययेष्वतिव्याप्तिदाना-

---

❀ अभिनव-चन्द्रिका ❀

तिरिक्तमिति। वस्तुतस्त्वनेकभेदघटितसूत्रद्वयसाधारणगुरुतरनिरुक्तार्थवत्त्वस्वीकारस्य प्रत्ययपर्युदासखण्डनातिरिक्तन्न किमपि फलमिति प्राचीनमते एव महालाघवमिति बोध्यम्।

❀ चिदस्थिमाला ❀

तावन्मात्रेण=कृदाद्यन्तमात्रेण। रप्यभावेनेति। तावन्मात्रप्रयोगाभावादिति भावः। अपिरेवार्थः, स्पष्टार्थो वा। नच लिङादौ तथास्तीति वाच्यं, तत्त्वग्रहाभावेऽपि बोधात्। सुबन्तत्वस्यापि तत्र सत्त्वाच्च, सर्वेषां तत्त्वग्रहासम्भवाच्चेति दिक्। सुतरामिति। अर्थस्येति भावः। एवमेवेति। उक्तार्थवत्त्वमेवेत्यर्थः। अन्यथा=अत्र तथानभिमतत्वे। तत्सामर्थ्याद्=अर्थवत्पदसामर्थ्यात्। नन्वनुवृत्तिपदेन कथमेवं लभ्यमत आह—पूर्वेति। अर्थवत्सूत्रे इत्यर्थः। तत्सामर्थ्यादिति भावः। अत्रापि=कृत्तद्धितसूत्रेऽपि। अर्थस्यैवेति। अर्थवत्पदार्थस्यैवेत्यर्थः। एवकारेण मूलकृदभिमतवैषम्यनिरासः। एवञ्चैकमेवार्थवत्त्वं सूत्रद्वये। 'यादृशतादृशे'ति सादृश्योपपत्तिस्तु औपाधिकभेदं वास्तवभेदमादाय वा बोध्या। शास्त्रीयार्थेति। उक्तरूपार्थवत्पदार्थे इत्यर्थः। व्यर्थेति। तेषां तदन्तानां चार्थवत्त्वाव्यभिचारादिति भावः। तद्भावः=भाष्यकैयटाशयः।

ननु—'अकर्त्तरी'त्यादौ कारकग्रहणादिसाफल्यरूपफलसम्भवात्–नञिवयुक्तन्यायाऽनित्यत्वज्ञापकतयैव साफल्यमस्त्वत आह—किञ्च पूर्वसूत्रे इति। कृत्तद्धितेतिसूत्रात्प्राक्सूत्रे इत्यर्थः। प्रकृतसूत्रे इति यावत्। सामान्यत इति। वृत्त्यार्थबोधकत्वरूपेत्यर्थः। न किञ्चित्फलमिति। नच प्रादीनां द्योतकाना-

❀ ज्योत्स्ना ❀

मित्यर्थादुक्तं भवति। सुतरामभावादिति। यदि तु केवलप्रकृतिप्रत्यययोरर्थस्य शास्त्रकृत्कल्पितत्वादभिव्यक्तत्वमात्रं, कृदाद्यन्तार्थस्य च लौकिकार्थप्रत्यासन्नत्वादभिव्यक्ततरत्वं, विभक्त्यन्तार्थस्य तु

❀ सदाशिवभट्टीयम् ❀

मूल एव स्फुटीभविष्यति। कृत्तद्धितान्तञ्चैवार्थवदिति। अर्थवत्पदगृहीतार्थवदित्यर्थः। एवमेवेति—औपाधिकभेदं वास्तवभेदमादाय वा बोध्या सादृश्योपपत्तिः। अन्यथा=पूर्वत्र तथानभिमतत्वे।

तत्सामर्थ्यादिति। पर्युदासेनैव निरर्थकव्यावृत्तौ व्यावर्त्यान्तराभावेन वैयर्थ्यमिति भावः। पूर्वसूत्रे परिष्कृतार्थवत्त्ववादिनो मम तु प्रत्यय-देवदत्तो गार्ग्यादि-रूपव्यावर्त्यसत्त्वेन तद्ग्रहस्य सामर्थ्याभावादनुवृत्तिपर्यन्तानुधावनं सङ्गच्छते। ननु पूर्वत्र तथार्थवत्त्वसङ्कोचः कैयटस्य नाभिमतः, अन्यथाऽर्थाधिकारादित्येव वदेत्, किञ्चैतत्सामर्थ्यस्यानुवृत्तिप्रयोजकत्वेपि तदन्तविध्यप्रयोजकत्वेन च तथा नावादीदित्यपि वक्तुं शक्यमित्यरुचेराह—किञ्चेति।

❀ विषमपदविवृतिः ❀

विभक्तीतरानपेक्षया प्रतीयमानत्वात्तत्प्रत्यासत्तिः। कृत्तद्धितार्थस्तु स्वप्रकृति-विभक्त्युभयापेक्षयैव कृदादेः प्रतीयमानत्वाद्विप्रकृष्ट इति बोध्यम्। तत्सामर्थ्यादित्येवेति। अधातुरिति पर्युदासेन पूर्वसूत्रेऽर्थवत्त्वलाभात्, कृदादीनां चानर्थकानामप्रसिद्धेरिति भावः। सामान्यतोऽर्थवत्त्वग्रहणे इति।

तिरिक्तम्। अत एव तद्धितग्रहणस्य नियमार्थत्वाश्रयणेन—'ह्रस्वो नपुंसके यत्तस्ये'ति न्यासेन 'काण्डे' इत्यादौ ह्रस्ववारणात्फलाभावेन वा—भाष्योक्ते तत्प्रत्याख्याने

### ❀ अभिनव-चन्द्रिका ❀

**ह्रस्वो नपुंसके यत्तस्येति।** 'ह्रस्वो नपुंसके' इत्येतावदेव सूत्रम्, तस्य च नपुंसकत्वशक्तिपर्याप्त्यधिकरणं यत्तस्यान्त्यस्याचो ह्रस्व इत्यर्थः। तदेतदाह—**यत्तस्येति**। एतेन 'ह्रस्वो नपुंसके यत्तस्ये'ति

### ❀ चिदस्थिमाला ❀

भितरधात्वादिसापेक्षतयैव बोधकानां प्रातिपदिकसञ्ज्ञासिद्धिः फलमिति वाच्यं, तत्र ज्ञापकेनानुक्तसमुच्चयार्थकचकारेण वा तत्सिद्धेः। अत एव=सूत्रद्वये प्रागुक्तार्थवत्त्वाङ्गीकारादेव। **नियमेति**। 'प्रत्ययान्तस्य चेत्कृत्तद्धितान्तस्यैवे'ति नियमेत्यर्थः। एवञ्च काण्डे इत्यादौ प्रातिपदिकसञ्ज्ञैव नेति भावः। तत्सत्त्वेऽपि न दोष इत्याह—**ह्रस्वेति**। विभक्त्यन्तस्य शक्तिसङ्ख्याप्रधानत्वेन लिङ्गयोगाभावादितिभावः।

**फलाभावेन वेति**। 'प्रातिपदिसञ्ज्ञाया' इति शेषः। सुबुत्पत्तिस्तु गमके सत्येवेत्यन्यत्र प्रपञ्चितम्। नियमार्थत्वाश्रयणापेक्षो विकल्पः। **तत्प्रत्ययाख्याने इति**। प्रत्ययान्तपर्युदासप्रत्याख्यान इत्यर्थः।

### ❀ ज्योत्स्ना ❀

पूर्णलौकिकार्थवत्त्वादभिव्यक्ततमत्वमिति विषयविभागेनोच्यते, तदा 'प्रत्ययान्तेष्वि'त्यस्य-कृदाद्यन्तेष्वित्यर्थोऽपि सम्यगेवेति वदन्ति। **तद्धितग्रहणस्य नियामार्थत्वाश्रयणेनेति**। कृद्ग्रहणस्यनियमार्थत्वन्तु न, भिद् छिदित्यादौ धातुपर्युदासात्सञ्ज्ञाया अप्राप्तेस्तस्य विध्यर्थत्वादिति प्रदीपकृतः।

### ❀ सदाशिवभट्टीयम् ❀

**अत एव ताद्धितेति**। सूत्रद्वयेप्युक्तार्थाङ्गीकारादेवेत्यर्थः। **फलाभावेनेति**। एतेन ताद्धितग्रहणमपि निष्फलमिति सूचितम्। 'प्रातिपदिकसञ्ज्ञाया' इति शेषः। औत्सर्गिकैकवचनन्तु सत्येव गमके। लुगपि न, धातुसाहचर्येण स्वप्रकृतित्वाश्रयेतरव्यवहिताव्यवहितान्यतरस्वावयवकलुक्प्रयोजकधातुत्वप्रातिपदिकत्वान्यतरधर्मवदवयवसमभिव्याहृतस्यैव लुग्विधानात्। 'काण्डे तिष्ठती'त्यादौ तिष्ठतीत्यादिसमभिव्याहृतत्वादतिव्याप्तिवारणाय—धातुत्वप्रातिपदिकत्वान्यतरधर्मवत्सम्बन्धित्वेनावयवो विशेषितः। लुक्प्रयोजकत्वं—प्रत्यासत्तिध्वननायान्यतराविशेषणं, न तु व्यावर्तकम्। एवमपि तत्रैव तत्प्रयोजकधातुत्ववत्तिष्ठतिसमुदायावयव'तिष्ठ'समभिव्याहृतत्वादतिव्याप्तिवारणाय—स्वावयवकत्वेन धर्मवान् विशेषितः। स्वमवयवो यस्येति तदर्थः। स्वशब्दो लुक्प्रतियोगिपरः। अस्ति च 'पुत्रीये'त्यत्र तथा, पुत्रमितिसुप्प्रत्ययावयवकतत्प्रयोजकधातुत्ववत्पुत्रीयेत्येतदवयवक्यच्समभिव्याहृतत्वात्। प्रकृते तु न दोषः। एवमपि तत्रैव तथाप्रकृतिमादाय तदवयवं वादायातिव्याप्तिवारणाय—स्वप्रकृतित्वाश्रयेतरत्वेनावयवो विशेषितः। 'तत्पर्याप्त्यधिकरणे' त्युक्तौ त्ववयवमादाय स्यादेव सातिव्याप्तिरत—'आश्रये'त्येवमुक्तम्। एवमपि राजपुरुषादौ पुरुषाद्युत्तरसुप्यव्याप्तिवारणायाव्यवहितत्वेनावयवो विशेषितः। विशेषिते तु तथाभूतं पूर्वपदमादाय तत्परिहारः। तथा तत्रैव पूर्वपदान्तरसुप्यव्याप्तिवारणायान्यतरत्वेन स एव विशेषित इत्यलम्।

### ❀ विषमपदविवृतिः ❀

उत्तरसूत्रे विशिष्टार्थवत्त्वस्यैवोपयोगेनार्थाधिकारानुरोधात्पूर्वसूत्रेपि तादृशार्थवत्त्वग्रहणे न्यायतः प्राप्तेऽपि तत्परित्यागेन सामान्यतोऽर्थवत्त्वग्रहणे फलमाह—**अत एवेति**। 'अत एवे'त्यारभ्यं 'नाप्युत्तरसूत्रेणे'त्यन्तमेकं वाक्यम्। 'प्रातिपदिकत्वे टाबापत्ति'रिति वाक्यान्तरम्। 'तत्प्रत्याख्याने' इत्यस्य-

'पञ्चनावप्रिय' इत्यादौ 'पञ्चनावे'त्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेण। प्रातिपदिकत्वे तु टाबापत्तिः। एवञ्च प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो विफलः।

ॐ अभिनव-चन्द्रिका ॐ

न्यासेन सिद्धे प्रातिपदिकस्येत्यादि व्याख्यानं परास्तम्। सैद्धान्तिकन्यासापेक्षया एकपदाधिक्येन भाष्योक्तप्रातिपदिकग्रहणसामर्थ्येऽपि न्यासस्यासङ्गत्यापत्तेः। नपुंसकत्वशक्तिपर्याप्त्यधिकरणस्येत्यर्थकरणेन 'वारिर्गा' इत्यादौ न दोष इति दिक्। टाबापत्तिरिति। पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वेन ङीपः प्राप्तेरभावादिति भावः।

ॐ चिदस्थिमाला ॐ

**अनेन नेति**। अर्थवत्सूत्रेण नेत्यर्थः। **उत्तरेति**। 'तद्धितान्तत्वात्समासत्वाच्च प्राप्त'मिति शेषः। समान्यतोऽर्थवत्त्वस्योभयत्र ग्रहणे तु स्यादेवेति भावः। **टाबापत्तिरिति**। टजन्तस्योपसर्जनतया 'द्विगो'रित्यादि-

ॐ ज्योत्स्ना ॐ

अत्र वदन्ति—एवन्तु 'अस्यापत्यम्-इ'त्यादौ प्रत्ययपर्युदासादप्राप्तेस्तद्धितग्रहणस्यापि नियमार्थत्वं न

ॐ सदाशिवभट्टीयम् ॐ

यद्वा तत्साहचर्यादादेशरहितस्य वृत्त्यवयवस्य प्रातिपदिकावयवस्य लुगित्यर्थः। 'परमकाण्डे' इत्यत्र वृत्त्यवयवसत्त्वादादेशरहितेति।

ननु सिद्धान्तेपि सोमसुता अश्वः—'सोमसुताश्वः', 'सोमसुताऽत्ती'त्यादावेकादेशेऽन्तवद्भावेन सुप्त्वात् परादिवद्भावेन धातुत्वप्रातिपदिकत्वाभ्यान्तदवयवत्वेन लुक् स्यादिति चेन्न, उभयत आश्रयणेनान्ताद्यवयवत्वोभयाभावात्, 'अधिकरणे चे'ति निर्देशेन विभक्त्येकादेशो नान्तवदित्युक्तेश्च, पञ्चमीसमासेन स्थानिवत्त्वाच्च, अपरनिमित्तकत्वेनान्तरङ्गे लुकि परनिमित्तैकादेशस्य बहिरङ्गासिद्धत्वाच्च।

**प्रत्याख्यानेति**। प्रत्ययान्तपर्युदासेत्यर्थः। **अनेन न प्रातिपदिकत्वमिति**। 'नियमशास्त्राणां निषेधमुखेन प्रवृत्ति'रिति पक्षे इदं, 'विधिमुखेन प्रवृत्ति'रिति पक्षे तु सामान्यतोऽर्थवत्त्वग्रहेऽपि प्रत्ययान्तभिन्नपरन्तत्समाससजातीयसमुदायभिन्नपरन्तदिति सङ्कोचादेव न तत्प्राप्तिरित्यनेन प्राप्तिविरहादसङ्गतिः स्यात्। विधिमुखेन प्रवृत्तिरिति पक्षेप्याह—**नाप्युत्तरेति। टाबापत्तिरिति**। टजन्तस्योपसर्जनतया 'टिड्ढे'ति 'द्विगो'रिति वा

ॐ विषमपदविवृतिः ॐ

च 'अनेन न प्रातिपदिकत्व'मित्यनेनैवान्वयः। प्रत्ययान्तपर्युदाससत्त्वे तत एव 'पञ्चनावे'त्यस्य प्रातिपदिकत्वं नेत्युक्तविधार्थवत्त्वस्यात्र सूत्रे ग्रहणे नेदं सम्भवतीति 'तत्प्रत्याख्याने'इत्युक्तम्। 'अत एवे'त्यस्य सूत्रद्वये उक्तविधार्थवत्त्वग्रहणादेवेत्यर्थः। अस्मिन्सूत्रे ईदृशार्थवत्त्वग्रहे 'पञ्चनावे'ति प्रयोजनोपन्यासः—'उक्तविधार्थवत्प्रत्ययान्तस्य चेत्प्रातिपदिकत्वं तर्हि तथाविधतद्धितान्तस्यैवे'ति नियमाभिप्रायेण। पञ्चनावे-

ॐ वरवर्णिनी ॐ

**टाबापत्तिरिति**। अनुपसर्जनाधिकाराट्टिड्ढेति ङीपोऽप्रसङ्गादिति भावः। प्रकृते हि—'पञ्चनावे'त्युपसर्जनमेवेति तत्त्वम्। तथाहि—उपसर्जनत्वं स्वविशिष्टत्वं, वै० 'स्वतादात्म्य' 'स्वनिष्ठशक्तिनिरूपकार्थनिष्ठविशेष्यताविशिष्टत्वोभय'सम्बन्धेन। वै०'स्वनिरूपितप्रकारताप्रयोजकत्व' 'स्वाभाववत्त्वो' भयसम्बन्धेन। स्वाभावश्च—स्ववृत्तिप्रयोज्यतानिरूपितपदघटितनिष्ठप्रयोजकत्वसम्बन्धावच्छिन्नप्रतियोगिताको विवक्षितः। यस्योपसर्जनत्वं चिकीर्षितं तत्स्वम्। प्रकृते—पञ्चनावनिष्ठशक्तिनिरूपकाऽन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य, [ 'पञ्चनावे'त्येतत्पर्याप्तशक्तेरभावात्तादृशविशेष्यतानिष्ठप्रयोज्यतानिरूपितप्रयोजकत्वस्य 'पञ्चनावे'त्यतन्मात्रे विरहेण च—]—तादृशप्रतियोगिताकस्वाभाववत्त्वस्य च सत्त्वादुपसर्जनत्वमुपपन्नम्। 'वृषलपत्नी'त्यादावुपसर्जनत्ववारणाय तादृशाभावनिवेशः, तत्र समुदाये एव प्रयोजकतायाः सत्त्वात्। तथात्र वृषलपतिनिष्ठशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेऽपि वृषलपतिनिष्ठशक्तिनिरूपकभार्यारूपार्थनिष्ठप्रयो-

❀ अभिनव-चन्द्रिका ❀

क्वचिन्ङीबापत्तिरिति पाठः। तस्यायं भावः—पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वमुपसर्जनत्वम्। तथा च तादृशोपसर्जनत्वं प्रकृते नेति।

स्यादेतत्—'पञ्चनावे'त्यस्य सत्यप्यर्थवत्त्वे न क्षतिः, उत्तरपदपरकत्वन्निमित्तीकृत्य जायमानायाः समाससञ्ज्ञायाः तद्विघातकटाबादिप्रवृत्तिं प्रत्यनिमित्तत्वेन सन्निपातपरिभाषया तद्वारणसम्भवादिति चेन्नैवम्, 'तद्धितार्थोत्तरपदे'त्यादीनां सञ्ज्ञाशास्त्रत्वेन अभ्यनुज्ञावाक्यकल्पनाया अभावादभ्यनुज्ञावाक्यसङ्कोचकसन्निपातपरिभाषाया अप्रवृत्तेः। वस्तुतस्तु 'यतोऽनाव' इतिसूत्रस्थभाष्यप्रामाण्येन विघातकशास्त्रे'ऽजाद्यत' इत्यादौ सङ्कोचस्यावश्यकतया 'ऽजाद्यत' इत्यस्य–'टाप् स्वोपजीव्यविघातकत्वाभाववान्भवती'त्यर्थेनोपजीव्यविरोधात्पञ्चनावेत्यस्मान्न टाबादिः। किञ्च 'पञ्चनावप्रिय' इत्येतत्पर्याप्तैकार्थीभावेनैव विशिष्टे बहुव्रीहिसञ्ज्ञाया अवान्तरे तत्पुरुषसञ्ज्ञायाश्च सिद्धत्वेन 'पञ्चनावे'त्यत्र शक्तिकल्पने मानाभावात्–'पञ्चनावे'त्यस्य लोके अर्थविषयकबोधजनकत्वमेव न। स्पष्टञ्चेदं प्रकृतसूत्रे शब्दरत्ने इति दिक्।

**विफल इति।** परे तु पूर्वोत्तरसूत्रद्वयसाधारणमर्थवत्त्वं,–स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वम्। गुरुतरलक्षणं स्वीकृत्य प्रत्ययपर्युदासखण्डनापेक्षया तत्पर्युदासं स्वीकृत्य एतल्लक्षणस्यैव लघुत्वात्। नच 'पञ्चनावप्रिय' इत्यादौ 'पञ्चनावे'त्यस्यार्थवत्त्वं स्यादिति वाच्यं, 'पञ्चनावे'त्यत्र शक्तिकल्पने मानाभावेन विशिष्टशक्त्यैवोपपत्तेरित्यादिना दत्तोत्तरत्वात्। नचैवमपि 'सुप्तिङन्त'मिति सूत्रस्थभाष्यविरोध'; तत्र हि–अन्तग्रहणेन 'सञ्ज्ञाविधा'-विति परिभाषां ज्ञापयित्वा—'यद्येवं 'कृत्तद्धिते'तिसूत्रेऽन्तग्रहणं कर्तव्यम्? न कर्त्तव्यम्,–

❀ चिदस्थिमाला ❀

ङीपोऽप्राप्तेरिति भावः। पर्यवसितमुपसंहरति–**एवञ्चेति**। ईदृशार्थवत्त्वग्रहणे चेत्यर्थः। **प्राप्तिरेवेति**। 'प्रातिपदिकसञ्ज्ञाया' इति शेषः। एवञ्चार्थवद्ग्रहणव्यावर्त्यता प्रत्ययस्य, 'पञ्चनावे'त्यस्य च बोध्या।

❀ ज्योत्स्ना ❀

स्यात्, यथोद्देशपक्षे 'अ अस् इन्' इत्यवस्थायां प्रवृत्ता सञ्ज्ञा एकदेशविकृतन्यायात्–'इ'रित्यवस्थायां

❀ सदाशिवभट्टीयम् ❀

ङीपोऽप्राप्तिरिति भावः। उपसर्जनह्रस्वेन तु न निर्वाहः, यस्य प्रातिपदिकस्य स विधीयते तदर्थं प्रत्युपसर्जनत्वाभावेन 'सुगोकुल'मित्यादाविव तदप्राप्तेः। वस्तुतो 'ङीबापत्ति'रितिपाठोपि सुयोजः, यस्मान्ङीब् विधीयते तदर्थं प्रति टिद्दादेरनुपसर्जनस्य एव प्रत्यासत्त्या तत्प्रवृत्त्या ङीप्प्राप्तेः सत्त्वात्। ननूत्तरपदत्वमुपजीव्य जायमाना तत्पुरुषसञ्ज्ञा टच्प्रवृत्त्या तद्धितान्तत्वेन प्रातिपदिकसञ्ज्ञाद्वारा टाबादेरानन्तर्यविघातकस्यानिमित्तं स्यादिति चेत्सत्यम्, 'अलौकिक एव प्रक्रियावाक्ये समासान्ताः प्रवर्तन्ते' इति सिद्धान्तात्। पञ्चन् जस् नौ जस् इत्यवस्थायामेव बहुव्रीहिसञ्ज्ञासमकालमेव टच्प्रवृत्त्या ततस्तद्धितान्तत्वेन प्रातिपदिकत्वोत्तरपदहेतुकद्विगुत्वयोः प्राप्तावपरनिमित्तकत्वेनान्तरङ्गत्वात् द्विगुसञ्ज्ञायाः प्राक् प्रातिपदिकत्वे तथैवान्तरङ्गत्वाट्टाप् स्यात्। सन्निपातलक्षणाया द्विगुसञ्ज्ञायाः पूर्वमप्रवृत्तत्वात्परिभाषाया अप्राप्तेः। मम त्वर्थवत्त्वाभावेन न प्रातिपदिकत्वमिति न टाबिति नवीनाशयः प्रतिभातीति **केचित्**।

**विफल इति।** 'प्रत्यय' इतिसूत्रभाष्यविरुद्धश्चेत्यपि बोध्यम्। तत्र हि प्रकृत्युपपदोपाधीनामपि

❀ विषमपदविवृतिः ❀

त्यस्योक्तविधप्रत्ययान्तत्वाभावेनोक्तनियमाप्रवृत्तावर्थवत्सूत्रप्राप्तिसम्भवात्। 'प्रत्यायान्तसामान्यविषये

❀ वरवर्णिनी ❀

ष्यतानिरूपितप्रयोजकत्वपर्याप्तिर्वृषलपत्नीतिसमुदाये सुलभतया तादृशप्रतियोगिताकाभावविरहेण नोपसर्जनत्व'मितिकेचित्।

'दश दाडिमानि षडपूपा' इत्यादिनिरर्थकपदसमुदायव्यावृत्तिरर्थवद्ग्रहणस्य फलम् ।

❀ अभिनव-चन्द्रिका ❀

अर्थवदिति वर्त्तते, कृत्तद्धिताश्चैवार्थवत्, न केवलाः कृतस्तद्धिता वा–'इत्युक्तम् । तथा च निरुक्तार्थवत्त्वस्य केवलकृत्तद्धितेष्वपि सत्त्वेन तद्विरोधः स्यादिति वाच्यं, 'कृत्तद्धितान्तश्चैवार्थ'दित्यस्य—'प्रातिपदिक'-मिति 'न केवलाःकृतस्तद्धिता वे'त्यनन्तरं–'प्रातिपदिकानी'ति च शेषो बोध्यः । तथाच 'सञ्ज्ञा-विधा'वित्यस्य सञ्ज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं यत्प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदन्तत्तदादिविशेष्यकतदन्तविधिप्रयोजकमित्यर्थेन तदादिविशेष्यकतदन्तविध्यभावेऽपि अनुवृत्तार्थ-वद्विशेष्यकतदन्तविधेः सूत्रपादत्वेन 'कृत्तद्धितान्तश्चैवार्थवत्प्रातिपदिकं न केवला कृतस्तद्धिता वा प्रातिपदिकानी'त्यर्थकतया भाष्यस्य सुयोजत्वेनाविरोधात् ।

अर्थवदिति किम् ? धनं वनम्, प्रतिवर्णं सञ्ज्ञा माभूत् । नच वृक्षप्रचलनन्यायेन विशिष्टस्यैव प्रातिपदिकसञ्ज्ञा स्यान्न तु प्रतिवर्णमिति न दोष इति वाच्यं, 'दश दाडिमानि' 'षडपूपा' इत्यनर्थकसमुदायस्य प्रातिपदिकत्ववारणायार्थवद्ग्रहणस्यावश्यकत्वात् ।

एतदेवाभिप्रेत्य भाष्ये—अर्थवदिति किम् ? धनं वनमिति दोषं प्रदर्श्यापि सूत्रशेषे दश दाडिमानीत्यनर्थकसमुदायस्तत्फलत्वेन प्रदर्शितः । नच 'दश दाडिमानी'त्यनर्थकसमुदायस्य समासग्रहणकृतनियमेन व्यावृत्तिर्भवतीति नैतत्फलम्, धनं वनमित्यादौ वृक्षप्रचलनन्यायेनैव प्रतिवर्णं सञ्ज्ञा नेत्युक्तमेव, तथाचार्थवद्ग्रहणं व्यर्थमिति वाच्यं, 'स्वातन्त्र्येण प्रयोगा-र्हार्थवत्पूर्वावयवकः, स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकः, अर्थविषयकबोधौपयिकाकाङ्क्षापर्याप्त्य-धिकरणञ्च यः समुदायस्तस्य चेत्तर्हि समासस्यैवे'ति नियमशरीरस्य वक्ष्यमाणत्वेनानर्थकसमुदाये अर्थविषयकबोधौपयिकाकाङ्क्षापर्याप्त्यधिकरणत्वस्याभावेन नियमेन व्यावृत्त्यसम्भवादर्थवत्त्वात् ।

अतएव प्रत्ययग्रहणपरिभाषाप्रयोजनं 'देवदत्तो गार्ग्य'इत्यस्य प्रातिपदिकसञ्ज्ञाऽभाव'इति भाष्योक्तं सङ्गच्छते । अन्यथा नियमेनैव तद्व्यावृत्तिसम्भवेन तदसङ्गतिः स्पष्टैव । नम तु अभेदसंसर्गकबोधं प्रति समानविभक्तिकत्वस्य तन्त्रत्वेन 'देवदत्तो गार्ग्य'इत्येतावन्मात्रेऽभेदसंसर्गकबोधौपयिकाकाङ्क्षा-पर्याप्त्यधिकरणत्वस्याभावेन नियमेनाव्यावृत्त्या तत्सङ्गतिरिति प्राहुः ।

**व्यावृत्तिरिति** । वृक्षप्रचलनन्यायाश्रयणेनेदं दूषणं, तदनाश्रयणे तु—'धनं''वन'मित्यादौ प्रतिवर्णं सञ्ज्ञाव्यावृत्तिरेव तत्फलमिति भावः ।

❀ चिदस्थिमाला ❀

ननु यथाश्रुतेऽर्थवत्त्वस्य किं व्यावर्त्यं,—यत्पर्युदासेन लभ्यते इत्युक्तम् । नच धनं वनमित्यादौ प्रतिवर्णं नार्थवत्त्वं,तत्सत्त्वेऽपि क्षत्यभावात्, गमकं विना सुपोऽनुत्पत्तेरत आह—**दशेति** । आदिपद-ग्राह्यन्तु–'कुण्डमजाजिनं, पललपिण्डः, अधोरुकमेतत्कुमार्याः, स्फय्यकृतस्य पिता प्रतिशीन' इति बोध्यम् । **निरर्थकेति** । तथा यः पदसमुदाय इत्यर्थः । पदार्थानां समन्वयस्यैव वाक्यशक्यत्वेन

❀ सदाशिवभट्टीयम् ❀

प्रत्ययत्वे किन्दूषणम् ? इति प्रश्ने–परत्वमाद्युदात्तत्वमङ्गसञ्ज्ञेत्येते विधयः प्रसज्येरन्नित्युक्तं, न तु प्रातिप-दिकत्वं न स्यादित्यपि । तव तु तदपि वक्तव्यमिति । ननु यथाश्रुतेपि किमर्थवद्ग्रहणव्यावर्त्यं यत्पर्यु-दासेन लभ्यते इत्युक्तमत आह—**दशेति** । निरर्थको यः समुदाय इत्यर्थः । पदार्थानां समन्वयस्यैव

❀ विषमपदविवृतिः ❀

नियमे विज्ञायमाने त्वत्र सूत्रे ईदृशार्थवत्त्वग्रहणे नेदं प्रयोजनम् । 'प्रत्ययान्तस्य चेत्प्रातिपदिकत्वं तर्ह्युक्त-

१ यद्वा कृत्तद्धितान्तं चैवार्थव'दित्यत्र चोऽप्यर्थः, एवकारो भिन्नक्रमः । तथाच—केवलकृत्तद्धिता-वेवार्थवन्ताविति न, अपि तु कृत्तद्धितान्तमप्यर्थवदिति तदर्थ इति न दोष इति तु परे ।

तत्र हि 'सुपो धात्वि'ति लुगापत्तिरिति भाष्ये स्पष्टमिति दिक् ।

❀ चिदस्थिमाला ❀

तदभावात्तत्वमितिभावः । नन्वत्रापि तत्त्वे वर्णवन्न क्षतिरत आह—तत्र हीति । निरर्थकपदसमुदाये प्रातिपदिकसञ्ज्ञा अत इत्यर्थः । भाष्ये=प्रकृतसूत्रस्थे । तत्रत्यकैयटे चेत्यपि बोध्यम् । दिगिति । तदर्थस्तु—

❀ ज्योत्स्ना ❀

सुलभेति चेन्न, तदभाव एव नियमप्रक्रमात् । अत एव भगवता 'कृत्तद्धितग्रहणयोर्द्वयोरपि नियमार्थत्व'मित्युक्तमिति । अत्रायं प्रदीपकृदाशयः,—अस्तूक्तरीत्या यथोद्देशपक्षे 'भिद् छि'दित्यादौ सञ्ज्ञा,

❀ सदाशिवभट्टीयम् ❀

वाक्यशक्यत्वेन तदभावात्तत्त्वम् । दिगर्थस्तु समासेतिनियमेन नास्य व्यावृत्तिः, तस्यार्थवत्समुदायविषय-

❀ विषमपदविवृतिः ❀

विधार्थवत्तद्धितान्तस्यैवे'ति नियमेनैतत्सूत्रविहितप्रातिपदिकत्वस्य व्यावृत्तिसम्भवात् । 'बहुश्रेयसी' 'प्रियतिसे'त्यादौ नदीत्वतिस्राद्यर्थमुपसर्जनपदार्थेपि स्त्रीत्वभानस्याङ्गीकर्तव्यतया टाबापादनोपपत्तिः । स्वार्थविशिष्टार्थान्तरोपसङ्क्रान्तत्वमुपसर्जनत्वं, तच्च 'बहुकुरुचरे'त्यादाविव 'पञ्चनावे'त्यादावपि ।

ङीपोऽप्राप्त्या टाबापादितः । 'ङीबापत्ति'रिति पाठे तु—यस्मान्ङीप् कर्तव्यस्तदर्थं प्रति टिदर्थस्याविशेषणत्वरूपमनुपसर्जनत्वमुपपादनीयम् । 'भिद् छि'दित्यादावधातुरिति पर्युदासेन प्रातिपदिकत्वाप्राप्तौ कृद्ग्रहणस्य तद्विधानार्थत्वे नियामकत्वासम्भवात्तद्धितग्रहणस्य तदुक्तिः । यत्तु—अस्यापत्यमिरित्यादौ प्रत्ययपर्युदासात्प्रातिपदिकत्वाप्राप्तौ तद्धितग्रहणमपि विध्यर्थमेव, न नियमार्थं, यदि तु अ ङस् इ इत्यस्यां दशायां प्रवृत्तं प्रातिपदिकत्वमेकदेशविकृतन्यायेन इरित्यत्रापि सुलभमिति चेन्न, प्रत्ययान्तपर्युदासाभावे एव तद्धितग्रहणस्य नियमार्थत्वप्रक्रमादप्रत्ययान्तपर्युदासाप्रवृत्तेरित्युच्यते, तदा भिद् क्विबित्यस्यां दशायां प्रवृत्तं प्रातिपदिकत्वं भिदित्यत्रापि सुलभमिति [—पाठकः] तत्तुच्छम् । प्रत्ययपर्युदासस्य मूलत एवाभावेन प्रत्ययान्तपर्युदासस्य च व्यर्थत्वेन शङ्क्यमानत्वेन त्वदुपन्यस्तशङ्काडम्बरस्यापराद्धेषोर्धानुष्कस्य कण्ठाडम्बरत्वात् । किञ्चान्तरङ्गत्वात्क्विपो लोपेऽधातुरिति पर्युदासेन भिदित्यादौ प्रातिपदिकत्वं दुर्लभम्, अस्यापत्यमिरित्यादौ प्रातिपदिकत्वं विना सुब्लुगेव नेति महद्वैषम्यम् । टाप्पक्षे 'गोस्त्रियो' रिति ह्रस्वस्तु न शङ्क्यः, 'राजकुमारीपुत्र' इत्यादाविव तद्वारणसम्भवात् । नचैवं पञ्चनौशब्दस्याप्रातिपदिकत्वेन टजेव दुर्लभ इति वाच्यं, समासान्तविधौ प्रातिपदिकाधिकाराभावस्य वक्ष्यमाणत्वात् । न च सन्निपातपरिभाषया टाप्ङीपोर्वारणं, द्विगुसञ्ज्ञाद्वारोत्तरपदानन्तर्यनिमित्तकस्य टचस्तदविघातकत्वादिति वाच्यम्, 'कृन्मेजन्त'इति सूत्रस्थभाष्यप्रामाण्येन परम्परयापि तद्विघातकत्वस्य ग्रहणेपि सन्निपातलक्षणस्य साक्षादेव ग्रहणमित्याशयात् । अत्र ङीप्बापाद्यमानो—'द्विगो'रिति वा 'टिड्ढे'ति वा विहितो बोध्यः ।

इति दिगिति । अन्येत्वर्थवत्त्वमत्र शक्ति-लक्षणा-द्योतनान्यतमसम्बन्धेनार्थोपस्थितिजनकत्वम् । 'गोपी'त्यादौ ङीषुत्पत्तेःपूर्वमेव प्रातिपदिकस्य लक्षणावश्यकत्वेन गोपेत्यस्य प्रातिपदिकत्वसिद्धये—'लक्षणे'ति। द्योतकनिपातसङ्ग्रहायाह—'द्योतने'ति । न तु विभक्तीतरसमभिव्याहारानपेक्षयेति परिष्कृतमर्थवत्त्वम् । 'सिद्धं त्वन्वयव्यतिरेकाभ्या'मित्यारभ्य वर्णिता'ऽर्थवन्तोऽन्वयव्यतिरेकाभ्या'मित्यन्तेनैतत्सूत्रस्थभाष्यग्रन्थसन्दर्भेणास्मदुक्तार्थवत्त्वस्यैवार्थवच्छब्दार्थत्वावगतेः । अत एव भाष्ये 'वर्णानामनर्थकानां प्रातिपदिकसञ्ज्ञा मा भूदित्यर्थव'दित्युक्तम्, न तु प्रत्ययस्य माभूदिति । नन्वोदनं पचतीत्यत्र- 'ओदनं पचे' त्यस्य 'देवदत्तस्य पुत्र' इत्यत्र 'पुत्रे'त्यस्य 'देवदत्तो गार्ग्यै'ति समुदायस्य च प्रातिपदिकत्वापत्तिः, अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययादेरोदनं पचतीत्यादेश्च लोकेऽर्थबोधनवृत्ति-

**पूर्वसूत्रेणेति** । 'प्रत्ययग्रहणे यस्मा'दिति प्रत्ययान्तत्वाभावादिति भावः । नियमस्य

❀ अभिनव-चन्द्रिका ❀

ननु 'नियम्यत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वे सति तदीयो- द्देश्यतावच्छेदकरूपव्याप्यरूपावच्छिन्नोद्देश्यताकत्वं नियामकत्व'मिति सिद्धान्तेन तादृशस्थले नियामक- शास्त्रेण नियम्यशास्त्रे सङ्कोचः कर्त्तव्यः, तत्र यद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः कर्तव्यः तानि रूपाणि–नियामकशास्त्रीयोद्देश्यतावच्छेदकं, तद्व्याप्यं, तद्व्यापकम्, एवं नियम्यशास्त्रीयोद्देश्यतावच्छेदकं तद्व्याप्यं, तद्व्यापकञ्चेति षड्रूपाण्युपस्थितानि । तत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नाति- रिक्तत्वेन, तादृशरूपव्याप्यरूपावच्छिन्नातिरिक्तत्वेन वा सङ्कोचः कर्तुन्न शक्यते, स्नुषाश्वश्रून्याय- प्रसङ्गात्, नापि नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन तादृशरूपव्यापकरूपावच्छिन्ना- तिरिक्तत्वेन वा सङ्कोचः कर्तुं शक्यते, नियम्यशास्त्रवैयर्थ्यापत्तेः; किन्तु नियामकशास्त्रीयोद्देश्यता- वच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः

❀ चिद्स्थिमाला ❀

समासग्रहणकृतनियमेन नास्य व्यावृत्तिः, तस्यार्थवत्समुदायविषयकत्वात् । नच तद्ग्रहणाभावेऽग्रेऽनुवृत्त्य- भावेनाऽनर्थकसमासविषयकत्वस्यापि सम्भवेन कथं तद्विषयकत्वं नस्येति वाच्यं, धर्मिग्राहकमानेनैव तत्र सिद्ध्या पारिशेष्यात्तस्य तद्विषयकत्वादित्यन्यत्र विस्तरः । एवं 'धातोः प्रत्ययान्तस्य च चेत्कृत्तद्धितान्त- स्यैवे'ति नियममाश्रित्य धातुप्रत्ययान्तपर्युदासोऽपि विफल इत्यादिबोध्यः । ननु समासस्य प्रत्ययान्तत्वेन विध्यर्थमेव समासग्रहणमुचितमत आह—**प्रत्ययेति** । **इतीति** । परिभाषाप्रवृत्त्येत्यर्थः । 'समासस्ये'ति शेषः । ननु नियमस्यार्थवच्छब्दविषयकत्वेन 'पूर्वो भाग' इत्यादिलाभः कथमत आह—**नियमेति** ।

❀ ज्योत्स्ना ❀

कार्यकालपक्षे तु धातुपर्युदासात्सञ्ज्ञा नैव स्यादिति तदर्थं कृद्ग्रहणविध्यर्थताऽवश्यवक्तव्या । 'इ'रित्याद्यर्थन्तु तद्धितग्रहणं न भवति, केवलप्रत्ययपर्युदासानङ्गीकारात्, निरुक्तार्थवत्त्वस्य च तत्र

❀ विषमपदविवृतिः ❀

कल्पनेपि 'ओदनं पचे'त्यादेः समुदायस्य तत्कल्पने मानाभावात् । प्रत्ययपर्युदासस्तु नास्त्येव, प्रत्ययस्य फलाभावेनैव प्रातिपदिकत्वाप्रवृत्तेः । न च 'हरिष्वि'त्यत्र प्रत्ययस्य प्रातिपदिकत्वे औत्स- र्गिकैकवचने च तस्य श्रवणापत्तिः, तस्य सति गमक एवोत्पत्तेः । अत एव 'ङ्याप्प्रातिपदिका'-

❀ वरवर्णिनी ❀

**पूर्वसूत्रेणेति** । अत्रेदमवधेयं–'राजन्-अस् पुरुष-सु'इत्यादौ समासे धातु-प्रत्यय-प्रत्ययान्तभिन्नतयाऽर्थ- वत्सूत्रेणैव प्रातिपदिकत्वसिद्ध्या समासग्रहणं व्यर्थं सन्नियमार्थम् । निरुक्तसमासस्य प्रत्ययान्ततया प्रत्ययान्त- पर्युदासेन निषेधस्तु न, 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषया तत्र तदादे- रुपस्थित्या राजन्-अस्-पुरुष-सु इत्यस्य प्रत्ययनिष्ठचरमावयवतानिरूपकत्वरूपप्रत्ययान्तत्वेऽपि प्रत्ययान्ततदा- दित्वाभावात् । ननु तदादित्वं नाम–प्रकृत्यादित्वं, तच्च तादृशसमुदायेऽक्षतं, ङस्प्रत्ययप्रकृतिराजञ्छब्दादित्वा- दिति चेन्न, 'स्वनिष्ठचरमावयवतानिरूपकत्व' 'स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठावयवतानिरू पकत्वो'भयसम्बन्धेन प्रत्ययविशिष्टस्यैव प्रत्ययान्ततदादित्वेन तत्त्वाभावात् । तथाहि—प्रत्ययपदेन यदि राजपदोत्तरङसो ग्रहणं तर्हि तत्समुदाये ङस्निष्ठचरमावयवतानिरूपकत्वं नास्ति, सुप्रत्ययस्य यदि तेन ग्रहणन्तर्हि स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रय-पुरुष-निष्ठावयवतानिरूपकत्वं तादृशसमुदाये नास्तीति प्रत्ययान्त- तदादित्वविरहः स्पष्ट एव । नन्वेवमपि 'घट-पटसमुदायो न घट' इति प्रत्ययापत्तिवारणाय–'स्ववृत्ति- व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकः स्वप्रतियोगिको भेदो नाङ्गीक्रियते' इति नियमाभ्युपगमा'त्प्रत्य-

❀ विषमपदविवृतिः ❀

दिति सूत्रे भाष्ये तदधिकारस्यासत्त्वे प्रत्ययादौत्सर्गिकैकवचनापत्तिर्नापादिता । नचैवं धनं वनमित्यादावपि विभक्त्यनुत्पत्तावर्थवदिति व्यर्थमिति वाच्यं, निपातस्यानर्थकस्य प्रातिपदिकत्वावधानेनार्थवत्सूत्रस्थशेषभाष्यप्रामाण्येन चानर्थकप्रतिपदिकादेकवचनोत्पत्त्यभ्यनुज्ञानात् । न च 'काण्डे' इत्यादौ प्रत्ययस्य प्रातिपदिकत्वे ह्रस्वापत्तिः, नपुंसके वर्त्तमानत्वाभावेनादोषात् । स्पष्टञ्चेदं भाष्ये ।

न च व्यपदेशिवद्भावेन प्रातिपदिकावयवयसुब्लुगापत्तिः, सुप्कार्यन्त्वलुक्समासे चारितार्थमिति वाच्यं, धातुसाहचर्येण मुख्यावयव एव सुब्लुक्प्रवृत्तेः । न चौपगवयतीत्यादावणो णिजापत्तिः । उपगवर्थेनैकार्थीभूतत्वेनाणर्थमात्रस्य णिजर्थेनान्वयायोगात् । उत्तरसूत्रे तु शब्दाधिकाराश्रयणेन प्राशस्त्ये मतुपा प्रशस्तार्थवत्त्वं विवक्षितम्, तच्च पृथगुपस्थितयोरर्थयोरन्वयबोधजनकत्वम्, एकार्थीभाववत्त्वं वा । लौकिकार्थप्रत्यासन्नत्वमपि लौकिकार्थसदृशत्वम् । लौकिकार्थौ यथायोग्येतरन्वयी तत्सदृशत्वम् । 'पञ्चगव' इत्यादौ तु तद्धितान्तत्वेन प्रतिपदिकत्वेपि न टाप । स्वार्थिकानां क्वचित्प्रकृतितः लिङ्गवचनातिवृत्त्याऽर्धनावमित्यादाविव क्लीबत्वाश्रयणेनादोषात् । विशेषणपदार्थे स्त्रीत्वस्यानभ्युपगमाच्च । 'प्रियतिसे' त्यादौ तु भाष्यप्रामाण्येन भौतपौर्विकं स्त्रीत्वमादाय तिस्रादेशः । 'विभक्तीतरे'त्याद्यक्तार्थवत्त्वतु गुरुतरमनेकदोषदुष्टञ्च । अर्थवदिति तु धनं वनमित्यादौ

❀ वरवर्णिनी ❀

यान्तसमुदायो न प्रत्ययान्त' इति भेदासम्भवान्निरुक्त-राजन्-अस्-पुरुष-सु- इत्यत्रार्थवत्सूत्रेण कथं प्रातिपदिकत्वप्राप्तिरिति चेन्न, प्रत्ययान्तसमुदायत्वेऽनुयोगितावच्छेदकत्वाभावेऽपि निरवच्छिन्नानुयोगिताकस्य 'प्रत्ययान्तसमुदायो न प्रत्ययान्त'इति भेदस्य तत्र सत्त्वे बाधकाभावेन पूर्वसूत्रेण प्रातिपदिकत्वप्राप्तेः सम्भवात् । नचैवं'घटपटसमुदायो न घट'इत्यपि प्रत्यय आपद्यते,निरवच्छिन्नानुयोगिताकतादृशभेदस्य निष्प्रत्यूहत्वादिति वाच्यम्,'घटपटौ न घट'इत्यत्र घटभेदस्य विधेयतया-उद्देश्यतावच्छेदकावच्छेदेनैव च विधेयान्वयस्य स्वीकरणीयत्वया तत्र निरवच्छिन्नानुयोगिताकभेदस्य वक्तुमशक्यत्वात् । 'प्रत्ययान्तसमुदायो न प्रत्ययान्त' इत्यत्र तु न भेदस्य विधेयत्वम् । यद्वा तद्व्यक्तित्वावच्छिन्नानुयोगिताक एव प्रत्ययान्तभेदोऽत्र न समुदायत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्न इति न नियमभङ्गः । 'घटपटौ न घट' इत्यत्र तु तद्व्यक्तित्वस्यानुल्लेखान्न तादृशभेदमादाय तथाप्रतीत्यापत्तिरिति श्रीगुरुचरणाः ।

अथैवमपि 'यत्र सङ्घाते पूर्वो भागःपद'मित्यादिर्न नियमः, किन्तु परिसङ्ख्यैव । तथाहि-'व्रीहीनवहन्ती'त्यादौ यदा नखविदलनेनैव तुषापनयनेच्छा तदाऽवघातस्याप्राप्त्या तस्य पाक्षिकतया तद्विधानं हि नियमः।यत्र तु 'पञ्च पञ्चनखा भक्ष्या'इत्यादौ-रागप्राप्तभक्षणस्य पञ्चनखेषु तदतिरिक्तेषु चातिप्रसक्तिस्तत्र-पञ्चानां पञ्चनखानां भक्ष्यत्वोक्तिः परिसङ्ख्येत्युच्यते । एवञ्च प्रकृतेऽपि-समासे असमासे च प्रातिपदिकसञ्ज्ञाप्राप्तौ-समासस्य प्रातिपदिकसञ्ज्ञाविधानं-परिसङ्ख्यैव भवितुमर्हति न नियमः, पाक्षिकत्वाभावात् । तदुक्तं-

'विधिरत्यन्तमप्राप्तौ, नियमः पाक्षिके सति ।
तत्र चाऽन्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ।' इति ।

सत्यम्, अन्यनिवृत्तिरूपनियमसाधर्म्येणात्र परिसङ्ख्यायामपि नियमशब्द उपात्तः, वस्तुतस्तु परिसङ्ख्यैव सेति तत्त्वविदः प्राहुः । 'नियमशास्त्राणां निषेधमुखेन प्रवृत्ति'रिति वदतां प्राचां मते नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापको यो नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो धर्मस्तद्धर्मावच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकधर्मावच्छिन्नातिरिक्तस्य स्वविधेयाभावो बोध्यते । तादृशनियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापको नियम्यार्थवत्सूत्रीयोद्देश्यतावच्छेदक-धातुप्रत्ययादिभिन्नार्थवत्त्व-व्याप्यो धर्मश्च प्रकृते-पूर्वभागपदघटितसमुदायत्वं, तदवच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकसमासत्वावच्छिन्नातिरिक्तस्य वाक्यस्य च स्वविधेय-प्रातिपदिकत्वा-ऽभावोऽत्रेति समासग्रहणादवगम्यते ।

❀ अभिनव-चन्द्रिका ❀

कर्तव्य इत्यभिप्रेत्याह—**नियमस्य सजातीयविषयत्वादिति** । **यत्तच्छब्दार्थयोरननुगतत्वेनेति** । यत्तत्पदयोः सर्वनामत्वेन बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तत्वेन बुद्धीनामानन्त्यात्तदर्था-नामप्यानन्त्येनानुगमासम्भवादिति भावः । ननु बुद्धीनामानन्त्येऽपि दीक्षितबुद्धिस्थे प्रकृते

❀ विषमपदविवृतिः ❀

त्यादौ वर्णानां प्रातिपदिकत्ववारणायौत्सर्गिकैकवचनोत्पत्तेरुक्तदिशाऽऽपादयितुं शक्यत्वात् । अथवा 'हरिषु' 'करोषी'त्यादौ 'षु—करोषी'ति सुप्तिङन्तसमुदायस्यानर्थकस्य प्रातिपदिकत्ववारणाय तत् । तस्य प्रातिपदिकत्वे तु 'सुपो धातु'रिति लुगापत्तिः । समासग्रहणकृतनियमेन तु न वारणं, पूर्व-भागस्याऽपदत्वात् । तदेतदभिप्रेत्योक्तं भाष्ये—'अर्थवदिति व्यपदेशाये'ति । विशिष्टसञ्ज्ञिनो निर्देशायेति तदर्थः । 'वर्णानां च माभू'दित्युत्तरभाष्यन्तु प्रत्युदाहरणदिक्प्रदर्शनपरम् ।

'दश दाडिमानी'ति निरर्थकपदसमुदायस्तु न व्यावर्त्यः, समासग्रहणकृतनियमेनैव व्यावर्त्तनात् । नचार्थवतां यः समुदायोऽर्थवान्स एव नियमव्यावर्त्य इति वाच्यम्, व्यावर्त्यसमुदायस्यार्थवत्त्वविशेषण-वैयर्थ्यात् । भाष्ये तु 'दश दाडिमानी'ति पदसमुदायस्यानर्थकस्य प्रातिपदिकत्वमाशङ्क्यानर्थकत्वेन परिहृत्य, ततो 'देवदत्त गामभ्याज शुक्ला'मिति सार्थकवाक्यस्य तदाशङ्क्य—समासग्रहणकृतनियमेन वारितम्, न त्वर्थवदित्यस्य तद्व्यावर्त्यतया प्रदर्शितम् । समासग्रहणकृतनियमस्यासाधारणं प्रयोजनं प्रदर्शयितुमेवानर्थकसमुदायस्यार्थवदित्यनेन व्यावृत्तिः प्रदर्शिता, न तु तस्य तदेव व्यावर्त्य-मित्यभिप्रेत्य । अप्रत्यय इति तु प्रसज्यप्रतिषेधः । तेन 'काण्डे' 'हरा'वित्यादौ पूर्वा-न्तवत्त्वेन प्राप्तस्यापि प्रातिपदिकत्वस्य निषेधसिद्धिः । अन्यथा प्रतिषेधस्य शास्त्रविहितत्वाभावेन स्थानिवत्त्वाऽन्तवत्त्वयोरप्रवृत्तौ प्रातिपदिकत्वे लुगापत्तिः । शास्त्रतात्पर्यविषयस्यापि शास्त्रीयत्वे तु न मानम् । अन्यथाऽज्भिन्नेऽयादेशस्यापि शास्त्रतात्पर्यविषयत्वेन तस्मिन्नपि स्थानिवद्भावापत्तौ 'नायक' इत्यादावयायनापत्तिः । अत एव प्रसज्यप्रतिषेध एव—'ब्रह्मबन्धू'रित्यादौ प्रातिपदिकत्वं न स्यादित्युक्तं भाष्ये—न पर्युदासे । 'अथवा पुनरस्तु पर्युदासे' इति भाष्यन्तु प्रौढि-वादपरम्, अन्यथा 'काण्डे' इत्यत्र ह्रस्वस्य कथञ्चिद्वारणेऽपि 'सुपो धातु'रिति लुकः प्रसङ्गात् । अन्तादि-वत्त्वयोरेकत्रार्थेऽनाश्रयणेनो'भयत आश्रयणे' इति निषेधाप्रवृत्तेः, तस्य व्यपवर्गविषयत्वाच्च । अस्यो-दाहरणं त्वव्युत्पत्तिपक्षे 'घटः पट' इत्यादि । व्युत्पत्तिपक्षे तु 'बहुपटवः' 'परमगार्ग्यायणः' 'शिव-भागवतः' 'राजकुमारीश्रित' इत्याद्युदाहरणम् । गार्ग्यभगवच्छब्दाभ्यां सुप्फगण्प्रवृत्त्या शिव—परमे-त्येतत्सहितस्यातद्धितान्तत्वात्, 'राजन् ङस् कुमारी अ'मित्यस्यां दशायां षष्ठीतत्पुरुषयोर्द्वितीया-तत्पुरुषयोर्युगपत्प्रवृत्त्या समुदायस्यासमासत्वादित्याहुः ।

---

❀ वरवर्णिनी ❀

'नियमस्य निषेधमुखेन प्रवृत्तौ प्राप्त प्रातिपदिकत्व-बाध-स्वार्थत्याग-परार्थकल्पनादिदोषप्रसङ्ग इति नियम-शास्त्राणां विधिमुखेनैव प्रवृत्ति'रिति वदतामर्वाचां मते तु नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापक-नियम्यशा-स्त्रीयोद्देश्यतावच्छेदकव्याप्य-धर्मावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः ।तथा च प्रकृते—अर्थवच्छास्त्रीयोद्देश्यतावच्छेदकताद्दृशार्थवत्त्वव्याप्य-नियामक-कृत्तद्धितेति—शास्त्रीयोद्देश्यतावच्छेदक-समासत्वव्यापक—पूर्वभागपदघटितसमुदायत्वरूप—धर्मावच्छिन्नातिरिक्तत्वेनार्थवत्सूत्रीयोद्देश्यतावच्छेदकाव-च्छिन्ने सङ्कोचेन पूर्वभागपदघटितसमुदायत्वरूपे वाक्ये समासे च पूर्वसूत्रेण प्रातिपदिकत्वाप्राप्तौ नैयामक-शास्त्रेण समासे प्रातिपदिकसञ्ज्ञा विधीयते इति तत्त्वम् । स्पष्टञ्चेदं शेखराभिनवचन्द्रिकाऽभिनवराज-लक्ष्म्यां, शेखर—जटाजूट—त्रिपुरसुन्दर्यादिषु च मान्यैर्निरूपितन्तत एवावधार्यम् ।

सजातीयविषयत्वात्साजात्यं दर्शयितुमाह—**पूर्वो भाग इति**। एतेन यत्तच्छब्दार्थयोरननुगतत्वेन शब्दानुगमस्याप्रयोजकत्वेन व्यवच्छेद्यानुगमेऽपि क्षत्यभावेन च

❀ अभिनव-चन्द्रिका ❀

यत्तत्पदयोः शक्तिरिति स्वीकारेणानुगमः सम्भवत्येवेत्यत आह-**शब्दानुगमस्याप्रयोजकत्वेनेति**। अयम्भावः-दीक्षितोत्पत्तेः प्राक्तदीयबुद्धेरभावेन तदानीमपि समाग्रहणकृतनियमेनार्थवत्सूत्रे सङ्कोचस्यावश्यकत्वेन अयन्नियमोऽप्रयोजक इति। ननु 'यत्र सङ्घाते' इत्याद्युपलक्षणं— 'पदपूर्वावयवकसमुदायस्य चेत्तर्हि समासस्यैवे'त्यस्य, तथा चानुगमः सम्भवत्येवेत्यत आह—

❀ चिदस्थिमाला ❀

**नियमेति**। **सजातीयेति**। अन्यथाऽतिप्रसङ्गापत्तेरिति भावः। **खण्डने**[1]क्तदुक्तिं खण्डयति—**एतेनेति**। साजात्यप्रदर्शनाय तथाकथनेनेत्यर्थः। अर्थयोः=तज्जन्यधीविशेष्ययोः। अननुगतत्वेन=आनन्त्यात्। शब्दानुगमस्य='यत्र—तस्ये'त्येवंरूपस्य। ननु बुद्धिस्थत्वेन तयोरनुगम एवात आह—**व्यवच्छेद्येति**। वाक्येत्यर्थः। नियमस्वरूपभङ्गस्य तावता अभावादिति भावः। आदिना 'तस्ये'त्यन्तपरिग्रहः। एवेन फलसामान्याभावः सूचितः। नन्वत्र पदशब्देन न तत्सञ्ज्ञकग्रहणं-'वृषण्वसु'रित्यादौ तदभावात्, नापि सुबन्तादिग्रहणमनुकरणे तदभावात्, नापि पदत्वयोग्यग्रहणं, भत्वविषये तदभावात्, 'उत्तरपदत्वे चे'त्यस्य प्रत्याख्यानप्रकारस्यायुक्तत्वात्, आरण्यकदण्डस्य तत्त्वेऽपि कीटाद्युपभुक्तदण्डस्य तदभाववत्। अत एव 'वेतस्वा'-निति सिद्ध्यर्थं सप्तमीसमास आदृतो भाष्ये। अन्यथा षष्ठीसमासेऽपि तथा निर्वाहे तदसङ्गतिः स्पष्टैव। नापि पदत्वसम्पादकप्रकृतित्वाक्रान्तग्रहणम्, सर्वसमासे पूर्वभागस्य प्रकृतित्वाभावात्। एवञ्च 'राज्ञः पुरुष' इत्यादेर्न व्यावर्त्यत्वम्। यद्यपि तत्र विभक्तिपूर्वभागे प्रकृतित्वमस्त्येव, तथापि पदत्वसम्पादकत्वाभावः। किञ्च 'जन्मवा'नित्यादौ तदनापत्तेः, तद्धितपदस्यौपगवादौ कृतार्थत्वात्। शुद्धप्रकृतित्वविवक्षणे तु न

❀ ज्योत्स्ना ❀

सत्त्वेनादोषादिति सर्वमनवद्यम्। **नियमस्य सजातीयविषयत्वादिति**। सामान्यप्राप्तेः स्वसजातीयाद्यवच्छेदेन लब्धनिष्कम्पप्रवृत्तिकविषयत्वं हि नियमः। यथा—'पञ्च पञ्चनखा भक्ष्या' इत्युक्ते रागतः प्राप्तेः पञ्चपञ्चनखसजातीयात्प्राणिपञ्चनखाद्यवच्छेदेन पञ्चपञ्चनखभक्षणरूपविषयस्याऽप्राप्तस्य लाभो निष्कम्पप्रवृत्तिकः, ततश्च पञ्चातिरिक्ताऽप्राणिशर्करादिप्रतिकृतिपञ्चनखे पञ्चपञ्चनखविजातीये प्राणिन्यप्राणिनि च भक्षणमभ्यनुज्ञायते। एवं 'समासः प्रातिपदिक'मित्युक्ते सामान्यतः प्राप्तेरर्थवत्प्रातिपदिकमित्यस्य समाससजातीयाद्यवच्छेदे समासप्रातिपदिकत्वरूपविषयस्याऽप्राप्तस्य लाभो निष्कम्पप्रवृत्तिकः। ततश्च समासाद्विजातीयेऽर्थवन्मात्रे प्रातिपदिकत्वमभ्यनुज्ञेयम्। समाससजातीयाद्यवच्छेदश्च समासत्ववद्वृत्तिसमानधर्मज्ञानमन्तरेण दुर्निरूपः, साधर्म्यरूपत्वात्सजातीयत्वस्य, तदेतत्सर्वमभिसन्धायाह—साजात्यं **सन्दर्शयितुमाहेति**। **चक्रपाणि**[1]खण्डनापन्नदूषणं परिहरति—**एतेनेति**।

**यत्तच्छब्दार्थयोरननुगतार्थकत्वेनेति**। 'तदादीनां गोत्वाद्यवच्छिन्ने शक्तिः, स इत्युक्ते गौरित्याद्याकारकबोध' इति मतेनेदम्। नन्वस्त्वर्थाननुगमः,—तद्वाचकशब्दस्त्वनुगतो 'यत्र सङ्घाते' इत्यादिको भविष्यति, जातिविशिष्ट-व्यक्तिवादेऽननुगतव्यक्तीनामनुगत एको जातिरूपोऽर्थ-

❀ सदाशिवभट्टीयम् ❀

कत्वात्साजात्यादिति भट्टाः। **यत्तच्छब्दार्थयोरिति**। तज्जन्यधीविशेष्ययोः। **अननुगतत्वेनेति**।

❀ विषमपदविवृतिः ❀

**कृत्तद्धितसमासाश्च**। **चक्रपाण्यु**[1]क्तदूषणमुद्धर्त्तुमाह—**एतेनेति**। साजात्यप्रदर्शनमात्राभिप्रायकत्वेनेत्यर्थः। अर्थाननुगमेपि शब्दानुगमोऽस्त्येवेत्याशङ्क्याह—**शब्दानुगमस्येति**। अर्थस्यैव

१ 'मनोरमाखण्डन'कृच्चक्रपाणिशेषः श्रीशेषवीरेश्वरपुत्रः, शेषश्रीकृष्णपौत्रः।

'यत्र सङ्घाते' इत्यादि व्यर्थमेवेत्यपास्तम् । पदशब्देनात्र स्वातन्त्र्येणापि प्रयोगार्ह-मर्थवद्गृह्यते । अत एव 'अर्थवत्समुदायानां समासग्रहणं नियमार्थ'मित्युक्तमत्र भाष्ये ।

❀ अभिनव-चन्द्रिका ❀

**व्यवच्छेद्यानुगमेऽपि क्षत्यभावेनेति** । **अपास्तमिति** । नियमशास्त्रसार्थक्याय प्रकृते व्यवच्छेद्यानुगमस्यावश्यकत्वादिति भावः । ननु पदपूर्वावयवकसमुदायत्वन्नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकं भवितुमर्हति, 'वृषण्वसुः' 'वृषणश्व'इत्यादौ समासत्वस्य सत्त्वेऽपि पदपूर्वावयवकसमुदायत्वस्याभावात्, 'वृषण्वस्वश्वयो'रिति वार्तिकेन वृषणित्यस्य भत्वादित्यत आह—**स्वातन्त्र्येण प्रयोगार्हार्थवदिति** ।

**अत एवेति** । 'यत्र सङ्घाते पूर्वो भागः पद'मिति–'स्वातन्त्र्येण प्रयोगार्हार्थव'दित्यस्योपलक्षणमिति स्वीकारादेवेत्यर्थः । **अर्थवत्समुदायानामिति** । अर्थवतां समुदायाः–अर्थवत्समुदायाः, अर्थ-

❀ चिदस्थिमाला ❀

पदशब्दस्वारस्यं, शक्तग्रहणे तु वैयर्थ्यं तदवस्थमेवात आह—**पदेति** । अत्र=साजात्यप्रदर्शकवाक्ये । अपिः पारतन्त्र्यसमुच्चायकः । अत्रार्थे भाष्यमपि प्रमाणयति—**अत एवेति** । उक्तरीत्याऽन्यथा गत्यभावादेवेत्यर्थः । अत्र तन्त्रेण षष्ठीसमासः कर्मधारयश्च । आद्येन डित्थादौ न दोषः, अन्त्येन नियमस्य सजातीयापेक्षत्वलाभः, अर्थवत्पदस्य तत्रानुवृत्तेः। अन्यथाऽनर्थकसमासेऽर्थवतां समूहत्वस्य सत्त्वेऽपि समूहस्यानर्थक्या-

❀ ज्योत्स्ना ❀

इवेत्यत आह—**शब्दानुगमस्य चाप्रयोजकत्वेनेति** । अयम्भावः,—अ(न)नुगतार्थे शक्तिग्रहमुपजीव्य शब्देनार्थोऽनुगन्तव्यः, अननुगतस्य चाऽर्थस्यानन्त्यव्यभिचाराभ्यां यदि शक्तिरेव न गृहीता—तत्कथं शब्देन तदनुगमो भविष्यतीति । ननु तदादीनां बुद्धिविशेषविषयत्वमेव सकलार्थसाधारणं शक्यं, न गोत्वादि, 'तस्यापत्य'मिति सूत्रे 'सर्वनामनिर्देशे विशेषाऽसम्प्रत्ययः, सामान्यनिर्देशा' दितिभाष्यात् । बुद्धिविशेषश्च–'इदमस्तु–सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ।।' इत्यादिवृद्धोक्तिसमधिगम्योऽतो नास्त्यननुगम इत्यस्वरसादाह–**व्यवच्छेद्यानुगमेऽपि क्षत्यभावेनेति** । उपादेयस्य फलविशेषसम्बन्धबोधनायाऽव्यवधानेन प्रतीतिरपेक्षिता, सा चानुगममन्तरेणासम्भविनी । व्यवच्छेद्यस्य तु तथात्वाभावादननुगमेऽपि न दोषः, अत एव भाष्ये शब्दापशब्दयोरन्यतरोपदेशे तदितरस्मिन्नपशब्दत्वसाधुत्वयोरनुमातुं शक्यत्वेऽपि शब्दोपदेशस्य ज्यायस्त्वमुक्त्वा 'इष्टान्वाख्यानं खल्वपि भवती'ति तत्र हेतुरुपदर्शितः पस्पशायामिति भावः । नियमशरीरे न्यूनतां परिहरति—**पदशब्देनात्रेति** । ननु वाक्ये सञ्ज्ञावारणाय भाष्येऽर्थवत्समुदायानां समासग्रहणस्य नियमार्थत्वमुक्त्वा 'बहुपटव'इत्यत्र सञ्ज्ञार्थं नियमस्य सञ्ज्ञा-

❀ सदाशिवभट्टीयम् ❀

आनन्त्यात् । **शब्दानुगमस्येति** । 'यत्र तरये'त्येवंरूपस्य । ननु बुद्धिस्थत्वेन तयोरनुगम एवात आह–**व्यवच्छेद्येति** । **क्षत्यभावेनेति** । नियमस्वरूपभङ्गस्य तावताप्यभावादिति भावः । 'स्वातन्त्र्येणापी'त्यपिना पारतन्त्र्यसमुच्चयः। अन्यथा 'सर्वं वाक्य'मिति न्यायेन स्वातन्त्र्येणैवेत्यर्थापत्त्याऽनुकरणस्य इतिशब्दापेक्षस्यापि प्रयोगेण स्वातन्त्र्येणैव प्रयोगार्हत्वाभावान्नियमेन व्यावृत्तिर्न स्यात् । **भाष्ये सुबन्तानामिति** ।

❀ विषमपदविवृतिः ❀

नियमशरीरे निवेशादिति भावः । **व्यवच्छेद्यानुगमेपीति** । सङ्ग्राह्यस्यैवानुगमः, यथा 'सास्नादिमत्त्वं गोर्लक्षण'मित्यत्र सङ्ग्राह्याणां सकलगोव्यक्तीनामनुगमः । व्यवच्छेद्यमहिष्यादिकन्तु न कोऽप्यनुगमयति । तथा च भगवान्पाणिनिः–सङ्ग्राह्यान्साधुशब्दानेवानुगमयति नासाधुशब्दानिति भावः । **अपास्तमिति** । साजात्यप्रदर्शनार्थमेव 'यत्र सङ्घात'इति मूलस्य प्रवृत्तत्वेनानुगमस्य सम्भवेप्यनुपयोगेपि क्षत्यभावादिति भावः । वस्तुतो द्वावपि स्थूलदृष्वानौ; तथा हि–पदसञ्ज्ञकपूर्व-

१. द्वौ=चक्रपाणि–नागेशभट्टौ । नव्यः=नागेशभट्टः ।

"भाष्ये 'सुबन्ताना'मित्यनेन भेदसंसर्गद्वारकार्थवन्त उपलक्ष्यन्ते–" इति कैयटेन स्पष्टमेवोक्तम्। तेन 'गवित्ययमाह'त्यादौ 'गो'इत्यादीनां सुबन्तत्वाभावेऽपि

❀ अभिनव-चन्द्रिका ❀

वांश्चासौ समुदायश्चार्थवत्समुदायः, अर्थवत्समुदायाश्चार्थवत्समुदायश्च तेषामिति तन्त्रेण निर्देशः। नानाप्रयोगाभिप्रायेणाऽर्थवत्समुदायानामिति बहुवचननिर्देशः। तथा च 'स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकः, तादृशार्थवदुत्तरावयवकः, अर्थवांश्च यस्समुदायस्तस्य चेत्तर्हि समासस्यैवे'ति भावः। अत एव पूर्वसूत्रे'ऽर्थव'दित्यस्य–'दश दाडिमानी'त्यनर्थकसमुदायव्यावृत्तिस्तत्फलमित्युक्तम्भाष्ये। अन्यथा समासग्रहणकृतनियमेनैव तद्व्यावृत्तौ तदसङ्गतिः स्पष्टैवेति दिक्। **भेदसंसर्गद्वारकार्थवन्त इति**। शक्तिभेद नियामकसंसर्गकद्वारकार्थवन्त उपलक्ष्यन्त इत्यर्थः। 'आकाङ्क्षाभास्यार्थवन्त उपलक्ष्यन्ते' इति यावत्। **सुबन्तत्वाभावेपीति**। सादृश्यज्ञानाधीनोपस्थित्या अर्थबोधकत्वेऽपि शक्तिलक्षणा-

❀ चिदस्थिमाला ❀

त्त्रैव विध्यर्थत्वे सम्भवति नियमानुपपत्त्या वाक्ये तदापत्तिरेव। किञ्च 'पञ्चनावप्रिय' इत्यादौ पूर्वखण्डे तदापत्तिरिति भावः। अत्र=अर्थवत्सूत्रे। वाक्यवारणायेति भावः। नन्वेवमपि अत्रत्यभाष्यान्तरविरोधः तेन मूलोक्तस्यैव यथाश्रुतस्य लाभादत आह–**भाष्ये इति**। तदग्रे अत्रत्ये एवेत्यर्थः। 'बहुपटव' इत्यादौ तदभावमाशङ्क्य नियमस्य साजात्यप्रदर्शनायेत्थमुक्तम्। **भेदेति**। वाक्ये पदार्थयोर्विभागेनापि शब्दप्रयोगे सतीतरसंसर्गाकाङ्क्षा–भेदसंसर्गः। स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्ता इत्यर्थः। समासेऽपि वाक्यीयेनैव तेन विशिष्टार्थवत्त्वम्। नहि प्रकृतिप्रत्यययोर्विभागः, परश्चेति वचनादिति तद्भावः। तत्र पूर्वभागफलमाह—**तेनेति**। [ 'स्वातन्त्र्येण प्रयोगार्हे'ति– ] अर्हान्तेनेत्यर्थः। **'गो' इतीति**। स्वरूपबोधायाव् न कृतः, संहिताऽविवक्षया वा। अभावेऽपि=तत्प्रयुक्तपदत्वाभावेऽपि।

❀ ज्योत्स्ना ❀

सजातीयत्वेन सुबन्तमात्रविषयतोक्तेति, तत्राह—**भाष्ये सुबन्तानामित्यनेनेति। भेदसंसर्गद्वारकार्थवन्त इति**। भेदे=प्रवृत्तिनिमित्तभेदे सत्याकाङ्क्षा संसर्ग इतरान्वयस्तद्द्वारकार्थवन्त इत्यर्थः। **उपलक्ष्यन्त इति**। 'अश्वक्रीती'त्यादौ 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते'रिति वचनात्सुबन्तासुबन्तानामपि समासदर्शनेनोक्तार्थस्यैव सजातीयत्वात्। तिङ्भिन्नघटितत्वेन सजातीयत्वग्रहणाद्देवदत्तः पचति भवतीत्यादिवाक्येऽतिव्याप्तितादवस्थ्यन्तु न—'जहिजोड:' 'पचतभृज्जते'त्यादिसमासानां तिङन्तघटितत्वदर्शनेनोक्तरूपे सजातीयत्वस्य ग्रहीतुमशक्यत्वादिति भावः। स्पष्टञ्चेदं भाष्ये कैयटे च। **गोइत्यादीनां सुबन्तत्वाभावेऽपीति**। यदात्वजन्तपुँल्लिङ्गशेषे

❀ सदाशिवभट्टीयम् ❀

पूर्वोक्तभाष्यानन्तरं प्रकृतसूत्रभाष्य इत्यर्थः। **भेदसंसर्गेति**। वाक्ये पदार्थयोर्विभागेनापि प्रयोगे

❀ विषमपदविवृतिः ❀

भागघटितत्वस्य अनुगतरूपस्य सम्भवात्। 'गामानये'त्यादेरिव 'बहुपटव' इत्यादेरपि प्रातिपदिकत्वाभाववारणाय व्यवच्छेद्यानुगमस्यावश्यकत्वाच्च व्यवच्छेद्यानुगमस्यासम्भवमनुपयोगं च वदन् **चक्रपाणिः स्थूलदृश्वा**। तदेतद्द्वयमभ्युपेत्य साजात्यप्रर्शनार्थत्वं वदन्नव्योऽतिस्थूलदृश्वा। यत्तच्छब्दार्थयोरननुगमे साजात्यस्यैवासम्भवात्। समासवाक्ययोरेकधर्मवत्त्वं हि साजात्यम्। व्यवच्छेद्यानुगमस्यानावश्यकत्वे साजात्यप्रदर्शनानुपयोगाच्च। ननु वाक्यसञ्ज्ञावारणायार्थवत्समुदायानामिति नियमशरीरमुक्त्वा 'बहुपटव' इत्यादौ दोषमाशङ्क्य–'सुबन्तानां समुदायस्य समासग्रहणं नियमार्थ'मित्युक्तं भाष्ये, न तु 'स्वातन्त्र्येण प्रयोगार्हे'ति विशेषणेन पूर्वोक्तनियमशरीरं स्थापितमित्याशङ्क्याह—**भाष्ये सुबन्तानामित्यनेनेति**। तथा च 'सुबन्ताना'मिति भाष्येण-पूर्वोक्त-

❀ वरवर्णिनी ❀

अत्र सूत्रे परेस्त्वेवं व्याचक्षते—'नियमस्य सजातीयविषयत्वा'दित्यस्यायं भावः–नियामकशास्त्रं हि–स्ववैयर्थ्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यीभूतं–स्वीयोद्देश्यतावच्छेदकव्यापकीभूतं–यद्रूपन्तद्रूपावच्छिन्नाति-

❀ वरवर्णिनी ❀

रिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचङ्कृत्वा स्वीयोद्देश्यतावच्छेदकावच्छिन्ने स्वविधेयं विधत्ते, इदमेव च नियमस्य सजातीयविषयत्वं नाम । 'कृत्तद्धिते'ति सूत्रे च तादृशं रूपङ्किमित्याह—**पूर्वो भाग इतीति** । एवञ्च पदसञ्ज्ञकपूर्वभागघटितसमुदायत्वमेव प्रकृते तादृशं रूपमित्याशयः । **यत्तच्छब्दार्थयोरिति** । स्वैयर्थ्यप्रयोजक–नियम्य–शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने यद्रूपावच्छिन्नाति-रिक्तत्वेन सङ्कोचस्तद्रूपमनुगतीकर्तुं प्रवृत्तोऽयं ग्रन्थस्तत्राप्यननुगतार्थकयत्तच्छब्दयोरुपादानेन पुनरप्यननु-गम एवावस्थित इति भावः । ननु—यत्तच्छब्दप्रतिपाद्यत्वेन दीक्षितनात्पर्यविषयो यावान्समुदायस्तत्त्व-मेव तादृशं रूपमिति नाननुगम इत्यत आह—**शब्दानुगमस्याप्रयोजकत्वेनेति** । दीक्षितमजानतो दीक्षितप्राक्कालिकस्य वा तेन रूपेण ज्ञानासम्भवेनाप्रयोजकत्वं तादृशरूपेणानुगमस्येति तदाशयः । यद्यपि पदसञ्ज्ञकपूर्वभागवत्समुदायत्वेन रूपेणानुगमः सम्भवति, तथापि—प्रकृतेऽनुगमाभावेऽपि क्षतिविरहः, किञ्च 'राज्ञः पुरुषः' 'गामभ्याजे'त्यादि वाक्यात्मकाननुगततत्तद्व्यक्त्यतिरिक्तत्वेनैव सङ्कोचेऽभीष्टसिद्ध्या-ऽनुगमप्रयास एव दीक्षितानामनुचित इत्याह—**व्यवच्छेद्येति** । यस्य समुदायस्यार्थवच्छास्त्रीयोद्देश्यता-वच्छेदकाक्रान्तत्वं स एवात्र व्यवच्छेद्यः—'राज्ञः पुरुष' इत्यादिः । **अपास्तमिति** । 'यत्र सङ्घात'-इत्यादिना सङ्कोचरूपाकारनिरूपणादिति भावः । किञ्च तत्तद्व्यक्तित्वेन सङ्कोचापेक्षया—पदसञ्ज्ञकपूर्व-भागवत्पदसमुदायातिरिक्तत्वेन सङ्कोचे लाघवादीदृश एव सङ्कोचाकारो बोध्यः—'इति ।

**भेदसंसर्गद्वारकार्थवन्त इति** । 'अर्थवन्त' इत्येतावन्मात्रोक्तौ—नागेशमते पदपदार्थयोस्तादा-त्म्यस्यैव शक्तित्वेन तादृशतादात्म्यात्मकशक्तिसम्बन्धेनार्थवतामेव घटादीनां ग्रहणं स्यात्, अतो 'भेद-संसर्गद्वारके'त्युक्तम् । भिन्नं–भेदः=शक्तिभिन्नः सादृश्याख्यः,–संसर्गः । 'अपी'ति शेषः । एवञ्च—सादृश्याख्यभेदसम्बन्धेन, शक्त्याख्यतादात्म्य[अभेद]सम्बन्धेन च योऽर्थवानित्येवं निर्गलितोऽर्थः । तेन 'गवित्ययमाहे'त्यस्य सादृश्याख्यसम्बन्धेनार्थवतोऽनुकरणस्यापि नियमेन व्यावृत्तिः सिद्धेति श्रीबालशास्त्र्य-नुयायिनः । केचित्तु—भेदे सति=उपस्थितिभेदे सतीत्यर्थ इत्याहुः, तन्न, घटः पटश्चेति समूहालम्बनो-पस्थितौ भेदाभावेन तादृशपदसमुदायस्य प्रातिपदिकत्वापत्तेरित्याहुः । अन्ये तु—"उत्तरपदपर्याप्तशक्ति-निरूपकार्थनिरूपित–शक्तिसादृश्यादिप्रयोज्यशाब्दबोधविषयीभूतार्थस्य योऽन्वयस्तद्विषयकबोधप्रयोजकशक्ति-सादृश्यादिसम्बन्धेनाऽर्थवन्त इत्यर्थः । भेदे सति=शक्तिभेदे सति, यः संसर्गः=आकाङ्क्षाभास्यतावच्छेदक-विलक्षणरूपावच्छिन्नोऽन्वयः–इत्यक्षरार्थात् । तादृशसंसर्गश्च–'राज्ञः पुरुष' इत्यादौ राजस्वत्वयोर्निरूपि-तत्वमेव । तद्विषयकबोधप्रयोजकशक्तिसादृश्यादिसम्बन्धेनार्थवत्त्वं तत्रेति नियमेन तद्व्यावृत्ति"रित्याहुः ।

परिष्कारप्रियास्तु—'शक्तिभेदे सती'त्याद्यर्थेन 'सुन्दरः पुरुष' इत्यादेरभेदसंसर्गद्वारकार्थवतो ग्रहणेन दोषाभावेऽपि 'गवित्ययमाहे'त्यादौ शक्तिभेदाभावेन प्रातिपदिकत्वापत्तिर्दुरुद्धरैव,—किञ्च 'देवदत्तो गार्ग्य' इत्येतद्घटक'देवदत्तो गार्ग्ये'त्यस्याप्यर्थवत्त्वेन समासग्रहणकृतनियमेनैव व्यावृत्तौ प्रत्ययग्रहणपरिभाषया तदाद्युपस्थितेः फलत्वेनास्य भाष्ये उदाहरणमसङ्गतमेवेति—पदविशिष्टसमुदायत्वं- भेदसंसर्गद्वारकार्थवत्त्वं, वै० 'स्वनिष्ठशक्तिविशिष्टसंसर्गकविशेष्यविशेषणभावप्रयोजकत्व', 'स्वनिष्ठशक्तिनिरूपकार्थबोधौपयिकाकाङ्क्षा-पर्याप्त्यधिकरणत्वो'भयसम्बन्धेन । शक्तिवैशिष्ट्यञ्च–'स्वनिरूपकार्थप्रतियोगिकत्व–अनुयोगिकत्वैतदन्यतरत्व' 'स्वनिरूपकार्थभिन्नार्थप्रतियोगिकत्व–तादृशानुयोगिकत्वैतदन्यतरवत्त्वै'तदुभयसम्बन्धेन । शक्तिश्चात्र पद-निष्ठा नार्थनिष्ठा । 'गवित्ययमाहे'त्याद्यर्थं, 'देवदत्तस्य—'खाद्'-शृणु' इत्याद्यर्थञ्च प्रथमः सम्बन्धः । 'देव-दत्तो गार्ग्ये'त्याद्यर्थञ्च 'स्वनिष्ठशक्तिनिरूपकार्थे'ति द्वितीयः सम्बन्धः–"इत्यनुगमय्य प्राहुः । आचार्यास्तु—भेदे=प्रवृत्तिनिमित्तभेदे—" इत्येव समर्थयामासुः । विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेयः ।

**देवदत्तो गार्ग्य इति** । नन्वेतत्सञ्ज्ञाफलभूतेत्याद्यर्थवत्त्वं यदि 'देवदत्तो गार्ग्ये'त्यत्र भवता ['प्रत्यय-ग्रहणपरिभाषया तत्र न प्रातिपदिकत्व'मिति ब्रुवता ] स्वीक्रियते तदा–'देवदत्तेन कृते'त्यत्रापि अर्थवत्त्वस्य

न समुदायस्य प्रातिपदिकत्वम्, अनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तावन्मात्रस्यापि पृथक्प्रयोगार्हत्वात्। 'बहुपटव' इत्यादौ प्रातिपदिकत्वसिद्धये—'स्वातन्त्र्येणे'ति।

❀ अभिनव-चन्द्रिका ❀

न्यतरज्ञानाधीनोपस्थित्या अर्थबोधकत्वाभावेन प्रातिपदिकत्वाभावादिति भावः। **स्वातन्त्र्येणेतीति।** स्यादेतत्,—स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं पूर्वसूत्रवदेतत्सञ्ज्ञाफलभूतेत्यादि यदि परिष्क्रियते तर्हि 'पञ्चगवधने'त्यादौ 'पञ्चगवे'त्यस्य तादृशार्थवत्त्वस्याभावेन निरुक्तरूपे नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकत्वन्न स्यात्, तत्र समासत्वस्य सत्त्वेप्यर्थवत्पूर्वावयवकत्वस्याभावात्! किञ्च'राज्ञः पुरुषा'वित्यादौ 'पुरुषे'त्यस्य चिकीर्षितप्रातिपदिकसञ्ज्ञाफलभूतप्रत्ययेतर'औ'समभिव्याहारेणैव लोकेऽर्थविषयकबोधजनकत्वेन 'राज्ञः पुरुषे'तिसमुदाये स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकत्वाभावेन समासग्रहणकृतनियमेव तद्व्यावृत्तिर्न स्यादिति चेन्नैवम्, प्रातिपदिकसञ्ज्ञाफलभूत-प्रत्यय-पदै-तदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वं—'स्वातन्त्र्येण प्रयोगार्हार्थवत्त्व'मितिपरिष्कारेणादोषात्। 'राज्ञःपुरुषा'वित्यादौ औविभक्तेरपि प्रातिपदिकसञ्ज्ञाफलभूतत्वेन तदितरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वेन तत्र समासग्रहणकृतनियमेन व्यावृत्तिः सिध्यति। 'पञ्चगवधनः,' 'तन्निभः' 'कुम्भकारः', 'एधाञ्चक्रे' 'एधामासतुःकल्पम्' 'मूलकेनोपदंश'मित्यादौ धन—तत्—कुम्भ-चक्रे-एधाम्—मूलकेने-त्यादिषु प्रातिपदिकसञ्ज्ञाफलभूतप्रत्ययेतरत्वस्य सत्त्वेऽपि पदेतरत्वस्याभावात्प्रातिपदिकसञ्ज्ञाफलभूत—प्रत्यय-पदै-तदन्यतरेतरसमभिव्याहारानपेक्षयाऽर्थबोधजनकत्वेन पञ्चगव—निभ-कार-आसतुः-कल्पम्—उपदंशमित्यादीनां स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं निर्बाधम्। नच 'चश्वासु' 'हरिश्चि'त्यादौ सोर्निरुक्तस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वापत्तिरिति वाच्यम्, इष्टापत्तेः, सोर्निरुक्तार्थवत्त्वसत्त्वेऽपि पूर्वभागप्रकृतेस्तदभावाच्च। एवमेवोत्तरभागस्यापि 'स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं, परिष्करणीयमिति दिक्।

❀ चिदस्थिमाला ❀

समुदायस्य='गविनी'त्यस्य। **अनितीति।** 'अनुकरणश्चानितिपर'मित्युक्तेरिति भावः। अपी—तत्समुच्चायकौ। तावन्मात्रस्य=इतिरहितस्य। एतेन किञ्चित्समभिहारावश्यकत्वेनानुकरणे दोष एवेत्यपास्तम्, केवलप्रयोगस्यापि लोके शास्त्रे च बहुशो दृष्टत्वात्। एतेनासाधुत्वशङ्कापि निरस्ता।

नन्वेवं 'प्रयोगार्हार्थे'त्याद्येवालमत आह—**बहुपेति।** अत्र बहुजादेर्घटकतया तत्त्वेऽपि तथाऽतत्वात्। अपित्वनुकरणनिर्वाहक एवेति भावः। अर्थवत्त्वफलन्तूक्तमिव। नन्वेवमपि 'पुत्रकाम्ये'त्यादौ दोषः, नियम-

❀ ज्योत्स्ना ❀

स्वयं वक्ष्यमाणरीत्यानुकरणेभ्यो विभक्तिरवश्यमुत्पद्यते इत्युच्यते तदा यथाश्रुतोऽपि मूलोक्तो नियमः—'उत्तरस्तु तत्प्रकृतिकप्रत्ययो ने'तिशेषपूरणेन मनोरमायां व्याख्यातो न दुष्ट इति बोध्यम्। पुत्रकाम्ये-

❀ सदाशिवभट्टीयम् ❀

सतीतरसंसर्गाकाङ्क्षा—भेदसंसर्गः, स द्वारभूतो यस्य विशिष्यार्थवत्त्वस्य तद्युक्ता इत्यर्थः। समासेपि वाक्येनैव तेन विशिष्यार्थवत्त्वं, नहि प्रकृतिप्रत्यययोर्विभागः, परश्चेतिवचनात्, अतो बहुपटव इत्यादौ न दोष इति भाट्टम्।

❀ विषमपदविवृतिः ❀

नियमशरीरे 'स्वातन्त्र्येण प्रयोगार्हे'ति विशेषणं देयमित्युक्तं भवतीति भावः। भेदे=पृथक्प्रयोगे

१. 'स्वातन्त्र्येण प्रयोगार्हार्थव'दित्यादिनोक्ते रूपे। २. चिदस्थिमालाकृन्मतम्।

तत्र 'पूर्व'इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणात्–'पुत्रकाम्ये'त्यादौ न दोषः। अत एवाङ्गसञ्ज्ञासूत्रे भाष्ये–'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषायाः फलनिरूपणावसरे–'देवदत्तो गार्ग्ये'ति समुदायस्य यञन्तत्वेन

## ॐ अभिनव-चन्द्रिका ॐ

**स्वातन्त्र्येण प्रयोगार्हार्थवतामिति**। उक्त एवार्थः। **पुत्रकाम्येत्यादाविति**। 'काम्ये'त्यत्र शक्तग्रभावेन स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यताया अभावेन निरुक्तार्थवत्त्वाभावादिति भावः। **अत एवेति**। 'उत्तरभागोऽपि स्वातन्त्र्येण प्रयोगार्हार्थत्वानपेक्षित' इति स्वीकारादेवेत्यर्थः। **फलत्वेनोक्त इति**। नच 'देवदत्तो गार्ग्य'इत्यादौ 'देवदत्तो गार्ग्ये'त्यस्य चिकीर्षितप्रातिपदिकसञ्ज्ञाफलभूतविभक्तीतर-सु-समभिव्याहारेणैव लोकेऽर्थविषयकबोधजनकत्वेनार्थवत्सूत्रोक्तार्थवत्त्वाभावादेतत्फलकथनं भाष्योक्तमसङ्गतमिति वाच्यम्, 'अर्थवदन्तं यत्तद्धितान्त'मित्यर्थस्वीकारेण 'देवदत्तो गार्ग्ये'त्यस्यार्थवदन्तत्वेन तद्धितान्तत्वेन च दोषकथनस्य सङ्गतत्वात्।

स्यादेतत्,–'देवदत्तेन कृत'मित्यादौ 'कृते'त्यस्येव'देवदत्तो गार्ग्ये'त्यादौ गार्ग्येत्यस्यापि प्रातिपदिकसञ्ज्ञाफलभूतविभक्ति-पदे–तदन्यतरेतरसमभिव्याहारानपेक्षया लोके अर्थविषयकबोधजनकत्वरूपस्वातन्त्र्येण प्रयोगार्हार्थवत्त्वस्य सत्त्वात्पुनरपि प्रत्ययग्रहणपरिभाषाफलकथनासङ्गतिरिति वाच्यं, यस्समुदायः समासग्रहणकृतनियमशरीराक्रान्तत्वेन विवक्षितस्तत्पर्याप्ता यौपस्थापकशक्तिरानु-

## ॐ चिदस्थिमाला ॐ

व्यावर्त्यतापत्तेरत आह–**तत्रेति**। 'पूर्वो भाग'इत्यत्रेत्यर्थः। पूर्वत्वस्य साकाङ्क्षत्वादिति भावः। अत्रापेः फलाभावादाह—**स्वातन्त्र्येणेति**। तेनैवेत्यर्थः। न चात्र कृदन्तत्वात्सिद्धिः, नियमेन परत्वाद्बाधादिति भावः। स्वातन्त्र्यञ्चात्र विभक्तीतरापारतन्त्र्यरूपम्। इदमेव ध्वनयितुं परभागस्यापि तथात्वमिति प्रमाणयितुञ्चोक्तार्थावश्यकत्वं सूचयितुञ्चाह—**अत एवेति**। उक्तरूपनियमाङ्गीकारादेवेत्यर्थः। 'परिभाषाया' इत्यस्याग्रेऽप्यन्वयः।

## ॐ ज्योत्स्ना ॐ

**त्यादाविति**। अत्र हि प्रातिपदिकत्वाभावे टाबादि न स्यात्। न च कृदन्तत्वात्सिद्धिः, तस्य नियमेन परत्वाद्बाधनात्। आदिग्रहणाज्जन्मवानित्यादि। स्यादेतत्—'घटमानये'त्यादौ तिङन्तपदे सुबन्तपदसम्बन्धित्वग्रहे शब्दार्थयोस्तादात्म्यात्पदपदार्थयोरुभयोरपि परस्परसम्बन्धित्वात्–'आनयनं कर्मीभूतघटसम्बन्धि, कर्मविभक्त्यन्तघटपदवत्त्वा'दित्यानयनाद्यर्थपक्षकानुमानेन वाक्यार्थस्यातिरिक्तत्वाभावे तन्निरूपितबोधकत्वस्य वाक्येऽनभ्युपगमादर्थवत्त्वाभावान्नियमो निष्फलः। नचैवं 'घटो घटत्वसम्बन्धी, तादात्म्येन घटपदवत्त्वा'दित्याद्यनुमानेन पदार्थस्याप्यनतिरिक्तत्वे तन्निरूपितबोधकत्वस्य पदेऽनभ्युपगमादर्थवत्त्वस्य कुत्राप्यभावेन सञ्ज्ञाप्रणयनस्य निरालम्बनत्वापातः, हेतु-साध्य-पक्षधर्मताज्ञानमन्तरेणापि पदार्थबोधनादर्थवत्त्वस्यावश्यकत्वाच्च तथात्वमिति चेत्तथैव वाक्या-

## ॐ सदाशिवभट्टीयम् ॐ

केचित्तु–"**न दोष इति**। तदित्थं नियमनिष्कर्षः–'स्वनिष्ठप्रकृतित्वनिरूपकप्रत्यय–प्रकृत्यन्यतरसमभिव्याहारानपेक्षप्रयोगार्हार्थवत्पूर्वोत्तरभागस्यार्थवतः समुदायस्य चेद्भवति तर्हि समासस्यैवे'ति नियमशरीरम्। 'शिवरामा'दावतिव्याप्तिवारणायार्थवत्त्वेन पूर्वोत्तरभागौ विशेषितौ। 'बहुपटवः' 'पुत्रकाम्ये'त्यादावतिव्याप्तिवारणाय–प्रत्ययप्रकृत्यन्यतरसम्बन्धित्वेन समभिव्याहारो विशेषितः। एवमपि–कुम्भकारादा-

## ॐ वरवर्णिनी ॐ

सत्त्वात्तादृशसमुदायस्य प्रातिपदिकत्वापत्तिः, 'देवदत्तो गार्ग्ये'त्यत्रेव 'देवदत्तेन कृते'त्यत्र प्रत्ययग्रहणपरिभाषया तदादिनियमेन वारणन्त्वसम्भवि, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्तदादिनियमाभावात्।

प्राप्तप्रातिपदिकसञ्ज्ञाऽभावः फलत्वेनोक्तः। यथाश्रुतमूलोक्तनियमे तु नियमेनैव तत्र

## ॐ अभिनव-चन्द्रिका ॐ

भविकशक्तिरित्येतदन्यतरा तन्निरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रातिपदिकसञ्ज्ञाफलभूतविभक्ति-पद-एतदन्यतरेतरसमभिव्याहारानपेक्षया लोके अर्थविषयकबोधजनकत्वं 'स्वातन्त्र्येण प्रयोगार्हार्थवत्त्व'मिति परिष्कारेणादोषात्। तथाहि-अभेदसम्बन्धावच्छिन्ना या गार्ग्यत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपितदेवदत्तत्वावच्छिन्नविशेष्यताकशाब्दानुभवत्वावच्छिन्नं प्रति स्वन्तदेवदत्तपदसमभिव्याहृतस्वन्तगार्ग्यपदत्वप्रकारकज्ञानस्य कारणत्वेन 'देवदत्तो गार्ग्यः'त्यत्र औपस्थापकशक्तेरानुभविकशक्तेर्वा पर्याप्तिरभावेन 'देवदत्तो गार्ग्य' इत्येतत्पर्याप्तानुभावकशक्त्यौपस्थापकशक्त्यन्यतरनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रातिपदिसञ्ज्ञाफलभूतविभक्तीतरत्वेन गार्ग्यपदोत्तरसोः तत्समभिव्याहारापेक्षयैव 'गार्ग्यः'त्यस्य लोके अर्थविषयकबोधजनकत्वेन निरुक्तार्थवत्त्वाभावान्न समासग्रहणकृतनियमेन व्यावृत्तिरिति भाष्यसङ्गतिः। 'देवदत्तेन कृत'मित्यादौ तु भेदसंसर्गकदेवदत्त-

## ॐ चिदस्थिमाला ॐ

'प्राप्ते'त्यस्य 'तद्धितान्तत्वा'दित्यादिः। 'अतएवे'त्युक्तमर्थं विशदयति—**यथेति**। मूलस्य तथार्थककरणे तु न दोष इति सूचयितुं—**यथाश्रुते**त्युक्तम्। पदत्वघटितेत्यर्थः। एवेन परिभाषाव्यावृत्तिः। तत्र=उक्तसमुदाये।

## ॐ ज्योत्स्ना ॐ

दर्थबोधनाद्वाक्येऽर्थवत्त्वं किमपराध्यति?। तदेतभ्युपगमे ह्यशाब्दो वाक्यार्थः स्यात्। 'पदसमभिव्याहाररूपाकाङ्क्षायाः करणत्वज्ञानसहकारेण पदैरेव वाक्यार्थस्यापि बोधनादशाब्दत्वं ने'ति चेत्, पदकरणत्वज्ञानसहकारेण पदादर्थबोधनात्तत्रापि अर्थवत्त्वाभावकल्पनतौल्यादशाब्दत्वप्रसङ्गतादवस्थ्यात्।

नन्वितरासहकारेण पदजन्योपस्थितिविषयार्थवत्त्वमात्रात्पदानामर्थवत्त्वम्, पदार्थसम्बन्धित्वेन पदोपस्थितस्य पदार्थसम्बन्धरूपवाक्यार्थस्य शब्दप्रयोज्योपस्थितिविषयत्वाच्छाब्दत्वञ्च नानुपन्नमिति, तन्न, शब्दजन्यधूमज्ञानेन जायमानाया वह्न्यनुमितेः शब्दप्रयोज्योपस्थितिविषयत्वेन शाब्दत्वप्रसङ्गात्। तस्मात्पदस्येव वाक्यस्यापि अर्थवत्त्वावश्यम्भावात्तद्व्यावृत्तिफलको नियमो न निष्फल इति वाच्यम्, एवन्तर्हि वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वाऽननुभवात्तयोरर्थवत्त्वं दूरापेतम्।

## ॐ सदाशिवभट्टीयम् ॐ

वुत्तरभागस्य समुदायप्रकृतिकसुप्प्रत्ययापेक्षत्वात्, पञ्चनावप्रियादौ पूर्वभागस्य तदपेक्षत्वात्, साङ्कूटिनादौ 'कूटि'त्रित्यस्योत्तरसमुदायप्रकृतिकक्तप्रत्ययापेक्षत्वात्तस्य व्यभिचारित्ववारणाय—स्वनिष्ठप्रकृतित्वनिरूपकत्वेन

## ॐ वरवर्णिनी ॐ

किञ्च 'देवदत्तो गार्ग्यं'तिसमुदायस्याप्रत्ययान्ततयाऽर्थवत्सूत्रेण प्रातिपदिकत्वं दुर्वारं, न च समासग्रहणकृतनियमेन व्यावृत्तिः, उत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावान्नियमाप्रसक्तेः। अथ 'देवदत्तो गार्ग्यं'त्यत्र तादृशमर्थवत्त्वं नास्तीत्युच्यते तदा—स्वातन्त्र्येण प्रयोगार्हस्योत्तरभागस्यैव ग्रहणेऽङ्गसञ्ज्ञासूत्रभाष्यस्योपष्टम्भकत्वस्याऽसम्भवेन प्रकृतग्रन्थासङ्गतिः। किञ्च प्रत्ययग्रहणपरिभाषासिद्धेः पूर्वं प्रत्ययान्ततया समासेऽर्थवत्सूत्रेण प्रातिपदिकत्वाप्राप्त्या समासग्रहणं विध्यर्थमेवेति—अङ्गसञ्ज्ञासूत्रभाष्यस्य सङ्गतत्वेन शेखरोऽसङ्गत एवेति चेन्न। 'देवदत्तो गार्ग्ये'त्यत्र 'देवदत्तेन कृते'त्यत्र च निरुक्तार्थवत्त्वं नास्त्येव, 'अर्थवदन्तं यत्तद्धितान्त'मित्यर्थेन 'देवदत्तो गार्ग्ये' त्यस्यार्थवद्गार्ग्यान्तत्वेन प्राप्तसञ्ज्ञायाः प्रत्ययग्रहणपरिभाषया वारणमिति भाष्याशयो वर्णनीयः। प्रत्ययग्रहणपरिभाषाया अद्य यावदसिद्ध्या समासग्रहणस्य विध्यर्थत्वमेवेत्यपि न, 'प्रत्ययसामान्यग्रहणे प्रत्ययग्रहणपरिभाषा प्रवर्त्तते' इति पूर्वं स्वीकृत्य प्रत्ययविशेषग्रहणेऽपि तस्याः प्रवृत्तिरिति साधनायैवाङ्गसञ्ज्ञासूत्रभाष्यस्य प्रवृत्तत्वेन ततः पूर्वमपि प्रत्ययग्रहणपरिभाषा

### ॐ अभिनव-चन्द्रिका ॐ

प्रकारक-कृत-पदार्थविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तृतीयान्तदेवदत्तसमभिव्याहृतकृतपदत्वप्रकारकं ज्ञानमेव कारणम् , न तु तादृशाऽमन्तकृतपदत्वप्रकारकं ज्ञानम् । अन्यथा'देवदत्तेन कृतेन' 'देवदत्तेन कृतायै'त्यादौ शाब्दानुभवानुदयप्रसङ्गात् । तथाच 'देवदत्तेन कृते'त्येनस्यपर्याप्तानुभावकशक्ति-

### ॐ ज्योत्स्ना ॐ

अर्थप्रतीतेरन्यथानुपपत्त्या तत्कल्प्यते इति चेद्वर्णैरन्यथासिद्धिरिति तत्र ब्रूमः । तत्किमेकैकस्य वर्णस्यार्थप्रतीतिजनकत्वं ब्रूषे ? तत्समुदायस्य वा ? नाद्यः–द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात् । द्वितीयेऽप्युत्पद्यमानानां समुदायोऽभिव्यज्यमानानां वा ?, अत्राप्याद्ये क्रमेणोत्पत्तिर्युगपद्वा ? नाद्यः–आशुविनाशिनामप्युत्पन्नध्वस्तत्वेन समुदायाभावात् । नान्त्यः-युगपदनेकविषयनाल्वोष्ठपुटव्यापारासम्भवात् ।

### ॐ वरवर्णिनी ॐ

याः सत्त्वेन 'राजन् अस् पुरुष सु' इत्यस्य प्रत्ययान्ततदादित्वविरहेण पूर्वेणैव तत्र प्रातिपदिकत्वसिद्ध्या समासग्रहणस्य वैयर्थ्येन नियामकत्वसम्भवादिति श्रीमद्गुरुचरणाः ।

परे तु—"अर्थवत्समुदायानामित्यत्र अर्थवांश्चासौ समुदायः, अर्थवताञ्च समुदाय इति तन्त्रेणार्थे प्रमाणमुपन्यस्यति—**अत एवेति** ।'देवदत्तो गार्ग्ये'ति नार्थवत्समुदायः,'देवदत्त' इत्यस्य 'गार्ग्ये' इत्यस्य चार्थवत्त्वेपि 'देवदत्तो गार्ग्ये'त्येतत्समुदाये देवदत्ताऽभिन्नो गार्ग्य इत्येतदर्थविषयकबोधजनकाकाङ्क्षाया अभावेन समुदायस्यानर्थकत्वात्–नियमेन वारणासम्भवात्परिभाषया वारणं भाष्योक्तं सङ्गच्छते । 'देवदत्तेन कृत'मित्यत्र तु सुरहितादपि हे देवदत्तेन कृतेति वाक्याद्देवदत्तकर्तृकरणकर्मीभूतेत्यर्थप्रतीत्या सुरहित एव तादृशाकाङ्क्षायाः स्वीकरणीयतया समुदायस्याप्यर्थवत्त्वात्समासग्रहणकृतनियमेन वारणमिति न कोऽपि दोषः"—इति वदन्ति ।

सम्प्रदायविदस्तु—उत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हस्य ग्रहणे एवाङ्गसञ्ज्ञासूत्रभाष्यं प्रमाणतया योजनीयं, गार्ग्येति च न तथा। एवञ्च नियमाप्रवृत्त्या परिभाषयैव वारणम्, 'कृते'ति तु स्वातन्त्र्येण प्रयोगार्हमेवेति तत्र नियमेनैव वारणम्। स्वातन्त्र्येण प्रयोगार्हत्वञ्च—एतत्सञ्ज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकाकाङ्क्षाशालित्वम्।'एतत्सञ्ज्ञा'पदेन च नियमेन व्यावर्त्तनीया सम्भावनाविषयीभूता सञ्ज्ञा ग्राह्या, 'देवदत्तो गार्ग्ये'त्यत्र सुसहिते एव देवदत्ताभिन्नो गार्ग्य इति बोधजनकाकाङ्क्षा, न सुरहिते इति न तत्र तादृशं स्वातन्त्र्येण प्रयोगार्हत्वमुत्तरभागस्येति न नियमेन तत्र प्रातिपदिकसञ्ज्ञानिरास इति परिभाषया वारणं युक्तमेव ।'देवदत्तेन कृते'त्यत्र तु सुरहित एवाकाङ्क्षाऽङ्गीक्रियते, 'हे देवदत्तेन कृत' 'देवदत्तेन कृतपुत्र' इत्यादिवाक्याद्देवदत्तकर्तृकोत्पत्तिकर्मीभूतपुत्र इत्याद्यर्थबोधस्यानुभवसिद्धत्वात् । यदि तु 'देवदत्तोगार्ग्ये'त्यत्रापि सुरहिते एवार्थबोधौपयिकाकाङ्क्षेत्युच्यते तदा—नियमव्यावर्त्तनीय–एतत्सञ्ज्ञा–पर्याप्त्यधिकरणघटकवाच्यतावच्छेदकीभूतधर्मेण साक्षात्परम्परया वाऽवच्छिन्ना या धर्मिता तन्निरूपितसङ्ख्यानिष्ठप्रकारता-प्रयोजकविभक्ती–तरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमेव–स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वं परिष्करणीयम् । 'देवदत्तेन कृत'मित्यादौ कृतपदोत्तरसुविभक्तिप्रयोज्यैकत्वनिष्ठप्रकारतानिरूपिता कृतपदार्थैकरणकर्मीभूतनिष्ठा धर्मिता देवदत्तनिष्ठावच्छेदकताककर्तृत्वनिष्ठावच्छेदकताकर्मत्वनिष्ठावच्छेदकता काअस्त्येव, तत्र कृतपदार्थैकदेशधात्वर्थकरणक्रियायामेव देवदत्तादीनामन्वयात् । 'देवदत्तो गार्ग्य' इत्यादौ तु देवदत्तस्य गार्ग्यपदार्थे एवान्वयेन एकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकत्वस्य देवदत्तादावभावान्न दोषः । तत्र हि प्रत्युत देवदत्तनिष्ठऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितगार्ग्यादिनिष्ठधर्मितावच्छेदिकैव एकत्वादिसङ्ख्या ( न तु तत्र सङ्ख्यानिष्ठा प्रकारता ) इत्याहुः ।

तदप्राप्त्या भाष्यासङ्गतिः स्पष्टैव। एतेन 'वृषणवसु'रित्यादौ पूर्वभागस्य भत्वात्पूर्वो भागः पदमित्ययुक्तमित्यपास्तम्।

❀ अभिनव-चन्द्रिका ❀

निरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजिकैवाम्विभक्तिरिति तदितरसमभिव्याहारानपेक्षया 'कृत'त्यस्य लोके अर्थविषयकबोधजनकत्वेन निरुक्तार्थवत्त्वस्य सत्त्वेन 'देवदत्तेन कृते'त्यस्य समासग्रहण-कृतनियमेन व्यावृत्तिः सिध्यतीति दिक्। अपास्तमिति। 'वृषणवसु'रित्यादौ व्यभिचारेण समासत्व-

❀ चिदस्थिमाला ❀

तदिति। प्रातिपदिकसञ्ज्ञेत्यर्थः। आद्यदोषमुद्धरति—एतेनेति। उक्तार्थकरणेनेत्यर्थः। नन्वङ्गाधिकारविहित-सुप्प्रत्ययनिमित्तकार्याणां सुबादेशविधायकानाञ्च वैयर्थ्यापत्त्या श्रवणं भविष्यति, न च 'राम' इत्यादौ

❀ ज्योत्स्ना ❀

नापि द्वितीये द्वितीयः, प्रत्येकध्वनिभिः समुदायाभिव्यक्तेरसम्भवेन क्रमेणैवाभिव्यक्त्या समुदायाभावस्य तदवस्थत्वात्। अस्तु तर्हि ताल्वोष्ठपुटव्यापारजन्यचरमवर्णोत्पत्तिकाले, तादृशध्वनिना तदभिव्यक्ति-काले(वा) 'वीचीतरङ्ग'न्यायेन पूर्ववर्णजन्यतत्तद्वर्णानां, पूर्वपूर्वतत्तदभिव्यञ्जकताभिव्यक्तियुजां वा तेषां सद्भावात्समुदायस्य तथात्वं; न, सममेवोत्पद्यमानानामभिव्यज्यमानानां वा पौर्वापर्येणावस्थाने प्रमाणा-भावात्सरो रस इत्यादावर्थप्रतिपत्तेरविशेषप्रसङ्गात्। एतेनोत्पत्त्यभिव्यक्तिपक्षयोरन्यतरस्मिन्पूर्वपूर्व-वर्णानुभवजनितसंस्कारसध्रीचीनान्त्यवर्णानुभवजनितसंस्कारहेतुकैकस्मृत्युपारूढवर्णसमुदायस्य वाचक-त्वमित्यपास्तम्। ननु च 'स'ज्ञानानन्तरज्ञानविषयत्वं रेफस्यानन्तर्यं, सकाररकारयोरानुपूर्वी मौनि-श्लोकानुरोधात्, सा च मनसा गृह्यते, मनसोपनीता च श्रोत्रेन्द्रिये भासते। 'सुरभि चन्दन'मित्या-दिवद्बहिरिन्द्रियेण ज्ञानोपनीतस्य स्वायोग्यस्यापि ग्रहोपगमात्सरो रस इत्यादौ नास्त्यर्थप्रतिपत्ते-

❀ सदाशिवभट्टीयम् ❀

प्रत्ययो विशेषित इत्यलम्। असङ्गतिः स्पष्टैवेति। ननु प्रत्ययग्रहणपरिभाषातः प्रागर्थवत्सूत्रे प्रत्ययान्तत्वस्यापि यथाकथाञ्चित्तया गृहीतुं शक्यत्वेन समासस्य प्रातिपदिकत्वाऽप्राप्त्या विध्यर्थमेवेदानीं

❀ विषमपदविवृतिः ❀

क्रियमाणे याऽऽकाङ्क्षा तन्मूलको यः संसर्गः परस्परमन्वय इत्यर्थः। भाष्यासङ्गतिः स्पष्टैवेति। इदमयुक्तम्—तद्धितान्तत्वप्रयुक्तप्रातिपदिकसञ्ज्ञायास्तदादिनियमाश्रयणेन वारणेप्यर्थवत्सूत्रेण तस्या दुर्वारत्वात्। किञ्च तदादिनियमाभावे 'देवदत्तो गार्ग्ये'ति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्व-मापादितं भाष्ये, तदानीं च न समासग्रहणस्य नियमार्थत्वम्, समासस्य प्रत्ययान्तत्वात्; तदा नियमस्य चाभावात्, किन्तु विध्यर्थमेव। तथा च 'देवदत्तो गार्ग्ये'ति समुदायस्य सूपपन्नं प्राति-पदिकत्वापादनम्। किञ्च 'कुम्भकारे'त्यादिसमासे उत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेन, 'शुक्लीकृत्ये'त्यादौ कृभ्वस्तियोगे एव च्वेः साधुत्वात्कृभ्वस्तीन्विना 'शुक्ली'त्यादिपूर्वभागस्य स्वात-न्त्र्येण प्रयोगार्हत्वाभावेन च, 'पटुपटु' 'एकैक'मित्यादेरतिदिष्टसमासत्वमाश्रित्य प्रातिपदिकत्वस्य वक्त-व्यतया तद्घटकपूर्वोत्तरभागयोः स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावेन च स्वातन्त्र्येण प्रयोगा-र्हार्थवत्पूर्वोत्तरभागकत्वं न समासमात्रेऽस्तीति समाससाजात्येन नियमशरीरे नायं धर्मः प्रवेष्टुं शक्यः।

एवं 'पञ्चगवधन' इत्यादिसमासे 'पञ्चगवे'ति पूर्वभागस्य न स्वातन्त्र्येण प्रयोगार्हत्वम्। किञ्चैधामास मूलकेनोपदंशमित्यादिवाक्येऽर्थवत्सूत्रेण प्रातिपदिकत्वं दुर्वारम्, 'एधामासे'त्यनयोः परस्परपरिहारेणोपदंशमित्यस्य मूलकेनेत्येतत्परिहारेण प्रयोगार्हत्वाभावेनोक्तनियमेनाव्यावृत्तेः। तस्मात्षष्ठीनिर्देशादिभिर्ये सुबन्तानां समासा विहितास्तदेकवाक्यतापन्नं यत् 'कृत्तद्धितसमासश्चे'ति

❀ ज्योत्स्ना ❀

रविशेषः । नन्वेवमपि 'स'ज्ञानानन्तरज्ञानविषयो रकार इति रकारमुख्यविशेष्यकमानुपूर्वीविशेषणकं लौकिकप्रत्यक्षं न स्यात्, रकारोत्पत्तिः, तज्ज्ञानं, तत्र 'स'ज्ञानानन्तर्यग्रहणञ्चेत्येतावत्पर्यन्तं रकारनाशेन विशेष्याभावादिति वाच्यं, वीचीतरङ्गन्यायेन श्रोत्रावच्छेदेन नाना रकारा उत्पद्यन्ते, तत्र तत्त-द्व्यक्तिभेदेऽप्यानुपूर्व्या एकत्वात् पूर्वरकारस्य श्रोत्रसमवेतत्वात्तत्समवेतरत्वस्य समवेतसमवायेन निर्विकल्पकोत्पत्तावनन्तरं रकारे प्रथमं रकारघटितसम्बन्धेन ज्ञातानुपूर्वी विशेषणतया भासते इत्य-भ्युपगमात् । तथा च रकारोत्पत्तिः, तज्ज्ञानं, तत्र सज्ञानानन्तर्यग्रहः, सा चानुपूर्वी रकारनाशेऽपि रकारान्तरे विशेषणतया श्रोत्रप्रत्यक्षे भासते इति, नैतदस्ति, वर्णानां क्रियावत्त्वाभ्युपगमाज्झटिति श्रोत्रदेशमागतानां श्रोत्रेण ग्रहाच्छ्रोत्रस्यैव वाहङ्कारिकत्वेन वर्णदेशगमनात्तद्ग्रहाद्वीचीतरङ्गन्यायेना-नन्तवर्णोत्पत्तिकल्पने प्रमाणाभावात् । ज्ञानानामपि वर्णवदाशुविनाशित्वेनोत्तरज्ञाने पूर्वपूर्वज्ञानव-त्त्वस्य ग्रहीतुमशक्यत्वादानुपूर्व्या एवाभावात्तद्वैशिष्ट्यस्य वर्णे सुतरामभावाद्यथाकथञ्चिद्ग्रहे वा आनुपूर्व्या-अनन्तत्वेन तस्याः शक्ततावच्छेदकत्वासम्भवेन तद्विशिष्टे शक्तिग्रहस्यैवासम्भवप्रसङ्गात् ।

❀ सदाशिवभट्टीयम् ❀

समासग्रहणमिति नियमकथाप्युच्छिद्येतेति न भाष्यासङ्गतिः, प्रत्युत परिष्कृतार्थवत्त्वाभावात्प्राप्तिरेव नेति भवतामेव तद्विरोधः, अर्थवत्त्वे हि परिभाषास्वीकारेणोत्तरसूत्रेणाप्राप्तावपि नियमाप्राप्त्या सा दुर्वारा स्या-दिति चेन्न, कृत्तद्धितेतिसूत्रे परिभाषाप्रयोजनदानावसरे यद्यर्थवत्सूत्रे परिभाषा न स्यात्तदार्थवत्सूत्रन्त्यक्त्वो-त्तरसूत्रे भगवतो गमनं निर्दलं स्यात्, अर्थवत्सूत्रे प्रत्ययग्रहणपरिभाषाभावे तु 'गामानये'त्यादिवाक्यानां प्रत्ययान्तत्वादेवाप्राप्तावपि 'मूलकेनोपदंश'मित्यादौ कृदन्तत्वेनातिप्रसक्तेर्दृढतया तत्र प्रथमं परिभाषा-प्रदर्शनस्यावश्यकत्वात् । न च 'देवदत्तः पाचक' इत्यादावतिप्रसङ्गसत्त्वेन प्राथमिककृद्ग्रहणत्यागे बीजा-भावात्त्वयापि तद्भाष्यमवश्यमुपलक्षणतया नेयमिति वाच्यं, प्रत्ययग्रहणपरिभाषाविरहे कृद्ग्रहणपरिभाषायाः 'सपूर्वस्य चेद्गतिकारकपूर्वस्यैवे'ति नियमार्थत्वापत्त्यातिप्रसङ्गभङ्गस्यैव बीजत्वात् । तस्मादर्थवत्सूत्रे प्रयोजनमदर्शयतो भगवतः 'प्रत्ययग्रहणपरिभाषया यत्कर्त्तव्यं तदन्यथासिद्ध'मित्यभिप्रायः कल्पनीयः ।

अर्थवत्सूत्रे प्रत्ययपर्युदासो नास्तीति भट्टसिद्धान्तः । प्रत्ययान्तपर्युदासस्त्वस्त्येवेति चेत्तत्राऽप्रत्यय इत्यत्र–न विद्यते प्रत्ययो यस्येति बहुव्रीहिः, अन्यपदार्थ एव प्रत्ययविधानावध्याद्यवयवक–प्रत्ययचरमावयवकः समु-दायः । यथाकथञ्चित्प्रत्ययान्तेपि पारिभाषिकप्रत्ययान्तत्वस्य सत्त्वेन नाप्राप्तत्वेन तन्निषेधस्यौचित्यात् ।

❀ विषमपदविवृतिः ❀

तत्—सुबन्तानां समुदायस्य समाससञ्ज्ञानियमपरम् । तेन 'नीलो घट' इत्यादेः समुदायस्य प्रातिपदिकत्वव्यावृत्तिः । न चैवं 'गवित्ययमाहे'त्यादौ दोषः, 'गविती'त्यस्य प्रातिपदिकत्वेपि क्षत्य-भावात् । 'गवित्यय'मितिसमुदायस्य तु सुबन्तसमुदायत्वेनैव वारणात् । 'देवदत्तो गवित्याहे'त्यत्र तु 'देवदत्तो गवि'त्यस्य न प्रातिपदिकत्वं, परस्परानन्वयेनानर्थकत्वात् । अनुकार्यानुकरणयोर्भेदविव-क्षाया एव वक्ष्यमाणत्वेन गवित्यस्यासुबन्तस्यासाधुत्वाच्च । नन्वेवमपि 'वृत्रम्–अह'न्निति समुदायस्य प्रातिपदिकत्वं दुर्वारं, सुबन्तसमुदायत्वाभावेनोक्तनियमेनाव्यावृत्तेरिति चेन्न । 'जहि कर्मणे'त्येत-देकवाक्यतापन्नेनानेन सुप्तिङन्तसमुदायस्यापि प्रातिपदिकत्वनियमनात् । नन्वेवमपि 'पचति भवती' त्येतत्समुदायस्य प्रातिपदिकत्वं दुर्वारम्, उक्तनियमद्वयाविषयत्वादिति चेन्न । 'आख्यातमा-ख्यातेने'त्येतदेकवाक्यतापन्नेनानेन तिङन्तसमुदायस्यापि प्रातिपदिकत्ववारणात् । तदेतदभिप्रेत्यार्थ-वत्सूत्रे भगवता भाष्यकृतोक्तं—तुल्यजातीयस्य नियमो, 'यथाजातीयकानां च समासः, सुबन्तानां च समासः, सुप्तिङ्समुदायस्यापि प्रातिपदिकसञ्ज्ञारभ्यते–'जहि कर्मणे'ति, सा नियमार्था भविष्यति । तिङ्समुदायस्यापि तर्हि प्राप्नोति, तिङ्समुदायस्यापि प्रातिपदिकसञ्ज्ञारभ्यते—'आख्यात-

ॐ ज्योत्स्ना ॐ

अत्रायं सिद्धान्तः—वर्णातिरिक्तं पदं पदातिरिक्तञ्च वाक्यं—स्फुटति वर्णातिरेकेण प्रकाशत इति व्युत्पत्त्या स्फोटपदाभिधेयं तावदवश्यमभ्युपगन्तव्यम्। तस्य नित्यत्वादेकत्वादखण्डत्वाच्च शक्तिग्रहादेर्नानुपपत्तिः। नन्वेवं 'ततः सर्वदार्थबोधप्रसङ्गः, व्यञ्जकत्वेन वर्णानामप्युपयोग इति चेत्, एकैकवर्णस्य तद्व्यञ्जकत्वं समुदायस्य वेति विकल्पग्रासेनाभिव्यञ्जकग्रहासम्भवादभिव्यङ्ग्यग्रहस्य सुतरामसम्भवात्। तदुक्तम्—यःस्फोटोऽभिव्यज्यते वर्णबुद्धिभिः सोपि पर्यनुयोगेन नैवानेन विमुच्यते इतीति वाच्यं, प्रथमवर्णस्यैव तद्व्यञ्जकत्वेऽप्युत्तरोत्तरवर्णानां चरमवर्णपर्यन्तानां विशदविशदतरविशदतमाभिव्यक्तिप्रयोजकत्वेनोपयोगात्। विशदतमाभिव्यक्तिसहकृतस्यैव तस्यार्थबोधे उपयोगात्। यदाहुः—'सामस्त्येन तु तद्व्यक्तिः सर्वान्ते रत्नतत्त्ववदिति, नच विशदविशदतरविशदतमाभिव्यक्तिसहकारेण वर्णा एव स्फोटमिवार्थमभिव्यञ्जन्तु, किमन्तर्गडुना स्फोटेनेति वाच्यं, स्फोटाभिव्यक्तेः श्रोत्रप्रत्यक्षरूपत्वाभ्युपगमात्प्रत्यक्षे च रत्नतत्त्वपरीक्षणन्यायेन विशदाविशदभावस्वीकारेऽप्यर्थाभिव्यक्तौशाब्दबोधात्मिकायां तथा कल्पने मानाभावात्। 'शब्दो वाचकोऽर्थो वाच्य' इति प्रतीतेः शब्दार्थयोः सम्बन्धस्य

ॐ सदाशिवभट्टीयम् ॐ

अत एव 'सनाद्यन्ता'इत्यत्राप्येवं निर्वाहसम्भवात्प्रयोजनान्तरं 'देवदत्तो गार्ग्य' इति दत्तम्। तेन च गुरुभूतव्याख्यानगम्ययोगविभागापेक्षयान्यपदार्थविशेषग्रहणमेव लघ्विति सूचितं भगवतेति दिगित्यन्ये। वस्तुतस्तु पूर्वसूत्रे प्रयोजनमदर्शयतो भगवतः प्रत्ययविशेषग्रहण एव प्रयोजनप्रदर्शने तात्पर्यम्, तत्सामान्यग्रहेप्येतत्प्रवृत्तिरिष्टैव। अत एव 'प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वरा' इत्यादिना तद्विशेषग्रहणान्येवोदाहृतानि; तस्मात्समासग्रहणस्य नियमार्थत्वमेवेति प्राचां भाष्यासङ्गतिरेवेति नव्याशयः।

किन्चोत्तरसूत्रेऽर्थवत्पदानुवृत्तौ केवले कृति पारिभाषिकार्थवत्त्वासम्भवात्कृत्ताद्धितांशे तदन्तविधौ तद्विशेषणे तावदर्थवत्पदांशेपि तदन्तविधौ बाधकाभावाद'र्थवदन्तं यत्कृत्ताद्धितान्त'मित्यर्थस्य वक्तुं शक्यतया समुदायस्यार्थवत्त्वाभावेप्यर्थवान्—यो गार्ग्यशब्दस्तदन्तत्वेन परिभाषातः प्राक्तद्धितान्तत्वसत्त्वेन च प्रातिपदिकत्वस्य प्राप्तिसत्त्वाद, तत्परिभाषोत्तरन्तु विशिष्टस्यार्थवदन्तत्वेपि ताद्धितान्तत्वाभावान्न दोषः। केवलगार्ग्यस्यौपगवादीनाञ्चार्थवदन्तत्वमातिदेशिकं व्यपदेशिवद्भावेन बोध्यम्। यत्तु—'अर्थवदन्तं यत्कृत्ताद्धितान्तमित्यर्थात्तत्प्राप्तिरिति, तन्न, निरुक्तार्थवत्त्वमादाय व्यावर्त्यकृत्तद्धितान्ताऽप्रसिद्ध्या इतरव्यावर्तकत्वरूपव्यापारवत्करणत्वाभावेन करणतृतीयान्तपदघटित—'येन विधि'रित्यस्याप्रवृत्तेरिति चेन्न,

ॐ विषमपदविवृतिः ॐ

माख्यातेने'ति, सा नियमार्था भविष्यती'ति। नन्वेवमपि 'देवदत्तस्य पुत्र'इत्यस्य, 'ओदनं पचती' त्यत्र 'ओदनं पचे'त्यस्य, 'अजां गमयती' त्यत्र 'अजां गमी'त्यस्य प्रातिपदिकत्वं स्यात्। नचाद्य विभक्तीतरदेवदत्तत्वापेक्षयाऽन्त्ये चैतत्सञ्ज्ञाफलभूतविभक्तीतरतिङपेक्षयाऽर्थबोधकत्वेनैतत्सञ्ज्ञत्वार्थवत्त्वाभावाच्च प्रातिपदिकत्वमिति वाच्यम्; ईदृशार्थवत्त्वस्य भवद्भिरनङ्गीकारात्। एवं भू सत्तायामित्यस्य प्रातिपदिकत्वं दुर्वारम्, 'भू' इत्यस्य सुप्तिङन्तभिन्नत्वेनोक्तनियमत्रयाविषयत्वात्। एतेन 'कटप्रुजुश्रीणा' मित्येतदेकवाक्यतापन्नेन 'कृत्तद्धिते' त्यनेन धातुसुबन्तसमुदायस्यो'पपदमति'ङित्येतदेकवाक्यतापन्नेन चानेन सुबन्तसुप्तिङ्भिन्नप्रत्ययान्तसमुदायस्य प्रातिपदिकत्वनियमान्न दोष तीह परास्तम्, 'देवदत्तस्य पुत्र' इत्यादौ दोषानिवारणाच्चेति चेत्सत्यम्, प्रकृतिप्रत्ययोरन्वयव्यतिरेकाभ्यां, पदवाक्ययोश्च लोकेऽर्थबोधजनकत्वेन वृत्तिकल्पनेपि 'स्य पुत्र'इत्यादेस्तत्कल्पने मानाभावेन वृत्त्याऽर्थवत्त्वाभावादेवादोषात्। 'कटप्रु' 'पाचक' 'कुम्भकारा'दौ तु 'समर्थः पदविधि'रिति शास्त्रप्रामाण्यादेव वृत्तिमत्त्वम्। 'उपपदमति'ङित्येतदेकवाक्यतापन्नेन 'कृत्तद्धिते'त्यनेन सुबन्तप्रातिपदिकसमुदायस्य प्रातिपदिकत्वनियमनान्न 'भू सत्ताया' मित्यत्र दोषः। भेदविवक्षया-

## ❀ ज्योत्स्ना ❀

वाच्यवाचकतालक्षणस्य कल्पनेन व्यञ्जकसमुच्चयस्य व्याघ्रीत्यादावनर्थकपोरिव दर्शनेऽपि वाचकसमुच्चयस्यादृष्टचरस्य वर्णेषु सद्भावे प्रामाणाभावाच्च। अपरे पुनरेवं सङ्गिरन्ते—वर्णानामेवार्थाभिव्यञ्जकत्वे एकं पदमेकं वाक्यमिति प्रतीतेर्निरालम्बनत्वापत्तिः—तेषामनेकत्वात्। सेनावनादिवदेकार्थप्रत्ययजननौपाधिलभ्यः स इति चेत्तन्न, विकल्पासहत्वात्, तथाहि स एकोऽर्थः किमविशिष्ट उत विशिष्टः, नाद्यः—घट इत्यादितो घटत्ववैशिष्ट्यादिना बोधादविशिष्टार्थप्रत्ययस्य शशविषाणोपमानत्वात्। नान्त्यः, घट इत्यत्रैकं पदमिति प्रत्ययस्य घटमानयेत्यत्रैकं वाक्यमिति प्रत्ययस्य चाविशेषेणापर्यायप्रसङ्गात्। नचैकविभक्त्यन्तार्थेन वैशिष्ट्यस्य विशेषणादेकविभक्त्यन्तार्थविशिष्टार्थविषयादेकं वाक्यमिति प्रत्ययात्तद्भिन्नविषयैकपदप्रत्ययस्य विशेषः स्पष्ट एवेति वाच्यम्, दध्यानयेति लुप्तविभक्तिकवाक्ये एकं पदमिति प्रत्ययप्रसङ्गस्य तथाप्यपरिहारात्। नच लुप्तविभक्त्यनुसन्धानादेकं वाक्यमित्येव तत्र प्रत्ययो नत्वेकं पदमित्यपीति परिहारः, राजपुरुष इति समस्तपदे एकं वाक्यमिति

## ❀ सदाशिवभट्टीयम् ❀

'पञ्चनावे'त्यस्य केवलकृत्तद्धितयोश्च तद्व्यावर्त्यताप्रसिद्धेः। सन्निपातपरिभाषया यथा न पञ्चनावेत्यस्य सिद्धिस्तथोक्तं प्राग्। न च केवलयोः फलाभावादेव न सञ्ज्ञा, पदसञ्ज्ञासूत्रस्थं भाष्यन्त्वेकदेशयुक्तिरिति वाच्यम्, औपगवः पाचक इत्यादावपत्यकर्त्रर्थकयोस्तद्धितकृतोः सञ्ज्ञापत्तावपत्यादिगतां सङ्ख्यामादाय सुबुत्पत्तेः फलत्वात्। अवयवात्तदुत्पत्तौ च विशिष्टस्य पदत्वानापत्त्या दूषणान्तरं स्फुटमेवेति प्रत्युत विरोधो न। प्रत्ययग्रहणपरिभाषाभावे प्रत्ययान्तत्वस्य 'सनाद्यन्ता' इति धातुत्वस्य चानर्थकेपि सत्त्वेन व्यभिचारादर्थवत्त्वेन सादृश्यग्रहणानापत्तावर्थवत्पदस्य वैयर्थ्याभावात्परिष्कृतार्थवत्त्वाभावेन यथाश्रुतार्थवत्त्वस्य च देवदत्तो गार्ग्य इत्यत्र सत्त्वेन प्राप्तिरेवेति न प्रत्युत विरोध इत्यन्ये आहुः। परन्त्विदं कुशकाशावलम्बनं नव्यग्रन्थश्रद्धालुभिरादरणीयं क्षोदक्षमन्तु नेत्यलं बहुनेति व्याचक्षते। आहुरिति—सूचितास्वरसस्तु समासग्रहणस्य विध्यर्थत्वापत्त्या प्राचां भाष्यासङ्गतिविरहस्तु न। इममेवारुचिं मनसि निधाय 'सनाद्यन्ता' इति द्वितीयफलोद्भावनात्। इदन्तु बोध्यं—प्राचीनमतेप्युत्तरसूत्रे एकार्थीभावविशिष्टत्वरूपार्थवत्त्वग्रहस्योक्तत्वेन 'देवदत्तो गार्ग्ये'त्यत्र तदभावेन प्रकृतभाष्यसङ्गतिरस्त्येव, नतपरिहारश्चार्थवत्पदे नञन-

## ❀ विषमपदविवृतिः ❀

'भू' इत्यस्य प्रातिपदिकत्वात्, निर्देशात्सुबुत्पत्तिर्नेत्यन्यत्। 'कटप्रु' इत्येतदेकवाक्यतापन्नेन धातुसुबन्तसमुदायस्य प्रातिपदिकत्वनियमनाच्च। 'प्रकृतिवदनुकरण'मिति प्रु इत्यस्यापि धातुत्वात्। अत एव सुबनुत्पत्तिः। नियमत्रयप्रदर्शनपरं भाष्यं तूपलक्षणम्। नन्वेवमपि 'पचति—पचतितरा'मिति द्विर्वचनात्तरपि तिङन्तसमुदायसत्त्वेन नियमव्यावर्त्यापातः, एवं 'शिवभागवत' इत्यस्यापि नियमव्यावर्त्यतापातः, सुबन्तसमुदायसत्त्वादिति चेन्न। तिङन्तसुबन्तमात्रघटितसमुदायस्यैव तेन व्यावर्त्तनात्। एतेन 'प्रत्ययान्तानां समुदायस्य चेत्प्रातिपदिकत्वं तर्हि समासस्यैवेत्येक एव नियमोस्तु, कृतं नियमत्रयेणे'त्यपास्तम्। प्रत्ययान्तमात्रघटितेति परिष्कारासम्भवेनोक्तस्थले 'पाचकि' रित्यादौ च दोषापत्तेः। न च प्रकृतिप्रत्ययभावापन्नसमुदायविषयक एव एव नियमोस्त्विति वाच्यम्, 'पचतितरा' मित्यत्रातिव्याप्तेः, तरामित्यस्याप्रत्ययत्वात्। यदि च 'प्रकृतिप्रत्ययभावानापन्नौ यावर्थवन्ता'वित्युच्यते, तदापि 'पचति आ'मिति भागद्वयमादाय तत्रातिव्याप्तिः, उक्तभागद्वयस्य प्रकृतिप्रत्ययभावानापन्नत्वात्, आमस्तिङन्ताप्रकृतिकत्वात्, कथञ्चित्तत्रातिव्याप्तिवारणे उक्तधर्मद्वयस्य समासमात्रवृत्तित्वासम्भवः। 'बहुखट्वक' इत्यादिसमासे पूर्वोत्तरभागयोः 'क' 'बहुखट्व' इत्यनयोः प्रकृतिप्रत्ययभावापन्नत्वात्। कपः समान्तान्तावयवत्वेन

॥ ज्योत्स्ना ॥

प्रत्ययप्रसङ्गापरिहारस्य तदवस्थत्वात्। विभक्तौ श्रूयमाणत्वविशेषणेऽपि कण्ठेकाल इत्याद्यलुक्समासे एकं वाक्यमिति प्रत्ययस्य दध्यानयेति लुप्तविभक्तिके वाक्ये एकं पदमिति–प्रत्ययस्य प्रसङ्गस्तदवस्थः। अनेनैव न्यायेनैकबुद्धिविषयत्वस्योपाधित्वं वर्णानां निरसनीयम्। न च कश्चित्पदात्मा स्फोटोऽपरस्तु वाक्यात्मेतिव्यवस्थार्थमेकविभक्त्यन्तत्वस्य तदनेकत्वस्य चोपाधित्वकल्पनाया आवश्यकत्वात्प्रागुक्तविकल्पासहत्वं स्फोटवादिनोऽपि सममिति वाच्यं,—वस्तुसत एवोपाधेस्तन्नियामकतया ज्ञानस्यानुपयोगात्। न च वर्णातिरिक्तस्फोटानभ्युपगन्तॄणां तुल्यमेतत्—उक्तोपाधिप्रतिसन्धानव्यतिरेकेऽप्यैक्यप्रत्ययात्। सेनावनादिबुद्धेरुपाधिप्रत्ययं विनानुत्पादेन दृष्टान्तवैषम्यस्यान्यथापातात्। एकबुद्धिविषयत्वमात्रस्य समूहालम्बन-समुल्लिख्यमानघटपटादिष्वैक्यप्रतीत्यनुपधायकत्वात्। एकार्थधीहेतुत्वस्य तावद्वर्णानामेकार्थवाचकत्वसिद्ध्युत्तरकल्प्यत्वाच्चेति। एवं स्थिते वाक्यार्थेनार्थवतो वाक्यस्य प्राप्ता सञ्ज्ञा समासग्रहणकृतनियमेन निवार्यते। तत्रापि फलमाह–प्रातिपदिकत्वे हीति। ननूत्तरसूत्रेऽर्थवद्ग्रहणमनुवर्तते नवा? नाद्यः-शशशृङ्गादेर्बोध्यार्थरहितसमासस्य पूर्वेण सञ्ज्ञानापत्तौ समा-

॥ सदाशिवभट्टीयम् ॥

विधिरित्येकः पूर्ववदेव, अपरश्च विभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधकरूपार्थवत्त्वमुत्तरसूत्रे, परिभाषाविरहे एकार्थीभावस्य कृत्तद्धितान्तव्यभिचरितत्वाभावात्तेन तद्रूपस्यैव ग्रहणे मानाभावादिति। देवदत्तो-गार्ग्य इति। नन्वेवं 'राज्ञः पुरुष'इत्यत्र सुविनिर्मुक्त'राज्ञः पुरुष' त्वस्य पूर्वसूत्रेण सञ्ज्ञा दुर्वारैव, उत्तरभागस्य स्वातन्त्र्येण प्रयोगानर्हत्वेन नियमेन व्यावर्तयितुमशक्यत्वात्। नचैवन्तस्य व्यावर्त्याप्रसिद्धिः, लौकिकवाक्यस्यैव तथाभूतत्वेनैव प्रसिद्धत्वादिति चेन्न; त्वदुक्तरीत्या विभक्तिरहितोत्तरभागवत्समुदाये प्रातिपदिकत्वापादनतया तदवयवपूर्वभागविभक्तेर्लुका लुप्तत्वेन तादृशवाक्यस्यैव गगनारविन्दतुल्यत्वात्।

अथोत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हताऽऽग्रह एव त्यज्यतामिति चेन्न, प्रकृतभाष्यविरोधात्। अथ तादृशार्थाग्रहेतिप्रसङ्गोऽनाग्रहे तु भाष्यविरोध इत्युभयतः पाशा रज्जुरिति चेत्तर्हीत्थं नियमः प्रकल्प्यतां, पूर्वसूत्रेणार्थवत्समुदाये चेत्सञ्ज्ञा तर्हि स्वतन्त्रप्रयोगार्हार्थवत्पूर्वोत्तरभागघटित एवे'ति, तथाच प्रयोगानर्हेतरभागकसमुदायस्य पूर्वसूत्राविषयत्वमिति न कश्चिद्दोषः। अत एव भाष्ये प्रकृते यजन्तत्वेनैव सञ्ज्ञामाशंक्य तत्समाधानञ्च कृतम्। अन्यथा तद्धितान्तत्वप्रयुक्तसञ्ज्ञाव्यावर्तकप्रत्ययग्रहणपरिभाषयैव समूहस्य प्रत्ययान्तत्वाभावेन प्रत्ययान्तपर्युदासाप्रवृत्त्या पूर्वसूत्रेणैव तस्या दुर्वारत्वात्तत्परिहाराकरणेन न्यूनतया भाष्यासङ्गत्यापत्तेरित्यपरे-

॥ विषमपदविवृतिः ॥

कान्तस्य समासत्वात्। 'भागवत-शिवे'त्यनयोः प्रकृतिप्रत्ययाभावानापन्नत्वादर्थवत्त्वाच्च 'शिवभागवत' इत्यस्य नियमव्यावर्त्यत्वापाताच्च। नन्वेवमपि 'राजकुमारीश्रित' इत्यत्र युगपद्वृत्तिद्वयपक्षे प्रातिपदिकत्वानापत्तिः, सुबन्तमात्रसमुदायसत्त्वादिति चेन्न। युगपद्वृत्तिद्वयोत्तरं राजकुमारीत्वस्य समासत्वात्प्रातिपदिकत्वेन पुनः सुपि पुनर्द्वितीयातत्पुरुषेणादोषात्। 'श्रिते'त्यस्य प्रत्ययलक्षणेन सुबन्तत्वात्, उत्तरपदे चेति निषेधस्य पदान्तविधावेव प्रवृत्तेः।

केचित्तु नियमस्य परस्परासमानाधिकरणसमाससञ्ज्ञाश्रयाघटितसुबन्तसमुदायविषयकत्वान्नोक्तदोष इति, तन्न। 'राजकुमारीश्रितस्य पुत्र' इति वाक्ये प्रातिपदिकत्वापत्तेः। उक्तद्वयाश्रयघटितत्व समासत्वानाश्रयघटितत्वोभयाभावनिवेशेपि 'राजा कुमारीश्रितस्य सुन्दर'वाक्ये तदापत्तिरिति दिक्। उक्तद्वयाश्रयघटितत्वैकार्थीभावपर्याप्त्यधिकरणत्वोभयाभावनिवेशो न सम्भवति, राजकुमारीश्रितपुत्रे तदभावात्। 'राजकुमारीश्रितो' 'मूलकेनोपदंश'मित्यादौ दोषाच्च। अत्र कुमारीश्रितशब्दादेव सुबुत्पत्तिरित्यपि कश्चित्।

**वाक्यस्य नेति**। प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिः। 'पिण्डी'मित्यादौ वाक्यैकदेशप्रयोगेऽलुक्समासे चाङ्गाधिकारविहितसुप्प्रत्ययनिमित्तककार्याणां सुबादेशानाञ्च चारितार्थ्यं, विकल्पेन समासविधानञ्च स्वराद्यर्थमिति भावः।

शशशृङ्गादिपदानाञ्च बौद्धे शशशृङ्गादौ शक्तिरिति पूर्वेणैव प्रातिपदिकत्वं सिद्धम्। स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्याऽऽवश्यकत्वम्। अक्षौहिणीरथन्तरादिपदेषु अवयवाना-

ॐ **अभिनव-चन्द्रिका** ॐ

व्यापकत्वस्य पदपूर्वावयवकसमुदायेऽभावेऽपि स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकसमुदाये सत्त्वादिति भावः। **आवश्यकत्वमिति**। ज्ञानमात्रं प्रति विषयस्य कारणत्वेनातीतानागतविषयकज्ञाना-

ॐ **चिदस्थिमाला** ॐ

नत्साफल्यं वाक्यस्यैव प्रयोगादत आह—**पिण्डीति**। अत्रापि वाक्यव्यवहारपक्षे आह—**अलुगिति**। 'निमित्ते'ति बहुव्रीहिः। ननु 'न लुमते'तिनिषेधानित्यत्वात्तत्सिद्धिरत आह—**सुवेति**। नन्वेवमपि विकल्पेन समासविध्यन्यथानुपपत्त्या लुङ्, नहि तथा सति तत्साध्यप्रयोगद्वयसिद्धिरत आह—**विकेति**। चस्त्वर्थे। एवमप्यादिना विशेषणयोगादिपरिग्रहः। ननु निरर्थकशशशृङ्गादिसमासे विध्यर्थत्वमेवैतदुचितमत आह—**शशेति**। बुद्धिमात्रविषयीकृतस्यात्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य शब्देन बोधनादिति भावः।

ननु प्रसिद्धपदार्थद्वयस्य सम्बन्धमात्रारोप एव सुवचोऽत आह—**स्वप्नेति**। तत्रानुभूतपदार्थानां न व्यावहारिकत्वं, प्रतिबोधादावप्युपलम्भापत्तेः। घटादावप्येवमेवेति मञ्जूषायां विस्तरः। ननु रथन्तरादिष्ववयवानां सर्वथाऽऽनर्थक्यात्कथं साजात्येन नियमस्यार्थवत्समुदायविषयत्वमपीत्यत आह—**अक्षौहीति**।

ॐ **ज्योत्स्ना** ॐ

सांशेऽर्थवद्ग्रहणस्यासम्बन्धकल्पने समासग्रहणस्य विध्यर्थत्वापत्तेः। नान्त्यः—पञ्चनावप्रिय इत्यादौ निरुक्तार्थवत्त्वाभावतः पञ्चनावेत्यस्य सञ्ज्ञाप्रसङ्गात्। अत एव 'कृत्तिरधातुः प्रातिपदिक'मेतावतैव सिद्धे पूर्वत्र प्रत्ययपर्युदासस्योत्तरस्य च सर्वस्य योगस्य प्रत्याख्यानं न कृतम्, पञ्चनावेत्यस्य तद्धितसमासवृत्तिरूपत्वेन दोषादत आह—**शशशृङ्गादिपदानाञ्चेति**। ननु केवलबुद्धिसत्तामारूढं मास्तु अतिरिक्तं शशशृङ्गादि, अन्यथाख्यातिवादाभ्युपगमात्प्रसिद्धशृङ्गे शशीयत्वग्रहेण तद्बुद्धेरन्यथासिद्धत्वादित्यत आह—**स्वप्नाद्यनुरोधेन चेति**। "विप्र! पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन। स्वप्न-

ॐ **सदाशिवभट्टीयम्** ॐ

सङ्गिरन्ति। तत्रापि फलमाह—**प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिरिति**। न च धातुसाहचर्येण वृत्त्यवयवस्यैव प्रातिपदिकावयवस्यापि ग्रहान्न लुगिति वाच्यं, मूलकेनोपदंशमित्यादौ दोषात्। **स्वराद्यर्थ**मित्यादिना विशेषणयोगादिसङ्ग्रहः। **शशशृङ्गादिपदानाञ्चेति**। बुद्धिमात्रविषयीकृतस्यात्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य शब्देन बोधनादिति भावः। ननु प्रसिद्धपदार्थद्वयस्य सम्बन्धमात्रारोप एव सुवचोऽत आह—**स्वप्नेति**। तत्रानुभूतपदार्थानां न व्यावहारिकत्वं, प्रबोधेप्युपलम्भापत्तेः। ननु रथन्तरा-

ॐ **विषमपदविवृतिः** ॐ

ननु शशशृङ्गादिसमासे शशशृङ्गादेरलीकत्वेनानर्थकत्वात्प्रातिपदिकत्वाप्राप्तौ समासग्रहणं विध्यर्थमेव स्यान्न नियमार्थमित्याशङ्क्याह—**शशशृङ्गादिपदानामिति**।

विप्र! पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाच न।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते।—

—इति कौर्मस्मृतेरनादिवासनारूपेणान्तरवस्थितरजतादेः कामादिवृत्तिसहकारेण बहिर्विषयप्रदेशे आगमस्वीकारेण विषयभासनं च, न तु बाह्यः कोपि विषयस्य विशेषाकारोऽस्ति। न च सौत्रा-

मन्यन्तानिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथाकथञ्चित्साधुत्वान्वाख्यानं बोध्यम् ।

**अधिकारोऽयमिति** । सञ्ज्ञाऽधिकार इत्यर्थः । सञ्ज्ञात्वावगमस्तु व्याख्यानात् ।

❀ **चिदस्थिमाला** ❀

अवयवानाम्=अक्षरथादीनाम्। आदिना समासादिपरिग्रहः । **यथेति** । उक्तमूलक एव क्लेशः । **व्याख्यानमिति** । 'समूहस्वे'ति शेषः । नन्वधिकार इत्यनेन तदन्यपञ्चसूत्रान्यतमत्वनिरासे स एव कुतः, नच लिङ्गाभावात्सञ्ज्ञ्यनुपादानादवध्याद्यनुपादानादसिद्धत्वाप्रतियोग्यनुपादानाच्च स एव पर्यवस्यतीति वाच्यम्, एवमपि शुद्धाधिकारत्वे स्वं रूपमित्युक्तेरग्रिमसूत्रेषु तत्स्वरूपस्य पक्षे विधानापत्तेः, शब्दसञ्ज्ञा नात आह—**सञ्ज्ञेति** । तथाच विशिष्टं सूत्रमिदं पूर्वत्रासिद्धमितिवत्, न शुद्धमधिकारसूत्रमिति भावः । ननु सञ्ज्ञा न शास्त्रान्तरेण ज्ञात आह—**सञ्ज्ञात्वेति** । वक्ष्यमाणसनादिसञ्ज्ञात्वेत्यर्थः । **व्याख्यानादिति** । विधेयसमानाधिकरण्याद्विध्येकवाक्यतयेत्यर्थः । प्रकारान्तरेणान्वयासम्भवात् । शब्दार्थयोस्तादात्म्येन न

❀ **ज्योत्स्ना** ❀

भ्रममदादेषु सर्वैरेवानुभूयते ॥' इति कौर्मस्मृतेरनादिवासनारूपेणान्तरवस्थितरजतादेः कामादिवृत्तिसहकारेण वहिर्विषयप्रदेशे आगनं, स्वाकारेण विषयभासनञ्च, न तु बाह्यः कोऽपि विषयस्य विशेषाकारोऽस्ति, न च सौत्रान्तिकमतप्रवेशः,—तेन तत्रारोपितसत्ताया अप्यनङ्गीकारात् । अस्मन्मते तु बुद्धिस्थज्ञानाकाररजतस्य बाह्यविषये तादात्म्यारोपे विषयसत्तायाश्च तत्रारोपेण यावद्व्यवहारं वहिःसद्भावावगमेन ततो विशेषात् । यदाह पञ्चशिखः–'सदसत्ख्यातिर्बाधाबाधाभ्या'मिति । यावद्विशेषदर्शनमबाधात्सत्त्वं, विशेषदर्शने तु बाधात्तदभाव इति तदर्थः । बुद्धिसत्तासमाविष्टमेव च वस्तु तत्तत्पदशक्यमित्यादावेवोक्तम् । यदि तु—पदानामान्तरसत्ताव्यतिरेकेण केवलबाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्तदा वृक्ष इत्यतः सत्तावगमादस्तीति प्रयोगो न स्यात् । नास्तीत्यभावस्य च सत्ताविरोधात्प्रयोगाप्रसङ्गः । अङ्कुरो जायत इति च प्रयोगो न स्यात्सतो जन्मनिषेधात् । उपचारसत्तायान्तु ते दोषा नातवरन्ति, बुद्धिसत्तासमाविष्टस्य बहिःसत्त्वासत्त्वजननप्रतिपादनायास्ति-नास्ति-जायत इति प्रयोगयोगात् । शाब्दबोधे वा संसर्गाग्रहस्य कारणत्वं, न योग्यताज्ञानस्य, नापि बाधबुद्धेः प्रतिबन्धकत्वस्य । स्पष्टञ्चेदं मतुप्सूत्रे भाष्यकैयटयोः । नन्वक्षौहिणीरथन्तरादिष्वत्यन्तनैरर्थक्यादवयवानां प्रातिपदिकसञ्ज्ञाया अप्रसङ्गात्—अक्षाणामूहनीत्यादिरूपेण षष्ठीसमासादेरप्रसङ्गोऽत आह—**अक्षौहिणीरथन्तरादिपदेष्विति** । **अन्यत्र दृष्टार्थारोपेणेति** । अक्षांश्छिनत्ति दीव्यतीत्यादौ दृष्टस्यार्थस्यारोपेणेत्यर्थः । जहत्स्वार्थावृत्तिपक्षे समासमात्रे उक्तयुक्तिं विना गत्यन्तराभावादितिभावः । **सञ्ज्ञाधिकारः**=सञ्ज्ञात्वेनाधिकारः । ननु परोच्चारितत्वरूपसञ्ज्ञात्वस्य प्रत्यय इत्यत्राभावात्सञ्ज्ञाधिकार इत्युक्ती रिक्तेत्यत आह—**सञ्ज्ञात्वावगमस्त्विति** । व्याख्यानात्=अनाकृतिः

❀ **विषमपदविवृतिः** ❀

न्तिकमतप्रवेशः, तेन तत्रारोपितसत्ताया अप्यनङ्गीकारादिति भावः । तदुक्तं 'तदस्यास्त्यस्मि'न्निति सूत्रे-'न सत्तापदार्थो व्यभिचरती'ति भाष्यव्याख्यावसरे कैयटे,–'यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्ततो वृक्ष इत्यस्मात्सत्तावगमादस्तीत्यस्य गतार्थत्वात्प्रयोगो न स्यात्, सतो जन्मविरोधात् । बौद्धसत्तायां ते दोषा नावतरन्ति, बुद्धिसत्तासमाविष्टस्य बहिःसत्त्वासत्त्वजननप्रतिपादनाय–अस्ति नास्ति जायत इति प्रयोगादिति ।

नन्वक्षौहिण्यादौ समासे स्वातन्त्र्येण प्रयोगार्हार्थवत्समुदायत्वं न विद्यते, तदवयवानां निरर्थकत्वादित्याशङ्कते—**अक्षौहिणीत्यादीति** । **अन्यत्रदृष्टार्थारोपेणेति** । प्रातिपदिकत्वसिद्धयेऽर्थवत्त्वा-

विकारागमानान्तु न तत्सञ्ज्ञा, 'प्रत्यय' इति महासञ्ज्ञया स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैव

**॥ चिद्स्थिमाला ॥**

तदनुपपत्तिरिति भावः । नन्वेवं प्रकृत्युपपदोपाधीनां भिन्नविभक्त्यवरुद्धानां तत्सामानाधिकरण्या-सम्भवात्सञ्ज्ञानतिप्रसङ्गेऽपि विकारादेस्तत्सम्भवात्तदापत्तिरत आह—**विकेति** । बहुवचनमवयव-बहुत्वाभिप्रायम् । विकारशब्देनात्र भावरूपादेशः, लोपस्य तदसम्भवात्, तत्त्वे फलाभावाच्च । समुदाया-देशस्य वक्ष्यमाणत्वाच्च । **सञ्ज्ञयेति** । प्रत्याययतीति ण्यर्थान्तर्भावेणान्वर्थत्वाङ्गीकारेणेतिशेषः । नन्वेव-मत्यन्तस्वार्थिकानां सा न स्यात्, विकारादिवदत आह—**स्वप्रकृत्येति** ।

ननु 'यदर्थे वाच्ये द्योत्ये वा विधानं तत्त्वं स्वार्थत्व'मितिवत्स्वप्रकृत्यर्थत्वं दुर्वचं, तदर्थे तासामविधाना-

**॥ ज्योत्स्ना ॥**

सञ्ज्ञा, आवर्तिन्यः सञ्ज्ञा' इतिभाष्यादनाकृतित्वावर्त्तनीत्वस्वरूपसञ्ज्ञाधिकार इत्यभिव्यञ्जकन्याय-मूलकव्याख्यानात् । परोच्चारितत्वस्य तु सञ्ज्ञात्वाभिव्यञ्जकत्वं प्रायिकं, वृद्धिसञ्ज्ञादौ व्यभिचारादिति तत्त्वम् । **स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैवेति** । तत्र स्वार्थप्रत्यायकत्वमिच्छार्थकसनादीनां, स्वप्रकृत्यर्थप्रत्यायकत्वमत्यन्तस्वार्थिकानामविकादिशब्दघटककादीनामिति बोध्यम् ।

**॥ सदाशिवभट्टीयम् ॥**

दिष्ववयवानां सर्वथा निरर्थकत्वात्कथं साजात्येन नियमस्यार्थवत्समुदायविषयकत्वमत आह—**अक्षेति** । **अन्वाख्याने**-समूहस्येति शेषः। **विकारेति** । 'त्रपुजतुनोः षुक्' 'हनस्त चे'त्यादीनाम् । बहुवचनमवयवबहुत्वा-भिप्रायम् । **न सञ्ज्ञेति** । तत्सत्त्वे दूषणं सीयुडादेः साचः-आद्युदात्तत्वापत्तिरिति । आगमानुदात्तत्वन्तु नापूर्वमि-ति, नभादेश्च तत्त्वापत्तिरिति च प्रकृतसूत्रभाष्यतोवसेयम् । **महासञ्ज्ञयेति** । प्रत्याययति प्रत्याय्यते वा इति ण्यर्थान्तर्भावेण कर्तृकर्मसाधनप्रत्ययशब्दयोः प्रकृतसूत्रभाष्योक्ततन्त्रेण चेति शेषः । तत्र कर्तृसाधनेन स्वार्थप्रत्यायकसङ्ग्रहः । कर्मसाधनेन तु प्रत्याय्यते प्रकृत्या बोध्यते इति स्वार्थिकप्रत्ययस्य । यद्यपि स्वार्थिकेषु प्रकृत्या तदर्थः प्रत्याय्यते, न—स एव, तथापि शब्दार्थयोस्तादात्म्यात्प्रकृत्या प्रत्याय्यमानार्थकत्वात्सोप्येव-मुच्यते इति तद्भाष्याशयं कैयट ऊचे । तदेतन्मनसि निधायाह—**प्रकृतीति** । प्रकृतित्वञ्चात्र परश्चेत्यत्र वक्ष्यमाणं न ग्राह्यम्, इदानीं प्रत्ययत्वस्यानिर्णीतत्वेन वधाद्यादेशरूपप्रत्ययविध्युद्देश्यतायाः स्थानिनि हन्त्यादौ सत्त्वेन तदर्थबोधकानां वधादीनामपि सञ्ज्ञापत्तेरन्योन्याश्रयापत्तेश्च । किञ्च यस्य प्रत्ययत्वमानेयन्त-दवधित्वम् । अयम्भावः—नभादिव्यावृत्तये स्वशब्दार्थान्तर्भावेण प्रत्ययशब्दस्य वृत्तिरिति चेत्स्वार्थिकानां प्रकृत्यर्थप्रत्यायकानां नभादिवत्स्वार्थप्रत्यायकत्वाभावात्सञ्ज्ञा न स्यात्, अतः कर्मव्युत्पत्तिरङ्गी-कार्या; तथा च स्वेन प्रत्याय्यमानार्थकत्वमव्यभिचारीति अन्येनेति लभ्यते, तदपि स्वसमभिव्याहारे सर्वत्रास्तीति स्वसमभिव्याहार इति लभ्यते, तदप्यनियमेन सर्वत्र नियमेनेति लभ्यते । तच्च प्रकृतिरूपमेव फलतीति 'वतोरिड्वा' 'नान्तादसङ्ख्यादे'रित्यादौ प्रकृतित्वाभावादेव नातिव्याप्तिरिति बोध्यम् । तन्निष्ठविधेयता-निरूपिततन्निवृत्तिव्यधिकरणं तन्निरूपितावयवित्वव्यधिकरणञ्च यदुद्देश्यत्वन्तदवच्छेदकाक्रान्तत्वं; स्थानिनिष्ठो-द्देश्यताया निवृत्तिसामानाधिकरण्यादागमिनिष्ठायास्तस्या अवयवित्वसामानाधिकरण्याच्च स्थान्यागमिनोर्नाति-व्याप्तिरवधित्वनिवेशेन । एतेन वैल्वादावकारस्य कुक्शक्तिकत्वेन कुको विकाररूपस्वार्थप्रत्यायकत्वाभावेऽपि प्रकृत्यर्थप्रत्यायकत्वात्प्रत्ययत्वन्दुर्वारमित्यपास्तम् । श्नमस्तु शित्करणात् 'तृणह' इति निर्देशाद्विकरणानां द्योतकतया स्वार्थप्रत्यायकत्वाद्वा प्रत्ययत्वं, शबादीनान्तु प्रकृत्यर्थप्रत्यायकत्वात्—द्योतकतया स्वार्थप्रत्यायक-त्वाद्वा तत्त्वम् । ननु 'यदर्थे वाच्ये द्योत्ये वा विधानं तत्त्वं स्वार्थत्व'मितिवत्स्वप्रकृत्यर्थत्वञ्च दुर्वचं, तदर्थे

**॥ विषमपदविवृतिः ॥**

रोपस्यावश्यकतया तत एव समासेऽर्थवत्समुदायत्वं सूपपादमिति भावः । विकारागमेति पाठः ।

तत्सञ्ज्ञकत्वात्। स्वप्रकृत्यर्थत्वञ्च—धातुपाठकोशादौ तमुच्चार्य्य बोधितत्वम्। अत एव नभवधाद्यादेशानां न सञ्ज्ञा। तेषां स्थान्यर्थेनैवार्थवत्त्वं, न तु स्वार्थोऽस्ति।

अत एव कोशादौ तदर्थाकथनम्। एतदर्थमेव भाष्ये 'स्वीयमर्थं प्रत्याययन्ती'ति विग्रहे 'स्वीय'पदोपादानम्। भाष्यप्रामाण्याच्च तदर्थान्तर्भावेण प्रत्ययशब्दस्य वृत्तिः।

यत्तु विकारागमादेशानां देशांशे निराकाङ्क्षत्वात्—'परश्चे'त्यस्यानुपस्थितौ

ॐ चिदस्थिमाला ॐ

दत आह—**स्वप्रकृत्यर्थत्वञ्चेति**। व्याकरणसूत्रेषु तस्याप्यभावादाह—**धात्विति**। आदिना निरुक्तादिसङ्ग्रहः। **तमिति**। प्रकृतिभूतशब्दमित्यर्थः। अन्वर्थसञ्ज्ञाया निरर्थकव्यावृत्तिरूपफलमुक्त्वार्थवति नदाह—**अत एवेति**। अन्वर्थसञ्ज्ञाविज्ञानादेवेत्यर्थः। आदिना विरङ्गादिपरिग्रहः, एतद्रूपादेशानामपीत्यर्थः। **स्थान्यर्थेनैवेति**। स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्तादिति भावः। एवव्यवच्छेद्यमेवाह—**न स्विति**। स्वः=स्वीयः। ननु उक्तस्वार्थत्वाभावेऽपि उक्तस्वप्रकृत्यर्थत्वतुल्यं स्वार्थत्वमस्त्येवेत्यत आह—**अत एवेति**। स्थान्यर्थेनैवार्थवत्त्वादेवेत्यर्थः। **तदर्थेति**। तेषां पृथगर्थं इत्यर्थः। अत एव नभ्यशब्दादपि नाभिशब्दप्रकारकस्तदर्थबोधो—'नाभिहित'इति, नतु कदाचिदपि 'नभहित'इति। येऽपि शास्त्रानभिज्ञास्तेऽपि वृद्धव्यवहारात्तथैव प्रतियन्ति। नन्वेवमपि स्वप्रकृत्यर्थावबोधकत्वमस्त्येवेति चेन्न, प्रकृतिशब्दे प्रत्ययविधानावधिग्रहणान्नाभ्यादीनामन्यनिरूपितावधित्वेऽपि नभादिनिरूपिततत्त्वाभावात्स्वपदेन तेषामग्रहणात्। नचैवं सिजादीनामपि न स्यात्स्थान्यर्थेनैवार्थवत्त्वादिति वाच्यं, तत्र स्थानिनोऽप्यर्थाभावात्, प्रकृत्यर्थेनार्थवत्त्वन्तूभयोः समानम्। अत एव सिजादीनामेवोत्सर्गापवादभावमाश्रित्य 'च्लिः' प्रत्याख्यात इति दिक्।

उक्तार्थे भाष्यं प्रमाणयति—**एतदिति**। ननु विग्रहे तत्सत्त्वे तद्बोधेऽपि वृत्तौ कथं तद्बोधः, अन्यथा भिन्नार्थत्वापत्तिस्तयोरत आह—**भाष्येति**। चस्त्वर्थे। **तदर्थेति**। स्वीयार्थेत्यर्थः। मान्याद्युक्तिं खण्डयति—**यत्त्विति**।

ॐ ज्योत्स्ना ॐ

**तमुच्चार्येति**। अर्थबोधकशब्दमुच्चार्येत्यर्थः। **बोधितत्वमिति**। प्रकृतिशक्यत्वेन बोधितत्वमित्यर्थः। **नभवधाद्यादेशानामिति**। 'नाभि नभं च', 'हनश्च वधः', 'आदिपदात्—'विराग विरङ्गश्चे'त्यादीनामित्यर्थः। तेषां हि स्थान्यर्थेनार्थवत्त्वं, योग्यविभक्तिनिर्देशाद्विधेयत्वञ्चेति यथाश्रुते सञ्ज्ञा प्राप्नोतीति भावः।

ननु बाधकबाधितसाधारणं प्रत्ययपरत्वं प्रत्ययसञ्ज्ञासन्नियोगशिष्टमत एव 'न यासयो'रिति 'प्रत्ययस्था'-

ॐ सदाशिवभट्टीयम् ॐ

तासामविधानादत आह—**स्वप्रकृत्यर्थश्चेति**। 'कोशादी'त्यादिना निरुक्तनिघण्टुसङ्ग्रहः। ननु प्रत्यायकत्वमित्येवास्तु, मास्तु तत्रादिः, स्वशब्दोपादानञ्चेत्यत आह—**अत एव नभेति**। स्वशब्दार्थान्तर्भावेण प्रत्ययशब्दवृत्तिस्वीकारादेवेत्यर्थः। **अत एवेति**। स्वार्थाभावादेव। नभ्यशब्दादपि नाभिशब्दप्रकारक एव बोधः—'नाभिहित'इति, नतु कदाचिदपि 'नभहित'इति। येपि शास्त्रानभिज्ञास्तेऽपि वृद्धव्यवहारात्तथैव प्रतिपद्यन्ते। उक्तार्थे भाष्यं प्रमाणयति—**एतदर्थमेवेति**। स्थान्यर्थप्रत्यायकनभादेः प्रत्ययत्वव्यावृत्त्यर्थमेवेत्यर्थः। **इति विग्रह इति**। स्वमर्थं प्रत्याययतीति विग्रह इत्यर्थः। एवं 'स्वीयपदे'त्यत्रापि—'स्वीयार्थस्वपदे'त्यर्थो बोध्यः। यथाश्रुतं तु न युक्तम्। भाष्ये तादृशपाठस्यानुपलम्भात्। एवमुक्तिस्तु तत्रत्य-

ॐ विषमपदविवृतिः ॐ

एवमग्रेपि। **तमुच्चार्येति**। अर्थबोधकशब्दमुच्चार्येत्यर्थः। **नभवधाद्यादेशानामिति**। 'नाभि नभञ्च', 'हनश्च वधः', आदिपदात्—'विराग विरङ्गश्चे'त्यस्य सङ्ग्रहः। **श्नमकजिति**। श्नमि प्रत्ययत्वाभावेन शकारस्ये-

तत्सन्नियोगशिष्टप्रत्ययसञ्ज्ञाया अप्रवृत्तिरिति, तन्न । श्नमकज्बहुच्प्वप्रवृत्त्यापत्तेः ।

किञ्च 'लविषीये'त्यत्र विशेषविहितत्वात्परत्वाच्च पूर्वं सीयुटि ततो लादेशे प्रत्ययसञ्ज्ञासन्नियोगेनेटो विधीयमानमाद्युदात्तत्वं सीयुट एव स्यादत आगमानुदात्तत्वं वक्तव्य-

## ❀ अभिनव-चन्द्रिका ❀

पपत्तये बौद्धविषयकल्पना आवश्यकीति भावः । अप्रवृत्त्यापत्तेरिति । नच श्नमि शकारस्येत्सञ्ज्ञार्थं, 'मर्विके'त्यादौ इत्वार्थमकचि प्रत्ययत्वस्यावश्यकत्वेऽपि बहुचि प्रत्ययत्वे किं प्रयोजनम् ? नच ईषदून उः बहूः, तस्मात्क्यचि 'सर्वप्रातिपदिकानां क्यचि लालसाया'मित्यनेन सुकि 'बहूष्यती'त्यादौ पूर्वान्तवत्त्वेन प्रत्ययत्वमादाय षत्वार्थं बहुचः प्रत्ययत्वस्यावश्यकत्वमिति वाच्यं, तस्य वार्त्तिकस्य दधिमधुमात्रविषयकत्वस्य शेखरे वक्ष्यमाणत्वादिति वाच्यम्, ईषदूनः उः बहूः, तस्मादाचार-

## ❀ चिदस्थिमाला ❀

**यत्त्विति** । विकारादेशयोर्भेदः प्राग्वत् । **देशांशे इति** । स्थानषष्ठीबलाल्लिङ्गाच्चेति भावः । **तत्सन्नीति** । 'सन्नियोगशिष्टाना'मिति न्यायादिति भावः । ननु 'तृणह इमि'ति निर्देशात्, 'न यासयो'रिति ज्ञापकात्प्रवृत्तिरत आह—**किञ्चेति** । अनवकाशत्वे सत्येव विशेषविहितत्वस्य बलवत्त्व(बाधकत्व)प्रयोजकत्वादाह—**परत्वाच्चेति** । लादेशनिमित्ताद्युदात्तत्वस्य 'यात' इत्यादिरवकाशः । 'शयिषीष्टे'त्यादौ लसार्वधातुकानुदात्तत्वात् सीयुट् सावकाशः, प्रकृते उभयप्रसङ्गे परत्वात्सीयुडित्यर्थः । यद्यपि तिबादीनां प्रत्ययत्वं स्थानिवत्त्वेन सिद्धं, तथाप्यधिकृतस्य तत्रासम्बन्धे मानाभाव इत्याशयेनाह—**प्रत्ययेति** । **असङ्गतेरिति** । तदापत्तेरित्यर्थः ।

## ❀ ज्योत्स्ना ❀

दितीत्वनिषेधः सार्थक इत्यरुचेराह—**किञ्चेति** । इटः=उत्तमपुरुषैकवचनस्य ।

## ❀ सदाशिवभट्टीयम् ❀

स्वपदस्यात्मीयार्थकत्वं ध्वनयितुम् । आत्मवाचकत्वे त्वर्थेनाऽभेदो बाधितः स्यात् । एतेन—'एतदर्थमेव=प्रकृत्यर्थसङ्ग्रहार्थमेव—स्वीयपदोपादानमिति; अन्यथा स्वशब्दमेवोपाददीत, स्वीयपदे उपात्ते त्वात्मीयवाचकस्वशब्दप्रकृतिकच्छप्रत्ययान्तादात्मीयप्रकृतिसम्बन्ध्यर्थसङ्ग्रहः, आत्मवाचिप्रकृतिकादात्मसम्बन्धिस्वार्थसङ्ग्रहो जायत इति भाव' इति व्याख्यान्तरमपास्तम् । 'कर्मसाधनोपि प्रत्ययशब्दोऽस्ती'त्यग्रिमभाष्यानुत्थितिप्रसङ्गाच्च । **तदर्थान्तर्भावेणेति** । स्वशब्दार्थान्तर्भावेणेत्यर्थः । प्रत्यर्थान्तर्भावेणेत्यर्थ इत्यन्ये । **यत्तु विकारेति** । विकार 'एकदेशस्थानिको—'श्नसत्त्वे'त्यादिः । आदेशः—सर्वस्थानिको—नमादिरिति भेदः । ननु 'तृणह' इति निर्देशात्,'न यासयो'रितिज्ञापकाच्च श्नमकचोर्न दोषः, बहुचि तु प्रत्ययत्वाभावेपि न क्षतिरित्यरुचेराह—**किञ्च लविषीति** । पाठकोक्ताऽरुचिस्तु चिन्त्या, नभाङ्गेरपि प्रत्ययत्वापत्तेः । विशेषविहितत्वस्यानवकाशत्वे सत्येव बाधकत्वे प्रयोजकत्वात्सीयुटश्च लादेशप्रवृत्त्युत्तरं चारितार्थ्यमत आह—**परत्वादिति** । उत्कृष्टत्वादित्यर्थः । 'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाता'मिति न्यायेन लादेशाप्राप्तियोग्यविषयाभावरूपानवकाशत्वस्य सीयुटि सत्त्वेनापवादत्वादिति यावत् । यासुड्विषये सीयुटः प्रतिषेधेन लिङ्सम्बन्धिनामुक्तन्यायेन बाध्यबाधकभावोनेत्याख्याते वक्ष्यमाणत्वात् । तक्रकौडिन्यन्यायस्य तु नात्राश्रयणं, तदाश्रयणे हि तक्रदानोत्तरं दधिदानस्येव सीयुटि लादेशाप्रवृत्तिरेव स्यात् । भोजनन्यायाश्रयणे तु परिवेषणोत्तरं भोजनस्येव तदुत्तरं तत्प्रवृत्तिर्निर्बाधैव । यद्वोक्तन्यायेन सीयुटो बलीयस्त्वाद्विप्रतिषेधाभावेन परत्वाप्रयोजकत्वादाह—**चेति** । चेन च—उक्तार्थसमुच्चयः । **सीयुट एवेति** । यद्यपि तृतीयसूत्रेण लस्थाने इडुदात्तो भवतीत्युत्पत्तिकाल एव स्वरविधानादनुवादविषये 'यदागमा' इत्यस्याप्रवृत्तेरागमविशिष्टस्योदात्तत्वाप्राप्त्योच्चार्यमाणस्येट एवाद्युदात्तत्वे सीयुटः शेषनिघातसिद्धिः; यत्तु सीयुडागमसमवधाने लस्थानवैक्यादादेशा-

मिति 'आद्युदात्तश्चे'तिसूत्रस्थभाष्यकैयटासङ्गतिः । लस्थानिकत्वेन देशांशे निराकाङ्क्षत्वेन 'परश्चे'त्यस्याप्रवृत्तौ 'प्रत्यय' इत्यस्याप्यप्रवृत्तौ तत्सन्नियोगकथनासङ्गतेरिति दिक् ।

❀ अभिनव-चन्द्रिका ❀

क्विबन्तात्कर्त्तरि क्विपि नपुंसकह्रस्वे च वह्लिति जाते तस्मादाचारक्विबन्ताद्वनिपि 'बह्वा' इत्यादौ 'ल्लोपश्चास्यान्यतरस्या'मित्यनेन पूर्वान्तवद्भावेन प्रत्ययत्वमादायोतो लोपार्थं बहुचः प्रत्ययत्वस्यावश्यकत्वादिति दिक् ।

असङ्गतेरिति । 'तिप्तस्झी'त्यत्र 'लस्ये'त्यधिकारात्परश्चेत्यस्यानुपस्थित्या आद्युदात्तश्चेत्यस्याप्यनुपस्थित्येति भावः। प्रत्यय इत्यस्याप्यप्रवृत्ताविति । वस्तुतस्तु 'भोभगो'इतिसूत्रस्थभाष्यरीत्या प्रत्ययत्वस्य स्थान्यत्वृत्तिधर्मत्वेन तदनुवृत्तिरावश्यकी । नच स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वस्याभावात्कथं तिबाद्यादेशानां प्रत्ययत्वमिति वाच्यं,'लः कर्मणी'तिशास्त्रेण लादेशानां कर्माद्यर्थकत्वस्यो·

❀ चिदस्थिमाला ❀

तत्र हेतुमाह—लस्थानिकेति । 'इट' इति शेषः । यदि तु लावस्थायामनच्कत्वात्स्वराभावेऽपि सीयुटि 'धातो'रित्यस्य विहितविशेषणत्वे व्यवहितेऽपि प्रवृत्त्या अनिर्दिश्यमानत्वान्न समुदायस्य, व्यवहितत्वान्न निर्दिश्यमानस्येत्यादेशाप्रवृत्तिरेव स्यादिति शङ्काया निरासेऽपि—लस्य स्थाने इडुदात्तो भवतीत्युत्पत्तिकाले एव स्वरविधानादनुवादविषयाया 'यदागमा' इति परिभाषाया अप्रवृत्त्याऽऽगमविशिष्टस्योदात्तत्वाप्राप्त्योच्चार्यमाणस्येट एवाद्युदात्तत्वे पूर्वं जातस्यापि सीयुटः शेषनिघातेनानुदात्तत्वे सिद्धे तद्वचनमनावश्यकमितीदं भाष्यमेकदेश्युक्तिः; नच तावत एव पृथक्प्रत्ययत्वे सीयुडन्तस्याङ्गत्वापत्तौ तदन्तस्यापि 'लविषीश्व'मित्यादौ गुणापत्तिरित्यागमसन्निधाने विशिष्टे एव प्रत्ययत्वाद्युदात्तत्वे इति तदाशय इति वाच्यम्, अङ्गसञ्ज्ञायां 'यदागमा' इति न्यायेन विशिष्टस्यैव प्रत्ययत्वेन ग्रहणात्; अधिकमन्यत्र द्रष्टव्यमित्युच्यते तर्हि—ज्ञापकाश्रयणे गौरवापत्तिरेव दोषः । किञ्च—श्नमकचोर्ज्ञापकसत्त्वेऽपि बहुचि तदभावः, सामान्यापेक्षत्वे माना-

❀ ज्योत्स्ना ❀

तत्सन्नियोगकथनासङ्गतेरिति। 'परश्चे'त्यस्याप्रवृत्तावपि स्थानिवद्भावेन प्रत्ययसञ्ज्ञासन्नियोगकथनं

❀ सदाशिवभट्टीयम् ❀

सम्भवेन सीय्—ल इत्यस्य स्थाने 'सीय्' इत्यादेशः स्यात्, स च प्रत्ययसञ्ज्ञक आद्युदात्तश्चेत्यानुमानिकवचनेन प्राप्नोतीत्याशयः । आगमानुदात्तत्वे उक्ते त्वपवादविषयत्वात् पूर्वमेव नानुमानिकाद्युदात्तत्वप्रवृत्तिरिति श्रौताद्युदात्तत्वस्यैवावस्थानमित्याहुः । तन्न । आनुमानिककल्पनेपि विशेषणविशिष्टस्य लक्षणाननुलक्षिते विशेषणान्वय इत्यङ्गीकारात् । अन्यथा पदस्य वाक्यस्य वाऽऽद्युदात्तत्वापत्तिरिति;—तथाप्यस्यैकदेश्युक्तित्वादिति स्पष्टमुद्द्योते । ननु 'क्रियमाणेप्यागमानुदात्तत्वे क्रियमाणेपि प्रत्ययसन्नियोगेनाद्युदात्तत्वे सीयुडादेर्लिङ आद्युदात्तत्वं प्रसज्येते'ति भाष्यं लिङ्विधावुपस्थिताद्युदात्तश्चेत्यस्य विधानकाले लिङोऽनच्कत्वेनाप्रवृत्तावपि सीयुटि 'यदागमे'तिन्यायेन लिङ्त्वात्सीयुटः प्राप्नोतीत्यभिप्रायकमित्यादेशविधौ न तदसङ्गतिरतः कैयटासङ्गतिमाह—कैयटेति । तत्सूत्रस्थप्रदीपोद्योतौ तु चिन्त्यावेव, चिन्ताबीजं तु स्फुटं सूक्ष्मदृशामिति नोक्तम् । यत्तु प्रकृतसूत्रे कैयटे 'उपपदस्यापि प्रत्ययत्वे राजपुरुषादिषु सावकाश'मुपसर्जनम्पूर्वं'मित्येतद्बाधित्वा परत्वापत्ति'रित्युक्तन्तस्यायं भावः—राजपुरुषयोः सुप्निरूपितप्रकृतित्वेपि शब्दान्तरापेक्षया परस्परापेक्षया वा पर्यायेण प्रयोगे प्राप्ते समस्यमानपदापेक्षयोपपदस्योपसर्जनस्य पूर्वनिपातार्थन्तत्सार्थक्यम् । आदिपदग्राह्यं 'दास्याः पुत्र' इत्यादावलुक्समासे, जहिजोड'मिति तिङन्तपूर्वपदके च समासे तत्सार्थक्यम्; नहि तत्र तिङन्त-

❀ विषमपदविवृतिः ❀

त्वसञ्ज्ञा न स्यात् । अकचि तदभावे सर्विकेत्यादावित्वं न स्यात् । बहुच्चितु फलं चिन्त्यम् ।

**परश्च** । 'गुप्तिज्किद्भ्य' इत्यादावपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी । तत्र परः पूर्वो वेत्यत्रानियमेनाध्याहारे प्रसक्ते 'पर एवे'ति नियमार्थमिदम् । 'गापोष्ट'-गित्यादावपि षष्ठ्यर्थे आनन्तर्यं पूर्वपरसाधारणमित्यनियमोऽस्त्येव । अत्र 'तस्मा'दिति परिभाषोत्तराङ्गविकला प्रवर्तते इत्यव्यवहिता एव प्रत्ययाः ।

❀ अभिनव-चन्द्रिका ❀

कत्वेन स्वार्थप्रत्यायकत्वस्य सत्त्वात् । **प्रवर्तत इति** । उत्तरत्वांशस्य सिद्धत्वात्प्रत्ययविधौ षष्ठ्यंशस्य

❀ चिदस्थिमाला ❀

भावो गौरवञ्चेति बोध्यं, तदाह—**दिगिति । असम्भवादिति** । तेभ्यः सनादिर्भवतीत्यर्थेन, आयाती-त्यर्थाभावेन तज्जन्यविभागानाश्रयत्वादिति भावः । तत्र=तस्यां पञ्चम्यां सत्याम् । 'तदन्यथानुपपत्त्ये'ति शेषः । नन्वेवं 'गापोष्ट'गित्यादावस्याऽप्रवृत्त्या तस्यादेशतापत्तिरत आह—**गापोरिति** । प्रत्ययप्रकरण-पाठेन 'षष्ठी स्थाने' इत्यस्याबाधस्तदाह—**षष्ठ्यर्थे आनन्तर्यमिति** । बौद्धैकदेशाधारकस्थित्याश्रयत्वरूप-षष्ठ्यर्थसम्बन्धनिरूपकाध्याहृतानन्तरादिपदबोध्यानन्तर्यमित्यर्थः । नन्वनेन पूर्वत्वनिवारणेऽपि व्यवहित-त्वापत्तिरेवात आह—**अत्रेति** । 'गुप्तिज्किद्भ्य' इत्यादावित्यर्थः । परत्वस्य सिद्धत्वादाह—**उत्तरेति** ।

❀ ज्योत्स्ना ❀

नानुपपन्नमिति चिन्त्यमेतत् । **अव्यवहिता एव प्रत्यया इति** । 'गापोष्ट'गित्यत्र तु 'धातो'रिति

❀ सदाशिवभट्टीयम् ❀

षष्ठ्यन्तयोः प्रकृतित्वेन प्रत्ययत्वप्राप्तिरस्ति येन परत्वं प्रसज्येतेति । एतेनोपसर्जनपूर्वत्वस्यानवकाशत्वा-भिप्रायको विवरणग्रन्थः परास्तः । यदपि–प्रकृतसूत्रे–'विकारागमेषु च परविज्ञाना'दिति भाष्यव्याख्याना-वसरे कैयटेनोक्तं–'न हि परत्वनिमित्ता प्रत्ययसञ्ज्ञाऽपि तु प्रत्ययसञ्ज्ञानिमित्तं परत्वं, तथा च परत्वाभावेपि श्नम्बहुजकचां प्रत्ययसञ्ज्ञा भवती'ति । तस्याप्ययम्भावः—परत्वसन्नियोगशिष्टं न 'प्रत्यय' इति, सूत्रे चकाराभावादव्याप्तेश्च, किन्तु प्रत्ययसन्नियोगशिष्टं परत्वमिति । न च 'तृणह'इति निर्देशेन सन्नियोगशिष्ट-न्यायानित्यत्वेनाव्याप्तिः सुपरिहरेति वाच्यम्, अधिकारसूत्रवाक्यार्थस्यैकत्वेन तत्र न्यायाप्रवृत्तौ विकारादिष्व-तिव्याप्तिः, प्रवृत्तौ श्नमादिष्वव्याप्तिरित्युभयस्य दुर्लभत्वादिति । एतेन तद्व्याख्यावसरे उद्योते यदुक्तं–'न हि परत्वनिमित्तेति–तद्व्याप्येत्यर्थः, तथा हि सति व्यापकाभावेन व्याप्याभावः सिद्ध्येदपीति भावः, अपि तु प्रत्ययसञ्ज्ञानिमित्तम्परत्व'मिति । तच्चिन्त्यं'राजपुरुष'इत्यादौ प्रत्ययत्वाभावेपि पुरुषशब्दस्य परत्वदर्शनात् । 'सन्नियोगे'तिन्यायानित्यत्वेन श्नमादीनां प्रवर्तते एव सञ्ज्ञेति च–तदपास्तं, चिन्त्यञ्च । तद्भाष्याशयस्तु विकारागमेषु फलाभावान्न प्रत्ययत्वमित्येव । आद्युदात्तत्वञ्च परत्वसन्नियोगशिष्टम्, न प्रत्ययत्वसन्नियोग-शिष्टम्, अत एव परश्चेत्यस्याग्रे आद्युदात्तश्चेति सूत्रितं, वाचनिकं वाऽऽगमानुदात्तत्वमित्यादि कैयटे स्पष्टम्—यत्र च श्नमादौ फलमस्ति भवत्येव तत्र प्रत्ययत्वमित्यादिना । दिगर्थस्तु प्रदीपतोवगन्तव्य इत्यलम्बहुनेति व्याचक्षतेतराम् ।

**परश्चेति । अपादानत्वासम्भवेति** । गुपादिभ्यः सनादिर्भवतीत्यर्थेन 'आयाती'त्यर्थाभावेन तज्जन्य-विभागानाश्रयत्वादिति भावः । **षष्ठ्यर्थे आनन्तर्यमिति** । बौद्धैकदेशाधारकस्थित्याश्रयत्वरूपषष्ठ्यर्थसम्बन्ध-निरूपकाध्याहृतानन्तरादिपदबोध्यानन्तर्यमित्यर्थः । **अव्यवहिता एवेति** । गापोष्ट'गित्यत्रानन्तर्यस्य षष्ठ्यर्थकत्वे

❀ विषमपदविवृतिः ❀

**इति दिगिति** । अन्ये तु 'तृणह'इति निर्देशात्प्रत्ययपरत्वाभावेपि प्रत्यय इत्यस्योपस्थितिः, बहुचि तु प्रत्ययत्वस्य न फलम्, 'अव्ययसर्वनाम्ना'मित्यत्रापि 'प्रत्यय' इत्यस्य सम्बन्धः, 'न यासयो'रिति ज्ञापकात् । एवं च यत्र गमकं तत्र परश्चेत्येतत्सन्नियोगशिष्टस्य प्रत्यय इत्यस्य सम्बन्धः । आद्युदात्तश्चे-त्यनेन तु न सन्नियोगशिष्टत्वम्, विप्रकृष्टत्वात् । तेन क्विबादेः प्रत्ययसञ्ज्ञासिद्धिः ।

न चैवं षष्ठ्यंशविकलं सम्पूर्णं सूत्रमुपतिष्ठतां, किं 'परश्चे'त्यनेनेति वाच्यं, प्रकृत्यर्थमात्रविवक्षायां केवलप्रकृतेः—'पच्' 'पत्'इत्यादेः प्रयोगो मा भूदिति—'प्रत्ययः परो भवत्येव'तिनियमार्थत्वात् । तेन 'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्यय' इति सिद्धम् । अनुकरणे तु अभेदविवक्षयाऽर्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन प्रकृतित्वाभावात् 'गवित्ययमाहे'त्यादौ नानुपपत्तिः ।

## ❀ अभिनव-चन्द्रिका ❀

बाधितत्वाच्च केवलाव्यवहितत्वांश एवोपतिष्ठते इति भावः । **प्रयोगो माभूदितीति** । स्यादेतत्—'वर्त्तमाने लडि'त्यस्य वर्तमानकालेतरकालाविवक्षायां धातोर्लट् भवतीत्यर्थेन, 'प्रातिपदिकार्थमात्रे प्रथमे'त्यस्य प्रातिपदिकार्थेतरार्थाविवक्षायां प्रथमा भवतीत्यर्थेनैकस्मिन्नेकवचनमित्यस्य एकत्वेतरसङ्ख्यायाऽविवक्षायामेकवचनं भवतीत्यर्थेन च धातोर्लटः, प्रातिपदिकात्प्रथमैकवचनस्य च दुर्वारत्वेन केवलप्रकृतेः प्रयोगो नैव प्राप्नोतीति 'परश्चे'ति सूत्रं पुनरपि व्यर्थमिति चेन्मैवम्, 'वाक्ये वाक्यैकदेश'न्यायेन 'पिण्डीं' 'पिधेहीतिवत् 'पदे पदैकदेश'न्यायेन 'सत्या''भामा''देवः''दत्तः'इतिवच्च समभिव्याहारनियन्तृककार्यविषयेऽपि 'सुद्ध्युपास्य'इत्येतत्तात्पर्येण 'सुद्ध्य्' इति यान्तस्य' 'पाचक'इत्येतत्तात्पर्येण च 'पच्''अक'इत्यादिप्रयोगवारणाय समभिव्याहारनियन्तृककार्याणां तत्समभिव्याहाराभावेऽसाधुत्वबोधनाय 'परश्चे'तिसूत्रस्यावश्यकत्वादिति दिक् । **अर्थवत्त्वाभावादिति** । सादृश्य-

## ❀ चिदस्थिमाला ❀

उत्तरस्येत्यर्थः । अविरोधादिति भावः । एवं=तत्प्रवृत्तेरावश्यकत्वे । असम्भवादाह—**षष्ठ्यंशेति** । अत्र च अङ्गसञ्ज्ञासूत्रे 'प्रत्यये'इति 'सुपि चे'त्यादि च सप्तमीनिर्देशास्तात्पर्यग्राहकास्तथा च प्रथमां स्वीकृत्य प्रत्ययैः सामानाधिकरण्यमिति भावः । उभयार्थविवक्षायां केवलाप्रसङ्गात्प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानात्प्रत्ययार्थमात्रविवक्षायां 'किमस्य द्वयस'मितिप्रयोगाप्रसङ्गादाह—**प्रकृत्यर्थेति** । तत्फलमाह—**तेनेति** । नन्वेवं 'गवित्ययमाहे'त्यादिप्रयोगानुपपत्तिरत आह—**अनुकेति** । अस्य गवित्ययमाहेत्यादावितिसप्तम्यन्तेऽन्वयः । **अभेदेति** । 'अनुकार्यानुकरणयो'रित्यादिः । तदा हि स्वसादृश्याख्यसम्बन्धेनैव तदुपस्थितौ तत्र वृत्त्यकल्पनेनार्थवत्सूत्रनिविष्ट-वृत्त्यार्थबोधकत्वरूपार्थवत्त्वाभावादित्यर्थः । **भावेनेति** । 'स्वौजसि'तिसूत्राप्रवृत्त्येति शेषः

## ❀ सदाशिवभट्टीयम् ❀

सिद्धे क्लेशेनार्थान्तरकरणं **पाठकस्य मुधैवेति** भाति । **षष्ठ्यंशेति** । अत्र च 'सुपि चे'त्यादिनिर्देशास्तात्पर्यग्राहका इति भाट्टव्याख्यानं, तथा च प्रथमां स्वीकृत्य प्रत्ययैः सामानाधिकरण्यमिति भावः । **भवत्येव नियमेति** । अयं भावः, विधिर्द्विविधः, नित्यो वैकल्पिकश्च । तत्र नित्यविधेरजुपश्लिष्टस्येको यण्, तद्घटितः साधुः, स प्रयोक्तव्यः, तदघटितो न साधुः, स न प्रयोक्तव्य इत्यादिरीत्या स्वविधेयाघटितासाधुत्वबोधनपर्यन्तमपि व्यापारः, 'स्वरती'त्यादिविकल्पविधेश्च साधुत्वबोधनपर्यन्तमेवेत्येवं स्थिते विध्यन्तरवद्वर्तमानत्वविवक्षायां तद्घटितस्य साधुत्वं न्यायसिद्धन्तदविवक्षायां तदघटितस्यासाधुत्वबोधनार्थं नियमः । अत्र च लडादिर्निरर्थक एव, 'भूतानि कालः पचती'त्यत्र यथा, 'तस्यापत्य'मित्यादिविकल्पविधावुपगवपत्यमुपगोरपत्यमित्यादिप्रयोगभङ्गमियाऽणाद्यघटितस्यासाधुत्वं न न्यायसिद्धं तत्र महाविभाषया वाक्यम्—अन्यतरस्याङ्ग्रहणानुवृत्त्या समासः उपगवपत्यमित्यर्थे 'उपगु'रिति न प्रयोक्तव्यमिति नियमेन साध्यम् । स्पष्टञ्चेदमत्र भाष्ये । विपरीतन्तु न, व्याख्यानात् । 'क्रमण्नित्य'मित्यत्र योगविभागादिकन्तु मवन्ताभिवृत्तार्थप्रतीतिर्यथा नियमेन स्यादित्येवमर्थम् । परश्चेतिनियमेन तु निरर्थको

## ❀ विषमपदविवृतिः ❀

किञ्चेत्याद्युक्तमपि दूषणं देशांशे निराकाङ्क्षत्वेपि परश्चेत्यस्य सम्भवमात्रेण सम्बन्धसम्भवः । विकारा—

प्रकृतित्वञ्च—प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वम् । अयं न्यायः शास्त्राबोधितान्यतरप्रयोगविषयः, अत एव 'लिट्', 'इया'नित्यादौ न दोषः । अत्र प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधाना'न्नापि केवल' इति न्यायमूलकम् । एतन्मूलकमेव पठ्यते—'अपदं न प्रयुञ्जीते'ति । अपरिनिष्ठितमिति तदर्थः ।

परिनिष्ठितत्वञ्च—अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । निहते तिङन्तादावव्याप्तिवारणाय—अप्रवृत्तेति । वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते 'सेद्धे'त्यादावव्याप्तिवारणाय—'नित्येती'ति दिक् ।

### ❀ अभिनव-चन्द्रिका ❀

ज्ञानाधीनोपस्थित्या अर्थविषयकबोधजनकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्या अर्थविषयकबोधजनकत्वस्याभावादित्यर्थः। **प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वमिति**। स्यादेतत् स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वशरीरे प्रकृतित्वस्य, मूलोक्तप्रकृतित्वशरीरे प्रत्ययत्वस्य पतितत्वादन्योऽन्याश्रय इति चेन्मैवम्, 'आगमभिन्नः आदेशभिन्नश्च यस्तृतीयचतुर्थपञ्चमाध्यायविधेयस्तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वम्प्रकृतित्व'मिति परिष्कारणादोषात् । **अप्रवृत्तेतीति** । इदं विशेषणं

### ❀ चिदस्थिमाला ❀

**भावादिति** । उक्तनिषेधाविषयत्वादिति शेषः । ननु तत्र प्रातिपदिकत्वाभावेऽपि तत्सजातीयाद्विभक्तिदर्शनेन प्रकृतित्वं कुतो नात आह—**प्रकृतित्वञ्चेति** । एवञ्च तत्रोद्देश्यतावच्छेदकप्रातिपदिकत्वाभावात्तदभावो युक्त इति भावः । नन्वेवमपि 'दधि' 'व्यतिसे' इत्यादिप्रयोगानुपपत्तिरेवात आह—**अयमिति** । 'न केवलेती'त्यर्थः । **अन्यतरेति** । प्रकृतिप्रत्ययान्यतरेत्यर्थः । अत एव=तस्य तद्विषयत्वादेव । आदिना दध्यादिसङ्ग्रहः । ननु 'परश्चे'त्यनेन न्यायैकदेशसाधनेऽपि अन्यांशस्य वाचनिकत्वावश्यकत्वे सर्वस्य तत्त्वमस्तु, किं 'परश्चे'त्यनेनात आह—**अत्रेति** । न्याये इत्यर्थः ।

**विधानादिति** । 'केवलप्रत्ययप्रयोगासम्भव इती'ति शेषः । **इतीति** । इत्यपीत्यर्थः । ननु 'अपदं न प्रयुञ्जीत' इति वक्तस्य वाचनिकत्वमेवास्तु, कृतमनेनात आह—**एतदिति** । नन्वर्थभेदात्कथं तन्मूलकत्वं, किञ्च गविति लिडितीत्यादौ दोष एवातआह—**अपरीति** । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादाह—**परीति** । आदिना पदात्परामन्त्रितादिसङ्ग्रहः । **चैकेति** । 'अप्रवृत्ते'त्यादिः । 'इडागमे'त्यस्य इडागमविधेत्यर्थः । एवञ्चार्थभेदात्तन्मूलकत्वं, तत्रादोषश्चेति भावः । एतेन—'बहुजेव पुरस्ता' दिति नियमेन सिद्धावपि 'बहुच्पुरस्तादेवे'त्य दिविपरीतनियमस्याप्यापत्तौ अन्यप्रत्ययानामव्यवस्थावारणायेदं सूत्रमिति—**प्रकाश-रत्नाकराद्युक्तमपास्तम्** , उक्तरीत्या निर्वाहात् । नन्वप्रवृत्तत्वं—प्रयोगत्वावच्छेदेन ? तत्सामानाधिकरण्येन वा ? अन्त्ये किं परिनिष्ठिते ? अपरिनिष्ठिते वा ? एवं नित्यविधित्वावच्छिन्ने (उत्तमः) । अत्रेदं बोध्यम्—परिनिष्ठितत्वेनाभिमतविशेषाऽधिकरणकप्रवृत्तियोग्यकर्तृकभूतकालिकप्रवृत्त्याश्रयभिन्नो यो नित्यो वैकल्पिकभिन्नश्च विधिर्थदीयप्रक्रियावाक्ये प्रवृत्तस्तत्र यदुद्देश्यतावच्छेदकं तदनाक्रान्तत्वमित्यर्थः ।

### ❀ सदाशिवभट्टीयम् ❀

मप्स्यात् । अत्यन्तस्वार्थिके तु नास्य सम्बन्धो महाविभाषया सह विरोधात् । विभाषया हि स्वविधेयघटिते साधुत्वं, नियमेन चासाधुत्वमिति विरोधः। **स्पष्ट एवेति**। अत एवाषडक्षेत्यादावुत्तरसूत्रस्यान्यतरस्याङ्ग्रहणस्य ज्ञापकत्वेन नित्यत्वमुक्तमाकरे । **अनुकरणे त्विति** । अस्य च'गवित्ययमाहेत्यादा'विति सप्तम्यन्तेऽन्वयः । **शास्त्राबोधितेति** । शास्त्राबोधितत्वञ्च शास्त्रबोधितासाधुत्वकत्वम् । अतः 'पाचक'इत्यादेर्वुन्विधायकशास्त्रबोधितस्य प्रयोगः स्यादिति नापादनीयं, पर एवेति नियमेन स्वाघटितस्य तस्यासाधुत्वबोधनात् । **अनुकरणे**-

१. अत्र ग्रन्थत्रुटितो भाति, परं चतुर्ष्वपि लिखितपुस्तकेष्वेवमेव पाठ उपलभ्यते ।

**ङ्याप्प्रातिपदिकात्** । समाहारद्वन्द्वः । ननु 'परश्चे'त्यनेन प्रकृतेराक्षेपा-

ॐ अभिनव चन्द्रिका ॐ

लक्ष्ये लक्षणन्यायप्रयोज्यसङ्कोचमबुद्ध्वा दत्तम् । अन्यथा तेन न्यायेन स्वस्मिन्स्वविधेयघटितातिरिक्तत्वेन सङ्कोचात्स्वप्रवृत्त्युत्तरं स्वीयोद्देश्यतावच्छेदकाक्रान्तेरभावादिदं विशेषणं व्यर्थं स्यात् । प्रकृते-

ॐ चिदस्थिमाला ॐ

अस्ति चेदं परिनिष्ठितमात्रे । तत्र तावत् 'पचति' राम' इत्यादौ तद्भिन्नो यो नित्यविधिर्यस्तदीयप्रक्रियावाक्ये न प्रवृत्तस्तत्तदनाक्रान्तत्वमस्ति । 'दधि' 'लिट्' निहतातिङन्तादौ 'सेढे'त्यादावपि विशेषणद्वयमतो न दोषः । 'पच्-ल्''राम-स्' इत्यादौ च नास्ति, यतस्तत्र प्रवृत्तियोग्य एव तादृशोऽस्तत्तदाक्रान्तत्वम् । अनुकरणे त्वेनद्वैपरीत्यमिति तत्त्वम् । अत्र 'प्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाक्रान्तत्वमपरिनिष्ठितत्व'मित्युक्तौ लाघवेऽपि नव्द्वयानिवेशादुक्तरीत्या 'पचती'त्यादौ निर्वाहेऽपि दध्यादावव्याप्तिः । 'अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाक्रान्तत्वं तत्त्व'मित्युक्तौ तु न विशेषः । अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाक्रान्तत्वं परिनिष्ठितत्वमिति त्वसम्भवग्रस्तम् , तस्मादुक्तरीतिरेव युक्तेति दिगिति । तदाह—**इति दिगिति** । इतरेतरद्वन्द्वे बहुवचनापत्तेराह—**समेति** । यत्तु **दण्डी**—ज्ञापकात्सुबन्तात्तद्धितोत्पत्तेस्तत्र प्रातिपदिकाधिकारो व्यर्थं इति शङ्कामाह; तन्नेति ध्वनयन् शङ्कते—**नन्विति** । **व्यर्थ इति** । सर्वत्र व्यर्थ इत्यर्थः । ननु प्रातिपदिकार्थादौ प्रथमाविधेस्तत्रादोषेऽपि 'पचति' 'पश्ये'त्यादौ क्रियायाः कर्मादिमत्त्वेन तद्वाचकतिङ-

ॐ ज्योत्स्ना ॐ

पञ्चम्यन्ताऽनुवृत्त्या 'ङ्यापोरनन्तरो धातोश्चाव्यवहितः पर'इत्यर्थान्न दोष इति भावः। **न द्वितीयादीति**। 'पश्य मृगो धावती'त्यादौ 'पचति भवती'त्यादौ प्रथमायाः सम्भवात्प्रथमादीति वक्तव्ये 'द्वितीयादी'-त्युक्तिर्विभक्तिविधौ 'कर्मणि द्वितीये'त्यस्य प्रथममुपादानात्प्राधान्यसूचनार्था । **सङ्ख्याभावादिति** । तिङन्तार्थप्रधानक्रियायां सङ्ख्यान्वयाकाङ्क्षाभावादित्यर्थः । ननु क्रियाविशेषणीभूततिङन्तार्थ-

ॐ सदाशिवभट्टीयम् ॐ

ऽतिव्याप्तिवारणायाऽपदत्वं व्याचष्टे-**अपरीति** । निहतादावव्याप्तिवारणाय तदपि परिष्कुरुते—**परीति** । अप्रवृत्तत्वञ्च प्रतिबन्धकाप्रतिहतप्रवृत्तिकत्वम् , तेन लिडित्यादौ ण्वुलाद्युद्देश्यतावच्छेदकधातुत्वाक्रान्तत्वेपि नाव्याप्तिः, 'हरी एता'वित्यादौ च न सा । प्रतिबन्धकत्वञ्च निहते तिङन्ते 'लक्ष्ये लक्षणस्ये'ति न्यायः, लिडादावुक्तार्थानामित्यपवादविषयता वा प्रकृतिभावश्चेति रीत्या तत्र तत्रानेकविधं यथासम्भवं बोध्यम् । दिगर्थस्तु वैकल्पिकविधीनां वाग्रहणरूपप्रतिबन्धकप्रतिहतप्रवृत्तिकत्वान्नित्यग्रहणवैकल्यकमिति केचिद्व्याचक्षते ।

ङ्याप् । प्रातिपदिकार्थत्वाभावेन मात्रपदेन द्वित्वातिरिक्तकालादेर्व्यावृत्त्या च प्रथमाया अप्राप्तावपि 'पश्य धावती'त्यादौ द्वितीया स्यादत आह—**नेति** । आदिना 'ज्योतिष्टोमेन यजेते'त्यादौ तृतीया । सङ्ख्येति ।

ॐ विषमपदविवृतिः ॐ

गमयोस्तु पञ्चम्यन्ताभावेनान्वयासम्भवात्परश्चेत्यस्यानुपस्थितिः । न च सीयुटा व्यवधानाद्धातोः परत्वासम्भवः, 'यासुट्परस्मैपदे'ष्विति सूत्रारम्भसामर्थ्येनागमातिरिक्तकृतव्यवधानाभावस्यैव परशब्दार्थत्वात् । इतरथा सीयुट इव यासुटोपि पूर्वं प्रवृत्त्या परस्मैपदविषयाभावात्तदसङ्गतिः । किञ्च स्थानिनः प्रत्ययत्वनिर्णयेन परश्चेत्यस्यासम्बन्धेपि 'प्रत्यय' इत्यस्य तत्सन्नियोगशिष्टाद्युदात्तश्चेत्यस्य च सम्बन्धः । किञ्च परश्चेत्यस्याप्रवृत्तावपि स्थानिवद्भावलब्धप्रत्ययसञ्ज्ञासन्नियोगेनाद्युदात्तत्वोपपत्तिः । तदेतदभि प्रेत्य भगवता भाष्यकृतोक्तं-'विकारागमेषु च परविज्ञानात्प्रत्ययसञ्ज्ञा न भविष्यति, प्रत्ययः परो भवतीत्युच्यते, न च विकारागमाः परे सम्भवन्ती'ति । प्रकृत्यर्थमात्रविवक्षायां = सिद्धावस्थाया विवक्षायाम् ।

ङ्याप्प्रातिपदिकात् । तिङन्तास्विति । 'पश्य मृगो धावती'त्यादौ ।

त्प्रातिपदिकाधिकारो व्यर्थः। तिङन्तात्तु न द्वितीयादिः[1], सङ्ख्याऽभावात्। सङ्ख्यायास्तिङो-क्तत्वाच्च। धातुभ्यस्तु न, तिङामपवादत्वात्। 'तस्ये'त्यादिसमर्थविभक्तिनिर्देशात्, तमब्विधौ 'तिङश्चे'ति ज्ञापकाच्च न तेभ्यस्तद्धितव्यावृत्त्यर्थ इति चेन्न। तदभावे

### ॐ अभिनव-चन्द्रिका ॐ

**राक्षेपादिति**। परत्वस्यावध्यंशे नित्यसाकाङ्क्षत्वादिति भावः। **उक्तत्वाच्चेति**। 'उक्तार्थानामप्रयोग' इति न्यायेन तिङन्तान्न सुबुत्पत्तिरिति भावः। **संस्कृतस्येति**। स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमेणो-

### ॐ चिदस्थिमाला ॐ

न्नात् द्वितीयापत्तिरत आह—**तिङन्तात्त्विति**। **सङ्ख्येति**। सङ्ख्यावच्छिन्नेऽन्यसङ्ख्याभावादित्यर्थः। औत्सर्गिकैकवचनन्तु गमके सत्येव। किञ्चैवं सर्वतिङन्ते सुबन्तत्वेनैव पदत्वे सिद्धे 'सुप्तिङन्त'मित्यत्र तिङ्ग्रहणवैयर्थ्यापत्तिरिति भावः। नन्वन्यसङ्ख्याभावेऽपि तत्सङ्ख्यामादाय स्यादत आह—**सङ्ख्येति**। द्योतकविषयेऽप्युक्तार्थानामिति न्यायप्रवृत्तेरिति भावः। एतेन 'वाक्यात्सुबुत्पत्तिनिरासाय स' इत्यपास्तम्।

ननु धातुभ्यः सुपोऽभावाय सोऽत आह—**धातुभ्य इति**। ननु एवमपि सुबन्तेभ्यस्तद्धितनिवृत्त्यर्थः सोऽत आह—**तस्येति**। आदिना 'तेने'त्यादिपरिग्रहः। नन्वेवमपि 'तस्ये'त्यादिना तिङ्रूपविभक्तेरनिर्देशेन तिङन्तात्तद्धितव्यावृत्त्यर्थः सोऽत आह—**तमबिति**। एवञ्च सुबन्तादिष्टत्वेन, तिङन्तान्निर्दिष्टान्यप्रत्ययाभावेन तद्वैयर्थ्यमेव, तदाह—**न तेभ्य इति**। सुबन्ततिङन्तेभ्य इत्यर्थः। एतेन 'वाक्यादत्यन्तस्वार्थिकनिरासार्थः स' इति **कौस्तुभा**द्युक्तमपास्तम्। तदभावे=प्रातिपदिकाधिकाराभावे।

ननु सुबुत्पत्तेः प्राक्केवलप्रातिपदिकादेव तद्धितोत्पत्त्यर्थं सोऽत आह—**स्वार्थेति**। **संस्कृतस्य**। 'क्रमेणे'-

### ॐ ज्योत्स्ना ॐ

साधनेऽस्य सङ्ख्यान्वयाकाङ्क्षास्त्येवेत्यत आह—**सङ्ख्यायास्तिङोक्तत्वाच्चेति**। तिङन्तेभ्यस्तद्धितव्यावृत्त्यर्थोऽपि प्रातिपदिकाधिकारो न भवतीत्यत आह—**तस्येत्यादीति**। तेभ्यः=तिङन्तेभ्यः।

### ॐ सदाशिवभट्टीयम् ॐ

सङ्ख्यावच्छिन्नेऽन्यसङ्ख्याभावादित्यर्थः। नन्वन्यसङ्ख्याभावेपि तत्सङ्ख्यामादाय स्यादत आह—**सङ्ख्येति**। एतेन वाक्यात्सुबुत्पत्तिनिरासाय स इत्यपास्तमिति **भट्टाः**। अन्ये तु "–'सङ्ख्याभावा'दित्यस्याऽप्रतीतेरित्यर्थः। ननु कर्तृकर्मप्रत्ययेऽप्रतीतावपि 'शय्यते'इत्यादौ तत्प्रतीतिरस्त्येव भावार्थकतिङन्तेऽत आह—**उक्तत्वादिति**। एतेन 'धावति पश्ये'त्यादौ कारकसङ्ख्याया उक्तत्वेपि क्रियागतामनुक्तामादाय स्यादित्यपास्त''मिति व्याचक्षते।

**अपवादत्वादिति**। फलस्य व्यपदेशिवद्भावेन कर्मत्वात्, धातुमात्रस्य तदुपस्थापकत्वात्, स्वमते सङ्ख्यासत्त्वाच्च सर्वत्र द्वितीयाप्राप्तेरिति भावः। क्वचित्तस्य करणत्वेनान्वयविवक्षायां 'ज्योतिष्टोमेन यजेते'त्यादौ 'हरिन्नमेच्चे'दित्यादौ च हेतुत्वे तृतीयाप्राप्तिर्बोध्या। इदन्तु चिन्त्यं–सङ्ख्यामात्रविवक्षायां कालसाधनादेरविवक्षायां तिङादेरप्राप्तौ सुपो वारणाय स आवश्यक इति। ननु वर्त्तमानकालिकैककर्तृकपाकसमूह इत्यर्थे पचतीत्यादावणादिव्यावृत्त्यर्थः सोऽत आह–**तस्येति**। ननु तस्येत्यादेर्न षष्ठ्यन्तादित्यर्थः, किन्तु तत्सम्बन्धीत्यादिः, एवञ्च तिङन्तादणादिःप्राप्नोत्येवेत्यत आह—**ज्ञापकेति**। 'तिङन्तात्तद्धितश्चेत्तरबादिरेवे'ति नियमद्वारेति भावः। एतेन वावृत्तुधातुस्थशेखरविरोध इत्यपास्तम्। वाक्यादत्यन्तस्वार्थिकनिरासाय तदिति चिन्त्य-

### ॐ विषमपदविवृतिः ॐ

**तिङोक्तत्वाच्चेति**। ननु धावतीति तिङा कर्तृगता सङ्ख्याऽभिधीयते न कर्मगतेति चेन्न, यास्काचार्यमते

---

१. **द्वितीयादिरिति**। 'प्रथमादि'रिति तु नोक्तं, प्रथमाविधौ प्रातिपदिकार्थपदोपादानेन तिङन्ते प्रातिपदिकार्थाभावेन तदप्राप्तेरिति–**श्रीबालशास्त्रि**चरणाः। **आचार्या**स्तु'कारकविभक्तित्वेन प्राधान्यात्तथोक्ति'रिति व्याचक्षते।

स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्यैः संस्कृतस्य बहिर्भूतापत्यादियोग' इति 'कुत्सिते' इन्निसूत्रभाष्योक्तन्यायेन, 'तस्यापत्य'मित्यादौ तत्सम्बन्ध्यपत्यमित्याद्यर्थे प्रथमोच्चारित-

ॐ **अभिनव-चन्द्रिका** ॐ

पस्थित्या तेन क्रमेण शब्दप्रादुर्भावेण येन क्रमेण शब्दप्रादुर्भावस्तेन क्रमेण तत्तत्प्रयुक्तकार्यप्रवृत्तेरिति भावः । तत्सम्बन्ध्यपत्यमिति । विशिष्टार्थे प्रत्ययानां विधानेऽपि 'प्राप्ताप्राप्तविवेक'न्यायेन 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'तिवदपत्यादिमात्रार्थकत्वं प्रत्ययानामिति बोध्यम् । **सर्वस्य सुपीति** ।

ॐ **चिदस्थिमाला** ॐ

त्यादिः । हेत्वन्तरमाह—**तस्येति** । प्रथमोच्चारिताद्बाधादाह—**बोध्यादिति** । 'प्रत्यया'दित्यस्य तावत्पर्यन्तं व्यापार इति भावः । 'इत्याद्यर्थस्ये'ति पाठः । 'सार्थके'त्यनेनात्यन्तस्वार्थिकादिनिरासः । एवञ्च केवल-

ॐ **सदाशिवभट्टीयम्** ॐ

मिदमिति वदन्ति । सुवन्तस्योपस्थितत्वसिद्धये हेतुद्वयमाह—**स्वार्थेति । तस्येति च बोध्येति** । अत्र च 'विद्वन्मानसे'ति वक्ष्यमाणवक्तव्यं बोध्यम् । **प्रथमोच्चारितबोध्यादिति** । प्रथमोच्चारितं बोध्यं वाच्यं यस्येति च तदर्थः, बोध्यबोधकादिति यावत् । अन्यथा 'मुक्तेपी'ति न्यायेन बोध्यादुपग्वादेरर्थात्प्रत्ययस्य बाधाऽ-

ॐ **विषमपदविवृतिः** ॐ

तिङर्थकर्तृमुख्यविशेष्यकशाब्दबोधस्याप्यङ्गीकारात् । यद्वा तिङन्ताद्द्वितीयापाद्यमाना किं प्रधानक्रियागतैकत्वमादाय ? आहोस्वित्प्रधानक्रियागतसङ्ख्याया बाधात्तद्विशेषणकर्त्रादिगतैकत्वमादाय ? । आद्ये 'सङ्ख्याभावा'दित्युत्तरम् । द्वितीये 'तिङोक्तत्वाच्चे'ति । धावनकर्तुरेव दर्शने कर्मत्वात्कर्तृगतसङ्ख्याया अभिहितत्वे कर्मगताया अपि तस्या अभिहितत्वमिति भावः । तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम्—'तिङोक्ता एकत्वादय इति तिङन्ताच्च स्वादयो भवन्ती'ति । यद्यपि 'पचति भवती'त्यादौ प्रथमाया अप्यापादानसम्भवः, तथापि प्रातिपदिकत्वायेकवाक्यतयैव स्वादिसूत्रस्य विधायकत्वेन तिङन्तस्य प्रातिपदिकत्वाभावेन प्रातिपदिकार्थाभावात्प्रथमा नापादयितुं युक्तेत्याशयेन 'द्वितीयादि'रित्युक्तम् ।

केचित्त्वष्टाध्याय्यां 'कर्मणि द्वितीये'त्यस्य प्रथममुपादानात्तथोक्तिरित्याहुः । तेभ्यः=तिङन्तेभ्यः । **प्रथमोच्चारितबोध्यादिति** । 'तस्यापत्य'मित्याद्यर्थबोधकशास्त्रेषु प्रथमोपात्तं यत्—'तस्ये'त्यादि, तद्बोध्यो

ॐ **वरवर्णिनी** ॐ

**उञ्छादिपाठेनेति** । न च 'फिषोऽन्त'इत्येवान्तोदात्तत्वे सिद्धे उञ्छादिषु पाठोऽस्य व्यर्थ इति वाच्यं, 'स्वाङ्गशिटामदन्ताना'मिति फिट्सूत्रेण 'स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्त'इत्यर्थकेन ( सर्वशब्दस्य सर्वनामसञ्ज्ञकतया–) प्राप्तस्याद्युदात्तत्वस्य बाधनायोञ्छादिषु सर्वशब्दपाठस्यावश्यकत्वात् ।

नन्वेवमुञ्छादिपाठेन सर्वशब्दस्यान्तोदात्तत्वेऽपि सुबुत्पत्त्यनन्तरं 'सर्वस्य सुपी'त्याद्युदात्ततयोञ्छादिषु तत्पाठो व्यर्थ इति चेदत्र प्राञ्चः—"उञ्छादिषु अन्तोदात्तत्वनिपातनात्सर्वस्य विकारः सार्व इत्यत्रानुदात्तादेरञिति अनुदात्तत्वलक्षणाऽञ्सिद्धिः, श्रवणन्तु सर्वत्राद्युदात्तस्यैव, प्रत्ययलक्षणेनापि 'सर्वस्य सुपी'त्याद्युदात्तस्वरस्यैवेष्यमाणत्वात्—"इत्याहुः ।

**श्रीराघवेन्द्राचार्यास्तु**–'सर्वप्रातिपदिकेभ्यः क्विब्वे'ति क्विपि 'सर्व इवाचरति—सर्वती'त्यत्रान्तोदात्तश्रवणायोञ्छादिपाठः सफलः, तत्र हि प्रातिपदिकग्रहणात्सुपोऽसम्बन्धस्य मूल एवोक्ततया सुपोऽभावेन 'सर्वस्य सुपी'त्यस्याप्राप्तेः । ननु तत्र'धातो'रित्यन्तोदात्तत्वसिद्धावुञ्छादिपाठस्य न फलमिति चेन्न, काम्यचश्चित्त्वेन 'धातो'रित्यस्य नामधातावप्रवृत्तेर्ज्ञापनात्, अन्यथा 'पुत्रकाम्यती'त्यादौ'धातो'रित्येवान्तोदात्तत्वे सिद्धे तदर्थं चित्त्वं व्यर्थमेव स्यादित्याहुः । **श्रीबालशास्त्रिचरणानुयायिनस्तु**–अत्यन्तस्वार्थिकेतरपि 'सर्वतर' इत्यादावुञ्छादिस्वरश्चरितार्थः, अत्यन्तस्वार्थिके सुपोऽसम्बन्धस्योक्तत्वादित्याहुः ।

बोध्यात्प्रत्यय इत्यर्थस्य सत्त्वेन च सार्थकतद्धितानां सुबन्तादुत्पत्त्या 'अनुदात्तादे'रित्यस्य प्राधान्यादुपस्थितसुबन्तविशेषणत्वापत्तौ 'सर्वस्य विकारः सार्व' इत्यत्राञनापत्तेः, 'सर्वस्य सुपी'त्याद्युदात्तत्वात् । तदधिकारसामर्थ्यात्तु प्रातिपदिकस्यैव तद्विशेषणमिति न दोषः, सर्वशब्दस्योञ्छादिपाठनान्तोदात्तत्वात् । स्पष्टञ्चेदमत्र भाष्ये ।

न चान्तरङ्गानपीति न्यायेन लुङ्निमित्तप्रत्ययात्पूर्वमाद्युदात्ताप्राप्त्या तस्य सुबन्तविशेषणत्वेऽपि न दोष इति वाच्यं, तेन न्यायेन धर्मिग्राहकमानादन्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेन दोषात् । 'सर्वस्य सुपी'त्यत्र सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात्-प्रत्यये परतः पूर्वकार्यत्वाभावेन 'न लुमते'त्यस्याप्राप्तौ प्रत्ययलक्षणेन

ॐ अभिनव-चन्द्रिका ॐ

'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति परिभाषया-सुबन्तस्य सर्वशब्दस्य आदिरुदात्त इति तदर्थः । उञ्छादिपाठेनेति । 'स्वाङ्गशिटामदन्ताना'मित्याद्युदात्तत्वबाधनार्थमयं पाठ इति भावः । अन्तरङ्गनिमित्तविनाशकलुक एवेति । लुकि 'अन्तरङ्गनिमित्तविनाशक' इति विशेषणदाना'दतिभवका'-

ॐ चिद्स्थिमाला ॐ

प्रातिपदिकात्तद्धितविधानं दुर्वचमिति भावः । घटकतयोपस्थितप्रातिपदिकविशेषणत्वाभावायाह—प्राधान्यादिति । उपस्थितेनेति । उक्तहेतुद्वयेनेति भावः । ननु तदधिकारेऽपि प्राधान्याभावात्कथं तद्विशेषणत्व मत आह—तदधीति । तत्='अनुदात्तादे'रित्येतत् । तथाच स न्यायोऽत्र बाध्येत तेनेति भावः । नन्वेवमपि 'स्वाङ्गशिटा'मित्याद्युदात्त एव सर्वशब्द इतीष्टासिद्धिरेवात आह—सर्वेति । ननु तत्र पाठे एव न मानमिति चेन्न, अन्यभाष्यस्य, 'सार्व'इत्यञन्तप्रयोगस्य च मानत्वात्, 'सर्वस्य सुपी'त्यारम्भाच्च, तदाह—स्पष्टमिति । लुक्स्थानिप्रत्ययनिमित्तकार्यापेक्षया लुगादेः प्राबल्यबोधको न्याय इत्याशयेनाशङ्कते—नचेति । प्रत्ययात्=अञः । तस्य='अनुदात्तादे'रित्यस्य । दोषः=अञनापत्तिः । एवमग्रेऽपि । धर्मीति । उक्तन्यायबोधक-प्रत्ययोत्तरेति-सूत्रस्थमपर्यन्तग्रहणानुवृत्तिरूपप्रमाणादित्यर्थः । अस्ति हि 'त्वत्कृत'मित्यादौ लुकोऽन्तरङ्ग-त्वमावेकवचने-इत्यस्य निमित्तविनाशकता, 'न लुमते'तिनिषेधेन लुकि विभक्तिपरत्वाभावात्तदाह—अन्तरङ्गेति । विनाशकस्यैव लुकोऽपीत्यर्थः । एवेन तदविनाशकव्यावृत्तिः । अपिना समासादिसङ्ग्रहः । नन्वत्रापि लुकि 'न लुमते'ति निषेधेन सुप्परत्वाभावात्सर्वस्य सुपीत्यप्राप्त्या तत्त्वमस्त्येवेति न्यायविषयतया दोषाभाव एवात आह—सर्वस्येति । इत्यत्र=इत्यादौ । तदन्तसप्तमीत्वात्='तदन्तसप्तमीत्व'-

ॐ ज्योत्स्ना ॐ

कौस्तुभोक्तं दूषयितुमुपन्यस्यति—न चेत्यादि । तेन न्यायेन='अन्तरङ्गानपी'तिन्यायेन । धर्मिग्राहकमानादिति । धर्मिणः=बहिरङ्गेण लुकाऽन्तरङ्गविधिबाधनस्य, ग्राहकं—यन्मानं='प्रत्ययोत्तर-

ॐ विषमपदविवृतिः ॐ

य उपगवादिसम्बन्धस्तद्बोधकं यत् 'उपगु ङस्' इत्यादि, तस्मादित्यर्थः । प्राधान्यादिति । इदमयुक्तम्—समर्थादिति सुबन्तमेव विशेष्यतया प्रक्रान्तं न त्वन्यत्, द्वयोर्हि विशेष्यतया सम्भावनायामन्यतरस्य तथात्वनिश्चयाय हेतूपन्यासो युक्तः । ननु सर्वशब्दोप्याद्युदात्त एव 'स्वाङ्गशिष्टामदन्ताना'मिति सूत्रेण, ततश्च प्रातिपदिकादित्युक्तावप्युक्तदोषस्तदवस्थ इत्यत आह—सर्वशब्दस्येति । कौस्तुभोक्तं दूषयितुमुपन्यस्यति—नचेति । लुङ्निमित्तप्रत्ययादिति । स न्यायो लुक इव तदुपजीव्यस्य कार्यस्यापि प्राबल्यबोधक इति भावः । 'सौवरीणाम्'=स्वरविधायक-

सुबन्ततया तस्यान्तरङ्गनिमित्तविनाशकत्वाभावात् । अत एव सर्वस्तोमादिबहुव्रीहे-राद्युदात्तत्वसिद्धिः । न चानुदात्तादिप्रकृतिकषष्ठ्यन्तादित्यर्थेन न दोष इति वाच्यं, 'गर्गादिभ्य' इत्यादौ सुबन्तं प्रति गर्गादीनां विशेषणत्वासम्भवादगत्या लक्षणास्वीकारेऽपि

ॐ अभिनव-चन्द्रिका ॐ

नित्यादौ अकच्च सिध्यति । अन्यथा लुकि अन्तरङ्गनिमित्तविनाशकत्वाभावसत्त्वेऽपि समास-सञ्ज्ञायां तत्सत्त्वेनाकज्न स्यात् । अत एव 'अर्णुहि' इत्यादौ अन्तरङ्गनिमित्तविनाशकत्वाभावा-ल्लुकः पूर्वं गुणे संयोगपूर्वकत्वान्न लुक् । एवं 'राजपुत्री'त्यादौ बहिरङ्गसमासादेः प्राक् शार्ङ्गरवादि-पाठान्ङीनि'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वं सिध्यतीति दिक् ।

**पूर्वस्य कार्यित्वाभावेनेति** । लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना–लुप्तप्रत्ययनिमित्तकाङ्ग-सञ्ज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वावच्छिन्ना च या उद्देश्यता तदुद्देश्यताकत्वस्य 'सर्वस्य-

ॐ चिदस्थिमाला ॐ

मिति सिद्धान्ताङ्गीकारात् । तथाच विशेष्यानुरोधेन षष्ठ्यर्थे सप्तमीमङ्गीकृत्य सुबन्तस्य तस्येत्यर्थेन विशिष्ट-कार्यित्वं, तदाह—**प्रत्यये इति** । तस्य=लुकः । ननूक्तसिद्धान्तस्य तत्रानङ्गीकारोऽत आह–**अत एवेति** । तदङ्गीकारादेवेत्यर्थः । 'सर्वस्तोमोतिरात्र' इति श्रुतौ तथा पाठादाह—**सर्वेति** । **आद्युदात्तत्वेति** । 'पूर्वपदप्रकृतिस्वरेणे'त्यादिः । अन्यथा बहुव्रीहिकालेऽन्तोदात्तत्वात्पूर्वपदप्रकृतिस्वरेण तस्यैवातिदेशः स्यान्ना-द्युदात्तस्य । ननु 'गर्गादिभ्य' इत्यादौ तत्प्रकृतिकषष्ठ्यन्ता(त्सुबन्ता)दित्यर्थस्य लक्षणयाङ्गीकारावश्यकत्वेना-'ऽनुदात्तादे'रित्यत्रापि तथैवास्त्वित्याशयेनाशङ्कते–**नचेति** । **मानेति** । असम्भवाभावादिति भावः । इदञ्च

ॐ ज्योत्स्ना ॐ

पदयोश्चे'तिसूत्रं–तस्मादित्यर्थः । तथाहि–त्वया कृतं–'त्वत्कृत'मित्यादौ 'त्वमावेकवचने'इत्येव सिद्धे 'प्रत्ययोत्तरपदयोश्चे'तिसूत्रमनर्थकम्,—अन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादेश्चान्तरङ्ग-विधिबाधकत्वज्ञापनेन चरितार्थं संपद्यते । नन्वेवमपि न ज्ञापनसम्भवः, तव पुत्रस्त्वत्पुत्र इत्यादौ तवाद्यादेशबाधनाय तस्यावश्यकत्वादिति चेत्, 'एवं तर्हि सूत्रे मपर्यन्तग्रहणानुवृत्तिरुक्तार्थे ज्ञापिका भविष्यती'ति भाष्यकृतः । एतद्व्याचक्षते,—'यदि तवाद्यादेशबाधनार्थत्वं सूत्रस्य स्यात्तदा मपर्यन्त-ग्रहणानुवृत्तिमन्तरेणोत्सर्गसमानदेशत्वात्तवादीनां त्वमौ मपर्यन्तस्य सिद्धाविति व्यर्था तदनुवृत्तिः-उक्त-ज्ञापनद्वारा प्रागेव लुकि कृते विभक्त्यभावात्तत्रादेस्त्वादेश्वासम्भवादप्राप्तत्वमादेशविधायकत्वेन-सफला भवती'ति । एतदुपाध्याया न क्षमन्ते,–इनमकज्वहुचां भिन्नदेशानामप्यपवादत्वदर्शनादुत्सर्ग-

ॐ सदाशिवभट्टीयम् ॐ

सङ्गतिः स्पष्टैव । तद्बोध्यबोधकञ्च सुबन्तमेवेति तस्योपस्थितत्वमिति भावः । घटकतयोपस्थितप्रातिपदिकत्व-विशेषणत्वाभावायाह—**प्राधान्येति** । **न दोष इति** । यद्यपि प्रकृते'सर्वस्य सुपी'त्यस्य प्रवृत्त्या प्रातिप-दिकमपि न, तथाप्युपलक्षणन्तदिति भावः । उञ्छादिपाठं प्रमाणयन्नाह—**स्पष्टञ्चेति** । **अत एव सर्वेति** । तत्र तदन्तसप्तमीत्वादेवेत्यर्थः । अन्यथा बहुव्रीहिकालेऽन्तोदात्तत्वात्तत्वस्यैव पूर्वपदप्रकृतिस्वरेणा-

ॐ विषमपदविवृतिः ॐ

शाखभवानाम् । **स्वरशब्दात्** 'तत्र भव' इत्यणि 'द्वारादीनां चे'त्यैजागमः । **आद्युदात्तत्वसिद्धि-रिति** । नन्वेवं सति 'सर्वस्य सुपी'त्यत्र 'सुपी'ति व्यर्थं स्यादिति चेत्सत्यम्, किमस्माभिः कर्तुं शक्यं ?, सर्वशब्दादाचारक्विपि तिपि चाद्युदात्तत्वाभावार्थं वा स्यात् । प्रातिपदिकाधिकारे तु तस्या-नुदात्तादिति विशेषणविशिष्टस्य–'गभीरायां नद्यां घोष' इत्यादाविव–'समर्था'दित्यनेनान्वयार्थं

**॥ ज्योत्स्ना ॥**

समानदेशत्वनियमस्यापवादेष्वभावादस्यामपि मपर्यन्तानुवृत्तौ त्वादीनां त्वमौ सर्वादेशावनेकाल्त्वा-द्बाधकौ स्यातामिति सप्रयोजना मपर्यान्तनुवृत्तिः। नच 'मपर्यन्तस्ये'त्यस्यानुवृत्त्यभावे विभक्तिलुगुत्तरं प्राप्स्यमाणाभ्यामुत्तरपदनिमित्तक-त्वमाभ्या'मुपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद' इतिन्यायाल्लुकः प्रागन्तरङ्गत्वात्प्राप्तौ त्वममाविव शेषो लोपो विशेषाद्बाधनीयो न तु मपर्यन्तस्येत्यस्यानुवृत्तौ चिर्ची-षतीतिदीर्घेण द्विर्वचनमिव तत्र बाधहेत्वोः-समानफलकत्वविरोधयोरभावात्, ततश्च सर्वादेशत्वे मपर्यन्तादेशत्वे वा रूपे विशेषाभावाद्यर्था मपर्यन्तस्येत्यस्यानुवृत्तिरिति वाच्यं, त्वमादेशयोरदन्तादेशत्वे तथात्वेऽपि हलन्तादेशत्वे फले विशेषस्य सत्त्वेनानुवृत्तेः सप्रयोजनत्वात्, अतोऽन्यथा व्याख्येयम्, त्वादय आदेशा स्थानिविशेषप्रक्लृप्त्यर्थं 'प्रत्ययोत्तरपदयोश्चे'त्यत्रानुवर्तन्ते, तत्र त्वादीनां प्रसङ्गे सिद्धयो-स्त्वमयोर्मपर्यन्तानुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति। तथाहि–प्रत्ययोत्तरपदयोरादेशविधानं तावत्त्वाद्यादेशबाधनार्थं, त्वाद्यादेशानुवृत्तिरपि तत्रैव संस्कारविशेष-सम्पादकत्वेन प्रागुक्तरीत्या दकारस्य शेषे लोपे 'त्वत्पुत्र'इतिरूपसम्पादनार्था। मपर्यन्तानुवृत्तिस्तु वाक्यभेदेनादेशविधायिका 'प्राप्ताप्राप्तविवेक'न्यायेन 'त्वत्कृत'मित्याद्यर्था भवन्ती यथोक्तज्ञापनाया-ऽलम्। केवला हि मपर्यान्तानुवृत्तिर्लाघवाय स्यात्, गरीयसी हि त्वाद्यनुवृत्त्या स्थानिप्रतीतिः, ततो ज्ञापनाय न प्रभवेत्, तस्मात्त्वाद्यनुवृत्तिर्ज्ञापिकेत्याखण्डलार्थः। तत्रायमन्तःकण्टकः-त्वाद्यादेशानां मपर्यन्तस्येत्यनयोरनुवृत्त्या प्रत्ययोत्तरपदयोरादेशविधानस्य त्वाद्यादेशबाधनार्थत्वोक्तिः भाष्योक्ता नोपपद्यते, त्वाद्यादेशाविषये त्वया कृतमित्यादौ समासे कृते सर्वादेशयोस्त्वमयोरन्त्याकारस्य यकारे 'त्व्यकृत'मित्यादिरूपसम्पादनफलकत्वात्। 'त्वमावेकवचने'इतिविहितयोर्मपर्यन्तावधिकत्वादन्त्य-दकारस्य यकारे 'त्व्यकृत'मिति भवेदिति विशेषात्। तस्येदं शोधनं, 'योची'त्यपनीयाच्चे इति न्यासे त्व्यकृतमितिरूपस्योभयत्र तुल्यत्वात्। त्वादेशो हलन्त इति तु न युक्तम्, मसाहचर्येण तस्याप्यदन्त-त्वात्, अन्यथा भाष्यासङ्गतिप्रसङ्गात्। सति तु ज्ञापके'ऽच्ये'इति न्यासस्तत्राद्यनुवृत्तिश्च फलाभावा-न्नाश्रयणीयेति। एवन्तु मपर्यन्तानुवृत्तौ त्वादीनां बाधेऽपि शेषे लोपाबाधनात्तस्मिन्सति यददन्तं रूपं तस्य तदनुवृत्तिमन्तरेणासर्वादेशत्वादपि सिद्धौ सामर्थ्याद्यचा(?)श्रुतमपर्यन्तानुवृत्तेर्ज्ञापकत्वं भाष्योक्तं नानुपपन्नम्। उपाध्यायानान्तु त्वाद्यादेशानुवृत्तिसहितमपर्यन्तानुवृत्तेर्ज्ञापकत्वोक्तिर्हल-न्तादेशत्वाभ्युपगमेनेत्यधिकं युष्मदस्मत्प्रकरणे वक्ष्यामः।

यत्तु श्नमकुज्वहुचां मित्त्वं प्राकृटेः पुरस्ताद्ग्रहणसामर्थ्याद्भिन्नदेशानामप्यपवादत्वमिन्युत्सर्ग-समानदेशत्वस्यान्यत्रापवादेषु नियम एव, अन्यथा 'तस्मिन्नणि चे'त्यनेन युष्मदस्मदोराकञि विधातव्ये युष्माकास्माकविधानवैयर्थ्यप्रसङ्गः। उक्तनियमे त्वाकञपवादयोस्तवकममकयोरप्यन्त्या-देशत्वापत्तिरतो न भवति युष्माकास्माकविधानवैयर्थ्यमित्युपाध्यायदूषितमतो ज्जीवनम्, तन्न, युष्मयतेरस्मयतेश्चाप्रत्यये मान्तयोः युष्मदस्मदोरेकदेशविकृतस्यानन्यत्वादाकञि फलभेदप्रसङ्गे युष्माकास्माकविधानस्य चरितार्थत्वात्। मान्तयोरनभिव्यक्तपदार्थत्वेन शास्त्राप्रवृत्तिस्तु न,–अति-देशबललभ्यप्रवृत्तेस्ततोऽभिव्यक्तपदार्थान्तरविषयत्वाभावेनाभिव्यक्तपदार्थनिरूपितानभिव्यक्तपदार्थ-त्वस्य तत्राभावाददोषात्। अत एव सखीयतेरप्रत्यये एकदेशविकृतन्यायेनानङ्णिद्वद्भावयोः—सखा, सखायावित्याद्युदाहृतमभियुक्तैरिति परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम्।

**अत एवेति।** लुकान्तरङ्गस्वरनिमित्तविनाशकत्वाभावादेवेत्यर्थः। अन्यथा बहुव्रीहिकालेऽ-

**॥ विषमपदविवृतिः ॥**

तत्प्रकृतिके लक्षणायामनुदात्तादिप्रातिपदिकप्रकृतिकषष्ठ्यन्तादमित्यर्थेन सिद्धे 'सार्व'इत्यत्रानन्तापत्तिः,

प्रकृते लक्षणायां मानाभावात् । वस्तुतस्तत्रापि न लक्षणा, 'गर्गादिरूपात्प्रातिपदिका-त्सम्बन्ध्यपत्यमित्यर्थे प्रत्यय' इत्यर्थे–प्रातिपदिकात्परत्वं तद्व्यवधानेन भविष्यति। तद्यति-रिक्तव्यवधाने तु न, मानाभावात् । एतच्च मतुप्सूत्रे कैयटे स्पष्टमित्यन्यत्र विस्तरः ।

❀ अभिनव-चन्द्रिका ❀

सुर्पा'त्यत्राभावेन 'नलुमते'ति निषेधाप्रवृत्तेरिति भावः । **मानाभावादिति** । 'तस्य विकार' इत्यादौ 'तस्ये'त्यस्य षष्ठ्यन्ततदाद्यर्थबोधकत्वेन तदेकदेशषष्ठ्यां 'पदार्थः पदार्थेनान्वेती'तिन्यायेनानुदात्तादि-प्रकृतिकेत्यस्य अन्वयासम्भवाच्चेत्यपि बोध्यम् । **भविष्यतीति** । 'घकालतने'ष्विति ज्ञापका'त्स्वार्थे-

❀ चिदस्थिमाला ❀

प्राचामनुरोधेन, तद्ध्वनयन्सिद्धान्तमाह—**वस्तुत इति** । तत्रापि=गर्गादिभ्य इत्यादावपि । अन्यथा निर्वाहे जघन्यवृत्तिकल्पनाया अन्याय्यत्वात् । तमेव प्रकारमाह–**गर्गेति** । 'प्रत्यय' इत्यस्य–'सूत्रे समर्थानां मध्ये प्रथमोच्चारितं बोध्या'दित्यादिः । **तद्व्यवेति** । सुब्व्यवेत्यर्थः । नन्वेवं 'तसा'दित्यस्य बाधे सुबन्य-प्रकृत्यन्तरादिव्यवायेऽपि स्यादत आह—**तद्यतीति** । उक्तहेतुद्वयेन सुब्व्यवायाङ्गीकारेऽपि तस्मादित्यनया तदन्यव्यवायवारणं, तद्बाधे मानाभावात्, अट्कुप्वाङिति वदिति भावः। नन्वप्रसिद्धोयं प्रकार इति लक्षणैवो-चिताऽत आह—**एतच्चेति** । उक्तार्थकथनमित्यर्थः । तत्र हि 'चित्रा गावो यस्य सन्ती'त्यत्र मतुप् कुतो नेति शङ्कायामवयवादसामर्थ्येन समुदायादप्रातिपदिकत्वेन वारणपरभाष्यव्याख्यावसरे—'ननु प्रातिपदिक-प्रकृतिकसुबन्तात्प्रत्यय इति–अप्रातिपदिकत्वादित्ययुक्तमसुबन्तत्वादिति वक्तुं युक्तमितिचेन्न,सुबन्तात्प्रत्ययोत्पत्तिः समर्थात्प्रत्ययः,प्रातिपदिकात्तु परः श्रूयते–इत्येवमाश्रयणेन सुबन्तसमुदायस्य समासग्रहणकृतनियमेन-वारणात्तथोक्ते'रिति तेनोक्तम् । किञ्च तदधिकाराभावे समर्थानामित्यादिसुबन्तस्यैव विशेषणं स्यात्तस्यैवो-पस्थितत्वात्, तथाच कृतसन्धिकार्यात्तस्मादुत्पत्तौ 'भानव' इत्याद्यसिद्ध्यापत्तिः, लुका ओकारसहितस्य निवृत्तेः । तदधिकारे तु तत्सामर्थ्यात्तस्यैव तद्विशेषणम् । एवञ्चान्तरङ्गेतिन्यायाविषयांशे एव परिनिष्ठितत्व-मत एव पञ्चखट्व इत्यादावेकादेशात्प्राक् टापो लुगिति बोध्यं, तदाह—**इत्यन्यत्रेति** । उद्योतादा-

❀ ज्योत्स्ना ❀

न्तोदात्तत्वाद्बहुव्रीहिस्वरेण तस्यैव प्रकृतिभावः स्यादिति भावः । **मानाभावादिति** । अनुदात्तादेः षष्ठ्यन्तस्यापि सम्भवेन लक्षणायां मानाभावादित्यर्थः । सति तु प्रातिपदिकाधिकारेऽनुदात्तादेः प्राति-पदिकस्य षष्ठ्यन्तत्वासम्भवादनुदात्तादिप्रातिपदिकप्रकृतिकषष्ठ्यन्ते लक्षणा, 'तस्य विकार' इति तत्रानु-वृत्तेरिति त्वन्यदेतत् । तत्रापि='गर्गस्यापत्यं देवदत्त'इत्यादौ षष्ठीवत्तत्रापि । **तद्व्यवधानेनेति** । सम्बन्धबोधकषष्ठीव्यवधानेनेत्यर्थः । अस्मिन्पक्षे सति प्रातिपदिकाधिकारे'ऽनुदात्तादे'रित्यादौ तत्स-म्बन्धिविकार इत्यर्थेऽनुदात्तादेः प्रातिपदिकात्प्रत्ययः, सच सामर्थ्यात्षष्ठीव्यवधानेनापि भविष्यति, 'तस्य'पदेन तस्या एवोपस्थितेः,'घकालतने'ष्विति ज्ञापकात्स्वार्थे परिसमाप्तस्यैवार्थन्तरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः । ननु तत्सम्बन्धवदपत्यमित्यर्थे विधीयमानः प्रत्ययः षष्ठीव्यवधान इव सम्बन्धशब्द-व्यवधानेऽपि स्यादत आह—**मानाभावादिति** । तत्रापि लुप्तषष्ठीव्यवधानसद्भावात्षष्ठीमात्र-व्यवधाने तल्लोपे प्रातिपदिकनिरूपितश्रौताव्यवधानस्य–प्रत्यये सम्भवात्तदतिरिक्तसम्बन्धादिशब्द-व्यवधाने प्रत्ययविधानस्यान्याय्यत्वादिति भावः । तदाह—**कैयटे स्पष्टमिति** । तत्र हि—'चित्रा

❀ विषमपदविवृतिः ❀

षष्ठ्या अनुदात्तादिप्रकृतिकत्वात्, षष्ठ्युत्पत्तिसमये सर्वशब्दस्यान्तोदात्तत्वात्। एवञ्च 'सर्वस्य सुपी'–त्यत्र 'सुपी'त्यपि सार्थकम्, उञ्छादिषु पाठः सफलः, सार्व इत्यत्राप्रवृत्तेरुभयफलत्वात् ।

**मानाभावादिति** । 'अनुदात्तादे'रित्यस्य षष्ठ्यन्तविशेषणत्वसम्भवादिति भावः । **न लक्षणेति**

लिङ्गविशिष्टस्येति । इयञ्च प्रातिपदिकसामान्यग्रहणे, तद्विशेषग्रहणे च; अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य भाष्ये शङ्कितत्वात् । विशेषविषये बहुतरोदाहरण-

❀ अभिनव-चन्द्रिका ❀

परिपूर्णमर्थान्तरेण युज्यते'इति 'कुत्सित' इति सूत्रस्थभाष्यलब्धन्यायादिति भावः । लिङ्गविशिष्टस्येतीति । लिङ्गबोधकप्रत्ययविशिष्टस्येत्यर्थः । वै० 'स्वघटितत्व' 'स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटकत्वै'तदुभयसम्बन्धेन । प्रातिपदिकसामान्यग्रहणे इति । प्रातिपदिकत्वेन रूपेण तद्ग्रहणे इत्यर्थः । तद्विशेषग्रहणे इति । प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नग्रहणे इत्यर्थः । न च 'कुमारः श्रमणादिभि'रितिज्ञापकासङ्गतिः, कुमारशब्दस्य 'कुमार क्रीडाया'मितिधातावपि सत्त्वेन कुमारशब्दत्वे प्रातिपदिकत्वव्याप्यत्वस्याभावात् । न च समर्थकुमारशब्दत्वं प्रातिपदिकत्वव्याप्यं भवत्येवेति न दोष इति वाच्यम्, अदन्तप्रातिपदिकत्वस्यापि प्रातिपदिकत्वव्याप्यत्वेन अनया रमाशब्देऽतिदेशेन 'अत इ'ञिति इञापत्तेरिति वाच्यम् ; 'तद्विशेषग्रहणे' इत्यस्य—पदप्रतिपाद्यप्रातिपदिकत्वव्याप्यधर्मावच्छिन्नग्रहणे इत्यर्थेनादन्तप्रातिपदिकत्वस्य वाक्यप्रतिपाद्यत्वेन, कुमारपदस्य समर्थकुमारप्रकृतिके लक्षणया समर्थकुमारत्वस्य च पदप्रतिपाद्यत्वेनादोषात् ।

अन्ये तु 'तद्विशेषग्रहणे' इत्यस्य प्रातिपदिकमात्रग्रहणे इत्यर्थः । तत्त्वञ्च प्रातिपदिकमात्रवृत्ति-

❀ चिदस्थिमाला ❀

वित्यर्थः । लिङ्गेति । लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । 'कुमारः श्रमणादिभि'रित्यादिज्ञापकस्य विशेषापेक्षत्वाद्विशेषग्रहणे एव प्रवृत्तिरिति प्रकाशादिग्रन्थासङ्गतिं सूचयितुमाह—इयञ्चेति । उक्तपरिभाषा चेत्यर्थः । आद्ये हेतुमाह—अनयेति । एतस्याञ्च सत्यां नार्थो ङ्याब्ग्रहणेनेत्यनेनेति भावः । द्वितीये हेतुमाह—विशेषेति । बहुतरोदेति । अयस्कुम्भीत्यादीत्यर्थः । नन्वेतावताऽनया विशिष्टे प्रातिपदिकत्वाति-

❀ ज्योत्स्ना ❀

गावो यस्य सन्ती'त्यत्र मतुप् कस्मान्न भवतीत्याशङ्कायाः–सामर्थ्याभावादवयवान्न भवति, समुदायादप्रातिपदिकत्वान्न भवती'ति भाष्यव्याख्यावसरे—'गोमा'नित्यत्रापि सुबन्तात्तद्धितोत्पत्त्या गोशब्दप्रकृतिकसुबन्तादुत्पद्यमानो मतुप् प्रत्ययान्तत्वादप्रातिपदिकत्वान्न स्यादित्याशङ्क्य—प्रथमासमर्थात्प्रत्ययः, प्रातिपदिकात्तु परः श्रूयते' इति समाहितम् । प्रातिपदिकसामान्यग्रहणे परिभाषाप्रवृत्तौ प्रमाणमाह–अनयेति । विशेषग्रहणे च तथात्वे प्रमाणमाह–विशेषविषयेति । बहुतरोदाहरणदानाच्चेति ।

❀ सदाशिवभट्टीयम् ❀

तिदेशः स्यात् । धर्मिग्राहकमानान्यायसङ्कोचादेवेति तु न–अत एवेत्यस्यार्थः, तदसङ्कोचेपि पूर्वं लुक्यन्तरङ्गत्वात्सर्वस्वरे प्रकृतिस्वरेण तत्त्वसिद्धेः । 'कुमारे'त्यादिधर्मिग्राहकस्य भाष्ये साक्षादनुपलम्भादुदाहरणं प्रमाणयति—बहुतरेति । ननु 'अयस्कुम्भी'त्युदाहृते प्रातिपदिकरूपेण कुम्भत्वादिना ग्रहणे प्रवृत्तिलाभेपि तद्भाष्य-

❀ विषमपदविवृतिः ❀

इदमयुक्तम्–तथा सति 'सार्व' इत्यत्राञनापत्तेः । सुपि परे 'सर्वस्य सुपी'त्यस्य प्रवृत्त्या 'सर्वे'ति प्रातिपदिकस्यानुदात्तादित्वाभावात्, मम तु सुपः पूर्वमनुदात्तादित्वेनानुदात्तादिप्रकृतिकषष्ठ्यन्तत्वस्य तत्र सत्त्वेनात्र सुलभः । किञ्च पदोद्देश्यकविधित्वाभावेन समर्थपरिभाषा गौणमुख्यन्यायश्च तद्धितविधौ नोपतिष्ठेयाताम् । अधिकमग्रे वक्ष्यामः । प्रातिपदिकग्रहणस्य प्रयोजनान्तरमपि भाष्योक्तं किञ्चित्प्रदर्श्यते,–छ्यचष्ठ'ञिति 'वाचा तरती'त्यत्र प्रसज्येत, 'घटेन तरती'त्यत्र च न स्यात्समर्थसुबन्तस्याद्ये द्व्यच्कत्वात्, द्वितीये तदभावात् । नौग्रहणं तु नियमार्थं स्यात् । बहुतरोदाहरणेति । 'सर्व-

दानाच्च । स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्व—तद्व्याप्यधर्मा विशिष्टेऽनेनातिदिश्यन्ते, अत एव 'बहुव्रीहेरूधस' इति सूत्रे भाष्ये—'नद्यृतश्चे'त्यस्य 'नद्यन्तबहुव्रीहे'-रित्यर्थे 'कुण्डोध्नी'त्यत्र (स) कबापादितः। अन्यथा तु ङ्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः। 'नद्यन्तानां यो बहुव्रीहि'रित्यर्थेन च परिहृत इत्यन्यत् ।

ॐ अभिनव-चन्द्रिका ॐ

विषयताप्रयोजकत्वम्। विषयतायां प्रातिपदिकमात्रवृत्तित्वञ्च—प्रातिपदिकवृत्तित्वे सति प्रातिपदिकेतरनिरूपितवृत्तित्वाभाववत्त्वम्। प्रातिपदिकेतरनिरूपितवृत्तित्वाभावश्च सामानाधिकरण्येनान्वयाप्रयोज्यो विवक्षितः । तथा चात्पदप्रयोज्यविषयतायां प्रातिपदिकेतरवृत्तित्वाभावश्च—अत्पदार्थस्य प्रातिपदिकपदार्थेन साकं सामानाधिकरण्येनान्वयप्रयोज्य एवेति न दोष इत्याहुः । **धर्मा इति**। 'लिङ्गबोधकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयपर्याप्ता' इति शेषः। **नद्यन्तानां यो बहुव्रीहिरिति** ।नद्यन्तो-

ॐ चिदस्थिमाला ॐ

देशलाभस्तथापि 'बहुव्रीहे'रिति सूत्रभाष्यासङ्गतिरेवेति आह—**तद्व्याप्येति** । अनेन=उक्तवचनेन । अतएव=उभयग्रहणे प्रवृत्त्योभयधर्मातिदेशलाभादेवेत्यर्थः । 'आपादित' इत्यत्रान्वयः । **स कबिति** । 'नद्यृतश्चे'तिकबित्यर्थः । अन्यथा तु=तद्व्याप्यधर्मानतिदेशे तु । **नद्यन्तानामिति** । नद्यन्तप्रकृतिकसुबन्तोत्तरपदको बहुव्रीहिरित्यर्थः। चो वाक्यालङ्कारे । **इत्यन्यत्**। अज्ञात्वा शङ्कायां तथैव परिहार उचित इति भावः।

ॐ ज्योत्स्ना ॐ

'अतः' कृकमी'त्यादिना सत्त्वादिसिद्ध्यर्थमयस्कुम्भीत्यादेर्बहुतरोदाहरणस्य प्रातिपदिकविशेषरूपस्य दानादित्यर्थः। स कप्='नद्यृतश्चे'ति कप्। **तदसङ्गतिः**। नचोक्तपरिभाषया तस्य बहुव्रीहित्वातिदेशेऽपि नदीरूपस्य नद्यन्ताभाव इति वाच्यं, व्यपदेशिवद्भावाश्रयणात् । वर्णयोरेव नदीसञ्ज्ञाविज्ञानाद्वा । **परिहृत इत्यन्यदिति**। ननु 'नद्यन्तानां यो बहुव्रीहि'रित्यस्य नद्यन्तयावत्पदानां यो बहुव्रीहिरित्यर्थः ? उत नद्यन्तघटितपदानां वा ? नाद्यः—'बहुकुमारीक'इत्यत्र कबनापत्तेः । नान्त्यः-'कुमारीभार्य'इत्यत्रातिप्रसङ्गादिति चेन्न। नदीसञ्ज्ञकपदम् अन्ते चरमे येषां तेषां यो बहुव्रीहिः-नद्युत्तरपदको बहुव्रीहिरित्यर्थेनादोषात् । अत्र पूर्वपक्षे नदीत्यस्य बहुव्रीहिर्विशेष्यः । बहुव्रीह्याक्षिप्त-

ॐ सदाशिवभट्टीयम् ॐ

बहुव्रीहित्वादिना ग्रहणे प्रवृत्तिर्न स्यादत आह—**स्त्रीप्रत्ययेति** । 'तद्वहिते दृष्टा' इति शेषः । तद्वहितत्वञ्च तत्प्रकृतिभूतत्वमेव । अत एव नद्युत्तरपदादित्यर्थेऽप्युत्तरपदत्वस्य विशिष्टेऽतिदेशात्कप्स्यादित्यपास्तम् , उत्तरपदत्वस्य प्रकृतौ दृष्टत्वाभावात् । एतद्ध्वननायैव—**समभिव्याहार इति** । अन्यथा तद्धिफलमेव स्यात्। **विशिष्टेति।** तन्मात्रविशिष्टे। एतेन 'दृष्टया मालये'त्यत्र तत्प्रकृतौ माले दृष्टप्रातिपदिकत्वस्य 'दृष्टा माले'ति विशिष्टेऽतिदेशात्प्रातिपदिकावयवत्वेन लुक् स्यादित्यपास्तमिति केचित्, **पाठक**ग्रन्थे उत्तरमिति तत्त्वम्। वस्तुतस्तु समासान्तानामलौकिके प्रवृत्त्या तत्र च सुपःसत्त्वान्नदीचरमावयवकत्वं बाधितमतो नद्यन्त-

ॐ विषमपदविवृतिः ॐ

नाम्नस्तृतीया च'—भवत्या हेतोः। 'कुसूलकूपकुम्भशालं बिले',—कुसूलीबिलम्। 'पूर्वसदृशसमोनार्थ'-पित्रा सदृशी । **तद्व्याप्यधर्मा इति** । आनुपूर्वीविशेषभिन्ना अपीत्यर्थः । अत एव= आनुपूर्वीविशेषव्याप्यधर्माणामप्यतिदेशादेव । **नद्यन्तानां यो बहुव्रीहिरिति** । ननु नद्यन्तसर्वा

समासान्तेषु तत्परिभाषाऽभावस्तु ङ्याप्सूत्रभाष्योक्तोऽवयवविषय एव। समुदायविषये तत्प्रवृत्तावपि दोषाभावेन तदंशे तदप्रवृत्तौ न मानमित्याशयः।

**ङ्याबन्तादिति**। ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणं, तेन 'ब्रह्मबन्धूतरा' 'युवतितरे'त्यादेः सिद्धिः। 'जातेश्चे'ति निषेधान्न पुंवत्त्वम्; वयोवाचिनां वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात्।

**तद्धितेति**। एतच्च समासान्त-ति-प्रत्ययाद्यतिरिक्तपरं; व्याख्यानात्। एतेन 'यूनीतिः'

❀ अभिनव-चन्द्रिका ❀

त्तरपदकबहुव्रीहेरित्यर्थः। **अवयवविषय एवेति**। अत एव अतिशयिताः श्रेयांसो यस्यां नगर्यां सा अतिश्रेयसी, अः—अतिश्रेयसी यस्मिन्स 'आतिश्रेयसिः', अतिशयिताः भ्रातरो यस्यां नगर्यामतिभ्रात्री, अः अतिभ्रात्री यस्य स 'आतिभ्रात्रि'रित्यादौ 'ईयसश्च' 'वन्दिते भ्रातु'रितिकन्निषेधः,

❀ चिदस्थिमाला ❀

ननु 'समासान्तविधौ ने'ति ङ्याप्सूत्रभाष्यविरोधोऽस्य भाष्यस्यात आह-**समेति**। **तदिति**। मूलोक्तेत्यर्थः। एवमग्रेऽपि। 'समुदाये'त्यस्य 'यत' इत्यादिः। तदंशे=समुदायांशे। **इत्याशय इति**। उक्तभाष्यस्येति शेषः। तथाच तदेव तत्र नियामकम्। अत एव परविधावेव समाससङ्घातग्रहणे तत्र दोषोक्तिरिति भावः।

ननूक्तफलाय ङ्याब्ग्रहणेऽपि ऊङन्तादावनिर्वाहोऽत आह-**ङ्याबिति**। सिद्धिः=अत्र विशिष्टात्तद्धितसिद्धिः, अन्यथा-लोहितिकेत्यादिवदादावेव स्यादिति भावः। आदिना 'युवतिके'त्यादि परिग्रहः।

ननु 'पुंवद्भावाद्ध्रस्वत्वं विप्रतिषेधेने'ति वार्तिके 'दारदक' इत्यत्र पुंवद्भावावकाशप्रदर्शनपरभाष्यप्रामाण्येन कप्रत्ययस्यापि तसिलादिषु पाठावश्यकत्वाद्युवतिका-युवतितरेत्यत्र पुंवद्भावान्न कश्चिद्विशेषोऽत आह—**जातेरिति**। नन्वेषां न जातिवाचकत्वमत आह—**वयोवेति**। ननु स्त्रीप्रत्ययान्तात्तद्धितोत्पत्त्यङ्गीकारेऽतिप्रसङ्गोऽत आह—**एतच्चेति**। तद्धितग्रहणञ्चेत्यर्थः। आदिनाऽत्यन्तस्वार्थिकपरिग्रहः। **व्याख्यानादिति**। लक्ष्यसिद्ध्यनुरोधरूपादित्यर्थः। **यूनीतिरिति**। 'उक्तार्थे'निन्यायस्तु स्त्रीप्रत्ययप्रकरणे

❀ ज्योत्स्ना ❀

पदसमुदायस्तूत्तरे इति तत्त्वम्। समुदायविषये='कुण्डोघ्नी' 'बहुधीवरी'त्यादौ। तत्प्रवृत्तावपि=लिङ्गविशिष्टपरिभाषायाः प्रवृत्तावपि। दोषाभावेन—'नद्यन्तानां यो बहुव्रीहि'रित्याश्रयणात्। तदंशे=समुदायांशे। तदप्रवृत्तौ=लिङ्गविशिष्टपरिभाषाया अप्रवृत्तौ। **इत्यादेः सिद्धिरिति**। वस्तुतस्तूपलक्षणत्वे प्रमाणाभावः, 'स्वार्थद्रव्यलिङ्गादिप्रयुक्तकार्योत्तरमेव स्वार्थे परिपूर्णस्य प्रियकुत्सनादियोग' इति 'कुत्सित' इतिसूत्रभाष्योक्तेरातिशयिकस्य स्त्रीप्रत्ययान्तादेवोत्पत्तेर्'ब्रह्मबन्धूतरा' 'युवतितरे'त्यनयोरन्यथासिद्धत्वात्। मूलोक्तङ्याब्ग्रहणप्रयोजन(फल)न्तु लोहिनिका आर्यिका चेति मनोरमोक्तं, यत्रात्यन्तस्वार्थिकः कनित्याहुः, तत्रास्वरसमुद्भावयन्व्याचष्टे—**एतच्चेति**।

❀ सदाशिवभट्टीयम् ❀

प्रकृतिकसुबन्तोत्तरपदक इत्यर्थो बोध्यः। **इत्यादेः सिद्धिरिति**। आदिना युवतिकायाः। अन्यथान्तरङ्गत्वादेव ङ्यापोः पूर्वमुत्पादे सिद्धे 'स्त्रीप्रत्ययान्ताच्चेन्ङ्याबन्तादेवे'तिनियमार्थत्वापत्त्या त्यूङः पूर्वमनुत्पत्त्यावसिद्धिः स्याद्, मानन्तु प्रत्याख्यानपरभाष्यमेव। **एतच्चेति**।-ङ्याब्ग्रहणासम्बन्ध इतीति। **प्रत्ययाद्यतीत्या-**

❀ विषमपदविवृतिः ❀

वयवको यो बहुव्रीहिरित्यर्थे 'बहुकुमारीक' इत्यत्र कबनापत्तिः, 'नद्यन्तावयवक' इत्यर्थे 'कुमारीभार्य' इत्यत्रातिप्रसङ्ग इति चेन्न, नद्युत्तरपदक इत्यर्थेनादोषात्।

**अवयवविषय एवेति**। मद्रराज्ञी'त्यादिसमासावयवराजञ्शब्दविषय एवेत्यर्थः। तथा च समास-

'बहुगोमतीके'ति स्यादित्यपास्तम्। एवञ्च स्त्रीप्रत्ययेषु, अत्यन्तस्वार्थिकानारभ्य तद्धितेषु च ङ्याब्ग्रहणासम्बन्धो—व्याख्यानात्। अत एव 'लोहिनिके'त्येतत्सिद्धये 'लोहितालिङ्ग-

❀ अभिनव-चन्द्रिका ❀

किञ्च—कियतः समीपमुपकियतं, तस्माण्ण्यन्तात्क्विपि उगित्वान्ङीपि, उपकियती, आ उपकियती यस्मिन् 'ओपकियतम्'-अत्र 'अव्ययीभावे शरत्प्रभृतिभ्य' इति टच सिध्यति। **चरितार्थमिति**। अन्यथा

❀ चिदस्थिमाला ❀

नेति भावः। **एवञ्चेति**। लक्ष्यानुरोधेन तस्य तदन्यपरत्वे चेत्यर्थः। 'आरभ्ये'त्यनेन समासान्तपरिग्रहः। 'पठिते'ष्विति शेषः। **व्याख्यानादिति**। ङ्याब्ग्रहणस्य स्त्रीप्रत्ययमात्रोपलक्षणत्वस्य प्रत्याख्यानानुरोधेनावश्यकत्वेन तद्भिन्नतद्धितस्यैव तेन ग्रहणमिति सूत्रमतेऽपि 'यूनस्ति'रित्यत्र तदसम्बन्धः। अत्यन्तस्वार्थिकादिषु तु तेषामतिरिक्तार्थाभावेन 'परिपूर्ण'मितिन्यायाविषयतया 'सुबन्तात्तद्धित' इति सिद्धान्तस्य ङ्यापोः प्राक् प्रवृत्तेश्चाभावात्तदसम्बन्धः। न चार्थाभावेनैव सिद्धेऽतिरिक्तेत्यधिकमिति वाच्य, 'प्रत्यय' इति महासञ्ज्ञानुपपत्तेः। प्रकृत्यर्थापेक्षयाऽन्यः=परो—वाच्यो द्योत्यो वा नास्तीत्यन्यदेतत्। द्वावित्यादिवचनान्यतरवैयर्थ्यम्। अत एव 'स्वार्थिक' इति तत्र व्यवहारः। अत्यन्तत्वं तु कुत्साद्यप्रवेशेनेत्यर्थः। उक्तार्थज्ञापकं सूचयितुमाह—**अत एवेति**। तत्र तदसम्बन्धादेवेत्यर्थः। उक्तार्थं सूत्रद्वयभाष्याभ्यामपि द्रढयति—**अत्यन्तेत्यादि सिद्धिरित्यन्तेन**। सुबुत्पत्तेः—ङ्याबुत्पत्तेश्चेत्यपि बोध्यम्। 'प्रयोजन'मित्यस्य 'द्विर्वचनाभाव' इत्यनेनान्वयः।

❀ ज्योत्स्ना ❀

**ङ्याब्ग्रहणासम्बन्ध इति**। अत एव "हंसं तनौ सन्निहितञ्चरन्तं मुनेर्मनोवृत्तिमिव स्विकायाम्" इति श्रीहर्षश्लोके—'भन्नैषे'तिवैकल्पिकमित्त्वं व्याचक्षाणा उपेक्ष्या' इत्युक्तं मनोरमायाम्। कुत्साद्यर्थकाकजं प्रबाध्यात्यन्तस्वार्थिककप्रत्ययान्तस्येदं रूपं, नत्वकज्विशिष्टस्य,स्यात्प्रसङ्गात्। ङ्याबन्तादत्यन्तस्वार्थिकोत्पत्तौ त्वातः स्थानिकाकारसत्त्वेन वैकल्पिकव्याख्यानसौष्ठवात्तदुपेक्षाया अयोग्यत्वात्।

**इति चरितार्थमिति**। नचैवं सति ङ्याब्ग्रहणवैयर्थ्यं, लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थत्वात्। तेन 'विभक्तौ लिङ्गविशिष्टाग्रहण'मित्यादेः सिद्धिरिति परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम्। अस्मिन्पक्षे आर्थिकेत्येकमेव, आतः स्थानिकत्वाभावेनो'दीचामातः स्थाने'—इतिविकल्पाप्रवृत्तेः। यथाश्रुतमनोरमोक्तव्याख्याने तु पक्षे 'आर्यके'त्यपीष्यते। न च 'बहुगोमतीके'ति प्राप्नोति, अलौकिकप्रक्रियावाक्ये समासात्प्रागेव समासान्तप्रवृत्त्या मनोरमायां समाहितत्वात्। 'यूनीति'रिति तु प्राप्नोति, तत्राप्येतत्समाधानेनापि लिङ्गबोधकप्रत्ययस्य बाधनात्कृतेऽपि ङ्याब्ग्रहणे 'लोहितालिङ्गबाधनं वे'ति

❀ सदाशिवभट्टीयम् ❀

दिनाऽत्यन्तस्वार्थिकपरिग्रहः। **यूनीतिरिति**। 'उक्तार्थे'तिन्यायस्तु स्त्रीप्रत्ययप्रकरणे नेति प्रत्ययारम्भाद्बाध्यत इति भावः। **एवञ्चेति**। लक्ष्यानुरोधेन तस्य तदन्यपरत्वे चेत्यर्थः। **आरभ्येत्यनेन** समासान्तपरिग्रहः। 'पठिते'ष्विति शेषः। **व्याख्यानादिति**। ङ्याब्ग्रहणस्य स्त्रीप्रत्ययमात्रोपलक्षणत्वस्य प्रत्याख्यानानुरोधेनावश्यकत्वेन तद्भिन्नतद्धितस्यैव तेन ग्रहणमिति सूत्रमतेपि 'यूनस्ति'रित्यत्र तदसम्बन्धः। अत्यन्तस्वार्थिकादिषु तु तेषामतिरिक्तार्थाभावेन 'परिपूर्ण'मिति न्यायाविषयतया 'सुबन्तात्तद्धित' इति सिद्धान्तस्य ङ्यापोः

❀ विषमपदविवृतिः ❀

घटकराजन्शब्दत्वादिकमेव समासान्तविधावनया परिभाषया नातिदिश्यते, बहुव्रीहित्वादिकं त्वतिदिश्यत एवेति भावः। **इति चरितार्थमिति**। तथा चार्यिकेत्यत्र नेत्वविकल्पः, अत्यन्तस्वार्थिकेषु ङ्याब्ग्रहणसम्बन्धेन आपः पूर्वमेव कपः प्रवृत्तेः, किन्तु नित्यमेवेत्त्वम्।

नचैवं सति ङ्याब्ग्रहणवैयर्थ्यम्, अत्यन्तस्वार्थिकानामन्तरङ्गत्वेन परत्वेन च ङ्याब्भ्यां प्राग-

बाधनं वे'ति चरितार्थम् । 'अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमुत्पत्ति'रिति 'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टं, कैयटे च । तत्र हि-'पदस्ये'त्यस्य प्रयोजनं—'द्विपदिके'त्यादौ द्वित्वसङ्ख्यायुक्तपदार्थस्य वीप्सितत्वात्, वीप्सायामेकत्वलक्षणसङ्ख्याया अनन्तर्भावात्समासा-

❀ अभिनव-चन्द्रिका ❀

'लोहितिके'त्यादौ ङ्यन्तादेव तद्धितोत्पत्त्या तत्सिद्ध्यर्थं तद्वार्त्तिकप्रणयनमसङ्गतं स्यादिति भावः ।

❀ चिदस्थिमाला ❀

पादार्थस्य=पादपदार्थस्य, न तु तद्धातुः । एकत्वेति । वीप्साविषयव्याप्तिबोधसमवेतदातृगतैकत्वस्याननु-

❀ ज्योत्स्ना ❀

कर्तव्यमिति गौरवम् । 'लोहितको मणि'रिति पुंलिङ्गे—'लोहितान्मणा'वित्यस्य चारितार्थ्येन न्यायतौल्याभावात् । प्रतिपदविधित्वेनान्तरङ्गत्वात्प्राप्तस्तु ङ्याब्ग्रहणाद्बाधितुं शक्यत इति नास्ति कोऽपि दोषः । 'घकालतने'ष्वितिज्ञापकात्तद्धितोत्पत्तिः सामान्येन सुबन्ता'दिति चक्षुषी निमील्य व्याचक्षाणानां मतं दूषयितुमाह—**अत्यन्तस्वार्थिकानामिति । सुबुत्पत्तेः पूर्वमिति ।** अत्यन्तस्वार्थिकानामन्तरङ्गत्वेन सुबुत्पत्तेः प्रागेव भवितुं युक्तत्वात् । 'कुत्सित'सूत्रोक्तन्यायमूलकत्वात्,

❀ सदाशिवभट्टीयम् ❀

प्राक् प्रवृत्तेश्चाभावात्तदसम्बन्धः । न्यायसिद्धेऽर्थे सम्मतिमप्याह—**सर्वस्येति ।** तत्र भाष्ये उक्तार्थासंस्पर्शादाह—**कैयट इति ।** अत्र केचित्प्रत्यवतिष्ठन्ते—'तत्र हि भाष्ये—'पदग्रहणं कर्तव्यं'—समासनिवृत्त्यर्थं—सप्तपर्ण' इत्युक्तं, यदा सप्तसङ्ख्याकपर्णविशिष्टो वृक्ष एकत्वादिसङ्ख्यानालिङ्गितो वीप्स्यते तदा वीप्साविषयव्याप्तिबोधसमये वृक्षगतैकत्वस्याननुभवाद्विभक्त्युत्पत्तेः प्रागेव समासस्य प्राप्तिरपदत्वान्न भवति, कृते स्वादौ पदत्वेपि तदर्थसङ्ख्यालिङ्गितार्थे वीप्सितत्वाभावान्न भवति, तदालिङ्गिते वीप्साविवक्षायान्तु भवत्येव—'घटं-घटं पश्ये'ति च तद्भावः । 'सप्तसङ्ख्यानि पर्णानि वीप्स्यन्ते नतु तद्वान् वृक्ष' इति कैयटस्तु चिन्त्य एव, वृक्षादेरवीप्सितत्वे विभक्त्यन्ते इव द्विर्वचनाप्रसक्त्या पदग्रहावश्यकत्वासङ्गतेः । ततः—'तद्धितनिवृत्त्यर्थञ्च-द्विपदिके'ति । [भाष्यस्य-] स्त्रीत्वद्वित्वलक्षणलिङ्गसङ्ख्यान्वितः पादार्थो वीप्स्यते, नत्वेकत्वाद्यालिङ्गित इति वीप्साविषयव्याप्तिबोधसमये एकत्वादेरननुभवात् सुबुत्पत्तेः प्राक् पूर्वान्तत्वेन तद्धितान्तस्य टाबन्तस्य द्विर्वचनं प्राप्नोति, पदाधिकारात्तु न भवति, कृते सौ हल्ङ्यादिलोपे च पदत्वेपि तदर्थकस्यैकत्वालिङ्गितस्यावीप्सितत्वान्न भवति, तत्त्वे तु भवत्येवेति भावः। यत्तु कैयटः-स्त्रीत्वस्यापि वीप्सायामनन्तर्भावमाह, तन्न सम्यक्,—'द्विपदिकाभ्या'-मित्यत्र प्राप्नोती'ति वक्ष्यमाणभाष्यासङ्गतेः । नहि लिङ्गस्याऽवीप्सितत्वे टाबन्ते'स्वादिष्वि'ति पदत्वेपि द्विर्वचनप्रसक्तिरस्तीति । यच्च—'तद्धितोत्पत्तेः प्राक् समासस्य न द्विर्वचनमपदत्वा'दित्यभिप्रायकमाह, तदपि न, प्रकृतार्थस्य भाष्यानभिप्रेतत्त्वात् ; तथाहि—'तद्धितनिवृत्त्यर्थं'मित्यस्य—तद्धितान्तनिवृत्त्यर्थमित्यर्थः । नहि तदुत्पत्तेः प्राक् तदस्ति, 'समासनिवृत्त्यर्थं'मित्यनेन गतार्थत्वाच्च । किञ्च तथाभिप्रेतत्वे हि 'तद्धितेनोक्तत्वान्न भवती'ति तदुत्तरन्तत्प्रत्याख्यानभाष्यासङ्गतिः । नहि ततः प्राक् तेनोक्तत्वं सम्भवतीति वुनः सर्वथा निरवकाशत्वेन तद्बाधकत्वात्ततः प्राक् तदप्रवृत्तेश्च । वुनि कृतेपि 'तक्रकौण्डिन्य'न्यायेन बाधेऽपवादे कृते उत्सर्गा-

❀ विषमपदविवृतिः ❀

वोत्पत्तेः, कुत्सिताद्यर्थकतद्धितानान्तु 'कुत्सिते' इति सूत्रस्थभाष्योक्तरीत्या स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारेण न्यायत एव ङ्याबन्तादुत्पत्तिसिद्धेरिति वाच्यं, लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थत्वात् । तेन समासान्तादिविधौ लिङ्गविशिष्टपरिभाषाया अप्रवृत्तिः । नन्वत्यन्तस्वार्थिकेषु ङ्याब्ग्रहणासम्बन्धेपि 'घकालतने'ष्विति ज्ञापकेन तद्धितानां सुबन्तादेवोत्पत्त्या 'लोहिताल्लिङ्गबाधनं वे'ति पुनरसङ्गतमित्यत आह—**अत्यन्तस्वार्थिकानामिति ।**

**अनन्तर्भावादिति ।** एतदुत्तरं वुनन्तस्येति शेषः । तस्य च 'द्विर्वचनाभाव' इत्यनेनान्वयः ।

द्विभक्त्यभावेन पदत्वाभावात्प्राक्तद्धितोत्पत्तेर्द्विर्वचनाभाव—'इत्युक्तम् । 'पुंयोगा'दिति सूत्रे भाष्येऽप्येतत्स्फुटम् । तत्र हि—'गतिकारकोपपदाना'मित्यस्याः—'साङ्कूटिन'मिति प्रयोजन-

## ॐ अभिनव-चन्द्रिका ॐ

**इत्युक्तमिति**। अयं भावः—'द्विपदिके'त्यादौ 'द्वी इत्यस्य 'पादे'त्यस्य च पदत्वेऽपि तदर्थमात्रगत-वीप्साया अभावाद्द्विपादेत्यस्य समुदितस्य पदत्वाभावात्तद्धितान्तेन च वीप्साया उक्तत्वान्न द्विर्भावः । स्वार्थिकप्रत्ययानां सुबुत्पत्त्युत्तरमुत्पत्तौ तु द्विपादेत्यस्यापि प्रत्ययलक्षणेन पदत्वाद्भाष्यासङ्गतिः स्पष्टैवेति ।

## ॐ चिदस्थिमाला ॐ

भवादित्यर्थः । **पदत्वाभावादिति** । अत्यन्तस्वार्थिकत्वात्सुबुत्पत्तेः पूर्वमेवायं तद्धित इति भावः । **प्रागिति**। तदनन्तरन्तु तेनोक्तत्वान्न । पदाधिकारे तु पदवाच्यस्य वीप्सायोगाभावान्न दोषः । एतत्=तेषां

## ॐ ज्योत्स्ना ॐ

सुबन्तात्तद्धितोत्पत्तेर्ज्ञापकासम्भवाच्चेति भावः । **प्राक्तद्धितोत्पत्तेरिति** । तद्धितोत्पत्तेरनन्तरं तु न द्विर्वचनं, तस्यैकत्वसङ्ख्यावरुद्धत्वेन वीप्साया अविवक्षितत्वात् । इदञ्च 'विरोधे एव बाध्य-बाधकभाव' इति वार्तिकमतमाश्रित्य पदग्रहणस्य प्रयोजनमुक्तम् । 'उभयोरेकार्थबोधकत्वात्समान-फलकत्वेनापि बाध्यबाधकभाव'इतिभाष्यकृन्मते तु—काकचोरिव तत एव बाध इति बोध्यम् ।

## ॐ सदाशिवभट्टीयम् ॐ

प्रवृत्त्या द्वित्वं न प्राप्नोत्येवेति तथापि भाष्यमसङ्गतमेवेति तु न वाच्यम् ; उत्सर्गे द्वित्वे कृते उक्तत्वा-द्वीप्साया,—वुनोऽप्राप्त्या तन्न्यायविषयाभावात्, हल्ङ्यादिलोपे कृते पदत्वात् । 'द्विपदिका'इति बहुवचनान्तं पाठ्यमिति च तदुक्तं चिन्त्यम्, तत्पाठस्यापि योजितत्वात् । यत्तु **विवरणे**—द्विपदिकेत्युत्तरं 'माषश' इत्यप-पाठः, पदग्रहणेनापि तत्र तन्निवृत्तेरशक्यत्वात्, शसन्तस्यापि पदत्वात्, तत्पूर्वभागस्यापि सुबन्ताच्छस उत्पत्त्या पदत्वात्—'इत्युक्तं, तत्र 'तत्पूर्वभागस्यापि स्वादिष्विति पदत्वा'दिति युक्तः पाठः, अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमुत्पत्तिरिति पूर्वमुक्तत्वादिति । प्रकृतग्रन्थार्थस्त्वित्थं—**द्वित्वसङ्ख्यायुक्तेति**। 'स्त्रीत्वयुक्ते'त्यपि बोध्यम् । **एकत्वेति**। कैयटे लिङ्गानन्तर्भावस्योक्तत्वेप्युक्तहेतोरेव तत्त्यागः । **अनन्तर्भावात्**—'सुबुत्पत्तेः प्राक् टाबन्तस्ये'ति शेषः । तस्य—'पदत्वाभावाद्द्विर्वचनाभावः प्रयोजन'मित्यन्वयः । ननु कृते तद्धितेऽपदत्वात्, तेनोक्तत्वाद्वा द्विवर्चनाभावेपि तदुत्पत्तेः प्राक् समासस्य कुतो नेत्यत आह—**सेति** । **अभावेनेति** । तस्याः सङ्ख्यापेक्षत्वेन बहिरङ्गत्वात्तद्धितस्य च स्वार्थिकत्वेनान्तरङ्गत्वात्तेन बाधादिति भावः। यद्यपि वुनो बाधकत्वा-त्तद्विषये द्विवचनाप्रवृत्तिरिति वक्तव्यं, तथाप्यपदत्वात्प्राप्तिरेव नेत्युक्तेरेव न्याय्यत्वादेवमुक्तमिति । प्रत्याख्याने तु तथैव पूर्वमप्रवृत्तिरिति भावः । ननु'पसञ्जनिष्ये'ति न्यायेन भत्वेन पदत्वबाधात्प्रा-क्तद्धितोत्पत्तेः समासे कृते पदत्वाभावात्तदभाव इति कैयटः सुयोजोऽत आह—**पुंयोगेति** । अपिना

## ॐ विषमपदविवृतिः ॐ

इदञ्चो'कार्थाना'मितिन्यायमननुसन्धाय प्रवृत्तम् । एकत्वं स्त्रीत्वं वुन्नन्तार्थः, तद्युक्तस्य चाऽ-वीप्सितत्वान्न वुन्नन्तस्य द्वित्वमित्यर्थः ।

**विभक्त्यभावेनेति** । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्तेरिति भावः । नन्वेतद्भाष्यं सुबन्तात्तद्धितोत्पत्तावप्युपपन्नम्, नित्यत्वाद्वुनि अकादेशे च भत्वेन पदत्वाभावान्न तद्धित-प्रकृतेर्द्वित्वम्, वीप्सायां स्त्रीत्वैकत्वयोरनन्तर्भावान्न तद्धितान्तस्य पदस्य, कयटस्त्वसङ्गत एवेत्य-रुचेराह—**पुंयोगादितिसूत्रे इति** । **अधिकसापेक्षत्वेनेति** । इनुणन्तत्वरूपविशेषापेक्षत्वेनेत्यर्थः ।

मुक्तम्। तत्र हि 'अभिविधौ भात्र इनुणि कूटिन्शब्दादण्प्रत्ययविभक्त्योः प्राप्तयोः स्वार्थिकत्वेनान्तरङ्गत्वादणि कूटिन्नित्यस्यैव वृद्धिः स्या'दित्युक्तम्। तस्यापि सुबन्तादुत्पत्तौ तु पूर्वं सुपि इनुणन्तत्वरूपाधिकसापेक्षत्वेन बहिरङ्गतयाऽणः पूर्वं समासे विशिष्टादणि रूपासिद्धौ भाष्यासङ्गतिः। प्राक्सुबुत्पत्तेः समासे तु–उक्तरीत्यैवान्तरङ्गत्वात्पूर्वं

❀ अभिनव-चन्द्रिका ❀

भाष्यासङ्गतिरिति। वस्तुतस्तु सङ्कुटिन्निति शब्दरूपसमुदायस्याणसमासयोः समानत्वेन बहिरङ्गत्वाभावात् परत्वादणि 'साङ्कौटिन'मिति स्यादिति भाष्योक्तदूषणं सङ्गच्छत एवेति नैतद्भाष्यं

❀ चिदस्थिमाला ❀

ततः प्राक् भवनम्। तत्र हि='सांकूटिन'मित्यत्र हि। परिभाषाभावे इति शेषः। इनुणीति।–इनुण्'इतीनुणीत्यर्थः। कूटधातोरिति शेषः। 'अण्=अणिनुण' इत्यनेन। स्वार्थिकत्वेन=अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्तेः। विभक्तेस्तु स्वार्थबहिर्भूतसङ्ख्यादिद्योतकत्वेनास्वार्थिकत्वाद्बहिरङ्गत्वमिति भावः। इदं भाष्योक्तं सुबन्तात्तदनुत्पत्तावेव सम्भवति नान्यथा, तदाह–तस्यापीति। अत्यन्तस्वार्थिकाणोऽपि। अपिः समाससमुच्चायकः। विशिष्टादिति। 'कृद्ग्रहण'इतिन्यायेनेति भावः। एवमग्रेऽपि। रूपेति। 'स'मित्यस्य वृद्ध्येति भावः। 'गतिकारके'तिपरिभाषाङ्गीकारे तु न दोष इत्याह—प्रागिति। उक्तेति। अण इनुणन्तत्वरूपाधिकपदार्थसापेक्षतया बहिरङ्गतया तन्निरूपितान्तरङ्गत्वादित्यर्थः। एवञ्च तत्र तदसम्बन्ध एव। अत एव ङ्याब्ग्रहणस्य तदर्थत्वे समासान्तेषु दोषं स्वार्थिकत्वेनोक्ताशयेन परिहृत्य 'कथं कालिके'त्यादिकृनशङ्कोत्थितिः। लोहितिकेतिसिद्धिस्तु वचनेनैव। अत्यन्तस्वार्थिकतरबादेरपि ङ्याबाद्यन्तादनभिधानमेव। सत्यभिधाने 'एतिके'त्येव। एवञ्चोक्तन्यायेनैव सिद्धौ ङ्याब्ग्रहणं व्यर्थमेव। किञ्च समासान्तप्रकरणे प्रानि-

❀ ज्योत्स्ना ❀

स्वार्थिकत्वेनान्तरङ्गत्वादिति। विभक्तिस्तु सङ्ख्याकर्मापेक्षेति बहिरङ्गेति भावः। इनुणन्तत्वरूपाधिकसापेक्षत्वेन बहिरङ्गतयेति। न च सुबन्तद्वयसापेक्षसमासापेक्षया एकसुबन्तापेक्षाणप्रत्ययस्यै·

❀ सदाशिवभट्टीयम् ❀

पूर्वोक्तकैयटसङ्ग्रहः। एतेनोक्तार्थस्य भाष्यासंस्पर्शं सूचितवान्, अन्यथा सूत्रेपीति वदेत्। इनुणन्तत्वरूपेति। समासविधौ हि गतित्वज्ञानं समर्थत्वज्ञानं चेति द्वयमेव, अण्विधौ तु प्रातिपदिकत्वं समर्थत्वमिनुणन्तत्वं चेति त्रयोऽतस्तस्याधिक्यम्। न च पदद्वयाश्रितत्वेन समासस्यापि बहिरङ्गत्वेनोभयोस्तयोः परत्वादणेव स्यादिति वाच्यं, सांकूटिनादिलक्ष्यानुरोधेनोक्तान्तरङ्गत्वस्यैव पुरस्कारादिति कैयटाशयः। एतेन 'समासस्यान्तरङ्गत्वेपि प्रतिपदोक्तत्वादण् स्या'दित्यपास्तम्। इनुणन्तनिष्ठधर्मतयोपस्थितावण्विध्युपस्थित्याऽण्विधेर्विलम्बोपस्थितिकत्वात्,प्रत्युत तन्निष्ठावश्यकसमर्थत्वरूपधर्ममात्रोपस्थितौ समासविध्युपस्थित्या तस्यैव तत्त्वात्।

असङ्गतिरिति। ननु तदन्तात्तदुत्पत्तावपि परिभाषाङ्गीकारेण सुबुत्पत्त्यनन्तरं प्राप्त्या तदुत्पत्तेः प्रागेवान्तरङ्गत्वात्समासे ततस्तदुत्पत्तौ समुदायादणि सांकूटिनसिद्धिः, तदनङ्गीकारे तु द्वयोरपि तदुत्पत्त्यनन्तरं युगपत्प्राप्त्यैकपदाश्रितत्वेनान्तरङ्गत्वात्केवलादणि 'साङ्कौटिन'मिति स्यादिति रीत्या भाष्यस्य सुयोजत्वे न काप्यसङ्गतिरिति चेन्न, 'सत्यामप्येतस्यामवयवादुत्पत्तिः प्राप्नोती'ति तदुत्तरभाष्यानुरोधेनास्यापि भाष्यस्योक्ताभिप्रायकत्वेनैव व्याख्येयत्वेनासङ्गतेस्तादवस्थ्यात्, नहि सुबन्तात्तदुत्पत्तिरिति नियमेऽवयवात्तदुत्पत्तिः प्राप्नोतीति,अवयवस्य तत्त्वाभावात्–येन तद्भाष्यं सङ्गतं स्यात्। इदं प्राचामनुरोधेन-वस्तुतः 'सम्रस्कारे'त्यादौ

❀ विषमपदविवृतिः ❀

न च सुबन्तद्वयसापेक्षसमासापेक्षयैकसुबन्तापेक्षाणप्रत्ययस्यैवान्तरङ्गत्वमिति वाच्यम्, एतद्भाष्यप्रामाण्येन पदद्वयसापेक्षादपि विशेषापेक्षस्य बहिरङ्गत्वात्। उक्तरीत्यैवेति। सामान्यापेक्षत्वेनेत्यर्थः।

समासे ततो विशिष्टादणिति साङ्कूटिनसिद्धिरित्यन्यत्र विस्तरः ।

**स्वौजस**। सूत्रे समाहारद्वन्द्वः। **टङपाश्चेत इति**। न च फलाभावः, लोपस्यैव फलत्वात्। तत्र-तत्रेतरव्यावृत्त्या चरितार्थानां लोपफलकत्वस्वीकारे बाधकाभावात्। काम्यजादौ तु लोपे सति वर्णोच्चारणवैयर्थ्यान्न तन्मात्रफलिकेत्सञ्ज्ञेति बोध्यम्।

❀ अभिनव-चन्द्रिका ❀

सुबुत्पत्तेः प्राक्स्वार्थिकप्रत्ययोत्पत्तौ मानमिति दिक्। **समाहारद्वन्द्व इति**। तृतीयाद्विवचन-'भ्या'म्पर्यन्तं समाहारद्वन्द्वं कृत्वा, तदनन्तरं चतुर्थीद्विवचन—'भ्यां'-पर्यन्तं द्वन्द्वं कृत्वा, ततः पञ्चमीद्विवचन—'भ्यां'—पर्यन्तं द्वन्द्वं कृत्वा, ततश्च षष्ठीद्विवचनौस्पर्यन्तं समाहारद्वन्द्वं कृत्वा ततोऽवशिष्टानां समाहारद्वन्द्वं कृत्वा सकलद्वन्द्वानां समाहारद्वन्द्व इति भावः। अत एव भ्यामां भ्यसोः औसोश्च नैकशेषः। ननु 'एचोऽयवायाव'इत्यादाविव लोपमात्रफलकत्वे इत्सञ्ज्ञैव न स्यादत आह—**तत्रतत्रेत्यादिना**। **समावेशार्थं इति**। वस्तुतस्तु

❀ चिदस्थिमाला ❀

पदिकस्याप्यसम्बन्धः, तस्यामवस्थायां वाक्यस्याप्रातिपदिकत्वादिति दिक्। तदाह—**इत्यन्यत्रेति**। गुरुशेखरोद्योतादावित्यर्थः। 'स्वौजसमौट्'इत्यत्र पृथक्पदानीति—**प्रकाशः**। तत्र बहूनां लुक्कल्पनेनागतिकच्छान्दसत्वकल्पनेन च गौरवापत्तेः। यदपि 'इतरेतरद्वन्द्व' इति **रत्नाकरः**, तन्न, बहुवचनस्य सौत्रत्वात् लुकि गौरवापत्तेरत आह—**सूत्रे इति**। ननु सञ्ज्ञायाः कार्यार्थत्वेनात्र तदभावेन कथं सेत्याशयेनाशङ्कते—**न चेति**। ननु लोपमात्रफलिकेत्सञ्ज्ञा न, 'अकार्थं लोप' इति भाष्योक्तेः, अन्यथा काम्यचः 'क'स्यापि तत्त्वापत्तिरत आह—**तत्र-तत्रेति**। 'अर्वणस्त्रसौ''ङसोश्'इत्यादावित्यर्थः। यथा चैतत्तथा स्पष्टमन्यत्र। चरितार्थानाम्=चरितार्थोच्चारणानामेषां वर्णानामित्यर्थः। **लोपेति**। लोपफलकं यदित्त्वं तत्स्वीकारे इत्यर्थः। तथाच यत्र लोपे सति तद्वैयर्थ्यं तत्र तदङ्गीकारे इत्युक्तभाष्यार्थः, अत एव काम्यजादौ नापत्तिस्तदाह—**काम्येति**। **तन्मात्रेति**। लोपमात्रेत्यर्थः। तस्यानुच्चारणेनापि सिद्धेरिति भावः।

❀ ज्योत्स्ना ❀

वान्तरङ्गत्वमिति वाच्यं, तथापि विधेयप्रत्ययस्वरूपसापेक्षत्वेन बहिरङ्गत्वादिति भावः। **समाहारद्वन्द्व इष्ट इति**। इतरेतरयोगे बहुवचनापत्तिः, पृथक्पदत्वे सुरौजसित्यादिविभक्तिश्रवणेन भवितव्यमिति भावः। लोपे सति—काककारस्य। वर्णोच्चारणवैयर्थ्यात्=ककाररूपेणोच्चारणवैयर्थ्यात्।

❀ सदाशिवभट्टीयम् ❀

सुट इवान्तरङ्गतरार्थकगतिनिमित्तकत्वेन समासस्यान्तरङ्गत्वं बोध्यम्। तदाह—**अन्यत्रेति**। एतेन तत्त्वेनतत्त्वाङ्गीकारे स्वग्रन्थान्तरविरोध इत्यपास्तमिति **केचित्**।

**स्वौजस**। **द्वन्द्व इति**। जसादौ रुत्वं सौत्रत्वान्नेति भावः। वस्तुत'स्तिप्तस्झी'त्यत्र वक्ष्यमाण-

❀ विषमपदविवृतिः ❀

उक्तदिशा पदद्वयापेक्षत्वेपि समासस्याणपेक्षायामन्तरङ्गत्वं बोध्यम्। **अन्यत्र विस्तर इति**। स्पष्टञ्चेदं सर्वमत्रत्यभाष्यकैयटयोः। तत्र हि—ङ्याब्ग्रहणस्य 'कालितरे'त्यादिप्रयोजनमुपन्यस्य-तस्य 'बहुगोमत्के'त्यादौ दोषमुद्भाव्य-'स्त्रीप्रत्ययोपि स्वार्थिकः, समासान्ता अपि स्वार्थिकास्तत्र परत्वात्समासान्ता भविष्यन्ती'त्युक्तम्। 'कालिके'त्यादौ स्त्रीप्रत्ययात्पूर्वं परत्वादत्यन्तस्वार्थिके कनि 'प्रत्ययस्था'दितीत्त्वेन सिद्धिः। 'लोहिनिके'ति तु 'लोहिताल्लिङ्गबाधनञ्चे'ति वचनेन सिध्यतीत्युक्तम्भाष्ये। कैयटे च—'ङ्याब्ग्रहणप्रत्याख्यानेन 'समासान्ते परिहारः, 'कालितरे'त्यादौ तु पूर्वोक्तन्यायेनान्तरङ्गत्वात्स्त्रीप्रत्यये प्रकर्षप्रत्यय' इत्युक्तम्। एवञ्चात्यन्तस्वार्थिके कनि इत्त्वाघटितमार्यकेत्याद्यसाध्वेव। **तत्रतत्रेति**। 'टाङसी'त्यादौ।

'न विभक्तौ'विति निषेधोपयोगिनीं विभक्तिसञ्ज्ञामाह—**विभक्तिश्च**। चकार एकसञ्ज्ञाधिकारेऽपि पुरुषवचनसञ्ज्ञाभ्यां समावेशार्थः; अन्यथा पर्यायः स्यात् ।

'सुप' इति सूत्रं, 'तिङस्त्रीणि' इति सूत्रात्तिङ इति चानुवर्तते । 'प्रथमयो'रित्यादौ व्याख्यानात्प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणं बोध्यम् । अन्यथा 'औजसोः पूर्व' इत्येव वदेत् । विभक्तिप्रदेशेषु 'सुप्ति'ङिति न वक्तुं शक्यम्, 'यत्र' 'तत्रे'त्यादौ त्यदाद्यत्वानापत्तेः । तेषां सुप्सञ्ज्ञा त्वशक्या, 'एतर्हि'त्यादौ 'सुपि चे'ति दीर्घापत्तेः ।

❀ अभिनव-चन्द्रिका ❀

'स्वतादात्म्य', 'स्वप्रतियोगिकविधेयानुयोगिकसंसर्गघटकनिरूपितत्वसमसङ्ख्याकनिरूपितत्ववत्संसर्गप्रतियोगिकत्वो'भयसम्बन्धेन-यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककत्वरूपसमानावधित्वस्य-'विभक्तिश्चे'ति शास्त्रीयोद्देश्यतावच्छेदकतिङ्त्वस्य 'तिङस्त्रीणि त्रीणी'तिशास्त्रीयोद्देश्यतावच्छेदकतिङ्त्वे तादात्म्यस्य सत्त्वेऽपि, तदीयोद्देश्यतावच्छेदकतिङ्त्वे—स्वप्रतियोगिकविधेयानुयोगिकसंसर्गघटकनिरूपितत्वसमसङ्ख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वस्याभावेन समानावधित्वाऽभावादाकडारसूत्राप्राप्त्या चकारः सुप्तिङनुवृत्तिमात्रफलक एवेति बोध्यम् । **दीर्घापत्तेरिति** । नच 'एतर्हि'त्यादौ 'इदमोर्हिलि'त्यादौ 'अर्हिल्' इति च्छेदेन न दीर्घापत्तिः । तथा च 'प्राग्दिशस्सु'बितिन्यासे न दोषः । नच 'अर्हिल्' इति च्छेदे 'एतर्हि'त्यादौ 'एतेतौ रथो'रित्यनेन एतादेशानापत्तिरिति वाच्यम्, 'एतेतावथो'रितिन्यासं कृत्वा अकारादौ थादौ प्राग्दिशीये

❀ चिदस्थिमाला ❀

'विभक्तिश्चे'त्यस्य मध्ये उल्लेखे सङ्गतिमाह-**न वीति**। 'जसादिषु सादेःप्रासेत्सञ्ज्ञाभावाय वक्ष्यमाणे'त्यादिः। अपिर्विरोधे। अन्यथा=चकाराभावे। यौगपद्यन्तु एकसञ्ज्ञाधिकारेण बाधितम्। अन्यतरबाधस्तु न, वचनद्वयप्रामाण्यात्, अत आह—**पर्याय इति**। नन्वेवं 'त्रीणि-त्रीणि' इत्यस्यानुवृत्त्या'वष्टन आ'वीत्यादौ निर्वाहेऽपि 'प्रथमयो'रित्यादौ दोषोऽत आह—**प्रथमेति**। 'वाच्ययो'रित्यत्र 'त्रिकयो'रिति शेषः। 'व्याख्याना'दित्यस्यार्थमाह—**अन्यथेति**। तयोरग्रहणे इत्यर्थः। 'अची'त्यनुवृत्तेरावश्यकत्वात्स्वावोरिति दुर्वचमत आह—**औजसोरिति**। किञ्च 'तस्माच्छस'इति लिङ्गमप्यत्र बोध्यम्। ननु विभक्तिप्रदेशेषु सुप्तिङ्पदाभ्यामेव व्यवहारः किं, विभक्तिसञ्ज्ञयेत्यत आह—**विभेति**। **नापत्तेरिति**। तेषां प्राग्दिशीयत्वेन विभक्तित्वेऽपि सुप्तिङ्भिन्नत्वात्। ननु एवं तेषामपि सुप्सञ्ज्ञास्त्वित्यत आह—**तेषामिति**। प्राग्दिशीयानामित्यर्थः।

❀ सदाशिवभट्टीयम् ❀

रीत्या लाघवेन निर्विभक्तिकानुकरणभूतानि पृथक्पदान्येवेत्यस्त्वं न्याय्यमेवेति बोध्यम्।

**विभक्तिश्च**। नन्वेवं 'त्रीणि-त्रीणी'त्यस्यानुवृत्तावष्टन आवीत्यादौ निर्वाहेपि 'प्रथमयो'रित्यादौ दोषोऽत आह—**प्रथमेति**। 'वाच्ययो'रित्यत्र 'त्रिकयो'रिति शेषः। 'व्याख्याना'दित्यस्यार्थमाह—**अन्यथेति**। **औजसोरिति**। 'स्वावो'रिति तु नोक्तं, जस्व्यावृत्त्यर्थकाम्रादिचीतीज्ग्रहात्, सोरजादित्वं तु 'ज्ञानं' 'शिवोऽर्च्य' इत्यत्र बोध्यम्। 'तस्माच्छस'इति लिङ्गमप्यत्र बोध्यम्। **सुप्सञ्ज्ञेति**। तिङ्सञ्ज्ञाप्येवमेव,

❀ विषमपदविवृतिः ❀

**विभक्तिश्च**। ननु 'त्रीणि-त्रीणी'त्यननुवर्त्य 'तिङ' एतन्मात्रानुवृत्तौ विभक्तिपदेनैकैकप्रत्ययग्रहणात्प्रथमयोरित्यादौ षण्णां प्रत्ययानां ग्रहणं न स्यात्, किन्तु द्वयोरेव, तत्र सोरजादित्वाभावेनौजसोरेव ग्रहणं स्यादित्याशङ्क्याह—**प्रथमयोरिति**। **बहुवचनापत्तिरिति**। 'द्वयेके'ष्विति स्यादिति भावः।

सुप्तम्यन्ता इति । 'स्त्रीलिङ्गा' इति शेषः । **प्राचां**—वैयाकरणान्तराणाम् । **इहापि**—अस्मिन्व्याकरणेऽपि ।

**सुपः** । 'सु'बिति प्रत्याहारात्षष्ठ्यत्र ।

**द्व्येकयोः** । नियमार्थे इमे । इह सूत्रे द्व्येकशब्दौ सङ्ख्यापरौ, न सङ्ख्येयपरौ, बहुवचनापत्तेः,तदाह—**द्वित्वैकत्वयोरिति** । लौकिकप्रयोगे तु 'आदशतः सङ्ख्याः सङ्ख्येये' इति कोशभाष्याद्युक्तेः सङ्ख्येयपरत्वे एव प्रायः साधुत्वम् । क चित्सङ्ख्यापरत्वेऽपि सङ्ख्येयगतसङ्ख्यारोपेण साधुत्वम् । अत एव कयोर्द्वित्वे ? इत्याद्यर्थे—कयोर्द्वयोः केषां बहुष्विति भाष्ये प्रयुक्तमिति बोध्यम् । एकशब्दो द्विशब्दसाहचर्यात्सङ्ख्यावाच्येव । एकग्रहणं त्यक्त्वा—एवैकवचनमुत्सर्गः कर्तव्यस्तेनाव्ययेभ्यः 'पचतिकल्प'मित्यादौ च व्यर्थैकवचनप्रयोगसिद्धिरिति 'तद्धितश्चे'ति सूत्रे भाष्ये स्पष्टम् ।

---

❀ अभिनव-चन्द्रिका ❀

'इदमेतदोः—एत इत' इत्यादेशौ स्त इत्यर्थेनादोषादिति वाच्यं, 'सदा' 'सर्वदे'त्यादौ दाप्रत्ययस्य सुप्सञ्ज्ञायां 'सर्वस्य सुपी'ति आद्युदात्ततापत्तेः । कतरशब्दाण्ण्यन्तात्क्विपि तस्मात्तसिलि

❀ चिदस्थिमाला ❀

'प्राग्दिशः सु'बितिन्यासेनेति भावः । तिङ्सञ्ज्ञा तु न कृता, कृदन्तान्तरबाधापत्तेः । 'राम इहे'त्यादौ निघातापत्तेश्चेति दिक् । प्रथमशब्दादीनां तत्त्ववारणायाह—**स्त्रीलिङ्गा इति** । वृत्तिकारादिनिरासायाह—**अस्मिन्निति** । कारकप्रकरणादाविति भावः । **प्रत्याहारादिति** । सप्तमीबहुवचनं—नैव, एकस्यानेकसञ्ज्ञाविधिवैयर्थ्यापत्तेः । अन्वययोग्यत्वायाह—**षष्ठीति** । सामान्यसूत्रेण सिद्धत्वादाह—**नियमेति** । बहुष्वितिसूत्राभिप्रायं द्विवचनम् । यत्तु—बहुष्वितिसूत्रभाष्यप्रामाण्या'दादशत' इति एकद्विबहुशब्दान्यविषयमिति-तन्नेतिध्वनयन्नाह—इहेत्यादिना । सङ्ख्यापरौ—लक्षणयेति भावः । 'इह सूत्रे' इत्यस्य फलमाह—**लौकिकेति** । अत एव तुः प्रयुक्तः । **भाष्यादीति** । 'सङ्ख्ययाव्ययासन्ने'तिसूत्रभाष्यादीत्यर्थः । 'प्राय'इत्यस्य फलमाह—**क्वचिदिति** । आरोपेण—शब्दार्थसङ्ख्यायाम् । अत्र मानं सूचयितुमाह—**अत एवेति** । क्वचित्तथा साधुत्वादेव । 'कयोर्द्वित्वे' इति पाठः । आदिना '**केषां बहुत्वे**' इत्यस्य परिग्रहः । भाष्ये='बहुष्वि'तिसूत्रस्थे । नन्वन्यादिवाचकैकशब्दस्य कुतो न ग्रहणमत आह—**एकेति** । नन्वेवमव्ययादिभ्यो न स्यात्सङ्ख्याभावादत आह—**एकेति** । **उत्सर्ग इति** । सामान्यसूत्रमित्यर्थः । 'द्विबह्वोर्द्विबहुवचने' इत्यपरं कार्यमिति भावः । **वचनेति** । वचनस्य प्रयोगे-

❀ ज्योत्स्ना ❀

तन्मात्रफलिका=लोपमात्रफलिका । **बहुवचनापत्तेरिति** । 'द्व्येके'ष्विति स्यादिति भावः । यत्तु '**स्वरितात्संहितायामनुदात्ताना**'मिति सूत्रे 'द्व्येकयोरेकश्रुत्यवचन'मिति वार्तिके'द्व्येकयो'रित्यत्र द्विशब्देन द्वित्वमुच्यते, एकशब्देन चैकत्व'मिति कैयटग्रन्थव्याख्यानावसरे—'सङ्ख्येयपरत्वे द्व्येकेषामिति स्यादित्यभिनवविवरणे उक्तं, तद्भ्रमसात्; 'द्वन्द्वे चे'तिनिषेधेन सुडप्राप्तेः । अत एव प्राचीनशेषकृष्णादिविवरणे—द्व्येकेष्विति स्यादित्येव तत्रापत्तिर्व्याख्याता । एतेन 'गोत्रे लुगची'ति सूत्रे गोत्रस्य बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुगिति—वार्तिके-द्व्येकयोरित्यत्र द्वित्वैकत्वयोरित्यर्थ इति स्वीयव्याख्याने तु द्व्येके-

❀ सदाशिवभट्टीयम् ❀

तदन्तान्तरबाधापत्तेः, 'राम इहे'त्यादौ निघातापत्तेश्च । **दीर्घापत्तेरिति** । सन्निपातपरिभाषया दीर्घवारणे तु 'सर्वदे'त्यादौ 'सर्वस्य सुपी'त्याद्युदात्तत्वापत्तिर्बोध्येत्यन्यत्र विस्तरः ।

**बहुषु** । बहुशब्दोऽत्र त्रित्वादिपरार्द्धान्तसङ्ख्यानां व्यापको यो धर्मविशेषो बहुत्वं, तत्परः । बहुवचनन्त्वाश्रयगतबहुत्वं धर्मे आरोप्य कृतं, तेन वैपुल्यवाचिनो न ग्रहणम् । 'दारा' इत्यादौ त्ववयवादिगतबहुत्वस्यावयविन्यारोपो बोध्यः, स च कोशवृद्धव्यवहारानुसारेणैवेति नातिप्रसङ्गः । 'भर्तृदारयोः', 'अत्तेजसो'रित्यादौ वृत्तौ तु द्विवचनमेव, आरोपे मानाभावात्, अत एव द्व्येकयोरिति सङ्गच्छते । एतेनैकस्मिन्नपि 'गुरवः समागता' इत्यादि समर्थितम् ।

अन्वर्थसञ्ज्ञयैव सिद्धे इदं सूत्रद्वयं स्पष्टार्थम् । **राम इति** । रुत्वे एकदेशविकृतन्यायेन सुबन्ततया पदत्वाद्विसर्गः ।

---

**❀ अभिनव-चन्द्रिका ❀**

'कतरत्त'इत्यादौ तसिलः सुप्त्वेन 'रोः सुपी'तिनियमाद्विसर्गाभावेन सत्वानापत्तेश्चेति दिक् ।

**एकदेशविकृतन्यायेनेति** । स्थानिवद्भावेनेत्यर्थः ।

**❀ चिदस्थिमाला ❀**

त्यर्थः । 'द्व्येकयो'रिति साहचर्याद्बहुशब्दस्यापि सङ्ख्यापरत्वमिति सूचयितुमाह–**बहुष्विति**। अत्र=सूत्रे । एतेन लोके प्राग्वदिति सूचितम् । **व्यापकेति** । अन्यतमसङ्ख्येत्यादिः । एतावतैव बहुत्वे सङ्ख्याव्यवहारः । एतेन 'बहव' इत्युक्ते कतीति सङ्ख्याविशेषाकाङ्क्षाया जायमानत्वेन बहुत्वस्य नियतपरिच्छेदकत्वाभावान्न सङ्ख्यात्वमित्यपास्तम् । नन्वेवं बहुवचनासङ्गतिरत आह–**बहुवेति** । तत्फलमाह—**तेनेति** । 'बहुः पर्वत' इत्यादौ । नच तत्र परत्वादेकवचनं, स्वौजसिति वाक्ये बहुवचनस्यैव परत्वात्, अनयोर्नियामकत्वेन तदेकवाक्यत्वात् । एतेन तथा निर्वाहाद्बहुवचनं व्यर्थमिति कौस्तुभाद्युक्तमपास्तम् । नन्वेवं 'दारा' इत्यादौ आश्रयकत्वात्तत्र स्यादत आह—**दारा इति** । पूर्ववैलक्षण्यसूचकस्तुः । नन्वेवमेकस्मिन्नपि वृक्षे 'वृक्षा' इति स्यादत आह—**स चेति** । आरोपश्चेत्यर्थः । कोशादपि वृद्धव्यवहारस्य प्राबल्यमिति ध्वनयितुमाह–**भर्तृदारेति** । अयं स्मार्तप्रयोगः । अन्त्यः शाङ्क(ब)रभाष्यीयः । इत्यादिरूपवृत्तावित्यर्थः । आरोपे=अवयवगतबहुत्वारोपे । तथा वृद्धव्यवहारादिति भावः । तत्र मानं सूचयति—**अत एवेति** । सति तु वृद्धव्यवहारे तथा भवत्येवेत्याह–**एतेनेति** । तदनुसारेण तदारोपेणेत्यर्थः । आदिना–'आचार्याः कथयन्ती'त्यादिसङ्ग्रहः । नन्वेकवचनादिसञ्ज्ञानां रूढत्वेऽर्थप्रत्ययनियमभेदेन दोषवारणाय सूत्रद्वयावश्यकत्वेऽपि नान्वर्थत्वेऽत आह—**अन्वर्थेति** । एकदेशोऽत्र सुबन्तस्य, तदाह—**सुबन्तेति** । कार्यकालपक्षे चेदम् । सूत्रात्=उत्तरसूत्रात् ।

**❀ ज्योत्स्ना ❀**

षा'मिति युक्तमित्य(भिप्रेत्या)भिनवविवरणावतरणमपि प्रत्युक्तम् । नन्ववयवगतबहुत्वस्यावयविन्यारोपे 'वृक्ष' इत्यादावपि बहुवचनापत्तिरत आह—**स चेति । कोशवृद्धव्यवहारानुसारेणेति**। तत्र कोशा-

**❀ सदाशिवभट्टीयम् ❀**

**बहुषु । न ग्रहणमिति** । तेन 'बहुः पर्वत'इत्यादौ न । नचात्र परत्वादेकवचनं स्यादिति वाच्यं, तस्यौत्सर्गिकत्वेन तस्य तदपवादत्वादिति वदन्ति । कोशादपि वृद्धव्यवहारस्य प्राबल्यमिति ध्वनयितुमाह–**भर्तृदारेति** । अयं स्मार्तप्रयोगः । अन्त्यः शाबरभाष्यीयः । **रुत्व इति** । **सुबन्ततयेति** । 'हेतौ तृतीया'

**❀ विषमपदविवृतिः ❀**

यत्तु 'स्वरितात्संहितायां'मिति सूत्रे कैयटव्याख्यावसरे 'द्व्येकेषा'मिति स्यादित्यभिनवविवरणे उक्तम्–तद्भ्रमात् । 'द्वन्द्वे चे'ति निषेधेन सुडप्राप्तेः । **भर्तृदारयोरिति** । बहुवचनान्तस्योत्तरपदत्वे बहुवचनमेव, पूर्वपदत्वे तु द्विवचनमित्यन्ये । **एकदेशविकृतन्यायेनेति** । आनुमानिकस्थान्यादेशभावेनेत्यर्थः ।

**सरूपाणामे**। 'वृद्धो यूने'ति सूत्रादेवकारोऽपकृष्यत इत्याह—**सरूपाण्येवेति**।

❀ **अभिनव-चन्द्रिका** ❀

**सरूपाणाम्**। **अपकृष्यत इति**। स्यादेतत्, 'सरूपाणा'मिति निर्धारणे षष्ठी। 'सरूपाणा'-मित्यस्य—सारूप्यवदारब्धसमुदायघटकानामित्यर्थः। तत्र न तावदपकृष्टैवकारः—'सारूप्यवदारब्धसमुदायघटकाना'मित्यनन्तरं योजयितुं शक्यः; 'सारूप्यवदारब्धसमुदायघटकानामेवैकः शिष्यत' इति उच्यमाने एवपदवैयर्थ्यापत्तेः। नापि—सारूप्यवदारब्धसमुदायानन्तरन्तथा, सारूप्यवदारब्धसमुदायमात्रघटकेत्यादिरीत्योच्यमानेऽपि एवपदवैयर्थ्याऽनिरासात्। नापि सारूप्यवन्मात्रेत्यादिरीत्या सारूप्यवदित्यनन्तरं योजयितुं शक्यते, जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोः समुदायस्यापि 'मातृभ्या'मित्येवं सारूप्यस्य भ्यामादौ सत्त्वात्सारूप्यवन्मात्रमातृ–मातृशब्दाऽऽरब्धसमुयत्वादेकशेषापत्तेः। नापि सरूपपदार्थैकदेशे सारूप्ये—सारूप्यमात्रवदारब्धेत्यादिरीत्या एवार्थान्वयः शक्यते कर्त्तुं, मृगीवाचकहरिणीशब्दस्य, वर्णवाचकहरिणीशब्दस्य च तद्धितादौ वैरूप्यसत्त्वेन सारूप्यमात्रवत्त्वविरहेण 'हरिणीहरिणी'इति समुदाये सारूप्यमात्रवदारब्धत्वस्याभावेन तयोरेकशेषानापत्तेरिति चेन्नैवम्; विभक्तौ परतः सारूप्यमेव येषां दृष्टं तेषामेकः शिष्यत इतिसूत्रार्थकरणेनादोषात्। तथाच हरिणीशब्दयोर्विभक्तौ औजसादिषु वैरूप्यस्य दर्शनादेकशेषः सिद्ध्यति, मातृशब्दयोस्तु औजसादिषु वैरूप्यस्य दर्शनान्नैकशेष इति दिक्।

स्यादेतत्—विभक्तौ परतः सारूप्यमेव येषां तेषां तत्त्वं किं? न तावत्—'स्ववृत्तिविभक्त्यव्यवहितपूर्वत्वसमानाधिकरणयावद्रूप–वत्त्व'सम्बन्धेन स्वविशिष्टत्वन्तत्त्वम्, नित्यबहुवचनान्ताक्षतशब्दस्य क्षतशून्यार्थकसर्वविभक्त्यन्ताक्षतशब्दस्य चैकशेषानापत्तेः। विभक्त्यव्यवहितपूर्वत्वविशिष्टसर्वविभक्त्यन्ताक्षतशब्दवृत्ति–एकविंशतिरूप–वत्त्वस्य नित्यबहुवचनान्ताक्षतशब्देऽभावात्। नापि तावत्—'स्वाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यकसम्भावना-प्रयोज्यतावद्विभक्त्यवहित पूर्वत्वप्रकारकयावद्रूपविशेष्यकसम्भावना-प्रयोज्यताद्रूपवत्त्वप्रकारकसम्भावना-विशेष्यत्व-सम्बन्धेन स्वविशिष्टत्वन्तत्त्वम्। 'यद्यस्मान्नित्यबहुवचनान्ताक्षतशब्दाद्यावत्यो विभक्तयो भवेयुः तावद्विभक्त्यव्यवहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयुस्तावद्रूपवानयं भवे'दित्याकारकसम्भावना-विशेष्यत्वसम्बन्धेन निरुक्ताक्षतशब्दयोः परस्परवैशिष्ट्यसत्त्वाद्दोषाभावेऽपि, सञ्ज्ञाभूतसर्वशब्दस्य

❀ **वरवर्णिनी** ❀

इदमत्रावधेयं, 'सरूपाणा'मिति हि निर्धारणार्थिका षष्ठी, निर्धारणषष्ठीप्रकृत्यर्थस्य च 'स्वघटकत्व' 'स्वघटकनिर्धार्यमाणेतरावृत्तिधर्मवत्त्वो'भयसम्बन्धेन निर्धार्यमाणेऽन्वयो भवति। यथा–'नृणां द्विजः श्रेष्ठ' इत्यत्र निर्धारणषष्ठीप्रकृतिनृपदार्थस्य-नृत्वावच्छिन्नसमुदायस्य—निर्धार्यमाणे द्विजपदार्थे—स्व(–नृसमुदाय–)घटकत्व-सम्बन्धेन, स्वघटकनिर्धार्यमाण-द्विजेतराऽवृत्ति-श्रेष्ठत्व-धर्मवत्त्वसम्बन्धेन चान्वयो भवति। अत एव–'नृणां गजः स्थूलः' इति न प्रयोगः, गजस्य स्वघटकत्वाभावात्, एवं 'नृणां द्विजः प्रमेयः' 'नृणां ब्राह्मणः प्राणी' इत्यादयोऽपि न प्रयोगाः, स्वघटकनिर्धार्यमाणब्राह्मणेतरशूद्रादिवृत्तित्वस्यैव प्रमेयत्व-प्राणित्वादिधर्मेषु सत्त्वेन तदवृत्तिधर्मवत्त्वाभावात्।

एवञ्च स्वरूपपदोत्तरषष्ठ्या अपि निर्धारणविभक्तित्वेन पूर्वोक्तसम्बन्धाभ्यामेव तत्प्रकृत्यर्थस्य निर्धार्यमाणे एकत्वावच्छिन्नेऽन्वयो वाच्यः, स च न सम्भवति, स्वघटकनिर्धार्यमाणैकत्वावच्छिन्नेतरस्याप्रसिद्धेः, एकत्वस्य केवलान्वयित्वेन सर्वत्र सत्त्वादिति चेदत्र भ्रमः, प्रथमार्थैकशब्दस्यैवात्रग्रहणेन तादृशसम्बन्धाभ्यां सरूपपदार्थस्य निर्धार्यमाणेऽन्वयस्य सम्भवेन दोषाभावात्, 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथे'त्यभियुक्तोक्तेरेकशब्दस्य प्रथमार्थकतायाः प्रसिद्धत्वादिति **मान्याः**।

❀ अभिनव-चन्द्रिका ❀

सर्वनामसर्वशब्दस्य च स्वाव्यवहितोत्तरत्वप्रकारकयावद्विभक्तिविशेष्यिका या सम्भावना 'अस्मात्सञ्ज्ञाभूतसर्वशब्दाद्यावत्यो विभक्तयो भवेयु'रित्याकारिका, तादृशसम्भावनाप्रयोज्या या–तावद्विभक्त्यव्यवहितपूर्वत्वप्रकारकयावद्रूपविशेष्यिका सम्भावना–'तावद्विभक्त्यव्यहितपूर्वत्ववन्ति यावन्ति रूपाणि भवेयु'रित्याकारिका, तादृशसम्भावनाप्रयोज्या या तावद्रूपवत्त्वप्रकारिका सम्भावना–'तावद्रूपवानयं भवे'दित्याकारिका, तादृशसम्भावनाविशेष्यत्वसम्बन्धेन परस्परं वैशिष्ट्यसत्त्वेन एकशेषापत्तेः। नचेष्टापत्तिः, यथा 'समानैव वृत्तिर्येषान्तेषामेको गुरुर्भवति, अन्ये तस्य शिष्या भवन्ती'ति वाक्यस्य–काश्यां गयायां प्रयागे च व्यत्ययेन याजनाध्यापनप्रतिग्रहान् कुर्वन्तो ब्राह्मणा न विषयाः, तथा 'विभक्तौ परतः सारूप्यमेव येषां तेषामेकः शिष्यतेऽन्ये लुप्यन्ते' इति वाक्यस्यापि—सञ्ज्ञाभूतसर्वशब्द-सर्वनामसर्वशब्दविषयकत्वस्य वक्तुमशक्यत्वादिति चेन्नैवम्,

'स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्व'मिति परिष्कारेणादोषात्। रूपवैशिष्ट्यञ्च रूपे–'स्वभिन्नत्व' 'स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यो'भयसम्बन्धेन, सञ्ज्ञाभूतसर्वशब्दस्य सर्वनामसञ्ज्ञकसर्वशब्दस्य च नैकशेषः, स्वं–सञ्ज्ञाभूतसर्वशब्दः, स्ववृत्तिरूपं–सर्वायेत्यत्र 'सर्वा' इत्याकारकं, तद्भिन्नत्वस्य, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकङेत्वाच्छिन्नाव्यवहितपूर्वत्वसामानाधिकरण्यस्य च 'सर्वस्मै' इत्यत्र 'सर्व' इत्याकारकरूपे सत्त्वेन स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वरूपतत्त्वस्याभावात्।

नित्यबहुवचनान्ताक्षतशब्देऽपि न दोषः। 'अक्षतेभ्य' इत्यत्र 'अक्षते' इत्येतद्रूपभिन्नत्वस्य,

---

❀ वरवर्णिनी ❀

अपकृष्टैवशब्दार्थस्य—'विभक्ताविव सरूपाणा'मित्येवं विभक्तावन्वये–'विभक्त्यव्यवहितपूर्वत्वावच्छिन्नप्रतियोगिताकभेदवति—सारूप्याऽभाववतामेकः शिष्यते' इत्यर्थे–'रामौ' 'रामा' इत्यादावपि तद्धितादौ परतोऽपि सारूप्यदर्शनादेकशेषानापत्त्या सूत्रमेव व्यर्थं स्यात्। एकशेषपदार्थे तदन्वयोपि व्यर्थ एव, एकशेषपदमर्यादयैव तथा लाभात्।

नापि सरूपपदार्थेऽन्वयः, तथाहि—सारूप्यवदारब्धसमुदायघटका एव प्रकृते षष्ठ्यन्तसरूपपदेन गृह्यन्ते, तत्र न घटकोत्तरन्तदन्वयः, तथा सति—'सारूप्यवदारब्धसमुदायघटकः सारूप्यवदन्यारब्धसमुदायाघटक' इत्यादिरीत्याऽर्थे–'रामश्च रामश्च हरश्च–रामहरा'इत्यादौ 'रामरामहरा'इत्यापत्तेः, सारूप्यवदितर-हरारब्ध-'रामरामहर'—समुदायघटकत्वस्यैव रामशब्दे सत्त्वात्। नापि सारूप्यपदार्थैकदेशे समुदाये एवशब्दार्थस्यान्वयः, तथा सति—'सारूप्यवदारब्धसमुदायमात्रघटक'इत्यादिरीत्याऽर्थे—'मातृमातरौ' इत्यादावपि एकशेषापत्तेः, सारूप्यवदारब्ध–मातृमातृ–समुदायमात्रघटकत्वान्मातृशब्दस्य। नापि सारूप्यवति तदन्वयः, तथा सति—सारूप्यवन्मात्रारब्धेत्यादिरीत्याऽर्थे रामश्च रामश्च हरश्चेत्येवं सहविवक्षायां 'रामहरा' इत्यत्रैकशेषानापत्तेः, रामशब्दे सारूप्यवदन्यहरारब्धसमुदायघटकतया तदघटकत्वविरहात्। तादृशमातृशब्दयोस्तदापत्तेश्च। नापि सारूप्येऽन्वयः,–तथा सति सारूप्यमात्रवदारब्धेत्यादिरीत्याऽर्थे वर्णवाचकहरिणीशब्दे मृगीवाचके हरिणीशब्दे च तद्धितादौ वैरूप्यसत्त्वेन मृगीवाचकहरिणीशब्द–वर्णवाचकहरिणीशब्दयोरेकशेषानापत्तेरितिचेत्–उच्यते,—सारूप्य एवान्वयः, 'विभक्तौ परतः सारूप्यमेवे'त्यादि रीत्या चार्थः, एवञ्च वर्णवाचकहरिणीशब्दस्य विभक्तौ परतः सारूप्यस्यैव सत्त्वान्न तत्रैकशेषानापत्तिरिति सङ्क्षेपः।

---

१. यथा—केचिद्ब्राह्मणाः—प्रयागेऽधीत्य काश्यां याजयित्वा गयायाम्प्रतिगृह्णन्ति, यथा वा केचित्–काश्यां पठन्ति, प्रयागे यजन्ति, चित्रकूटे तपन्ति—ते ब्राह्मणा नोक्तवाक्यविषयीभूताः।

❀ अभिनव-चन्द्रिका ❀

'अक्षताय'त्यत्र 'अक्षता' इति रूपे सत्त्वेऽपि, स्वाश्रयप्रकृतिकभ्यस्वृत्तिविभक्तिविभाजकभ्यस्त्वधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यस्याभावेन निरुक्ततत्त्वस्य सत्त्वात् । एवं सामाननगरे समानैव वृत्तिर्येषां तेषां तत्त्वमपि—स्ववृत्तिवृत्तिविशिष्टवृत्तिमद्भिन्नत्वमिति परिष्करणीयम् । वृत्तिवैशिष्ट्यञ्च वृत्तौ—'स्वभिन्नत्व' 'स्वाश्रयनगरवृत्तिनगरत्वव्याप्यधर्मसामानाधिकरण्यो' भयसम्बन्धेन ।

नचैवमपि मतिजराशब्दादावेकशेषानापत्तिः, तथाहि—स्ववृत्तिरूपं—'मत्यै' इत्यत्र 'मत्य्' इति रूपं-तद्भिन्नत्वस्, स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकङेत्वावच्छिन्नाव्यवहितपूर्वत्वसामानाधिकरण्यस्य च 'मतये'इत्यत्र 'मतय्' इतिरूपे सत्त्वेन—स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वस्याभावादिति वाच्यं, 'स्वभिन्नत्व'मित्यत्र—'स्वविशिष्टभिन्नत्व'मिति निवेशनादोषात् । वै० 'स्वसामानाधिकरण्य' 'स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यो'भयसम्बन्धेन । 'मत्य्'इत्येतद्रूपसामानाधिकरण्यस्य, एतद्रूपाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यस्य च 'मतये'इत्यत्र 'मतय्'इति रूपे सत्त्वेन स्वविशिष्टभिन्नत्वस्याभावात्। सञ्ज्ञाभूतसर्वनामसर्वशब्दयोरेकशेषवारणाय द्वितीयसम्बन्धदानम्, असम्भववारणायाद्यसम्बन्धदानम्।

---

❀ वरवर्णिनी ❀

नन्वेकविभक्ताविरयुक्तौ रामरामेत्यादिसमुदायाद्विभक्त्यभावात्सूत्रवैयर्थ्यं, नचार्थवदिति प्रातिपदिकत्वात्समुदायादेकविभक्तिसम्भव ति वाच्यं, समासग्रहणकृतनियमेन तादृशसमुदायस्य प्रातिपदिकत्वासम्भवात् । एकविभक्तावित्यत्र—एकपदस्य समानार्थकत्वेऽपि उत्पन्नविभक्तेः श्रवणापत्तेर्दुरुद्धत्वात् । 'विभक्त्यन्तानामेकशेष' इति पक्षेऽपि 'राम सु' इति शिष्यमाणोत्तरस्वादिविभक्तिश्रवणापत्तेश्चेतिचेन्न, प्रातिपदिकानामेकशेष इति पक्षस्यैव स्वीकारेण ( विभक्तिपदस्य च सारूप्ये उपलक्षणतया ) दोषाभावात् ।

ननु 'प्रातिपदिकानामेकशेष'इति पक्षे—'समानविभक्तौ सारूप्यं येषान्तेषामेक शिष्यते'इत्यर्थे जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोः समानविभक्तौ भ्यामादौ सारूप्यादेकशेषापत्तिरितिचेन्न; वृद्धो यूनेतिसूत्रादेवकारापकर्षणेन—सारूप्यमेव येषामित्यर्थेन औजसादावनयोर्वैरूप्याद्दोषविरहात् ।

इदमेव तात्त्विकास्तु "—एवकारापकर्षेऽपि तदर्थस्य न काप्यन्वयः सम्भवति; तथाहि—एवशब्दार्थस्य,—स्वीयभेदप्रतियोगितावच्छेदकाभाववद्व्यवच्छेदकत्वसम्बन्धेन विभक्तावित्यनेन—['विभक्तावेवे'त्येवम्—] अन्वये—सप्तम्यर्थस्य तत्राव्यवहितपूर्वत्वरूपतया—'विभक्त्यव्यवहितपूर्वत्वावच्छिन्नप्रतियोगिताकभेदवति यः सारूप्याभाववान् तस्यैकशेष' इत्यर्थनिष्पत्तौ, रामादिशब्दानामपि विभक्त्यव्यहितपूर्वत्वावच्छिन्नप्रतियोगिताकभेदवति तद्धितादौ सारूप्यस्य सत्त्वादेकशेषाप्रवृत्त्या सूत्रवैयर्थ्यम् । एकशेषपदार्थेन सह यद्येवार्थस्य सम्बन्धस्तदा एवकारापकर्ष एव निष्फल; एकशेषपदेनैव तथार्थलाभात् । नापि च षष्ठ्यन्तसरूपपदार्थेनान्वयः सम्भवति, तथाहि—सरूपाणा'मिति निर्धारणषष्ठ्या बहुत्वे एव साधुत्वस्य वक्ष्यमाणतया—घटकत्वं बहुत्वञ्चार्थः, सरूपपदेन च सारूप्यवतो ग्रहणम्, एवञ्च सारूप्यवदारब्धसमुदायघटकानामिति षष्ठ्यन्तार्थः । तत्र न तावत्सारूप्यवदारब्धसमुदायघटकोत्तरमेवार्थान्वयः सम्भवति, 'यत्पदोत्तरमेवकारः प्रयुज्यते तदर्थसम्बन्धस्य तदर्थेतरार्थसम्बन्धाभावस्य च विशेषणे विशेष्ये वा प्रतीयमानतया—'सारूप्यवदारब्धसमुदायघटकः सारूप्यवदन्यारब्धसमुदायाघटकः शिष्यमाणत्वेनेच्छाविषयैकत्ववान् शिष्यते' इत्यर्थापत्तौ रामश्च कृष्णश्च रामश्चेति सहविवक्षायां 'राम-कृष्ण-रामा'इति प्रयोगापत्तिः, सारूप्यवदन्य-कृष्णाऽऽरब्धसमुदायघटकत्वेन रामशब्दे एकशेषाप्रवृत्तेः । नापि सारूप्यवदारब्धसमुदायेऽन्वयः, तथा सति 'सारूप्यवदारब्धसमुदायघटकस्य सारूप्यवदारब्धसमुदायेतराघटकस्ये'त्याद्यर्थापत्तौ—'मातृमातरौ' इत्यत्रैक-

## ❀ अभिनव-चन्द्रिका ❀

नचैवमपि नित्यैकवचनान्तैकशब्दस्य, नित्यद्विवचनान्तद्विशब्दस्य चैकशेषापत्तिः, 'द्वाभ्या'मित्यत्र 'द्वा' इतिरूपविशिष्टभिन्नत्वस्य''एकस्मै' इत्यत्र'एके'तिरूपे सत्त्वेऽपि स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वस्याभावादिति वाच्यं,'स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्वे सति स्ववृत्तिरूपविशिष्टरूपवत्त्व'मिति परिष्कारेणादोषात् । सत्यन्तदले रूपवैशिष्ट्यञ्च रूपे 'स्वविशिष्टभिन्नत्व', 'स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यो'भयसम्बन्धेन । 'स्वविशिष्टभिन्नत्व'मित्यत्र वैशिष्ट्यञ्च 'स्वसामानाधिकरण्य' 'स्वाश्रयप्रकृतिकविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्यो'भयसम्बन्धेन । द्वितीयदले रूपवैशिष्ट्यञ्च रूपे-'स्वाश्रयप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्य' सम्बन्धेन। द्वितीयदलदानादेकद्विशब्दयोर्नैकशेषः । प्रथमदले रूपे रूपवैशिष्ट्यघटक'स्वविशिष्टभिन्नत्व'दानान्मतिजरादिशब्दानामेकशेषः सिद्धः । स्वविशिष्टभिन्नत्वघटकवैशिष्ट्ये—'स्वाश्रयप्रकृतिके'त्यादिसम्बन्धदानात्सञ्ज्ञाभूतसर्वशब्दसर्वनामसर्वशब्दयोर्नैकशेषः । तत्रैव स्वसामानाधिकरण्यमात्रोक्तावसम्भवः । रूपवैशिष्ट्ये 'स्वाश्रयप्रकृतिके'त्यादिमात्रोक्तावपि असम्भव एवेति दिक् ।

## ❀ वरवर्णिनी ❀

शेषापत्तिः, सारूप्यवन्मातृशब्दारब्ध'मातृमातृ'समुदायेतराघटकत्वान्मातृशब्दस्य । नापि सारूप्यवति—सरूपे-एवकारार्थान्वयः, तथा सति—'सारूप्यवदारब्धसमुदायघटक—सारूप्यवदन्यारब्धसमुदायाघटके'-त्याद्यर्थनिष्पत्तावपि—मातृशब्दयोरेकशेषापत्तेरनुद्धारात् , प्रत्युत रामश्च रामश्च कृष्णश्च—रामकृष्णा इत्यत्र 'रामरामकृष्णा'इत्यापत्तेश्च, सारूप्यवत्कृष्णारब्धसमुदायघटकत्वाद्रामशब्दस्येतिचेन्न, सारूप्ये एव एवकारार्थस्यान्वयेन एवार्थस्य—स्वीभेदप्रतियोगितावच्छेदकव्यधिकरणधर्मानवच्छिन्नत्वनियमात्स्वीयभेदप्रतियोगितावच्छेदकाभाववद्व्यवच्छेदकतया—स्वीयभेदप्रतिगितावच्छेदक—सारूप्य—व्यधिकरण-वैरूप्यानधिकरण —सारूप्यवदारब्धसमुदायघटकस्येत्याद्यर्थलाभान्मातृशब्दादावतिव्याप्तेरभावात् । नन्वेवमपि रामशब्दादौ यत्किञ्चित्प्रतियोगिकवैरूप्यस्यापि सत्त्वादव्याप्तिरस्त्येवेति चेन्न, ययोरेकशेषश्चिकीर्षितस्तयोरेव परस्परं तादृशसारूप्यस्य विवक्षणेनादोषात् । सूत्रे सरूपपदञ्च धर्मपरनिर्देशेन सारूप्यपरम् , एवकारस्तत्र तात्पर्यग्राहक इति न तत्रान्वये एकदेशान्वयप्रसक्त्याव्युत्पत्तिभङ्गभीतिरिति—'वैशद्येनापि व्याचक्षते ।

परिष्कारकुशलास्तु—'यत्किञ्चित्पदविशिष्टत्वं सारूप्यम् । वै० 'स्ववृत्तिरूपवत्त्व' 'स्वावृत्तिरूपाभाववत्त्वै'तदुभयसम्बन्धेन । वृत्तिता च समवाय-स्वोद्देश्यत्वान्यतरसम्बन्धेन । येषामेकशेषश्चिकीर्षितस्तत्समुदायघटकान्यतमः-स्वम् । एवञ्च मातृत्वादीनामपि स्वोद्देश्यत्वसम्बन्धेन मातृशब्दवृत्तित्वेऽपि स्वावृत्तिमातात्र्वादिरूपवत्त्वस्यैव सत्त्वान्नैकशेषः । न च वर्णवाचकहरिणीशब्दमृगीवाचकहरिणीशब्दयोरेकशेषानापत्तिः, तद्धिते तयोः क्रमेण हारितं हारिणमित्यादिरूपसत्त्वेनान्यतरावृत्तिरूपस्यान्यतरत्र सत्त्वादिति वाच्यं, यत्किञ्चित्पदविशिष्टत्वन्तत्त्वं, वै० 'स्ववृत्तिरूपवत्त्व' 'स्वावृत्तिविभक्त्यव्यवहितपूर्वत्वावच्छिन्नरूपाभाववत्त्वै'तदुभयसम्बन्धेनेति विवक्षणेनादोषात् । न चैवमपि 'मातृमातरा'वित्यत्र स्वं-परिच्छत्तृवाची मातृशब्दस्तद्वृत्तिरूपं ( औ मातरीत्येवं रूपमुभयोरिति ) मातृत्वमपि, तस्य जननीवाचिमातृशब्दे सत्त्वेन स्वावृत्तिरूपपदेन घटत्वादिरूपमादाय तदभाववत्त्वस्य सत्त्वादेकशेषापत्तिर्दुरुद्धरेति वाच्यं, पूर्वोक्तवैशिष्ट्यघटकप्रथमसम्बन्धस्थाने'स्ववृत्तियावद्रूपवत्त्व'स्य निवेशेन तादृशयावदन्तर्गतमातात्र्वादिरूपवत्त्वस्य जननीवाचिमातृशब्दे विरहेण एकशेषाप्राप्तिः सामञ्जस्यात् । नन्वेवं प्रथमसम्बन्धोपादाने हरिणीशब्दे द्वितीयसम्बन्धसत्त्वेऽपि स्ववृत्ति'हारितत्व''हारिणत्वै'तदन्यतररूपस्यान्यतरस्मिन्नभावेन स्ववृत्तियावद्रूपवत्त्वविरहेणैकशेषानापत्तिरिति वाच्यं, स्ववृत्तिविभक्त्यव्यवहितपूर्वत्वावच्छिन्नयावद्रूपवत्त्व' 'स्वावृत्तिविभक्त्यव्यवहितपूर्वत्वावच्छिन्ना-

॥ अभिनव-चन्द्रिका ॥

परे तु एवकारापकर्षे न मानम्। अत एव 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः' माता च जनयित्री, माता च परिच्छेत्ता, उभयोरपि क्वचित्सारूप्यं दृश्यते' इति प्रातिपदिकैकशेषकल्पे एव शङ्का कृता, न तु विभक्त्यन्तैकशेषादिकल्पे—भाष्ये। अन्यथा तस्मिन्कल्प इव तेष्वपि कल्पेषु 'मातृमात्रोः प्रतिषेधो वक्तव्य' इति वचनमारब्धव्यं स्यात्। अत एव 'किमुच्यते प्रातिपदिकैकशेषे 'मातृमात्रोः प्रतिषेधो वक्तव्य'इति ? न पुनरन्यस्यापि विभक्त्यन्तानामेकशेषः—तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात्, तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि—'मातृभ्याश्च' 'मातृभ्या'श्चेति। 'अथ मतमेतत्, विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणेति, प्रातिपदिकानामेकशेषे दोषो भवती'ति भाष्यं सङ्गच्छते। अन्यथा एकस्यैव सूत्रस्य व्याख्याभेदेन एकस्यैव लक्ष्यस्य साधुत्वमसाधुत्वञ्च स्यात्। एतद्भाष्यैकवाक्यतया—'मातृमात्रोः प्रतिषेधो वक्तव्य' इति सामान्यत आरब्धमपि वार्तिकं—सर्वनामस्थानविभक्तिपरत्वविषयकम्बोध्यम्।

---

॥ वरवर्णिनी ॥

भाववत्त्वे'तदुभयसम्बन्धेन यत्किञ्चित्पदविशिष्टत्वं सारूप्यमितिस्वीकारेण हारितत्वादिरूपाणामग्रहणेनादोषात्।

ननु सारूप्यं किं विभक्तित्वावच्छेदेन [ यावद्विभक्तिषु ] विवक्षितं ?, विभक्तित्वसामानाधिकरण्येन [यत्किञ्चिद्विभक्तौ—] वा विवक्षितम् ? आद्ये नित्यबहुवचनान्तदारशब्दस्य दस्यारो दार इत्यर्थकस्य—सर्ववचनान्तस्य दारशब्दस्य चैकशेषानापत्तिः, यावद्विभक्तेरेव तत्राभावात्। अन्त्ये—मातृशब्दयोरपि ङौ सारूप्यादेकशेषापत्तिरिति चेन्न,समानार्थकैकग्रहणाद्दारशब्दे समानविभक्तौ जश्सादौ सारूप्यादेकशेषोपपत्तेः। मातृशब्दे च औजसादौ 'मातरौ' 'मातारौ' इत्यादिवैरूप्यादेकशेषापत्तेरभावाच्च दोषलेशविरहात्। नन्वेवमपि सर्वशब्दयोरेकशेषानापत्तिः, सर्वस्मै-सर्वायेत्येवं तयोर्वैरूप्यदर्शनादिति चेन्न, इष्टापत्तेरिति **केचित्।** **श्रीबालशास्त्रिचरणास्त्विष्टापत्तिमन्यत्यामन्यथैव** दूषयाञ्चक्रुरितिश्रीमदस्मत्पितामह**श्रीस्नेहिरामशास्त्रिपादै**-श्शब्देन्दुशेखर**त्रिपुरसुन्दर्यां** निरूपितन्तत एवावधार्यम्।

अत्र केचित्-**ननु**-क्षतरहितार्थकाक्षतशब्दस्य तण्डुलपर्यायनित्यबहुवचनान्ताक्षतशब्दस्य चैकशेषानापत्तिः, स्ववृत्त्यदन्तत्वरूपस्येतरस्मिन्नित्यबहुवचनान्तेऽवृत्तेरिति चेदुच्यते—यत्किञ्चित्पदविशिष्टरूपवत्त्वं सारूप्यं, वै० स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्व' सम्बन्धेन। वै० 'स्वभिन्नत्व' 'स्वाश्रयोत्तरविभक्तिवृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वो'भयसम्बन्धेन। 'रामौ'इत्यादौ रामवृत्तिरामत्वरूपविशिष्टघटत्वादिरूपवद्घटादिभिन्नत्वाल्लक्षणसमन्वयः। 'स्वभिन्नत्व'निवेशान्न रामशब्दे रामत्वरूपमादाय दोषः। 'स्वाश्रयोत्तरे'त्यादिद्वितीयसम्बन्धनिवेशाच्च न हरिणीशब्दयोरेकशेषानापत्तिः। एवं मातृशब्दयोर्नैकशेषः, उक्तसारूप्याभावात्। अक्षतशब्देऽपि न दोषः, स्ववृत्त्यक्षतत्वरूपवैशिष्ट्यस्य निरुक्तसम्बन्धाभ्यां 'अक्षतात्व'रूपे विरहेण तद्भिन्नत्वस्य तत्र सुस्थत्वादेकशेषसौलभ्यात्।

न चाक्षतशब्दे स्वाश्रयोत्तर-सु-विभक्तिवृत्तिप्रथमात्वरूपविभक्तिविभाजकधर्मवज्जसादिप्रत्ययाव्यवहितपूर्वत्वात्स्वभिन्नत्वाच्चाक्षतात्वेऽक्षतत्वरूपवैशिष्ट्यस्यैव सत्त्वेन रूपविशिष्टरूपवद्भिन्नत्वाभावादेकशेषानापत्तिरिति वाच्यं, द्वितीयसम्बन्धस्थाने 'स्वाश्रयोत्तरविभक्तिविभाजकविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्व'स्यैव निवेशेन-विभक्तिविभाजकप्रथमात्वादिविभाजकैकवचनत्वादिधर्मवत्सुविभक्त्यव्यवहितपूर्वत्वाभावाद्दोषप्रसङ्गविरहादित्याहुः। स्पष्टञ्चेदमभिनव**चन्द्रिकायाम्**। विस्तरस्त्व**भिनवराजलक्ष्म्या**मनुसन्धेयः।

तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्भ्यामि नैकशेषः । न चैकविभक्ताविति व्यर्थं, 'यानि सरूपाण्येवे'त्युक्त्यैवोक्तदोषवारणादिति वाच्यम् ; हरिणस्त्रीवाचकहरिणीशब्दस्य हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य चैकशेषानापत्तेः । पुंवद्भावेन तद्धितादौ

## ❀ अभिनव-चन्द्रिका ❀

*अन्यथा विभक्त्यन्तैकशेषवादिमते 'मातृभ्या'मित्यादावेकशेषो भवति, प्रातिपदिकैकशेषवादिमते एकशेषो न स्यादिति फलभेदः स्यात् ।* तथा च जननीपरिच्छेत्तृवाचकयोर्भ्यामि सारूप्यसत्त्वात्—प्रातिपदिकैकशेषवादिमतेऽप्येकशेषो भवत्येव, केवलं सर्वनामस्थाने एव न भवति, तत्र वैरूप्यात् । न च 'मातृमात्रोः प्रतिषेध' इति वार्तिके एकशेषाकरणेन एवकारापकर्षोऽस्तीति गम्यते; अन्यथा भिसि जननीपरिच्छेत्तृवाचिनोः सारूप्यस्य सत्त्वेन 'मात्रोः प्रतिषेधो वक्तव्यं' इत्येवं वक्तव्यं स्यादिति वाच्यम् , अनुकरणस्वरूपभङ्गभिया एकशेषाकरणेनादोषादित्याहुः। **भ्यामिति ।** भ्यामि सारूप्यसत्त्वेऽपीत्यर्थः । **नैकशेष इति ।** सर्वासु च विभक्तिष्वेकशेषो न भवतीत्यर्थः । **वैरूप्यादिति ।** वर्णवाचक-

## ❀ चिदस्थिमाला ❀

**सरूपाण्येवेतीति** । न तु विरूपाणीत्यर्थः । औजसादिषु सरूपत्वाभावादेव नातिप्रसङ्गोऽत आह—**भ्यामीति** । तदादावित्यर्थः । औजसादिषु वैरूप्यात् । एवकारस्यान्वयितावच्छेदकावच्छेदेनान्वये तात्पर्यग्राहकत्वेन विभक्तित्वावच्छेदेन सारूप्यान्वयलाभात् । अन्यथैकशब्दस्वारस्येन सामानाधिकरण्येन स स्यादिति भावः । नन्वेवमुपस्थितत्वात्तदवच्छेदेन तल्लाभे तद्वैयर्थ्यमित्याशयेनाशङ्कते—**नचैकेति ।** शब्दशास्त्रे विभक्तिवत्तद्धितादीनामप्युपस्थितत्वं, प्रकरणं तु समानमित्याशयेन समाधत्ते—**हरिणेति ।** **पुंवदिति ।**

## ❀ ज्योत्स्ना ❀

नुसारेण—दारा इति । पुंभूम्नि दारा इत्यमरः । वृद्धव्यवहारेणारोपमाह—**एतेनैकस्मिन्नपि गुरवः समागता इत्यादीति । एकशेषानापत्तेरिति ।** नन्वेमपि विभक्तावित्येतावदस्तु, एतेनैकग्रहणन्तु

## ❀ सदाशिवभट्टीयम् ❀

सुबन्तताहेतुकं यत्पदन्तदेकदेशविकृतन्यायेन कृतरुत्वे इत्यर्थः, यथाश्रुतं तु न साधु, तेन न्यायेन विकृतावयवनिबन्धनकार्यस्यानतिदेशात् । मम हेतूपादानन्तूपदेशाप्रवृत्तिद्योतनाय । इदञ्च पक्षद्वयेपि बोध्यम् , अग्नी इत्यत्रेव रुत्वस्यासिद्धत्वात्सुबुद्ध्याप्रवृत्त्या पुनः पदत्वमित्यादिप्रागुक्तञ्च न विस्मर्तव्यम् ।

**सरूप ।** विभक्त्यन्तानां सरूपाणामेकशेष इत्यर्थ इति पक्षसाधारणं फलं वक्तुमाह—**भ्यामीति** ।

## ❀ विषमपदविवृतिः ❀

**सरूपाणामेकशेष एकविभक्तौ** । तन्त्रस्योदाहरणमाह—**यथा भ्यामिति** । भ्याम्यपीत्यर्थः । **अन्ये** तु 'प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः', माता च जनयित्री, मातारौ च धान्यस्य, मातृमातार इति–वैरूप्यविषयोदाहरणोपन्यासेन 'यस्यापि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यस्तस्यापि सरूपाणि 'मातृभ्यां' 'मातृभ्यां' चेति । अथ मतमेतत्, विभक्त्यन्तानां सारूप्ये भवितव्यमेवैकशेषेणे'त्यग्रिमभाष्येण च भ्याम्येकशेषो भवत्येव ।

## ❀ वरवर्णिनी ❀

**परे** तु–यत्किञ्चित्पदविशिष्टत्वं सरूपत्वम् । वै० 'स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्व'सम्बन्धेन । वै० 'स्वभिन्नत्व', 'स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्ववृत्तित्वो'भयसम्बन्धेन । एवञ्च नोक्तस्थलेषु दोषलेश इत्याहुः । नचैवं द्विशब्दयोरेकद्विशब्दयोश्चैकशेषापत्तिः, तथाहि द्विशब्दगतरूपविशिष्टं न त्रिशब्दगतं रूपं, तस्य स्वभिन्नत्वे नाद्यसम्बन्धस्य सत्त्वेऽपि द्वितीयसम्बन्धविरहात्, किन्तु घटत्वादिरूपमेव तथा, तादृग्रूपवद्भिन्न-

वैरूप्यात्। **दृष्टानीति**। 'लौकिके प्रयोगे' इति शेषः। एकशेषश्चायमनैमित्तिकत्वे-नान्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमेवेति एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्यम्।

❀ **अभिनव-चन्द्रिका** ❀

हरिणीशब्दस्य 'हारित'मिति, हरिणस्त्रीवाचकहरिणीशब्दस्य 'हारिण'मिति तद्धितादौ वैरूप्यादित्यर्थः।

❀ **चिदस्थिमाला** ❀

'भस्याढे'इत्यादिना। आदिना क्यजादि। ननु परनिमित्तत्वेन बहिरङ्गतया दीर्घादीनामसिद्धत्वादेवकाराप-कर्षेऽपि तयोस्तत्रैकशेषो दुर्वारोऽत आह—**लौकिक इति**। सारूप्ये तस्या उपलक्षणत्वेन तत्रानिमित्तत्व-फलमाह—**एकेति**। चस्त्वर्थे। तदपवादत्वव्यवहारोऽस्यान्यत्र स्पष्टः। अतएवावैरूप्यमपि प्रातिपदिकांशे

❀ **ज्योत्स्ना** ❀

व्यर्थमेवेति वाच्यम्, 'स्वसा च स्वसा च स्वसारौ च स्वसारः' इत्यादावेकशेषानापत्तेः, विग्रहवाक्य-विभक्त्योः सारूप्याभावात्। एकग्रहणे तु तत्सामर्थ्यादेकशेषान्तरमुत्पन्ना या एकविभक्तिस्तस्या-मन्यतरस्य शेषे वैरूप्याभावस्य विवक्षितत्वात्। नन्वेवमपि तद्वैयर्थ्यं, विभक्तिनिमित्तकार्यात्प्राग-वैरूप्याभावस्य विवक्षितत्वादित्याशङ्क्य 'दृष्टानीत्ये'तद्वाक्यशेषेण व्याचष्टे—**लौकिके प्रयोग इति शेष इति**। एतेन सत्यप्येवकारापकर्षे मातृमात्रोरेकशेषो दुर्वार इत्यपास्तम्। ननु 'विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति चे'ति वाग्भटश्लोकादौ 'च'शब्दबोधितसाहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण द्वन्द्वसाधुत्वम्, विवक्षितार्थप्रतीतिस्तु पाष्ठकी प्रकरणादिना भवति, एवमक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यत्र विवक्षावशादन्तर्भूतचार्थानां क्रियापदानां साहित्यबोधकत्वात्साहित्यावच्छिन्ने साहि-त्यावच्छिन्नान्वयेनैकशेषस्य वक्ष्यमाणरीत्या साधुत्वे साधारणे तन्त्रस्य नेदमुदाहरणं भवत्यतस्तस्य

❀ **सदाशिवभट्टीयम्** ❀

यद्वा एवकारापकर्षाभावे उपलक्षणस्यातिप्रसङ्गमात्रं—**भ्यामीति**। सिद्धान्तपक्षे त्वौजसादावपि तद्व्यावृत्तिः फलं बोध्यम्। ध्वनितश्चेद्भ्यामादावपीत्युक्त्या बृहति [बृहच्छेखरे]। **तद्धितादाविति**। आदिना क्यङ्। 'हारितं' 'हारिणं' 'हरिणीयते 'हरितायते' इत्यत्र। ननु सत्यप्येवकारापकर्षे मातृमात्रोरेकशेषो दुर्वारोऽलौकिके औ-जसादावपि सारूप्यादत आह—**लौकिकेति**। यद्यपि विरूपाणि नेत्यर्थपर्यवसानात्, लौकिके च वैरूप्या-

❀ **विषमपदविवृतिः** ❀

'अर्थविप्रतिषेधादत्रैकशेषो ने'ति कैयटोक्तं तु न युक्तम्, 'तौ'रित्यनुप्रयोगे द्व्यर्थावगतिसम्भवात्, सा च तौ च 'तौ'रित्येकशेषसम्भवात्। 'अर्थविप्रतिषेधे नैकशेष' इति वचनाभावाच्च। अत एव 'प्रातिपदिकानामेकशेष' इति पक्षे 'एकविभक्तौ यानि सरूपाणि तेषामेकशेष' इति एवकाराघटितो वाक्यार्थनिष्कर्षो भाष्यकृता दर्शितः। अपकर्षस्य भाष्यकृता कुत्राप्यनाश्रयणाच्च। अत एव प्रातिपदिकतन्त्रमाश्रित्यैकशेषप्रत्याख्याने न फलभेदः। तत्र हि 'मातृभ्या'मित्यत्र सारूप्यात्तन्त्रं सम्भवति, 'मातरा'वित्यादौ च नेत्याहुः। **तद्धितान्तादौ वैरूप्यादिति**। तथा च यानि सरूपाण्येवे-त्युक्तौ हरिणीशब्दयोरेकशेषो न स्यात्। एवकारानपकर्षे तु जननीवाचिपरिच्छेत्तृवाचिनोरेक-शेषापत्तिरित्युभयतः पाशा रज्जुरिति तत्परिहाराय विभक्तावित्यावश्यकमिति भावः। अन्ये त्वेव-

❀ **वरवर्णिनी** ❀

त्वस्य त्रिशब्दादावक्षतत्वादिति वाच्यं, 'स्वसमानानुपूर्वीकत्व' 'स्वाश्रयप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्य-व्यवहितपूर्ववृत्तित्वै'तत्रितयसम्बन्धेन 'स्ववृत्तिरूपविशिष्टरूपवद्भिन्नत्व'सम्बन्धस्य वक्तव्यत्वात्। न च'जरसा'-वित्यादौ जराशब्दगतरूपविशिष्टजरस्त्वरूपवद्भिन्नत्वाभावाज्जरसावित्यादावेकशेषानापत्तिरिति वाच्यं, 'स्व-भिन्नत्वे'ति प्रथमसम्बन्धस्थाने 'स्वाश्रयवृत्तिभिन्नत्व' सम्बन्धस्यैव वक्तव्यतया स्ववृत्तिजरात्वरूपाश्रयजरावृत्ति-

### ॐ विषमपदविवृतिः ॐ

कारो नापकृष्यतेऽदर्शनात्। मातृशब्दयोस्तूक्तयोभ्याम्येकशेषो भवत्येवेत्युक्तम्। एवं शुद्धक्यन्त-(क्यजन्त)कुमारीशब्दस्यौजसोरेकशेषो भवत्येव, शसि तु न, यण्पूर्वमवर्णाभ्यां रूपभेदात्। 'मातृमात्रोः प्रतिषेधो वक्तव्य' इति वार्तिकन्तूपलक्षणम्। 'एकविभक्ता'विति तु सहविवक्षाया उपलक्षणार्थम्, सहविवक्षायामेकविभक्तेरेव दर्शनात्। तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम्—'एकविभक्ताविति किमर्थम्? 'पयः पयो जरयति' 'वासो वासश्छादयति' 'ब्राह्मणाभ्यां कृतं ब्राह्मणाभ्यां देही'ति असहविवक्षाविषयप्रत्युदाहरणदानेनैकविभक्तावित्यस्य सहविवक्षोपलक्षणत्वं स्पष्टमेव सूचितम्। 'विभक्तिः सारूप्येणाश्रीयत'इति प्रातिपदिकैकशेषोपपादनप्रकरणस्थं भाष्यं त्वेकदेश्युक्तिः। नचैवं सति

### ॐ वरवर्णिनी ॐ

भिन्नत्वं न जरात्वरूपे, किन्तूदासीनघटत्वादिरूप एवेति-घटत्वादिकमेव निरुक्तत्रितयसम्बन्धेन रूपविशिष्टं रूपं, तद्वत्त्वं घट इति—तद्भिन्नत्वस्य जराशब्दे निर्बाधत्वादुक्तदोषविरहात्। नचैवमपि मातृशब्दयोरेकशेषापत्तिः, अम्बावाचिमातृशब्दवृत्तिमातरत्वरूपविशिष्टोदासीनघटत्वादिरूपवद्घटादिभिन्नत्वस्य परिच्छेत्तृवाचिमातृशब्दे सुलभत्वात्, नहि जननीवाचिमातृशब्दवृत्तिमातरत्वरूपविशिष्टं परिच्छेत्तृवाचिमातृशब्दवृत्तिमातारत्व रूपं भवितुमर्हति, जननीवाचिमातृशब्दादाचारक्विबन्ताद्धेतुमण्णिचि 'मातारयती'त्यत्र जननीवाचिमातृशब्देऽपि स्वोद्देश्यत्वसम्बन्धेन मातारत्वरूपस्य वृत्तितया तत्र परिच्छेत्तृवाचिमातृशब्दवृत्तिमातारत्वे स्वाश्रय-(जननीवाचिमातृशब्द-)–वृत्तिभिन्नत्वविरहादिति उदासीनघटत्वादिकमादाय एकशेषापत्तिरिति वाच्यम्। 'स्वाश्रयवृत्तिभिन्नत्व'स्थाने 'स्वविशिष्टरूपभिन्नत्व'सम्बन्धनिवेशेनादोषात्। स्वमत्र रूपम्। वै० 'स्वाश्रयवृत्तित्व' 'स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्ववृत्तित्वो' भयसम्बन्धेन। तदेवमत्र स्वपदेन जननीवाचिमातृशब्दवृत्तिमातरत्वरूपं यदा गृहीतं, तदा—स्वं मातरत्वं, स्वाश्रयो जननीवाचिमातृशब्दः, तदुत्तरजसादिविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यहितपूर्वत्वसामानाधिकरण्यस्य परिच्छेत्तृवाचिमातृशब्दवृत्तिमातारत्वरूपे सत्त्वेऽपि,—स्वं मातरत्वं, स्वाश्रयो जननीवाची मातृशब्दस्तद्वृत्तित्वाभावो मातारत्वरूपे इति स्वविशिष्टं रूपं न मातारत्वं, किन्तु मातरत्वमेव, तद्भिन्नत्वं मातारत्वे, (एवञ्चोक्तसम्बन्धद्वयेन)'स्वविशिष्टरूपभिन्नत्व'सम्बन्धेन स्ववृत्तिमातरत्वरूपविशिष्टं रूपं मातारत्वमेव, (—नोदासीनं घटत्वादि,) तद्भिन्नत्वं न परिच्छेत्तृवाचिमातृशब्दे इति नैकशेषः। 'मातारयती'त्येतत्स्थलीयमातारत्वरूपस्य-जननीवाचिमातृशब्दवृत्तिमातरत्वरूपाश्रयजननीवाचिमातृशब्दवृत्तित्वेऽपि—स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्वत्वसामानाधिकरण्याऽभावान्न तस्य रूपस्य स्वविशिष्टरूपत्वमिति न दोषः। यदि च तदुत्तरत्वरूपानुपूर्व्या जातिविशेषरूपतयोभयत्रैक्यात्पुनरपि 'मातारयती'त्यत्रत्यमातारत्वरूपमादाय दोष इत्युच्यते तदा—आनुपूर्व्यवच्छिन्नवर्णसमुदायस्यैव रूपपदेन ग्रहणं, तादृशसमुदायश्च प्रत्युच्चारणं शब्दानां भेदाद्भिन्न एवेति 'मातारौ' 'मातारयती'त्यत्रत्यमातारितिशब्दसमुदायस्य भेद एवेति गृहाण। यद्वा-'स्वविशिष्टरूपभिन्नत्व'स्थाने 'स्वविशिष्टवृत्तितावद्रूपभिन्नत्वं'देयं, वै० 'स्वाश्रयनिरूपितत्व' 'स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्वत्वनिरूपितत्वो'भयसम्बन्धेन। एवञ्च मातरत्वरूपाश्रयजननीवाचिमातृशब्दोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्व—परिच्छेत्तृवाचिमातृशब्द—निरूपितवृत्तिता—जननीवाचिमातृवृत्तिमातरत्वरूपाश्रयनिरूपिता नास्तीति नोक्तदोषप्रसर इति तत्त्वदृशो मैथिलप्रवरा व्याचक्रुः।

केचित्तु—शब्दविशिष्टशब्दत्वं तत्त्वं, वै० (विभक्तित्वावच्छेदेन)—स्ववृत्तियावद्रूपवत्त्वसम्बन्धेन। एवञ्च मातृशब्दे—विभक्तित्वावच्छेदेन परिच्छेत्तृवाचिमातृशब्दवृत्तियावद्रूपस्य जननीवाचिमातृशब्देऽसम्भवान्नोक्तदोष इत्यप्याहुः। अन्यत्तु तत्त्वं राघवेन्द्राचार्यैर्विषमपदविवृतौ प्रकटितन्तदप्यत्रानुसन्धेयमिति—साम्प्रदायिकाः। इतोऽधिकं जिज्ञासमानैरस्मत्पितामहचरणनिर्मिता शब्देन्दुशेखरत्रिपुरसुन्दरी द्रष्टव्या।

ननु तन्त्रेणैव सिद्धेरिदं व्यर्थम्, 'अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ता'मित्यत्राक्षा इति कारकस्य सकृदुपादानेऽपि सर्वत्रान्वयः। तन्त्रकारणन्तु—शब्दानां तुल्यरूपता। एवम'क्षो भज्यतां भुज्यतां दीव्यता'मित्यपि। तन्त्रं द्वेधा—शब्दतन्त्रमर्थतन्त्रञ्च। शब्दस्य

❀ अभिनव-चन्द्रिका ❀

**तुल्यरूपतेति**। स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेणेत्यर्थः।

❀ चिदस्थिमाला ❀

एव। अत एव च सञ्ज्ञासर्वनामप्रथमाद्योरेकशेषः—अन्यथा जसि 'प्रथमे' इति वैरूप्यान्न स्यादिति बोध्यम्। 'कारकस्ये'त्यनेन विभक्त्यन्ततन्त्रता सूचिता। समभिव्याहृतानेकपदप्रयोगरूपतात्पर्यग्राहकात्साहित्यानवच्छिन्नतयोपस्थितेः। अत्र भिन्नानि शब्दज्ञानानि, भिन्नाश्च तदर्थोपस्थितयः, प्रत्येकान्वयविषयः समूहालम्बनात्मको बोधः, अनेकज्ञानयौगपद्यस्यापि पातञ्जलैरङ्गीकारादितिभावः। तदाह—**सर्वत्रेति**। 'प्रत्येक'मिति शेषः। नचात्र (जात)शास्त्रीयैकशेषेणैव निर्वाहः,—तथासति एकशेषे तच्छब्दमर्यादयेतरनिवृत्तिपूर्वकावस्थितेरेव-प्रतीत्या लोपादिस्थल इव शिष्यमाणस्यैव लुप्यमानार्थाभिधायकत्वावश्यकत्वेनैकपदजन्यैकोपस्थिति-विषयाणां पुष्पदन्तादिपदवदेकत्रान्वयस्यैवौचित्येन च विभक्त्यर्थव्यासज्यवृत्तिसङ्ख्यान्वये तदन्वयितावच्छेदकधर्मावश्यकत्वेन साहित्यभानावश्यकतया चात्रानेकत्रान्वयस्य दुरुपपादत्वादितिभावः।

**तुल्यरूपतेति**। तदुक्तम्—"अक्षादिषु यथा भिन्ना भक्षिभञ्जिदिविक्रियाः। प्रयोगकालभेदेऽपि प्रतिभेदं पृथक्स्थिता॥ अक्षाणां तत्रिणां तन्त्रे उपायस्तुल्यरूपता" इति। एतेन तुल्यरूपत्वे सत्यनेकार्थबोधकत्वं तल्लक्षणं सूचितम्।

एकशेषाविषयोदाहरणमाह—**एवमिति**। उक्तवत्। 'इत्यपी'त्यस्य—'भवति तन्त्रेणे'ति शेषः। नन्वत्र न वास्तवतन्त्रव्यवहारः, तत्तत्कारकशक्तिमतां भिन्नक्रियान्वयितया बोधेन श्रोतुरनेकानुसन्धानाद्बोधेनावृत्तेरेव नात्त्विकत्वात्। अनेकार्थस्थले तात्पर्यग्राहकप्रकरणादीनां क्रमेण ज्ञानात्क्रमेणोपस्थितौ बोधे चाऽऽवृत्तिव्यवहाराङ्गीकारात्, उच्चारणैक्यमात्रेण तु तन्त्रव्यवहारो गौणोऽत आह—**तन्त्रमिति**। यत्तु—'अर्थभेदाच्छब्दभेद'

❀ ज्योत्स्ना ❀

असाधारणमुदाहरणान्तरमाह—**एवमिति**। **अक्षो भज्यतामिति**। अत्र ह्यक्ष इति विभक्त्यन्तं

❀ विषमपदविवृतिः ❀

मातृमातरावित्यत्राप्येकशेषापत्तिः, शिष्यमाणस्य कृतदीर्घत्वे च तेन जननीबोधासम्भवेनाकृतदीर्घत्वे च तेन परिच्छेत्तृबोधासम्भवेनैकशेषाप्रवृत्तेः। एकशेषशास्त्रं हि एकस्य नानेकार्थकतोत्पादकं, किन्तु लोकसिद्धानुवादकम्; न हि लोके दीर्घोपधान्मातृशब्दाज्जननीबोधो ह्रस्वोपधाच्च परिच्छेत्तृबोधो दृष्टः। तदेतदभिप्रेत्य भगवता भाष्यकृतोक्तम्—'शब्दस्य स्वाभाविकी वाऽनेकार्थता स्यात्, वाचनिकी वा'। तद्यदि तावत्स्वाभाविकी—अशिष्य एकशेषः, किं कारणं? एकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्। यदि तर्हि एकेनानेकस्याभिधानं भवति 'प्लक्षन्यग्रोधौ', एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः। इदानीमेवोक्त'मेकेनानेकस्याभिधानं भवती'ति?। सरूपाणामेकेनानेकस्याभिधानं भवति न विरूपाणाम्। किं कारणं सरूपाणामेकेनानेकस्याभिधानं भवति न विरूपाणाम्? अभिधानं पुनः स्वाभाविकमिति। एतद्भाष्येण हि शिष्यमाणस्य विरूपार्थबोधकत्वं स्पष्टमेवोक्तम्। अत एव ङीबन्तङीषन्तहरिणीशब्दयोस्तद्धितविवक्षानिमित्तकपुंवद्भावापेक्षयाऽनिमित्तिकत्वनान्तरङ्गत्वादेकशेषे कृते 'स्वरभिन्नाना'मिति ङीबन्तस्य शेषः, तस्मात्तस्य समूह इत्यर्थेऽणि 'हारित'मिति रूपं न भवति, तच्छब्दघटितस्य विरूपत्वेन हरिणीशब्दार्थाप्रतिपादकत्वात्। यत्र तु तद्धिते द्वयो रूपं समानं तत्र भवत्येवैकशेषः। यथा हरिण्योरपत्ये'हारिणेया'विति, अत्र 'भस्याढे' इति पुंवद्भावो न, 'अढे' इति पर्युदासादित्याहुः। तन्त्रस्योदाहरणमाह—**यथाऽक्षा भज्यन्तामित्यादि**।

पर्यायपरिवृत्त्यसहत्वे आद्यं, यथा–'अक्षा' इत्यादौ। तत्सहत्वे त्वन्त्यं, यथा–'घटा' इत्यादौ। तत्र 'अक्षा भज्यन्तां भुज्यन्ता'मित्यादावन्वयिपदार्थभेदाद्बोद्धुरावृत्त्यैव बोधः,

❀ अभिनव-चन्द्रिका ❀

**पर्यायपरिवृत्त्यसहत्व इति।** पर्यायस्य या परिवृत्तिः=आवृत्तिः, तस्या सहत्वे इत्यर्थः। यस्य शब्दस्य तन्त्रेण निर्देशः कर्तव्यः तत्पर्यायशब्दान्तरासम्भवे शब्दतन्त्रमिति यावत्। **तत्सहत्वे इति।** यस्य शब्दस्य तन्त्रेण निर्देशः कर्तव्यः तत्पर्यायशब्दान्तरसम्भवे अर्थतन्त्रमिति यावत्। वस्तुतस्तु प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताको बोधो यत्र सम्भवति तत्र—अर्थतन्त्रम्। यत्र प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताको बोधस्तत्र—शब्दतन्त्रम्। यथा 'घटा' इत्यत्रैव, घटत्वनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधसम्भवात्। नानार्थस्थले च शब्दतन्त्रमेव, यथा 'अक्षा'इत्यादौ। अत्र हि प्रवृत्तिनिमित्तस्यैकस्याभावेन प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधस्य

❀ चिदस्थिमाला ❀

इति मते सकृत्ताल्वोष्ठपुटव्यापाराद्विनिगमनाविरहेणानेकशब्दानां भेदापह्नवेनोच्चारणमित्याद्यः। 'अर्थभेदेऽपि शब्दैक्य'मिति मते ताल्वोष्ठपुटव्यवहारप्रकाशितैकशब्देनैकवृन्तगतानेकफलन्यायेनानेकार्थसम्बन्धेनानेकार्थबोधादर्थतन्त्रमितिकेचित्, तन्न, अक्षादिस्थले उपपत्त्या शब्दभेदेऽपि लोकानां भेदाप्रतीतेः,पटादिष्वर्थभेदाभावेनोपपत्त्यापि भेदाभावात्, बोद्धृभिरनेकशब्दज्ञानानुभवाच्चात आह—**शब्दस्येति**। 'मतद्वयेऽपी'त्यादिः। शब्दान्वयव्यतिरेकसत्त्वे इति भावः। तत्सहत्वे=शब्दस्य पर्यायपरिवृत्तिसहत्वे। उभयत्रापि सकृदनुसंहितैकशब्देन युगपदनेकार्थबोधः। तत्र=तयोराद्योदाहरणमध्ये। अस्याशय उक्तः। इदमुभयमपि प्रातिपदिकतन्त्रम्, एकक्रियादावेवान्वयसत्त्वात्। तदुक्तं वृद्धैः–'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'ति। तदाह—**अन्वयीति**। तथा च क्वचिद्विभक्त्यन्ततन्त्रमनेकज्ञानयौगपद्यञ्च, क्वचित्प्रातिपदिकतन्त्रं समूहात्मकमेकमेव-

❀ ज्योत्स्ना ❀

तन्त्रेण निर्दिष्टम्। तस्य बह्वर्थत्वेऽप्यप्रातिपदिकत्वाद्बहुवचनाभाव इति बोध्यम्। **पर्यायपरिवृत्त्यसहत्वे इति।** तच्च स्वबोध्यस्यार्थस्यैकेन पर्यायान्तरेणाबोध्यत्वम्। अन्वयिपदार्थस्य=अन्वयानुयोग्येक-

❀ सदाशिवभट्टीयम् ❀

तत्र स सुवार एव,तथापि अन्यतरीयं लौकिकम्, अपरीयमलौकिकमादायाव्याप्तिवारणं शेषफलं बोध्यमिति वदन्ति। अत्रावैरूप्यमपि प्रातिपदिकांश एव,तेन सन्त्रासर्वनाम्नोः प्रथमाद्योरेकशेषोन्यथा जसि प्रथमे प्रथमा

❀ विषमपदविवृतिः ❀

यथाशब्दोऽत्रोदाहरणार्थो न दृष्टान्तार्थः। अक्षशब्दः शकटाक्षस्य बिभीतकाक्षस्य देवनाक्षस्य च वाचकः, एकशेषेण तु नात्र निर्वाहः। एकत्रानन्वयेन सहविवक्षाया अभावात्। तथा च तदर्थमावश्यकेन तन्त्रेणैव निर्वाहे एकशेषारम्भो व्यर्थ इति भावः। एकशेषानिर्वाह्यस्थलान्तरमाह—**एवमक्षो भज्यतामिति।** अत्रैकवचान्तत्वेनैकशेषः शङ्कितुमशक्य इति भावः। **शब्दतन्त्रमर्थतन्त्रं चेति।** अर्थस्य विजातीयत्वे शब्दस्यैकजातीयत्वे शब्दतन्त्रम्। अर्थस्यैकजातीयत्वेऽर्थतन्त्रम्। **पर्यायपरिवृत्त्यसहत्व इति।** पर्यायेण प्रवृत्तिः परिवृत्तिस्तदसहत्वे इत्यर्थः। एकार्थकानां शब्दानां पर्यायेणैवार्थबोधनाय प्रवृत्तिर्न युगपद्भिन्नार्थकानामेकानुपूर्वीकाणामप्यक्षादिशब्दानां युगपदेवार्थबोधनाय प्रवृत्तिरर्थभेदात्। तथा च बिभीतकाक्षबोधकाक्षशब्दस्य देवनाक्षबोधकाक्षशब्देन सह पर्यायपरिवृत्त्यसहत्वे युगपत्प्रयोगार्हत्वे भिन्नार्थत्वे शब्दतन्त्रमित्यर्थः। तत्सहत्वे=पर्यायपरिवृत्तिसहत्वे, एकार्थत्वे इति यावत्। ननु तन्त्रस्थले बोद्धुरावृत्त्यैव बोधः। एकशेषस्थले तु नैव

उच्चारणन्तु तन्त्रेण । अन्वयिपदार्थस्यैकत्वे तु एकोपस्थित्यैवान्वयः; यथा–'अक्षान्पश्य', 'घटान्पश्ये'त्यादाविति चेत्सत्यम् ; 'सरूपाणामेकशेष एवे'तिनियमर्थत्वात् । तत्फलन्तु प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचित्तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः । स चायं नियमो विभक्तौ यानि सरूपाण्येव तद्विषयः, सहविवक्षाविषयश्च ।

अत एव–'विभक्त्यन्तानामेकशेष' इति पक्षे 'द्वन्द्वप्रतिषेधो वक्तव्य' इत्याशङ्क्य–'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्ये उक्तम् । किञ्चासहविवक्षायामपि

### ॐ अभिनव-चन्द्रिका ॐ

असम्भवात् । **एकोपस्थित्यैवेति** । एकरूपपुरस्कारेण नानार्थोपस्थितेषु समभिव्याहृतपदार्थान्वयसम्भवादित्यर्थः । **प्रत्यर्थमिति** । अत्रार्थपदेन प्रवृत्तिनिमित्तनिष्ठप्रकारता ग्राह्या, तथाच यावत्यः प्रवृत्तिनिमित्तनिष्ठप्रकारतास्तावच्छब्दप्रयोगः कर्तव्य इत्यर्थः । अत एव 'घटोयं घटोयं घटोय'मिति प्रवृत्तिनिमित्तनिष्ठप्रकारताभेदेन एकप्रवृत्तिनिमित्तस्थलेऽपि नानाशब्दप्रयोगः कृतो भाष्ये ।

### ॐ चिदस्थिमाला ॐ

तदर्थज्ञानमित्यत्रान्वय्यनेकज्ञानपदसमभिव्याहारस्तादृशैकपदसमभिव्याहारश्च नियामक इति बोध्यम् । तत्फलन्तु=नियमफलन्तु । **प्रत्यर्थेति** । 'अक्षा भज्यन्ताम्' 'अक्षा दीव्यन्ता'मित्यादावर्थमर्थं प्रतीत्यर्थः । अपिर्'थावर्थौ प्रती'त्यादिवक्ष्यमाणसमुच्चायकः । अत एवाह—**कदाचिदिति** । तत्राद्ये बीजस्य सूत्र एवोक्तत्वादन्त्यं प्रमाणयति—**अत एवेति** । सहविवक्षाविषयत्वादेवेत्यर्थः । असहविवक्षायामेकशेषे तु तत्रास्य सावकाशतया निरवकाशत्वाभावेन भाष्योक्तिरसङ्गता स्यादिति भावः । तत्रैव दोषान्तरमाह—**किञ्चेति** ।

### ॐ ज्योत्स्ना ॐ

धातूपस्थाप्यपदार्थस्य । **एकत्वे त्विति** । तिङुपस्थाप्यसङ्ख्याया धात्वर्थेऽन्वयानभ्युपगमात्सङ्ख्याकृतावच्छेदशून्यत्वाद्धात्वर्थस्यैकत्वं मन्यते । अथवैकत्वे इत्यस्यैकधर्मावच्छेदेनोपस्थितिविषयत्वे इत्यर्थः । **एकोपस्थित्येति** । 'अक्षान्पश्ये'त्यतो दृशिकर्मत्वेन बहुत्वेन च रथाक्षबिभीतकाक्षदेवनाक्षाणां त्रयाणामप्युपस्थितेरित्यर्थः । इदन्त्वविभक्त्यन्ततन्त्रमभिप्रेत्य, तदा ह्यक्षानिति नियतविभक्त्यन्तात्प्रतिनियतार्थोपस्थितिर्युज्यते । यदात्वेको रथाक्षो द्वौ बिभीतकाक्षौ शेषा देवनाक्षा दृशिकर्मत्वेन विवक्षितास्तदा प्रातिपदिकतन्त्रं, प्रातिपदिकस्य तत्तत्सङ्ख्याविशिष्टतत्तत्पदार्थोपस्थापनपूर्वकबहुत्वोपस्थापकत्वाद्बहुवचनमिति बोध्यम् । एतेनोक्तरूपेण तत्तदर्थबोध एकशेषं विना न सिद्ध्येदित्यपास्तम् । **नियमार्थत्वादिति** । जातिपक्षे लोकप्राप्तस्य समकालसवर्णग्रहणस्य तपरसूत्रेणेव लोकप्राप्तस्यैकशेषस्यानेन नियमविधानादिति भावः । अत्र दृष्टान्ते समकालसवर्णग्रहणनिवृत्तिरिवेहाप्यनेनैकशेषद्वयनिवृत्तिः फलमित्याह—**तफलन्त्विति** । **विभक्तौ यानि सरूपाण्येव तद्विषय इति** । स चायमर्थ एवकारापकर्षादिलभ्य इति प्रागुक्तम् । **सहविवक्षाविषयश्चेति** । इदञ्च 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे' इति सूत्राद्द्वन्द्वे इत्येकदेशमनुवर्त्य द्वन्द्वे प्रसक्ते–इतिव्याख्यानाल्लभ्यमित्याहुः । आरवैः सहिताः सारवाः, सरय्वां भवाः सारवाः, सारवाश्च ते सारवाश्च ऊर्मयस्तेषु जातः–सारवसारवोर्मिजः । "भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी ध्यानालम्बनतां

### ॐ विषमपदविवृतिः ॐ

तथा च कथं तन्त्रेण निर्वाह इत्याशङ्क्याह—**अन्वयिपदार्थभेदादिति** । **आवृत्त्यैवेति** । शब्दावृत्त्या

तत्प्रवृत्तौ सहविवक्षायां द्वन्द्वस्यैवान्यत्र कर्मधारयस्यापि बाधापत्तौ 'सारवसारवोर्मिज' इत्यादिप्रयोगविरोधापत्तिः। असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण 'ब्राह्मणाभ्यां कृतं देहि' 'पयो जरयती'त्यादि—'नीलोत्पलस्पर्धिनी नेत्रे तनुर्वा हरे'रितिवत् 'विद्वन्मानसहंसे'ति-वच्चेष्टमेवेति बोध्यम्। न चासहविवक्षायां तन्त्रसत्त्वे 'इदित' इति गुरुनिर्देशो व्यर्थः, अन्यपदार्थावगतये तत्सत्त्वात्। इदस्य धातोरिति करणे तु गौरवम्।

एतच्च सूत्रं भाष्ये प्रत्याख्यातम्—'अर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि

**ॐ अभिनव-चन्द्रिका ॐ**

**सरूपाण्येव तद्विषय इति**। तत्र यद्वक्तव्यं तत्पूर्वमेवावोचाम। **अन्यपदार्थावगतय इति**। चिन्त्य-मिदं, चक्षिङ्धातौ नुम्वारणाय 'इचासाविच्चे'ति कर्मधारयं स्वीकृत्य 'इदन्तधातोर्नुम्भवतीति 'इदितो-नुम्धातो'रिति सूत्रार्थस्यावश्यकत्वात्। **अर्थावर्थौ प्रति यदर्थानर्थान्प्रति चेति**। अत्राप्यर्थपदेन प्रवृत्तिनिमित्तनिष्ठप्रकारतैव ग्राह्या।

**ॐ चिदस्थिमाला ॐ**

तत्प्रवृत्तौ=उक्तनियमप्रवृत्तौ। अन्यत्र=असहविवक्षायाम्। **सारवेति**। नन्वेवमसहविवक्षायां तत्रापत्तिरत आह—**असहेति**। 'इत्यादी'त्यस्य**ष्टमेवे**त्यत्रान्वयः। एकशेषे तु बहुवचनद्विवचनापत्तिरिति भावः।

'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः॥१॥
विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते ! दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !।
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो ! साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥२॥

अत्रविदुषां मानसामिवमानसाधिकरणकहंसेत्याद्यर्थः। अत्र शास्त्रीयप्रयोगविरोधं परिहरति—**नचेति**। 'इत' इत्येव ब्रूयादितिभावः। **गौरवमिति**। प्रतिपत्तिगौरवमित्यर्थः, उभयाश्रयणादिति भावः। 'आश्रयणेने'ति

**ॐ ज्योत्स्ना ॐ**

समाधिनिरतैर्नीतेहितप्राप्तये। लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्ति-शमनं नेत्रे तनुर्वा हरेः''इति लिङ्गवचनश्लेषोदाहरणं काव्यप्रकाशनवमे।

''विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते ! दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !।
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो साम्राज्यं वरवीर ! वत्सरशतं वैरञ्चमुच्चैः क्रियाः''इति च श्लिष्टवाचके परम्परितरूपकोदाहरणन्तत्रैव दशमे उल्लासे। **इति बोध्यमिति**।

**ॐ विषमपदविवृतिः ॐ**

पदार्थोपस्थित्यावृत्त्या चेत्यर्थः। **दर्शनेनेति**। 'घटोयं घटोय'मित्यादौ। अन्यत्र=असहविवक्षायाम्। **सारवोसारवोर्मिज इति**। सरय्वां भवः सारवः, 'दाण्डिनायने'ति निपातनात्साधुः। आरवेण सहितः—सारवः। सारवश्चासौ सारवश्चेति कर्मधारयः। तथा चोक्तभाष्येण, 'सारवे'त्यादिमहाकवि-प्रयोगेण च सहविवक्षायामेवोक्तनियम इति सिद्धम्। केचित्तु—'तिष्यपुनर्वस्वो'रिति सूत्राद्द्वन्द्व इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सत्येकशेष इत्याहुः। ननु 'सरूपाणामेकशेष एत्रे'तिनियमवत् 'सरूपाणां सह-विवक्षायामेवैकशेषो नासहविवक्षाया'मित्यपि नियमोऽङ्गीकार्यः, तेन तृतीयान्तचतुर्थ्यन्तयो 'र्ब्राह्मणाभ्या'मित्यनयो'र्ब्राह्मणाभ्यां कृतं' 'ब्राह्मणाभ्यां देही'ति पृथक् प्रयोगः, नत्वेकस्य निवृत्तिः। अन्यथा 'ब्राह्मणाभ्यां कृतन्देही'ति प्रयोगापत्तिरित्याशङ्क्य—द्वितीयनियमं स्वीकृत्योक्तप्रयोगापाद-नेनेष्टापत्तिमाह—**असहविवक्षाविषयेणेति**। **पय इति**। एकं प्रथमान्तमेकं द्वितीयान्तम्। **नीलोत्पलस्पर्धिनीति**। एकं द्विवचनान्तं नपुंसकं नेत्रे इत्यस्य विशेषणम्, एक ङ्यन्तं तनोर्विशेष-णम्। **अन्यपदार्थावगतय इति**। ननु चक्षिङो नुम्व्यावृत्तये कर्मधारस्यावश्यकत्वे एकमितपदं

प्रत्यर्थमेवे'त्याश्रयणेन । अनेकघटादिपदानां साहित्ये वृत्तिरेव नानभिधानात्, एकस्यैव त्वनेकार्थस्य तत्र वृत्तिरभिधानस्वाभाव्यादिति तदाशयः । 'द्विवचनेऽची'त्यादावेकशेषशब्दस्तु भाष्ये तन्त्रपरः । स चोच्चारयितुः, बोद्धुस्त्वावृत्तिरेवेति बोद्धयम् ।

'एकविभक्ता'वित्यत्रैकपदन्तु स्पष्टार्थम्,—'एकस्यामपि विभक्तौ यानि विरूपाणि ने'त्यर्थं स्पष्टं बोधयितुम् । ध्वनितश्चेदं 'विभक्तिः सारूप्ये उपलक्षण'मिति भाष्ये एकपदानुच्चारणेन । समाहारद्वन्द्वविषये तु नैकशेषः, 'एकवच्चास्यान्यतरस्या'मित्यनेनैकशेष-

---

❀ चिदस्थिमाला ❀

पूर्वान्वयि । ननु द्वन्द्वनिवृत्तिः फलमुक्तमिति कथं प्रत्याख्यानमत आह—**अनेकेति** । तत्र=साहित्ये ।

नन्वेकशेषस्य सहविवक्षाविषयत्वे कथमन्यत्र तदुक्तिरत आह—**द्विरिति** । आदिना 'अक्षा भज्यन्ता' मित्यादि । **तन्त्रपर इति** । समानफलकत्वात्तल्लक्षक इत्यर्थः । असहविवक्षायां विभक्त्यन्ततन्त्राङ्गीकारादिति भावः । तत्रापि विशेषं सिद्धान्तभूतमाह—**स चोच्चेति** । 'अनन्यार्थैकग्रहणेन यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ सरूपाणामित्यर्थेन भ्यामादावेकशेषो, नौजसादा'विति—**खण्डनकारोक्ति**'—'पयः पयो नयती'त्यत्र वारणाय सहविवक्षायामेवैकशेष इत्यर्थलाभाय चैकग्रहण'मिति—**रत्नाकरोक्तिञ्च** खण्डयति—**एकेति** । 'स्पष्टार्थं' मित्यस्य व्याख्या—**एकस्यामपीति** । यत्तु 'समाहारद्वन्द्वविषयेऽपि प्रवृत्त्यौचित्यं, सङ्कोचे मानाभावात्, अन्यथा 'घटघट'मित्यस्य साधुतापत्तेः, अनभिधाने च न मानं, सूत्रानर्थक्यापत्तिश्च,'घटघटा'वित्यस्यापि तत एव वारणात् । न च 'घटघट'मित्यत इव'घटा'इत्यतः समूहाप्रतीत्या कथमेकशेषः ? तत्रापि प्रकरणादि-

❀ ज्योत्स्ना ❀

तथाच सत्यप्येकशेषशास्त्रारम्भे तन्त्रन्यायस्यावश्यकतां दर्शयति । सूत्रकृन्मतमुपपाद्य भाष्यमतेन सूत्रप्रत्याख्यानमाह-**एतच्च सूत्रमिति** ।

नन्वेवं सूत्रप्रत्याख्याने-घटघटाविति द्वन्द्वःकस्मान्न भवत्यत आह—**अनेकघटादिपदानामिति** । सूत्रप्रत्ययख्यानवादिमतात्तदारम्भवादिमतस्य दुर्बलत्वं मन्यमानः सत्यपि सूत्रे तत्रैकग्रहणप्रत्याख्यानं (वे यो?) वक्तुमुपक्रमते—**एकग्रहणन्तु स्पष्टार्थमिति** । **इत्यर्थं बोधयितुमिति** । एकग्रहण-

❀ सदाशिवभट्टीयम् ❀

इति वैरूप्यान्न स्यादिति बोध्यमित्यन्ये । नन्वेकशेषस्य सहविवक्षाविषयत्वे कथमन्यत्र तदुक्तिरत,आह-**द्विवचनेति** । **स्पष्टार्थमिति** । सूत्रारम्भसामर्थ्यात्-वक्ष्यमाणेतरार्थस्यापि बोधयितुं शक्यत्वेन च वक्ष्यमाण एवार्थ इति स्पष्टतया बोधनार्थमित्यर्थः । **एकस्यामपीति** । सामानायां त्वित्यर्थः । **बोधयितुमिति** । अन्यथा-'चालनी'न्यायेन भिन्नविभक्तौ वैरूप्यमादायासम्भवः स्यात्, 'रामौ''रामाभ्यां''स्वसा''स्वसारा'वित्यादौ भिन्नविभक्तौ सर्वत्र वैरूप्यस्य सत्त्वादिति भावः । **नैकेशष इति** । तेन'वृद्धो यूने'त्यादिविरूपैकशेषस्य लक्ष्ये 'गार्ग्यौ''गर्गा' इत्यादौ समाहारे एकशेषेण न 'गार्ग्यं' इत्येकवचनं, विभक्त्यन्ततन्त्रन्तु न, वैरूप्यात् ।

❀ विषमपदविवृतिः ❀

व्यर्थमिति चेत्सत्यम् । नन्वर्थं अर्थं प्रति तदपि प्रत्यर्थमिति 'घटघटा'विति द्वन्द्वः कस्मान्न भवतीत्याशङ्क्याह—**अनेकघटादिपदानामिति** । **तन्त्रपर इति** । एकशेषे द्विवचनापत्तेः । सहविवक्षाऽभावेन तदसम्भवाच्चेति भावः । **इत्यर्थं बोधयितुमिति** । एकग्रहणसामर्थ्यादप्यर्थान्तर्भावेण

विषयपदानां समाहारे वृत्त्यभावबोधनात् । 'न ब्राह्मणं हन्या'दित्यादौ तु जातिपक्षेणैव निर्वाहः । अत एव तत्र व्यक्तिपक्षे 'यं कञ्चिद्ब्राह्मणमहत्वा कृती स्या'दिति दूषणं भाष्ये उक्तम् ।

## ❀ अभिनव-चन्द्रिका ❀

**वृत्त्यभावबोधनादिति** । नचान्यतरस्याङ्ग्रहणसामर्थ्येन इतरेतरयोगविषये एव वृत्तिर्नेति कस्मान्न कल्प्यते, तावतापि 'अन्यतरस्या'मित्यस्य सार्थक्यसम्भवादिति वाच्यम्, 'सरूपाणा'मित्यादिनिर्देशाऽन्यथाऽनुपपत्त्या एकशेषविषयपदानां समाहारे वृत्तिरेव नेति कल्पनाया एवोचितत्वात् । **निर्वाह इति** । 'न ब्राह्मणं हन्या'दित्यादौ ब्राह्मणत्वनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधतात्पर्येणेदं ब्राह्मणपदमुच्चरितमित्यर्थतन्त्रेण निर्वाह इत्यर्थः ।

**दूषणमिति** । आवृत्तिमकृत्वा शब्दतन्त्रञ्चानङ्गीकृत्य ब्राह्मणत्वनिष्ठैकप्रकारतानिरूपितैकविशेष्यताकबोधपरत्वे इत्यर्थः ।

## ❀ चिदस्थिमाला ❀

गमकवशात्तत्प्रतीतौ बाधकाभावात् । अन्यथाऽनेकं ब्राह्मणं भोजयेति सामानाधिकरण्यानुपपत्तिः । अत एव 'न ब्राह्मणं हन्या'दित्यादौ व्यक्तिपक्षेऽनेकब्राह्मणहननादावपि प्रत्यवायः शास्त्रकृतामिष्टः, समूहस्य प्राधान्यादेकवचनं, हननान्वयस्तु तत्र बाधात्—व्यक्तिष्वेव, 'ब्राह्मणानां शतं भोज्यता'मितिवत्'—इतिरत्नाकरकृत्खण्डयति—**समाहारेति** । **एकवदिति** । 'नपुंसकमनपुंसकेने'त्येव समाहारेतरेतराभ्यां 'तदिदं वस्त्रं' 'तानीमानि वस्त्राणी'त्यादिसिद्ध्या तद्वैयर्थ्यादिति भावः । एतेन—'उक्तज्ञापकादितरेतरद्वन्द्वविषये तद्विधानेऽपि समाहारद्वन्द्वविषयेऽपवादाभावात्—'घटघट'मितिद्वन्द्वापत्तिः । नच दिक्षु समाहारस्यैवात्राप्यनभिधानात्तदभाव इति वाच्यं, तत्र समाहरणस्य बाधवदत्र तदभावादित्याशङ्क्य—एवकारापकर्षेण 'सरूपाणामेकशेष एव वृत्तिर्नान्ये'तिव्याख्यानेन तद्व्यावृत्तिसिद्धि'रिति **मन्दोक्तमपास्तम्** । उक्तयुक्तेरेवापकर्षो व्यर्थ इतिस्वपूर्वग्रन्थविरोधापत्तेः, तदपकर्षसाफल्यस्यान्यथाप्रागुक्तत्वात्, 'पौनःपुन्यं' 'पौनःपुनिक'इत्यादौ तद्धितवृत्तेर्मातृमातृभ्यां मातृमात्रोरित्यादौ द्वन्द्वस्य चानापत्तेश्चेति दिक् । 'अनेकं ब्राह्मण'मित्यादौ तु लक्षणया सामानाधिकरण्यं बोध्यम् । 'शेष'शब्दश्च निवृत्तिमदवस्थानवाचीतिरत्नाकराद्यसाङ्गत्यायाह—**एकेति** । एतल्लब्धो

## ❀ ज्योत्स्ना ❀

सामर्थ्यादपिशब्दार्थान्तर्भावेण समासाश्रयणादेकस्यामनेकस्याञ्च विभक्तौ यानि सरूपाण्येवेति विधेयसङ्गतैवकारेण स्वाधिकरणे स्वसजातीयव्यवच्छेदबोधनादेकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थस्याक्षेपात्, अन्यथा विभक्ताविव्येतावतैकत्वविवक्षणादेकस्यां विभक्तौ यानि सरूपाण्येव न विरूपाणीत्यर्थलाभादेकग्रहणवैयर्थ्यापत्तिः, तथा च मातृमातरावित्यत्रैकशेषापत्तिस्तत्रापि क्वचिच्छ्रामादावेकस्यां विभक्तौ वैरूप्याभावस्य सत्त्वात् । सत्येकग्रहणे तूक्तरीत्या दोषाभावः । वस्तुतो विभक्तावित्येकत्वस्यानुवाद्यविशेषणत्वेनाविवक्षितत्वाद्विभक्तिसामान्ये यानि सरूपाण्येव न विरूपाणीत्यर्थेनापि मातृमातरावित्यादावेकशेषानापत्तेश्चिन्त्यमेतत् । तस्मादेकशेषप्रवृत्त्युत्तरमेकस्यां विभक्तौ यानि सरूपाणीत्यर्थलाभायैकग्रहणमिति प्रागुक्तमिह तत्त्वम् । **वृत्त्यभावबोधनादिति** । यदि तु

## ❀ सदाशिवभट्टीयम् ❀

सरूपैकशेषस्थले तु तन्त्रेण राम इत्यस्य दुर्वारत्वात् । **अन्यतरस्यामित्यनेनेति** । 'फलषेने'तिवार्तिकस्य

## ❀ विषमपदविवृतिः ❀

समासः । 'सरूपाणी'त्यस्य विरूपाणि नेत्यर्थः । एवञ्चैवकारापकर्षो मास्तु, तदपकर्षे तूक्तार्थसम्पादकैकग्रहणं मास्त्विति भावः । **दूषणं भाष्ये उक्तमिति** । समाहारद्वन्द्वविषये एकशेषे तु एतद्दूषणासं-

शेषशब्दार्थश्चेतरनिवृत्तिपूर्वकमवस्थानं, तदाह—**एक एवेति**। 'एके'ति लुप्तविभक्त्यन्तं पृथक्पदम्। अत एव तत्र 'सरूपाणा'मित्यस्यान्वयः। तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया। तत्र 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायेन श्रूयमाणपदवृत्त्या बोधः।

धातुषु तु नास्य प्रवृत्तिः। एकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्याऽनेकधातुप्रयोगाप्रसक्तेः।

### ॐ चिदस्थिमाला ॐ

'एव'इति भावः। पृथगुक्तिफलमाह—**एकेति**। **लुप्तेति**। शेषशब्दस्य कर्मसाधनत्वे लुप्तस्वन्तं, भावसाधनत्वे लुप्तङ्सन्तमित्यर्थः। तत्र=एकपदार्थे। अन्यथा पदार्थैकदेशत्वान्न स्यात्। तत्र=तयोर्मध्ये। नन्वेवं कथं बोधोऽत आह—**तत्रेति**। निवृत्तेर्लोपवच्छास्त्रीयत्वे सतीत्यर्थः। लक्षणेतिमतसङ्ग्रहायाह—**वृत्त्येति**। एतेन तत्स्मरणाद्बोधः इति निरस्तम्, उक्तयुक्तेः, प्रत्ययानामिति व्युत्पत्तिभङ्गापत्तेः, एकशेषशास्त्रमजानतो बोधानापत्तेश्च। **अनेकेति**। तत्फलानुकूलत्वेन फूत्काराद्यवयवानामित्यर्थः। **निवृत्तेति**। शब्दशक्तिस्वाभाव्येन धातु-

### ॐ ज्योत्स्ना ॐ

समाहारद्वन्द्वविशेष एकशेषः स्यात्तदा शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रं,—'तदिदं शुक्लं' 'तानीमानि शुक्लानी'ति प्रयोगद्वयेऽप्येकशेषे कृते एकत्र समाहारस्यैकत्वादेकवचनस्यान्यत्रेतरेतरयोगे वर्तिपदार्थबहुत्वाद्बहुवचनस्य च सिद्धेः 'एकवच्चास्यान्यतरस्या'मिति व्यर्थं सदुक्तार्थे ज्ञापकं सम्पद्यते। यत्र तु—सोयमाश्विकः, सा चेयमाश्विकी, तच्चेदमाश्विकं कुलं, 'तदिदं सर्वमाश्विकं', 'तानीमान्याश्विकानी'त्यबहुप्रकृतीनां वृत्तिस्तत्र—'फलसेनेति—' वार्तिकेन समाहारद्वन्द्वस्य निषिद्धत्वादप्रसङ्गात्—द्वन्द्वे प्रसक्ते विधीयमान एकशेषस्तदा न प्राप्तः, इतरेतरयोगे तु द्वन्द्वे प्रसक्ते एकशेषो विधेय इति बहुवचने प्राप्ते—एकवचनार्थम्—'एकवच्चास्यान्यतरस्या'मिति स्यादतश्चिन्त्यमेतत्। तस्माद्घटश्च घटश्चानयोः समाहारे 'घट' इत्येकशेषो भवत्येव, न च नपुंसकत्वप्रसङ्गः, समाहारद्वन्द्वे एव तद्विधानात्। एवञ्च 'घटघट'मित्यादेरनभिधानं नाश्रयणीयमित्यपरमनुकूलम्। स्पष्टञ्चेदं बृहच्छब्दरत्ने बृहच्छेखरे च।

**जातिपक्षेणैव निर्वाह इति**। नच जात्याक्षिप्तव्यक्तीनां बहुत्वाद्बहुवचनापत्तिः—तासां विशेषणत्वविवक्षायां जातिप्राधान्यात्तस्या एकत्वादेकवचनस्य न्याय्यत्वादिति भावः। **इतिदूषणं भाष्ये उक्तमिति**। नच तत्र विभक्त्यन्ततन्त्रेणेष्टसिद्धिः, प्रतिव्यक्ति शास्त्रावृत्तिकल्पने गौरवप्रसङ्गात्।

### ॐ सदाशिवभट्टीयम् ॐ

विकल्पेनैकवद्विधायकत्वोक्तेराश्विकादावप्राप्तैकवद्भावविधानार्थमिति न वाच्यम्। ननु तस्य विधित्वेऽप्यबहुप्रकृतेराश्विकादिद्वन्द्वस्य 'द्वन्द्वश्चे'ति नित्यैकत्वे प्राप्ते विकल्पार्थमिति कथं ज्ञापकत्वमिति चेन्न। तेन प्रकरणेन समाहारगतैकत्वानुवादात्। तत्र द्वन्द्ववाच्यसमाहारे वर्तिपदार्थगतसङ्ख्यारोपाभावेप्येकशेषवाच्यसमाहारे तदभावे बीजाभावात्। ननु ज्ञापकेन समाहारे एकशेषाभावेपि द्वन्द्वे 'घटघट'मिति स्यादेवातः सामान्यतो ज्ञाप्यशरीरमाह—**समाहारे वृत्त्यभावेति**। **लुप्तेति**। शेषशब्दस्य कर्मसाधनत्वे लुप्तस्वन्तं, भावसाधनत्वे तु लुप्तङ्सन्तम्। अत एवावस्थानमिति व्याख्यानं सङ्गच्छते। न च भावसाधनत्वे'आकडारे'ति सूत्रस्थभाष्यविरोधः, तत्रहि—एकेति सम्बन्धादेकग्रहणमनर्थं प्रत्याख्यातमिति वाच्यं, भावसाधने शेषशब्दे विभक्तिविपरिणामेनेति विवरणेनैव समाधानात्। **श्रूयमाणेति**। तत्र=एकपदार्थे अस्य फलं 'युष्मदी'ति सूत्रे

### ॐ विषमपदविवृतिः ॐ

गतिरिति भावः। अत्र वदन्ति—सोयमाश्विकः, सा चेयमाश्विकी, तच्चेदमाश्विकं, 'तदिदं सर्वमाश्विकं' 'तानीमान्याश्विकानी'ति अबहुप्रकृतीनां यत्र वृत्तिस्तत्र 'फलसेने'ति वार्तिकेन समाहारद्वन्द्वस्य निषिद्धत्वादप्रसङ्गात्। द्वन्द्वे प्रसक्ते विधीयमान एकशेषस्तदा न प्राप्तः, इतरेतरयोगद्वन्द्वे तु प्रसक्ते एकशेषो विधेय इति बहुवचनप्रसङ्गे एकशेषो विधीयते, बहुवचने प्राप्ते

सरूपाणां किम् ? घटपटौ । 'शेष' इत्येतन्मात्रोक्तौ द्विबह्वोरपि शेषः प्रसज्येत । 'एक' इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात् । तथा चाश्वश्चाश्वश्चेत्यादौ कदाचित् ह्युदात्तवत्त्व–ह्यनुदात्तवत्त्वरूपसाम्यमादायोभयस्वरितैकादेशः प्रसज्येत । न च 'अक्षस्यादेवनस्ये'ति फिट्सूत्रेण शकटाक्षे आद्युदात्तस्य, देवनाक्षे 'फिष' इत्यन्तोदात्तस्य

※ चिद्स्थिमाला ※

वाच्यक्रियायास्ततः कर्त्रादिभेदेऽपि निवृत्तभेदाया एव प्रतीतेरिति भावः । सङ्ख्यापरतयाह—**द्विबह्वोरपीति । एतावदिति** । तन्मात्रेत्यर्थः । **एक इति** । अन्तरतम इत्यर्थः । तदाह—**तथा चेति** । अन्यतरसाम्यमादायान्यतरादेशवदुभयसाम्यमादाय सोऽपि प्रसज्येतेत्यर्थः । उभयोक्तौ शङ्कते—**नचेति** ।

※ ज्योत्स्ना ※

नच प्रागुक्तरीत्या समाहारद्वन्द्वप्रसङ्गेऽप्येकशेषविधानादेकवचनं, जातिपक्षेऽपि व्यक्तिप्राधान्यविवक्षायां तथात्वस्यावश्यकत्वादिति वाच्यं, समाहाराविवक्षायां व्यक्तिपक्षेपि दोषस्य तुल्यत्वात् । एवन्तु जातिपक्षेणैव निर्वाह इत्येवकारश्चिन्त्यप्रयोजनः । भाष्यकृता त्वेकशेषप्रत्याख्यानं लाघवादभ्युपगम्य व्यक्तिपक्षे दूषणमित्युक्तमिति दिक् । **उभयस्वरितैकादेशः प्रसज्येतेति** ।यदि त्वान्तरतम्यघटकोदात्तानुदात्तशब्दाभ्यां तत्सञ्ज्ञकग्रहणात्स्वरितघटकयोस्तयोस्तथात्वाभावादुभयस्वरितैकादेशो न प्राप्नोति, किन्त्वाद्युदात्तत्वानुदात्तत्वरूपान्तर्येणादेशविधाने दोषाभाव इत्युच्यते, तथापि तेनैव रूपेणान्तरतम्याश्रयणे

※ सदाशिवभट्टीयम् ※

स्फुटीभविष्यति । **द्विबह्वोरिति** । सङ्ख्यापरत्वात्साधुत्वम् । अंशाविशिष्टोदात्तकत्वे सत्यंशाविशिष्टानुदात्तकत्वं गृहीत्वोदात्तानुदात्तयुक्तोपि स्यादेवेत्यत आह–**कदाचिदिति । ह्युदात्तवत्त्वेति** । द्वावुदात्तवन्तावस्वशब्दौ यस्य तत्त्वम् । कर्मधारये तु मतुब् न स्यात् । उदात्तशब्दो धर्मिपरः। तस्यैव ग्रहणे मानाभावा-

※ विषमपदविवृतिः ※

एकवचनार्थ'मेकवच्चास्यान्यतरस्या'मिति स्यात् । किञ्चानेनेतरेतरद्वन्द्वयोगे एकशेषाभावो ज्ञाप्यत्वावतापि तस्य सार्थक्यसम्भवात् । तस्माद्घटश्च घटश्चानयोः समाहारे 'घट' इत्येकशेषो भवत्येव । न च नपुंसकत्वप्रसङ्गः, समाहारद्वन्द्व एव तद्विधानात् । एवञ्च 'घटघट' इत्यादेरनभिधानं नाश्रयणीयमित्यपरमनुकूलमिति । अत्र ब्रूमः–समाहारद्वन्द्वविषये एकशेषप्रवृत्तौ—'विभक्त्यन्तानामेकशेष' इति पक्षे'ऽयं तर्हि दोषः–कश्चिद्वचनलोपः, द्विवचनबहुवचनविधिर्द्वन्द्वप्रतिषेधश्चे'ति भाष्यं, 'कश्चिदिति–शिष्यमाणस्यैकवचनस्य लोपो वक्तव्य' इति कैयटग्रन्थश्च व्याकुप्येत । एकवचनान्तस्यापि साधुत्वे तु तदसङ्गतिः, तेनैकवचनान्तस्यासाधुत्वलाभात् । एतद्भाष्यप्रामाण्यादेव समाहारद्वन्द्वविषये नैकशेषः । अत एवैकशेषोदाहरणानि द्विवचनबहुवचनान्तान्येव भगवता भाष्यकृता प्रदर्शितानि, नत्वेकवचनान्तानि । सूत्रशेषे च भाष्ये 'केष्वर्थेषु लौकिकाः शब्दान्प्रयुञ्जते ?, लोके चैकस्मिन्वृक्ष इति प्रयुञ्जते' द्वयो'र्वृक्षा'विति, बहुषु 'वृक्षा' इति । तेन 'गार्ग्यो, हंसः, पिता' इत्यादिभ्य एकवचनान्तेभ्यः क्रमेण गार्ग्यायण-हंसी-मातृबोधो न । 'गङ्गायां मीनघोषा'विति च न । **निवृत्तभेदानामिति** । भेदेनाप्रतीयमानानामित्यर्थः । तथा च तिङन्तेभ्योऽभेदेनैव शब्दशक्तिस्वभावेन प्रतीत्या नानेकशब्दप्रयोगप्रसङ्ग इति भावः । ननु 'मातृमात्रोः प्रतिषेधो वक्तव्य' इति वार्तिकप्रयोगः कथम् ? एकशेषस्य दुर्वारत्वादिति चेन्न; एकशेषे सति विवक्षितार्थानवगमात्तदभावः । एवं ह्यत्रार्थो विवक्षितो 'जननीवाचिनः परिच्छेत्तृवाचिनश्चैकशेषप्रतिषेधो वक्तव्य' इति, एष चार्थो 'मात्रो'रित्युक्ते न गम्यत इति कैयटेन समाधानात् । एतेनाह्नो

चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः स्यादिति वाच्यं, 'स्वरभिन्नानां यस्योत्तरस्वर-विधि'रिति वचनेनैव निर्वाहात्। एकादिदशान्तसङ्ख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः। विंशत्यादौ त्विष्ट एवैकशेष इत्यलम्।

**चुटू**। 'आदिर्ञिटुडव' इत्यत 'आदि'रिति 'षः प्रत्ययस्ये'त्यतः 'प्रत्ययस्ये'ति चानुवर्त्तते, तदाह—**प्रत्ययाद्याविति**। तेन वाचाटे नेत्त्वम्। प्रत्ययेति किम्? चामरा-

ॐ अभिनव-चन्द्रिका ॐ

**स्वरभिन्नानामिति**। स्वरः भिन्नो येषामिति विग्रहः, भिन्नस्वरकाणामिति यावत्।

**अनभिधानादिति**। सङ्कलितसङ्ख्यातात्पर्येणेत्यर्थः, अत एव 'ऊकाल' सूत्रे शेखरे 'एकद्वित्रि-मात्राणा'मिति प्रयोगः सङ्गच्छते।

**चुटू**। **प्रत्ययाद्याविताति**। प्रत्ययबोधकाद्याविल्यर्थः। **नेत्त्वमिति**। आटचि टकारस्य नेत्त्व-

ॐ चिदस्थिमाला ॐ

आद्यशेषस्येष्टत्वादाह—**कदाचिदिति**। अन्यत्रातिप्रसङ्गं निराचष्टे—**एकादीति**। 'एकश्चैकश्च' 'द्वौ द्वौ चे' त्यादाविति भावः। अभ्यर्हितत्वादुपस्थितिक्रमाद्वा एकशेषशब्दस्य पूर्वनिपातः। 'गर्गा' इत्यादौ पितुरेक-त्वात्प्रकृतिरेका, यञस्तु बहवः प्राप्नुवन्ति यद्यपि तथापि यञित्यत्र व्यक्त्यैक्यविवक्षया ते वारणीयास्तदाह—**इत्यलमिति**। आद्यनुवृत्तिफलमाह—**तेनेति**। अत एवाह—**प्रत्ययेतीति**। चामरादाविचेऽन्तोदात्तत्वा-

ॐ ज्योत्स्ना ॐ

प्रमाणाभावात्कदाचिदुदात्तसञ्ज्ञकः कदाचिदनुदात्तसञ्ज्ञकश्चादेशः प्राप्तः—शेषग्रहणेन वारणीय इति स्पष्टं भाष्यकैयटयोः। **एकशेषद्वन्द्वावनभिधानादिति**। तथाचैकशेषप्रकरणे वार्तिकम्—'सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चे'ति। एकावित्युक्ते स्वसहायादेरर्थस्य प्रतीतिर्न, द्वावित्यस्य द्वावित्य-सन्दिग्धेन पदान्तरेण च तद्बोध्यार्थप्रतीतिरित्येकाविति सन्दिग्धे एकशेषो नेति तदर्थः। एवञ्च तुल्य-न्यायाद्द्वन्द्वोऽपि सङ्ख्यावाचकानां न भवति, नह्येकद्व इत्युक्ते विवक्षितार्थप्रतीतिर्भवति। त्रय इति पदान्तरेण च तद्बोध्यार्थप्रतीतिरिति। यत्र तु 'लोचनाधरकृता हृतरागे'त्यादाविव साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण द्वन्द्वसाधुत्वं, पार्ष्ठिकस्तु विशेषबोधः, तत्र विवक्षितार्थस्य पदान्तरेण बोध-

ॐ सदाशिवभट्टीयम् ॐ

दिमं गृहीत्वा स्यादेव दोषः। **स्वरभिन्नेति**। तृतीयासमासः। **दशान्तेति**। अष्टादशान्त्य इत्यर्थः। अग्रे एकोनविंशत्यादौ विंशत्यादाविति बोध्यम्। एकादशादित्यागे बीजाभावादित्यन्ये। **एकशेषेति**। एकश्च एकश्च दश च दश चेत्यादाविति भावः। अत्र द्वन्द्वानभिधानं सरूपे, विरूपे तु द्वादशादावस्त्येव, अत एव विरूप-सङ्ख्यावाचिद्वन्द्वानभिधानप्रतिपादके'स्यदादितः शेषे पुंनपुंसके'त्यत्र शेखरे 'नवान्ताना'मित्येव पाठः।

**विंशत्यादौ त्विति**। सङ्ख्यापरिच्छिन्नसमुदायपराणां, न तु सङ्ख्येयमात्रपराणां; 'ब्राह्मणानां विंशती' इत्यादौ विंशतिसङ्ख्यावच्छिन्नौ द्वौ समुदायावित्यर्थप्रतीतेः, 'विंशती घटा' इत्युक्ते चत्वारिंशतामप्रतीतेः।

चुटू। 'चुट्वषः प्रत्ययस्ये'ति वाच्ये योगविभागादस्यानित्यत्वेन चुञ्चुबादौ नेत्त्वमिति प्रकारस्य

ॐ विषमपदविवृतिः ॐ

मध्ये वा मनोरामरामा'विति प्रयोगोपपत्तिः सङ्गच्छते। अत्र च 'नौवयोधर्मविषमूलमूले'ति निर्देशोपि गमकः। **स्वरभिन्नानामिति**। भिन्नस्वराणामित्यर्थः। ननु स्वरभेदे कथं सारूप्यमिति चेन्न।

ॐ वरवर्णिनी ॐ

**वाचाटे नेत्त्वमिति**। ननु टकारस्येत्सञ्ज्ञायामवशिष्टस्य अकारस्याऽऽकारेण दीर्घैकादेशे कृते टकारो-त्तराकारोच्चारणं व्यर्थम्, अकारोच्चारणं विनापि 'वाचा' इति रूपस्य सिद्धेरित्यकारोच्चारणसामर्थ्याट्टकारस्य-

दावित्त्वं मा भूदिति। चुञ्चुप्चणपोर्यादित्वात्परनिमित्तयलोपस्य बहिरङ्गासिद्धत्वा-त्प्रत्ययादित्वाभावान्नेत्त्वम्।

**न विभक्तौ**। 'हलन्त्य'मित्यस्य निषेधोऽयम्। अनित्यमिदं—थमोर्मकारपरि-त्राणार्थादुदित्करणात्। तेन 'किमोऽत्'—'क्व'ति सिद्धम्। प्राग्दिशीयत्वादयं विभक्तिः।

ॐ अभिनव-चन्द्रिका ॐ

मित्यर्थः। **माभूदितीति**। नच चामरशब्दे चकारस्येत्सञ्ज्ञायामपि चितः प्रत्ययस्यैवान्तोदात्तत्व-विधानान्न दोष इति वाच्यम्, चित्त्वसामर्थ्येनाप्रत्ययत्वेऽपि अन्तोदात्तत्वम्भविष्यतीतिकल्पनेना-दोषात्। **यादित्वादिति**। तथाच प्रत्ययबोधकाऽऽदित्वस्य चुञ्चुप्चणपादौ चकारेऽभावान्न दोष इति भावः। समाधानान्तरमप्याह—**परनिमित्तेत्यादि**। वस्तुतस्तु बहिरङ्गासिद्धत्वस्य नोपयोगः, प्रत्ययबोधकाऽऽदित्वस्याभावादेवेत्सञ्ज्ञाया अप्राप्तेः। **निषेधोऽयमिति**। 'अनन्तरस्य विधि'रिति-

ॐ चिद्स्थिमाला ॐ

पत्तिः, आद्युदात्तः सः। यत्तु 'चुट्ठ षःप्रत्ययस्य'—इति वाच्ये योगविभागादनित्यमिदं, तेन चुञ्चुपादौ नेत्त्वमिति रत्नाकरस्तन्न, भाष्यानुक्तत्वात्तद्ध्वनयन्नाह—**चुञ्चुबिति**। तल्लोपे आह—**परेति**। डादेरित्त्वानापत्त्योप-देशपदाननुवृत्तिरिति तत्तात्पर्यं, तस्य खण्डितत्वाच्च। टीटचोप्येवमित्त्वाभाव इति बोध्यम्।

ॐ ज्योत्स्ना ॐ

यितुमशक्यत्वाद्द्वन्द्वो भवत्येव—'द्व्येकयोर्द्विवचनैकवचन'इति यथा। एतेन'एकद्विकरणे हेतू महापातक-पञ्चके। तृणवन्मन्यते कोपकामौ यः पञ्च कारय'न्निति श्रीहर्षप्रयोगो व्याख्यातः। एवमप्यर्थविवक्षायामेक-शेषस्तत्र न भवति—अर्थाऽसम्प्रत्ययस्य सत्त्वात्। तथा च—'प्रथमेऽष्टादशाध्यायास्तत्र प्रकरणत्रयम्। त्रित्रिद्वादशभिर्लक्ष्यं हीनमध्योत्तमत्वत'इति भागवताऽनुक्रमण्यां बोपदेवो—द्वन्द्वं कृत्वाप्येकशेषं कृतवान् 'नौवयोधर्मविषमूलमूले'तिवद्द्विरूपशब्दसमभिव्याहारान्त्रिरीति नैकशेष इति तद्व्याख्यायां हेमाद्रिः।

चामरादावित्यादिपदाच्चकासादेर्धातोः सङ्ग्रहः। **बहिरङ्गासिद्धत्वादिति**। समुदायादित्वसापेक्षे-त्सञ्ज्ञाया वर्णद्वयमात्रापेक्षलोपस्यैव बहिरङ्गत्वं, सञ्ज्ञाकृतान्तरङ्गबहिरङ्गभावस्तु नाश्रितः। तदाश्रयणेऽपि

ॐ सदाशिवभट्टीयम् ॐ

भाष्यानुक्तत्वेनायुक्तत्वं ध्वनयन्नाह—**यादित्वेति**। टीटचोप्येवमेवेत्त्वाभाव इति बोध्यम्। **असिद्धत्वाच्च**।

ॐ विषमपदविवृतिः ॐ

रूपशब्देन वर्णानुपूर्व्या एव ग्रहणात्। तथा च 'तृज्वत्क्रोष्टु'रिति सूत्रे भाष्यम्—'नहि स्वरो रूपवा'निति।

**न विभक्तौ तुस्माः**। ननु प्राग्दिशीयविभक्तौ नायं निषेधः प्रवर्तते इत्येवोदित्त्वेन ज्ञाप्यता-

ॐ वरवर्णिनी ॐ

त्सञ्ज्ञा न भविष्यतीति न दोषः, न चाकारोच्चारणसामर्थ्याद्दीर्घो नेत्येव कल्प्यते इति वाच्यं, दीर्घविधाय-कस्य साक्षाद्विधिशास्त्रस्य बाधकल्पनापेक्षया इत्सञ्ज्ञाशास्त्रबाधस्यौचित्यादिति चेन्न; संहितासञ्ज्ञाया एव बाधकल्पनेनापि संहिताधिकारविहितदीर्घाप्रवृत्त्या 'वाचा-अ' इति रूपसाधनेनाकारोच्चारणस्य चरिता-र्थतयाऽकारोच्चारणस्य वैयर्थ्याभावेन 'टकारस्येत्सञ्ज्ञा ने'तिकल्पनायाः कर्तुमशक्यत्वात्। किञ्च टकारस्ये-त्सञ्ज्ञायां दीर्घे च कृतेऽपि तन्त्राचः परस्मिन्निति सूत्रे पञ्चमीसमासाश्रयणाद्दीर्घस्य स्थानिवद्भावे 'वाचा' इत्यस्यादन्तत्वादतो भिस ऐसित्यैसादेशे 'वाचै'रिति रूपम्, अकारानुच्चारणे तु 'वाचाभि'रिति रूपमिति-वाचैरितिरूपसम्पत्तयेऽकारोच्चारणं सफलमेव, न व्यर्थमिति—न तदुच्चारणसामर्थ्यादित्सञ्ज्ञाऽभावो लब्धुं शक्यते—अत 'आदि'रित्यनुवर्त्तनीयमेवेति—असद्गुरुचरणाः पण्डितैकशेषाः श्रीहरनारायणत्रिपाठिवरेण्याः।

अत एव दानीमो मस्य नेत्त्वमिति—नव्याः । भाष्ये तु प्राग्दिशीयेष्वस्याप्रवृत्तावुदित्त्वं ज्ञापकमित्युक्त्वा 'दानीञ्चे'ति सूत्रे 'लोपो व्यो'रिति लोपेन यकारं प्रश्लिष्येत्सञ्ज्ञा वारिता। अन्यत्रानित्यत्वस्य फलाभावाच्चैवमेवोक्तम् । लोपस्यासिद्धत्वाच्च नान्त्यत्वमिति बोद्ध्यम् । विभक्तौ किम् ? 'अचो यत्' ।

**अतो गुणे** । 'उस्यपदान्ता'दित्यतो'ऽपदान्ता'दिति 'एङि पररूप'मित्यतः 'पररूप'मिति चानुवर्त्तते । **पुरस्तादिति ।** अत एव 'नादिची'तीज्ग्रहणं चरितार्थम् ।

❀ अभिनव-चन्द्रिका ❀

न्यायादिति भावः । अत्र **फलाभावादिति** । नच 'इटोऽत्' 'औत्' इत्यादौ 'न विभक्ता'विति निषेधाप्रवृत्तये सामान्यतः स्थमोरुकारोच्चारणेन 'न विभक्ता'वितिनिषेधानित्यत्वं कल्पनीयमिति वाच्यं, 'तपरस्तत्कालस्य' इति शास्त्रेण 'अत्' 'आत्' इत्यादीनां सञ्ज्ञात्वेनादोषात् । **असिद्धत्वा-**

❀ चिदस्थिमाला ❀

अत एव=तत्प्रयुक्तविभक्तित्वादेव । 'नव्या'इति सूचितारुचिमाह—**भाष्ये त्विति ।** ननु तथैव कुतो नोक्तमत आह-**अन्यत्रेति**। दानींभिन्न इत्यर्थः। चो—वाक्यालङ्कारे। लोपासिद्धत्वं—बहिरङ्गतया। एतेन तथा शास्त्रिदण्ड्याद्युक्तमपास्तम्। बाध्यविशेषचिन्ताङ्गीकारे गमकमाह—**अत एवेति** । उक्तन्यायाङ्गीकारादेवेत्यर्थः।

❀ ज्योत्स्ना ❀

प्रत्याहारमात्रापेक्षाल्लोपात्प्रत्ययोदित्सञ्ज्ञाद्वयापेक्षेत्सञ्ज्ञाया बहिरङ्गत्वमेवेति चिन्त्यमेतत्। इत्सञ्ज्ञाया अप्रवृत्तिस्तु उपदेशपदानुवृत्त्या बोध्या । **दानीमो मस्येति** । इदमुपलक्षणम्—'सद्यःपरु'दित्यादौ सकारतकारादेरित्सञ्ज्ञा वारितेति । अत्र पक्षे 'सद्यःपरु'दित्यादावित्त्वाप्रवृत्तिर्निपातनाद्बोध्या ।

**असिद्धत्वाच्चेति** । बहिरङ्गत्वादित्यर्थः । अत्राप्युपदेशेऽन्त्यत्वं नेत्येव वक्तुमुचितम् । **न तदन्तस्य सञ्ज्ञेति** । 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहण'मितिनिषेधस्त्विह नोक्तः, 'सामन्त्रित'मितिवन्महासञ्ज्ञा-

❀ सदाशिवभट्टीयम् ❀

'नान्त्य'मिति पूर्ववत् । बहिरङ्गासिद्धत्वादिति भावः । ननु सूत्रे चकाररूपवत्परत्वात्प्रवृत्तावपि प्रयोगे त्वित्सञ्ज्ञालोपाभ्यामेव तन्निवृत्तिर्वाच्येति कथं नान्त्यमिति चेन्न, व्यवसितान्त्यत्वाभावात् ।

❀ विषमपदविवृतिः ❀

मत आह—**अत एवेति** । उक्तज्ञाप्यांशं विहाय सामान्यतोऽनित्यत्वज्ञापनादेवेत्यर्थः । **अन्यत्रेति** । न चौतस्तकारे तत्फलम्, अनुच्चारणेनाप्युपपत्तेः । **एकवचनमिति** । नन्वेकवचनग्रहणेन प्रत्ययग्रहणपरिभाषोपतिष्ठते, एकवचनशब्दस्य प्रत्ययमात्रबोधकत्वाभावात् । 'त्वमावेकवचन' इत्यादावर्थबोधकत्वस्याप्यङ्गीकारात् । 'सुः सम्बुद्धि'रित्युक्तौ तूपतिष्ठेत । न च 'सञ्ज्ञाविधा'-विति निषेधः, यथा सामन्त्रितशब्दयोगार्थोपपत्तये उक्तनिषेधाप्रवृत्त्या तदन्तविधि-स्तथात्रापि तदन्तविधिशङ्काया अनिवारणात् । आमन्त्रणसाधनत्वस्येव सम्बोधनसाधनस्यापि

❀ वरवर्णिनी ❀

**फलाभावाच्चेति ।** ननु'हरौ''क''पथिषीये'त्यादौ तकारस्येत्सञ्ज्ञेति तदनित्यत्वफलमस्त्येवेति चेन्न; 'न विभक्ता'वित्यत्र 'विभक्त—अ—अ—औ' इतिच्छेदेन—'विभक्तिश्चे'त्यत्र च विपूर्वकभजधातोरेव सञ्ज्ञात्व-स्वीकारेण च—'अ—अ—औ' इत्यत्र प्रथमाकारस्य'अमानोनाः प्रतिषेधे' इत्युक्तेर्निषेधार्थकतया—अ—औभिन्न-विभक्तिस्थास्तवर्गसकारमकारा इतो ने'त्यर्थेन 'हरा'वित्यादौ तकारेत्सञ्ज्ञासिद्धेरनित्यत्वज्ञापने फलाभाव इत्याशयादित्यसद्गुरुचरणाः। **परे** तु विभक्ताविति निर्देशादेव तकारेत्सञ्ज्ञेति नानित्यत्वज्ञापने फलमित्याहुः।

तद्धि 'रामा'नित्यादौ निषेधाभावाय, पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव। **नोत्तरानिति**। अनन्तरापेक्षया—उत्तरान्—व्यवहितानित्यर्थः।

**एकवचनं सं**। 'सुः सम्बुद्धि'रित्युचितम्। 'सम्बोधने चे'त्यतः 'सम्बोधने' इत्यनुवृत्तेः सप्तमीबहुवचने न दोषः। 'सम्बुद्धावङ्गस्य गुण' इति व्यवहारान्न तदन्तस्य सञ्ज्ञा। तस्मात्पारायणादावदृष्टार्थमेवैवं न्यास इति बोद्धव्यम्।

**सम्बुद्ध्याक्षिप्तस्येति**। सम्बुद्धेः प्रत्ययत्वेन 'यस्मात्स विहितस्तदादी'-त्यंशोपस्थितिः। स चात्र योग्यतया पञ्चम्यन्त इति भावः। 'प्रत्यये

ॐ अभिनव-चन्द्रिका ॐ

दिति। अत्रापि पूर्ववदेव असिद्धत्वस्य नोपयोग इति मन्तव्यम्। **व्यवहितानिति**। उत्सर्गकर्तृकव्यवधानवत इत्यर्थः। **उचितमिति**। न च सुपोऽपि 'सुः 'सम्बुद्धि'रिति न्यासे सम्बुद्धिसञ्ज्ञापत्तिरिति वाच्यं, तदनुबन्धकपरिभाषया दोषाभावात्। **न दोष इति**। वस्तुतस्तु 'सुः सम्बुद्धि'रित्यत्राऽनुनासिकोकारनिर्देशेन बहुवचनसुपो व्यावृत्त्या तंन्न्यासकल्पे 'सम्बोधने' इत्यनुवृत्तेः फलं चिन्त्यम्। **न सञ्ज्ञेति**। यादृशसञ्ज्ञापुरस्कारेण प्रत्ययानामङ्गाधिकारे निमित्तत्वेनोपादानं तत्सञ्ज्ञाशास्त्रे तदादिविशेष्यकतदन्तविधिर्न भवतीति ज्ञापनादिति भावः।

न च 'सञ्ज्ञाविधा'विति तदन्तविधिनिषेधादेतत्कल्पनाया नोपयोग इति वाच्यम्, एतत्परिभाषाऽनुपयुक्तेति तात्पर्येणैतद्ग्रन्थप्रवृत्तेः। अत एव 'अर्थवदधातुरप्रत्ययः' 'प्रथमचरमतया' 'विभाषाप्रकरणे तीयस्य' 'कृत्तद्धित' 'कृन्मेजन्तः' 'तद्धितश्चा' 'क्त्वातो' 'सामन्त्रित'मित्यादिषु तदन्तविधिः सिध्यति। अन्यथा निरुक्तस्थलेषु तदन्तविधिसिद्धये महान् यत्नः कर्तव्यः स्यादिति गौरवं स्यात्।

न च 'कृदतिङ्' 'ते तद्राजाः' 'ञ्यादयस्तद्राजाः' 'तिङ्शित्सार्वधातुकम्' 'आर्धधातुकं शेषः' 'लिट्चे'त्यादौ एतत्परिभाषाभावे तदन्तविधिः स्यादिति वाच्यं, तृतीयाध्याये 'धातो'रित्यधिकारसत्त्वेन, चतुर्थपञ्चमयोः 'प्रातिपदिका'दित्यधिकारसत्त्वेन च 'प्रत्ययग्रहणे चापञ्चम्या' इति

ॐ चिदस्थिमाला ॐ

**तद्वैयर्थ्यमिति**। 'अची'त्यनुवृत्तौ बाधकाभावादित्यर्थः। ननु 'अनन्तरा'नित्यस्य प्रतिपक्षिणि वाच्ये तथोक्तिरयुक्ताऽत आह—**अनन्तरेति**। तथाचोत्तरत्वमव्यवहितापेक्षं, न व्यवहितापेक्षमिति भावः।

ननु तुल्ययुक्त्याऽऽमन्त्रितसञ्ज्ञावत्तत्सञ्ज्ञाभावाय—तदाश्रयकार्यमत आह—**सम्बुद्धाविति**। व्यवहारात्—सौत्रात्। **तदन्तस्येति**। तथाहि सति 'एङ्-ह्रस्वा'दित्यत्राङ्गाक्षेपासम्भवेन 'हे कतर'दित्यस्यासिद्धिः। एतेन तदर्थं तदितिशास्त्रिदण्ड्याद्युक्तं, 'सामन्त्रित'मित्यत्रत्या मनोरमा समूला चिन्त्या, अन्वर्थसञ्ज्ञावत्—उद्देश्यस्यापि तुल्यत्वात्—सापि प्रत्ययमात्रस्यैवेति स्वीकारादिति शास्त्र्युक्तव्यापास्तं, तद्धनयन्नाह—**तस्मादिति**। कार्यकालपक्षेणाह—**सम्बुद्धेरिति**। **अंश इति**। अङ्गसञ्ज्ञासूत्रघटकेत्यर्थः। परिभाषायां तदंशस्य

ॐ ज्योत्स्ना ॐ

बलात्साहचर्याच्च तदन्तस्यैव सञ्ज्ञाया भवितुं युक्तत्वादिति भावः। **अदृष्टार्थमिति**। सम्बोधने 'सुपां सुलु'गित्यौजसोः सु इत्यादेशे—सञ्ज्ञाया अभावार्थमेकवचनग्रहणमित्यपि न, लक्ष्यादर्शनात्।

ननु सम्बुद्धेरङ्गौपपाद्यत्वस्य साक्षादभावेऽप्यङ्गोपपाद्यप्रत्ययोपपाद्यत्वात्परम्परयाऽङ्गोपपाद्यत्वमस्तीत्या-

ॐ सदाशिवभट्टीयम् ॐ

नन्वन्तरानित्यस्य प्रतिपक्षिणि वाच्ये तथोक्तिरयुक्ताऽत आह—**अनन्तरापेक्षयेति**।

**एङ्ह्रस्वात्**। **पञ्चम्यन्त इति**। नन्वेवमपि कतरदित्यादावतिव्याप्तिर्दुर्वारैव, यस्मात्कतरशब्दा-

ॐ विषमपदविवृतिः ॐ

तदन्त एव सम्भवादित्याशङ्क्याह—**सम्बुद्धाविति**। **इत्यंशेति**। सम्बुद्ध्याक्षिप्तस्येत्यस्य—तदुपस्थापितस्येत्यर्थ इति भावः। **फलाभावादिति**। आक्षेपकोपपत्तिरूपाक्षेपफलाभावादित्यर्थः।

१. पर्वतीयास्तु—'राम' इत्यादौ तद्वारणं फलमित्याहुस्तन्न, 'प्लव'इत्यादिनिर्देशैरेव तद्व्युदासात्।

गृह्यमाणे यस्मात्स विहित' इत्याद्युपतिष्ठते इति 'प्रत्ययग्रहणे यस्मात्स विहित' इत्यादिपरिभाषार्थ इति—'अङ्गस्ये'ति सूत्रे भाष्ये स्पष्टम् ।

अनुमानरूपाऽऽक्षेपस्तु नात्र, फलाभावात् । यथा पीनत्वानुपपत्त्याऽनुमीयमानरात्रि-भोजनस्य पीनत्वोपपत्तिः फलं, न तथा एतत्सूत्रे—तदनुमानेन सम्बुद्ध्युपपत्तिर्भवति ।

❀ अभिनव-चन्द्रिका ❀

परिभाषया तदन्तविधिनिषेधस्य सिद्धत्वात् । न च 'क्तक्तवतू निष्ठा' इत्यादौ तदन्तविधिः स्यादिति वाच्यं, क्तपदस्य प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वाभावेन, क्तवतुपदे प्रत्ययबोधकत्वस्यैव चाभावेन प्रत्ययग्रहणपरिभाषायास्तत्राप्रवृत्तेः । न चैवमपि 'षः प्रत्ययस्य' 'चुटू' 'लशक्वतद्धिते' इत्यादौ तदन्तविधिस्स्यादिति वाच्यं, तत्र प्रत्ययपदस्य प्रत्ययबोधकपरत्वेन प्रत्ययबोधकबोधकत्वेऽपि प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वरूपप्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषायास्तत्राप्रवृत्तेः ।

❀ चिदस्थिमाला ❀

प्रत्यये इत्यन्तयोगविभागेन तदंशमूलकत्वात्तदाह—**प्रत्यये इति** । शेषमाह—**गृह्येति** । **उपेति** च । अयमेव च आक्षिपपदार्थः । तथाच तद्विशेषणत्वमेङादेरिति तदन्तविधिः । तदन्तांशस्तु न, 'प्रत्ययग्रहणे' इतिनिषेधात् । इदमेव सूचयितुमत्राङ्गसञ्ज्ञासूत्रानुपन्यासः । ननु प्रसिद्धाक्षेप एवात्र कुतो नात आह—**अनुमानेति** । अनेन तस्यातिरिक्तत्वं निरस्तम् । व्युत्पत्तिवैचित्र्येण वृत्त्यनुपस्थितस्यापि शाब्देऽन्वय-सम्भवादाह—**फलेति** ।

❀ सदाशिवभट्टीयम् ❀

त्सम्बुद्धिर्विहिता स आदिर्यस्यादडादेशाकारविशिष्टस्य तस्य च ह्रस्वान्तस्य तदादित्वेन ततः परस्य दका-रस्य सम्बुध्यवयवहल्त्वेनेति चेन्न । परिभाषायां तदादिपदे बहुव्रीहिसत्त्वेपि विहितप्रत्ययप्राग्भाग एव

❀ विषमपदविवृतिः ❀

**सम्बुद्ध्युपपत्तिरिति** । प्रयोगे इति शेषः । तथा च प्रयोगे तदुपपत्तये प्रयोग एवाक्षेपः स्यान्न तु सूत्रे इति भावः । आक्षिप्तस्याक्षेपकानुपपादकत्वेनाक्षेपासम्भवमुक्त्वाऽऽक्षेपमूलभूतानुपपत्तेरभावे-नापि तदसम्भवमाह—**किञ्चेति** ।

❀ वरवर्णिनी ❀

**अनुमानरूपाक्षेपस्त्विति** । अर्थापत्त्यात्मकानुमानजन्याऽनुमितिरूपार्थापत्तिस्त्वित्यर्थः । शास्त्रे-अर्थापत्तिपदं-प्रमाणप्रमित्युभयपरं, तत्र प्रमाणरूपार्थापत्तिः-परस्परविरुद्धधर्मद्वयघटितहेतुरूपा । प्रमिति-रूपा तु-शाब्दबोधविशेषात्मकश्रुतार्थापत्तिनाम्नी एका, यथा-'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते'इतिवाक्य-जन्यबोधः-अध्याहृतरात्रिभोक्त्रादिविषयकः । अनुमितिविशेषात्मिका दृष्टार्थापत्तिनाम्नी-अपरा, यथा-'अयं रात्रिभोक्ता, दिवाभोजनकर्तृत्वाभावविशिष्टपीनत्वा'दिति । अत्र हेतौ-परस्परं विरुद्धौ धर्मौ भोजनकर्तृत्वा-भाववत्त्व-पीनत्वरूपौ । एवं 'जीवंश्चैत्रो गृहे नास्ती'त्युक्तौ—अन्यत्र प्रतीतिरर्थापत्तिरूपा,—'चैत्रोऽन्यत्र सत्तावान्, जीवित्वे सति गृहसत्त्वाभावात्', अत्र जीवित्वसत्ताऽभाववत्त्वे परस्परं विरुद्धौ धर्मौ । श्रुतार्था-पत्तावन्यत्राऽस्तीत्यध्याहारो बोध्यः ।

इयं—अर्थापत्तिः प्रत्यक्षादिचतुष्टयातिरिक्तप्रमाणान्तरं, तज्जन्यज्ञानात्मिकाऽर्थापत्तिरपि—प्रत्यक्षशब्दानु-मित्युपमितिभिन्नेति **मीमांसकमतम्** । **तार्किकास्तु**—अनुमानविशेष एवार्थापत्तिः, विशेषश्च-विरुद्धधर्म-द्वयघटितत्वस्वरूप एव, तज्जन्यं ज्ञानमपि—अनुमितिविशेषरूपमेव, अवश्यक्लृप्तप्रमाणचतुष्टयातिरिक्ते बल-वत्तरप्रमाणाभावादित्याहुरिति श्री**बालशास्त्रि**चरणानुयायिनः । अनुमित्यभावे हेतुमाह—**यथेत्यादिना** । अर्थापत्त्यात्मकानुमानस्य सम्भव एव नेति भावः ।

किञ्च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि–ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः। अत एवाङ्गस्येति सूत्रे–'तत्स्थाने प्रत्यये इत्यधिकारः कार्य' इति पक्षे–'प्राकरो'दित्यादौ उपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य–'प्रत्ययग्रहणे यस्मात्स विहितस्तदादे'रिति परिभाषो-

ॐ अभिनव-चन्द्रिका ॐ

न चैवमपि 'ईदूदेद्द्विवचन'मित्यादौ तदन्तविधिप्रसङ्ग इति वाच्यं, श्रुतानुमितपरिभाषया 'ईदूदे' दित्यस्य द्विवचने एव विशेषणत्वेन सत्यामपि तदन्तविधौ क्षत्यभावात्। न चैवमपि 'तरप्तमपौ घ' इत्यादौ तदन्तविधिप्रसङ्गो दुर्वार इति वाच्यं, 'परौ तरप्तमपौ घ' इति न्यासेन कस्मात्परा-

ॐ चिदस्थिमाला ॐ

दोषान्तरमाह—**किञ्चेति**। 'प्रयोगे' इति शेषः। अत एवाह—**शास्त्रे इति**। अत एव= उक्तहेतुद्वयादेव। 'सूत्रे' इत्यस्य 'समाहितं भाष्ये' इत्यत्रान्वयः। **प्रत्यये इति**—सप्तम्यन्तम्। **आशङ्क्येति**। तदन्तविधिना विशिष्टस्य प्रत्ययान्तत्वादिति भावः। **यस्मादिति**। एवञ्च विशिष्टस्य न प्रत्ययान्तत्वमिति नोक्तदोष इति भावः। एतेन 'तत्र परस्परं प्रति अङ्गसञ्ज्ञाभावा'दिति

ॐ ज्योत्स्ना ॐ

शङ्क्याह—**किञ्चेति**। **ज्ञाने तदपेक्षत्वाभावेनेति**। यद्यपि प्रातिपदिकात्परः प्रातिपदिकोद्देश्येन विधीयमानः सुपदबोध्यैकवचनसञ्ज्ञः सुः–सम्बुद्धिसञ्ज्ञ इति स्वादिविधिसुप्सञ्ज्ञैकवचनसञ्ज्ञा-

ॐ सदाशिवभट्टीयम् ॐ

गृह्यते, प्रत्ययेऽङ्गमित्युत्तरसूत्रे तस्यैव सम्भवेनार्थाधिकारानुरोधात्। तथाविधस्य च प्रकृते ह्रस्वान्तत्वाभावात्, हलश्च ततः परत्वाभावात्। अत एव तत्र तत्र प्रत्ययग्रहणे शब्दस्वरूपं विशेष्यमादाय तदन्तविधिरित्युच्यते। उक्तार्थकतदादिपदस्य प्रत्ययान्तेन सामानाधिकरण्यासम्भवेन तस्य विशेष्यत्वासम्भवात्। नन्वेवं प्रदेशे तेन तस्य कथं सामानाधिकरण्यमिति चेदन्वयादिबाधेन शब्दाधिकारस्वीकारादिति गृहाण। यद्वोपस्थाप्यतदादि-पदेऽर्थवानेवान्यपदार्थः—अर्थाधिकारादिति–न क्वापि दोषशङ्कालेशः। विकरणान्तस्याप्यर्थवत्त्वमस्त्येव, 'कतर'दित्यत्र तु दकाररहितस्य नेति, प्रकृतसूत्रस्थभाष्यमपीह मानं, तत्र हि विहितविशेषणं हल्ग्रहणं यस्माद्ध्रस्वात्सम्बुद्धिर्विहितेति। विधीयतेऽस्माद्धिहितं, बाहुलकादपादाने निष्ठा। ह्रस्वपदं तद्विशेषणं, नतस्त-दन्तविधिः। यस्मात्सम्बुद्धिर्विहिता तस्माद्ध्रस्वान्तात्परः सम्बुद्धेर्हल्लुप्यत इति सूत्रार्थः, यथाश्रुतं तु न युक्तम्, 'हे राम' 'हे स' 'हे गौरी'त्यादावव्याप्तेः। तदादीत्यस्योक्तार्थकत्वन्ध्वनयितुं विहितेति प्रकृता-भिप्रायकमुक्तमिति दिक्। **स्पष्टमिति**। अयमेवात्राक्षेपपदार्थः, एकदेशस्तद्विशेषणत्वात्तदन्तविधिरत एवा-त्राङ्गसञ्ज्ञासूत्रानुपन्यासः। ननु प्रकृतिमन्तरा प्रत्ययानुत्पत्या तेन तदुत्पत्तिर्भवत्येवात आह—**किञ्चेति**।

ननु रात्रिभुक्तिरपि पीनत्वजनिकैवेति तत्रापि तज्ज्ञाने तदनपेक्षत्वमेवात आह—**शास्त्र इति**। दिवा-भुञ्जानत्वे सति पीनत्वमित्यर्थस्य तादृशानुमितिं विनापि विरोधग्रस्तत्वात्तत्र लोके सम्भवत्येव सः, प्रकृते तु न तथा गमकमिति भावः। ननु तदादेः परम्–एकवचनं सम्बुद्धि'रित्यर्थाज्ञानेप्यपेक्षैवात आह—**अत एवेति**।

ॐ वरवर्णिनी ॐ

ननु विधायकशास्त्रजन्यज्ञाने परत्वेन भानेन स्वस्वप्रकृत्यन्यतरार्थाभिधायकत्वविशिष्टपरत्वविशिष्टस्यैव प्रत्ययत्वेन परत्वस्यावध्यंशे नित्यसाकाङ्क्षतया तदाकाङ्क्षाशान्तयेऽङ्गपदाध्याहार उचितोत आह—**किञ्चेति**।

**प्रत्ययस्योत्पत्तावित्यस्य** बाहुलकात्करणे क्तिना–प्रत्ययविधायकशास्त्र इत्यर्थो बोध्य इति भावः। ज्ञाने=सर्वज्ञाने। सर्वज्ञाने परत्वेनाप्रतीयमानत्वादित्यर्थः। प्रत्ययत्वहेतुकानुमितिस्तु न, व्यभिचारादिति—जटाजूटकृतः।

पस्थित्या समाहितं भाष्ये, न त्वङ्गाक्षेपेणेति दिक् ।

अङ्गस्य—उक्तार्थस्य । 'हल्ङ्या'बिति सूत्राद्धलित्यनुवर्तते । हे **कतरदिति** । प्रकृत्यकारस्य टिलोपेनापहारादिति भावः । नन्वङ्गात्परस्याः सम्बुद्धेरवयवस्य हलो लोप इत्युचितम्, सम्बुद्ध्याक्षिप्तस्य सम्बुद्ध्यैवान्वयस्योचितत्वादत आह—**कुलेतीति** । अत्र

**ॐ अभिनव-चन्द्रिका ॐ**

विति नियतावध्याकाङ्क्षायामुपस्थितप्रातिपदिकादित्यस्यान्वयेन 'प्रत्ययग्रहणे चे'तिपरिभाषया तदन्तविधेरभावादिति दिक् । **दिगिति** । न चाङ्गस्याऽऽक्षेपाभावे 'कतर'दित्यादौ दोषो दुरुद्धरः, ह्रस्वान्ततदाद्यवहितोत्तरत्वविशिष्टस्य सम्बुद्ध्यवयवहलः सत्त्वात्, 'भवामि' 'भविष्यामी'त्यादौ दीर्घसम्पत्तये 'तदादे'रित्यत्र स आदिर्यस्येति बहुव्रीहेरावश्यकत्वात् । न च 'ह्रस्वान्ततदादे'रित्यस्य सम्बुद्धौ विशेषणत्वेन न दोष इति वाच्यं,'कुले'त्यादौ मकारस्य लोपानापत्तेरिति चेत्; मैवम्, एङ्-साहचर्येण ह्रस्वस्यापि सम्बुद्ध्यनवयवस्य ग्रहणेनादोषात् । वस्तुतस्तु एवं साहचर्येण 'कतर'दित्यादौ दोषवारणे तु तदादेरित्यस्योपस्थित्या अङ्गाक्षेपस्य खण्डनं शेखरोक्तं वृथैवेति बोध्यम् ।

**ॐ चिदस्थिमाला ॐ**

भाष्यमुपादाय'प्रकृतिमन्तरेण प्रत्ययस्याभावात्तद्विधौ निमित्तत्वेनाश्रयणाच्च प्रकृतिः प्रत्ययनिमित्तं, प्रत्यये परतोऽङ्गसञ्ज्ञाविधानादङ्गं प्रत्ययापेक्षं, तत्रान्यतरस्मिन्नुपादीयमानेऽव्यभिचारादिताक्षेप इति **कैयटोक्तमपास्तम्**, तदाह—**इति दिगिति** ।

तस्यैवाङ्गपदार्थत्वादाह—**उक्तेति**। तस्य विशेष्यं मूलोक्तं समूलयति—**हल्ङ्या बिति** । ह्रस्वान्ता न प्रकृति-रित्याह—**प्रकृत्यकेति** । अङ्गात्=एङन्तात् ह्रस्वान्ताच्चोक्तार्थात् । 'हे कतर'दित्यत्र तावताप्यदोषात्—,

**ॐ ज्योत्स्ना ॐ**

सम्बुद्धिसञ्ज्ञानामेकवाक्यत्वेन विशिष्टार्थबोध इतिसम्बुद्धिज्ञानेऽप्यङ्गोपपाद्यत्वं सम्भवति, तथापि स्वादिविधिवाक्यार्थबोधात्प्राक्तत्रान्तर्गतानामेव सुसञ्ज्ञेत्यभिप्रायेण ज्ञाने तदनपेक्षत्वमुक्तमिति भावः । शास्त्रे='एङ्ह्रस्वा'दित्यादौ । **दिगिति** । यदित्यङ्गसञ्ज्ञाङ्गाधिकारयोरकरणे लाघवानुसन्धाना-त्परिभाषायाः क्वचित्तदन्तांशानुपस्थितावपि तदाद्यंशोपस्थितिर्भाष्ये उक्ता, न तु तयोः सद्भावेऽपि

**ॐ सदाशिवभट्टीयम् ॐ**

**न त्वङ्गाक्षेपेणेति** । नन्वङ्गाधिकाराभावेऽङ्गसञ्ज्ञासूत्रस्याप्यभावेन कथं तदाक्षेपं वदेदिति चेन्न,अङ्गस्येत्यस्याभावेपि 'ह्रस्वान्ङ्गात्' 'इणःषीध्व'मित्याद्यर्थमङ्गसञ्ज्ञासूत्रस्यावश्यकत्वात्, अङ्गपदेन प्रकृते-र्विवक्षणाच्च । **दिगिति** । अनुमितस्य शाब्देऽन्वयित्वाभावाद्विशेष्यविशेषणभावनिबन्धनतदन्तविधेरलाभो-

**ॐ विषमपदविवृतिः ॐ**

उक्तार्थस्य=यस्मात्स विहितस्तदादेरित्यर्थस्य । **अत आहेति** ।

अन्ये त्वङ्गाक्षेपाभावेप्येङ्ह्रस्वात्परा या सम्बुद्धिस्तस्या हलो लोप इत्यर्थेन 'हे कतर'दित्यादौ सम्बुद्धिलोपवारणादङ्गाक्षेपो व्यर्थ इत्याशङ्क्याह—कुलेतीत्याहुः । ननु पौर्वापर्यभावोप्यन्तादिवद्भावे-

१ अन्ये तु—'यस्मात्प्रत्ययविधि'रित्यङ्गसञ्ज्ञाशास्त्रे तस्यादिस्तदादिरितिसमासेन प्रत्ययाव्यवहितपूर्वस्यैव तदादिपदेन यथाग्रहणन्तथा प्रत्ययग्रहणपरिभाषायामपि, एवञ्च 'भवामी'त्यादौ मिबाद्यव्यवहितपूर्वत्वा-त्प्रकृतिनिष्ठादित्वनिरूपकत्वाच्च [-शबन्त'भवे'त्यादिसमुदायस्य-] दीर्घः सिद्धः, 'कतर'दित्यत्र तु प्रत्ययाव्य-वहितपूर्वत्वं नाकारान्ते, दकारमात्रे तु प्रत्ययत्वपर्याप्तेरभावान्न दोष इत्याहुः ।

परत्वात्पूर्वरूपे—उभयत आश्रयणेऽन्तादिवद्भावाभावात्, तत्स्वीकारेऽपि ह्रस्वसम्बुद्ध्योः

❀ अभिनव-चन्द्रिका ❀

अत्रेदम्बोध्यम्, अव्यवहितोत्तरत्वसम्बन्धेन अङ्गत्वव्याप्यत्वस्य सम्बुद्धौ सत्त्वेन तयाऽङ्गाक्षेपेऽपि आक्षिप्तस्य शाब्देऽनन्वयात्,'कतर'दित्यादौ दोषवारणं साहचर्यमन्तरा न भवतीति–परममूलोक्तं न सम्यक्। शेखरोक्तखण्डनन्तु न सम्यक्, अनुमाने व्याप्तिज्ञानस्यैव कारणत्वेन व्याप्येन व्यापकानुमाने बाधकाभावात्। न च श्रुतार्थापत्त्याऽङ्गस्येत्यस्याक्षेप इति–परममूलोक्तं सङ्गतमेवेति वाच्यं, तदभाववत्तानिश्चयमुद्रया तदभावव्याप्यवत्तानिश्चयमुद्रया वा परस्परविरुद्धयोर्धर्मयोर्विरोधपरिहारस्यैवार्थापत्तिफलत्वेन तादृशविरुद्धधर्मद्वयोपादानस्याभावेनार्थापत्तिविषयत्वस्यात्राभावात्। शेखरोक्तं फलाभावेन परममूलखण्डनन्तु न युक्तम्, 'पीनो देवदत्त'इत्यादौ पीनत्वोपपत्तिरूपफलवत् अङ्गाक्षेपेण प्रत्ययत्वोपपत्तिरूपफलस्य सत्त्वात्। 'किम्वे'त्याद्युक्तं शेखरोक्तमप्यसङ्गतमेव, धूमोत्पत्तौ वह्नेरपेक्षासत्त्वेऽपि धूमज्ञाने वह्नेरनपेक्षणेन धूमेन वह्नेरनुमानस्यासङ्गत्यापत्तेरिति दिक्।

अत्रेदं तत्त्वं—'कतर'दित्यादौ अद्डि डित्करणसामर्थ्यादेव अद्डादेशाकारमादाय प्राप्तसम्बुद्धिलोपवारणं, न चाद्डो डित्करणं 'प्रथमयोः पूर्वसवर्ण' इति पूर्वसवर्णदीर्घबाधनार्थमिति वाच्यं, डुकि विधातव्ये अदादेशविधानसामर्थ्येन पूर्वसवर्णदीर्घवारणेन डित्करणवैयर्थ्यस्य सुस्थत्वात्। अन्ये तु—एङ्साहचर्यात्प्रकृत्यवयवो ह्रस्वो गृह्यते इति 'कतर'दित्यादौ न दोषः, सम्बुद्ध्यनवयवत्वेन साहचर्यं स्वीकृत्य 'कतर' दित्यादौ दोषवारणन्तु न सम्यक्, कुले'त्यादौ परादिवद्भावेन सम्बुद्धित्वात्सम्बुद्ध्यनवयवह्रस्वाभावेन लोपानापत्तेरित्याहुः। तत्स्वीकारेऽपीति। 'उभयत आश्रयणे' इति परिभाषाया अनङ्गीकारेणैकत्रान्तादिवत्त्वोभयस्वीकारेऽपीत्यर्थः।

❀ चिदस्थिमाला ❀

प्राचां मतेनाह–उभयत इति। सिद्धान्ते तदभावादाह–तत्स्वीकारेऽपीति। उभयत आश्रयणेऽन्तादिवद्भावस्वीकारेऽपीत्यर्थः। तेन भेदानतिदेशादाह–ह्रस्वेति। ननु स्थानिरूपातिदेशेन तत्सम्भवोऽत आह–

❀ ज्योत्स्ना ❀

तस्योपस्थितिर्युक्ता, पञ्चम्यन्तत्वकल्पने गौरवाच्च। अत एवाङ्गसञ्ज्ञासूत्रे 'परस्परं प्रत्ययसञ्ज्ञाभावा'दितिभाष्यमुपादायाऽव्यभिचारात्परस्पराक्षेपकत्वादित्यर्थः–प्रदीपे व्याख्यात–इत्युच्यते तदाऽऽक्षिप्तस्य शाब्देऽन्वयप्रतियोगित्वानुपपत्तिर्बृहच्छेखरोक्ताऽत्रापीदमर्थत्वेन सूचिता बोद्धव्येत्याहुः।

नन्वेओङिति सूत्रभाष्योक्तस्य'अमि पूर्व'इत्यत्र'पूर्वसवर्ण'इत्यनुवृत्त्या सिद्धे पूर्वग्रहणसामर्थ्याद्यादृशः पूर्वस्तादृशो यथा स्यादित्यर्थाश्रयणाद्वक्ष्यमाणे 'राम'मित्यादौ 'सुपि चे'तिदीर्घो न भविष्यति, अर्द्धाधिकविकारे एकदेशविकृतन्यायस्तु भाष्यकृतैवाङ्गीकृतः, 'सम्प्रसारणाच्चे'त्यत्रोक्तार्थकपूर्वग्रहणानुवृत्तावपि 'हल' इतिसम्प्रसारणानुवादेन विधीयमानो दीर्घो वचनसामर्थ्याद्भविष्यतीत्यत आह—

❀ सदाशिवभट्टीयम् ❀

दिगर्थः। परत्वात्पूर्वेति। लोपेऽपरनिमित्तकत्वेनान्तरङ्गत्वोद्भावने तु प्रतिपदोक्तत्वमस्य बोध्यम्।

ननु तवापि हलि सम्बुद्ध्यवयवत्वम्, अमि सम्बुद्धित्वं, ह्रस्वान्तेऽङ्गत्वमित्युभयत आश्रयणमेवेति तत्र तदभावे कथं सिद्धिरत आह—तत्स्वीकारेपीति। मम तु पौर्वापर्यं नापेक्षितमिति भावः। ननु स्थानिद्वयरूपातिदेशेन

पौर्वापर्यव्यवहारासम्भवात्,-ताद्रूप्यानतिदेशाच्च-ह्रस्वान्ताङ्गात्परसम्बुद्धेरभावान्मलोपो न स्यात्। एवञ्च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति भावः। एतदर्थमेव 'हल्लुप्यते सम्बुद्धेश्चे'दिति व्याख्यातम्, मस्य सम्बुद्धित्वाभात्। अर्द्धविकारेणैकदेश-विकृतन्यायेनापि न सम्बुद्धित्वम्, एकवचनसञ्ज्ञासम्बुद्धिसञ्ज्ञयोरक्तपरिमाणनिष्ठतया तयोस्तेन न्यायेनालाभाच्च। मकारस्यादेशत्वाभावाच्च-नात्र स्थानिवद्भावः।

❀ अभिनव-चन्द्रिका ❀

**ताद्रूप्यानतिदेशादिति**। अन्तादिवृत्तिर्यो वर्णत्वव्याप्यो धर्मस्तद्घटितधर्मस्यानतिदेशादित्यर्थः। वस्तुतश्चिन्त्यमेतत्,—'क्षीरपेणे'त्यादौ 'पे' इत्यत्र एकाजुत्तरपदत्वातिदेशाय—अन्तादिवृत्ति-र्वर्णमात्रवृत्तिस्तत्स्थानिकादेशावृत्तिश्च यो धर्मस्तद्घटितो धर्मो नायातीति 'ताद्रूप्यानतिदेशा'-दित्यस्यार्थस्य वक्तव्यतया ह्रस्वत्वेऽन्तादिवृत्तित्ववर्णमात्रवृत्तित्वोभयसत्त्वेऽपि तत्स्थानिकादेशावृत्ति-त्वस्याभावेन ह्रस्वान्तत्वस्यातिदेष्टुं शक्यत्वात्।

**अर्द्धविकारेणेति**। अर्द्धाधिकविकारेणेत्यर्थः। **अक्तपरिमाणनिष्ठतयेति**। सङ्ख्यात्व-परिमाणत्वै-तदन्यतरत्वव्याप्यधर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयता-वत्त्वरूपाक्तपरिमाणसमनियतधर्माणामेवातिदेशो भवतीति—अक्तपरिमाणनिष्ठविवधत्वादिधर्माणां वीवधादौ अतिदेशायावश्यं वक्तव्यत्वाच्चिन्त्यमिदम्। **आदेशत्वाभावादिति**। न चा'तोऽमि'त्यत्र

❀ चिदस्थिमाला ❀

**ताद्रूप्येति**। यत्तु-"उभयत आश्रयणेऽन्तादिवत्त्वाभावात्-'हे ज्ञाने'त्यादौ परत्वात्पूर्वरूपे ह्रस्वात्परसम्बुद्ध्य-भावान्मलोपो न स्यादित्येतदर्थं तथाव्याख्यानं, तदा हि—ह्रस्वग्रहणं हलो विशेषणं न सम्बुद्धेरिति नोभयत आश्र-यणम्। एतेन ङ्याप: सोरिति निष्कर्षः परास्तः-"इति **शास्त्री**, तत्खण्डयन्नाह—**एतदर्थमेवेति**। अस्यार्थमाह—**मस्येति**। उक्तरीत्येति भावः। ननु ह्रस्वान्ताङ्गत्वमन्तवद्भावेन, लौकिकेनैकदेशेतिन्यायेन सम्बुद्धित्वं मस्यात आह—**अर्धेति**। तन्न्यूनविकारे एव तत्प्रवृत्तेः। अपिः पूर्वसमुच्चये। हेत्वन्तरमाह—**एकेति**। क्रमसत्त्वान्नानुपपत्तिः, 'येन विधि'रित्यत्र भाष्यकैयटयोर्ध्वनितमिदम्। ननु शास्त्रीयोऽस्तु सः। तस्य तत्रापि 'एङ्'रित्यादौ प्रवृत्तेरत आह—**मकारस्येति**। चो व्युत्क्रमे।

❀ ज्योत्स्ना ❀

**एकवचनेत्यादि**। **अनल्विधित्वादिति**। सम्बुद्धित्वस्य स्थान्यलसाधारणत्वाच्चेत्यपि बोध्यम्।

❀ सदाशिवभट्टीयम् ❀

तत्सम्भवोऽत आह—**ताद्रूप्येति**। एतदर्थमेवेत्यस्यार्थमाह—**मस्येति**। असाधारणत्वनिवेश-

❀ विषमपदविवृतिः ❀

नैव साध्यतामत आह—**ताद्रूप्यानतिदेशादिति**। पौर्वापर्यानतिदेशादित्यर्थः। ह्रस्वान्तत्वानति-देशादिति तु नार्थः, तस्य स्वतः सिद्धत्वेनातिदेशानपेक्षणात्। अन्याक्षिप्तस्य=अन्योपस्थापितस्य।

वस्तुतस्तु 'यद्येनोपस्थाप्यते तस्य तेनैवान्वय' इति नियमे मानाभावः, गुणश्रुत्योपस्थापितस्यैक इत्यस्याङ्गेनानन्वयाद्यभिचारश्च। यदि च तस्याङ्गद्वारा गुणेनान्वयस्तर्हि प्रकृतेऽपि हल्द्वारा सम्बुद्ध्याऽन्वय इति तुल्यम्। **एतदर्थमेवेति**। अङ्गादित्यस्य हल्यन्वयसूचनार्थमित्यर्थः।

नन्वेवमपि 'कतर'दित्यत्र लोपो दुर्वारः, अदन्तस्य यस्माद्विहितस्तदादित्वात्, तकारस्य च सम्बुध्य-वयवत्वादिति चेन्न, प्रत्ययघटकभागाघटितस्यैव तदादिग्रहणेनादोषात्। न चैवं कुलेत्यत्र लोपा-नापत्तिः, मकारस्य सम्बुद्ध्यवयवत्वोपपादनायाऽमित्यस्य परादिवद्भावेन सम्बुद्धित्वस्य वक्तव्यतया कुलेत्यस्य प्रत्ययघटकभागघटितत्वादिति वाच्यं, सम्बुद्ध्यवयवत्वस्योपलक्षणत्वेन परादिवद्भावा-नाश्रयणेनादोषात्, मकारस्य सम्बुद्ध्यवयवत्वं पूर्वमासीदेवेत्याशयात्। नन्वेङ्ह्रस्वात्परसम्बुद्धे-

अत एव 'राम'मित्यादौ 'सुपि चे'ति दीर्घो न । न च सम्बुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूताल्धर्मत्वेनामः सम्बुद्धित्वाभावे कथं मस्य सम्बुद्ध्यवयवत्वमिति वाच्यं, सुप्सञ्ज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्ये जायमानैकवचनसञ्ज्ञाया विशिष्टे सत्त्वेन सम्बुद्धिसञ्ज्ञायामित्सञ्ज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात् ।

एतेन'–अद्ड्डादेशेनैव नपुंसकत्वाभिव्यक्तौ 'कुलेतीति' व्यर्थम्–'इत्यपास्तम् ।

ॐ अभिनव-चन्द्रिका ॐ

'म्'इतिच्छेदः क्रियत इति स्थानिवद्भावेन सम्बुद्धित्वमायास्यत्येव, 'म्'इतिच्छेदे'ज्ञान'मित्यादौ 'सुपि चे'ति दीर्घापत्तिस्तु—सन्निपातपरिभाषया—अदन्तमङ्गं निमित्तीकृत्य जायमानो मादेशस्तद्विघातकं 'सुपि चे'तिदीर्घम्प्रति निमित्तं न भवतीति रीत्या वारणीया ।

न च 'रामाये' त्यादौ 'सुपिचे'तिदीर्घसम्पत्तये दीर्घविषये सन्निपातपरिभाषा न प्रवर्तत इति 'ज्ञान'मित्यादौ दीर्घो दुर्वारः स्यादिति वाच्यम्, 'कष्टाये'तिनिर्देशेन सन्निपातपरिभाषाप्रयोज्ये–'स्वोपजीव्यविघातकत्वाभाववा'निितिसङ्कोचे 'ङेर्य' इत्येतद्भिन्नत्वेन सङ्कोचङ्कृत्वा सङ्कुचितसङ्कोचस्य 'सुपि चे'त्यत्रावश्यंकर्त्तव्यत्वेन 'ज्ञान'मित्यादौ दीर्घापत्तिनिरासात् । तदेवं–'सुपि चे'ति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते' इति कौमुदीग्रन्थस्सङ्गच्छते ।

वस्ततस्तु 'सुपि चे'त्यत्र सन्निपातपरिभाषाप्रयोज्ये 'स्वोपजीव्यविघातकत्वाभाववा'निति सङ्कोचे 'ङेर्य' इत्येतदतिरिक्तत्वेन सङ्कोचं कृत्वा सङ्कुचितसङ्कोचे प्रमाणाभावेन—'ज्ञान'मित्यादौ 'सुपि चे'तिदीर्घापत्तेः 'म्'–इति च्छेदः कर्तुं न शक्यते, 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवती'ति 'उच्चैरुदात्त'सूत्रस्थभाष्येण मकारमात्रस्यातिदेशत्वासम्भवाच्च ।

**सम्बुद्धित्वाभावे इति** । सम्बुद्धित्वस्य हे कतरदित्यादौ अदिति समुदाये सत्त्वेन अल्लव्याप्यधर्मघटितत्त्वाभावात्, 'अतो'मित्यत्र स्थानितायाः सुप्त्वावच्छिन्नत्वेनाल्व्याप्यधर्मावच्छिन्नत्व-

ॐ विद्स्थिमाला ॐ

अत एव=उभयोरप्रवृत्तेरेव । एतेन तत्र तदप्रवृत्त्यर्थं पूर्वग्रहणमिति शास्त्र्युक्तमपास्तम् । सिद्धान्ते शङ्कते–नचेति । अल्विधित्वेन–अस्यानल्विधाविति निषेधादिति शेषोऽत्र । तस्य=सम्बुद्धित्वस्य । **अनल्विति** । अलुद्देश्यकविधेयताकत्वाभावादित्यर्थः । **तस्येत्यस्य**–सम्बुद्धिसञ्ज्ञासूत्रस्येत्यर्थे तु यथाश्रुतमेव साधु । तथाच तस्या अपि विशिष्टे सत्त्वेनास्य सुनरामनल्विधित्वमिति भावः । एतेन=उक्तरीत्या साफल्येन । सञ्ज्ञाकृतबहिरङ्गत्वाभावादाह—

ॐ सदाशिवभट्टीयम् ॐ

वादिमूलकृन्मतन शङ्कते—**मात्रनिष्ठेति** । प्रत्याहारपरामर्शवेलायां 'लोपश्च बलवत्तर' इत्युक्तेरुकारनिवृत्त्या तस्य तन्निष्ठत्वमिति भावः । अन्त्यपदस्य साङ्कर्ये लक्षणानङ्गीकर्तृतद्रीत्यैव समाधत्ते—**विशिष्टेसत्त्वेनेति** । त्वन्मते ह्युक्तरीत्या मध्यगानुबन्धनिवृत्तावपि–'इकः' 'सुप'इत्यादिनिर्देशान्यथानुपपत्त्याऽऽद्यन्तपदपरामर्शयोग्ययोः प्रागनिवृत्तिरित्यस्यावश्यंवक्तव्यतया स्वपदेन विशिष्टस्यैव परामर्शात्तस्य विशिष्टे सत्त्वमिति भावः । **विशिष्टस्यैवोद्देश्यत्वेनेति** । एवं च प्रकृतेऽल्वृत्तित्वेपि तस्य न तन्मात्रवृत्तित्वमिति रुत्वस्येवातिदेशो भवत्येवेति भावः । तस्य=सम्बुद्धिलोपस्य । अनल्विधित्वात्=स्थानिसम्बन्ध्यल्मात्रनिष्ठ-

ॐ विषमपदविवृतिः ॐ

लोप इत्यर्थेपि 'कुले'त्यत्र लोपो भवत्येव, 'एकदेशविकृत'न्यायेन मस्य सम्बुद्धित्वात् । तथाचोक्त—व्याख्यानक्लेशो व्यर्थ एवेत्याशङ्क्याह—**मस्येति** । 'सम्बुद्धित्वाभावा'दिति हेतो 'र्ह्रस्वान्ताज्ञातपरसम्बुद्धेरभावा'दिति—व्यवहितसाध्येनान्वयः । **स्थानिभूतात्वधर्मत्वेनेति** । अल्स्थानिभूतो यः 'सु'रिति समुदायस्तद्धर्मत्वाभावेनेत्यर्थः । तथा च 'स्थानिवदादेश' इत्यत्र स्थानिपदस्यादेशविधायकशास्त्रघटकस्थानषष्ठ्यन्तपदजन्यप्राथमिकोपस्थितिविषयपरत्वेपि सम्बुद्धित्वस्य तद्धर्मत्वाभावादतिदेशो न स्यादिति शङ्काभिप्रायः । **तस्यानल्विधित्वादिति** । तस्य=सम्बुद्धित्वस्य । अनल्धर्म-

**एङ्ग्रहणं किमिति।** 'हरे' 'विष्णो' इत्यादावङ्गाधिकारस्थात्—परनिमित्ता-पेक्षाच्च—गुणात्पूर्वं ह्रस्वान्तत्वादेव सिद्धिः। सेप्रभृतीनां सम्बोधने प्रयोगसत्त्वे एग्रहणेनैव सिद्धेः प्रत्याहारग्रहणं व्यर्थमिति प्रश्नः। **हरे इति।** सामर्थ्यादेवात्र सन्निपातपरिभाषा न, 'गुणात्सम्बुद्धे'रिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च। अत एव 'हे लक्ष्मी'त्यादौ

**ॐ अभिनव-चन्द्रिका ॐ**

स्याभावाच्च–'अल्त्वव्याप्यधर्मावच्छिन्ना या उद्देश्यता तदुद्देश्यताके कार्ये कर्तव्ये स्थानिवन्न भवती'ति आद्यर्थकानल्विधावित्यस्य, अति दिदिक्षिताल्त्वव्याप्यधर्मघटितधर्मस्यातिदेशो न भवतीति द्वितीयार्थका-ऽनल्विधावित्यस्य च प्राप्त्यभावेन सम्बुद्धित्वैकवचनत्वे स्थानिवद्भावेन आयास्यत एवेति चिन्त्य-मिदम्। आरोपप्रकारीभूतसम्बुद्धित्वेन 'एङ्ह्रस्वात्सम्बुद्धे'रिति शास्त्रीयोद्देश्यतायाः साक्षादन-वच्छिन्नत्वाच्च। **परनिमित्तापेक्षाच्चेति।** चिन्त्यमिदम्—'एङ्ह्रस्वा'दित्यत्राऽपरनिमित्तक–'एङ्ह्रस्वा' दिति शास्त्रस्य परनिमित्तक–'ह्रस्वस्य गुण' इति शास्त्रस्य चाश्रीयमाणसमुदायस्यान्यूनानतिरिक्त-त्वाभावाच्च। 'एङ्ह्रस्वादित्यत्र तदादित्वस्यान्वयासिद्धत्वादङ्गाक्षेपोऽपि न सम्यगिति पूर्वमेवावो-चाम इति दिक्। **प्रयोगसत्त्वे इति।** 'नहि पदान्तादिङो रुरस्ती'ति भाष्यप्रामाण्येनैकारान्ताना-

**ॐ चिदस्थिमाला ॐ**

**परेति।** पूर्वमन्तरङ्गं परं बहिरङ्गमिति भावः। नन्विना सहितः सेस्तस्य सम्बोधने लोपानापत्तिरत आह—**सेप्रेति।** अनेन हेशब्दमतिक्रान्तोऽतिहेरित्यादि परिग्रहः। **प्रत्येति।** एतेन तदर्थमेङ्ग्रहणमावश्यकमेवेति **दृण्ड्युक्तमपास्तम्।** अत एव मूले 'हे विष्णो'इति प्रत्युदाहरणान्तरं दत्तम्। **इति प्रश्न इति।** एतेन 'ह्रस्वान्ताद्विहितस्येत्यर्थेन गुणे जातेऽपि न क्षतिरिति प्रश्न' इति—**शास्त्र्युक्तमपास्तम्,** 'हे लक्ष्मी'त्यादा-वव्याप्तेः, परिभाषाबाधे मानाभावाच्च। ननु एवमपि गुणे कृते सन्निपातपरिभाषया लोपो न स्यात्, एङ्ग्रहणस्य 'से'इत्यादौ सावकाशत्वादत आह—**सामर्थ्यादेवेति।** प्रत्याहारग्रहणसामर्थ्यादेवेत्यर्थः। से-प्रभृत्यर्थत्वे लेग्रहणमेव कार्यमित्युक्तमेव। स्मृतवित्यादीनां त्वनभिधानमेवेति भावः। नन्वेङंशे तदप्रवृत्तावपि 'राम'इत्यत्र ह्रस्वग्रहणस्य सावकाशत्वेन गौरीत्यादौ परत्वाद्धल्ङ्याबितिलोपं बाधित्वा 'अम्बार्थे'ति ह्रस्वे सम्बुद्धिलोपो न स्यादत आह—**गुणादिति।** अत एव=ह्रस्वांशेऽपि तदप्रवृत्तेरेव। आदिना'हे गौरी'-

**ॐ ज्योत्स्ना ॐ**

**अङ्गाधिकारस्थादिति।** अनेन सञ्ज्ञाकृतबहिरङ्गत्वमुक्तं,'परनिमित्तापेक्षाच्चे'त्यनेन तु—पूर्वनिमित्तक-मन्तरङ्गं, परनिमित्तकं बहिरङ्गमित्यन्तरङ्गबहिरङ्गभावे प्रयोजकं धर्मान्तरं—पूर्वपक्षिणा इहाभिप्रेतमुक्तम्।

**ॐ सदाशिवभट्टीयम् ॐ**

धर्माश्रितविधित्वाभावादित्यर्थः। स्वमतेपि 'सौर'मित्युक्तत्वादनल्वृत्तिधर्मत्वेन न स्थानितावद्वृत्तिक-त्वादिद्त्ववदतिदेशो भवत्येवेति बोध्यम्। ननु गुणस्य परनिमित्तकत्वेन बहिरङ्गत्वात्प्रकृतिप्रत्ययसम्बन्धि-वर्णमात्रनिमित्तकत्वेनान्तरङ्गत्वमपीत्युभयोरन्तरङ्गयोः परत्वाद्गुण एव स्यादत आह—**अङ्गाधीति।** एवञ्च तस्य तन्मात्रनिमित्तकत्वमिति भावः। **एग्रहणेति।** स्मृतवादिषु तु गुणे णित्वाद्वृद्धिप्राप्तिरिति भावः। **सामर्थ्यादेवात्रेति।** प्रत्याहारग्रहणस्येति भावः। ननु रामादौ ह्रस्वग्रहणस्य साफल्याद्गौर्यादौ तया कथं वार्येतात आह—**गुणेति।** अत एव=ह्रस्वांशे तदप्राप्तेरेव। असमबलत्वेन परत्वासम्भवादाह—

**ॐ विषमपदविवृतिः ॐ**

त्वादित्यर्थः। यथाश्रुतौ पूर्वोत्तरपक्षावसङ्गतावेव, सम्बुद्धित्वस्य स्थानिभूताल्धर्मत्वशङ्कायाः समु-दायस्यास्थानित्वोपपादनेनैव निवारणीयतया सम्बुद्धिसञ्ज्ञायाः समुदायोद्देश्यकत्वोपपादनस्या-सङ्गतत्वात्। इदमयुक्तम्—पूर्वोत्तरपक्षाभ्यां सम्बुद्ध्यवयवत्वस्य विशेषणताया एवावगमात्, तत्र चोक्तरीत्या दोषात्। **अङ्गाधिकारस्थादिति।** एतेनाङ्गसञ्ज्ञाकृतं बहिरङ्गत्वमुक्तम्।

लोपसिद्धिः । **परत्वादिति**—अभ्युच्चयः । **नित्यत्वाच्चेति** । चेनानवकाशत्वसङ्ग्रहः । नपुंसके 'त्रपो' इत्यादावस्यापि लुका बाध इत्यन्यत् ।

---

**❀ अभिनव-चन्द्रिका ❀**

मनभिधानमिति बोधनाय'तु' शब्दः । **अनवकाशत्वसङ्ग्रह इति** । तद्प्राप्तियोग्येऽचारितार्थ्यरूप-बाधबीजस्य सत्त्वादिति भावः । वस्तुतस्तु सम्बुद्धिलोपे कृते प्रत्ययलक्षणेन गुणस्य चारितार्थ्यादनव-काशत्वादित्यसमञ्जसमेव ।

**❀ चिदस्थिमाला ❀**

त्यादिपरिग्रहः । एतेन 'स्वतः-सिद्धेङ्ग्रहणार्थमपि तत् , अत एव 'गुणात्सम्बुद्धे'रित्येव सूत्र्यतामित्यप्यपास्त'-मिति शास्त्र्युक्तमपास्तम् ।

असमबलत्वेन परत्वासम्भवादाह—**अभ्युच्चेति** । ननु तस्य नित्यत्वेऽपि लोपस्योक्तरीत्यान्तरङ्गत्वम्, 'अकृतव्यूहे'ति तु नास्त्येवात आह—**चेनेति** । यद्यपि 'रामे'त्यत्रापि सम्बुद्धिगुणः प्राप्नोतीति सोऽपि

**❀ सदाशिवभट्टीयम् ❀**

**अभ्युच्चेति** । **अनवकाशेति** । 'येन ने'तिन्यायेनोत्सर्गप्रवृत्त्युत्तरमचारितार्थ्येऽपि बाधः, 'तद्प्राप्ति-योग्ये'त्यत्र योग्यता वर्तमानैवेति नाग्रह इति च भावः । ह्रस्वस्य गुणे इक्पदोपस्थित्या 'रामे'त्यत्र

**❀ विषमपदविवृतिः ❀**

न च गुणबहिरङ्गत्वस्य पूर्वपक्षाभिप्रेतत्वे 'परत्वान्नित्यत्वाच्चे'ति समाधानग्रन्थासङ्गतिरिति वाच्यं, 'सञ्ज्ञाकृतबहिरङ्गत्वस्य 'अ'मिति न्यासे परत्वान्नुडित्यादिभाष्येण समानाश्रये त्वपरनिमित्ता-पेक्षत्वेन बहिरङ्गत्वस्य चानाश्रयणमिति समाधानग्रन्थाशयात् । सामर्थ्यादेव = एङ्ग्रहण-सामर्थ्यादेव । **एङ्ह्रस्वग्रहणसामर्थ्याच्चेति** । ह्रस्वग्रहणं 'हे लक्ष्मी'त्याद्यर्थं, सन्निपात-परिभाषया ह्रस्वस्य सम्बुद्धिलोपानिमित्तत्वे तु तद्वैयर्थ्यम् । **अभ्युच्चय इति** । नित्यानित्ययोर्विप्रति-षेधायोगादिति भावः । **अनवकाशत्वसङ्ग्रह इति** । ननु तथा सति गुणे कृते लोपाप्रसङ्ग इति चेन्न, एङन्तत्वनिमित्तकलोपप्रवृत्तेः सुलभत्वात् । 'विषयभेदे उत्सर्गापवादभावो ने'ति त्रिपथगायां निरूपितं न विस्मर्तव्यम् ।

'त्रपो' इत्यत्र लोपाप्राप्तिविषये गुणस्य चारितार्थ्याद्गुणस्य नलोपापवादत्वमित्याशङ्क्याह—**नपुंसक इति** । बाधकाबाधितप्राप्तेरभावेपि प्राप्तिमात्रमस्त्येवेति भावः ।

---

**❀ वरवर्णिनी ❀**

**अनवकाशत्वेति** । परे तु-'ह्रस्वस्य गुण'इत्यत्र स्थानिनो 'ह्रस्वस्य'निर्दिष्टत्वेनपरिभाषानुपस्थितेर्हेरामे-त्यादावपि तत्प्राप्त्या उभयोरप्यपवादत्वादिदमयुक्तं, किञ्च गवयशब्दाचारक्विबन्तात्कर्त्तरि क्विप्यतो लोपे यलोपे हे गवेत्यादौ लोपस्य सावकाशत्वेन नानवकाशत्वम् , अत्र स्थानिवत्त्वात्र गुणप्राप्तिः, सम्बुद्धि-लोपस्य—तु प्राप्तिरस्त्येव, तत्र कर्त्तव्ये स्थानिवत्त्वन्तु न वक्तुं शक्यं, लोपस्य पूर्वविधित्वाभावात् । पञ्चमीसमासस्य त्वनित्यत्वात् । एवं ह्यशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि–अल्लोपयलोपयो'र्हे ह' इत्यत्रापि लोपस्य सावकाशत्वमिति—जगन्मान्या अस्मद्गुरवः **श्रीहरनारायणत्रिपाठिपादाः** । श्रीबालशास्त्रि-चरणाः, अस्मत्पितामहपादाः श्रीहरिरामशास्त्रिवरेण्याश्चाप्येवमेव प्राहुः ।

**अमि पूर्वः** । 'पूर्वसवर्ण' इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणन्तु 'राम'मित्यादौ द्विमात्रवारणाय ।

**लशकु** । समाहारद्वन्द्वः । अतद्धिते किम् ? 'कर्णललाटात्कनलङ्कारे'–कर्णिका । कित्त्वफलन्त्वादिवृद्धिः स्यात् । आदिग्रहणाद्वृङः षाकनो न । तस्य कित्त्वे गुणो न स्यात् ।

**तस्माच्छ** । पुंसीति पञ्चम्यर्थे सप्तमी । पुंसो विहितस्येत्यर्थः । 'तत्र विद्यमाना-

---

❀ अभिनव-चन्द्रिका ❀

**अमि पूर्वः** । प्रत्ययग्रहणपरिभाषया 'यस्मात्प्रत्ययविधिस्तदादी'त्युपतिष्ठते, तच्च पञ्चम्यन्तं, पष्ठ्यन्तं वा, आद्ये–तदादेः परीभूतो योऽम्यच् तस्मिन्परतः पूर्वरूपमित्यर्थः । अन्त्ये—अगन्ततदादेरम्यचि परतः पूर्वरूपमित्यर्थः । अत एव-'हे देवदत्त ! अम्' इत्यादावनेन पूर्वरूपं न ।

❀ चिदस्थिमाला ❀

निरवकाशस्तथापि फलाभावात्तत्र तदप्रवृत्तिरिति भावः । वृत्तिकाराद्युक्तमाह—**पूर्वसवर्ण इति** । **द्विमात्रेति** । तदादीत्यर्थः । तेन 'कुमारी'मित्यादौ त्रिमात्रसङ्ग्रहः । अत्र **कृष्ण शास्त्रि-दण्ड**युक्तं यथा चिन्त्यं तथा भावप्रकाशे स्पष्टम् । **समेति** । वृत्तौ तु इतरेतरद्वन्द्वपरतया तद्विवरणं बोध्यम् । यत्तु 'चूडालः' 'लोमश' इत्यपि प्रत्युदाहरणमिति**शास्त्रिदण्डि**प्रभृतयः, तन्न, तत्रेत्त्वे फलाभावात्, तद्ध्वनन्नाह—**कर्णेति** ।

यत्तु–'पञ्चहस्ता'दितिवदाक्षिप्तप्रकृतेः 'पुंसी'ति विशेषणमिति **शास्त्र्यादय**स्तन्न, प्रागुक्तरीत्या प्रसिद्धाक्षेपासम्भवात् । यद्यपि स्वोक्ताक्षेपः सुवचस्तथापि तत्र गौरवादाह—**पुंसीतीति** । व्यत्ययेनेति भावः ।

❀ ज्योत्स्ना ❀

**द्विमात्रेति** । 'पूर्वसवर्ण'इत्यनुवृत्तेः प्रमाणत आन्तर्येण प्राप्तस्य वारणायेत्यर्थः । पूर्वसवर्णदीर्घेण-सिद्धेरेतदारम्भसामर्थ्यात्पूर्वसवर्णः प्रमाणतोऽन्तरतमोऽपि न भविष्यतीति तु वक्तुमशक्यं,

❀ सदाशिवभट्टीयम् ❀

तदप्राप्त्या लोपस्य नानवकाशत्वमिति बोध्यम् । **द्विमात्रेति** । 'कुमारी'मित्यादौ त्रिमात्रार्थञ्चेत्यर्थः ।

❀ विषमपदविवृतिः ❀

**द्विमात्रवारणायेति** । न चैवं पूर्वसवर्णदीर्घेण सिद्धेरेतद्वैयर्थ्यमिति वाच्यं, 'गौरी'इत्यादौ

---

❀ वरवर्णिनी ❀

**कित्त्वफलन्त्विति** । न च 'वुञ्छ'णिति सूत्रेण वराहादिभ्यः कको विधीयमानस्य कित्त्वसामर्थ्यादादिककारस्य नेत्त्वमिति कल्पनात्कर्णिकादौ न दोष इति वाच्यम् , कक्रि ककारद्वयोच्चारणसामर्थ्याद्-अन्त्यककारस्य नेत्त्वमित्येवं कल्पनाया अप्यापत्तेरादिककारस्येत्त्वापत्तेर्दुरुद्धरत्वात् । 'केण'इत्यादि सूत्रारम्भसामर्थ्यादादिककारस्येत्सञ्ज्ञावारणे तु दोषश्चिन्त्य **इत्यस्मद्गुरुचरणाः** ।

ननु 'लशक्वतद्धित' इत्यत्र 'क्वतद्धिते' इत्येव सूत्र्यतां, किं लशग्रहणेन ?, न च शबादौ कथं शकारादेरित्सञ्ज्ञेति वाच्यं, शकारस्थाने छकारं कृत्वा 'चुटू' इत्यनेनैव तत्सिद्धेः, ल्यु–ल्युडादौ तु 'युल्'–'ट्यु'लित्येवं करणेन लकारस्य हलन्त्यमित्यनेनैवेत्सञ्ज्ञेति चेन्न, छकारस्यायनेयीनीयिय इति ईयादेशापत्तेः, नच फढादिसाहचर्यात्तद्धितछकारस्यैव तदादेश इति वाच्यं, 'मत्वर्थाच्छ' इति कृतसञ्ज्ञकछत्ययेऽपि 'मत्वर्थीय' इत्यादौ तदादेशप्रवृत्तेरिति सङ्क्षेपः ।

**तस्माच्छस इति** । अत्र पुंसीति पञ्चम्यर्थे सप्तमी, 'शस'इत्यवयवषष्ठी, तत्पदेन पूर्वसवर्णदीर्घःपरामृश्यते, तेन पूर्वसवर्णदीर्घात्परस्य पुंवाचकाद्विहितशसवयवस्य नत्वमित्यर्थे–दीर्घोत्तरमवशिष्टस्य शसवयवसकारस्य नत्वेन रामानित्यादिसिद्धिः । तथा च सकारस्य नत्वमिति फलितोर्थः ।

ननु शस इतिषष्ठ्या अवयवार्थकत्वे तत्र–'तस्मा'दितिपरिभाषोपस्थित–परस्येत्यस्यान्वयो न स्यात्प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् । शस्शब्दस्य शसवयवे लक्षणायामपि न तत्र तदन्वयः, 'पदार्थः पदार्थेना-

द्विहितस्ये'त्यर्थो वा । तस्मादिति किम् ? एतान् गाः पश्य । 'पुंसि' किम् ? मर्तीः ।

## ॐ अभिनव-चन्द्रिका ॐ

तत्र विद्यमानादिति । पुंस्त्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरितादिहितस्येत्यर्थः, 'प्रधानाप्रधान' इति न्यायात् । अत एव 'राजकुमारीः पश्ये'त्यादौ नानेनादेशः । अन्यथा राजकुमारीशब्दस्य पुंस्त्वावच्छिन्नविषयकबोधतात्पर्येणोच्चरितत्वेन 'तस्माच्छसो न' इति नत्वं दुर्वारं स्यात् ।

एतान् गाः पश्येति । 'अकः सवर्णे' इतिसूत्राद्दीर्घपदमनुवर्त्य पञ्चम्यन्तत्वेन विपरिणमय्य दीर्घात्-

## ॐ चिद्स्थिमाला ॐ

'अतिखट्वा'नित्यादिसिद्धये आह—विहितस्येति । यथाश्रुतमेव ततोऽपि लाघवाद्योजयति—तत्रेति । 'वाक्यैकदेश'न्यायेन प्रयोग इति भावः । शसः किं ? 'रामाः' ।

## ॐ ज्योत्स्ना ॐ

'वाच्छन्दसी'त्यत्रानुवृत्त्यर्थं सामर्थ्यस्योपक्षयात् । तत्र विद्यमानाद्विहितस्येति । अत्र पक्षे 'पुंसी'ति-पञ्चम्यर्थकल्पना नास्ति, पूर्वसवर्णदीर्घे कृते पुंसि विद्यमानात्परो वा शस् न सम्भवत्यतः परविशेषणं विहाय 'विहितस्ये'त्युक्तम् ।

## ॐ सदाशिवभट्टीयम् ॐ

'वाच्छन्दसी'त्यत्रानुवृत्त्यर्थञ्च । दीर्घे कृते परत्वासम्भवादाह—विहितेति । यद्यपि मकाररूपावयवविशेषणत्वेनासम्भवः सुपरिहरस्तथापि'सुपुरुषा स्त्रिय'इत्येतद्व्यावृत्तये तदुक्तमिति बोध्यम् । एतानिति ।

## ॐ विषमपदविवृतिः ॐ

त्रिमात्रप्रवृत्त्यर्थत्वात्, 'वा छन्दसी'त्यनेनैकवाक्यार्थत्वाच्च ।

तस्माच्छसः । ननु 'तस्मा'दिति मास्तु, 'अक' इत्यनुवर्त्याकः परस्य नत्वविधानेन 'लिह्' इत्यादावदोषात् । न चा'देः परस्ये'त्यादेनकारे 'हरी'नित्यत्र दीर्घश्रवणानापत्तिः, 'शसः सो नः पुंसी'ति न्यासेनादोषात्, अकः परस्य शसः सस्य न इत्यर्थः । पूर्वसवर्णदीर्घस्य 'तक्रकौण्डिन्य'न्यायेन बाधः स्यादिति तु न शङ्क्यम्, पूर्वसवर्णदीर्घेऽकः परस्य शसोऽसम्भवेनोक्तन्यायाप्रवृत्तावनवकाशत्वेन तं बाधित्वा नत्वे प्रवृत्ते पश्चात्तत्प्रवृत्तेः ।

ननु 'तितऊ'नित्यत्रोत्सर्गे कृते नत्वचारितार्थ्यादुक्तन्यायेन तस्य बाधे पुनरप्रवृत्तिरिति चेत्सत्यम् ; 'अक' इत्यस्य सकारविशेषणत्वेनादोषात् । अक् च सामर्थ्यात्प्रत्ययानवयवस्तथा च पूर्वसवर्णदीर्घात्तरमेव नत्वप्रवृत्तिरिति न कश्चिद्दोष इत्यभिप्रायेण शङ्कते—तस्मादिति किमिति ।

## ॐ वरवर्णिनी ॐ

ऽन्वेति, न पदार्थैकदेशेने'ति न्यायविरोधात् । किञ्च तत्र षष्ठ्या अवयवार्थकत्वेऽपि शसोऽवयवस्य स्थाने नत्वमित्यर्थो न सिध्यति, शस इत्यत्र अवयवषष्ठीत्वे स्थानषष्ठीत्वायोगादिति चेदुच्यते, अवयवषष्ठीत्वेऽपि तत्र परस्येत्यस्यान्वये बाधकाभावः, तस्य प्रकृत्यर्थे शस्यप्यन्वयात् । एवं षष्ठ्या अवयवार्थकत्वेऽपि—शसवयवस्य स्थाने इत्येवमर्थे [स्थानार्थलाभेऽपि] न बाधकं, तस्मादितिपरिभाषयोपस्थितषष्ठ्यंशेनैव तल्लाभात् । किञ्च शसश्शस्य स्थावयवलक्षणायामपि तत्र परस्येत्यस्यान्वये न किमपि बाधकं, निरूप्यनिरूपकभावातिरिक्ते एव 'पदार्थः पदार्थेनान्वेती'ति न्यायस्य प्रवृत्तिस्वीकारादिति तत्त्वविदग्रेसराश्रिपाठिचरणा व्याचक्षतेतराम् ।

गाः पश्यति । नन्वकःसवर्णे इत्यतोऽक्पदमनुवर्त्य पुंसि विद्यमानादगन्ततदादेः परस्य शसः सकारस्य नत्वमित्यर्थे'गा'इत्यादौ न दोषः, तत्र हि प्रतिपदोक्तत्वात्पूर्वमात्वेऽन्तवद्भावेन आकारान्ते तदादित्वेऽपि सकारमात्रस्य शस्त्वाभावात्, गकारान्ते त्वगन्तत्वस्यैव विरहात्, 'रामा' नित्यत्र तु दीर्घात्पूर्वं प्रतिपदोक्त्वा-

ॐ अभिनव-चन्द्रिका ॐ

परीभूतो यदशसस्सकारस्तस्य नकारादेशस्स्यादित्यर्थेन 'लिह' इत्यादौ दोषो नास्तीति प्रश्नकर्तुराशयः।

वस्तुतस्तु दीर्घपदमनुवर्त्य पञ्चम्यन्तेन विपरिणामेऽपि तस्य शसैवान्वयः स्यात्, तथाच 'गाः पश्ये' त्यादौ दीर्घात्परीभूतशसोऽभावेन नायं प्रश्नकर्तुराशयः। न चा 'कःसवर्णे' इति सूत्रादक इत्यनुवर्त्याकः परीभूतो यश्शसस्सकारस्तस्य नः स्यादिति प्रश्नकर्तुराशय इति वाच्यं, 'गाः पश्ये'त्यादौ अग-व्यवहितोत्तरत्वविशिष्टशसोऽभावेन 'गाः पश्ये'त्यादिदोषकथनासङ्गत्यापत्तेः। न च 'तस्माच्छसो नः पुंसी'त्यत्र 'च्छसो नः पुंसी'त्यनन्तरं सकारम्प्रश्लिष्याग्व्यवहितोत्तरत्वविशिष्टो य शसस्सकारस्तस्य नः स्यादिति प्रश्नकर्तुराशय इति वाच्यम्, एवन्तर्हि 'लिह' इत्यादावेव दोषसत्त्वेनैतान् गाः पश्येति पर्यन्तमनुधावनासङ्गत्यापत्तेः, तस्माद्दीर्घपदमनुवर्त्य सकारम्प्रश्लिष्य दीर्घात्परीभूतो यश्शसस्सकार-स्तस्य नः स्यादिति प्रश्नकर्तुराशः। अन्ये तु—'शसो नुम्पुंसी' ति न्यासः क्रियते, 'अक' इति पद-

ॐ वरवर्णिनी ॐ

न्नत्वे पश्चाद्दीर्घे च रूपसिद्धिः, 'प्रध्य' इत्यादावपि प्रतिपदोक्तत्वान्नत्वात्पूर्वं यणि अगन्तत्वविरहान्न दोषः, एवं 'लिह' इत्यादावप्यगन्तत्वं नास्तीति तस्मात्पदं व्यर्थमिति चेन्न। 'अचः परस्मि'न्नित्यत्र पञ्चमीसमासाश्रयणेन—इकारेण सहितः सेः, तस्माच्छसि—'सय' इत्यत्र स्थानिवद्भावेनागन्तत्वा-न्नत्वाभावार्थं तदावश्यकत्वात्। किञ्च—नृशब्दादाचारक्विबन्ताड्डिचि शसि 'नर' इत्यादौ, 'विश्वप' इत्यादौ च नत्वाभावार्थं तस्मादित्यस्म द्गुरुचरणाः। नन्वेवमपि 'शसोऽन् पुंसी'ति न्यासेन पूर्वसवर्णदीर्घात्पूर्व-मनादेशे ततो दीर्घे सर्वलक्ष्यसिद्धिः, 'गा' इत्यत्रापि अनादेशं बाधित्वा 'औतोम्शसो'रित्यात्वे कृते लक्ष्यसिद्धे-स्तस्माद्ग्रहणं व्यर्थमेवेति चेन्न, 'बहुश' इत्यादौ 'बह्वल्पार्था'दितिविहितस्य शसोऽनादेशापत्तेः।

केचित्तु—'प्रथमयोः पूर्वसवर्ण' इत्यतः 'प्रथमयो'रित्यनुवृत्त्या प्रथमाद्वितीयासम्बन्धित्वाभावात्तद्धित-शसो नाऽनादेशः, यद्वाऽचीत्यनुवर्त्याजादेः शसो ग्रहणात्तद्धितशसो नाऽनादेश इत्याहुः।

परे तु—अनादेशे पदधातोर्घञर्थे के तत आचारक्विबन्तात्कर्त्तरि क्विपि—अल्लोपे प्रातिपदिकत्वाच्छसि 'पद' इत्यत्र पञ्चमीसमासाश्रयणादल्लोपस्य स्थानिवत्त्वादनादेशापत्तिरतस्तस्मादित्यावश्यकं, प्रकृते पञ्चमीसमा-साश्रयणे च तस्माद्ग्रहणमेवात्र मानम्। 'शसःसो नः पुंसी'ति न्यासे तु न कश्चिद्दोषः, तत्र हि—अकः परस्य शसःसकारस्य नादेश इत्यर्थेन—शसः सकारस्याक्परत्वाव्यभिचारेऽपि अक्पदानुवृत्तिसामर्थ्यादग्मात्र-स्थानिकस्यैवाको ग्रहणेन 'गाःपश्ये'त्यादावोकारस्थानिकत्वेनागितरस्थानिकादकारात्परस्य नत्वाप्रवृत्ते-रित्यस्मद्गुरुचरणाः प्राहुः।

अत्र केचित्—ननु 'शसो नुक्पुंसि' 'शसो नुम्पुंसी'ति वा न्यास उचितः, अक्पदानुवृत्त्याऽकः परस्य शसो नुक् नुम्वेत्यर्थे—'आदेः परस्ये'ति परिभाषया शसोऽकारस्यान्तावयवे नुकि, 'मिदचोन्त्या'दिति परिभाषया च शसोऽकारान्तावयवे नुमि वा—पूर्वसवर्णदीर्घे संयोगान्तलोपेन सलोपे—'रामा'नित्यादिरूप-सिद्धेः। 'लिह' इत्यादौ त्वकः परत्वाभावादेव न दोषः। 'गाःपश्ये'त्यादावोकारस्याक्त्वाभावेन, 'औतो-म्शसो'रित्यात्वे कृते तु—अकः परस्य शसोऽभावेन न दोष इति चेन्न, 'विश्वप' इत्यादावातो लोपे पञ्चमीसमासपक्षेऽचः परस्मिन्निति स्थानिवत्त्वादकः परतया नुगाद्यापत्तेः। 'अष्टौ' इत्यत्र तु न नुगाद्यापत्ति-र्दोषः, आत्वे कृते [ जश्शसोः-] 'अष्टाभ्य औ'शित्यौशादेशेऽपि आत्वस्य परनिमित्तकत्वेन बहिरङ्गत्वाद-सिद्धत्वेनाकः परत्वाभावेन नुगाद्यापत्तेरभावात्। एवञ्च विश्वप इत्यत्रैव दोषः। पञ्चमीसमासानाश्रयणे तु सुवचावेवेमौ न्यासाविति-प्राहुः। तदपरे न क्षमन्ते, तदप्राप्तियोग्येऽचारितार्थ्यमूलकतक्रकौण्डिन्यन्यायेन एतद्विषये पूर्वसवर्णदीर्घ-बाधापत्त्या रामानित्याद्यसिद्ध्यापत्तेः। इतोऽधिकन्तु—अस्मत्पितामहश्रीस्नेहि-रामशास्त्रिचरणनिबद्ध-शेखरत्रिपुरसुन्दर्यामनुसन्धेयम्। सदाशिवभट्टयादौ च विस्तरो बोध्यः।

अट्कु । बाधितुमिति । तेन 'पर्याणद्ध'मित्यत्र 'उपसर्गादसमासेऽपी'ति

❀ अभिनव-चन्द्रिका ❀

मनुवर्तते, तथाचाकः परीभूतो यश्शसस्तस्य नुम् स्यादिति-'लिह'इत्यादौ न कुत्रापि दोषः। पूर्वसवर्णदीर्घाप्राप्तियोग्येऽचारितार्थ्यस्य, 'अतिला'नित्यादौ पूर्वसवर्णदीर्घे कृते परादिवद्भावेन शस्त्वस्य

❀ चिदस्थिमाला ❀

तत्फलमाह—**तेनेति** ।

❀ सदाशिवभट्टीयम् ❀

अकः परो यः शस्तस्य न इत्यर्थेनादेःपरस्येत्यकारस्य ने 'नुपि चे'ति दीर्घे संयोगान्तलोपे'रामा'निति सिद्धावपि 'हरी'निति न सिध्येत्, तदर्थमगन्तात्पुंसो विहितस्येत्यर्थे तु'येन ने'तिन्यायेन दीर्घबाधापत्तिः। एतेन नुमि संयोगान्तलोपे, नुकि संयोगादिलोपे वा न दूषणमित्यपास्तम्। पञ्चमीसमासेन स्थानिवत्त्वाद्दीर्घोत्तरमपि नुमादेः प्राप्त्या 'तक्रकौण्डिन्य'न्यायप्रवृत्तेः सुवचत्वात्। वस्तुतः पूर्वसवर्णदीर्घान्तात्पुंसस्तदादेः परस्य शसोऽवयवस्येत्यर्थो न्याय्यो, विहितेति तु फलितार्थकथनपरं, द्विर्णायनदन्नविधिप्राप्तातिप्रसङ्गभङ्गाय वेति बोध्यम्।

**अट्कु । पर्याणद्धेति** । 'व्यवधायकस्य पदस्य णत्वाश्रयातिरिक्तद्भिनभिन्नपरत्वे'इति वक्ष्यमाणस्य 'णत्वा-

❀ वरवर्णिनी ❀

**अट्कुप्वाङिति** । 'रषाभ्या'मित्यनेन व्यवहितेऽप्राप्तेर्विध्यर्थमिदम्। नन्वेवं 'कृत्स्नं''मृत्स्ने'त्यादावडादिव्यवधानाभावाण्णत्वाऽप्राप्तावपि 'आदर्शेने'त्यत्र अडादिव्यवायस्यापि सत्वाण्णत्वापत्तिः, नच अडादिभिरेव व्यवाये इत्यर्थः, अडादिव्यवाये णत्वमित्यर्थस्यैव सूत्राक्षरैर्लाभादिति चेन्न, प्रकृतसूत्रे 'रषाभ्या'मित्यनुवृत्तेस्तस्मादितिपरिभाषयाऽव्यवहितत्वांशोपस्थित्या—रेफषकाराव्यवहितपरत्वं नकारे विशेषणमुपस्थाप्यते, ततश्च रेफषकाराभ्यां परस्य नकारस्य वर्णान्तरकृतव्यवधानराहित्यं लभ्यते, व्यवाये इत्यनेन चाडादिकर्तृकव्यवधानवत्त्वं नकारे लभ्यते, एवञ्च रेफषकाराव्यवहितोत्तरस्याडादिव्यवधानवतो नस्य णत्वमित्यर्थः पर्यवसन्नः। तत्र च व्यवहितत्वाव्यहित्वयोर्विरोधात्सूत्रवैयर्थ्यमतः—अव्यवहितपदार्थ—वर्णान्तरकर्तृकव्यवधानशून्यत्व—घटक—वर्णान्तरे 'व्यवाये'इत्यनेन अडाद्यतिरिक्तत्वमात्रं बोध्यते, तदेवमडादिव्यतिरिक्तवर्णकर्तृकव्यवायशून्यस्य नस्य णत्वमित्यर्थलाभेन आदर्शेनेत्यत्राडादिव्यतिरिक्तशकारेण व्यवधानाण्णत्वाप्राप्त्याऽऽदर्शेनेति रूपसिद्धेः। अतएव वार्त्तिककृता—आदर्शेनेत्यत्र,—'अडाद्यतिरिक्तव्यवाये प्रतिषेधो वक्तव्यः' इत्यनेन णत्वं परिहृत्य—मदुक्ताशयेनैव—'नवाऽतिरिक्तव्यवाया'दित्यनेन समाहितम्। नन्वग्रे भाष्येऽडाद्यतिरिक्तव्यवाये णत्वमाशङ्क्य—'चुट्तुलशर्व्यवाये ने'त्येव णत्वनिषेधप्रकरणे पठनीयेऽट्कुप्वाङित्यादिरीत्या सूत्रकरणादडादिभिरेव व्यवाये णत्वमित्यभिप्रेत्य—'अटैव व्यवाये'इत्यर्थेन परिहृतं, तदेवं त्वदुक्तोऽर्थो भाष्यासम्मत इति लभ्यते इतिचेन्न, तद्भाष्यस्यैकदेश्युक्तित्वात्, स्पष्टञ्चेदं शेखर एवेति—**नागेशानुयायिनः** ।

परे तु—(आदर्शेनेत्यादावडादिसहिततवर्गादियोगेऽस्य विध्यर्थत्वे तु—) 'कृत्स्नम्' 'मृत्स्ना'इत्यादिकतिपयलक्ष्येषु अडादिव्यतिरिक्तानां तकारशकारसकाराणामेव व्यवधानलाभात्—निषेधप्रकरणे'शस्तैर्व्यवाये' इत्येव न्यासे करणीयेऽट्कुप्वाङित्युक्तेरडादिभिरेव व्यवाये इत्यर्थलाभ इत्येव—'अडादिभिरेव व्यवाये'इति भाष्यस्याशय इति—सा नैकदेश्युक्तिः, आपाद्यमानन्यासस्य लघुत्वात्। एतद्भाष्याशयवर्णनपरैव 'अडाद्यतिरिक्तव्यवाया'दिति वार्त्तिककारोक्तिः। किञ्च—ङ्याप्प्रातिपदिकादित्यत्र षष्ठ्यंशवैकल्यवदत्र विरोधादव्यवहितांशविकलैव तस्मादिति परिभाषोपतिष्ठते, तथाच अडादिव्यवाये णत्वमित्येवार्थः स्यादित्यादर्शेनेत्यत्र णत्वं दुर्वारम्। यद्वा—अव्यवहितांशोपस्थितावपि प्रकृतसूत्रे परिभाषोपस्थिताऽव्यवधानांशस्य, सूत्रोक्तव्यवायस्य च (धर्मस्य) परस्परं विरोधेऽपि धर्मिणामडादीनामन्यैर्वर्णैः सहैकत्र प्रयोगदर्शनान्न परस्परं विरोधः। 'तदेवम्—अडाद्यतिरिक्तव्यवायशून्ये' इत्यादि नागेशोक्तं न युक्तम्, किन्तु अडादिकर्तृकव्यवायातिरिक्तव्यवायशून्यस्य नस्य णत्वमित्येवार्थः प्रकृते स्यात्, तथाच अडादिकर्तृकव्यवायातिरिक्तो व्यवायः—मृत्स्नेत्यादौ, तदतिरिक्तव्यवायो रामेणेत्यत्रेति णत्वं सिध्यति। 'मृत्स्ने'त्यत्र च न णत्वम्। एवञ्च आदर्शेनेत्यत्र-

### ॐ अभिनव-चन्द्रिका ॐ

अगव्यवहितोत्तरत्वस्य च सत्त्वेन कृते चारितार्थ्यस्य सत्त्वात्तक्रकौण्डिन्यन्यायेन नुमा पूर्वसवर्ण-दीर्घस्यादिति प्रश्नकर्तुराशयः। तथाच 'शसो नःपुंसी'त्येव न्यासः कर्तव्यः, तत्राक इत्य-नुवर्त्य सकारञ्च प्रश्लिष्य अगन्ततदाद्यव्यवहितोत्तरत्वविशिष्टो यश्शसस्सकारस्तस्य नः स्यात्पुंसीत्यर्थः कर्तव्यः। अथवा दीर्घपदमनुवर्त्य दीर्घात्परीभूतो यश्शसस्सकारस्तस्य नःस्यादित्यर्थः कर्तव्य इति—'एतान् गाः पश्ये'त्यादौ दोषः स्यादित्युत्तरकर्तुराशयः।

### ॐ वरवर्णिनी ॐ

णत्वं दुर्वारम्, अडादिकर्तृकव्यवायातिरिक्त-कृत्स्नादिस्थलीयव्यवाय-शून्यत्वस्य आदर्शेनेतिव्यवाये सत्त्वात्। अटाऽपि तत्र व्यवायसत्त्वात्। तदतिरिक्तशकारेणव्यवायोऽपीति त्वन्यदेतत्। एवञ्च शेखरोक्तः—अडाद्यतिरिक्ताव्यवहितस्येत्याद्यर्थमाश्रित्यादर्शेनेत्यत्र णत्वस्य परिहारो न युक्तः, अव्यवधानपदार्थघटक-व्यवधानकर्तृतयाऽऽक्षिप्तस्य वर्णस्य शाब्दे भानाभावेन तत्राडाद्यतिरिक्तत्वेन सङ्कोचस्यात्यन्तमयुक्तत्वात्। तथासङ्कोचे रषाभ्यामित्यस्य व्यर्थत्वाच्च,—किन्तु भाष्योक्तरीत्याऽडादिभिरेव व्यवाये नान्यैरित्याद्यर्थलाभादेव तत्र न णत्वमित्याहुः।

इदमत्र तत्त्वम्—अत्र 'आदर्शेने'त्यादिना'एतद्वार्त्तिकमत'मित्यन्तेन वार्त्तिकमतमुद्भाव्य-तस्यैकदेश्युक्ति-प्रत्युक्तिरूपत्व शेखरकृताऽवधारितं—तन्न युक्तम्, अव्यवहितांशोपस्थित्या तद्घटकव्यवहितपदार्थेऽट्कुप्वाङ्-नुम्कर्तृकव्यवायातिरिक्तत्वेन सङ्कोचे-अट्कुप्वाङ्नुम्कर्तृकव्यवायातिरिक्त-व्यवाय-शून्यस्य नस्य णत्वमित्यर्थस्यैव निष्पत्त्याऽऽदर्शेनेत्यत्र णत्वस्य दुर्वारत्वात्, अट्कुप्वाङ्नुम्कर्तृकव्यवायातिरिक्तो व्यवायो'मृत्स्ना' 'कृत्स्नम्' 'आर्घ्नो'दित्यादौ, तच्छून्यत्वस्य आदर्शेनेत्यत्र सौलभ्यात्, अडादिव्यवायस्यैव तत्र सत्त्वात्। शेखरोक्तः—अट्कुप्वाङ्नुमतिरिक्तव्यवायशून्येत्याद्यर्थस्तु न युक्तः, नियामकशास्त्रेण—नियम्यशास्त्रे सङ्कोचात्प्राग्यत्र यत्र—कार्यं भवति, तत्र तत्र सङ्कोचानन्तरमपि नियामकशास्त्रप्रवृत्तेरौचित्यात्; व्यवाये भवति चेत्तर्हि अडादिकर्तृक-व्यवाये एवेति नियमस्यैव लाभात्। एवञ्चादर्शेनेत्यत्र नियमेऽपि णत्वप्राप्तिरस्त्येव, भाष्ये—'एतैरेव व्यवाये' इत्यत्रैवकारो भिन्नक्रमः,—एतैर्व्यवाये एवेति तदर्थः, नत्वेतैरेव व्यवाये नान्यैरित्यर्थः। अत एव नियम-प्रदर्शनानन्तर'मिह कस्मान्न भवति ?—आदर्शेनेति, अड्व्यवायसत्त्वात्प्राप्नोत्येव,—इति शङ्कितं भाष्ये। ततः—'शर्व्यवाये ने'त्येव सिद्धे 'अड्कुप्वे'ति गुरुभूतन्यासकरणेन—'एतैरेव व्यवाये नान्यै'रिति लभ्यते इति—समाधानं कृतम्, न तु नियमेनादर्शेनेत्यत्र णत्ववारणमुक्तमिति—आदर्शेनेत्यत्र णत्वस्य वारणमित्थमेव बोध्यं, न शेखरोक्तनियमेनेति।

नात्र भाष्यवार्त्तिकयोर्मतभेदः, किन्तु ऋवर्णान्नस्येतिवार्त्तिकप्रत्याख्यानाय 'व्यवाये' इति योगो विभज्यते'व्यवाये नस्य णत्वं भवती'ति तदर्थः। ततः 'अट्कुप्वाङ्नुम्' इति लुप्ततृतीयान्तं—नियमार्थम्। तथा च नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य—नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापक—आक्षरसमाम्ना-यिकत्व-धर्मा-ऽवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने व्यवाये सङ्कोचेन—मातृणामित्यत्र 'व्यवाये' इत्यनेन णत्वं सिद्धं भवति। भाष्योक्तस्य 'शर्व्यवाये ने'त्यस्य निषेधप्रकरणे 'क्षुभ्न'इति पाठ्यं,—रषाभ्यां परस्य सकारतवर्गशकारपरस्य न णत्वमिति च तदर्थं इति तात्पर्यम्। तेन आदर्शेनेत्यादौ न णत्वमिति भाष्यवार्तिकग्रन्थाशय इत्याहुः। परेत्वेवकारघटिते एव न्यासे तात्पर्यं वदन्ति, तदा तु आदर्शे-नेत्यत्र न णत्वमिति स्पष्टमेव लभ्यते, स्पष्टञ्चेदं सदाशिवभट्टीये।

तदयमत्र निर्गलितोऽर्थः—नियमेनान्यस्य व्यावृत्तिर्भवति, न तु स्वीयोद्देश्यतावच्छेदकावच्छिन्नस्य कस्यचित्, यथा समासग्रहणकृतनियमेन समासव्यतिरिक्तस्य वाक्यस्यैव नियमेन व्यावृत्तिर्न तु नियामकशास्त्रीयोद्देश्य-तावच्छेदकावच्छिन्नस्य—समासस्यापि—नियमेन प्रातिपदिकत्वव्यावृत्तिर्भवति, एवमट्कुप्वाङ्नुम्भिरिति-नियामकशास्त्रीयोद्देश्यतावच्छेदकाड्डादिव्यवहितनत्वावच्छिन्नातिरिक्तस्यैव मृत्स्नेत्यादेर्व्यावृत्तिः स्यान्न तु नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नस्य अडादिव्यवहितनस्यादर्शेनेत्यादेरिति—नियमेनादर्शेनेत्यत्र णत्व-वारणं शेखरोक्तमयुक्तमेव। आदर्शेनेत्यत्र णत्ववारणन्तु—'शस्तैर्व्यवाये' इत्येव लघुन्यासेन सिद्धेऽट्कुप्वेति

णत्वसिद्धिरिति भावः । **अयोगवाहानामिति** । न विद्यते—योगो—वर्णसमाम्नाये—येषां तेऽयोगाः, अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः । ते च ते वाहयन्ति—प्रयोगं निर्वाहयन्ति—ते वाहाः । ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः । अत एव 'उरःकेणे'त्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः । तदुक्तं भाष्ये—'नार्थो नुम्ग्रहणेन—अनुस्वारे कृतेऽड्व्यवाये इत्येव सिद्ध'मिति ।

'आदर्शने'त्यादौ तु नातिप्रसङ्गः, अडतिरिक्तव्यवायात् । 'तस्मा'दित्युपस्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारे—'अडादिव्यतिरिक्ताव्यवहित'परम् । तदुक्तं—'णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो, न वा—अन्येन व्यवेतत्वा'दिति ग्रन्थेन । एतदुत्तरम्—'अटा व्यवायसत्त्वात्प्राप्नोत्येव !, अटैव व्यवाये इत्यर्था'दित्यादि भाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरम् । 'चुटुतुलशर्व्यवाये ने'ति प्रतियोगिज्ञानसापेक्ष-निषेध-बोधक-गुरुन्यासेन सिद्धे 'अट्कुप्वा'ङित्युक्त्या-'एतैरेव व्यवाये' इत्यर्थं वदता—तस्यास्तदुक्तित्वध्वननात् ।—एतद्वार्तिकमनम् ।

### ॐ अभिनव-चन्द्रिका ॐ

**अडादिव्यतिरिक्ताव्यवहितपरमिति** । चिन्त्यमिदम् ,-अट्कुप्वाङ्सूत्रेऽव्यवहितांशस्य बाधा-

### ॐ चिदस्थिमाला ॐ

अयोगवाहपदमन्वर्थमित्याह—**न विद्यते इति** । अत एव=नेपानकारोपरि पाठनाद्त्वादेव । अत्र मानमाह—**तदुक्तमिति** । 'रषाभ्या'मिति पञ्चम्या व्यवहितेऽप्राप्ताविदमेकं वाक्यं विध्यर्थमित्यभिप्रेत्याह—**आदर्शनेति** । तत्र तावद्वार्तिकमतेनाह—**अडतिरिक्तेति** । ननु तावतापि तस्य निवारकं किमत आह—**तस्मादिति** । तदुपस्थितिलब्धमित्यर्थः । **तदुक्तं**—वार्तिककृता । अग्रिमभाष्यविरोधं परिहरति—**एतदिति** । 'इत्यादी'त्यस्य 'ने'ति शेषः ।

ननु नेदं सिद्धान्ताशयकं, तस्याग्रे वक्ष्यमाणत्वात् , तथा सत्युक्तार्थाज्ञानेन शङ्कायामपि तत्प्रकाशनस्यैवौचित्याच्च, अत उभयोरप्युक्तिरन्याशयैवेति शङ्कावत्तस्यापि तत्त्वमेवेत्याशयेन तत्र **हेतुमाह**—**चुटुत्विति** । गुरुत्वसम्पत्तये आह—**प्रतियोगीति** । **इत्युक्त्येति** । तत्सामर्थ्याल्लब्धमित्यर्थः । लाघवार्थं तथा न्यासे तु नोक्तार्थसिद्धिरित्याह—**तस्या इति** । समाधानपरभाष्योक्तेरपालयर्थः ।

नायं सिद्धान्त इत्याह—**एतदिति** । इतो लाघवात्—यथोत्तरं मुनीनां प्रामाण्यादेतत्खण्डनाय प्रवृत्तेश्च

### ॐ सदाशिवभट्टीयम् ॐ

अयप्रत्ययातिरिक्ते'त्यर्थः; प्रत्याख्यानेन फलाभेदाद्येति—निषेधप्राप्तिरत्रेति बोध्यम् । योगार्थस्यैषत्स्पृष्टलकारेऽतिप्रसङ्गाद्रूढ्यर्थमाह—**तत्रानुस्वारेत्यादिना** । **उरःकेति** । उरसि क यस्य, उरःकायर्त्तीति वा—विग्रहः । **अन्येन व्यवेति** । उक्तयुक्त्यनङ्गीकारेऽयमर्थो न स्यात् : **न्यासेन सिद्धे इति** । न च 'चुटुतु'-

### ॐ विषमपदविवृतिः ॐ

**अट्कुप्वाङ्** । **तदुक्तित्वध्वननादिति** । वस्तुतस्तु 'कृत्स्नं' 'मूर्ध्न' 'आर्घ्नो'दित्यादौ णत्ववारणाय

---

### ॐ वरवर्णिनी ॐ

गुरुन्यासात्—'आक्षरसमाम्नायिकवर्णकर्तृकव्यवाये नस्य णत्वं चेत्तर्हि अडादिकर्तृकव्यवाय एव नान्यत्रे'ति नियमेनेति बोध्यमिति **मान्या** व्याचक्षते ।

नियमत्वञ्च—यत्किञ्चिच्छास्त्रविशिष्टत्वं, वै० 'स्वीयविधेयतावच्छेदकधर्मावच्छिन्नविधायकत्व' 'स्वीयोद्देश्यतावच्छेदकव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वो' भयसम्बन्धेन । 'वृद्धिरेची'त्यस्य'आद्गुण'इति सूत्रवैशिष्ट्यवारणायाद्यः सम्बन्धः, 'ओमाङोश्चे'त्यस्य'एङि पररूप'मितिशास्त्रवैशिष्ट्यवारणाय द्वितीयः सम्बन्धः । अर्थवच्छास्त्रविशिष्टत्वात्समासग्रहणस्य नियमत्वं, 'व्यवायेपी'ति शास्त्रविशिष्टत्वाच्च'अट्कुप्वाङ्नुम्भि'रित्यस्य नियमत्वमिति—**संक्षेपः** । अस्य समन्वयः स्वयमूहनीयः ।

भाष्ये तु 'रषाभ्या'मिति सूत्रे 'ऋवर्णान्नस्ये'त्यस्य प्रत्याख्यानाय—'व्यवाये' इति योगं विभज्य 'अट्कुप्वाङ्नुम्भि'रित्येतत्—'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यै' रित्यर्थकं व्याख्यातम् । तदा तु 'आदर्शेने'त्यादौ प्राप्तिरेव नेति बोध्यम् ।

❀ अभिनव-चन्द्रिका ❀

तद्विकलांशस्योपस्थित्या अडादीतरत्वेनाऽव्यवहितपदार्थे सङ्कोचस्य कर्तुमशक्यत्वात् । 'तस्मि'न्निति 'तस्मा'दितिपरिभाषे हि योंऽशो बाधितः सिद्धो वा तमंशम्परित्यज्यान्यांशविशिष्टे उपतिष्ठेते । यथा प्रत्ययविधौ 'परश्चे'त्यधिकारेण उत्तरत्वांशस्य सिद्धत्वात्तदंशरहिता 'तस्मा'दिति उपतिष्ठते । एवं 'व्यवायेऽपी'त्युक्त्याऽऽव्यवहितांशस्य बाधितत्वात्तदनुपस्थितौ तत्र कथमडादीतरत्वेन सङ्कोच इति विभाव्यताम् । तथाचादर्शेनेत्यादौ णत्वं दुर्वारमेवेति बोध्यम् । **णत्वस्य प्राप्तिरेव नेति** । इदमपि चिन्त्यमेव,—नियमस्थले हि 'नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे सङ्कोचं कृत्वा नियमशास्त्राणां विधिमुखेन प्रवृत्ति'रित्येकः पक्षः । अथवा 'निरुक्तरूपावच्छिन्ने नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा नञश्चाध्याहृत्य नियमशास्त्राणां निषेधमुखेन प्रवृत्ति'रित्यपरः कल्पः । तथाच प्रकृते आद्यकल्पे—'व्यवायेऽपी'ति नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य—नियामकशास्त्रीयो-

❀ चिदस्थिमाला ❀

सिद्धान्तमाह—**भाष्ये त्विति** । पाठक्रमादार्थक्रमो बलीयानितिन्यायेनाह—**व्यवायेपीति** । विभज्य= 'तत्र णत्वं विधाये'ति शेषः । छान्दसो भिसो लुगिति सूचयन्नाह—**नुम्भिरिति** । तदर्थमेवाह—**अक्षरेति** । नियमस्य सजातीयापेक्षत्वादिति भावः । **व्याख्यानमिति** । एतेनोक्तरीत्या योगविभागेन विनापि निर्वाहः सुकर इति दण्डयुक्तं, 'वस्तुतो व्यवायेऽपीति न कार्यम्-उक्तज्ञापकात्तत्र निर्दिष्टाङ्ग-विकल्पपरिभाषोपस्थितिः, अट्कुप्विति तु पूर्ववन्नियमार्थ'मिति शास्त्र्युक्तञ्चापास्तम् ।

❀ ज्योत्स्ना ❀

**एतैरेवाक्षरसमाम्नायिकैरिति** । न चैवं 'रामेणे'त्यादौ दोषः, आक्षरसमाम्नायिकाकारादिभिः

❀ सदाशिवभट्टीयम् ❀

इत्याद्युक्तौ मृत्स्नेत्यादाविवादर्शेनेत्यादावपि णत्वं वारितं स्यात् , एवञ्चादर्शेनेत्यत्र णत्वसिध्यर्थमेव तथा [ 'चुटूतु' इत्यादिरीत्या सूत्रकृता— ] नोक्तमित्येव कुतो न स्यादिति वाच्यं, 'चुटूतु'—एवमुक्तावपि 'रषाभ्या'मिति पञ्चमीनिर्देशाद्व्यवधानमात्रे अप्राप्तावेतैरेव व्यवधाने न भवति, आदर्शेनेत्यत्राडादि-सहितव्यवधाने तु भवत्येवेति नियममुखेन वक्तुं शक्यत्वादित्याहुः । यद्वा 'शर्व्यवाये ने'ति शेष-भाष्यस्य तवर्गाद्यनुक्त्योपलक्षणतयैवोद्द्योते व्याख्यातत्वेन मात्रपदविशिष्टन्यासेपि तात्पर्यं बोध्यम् । न्यासश्च निषेधप्रकरणे, स चेत्थं 'नभू'इति प्रकरणे 'पदेन व्यवाये चुटूतुलशर्मात्रेणे'ति । विधिप्रकरणे च'रषाभ्या'मित्यस्यानन्तरम्—'आङ'इति पञ्चम्यन्तस्याधिकारः कार्यः, शर् च—अयोगवाहभिन्नः, तुसाह-चर्यात्, तेन क्रिमिशब्दादाचक्षाणणिजन्तात्क्विपि क्रिम्शब्दस्यान्शब्देन षष्ठीसमासे शसि अल्लोपे [अनुस्वारे] 'क्रिंणः पश्ये'त्यत्र शरा [ अनुस्वारेण ] व्यवायाण्णत्वं न स्यादिति फलभेदो न । अत्र न्यासे एकोन-विंशतिर्मात्रा, विंशतिर्वा, यथान्यासे सप्तदशमात्राः, नुम्ग्रहणत्यागे पञ्चदश वेति गौरवमभिप्रेत्य गुरुन्यासे-त्युक्तम्, आद्ये कल्पे तु मात्रपदाभावेन पञ्चदश तास्तथापि गुर्वित्यस्य लघुभिन्नेत्यर्थ इति न दोषः । प्रतिपत्ति-गौरवादस्यैकदेश्युक्तित्वम् । **प्राप्तिरेव नेति** । ननु निषेधमुखेन प्रवृत्तिरिति पक्षे—व्यवाये णत्वम्भवत्यडादि-

❀ विषमपदविवृतिः ❀

तु नैवं, 'व्यवायेने'ति लघुन्यासेन सिद्धेऽट्कुप्वग्रहणमेतैरेव व्यवाये इत्यर्थकं भविष्यतीति सूपपन्नं भाष्यम् । **आक्षरसमाम्नायिकैरिति** । वर्णैरित्यर्थः । अज्भागे तु न वर्णत्वम् ।

**णत्वे इति**। णकारे इत्यर्थः।

**पदान्तस्य**। 'न भाभू' इति सूत्रान्नेति वर्त्तते। अत्र सूत्रे 'अनन्तरस्ये'-

ॐ अभिनव-चन्द्रिका ॐ

द्देश्यतावच्छेदकव्यापकाक्षरसमाम्नायिकत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा–'अट्कुप्वा'ङित्यस्य विधायकत्वे आदर्शेनेत्यत्राट्कुप्वाङित्यनेन णत्वस्य दुर्वारत्वात्,–'अट्कुप्वा'ङित्यत्र वा'ऽडादिकर्तृकव्यवधानवद्भिन्नो य आक्षरसमाम्नायिककर्तृकव्यवधानवान् तस्य नस्य णत्वं न भवती'ति निषेधमुखेन प्रवृत्तौ–'व्यवायेपी'त्यनेन आदर्शेनेत्यादौ णत्वस्य दुर्वारत्वात्। अत एव 'रषाभ्या'मिति भाष्ये–'मातृणामि'त्याद्यर्थं 'रषाभ्यांणत्वे ऋकारग्रहणं कर्तव्य'मिति वार्तिकमुक्त्वा–'अट्कुप्वा'ङिति योगविभागेन नियमं च स्वीकृत्य तद्वार्तिकञ्च प्रत्याख्याय—'अट्कुप्वा'ङितिसूत्रे—आदर्शेनेत्यादौ णत्ववारणाय—'अटा व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्य' इति वार्तिकमुक्तम्। अन्यथा पूर्वसूत्रे एव 'आदर्शेने'त्यादौ नियमेनैव णत्ववारणादेतद्वार्तिकानुत्थानमेव स्यात्। अग्रे भाष्यकारेण चोक्तम्"—'व्यवायेपी'ति योगो विभज्यते, अट्कुप्वाङिति नियमार्थ'मित्यादि। अग्रे 'अटैव व्यवधाने भवति,—किं वक्तव्यमेतत्? नहि, कथमनुच्यमानं गस्यते? अड्ग्रहणसामर्थ्यादिति, यदि हि अटा चान्येन च व्यवाये स्यादड्ग्रहणमनर्थकं स्यात्, 'व्यवाये णो भवती'त्येव ब्रूयात्। अस्ति चान्यदड्ग्रहणस्य प्रयोजनं, किम्?, योऽनिर्दिष्टैरेव व्यवायस्तत्र माभूत्—'कृत्स्नम्' 'मृत्स्ने'ति, यद्येतं प्रयोजनं स्यात्–'शर्व्यवाये ने'त्येव ब्रूयात्—" इति भाष्ये समाहितम्।

'चुटुतुलशर्व्यवाये ने'ति मूलोक्तं चिन्त्यमेव, भाष्येऽदर्शनात्। तस्माच्छर्व्यवाये नेत्येव सिद्धे 'अट्कुप्वा'ङिति गुरुन्यासकरणादट्कुप्वाङ्नुम्भिरेव व्यवाये णत्वं भवतीति सूत्रार्थ इति आदर्शेनेत्यादौ णत्वं न भवतीति। न च 'शर्व्यवाये ने'ति न्यासकल्पे 'आर्च्ने'दित्यादौ णत्वं स्यात्, यथाश्रुतन्यासे च अडादिव्यवधानाभावाण्णत्वं न स्यादिति फलभेद इति वाच्यं, 'तुशर्व्यवाये ने'त्येव सिद्धे 'अट्कुप्वा'ङिति गुरुन्यासकरणेन निरुक्तार्थस्य लाभात्। भाष्ये 'शर्व्यवाये ने'त्यपि 'तुशर्व्यवाये ने'त्यस्यैवोपलक्षणमिति दिक्।

**णकार इत्यर्थ इति**। अयं भावः—णपदस्य णत्वावच्छिन्नाभिन्नो यो णपदवाच्यस्तत्र शक्तिः, तथाच प्रत्ययप्रकृतिणपदजन्यबोधे णत्वावच्छिन्नस्य प्रकारीभूतत्वात्त्वप्रत्ययोऽपि णकारे इति। अत एव 'कुत्वं कस्मान्न भवती'ति भाष्येऽपि कुपदस्य कवर्गाऽभिन्नो यः कुपदवाच्यस्तत्र शक्त्या—कुत्वं कस्मान्न भवतीत्यस्य कवर्गः कस्मान्न भवतीत्यर्थः। तथाच 'वृद्धिरादै' जित्यादौ 'कुत्वं कस्मान्न भवती'त्यस्य-सङ्केतसम्बन्धेन कुपदं कस्मान्न तिष्ठती'ति प्रश्नाशय इत्याहुः। परे तु शब्दब्रह्मवादिमते धर्मी सर्वत्रैक एव-सत्यज्ञानानन्दस्वरूपोऽखण्डोऽखण्डानन्दैकरसः सर्वज्ञः सर्वशक्तिमानिति तस्य विधातुमशक्यत्वाद्धर्मा एव विधेयाः। तथाच कुत्वं कस्मान्न भवतीति यथाश्रुतमेव समीचीनम्। प्रत्युत कुमर्वतीत्यादेरेव कुत्वं भवतीत्यर्थः कर्तव्यः, तथाच 'णत्वे' इत्यस्य णकार इत्यर्थ इति व्याख्यानमसमञ्जसमेवेत्याहुः।

ॐ ज्योत्स्ना ॐ

प्रत्याययितानामाकारादीनामप्याक्षरसमाम्नायिकत्वाभ्युगमात्। तर्हि'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते'इतिपक्षे'मातृणा'मित्यादावृकारैकदेशस्य रेफस्येव तदुत्तरभागस्य ऋकारेण सावर्ण्या-

ॐ सदाशिवभट्टीयम् ॐ

भिन्नैराक्षरसमाम्नायिकैर्व्यवाये नेत्यर्थात् प्राप्तिरेव नेति। स्वसिद्धान्तभूते विधिमुखेन प्रवृत्तिरिति पक्षे—स्वाक्षरसमाम्नायिकातिरिक्तैः व्यवाये णत्वं भवत्यडादिभिर्व्यवाये णत्वम्भवतीत्यबाधात्तस्य चात्र सत्त्वात्प्राप्तिरस्त्येव।

किञ्च 'व्यवायेपी'त्यनेन 'कृशेने'त्यादौ णत्वापत्तिरनाक्षरसमाम्नायिकाऽऽभक्त्वा व्यवायसत्त्वादिति चेन्न, 'अट्कुप्वाङ्नुम्व्यवायेपि' पूर्वत्र व्यवायेपीत्यपकृष्यते, रषाभ्यामव्यवहितपरस्याडादिव्यवाये णत्वमिति, रषाभ्यामव्यवहितपरस्यानाक्षरसमाम्नायिकव्यवाये इत्यर्थाच्च। व्यवायेपीति सूत्रे पूर्वसूत्रानुवृत्त्या 'कृशेने'त्यादौ

त्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या, 'अपदान्तस्ये'त्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात् ।

**यस्मात्प्र** । 'यस्मा'दिति—'तदादी'ति तच्छब्दाकाङ्क्षापूरणाय । **तदादीति** । तत्—प्रकृतिरूपम्—आदिर्यस्येत्यर्थः । प्रत्यासत्तिन्यायलब्धार्थमाह—**तस्मिन्प्रत्यये इति** । 'गुणः कृतात्मसंस्कार' इति न्यायेनात्रापि 'तस्मि'न्निति परिभाषाप्रवृत्तिः । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम् ।

**स्त्री इयतीति** । इदम्शब्दाद्वतुपि वस्य 'किमिदम्भ्यां वो घ'इति घादेशे तस्येयादेशे 'इदं किमो'रितीशि 'यस्ये'ति लोपे ङीपि'इयती' इति रूपम् । न च तत्र परतः

❀ अभिनव-चन्द्रिका ❀

**अप्रवृत्तिर्बोध्येति** । सर्वणत्वविधिकाण्डानन्तरं णत्वनिषेधकाण्डारम्भादिति भावः । प्रमाणान्तरमप्याह—**अपदान्तस्येत्यादि** । **यस्येत्यर्थ इति** । प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठाद्यवयवतानिरूपक इति भावः ।

**तस्मिन्प्रत्यय इति** । तथाच 'स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाद्यवयवकत्व','स्वाव्यवहितपूर्वत्वे'तदुभयसम्बन्धेन प्रत्ययविशिष्टत्वमङ्गत्वमिति फलितम् । **परिभाषाप्रवृत्तिरिति** । औपश्लेषिकाधिकरणबोधकसप्तम्यन्त घटितस्वरूप—तस्मिन्निति—परिभाषाशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्व-

❀ चिद्स्थिमाला ❀

स्वं रूपमिति शास्त्रतोऽणादेः सञ्ज्ञाशब्दत्वावगमात्तत्र च शब्दस्यैव प्रवृत्तिनिमित्तत्वेन तस्यैव भावप्रत्ययवाच्यत्वादाह-**णकारे इति** । तदुक्तं हरिणा—'सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता । सञ्ज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभि'रिति । **न्यायाप्रवृत्तिरि**ति पाठः । 'न्यायाना'मितिपाठे विषयभेदकृतं बहुत्वम् ।

**अपेति** । 'रषाभ्या'मित्यादौ षष्ठीसमासभ्रमायाह—**तदिति** । तस्मिन्नित्यंशलाभबीजमाह—**प्रत्येति** । 'प्रत्ययविधौ चापञ्चम्या'इतिनिषेधादत्र तदन्तग्रहणं न । नन्व'न्योपकारकत्वेन द्वयोर्गुणत्वाद्गुणाना'मितिन्यायेनात्र परिभाषाप्रवृत्तिर्न स्यादत आह—**गुण इति** । लक्ष्यानुरोध एव व्यवस्थाबीजम् । ननु तदादिग्रहणात्केवलप्रकृतेरन्तरङ्गत्वं न स्यादत आह—**प्रकृतीति** । अत्र 'यस्येति चे'तिलोपापत्तिः । असिद्धत्वन्तु न, 'प्राग्भादसिद्धत्व'मिति पक्षाभ्युपगमात् । 'श्नसोर'दितितपरकरणेन तदनित्यत्वात्सूत्रस्य प्रत्याख्यानाच्च । वस्तुतो रूपोदाहरणमेतत्, कार्योदाहरणं तु ओयत इत्यादि (?) । 'स्त्री अं पश्ये' त्यादावियङ् स्यादिति ।

❀ ज्योत्स्ना ❀

ज्जातिपक्षाश्रयणाद्वा अङ्ग्रहणेन ग्रहणे योगविभागनियमावन्तरेणापि तत्र णत्वसिद्धिरिति चेन्न, व्यक्तिपक्षे तस्य भागस्य स्फुटप्रतिभासाविषयस्य तुल्यस्थानप्रयत्नकत्वाभावात्सावर्ण्याभावात् । पक्षान्तरे

❀ सदाशिवभट्टीयम् ❀

दोषः । पूर्वोक्तवार्तिकमतेप्येवं सत्त्वेन तदात्विति विशेषोपादानकथनमिति तु चिन्त्यं, प्रत्याख्यानेति न्यायप्रवृत्तौ तु फलभेदात् न स्यादिति भावः । **यस्मात्प्र** । 'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । प्रधानस्योपकारे हि तथा भूयसि वर्तते'इतिन्यायशरीरम् । यस्मात्परो यः प्रत्ययो विधीयते तत्प्रत्ययोपश्लिष्टतदाद्यङ्गमित्यर्थेन सिद्धे परिभाषोपस्थितिर्मुधा, परनिमित्तकत्वन्तु परसत्ताशाप्यसत्ताकत्वेन सुलभमिति तु न वाच्यं,वक्ष्यते ।

❀ विषमपदविवृतिः ❀

**यस्मात्प्रत्ययविधिः** । 'गुणानां च'ति न्यायेन 'तस्मि'न्निति परिभाषाया अप्रवृत्तिमाशङ्क्याह—**गुणः कृतात्मेति** । 'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । प्रधानस्योपकारे हि तथा भूयसि वर्तते'इति न्यायः ।

❀ वरवर्णिनी ❀

**इति रूपमिति** । अयमाशयः—विधिग्रहणाभावे यस्मादिति पञ्चम्युपपत्तये दिक्छब्दाध्याहारे यस्मात्परः प्रत्ययः—तस्मिन्प्रत्यये परे तदादि अङ्गसञ्ज्ञं स्यादिति सूत्रार्थनिष्पत्त्या 'स्त्री इयती'त्यादौ—स्त्रीशब्दा-

स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न, यस्येतिलोपस्याभीयत्वादसिद्धत्वेनात्र तदप्राप्तेरिति वाच्यं, व्याश्रयत्वेनाभीयासिद्धत्वाप्राप्तेः ।

तत्र हि—समानाश्रयत्वम्—असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम् । अस्ति च 'यस्येति'लोपापेक्षया 'स्त्रिया'इति सूत्रेऽधिकस्य स्त्रीशब्दस्या-

---

❀ अभिनव-चन्द्रिका ❀

सत्त्वादिति भावः । **अन्यूनानतिरिक्ताश्रयकत्वमिति** । तत्त्वञ्च यत्किञ्चिदाभीयशास्त्रविशिष्टत्वं,

❀ चिदस्थिमाला ❀

**शास्त्रिदण्डिप्रभृतयस्त्वेति** ध्वनयन्नाह—**स्त्रीशब्देति** । आदिना 'प्रधी इयर्ती'त्यादौ दणपरिग्रहः ।

ननु प्रत्ययसापेक्षत्वमुभयोस्तुल्यमिति कथं तत्त्वमत आह—**तत्र हीति** । **अधिकेति** । इवर्गस्य

❀ ज्योत्स्ना ❀

जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः । **इयङापत्तिरूपो दोष इति** । आदिपदा'यस्येति चे'ति-लोपः । 'वाम्शसो'रित्युत्तरसूत्रेऽम्शस्साहचर्यात्स्त्रिया इयङ्निमित्ताजादिप्रत्ययस्य सुप्सञ्ज्ञकस्यैव ग्रहणादियङो वारणसम्भवात् । ननु समानाश्रयत्वं–समाननिमित्तकत्वं, तच्चेयङ्लोपयोस्तद्धितनिमित्तकयोरस्त्येव, न, व्याश्रयत्वं व्याचष्टे—**तत्र हीति** । **असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तेति** । अत्र

❀ सदाशिवभट्टीयम् ❀

**असिद्धत्वेनेति** । स्थानिवत्त्वन्तु नोक्तं, पदसंस्कारे आदिष्टादचः पूर्वत्वाभावात् । वाक्यसंस्कारेऽपि लोपे तत्प्राप्तावपीयङि'न पदान्ते'ति निषेधात् । **नातिरिक्तेति** । विकारकृतमतिरिक्तत्वं तु न, तेन नहि विशाका-

❀ विषमपदविवृतिः ❀

वस्तुतो 'गुणानाञ्चे'ति न्यायो नात्र शास्त्रे समाश्रीयते इत्युक्तं प्राक् । **इयङाद्यापत्तिरिति** । आदि-

---

❀ वरवर्णिनी ❀

वतुपः परस्य सत्त्वादङ्गसञ्ज्ञायां 'स्त्रिया' इतीयङापत्तिः । विधिग्रहणे तु—न्यक्लोपपक्षन्या—यमुद्दिश्य प्रत्ययो विहितस्तस्मिन्प्रत्यये तदादेः [—प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठावयवत्वनिरूपकसमुदायस्य—]—अङ्गसञ्ज्ञा भवतीत्यर्थेन वतुपः स्त्रीशब्दमुद्दिश्य विहितत्वाभावेन नाङ्गसञ्ज्ञेति तत्र नेयङाद्यापत्तिरिति ।

न च विधिग्रहणेऽपि सुनिरूपिताङ्गत्वस्य स्त्रीशब्दे सत्त्वात्—'स्त्री-इयर्ती'त्यत्रेयङापत्तिर्दुर्वारैवेति वाच्यं, प्रत्यासत्त्या यस्मिन्प्रत्यये परत आदेशस्तन्निरूपिताङ्गत्वस्यैव विवक्षणीयतया अजादिप्रत्ययप्रयोज्याङ्गसञ्ज्ञावतः स्त्रीशब्दस्यैवाजादौ प्रत्यये परत इयङादेशेन'स्त्री इयर्ती'त्यत्रादोषात् । न च विधिग्रहणाभावेऽपि ईकारलोपस्य स्थानिवत्त्वादजादिप्रत्ययपरत्वाभावेनेयङापत्तिर्नेति वाच्यं, पदचरमावयवे विधौ 'न पदान्ते'ति स्थानिवद्भावनिषेधात्, पदसंस्कारपक्षे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावादचः परस्मिन्नित्यस्याप्राप्तेश्च ।

न च 'वाम्शसो'रित्युत्तरसूत्रसाहचर्येण 'स्त्रिया' इत्यस्याजादौ सुप्येव प्रवृत्त्यङ्गीकारात्स्त्री-इयनीत्यत्र न दोष इति वाच्यं, सूत्रान्तरसाहचर्यस्य प्रामाणिकैरनङ्गीकारात् । न च विधिग्रहणाभावेऽपि—'असिद्धवदत्राभा'-दितिसूत्रेणाभीयस्येति चेतीकारलोपस्यासिद्धत्वेन तद्व्यवधानान्नेयङापत्तिस्तत्रेति वाच्यं, 'स्त्रिया'इत्यत्र 'यस्ये'तिलोपापेक्षया स्त्रीशब्दस्याऽधिकस्यापेक्षणादसिद्धत्वाश्रय-यस्येतिचेतिलोपशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वस्य'स्त्रिया'इत्यत्राभावेनासिद्धवदित्यस्यात्राऽप्राप्तेः ।

पेक्षा। प्रत्यासत्त्या चाजादिप्रत्ययनिरूपिताङ्गे एवेयङ्प्रवृत्त्या स्त्रीशब्दस्य सुनिरूपिताङ्गत्वेऽपि न दोषः।

॥ अभिनव-चन्द्रिका ॥

वैशिष्ट्यञ्च 'स्वविशिष्टत्व' 'स्वीयोद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावाञ्शब्दसमुदायस्तत्समभिव्याहृतो यस्तद्घटितसमुदायाश्रयकत्वै'तदन्यतरसम्बन्धेन। प्रथमसम्बन्धे वैशिष्ट्यञ्च 'स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्व' 'स्वीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वो'भयसम्बन्धेन: प्रथमसम्बन्धानुपादाने चिणोलुग्दृष्ट्या चिणो लुकोऽसिद्धत्वं न स्यात्। द्वितीयसम्बन्धे निरुक्तसमभिव्याहृते 'समुदाय' इति विशेषणादाने 'जही'त्यादौ 'अतो हे'रिति दृष्ट्या 'हन्तेर्ज' इत्यस्यासिद्धत्वं न स्यात्। समभिव्याहृतपदानुपादाने स्थान्यादेशयोर्भिन्नस्वरूपमादाय दोषः स्यादतस्तदुपात्तम्। एतेन यथाश्रुतमूलरीत्या 'जही'त्यादौ हेर्लुकि कर्तव्ये जादेशस्या-

॥ चिदस्थिमाला ॥

तत्रापि यथाकथञ्चिन्निमित्तत्वमस्त्येव, तदपि यथाकथञ्चिदिति भावः। ननु स्त्रीशब्दात्तस्याविधानेऽपि सोर्विधानेनाङ्गत्वाद्विधिग्रहणे कृतेऽपि दोष एवात आह—**प्रत्येति**।

॥ ज्योत्स्ना ॥

निमित्तशब्दः कार्यिसाधारणः, अन्यथा 'जही'त्यत्र हिलोपे कर्तव्ये जभावासिद्धेरप्रसङ्गात्, जभावे हि हिशब्दो निमित्तं, हिलोपे च 'ज' इत्यदन्तमङ्गमिति तयोरसाम्यात्। निमित्तमपि शब्दरूपमेव ग्राह्यं, तेन 'कुर्वः' 'कुर्म' इत्यत्र म्वोरुलोपस्यासिद्धत्वा'दत उत्सार्वधातुक'इत्युत्त्वसिद्धिः। सञ्ज्ञादिकृतनिमित्तान्यूनानतिरिक्तत्वस्यापि ग्रहणे तदसङ्गतिः। आङ्गत्वादुभयोः प्रत्ययापेक्षत्वेऽप्युत्वविधौ सार्वधातुकत्वस्यातिरिक्तत्वेनाश्रयणात्। अतिरिक्तमपि पूर्वविध्युपात्ततावच्छेदकरूपेणाश्रितं चेत्तदपि समानाश्रयमेव, अत एव चिणो लुकि चिणो लुगसिद्धः, यत्र तु तथानाश्रितं,–यथा चङ्क्रायितेत्यत्र 'ये विभाषा' इत्यात्वे निमित्तं यङमपेक्ष्य 'यस्य हल'इति यलोपे आर्धधातुकत्वेन तृच्। तत्रत्याश्रयावादसिद्धत्वं नेति शब्दरत्नः। अत्रोपात्तता व्यापकधर्मावच्छिन्ना ग्राह्या, न व्याप्यधर्मावच्छिन्ना,'आस'न्नित्यादावल्लोपाद्विध्योः प्रत्ययपरकाङ्गत्वेन साम्येपि—तद्व्याप्यसार्वधातुकत्व–लुङ्त्वादिना तदभावात्। व्यापकधर्मोऽपि शक्त्याख्यसम्बन्धेन न शब्दोपात्त इत्याग्रहः, किन्तु लक्ष्यप्रक्रियाक्षिप्तोऽपि, तेन 'चङ्क्रायिते'त्यत्रात्वयलोपयोरुभयोः प्रत्ययपरकाङ्गत्वसाम्येऽपि प्रत्ययपरकप्रत्ययान्ताङ्गत्वेन प्रत्ययद्वयापेक्षत्वाद्यलोपस्यात्वमपेक्ष्याऽधिकाश्रयत्वं न विरुध्यते। अत एव—'अचःपरस्मि'न्निति सूत्रे 'हलचोरादेशःस्थानिवदिति'चे'द्विंशतेस्तिलोप एकादेशो वक्तव्य'इति वार्तिके 'विंशक' इत्यत्र वुनि तिलोपे

॥ सदाशिवभट्टीयम् ॥

दावसिद्धत्वं, स्पष्टं चेदमुद्द्योते। यत्तु शब्दरत्नमनूद्योपात्तता व्यापकधर्मावच्छिन्नेत्यादिना क्लिश्यन्ते, तन्मुधैव,

॥ विषमपदविवृतिः ॥

पदग्राह्यं चिन्त्यम्। यत्तु पाठकेनोक्तम् 'आदिपदाद्यस्येति चेति लोपो ग्राह्य'इति, तत्तुच्छम्; तस्मिन्कर्त्तव्ये इकारस्य स्थानिवत्त्वादाभीयासिद्धत्वाच्च। न च 'न पदान्ते'ति निषेधः, लोपस्य पदानवयवत्वात्, चिणोलुङ्न्यायेन समानाश्रयत्वाच्च। 'वाम्शसो'रित्येतत्साहचर्यात्सुप एवाच्प्रत्ययस्य ग्रहणे तु 'स्त्री औ'इत्युदाहर्त्तव्यम्। अशब्दादौप्रत्यये रूपम्। परादिवद्भावेन च प्रत्ययत्वम्।

एवं 'वारि औ'इत्यत्र 'इकोऽची'ति नुम्, स्त्रीशब्दस्येयच्छब्देन समासे'ऽचि श्नि'तीयङ्। न च स्थानिद्भावः, 'न पदान्ते'ति निषेधात्। ननु विधिग्रहणे कृतेपि स्त्रीत्वस्य सुनिरूपिताङ्गत्वमादायेयङ् दुर्वार इत्यत आह—**प्रत्यासत्त्येति**। तदादिग्रहणस्य 'भवामी'त्यादिमूलोक्तं प्रयोजनं न युक्तं,

विधिग्रहणादेव 'भनक्ती'त्यादौ 'अतो दीर्घो यञी'ति न । तदादिग्रहणं [illegible]

❀ अभिनव-चन्द्रिका ❀

सिद्धत्वानापत्तिः, चिणो लुग्दृष्ट्या चिणो लुकोऽसिद्धत्वानापत्तिश्चेति परास्तम्ः मूलोक्तान्यूनानतिरिक्तसमुदायाश्रयकत्वमित्यस्य-निरुक्तलक्षणोपलक्षणत्वात् । भिनत्तीत्यादाविति । अयम्भावः—'प्रत्ययेऽङ्ग' मित्येव सिद्धे 'यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्ग'मिति करणाद्—यदवधिकपरत्वावच्छिन्नविधेयताश्रयो यःप्रत्ययस्तस्मिन्परतः तदाद्यङ्गसञ्ज्ञं स्यादिति 'स्त्री–इयती'त्यादौ स्त्रीशब्दावधिका-

❀ चिदस्थिमाला ❀

नस्य फलान्तरमप्याह—विधीति । ननु तदादिग्रहणफलं मूलोक्तमयुक्तं, तदभावेऽपि तत्रारम्भसामर्थ्यादेव तत्सिद्धेः । यत्तु पय वय गतौ आभ्यां यङ्लुकि 'पापामि' वावामी'त्यादौ तच्चारितार्थ्यमिति—शाब्दिकदण्डिप्रभृतयस्तन्न, यङ्लुकश्छान्दसत्वात्, तदेतद्ध्वनयन्मौलाऽऽदिपदसङ्ग्राह्यमेवाह—करोमीति । प्राचोक्तमेवाह—तथा सतीति ।

❀ ज्योत्स्ना ❀

तस्य स्थानिवद्भावात्पररूपाभाव आपादितो न 'यस्येति चे'त्यल्लोपाभावः । तिलोप-यस्येतिलोपयोः प्रत्ययपरकाङ्गसञ्ज्ञाश्रयत्वेन समाननिमित्तकत्वा'द्यस्येति' लोपे तिलोपस्यासिद्धत्वादिति हि तस्याभिप्रायः । एवं तु 'स्त्री इयती'त्यत्रापि यस्येति लोपेयङ्योरपि प्रत्ययपरकाङ्गत्वसाम्यात्समानाश्रयत्वादियङाद्यापत्तिर्न भवति । समानाश्रयत्वञ्चासिद्धत्वाश्रयशास्त्रोपयुक्ताङ्गसञ्ज्ञानिमित्तप्रत्ययान्यूनानतिरिक्तनिमित्ताश्रयत्वमित्येव,अत एव 'स्त्री इयती'त्यत्र प्रागभादसिद्धत्वमितिपक्षेऽसिद्धवत्सूत्रप्रत्याख्यानपक्षे वा दोषः-इत्युपाध्यायैर्व्याख्यातमित्यस्वरसादाह—एव भनक्तीत्यादाविति । 'भवामि' 'भविष्यामी'ति

❀ सदाशिवभट्टीयम् ❀

व्यतिरिक्तस्यैवाभावेन दोषलेशाभावात् । ननु समानाश्रयत्वम्-असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तान्यूनानतिरिक्तकार्यिनिमित्तान्यतरकत्वमित्येवास्तु, मास्तु च विधिग्रहणमत आह—भनक्तीति । न च सिद्धान्तेपि 'मिदच'इति विधानमाश्रित्याङ्गत्वं दुर्वारमिति वाच्यं, तेनाचः परत्वस्याज्ञातस्य ज्ञापनेपि प्रत्ययस्यापूर्वबोधनाभावात् । अत एव 'भनक्ती'ति भाष्ये प्रयुक्तं, 'भूसुवो'रित्यतस्तिङीत्यनुवृत्त्या'आने मु'गिति सूत्रे भाष्ये स्पष्टतया दीर्घवारणे तु 'स्त्री ई पश्यती'त्यत्रैव स्त्रीशब्दस्येयङापत्तिर्बोध्या । ननु विकरणान्ते दीर्घे आरम्भसामर्थ्यात्सिद्धः । न च 'यायामी'त्यादौ यङ्लुङन्ते 'पुत्रीयामि''बोभूयामहे''चिकीर्षामी'त्यत्र शबेकादेशस्यान्वरत्वेनाङ्गत्वे च चरितार्थ इति वाच्यम्, आद्यस्यच्छन्दोविषयत्वात्, अन्येषु तु 'कृदतिङ्' सूत्रीयभाष्यरीत्या शबेकादेशस्य स्थानिवत्त्वात्प्राप्तिरेव नेत्यत आह—करोमीति । उद्द्योतीयफलप्रदर्शनमपि

❀ विषमपदविवृतिः ❀

विधानसामर्थ्येन तत्राङ्गस्येत्यस्यासबन्धकल्पनया दीर्घसिद्धेः । हन्तेर्यङ्लुक्यभिधाने दृढमानाभावादित्यभिप्रेत्य स्वयं तस्य फलमाह–तदादीति । वस्तुतश्चिकीर्षामीत्यादौ चारितार्थ्यान्मूलोक्तमपियुक्तम् ।

❀ वरवर्णिनी ❀

ननु 'कार्यमनुभव'न्नितिपरिभाषाप्रवृत्त्या स्त्रीशब्दस्य निमित्तत्वाभावेन समानाश्रयत्वमक्षतं, किञ्च—असिद्धत्वेनाभिमतशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयतापर्याप्त्यधिकरणीभूतसमुदायपर्याप्तविषयताप्रयोजकसप्तम्यन्तपदघटितत्वं समानाश्रयत्वमिति स्वीकारेण यस्येति लोपस्यासिद्धत्वेन 'स्त्रीयती'त्यत्र न दोष इति विधिग्रहणं व्यर्थमत आह—

भनक्तीति । केचित्तु-'अभ्यासस्यासवर्णे' इत्यतोऽसवर्णपदानुवृत्त्या 'स्त्रीयती'त्यत्र न दोष इत्यतो

१. अन्यूनानतिरिक्तपदोपादानफलन्तु—ज्योत्स्नाद्युक्तं–'चक्षायिता' 'पपुष' इत्याद्यनुसन्धेयम् ।

त्यादौ विकरणस्य गुणार्थम् ।

**प्रत्ययविशिष्टस्येति** । तथा सत्यङ्गेन प्रत्ययपरत्वलाभानापत्तौ 'वव्रश्च'

**ॐ अभिनव-चन्द्रिका ॐ**

ऽव्यवहितपरत्वावच्छिन्नविधेयताश्रयत्वस्य वतुप्यभावात्स्त्रीशब्दस्याङ्गसञ्ज्ञा न प्राप्नोतीति विधि-

**ॐ ज्योत्स्ना ॐ**

मूलोक्तोदाहरणेऽतो 'दीर्घो यञी'त्यारम्भसामर्थ्याद्दीर्घो भविष्यतीत्यत आह—**विकरणस्येति** ।

**ॐ वरवर्णिनी ॐ**

भनक्ती'त्यवतारयन्ति, तन्न, वासुदेवार्थकाऽशब्दादौ विभक्तौ परादिवद्भावेन सुप्त्वात्स्त्री-औ-इत्यत्रेयङापत्तेरेव जागरूकत्वादेतत्पर्यन्तानुधावनस्य अनुचितत्वादित्याहुः । विधिग्रहणाभावे भनक्तीत्यत्र हि—श्नमि परे 'भ' इत्यस्याप्यङ्गत्वापत्तावतो दीर्घ इति दीर्घापत्तिरित्याशयः । नच 'भूसुवो'रित्यतः तिङीत्यनुवर्त्य यञादौ तिङि दीर्घ इत्यर्थाद्भनक्तीत्यत्र न दोष इति वाच्यं, "—'ज्ञाजनोर्जे'ति सूत्रेण ह्रस्वजादेशविधानेऽपि जानाती-त्यादावतो दीर्घ इति दीर्घसिद्धेर्दीर्घाकारविधानमङ्गवृत्ते पुनर्वृत्तावविधिरितिपरिभाषाज्ञापकम्—"इति भाष्यो-क्तेर्विरोधेन तिङ्पदानुवृत्तेर्वक्तुमशक्यत्वात् । नच विधिग्रहणखण्डनाय प्रवृत्तस्य भाष्यविरोधोऽकिञ्चित्कर इति वाच्यम् , 'अभन'गित्यत्र 'तिङश्चे'त्यकचि अभनकगित्यत्र [ —अभन्—अक्—अगित्यत्र ] अभनित्यस्य अकज्निरूपिताङ्गत्वेनाल्लोपोऽन इत्यकारलोपापत्तेः । 'अल्लोपोऽनोऽनके' इति न्यासेन तत्र दोषवारणन्तु न युक्तं, लाघवाभावात् ।

नच विधिग्रहणेऽपि अकज्निष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वस्य—अभनगित्यत्र समुदाये इवापर्याप्त्या अभनित्यत्रापि सत्त्वादङ्गसञ्ज्ञापत्तिरिति वाच्यं, तादृशोद्देश्यतापर्याप्त्यधिकरणस्यैव ग्रहणात् , अत्रैव विधिग्रहणं तात्पर्यग्राहकमित्याशयात् ।

**अन्ये तु**—वासुदेवार्थकाऽशब्दादौ विभक्तौ ततो वारिशब्देन सम्बन्धे 'वारि-औ' इत्यत्रेकोऽचि विभक्तावितिनुमापत्तिः, परादिवद्भावेन विभक्तित्वात्,—अतो विधिग्रहणमावश्यकम् । नच 'सुपी'त्यनुवृत्त्यैव सिद्धे विभक्तिपदमनतिदिष्टविभक्तिग्रहणार्थमिति 'वारि—औ—' इत्यत्र नोक्तदोष इति वाच्यं, पूर्वोक्ते 'स्त्री—औ'इत्यत्र स्त्रिया इतीयङापत्तेरित्याहुः ।

केचित्तु—करोमीत्यादौ विकरणविशिष्टस्याङ्गसञ्ज्ञार्थं क्रियमाणस्य तदादिग्रहणस्य—दिग्योगपञ्चम्यां—[ 'करोमी'त्यादौ विकरणविशिष्टस्य मिप्परत्वेनाङ्गसञ्ज्ञायाः सिद्धेः—]—वैयर्थ्यापत्त्या तत्सामर्थ्यादेव यस्मा-दिति पञ्चम्या ल्यब्लोपपञ्चमीत्वनिर्णयसम्भवे विधिग्रहणमनतिफलकं व्यर्थमेवेत्याहुः ।

**गुणार्थमिति** । नच गुणविधायकशास्त्रवैयर्थ्यात्तदादेरङ्गसञ्ज्ञा भविष्यतीति वाच्यं, 'भवामी'त्यादौ गुणस्य चारितार्थ्येन ज्ञापनासम्भवात् । न च 'करोमी'त्यादौ—गुणविधायकशास्त्राणामङ्गाधिकारात्पूर्वमेव पाठादपि—गुणसिद्धौ तदादिग्रहणं व्यर्थमिति वाच्यम् , अशब्दादाचारक्विबन्ताद्धन्यर्थे के आर्धधातुकत्वादतो लोपे—'अ'इत्यार्द्धधातुकमात्रमवशिष्टं—तस्मिन्परतो वारि-मधु-सुन्वादिशब्दानान्त्यस्य गुणापत्तेरङ्गाधिकारे तत्पाठस्यावश्यकत्वात् ।

**वव्रश्चेति** । अयमाशयः—'यस्मात्प्रत्ययविधिस्तदादयङ्ग'मित्येतावन्मात्रमेव सूत्रमस्तु, प्रत्ययग्रहणं किमर्थम् , न चैवं तदादिरूपं कियदित्यपेक्षायामवधेरनिर्देशान्निरवधिकैवाङ्गसञ्ज्ञेति प्रत्ययविशिष्टस्य ततो-ऽप्यधिकस्यैव वाऽङ्गसञ्ज्ञापत्तौ राम भिसित्यत्र ससहाये व्यपदेशिवद्भावाप्रवृत्ते रामेत्यस्यानङ्गत्वेनातो भिस ऐसित्यैस् न स्यात् , एवं—'रामाभ्या'मित्यत्र 'सुपि चे'ति दीर्घो न स्यात् , समुदायस्यैवाङ्गत्वादिति वाच्यं, 'कौशल्यकार्मार्याभ्याञ्च' 'पापाणके कुत्सितै'रित्यादिनिर्देशैः, 'सुपि चे'त्यादिसूत्रारम्भसामर्थ्येन च ससहाये-ऽपि व्यपदेशिवद्भावप्रवृत्तेस्तत्र दोषाभावात् ।

इत्यस्यासिद्धिः । किञ्च 'राजपुरुष' इत्यादौ 'न लुमते'ति निषेधात्पूर्वपदे

❀ अभिनव-चन्द्रिका ❀

ग्रहणं किमर्थमिति प्रश्नः । 'भनक्ती'त्यादौ 'मिदचोऽन्त्या' दिति परिभाषया भकारोत्तराकारावधिकपरत्वावच्छिन्नविधेयताश्रयत्वस्य श्नमि सत्त्वेनाकारस्याङ्गसञ्ज्ञायामतो दीर्घो यञीति दीर्घापत्तिरिति भावः । असिद्धिरिति । एवञ्च 'क्रोष्ट्री'त्यत्र 'स्त्रियाञ्चे'ति तृज्वद्भावस्य प्रत्ययनिमित्तकत्वाभाव लुप्तप्रत्ययाव्यवहितत्वेन साक्षादवच्छिन्ना या—लुप्तप्रत्ययनिमित्तकाङ्गसञ्ज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्ना उद्देश्यता—तदुद्देश्यताके कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थक-'न लुमताङ्गस्ये'तिनिषेधाप्रवृत्तौ प्रत्ययलक्षणेन समासोत्तरं तृज्वद्भावप्राप्त्या लुकोऽन्तरङ्ग-'स्त्रियाञ्चे'ति तृज्वद्भाव-निमित्तविनाशकत्वस्याभावेन लुकः पूर्वं तृज्वद्भावे समासेऽपि श्रवणं दुर्वारमित्यपि बोध्यम् । न लुमतेतिनिषेधादिति । 'यस्मात्प्रत्यय' इति सूत्रे 'प्रत्यय' इतिपदाभावेन 'न लुमताऽ-

❀ चिदस्थिमाला ❀

तदनुक्रमाह—किञ्चेति । अपिः सिद्धान्तसमुच्चायकः । यत्तु तनोऽधिकस्येति स्पष्टार्थमतिशयोक्तिपरं

❀ ज्योत्स्ना ❀

असिद्धिरिति । उरदत्वस्य प्रत्ययनिमित्तकत्वालाभात्परनिमित्तकत्वाभावात्स्थानिवत्त्वाप्रवृत्तौ 'न सम्प्रसारणे सम्प्रसारण'मिति निषेधस्यासिद्धिरिति भावः । ननु 'वव्रश्चे'त्यत्राङ्गेन प्रत्ययपरत्वानाक्षेपेऽपि न दोषः, 'न सम्प्रसारण सम्प्रसारण'मित्यत्र सम्प्रसारणस्थानिनः सम्प्रसारणशब्देन बोधनात्तदसम्भवादत आह—किञ्चेति । अयं भावः—असति द्वितीये प्रत्ययग्रहणे प्रत्ययविधानमात्र-

❀ विषमपदविवृतिः ❀

ननु 'न सम्प्रसारणे' इत्यत्र सम्प्रसारणपदं लक्षणया स्थानिपरमतो न दोष इत्यरुचेराह—किञ्चेति । ननु 'न लुमता तस्मि'न्निति न्यासे—लुमता लुप्ते प्रत्यये परतो यत्पूर्वस्य कार्यं तदेव

❀ वरवर्णिनी ❀

न चैवमपि वव्रश्चेत्यत्रोरदत्त्वस्य परनिमित्तकत्वानापत्त्याऽचः परस्मिन्निति स्थानिवद्भावानापत्तौ सम्प्रसारणपरकत्वविरहेण 'न सम्प्रसारणे' इति अभ्यासस्य सम्प्रसारणनिषेधानापत्तिः, प्रत्ययग्रहणे तु अङ्गेन प्रत्ययाक्षेपादुरत्त्वस्य परनिमित्तकत्वेन स्थानिवत्वान्न सम्प्रसारण इति निषेधसिद्धिरिति वाच्यं, 'सम्प्रसारणाश्रयस्य प्रतिषेधो वक्तव्य' इति वार्त्तिकेन 'न सम्प्रसारण' इति सूत्रस्य प्रत्याख्यानेन सम्प्रसारणे कृतेऽपि सम्प्रसारणाश्रयस्य—पूर्वरूपस्य-निषेधेन यणि वव्रश्चेति रूपसिद्धेः । मूलकृन्मतेऽपि—'अभ्यस्तस्य चे'ति सूत्रेण सम्प्रसारणे सिद्धेऽपि 'ह्वः सम्प्रसारण'मिति—चङ्परकणौ सम्प्रसारणविधायक—सूत्रारम्भसामर्थ्यात्—अभ्याससञ्ज्ञानिमित्तशास्त्राणामभ्याससञ्ज्ञाप्रयोजक-द्वित्व-निमित्त-प्रत्यय-निमित्तकत्वमिति ज्ञापनेन उरदत्त्वस्य द्वित्वनिमित्तप्रत्ययनिमित्तत्वेन परनिमित्तत्वं सुलभमेवेति परनिमित्तत्वेन स्थानिवद्भावप्रवृत्त्या 'वव्रश्चे'त्यत्र 'न सम्प्रसारणे' इति निषेधप्रवृत्तिर्निष्प्रत्यूहैव ।

नच 'राजपुरुष'इत्यादौ प्रत्ययविशिष्टत्वेन 'न लुमते'ति निषेधप्रवृत्त्या प्रत्ययलक्षणाभावेन राजन्नित्यादेः पदत्वानापत्तौ नलोपानापत्तिरतः प्रत्ययग्रहणमावश्यकमितिवाच्यं, 'नलुमता तस्मिन्नि'तिन्यासेन तत्र प्रत्ययलक्षणप्रवृत्तिसम्भवादितिचेत्—'देवदत्त ओदनमपाक्षी'दित्यत्र सुप्रत्ययनिमित्ताकाङ्गसञ्ज्ञाया लुङन्ते सत्त्वाद्देवदत्तात्पूर्वमडागमापत्तेरतस्तदादिग्रहणमावश्यकमिति—इत्यलङ्गुरवरिपाठिपादाः ।

१. अजूहवदित्यत्राभ्यस्तस्य चेत्यनेनैव सम्प्रसारणसिद्धौ 'ह्वःसम्प्रसारण'मितिव्यर्थं, तथा ज्ञापिते तु—'अजूहव'दित्यत्र णिचा व्यवहितत्वाचङ्निमित्तकस्या'भ्यस्तस्य चे'त्यस्य तत्राप्राप्त्या 'ह्वःसम्प्रसारण'मिति सफलम् । ज्ञापनफलन्तु—'प्रजिहायकीयिषती'त्यत्राभ्यस्तस्येति सम्प्रसारणाभाव इति तत्त्वम् ।

पदत्वाभावेन नलोपानापत्तिरिति भावः । **ततोऽप्यधिकस्य वेति** । 'देवदत्त ओदनमपाक्षी'दित्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमप्यडापत्तिः, अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति भावः ।

**टाङसि** । 'अङ्गस्ये'ति षष्ठ्या 'अतो भिस' इत्यतोऽनुवृत्तेनात इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह—**अकारान्तादिति** । 'अकारात्परेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ' इति पक्षान्तरं भाष्ये। किञ्चादन्तादङ्गादित्यर्थेऽपि 'ब्राह्मणाभिस्सा' इत्यादावतिप्रसङ्गः। 'ब्राह्मणे'त्यस्यापि 'युवोरनाकौ' इतिसूत्रभाष्योक्त-

❀ अभिनव-चन्द्रिका ❀

ङ्गस्ये'त्यत्राङ्गपदेन प्रत्ययस्यानुपस्थित्या लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नेऽपि उद्देश्यतायां

❀ चिदस्थिमाला ❀

न त्वनिष्टप्रतिपादनपरम्, प्रत्यासत्त्या लुङादिनिमित्ताङ्गस्य ग्रहणादिति **शाखिदण्डि**प्रभृतयस्तन्नेत्याह—**अङ्गेति । अङ्गस्येतीति** । 'अधिकृते'त्यादिः । **मूलवच्छाखिदण्ड्या**द्युक्त्यसाङ्गत्यं ध्वनयन्सिद्धान्तपक्षमाह-**अकारादिति** । इदमपि तदभ्युपेत्य, वस्तुतः स पक्ष एवायुक्त इत्याह—**किञ्चादन्तादिति** । अपिना-अङ्गाधिकाराभावपक्षसमुच्चयः । ननु कथं तस्याङ्गत्वमत आह—**ब्राह्मणेत्यस्यापीति** । अपिः समुदायसमुच्चये । 'नलुमते'तिनिषेधस्य—लब्धाङ्गसञ्ज्ञकस्येत्यर्थात्—अनित्यत्वाद्वा अप्रवृत्तिस्तदाह—**युवोरनेति** ।

❀ ज्योत्स्ना ❀

प्रतिबद्धाङ्गसञ्ज्ञा राजञ्शब्दस्य स्यात्,ततः षष्ठीविधानात्, ततश्च पदत्वस्याङ्गसम्बन्धिकार्यत्वात् 'न लुमते'ति तन्निषेधान्नलोपो न स्यात् । सति तु प्रत्ययग्रहणे यस्मिन्प्रत्यये परतोऽङ्गसञ्ज्ञा वस्तुतोऽङ्गसञ्ज्ञोद्देश्यककार्यमपि तस्मिन्नेवप्रत्ययेपूर्वस्य प्राप्नोति चेत्प्रत्ययलक्षणप्रतिषेधो भवतीति प्रत्यासत्त्या आश्रीयते। असति तु तस्मिन् प्रत्यासत्तावप्याश्रितायां प्रत्ययनिमित्तकं कार्यं निषिध्यते, नतु प्रत्यये परतः पूर्वस्येति । 'पञ्चक्रोष्ट्रीभी रथै'रित्यत्र तु 'स्त्रियाञ्चे'ति तृज्वद्भावरूपाङ्गकार्यस्य पार्थक्येन प्रत्ययनिमित्तत्वाभावादुक्तप्रत्यासत्तेराश्रयितुमशक्यत्वात्प्रत्ययलक्षणं भवत्येवेति-'न लुमते'तिसूत्रस्थस्वग्रन्थविरोधो न, एवंसति प्रत्ययग्रहणे भाष्योक्तं स्यर्थमिति प्रयोजनमपि सङ्गृहीतं भवति । **युवोरनाकाविति सूत्रभाष्योक्त-**

❀ सदाशिवभट्टीयम् ❀

उक्तरीत्याऽरुचिग्रस्तं बोध्यम् । ननु प्रत्ययेऽङ्गमितीयतैव सिद्धे पदत्रयकरणाद्विहितपदाध्याहारे विधिग्रहणं मुधैवेति चेन्न। प्रत्यासत्तिप्रतिबन्धेन प्रत्ययभेद एव प्रवर्तनेन चारितार्थ्यसम्भवात् । पदत्रयस्य फलन्तु 'हरिर्भवामी'त्यत्र दीर्घः केवले नेति बोध्यम् ।

**टाङसि । अङ्गाधिकारे पाठो व्यर्थः स्यादिति** । उक्तलक्ष्यसिद्ध्यर्थमावश्यकपरिभाषाद्वयसञ्चारेणैवानङ्गादन्त—'सटा'इत्यादिव्यावृत्तौ सिद्धायां विभक्तिविपरिणामेनात्र व्याख्यानं तव निष्फलं स्यादिति भावः । अङ्गनिमित्तेत्यर्थे तु न तयोरावश्यकसञ्चारकत्वम् । सञ्चारे तु पाठो न कार्य इति स्पष्टं भाष्ये । एतेन 'ते आश्रित्य पाठवैयर्थ्यस्य भाष्ये सिद्धान्तितत्वेन तदापादनमसङ्गतं

❀ विषमपदविवृतिः ❀

निषिध्यत इति नात्र दोष इति चेद्दोषान्तरं गृहाण, श्रियावित्यादौ तावदियङनापत्तिर्दोषः; ससहाये व्यपदेशिवद्भावाऽप्रवृत्त्या श्रीत्यस्यानङ्गत्वात् । एवं 'जुहोती'त्यादौ गुणो न स्यात् । गुणस्तु करोतीत्यादौ चरितार्थः । 'प्रत्यय' इत्युक्तौ तु तत्परकस्य मुख्यतदादित्वव्यपदेशभाजोऽसत्त्वेनासहायत्वाद्व्यपदेशिवद्भावः सुलभः । अथात्र कथञ्चिद्व्यपदेशिवद्भावं मन्यसे तदा स्यर्थमित्यादावियङापत्तिः, 'न लुमते'ति निषेधस्योक्तविधयाऽप्रवृत्तेः । **युवोरनाकाविति** । तत्र द्वि-

रीत्याऽन्तर्वर्तिविभक्त्याऽङ्गत्वात् । अर्थवत्परिभाषया प्रत्ययग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे पाठो व्यर्थः । भिसः प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्रहणमिति युज्यते वक्तुं, नान्यथा । इदमेव हि 'अतो भिस' इत्यत्राङ्गाधिकारस्य प्रयोजनं भाष्ये दत्तमित्यलम् ।

**सुपि च** । 'अतो दीर्घो यञी'त्यनुवर्तते । 'यञी'त्यनेनाल्त्वात्तदादिविधिरित्याह—**यञादाविति** ।

---

❀ अभिनव-चन्द्रिका ❀

विशेषणस्य दातुमशक्यत्वेन लुप्तप्रत्ययनिमित्तकाङ्गसञ्ज्ञावत्पर्याप्तोद्देश्यताके कार्ये कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थस्य लाभेन 'राजपुरुष' इत्यादौ नलोपस्यापि लुप्तप्रत्ययनिमित्तकाङ्गसञ्ज्ञावत्पर्याप्तोद्देश्यताकत्वेन नलोपे प्रत्ययलक्षणाप्रवृत्तौ 'राजपुरुष' इत्यादौ नलोपो न स्यादिति भावः ।

**इत्यादाविति** । 'ओदनमपाक्षीद्देवदत्त' इत्यस्योपलक्षणमिदम्बोध्यम् । अपाक्षीद्देवदत्तस्याङ्ग-

❀ चिदस्थिमाला ❀

तत्र हि—'पञ्चभिः क्रोष्टृभिः क्रीतं कुलं पञ्चक्रोष्टृ'इत्युक्तम् । स्पष्टञ्चेदं भावप्रकाशे । नन्वत्रान्यथा वारणमत आह—**अर्थवदिति** । वर्णग्रहणे तदप्रवृत्तेराह—**प्रत्ययेति** । एवञ्च नर्थोक्तिरयुक्तैव स्यात् ।

ननु प्रत्यासत्त्या भिस्निमित्ताङ्गादित्यर्थे नोक्तदोषोऽत आह—**भिस इति** । हि=यतः, एवमग्रेऽपि । ननु तत्रान्यथैव वारणमस्तु, अङ्गाधिकारस्य चान्यत्प्रयोजनं भविष्यतीत्यत आह—**इदमेवेति** । किञ्च भिसः प्रत्ययस्यैव ग्रहणमित्यत्र न मानं, तस्याः परिभाषाया लक्ष्यासंस्कारकत्वात् । एवञ्च प्रत्यासत्तिः सर्वथा दुर्ज्ञेया । वर्णग्रहणेऽर्थवत्परिभाषाया अप्रवृत्त्या 'नेदमदसो'रिति निषेधारम्भेण च सर्वत्रेस्सिद्धिः । एवञ्च तथा व्याख्यानं चिन्त्यमेव फलाभावात्तदाह—**इत्यलमिति** । अलत्वात्=तद्ग्राहकत्वात् ।

❀ ज्योत्स्ना ❀

**रीत्येति** । तत्र ह्युक्तं—समासे कृतेऽन्तरपदस्य प्रत्ययलक्षणेनाङ्गसञ्ज्ञा, 'न लुमते'तिनिषेधस्तु न, अङ्गसञ्ज्ञोद्देश्यककार्यान्तरे कर्तव्ये—एव तत्प्रवृत्तिर्न तु तस्यामपीति । इदं यथोद्देशपक्षे, कार्यकालपक्षे त्वङ्गसञ्ज्ञैस्त्विध्योरेकवाक्यतया प्रत्यये परतो यदङ्गं तस्मात्परस्य भिसः—प्रत्यासत्त्या—अङ्गसञ्ज्ञा-

❀ विषमपदविवृतिः ❀

'अङ्गसञ्ज्ञायां 'न लुमते'ति निषेधो न प्रवर्त्तते, तस्या अङ्गत्वविशिष्टानुद्देश्यकत्वा'दित्युक्तम् ।

ननु प्रत्यासत्त्या भिस्निमित्तकाङ्गस्यैव ग्रहणान्नोक्तदोष इत्याशङ्क्य समाधत्ते—**भिस इति** ।

---

❀ वरवर्णिनी ❀

अथ 'सुपि चे'ति सूत्रं किमर्थं, 'रामाभ्या'मित्यादावतो दीर्घो यञीति सिद्धेः, न च तत्र 'तुरुस्तुशम्यम' इति सूत्रात्सार्वधातुके इत्यनुवर्त्तते, अतो रामाभ्यामित्यादौ सार्वधातुकपरत्वाभावादतो दीर्घो यञीति दीर्घो न स्यादिति वाच्यं, 'सार्वधातुके' इत्यस्यातो दीर्घो यञीत्यत्र सम्बन्धो न कार्यः, 'सुपि चे'त्यपि न कार्यमित्येवं तात्पर्यात् । न चैवं 'केशव'इत्यत्र 'केशाद्वोऽन्यतरस्या'मिति वप्रत्यये परतोऽपि 'अतो दीर्घ' इति दीर्घापत्तिरिति वाच्यं, 'केशादवोऽन्यतरस्या'मिति न्यासेन—अवप्रत्यये 'यस्येति चे'ति लोपे 'केशव' इत्यस्य सिद्धेः, ।

न च 'केशादवोऽन्यतरस्या'मिति न्यासे—केशशब्दादाचक्षाणणिजन्तात्कर्त्तरि क्विपि [ केशमाचष्टे केशयति, केशयतीति-] 'केड्' इत्यत्र-अवप्रत्यये 'केशव' इति रूपं, वप्रत्यये तु 'केड्व' इति-फलभेदसत्त्वादवप्रत्ययः कर्त्तुं न शक्यत इति 'केशव' इत्यत्र वप्रत्यये दीर्घवारणाय सार्वधातुकपदानुवृत्तिरतो दीर्घे इत्यत्र

ॐ वरवर्णिनी ॐ

आवश्यकीति रामाभ्यामित्याद्यर्थं 'सुपि चे'ति चरितार्थमिति वाच्यं, 'श्रृङ्गवृन्दाभ्यामारक'न्नित्यत्र रकन्नित्येवं न्यासेऽपि—'अनो दीर्घ' इति दीर्घेण सिद्धे आकारोच्चारणसामर्थ्यात्तद्धिते परतोऽतोदीर्घेति दीर्घो नेति ज्ञापनेन 'केशव' इत्यत्र 'केशाद्व' इत्येवं वप्रत्ययेऽपि दीर्घापत्तेरभावात् । ननु श्रृङ्गमाचष्टे शृङ्गयति, ततः कर्त्तरि क्विपि'शृङ्ग' इत्यत्राऽऽकारोच्चारणं सफलं, नच 'आरगुदीचा'मित्यत्र रका सिद्धे आकारोच्चारणमन्यतोऽपि विधानार्थं, तेन जडस्यापत्यं—'जाडारः' 'पाण्डार'इत्यपि सिद्धमिति भाष्यप्रामाण्येन तद्धितप्रकरणे णिजन्तात्कर्तृक्विपोऽनभिधानेन शृङ्गिति हलन्ते न आकारोच्चारणफलं, तस्यानभिधानादिति वाच्यं, 'वासुदेवार्जुनाभ्यां वु'न्नित्यत्र कन्नि विधातव्ये वुन्विधानस्य—तद्धितप्रकरणे णिजन्तात्कर्त्तरि क्विब्भवतीति—ज्ञापकतया शृङ्गितिहलन्ते आरकन्विधानस्य 'शृङ्गारक' इति रूपसिद्ध्यर्थं साफल्येन—ज्ञापकत्वासम्भवाद्वप्रत्यये दीर्घापत्तेः सुपिचेति करणीयमेवेति चेन्न,—'विनञ्भ्यां नानाञौ नसहे'ति सूत्रे नाञो ञित्करणात्तद्धितेऽनोदीर्घ इत्यप्रवृत्तेर्ज्ञापनात्केशवादावदोषात् । न च स्वरार्थं ञित्करणं,'वेर्ना, नञो ना–उदात्तश्चे'ति न्यासेनापि आद्युदात्तत्वसिद्धेः । एवञ्च 'सुपि चेति नारम्भणीय'मिति पूर्वपक्षः सुस्थः ।

यत्तु—'शरादीनाञ्चे'ति दीर्घविधानं व्यर्थं सत्तद्धिते दीर्घश्चेच्छरादीनामेवेति ज्ञापयति, इतरथा हि—'शरावती'त्यत्रातो दीर्घ इत्येव सिद्धेस्तद्व्यर्थमिति–तन्न, शरादीनाञ्चेत्तर्हि तद्धित एवेति विपरीतनियमापत्तौ शराभ्यामित्यत्रापि दीर्घानापत्तेः,शरा ई यस्य कुलस्य तत् 'शरि' कुलमित्यत्र–['शरे'शब्दे-]नपुंसकह्रस्वे मतुपि शरीवतीत्यत्रैकादेशस्य पूर्वान्तत्वेन शरशब्दतया दीर्घार्थं 'शरादीना'मित्यस्य चारितार्थ्याच्च ।

एवञ्च नाञो ञित्करणमेव–तद्धिते परतो दीर्घाभावज्ञापकमिति 'मुखरः' 'अङ्गने'त्यादौ न दीर्घप्राप्तिः । तत्रापि–'अर' 'अन' इत्येवमकारादिप्रत्ययविधानन्तु—'शुषिरं' 'विशुण' इत्याद्यसिद्धेर्न कर्त्तुं शक्यम् ।

न चातो दीर्घो यञीत्यस्य सुब्विधित्वाभावेन 'नलोपः सुप्स्वरे'त्यस्याप्रवृत्त्या नलोपस्यासिद्धत्वाभावेन 'राजभ्या'मित्यत्र दीर्घापत्तिः, ममतु 'सुपि चे'त्यस्य सुब्विधित्वान्नलोपस्यासिद्धतया न दीर्घ इति वाच्यं, सुप्त्वधर्मवन्निमित्तके विधौ नलोपोऽसिद्धो नान्यत्रेत्येवमर्थेन सुप्त्ववद्भ्यामादिनिमित्तकत्वादतो दीर्घ इत्यस्यापि सुब्विधित्वसम्भवात् । न चैवं षत्वस्यापि सुब्विधित्वाद्दण्डिषु इत्यत्रापि नलोपासिद्ध्या षत्वानापत्तेः—सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपकविधेरेव सुब्विधित्वादतो दीर्घ इत्यस्य चातथात्वान्नलोपासिद्धेरभावाद्दीर्घापत्तेस्तादवस्थ्यमिति वाच्यं, 'नलोपः स्वरसञ्ज्ञायैस्तुग्विधि'ष्विति न्यासे–स्वरसञ्ज्ञा च आश्च–एश्च–ऐश्चेत्येवं छेदेन–दीर्घेणात्वे कर्त्तव्ये नलोपासिद्धत्वस्य सुलभत्वात् । नचैवमपि 'राजाश्व' इत्यत्र सवर्णदीर्घेप्यसिद्धत्वापत्तिः,'अतो दीर्घो यञी'त्यत्र 'अत आ यञी'ति न्यासेन प्रतिपदोक्तस्यास्यैवाकारस्य 'नलोप'इत्यत्रग्रहणेन 'राजाश्व' इत्यत्रादोषात्। केचित्तु पूर्वत्रासिद्धमित्यतः पूर्वत्रेत्यनुवर्त्य पूर्वस्मिन्सुबादिविधौ नलोपोऽसिद्ध इत्यर्थेन षत्वविधेर्नलोपविध्यपक्षया पूर्वत्वाभावेन सुप्त्वधर्मवन्निमित्तके विधावित्यर्थेपि 'दण्डिषु' इत्यत्र न दोष इति 'राजभ्या'मित्यत्र न दोष इति 'सुपि चे'ति व्यर्थम्। नच 'सुपि चे'तिसूत्राभावे अय-पय-दयादिधातोर्वनिपि यलोपे अवा–दवा–पवेत्यत्रातो दीर्घ इति दीर्घापत्तिरिति वाच्यं, विड्वनोरित्यनेन विजावेत्यादौ ह्रस्वाकारेऽप्यनेन दीर्घे रूपसिद्धेर्दीर्घाकारविधानात्कृति परे नानेन दीर्घ इति ज्ञापनेनादोषात् । गोजेत्यादौ विटि दीर्घश्रवणार्थन्तु नाऽऽकारविधानं, प्रत्ययलक्षणेनातो दीर्घ इत्येव दीर्घसिद्धेरिति चेत्–सत्यम्, 'बहुवचने झल्ये'दित्यत्रानुवृत्त्यर्थमेव सुपि चेति सूत्रं, तेन पचध्वमित्यत्र तिङि एत्वं नेति बोध्यम् । अध्वंकरणेन तु तत्र नेष्टसिद्धिः, 'लविषीढ्वम्' 'पेधिढ्व'मित्याद्यसिद्ध्यापत्तेः ।

---

१. वुन्विधानं हि–अर्जुनमाचष्टेऽर्जुनयति, ततः क्विपि प्रातिपदिकत्वे हलन्तार्जुन्शब्दाद्वुनि—'अर्जुनक' इति रूपार्थं, कनि तु तत्र तद्रूपानापत्तिरिति । आरगुदीचामित्यत्रत्यभाष्येण तु आबन्तप्रकृतिकेणिजन्तात्कर्तृक्विप एवाऽनभिधानं, न तु तद्धितप्रकरणे णिजन्तमात्रात्कर्तरि क्विप इति तदाशयः ।

**ङेर्यः** । चतुर्थ्येकवचनस्यैव ग्रहणं, व्याख्यानादित्याह— **ङइत्येतस्येति ।**

**सन्निपातेति** । उपजीव्यविरोधन्यायमूलेयं । सन्निपातः–संश्लेषस्तन्निमित्तको यो विधिः स–तं सन्निपातं यो विहन्ति स तद्विघातः–तस्यानिमित्तमित्यर्थः । न च यञादित्वसापेक्ष-

ॐ अभिनव-चन्द्रिका ॐ

सञ्ज्ञायां तस्यैवाडापत्तिरिति बोध्यम् । यथाश्रुतन्तु न युक्तम्, 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यत्र प्रत्यासत्त्या लुङादिनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकाङ्गस्य ग्रहणे 'देवदत्त ओदनमपार्क्षी'-दित्यादौ समुदायस्याटोऽनापत्तेः । **संश्लेष इति** । उपजीव्यमात्रस्योपलक्षणमिदम् ।

ॐ चिद्स्थिमाला ॐ

**स्यैवेति** । कष्टायेत्यादिनिर्देशात्–प्रतिपदोक्तत्वाच्च । एवेन सप्तम्येकवचननिरासः । तस्य भिन्ना-देशविधानात् । न च विकल्पेऽस्तु 'सर्वनाम्नः स्मै स्मिना'वित्येव सिद्धे 'ङसिङयो'रित्यत्र ङिग्रहण-वैयर्थ्यापत्तेः । ङेरा'मित्यत्र तु 'ङिया'मित्यादिनिर्देशात्तस्यैव ग्रहणं, तदेतदभिप्रेत्याह—**व्याख्याना-दिति** । ज्ञापकमूलेयमितिरसारदेवाशुक्तेरसाङ्गत्यं ध्वनयन्नाह—**उपजीव्येति** । तदुक्तार्थासाङ्गत्यं ध्वन-यन्नाह–**सन्निपात इति** । पूर्वपरयोर्विशेषणविशेष्ययोश्चेत्यर्थः । 'विधि'रित्यत्र कर्मणि किः । 'तद्विघातस्ये'त्यत्र 'कर्मण्य'णित्यणित्याह—**तं समिति** । 'सन्निपातविघात' इत्यत्र भावे घञ्–एवमग्रेऽपि । एवञ्च दीर्घविधौ

ॐ ज्योत्स्ना ॐ

निमित्तप्रत्ययस्वरूपस्यैसित्यर्थाददोष इति बोध्यम् । **चतुर्थ्येकवचनस्यैवेति** । न सप्तम्येकवचनस्य ।

**व्याख्यानादिति** । 'द्वन्द्वे चे'त्यादिनिर्देशमूलकादित्यर्थः ।

—**नात्र सन्निपातविघात इति** । यादेशलक्षणीभूतादन्तसन्निपातस्य विघातो—विघातकत्वं,

ॐ सदाशिवभट्टीयम् ॐ

स्यादित्यपास्तम् । **ङेर्यः** । 'सम्प्रसारणे' इत्यादिनिर्देशस्योभयोरग्रहे ज्ञापकत्वसम्भवेपि 'सम्प्रसारणे' इति पररूपेण चतुर्थ्यन्तमेव, कष्टायेति सप्तम्यन्तमेवेत्यपि वक्तुं शक्यत्वेन सप्तम्या एव ग्रहाभावेन तत्त्वासम्भवादाह—**व्याख्यानेति** । तच्च 'सर्वनाम्नः स्मैस्मिनौ' 'ङसेः स्मा'दित्येव सिद्धे ङिग्रहण-रूपं, प्रतिपदोक्तरूपञ्चेत्यन्ये । 'उपजीव्ये'ति न्यायानाश्रयणे लिङ्गन्तु—**वृद्धावित्यादिनिर्देशः** । यत्तु 'वाचि ह्रस्व श्चे'त्येव सिद्धे'ङिति ह्रस्वश्च''वामी'तिसूत्रद्वयं लिङ्गम्, नहि 'भ्रूणा'मित्यादौ नुडर्थं, नुव्यजादित्वस्य विनाशादिति, तन्न, वामीत्युक्तेऽपि–'आत्वं पुग्विधे'रिति न्यायेनौपदेशिकसन्निपातविघात-सत्त्वेन चारितार्थ्याभावात्, अचीत्युक्तेपि सामर्थ्येन परिभाषाया बाधाच्च । **तं विहन्तीति** । ननु यादेशेनैव सन्निपातनाशाद्दीर्घस्य कथं तद्विघातकत्वमिति चेन्न, तेन पूर्वापरीभावसन्निपातविघातेऽप्यदन्ताङ्गेतिविशेषण-सन्निपातस्य सत्त्वेन दीर्घस्य तद्विघातकत्वात् । सन्निपातलक्षणप्रवृत्तेः प्रागव्यवहितोत्तरं वा यः सन्निपात एतदन्यतरविघातकस्यानिमित्तमित्यर्थस्य तिस्र इत्याद्यनुरोधेनावश्यकत्वाच्च । **यञादित्वेति** । एवञ्च पर

ॐ वरवर्णिनी ॐ

ननु–'अतो दीर्घो यञि''सुपि चे'त्यत्र'इगार्ग्यगालवयो'रित्यतोऽप्पदमनुवर्त्य अड्विधानेनैव सिद्धे दीर्घ-ग्रहणं व्यर्थं, न च पररूपापत्तिरितिवाच्यं, विधानसामर्थ्यात्तदप्रवृत्तेरिति चेन्न, 'आभ्या'मित्यत्र अडागमे कृते हलादित्वाभावेन हलि लोपानापत्तेः । यद्यपि–'अहल्यनाप्यकः''लोप'इतिन्यासे–प्रथमस्य–'हलादिभिन्ने आपि इदोऽन् भवति'इत्यर्थे, द्वितीयस्य 'लोपः' इत्यस्य–'आपी'त्यनुवृत्त्या 'आपि परे इदो लोप'इत्यर्थे च निष्पन्ने–अहलीति पर्युदाससामर्थ्याद्भूतपूर्वहलादित्वेऽपि–अहलीति पर्युदासप्रवृत्त्याऽनादेशे 'आभ्या'मिति रूपसिद्धिः सम्भवति, तथापि पदलाघवाभावेन दीर्घपदस्य सञ्ज्ञाशब्दतया सञ्ज्ञाशब्दानामर्द्धमात्रिकत्वेन मात्रालाघवाभावाच्च दीर्घग्रहणमेव वरमिति—**श्रीगुरुचरणाः श्रीकेहिरामशास्त्रिणः** ।

दीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः। किञ्चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि कृतेऽसिद्धत्वे मानाभावः। किञ्चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ 'गौरि' इत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्या अति-

ॐ अभिनव-चन्द्रिका ॐ

ननु शास्त्रे ज्ञानमेव प्रवृत्तिनिवृत्तिनियामकम्, अन्यथाऽतिदेशशास्त्रप्रणयनं व्यर्थं स्यात्, तथाच 'सुपि चे'ति दीर्घस्य बहिरङ्गासिद्धत्वे तद्धर्मिकस्योपजीव्यविघातकत्वप्रकारकज्ञानस्य अभावात् 'ङेर्य' इति शास्त्रं 'सुपि चे'तिशास्त्रस्याऽभ्यनुज्ञां दद्यादित्येवेत्यरुचेराह—किञ्चेति।

ननु रामायेत्यादौ यादेशस्य जातत्वेऽपि 'ङेर्य' इति शास्त्रस्य 'स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमता शास्त्रेण यस्य साधुत्वम्बोध्यते तदपि साध्वि'ति अभ्यनुज्ञादानसमये तत्समानकालप्रापिक-'सुपिचे'ति शास्त्रस्यासिद्धत्वं वक्तुं शक्यत इत्यरुचेराह—किञ्चेति। आतिदेशिकेति। आतिदेशिकपदार्थं तावच्छेदकानिदेशपदार्थे यदागमन्यायसिद्धातिरिक्तत्वेन एकदेशविकृतन्यायसिद्धातिरिक्तत्वेन च

ॐ चिदस्थिमाला ॐ

तद्विघातकत्वान्नैतत्प्रवृत्तिरिति भावः। ननु सन्निपातलक्षणविधिनिमित्तनिमित्तकत्वस्यानङ्गीकारात्किमस्यान्तरङ्गत्वमुत यादेशस्येति चेत्तत्र नाद्य इत्याह—आरोपितेति। नैतत्प्रवृत्तेरिति। स्वरूपसद्विघात एवैतत्प्रवृत्तौ निमित्तमित्युपजीव्यविरोधस्य दुर्वारत्वादिति भावः। नान्त्य इत्याह—किञ्चान्तेति। 'यत' इति शेषः। एवमग्रेऽपि। कृते–अन्तरङ्गे। ननु तज्ज्ञानमेव तत्प्रवृत्तौ निमित्तमास्ताम्–इत्यनाद्यदोषेण स पक्षः सम्यगेवात आह–किञ्चेति। 'गौरी'त्यस्य 'हे' इत्यादिः। स्थानीति। आद्यसूत्रेण। नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षेणेदं, विधिमुखेनेति सिद्धान्तपक्षे प्रत्ययलक्षणेनेति बोध्यम्। ह्रस्वेत्यस्याम्बार्थेती त्यादिः। तत्र–हेगौरीत्यादौ। भाष्येति। नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्या'दित्यादि 'कृन्मजन्ते' इति सूत्रस्थभाष्येत्यर्थः।

ॐ ज्योत्स्ना ॐ

अत्र कृतेन दीर्घेनेत्यर्थः। यद्यपि स्वमते बहिरङ्गशास्त्रीयनिमित्तसमुदायान्तर्भूतशब्दरूपनिमि-

ॐ सदाशिवभट्टीयम् ॐ

निमित्तकत्वेन तत्त्वमिति भावः। एवमुक्तिस्त्वधिकापेक्षत्वेन बहिरङ्गत्वमिति मतसाधारण्येन तत्त्वसूचनाय।

नात्रेति। एवञ्च विघातरूपविशेषणज्ञानाभावेन तत्कर्तव्यरूपविशेषणज्ञानाभावेन तत्कर्तृकत्वरूपविशिष्टज्ञानासम्भवात्तदप्रवृत्तिरिति भावः। अत्रासिद्धत्वं यादेशदृष्ट्या, न परिभाषादृष्ट्या, तस्या अन्तरङ्गत्वस्य दुरुपपादत्वात्। परिभाषादृष्ट्याऽसिद्धत्वेपि यादेशदृष्ट्या सिद्धत्वेन परिभाषाप्रवृत्तेर्दुर्वारत्वाच्च, षाष्ठबहिरङ्गपरिभाषायां बहिरङ्गभूतस्य पूर्वत्रासिद्धत्वेप्यन्तरङ्गत्वे त्वेतस्याश्रयासिद्धत्वेन 'पयोडा'दौ बहिरङ्गासिद्धत्वस्येव 'यं सन्निपातविघातकं पश्यसि तन्निमित्तम्माभूया' इति तदर्थादिति बोध्यम्। वस्तुत इति। अन्तरङ्गत्वस्य ससम्बन्धिकत्वेन तज्ज्ञानाय बहिरङ्गत्वज्ञानस्यावश्यकत्वेपि सन्निपातलक्षणत्वग्रहस्य तद्विघातकत्वग्रहप्रयोज्यत्वेनेह तज्ज्ञानं न हेतुरिति भावः। ननु पूर्वत्रेत्यस्येवास्या अप्यन्तरङ्गदृष्ट्या बहिरङ्गं नेत्येवार्थ इत्यत आह—किञ्चेति। स्थानिवत्त्वेति। आनुमानिकेन सन्निपातलाभ इति भावः। श्रौतेन सम्बुद्धित्वन्तु न, अल्विधित्वात्। ननु दीर्घाद्युत्तरमतिदेशप्रवृत्त्या तदभावेपि प्रवृत्तेः प्राक् परिभाषया प्रतिबध्येतेति नासङ्गतिरिति चेन्न। प्रवृत्तेः प्राग् विघातकत्वासम्भवेन यत्र तद्विघातकत्वं भावीत्यर्थावश्यकत्वेनातिदेशेन

ॐ विषमपदविवृतिः ॐ

चतुर्थ्येकवचनस्यैवेति। न सप्तम्येकवचनस्य। संश्लेषः=सम्बन्धः। यथादित्वसापेक्षेति। इदं बह्वपेक्षं बहिरङ्ग'मिति प्राचीनमतेन। किञ्चातिदेशिकेनेति। इदं प्राथमिकपरिहारस्योपबृंहणं, न समाधाना-

व्याप्तिपरभाष्यासङ्गतिः । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेदत्रासिद्धत्व-मपि कथमिति वद ? ।

'कार्यस्य निमित्तं ययोः सन्निपात तयोः सूत्रे उपादानमपेक्षित'मिति तु नाग्रहः । अत एव 'दाक्षि'रित्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताऽङ्गसञ्ज्ञाऽनया परिभाषया-ऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्याऽनित्यत्वेन समाहितं भाष्ये कृन्मेजन्तसूत्रे । नह्यङ्गसञ्ज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति ।

न च कष्टायेत्यस्य 'अकृत्सार्वे'ति दीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यं, तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः । विरोधाभावात्, फले विशेषाभावाच्च परत्वेऽ-प्यकृदिति नोपन्यस्तम् ।

तस्याकृदित्यादिपर्युदासेनाऽसुप्येव प्रवृत्तिरित्यन्ये ।

ॐ अभिनव-चन्द्रिका ॐ

सङ्कोचः कर्तव्यः, अत एव 'येषां' 'तेषां' 'शैवः' 'गार्ग्य' इत्यादौ 'यस्ये'तिलोप—सुडागमौ सिद्धौ; अन्यथा विभक्तिं निमित्तीकृत्य जायमानमत्त्वं तदानन्तर्यविघातकसुट्प्रवृत्तिम्प्रति, शिवादिरूपप्रातिपदिकं निमित्तीकृत्य जायमानोऽणादिस्तादृशप्रातिपदिकविघातक—'यस्ये'तिलोपम्प्रति च निमित्तं न स्यात् । मम तु एकदेशविकृतन्यायेन 'यस्ये'तिलोपे शिवादिरूपप्रातिपदिकत्वस्य यदागमन्यायेन 'सा'मित्यत्र विभक्तित्वस्य च सत्त्वात्तोपजीव्यविरोधः । अत एव 'स एषां ग्रामणी'-रित्यादिनिर्देशः,'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्त'मिति वार्तिके वर्णाश्रयविशेषणञ्च सङ्गच्छते ।

**ययोरिति** । यद्रूपावच्छिन्नयोरित्यर्थः । **तयोरिति** । तद्रूपावच्छिन्नयोरित्यर्थः । **विरोधाभावा-दिति** । चिन्त्यमिदम्, 'रामाये'त्यादौ 'सुपि चे'ति 'अकृत्सार्वधातुकयोर्दीर्घ' इत्युभाभ्यां एकस्य दीर्घस्य विधातुमशक्यत्वात्—एकस्य च शास्त्रस्य विधायकत्वम्, अपरस्यानुवादकत्वञ्च वक्तव्यं, तथाच कस्य विधायकत्वं? कस्यानुवादकत्वमित्यत्र विनिगमकाभावाद्विरोधस्य सत्त्वात् । अतोऽरुचेराह—**फले इति** । **नोपन्यस्तमिति** । केचित्तु—'अकृत्सार्वधातुकयो'रिति पर्युदासाद्धातुत्वव्याप्यधर्मावच्छिन्नो-

ॐ चिदस्थिमाला ॐ

तदसङ्गतिनिरासाय शङ्कते—**सन्नीति** । अत्र=सन्निपाते । तत्रेति पाठः । उक्तोऽर्थः । क्वचिदुभयत्र 'तत्रे'त्येव पाठः, तत्राद्यस्य 'हेगौरी'त्यादौ, द्वितीयस्य 'रामाये'त्यादावित्यर्थः । **कथमिति** । अत एव पुक्ह्रस्वत्वस्या-दीदृपदिति भाष्यादिसङ्गतिरिति भावः । विशेषमाह—**कार्यस्येति** । पूर्वस्येत्यर्थः । सूत्रे=तद्विधायके । उपेत्यस्य 'विशिष्ये'त्यादिः । एवञ्च तत एवेष्टसिद्धावनित्यत्वमफलमिति भावः । 'भाष्यविरोधापत्ते'रिति हेतुं सूचयन्नुक्ता-शयेनैवाह—**अत एवेति** । तदनाग्रहादेवेत्यर्थः । 'समाहित'मित्यत्रान्वयः । अन्यथा शङ्काया एकदेशयु-क्तित्वेन योजनेऽपि समाधेस्तथैव वाच्यत्वेन तथा तदुक्त्यसङ्गतिः स्पष्टैव, तदाह—**नह्यङ्गेति** । न हि तद्विधावदन्तस्येञि अङ्गसञ्ज्ञेत्युक्तमित्यर्थः । नन्वेवं परत्वान्मूले तदुल्लेख एवोचितोऽत आह-**विरोधेति** । परत्वेऽपि=पाठनस्त्वेऽपि । मतान्तरमाह—**तस्येति** ।

ॐ ज्योत्स्ना ॐ

त्तकत्वस्यान्तरङ्गलक्षणत्वात्सन्निपातदीर्घयोरुभयोरपि प्रत्ययातिरिक्तनिमित्तकत्वाभावात्साम्या-दुक्तासङ्गतिस्तथाप्युक्तान्तरङ्गलक्षणे बहिरङ्गलक्षणशास्त्रीयनिमित्तशब्दवृत्तिसङ्ख्यान्तर्भूतसङ्ख्यावच्छब्द निमित्तकत्वस्य विवक्षितत्वाद्यञादिप्रत्ययरूपशब्दद्वयनिमित्तकदीर्घापेक्षया यादेशलक्षणीभूतादन्त-सन्निपातस्य, प्रत्ययमात्रनिमित्तकत्वादन्तरङ्गत्वमित्याशयः । मतान्तरे तु दीर्घविधेः सञ्ज्ञाकृतबहिरङ्गत्वे नास्ति संशयः । इत्यन्य इति । अतएवोरुया धृष्णुयेत्यादौ न दीर्घः ।

ॐ सदाशिवभट्टीयम् ॐ

तद्बुद्धौ तद्विघातकत्वाभावात् । **अशास्त्रीयेति** । तास्यनिट्त्ववदिति भावः । तेनादेशप्रयुक्तवारणाव तदप्रवृत्तिर्बोध्या । **तत्रासिद्धेति** । अशास्त्रीये—विघातकत्वं भावीत्यादिव्यवहारे इत्यर्थः । स्पष्टमेतद्

**झलि किमिति।** "—'उतो वृद्धि'रित्यतो 'हली'त्येवानुवर्त्य सन्निपातपरिभाषया 'रामाणा'मित्यत्र न दोषः—"इति प्रश्नः ।

ॐ चिद्स्थिमाला ॐ

'यञी'त्यनुवृत्तौ 'रामे'ष्वित्यादावनापत्तेराह—**उतो वृद्धिरिति** ।

ॐ विषमपदविवृतिः ॐ

ऽन्तरमित्युक्तमस्तीति परिभाषेन्दुशेखरेण विरुद्धम् । ननु 'झलीति किं'मिति शङ्का निर्मूला, जसादावतिव्याप्तेः स्फुटत्वादित्याशङ्क्याह—**उत इति** । 'उत' इत्यत्र 'झली'त्युक्तौ तु **मिपि** वृद्ध्य-

ॐ वरवर्णिनी ॐ

**न दोष इति।** न च झल्ग्रहणाभावेऽतो दीर्घ इत्यतो 'यञी'त्यस्य सम्बन्धे रामेष्वित्यादावेत्त्वानापत्तिरित्यव्याप्तिरेव दोष इति वाच्यं, 'वा शोकष्यञ्रोगेषु' 'हलि सर्वेषा'मित्यादिनिर्देशैरत्र यञीत्यस्यासम्बन्धेनाव्याप्त्यभावात् । न चैवमपि झल्ग्रहणाभावे प्रथमाबहुवचने 'रामा' इत्यत्र—'हरी'नित्यादौ चरितार्थं 'प्रथमयोः पूर्वसवर्ण' इति दीर्घं परत्वाद्बाधित्वा—एत्त्वं स्यादिति दोषसम्भवे—रामाणामित्येतत्पर्यन्तानुधावनं व्यर्थमिति वाच्यं, 'न विभक्तौ तुस्माः' 'कतिपयनेमाश्चे'त्यादिनिर्देशैस्तत्र दोषाभावात् । किञ्च 'नादिची'त्यत्राचीत्यनुवृत्त्यैव सिद्धे इज्ग्रहणादेत्त्वस्य जसि अप्रवृत्तेः कल्पनेनादोषात् ।

तथाहि—तत्र इज्ग्रहणं हि 'रामाः' 'रामा'नित्यादौ 'प्रथमयोः पूर्वसवर्ण'इति पूर्वसवर्णदीर्घप्रवृत्तये, 'अची'त्यनुवृत्तौ तु तत्रापि पूर्वसवर्णनिषेधापत्तिः । 'रामाः' 'रामा'नित्यादावेत्त्वप्रवृत्तौ तु इज्ग्रहणवैयर्थ्यं स्पष्टमेव । न च तत्रेज्ग्रहणं 'दीर्घाज्जसि चे'त्यत्र सम्बन्धायावश्यकम्, अन्यथा तत्राप्यचीत्यनुवृत्तौ शसि 'नदी'रित्यादावपि दीर्घनिषेधापत्तिरिति वाच्यं, तत्र जस्ग्रहणेन—'अकारादौ सुपि चेद्दीर्घनिषेधस्तर्हि जस्येवे'ति नियमेन तत्रादोषात् । परे तु—नादिचीत्यत्रेचीति न ज्ञापकं, तथाहि—अय–पय–वय–दय–इत्यादिधातुभ्यो घञर्थे के दयवयादिशब्देभ्य आचक्षाणणिजन्तेभ्यः कर्त्तरि क्विपि अल्लोपयलोपयोः प्रातिपदिकत्वे जसि—'दाः' 'वाः' इत्यादौ दीर्घनिषेधाभावायेज्ग्रहणं सफलं, नहि तत्रापि एत्त्वप्राप्तिः, अल्लोपयलोपयोः स्थानिवत्त्वात् । पूर्वसवर्णदीर्घे तु न स्थानिवद्भावः, दीर्घे तन्निषेधात्, पूर्वत्वेन दृष्टमात्रस्य विधेरभावाच्चेत्याहुः । अन्ये तु निर्देशैरेव 'रामा'इत्यादावेत्त्वं वारणीयम् । 'रामै'रित्यत्र तु ऐस्विधानसामर्थ्यादेव नैत्त्वम् । अतो रामाणामित्यत्रैव दोषो युक्तः । न च हरीणामित्यादौ चरितार्थं नुटं परत्वाद्बाधित्वा राम–आमित्यत्रैत्त्वापत्तिरित्येवं झल्ग्रहणाभावे दोष इति वाच्यम्, 'उतो वृद्धि'रिति सूत्राद्धलीत्यनुवृत्त्या तस्यामवस्थायामेत्त्वस्याप्राप्तेः । न च सन्निपातपरिभाषया रामाणामित्यत्रैत्त्ववारणान्न दोष इति वाच्यं, झल्ग्रहणस्यैत्त्वे सन्निपातपरिभाषाऽप्रवृत्तिरितिज्ञापनार्थत्वात्, फलन्तु 'सर्वेषा'मित्यादावेत्त्वसिद्धिरिति शेखराभिप्रायमाहुः ।

न च पर्जन्यवल्लक्षणप्रवृत्त्या—कृताकृतप्रसङ्गितया—'नामी'त्यस्य नित्यत्वादेत्त्वं बाधित्वा तेन दीर्घे रामाणामित्यस्य सिद्धेर्झल्ग्रहणं न स्वांशे चरितार्थमिति वाच्यं, 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवती'ति परिभाषया नामीत्यस्यानित्यतया परत्वादेत्त्वप्राप्त्या झल्ग्रहणस्य साफल्यात् । न चैवमप्युतो वृद्धिरित्यत्रैव झलीति पाठ्यं लाघवादिति वाच्यं, 'यौमि' 'स्तौमी'त्यादौ वृद्ध्यनापत्तेः । 'म्झली'ति पाठे तु 'स्तुवीवः' स्तुव' इत्यत्र 'तुरुस्तुशम्यम' इति वैकल्पिकेडनापत्तेः, म्झलीत्यस्यैव तत्रेदानीं सम्बन्धात् । 'रुदिव' इत्यत्रापि 'रुदादिभ्य' इतीडनापत्तिश्च । वस्यापि लोपेन तत्र प्रश्लेषे यकारे परतो 'रुवीया'दित्यत्रेडागमानापत्तिः, यकारस्यापि प्रश्लेषे तु—सुपां सुलुगिति आमो यादेशे 'रामाया' इत्यत्रैत्त्वापत्तिः, सुपि चेति दीर्घस्त्विष्ट इति केचित् । परे तु—ईदृशप्रयोगस्य [ 'उरुया' 'धृष्णुया' इतिवत्—] अप्रसिद्धेर्वेदे दृष्टानुविधेश्च 'रामाया' इत्यत्र दोषदानं मुधैवेति यकारादिप्रश्लेषकल्पनायां गौरवादेव 'उतो वृद्धि'रित्यत्र हलीत्येव पाठ्यमिति प्राहुः ।

"झल्ग्रहणमेन्त्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थं, तेन 'सर्वेषा'मित्यादावेत्वसिद्धिः—" इत्युत्तरम् ।

एतेन—'बहुवचने किं ? रामस्य' इति व्याख्यातम्

### ❀ विषमपदविवृतिः ❀

नापत्तिः । 'झलो'रित्युक्तौ लनो दीर्घ इत्यादावपि तदनुवृत्तौ 'भवामो''रामाभ्या'मित्यादावेव दीर्घः स्यान्न तु 'पचाव'इत्यादौ । **अप्रवृत्तिज्ञापनार्थमिति** । अन्ये तु 'सुबामन्त्रित' इत्यतोऽनुवर्तमानसुप्पदवन्मध्ये[हलीत्यस्य-]यञीत्येतत्सम्बद्धत्वेन तत्सम्बद्धस्य निवृत्त्यै—'सुप्यतिने'त्यत्र सुप्पदवन्मध्ये यञीत्येतत्सम्बद्धस्य हलीत्यस्य निवृत्तये झल्ग्रहणं स्यादिति- अज्ञापकमेत्त्वे सन्निपातपरिभाषाप्रवृत्त्यभावस्य ।

### ❀ वरवर्णिनी ❀

**बहुवचने किमिति** । न च 'राम' इत्यत्रैवैत्त्वशास्त्रदृष्ट्या'ससजुषो रु'रित्यस्य त्रैपादिकस्यासिद्धत्वादेत्वापत्तिरिति 'रामस्ये'त्येतत्पर्यन्तानुधावनं व्यर्थमिति वाच्यम् , षत्वनिमित्तस्य सकारस्य विनाशोन्मुखतयाऽकृतव्यूहपरिभाषया तत्रैत्त्वाप्राप्तेः । न च विसर्गस्यापि शर्षु समाम्नातत्वेन झलत्वादेत्वनिमित्तसमवधानसम्भवादकृतव्यूहपरिभाषया वाग्गासम्भव इति वाच्यं, 'नुम्विसर्जनीये'ति सूत्रे विसर्गपाठसामर्थ्यात्तस्य शर्षु पाठोऽनित्य इति ज्ञापनेन विसर्गस्य शर्त्वाभावादेत्वनिमित्तविनाशसम्भवादकृतव्यूहपरिभाषाप्रवृत्तेरप्रत्यूहत्वात् । न च ज्ञापकस्य सजातीयापेक्षत्वेन षत्वे कर्तव्ये एव विसर्गस्य शर्त्वमनित्यं नत्वेत्त्वे इति षत्वनिमित्तझलरकत्वविनाशाभावादकृतव्यूहपरिभाषया 'राम' इत्यत्रैत्त्वस्याव्युदासेन 'राम' इत्यत्रैव फलसम्भवे 'रामस्ये'त्येतत्पर्यन्तानुधावनं मूलकृतोऽसङ्गतमिति वाच्यम् , 'प्रत्ययः' 'परश्चे'त्यादिनिर्देशैस्तत्रैत्त्ववारणसम्भवात् । न च निर्देशैः सूत्राक्षरखण्डनमयुक्तमन्यथा 'संयोगान्तस्य लोपः' 'कौशल्यकार्माय्याभ्याञ्चे'त्यादिनिर्देशैः 'रामस्य' 'रामाभ्या'मित्यादावपि दोषाभावेन बहुवचनग्रहणं व्यर्थमेव स्यादिति वाच्यम्, 'एङ्ह्रस्वा'दित्यत्र ह्रस्वग्रहणसामर्थ्येन 'राम' इत्यादौ मावेत्त्वं नेति कल्पनेनादोषात्। ह्रस्वग्रहणं हि हे रामेत्यत्र लोपार्थं, तत्र यदि एत्वमेव स्यात्तर्हि एङन्तत्वादेव सिद्धे तत्र ह्रस्वग्रहणं व्यर्थमेव स्यात् । यद्यपि 'हे गौरि' 'हे अतिचमु' 'हे लक्ष्मी'त्याद्यर्थमपि ह्रस्वग्रहणं, तथापि तावन्मात्रफलकत्वे-इदुदेङःसम्बुद्धे'रित्येव पठनीये सामान्यतो ह्रस्वग्रहणस्य वैयर्थ्यं सुस्थमेव । न च 'हे कुले'त्यत्र मकारस्य लोपाय ह्रस्वग्रहणमिति वाच्यम्, इदुदेङः सम्बुद्धेः' इत्येतदनन्तरं 'मस्ये'ति सूत्रं कृत्वा तत्र सम्बुद्ध्यवयवमकारलोपोपपादनसम्भवाद्ध्रस्वग्रहणस्य वैयर्थ्यात् ।

नच हे अम्बेत्यत्राम्बार्थेतिह्रस्वविधिसामर्थ्यादेत्वप्रवृत्तेरभावे सम्बुद्धिलोपार्थं ह्रस्वग्रहणमिति वाच्यं तत्रापि—'अम्बार्थनद्योर्डिड्डाः' इति न्यासेन डादेशे डित्त्वाट्टिलोपे च हे अम्बेत्यादिसिद्धेः । 'नह्येङः पदात्परो रुरर्स्या'ति भाष्येण सावित्त्वस्य वारणसम्भवाच्च ।

केचित्तु 'स्वौजसमौ'ड्डित्यत्र 'वौंजसमौ'ड्डिति, 'सुपि चे'त्यादौ च 'रुपि चे'तिन्यासेन प्रकृते झल्परत्वाभावादेव 'राम' इत्यत्रैत्त्वस्याप्राप्तिरतो 'रामस्ये'त्येतत्पर्यन्तानुधावनमित्याहुः, तन्न, एवं सति 'राम' इत्यत्र रेफस्य यन्त्वात्-'रुपि चे'ति सूत्रेण दीर्घापत्तेः। न च 'हयवर'ड्डित्यत्र हरयबड्डिति न्यासेन रेफस्य वकारात्पूर्वं पाठाभावान्न दीर्घापत्तिरिति वाच्यं, पचेरन् ददेरन्नित्यादौ 'लोपो व्यो'रिति यलोपानापत्तेस्तथा न्यासस्य कर्तुमशक्यत्वात् । अन्ये तु-'सुपि चे'त्यस्य स्थाने 'अपि च' 'आपि च' 'शपि चे'त्यादि न्यासैरमः टापःशपो वाऽऽरभ्य सुपः पकारेण प्रत्याहारेण च राम इत्यत्र न दीर्घ इत्याहुः ।

नन्वेवं वौंजसिनिन्यासे राम इत्यादौ दीर्घापत्तेरभावेऽपि 'वक्षोऽत्र' 'पयोऽत्र' 'स्रोतोऽत्र' 'ओज्योऽस्ती'

## ॐ वरवर्णिनी ॐ

त्यादावतो गोरित्युत्त्वानापत्तिः, 'शिवोऽर्च्य' इत्यादावुत्वस्य चरितार्थतया प्रकृते उत्त्वशास्त्रदृष्ट्या रुत्वविधेरसिद्धत्वात् । सिद्धान्ते स्वौजसिति पाठे तु—सर्वत्र रुत्वस्य ससजुषोरित्यादिनिष्पन्नस्यैव सम्भवेन तस्य चोत्त्वदृष्ट्याऽसिद्धत्वादुत्वमनूद्योत्त्वविधेर्वैयर्थ्येनानुवादसामर्थ्यान्नासिद्धत्वम् । न च 'देवा अत्रे'-त्यादावुत्वं प्रति रुत्वस्यासिद्धत्वादेवोत्त्वाप्राप्त्या तपरकरणं विफलं सदुत्वं प्रति रुत्वासिद्धत्वं नेति ज्ञापयतीति यशोऽत्रेत्यादौ न दोष इति वाच्यं, प्रथमैकवचने 'हाहा अत्र' 'विश्वपा अत्रे'त्यादौ तपरकरणस्य चारितार्थ्यात् । न चैवमपि 'एहि सुस्रोत ३ अत्र स्नाही'त्यादौ रुत्वस्यासिद्धत्वादेवो-त्वाप्राप्त्याऽप्लुतादिति व्यर्थमिति तदेवोत्त्वं प्रति रुत्वं नासिद्धमिति ज्ञापयतीति वाच्यं, 'वात्सी३ बन्धु'रित्यत्र भाष्यप्रयोगेऽसम्बोधनेऽपि प्लुतदर्शनात्–'आगच्छतु भवान्देवदत्त ३ अहं गच्छामी'त्यादावुत्ववारणाय अप्लुतादित्यस्य चारितार्थ्येन ज्ञापकत्वासम्भवात् । न चैवमपि–अप्लुते इति व्यर्थं,' 'तिष्ठतु पय अ३ग्निदत्ते'-त्यत्र रोरसिद्धत्वादेवोत्त्वाप्राप्तेरिति तदेव 'रुत्वमुत्त्वं प्रति नासिद्ध'मितिज्ञापयतीति वाच्यं, 'तिष्ठतु देवदत्त अ३ग्निदत्त'त्यत्रोत्त्ववारणायाऽप्लुते इत्यस्य चारितार्थ्यात् । न च 'रूपरात्रिरथन्तरे'ति रुत्वविधानमेवोक्तार्थ-ज्ञापकम्, अन्यथा 'हसिचे'ति उत्वे कर्त्तव्ये रुत्वस्यासिद्धत्वादुत्वाप्रवृत्त्या रोरीति लोपे अहारूपमित्यस्यैव सिद्ध्या रुत्वे रत्वे च फलाभावः स्पष्ट एवेति वाच्यं, 'भोभगो' इति यत्वार्थं रुत्वविधानस्यावश्यकतया ज्ञापकत्वासम्भवात् । न च रुत्वविधेर्यत्वमात्रफलकत्वे यत्वमेव प्रक्रियालाघवाद्विधेयमिति रुत्वविधानं ज्ञापकमेवोक्तार्थ इति वाच्यम्, अहञ्छब्दादाचक्षाणणिजन्तात्कर्त्तरि क्विपि–'अह्'इत्यस्य गोशब्देन समासे ततो रूपशब्देन सम्बन्धे [गोहः रूपं–]गोरूपमितिरूपं रुत्वविधानपक्षे भवति,–आनुमानिकस्थान्यादेशभावेन अह्नित्यस्य,परादिवद्भावेन–ओह् इत्यस्य चाहञ्छब्दत्वाद्रूपरात्रीतिहकारस्य रुत्वे भोभगो इत्यस्याप्राप्त्या रोरी-तिलोपस्यैव प्रवृत्तेः । तेन वार्त्तिकेन यत्वविधाने तु 'गोयूरूप'मिति भवतीतिफलभेदेन यत्वविधानस्य कर्त्तुमशक्यत्वात् । न चैवं रूपरात्रीतिवार्त्तिकेन लाघवाल्लोपे एव विधातव्ये रुत्वविधानसामर्थ्यादुत्वं प्रति रुत्वस्यासिद्धत्वं नेति वाच्यम्, रूपमिवाचरत्–'अरूप'दित्यस्योक्त'गोह्'शब्देन सम्बन्धे रुत्वपक्षे 'गोररूप'-दिति भवति, लोपपक्षे तु हकारस्य लोपे 'गो–अरूप'दितिफलभेदस्य स्पष्टतया लोपविधानस्य कर्त्तुमश-क्यत्वात् । एवञ्च बहुवचनग्रहणाभावेऽपि राम इत्यत्र दोषाभावाद्रामस्येत्यत्रैव शेखरकृता दूषणं दत्तमिति तदेतत्स्वरसत उपपद्यते इत्याहुः श्रीगुरुचरणाः । साम्प्रदायिकास्तु—प्रत्यय इत्यादिनिर्देशैस्त्रिपाद्या अपि क्वचिदसिद्धत्वाभावेन रुत्वे एत्त्वाप्राप्त्या राम इत्यत्र दोषो नेति–रामस्येत्येतत्पर्यन्तमनुधावनमित्याहुः ।

**रामस्येति** । केचित्तु रामस्येत्यत्रापि न दोषः, 'टाङसिङसामिनात्स्याः' इति न्यासेनास्यादेशेऽतो गुण इति पररूपे उक्तरूपसिद्धेरप्रत्यूहत्वात् । न चास्यादेशे इदम्शब्दान्ङसि अस्येत्येतद्रूपं न स्यात्, 'अनाप्यक'इत्यनेनादेशापत्तेरिति वाच्यम्, 'आप्यक्षो लोपः', 'अन टौसो'रिति न्यासेन टा–ओसतिरिक्ते लोपप्रवृत्त्या तादृशरूपसिद्धेः ।

न चैवं रामस्येत्यत्रैवं वारणेऽपि—सर्वस्मै सर्वस्मात् सर्वस्मिन्नित्यादावेत्त्वापत्तिरिति वाच्यं, तत्रापि—अस्मै–अस्मिन्नित्येवमादेशविधानेन पररूपेणोक्तरूपसिद्धेः । न चैवमनेकत्र तथा प्रश्लेषे गौरवमिति वाच्यं, 'सर्वनाम्नः स्मै' इत्यनन्तरम्—'अट् चे'ति न्यासेन—'ङसिङ्यो'रित्यत्रापि तत्सम्बन्धाद्रूपसिद्धेः । न च निर्जरशब्देपि ङसोऽस्यादेशे जरसापत्तिर्दोष इति वाच्यं, सन्निपातपरिभाषया जरसादेशाभावे पररूपेण निर्जरस्येति रूपसिद्धेः । परे तु–व्याघ्रपाच्छब्दस्य अशब्देन समाहारद्वन्द्वे व्याघ्रपादशब्दान्ङसि अस्यादेशे भत्वात् पादः पदिति पदादेशापत्तेरस्येति न्यासो न कर्तुं शक्यते इति रामस्येत्यत्र शेखरकृदुक्तं दूषणं युक्तमेवेत्याहुः ।

ननु रामस्येत्यत्र सन्निपातपरिभाषयैव नैत्त्वं, न च साऽनित्येति वाच्यं, 'हलि सर्वेषा'मित्यादिनिर्देशैः

'रामाभ्या'मित्यादि प्रत्युदाहरणं बोद्धव्यम् ।

ॐ चिद्रस्थिमाला ॐ

तेन=तत्त्वे तदप्रवर्तनेन । अन्यथा तथा तदप्रवृत्तौ तदसङ्गतिः स्पष्टैव । तेन 'सेवपा'मिति—निर्देशेनैत्वे तदप्रवृत्तिरिति—शाक्तिदण्डयुक्तमनास्तम् । निर्दुष्टमुदाहरणमाह—रामाभ्यामिति ।

ॐ सदाशिवभट्टीयम् ॐ

'इहत्यत्रे प्रदीपे बहुवचने । रामाभ्यामिति । 'सुपि चे'ति तु 'रामाये'त्यत्र नावकाशं, पर्युदासेनाकृते-

ॐ विषमपदविवृतिः ॐ

तत्सम्बद्धस्यानुवृत्तौ तु 'रामे'ष्वित्यादौ षत्वं न स्यात् । 'सुपी'त्यस्य तु तत्सम्बद्धत्वेपि झल्ग्रहणसामर्थ्यात्

ॐ वरवर्णिनी ॐ

षष्ठीबहुवचने एत्वप्रवृत्तौ तस्या अनित्यत्वेऽपि सर्वत्र तस्या अनित्यत्वे मानाभावादित्यत आह—**रामाभ्यामिति**। नच 'ङेर्य'इत्यस्य स्थाने 'ङेरय'इति न्यासं कृत्वाऽकारोच्चारणसामर्थ्यात्कष्टायेत्यादिनिर्देशाच्चातोगुण इति पररूपं बाधित्वा सवर्णदीर्घे-[ ङेराय इतिन्यासेन वा— ] रामायेत्यादिसिद्धौ सुपि चेत्यारम्भसामर्थ्याद्रामाभ्यामित्यादौ नैत्वमिति बहुवचनग्रहणस्य नेदं फलम्, किञ्च 'सुपि चे'त्यस्य स्थाने 'ङेभ्यामो'रिति न्यासेन विशेषविहितत्वेनापवादत्वादेत्वं बाधित्वा दीर्घे 'रामाभ्या'मित्यादौ नैत्वनिवृत्तिःफलं सम्भवतीति वाच्यं, पचध्वमित्यादावेत्ववारणाय बहुवचने झलीत्यादौ सम्बन्धार्थं सुपिचेत्यस्यावश्यकत्वात् । 'झल्ये'दित्यस्य स्थाने'सभ्ये'दितिन्यासेन सकारभकारादौ प्रत्यये परतोऽदन्ताङ्गस्यैकार इत्यर्थेन'पचध्व'मित्यत्र वारणसम्भवेऽपि 'पचस्व''स्पर्द्धस्वे' त्यादावेत्वापत्तेः । 'सभ्येदतिङ' इतिन्यासेन, भादिसाहचर्यात्सादेरप्यतिङ एव ग्रहणाद्वा तद्वारणे तु—'घेर्ङिती'त्यत्र 'सुपिचे'त्यस्य सम्बन्धाभावे पट्वी मृद्वीत्यादौ गुणापत्तिरतः 'सुपि चे'त्यावश्यकमेवेति न तत्सामर्थ्याद्रामाभ्यामादावेत्ववारणसम्भव इति 'रामाभ्या'मितिफलं सम्यगेवेति **साम्प्रदायिकाः** ।

केचित्तु—'न विभक्ता'वित्यतो विभक्तिपदमनुवर्त्य ङिति विभक्तावित्यर्थेन पट्वीत्यादौ नोक्तदोषः, किञ्च 'स्त्रियाम्' [ ४-१-३ ] इत्यधिकारादग्रे एव 'तद्धिताः' [ ४-१-७६ ] इत्यधिकारे कर्णीये 'ओर्गुण'इति गुणाभावाय-'यूनस्तिः' [ ४-१-७७ ] इत्यतः प्राक्तद्धिताधिकारपाठेन ङीप्प्रत्यये गुणाभावज्ञापनान्नोक्तदोषः, अन्यथा स्त्रियामित्यधिकारादग्रे एव तद्धिताधिकारे 'प्राचां ष्फस्तद्धित इत्यत्र तद्धितग्रहणं,'यस्येतिचे'त्यत्र इकारग्रहणमौङःश्यामिति च न कर्णीयमितिलाघवं स्पष्टमेव । न च तद्धितग्रहणन्तत्रान्यतोऽपि ष्फ इतिज्ञापनाय, तेन आसुरिशब्दात्ष्फे—आसुरायणीत्यस्य सिद्धिरिति न तदकरणप्रयुक्तं लाघवमितिवाच्यं, ष्फविधानेनापि—ङित्वसामर्थ्यादन्यतोऽपीतिकल्पनेनापि तत्सिद्धेः । नच ङीप्ङीषादीनान्तद्धिताधिकारान्तर्गतत्वे 'लशक्वतद्धित'इतीत्संज्ञापत्तिरितिवाच्यं, 'चुट्ट'इत्यत्र 'चुटुङ्' इति न्यासङ्कृत्वा तत्सिद्धेःकर्त्तुं शक्यत्वात् । नच 'शकन्धूः'–'कर्कन्धूः' 'कुरू'रित्यादावोर्गुण इति गुणापत्तिरितिवाच्यम्, 'ऊङुत'इत्यस्य स्थाने 'ङूङुत' इत्येवं न्यासेन ङित्करणसामर्थ्येन गुणाभावज्ञापनात् । नच 'दण्डिनी'त्यादौ 'ऋन्नेभ्य' इति ङीपि तस्य तद्धितत्वान्नस्तद्धितइति टिलोपापत्तिरितिवाच्यं, 'डाबुभाभ्या'मित्यादौ डापो डित्करणात्स्त्रीप्रत्यये 'नस्तद्धित' इत्यस्याप्रवृत्तिरितिज्ञापनात् । नच 'शुनी' 'मघोनी'त्यादौ 'श्वयुवे'ति सम्प्रसारणं न स्यान्ङीपस्तद्धिताधिकारीयत्वादितिवाच्यं, स्त्रीप्रत्यये 'स्त्रीप्रत्यये'इत्येवं विशिष्य सम्प्रसारणविधानेनापि तत्सम्भवात् ।

नच नद्या अः-नद्यः, गौर्या अः गौर्यः, तत इच्छायां क्यचि—यणादेशस्य स्थानिवत्त्वात्तद्धितत्वेन 'क्यच्व्योश्चे'तियलोपापत्तिरितिवाच्यम्, अनल्विधावितिनिषेधादिति प्राहुः । परेतु 'सर्वस्य सुपि' 'प्रत्ययः'वत्सद्व्याभ्यां ठन्कनौ' इत्यादिनिर्देशात्सर्वत्रैवैत्ववारणसम्भवाद्बहुवचनग्रहणं स्पष्टार्थं सत्यप्यक्षराणां निर्देशैः खण्डनमयुक्तमितिज्ञापयितुमित्याहुरितिसङ्क्षेपः । अत्रत्यो विपुलो वालकलहोऽभिनवराजलक्ष्म्यां प्रदर्शितस्तत एवावधारणीय इति—फल्गुत्वाच्च नेह तन्यते ।

'बहुवचने झलीक्' इति तु न सूत्रितं, 'ज्ञानयो'रित्यादौ नुमापत्तेः। इटि तु–गङ्गे इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिवत्त्वात् 'एङ्ह्रस्वा'दित्यस्याप्राप्तौ व्यवधानाद् 'हल्ङ्या'बित्यस्य चाप्राप्तौ सम्बुद्धिलोपानापत्तिः।

### ❀ अभिनव-चन्द्रिका ❀

ङेदयतानिलपिनयादौ प्रत्यये परतस्तेन दीर्घ इति नात्र तस्य प्राप्तिरित्याहुः। **नुमापत्तेरिति**। 'ज्ञान ओस्' इति स्थिते 'ओसि चे'त्यनेन इगागमे 'वार्णादाङ्ग'मितिपरिभाषया 'इकोऽची'ति नुमापत्तिरिति भावः। न च वर्णशास्त्रीयस्थानितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानितावत्त्वरूपसमानस्थानिकत्वस्यैकोऽप्यि विभक्ताविल्यत्राभावाद्वार्णपरिभाषाया अप्रवृत्तौ अन्तरङ्गत्वाद्गुणे इगन्तत्वाभावान्नुमोऽप्राप्त्या 'ज्ञानयो'रित्यादौ न दोष इति वाच्यं, ज्ञानशब्दस्य अशब्देन समासे तस्मादाचारक्विबन्तात्कर्त्तरि क्विपि नपुंसकह्रस्वे परमशब्देन समासे ओसि परमज्ञान ओमिति स्थिते इकि जाते इयङि निरुक्तसमानस्थानिकत्वस्य सत्त्वेन इयङादेशापत्तेः।

न च 'एरनेकाच' इति यणि निरुक्त'परमज्ञानयो'रिति रूपं सिध्यतीति वाच्यं, 'सपूर्वपदस्य चेद्गतिकारकपूर्वपदस्यैवे'ति नियमपरेण 'गतिकारकपूर्वपदस्यैवे'तिवार्त्तिकेन यणोऽप्राप्तेरिति दिक्।

· **सम्बुद्धिलोपानापत्तिश्चेति**। न च 'गङ्गे'इत्यादौ पञ्चमीसमासस्यानित्यत्वादप्रवृत्तौ एङन्तत्वा-

### ❀ चिदस्थिमाला ❀

वहुवचनग्रहणस्येति भावः। उक्तदोषाभावाय 'झली'डिति न्यासे त्वाह–**इटि त्विति**। प्राचां मते नेदं, कैयटमते सिद्धान्तमते च स्थानिवत्त्वाप्राप्तेः। सर्वत्र सप्तमीनिर्देशासाङ्गत्वापत्त्या तथा कर्तुमेव दुर्वचमिति तत्त्वमत एव **इटि त्विति** पाठो न प्रचुर इति बोध्यम्। नन्ववसाने चर्त्वस्य पदान्तजश्त्वापवादत्वाज्जश्त्वोत्तरं चर्त्वे-

### ❀ सदाशिवभट्टीयम् ❀

त्वस्याप्राप्तेः। आद्यपक्षेऽरवादत्वेपि 'रामेभ्य'इत्यसिद्धेश्च। 'राम'इति तु न प्रत्युदाहृतं रुप्रत्ययेनैवेष्टसिद्धेः। पूर्वोक्तासिद्धत्वबाधस्तु'हलोनन्तरा'इत्यादिनिर्देशाद्बोध्यः। **नुमापत्तेरिति**। पञ्चमीसमासेन स्थानिवत्त्वेनो-

### ❀ वरवर्णिनी ❀

**नुमापत्तेरिति**। नच 'सम्बुद्धौ चे'त्यत्रापीक एव सम्बन्धे हे रमे इत्यत्रेकि वार्णादाङ्गमिति परिभाषाया ह्रस्वस्य गुण इति–इको गुणे सम्बुद्धिलोपे वृद्धौ हे रमै इत्येव स्यान्नतु हे रमे इति–ज्ञानयोरित्येतत्पर्यन्तानुधावनं भट्टानामनुचितमितिवाच्यं, सम्बुद्धावित्यत्र विषयसप्तमीं स्वीकृत्य पूर्वमेवेकि गुणे ततो विभक्तौ लोपे च रूपसिद्धेः। विस्तरस्तु **अभिनवचन्द्रिकायां** द्रष्टव्यः।

**सम्बुद्धिलोपानापत्तेरिति**। पञ्चमीसमासस्यानित्यत्वेतु–व्याघ्रपाच्छब्दस्य अशब्देन समासे व्याघ्रपादशब्दाद्भ्यसि–तस्येडागमे आद्गुणे च परादिवद्भावेन 'एभ्य'इत्यस्य स्वादित्वेन, स्वाश्रयाजादित्वाच्च भत्वेन पादःपदितिपदादेशापत्तिरतो यथान्यासमेव रमणीयमित्यस्मद्गुरुचरणास्तत्र भवन्तः पण्डितेन्द्राः–**श्रीहरनारायणत्रिपाठिनो** व्याचक्षाणा विजयन्तेतराम्। विस्तरस्त्वस्मत्पितामहचरण**पण्डितराजश्रीलोहिरामशास्त्रि**वराभ्यूहितायां शब्देन्दुशेखर**त्रिपुरसुन्दर्या**मनुसन्धानीयः।

केचित्तु–'बहुवचने झल्ये'दित्यत्र–'असावे'दिति न्यस्यन्ति। 'असा'विति च पर्युदासः, तेन सुमिवे तत्सदृशे सुप्येव प्रवृत्तिरिति पचध्वमित्यत्र न दोषः। ओसि चेत्यस्य च–'अजादौ चेदेत्वं तर्ह्योस्येवे'ति नियमार्थतया राममित्यादौ नैत्वमित्याहुस्तन्न, रामाभ्यामित्यादावेत्वापत्तेः, 'सवाभ्यां वामा' वित्यादिनिर्देशैस्तत्र वारणन्तु न युक्तं, निर्देशैःसूत्राक्षरखण्डनस्यानुचितत्वात्। एवमेव 'एत्' इत्यादिन्यासानामपि परीक्षा कार्येतिबोध्यम्।

जश्त्वमिति । 'बाधित्वे'ति शेषः । अवसाने चर्त्वस्य पदान्तजश्त्वापवादत्वात् ।

ॐ अभिनव-चन्द्रिका ॐ

देव सम्बुद्धिलोपः सिध्यतीति न दोष इति वाच्यम्, 'एभि'रित्यादौ भिस इटि हलादित्वा-भावेन हलि लोपानापत्तेः । केचित्तु 'आप्यको लोपः' 'अन टौसोः' इति न्यासः क्रियते, हलीति च न क्रियते । तथाच-'एभि'रित्यादौ न दोष इति 'बहुवचने झल्ये'दिति न्यासः सम्यगेव। प्रथमैकवचने 'इदोऽय् पुंसि' 'यःसौ' इत्याभ्यां औ-जस्-अम्-औट्-शस्सु 'दश्चे'ति बाधान्न तत्रातिप्रसङ्ग इत्याहुः।
अपवादत्वादिति । तद्प्राप्तियोग्येऽचारितार्थ्यविशिष्टस्य कृते चारितार्थ्यस्य सत्त्वादिति भावः ।

ॐ चिदस्थिमाला ॐ

ऽपि न्यासो न युक्तोऽत आह—बाधित्वेति । अस्य 'भवती'ति शेषः । अवसाने इति । 'रत्नमुं'डाद्रौ

ॐ ज्योत्स्ना ॐ

इति शेष इति । चिन्त्यमेतत्, रत्नमुडित्यादावान्तरतम्यात्षकारस्य चर्त्वेन षकार एव प्राप्नोति

ॐ सदाशिवभट्टीयम् ॐ

भयोर्नित्ययोः परत्वान्नुमापत्तेरिति भावः । 'अन्तरङ्गत्वाद्गुण' इति तु न वाच्यम्, इकि तस्या अनित्य-त्वेनाप्रवृत्तेः, अन्यथेकोऽसिद्धत्वाद्गुणो न स्यादिति । यद्वा वार्णादाङ्गस्य बलीयस्त्वात् । सा चागमविषयेपि, अत एव सतुक्कनिर्देशेन तदनित्यत्वज्ञापनं सङ्गच्छते । 'उभयोरादेशत्व एवे'ति-'ह्रस्व'इत्यत्रवक्ष्यमाणपक्षे तु 'रमे'इत्यादौ 'ह्रस्वस्य गुण'इति गुणापत्तिर्बोध्या, उभयोरादेशत्वात् । इट्पक्षे'रामेभ्य'इत्यत्र हलि लोपाना-पत्तिर्बोध्या । 'तच्छिव'इत्यत्र मनोरमाग्रन्थविरोधं परिहरन्ति—इति शेष इति । यत्र तु जश्त्वचर्त्वे इति द्वन्द्वे नैव शेषसम्भवस्तत्र तु 'जश्तु अचर्त्वे' इति छिन्दन्ति ।

यत्र पूर्वं जश्त्वप्रवृत्तौ परिनिष्ठिते रूपे विशेषस्तत्र जश्त्वम्प्राक् प्रवर्तते, न बाध्यबाधकभावः, तेन 'रत्नमुडा'-दौ न दोषः, अन्यथाऽऽन्तरतम्याच्चर्त्वेन षस्य ष एव स्यात् । 'जक्षित्यादयः षड्' 'षौष'डित्यादिनिर्देशाश्चेह लिङ्गम् । एतेन 'णत्वं द्वित्वं चतुर्णां'मित्यत्रत्यस्वग्रन्थविरोधश्चर्त्वस्य जश्त्वापवादत्वादित्यपास्तम् । तथाहि पूर्वत्रासिद्धमद्वित्व' इत्यस्य वर्णद्वित्वे प्रवृत्तौ चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणा-पत्तिरिति हि तत्रोक्तम्। तत्र च पूर्वं जश्त्वे गकयोः श्रुतिः, अपवादविषयतया तदभावे कुत्वनिष्पन्नकस्य द्वित्वे कद्वयश्रुतिरिति परिनिष्ठिते वर्त्तते विशेषः, वर्णद्वये तत्प्रवृत्तौ तु परेषामसिद्धत्वात्कुत्वे जश्त्वापवादत्वाद्वित्वा-पेक्षया परत्वाच्चर्त्वे द्वित्वमिति प्रक्रिया । एवङ्कारे जशि पर इति तदुत्तरशङ्काग्रन्थोपि न विरुध्यते, द्वित्वे कृतेपीत्यर्थाभावे एकगश्रवणरूपविशेषस्य सत्त्वात्—सिद्धान्ते तु पूर्वमेव चर्त्वमिति प्रक्रिया बोध्या। त्रिपाद्या-न्तककौण्डिन्यन्यायस्तु प्रवर्तयिष्यते 'अहन्'सूत्रे इति तत्रैव समर्थयिष्यते। त्रिपाद्यान्तन्यायप्रवृत्तौ यद्भाष्यं विरुध्यते तदनित्यत्वेन समाधेयम् । परन्त्विदं मनोरमाकाराशयवर्णनमात्रं, वस्तुतः 'षड्'ति-निर्देशेनाबाधकत्वज्ञापनमेव लभ्यिति दिक् । जश्त्वापवादत्वादिति । ननु प्राचीनमतेऽभेदविवक्षाया अपि सत्त्वेन पदत्वाभावे चर्त्वं सार्थकमिति वाच्यमिति चेन्न । 'यरोनुने'ति'वापदान्तस्ये'ति पूर्वोत्तरसाहचर्येण

ॐ विषमपदविवृतिः ॐ

केवलस्यानुवृत्तिः । किञ्च 'सुपां सु'रिति यादेशे एत्वाभावार्थं झल्ग्रहणं, एत्वे सन्निपातपरि-भाषाया अप्रवृत्तौ 'हलि सर्वेषा'मिति निर्देशो गमक इत्याहुः । नुमापत्तेरिति । 'वार्णादाङ्ग'मिति परिभाषया गुणं बाधित्वेति शेषः । सन्निपातपरिभाषया नुम्वारणे तु तयैव गुणोपि न स्यादिति भावः । इटि तु 'एभ्य' इत्यादौ हलि लोपानापत्तिर्बोध्या । बाधित्वेतिशेष इति । यत्तु पाठकेन-उक्तम्—'एवं सति षडित्यादावान्तरतम्यात्षकार एव स्याच्च टकारः, अल्पप्राणतया प्रयत्नभेदात् ।

द्वित्वे रूपेति । 'पूर्वत्रासिद्धमद्वित्वे' इति न्यायाच्चर्त्वोत्तरं द्वित्वं बोद्ध्यम् ।

ॐ अभिनव-चन्द्रिका ॐ

न च 'वावसाने' इति चर्त्वस्य जश्त्वापवादत्वे 'रत्नमुट्'इति रूपं न स्यात्, 'तक्रकौण्डिन्य'न्याय-विषये स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयाघटितत्वेन च सङ्कोचात्। 'ष्णान्ता षडि'ति निर्देशा-ऽनुपपत्त्या इष्टापत्तिः कर्तुं न शक्यत इति वाच्यं, उद्देश्यदलप्रविष्टविषयतावच्छेदकयोर्धर्मयोर्यत्र व्याप्यव्यापकभावस्तत्र 'माठरकौण्डिन्य' न्यायप्रवृत्तौ तेन न्यायेन एकविनियोगोद्देशेन प्रवृत्तवाक्य-कदम्बघटकधर्मावच्छिन्नबोधकप्रतिपाद्यतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्न-बोधकपदप्रतिपाद्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचात्, प्रकृते 'जश्त्वचर्त्वे करवाणी'ति विनियोगोद्देशेन प्रयुक्तः—'अभ्यासे चर्च''खरि च' 'वावसाने'इति वाक्यकदम्बस्तद्घटकव्याप्यधर्मा-वच्छिन्नबोधकझल्पदप्रतिपाद्यतावच्छेदकझल्त्वावच्छिन्ने चर्पदार्थतावच्छेदकचर्त्वावच्छिन्नातिरिक्तत्वेन सङ्कोचेन 'रत्नमु'षिति दशायाञ्चरतिरिक्तझलोऽभावा'द्वावसाने' इत्यस्याप्रवृत्तौ जश्त्वे 'वावसाने' इति चर्त्वे 'रत्नमुट्' 'रत्नमु'डिति रूपद्वयसिद्धेः । अत एव शसि दद्योरेत्वाभ्यासलोप निषेधस्सङ्गच्छते, चरतिरिक्तझलामभावेन 'अभ्यासे चर्चे'त्यस्याप्रवृत्तेः । तथाच अनादेशादे-रित्यत्र आदेशो वैरूप्यसम्पादक एव गृह्यते इत्यादि न वक्तव्यमिति दिक् ।

ॐ चिदस्थिमाला ॐ

गतिस्तु—'अपवादोऽपी'ति—न्यायेन तातङ् न्यायेनान्यथा वा बोध्या । अत एवा'संयोगा'दित्यत्र 'ऋदुपधेभ्य'इति वार्तिकखण्डकस्य 'नवा क्ससानवकाशत्वादपवादो गुणस्येति वार्तिकखण्डिकायां—'युक्तं तत्र यदनवकाशं कित्करणं गुणं बाधते, इह पुनरुभयं सावकाशमीजतुर्वर्तितेत्यादौ' इति भाष्योक्तौ 'क्सस्य कित्त्वे फलाभावः, इह तु सम्प्रसारणविधौ कृतार्थत्वाद्दुर्बलेनातिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बलत्वान्न तद्विधिना सह स्पर्धते, तानङ् न्यायेने'ति कैयटेनोक्तम् । 'परसवर्णत्व'मिति वार्तिकाद्वर्णद्वित्वे इदं ने'ति—प्राञ्चस्तन्न । 'वाक्वागि'ति—भाष्योदाहरणेन तस्य तत्प्रपञ्चत्वबोधनात्तदाह—**पूर्वत्रेति** ।

ॐ ज्योत्स्ना ॐ

न टकारोऽल्पप्राणतया प्रयत्नभेदादतोऽसिद्धत्वाजश्त्वे चर्त्वमिति—यथाश्रुतमेव सम्यगित्य'श्रुतवद्-

ॐ सदाशिवभट्टीयम् ॐ

तत्प्रकरणस्य पदानवयवेऽप्रवृत्तेः । **न्यायादिति** । फलाभावेपि प्रवृत्तौ बाधकाभावादिति भावः । पूर्व-ग्रन्थेऽस्य फलविशेषाभावे प्रवृत्तौ न बाधकमित्येव तात्पर्यम्, न तु तत्र प्रवृत्तौ बाधकमितीति न तद्विरोधः। मूले **प्रयत्नभेदादिति** । ननु प्रयत्नभेदेपि त एव स्यान्न तु सः, सादृश्यस्य भेदघटितत्वेन सकारस्य सदृश-

ॐ विषमपदविवृतिः ॐ

तस्माच्चर्त्वस्यासिद्धत्वाजश्त्वं ततश्चर्त्वमित्येव युक्तमिति । तन्न । उत्सर्गापवादभावपरित्यागे कारणाभावात् । षडित्यादौ तु न दोषः । शसिदद्योः प्रतिषेधेन चर्विधौ झल्पदेन चींभन्नस्य जश्विधौ जशभिन्नस्य ग्रहणबोधनेन जश्त्वोत्तरमेव चर्त्वप्रवृत्तेः । समानाश्रये चरितार्थस्य सवर्णदीर्घ-स्य व्याश्रये गुणेन वैरूप्यसम्पादकादेशप्रवृत्तियोग्ये चरितार्थस्य चर्त्वस्य सारूप्यसम्पादकादेशप्रवृत्ति-योग्यस्थले चर्त्वस्यासिद्धत्वेन तस्य जश्त्वे बाधनाच्च, 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायात्। अन्ये तु 'ष्णान्ता ष'डिति निर्देशेन जश्त्वचर्त्वयोरुत्सर्गापवादभाव एव नेति,अन्यथा जश्त्वं बाधित्वा चर्त्वे षकारस्य तदभावपक्षे जश्त्वेन डकारस्य श्रवणापत्तौ टान्तनिर्देशानुपपत्तिः । न च पुनर्भावोपक्रमाच्चर्त्वे तत्सिद्धिरिति वाच्यं, जश्त्वे पुनश्चर्त्वाभावस्योपक्रमे पुनर्भावपक्षे चर्त्वाभावाश्रय-

१ अपवादत्वाज्जश्त्वं प्रबाध्य षस्य महाप्राणप्रयत्नसाम्येन चर्त्वेन षकारे एव कृते, तस्य वैकल्पि-कत्वात्पक्षे जश्त्वेन डकारे च कृते 'रत्नमुष्''रत्नमु'डित्येवं रूपद्वयं स्यान्नतु'रत्नमुट्'इति तदाशयो विषम्यां स्पष्टः।

**तादेश इति** । अन्यथा 'यरि चे'ति चत्वेन सिद्धमिदं व्यर्थं स्यादिति भावः ।

**ह्रस्वन** । 'ह्रस्वनद्यापः' इति पञ्चमी, 'आमि सर्वनाम्नः' इत्यत 'आमी'ति वर्तते ।

ॐ अभिनव-चन्द्रिका ॐ

**इदं व्यर्थं स्यादिति** । न च 'अच उपसर्गात्त' इत्यतस्त इत्यनुवर्त्य 'सः स्यार्द्धधातुके' इति तादेशे सति तु 'घत्स्यती'त्यादौ 'चयो द्वितीया'इति द्वितीयादेशो भवति, चत्व तु तस्यासिद्धत्वाद्द्वितीयादेशो न स्यादिति वाच्यं, तावन्मात्रप्रयोजनकत्वे 'अच उपसर्गात्त' इत्यत्र तपदे एतत्सूत्रपर्यन्तानुवृत्तिप्रयोजकस्वरितत्वमकृत्वा 'सःस्यार्द्धधातुके' इत्यनेन आदेशमात्रविधाने 'स्थानेऽन्तरतम'परिभाषया सस्य स्थाने-अर्थादेव तो भवतीति-तस्यासिद्धत्वाभावेन द्वितीयादेशसम्पत्तेः। एतत्सूचनायैव-

ॐ सदाशिवभट्टीयम् ॐ

तसत्वाभावादत आह—मूले—**अत एवेति**। आन्तरतम्यपरीक्षायामभेदघटितस्यापि सादृश्यस्य ग्रहणादेवेत्यर्थः । एतेन पाक्षिकसकारनिवृत्त्यर्थन्तद्विधानमित्यपास्तम् । नचैवमपि'वत्स्यति''घत्स्यती'त्यत्र पक्षे द्वितीयादेशार्थन्तद्विधानमिति वाच्यं, बहिरङ्गपरिभाषया सन्निपातपरिभाषया च सिद्धान्तेपि तस्याप्रवृत्तेः । यद्वा 'सःसि'-अन्तरतम आदेश इत्येव तकारे लब्धे तकारानुवृत्त्यादेशविधानं ज्ञापकमुक्तार्थस्येत्यर्थः,न तु सर्वथा सूत्रं न कर्तव्यमिति । अभ्ययमित्यादिसमानविधानाज्ज्ञापकादित्यस्य यथा वक्ष्यते तथाऽत्रेवेति । न चात्र कल्पने तानुवृत्तिर्द्वितीयादेशाभावार्थेति इत्त्वत्वेनैव सिद्धे सूत्रस्यैव वैयर्थ्यापत्तेः, तदेतदभिसन्धायाह—**चर्त्वेन सिद्धाविति** । यद्वा तादेशारम्भे हेतुत्रयं सर्वथा तकारप्राप्तिः, पाक्षिकसकारनिवृत्तिः, द्वितीयादेशप्रवृत्तिश्चेति, तत्राद्यस्य न्याय्यत्वेनोक्तम्-अत एवेति । यद्वा एवकारोऽनर्थ इत्याहुः । **ह्रस्वनद्यापः** ।

ॐ विषमपदविवृतिः ॐ

णायोगात् । तथात्वे 'शिशिवतु'रित्यादौ द्वित्वे कृते सम्प्रसारणे 'शिशुवतु'रिति स्यादित्याहुः ।

**व्यर्थं स्यादिति** । ननु तादेशे 'चयो द्वितीया' इत्यस्यानन्तरं 'स आर्द्धधातुके' इति कार्यं, शरीत्यनुवृत्त्या शरादावार्द्धधातुके सस्य द्वितीय इत्यर्थः, स चान्तरतम्यात्थ एव । 'तासस्त्यो'रित्यत्र

ॐ वरवर्णिनी ॐ

**ह्रस्वनद्याप इति** । अयमत्र वर्चलितोऽर्थः—'नु'डित्येको योगः, 'नद्याप' इत्यपरः, अङ्गात्परस्यामो नुडित्याद्यस्य, नद्यन्तादाबन्ताच्च परस्यामो नुडित्यपरस्यार्थः । तत्र नुडिति सामान्यसूत्रेणैव सिद्धे 'नद्याप' इति नियमार्थं,-दीर्घात्परस्यामो नुट् चेन्नद्यापः परीभूतस्यैवेति। तेन वातप्रम्यामित्यादौ न नुट् । 'लिहां' 'दुहा'मित्यादौ तु न नुडापत्तिः, 'षट्चतुर्भ्यश्चे'त्यस्येदानीं वैयर्थ्येन तस्य—'हलन्ताच्चेत्षट्चतुर्भ्य एवे'ति नियमार्थत्वात् । अत एव 'झलां' 'युजिक्रुञ्चां,' 'षट्कतिकतिपयचतुरां,' वसुस्रंसुध्वंस्वनडुहा' मित्यादिनिर्देशोपपत्तिरिति ह्रस्वग्रहणं न कार्यमि

**विचक्षणास्तु**—नुडित्यस्य सामान्यापेक्षत्वे—नद्यामित्यादौ ङेरामि परमप्याटं सामान्यापेक्षत्वेनान्तरङ्गत्वाद्बाधित्वा नुडापत्तिः । यत्तु—'नियमशास्त्राणां विधिमुखेन प्रवृत्ति' रिति पक्षे 'नद्याप' इत्यस्यैव विधायकतया तस्य च विशेषापेक्षत्वेन बहिरङ्गतया परत्वादाटा नुट् बाध्यत इति नद्यामित्यादौ न दोष इति, तन्न, 'नियमशास्त्राणां निषेधमुखेन प्रवृत्ति' रिति पक्षे दोषतादवस्थ्यात् । किञ्च 'नद्यापः परस्यामो नुडेव नान्य'दित्येवं नियमापत्तिः, तथा च आट्-याट्-स्याटामन्यत्र श्छिद्वचने, नुटश्च पुंनपुंसकयोश्चरितार्थतया-सर्वासां गौर्यां सर्वस्यामित्यादौ नुटा बाधापत्तिः । किञ्च सर्वासां सर्वस्यां गौर्यामित्यादौ याडादीन्बाधित्वा नुटः सिद्ध्यर्थं नद्याब्ग्रहणं स्यादिति तस्य विध्यर्थत्वसम्भवेन नियमार्थत्वमेव न सिद्ध्येत् । तदेवं-विश्वपां

तच्च षष्ट्या विपरिणम्यते, 'नामी'ति लिङ्गादित्याह—**ह्रस्वान्तादित्यादि** । आमत्र षष्ठी-बहुवचनमेव, न तु ङेरामादीति स्पष्टं भाष्ये ।

यत्तु 'नु'डिति विभज्य सामान्येन नुड्विधेयः। 'नद्याप' इति-'दीर्घान्ताच्चेन्नद्याप एवे'ति नियमार्थमिति दीर्घेषु न दोषः । 'हलन्ताच्चेत्षट्चतुर्भ्य एवे'ति नियम इति हलन्तेषु न दोषः, एवञ्च ह्रस्वग्रहणं न कार्यमिति; तन्न, 'नद्याप' इत्यस्य—'स्त्रीलिङ्गानाञ्चेन्नद्याप

ॐ अभिनव-चन्द्रिका ॐ

'सः सी'ति तादेश आरभ्यत' इति मूले 'आदेश'पदोपादानम् ; 'तादेशो न कर्तव्यः, तत्स्थाने आदेशमात्रं विधातव्यमान्तरतम्यात्त एव भविष्यती'ति च कौमुद्यर्थः ।

न चैवमपि 'सः स्यार्द्धधातुक' इत्यत्र तपदस्यानुवृत्त्यभावेन सकारस्य स्थाने कदाचित्तकारः कदाचिन्नकारश्च भविष्यति, आन्तरतम्यात्, 'त' इत्यस्यानुवृत्तौ तु तकार एव भवतीति फलभेद इति वाच्यं, नकारादेशे तकारादेशे वा 'खरि चे'ति चर्त्वस्य दुर्वारतया तकारघटितस्य 'घत्स्यती' त्यस्य च सम्पत्त्या तपदानुवृत्तावननुवृत्तौ वा फलभेदाभावादिति दिक् । **विपरिणम्यत इति** । वस्तुतस्तु विपरिणामाभावेऽपि 'उभयनिर्देशे पञ्चमीनिर्देशो बलीया'निति परिभाषया षष्ठ्यंश-सहितायास्तस्मादिति परिभाषायाः षष्ठ्यंशविकलायास्तस्मिन्निति परिभाषायाश्चोपस्थित्या आम-व्यवहितपूर्वत्वविशिष्टं यद्ध्रस्वान्तमाबन्तन्नद्यन्तमङ्गं तदव्यहितोत्तरत्वविशिष्टस्य नुड् भवतीत्यर्थन मामञ्जस्यं स्यात् । **स्त्रीलिङ्गानाञ्चेदिति** । वस्तुतस्तु—कुमारीशब्दात्क्यजन्तात्क्विपि तस्मादामि

ॐ चिदस्थिमाला ॐ

तच्च='त्रेस्त्रय'—इति पूर्वत्र सफलञ्च । पंचमीत्वे बीजमाह—**नामी**ति । **शास्त्रिदण्ड्या**द्युक्तिं खण्डयति—**यत्त्विति** ।

ॐ ज्योत्स्ना ॐ

पस्थित'इत्यत्रोक्तं न विस्मर्तव्यम्। 'ङेरामादी'त्यादिपदात्कास्प्रत्ययादाम् घादामौ । **स्पष्टं भाष्ये इति** । 'आमि सर्वनाम्न' इतिसूत्रे इत्यर्थः। तत्र ह्युक्तं-कास्प्रत्ययादामो घादामश्चामित्त्वार्थं तत्रानुबन्धकरणा-न्निरनुबन्धकग्रहणेन तदग्रहणात्, ङेरामो निरनुबन्धकत्वेऽपि तत्र याडाट्स्याड्भिः परत्वान्नुटो बाधा-'त्सकृद्गति'न्यायाश्रयणाच्च नुमस्तदप्रवृत्तेः षष्ठीबहुवचनस्यैव ग्रहणमिति ।

ॐ सदाशिवभट्टीयम् ॐ

**बहुवचनमेवेति** । तद्धितस्य सानुबन्धकत्वात्, 'कास्प्रत्यया'दिति विहितस्यापि न, फलाभावात् ; तथा-ह्यदन्ते नित्यत्वादल्लोपः, इगन्ते परत्वान्नित्यत्वाच्च गुणः, णिजन्ते नित्यत्वादयादेश इति ह्रस्वांशे न फलं, नद्यन्तेपि परत्वाद्गुणे वर्णसञ्ज्ञापक्षेऽप्राप्तिः, तदन्तसञ्ज्ञापक्षेपि 'सकृद्गता'विति न्यायेन नेति न तत्। आबन्तादाचारक्विपोऽनभिधानमेव,तस्यात्र ग्रहणेपि न दोष इति प्रक्रान्तसूत्रभाष्यादितिस्पष्ट**मुद्योत** इति भावः।

**दीर्घेष्विति** । दीर्घान्तेष्वित्यर्थः। ननु बहुश्रेयसीत्यत्र पुंस्यपि नदीत्वस्य सत्त्वात्, खट्वाया अः—खट्वा इत्यादौ पुंस्याबन्तस्य सत्त्वात्कथं स्त्रीत्वलाभ इति चेत्तथापि व्यभिचारेण दीर्घान्तत्वलाभो न स्यादित्यत्र

ॐ विषमपदा [illegible]तिः ॐ

'सी'ति कर्त्तव्यम् , न च लाघवाभावः । तकारं कृत्वा थकारकरणापेक्षया साक्षात्थकरणे प्रक्रिया-

ॐ वरवर्णिनी ॐ

वातप्रम्यामित्यादौ नुडापत्तिः । 'सख्यशिश्वीतिभाषायां' 'नद्यां मतुप्' 'तदस्यां प्रहरणमिति क्रीडायां' 'सर्वासां प्रायदर्शन'मित्यादिनिर्देशैर्विपरीतनियमादिनिराससम्भवेऽपि 'आकारान्तादीकारान्तादूका-रान्ताच्च चेद्भवति तर्हि नद्याप एवे'ति नियमस्यापि सम्भवादापत्त्या—['विश्वपां' 'खल्वां' 'वातप्रम्या' मित्यादौ नुटो व्युदासेऽपि]—'ग्लावां' 'नावां' 'गवा'मित्यादौ नुडापत्तिर्दुरुद्धरैवेति—**ह्रस्वग्रहणमावश्यक-मेवेत्याहुः** । शेखरोक्तनियमाकारासम्भवत्वसाधनप्रकारस्तु अभिनव**चन्द्रिकायां** दर्शितो नेह प्रतन्यते ।

एवे'ति नियमपरतयाऽपि व्याख्यातुं शक्यत्वेन, नदीत्वाप्त्वयोर्ह्रस्वेऽपि दृष्टत्वेन त्वदुक्त-
नियमे दृष्टतरमानानावेन च 'मर्तीना' मित्यादौ नुडनापत्तेः ।

**नामि** । 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्त्तते । अङ्गस्येति किम् ? चर्मणाम् ।

❀ अभिनव-चन्द्रिका ❀

'कुमारीणां ब्राह्मणाना'मित्यत्र कुमारीशब्दे स्त्रीलिङ्गत्वस्याभावेन नद्यन्तत्वस्य च सत्त्वेन, एवं—वनिनाशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि आमि 'वनिनानाम्ब्राह्मणाना'मित्यादावपि वनिनाशब्दे स्त्रीलिङ्गत्वस्याभावेन आबन्तत्वस्य च सत्त्वेन च स्त्रीलिङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वे नियम्य—नुडिति—शास्त्रीयोद्देश्यतावच्छेदक—आम्त्व—व्यापकत्वस्य सत्त्वेपि नियामक—'नद्याप'—इत्येतच्छास्त्रीयोद्देश्यतावच्छेदक–नद्याबन्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्व–व्यापकत्वस्य–[ नद्यन्ताङ्गा-व्यवहितोत्तरत्वविशिष्टाम्त्वाधिकरण'कुमारीणां वनिनानाञ्च ब्राह्मणाना'मित्येतद्घटकवृत्त्यभावप्रति-योगित्वस्यैव स्त्रीलिङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वे सत्त्वेन–] अभावात् 'स्त्रीलिङ्गानाञ्चनद्याबन्ताना-मेवे'ति नियमो न सम्भवतीति 'मर्तीना'मित्यादौ न दोषः, तस्मान्नियमद्वयाश्रयणे गौरवात्

❀ चिदस्थिमाला ❀

दीर्घेषु=नदन्तेषु। अपिरुक्तसमुच्चये । ननु इष्टानुरोधेन तथैवात आह—**नदीत्वेति** । मति—अतिखट्वादौ ।

❀ सदाशिवभट्टीयम् ❀

आह—**नदीत्वाप्त्वयोर्ह्रस्वेपीति** । तदन्तसञ्ज्ञापक्षे उभयत्रापि तदन्तपरता बोध्या । **नामि** । **चर्मणा-मिति** । 'ब्राह्मणभिस्से'ति पूर्वोक्तोदाहरणपरभाष्यरीत्येदं प्रयोजनम् । अर्थवत्परिभाषया तद्वारणे तु—

❀ विषमपदविवृतिः ❀

लाघवात् । थकाराभावे च 'खरि चे'ति चर्त्वेन तकारः, एवं सिद्धे तत्वविधानमित्याशयात् ।

❀ वरवर्णिनी ❀

**चर्मणामिति** । 'नामी'तिसूत्रस्याङ्गाधिकारे पाठाभावे चर्मन्छब्दादामि नकारस्यामा सम्बन्धे–'नामि परे अचो दीर्घो भवती'त्यर्थकेन 'नामी'त्यनेन दीर्घापत्तौ 'चर्माणा'मिति रूपप्रसङ्ग इत्याशयः। न चैवमपि 'प्रत्यय-ग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषया तदादेरुपस्थित्या तद्विशेष्यकतदन्तविधा-वजन्ततदादेर्नामि दीर्घ इत्यर्थेन—चर्मेत्यस्य तदादित्वाभावान्नान्तस्य चर्मन्नित्यस्य तदादित्वेऽप्यजन्तत्वाभावा-न्नाम्परकत्वविरहाच्च चर्मणामित्यत्र न दीर्घापत्तिरिति वाच्यम्, अङ्गाधिकारेऽस्य पाठाभावे–प्रत्ययत्वव्याप्य-धर्मावच्छिन्नविषयताप्रयोजकत्वस्य नाम्पदे विरहेण—प्रत्ययग्रहणपरिभाषाया अप्रवृत्तेः । नचैवमपि 'अर्थवद्ग्रहणे नानर्थकस्ये'ति, 'प्रत्ययाप्रत्ययोः प्रत्ययस्यैव ग्रहण'मिति च परिभाषयाऽर्थवतो नामः प्रत्ययस्यैव ग्रहणाच्चर्मणामित्यत्र न दीर्घापत्तिरिति वाच्यं, 'ब्राह्मणभिस्से'त्यादावतो भिस ऐसित्यस्य प्रवृत्त्य-भावाय तस्याङ्गाधिकारे पाठ इत्येवमाशयकभाष्यप्रामाण्येनाऽत्र प्रकरणे तयोः परिभाषयोरनाश्रयणात् । अन्यथा 'ब्राह्मणभिस्से'त्यत्र निरर्थकस्याप्रत्ययस्य च भिसो वारणस्य परिभाषाभ्यामाभ्यामपि सम्भवादङ्गा-धिकारेऽतो भिस ऐसिति सूत्रपाठस्य व्यर्थतया तद्भाष्यासङ्गतिः स्पष्टैवेति भावः। स्पष्टञ्चेदं सदाशिवभट्टीये ।

परे तु–अङ्गाधिकारे 'नामी'त्यस्य पाठाभावे नमतेः क्विपि–'अनुनासिकस्य क्वी'ति दीर्घे–नमतीति नाम्, चर्मणो नाम्—'चर्म-ना'मित्यत्र दीर्घापत्तिरित्येव नागेशाशयः, 'चर्मना'मित्येव च पाठः, 'चर्मणा'-मिति णकारघटितः पाठस्तु लेखकानवधानात् । इह–'चर्मना'मिति पाठस्यैव साम्प्रदायिकत्वादेव च 'आमी'ति न्यासे 'चर्मणा'मित्यत्र दीर्घापत्तिरूपो दोषो भाष्यकृतोपन्यस्तः, अन्यथा—'आमी'ति न्यासे 'चर्मणा'मित्यत्र दीर्घापत्तिश्चेदङ्गाधिकारपाठे किं फलम् ?, अथ अङ्गाधिकारपाठस्य 'चर्मणा'मित्यत्र दीर्घा-

ननु 'आमी'त्येवास्तु, नित्यत्वात्पूर्वं दीर्घेऽपि ह्रस्वान्तान्नुडित्येतत्सामर्थ्याद्भूतपूर्व-ह्रस्वान्तत्वमादाय नुट्सिद्धेः। न च 'नृ चे'ति दीर्घविकल्पात् 'नृणा'मित्यत्र नुट् चरितार्थः ?, 'नृनद्याप' इत्येव सिद्धेः।

❀ अभिनव-चन्द्रिका ❀

'नुट्-नद्याप' इति न्यासः कर्तुं न शक्यत इति बोध्यम्। **भूतपूर्वह्रस्वान्तत्वमिति**। पञ्चमी-समासेन स्थानिवद्भावात् ह्रस्वान्तत्वातिदेशादिति भावः। **नृनद्याप इत्येव सिद्धेरिति**। ननु

❀ सदाशिवभट्टीयम् ❀

नम्धातोः क्विपि 'देवदत्त ना'मित्यत्र फलं बोध्यम्। 'टोरना'मिति निर्देशेन प्रत्ययस्यैव ग्रहणेन तदादेरेव दीर्घ

❀ वरवर्णिनी ❀

भावः फलमिति मन्यसे ?—तर्हि 'आमी'ति न्यासे किं फलमित्युभयतःपाशा रज्जुः स्यादित्याहुः।

नन्वङ्गाधिकारे 'नामी'त्यस्य पाठाभावे 'नोपधाया'इति सूत्रं व्यर्थं, सुप्त्व-तद्व्याप्यधर्मावच्छिन्नोद्देश्यताक-कार्यत्वस्येदानीं 'नामी'ति दीर्घे विरहेण 'नलोपः सुप्स्वरे'ति नियमाक्रान्तेरभावेन नलोपासिद्धत्वाभावेन नलोपोत्तरं 'नामी'त्यनेनैव 'पञ्चाना'मित्यादौ दीर्घसिद्धेः। अङ्गाधिकारे 'नामी'त्यस्य पाठे तु अङ्गसञ्ज्ञा-निमित्तस्य नामः प्रत्ययस्यैव ग्रहणेन तस्य च सुप एव सम्भवेन सुप्त्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्यत्वस्य 'नामी'ति दीर्घे सत्त्वेन 'नलोपः सुप्स्वरे'ति नियमाक्रान्ततया नलोपस्याऽसिद्धतयाऽजन्ताङ्गाभावेन 'नामी'ति दीर्घाप्राप्त्या तत्र दीर्घार्थं 'नोपधाया' इति चरितार्थमिति चेन्न, 'नामी'त्यत्राङ्गाधिकाराभावे 'नोपधाया' इत्यत्रापि तदसम्बन्धस्यावश्यकतया, नमतीति नाम्, हे चर्मन्–नाम्–चर्मान्नामित्यत्र नाम्परकनान्तोपधाया दीर्घार्थं 'नोपधाया' इत्यस्य सार्थक्यसम्भवेन तद्वैयर्थ्याभावादित्यस्मद्गुरवस्खिपाठिपादा व्याकुर्वन्ति।

भाष्यरीत्या शङ्कते—**नन्विति**। अयमाशयः–लाघवान्नामीत्यत्रामीत्येव न्यासोऽस्तु, अजन्ताङ्गस्य दीर्घः स्यादामि परे इति च तदर्थः, 'रामाणा'मित्यादौ परत्वान्नुटि 'आमी'ति दीर्घे रूपसिद्धेः। न चैवं न्यासे 'राम–आ'मित्यवस्थायां [कृते नुट्यपि यदागमन्यायेनाम्त्वादामीत्यस्य प्रवृत्तेः सम्भवेन दीर्घस्य कृताकृतप्रसङ्गितया–] नित्यत्वान्नुटः पूर्वं दीर्घे ह्रस्वान्तत्वाभावान्नुण्न स्यादिति वाच्यं, ह्रस्वान्तान्नुडिति वचनसामर्थ्यात्स्वरूपाणा-मित्यादिनिर्देशाच्च भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेरप्रत्यूहत्वात्। न चामीत्येतदप्राप्तियोग्येऽचारिता-र्थ्यस्य, कृतेऽपि दीर्घे ह्रस्वान्तत्वाभावादचारितार्थ्यस्य नुटि सत्त्वेन 'येन नाप्राप्ति'न्यायेन दीर्घो नुटा-बाध्यते इति वाच्यं, साक्षाच्छास्त्रबाधकल्पनापेक्षया पञ्चमीसमासाश्रयणेन 'रामाणा'मित्यादौ कृतेऽपि दीर्घे स्थानिभूतादचः पूर्वस्मात्परस्यामो नुटि कर्तव्ये स्थानिवत्त्वाद्ध्रस्वान्तात्परत्वान्नुडिति कल्पनाया एवौचित्यात्।

यद्यपि पूर्वस्मादव्यवहितपरत्वमामो नास्ति, आकारेण व्यवधानात्, तथापि सामर्थ्यादव्यवहितत्वस्याना-दरोऽत्र बोध्यः, एतदेवाभिप्रेत्य—'भूतपूर्वे'त्याद्युक्तम्। परे तु—"अशब्दादामि आनामित्यादौ स्थानि-भूतादचः पूर्वत्वेन दृष्टस्यैवाप्रसिद्धेः पञ्चमीसमासेन न निर्वाहः सम्भवत्यतः–भूतपूर्वगत्याश्रयणम्। शास्त्रबाधापेक्षया ह्रस्वत्वमुपलक्षणं न तु विशेषणमित्येवं कल्पनस्यौचित्येन दीर्घेपि उपलक्षणतया ह्रस्वत्वमस्त्येवेति न दोष इति च—तदाशयः–"इत्याहुः।

न च 'नृ चे'ति दीर्घविकल्पाद्दीर्घाभावपक्षे नृणामित्यत्र नुडर्थं ह्रस्वग्रहणं सफलमिति न तत्सामर्थ्या-द्भूतपूर्वगत्याश्रयणं कर्तुं शक्यमिति वाच्यं, 'नृनद्याप' इतिन्यासेनापि तत्र नुट्सिद्धिसम्भवात्सामान्यतो ह्रस्वान्तात्परस्यामो नुड्विधानस्य वैयर्थ्येन भूतपूर्वगत्याश्रयणमित्याशयात्। ननु 'आमी'तिन्यासपक्षे 'ह्रस्व-नद्याप' इति ह्रस्वघटितन्याससत्त्वे–'नृ चे'ति दीर्घपक्षे ह्रस्वात्परत्वाभावेन नुटोऽप्रवृत्त्या यणि 'न्रा'मिति रूपं, दीर्घाभावपक्षे नुटि 'नृणा'मिति च रूपं भवति, [आमीति न्यासकल्पे–] 'नृनद्याप'इति न्यासाङ्गीकारे तु–दीर्घपक्षे स्थानिवद्भावेन नृशब्दत्वान्नुटि 'नॄणा'मिति रूपं, दीर्घाभावपक्षे च 'नृणा'मिति रूपमिति

❀ वरवर्णिनी ❀

फलभेदस्य सत्त्वात् 'नृनधाप' इति न्यासस्य कल्पनानुपयुक्तत्वाद्ध्रस्वग्रहणवैयर्थ्याभाव इति चेदत्र केचित्—आमीति न्यासकल्पे 'नृचे'ति दीर्घस्य 'नृनधाप' इत्येतदप्रातियोग्येऽचारितार्थ्यस्य, कृतेऽपि नुटि यदागमन्यायेनाम्ग्रहणेऽस्मरकत्वचारितार्थ्यस्य च सत्त्वेन तक्रकौण्डिन्यन्यायप्रवृत्त्या [ नृ—आमित्यस्यां दशायां ] तेन न्यायेन नुटं बाधित्वा दीर्घे स्वविहितकार्याश्रय-'नृ-आ'मित्येतदतिरिक्तत्वेन सङ्कोचे तत्पक्षे 'नृनधाप' इति नुटोऽप्रवृत्त्या यणि 'न्रा'मिति, दीर्घाभावपक्षे 'नृणा'मिति यथा रूपं—तथा 'ह्रस्वनधाप' इति ह्रस्वघटितन्यासकल्पेऽपि 'नृचे'ति दीर्घकल्पे 'न्रा'मिति, तदभावे नुटि 'नृणा'मिति रूपमिति फलभेदाभाव इत्याहुस्तन्न, 'नृचे'त्यस्य प्राप्तविभाषात्वेन तत्र भावस्य सिद्धतयाऽभावस्यैव विधेयतया 'नृचे'तिसूत्रविहित—दीर्घाभावरूपकार्याश्रयातिरिक्तत्वेनैव सङ्कोचस्य वक्तव्यतया 'नृचे'ति विहितदीर्घाभावरूपकार्याश्रय—'नृ-आ'मित्येतदतिरिक्तत्वेन सङ्कोचे तत्र नुटोऽप्राप्त्या यणि 'न्रा'मिति, दीर्घे तु स्थानिवद्भावेन नृशब्दत्वान्नुटि—'नॄणा'मिति—रूपद्वयं, 'ह्रस्वनधाप' इति यथाश्रुतकल्पे तु दीर्घपक्षे—ह्रस्वान्ताङ्गात्परत्वाभावादामो नुडभावे यणि 'न्रा'मिति, दीर्घाभावपक्षेऽपि च—तद्विहितकार्याश्रयातिरिक्तत्वेन सङ्कोचान्नुटोऽप्राप्त्या यणि 'न्रा'मिति रूपमित्युभयथाऽप्येकमेव रूपमिति कल्पभेदेन फलभेदस्य तावतापि अनिरासात् ।

मान्यास्तु—प्राप्तविभाषासु सर्वत्र भावे अभावे च खण्डशः शक्तिरिति 'नृ चे'त्यनेनैव सिद्धो भावः अभावश्चापूर्व इत्युभयं विधीयते, तत्र भावांशेऽनुवादमात्रम्, अभावांशे त्वपूर्वं विधीयते इति विशेषः, एवञ्च विभक्तिनिमित्तके कार्ये यथा तक्रकौण्डिन्यन्यायो न प्रवर्त्तते, तथाऽभावत्वावच्छिन्नविधेयताके कार्ये कर्त्तव्येऽपि तक्रकौण्डिन्यन्यायो न प्रवर्त्तते इति कल्प्यते, एवञ्च प्रकृतेऽभावरूपकार्यस्याभावत्वावच्छिन्नविषयकतया तक्रन्यायाप्रवृत्तौ नृ—आमिति दशायां नुटि—'नृणा'मिति, दीर्घपक्षे—दीर्घस्याभावत्वावच्छिन्नविधेयताककार्यत्वाभावात्तक्रन्यायप्रवृत्तौ—स्वविहितकार्याश्रय—नॄ—आमित्येतदतिरिक्तत्वेन नुड्विधायकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचे नुटोऽप्राप्त्या यणि 'न्रा'मिति यथा रूपन्तथा 'ह्रस्वनधाप' इति न्यासपक्षेऽपि दीर्घपक्षे—ह्रस्वान्तत्वाभावान्नुटोऽप्राप्त्या यणि 'न्रा'मिति रूपम्, नृचेति दीर्घाभावे च—'नृनधाप' इति न्यासे 'ह्रस्वनधाप' इति न्यासे च उभयथाऽपि 'नृणा'मिति रूपमिति 'नृणां' 'न्रा'मिति रूपद्वयस्य सर्वत्रैव तुल्यतया फलभेदाभाव इत्याहुः ।

अन्ये तु [ नुः ऋत् नॄत्— ] 'नॄन्नधाप' इति पठित्वा नृसम्बन्धिह्रस्वऋकारात्परस्य नुडित्यर्थेन दीर्घपक्षे नुटोऽप्राप्त्या यणि 'न्रा'मित्यस्यैव सम्भवेन न फलभेद इत्याहुः ।

नन्वेतावतापि फलभेदो दुर्वार एव, तथा हि—तिसृणामित्यादौ नुर्ड्य 'षट्चतुर्भ्यश्चे'त्यत्र 'त्रेस्त्रय' इत्यतस्त्रेरित्यनुवृत्त्या—त्रिशब्दादामि परत्वान्नित्यत्वाच्च दीर्घं बाधित्वा त्रयादेशे—आमीति दीर्घे त्रया—आमित्यवस्थायां स्थानिवत्त्वेन दीर्घविशिष्टे त्रिशब्दत्वान्नुटि 'त्रयाणा'मिति रूपं, 'ह्रस्वनधाप' इति न्याससत्त्वे आमीति न्यासकल्पे तु—स्थानिवत्त्वेनाञ्रूपाऽल्मात्रवृत्तिह्रस्वत्वधर्मस्यानेतुमशक्यत्वेन नुडभावे 'त्रया'मिति रूपं जायते इति फलभेदस्य स्पष्टत्वात् ।

न च 'त्रे'रित्यनुवृत्तावपि चतुरशब्दसाहचर्यात्त्रिशब्दोऽयोपध एवेह गृह्यते, तेन त्रयाणामित्यत्र योपधत्वान्नुटोऽप्रवृत्त्या सर्वत्रैव 'त्रया'मित्येव रूपमिति न फलभेद इति वाच्यं, त्रिशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि तुकि प्रातिपदिकत्वादामि त्रित्—आमित्यत्र ह्रस्वग्रहणपक्षे ह्रस्वान्तत्वविरहान्नुटोऽप्रवृत्त्या 'त्रिता'मिति, 'नृनधाप' इतिकल्पे त्रिपदानुवृत्तिस्वीकारे तु—यदागमन्यायेन तुग्विशिष्टेऽपि त्रिशब्दत्वानपायान्नुटि 'त्रित्ना'मिति रूपमिति फलभेदस्य तावतापि दुरुद्धरत्वात् । न च षट्चतुरशब्दसाहचर्याद्दकारान्तोऽयकारोपध एव त्रिशब्द इह गृह्यत इति वाच्यं, चतुरशब्दादाचक्षाणणिजन्तात्कर्त्तरि क्विपि निष्पन्ने चतुशब्दे तकारान्तत्वस्यापि सम्भवात्तथा साहचर्यस्य ग्रहीतुमशक्यत्वात्त्रितामित्यादौ फलभेदस्य सुस्थत्वादिति चेन्न, जराशब्दे

तदुक्तं भाष्ये—'नैकमुदाहरणं योगारम्भं प्रयोजयती'ति ।

ॐ अभिनव-चन्द्रिका ॐ

'आमी'ति न्यासकल्पे 'नृ आ'मिति स्थिते नित्यत्वात् 'नृ चे'ति दीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्त्या यणि 'न्राम्' इति, दीर्घाभावे नुटि 'नृणा'मिति रूपद्वयम्, 'नृनद्याप' इति न्यासकल्पे तु 'नृणाम्' 'नृणा'मिति च रूपद्वयमिति फलभेदः। एवं नृशब्दस्य ऋशब्देन समासे सवर्णदीर्घे 'नॄ' इति जाते तस्मादामि पूर्वान्तवद्भावेन नृशब्दत्वान्नृनद्यापो नुट्,—आमीति न्यासकल्पे नुड् भवति । 'ह्रस्वनद्यापो नुट्' 'नामी'ति च यथावस्थितन्यासकल्पे नुट् न भवतीति फलभेदः। एवं नृशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि तस्मादामि 'ह्रस्वनद्याप' इति कल्पे नुण्न भवति, 'नृनद्याप' इति कल्पे च भविष्यतीति फलभेद इति चेदत्र केचित्—'नृनद्याप'इति न्यासे शेखरतात्पर्यं, तपरकरणसामर्थ्याच्च ह्रस्वऋकारान्तस्यैव नृशब्दस्य न तु तान्तनृच्छब्ददीर्घान्तनॄशब्दस्य वा ग्रहणमिति न पूर्वोक्तफलभेद इति अदोषादित्याहुः ।

परे तु—'नद्यापो नुट्' 'नुर्वा' इति 'आमी'ति सूत्रकल्पे न्यासः क्रियते, 'नुर्वे'ति च 'तक्रकौण्डिन्य' न्यायेन 'आमी'त्येतदप्राप्तियोग्येऽचारितार्थ्यस्य कृते चारितार्थ्यस्य च सत्त्वाद्दीर्घस्य बाधक इति नुट्कल्पे 'नृणा'मिति तदभावे च 'न्रा'मिति न फलभेद इत्याहुः। अस्मिन्मते च 'नृचे'तिसूत्राकरणप्रयुक्तं लाघवमनुसन्धेयम्। नैकमुदाहरणमिति। सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रमेकमुदाहरणं[1] न प्रयोजयतीत्यर्थः।

ॐ वरवर्णिनी ॐ

वक्ष्यमाणरीत्या परम्परया स्थानिवद्भावस्य भट्टैरनङ्गीकारात्त्रयादेशे त्रिशब्दत्वेऽपि कृतदीर्घे 'त्रया' इत्यत्र त्रिशब्दत्वाभावादुभयत्रापि कल्पे नुटोऽप्रवृत्त्या 'त्रया'मित्यस्यैव रूपस्य सम्भवेन फलभेदाभावात्। वस्तुतस्तु अचः परस्मिन्निति सूत्रस्थशेखरोक्तरीत्या—इदुदुपधेभ्य आचक्षाणणिचोऽनभिधानाच्चतुरशब्दस्य तान्तस्याऽसम्भवेन तत्साहचर्यात्त्रिशब्दस्यापि अतान्तस्यैव ग्रहणसम्भवेन 'त्रिता'मित्यादौ न फलभेद इत्यवधेयम्।

नन्वेवमपि नृशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि तुकि प्रातिपदिकत्वादामि—ह्रस्वग्रहणपक्षे नुटोऽप्रवृत्त्या नृतामिति, 'नृनद्याप' इति न्यासे यदागमपरिभाषया नुटि 'नॄणा'मिति फलभेदः पुनरपि दुरुद्धर एव, न च ह्रस्वग्रहणकल्पेऽपि यदागमपरिभाषया नुट् प्रवर्त्तेतेति वाच्यं, वर्णग्रहणे तदप्रवृत्तेरिति चेन्न, आचारक्विबन्तात्कर्त्तरि क्विपोऽनभिधानस्य नागेशभट्टैरुक्तत्वादुक्तफलभेदस्याभावात्। नन्वेवमपि-नृशब्द-ऋशब्दयोः समासे सवर्णदीर्घेण निष्पन्ननॄशब्दादामि 'ह्रस्वनद्यापो'रिति न्यासे पञ्चमीसमासमाश्रित्याचः परस्मिन्निति स्थानिवद्भावाद्ध्रस्वान्तत्वेन नुटः प्रवृत्त्या 'नॄणा'मितिरूपं,'नृनद्याप' इति न्यासे तु स्थानिवद्भावेऽपि ऋकारेण व्यवधानान्नुटोऽप्रवृत्त्या यणि 'न्रा'मिति रूपमिति फलभेदस्तदवस्थ एव, न च 'नृनद्याप' इति न्यासाङ्गीकर्तृभाष्यप्रामाण्यादत्र पञ्चमीसमासो नाश्रीयत इति वाच्यम्, एवमपि 'नृनद्याप' इति न्यासे—दीर्घविशिष्टे 'स्थानिवदादेश' इति स्थानिवद्भावान्नॄशब्दतया नुटि 'नॄणा'मिति, 'ह्रस्वनद्याप' इति न्यासेऽनल्विधाविति निषेधाद्ध्रस्वान्तत्वस्यानयनासम्भवेन नुडभावे यणि 'न्रा'मिति फलभेदस्य सम्भवादिति चेच्छृणु,—'नॄणा'मिति रूपमिष्टं ?, 'न्रा'मिति वा ?, आद्ये—पञ्चमीसमासमाश्रित्यानिष्टापादनस्यानुचितत्वान्नृनद्याप इति न्यासे तदनाश्रयणेन नुटि 'नॄणा'मिति रूपं, 'ह्रस्वनद्याप' इति न्यासे तु इष्टरूपसिद्ध्यर्थं पञ्चमीसमासमाश्रित्य ऋकारस्य स्थानिवद्भावाद्ध्रस्वान्ततया नुटि 'नॄणा'मिति क्व फलभेदः ? द्वितीयेऽपि—ह्रस्वग्रहणसत्त्वे पञ्चमीसमासानाश्रयणेन, 'नृनद्याप' इति न्यासे च तदाश्रयणेन नुडभावे 'न्रा'मिति रूपसिद्धेर्नास्ति फलभेद इत्यदोषात्। परे तु 'नृनद्याप' इति न्यासमाश्रित्य यदागमन्यायेनापि नॄदिति तान्ते नृशब्दसम्बन्धिह्रस्वऋकारान्तत्वस्यानेतुमशक्यतया नृच्छब्दे न फलभेद इत्याहुः।

---

१. एकमुदाहरणं कर्तृभूतं—सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रं न प्रयोजयति, तदुदाहरणमात्रफलकं विशेषशास्त्रं-'कलेर्ढक्'-'मित्र चर्षौ' 'अग्नेर्ढक्' इत्यादि तु-प्रयोजयत्येवेति दण्डिभट्टानामाकूतम्।

—'तिसृणामि'ति—'प'डित्यत्र 'त्रे'रित्यनुवृत्त्या सिद्धमिति—भाष्ये एव स्पष्टम् ।

एतेन 'ऋन्नधात' इति न्यासे भाष्यतात्पर्यमित्यपास्तम् । 'चतसृणां' 'प्रिय-चतसृणा'मित्यत्र 'षट्चतुर्भ्य' इति सिद्धम् । गौणे तदप्रवृत्तौ तु न मानम् ।

❀ अभिनव-चन्द्रिका ❀

सिद्धमितीति । न च भाष्योक्ते 'आमी'ति न्यासकल्पे—'ह्रस्वनद्याप' इत्यत्र ह्रस्वपदोपादाने त्रिशब्दादामि त्रयादेशे नित्यत्वादामीति दीर्घे ह्रस्वान्तत्वैकल्याद्ध्रस्वनद्याप इति नुण्न भवतीति 'त्रया'मित्येव रूपं, तत्र ह्रस्वग्रहणाभावे तु दीर्घेपि'षट्चतुर्भ्य' इत्यत्र त्रेरित्यनुवृत्तिनत्त्वात्स्थानिवत्त्वान्नुटि 'त्रयाणा'मिति च रूपमिति फलभेद इति वाच्यं, षट्चतुर्साहचर्येणानकारान्तत्रिशब्दस्यैव ग्रहणात्त्रयादेशे

❀ चिदस्थिमाला ❀

नन्वेवमपि 'तिसृणा'मित्यादौ सावकाशोऽत आह—**तिसृणामिति** । एतेन नैकमुदाहरणं तत्र तदनुवृत्त्या सिद्धिरिति भाष्यद्वयविरोधेन **प्राचयदीक्षितादीनामुक्तिखण्डनायाह—प्रियेति** । **सिद्ध इति** । नुडित्यर्थः । तदुक्तिं निराचष्ट-**गौणे इति** । ननु बहुवचननेव तथेति तदुक्तमेवात आह—**बाह्विति** । तत्र तदप्रवृत्तावभ्यु-

❀ ज्योत्स्ना ❀

**षडित्यत्रेति** । षट्चतुर्भ्यश्चेत्यर्थः । 'ह्रस्वनद्याप'इत्यत्रैव 'त्रे'रित्यनुवृत्त्यासिद्धिर्भाष्याल्लभ्यते ।

❀ सदाशिवभट्टीयम् ❀

इति न शक्यं, न आम् अनाम् इत्येवमपि निर्देशोपपत्तेः । **षडित्यत्रेति** । 'नृनद्याप' इति सूचितं, भाष्य-

❀ विषमपदविवृतिः ❀

प्राचां मते तस्य बहिरङ्गत्वेनासिद्धत्वाद्वितीयाप्रवृत्तेश्च । **षडित्यत्रेति** । अनन्तरत्वा'न्नृनद्याप' इत्यत्र तदनुवृत्तिरुचिता ।

❀ वरवर्णिनी ❀

नन्वेवमपि—'छन्दस्युभयथे'ति वैकल्पिकदीर्घविधाने—धातृशब्दादामि 'ह्रस्वनद्याप' इति यथावस्थित-सूत्रसत्त्वे दीर्घपक्षे 'धात्रा'मिति, दीर्घाभावे तु नुटि 'धातृणा'मिति रूपम्, 'नृनद्याप' इति न्यासे तु पक्ष-द्वयेपि नुटोऽप्रवृत्त्या 'धात्रा'मिति रूपमिति 'धाता धातृणा'मिति तैत्तिरीयशाखाप्रयोगासङ्गत्या फलभेदः, एवं 'श्रीग्रामण्योश्छन्दसी'ति वैकल्पिकदीर्घविधानेऽपि—ह्रस्वग्रहणे दीर्घपक्षे नुडभावः, दीर्घाभावे नुट्, 'नृनद्याप' इति कल्पे तूभयत्र नुडभाव इति फलभेद इति चेदुच्यते,—'न तिसृचतसृ' 'नृ च' 'छन्दस्यु-भयथा' 'षट्चतुर्भ्यश्च' 'श्रीग्रामण्योश्छन्दसी'ति पञ्च सूत्राणि 'ह्रस्वनद्याप' इति सूत्रञ्च विहाय—'ऋतश्च-तुरो नुट्' 'षण्नद्यापः' 'नुर्वा' 'छन्दसि च' श्रीग्रामण्यो'रिति । च पृथक्सूत्राणि क्रियन्ते, तत्कौण्डिन्य-न्यायेन चैतानि 'आमी'तिदीर्घस्य बाधकानि । 'ऋतश्चतुर' इत्यत्र च 'त्रे'रित्यनुवर्त्तते । एवञ्चेदृशलघु-न्यासेन सिद्धे ह्रस्वग्रहणसामर्थ्याद्भूतपूर्वगत्याश्रयणमित्याशयात् । छन्दसिदृष्टानुविधेश्चधातृणामित्यादाव-दोषात् । त्रितां त्रित्रामित्यत्र फलभेदवारणाय तु अत्रापि कल्पे—आचारक्विबन्तात्कर्त्तृक्विपोऽनभिधान-मादरणीयम् । एवमन्येऽपि त्रिशब्दस्येशब्देन समासादिना प्रसक्ताः फलभेदाः पञ्चमीसमासादिना निरसनीया इत्याहुरस्मद्गुरव**क्षिपाठिचरणाः** ।

केचित्तु नद्याप्साहचर्यान्नृशब्दोप्यजन्तो गृह्यत इति नृच्छन्दादौ न दोषः, नीत्—नृशब्दादौ च पञ्चमीसमासेन स्थानिवद्भावात्तत्वव्यवधानान्न नुडित्याहुः ।

**प्रियचतसृणामिति** । अयमाशयः—यद्यपि'प्रियतिसृणां' 'प्रियचतसृणा'मित्यादावामीति न्यासे ह्रस्वग्रहणे 'प्रियचतसृ—आमित्यत्र नुटि प्रियचतसृणां प्रियतिसृणामित्यादि रूपाणि भवन्ति, 'नृनद्याप' इति न्यासे तु नुटो

बहुवचनन्तु लाघवार्थम् । द्विवचने हि 'चतुर्भ्या'मिति गुरुनिर्देशः स्यात्, 'नैकमुदाहरण'मिति प्रकृतसूत्रस्थभाष्यविरोधश्च । 'समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थ' इति तु न युक्तम्, 'अस्थिदधि'-'तिसृभ्यो जस' इत्यादौ व्यभिचारात् ।

न च-'अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवती'ति सर्वादि-

❀ अभिनव-चन्द्रिका ❀

नुटोऽप्राप्त्या 'त्रचा'मित्येव रूपम्भवतीति फलभेदाभावात्। **गृह्यमाणविभक्तेरिति** । गृह्यमाणाद्विहित-

❀ चिदस्थिमाला ❀

पेत्यापि दोषान्तरमाह—**नैकमिति** । एवमभ्युपेत्योक्तमिदानीं तस्य वैयर्थ्येऽपि न तस्य तदर्थत्वमतिप्रसङ्गापत्तेरित्याह—**समेति** । 'षट्चतुर' इतीत्यर्थः । तदभिमतं भाष्यरूपमानान्तरं खण्डयति—**नचाङ्गेति** । पञ्चम्या=तदन्तेन । अर्थान्तराभ्रमायाह—**गृह्येति** । तस्य तथार्थे साधकं तदग्रिमभाष्यान्तरमपि तथा

❀ ज्योत्स्ना ❀

**गुरुनिर्देशः स्यादिति** । यदि त्वन्वितार्थकद्विवचननिर्देशमपेक्ष्यानन्वितार्थस्य शब्दार्थयोस्तादात्म्यादर्थगतबहुत्वारोपमूलस्य वा बहुवचनस्य निर्देशो गुरुः, न हि वर्णगौरवमेव गौरवं नच ज्ञानगौरवं तदिति राजाज्ञास्तीत्यतस्तत्सामर्थ्याद्गौणे 'प्रियचतसृणा'मित्यत्र नुडप्राप्तिरित्युच्यते तदा-'ऋन्नद्याप' इति न्यासे भाष्यतात्पर्यं वक्तव्यमेव । अत्राप्याह—**नैकमुदाहरणमिति** ।

**भाष्यविरोधश्चेति** । वस्तुतस्तु-'नामि दीर्घ आमि त्वेत्स्यात्कृते दीर्घे न नुड् भवेत् । वचनाद्यत्र तन्नास्ति नोपधायाश्चर्मणाम् ॥' इति वार्तिके आद्यपादाभ्यां पूर्वपक्षे समाधाने तृतीयाद्यभागेन—ह्रस्वान्तान्नुड्विधिसामर्थ्यात्कृतेऽपि दीर्घे नुडित्यर्थकेन पुनः पूर्वपक्षोत्तेजनम् तदुत्तरभागे, ननु यत्र दीर्घो निषिद्धस्तदर्थोपक्षयात्सामर्थ्याभावात्समाधाने स्थिरीकृते चकारघटितेन चतुर्थपादेन पूर्वोक्तप्रयोजनसमुच्चितमुत्तरसूत्रे प्रयोजनमुक्तम्, तद्व्याख्यातं भाष्ये पूर्वपक्षिणा चाङ्गसञ्ज्ञानिमित्तस्य—षट्चतुर्भ्यः परस्यामो नुडित्यर्थेन चतसृणामित्यत्रेव प्रियचतसृणामित्यत्रापि षट्चतुर्भ्यश्चेत्यनेनैव नुड्विहितोऽतो नृणामित्येतदेकं प्रयोजनं ह्रस्वलक्षणनुड्विधिं न प्रयोजयतीत्युक्तवचनसामर्थ्यं दृढीकृतम् । नैतावताऽसौ षट्चतुर्भ्यश्चेत्यस्यार्थः समुच्चितप्रयोजनवादिसिद्धान्ताभिमतोऽत्र वार्तिके चकारप्रयोगात्, किन्तु सर्वादिसूत्रभाष्यप्रामाण्यादङ्गसञ्ज्ञानिमित्तस्य षट्चतुर्भ्योऽर्थद्वारा विहितस्य षट्चतुरर्थसङ्ख्यासमर्पकस्यामो नुडित्येवार्थ इतिकृतबुद्धयो विदाङ्कुर्वन्तु ।

**व्यभिचारादिति** । तत्र'स्थिदधी'त्यादावन्यपदार्थप्रधानसमाहारद्वन्द्वमपेक्ष्य वर्त्तिपदार्थप्रधानेतरे-

❀ वरवर्णिनी ❀

ऽप्राप्त्या यणि प्रियचतस्त्रामित्यादिरूपाणीति फलभेदस्तथापि 'षट्चतुर्भ्यश्चे'त्यनेन तत्र नुट्सिद्धेर्न फलभेदः, न च बहुवचननिर्देशाद्गौणे तदप्रवृत्तिरिति वाच्यं, लाघवादेव तथा निर्देशाद्गौणे तदप्रवृत्तौ बाधकाभावात् । किञ्च षट्चतुर्भ्यश्चेति नुटो गौणेऽप्रवृत्तौ ह्रस्वग्रहणस्य प्रियतिसृणां प्रियचतसृणामित्यादौ नुडादिसिद्धेरपि फलत्वेन अनेकोदाहरणसम्भवे-'नैकमुदाहरण'मिति भाष्ये एकपदोपादानमसङ्गतमेव स्यादतो गौणेऽपि षट्चतुर्भ्यश्चेत्यस्य प्रवृत्तिर्भाष्यारूढैवेति प्रियचतसृणामित्यादौ न दोष इति ।

**व्यभिचारादिति** । तत्र बहुवचनेन निर्देशेपि तेषां गौणेऽपि प्रवृत्त्या—'बहुवचनेन निर्दिष्टा गौणे न प्रवर्त्तन्ते' इति नियमस्य व्यभिचारादित्यर्थः । वादी-'षट्चतुर्भ्यश्चे'त्यस्य गौणेऽप्रवृत्तिरित्यत्र प्रमाणतया भाष्यमुपन्यस्यति-**न चेति**। 'इत्युक्त'मित्यस्य 'भाष्यकृते'ति शेषः। **गृह्यमाणादिति** । पञ्चम्यन्तात्परीभूतविभक्तिनिमित्तकं नुडादिकार्यं गृह्यमाणात्षडादिभ्यो विहिताया आमादिविभक्तेर्भवतीति

सूत्रभाष्याद्गृह्यमाणाद्विहितविभक्तेरित्यर्थकाद्न्य नुटो गौणेऽप्रवृत्तिः । 'षड्भ्य' इत्यत्रापि विहितविशेषणमेवेत्याशयेन 'परमपञ्चे'त्यादौ लुगभावमाशङ्क्य—'पदप्रधान एव मतम्' इत्युक्तम् । 'समासस्य पदप्रधानत्वेन सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोध-जनकत्वेन पदत्वमस्त्येव न दोष' इति तदर्थः । 'ष्णान्ते'त्यत्र—लोके गणनायां प्रसिद्धा-नामेव ग्रहणमित्यत्र न मानम् । प्रकृतेऽपि तथैव,—'षड्भ्य' इत्यादौ—पञ्चम्या विरुद्ध-विभक्तित्वादङ्गस्येत्यनेन सम्बन्धायोग्यत्वाद्विहितेत्याद्यध्याहारेण प्रत्ययविशेषणतैवेति

❀ अभिनव-चन्द्रिका ❀

विभक्तेरित्यर्थः । सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेनेति । न च सङ्ख्याप्रकारक-सङ्ख्येयविशेष्यकबोधजनकत्वरूपसङ्ख्यावाचकत्वस्वीकारे 'राजान' इत्यादौ बहुत्वप्रकारकराजत्वावच्छिन्न-विशेष्यकबोधजनकत्वस्य राजन्शब्दे सत्त्वेन तस्य षट्त्वापत्तिरिति वाच्यं, सङ्ख्याप्रकारकसङ्ख्येय-

❀ विद्वत्सुधिमाला ❀

आह—षड्भ्य इति । न दोष इति । विहितविशेषणत्वेऽपीति भावः । ननु लोके गणनायां तद-पाठात्तावता दि—कथं तत्त्वमनस्तदाशयमाह—ष्णान्तेत्यत्रेति । न मानमिति । 'इति तदाशय' इति शेषः ।

नन्वेतावता लुग्विधौ न्था लाभेऽपि नात्रेत्यत आह—प्रकृतेऽपीति । 'षट्चतुर्भ्य' इत्यत्रापीत्यर्थः । तथैव=विहितविशेषणमेव, तुडनुवृत्तेरिति ध्वनयन्नाह—षड्भ्य इति । आदिना—'सर्वनाम्नः स्मै'

❀ ज्योत्स्ना ❀

तरयोगद्वन्द्वो लघुरित्याशयः । 'तिसृभ्यो जस' इत्यत्र त्वर्थगतबहुत्वस्य शब्दे आरोपाद्बहुवचन-मित्युपाध्यायाः, तत्फलञ्चा'तितिस्र' इति गौणे स्वराप्रवृत्तिः । नचैव'मतितिस्र' इत्यत्र स्वरा-प्रवृत्तये जस्ग्रहणं क्रियमाणमनर्थकं, 'तिसृके'त्यत्र कति तिसृभावे नित्त्वादाद्युदात्तस्येष्यमाणस्य बाधाभावाय तस्य सत्त्वात् । यत्त्व'तितिस्र'इत्यत्रेप्यत एव जसुदात्तत्वमित्युपाध्यायैरुक्तं, तत्—'उप-समस्तार्थमेके जसो ग्रहणमिच्छन्ती'ति—भाष्योपन्यस्तैकदेशिमताशयवर्णनमात्रमिति स्पष्टं भाष्ये । इत्युक्तमिति । सर्वादिसूत्रभाष्ये इत्यर्थः । प्रकृतेऽपि='षट्चतुर्भ्यश्चे'त्यत्रापि । तथैव=विहित-

❀ सदाशिवभट्टीयम् ❀

स्योदासीनत्वान्मण्डूकानुवृत्तेर्निष्फलत्वात् । सङ्ख्येयविशेष्येति । मुख्यविशेष्येत्यर्थः । तत्त्वञ्च स्वार्थनिष्ठ-विशेष्यता-निरूपकविषयता-ऽनाश्रयत्वम् । यस्य सङ्ख्यावाचकत्वं स स्वपदार्थः, नातः 'प्रियपञ्चान'इत्यादौ दोषः । नन्वेवं त्रयो दण्डिन इव, त्रयः पूषाण इव, त्रयः पञ्च इव—'त्रिदण्डिनः' 'त्रिपूषाणः' 'त्रिपञ्चान' इत्यादावुपमितसमासेऽतिव्याप्तिः, मम तु षडर्थगतसङ्ख्याभिधायित्वाभावाज्जश्शसोर्न सेति चेन्न, परम-कतरवदिष्टत्वात् , अन्यथा कति तक्षाण इव 'कतितक्षाण'इत्यादौ तवापि सा दुर्वारैव स्यात् । 'षड्भ्य' इत्यस्य प्रवृत्त्या एकत्र षष्ठ्यर्थे पञ्चमीस्वीकारेण षड्भ्यः परयोः षडर्थगतसङ्ख्याभिधायिनोरित्यर्थः । एवञ्चेत्—'द्वित्राः' 'पञ्चशकुनय'इत्यत्रापि मम न सेति चेन्न, कति पञ्चेवेति—'कतिपञ्चान' इत्यादौ तद्दार्ढ्यात् उभयत्रापि पद्मन्त्रकः शब्दः प्रत्यासत्त्या एक एवेति चेत्, एवं रीत्या तत्परिहारस्य मयापि कर्तुं शक्यत्वात् । तथाहि लोके सङ्ख्यावाचकत्वेन प्रसिद्धशब्दप्रकारकसङ्ख्येयमुख्यविशेष्यकप्रतीतिजनक-प्रत्यासत्त्या—प्रकारभूतशब्दा-वयवतकारान्तेति सूत्रार्थः, एवञ्च दश पञ्चेव 'दशपञ्चान'इत्यादावपि न सेति दिक् । विहितविशेषण-

❀ वरवर्णिनी ❀

तदर्थः । न दोषः=परमपञ्चेत्यादौ लुगनापत्तिरूपो दोषो नेत्यर्थः । तथैव=विहितविशेषणमेव ।

तत्र हेतुमाह—विरुद्धविभक्तित्वादिति । प्रत्ययविशेषणतैवेति । एवञ्चाङ्गसञ्ज्ञानिमित्तस्य षडादिभ्यो

ॐ तरङ्गिणी ॐ

विद्वांसस्तावन्तो नुडित्यर्थे गौणे—प्रियपञ्चन्शब्दे—पञ्चत्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यतायाः सत्त्वेऽपि तस्या अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणतया—शाब्दबोधीयप्रकारत्वासमानाधिकरणसङ्ख्येयनिष्ठविशेष्यत्वाप्रयोजकत्वरूपोक्तसङ्ख्यावाचकत्वमिति षट्संज्ञाऽभावान्न नुटस्तत्र प्रवृत्तिरित्याशयः ।

ननु—सङ्ख्यावाचकत्वं यदि—सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठमुख्यविशेष्यताकबोधजनकत्वं तर्हि—'पञ्चकं प्रातिपदिकार्थ' इति मते 'राज्ञ' इत्यादावपि बहुत्वसङ्ख्यानिष्ठप्रकारतानिरूपितराजन्शब्दार्थनिष्ठमुख्यविशेष्यताकबोधजनकत्वेन षट्त्वे 'षट्भ्य' इति शसो लुगापत्तिरिति चेन्न, बोधपदेनात्रोपस्थितेर्ग्रहणेन राजन्शब्दादौ च क्वचिद्द्वित्वसङ्ख्यायाः क्वचिद्बहुत्वसङ्ख्यायाश्चोपस्थितिसिद्धये सङ्ख्यालिङ्गादौ खण्डशः शक्तिस्वीकारेणोपस्थितेर्भेदात्सङ्ख्यायाः सङ्ख्येयस्य च पृथगेवोपस्थितिरिति प्रकृते—सङ्ख्योपस्थितेरत्र बहुत्वत्वेन रूपेणैव सत्त्वादुपस्थितौ सङ्ख्यानिष्ठप्रकारताया अभावाददोषात् । केचित्तु—सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठनिरवच्छिन्नमुख्यविशेष्यताकबोधजनकत्वमेव सङ्ख्यावाचकत्वमतो 'राज्ञ'-इत्यादौ न दोषः, तत्र हि सङ्ख्याप्रकारकसङ्ख्येयराजन्निष्ठमुख्यविशेष्यताया—राजत्वेन धर्मेणावच्छिन्नत्वादित्याहुः ।

प्राञ्चस्तु—'गृह्यमाणविभक्ते'रित्यस्य—[ गृह्यमाणपदस्य तदर्थगतसङ्ख्याभिधायिन्यां लक्षणायाः स्वीकारात्]—गृह्यमाणार्थगतसङ्ख्याभिधायिन्या विभक्तेरित्यर्थः, 'ष्णान्ता ष'डित्यत्र सङ्ख्यापदेन—लोके सङ्ख्यावाचकतया प्रसिद्धानां पञ्चादीनामेव ग्रहणं, 'षट्चतुर्भ्यश्चे'त्यस्य च—षडर्थ—चतुरर्थ—गतसङ्ख्याभिधायिन आमो नुडित्यर्थः, एवञ्च 'पञ्चानां' 'परमपञ्चाना'मित्यादौ षट्संज्ञकपञ्चार्थगतसङ्ख्याभिधायित्वादामो नुट् सिद्ध्यति । एवञ्च 'प्रियतिसृणा'मित्यादौ गौणे तदप्रवृत्त्या तत्र नुडर्थं वचनस्यावश्यकतया—'नैकमुदाहरण'मिति भाष्यस्य—एकम्=ऋकारान्तमात्रमुदाहरणमित्यर्थेन 'ऋन्नयाप' इति न्यास एव भाष्यतात्पर्यमिति वदन्ति ।

नन्वेवमपि नागेशाभिमतसङ्ख्यावाचकत्वस्वीकारे 'प्रियपञ्चानः पञ्चे'त्यत्र प्रियपञ्चोत्तरविभक्तेर्लुगापत्तिः, तत्र पञ्चेत्यस्यैवान्यपदार्थतया पञ्चत्वसङ्ख्याभिधायित्वस्य विभक्तावक्षतत्वादिति चेन्न, गृह्यमाण विशिष्टविभक्तेर्लुगित्यायर्थात् , वै० 'स्वोत्तरत्व' 'स्वार्थगतसङ्ख्याभिधायित्वो'भयसम्बन्धेन । प्रकृते—स्वं यदि प्रियपञ्चन्शब्दघटकः—पञ्चन्निति, तदा तदर्थगतसङ्ख्याभिधायित्वं जसि नास्ति, अन्यपदार्थगतसङ्ख्याभिधायित्वात्तस्य, यदि स्वपदेन—अन्यपदार्थबोधकः 'पञ्च'न्निति गृह्यते, तदा—तदुत्तरत्वं प्रियपञ्चन्नितिसमुदायोत्तरवर्तिनि जसि नास्तीत्यदोषात् । यदि च प्रियपञ्चन्शब्दघटकपञ्चपदार्थस्यान्यपदार्थस्य चैक्येन—तत्रस्वं प्रियपञ्चन्घटकपञ्चन्नितिपदं, तदुत्तरत्वस्य तदर्थगतसङ्ख्याभिधायित्वस्य च जस्यक्षततया—गृह्यमाण-प्रियपञ्चन्शब्दघटकपञ्चन्पदविशिष्टत्वं तदुत्तरजसि सम्भवतीति तदुत्तरजसो लुगापत्तिरस्त्येवेत्युच्यते, तर्हि—गृह्यमाणविशिष्टविभक्तेर्लुगित्यर्थः, वै० 'स्वोत्तरत्व' 'स्वप्रयोज्यसङ्ख्यानिष्ठावच्छेदकतानिरूपितविशेष्यतानिरूपितप्रकारताप्रयोजकत्वो'भयसम्बन्धेनेति न कोपि दोष इति गृहाण । तथाहि—'प्रियपञ्चानः पञ्चे'त्यत्र—प्रियपञ्चन्घटकगृह्यमाणपञ्चन्नित्यस्य स्वनिष्ठप्रीतिनिरूपकत्वाश्रये शक्तिर्न तु पञ्चत्वावच्छिन्ने, तदेवं तद्घटकपञ्चन्शब्दप्रयोज्या या अवच्छेदकता सा न पञ्चत्वसङ्ख्यानिष्ठा, किन्तु स्वनिष्ठप्रीतिनिरूपकत्वनिष्ठा, तादृशावच्छेदकतानिरूपकता च न पञ्चन्निष्ठा, अपि तु अप्रसिद्धा, इति—तादृशविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य प्रकृतप्रियपञ्चन्घटकपञ्चन्पदोत्तरजसोऽभावान्निरुक्तद्वितीयसम्बन्धाभावेन प्रथमसम्बन्धसत्त्वेऽपि उभयाभावस्य सत्त्वाद्दोषविरहात् । नन्वेवमपि विशेषणवाचकपदोत्तरविभक्तेः साधुत्वमात्रार्थकतया 'परमपञ्च पञ्चे'त्यत्र गृह्यमाण—परमपञ्चन्घटकपञ्चन्पदप्रयोज्यपञ्चत्वसङ्ख्यानिष्ठावच्छेदकतानिरूपिता पञ्चन्पदार्थनिष्ठा विशेष्यता—तादृशविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य परमपञ्चन्घटकपञ्चन्पदोत्तर-

❀ अभिनव-चन्द्रिका ❀

विशब्दोऽस्यास्तु... सङ्ख्यावाचकत्वमिति... । न चैवमपि सङ्ख्यानिष्ठप्रकारता-निरूपित... सङ्ख्यावाचकत्वस्य प्रियपञ्चा इत्यादौ

❀ ज्योत्स्ना ❀

वेद्यम्, ... प्रहणे मानाभावश्चेत्येव ।

❀ वरवर्णिनी ❀

जसोऽभावाद्द्वितीयसम्बन्धाभावेन जसो लुङ्न स्यादिति चेन्न, 'स्वप्रयोज्यसङ्ख्यानिष्ठावच्छेदकत्वाऽनिरू-पितविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभाववत्त्व'मित्यस्यैव द्वितीयसम्बन्धस्थाने निवेशनीयतया—प्रकृते परमपञ्चन्घटकपञ्चन्पदप्रयोज्या या पञ्चत्वसङ्ख्यानिष्ठाऽवच्छेदकता—तादृशावच्छेदकत्वाऽनिरू-पिता विशेष्यता—न घटनिष्ठा,—तत्र तन्निरूपितत्वस्यैव सत्त्वात्—किन्तूदासीनघटपटादिनिष्ठा, तादृश-विशेष्यतानिरूपिता या उदासीना प्रकारता—तत्प्रयोजकत्वाभाववत्त्वस्यैव परमपञ्चन्घटकपञ्चन्पदोत्तर-जसः सत्त्वेन गृह्यमाणवैशिष्ट्यसत्त्वाज्जसो लुकः सम्भवेन दोषलेशाभावात् ।

अथ प्रियाः पञ्च येषां पञ्चानां ते—'प्रियपञ्चानः पञ्चे'त्यत्र प्रियपञ्चन्पदप्रयोज्य—सङ्ख्यानिष्ठ-प्रकारत्वाऽनिरूपितविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभाववत्त्वस्य, स्वोत्तरत्वस्य च सत्त्वाद्गृह्यमाण-वैशिष्ट्यस्य तदुत्तरजसि सत्त्वाल्लुगापत्तिरिति चेन्न, 'स्वप्रयोज्यसङ्ख्यानिष्ठावच्छेदकतानिरूपितविशेष्यता-निरूपितप्रकारताप्रयोजकत्व' 'स्वोत्तरत्वो'भयसम्बन्धेन गृह्यमाणविशिष्टस्यैव जसो लुगित्यर्थेन—प्रकारता-प्रयोजकत्वस्य च विभक्तौ स्वरूपयोग्यतानाक्षेनापि स्वीकारेण 'परमपञ्च पञ्चे'त्यत्र विशेषणवाचकपञ्चन्पदो-त्तरवर्तिजसो बहुत्वरूपार्थबोधकतया असावपि 'अयं जस् सहकारिकारणान्तरसमवधाने सति बहुत्वरूपार्थं बोधये'दिति सम्भावनायाः सम्भवेन तद्योग्यताया अक्षततया जसो लुक्सिद्धेः । 'प्रियपञ्चानः पञ्चे'त्यत्र तु योग्यताया सर्वथाऽसम्भवान्न जसो लुगित्याशयः । यद्यपि तत्र विशेषणवाचकप्रियपञ्चन्घटकपञ्चन्पदोत्तर-जसो वास्तविकमपि सङ्ख्याबोधकत्वं सम्भवति, तथापि तद्घटकगृह्यमाणपञ्चन्पदप्रयोज्यसङ्ख्यानिष्ठावच्छे-दकताया एवाप्रसिद्ध्या सङ्ख्यानिष्ठाऽवच्छेदकतानिरूपितविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य जस्य-सम्भवान्निरुक्तसम्बन्धाभावेन लुगभावो बोध्यः । ननु किमत्र सहकारिकारणपदेन भवता विवक्ष्यते, यत्सत्त्वे 'परमपञ्च पञ्चे'त्यत्र बहुत्वबोधः सम्भाव्येतेति चेत्—तदर्थकपदोत्तरविभक्त्या सङ्ख्याबोधने-ऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकपदोत्तरत्वं विभक्तावपेक्षितं, तदेवात्र सङ्ख्याबोधने सहकारिकारणतया विवक्षितं, तथा च प्रकृते 'परमपञ्च पञ्चे'त्यत्र यदि परमपञ्चन्शब्दस्य विशेष्यत्वं स्यात्तर्हि तदुत्तरजसोऽभेद-सम्बन्धावच्छिन्नप्रकारताप्रयोजकपरमपञ्चन्पदोत्तरत्वस्य सम्भवेन—बहुत्वसङ्ख्यावाचकत्वं सम्भवति, यदा तु तादृशपदं विशेषणं भवति—यथा प्रकृते 'परमपञ्च पञ्चे त्यादौ, तदैवं सहकारिकारणाभावाद्विशेषणवाचक पदोत्तरविभक्त्या निरुक्तरीत्या सङ्ख्याबोधकत्वाभावेऽपि स्वरूपयोग्यताऽस्त्येवेति निर्गलितोऽर्थः ।

भट्टोक्तावपरितुष्यन्तः केचित्तु—भाष्यद्वयविरोधाल्लक्ष्यासिद्धेर्व्यवहारविरोधाच्च नागेशोक्तमयुक्तं, कैयटा-द्युक्तमेव च समीचीनं, तथा हि—'अङ्गाधिकारे पञ्चम्या यदुच्यते' इत्यादिभाष्यं सर्वादिसूत्रे तदन्तविधिं बुद्ध्वा प्रवृत्तम् ? अबुद्ध्वा वा ?, नाद्यः—अतिसर्वादेरपि सर्वाद्यन्तत्वात्सर्वनामत्वे स्मायादेशापत्त्या भाष्योक्त्य-सङ्गत्यापत्तेः, नाप्यन्त्यः, 'परमसर्वस्मै' इत्यत्र ङेविभक्तेः समुदायाद्विहितत्वेन तस्य च सर्वनामत्वा-भावेन स्मायादेशानापत्तेः । तद्भाष्यस्य—गृह्यमाणार्थगतसङ्ख्याभिधायिन्या विभक्तेरित्यर्थं वदतां कैयटा-दीनान्तु नोक्तभाष्यविरोधः, 'परमसर्वस्मै' इत्यत्र ङेविभक्तेः सर्वार्थगतसङ्ख्याभिधायित्वात्, 'अतिसर्वाये'-त्यत्र तु अन्यपदार्थगतसङ्ख्याभिधायित्वेऽपि—सर्वनामार्थगतसङ्ख्याभिधायिन्या ङेविभक्तेरभावान्न स्माया-देशः । एवञ्च भट्टानां मते, सर्वादिसूत्रस्थभाष्यविरोधः स्पष्ट एव । एवमेव स्वं रूपमिति भाष्यविरोधो-ऽपि भट्टानां मते, तथाहि—स्वरूपसूत्रे भाष्ये 'अशब्दसञ्ज्ञे'त्यस्याभावे—शब्दशास्त्रीयवृद्ध्यादिसञ्ज्ञानामपि

❀ वरवर्णिनी ❀

स्वरूपबोधकत्वापत्तिः, नच गुणवृद्ध्यादिसञ्ज्ञाविधानसामर्थ्यादेव स्वरूपग्रहणनिरासम्भव इति वाच्यं, 'स्वरूपस्यादैजादेश्च तन्त्रेण बोधाय सञ्ज्ञाविधान'मित्यस्यापि वक्तुं शक्यतया सामर्थ्यस्योपक्षीणत्वादतोऽशब्दसञ्ज्ञेत्यावश्यकमित्याशङ्क्य—'ष्णान्ता ष'डिति शास्त्रेण षान्तानां षट्सञ्ज्ञाविधानसामर्थ्याच्छब्दशास्त्रीयसञ्ज्ञाशब्दानां स्वरूपबोधकत्वाभाव इत्युक्तम्, षान्तसङ्ख्यावाचकषष्शब्दस्य 'ष्णान्ता ष'डिति स्वरूपेणैव ग्रहणे सिद्धे तस्य [ ष्णान्ता षडित्यनेन—] षट्सञ्ज्ञाविधानं व्यर्थमेवेति च तदाशयः । भट्टोक्त—सङ्ख्याप्रकारकसङ्ख्येयमुख्यविशेष्यकबोधजनकत्वरूपसङ्ख्यावाचकत्वस्वीकारे तु—'ष्णान्ता ष'डित्यनेन परमषष्शब्दस्यापि षट्सञ्ज्ञा भवति, 'परमषष्' इति च न स्वरूपम्, किन्तु षडित्येव तथा, एवञ्च 'ष्णान्ता ष'डित्यत्र षकारग्रहणं परमषडित्यत्र षट्सञ्ज्ञार्थं भट्टानां मते चरितार्थमिति कथं तद्वैयर्थ्येन भाष्योक्तज्ञापकत्वस्योक्तिः सङ्गच्छताम् ? प्राचां मते तु—लोके सङ्ख्यावाचकत्वेन प्रसिद्धानां पञ्चन्—षषादिशब्दानामेव षट्सञ्ज्ञा, न परमषडादीनामिति—स्वरूपग्रहणेनैव षषः षट्सञ्ज्ञासिद्धौ षकारोच्चारणं ज्ञापकमेव भाष्योक्तार्थस्येति न काप्यसङ्गतिः । एवं भट्टोक्ते 'सङ्ख्याप्रकारकसङ्ख्येयविशेष्यके'त्याद्यर्थे लक्ष्यदोषोपि प्रसज्यते, तथाहि—दण्डिन इव इमे त्रयः—त्रिदण्डिन इत्याद्युपमितसमासे पूर्वपदार्थस्यैव प्रधानतया सङ्ख्याप्रकारकसङ्ख्येयमुख्यविशेष्यकबोधजनकत्वेन त्रिदण्डिन्नित्यस्य षट्सञ्ज्ञायां जसो लुगापत्तिः । 'राज्ञ' इत्यादौ च तद्वारणार्थं 'सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठनिरवच्छिन्नमुख्यविशेष्यताकबोधजनकत्व'मित्युक्तावपि प्रकृते—त्रित्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठनिरवच्छिन्नमुख्यविशेष्यताकबोधस्यैव त्रिदण्डिन्शब्दादङ्गीकाराच्च निस्तारसम्भावनाऽपि । एवं भट्टानां मते व्यवहारविरोधोप्यापद्यते, स चेत्थं—लोके यथा 'स्वनिष्ठविशेष्यताकोपस्थितिजनकत्व' 'स्वावच्छिन्न—पदान्तरार्थनिष्ठप्रकारतानिरूपितविशेष्यता—निरूपकोपस्थित्यजनकत्वो'भयसम्बन्धेन जात्यादिविशिष्टस्यैव जात्यादिवाचकत्वव्यवहारः, अत एव परमब्राह्मणादेर्न जातिवाचकत्वव्यवहारः, किन्तु ब्राह्मणादेरेव, तथैव सङ्ख्यावाचकत्वमपि—'स्वनिष्ठप्रकारताकोपस्थितिजनकत्व' 'स्वावच्छिन्नपदान्तरार्थनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकोपस्थित्यजनकत्वो'भयसम्बन्धेन सङ्ख्याविशिष्टत्वमेव वाच्यं, तथा च परमपञ्चन्शब्दे—परमत्वावच्छिन्नरूपपदान्तरार्थनिष्ठप्रकारतानिरूपिता या पञ्चत्वसङ्ख्यावच्छिन्ना विशेष्यता तादृशविशेष्यताकोपस्थितिजनकत्वस्यैव सत्त्वेन तदजनकत्वाभावात्सङ्ख्यावाचकत्वानापत्तौ षट्त्वाभावे जसो लुगनापत्तिर्नागेशभट्टानां मते । एवञ्च—''लोके गणनायां प्रसिद्धानामेवेह ग्रहणं, तदर्थगतसङ्ख्याभिधायिविभक्तेरिति च 'गृह्यमाणविभक्ते'रित्यस्यार्थः 'ऋत्र्यधाप' इति न्यास एव भाष्यतात्पर्यम्''इति प्राचोक्तमेव युक्तमुत्पश्यामः—इत्याहुः ।

नवीनानुसारिणो विचक्षणास्तु—प्राचाम्मतेऽपि 'अङ्गाधिकारे पञ्चम्या' इत्यादि भाष्यं तदन्तविधिं बुद्ध्वाऽबुद्ध्वा वा प्रवृत्तं ? नाद्यः—'अतिसर्वाये'त्यत्र स्मायादेशापत्तेः, नान्त्यः, परमसर्वशब्दे समुदायस्य सर्वनामत्वानापत्तौ—सर्वनामप्रकृतिकसप्तम्यन्तात्त्रलित्यर्थकेन 'सप्तम्यास्त्र'लित्यनेन परमसर्वत्रेत्यत्र त्रलनापत्तेः, एवञ्च नवीनैरिव प्राचीनैरपि भाष्यस्यास्यैकदेश्युक्तित्वमवश्यमभ्युपेयम्, अत एव भाष्येऽपि—'सर्वनामेति महती खलु सञ्ज्ञा क्रियते' इत्यादिना समाधानान्तरमुक्तमिति नाद्यभाष्यविरोधः ।

अशब्दसञ्ज्ञेतिप्रत्याख्यानपरभाष्यविरोधोऽपि न नवीनानां मते—तस्यापि तन्त्रावृत्त्यादिना वृद्ध्यादैजादिरूपोभयार्थग्रहणप्रतिपादकतया गौरवपराहतत्वेनैकदेश्युक्तित्वात् । परमषडित्यादौ लुगर्थं षड्भ्यो लुगित्यत्र षडित्यावर्त्य स्वरूपस्य षट् सञ्ज्ञकस्य च ग्रहणेऽपि गौरवस्य स्पष्टत्वात्तद्भाष्यस्यैकदेश्युक्तित्वस्य सर्वैरेव वक्तव्यत्वात् । 'त्रिदण्डिन' इत्यत्रापि न दोषः, तथाहि—षान्तनान्तान्यतरावधिकपूर्वपदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वाभाववती या—सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठनिरवच्छिन्ना मुख्यविशेष्यता तादृशमुख्यविशेष्यताकबोधजनकत्वस्यैव प्रकृते परिष्कृतसङ्ख्यावाचकत्वेन—त्रिदण्डिन्नित्यत्र दण्डिन्नि-

भाष्योक्तेः,—इति गौणे नुटोऽप्रवृत्तिरिति वाच्यम्, 'नामी'ति सूत्रस्थोक्तभाष्यप्रामाण्या-न्नुड्विधायके विहितपदानध्याहारेण षडादिभ्यः परस्याङ्गसञ्ज्ञानिमित्तस्यामो नुडित्यर्थेन

※ चिद्स्थिमाला ※

इत्यादि । अत्र ... इति । द्वितीयेप्युमञ्जारमाह—इति गौणे इति । उक्तभाष्येति । 'नैक-

※ ज्योत्स्ना ※

'नामी'ति सूत्रस्थोक्तभाष्यप्रामाण्यात्='नैकमुदाहरणं योगारम्भं योजयती'ति भाष्यप्रामाण्यात् ।

※ सदाशिवभट्टीयम् ※

मिति । 'परमषडि'त्यादावनभिधानमेवेति न स्वं रूपमिति सूत्रस्थभाष्यविरोधः तत्र हि षान्तस्य षट्सञ्ज्ञा-

※ वरवर्णिनी ※

नितान्तावधिकपूर्व—त्रिपद—पर्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वस्यैव सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येय-निष्ठनिरवच्छिन्नमुख्यविशेष्यतायामस्तीति—तादृशप्रयोज्यत्वाभाववत्त्वाभावान्न त्रिदण्डिन्नित्यस्यसङ्ख्यावाचक-त्वप्रसक्तिरिति नात्र लुगापत्तिदोषः । नन्वेवं परिष्कृतसङ्ख्यावाचकत्वस्वीकारे—पञ्चानां पञ्च—पञ्चपञ्चेत्यत्र नान्तोत्तरपञ्चन्पदावधिकपूर्व-पञ्चन्पद-पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्त्वस्यैव-पञ्चत्वसङ्ख्यानिष्ठप्रकारता-निरूपितपञ्चनिष्ठविशेष्यतायां सत्त्वमिति-सङ्ख्यावाचकत्वानापत्त्या लुगनापत्तिरितिचेन्न, 'आश्रयभेदेन विषयता भिद्यते' इति नये—पूर्वपञ्चन्पदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यत्ववत्त्वस्य उत्तरपञ्चन्पदप्रयोज्य—पञ्चत्व-सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यतायामभावेन परिष्कृतसङ्ख्यावाचकत्वस्याक्षतत्वात् ।

'प्रयोजकभेदेनापि विषयता भिद्यते' इत्यस्यापि स्वत्वेन च 'परमाश्च ते च पञ्च परमपञ्च, परमपञ्च च परमपञ्च च—परमपञ्चेत्येकशेषे आश्रयस्याप्यैक्येन पूर्वोत्तरपञ्चन्पदप्रयोज्यविषयतयोरैक्येन प्रयोजक-तानिरूपितप्रयोज्यत्वाभाववत्त्वस्यासम्भवाद्दोषपरतदवस्थः—इत्यपि न वक्तुं शक्यते । 'जातिवाचकत्ववदेव सङ्ख्यावाचकत्वमपि परिष्करणीय'मिति राजाज्ञाभावाच्च न व्यवहाराविरोधान्नवीनोक्तमसङ्गतम् ।

किञ्च 'षड्भ्यो लु'गित्यस्य प्राचीनाभिमते षडर्थगतसङ्ख्याभिधायिनोर्जश्शसोरित्यर्थे 'पञ्च ब्राह्मणा' इत्यत्र ब्राह्मणपदोत्तरजसोऽपि षडर्थगतसङ्ख्याभिधायित्वाल्लुगापत्तिः, यदि तु षडर्थगतसङ्ख्याभिधायिनोः षडव्यवहितोत्तरयोरित्यर्थस्तदा 'प्रियपञ्चानः पञ्चे'त्यत्र—उत्तरपञ्चपदार्थगतसङ्ख्याभिधायित्वस्य षट्-सञ्ज्ञकपञ्चन्पदोत्तरत्वस्य च तत्र सत्त्वाज्जसो लुगापत्तिः । यद्यपि—षड्विशिष्टयोर्जश्शसोर्लुगि-त्यर्थः, वै० 'स्वार्थगतसङ्ख्याभिधायित्व' 'स्वाव्यवहितोत्तरत्वो'भयसम्बन्धेन, तथाच 'प्रियपञ्चानः पञ्चे'त्यत्र स्वपदेन पूर्वपञ्चञ्छब्दस्य उत्तरस्य वा एकदैकस्यैव ग्रहणसम्भवेनोक्तसम्बन्धद्वयविरहेण नोक्तदोषस्तथापि—वर्त्तिपदार्थान्यपदार्थयोर्यदैक्यं तदा 'प्रियपञ्चानः पञ्चे'त्यत्र पूर्वपञ्चार्थगतसङ्ख्या-भिधायित्वस्य, स्वोत्तरत्वस्य च सत्त्वाल्लुगापत्तिः प्राचीनार्थे पूर्वोक्ता सुदृढैवेति नवीनोक्तमेव युक्तमिति-समर्थयन्ते ।

**अपरे तु**—षकारनकारविशिष्टत्वं षट्त्वं, वै० 'स्वान्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या—सङ्ख्यानिष्ठप्रकारतानिरूपिता सङ्ख्येयनिष्ठा विशेष्यता—तत्प्रयोजकत्व' 'स्वान्तपर्याप्तप्रयोजकतानिरूपितप्रयो-ज्यतावत्त्वावच्छिन्नसादृश्यसम्बन्धावच्छिन्नप्रकारत्वाऽप्रयोजकत्वो'भयसम्बन्धेन । एवञ्च 'त्रिदण्डिन' इत्यत्र दण्डिन्पर्याप्तप्रयोजकतानिरूपितदण्डित्वनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वेऽपि स्वान्तपर्याप्तप्रयोजकता-निरूपितप्रयोज्यतावत्सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यताप्रयोजकत्वाभावेन न षट्त्वम् । 'परमपञ्चे'त्यत्र तु परमनिष्ठप्रकारतायाःसादृश्यसम्बन्धावच्छिन्नत्वेन न दोष इति नव्यमते न कोऽपि दोष इत्याहुः ।

'कृन्नचाप' इति न्यासे भाष्यतात्पर्यमित्याविष्कुर्वतां प्राचां कैयटादीनां मतमुत्थापयमिति-भाष्यप्रामा-

गौणेऽपि प्रवृत्तेः । 'अतो भिस' इत्यादावङ्गस्येत्यस्यैवमन्वयस्यैवाङ्गसञ्ज्ञासूत्रे भाष्ये उक्तत्वात् । अत एव 'परमचतुर्णा'मित्यादौ नुट् ।

यद्यप्येवं 'षड्भ्यः' 'अद्डुतरादिभ्य' इत्यनयोरपि वक्तुं शक्यं, तथापि लक्ष्यानुसारात्तत्र विहितविशेषणं, 'विरुद्धविभक्तित्वादि'ति भाष्योक्तयुक्तिस्त्वेकदेशिन इति बोध्यम् ।

॥ अभिनव-चन्द्रिका ॥

पञ्चञ्शब्दे सत्त्वेन 'न षडि'ति निषेधानापत्तिरिति वाच्यं, सङ्ख्याप्रकारकसङ्ख्येयमुख्यविशेष्यकोपस्थितिजनकत्वं सङ्ख्यावाचकत्वमिति परिष्कारेणादोषात् । नन्वेवमपि दण्डिन इव त्रयः त्रिदण्डिन इत्यादौ सङ्ख्याप्रकारकसङ्ख्येयमुख्यविशेष्यकोपस्थितिजनकत्वस्य सत्त्वेन सङ्ख्यावाचकत्वसत्त्वात्षट्सञ्ज्ञापत्तिः, एवं 'स्वं रूप'मितिसूत्रस्थ-अशब्दसञ्ज्ञेत्यस्य प्रत्याख्यानपरभाष्यविरोधश्च ।

तत्र हि भाष्ये शब्दशास्त्रीयसञ्ज्ञाविषये स्वरूपग्रहणं न भवति, 'ष्णान्ता ष'डित्यनेन षान्तस्य षट्सञ्ज्ञाविधानसामर्थ्यात्, शब्दशास्त्रीयसञ्ज्ञाविषये स्वरूपग्रहणे तु—षड्भ्यो लुगित्यत्र स्वरूपस्य सञ्ज्ञाविधानसामर्थ्यात्षट्सञ्ज्ञकनान्तस्य च ग्रहणे सिद्धे ष्णान्तेत्यत्र षकारोपादानं

॥ चिदस्थिमाला ॥

मुदाहरण'मितीत्यर्थः । 'अङ्गे'त्यर्थे मानमाह—**अतो भिस इति** । तद्भाष्यतात्पर्यमाह—**यद्यप्येवमिति** । नन्वेवं भाष्योक्तहेतोः का गतिरत आह—**विरुद्धेति** ।

॥ ज्योत्स्ना ॥

**एकदेशिन इतीति** । वस्तुतो 'नामी'ति सूत्रस्य भाष्योक्तिरेवैकदेशिन इति प्रागुक्तम् ।

॥ सदाशिवभट्टीयम् ॥

शब्दशास्त्रीयसञ्ज्ञाया शब्दस्वरूपाग्रहणज्ञापकमित्युक्तं, विहितविशेषणं तु तदभिधाने फलभेदापत्त्या तदसङ्गतिः स्यादिति स्पष्टम् ।

॥ वरवर्णिनी ॥

**ण्यादिति** । 'नैकमुदाहरण'मिति भाष्यप्रामाण्यादिति च तदर्थः । अत एव=विहितपदानध्याहारादेव । अन्यथा 'परमषण्णा'मित्यत्र विशिष्टस्य षट्त्वेन नुटः सिद्धावपि विशिष्टस्य चतुश्शब्दत्वाभावात्परमचतुर्णामित्यत्र नुण्न स्यादित्याशयः । **यद्यप्येवमिति** । विहितपदानध्याहारेणेत्यर्थः । **एकदेशिन इति** । 'नैकमुदाहरण'मिति भाष्यादेवास्या एकदेशियुक्तित्वमित्याशयः । किञ्च विरुद्धविभक्तित्वादिति हेतुरयुक्त एव, परशब्दयोगे पञ्चम्या विरुद्धविभक्तित्वस्य त्वद्रीत्या वक्तुमशक्यत्वादित्याहुः **साम्प्रदायिकाः** ।

**परे तु**—प्राचोक्तमेव युक्तम्, 'अङ्गाधिकारे' इति भाष्यस्य-'यथाऽङ्गाधिकारे' इत्येवं दृष्टान्तपरतया-व्याख्यानेन-'सप्तम्यास्त्र'लित्यादावपि सर्वनामार्थगतसङ्ख्याभिधायिसप्तम्यन्तात्त्रलित्यर्थस्य सम्भवेन 'परमसर्वत्रे'त्यत्र त्रलसम्भवात् । उपसर्जने सञ्ज्ञायाञ्च सर्वनामसञ्ज्ञा भाष्यकृतैव-'अथवे'त्यादिना महासञ्ज्ञात्वादिना च वारितैवेति न 'अतिसर्वे' इत्यत्र त्रलापत्तिः । 'स्वं रूप'मिति सूत्रस्थं-[अशब्दसञ्ज्ञेतिखण्डनाय प्रवृत्तं-] भाष्यमपि नैकदेशियुक्तिः, षान्तस्य षट्सञ्ज्ञाविधानाच्छब्दशास्त्रसञ्ज्ञाबोधकशब्दे स्वरूपस्य षट्सञ्ज्ञकस्य च बोधेनावृत्तितन्त्रादेरनावश्यकतया त्वदुक्तगौरवस्यासम्भवात् । 'प्रियपञ्चानः पञ्चे'त्यत्र वर्तिपदार्थान्यपदार्थयोरेकत्वेऽपि न जसो लुगापत्तिः, 'स्वान्तपर्याप्तशक्तिप्रयोज्यविशेष्यतानिरूपिता या प्रकारत्वासमानाधिकरणा [मुख्या-] विशेष्यता, तादृशविशेष्यतानिरूपितसङ्ख्यानिष्ठप्रकारताप्रयोजकत्व', 'स्वोत्तरत्वो'भयसम्बन्धेन षड्विशिष्टयोर्जश्शसोर्लुगित्यर्थेन तत्र च तादृशप्रकारतासामानाधिकरण्यस्यैवासत्त्वादित्याहुः ।

'अदड्डतरादिभ्यः' 'षड्भ्यो लुगि'त्यनयोरेव सर्वादिसूत्रे भाष्ये उपन्यासाच्च । 'षड्भ्य' इत्यादेः—'तदर्थगतसङ्ख्याभिधायिजश्शसो'रित्यादिक्रमेणार्थ इति कैयटोक्तन्तु—'अदड्डतरादिभ्य' इतिसूत्रे भाष्यविरोधादिभिर्दूषयिष्यते ।

न च 'पदां' 'दतां'मित्यादावतिप्रसङ्गः, ह्रस्वत्वं नाम मात्राकालिकाच्त्वं, तत्र सामर्थ्याद्विशेषणीभूतमात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयणं नतु विशेष्यभूताच्त्वांशेऽपीत्यदोषादिति चेन्न; 'नोपधायाः' इत्युत्तरार्थत्वात् । तेन 'चर्मणा'मित्यादौ दीर्घाभावः सिद्ध इति

❀ अभिनव-चन्द्रिका ❀

त्यर्थमित्याशयकमुक्तम् । नवीनमते तु सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठमुख्यविशेष्यताकबोधजनकत्वस्वरूपसङ्ख्यावाचकत्वस्य षट्शब्द इव परमषपृशब्देऽपि सत्त्वेन तदर्थं 'षकारोपादानमावश्यकं,स्वरूपग्रहणपक्षे हि—परमषपिति न षप्स्वरूपं, येन तत्र सञ्ज्ञा सिद्ध्येदिति भाष्यासङ्गतिः

❀ चिदस्थिमाला ❀

तत्र तत्त्वं हस्त्वन्तरमाह—उपेति । नन्वेवं कैयटस्य का गतिरत आह—षड्भ्य इति । हरदत्तोक्तिं खण्डयति—न चेति । 'भूतपूर्वत्वाश्रयणे' इति शेषः । तत्र तस्य फलमाह—तेनेति । इति=इत्यादौ [ ] ।

❀ ज्योत्स्ना ❀

दूषयिष्यत इति । यथा चात्र दूषणाभावस्तथा तत्रैव वक्ष्यतेऽस्माभिः ।

❀ वरवर्णिनी ❀

इदमत्र तत्त्वं—नव्यमते सङ्ख्यावाचकत्वं स्वविशिष्टविशेष्यताकबोधजनकत्वं, वै०'स्वजन्योपस्थितीयसङ्ख्यानिष्ठप्रकारतानिरूपितत्व', 'स्वघटकाबाधिकपूर्वपदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वाभाववत्त्व', 'स्वजन्योपस्थितीयमुख्यविशेष्यतानिरूपितसादृश्यसम्बन्धावच्छिन्नप्रकारत्वासामानाधिकरण्यै'तत्रितयसम्बन्धेनेति 'प्रियपञ्चानः पञ्चे'त्यत्र न जसो लुगापत्तिरिति । प्राचां मते तु—षकारनकारान्यतरान्तत्वे सति लोके सङ्ख्यावाचकत्वेन प्रसिद्धत्वमेव तत् । 'प्रियपञ्चानः पञ्चे'त्यत्र लुक् तु न, षड्विशिष्टयोर्जश्शसोर्लुगित्यर्थस्य षड्भ्यो लुगित्यत्र स्वीकारात् । वै० स्वोत्तरत्व' 'स्वार्थगतसङ्ख्याभिधायित्वै'तदुभयसम्बन्धेन । 'स्वोत्तरत्वे' त्यत्र उत्तरत्वमव्यवधानघटितमिति—'षट्काः' 'षट्कला' इत्यादौ न जसो लुगापत्तिरिति सङ्क्षेपः ।

न चैवं ह्रस्वग्रहणसामर्थ्याद्भूतपूर्वगत्याश्रयणे 'पदां' 'हृदां' 'दतां'मित्यादावपि भूतपूर्वह्रस्वान्तत्वमादाय नुडागमापत्तिरिति वाच्यं, मात्राकालिकाच्त्वस्यैव ह्रस्वत्वेन—विशेषणीभूते मात्राकालिकत्वे सामर्थ्याद्भूतपूर्वगत्याश्रयणेपि विशेष्यीभूताच्त्वांशे भूतपूर्वगत्याश्रयणे मानाभावाददोषात् । 'हृदय–दन्त–पादादिशब्दवत्पदादिशब्दा अपि पृथक्प्रसिद्धा एव, शसादौ तेषां व्यवस्थया प्रयोगमात्रं 'पद्दन्न' इत्यादिना बोध्यते' इति मते तु पदादीनामादेशत्वाभावेन भूतपूर्वह्रस्वान्तत्वासम्भवाच्च । आदेशत्वपक्षेऽपि आमुत्पत्तिकालिकह्रस्वान्तादित्येवमर्थस्वीकारेण 'पद्दन्न' इत्यत्र च'शस्प्रभृति'ष्विति सप्तम्या विषयसप्तमीत्वेनादेशोत्तरमेवामादिविभक्त्युत्पत्त्या 'पदा'मित्यादौ–आमाद्युत्पत्तिकालिकह्रस्वान्तत्वाभावेनादोषाच्चेति–'नामी'तिसूत्रस्थसकलसङ्काग्रन्थार्थः ।

उत्तरार्थत्वादिति । अयमाशयः–'नामी'त्यत्र 'आमी'त्येव न्यासे–'नोपधाया' इत्यस्य नान्ताङ्गस्यो-

## ॐ अभिनव-चन्द्रिका ॐ

स्यादेवेति चेन्न, यस्य सङ्ख्यावाचकत्वं वक्तव्यं तत्पर्याप्तिप्रयोजकतानिरूपितप्रयोज्यतावर्ती या विशेष्यता तादृशविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या सङ्ख्यानिष्ठप्रकारतानिरूपिता सङ्ख्येयनिष्ठा विशेष्यता तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वं सङ्ख्यावाचकत्वमिति परिष्कारेणाऽदोषात्। 'प्रियपञ्चा द्रौपदी'त्यादौ पञ्चन्नित्यत्र निरुक्तसङ्ख्यावाचकत्वस्य सत्त्वान्नषडिति निषेधः सिद्ध्यति। न चैवमपि परमषडित्यत्र षडित्यस्य षट्सञ्ज्ञायामपि ततो विहितत्वाभावात्परमषडित्यादौ लुगनापत्तिरिति वाच्यं, षड्भ्यो विहितयोर्जश्शसोरित्यस्य—षट्सञ्ज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रययोरित्यर्थः। अत्र चोद्देश्यताऽपर्याप्त्याऽपि गृह्यत इति परमषडित्यादौ षषि अपर्याप्त्या उद्देश्यतायाः सत्त्वेनादोषात्।

## ॐ वरवर्णिनी ॐ

पधाया अचो दीर्घः स्यादामीत्यर्थे 'चर्मणा'मित्यादौ दीर्घापत्तिरतो 'नामी'त्येव न्यासो युक्तः। नन्वामीति न्यासेऽपि नात्र दोषस्तथाहि—'वारीणां' 'मधूनां' 'सुनूना'मित्यादावविकोऽचि विभक्ताविति नुम्यपि नकारान्ताङ्गस्योपधाया अचो दीर्घः स्यादामीत्यर्थकेन 'नोपधाया' इत्यनेन दीर्घे सिद्धे पुनर्नुमचिरेति वार्त्तिके नुम्ग्रहणं व्यर्थं सन्नोपधाया इत्यत्र सागमो नुट्सहित एवाम् गृह्यते—इति ज्ञापयति, एवञ्च 'चर्मणा'मित्यादावतथात्वान्न दीर्घापत्तिरामीति न्यासेऽपि। न चेनहन्पूषेति नियमाद्वारीणामित्यादौ नुमि 'नोपधाया' इति दीर्घो न स्यादिति वाच्यं, पूषन्नादिसाहचर्येण लक्षणप्रतिपदोक्तपरिभाषया च प्रतिपदोक्तस्यैवेनो ग्रहणादिति चेन्न, 'नुमचिरे'त्यत्र नुम्ग्रहणसामर्थ्यात्—आमि परे नान्तस्याङ्गस्येको दीर्घश्चेत्तर्हि नुमो नान्तस्यैवेति विशेषकल्पनापत्त्या ['दण्डिना'मित्यादौ दीर्घाभावे सिद्धेऽपि—] चर्मणामित्यादौ दीर्घापत्तेर्दुरुद्धरत्वात्। 'नोपधाया' इत्यत्र शब्दाधिकारान्नुट् सहित आमेव गृह्यत इति नियमे मानाभावाच्च। अत एव भाष्ये 'दण्डिना'मिति परित्यज्य 'चर्मणा'मित्येव 'आमी'ति न्यासफलमुक्तम्।

न च 'दण्डिना'मित्यादौ 'नामी'ति नकारघटितन्यासाभावेऽपि 'इनह'न्निति नियमान्नोपधाया इति दीर्घाप्रवृत्त्या तद्विहाय 'चर्मणा'मिति भाष्ये उक्तं, न तु नान्ताङ्गस्येको दीर्घश्चेन्नुमो नान्तस्यैवेति नियमात्तथोक्तमिति—तथा नियमस्य 'दण्डिना'मिति न फलं, 'नुमचिरे'त्यत्र नुम्ग्रहणसामर्थ्या'न्नुट्सहित एवाम् नोपधाया इत्यत्र गृह्यते'इति नियमे तु—'चर्मणा'मिति फलमस्त्येवेति चर्मणामित्यत्रामीति न्यासेऽपि नोक्तदोष इति वाच्यं, 'वारीणां' 'शुचीना'मित्यादौ नुमा रूपसिद्धावपि 'नामन्यतरस्या'मिति वैकल्पिकोदात्तत्वार्थं नुट्सम्पत्तये 'नुमचिरे'त्यत्रत्यनुम्ग्रहणस्य साफल्यात्। वार्त्तिकाक्षरैर्ज्ञापितेन वचनेन सूत्राक्षरखण्डनस्यानुचितत्वाच्च। तथा च 'नामी'त्येवं यथाश्रुत न्यासस्य 'चर्मणा'मिति फलं सम्यगेवेत्याहुः।

**मान्यास्तु**—'आमी'तिन्यासे न कोऽपि दोषः, आम्निरूपिताऽव्यवहितपूर्वस्योपधाभूतस्याचो दीर्घ इति हि [ तथान्यासे—] 'नोपधाया' इत्यस्यार्थः, अव्यवहितत्वञ्चातिदिष्टनकारातिरिक्तव्यवधानशून्यत्वरूपमेव, तदेवं 'पञ्चाना'मित्यत्रागमविशिष्टाम्ग्रहणेन ग्रहणात्तन्निरूपितपूर्वत्वविशिष्टस्य असिद्धनलोपप्रतियोगिनकारोपधस्याकारस्य दीर्घः सिद्धः। 'चर्मणा'मित्यत्र तु—अनतिदिष्टनकारेण व्यवधानान्न दोषः। एतादृशाव्यवहितत्वस्याश्रयणे तु 'नोपधाया' इति सूत्रमेव मानमित्याहुः।

**परे तु**—'नामि' 'नोपधाया' इत्यनयोरङ्गाधिकारे पाठो हि—'चर्मणा'मित्यादौ दीर्घाभावाय, अङ्गाधिकारे हि अङ्गसञ्ज्ञानिमित्तस्य नामो ग्रहणेन 'चर्मणा'मित्यादौ वारणं भवति, यदि आम एव 'नोपधाया' इत्यत्र ग्रहणन्तर्हि 'चर्मणा'मित्यादावपि अङ्गसञ्ज्ञानिमित्तस्यामः सत्त्वाद्दीर्घापत्तिरस्त्येवेति अङ्गाधिकारे 'नोपधाया'इत्यस्य पाठो व्यर्थ एवेति तत्सामर्थ्यादेव नुट्सहितस्यैवामो ग्रहणेन 'चर्मणा'मित्यादौ दोषाभावादामीति न्यासे न किमपि दूषणं पश्याम इत्याचक्षते।

दिक्। **परिभाषाविरोधादिति** । सर्वत्रानित्यत्वाश्रयणे मानाभाव इति भावः ।

❀ चिदस्थिमाला ❀

येन—कैयटानुरोधेन **दीक्षित-शास्त्रि-दण्ड्यादुक्तं, मिश्रोक्तिखण्डनाय** 'ऋन्नचाप' इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यमनुपक्षीणमेवेति दण्डयुक्तं,—"ह्रस्वान्ताद्विहितस्येत्यर्थो भूतपूर्वगतिशब्देन विवक्षितः, 'षड्न'-इत्यत्र 'शस्प्रभृति'ष्विति विषयसप्तमी, एवञ्च–तत्र हलन्तादेव विधिरिति–न नुटः प्रसङ्गः, यद्वा–'आमि परतो यद्ध्रस्वान्तं दृष्टं ततः परस्यामो नु'डिति वाक्यार्थः, आवृत्तौ च ह्रस्वग्रहणमेव नानम्। यद्वा ह्रस्वग्रहणसामर्थ्यात्–पूर्वं नुट् पश्चाद्दीर्घः–"इति **शास्त्र्युक्तञ्चापास्तम्।** तदाह—**इति दिगिति** । ननु पूर्ववदत्राप्यनित्यत्वेनैव निर्वाहोऽत आह—**सर्वत्रेति** । ननूक्तज्ञापका-

❀ ज्योत्स्ना ❀

नन्वेङ्ह्रस्वादित्यत्र हल्ग्रहणाननुवृत्तौ नपुंसके सोरमादेशे 'आदेः परस्ये'त्यकारलोपे 'सुपि-चे'ति दीर्घे 'हे कुण्डां' 'हे पिण्डा'मिति प्राप्नोतीति भाष्याद्ध्रस्वसन्निपातलक्षणो विधिः स्वप्रयोज्ययत्रादित्वद्वारा ह्रस्वविघातकदीर्घस्यानिमित्तं नेत्येतावत्परिभाषानित्यत्वज्ञापनशरीरं वक्तव्यं, तथाच 'रामाणा'मित्यत्र 'सुपि चे'त्यस्य प्रवृत्तौ बाधकाभावोऽत आह—**सर्वत्रानित्यत्वे इति** । ह्रस्वसन्निपातलक्षणो विधिरादेशरूपो ग्राह्यो ज्ञापकस्य सजातीयविषयत्वादित्यागमरूपो नुड्विधिः सन्निपातविघातकदीर्घस्यानिमित्तं भवत्येवेति भावः । अत एव 'श्नान्नलोप'इत्यत्र

❀ विषमपदविवृतिः ❀

ननु 'कष्टाय क्रमणे' इति निर्देशेन दीर्घमात्रे सन्निपातपरिभाषा न प्रवर्त्तते, अत एवा'ने मु'गिति सूत्रे भाष्ये—'मु'डिति न्यास आपादितः, 'नामी'ति सूत्रे भाष्ये च—'अग्नीना'मित्युदाहृतं, न तु 'वृक्षाणा'मिति, तत्र परत्वा'त्सुपि चे'त्यस्य न्याय्यत्वात्। 'श्नान्नलोप' इति-सूत्रस्थं 'शकाराभावे 'यज्ञाना'मित्यादौ नामीति दीर्घत्वं बाधित्वा परत्वान्नलोपः स्या'दिति भाष्यन्तु

---

❀ वरवर्णिनी ❀

**सर्वत्रेति** । 'कष्टाय क्रमणे' इति निर्देशस्य सामान्यापेक्षज्ञापकतामाश्रित्य सर्वत्र 'सुपि चे'ति दीर्घे सन्निपातपरिभाषा न प्रवर्त्तते इति कल्पने न प्रमाणं, 'श्नान्नलोप'इति सूत्रे भाष्ये 'सुपि चे'ति दीर्घे कर्त्तव्ये सन्निपातपरिभाषाप्रवृत्तेर्ध्वनितत्वात्। तत्र हि–'रुधादिभ्यः श्नम्' 'श्नान्नलोप'इत्यादौ श्नमः शकाराकरणे 'नान्नलोप' इत्यादिन्यासे नन्दतीत्यत्र नकारात्परस्य नुमो नकारस्य लोपमाशङ्क्य–'अनिदिता'मित्यपकृष्य इदिद्भिन्नस्य धातोर्नस्य लोप इत्यर्थेन परिहृत्य अन्ते–यज्ञानां यत्नानामित्यत्र नलोपापत्तिरिति दूषणे दत्ते–[ नामीति–] दीर्घे जाते नास्तिनलोपप्राप्तिरिति पुनः पूर्वपक्षिणा शङ्किते—'परत्वाद्दीर्घं बाधित्वा नलोपः प्राप्नोती'त्युक्तं सिद्धान्तिना। अत्र परत्वादित्युक्त्या 'नामी'तिदीर्घस्यैव प्राप्तिः सूचिता ननु 'सुपिचे'त्यस्य, 'सुपि चे'ति दीर्घस्य नलोपात्परत्वात्। सर्वत्र दीर्घे सन्निपातपरिभाषाया अप्रवृत्तौ तु नलोपात्परत्वात्सुपिचेतिदीर्घस्यैवप्राप्त्या भाष्यासङ्गतिः स्यात्। मम तु चतुर्थ्येकवचने सुपिचेतिप्रवृत्तौ सन्निपातपरिभाषाया अप्रवृत्तावपि अन्यत्र–षष्ठ्यादौ तत्प्रवृत्तौ बाधकाभावादत्र सन्निपातपरिभाषया 'सुपिचे'ति दीर्घाऽप्रवृत्त्या प्रकृतभाष्यसङ्गतिरिति **भैरवमिश्रादयः** प्राहुः ।

**परेतु** बाध्यसामान्यचिन्तया सर्वत्र दीर्घविषये सन्निपातपरिभाषाया अप्रवृत्तिरेव, नचैवं 'यत्नाना'-मित्यत्र नलोपात्परत्वात्सुपिचेतिदीर्घप्रवृत्त्या नलोपाप्राप्त्या भाष्यासङ्गतिरितिवाच्यं, 'सुपि चे'त्यत्र सुप्–अत्–अङ्गादिसञ्ज्ञानामेवोद्देश्यतया तदपेक्षया नलोपशास्त्रस्य प्रतिपदोक्ततया–'सुपिचे'त्यस्य' तेन नलोपेन प्रतिपदोक्तत्वाद्बाधइतिभाष्याशयेनादोषात्। नामीति दीर्घस्यापि प्रतिपदोक्तत्वात्प्राप्तिरस्ति, साच परत्वान्निरस्तैवेति सर्वं समञ्जसमित्यसद्गुरवस्त्रिपाठिपादाः प्राहुः ।

कृताऽकृतप्रसङ्गित्वात् 'नामी'ति नित्यम् । न च विशेषाभावेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यं, विशेषाभावेऽपि 'पर्जन्य'न्यायेन शास्त्रप्रवृत्तेः 'इको झलि'ति सूत्रे भाष्ये उक्तत्वात् । 'आयादय' इति सूत्रे भाष्ये–स्यादिभिः परत्वादायादिबाधमाशङ्क्य "अनवकाशत्वादायादयः, न च 'गोपायती'त्यादिरवकाशः, अत्रापि शपः स्यादेः प्राप्तेः, न च नास्ति विशेषः, अन्यदिदानीमिदमुच्यते—'नास्ति विशेष' इति, यदुक्तम्–आयादीनां स्यादिभिरव्याप्तोऽवकाश इति, स नास्त्यवकाशः–"इति भाष्योक्तेश्चेत्यपि बोध्यम् ।

### ॐ अभिनव चन्द्रिका ॐ

भाष्योक्तेश्चेति । न चेदम्भाष्यम्—'आयादयो वा' 'सार्वधातुके नित्य'मिति न्यासपरम्, तथा च यथाश्रुतन्यासकल्पे 'गोपायिष्यति, गोपिष्यति, गोप्स्यति' इति रूपत्रयं भवति, एतन्न्यासकल्पे च अपवादत्वा'त्सार्वधातुके नित्य'मिति शास्त्रेणायप्रत्यये 'गोपायिष्यती'त्येकमेव

### ॐ चिदस्थिमाला ॐ

तस्या अनित्यत्वं प्रागुक्तमेवेति न स तदभावसाधकोऽत आह—कृताकृतेति । तन्मात्रत्वेनापि नित्यत्वाभ्युपगमात् । तत्प्राप्तिः=नामीत्यस्य प्राप्तिः । स्यादिभिरिति । यथाश्रुतसूत्रे 'आयादेर्यदार्धधातुकं तत्र परे आयादीनां निवृत्ति'रिति पक्षे–'गुप्ति''जुगोपे'ति न स्यात्; 'गोपां' 'गोपाञ्चकारे'ति स्यात्, 'आयादिप्रकृतेर्यदार्धधातुकं तत्र परे तेषामुत्पत्ति'रिति पक्षे–प्रागुक्तेष्टसिद्धावपि–'गोपाये'तीष्टं न सिद्ध्यतीत्युक्त्वा स्वीकृते–'आयादयो' वा, ततः 'सार्वधातुके नित्य'मिति न्यासभेदपक्षे । 'गोपायिष्यती'त्यादा'विति–अस्यादिः ।

परत्वादिति । लादेशप्रवृत्त्युत्तरं 'स्यतासी' इति पक्षे इदम् । तथा च 'सकृद्गति'न्यायेनायादयो न स्युरेवेति भावः । ल्यबन्तस्योक्तावन्वयः । नास्तीति । 'सति शप्यसति वे'ति शेषः । विशेषकृच्छास्त्रं तदभावे न प्रवर्तेत इति मन्यते । स नास्तीति । पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः । एतेन "शब्दान्तरस्येति नामीत्यस्यानित्यत्व"मिति दण्डयुक्तं, "तस्या अनित्यत्वात्तेनैव दीर्घ इति नामीत्यस्योपन्यासो निष्फल

### ॐ ज्योत्स्ना ॐ

शकारश्चरितार्थः । 'नान्नलोप' इत्युक्ते हि 'यज्ञा'नामित्यादौ परत्वान्नामीति दीर्घं बाधित्वा नलोपः स्या'दित्युक्तं भाष्ये । 'सुपि चे'तिदीर्घेऽपि सन्निपातपरिभाषाया अप्रवृत्तौ तु–लोपादपि परत्वात्तेन दीर्घेणात्र प्रवर्तितव्यमिति शकारो व्यर्थ एव स्यादित्यन्यत्र विस्तरः। अभ्युपेत्य दीर्घमात्रे सन्निपातपरिभाषाया अनित्यतां—परोऽपि–'सुपि चे'ति दीर्घो नित्येन 'नामी'ति दीर्घेण बाधितुं युक्त–इत्याह—कृताकृतप्रसङ्गित्वाभावान्नामीति नित्यमिति। एतेन "रामशब्दे 'नामी'त्यस्योपन्यासो लेखकप्रमादा-

### ॐ विषमपदविवृतिः ॐ

'सुपि चे'ति दीर्घापेक्षया नलोपस्य नित्यत्वाभिप्रायमिति न तद्विरोधः । एवं च 'रामाणा'मित्युदाहरणे 'नामी'त्यस्योपन्यासो न युक्त इत्याशङ्क्य समाधानान्तरमाह–कृताकृतेति । 'नामी'तिसूत्रे भाष्येऽग्नीनामित्युदाहरणोपन्यासस्त्वन्यथासिद्धत्वाभिप्रायः,नतु 'वृक्षाणा'मित्यस्यानुदाहरणत्वाभिप्राय इति भावः। आयादिबाधमाशङ्क्येति । इदन्तु भाष्यम्–'आयादयो वा' 'गुपूधूपविच्छिपणिपनिभ्य आयः' 'सार्व-

### ॐ वरवर्णिनी ॐ

इको झलीति । तत्र हि—एतत्सूत्राभावे 'बुभूषती'त्यत्र गुणः स्यात्, न चाज्झनगमामित्यजन्तस्य दीर्घविधानान्न गुणः, दीर्घेण गुणस्य बाधादिति वाच्यं, गुणे कृतेऽपि दीर्घस्य चारितार्थ्यादित्युक्तम् । दीर्घस्य दीर्घविधाने फलाभावात्तत्र दीर्घाप्रवृत्तौ तु भाष्यासङ्गतिः स्पष्टैवेति–तेन पर्जन्यवल्लक्षणप्रवृत्तिः सूचितेति बोध्यम् ।

**आरम्भेति** । यत्तु–'कतीना'मित्यत्र 'षट्चतुर्भ्य' इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावकाशत्वमस्त्येवेति; तन्न, 'न ह्येक'मित्युक्तन्यायेन 'कतेर्नामी'त्येव सिद्धे सामान्यमत्रारम्भेन्यर्थात् । एवञ्च 'न तिसृचतसृ' इत्यकरणेन लाघवमिति भावः । 'नुटी'ति तु नोक्तम् ।

ॐ अभिनव-चन्द्रिका ॐ

रूपं स्यादिति फलभेदः स्यादिति वाच्यम्, 'आयादयो वा' 'आर्द्धधातुके' 'सार्वधातुके नित्य'मिति न्यासपरत्वेन भाष्यस्य योजनयाऽदोषात् । अत्रार्धधातुक इति शास्त्रं'सार्वधातुके नित्य'मिति नित्याऽऽय-प्रत्ययबाधनायेति न फलभेदः । **कतेर्नामीत्येव सिद्ध इति** । न च 'कतेर्नामी'ति न्यासेऽपि षट्-सञ्ज्ञकत्वं निमित्तीकृत्य जायमानो नुट् स्वोपजीव्यषट्सञ्ज्ञकत्वविघातक'कतेर्नामी'त्येतत्प्रवृत्ति-म्प्रति निमित्तं न स्यादिति पुनरपि सन्निपातपरिभाषाविरोध इति वाच्यं, षट्सञ्ज्ञकत्वस्य एक-देशविकृतन्यायेन दीर्घे कृतेऽपि सत्त्वेन सन्निपातविघाताभावात् । न चातिदेशिकसन्निपातविघा-ताभावमादायैतत्परिभाषाप्रतिबन्धो न भवतीति वाच्यं, तत्र एकदेशन्यायातिरिक्तातिदेशस्य ग्रहणमिति पूर्वमेवोक्तत्वात् । **नोक्तमिति** । 'भृङ्ग' इत्यादौ दीर्घापत्तेरिति भावः । न च 'भृवः

ॐ चिदस्थिमाला ॐ

एवेति–नामीत्यस्योपन्यासो लेखकप्रमादादिति यद्बुधुक्तच्चिन्त्यमिति मनोरमा च्चिन्त्या–''इति च शास्त्र्युक्तञ्चापास्तम् ।

खण्डनकारोक्ति खण्डयति—**यत्त्विति** । तथा सति गौरवमपि प्रकृते नेत्याह–**एवञ्चेति** । 'कतेर्नामी'-त्युक्तौ चेत्यर्थः, प्राप्तेरेवोक्तरीत्या अभावादिति भावः । एतेन ''न तिस्त्रित्यारम्भेत्यर्थः–''इति **शास्त्रिदण्डयु-क्तमन्यथा च दण्डयुक्तमपास्तम् । नोक्तमिति** । ''उणादीनामव्युत्पन्नत्वेन भृङ्गशब्देऽदोषेऽपि, प्रत्यासत्त्या

ॐ ज्योत्स्ना ॐ

दिति प्रक्रियाप्रकाशकृदुक्तिर्मनोरमाकारेण प्रकारान्तरेण दूषिता । **नुटीति तु नोक्तमिति** । एतावानिह

ॐ सदाशिवभट्टीयम् ॐ

**अप्राप्तेरिति** । इदञ्चान्यरीत्या, स्वमते तु तत्रापि परिभाषाप्रवृत्तिः स्फुटैवेति बोध्यम् । **नोक्तमिति** । दोषाभावात् । शास्त्रेऽयमेव नुट् कर्तव्यः, अन्यत्र–निटो नटो वा कार्यो इति भावः ।

ॐ विषमपदविवृतिः ॐ

धातुके' इति न्यासाभिप्रायम् । [नोक्तमिति ।] उणादीनां व्युत्पत्तिपक्षे ज्ञापकमिति [शेषः] । 'अनश्व'

ॐ वरवर्णिनी ॐ

**कतीनामित्यत्रेति** । न चात्रापि दीर्घे सति षट्त्वविनाशात्परिभाषाप्रवृत्तिरिति वाच्यं, दीर्घेऽप्येक-देशविकृतन्यायेन षट्त्वस्य सत्त्वात् । न चातिदेशप्रयोज्यसन्निपातविघाताभावेऽपि सन्निपातपरिभाषाप्रवृत्ति-रितिवाच्यम्, अतिदेशपदेन एकदेशविकृतन्यायातिरिक्तस्य ग्रहणेनादोषात् । अतएवातिजरांसीत्यत्रनुम्, अन्यथा सन्निपातपरिभाषया न स्यात् । मम तु एकदेशविकृतत्वात्तत्परिभाषाऽप्रवृत्त्या न दोष इतितत्त्वम् ।

ननु ह्रस्वग्रहणसत्त्वे आमीत्युक्तौ गम्ल्–आमितिस्थिते आमीतिदीर्घे ऋकारस्य यणि गम्रामितिरूपम्, आमीतिसूत्राभावेतु दीर्घाभावे यणि गम्लामिति फलभेद इति कथं सामर्थ्यमिति चेन्न, कतेरामीत्यत्र 'लृकते-रामीति' न्यास इत्याशयेनादोषादित्याहुः ।

**नुटीतीति** । ननु 'नुटी'ति न्यासे न दोषः, न च नुटीति न्यासेऽचो दीर्घो नुटि परे इत्यर्थे अनश्व इत्यत्र नुटि परेऽकारस्य दीर्घापत्तिरिति वाच्यं,'तस्मान्नुडची'त्यत्र 'तस्मान्नुगची'ति न्यासेन नुक एव विधा-नेन नुट्परत्वाभावेनादोषसम्भवात् । न चैवमपि 'अनश्व'इत्यत्र नञो नुगागमे 'ङमो ह्रस्वा'दिति ङमुडा-पत्तिरिति वाच्यम्, 'उत्तरपदत्वे' इति प्रत्ययलक्षणनिषेधेनाश्वेत्यस्य पदत्वाभावादजादिपदपरकत्वाभावेन–

## ॥ वरवर्णिनी ॥

अजादेः पदस्य ङमुडित्येवं नर्वानाभिमतार्थे ङमुडापत्तेरसम्भवात् । न च नञो अशब्देन समासे 'तस्मान्नुडची'ति न्यासकल्पे नुटि–अन इत्यस्मादाचक्षाणणिचि टिलोपे कर्त्तरि क्विपि प्रातिपदिकत्वाद्विभक्तौ ततो मित्रशब्देन समासे नलोपे च–अनो मित्रम्–अमित्रमित्यत्र–स्वरविधौ नलोपस्यासिद्धत्वान्नकारेण व्यवधाना 'नञोजरमरमित्रमृता'इति सूत्रेण नञः परस्य मित्रशब्दस्य स्वरो न भवति, नुगागमे तु नुको नञवयवत्वेन यदागमन्यायेन नञ्पदेन नुग्विशिष्टस्यैव ग्रहणान्नलोपासिद्धत्वेऽपि स्वरापत्तिरिति वाच्यं, नुकं विहाय नट एव 'तस्मान्नडची'ति न्यासेन विधानादनश्व इत्यत्र नुटीतिदीर्घापत्तेरभावात् । न च नुटीति न्यासे 'नोपधाया' इत्यत्रापि तस्यैव सम्बन्धे 'सन्नच्युत' इत्यत्र नुट्परतया दीर्घापत्तिरिति वाच्यं, तत्रापि ङमट्करणेन नट एव विधानेनादोषात् । न च 'ङमोह्रस्वे'त्यत्र ङमडिति न्यस्य नट एव विधाने 'तस्मान्नुडची'त्यनेन नट एव विधाने च सन्नच्युत इवाचर्य–सन्नच्युतित्वा सन्नच्युत्त्वेत्यत्र, अनश्व इवाचार्य–अनश्वित्वा–अनश्वेत्यादावाचारक्विबन्तात् क्त्वाप्रत्यये च 'उदितो वे'ति वैकल्पिक इण्न स्यादिति नड्विधानं कर्त्तुमशक्यमिति नुड्विधानेऽनश्वः सन्नच्युत इत्यादौ दीर्घापत्तिरिति वाच्यं, नुटीत्यस्याङ्गाधिकारे पाठेन अङ्गेन प्रत्ययस्याक्षेपादजन्ताङ्गस्य दीर्घःस्यान्नुडादौ प्रत्यये परे इत्यर्थेन अनश्व इत्यादावदोष इत्याशयात् ।

अस्यापत्यमिः, न इः–अनिरित्यत्र निरित्यस्य नुडादिप्रत्ययतयाऽपि न दीर्घापत्तिः–'अ'इत्यस्याङ्गत्वाभावात्। न चाक्षिशब्दान्मतुपि मकारस्य वत्वे 'बहुलं छन्दसी'त्यनङि,'अनो नुड्वे'त्यन्नन्तात्परस्य मतुपो नुडागमे-'ऽनो लोप'इति लोपेऽट्कुप्वेतिणत्वेऽक्षण्वानित्यत्र 'नोपधाया' इति दीर्घापत्तिर्नुटीत्यस्यैव तत्र सम्बन्धादिति वाच्यम् , 'अनो नुड्वे'त्यत्र नुग्वेति न्यस्य नुक एव विधानेनादोषात् । न च नुकि सति तद्विशिष्टस्य पदत्वे 'पदान्तस्ये'ति णत्वनिषेधापत्तिरिति वाच्यं, नट एव तेन विधानेनोक्तदोषाभावात् । पूर्वोक्तरीत्याऽऽचारक्विबन्तात् क्त्वाप्रत्यये इड्विकल्पार्थन्तु न नुड्विधानं, हलन्तेभ्य आचारक्विपोऽनभिधानस्य भट्टैः पूर्वमुक्तत्वादिति चेन्न । 'भृञः किन्नुट्चे'ति गन्प्रत्यये तस्य नुटि नुडादिप्रत्ययपरतया दीर्घापत्तेः, न च उणादयोऽव्युत्पन्नान्येव प्रातिपदिकानीति वाच्यम् , अयामन्तात्वाय्येत्यादिसूत्रप्रामाण्येनोणादिषु व्युत्पत्तिपक्षस्याप्यभ्युपगमात् । न च तत्रापि 'भृञः किन्नट्चे'त्येवपाठ्यमिति वाच्यं,पूर्वोक्तरीत्या भृङ्ग इवाचर्य–भृङ्गित्वेत्यादौ वैकल्पिकेड्विधानार्थमुदित्त्वस्यावश्यकत्वादिति मैथिलाः । परे तु—तादृशप्रयोगाणामभिधाने तत्र वैकल्पिकेट इष्टत्वे च दृढतरमानाभावान्नट्करणेऽपि दोषाभावान्नुटीति सुवचमेवेत्याहुः ।

नन्वेवमपि लाघवान्नीत्येवास्तु, नकारे परे अचो दीर्घ इत्यर्थः, नचाङ्गेनेत्यादावङ्गात्कल्याणे इत्यादिविहितनादिप्रत्यये परतो दीर्घापत्तिरिति वाच्यं, 'विनञ्भ्यां नानाञा'वित्यत्र ञकारोच्चारणेन नादौ तद्धिते दीर्घाभावबोधनात्। न च 'सुनोती'त्यत्र सुञो दीर्घापत्तिरिति वाच्यं, 'प्वादीना'मिति ह्रस्वविधानसामर्थ्याद्विकरणे परतो दीर्घाभावबोधनात् , अन्यथा दीर्घप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव । 'सिनो ग्रास' इत्यादावपि न तदापत्तिः, 'दुग्वोर्दीर्घश्चे'ति दीर्घविधानसामर्थ्येन कृति तदभावबोधनात्। 'सुपि चे'त्यनन्तरं नीतिन्यासेन नादौ सुपि अजन्ताङ्गस्य दीर्घ इत्यर्थेन तत्र प्राप्त्यभावाच्चेति चेन्न, हरिणेत्यत्र दीर्घापत्तेस्तथान्यासस्य कर्त्तुमशक्यत्वात् । नन्वाङि नुगस्त्रियामिति न्यासेन नुकोऽङ्गावयवत्वेन नकारादिसुपोऽभावान्न 'हरिणे'त्यादौ दोषः, नचाङि नुगिति न्यासेऽमुनेत्यस्यासिद्ध्यापत्तिर्नाभावस्याप्रसिद्धेर्नमुने इत्यस्य वैयर्थ्यापत्तिश्चेति वाच्यं, 'न मु ने' इत्यस्य नकारे कर्त्तव्ये मुत्वन्नासिद्धमित्यर्थेनापि दोषाभावात्। न च 'न मु ने' इत्यस्येदृशेऽर्थेऽमुष्मै कुलायेत्यत्रेकोऽचिविभक्ताविति नुमागमरूपे नकारे कर्त्तव्ये मुत्वस्याऽसिद्धत्वाभावान्नुमापत्तिरिति वाच्यं 'न मुने'इत्यत्र 'न मु नुकी'ति न्यासेनादोषादितिचेन्न । प्रकृष्टः कविः–प्रकविस्तेन प्रकविणा–रम्यविणेत्यादौ नकारस्य विभक्तिस्थत्वाभावेन 'प्रातिपदिकान्ते'ति णत्वानापत्तेः । न च प्रातिपदिकान्तत्वादेव णत्वं स्यादिति वाच्यम्, उत्तरपदं यत्प्रातिपदिकन्तदन्तस्यैव नस्य णत्वमित्यर्थस्यैव गर्गभगिनीत्यादौ णत्वाभावाय स्वीकर्त्तव्यतया तदप्राप्तेः ।

## ॐ वरवर्णिनी ॐ

न चैवमर्थमाङि नुमचिरनामिति न्यासं कृत्वा नुमागमे 'प्रातिपदिकान्ते'त्यनेन नुमो नस्य णत्वं स्यादेवेति 'रम्यविने'त्यादौ न दोष इति वाच्यं, 'प्रियतिस्रे'त्यत्र बहुव्रीहौ–प्रियत्रि–आ इत्यवस्थायां नुम्तिस्रादेशयोः प्रसङ्गे वर्तमानत्वात्तुमि निर्दिश्यमानपरिभाषाया जागरूकतया नुना निर्दिश्यमानस्य त्रिशब्दस्य व्यवधानात्तिस्रादेशानापत्तेः, 'आङो नाऽस्त्रिया'मिति यथाश्रुतन्यासे तु कृताकृतप्रसङ्गितया नित्यत्वादादौ तिस्रादेशे न दोषः । नचैवं क्रुंवे प्रियतिसृगे कुलायेत्यत्रकोऽचि विभक्ताविति नुमः कृताकृतप्रसङ्गितया नित्यत्वादादौ नुमि निर्दिश्यमानस्य तेन व्यवधानात्तिस्रादेशानापत्तिरेवेति वाच्यं, पूर्वं त्रिशब्दस्य, कृते आदेशे तिसृशब्दस्येति शब्दान्तरस्य प्राप्त्या 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवती'त्यनया नुमोऽनित्यत्वेनादोषात् ।

नन्वेवं न्यासेन नुमागमे व्यक्तिविशेषवाचकादनुकरणाद्वा त्रिशब्दाट्टाविभक्तौ त्रिणेत्यत्र विभक्तेर्हलादित्वाभावा'त्षट्त्रिचतुर्भ्यो हलादि'रित्यन्तोदात्तस्वरानापत्तिरत 'आङो नाऽस्त्रिया'मित्येव न्यासो युक्तस्तथा च हरिणेत्यादौ दीर्घापत्तिरेव दोषः, न च तत्र स्वरशास्त्रे प्रतिपदोक्तहलादिर्भ्यसादेरेव ग्रहणात्त्रिणेत्यत्र सिद्धान्तेऽपि स्वरो न प्रवर्त्तते इति वाच्यं, विभक्तिनिमित्तकादेशविषये 'हलि सर्वेषा'मितिनिर्देशात्प्रतिपदोक्तपरिभाषा न प्रवर्तत इति ज्ञापनात्, अन्यथा 'रामेभ्य' इत्यादौ चरितार्थमेत्त्वं लाक्षणिकझलादौ 'सर्वेषा'मित्यत्र न प्रवर्त्ततेति चेन्न, नुम्विधानेऽपि 'सावेकाचस्तृतीयादिर्विभक्ति'रित्यनेनान्तोदात्तत्वसिद्धेरिति चेत्—प्रियत्रिणेत्यत्र 'सावेकाच' इत्यस्याप्रवृत्त्याऽन्तोदात्तस्वरानापत्तेरतो यथान्यासमेवाङो ना स्त्रियामित्येव रमणीयन्तथा च भानुनेत्यत्र दीर्घापत्तिरतो 'नामी'त्येव न्यासो युक्तो न तु नीनीत्याहुर्मैथिलाः ।

नन्वेवमपि–'विती'त्येव न्यस्यताम्, उकार इद्यस्यासाविदिति तदर्थः। अङ्गाधिकारात्प्रत्ययस्याक्षेपेण लाभस्तेन उकारेत्सञ्ज्ञके प्रत्यये परतोऽजन्ताङ्गस्य दीर्घ इत्यर्थः, तेनोकारेत्सञ्ज्ञके धातौ प्रातिपदिके च परतो 'हे देवदत्त दीव्यसि' 'कुत्र भवा'नित्यादौ च न दीर्घः। सुप्रत्ययस्थाने सेर्विधानात्प्रत्ययः वृद्धिरादैजित्यादिनिर्देशात्पथिमथीत्यनेन दीर्घाकारविधानाच्च हरिः शम्भू रामइत्यादौ न दीर्घापत्तिः, ऋकारांशेऽनङादिना बाधाच्च न दोषः। 'अर्थवत्' 'अनद्यतने'इत्यादिनिर्देशैरुकारेत्सञ्ज्ञके तद्धिते दीर्घाभावबोधनाद्धनवानित्यादौ न दीर्घः। 'शरादीनाञ्च' 'मतौ बह्वचोऽनजिरादीना'मित्यादिसूत्रारम्भसामर्थ्याच्च न तत्र दोषः। केचित्तु–मतुपः स्थाने मतृपं, तुटः स्थाने तिटं, सुटःस्थाने सिटं कृत्वा तत्र तत्र दोषं निरस्यन्ति । अनद्यतन इवाचर्य–अनद्यतनित्वा, सर्वेषां पुत्र इत्यत्र 'षष्ठ्या आक्रोशे' इति षष्ठ्या अलुकि ततःपूर्वदाचारक्विबन्तात्क्त्वाप्रत्यये–सर्वेषां सुत इवाचर्य–'सर्वेषांसुतित्वे'त्यादौ चोदितो वेति क्त्व इड्विकल्पार्थन्तु नोगित्करणन्तत्रावश्यकं, प्रातिपदिकाश्रितानुबन्धप्रयुक्तात्मनेपदादिकार्याभावस्य भाष्यकृता–'ब्राह्मणमाणववाडवाद्यदित्यत्र केदाराद्यञित्यतोऽनुवृत्तावपि-प्रकृते यन्यञोः फले विशेषाभावात्–सिद्धे यन्विधानं क्वचिदन्यतोऽपि यनिति बोधनार्थ'मिति वदता–सूचितत्वादुदितोवेत्यस्य प्राप्त्यभावेन फले विशेषाभावात् । णमुलादौ तु 'अचो ञ्णिती'त्यादिविहितवृद्ध्यादिना बाधान्न दोषः, कृतवानित्यादावपि'निष्ठायामण्यदर्थे'इतिदीर्घविधानाज्ज्ञापकादुकारेत्सञ्ज्ञके कृति अस्य प्रवृत्त्यभावकल्पनान्न दोष इति चेत्सूत्रनिर्देशादिना सूत्राक्षरसङ्कोचादेरनुचित्वादेव तथा नोक्तमितिमैथिलाः।

कुतूहलकारास्तु—नृशब्देन नशब्दस्य समासे आचारक्विबन्तात्कर्त्तरि क्विप्यल्लोपे नृनितिजाते ततो यशब्देन समासे नलोपे निष्पन्नान्नृयशब्दाचारक्विबन्तात्कर्त्तरि क्विप्यल्लोपे यलोपे नलोपःसुप्स्वरेति नियमाक्रान्तत्वान्नलोपस्यासिद्धत्वेन ह्रस्वान्तत्वाभावात्तुकोऽप्रवृत्त्या निष्पन्नान्नृशब्दादामि–प्रत्ययत्ववदाम्त्वस्यैधाञ्चक्रेइत्यादावाम्यपि सत्त्वेन सुप्त्वव्याप्यत्वाभावेनोक्तनियमाक्रान्तत्वाभावेन नलोपासिद्धत्वाभावाद्ध्रस्वनद्याप इतिनुटि नृचेतिवैकल्पिकदीर्घे कर्त्तव्ये प्रत्ययत्ववन्नाम्त्वस्य सुप्त्वव्याप्यत्वान्नलोपः सुप्स्वरेति नियमाक्रान्तेर्नलोपस्यासिद्धत्वात्तदप्रवृत्तौ 'नोपधाया' इतिनित्ये दीर्घे नृणामितिरूपं भवति, वितीतिन्यासे तु वित्प्रत्ययत्वस्य नुटीतिन्यासे च नुडादिप्रत्ययत्वस्य सुप्त्वव्याप्यत्वाभावेन नलोपासिद्धत्वाभावेन नृचेतिवैकल्पिकदीर्घापत्तिरतो 'वितीतिनोचितम् । नुडागमे कर्त्तव्ये स्थानिवत्त्वन्तु न, पञ्चमीसमासस्यानित्यत्वात्, 'कौलुप्तं ने'ति निषेधाच्च ।

॥ वरवर्णिनी ॥

'नलोपःसु'वित्यस्य सुब्वृत्तिविषयताप्रयोजके विधावित्यर्थे तु-उकारेत्सञ्ज्ञकप्रत्ययत्वादेरपि तादृशविषयताप्रयोजकतया नलोपः सुप्स्वरेतिनलोपस्यासिद्धत्वान्नृचेत्यस्य तत्राप्राप्त्या यद्यपि न फलभेदस्तथापि-दण्डिनमात्मन इच्छति दण्डीयति, ततः क्विप्यल्लोपयलोपयोः प्रातिपदिकत्वादामि दण्डी-आमित्यवस्थायां सुब्वृत्तिविषयताप्रयोजकेऽचिरनुधात्विर्तीयङि कर्त्तव्ये नलोपासिद्धत्वापत्त्या दण्डियामिति रूपासिद्धेः सुप्त्वव्याप्यधर्मावच्छिन्ननिमित्तके विधावित्येव नस्यार्थो युक्त इति पूर्वोक्तनृणामित्यत्र फलभेदो दुरुद्धर इति 'विर्ता'तिन्यासो नोचित इति व्याचक्षते ।

ननु नामीत्यत्र नर्टात्येवास्तु, 'ह्रस्वनद्याप' इत्यादिभिरपि नडेव विधीयतामिति चेन्न, 'षष्ठ्या आक्रोशे' इत्यलुकि पूर्वोक्तरीत्या क्त्वाप्रत्यये 'चौराणांस्तुतिर्वे'त्यत्रोदितो वेतिवैकल्पिकेडनापत्तेरित्यप्याहुः । विस्तरस्तु-मानन्नाथैरस्मत्पितामहश्रीलोहिरामशास्त्रिचरणैर्विरचितायां शब्देन्दुशेखरत्रिपुरसुन्दर्यां, मत्कृतायां शेखराभिनवराजलक्ष्म्यां चानुसन्धेयः ।

[परममान्यास्तु-'नामी'ति सूत्रव्याख्यावसरे—नित्यत्वादिति [१२४पृ०शे०]। नुटोऽपरनिमित्तकत्वेनान्तरङ्गत्वसत्त्वात्तुल्यनया नस्य नोपयोगः, नृणामित्यादौ चारितार्थ्याच्च न नुटोऽपवादत्वेन बलवत्त्वमिति नामीत्यस्य नित्यत्वमेवोपयुज्यते। भूतपूर्वेति । पञ्चमीसमासेन स्थानिवद्भावादित्यर्थः। योगारम्भमित्यस्य—सामान्ययोगारम्भमित्यर्थः । 'व्याप्यधर्मपुरस्कारेण बोधकपदोपादानेन कार्यनिर्वाहसम्भवे व्यापकधर्मपुरस्कारेण बोधकपदोपादानेन कार्यनिर्वाहोऽनुचितः सत्यपि लाघवे' इति नियमादिति भावः ।

आमीति ।[१२४पृ०] नन्वामीति न्यासे ह्रस्वग्रहणे सति नित्यत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्त्या यणि त्रामितिरूपं,दीर्घाभावे नुटि नृणामितिरूपं, 'नृनद्याप' इतिन्यासेतु दीर्घेऽपि स्थानिवद्भावेन नृशब्दत्वान्नुटि नॄणामिति, तदभावे नृणामिति फलभेदः, न च नुटो दीर्घाभावपक्षे नृणामित्यत्र सावकाशतया दीर्घेण तक्रन्यायान्नुटो बाधे दीर्घपक्षे त्रामिति, तदभावे नृणामिति न फलभेद इति वाच्यं, प्राप्तविभाषाणां पक्षेऽभावमात्रविधायकतया नृचेत्यनेन नुड्विधायकदीर्घाभावरूपस्वविधेयघटितातिरिक्तत्वेनैव सङ्कोचे दीर्घाभावे यणि त्रामिति, दीर्घे नॄणामिति, ह्रस्वग्रहणे तु नृणां—त्रामिति—फलभेदस्य स्पष्टत्वात् । न च ह्रस्वग्रहणेऽपि तक्रन्यायेन नृचेत्यनेन [ दीर्घाभावपक्षे-] नुटो बाधे यणि त्रामिति, दीर्घपक्षेऽपि ह्रस्वान्तत्वाभावान्नुडभावे यणि त्रामिति, दीर्घपक्षेऽपि ह्रस्वान्तत्वाभावान्नुडभावे यणि त्रामिति एकमेव रूपमिति न फलभेद इति वाच्यम् , ह्रस्वग्रहणसामर्थ्येनात्र कल्पे तक्रन्यायाप्रवृत्तेः कल्पनादिति चेन्न, 'नृनद्याप' इत्यस्य 'नद्यापो नुट्' 'नुर्वे'ति न्यासे तात्पर्येणादोषात् । 'नुर्वे'ति च तक्रन्यायेन दीर्घबाधकमिति नुट्पक्षे नृणां, नुडभाव त्रामिति, ह्रस्वग्रहणपक्षेऽपि नृणां त्रामिति न फलभेद इति तदाशयात् । नृशब्दादाचारक्विबन्तात्क्विपि तुकि नृच्छब्दे फलभेदस्तु न शङ्क्यः, नद्याप्साहचर्येणाहलन्तस्यैव नृशब्दस्य 'नुर्वे'ति सूत्रे ग्रहणात् ।

नरश्च अरश्च न्रः, तेषां त्रामित्यत्रापि नृ—ऋशब्दयोः समासे नृशब्देन नुडापत्त्या फलभेदशङ्कापि, पञ्चमीसमासेन ऋकारेण व्यवधानान्नुटोऽप्रवृत्तेः । एवं 'षट्चतुर्भ्यश्चे'त्यत्र त्रिग्रहणानुवृत्तौ त्रयादेशेऽपि स्थानिवत्त्वेन त्रिशब्दत्वान्नुटि 'त्रयाणा'मिति, अननुवृत्तिकल्पे तु नित्यत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्रवृत्त्या-'त्रया'मिति फलभेदशङ्का तु-षट्चतुर्साहचर्यादनकारान्तस्यैव त्रेर्ग्रहणात्सर्वत्र 'त्रया'मित्येवेत्येवं निवारणीया । अतकारान्तेनापि साहचर्याश्रयणादाचारक्विबन्तात्कर्त्तरि क्विपि निष्पन्ने त्रिच्छब्देऽपि न फलभेद इति केचित् । परे तु—'त्रेस्त्रयः' ततः—'स्त्रियां चतुरो नुट्', 'त्रे'रिति वर्त्तते, स्त्रियां त्रिचतुर्शब्दात्परस्यामो नुडित्यर्थः । ततः—'षण्नद्यापः'—चतुरो नुडिति वर्त्तते, षट्सञ्ज्ञकेभ्यः चतुर्शब्दान्नद्यन्तादाबन्ताच्च परस्यामो नुडिति च तदर्थः । ततो—'नुर्वा'—नृशब्दादामो वा नुडित्यर्थः । 'स्त्रियां चतुरो नु'डित्यनेन च तक्रन्यायेन दीर्घबाध इति 'न तिसृचतसृ' इति निषेधो न कार्यः, एवं 'नुर्वे'त्यनेनापि तक्रन्यायेन दीर्घबाध इति—नृचेति सूत्रं न कार्यमिति महल्लाघवम्। त्रितामित्यादौ फलभेदस्तु पूर्वोक्तसाहचर्या-

**अपदान्तस्य** । 'प' इत्येव' सिद्धे मूर्धन्यग्रहणम् 'इणः षीध्व'मित्यत्र ढविधा-नार्थं, 'रषाभ्या'मित्यत्रानुवृत्त्यर्थञ्च; एवञ्च तत्र णग्रहणं, 'पदान्तस्ये'ति च न कर्त्तव्यमिति भाष्ये स्पष्टम् ।

**इण्कोः** । वर्गग्रहणञ्चत्वस्यासिद्धत्वात् 'सक्षि'त्याद्यर्थम् ।

❀ अभिनव-चन्द्रिका ❀

किन्तुट् चे'त्यत्र नुगेव क्रियत इति न दोष इति वाच्यम्, 'अनश्वः' 'अनेषक' इत्यादौ प्रत्यय-लक्षणेनाङ्गत्वस्य नुट्परकत्वस्य च सत्त्वेन दीर्घापत्तेः । न च तत्रापि नुगित्येव न्यासः क्रियत इति न दोष इति वाच्यम्, 'अनेषक' इत्यादौ ङमुडापत्तेः । इत्यादीति । आदिना कुकि

❀ चिदस्थिमाला ❀

नुडवयवनिरूपिताङ्गस्यैव ग्रहणेनानङ्गत्वात्–'अनश्व'इत्यादावदोषेऽपि, 'अक्षण्वन्न'इत्यादौ 'पूर्वत्रे'ति नुटोऽ-सिद्धत्वं, न च तस्यापि सन्निपातेतिवद्बाधः, उभयबाधकल्पनस्यान्याय्यत्वात्,शास्त्रबाधापेक्षया लौकिकन्याय-बाधस्यैवौचित्याच्चेत्येवमदोषेऽपि पूर्वत्रेत्यस्यानित्यत्वज्ञापनस्, अङ्गस्येति स्थाने 'प्रत्यये' इति करणपक्षे तेनान्वयस्य चानापत्त्याऽनश्व इत्यादौ दोषापत्तेः, 'पदलाघवं युक्तं, मात्रालाघवस्यासार्वत्रिकत्वं, प्रतिपत्तिगौरवस्य सर्वथा वर्ज्यत्व'मित्येवमर्थत्वाच्च'' इति शेषः । एतेनेष्टापत्तिग्रस्तं नदित्यपास्तम् ।

तत्र ढविधावग्रे पुनः षग्रहणकर्त्तव्यतापत्तिर्मण्डूकप्लुत्यापत्तिश्चेति मनसिनिधायाह—**रषाभ्यामिति** । एवञ्च सति महल्लाघवमित्याह—**एवञ्चेति** । सर्वसङ्ग्राहकत्वादुक्तौ चेत्यर्थः । अपदान्ताधिकारफलमाह—**पदान्तस्येति** । 'इण्को'रिति समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ।

❀ ज्योत्स्ना ❀

वाक्यशेषः—'अनश्व'इत्यादावतिव्याप्तिः, अङ्गसञ्ज्ञाप्रयोजकत्वस्य नुट्यसम्भवादङ्गसञ्ज्ञाप्रयोजके

❀ विषमपदविवृतिः ❀

इत्यादौ तु न दोषः, पदद्वयाश्रयत्वेन बहिरङ्गत्वात्तया नुटोऽसिद्धत्वात्। परं त्विदम्–'उणादीनामव्युत्प-त्तिपक्ष एवे'ति स्वसिद्धान्तविरुद्धम्। यत्तु कश्चिदाह—'नुटी'ति न्यासे सन्निपातपरिभाषया नुट् दीर्घ-निमित्तं न स्यात्, 'नामी'ति न्यासे तु नुटो न दीर्घनिमित्तत्वमिति न सन्निपातपरिभाषाविरोध इति, तन्न । नामीति न्यासेऽपि नुटो घटकतया दीर्घनिमित्तत्वात् । 'नुटी'ति न्यासेऽपि 'कष्टाये'ति निर्दे-शेन दीर्घविधौ सन्निपातपरिभाषाप्रवृत्त्यभावकल्पनासम्भवाच्च ।

'इण् च क् चे'ति इतरेतरद्वन्द्वे द्विवचनमिति भ्रमनिरासायाह—**वर्गग्रहणमिति** । **ठकारेति** ।

---

❀ वरवर्णिनी ❀

देव निरसनीय इत्याहुः । अन्येतु—'त्रेस्त्रय' इत्यस्याग्रे—'चतुरश्चनुट्' इति योगः क्रियते, 'त्रे'रित्य-नुवृत्तं, तच्च चतस्रसाहचर्याद्वकारान्तमेव गृह्यते । ततः—'नद्यापोनुट्' 'षट्चतुर्भ्यश्च' 'नुर्वा' न्यासा इति न फलभेद इत्याहुः । वस्तुतस्तु—'ऋन्नद्याप' इति न्यास एव भाष्याशयो युक्तः, तत्र पूर्वोक्तफलभेद-लेशस्याप्यभावादिति—प्राहुः । ]

**इण्कोरितीति** । नन्विदं सूत्रं किमर्थं, मूलोक्ते 'रामसे'त्यत्र स्यादेशस्य स्थानिवद्भावेन प्रत्ययतया तदवयवसकारस्यादेशप्रत्यययोरिति षत्वन्तु न शक्यं, 'लोपः शाकल्यस्ये'त्यादिनिर्देशात् । न च निर्देशैः सूत्रखण्डनमनुचितम्, अन्यथा 'स्वादयः' 'पश्चिमश्च्यूमुक्षा'मित्यादिनिर्देशैरेव सुध्युपास्येत्यादौ यण्सिद्धाविको यणचीति व्यर्थ स्यादिति वाच्यं, प्रक्रियालाघवात्ष्यादेश एव विधातव्ये स्यादेशविधानसामर्थ्यादेव रामसेत्या-दावदोषात्। नच ष्यादेशे 'षःप्रत्ययस्ये'ति षकारस्येत्वापत्तिरितिवाच्यं, षकारोच्चारणसामर्थ्याल्लोपो व्योरिति-

## आदेश । प्रत्ययशब्दस्तदवयवपरो व्याख्यानात्, सातेः षत्वनिषेधाल्लिङ्गाच्च ।

**॥ अभिनव-चन्द्रिका ॥**

प्राङ्क्विपत्यादेर्ग्रहणम्बोध्यम् । व्याख्यानादिति । प्रत्ययस्येत्यनुवृत्तिं कृत्वा 'लोपे प्रत्ययलक्षण'मित्येव सिद्धे 'प्रत्ययलोपे प्रत्ययलक्षण'मिति करणात्प्रत्ययावयवे प्रत्ययत्वं स्वीक्रियत इति व्याख्याना-

**॥ चिदस्थिमाला ॥**

व्याख्यानादिति । 'समुदाये दृष्टा'इतिन्यायमूलकादित्यर्थः । नन्वेवमादेशपदेऽपि तत्त्वापत्तिरत

**॥ ज्योत्स्ना ॥**

तुव्यचो दीर्घस्य वक्तुमशक्यत्वात्, अजन्ताङ्गस्य तुटि दीर्घ इति सूत्रार्थादिति । ननु शब्दस्वरूपं विशेष्य-

**॥ सदाशिवभट्टीयम् ॥**

लिङ्गादिति । प्रकृतसूत्रे भाष्ये स्पष्टमिदम् । एतेनाचक्षाणणिच्चि टिलोपे सार्थक्यमित्यपास्तम्, तदन-

**॥ विषमपदविवृतिः ॥**

वर्गद्वितीयो—न प्रथमः, तस्याल्पप्राणतया प्रयत्नभेदात् ।

**॥ वरवर्णिनी ॥**

लोपेन यकारस्यादौ प्रश्लेषाद्वा दोषाभावात् । न चोच्चारणसामर्थ्यादमुष्यपुत्र इत्यत्र षत्वं नस्यादिति वाच्यम्, नडादिगणेऽमुष्येति निपातनात्—'आमुष्यायणामुष्यपुत्रिके'त्यादिनिर्देशादेव च तत्र षत्वसिद्धेः। हे राम-स्येत्यादौ षोऽन्तकर्मणीतिधातोरादेः सस्य षत्वापत्तिस्तु—'सात्पदाद्यो'रितिनिषेधाद्वक्तुमशक्या, नच राममिच्छति रामस्यति,'सर्वप्रतिपदिकानां क्यचि लालसायां सुगसुका'विति सुक्, रामस्यतीति रामस्यस्तत्सम्बुद्धौ हे रामस्येत्यत्र- यद्वा रामस्येत्यत्र रामस्यधातोर्लोण्मध्यमपुरुषैकवचने वा षत्वापत्तिरिति भट्टोजिदीक्षितानामाशय इति वाच्यं, सुकः प्रत्यया वयवत्वाभावेन षत्वाप्राप्तेरिति चेन्न । अततीत्यत्, चौरस्यात्—चौरस्यात, 'षष्ठ्या आक्रोशे' इत्यलुक् । तत आचक्षाणणिच्चि टिलोपे कर्त्तरि क्विपि क्विपोवकारं निमित्तीकृत्य लोपोव्योरिति यलोपे, प्रातिपदिकत्वात्प्रथमैकवचनेऽत्वसन्तस्ये दीर्घे—चौराः चौरसौ चौरस इति रूपाणि भवन्ति, ष्यादेशे तु चौरट्—चौरड् चौरषौ चौरष इत्येवं रूपाणि भविष्यन्तीति फलभेदस्य सत्त्वेन'टाङसिङसामिनात्स्या'इति षकारोच्चारणस्य कर्त्तुमशक्यत्वेन 'सकारोच्चारणसामर्थ्यान्न ष'इत्यस्य वक्तुमशक्यत्वात् । एतेन सुकः सकारोच्चारणसामर्थ्यात्त्वं रामस्येत्यत्र न षत्वमित्यपास्तम्, सुकः सकारस्य अश्वाः, अश्वसौ—इत्येवंरूपसम्पादनेन चरितार्थत्वात् । एवं रामस्येत्यनुकरणादाचक्षाणणिच्चि टिलोपे क्विपि स्यादेशपक्षे रामाः रामसौ रामस इति रूपाणि, ष्यादेशे रामड्डित्यादीति फलभेदोऽपि अनुसन्धेयः । 'विश्वपासु'इत्यत्र षत्वापत्तिरपि दोष इण्कोरित्यनुक्तौ बोध्यः । सुपः सकारोच्चारणन्तु 'लिट्त्सु'इत्यादौ धुट्सम्पादनेन सफलम् ।

**परे** तु रमते इति रमाः, 'सर्वधातुभ्य असु'न्नित्यसुन्, रमसमिच्छति रमस्यति, रमस्यतीति रमस्यः, ततःस्वार्थिके प्रज्ञाद्यणि रमस्य एव रामस्यः, तत्सम्बुद्धौ हे रामस्येत्यत्र षत्वापत्तिर्भट्टोजिदीक्षिताभिप्रेता, न चात्र सकारस्यान्तवर्त्तिविभक्त्या पदान्ततयाऽपदान्तस्यमूर्धन्य इति निषेधः शङ्क्यः, 'नःक्ये' इति नियमेन सान्तस्यापदत्वादित्याहुः । यत्तु 'रामेभ्यः' 'रामान्' 'रामै'रित्यादावेव षत्वापत्तिसम्भवे रामस्येत्येतत्पर्यन्तमनुधावनं ग्रन्थकृतोऽसङ्गतमिति, तन्न, 'अपदान्तस्य मूर्धन्य' इति निषेधस्य जागरूकत्वेन तत्र दोषाभावात्, तत्र तत्र नत्वादिविधिभिः षत्वस्य बाधनाच्च । 'राम'इत्यत्र तु जातेऽपि सस्य षत्वे तस्यासिद्धत्वाद्रुत्वविसर्गप्रवृत्तेः सुलभत्वात्तदपि नोपात्तमिति सङ्क्षेप इति त्रिपाठिचरणा व्याचक्षते ।

केचित्तु—'आदेशप्रत्यययो'रिति सूत्रं विहाय 'इण्को'रित्येव विधायकं सूत्रमिष्यते, सुपीः सुपिसावित्यादौ तु नानेन षत्वापत्तिः, 'शासिवसिघसीनाञ्चे'ति सूत्रस्य 'सान्तानान्धातूनां सस्य यदि षत्वं तर्हि शास्यादीनामेवे'ति नियमार्थतया सुपिसावित्यादौ षत्वाप्राप्तेरित्याहुस्तन्न, बाढमाचष्टे साधयति, ततः साधयन्तमिच्छति सिसाधयिषतीत्यादौ द्वितीयसकारस्य मूर्धन्यापत्तेः, मम तु आदेशरूपत्वाभावान्न ष इति यथावस्थानमेव रमणीयमिति च गुरवः श्रीत्रिपाठिचरणा व्याचक्षते ।

तदाह—**प्रत्ययावयवेत्यादि** । **विवृतायोपस्येति** । विवृतस्वरूपाभ्यन्तरप्रयत्नवतो-ऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाद्यम्, ऋकारवारणाय द्वितीयम् ।

**रामस्येति** । 'टाङसी'तिसूत्रे सकारोच्चारणन्तु 'इण्को'रित्यनुवृत्तावेव तात्पर्य-ग्राहकमिति भावः ।

**सर्वादीनि** । तद्गुणसंविज्ञानो बहुव्रीहिः । आदिशब्दोऽवयववाची । तेन सर्व-

ॐ अभिनव-चन्द्रिका ॐ

दित्यर्थः । अत एव 'कस्कादिषु' 'कविभिः कृत'मित्यादौ प्रत्ययरूपो यो विसर्गस्तस्य षत्वम्भवतीति सामाना-धिकरण्ये 'इदुदुपधस्ये'ति षत्वं न भवति । न च प्रत्ययावयवे प्रत्ययत्वस्वीकारे 'अचिश्नु' सूत्रे अजादौ प्रत्यये इयङुवङौ भवत इत्यर्थे 'श्रियौ' 'भ्रुवौ' इत्यत्रैव तौ स्यातां न तु, 'श्रियः' 'भ्रुव'इति भाष्यविरोधः, जसवयवेऽकारेऽपि भवन्मते प्रत्ययत्वस्य सत्त्वात्, एवं 'रामाणा'मित्यादौ प्रत्य-यावयवे आमि प्रत्ययत्वस्य सत्त्वेन रामन्नित्यस्य भसञ्ज्ञायां परत्वादल्लोपापत्तिः । एवं 'भूया'दित्यादौ प्रत्ययावयवतकारमात्रे प्रत्ययत्वस्वीकारे अपृक्तसञ्ज्ञायां हल्ङ्यादिलोपापत्तिश्चेत्यादिदूषणगणपात इति वाच्यं, षष्ठीप्रकृतिप्रत्ययपदप्रयोज्या या विषयता तादृशविषयताश्रयत्वेन प्रत्ययावयवोऽपि गृह्यत इति सामञ्जस्यादिति दिक् ।

**सर्वादीनीति** । **अविशेषादिति** । सर्वशब्दनिष्ठावयवतानिरूपकसमुदायघटकत्वस्य विश्वा-दिष्विव सर्वशब्देऽपि सत्त्वादिति भावः ।

ॐ चिदस्थिमाला ॐ

आह—**सातेरिति** । एतेन 'तस्य तत्र लक्षणे'ति शास्त्र्युक्तमन्यथा मनोरमोक्तञ्चापास्तम् । विवारभ्रमनिरासायाह—**विवृतेति** । लाघवादाह—**टाङ्सीति** । एतेन "ततो न षत्वमत्र, अमुष्येत्यादौ तु निपातनात्तत्, तथा च 'विश्वपा'स्विति प्रत्युदाहार्यं, तत्र तु 'लिट्'स्वित्यादिसिद्ध्यर्थं तदुच्चारण-मावश्यक"मिति-दण्डयुक्तमपास्तम्, विपरीतगौरवापत्तेः ।

तत्र बीजं ध्वनयन्नाह—**आदीति** । तेन = तथा बहुव्रीहिणा । तत्र = समुदाये । युगपल्लक्ष्ये

ॐ सदाशिवभट्टीयम् ॐ

मिधानात् । **अनुवृत्तावेवेति** । अन्यथामुष्येत्यादावपि न स्यादिति भावः । **सर्वादीति** । तद्गुणत्वेबीजमाह—**अवयवेति** । एवञ्चान्यपदार्थस्य प्रायः संयोगसमवायान्यतरसम्बन्धित्वात्तत्वमिति भावः । न्यायसिद्धत्वा-

ॐ विषमपदविवृतिः ॐ

**द्वितीयमिति** । ऊष्मणामीषद्विवृतत्वे 'ईषद्विवृतस्ये'त्येव सुवचम् ।

**सर्वादीनि सर्वनामानि** । **तद्गुणसंविज्ञान इति** । तस्यान्यपदार्थस्य ये गुणा विशेषणानि

ॐ वरवर्णिनी ॐ

**तद्गुणेति** । यत आदिशब्दोऽवयवाची अतस्तद्गुणसंविज्ञानो बहुव्रीहिरित्येवमन्वयो बोध्यः । 'तद्गुण-संविज्ञान इत्यस्य-तस्य-अन्यपदार्थस्य गुणाः=विशेषणानि-वृत्त्यन्तर्वर्त्तिपदार्था इति यावत्, [समस्यमान-पदानामर्था इति तु तत्त्वम् ।] तदन्वय्यन्वयित्वेन संविज्ञायन्ते यत्रासौ बहुव्रीहिस्तद्गुणसंविज्ञान इत्यर्थः । यथा-'लम्बकर्णं कुसूलपादं प्रोन्नतघोणं बृहन्नितम्बं स्थूलौष्ठमानये'त्यत्र-लम्बौ कर्णौ यस्येत्यादिबहुव्रीहौ वृत्तिघटकसमस्यमान-लम्बपद-कर्णादिपदार्थानामन्यपदार्थान्वयि-आनयनादिक्रिया ऽन्वयित्वेन संविज्ञाना-ल्लम्बकर्णादिशालिन एवानयनात्तद्गुणसंविज्ञानत्वम्, एवं सर्वादीनीत्यत्रादिशब्दस्यावयववाचितया—पञ्चत्रिंशच्छब्दसमुदायरूपा-ऽन्यपदार्था—न्वयि-सञ्ज्ञाभवनक्रिया-ऽन्वयितया तद्गुणसंविज्ञानत्वमिति श्रीगुरुचरणाः । **अन्ये तु**-तस्य-अन्यपदार्थस्य गुणानाम्=अवयवानां वर्त्तिपदार्थानां-संविज्ञानम्=अन्य

शब्दघटित उद्भूतावयवभेदः समूहः समासार्थ इति—बहुवचनम् । 'उद्भूतावयवभेद' इत्यस्य—आरोपितावयवगतसङ्ख्य इत्यर्थः । तत्र वैयर्थ्यादप्रवृत्तावपि अवयवेषु प्रवर्त्तमाना अविशेषात्सर्वशब्देऽपि भवति । 'सर्वनामानी'त्यत्र 'पूर्वपदा'दिति णत्वमत एव निपातनान्न, नाप्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वाण्णत्वसहितमसाधु इति स्पष्टं भाष्ये ।

---

❀ अभिनव-चन्द्रिका ❀

**निपातनाच्चेति** । न च कृतणत्वेन यत्र सञ्ज्ञावगमस्तत्रैव 'पूर्वपदा'दिति णत्वम्भवति, अत

❀ चिदस्थिमाला ❀

प्रयोगाभावात्—'आनर्थक्यात्तदङ्गेषु'—इति न्यायेनाह—**अवयवेष्विति** । अत एव=अस्मादेव । सौत्रत्वं विहाय निपातनाश्रयणफलमाह—**णत्वेति** । एवञ्च लोकेऽपीत्यादिः । क्वचित्तथा पाठ एव ।

ननु विशेष्यासन्निधानात्कथं तदन्तविधिः, न च शब्दरूपं तत्, तस्यातिप्रसक्तत्वादत आह—

❀ सदाशिवभट्टीयम् ❀

स्सर्वेषामिति निर्देशानुधावनं न कृनन्तेनैतत्साध्यं सर्वशब्दघटितत्वम्, अन्यपदार्थस्योभयसाधारणत्वात् । **निपातनाच्चेति** । 'लोकेपी'ति शेषः । ऋष्यसम्मतञाप्यार्थकस्यापि 'ओर्गुण'इत्यादेरनादरात् । तत्सम्मति-

❀ विषमपदविवृतिः ❀

तेषां कार्य्यान्वयितया संविज्ञानं यत्रेति विग्रहः । संयोगेन समवायेन वा यत्र वर्तिपदार्थसम्बन्धी अन्यपदार्थस्तत्र प्रायेण तद्गुणसंविज्ञानः, यथा—'पीताम्बरमानय' 'लम्बकर्णमानये'त्यादौ । अन्यत्र त्वतद्गुणसंविज्ञानः, यथा—'चित्रगुमानये'त्यादौ । क्वचित्तु संयोगादिना वर्तिपदार्थसम्बन्धिनोऽन्य-पदार्थत्वेपि अतद्गुणसंविज्ञानः, 'नागयज्ञोपवीती भोज्यतां' 'लम्बकर्णो भोज्यता'मित्यादौ ।

**उद्भूतावयवभेद इति** । उद्भूतः=आरोपितोऽवयवस्तत्सहचरिता सङ्ख्या यत्रेति बहुव्रीहिस्तदाह—**आरोपितेति** । न हि **तदन्तविधिं विनेति** । इदमयुक्तम्—इश्च इतरश्चेति द्वन्द्वे सर्वनामसञ्ज्ञानिषेधार्थ-

---

❀ वरवर्णिनी ❀

पदार्थे विशेषणत्वं—तद्गुणसंविज्ञानत्वम्, उपलक्षणत्वम्—अतद्गुणसंविज्ञानत्वम् । येन सम्बन्धेन सम्बन्धी अन्यपदार्थः स सम्बन्धः शाब्दबोधकाले यदि भवेत्तदा तद्विशेषणं—विशेषणमित्युच्यते, यदा तु सम्बन्धिनो-स्सम्बन्धः शाब्दबोधकाले न भवेत्तदा तद्विशेषणमुपलक्षणमित्युच्यते । यथा 'लम्बकर्णमानये'त्यादावाद्यम् । 'दृष्टसागरमानये'त्यादौ शाब्दबोधकालेऽन्यपदार्थस्य पुंसः कर्तृत्वसम्बन्धेन दर्शनविशिष्टत्वाभावस्य भूते क्तप्रत्ययेन बोधनादतद्गुणसंविज्ञानत्वम् । 'नागयज्ञोपवीतिनमानय' 'चित्रगुमानये'त्यादौ तु प्रकरणादिवशा-त्तद्गुणसंविज्ञानत्वमतद्गुणसंविज्ञानत्वञ्च भवति । तदुक्तं सर्वादिसूत्रे कैयटेन—'तस्यान्यपदार्थस्य गुणा—उपलक्षणानि—प्रकारतयाऽन्वयिपदार्थाः, तेषामपि कार्ये संविज्ञानं—तद्गुणसंविज्ञानं, यथा 'दण्डी विषाणी चानीयता'मित्यत्र यथायथं संयोगसमवायलक्षणसम्बन्धेन सम्बन्धिनि आनयनरूपे कार्ये विज्ञायमाने उप-लक्षणस्य दण्डादेरप्यन्तर्भावो भवतीति तद्गुणसंविज्ञानत्वमिति प्रकृतेऽपि आदिशब्दस्यावयववाचित्वात्समवायेन सम्बन्धिनोऽन्यपदार्थत्वात्तद्गुणसंविज्ञानत्वादुद्भूतावयवभेदसमुदायस्य समासार्थस्य च युगपल्लक्ष्ये प्रयोगाभावा-त्तदन्तर्भूतानामेव पृथक्प्रयोगत्वात्कार्यार्थया सञ्ज्ञया प्रवर्त्तितव्यमिति सर्वशब्दस्यापि सा भवती'ति । कार्ये संविज्ञानञ्च द्वेधा—क्वचिद्विशिष्टस्य क्रियायां संनिधिमात्रेण—यथा क्रियायोगाभावेऽपि 'शुक्लवाससं भोजय' 'नागयज्ञोपवीतिनं भोजये'त्यत्र । क्वचित्तु विशेषणस्यापि क्रियायोगेन, यथा—'शुक्लवाससं पश्ये'ति । एवञ्च यत्र कार्ये तद्भावभावि तत्र तद्गुणसंविज्ञानत्वम् । अर्थात्—वृत्ति-

'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मितिवार्त्तिकाच्छब्दरूपविशेष्यमादाय ज्ञापकात्तदन्तविधिरित्याह–**द्वन्द्वे चेतीति** । प्रथमार्थे सप्तमी । द्वन्द्वः सर्वनामसञ्ज्ञो नेति तदर्थः । न हि तदन्तविधिं विना समुदाये सञ्ज्ञाप्रवृत्तिरस्ति–या निषिद्ध्येतेति भावः ।

ननु तदन्तस्यापि सर्वनामत्वे—'सर्वनाम्नः स्मै' इत्यादिषु सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थाश्रयणेनातिसर्वादौ दोषाभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्यसूचितं

॥ अभिनव-चन्द्रिका ॥

एव रघुनाथादिशब्दे णत्वं न भवति । तथाच–प्रकृते कृतणत्वेन सञ्ज्ञानवगमाण्णत्वप्राप्तेरसत्त्वान्नणत्वमितिभावः । **प्रथमार्थे सप्तमीति** । वस्तुतस्तु–वाचकत्वं सप्तम्यर्थः । तथाच–वाचकतासम्बन्धेन सर्वनामपदं द्वन्द्वे न तिष्ठतीति यथाश्रुतमेव सङ्गतमिति प्रथमार्थे सप्तमीत्यस्य नोपयोगः । **समुदाय इति** । न च अश्व इतरश्चानयोः समाहार एतरम्, अश्वान्यश्चानयोः समाहार आन्यमित्यादौ परादिवद्भावेन सर्वादित्वस्य सत्त्वात्सर्वनामसञ्ज्ञानिषेधार्थं 'द्वन्द्वे चे'तिशास्त्रं चरितार्थमिति कथन्तदन्तविधिज्ञापकत्वं ?, फलञ्च स्नायाद्यभाव इति वाच्यं, 'पूर्वोत्तरनिमित्तककार्यात्पूर्वमन्तरङ्गोप्येकादेशो ने'त्यस्य–वस्तुतः पूर्वोत्तरनिमित्तके कार्ये कर्तव्येऽन्तरङ्गत्वाज्जातोप्येकादेशोऽसिद्धो भवतीत्यर्थः । तथा च—'द्वन्द्वे चे'तिनिषेधस्य वस्तुतः पूर्वोत्तरपदनिमित्तकत्वेन तस्मिन्कर्त्तव्ये जातस्याप्येकादेशस्यासिद्धत्वेन 'द्वन्द्वेचे'तिनिषेधवैयर्थ्यस्य स्पष्टत्वात् । अत एव 'सरूपाणा'मित्यत्र विभक्तौ परतः प्रातिपदिकैकशेषकल्पे विभक्त्यन्तानामेकशेष इति कल्पे च न फलभेदः । अन्यथा

॥ चिद्स्थिमाला ॥

**प्रयोजनमिति** । तथा च गमके सत्येव तस्य तत्त्वाङ्गीकारो नान्यत्रेति नातिप्रसङ्ग इति भावः । वार्तिकस्यापूर्वत्वादाह—**ज्ञापकादिति** । नन्ववयवनिषेधेन तत्सफलमत आह—**प्रथमेति** ।

मूलोक्तज्ञापकेनैव निर्वाहे स्वीयवार्त्तिकोल्लेखफलं सूचयितुं शङ्कते–**नन्विति** । **सर्वनामत्वे इति** । विरोधे-

॥ ज्योत्स्ना ॥

मादाय तदन्तविधेरव्यावर्तकोऽत आह—**ज्ञापकादिति** । **विरुध्येतेति** । सत्यपि विहितविशेषणे-

॥ सदाशिवभट्टीयम् ॥

माह—**प्रयोजनेति** । **एकदेश्युक्तिरिति** । यस्तु विहितविशेषणाश्रयणसामर्थ्यात्सर्वनामपदे योगरूढ्य-

॥ विषमपदविवृतिः ॥

मावश्यकत्वात् । तस्मादन्वर्थसञ्ज्ञाक्षिप्तसञ्ज्ञी सर्वादिभिर्विशेष्यते, अपूर्वो वा तदन्तविधिरुपसङ्ख्यायते

॥ वरवर्णिनी ॥

घटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणसंविज्ञानत्वं, वै० 'स्वान्वयिक्रियान्वयित्व' 'स्वप्रतियोगिकसंयोगसमवायान्यतरसम्बन्धानुयोगिकत्वै'तदन्यतरसम्बन्धेनेति फलितम् । तदेवं—तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः, अतद्गुणसंविज्ञाने तु—तदुपलक्षितस्येति भेदः । क्वचिदेकक्रियान्वयित्वं, यथा—'शुक्लवाससं पश्य', 'नागयज्ञोपवीतिनमानये'ति, क्वचिच्च क्रियान्वय्यन्वयित्वमात्रेण कार्यसन्निहितत्वमात्रं, यथा–'नागयज्ञोपवीतिनं भोजये'ति,—अत्र हि शब्दशक्तिस्वभाव एव शरणम्''–इति **नागेशभट्टा** अभिप्रयन्ति । ''विधेयान्वयि-तत्कालसन्निहिता–ऽन्यतरत्वघटकावयवार्थकत्वं तद्गुणसंविज्ञानत्वम्, तद्भिन्नत्वमतद्गुणसंविज्ञानत्व''मिति**च्छायाकृतः** । **मान्यास्तु**—वर्त्तिपदार्थान्वयो यत्रान्यपदार्थान्वयस्य नान्तरीयकस्तत्र तद्गुणसंविज्ञानत्वमित्याचक्षते–इतिशब्देन्दुशेखरत्रिपुरसुन्दर्यामस्मत्पितमहाः–**श्रीस्नेहिरामशास्त्रि**-चरणा व्याचक्षते ।

विरुद्ध्येतेति चेन्न, 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति तदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधेनास्य भाष्यस्यैकदेश्युक्तित्वात् । इत एव वाऽरुचेर्भाष्ये पक्षान्तरोपादानम् ।

न च ऋष्युक्तपक्षेषु नारुचिरिति भ्रमितव्यं, वृद्धिसञ्ज्ञासूत्रे 'अपरितुष्यन्खल्वपि भवाननाकृतिलिङ्गेन वेत्याहे'ति वार्तिककारं प्रति [पूर्वत्र] भाष्योक्तेः ।

**अकचेति** । 'कुत्सित'इतिसूत्रोक्तभाष्यरीत्या सङ्ख्याकारकाभ्यां पूर्णार्थस्येतरान्वयेन

❀ अभिनव-चन्द्रिका ❀

'रामा'वित्यादौ राम सु राम सु इत्यनयोः सारूप्यात् विभक्त्यन्तैकशेषकल्पे एकशेषो भवति । 'विभक्तौ परतः सरूपाणामेकशेष' इति कल्पे च–राम राम औ इति स्थितेऽन्तरङ्गत्वाद्वृद्धौ परादिवद्भावेन विभक्तिपरकत्वस्य सत्त्वेऽपि 'राम्' इत्यस्य 'रामे'त्यनेन सारूप्याभावादेकशेषो न स्यादिति फलभेदः स्यात् । मम तु वस्तुतः पूर्वोत्तरनिमित्तकैकशेषे कर्तव्ये एकादेशस्यासिद्धत्वात्सारूप्यमस्त्येवेति न फलभेदः । भाष्ये सूचितमिति । 'अङ्गाधिकारे पञ्चम्या यदुच्यते तद्गृह्यमाणविभक्तेर्भवती'ति भाष्यस्य गृह्यमाणाद्विहितविभक्तेरित्यर्थस्य करणादिति भावः । **एकदेश्युक्तत्वादिति** । वस्तुतस्तु-नेदम्भाष्यमेकदेश्युक्तिः, तथाहि–भाष्ये- 'सञ्ज्ञोपसर्जनीभूतानां प्रतिषेधो वक्तव्य' इत्युक्त्वा 'पूर्वपरे'ति सूत्रेऽसञ्ज्ञायामिति योगं विभज्य यानि सर्वादीनि तानि असञ्ज्ञायां द्रष्टव्यानीति सञ्ज्ञाभूतानां सर्वादिषु पाठाभावादेव पर्युदास इति सञ्ज्ञाप्रतिषेधोऽनर्थक इत्युक्त्वा–उपसर्जनप्रतिषेधखण्डनाय समाधानत्रयमुक्तम् । तत्र प्रथमन्तावत्–(१)'अनुपसर्जना'दिति योगः प्रत्याख्यायत इति । अनुपसर्जन अ अदिति च्छेदं कृत्वा 'अ' इत्यनेन 'त्यदादीनामः' 'अ' दित्यनेन 'अद्ड्डतरादिभ्य' इत्यद्ड् अनुपसर्जनस्यैव भवतीति 'अतिकतरं कुलम्' 'अतित'दित्यादौ न दोष इत्युक्तम् । तस्यायम्भावः—स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात् 'बहुकुरुचरे'त्यादौ टिदर्थगतस्त्रीत्वस्याभावान्न ङीपः प्राप्तिरित्यनुपसर्जनाधिकारो व्यर्थः । स्त्रीप्रत्ययप्रकरणे सर्वत्र–'वनोरच' इत्येतद्विहाय–'स्त्रिया'मिति गृह्यमाणविशेषणमेव । न च 'कुम्भकारेयः' इत्यापत्तिवारणाय तदन्तविधिज्ञापनार्थ-

❀ चिदस्थिमाला ❀

ऽन्वयः । आश्रयणस्य 'न कार्य'इत्यत्र । तथानुक्तत्वादाह–**सूचीति** । क्रमविवक्षयाह–**वार्त्तिकेति** । तत्रत्यं भगवतैव तथा सूचितमित्याह–**इत एव वेति** । पक्षान्तरम्=अन्वर्थत्वरूपम् । पक्षेषु=तेषां मध्ये । 'पूर्वत्र भाष्य-

❀ ज्योत्स्ना ❀

ऽतिसर्वस्मै इति तदन्तविधिना स्मायापत्तेर्वारयितुमशक्यत्वादिति भावः । **एकदेश्युक्तित्वादिति** । वस्तुतो विहितविशेषणाश्रयणसामर्थ्यात्सर्वनामपदे योगरूढ्यङ्गीकारात्सर्वार्थवाचकसर्वनामसञ्ज्ञकसर्वादेर्विहितस्य ङेःस्मै–इत्यादिरूपेण प्रदेशार्थव्यवस्थापनादतिसर्वादौ दोषवारणादेषा सिद्धान्त्युक्तिरेव ।

❀ सदाशिवभट्टीयम् ❀

ङ्गीकारेण सर्वार्थवाचकसर्वनामसञ्ज्ञकसर्वादेर्विहितस्य ङेःस्मै इत्यतिसर्वादौ न दोष इति तस्यापि सिद्धान्त्युक्तित्वं समर्थयाञ्चक्रे, स एवं वक्तव्यः–'मासपूर्वाये'त्यादिव्यावृत्त्या सार्थकस्य तस्य क सामर्थ्यमिति, महासञ्ज्ञयेव तत्सिद्धौ विहितपदाध्याहारो विफल इत्युच्यैवाग्रिमभाष्यस्य त्वयापि व्याख्येयत्वान्मूलतोधिकं किं पराक्रान्तन्त्वयेति च । **सङ्ख्याकारकाभ्यां पूर्णेति** । सङ्ख्याकारकाभ्यां पूर्णो योऽर्थस्तस्येत्यर्थः ।

❀ विषमपदविवृतिः ❀

इति कैयटोक्तमेव युक्तमिति केचित् । **भाष्यसूचितमिति** । 'अथवाङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवती'त्येतत्सूत्रस्थभाष्यसूचितमित्यर्थः ।

१ ज्योत्स्नाकारः ।

सुबन्तादेव तद्धितोत्पत्तेः, प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थात्तदन्तसञ्ज्ञाऽभावे तदसिद्धिरिति भावः । एवमेव त्रलाद्य-सिद्धिर्बोद्ध्या । एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धिरित्यपास्तम् ।

जसः शी । दीर्घोच्चारणमुत्तरार्थं—'वारिणी' इति । अदन्तादिति—'परस्ये'त्यने-नान्वेति । 'अत' इत्यस्याङ्गविशेषणतया—अदन्तादङ्गादित्यर्थः । 'सर्वनाम्न' इति तु

❀ अभिनव-चन्द्रिका ❀

मनुपसर्जनाधिकारः सार्थक इति वाच्यम्, अनुपसर्जनाधिकाराभावेऽपि 'शूद्रा चामह'दित्यत्रामहत्पूर्व-तिपर्युदासेन सामान्यतः स्त्रीप्रत्ययप्रकरणे तदन्तविधिरस्तीति ज्ञापयितुं शक्यत्वात् । न चापि-शलेन प्रोक्तां मीमांसामधीते 'आपिशला ब्राह्मणी' इत्यादावण्णन्तत्वप्रयुक्तङीब्वारणायानुपसर्जना-धिकारः सार्थक इति वाच्यं, प्रोक्ताणर्थगतस्त्रीत्वमादायैकवारं ङीपो जातत्वेन 'लक्ष्ये लक्षण'न्यायेन

❀ चिदस्थिमाला ❀

कारोक्ते'रिति पाठः । रीतिरन्वये हेतुः । स चोत्पत्तौ, सा चार्थे । अन्योन्यनिरासायाह—प्रत्येति । आदि सङ्ग्राह्यं तमिलित्याह—त्रलादीति । एतेन=तथा तदर्थेन । ननु ह्रस्वे एव गुणेन सिद्धिरत आह—दीर्घोच्चेति । अव्यवहितान्वयाऽभावायाह—परेति । नन्वेवं कथं तदन्तविधिरत आह—अत इति । नन्वेवं सर्वनामान्ता-

❀ सदाशिवभट्टीयम् ❀

गतकत्वात्समासः । अन्वयेनेति । अयं सुबन्तात्तदुत्पत्तौ हेतुः, इदं चाकच्विधौ 'विभाषा सुप'इत्यतः 'सुप' इत्यस्य सम्बन्धेपि वाक्यभेदेन युष्मदस्मत्प्रकृतिकसुबन्तस्य टेः प्रागकच्विधायकमित्याशयेन । यदि त्वकच्सूत्रीय-शेखरोक्तरीत्या वाक्यद्वयेपि सम्बन्धः, सुबन्तावयवसर्वनाम्नष्टेः प्रागकजिति वाक्यार्थस्तदा स्पष्टैव सुबन्ता-त्तदुत्पत्तिः । अत्रत्यन्तरत्वमुभयशब्दे स्फुटीभविष्यति । सुबन्तादिति । ल्यब्लोपे पञ्चमी । सुबन्तं सम्पाद्ये-त्यर्थः । 'उत्पत्ते'रित्यस्याग्रे 'कर्तव्यत्वा'दिति शेषः, यथाश्रुतन्तु न युक्तम्, उक्तभाष्यात्सुबुत्पत्त्यनन्तर-न्तदुत्पत्तिलाभेपि देशविशेषस्यालाभात् । 'घकाले'त्यादिना तल्लाभेपि अकचि कृते तद्बाधात् । एवमग्रेपि 'सर्वनामप्रकृतिकसुबन्ता'दिति व्याख्येयमिति न तदसङ्गतिरपि । प्रागकजित्यस्याग्रे—'कर्तव्य' इति शेषः ।

इत्यर्थात्तदन्तेति । नन्वेवमपि 'सर्वक'इत्यादौ सर्वार्थकुत्साबुबोधयिषायां किमादेरकजद्दुर्वारोऽतस्त-द्वारणार्थं सर्वनाम्नष्टेः प्रागकच्प्रकृत्यर्थकुत्सायामिति प्रत्यासत्तिरावश्यिकेति तयैव तदन्तसञ्ज्ञाभावे तदसिद्ध्यु-पपत्तावयं प्रयासो विफल इति चेन्न, भवच्छब्दात्सुप्यनुत्पन्नेऽत्यन्तस्वार्थिके कनि भवदर्थकुत्साविक्षायाम-कज्नेत्यस्य फलस्य वक्तुं शक्यत्वेन सुवचत्वात् । असिद्धिरिति । समासार्थकुत्साविवक्षायामसिद्धिरिति भावः ।

नन्वेवं भवकच्छब्देन समासे समुदायकुत्साबोधकोऽपरोऽकच् स्यात्, इष्टापत्तेः । एतेनान्तर्वर्ति-सुपा सुबन्तत्वमादाय तत्सिद्धिरित्यपास्तम । एवमेवेति । सर्वनामप्रकृतिकसप्तमीपञ्चम्यन्तात्त्रतसिलाविति

❀ विषमपदविवृतिः ❀

सर्वनामाऽवयवटेरिति । न तु सुबन्तस्य टेः, तथा सति 'सर्वकाभ्या'मित्यादौ दोषा-पत्तिः, 'ओकारसकारे'ति वार्तिकन्तु युष्मदस्मच्छब्दविषयकम्, 'अव्ययसर्वनाम्ना'मित्यस्य श्रुतत्वात्तेन 'टे'रित्यनेन सम्बन्धः । 'प्रातिपदिका'दिति चाव्ययसर्वनामात्मकप्रातिपदिक-प्रकृतिकसुबन्तपरम् । परमत्वान्वयोत्तरं कुत्साद्यन्वयविवक्षायामिदम्, कुत्साद्यन्वयोत्तरं परमत्वा-न्वये तु नेदमिति भावः । इदमयुक्तम्—सर्वनामप्रकृतिकसुबन्तादित्यस्यानन्वयात्, 'परम-भवका'नित्यत्र भवच्छब्दस्य प्रत्ययलक्षणेन सर्वनामप्रकृतिकसुबन्तत्वेनाकच्सिद्धेः । 'उत्तर-पदत्वे'ति निषेधस्तु पदान्तविधावेव, भवन्मते सुबुत्पत्त्यनन्तरं प्रातिपदिकमेव प्रकृतितया-

❀ अभिनव-चन्द्रिका ❀

पुनस्तस्याग्रास्थाऽध्येत्रणो लुप्तत्वेनाऽणो योऽकारस्तदन्तादित्यर्थेन 'वर्णाश्रये नास्ति प्रत्ययलक्षण' मिति परिभाषयाऽणि योऽकारस्तदन्तत्वस्यानेतुमशक्यत्वादध्येत्रणर्थगतस्त्रीत्वमादायापि ङीपोऽप्राप्तेरनुपसर्जनाधिकारस्योपयोगाभावात् । न चैवमपि 'अतिसर्वाये'त्यादौ स्मायाद्यापत्तिर्दुर्वारा, अअद्वावेत्रानुपसर्जनस्य भवत इत्युक्तत्वादिति वाच्यं, 'डावुभाभ्यामन्यतरस्यामि'तिसूत्रादन्यतरस्यामित्यनुवर्त्यान्यतरस्य अनुपसर्जनस्य आमित्येवमत्र विवक्षणेनादोषात् । तथा हि—अन्यतरस्येत्यत्रान्यतरशब्दोऽर्शआद्यजन्तः । तथाचान्यतरस्येत्यस्यान्यतरशब्दघटितसर्वविश्वेत्यादिसमुदायस्येत्यर्थः । तत्र नुपसर्जन आम् ज्ञानमित्यर्थः । आमिति अम्धातोर्गत्यर्थाद्भावे क्विप् । 'ये गत्यर्थास्ते ज्ञानार्था' इति प्रकृते अम्धातुर्ज्ञानार्थकः । 'अनुपसर्जने'ति लुप्तषष्ठ्यन्तं पदम् । 'अ' 'अ'दिति प्रकृतार्थकरणस्योदाहरणम् ।

द्वितीयं च समाधानम् (२)'अथवा अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवती' ति । तस्यायम्भावः—'सर्वनाम्नः स्मै' 'ङसिङ्योः स्मात्स्मिनौ' 'जसः शी' 'आमि सर्वनाम्नः सुट्' 'अद्ड्डतरादिभ्यः पञ्चभ्यः' 'त्यदादीनाम' इत्यादौ 'सप्तम्यास्त्रलि'त्यादौ च सर्वत्र 'स्वाव्यवहितोत्तरत्व,' 'स्वार्थगतसङ्ख्याभिधायित्वै'तदुभयसम्बन्धेन स्वविशिष्टङेप्रभृतीनां स्मायाद्यादेशा भवन्तीत्यर्थ इति,—'अतितत्' 'अतिकतरं कुलम्' 'अतिसर्वाये'त्यादौ न दोषः ।

'गृह्यमाणविभक्ते'रिति भाष्यस्य—गृह्यमाणार्थगतसङ्ख्याभिधायिविभक्तेरित्यर्थः । एतत्कल्पे च 'सर्वादीनी'त्यत्र तदन्तविधिर्नास्तीति 'अतिसर्वाये'त्यादौ सर्वनामार्थगतसङ्ख्याभिधायिङेप्रत्ययस्याभावान्न स्मायादेशः । 'परमसर्वस्मै' इत्यादौ तु समुदायस्य सर्वनामत्वाभावेऽपि ङेप्रत्यये सर्वनामार्थगतसङ्ख्याभिधायित्वस्य सर्वनामाव्यवहितोत्तरत्वस्य च सत्त्वान्न दोषः ।

(३)'अथवा सर्वेषां नामानि सर्वनामानी'ति तृतीयं समाधानमुक्तम् । अत्र कल्पे च 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति वार्तिकेन 'सर्वादीनी'त्यत्र तदन्तविधिरस्तीति 'सञ्ज्ञोपसर्जनप्रतिषेध' इति वार्त्तिककल्पे, तत्प्रत्याख्यानकल्पेषु त्रिषु च न फलभेद इति दिक्[1] ।

❀ विषमपदविवृतिः ❀

श्रित्याकच्प्रवृत्तेश्च । परमत्वकुत्सयोर्युगपदन्वये युगपदेव समासतद्धितवृत्तिसम्भवाच्च । 'परमसर्वत्रे'ति-तु कथञ्चिदुदाहरणं शक्यमुपपादयितुम् । परिनिष्ठितविभक्तया समासेपि समुदायादुत्पन्नसप्तम्याः सर्वनामाप्रकृतिकत्वात्तदन्तात्त्रलोऽसम्भवात् । सर्वस्य सर्वनामप्रकृतिकसप्तम्यन्तत्वेपि तस्मात्त्रलि परमादेस्तद्धितान्तत्वाभावेन प्रातिपदिकत्वानापत्तिः । शिवभागवतादाविव तदुपपादनेऽपि तद्धितान्तत्वाभावेन समुदायस्याव्ययत्वानापत्तिः । तदनापत्तौ समुदायाद्विहितसुपो लुगनापत्तिः । सर्वनाम्नः परा या सप्तमी तदन्तात्त्रलित्यर्थे तु तच्छब्दान्नपुंसकात्परं यत्—'अ-'शब्दप्रकृतिकसप्तम्यन्तम्—'ए' इति ततस्त्रलापत्तिः । 'परमसर्वे' 'परमविश्वे' इति भाष्योक्तं तदन्त-

1. दिगर्थस्तु—ननु भाष्योक्तद्वितीयकल्पवदत्र तृतीयकल्पे तदन्तविध्यभावेऽपि सर्वेषां नामानि सर्वनामानीत्येवं रीत्या भाष्यकृदुक्तं 'सञ्ज्ञोपसर्जनानां प्रतिषेधो वक्तव्य'इतिवार्त्तिकोक्तोपसर्जनस्य सर्वनामसञ्ज्ञाप्रतिषेधखण्डनं न विरुध्यते, 'पदाङ्गाधिकार' इति परिभाषया स्मात्स्मिन्स्मायादीनामङ्गाधिकारीयकार्याणां 'परमसर्वस्मात्' 'परमसर्वस्मि'न्नित्यादौ सुलभत्वादिति चेन्न, सर्वनाम्नो विहितस्य ङेस्मै इत्याद्यर्थस्य वर्णाश्रमेतराणामित्यादौ तदभावायावश्यमभ्युपगन्तव्यतया परमसर्वस्मादित्यादौ स्मात्स्मिनाद्यभावापत्त्या 'प्रयोजनं सर्वनामाव्ययादीना'मिति वार्त्तिकोक्ततदन्तविधेरावश्यकत्वादितीत्याहुः । स्पष्टञ्चेदं ज्योत्स्नायां विषम्याञ्चोक्तमिति ततोऽधिकमनुसन्धेयम् ॥

विहितविशेषणं,तस्य तु नाङ्गं विशेष्यम्, आवृत्तौ मानाभावात्। तेन'वर्णाश्रमेतराः' 'मासपूर्वा' इत्यत्र न। अत एव 'विभाषा जसी'ति चरितार्थम्। 'अङ्गसञ्ज्ञानिमित्तस्यादन्तात् सर्वनाम्नो विहितस्ये'त्यर्थस्तु न, 'ने' 'तेषा'मित्याद्यसिद्धेः। अत्वविधौ विषयसप्तमी तु न, तस्मिन्निति परिभाषाबाधे मानाभावात्। **प्रागित्सञ्ज्ञाया इति।** प्रत्ययादित्वज्ञानाभावात्तज्ज्ञानाभाव इति भावः।

❀ अभिनव-चन्द्रिका ❀

**विहितविशेषणमिति।** वस्तुतस्तु 'जशः शी' इत्यस्य सर्वनामाभिन्नं यददन्तमङ्गं तदादि वा ततः परीभूतस्य जसः शी भवतीत्यर्थकरणेन 'वर्णाश्रमेतरा' इत्यादौ दोषाभावेन विहितविशेषणं व्यर्थं, 'तस्मादि'ति परिभाषायां जागरूकायां विहितपदाध्याहारस्य कर्तुमशक्यत्वात्। ननु 'मासपूर्वा' इत्यादौ जसःशी भवत्येवेत्यत आह—**अत एवेति।**

**मानाभावादिति।** तस्मिन्निति परिभाषाशास्त्रीयोद्देश्यतावच्छेदकसम्पत्तये 'असति प्रमाणान्तरे यावत्यः सप्तम्यस्ताः सर्वा औपश्लेषिकाधिकरणबोधिका मन्तव्याः' इत्येतन्मूलकव्याख्यानपरिभाषाशेषभूत—'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'तिपरिभाषाबाधे मानाभावादिति भावः।

**चरितार्थमिति।** 'द्वन्द्वे चे'ति निषेधे प्राप्ते शीभावे कर्तव्ये विकल्पेन निषेधार्थं तत्। यदि 'द्वन्द्वे चे'ति निषेधेन शीभावो न प्रतिषिध्यते तर्हि 'विभाषा जसी'ति शीभावे कर्तव्ये

❀ चिदस्थिमाला ❀

दित्यपि कुतो नात आह—**तस्य त्विति।** तस्य फलमाह—**तेनेति।** इदं सूत्रकृत्सम्मतमेवेत्याह—**अत एवेति।** तथार्थाङ्गीकारादेवेत्यर्थः। अन्यथासञ्ज्ञायास्तत्राभावपक्षेऽप्यवयवसञ्ज्ञया ततः परत्वाच्छीप्राप्त्या तदसङ्गतिः स्पष्टैवेति भावः। आवृत्त्यभावतो लघुभूतं मूलानुक्तमाह—**अङ्गेति।** अङ्गसञ्ज्ञानिमित्तस्यातः परस्य सर्वनाम्नो विहितस्येति सिद्धान्तार्थे तु न दोषलेशः। अत एव मूले 'सर्वनाम्नः स्मै' 'ङसिङ्यो'रित्यनयोर्वृत्त्योरतः सर्वनाम्न इत्येतावन्मात्रमुक्तम्। **तदिति।** शित्वेत्यर्थः।

❀ ज्योत्स्ना ❀

**चरितार्थमिति।** विहितविशेषणाभावे हि द्वन्द्वस्य पाक्षिके सर्वनामत्वनिषेधे सत्यप्यवयवसर्वनामत्वे पदाङ्गाधिकारपरिभाषया तदन्तविधौ तत्प्रयुक्ते जसः शीभावे चारितार्थ्यमिति भावः।

❀ सदाशिवभट्टीयम् ❀

तदसिद्धिरिति भावः। एवम्—'अभवकव्या'मित्यादौ नञ्समासे पूर्वपदप्रकृतिस्वरेऽकच्यन्तोदात्तत्वं सिध्यति, अन्यथावयवादुत्परत्या स्वरद्वयं श्रूयेतेति बोध्यम्। **चरितार्थमिति।** 'द्वन्द्वे चे'ति निषेधस्तु विशिष्टस्य 'स्वाङ्गशिटा'मिति प्रकृतिस्वराकज्निषेधकत्वेन कृतार्थः स्यादिति भावः। इदमुपलक्षणं—'ररमसर्वे'इति तदन्तसञ्ज्ञोदाहरणपरभाष्यस्य। वस्तुतस्त्वङ्गसञ्ज्ञकाददन्तसर्वनाम्नः परस्येति सर्वत्रार्थ इति न क्वापि विहितविशेषणम्, अत एव सर्वनाम्नः परस्याम इति'तस्मिन्नि'तिसूत्रे भाष्ये उक्तमित्याहुः।

❀ विषमपदविवृतिः ❀

विधिप्रयोजनन्तु समीचीनम्। अवयवस्य सर्वनामत्वे ततो जसो विहितत्वाभावेन शीभावानापत्तेः। **इति चरितार्थमिति।** विहितविशेषणाभावे समुदायस्य विकल्पेप्यवयवस्य नित्यसर्वनामसञ्ज्ञामादाय नित्यं शीभावापत्तेः। यद्यप्येवं सति 'द्वन्द्वे चे'ति निषेधवैयर्थ्यमपि सुवचम्, तथाप्या'मि सर्वनाम्न' इत्यादौ विशेषणं स्वीकृत्य 'जसः शी'त्यत्र तदाश्रयणे विवदमानं प्रत्येवमुक्तम्। किञ्च समुदायगतकुत्साविवक्षायां कप्प्रत्ययार्थं स निषेधः सार्थकः, तत्फलं 'वर्णाश्रमेतराणा'मित्यादौ सुडभाव इति मन्तव्यम्। अत्र यद्वक्तव्यं तदग्रे वक्ष्यते।

परे तु अनुबन्धत्वयोग्यतयाऽत्रापि तन्निषेधप्रवृत्त्या शित्त्वादेव सर्वादेशः। इत्सञ्ज्ञा-योग्यशाकारवत्त्वमेव तत्सूत्रे शित्त्वम्। अत एव काणोर्विषये 'नानुबन्धकृतमसारूप्य'-मिति विकल्पाभावः। अन्यथा कादीनां—कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने—इत्स-ञ्ज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकालेऽनुबन्धज्ञानाभावेन विकल्पो दुर्वारः, पश्चादनुबन्धत्वज्ञानेऽपि जातनिवृत्त्ययोगात्। यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्ति-स्तर्ह्यत्रापि पश्चात्तत्त्वज्ञाने सर्वादेशत्वस्यापि निवृत्त्यापत्तिः। ध्वनितञ्चेदं 'लुटः प्रथमस्य'

---

❀ अभिनव-चन्द्रिका ❀

विकल्पेन सर्वनामसञ्ज्ञानिषेधो व्यर्थः स्यात्, अवयवसर्वनामत्वस्यैवमपि सुस्थतया जसःशीभावस्य दुर्वारत्वेन विकल्पानुपयोगादिति भावः।

❀ चिदस्थिमाला ❀

सिद्धान्तमाह—**परे त्विति**। **तदिति**। 'नानुबन्धकृत'मितीत्यर्थः। ननूक्तरीत्या न शित्त्वमत आह—**इत्सञ्ज्ञेति**। हि=यतः। साजात्यादाह—**अत एवेति**। योग्यतानिवेशादेवेत्यर्थः। अन्यथा=तदभावे। **इतीति**। 'प्रवृत्त्ये'ति शेषः। विकल्पः='वासरूप'इति। अन्यथा=तदभावे। **कादेरिति**। **इत्सञ्ज्ञादावन्वयः**। **अनुबन्धेति**। तत्त्वेत्यर्थः। 'तदप्रवृत्त्ये'ति शेषः। ननु तदनन्तरं तत्सत्त्वेन तदापत्तिरेवात आह—**पश्चादिति**। विपक्षे बाधकमप्याह—**यदीति**। **ध्वनितमिति**। तत्र ह्याद्ये—डाविकारस्य शित्त्वं कार्यं, सर्वादेशार्थ-

❀ ज्योत्स्ना ❀

ध्वनितञ्चेदमिति। तत्र—'लुटः प्रथमस्ये'ति सूत्रे डाविकारे शित्करणं सवादशार्थं वक्तव्य-

❀ सदाशिवभट्टीयम् ❀

**परे त्विति**। **अत एव काणेति**। यद्यपि—'नानुबन्धकृतमनेकाल्त्व'मित्यत्रानुबन्धत्वयोग्यतानिवेशफलन्न, तथापि वक्ष्यमाणभाष्येणेत्सञ्ज्ञायोग्यत्वमेवानुबन्धत्वमिह शास्त्रे इति बोध्यते, न तु लक्षणात्तत्फलमुक्तमिति न दोषः। **अनुबन्धेति**। तत्त्वज्ञानेत्यर्थः। एवमग्रेपि बोध्यम्। **विकल्प इति**। ननु दधतीत्यत्रान्तादेश इवात्रापि प्राग् विकल्पो न स्यादिति चेन्न, अण्णादिविषये सूत्रीयासारूप्यमादाय प्राप्तविकल्पनिवृत्त्या सार्थक्ये-नापवादोपीति न्यायविषयतया दधतीत्यतोऽत्र वैषम्यात्। अत्रत्यन्तत्त्वं परिभाषेन्दुशेखरविवृतिसङ्ग्रहे स्पष्टम्। **ध्वनितमिति**। तत्र हि डाकारस्य शित्त्वं कार्यमित्याशङ्क्य—अनित्त्वात्प्रश्लिष्टत्वाद्वा इत्युक्तम्। अन्त्ये शित

❀ विषमपदविवृतिः ❀

**बोधरूपतत्प्रवृत्तिकाल इति**। वस्तुतो बोधमात्रं न प्रवृत्तिः, किन्तु पदैकवाक्यतयाऽन्वयार्हस्य सर्वस्योपस्थितौ वाक्यार्थबोधे वृत्ते पश्चाद्वाक्यैकवाक्यतयाऽन्वयार्हपरिभाषोपस्थितौ तदेकवाक्यतया महावाक्यार्थबोधः, तन्मूलक अस्मादयमिति श्रृङ्गग्राहकतयोपप्लूयमानवाक्यार्थबोधो वा लक्ष्ये प्रवृत्तिः, अस्याञ्च दशायां कादेरनुबन्धत्वं ज्ञातुं सुशकमेव।

---

❀ वरवर्णिनी ❀

**ध्वनितञ्चेदमिति**। तत्र 'लुटःप्रथमस्ये'ति सूत्रे भाष्ये—"**डाविकारस्य शित्करणं सर्वादेशार्थम्**। डाविकारः शित्कर्त्तव्यः, किम्प्रयोजनम्? सर्वादेशार्थम्,—'शित्सर्वस्ये'ति सर्वादेशो यथा स्यात्, अक्रियमाणे हि शकारे 'अलोन्त्यस्य विधयो भवन्ती'त्यन्त्यस्य प्रसज्येत—"इत्युक्तम्। अत्र **कैयटः**—"**डाविकारः इति**। डादेश इत्यर्थः। 'नानुबन्धकृतमनेकाल्त्व'मित्यन्त्यस्य स्यादिति डाश्वक्तव्य"इत्याह। तदग्रे भाष्ये—

–'अनेकाल्शि'दित्यादिसूत्रेषु भाष्ये इति प्राहुः ।

❀ अभिनव-चन्द्रिका ❀

**प्राहुरिति** । न च डादिविषये सर्वादेशत्वं विनाऽनुबन्धत्वस्याभावादानुपूर्व्यासिद्धमिति परिभाषेन्दुशेखरग्रन्थविरोध इति वाच्यं, डादिविषये सर्वादेशत्वाभावेन प्रत्ययादित्वाभावादित्सञ्ज्ञाया अप्रवृत्त्या स्वोपजीव्यानुबन्धत्वविघातादुपजीव्यविरोधान्नानुबन्धकृतमिति परिभाषया शीः सर्वादेशो न भवतीति परिभाषेन्दुशेखरग्रन्थविरोधाभावात् ।

❀ चिदस्थिमाला ❀

नित्याशङ्क्य प्रश्लेषेण समाहितम् । द्वितीये—'शिन उदाहरणमिदम् इ'शिति प्रागुक्तरीत्या सङ्खण्ड्य 'जसः शी'ति प्रतिपाद्य—उक्तरीत्यानेकाल्त्वात्संसाध्य 'नानुबन्धकृत'मिति ज्ञापनार्थं शिद्ग्रहणमित्युक्तम् ।

❀ ज्योत्स्ना ❀

मित्युक्तम् । 'अनेकाल्शि'दिति सूत्रे च शित्सर्वस्येत्यस्य 'जश्शसोः शि'रित्युक्त्वाऽऽनुपूर्व्यादनेकाल्त्वात्सिद्धमित्याशङ्क्य नानुबन्धेति ज्ञापनेन सार्थक्यमुक्तम् ।

❀ सदाशिवभट्टीयम् ❀

उदाहारणे शित्याद्युक्त्वाऽनुपूर्व्यादनेकाल्त्वात्सिद्धमित्याशङ्क्य 'नानुबन्धे'ति ज्ञापनेन सार्थक्यमुक्तम् ।

वस्तुतस्तु न्यायसिद्धत्वेनाऽनित्यत्वादित्येव सिद्धान्त्युक्तिः । न्यायसिद्धैतद्भाष्यविरोधेन, प्रश्लेषप्रयुक्तगौरवेण

❀ विषमपदविवृतिः ❀

**प्राहुरिति** । अन्ये तु 'नानुबन्धकृतमनेकाल्त्व'मित्यत्रानुबन्धपदस्य तत्त्वयोग्यपरत्वे-

❀ वरवर्णिनी ❀

**सिद्धमलोन्त्यविकारात्** । सिद्धमेतत्–कथम् ? अलोन्त्यविकारात् । अस्त्वयमलोन्त्यस्य । का रूपसिद्धिः ? कर्त्ता । **डिति टेर्लोपाल्लोपः** । डिति टेर्लोपेन लोपो भविष्यति । अभत्वान्न प्राप्नोति, डित्करणसामर्थ्याद्भविष्यति–''इत्युक्तम् । तत्र **डितीत्यस्य**–आकारे डिति परतः टिसञ्ज्ञकस्य लोपो डित्करणसामर्थ्याद्भविष्यतीति तदर्थः । एतद्भाष्येऽन्त्यादेशत्वमभ्युपेत्य टिलोपेन समाहितम् । पूर्वपक्षिणा च डादेशस्य शित्त्वकर्त्तव्यनित्युक्तम् । एतेन ध्वनितम्—'यद्यनुबन्धपदस्यानुबन्धत्वयोग्ये लक्षणा न स्यात्तदा आदेशप्रवृत्तिकालेप्युक्तरीत्यानुबन्धत्वाभावेन नानुबन्धेत्यस्याप्राप्त्याऽनेकाल्त्वेनैव सर्वादेशत्वे सिद्धे पूर्वपक्षसमाधानयोर्निर्दलत्वापत्ति'रिति । ततोऽग्रे भाष्ये–**अनित्त्वाद्वा**,—अथ वाऽनित्त्वादेतत्सिद्धम् । अनित्त्वञ्चालोन्त्यस्यायम्भवन्न प्रत्ययः स्यादित्यादिनोपपादितम् । यद्वा–**आनुपूर्व्या** । इदम्भाष्यमनुबन्धपदस्य लक्षणाया अभावे नानुबन्धेतिवचनस्यात्राप्रवृत्तिस्वीकारेप्यानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वम्भविष्यतीत्यभिप्रायेण । ततः **प्रश्लिष्टनिर्देशाद्वा** । अथ वा प्रश्लिष्टनिर्देशोयं—'डा आ–डा' इत्युक्तम्भाष्ये । एतेनाकारस्य प्रश्लेषाभावे डकारस्यानुबन्धत्वयोग्यत्वान्नानुबन्धेत्यस्य प्रवृत्त्या सर्वादेशत्वन्दुर्लभं स्यादित्युक्तप्रायमिति **भैरवमिश्राः** ।

१ **पर्वतीयास्तु**—'ङिच्चे'त्यस्यानन्यार्थङित्त्वेष्वेव प्रवृत्तिर्यथा–'अन्यार्थङित्त्वेष्वनङादिषु चरितार्थः'–इत्यनेन दीक्षितैरुक्ता, तथाऽनेकाल्शिदित्यस्यापि अनन्यार्थशित्त्वेष्वेव प्रवृत्तिरुचितेति–'जसः शी'त्यादावनेकाल्त्वादेव सर्वादेशो, न शित्त्वात्, 'विभाषा ङिश्यो'रित्यादौ विशेषणार्थतया शित्त्वस्य चरितार्थत्वादित्याहुः, तन्न युक्तम्,–"अनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया-सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते–" इति कौमुदीग्रन्थानुसारेण 'ङिच्चे'त्यस्य-तातङि प्रवृत्तेरेव लाभात्, परेण बाध इति त्वन्यदेतत् । किञ्चैवं 'श्चुत्वं धुटि सिद्ध'मित्यादौ विशेषणार्थत्वेन धुटष्टित्त्वस्य चरितार्थतया धुटि 'आद्यन्तौ टकितौ'त्यस्याप्रवृत्त्यापत्तिः, 'समःसुटी'त्यादौ विशेषणार्थत्वेन सुटष्टित्त्वस्य चरितार्थतया च सस्कर्त्तेत्यादौ सुट आद्यवयवत्वानुपपत्तिरित्यपि बोध्यम् । यदपि—'नानुबन्धकृतमनेकाल्त्व'मित्यत्र अनुबन्धपदस्यानुबन्धत्वयोग्यपरत्वे न मानमिति, तदपि चिन्त्यमेव, 'लुटः प्रथमस्य' 'अनेकाल्शित्सर्वस्ये'त्यादिसूत्रस्थभाष्यस्यैव प्रमाणत्वात्, तद्भाष्यस्यैकदेश्युक्तित्वे च बलवत्तरप्रमाणाभावात्, काणोर्विषये वासरूपन्यायेन विकल्पापत्तेश्चेति सुधियो विभावयन्तु—इति **गौडाः** ।

**अतः सर्वनाम्न इति।** अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्यर्थः। तेन 'मासपूर्वाये'त्यत्र स्मै न।

**ङसिङ्योः।** स्मात्स्मिनो'र्हलन्त्य'मिति न, 'न विभक्ता'विति निषेधात्। यद्यपि–इत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं, तथापि 'विभक्ता'वित्यस्य–विभक्तित्वयोग्य-इत्यर्थान्न दोषः। अत एव सूत्रे 'तु'ग्रहणं चरितार्थम्।

❀ अभिनव चन्द्रिका ❀

**सर्वनाम्नो विहितस्येति।** अत्रापि पूर्ववदेव–सर्वनामाभिन्नं यददन्तमङ्गमदन्ततदादि वा तस्मात्परस्य ङेइत्यस्य स्मै भवतीत्यर्थ इति 'वर्णाश्रमेतराये'त्यादौ न दोष इति बोध्यम्।

एवं 'ङसिङ्योः स्मात्स्मिना'वित्यस्यापि–सर्वनामाभिन्नं यददन्तमङ्गमदन्ततदादि वा ततः परयोः ङसिङ्योः स्मात्स्मिनौ भवत इति 'मासपूर्वात्' 'मासपूर्वे'इत्यादौ न दोषः। एवमेव 'आमि सर्वनाम्नः सु' डित्यत्रापि–सर्वनामाभिन्नं यददन्तमङ्गं, तस्मात्परस्यामः सुडित्यर्थ इति 'वर्णाश्रमेतराणा'मित्यादौ न दोष विहितविशेषणाश्रयणं मुधैवेति सुधियो विभावयन्तु।

❀ चिदस्थिमाला ❀

मूलकृदनुरोधेनाह–**अदन्तादिति**। सिद्धान्तस्तूक्त एव। एवमग्रेऽपि। **ज्ञानमिति**। उक्तरीत्येति भावः। **अत एवेति**। अन्यथा सुप्सु तदभावात्तिङ्क्ष्वादौ तत्सत्त्वेऽपीत्त्वाप्राप्तेरन्त्ये तदभावाच्च प्राग्दिर्शीये-ऽनित्यत्वेन तदप्रवृत्तेरिष्टत्वाच्च तदानर्थक्यं स्पष्टमेवेति भावः।

❀ सदाशिवभट्टीयम् ❀

च तत्र तादृशतद्ग्रहणे फलाभावाच्च तद्भाष्यद्वयमेकदेश्युक्तिः। अत एव 'परस्मैपदाना'मिति सूत्रभाष्येऽनित्त्वा-देव णलः सर्वादेशत्वं साधितं, न तु प्रश्लेषादपि। परिभाषाज्ञापनन्तु 'पुम्रैद्युभ्य' इति निर्देशेनापि सिद्धं, शिद्ग्रहणञ्च न कार्यमिति तदाशयमाहुः। **विभक्तित्वयोग्य इति**। यद्यपि दधतीत्यादिवदिदमपि लक्षणां विनैव सिध्यति, तथापि 'स्थानेन्तरतम' इति सूत्रोक्त-'भुक्तवन्त'मिति न्यायविरोधादनर्थकत्वमुक्तं, तद्रीत्येदमिति

❀ विषमपदविवृतिः ❀

'ऽनेकाल्शि'दित्यत्र शित्पदस्य शित्त्वयोग्यपरत्वे न फलं–प्रत्युत गौरवम्। किञ्चेत्सञ्ज्ञा-योग्यशकारवत्त्वज्ञाने सर्वादेशत्वज्ञानं, सर्वादेशत्वज्ञाने च प्रत्ययादित्वज्ञानं, ततश्च शकारस्ये-सञ्ज्ञायोग्यत्वज्ञानमिति चक्रकापत्तिः, काणोस्तूक्तरीत्या प्रवृत्तिकालेऽनुबन्धत्वज्ञानं सुलभमित्याहुः।

केचित्तु 'नानुबन्धकृतमसारूप्य'मित्यस्य वासरूपपरिभाषापवादतया 'उपसञ्जातनिमित्तोऽप्युत्सर्ग उपजनिष्यमाणनिमित्तेनापवादेन बाध्यते' इति–'न धातुलोप' इतिसूत्रस्थकौस्तुभोक्तन्यायेन तेन तस्य बाधः, प्रकृते तु प्रथमत एवानेकाल्त्वात्सर्वादेशस्यापवादस्य निमित्तमस्तीत्युक्तन्यायस्या-प्रवृत्तेर्विशेष इत्याहुः। 'अनेकाल्शित्सर्वस्ये'ति सूत्रस्थं—'शित्सर्वस्ये'ति किमुदाहरणम्? 'इदम-इश्', शित्करणादेव सर्वादेशो भविष्यति, इदं तर्हि 'जश्शसोः शिः' 'जसः शी'ति भाष्यं, 'लुटःप्रथमस्ये'ति सूत्रस्थं–'डाविकारस्य शित्करणं सर्वादेशार्थं, डाविकारः शित्कर्तव्यः, किं प्रयो-जनं? सर्वादेशार्थ'मिति भाष्यञ्च–शिदनुबन्धपदे शित्त्वानुबन्धत्वयोग्यपरे इत्युपेत्य 'कृत्वा चिन्ता'-न्यायेन प्रवृत्तमिति–अन्त्यस्यायं स्थाने भवन्न प्रत्ययस्यासत्यां प्रत्ययसञ्ज्ञायामित्सञ्ज्ञा न स्यादसत्या-मित्सञ्ज्ञायां लोपो न स्यादसति लोपेऽनेकाल्,यदाऽनेकाल् तदा सर्वादेशो,यदा सर्वादेशस्तदेत्सञ्ज्ञा, यदेत्सञ्ज्ञा तदा लोप इति तदुत्तरभाष्येण तथात्वं सूचितमिति न तद्विरोधः।

**विभक्तित्वयोग्य इति।** ननू'पसञ्जनिष्यमाणनिमित्त'न्यायेन सिद्धे विभक्तित्वयोग्ये लक्षणाश्रयणं व्यर्थमिति चेन्न, 'न बहुव्रीहा'वितिसूत्रस्थभाष्यप्रामाण्येन निषेधविषये सञ्ज्ञाविषये वा–'उपसञ्जनिष्य-माण'न्यायाप्रवृत्तेः। तत्र हि 'त्वकत्पितृक' इत्यादावलौकिके प्रक्रियावाक्ये प्राप्ताकज्वारणाय बहुव्रीहिपदं

**आमि स** । 'आज्जसेरसु'गित्यत 'आ'दिति वर्त्तते ।
**पञ्चत्रिंशदिति** । तेन सर्वार्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः।
**सर्वविश्वौ**—बुद्धिस्थानेकसङ्ख्याकावयवारब्धसमुदाये शक्तौ । तस्य समुदायस्या-

❀ अभिनव-चन्द्रिका ❀

**आमि सर्वनाम्नः सुट्** । आमीति सप्तम्याः 'त्रेस्त्रय' इत्यादौ चारितार्थ्येन, आदिति पञ्चम्या-'आज्जसेरसु' गित्यादौ चारितार्थ्येन परत्वात्पञ्चमीनिर्देशस्य प्रबलत्वेन 'तस्मा दितिपरिभाषा पक्षांशसहितोपतिष्ठते, 'तस्मि'न्निति परिभाषा च पक्षांशविकला । तथा चाऽऽसमव्यवहितपूर्वत्व-विशिष्टं यत्सर्वनामाभिन्नमदन्तमङ्गं तदादि वा तदव्यवहितोत्तरत्वविशिष्टस्य सुडिति सूत्रार्थः ।

**अनेकसङ्ख्यावयवारब्धेति** । अनेकसङ्ख्याकावयवारब्धत्वं विना समुदायत्वस्यैवासम्पत्त्या समुदाये इदं विशेषणं व्यर्थमेवेति बोध्यम् ।

❀ चिदस्थिमाला ❀

तेन=परिगणनेन । अन्वर्थसञ्ज्ञालभ्यमाह—**सर्वार्थेति** । नन्वेवं बहुवचनमेव स्यान्नैकवचनादीत्यत आह—**सर्वविश्वाविति** । **अनेकेति** । बह्वित्यर्थः ।

❀ **वरवर्णिनी** ❀

नन्वेवं 'सर्वोऽप्यात्मा नित्य' इतिप्रयोगानुपपत्तिः, अद्वैतसिद्धान्तेऽन्तःकरणाद्युपाधिभेदादात्मनाम्भेदेऽपि बुद्धिस्थानेकसङ्ख्याकावयवारब्धसमुदायरूपत्वानुपपादनात् । एवमात्मनां सर्वेषामेकत्वमित्यादिप्रयोगानुपपत्तिः । न चात्राशेषत्वावच्छिन्नः सर्वशब्दार्थः, अशेषत्वञ्च—विधेयशून्यावृत्त्युद्देश्यतानवच्छेदकवत्त्वम् । प्रकृते विधेयस्य=नित्यस्य यत्तादात्म्यसम्बन्धावच्छिन्नाभावस्तद्वाननित्यः प्रतीयत इति नानुपपत्तिरिति वाच्यं, 'सर्वे घटाः प्रमेयत्ववन्त' इत्यत्रागत्यापत्तेः, विधेयस्य विधेयतावच्छेदकस्वरूपसम्बन्धावच्छिन्नाभावाप्रसिद्धेः । किञ्च 'सर्वे घटा रूपवन्त' इत्यादौ शब्दाद्घटत्वावच्छिन्ने तादात्म्यसम्बन्धेन रूपाभाववदवृत्तिघटत्वावच्छिन्नस्य विधेयांशेऽधिकावगाहित्वेन शाब्दबोधसम्भवेऽपि–वाक्यद्वयं घटत्वविषयत्वावगाह्यनुभवस्य सार्वजनीनस्याभावादनुपपत्तिः । न चोद्देश्यतावच्छेदकव्यापकविधेयवत्त्वमेव सर्वशब्दार्थ इति वाच्यं, तदवच्छिन्ने तस्य विधेयतया भानानुपगमात् । न च सर्वशब्दार्थो व्यापकत्वमेव, तस्य विधेयेऽन्वयान्नानुपपत्तिरिति वाच्यं, नामार्थयोर्भेदसम्बन्धेनान्वयानुपगमात् । नाप्यभेदेन विधेयत्वव्यापकः सर्वपदार्थः, एवं सति विधेयबोधकपदसामानाधिकरण्येन सर्वशब्दस्य तल्लिङ्गत्वापत्त्या 'सर्वे वेदाः प्रमाण'-मित्यत्रान्वयि'प्रमाण'शब्दवत्सर्वशब्दे नपुंसकत्वापत्तिः, एवमेकवचनापत्तिश्चेति चेन्न, उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तम् । स च धर्मः 'सर्वे घटा रूपवन्त' इत्यादौ घटनिष्ठयावत्त्वम्। तदवच्छिन्नस्य चोद्देश्येऽभेदेनान्वयोपगमान्न पूर्वोक्तानुपपत्तिः। यावत्त्वमत्र पर्याप्त्युद्देश्यता-

१. विधेय-रूपवत्त्वादि-व्याप्या या उद्देश्यतावच्छेदक-घटत्वादि-व्यापिका पर्याप्तिः, तादृशपर्याप्तिकं यद्यावत्त्वादिकं तदेव सर्वशब्दप्रवृत्तिनिमित्तं, तादृशयावत्त्वावच्छिन्ने च सर्वशब्दस्य शक्तिरित्यर्थः, यथा—'सर्वे घटा रूपवन्त' इत्यत्र-घटवृत्तियावत्त्वं हि रूपवत्त्वव्याप्यं,—पटेऽपि रूपवत्त्वस्य सत्त्वात् , एवं यावत्त्वस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वमप्यक्षतमिति लक्षणसमन्वयः । एवञ्च वायौ रूपाभावेन द्रव्यत्वादिव्यापकपर्याप्ते रूपाद्यव्याप्यतया 'सर्वाणि द्रव्याणि रूपवन्ति' इति न प्रयोगः ।

एवं 'सर्वं गगन'मित्यादिप्रयोगाभावाद्यावत्त्वदनेकत्वमपि सर्वपदार्थः, तच्च—स्वार्थाभेदान्वयोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव । भेदश्च—'सामानाधिकरण्य'—'निरूपकत्वो'भयसम्बन्धेन प्रतियोगिनाविशिष्टान्यो ग्राह्यः, तेन द्वित्वाद्यवच्छिन्नभेदमादाय नातिप्रसङ्गः । 'चैत्रो दधि भुङ्क्ते,' 'मैत्रः पयो भुङ्क्ते' 'देवदत्तो घृतं भुङ्क्ते' 'विष्णुमित्रः सर्वमेवे'त्यादौ सर्वपदेन प्रत्येकं दधि–पयो–घृतानां भोजनकर्मतयाप्रतिपादनात्–यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयस्तद्रूपावच्छिन्नान्विततया• यावद्धर्मावच्छिन्ना उपक्रान्ताः–प्रत्येकं तावद्धर्मावच्छिन्नेषु सर्वपदस्य शक्त्यन्तरमप्यङ्गीकार्यम् । विस्तरस्तु–अस्मत्पितामह-श्रीस्नेहिरामशास्त्रिचरणाभ्यूहितायां शब्देन्दुशेखरत्रिपुरसुन्दर्यां, शक्तिवादे चानुसन्धेयः ।

नुद्भूतावयवभेदत्वे एकवचनं, यथा—'सर्वो लोक' इति । तादृक्समुदायद्वयादिविवक्षायां द्विवचनादि—'सर्वौ व्यूहौ' 'सर्वे व्यूहा' इति । यदाऽप्युद्भूतावयवभेदसमुदायविवक्षा तदाऽपि बहुवचनं—'सर्वे घटा' इति ।

**पूर्वपरावर ।** व्यवस्थाऽसञ्ज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः । एवमुत्तरसूत्रद्वयेऽपि । **नित्यं द्विवचनान्त इति ।** द्विवचनान्त एवेत्यर्थः ।

**अकजर्थं इति ।** ननु काकचोः को विशेषः? प्रत्ययस्वर-चित्स्वराभ्यामन्तोदात्तत्वस्यव सत्त्वात् । न च सुबन्तात्तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदात्तत्वम्—'उभकाभ्या'-

---

### ❀ अभिनव-चन्द्रिका ❀

अनुद्भूतावयवभेदत्वमिति । समुदायत्वगताः समुदायगता वा यत्रैकत्वसङ्ख्या विवक्ष्यते तत्रानुद्भूतावयवत्वमवबोध्यम् । **उद्भूतावयवभेदसमुदायविवक्षेति ।** अवयवगतसङ्ख्याविवक्षेत्यर्थः ।

परममूले—**द्वित्वविशिष्टस्य वाचक इति ।** 'स्वानधिकरणवृत्तित्व' 'स्वसजातीयमात्रवृत्तित्वो'-

### ❀ चिदस्थिमाला ❀

एकशेषेणाह—**तादृगिति ।** अनुद्भूतावयवभेदेत्यर्थः । तं विनापि बहुवचनमाह—**यदापीति ।** सञ्ज्ञायाः सामान्यसूत्रेणैव सिद्धेर्गणसूत्रार्थमाह—**व्यवस्थेति ।** नित्यशब्दोऽवधारणार्थ इत्याह—**एवेत्यर्थ इति ।** अनेन सजातीयवचनान्तरस्यैव व्यवच्छेदाट्टाबादिकं भवत्येव—उभेति, अर्थपरत्वे एवायं नियम इति—शब्दपरत्वे 'उभा'दित्यादि भवत्येव । रूपेऽविशेषस्य स्पष्टत्वादाह—**प्रत्ययेति ।**

### ❀ सदाशिवभट्टीयम् ❀

नोक्तदोषः । नित्यशब्दोऽवधारणार्थ इत्याह—**एवेति ।** अनेन सजातीयवचनस्य व्यवच्छेदाट्टाबादिकं भवत्येव । अर्थपरत्व एवायं नियम इति शब्दपरत्वे उभादित्यादि भवत्येव । **नच सुबन्तेति ।** अयं भावः—'त्वयका' 'मयके'त्यादिसिद्धये 'विभाषा सुप' इति सूत्रादकज्विधौ 'सुप' इति सम्बध्यते, तथा चायमर्थः—युष्मदस्मत्प्रकृतिकौकारसकारभकारादिसुबन्तस्य टेः प्रागकजित्येकः, अन्यत्र तु युष्मदस्मदोः सुबन्तावयवसर्वनाम्नष्टेः प्रागकजित्यपरः, एवञ्च सुबन्तस्य प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वात्प्रकृतित्वं स्पष्टमेवेति । एतेन "—सुबन्तादकचि—'उभाभ्यका'मिति रूपेण विशेषस्य सत्त्वेन स्वरपर्यन्तानुधावनं व्यर्थम्, ओकारेत्यादि

### ❀ विषमपदविवृतिः ❀

लक्षणया बहुव्रीह्यर्थालौकिकप्रक्रियावाक्यपरमित्युक्तम् । उक्तन्यायेनैव पूर्वं सर्वनामसञ्ज्ञायास्तन्निमित्ताकचश्चाप्रवृत्तिसिद्धौ लक्षणाश्रयणवैयर्थ्यं स्पष्टमेव, अप्रातिपदिकस्यैव प्रकृतित्वादिति । अकज्विधौ सर्वनामपदं

---

### ❀ वरवर्णिनी ❀

वच्छेदकसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम् । न च विधेयव्याप्यत्वं हि विधेयतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकविधेयाभाववदवृत्तित्वम्, एवञ्च 'सर्वे घटाः प्रमेयत्ववन्त' इत्यादौ स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयत्वाभावाप्रसिद्ध्याऽनुपपत्तिरिति वाच्यं, व्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकविधेयतावच्छेदकावच्छिन्नाभाववत्त्वस्यैव व्याप्यत्वरूपत्वात् । व्यधिकरणसम्बन्धावच्छिन्नाभावश्च सर्वमतप्रसिद्ध एव ।

अयं सर्वशब्दार्थश्च—यत्र सर्वशब्दस्योद्देश्यबोधकपदसामानाधिकरण्यन्तत्र, यत्र तु विधेयबोधकपदसामानाधिकरण्यन्तत्र तु विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकावच्छिन्नसम्बन्धव्याप्यपर्याप्तिकयावत्त्वम्प्रवृत्तिनिमित्तम् । यथा 'पृथिवी सर्वगन्धवती' त्यादौ ।

मित्यादौ सुबन्तस्य, के तु प्रकृतेरिति विशेष इति वाच्यं, तद्धितविधौ 'प्रातिपदिका'दित्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात्। स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यदेतत्। युष्मदस्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं, तस्यैव टेः प्रागकजिति बोध्यम्। न चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकाववयवौ यस्येत्यर्थे उभकशब्दादयच्युभकय इति रूपं, के तु नेति विशेषः; 'कश्चेदानीं काकचोर्विशेष' इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्कते—**न चेति**।

**द्विवचनपरत्वाभावेनेति**। अकचि तन्मध्यपतितन्यायेनोभशब्दस्य द्विवचन-

❀ अभिनव-चन्द्रिका ❀

भेदसम्बन्धेन स्वविशिष्टं यद्द्वित्वं तदधिकरणवृत्तिर्या भेदप्रतियोगितावच्छेदकता, तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्द्वित्वम्—उभशब्दप्रवृत्तिनिमित्तं बोध्यम्। साजात्यञ्च एकवचनार्थैकत्वपरिष्कारघटकसाजात्यवत्—'स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्व'रूपेण ग्राह्यम्। इदमेव द्वित्वं द्विवचनार्थोऽपि। यथा 'उभौ घटपटा'वित्यादौ—स्वं द्वित्वं, 'स्वानधिकरणवृत्तित्व', 'स्वसजातीयमात्रवृत्तित्वे'तदुभयसम्बन्धेन स्वविशिष्टद्वित्वस्याप्रसिद्धावपि तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वरूपसम्बन्धस्यैतद्द्वित्वेऽभावात्स्वाभाववत्त्वं स्वस्मिन् सुलभमिति लक्षणसमन्वयः।

❀ चिदस्थिमाला ❀

**न्यायात्**='स्वार्थे परिपूर्ण'मित्येव रूपाद् 'कुत्सिते' इति सूत्रभाष्योक्तात्। नन्वेवं क्वचिद्दोषोऽत आह—**युष्मदिति**। वचनात्='ओकारसकारे'तिवार्त्तिकात्। तच्च युष्मदस्मच्छब्दमात्रविषयम्, भाष्ये तथैवोदाहरणात्। **तस्यैवेति**। तत्र 'सुपः' 'प्रातिपदिका'दित्युभयसम्बन्धेन क्वचित्सुबन्तावयवप्रातिपदिकस्यैव, क्वचित्सुबन्तस्यैवेत्यर्थस्तत एव तदन्यसर्वनाम्नां प्रातिपदिकटेरेव प्रागित्यर्थः। रूपे एव विशेषमाह—**नचेति**।

❀ सदाशिवभट्टीयम् ❀

तु युष्मदसद्विषकम्–" इत्यपास्तम्। **के तु प्रकृतेरिति**। स्यामादिप्रकृतेरित्यर्थः। **'सुबन्तात्पर'** इत्यस्य-सुबन्तं सम्पाद्य यतः कुतश्चित्पर इत्यर्थः। यथाश्रुतन्तु न युक्तम्। न्यायासाध्यत्वात्, अकचि चाऽसम्भवात्।

**प्रातिपदिकस्यैवेति**। अकच्सूत्रीयशेखरस्तु स्वरूपकथनपरः, न तु द्वितीयवाक्ये तत्सम्बन्धपर इति न तद्विरोधः। अत एव 'काकचोः को विशेष' इति भाष्यं सङ्गच्छते। यत्त्वकज्विधावुद्द्योते उक्तम्–**उभयं प्रकृतमिति** प्रतीकमुपादाय–प्रातिपदिकाधिकारात्सुबन्तसामर्थ्यादिति–तच्चिन्त्यम्। **इति विशेष इति**। यत्तु प्रकृतसूत्रे उद्द्योते–एवमज्ञातोभयोर्घट इत्यर्थेऽकच्ययच्युभकयघट इति रूपं, केऽयच्युभयकघट इति, कस्य द्विवचनत्वे उभयकघट इति वा स्यादिति रूपे विशेष इत्युक्तं, तत्तु 'वृत्तौ कृतायामय'जिति प्राचीनवासनया,

❀ विषमपदविवृतिः ❀

तत्प्रकृतिकसुबन्तेन लाक्षणिकं, 'नेदमदसोरको'रककारकत्वाव्यभिचारात्। ननु समस्तार्थमेतत्स्यादिति चेत्सत्यम्, काकचोरविशेषप्रतिपादनपरभाष्यादेवोक्तार्थस्वीकारात्। अन्यत्र तु लाक्षणिकमेवेत्युक्तं 'ङ्याप्प्रातिपदिका'दिति सूत्रे। अकज्विधौ प्रातिपदिकाधिकारस्य नोपयोगः—तस्य पञ्चम्यन्तत्वात्। तत्र सर्वनामपदेन लिङ्गविशिष्टपरिभाषया ङ्यन्तस्यापि ग्रहणाद्भवतीशब्दे ङीपः प्राक् अकचि 'भवतकी'ति रूपम्। न च 'प्रत्ययः परः प्रयोक्तव्य एवे'तिनियमेन मध्येऽकजनुत्पत्तिः। 'त्यकें'त्यादाविव प्रकृतिप्रत्ययमध्येऽप्यकच्प्रवृत्तिसम्भवात्। शब्दादिविधानेनोक्तनियमस्यानित्यत्वकल्पनात्। **सुबन्तात्परेति**। सुबन्तत्वज्ञानाव्यवहितोत्तरकालप्रवृत्तिक इत्यर्थः।

परत्वं, के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः। 'उभादुदात्त' इतिसूत्रे भाष्यकृताऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणमयोग्यं सत्—योगविभागेनोभशब्दाद्वृत्तिविषयेऽत्यन्तस्वार्थिकायज्विधानार्थम्। अयञ्च तद्विषये सुबुत्पत्तेः पूर्वमेव, स्वार्थिकत्वेनान्तरङ्गत्वात्। अत एवायज्विशिष्टस्योभस्य सर्वनामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः। अत्र नित्यशब्दस्य वाच्यार्थविरोधान्महाविभाषाया असम्बन्धः।

ॐ अभिनव-चन्द्रिका ॐ

स्वसजातीयमात्रवृत्तित्वनिवेशात्—'उभौ घटाकाशा'वित्यादौ तत्तदाकाशघटोभयवृत्तिद्वित्वे तत्तद्घटाकाशोभयवृत्तिद्वित्ववैशिष्ट्यस्य सत्त्वेऽपि नोक्तलक्षणाव्याप्तिः। सङ्ख्यारूपं द्वित्वं नोभशब्दप्रवृत्तिनिमित्तं न वा द्विवचनार्थः, 'उभावाकाशा'वित्यादिप्रयोगाणां प्रमाण्यापत्तेः, धवद्वयखदिरद्वयतात्पर्येण 'धवखदिरौ छिन्धी'त्यादिप्रयोगापत्तेश्च। न च द्वित्वत्वेन रूपेण नानाद्वित्वावगाहिबोधोऽव्युत्पन्न इति वाच्यं, 'सारस्वतौ मेषौ भवतः' ब्राह्मणाभ्यां ब्राह्मणाभ्यां देही'त्यादौ द्वित्वत्वेन नानाद्वित्वावगाहिबोधदर्शनेनैतादृशद्वित्वावगाहिबोधो न भवतीति वक्तुमशक्यत्वात्। न चैवमप्युभावाकाशावित्यादिप्रयोगवारणायोद्देश्यतावच्छेदक-

ॐ चिदस्थिमाला ॐ

ननु पाठाभावे दृष्टान्ते तावत्त्रलादिकमेव कथमत आह—**उभादुदात्त इति**। नन्वस्वरितत्वाद्वेत्यस्यानुवृत्त्या नयविकल्पेन विकल्पासिद्ध्या च वाक्यसिद्धिर्न स्यादत आह—**महेति**। उक्तन्यायस्य तत्राप्रवृत्तेराह—**अयञ्चेति**। तद्विषये=वृत्तिविषये। **स्वार्थीति**। 'अत्यन्ते'त्यादिः। अत्र=द्वितीयवाक्ये।

ननु वृत्तिविषये तद्विधाने 'उभयोर्वास' इत्यादावतिप्रसङ्ग इति चेत्, न तत्र तन्निमित्तं, किन्त्वन्यदेव

ॐ सदाशिवभट्टीयम् ॐ

'वृत्तिविषये पूर्वमेव स' इति सिद्धान्ते तु सर्वथोभयकघट इत्येकमेव भवितव्यमिति विशेषाभावः स्पष्ट एव। अत एव तद्विशेषानुक्तिरत्र ग्रन्थे, आदेशपक्षे तयप्स्थानिकत्वेनायचस्तद्विकल्पेनैव वाक्यसिद्धौ फलाभावेन महाविभाषाया असम्बन्धः सिध्यति, प्रत्ययान्तरत्वपक्षे तदसम्बन्धार्थं तत्स्यादत आह—**भाष्यकृतेति**। व्याख्यानं—सम्बन्धावश्यकत्वे हेतुः। अन्यथा फलभेदे पक्षभेदासङ्गतिः स्यादिति भावः।

**अयोग्यं सदिति**। द्वितीयसूत्रस्थ'वे'त्यस्यास्वरितत्वादसम्बन्धमभिप्रैति। ननु कारकमनोरमायां वस्तुतस्त्वित्यादिना वृत्तौ कृतायामयजित्यर्थलाभेनोभयत उभयत्रेत्यादावविवेति दृष्टान्तासङ्गतिः, अन्योन्याश्रयापत्त्या त्रलादेरेवानुत्पादप्रसङ्गात्, सत्ययचि त्रलादिवृत्तिः, सत्याञ्च त्रलादिवृत्तावयजितीत्यत आह—

ॐ विषमपदविवृतिः ॐ

**प्रत्ययान्तरत्वेन व्याख्यानादिति**। अस्यात्यन्तस्वार्थिकायज्विधानार्थमित्यनेनान्वयः। **महाविभाषासम्बन्धस्यावश्यकत्वेनेति**। अस्य 'लक्ष्यानुरोधा'दिति शेषः। **अत एवेति**। सुबुत्पत्तेः पूर्वमयजुत्पत्तेरेवेत्यर्थः।

ननु सुबुत्पत्त्यनन्तरमयजुत्पत्तावप्युभशब्दात्सुबन्तात्स्वार्थेऽयचि ततः सप्तम्यान्तत्त्रल्यु'भयत्रे'ति रूपं सिद्ध्यति, न हि अवयवार्थकायजन्तस्योभयशब्दस्य सर्वादिषु पाठः, न स्वार्थिकायजन्तस्येत्यत्र मानमस्तीति चेन्न, सुबुत्पत्त्यन्तरमयजुत्पत्तौ 'नित्य'मित्यत्रोभादित्यस्य सम्बन्धेन तस्य तत्प्रकृतिकसुबन्ते लक्षणायां मानाभावेन—सुपि परत उभशब्दादयचि तस्य सप्तमीरूपस्य सुप उभशब्दप्रकृतिकस्य सर्वनामप्रकृतिकत्वाभावेन त्रलाद्यनापत्तिरित्याशयात्। 'घकालतने'ष्विति ज्ञापकं तु सार्थकतद्धितविषयम्। न चोभशब्दपाठस्य त्रलाद्युत्पत्तिरपि प्रयोजनमस्त्विति वाच्यं, तथा सति—"उभस्य सर्वनामत्वे किं प्रयोजनम्? अकजर्थं पाठः क्रियते 'उभकौ', किमुच्यतेऽकजर्थमिति? न पुनरन्यान्यपि सर्वनामकार्याणि। 'अन्याभावो द्विवचनटाब्विषयत्वात्''-इत्यादि भाष्यग्रन्थसन्दर्भसूचितप्रयोजनान्तराभावा-

अयमप्याद्युदात्त एवोदात्तग्रहणानुवृत्तेः ।
अयच्च वार्तिकप्रामाण्याद्यत्रोभशब्दस्योभयशब्दस्य वा द्विवचनविषयत्वाभावसम्भावना

ॐ अभिनव-चन्द्रिका ॐ

व्यापकत्वविशिष्टपर्याप्तिसम्बन्धेन द्वित्वस्यान्वय इति स्वीकारादेव नोक्तदोषावकाश इति न परिष्कृत-द्वित्वमुभशब्दप्रवृत्तिनिमित्तं, न वा द्विवचनार्थ इति–कथमस्योपयोग इति वाच्यं, 'उभौ धवखदिरौ छिन्धी'त्यादावुद्देश्यतावच्छेदकधवत्वव्याप्यत्वस्य खदिरत्वव्याप्यत्वस्य च द्वित्वेऽभावेनैकैकधवैकैक-खदिरतात्पर्येण तादृशप्रयोगोपपत्तये शुद्धपर्याप्तिसम्बन्धेन द्वित्वस्यान्वयस्वीकारे धवद्वयखदिरद्वय-तात्पर्येणोभौ धवखदिरौ छिन्धीतिप्रयोगस्योभावाकाशावित्यादिप्रयोगस्य चापत्तेर्दुर्वारत्वादिति दिक् ।

**उभशब्दस्येति** । अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रोभशब्दस्य द्विवचनपरत्वसम्भा-वना ततोऽन्यत्रायजिति भावः। यद्यत्र–'उभशब्दादयज्न स्यात्तर्ह्युभशब्दस्य द्विवचनपरत्वं स्या'दिति यत्र सम्भाव्यते ततोऽन्यत्रायच्साधुरिति यावत् । अत एव 'उभे भद्रे' इति सिद्धम्, यद्युभशब्दायच् न स्यात्तर्हि टापि पूर्वान्तवद्भावेन टाबन्ते उभशब्दस्य सत्त्वाद्द्विवचनपरत्वमेवेति अयचो-ऽसाधुत्वात् । ननु उभतयाविति रूपं न स्यात् , 'यद्ययज्न स्यात्तर्हि तयपि तेन व्यवधाना-दुभशब्दस्य द्विवचनपरकत्वाभावेन अपवादायज्विषयत्वेनोत्सर्गतयपोऽप्रवृत्तेः, एवं भाष्यकृन्मते 'उभयत' 'उभयत्रे'त्याद्यसिद्ध्यापत्तिश्च, यद्ययज्न स्यात्तर्ह्युभशब्दस्य भाष्यमते सर्वादावपाठात्तत्प्रकृ-तिकसप्तम्याः सर्वनामप्रकृतिकत्वाभावेन त्रलाद्यनुत्पत्तौ उभशब्दस्य द्विवचनपरत्वमेवेति ततोऽन्यत्र न जातमिति तत्रायचः साधुत्वस्य दुरुपपादत्वादिति चेत्तत्राह—**उभयशब्दस्येति** । अयच्प्रवृत्ति-

ॐ सदाशिवभट्टीयम् ॐ

**अयच्चेति** । कारकमनोरमाग्रन्थस्तु प्राचामनुसारीति न तद्विरोध इति भावः । ननूभशब्दस्यायचि कृते सर्वत्रैव तद्विषयत्वाभावसम्भावना, यद्ययचं विना सम्भावनेत्युच्यते तदो'भयत''उभयत्रे'त्यादावपि स न स्यादत आह—**उभयशब्दस्येति** । **द्विवचनेति** । तच्चोभशब्दप्रकृतिकमेवेति नाग्रहः, तेन 'परमोभौ'-

ॐ विषमपदविवृतिः ॐ

भिप्रायविरोधात् । **आद्युदात्त एवेति** । नान्तोदात्तः, चित्त्वेनान्तोदात्तस्य प्राप्तत्वेनोदात्तग्रहण-वैयर्थ्यात् । ननु 'क इदानीमन्यस्यान्यत्र भवति ? 'उभयोन्यत्र' उभयशब्दोस्यान्यत्र भवति' इति भाष्यम् ; अस्योभशब्दस्यान्यत्र=द्विवचनभिन्ने परत 'उभय' इति रूपं भवति ;—अयज्भवतीति फलितोर्थः । तथा चायच्प्रत्ययस्य द्विवचनभिन्ने परत एव विधानेन सुबुत्पत्तेः पूर्वमेवायजिति पूर्वग्रन्थासङ्गतिः, भाष्यसूचिताकजतिरिक्तसर्वनामकार्याभावविरोधश्च, 'उभयत्रे'त्यादावुभशब्दा-त्सप्तमीद्विवचनोत्तरमेव त्रलुत्पत्त्या द्विवचने च सति अयजभावेन सर्वनामप्रकृतिकसप्तम्यन्ता-भावेन त्रलनापत्त्या तदर्थं उभशब्दपाठस्यावश्यकत्वादित्याशङ्क्याह—**द्विवचनविषयत्वाभावसम्भा-वनेति** । 'परिनिष्ठिते प्रयोगे' इति शेषः । तथा चा**न्यत्रे**त्यस्य–द्विवचनपरत्वाभावे इति नार्थः, किन्तु परिनिष्ठिते प्रयोगे द्विवचनविषयत्वाभावसम्भावनायामित्येवार्थ इति न पूर्वोक्तदोषद्वयमिति भावः ।

नन्वेवमप्युभावित्यत्राप्ययच् स्यात् , अयचि ततो द्विवचनेपि परिनिष्ठिते प्रयोगे उभशब्दस्य द्विवचनपरत्वाभावात्, अयचा व्यवधानादित्यत आह—**उभयशब्दस्य वेति** । वस्तुतोऽय-

ॐ वरवर्णिनी ॐ

**उभशब्दस्योभयशब्दस्य वेति**। इदमत्र तत्त्वं–'यद्ययज्न स्यात्तर्हि उभशब्दो द्विवचनपरकस्या'-दिति सम्भावना, 'यद्ययच्स्यादुभयशब्दो द्विवचनपरकः स्या'दिति च सम्भवना—अयचः प्रति-

तत्रैव । अत एवोभयार्वास इत्यादौ 'शयवासे'त्यलुकि नायच् । तद्ध्वनयन् वार्तिकमाह—**उभयोऽन्यत्रेति** ।

### ॐ अभिनव-चन्द्रिका ॐ

सम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायच्साधुरिति भावः । तथा चोभतयाविति रूपं, भाष्यमते उभयत उभयत्रेत्यादि च सिद्धं, यत्तुभशब्दादयच् स्यात्तर्हि अयजन्तस्य द्विवचनपरत्वमेवेति ततोऽन्यत्रेति न जातमिति अपवादविषयत्वाभावेनोत्सर्ग-

### ॐ चिदस्थिमाला ॐ

वार्तिकसिद्धमिति प्रतिपादयन् वार्तिकमवतारयति—**अन्यत्रेति** । उक्तरीत्या तदसम्भवादाह—**उभयेति** । उक्तरीत्या तत्र वस्तुतस्तत्परत्वं नैवात आह—**विषयेति** । विषयत्वेत्यर्थः । क्वचित्तथैव पाठः । आदिना—'उभये देवमनुष्या' इति, सति हि तस्मिन्नयच्द्वयं श्रूयेतेतिभावः । **वार्तिकमिति** । यत्प्रामाण्या-

### ॐ सदाशिवभट्टीयम् ॐ

'उभोभा'वित्यादौ समासप्रकृतिकेपि तत्र नायच्, प्रत्याख्याने द्विवचनशब्दग्रहणेन तदर्थस्य सम्भवेनारम्भेपि तथैवोचितत्वात् । 'उभयशब्दादुत्पन्नं द्विवचन'मिति मनोरमाग्रन्थस्य तु तदन्तादित्यर्थ इति बोध्यम् । विषयत्वञ्च परत्वम् । नन्वेवं'मुभा'वित्यत्र प्रक्रियायामेकादेशतः प्राक् तस्य तत्परत्वसम्भावनायामपि परिनिष्ठिते तदभावस्यापि सम्भावनयाऽतिव्याप्तिर्दुर्वारेति चेन्न, तद्विषयत्वसम्भावनाभावस्य विवक्षितत्वात् । विषयत्वविषयिणी अभावप्रतियोगिभूता सम्भावनेत्यर्थात् । लुका चानुत्पत्तिरेवेति—न तत्रापि सम्भावनेति बोध्यम् । यद्वा—'उभौ साभ्यासस्ये'ति निर्देशेन'स्वोत्तरत्व''स्वावयत्वा'न्यतरसम्बन्धेन तद्विशिष्टत्वमेव तद्विषयत्वं परिनिष्ठिते विवक्षितमिति यथाश्रुतमपि साधु । **अलुकीति** । यद्यपि द्विवचनबहुवचनयोरलुक् नेति—'अलुगुत्तरपदे'इति सूत्रभाष्याल्लभ्यते, तथापि सम्भवाभिप्रायेणेदमुक्तमिति बोध्यम् ।

### ॐ विषमपदविवृतिः ॐ

मार्थिकोऽर्थो न तु वाच्योऽर्थः, 'अन्यत्रे'त्यस्य प्रकृतद्विवचनभिन्ने एव शक्तत्वेन ततो द्विवचनपरत्वाभाव इत्यर्थलाभात् । अस्येत्यस्योभयशब्दस्येत्यर्थे 'क इदानीमस्यान्यत्र भवती'त्यादिभाष्यग्रन्थस्यानन्वितार्थत्वापत्तेश्च । भाष्याक्षरार्थस्त्वस्यो'भशब्दस्य परिनिष्ठिते प्रयोगे द्विवचनभिन्नपरत्वे उभय इति रूपं बोध्य'मिति । अत्रैरनेकाच इति सूत्रस्थगतिकारकपूर्वस्येष्यत इत्यस्येवार्थिकार्थ एव तात्पर्यं न वाच्यर्थे । ननु 'यत्र द्विवचनविषयत्वाभावसम्भावना तत्रैवाय'जिति नियमो व्यर्थः, 'उभा'वित्यादौ वृत्तेरभावेन वृत्तिविषये विहितस्यायचोऽप्रवृत्तेः, अकजन्तात्तु नायच्; अनभिधानादित्युक्तमेवेत्याशङ्क्य तत्फलमाह—**उभयोवांस इति** । नन्वेवं सति वृत्तिविषये इति व्यर्थम्, 'उभा'-

### ॐ वरवर्णिनी ॐ

बन्धिका, आद्यसम्भावनाफलं स्त्रियाम्—'उभे भद्रे' इत्यादौ नायच्, तत्रायजभावेऽन्तवद्भावेन टाबन्तस्योभशब्दतया तत्रोभशब्दस्य द्विवचनपरत्वसम्भवात् । 'यद्ययच्स्यात्तर्हि उभयशब्दो द्विवचनपरकः स्या'दितिद्वितीयसम्भावनया तु नात्र [ 'उभे भद्रे' इत्यत्र ] निर्वाहसम्भवः, तत्रहि—यद्ययच्स्यात्तर्हि टिड्ढेतिङीपि ततो द्विवचनेऽयजन्तस्योभयशब्दस्य ङीपा व्यवधानेन द्विवचनपरत्वासम्भवादतः प्रथमा सम्भावनाऽवश्यमङ्गीकार्या । न च लिङ्गविशिष्टपरिभाषया ङीबन्तस्याप्युभयशब्दतया द्विवचनपरत्वसम्भावनयाऽयचोऽप्रवृत्त्या 'उभे भद्रे' इत्यत्र दोषाभावात्प्रथमसम्भावनास्वीकारो मुधैवेति वाच्यं, विभक्तौ लिङ्गविशिष्टाऽग्रहणेनोभयशब्दत्वस्य ङीबन्तेऽसम्भवात् । यदि तु विभक्तिनिमित्तककार्ये एव 'विभक्तौ लिङ्गविशिष्टाऽग्रहण'मिति प्रवर्त्तते न तु द्विवचनरूपविभक्त्यभावनिमित्तके, किञ्च सम्भावना न विभक्तिकार्यमित्यभिप्रेयते तर्हि प्रथमा सम्भावना त्याज्यैव, 'यद्ययच्स्यात्तदोभयशब्दस्य द्विवचनपरत्वं स्या'दिति द्वितीयसम्भावनै-

**द्विवचनपरत्वाभावे इति** । तत्परत्वविषयत्वाभावे इत्यर्थः ।

'उभयो मणि'रित्यादौ तु न, 'लिटयन्यामन्योभयेषा'मितिनिर्देशेन योगविभागस्य

❀ अभिनव-चन्द्रिका ❀

तयप्प्रवृत्तेः । एवं यद्युभशब्दादयच् स्यात्तर्हि भाष्यमतेऽयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वेन तदुत्तरसप्तम्याः सर्वनामप्रकृतिकत्वेन तस्मात्त्रलि विभक्तिलुकि उभयशब्दस्य द्विवचनपरकत्वाभावेनायचः साधुत्वस्य सूपपादत्वादिति दिक् ।

❀ चिदस्थिमाला ❀

दिदमुक्तं तदित्यर्थः । प्राग्वदाह — **विषयेति** । परिभाषाशयेनाह— **योगेति** ।

❀ ज्योत्स्ना ❀

तत्परत्वेति । यद्ययच्स्यात्तर्ह्युभयशब्दस्य सर्वादिगणे पाठात्तस्य सर्वनामताऽस्त्येवातस्त्रतसिलावपि स्यातामिति द्विवचनस्य लुगपि स्यादित्यस्ति द्विवचनविषयकत्वाभावसम्भावनेति भावः ।

ननु स्वार्थिकस्यायचो द्विवचनोत्पत्तेः प्रागेव प्रसङ्गाद्द्विवचनपरत्वाभावोऽव्यभिचारीत्यतो व्याचष्टे—**तत्परत्वविषयाभाव इत्यर्थ इति** । ननु वक्ष्यमाणभाष्योक्तरीत्या रूपबाधन्तेऽयज्नेष्यते,

❀ सदाशिवभट्टीयम् ❀

**निर्देशेनेति** । उभशब्दप्रकृतिकसुबन्ताभावेन स्वार्थिकायजुत्तरत्रारिताथ्याभावेन 'तक्रकौण्डिन्य'-

❀ विषमपदविवृतिः ❀

वित्यादौ द्विवचनपरत्वादेवायचोऽप्रवृत्तेरिति चेत्सत्यम्, एतत्फलितार्थकथनमेव—**वृत्तिविषय इति** । एवञ्चान्यत्रेत्यस्यो'भा'वित्यपि प्रत्युदाहरणं दातुं शक्यम् । **तत्परत्वविषयाभावे इति** । परिनिष्ठिते प्रयोगे तत्परत्वाभावसम्भावनायामित्यर्थः, यथाश्रुतमूलं तु न युक्तम्, 'द्विवचनपरत्वाभावे'-इत्युक्तौ सम्प्रति द्विवचनपरत्वाभावाभावेनोभयत्रेत्यादावयजनापत्तेः । न चान्तरङ्गत्वं, विभक्त्युत्पत्तेः पूर्वमयजापत्त्या तद्वैयर्थ्यापत्तेः । **इत्यादौ तु नेति** । 'अत्यन्तस्वार्थिकाय'जिति शेषः । **निर्देशेनेति** ।

---

❀ वरवर्णिनी ❀

वायज्रूपकार्यसिद्धिप्रतिबन्धिका । ईदृशसम्भावनायाः प्रतिबन्धकत्वस्वीकारादेव—उभशब्दस्य सर्वादिगणे पाठं प्रत्याचक्षाणस्य भगवतो भाष्यकारस्य मते 'उभयतः' 'उभयत्रे'त्यादिरूपसिद्धिः, 'यद्युभशब्दादयच्स्यात्तर्ह्ययजन्तस्योभयशब्दस्य भाष्यमतेऽपि सर्वनामसञ्ज्ञकतया तदुत्तरसप्तम्याः सर्वनामप्रकृतिकतया ततस्त्रलि-द्विवचनपरत्वाभावसम्भवादयच्प्रतिबन्धाभावात् । 'यद्ययज्न स्यात्तर्हि उभशब्दो द्विवचनपरकः स्या'दिति-प्रथमसम्भावनायान्तु—उभशब्दस्य भाष्यमते सर्वनामत्वाभावेन तद्विहितसप्तम्याः सर्वनामप्रकृतिकत्वाभावेन नतस्त्रलोऽप्राप्त्या द्विवचनपरत्वसम्भवादयच्प्रतिबन्ध एव स्यात् । एवमुभतयावितिसिद्धिर्द्वितीयसम्भावना-

---

१ ननूभयो मणिरित्यत्र द्विवचनपरत्वविषयत्वाभावादत्यन्तस्वार्थिकोऽयज्दुर्वारोऽत आह—**उभय इति** । 'ने'त्यस्य—अयजिति शेषः । नन्वत्यन्तस्वार्थिकायचो—द्विवचनविषयत्वाभावसम्भावनायां सुबुत्पत्तेः पूर्वमेवोत्पत्तेः सिद्धान्तितया—पूर्वं प्रवृत्तौ तदन्तस्योभशब्दत्वाभावेन तयप्समानार्थकस्यायचोऽप्रवृत्तिः, उभयो मणिरित्यादिभाष्यप्रामाण्याल्लिटयन्यत्रस्योभयेषामिति निर्देशाच्चावयवार्थकस्य 'उभादुदात्त' इत्यनेन विहितस्यायच एव पूर्वं प्रवृत्तौ तु तदन्तस्योभशब्दत्वाभावेनात्यन्तस्वार्थिकस्य—[ 'नित्य'मिति योगविभागेन विहितस्य—] अयचोऽप्राप्तिरिति शङ्केवेयं नोदेतीति चेन्न, बहुतरकादिवदुभयोस्तयोरयचोरनियतं प्रवृत्त्यापत्तिरिति शङ्कितुराशयस्य वर्णनीयत्वादिति अस्मत्सतीर्थ्या विद्वत्तमाः श्रीनृसिंहशास्त्रिणो ग्रन्थमिमं लापयन्ति । **विषमपदविवृतिकृतस्तु**—'इदमुपलक्षण'मित्यादिनाऽस्य दोषान्तरत्वमेवाभिप्रयन्ति ।

**गौडास्तु**—उभाववयवौ यस्य मणेरसावुभयो मणिरित्यत्र—अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभय-

इष्टसिद्ध्यर्थत्वेन च तस्य क्वचिदप्रवृत्तेः, अतो रूपाद्यन्ते नायच् । रूपादेरस्मादनभिधानमेव वा ।

ॐ अभिनव-चन्द्रिका ॐ

**इष्टसिध्यर्थत्वेन** चेति । चिन्त्यमिदम्, विभक्तयोगद्वयमध्येऽन्यतरेणान्यतरस्य यत्र वैयर्थ्यं तादृशातोधातोरित्यादिविषय एव 'योगविभागादिष्टसिद्धि'रिति परिभाषाप्रवृत्तिस्वीकारेण

ॐ चिदस्थिमाला ॐ

तस्य=द्वितीयस्य। तत्र गत्यन्तरसम्भवादाह—**रूपादेरिति**। ननु के तत्सम्भावनाया अभावात्पूर्वमयचि 'उभयत' इत्यादिवत्तदपाठेऽपि विशिष्टस्य सर्वनामत्वेनाकजेव स्यादपवादत्वादिति तस्योक्तरीत्या तत्सम्भवो

ॐ ज्योत्स्ना ॐ

इह तु स्यादिति फलभेदोऽत आह—**क्वचिदप्रवृत्तेरिति** ।

ॐ सदाशिवभट्टीयम् ॐ

न्यायाप्रवृत्त्या सर्वथा निरवकाशत्वेनैवावयवार्थकोऽयच् तद्बाधकः स्यादिति तत्र कृते 'क्रोष्ट्री'त्यत्र ङीब्वत्स्वार्थिकोऽयच् दुर्वार इति निर्देशेनैव वारित इति बोध्यम्। **अनभिधानमेवेति** । तत्प्रत्याख्यानेन फलैक्यायेद-

ॐ विषमपदविवृतिः ॐ

इदमुपलक्षणम्—अत्यन्तस्वार्थिकायचोन्तरङ्गत्वेन सुबुत्पत्तेः पूर्वमेवोत्पत्तेः स्वीकारेणावयवार्थकायचः पूर्वं स्वार्थिकायच्युभशब्दप्रकृतिकसुबन्ताभावेनो'भादुदात्त' इत्यस्यावयवार्थकायज्विधायकस्य निर्विषयत्वापत्तेः । **अनभिधानमेव वेति** । अत्र प्रमाणन्तु—कप्रत्ययस्य द्विवचनत्वमाश्रित्योभशब्द-

ॐ वरवर्णिनी ॐ

फलं, द्वितीयसम्भावनाऽभावे हि यद्ययज्न स्यात्तर्हि तयपि तेन व्यवधानाद्द्विवचनपरत्वं न स्यादिति अपवादायचो विषयतया तयपोऽप्रवृत्त्योक्तरूपसिद्ध्यभावप्रसङ्गः स्पष्ट एव । तस्यां सत्यान्तु—यद्युभशब्दादयच्स्यात्तर्ह्ययजन्तस्योभयशब्दस्य द्विवचनपरत्वमेवेति प्रतिबन्धकसद्भावान्नायजिति,—इति अस्मत्पितामहवरेण्या **श्रीस्नेहिरामशास्त्रि**चरणा व्याकुर्वते ।

शब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायजिति पूर्वोक्तरीत्या द्वितीयसम्भावनात्मकप्रतिबन्धकाभावादत्यन्तस्वार्थिकस्यायचः पूर्वं प्रवृत्त्या—ततः—'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ती'ति भाष्यस्य—प्रकृतिग्रहणेन स्वार्थिकप्रत्ययविशिष्टस्य ग्रहणमित्यर्थस्याभियुक्तैरनुपदमेव वक्ष्यमाणतयाऽत्यन्तस्वार्थिकायजन्तस्योभशब्दतयाऽवयवार्थकोऽयच्प्राप्नोतीति शङ्कायां—'लिट्यभ्यासस्योभयेषा'मिति यकारद्वयाघटितनिर्देशेनात्यन्तस्वार्थिकायचोऽत्र वारण भवतीति अवयवार्थकायज्घटितमेव रूपमिति समाधानं युक्तमेवेति यथावस्थितमेव रमणीयमिति प्राहुः ।

ननु—अस्य स्वार्थिकायच्प्रत्ययस्य सुबुत्पत्तेः पूर्वमेव प्रवृत्त्या 'उभयोर्वास'इत्यत्र सुबुत्पत्तेः पूर्वं द्विवचनपरत्वाभावेन समासरूपवृत्तेः सत्त्वेन चायजापत्तिः, द्विवचनस्य च 'शयवासे'त्यलुक्—इत्यत आह—**अयज्वेति**। [पृ० १६०] तथा च—यद्ययज्न स्यादुभशब्दो द्विवचनपरः स्यादिति प्रथमसम्भावनायाः प्रतिबन्धकतया तत्र नायज्। द्वितीयसम्भावनामात्रस्वीकारेऽपि 'यद्ययच्स्यादुभयशब्दो द्विवचनपरकः स्या'दितिद्वितीयसम्भावनायाः प्रतिबन्धिकायाः सत्त्वादत्र नायजिति भावः ।

१. एकतरस्य सार्वत्रिकत्वे एकतरस्य यत्र वैयर्थ्यं तत्रैव योगविभागस्येष्टसिद्ध्यर्थत्वं, यथा—'सह सुपा' 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे—इत्यादावाद्ययोः सार्वत्रिकत्वेऽपरयोर्वैयर्थ्यापत्तिः, प्रकृते तु वैकल्पिकावयवार्थकायज्विधायकेन पूर्वयोगेन नित्यात्यन्तस्वार्थिकायज्विधायकस्योत्तरयोगस्य वैयर्थ्याभावेन योगविभागस्येष्टसिद्ध्यर्थत्वस्य वक्तुमशक्यत्वाच्चिन्त्यमिदमिति **गौडाः** ।

अयच्यकच्तु तु न वाच्यः । उपजीव्यत्वेन कस्यैव प्राप्तेः ।

❀ अभिनव-चन्द्रिका ❀

प्रकृते चावयवार्थादयचोऽन्यन्तस्वार्थिकायचश्चैकेन योगेन विधातुमशक्यतया ऽप्रयोगस्य साफल्येन द्वित्वार्थस्य वक्तुमशक्यत्वात्, अन्यतरेणान्यतरयोगवैयर्थ्यस्यैव परिभाषावीजत्वाच्च, तथैव स्वयमप्युक्तत्वाच्च ।

न चैवमपि उभे भद्रे इति न स्यात्, यद्युभशब्दादयच् स्यात्तर्हि तदन्तात् 'टिड्ढे'ति ङीपि ङीपा व्यवधानादुभयशब्दस्य द्विवचनपरकत्वनास्तीति ततोऽन्यत्रेति जातमिति प्रतिबन्धकाभावादयजापत्तेरिति वाच्यं, ङीप्यपि ङयन्ते लिङ्गविशिष्टपरिभाषया उभयशब्दत्वस्य सत्त्वेन उभयशब्दस्य द्विवचनपरकत्वस्यैव सत्त्वात् । न च 'विभक्तौ लिङ्गविशिष्टाग्रहण'मिति ङयन्ते लिङ्गविशिष्टपरिभाषया उभयशब्दत्वाप्रायास्यतीति वाच्यं, विभक्तिनिमित्तककार्ये कर्तव्ये एव विभक्तौ लिङ्गविशिष्टा ग्रहणमिति परिभाषायाः प्रवृत्त्या अयचो द्विवचनपरकत्वाभावनिमित्तकत्वेन विभक्तिनिमित्तकत्वाभावात्तदप्रवृत्तेः ।

ननु अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरकत्वसम्भावना ततोऽन्यत्रायचः साधुत्वस्य स्वीकारे सर्वादौ पुनरप्युभशब्दपाठो व्यर्थः, यद्युभशब्दादयच् स्यादयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वादकच्युभयशब्दस्य द्विवचनपरत्वमेवेति ततोऽन्यत्रेति न जातमित्ययचोऽसाधुत्वात् केऽपि उभकाविति रूपसिद्धेरत आह—**अयच्यकच् तु न वाच्य इति ।** अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरकत्वसम्भावना तस्यां कर्तव्यायामकच्प्रवृत्तिशङ्का न कर्तव्येत्यर्थः । अत्र हेतुमाह—**उपजीव्यत्वेन कस्यैव प्राप्तेरिति ।**

❀ चिदस्थिमाला ❀

नास्तीत्ययचो न प्राप्तिरिति कथं तदापादनं मूलेऽत आह–**अयचीति ।**

❀ सदाशिवभट्टीयम् ❀

मावश्यकमिति भावः । वस्तुत इदं प्रत्याख्यानमिष्टापत्तिं कृत्वैव, अत एव–'उभौ'ति वक्ष्यमाणग्रन्थसङ्गतिरिति बोध्यम् ।

**अयच्यकच् तु नेति ।** अयम्भावः—सुबुत्पत्तेः पूर्वमयजङ्गीकारे तत्र कृतेऽयजन्तस्य गणे पाठेन सर्वनामत्वादकचि तद्विषयत्वमेव स्यादिति–तदभावसम्भावनाऽभावेन पूर्वमयजप्रवृत्तौ कप्रत्ययेपीष्टसिद्धयोभशब्दपाठो व्यर्थः, वृत्त्यनन्तरमयजङ्गीकारे तु नायं दोष इति । **उपजीव्यत्वेनेति ।** अयम्भावः–उक्तरीत्यो·

❀ विषमपदविवृतिः ❀

प्रत्याख्यानपरं भाष्यम्,—तथा हि—द्विवचनशब्दस्य तत्सञ्ज्ञकपरत्वे रूपम्ययच् भवति, द्वित्वविशिष्टार्थवाचकपरत्वे तु स नेति फलभेदादनभिधानम् । ननूभशब्दपाठो मास्तु, न च कप्रत्ययापत्तिः, वृत्तिविषये सुबुत्पत्तेः पूर्वमेवायजुत्पत्तिस्वीकारेण कप्रत्ययस्य च सुबुत्पत्त्यनन्तरमेवोत्पत्त्या पूर्वमयच्ययजन्तस्य सर्वादिषु पाठेन ततोऽकच एव प्रवृत्तेः । न चायजन्तस्य सर्वनामत्वेप्युभशब्दस्य सर्वनामत्वाभावात्ततः कप्रत्ययापत्तिरिति वाच्यं, सुबुत्पत्तेः पूर्वमेवायजुत्पत्तिस्वीकारेणोभयशब्दस्यासुबन्तत्वेपि न ततः कप्रत्ययप्राप्तिः । 'प्रत्ययः परः प्रयोक्तव्य एवे'ति नियमेनोभशब्दायचोर्मध्ये कप्रत्ययासम्भवाच्चेत्याशङ्क्याह—**अयच्यकजिति ।** कुतो न वाच्य इत्यतस्तत्र हेतुमाह—**उपजीव्यत्वेनेति ।** परिनिष्ठिते प्रयोगे द्विवचनपरत्वाभावो

१. ननु कप्रत्ययरूपवृत्तिविषयतायामयचि उभयशब्दस्य सर्वनामत्वे कप्रत्ययापवादस्याकचः प्राप्तिः सत्त्वेन [ कप्रत्ययासम्भवात्–]उभयशब्दो द्विवचनपरकः स्यादिति सम्भावनायाः प्रतिबन्धकीभूतायाः सत्त्वेनायजनुत्पत्तौ के उभकाविति सिद्धेः सर्वादिगणे उभशब्दपाठः पुनरपि व्यर्थ एवात आह–**अयच्यकजिति ।** अयच्सम्पन्नोभयशब्दनिमित्तक–सर्वनाम–निमित्तोऽकच्–स्वोपजीव्य–सर्वनामत्व–निमित्तभूतोभयशब्दत्व–विनाशनिमित्तं न स्यादिति भावः ।

अपवादस्त्वन्यत्र[३] चरितार्थः ।

अत्रेदं चिन्त्यम्—अकज्विधावेवोभग्रहणेन सिद्धे सञ्ज्ञाप्रणयनं किमर्थम् ?,

ॐ अभिनव-चन्द्रिका ॐ

'यद्युभशब्दादयच्स्यात्तर्ह्ययजन्तोभयशब्दस्य सर्वादौ पाठेनाकच्स्या'दित्यकच्प्रवृत्तेः सम्भावनायां द्विवचनपरकत्वाभावसम्पादनेन कस्योपजीव्यत्वादिति भावः । **अन्यत्रेति** । उपजीव्योपजीवकभावस्याभावविषये सर्विकेत्यत्र चारितार्थ्यादिति भावः । **किमर्थमिति** । न च सर्वादावुभशब्दपाठेऽकज्विधौ पाठे वा लाघवाभावाद्विशेषाभावेन-

ॐ चिदस्थिमाला ॐ

'अपवादोऽरी'ति न्यायेनाह—**अपेति** । एवञ्चाकजर्थः पाठ इति मौलं सिद्धं, तत्र दोषमाह—**अत्रेदमिति** । 'न ह्येकं'मिति न्यायेनाह—**अकजिति** ।

ॐ ज्योत्स्ना ॐ

विवरणकृत्कर्मन्दी[३] तु क्वचिदप्रवृत्तौ व्यवस्थामपश्यन्नयज्निमित्तद्विवचनपरत्वाभावेन—वृत्तिरुपलक्ष्यते इत्याह, सा च परार्थाभिधानम् । नचोभे भद्रे इत्यत्रापि अतिप्रसङ्गः, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाणां पञ्चानामेव वृत्तिशब्देन ग्रहणात् । तत्रोभयत उभयत्रेत्यादाविव कप्रत्ययेऽप्ययजापत्तिरित्युभयशब्दपाठवादी मन्यते । एवमपि बहुजकचोरत्राप्रसङ्गस्तस्मात्परस्य स्वार्थातिरिक्तस्य विशेष्यतयाभिधानं वृत्तिरिह विवक्षिताऽतो बहुजकजर्थस्य स्वार्थे विशेषणत्वाददोषः । एवं तु कप्रत्ययेऽप्ययज्न प्राप्नोति, अधिकरणत्वापादानत्वयोस्तु प्रकृत्यर्थविशेष्यत्वात्तदर्थकविभक्त्यन्ताद्विहिताभ्यां त्रतसिल्भ्यां परार्थाभिधाना'दुभयत' 'उभयत्रे'त्यादावयच्प्रवर्तत इत्युभशब्दस्य पाठे प्रयोजनाभाव इति प्रत्याख्यानवादिमतादप्रत्याख्यानवादिमतं प्रबलमिति सूचयंस्तत्रात्मनोऽभिप्रायमाह—उभयोमणिरित्यवयवार्थकायच् तु नैव प्राप्नोति, वृत्तिविषयेऽन्तरङ्गत्वात्स्वार्थिके तदन्तस्योभशब्दत्वाभावाद्वितीयस्य प्राप्त्यभावात्, प्रकृतिप्रत्यययोर्मध्ये तत्प्रवृत्तौ च प्राक्प्रवृत्तस्यायचो व्यवधानासम्भवादिति । उभशब्दपाठवादिमतात्प्रत्याख्यानवादिमतं प्रबलमिति सूचयंस्तत्रास्वरसमाह—**अत्रेदं चिन्त्यमिति** ।

ॐ सदाशिवभट्टीयम् ॐ

भयशब्दस्य तद्विषयत्वाभावसम्भावनाभावेप्युभशब्दस्य कप्रत्ययविवक्षायां तदभावसम्भावनासत्त्वेनायजुजीव्यकापवादाकचोऽप्रवृत्तिरिति । नचैवमुभयशब्दस्यैव तदभावसम्भावनाऽयच्प्रयोजिकाऽस्तु,—उभशब्दस्य तु सा मास्तु, फलाभावात्, एवञ्च पाठो न कार्य इति लाघवं, न ह्यत्रापि कप्रत्ययस्योपजीव्यत्वमिति वाच्यम्, एवमपि पूर्वमयज् मा प्रवर्तताङ्कप्रत्ययोत्तरन्तु स प्रवर्तेत तदा तदभावसम्भावनासत्त्वादित्याहुः ।

**किमर्थमिति** । एवं सति प्रत्ययविधौ तदन्तविधिनिषेधेन 'परमोभका'वित्याद्यसिद्धिस्तु न, तन्निषेधे-

ॐ विषमपदविवृतिः ॐ

हि अयज्रुपजीव्यः, यदि चायचि कृतेऽकच् स्यात्तदा स्वार्थिकायजन्तस्य द्वित्वविशिष्टबोधकत्वेन ततो द्विवचनापत्तौ द्विवचनपरत्वाभावमुपजीव्यं व्याहन्येतेति कप्रत्ययस्यैव प्राप्तिरित्यर्थः ।

नन्वपवादेऽयचि जागरूके कथं क इत्याशङ्क्याह—**अपवादस्त्वन्यत्रेति** । उपजीव्योपजीवकभावा-

---

१. नन्वकचः कापवादतया कप्रत्ययो दुर्लभोऽत आह—**अपवाद इति** । 'अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इत्यत्रान्तरङ्गपदमितरस्याप्युपलक्षणमित्याशयः । एवञ्चापवादोऽकच् सर्विकेत्यादौ चरितार्थ इति प्रकृते केन बाध्यते इति कप्रत्ययसिद्धिः । २. नह्येकमुदाहरणं योगारम्भं प्रयोजयती'ति न्यायः ।

३. कर्मन्दी=दण्डी, सिद्धान्तकौमुदीतत्त्वबोधनी टीका—भाष्यविवरणादिकारो ज्ञानेन्द्रसरस्वतीत्यर्थः ।

अनभिव्यक्तपदार्थकत्वान्सञ्ज्ञाव्यावृत्तिः, सर्वनामसाहचर्याच्च, अत एवोपसर्जनव्यावृत्तिरिति।

'उभयोऽन्यत्रे'ति वार्त्तिके तयप्समानार्थकोऽप्ययज् गृह्यते, 'उभयो मणिः', 'उभये देवमनुष्या' इति भाष्ये तदुदाहरणात्। स्वार्थिकस्य च ग्रहणं, तदुपक्रमेण वार्त्तिकप्रवृत्तेः। एवञ्चावयवद्वयारब्धमणिद्वयविवक्षया, उद्भूतावयवभेदविवक्षया वा द्विवचनमस्यासाध्वेव, एतन्मूलकमेवोभयस्यासर्वविभक्तित्वं 'तद्धितश्चे'तिसूत्रे कैयटेनोक्तं, तदाह—**कैयट इति। हरदत्त इति।** अत्रारुचिबीजं—प्रागुक्तभाष्यविरोधः।

भाष्ये तूभशब्दपाठः प्रत्याख्यातः, कप्रत्ययस्याज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन

❀ अभिनव-चन्द्रिका ❀

इयमाशङ्काऽसङ्गतेति वाच्यं, सर्वादावुभशब्दपाठे 'उभे भद्रे' इत्यादावन्तोदात्तदर्शनेन 'स्वाङ्गशिटा'-मित्याद्युदात्तत्वबाधनार्थमुञ्छादिषु [ घृतादिषु ? ] उभशब्दपाठस्यावश्यकत्वेनोभयत्र पाठे गौरवेणाकच्त्रिधावेवोभशब्दस्य ग्रहणं कस्मान्न क्रियत इति शङ्कायाः सम्यक्त्वात्।

❀ चिदस्थिमाला ❀

ननु सञ्ज्ञोपसर्जनव्यावृत्त्यर्थं तदत आह—**अनभीति**। अग्रिमावतरणमाह—**उभयोऽन्यत्रेति। तदिति**। वार्तिकेत्यर्थः। एतेन स्वार्थिकायजन्तस्यैव तत्र ग्रहणमिति **दण्ड**युक्तमपास्तम्। अपिसमुच्चेवमाह—**स्वार्थेति**। 'अत्यन्ते'त्यादिः। एवञ्च=तद्द्विवचनानुदाहरणे च। एतेन 'मिश्रमते द्वित्वावच्छिन्नपदार्थप्राधान्ये 'उभा'विति, तादृक्पदार्थद्वयसमुदायद्वयप्राधान्ये 'उभया'विति साधुरिति न पूर्वविरोध' इति **शास्त्र्युक्त**मपास्तम्। एकशेषेण आह—**अवयवेति**। तं विनाप्याह—**उद्भूतेति**। 'अस्ये'ति शेषत्वविवक्षया षष्ठी। **एतदिति**। उक्तोदाहरणपरभाष्येत्यर्थः। **प्रागुक्तेति**। तथोदाहरणपरभाष्येत्यर्थः। मूलादि खण्डयति—**भाष्ये त्विति**। तत्प्रकारमेवाह—**कप्रेति**।

❀ ज्योत्स्ना ❀

**अनभीति**। 'अभिव्यक्तपदार्था ये' इति न्यायो गौणमुख्यन्यायमूलकत्वात्तत्तत्पदकार्येष्वेवेत्यस्वरसादाह—**सर्वनामसाहचर्याच्चेति। तदुपक्रमेणेति**। स्वार्थिकोपक्रमेणेत्यर्थः। **असाध्वेवेति**। भाष्ये एकवचन-

❀ सदाशिवभट्टीयम् ❀

प्यव्ययोभसर्वनाम्नां टेः प्रागकच्, तदर्थगतकुत्सादावित्यर्थेन समुदायार्थे तद्विवक्षायामवयवार्थे तदविक्षायाया वक्तुमशक्यत्वेन 'परमगार्ग्यायण'इत्यत्रोक्तरीत्येष्टसिद्धेरित्याशयात्। 'परमभवका'नित्यत्रोक्तन्तु मतान्तरमिति क्षोदिष्यते। विशिष्टस्य प्रकृतित्वाभावे'ऽनुभका'वित्यादौ स्वरे तु न दोषः, सति शिष्टत्वेन स्वघटितपदघटितत्वेन च निघातप्रवृत्तेर्निष्प्रत्यूहत्वात्। एवं हि गणेऽन्तोदात्ततन्निपातनं न कार्यमिति लाघवमिति भावः, प्रत्याख्यानेन गणेऽन्तोदात्तात् तन्निपातनानुमानम्, अन्यथा स्वरार्थं पाठस्यावश्यकत्वात्तदसङ्गतिः स्यात्। **अत एवोपसर्जनेति**। इदञ्च स्वच्छन्दस्तान्त इति पक्षे फलं सुवचमिति वादिनां मतेन, स्वमते उपसर्जने

❀ विषमपदविवृतिः ❀

दन्यत्रेत्यर्थः। तथा च द्विवचनपरत्वाभावसम्पादनद्वारा स्वोपजीव्य-कप्रत्यय-विघातकाकचोऽयजन् निमित्तं भवतीति नात्राकच्प्रवर्त्तत इत्यर्थः। **अत एवोपसर्जनव्यावृत्तिरिति**। इदमुपलक्षणम्,—वृत्त्युत्तरमुपसर्जने कुत्सादियोगासम्भवात्, ततः पूर्वं तद्योगे त्वकजिष्ट एवेति। **अज्ञाताद्यर्थविशिष्टस्वार्थे इति**। सुबन्तात्कप्रत्ययविधानेऽप्यभिधानस्वाभाव्यात्सूत्रे विभक्तिविशेषस्यानुपा-

द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनत्वेन वार्त्तिके

## ❀ अभिनव-चन्द्रिका ❀

**द्वित्वसङ्ख्याप्रकारकेति** । स्यादेतत्—यदि द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वं द्विवचनत्वं तर्हि घटपदस्यापि द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वात्तस्यापि द्विवचनत्वापत्तौ उभयोर्घटौ उभयघटावित्यादावयच् न स्यात्, उभशब्दस्य उभयशब्दस्य वा द्विवचनपरकत्वस्यैव सत्त्वात् । न च द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकोपस्थितिजनकत्वं द्विवचनत्वमिति घटपदात्तथोपस्थितेरभावान्नोक्तदोष इति वाच्यं,त्रतसिलादेरपि द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकोपस्थितिजनकत्वेन तस्यापि निरुक्तद्विवचनत्वापत्तौ 'त्रतसिलादेर्द्विवचनत्वं नास्ती'त्यग्रिमग्रन्थविरोधात्,उभावित्यादावौविभक्तेर्द्वित्वसङ्ख्याप्रकारकसङ्ख्येयविशेष्यकोपस्थितिजनकत्वस्याभावेन निरुक्तद्विवचनत्वस्यानापत्तेश्चेति चेन्नैवम्; यस्य द्विवचनत्वं वक्तव्यं तत्प्रयोज्यप्रधानतानिरूपिताऽप्रधानत्वासमानाधिकरणा या द्वित्व-

## ❀ ज्योत्स्ना ❀

बहुवचनयोरेवोदाहरणाद्द्विवचनस्य परित्यागाच्चेति भावः ।

## ❀ सदाशिवभट्टीयम् ❀

कुत्सादिविवक्षायाः कर्तुमशक्यत्वं स्पष्टमन्यत्रेति बोध्यम् । **अनुवादकत्वमिति** । बोधकत्वमित्यर्थः ।

## ❀ वरवर्णिनी ❀

**द्वित्वसङ्ख्याप्रकारकेति** । द्वित्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठमुख्यविशेष्यताकोपस्थितिजनकत्वं द्विवचनत्वमिति प्रकृतग्रन्थार्थः। नन्वेवमुभयत इत्यादौ तसिलादेरपि पूर्वोक्तद्विवचनत्वापत्त्या तत्रायज्न स्यात्, द्विवचनपरत्वस्यैव तत्र सम्भवादिति चेदुच्यते,—स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या अप्रधानता, तदसमानाधिकरणा या—सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यता, तादृशविशेष्यताकोपस्थितिजनकत्वं द्विवचनत्वमिति स्वीकारेणादोष इति । तथाहि—यस्य द्विवचनत्वं चिकीर्षितन्तत्–स्वम् । 'उभयत' इत्यत्र च स्वं–तस्, तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती प्रधानता—क्रियाऽपादानभाव–सम्बन्धनिष्ठा, तन्निरूपिता अप्रधानता—द्वित्वाऽवच्छिन्ननिष्ठा, तत्रैव च सङ्ख्यानिष्ठप्रकारतानिरूपिता–सङ्ख्येयनिष्ठा विशेष्यतापीति-तादृशाऽप्रधानतासमानाधिकरणैव विशेष्यता जाता, एवञ्च तादृशाऽप्रधानत्वाऽसामानाधिकरण्याभावात्तादृशविशेष्यताकोपस्थितिजनकस्य तसिलादेर्न द्विवचनत्वम् ।

ग्रन्थकृदुक्ते–'उभौ' 'उभका'वित्यादौ तु—उभशब्दस्य कप्रत्ययस्य च निरुक्तद्विवचनत्वं सुलभं, तथाहि—स्वम्–द्वितीय उभशब्दः, कप्रत्ययश्च, तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती **प्रधानता**—द्वित्वावच्छिन्ननिष्ठा, तन्निरूपिताऽ**प्रधानता**—द्वित्वनिष्ठा, **तदसमानाधिकरणा**—सङ्ख्यानिष्ठप्रकारता निरूपितसङ्ख्येयनिष्ठा **विशेष्यता**–द्वित्वावच्छिन्ननिष्ठेति लक्षणसमन्वयात् । तदेवं–स्वविशिष्टाऽप्रधानत्वाऽसमानाधिकरण—द्वित्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यताकोपस्थितिजनकत्वं द्विवचनत्वं, वै० 'स्वप्रयोज्यत्व' 'स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्प्रधानतानिरूपितत्वो'भयसम्बन्धेनेति फलितम् । यस्य द्विवचनत्वं चिकीर्षितं तत्स्वम् ।

समन्वयस्त्वित्थम्—उभयत्रोभयत इत्यादौ क्रियाऽधिकरणभाव—क्रियाऽपादानभावादि–सम्बन्धनिष्ठप्रधानतानिरूपिताऽप्रधानताया द्वित्वावच्छिन्नप्रकृत्यर्थनिष्ठायास्त्रलतसिलादिः प्रयोजकः, तादृशसम्बन्ध

---

१. यद्यपि कारकक्रियाभावरूपः सम्बन्धः सर्वत्र संसर्गतया भासते इति उभयत्रेत्यादावपि सङ्ख्येयविशेष्यकबोधजनकत्वं सम्भवति. तथापि प्रकृते विशेष्यतापदेन प्रधानताया एव ग्रहणेन तस्याश्च संसर्गताविशेष्यतासाधारणतया उभयत्रेत्यादिपदजन्यबोधीयप्रधानता कारकशक्तिनिष्ठैव न सङ्ख्येयनिष्ठेति नात्र सङ्ख्येयस्य प्राधान्यमिति न तत्रोक्तदोष इति तत्त्वम् ।

द्विवचनशब्देन तस्यापि ग्रहणमुभशब्दग्रहणवत् । अत एवोभयोरुभावुभोभावित्यादौ नायच् । तदुक्तं भाष्ये—"केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति, कथं ? स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति—प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति" —इति । इति—हेतोः,प्रकृतेः—कादिप्रकृतेरुभशब्दस्य—ग्राहकेण द्विवचनशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति तत्तत्कारकशक्तिप्रधानावेवेति न तयोरुक्तद्विवचनत्वमिति ।

❀ अभिनव-चन्द्रिका ❀

सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठा प्रधानता तादृशप्रधानताप्रयोजकत्वं द्विवचनत्वमिति परिष्कारेणादोषात् । तथा हि—प्रधानता नाम संसर्गताविशेष्यतासाधारणो विषयताविशेषः । तथा चोभयत्रेत्यादौ सप्तम्यन्तात् त्रलाद्युत्पत्त्या त्रलपदप्रयोज्याऽऽधाराधेयभावसंसर्गनिष्ठप्रकारतानिरूपिताप्रधानत्वसमानाधिकरणैव द्वित्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठा प्रधानता जातेति त्रतसिलादेर्नोक्तद्विवचनत्वं, कप्रत्ययस्य प्रातिपदिकादेवोत्पत्त्या संसर्गनिष्ठप्रधानताख्या विषयता न कपदप्रयोज्येति कस्य नोक्तद्विवचनत्वभङ्ग इति, तदेतत्सर्वं ध्वनयन्नाह—**तत्तत्कारकशक्तिप्रधानाविति** ।

परे तु 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ती'त्यस्य यदागमपरिभाषावत् स्वार्थिकप्रत्ययप्रकृतिपर्याप्तधर्माः स्वार्थिकप्रत्ययान्तेऽपि दिश्यन्ते इत्यर्थः । तथा चोभशब्दग्रहणेनोभक-

❀ चिदस्थिमाला ❀

अस्यावश्यकत्वमाह—**उभशब्देति** । इतिर्हेतावित्याह—**इति हेतोरिति** । 'ग्रहणे' करणे ल्युडित्याह—**ग्राहकेणेति** । दृष्टान्तवैषम्यमाह—**त्रतसिलाविति** । इतिर्मतसमाप्तौ । एतेनाकजुपक्रमानुरोधादकजर्थ एव पाठः

❀ ज्योत्स्ना ❀

**उभोभावित्यादौ नायजिति** । प्रागुक्तकर्मन्दिविवरणकृन्मते त्वत्रायज्भवत्येवेत्यस्वरसादाहेत्यपि बोध्यम् ।

❀ वरवर्णिनी ❀

निष्ठप्रधानताया अपि त्रलतसिलादिरेव प्रयोजक इति—अप्रधानतायां त्रलप्रयोज्यत्वस्य, तादृशत्रलादिपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्प्रधानतानिरूपितत्वस्य च सत्त्वात्तदसमानाधिकरणद्वित्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यतानिरूपकोपस्थितिजनकत्वस्य त्रलादावभावेन न द्विवचनत्वम् ।

'स्वप्रयोज्यत्व'सम्बन्धनिवेशादुभयोर्वास इत्यादावोसि क्रियाऽधिकरणभावसम्बन्धनिष्ठप्रधानताप्रयोजकत्वेन स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्प्रधानतानिरूपितद्वित्वावच्छिन्नप्रकृत्यर्थनिष्ठाऽप्रधानतासमानाधिकरणसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यताकोपस्थितिजकत्वेऽपि ओसो द्विवचनत्वमक्षतं, तादृशाऽप्रधानतायां स्वप्रयोज्यत्वस्याभावात्ताऽप्रधानताप्रयोजकत्वम् । ओसो हि द्वित्वमात्रमर्थः, त्रलादिस्तु विभक्त्यन्तस्य स्वार्थे विहित इति तादृशाऽप्रधानताप्रयोजकत्वं तत्रास्त्येवेति तत्त्वम् ।

प्रधानतायां—'स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्त्व'निवेशाच्च—'उभोभौ पश्यन्ती'त्यत्र द्वितीयोभशब्दस्य द्विवचनत्वसिद्धिः । तत्र हि—दर्शनक्रियाकर्मभावसम्बन्धनिष्ठप्रधानताप्रयोजिका द्वितीयाविभक्तिरौ इति, न तु यस्योभशब्दस्य द्विवचनत्वं चिकीर्षितं स इति—उभशब्दपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती प्रधानता न दर्शनक्रियाकर्मभावसम्बन्धनिष्ठेति तादृशसङ्ख्येयनिष्ठविशेष्यतायास्तन्निरूपिताऽप्रधानत्वसामानाधिकरण्येऽपि दोषविरह इति श्रीमन्तो महामान्याः श्रीगुरुचरणा व्याकुर्वते ।

१ एवञ्च यदागमपरिभाषावदत्रापि—स्वार्थिकप्रत्ययविशिष्टः प्रकृतिग्रहणेन गृह्यते इत्यर्थः, यदागमपरिभाषावदेव चात्र वै० 'स्वघटितत्व' 'स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व' 'स्वविशिष्टा-

**तस्मात्**—उभयशब्दात् । **जसीति** । अवयवद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः । **अन्तरङ्गत्वादिति** । सर्वार्थबोधकत्वरूपार्थस्योभयत्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बहिरङ्गत्वम् , अत एव सञ्ज्ञोपसर्जनप्रथमादिशब्दे न विकल्पः, अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः । इदमर्वाचामनुरोधेन ।

**परे तु**—अस्य पक्षेऽभावबोधकतया 'निषेधाश्च बलीयांस' इत्यनेनाऽस्य प्राप्तिः ।

❀ **अभिनव-चन्द्रिका** ❀

शब्दस्यापि ग्रहणात्केऽप्युभशब्दस्य द्विवचनपरत्वमेवेत्युभशब्दपाठो व्यर्थः । अत एव प्रकृतितोऽभिन्ना इत्यर्थकं 'प्रकृतितोऽविशिष्टा' इति भाष्यं सङ्गच्छते । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इत्याहुः।

**सर्वार्थबोधकत्वरूपार्थस्येति** । प्राधान्येन स्त्रीयसर्वार्थवाचकत्वरूपार्थस्येत्यर्थः । **पक्षेऽभावबोधकतयेति** । अयं भावः-प्रथमचरमेति विकल्पस्य नेमशब्दे प्राप्ते अन्यत्राऽप्राप्ते

❀ **चिदस्थिमाला** ❀

प्रत्याख्यानः, न त्वलाद्यर्थः, अन्यथा सर्वनामत्वात्तौ न स्यातामिति भाष्यतात्पर्यमिति **शास्त्र्युक्त**मपास्तम्। उपसंहारपरत्वभ्रमनिरासायाह—**उभयेति** ।

ननु समुदायस्यैकत्वात्कथमिदमत आह—**अवयवेति** । एकशेषेणेति भावः । सञ्ज्ञायाः=तस्या एव । अत एव=विकल्पेपि तस्य निमित्तत्वादेव । इदं प्राचां मतेन । सिद्धान्तमाह—**अर्थेति** । **अर्वाचां**=प्रक्रिया·

❀ **ज्योत्स्ना** ❀

उभयत्रापि=नित्यवैकल्पिकसञ्ज्ञयोः । निमित्तत्वे=निमित्तत्वे सतीत्यर्थः । न तत्कृतं=सर्वार्थबोधकत्वरूपार्थकृतं-नित्यसञ्ज्ञाया बहिरङ्गत्वं नेत्यन्वयः । उपसर्जनप्रथमादिशब्दे न विकल्पः=विकल्पो नेत्यन्वयः । ननु शब्दरूपनिमित्तस्योभयत्र साम्ये शब्दकृतान्तरङ्गबहिरङ्गभावोऽसम्भव एव, अर्थादिकृतोऽन्तरङ्गबहिरङ्गभाव आश्रीयते इत्यस्वरसादाह—**अर्थकृतेति** । अस्य=विकल्पस्य । अस्य=पाक्षिकशीभावनिषेधस्य । ननु 'निषेधाश्च बलीयांस' इत्यत्र निषेधशब्देनात्यन्तं विध्युन्मूलको निषेधो गृह्यते, न पाक्षिकोऽपीत्यस्वरसादाह—**अत एवेति** ।

❀ **वरवर्णिनी** ❀

**इत्यनेनास्येति** । परे तु परिभाषेन्दुशेखरे 'निषेधाश्च बलीयांस' इत्यत्र-'विध्युन्मूलनाय प्रवृत्तिरस्या बीज'मिति स्वयमेवोक्ततया प्राप्ताऽप्राप्तविभाषास्थले विध्युन्मूलनाभावेन तत्परिभाषाप्रवृत्तेरभावेनेदं चिन्त्यम्।

घटितत्वै'तन्नितयसम्बन्धेन । तत्रापि वै० 'स्वेतरत्व' 'स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वै'तदुभयसम्बन्धेन । यथा—देवदत्त एव देवदत्तक इत्यादौ स्वार्थिके कनि—देवदत्तकस्य देवदत्तपदेन ग्रहणं, तत्र स्वं—कन्, तद्घटितत्वात्, कन्निष्ठविधेयतानिरूपितोद्देश्यताश्रय—देवदत्त-घटिततत्वात्, कनितर-कन्निष्ठविधेयतानिरूपितोद्देश्यताश्रय-देवदत्ते-तराघटितत्वाच्च देवदत्तकस्येति समन्वयः । प्रदर्शितश्चायं प्रकारो यद्गामपरिभाषानिरूपणे **विजयायां श्रीजयदेवमिश्रै**रिति प्राहुः ।

१. परेतु—उभौ पश्येत्यादौ द्वितीयार्थ कर्मत्वान्वयिवृत्तित्वेन्वेतीत्यत्रापि निषेधानापत्तिः 'प्रकृतितोऽविशिष्टा' इत्यक्षरस्वारस्यभङ्गापत्तिश्चेति—अपूर्ववचनमेवैतत्कल्प्यते—'स्वार्थिकाः प्रकृतितोऽविशिष्टा' इति, स्वार्थिकप्रत्ययान्ते प्रकृत्यभेदो वाचनिक आरोप्यते इति च तदर्थः । एवञ्च-यथाऽकचि तन्मध्यपतितन्यायबलाद्विवचनपरत्वन्तथा कप्रत्ययान्तेऽपि अनेन भाष्यवचनेन प्रकृत्यभेदाद्विवचनपरत्वम् । उभोभाविति समासे तु अयज्भवत्येव, अतिदेशश्चायं न सार्वत्रिकस्तेन स्वार्थिककप्रत्ययान्ताश्विकादिशब्दादड्ढेढ्गित्यादिर्न भवति । उभयत्रेत्यादौ तु न दोषस्तलादेरत्यन्तस्वार्थिकत्वाभावेनाऽतिदेशाप्रवृत्तेरित्याहुरिति **श्रीबालशास्त्रि**चरणानुयायिनः ।

किञ्च न 'अन्तरङ्गं बलीयः' इत्यस्या अत्र विषयो, युगपत्प्राप्त्यभावात् । सञ्ज्ञानां वाऽव्यवाधकभावानभ्युपगमेन प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाप्रवृत्तेः ।

ॐ अभिनव-चन्द्रिका ॐ

विभाषान्तेन पक्षे अभावस्यापि विधेयत्वेनाऽऽश्रयणा नञं चाध्याहृत्य प्रथमादीनां सर्वनामसञ्ज्ञा न भवतीति पूर्वं सामान्यतो निषिध्य पश्चादुद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयाद्विकल्पेन सर्वनामसञ्ज्ञाविधाने 'निषेधाश्च बलीयांस'इतिन्यायेन 'उभये' इत्यादौ 'प्रथमचरमे'ति विकल्पस्यैवापत्तेरिति भावः ।

**सर्वनामसञ्ज्ञाप्रवृत्तेरिति** । वस्तुतस्तु 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जात-

ॐ चिदस्थिमाला ॐ

कारादीनां प्राप्तिः सिद्धत्वादाह—**अभावेति** । **निषेधाश्चेति** । विध्युन्मूलकत्वेनोपजीव्यादपि ते बलीयांस इत्यर्थः। अभ्युपेत्येदं, वस्तुतस्तदविषय एवेति प्राचां मतेनैवाह—**किञ्चेति** । सञ्ज्ञानाम्=आकडारीया-

ॐ सदाशिवभट्टीयम् ॐ

अतएवो'भा'मित्यस्य सिद्धि', अत एवोद्द्योते बोधकपदोपादानमेव । **अभावबोधकेति** । 'न वेति विभाषे'-त्युक्तेरिति भावः । एवञ्चापवादविषयेऽन्तरङ्गोद्भावनमसङ्गतमिति भावः । इदञ्च प्राप्तिमभ्युपेत्य, वस्तुनस्तत्प्राप्तिरेव नेत्याह—**किञ्चेति** । **युगपत्प्राप्त्यभावादिति** । उभयविषयकवाक्ये—जसि परतः सर्वनामता वा न भवति–जसः कार्यं प्रतीति सूत्रार्थोऽत्र पक्षे, जसः कार्यमिति वाचनिकं, यद्वा जसः स्थाने आदेशे कर्तव्ये,जस इकारे कर्तव्य इत्यर्थो वा, जसुत्तरमेव तस्य कर्तव्यतेति न युगपत्प्राप्तिः। 'प्रकल्प्य चे'ति

ॐ विषमपदविवृतिः ॐ

दानाच्च अज्ञातत्वादिविशिष्टप्रातिपदिकार्थे एव कप्रत्यय इति भावः । **परे त्वित्यादि** । **निषेधाश्च बलीयांस इति** । ननु स्वरतेर्वेट्त्वात्–'ऋद्धनोः स्ये इति विप्रतिषेधेने'ति विप्रतिषेधानुपपत्तिः,उक्तन्यायेन विकल्पस्य बलवत्त्वादिति चेन्न; 'ऋद्धनोः स्ये' इत्यस्य निषेधसमकक्षत्वात् ।

ॐ वरवर्णिनी ॐ

नञाऽभावबोधने एव सा प्रवर्त्तते, प्रकृते च वापदं, न नञ्पदमिति च तदप्रवृत्तिरिति **गुरवः** । अतोऽरुचेराह—**किञ्चेति** । अंशद्वयवती हि–अन्तरङ्गपरिभाषा, तस्या आद्योंऽशः 'अन्तरङ्गं बलीय' इति । एवञ्च–नित्यसञ्ज्ञाया अन्तरङ्गत्वेऽपि–'अन्तरङ्गं बलीय' इत्यंशेन नित्यसञ्ज्ञाया बलवत्त्वं न वक्तुं शक्यं, नित्यसञ्ज्ञा–विभाषासञ्ज्ञयोर्युगपत्प्राप्तेरभावादिति भावः । परे तु—पूर्वप्रवृत्तिकत्वरूपं लौकिकमन्तरङ्गत्वमेव-नित्यसञ्ज्ञायाः, न तु शास्त्रीयं तदिति नित्यसञ्ज्ञाया अन्तरङ्गतया लौकिकं बलवत्त्वं सुस्थमेवेति चिन्त्य एवायं शेखर इत्याहुः ।

१. अयं भावः—प्रतियोगिसापेक्षाभावबोधकनञा विध्युपमर्दकतयाऽभावो बोध्यते इति–तत्र विध्युपमर्दकतया शाब्दबोधेऽभावभानेन विध्यपेक्षयाऽधिकं बलं, विधेर्निषेधोपमर्दकत्वेन शाब्दबोधेऽभानात् । वादिशब्दैर्बोधितोऽभावस्तु न विध्युपमर्दकत्वेन भासते, नातो निषेधस्यात्राधिकबलता ।

किञ्च–'प्रथमचरमे'ति सूत्रे नेमशब्दांशे पक्षेऽभावबोधकं, भावस्य पूर्वेणैव सिद्धत्वात् , प्रथमादिषु च भावस्यैव बोधकम् , अभावस्य सिद्धत्वादिति प्रथमाद्यंशेऽस्य निषेधत्वाभावेन बलवत्त्वाभाव इति चिन्त्यमेतदिति । इत एवारुचेराह—**किञ्चेति** ।

२. परेतु—'विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव सञ्ज्ञा भवती'ति कौमुदीग्रन्थस्य–नित्यसञ्ज्ञाप्राप्तिकाले विकल्पसञ्ज्ञाया अप्राप्तिलक्षणमेव तत्र लौकिकं बहिरङ्गत्वं, यथा 'सुध्युपास्य' इत्यत्र यण्प्रवृत्तिकालेऽनचि चेत्यस्याऽप्रप्तिरूपं बहिरङ्गत्वमित्यस्य वक्तुं शक्यतया चिन्त्यमेतत् । किञ्च—पदसंस्कारपक्षे समकालप्राप्तिरपि सुवचेति शेखरोऽयं चिन्त्य एवेत्याहुः ।

अत एवोभये इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः, 'पूर्वपरे'त्यादि तु पक्षे तदभावमात्रबोधकम्। 'असिद्धं बहिरङ्ग'मित्यपि न; अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः।

❀ अभिनव-चन्द्रिका ❀

निमित्तमप्युत्सर्गं बाधते' इति न्यायेन 'यदि नित्या सञ्ज्ञा न स्यादस्माज्जसि अपवादः प्रथमचरमेति-विकल्पः स्या'दिति सम्भावनायाः सत्त्वेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचात्पूर्वरीत्या निषेध-शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सर्वादीनीत्यत्र सङ्कोचान्नित्यसञ्ज्ञाया अप्राप्तेरिदं-चिन्त्यम्। **शीभावसिद्धिरिति**। वस्तुतस्तु जसुत्पत्त्यनन्तरं सर्वनामसञ्ज्ञायामपि सर्वनामसञ्ज्ञकाभिन्नं

❀ चिदस्थिमाला ❀

ऽन्यासाम्। अत एव=सुबुत्पत्तेः पूर्वमेव तत्सत्त्वादेव। नित्यप्रवृत्त्युत्तरमपि विकल्पप्रवृत्त्या पक्षे तदभाव-विशिष्टे साधुत्वं सुबोधमित्याह—**पूर्वेति**।

नन्नु कथं तावतातदभावोत आह—**अन्तरङ्गेति**। अनया='असिद्ध'मित्यनया। नन्नु तथैवार्थे माना-

❀ ज्योत्स्ना ❀

प्रायिकत्वोक्तेः फलमाह—**अत एवेति**। **शीभावसिद्धिरिति**। विहितविशेषणफलन्तु 'मासपूर्वा' इत्यादौ शीभावाद्यभाव इति प्रागुक्तम्, तदपि—'तृतीयासमासे'इत्यादीनां समुदायस्यैव निषेधकत्व-मिति मतेन। यदा त्वेवं सति तत्र सप्तमीनिर्देशवैयर्थ्यापत्तिः—तस्मात्तृतीयासमासादिघटकतत्तत्सर्वा-

❀ सदाशिवभट्टीयम् ❀

न्यायेन प्रवृत्तिपक्षे नित्यसञ्ज्ञायाः पूर्वमप्रवृत्तिः, अप्रवृत्तिपक्षे जसः पूर्वमेव नित्यसञ्ज्ञाप्रवृत्तिरित्युभये इत्यस्य सिद्धिरिति भावः। नन्नु प्रथमे इत्यादिसिध्यनुरोधाद्वाक्यान्तरे जस्विषये पूर्वमेव सर्वनामता वा भवति

❀ विषमपदविवृतिः ❀

नचैवमप्याकडारादन्यत्र सञ्ज्ञाया बाध्यबाधकभावाभावादिदमयुक्तमिति वाच्यं, विजातीययो-स्तदभावेपि सजातीययोस्तदङ्गीकारात्, नित्यविकल्पयोः सञ्ज्ञयोरेकसञ्ज्ञाधिकारबहिर्भूतयोरपि तदङ्गीकाराद्वा, भावाभावयोर्विरोधेन तयोः साक्षाद्विरोधात्। साक्षादविरुद्धयोरेवैकसञ्ज्ञाधिकारबहि-र्भूतयोस्तयोर्बाध्यबाधकभावाभावः, साक्षाद्विरुद्धयोस्तुल्ययोः साऽस्त्येव, यथा तपरस्तत्कालस्याणु-दित्सवर्णस्येत्यनयोः। अत एव पूर्वादीनां वैकल्पिकीं सर्वनामसञ्ज्ञां नित्यसञ्ज्ञा बाधते।

नन्वेवं 'पूर्वे' इत्यादौ शीभावोत्तरं न स्यात्, 'पूर्वपरे'त्यादिना जसि परतः सर्वनामसञ्ज्ञाविकल्पवि-धानेन जसः सर्वनाम्नो विहितत्वाभावादित्याशङ्क्याह—**पूर्वपरेत्यादि त्विति**। तथा च 'पूर्वे' इत्यादौ जसः पूर्वं प्रवर्तमानां 'सर्वादीनी'त्येतद्विहितां सर्वनामसञ्ज्ञामुपजीव्य शीभावप्रवृत्तिरिति भावः।

नन्वसिद्धं बहिरङ्गमित्यनेनान्तरङ्गोत्तरं प्रवर्त्तमानबहिरङ्गस्यासिद्धत्वेनाभावबोधनान्न दोष इत्याशङ्क्य समाधत्ते—**असिद्धमिति**। नन्वन्तरङ्गप्रवृत्त्युत्तरं प्रवृत्तिनिमित्तसद्भावाधीनबहिरङ्गप्रवृत्तेरन्तरङ्गपरि-

❀ वरवर्णिनी ❀

**सर्वनाम्नो विहितत्वेनेति**। परे तु विहितविशेषणं न युक्तं, पदसंस्कारपक्षे पूर्वं जसाद्युपस्थितौ परपदाध्याहारस्यैव युक्तत्वादित्याहुः। नन्वेवं नित्यसञ्ज्ञायां विकल्पसञ्ज्ञा न स्यादत आह—**पूर्वपरेति**। तदभावः=नित्यसर्वनामसञ्ज्ञाऽभावः। भुक्तवन्तमितिन्यायो नात्राश्रीयते इत्याशयः। 'असिद्धं बहिरङ्ग-मन्तरङ्गे'इत्यस्या द्वितीयोंशः—'असिद्धं बहिरङ्ग'मिति, प्रकृते तमपि निरस्यति—**असिद्धमिति**। अन्तरङ्गे=

१. वस्तुत इदं चिन्त्यं, 'जसः शी'त्यादेः—तदाद्यभिन्नसर्वनाम्नः परस्य जसः शीत्यर्थस्यैव अभिनवचन्द्रिकादौ सिद्धान्तितया विहितविशेषणाश्रयणे फलाभावात्।

अन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि—तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात्, बहुशस्तथा दृष्टत्वात्। तदुत्तरमप्येतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात्। 'जसी'ति विषयसप्तमीतिपक्षेऽपि—प्रातिपदिकादिसञ्ज्ञोत्तर-

## ❀ अभिनव-चन्द्रिका ❀

यददन्तमङ्गं ततः परस्य जसः शी स्यादित्यर्थकरणेन 'वर्णाश्रमेतरा'इत्यादौ दोषाभावाद्विहितपदाध्याहारस्य पूर्वमेव खण्डितत्वाज्जसुत्पत्त्यनन्तरमपि सर्वनामसञ्ज्ञायां नोक्तदोष इति बोध्यम्।

**वारयितुमशक्यत्वादिति**। वस्तुतस्तु नित्यसञ्ज्ञाप्रवृत्तिकाले विकल्पस्याप्राप्तिरूपमेव बहिरङ्गत्वं

## ❀ चिद्रस्थिमाला ❀

भावोऽत आह—**बहुश इति**। नन्वेवमस्य वैयर्थ्यमत आह—**तदुत्तरमिति**। ननु तत्र विषयसप्तम्यां युगपत्प्राप्त्या पूर्वविषयत्वमत आह—**जसीति**। आदिना नित्यसञ्ज्ञा।

## ❀ ज्योत्स्ना ❀

दीनामुपसर्जनानामिव पाठाद्बहिर्भाववद्द्वारैव सर्वनामसञ्ज्ञानिषेधात्तदन्तविधिना सञ्ज्ञाप्राप्तेरसम्भवाद्विहितविशेषणे प्रयोजनाभावः, अत एव वृत्तौ विहितविशेषणं न कुत्राप्युक्तं दीक्षितैरपि तु सुब्विधावेव विहितविशेषणप्रयोजनं वदद्भिस्तत्रानास्था प्रदर्शितेत्युच्यते—तदा मूलोक्तं साध्वेव, वक्ष्यमाणभाष्यग्रन्थस्तु यथोद्देशपक्षाभिप्रायेणेत्याहुः।

**बहुशस्तथादृष्टत्वादिति**। 'हे पयो ३ द्' हेपयो ३द'त्यादावन्तरङ्गे एकादेशादौ बहिरङ्गप्लुतादेर्दृष्टत्वा-

## ❀ सदाशिवभट्टीयम् ❀

शीभावे कर्त्तव्ये इत्यर्थ आवश्यकः, जस आदेशस्य विषये इत्यर्थो वा, उभयथापि शीभावविषयता जसः प्राक्कालीनैव सामर्थ्याद्गृह्यते इति युगपत्प्राप्तिर्नित्यविकल्पविध्योः सम्भवतीति चेत्तत्राप्यसम्भव एवेत्याह—**जसीति विषयसप्तमीति**। ननु 'मनुष्योयं प्रातरुत्थाये'ति दृष्टान्तेन पूर्वं यस्य निमित्तसम्पत्तिस्तस्य

## ❀ विषमपदविवृतिः ❀

भाषया निवारणाभावेपि बहिरङ्गा वैकल्पिकी सर्वनामसञ्ज्ञाऽसम्भवादेव न प्रवर्त्तते, न हि नित्यसञ्ज्ञोत्तरं प्रवर्त्तमानमपि पूर्वपरेति शास्त्रं सर्वनामसञ्ज्ञाया अभावं बोधयितुं क्षमं, भावाभावयोर्विरोधात्। विधायकशास्त्रभेदेन सञ्ज्ञाभेदे तु—'पूर्वपरे'त्यादिना स्वविहितसञ्ज्ञाया अभावबोधनेपि 'सर्वादीनी'त्येतद्विहिताया अभावाबोधनात्, तामाश्रित्य नित्यं शीभावो दुर्वार इत्याशङ्क्याह—**तदुत्तरमपीति**। शास्त्रभेदेन सञ्ज्ञाया भेदाभावेपि जातसञ्ज्ञाया एव पूर्वादिष्विवोभयोरपि

## ❀ वरवर्णिनी ❀

नित्यसर्वनामसञ्ज्ञा, बहिरङ्गं—वैकल्पिकसञ्ज्ञा। **बहुश इति**। यथा—'ग्रामणिनी'इत्यत्रान्तरङ्गे नपुंसकह्रस्वे कृते बहिरङ्गभूनोऽपिनुम् भवत्येव। तव तु जातेऽप्यन्तरङ्गे बहिरङ्गनुमोऽप्रवृत्तिरेव स्यादिति भावः। नन्वेवं प्रथमेति सूत्रं व्यर्थमित्यत आह—**तदुत्तरेति**। एवञ्च नित्यसञ्ज्ञोत्तरमपि तव विकल्पोपपत्तेर्न वैयर्थ्यमितिभावः।

१. तत्तच्छास्त्रप्रामाण्यात्सर्वनाम्न्यपि पूर्वादौ पक्षेऽसर्वनामत्वमारोप्यते इत्याशयमस्य श्रीबालशास्त्रिचरणानुसारिणः प्राहुः। **बोधनस्येति**। चिन्त्यमिदं—सर्वनामत्वासर्वनामत्वयोः परस्परविरुद्धयोरेकत्रावस्थानासम्भवात्। पूर्वोक्तः सर्वनाम्न्यप्यसर्वनामत्वस्य आरोपस्तु न युक्तः, यत्र शास्त्रस्य वैयर्थ्यसम्भावना तत्रैव तादृशारोपस्य शास्त्रप्रामाण्यादङ्गीकारेऽपि प्रकृते द्वितये इत्यादौ शास्त्रस्य चरितार्थतया तथा वक्तुमशक्यत्वात्।

मेवास्याः प्रवृत्तिः, तदुत्तरमेव तद्विषयात् । स्थानिवदतिदेशप्रापिताया निरवकाशत्वाच्च ।

❀ अभिनव-चन्द्रिका ❀

'प्रथमचरमे'त्यस्य मूलकृतोऽभिप्रेतमिति नेदं दूषणं सम्यक् । **निरवकाशत्वाच्चेति** । चिन्त्यमिदम्, प्रथमचरमेतिशास्त्रस्यात्र प्रवृत्तेरभावेन स्थानिवदित्यतिदेशार्थमन्यत्सञ्ज्ञाशास्त्रमन्यविषयेऽन्यदिति वक्तुमशक्यत्वेन निरवकाशत्वस्य दुरुपपादत्वात् । न च 'उभये' इत्येतल्लक्ष्यसिद्ध्यर्थं व्यक्तिपक्षे उपप्लुतं 'प्रथमचरमे'तिशास्त्रं निरवकाशमिति वक्तुं युक्तम्, एवन्तर्हि 'उभये' इतिलक्ष्यार्थमुपप्लुतस्य

❀ चिदस्थिमाला ❀

अस्याः=वासञ्ज्ञायाः । तत्र दोषान्तरं सिद्धान्तमतेनाह—**स्थानिवदिति** । ननु कार्यकालपक्षे

❀ ज्योत्स्ना ❀

दित्यर्थः । परशास्त्रप्रवृत्त्युत्तरं पूर्वशास्त्रप्रवृत्तेः पूर्वप्रवृत्तपरशास्त्रप्रवृत्तिवैयर्थ्यापादकत्वेऽनिष्टत्वाच्चिन्त्य-

❀ सदाशिवभट्टीयम् ❀

पूर्वं प्रवृत्तिरित्यर्थः सिध्यति, तस्यापि परिभाषया क्रोडीकारे न बाधकं, तत्रासिद्धत्वं च निमित्ताभावादप्राप्तिरूपमिति युगपत्प्राप्त्यभावेपि परिभाषासञ्चरत्वेवेति चेत्तत्राह—**स्थानिवदिति । निरवकाशेति** । अयं भावः—प्रकृतिभेदात्प्रत्ययो भिद्यते, स्थानिभेदादादेशो भिद्यते, आदेशभेदात्स्थानिवद्भाववाक्यं भिद्यतेऽनल्विधिभेदाच्च । एवञ्चो भयशब्दावयवोऽयजादेशः सर्वनामत्वेऽनल्विधौ कर्तव्ये 'तयरूपस्थानिव'दिति वाक्यं निरवकाशमिति । एतेनोभयीत्यत्र ङीप्सम्पादनेन द्वयेत्यादिसाधनेन चातिदेशप्रापितापि सावकाशेति परास्तम् । अन्यस्यानभिधानाच्च । **येन** निषेधानां वलीयस्त्वस्य सङ्ग्रहः । ननु परिभाषाविरोधादतिदेशवाक्योपप्लव एव नेति चेत्तत्राह—**प्रत्यक्षेति**। निरवकाशत्वञ्च 'दिवः कर्म चे'ति सूत्रस्थमनोरमानुरोधेन

❀ विषमपदविवृतिः ❀

अभावबोधनं सम्भवति, लुगादिनेव जातनिवृत्तेरङ्गीकारादिति भावः । ननु 'प्रथमचरमे'त्यादौ जसीति विषयसप्तमी, तथा चान्तरङ्गबहिरङ्गयोर्युगपत्प्राप्त्याऽन्तरङ्गं बलीय इत्यस्यात्र विषयोस्त्येवेत्याशङ्क्याह—**जसीति** । **तदुत्तरमेतद्विषयादिति** । तथा च प्रातिपदिकसञ्ज्ञोत्तरमेव शीभावविषयसत्त्वेन तदुत्तरमेव वैकल्पिकी सर्वनामसञ्ज्ञा । नित्यसर्वनामसञ्ज्ञा तु प्रातिपदिकसञ्ज्ञा-

❀ वरवर्णिनी ❀

ननूभयशब्दातिरिक्ते प्रथमशब्दादौ तव जसुत्पत्त्यनन्तरं प्रथमचरमेतिसर्वनामसञ्ज्ञेतिसर्वनाम्नोऽविहितत्वाच्छीभावो न स्यादतस्त्वयाऽपि अगत्या प्रथमचरमेतिविकल्पसञ्ज्ञायां विषयसप्तमी वक्तव्येति नित्यविकल्पसञ्ज्ञयोः प्रातिपदिकसञ्ज्ञासमकालप्राप्तिकतयाऽसिद्धं बहिरङ्गमित्यनयाऽन्तरङ्गत्वान्नित्यैवसञ्ज्ञेति वक्तुं शक्यमित्यत आह—**जसतीति** । **तद्विषयादिति** । विषयता हि—स्वीयोद्देश्यतावच्छेदकाक्रान्तत्वे एव । एवञ्च प्रातिपदिकसञ्ज्ञां विना जस्विषयकसर्वनामसञ्ज्ञाया अप्राप्त्या प्रातिपदिकसञ्ज्ञासमकालत्वं न विकल्पसञ्ज्ञाया इत्याशयः । **अतिदेशेति** । अयच्चि तयपोऽतिदेशादित्यर्थः ।

---

१ तयप्स्थानिकस्याऽयचः स्थानिवद्भावार्थमुपप्लुतस्य स्थानिवत्सूत्रस्य निरवकाशत्वमित्यर्थः । चिन्त्यमिदम्—उपप्लुतस्य वैयर्थ्यसम्भावनायामुपप्लवस्यैवाभावेनादोषात् । अन्यथा—निर्जरैरित्यत्र स्थानिवदतिदेशप्रापितेन जरसादेशेनानुमानिक्याःसन्निपातपरिभाषाया बाधाज्जरसादेशापत्तिः स्यात् ।

प्रत्यक्षस्य स्थानिवद्भावस्यानुमानिक्याऽनया बाधायोगाच्च । सर्वनामसञ्ज्ञायामुक्तयुक्त्या यथोद्देशपक्षस्यैवौचित्याच्च । अत एव 'तयादेशे उभयप्रतिषेधः, तयपो ग्रहणेन ग्रहणात् जसि विभाषा प्राप्नोती'ति स्थानिवत्सूत्रस्थं वार्त्तिकम्—'अयच्प्रत्ययान्तर'मिति

❀ अभिनव-चन्द्रिका ❀

'सर्वादीनि सर्वनामानी'तिशास्त्रस्यापि निरवकाशत्वस्य तुल्यत्वात् । बाधायोगाच्चेति । इदमपि चिन्त्यमेव, नित्यसञ्ज्ञाप्रवृत्तिकाले विकल्पसञ्ज्ञाया अप्रवृत्त्या नित्यसञ्ज्ञाप्रवृत्तिकाले परस्य-निमित्ताभावादप्रवृत्तिरूपं बहिरङ्गत्वमिति वदितुमते प्रत्यक्षस्थानिवदितिशास्त्रस्य ज्ञापकसिद्धत्वेनानुमानिक्या 'असिद्धं बहिरङ्ग'मितिपरिभाषया बाधायोगादिति कथनस्यायुक्तत्वात । अत एवेति । 'निषेधाश्च बलीयांस' इति न्यायेन प्रथमचरमेतिशास्त्रस्योभयत्र विभाषात्वेन पूर्वं निषेधमुखेन प्रवृत्त्युपपत्तये कल्पितान्निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन 'सर्वादीनी'त्यत्र सङ्कोचान्नित्यसञ्ज्ञाया अप्राप्त्या, पक्षे सर्वनामसञ्ज्ञासम्पत्तये कल्पितेन 'विभाषा जसि सर्वनामसञ्ज्ञा भवती'ति वाक्येन 'उभये' इत्यादौ विकल्पेन सञ्ज्ञा प्राप्नोतीति स्वीकारादेवेत्यर्थः ।

❀ चिदस्थिमाला ❀

यौगपद्यमेवेत्याद्यर्थकासिद्धमित्यस्य विषय एवात आह—सर्वेति । उक्तेति । तासां बाध्यबाधक भावाभावेन ततः प्राक् तत्प्रवृत्त्या ततो विहितत्वेन शीसिद्धिरूपयेत्यर्थः । 'औचित्याच्चे'ति पाठः । अत्र भाष्यसम्मतिमाह—अत एवेति । अन्तरङ्गत्वेन अनिर्वाहादेवेत्यर्थः । नन्वेवं ङीप्स्यादतो

❀ ज्योत्स्ना ❀

मेतत् । आनुमानिक्या बाधायोगाच्चेति । वस्तुतोऽक्लृप्तबाधाया नित्यसञ्ज्ञाया बाधकल्पनापेक्षया क्लृप्तबाधाया वैकल्पिकसञ्ज्ञाया एव बाध उचितः ।

❀ सदाशिवभट्टीयम् ❀

तद्रीत्यापि । ननु कार्यकालपक्षे जसुत्तरमेव नित्यसञ्ज्ञाया अपि प्राप्तिरिति युगपत्प्राप्तिरस्त्येवेति चेत्तत्राह—सर्वनामेति । अत एव तयादेश इति । तयबन्तत्वप्रयुक्ते आदेशे कर्तव्ये उभयशब्दावयवादेशस्य

❀ विषमपदविवृतिः ❀

समकालमेवेति न तयोर्युगपत्प्राप्तिरिति भावः । आनुमानिक्यानयेति । 'अन्तरङ्गं बलीय' इत्यनयाऽसिद्धं बहिरङ्गमित्यनया वेत्यर्थः । नन्वस्तु यथोद्देशे नित्यपाक्षिकयोर्युगपत्प्राप्त्यभावः, तत एव चान्तरङ्गं बलीय इत्यस्याप्रवृत्तिश्च, तथापि कार्यकालपक्षेऽस्त्येव तयोर्युगपत्प्राप्तिः, शीभावप्रवृत्तिकाल एव नित्यसञ्ज्ञाप्रवृत्तेरित्याशङ्क्याह—सर्वनामसञ्ज्ञायामिति । उक्तयुक्त्येति । सर्वनाम्नो विहितत्वेन शीभावसिद्धिरित्युक्तयुक्त्येत्यर्थः । यद्यपि कथञ्चिद्युगपत्प्रवृत्तिं गृहीत्वाऽन्तरङ्गं बलीय इति नित्यसञ्ज्ञाप्रवृत्तावपि तदुत्तरं बहिरङ्ग इति पूर्वशेखरोक्तयुक्त्या सूपपादा, अन्यथान्तरङ्गं बलवदित्यस्य विषयाभावेपि प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाङ्गीकारात्तन्निवृत्तिर्न स्याद; तथाप्यन्तरङ्गं बलवदिति न्यायेन बाधितस्य पुनरप्रवृत्तिरित्यभिप्रायेणेदम् । अत एवेति । उक्त-

---

१ आनुमानिक्येति । चिन्त्यमिदम्, अनया प्रधानतमविधिशास्त्राणामपि बाधस्याभ्युपेयतया-अप्रधानानामतिदेशानां बाधप्रतिबन्धासम्भवात् ।

२ ननु कार्यकालपक्षे विभक्तेः प्राक्फलाभावात्सर्वनामसञ्ज्ञाऽप्रवृत्तिः, विभक्त्युत्पत्तौ तु समकालप्राप्तिरस्त्येव नित्यविकल्पसञ्ज्ञयोरित्यत आह—यथोद्देशेति । सर्वनाम्नो विहितस्य जसः शीत्वादिपूर्वोक्तार्थे सर्वनाम्नो विहितत्वस्य सिद्धये पूर्वं सर्वनामसञ्ज्ञाऽऽवश्यकीति यथोद्देशपक्ष आस्थेय इत्याशयः । चिन्त्यमेतत्—तदाद्यमिन्नसर्वनाम्नः परस्येत्यार्थेन सिद्धेर्विहितविशेषणस्यानौचित्येन कार्यकालपक्षाश्रयणे बाधकाभावात्समकालप्राप्तेः सुलभत्वात् । ३ अत एव=विकल्पस्य प्रागेव प्राप्तेरेव, अन्तरङ्गनित्यसञ्ज्ञया विकल्पस्य बहिरङ्गस्य बाधाभावादेव वा ।

सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातं, न त्वन्तरङ्गन्यायबलेन। 'उभयी'त्यत्र ङीप्तु 'टिड्ढे'ति-सूत्रे मात्रशब्दादारभ्यायचश्चकारात्प्रत्याहाराश्रयणेन सिद्धः। 'अत' इत्यनुवृत्त्या च 'कती'त्यादौ नातिप्रसङ्गः। तयब्ग्रहणन्तु सूत्रेऽवयुत्यानुवादः। द्वित्रिशब्दप्रकृतिकायजन्तस्य जसःशीविषयेऽनभिधानमेव, पुंस्येव वाऽनभिधानमिति तदाशय इति वेदन्ति।

❀ अभिनव-चन्द्रिका ❀

**अवयुत्यानुवाद इति**। पृथक्कृत्यैकदेशानुवाद इत्यर्थः। अत्रेदं तत्त्वम्—'धातोर्द्वये प्रत्ययाः सुपस्तिङश्च' इति भाष्ये 'द्वये' इति प्रयोगदर्शनेन—द्वित्रिशब्दप्रकृतिकायजन्तस्यानभिधानकथनं साहसमात्रमेव, तयादेशकल्पे विकल्पप्रवृत्त्या द्वये द्वया इति रूपद्वयं भवति, 'अयच् प्रत्ययान्तर'मिति कल्पे तु सर्वनामत्वाप्राप्त्या-'द्वया' इत्येवेति फलभेदस्तु न शङ्क्यः, आदेशकल्पे 'तयादेशे उभयप्रतिषेध' इति वार्तिकेन तयपः स्थानिवत्त्वनिषेधात्, 'अयच् प्रत्य-

❀ चिदस्थिमाला ❀

भाष्याशयमाह—**उभयीति**। **मात्रेति**। 'प्रमाणे इति सूत्रस्थे'त्यादिः। नन्वेवमतिप्रसङ्गोऽत आह—**अत इति**। ननु तयबुक्त्या पाणिन्यसम्मतमिदमत आह—**तयबिति**।

नन्वेवमप्यन्यत्र दोष एवात आह—**द्वित्रीति**। लक्ष्याभावादाह—**पुंस्येवेति**। तदाशयः=प्रत्याख्यानपर-

❀ ज्योत्स्ना ❀

सूत्रे=टिड्ढेतिसूत्रे। अवयुत्य=अवयवेनैकदेशेन तयब्रूपेण, अनुवादः-अर्थात्प्रत्याहार-ग्रहणस्येत्यर्थः। 'अवयुत्यनुवाद' इति पाठे—अवयुतेः=प्रत्याहारैकदेशस्यानुवाद इति षष्ठीसमासः। नन्वयचः प्रत्ययान्तरत्वे द्वये द्वया इति तयबन्तत्वप्रयुक्ता जसि विभाषा न प्राप्नोतीत्यत आह—**द्वित्रिप्रकृतिकेति**। **अनभिधानमेवेति**। इदं 'द्वित्रिभ्यां तयस्यायज्वा' इत्यत्र

❀ सदाशिवभट्टीयम् ❀

स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः। अत एव वार्त्तिकमते 'उभयी'ति ङीपि कर्तव्ये तत्प्रतिषेधो न, शीभाव एव तद्विधानात्। अत एव भाष्ये 'यदि प्रत्ययान्तरम्, 'उभयी'त्यत्रेकारो न प्राप्नोती'ति शङ्कितम्, नतु यदि स्थानिवत्त्वप्रतिषेध इत्यादि। **अनभिधानमेवेति**। इदं'द्वित्रिभ्यान्तयस्यायज्वे'ति तयग्रह-

❀ विषमपदविवृतिः ❀

युक्तथा नित्यसञ्ज्ञायाः वैकल्पिकसञ्ज्ञया बाधायोगादेवेत्यर्थः। **नातिप्रसङ्ग इति**। 'न षट्स्वस्रादिभ्य' इति निषेधोपि बोध्यः। नन्वेवं प्रत्याहाराश्रयणे टिड्ढेति सूत्रे तयब्ग्रहणं व्यर्थमित्याशङ्क्याह—**तयब्ग्रहणन्त्विति**। अवयुत्य=अवयवेनैकदेशेन, अवयुत्येति ल्यबन्तं वेति। 'अवयुत्यनुवाद' इति पाठे त्ववयुतेः प्रत्याहारैकदेशस्यानुवाद इति षष्ठीसमासः। ननु स्थानिवदित्यतिदेशप्रापिताया निरवकाशत्वाच्चेत्ययुक्तम्, 'द्वये' इत्यादौ सावकशत्वाच्चेत्याशङ्क्याह—**अनभिधानमेवेति**।

---

चिन्त्यमेतत्—उपायस्योपायान्तरादूषकतया भाष्यकृदुक्तस्यापि युक्तत्वात्। 'जसि विभाषा प्राप्नोती'-भाष्यस्थः पूर्वपक्षग्रन्थस्तु—नित्यसञ्ज्ञाया अन्तरङ्गत्वमबुद्ध्वा परत्वाद्विकल्प एव स्यादिति बुद्ध्वा च प्रवृत्त इति न तद्विरोध आपादनीयः।

१ **अनभिधानमिति**। 'अयच्प्रत्ययान्तर'मिति भाष्यप्रामाण्यादित्यर्थः। अन्यथा तयप्स्थानिकायच्प्रत्ययस्वीकारे 'द्वये' 'द्वया' इति रूपम्, 'अयच्प्रत्ययान्तर'मिति पक्षे तु 'द्वया' इत्येवेति फलभेदापत्तिः स्पष्टैवेत्याशयः। चिन्त्यमिदं—'धातोर्द्वये प्रत्यया' इति कर्तृकर्मणोः कृतीतिसूत्रस्थभाष्यप्रयोगादनभिधानस्य वक्तुमशक्यत्वात्। 'अयच्प्रत्ययान्तर'मिति भाष्यन्तु—'उभादुदात्तो नित्य'मित्यनेनायच्प्रत्यान्तरं विधीयते इत्यर्थकं, न तु 'द्वित्रिभ्यां तयस्यायज्वे'त्यनेनायच्प्रत्ययान्तरमित्यर्थकमिति न फलभेदशङ्कापीति प्राहुः।

केचित्तु 'द्वये' इति विभक्तिप्रतिरूपकमव्ययं मत्वा भाष्यविरोधं परिहरन्ति, तन्मुधैव, विभक्तिप्रतिरूपकत्वे मानाभावात्। अन्येतु 'द्वये' इति सप्तम्यन्तं, तथाच द्वये=आख्यातप्रातिपदिकार्थविषये इत्यर्थ इत्याहुः।

२ **मान्यास्तु**—प्राचीनमतमेवात्र ज्यायः, तथाहि—**यदुक्तमभावबोधकतयेति**; तन्न युक्तं,

**तथापीहेति** । 'प्रत्ययग्रहणे तदन्तग्रहण'मिति 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति च तदन्तविधिद्वयेन डतरान्तान्तेत्यादयर्थं परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य

❀ अभिनव-चन्द्रिका ❀

यान्तर मिति कल्पे च प्रथचरमेतिविकल्पसञ्ज्ञाया अप्राप्त्या 'उभये' इत्येकमेव रूपमित्यारम्भप्रत्याख्यानयोर्वैषम्याभावेनाऽनभिधाने मानाभावात् ।

वस्तुतस्त्वन्त्रादेशकल्पे 'तयादेशे उभयप्रतिषेध' इति वार्त्तिककरणाद्गौरवेणायच् प्रत्ययान्तर'-

❀ चिदस्थिमाला ❀

भाष्याशयः । नन्वेवं महिङो ङस्येव चस्य समुदायानुबन्धत्वेनाऽयचोऽननुबन्धत्वात्कथञ्चित्कार्यमिति वाच्यं, 'तस्थस्थमिपा'मित्यादिज्ञापकस्य विशेषापेक्षत्वेन तत्र तथाङ्गीकारेप्यत्र तथाङ्गीकारे मानाभावादिति **केचित्** । वस्तुतस्तु प्रत्याहारघटकचकाराऽन्यचस्य तद्विधौ सत्त्वेन दृष्टान्तवैषम्येण शङ्कैवायुक्तेति बोध्यम् ।

एकस्तदन्तविधिर्मूलाभिमत इति प्राचामुक्तिनिरासायाह–**प्रत्ययेति** । तत्र निषेधाप्रवृत्तौ, प्राचां मतेनव

❀ ज्योत्स्ना ❀

तयग्रहणस्याकरणप्रौढ्या । वस्तुतस्तूभशब्दप्रकृतिकोऽयजेव प्रत्ययान्तरम्,–'उभादुदात्त'इत्यत्र तयस्येत्यस्यानुवृत्तेः, नतु द्वित्रिप्रकृतिकोऽपि, तत्र तयग्रहणस्य सत्त्वात् । अत एव 'कर्तृकर्मणो'रितिसूत्र

❀ सदाशिवभट्टीयम् ❀

गस्याकरणप्रौढ्या, वस्तुतस्तूभशब्दप्रकृतिक एवायच् प्रत्ययान्तरन्तत्र तयस्येत्यननुवृत्तेः, द्वित्रिप्रकृतिकस्तु तयस्थानिक एव न तु प्रत्ययान्तरमिति **पाठकाः** । एतन्मतश्रद्धालवोऽन्ये त्वत्र अयच्प्रत्ययान्तरमिति भाष्यं यथाश्रुतं युज्यते, असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् । त्वया तूभशब्दप्रकृतिकोऽयजिति व्याख्येयमिति तद्भङ्गः स्यात् । भाष्ये तत्र च द्वितये इत्येव पाठ इति वदन्ति । इदञ्च 'नवेतिविभाषे'त्यारम्भे प्रत्ययान्तरत्वेन समाधानमावश्यकमिति स्पष्टमेव, तत्प्रत्याख्याने त्वन्तरङ्गप्रथमादिसाहचर्याद्विधिमुखेनैव प्रवृत्तिर्भविष्यतीति नित्यसञ्ज्ञाप्रवृत्तिमूलोक्तरीत्या न्याय्यैवेति बोध्यम् । **तदन्तविधिद्वयेनेति** । यद्यप्येकेनापि तदन्तविधिना प्रयोजनलाभात्पाठः सार्थकस्तथापि सत्येकस्मिंस्तदन्तविधा

❀ विषमपदविवृतिः ❀

वस्तुतो नेदं युक्तम्, अनभिधाने प्रमाणाभावात् । 'धातोश्च द्वये प्रत्ययास्तिङः कृतश्चे'तिभाष्यप्रयोगाच्च ।

अन्ये तु सर्वनामसञ्ज्ञायां कार्यकालपक्ष एव । तत्पक्षे च सञ्ज्ञायाः कार्यनिमित्तनिमित्तकत्वम्, अत एव 'पूर्वपरे'त्यादि चरितार्थम्, अन्यथा पूर्वं नित्यसर्वनामसञ्ज्ञायां तत एव नित्यशीभाव-

नत्किल–प्राप्तविभाषाभिप्रायेणैव, यदि पूर्वेण नित्यसञ्ज्ञा न स्यात्तर्हि अनेनाऽभावो बोधयितुं न शक्यते, यदि च नित्यसञ्ज्ञाया बाधस्तथापि पूर्वेणाप्राप्त्याऽनेनाभावो बोधयितुं न शक्यते इति । **युगपत्प्राप्त्यभावा**दित्यपि न युक्तं, 'सुद्ध्युपास्य'इत्यादाविको यणचीत्यस्यानचिचेत्यपेक्षया पूर्वप्राप्तिकत्वरूपं लौकिकमन्तरङ्गत्वं यथा, तथैवात्रापि प्रातिपदिकसञ्ज्ञासमकालिकनित्यसञ्ज्ञाप्राप्तिकाले तदप्राप्तेः लौकिकमन्तरङ्गत्वं 'नित्यसञ्ज्ञाया'इत्येवाभिप्रेतमिति निरुक्तदोषाभावात् । **निरवकाशत्वादित्यपि** न युक्तम्, अन्तरङ्गत्वान्नित्यसञ्ज्ञया बाधादुपप्लवस्यैवाभावात्, अन्यथा 'श्रीश'इत्यादौ व्यक्तिपक्षे 'इको यणची'त्यस्योपप्लुतस्य निरवकाशत्वात्पर्यायतापत्तिः । किञ्च–**आनुमानिक्येत्यपि** न युक्तं, निरुक्तलौकिकान्तरङ्गत्वप्रयुक्तबलवत्त्वस्य लोकसिद्धतया तस्यानुमानिकत्वाभावात् । **यथोद्देशपक्षे** इत्यपि न युक्तं, 'जसः शी'त्यादेस्तदाद्यभिन्नसर्वनाम्नः **परस्य** जसःशीत्याद्यर्थस्यैव युक्ततया विहितविशेषणाभावेन कार्यकालपक्षेऽपि दोषाभावात् । अतएव पदसंस्कारपक्षे विभक्त्युत्पत्त्यनन्तरं सर्वनामसञ्ज्ञायामपि न दोषः । उपायस्योपायान्तरादूषकतया च–**नत्वन्तरङ्गन्यायबलेनेत्यप्ययुक्तम्** । 'धातोर्द्वये'इति भाष्यप्रयोगाच्च नानभिधानोक्तिर्युक्तेति प्राहुः । विस्तरस्त्वस्मत्पितामहचरणकृत–**त्रिपुरसुन्दर्यां** मत्कृतायाम**भिनवराजलक्ष्म्या**ञ्चानुसन्धेयः ।

च सञ्ज्ञा सिद्धेति भावः । तत्र मानमाह—**केवलयोरिति** । **प्रयोजनाभावात्**—फला-

❀ अभिनव-चन्द्रिका ❀

मिति कल्पोभगवताऽऽस्थितः ।

'उभयी'त्यत्रेव 'द्वयी'त्यत्रापि ङीब्भवत्येव । 'द्वित्रिभ्यां तयस्ये'त्यत्र तयग्रहणमकृत्वा 'द्वित्रिभ्या'-मिति विकल्पेनायच्प्रत्ययस्यैव विधातुं शक्यत्वात् । तथा चाऽयच्प्रत्ययान्तरमिति भाष्यकल्पे—द्वित्रिभ्यामिति सूत्रे तयस्येति पदं न कर्त्तव्यं भवति, एवं 'टिड्ढे'ति सूत्रेऽयजिति प्रत्याहारा-श्रयणेन तत्रत्यं तयब्ग्रहणमपि न कर्त्तव्यं भवति । एवं—प्रथमचरमेति सूत्रे 'तयादेशे उभय-प्रतिषेध' इति वार्त्तिकञ्च न कर्त्तव्यं भवतीति महदेव लाघवम् । द्वयीत्यत्र ङीब्न भवतीति तु वक्तुमशक्यं, 'द्वयं द्वयी'ति कोशविरोधादिति दिक् ।

**सञ्ज्ञासिद्धेति भाव इति** । वस्तुतस्तु अत्रत्यशेखरो मूलञ्चैतदुभयमपि चिन्त्यमेव, साक्षा-

❀ ज्योत्स्ना ❀

'धातोर्हि द्वये प्रत्यया विधीयन्ते । तिङः कृतश्चे'ति द्वयशब्दाज्जसः शी प्रयुक्तः, स्वयमपि तथैवानूदिष्यते । यदि तु चाक्रवर्मणव्याकरणे द्वयशब्दस्य सर्वनामसञ्ज्ञा विधानात्, 'व्यर्था द्वयेषा'मिति माघप्रयोगा-च्चोक्तप्रयोगे नित्यं शीभाव इत्युच्यते तर्ह्यनभिधानं कुत्रत्यम् ? त्रिशब्दविषयश्चेत्प्रमाणाभावः, उक्तमाघप्रयोगस्य प्रकारान्तरेणोपपत्तिप्रदर्शनपूर्वकं व्याकरणान्तरेण साधुत्वव्यवस्थापनस्य सर्वनाम-सञ्ज्ञाप्रकरणे कौस्तुभे दूषितत्वाच्चेति दिक् । नन्वदन्तात्सर्वनाम्नो जसः शीविधाने केवलयोरपि

❀ विषमपदविवृतिः ❀

प्रवृत्तौ तद्वैयर्थ्यम् । न चास्मिन्पक्षे सर्वनाम्नो विहितत्वाभावेनोभय इत्यादौ शीभावानापत्तिः, विहितविशेषणताया अनाश्रयणात्, 'अदन्तात्सर्वनाम्नः परस्य प्रत्यासत्त्या तत्पर्याप्ताङ्गसञ्ज्ञानिमि-त्तस्य जसःशी'त्यादिरूपेण वाक्यार्थबोधाङ्गीकारेण विहितविशेषणफलसिद्धेः । 'नान्तरङ्गं बलीय इत्यस्यात्र विषय' इत्याद्ययुक्तम्, तदप्रवृत्तावपि नित्यसर्वनामसञ्ज्ञायाः पूर्वप्रवृत्तिस्वीकारेण 'तयादेशे उभयप्रतिषेध' इति वार्तिकवैयर्थ्यात् । 'पूर्वपरेत्यादि तु पक्षे तदभावमात्रबोधक'मित्याद्यप्ययु-क्तम्, प्रथमादिशब्दविषयकाप्राप्तविभाषायामगतेः । प्रथमादिशब्दे सर्वनामसञ्ज्ञाविकल्पसामर्थ्येन चास्मदुक्तार्थकल्पनैव ज्यायसी । 'तदुत्तरमप्येतत्प्रवृत्त्ये'त्याद्यप्ययुक्तम्, कार्यकालपक्षाश्रयणेनैवोपपत्तौ पूर्वादिषु जाततन्निवृत्तिकल्पनाया अयुक्तत्वात् । सञ्ज्ञाविषये निषेधविषये वाऽक्लृप्तस्य 'उपस-ञ्जनिष्यमाण'न्यायस्य पूर्वादिष्वाश्रयणमप्यगतिकगतिः । उभयशब्दे तु नोपसञ्जनिष्यमाणन्याया-वकाशः, द्वितीये इत्यादौ तच्चारितार्थ्यात् । एवं 'जसीत्यस्य विषयसप्तमीत्व'मप्यगतिकगतिः । तथा च नित्यविकल्पयोः सञ्ज्ञयोरन्तरङ्गबहिरङ्गभावात्परत्वाद्विकल्पे प्राप्ते 'तयादेश' इति वार्तिकं प्रवृत्तम् । वस्तुतस्तु जसि विकल्पविषयेऽपि अकजाद्युदात्तत्वार्थं नित्यसञ्ज्ञा प्रवर्तते एव । शीभावः परं वैकल्पिकीं सञ्ज्ञामाश्रित्य प्रवर्त्तते, न नित्यम्; अन्यथा विकल्पवैयर्थ्यापत्तेः । नित्यविकल्पयो-

१ किञ्च तदादिरूपं विशेष्यमादाय प्राप्ततदन्तविधेरेव 'सञ्ज्ञाविधौ प्रत्ययग्रहणे' इति निषेधिका, अत एव 'कृत्तद्धिते'त्यत्रार्थवन्तं विशेष्यमादाय तदन्तविधिर्भवत्येव, एवञ्चात्र 'प्रयोजनं सर्वनामाव्ययादी-ना'मिति भाष्यबलेन शब्दरूपं विशेष्यमध्याहृत्य तदन्तविधौ तन्निषेधाभावादयं शेखरश्चिन्त्यएवेति परे।

**फलाभावादिति** । अकच्तु न फलं, वृत्त्येकदेशे कुत्साद्यनन्वयात्, प्रातिपदिकार्थगतकुत्सादावेव च तत्प्रवृत्तेः ।

भावादित्यर्थः । अदन्ताङ्गात्परस्य सर्वनाम्नो विहितस्येत्येव 'जसः शी'त्यादेरर्थादिति भावः ।

ननु डतरग्रहणेनैव सिद्धेऽन्यतरशब्दपाठो व्यर्थोऽत आह—**अन्यतरेति ।** किंयत्तदाद एव तयोर्विधानादिति भावः । **अपुरीति ।** पूःशब्दस्य विशेष्यत्वे नेत्यर्थः । तद्वतमन्त्रियामुदाहरति—**अन्तरायामिति ।**

'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे सङ्ख्यायाञ्च प्रयुज्यते ॥' इति केचित् ।

॥ अभिनव-चन्द्रिका ॥

सर्वनामसञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य सर्वादिपदे सत्त्वेऽपि प्रत्ययमात्रवृत्ति विषयताप्रयोजकत्वस्य तत्राभावेन, सर्वादिगणान्तर्गतडतरडतमेत्यत्र प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य सत्त्वेऽपि सर्वनामसञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य साक्षादभावेन 'साक्षात्सञ्ज्ञानिष्ठविधेयतानिरूपितप्रत्ययमात्रवृत्त्युद्देश्यताप्रयोजकं पदं तदादिविशेष्यकतदन्तविधिप्रयोजकत्वे'त्यर्थिकायाः 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्ती'ति परिभाषायाः प्रकृते प्राप्त्यभावात् ।

**सर्वनाम्नो विहितस्येति ।** अत्रापि पूर्ववत्सर्वनामाभिन्नं यददन्तमङ्गं तस्मात्परत्वेत्यर्थो बोद्धव्यः । **विशेष्यत्वे नेति ।** विशेष्यताप्रयोजकत्वे नेत्यर्थः । तथा च पूःपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकेतरस्यैवान्तरशब्दस्य 'अन्तरं बहिर्योगे' इति गणसूत्रे ग्रहणमिति भावः ।

अन्ये तु अपुरीत्यस्य—पूःशब्दार्थस्य विशेष्यत्वे नेतिव्याख्यानमिति—स्त्रीत्वविशिष्टपूःशब्दार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतरान्तरशब्दस्य 'अन्तरं बहिर्योगोपे'ति गणसूत्रे ग्रहणमिति 'अन्तरायां नगर्या'मित्यादिसिद्धिः ।

परे तु—उपस्थितं पूःशब्दं विहायानुपस्थितपूःशब्दार्थस्य विशेष्यत्वे मानाभाव इत्याहुः ।

॥ चिदस्थिमाला ॥

तदभावे हेतुमाह—**अदेति ।** अदन्तादिति पाठः । प्राचां मतेनाह—**अदन्तादिति ।** पूःशब्दस्य=तदर्थस्य । अत एवान्तरायां नगर्यामित्यपि सिद्धम् । **केचित्=दीक्षितशाखिदण्ड्यादयः ।**

॥ ज्योत्स्ना ॥

सञ्ज्ञायाः प्रयोजनं सम्भवत्येवेत्यत आह—**सर्वनाम्नो विहितस्येत्येवेति ।** अत्र हेतुः प्रागेवोक्तः ।

वस्तुतः 'प्रयोजनाभावा'दित्यस्य—सञ्ज्ञायाः प्रयोजकत्वस्य सर्वार्थवाचकत्वस्वरूपस्याभावादित्यर्थः । एवञ्चास्मदुक्तरीत्या विशेषणाभावपक्षे प्रयोजनलाभेऽपि तदन्तविधिरावश्यक इति बोध्यम् । इति

॥ विषमपदविवृतिः ॥

विधायकशास्त्रभेदेन भेदान्न विरोधः । तथा च 'तयादेश' इति वार्तिकोत्थितिः । 'स्थानिवदतिदेशप्रापिताया' इत्यप्ययुक्तं, द्वयशब्दे चारितार्थ्यात्, तदनभिधानस्य निरस्तत्वात् । 'प्रत्यक्षस्ये'त्याद्यप्युक्तम् । 'पचावेद'मित्यादौ पूर्वान्तवद्भावेन लोडुत्तमत्वाद्याश्रित्य प्रवर्त्तमानस्यैत्त्वादेरन्तरङ्गपरिभाषया बाधदर्शनात् । 'स्योन'इत्यादौ स्वसमकालप्राप्तिकस्यापि स्थानिवद्भावेनाङ्गत्वमाश्रित्य प्रवर्तमानस्य गुणस्यान्तरङ्गपरिभाषाबलेन यणा बाधदर्शनाच्चेति । एकदेशविकृतन्यायस्य लौकिकत्वेऽपि स्थानिवदतिदेशस्य प्रत्यक्षत्वादित्याहुः । **तद्ध्वनयन्निति ।** पूःशब्दार्थमात्रविवक्षायां लिङ्गान्तरेप्युदाहरणसम्भवात् स्त्रियामेवोदाहरणोपन्यासो व्यर्थः स्यादिति भावः । **एकोन्यार्थे इति ।** —कस्यचिदभियुक्तस्य वचनं न तु कोशः । तेनैकदिगित्यत्रैकशब्दः समानार्थः । तेन तद्योगे 'तुल्यार्थे'रिति तृतीया । एका मातेत्यत्र साधारणार्थः ।

नन्ववधिनियमो व्यवस्थेत्ययुक्तम्, तस्य पूर्वादिशब्दार्थत्वाभावात् । देशवाचिनः सर्वनामत्वानापत्तेश्च, न हि काशी प्रयागादेव पूर्वा न ग्रामान्तरादित्यवधेर्नियमोऽस्तीत्याशङ्क्याह—

केवले=असहाये । तत्र सङ्ख्याऽन्यार्थासहायवाची'ष्णान्ता षट्' 'बहुषु बहुवचनम्' 'एकादाकिनिच्चे'त्यादिसूत्रेषु भाष्ये स्पष्टमुक्तः । 'एको गोत्रे' इति सूत्रशेषे भाष्ये प्रथमार्थोऽपि उक्तः । साधारणसमानार्थयोः सङ्ख्यावाचिन एवार्थतः पर्यवसानम्, यथा—'तेनैकदिक्', 'चैत्रमैत्रयोरेका माते'त्यादौ । 'सर्वस्य द्वे' इतिसूत्रे 'एकैकश' इति भाष्यमुपादाय—'केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्ती'ति वदता कैयटेन केचिदित्युक्त्या तदर्थकाभावो ध्वनित एव, एवञ्च प्रधानार्थे न दृढं मानम् ।

**'स्वाभिधेयापेक्षावधी'ति** समस्तः पाठः । नियमेनावधिसापेक्षेऽर्थे वर्त्तमानपूर्वादीनामित्यर्थः । **दक्षिणा गाथका इति** । उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थाऽस्तीत्याग्रहे तु—'उत्तरे प्रत्युत्तरे च शक्त' इति प्रत्युदाहरणं बोद्धयम् ।

❀ अभिनव-चन्द्रिका ❀

**न दृढं मानमिति** । चिन्त्यमिदम्—अर्थनिर्णयस्य कोशाद्यधीनत्वेन अर्थानिर्णायके शब्दशास्त्रे महाभाष्ये—मुख्यार्थकैकशब्दादर्शनेनैव प्रधानेऽर्थे न दृढं मानमितिकथनस्य साहसमात्रत्वात्, 'एके मुख्यान्यकेवला' इति कोशस्य तत्रार्थे मानत्वाच्च । 'नेत्येके ऽस्रेर्हि दृश्यते' इति वार्तिके मुख्यार्थकैकशब्दस्य, 'समो वा लोपमेके' इति भाष्ये मुख्यार्थकैकशब्दस्य दर्शनाच्च । [एकवीरादौ तथोपलब्धेश्च ] शब्दार्थनिर्णयस्य लौकिकान्वयव्यतिरेकसिद्धत्वाच्चेति दिक् ।

**अवधिसापक्षेऽर्थे इति** । अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नवाचकत्वमेव व्यवस्थावाचकत्वम् । यद्धर्मावच्छिन्नज्ञानोत्तरमवधिविशेषविषयिणी जिज्ञासा नियमेनोदेति तद्धर्मावच्छिन्न·

❀ चिदस्थिमाला ❀

तत्र=अष्टानां मध्ये । **अन्यार्थेति** तत्पुरुषः । यथाक्रममाह—**ष्णान्तेति** । **भाष्ये इति** । जातावेकवचनम् । एवम् अग्रे—उक्त इत्यादावपि । उक्तक्रमेणाह—**साधेति** । अर्थेन कर्मधारयः । तयोरशाब्दत्वादाह—**अर्थत इति** । अथ सार्वविभक्तिकस्तसिः । उदाहरति क्रमेण—**यथेति** । केचिदिति सूचितारुचिमाह—**सर्वस्येति** । प्रकाशशास्त्र्याद्युक्तव्यस्तपाठासाङ्गत्यायाह—**स्वाभीति** । 'व्यवस्थाया'मिति विषयसप्तमीत्याह—**नियमेनेति** ।

❀ ज्योत्स्ना ❀

**केचिदिति** । गणरत्नमहोदधिकारास्त्वेकः सङ्ख्यासहाययोरित्यर्थद्वयमेवाहुः । **न दृढं मानमिति** । वस्तुतो सहायत्वं द्विविधं,—क्वचित्स्वदोषप्रयोज्येतरानपेक्षितत्वरूपं, यथैकाकिभिः क्षुद्रकैर्जितमिति, क्वचिद्वस्तूत्कर्षप्रयोज्यानपेक्षितेतरकत्वरूपं, तत्र द्वितीयार्थमादायैकशब्दस्य प्रधानार्थकत्वम् । यथैकवीरः पुण्यान्यन्यानि शुचिकर्मैकभक्तिर्मया-सार्द्धं वरितास्याजमीढेत्यादौ(?) तदनुभवादिति युक्तमुत्पश्यामः । **मध्याह्ने सूर्यस्योदङ्मुखत्वादिति** । इदञ्च हैमवतवर्षस्थितिमपेक्ष्योक्तम्, अन्यथा

❀ विषमपदविवृतिः ❀

**नियमेनावधिसापेक्ष इति** । **उत्तरे इति** । नियमेनापेक्ष्यमाणोऽपि पूर्वपक्षो नावधिरितिभावः ।

१ **स्वाभिधेयेति** । स्वस्य=पूर्वादिशब्दस्याभिधेयो योऽर्थस्तेन—अपेक्ष्यते—स्वाकाङ्क्षाशान्तये नियमेन जिज्ञास्यते—इत्यपेक्षः, [ कर्मणि घञ् ] स चासाववधिश्च—स्वाभिधेयापेक्षावधिः, तस्य नियमः=नियमेनोपशान्तिरित्यक्षरार्थः । तत्र विशेष्यीभूतस्यावधेरुपशान्तेरसम्भवात्तद्विशेषणीभूताया ज्ञानविषयकेच्छाया एवोपशान्तिर्ग्राह्या, 'संयोगविप्रयोगौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामतः' इति न्यायात् । [विप्रयोगः=अभावः, प्रकृते उपशान्तिरूपः । ] 'व्यवस्थाया'मिति सप्तम्यर्थो वर्त्तमानत्वं, तच्च स्वप्रतियोगिजिज्ञासाविषयीभूतपूर्वत्वादिरूपावच्छिन्नबोधकत्वम् । एवञ्च अवध्यंशे नित्यसाकाङ्क्षपूर्वत्वादिरूपावच्छिन्नबोधजनकपूर्वादिशब्दानां सर्वनामसञ्ज्ञेति फलितोऽर्थः ।

**उत्तराः कुरव इति** । सुमेर्वत्रधिकपरदेश[त्व]रूपोपाधिविशिष्टकुरुषु उत्तरशब्दः—शब्दं प्रवृत्तिनिमित्तीकृत्य वर्तते इति व्यवस्थाविषयत्वं बोद्धयम् । दिग्वाचकपूर्वादिशब्दानां मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसंनिहितदेश—तात्कालिकसूर्यसम्मुख-

ॐ अभिनव-चन्द्रिका ॐ

वाचकत्वमिति यावत् । **मध्याह्नसूर्यसंयोगीति** । वस्तुतो नेदं दिग्वाचकपूर्वादिपदप्रवृत्तिनिमित्तम्, एवं सति दाक्षिणात्यानाम्—'उदङ्मुखः प्राङ्मुखो वा त्रिराप उपस्पृशेत्' इत्यादिविधीनाङ्कर्तुमशक्यत्वमेव स्यात्, तद्दृष्ट्या सर्वासामेव दक्षिणदिक्त्वात् । एवं-पाश्चात्यानां-'दक्षिणाभिमुखः सन्श्राद्धादिविधिं कुर्या'दित्यादि विधीनां कर्त्तुमशक्यत्वमेव स्यादिति देशवाचकपूर्वादिपदानां यत्प्रवृत्तिनिमित्तमुक्तन्तद्दिग्वाचकानां बोध्यम्, एवं दिग्वाचकपूर्वादिपदानां यत्प्रवृत्तिनिमित्तमुक्तं मूले तद्देशवाचिनां बोध्यमिति दिक् ।

ॐ चिदस्थिमाला ॐ

अत एवाह—**सुमेर्विति** । लक्ष्येष्वप्येवं तदाह—**दिग्वाचकेति** । **सन्नीति** । तयोः सन्निहितदेशाविल्यर्थात् । **तदिति** । मध्याह्न इत्यर्थः । **तदिति** । सूर्येत्यर्थः । उदयाचलपर्यन्तादिरूपोपाधेस्तदभिधेयस्य तदाकाङ्क्ष-

ॐ विषमपदविवृतिः ॐ

केचित्त्ववधित्वमेतद्व्यावर्त्यं दुर्वचम्, स्मिनादेशाऽभावस्तु 'पूर्वादिभ्य'इति विकल्पात्, पक्षे तु स इष्यत एव, तस्माद्दक्षिणा गाथका इत्येव प्रत्युदाहरणमित्याहुः । ननु कुरुषूत्तरशब्दस्य केवलरूढत्वे व्यवस्थाभावादेव सञ्ज्ञाया अभावादसञ्ज्ञायामिति व्यर्थमित्याशङ्क्य योगरूढिमाश्रित्य समाधत्ते—**सुमेर्ववधिकेति** । 'तात्कालिके'ति पाठः ।

१. सङ्केतसम्बन्धेनोत्तरपदवान्—उत्तरपदशक्यः, तत्र च कुरुसङ्कृत इति शब्दप्रवृत्तिनिमित्तता स्पष्टैव । तत्र परिचयार्थैवोपलक्षणीभूतं रूपं दर्शयति—**सुमेर्ववधिकेति** । इदञ्च रूपं न प्रवृत्तिनिमित्तं, किन्तूपलक्षणमात्रम् । भारतवर्षावधिकेति च तदर्थः । अन्यथा 'सर्वेषामेव वर्षाणां मेरुरुत्तरतःस्थित'-इत्यभियुक्तोक्तेः सर्वत्र सुमेर्ववधिकपरत्वस्य सम्भवात्सर्वेष्वेव वर्षेषु उत्तरकुरुत्वव्यवहारापत्तिः ।

पूर्वादिशब्दा हि द्विविधाः—दिग्वाचकाः, देशवाचकाश्च, तत्र तयोर्भेदं दर्शयति—**दिग्वाचकेति** । अत्रापि-सङ्केतसम्बन्धेन तत्पदवानेव-उत्तरपदशक्यः, मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलत्वादिकन्तूपलक्षणं परिचयार्थैवेति श्री**बालशास्त्रिचरणा**नुसारिण **उमानाथ**पण्डिताः ।

तदयमत्र निर्गलितोऽर्थः—पूर्वदिक्त्वादिकं मध्याह्नसूर्यसंयोगिदेशावधिकमेकमेव सर्वत्र, पूर्वदेशत्वादिकन्तु तत्तत्पुरुषव्यक्त्यवधिकं भिन्नं भिन्नमिति ।

**परे** तु—विपरीतमेव दिग्देशवाचकपूर्वादिशब्दानां प्रवृत्तिनिमित्तमत्र **भट्टै**रभिहितं, वस्तुतः 'पूर्वस्यां दिशि वाराणसी'त्युक्तौ—'कस्मात्पूर्वस्यां दिशि ? प्रयागाच्चित्रकूटाद्वे'ति आकाङ्क्षोदयस्य सार्वत्रिकतया पूर्वदिक्त्वादेरेव तत्तद्व्यक्त्यवधिकत्वं, 'पूर्वदेशीयोऽय'मित्युक्तौ तु 'कस्मात्पूर्वदेशीय' इत्याकाङ्क्षाया अनुदयाच्च पूर्वदेशत्वादिकमेव मध्याह्नसूर्यसंयोगिदेशावधिकं सर्वत्रैकमेव । शेखरोक्तन्तु न युक्तम्, अन्यथा दिग्वाचकपूर्वादिप्रवृत्तिनिमित्तस्य सर्वत्रैक्येन दाक्षिणात्यानां पूर्वादिव्यवहारविलोपापत्तिः स्यात् । अस्माकन्तु तत्तत्पुरुषभेदेन पूर्वदिक्त्वादिकं भिन्न-भिन्नं, न तु मध्याह्नसूर्यसंयोगिदेशावधिकमेकमेवेति नोक्तदोषः।

तदेवं स्वस्माद्यत्र दिशि सुमेरुस्तत्त्वमुत्तरत्वमिति बोध्यम् । नन्वेवं 'सर्वेषामेव वर्षाणां मेरुरुत्तरत' इति विरुध्येत इतिचेन्न, यथाऽस्माकं य उदयाचलः स एवास्मद्विरुद्धदिग्वर्त्तिनामस्ताचल इत्यनुभवसिद्धं, तथैव दक्षिणोत्तरयोरपि वैपरीत्यमूह्यमितिप्राहुः ।

**भट्टानुसारिणस्तु**—मध्याह्नसूर्यसंयोगिदेशावधिकोदयास्ताचलसंनिहितदेशाद्युपाध्यवच्छिन्नत्वस्य तत्तत्पुरुषावधिकोदयास्ताचलसन्निहितत्वादेश्च स्वरसतो दिग्देशधर्मत्वस्य प्रतीयमानतया भट्टोक्तमेव सम्यक्, 'काश्याः प्रयागः पश्चिमः' 'काश्याः पाटलिपुत्रं पूर्व'मित्यादौ तु पूर्वादिशब्दा देशवाचका एव, न दिग्वाचका इत्याहुः ।

यावद्देश-तात्कालिकतत्पृष्ठस्थयावद्देश-रूपोपाधिविशिष्टदिशि तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति—उपाध्यन्तर्गततया व्यवस्थाऽस्त्येव, मध्याह्ने सूर्यस्योदङ्मुखत्वात् ।

देशवृत्तीनां—तत्तदवधिकोदयाचलसन्निहितत्वादि प्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः ।

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥'

ॐ चिदस्थिमाला ॐ

त्वादिति भावः । **सन्निहितत्वादीति** । एतेन 'दक्षिणपूर्वेत्यत्र पुंवत्त्वं न प्राप्नोति, समानायामाकृतावभाषितपुंस्कत्वात्, आकृत्यन्तरे चैतौ तथा,—दक्षिणा पूर्वेति दिक्शब्दौ, दक्षिणः पूर्व इति व्यवस्थाशब्दौ। एवं तर्हि 'सर्वनाम्न' इति पुंवत्त्व'मिति—'दिङ्नामे'ति सूत्रस्थभाष्यविरोधो निरस्तः । एवञ्च पूर्वादिशब्दैरेकस्या एव दिशः उपाधिकृतभेदस्य प्रतिपादनम्। उपाधिश्च पृथ्वीमध्यं, तत्प्रान्तवर्तिनश्चत्वारः पर्वताश्च । रामायणे किष्किन्धायां सुग्रीवेण मध्यदेशावधिकस्यैव दिग्विभागस्योक्तेः । पृथ्वीमध्यन्तु मध्याह्नसूर्यसंयोगिदेश इति बोध्यं, तदाह—**इत्यन्यत्रेति** । शब्दरत्नादावित्यर्थः। व्यवच्छेद्यमार्यया प्रसिद्धाप्रसिद्धसाधारणमाह—**अन्तरमिति**। ननु त्रिसूत्रीप्रत्याख्यानपक्षे शीवदकच्स्वरावपि वैकल्पिकाविष्टौ त्रिसूत्र्या न स्याता-

ॐ ज्योत्स्ना ॐ

'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित' इतिवचनात्तत्तद्वर्षस्थितसूर्यावधिकसुमेरोरुत्तरत्वावश्यम्भावात्सुमेरोरुदयगिरित्वात्सूर्यसम्मुखीनस्य तत्रौचित्याच्चोक्तोपाधीनामप्यनियमः स्यात्। एवञ्च दिग्वाचकपूर्वादिशब्देषूक्तानियमनिरासाय रूढिरभ्युपगन्तव्येत्येतावदिह रहस्यम्। देशवाचिनां तु उक्तानियमे इष्टापत्त्या विशेष इत्याह—**देशवृत्तीनान्त्विति** । तत्तदवधिकोदयाचलसन्निहितत्वादि-प्रवृत्तिनिमित्तावधारणगर्भः समासः,—तत्तदवधिकोदयाचलसन्निहितत्वाद्येव प्रवृत्तिनिमित्तमिति ।

ॐ सदाशिवभट्टीयम् ॐ

प्रत्ययग्रहणाभावेन 'सञ्ज्ञाविधा'विति निषेधाप्राप्त्या 'प्रयोजनं सर्वनामे'ति बोधिततदन्तविधिस्वीकारे बाधकाभाव इति भावः । **सन्निहितत्वादीति** । दिग्देशवृत्तीनां प्रवृत्तिनिमित्तभेदादेव भाषितपुंस्कत्वाभावो भाष्योक्तः सङ्गच्छते। [आर्यायां–] **चेन** सदृशः, स्थानेन्तरतम इति यथा ।

ॐ विषमपदविवृतिः ॐ

**तत्तदवधिकेति** । यन्निरूपितदेशस्य पूर्वत्वादि तदवधिकेत्यर्थः। अपरशब्दो रूढो,न नञ्समासः। परापरशब्दयोः समानार्थत्वात्। **अन्तरमवकाशावधीति** । अवकाशे यथा—अन्तरे देहि। अवधौ—मासान्तरे देयम्, परिधाने- अन्तरे शाटकाः। अन्तर्द्धौ—घनान्तरितः सूर्यः। भेदे-उदरमन्तरं कुरुते,

यत्तु **पर्वतीयाः**—मध्याह्नस्य देशभेदेन भेदाद्दाक्षिणात्यानां 'प्राङ्मुखस्त्रिवार' मित्यादिविध्यनुष्ठानानुपपत्तिं परिजहुस्तन्न युक्तम्, यत्र केन्द्रे मध्याह्ने सूर्यसंयोगस्तस्य केन्द्रस्यैक्येन तत्पृष्ठदेशादेरपि तथैव केन्द्रवशादैक्येन दाक्षिणात्यानां पूर्वदिगभिमुखमनुष्ठेयकार्याणां स्वदेशेऽननुष्ठानापत्तेर्दुरुद्धरत्वात्। एवञ्च भट्टोक्तो दिग्देशवाचिपूर्वादिप्रवृत्तिनिमित्तप्रदर्शनप्रकारो विपर्ययेणैव संलापनीयः । अत एव देशविभागव्याख्यावसरे—'महोदयं मूलमवधीकृत्येति **यायावरीयः**' [ महोदयः=कान्यकुब्जनगरम्' ] इति **राजशेखरो** निर्दिदेश । रामायणेऽपि मध्यदेशावधिक एव तथा व्यवहार इति **गौडाः** ।

**मान्यास्तु**—दिग्व्यवहारस्य तत्तत्पुरुषभेदेन भिन्नस्यैवोपलभ्यमानत्वाच्छेखरोक्तमयुक्तमेव, अन्यथा-सर्वत्रैव देशे मध्याह्नसूर्यसंयोगस्य सत्त्वेन सर्वस्यापि सर्वदिक्त्वं स्यात्, एवञ्च—यदा यत्पुरुषस्योदयगिरिसन्निहिता या दिक्तदा सा तस्य—प्राची, एवम्-उदयगिरिव्यवहिता प्रतीची, सुमेरुगिरिसन्निहिता—उदीची, तद्व्यवहिता दक्षिणेत्येव तत्त्वमिति व्याचक्षते ।

—इतिकोद्योक्तार्थान्तरव्युदासार्थमाह—**अन्तरं बहिर्योगेति**। अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसाधारं शीभाव एव, **न त्वकजाद्युदात्तत्वादाविति** बोद्ध्यम्।

**न बहुव्रीहौ**। 'चिकीर्षिते' इत्यध्याहारलभ्यम्। प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम्। नेदं सूत्रं बहुव्रीहेस्तत्त्वनिषेधकम्, उपसर्जनप्रतिषेधेन सिद्धेः। **प्रक्रियावाक्य इति**। अलौकिके इत्यर्थः। न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव समास इव तत्रापि निषेधः सिद्ध इति वाच्यं, तत्रैकार्थीभावस्यारोपेऽपि स्वार्थविशिष्टार्थान्तरबोधकस्वरूपोपसर्जनत्वाभावेनातिभवकानित्यत्रेव प्राप्तस्याकचो-

ॐ अभिनव-चन्द्रिका ॐ

**स्वार्थविशिष्टार्थान्तरबोधकस्वरूपेति**। पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोज-

ॐ चिदस्थिमाला ॐ

मत आह—**अयमिति**। अर्थाधिकारानुरोधात्। तेनान्यन्नित्यं तदाह—**न त्विति**। आदिना ञलादि। यत्तु **शाब्दिकचण्ड्यादयः** 'विषयसप्तम्या चिकीर्षिते इति लभ्यते' इति, तन्न, तथा सति तद्विषयत्वस्य समुदाय एव सत्त्वेन तत्रैव निषेधापत्तौ 'प्रियविश्वाये'त्यादिलक्ष्यसम्भवेऽपि 'त्वत्कपितृक' इत्यादिमूलोक्तलक्ष्योच्छेदापत्तेरत आह—**चिकीर्षित इति**। सिद्धान्तस्य वक्ष्यमाणत्वादाह—**प्राचीनेति**। तदाशयमाह—**नेदमिति**। किञ्च सूत्रे सत्सप्तम्या बहुव्रीहौ कर्तुमिष्टे सति सर्वादेः सर्वनामत्वं नेत्यर्थलाभार्थमेव समुदायस्येष्टत्वे 'न बहुव्रीहि'रिति वाच्ये 'न बहुव्रीहा'विति गुरुनिर्देश इति बोध्यं, सूत्रवैयर्थ्यं तन्मते आह—**न चेति**। **तत्रेकेति**। एकोपस्थितिनियामकसमुदायशक्तेराह—**आरोपेऽपीति**। ततो बोधस्य कस्याप्यभावेन

ॐ ज्योत्स्ना ॐ

अतो न तत्र रूढिरिति ज्ञेयम्। अत्र **केचित्**—पूर्वादिष्वपरशब्दस्य पाठोऽनर्थकः। परस्य नञ्समासे तदन्तविधिना सिद्धत्वादिति। **अन्ये** त्विह एव पाठात्सर्वनामसञ्ज्ञायां तदन्तविधिर्न सूत्रकृत्सम्मत इति मन्वते। **अपरे** त्वपरशब्दो रूढो न तु नञ्समासः, परापरशब्दयोः समानार्थत्वादिति व्याचक्षते।

**अन्तरमवकाशेत्यादि**। तत्रावकाशे यथा—अन्तरं देहि। अवधौ—मासान्तरे देयम्। परिधाने—अन्तरे शाटकाः। अन्तर्द्धौ—पर्वतान्तरितः सूर्यः। भेदे—यदन्तरं सिंहशृगालयोर्द्वयोः। तादर्थ्ये—त्वदन्तरे ऋणं गृहीतम्। छिद्रं = विवरं, तत्र—अन्तरे प्रहर्तव्यम्। आत्मीये—अयमस्यन्तरो मम। विनार्थे—अन्तरेण पुरुषकारम्। बहिरर्थे—अन्तरे चाण्डालगृहाः। अवसरे—अन्तरज्ञः सेवकः। मध्ये—आवयोरन्तरे शैलाः। अन्तरात्मनि—अन्योन्तर आत्मा आनन्दमयः। चकारात्सदृशार्थेऽपि, यथा-'स्थानेऽन्तरतम' इति।

नन्वध्याहारे प्रमाणाभावोऽत आह—**नेदमिति**। **सिद्धेरिति**। एवञ्चाध्याहारं विना नैरर्थक्याद-

ॐ विषमपदविवृतिः ॐ

यदन्तरं सिंहशृगालयोर्द्वयोः। तादर्थ्ये-त्वदन्तरे ऋणं गृहीतम्। छिद्रे—अन्तरं पश्यति। आत्मीये—अन्तरे जनाः। विनार्थे उदाहरणं मृग्यम्। बहिरर्थे—अन्तरे चाण्डालगृहाः। अवसरे—अन्तरज्ञः सेवकः। मध्ये—अनयोरन्तरे शैलः। अन्तरात्मनि—अन्योन्तर आत्माऽऽनन्दमयः। चकारात्सदृशार्थोऽपि। यथा—स्थानेन्तरतमः। विनाबहिःशब्दयोरव्ययत्वेऽपि चार्थयोगमाश्रित्य द्वन्द्वः। **न त्वकजाद्युदात्तत्वादाविति**। अकजाद्युदात्तत्वे तु नित्यं स्तः, तयोः कर्तव्ययोः सतोः सर्वादीनीति नित्यं सञ्ज्ञासत्त्वात्, सा तु न शीभावोपयोगिनी, शीभावे विकल्पविधानसामर्थ्यात्। वर्णाश्रमेतरे इत्यादौ तु नैते, 'द्वन्द्वे चे'ति नित्यसञ्ज्ञानिषेधात्। विकल्पस्य च शीभावमात्रफलकत्वात्। एवं प्रथमे इत्यादावपि न ते। **बोधकस्वरूपेति**। लोके इति शेषः। वस्तुतस्त्वेकार्थीभावकल्पनातः पूर्वमव-

ऽभावार्थं सञ्ज्ञानिषेध इत्यत्र तात्पर्यात्। लौकिके तु नास्य प्रवृत्तिस्तत्र समासस्य चिकीर्षितत्वाभावात्। 'अतिक्रान्त' इत्यादिना पूर्वोक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते। अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः।

**भाष्यकारस्त्विति**। 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशय'मिति भाष्योक्तेः–वृत्तिकृद्रीत्येदं व्याख्यानमयुक्तमिति भावः।

ननु स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्तु, कथं प्रत्याख्यानमत आह–**यथोत्तरमिति**। एतच्च 'धिन्विकृण्व्योर चे'तिसूत्रे भाष्ये ध्वनितम्। एवञ्च वृत्तिकृदुक्तार्थकं नेदम्।

❀ अभिनव-चन्द्रिका ❀

कत्वरूपोपसर्जनत्वस्यालौकिकविग्रहवाक्ये 'युष्मद्'सु इत्यत्राभावादिति भावः। अतिदिश्यमानधर्मसमनियतधर्मनिमित्तककार्याभावस्यातिदेशस्वभावसिद्धत्वेन समाससञ्ज्ञार्थमलौकिकविग्रहवाक्ये एकार्थीभावस्यारोपेऽपि तत्समनियतोपसर्जनत्वनिमित्तकसर्वनामसञ्ज्ञानिषेधस्य वक्तुमशक्यत्वात्।

अत एव 'अति भवत् अम्' इत्यलौकिकविग्रहवाक्ये अकज् भवति।

❀ चिदस्थिमाला ❀

प्रधानार्थविशिष्टविशेषणार्थबोधकत्वरूपोपसर्जनत्वस्यात्र विवक्षितस्याभावेनेत्यर्थः। 'अलौकिक' इति व्याख्यायां बीजमाह—**लौकिके त्विति**। नन्वेवमतिक्रान्त इति वाक्योल्लेखो वृथाऽत आह—**अतिक्रान्त इति**। नन्वेवमप्यकृतेत्यनया तत्र नेति सूत्रवैयर्थ्यमेवात आह–**अकृतेति**। स्वरः=स्वाङ्गशिटामिति। प्रत्यङ्गं=प्रत्यवयवं–पूर्वपरत्र वा। संशयमिति क्रियाविशेषणं, संशयाविति पाठान्तरम्। **भाष्योक्तेरिति**। 'गोनर्दीय आहे'ति प्रागुक्तेरिति भावः। **ध्वनितमिति**। तत्र हि 'किमर्थमत्वं विधीयते'वस्य लोप एवास्त्वित्याशङ्क्य–अत्वेऽल्लोपे तस्य स्थानिवत्त्वेन तेन प्रतिबन्धात्प्राप्तलघूपधगुणाभावार्थमत्वविधानं, न च वलोपेऽपि 'न धात्वि'तिगुणनिषेधः सिद्ध इति वाच्यं, तत्प्रत्याख्याने गुणप्राप्ते'रित्युक्तम्, एवञ्च तत्सूत्रभाष्योभयमूलकमेवेदं, तेन सूत्रमतात्प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसम्मतलक्ष्यमेव कथञ्चित्सूत्रमतेऽपि

❀ ज्योत्स्ना ❀

ध्याहारसिद्धिरिति भावः। **नास्त्येवेति**। सद्भावेऽप्येतत्सूत्रारम्भसामर्थ्यात्तस्या अनित्यत्वमित्याद्यन्यत्र विस्तरः। **भाष्ये ध्वनितमिति**। एवं हि भाष्ये–'धिन्विकृण्व्योरच्चे'ति—क्वायमकारः श्रूयते? न क्वचिच्छ्रूयते, लोपोऽस्य भवति—अतो लोप आर्धधातुके इति, यदि न क्वचिच्छ्रूयते, किमर्थमयमुच्यते? नलोप एवोच्येत? नैवं शक्यं,–लोपे सति गुणः प्रसज्येत, अत्वे पुनः सत्यकारलोपस्य

❀ विषमपदविवृतिः ❀

अकचः प्राप्तिर्बोध्या। 'अन्तरङ्गानपी'ति न्यायस्तु सञ्ज्ञातिरिक्तान्तरङ्गबाधकत्वविषयः, अर्थातिरिक्तनिमित्तविनाशकविषयो वा। ननु 'स च समासेऽपि श्रूयेते'त्यस्यातिभवकानित्येव दृष्टान्ततया प्रदर्शनीयः, अतिक्रान्त इत्यादिकं तु न प्रदर्शनीयं, प्रकृतासङ्गतेरित्याशङ्क्याह—**अतिक्रान्त इत्यादीति**। तथा चातिक्रान्तो भवकन्तमिति लौकिकविग्रहवाक्य इवालौकिके प्रक्रियावाक्ये प्रवर्त्तमानोऽकच् यथातिभवकानिति समासे श्रूयते तथा त्वकं पितेति लौकिकविग्रह वाक्य इवालौकिके वाक्ये प्रवर्तमानोऽकच् त्वत्कपितृक इति समासेऽपि श्रूयतेति मूलार्थ इति भावः।

प्रत्यङ्गम्=अन्तरङ्गम्। **एतच्चेति**। भाष्यकृत्करिष्यमाणसूत्रप्रत्याख्यानस्य सूत्रकृदभिमतत्वमित्यर्थः। **भाष्ये ध्वनितमिति**। एवं हि तत्र भाष्यम्–'क्वायमकारः श्रूयते,न क्वचित् श्रूयते? लोपोस्य भवति'

तस्मादुपसर्जनप्रतिषेधानुवादकम् । यद्वा वार्त्तिककृता तस्य कृतत्वात्सूत्रकृतेदमारब्धम् । सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमेव न सूत्रकृदूहितमिति 'विभाषा दिक्' इति सूत्रे कैयटे स्पष्टम् । सूत्रे सप्तमीनिर्देशः प्रथमार्थ एव । अत एव वृत्तिकृदुक्तः

❀ अभिनव-चन्द्रिका ❀

**कैयटे स्पष्टमिति** । अत्राहुश्चिर्बीजन्तु महर्षीणां सर्वज्ञत्वभङ्गः, अतोऽस्मिन् शास्त्रे उत्तरमुनिताल्पर्यानुसारेणैव पूर्वमुनेस्तात्पर्यमवधारणीयमिति बोध्यम् । **प्रथमार्थ एवेति** । वस्तुतस्तु वाचकत्वं सप्तम्यर्थ इति स्वीकृत्य बहुव्रीहौ वाचकतासम्बन्धेन सर्वनामपदं न तिष्ठतीति न बहुव्रीहा-

❀ चिदस्थिमाला ❀

साध्यं, न तु विपरीतं—इति सम्भवे इति—सूत्रतस्तदसम्भवे सूत्रमप्रामाण्यमेवेति प्रत्याख्यानं सूत्रसम्मतमिति च चतुष्टयं ध्वनितम्। 'नदशिष्य'मित्यादिना सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानामप्रामाण्यवत्सूत्रकारवचःखण्डनप्रवृत्तभाष्यवार्तिकवचनैः सर्वांशे तत्त्वे वृद्धिसूत्रभाष्यविरोधापत्त्या तदंशे सूत्रकारवचसोऽपि अदृष्टार्थसाधने 'तत्रापाणिनीयं तु भवती'ति भाष्योक्त्या प्रामाण्यसत्त्वेऽपि दृष्टार्थसाधने अप्रामाण्यकल्पनैवोचिता । किञ्च भाष्यस्य सन्दिग्धत्वेनासन्दिग्धार्थस्य सूत्रस्य तथा व्याख्यैवोचिता । किञ्चेतिहासपुराणाद्यैर्वेदार्थवर्णनवत् वार्तिकभाष्यादिग्रन्थैः सूत्रार्थवर्णनमुचितमिति भावः । एवं सति सूत्रगति प्राचामनुरोधेनाह—**एवञ्चेति** । उत्तरमुनिप्रामाण्येन तद्विरोधे चेत्यर्थः । सिद्धान्तमतेन तामाह—**यद्वेति** । तस्य=उपसर्जनप्रतिषेधस्य । नन्वेवमप्यन्वर्थत्वेन निर्वाहे वैयर्थ्यमेवात आह—**सञ्ज्ञेति** । अत्रैवाह—**सूत्रेति** । अत्र भाष्यसम्मतिमाह—**अत एवेति** । तस्य तदर्थत्वादेवेत्यर्थः ।

❀ ज्योत्स्ना ❀

स्थानिवद्भावाद्गुणो न भविष्यति । ननु च लोपेपि सति 'न धातुलोप आर्धधातुके' इति प्रतिषेधो भविष्यति, आर्धधातुकनिमित्ते लोपे प्रतिषेधः, न चैष आर्धधातुकनिमित्तो लोपः, अपि च प्रत्याख्यायते खल्वपि स योगः तस्मिन्प्रत्याख्याते गुणः स्यादेवेति । अत्र 'धातुलोप' इति बहुव्रीहिमाश्रित्य धातुलोपनिमित्तार्धधातुकनिमित्ते गुणवृद्धी नेत्यर्थे सूत्रारम्भवादिमतेन प्रथमं वलोपविधानपक्ष उपपादितः । षष्ठीतत्पुरुषपक्षे धातोर्लोपे सत्यार्धधातुकनिमित्ते गुणवृद्धी नेति तु सूत्रार्थदोषासम्भवेऽपि प्रत्याख्यानपक्षे सूत्रार्थतिरस्काराय प्रत्याख्यानवादिमतेन स दोषः पुनर्दृढीकृतः, एवञ्च प्रत्याख्यानविरुद्धफलकसूत्राशयकल्पनं क्वचित्क्वचिद्वृत्तिकाराणामनुचितमिति सूचितं, तदाह—**एवञ्चेति** । नन्वनुवादकत्वे स एव दोषोऽत आह—**यद्वेति** । **कैयटे स्पष्टमिति**। नचैवं सूत्रमते 'अतिसर्वम्' 'अतिसर्वस्मै'प्रसङ्गः, 'कस्येत्' इति सूत्रकैयटोक्तरीत्या 'न बहुव्रीहा' वित्यत्र नेति योगविभागेन तत्प्रतिविधानादित्याहुः। नन्वेवं सूत्रे सप्तमीनिर्देशो व्यर्थोऽत आह—

❀ सदाशिवभट्टीयम् ❀

**प्रथमार्थ एवेति** । प्रथमानिर्देशसाध्यप्रयोजनसाधनतात्पर्यक एवेत्यर्थः, न तु चिकीर्षिते इत्यध्याहारतात्पर्यकः, लघुनि प्रथमानिर्देशे कर्तव्ये गुरुस्सप्तमीनिर्देशस्त्वदृष्टार्थ एवेति भावः ।

❀ विषमपदविवृतिः ❀

यदि न क्वचिच्छ्रूयते, किमर्थमिदमुच्यते, नलोप एवोच्येत । नैवं शक्यं—लोपे सति गुणः प्रवर्तेत, अल्वे च सति अकारलोपस्य स्थानिवद्भावाद्गुणो न भविष्यति । ननु च लोपेऽपि 'न धातुलो'ति निषेधो भविष्यति, आर्धधातुकनिमित्ते लोपे प्रतिषेधः, न चैष आर्धधातुकनिमित्तो लोपः । अपि च प्रत्याख्यायते खल्वपि स योगः । तस्मिन्प्रत्याख्याते गुणः स्यादेवेति । एवञ्च प्रत्याख्यानविरुद्धफलकसूत्राशयकल्पनं वृत्तिकाराणामनुचितमिति सूचितं तदाह—**एवञ्चेति** ।

**कैयटे स्पष्टमिति** । नन्वेवं सूत्रमते—'अतिसर्वाये'त्यादौ स्मैप्रसङ्गः । बहुव्रीहिग्रहणस्योपसर्जनो-

प्रक्रियावाक्ये निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः। अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम्।

**तदनुगुणानामेवेति।** प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासञ्ज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः। 'नाम'पदस्वारस्येन प्राधान्येनेत्यस्य लाभः। उपसर्जनं हीतरविशेषणतयैवोपस्थापकमिति तेन तद्व्यावृत्तिः। पूर्वादिसङ्ग्रहाय स्वीयसर्वार्थेति-

❀ अभिनव-चन्द्रिका ❀

वित्यस्यार्थ इति यथाश्रुतमपि सम्यक्। **बोधकमहासञ्ज्ञयेति**। महासञ्ज्ञालब्धेऽर्थे प्राधान्येनोपस्थितिविषयेतिनिवेशादुपसर्जनव्यावृत्तिः। प्रसिद्धेति निवेशात् सञ्ज्ञाव्यावृत्तिः। **स्वीयसर्वार्थेति**-निवेशात् सर्वादिप्रवृत्तिनिमित्तेतररूपेण सर्वार्थवाचकत्वस्याभावेऽपि स्वीयप्रवृत्तिनिमित्तपुरस्कारेण सर्वार्थवाचकत्वमव्याहतमिति बोध्यते।

**इतरविशेषणतयैवोपस्थापकमिति**। पदार्थान्तरनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेनोपस्थापकत्वमुपसर्जनत्वमिति भावः।

❀ चिदस्थिमाला ❀

तदनुगुणत्वं विशदयन्नाह—**प्राधान्येनेति**। सञ्ज्ञाशब्दत्वेन चतुष्टयीपक्षे आह—**सर्वनामपदेति। नामेति**। अन्यथा सर्वार्थेत्येव वदेत्। **स्वीयेति**। तत्तत्पदवाच्येत्यर्थः। तत्र=

❀ ज्योत्स्ना ❀

**सूत्रे इति। इति तत्त्वमिति**। मुख्य इव गौणोऽप्यर्थः पदस्यैवेति–ततः–पदान्तराध्याहारेण

❀ सदाशिवभट्टीयम् ❀

सौत्रत्वात्प्रथमार्थे सप्तमीत्येवं तु न व्याख्येयं, गौरवात्, मनोरमोक्तरीत्या सिद्धे फलाभावाच्च।

**अन्यथेति**। चिकीर्षिते इत्यध्याहारतात्पर्यकत्वे इत्यर्थः। **व्यर्थः स्यादिति**। इदन्तु चिन्त्यम्—पाणिनिनापि किमर्थं प्रथमार्थे सप्तमी स्वीकृतेति प्रश्ने तवाप्युत्तरस्य दुर्लभत्वात्। अपरशब्दस्तु रूढः, परापरयोस्तुल्यार्थत्वात्। **नामपदस्वारस्येनेति**। नम्यमानार्थकन्नामेति व्युत्पत्तेरिति भावः। विशेष्यभूतार्थकमिति यावत्।

❀ विषमपदविवृतिः ❀

पलक्षणत्वात्, सञ्ज्ञायां तु व्यवस्थायामसञ्ज्ञायामिति पृथक्कृत्य निषेधो बोध्यः। अन्तर्गणकार्यमप्यनुपसर्जनादित्यस्याकारात्कारावनुपसर्जनस्य द्रष्टव्याविरयर्थेन परिहर्त्तव्यम्। सत्वमप्यर्थाधिकाराश्रयणेन परिहर्त्तव्यम्। अन्ये तु प्रियविश्वाय, उपसर्जनप्रतिषेधेनाप्येतत्सिद्धमिति न बहुव्रीहाविति सूत्रस्थभाष्येण, 'न कोपधायाः' इत्ययं योगः पुंवद्भावमात्रस्य विषये, तत उत्तरमाद्यस्य योगस्य विषय इति 'न कोपधायाः' इतिसूत्रस्थभाष्येण 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके' इत्यभियुक्तोक्त्या च सञ्ज्ञोपसर्जनप्रतिषेधोपि सूत्रकृत्सम्मत एव। अत एव बहुव्रीहिपदस्य तदर्थालौकिकवाक्यपरत्वं लक्षणया स्वीकृत्य 'त्वत्कपितृक' इत्यादावकजभावः फलमित्युक्तं भाष्ये। तथा चात्र सूत्रकृद्भाष्यकृन्मते विरुद्ध एव। उत्तरमुनिस्मृतिश्च प्रबलेत्येव तत्त्वम्। विभाषा दिगिति सूत्रस्थं भाष्यं त्वेकदेश्युक्तिरित्याहुः।

ननु सर्वार्थवाचकत्वं सर्वविश्वयोरेव, नत्वन्येषामपीत्यत आह—**प्रसिद्धस्वीयेति**। तथा च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नत्वधर्माश्रयवाचकत्वं सर्वार्थवाचकत्वम्। **मानाभाव इति**। तेन 'त्यदादीनी'त्येकशेषोपि सञ्ज्ञोपसर्जनयोर्न, 'त्यदादीनि'चेति वृद्धसञ्ज्ञापि न। **नामपदस्वारस्येनेति**। घटपदं घटत्वस्य नामेत्यप्रयोगादिति भावः। **पूर्वादिसङ्ग्रहायेति**।

सञ्ज्ञाव्यावृत्तयेऽभिव्यक्तेतिन्यायमूलकं 'प्रसिद्धेती'ति भावः ।

सर्वादिसूत्रस्य चायमर्थः—'सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणान्वयेन सञ्ज्ञकानी'ति । तत्र प्राप्ताप्राप्तविवेकन्यायेन सर्वनामपदवत्त्वांश एव विधिः, सर्वार्थवाचकत्वस्य लोकतः सिद्धेः । एतेनान्वर्थसञ्ज्ञोपस्थितसर्वार्थवाचकत्वस्य विशेष्यतया सर्वादीनामन्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात् ।

ॐ चिदस्थिमाला ॐ

विशिष्टमध्ये । एतेनेत्यस्यार्थमाह—**एकपदेति** । अभ्युपेत्याप्याह—**रूढ्यर्थेति** । ननूक्तसर्वार्थवाचकत्वं

ॐ **ज्योत्स्ना** ॐ

वाक्यार्थव्यवस्थापनाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इत्याशङ्क्य-रूढियोगाभ्यामुभयार्थयोरुपस्थितौ लक्ष्यलक्षणयोरपि प्रत्ययो यथा 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य' इति गौतमीयेन्द्रियलक्षणसूत्रे इति काव्यप्रदीपकृता व्याख्यातमित्याहुः । मतान्तरं दूषयति—**एतेनेति** । तदा-

ॐ **सदाशिवभट्टीयम्** ॐ

**अभिव्यक्तेति** । इदञ्चान्येषां मतेन, क्वचित्त्वेतदपपाठः । स्वमते तु प्रसिद्धार्थकाव्ययभूतनामपदस्वारस्येन नामपदोपादानादेवोभयलाभः । यद्वा—सर्वेषामिति बहुवचनेन प्राधान्यलाभः, अव्ययनामपदेन प्रसिद्धलाभ इति बोध्यम् ।

**पदवन्तीति** । इदं चान्यरीत्या । स्वीयमते तु वृद्धिसूत्रोक्तरीत्या पदाभिन्नानीत्यर्थो बोध्यः । **लोकतः सिद्धेरिति** । यत्र सञ्ज्ञोपसर्जनीभूते उभयमपि लोकतः प्रसिद्धं तत्रासम्भवान्नोभयविधिरिति बोध्यम् । न चासम्भवेपि तत्सादृश्यविधिरन्यत्रेवास्तु, अन्यतरविधानेपि सार्थक्येनान्यत्रेवात्र सामर्थ्याभावादिति भावः । **एतेनेति** । उक्तरीत्या सर्वार्थवाचकस्य पदार्थैकदेशत्वेनेत्यर्थः । दोषान्तरमप्याह—**एकपदोपेति** । **अव्युत्पन्नत्वादिति** । इदं च 'समासे उद्देश्यविधेयभावेनान्वयो ने'ति वादिनां मते स्पष्टमेव । तन्मते तेन

ॐ **विषमपदविवृतिः** ॐ

ननु दिग्वाचकपूर्वादीनां न स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वमिति चेन्न, 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थित' इति प्रमाणानुरोधेन तत्तद्वर्षवासिनां सूर्योदयाधिकरणत्वेन परिदृश्यमानभागविशेषाणामेव तत्तद्देशवासिनः प्रति पूर्वादिदिक्त्वाङ्गीकारेण सर्वार्थवाचकत्वोपपत्तेः ।

ननु द्वयोस्त्रिषु वा सङ्केतितसर्वादीनां सर्वनामसञ्ज्ञा दुर्वारा, सर्वार्थवाचकत्वादित्याशङ्क्याह—**सञ्ज्ञाव्यावृत्तये इति** । **अभिव्यक्त्येतिन्यायमूलकेति** । नन्वस्य न्यायस्य यत्तदिति (?) चेत्सत्यम् । 'अभिव्यक्ते'ति न्यायस्य पदकार्यविषयकत्वमन्यत्रोक्तं तु हेयमेव । तथा चायं न्यायः प्रातिपदिककार्यविषयेपि । अत एव सञ्ज्ञात्रिशब्दे त्रयादेशाभावः, 'युष्मदस्मद्भ्यां ङसो'शित्यादौ आत्वाद्यभावश्च । अयं निर्देशः प्रातिपदिककार्येप्येतत्प्रवृत्तेर्लिङ्गम् । **सर्वनामपदवत्त्वांश एवेति** । इतरांशस्तु योगार्थानुगुणानामेव सञ्ज्ञित्वसूचनायेति भावः । अन्यथा महासञ्ज्ञाकरणानुपयोगात् ।

**एकपदोपस्थाप्ययोरिति** । यत्तु परेषां कृतीष्टसाधनत्वयोर्लिङुपस्थाप्ययोः परस्परान्वयस्य दृष्टत्वात्, 'धातोः पृथक् फलव्यापारौ शक्यौ चेत्तयोरुद्देश्यविधेयभावेनान्वयापत्तिः, पृथगुपस्थितयोस्तयोस्तथान्वयस्यौत्सर्गिकत्वा'दिति मञ्जूषायां फलव्यापारयोः पृथक् शक्तिवादस्य स्वयमपि दूषितत्वाच्च चिन्त्यमेतदिति पाठकेनोक्तं, तन्न, कृतीष्टसाधनत्वयोर्लिङ्त्वाख्यातत्वादिशक्ततावच्छेदकभेदेन शाब्दबोधविषययोस्तथान्वयाङ्गीकारेपीतरत्र तथान्वये मानाभावात् । मञ्जूषाग्रन्थस्तु पृथगुप-

रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्वं त्ववयवद्वारा बोध्यम् । एतेन 'तदाक्षिप्तस्य विशेष्यते'त्यपास्तम् । तद्विनाऽनुपपत्त्यभावेनाक्षेपायोगात्, आक्षिप्तस्य शाब्देऽन्वये मानाभावाच्च ।

**केचित्तु** आवृत्त्या एकस्योद्देश्यताऽपरस्य विधेयतेति वदन्ति । परन्त्वाद्यः

❀ चिदस्थिमाला ❀

कथं तदन्तेऽन आह—**तदन्त इति** । अवयवनिष्ठसर्वार्थवाचकत्वस्य समुदाये आरोपः, उपसर्जने तु तस्यैव तत्त्वमिति न तदारोप इति भावः । उक्तदोषद्वयाभावादाह—**एतेनेति** । अन्वर्थसञ्ज्ञाक्षिप्तेत्यर्थः । तस्यार्थमाह—**तद्विनेति** । उक्तसर्वदोषायाह—**केचित्त्विति** । प्राञ्च इत्यर्थः । एकस्य=एकबोध्यस्य योगार्थस्य । एवमग्रेऽपि । अत्राऽऽवृत्त्यादिकृतगौरवादाह—**परन्त्विति** । आद्यः=विशिष्टविधिपक्षः ।

❀ ज्योत्स्ना ❀

क्षिप्तस्य=अन्वर्थसञ्ज्ञाक्षिप्तस्येत्यर्थः । **मानाभावाच्चेति** । पदवृत्त्युपस्थापितस्यैव शाब्देऽन्वयप्रतियोगित्वाभ्युपगमादिति भावः । एतच्च शब्दाध्याहारवादे, अर्थाध्याहारवादे तु तथानुपस्थितस्यापि तदन्वये बाधकाभावः, जात्याक्षिप्तव्यक्तेर्मीमांसकैस्तदङ्गीकारात्, अप्रसङ्गस्तु तात्पर्यग्रहस्य शाब्दे

❀ सदाशिवभट्टीयम् ❀

रूपेणान्वये पृथगुपस्थितेस्तन्त्रत्वात् । स्वमते तु समासेपि तथान्वयो भवत्येवेति कारके वक्ष्यते, मञ्जूषायाञ्च वक्ष्यते, तदाऽव्युत्पन्नत्वादित्यस्यौत्सर्गिकत्वादित्यर्थो निपुणतरैर्मत्सजातीयैरन्यैरपि वेदितव्यः ।

❀ विषमपदविवृतिः ❀

स्थितयोस्तथान्वयस्यौत्सर्गिकत्वादेकपदोपस्थाप्ययोरन्वयाङ्गीकारे एवमन्वयः स्यादित्येवंपरः । अत एव 'वषट्कर्तुः प्रथमभक्ष' इत्यादौ भक्षप्राथम्ययोर्नोद्देश्यविधेयभावेनान्वयः । यद्यप्येवकारार्थयोरन्ययोगव्यवच्छेदयोः परस्परमन्वयोस्ति, तथाऽपि नोद्देश्यविधेयभावेन सः, अगतिकगतिश्चेति न दोषः, निपातातिरिक्तनामपदोपस्थाप्ययोस्तथान्वयाङ्गीकाराद्वा । **अन्यतरवियोगेनेति** । यत्तु 'अरिमेदः पलाशश्च बाहुः कल्पद्रुमश्च ते' इति पदश्लेषोदाहरणेऽरीणाम्मेदः पलं चाश्नातीत्यरिमेदःपलाशस्ते बाहुः–अरिमेदसञ्ज्ञकः पलाशसञ्ज्ञकश्च कल्पद्रुम इत्यर्थके परस्परमुद्देश्यविधेयभावेनान्यतरवियोगेनान्यत्रान्वयस्य दृष्टत्वादिदञ्चिन्त्यम्, अत एव दुष्टपदं, श्रुतिकटु, च्युतसंस्कृतीति पददोषविशेषलक्षणसूत्रे–'ननु श्रुतिकटुप्रभृतिशब्दानां लक्षणपरत्वे विभागपरत्वाभावाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इत्याशङ्क्य–रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरपि प्रत्ययः, यथा 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य' इति गौतमीयेन्द्रियलक्षणसूत्रे इति काव्यप्रदीपकृता व्याख्यातमिति पाठकेनोक्तं, तन्न, अरिमेदःपलाशशब्दौ हि योगरूढौ मण्डपादिशब्दवत्, न तु [योगरूढौ (?)] रूढौ,'वृक्षयोर्मेदःपलानशितृत्वात् । सर्वनामशब्दस्तु योगरूढः । योगरूढस्थले च शेखरोक्तो नियम इति नोक्तश्लेषोदाहरणविरोधः । काव्यप्रदीपकृदुक्तिस्तूक्तनियमविरोधेन प्रौढिवादरूपेति दिक् । ननु सर्वनामपदस्य योगरूढत्वेन तदनुगुणानामेव सञ्ज्ञित्वकल्पनं, नतूपसर्जनादीनां सर्वादीनां गणाद्बहिर्भावस्तथाचा'तिसर्वाये'त्यादौ समुदायस्य सञ्ज्ञा दुर्वारा, तस्य प्राधान्येन स्वीयप्रकृतिनिमित्तवत्सर्वोपस्थापकत्वादित्याशङ्क्याह—**तदन्तत्वे इति** । **अवयवद्वारेति** । व्याख्यानादन्तावयवद्वारोक्तसर्वार्थवाचकानामेव सञ्ज्ञित्वकल्पनायामुपसर्जनस्य सर्वादिबहिर्भाव अर्थादापतितः । योगार्थाननुगुणत्वेन तस्य तत्त्वे मानाभावादिति भावः । 'येन विधि' रिति सूत्रे कैयटेनोक्तं पक्षं दूषयति—**एतेनेति** । आक्षेपं विनैवोक्तरीत्या निर्वाहसम्भवेनेत्यर्थः ।

पक्ष इतो लघुरिति बोध्यम् । सन्निवेशादिति । तदनुमानादित्यर्थः । अत्रोपसर्जनत्व-मितरविशेषणत्वेनार्थोपस्थापकत्वम् । 'तदोः सः' इतिसूत्रे–'अदस एव दस्य नान्यस्ये'ति

ॐ अभिनव-चन्द्रिका ॐ

इतो लघुरिति । सर्वाद्यन्तानि शब्दस्वरूपाणि प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थ-वाचकत्वविशिष्टसर्वनामपदवन्तीति प्रथमकल्पे एकमेव वाक्यमिति लाघवं, सर्वाद्यन्तानि प्रसिद्ध-स्वीयसर्वार्थवाचकानि, तानि च सर्वनामपदवन्तीति द्वितीयकल्पे तु वाक्यद्वयमिति गौरवम् ।

इतरविशेषणत्वेनार्थोपस्थापकत्वमिति । पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारता-प्रयोजकत्वमुपसर्जनत्वमिति यावत् । अन्ये तु–पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितीय-

ॐ चिदस्थिमाला ॐ

सन्निवेशे ताल्वोष्ठपुटव्यापारस्य हेतुत्वेऽपि महासञ्ज्ञाकरणस्याहेतुत्वादाह—तदनुमानादिति । सन्निवेशा-नुमानादित्यर्थः । कृत्रिमोपसर्जनस्यैव ग्रहणमिति भ्रमनिरासायाह—अत्रेति । वार्तिके इत्यर्थः । अत्रेत्थमेव विवक्षितमिति भावः । नन्वेवं 'तदोः सः सा'विति सूत्रभाष्यविरोधः, ततो हि कृत्रिमोपसर्जने एव निषेध-प्रतीतेः, अन्यथा सिद्धान्तेऽप्युपसर्जनत्वादत्वसत्वयोरप्राप्तौ–'इष्यते' इत्युक्तिरसङ्गतैव स्यादत आह—तदो-रिति । अदस एवेति । ''-'अनन्त्ययो'रिति न वाच्यं 'तदोः सः सौ' ततो 'ऽदसः' नियमार्थमिदम् ''इत्यादिः।

ॐ ज्योत्स्ना ॐ

सहकारित्वात्तदभावेनैव निरसनीय इत्याहुः । तदनुमानात्=सर्वार्थवाचकानुकरणानुमानात् । तच्चैवं-'सर्वादिगणपठितानि सर्वार्थवाचकानुकरणानि' सर्वनामसञ्ज्ञाप्रयोजकत्वात् , यन्नैवं तन्नैवमिति ।

ॐ विषमपदविवृतिः ॐ

इतो लघुरिति । वस्तुतः प्राप्ताप्राप्तविवेकन्यायाद्यननुसन्धानादाद्यपक्षोऽप्येतत्पक्षसम एव । इतर-विशेषणत्वेनार्थोपस्थापकत्वमिति। 'तेषां घन'इत्यादौ तु तच्छब्दस्येतरविशेषणतया स्वार्थबोधकत्वे-ऽपि न तथोपस्थितिजनकत्वम्, उपस्थितेः शक्तिग्रहसमानविषयत्वात् । नन्वेवं'परस्मैपदं' 'परस्मै-

ॐ वरवर्णिनी ॐ

इतरविशेषणेति । इतरार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमुपसर्जनत्वमित्यर्थः । यथा—'अतिसर्वौ' इत्यत्र–सर्वरूपार्थेतरातिक्रमणरूपार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं सर्व–शब्दस्येति तस्योपसर्जनत्वम् । नन्वेवं केवलसर्वशब्दस्यापि–सर्वनिष्ठविशेष्यतानिरूपित-सर्वत्वनिष्ठप्रकारता–प्रयोजक-त्वादुपसर्जनत्वापत्तिरिति चेन्न, इतरार्थनिष्ठविशेष्यतानिरूपित-यत्किञ्चिद्धर्मावच्छिन्नप्रकारता–प्रयोजकत्व-स्यैव तथात्वेन सर्वत्वनिष्ठप्रकारताया निरवच्छिन्नत्वेन सावच्छिन्नत्वाभावात् , [ अनुल्लिख्यमानजातेः सर्वत्वस्य प्रकृते स्वरूपत एव भानेन तन्निष्ठप्रकारतायाः सर्वत्वत्वेनानवच्छिन्नतया निरवच्छिन्नत्वात् ] ।

नन्वेवमपि 'सर्वस्मै'इत्यत्र केवलसर्वशब्दे उपसर्जनत्वापत्तिस्तदवस्थैव, एकत्वत्व-पुंस्त्वत्वाद्यवच्छिन्न–पुंस्त्वैकत्वादिनिष्ठप्रकारता–निरूपित–सर्वत्वावच्छिन्नसर्वनिष्ठविशेष्यता–प्रयोजकत्वस्य केवलसर्वशब्दे सत्त्वा-दिति चेन्न, इतरपदार्थनिष्ठविशेष्यतानिरूपितयत्किञ्चिद्धर्मावच्छिन्नोपस्थितीयप्रकारताप्रयोजकत्वस्यैवोपसर्जन-त्वेन–एकत्व–पुंस्त्वादौ च नानाविधवचनलिङ्गादिभानोपपत्तये खण्डशः शक्तिस्वीकारेण तादृशप्रकारता-प्रयोजकत्वस्य केवलसर्वशब्देऽभावेनादोषात् । उपस्थितिपदोपादानाच्च–'सर्वस्मै घटाये'त्यत्र घटरूपेतर-पदार्थनिष्ठविशेष्यतानिरूपितसावच्छिन्नप्रकारताप्रयोजकत्वेऽपि सर्वशब्दस्य नोपसर्जनत्वापत्तिः, घटत्वेन

ॐ वरवर्णिनी ॐ

घटस्य, सर्वत्वेन च सर्वस्योपस्थित्या इतरपदार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वस्य सर्वशब्देऽभावात् ।

नन्वेवमपि 'नीलो घट' इत्यत्र नीलघटतात्पर्येण तच्छब्दप्रयोगे तादृशतच्छब्दस्य-नीलेतरघटत्वावच्छिन्न घटपदार्थ-निष्ठविशेष्यतानिरूपितनीलत्वावच्छिन्नप्रकारताकोपस्थितिजनकतयोपसर्जनत्वापत्त्या 'स'इत्यादि रूपानापत्तिरिति चेन्न; इतरत्वस्य पदे विशेषणेन, इतरपदेन स्वार्थेतरार्थस्य ग्रहणेन वा दोषाभावात्। यस्योपसर्जनत्वं चिकीर्षितं तत्स्वम्, प्रकृते केवलसर्वशब्दस्य स्वपदेन ग्रहणे—सर्वत्वादिर्न स्वार्थेतर इति तत्र नोपसर्जनत्वापत्तिरिति-'सावच्छिन्नत्व'मपि न देयमिति लाघवम्। नीलघटादितात्पर्यकतच्छब्दे च घटत्वाद्यवच्छिन्नो घटादिर्न स्वार्थेतरोऽर्थ इति न दोष इत्याशयः ।

परे तु—"द्वीयेनेरप्रत्यये'द्व'इति प्राप्नोति, 'स्व'इति चेष्यते-" इति भाष्यस्यैकदेश्युक्तित्वं वदतो नागेशभट्टस्य 'द्व'इत्येव रूपमिष्टमिति-तत्रोपसर्जनत्वं भट्टाभिमतमिदानीं न सिध्येदत इतरत्व पदविशेषणमिति स्वार्थेतरार्थस्य ग्रहणमिति च वक्तुमशक्यम्, एवञ्च—'सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः' 'कीचका वेणवस्तेस्युर्ये स्वनन्त्यनिलोद्धताः'—इत्यादिकोशप्रामाण्येन कूकुदादिशब्दानां सत्कारपूर्वकालङ्कारविशिष्टकन्यादानकर्तृत्वावच्छिन्नवाचकतया तत्तात्पर्येण नीलघटादि-तात्पर्येण च तदादिशब्दप्रयोगे तेषामुपसर्जनत्वापत्तिः, तत्र दाननिष्ठप्रकारतायाः सत्काराद्यवच्छिन्नत्वात्, अतः स्वविशिष्टोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वं वाच्यं,वै० 'स्वप्रयोज्यत्व' 'स्वपर्याप्तशक्तिज्ञानीय-मुख्यविशेष्यतासामानाधिकरण्यो'भयसम्बन्धेन । यस्योपसर्जनत्वं चिकीर्षितं तत्स्वम् । अतिसर्वादौ च-स्वं—सर्वशब्दः, तत्प्रयोज्यातिक्रमणकर्तृत्वावच्छिन्नविशेष्यतानिरूपितसर्वत्वावच्छिन्नविषयताकोपस्थितीयप्रकारताप्रयोजकत्वं तत्रैव, एवं-स्वपर्याप्तशक्तिः—सर्वत्वावच्छिन्ननिरूपिता, तादृशशक्तिज्ञानीया मुख्यविशेष्यता—सर्वत्वावच्छिन्ना सर्वनिष्ठा, तत्रैव च—सर्वकर्मकातिक्रमणकर्तृत्वावच्छिन्नविशेष्यता निरूपिता सर्वपदप्रयोज्या उपस्थितीयप्रकारताऽपीति-तादृशविशेष्यतासामानाधिकरण्यस्य तादृशप्रकारतायां सत्त्वेन तत्र-तत्प्रयोजकस्य सर्वशब्दस्योपसर्जनत्वं सुलभम्। यद्यप्यतिसर्वशब्दे एव पर्याप्त्या तादृशोपस्थितिप्रयोजकत्वन्तथाप्यपर्याप्त्या सर्वशब्देऽपि तदस्त्येवेति भावः। पूर्वोक्तकूकुदादिवाचकतच्छब्दे च तादृशशक्तिज्ञानीयमुख्यविशेष्यता—तादृशकन्यादानकर्तृत्वावच्छिन्ननिष्ठा, उपस्थितीयप्रकारता च सत्कारादि-निष्ठेति तादृशविशेष्यतासामानाधिकरण्यस्य तादृशोपस्थितीयप्रकारतायामसत्त्वान्नोपसर्जनत्वापत्तिः। सर्वत्व-निष्ठप्रकारतायाः पूर्वोक्तविशेष्यतासामानाधिकरण्याभावाच्च न केवलसर्वशब्दस्योपसर्जनत्वम् ।

अत्र 'स्वप्रयोज्यत्व'सम्बन्धानिवेशे'परमसर्वस्मै' इत्यत्र सर्वशब्दस्योपसर्जनत्वापत्तिः, तथा हि स्वं-परमसर्वघटकः सर्वशब्दः, स्वपर्याप्ता या शक्तिज्ञानीया सर्वत्वावच्छिन्ना मुख्या विशेष्यता, तादृशविशे-ष्यतासामानाधिकरण्यस्य परमत्वावच्छिन्नोपस्थितीयप्रकारतायां सुलभतया तत्प्रयोजकत्वस्य सर्वशब्दे-ऽक्षतत्वात्, न च मुख्या विशेष्यता सर्वत्वावच्छिन्ना, सर्वनिष्ठा उपस्थितीया प्रकारता तु परमत्वावच्छिन्ना परमनिष्ठेति मुख्यविशेष्यतातादृशप्रकारतयोः सामानाधिकरण्याभावादेव न सर्वशब्दस्योपसर्जनत्वापत्ति-रिति वाच्यम्, परमसर्वयोरभेदान्वयेन परमत्वावच्छिन्ननिष्ठप्रकारताया मुख्यविशेष्यतासामानाधिकरण्यस्य सूपपादत्वात्। 'स्वप्रयोज्यत्व' सम्बन्धोपादाने तु—सर्वपदप्रयोज्या न परमत्वावच्छिन्नविषयताकोपस्थितीया प्रकारता, किन्तु परमपदप्रयोज्यैवेति नोपसर्जनत्वापत्तिः। न च परमशब्दस्य तत्प्रयोजकत्वे-एकार्थीभावेन परमसर्वस्यापि तत्त्वादपर्याप्त्या सर्वपदस्यापि तादृशप्रकारताप्रयोजकत्वसम्भवात्तत्सम्बन्ध-निवेशेऽपि परमसर्वशब्दे सर्वशब्दस्योपसर्जनत्वापत्तिरिति वाच्यं, तत्र प्रयोजकतायाः पर्याप्त्यैव स्वीकारा-दित्याहुः-इत्यस्मत्पितामहचरणा मरुमण्डलमार्त्तण्डाः श्रीस्नेहिरामशास्त्रिणो व्याचचक्षिरे ।

नियमे 'द्रीयतेरप्रत्यये द्र इति प्राप्नोति, स्व इति चेष्यते, यथालक्षणमप्रयुक्ते'–इति

❀ अभिनव-चन्द्रिका ❀

तकारतात्प्रयोजकत्वमुपसर्जनत्वम् । अत एव 'द्रीयतेरप्रत्यये द्र इति प्राप्नोति स्व इति चेष्यते' इति भाष्यं सङ्गच्छते । अन्यथा उपसर्जनत्वात्सत्वाप्राप्त्या तदसङ्गतिः स्पष्टैव । न च 'यथालक्षण-मप्रयुक्ते' इत्यत्राऽलक्षणमितिच्छेदः । लक्षणपदं–लक्षणप्रवृत्तिपरमुपचारात्, तथा चाप्रयुक्ते लक्षणप्रवृत्त्यभावयोग्यतेत्यर्थ इति एतस्यानभिधानमिति वाच्यम्, प्रवृत्तौ लक्षणास्वीकारे गौरवात् । 'अलक्षण'मितिच्छेदे मानाभावाच्च । पदार्थानतिवृत्तावव्ययीभावं स्वीकृत्य अप्रयुक्तविषये लक्षणमन-तिक्रम्य प्रयोगः कर्तव्य इत्यर्थस्यैव 'यथालक्षणमप्रयुक्ते' इति भाष्यस्य न्याय्यत्वादित्याहुः ।

परे तु सर्वादिविशिष्टत्वमुपसर्जनत्वम्, वैशिष्ट्यञ्च 'स्वप्रयोज्योपस्थितीयविशेष्यताप्रयोजकता-पर्याप्त्यधिकरणत्व' 'स्वप्रयोज्यप्रकारतानिरूपितोपस्थितीयप्रयोजकतापर्याप्त्यधिकरणत्वै'तदुभय-सम्बन्धेन। अत एव 'सर्वेषाम्पुत्रः' 'परस्मैपदम्' 'अतिभवकान्' 'सर्वस्मिन्नाशय'इत्यादिषु सुट्स्मा-यादयः सिद्ध्यन्ति, अन्यथा पूर्वोक्तलक्षणद्वयस्यापि सर्वादिशब्देषु सत्त्वादुपसर्जनत्वात्सुडादयो न स्युः । न च निरुक्तोपसर्जनत्वस्य अतिसर्वेति समुदाये एव सत्त्वेनावयवस्य सर्वनामत्वादति-सर्वायेत्यादौ स्मायाद्युत्पत्तिरिति वाच्यं, मासपूर्वायेत्यादौ स्मायाद्युत्पत्तिवारणाय सर्वनामाभिन्नं यदन्तमङ्गन्ततः परेषां ङेप्रभृतीनां स्मायादयो भवन्तीत्यर्थकरणेनादोषात् ।

न च 'द्रीयतेरप्रत्यये द्र इति प्राप्नोति स्व इति चेष्यते' इतिभाष्यविरोधो निरुक्तोपसर्ज-नत्वस्य सत्त्वादिति वाच्यं, 'स्वप्रयोज्योपस्थितीयप्रकारताप्रयोजकतापर्याप्त्यधिकरणघटितत्व' 'स्वप्रयोज्यप्रकारतानिरूपितस्वेतरपदप्रयोज्योपस्थितीयविशेष्यताप्रयोजकतापर्याप्त्यधिकरणघटितत्वै'-तदुभयसम्बन्धेन सर्वादिविशिष्टत्वमुपसर्जनत्वम्, अथवा 'स्वघटितत्व' 'स्वेतरपदप्रयोज्यविशेष्यता-प्रयोजकघटितत्वो'भयसम्बन्धेन—सर्वादिविशिष्टत्वमुपसर्जनत्वमिति स्वीकारेणादोषात्–एवञ्च भाष्यं नैकदेशीत्याहुः ।

❀ वरवर्णिनी ❀

जगन्मान्याःश्रीहरनारायणत्रिपाठिचरणास्तु—एवं सति शुद्धसर्वशब्दद्विशब्दादेरपि–अतिसर्वादौ निरुक्तसम्बन्धेन स्वविशिष्टप्रकारताकोपस्थितिप्रयोजकतया तत्रत्यात्रत्यशक्त्योरैक्येन तादृशप्रकारताको-पस्थितिजनकत्वस्याक्षततयोपसर्जनत्वापत्तिरतः–स्वविशिष्टप्रकारताकबोधप्रयोजकत्वप्रकारकतात्पर्यविषयत्व-मेवोपसर्जनत्वं, वै० 'स्वप्रयोज्यत्व' 'स्वपर्याप्तशक्तिज्ञानीयमुख्यविशेष्यतासामानाधिकरण्यै'तदुभय-सम्बन्धेन । एवञ्च शुद्धद्विशब्दादौ इच्छाकर्तृरूपार्थे तात्पर्याभावान्न शक्त्यैक्येऽपि दोषसम्भवः । एवमपि 'सर्व इव–'सर्वे' इति क्बलुगन्ते भट्टमते उपसर्जनत्वमिष्टं तदिदानीं न सिद्ध्येदिति दोषस्तदवस्थ इति चेत्—'स्वप्रयोज्यत्वं'विहाय—'स्वनिष्ठप्रयोजकतानिरूपितप्रयोज्यताद्विशेष्यतानिरूपितत्वे'त्यस्यैव प्रथम सम्बन्धतया निवेशेनादोष इति गृहाण ।

नचातिसर्वायेत्यत्रातिसर्वशब्दनिष्ठप्रयोजकतानिरूपितप्रयोज्यतावती या अतिक्रमणकर्तृत्वावच्छिन्ननिष्ठा विशेष्यता सा न सर्वशब्दप्रयोज्येति तद्घटकसर्वशब्दस्योपसर्जनत्वानापत्तिरिति वाच्यं, तत्र सर्वशब्देऽपर्याप्त्या

१ द्रीयतेरिति। अयमाशयः–तदोः सः सावित्यत्रानन्त्यग्रहणं किमर्थं, न च तदादौ दस्य सत्वापत्तिरिति वाच्यं 'तदोः सः सौ' 'अदसः' इति योगो विभज्यते, द इति वर्तते, अदसो दस्य स इत्यर्थः । पूर्वेण सिद्धे इदं व्यर्थं सन्नियमार्थं भविष्यति, अनन्त्यदकारस्य चेत्सत्वन्तर्ह्यदस एवेति तदादौ दस्याप्राप्तिरित्याशङ्क्य भाष्यकृदाह—द्रीयतेरित्यादि । अप्रत्ययः=अविद्यमानो [लुप्यमानः–] विच्प्रत्ययः। गुणस्तु न–अल्लोपस्य स्थानिवत्त्वादिति तत्त्वम् ।

भाष्यन्तु प्रकृतसूत्र—नञ्सूत्रादिस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति न तद्विरोधः ।

❀ अभिनव-चन्द्रिका ❀

**एकदेश्युक्तिरिति** । चिन्त्यमिदम्—पूर्वोक्तदिशा एकदेश्युक्तित्वस्य कथमपि वक्तुमशक्यत्वात् ।

❀ चिदस्थिमाला ❀

**प्रकृतेति** । महासञ्ज्ञया वार्तिकप्रत्याख्यानपरेत्यर्थः । **नञ्सूत्रेति** । नञ्समासस्य पूर्वपदार्थप्राधान्ये अस्

❀ विषमपदविवृतिः ❀

भाषा' इत्यादौ स्मैभावो न स्यादिति चेन्न, अन्तरङ्गत्वेन स्मायादिषु कृतेष्वेव समाससञ्ज्ञाप्रवृत्तेः । समासस्य विप्रयोजकत्वाभावेनान्तरङ्गानपीति न्यायाविषयत्वात् । 'राजकुमारीपुत्र' इत्यादौ ह्रस्व-वारणप्रकारेण निर्वाहसम्भवाच्च । अत्र 'सञ्ज्ञोपसर्जनीभूता' इति वार्तिकारम्भादन्वर्थसञ्ज्ञाश्रय-णमेव श्रेयः । सञ्ज्ञोपसर्जनीभूतप्रथमचरमादीनां सञ्ज्ञाव्यावर्त्तय इति बोध्यम् ।

---

❀ वरवर्णिनी ❀

प्रयोजकतायाः सत्त्वेनादोषात् । न चैवं 'स्वनिष्ठप्रयोजकतानिरूपिते'त्यादिनिवेशे 'परस्मैपदं' 'परस्मैभाषा' इत्यादावुपसर्जनत्वापत्त्या स्मैभावानापत्तिरिति वाच्यं, निपातनेनैव तत्र स्मैभावसिद्धेः । एवञ्च—'स्वनिष्ठ-प्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितत्व' 'स्वपर्याप्तशक्तिज्ञानीयमुख्यविशेष्यतासामानाधिकरण्यो'-भयसम्बन्धेन स्वविशिष्टप्रकारताकबोधप्रयोजकत्वप्रकारकतात्पर्यविषयत्वमुपसर्जनत्वमिति तत्त्वम् ।

**एकदेश्युक्तिरिति** । परे तु स्वविशिष्टप्रकारताकबोधप्रयोजकत्वप्रकारकतात्पर्यविषयत्वमुपसर्जनत्वं, वै० 'स्वान्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितत्व' 'स्वपर्याप्तशक्तिज्ञानीयमुख्यविशेष्यता-सामानाधिकरण्यै'तदुभयसम्बन्धेनेत्यवश्यं स्वीकार्यम्, अत एव 'परस्मैपदं' 'परस्मैभाषा' 'सर्वस्मिञ्श्रयः' 'सर्वस्मिन्वास' इत्यादिप्रयोगोपपत्तिः, स्वान्तपर्याप्तिप्रयोजकत्वस्याभावात् । 'अनेषक' इत्यत्रैतत्तदोरिति ज्ञापका-देव न दोषः । कनो लुकि तु 'द्व'शब्दवद्भाष्यरीत्या स्मायादिकमिष्टमेव—'सर्वस्मै ब्राह्मणाये'ति,—एवञ्च न तत्रोपसर्जनत्वानापत्तिर्दोषः ।

एवञ्च द्वीयतेरप्रत्यये द्व इत्यत्र द्विशब्दस्य स्वान्तत्वाभावादुपसर्जनत्वाभाव इति 'स्व इति चेष्यते' इति भाष्यं सूपपन्नम् । एतद्भाष्यस्यैकदेश्युक्तित्वे प्रमाणाभावात् । ईदृशोपसर्जनत्वस्य स्वीकारादेव 'द्व' इत्यादेरनुपसर्जनत्वादेव चोपसर्जनाधिकारस्य तदन्तविधिज्ञापकत्वं सङ्गच्छते, अन्यथा कुरुचरशब्दादाचार-क्विबन्तात्कर्त्तरि क्विपि नागेशभट्टमते 'द्व' इत्यत्रेव तत्रापि उपसर्जत्वेन तत्र ङीब्वारणायोपसर्जनाधिकारस्य चरितार्थतया तदन्तविधिज्ञापकताऽसङ्गतैव स्यात् । 'स्वान्तपर्याप्ते'त्याद्युक्तौ तु तादृशकुरुचर्शब्दे उपसर्जनत्वा-भावेन तदन्तविधिज्ञापकता सूपपद्यते । तादृशकुरुचराद्यनभिधानपरस्तत्रत्यः शेखरस्त्वयुक्त एव ।

न च 'द्व' इत्यादावपि द्विशब्दस्य व्यपदेशिवद्भावेन स्वान्तत्वं सुलभमिति उपसर्जनत्वमस्त्येवेति शेखरो ऽपि युक्त एवेति वाच्यम्, अनतिदिष्टस्यैव स्वान्तत्वस्य ग्रहणात् । 'द्व' इत्यत्रोपसर्जनत्वमभिप्रयन्नागेशस्तु—अतिदिष्टमपि स्वान्तत्वन्तत्र लक्षणे मन्यते, एवञ्च यथाश्रुतशेखरग्रन्थोपि सङ्गच्छते, 'परस्मैपद'मित्यादिरूपा-ण्यपि सिध्यन्तीतीदमेवोपसर्जनत्वं [ 'परे तु' मतोक्तं ] सर्वसम्मतमित्याहुः ।

**अन्ये तु**—स्वविशिष्टत्वमुपसर्जनत्वं, वै० 'स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठमुख्यविशेष्यतानिरूपिता या उपस्थितीयमुख्यविशेष्यतासमानाधिकरणा प्रकारता, तत्प्रयोजकत्व' 'स्वतादात्म्यो'भयसम्बन्धेने-त्याहुः । अधिकन्त्वस्मद्विरचितायां शब्देन्दुशेखराभिनवराजलक्ष्म्यामनुसन्धेयम् ।

श्री **बालशास्त्रिचरणानुसारिणस्तु**—स्वेतरत्—यत्—पदं, तदर्थनिष्ठविशेष्यतानिरूपितस्वार्थनिष्ठ-प्रकारताकोपस्थितिजनकत्वमुपसर्जनत्वं,—'स्व' इति चेष्यते' इति वदतो भाष्यकृतोऽभिप्रेतमित्याहुः ।

**तृतीयासमासे ।** 'द्वन्द्वे चे'तिसूत्रस्थाकरोक्तरीत्या 'न बहुव्रीहौ' इतिसूत्रस्थाकररीत्या च प्रथमार्थे सप्तमी । अयमपि समासस्यैव निषेधो नावयवानाम् ।

**समुदायस्येति ।** 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्' ।–इति भाष्योक्तया एतत्प्रकरणविषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः । किञ्चावयवमात्रस्य निषेधे 'वर्णाश्रमेतराणा'-मित्यत्र सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायसञ्ज्ञायां सुडापत्तिः, तस्य सञ्ज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादित्वानपायात् । अवयवस्य व्यपदेशिवद्भावेन, समुदायस्य च

❀ अभिनव-चन्द्रिका ❀

**प्रथमार्थे सप्तमीति ।** वस्तुतस्तु वाचकत्वं सप्तम्यर्थ इति स्वीकृत्य वाचकतासम्बन्धेन तृतीयासमासे तृतीयासमासार्थवाक्ये च सर्वनामपदं पाणिनिसङ्केतसम्बन्धेन न तिष्ठतीत्यर्थस्वीकारेण सामञ्जस्यात् प्रथमान्तेन विपरिणामो वृथेति बोध्यम् । **प्रत्यङ्गमिति ।** अन्तरङ्गमित्यर्थः । **मुक्तसंशयमिति ।** –क्रियाविशेषणमेतत् । निःसंशयमन्तरङ्गत्वात्समासात्प्रागेव अकच्स्वरौ कर्तव्यावित्यर्थः ।

**प्रथमार्थकत्वमिति ।** इदमपि चिन्त्यमेव, उक्तयुक्तेः । **सुडापत्तिरिति ।** परे तु 'न बहुव्रीहौ'

❀ चिदस्थिमाला ❀

इत्यादावत्वसत्त्वयोरनापत्तिपरेत्यर्थः । प्राचोक्तमसङ्गतमिति ध्वनयन्नाह—**द्वन्द्वे चेतीति ।** **स्मृत्येति ।** तद्विषय–'न बहुव्रीहा'विलेतत्साहचर्येण चेत्यपि बोध्यम् । खण्डनकृदुक्तिं खण्डयितुमाह–**किञ्चेति ।** मात्रपदेन समुदायव्यावृत्तिः । तदाशयो भावप्रकाशे प्रतिपादितस्तत एव बोध्यः । **निषेध इति ।** 'प्रयोजनमिति–'येनविधि'रिति–सूत्रभाष्यप्रामाण्येन तदन्तविधा'विति शेषः । तथा भाष्यप्रयोगसामर्थ्यात्तदभावकल्पनापेक्षया स पक्ष एवोचित इति भावः । नन्वनेन निषेधात्तस्य सर्वार्थवाचकत्वमेव नात आह—**तस्येति ।** सर्वार्थवाचकत्वस्येत्यर्थः । लोकव्युत्पत्तिसिद्धस्य तस्यानेन निषेद्धुमशक्यत्वादिति भावः ।

यत्तु खण्डनकृत् "–समूहमात्रनिषेधस्येष्टत्वे 'द्वन्द्वश्चे'त्येव वाच्ये सप्तमीनिर्देशसामर्थ्यात् सञ्ज्ञिनोऽधिकरणत्वविवक्षया सप्तम्यामपि बहुलक्ष्यसंस्कारानुरोधाद्विद्यमानानीत्यध्याहारेण बहुवचनस्य समूहावयवाभिप्रायत्वेन सर्वादीनीत्यस्य गौरवादनन्वयान्निष्फलत्वाच्चानुवृत्त्या समुदायस्यावयवानाञ्च निषेधः, तयोर्मध्ये समुदायस्य व्यपदेशिवद्भावेन निषेधः, आधाराधेयभावेऽपि व्यपदेशिवद्भावस्य तुल्यास्यसूत्रभाष्यादौ स्पष्टत्वात्,

❀ ज्योत्स्ना ❀

**अयमपि समासस्यैवेति ।** परेत्वेवं सति मासपूर्वायेत्यादाववयवनिषेधाभावादङ्गाधिकारपरिभाषया स्मायादिवारणाय विहितविशेषणाश्रयणे गौरवात्सप्तमीनिर्देशानुरोधाच्च तृतीयासमासे विद्यमानसर्वादीनां निषेधः, स च पूर्वोक्तरीत्या पाठाद्बहिर्भावद्वारैवेति सर्वाद्यन्तत्वप्रयुक्तसर्वनामसञ्ज्ञां समुदाये न प्रवर्तयति । स्पष्टञ्चेदं 'विभाषा दि'गितिसूत्रे वृत्तिपदमञ्जर्योः । अत एव भाष्येऽत्र सूत्रे समास इत्यनुवर्तमाने पुनस्तदुपादानमसमास इति योगविभागेन वाक्ये निषेधार्थमित्युक्तम् । प्रथमार्थकनिर्देशे तु तदनुपपत्तिरित्याहुः । इदं तु स्यात्—वाक्ये निषेधः प्रवर्तमानो लौकिक एवाप्रवृत्तिमर्हति, न मासपूर्वायेति लौकिके, प्रत्यासन्नत्वात् । न पूर्वसदृशेऽतिप्रतिपदोक्तसमासस्यैवेह ग्राह्यत्वात्तस्यालौकिके निषेधे फलालाभात् । 'त्वयकाकृतं' 'त्वकत्कृत'-मित्यादावन्तरङ्गाकज्निषेधस्यैव गोनर्दीयमतेऽनेष्टत्वात् । **सर्वार्थवाचकसर्वादित्वानपायादिति ।** इदं पाठाद्बहिर्भावद्वारा सञ्ज्ञानिषेध इत्यनाश्रित्योक्तम् । स्यादेतत्—सञ्ज्ञाविधाविव निषेधेऽपि तदन्त-

❀ विषमपदविवृतिः ❀

**नावयवानामिति ।** केचित्तु मासपूर्वायेत्यादौ स्मायादिवारणाय विहितविशेषणाश्रयणे गौरवात्सप्तमीनिर्देशानुरोधाच्च तृतीयासमासे विद्यमानसर्वादीनां निषेधः, स च पूर्वोक्तरीत्या पाठाद्बहिर्भावद्वारैवेति

द्वन्द्वे विद्यमानत्वेन निषेधे तु-अवयवस्य निषेधे फलाभावः ।

न च त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषेण फलं, द्वन्द्वावयवमात्रे सुन्दरादिविशषणान्वयाभाववत्कुत्सादिविवक्षाया अभावात् । समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक्तदनुत्पत्तेः, अन्यथा तव प्रत्येकं कप्रत्ययोत्पत्त्यापत्तिः। अत एवोक्तं भाष्ये–'अकज् हि न भवती'ति–'विभाषा जसी'तिसूत्रे । समुदायकुत्साविवक्षायामिति तदर्थः। कृताऽकचा समासस्तु भवत्येव, तत्र सर्वार्थ-

❀ अभिनव-चन्द्रिका ❀

'तृतीयासमासे' 'द्वन्द्वे चे'ति निषेधैः–तद्घटकानि सर्वादीनि न भवन्तीति सर्वादित्वमेव निषिध्यते, न सर्वनामसञ्ज्ञा । तथा च 'वर्णाश्रमेतराणा'मित्यत्र इतरशब्दस्य सर्वादित्वनिषेधे तदन्तस्य सर्वनामसञ्ज्ञाया दूरापास्तत्वेन सुटोऽप्रवृत्तिः । तथाच यथाश्रुतसप्तम्यर्थत्वेऽपि क्षतिविरहात् ।

न चावयवस्य सर्वादित्वनिषेधे सर्वनामत्वाभावादकज् न स्यादिति वाच्यम् 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशय'मिति भाष्येण समासात्प्रागेव अकच्प्रवृत्तेरित्याहुः । **कुत्सादिविवक्षाया अभावादिति** । 'वृत्त्युत्तर'मिति शेषः । वृत्तेः प्राक् कुत्सादिविवक्षायान्तु अन्तरङ्गत्वादकच् भवत्येवेति बोध्यम् । तदेतद्ध्वनयन्नाह—**कृताकचा समासस्त्विति** ।

❀ चिदस्थिमाला ❀

तत्फलञ्च तत्रावयवसर्वनामत्वप्रयुक्तोपि नाकजिति–"इति तत्खण्डयति–**अवयवस्येति** । व्यपेत्युत्तरान्वयि । **फलाभाव इति** । इतरकशब्देन समासे 'अतिभवका'नित्यादाविव तच्छ्रवणस्य दुर्वारत्वादिति भावः।

मनोरमाद्युक्तं खण्डयति–**न चेति** । समाहारे इवे इतरेतरयोगेऽपि साहित्यस्य विशेष्यतेति सिद्धान्तेनाह–**द्वन्द्वावयवेति** । एकार्थीभाववशादिति भावः । नन्वेवमपि समुदाये तद्विवक्षासम्भव एवात आह—**समुदाये इति**। एवञ्च शङ्का एवायुक्तेति भावः ।

❀ ज्योत्स्ना ❀

विध्यङ्गीकारात्सर्वाद्यन्तानां सञ्ज्ञा निषिध्यते । नचैवं समुदायस्य निषेधाभावादङ्गाधिकारपरिभाषया सुडापत्तिः, केवलानां व्यपदेशिवद्भावेन सञ्ज्ञा इव द्वन्द्वावयवानां निषेधस्यापि तेनैव विधेयत्वादित्याशङ्क्याह—**अवयवस्येति** । **अवयवस्य निषेधे फलाभाव इति** । नचाङ्गाधिकारपरिभाषया प्राप्तस्य सुटो निवृत्तिः फलं, विहितविशेषणेनापि तस्य वारयितुं शक्यत्वात्। एवञ्च विद्यतिक्रियाध्याहारे गौरवात्प्रथमार्थकसप्तम्यैव समुदायनिषेध उचितः,तृतीयासमास इत्यादावप्येवमेवेति भावः।

**अत एवोक्तमिति** । यस्माच्छीभावः प्राप्तस्तस्य शीभावे कर्तव्ये पक्षे सर्वनामसञ्ज्ञा विधेयशीभा-

❀ विषमपदविवृतिः ❀

सर्वाद्यन्तत्वप्रयुक्तसर्वनामसञ्ज्ञा समुदाये न प्रवर्त्तते । स्पष्टं चेदं 'विभाषा दि'गिति सूत्रे वृत्तिपदमञ्जर्योः । अत एव भाष्येऽत्र सूत्रे समासे इति वर्त्तमाने पुनस्तदुपादानं योगविभागेन वाक्ये निषेधार्थमित्युक्तम् । प्रथमार्थकसप्तमीनिर्देशे तु तदनुपपत्तिरित्याहुः । **अवयवस्यानिषेधे फलाभाव इति** । केचित्तु विहितविशेषणानाश्रयणे एवं सति सम्भवतीति वर्णाश्रमेतराणामित्यादौ सुडभावस्तत्फलमित्याहुः । **अन्यथा तवेति** । अवयवनिषेधवादिनस्तवेत्यर्थः । **अत एवेति** । उक्तरीत्याऽवयवेभ्यः पृथक्तदनुत्पत्तेरेवेत्यर्थः । अन्यथा समुदायस्य शीभावे कर्त्तव्ये एव विकल्पेऽप्यवयवस्य नित्यसर्वनामसञ्ज्ञामाश्रित्याकचो दुर्वारतया तदसङ्गतिः, मम त्ववयवस्य सर्वनामत्वेपि तदर्थमात्रे कुत्सान्वयाभावादकजभावः । समुदायकुत्सामादाय तु नाकच् , समुदायस्यासर्वनामत्वादिति भावः ।

नन्ववयवकुत्साविवक्षाया उक्तरीत्याऽभावेऽकचः प्राप्तिरेव नेति 'शीभावं प्रति विभाषाऽकज्झि न भवती'ति भाष्यं पुनरसङ्गतमेवेत्यत आह—**समुदायेति**। यद्वा-अत एवेत्यस्यावयवमात्रस्य निषेधाभावादेवेत्यर्थः । तथात्वे हि सर्वाद्यर्थकसर्वाद्यन्तत्वेन समुदायस्य नित्यसर्वनामसञ्ज्ञायामकच्स्यादेवेति

त्वादनेन विकल्पो भवत्येव, 'त्वदधरमधुरमधूनि पिबन्त्व'मिति जयदेवप्रयोगबलेन अन्वर्थकत्वच्छब्दस्य सत्त्वेऽपि तस्य सर्वनामत्वे मानाभावात्, बहुसम्मतत्वाच्च ।

एतेन 'न बहुव्रीहाविति निषेधस्यापि द्वन्द्वे चिकीर्षिते इत्यर्थ' इत्यपास्तं, फलाभावात् ।

❀ अभिनव-चन्द्रिका ❀

त्वदधरमधुरमधूनीति । अन्ये तु—राधिकाऽत्यन्तविरहोत्कलिततया स्वाधरे कृष्णाधरत्वभ्रमेण मधुपानं कुर्वन्तीति बोधयितुं—'त्वदधरमधुरमधूनी'त्यत्र त्वच्छब्दो युष्मच्छब्दनिष्पन्न एवेत्याहुः ।

न बहुव्रीहाविति । अयम्भावः—'चार्थे द्वन्द्वः' इत्यनेन—इतरेतरयोगसमाहारयोर्द्वन्द्वो विधीयते, तत्र 'घटपटौ' 'घटपट'मित्युभयत्रापि घटपटोभयप्रकारकसमुदायविशेष्यकबोधस्यैव जननात् परस्परान्वयोपपत्तये घटत्वावच्छिन्नप्रकारतानिरूपिता या पटनिष्ठा समुदायत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतात्वावच्छिन्ना या पटत्वावच्छिन्नप्रकारतानिरूपितसमुदायत्वावच्छिन्ना घटनिष्ठा विशेष्यता, तादृशविशेष्यताकबोधस्यौचित्येन समुदायत्वावच्छिन्नविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वस्य 'वर्णाश्रमेतरे' 'वर्णाश्रमेतरा' इत्यादावितरशब्दे सत्त्वेन निरुक्तोपसर्जनत्वस्य सत्त्वात् द्वन्द्वघटकानामुपसर्जनत्वादेव पाठात्पर्युदासे सिद्धे—'द्वन्द्वे चे'ति सूत्रमपि 'न बहुव्रीहा'वितिवन्न

❀ चिदस्थिमाला ❀

अत एव=अवयवनिषेधे फलाभावादेव । 'सूत्रे' इति पूर्वान्वयि । तदेव ध्वनयन्नाह—**कृताकचेति** । अनेन=प्रकृतेन'विभाषा जसी'त्यनेन । तत्र दोषान्तरमाह—**त्वदधरेति** । गणेऽदन्तस्यैव पाठ इति भावः । **बह्विति** । तान्तस्येति भावः । प्राचोक्तं खण्डयति—**एतेनेति** । अस्यार्थमाह—**फलेति** ।

❀ ज्योत्स्ना ❀

समुदायादेव प्राप्नोतीत्यत इति भावः । **तत्रेति** । 'वर्णाश्रमेतरके' इत्यत्राकचि समासे कृते इत्यर्थः। अनेन='विभाषा जसी'त्यनेन । **तत्त्वमिति** । 'द्वन्द्वे चे'त्यस्य प्रत्याख्यानेऽपि 'विभाषा जसी'त्यस्यारम्भाज्जसि विकल्पो भविष्यतीति न काचिदनुपपत्तिरिति भावः । एतेन उपसर्जनप्रतिषेधेन यत्र समुदायनिषेधे प्रयोजनाभावस्तत्र विग्रतिक्रियाध्याहारेण—बहुव्रीहौ विद्यमानसर्वाद्यन्तस्य निषेधाभावात्तदन्तविधिमूलकव्यपदेशिवद्भावासम्भवात्केवलावयवनिषेधार्थं तथाध्याहारः, तन्निर्वाहार्थञ्चाऽकृतव्यूहपरिभाषाया वृत्तेः प्रागकजप्रवृत्तिकल्पना गौरवपराहता । 'चिकीर्षिते'इत्यध्याहारो लक्षणा वा ततोऽपीति-प्रथमार्थकसप्तमीनिर्देशस्य व्याख्यातुं शक्यत्वेऽपि 'द्वन्द्वे चे'त्यत्र सप्तमीनिर्देशसामर्थ्याद्भाष्यविरोधाद्वृत्त्याद्यनुग्रहाद्विहितविशेषणादाने लाघवानुसन्धानाच्च,—विग्रतिक्रियाध्याहारेण समुदायावयवोभयनिषेधः, तत्रोक्तरीत्यावयवनिषेधे फलाभावः । 'द्व्येकयो'रितिसूत्रनिर्देशात्, 'एकद्विकरणे हेतु'रिति श्रीहर्षप्रयोगात्, 'द्विषड्भि'रिति बोपदेवप्रयोगात् द्विशब्देनैकशेषाभावद्वन्द्वयोरिष्टत्वा'देकद्विका' इत्यादौ प्राग्वृत्तेरकृतव्यूहपरिभाषयाकजप्रवृत्तावनन्तरं वृत्तावयवमात्रकुत्साप्रयुक्ते

❀ विषमपदविवृतिः ❀

भाष्यासङ्गतिः । **अकज्भिन्न भवतीति** । ननु कृताकचा समासे नानेन विकल्पः, अज्ञाताद्यर्थकत्वेनाऽसर्वार्थकत्वात् , पूर्वं द्वन्द्वे जसि सर्वनामसञ्ज्ञाविकल्पे पश्चादवयवकुत्सामादायाकचि शीभावविकल्पघटितं रूपमित्यवयवकुत्साद्यर्थकाकजभिप्रायकत्वमप्यकज्भिन्न भवतीति भाष्यस्य न सम्भवतीत्याशङ्क्याह—**तत्रेति** । **मानाभावाच्चेति** । अन्ये तु दाण्डिनायनसूत्रे स्वरसर्वनामैकश्रुत्या द्वयोरैक्ष्वाकशब्दयोरिवोदात्तानुदात्तयोस्त्वशब्दयोः सकृत्पठितेन ग्रहणे सिद्धे त्वत्त्वेत्युभयपाठः—**एकस्य**

१ 'त्वत्त्वसमसिमेत्यनुच्चानी'ति फिट्सूत्रस्य मानत्वादाह—**बह्विति** ।

जसाधारे शीभावे एव विकल्पविधायकस्य 'विभाषा जसी'त्यस्यासङ्गतेश्चेति भावः ।

उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपसर्जने सञ्ज्ञाया अप्राप्त्या 'द्वन्द्वे चे'त्यपि 'न बहुव्रीहा'वितिवदिति तत्त्वम् । अत एव 'गोस्त्रियो'रिति सूत्रे 'कुक्कुटमयूर्या'वित्यादौ ह्रस्ववारणाय 'द्वन्द्वे ने'ति वचनमारब्धमिति दिक् ।

**नाकजिति** । समुदायनिष्ठकुत्साबोधकोऽकज्नेत्यर्थः ।

**प्रथमचरम** । अत्र सूत्रे 'ने'ति न सम्बध्यते, प्रथमादिष्वसम्भवात् ।

'जसी'त्यनुवृत्तेरर्थाधिकारादयमपि शीभावे एव विकल्पः, तदाह—**जसः कार्यं प्रतीति** । **तयः**—'सङ्ख्याया अवयवे तय'बिति । **प्रत्यय इति** । 'तदन्ता' इत्यत्र हेतुरुक्तः ।

**द्वितीयतृतीयौ**—'द्वेस्तीयः' 'त्रेः सम्प्रसारणञ्चे'ति साधू । **अर्थवदिति** । प्रतिपदोक्तस्येत्यपि बोध्यं, तेनानन्ते आद्युदात्तस्य 'द्वितीयाय भागाये'त्येव, अनभावे तु स्मैर्भवत्येव ।

❀ अभिनव-चन्द्रिका ❀

कर्तव्यमेव, एवञ्च द्वन्द्वस्थले अवयवगतसङ्ख्या यदा विवक्ष्यते तदा इतरेतरयोगः, समुदायगतं समुदायत्वगतं वा यदैकत्वं विवक्ष्यते तदा—समाहारद्वन्द्वः । उभयत्रापि द्वन्द्वविषये समुदायविशेष्यकावयवप्रकारकबोध इति सुधियो विभावयन्तु । एतत्सर्वं प्रमाणयन्नाह—**द्वन्द्वे नेति वचनमारब्धमिति** । **हेतुरुक्त इति** । केवलतयस्य सर्वनामसञ्ज्ञायामपि 'जसः शी'त्यत्र विहितविशेषणस्य सत्त्वेन फलाभावादिति भावः । **प्रतिपदोक्तस्येत्यपीति** । 'द्वितीयाय भागाये'त्यादौ 'पूरणाद्भागे तीयादन्'

❀ चिदस्थिमाला ❀

अस्यावश्यकत्वमाह—**जसाधारे इति** । तेन फलाभावादवयवनिषेधाभावे तत्साहचर्येणार्थाधिकारानुरोधेन चास्याप्यवयवनिषेधकत्वाभाव इति भावः । नन्वेवमुक्तरीत्या सूत्रवैयर्थ्यमेवात आह—**उद्भूतेति** । इतरेतरद्वन्द्वोदाहरणादिति भावः । अत एव=तत्र तस्य विशेष्यतया वर्तिपदार्थस्योपसर्जनत्वादेव । **सूत्रे इति** । 'भाष्ये'इति शेषः । साधकान्तरमप्यन्यत्र स्फुटम् । समुदायकुत्सादिविवक्षायां के तु न विकल्पः, द्वन्द्वस्य सर्वाद्यन्तत्वाभावात्, 'परश्चे'त्यनेन तस्यापि द्वन्द्वावयवबोधनात् । जस्विषयताया द्वन्द्वोत्तरमेव सत्त्वेन 'जसी'ति विषयसप्तमीत्यपि वक्तुमशक्यम् । एतेन मन्दोक्तमपास्तमिति स्पष्टं भावप्रकाशे, तदाह-**इति दिगिति** । उक्ताशयेनाह—**समुदायेति** । **असम्भवादिति** । प्राप्त्यभावेन निषेधासम्भवादित्यर्थः । 'तत' इत्यस्यार्थं सूचयन्नाह—**तदन्ता इति** । वक्ष्यमाणतो वैलक्षण्यायाह—**द्वितीयेति** । पूरणफलमाह—**तेनेति** । 'अनन्तस्ये'ति पाठः । अन्यथात्रार्थवत्त्वसत्त्वाद्दोषापत्तिरेवेति भावः । तदेव स्पष्टयति—**अनिति** ।

❀ ज्योत्स्ना ❀

कप्रत्यये 'विभाषा जसी'तिविकल्पाभावस्येष्टत्वादिति परास्तम् । **दिगिति** । वस्तुतस्तु परमसर्वादावयवद्वारकसर्वार्थवाचकत्वस्य द्वन्द्वेऽपि सत्त्वादुपसर्जनत्वाभावः । 'गोस्त्रियो'रितिसूत्रस्थं वार्तिकं तु तत्रैव द्वन्द्वेऽप्युक्तमिति भाष्यकृत्कृतप्रत्याख्यानसंरम्भादेकदेश्युक्तिरिति तत्रैव प्रदीपे स्पष्टम् ।

अत एव 'विभाषा दिक्समासे'इतिसूत्रे-'बहुव्रीहाविति किमर्थम्? द्वन्द्वे माभूत्—दक्षिणोत्तरपूर्वाणामिति, नैतदस्ति प्रयोजनं-द्वन्द्वेचेति प्रतिषेधो भविष्यती'ति भाष्ये उक्तम् । तथा च 'द्वन्द्वेचे'त्यस्य प्रत्याख्यानासम्भवात्प्रागुक्तरीत्यैकद्विका इत्यादि प्रयोगेष्ववयवनिषेधे फलं भवत्येवेत्याहुः ।

**असम्भवादिति** । यद्यपि नेमशब्देऽस्ति सम्भवः, तथाप्युभयत्र विभाषात्वादस्या 'नवेतिविभाषे'त्यनेन संस्काराभेत्यनेन प्रदेशस्य समीकरणादसम्भवतादवस्थ्यमिति भावः । **हेतुरुक्त इति** ।

१ परे तु गोस्त्रियोरित्यत्रैकविभक्ति चापूर्वनिपाते इति शास्त्रीयमेवोपसर्जनत्वं विवक्षितं, न लौकिकम्, अत एव कुमारीमिच्छन् ब्राह्मणः-'कुमारी'-इत्यत्र लौकिकोपसर्जनत्वस्य नागेशमते सत्त्वेऽपि न ह्रस्व इति शेखरश्चिन्त्य एवेति गौडाः ।

**जराया** । 'अष्टन' इत्यतो विभक्ताविति, 'अचिरे'त्यतोऽचीत्यनुवर्त्तते, तदादिविधिश्चेत्याह—**अजादाविति** । 'जरसा'वित्यादौ तु व्यपदेशिवद्भावेन ।

विभक्तौ किम्? जराया इदञ्जारम् । प्रतिपत्तिलाघवाय 'जराया असुङ्' न कृतः ।

❀ अभिनव-चन्द्रिका ❀

इत्यनि तस्य तीयप्रत्ययार्थेनैवार्थवत्त्वात्तत्रार्थवद्ग्रहणपरिभाषया वारणं न भवतीति लक्षणप्रतिपदोक्तपरिभाषाऽवश्यं वारणीकरणीयेति तथैव परिभाषया 'पट्वजातीयाये'त्यादावपि वारणं भवतीति भावः ।

**जारमिति** । न च शरदादौ 'जराया जरस् च' इत्यन्तर्गणसूत्रस्य वैयर्थ्यात्तेन 'तद्धिते चेत् समासान्त एवे'तिनियमेनैव जारमित्यादौ दोषवारणाद्विभक्ताविति व्यर्थमिति वाच्यं, जराशब्दात् क्यजन्तात्क्विपि 'क्यचि चे'तीत्वे अल्लोपयलोपयोः कृतयोः 'जरी'त्यादौ अल्लोपस्य 'अचः परस्मिन्नि'ति स्थानिवद्भावेन अच्परकत्वाज्जरसादेशापत्तेः, जराशब्दादाचारक्विबन्तात्तव्यदादौ इटि आतो लोपं बाधित्वा परत्वाज्जरसादेशापत्तेश्च ।

**असुङ् न कृत इति** । वस्तुतस्तु-प्रथमान्तजराशब्दस्य पदद्वित्वे स्थानिवद्भावेन सुबन्तत्वादशब्देन समासे 'जराजरा-औ' इति स्थिते पूर्वान्तवद्भावेन जराशब्दत्वाज्जरसि-'जरसौ' इति रूपं भवति, असुङ्कल्पे च 'जराजरसौ'-इति फलभेदात्तथान्यासः कर्तुं न शक्यत इति बोध्यम् ।

❀ चिदस्थिमाला ❀

नन्वेवं जरसावित्यादावादेशो न स्याद्विभक्तेरजरूपत्वेन अजादित्वाभावादत आह—**जरसाविति** । **व्यपेति** । एवञ्चाद्यन्तवत्सूत्रं न कार्यम् , इदमेव ध्वनयितुमिह तदनुपन्यासः ।

नन्वर्धमात्रालाघवेन 'जराया असुङ्' इत्येवास्तु, किं जरसादेशविधानेनात आह—**प्रतीति** । 'जरसादेश'

❀ ज्योत्स्ना ❀

केवलप्रत्यये सञ्ज्ञायाः प्रयोजनाभाव इत्येषः । **असुङ् न कृत इति** । जराशब्दादाचक्षाणणिजन्ता-

---

❀ वरवर्णिनी ❀

**प्रतिपत्तीति** । प्रतिपत्तिः=प्रक्रिया । इत्सञ्ज्ञालोपयोर्ङित्त्वस्य चानुसन्धाने प्रक्रियागौरवमित्यर्थः । "–'तत्करोती'ति णिजन्ताज्जराशब्दात् क्विपि टिलोपणिलोपयोरेकदेशविकृतस्यानन्यतया जरित्यस्य जरसादेशे-जरसाविति, असुङि–जसाविति फलभेदः, नच णिलोपस्य स्थानिवत्त्वाद्विभक्तिपरकत्वाभाव इति वाच्यं, 'कौलुप्त'मिति स्थानिवद्भावनिषेधात्–" इति तु न युक्तम् , आबन्तप्रकृतिकणिजन्तात् क्विपोऽनभिधानात् । अत्र प्रमाणन्तु–'आरगुदीचामित्यत्र रका सिद्धे आकारोच्चारणमन्यतोऽपि विधानार्थं, जडस्यापत्यं जाडार' इति भाष्यमेव, आबन्तप्रकृतिकणिजन्तात्क्विपितु–टिलोपेन निष्पन्नगोधुशब्दाद्रकि आरकि च फलभेदेन भाष्योक्तिरियमसङ्गतैव स्यादिति **केचित्** । अन्ये तु जराशब्दस्य ऋशब्देन समासे गुणे-जररित्यस्य पूर्वान्तवत्त्वेन जराशब्दत्वाज्जरसादेशे जरसाविति, असुङि तु रेफस्यासुङि दीर्घे जरासाविति फलभेदान्नायं न्यास उचित इति वदन्ति । तन्न, पररूपेण तत्रापि जरसावित्यस्य सिद्ध्या फलभेदाभावात् । असुङोऽकारोच्चारणसामर्थ्यात्'दतो गुण' इति पररूपमिति तु न वाच्यं, जरसावित्यादौ तच्चारितार्थ्यात् । परेतु–जरामततीति जरात् , ततो णिचि क्विपि टिलोपे जरिति रेफस्यासुङि जसाविति रूपं, जरसादेशे तु–जरसाविति-फलभेदः । टिलोपस्य अचः परेति स्थानिवत्त्वन्तु न, अज्झलादेशत्वात् । णिलोपस्यापि न तत् , 'कौलुप्त'-मिति निषेधादित्याहुः । एतत्खण्डनाय **पर्वतीयानां** प्रयासस्तु तुच्छ एव, जराच्छब्दघटकजराभागे जराशब्दत्वानपायादित्यादि–अत्रत्यं तत्त्वमस्मत्कृतायां **शब्देन्दुशेखराभिनवराजलक्ष्म्यामनुसन्धेयम्** ।

**पदाङ्गाधिकार इति**। पदमङ्गं च विशेष्यं, विशेषणेन तदन्तविधिरिति भावः। पद-शब्देनोत्तरपदाधिकारः, केवलपदाधिकारश्च गृह्यते इति—'येन विधि'रित्यत्राकरे स्पष्टम्।

**निर्दिश्यमानस्येति**। 'षष्ठी स्थानेयोगे'तिसूत्रमावर्त्तते, आवृत्तस्य चायमर्थः—'षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते, न प्रतीयमान'मिति, तेनेदं सिद्धमिति भावः।

नन्वयं जरशब्दो न जराशब्दोऽत आह—**एकदेशेति**। स्थानिवत्सूत्रेणेति भावः, 'जरा' इत्यक्तपरिमाणस्य ग्रहात्। अनेन स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्य-

**ॐ अभिनव-चन्द्रिका ॐ**

यत्तु—जराशब्दाण्ण्यन्तात्क्विपि टिलोपे तस्मादौविभक्तौ 'जर्—औ' इति स्थिते असुङ्कल्पे 'जरौ' इति, जरस्कल्पे 'जरसौ' इति फलभेद इति ज्योत्स्नादिकृतः, तन्न, टिलोपस्य णिलोपस्य वा स्थानि-वद्भावेन जरसादेशस्यैवाप्राप्तेः। एतेन जरामत्तीति—जरात्—तस्माण्ण्यन्तात्क्विपि निरुक्तदिशा फल-भेदादसुङ्कृतु न शक्यत इति परास्तम्, णिलोपस्य स्थानिवद्भावस्य दुर्वारत्वात्।

**विशेष्यमिति**। विशेष्यमेवेत्यर्थः। तथा च—पदाधिकारेऽङ्गाधिकारे उत्तरपदाधिकारे च—असति प्रमाणान्तरे पदस्याङ्गस्य च विशेष्यत्वमेवेतीयं परिभाषा बोधयति। एतेनैतत्परिभाषाव-त्तस्मिन्निति निर्दिष्टे इत्यादिपरिभाषालभ्यमर्थमादायाऽव्यवहितपूर्वस्य कार्याणि भवन्तीत्यादिपरिभाषाः सिद्ध्येयुरित्यपास्तम्। पदाङ्गाधिकारयोः—असति मानान्तरे पदस्याङ्गस्य च विशेष्यत्वमेवेति सूचनाय परिभाषायाः सार्थक्यात्, अन्यथा 'गर्गादिभ्यो य'ञित्यादौ प्रातिपदिकादित्यस्य विशेषणत्व-वदङ्गस्य पदस्य च कदाचिद्विशेषणत्वं स्यात्। **षष्ठ्यन्तमिति**। षष्ठ्या अन्त्यं षष्ठ्यन्तम्, अन्त्यशब्दः

**ॐ चिदस्थिमाला ॐ**

इत्यादिः। अर्धमात्रालाघवे सत्यपि तस्याऽसार्वत्रिकत्वं, ततोऽस्य बलवत्त्वञ्च। एतेन जराशब्दात्तत्करोतीति णिचि टिलोपे क्विपि णिलोपे 'एकदेशविकृत'न्यायेन जराशब्दत्वात्तत्र दोषापत्त्या स न कृतः, तत्र कार्ये णिलोपस्य स्थानिवत्त्वन्तु न, 'क्वौ लुप्त'मिति निषेधात्। अत्र चास्याश्रयणे'ऽभिव्यक्ते'ति न्यायानाश्रयणे च जरसादेशकरणमेव मानमिति शास्त्रिदण्ड्याद्युक्तमपास्तं, मूलशैथिल्यात्। 'क्वौ लुप्त'मित्यस्यासार्वत्रि-कत्वात्, 'अभिव्यक्ते'त्यनेन तत्रादोषाच्च इति दिक्। 'येन विधि'रित्यस्यायं प्रपञ्च इति तत्रैव भाष्ये स्पष्टत्वादाह—**पदमिति**। तत्रैवोदाहरणदानादाह—**उत्तरेति**। 'परमातिमहा'नित्यस्य सिद्धेर्भाष्योक्त-त्वादाह—**केवलेति**। सीरदेवाद्युक्त्यसङ्गत्यायाह—**षष्ठीति**। अत्रत्यं तत्त्वं परिभाषेन्दुशेखरे, गदायां च स्पष्टम्। लौकिकाविषयत्वादाह—**स्थानीति**। तदप्राप्तौ बीजमाह—**जरा इति**। यथा चैतत्तथा तत्रैव स्पष्टम्।

ननु तेन जराशब्दत्वेऽपि जरशब्दस्य निर्दिश्यमानत्वाभावात्कथमादेशोऽत आह—**अनेनेति**।

**ॐ ज्योत्स्ना ॐ**

त्क्विपि बृहच्छेखरोक्तो दोषोऽपीह बोध्यः। **आवर्तते इति**। भाष्ये तु नियमफलकत्वस्य प्रत्याख्याना-दावृत्तिर्न दृश्यते, नत्वेकदेशग्रहणसामर्थ्यादानुमानिकादेशस्यापि तत्र ग्रहणादिति भावः।

एकदेशविकृतन्यायेन निर्दिश्यमानत्वातिदेशोऽपि कस्मान्नेत्यत आह—**जराया इति**। अक्तपरि-

**ॐ विषमपदविवृतिः ॐ**

**जराया जरसन्यतरस्याम्**। **अक्तपरिमाणस्येति**। परिच्छिन्नपरिमाणस्येत्यर्थः। **स्थानि-बुद्ध्यैवेति**। नचैवं लावस्थायामप्यपिबदित्यादौ आगमिबुद्ध्या साट्कस्य पिबादेशा-

मानस्ये'तिपरिभाषाबाधाभावो बोध्यः । 'येन विधिस्तदन्तस्ये' त्यस्य तु सञ्ज्ञासूत्रत्वात्— सूत्रस्थजरशब्दो जराशब्दान्तपर इति—तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एवेति दिक् ।

**निर्जरसेति** । अत्र 'स्वादिषु' इति पदत्वेन रुत्वं न, भत्वेन पदत्वबाधात् । सूत्रेपूत्तरस्थस्य पूर्वत्रापकर्षवदग्रे लेखो वैचित्र्यायेति बोध्यम् ।

**पक्षे इति** । जरसादेशाभावपक्षे इति भावः । इदमर्वाचामनुरोधेन ।

※ अभिनव-चन्द्रिका ※

समीपवाची, तेन षष्ठीप्रकृतिरित्यर्थः। परेत्वतद्गुणसंविज्ञानो बहुव्रीहिरित्याहुः । 'षष्ठी स्थानेयोगे'तिसूत्रे 'यत' इति शेषं कृत्वा—यतः षष्ठी सा स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगिनी भवतीति सूत्रार्थेन तथैव लाभात्। तत्र निर्दिश्यमानत्वं-षष्ठीप्रकृतिविशिष्टप्रकारताश्रयत्वम् , वैशिष्ट्यञ्च'स्वजन्यशाब्दबोधीयत्व' 'स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्त्व' 'स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितत्वे'तत्त्रितयसम्बन्धेन । विस्तरस्तु परिभाषेन्दुचन्द्रिकायां द्रष्टव्य इति दिक्। इति भाव इति । सङ्ख्यात्वपरिमाणत्वेतदन्यतरव्याप्यधर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताव-

※ चिदस्थिमाला ※

स्थानिवत्सूत्रेणेत्यर्थः । नन्वेवं कथमेतत्प्रवृत्तिरत आह—येनेति । एवं यदागमा इति बोधितस्याप्यादेशेन निवृत्तभावः, एतन्न्यायबलात्। 'अस्यच्वा'वित्यादौ दोषवारणादि तत्रैव स्पष्टम्। एवमनयालोन्त्येत्यादीनां समावेश एव, न बाध्यबाधकभाव इत्याद्यपि तत्रैव स्पष्टं, तदाह—इति दिगिति। नन्वेवं तदत्रैव वक्तुमुचितमत आह—सूत्रेष्विति ।

※ ज्योत्स्ना ※

माणस्य=परिच्छिन्नपरिमाणस्य । अनेन=जराया इत्यनेन । **परिभाषाबाधाभाव इति** । एकदेशविकृतन्यायेन तु न तद्बुद्धिः तस्य लौकिकत्वात्, लोके चाक्षपरिमाणबोधकद्रोणादिशब्दानां यत्किञ्चिदपनीतावयवे प्रवृत्त्यदर्शनात्। अतिदेशशास्त्रेण त्वातिदेशिकी तद्बुद्धिर्भवत्येव, 'दृष्टान्तस्यापि पुरुषारम्भो निवर्तको भवती'ति भाष्यादिति भावः। ननु तदन्तसञ्ज्ञाया अपि पुरुषारम्भत्वाविशेषोऽत आह—सञ्ज्ञासूत्रत्वादिति। एवञ्च जराशब्देन तदन्तोपस्थितावपि न तद्बुद्धिः, सञ्ज्ञाशब्दानां सञ्ज्ञासमानाधिकरणानुगतसंस्थानवत्तत्तद्व्यक्तिबोधकत्वाभ्युपगमादिति भावः । ननु सर्वनामस्थान इत्यस्य विषय-

※ विषमपदविवृतिः ※

पत्तिरिति वाच्यम्, उक्तयुक्त्या निर्दिश्यमानत्वाप्राप्तावपि'पादः प'दिति सूत्रस्थभाष्यप्रामाण्येन सागमस्य निर्दिश्यमानत्वानङ्गीकारात् । अन्ये तु 'निर्दिश्यमानत्वं—' 'स्वबोध्याघटितत्वे सति स्वबोध्यत्वम्' । तच्च सागमके तदन्ते च न, आदेशे त्वस्त्येवेति—तत्र निर्दिश्यमानपरिभाषयाऽऽदेशवारणम्। यद्वा स्वं रूपमित्येतद्भिन्नशक्तिग्राहकशास्त्राननुसन्धानकालीनस्थानषष्ठ्यन्तपदजन्योपस्थितिविषयत्वरूपनिर्दिश्यमानत्वमादेशेपि, यदागमन्यायोपि शक्तिग्राहक एव । 'अस्य च्वा'वित्यादौ जातिपक्षः । अथवा यतः षष्ठ्युच्चारिता तत्त्वतत्स्थानिकत्वान्यतरत्वं, तिसृणामित्यत्र तिस्रादेशे कृते त्रयादेशाशङ्कापरभाष्यप्रामाण्यादित्याहुः । वैचित्र्यायेति । ननु पदत्वभत्वयोर्द्वयोरननुसन्धानेपि निर्जरसेत्यादिसिद्धिरतस्तयोरलेखः । अन्ये तु दद्भ्यां मान्भ्यामित्येतदर्थं स्वादिष्वित्यस्यावश्यपाठ्यतया दत इत्यादौ जश्त्वशङ्कया 'यचिभ'मित्यपि पाठ्यमिति विशेष इति वाच्यम्, तथा सति शिवोर्च्य इत्युदाहरणे 'प्रथमयोः पूर्वसवर्णः' 'नादिचि'त्यनयोरनुपन्यसनीयत्वापत्तेः ।

**परे तु**—'विभक्त्यादेशेभ्यः परत्वाज्जर'सित्यसङ्गतं, विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव 'जराया' इति सूत्रे—'अजरांसी'त्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जर'सिति भाष्योक्तं सङ्गच्छते, अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमा विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव ।

अत एव 'टाङसी'ति सूत्रे कैयटेनोक्तं—'भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेण अतिजरादिति भाष्यं, न त्वतिजरसिनाऽतिजरसादिति—गौरवमुद्भावितवान्—'इति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या, तदभावपक्षे च तस्याप्राप्त्या 'सन्निपातपरिभाषया जरसादेशमनभ्युपय'न्नित्यस्यासङ्गतिः स्पष्टैव ।

वृत्तिकारोऽप्याह—'अतिजरसिन अतिजरसादिति केचिदिच्छन्ति, यथा तु

❀ चिदस्थिमाला ❀

सिद्धान्तमाह—**परे त्विति** । अत्र भाष्यसम्मतिमाह—**अत एवेति** । तेषां तत्रेष्टत्वादेवेत्यर्थः । अन्यथा=अदनिष्टत्वे तु । कैयटसम्मतिमप्याह—**अत एवेति** । उक्त एवार्थः । **तदभावेति** । जरसभावे इत्यर्थः। तस्य=जरसः। **वृत्तिकृत्सम्मतिमप्याह—वृत्तीति** । भाष्याद्यविरोधायाह-

❀ ज्योत्स्ना ❀

सप्तमीत्वाभिप्रायिका नुम्जरसोर्विप्रतिषेधोक्तिर्भाष्ये इत्यस्वरसादाह—**अत एवेति** ।

**तस्या अप्राप्त्येति** । सन्निपातपरिभाषाया अप्राप्त्येत्यर्थः । **असङ्गतिः स्पष्टैवेति** । शक्यते त्वत्र वक्तुम्—औपदेशिकविभक्तिनिमित्तपाक्षिकजरसभावप्रक्रमेऽपि स्थानिवद्भावसहकारेणातिदेशिकतथाभूतजरस्प्रक्रमे सन्निपातविघातसम्भवमूलिका कैयटोक्तिः स्यादित्यस्वरसादाह—**वृत्तिकारोऽपीति** ।

❀ विषमपदविवृतिः ❀

**तदभावपक्षे तस्याप्राप्तेरिति**। अभावपक्षोपक्रमे पुनर्भावपक्षस्वीकारायोगादिति भावः। **'तस्याप्राप्ते'रित्यस्य**—जरसादेशस्याप्राप्तेरित्यर्थः। पाठकस्तु-'तस्या अप्राप्त्ये'ति पाठं स्वीकृत्य सन्निपातपरिभाषाया-

❀ वरवर्णिनी ❀

**परे तु**—'अजरांसी'त्यत्र शिभावजरसोः प्राप्तौ—कृतेऽपि जरसि प्राप्तेः—'नित्यत्वाच्छिभाव' इति परेणोक्ते,—'एवन्तर्हि कृतेऽपि शिभावे प्राप्तेर्जरसपि नित्य इति'—उभयोः साम्येन परत्वाज्जरसिति चान्येन तत्खण्डिते; 'शिभावे ततो नुमि तेन व्यवधानान्निर्दिश्यमानत्वाभावाज्जरसोऽप्राप्त्याऽनित्यो जरसादेश'इति केनचिच्छङ्किते—'जरसो नित्यत्वं द्रढयितुं—'**नुम्जरसोः परत्वाज्जर**'सिति जरसादेशस्यापि नित्यतया तौल्यात्परत्वाज्जरसिति युक्तमेवे'त्युक्त्या—अनेन भाष्येण शिभावस्य पूर्वं प्रवृत्तेरलाभान्न तद्विरोधः, कैयटविरोधस्त्वकिञ्चित्कर इति'निर्जरसे'त्यादि कौमुद्युक्तमेव युक्तमित्याहुर्गौडाः ।

१ 'टाङसी'ति सूत्रेण टाङस्योः स्थाने नादेशाऽदादेशयोरेव विधानस्य लाघवादौचित्येन-इनादेशाऽऽदादेशविधाने गौरवमिति भाष्यकृदाहेत्यर्थः । [ इति=इति हेतोः । गौरवम्=इनाद्यादेशविधाने गौरवमित्यक्षरार्थः । ]

२ **परे** तु—वृत्तिग्रन्थे 'निर्जरेणेत्येव भवति न तु निर्जरसेतीत्यनुक्त्या तेन वृत्तिग्रन्थेन 'निर्जरसे'त्येक भाष्यसम्मतमित्यर्थस्यापि लाभसम्भवाद्दीक्षितोक्तमेव युक्तमित्याहुर्गौडाः ।

३ **विषमपदविवृतिमनुसरद्भिः पर्वतीयैर्द**र्शितः कैयटविरोधपरिहारस्त्वयुक्तः, अभावोपक्रमे भावोपक्रमस्यायुक्तत्वात्। विशेषस्तु **अभिनवराजलक्ष्म्यां** वक्ष्यते।

भाष्यं तथा नेतदिष्यत इति लक्ष्यते'-इति ; नपुंसकाद्वितीयैकवचनेऽपि लुग्बाधेन 'अतोऽमि'त्यमि सन्निपातपरिभाषया जरसभावः । न च तत्र न अकारान्तसन्निपातकृत एव लुगादिः, किन्तु तदभावेऽपि, एषा तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति-अत्र भवत्येव जरमिति वाच्यं, मानाभावात्, 'टाङसी'ति सूत्रस्थेनातिजरेणत्येतद्विषयकैयटेन विरोधाच्च । ध्वनितश्चेदं 'जराया' इति सूत्रे भाष्ये ।

ॐ अभिनव-चन्द्रिका ॐ

च्छेदकविषयतावच्छेदकत्वरूपाकाररिमाग-चतुष्ट्य-समनियतजराशब्दलरूपवर्णनिमित्तककार्यस्यैकदेशविकृत-

ॐ विद्स्थिमाला ॐ

**नपुंसकेति** । विशेषविहितत्वादाह—**लुग्बाधेनेति** । तत्र=नपुंसकाद्वितीयैकवचने । **पातेति** । तल्लक्षणविधिप्रवृत्तिरित्यर्थः । एषा तु=सन्निपातेति तु । अत्र भाष्यसम्मतिमप्याह—**ध्वनितमिति** ।

ॐ ज्योत्स्ना ॐ

**नेतदिष्यत इतीति** । अत्राप्यनिष्टिहेतुः—सन्निपातपरिभाषाप्रवृत्तिरिव व्याख्यानसापेक्षपूर्वविप्रतिषेधाप्रवृत्तिरपि व्याख्यातुं शक्येति-गोकर्णशिथिलेयमप्युक्तिरतो वक्ष्यमाणभाष्येण दार्ढ्यमुपन्यस्यन्नाह—**नपुंसकद्वितीयैकवचनेऽपीति** । **नेतदिष्यत इतीति बोध्यमिति** । इदञ्चिन्त्यम्—पाठान्तरस्य भाष्यपुस्तकेष्वनुपलम्भात्, 'अतिजरमं पश्येत्यत्र लुक्कस्मान्ने'ति पूर्वपक्षस्य त्वयमाशयः, परत्वान्नित्यत्वाद्वा जरसादेशेन बाधितस्वम्भावस्य जरसूप्रवृत्त्युत्तरमपि न प्रवृत्तिः, अनकारान्तत्वादतो लुकावश्यं भाव्यमिति,-ततःपरेण'किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न प्रथमैकवचनमप्यतिजरसन्तिष्ठती'ति पृष्टे विशेषे-'अस्त्यत्र विशेषः-तत्राकृतेऽम्भावे जरस्भावो न प्राप्नोति,किं कारणम्?

ॐ विषमपदविवृतिः ॐ

अप्राप्त्येत्यर्थमाह । **ध्वनितश्चेदमिति** । नपुंसकद्वितीयैकवचने जरसभाव इत्येतदर्थ इत्यर्थः ।

---

१ इदं=विभक्त्यादेशाः पूर्वविप्रतिषेधेनेतीति । परे तु-'अतिजरसमित्यत्र द्वितीयैकवचने लुक्कस्मान्न भवती'ति पृष्टे,-'प्रथमैकवचनेऽपि लुक्कस्मान्नाशङ्कितः?' इति केन चिदाशङ्किते,-**पूर्वपक्षी'**-''प्रथमैकवचनेऽम्भावोत्तरमेवाजादिविभक्तिपरकत्वसम्भवाज्जरस्सम्भवतीति-लुगपवादेऽम्भावे जाते सति न लुक् प्राप्नोति, द्वितीयैकवचने तु अम्भावात्परत्वात्पूर्वं जरसि 'लुक्कस्मान्ने'ति शङ्का युक्तैव-''इतिशङ्कामुपपादितवान् । एवञ्च **प्रथमैकवचनेऽम्भावोत्तरमेव** जरसित्येव विशेषोपपादको ग्रन्थः । [अयं पूर्वपक्षी सन्निपातपरिभाषामबुद्ध्वैव च प्रवृत्तः, सन्निपातपरिभाषास्मरणे तु-द्वितीयैकवचनेऽपि सन्निपातपरिभाषया लुगप्राप्तेरतिजरसं पश्येत्यत्र लुक्कस्मान्नेति शङ्काया एवासङ्गतेः ।] तदेव द्वितीयैकवचने लुक्कस्मान्नेति पूर्वपक्षः स्थापितः । तत्र सिद्धान्तिन उत्तरं,-**''तत्र जरसि कृते सन्निपातपरिभाषया न लुक्-''** इति । [तत्र=अतिजरसं पश्येत्यत्र द्वितीयैकवचने ।] एवञ्च लुगपवादाऽम्भावात्परत्वाज्जरसि लुक् प्राप्नोति-सन्निपातपरिभाषया च स वार्यते इति तत्त्वम् । इत्थं सन्निपातपरिभाषास्मरणे जाते स एव **पूर्वपक्षी** पुनः शङ्कितवान्-'तर्हि सन्निपातपरिभाषया प्रथमैकवचनेऽपि जरस् न स्या'दिति, ततः प्रथमैकवचने **सिद्धान्ती-'इष्टमेवैतत्सङ्गृहीतम्,-अतिजरम्**, अतिजरैरिति भवितव्य'मिति समाहितवान् । **हलादिभिस्साहचर्यात्सुविभक्तेरेव रूपमतिजरमिति**, न तु द्वितीयैकवचनस्य, तत्र तु जरसिष्ट एव-अतिजरसमिति-तत्त्वविदो **गौडाः** ।

एतेन-''यदि विभक्त्यादेशात्पूर्वं जरस्स्यात्तर्हि द्वितीयैकवचनेऽपि अमादेशात्पूर्वं जरसि सन्निपातपरिभाषया न लुक्'' इति भाष्योक्तिर्विरुद्ध्येतेति **नागेशोक्तमपास्तं**, तादृशशङ्कायाः-पूर्वोक्तरीत्या प्रथमैकवचन एव सत्त्वात्—अमादेशात्पूर्वं हलादित्वान्न जरस्, अमादेशे तु सन्निपातपरिभाषया न जरसिति तदाशयस्योक्तत्वात् । तदनुसारेणैव च सिद्धान्तिनाऽपि प्रथमैकवचनेऽतिजरमित्येव भवतीतीष्टापत्त्या समाहितमिति न दीक्षितमते भाष्यविरोधः । पाठभेदे तु न मानमिति प्राहुः ।

तत्र हि पूर्वपक्षिणा—'अतिजरसं पश्येत्यत्र लुक् कस्मान्ने'ति पृष्टे, परेण—'प्रथमैकवचने—अतिजरसन्तिष्ठतीत्यत्रापि कुतो लुक् न शङ्क्यते'—इति पृष्टे, पूर्वपक्षिणा—प्रथमैकवचनेऽम्भावोत्तरमेव जरस्, तत्र जरसि कृते सन्निपातपरिभाषया न लुक्'—'यद्वाऽम्भावे कृते सन्निपातपरिभाषया न जर'सिति पाठभेदेन विशेष उक्तः।

ततः परेण 'यद्येवम्—अतिजरसम् अतिजरसैरित्यत्र न प्राप्नोति जरस्'—इति-द्वितीयैकवचनादौ[1] शङ्किते, सिद्धान्तिना—'इष्टमेवैतदतिजरमतिजरैरिति भवितव्य'मिति।

अत्र विशेषोपपादनेऽन्त्यपाठ एव युक्तः, अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादिते द्वितीयैकवचनेऽपि तेन न्यायेन लुकोऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोद्धव्यम्।

एवं—स्त्रियां जरसादेशे कृते 'याडापः' इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव, तेषां परत्वात्। अतिखट्वशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक[2] इत्याहुः।

**परे तु**—जरसादेशाद्विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेन, तेन 'जराणा'[3]मित्यादावामि

❀ चिद्स्थिमाला ❀

'तत्र हि'त्य'उक्त'त्रयेऽन्वयः। 'वचनेतिजरसन्तिष्ठतीत्यत्रापी'ति पाठः। तत्र=तथा सति। अतिजरमिति प्रथमा-द्विर्नीयासाधारणमेवेदमिति भावः। अत्र=उक्तभाष्ये। अन्यथा=आद्यपाठे। एकेति=प्रथमेत्यादिः। तेन=सन्नीति-न्यायेन। एवञ्च=तेषामादाविष्टत्वे च। **एवमिति** पाठे—एवं सतीत्यर्थः, तद्वदित्यर्थो वा। पूर्वतो भेदमाह—**तेषा-मिति**। सर्वथा तत्र न प्रश्लेषवैयर्थ्यमित्याह—**अतीति**। तेषाम्=औङ आप इत्यादीनाम्। ततो विशेषसिद्धान्त-माह-**परे त्विति**। मात्रं कार्त्स्न्ये, नतु विभक्त्यादेश एव। अयमेव पूर्वतो विशेषः। **आमीत्यस्याभावे**ऽन्वयः

❀ ज्योत्स्ना ❀

अर्चीन्युच्यते, यदा च जरस्भावः कृतस्तदा लुङ्न भविष्यति—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य'। तस्य चायमाशयः—प्रथमैकवचने या पूर्वं लुकः प्राप्तिः सा अपवादेनाम्भावेन बाधिता, तत्र तु कृते सन्निपातपरिभाषया जरस् न बाधनीयः, इन इकारोच्चारणेन विभक्त्यादेशस्यादन्त-सन्निपातविघातकत्वानभ्युपगमात्। कृते च जरसि सन्निपातपरिभाषया न लुक्। न च द्वितीयैक-वचनेऽप्येतदविशिष्टमितिवाच्यं, 'गुणात्सम्बुद्धे'रिति वक्तव्ये—'एङ्ह्रस्वा'दितिज्ञापकादौपदेशिकविभक्ति-सन्निपातलक्षणविधेस्तद्विघातकत्वाभ्युपगमादिति। ततो 'यद्येवमतिजरसमसिजरसैरिति न प्राप्नोति—अतिजरमितिजरैरिति भविव्य'मिति परेण कृतस्याक्षेपस्याप्ययमाशयः—टादेशस्यैवादन्त-सन्निपातविघातकत्वाभावः—इन इकारोच्चारणात्स्यादिति सोर्भिसश्चाकारान्तसन्निपातेनामाद्यादेश-स्तद्विघातिजरसो निमित्तं न स्यादिति। ततो 'गोनर्दीय आह—इष्टमेवैतत्संगृहीतं भवति—अति-जरमतिजरैरितिभवितव्यं सत्यामेतस्यां परिभाषायां—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति

❀ विषमपदविवृतिः ❀

भवितव्यमिति। 'उक्त'मिति शेषः। 'प्रश्लेष आवश्यक' इत्युत्तरम् 'इत्याहुःपरे'त्विल्पपाठः। 'विभक्त्या-देशाना'मिति—पूर्वोक्तमुपलक्षणं विभक्तिसम्बन्धिकार्यमात्रस्येत्याह—**विभक्तिसम्बन्धीति**।

१ 'द्वितीयैकवचनादौ शङ्किते' इति तु नागेशभट्टानामुक्तिश्चिन्त्यैव, पूर्वोक्तरीत्या प्रथमैकवचने एव तादृशापत्तेर्भिस्साहचर्यादुपपादनादिति **परे**।

२ **आवश्यक इति**। परे तु—'नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन, नुमोऽवकाशः—कुण्डानि जरसो-ऽवकाशः—जरसा, जरसे' इति भाष्योक्तेः पूर्वविप्रतिषेधेन जरसेव, ततो न याडित्याहुर्**गौडाः**।

३ **तेन जराणामिति**। वस्तुतस्तु—जरसा जरसे इति भाष्यप्रामाण्यात्पूर्वं जरसेवेत्याहुः।

पूर्वं नुटि जरसोऽभाव एव । एवञ्च 'ह्रस्वनद्यापः' इत्यत्राऽऽकारप्रश्लेषे न फलं, नापि मानम्।

अत एव 'ङ्याब्ग्रहणेऽदीर्घः' इतिवज्जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता नाऽऽरब्ध इत्याहुः।

❀ अभिनव-चन्द्रिका ❀

न्यायेनानेतुमशक्यत्वादिति । इत्याहुरिति । परे तु—विभक्तिसम्बन्धिकार्यमात्रात्प्रागेव जरस्, तथाहि—यत्र जरसादेशस्य परत्वन्तत्र 'विप्रतिषेधे पर'मिति परिभाषया परत्वाज्जरस्, यथा—अजरांसि । यत्र च याडादयः परास्तत्रापि पूर्वविप्रतिषेधेन जरसेव, यथा जरसे इत्यादौ याटं बाधित्वा पूर्वविप्रतिषेधेन जरस् । अत एव 'जरसोऽवकाशो जरसा जरसे' इति भाष्यं सङ्गच्छते, अन्यथा—'आङि चापः'—'याडापः'इत्येताभ्यां परत्वेन एकारे याटि च कृते पूर्वत्र सन्निपातपरिभाषया अन्त्ये तु याटि अजादिविभक्तिपरत्वाभावेन जरसोऽप्राप्त्या तदसङ्गतिः स्पष्टैव । अत एव च—"अथेह लुकस्मान्न भवति—'अतिजरसम्पश्ये'ति ?' 'किं पुनः कारणं—द्वितीयैकवचनमेवोदाह्रियते, न पुनः प्रथमैकवचनमपि ?—अजरसं तिष्ठतीति, अस्त्यत्र विशेषः, नात्र कृतेऽम्भावे जरस्भावः प्राप्नोति, किं कारणम् ? अचीत्युच्यते"—इति भाष्यं—तदप्राप्तियोग्ये चरितार्थ्याभावविशिष्टा या अपवादशास्त्रप्रवृत्त्यनन्तरोत्सर्गप्रवृत्तिसम्भावनाप्रयोज्यशास्त्रवैयर्थ्यसम्भावना, तादृशसम्भावनारूपबाधबीजवताऽतोऽमितिसूत्रेण 'स्वमोर्नपुंसका'दिति शास्त्रे—स्वप्रवृत्तियोग्यातिरिक्तत्वेन, स्वविधेयघटकातिरिक्तत्वेन च सङ्कोचादजरसं तिष्ठतीत्यत्र प्रथमैकवचने जरसादेशे कृते अम्घटितातिरिक्तस्वमोरभावेन लुकोऽप्राप्तिरिति—द्वितीयैकवचन एव 'लुक् कस्मान्न भवती'ति शङ्का उचिता, न तु प्रथमैकवचने—इति विशेषप्रदर्शनपरं भाष्यं सङ्गच्छते, अन्यथा—द्वितीयैकवचनेऽपि भवद्भीत्यामादेशे सन्निपातपरिभाषया तत्रापि जरसः—[ विप्रतिषेधेन ]—अप्राप्त्या इदं भाष्यमसङ्गतं स्यात् ।

❀ चिदस्थिमाला ❀

अत्र मानं सूचयन्नाह—अत एवेति । तस्य तथेष्टत्वादित्यर्थः । वैषम्ये दृष्टान्तः । एवञ्च तदज्ञाननिरासाय

❀ विषमपदविवृतिः ❀

इत्याहुरिति । अन्ये तु 'नुम्जरसा'विति वार्त्तिके नुम्पदं—लक्षणया नुम्शिभावोभयपरम् । यद्वा 'नित्यत्वात्पूर्वं शिभावः, जरसादेशस्तु न नित्यः, शिभावे कृते नुमि तदप्राप्ते'रिति शङ्कापरिहाराय 'शिभावोत्तरमपि विप्रतिषेधेन जरसः प्राप्ति'रिति भाष्यकृतोक्तं,न तु शिभावोत्तरमेव जरसित्याशयेन।

अयं विप्रतिषेधोपन्यासो जरसो नुमा सह समबलतामभ्युपेत्य, वस्तुतो जरसादेशः सर्वविधिभ्यो बलवान्, 'जरसोऽवकाशो जरसा जरसे' इति जराया इति सूत्रस्थभाष्यप्रामाण्यात् । अन्यथा 'जरसे'इत्यत्र जरसादेशात्परत्वाद्याडाप इति याडिति तदसङ्गतिः। एवञ्च 'विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेने'त्यस्य कावकाशः ?, जरसादेशस्य सर्वतः प्रबलत्वात् । एतेन 'एवं स्त्रियां जरसादेशे कृते' इत्यारभ्य 'तेषां परत्वा'दित्यन्तो ग्रन्थो निरस्तो वेदितव्यः । तथा च पुंसि निर्जरेण निर्जरसेत्यादिरूपं, स्त्रियां जरायै जरसे इत्यादि भवति ।

नन्वेवं 'टाङसी'ति सूत्रस्थकैयटासङ्गतिरिति वाच्यम्, वैकल्पिकत्वेन प्रथमं जरसादेशाभावे इनादेशे कृते पश्चात्प्राप्तस्य जरसः सन्निपातपरिभाषया वारणमित्याशयात् । न चाऽभावोपक्रमे पश्चाच्च भावपक्षादरणम् , अन्यथा 'शिश्वियतु' रित्यादौ द्वित्वोत्तरं 'विभाषा श्वे'रिति सम्प्रसारणा-

१ नारब्ध इति । वस्तुतस्तु दीर्घभिन्नादेशे न स्थानिवदिति 'ङ्याब्ग्रहणे' इत्यस्यार्थ' इति जरसादेशस्यापि स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता उक्त एवेति—नागशोक्तिश्चिन्त्येत्याहुरस्मत्पितामहचरणाः-श्रीस्नेहिरामशास्त्रिणः, श्रीगुरवस्त्रिपाठिपादाश्च ।

ॐ अभिनव-चन्द्रिका ॐ

मम तु—परत्वाज्जरसि द्वितीयैकवचने 'लुक्कस्मान्न'ति शङ्का युज्यते। अग्रेऽपि—'यदा जरस्भावः कृतस्तदा लुङ् न भविष्यति,—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति सिद्धान्तिना समाहितम् । अत एव चाग्रे पूर्वपक्ष्येकदेशिना—'यद्येवमतिजरसमतिजरसैरिति न प्राप्नोति, अतिजरम्, अतिजरैरिति भवितव्य'मिति प्रथमैकवचनतृतीयाबहुवचनयोरेव शङ्का कृता ।

ततः सिद्धान्तिना—इष्टापत्तिं मत्वा—'गोनर्दीयस्त्वाह—इष्टमेवैतत् सङ्गृहीतम्—अतिजरम् अतिजरैरिति भवितव्यं, सत्यामेतस्यां परिभाषायां—'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'त्युक्तं समाधानं सङ्गच्छते, अन्यथा विशेषोपपादान एव लुगैसोस्सन्निपातपरिभाषया जरसोऽप्राप्त्या इमे शङ्कासमाधाने असङ्गते स्याताम् ।

न च 'नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन,—'अतिजरांसि ब्राह्मणकुलानी'ति भाष्यविरोधः, भवद्रीत्या शिभावादेव परत्वाज्जरसि नुमा जरसो विप्रतिषेधविचारस्यासङ्गतत्वापत्तेरिति वाच्यम्, अतिजर—अस् इतिस्थिते परमपि जरसादेशम्बाधित्वा नित्यत्वाच्छिः कस्मान्न भवतीति शङ्कां मनसि निधाय—इयादेशे कृतेऽपि परत्वान्नुमं बाधित्वा परत्वाज्जरसेव भविष्यतीति—जरसा-

ॐ विषमपदविवृतिः ॐ

पत्तिरिति वाच्यम्, आकारनिमित्तकस्य जरसो-ऽभावोपक्रमेपि इकारनिमित्तकस्याभावानुपक्रमात् । 'शिश्वियतु'रित्यादौ तु श्विवुध्यैव पश्चात्प्रवृत्तेरस्ति विशेषः ।

नपुंसकद्वितीयैकवचने तु जरसादेशो भवत्येव, 'अथेह लुक्कस्मान्न भवति—अतिजरसं पश्ये'ति भाष्यात्, अम्लुग्भ्यां जरसः परत्वाच्च । न च लुकः सर्वविधिभ्यः प्राबल्यं, बहिरङ्गलुक एव तथात्वात्, तत्र च स्वमोरिति सूत्रस्थं 'त्यदादिभ्यश्चेति वक्तव्य'मिति वार्तिकं मानं, तेन 'भवता'दित्यत्र लुकं बाधित्वा तातङ्। 'अतिजरमतिजरै'रिति भवितव्य'मित्यग्रिमभाष्यन्तु—प्रथमैकवचनविषयम् ।

ध्वनितश्चेदं जराया इति सूत्रे भाष्ये, तथा हि—'अथेह लुक्कस्मान्न भवति—अतिजरसं पश्ये'ति पूर्वपक्षिणा शङ्कितं, ततः पूर्वपक्षिणा—अस्त्यत्र विशेषः, नाकृतेऽम्भावे जरसादेशः प्राप्नोति, किं कारणम्? अचीत्युच्यते। न चायं परिहारो द्वितीयैकवचनेऽप्यविशिष्ट इति वाच्यम्,अनवबोधात्, 'किं कारणमचीत्युच्यते'इत्यन्त एव विशेषप्रतिपादनपरो, नाग्रिमः। तस्य चायमाशयः—अतोमित्यम्प्रवृत्तिं विना न जरस्भावः, सोर्हल्ङ्यादित्वात्, अम्भावे तु न लुक्, अमा बाधितत्वात्। अमा बाधितस्यापि पुनः प्रवृत्तौ तु ज्ञानमित्यत्रापि तदापत्तिरिति । न च जरसादेशार्थं सोरम्विधानम्, अकारादेशविधानेनैव सिद्धावम्विधानवैयर्थ्यात् [१]।

ततो द्वितीयैकवचने लुकं समाधत्ते सिद्धान्ती—'यदा च जरस्भावः कृतस्तदा लुङ्न भविष्यति,—सन्निपातलक्षणो विधिरनिमित्त'मिति । 'यदा चे'त्यस्य—'अमं लुकं च बाधित्वा परत्वा'दिति शेषः । ततः पुनः पूर्वपक्षी प्रथमैकवचने तृतीयाबहुवचने च शङ्कते—'यद्येवमतिजरसमतिजरसैरिति न प्राप्नोति, अतिजरमतिजरैरिति भवितव्य'मिति । लक्ष्यानुरोधाज्जरसादेशविषये सन्निपातपरिभाषा नाश्रीयत इति तद्भावः। ततः सिद्धान्त्याह—'गोनर्दीय आह—'इष्टमेवैतत्सङ्गृहीत'मित्यादि । 'किं कारणमचीत्युच्यते, अम्भावे कृते सन्निपातपरिभाषया जर'सिति नव्योक्तपाठान्तरन्तु भाष्यपुस्तकेषु क्वापि नोपलभ्यते, पूर्वग्रन्थासङ्गतेश्च । 'प्रथमैकवचने अतिजरसं तिष्ठतीत्यत्र लुक्कुतो न शङ्कितः'? इति तटस्थेन शङ्किते—सन्निपातपरिभाषया जरसादेशाप्रवृत्त्योक्तरूपमेव दुर्घटमिति समाधानस्य पाठान्तरकल्पनया भवदभिप्रेतस्य प्रतिपादनाय—'अस्त्यत्र विशेष' इत्युक्तयसङ्गतेः, तथोक्त्या हि—अतिजरसं तिष्ठतीति रूपं स्वीकृत्य विशेषमात्रमभिधित्सितमिति प्रतीयते । किञ्च—'अस्त्यत्र विशेषः—नात्राकृतेऽम्भावे जरसादेशः प्राप्नोति,किं कारणम्, अची-

परिभाषाया अनित्यत्वमिति। इनातोरिकारदीर्घोच्चारणम्, एसि कर्त्तव्ये ऽस्वरतश्च तदनित्यत्वे मूलमिति तदभिमानः। **षष्ठ्येकवचने इति।** एकसूत्रोपात्तत्वा-भावेऽपि विप्रतिषेधेऽपि पूर्वविप्रतिषेध इति तद्भावः।

**एतच्च भाष्येति।** इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः, 'इष्टमेवैतत्स-ङ्गृहीतमतिजरैरिति भवितव्यमिति 'जराया' इतिसूत्रस्थभाष्येति चार्थ इत्यन्यत्र विस्तरः।

ॐ अभिनव-चन्द्रिका ॐ

देशोऽपि नित्य इति—बोधयितुं तद्वार्त्तिकप्रवृत्तेः, अग्रिमभाष्येण तथैव लाभात्। एतेन 'यद्वा-ऽम्भावे कृते सन्निपातपरिभाषया न जर'सिति पाठभेदेन विशेषोपपादनम्, एवं 'स्त्रियां जरसादेशे कृते 'याडापः'इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव। विप्रतिषेधे परमित्यनयैव परविप्रतिषेधेन सिद्धेरियुक्तिः परास्ता, पूर्वोक्तभाष्यप्रामाण्येन पूर्वविप्रतिषेधेन जरसि याङ्वारणाय प्रश्लेषस्या-वश्यकत्वात्। 'टाङसिङसा'मित्येतत्सूत्रस्थेनातिजरेणेत्येतद्विषयकेण कैयटेन विरोध इति तु न वाच्यम्, तद्विरोधस्याकिञ्चित्करणतया इष्टापत्तेरित्याहुः।

ॐ चिदस्थिमाला ॐ

तथेष्टमिति भावः। अत्र तद्विशेषगमकाभावादाह—**एकेति।** तद्भावः=तदभिमानः। प्राचोक्तमाह—**इनातोरिति।** स्वयं भाष्यान्तरमाह—**इष्टमेवेति। भाष्येति चेति।** भाष्येत्यर्थश्चेत्यर्थः। एतेनैस्करणं ज्ञापक-मेवेत्यपास्तं, द्वितीयभाष्यविरोधात्, लाघवाभावान्नैरित्यादिसिद्धये उत्तरार्थं तस्य सत्त्वाच्च। इकारप्रत्याख्यानेन चेदं ध्वन्यते—योगविभागादिक्लेशपरिहारायैव स इति न फलान्तरकल्पनेऽभिनिवेशः कार्यः, आदादेशविषये तु अदिति च्छेद एव सूत्रतात्पर्यमिति, तदाह—**अन्यत्रेति।** शब्दरत्नादावित्यर्थः। प्राचां मतेन मूलमिति

ॐ ज्योत्स्ना ॐ

इति सिद्धान्तस्यायमाशयः,-इन इकारस्य प्रत्याख्यानात्-विभक्त्यादेशस्यादन्तसन्निपातविघात-कत्वानभ्युपगमे उक्तिसम्भवाभावात्सन्निपातपरिभाषया जरसप्रवृत्तेर्लक्ष्यसिद्धेस्तथैवेष्टत्वात्। एवञ्च सन्निपातपरिभाषापक्षपातप्रदर्शनाज्ज्ञापकात् इनाऽऽद्विषयसङ्कोचः सति सम्भवे व्याप्यधर्मावच्छेदेनैवे-

ॐ विषमपदविवृतिः ॐ

त्युच्यतेऽम्भावे कृते सन्निपातपरिभाषया न जर'सिति भवत्कल्पितपूर्वभाष्येण प्रथमैकवचनेऽम्भावो-त्तरमेव जरस् प्राप्नोति, द्वितीयैकवचने त्वमादेशात्प्रागेव परत्वाज्जरसिति लभ्यते। तच्च 'विभ-क्त्यादेशाः पूर्वविप्रतिषेधेने'ति वदतस्तव विरुद्धम्।

'यद्येवमतिजरसमतिजरसैरिरिति न प्राप्नोती'ति भाष्यस्य, भवदुक्तं द्वितीयैकवचनाभिप्रायक-त्वमपि न युक्तम्, 'यद्येव'मिति पदस्वारस्येन पूर्वग्रन्थोक्तयुक्तिमुपजीव्येयं शङ्केति प्रतीयते। पूर्वग्रन्थार्थश्चोक्तरीत्याऽतिजरसं पश्येत्यादावमादेशात्पूर्वं जरसः प्रवृत्तिः, तदङ्गीकारे च द्वितीयकैवचने कथं सन्निपातपरिभाषया जरसादेशाभावः?।

किञ्च द्वितीयैकवचने लुकि पूर्वपक्षिणा शङ्किते—ततः परेण—'प्रथमैकमचने लुक् कुतो न शङ्कित' इतिपृष्टे 'अस्त्यत्र विशेष' इति पूर्वपक्षिणा विशेषे प्रतिपादिते, पश्चात्प्रवृत्तो 'यद्येव'मिति ग्रन्थो न तावत्पूर्वपक्षिणः, तेन जरसादेशमङ्गीकृत्यैव लुक आपादनात्। नापि तटस्थस्य 'इष्टमेव ह्येतत्संगृहीत'-मित्यग्रिमभाष्यासङ्गतेः, अतिजरसैरित्युपन्यासासङ्गतेश्च। नापि सिद्धान्तिनः,—तेन जरसादेशा-भावप्रतिपादनद्वारोक्तरूपस्यैव खण्डनीयतया 'ऽतिजरसमिति न प्राप्नोती'त्यनिष्टापादनासङ्गतेः।

अत एव ङ्याब्ग्रहणेऽदीर्घ इतिवदित्याद्यप्ययुक्तम्। अदीर्घपदेन दीर्घभिन्नजरसोपि ग्रहणात्। दीर्घभिन्नस्य ह्रस्वस्यैव ग्रहणे तु-चित्रायां जातश्चित्र इत्यादौ हल्ङ्यादिलोपयाडागमाद्यापत्तिरित्याहुः।

**पद्न्नो**। आदेशैः स्वानुरूपाः स्थानिन आक्षिप्यन्ते इत्याह—**पाद्दन्तेति**। 'अनुदात्तस्य चदुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्त्तते। अत एव तुल्यास्यसूत्रादिभाष्ये—'आस्ये तुल्यः' 'पादेनोपहतं' 'मासेन पूर्वाये'त्यादिप्रयोगाः, 'हृदयस्य प्रिय' इति सौत्रप्रयोगश्चोपपन्ना भवन्ति। 'ये च तद्धिते' इति सूत्रस्थे—'वा केशेषु' इतिवार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासम्बन्धबोधकम्। यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन भागुरिमतसिद्धतयाऽऽपो वैकल्पिकत्वेन च वाक् वाचेत्युभयवन्निश्निशयोः—सूत्रे निश्ग्रहणं विनापि—सिद्धिः, तथापि सुटि हलन्तस्यासाधुत्वबोधनायात्र ग्रहणमिति—**वृत्त्यनुसारिणः**।

**परे तु**—'अनुदात्तस्ये'तिसूत्रे'ऽन्यतरस्या'मित्यस्य स्वरितत्वं नास्ति। अत एव 'शीर्षंश्छन्दसी'ति सूत्रे—'शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरश्शब्दस्य प्रयोगो न स्यादि'त्युक्तं भाष्ये। अन्यथा विकल्पानुवृत्त्याऽऽदेशत्वेऽपि

ॐ **चिदस्थिमाला** ॐ

सूचयंस्तथैव व्याचष्टे—**आदेशैरिति**। **स्वानुरूपा इति**। अर्थतो वर्णतश्चेत्यर्थः। तेन चरणादीनामन्यवाचकपादादीनां नेति भावः। तथैव तदाशयमाह—**अनुदात्तेति**। अत एव=तदनुवृत्त्यास्य पाक्षिकत्वादेव। **भाष्येति**। जातावेकवचनम्। नन्वेवं 'येचे'तिसूत्रस्थवार्तिके वाग्रहणानर्थक्यमत आह—**येचेति**। व्यवस्थितविभाषाणां परिगणितत्वेन तद्बोधकत्वासम्भवादाह—**तत्रेति**। 'येचे'ति सूत्रे इत्यर्थः। **वेति**। तदर्थकान्यतरस्यामित्यर्थः। अत एवाह—**आप इति**। **निश्निशयोरिति**। मातृमात्रोरितिवत्प्रयोगः, किञ्चिद्वैरूप्यादर्थभेदाच्च। **वृत्तीति**। प्रकाशमूलशास्त्रिदण्डयादय इत्यर्थः। अत्रारुचिं प्रतिपादयन् सिद्धान्तमाह—**परेस्त्विति**। अत्र भाष्यसम्मतिमाह—**अत एवेति**। तदभावादेवेत्यर्थः। **'सूत्रे'** इत्यस्याग्रेऽन्वयः।

ॐ **ज्योत्स्ना** ॐ

त्यपि सूचितम्। अत 'एङ्ह्रस्वा'दिति ज्ञापकं—तत्सूत्रविहितसम्बुद्धिलोपे सन्निपातविघाताभ्युपगमविषयमित्यतिजरसं पश्ये'त्यत्र सन्निपातपरिभाषया लुगभाव इत्यप्युक्तप्रायमिति दिक्।

**इतिवृत्त्यनुसारिण इति**। वक्ष्यमाणभाष्यानुसारिमते तु 'ये च तद्धिते'त्यत्रादेशत्वाय शिरसो ग्रहणं

ॐ **सदाशिवभट्टीयम्** ॐ

**पद्न्नोमा**। **स्वानुरूपा इति**। वर्णतोऽर्थतश्चेति बोध्यम्। नन्वस्य वैकल्पिकत्वाच्चरणादेरादेशत्वेपि न दोष इति चेन्न, 'पद्' इत्यस्याच्चरणत्वप्रकारकबोधो माभूदिति, 'चरणोऽस्त्रिया'मित्युक्तेस्तस्य नपुंसकत्वेन तस्यादेशे शसि 'पन्दि पश्ये'तिमाभूदिति, 'सुन्दरास्ने'त्यत्र'मुखं स्वाङ्ग'मिति स्वरो माभूदिति च। अन्तरतमे-इति सप्तम्यन्तपाठस्य दूषितत्वेनैतल्लाभः कथमिति परं चिन्त्यम्। **भाष्य इति**।—जातावेकवचनं। **वेति**। तदर्थकान्यतरस्यांग्रहणमित्यर्थः। **निश्निशयोरिति**। शब्दपरत्वेन भिन्नार्थत्वान्नैकशेषः। **सुटीति**। इदं च सुप्त्वेन सादृश्यमिति मते। **हलन्तेति**। विपरीतन्तु न,-'आस्यञ्च प्रयत्नश्चे'ति भाष्यप्रयोगात्। ननु छन्दसि

ॐ **विषमपदविवृतिः** ॐ

**पद्न्नोमास्**। अन्यतरस्यामित्यस्यानुवृत्तिं दूषयित्वा 'स्वानुरूपाः स्थानिन आक्षिप्यन्त' इत्युक्तमपि

१ एवञ्च स्वविशिष्टत्वं स्वानुरूपत्वं, वै० 'स्वघटकव्यञ्जनघटितत्व', 'स्वबोध्यार्थविषयकबोधजनकत्वै'तदुभयसम्बन्धेन। स्वं—पदादय आदेशाः, तेन चरणशब्दस्य श्लोकपादादेश्च न पदादेशानुरूपत्वम्, आसनशब्दस्य च नासन्नादेशानुरूपत्वम्। यावदानुपूर्वीमत्त्वेन तु न सादृश्यम्, आदेशविधानवैयर्थ्यादिति **गौडाः**।

दोषाभावेन तदसङ्गतिः स्पष्टैव । 'ये च तद्धिते' इत्यत्र च—'आदेशत्वाय [illegible] कर्त्तव्य'मित्युक्तं, 'वा केशेषु' इति च वक्तव्य'मित्युक्तम् । तस्माच्छसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः । एवं—मांस्पृत्स्नवोऽपि । अत एव नस्पृतोः स्थानिवद्भावा-द्व्यञ्जनान्तत्वनादाय 'नसां' 'पृता'मित्यादौ न नुडादिः, नासिकाया नस् यत्तस्क्षुद्रेषु' इति वार्तिके आदेशत्वमेव, 'नासिकाया' इत्युक्तेः । अत एव तद्विषये 'नासिकाक्षुद्र' इत्यादि न । अत एव पदादिषु, 'मांस्पृत्स्नूनामुपसङ्ख्यान'मितिवार्त्तिके स्थानिनिर्देशो न कृत इत्याहुः ।

---

ॐ **चिदस्थिमाला** ॐ

अन्यथा=स्वरितत्वे आदेशत्वे च। बाधकान्तरमाह—**ये चेति**। विकल्पानुवृत्तौ बाधकान्तरमाह—**वा केशेष्विति**। ततः पूर्वं विशेषस्य वक्ष्यमाणत्वादाह—**शसादीति**। प्रकृत्यन्तरत्वेनोक्तभाष्यप्रयोगोपपत्तिः ।

एवं 'मांसपृतनासानूना'मिति स्थानिनिर्देशोऽपि तेषामयुक्त इति सूचयन्नाह—**एवमिति**। तेषामन्यग्रन्था-सङ्गतिमपि सूचयन्नाह—**अत एवेति**। प्रकृत्यन्तरत्वादेवेत्यर्थः। अत एव तत्र प्रश्लेषे फलाभावोऽनुपदमुक्तः।

ननस्तत्रोक्तवैलक्षण्यफलमाह—**अत एवेति**। तत्र तदिष्टत्वादेवेत्यर्थः। नन्वेवं तत्रापि कुतो न, प्राचां स्थानिनिर्देशस्य सत्त्वादत आह—**अत एवेति**। तत्र तथेष्टत्वादेवेत्यर्थः। **सुडिति**—नागमग्रहणं, प्रत्यया-

ॐ **ज्योत्स्ना** ॐ

कर्तव्यमिति गौरवम्। नसां पृतामित्यादौ नुडादि न, तद्विधौ—आ—आदितिप्रश्लेषादिति तेषामाशयः।

**इत्याहुरिति**। 'ये च तद्धिते' इत्यत्र शिरसो ग्रहणं कर्तव्यमित्यस्य व्याख्येयमित्यर्थः। आदेशेन स्वानुरूपप्रकृत्याक्षेपात्। यद्वा 'पदादयः प्रकृत्यन्तराणी'त्यनेन प्रकृत्यन्तरबोधकसूत्राणां प्रत्याख्याने

ॐ **सदाशिवभट्टीयम्** ॐ

सर्वविधीनां वैकल्पिकत्वेनादेशत्वेपि दोषाभावाद्भाष्यमेकदेश्युक्तिरेवात आह—**ये च तद्धित इति**। **इत्युक्तमिति**। तस्य स्वरितत्वं तु शिरस्यप्यस्य दुर्वारत्वेन तन्निवृत्तये क्रियमाणः स्थानिनिर्देशो विफलः स्यादिति भावः। ननु 'वा केशेष्वि'तिज्ञापकान्नात्र सम्बन्ध इत्युक्तमेवेति चेन्न, तज्ज्ञापकानुसन्धाने हि प्रकृत्यन्तरत्वेपि दोषाभावेन तदसङ्गतेस्तदवस्थत्वात्। **प्रकृत्यन्तरेति**। ते च शसादौ साधव इत्यर्थः, अतो न पूर्वोक्तभाष्यादिप्रयोगविरोधः। **अत एवेति**। न तु 'आ-आ'विति प्रश्लेषादिति भावः।

यत्तु वृत्तिकारमते शिरस इति स्थानिनिर्देशो न कर्तव्यो भाष्यानुसारिमते तु कर्तव्य इति पाठकक्तं लाघवोप-वर्णनन्तत्र, शीर्षण्य इतिवच्छिरस्य इत्यस्याप्यापत्तेः। **अन्ये** तु पदादीनामादेशत्वमेव, तस्य न्यायप्राप्तत्वात्। अत एव 'शीर्षश्छन्दसी'तिसूत्रभाष्ये 'प्रकृत्यन्तरं द्रष्टव्यम्, आदेशो मा विज्ञायी'त्युक्तम्। 'शिरसो ग्रहण-कर्तव्यं प्रकृत्यन्तरं माविज्ञायीति'ये च तद्धिते'इति सूत्रस्थं भाष्यं त्वर्थाधिकारप्राप्तातिप्रसङ्गभङ्गायेति नास्माकं प्रतिकूलम्। 'वा केशेष्वि'त्यतो वेति सम्बध्यते, तेन 'हृदयस्ये'त्यादेर्नासङ्गतिः। वार्तिकस्थपदस्याप्यनुवृत्तिः सूत्रे क दृष्टेति चेत्—'वैयाकरणाख्यायां चतुर्थ्याः''इणःष'इत्यनयोः पश्य। अत एव'शीर्षश्छन्दसी'ति सूत्र इव 'पद'न्निति सूत्रे प्रकृत्यन्तरं द्रष्टव्यमिति नोक्तम्, तेन अत्र सूत्रे आदेशत्वप्रकृत्यन्तरत्वयोः फलाविशेषो ध्वनितः, विकल्पासम्बन्धे तु विशेषस्य स्पष्टतया तदसङ्गतिः स्पष्टैवेत्याहुः। **आहुरिति**। 'स्थानेन्तरतमे'इति पाठ-दूषणावसरे एतत्फलान्यथासिद्धिकरणात् प्रकृत्यन्तरत्वमेषां ध्वनितं भाष्ये इत्यपि बोध्यम्।

ॐ **विषमपदविवृतिः** ॐ

दूषयितुमाह—**शिरसो ग्रहणं कर्त्तव्यमित्युक्तमिति**। विकल्पानुवृत्तौ दूषणान्तरमाह—**वा केशे-ष्विति**। 'ये च तद्धिते' इत्यत्रैव 'वा केशे'ष्वित्यारम्भेणान्यतरस्यांग्रहणस्यानुवृत्तेरुत्तरत्र मण्डूकप्लुत्या

प्रत्याहार इति । व्याख्यानादौटष्टकारेणेति भावः । अक्लीबस्येति । पर्युदास-

❀ अभिनव-चन्द्रिका ❀

अक्लीबस्येति । 'अनन्तर' इति शेषः । तथा चाक्लीबस्यानन्तरं प्रत्यासत्त्या—अक्लीब-प्रकृतिकश्च सुट् सर्वनामसञ्ज्ञक इति सूत्रार्थः ।

❀ चिदस्थिमाला ❀

प्रत्यययोरित्युक्तेः, 'सर्वनामस्थाने चे'त्यत्रासम्बुद्धाविति पर्युदासाच्च । प्रत्याहारोऽपि न टाटकारेण, 'प्रत्ययासत्ति'न्यायविरोधात्, औटष्टित्वस्यान्यार्थत्वाच्च । टाटकारस्तु 'टाङसिङसा'मित्यादौ विशेषणार्थः, तद-

❀ ज्योत्स्ना ❀

तात्पर्यम् । प्रभृतिग्रहणस्य प्रकारार्थताया व्यवस्थापयिष्यमाणत्वात् क्वचिदतिप्रसङ्गस्यानभिधानाश्रयेण निरासात् । आदेशत्वार्थं शिरसोग्रहणस्य—'वाकेशे'ष्वित्यादिवार्तिकानां करणेऽपि लाघवमित्याशयः [?]

❀ सदाशिवभट्टीयम् ❀

सुडनपुंसकस्य । व्याख्यानादौट इति । आगमस्तु न, 'सर्वनामस्थाने चासम्बुद्धा'विति पर्युदासात्, फलाभावाच्च । टाटकारेण प्रत्याहारे शसोऽप्यन्तर्भावात्—'शि सर्वनामस्थान'मिति नियमाश्रयणेनेतरेषां क्लीबे

❀ विषमपदविवृतिः ❀

तदनुवृत्तेश्च कल्पनामपेक्ष्य सर्वथा तस्यास्वरितत्वकल्पनैव न्याय्येति भावः ।

[ ननु याडादीति । 'ह्रस्वनद्याप'इत्यत्र न प्रश्लेष इत्यभिमानेनेदम् । जरसामित्यादौ नुडभावार्थं तु प्रश्लेष आवश्यक इत्युक्तन्तु न विस्मर्तव्यम् । ? ] व्याख्यानादिति । अन्त्यत्वप्रयुक्ता यस्येतसञ्ज्ञेति

❀ वरवर्णिनी ❀

ननु 'सुडनपुंसकस्ये'त्यत्र 'सुडशी'इत्येव न्यस्यतां, धनं वनमित्यादौ स्वमोरपि सर्वनामस्थानत्वान्नपुंसकस्य झलच इति नुम् तु न, 'तुल्यास्यप्रयत्नं' 'मूलमस्याबर्हि'त्यादिनिर्देशात्, सन्निपातपरिभाषयाऽदन्तसन्निपातनिमित्तकस्यातोऽमित्यमादेशस्य तद्विघातकनुमागमं प्रति निमित्तत्वासम्भवाद्वा । 'अशी'त्युक्तेश्च—ज्ञाने' 'वारिणी'इत्यत्रापि न नुम् । न चाशीत्युक्तौ 'जसःशी'ति श्यादेशस्यापि सर्वनामस्थानसञ्ज्ञानापत्तौ 'सर्वे'इत्यत्र 'यचि भ'मिति भसञ्ज्ञायां 'यस्येति चे'ति लोपापत्तिरिति वाच्यम्, 'औङःश्यां प्रतिषेधो वाच्य' इत्यत्र 'औङः' इति विहाय—'श्यां प्रतिषेध' इति न्यासेन—शीमात्रेऽपि लोपस्य प्रतिषेधेनादोषादिति चेन्न; 'अति जरसं पश्ये'त्यत्र 'नपुंसकस्य झलच' इति नुमापत्तेः । न च सन्निपातपरिभाषयाऽदन्तसन्निपातनिमित्तस्याऽमादेशस्य नुमागमं प्रत्यनिमित्तत्वान्नुन्न भवतीति वाच्यं, 'नपुंसकस्य झलच' इति झलन्तलक्षणनुमापत्तेस्तावताऽप्यपरिहारात् । केचित्तु—'नपुंसकस्य शौ झलच' इति न्यासेन झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्याच्छौ परत इत्यर्थादतिजरसमित्यत्र नुमोऽप्राप्तेः 'सुडशी'ति न्यासे न दूषणं, नचैवं न्यासे लाघवाभावः, 'शि सर्वनामस्थान'मिति सूत्रस्याऽकरणेन लाघवात्, 'सर्वनामस्थाने चासम्बुद्धौ शौ' इति न्यासेनैव ज्ञानानीत्यादौ दीर्घसिद्धेः, एवमेवोगिदचां सर्वनामस्थाने शावधातोरिति न्यासेन 'तिर्यञ्ची'त्यादौ नुम्सिद्धेरित्याहुः । ननु 'सु'डित्येव न्यासेः कुतो न कृतः, नचैवमह्नी अहनी साम्नी लोमनी इत्यादौ सर्वनामस्थानतया भत्वाभावाद्भत्वप्रयुक्तो 'विभाषा ङिश्योः'रिति अल्लोपो न स्यादिति वाच्यं, शीग्रहणसामर्थ्यात्,—भत्वप्रयुक्तस्य 'यस्येतिचे'ति लोपस्य औङि—'औङःश्यां प्रतिषेध' इति प्रतिषेधस्य वैयर्थ्येन 'शी परे भत्वप्रयुक्तकार्याणि भवन्ती'ति ज्ञापनाद्वा—निरुक्तदोषाभावादिति चेन्न, 'ज्ञाने' इत्यादौ औङः सर्वनामस्थानतया 'नपुंसकस्य झलच' इति नुमापत्तेः । 'शि सर्वनामस्थान'मित्यस्य 'नपुंसके चेत्सर्वनामस्थानसञ्ज्ञा तर्हि शावेवे'ति नियमार्थत्वन्तु न वक्तुं शक्यं, शसि—अपूर्वसञ्ज्ञाविधायकतया तस्य साफल्यात्, 'धन'मित्यादावेकादेशस्य परादिवद्भावेन सर्वनामस्थाननिमित्तकदीर्घापत्तिस्तु 'शि सर्वनामस्थान'मित्यादिनिर्देशैर्वारणीयेति सङ्क्षेप इति श्रीगुरुवरत्रिपाठिचरणानुसारिणो गौडाः प्राहुः ।

परतयाऽप्यस्य भाष्ये व्याख्यानात्, लघुत्वाच्चेति भावः। प्रसज्यप्रतिषेधेन व्याख्याने अत एव ज्ञापकात्केषाञ्चिदसमर्थसमासानां साधुत्वं बोध्यम्।

**स्वादिषु**। 'सु'रत्र प्रथमैकवचनम्। आदिशब्देन कबन्तानां ग्रहणं, व्याख्यानात्, तदाह—**कप्प्रत्ययावधीति**। तदन्तेष्वित्यर्थः।

**यचि भम्**। समाहारद्वन्द्वे सौत्रत्वान्न टच्। 'यची'त्यनेन–स्वादेर्विशेषणात्तदादि-

ॐ अभिनव-चन्द्रिका ॐ

स्वादिषु–यचि भमित्युभयत्रापि–प्रत्ययस्य निमित्तत्वेनोपादानं यत्र तत्रापि प्रत्ययग्रहणपरिभाषया तदादिमात्रांशोपस्थित्या तदादेरेव पदसञ्ज्ञाभसञ्ज्ञे भवत इति बोधयन्नाह—**तदन्तेष्वित्यर्थ इति**। असर्वनामस्थानकप्रत्ययान्तस्वाद्यव्यवहितपूर्वत्वविशिष्टं पदसञ्ज्ञं स्यादित्यर्थः।

ॐ चिदस्थिमाला ॐ

अभिप्रेत्याह—**व्याख्येति**। अपिना पक्षान्तरसमुच्चयः। युक्तश्चायमित्याह—**लघुत्वादिति**। अत्र तु सोऽपि युक्त इति ध्वनयन् **भाष्योक्तमेवाह—प्रसज्येति**। प्रथमोपस्थितत्वात्, असर्वनामस्थाने इति व्यत्ययैकवचनेन पर्युदासाच्चाह—**सुरत्रेति**। सुपीत्येव वाच्ये आदिग्रहणसामर्थ्यात्तदन्येषामपि ग्रहणं, ते चाविशेषात्कबन्ता इत्यभिप्रेत्याह—**आदीति**। यथाश्रुते कपोऽसंग्रहापत्तेराह—**तदन्तेष्विति**। एतेन यथाश्रुतमेव वदन्तः **शेखिदण्ड्यादयः** परास्ताः। यत्तु 'समासान्तविधेरनित्यत्वान्न ट'जिति **शास्त्री**[1], तन्न, तथासति सूत्रादन्यत्रापि तथा प्रयोगापत्तेस्तद्ध्वनयन्नाह—**सौत्रत्वादिति**। विशेषणात्=विशेष्या-

ॐ ज्योत्स्ना ॐ

**औटष्टकारेणेति**। न तु टाटकारेण, नापि–सुडित्यागम इति भावः। **अत एव ज्ञापकादिति**। 'सुट-स्त्रीपुंसयो'रिति वक्तव्ये–'अनपुंसकस्ये'ति ज्ञापकादिति भावः। **केषाञ्चिदसमर्थसमासानामिति**। 'अश्राद्धभोजी'त्यादीनामित्यर्थः। **प्रथमैकवचनमिति**। न सप्तमीबहुवचनम्। **तदन्तेष्वित्यर्थ इति**। कप्प्रत्ययपर्यन्तेष्वित्यर्थः। [ सन्निपातलक्षणविधेस्तद्विघातकत्वाभ्युपगमादिति ? ]।

ॐ सदाशिवभट्टीयम् ॐ

सञ्ज्ञाविरहे सिद्धे अनपुंसकस्येति व्यर्थमेव स्यादत्,'अनुबन्धवतश्चेत् शेरेवे'तिनियमस्तु न, राजासे''मनुष्य-युवान' इति निर्देशात्। 'अनुबन्धवतोऽज्रूपस्य चेत् शेरेवे'ति, तेन 'राजानौ पश्ये'ति औटि न स्यादिति चेत्, औटि टकारोच्चारणसामर्थ्यात् तेन प्रत्याहार इत्यवेहि। 'सुट् सर्वनामस्थानमशी'रिति तु न सूत्रितं, 'शान'मित्यादौ सन्निपातपरिभाषया नुम्वारणसम्भवेऽप्यजरसं पश्येत्यादौ दीक्षितमतेन झलन्तलक्षणनुमापत्तेः। 'सर्वे' इत्यादौ 'यस्ये'ति लोपस्तु न, 'औङः श्या'मित्यत्र औङित्यस्याकरणात्, तत्प्रत्याख्याने तदलाभाच्च।

**स्वादिषु**। **प्रथमैकेति**। अत एवासर्वनामस्थाने इति चरितार्थम्। **व्याख्यानादिति**। सुपां ग्रहे इष्टे 'सुप्सु' इत्येव वदेत्। अधिकग्रहे–विनिगमनाविरहात् कबन्तानामिति भावः। कपः सङ्ग्रहायाह—**तदन्तेष्विति**।

**यचिभम्**। **सौत्रत्वान्न टजिति**। समासान्तानित्यतायाः क्लृप्तत्वादितरेतरयोगद्वन्द्वे एकवचनमिति नोक्तम्।

ॐ विषमपदविवृतिः ॐ

व्याख्यानात् औटष्टकारेणैव प्रत्याहारो न तु टाटकारेणेत्यर्थः। **प्रथमैकवचनमिति**। सप्तमीबहुवचन-ग्रहणेऽसर्वनामस्थाने इति व्यर्थं स्यादित्यर्थः। **व्याख्यानादिति**। तदुत्तरं प्रत्ययाभावाच्च। 'कप्प्रत्यया-वधी'त्युक्तौ–कप्प्रत्ययस्य न स्वादिषु ग्रहणमिति प्रतीयेत, अत आह–**तदन्तेष्विति**। **नपदान्तसूत्रस्थ-इति**। तत्र हि वेतस्वानित्यत्र रुत्वमाशङ्क्य भत्वेन समाहितं, तत्र च भसञ्ज्ञाया रुत्वप्रतिबन्धा-

१ **शास्त्री**=सिद्धान्तकौमुदीविलासटीकाकर्त्ता भास्कररायशास्त्री मखी।

विधिः। **असर्वनामेति**। तेन सुपादावित्यादौ पादः पन्न। भसञ्ज्ञापदत्वकार्यप्रतिबन्धरूपेऽशार्त्तीयेऽपि कार्ये भवति, न पदान्तसूत्रस्थभाष्यप्रामाण्यात्।

**आकडारा**। 'प्राक्कडारा'दिति नावधिः, तत्पुरुषो द्विगुश्चेति लिङ्गात्, समावेशार्थं हि तदित्याह—**कडारा इत्यादि**। व्याप्त्यर्थकाऽऽङा 'आ चार्थात्'इति वक्तुं युक्तम्। **एकैवेति**। सङ्ख्यावाच्येकशब्दोपादानादवधारणं सम्पद्यते इति भावः।

## ॐ अभिनव-चन्द्रिका ॐ

आकडारादेका। अत्रैकपदप्रवृत्तिनिमित्तं—स्वसजातीयद्वितीयराहित्यरूपं—स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टस्वप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण—स्वसजातीयनिष्ठभेदप्रातियोगितावच्छेदकैकत्वं बोध्यम्। विस्तरस्तु—'एकः पूर्वपरयो'रित्यत्र प्रपञ्चितोऽस्माभिरिति तत्रैव द्रष्टव्यः।

'एका सञ्ज्ञा भवती'त्यस्य—इत आरभ्य 'कडाराः कर्मधारये' इत्यतः प्राक्—स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककसञ्ज्ञान्तरसमानाधिकरण्याभावविशिष्टा सञ्ज्ञा भवतीत्यर्थः।

स्वीयोद्देश्यतावच्छेदकवैशिष्ट्यञ्च-[ उद्देश्यतावच्छेदके—]-'स्वतादात्म्य' 'स्वप्रतियोगिक—विधेयानुयोगिक—संसर्ग—घटक-निरूपकत्वसमसङ्ख्याकनिरूपकत्ववत्संसर्ग—प्रतियोगिकत्वो'—भयसम्बन्धेन। अत एव तत्पुरुषबहुव्रीहिसञ्ज्ञादिभिरङ्गसञ्ज्ञायाः, ह्रस्वदीर्घसञ्ज्ञाभ्यां यथायर्थ

## ॐ चिदस्थिमाला ॐ

करणात्। जीर्णानुक्तं विशेषमाह—**भसञ्ज्ञेति**। प्रकृतसूत्रविहितेत्यर्थः। यथाचैतत्तथान्यत्र स्पष्टम्। इत्याह=इत्यत आह। मर्यादायां द्वन्द्वासंग्रहापत्तेरत आह—**व्याप्त्यर्थकेति**। 'चार्थे द्वन्द्व'इति सूत्रमभिव्याप्येत्यर्थः।

## ॐ ज्योत्स्ना ॐ

**नपदान्तसूत्रस्थभाष्यप्रामाण्यादिति**। तत्र हि 'वेतस्वा'नित्यत्र—ड्मतुपि टिलोपे—'तसौ मत्वर्थे—' इति सान्तस्य भसञ्ज्ञापदत्वप्रतिबन्धद्वारा रुत्वाभावार्थत्युक्तम्। **इतिवक्तुमिति**।

## ॐ सदाशिवभट्टीयम् ॐ

**तेनेति**। पूर्वसूत्रे'राजाना'वित्यत्र नलोपस्तु नापादितः, भसञ्ज्ञया बाधात्। **भवतीति**। तेन 'इतः दते'त्यादौ जश्त्वं नेति भावः। **आकडारादेका सञ्ज्ञा**। सञ्ज्ञाग्रहणं स्पष्टार्थं, प्रकरणादेव तल्लाभादिति स्पष्टमत्रैव भाष्ये। **व्याप्त्यर्थकेति**। तेन 'चार्थे द्वन्द्व'इत्यस्य सङ्ग्रहः, तेन कर्मधारयसञ्ज्ञाविषये न द्वन्द्वसञ्ज्ञा। **युक्तमिति**। तदुत्तरमस्यानुपयोगादिति भावः। पदगौरवेपि मात्रालाघवं प्रतिपत्ति-

## ॐ विषमपदविवृतिः ॐ

तिरिक्तं न किञ्चित्कार्यम्। **व्याप्त्यर्थेति**। ननु मर्यादार्थकाङा'आचार्था'दिति निर्देशेपि न कोपि दोष इति चेन्न, समाहारे द्वन्द्वबहुव्रीहिसञ्ज्ञयोः समावेशापत्तेः। **वक्तुं युक्तमिति**। नतूक्तं, वर्णगौरवा-

## ॐ वरवर्णिनी ॐ

**परे तु**—स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककसञ्ज्ञान्तरासमानाधिकरणा सञ्ज्ञा भवती'त्येका सञ्ज्ञे'त्यस्यार्थः। वै० 'स्वतादात्म्य' 'स्ववृत्त्यवच्छेदकतासजातीयावच्छेदकताश्रयत्वे'तदुभयसम्बन्धेन। साजात्यञ्च—स्वप्रतियोगिक उद्देश्यत्वानुयोगिको यः—[साक्षात्परम्परया वा—] सम्बन्धः, तदन्तःपातियावन्निरूपकत्ववृत्तिसङ्ख्यासजातीयसङ्ख्यावन्निरूपकत्वघटितो य उद्देश्यतानुयोगिकः सम्बन्धस्तत्प्रतियोगिकत्वेन।

समन्वयस्तु—भपदसञ्ज्ञयोरुद्देश्यतावच्छेदकं तदादित्वमिति—पदसञ्ज्ञाशास्त्रीयोद्देश्यत्वानुयोगिकस्तादृशोद्देश्यतानिरूपितोद्देश्यतावच्छेदकतदादित्वप्रतियोगिकश्च यः—स्वनिष्ठावच्छेदकतानिरूपकत्वरूपः सम्बन्धः स यावत्सङ्ख्याकनिरूपकत्वघटितस्तावत्सङ्ख्याकनिरूपकत्वघटितः—भसञ्ज्ञाशास्त्रीयोद्देश्यत्वानुयोगिकस्तन्निरूपिततदादित्वनिष्ठावच्छेदकताप्रतियोगिकः सम्बन्धोऽपीति—रीत्या बोध्यः। तत्पुरुषबहुव्रीहिसञ्ज्ञयोस्तादृशमुद्देश्यतावच्छेदकं सामर्थ्यमिति—भपदसञ्ज्ञादिवन्न तयोः समावेशः। यद्यपि द्विगु-तत्पुरुष-कर्मधारयादिसञ्ज्ञानामपि तादृशमुद्देश्यतावच्छेदकं सामर्थ्यमेवेति न तत्पुरुषसञ्ज्ञया द्विगु-

❀ अभिनव-चन्द्रिका ❀

घिनदीसञ्ज्ञयोः, अङ्गसञ्ज्ञायाः च अपदसञ्ज्ञयोश्च समावेशः सिध्यति । लक्षणसमन्वयस्तु—यथा—अङ्गसञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदक—तदादित्वस्य—अपदसञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वे—स्वतादात्म्यस्य, स्वावच्छेदकतानिरूपकोद्देश्यतानिरूपकविधेयतावत्त्वसंसर्गघटकनिरूपकत्वसमसङ्ख्याकनिरूपकत्वसंसर्गप्रतियोगित्वस्य सत्त्वाद्बोध्यः ।

न चाङ्गसञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्ववैशिष्ट्यस्य—अपदसञ्ज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वे सत्त्वात्तयोः समावेशो न स्यादिति वाच्यम्, अङ्गसञ्ज्ञायाम्—अव्यवहितपूर्वं यत्तदादि तदेवोद्देश्यं,—अपदसञ्ज्ञयोस्तु—विशेष्यविशेषणभावव्यत्यासेन तदाद्यभिन्नं यदव्यवहितपूर्वं तदेवोद्देश्यमिति स्वप्रतियोगिकसंसर्गघटकनिरूपकसतुल्यसङ्ख्याकनिरूपकत्ववत्संसर्गप्रतियोगित्वस्य तदादित्वयोरभावेन—अव्यवहितपूर्वत्वतदादित्वयोस्तादात्म्यस्याप्यभावेन च परस्परोद्देश्यतावच्छेदकवैशिष्ट्यस्य परस्परोद्देश्यतावच्छेदकेऽभावेनादोषात् । एवं ययोः सञ्ज्ञयोर्बाध्यबाधकभावो नेष्यते तत्र विशेषणविशेष्यभावव्यत्यासेन निरुक्तसमानोद्देश्यतावच्छेदकत्वविघटनं बोध्यम् । **सङ्ख्यावाचीति** । निरुक्तसङ्ख्यावाचीत्यर्थः ।

❀ **चिदस्थिमाला** ❀

तदुत्तरत्वस्यानुपयोगादिति भावः । प्रतिपत्तिलाघवमत्र गूढाभिमतम् । उपादानाद्यभावादाह—

❀ **ज्योत्स्ना** ❀

न तूक्तम्—अत एव निर्देशात्पाणिनेर्वर्णगौरवात्पदगौरवगरीयस्त्वानुमानात् ।

❀ **सदाशिवभट्टीयम्** ❀

लाघवञ्चात्र पक्षे इत्याशयः । इदमुपलक्षणम्—'आद्यन्ता'वित्यस्य, तेनाभिव्याप्त्यर्थकत्वं सम्भाव्येत, सिद्धान्ते

❀ **विषमपदविवृतिः** ❀

त्पदगौरवस्य गरीयस्त्वादिति पाठकः । **सङ्ख्यावाच्येकशब्दोपादानादिति** । वस्तुतस्तु दीक्षितो,

❀ **वरवर्णिनी** ❀

सञ्ज्ञादेः समावेशः सम्भवति, तथापि चकारादिबलेन तत्र समावेशस्योद्देश्यतयोपजीव्यत्वान्न तयोर्बाध्यबाधकभावः । एवञ्च तत्पुरुषादिसञ्ज्ञाभिरङ्गसञ्ज्ञाभसञ्ज्ञयोः समावेशः शेखरोक्तः सूपपन्नः, तादृशसमसङ्ख्याकनिरूपकत्वविरहात्, तेन 'वृत्रघ्न' इत्यादावल्लोपसिद्धिः । घिनदीलघुगुरुसञ्ज्ञा वर्णस्यैवेति पक्षेऽपि—घिलघुसञ्ज्ञयोर्नदीगुरुसञ्ज्ञयोरपि समावेशः सिद्धः, तादृशसमसङ्ख्याकनिरूपकत्ववत्संसर्गप्रतियोगित्वस्याभावात् । अन्यथा 'गौरवं' 'मौनं' 'शौचं' 'लाघव'मित्यादाविगन्ताच्च लघुपूर्वादित्यण्न स्यात्, निरवकाशया घिसञ्ज्ञया लघुसञ्ज्ञाया बाधसम्भवात् । एवं वात्सी३बन्धुरित्यत्र तादृशनदीसञ्ज्ञया गुरुसञ्ज्ञाया बाधाद्गुरोरनृत इति प्लुतो न स्यात् । मम त्वत्र नदीत्वान्नदीबन्धुर्नाति पूर्वपदान्तोदात्तत्वं, गुरुत्वात्प्लुतश्च भवत एव । एवञ्च—उभे अपि वर्णस्येति आकरोक्तः पक्ष एकदेशिन इति शेखरोक्तमयुक्तमेवेति गौडाः । एवं कारककर्मादिसञ्ज्ञासमावेशः सिध्यति । कर्तृकरणकर्मादिसञ्ज्ञानां तु न परस्परं समावेशः, निरुक्तपरिष्कारानुसरणात् । भपदसञ्ज्ञयोस्तदादित्वस्यैव तत्र हि कारकत्वस्यैवोद्देश्यतावच्छेदकतया तादृशसञ्ज्ञान्तरत्वस्यैव सत्त्वात् । यत्र तु बाध्यबाधकभावो नेष्टः, निरुक्तसञ्ज्ञान्तरत्वञ्च भवति—तत्र विशेष्यविशेषणभावव्यत्यासेन निरुक्तसमानोद्देश्यककसञ्ज्ञान्तरत्वं विघटनीयं, यथा—अङ्गभसञ्ज्ञयोः । 'ङिति ह्रस्वश्चे'तिघिसञ्ज्ञानदीसञ्ज्ञयोर्विषये तदादित्वस्यैवोद्देश्यतावच्छेदकत्वेऽपि नदीसञ्ज्ञायान्तादृशं तदादित्वमुद्देश्यतावच्छेदकतावच्छेदकं कल्पनीयं, घिसञ्ज्ञायाञ्च तदादित्वमुद्देश्यतावच्छेदकमेवेति न तयोर्बाध्यबाधकभावः । एवञ्च यत्र बाध्यबाधकभावो नेष्टस्तत्र विशेष्यविशेषणभावव्यत्यासासम्भवे उद्देश्यतावच्छेदकमुद्देश्यतावच्छेदकतावच्छेदकं कार्यमिति सर्वत्रोपाय आस्थेय इति श्रीबालशास्त्रिचरणानुसारिणो गुरुचरणाः प्राहुः ।

**या परेति** । द्वयोः सावकाशयोः परा, निरवकाशत्वे तु सैवेत्यर्थः । आभ्यामेव बाध-सिद्धिस्तु न, अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधा-भावाद्विप्रतिषेधाप्रवृत्तेः । लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषये-ऽदर्शनेन शास्त्रेऽपि सञ्ज्ञाविषयेऽप्रवृत्तेश्च । **तेनेति** । अनवकाशत्वेनेत्यर्थः ।

परोदाहरणन्तु—'अपादानमुत्तराणि कारकाणि बाधन्ते' इत्याद्याकरे स्पष्टम् । विरोधाद्यभावेन विप्रतिषेधसूत्राद्यप्रवृत्तावपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था । अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः पर्यायापत्तिर्दोषः ।

---

### ❀ अभिनव-चन्द्रिका ❀

**अदर्शनेनेति** । 'विरोधे हि बलीयसा दुर्बलो बाध्यते' इति न्यायेन विरोधाभावे तक्र-कौण्डिन्यन्यायस्याप्रवृत्तेरिति भावः । **अप्रवृत्तावपीति** । चिन्त्यमिदम्—'आकडारादेका सञ्ज्ञा' इत्यनेन निरुक्तसमानोद्देश्यतावच्छेदकसञ्ज्ञान्तरसामानाधिकरण्याभावस्य निरुक्तसमानोद्देश्यता-वच्छेदकसञ्ज्ञायां बोधनेन विप्रतिषेधस्य सत्त्वेन विप्रतिषेधशास्त्रप्रवृत्तौ बाधकाभावात् ।

### ❀ चिदस्थिमाला ❀

**सञ्ज्ञेति** । द्वयोर्निरवकाशत्वे विकल्पस्यैवेष्टत्वादाह—**सावेति** । **निरवेति** । 'अन्यतरस्या' इत्यादिः । नन्वेवं ताभ्यामेवान्यत्रेवात्रापि बाधसिद्धाविदं सूत्रं व्यर्थमत आह—**आभ्यामेवेति** । तत्राद्ये आह—**अन्यत्रेति** । अस्यैव व्याख्या—**तव्येति** । द्वितीय आह—**लौकीति** । **अपिरुक्तसमुच्चये** । नेदं परोदाहरण-मित्याह—**नचेति** । अत एव न्यूनता निरासायाह—**परोदेति** । एतेन 'परानवकाशा भसञ्ज्ञा पद-सञ्ज्ञां बाधते', इति दण्डशुक्तमपास्तम् । ननु तयोरत्राप्रवृत्तौ कथं ताभ्यामत्र व्यवस्थाऽत आह—**विरोधादिति** । आदिना सामान्यविशेषभावः, भिन्नफलत्वादितिभावः । आदिना लौकिकन्यायः । प्रकृत-सूत्राभावेऽनिष्टमाह—**अपेति** । स्वादिष्विति बाधेन भत्वस्य सावकाशत्वादाह—**परयेति** । तद्बुद्धया

### ❀ ज्योत्स्ना ❀

**लोके सञ्ज्ञाविषयेऽदर्शनेनेति** । तथाहि देशविशेषे-'काशी'ति सामान्यसञ्ज्ञाया'वाराणसी'ति विशेषसञ्ज्ञया बाधाभावः, यथा च 'पाञ्चाले'तिसञ्ज्ञया 'अहिच्छत्रे'ति विशेषसञ्ज्ञायाः । **पर्यायापत्तिर्दोष इति** । तेन 'धनुषा विध्यती'त्यादौ धनुरादीनामपादानत्वप्रयुक्तपञ्चम्यादि

### ❀ सदाशिवभट्टीयम् ❀

तु तथात्वेपि न क्षतिरित्यपास्तम् । वस्तुतोऽवधिनिर्देशोऽफलः, 'उपसर्जनं पूर्व'मिति प्रकरणे विच्छेदेनाग्रेऽ-सम्बन्धासम्भवात् । **निरवकाशत्वेति** । एकस्या इति भावः । नन्वेकेत्युक्तेः परैव कुतोऽत आह—**विरोधाभावेनेति** । **पर्यायापत्तिरिति** । पर्यायो हि क्रमप्राप्तस्यानतिक्रमः, तत्कार्ययोर्मध्ये यत् क्रमात्

### ❀ विषमपदविवृतिः ❀

नव्यश्च द्वावपि स्थूलदृश्वानौ, केवलार्थैकैकशब्दस्यैवात्र ग्रहणात् । कैवल्यं हि सजातीयसञ्ज्ञान्तरा-समानाधिकरणम्, 'एकाकी तिष्ठती'त्यादौ तथा प्रतीतेः । ननु परत्वानवकाशत्वाभ्यामेव बाधसिद्धौ आकडारादेकेति व्यर्थमित्याशङ्क्याह—**आभ्यामेवेति** । परत्वानवकाशत्वाभ्यामेवेत्यर्थः । अन्यत्र= आकडारीयविषयसञ्ज्ञाभिन्ने । **लोके सञ्ज्ञाविषय इति** । 'ग्राम' इति सञ्ज्ञया 'वाराणसी'ति सञ्ज्ञायाः, कृष्णदेवदत्तादिसञ्ज्ञया वृष्ण्यन्धकादिसञ्ज्ञायाश्च बाधादर्शनादित्यर्थः । **आकडारेइति** । तेन 'धनुषा विध्यती' त्यत्र न पञ्चमी । विरोधाभावेनेत्युक्त्या तस्य स्पष्टत्वात् । **पर्यायापत्तिर्दोष**

भपदसञ्ज्ञयोः समावेशे तु 'राज्ञ' इत्यादौ नलोपस्यापत्तिर्बोध्या । न च 'राजन्य' इत्यादौ 'सुप्तिङन्त'मिति पदसंज्ञा दुर्वारा, परया भसञ्ज्ञया तु न बाधस्तस्या अन्तरङ्गत्वादिति वाच्यम्; समानावधिकतया अन्तरङ्गाया अप्यनया बाध्यसामान्यचिन्तयाऽपवादत्वेनैव बाध इत्याहुः । आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यग्रे 'अ'शब्दे निरूपयिष्यते ।

भपदसञ्ज्ञाविधायकप्रकरणे भस्येत्यस्य पाठनाङ्गमित्यनुवर्त्याङ्गं सत् पदं भवति, भं भवतीत्यर्थेन ताभ्यां तस्य समावेश एव न पर्याय इति बोध्यम्। पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि 'णलुत्तमो वा' इति ज्ञापकात्समावेशः । 'गुरुलघुसञ्ज्ञे वर्णस्य, नदीघिसञ्ज्ञे तदन्तस्ये'ति भिन्नावधिकत्वात्समाविशतः । 'उभे अपि वर्णस्ये'ति पक्ष आकारे उपलभ्य-

ॐ अभिनव-चन्द्रिका ॐ

**समानावधिकतयेति** । समानावधिकत्वञ्च—निरुक्तोभयसम्बन्धेन स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककत्वं बोध्यम्। **समावेश एवेति** । निरुक्तसमानोद्देश्यतावच्छेदककत्वस्याभावादिति भावः। एवमुत्तरत्रापि बोध्यम्।

ॐ चिदस्थिमाला ॐ

तत्रैव प्रवृत्तेराह—**समेति** । आहुरित्यरुचिबीजन्तु स्वतन्त्रस्यानत्वेन नेदं सुवचं, तस्यान्यत्र दृष्टत्वेऽपि तदन्यस्यापि दृष्टत्वेन तस्यैवाश्रयणे मानाभावश्च, अन्यत्र दृष्टान्तरङ्गत्वस्यापि ग्रहणापत्तिश्चेति, तस्माद्भाष्यप्रामाण्याद्राजन्येति निर्देशाच्च नेयमिति तत्त्वम् । ननु कार्यकालपक्षे एकदेशस्थत्वेन कथं परत्वेन व्यवस्थाऽत आह—**आकडारेति** । ननु सुप्तस्त्वेऽङ्गसञ्ज्ञा भपदसञ्ज्ञाभ्यां बाध्येत-अनवकाशत्वादत आह—**भपदेति** । अस्याङ्गमित्यनुवर्त्त्येत्यत्रान्वयः । 'यस्मादिति' सूत्रादिति भावः । नन्वेवमपि पर्यायः स्यात्, एवञ्चानुवृत्तिरपि सफला नियमबाधश्च नात आह—**इहाङ्गेति** । अस्य समावेशेऽर्थद्वारान्वयाद्दोषान्तरमुद्धरति—**पुरुषेति** । अपिरुक्तसमुच्चये, 'णलः परस्मैपदस्थानिकत्वात्तत्वम् । दोषान्तरमुद्धरति—**गुर्विति** । सौत्रक्रमेणाह—**नदीति** । उभे = घिनदीसञ्ज्ञे ।

ॐ ज्योत्स्ना ॐ

नेति स्पष्टं भाष्ये । **अपवादत्वेनैवेति** । तथाच—'सुप्तिङन्त'मितिपदसञ्ज्ञया बाधो-

ॐ सदाशिवभट्टीयम् ॐ

प्राप्तं परं तदनतिक्रमस्यापत्तिरित्यर्थः। सिद्धान्ते तु सञ्ज्ञयोर्या परा तत्प्रयुक्तं कार्यम्पूर्वमपि प्रवर्तते, इदानीं तु कार्यगतपरत्वं नियामकं स्यादिति भावः । एतेनैकमेव कार्यं स्यादिति चिन्त्यमेतदित्यपास्तम् ।

**नलोपस्यापत्तिरिति** । सर्वथा निरवकाशत्वादल्लोपे जाते इति भावः । **नदीघिसञ्ज्ञे इति** । भाष्यप्रयोगात्पूर्वनिपातो नद्याः । **अनुपपादनादिति** । [ २१२ पृ० ] लघुनोपायेनेति शेषः ।

ॐ विषमपदविवृतिः ॐ

**इति** । इदमयुक्तम्—विप्रतिषेधे परमिति परकार्यस्यैव प्रवृत्तेः । **बाध्यसामान्यचिन्तयेति** । अत्र च 'सिति चे'ति सूत्रं मानम्, तद्धि भवदीय इत्यादौ पदत्वार्थम्, अन्तरङ्गत्वात्सुप्तिङन्तमिति पदत्वे तु तद्वैयर्थ्यम् । नन्वाकडारीयसञ्ज्ञयोः कार्यकालत्वे एकदेशस्थत्वेन या परेत्यसङ्गतमित्याशङ्क्याह—**आकडारस्थेति** । **णलुत्तमोवेति** । पुरुषसञ्ज्ञा तिङ्षु परस्मैपदसञ्ज्ञाया बाधिका-

१ नच ईबन्धुरित्यत्र वर्णस्यैव गुरुनदीसञ्ज्ञे इति समानावधिकत्वस्यैव सत्त्वात्कथं समावेश इतिवाच्यं, प्रकृते नदीसञ्ज्ञाभावान्नदी बन्धुनीत्यस्याऽप्रवृत्तावपि बहुव्रीहिनिमित्तकपूर्वपदप्रकृतिस्वरेणैव सिद्धेः, नञ्सात्राद्युदात्तत्वान्तोदात्तत्वयोः फले भेद इत्यस्मद्गुरुचरणाः । स्पष्टञ्चेदं विषमपदविवृतौ ।

२ परे तु सञ्ज्ञयोः समावेशेऽपि तत्प्रयुक्तद्वितीयादिकार्याणां समावेशासम्भवात्परत्वात्पञ्चम्यादेरापत्तिरित्येव दोष इति प्राहुः ।

नानोऽप्येकदेशिन एव, समावेशानुपपादादिति दिक् ।

**यलोप इति** । 'हलि सर्वेषा'मित्यनेनेत्यर्थः ।

**अल्लोपोऽनः** । तपरकरणम्—[किम् ?]—अनितेः क्विपि 'आन' इत्यादौ लोपाभावाय । अन्त्वं त्वत्रैकदेशविकृतन्यायेनेत्यन्यत्र विस्तरः ।

## ॐ चिदस्थिमाला ॐ

**वेशानुपेति** । एतेनान्यथोपपादनं तत्र पक्षेऽपास्तं, क्लिष्टत्वादस्वरितत्वाच्च । पुरुपसञ्ज्ञात्मनेपदसञ्ज्ञयोरप्युक्तसामान्यापेक्षज्ञापकात्समावेशः । अन्यत्रेष्टसमावेशस्थले च पाणिनिना कृत एव तदाह—**इति दिगिति** । षत्वासिद्ध्या 'लोपो व्योरि'ति न, लोपः शाकल्यस्येत्यपि न, हलीत्यस्य बाधकत्वात्, एतेन 'तेन लोपे रूपद्वयमिति तत्त्व'मिति **शास्त्र्युक्त**मपास्त, तद्ध्वनयन्नाह—**हलीति** ।

**करणमनिते**रिति पाठः । **एकेति** । शास्त्रीयेणेत्यर्थः । अकृते तु नास्त्येव । एतेन नञ्समासभ्रमवारणार्थमेव तपरकरणं न नदर्थम्, दीर्घेऽन्त्वस्यैवाभावादिति केषाञ्चिदुक्तिः परास्ता । अत्र वृत्त्याद्युक्तमेव व्याख्यानं युक्तं, न मूलाद्युक्तमित्यन्यत्र स्पष्टं, तदाह—**इत्यन्यत्रेति** ।

## ॐ ज्योत्स्ना ॐ

निरवकाशत्वोदाहरणमित्युक्तम् । किञ्च—'भवदीय' इत्यादौ 'सिति चे'ति पूर्वपदसञ्ज्ञया परभसञ्ज्ञाया बाधोऽनवकाशत्वोदाहरणं बोध्यम् । **एकदेशविकृत न्यायेनेति** । स च न्यायो लौकिकः—'प्राग्दीव्यत' इति विकृतनिर्देशादशास्त्रीयकार्येऽप्यङ्गीकृतः, 'स्थानिव'त्सूत्रे आदेशग्रहणज्ञापितस्तु शास्त्रीयकार्य एवेति न तस्यात्र प्रवृत्तिर्विवक्षिता, अन्त्वस्याशास्त्रीयत्वात्, तदाह—**इत्यन्यत्र विस्तर इति** । **आवृत्त्येति** । अत्र पूर्वस्येत्येतावदंशे आवृत्तिर्विवक्षिता, 'विधा'वित्यस्य

## ॐ विषमपदविवृतिः ॐ

ऽपवादत्वात् । परस्मैपदसञ्ज्ञा तु शतृक्वसोश्चरितार्था । तथा च परस्मैपदानामित्यनेन शतृक्वसोरेव णलादेशः स्यात्, तस्य च स्थानिवद्भावेनोत्तमत्वाभावात्तदसङ्गतिरिति भावः । इदमुपलक्षणं—तयोः समावेशे 'सिचि वृद्धि'रित्यपि ज्ञापकं बोध्यम् । **एकदेशिन एवेति** । इदमयुक्तम् । इशब्दस्य तदन्तसञ्ज्ञापक्षेपि समानावधिकया लघुसञ्ज्ञया परत्वाद्बाधेन घित्वानापत्तेः । घिसञ्ज्ञा तु हरिशब्दे चरितार्था, तत्र भिन्नावधिकत्वेन द्वयोः समावेशात् । अस्य स्त्री ईत्यत्र गुरुसञ्ज्ञया बाधेन नदीत्वानापत्तेश्च । तस्मादेरजित्यादिनिर्देशैस्तयोः समावेशो भवता वाच्यः । स च समो वर्णसञ्ज्ञा-

## ॐ वरवर्णिनी ॐ

**अल्लोपोऽनः** । नन्वत्र—'अनो न'शित्येवास्तु, नकाराकारश्चोच्चारणार्थः, शित्वाच्च सर्वादेशः, न च यथान्यासे 'प्रियाष्ट्न' इत्यत्राऽल्लोपे तस्य स्थानिवद्भावात्ष्टुत्वं न भवति, [पूर्वत्रासिद्धीये न स्थानिवदिति निषेधस्तु न, तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्विति तन्निषेधात्।] 'अनो न' शितिन्यासे तु नशोऽज्झलादेशतयाऽचः परस्मिन्निति स्थानिवद्भावाभावेन ष्टुत्वं स्यादेवेति वाच्यं, नागेशभट्टादिरीत्या प्रियाष्ट्न-इत्यादेरनभिधानात्, बहिरङ्गस्य नशादेशस्यासिद्धत्वाद्वा ष्टुत्वाप्राप्तेरिति चेदत्र केचित्—प्राणितीति प्राण्, ततः शसि—'प्राणः' इत्यत्रानितेरिति णत्वस्यासिद्धत्वादनो नशिति नशादेशापत्तिः, यथान्यासे तु—'अल्लोप' इति तपरकरणान्न तत्र लोपः, स्पष्टश्चेदं शेखरे मूले एव । न च 'वार्णादाङ्गं बलीय' इति परिभाषया दीर्घात्पूर्वमेव लोपप्रवृत्त्या तत्र ह्रस्वाकारस्य सुलभतया तपरकरणेऽपि 'प्राण' इत्यत्र लोपापत्तिः सिद्धान्तेऽपीति—'ययोरेव समो दोषः परिहारस्तयोः सम' इति न्यायप्रसरापत्तिरिति वाच्यम्, अनितेः क्विपि—'अनुनासिकस्य क्वी'ति दीर्घे—तत उपसर्गेण सम्बन्धे सवर्णदीर्घात्प्रागपि दीर्घाकारस्यैवोपलभ्यमानत्वात्तपरकरणेन तद्व्यावृत्तेः सम्भवात् । 'अनो न'शितिन्यासे तु एकदेशविकृतन्यायेनान्त्वस्य तत्र सत्त्वान्नशादेशापत्तिः—" इत्याहुः ।

**परे तु**—अर्द्धविकारेऽर्द्धाधिकविकारे चैकदेशविकृतन्यायाप्रवृत्तेरत्रार्द्धाधिकविकारे तदप्रवृत्तेः 'सर्वे सर्वपदादेशा' इत्यानुमानिकस्थान्यादेशभावसत्त्वात्स्थानिवद्भावेनैवान्त्वं बोध्यमित्याहुरिति—श्री**त्रिपाठि**पादाः ।

**पूर्वस्मादिति** । 'अचः परस्मि'न्नित्यत्र 'पूर्वविधा'वित्यस्यावृत्त्या पञ्चमीसमासाश्रयणादयमर्थो लभ्यते इति भावः । तेन प्रत्यैपिपन्नित्यादिसिद्धिः, अन्यथा जुस् स्यात् । अत एव 'उभे अभ्यस्त'मिति सूत्रे "—'उभे'ग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थम्, ऐत्सिन् इत्यत्राभ्यस्तलक्षणो जुस् मा भूदित्युक्ते,—एकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं स्पष्टार्थम्—"इत्युक्तम् । तेन—उभे यत्र श्रूयेते इत्यर्थेऽपि प्रत्यैपिपन्निति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं स्पष्टार्थमिति तद्भावः ।

ॐ अभिनव-चन्द्रिका ॐ

**प्रत्यैपिपन्निति** । न च जुसः पदचरमावयवत्वेन—'न पदान्ते'ति स्थानिवत्त्वनिषेधः शङ्क्यः, 'पदे अन्त' इति सप्तमीसमासस्य सिद्धान्तितत्वेन पदपरकचरमावयवकत्वस्य जुस्यभावेन निषेधाप्रवृत्तेः । न च 'प्रत्यैषिषन् देवदत्ता' इत्यादौ पदपरकचरमावयवत्वस्य जुसि सत्त्वेन पुनरपि तन्निषेधः शङ्क्यः,—इत एवारुचेस्तत्र प्रत्यासत्त्या परपदस्थाजादेशस्यैवाश्रयणेनादोषादिति दिक् ।

ॐ चिदस्थिमाला ॐ

शब्दरत्नादावित्यर्थः । मौलापिसूचितेष्टार्थान्तरसंग्रहायाह—**आवृत्त्येति** । मनोरमोक्तफलानामन्यथासिद्धावप्यस्यावश्यकत्वं प्रतिपादयन्नस्यासाधारणफलमाह—**प्रत्यैपिपन्निति** । अन्यथा=समासाभावे । अस्यावश्यकत्वं भाष्यसम्मतमित्याह—**अत एवेति** । तदाश्रयणादेवेत्यर्थः । **उक्ते**—इत्यस्य एकदेशिनेति शेषः । **प्रयोजेति** । उक्तेत्यादिः । **उक्तं**—भाष्यसिद्धान्तिनेति शेषः । तस्यार्थं सूचयन्नाह—**तेनेति** । उभेग्रहणेनेत्यर्थः । **इत्यर्थेपि** =इत्यर्थेन तत्र वारणेऽपि । तत्सिद्धौ=ऐत्सिन्नित्यादिसिद्धौ । तुना पाक्षिकत्वं सूचितमिति मनोरमादि चिन्त्यमिति स्पष्टं शब्दरत्नादौ । यत्तु—'मनोरमादि न युक्तमैत्सिनित्यादेः पञ्चमीसमासं विनाऽसिद्धेस्तस्मात्—'इत्थं

ॐ ज्योत्स्ना ॐ

पूर्वसूत्रादनुवृत्तेः सम्भवात् , वस्तुतः पूर्वस्य विधावित्यतः पूर्वसम्बन्धिनि—तत्स्थानिके, तन्निमित्तके च विधाने इत्यर्थद्वयस्य क्रोडीकारसम्भवादावृत्तिर्व्यर्था । न च 'षष्ठी स्थाने योगे'तिनियमात्स्थानातिरिक्तसम्बन्धप्रतीतेर्बाधः, अनुवादे परिभाषाणामनुपस्थितेः, 'अचः परस्मिन्पूर्वस्ये'ति—षष्ठ्या पूर्वस्य कार्ये कर्तव्ये—इत्यर्थात्कार्यस्य विधिरूपत्वाद्विध्यर्थे आक्षिप्ते विधिग्रहणानुवृत्तिसामर्थ्यादधिकार्थसंग्रहाय नियमबाधाच्च, पुनर्विधावितिवचनन्तु योगविभागेन नियमार्थं, पूर्वस्य विधावेव आदेशः स्थानिवदेव यथा स्यादिति, तत्फलञ्च—वाय्वोरित्यादौ स्वाश्रयकार्यनिवृत्त्या 'लोपो व्यो'-रिति लोपाभाव इति भाष्यकैयटयोः स्पष्टम् । कौस्तुभकारास्तु—'काममतिदिश्यतां वा सच्चाऽसच्चापि नेह भारोऽस्ती'ति वार्तिकाव्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदात् क्वचित्स्थानिवद्भवतीति,—

ॐ विषमदविवृतिः ॐ

पक्षेपि, तथा हि 'वेतस्वा'नित्यादौ भसञ्ज्ञाया इवादीद्दपदित्यादौ अभ्यासेकारस्य घिसञ्ज्ञायां 'दीर्घो लघो'रित्यस्य वैयर्थ्यापत्त्या तद्बलेन तयोः समावेशकल्पनात् । **पञ्चमीसमासाश्रयणादिति** । परस्येत्येतदर्थान्तर्भावेण वृत्तिः, 'पञ्चमी भयेने'त्यत्र पञ्चमीति योगविभागेन भाष्यकृता 'तत्पर' इत्यत्र पञ्चमीसमासाश्रयणादिति भावः । दीक्षितेन पञ्चमीसमासोदाहरणस्यापीपचन्नित्यस्य विदिसाहचर्येण लङ एव झेर्जुसमाश्रित्यान्यथासाधनात्पञ्चमीसमासस्य लङि जुस्वारणप्रयोजनमाह—**तेनेति । अत एवेति** । एवं जातीयस्थले जुसीत्यस्याऽनिष्टत्वादेवेत्यर्थः । इदमुपलक्षणम्—अविन्दन्नित्यादौ सिजभ्यस्तेति जुसभावोपि फलम् । ननु झेरित्यत्रेकारोऽविवक्षितः, तथा च ङितो झस्य जुसिति वाक्यार्थः, इतश्चेतीकारलोपे झमात्रस्यैव ङित्त्वादिसम्भवात् , तथा च प्रत्यैषिषन्नविन्दन्नित्यादौ न दोषः,झत्वस्याल्वृत्तित्वेन स्थानिवद्भावेनानेतुमशक्यत्वात् । एवञ्च पञ्चमीसमासाश्रयो-

**इति पक्षे त्विति** । तुनाऽस्यानित्यत्वं सूचितम् । 'प्रविगणय्ये'ति भाष्योदाहरणमपि तदनित्यत्व एव सङ्गच्छते । अत एव हे 'गौ'रित्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः । 'पूर्वस्मान्निमित्तत्वेनाऽऽश्रिता'दिति व्याख्याने तु न मानम् ।

केचित्तु—पूर्वस्माद्व्यवहितपरस्यैव कार्ये स्थानिवत्त्वम्, 'प्रविगणय्ये'त्यादौ तु

ॐ अभिनव-चन्द्रिका ॐ

**अव्यवहितपरस्यैवेति**। न च 'भवती'त्यादौ पञ्चमीसमासेन गुणस्य स्थानिवद्भावादेवादेशो न

ॐ चिदस्थिमाला ॐ

कौमुद्याशय' इत्यन्तो भिन्नो ग्रन्थः, 'पक्षे'त्वित्यादिर्भिन्नः । **इतिहेतौ** । नियमसूत्राणां यतो निषेधमुखेनैव प्रवृत्तिरिति निष्कृष्टपक्षोऽतो 'रषाभ्या'मित्येवात्र णत्वमित्याद्यार्थः । तेषां विधिमुखेन प्रवृत्तिरिति पक्षे तु—'अड्व्यवाये' इत्येवात्र णत्वमिति द्वितीयार्थः । अनित्यत्वाशयेन यथाश्रुतं मूलयोजनं तु न, अनित्यत्वोक्तेरत्रानुपयोगात्, टीकाग्रन्थासङ्गतेश्च" इति **शास्त्री**, तन्न; टीकाग्रन्थस्यायुक्तत्वात्, तस्यासार्वत्रिकत्वसूचनरूपोपयोगस्य सत्त्वात्, खण्डशोऽध्याहारादिनाऽप्रक्रान्तार्थकल्पनया व्याख्याने गौरवात्, अक्षरमर्यादया तथाऽप्रतीतेः, विधिमुखेनैव प्रवृत्तेः सिद्धान्तत्वेन वैपरीत्योक्तेर्भाष्यादिविरुद्धत्वात्, 'पुष्णाती'त्याद्यर्थं तत्र पग्रहणावश्यकत्वेनोत्तरमात्रार्थत्वे द्वन्द्वासम्भवेन निर्देशासङ्गत्यापत्त्या 'रषाभ्या'मित्यत्र निर्दिष्टविकल्परिभाषोपस्थितौ मानाभावेन तथा सत्यतिप्रसङ्गापत्त्या तथा व्याख्याने फलाभावेन 'व्यवायेपी'त्यस्यावश्यकत्वेनाद्यार्थासम्भवाच्च । एतेन—"ष्टुत्वाविषयत्वप्रदर्शकं पूर्वस्मादपीति निर्दिष्टविकल्परिभाषोपस्थिताविहैव सूत्रे पग्रहणं लिङ्गम्, अतएव व्यवायेपीति न कार्यम्-"इत्यपि तदुक्तमपास्तम्, उक्तयुक्तेः । व्यवायेपीति योगविभागेन नियमप्रतिपादकभाष्यविरोधापत्तेश्चेतिदिक् । तस्मादनित्यत्वाशयकं मूलं, तदाह—**तुनेति** । अस्य=पक्षस्य । 'अत्र सेड्ग्रहणं मान'मिति **दीक्षितादयस्तत्रेति** ध्वनयन्नाह—**प्रवीति** । **इतीति** । एतत्सजातीयप्रगमय्येतिभाष्योदाहरणेत्यर्थः। **तदिति** । पञ्चमीसमासेत्यर्थः । **अपिसमुच्चेयमेवाह—अत एवेति** । तदनित्यत्वादेवेत्यर्थः । तत्र कैयटोक्तसमाधानं दूषयति—**पूर्वस्मादिति** । स्पष्टञ्चेदमुद्योते, भावप्रकाशे च ।

मूलासङ्गतिमाह—**केचित्त्विति** । बेभिदितेत्यादेः, प्रत्यैषिषन्नित्यादेः, यूष्ण इत्यादेश्च सङ्ग्राहकमाह—**पूर्वस्मादिति** । लिङ्गादचः पूर्वत्वस्य व्यवहिताव्यवहितसाधारणत्वेपि ततः परत्वस्याव्यवहितस्यैव ग्रहणं, निर्दिष्टांशबाधे मानाभावात्, एवञ्च 'हे गौः' इत्यत्र न दोष इति भावः । नन्वेवमप्याद्यस्य का गतिरत आह—**प्रवीति** ।

ॐ ज्योत्स्ना ॐ

वाक्यशेषस्य कल्पनवत्क्वचित्स्थानिवन्न भवतीत्यस्यापि कल्पनात् स्वाश्रयकार्यनिवृत्तेः सिद्धौ विधिग्रहणं योगविभागेन '**पूर्वस्यैव विधौ, न पूर्वपरयोर्विधौ स्थानिवद्भाव**' इत्यर्थलाभार्थं, तेन ईयतुरित्यादौ सवर्णदीर्घादि नेत्याहुः । भाष्यमते तु दीर्घविधौ स्थानिवत्त्वनिषेधादिह दीर्घो वारणीयः । त्रैपादिकस्यैव दीर्घस्य तत्र ग्रहणमित्यत्र तु न मानमित्यन्यत्र विस्तरः। नचैवमप्यारतीत्यादावाद्गुणो-वारयितुमशक्यः, तत्र कृते पूर्वान्तवद्भावादभ्याससञ्ज्ञाया'मत आदे'रिति दीर्घे रूपसिद्धेरिति दिक्।

**अनित्यत्वं सूचितमिति** । अनित्यत्वे ज्ञापकन्तु 'निष्ठायां सेटी'ति सूत्रे सेड्ग्रहणम्, तद्धि कालावधारणार्थम्—अक्रियमाणे हि तस्मिन्कारित इति स्थिते इण्गिलोपयोः प्राप्तयोर्नित्यत्वाण्गिलोपे एकदेशविकृतस्यानन्यत्वात्कृतवृद्धेः करोतिग्रहणेन ग्रहणादेकाच इति इट्प्रतिषेधः स्यात्, सेड्ग्रहणे-लिटि कृते णेर्लोपो विधीयते, तत्र पञ्चमीसमासे णेः स्थानिवद्भावान्निषेधाप्राप्तेरिट् सिद्ध इति व्यर्थं सेड्ग्रहणं—पञ्चमीसमासस्यानित्यत्वञ्च ज्ञापयतीति 'निष्ठायां सेटी'ति सूत्रे प्रदीपग्रन्थे स्पष्टम्। **सङ्गच्छत इति** । पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावे तु लघुपूर्वात्परस्य णेरभावादयादेशो न स्यादिति भाष्योदाहरणासङ्गतिरिति भावः । **इति व्याख्याने तु न मानमिति** । अत्र यद्वक्तव्यं

ॐ विषमपदविवृतिः ॐ

दाहरणं मृग्यमिति चेत्सत्यम् । पञ्चमीसमासानित्यत्वे ज्ञापकमाह—**प्रविगणय्येति** । निष्ठायां

स्थानिवद्भावलब्धधकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति तदनित्यत्वे न तन्निर्वाहः ।

**पूर्वत्रासिद्धे नेति** । अतिदेशदृष्टया त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलन्त्वतिदेशान्तराणां वनिघटितानां त्रिपाद्यां प्रवृत्तिबोधनम् । अत एव 'अमी' 'क्षीरपेणे'त्यादौ मीत्वणत्वे भवतः । अत्रैकारस्यादस्सम्बन्धित्वं, प इत्यस्यैकाजुत्तरपदत्वञ्चान्तरङ्गत्वाद्बोधनम् ।

**तस्य दोष इति** । इदं वाचनिकमेव । 'न मु ने' इति सूत्रे 'न' इति योगविभागस्तु भाष्ये न दृश्यते । अत एव सिद्धकाण्डं वार्तिककृताऽऽरब्धं, 'नलोपः सु'विति सूत्रञ्च सूत्रकृता ।

ॐ अभिनव-चन्द्रिका ॐ

स्यादिति वाच्यं, स्वविधौ पञ्चमीसमासेनापि स्थानिवद्भावाप्रवृत्तेः । अत्राव्यवहितपरत्वं श्रूयमाणं बोध्यम् । **आहुरिति** । अत्रारुचिबीजन्तु—'प्रविगणय्ये'ति भाष्यासङ्गतिः, स्थानिभूतादचः पूर्वत्वेनदृष्ट—णकाराव्यवहितोत्तरत्वस्य श्रूयमाणस्यणौसत्त्वेन अल्लोपस्य स्थानिवद्भावात्तेन व्यवायाल्लघुपूर्वणकाराव्यवहितोत्तरत्वस्य णावभावेन णेरयादेशानापत्तेः । **अमी क्षीरपणेति सिद्धमिति** । 'अन्तादिवच्चे'ति सूत्रं न कर्त्तव्य'मितिमते 'स्थानिवदादेशोऽनल्विधा'

ॐ चिदस्थिमाला ॐ

केचिदित्यरुचिर्बीजन्तु—पूर्वसात्रित्युक्तेः सिद्धान्तत्वस्य भावप्रकाशादौ स्पष्टत्वेऽपि सन्नेहाये व्यपदेशित्वाप्रवृत्तिः, स्वविधौ स्थानिवत्त्वाप्रवृत्तिश्चेति तदर्थमनित्यत्वमेव शरणमिति । **अतिदेशेति** । 'अचः परे'तीत्यर्थः । पूर्वसूत्रन्तु लिङ्गात्तत्र प्रवर्तत एवेत्यन्यत्र स्पष्टम् । अनुवादत्वस्य सफलत्वनियतत्वादाह—**तत्फलन्त्विति** ।

तद्घटितनिराम्नायाह—**वतीति** । अतएव=अन्यत्र तत्प्रवर्तनादेव । **एकाजुत्तरेति** ।—कर्मधारयः । स्थानिवत्त्वं तु न, आद्यस्याशास्त्रीयत्वात्, अन्त्ये एकाच्त्वस्य स्वतः सत्त्वेप्युत्तरपदत्वस्याशास्त्रीयत्वात्, पक्षद्वयेऽपि वर्णसमुदाययोः स्थानित्वेन तद्धर्मत्वाच्चेति भावः । 'योगविभागेनैतदपि सिद्ध'मिति प्राचोक्तं खण्डयन् योगविभागस्य भाष्यासम्मतत्वमाह—**न मु ने इतीति** । अस्य वाचनिकत्वादेवेत्यर्थः । 'अतएवे'त्यस्योभयत्रान्वयः ।

वार्तिकासम्मतत्वमाह—**सिद्धेति** । सूत्रासम्मतत्वमाह—**नलोप इति** । 'आरब्ध'मित्यस्यानुषङ्गः,

ॐ ज्योत्स्ना ॐ

तदन्यत्रोक्तम् । **इदं वाचनिकमिति** । यथा तु—'पूर्वत्रासिद्धे न स्थानिव'दित्यस्यैवास्यापि न वाचनिकत्वं तथा 'न पदान्त'सूत्र एव निरूपितमस्माभिः ।

ॐ विषमपदविवृतिः ॐ

सेट्ग्रहणमप्यत्र ज्ञापकं बोध्यम्, तद्धि कारितमित्यादाविटि कृत एव णिलोपो यथा स्यान्न ततः ततः प्रागित्येतदर्थम्, पूर्वं णिलोपे हि 'एका'जिति निषेधादिण्न स्यात् । पञ्चमीसमासस्य नित्यत्वे हि पूर्वं णिलोपेपि तस्य स्थानिवद्भावादेवेण्णिषेधाप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव । **केचिदित्यादिः**—आहुरित्यन्तोऽपपाठः । स्थानिवद्भावलब्धाकारस्यैव प्रविगणय्येत्यादौ व्यपदेशिवद्भावेन लघुपूर्वत्वस्वीकारे प्रचिकीर्षेत्यादावयादेशापत्तेः । अन्तरङ्गपरिभाषावारणायाह—**वतिघटितेति** । **इदमयुक्तम्** ।

१ ससहाये व्यपदेशिवद्भावाऽप्रवृत्त्या तमाश्रित्यप्रवृत्तं शेखरोक्तं **केचित्तुमतमयुक्तमित्याशयः** । परे तु घटितत्वघटकत्वधर्मयोरेव व्यपदेशिवद्भावेनानयनं, न तु लघुपूर्वत्वादिधर्माणां, तथात्वे हि—दधिशब्देऽपि व्यपदेशिवद्भावादिकारादिरूपेऽचि—इगव्यवहितपूर्वत्वस्यानयने सवर्णदीर्घयणादेरापत्तिरतः केचित्तुमतमयुक्तं, पञ्चमीसमासस्यानित्यत्वमेवास्थेयमिति **गौडाः** ।

२ अदश्शब्दसम्बन्धित्वं दकारस्यैव विशेषणत्वेनैकारस्येति तु वक्तुमशक्यम्, अमुमाचष्टे—अदयतीत्यत्र ण्यन्तस्याऽदीत्यस्य श्निमित्तके गुणे एकारस्यादश्शब्दसम्बन्धित्वेन ईत्वापत्तेः । अमी इत्यत्र तु पूर्वान्तवत्त्वेनैकारस्यादश्शब्दसम्बन्धित्वमुपपादनीयमिति **श्रीत्रिपाठिचरणानुसारिणो गौडा व्याचक्षते** ।

**प्रकारार्थमिति** । प्रकारः सादृश्यं, तच्च सुप्त्वेन । 'मांस्पचनी'त्यादावपि 'न लुमते'तिनिषेधानित्यत्वाच्छसादिपरत्वं बोद्धयम् । शब्दत्वेन सादृश्यमित्यन्ये, तन्न; 'वा शोकष्यञ्रोगेष्वि'त्यस्य वैयर्थ्यापत्तेः, 'नासिकाया यत्तस्क्षुद्रेषु न'सिति भाष्य-पठितवार्त्तिकस्य वैयर्थ्यापत्तेश्च । 'आसन्यं प्राणमूचु'रित्यत्रापि तद्वदेव शसादिपरत्वम् ।

अत्र 'सुप्रभृतिष्वि'ति वाच्ये 'शस्प्रभृतिषु' इत्युक्त्याऽन्यत्र क चिदेव प्रवृत्तिर्बोध्यते । अत एव पद्दन्निशां ग्रहणं चरितार्थम् । तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यं स्पष्टमेव ।

प्रकारार्थत्वे प्रमाणमाह—**भाष्ये इति** । तत्र हि—"शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृति-ष्वपि दृश्यते—'शलादोषणी ककुदोषणी याचते महादेवः'—"इत्युक्तम् । आग्नस्याग्निगुप्रैषे पठ्यमानस्य शलाकाकारे दोषणी इत्यर्थः । छान्दसः कादिलोपः ।

एतेन 'दोषे'त्यकारान्तस्य दूषणवाचिनो दोषन्नादेशः—इत्यपास्तम् ।

**तेन पद्भिरिति** । न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक्

॥ अभिनव-चन्द्रिका ॥

विधस्य त्रिपाद्यामप्रवृत्त्या तेनानयोः सिद्धिर्बोध्या । **वैयर्थ्यापत्तेरिति** । विरुद्धोऽर्थो यस्या-सौ व्यर्थः, तस्य भावो वैयर्थ्यम् । एवञ्च तस्य–विरुद्धार्थत्वापत्तेरित्यर्थः । 'नासिक्यं नगरं'–'नासिक्यो वर्ण'–इत्यादौ नसादेशवारणाय कृतम्—'अवर्णनगरयो'रितिवार्तिकं,—

॥ चिदस्थिमाला ॥

'अत्राप्रतिषिद्ध'मितिन्यायेनाद्यस्य, तद्विवरणपरतया वार्तिकस्य च निर्वाहादिदमन्ते उक्तम् । भेदनिरासायाह—**सादृश्यमिति** । प्राचोक्तं खण्डयति—**शब्दत्वेनेति** । तदनित्यत्वानाश्रयणाजलाघवादिति तद्भावः ।

अत एव प्रत्ययत्वेनापि न सादृश्यमिति ध्वनयन्नाह—**आसन्यमिति** । तद्वदेव=निषेधानित्यत्वादेव । एवं सति प्राप्तातिप्रसङ्गनिरासाय तात्पर्यभूतसिद्धान्तमाह—**अत्रेति** । पद्दन्निसत्रेत्यर्थः । अन्यत्र=सुटि । अत एव=तत्रतत्प्रवृत्तेः काचित्कत्वादेव । अन्यथाह–**तेषामिति** । तत्र तेषु । मात्रे–कात्स्न्र्ये । तस्या=व्यवस्थायाः । **तदिति** । तेषां ग्रहणेत्यर्थः,तत्र हि=भाष्ये हि । उक्तावन्वयः । **अग्निगिवति** । होतृकर्तृकेऽग्निगुं प्रति प्रैषे इत्यर्थः । भिन्ने पदे । आदिना विभक्तिः । एतेन=भाष्यविरोधेन । 'दोषेत्यकारान्तस्ये' ति पाठः । **पादादीति**–षष्ठीतत्पुरुषः ।

॥ ज्योत्स्ना ॥

**तद्वदेवेति** । 'न लुमते'ति निषेधानित्यत्वादेवेत्यर्थः । **तस्या असम्भवेनेति** । व्यवस्थार्थताया असम्भवेनेत्यर्थः । **कादिलोप इति** । 'शलादोषणी'इत्यत्र 'शलाकाकारदोषणी'ति प्राप्ते 'काकार' इत्यस्य कादेर्वर्णसमुदायस्य लोप इत्यर्थः । **भाष्यरीत्यानादेशत्वादिति** । किन्तु पदादीनां प्रकृत्य-न्तरत्वमेवेति भावः । नन्वेवं सूत्रवैयर्थ्यं प्राप्नोतीत्यत आह—**तत्त्वेऽपीति** । अनादेशत्वेऽपीत्यर्थः ।

**प्रकारार्थत्वस्यावश्यकत्वादिति** । एतेन पादहृदयशब्दाभ्यां सौ तन्निमित्तके पद्धृदादेशे सन्निपातपरिभाषया लोपलुकौ न स्यातामिति 'पद्भिः'–'स्वान्तं हृन्मानसम्मनः'–इत्यसङ्गतिरित्य-

॥ विषमपदविवृतिः ॥

न लुमतेति निषेधानित्यत्वेन सुप्परत्वमादाय लन्मतेपि सूत्रेण सिद्धिसम्भवात् । तदनित्यत्वस्यागतिक-गतित्ववत्—शब्दत्वेन सादृश्यमादाय पदादि प्रवृत्तिरपि अगतिकगतिः । **भाष्यपठितेति** । इद-मप्ययुक्तम्—नासिकाशब्दप्रयोगाभावाय तदावश्यकत्वात् । **तस्या इति** । व्यवस्थाया इत्यर्थः । 'न लुमते'ति निषेधाऽनित्यत्वेन सर्वत्र सुप्परत्वादिति भावः । पादयतीत्यादौ पद्भाववारणाय

पदादिवचनन्तत्र व्यर्थं, न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानसनर्थादेशस्याप्यर्थबोधनात्, अत एव नसाद्यादेशानां कोशेऽनुवन्धनम् इति वाच्यं, पदादीनां भाष्यरीत्याऽनादेशत्वात्। तत्त्वेपि–'तृज्वत्क्रोष्टु'रिति–वद्वचस्यार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थम्प्रकारार्थत्वस्यावश्यकत्वात्। स्पष्टञ्चेदं 'वा शोके'ति सूत्रे मूले।

※ अभिनव-चन्द्रिका ※

परिमुखादौ पाठेन 'नासिक्या वर्णा' इति, सङ्काशादिषु पाठात्–'नासिक्यं नगर'मिति च साधयित्वा-प्रत्याख्यानम्। शब्दत्वेन सादृश्ये तु-प्रत्याख्यानकल्पे 'नासिक्यं' 'नास्य'मिति वर्णे रूपद्वयम्, एवं नगरेऽपि 'नासिक्यं' 'नास्य'मिति रूपद्वयम्। आरम्भपक्षे तु नसादेशाभावान्नगरवर्णयोर्नासिक्यमित्येकमेव रूपं भवतीति–फलभेदेन प्रत्याख्यानाऽसङ्गत्यापत्त्या विरुद्धार्थत्वापत्तिः। मम तु सुप्त्वेन सादृश्यां'त्वलुमते'ति निषेधेन नसादेशाप्राप्त्याऽऽरम्भप्रत्याख्यानयोः 'नासिक्य'मित्येकमेव रूपमिति–फलभेदाभावान्न प्रत्याख्यानासङ्गतिः। तेन 'नासिकाया न'सितिवार्तिकस्य स्थानिघटितस्यासाधुत्वनिबोधनायावश्यकत्वमिति वैयर्थ्याभावादिदमसङ्गतमित्यपास्तम्।

स्यादेतत्—'स्वान्तं हृन्मानसं मनः' 'पदङ्घ्रिश्चरणोऽस्त्रिया'मित्यादौ हृत्पदशब्दादेरनुकरणत्वेन शब्दस्वरूपपरतयाऽर्थपरत्वाभावेन—स्वरूपतो हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितहृदयशब्दस्य, एवं-स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितपादशब्दस्य च पदन्निति सूत्रेण पदाद्यादेशविधानेन प्रकृते कोशे हृत्पदादेशयोरप्राप्त्या 'तेन–'स्वान्तं हृन्मानसं मनः' 'पदङ्घ्रिश्चरणोऽस्त्रिया'मित्यादि सङ्गच्छते' इतिकौमुदी असङ्गता। 'एतेन 'स्वान्तं हृत्', 'पदङ्घ्रि'रित्यादौ—हृत्पदादिशब्दे अर्थस्य प्रकारीभूय भानात्—तत्र कोशेऽपि चरणविषयकबोधतात्पर्येणोच्चरितत्वं, हृदयविषयकबोधतात्पर्येणोच्चरितत्वञ्चास्त्येवेति कौमुदी सङ्गतैवेति परास्तम्। स्वरूपतश्चरणत्वप्रकारकचरणत्वमुख्यविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य, एवं–हृदयत्वप्रकारकहृदयमुख्यविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य चाऽभावेनादेशाप्रवृत्तेः कौमुद्यसङ्गत्यापत्तेस्तदवस्थत्वादित्यत आह–

※ चिदस्थिमाला ※

तत्र=कोशे। नन्वेवं न तत्र प्रकारार्थत्वोपयोगोऽत आह—तत्त्वेऽपीति। अनादेशत्वेन भिन्नत्वेऽपीत्यर्थः। अस्य=पदन्नित्यस्य। मूले=कौमुद्याम्।

※ ज्योत्स्ना ※

पास्तम्। वस्तुतस्त्वादेशत्ववादिमतेऽपि न दोषः, सुप्त्वेन सादृश्यग्रहणे मांस्पचन्यासन्ययोर्दोषप्रसङ्गान्नलुमतेति निषेधानित्यत्वकल्पने गौरवाच्छब्दत्वेन सादृश्यग्रहणस्य व्यवस्थापनीयत्वात्।

न च 'वा शोकष्यञ्रोगे'ष्वित्यस्य वैयर्थ्यम्, एतेषु स्थान्यादेशयोः प्रयोगो हृदयस्यैव नान्येषामिति नियमार्थत्वात्। एवं 'नासिकाया यत्तस्क्षुद्रे'ष्वित्यस्यापि न वैयर्थ्यम्, एतेषु नासिकाया एव नान्येषामन्ये इति तत्रापि नियमार्थत्वस्य वक्तव्यत्वात्। एवञ्च प्रकृत्यन्तरवादिमतेऽपि शब्दत्वेनैव सादृश्यं ग्राह्यं, तत्तद्वचनवैयर्थ्यस्योक्तरीत्यैव प्रतिसमाधेयत्वात्। न च 'सुप्रभृति'ष्वित्येव वक्तव्ये 'शस्प्रभृति'ष्वित्यस्य वैयर्थ्यशङ्कापि, हलन्तेभ्योऽसृगादिभ्योऽवसाने लुग्विधेः सर्वतो बलवत्त्वात्तत्रकृते आदेशस्य प्रकृत्यन्तरस्य वा प्रयोगाभावार्थत्वस्य सत्त्वादित्याहुः।

※ विषमपदविवृतिः ※

सुप्येव पदादय इति व्यवस्थार्थं तच्चारितार्थ्यादयुक्तमेतत्। नन्वेवं सूत्रवैयर्थ्यं प्राप्नोतीत्यत आह–तत्त्वेपीति। अनादेशत्वेपीत्यर्थः। आवश्यकत्वादिति। एतेन पादशब्दात् हृदयशब्दात्सौ तन्निमित्तके पद्हृदादेशे सन्निपातपरिभाषया लोपलुकौ न स्यातामित्यपास्तम्। ननु कोशे पद्–हृदादिवत् नस्मासादयोपि कुतो नोक्ता इति चेन्न, पदादीनामिव तेषां सर्वनामस्थाने प्रयोगाभावादित्यवेहि।

कोशे शब्दा अर्थपरा एव । शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव । एवञ्च—'विष्णुर्नारायण' इत्यादौ विष्णुपदार्थोऽभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे विस्तरेण निरूपितम् । 'एतत्पदममुकवाचक'-मिति शक्तिग्रहस्तु—स्वस्वप्रसिद्धमादाय तत्तत्पुरुषस्यानियतः पश्चान्मनसैव । 'अघ्न्ये देवि

❀ अभिनव-चन्द्रिका ❀

**कोशे शब्दा अर्थपरा एवेति** । **अनुमानेनेति** । 'इदं विष्णुपदं नारायणत्वावच्छिन्ननिरूपितशक्तिमत्, नारायणपदघटितप्रघट्टकघटकत्व'दित्यनेनेत्यर्थः । अगृहीतशक्तिकपदघटितप्रघट्टकघटकेषु कोशा-

❀ चिदस्थिमाला ❀

वक्ष्यमाणप्राचीनरीतिखण्डनाय सिद्धान्तमाह—**कोशे** इत्यादि । नन्वेवं तस्य शक्तिग्राहकत्व-नियमस्य भङ्गोऽत आह—**शक्तीति** । एवञ्च=तत्र तेषामर्थपरत्वे च । प्रसिद्धाऽन्यथाशक्तिग्रहविरोधं परिहरति—**एतदिति** । प्रसिद्धम्-अर्थम् । नन्वेवं श्रुतिविरोधोऽत आह—**अघ्न्ये इति** । हेतुहेतुम-

❀ ज्योत्स्ना ❀

ननु कोशपठितशब्दानां लोकप्रसिद्धार्थानुकरणत्वेन शब्दपरत्वादभिव्यक्तपदार्थन्यायसहकारेण सूत्र-प्रवृत्तेस्तत्रासम्भवात्पदङ्क्रिश्चरणोऽस्त्रियां,स्वान्तं हृन्मानसं मन इत्यनयोः प्रकारार्थप्रयोजनत्वोक्तिरयुक्ते-त्यत आह—**कोशे शब्दा इति । अर्थपरा एवेति** । अनुकरणत्वे प्रमाणाभावादिति भावः । ननु तत्त-दर्थनिरूपितशक्तिग्रहस्य कोशाधीनत्वाच्छक्तिग्रहमन्तरेणार्थपरत्वासम्भवात्कोशपठितशब्दानामर्थपरत्वं नरविषाणसदृशमत आह—**शक्तिग्रहस्त्विति** । **सामान्यत एवेति** । 'इदं पदमर्थबोधकं, पदत्वात्, गौरितिपदवत्—' इत्येवमित्यर्थः । **इत्यादाविति** । आदिपदात्तृतीयाध्यायतृतीयपादस्थोद्गीथाधिकरण-शङ्करभगवत्पादभाष्यानुगुण्यपरिग्रहः । तत्रहि—सामानाधिकरण्यं चतुर्धा—'अध्यासेनापवादेनै-कत्वेन विशेषणत्वेन चेत्युक्त्वा, अध्यासेन यथा—इयं प्रतिमा विष्णुरिति । अपवादेन—इदं रजतमिति, एकत्वेन—द्विजोत्तमो ब्राह्मणो भूदेव इति, विशेषणत्वेन—नीलमुत्पलमित्युदाहृतम् । अत्रैकत्वोदाहर-णस्य पर्यायरूपत्वात्पर्यायशब्देषु चैकेनैव विवक्षितार्थसमर्पणात्तदितरस्यानर्थक्यात्सहप्रयोगाभावा-ल्लौकिकवाक्यत्वाभावात्कोशरूपत्वम् । कोशपठितशब्दानां शब्दपरत्वेत्वेकत्वेन सामानाधिकरण्योक्ते-र्विरोध इति भावः । भाष्यसंमतिमप्यत्राह—**अघ्न्ये देवीत्यादि** । अघ्न्यापदार्थाभिन्नो देवीपदार्थ इत्यर्थ

❀ विषमपदविवृतिः ❀

ननु कोशे शब्दानां लोकप्रसिद्धशब्दानुकरणत्वेन शब्दपरत्वादभिव्यक्तपदार्था ये इति न्यायेन पदाद्यप्रवृत्तिसम्भवात्पदङ्क्रिः स्वान्तं हृदित्यादेः प्रकारार्थत्वप्रयोजनत्वोक्तिः कौमुद्यामसङ्गतेत्यत आह—**कोशे शब्दा इति । अर्थपरा एवेति** । अनुकरणत्वे प्रमाणाभावादिति भावः । ननु तत्तदर्थे शक्ति-ग्रहस्य कोशाधीनत्वाच्छक्तिग्रहमन्तरेणार्थपरत्वासम्भवात्कोशस्थशब्दानामर्थपरत्वं शशविषाणसदृशमत आह—**शक्तिग्रहस्त्विति** । **सामान्यत इति** । अर्थविशेषापुरस्कारेणेत्यर्थः । 'इदं पदमर्थबोधकं, पदत्वात्, गोपदव'दित्यनुमानं बोध्यम् । **एवञ्चेति** । अनेनानुमानेन सामान्यतो विष्णुपदार्थोस्तीति ज्ञाने विष्णुपदश्रवणेन तत्स्मरणसत्त्वे इत्यर्थः । **इति क्रमेणेति** । कोशस्थं पर्यायेष्वेकं पदं विशिष्यार्थ-बोधकं, विदितशक्तिकैकपदम्पुरुषं प्रत्येव कोशस्य शक्तिग्राहकत्वादत आह—**स्वस्वप्रसिद्धेति** ।

❀ वरवर्णिनी ❀

**अर्थपरा एवेति** । अर्थविशिष्टशब्दपराः, नत्वनुकरणानीति भावः । नन्वेवं तदर्थबोधाप्रसङ्गः, **कोशार्थबोधात्पूर्वं** शक्तिग्रहासम्भवादत आह—**शक्तिग्रहस्त्विति** । 'इमानि विष्ण्वादिपदान्यर्थबोध-कानि, पदत्वात्, मदुच्चरितघटादिपदव'दित्येवमनुमानेनेत्यर्थः । एवञ्च विष्णुपदार्थाभिन्नो नारायणपदार्थ

सरस्वति इडे काव्ये विहव्ये–एतानि तेऽघ्न्ये नामानी'त्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधः। अत एव 'नामन्त्रिते समानाधिकरणे' इतिसूत्रभाष्ये 'सामान्यवचन'मित्यस्य इदं प्रत्युदाहरणन्दत्तम्; अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव। एकशेषस्तु न, तथा सति तत्तच्छब्दस्वरूपस्य सम्यग्बोधानापत्तेः। अनेकशब्दानां स्वरूपबोधनपूर्वकमेकार्थबोधने कोशतात्पर्यात्।

### ❀ अभिनव-चन्द्रिका ❀

च्छक्तिग्रहो न भवतीति–पदत्वहेतुकानुमानेन अर्थवाचकत्वग्रहस्तु–अर्थत्वप्रकारकार्थविशेष्यकबोधमेव जनयति, नतु स्वरूपतः शक्यतावच्छेदकधर्मप्रकारकबोधमिति तदनुमानं विफलम्। न चार्थत्वस्योपलक्षणत्वात्–तद्धर्मप्रकारकशाब्दबोधस्यानुदयेऽप्यर्थत्वेन रूपेण तत्तच्छक्यतावच्छेदकधर्मप्रकारकमेव शक्तिज्ञानं भवतीति चिरुक्तहेतुपर्यन्तानुधावनं व्यर्थमिति वाच्यं, विशेषधर्मप्रकारकशक्तिज्ञानाभावदशायामुपलक्षणीभूतधर्मप्रकारकशब्दबोधस्य 'तमानये'त्यनन्तरं 'कमानयामी'ति प्रश्नदर्शनेनानुभवविरुद्धत्वात्। विशेषधर्मप्रकारकशक्तिज्ञानस्यानेनानुमानेनासम्भवात्—अर्थत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य, अर्थत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य च सत्त्वेऽपि स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य, स्वरूपेण हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्यचाभावेनादेशाप्राप्त्या कौमुद्यसङ्गत्यापत्तेस्तदवस्थत्वाच्च। तस्मात्पूर्वोक्तानुमानेन पर्यायघटितप्रघट्टकघटकशक्तिग्रहवतः पुरुषस्य स्वरूपतस्तद्धर्मप्रकारकं शक्तिज्ञानं जायत इति सर्वं समञ्जसम्।

### ❀ चिदस्थिमाला ❀

द्भावेनान्वय इत्याह—यत इति। इदमेव भाष्यसम्मतमित्याह—अत एवेति। तथा बोधादेवेत्यर्थः। अन्यथा=तथाबोधानङ्गीकारेण भेदेन यथाश्रुतप्रतीयमानस्य इडेऽघ्न्ये तव एतानि अघ्न्ये इत्यादीनि शब्दरूपाणि नामानीत्यर्थस्याङ्गीकारे। अपिना–सामान्यवचनत्वम्। तथा च व्यङ्गविकलतेति भावः। नन्वेवं सर्वत्र 'विरूपाणामपी'त्येकशेषापत्तिरत आह—एकेति। इष्टापत्तावाह—अनेकेति। अत्र सूत्रसम्मति-

### ❀ विषमपदविवृतिः ❀

तत्तत्पुरुषस्येति। कश्चित्पुरुषं प्रतिविष्णुपदमर्थविशेषे गृहीतशक्तिकमन्यं प्रति नारायणपदन्तथेति भावः। अत्र भाष्यं प्रमाणयति—अत एवेति। इदमुद्गीथाधिकरणस्थशङ्करभाष्योपलक्षणं,—तत्र हि समानाधिकरण्यं चतुर्धाऽध्यासेनापवादेनैकत्वेन विशेषणत्वेनेति। अध्यासेन यथा–इयं प्रतिमा विष्णुरिति, अपवादेन यथा—नेदं रजतमिति, एकत्वेन यथा—द्विजोत्तमो ब्राह्मणो भूदेव इति, विशेषणत्वेन यथा—नीलमुत्पलमित्युदाहृतम्। तत्रैकत्वोदाहरणे उक्तरीतिः स्पष्टैव।

कोशतात्पर्यादिति। तथा च–"भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः। कृतोऽत्र भिन्न-

### ❀ वरवर्णिनी ❀

इत्येवं बोधः, पश्चाच्च 'नारायणपदं विष्णुत्वावच्छिन्नवाचकं, विष्णुत्वावच्छिन्नवाचकविष्णुपदार्थाभिन्नार्थवाचकत्वात्, यत्पदं यदर्थवाचकपदार्थाभिन्नार्थवाचकन्तत्तदर्थवाचकं–मदुच्चरितकलशपदव'दिति विशिष्यानुमानेन–इमानि विष्ण्वादिपदानि नारायणाद्यर्थवाचकानीति विशिष्य शक्तिग्रहः। कोशस्थतत्तदर्थाभिन्नार्थवाचकपदेष्वन्यतमे कस्मिंश्चित्पदे पूर्वं शक्तिग्रहस्तु वृद्धव्यवहारादेव, स एव विशिष्यानुमितेः प्रयोजकः। इयांस्तु विशेषः–वृद्धव्यवहारादिना कस्य चिद्विष्णुपदे पूर्वं शक्तिग्रहः, कस्य चिन्नारायणपदे, कस्य चिच्चवैकुण्ठपदे। एवञ्च यस्य पूर्वं नारायणपदे शक्तिग्रहस्तस्य 'विष्णुपदं नारायणत्वावच्छिन्नवाचकं, नारायणत्वावच्छिन्नवाचकनारायणपदार्थाऽभिन्नार्थवाचकत्वात्'—इत्येवं विशिष्यानुमानं बोध्यम्। एवमेव सर्वत्रोहनीयं, तदेतदाह–एतत्पदमिति। ननु पर्यायशब्दस्वरूपप्रतिपादनपरे श्रुतिविशेषे यथा पदानां स्वरूपपरत्वं, तथा कोशेऽप्यावश्यकमत आह—अघ्न्ये देवीति।

अत एव 'यत्तदेतेभ्य' इत्यादौ पाणिनिनैकशेषो न कृतः।

एतेन "-कोशे शब्दानां शब्दपरता, अत एवैकशेषो न, अर्थपरत्वन्तु न सम्भवति, इतः पूर्वं शक्तिग्रहाभावात्। 'एते शब्दा एकार्था' इति बोधः। एवञ्चात्र प्रकारार्थत्वा-

ॐ अभिनव-चन्द्रिका ॐ

**बोधानापत्तेरिति**। वस्तुतस्तु-एकरूपावच्छिन्नसंसर्गेण—एकरूपावच्छिन्ने एकरूपावच्छिन्नस्या-ऽन्वयबोधेच्छारूपसहविवक्षायाः कोशेऽभावादेव एकशेषाप्रवृत्तिः । **एकशेषो न कृत इति**। वस्तुतस्तु 'यत्तदेते'त्यनुकरणत्वेन शब्दस्वरूपपरतया'त्यदादीनि सर्वैर्नित्य'मित्यनेन-प्राधान्येन

ॐ चिदस्थिमाला ॐ

नाह—**अत एवेति**। तथा तात्पर्यादेवेत्यर्थः। प्राचां मतं खण्डयति—**एतेनेति**। उक्तसिद्धान्तविरोधेने-त्यर्थः। **शब्देति**। वाच्यवाचकयोरभेदोपचारात्प्रसिद्धार्थपदोपस्थितार्थेनाभेदान्वय इति भावः। अतएव=भिन्नार्थत्वेनाप्रसिरेव। अभेदश्च वाच्यवाचकभावमादाय पर्यवस्यतीति कोशादेः शक्तिग्राहकतापि नासङ्गते-त्याह-**एते इति**। शास्त्रस्य तु न पदपरेषु प्रवृत्तिः, 'उभा'दित्यादिनिर्देशात्। नचात्र सञ्ज्ञात्वम्, आधुनिक-सङ्केताभावात्। 'अभिव्यक्ते'ति न्यायोऽप्यत्र न, अपदकार्यत्वात्। अत एव सर्वनामसञ्ज्ञायां सञ्ज्ञा-प्रतिषेधो वार्तिककृतारब्धः,तदेतदभिप्रेत्याह-**एवञ्चेति**। शब्दपरत्वे चेत्यर्थः, अत्र=कोशे। **अक्षतावन्वयः**।

ॐ ज्योत्स्ना ॐ

इत्यादिबोधः। आर्थिकार्थमाह—**यत एतानीति**। **कोशतात्पर्यादिति**। तथा च 'भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः। कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते' इति कोशकारैः परिभाषितम्।

अस्यार्थः-भेदस्य=लिङ्गभेदस्य, स्वरूपभेदस्य चाख्यानाय द्वन्द्वैकशेषौ न कृतौ। लिङ्गभेदाख्यानाय-'ह्रादिनी वज्रमस्त्री स्यात्कुलिश'मित्यस्य स्थाने-'कुलिशह्रादिनीवज्रा' इति द्वन्द्वः, 'सहो बलं

ॐ विषमपदविवृतिः ॐ

लिङ्गानामनुक्तानां क्रमादृते॥' इति कोशकारैः परिभाषितम्। अस्यार्थः—भेदस्य=लिङ्गभेदस्य, स्वरूपभेदस्य च आख्यानाय द्वन्द्वैकशेषसङ्करा न कृता इति। लिङ्गभेदाख्यानाय—'ह्रादिनी वज्र-मस्त्री स्यात्कुलिश'मित्यस्य स्थाने कुलिशह्रादिनीवज्रा इति द्वन्द्वः। 'सहो बलं सहामार्गौ' इत्यस्य स्थाने 'सहसी बलमार्गयो'रित्येकशेषः, 'विष्णुर्नारायणः कृष्ण' इत्यादौ भेदाख्यानाय 'विष्णव' इत्येकशेषश्च न कृतः। तथा स्वर्गादिसम्बन्धिनां भेदस्य प्रतिपादनाय सङ्करो न कृतः, किन्तु स्वरादिकाण्डादिरूपेण पृथगेव निर्देशः कृतः। अस्यापवादः—'भिन्नलिङ्गानामनुक्तानां क्रमादृते' इति। भिन्नलिङ्गानामिति-भिन्नस्वरूपाणामुपलक्षणम्। तेन समानलिङ्गानां समानस्वरूपाणां द्वन्द्व एकशेषश्च कृत एव। यथा—'स्वर्गनाकत्रिदिवत्रिदशालया' इति। 'पादा रश्म्यङ्घ्रितुर्यांशा' इति च। 'अनुक्ताना'मित्यनेन -जनयित्री प्रसूर्माता तातस्तु जनकः पिते'ति स्थानान्तरे निर्दिष्टानां द्वन्द्वैकशेषौ कृतावेव—'मातापितरौ पितरा'विति। एतेन 'खं नभः श्रावणो नभा' इत्यत्र 'खश्रावणौ तु नभसी' इति न कृतमिति मञ्जूषोक्तमपास्तम्; 'नभोन्तरिक्षङ्गगनं' 'नभाः श्राव-णिकश्च स' इत्येवं स्वस्वपर्यायेषु पठितत्वात्। 'क्रमादृते' इति—क्रमः प्रस्तावस्तं विना सङ्करो न कृतः। सति प्रस्तावे सङ्कर एव, यथेन्द्रादिप्रस्तावे 'मेरुः सुमेरु'रित्येवमादिरूपेण गिरिवर्गादिभ्य उत्कृष्य सङ्करः कृतः। ननु विष्णुपादार्थाभिन्नो नारायणपदार्थ इत्यादिबोधे एकशेषो न प्राप्नोति, 'इदित' इत्यादिनिर्देशेन सहविवक्षायामेव तत्प्रवृत्तेरिति चेन्न, करीरादिपदार्थानामप्रसिद्धानां मिलितानां प्रसिद्धघटपदार्थेन्वयभेदेनान्वये घटः करीरः कलश इत्यादौ करीरादिपदानामेक-शेषापत्तिरित्याशयात्। **पाणिनिनेति**। 'प्रकृतिवदनुकरण'मित्यतिदेशेन अत्वनुकरणवदेकशेषा-करणादिति भावः।

ऽभावेऽपि न क्षतिः–" इत्यपास्तमिति दिक् ।

**सङ्ख्यादि** । 'सायेभ्य' इति वक्तव्ये पूर्वग्रहणमुत्तरपदे इत्यधिकृतस्य षष्ठ्यन्तत्व-लाभाय । एतेन 'द्यह्नप्रिय' इत्येवतदुदाहरणमित्यपास्तम् ।

---

**❀ अभिनव-चन्द्रिका ❀**

स्वीयसर्वार्थवाचकत्यदादीनामेवैकशेषविधानात्प्रकृते तदप्राप्त्या नैकशेषापत्तिः । **दिगिति** । परन्तु कोशे शब्दानामर्थपरत्वं सर्वत्र न सम्भवति, 'विधुर्विष्णौ चन्द्रमसि' 'अप्येकदन्तहेरम्बलम्बोदर-गजानना' इत्यादावर्थपरत्वस्यासम्भवात् । सर्वत्र शब्दपरत्वमपि न, 'सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः,' इत्यादौ शब्दपरत्वासम्भवात् । कौमुदीयोजनन्त्वेवम्—ननु असर्वविभक्तिकपदानां 'लाजाः पुंभूम्नि चाक्षताः,' 'नासत्यावश्विनौ दस्रौ', 'दारा पुंभूम्नि' इत्यादिवत्पदाद्यादेशस्य 'शसा-दिष्वेव प्रयोग'इत्येव वक्तव्ये सामान्यतः–'पद्भि'रिति करणं, ['स्वान्तं हृन्मानसं मन' इत्यत्र च सर्व-विभक्तिषु प्रयोगो भवतीति कथनं–]'प्रभृतिग्रहणं प्रकारार्थ' मित्यत्र मानमित्येवं तदाशयवर्णनेनैवेत्याहुः।

**❀ चिदस्थिमाला ❀**

एतेन–इन एवारुचेरानन्यमिति उक्तं मूले' इत्यपास्तं, तदाह–**दिगिति** ।

यत्तु 'पूर्वग्रहणमधिकार्थसूचनार्थं, तेन सायमो मलोपः सिध्यती'ति, न्यासकारः, तन्नः 'स्यन्तेर्घञि मायशब्दोऽकारान्तोऽस्मादेव लिङ्गादहरवसानवाचक' इति **हरदत्ताद्युक्तेः** । अत एव 'सायमण्डन-मभित्वरयन्त्य' इत्यादि कविप्रयोगा अपि, तदेतद्ध्वनयन्नाह—**सायेभ्य इतीति** । एतेन=तस्य षष्ठ्यन्तत्वेन । **द्यह्नेति** । उत्तरपदाधिकारबाधे मानाभावात् । एवेन 'द्व्यह्नी'ति मौलव्यवच्छेदः ।

**❀ ज्योत्स्ना ❀**

सहा मार्गे' इत्यस्य स्थाने–'सहसी मार्गबलयो'रिति, 'विष्णुर्नारायणः कृष्ण' इत्यादौ स्वरूप-भेदाख्यानाय 'विष्णव' इत्येकशेषश्चात्र शास्त्रे न कृतः । तथा स्वर्गादिसम्बन्धिनां भेदस्याख्यानाय सङ्करो न कृतः, किन्तु 'स्वरादिकाण्ड' इत्यादि रूपेण पृथङ्निर्देशः कृतः । अस्यापवादः–पर्युदास-न्यायेन–'भिन्नलिङ्गानामनुक्तानां क्रमादृते' इति । भिन्नलिङ्गानामिति—भिन्नस्वरूपाणामुपलक्षणम् । तेन समानलिङ्गानां समानस्वरूपाणां द्वन्द्व एकशेषश्च कृत एव, यथा 'स्वर्गनाकत्रिदिवत्रिदशालया' इति, 'पादा रश्म्यङ्घ्रितुर्यांशा' इति च । 'अनुक्ताना'मित्यनेन–'जनयित्री प्रसूर्माता तातस्तु जनकः पिते'ति स्थानान्तरे निर्दिष्टानां द्वन्द्वैकशेषौ कृतौ-'मातापितरौ पितरा'वितीन्युक्तम्। एतेन 'खं नभः श्रावणो नभा' इत्यत्र 'खश्रावणौ तु नभसी' इति न कृतमिति मञ्जूषोक्तमपास्तम् । 'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' 'श्रावणे तु नभाः श्रावणिकश्च सः' इत्येवं खस्वपर्यायेषु पठितत्वात् ।

क्रमादृते इति । क्रमः=प्रस्तावः, तं विना सङ्करो न कृतः। सति तु प्रस्तावे तावन्मात्रसङ्करः कृत एव, यथेन्द्रादिप्रस्तावेन हरिप्रभृतीनां–'मेरुः सुमेरुर्हेमाद्रि'रित्येवमादिरूपेण गिरिवर्गादिभ्य उत्कृष्य सङ्करः कृत इति । अत्र वदन्ति–'विष्णुपदार्थाभिन्नो नारायणपदार्थः' इत्यादिबोधे एकशेषो न प्राप्नोति, एकशेषस्य द्वन्द्वविषयत्वात्, द्वन्द्वस्य च समानाधिकरणे तत्पुरुषसञ्ज्ञयानवकाशत्वेन बाधनादप्राप्तेः । न च महाविभाषया तत्पुरुषसञ्ज्ञाऽभावपक्षे द्वन्द्वः प्राप्नोति, 'यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते विषये उत्सर्गो न भवती'ति 'पारेमध्ये षष्ठ्या वे'ति वाग्रहणेन ज्ञापितत्वात् । न च शाब्द-बोधे शब्दस्य प्रकारतया भानाभ्युपगमाद्विष्णुर्नारायण इत्यादौ विरूपोपस्थित्यनुभवाच्च भिन्नार्थत्वात्–

**❀ विषमपदविवृतिः ❀**

**एतेनेति** । उत्तरपदे इत्यस्य सप्तम्यन्तत्वाभावेनेत्यर्थः । इत्यन्ताः ।

---

**❀ वरवर्णिनी ❀**

**अपास्तमिति** । परे तु—कोशे शब्दाः शब्दपरा एव, न त्वर्थपराः, अन्यथा—'इनः सूर्ये नृपे पत्यौ' 'लाजाः पुंभूम्नि चाक्षता' इत्यादिष्वर्थासङ्गतिः स्यात्, न हि–इनरूपार्थः सूर्यादौ वर्त्तते, पुंस्त्वविशिष्टे बहुत्वविशिष्टे च लाजार्थो वर्त्तते—इत्येवमर्थस्तत्र सम्भवति ! । 'कोशे शब्दाः शब्दपरा एवे'ति मन्मते तु–इनशब्दो वाचकत्वेन सूर्यादिरूपार्थे वर्त्तते, एवं पुंस्त्वावच्छिन्ने बहुत्वावच्छिन्ने

## ॐ वरवर्णिनी ॐ

न लाजशब्दो वर्तते इत्येवमर्थसङ्गतिः सम्भवत्येवेति न कश्चिद्दोषः । एवं 'निभसङ्काशनीकाशप्रतीकाशोपमादयः, स्युरुत्तरपदे त्वमी'त्यादौ समासचरमावयवरूपोत्तरपदार्थे वर्तमाना अमी साधव इत्यर्थ इति नासङ्गतिः । 'कोशे शब्दा अर्थपरा' इति भट्टमते तु-निभाद्यर्था उत्तरपदार्थे वर्तन्ते इत्यर्थः स्यात् , एवञ्च तदसङ्गतिः स्पष्टैव, न हि तदर्थः समासचरमावयवे वर्तते इत्यर्थः सम्भवत्यपि । तस्मात्कोशे प्रथमान्ताः शब्दाः शब्दपरा एव । 'इनः सूर्ये प्रभौ नृपे' इत्यादौ सप्तम्यन्ता अन्यत्र व्युत्पादिताः शब्दास्त्वर्थपरा एव । एव 'कीचका वेणवस्ते स्यु'रित्यादौ यत्तत्पदघटिताश्च तेप्यर्थपरा एवेति विवेकः । तेन 'अप्येकदन्तहेरम्बलम्बोदरगजाननाः'इत्यादौ प्रथमान्तशब्दप्रपञ्चके 'एकार्थाः'इति शेषः, तथा चेमे शब्दा एकार्था इति बोधः ।

नन्वेवं कोशे शब्दानां शब्दपरकत्वेन 'पदङ्घि'रित्यादौ शसादिपूर्वभागस्यानुकरणतया पदाद्यादेशाऽप्रवृत्त्या कथं कोशस्य प्रकारार्थत्वे एषां कौमुद्युक्तं मानत्वमिति चेन्न, 'लाजाः पुंभूम्नी'तिवत् 'पच्छसादौ' इति वक्तव्ये तथानुक्तेरेव प्रकारार्थत्वे मानत्वमिति कौमुद्याशयस्य वक्तुं शक्यतया दोषाभावादित्यस्मद्गुरु**चरणाः** प्राहुरिति **गौडा** व्याचक्षते ।

**मान्यास्तु**-'अनुमानेने'त्यस्य-'सिंहो मृगेन्द्रः पञ्चास्य' इत्यादौ 'सिंहादिपदमर्थवाचकं पदत्वा'-दित्याद्यनुमानेनेत्यर्थः। नन्वेवमनुमानेनार्थत्वेनैवार्थस्य सर्वपदादुपस्थित्या विरूपोपस्थित्यभावाद्घटो घट इतिवद्विष्णुपदार्थाभिन्नो नारायणपदार्थ इत्यादिरीत्याऽभेदान्वयोऽसम्भवी, वैयाकरणनये स्वनिष्ठशक्तिनिरूपकत्वसम्बन्धेन स्वविशिष्टतत्तद्धर्मावच्छिन्ने तत्तत्पदानां शक्तावपि-तन्मते शब्दस्य प्रवृत्तिनिमित्तत्वाकल्पनाद्विरूपोपस्थितेर्वक्तुमशक्यत्वादिति । शब्दस्य प्रवृत्तिनिमित्तत्वे तु-विरूपाणामपि समानप्रवृत्तिनिमित्तकानामेकशेष इत्यर्थकस्य 'विरूपाणामपि समानार्थाना'मित्यस्य 'कुटिलदण्डौ' 'वक्रदण्डौ' इत्यादावप्रवृत्तौ तत्रैकशेषो न स्यात् । किञ्च भवद्रीत्या 'घटः' 'कलशः' इत्यादावपि शब्दभेदमात्रेण विरूपोपस्थित्याऽभेदान्वयापत्तिरिति चेन्न, 'अर्थवाचकत्वव्याप्यपदत्ववानय'मिति परामर्शेनैव कोशस्थपदेषु इतरबाधविधया स्वार्थवाचकत्वसाधकानुमित्यात्मकशक्तिज्ञानस्योत्पत्त्या इतरबाधस्यापि च स्वातन्त्र्येण सिंहत्वाद्यवच्छिन्नत्वेन रूपेण सिंहादिभानप्रयोजकतयाऽभेदान्वयस्य सूपपन्नत्वादित्याशयमाविष्कुर्वन्नाह— **विष्णुपदार्थाभिन्न इति** [पृ.२१८]। ननु तद्धर्मप्रकारकशाब्दबोधे तद्धर्मावच्छिन्नतद्धर्मिताकस्य तत्पदप्रकारकस्य स्वजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नत्वावच्छिन्नभगवदिच्छीयप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नसंसर्गतानिरूपकज्ञानस्य कारणतया—प्रकृते 'सिंहपदात्सिंहपदार्थो बोद्धव्य' इत्याकारकेच्छाया अभावेन—बोधविषयत्वनिष्ठतादृशप्रकारताया सिंहपदार्थत्वावच्छिन्नत्वावच्छिन्नत्वाभावेनाभ्रान्तानां सिंहादिपदार्थत्वावच्छिन्नत्वावच्छिन्नत्वावगाहिज्ञानासम्भवेन कोशस्थ—'सिंहो मृगेन्द्रः पञ्चास्य'—इत्यादिपदाच्छाब्दबोधानापत्तिः, न च सिंहत्वादिधर्मप्रकारकबोधे सिंहत्वादितद्धर्मावच्छिन्नसिंहादिधर्मिताकं सिंहादिपदप्रकारकं स्वजन्यबोधीयतत्तद्धर्मावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नसंसर्गताकं यज्ज्ञानं तस्यापि कारणत्वान्तरं कल्प्यते, इदञ्च ज्ञानमभ्रान्तानां प्रामाणिकानामपि सम्भवति, कुत्राप्यंशे भ्रमत्वाभावादिति नोक्तदोष इति वाच्यम्, तथासति घटपदाद्द्रव्यत्वप्रमेयत्वसत्त्वादिप्रकारकबोधस्याप्यापत्तेरिति चेदत्रास्मत्पितामहश्रीगुरु**चरणाः**-ईदृशज्ञानस्य तद्धर्मप्रकारकशाब्दबोधे बोधविषयत्वनिष्ठेश्वरीयप्रकारतांशे तदितरतद्धर्मावच्छिन्नत्वावच्छिन्नत्वावगाहितादृशज्ञानाभावविशिष्टस्यैव कारणत्वान्तरकल्पनात्तथाविधज्ञानाभावविशिष्टे तादृशज्ञाने प्रसरति सति च—प्रामाणिकतमानामपि सिंहत्वाद्यवच्छिन्नत्वप्रकारकः शाब्दबोधो निर्बाध एवेति प्राहुरित्याचक्षते । कोशे शब्दानां शब्दपरत्वादेव-'अप्येकदन्तहेरम्बे'त्यादौ द्वन्द्वबहुवचनोपपत्तिः, 'विष्णुनारायण' इत्यादावसमानार्थकत्वेनैकशेषाभावश्च स्वरसतः सङ्गच्छते ।

'अव्ये देवी'त्यादौ तु सम्बोधनविभक्त्यन्तत्वमेव सामानाधिकरण्यप्रयोजकमिति न कोशशब्दानां शब्दपरत्वे शेखरोक्तभाष्यविरोधः । 'क्षियः' 'उभादुदात्त'इत्यादिनिर्देशादनुकरणेषु सूत्राप्रवृत्त्या 'यत्तदेतेभ्य' इत्यादौ न दोषः । 'भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः' इत्यमरकोशीयप्रतिज्ञाविरोधपरिहारोपायस्तु—**ज्योत्स्नायां विषम्यां**ञ्च विस्तरेणोपपादितस्तत एवानुसन्धेय इति **गौडाः** ।

**विश्वपा इति ।** "विश्वं पातीति विग्रहे 'आतोऽनुपसर्गे' इति प्राप्ते वाऽसरूपन्यायेन 'आतो मनिन्क्वनिब्वनिपश्च' ति चेन विच् । स चाऽऽदन्तेभ्यो लोकेऽपि, 'कीलालप आगत'मिति 'विभाषा पूर्वाह्णे'ति सूत्रे भाष्यप्रयोगात् । क्विदन्स्त्वादन्तेभ्यो भाष्यानुक्तक्विभ्योऽनभिधानमेव । अत एव 'यू स्त्र्याख्या'वित्यत्र विजुक्तो भाष्ये, न तु क्विप् । अत एव 'शंस्था' इत्यादिप्रयोगेषु भाष्यकृता ईत्वं न कृतम्--"इति केचित् । अन्ये--क्विपमेवाहुः ।

ॐ अभिनव-चन्द्रिका ॐ

**क्विपमेवाहुरिति ।** परे तु 'ईत्वमवकारादा'विति वाच्यमिति 'वसां दना पावानः पिबत' 'घृतं घृतपावानः पिबते'त्याद्यावीत्ववारणाय कृतं वार्तिकं--भगवता 'पावान' इति वनिपा साधयित्वा प्रत्याख्यातम् ।

ॐ विद्वत्स्थिमाला ॐ

केचिन्ननमाह--**विश्वमिति** । ननु तत्र छन्दसीत्यस्यानुवृत्तिर्मुमतिचत्रस्य-'घृतं घृतपावानः'-इति भाष्यसम्मतेति कथनत्र सोऽत आह--**स चेति** । विग्रहस्याच्छन्दस्त्वादाह--**कीलालप इति** । एतेन 'छन्दसि-आतो'मनि'निति विच्, लोके त्वन्येभ्योपीतीति ।

ननु तेन क्विबेव कुतो नात आह--**क्विपस्त्विति** । 'क्विप् चे'त्यत्रान्येभ्योपीत्यनुवृत्त्याऽपिना आतः समुच्चयात् । अतार्वत्रिकत्वायाह--**भाष्येति ।** अत एव ध्यायतेर्दधातेर्वाधीरिति भाष्यं सङ्गच्छते । अत एव= अन्यत्र तदभिधानादेव । एवमग्रेपि । **विजुक्त इति** । आद्यपक्षत्वेनेति भावः । तदुपलक्षणमिति भ्रमनिरासायाह--**न त्विति । ईत्वमिति ।** 'स्थः क चे'ति सूत्रभाष्यस्थक्विप्पदं विचपरमिति भावः । **केचित्**= दाक्षिणात्याः प्राञ्चः । अत्रारुचिं सूचयन् सिद्धान्तमाह--**अन्ये इति** । भाष्यमतवित्र इत्यर्थः ।

ॐ ज्योत्स्ना ॐ

'नीलघटयोरभेद' इत्यादाविव द्वन्द्वप्राप्तिरिति वाच्यं, सामानाधिकरण्याभावविवक्षायां तथा वक्तुं शक्यत्वेऽपि-तद्विवक्षायां 'नीलोत्पल'मित्यादिवत्तत्पुरुषस्यैव युक्तत्वात् । 'विरूपाणामपी'ति वार्तिकारम्भसामर्थ्याच्च शब्दातिरिक्तस्यैव प्रकारतया भासमानस्य भिन्नार्थत्वप्रयोजकत्वाच्चेति ।

अत्रोच्यते-भिन्नाभ्यां शब्दाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकधर्मिबोधकत्वलक्षणस्य वृद्धिसञ्ज्ञासूत्रे उपाध्यायैरादृतस्य शब्दसामानाधिकरण्यस्य कोशपठितशब्देष्वभावात्तत्पुरुषसञ्ज्ञाया अप्रसङ्गः ।

न च 'नामन्त्रिते समानाधिकरणे' इति सूत्रस्थोक्तभाष्यविरोधः,-षोडशिप्रकरणे रोहिण्या गोर्दक्षिणकर्णे जपे विनियुक्तस्य मन्त्रस्य हन्तुमनर्हत्वादिरूपेणाघ्न्यादिपदानाम्-इडा मनोर्दुहिता-सेवेडेत्येवमादिगौणीवृत्तिव्यपाश्रयेण इडादिपदानां वेदभाष्यकारैर्व्याख्यानाद्गोसामान्यबोधकत्वाभावेन विशेषपरत्वमित्याशयात् । अघ्न्यादिपदानां गोत्वमेव प्रवृत्तिनिमित्तं, तद्रूपेणैव बोधकत्वमित्यत्र तु न मानम्-'एतानि तेऽघ्न्ये नामानी'त्यस्य बोधकानीत्येवार्थो, वेदभाष्ये तथैव दर्शनात् । अघ्न्या 'इ'ति गवां नाम, क एना हन्तुमर्हतीति भारताद्धन्तुमनर्हत्वेन गवाभिधायकत्वस्य आञ्जस्यतो लाभाच्चेति दिक् ।

न'न्वातोमनिन्क्वनिब्वनिपश्चे'त्यत्र 'विजुपेश्छन्दसी'त्यतः 'छन्दसी'त्यनुवृत्तेस्तत्रत्यचकारेण समुच्चितो विच्छन्दस्येव स्यादिति लोके विश्वपादीनां कथं साधुत्वमत आह--**स चादन्तेभ्यो-लोकेऽपीति** । अत्र प्रमाणमाह--'कीलालप आगत'मित्यादि । **अन्ये क्विपमेवाहुरिति ।**

ॐ विषमपदविवृतिः ॐ

**भाष्यानुक्तक्विभ्य इति ।** एतेन ध्यायतेर्धीरित्युपपन्नम् । **ईत्वं** नवं **कृतमितीति** । इदमप्राधान्येन

दीर्घाज्ज । चेनं 'इची'त्यनुकर्षः । 'दीर्घाच्छस्येवे'ति नियमपरं 'दीर्घाच्छसी'त्येव

ॐ अभिनव-चन्द्रिका ॐ

'विश्वपाः' 'शंस्था' इत्यादौ वार्तिकमते ईत्वाप्राप्त्या, भाष्यमते ईत्वप्राप्त्या आरम्भप्रत्याख्यानयोः फलभेदेन प्रत्याख्यानासङ्गत्यापत्तेः । 'ईत्त्वमवकारादा'विति वार्तिकस्य श्रूयमाणवकारादावीत्वं न भवतीत्यर्थः । तथा च विश्वपाःशंस्था इत्यादौ न फलभेद इति क्विपि वार्तिकप्रवृत्त्यभावेन घुमास्थेतीत्त्वस्य दुर्वारतया विजेव, अत्र च मानं 'कीलालप आगत'मितिभाष्यप्रयोग एव, एवं 'यूरूयाख्या'वित्यत्र विच्कथनं भाष्योक्तं सङ्गच्छते। एवञ्च–आदन्तेभ्य आचारक्विवन्तेभ्यः कर्तरि क्विपि फलभेदाभावेन आदन्तेभ्य आचारक्विपोऽनभिधाने न मानम् । न च वार्तिकमते 'पीवा' 'पीवान' इति लक्ष्यासिद्धिरिति वाच्यम् , एतदुद्धारायैव भगवता वार्तिकप्रत्याख्यानात् । 'यथोत्तरं मुनीनां प्रामाण्य'मिति सिद्धान्ताच्चेत्याहुः ।

ॐ चिदस्थिमाला ॐ

[ लोके—'सर्वत्रे'ति शेषः । अत एव एवोक्तिः । अयम्भावः—'विजुपे' इत्यतश्छन्दसीत्यस्यातो मनिनित्यत्रानुवृत्तिर्घुमेतिसूत्रस्थ 'धूर्त धूतपावान' इति भाष्यसम्मता । एवञ्चादन्तेभ्यो विच् छन्दस्येव । 'अन्येभ्योऽपी'त्यत्र तद्सम्बन्धः, 'दृश्यते' इत्युक्तेः । अपिना–छन्दस्येवातः समुच्चयः, यथा छन्दसि तेषां दृष्टानुविधिरादन्तेभ्यः, तथा तद्भिन्नेभ्यः सर्वत्र तेषां दृष्टानुविधिरित्यर्थः । क्विप्चेत्यत्रान्येभ्योपीत्यनुवर्त्तते, वचनविपरिणामः । 'क्विप् चान्येभ्योपि दृश्यते' इतिताच्छीलिकप्रकरणेभाष्योक्तेः । चेन मनिनादेः, अपिना आतः समुच्चयः, क्विबपि अन्येभ्यः आतश्च दृश्यते इत्यर्थः । दृशिना दृष्टानुविधिः । 'स्थः कचे'त्यत्र 'चात् क्विप्मात्रमि'ति भाष्य एव स्पष्टम् । एवं चादन्तेभ्यो लोके क्विबेव । न च घुमेतिसूत्रस्थवार्त्तिकप्रत्याख्यानयोः फलैक्याय आदन्तेभ्यः क्विपोऽनभिधानमावश्यकमिति वाच्यं, स्वरार्थं प्रत्ययलक्षणसूत्रस्य नियमार्थत्वस्यावश्यकत्वेन जीर्यतेर्वेतिपक्षेदृशिग्रहणसमुच्चेयापूर्वात्ववद् दधातेर्वेति भाष्यस्य तथा पूर्वत्वाशयकत्वेन हलीत्यस्यानजादिपरत्वे मानाभावेन परत्वान्नित्यत्वादन्तरङ्गत्वाच्चापृक्तलोपे उभयोरप्राप्त्याऽऽदन्तेभ्यः क्विपीत्वं नैवेति घुमेति सूत्रभाष्योपपत्त्या ततस्तदनभिधानस्य निर्मूलत्वात्(?) । अत एव वार्त्तिकपक्षे 'कथं धीवरी'त्याद्युक्तिवत् कथं 'धी'रित्यादि नोक्तं, प्रत्याख्यानपक्षे च कथं शंस्था इति विजत्र न किंचिति नोक्तम् । अतएव च 'स्थः कचे'ति सूत्रभाष्यमप्याञ्जस्येनोपपद्यते । किञ्च तथानुक्त्या ङित्साहचर्येण श्रूयमाण एव क्तितीत्व-

ॐ ज्योत्स्ना ॐ

नचैवमीत्त्वप्रसङ्गः–'ईत्वमवकारादा'विति वार्तिकेन तन्निषेधात् । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वमिति भाष्यमते क्विपोऽन्तरङ्गत्वादपृक्तलोपे प्रत्ययलक्षणाभावादीत्त्वस्याप्राप्त्यभावाच्च ।

ॐ सदाशिवभट्टीयम् ॐ

दीर्घाच्छसीत्येवेति । 'तस्माच्छस'इत्यतः प्रागिति शेषः । एवञ्च 'तस्माच्छस'इत्यत्र शस्ग्रहणं न कर्तव्यं

ॐ विषमपदविवृति ॐ

वर्णाश्रये प्रत्ययलक्षणमिति वार्तिकमतेन। वस्तुतस्तु 'शंस्था'इत्यत्र क्विपि ईत्वापादनं न तावद्वार्तिकमतेन, तेन ईत्वमवकारादाविति निषेधारम्भात्, नापि भाष्यमतेन,–तेन वर्णाश्रये प्रत्ययलक्षणानङ्गीकारात्, तदेतदभिप्रेत्याह–अन्ये त्विति [ पृ. २२३ ]।

---

१ तस्याधिकृतत्वादाह—चेनेचीति । चेनानुवृत्त्यकरणजलाघवादाह—दीर्घादिति । प्रथमयोरित्यग्रे इति भावः ।—अयं पाठश्चिदस्थिमालायां क्वचिद्दृश्यते ।

२ इह चिदस्थिमालापुस्तके भूयान्पाठे विपर्ययो दृश्यते । असार्वत्रिकश्च [ ] एतदन्तर्गतः पाठः ।

तु न सूत्रितम्, 'दीर्घादेव शसी'तिविपरीतनियमापत्तेः । प्रत्याहारेषु जातिपक्षा-

❀ चिदस्थिमाला ❀

प्रवृत्तिरित्यपि घुमेति सूत्रभाष्याभिमतम् । अत एव-''ननु माधातोः क्विपीत्वं दुर्लभं, वकारादौ प्रतिषेधात्, प्रत्ययलक्षणसूत्रे नियमपक्षस्य सिद्धान्तितत्वेन स्थानिवत्त्वस्यानल्विधाविति निषेधाच्च, ङित्याहन्यर्थेन श्रूयमाण एव कितीत्वप्रवृत्तिरित्यर्थस्य भाष्यादिसम्मतत्वाच्च । अत एव शंस्थाशब्दे नेत्वमित्यरुचराह—एतच्चेति । ईकारान्तधातोः-क्विपि न दोष इति ध्वनयितुं धातुविशेषोपन्यास इत्याहुः''-इत्येवं मनोरमाव्याख्याता मान्यैः[1] । तस्माद्विश्वपाशब्दे क्विबेव, ईत्वस्य तु प्रसङ्ग एव न पिबतेरभावात् । एवं कीलालं पातीत्यर्थककीलालपाशब्देपि । कीलालं पिबतीत्यर्थककीलालपाशब्दे तूक्तरीत्या नेत्वप्रसक्तिः, एवं शंस्थाशब्दादावपि । यद्यप्येवंरीत्या यूस्त्र्याख्यावित्यत्र सुवचं, तथापि प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वमते प्राप्तत्वाभावायावश्याश्रयणीयसौत्रत्वानाश्रयणजलाघवं,-छन्दोवदित्यतिदेशेन तत्सम्भव इति प्रथमोपस्थितत्वं च हृदि निधाय भगवता तत्परित्यज्य विजुक्तः । अत एव मूलविभुजादित्वात्क इति सिद्धान्त उत्तरपक्षत्वेन भगवतोक्तः । अत एव वाऽऽदन्तमात्रेभ्यस्तदनभिधाने मानाभावेपि इत्याद्यन्ते लोके क्विपि न दोषलेश इति केचित्तन्मतमयुक्तमेव । तेन वार्त्तिकमते सुधीवेत्यादि न स्यात्तस्मात् 'स्थः कचे'त्यत्र भाष्यप्रयोगान्नेत्त्वमिति तत्र मिश्रोक्तं, 'वार्त्तिकाद्भाष्यकारप्रयोगाद्वा नेत्व'मिति वार्त्तिकारम्भो ज्यायान्, प्रत्याख्यानपक्षे प्रत्ययलक्षणेन विध्यर्थेनेत्त्वापत्तेरिति कैयटोक्तं, 'शंस्थाशब्दादौ विजेव, भाष्यस्य तत्परत्वा'दित्युक्तं चापास्तम् । उक्तरीत्याऽदोषेण प्रत्याख्यानपक्षस्यैव भगवत्सम्मतत्वात् । 'स्थः क चे'त्यत्र मनोरमाप्येवमेव । आदन्तधातुप्रकृतिकक्विबन्तमादन्तं लोकेऽसाध्वित्यपास्तमिति—दिगिति । ]

'आख्या'वित्यत्र भाष्येऽपि विच्पदेन क्विबेव, 'शंस्था' इत्यादावीत्वमवकारादावित्युक्तेर्नेति गूढाकूतम् । यद्यपि दीक्षिताद्युक्तरीत्यापि निर्वाहस्तथापि न स सिद्धान्त इति ध्वनयन् सिद्धान्तनाह—प्रत्याहारेष्विति । पूर्वसवर्णदीर्घे क्षत्यभावेऽपि तस्यान्याय्यत्वसूचनायाह—जसीति ।

❀ ज्योत्स्ना ❀

ननु प्रथमयोरित्यनेनाकः पूर्वसवर्णदीर्घोऽसाधारणोदाहरणे गौर्यावित्यादौ न प्राप्नोति, अक्शब्दोपात्तेकारादेरनुच्चारितस्य ग्राहकसूत्रेणेतरप्रत्यायकत्वानङ्गीकारादिति—'दीर्घाज्जसि चे'ति व्यर्थमत आह—प्रत्याहारेष्विति । अत्र=असाधारणोदाहरणे गौर्यावित्यादौ । यत्तु विश्वपावित्यादावित्यर्थ इति, तन्न; प्रत्याहाराणामाद्यवर्णेषु ग्राहकसूत्रप्रवृत्तेः प्रागुपपादितत्वात् । यद्यप्यक्पदवृत्त्युपस्थिताक्षरसामाम्नायिकोपस्थाप्यदीर्घादेरक्पदवृत्त्यनुपस्थापितत्वात्तदुत्तरषष्ठ्यर्थाऽन्वयाप्रसङ्गः,

❀ सदाशिवभट्टीयम् ❀

भवति, तस्मादितिपञ्चम्या शसीति सप्तम्यन्तस्य षष्ठ्यन्तत्वकल्पनसम्भवाच्चो न कर्तव्य इति लाघवमिति भावः।

नन्वेवन्तच्छब्दोऽनन्तरपरामर्शार्थं इति सिद्धान्तात्-'नियमशास्त्राणां विधिमुखेन प्रवृत्ति'रिति पक्षे-'बहुश्रेयसी'नित्यत्रैव नत्वं स्यान्न तु 'हरी'नित्यादौ, तदुत्तरं पाठे तु शस्पदं कर्तव्यं, 'हरी'नित्यत्रैव स्यान्न तु 'बहुश्रेयसी'नित्यादाविति दोषश्चेति चेन्न; प्रकृते निषेधमुखेनैव प्रवृत्तिरित्याशयात् । तस्मादित्यनेनाको दीर्घः परामृश्यते, प्रथमयोर्वा दीर्घः परामृश्यते इत्याशयाद्वा । 'मृगान्हन्ती'ति निर्देशश्चात्र लिङ्गं, स्पष्टं चेदं सर्वं 'प्रथमयो'रित्यत्र भाष्ये । विपरीतनियमापत्तेरिति । 'मृगान्हन्ती'ति 'नॄन्पे''कानाम्रेडिते'इति निर्देशाश्रयणे तु

[1] मान्यपदेन बहुशश्चिदस्थिमालायां, शब्दरत्नभावप्रकाशे च स्मृतः प्रौढमनोरमाटीकाकर्त्ता भट्टोजिदीक्षितपुत्रो वीरेश्वरदीक्षित एवेति मन्महे । हरिदीक्षितपितृत्वेन स्वगुरुनागेशगुरुपितृतया च मान्यपदेनास्य वैद्यनाथभट्टानां व्यवहारो युक्त एव । एतत्कृता मनोरमाटीका चास्माभिर्दृष्टा काश्यामेव कस्य चन भट्टस्य गृहे इति तेनाप्यस्य पुष्टिर्भवतीति-गौडाः ।

श्रयणादत्र प्राप्तिः। **न्याय्यत्वादिति**। जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः।

**धातोः किं–हाहानिति**। अव्युत्पन्नमिदम्। अस्य क्रियाशब्दत्वे तु 'सा'निति प्रत्युदाहरणम्।

परे तु–क्त्वः इन इत्यादिसिद्ध्यर्थम्–'आतोऽनाप' इति वक्तव्य'मित्युक्ते 'आत' इति योगविभागेन तत्संसाध्य,–तत्प्रत्याख्यातं भाष्ये। एवञ्च साशब्दादेर्यद्यभिधानं तदा योगविभागेन लोप इष्ट एव। सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव, भाष्यवार्त्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात्। आबन्तादाचारक्विबेव न, तत्क्विबन्ताद्वा कर्त्तृक्विब्न अनभिधानादिति–न तत्र सूत्रवार्तिकयोर्विरोधः। अत एव 'प्रथमयो'रिति

❀ चिदस्थिमाला ❀

'निषेधाच्चे'ति न्यायादिति भावः। **इदमिति**। गन्धर्वविशेषवाचीत्यर्थः। इदञ्च प्राचां मतेनोक्तमिति सूचयन् सिद्धान्तमाह—**परेत्विति**। उक्ते—वार्तिककृता। एवञ्च सूत्रमतेऽपि स साध्य एव, अन्यथा फलभेदापत्तेरित्याह—**सूत्रे इति**। ननु प्राचोक्तमेव युक्तमस्याक्षरमर्यादयाऽलाभादत आह—**भाष्येति**। **ईदृशेति**। धातुग्रहणं तदन्यसामान्यव्यावृत्त्यर्थमित्यर्थस्याक्षरमर्यादयालाभेऽपि भाष्यवार्तिकप्रामाण्यात्तदन्यविशेषव्यावृत्त्यर्थं, न तु तथेति सूत्रकृदभिमतमित्यर्थः। नन्वेमप्याबन्तादाचारक्विबादौ सूत्रवार्तिकयोर्मिथो विरोध एवात आह—**आबन्तादिति**। यदभावज्ञापनेनोपपत्तिस्तदभावमात्रज्ञापनमेवोचितं नाधिकबाधज्ञापनमित्याह–**तत्क्विबन्ताद्वेति**। **इतिहेतौ**। तत्र=तत्प्रयोगविषये। भाष्यान्तरमप्यत्रसाधकमित्याह—**अत एवेति**। तथार्थकल्पनस्यैवौचित्यादेवेत्यर्थः। **मात्रं**–कात्स्न्र्ये।

❀ ज्योत्स्ना ❀

प्रत्ययानां प्रकृतिवृत्त्युपस्थाप्येऽन्वयनियमादिति 'विश्वपावित्यादा'वित्यर्थोऽपि प्रत्याहारेषु जातिपक्षाश्रयणफलकथने न दुष्यतीति, तदपि न, प्रत्ययानां प्रकृतिवृत्तिप्रयोज्योपस्थितिविषयेऽन्वयनियमस्य द्विरेफादिपदानुरोधेन कल्पनादिति दिक्। **पररूपबाधकं दीर्घं विधायेति**। तस्मादिति तच्छब्देन तु अवस्थानिकदीर्घमात्रपरामर्शो न तु पूर्वसवर्णदीर्घस्यैवेति बोध्यम्। नचैवं रामानित्यादावुक्तयोगविभागेन दीर्घे कृते 'आतोनाप' इति वार्तिकरीत्या लोपः स्यादिति वाच्यं, पक्षान्तरेणैकरूप्यायात्रापि पक्षे 'आतोनाप' इत्यनेनाकारान्तादङ्गाद्विहितप्रत्यये भस्यान्त्यस्य लोपविधानाददोषात्। एवञ्च रामाणामित्यादावपि वक्ष्यमाणरीत्या दीर्घे नुटःपूर्वमपि कृते लोपो नेति बोध्यम्। नचैवं कीलालपानां कुलानामित्यत्रातोलोपाभावार्थं नुड्विधावनुवर्तमाने–'आतोधातो'रित्येतस्मिन्–'नेतराच्छन्दसी'त्यतो नेत्यस्य स्वमोर्नपुंसकादित्यतो नपुंसकग्रहणस्य चानुवृत्त्या–नपुंसकसम्बन्धिन आतो लोपो नेत्यर्थाश्रयणं भाष्यकृतो व्यर्थमिति वाच्यं, तस्यैकदेशयुक्तित्वात्। अथवा क्लीबाजन्तत्वसापेक्षत्वेन बहिरङ्गत्वात्प्रातिपदिकत्वमात्रसापेक्षाया विभक्तेः पूर्वमुत्पत्तौ ततो ह्रस्वे लोपप्राप्तेर्वारणाय भाष्योक्तप्रकारस्य नास्ति वैयर्थ्यमित्याशयः। **समाधायेति**। रामाणामित्यादौ

❀ सदाशिवभट्टीयम् ❀

प्रतिपत्तिगौरवमिति भावः। नन्वेवं प्रथमयोः पूर्वेत्यत्रत्यभाष्योद्द्योतविरोधः, ततो हि ग्रन्थादस्य न्यासस्य निर्दुष्टत्वं लभ्यते इति चेन्न, इज्ग्रहणं न कर्तव्यमिति प्रसङ्गसत्त्वेन तस्य लाघवपक्षपातित्वादिति वदन्ति। अत्र '**दीर्घात्सुटी**'ति सूत्रयितुमुचितम्। **आतो धातोः**। **सानितीति**। आकारेण सहितानित्यर्थः। एतेन-पञ्चमीसमासेन स्वमते स्थानिवत्त्वेनान्यथासिद्धिः प्रयुक्ता,—यद्यभिधानमिति '**यदी**'त्यनेनेदं सूचितम्। वस्तुतः फलभेदाय तेषामनभिधानमेवेति। नन्वनाप इत्यस्य प्रत्याख्यानं 'क्त्वः-इन'इति निपातनेनापि भाष्ये कृतं, तेन अत्र लोपो नेष्ट इति प्रतीयते, योगविभागेन प्रत्याख्यानन्तु नास्माकं प्रतिकूलमतो भाष्यान्तरविरोधमाह—**अत एव प्रेति**। एतदेकवाक्यतयैव निपातनेनाधातुपदस्याऽऽभिन्नपरत्वबोधनद्वारा लोप-

सूत्रभाष्ये–'पररूपं चाद्ग्रहसामान्यचिन्तया दीर्घमात्रस्य बाधक'मिति पक्षे–रामानित्यादि-सिद्ध्यर्थम्–'अतो दीर्घ'इति, 'सुपि चे'ति चानुवर्त्तमाने–'बहुवचने झल्ये'दिति सूत्रे 'बहुवचने' इति योगविभागेन पररूपबाधकं दीर्घं विधाय, रामाणामित्यादावनेन दीर्घे परत्वात्कृते–अग्नीनामित्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य,–'ह्रस्वनद्याप'इति सूत्रे 'आज्जसे'रित्यत आद्ग्रहणानुवृत्त्या समाधाय, कीलालपामित्यादौ–नुड्विधायके 'आतो धातो'रित्यनुवर्त्य–लोपेन नुड्बाधकेन समाहितम् । नुड्विधायके आद्ग्रहणं न कार्य-

❀ अभिनव-चन्द्रिका ❀

**अत एवेति**। धातुग्रहणमावन्तनिवृत्त्यर्थमितिस्वीकारादेवेत्यर्थः। **तदसङ्गतिरिति**। यथाश्रुतन्यासे हल्वान्तत्वाभावान्नुण्न प्राप्नोति, 'ह्रस्वनद्याप' इत्यत्राऽऽदित्यनुवर्त्त्यादन्तान्नुड्वनीति कल्पे च नुड्वनीति फलभेदाद्भाष्यासङ्गतिरितिभावः । परे तु–'आतो धातो'रिति सूत्रकृन्मते, 'आतोनाप' इति वार्तिकमते,—'आत' इति योगविभागेन तद्वार्तिकप्रत्याख्यानपरभाष्यकृन्मते च फलभेद-वारणाय—'आतो धातो'रिति सूत्रे 'आत' इतिपदं स्त्रीत्वबोधकतापर्याप्त्यधिकरणघटकाकारभिन्ना-कारपरं, तथा च सानित्यादां प्रथमयोरितिसूत्रस्थभाष्यमते फलभेदाभावेनानभिधाने न दृढं मानम्।

न च धातुपदमेव निरुक्तार्थपरं भवत्वितिवाच्यम्, सूत्रे 'आत'इत्यस्य वैयर्थ्यापत्तेः, भाष्यकृत्कृत-योगविभागवैयर्थ्यापत्तेश्च, आतइति विभक्तसूत्रस्य लक्ष्यासम्भवात्। तेन 'धातुपदमाबन्तनिवृत्त्यर्थ'-मिति शेखरग्रन्थोऽप्यसङ्गतः, 'नमुने' इतिनिर्देशासङ्गतेः । नाशब्दस्यावन्तभिन्नत्वेनानेन लोपे 'न मु नी'तिरूपस्यैव त्वन्मते लाभात्। अस्मन्मते च–अत्पदं स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्ना-

❀ चिदस्थिमाला ❀

'सिद्ध्यर्थ'मित्यस्य 'विधाये'त्यत्रान्वयः। **अनुवर्त्तमाने**–सति । अनेन=योगविभागेन । इत्यादावित्यस्य–'समाहित'मित्यत्रान्वयः । 'नुडापत्तिशङ्कायां'मिति शेषः । नन्वेवं तत्राद्ग्रहणं व्यर्थमत आह–**नुड्वीति** ।

❀ ज्योत्स्ना ❀

विशेषविहितत्वादकारावस्थायामेव नुटि कृते ततो 'बहुवचने' इति विभक्तसूत्रेण दीर्घः । एवञ्चात इति योगविभागेन, 'आतोनाप' इति वार्तिकेन वा विधीयमानस्यातो लोपस्य तत्र प्राप्तिगन्धोऽपि नास्तीत्यपरमनुकूलम्। **नुड्बाधकेनेति** । 'आज्जसे'रित्यनुवृत्त्या विधीयमानस्य नुटो बाधकेनेत्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

इत्यर्थः कार्यः, तदग्रे 'कथं इन' इति प्रश्नस्तूक्तमाशयमजानत एकदेशिनः। अत एव भूवादिसूत्रे भाष्ये 'याः पश्यसी'त्यस्यान्यथासिद्धिरनाप इत्युक्ता कृता, धातुपदस्य यथाश्रुतनार्थकत्वे तदसङ्गतिः स्पष्टैव । नन्वेवं 'नमुन' इतिसूत्रप्रयोगस्य, 'ने यत्कार्य'मिति तत्सूत्रीयभाष्यप्रयोगस्य च विरोध इति चेन्न, 'बन्धुनी'तिवद् नपुंसकनिर्देशाङ्गीकारेणोभयोरुपपत्तेरिति वदन्ति । **दीर्घं विधायेति** । पररूपबाधके दीर्घे कृते पूर्वसवर्ण-दीर्घे सिद्धान्त इव नत्वस्य सत्त्वात्। तदर्थं केषांचित्तस्मादित्यत्र तच्छब्देनास्थानिकदीर्घमात्रपरामर्शो न तु पूर्वसवर्णदीर्घस्यैवेति क्लेशस्तु—सुधैवेति बोध्यम् । 'रामा'नित्यत्र 'बहुवचने'इति दीर्घे कृते'ऽनाप'-इत्यालोपस्तु न, पञ्चमीसमासेन स्थानिवत्त्वात्। बाध्यविशेषचिन्तापक्षेपि पूर्वसवर्णदीर्घे कृते यथोद्देशे भसञ्ज्ञा-प्रवृत्त्या पूर्वान्तवत्त्वेनाकारान्ते भत्वे प्राप्तस्य लोपस्य वारणम्–उक्तरीत्या स्थानिवत्त्वेन, सन्निपातपरिभाषया वा बोध्यम् । **न कार्यमिति** । नन्वेवं 'रमाणा'मित्यादाववर्णान्तत्वलक्षणनुट्श्चारितार्थ्यात्—'रामाणा'-

❀ विषमपदविवृतिः ❀

**दीर्घविधायकेति**। नन्वेवं रामानित्यत्र दीर्घे कृते 'आतोऽनाप इति लोपापत्तिरिति वाच्यम्, 'आतोऽनाप' इत्यनेनाकारान्तादङ्गाद्विहिते भसञ्ज्ञानिमित्ते प्रत्यये लोपविधानेनादोषात् ।

एवं 'रामाणा'मित्यादावपि वक्ष्यमाणरीत्या दीर्घे आतो लोपो नेति बोध्यम् ।

मिति तदाशयः । अधात्ववयवाकारान्तानां लोपाभावे तु—तदसङ्गतिः स्पष्टैवेत्याहुः ।

**क्त्वः श्न इति** ।—क्त्वाप्रत्ययस्य इडित्याद्यर्थक—'क्त्व इट्' 'श्नः शस्येत्त्व'-मित्यादिप्रयोगस्थमत्रोदाहरणम् । एतेनाऽऽचारक्विबन्तात्कर्तृक्विपा एते प्रयोगा निर्वाह्या इत्यपास्तम् । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेन तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभाच्च ।

**❀ अभिनव-चन्द्रिका ❀**

कारपरमित्युक्तत्वेन नाशब्दस्य स्त्रीलिङ्गत्वेन लोपाप्राप्त्या नासङ्गतिः । न च भवन्मते 'प्रथमयो'रिति सूत्रस्थभाष्यविरोधः, तत्र हि 'कीलालपा'मित्यादौ लोपार्थं नुड्विधायके 'आतो धातो'रित्यनुवृत्तिं कृत्वा योगविभागेन समाहितम् । नागेशमते च न भाष्यविरोधः, 'प्रियहाहा'मित्यादौ 'आतो धातो'रित्यस्य चारितार्थ्येन नुड्विधायके 'आत' इत्यनुवृत्तेरावश्यकत्वादिति वाच्यम्, 'आत' इत्येतत्साहचर्येण 'आज्जसे'रिति सूत्रादनुवृत्ताऽऽत्पदस्यापि स्त्रीत्वबोधकाकार-भिन्नाकारपरत्वेन—'प्रियहाहा'मित्यादौ नुटोऽप्राप्त्या तत्र लोपार्थम्—'आतो धातो'रित्यनुवृत्तेराव-श्यकत्वात् । अत एव—ङ्याप्सूत्रे भाष्ये–'आबन्तस्थले पूर्वान्तवद्भावेनैव सिद्धे आब्ग्रहणं किमर्थ'-मित्याशङ्क्य -'बहुदामे'त्यादिडाबन्तविषयं प्रयोजनमुक्तं सङ्गच्छते । अन्यथा 'क्त्वाया इ'डित्यादि-भाष्यप्रयोगेण 'क्त्व' इत्यादिप्रयोगेण च क्त्वाशब्दस्य च स्त्रीपुँल्लिङ्गत्वानुमानेन 'क्त्वाया' इत्यादौ याडर्थं टाप्प्रत्ययकरणस्यावश्यकतया अजादिगणे क्त्वाशब्दपाठस्यावश्यकत्वेन त्वन्मते ।आबन्त-भिन्नो यः 'क्त्वा' तत्सम्बन्धी य आकारस्तदन्तस्य टाप्प्रकृति भूतस्याबन्तभिन्नत्वेन टापि भत्वेन लोपे टाब्विषये एव आब्ग्रहणप्रयोजनसत्त्वेन डाप्पर्यन्तमाब्ग्रहणप्रयोजनानुधावनमसङ्गतं स्यात् । मम तु स्त्रीत्वबोधकघटकाकारभिन्नाकारस्याभावेन लोपाभावे पूर्वान्तवद्भावेनैव 'क्त्वाया' इत्यादौ प्रातिपदिकत्वमायातीति डाप्पर्यन्तमनुधावनं युक्तमेवेत्याहुः ।

**❀ चिदस्थिमाला ❀**

तदाशयः=भाष्याशयः । अतएवेत्यस्यार्थं स्पष्टयति—**अधात्विति** । हाहादीनामित्यर्थः । **तदेति** । भाष्येत्यर्थः । पूर्वोऽऽदिना—क्त्वाप्रत्ययस्य ल्यप् । 'इत्याद्यर्थक—क्त्व इ'डिति पाठः । द्वितीयादिना—'क्त्वो ल्यप्', 'श्नः शान'जित्यादि । एतेन=स्वारसिकतथाप्रयोगसत्त्वेन तत्साधुत्वाय तदावश्यकत्वेन । **निर्वाह्या इति** । तथाच योगविभागो व्यर्थ इति भावः । प्राचां मते दोषान्तरमाह—**आचारेति** ।

**❀ ज्योत्स्ना ❀**

अकारेणाऽऽकारस्यापि ग्रहणादिह तत्प्राप्तिरिति भावः । **तदसङ्गतिरिति** । अव्युत्पन्नहाहाद्याकारान्ते लोपाप्रवृत्तौ हि 'कीलालपा'मित्यादौ धातुविषये लोपेनोक्तरीत्या नुटो बाधेऽपि 'हाहा'मित्यादौ नुट्प्रसङ्गस्य वारयितुमशक्यत्वादसङ्गतिः । आद्ग्रहणानुवृत्त्यभावपक्षे हि—'हाहा'मित्यादौ नुटः

**❀ सदाशिवभट्टीयम् ❀**

मित्यादौ तु परत्वात्—'बहुवचने'इति दीर्घे नुड्विधावनुवर्तमानाऽनाप इति लोपप्रसङ्गः, आब्ग्रहणसत्त्वे त्ववर्णान्तलक्षणो नुट् 'बहुवचने'इति दीर्घापवाद इति न दोषः, अत एव भाष्ये तत्र कार्यमिति नोक्तमिति चेन्न; चारितार्थ्येपि नुटः प्रतिपदोक्तत्वात्पूर्वं प्रवृत्तेः, पूर्वं दीर्घेपि पञ्चमीसमासेन स्थानिवत्त्वेन सन्निपात-परिभाषया वा लोपाप्रसक्तेश्च । 'कथं कीलालपानां कुलाना'मिति भाष्यन्तु—सर्वेषामेकदेशयुक्तिरेवेति निपुण-तरमालोचनीयम् । **इत्यादन्ताः** ।

१ आत्पदस्य भवद्रीत्या तथा पारिभाषिकार्थस्य स्वीकारे तु—'कीलालपां पुर्यो'मित्यादावाकारस्य स्त्रीत्वावच्छिन्नविषयकबोधजनकत्वप्रकारकतात्पर्यविषयघटकतया लोपाप्राप्त्याऽऽत इत्यनुवृत्तिप्रयासो भग-वतो भाष्यकारस्यासङ्गत एव स्यादिति शङ्कितुर्गूढाकूतम् ।

**जसि च** । 'ह्रस्वस्य गुण' इति वर्त्तते ।

**ह्रस्वस्य** । 'सम्बुद्धौ चे'त्यतः 'सम्बुद्धा'विति वर्त्तते ।

**शेषो घ्य** । 'यू स्त्र्याख्या'वित्यतो 'यू' इति, 'ङिति ह्रस्वश्चे'त्यतो 'ह्रस्व' इति च वर्त्तते । 'शेष'पदार्थमाह—**अनदीत्यादि । तदन्तमिति** । अनुवृत्तयुभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इति भावः । ननु 'मत्यै' इत्यत्रानवकाशत्वान्नदीसञ्ज्ञैव भविष्यतीति

---

ॐ अभिनव-चन्द्रिका ॐ

जसि च। न च 'जिति चे'त्येव सूत्र्यतां, 'जुसि चे'ति सूत्रं न कर्तव्यं भवतीति लाघवमिति वाच्यम्,

ॐ चिदस्थिमाला ॐ

इतोऽपि पूर्वं द्वितीयः पक्ष उक्त इति बोध्यम्। अनुवृत्तह्रस्वगर्भितमाह—**युभ्यामिति** ।

ॐ ज्योत्स्ना ॐ

प्रसङ्ग एव नास्तीति लोपे सवर्णदीर्घे वा नास्ति रूपे विशेषः । नन्वेकसञ्ज्ञाधिकारादित्यनुपपन्नम्, 'आकडारादेका सञ्ज्ञे'त्यस्य परिभाषात्वव्यवस्थापनात् । नचाकडारादित्यवधिनिर्देशमकृत्वैका सञ्ज्ञे-

ॐ सदाशिवभट्टीयम् ॐ

**जसि च** । योगविभागस्येष्टसिद्ध्यर्थत्वात्क्वचिदप्रवृत्त्या पूर्वस्य गौरीत्यादिसिद्ध्यर्थो योगविभाग इति बोध्यम् । **शेषो घ्यसखि** । **युभ्यामिति** । यूपदह्रस्वपदानुवृत्तिफलितार्थकथनमदः । **अनवकाशत्वान्नदीति** । ननु 'गवां पत्यै स्त्रियै'इत्यत्र सावकाशत्वात्कथं नदीत्वस्य तत्त्वमिति चेदत्राहुः—विप्रतिषेधे परं कार्यं ह्रस्वोऽपतिः समास एव घिः षष्ठीयुक्तश्छन्दसि वा यू असखि ङिति नदी-

ॐ विषमपदविवृतिः ॐ

**इत्यादन्ताः** । **यू इतीनि** । पूर्वसूत्रे तस्य दीर्घपरत्वेपि शब्दाधिकारादत्र ह्रस्वपरत्वं, 'ह्रस्व' इत्यनेन समानाधिकरण्यानुरोधात्, तदेतदभिप्रेत्याह—**अनुवृत्तयुभ्यामिति** । **अनवकाशत्वादिति** । ननु 'गवाम्पत्यै ब्राह्मण्यै' इत्यत्र 'पतिः समास एवे'ति नियमेन घित्वाप्रवृत्तौ चरितार्था नदीसञ्ज्ञा

---

ॐ वरवर्णिनी ॐ

ननु 'जसि चे'ति सूत्रं विहाय 'जिति चे'त्येव सूत्र्यताम्, 'अबिभयु'रित्यत्राप्यनेनैव गुणस्य सिद्धतया 'जुसि चे'ति च न कर्त्तव्यं भवतीति लाघवात्। न च 'ह्रस्वस्य गुण'इत्यतो 'ह्रस्वस्ये'त्यस्यानुवृत्त्याऽबिभयुरित्यत्र दीर्घान्ते भीधातोर्गुणो न स्यादिति वाच्यं, तत्र ह्रस्वपदे स्वरितत्वाभावेनानुवृत्तेरसम्भवात् ।

न च 'जागृयु'रित्यादावपि यदागमन्यायेन यासुड्विशिष्टे जित्त्वस्य सत्त्वेन गुणापत्तिरिति वाच्यं, 'जुसि चे'ति सूत्रस्य स्थाने 'जिति चे'ति न्यासः कार्य इत्याशयेन तत्र च 'क्सस्याचि'त्यतोऽचीत्यस्यानुवृत्त्या इक्परिभाषोपस्थित्या च—अजादौ जिति परे इगन्ताङ्गस्य गुण इत्यर्थेन यासुड्विशिष्टेऽजादित्वाभावेनादोषात्। न च 'वातप्रम्यः''पप्यः' 'नियः''गौर्यः''लक्ष्म्य' इत्यादावपि गुणापत्तिरिति वाच्यं, 'वातप्रम्यः''गौर्यः' इत्यादौ गुणे सत्यकोऽभावात्—'प्रथमयोः पूर्वसवर्ण' इत्यस्याप्राप्त्या—तन्निषेधाय 'दीर्घाज्जसि चे'त्यत्र जस्ग्रहणस्य वैयर्थ्येन तत्सामर्थ्याज्जसि दीर्घस्य गुणो नेति ज्ञापनेनादोषात् । न च गौरीमिच्छन्ति गौरीयन्ति,—गौरीयन्तीति—'गौर्य' इत्यत्र—गौरीशब्दात्क्यजन्तात्क्विपि अल्लोपयलोपयोर्निष्पन्नाद्गौरीशब्दाज्जसि अल्लोपस्याचः परेति स्थानिवत्त्वेन जित्परत्वाभावेन गुणाप्राप्त्या तत्र—प्राप्तपूर्वसवर्णदीर्घवारणाय 'दीर्घाज्जसि चे'त्यत्र जस्ग्रहणं चरितार्थमिति—कथं तस्योक्तार्थज्ञापकता ? पूर्वसवर्णदीर्घे तु न स्थानिवत्त्वं, तस्य पूर्वपरोभयस्थानिकतया. पूर्वमात्रसम्बन्धिकत्वाभावादिति वाच्यं, पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्प्रातिपदिकसञ्ज्ञासमकालमेव स्थानिवत्त्वेनेरनेकाच इति यण एव तत्र प्रवृत्त्या पूर्वसवर्णदीर्घाप्राप्त्या तत्र जस्ग्रहणस्य

शेषग्रहणं व्यर्थमत आह—**एकसञ्ज्ञेति** । **अधिकारादिति** । 'कडाराः कर्मधारये' इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः । **स्पष्टार्थमिति** । स्पष्टतया तदन्तविधिलाभार्थ-

**❀ चिदस्थिमाला ❀**

नन्वाकडारादित्यस्य सञ्ज्ञाव्यवस्थापकत्वेपि नाधिकारसूत्रत्वमिति मूलमयुक्तमत आह—**कडारा इति** । तस्य=सञ्ज्ञाव्यवस्थापनस्य । शब्दरूपस्य विशेष्यत्वं सति गमके एवेत्याह—**स्पष्टतयेति** । ननु 'कृतोङी'ति

**❀ ज्योत्स्ना ❀**

त्येतावानधिकार एवास्त्विति वाच्यम्, 'बहुषु बहुवचन'मित्यादिषु तदसम्बन्धाय मण्डूकानुवृत्तिकल्पने तद्विषयप्रसङ्गाच्चेत्यत आह—**कर्मधारय इत्येतत्पर्यन्तमिति** । तस्य=एकासञ्ज्ञेत्यस्य **बुद्धिस्थत्वादित्यर्थ इति** । तथा च प्रधानोपकारकत्वमात्रेणाधिकारसादृश्यात्परिभाषाप्यधिकारशब्देनोच्यते इति तात्पर्यम् । **स्पष्टतया तदन्तविधिरिति** । शब्दस्वरूपं विशेष्यमादाय वर्णग्रहणे च सर्वत्रे-

**❀ सदाशिवभट्टीयम् ❀**

वा स्त्रियाः इयङुवङ्स्थानावस्त्र्यामि च न आख्या ह्रस्वं लघु इति न्यासभेदेन सावकाशत्वेपि परत्वान्नदीत्वं बाधकं भविष्यतीति शेषग्रहणस्य स्पष्टार्थतावादिनामाशय इत्येके । परं त्वत्रारम्भसामर्थ्यान्नदीसञ्ज्ञा, परकार्यत्वाच्च घिसञ्ज्ञेति भाष्यादिग्रन्थे योजनैव—तस्माद्यथाक्रम एव—'ङिति ह्रस्वः पतिश्च' 'समास एव घिः' 'षष्ठीयुक्तश्छन्दसि वा' 'असखी'ति न्यासेन सिद्धे सामान्यतो ह्रस्वान्तस्य विधानं निरवकाशम् । विशेषतो विधाने लाघवन्तु—'मत्यै' 'धेन्वै'इत्यत्र बाधमन्तरैव घिसञ्ज्ञावस्थित्या प्रतिप्रत्युक्तम् । न च सामान्यतो विधाने गवाम्पत्यै इत्यत्र सावकाशे मत्यै इत्यत्र परत्वाद्बाध्येते इति वक्तुं युक्तम्, उकारान्तस्य सञ्ज्ञाविधानं न कुत्रापि सावकाशमिति 'धेन्वै'इत्यत्र नदीत्वमेवेति फलभेद इति वाच्यं, तदभावात् । उदन्तस्य विधिवैयर्थ्यमित्यस्य-उकारानुवृत्तिर्न कार्येत्याशयः ? उत तद्विषयकं वाक्यं नोपप्लाव्यमिति ? नाद्यः, तस्या उत्तरार्थत्वात् । नान्त्यः, तस्य विप्रतिषेधसूत्रप्रतिबध्यत्वादित्यन्ये । भाष्यप्रामाण्यात् ङिति स्त्रियां पतिशब्दस्यानभिधानमित्यपरे । 'ङितिह्रस्वश्चे'त्यत्रा'दश्चे'तिवचकारः पुनर्विधानार्थस्तस्यानवकाशत्वमित्याशय इतीतरे । वस्तुतस्त्वहन्नित्यत्र वक्ष्यमाणरीत्यानवकाशत्वं सुस्थमेव, पतिशब्दे घिसञ्ज्ञाप्राप्तियोग्यतासत्त्वात् । नियमेनापि बाध इत्यन्यत् । एतेन नव्यमते परमसख्यै स्त्रियै इत्यत्रापि सार्थक्यमित्यपास्तम् । 'असखी'त्यस्य प्रसज्यप्रतिषेधत्वाङ्गीकारेण·

**❀ विषमपदविवृतिः ❀**

'मत्यै' इत्यादौ परत्वाद्घित्वेन बाध्यते । अत एव 'ऊदुपधाया गोह' इति सूत्रे उ-ऊदिति प्रश्लेषमाश्रित्य 'गोह' इति विकृतनिर्देशः प्रत्याख्यातो भाष्ये । तत्र हि—निजुगुहतुरित्यत्र चरितार्थमुत्वं बाधित्वा गूहयतीत्यादौ परत्वाद्गुणे आन्तर्याद्दीर्घ ऊकार इत्युक्तम् । निजुगुहतुरित्यादौ गुणस्य प्राप्तिमत्त्वेप्युत्वस्य तदपवादत्वमनाश्रित्येदं भाष्यं प्रवृत्तमिति स्पष्टमेवेति चेत्—सत्यम् ।

नन्वधिकारादित्यसङ्गतम्, एतस्य परिभाषात्वात्, अधिकारत्वे हि प्रतिसूत्रे सम्बन्धकल्पनागौरवम्, 'बहुषु बहुवचन'मित्यादौ तदसम्बन्धाय मण्डूकप्लुतिकल्पनेऽतिगौरवमित्यत आह—**बुद्धिस्थत्वादित्यर्थ इति** । **स्पष्टतयेति** । शब्दस्वरूपं विशेष्यमध्याहृत्य तदन्तविधिस्तु कल्पनीयत्वादस्पष्ट

**❀ वरवर्णिनी ❀**

चारितार्थ्यासम्भवादिति चेन्न; लक्ष्मीतन्त्र्यादिशब्दात्क्यजन्तात्क्विपि अल्लोपयलोपयोर्जसि 'लक्ष्म्यः' 'तन्त्र्यः' इत्यादौ पूर्वोक्तरीत्या पूर्वसवर्णदीर्घनिवृत्तये जस्ग्रहणस्य चरितार्थतया नियमार्थत्वासम्भवेन 'वातप्रम्य' इत्यादौ गुणापत्तेः । अत्रापि—'एरनेकाच' इत्यस्य प्राप्तिरिति तु वक्तुमप्यशक्यं, संयोगपूर्वत्वात् । नन्वेवमपि क्यजन्तलक्ष्मीशब्दे परत्वादियङ एव प्राप्त्या न तत्र पूर्वसवर्णदीर्घप्राप्तिरिति चेत्, यङ्लुकि 'अबोभवु'-रित्यत्र अनुबन्धनिर्दिष्टतया 'जिति चे'ति गुणानापत्तेर्जिति चेति न्यासस्य कर्तुमशक्यत्वात् । अन्ये तु—'क्लिपाशपे'त्यस्यानित्यतया यङ्लुगन्ते न दोष इति तथा न्यासः सुवच एवेति—**गौडा** व्याचक्षते ।

मिति भावः। **मात्रे इति**। 'ऋतो ङी'ति तु 'यू' इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः।

**आङो ना**। 'पुंसी'ति तु नोक्तम्, 'अमुना कुलेने'त्यत्र मुत्वस्य सिद्धत्वान्नुमनापत्तौ, पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपासिद्धेः। 'न मु ने' इति निषेधस्तु न नुमि; 'न मु टादेश' इतिवार्त्तिकविरोधात्। अत एव सूत्रकृता 'स्त्रियां'-इति वत्-'नी'ति नोक्तम्।

❀ अभिनव-चन्द्रिका ❀

'भूयासुः' 'जागृयु'रित्यादौ गुणापत्तेः। नच 'जुसिचे'त्यस्यैव स्थाने 'जिनि चे'त्येव न्यस्यते, इकृरिभाषा-प्युपस्थाप्यते, तथा च 'क्ङिति चे'ति निषेधान्नोक्तदोष इति वाच्यम्, 'वातप्रम्यः' 'नियः' 'लक्ष्म्य' इत्यत्रापि गुणापत्तेरितिदिक्। **इतिभाव इति**। नच 'गवां पत्ये'इत्यादौ 'पतिः समास एवे'ति नियमा-द्धिसञ्ज्ञाया अप्राप्त्या तत्र नदीसञ्ज्ञायाश्चरितार्थत्वान्मत्यै इत्यादौ परत्वाद्धिसञ्ज्ञा माभूदित्येतदर्थं शेषग्रहणमावश्यकमिति वाच्यम्। 'ह्रस्वौ यू ध्यसखि' 'ङिति स्त्र्याख्यौ नदी वा' 'इयङुवङ्स्थाना-वस्त्री वा न' अत्र 'ह्रस्व'इति न वर्तते, 'ङिती'ति च वर्तते, वाक्यभेदश्च। नच इयङुवङ्स्थानाविति च वर्तते, स्त्री च, यूसाहचर्येण स्त्रीशब्दोऽपि ईकारान्त एव गृह्यते इति स्त्रीशब्दे न दोषः, एवञ्च मत्यै इत्यादौ परत्वान्नदीसञ्ज्ञा भवतीति शेषग्रहणं स्पष्टार्थमित्यदोषात्। **'न मु न इति निषेधस्तु न नुमीति**। सैद्धान्तिकन्यासे इति शेषः। **वार्तिकविरोधादिति**। न चाङो ना पुंसीति

❀ चिद्स्थिमाला ❀

नियमाद्गुणाभविनादोषोऽत आह-**ऋत इति**। ततोऽस्यैवौचित्यादिति भावः।

पदलाघवादाह—**पुंसीति** । **नुमेति** । **इकोचीति** नुमभावापत्ताविल्यर्थः । **एवमग्रेऽपि** । टायामादेशष्टाया आदेशः। सूत्रसम्मतिमप्याह-**अत एवेति**। 'ऋमश्च क्ति'रितिसूत्रे ।

❀ सदाशिवभट्टीयम् ❀

'न ङिसम्बुद्ध्यो'रित्यतत्तुल्यत्वात्। **मात्रे इतीति**। अयमत्र मूलाशयः—यूग्रहणाननुवृत्तावपि ह्रस्वपदा-नुवृत्त्या विश्वपादिशब्दे नातिप्रसङ्गः, अदन्तस्य तु सत्यपि घित्वे क्षतिर्नास्ति। तथाहि रामेणेत्यत्रेनादेशो नादेशापवादः। रामस्येत्यादौ सत्यपि गुणे क्षतिर्नास्ति। इदानीमिक्परिभाषोपस्थित्या तदप्राप्तेश्च। 'अचघे'-रित्यत्रेदुद्भ्यामित्यनुवर्तत एव, 'हरिहरा'वित्यत्र 'द्वन्द्वे घी'त्यस्य विषयेपि न दोषः। 'अदन्तं चेदजाद्यवे'ति नियमार्थत्वादजाद्यदन्तमित्यस्य, 'ईदग्ने'रिति ज्ञापकाच्च न विपरीतनियम इति।

**आङो ना। रूपासिद्धेरिति**। प्रियत्रिणा कुलेनेत्यादौ विभक्तेर्हलादित्वाभावेन 'षट्त्रिचतुर्भ्यो हलादि'-रिति स्वरासिद्धिरपि बोध्या, तत्र स्वमते विहितविशेषणाभावात्। ननु 'न मु ने' इत्यस्य सिद्धान्तेऽपि नकारेऽसिद्धत्वनिषेधकत्वेन रूपं सिद्धम्, 'अमुष्मै कुलाये'त्यादितु न भवत्येवेति चेत्तत्राह-**न मु ने इति**। **विरोधादिति**। एवञ्च न सोर्थः सिद्धान्ते, इदानीन्तु स नवाश्यकस्तथाचामुष्मै इत्यादि प्रमितलक्ष्य-विरोधः स्यादिति भावः। तत्रार्थे सूत्रसम्मतिमप्याह—**अत एव सूत्रेति**।

❀ विषमपदविवृतिः ❀

इति भावः। **न मुने इति**। 'न मु ने' इत्यत्र नेत्यकारस्तूच्चारणार्थ इति भावः। **वार्तिकविरोधा-दिति**। पूर्वपक्षिणो वार्तिकविरोधस्याकिञ्चित्करत्वादिदमयुक्तम्। 'अमुना घटेने'ति लक्ष्यासिद्धेरिति तु वक्तुं युक्तम्। **नीति नोक्तमिति**। 'ने' इति निर्देशस्तु शब्दस्वरूपस्य विशेष्यत्वेन नपुंसकत्व-

❀ वरवर्णिनी ❀

[यूकिं-] **मात्रे इति**। अदन्तेषु रामादिशब्देषु टाङसीतिनिरवकाशेनेनादेशेन बाधात्, रामस्येत्यत्र च गुणेऽपि क्षतिविरहात्, 'रामे' इत्यत्राच्चेरिति न, तत्रेदुद्भ्यामित्यस्यानुवृत्तेः। दीर्घाकारान्तेषु तु-ह्रस्वग्रहणा-

१ गुरवस्तु—'ङिति ह्रस्वः पतिश्च' [ यूस्त्र्याख्याविल्यतो नदीत्यनुवर्त्य-ङिति ह्रस्वः पतिशब्दो

तथा सति तन्त्रेण नकारनिर्देशोऽपि सम्भाव्येत। आगन्तुनाऽकारेण तस्यापि 'ने' इति निर्देशेन तन्त्रस्वीकारे त्वत्यन्तं ज्ञानगौरवमिति न किञ्चिल्लाघवमिति स्पष्टम्भाष्ये।

**आङितीति**। ङकारविशिष्टा सञ्ज्ञा न त्वस्य ङस्येत्त्वम्। अत एव 'हरिणा', 'मत्या' इत्यादौ न गुणः। एवम्—'औङ आप' इत्यत्रापि। अत एवासम्भवे एवापवादत्व-मिति वार्त्तिकमतेऽपि 'रमे' इत्यादौ न याट्।

❀ चिदस्थिमाला ❀

**नकारेति**। नुम्सम्बन्धीत्यर्थः। दीक्षितायुक्तिं खण्डयति—**आगन्तुनेति**। पक्षान्तरे इति भावः। तस्यापि=नुमोऽपि। भाष्यमते बाधसम्भवादाह—**असम्भवे एवेति**।

❀ ज्योत्स्ना ❀

न्यनेन तदन्तविधिस्त्वकल्पनीयस्त्वादस्पष्ट इति भावः। **स्पष्टार्थमिति**। यथासङ्ख्यसूत्रे शब्दतः सङ्ख्या-साम्यमाश्रयणीयं, नार्थत इत्यर्थस्य स्पष्टतया ज्ञापनार्थं ङसिग्रहणमित्यर्थः। एवञ्च नायं स्वरित

❀ सदाशिवभट्टीयम् ❀

**न किञ्चिल्लाघवमिति**। 'ने'इति न्यासेपि नकारइत्यर्थाङ्गीकारे लघुभून'नी'तिन्यासत्यागो निर्बीजः स्यादिति भावः। 'औङ आप' ति सूत्रभाष्ये औवि ..त्वे खट्वे इत्यादौ याट् स्यादित्युक्तं, तदयुक्तं, शीभावस्य याडपवादत्वात्, अतोऽन्यरीत्या योजयति—**अत एवेति**। **हरिणा मत्येति**। तक्रकौण्डिन्य-न्यायेन नादेशस्य गुणबाधकत्वमत्राऽरुचिः। **न याडिति**। 'हरी' इत्यादौ गुणो नेत्यपि बोध्यम्।

❀ विषमपदविवृतिः ❀

माश्रित्य। तस्यापि=नुमोपि। **ज्ञानगौरवमिति**। ननु—'आङो नुट् पुंसी'ति न्यासोस्तु, 'न मुने' इत्यत्र च 'न मु नी'त्येव च न्यासोस्त्विति चेन्न; 'अमुष्मै कुलाये'त्यादौ मुत्वस्य सिद्धत्वेन नुमापत्तेः।

ननु नुम्विधिं प्रति सिद्धत्वेऽपि स्मायादेशं प्रत्यसिद्धत्वेन मुत्वात्पूर्वं स्मायादेशे कथं नुमः प्राप्ति-रिति चेन्न, 'अमुने'त्यादौ मुत्वस्यासिद्धत्वेन सवर्णदीर्घस्येनादेशगुणयोर्वा वारणाय नाभावे कर्त्तव्ये कार्यमात्रं प्रत्यसिद्धत्वनिषेधावश्यकत्वात्, सवर्णदीर्घस्मायादेशयोर्नुम्विघटकत्वाविशेषात्, पररूपन्त्व-न्तरङ्गत्वान्मुत्वात्पूर्वमेव प्रवर्त्तते। 'न मुने'इत्यत्र 'मु न नी'ति न्यासे तु आङो नुट् पुंसी'ति सुवचम्।

**नत्वस्येति**। आङ्त्यस्यासञ्ज्ञात्वमनाश्रित्याङो नादेशविधानादेव। ढकि लोप इत्यादौ विषयप्रत्यय-स्याङादेशं विधाय तदीयङकारस्य नेत्त्वमित्यर्थः [?] एवमौङ इत्यत्रापि बोध्यम्। **वार्तिकमतेऽपीति**।

❀ वरवर्णिनी ❀

नुवृत्त्याऽदोषात्, इदन्तोदन्तैर्विष्टत्वादृकारान्तानुधावनमित्याशयः। अदन्ते घिसञ्ज्ञायां 'द्वन्द्वे घी'ति-पूर्वनिपातप्रसङ्गस्तु न, 'अजाद्यदन्त'मित्यस्याऽदन्तस्य चेदजादेरेवेतिनियमार्थत्वात्। अजादेश्चेददन्त-स्यैवेति विपरीतनियमस्तु न, 'ईदग्नेः सोमवरुणयो'रितीत्त्वविधानात्। 'अग्निकलिभ्या'मिनि निर्देशाच्च।

ननु 'मात्रे' इत्यत्रापि न दोषः, एवं सति 'ऋतोङी'तिसूत्रे ङिग्रहणस्य वैयर्थ्येन ऋकारान्तेषु घित्वप्रयुक्तगुणस्याप्रवृत्तेर्ज्ञापयितुं शक्यत्वादिति चेन्न; 'मात्रे' इत्यस्य—मात्रेत्यस्योपलक्षणतया परिच्छेत्तृ-

घिसञ्ज्ञ इत्यर्थः ] ततः—'समास एव घिः' ['पति'रित्यनुवर्त्तते] ततः 'षष्ठीयुक्तश्छन्दसि वा' [ घिरिति, पतिरिति च वर्त्तते] ततः 'असखि' [ यूस्त्र्याख्यावित्यतो यू इति, ह्रस्व इति घिरिति च यथायथमनुवर्त्तन्ते, सखिवर्जं ह्रस्वाविदुतौ घिसञ्ज्ञावित्यर्थः ]—इति न्यासैः सिद्धे सामान्यतो ह्रस्वान्तस्य सञ्ज्ञाविधानस्य निरवकाशत्वान्नदीसञ्ज्ञैव भविष्यति, न घिसञ्ज्ञेत्याशयः। एतेन—नव्यमते 'परमसख्यै स्त्रियै' इत्यत्र सार्थक्यमित्यपास्तमित्याहुः।

**घेर्ङिति**। 'सुपि चे'त्यतः 'सुपी'ति वर्त्तते। तेन पट्वीति सिद्धम्।

न च 'घेर्ङी'त्येव सूत्रं कार्यं, ङकारादावित्यर्थः। 'प्रबाह्वा'–इत्यत्र 'आङ्याजयारा-मुपसङ्ख्यान'मित्याङादेशस्तु 'ङा'इत्येव वक्तुं शक्य इति वाच्यं; 'मत्या'मित्यादौ 'आण्नद्याः' इत्यस्यानापत्तेः, अल्विधित्वेन स्थानिवत्त्वाभावात्। ङ्ग्रहणे त्वनुबन्धकार्य-त्वात्स्थानिवत्त्वं स्पष्टमिति दिक्।

ॐ अभिनव-चन्द्रिका ॐ

न्यासकल्पे नुम्यपि 'नमुने'इति प्रवर्तिष्यते इति–'अमुना कुलेने'त्यादौ मुत्वस्यासिद्धत्वाभावान्नुमापत्तौ पुंस्त्वाभावेन नाभावस्याप्रवृत्तावपि न रूपासिद्धिरिति वाच्यम्, 'अमुष्मै कुलाये'त्यादावप्येवं मुत्वस्य सिद्धतया नुमापत्तेः, स्मायादेशानापत्तेश्चेति। **घेर्ङिति**। **इतिदिगिति**। दिगर्थस्तु 'नानुबन्धकृतमनेकाल्त्व'मित्यस्य–'अनुबन्धमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मघटि-

ॐ चिद्स्थिमाला ॐ

प्राग्वदाह—**घेर्ङिति**। **अल्विधीति**। ङकारादित्वस्य तत्त्वेन तेनालाभादित्यर्थः। तथा च नुडापत्तिरिति भावः। **स्पष्टमिति**। इदानीमपीत्संज्ञकङकारादावित्येवार्थ इति 'औङआप' इत्यत्र भाष्ये स्पष्टम्। 'प्रबाह्वे'त्यत्रोक्तरीत्यैव निर्वाह इति न सुपां सुलुगिति सूत्रभाष्यविरोधः, तदाह–**इति दिगिति**। पूर्वनिपातप्रकरणस्यानित्यत्वात्, घेरित्यादिनिर्देशस्य सौत्रत्वादिनोपपत्तश्च—

ॐ सदाशिवभट्टीयम् ॐ

**घेर्ङिति**। **दिगिति**। दिगर्थस्तु तत्र तदनापत्तौ नुडापत्तिः, सिद्धान्ते हि परत्वादाटा नुड् बाध्यत। रमायामित्यादौ ङेरामि याडनापत्तिरपि बोध्या, यदि तत्र ङेर्ङाम् क्रियते, तदा रमाय।मित्यत्र पूर्वं प्रत्ययत्वा-भावेनेत्त्वाप्रवृत्त्या ङकारयुक्ते एवादेशे कृते वार्णपरिभाषया याटि कृते प्रत्ययादित्वाभावादित्त्वं ङस्य न स्यात्।

ॐ विषमपदविवृतिः ॐ

अपिना भाष्यकृन्मतेपि याटि कृते निर्दिश्यमानपरिभाषया शीभावस्य प्रवृत्त्ययोग्यत्वेन खट्वा-मित्यादावाट इव भाष्यकृन्मतेपि निरवकाशत्वे न याटः पूर्वं शीभावप्रवृत्तेः। केचित्त्वङ्गस्ये-त्यनेन सामानाधिकरण्यायाबन्ताङ्गाद्विहितस्यौङः शीभावविधानात्कृतेपि याटि शीभाव प्रवृत्तेः भाष्यकृन्मते तक्रकौण्डिन्यन्यायादेव शीभावेन याटो बाध इत्याशय इत्याहुः।

**अल्विधित्वेनेति**। ननु ङकारस्य वस्तुतोऽनुबन्धत्वेनैतस्याप्यनुबन्धकार्यत्वमिति चेन्न; तथा सति

ॐ वरवर्णिनी ॐ

वाचिमातृशब्दस्य पुंल्लिङ्गे वर्त्तमानत्वात्ततस्तृतीयैकवचने 'आङोनाऽस्त्रिया'मिति नादेशापत्तिरित्यतो यूपदा-नुवृत्तिरित्याशयात्। परे तु 'मात्रा' इत्यत्रापि न दोषः, 'आङोनाऽस्त्रिया'मित्यत्रेदुद्भ्यामित्यस्यानुवृत्तेः। 'मात्रे' इत्यत्र च ऋतश्चेद्गुणस्तर्हि ङावेवेति नियमान्न दोष इति–'यूकि'मित्यस्य–"यूस्त्र्याख्यावित्यत्र यूग्रहणं किमर्थं, 'शेषोघी'त्यत्र तदनुवृत्तेर्निष्फलत्वात्—"इत्याशयेन–'मात्रे' इत्युत्तरम्। एवञ्चात्र जननी-वाचिमातृशब्दे नदीत्वे आट् स्यादिति 'मात्रै' इति स्यादित्याशय उत्तरस्येति–**गौडा** व्याचक्षते।

**पट्वीति**। परे तु—पट्वीत्यत्रावोतो गुणवाचनादित्यनेन टीष एव विधानेन नोक्तदोषः। एवं ङीपः स्थानेऽपि टीबेव कार्यः। 'ङीबादेर्ङित्त्वं नामधातौ ङित्त्वप्रयुक्तात्मनेपदार्थ'मिति तु वक्तुमश-क्यम्, एवं सति–"ब्राह्मणमाणवेत्यनेन—यत्नोऽनुवृत्त्यैव सिद्धे यतो विधानादन्यतोऽपि तदिति 'पृष्ठादुप-सङ्ख्यान' मिति सिद्धम्–"इति भाष्योक्तेरसङ्गत्यापत्तेरिति सङ्क्षेपः।

**स्थानिवत्त्वाभावदिति**। परे तु 'ङेर्ङाम्नद्याम्नीभ्य' इत्येवं न्यासेन स्थानिवद्भावं विनाऽपि ङित्त्व-लाभान्न मत्यामित्यत्रोक्तदोषः। अनुबन्धविनिर्मुक्तपदार्थोपस्थितेश्च स्वीकारादेव 'वार्णपरिभाषया नित्य-त्वाच्च पूर्वं याटि ङामि प्रत्ययादित्वाभावाच्छङ्केति ङस्येत्वं न स्या'दिति तत्र दूषणदानं तुच्छमेवेति तथा न्यासस्य सुवचत्वेऽपि 'यस्मिन्विधि'रित्यादिपरिभाषानुसन्धानादिगौरवाद्यथान्यासमेव रमणीय-मित्याहुर्गौडाः।

ङसिङ । एङो द्वित्वेऽप्यस्वरितत्वाद्यथासङ्ख्यं न ।

'ङितश्चे'ति तु नासूत्रि, 'ऋत उ'दित्यत्र ऋदन्तान्ङितोऽति परे पूर्वपरयोरुदित्याद्यर्थे 'जाग्रती'त्यादौ दोषः स्यादिति । ङसिग्रहणं स्पष्टार्थम् ।

**अच्च घेः** । इदुद्भ्यामिति किम् ? 'घेः परस्य ङेरौदच्चे'ति, 'ङिप्रकृतेर्घेरौदच्चे'ति वाऽर्थो मा भूदिति ।

अदौतोस्तपरत्वं मुखसुखार्थम् । इत्सञ्ज्ञायाश्च 'तस्य लोप' इति तयोर्लोपः । न चौतो विभक्तित्वात् 'न विभक्तौ' इति निषेधात्कथमित्सञ्ज्ञेति वाच्यं, 'मुखसुखार्थ'मित्यस्य—तदेव प्रयोजनं, नतु कार्यान्तरं, नापि प्रयोगे श्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव 'न विभक्ता'वित्यस्य तत्राप्रवृत्तेः । अत एव 'इद्वृद्धौ' 'पत्यावैश्वर्ये' इत्यादिनिर्देशाः सङ्गच्छन्ते । यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्तदा इत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु, किं 'तस्य लोप' इत्यनेन ?; स्वभाववादस्यो-

ॐ अभिनव-चन्द्रिका ॐ

ततत्तद्धर्मातिरिक्ताः, आनुपूर्व्यतिरिक्ताश्च येऽनुबन्धघटितबोधकवृत्तिधर्मास्तन्निमित्तके कार्ये कर्तव्येऽनुबन्धा अविद्यमानवद्भवन्तीति अर्थकरणात्, अनुबन्धमात्रवृत्तिविषयताप्रयोजकप्रतिपाद्यतावच्छेदकेतरो योऽल्त्वव्याप्यो धर्मस्तद्घटिताताविदिक्षितधर्मनिमित्तके विधौ कर्तव्ये स्थानिवन्न भवतीत्यनल्विधावित्यस्यार्थकरणान्मत्यामित्यादौ दोषाभावात्—नेर्ङित्येव सुवचमिति ।

**ङितश्चेति नासूत्रीति** । आ समन्तात्—अः—वासुदेवो यस्मिन्नगरे तत्—आ, ततो बहुव्रीहि पुनर्नपुंसकह्रस्वे 'बह्व'इति जाते तस्मादाचारक्विपि लङि शपि 'आङ्गकार्यस्य सम्भावनायां वार्णं पूर्वं न प्रवर्तते'इति

ॐ चिदस्थिमाला ॐ

शास्त्रिदण्ड्याद्युक्तमसदिति ध्वनयन्नाह—**अस्वरितत्वादिति** । अनुवृत्तिः किमर्थेत्याह—**इदुद्भ्यामिति** । पञ्चम्यन्तत्वस्योत्तरार्थमावश्यकत्वादाह—घेः **परेति** । आदेशसान्निध्यात्षष्ठ्येवोचितेत्याह—**ङिप्रकृतेरिति** । पर्यायस्तयोरुभयत्र बोध्यः। **तस्येति** । मुखसुखार्थत्वेत्यर्थः । अत्र सूत्रसम्मतिमाह—**अत एवेति** । तत्र ततस्तद-

ॐ ज्योत्स्ना ॐ

इत्यनुसन्धानविरहेऽपि न दोष इत्यपरमनुकूलं भवति, 'ङसो'रिति न्यासे तु तदापद्येत । **तत्राप्रवृत्तेरिति**। तत्प्रवृत्तौ हि लोपाभावाच्छ्रवणप्रसङ्गात्प्रतिज्ञाविरोध इति भावः। **वादस्येति**। परार्थत्वरूपस्वभाव-

ॐ सदाशिवभट्टीयम् ॐ

वार्णपरिभाषाया अनित्यत्वेनाप्रवृत्तौ तु न मानम्। यदि तूभयोरादेशत्वे एव, समानकार्यित्व एव सेत्यनुगमवादिमतमवलम्बसे, तदा सुपः सम्प्रति ङादित्वासम्भवेन भौतपूर्विकं तद्दूष्यते ? वासुपीति निवर्त्ये—'जतु ङ्वते' इत्यत्रैव प्रवर्तते ? इत्यादिनानाविकल्पन्तत्कुक्षौ निक्षिपामि । यदि निर्देशादिकं प्रदर्शयिष्यसि, तदा प्रतिपत्तिगौरवेण भीषयिष्यामीति—तूष्णीमेवास्वेति। **ङसिङसोश्च** । **नासूत्रीति** । जयन्ति भवन्तीत्यत्रान्तरङ्गत्वात्पररूपेऽचः परेति स्थानिवत्त्वेन गुणे परादित्वेन ङित्त्वसत्त्वात्प्रकृतसूत्रेपि दोषो बोध्यः । पूर्वरूपे तु न स्थानिवत्त्वं, पूर्वपरविधित्वात् । **अच्च घेः** । ननु तत्प्रतिज्ञायां किं मानमत आह—**अत एवेति** ।

ॐ विषमपदविवृतिः ॐ

प्रपठ्येत्यादाविडापत्तेः, क्त्वाप्रत्ययककारस्यानुबन्धत्वेन स्थानिवद्भावेन वलादित्वस्य सुवचत्वात् ।

नन्वेवं 'तिविंशतेर्डिति' 'छिवुक्लमुचमां शिति' 'अनुदात्तङित आत्मनेपद'मित्यादावपीत्पदं व्यर्थमिति चेत्सत्यं, [—व्यर्थमेव] । **ङसोरित्येवेति**। न च द्विवचननिर्देशान्ङसोर्ग्रहणं स्यादिति वाच्यम्, 'अती'त्यस्यानुवृत्त्या दोषाभावात् । औतस्तकारस्योच्चारणार्थत्वादित्सञ्ज्ञां विनैव निवृत्तिः, अत एव न स्वरितत्वमिति प्राचीनोक्तं दूषयितुमाह—**यदि त्विति**। स्वभावत एव निवृत्तिवादस्य । उभयत्र=उच्चारणार्थे

भयत्रापि समत्वात् । ध्वनितश्चेदं 'तस्य लोप' इत्यत्र भाष्ये—इति दिव औत्सूत्रे निरूपयिष्यामः ।

**न चैवमग्नावित्यत्रौतः** स्वरितत्वापत्तिः, न च 'प्रत्ययाप्रत्यययो'रित्येव सिद्धे पुनः–'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्तिरिति वाच्यं; तस्याः परिभाषाया लक्ष्यसिद्ध्यै भाष्यकृता क्वाप्यनाश्रयणात् । स्पष्टश्चेदं 'तित्स्वरित'मित्यत्र कैयटे ।

'अङ्गस्य' इति सूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना सोक्ता, न तु सिद्धान्तिनेति—स्पष्टं तद्विदाम् । 'श्नान्नलोप' इति सूत्रे भाष्येऽपि ध्वनितस्तदभावः,–

❀ अभिनव-चन्द्रिका ❀

यणोऽप्रवृत्तौ लघूपधगुणे वहो अ अत् इति स्थिते, पररूपे, परादिवद्भावेन ङित्सम्बन्ध्यात्परकत्वस्य सत्त्वेन पूर्वरूपापत्तेः । **सङ्गच्छत इति** । वस्तुतस्तु–'तपरस्तत्कालस्ये'ति शास्त्रेण 'अत्' 'आत्'इत्यादीनामेव सञ्ज्ञात्वेन नेत्सञ्ज्ञाप्राप्तिरिति बोध्यम् । **अनाश्रयणादिति** । चिन्त्यमिदं, 'वसोस्सम्प्रसारणम्'

❀ चिदस्थिमाला ❀

प्रवृत्तेरेवेत्यर्थः । दीक्षिताद्युक्तिं खण्डयति–**यदि त्विति** । कथं ध्वनितमित्यत आह–**इति दिव इति** । एवम्=उच्चारणार्थानामपीत्त्वे । **स्पष्टश्चेदमिति** । वातकसाफल्याय तत्र तेन तथोक्तम् । नन्वङ्गस्येति सूत्रे भाष्ये कण्ठत उक्तैवाऽत आह–**अङ्गस्येतीति** । वैपरीत्यशङ्कानिरासायाह–**श्नान्नलोप इतीति** । यथाचैतत्तथान्यत्र स्पष्टम् ।

❀ ज्योत्स्ना ❀

त्वादस्येत्यर्थः । **उभयत्रापीति** । उच्चारणार्थेषु, इत्सञ्ज्ञकेषु चेत्यर्थः । **समत्वादिति** । उच्चारणार्थानामितरोच्चारणफलकत्वस्येवेत्सञ्ज्ञकानामितरसम्बन्धिकार्यविशेषफलकत्वस्य सत्त्वादिति भावः ।

वस्तुतस्तु तपरसूत्रे तःपरो यस्मादिति पञ्चमीतत्पुरुषाश्रयणात्तकाररहितं वर्णमात्रं सञ्ज्ञा, विशिष्टाद्विभक्त्युत्पत्तिस्तु सौत्रत्वादिति व्याख्यातत्वात्तकारस्य शाब्दबोधे न प्रवेशः, 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व'नियमात्, तद्वदुच्चारणार्थवर्णसमवधाने तद्रहितबोधकभागस्यव प्रकृतित्वाद्विभक्त्यर्थान्वयादुच्चारणार्थानां शाब्दबोधे प्रवेशाभावादेव निवृत्तिरिति न तत्र लोपापेक्षा । इत्सञ्ज्ञकानान्तु–कार्यविशेषसम्पादनाय तदेकान्तत्वप्रतिज्ञानाद्विशिष्टस्य विभक्त्यर्थान्वयित्वेन लोपाकरणे 'स्वं रूप'मिति परिभाषणाच्छाब्दबोधे प्रवेशः स्यादित्यस्ति तत्र लोपापेक्षेति—स्वभाववादस्य तत्साम्यस्य चोपन्यासश्चिन्त्यः । यदि तर्ह्युच्चारणार्थानां प्रकृतित्वाभावात्तदर्थस्य विभक्त्यर्थानन्वयित्वमात्राल्लोपं विनैव निवृत्तिस्तर्हि 'हयवर'डित्यादावनुकार्यानुकरणयोरभेदविवक्षया विभक्त्यभावपक्षे उच्चारणार्थाकाराणामुपस्थितिरादिरन्त्येनेत्यनेनैकवाक्यतया कस्मान्न भवति ? उच्यते, प्रत्येकवर्ण विभक्तेरनुत्पत्तावपि 'हयवर'डित्यादिसूत्ररूपवर्णसमुदायात्तदुत्पत्तेर्ङ्गीकारात्तदर्थस्योच्चारणार्थवर्णरहितसमुदायेऽन्वयेन दोषवारणात्, पुनःपुनरकारोच्चारणेनाकाराव्यवहितपूर्ववर्णातिरिक्तवर्णानां प्रत्याहारे ग्रहणाभावज्ञापनेन दोषाभावस्य प्रत्याहारमण्डनावसरेऽस्माभिरुक्तत्वाच्चेति दिक् ।

**श्नान्नलोप इतिसूत्रे भाष्येऽपीति** । तत्र हि–'नान्नलोप' इत्येव शकारानुपादानेन लोपविधाने

❀ सदाशिवभट्टीयम् ❀

**समत्वादिति** । नन्वितरेत्सञ्ज्ञकविशिष्टे 'स्वं रूपं शब्दस्ये'त्युक्त्या विशिष्टस्य विधान श्रवणापत्तिरत इत्सञ्ज्ञालोपौ

❀ विषमपदविवृतिः ❀

इत्सञ्ज्ञके च । ननु 'तपरस्तत्कालस्ये'त्यनेन औकार एव विधेय इति 'न विभक्ता'वितीत्यादिशङ्कासमाधाने निष्फले इति चेत्सत्यम् । **ध्वनित इति** । तत्र हि 'नान्नलोप'इति न्यासे नन्दितत्वादौ नलोप

इति वाच्यम् ; 'प्रत्ययग्रहण'मित्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थात् । अत एवाऽऽदेशेषु दित्त्वमाश्रित्य तत्प्रत्याख्यानेन फलभेदो नेति दिक् ।

**अनङ् सौ** । 'सा'विति प्रथमैकवचनम्, 'असम्बुद्धा'विति पर्युदासात् । नकाराकारस्तूच्चारणार्थ इत्सञ्ज्ञकः ।

**अलोऽन्त्यात्** । अवध्यवधिमतोः साजात्यादाह—**पूर्वो वर्ण इति** । अत एव 'शिष्ट' इत्यादौ 'शा' इति समुदायस्य 'शास इ'दितीत्त्वं न । पञ्चम्यन्तात्ग्रहणाच्च शस्य न ।

### ॐ अभिनव-चन्द्रिका ॐ

'वसुस्रंसु' 'वले' 'वनोरच' 'न पदान्ता'दित्याद्यर्थं परिभाषाया आवश्यकत्वेन एकदेश्युक्तिलमात्रेण 'परिभाषा न स्वीक्रियते' इति वक्तुमशक्यत्वात् । अन्यथा 'बहिरङ्गलक्षणत्वाद्' त्यस्यैकदेश्युक्तित्वेन अन्तरङ्गपरिभाषाया अपि लक्ष्यसिद्ध्यनुपयुक्तत्वापत्तेः । विस्तरस्तु—परिभाषेन्दुचन्द्रिकायां द्रष्टव्य इति दिक् । **अलोऽन्त्यात्पूर्व** । उपधात्वञ्च—यत्किञ्चित्समुदायविशिष्टत्वं, वैशिष्ट्यञ्च—'स्वघटकत्व' 'स्वघटकान्त्यालव्यवहितपूर्वत्वो'भयसम्बन्धेन । अत्रान्त्यालोऽवधित्वेन तदव्यवहितपूर्वोऽपि अलेव

### ॐ चिदस्थिमाला ॐ

वार्तिकार्थमाह—**प्रत्ययेति** । अत्र भाष्यसम्मतिमाह—**अत एवेति** । तस्य तथार्थेन तत्र तदप्रवृत्तेरेवेत्यर्थः । 'एवञ्चौतस्तित्त्वं स्वरितत्वार्थमित्यादिप्रकाशोक्तमयुक्तमिति बोध्यं, तदाह—**इति दिगिति** । सप्तमीबहुवचननिरासायाह—**सावितीति** । तदसङ्गतये आह—**इदिति** । 'अल्'इत्यस्य फलमाह—**पञ्चम्यन्तेति** । विधेयगतत्वेन

### ॐ ज्योत्स्ना ॐ

नन्दितेत्यत्रातिव्याप्तिः । कितीत्यनुवर्त्य [तथात्वाद्धिसञ्ज्ञायाः सिद्धत्वादिति वदद्भिरुपाध्यायैरस्यैकदेश्युक्तित्वसूचनात्कार्यकालपक्षे सखीत्यस्याङ्गविशेषणत्वात्तदन्तविधौ सखिशब्दान्तस्य सञ्ज्ञानिषेध इति मिश्रोत्प्रेक्षितस्य, 'सख्यवयवभिन्नेवर्णाद्यन्तस्य घिसञ्ज्ञेति'मूलोत्प्रेक्षितस्य तदाशयस्य च पूर्वपक्षिसम्बन्धित्वकल्पनौचित्यात् । यथा चेयं पूर्वपक्ष्युक्तिस्तथोक्तं प्रागिति दिक्[1] । ]

### ॐ सदाशिवभट्टीयम् ॐ

प्रार्थ्येते, अनित्सञ्ज्ञकतपरे तु तपरसूत्रप्रवृत्त्या तकाररहितस्यैव विधानमिति वैषम्यमिति चेन्न, 'भाव्यमानेन सवर्णग्रहणं ने'त्यनेन गुणाभेदकत्वादिप्राप्तस्येव तपरसूत्रप्राप्तस्यापि निषेधध्रौव्यात् । अत एव किमोदिति पक्षेऽनुनासिको नेति बोध्यम् । **फलभेदो नेति** । नन्वौदादेशे दित्वं नाश्रयणीयमतोपि फलैक्यं, न हि भाष्ये औदादेशो दिदिति, अदादेशो दिदिति वा कण्ठरवेणोक्तमस्तीति चेन्न; दित्वमाश्रित्य तितीतिवार्त्तिकप्रत्याख्यानावसरे भाष्ये औकारस्य तपरत्वानुक्त्या तेन फलभेदापत्तेरिति भावः। **इत्वं नेति** । अलोन्त्यस्येति तु न, नानर्थके इति

### ॐ विषमपदविवृतिः ॐ

आपादितः । उक्तपरिभाषासत्वे तु नशब्दस्य प्रत्ययत्वाभावादेव नलोपाप्रसक्तौ तदसङ्गतिः।

**नेति दिगिति** । ननु 'तपरस्तत्कालस्ये'त्यनेनौकारमात्रस्यैव तस्य सञ्ज्ञात्वेन तस्य तित्त्वाभावात्स्वरितत्वशङ्कातत्समाधाने द्वे अपि निष्फले इति चेन्न; किमोदित्यत्रापि तथात्वापत्तौ क्वेत्यत्र स्वरितत्वानापत्तेः, यदि च तदर्थं तित्पदन्तिद्बोध्यपरन्तदा प्रकृतेपि तदापत्तेः । नव्यमतेऽणुदित्सूत्रस्थभाष्यानुरोधेनानुबन्धविनिर्मुक्तपदार्थोपस्थित्यङ्गीकारेण तित्पदस्य तद्बोध्यपरत्वस्यावश्यकत्वाच्च । तदेतदभिप्रेत्य—तित्स्वरितमिति सूत्रे कैयटे तित्प्रत्यायितसञ्ज्ञाधर्मेण सञ्ज्ञी कथ्यते इत्यस्ति तित्पदव्यपदेश आदेशस्येत्याद्युक्तम् । **समुदायस्येति** । 'नानर्थकेति' परिभाषा तत्रैव सूत्रे भाष्ये प्रत्याख्याता । **शस्येति**।

१ [ ] एतदन्तर्गतः पाठोऽत्र प्रमादादापतितो भाति,—खण्डितश्चात्र कियानपि ग्रन्थभागः ।

**सर्वनामस्थाने**। 'नोपधाया' इति, 'ढ्रलोपे' इत्यतो 'दीर्घ' इति चाऽनुवर्त्तते।

**अपृक्त**। 'अपृक्त' इति पुंस्त्वमविवक्षितम्; अत एवापृक्तं हलिति सङ्गच्छते। अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे सञ्ज्ञाविधानमदृष्टार्थम्।

**हल्ङ्याप्**। 'सुतिसी'ति पृथक् पदम्। **हलन्तादिति**। सुतिसीनां प्रत्ययत्वेनोपस्थितस्य 'यस्मात्स विहितस्तदादे'रित्यस्य विशेष्यत्वेन तदन्तलाभ इति भावः। एवं ङ्याबंशे द्वेधा तदुपस्थित्या ङ्याबन्तान्तादित्यर्थो द्रष्टव्यः। **हल्ङ्याब्भ्यः किमिति**। 'राम' इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः। 'दीर्घात्किं?, निष्कौशाम्बिः, अतिखट्व' इत्यारभ्य–'संयोगान्तलोपस्यासिद्धत्वा'दित्यन्तोऽपपाठः, मनोरमायां दर्शनात्।

**सखेति**। यद्यप्यत्रैव 'सख्युरसम्बुद्धा'विति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेः, 'अत उपधायाः' इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम्।

---

**ॐ अभिनव-चन्द्रिका ॐ**

गृह्यते इति 'शिष्ट' इत्यादौ न दोष इति भावः। **तदन्तलाभ इति**। सुतिसिभिः तदादिरिति धर्मी उपस्थापनीयो? ङ्याब्भ्यां तदादिरिति धर्म उपस्थापनीयो वेत्यत्र विनिगमनाविरहादुभाभ्यां धर्म्यु-

**ॐ चिदस्थिमाला ॐ**

विवक्षाप्राप्तावाह–**अपृक्त इतीति**। तन्नियमानादरे बीजमाह–**अत एवेति**। अन्यथा फलाभावादाह–**हलिति**। **पृथगिति**।—समाहारद्वन्द्वेन। अन्यथाऽपृक्तशब्दस्य पूर्वनिपातापत्तेः। 'पृथक्पदानी'त्युचितम्।

विशेष्यस्यान्यथासत्त्वादाह—**सुतीति**। भेदेनोक्तेः फलमाह—**द्वेधेति**। शास्त्रिदण्ड्यादिग्रन्थासाङ्गत्यन्ध्वनयन्नाह—**दीर्घादिति**। 'आरभ्ये'त्यस्य—'उक्तः' इति शेषः। **उचित इति**। निरवकाशत्वाभावेनाबाधकत्वेऽपि प्रतिपदोक्तत्वस्य पूर्वप्रवृत्तिनियामकत्वस्य स्वीकारादिति भावः।

मूलाशयमाह–**तथापीति**। 'सख्युर्यः''–सङ्ख्यस्य चे'त्यादिनिर्देशादाह–**उक्तेति**। 'अनुकरणे'न्वयः।

**ॐ सदाशिवभट्टीयम् ॐ**

निषेधात्। तत्प्रत्याख्याने तु न दोष इति स्पष्टमत्रैव सूत्रे भाष्ये। **प्रदेशेष्विति**। 'अस्तिसिचोऽपृक्ते''गुणोऽपृक्ते''वेरपृक्तस्ये'त्येतेषु सूत्रेष्विति भावः। **हल्ग्रहणेनैवेति**। तत्राद्ययोः'उतोवृद्धिर्लुकिहली'त्यतो हलीत्यनुवृत्तावपि तदादिविधिप्रतिबन्धाय हलिति वक्तव्यम्। तृतीये तु 'वे'रित्यनुनासिकनिर्देशमाश्रित्यापृक्तस्येति भाष्ये प्रत्याख्यातमिति—न कर्तव्यम्, हल्ङ्याबितिसूत्रे तु वर्तत एवेति बोध्यम्। **अदृष्टार्थमिति**।

**ॐ विषमदविवृतिः ॐ**

'आस्' इति समुदायात्पूर्वलेपीति शेषः। **अदृष्टार्थमिति**। यत्तु पाठकेनोक्तं–'हल्ङ्या'बिति सूत्रे हलन्तानां सुतिसीनामित्यर्थे हन्यादित्यादौ यासुड्विशिष्टस्य लोपः स्यादिति, तन्न; सुतिसीनां तस्मादित्युत्तरस्येति परिभाषया षष्ठन्तत्वकल्पनेन निर्दिश्यमानपरिभाषाप्रवृत्तौ दोषाभावात्। अथादित्यत्र रुदिहीत्यत्रादः सर्वेषामङ्गार्ग्यगालवयोरित्यादि नेष्यते एव हल्ग्रहणात्। वस्तुतस्तु 'गुणोऽपृक्ते' इत्यस्य हलादौ सार्वधातुके इत्यर्थे ऊर्णोतीत्यत्रापि गुणापत्तिः। नचो'र्णोतेर्विभाषे'त्यस्य वैयर्थ्यमिति वाच्यं, सूत्रद्वयस्य विषयव्यवस्थाया एवानापत्तेः। एवम्–'अदः सर्वेषा'मित्यस्य हलादेः सार्वधातुकस्येत्यर्थापत्तौ अत्ति अत्तामित्यादावडापत्तिः, तस्मादपृक्तसञ्ज्ञासूत्रं दृष्टार्थमिति। **द्वेधेति**। गोबष्कयणी बहुश्रेयसीत्याद्यर्थमिदम्। **राम इत्यादाविति**। राजेत्यादौ तु संयोगान्तलोपेन सिद्धिः।

**अचो ञ्णि** । 'मृजेर्वृद्धि'रित्यतो 'वृद्धि'रित्यनुवर्त्तते, 'अङ्गस्ये'ति चाधिकृतं, तदाह—**अङ्गस्य वृद्धिरिति** ।

**ख्यत्यादिति** । उच्चारणार्थाकारेण कृतयणः प्रयोगस्थस्यानुकरणादविशेषेणोभयोर्ग्रहणमित्याह—**खितीत्यादि** । ङस्यादिपरस्तादृश खि-खी-ति-ती-शब्दप्रकृतिक एव सम्भवतीति भावः । **सुसखेति** । 'न पूजना'दिति निषेधात्—'राजाहः सखिभ्य' इति टज्न ।

**समुदायस्येति** । 'असखी'त्यस्य—सखिभिन्नावयवाविति वर्णसञ्ज्ञापक्षेऽर्थः । अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्येवर्णादेरेव ग्रहणात्—'कृतं सख्या' इति वाक्ये न दोषः । सिद्धान्तिसम्मते तदन्तसञ्ज्ञापक्षे—सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पकसखिशब्दे तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत्सर्वं—हरदत्तानुरोधेन ।

ॐ अभिनव-चन्द्रिका ॐ

पस्थितौ घुतिसीत्येतदुपस्थितं तदादिं विशेष्यीकृत्य तदन्तविधिना ङ्याबन्तं यत्तदादि तदन्तं यत्तदादि तस्मात्परीभूतं सुतिसीत्येतदपृक्तं हल्लुप्यत इति सूत्रार्थ इति भावः । **सखिभिन्नावयवाविति** । नच सखिभिन्नं खीति, तदवयवेकारस्य घिसञ्ज्ञा दुर्वारैवेति वाच्यं, पर्युदासन्यायेन सखिभिन्नं यत्प्रातिपदिकं तदवयवेकारोकारयोर्घिसञ्ज्ञा भवतीत्यर्थेनादोषात् । एतदेवाभ्युपेत्याह—**कृतं सख्येतीति** ।

**हरदत्तानुरोधेनेति** । परेतु—'असखी'त्यस्य सखिभिन्नप्रातिपदिकावयवावित्यर्थः । नच पर्युदस्यमानो यत्र वर्णः पर्युदाससमर्पकश्च—यत्र समुदायबोधकपदं तत्र तत्पदं तदवयवे लक्षणिकमिति व्याप्तिः, अत एव 'इदुदुपधस्य' 'न पदान्तात्' 'नश्छव्यप्रशान्' 'अलसन्तस्य'इत्यादौ सर्वत्र प्रत्ययपद-नाम्पद-प्रशान्पद-धातुपदानि तदवयवपराणीति—प्रकृते सखिपदं तदवयवे लाक्षणिक

ॐ चिदस्थिमाला ॐ

**प्रकृतिक एवेति** । तत्स्थानिक एवेत्यर्थ । मूलाशयमाह—**असखीति** । 'सर्वे सर्वपदे'ति न्यायेनेदम् । यथाश्रुते प्रसक्तदोषमुद्धरति—**अत्रेति** । पूर्वस्यासिद्धान्तत्वसूचनायाह—**सिद्धान्तीति** । **विशेष्येति** । शब्दरूपविशेष्यं त्वतिप्रसक्तम् । एतेन शब्दशास्त्रप्रसिद्धः शब्दो विशेष्य इत्यपास्तम् । यद्यपि

ॐ सदाशिवभट्टीयम् ॐ

नन्वेवं हल्ङ्यादिसूत्रे तदन्तविधिना हलन्तं सुतिसि लुप्यते इत्यर्थेन हन्यादित्यादावतिप्रसङ्गः, सञ्ज्ञाकरणे तु न तदन्तविधिरिति दृष्टं फलम्, न च निर्दिश्यमानपरिभाषया निस्तारः, सूत्रे षष्ठीनिर्देशाभावात् । यदिनूक्तातिप्रसङ्गभङ्गाय षष्ठीनिर्देशः क्रियते—तदा भिन्तादित्यादावतिप्रसङ्गो दुर्वारः, स्थानिवद्भावविषये उक्तपरिभाषाया अवृत्तेरिति चेन्न; सुतिसि हलिति 'सुतिसिहल'इति वा कर्मधारयनिर्देशेन परनिपातनात्तस्य विशेषणत्वाभावनिर्णयेन तदन्तविधेरभावेनातिप्रसङ्गाभावात् । षष्ठीतत्पुरुषस्तु न, निषादस्थपतिवद्गौरवात् । एतेनापृक्तग्रहणं चिन्त्यप्रयोजनमित्यादि शब्दरत्नादिग्रन्था व्याख्याता इति बोध्यम् ।

**ख्यत्यात्परस्य । भिन्नावयवाविति** । अन्त्यावयवेत्यर्थः । अत एवाह—**प्रातिपदिकान्त्येवर्णादेरिति** ।

ॐ विषमपदविवृति ॐ

यद्वा 'हल्ङ्याब्भ्यः कि'मित्यस्य-ङ्याब्भ्य इति किमर्थमित्यर्थः । समुदायद्वाराऽवयवप्रश्ने तात्पर्यात् ।

**इदितोरित्यर्थ इति** । सञ्ज्ञाविधौ प्रथमान्तयोरेवोपयोगात् । सख्यवयवभिन्नाविदुतावित्युचितम् । वर्णसञ्ज्ञापक्षे सूत्रार्थमुक्त्वा तदन्तसञ्ज्ञापक्षे तं वक्तुमाह—**तदन्तेति** ।

'यस्येति चे'ति सूत्रभाष्यात्तु–'सखिशब्दस्य तदवयवे लक्षणया—सख्यवयव-भिन्नयोरिदुतोरित्यर्थः । यथा 'अत्वसन्तस्ये'ति सूत्रेऽधातोरित्येतद्घटकधातुपदस्य 'पिण्डग्र' इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणाऽऽकरे दृश्यते ।

तदन्तसञ्ज्ञापक्षेऽप्यसखीति य्वोरेव विशेषणं,ततस्तदन्तविधिः;'उतश्च प्रत्ययाद्'दितिवत् ।

### ❀ अभिनव-चन्द्रिका ❀

भवतीति कथं सखिभिन्नप्रातिपदिकावयवाविलर्थ इति वाच्यम्, 'ख्यत्यात्परस्ये'ति सूत्रस्थस्य 'किमर्थं विकृतनिर्देशो–न सखिपतिभ्यामित्येवोच्यते—अतिसखेरागच्छती'ति भाष्यस्य प्रामाण्येन प्रकृते तादृशार्थकरणात् । अन्यथा घिसञ्ज्ञाया अभावेन गुणाप्राप्त्या तदसङ्गतिः स्पष्टैव । नच ङ्यन्तप्रकृतिक एक एवायमिति विहितविशेषणमनाश्रित्यैवेदं भाष्यं प्रवृत्तमिति नैतद्विरोध इति वाच्यम्, तस्मादिति परिभाषायां जागरूकायां सत्यां विहितविशेषणाश्रयस्य कर्तुमशक्यत्वात्, लक्षणप्रतिपदोक्तपरिभाषाया ङ्यन्तप्रकृतिकसखिशब्दस्य लाक्षणिकत्वेन 'शेषोघ्यसखी'त्यत्र लक्षणप्रतिपदोक्तपरिभाषया एतत्सखिशब्दग्रहणस्य वक्तुमशक्यत्वाच्च। नचैवमपि यस्येति चेति सूत्रस्थभाष्यविरोधः, तत्र हि '–इवर्णस्य ईति किमुदाहरणम् ? अतिसखेरागच्छति, यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वादतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्या उपसर्जनह्रस्वत्वे कृतेऽपि सखिशब्दतया घिसञ्ज्ञा न स्यात्, लोपे तु लक्षणप्रति-पदोक्तपरिभाषयात्र दोषः–' इत्युक्तम् । भवद्रीत्या विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैवेति वाच्यम्; लोपेऽपि लिङ्गविशिष्टपरिभाषया ङ्यन्तस्य सखिशब्दत्वेन स्थानिवद्भावेन कृतह्रस्वस्यापि तत्त्वेन 'असखी'तिनिषेधप्रवृत्तेः सुलभत्वेन प्रकृतभाष्यासङ्गत्या एतस्य भाष्यस्यैकदेश्युक्तित्वेनादोषात् ।

न चास्मिन्मते असखीत्यत्र सखिपदं सख्यवयवे लाक्षणिकमिति—प्रातिपदिकत्वव्याप्यधर्मा-वच्छिन्नविशेष्यताकोपस्थितिजनकत्वाऽभावान्न लिङ्गविशिष्टपरिभाषाप्रवृत्तिरिति वाच्यं, कुमारत्वस्य–'कुमार कुमारक्रीडाया'मिति धातावपि सत्त्वेन प्रातिपदिकत्वव्याप्यत्वाभावात्––'कुमारः श्रमणा-दिभि'रिति ज्ञापकासङ्गत्यापत्त्या,––'स्वयुवे'त्यत्र युवन्पदमेव नकारान्तयुवन्शब्दान्तलाक्षणिकमिति एकदेशान्वयभिया 'विभक्तौ लिङ्गविशिष्टाग्रहण'मिति परिभाषायाः 'युवतीः पश्ये'तिफलदानपर-भाष्यप्रमाण्येन च–तथा कल्पनीयत्वेन अभेदसम्बन्धेनान्वयाप्रयोजकप्रातिपदिकेतरवृत्तित्वाभावत्वे सति प्रातिपदिकवृत्तित्वमित्येतद्रूपप्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वरूपप्रातिपदिकग्रहणत्वस्यावश्यं परिष्करणीयतया प्रकृते परिभाषाप्रवृत्तेः सुवचत्वात् । किञ्च पूर्वान्तवद्भावेन सखिशब्दत्वेन 'राजाहः सखिभ्यष्ट'जिति समासान्तटचोऽकरणेनेदं भाष्यमेकदेश्युक्तिः, ख्यत्यादितिसूत्रस्थ-भाष्यविरोधाच्चेत्याहुः ।

### ❀ चिदस्थिमाला ❀

कार्यकालेऽङ्गं विशेष्यमस्त्येव, तथापि सखिशब्दभिन्नान्तस्येत्येव स्यान्नतु सख्यन्तभिन्नस्येति नैकार्थी-भावापन्नस्य सखिशब्दस्य तं विनाङ्गे विशेषणत्वेनान्वयायोगादिति भावः । भाष्यात्त्वित्यस्य—'लभ्यते' इत्यत्रान्वयः । तत्रादौ वर्णे सञ्ज्ञापक्षे आह—सख्यवयवेति । य्वोरेवेति । उक्त-

### ❀ सदाशिवभट्टीयम् ❀

अन्यथा 'सख्युर्घातक' इत्यलुक्समासेऽतिप्रसङ्गःस्यादिति भावः । लक्षणयेति । यद्यपि तदन्त-विधिकल्पनेनापि भाष्यमुद्द्योते योजितं, तथापि वर्णसञ्ज्ञापक्षे लक्षणावश्यकत्वेनात्र सैवादृता । किञ्च तदन्तविधिकल्पने लिङ्गविशिष्टपरिभाषाया अप्रवृत्तयेऽनित्यत्वमाश्रयणीयम्, 'विभक्तौ लिङ्गविशिष्टाग्रहण'-मिति तन्निषेधप्रवृत्तये कार्यकालपक्षे पदैकवाक्यता वाश्रयणीया स्यात् । लक्षणापक्षे तु–वक्ष्यमाणरीत्या न्यायत एव लिङ्गविशिष्टपरिभाषाऽप्रवृत्तिः सिध्यतीति सैवादृतेति बोध्यम् ।

ततश्च--सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः। तदन्तविधिश्च--शेषपदार्थविशेषणतया। एवञ्च 'प्रकृते नैव घिसञ्ज्ञे'ति--लभ्यते। तत्र हि--"इवर्णस्य ईति किमुदाहरणम्?--अतिसखेरागच्छति, यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वात्--अतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृतेऽपि घिसञ्ज्ञा न स्यात्। लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः--" इत्युक्तम्।

भवद्रीत्या हि विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैव। न च लोपेऽपि लिङ्गविशिष्टपरिभाषया[1] दोषः, सखिशब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाभावात्। प्रातिपदिकत्ववदुपस्थापकपदोपादानं हि प्रातिपदिकग्रहणम्।

ख्यत्यात्सूत्रे--"किमर्थं विकृतनिर्देशः, न--'सखिपतिभ्या'मि त्येवोच्यते?, अतिसखेरित्यत्र मा भूत्?-"इति भाष्येऽपि ङ्यन्तप्रकृतिक एवायम्। विहितविशेषणानाश्रयणेनेव

ॐ चिदस्थिमाला ॐ

रीत्यैवेति भावः। प्रकृते=सखिशब्दे। कृतेऽपीति। तत्वसत्त्वादिति भावः। लोपेऽपि=इकारस्य। तदनित्यत्वस्यागतिकगतित्वादाह—सखीति। ननु एवमपि तदस्त्येवात आह—प्रातीति। तदुपस्थापकपदोपादानं-सामान्यतो विशेषतो वा। मूलोक्तप्रकारस्यापि भाष्यसम्मतत्वनिरासायाह—ख्यत्यादिति। नन्वेवं भाष्ययोर्मिथो विरोधोऽत आह-विहितेति। अनेन सङ्कोचावश्यकता सूचिता। एतत्=

ॐ सदाशिवभट्टीयम् ॐ

बोध्यम्। प्रातिपदिकत्ववदुपस्थापकेति। ननु तद्वदुपस्थापकत्वं-विशेषणतया, विशेष्यतया, मुख्यविशेष्यतया वा? सर्वसाधारण्येन वेह विवक्षितं? नाद्यान्त्यौ, सख्यवयवे लक्षणायामपि विशेषणतया सखिशब्दस्य भानसत्त्वात्तद्वदुपस्थापकत्वश्रौव्येण प्रकृते परिभाषाप्रवृत्तेर्दुर्वारत्वात। अत एव न द्वितीयोपि; आनुपूर्वीनिष्ठप्रकारतानिरूपितविशेष्यताया अपि सखिशब्दे सत्त्वात्। नापि तृतीयः; 'प्रातिपदिकार्थे'ति सूत्रेपि तदप्रवृत्त्यापत्तेः, द्वन्द्वनिर्देशे बहुशस्तत्सञ्चारस्य भाष्योक्तस्यासम्बद्धत्वापत्तेश्चेति चेत्,--अत्रोच्यते--सर्वसाधारण्येनैवेह तदुपस्थापकत्वं विवक्षितं, लक्षणा च शक्यतावच्छेदकारोपः, शब्दपराणाञ्च शब्दनिष्ठाजातिः प्रवृत्तिनिमित्तम्, एवञ्च सखिशब्दावयवेषु तदारोपेप्यवयवानां जातेर्वा न तद्वत्त्वमिति। यद्वाऽस्तु शब्दपरायणामानुपूर्वी प्रवृत्तिनिमित्तं, ध्वंसादिरूपायास्तस्या अपि न तद्वत्त्वमिति च। विहितविशेषणानाश्रयणनेवेति। विधीयतेऽस्माद्विहितं,-प्रकृते प्रकृतिरूपं--तदादीत्यर्थः, तेन यत्सखिपत्योर्विशेषणन्तदनाश्रयणेनेत्यर्थः। अपादाने निष्ठा च--'एङ्ह्रस्वा'दिति सूत्रभाष्ये स्पष्टेति तत्सूत्र एवोक्तम्। अयं भावः,--ङसिङसोरिति प्रत्ययग्रहणेन तदादीत्युपस्थितं न सखिपत्योर्विशेष्यं, तयोः श्रूयमाणपदार्थविशेषणत्वस्य न्याय्यत्वात्। नापि स्वातन्त्र्येण परपदार्थविशेषणं, व्यधिकरणविभक्तिद्वयापत्तेः; किन्तु सखिपत्योर्विशेषणम्; एवञ्च सुमखेरित्यादौ ना-

१ केचित्तु--'कुमारः श्रमणादिभि'रिति ज्ञापकात्प्रातिपदिकत्वव्याप्यविषयताप्रयोजकस्यैव प्रातिपदिकग्रहणपदेनाभिप्रयणीयत्वेन लिङ्गविशिष्टपरिभाषायाः प्राप्तावपि--सञ्ज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेन विभक्तिनिमित्तकत्वस्योपपादयितुं शक्यतया 'विभक्तौ लिङ्गविशिष्टाऽग्रहण'मिति तन्निषेधान्न दोषः। ख्यत्यादितिसूत्रभाष्योक्तमतिसखेरिति च ङ्यन्तस्य रूपं, लक्षणप्रतिपदोक्तपरिभाषामप्यबुद्ध्वैव चेदं भाष्यं प्रवृत्तं—अत्र दोषवारकं विहितविशेषणमबुद्ध्वेवेति ग्रन्थं लापयन्ति।

परे तु—सखिभिन्नावयवा इत्येवात्रार्थः, प्रकृतसूत्रार्थप्रतिपादनप्रवृत्तभाष्यस्य यस्येतिसूत्रैस्थकदेश्युक्त-

प्रतिपदोक्तपरिभाषानाश्रयणेनैवैतद्भाष्यं प्रवृत्तमिति न तद्विरोध इत्यलम्।

**पतिः समा।** एवकार इष्टतोऽवधारणार्थः। स्मृतिपुराणेषु 'पतये' 'सखिने'त्यादि व्याकरणानिष्पन्नत्वेनासाध्वेव। त्रिशङ्क्वाद्ययाज्ययाजनादाविव तपोमाहात्म्येनासाधुप्रयोगेऽपि ऋषीणां दोषाभावात्। याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च। अस्माकमपि—स्मृतिपुराणाध्ययनविधिबलात्, तेषां तपोबलाच्च-यज्ञमध्येऽपि तदन्तर्गतपाठे दोषाभावः। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव। अत एव नदीसञ्ज्ञासूत्रे भाष्ये—'छन्दोवत्कवयः कुर्वन्ती'त्युक्त्वा 'न ह्येपेष्टिरस्ती'त्युक्तम्। 'यू स्त्याख्या'विति सूत्रे

## ॐ चिद्स्थिमाला ॐ

ख्यत्यादिति सूत्रस्थम्। **तदिति**। 'यस्येति च'ेति सूत्रस्थभाष्येत्यर्थः। एतेन'ख्यत्यादिति सूत्रभाष्यविरोधात्तद्भाष्यमभ्युपगममात्रपर'मिति मूलं युक्तमेवेति **रत्नाकरोक्तमपास्तं**, तत्रत्यकैयटस्य तु प्रमाद एव इत्युद्योते स्पष्टं, तदाह—**इत्यलमिति**।

**इष्टत इति**। अन्यथा विपरीतनियमापत्त्यावनिष्टापत्तिवारणाय लिङ्गानुसरणे गौरवापत्तिरिति भावः। दीक्षिताद्युक्तप्रकारस्यार्थासाङ्गत्याऽयुक्तत्वं दिगर्थत्वेन वक्ष्यमाणं ध्वनयन्नाह—**स्मृतीति**। नन्वेवं कथं तैः प्रयुक्तमत आह—**त्रिशङ्क्वादीति**। अभ्युपेत्येदम्। वस्तुतः सिद्धान्तं पस्पशास्थभाष्यसम्मतमाह—**याज्ञे इति**। नन्वेवमप्यस्माकं दोष एवात आह—**अस्माकमपीति**। तदन्तर्गतेति। स्मृत्याद्यन्तर्गतेत्यर्थः। एतत्फलमाह—**स्वातन्त्र्येणेति**। अत एव=स्मृत्यादावसाधुत्वादेव।

## ॐ ज्योत्स्ना ॐ

**इष्टतोऽवधारणार्थ इति**। एवकाराभावे तु 'समासे पतिरेव घिसञ्ज्ञक' इति नियमसम्भावना। तथा च-अतिसखेः स्वमित्युदाहृतभाष्यप्रयोगविरोध इति भावः। ननु'समासे एव पतिर्घिसञ्ज्ञ'इत्यभिप्रेतनियमपक्षेऽपि 'सीतायाः पतये नमः' 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पता'वित्याद्यृषिप्रयोगविरोधोऽस्त्येवेत्यत आह—**स्मृतिपुराणेष्वित्यादि**। संक्षिप्तास्तु—पतिरित्याख्यातः पतिः, ण्यन्तादच इरित्यस्य

## ॐ सदाशिवभट्टीयम् ॐ

निप्रसङ्ग इति। **परिभाषानाश्रयणेनैवेति**। ननु लिङ्गविशिष्टपरिभाषया सखीशब्दस्यापि ग्रहणेन कृतष्टत्वे

## ॐ विषमपदविवृतिः ॐ

यज्ञमध्ये—ब्रह्मयज्ञमध्ये। अतएव=असाधुत्वादेव। आद्यन्यासे दोषमाह—

भाष्यबलेनान्यथायोजनस्यायुक्तत्वात्। बहुव्रीहौ नित्यकपः, तत्पुरुषे तु एकादेशेन सखिशब्दत्वादृचः प्रवृत्त्याऽतिसखेरितिरूपस्यैवासम्भवेन, लोपेऽपि लिङ्गविशिष्टपरिभाषया तत्र घिसञ्ज्ञाऽप्राप्तेश्च तस्य भाष्यैकदेश्युक्तित्वं स्पष्टमेव। 'विभक्तौ लिङ्गविशिष्टाऽग्रहण'मिति तु नात्र प्रवर्त्तते, सञ्ज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेन विभक्तिनिमित्तकत्वमाश्रित्य तस्या अप्रवृत्तेः। अन्यथा 'कृच्छ्रात्पतित' इत्यत्र 'पञ्चम्याः स्तोकादिभ्य' इत्यलुकः सुब्निमित्तकत्वेऽपि 'अपेतापोढमुक्ते'ति समासो न स्यात्, विभक्तौ लिङ्गविशिष्टाऽग्रहणात्। ननु सप्तम्यन्तपञ्चम्यन्तपदप्रयोज्याया निमित्ततायाः एव 'विभक्तौ लिङ्गविशिष्टाऽग्रहण'-मित्यत्र ग्रहणेन प्रकृते तदभावान्न दोष इति चेन्न, शूनीशब्दान्ङसि 'शून्याः'इत्यत्र.'न गोश्वन्साववर्ण'इति विभक्त्याद्युदात्तत्वनिषेधापत्तेस्तथाप्यपरिहारात्। बहुच्प्रत्ययघटितबहुपत्युरित्यादौष्टरूपासिद्ध्यापत्त्या विहितविशेषणानाश्रयणस्यावश्यकत्वात्। 'सखिपतिभ्या'मित्यस्य 'खितिभ्या'मितिलघुन्यासोपलक्षणत्वेन च विहितविशेषणताया वक्तुमशक्यत्वाच्च शेखरोक्तमसङ्गतमित्याहुः—**श्रीगुरुचरणानुसारिणो गौडाः**।

हरदत्तग्रन्थे स्पष्टतरञ्चैतत् ।

'समासे' इत्युक्तेः बहुच्पूर्वे न घित्वम् । अत एव--'पतिर्वृत्तावेवे'ति नासूत्रि ।

वर्णसञ्ज्ञापक्षे पत्यवयवेकार इत्यर्थः। तदन्तसञ्ज्ञापक्षे पत्यवयवेकारान्त इत्यर्थः। सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः ।

एतेन–'शेषो घ्यसखिपती' 'पतिसखी समास एवे'ति वा सूत्र्यतामित्यपास्तम् । 'यस्येति चे'ति सूत्रस्थभाष्यरीत्या 'सुपतिना' 'सुसख्ये'त्यादीष्टासिद्ध्या तथा न्यासस्य कर्त्तुमशक्यत्वादिति स्पष्टमेवेति दिक् ।

---

### ※ अभिनव-चन्द्रिका ※

**नासूत्रीति** । वस्तुतस्तु 'वृत्ति'रिति सञ्ज्ञायाः शास्त्रकारैरनुक्त्या, अस्मदादिकृतसञ्ज्ञाया अव्यवस्थापकत्वे 'पतिर्वृत्तावेवे'तिन्यास एव कर्तुं न शक्यते इति बोध्यम् ।

**इत्यर्थ इति** । 'पतिः समास एव' इति सूत्रात्—'समासाघटकपत्यवयवेकारो घिसञ्ज्ञको न भवती'ति—नियमस्य निषेधमुखेन प्रवृत्तिरितिपक्षेऽर्थस्य लाभः । विधिमुखेन प्रवृत्तौ तु—पतिभिन्नत्वेन 'शेषोध्यसखी'त्यत्र सामान्यतः सङ्कोच इति बोध्यम् ।

### ※ चिदस्थिमाला ※

बहुच्पूर्वे=बहुपत्येत्यत्र । प्राग्वत्क्रमेण तत्सूत्रार्थमाह—**वर्णेति** । पक्षद्वयेप्याह—**सूत्रे इति** । एतेन= प्राचाम्मते बहुच्पूर्वेऽनयोर्विशेषस्य स्पष्टत्वेन शेषोघीति पृथगित्याशयेन । विनिगमनाविरहादाह–**पतीति** । सिद्धान्तमाह—**यस्येतीति** । 'वस्तुत' इत्यादिः । **रीतेरिष्टत्वे**ऽन्वयः । अशक्यत्वमितीतिपाठः ।

### ※ ज्योत्स्ना ※

लाक्षणिकत्वात्सूत्रेऽग्रहणात्पतये इत्यादेः सिद्धिः । एतेन 'सखिना वानरेन्द्रेणे'तिरामायणं, 'कृष्णस्य सखिरर्जुन' इति भारतञ्च व्याख्यातमित्याहुः। ननु 'पतिः समास एवे'ति न्यासेऽपि नियमः केवल-पतिशब्दस्यैव सञ्ज्ञां व्यावर्तयतीति बहुच्पूर्वसमुदायस्य कथं सा व्यावर्तिता स्यादत आह—**पत्यवयवेकार इत्यर्थ** इत्यादि । तथा च पत्यवयवेकारस्तदन्तो वा समासादन्यत्र बहुच्पूर्वः सम्भवतीति तद्व्यावृत्तिरप्युपपद्यत इति भावः ।

**इत्यादीष्टासिद्ध्येति** । तत्र 'शेषोऽध्यसखिपती' इति न्यासे सख्यवयवेकारान्तस्येव पत्यवयवेकारान्तस्यापि निषेधः स्यादिति 'सुसख्ये'त्यादाविव 'सुपतिने'त्यादावपि नाभावादि न स्यात् । 'सखिपती समास एवे'ति न्यासे तु 'सुपतिने'त्यादावपि नाभावादि स्यादितीष्टासिद्ध्येत्यर्थः । **इति दिगिति** । [ अत्रापि दिगित्येतद्दूषणाप्रत्यासत्या

### ※ सदाशिवभट्टीयम् ※

चातिदेशेन तत्त्वसत्त्वात्सुखेनैव लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिर्नेति चेन्न, 'विभक्तौ लिङ्गविशिष्टाग्रहणात् ।

**अलमर्थस्तु**–वस्तुतस्तु भाष्यस्यायं भावः–सुसखेरित्यत्रातिव्याप्तिपरिहाराय 'सखिपतिभ्यां परस्ये'ति सूत्रे यदि 'लक्षणप्रतिपदोक्त'परिभाषा सञ्चरति–तदा सह खेन वर्तत इत्येवं निष्पन्नेऽव्याप्तिः । तत्परिहाराय यद-नित्यत्वात्तदप्रवृत्ति ब्रूषे तर्हि—पूर्वोक्तेऽतिव्याप्तिरित्युभयतःपाशा रज्जुरिति ।

**पतिः समास एवं । समास इत्युक्तेरिति** । 'पतिर्न्ने'ति वाच्य इति भावः । **बहुच्पूर्वे न घित्वमिति** । तत्रैव न घित्वमित्यर्थः । 'पतिर्न्ने'त्युक्ते तु भूपतिनेति समासेऽपि न स्यादिति भावः । एवमुक्तिस्तु वृत्तावितिन्यासे दोषदानमिति बोध्यम् ।

**अत एवेति** । प्रसिद्धावेवकारो, नत्ववधारणे, तेन पतीयतेः क्विपि—पत्युरित्यादौ न घित्वम्, 'पत्यावुपपीडं शेते' 'पत्योपदंशञ्चुम्बते' इत्यादिकृद्वृत्तौ च न घित्वमिति बोध्यम् । **लाक्षणिक इति** । अत एव भाष्योक्तवर्णसञ्ज्ञापक्षेण न फलभेद इति बोध्यम् । **पतिसखी समास इति** । इदम्प्राचामनुसारेण, तन्मतेऽभिव्यक्तेति न्यायेन वृद्धैर्वारणात् । पदकार्य्यविषयकत्वन्तस्येति—

**नित्यं बहुवचनान्त इति** । 'किमः सङ्ख्यापरिमाणे' इत्यनेन किंशब्दाद्बहुत्वसङ्ख्यावच्छिन्नसङ्ख्येयविषयप्रश्ने एव डतिरिति भाष्ये स्पष्टत्वादिति भावः ।

**बहुगण** । सङ्ख्याप्रदेशेष्वेतत्सञ्ज्ञाकरणज्ञानरूपप्रकरणसत्त्वेऽपि तन्मूलककृत्रिमाऽकृत्रिमन्यायस्य न प्रवृत्तिः, कर्त्तरि कर्मेत्यादाविव। अत एव 'सङ्ख्याया अतिशदन्ताया'

ॐ अभिनव-चन्द्रिका ॐ

**कर्तुमशक्यत्वादिति** । 'शेषोघ्यसखिपती'इति न्यासे तु–'भूपतिना' इत्याद्यसिद्धिः, 'सखिपतीसमास एवे'ति न्यासे तु–सुसख्येत्यादौ नागेशरीत्या घिसञ्ज्ञापत्तिः, अस्मन्मते च बहुच्प्रत्यये 'बहुसखिने'त्यादौ घिसञ्ज्ञानापत्तिश्च । एतेन—'पतिर्वृत्तौ' इति न्यासोऽपि प्रत्युक्तः, बहुव्रि 'बहुमत्या' इत्यादौ घिसञ्ज्ञापत्तेरिति दिक् ।

ॐ चिदस्थिमाला ॐ

मनोरमाद्यसङ्गतिरेव **दिगर्थः** ।

**विषयान्तो** बहुव्रीहिः । **भाष्ये इति** । तत्र हि 'किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नश्चानिर्ज्ञाते, अनिर्ज्ञानञ्च बहुषु, द्व्येकयोः पुनर्निर्ज्ञातमेवे'त्युक्तम् । ननु सूत्रसत्त्वे न्यायेन विधिषु बह्वादीनामेव ग्रहणं स्यान्नैकादीनामत आह—**सङ्ख्येति** । **तन्मूलेति**—बहुव्रीहिः । लक्ष्यानुरोधोऽत्र मुख्यं सार्वत्रिकं बीजमिति ध्वनयन्नाह—**कर्तरीति** । प्रकृतविषये क्वचित् ज्ञापकमप्याह—**अत एवेति** । तदप्रवृत्ताविवे-

ॐ ज्योत्स्ना ॐ

स्वरूपव्याक्रियासमासे सूचयति ?] तथाहि—प्रागुपपादिताया ख्यत्यादितिसूत्रभाष्यविरुद्धलक्षणाया एकदेशिसंमतत्वात्सखिशब्दान्ते घिसञ्ज्ञाया इव सिद्धान्तिमते पतिशब्दान्तेऽपि घिसञ्ज्ञायाः सम्भवाच्छेषोऽघ्यसखिपती'तिन्यासे इष्टस्य सिद्धिः । 'पतिसखी समास एवे'ति न्यासे च–सुसखिनेत्यादीष्टसिद्धिः । तर्हि तथैव कुतो न कृतमिति चेत् ?, 'शेषोऽघ्यसखिपती'इतिन्यासे तावत्स्वतन्त्रपतिशब्दस्येव पतिशब्दान्तसमासघटकपतिशब्दस्य निषेधापत्तौ द्वन्द्वे घेः पूर्वनिपातनियमो न स्यात्। दृश्यते च सः, 'पतिसुतान्वयभ्रातृबान्धवान्''यत्पत्यपत्यसुहृदा'मित्यादि। 'पतिपुत्रान्प्रतीक्षेत यौवने वार्द्धके तथे'त्यादीनामसाधुतापत्तिश्च । 'पतिसखी समास एवे'तिन्यासान्तरमपि न, पतिशब्दस्येव सखिशब्दस्यापि द्वन्द्वे पूर्वनिपातप्रसङ्गात् । एतेन 'पतिसखी वृत्तावेवे'ति न्यासान्तरमपि प्रत्युक्तम्। 'इवे प्रतिकृतौ'इति कनो लुप्याचारकर्तरि क्विपि च पतिसख्योरनिष्टप्रसङ्गाच्च । एतेन बहुज्विशिष्टे सख्यन्तसमुदाय इव तादृशपत्यन्तसमुदाये सञ्ज्ञाया अनिष्टत्वात्तदवयवस्य पत्युःसञ्ज्ञायाभावाभावयोरविशेषात् 'पतिर्वृतावेवे'ति न्यास दोषाऽभाव इत्यपास्तम् । **बहुत्वसङ्ख्यावच्छिन्नसङ्ख्येयविषय प्रश्न एवेति** ।

ॐ सदाशिवभट्टीयम् ॐ

स्वमते तु'सखाया'वितियुक्तम् । **इत्यादीष्टेति** । आदिना द्वन्द्वे पूर्वनिपातसङ्ग्रहः । **बहुत्वसङ्ख्येति** । इदं प्राचामनुसारेण, स्वमते बहुत्वे सङ्ख्यात्वाभावस्य वक्ष्यमाणत्वात् ।

**सङ्ख्येयविषयप्रश्नेति** । यद्यपि सङ्ख्याप्रश्ने वृत्तिस्तथापि सङ्ख्येयमपि तत्प्रश्ने विषयो भवत्येवेत्येवमेवोक्तम् । **भाष्ये स्पष्टत्वादिति** । तत्र हि–डत्यन्तादेकवचनद्विवचने न स्तः, तत्र सङ्ख्याया

ॐ विषमपदविवृतिः ॐ

**सुपतिनेति** । द्वितीये दोषमाह—**सुपख्येति** । इदमुपलक्षणं,—'पतिसुतान्वयवा'-नित्यादौ 'द्वन्द्वे घी'ति पूर्वनिपातोपि पूर्वन्यासे न सिध्येत् । उत्तरन्यासे च बहुसखिशब्दे घित्वं न स्यादित्यपि बोध्यम् । **भाष्ये स्पष्टत्वादिति** । तथा च **भाष्यम्**—

—इति शदन्तपर्युदासः सङ्गच्छते, न हि शदन्ता कृत्रिमा सङ्ख्याऽस्ति। तस्मात्सङ्ख्या-प्रदेशेषूभयगतिः।

किञ्च लोकप्रसिद्धमहासञ्ज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिति स्पष्टं भाष्ये।

ॐ चिदस्थिमाला ॐ

त्यर्थः। त्यन्तपर्युदासस्यान्यथापि सार्थक्यादाह—शदन्तेति। तत एव न्यायान्तरसञ्चारमत्राह—तस्मादिति। शुद्धरूढिपक्षे न्यायविषयतामभ्युपेत्येदं, वस्तुनोऽन्वर्थत्वात्सैव नेत्याह—किञ्चेति। तत्र गमकाभावादाह—

ॐ ज्योत्स्ना ॐ

किमः सङ्ख्यापरिमाणे डतेर्डतिविधाने किमर्थप्रश्नविषयत्वेनैव सङ्ख्याभिधानात्प्रश्नस्य च संशयपूर्वकत्वात् संशयस्य च तत्तद्विशेषधर्मावच्छिन्नविषयकोटिकत्वात्तत्रैकद्वित्वयोरिव त्रिचतुःपञ्चत्वादीनामपि सर्वदा परिस्फुरणादिति भावः। अतएवानिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यमिति भाष्ये उक्तम्। न तु 'कति भवतः पुत्राः' 'कति भवतो भार्या' इत्युक्तेऽप्येकविषयप्रश्ने तात्पर्याभावः, 'एकः पुत्रो' 'द्वौ पुत्रा' वित्युत्तरेणापि तत्र सन्देहनिवृत्तेरिष्टत्वादित्याहुः। **नहि शदन्ताः कृत्रिमेति।** त्यन्तपर्युदासस्तु न ज्ञापकः, वतिव्यावृत्त्या चरितार्थत्वात्। उपाध्यायास्तु—वैयाकरणसिद्धान्ते सर्वेषां सर्वार्थवाचकत्वाभ्यनुज्ञानात्तत्तत्सञ्ज्ञाकरणं नियमार्थं, तत्र लोके यथा—गोपालादिसञ्ज्ञाकरणेन सञ्ज्ञिनियमः सञ्ज्ञ्यन्तरं निवर्तयति, न क्रियानिमित्तमर्थान्तरं, सजातीयविषयत्वात्। एवं शास्त्रे सञ्ज्ञ्यन्तरमात्रनिवृत्त्या लौकिकप्रसिद्धार्थान्तरावगमादिष्टार्थसिद्धिः। क्वचित्कृत्रिमस्यैव ग्रहणं, क्वचिदकृत्रिमस्यैव, क्वचिदुभयोरित्यादि तु—लक्ष्यानुसारिव्याख्यानाज्ज्ञापकाच्चावसेयमित्याहुः।

**स्पष्टं भाष्य इति।** एवं हि भाष्ये—'अथवा महतीयं सङ्ख्येति सञ्ज्ञा क्रियते, सञ्ज्ञा च नाम यतो न लघीयः,—कुत एतत्,—लघ्वर्थं हि सञ्ज्ञाकरणं, तत्र महत्या सञ्ज्ञायाःकरणे एतत्प्रयोजनम्—अन्वर्थसञ्ज्ञा यथा—विज्ञायेत,—सङ्ख्यायतेऽनया सङ्ख्येति, एकादिकया चापि सङ्ख्यायते'इति। यद्यपि महत्याः सञ्ज्ञायाः करणात्तदर्थान्तर्गतानामुपात्तानामेव बह्वादीनां भवतु सञ्ज्ञा, यथा—सर्वादीनामेव-

ॐ सदाशिवभट्टीयम् ॐ

निर्णयेन प्रष्टव्यत्वाभावेन किमोऽप्रयोगादित्यभिप्रायकमुक्तम्। **बहुगण। शदन्तेति।** तिपर्युदासस्तु नोक्तः, तस्यार्थवत्परिभाषाबाधेनापि सार्थक्यसम्भवेन प्रकृतार्थसाधने साधारणत्वात्। असञ्जातविरोधन्यायेन प्रथमोपगतसङ्ख्यापदे सञ्चरितकृत्रिमन्यायबाधानौचित्याच्च। सङ्ख्यापदार्थनिर्णायकः कृत्रिमन्यायः, तिशब्दार्थनिर्णायकोऽर्थवन्न्यायः, तत्र कतरस्य बाध इति-संशये—शदन्तपर्युदासस्यैव विनिगमकत्वं वाच्यं, ततो वरं तन्मात्रप्रदर्शनमेवेति च। अयमेव तत्रत्यभाष्यप्रदीपोद्योतानामाशय इति बोध्यम्।

ॐ विषमपदविवृतिः ॐ

बहुष्विति वक्तव्यम्, इह माभूत,—कियान्, न वक्तव्यम्, किमेतत्परिप्रश्ने वर्तते, परिप्रश्नश्चानिर्ज्ञाते, अनिर्ज्ञातश्च बहुषु, द्व्येकयोः पुनर्निर्ज्ञातम्। निर्ज्ञातत्वाद्व्येकयोः परिप्रश्नो न, परिप्रश्नाभावात्किमेव तावन्नास्ति-कुतः प्रत्यय इति। स्वतन्त्रास्तु-किमः प्रश्नार्थकत्वात्प्रश्नस्य च संशयपूर्वकत्वात् संशयस्य च तत्तद्धर्मावच्छिन्नविषयकोटिकत्वात्तत्रैकत्वद्वित्वयोरिव त्रित्वादीनामपि परिस्फुरणात् 'द्वित्रा' इत्यादाविव स्वौजसिति विधिसूत्रगतं परत्वमादाय बहुवचनम्। तथा च 'कति पुत्राः' इति प्रश्ने 'द्वौ पुत्रा'वित्युत्तरं लोके कुर्वन्तीत्याहुः। **बहुगण। नहि शदन्तेति।** इदमुपलक्षणम्—त्यन्तपर्युदासोप्यत्र

अत एव 'पञ्चकृत्व' इत्यादिसिद्धिः । एतन्न्यायोपयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः ।

सूत्रे बहुगणग्रहणन्तु—तयोर्नियतविषयपरिच्छेदहेतुत्वाभावेनासङ्ख्यात्वात् । बहुत्वादि हि त्र्यादिसङ्ख्याव्यापको धर्मविशेषः । अत एव भाष्ये—'एतत्सूत्रनतिदेशार्थं—

ॐ अभिनव-चन्द्रिका ॐ

**बहुगणवतु । नियतविषयपरिच्छेदहेतुत्वेति ।** यद्धर्मप्रकारकनिश्चयोत्तरं स्वेतरसङ्ख्यात्वव्याप्ययावद्धर्मप्रकारकसंशयसामान्यं नोदेति, तद्धर्मावच्छिन्नसङ्ख्यावाचकत्वेति भावः । **त्र्यादिसङ्ख्या-**

ॐ चिदस्थिमाला ॐ

**अत एवेति ।** नन्वेवं 'कृत्रिमे'ति न्यायस्य निर्विषयत्वं स्यादत आह—**एतदिति ।** आदिना—संयोगादि ।

दीक्षितशास्त्रिदण्ड्याद्युक्तिं खण्डयितुं सिद्धान्तमाह—**सूत्रे इति ।** 'कृत'मिति शेषः । नियत इतरव्यावृत्तो यो विषयपरिच्छेदस्तद्धेतुत्वाभावात् । विषयपरिच्छेदहेतुत्वेऽपि तत्र नियतत्वाभावादिति यावत् । त्रित्वादिसङ्ख्या व्याप्या यस्य । अत्र मानमाह—**अत एवेति ।** तस्य सङ्ख्यात्वादेवेत्यर्थः । उद्देश्यविशेषण-

ॐ ज्योत्स्ना ॐ

सर्वनामसञ्ज्ञा नाधिकानां, फलञ्च तत्र सञ्ज्ञोपसर्जनव्यावृत्तिः, एवमिह बहुगणयोःसङ्घवैपुल्यवाचिनोर्व्यावृत्तिरित्येकादीनां लोकप्रसिद्धानां सञ्ज्ञा न स्यात्तथापि सञ्ज्ञासूत्रेऽन्वर्थत्वाश्रयणसामर्थ्यात्प्रदेशेषूभयगतिरिति—समन्तरं वक्ष्यमाणव्याख्यानं भाष्यस्येति न दोषः । उपाध्यायास्तु—'सङ्ख्ये'ति योगं विभज्यान्वर्थसञ्ज्ञाबलेन तदनुरूपसकलसञ्ज्ञिनामाक्षेपादेकादीनां लोकप्रसिद्धानां सञ्ज्ञा न स्यात्तथापि सञ्ज्ञासूत्रेऽन्वर्थत्वाश्रयणसमर्थ्याद्बह्वादीनाञ्च सञ्ज्ञां प्रसाध्य—'बहुगणवतुडती'ति द्वितीययोगेन भूर्यादीनां निवृत्तये—'नियतसङ्ख्यावाचिनां चेद्भवति तर्हि बह्वादीनामेवे'ति नियममिच्छन्ति । **अतएवेति ।** सङ्ख्याप्रदेशेषूभयगतेरेवेत्यर्थः । **पञ्चकृत्व इत्यादेःसिद्धिरिति । सङ्ख्याया**

ॐ सदाशिवभट्टीयम् ॐ

**अभ्यासाम्रेडितादीति ।** तेपु महासञ्ज्ञाकरणं प्राचामनुरोधेनेति बोध्यम् । **तयोरिति ।** तदर्थयोरित्यर्थः । **नियतविषयेति ।** नियतानि यान्येकत्वादीनि तद्विषयेत्यर्थः । नियतैकत्वाज्ञानात्रित्वादेरत्यन्तानियतैकत्वज्ञानाद्बहुत्वे डतिरिति भावः । **बहुत्वादि हीति ।** आदिना गणत्वं तच्छब्दवाच्यं हीत्यर्थः । यथाश्रुतं आदिपदग्राह्यं दुर्वचं स्यादिति बोध्यम् । **त्र्यादीति ।** त्रित्वादीत्यर्थः । **धर्मविशेष इति ।**

ॐ वरवर्णिनी ॐ

**सङ्ख्याव्यापक इति ।** ननु बहुत्वं न त्रित्वादिव्यापकं, तथाहि—सङ्ख्योत्पत्तावपेक्षाबुद्धिर्नियामिका, सा च द्वित्वोत्पत्तौ—'अयमेकः, एतदेकत्वविशिष्टविशिष्टोऽयमेकः—इमौ द्वौ' इत्येवं रूपा । त्रित्वोत्पत्तौ च—'अयमेकः एतदेकत्वविशिष्टविशिष्टोऽयमेकः—इमौ द्वौ, एतद्द्वित्वविशिष्टविशिष्टोयमेकः—इमे त्रयः' इत्येवं रूपा । बहुत्वोपपत्तौ च—'अयमेकः—अयमेकः—अयमेकः—इमे बहवः' इत्येवं रूपा—वैयाकरणानामभिमता । तार्किकाऽभिमताऽन्यादृश्यपेक्षाबुद्धिस्तु न वैयाकरणैरूपेयते इति **यथासङ्ख्यसूत्रे शब्देन्दुशेखराभिनवराजलक्ष्म्यामवोचाम ।** तदेवं त्रित्वस्थले बहुत्वोत्पादिकाया अपेक्षाबुद्धेरभावेन तत्त्वाभावाद्व्यापकत्वोक्तिरसङ्गतैवेति चेन्न, अपेक्षाबुद्ध्या तदुपपादनासम्भवेऽपि विषयापेक्षयैव व्यापकत्वस्योपपादनीयत्वात् । तथाहि—एकस्मिन्नेव विषये कस्य चित्पुरुषस्य प्रागुक्तत्रित्वोत्पादकपेक्षाबुद्धेः सत्त्वेन त्रित्वमुत्पद्यते, कस्य चिद्बहुत्वोत्पादिकायास्तस्याः सत्त्वेन बहुत्वमुत्पद्यते । एवञ्च एकपुरुषापेक्षया त्रित्वबहुत्वयोरेकत्रासत्त्वेन व्यापकत्वस्यासम्भवेऽपि पदार्थापेक्षया व्यापकत्वमुपपद्यत एवेति—एकस्मिन्नेव पदार्थे तत्तत्पुरुषीयापेक्षाबुद्धिमादाय त्रित्वबहुत्वयोर्द्वयोरपि सम्भवाद्व्यापकत्वमक्षतमिति परशिवावतारा **गुरुवराःश्रीचेदिरामशास्त्रिणो** व्याचक्षते ।

१ 'बहवो जना' इतिप्रतीतिसाक्षिकस्त्रित्वचतुष्ट्वादिव्यापकः सङ्ख्यात्वव्याप्यो धर्मविशेष इत्यर्थः । 'सङ्ख्यात्वव्याप्यधर्मावच्छिन्नसंशयनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिज्ञानविषयत्वञ्च—नियतविषयपरिच्छेदहेतुत्व'मिति श्रीगुरवः—श्री१०८त्रिपाठिपादाः ।

## ॐ सदाशिवभट्टीयम् ॐ

न तु त्रित्वादिरूपमित्यर्थः। सचैकोऽखण्डोपाधिस्तस्य चानेकेषु पर्याप्तेरेकत्वं, समवायवदिति बोध्यम्। न च बहुत्वस्य त्रित्वाद्यतिरिक्तत्वे गौरवमिति शङ्क्यं, बहुत्वस्य त्रित्वादिरूपत्ववादिनां बहुत्वत्वं जातिरूपं—बहवः त्रय इत्यादिप्रवृत्तिवैलक्षण्यायावश्यमतिरिक्तं वाच्यं, मया तु बहुत्वमेवातिरिक्तमिष्यते, बहुत्वत्वन्तु बह्वितरावृत्तित्वे सति सकलबहुवृत्तित्वरूपमिति विशेषाभावात्। अथ त्वयोच्येत—मया बहुत्वत्वमपि जातिरूपमतिरिक्तं नेष्यते, किन्त्वेकत्वद्वित्वबद्भेदविशिष्टसङ्ख्यात्वमेव बहुत्वत्वमिति, तर्हि मयापि बहुत्वमतिरिक्तं नेष्यते किन्तु एकत्वद्वित्वबद्भेद एवेति वक्तुं शक्यमित्यलमतिप्रसक्तविचारेण। **अतएवेति**। बहुत्वे सङ्ख्यात्वाभावादेवेत्यर्थः। **इत्युक्तमिति**। ननु बह्वादीनां शब्दरूपाणां त्रित्वादिवृत्तिसङ्ख्यात्वजातिमद्भिन्नत्वमित्यर्थे लक्षणापत्तेश्च, व्यपदेशातिदेशश्चायं—त्रित्वादिसङ्ख्यायां यो व्यपदेशः—सङ्ख्येति स बह्वादिषु भवतीत्यर्थेन सर्वेष्टसिद्धौ बहुत्वस्य सङ्ख्यात्वेऽपि नेदं भाष्यं विरुद्धं, किञ्च वतुडतिविषयकमेवास्तु, तयोः सङ्ख्यावाचकत्वस्य बाधात्तु लक्षणेति च तत्तात्पर्यं वक्तुं शक्यम्। किञ्च बहुत्वस्य सङ्ख्यात्वाभावे 'सङ्ख्याचैव तथा तिङा'मिति भाष्ये सङ्ख्यापदेन बहुत्वमपि विवक्षितम्। तथा 'तस्य पूरणे' इति सूत्रे वार्तिकं 'सङ्ख्यापूरण इति वक्तव्य'मिति। अत्रापि सङ्ख्यापदेन बहुत्वं विवक्षितं—बहुतिथ इत्यादिसिद्ध्यर्थं, तद्विरुध्येत। एवं बहुस्थलेषु सङ्ख्यापदेन बहुत्वं विवक्षितन्तद्विरुध्येत, तस्मादस्तु बहुत्वं त्रित्वादिरूपासङ्ख्यैवेति चेन्न; अत्र प्रकरणे सङ्ख्यापदेन सङ्ख्यावाचकपदस्यैव विवक्षितत्वात्। किञ्च बहुत्वस्य सङ्ख्यात्वे भूर्य्यादीनां सङ्ख्याकार्य्यं दुर्वारम्। न च नियमेन निस्तारः, सम्पूर्णसूत्रस्य भाष्ये प्रत्याख्याततत्वेन तद्विरोधस्य दुष्परिहरत्वात्। तत्र तत्र भाष्ये बहुत्वस्य सङ्ख्यापदेन व्यवहारस्तु, बहुशब्दस्य सङ्ख्यासञ्ज्ञकत्वेन शब्दार्थयोस्तादात्म्याङ्गीकारेण द्विरेफव्यवहारवत्, 'हिरण्यपूर्व्वं कशिपु'मितिवच्च नेयः। एवञ्च तस्य न तादृशनिश्चयहेतुत्वमिति भावः। तस्य त्रित्वादिभिन्नत्वेपि त्रित्वादिवृत्तिसङ्ख्यात्वजातिमत्त्वमस्त्येव। अत एव 'नित्यं बहुवचनान्त' इति प्रतीके—बहुत्वसङ्ख्यावच्छिन्नेति स्वग्रन्थो, बहुत्वं सङ्ख्येत्यभिप्रायका भाष्यादिग्रन्थाश्च स्वरसतःसङ्गच्छन्ते। 'बहुत्वं न सङ्ख्ये'ति शब्दरत्नादिग्रन्थास्तु शब्दपराद्बहुशब्दात्त्वप्रत्यये बहुशब्दः नियतविषयपरिच्छेदहेतुत्वरूपसङ्ख्यात्वाभाववानित्यर्थो बोध्याः।

यद्वा—**बहुत्वादी**त्यत्र सङ्ख्यापराद्बहुशब्दाद्भावप्रत्यये—बहुत्वत्वादीत्यर्थः। **सङ्ख्याव्यापक इति**। तादात्म्येन यत्र सङ्ख्या तत्र समवायादिना स इत्यर्थः। एवञ्च बहुत्वत्वेन रूपेण न बहुशब्दात्त्रित्वभानमिति न तादृशो निश्चयः, त्रिशब्देन तु त्रित्वभानमिति सोऽस्त्येवेति भावः। **धर्म्मविशेष इति**। न तु त्रित्वत्वादिरूप इति

## ॐ विषमपदविवृतिः ॐ

ज्ञापकः। यत्तु पाठकेनोक्तम्—त्यन्तपर्युदासो न ज्ञापकः, कतिव्यावृत्त्या चरितार्थत्वादिति, तत्तुच्छम्; भाष्यकृता त्यन्तपर्युदासेऽर्थवतस्तिशब्दस्य ग्रहणमित्युक्तत्वेन विंशतिशब्दे एव त्यन्तपर्युदासेनाऽप्रवृत्तेः। पतिशब्दात्तु कनिष्ट एव। **स्पष्टं चेदं भाष्ये इति**। तथा च भाष्यम् "—अथवा महतीयं-सञ्ज्ञा क्रियते, तत्करणे एतत्प्रयोजनम्—अन्वर्थसञ्ज्ञा यथा विज्ञायते, सङ्ख्यायतेऽनयेति सङ्ख्या, एकादिकया चापि सङ्ख्यायते—" इति। ननु महासञ्ज्ञाकरणेन तदर्थानुगुणं सञ्ज्ञित्वं कल्प्यतां, प्रदेशेषु लोकप्रसिद्धार्थावगतिस्तु कुत इति चेन्न; तदर्थाननुगुणानां वक्ष्यमाणप्रकारेण सञ्ज्ञित्वव्यावृत्तिसम्भवात्। नियतविषयपरिच्छेदहेतुत्वाभावेन बह्वादीनामन्वर्थसञ्ज्ञाननुगुण्याच्चागत्या महासञ्ज्ञाप्रकरणेन प्रदेशेषु लोकप्रसिद्धार्थावगतेः कल्पनात्। एतन्न्यायोपयोगः=कृत्रिमाकृत्रिमन्यायोपयोगः। **अभ्यासाम्रेडितेति**। तत्र महासञ्ज्ञाकरणेऽपि न लोकप्रसिद्धार्थस्य ग्रहणम्, ऐच्छिकद्विःप्रयोगेपि अभ्यासादिकार्यापत्तेः। ननु सङ्ख्यापदेन लोकप्रसिद्धार्थग्रहणे सूत्रे बहुगणयोर्ग्रहणं व्यर्थं, तयोरपि सङ्ख्यावाचित्वादित्याशङ्क्याह—**सूत्रे इति**। अत एव=बहुत्वाभावादेव। इदमुपलक्षणं

यदयमसङ्ख्यां सङ्ख्येत्याह'–इत्युक्तम्। यत्तु भाष्ये–'एकादिकया चापि सङ्ख्यायते' इत्युक्तं, तस्यायमर्थः–बह्वादिकयाऽपि स्वव्याप्यत्रित्वादिसङ्ख्यया सङ्ख्यायते।

कतिशब्दोऽपि सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकतया सङ्ख्यानकरणम्। एवं वत्वन्तेऽप्यूह्यम्।

यद्वा–'चापि'शब्दौ वाक्यालङ्कारे। एकादिकया सङ्ख्यायते, साऽपि प्रदेशेषु यथा गृह्येतेति लोकप्रसिद्धमहासञ्ज्ञाकरणमिति तदर्थः।

---

❀ चिदस्थिमाला ❀

त्वेन वार्तिककृत्कृतसङ्ख्याग्रहणखण्डनाय भाष्योक्तपक्षचतुष्टयान्तर्गतपक्षमाह—**एतदिति**। तेषामज्ञानं प्रकाशयन् भाष्ययोरविरोधमाह—**यत्त्विति**। अन्वर्थसञ्ज्ञापक्षे इति भावः। अपिना–बह्वादिसमुच्चयाद्विरोधः। साक्षादतत्त्वमाह—**बह्वादीति**। साक्षादतत्त्वेऽप्याह—**स्वव्याप्येति**। अत एवातिदेशपक्षान्वर्थसञ्ज्ञापक्षयोरेकफलकता। ननु कतिशब्दस्य सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकतया साक्षात्सङ्ख्यानाकरणत्ववत्परम्परयापि न तत्त्वमत आह—**कतीति**। वत्वन्ते सङ्ख्यानकरणीभूतार्थविषयकपरिमाणार्थतया तत्त्व बोध्यम्। वस्तुतः स्वारसिकतत्त्वाभावादाह—**यद्वेति**। तेषामुक्तिं खण्डयति-**एतेनेति**। उक्त-

❀ ज्योत्स्ना ❀

विधीयमानस्य कृत्वसुचो लौकिकैकादिसङ्ख्याभ्योऽपि विधानादिति भावः। ष्णान्तेत्यत्र तु प्रयोजनं नोक्तं, स्त्रीलिङ्गनिर्देशेन सङ्ख्येत्यनुवृत्त्या शास्त्रीयसङ्ख्याग्रहणेसम्भवाल्लौकिकतन्निश्चयस्य वक्तुंशक्यत्वात्। एतन्न्यायोपयोगः=कृत्रिमाकृत्रिमन्यायोपयोगः। **इत्युक्तमिति**। व्याख्यातश्च कर्मन्दिविवरणे—सम्यक् ख्यायतेऽनयेति—सङ्ख्या। नियतविषयत्वञ्च-परिच्छेद्यस्य सम्यक्त्वम्।–एवञ्चानियतविषयपरिच्छेदहेतुबहुत्वादेरसङ्ख्यात्वाद्भाष्यकार 'असङ्ख्यां सङ्ख्येत्याहे'त्यवोचदिति। **एतेनेति**। भूयादीनां सम्यक्ख्यानकरणत्वाभावादसङ्ख्यात्वेनेत्यर्थः।

❀ सदाशिवभट्टीयम् ❀

भावः। 'बह्वादिकया चापि सङ्ख्यायते' इति भाष्यविरोधः। अनेन हि भाष्येणैकादिषु बह्वादिषु च तुल्यो योग इति प्रतीयते इति चेदत्राह–**यत्त्विति**। **एकादिकयेति**। एकत्वादिकयेत्यर्थः। **बह्वादिकयेति**। बहुगणशब्दवाच्यबहुत्वसङ्ख्ययेत्यर्थः। यथाश्रुतमेव तदादिशब्दरूपेत्यर्थकम्। **स्वव्याप्येति**। यत्र यत्र शक्तिसम्बन्धेन त्र्यादिशब्दस्तत्र तेन सम्बन्धेन बहुगणशब्दाविति भावः। **त्रित्वादिसङ्ख्येति**। पूर्ववत्त्वप्रत्ययेन त्रिशब्दार्थसङ्ख्येत्यर्थः, शेषम्प्राग्वद्व्याख्येयमितिवदन्ति। **सङ्ख्यायत इति**। अस्तेतीति शेषः। 'बहुत्वं सङ्ख्ये'तिवादिनापि 'बहु'इति विषये एवं दिशैव व्याख्येयत्वात्, सम्पूर्णसूत्रस्यत्वया नियमार्थत्वानभ्युपगमादिति भावः। नन्वेवमपि कतिशब्दासङ्ग्रहः, जिज्ञासाविषयसङ्ख्यावन्तो हि कतिशब्दवाच्याः, तत्र त्रित्वादेरेव सङ्ख्यारूपत्वे तद्व्याप्यत्वं दुर्वचम्, अतःप्रकारान्तरेण तत्सङ्ग्रहमाह—**कतिशब्दोपीति**। वस्तुतस्तु समवायतादात्म्यघटितसामानाधिकरण्येन सङ्ख्यात्वस्य त्रित्वादिव्यापकत्वं

❀ विषमपदविवृतिः ❀

क्षणम्—'बह्वादीनां ग्रहणं शक्यमकर्तुं ज्ञापकात्सिद्ध'मिति भाष्यस्य, बह्वादीनां सङ्ख्यावाचकत्वे तु ज्ञापकवैयर्थ्यम्। ननु बहुत्वादेः सङ्ख्यात्वाभावे 'एकादिकया चापि सङ्ख्यायते, इति भाष्यविरोधः। तत्रापिशब्देन बह्वादीनामपि ग्रहणादित्याशङ्क्य समाधत्ते—यत्त्वित्यादिना। **स्वव्याप्येति**। तथा च स्वव्याप्यत्रित्वादिद्वारा बह्वादीनां सङ्ख्यार्थकत्वेपि साक्षात्तदभाव इति भावः।

कैयटोक्तं दूषयति–**एतेनेति**। नियतविषयपरिच्छेदहेतुत्वाभावेन बहुत्वादीनामसङ्ख्यात्वेनेत्यर्थः।

एतेन-'अर्थान्तरवाचिनश्चेत्सङ्ख्याकार्यं तर्हि बहुगणयोरेवे'ति नियमार्थं तत्, तेन भूर्यादीनां न। तेषां वैपुल्याद्यर्थान्तरवाचित्वात्। वैपुल्यं-विशालता। विशेष्यविशेषणदलाभ्यामबहुत्ववाचिन एकशब्दस्य, बह्वर्थमात्रवाचिनां त्र्यादीनाञ्च न व्यावृत्तिः।

यद्वा-'अनियतसङ्ख्यावाचिनाञ्चेद्बहुगणयोरेवे'ति नियमः। अनन्तशब्दवदनन्तवाचिशतशब्दस्य सङ्ख्याकार्याभाव इष्ट एवेत्यपास्तम्। सङ्घवैपुल्यवाचकयोर्नेह ग्रहणं,

## ❀ अभिनव-चन्द्रिका ❀

वाचक इति। बहुत्वे त्रित्वादिसङ्ख्याव्यापकत्वस्य सत्त्वेऽपि निरुक्तसङ्ख्यात्वव्याप्यधर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वं नास्तीति न बह्वादिपदं सङ्ख्यावाचकमिति भावः। **इत्यपास्तमिति**। परे तु-सङ्ख्यावाचकत्वं सङ्ख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वमेव, अत एव 'एकादिकया चापि सङ्ख्यायते' इति भाष्ये-'चाऽपि' शब्दौ सङ्गच्छेते। अन्यथा

## ❀ चिदस्थिमाला ❀

भाष्यविरोधेनेत्यर्थः। **बहुत्वेति**। बहुत्ववदित्यर्थः। तत्=बहुगणग्रहणम्। व्यावर्त्यत्वायाह-**तेषामिति**। आदिना-सङ्घः। भेदायाह--**विशेषेति**। यथाक्रममाह-**अबह्विति**। लाघवादाह--**यद्वेति**। यद्दोषेणैतत्त्यागेन प्राचां पूर्वस्वीकारस्तमुद्धरति---**अनन्तेति**। ननु सिद्धान्ते तयोर्ग्रहणं कुतो नात आह-**सङ्घेति**।

## ❀ सदाशिवभट्टीयम् ❀

सुवचम्, अभेदेन व्यापकत्वमित्यत्र मानाभावश्चेति बोध्यम्। **ऊह्यमिति**। अयम्भावः—एकत्वादिषु लोकप्रसिद्धयोगस्य बह्वादिषु बाधात्तदर्थान्तर्भावेण सङ्ख्यापदस्य वृत्तिः स्वीक्रियते, सा चेहैव न प्रदेशेषु, मानाभावात्। एतेनैवं सति भूर्यादिषु सङ्ख्याकार्यातिप्रसङ्ग इत्यपास्तम्। बह्वादिषु सङ्ख्यापदं योगरूढमिति यावत्। सङ्ख्यापदे बाहुलकात्करणेऽडिति। **इत्यलमिति**। इदं सूत्रं भाष्ये प्रत्याख्यातं, तस्यायं भावः—आरम्भेपि प्रदेशे एकादीनां ग्रहणायातिशदन्ताया इति सामान्यापेक्षज्ञापकं वक्तव्यमेव, तद्वरं बह्वादीनामेव सङ्ख्यापदेन ग्रहणाय तादृशज्ञापकाश्रयणम्। एतेन कौस्तुभकृदुक्तं समाहितमित्यलमर्थः।

**एतेनेति**। उक्तसङ्ख्यात्वस्य बहुगणयोरभावेनेत्यर्थः। नन्वेवं क्लिष्टकल्पनया बह्वादिषु योगरूढिस्वीकारे फलमस्ति ? नवा ? आद्ये महासञ्ज्ञाकरणसामर्थ्यात्प्रदेशे कृत्रिमन्यायबाध इति भाष्यासङ्गतिः, द्वितीयेऽस्तु सङ्ख्यापदस्य रूढिरेव, अलमनया क्लिष्टकल्पनयेत्यरुचेराह-**यद्वेति**। **सूत्रे बहुग्रहणन्त्वि**त्यारभ्य व्याख्यान्तरम्। अत्र नियमेन 'सङ्ख्ये'तिशब्दस्यापि सङ्ख्याकार्यं वार्य्यते इति विशेष इति बोध्यम्। **तयोरिति**। बहुगणशब्दयोरित्यर्थः। **अनियतेत्यादि**। नियतैकत्वनिश्चयजनकत्वाभावेनेत्यर्थः। तादृशनिश्चयजनकशब्द एव

## ❀ विषमपदविवृतिः ❀

अथवा 'महतीयं सञ्ज्ञा क्रियते'इति भाष्यमुपादाय कैयटेनोक्तम्,-'ननु महत्याः सञ्ज्ञायाः करणात्सङ्घवैपुल्यवाचिनोर्बहुगणयोस्सञ्ज्ञा मा भूदेकादीनान्तु कथं स्यात्?, नैष दोषः। सङ्ख्येति योगो विभज्यते। तत्र चान्वर्थसञ्ज्ञानुरूपः सर्वः सञ्ज्ञी आक्षिप्यते। ततो 'बहुगणे'त्यादि। इदम्भूर्यादिव्यावृत्त्यर्थं नियमार्थं व्याख्यायते। अन्वर्थसञ्ज्ञाश्रयणादेव सङ्घवैपुल्यवाचिनोर्बहुगणयोः सञ्ज्ञा नेति। ननु महासञ्ज्ञाकरणसामर्थ्याल्लौकिकसङ्ख्याया अपि प्रदेशेषु ग्रहणमित्ययुक्तम्, सङ्घवैपुल्यवाचिनोर्बहुगणयोः सञ्ज्ञानिरासार्थं तत्सार्थक्यादित्याशङ्क्याह-**सङ्घेति**। यद्वा—लोकप्रसिद्धसङ्ख्या

परस्परसाहचर्येण त्र्यादिसङ्ख्याव्यापकधर्मवाचिनोरेव ग्रहणात् । 'वतु' इति सानुबन्ध-निर्देशो ब्राह्मणवदित्यादिव्यावृत्त्यर्थः । डतिस्तद्धित एव, वतुसाहचर्यादित्यलम् ।

'ष्णान्ता' इत्यतः 'ष'डिति वर्तते, 'सङ्ख्ये'ति च प्रकृतं, तदाह—**डत्यन्तेति** । अत एव 'षट्कती'ति डडनुवादेन थुग्विहितः । अत एव सञ्ज्ञाविधावपि—प्रत्ययग्रहणे तदन्तग्रहणम् । सङ्ख्येति किं ? पतयः ।

**प्रत्ययस्य** । अनेकसञ्ज्ञाकरणात्—आवृत्त्या, विभक्तिविपरिणामेन च—तद्भावित-सञ्ज्ञाश्रयणम्, अतो न सङ्करः । तेन 'हन्ती'त्यादौ 'श्लौ'विति द्वित्वं न, तदाह—

❀ अभिनव-चन्द्रिका ❀

बह्वादीनां निरुक्तसङ्ख्यावाचकत्वस्याऽभावेन तदसङ्गतिः स्पष्टैव । नच 'यदयमसङ्ख्यां सङ्ख्येत्याहे—'ति भाष्यविरोध इति वाच्यं, वत्वन्तस्य डतिप्रत्ययान्तस्य च सङ्ख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वस्या-ऽभावेन तस्य भाष्यस्य तद्विषयकत्वेनादोषात् । भूर्यादीनान्तु—'अनियतसङ्ख्यावाचिनार्बहु-गणयोरेवे'त्यादिनियमेनैव वारणं बोध्यमित्याहुः । **सङ्ख्येति च प्रकृतमिति** । तेन साक्षात्सञ्ज्ञा-निष्ठविधेयतानिरूपिता या प्रत्ययमात्रवृत्त्युद्देश्यता, तादृशोद्देश्यताप्रयोजकं तदादिविशेष्यकतदन्त-विधिप्रयोजकं नेत्यर्थिकाया 'सञ्ज्ञाविधा'विति परिभाषाया अप्रवृत्तिरिति भावः; साक्षात् षट्-सञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य सङ्ख्यापदे एव सत्त्वेन डतिपदेऽभावात् । **पतय इति** । पतिशब्दस्य 'पातेर्डति'रित्यौणादिकडतिप्रत्ययान्तत्वादिति भावः । न च 'बहुगणवतुडतिसङ्ख्या'

❀ चिदस्थिमाला ❀

'रामार्जुनगतिस्तयो'रितिवत् । **साहचर्यादिति** । उणादेरव्युत्पन्नत्वेनान्यासम्भवाच्चेत्यपि बोध्यं, तदाह—**इत्य-लमिति** । अत एव=तदन्तस्य सञ्ज्ञात एव । अत एव=तदनुवादेन तद्विधानादेव । एतेन—सञ्ज्ञाविधाविति-निषेधात्, डत्यन्तेत्ययुक्तं, न च केवलस्य सञ्ज्ञा निष्फला, अङ्गाधिकारे तदन्तविधेः सत्त्वेन 'षड्भ्यो लु'गिति लुकः सम्भवादित्यपास्तम् । शाकटायनमतेनाह—**सङ्ख्येति किमिति** । शास्त्रुक्तेरसाङ्गत्यं सूचयन्नाह—**अनेकेति** । वक्तुस्तन्त्रसत्त्वेऽपि बोद्धुरावश्यकमाह—**आवृत्त्येति** । नन्वेवमन्योन्याश्रयापत्तिरत आह—

❀ ज्योत्स्ना ❀

**इत्यलमिति** । अत्रेदं तावच्चिन्त्यम्—'महासञ्ज्ञाकरणान्वर्थत्वाभ्यां प्रदेशेषु लोकप्रसिद्धार्थग्रहणे-

❀ सदाशिवभट्टीयम् ❀

सङ्ख्यापदस्य वृत्तिः, 'असङ्ख्यां सङ्ख्ये'त्यादि भाष्यात्, 'एकादिकया चापी'ति भाष्याच्च, सङ्ख्यासञ्ज्ञा स्यादिति वार्तिकाच्च ।

❀ विषमपदविवृतिः ❀

वाचित्वस्य बह्वादिष्वभाव इति पूर्वमुक्तत्वेनान्वर्थसञ्ज्ञाबलेन सङ्ख्वैपुल्यवाचिनोर्बहुगणयोर्व्यावृत्ति-रिति वक्तुमशक्यम् । एवं पतिशब्दोपि डत्यन्तत्वेन सञ्ज्ञिकोटौ निविष्टो न व्यवच्छिद्येतेत्या-शङ्क्याह—सङ्ख्येत्यादिनेत्यलमित्यन्तेन । **पतये इति** । सङ्ख्यापदानुवृत्तिरप्युणादीनां व्युत्पत्तिपक्षस्य ज्ञापिका । **अतो न सङ्कर इति** । वस्तुतस्त्वनेकसञ्ज्ञाकरणसामर्थ्यादाकडारीयत्वाभावेपि नासां

१ 'अस्य सूत्रस्य शाटकं वये'ति कुविन्दं प्रति कस्य चिदुक्तौ—वाने सति शाटकसिद्धिः, शाटक-सिद्धौ च वानं,—'शाटकं वये'त्युक्तेरिति-प्रसक्तस्यान्योन्याश्रयस्य—'यस्मोतस्य शाटकेतिसञ्ज्ञा भवित्री तद्वये'त्येवंरीत्या भाविसञ्ज्ञाश्रयणेन यथा निरासः, यथा वा—'इग्यणः सम्प्रसारण'मित्यादौ भाविसञ्ज्ञा-विज्ञानं तथाऽत्रापि यस्य लुक्श्लुलुप्सञ्ज्ञा भाविन्यस्तददर्शनन्तथेत्यर्थेन नान्योन्याश्रय इति भावः ।

लुक्श्लुलुप्शब्दैरिति । 'अदर्शनं लोप' इत्यतोऽदर्शन'मित्यनुवर्त्तते । प्रदेशेषु भाविसञ्ज्ञाविज्ञानान्नान्योन्याश्रयः । एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन—लोपसञ्ज्ञया आसां समावेशः; तेन प्रत्ययलक्षणसिद्धिः ।

**षड्भ्यो** । 'जश्शसोः शि'रित्यतो 'जश्शसो'रिति वर्त्तते । 'षड्भ्य' इति विहितविशेषणं, तेन गौणे न ।

❀ अभिनव-चन्द्रिका ❀

'कति चे'त्येव सूत्र्यतामिति वाच्यं, छान्दसडत्यन्तपतिशब्दस्य सङ्ख्याषट्सञ्ज्ञयोरनापत्तेः ।

**नान्योन्याश्रय इति** । लुक्श्लुलुप्पदानां लुक्श्लुलुप्पदप्रयोज्यत्वे, विधेयतायाम्, अदर्शने च खण्डशश्शक्तिस्वीकारादिति भावः। यत्र तु लुगादिपदं विधेयसमर्पकं तत्रादर्शनरूपखण्डस्यैवोपस्थितिः, न तु लुगादिपदप्रयोज्यत्वरूपखण्डस्य, विधेयतारूपखण्डस्य च; अनुपयोगात् । यत्र च लुगादिपदमुद्देश्यतासमर्पकं तत्र खण्डत्रयस्याप्युपस्थितिः । लुगादिपदप्रयोज्यविधेयताश्रयादर्शनरूपार्थलाभस्तु आकाङ्क्षावैचित्र्यादिति न लुकि श्लुप्रयुक्तं कार्यं, नापि लुपि, न वा श्लौ लुबादिप्रयुक्तकार्यसङ्करः । भाविसञ्ज्ञानुसरणन्तु भट्टानां मुखेवेति प्राहुरिति दिक् । **विहितविशेषणमिति** । 'षड्भ्यो लु'गित्यस्य

❀ चिदस्थिमाला ❀

**प्रदेशेष्विति** । नन्वेवमपि विशेषविहितत्वादेतामिर्लोपसञ्ज्ञाबाधः स्यादत आह—**एकेति** । दीक्षितायुक्तेरसाङ्गत्यस्यान्यत्र प्रतिपादितत्वात्सिद्धान्तमाह-**षड्भ्य इतीति** । इष्टानुरोधेन तसादित्यस्याप्रवृत्तेः। बहुवचनं प्रयोगभेदाभिप्रायम् ,–'ऋत्विग्भ्य' इतिवत् । 'द्वित्राः' 'पञ्चकाः शकुनयः' इत्यादौ षट्त्वाभावादेवादोषादाह—**गौण इति** ।

❀ ज्योत्स्ना ❀

ऽपि सञ्ज्ञाप्रदेशे बह्वादीनां सङ्ख्यानकरणत्वस्वरूपार्थान्वयः कथ'मिति । तस्माद्योगविभागेन नियमपरमुपाध्यायव्याख्यानमेव सारम् । एवञ्चैकादिया चापि सङ्ख्यया सङ्ख्यायते, अपिशब्दाद्बह्वादिकयेति यथाश्रुत एव भाष्यार्थः । 'असङ्ख्यां सङ्ख्येत्याहे'ति भाष्यान्तरन्तु नियतसङ्ख्यावाचिनामेव

❀ विषमपदविवृतिः ❀

सञ्ज्ञानां समावेशः। लोपसञ्ज्ञा तासां विषये प्रवर्त्तत एव,—बाधकाभावात् , नह्येता इव लोपसञ्ज्ञा प्रत्ययादर्शनमुद्दिश्य विहिता, किन्त्वदर्शनमात्रम् । एकसञ्ज्ञ्युद्देश्यकानेकसञ्ज्ञानान्तु पृथक्सञ्ज्ञाकरणसामर्थ्याच्च युक्तः समावेशः । 'न लुमते'ति निषेधारम्भाच्च लोपसञ्ज्ञैव तासां विषये प्रवर्त्तते ।

ननु यथा लोपसञ्ज्ञा एतासां विषये प्रवर्तते तथैता अपि लोपसञ्ज्ञाविषये प्रवर्तेरन् , तथाचागोमती गोमती सम्पन्ना गोमतीभूतेत्यत्र च्वेर्लोपे तत्र 'लुक्तद्धितलुकी'ति ङीपो लुक् प्रसज्येत, छिद्भिदित्यादौ 'श्लौ'विति द्वित्वं प्रसज्येत, च्वेः क्विपश्चादर्शनस्य लुक्श्लुसञ्ज्ञाप्रवृत्तेः, 'वेरपृक्तस्ये'ति लोपे प्रत्ययत्वव्याप्यधर्मपुरस्कारेणैव प्रत्ययस्योपपादनादिति चेन्न; पृथक्सञ्ज्ञात्रयविधानसामर्थ्येनासां स्वभिन्नसञ्ज्ञासामान्यविषयेऽप्रवृत्तिकल्पनात् । लोपसञ्ज्ञायास्त्वासां विषये प्रवृत्तिरुपपादितैव । अत एव—"प्रत्ययादर्शनन्तु लुमत्सञ्ज्ञं प्राप्नोति, तत्र को दोषः ? तत्र लुकि श्लुविधिप्रतिषेधः । न वा–पृथक्सञ्ज्ञाकरणात् । यथैव तर्हि अदर्शनसामान्ये लोपसञ्ज्ञा—लुमत्सञ्ज्ञाऽपि लोपसञ्ज्ञामवगाहेरन् । तत्र को दोषः ? गोमतीत्यत्र 'लुक्तद्धितलुकी'ति ङीपो लुक् प्रसज्येत । ननु चात्रापि 'न वा पृथक् सञ्ज्ञाकरणा'दित्येव सिद्धम् । यथैव तर्हि पृथक्सञ्ज्ञाकरणसामर्थ्याल्लुमत्सञ्ज्ञा अपि लोपसञ्ज्ञां नावगाहन्ते, एवं लोपसञ्ज्ञापि लुमत्सञ्ज्ञां नावगाहते । तत्र स एव दोषः, लुक्युपसङ्ख्यानम्–" इत्यादि भाष्योक्तं सङ्गच्छते । 'न वा पृथक् सञ्ज्ञाकरणा'दिति भाष्यस्य–तद्भावितसञ्ज्ञाभिप्रायकत्वे तु गोमतीत्यत्र 'लुक् तद्धितलुकी'ति लुगापादनपरभाष्यं,'यथैव तर्ही'त्यादि तदुत्तरभाष्यं चासङ्गतं स्यात् , तद्भावितसञ्ज्ञाश्रयणे गौरवञ्च । **विहितविशेषणमिति** । अत्र वदन्ति—एवं सति 'परमकर्ता'त्यत्र 'षड्भ्यो

'परमपञ्च'त्यादौ तु विशिष्टस्यापि सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजकत्वेन सङ्ख्यावाचितया षट्त्वमस्त्येवेति न दोषः ।

❀ अभिनव-चन्द्रिका ❀

षट्सञ्ज्ञकविशिष्टयोर्जश्शसोर्लुगित्यर्थः, वैशिष्ट्यञ्च—'स्वार्थगतसङ्ख्याभिधायित्व' 'स्वनिष्ठोद्देश्यता-निरूपितविधेयताश्रयत्वै'तदुभयसम्बन्धेन, तेन 'षड् ब्राह्मणाः' षट्कल्पा इत्यादौ न दोषः; ब्राह्मणपदोत्तरजसि, कल्पबन्तप्रकृतिकजसि च षट्सञ्ज्ञानिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्याभावात्।

बोधजनकत्वेनेति । यस्य सङ्ख्यावाचकत्वं वक्तव्यं, तत्प्रयोज्या सङ्ख्यनिष्ठप्रकारतानिरूपिता निरवच्छिन्ना स्वप्रयोज्यविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा च या सङ्ख्येयनिष्ठा विशेष्यता, तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वरूपसङ्ख्यावाचकत्वस्य परमपञ्चन्घटकपञ्चन्शब्देऽपि सत्त्वेन 'षड्भ्यो लु'गित्यादौ—उद्देश्यताया अपर्याप्त्यापि विवक्षणात्परमपञ्चेत्यादौ न दोष इति भावः । एतेन मूलोक्तदिशा 'त्रिदण्डिन' इत्यादौ 'त्रिदण्डि'न्नित्यस्य सङ्ख्यावाचकत्वं स्यात्, परमषडित्याद्यर्थं षान्तग्रहणस्यावश्यकत्वात्, तेन ज्ञापकेनाशब्दसञ्ज्ञेति प्रत्याख्यानपर—'स्वं रूप'-मिति सूत्रस्थभाष्यविरोधश्चेत्यपास्तम् । 'षड्भ्यो लु'गित्यस्य षट्सञ्ज्ञकनिष्ठोद्देश्यतानिरूपित-विधेयताश्रययोर्जश्शसोर्लुगित्यर्थेन तत्रोद्देश्यताया अपर्याप्त्यापि विवक्षणेन 'परमष'डित्यादा षडि-त्यत्रापर्याप्त्या उद्देश्यतायाः—सत्त्वादुक्तभाष्यविरोधाभावात् । त्रिदण्डिन्नित्यादौ 'त्री'त्यत्रैव—सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यताप्रयोजकतापर्याप्तिर्नतु त्रिदण्डिन्निति समुदाये इति—दण्डिन्नित्यस्य 'स्वप्रयोज्यसङ्ख्यानिष्ठप्रकारतानिरूपितत्व' 'स्वप्रयोज्यविशेष्यतानिरूपितप्रकारत्वा-समानाधिकरण्यो'भयसम्बन्धेन स्वविशिष्टनिरवच्छिन्नसङ्ख्येयनिष्ठविशेष्यताप्रयोजकतापर्याप्त्य-धिकरणत्व'रूप—सङ्ख्यावाचकत्वस्यैवाभावेनोक्तदोषविरहादित्याहुः ।

❀ चिदस्थिमाला ❀

नन्वेवं कथमिष्टं वदन्तेऽत आह—परमेति । अपिः केवलसमुच्चये । जनकत्वेनेत्यभेदे तृतीया वार्तिकेन, वस्तुतस्तयोर्भेद एवेति स्पष्टं मञ्जूषायाम् । लोके गणनायां प्रसिद्धानामेवात्र ग्रहणमि-त्यत्र न मानं, गौणे त्वतिक्रान्ताद्यर्थप्राधान्यं, नतु सङ्ख्याप्रकारकसङ्ख्येयस्येति भावः । उपसर्जनप्रतिषेध-खण्डनाय—'यद्वाङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति, यद्येवं परमपञ्च षड्भ्य इति लुङ्न प्राप्नोति,

❀ ज्योत्स्ना ❀

सङ्ख्यात्वमभ्युपगम्य पक्षान्तरेण प्रवृत्तमिति न तद्विरोधनप्रदर्शनमत्र पक्षे किञ्चित्करमित्याहुः । इति न दोष इति । एवन्तु त्रयः पञ्च इव त्रिपञ्चान इत्युपमितसमासस्य सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधज-

❀ सदाशिवभट्टीयम् ❀

अत एव सङ्ख्येतिपदे न सङ्ख्याकार्य्यं, त्वदीयनियमेन तु न वारणीयम्, तस्य बहुवाचित्वाभावात् ।

❀ विषमपदविवृतिः ❀

लुगि'ति लुगनापत्तिः, डत्यन्तस्य षट्सञ्ज्ञाविधानात् । न चायं समास एव दुर्लभः, 'दिक्सङ्ख्ये-सञ्ज्ञाया'मिति नियमादिति वाच्यं, दिक्सङ्ख्ये समानाधिकरणविशेषणत्वेनोपादाय प्रवर्त्तमान-समाससञ्ज्ञाया एव तेन नियमेन व्यावृत्तेः । अत एव सर्वादिसूत्रे परमपञ्चेति प्रयुक्तं भाष्ये । न च 'बहुगण', 'डतिचे'त्यनयोर्द्विस्तदन्तविधिः, अतिकतय इत्यत्रापि षट्सञ्ज्ञायां लुगापत्तेः । बह्वा-दीनामसङ्ख्यात्वस्य तथा स्वीकृतत्वेनान्वर्थसञ्ज्ञाबलेन सङ्ख्याषट्सञ्ज्ञयोरुक्तस्थले वारणसम्भवादिति ।

१. अत्रत्यं तत्त्वं नामीति सत्रीयवरवर्णिन्यामस्माभिर्विस्तरेण निरूपितं तत एवावधारणीयम् ।

स्पष्टञ्चेदं 'षट्प्रधान एष समासः' इत्यादिना सर्वादिसूत्रे भाष्ये। कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम्।

**प्रत्ययलोपे**। 'प्रत्ययस्ये'त्यनुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे माभूत्।

❀ अभिनव-चन्द्रिका ❀

**अन्यत्र निरूपितमिति। परेतु**—'सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठनिरवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वमेव सङ्ख्यावाचकत्वम्। न च 'प्रियपञ्चान'इत्यादौ 'षड्भ्यो लु'गिति लुगापत्तिरिति वाच्यं, 'षट्प्रधान एव समास' इतिभाष्यप्रमाण्येन 'षड्भ्यो लुगि'त्यादेः 'स्वार्थगतसङ्ख्याभिधायित्व' 'स्वाव्यवहितोत्तरत्वै'तदुभयसम्बन्धेन षट्सञ्ज्ञाविशिष्टयोर्जश्शसोर्लुगित्यर्थेनादोषात्। अत एव 'प्रियपञ्चा द्रौपदी'त्यत्र'डाबुभाभ्या'मिति सूत्रे अनुवृत्तेन 'न ष'डित्यनेन डाब्निषेधः सिद्ध्यति। लोकप्रसिद्धसङ्ख्यावाचकत्वं विहायाऽन्यादृशसङ्ख्यावाचकत्वपरिष्कारे मानाभावाच्च शेखरोक्तं चिन्त्यमेवेत्याहुः। **प्रत्ययस्येत्यनुवृत्त्या सिद्ध इति**। अत्रेदं तत्त्वं–'प्रत्ययस्य लु'-

❀ चिदस्थिमाला ❀

नैष दोषः'—इत्यग्रिमसुक्तमाह—**षडिति**। **अन्यत्र**=उद्योते।

❀ ज्योत्स्ना ❀

नकस्य षड्त्वापाताल्लुक्प्रसङ्गाच्चिन्त्यमेतत्। **अन्यत्र निरूपितमिति**। कयटप्रदर्शितप्रकारोपपत्तिस्तु

❀ सदाशिवभट्टीयम् ❀

**प्रत्ययलोपे**। **अनुवृत्तेति**। तत्फलन्त्वपिपूर्वादीङ्क्तौ क्विप्, भागुरिमतेऽल्लोपे–पिपौ पियः–इत्यत्रैरनेकाच इति यण्न, ननन्देत्यादावाम् च न, प्रत्ययपदाभावे तु यस्य कस्यचिल्लोपे प्रत्ययलक्षणमित्यर्थेनानेकाच्त्वाभावेन अप्राप्तौ यणामभावावतिदिश्येयाताम्। किञ्चोक्तेर्थे वेहतीत्यत्र ष्यङ् स्यादिति बोध्यम्। लोपे इति च सति सप्तमी, अतएव 'पच भवती'त्यादावतिङ् इति निघातप्रतिषेधः, दधीयति मधूयतीत्यत्र सुबन्तलक्षणः क्यच्, वेभिदीति चेच्छिदीतीत्यत्र यङोवेतीट् च सिध्यति। **अवयवलोपे माभूदिति**। अत्र कैयटः—'अन्यतमावयवलोपे

❀ वरवर्णिनी ❀

ननु प्रत्ययस्य लोपे=शास्त्रतोऽर्थतश्च अदर्शने सति प्रत्ययलक्षणे–हरिरित्यत्रापि जसोऽदर्शनाज्जसिचेत्यस्य गुणस्य

---

१. अयम्भावः—प्रत्ययस्य लोपः=अदर्शनं, तत्र प्रत्ययलक्षणमित्यर्थे कविरित्यत्र जसोऽभावसत्त्वाद्गुणापत्तिः। 'शास्त्रविहिते प्रत्ययादर्शने तत्त्व'मित्यर्थे तु—'कविपुत्र' इत्यत्र सुपो धात्विति शास्त्रविहितङ्स्प्रतियोगिकाऽभावसत्त्वाद्गुणापत्तिः। न चात्र नलुमताङ्गस्येति निषेधादेव न तदापत्तिरिति वाच्यं, 'राज्ञ' इत्यत्र नलोपापत्तेः, राजेत्यत्र प्रथमान्ते हल्ङ्यादिसूत्रविहितसुप्रत्ययादर्शनसत्त्वात्। 'शास्त्रविहिते प्रत्ययादर्शने' इत्यस्य—यस्याः प्रकृतेर्विहितस्य प्रत्ययस्याभावः शास्त्रकर्तृकस्तस्याः प्रकृतेरित्यर्थेन तत्प्रकृतिकत्वस्य शसादिपरकराजन्छब्देऽप्यक्षतत्वात्। प्रत्युच्चारणं शब्दभेदस्वीकारे तु 'राजे'त्यत्र सुप्रकृतेः 'राज्ञ' इत्यत्र शसादिप्रकृतेश्च भेदादेव नोक्त दोष इति सृष्टिं कुर्वन्नित्येवमादयो दोषा बोध्या इति केचित्।

'लोप'इति भावे घञ्, प्रत्ययस्य लोप इति समासः। प्रत्ययलोपे इति 'यस्य च भावेने'ति सतिसप्तमी। औपश्लेषिकसप्तम्या—प्रत्ययलोपे परत इति तु नार्थः, अभावेन पौर्वापर्यासम्भवात्। शास्त्रकृत्कल्पितस्य लक्ष्यसिद्धये बौद्धतादृशव्यवहारस्य स्वीकारे तु 'पच—गच्छती'त्यादौ 'तिङ्ङतिङ' इति निघातस्य 'अतिङ' इति निषेधो न स्यात्। एवं 'बहुपरिव्राजका नगरी'त्यत्र प्रत्ययलोपाव्यवहितपूर्वस्य कार्याभावेन प्रत्ययलक्षणाभावे 'असुप' इति निषेधाप्रवृत्त्या प्रत्ययस्थादितीत्त्वापत्तिः। एवं बोभवीतीत्यत्र यङ्लुकि लुप्तयाव्यवहितपूर्वस्य कार्याभावेनेडागमानापत्तिरिति स्पष्टं—**सदाशिवभट्टीये**।

## ॐ वरवर्णिनी ॐ

प्रत्ययलक्षणेनापत्तिरिति चेन्न, 'पतिः समास एवे'त्यादिनिर्देशात्प्रत्यासत्त्या च यस्य प्रत्ययस्यादर्शनं शास्त्रविहितं तत्प्रत्ययनिमित्तकं कार्यमित्यर्थेनादोषात्। **गुरवस्तु**–सृष्टिं कुर्वन्नित्यत्र नलोकेतिषष्ठीनिषेधात्षष्ठ्या अदर्शनेन षष्ठीसमासापत्तिः, प्रत्ययस्यादर्शनेन प्रत्ययलक्षणप्रवृत्त्या षष्ठ्यन्तत्वस्य तत्र लाभात् । न च 'पूरणगुणे'ति निषेधादेव न समासापत्तिरिति वाच्यं, 'सृष्टिं कृतवा'नित्यत्र समासापत्तेरिति–'अदर्शनं लोप' इत्यतो लोपपदं, 'प्रत्ययस्य लु'गित्यतो लुगादिपदञ्चानुवर्त्य विभक्तिविपरिणामेन तृतीयान्ततया–लुक्श्लुलुग्लोपशब्दैः प्रत्ययस्यादर्शने प्रत्ययलक्षणमित्यर्थो वाच्य इति नोक्तदोष इत्यप्याहुः। **अनुवृत्त्येति**। न च तदनुवृत्तिर्व्यर्थेति वाच्यम्, अपिपूर्वकादीङ्धातोः क्विपि भागुरिमतेऽल्लोपे दीर्घे 'पी' शब्दादौविभक्तौ 'पिया'वित्यत्र प्रत्ययलक्षणेनानेकाच्त्वादेरनेकाच इति यणापत्तेः । ननु–उदियावित्यादिभाष्यप्रयोगात्तत्र यणभावाय–'किञ्चिद्धात्वयवपूर्वकस्यैवेकारस्यैरनेकाच इत्यनेन यण्भवती'तिसिद्धान्ततया'पिया'वित्यत्र प्रत्ययग्रहणाभावेऽपि प्रत्ययलक्षणेन यण न प्राप्नोतीति चेन्न, ननन्दतुरित्यत्रेकारस्य टेश्च लोपेन प्रत्ययलक्षणप्रवृत्त्याऽनेकाच्त्वात्कास्यनेकाच आमित्यामापत्तेः । नचाम्विधौ कास्ग्रहणेन—'आमि कर्त्तव्ये अनुबन्धलोपे प्रत्ययलक्षणं ने'ति कल्पनान्नोक्तदोष इति वाच्यम्, अबुन्दित्यत्रोकारलोपे प्रत्ययलक्षणेन 'आडजादीना'मित्याडागमापत्तेः। ननु कास्ग्रहणेन सामान्यतोऽनुबन्धलोपे प्रत्ययलक्षणं नेति ज्ञापनान्नोक्तदोष इति वाच्यं, 'राजपुरुष' इत्यादौ ङकाररूपानुबन्धलोपे पश्चाच्च सुपोधात्विति षष्ठ्या लुकि प्रत्ययलक्षणाभावेन नलोपापत्तेरिति विस्तरेण शेखराभिनवराजलक्ष्म्यां निरूपितमस्माभिः ।

**अवयवलोप इति**। कृत्स्नप्रत्ययलोप एव प्रत्ययलक्षणमित्यर्थः । तेन 'प्रत्ययत्वोपलक्षितसमुदायत्वावच्छिन्नप्रतियोगितानिरूपकाभावनिष्ठविषयतानिरूपकज्ञानजन्यज्ञानीयविषयताश्रयप्रत्ययनिष्ठनिमित्ततांकं कार्यमेव प्रत्ययलक्षणेन भवती'त्यस्य लाभेन आङ्पूर्वकहनधातोः–'आङो यमहन' इत्यात्मनेपदे विधिलिङि इटि 'इटो'ऽदित्यदादेशे सीयुटि, सकारलोपे 'गमहने'त्युपधालोपे 'होहन्ते'रितिकुत्वेन निष्पन्ने–'आघ्नीय' इत्यत्र सीयुड्विशिष्टप्रत्ययावयवसकाररूपप्रत्ययलोपेऽपि तन्निमित्तकानुदात्तोपदेशेत्यनुनासिकलोपो न भवति, सकाररूपप्रत्ययावयवलोपेऽपि समुदायत्वावच्छिन्नप्रतियोगितानिरूपकाभावस्याभावात् । न चानुदात्तोपदेशेत्यत्र वन्साहचर्याद्धन्धातोरपि अनुपधालोपिन एव ग्रहणादेवाघ्नीयेत्यत्र न दोष इति तदर्थमाद्यप्रत्ययग्रहणं व्यर्थमिति वाच्यं, वनोतेर्विचि शसि'व्न' इत्यादावुपधालोपस्य दर्शनेन तथा साहचर्यस्य वक्तुमशक्यत्वात् ।

ननु किङिन्निमित्तकोपधालोपाभाववद्वनोतिसाहचर्याद्धन्तेरपि तथैवानुपधालोपिनो ग्रहणमिति न दोष इति चेन्न, समिधमिच्छति–समिध्यति, समिध्यतीति समिदित्यत इच्छाक्यजन्तात्क्विपि निष्पन्नाट्टाविभक्तौ 'समिधा' इत्यत्र क्यजकारस्य प्रत्ययावयवस्य लोपे प्रत्ययलक्षणापत्त्याऽदन्तत्वाट्टाङ्सीतीनापत्तेः, भिसि ऐसापत्तेः, ङसे स्यादेशापत्तेश्च । न च वर्णाश्रये प्रत्ययलक्षणनिषेधान्नोक्तदोष इति वाच्यं, तस्य वर्णप्राधान्यविषयत्वात् । अदन्तत्वादौ च वर्णस्याप्रधानतया एव सत्त्वात्। न च प्रत्ययावयवे प्रत्ययत्वव्यवहाराभावादेव सलोपेऽपि प्रत्ययलक्षणाऽप्रवृत्त्याऽऽघ्नीयेत्यत्रोक्तदोषाभावादाद्यप्रत्ययग्रहणं विफलमिति वाच्यं, 'यावता विनाऽनुपपन्नं तावत्सकलं ज्ञाप्यते' इति न्यायेन प्रत्ययावयवे प्रत्ययत्वव्यवहारस्यापि ज्ञापनेन 'आघ्नीये'त्यत्र नलोपाभावार्थं तत्सार्थक्यात् । प्रत्ययावयवे प्रत्ययत्वव्यवहारे ज्ञापिते हि कृत्स्नप्रत्ययलोपाभावेनाघ्नीयेत्यत्र प्रत्ययलक्षणसूत्राप्रवृत्त्या झलादित्वाभावान्नलोपो नेति तत्त्वम् ।

ननु प्रत्ययावयवे प्रत्ययत्वव्यवहारेऽचिश्नुधात्विति सूत्रे तदादिविध्युपपादनपरत्वेन विधिरिति सूत्रभाष्यविरोधः, अजन्त इत्यर्थेपि प्रत्ययावयवे प्रत्ययत्वव्यवहारस्य सत्त्वेन जसादावकारे प्रत्ययत्वस्य स्वारसिकतयाऽजन्तत्वस्य च व्यपदेशिवद्भावेन सम्भवादिति चेन्न, 'स्वघटितत्व' 'स्वनिष्ठचरमावयवतानिरूपकत्वै'तदुभयसम्बन्धेन अज्विशिष्टस्यैवाजन्तपदेन विवक्षणेन ससहाये व्यपदेशिवद्भावाप्रवृत्त्याऽकारे स्वघटितत्वादेरसम्भवेनाऽजन्तत्वस्य जसकारेऽसम्भवात् ।

नच प्रत्ययावयवे प्रत्ययत्वव्यवहारे 'वृङः षाक'न्निति षाकन्ः ककारस्य लशक्वेतीत्वापत्तिरेवञ्च 'वराक' इत्यत्र गुणनिषेधापत्तिः, एवमाखनिकबकइत्यत्रेकवकप्रत्ययघटकककारस्यापि प्रत्ययत्वादित्त्वापत्त्या 'गमहने'त्युपधालोपापत्तिरिति वाच्यं, प्रत्ययत्वन्यूनवृत्तिधर्मावच्छिन्नविषयत्वाऽनिरूपितविषयतैव प्रत्यया-

❀ अभिनव-चन्द्रिका ❀

गित्यतः 'प्रत्ययस्ये'त्यनुवृत्त्यै 'लोपे प्रत्ययलक्षण'मित्येव सिद्धे पुनः प्रत्ययग्रहणं 'षष्ठीप्रकृतिप्रयोज्य-प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियते' इति बोधनाय, तेन—'इदुदुप-धस्ये'त्यत्र प्रत्ययभिन्नो यो विसर्ग इति सामानाधिकरण्येनान्वयेऽपि 'कविभिःकृत'वित्यादौ न दोषः। नच—"प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे माभूत्, तेनाग्नीयेत्यादौ नानु-नासिकलोपः–" इति भाष्यविरोध इति वाच्यं, तस्यापि भाष्यस्यास्मिन्नेव तात्पर्यमिति कल्पनेना-दोषात्। अत एव 'आदेशप्रत्ययो'रित्यादौ 'आदेशः प्रत्ययश्च यः सकार'इति सामानाधिकरण्ये-नान्वयेऽपि 'रामे'ष्वित्यादौ षत्वं सिध्यति। अत्रैव 'सात्पदाद्यो'रिति सातिग्रहणमपि ज्ञापकम्।

❀ वरवर्णिनी ❀

वयवे गच्छतीति स्वीकारेणाऽऽदित्वस्य च प्रत्ययत्वन्यूनवृत्तिधर्मतया तदानयनासम्भवात्। अत एव राम-मित्यत्र मकार सुप्त्वमादाय 'सुपिचे'ति दीर्घो न। प्रमाणञ्चात्र 'यचि भ'मित्यादिनिर्देश एवेत्याहुः। एवञ्च स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽसमानाधिकरणा या प्रत्ययत्वावच्छिन्ना विषयता सा प्रत्ययावयवे-ऽपीति फलितं, 'आदिर्ञिटुडवः' 'षःप्रत्ययस्य' 'लशक्वतद्धिते' इत्यादौ प्रत्ययावयवीभूताऽऽदित्वावच्छिन्न-विशेष्यतानिरूपितैव प्रत्ययत्वावच्छिन्ना विशेष्यतेति न वराक इत्यादौ दोषः। एवमुष्ट्रगोयुगमित्यत्र यादिप्रत्ययपरत्वेन वान्तादेशोऽपि न। केचित्तु गव्युगव्ये कर्त्तव्ये ओकारोच्चारणसामर्थ्यान्नावादेश इत्याचक्षते।

[ ननु प्रत्ययलोपे तल्लक्षणमित्येव सिद्धे द्वितीयप्रत्ययग्रहणेन—लुप्तप्रत्ययवृत्तिप्रत्ययत्वव्याप्यधर्मस्यैवानेना-तिदेश इत्यर्थस्यावश्यं स्वीकरणीयतया आग्नीयेत्यत्र झल्त्वस्य प्रत्ययत्वाव्याप्यतया तस्यातिदेशाभावेनैव नलोपाप्रसक्त्या प्रथमप्रत्ययग्रहणस्य न फलमिति चेन्न; प्रत्ययमात्रवृत्तिविषयताप्रयोजकपदजन्यप्रतीतिविषय-तावच्छेदकधर्मस्यैवानयनमित्यस्यैव द्वितीयप्रत्ययग्रहणेन लाभात्प्रकृते–झल्पदप्रयोज्यविषयतायाः सकाररूप-प्रत्ययनिष्ठायाः प्रत्ययत्वव्याप्यत्वाक्षतेः प्राप्तस्य प्रत्ययलक्षणस्य निरासायाद्यप्रत्ययग्रहणस्य सार्थक्यसम्भवात्। अत्वसन्तस्येत्यत्र तु अस्त्वादिपदं न तथेति 'सुदृषत्प्रासाद' इत्यत्र न दीर्घः। ]

ननु 'प्रत्ययलोपे तल्लक्षण'मित्येव सिद्धे द्वितीयग्रहणं न कार्यमेवेति चेन्न, 'सुदृषत्प्रासाद'इत्यत्रात्वसन्त-स्येति दीर्घाभावाय प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताकं कार्यं प्रत्ययलोपे सति भवति, न तु प्रत्ययवृत्ति-धर्मासमानाधिकरणधर्मावच्छिन्नोद्देश्यताकं कार्यमित्यर्थस्यावश्यवक्तव्यतया तल्लाभार्थं तत्सत्त्वात्। एवञ्च अस्पदस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वाभावान्न 'सुदृषत्प्रासाद'इत्यत्र दीर्घः। न चातुसाह-चर्याच्छ्रूयमाणाऽसन्तस्यैव दीर्घ इति 'सुदृषत्प्रासाद'इत्यत्र जस्घटकमसमादाय न दीर्घ इति वाच्यं, मति-मच्छब्दादाख्यानणिजन्ताद्विचि निष्पन्ने 'मतिम्' शब्दे 'सर्वे सर्वपदादेशा'इतिन्यायेन स्थानिवत्त्वेनात्वन्तत्व-सत्त्वात्तत्र चातोरश्रूयमाणस्यापि सत्त्वात्तथा साहचर्यस्यासम्भवात्। नचोक्तमतिम्शब्दे णिलोपस्य स्थानिवत्त्वादत्वन्तत्वाभाव इति वाच्यं, दीर्घविधावचःपरस्मिन्निति स्थानिवद्भावाप्रवृत्तेः। नन्वत्वसन्तस्येत्यत्र निर्दिश्यमानपरिभाषाप्रवृत्त्या मतिम्शब्दे निर्दिश्यमानस्यातोरभावान्न दोषः। किञ्च—'अस्मायामेधे'त्यत्र असितिवर्णग्रहणादुगिद्वर्णग्रहणमिति तदन्तविधिनिषेधप्रतिप्रसवात्तदन्तविधावनल्विधाविति निषेधात्सुदृषत्प्रासाद इत्यत्रासन्तत्वस्यानयनासम्भवान्न दीर्घप्रसङ्गः, न च असिति न वर्णग्रहणमिति कथमुगिद्वर्णग्रहणमित्यस्य विषय इति वाच्यम्, अनिनस्मिन्निति परिभाषायाः—अन्त्वादौ वर्णत्वव्याप्यधर्मावच्छिन्नविषयताया अतिदेश इत्यर्थस्य परिभाषेन्दुशेखरभूत्यादौ निर्णीतत्वेन तद्विषयत्वाक्षतेरत एव वार्त्तिककर्तृमते प्रत्ययलक्षण-सूत्रस्य विध्यर्थत्वेऽपि स्थानिवत्त्वेनासन्तत्वमादाय दीर्घापत्तिर्न, अस्त्वस्य वर्णत्वव्याप्यतयाऽनल्विधाविति निषेधादिति चेन्न, दामञ्छब्दादाचक्षाणणिजन्तात्कर्त्तरि क्विपि उपशब्देनाव्ययीभावसमासेऽनल्विधाविति निषेधात्स्थानिवत्त्वाप्रवृत्तावुपदाममित्यत्रानन्तलक्षणटजनापत्तेः। यत्तु सुदृषत्प्रासाद इत्यत्र प्रत्ययलक्षणा-प्रवृत्त्याऽसन्तत्वाभावादस्मायामेधेति विनोऽभावो द्वितीयप्रत्ययग्रहणफलमिति, तन्न; मायादिसाहचर्येण श्रूयमाणस्यैवासो ग्रहणेन तत्र विनः प्राप्तेरेवाभावादिति; नियमार्थत्वमस्य प्रत्ययलक्षणसूत्रस्य वदतां भाष्य-कृतां मते च नियमफलतयाऽपि उपदाममित्यादिसिद्धिर्ध्येयेति च श्रीत्रिपाठिचरणान्तेवसन्तो गौडाः।

तेन 'आघ्नीये'त्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये।

इदमेव प्रत्ययग्रहणं ज्ञापकम्—अवयवेऽपि प्रत्ययत्वव्यवहारस्य। एवञ्च 'आदेशप्रत्यययोः'

ॐ अभिनव-चन्द्रिका ॐ

'प्रत्ययलोपे' इति सूत्रे 'स्थानिव' दित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते, अर्थात्—प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तके कार्ये कर्तव्ये एव प्रत्ययलक्षणं यथा स्यादित्येतदर्थं, तेन 'सुदृषत्प्रासाद' इत्यादौ—अत्वसन्तस्ये ति दीर्घो न, अस्त्वे प्रत्ययत्वव्याप्यत्वाभावात्।

ॐ चिदस्थिमाला ॐ

**इदमेवेति**। अन्यथोक्तभाष्यस्य तस्य चासङ्गतिः स्पष्टैव।

ॐ सदाशिवभट्टीयम् ॐ

तद्घटितसमुदायस्याप्यदर्शनमस्त्येव, यथावयवे दग्धे पटो दग्ध इति मुख्यो व्यवहार'इति। तस्यायं भावः—समवायिकारणनाशे सत्यसमवायिकारणनाशे वा कार्य्यनाशोस्त्येवेति सर्व्वसम्मतम्, एवञ्च महापटस्य नाशो मुख्य एव, तत्सहकृताच्च कारणकलापात्खण्डपटोत्पत्तिस्तद्वत्प्रकृतेपीति। **आघ्नीयेत्यादाविति**। आदिना समिधमिच्छति समिध्यति, क्विप्—समिधित्यत्र हीनादेशो न। **ज्ञापकमिति**। अयं भावः—तदभावबुद्धिं प्रति तद्बुद्धिःप्रतिबन्धिकेति सर्व्वसिद्धं, शास्त्रत्वाहार्य्यापि सा तथेति निर्व्विवादम्। एवञ्चावयवलोपेन समुदायलोपे सत्यप्यवयवान्तरेऽतिदेशेन तद्बुद्धिसत्त्वेन कथं तल्लोपबुद्धिः स्यादतःकैयटोक्तं न युक्तं, किन्तु ज्ञापकमेवाश्रयणीयम्। अत एव भावरूपे आदेशे न तल्लोपकार्य्यमिति प्रपञ्चितं प्रागिति।

नन्वेवमाघ्नीयेति भाष्योदाहरणासङ्गतिः, तथाहि—कात्स्न्र्यंनिवेशेऽपि प्रत्यासत्तिरवश्यं वाच्यैव, प्रत्ययलोपे लुप्तप्रत्ययवृत्त्यसाधारणधर्म्मनिमित्तकं भवतीति, अन्यथा सुदृषदित्यत्र दीर्घो दुर्वारः, असः कृत्स्नप्रत्ययस्य लोपसत्त्वात्, असम्बुद्धौ सौ विधानेन प्रत्ययलक्षणत्वाच्च। अतएवैकेनैव प्रत्ययपदेन कात्स्न्र्यंलाभे द्वितीयप्रत्ययपदमकार्य्यमित्युक्तं भाष्ये। प्रत्यासत्त्यनङ्गीकारे तूक्तरीत्योभयोरप्यावश्यकत्वेन तदसङ्गतिः स्पष्टैव। एवञ्च तव मते लुप्तः सकारात्मकः प्रत्ययस्तद्वृत्तिझल्त्वं न प्रत्ययासाधारणम्। कैयटमते तु न दोषः, लुप्तप्रत्ययावशिष्ट ईयस्तद्वृत्तिस्तदसाधारणो धर्म्म आर्द्धधातुकत्वादिरेवेति चेन्मैवं; लुप्तप्रत्ययएव यत्कार्य्यप्रयोजकस्तत्कार्यं प्रत्ययलोपेपि भवतीत्यर्थेनादोषात्। सुदृषदित्यत्र लुप्तः अस्, स त्वप्रत्ययोर्दीर्घप्रयोजकः, अव्युत्पत्तिपक्षे सुपया इत्यादौ अप्रत्ययस्यापि तस्योपलम्भात्। आघ्नीयेत्यत्र तु लुप्तः सः, स तु प्रत्ययसञ्ज्ञक एव अनुनासिकलोपप्रयोजक इति।

**अवयवेपि प्रत्ययत्वव्यवहारस्येति**। नचैवं प्रत्ययादेरित्सञ्ज्ञायामतिप्रसङ्गः, आदिपदानुवृत्तिसामर्थ्येन कृत्स्नप्रत्ययादेरेव विवक्षितत्वात्। एवमायनेयीत्यत्राद्युदात्तश्चेत्यत्राप्यतिप्रसङ्गो भञ्जनीयः।

नन्वेवमपि 'येनविधि'रिति सूत्रे भाष्येऽचिश्नु इति सूत्रे तदादिविधेरभावे श्रियौ भ्रुवावित्यत्रैव स्यात्, श्रियः भ्रुव इत्यत्र न स्यादित्युक्तं, तद्विरुध्येत, प्रत्ययावयवेऽपि प्रत्ययत्वसत्त्वेनाचिप्रत्ययइत्यर्थेऽजन्ते प्रत्यय इति वार्त्तेपि तत्र तत्प्रवृत्तेर्निष्फलत्वादिति चेन्मैवम्; तस्य प्रत्ययत्वेपि विधानाभावेनाङ्गसञ्ज्ञानिमित्तत्वाभावात्। एतेन कर्म्मठ इत्यत्रेकादेशोपि परिहृतः, 'ठस्येक'इति सूत्रे भाष्ये कर्म्मठेऽतिप्रसङ्गमाशक्याङ्गस्येति वर्त्ततेऽङ्गस्य यष्ठकारः, किञ्चास्य ठकारनिमित्तं यस्मिन्नङ्गमित्येतद्भवति कस्मिंश्चाङ्गमित्येतद्भवति प्रत्यये' इति यदुक्तन्तस्य प्रतीयत इति व्युत्पत्त्या विहितइति न तद्विरोधः। अङ्गसञ्ज्ञासूत्रे साक्षादेव विधानमाश्रीयते न घटकतयेति च तदाशयः।

यदपि प्रत्ययस्थादिति सूत्रे भाष्ये 'केति सङ्घातग्रहणं'कारिका हारिकेत्यत्र न स्यात्, वर्णपक्षे तु वचनसामर्थ्यादेव भविष्यती'त्युक्तम्। तस्यायमाशयः—स्वग्रहणे सति सामर्थ्यात्परिभाषा बाध्यते, वर्णग्रहणे तु वचनसामर्थ्यादेव न प्रवर्त्ततइति स्वग्रहणं न कार्य्यमिति। एवं'भीही'ति सूत्रेपि तत्सामानाधिकरण्यानुरोधात् कृत्स्नप्रत्ययग्रहणमिति तद्विरोधो नेतिबोध्यम्। अनेनावयवे प्रत्ययत्वज्ञापनेपि तद्याप्यपित्त्वादेरज्ञापनात्, अन्यथा भूयास्तामित्यादाविडादेरापत्त्या बहूपप्लवापत्तिः। एवमन्यत्रातिप्रसङ्गो भञ्जनीयस्ततो ज्ञापकसिद्धस्या-सार्व्वत्रिकत्वेन यदि प्राप्नोति। **एवञ्चेति**। एतेन कैयटमते प्रत्यय ग्रहणात् स्वरूपतः प्रत्ययस्य ग्रहण-

'इद्गुपधस्ये'त्यनयोर्लक्षणादि नाश्रयणीयं, 'सात्पदाद्यो'रिति च चरितार्थम् ।

'स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थ'मिति भाष्यम् । 'प्रत्ययस्यासाधारणं

❀ अभिनव-चन्द्रिका ❀

स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं नियमार्थं,—'प्रत्ययलोपे प्रत्ययलक्षणमेव, न स्थानिव'दिति । तथाच स्थानिवत्सूत्रे आदेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन सङ्कोचात्–'सुदृषत्प्रासाद'इत्यादौ

❀ चिदस्थिमाला ❀

लक्षणादीत्यादिना—। वैयधिकरण्यम् । द्वितीयं प्रत्ययलक्षणमिति लब्धमाह—**प्रत्ययस्येति** ।

❀ सदाशिवभट्टीयम् ❀

मिति कल्पना प्रत्युक्ता, चारितार्थ्येऽपि फलाभावात् । **आदेशप्रतीति** । अत्रावयवप्रत्ययविषयवाक्ये तद्विधानाभावेनासम्भवात्तदादेरित्यस्यानुपस्थितिरिति एधिषीष्टेत्यादौ सीयुट्सुडादेः षत्वसिद्धिरित्यपरमनुकूलम् । अन्यथा तदादेरित्यस्योपस्थित्येण्कवर्गान्ततदादेरिति सूत्रार्थेन तत्र तदनापत्तिरतो लक्ष्यानुरोधान्नैवमर्थः किन्त्विण्कवर्गाभ्यां परस्य तदादेरवयो यः प्रत्ययस्तदवयवस्य सकारस्य षत्वमित्यर्थं इति वक्तव्यं स्यात् । **लक्षणादीति** । आदिना–आद्ये सौत्रत्वाद्द्वन्द्वः, व्यधिकरणान्वयश्च । अन्त्ये प्रसज्यप्रतिषेधो व्यधिकरणान्वयश्च । इति **चरितार्थमिति** । एवञ्चैकयैव कल्पनया द्वयोश्चारितार्थ्यमिति लाघवं, कैयटमते कल्पनाद्वयमिति गौरवमिति भावः । ननु कार्त्स्न्यविवक्षायाः फलं विध्यर्थमिति पक्षेआग्नीयेति, नियमार्थमिदसूत्रमिति पक्षे तद्विवक्षायास्तु किं फलमितिचेच्छृणु, तद्विवक्षां विना तस्य नियामकताया एववक्तुमशक्यत्वमिति । किञ्च प्रथिमानमाचष्टे प्रथिमयति ततः क्विप् प्रथिमित्यत्रानश्चेति टचः सिद्धिः । एवं वाग्मिनमाचष्टे वाग्मयति ततः क्विप् संयोगान्तलोपः बहवो वाग्मो यस्यां नगर्यां सा बहुवाग्म्का नगरीत्यत्रेनः-स्त्रियामिति कप्सिद्धिश्च । एवं सर्व्वत आचष्टे सर्व्वतयति ततः क्विप् सर्व्वादित्यत्रात्वसन्तस्येति दीर्घसिद्धिश्च । अचः परेति स्थानिवत्त्वन्तु न, नव्यमते सपादसप्ताध्यायीस्थदीर्घविधौ तन्निषेधात् । एवंसर्व्वाद्वियते यस्य स सर्व्वत्वी सर्व्वत्विनावित्यत्रास्मायामेधास्रजइति विनः प्रत्ययस्य सिद्धिः । एवं सुसर्व्वादित्यत्र । तस्सुधातोः क्विप् परमेण समासेआचक्षाणे णिचि क्विपि परमत् । सुना समासे सुपरमन्नित्यत्रसोर्म्मनसत्त्वलोमोषसीति स्वरसिद्धिश्च । इहापि नस्थानिवत्, आद्येऽपूर्व्वविधित्वादन्त्ये स्वरविधित्वात्, अन्यथा प्रत्ययावयवलोपेऽपि प्रत्ययासाधारणधर्म्मनिमित्तकमेवेति नियमेनानन्तत्वमिन्नन्तत्वमसन्तत्वं स्थानिद्भावेन लभ्येतेत्युक्तोदाहरणेषूक्तविधीनामप्रवृत्तिरेव स्यात् । एतेन क्वचित्पर्य्युदासेन क्वचित् तत्सूत्रस्थपदान्तरसाहचर्य्येण श्रूयमाणतदन्तेष्वेवोक्तविधीनां प्रवृत्तेरङ्गीकारेण वक्ष्यमाणलक्ष्येषु तदप्रवृत्तिसिद्धौ प्रत्ययलक्षणसूत्रं व्यर्थं, साहचर्य्यञ्च सर्व्वत्र व्यवस्थापकमिति हि तज्ज्ञापनार्थन्तदिति **शब्दरत्नाद्युक्तं**, बहूनां ज्ञापकान्तराणां सत्त्वादित्यपास्तम् । साहचर्य्येण तत्रैव तत्प्रवृत्त्यङ्गीकारे उक्तलक्ष्येषु तदप्रवृत्त्यापत्तिः । 'सुदृषत्प्रासाद' इति भाष्योदाहरणस्यासङ्गत्यापत्तेः ।

**नियमार्थमिति** । तत्फलन्तु 'सुदृषत्प्रासाद' इत्यत्र स्थानिवत्त्वेनाऽसन्तत्वात्स्वरदीर्घौ न ।

❀ विषमपदविवृतिः ❀

**आग्नीयेति** । **चरितार्थमिति** । प्रत्यावयवे प्रत्ययलक्षीकाराभावे तु प्रत्ययरूपसकाराभावेन षत्वाप्रवृत्तौ सातिग्रहणं व्यर्थं स्यात् । ननु प्रत्ययरूपसकारस्य कुत्राप्यसम्भव एव कुतो नोक्तः ।

❀ वरवर्णिनी ❀

१ ननु स्थानिवत्सूत्रेणैव—'राजा' 'दधि' 'वारी'त्यादौ लोपरूपादेशस्य स्थानिवद्भावेन सुप्त्वात्सुप्तिङन्तमित्यादिना पदत्वसिद्धौ प्रत्ययलक्षणसूत्रं व्यर्थमित्यत आह—**नियमेति** । अत्र हि—[ प्रत्ययलक्षणसूत्रे ] भाष्यवार्त्तिककारौ नियमार्थतया विध्यर्थतयैव च यथायथं सूत्रमिदं योजयन्ति ।

तत्र तावद्वार्त्तिककृतः–'अतृणेट्' 'मित्रघ्री'रित्यादौ–[आद्ये हलादिपिन्निमित्तकेमागमे कर्त्तव्ये, द्वितीये–हलादिकिन्निमित्तके इत्वे कर्त्तव्ये ] अल्विधित्वेन स्थानिवद्भावाप्राप्तावपि तत्र प्रत्ययलक्षणप्रवृत्तये

ॐ वरवर्णिनी ॐ

प्रत्ययलक्षणसूत्रं विध्यर्थम्'—इत्याचक्षते । न च वार्त्तिकमते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वे—गवे हितं गोहितमित्यत्र तत्प्रवृत्त्या प्रत्ययलक्षणेन अवाद्यादेशापत्तिरिति वाच्यं, 'प्रत्ययलोपे तल्लक्षण'मित्येव सिद्धे प्रत्ययग्रहणेन-यत्र प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणप्रवृत्त्या 'एचोयवायाव' इत्यत्राच्त्वस्य [ प्रत्ययत्वव्याप्यधर्मत्वाभावेन-] प्रत्ययासाधारणधर्मत्वाभावेनादोषात् । न च चित्रायां जाता चित्रेत्यत्र 'टिड्ढे'ति ङीबापत्तिः, अण्त्वस्य प्रत्ययासाधारणरूपत्वादिति वाच्यम्, 'अणो योऽकार' इत्यर्थस्य टिड्ढेति सूत्रे शेखरे वक्ष्यमाणतयाऽणोऽप्रधानतयाऽऽश्रयणस्यैव तत्र सत्त्वेन—प्रधानाप्रधानन्यायात्प्रत्ययस्य यत्र प्राधान्येनाश्रयणं तत्रैव प्रत्ययलक्षणमित्यर्थकस्य-प्रत्ययलक्षणसूत्रस्याप्रवृत्तेः । प्रत्ययस्य प्राधान्येनाश्रयणञ्च—अवयवावयविभावादिसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वं, स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽसमानाधिकरणप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताश्रयत्वमिति यावदिति—'अणो योऽकार' इत्यर्थेऽणि प्रकारताश्रयत्वस्यैव सत्त्वात् । अतृणेडित्यादौ तु प्रत्ययस्य प्राधान्येनाश्रयणात्प्रत्ययलक्षणं भवत्येव ।

भाष्यकृतस्तु—स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं नियमार्थं,न तु अल्विधौ विध्यर्थम्, अनल्विधावित्यस्यात्राप्यनुवृत्त्या स्थानिवत्सूत्रवदस्यापि अल्विधावनिष्टत्वात् । न चातृणेडित्यत्राल्विधौ स्थानिवद्भावाप्रवृत्त्या कथं रूपसिद्धिरिति वाच्यं, 'तृणह इ'मित्यत्र 'हली'त्यस्यानुवृत्तिमकृत्वा नाभ्यस्तस्याचीत्यतो नेति अचीति चानुवर्त्याजादौ नेति व्याख्यानेन परिशेषादेव हलादौ पिति तत्प्रवृत्त्याऽल्विधित्वाभावादेवेमागमसिद्धेः । पित्त्वन्तु स्थानिवद्भावेनैवानेतुं शक्यमित्याशयः । एवं 'मित्रशी'रित्यादावपि 'शास इद्'-इत्येको योगः, 'अङी'त्यपरः । तत्र पूर्वेण सिद्धे'ऽजादौ क्ङिति चेदङ्येवे'ति नियमार्थत्वेना'ऽङी'त्यस्य व्याख्येयतया 'शास इ'दित्यत्र 'हली'त्यस्याऽकारणादल्विधित्वाभावेन क्ङित्त्वस्य च प्रत्ययलक्षणं विनाऽपि स्थानिवत्त्वेनैवानयनेनेत्त्वसिद्धिरिति नेदं सूत्रमल्विध्यर्थमिति तत्त्वविदः । स्पष्टञ्चेदं **सदाशिवभट्टीये** ।

नच आशास्ते इत्यत्र 'शास इ'दितीत्त्वाभावाय अङ्सादृचर्यात्परस्मैपदे हलादावेवेत्त्वमित्यर्थस्यावश्यकस्य लाभाय 'शास इदङ्हलो'रित्येवं सूत्रमावश्यकमिति वाच्यं, 'आशासः क्वावुपसङ्ख्यान' मित्यस्य 'आङ्पूर्वाच्छासश्चेत्क्वावेवे'ति नियमार्थतया 'आशास्ते' इत्यत्रादोषात् ।

अथात्र कीदृशो नियमः? यदि-'कृत्स्नप्रत्ययलोपे सति लुप्तप्रत्ययवृत्तिप्रत्ययाऽसाधारणधर्मावच्छिन्ननिमित्तताकमेव कार्यं भवति, नातिरिक्त'मिति नियमाकारस्तर्हि-'दध्यत्र''मध्वत्र' 'वार्यत्र''राजाऽत्रे'त्यादौ कृत्स्नप्रत्ययलोपसत्त्वाद्दीर्घयणादिकं न स्यात्, नियमाक्रान्तत्वात् । 'कृत्स्नप्रत्ययलोपे एव लुप्तप्रत्ययवृत्तिप्रत्ययासाधारणधर्मावच्छिन्ननिमित्तताकं कार्यं नान्यत्रे'ति रीत्या तत्स्वीकारे तु 'दधी'त्यत्र लुप्तसुप्रत्ययवृत्तिप्रत्ययमात्रवृत्तिसुप्त्वावच्छिन्ननिमित्तकपदत्वादिकार्यस्य तदतिरिक्ते 'रामः'इत्यादावप्यप्रवृत्त्यापत्तेः । 'कृत्स्नप्रत्ययलोप एव-न तद्भिन्ने—अवयवलोपे'—इत्यपि न, 'राम' इत्यादौ पदत्वसिद्धावपि—'सुदृषत्प्रासाद' इत्यादौ स्थानिवद्भावस्यावारणाद्दीर्घापत्तेरनुद्धारादिति चेदत्र केचित्-'कृत्स्नप्रत्ययलोपे लुप्तप्रत्ययवृत्तिप्रत्ययासाधारणधर्मावच्छिन्ननिमित्तताकमेव कार्यं नान्य'दित्येव नियमः, न च 'राजात्र' 'दध्यत्रे'त्यादौ दीर्घयणादेरप्यनापत्तिरिति वाच्यं, नियमस्य सजातीयविषयतया तादृशप्रत्ययासाधारणधर्मावच्छिन्ननिमित्तताककार्यस्यैव वारणादित्याहुः ।

अथ नियमस्थले 'नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवती'ति नियमः कृत्तद्धितेतिसूत्रे उपपादितोऽस्माभिः । तत्र हि—कृत्तद्धितेतिसूत्रे समासग्रहणस्य नियमार्थतया नियामक—समास—शास्त्रीयोद्देश्यतावच्छेदक-समासत्व व्यापकं—नियम्यार्थवच्छास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वव्याप्यञ्च यत्-पदपूर्वावयवकसमुदायत्वं—तदवच्छिन्नातिरिक्तत्वेनार्थवच्छास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति, एवं प्रकृतेऽपि—नियामक—प्रत्ययलक्षण-शास्त्रीयोद्देश्यतावच्छेदकव्यापकं, नियम्य-स्थानिवत्सूत्रीयो-

ॐ वरवर्णिनी ॐ

द्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यस्थानिवच्छास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचोऽत्रावश्यकः, अन्यथा कृत्तद्धितसूत्रेऽर्थवच्छास्त्रे समासातिरिक्तत्वेन, प्रकृते स्थानिवत्सूत्रे प्रत्ययलोपातिरिक्तत्वेन च सङ्कोचे स्नुषाश्वश्रून्यायप्रसङ्ग इति सर्वमुपपादितमेव । एवं सति च प्रकृते नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने आदेशे नियामकशास्त्रीयोद्देश्यतावच्छेदक-प्रत्ययलोपत्व-व्यापकस्य कस्यापि रूपस्याप्रसिद्धेस्तादृशरूपावच्छिन्नातिरिक्तत्वेन सङ्कोचो नोपपद्यते । न च स्वस्यैव स्वव्यापकत्वात्प्रत्ययलोपत्वमेव तादृशं रूपमिति तदवच्छिन्नातिरिक्तत्वेन स्थानिवच्छास्त्रीयोद्देश्यतावच्छेदकादेशत्वावच्छिन्ने सङ्कोच इति वाच्यं, स्नुषाश्वश्रून्यायप्रसङ्गापातात्प्रकृते—स्वविशिष्टत्वं स्वव्यापकत्वं, वै० 'स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्व' 'स्वाभाववद्वृत्तित्वो' भयसम्बन्धेनेत्यस्यैव स्वीकारेण स्वव्यापकत्वस्य स्वस्मिन्वक्तुमशक्यत्वात् । अत एव 'कृत्तद्धितसमासाश्चे'त्यत्रापि स्वस्य स्वव्यापकत्वमाश्रित्य समासत्वावच्छिन्नातिरिक्तत्वेन न सङ्कोचः, अन्यथा 'गामानये'ति वाक्यास्याप्यर्थवत्सूत्रेण सञ्ज्ञापत्तिस्तदवस्थैव स्यादिति, स्नुषाश्वश्रून्यायप्रसङ्गस्तदवस्थ एव च स्यात् ।

न च स्थानिवत्सूत्र–प्रत्ययलक्षणसूत्रयोरुद्देश्यविधेययोर्व्यत्यासेन–'स्थानिवृत्तिधर्मावच्छिन्ननिमित्तककार्यवान्—आदेशो भवति' 'प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तककार्यं प्रत्ययलोपनिमित्तकं भवति'–इत्येवमर्थः। 'प्रत्ययलोपे'इति च प्रथमार्थे सप्तमीत्याशयः । एवञ्च–स्थानिवृत्तिधर्मावच्छिन्ननिमित्तककार्यवति–नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने, नियामक-प्रत्ययलक्षण-शास्त्रीयोद्देश्यतावच्छेदकप्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तककार्यत्वव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदक–स्थानिवृत्तिधर्मावच्छिन्ननिमित्तताककार्यवत्त्वव्याप्यं यत्—प्रत्ययवृत्तिधर्मावच्छिन्ननिमित्तताककार्यत्वात्मकं रूपं—तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः सम्भवत्येवेति वाच्यं, सुप्प्रत्ययवृत्तिसुप्त्वावच्छिन्ननिमित्तताककार्यत्वेन 'सुपि चे'ति दीर्घे कर्त्तव्ये स्थानिवत्त्वाप्रवृत्तौ रामायेत्यादिरूपासिद्ध्यापत्तेः, कष्टायेत्यादिनिर्देशासङ्गत्यापत्तेर्व्यत्यासे गौरवाच्चेति चेन्न; व्यत्यासं विनाऽपि तादृशरूपस्य वक्तुं शक्यत्वात्। तथाहि—

नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने–आदेशे नियामक—प्रत्ययलक्षणशास्त्रीयोद्देश्यतावच्छेदक–'प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तककार्यप्रयोजकीभूतप्रत्ययलोपत्व'व्यापक–नियम्यशास्त्रीयोद्देश्यतावच्छेदक-'आदेशत्व'—व्याप्य—'लुप्यमानप्रत्ययवृत्तिधर्मसमानाधिकरणधर्मावच्छिन्नत्व'—रूपधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचः । इदञ्च रूपं नियामकशास्त्रीयोद्देश्यतावच्छेदकस्य तादृशप्रत्ययलोपत्वस्य व्यापकं—'सुदृषत्प्रासाद' इत्यत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपाभावेऽपि लुप्यमानप्रत्ययवृत्त्यस्त्वधर्मसमानाधिकरणधर्मावच्छिन्नत्वात् । नियम्यशास्त्रीयोद्देश्यतावच्छेदकरूपव्याप्यञ्च,—हन्तेर्वधादेशे [ तस्य प्रत्ययत्वाभावेन–] तादृशरूपस्यावृत्तेः । परे तु लोपत्वमेव तादृशं रूपं, प्रत्ययलक्षणशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वात्, स्थानिवत्सूत्रीयोद्देश्यतावच्छेदकादेशत्वव्याप्यत्वाच्चेत्याहुः ।

केचित्तु लोपत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचो नोचितः, दामन्छब्दादाचक्षाणणिजन्तात्कर्त्तरि क्विपि निष्पन्नस्य दाम्शब्दस्योपेनाव्ययीभावसमासे स्थानिवद्भावेनानन्ततयाऽनश्चेति टचि–उपदाममिति रूपं भवति, तदिदानीं न स्यात्, लोपातिरिक्तत्वेन सङ्कोचेन स्थानिवत्त्वाप्रवृत्तेः । अन्त्वस्य प्रत्ययासाधारणरूपत्वाभावाच्च प्रत्ययलक्षणस्याप्यवृत्तेरित्याहुः ।

अथ नियमस्य किं फलं, न च 'सुदृषत्प्रासाद' इत्यत्र स्थानिवद्भावेनासन्तत्वमादायात्वसन्तस्येति न दीर्घ इति मनोरमोक्तं फलमिति वाच्यं, दीर्घविधावत्वसाहचर्याच्छ्रूयमाणाऽसन्तस्यैव ग्रहणेन दीर्घप्राप्तेरेवाभावात् । न च साहचर्यपरिभाषाया अनित्यतया सुदृषदित्यत्र दीर्घनिवृत्तिः फलमुचितमेवेतिवाच्यम्, 'अत्वसन्तस्ये'त्यत्र निर्दिश्यमानपरिभाषायाः प्रवृत्तेरुचितत्वेन सदृषदित्यत्र निर्दिश्यमानाऽस एवाभावेनादोषात् ।

न चात्वसन्तस्येति सूत्रेऽस्पदोत्तरं षष्ठ्या अभावान्निर्दिश्यमानपरिभाषायाः प्रवृत्तिर्दुरुपपादेति वाच्यम्, 'अत्वसो'रिति न्यासेन तदन्तविधिना 'अत्वन्तस्य, धातुभिन्नो योऽसन्तस्तदवयवो यो निर्दिश्यमानः–अस्,

❀ वरवर्णिनी ❀

तस्योपधायाश्च दीर्घोऽसम्बुद्धौ सा'वित्यर्थेन सुदृषदित्यत्र दीर्घप्राप्तेरभावस्य स्पष्टत्वात्। परे तु—स्थानिवद्भावेनासम्बुद्धेः सम्भवेऽपि तदुपधाया अभावेन न दीर्घप्राप्तिः, स्थानिवद्भावादिना हि यस्य बुद्धिस्तन्निमित्तकस्यैव कार्यस्य प्रवृत्तिर्न तु तदुपधानिमित्तकस्येत्याहुरिति चेदत्र सदाशिवभट्टानुयायिनोऽस्मत्पितामहाः श्रीस्नेहिरामशास्त्रिणः—सुदृषदित्यत्र स्थानिवद्भावेनासन्ततया'ऽस्मायामेधास्रजो विनि'रिति विनिप्रत्ययापत्तिः। न च मायामेधादिसाहचर्याच्छ्रूयमाणस्यैवासस्तत्र ग्रहणमिति वाच्यं, मेधामाचष्टे मेधयति—इत्यत्राचक्षाणणिजन्तात्कर्त्तरिक्विपि 'मेध्' इत्यत्राश्रूयमाणस्य मेधाशब्दस्याप्युपलम्भात्तथा साहचर्यस्यासम्भवात्। न च तत्रापि श्रूयमाण एव मेध्शब्दः, मेधाशब्दत्वन्तु तत्रैकदेशविकृतत्वादिति वाच्यम्, बहुदण्डिन्शब्दादाचक्षाणणिजन्तात्क्विपि टिलोपे संयोगान्तलोपे 'बहुदन्' 'बहुदण्डा'वित्यत्र 'सर्वे सर्वपदादेशा' इति स्थानिवद्भावेनानन्तत्वात्प्राप्तस्येनः स्त्रियामिति कपो वारणं नियमफलमित्यस्य वक्तुं शक्यत्वात्। एवं—राजन्शब्दादाचक्षाणण्यन्तात्क्विपि राजः समीपमुपराट्—इत्यत्र स्थानिवत्त्वेन प्राप्तस्यानश्चेति टचो वारणं नियमफलमित्यपि बोध्यम्। एवं पीताम्बरा सुदृषन्नगरीत्यादावुगितश्चेतिङीपो वारणं नियमफलमिति सदाशिवभट्टोक्तमप्यत्रानुसन्धेयमित्याहुः।

प्रत्ययलोपे प्रत्ययवदित्येव सिद्धे लक्षणग्रहणं—'सप्तम्यन्तपदप्रयोज्यविषयतानिरूपकं तादृशं कार्यं प्रत्ययलोपे सति भवति, न तु षष्ठ्यन्तपदप्रयोज्यविषयतानिरूपक'मित्यर्थलाभाय। तेन 'नखभिन्न' इत्यादौ भिसो लुकि नैसादेशः। नन्वत्र 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रज्ञापितया'ऽन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति परिभाषया अन्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेन—प्रकृते नखनिर्भिन्न इत्यादौ लुगुत्तरमपि प्रत्ययलक्षणेनैसः प्राप्त्याऽन्तरङ्गैस्विधायकनिमित्तविनाशाभावात्तस्या अप्रवृत्त्या लुकः प्राबल्याभावेन लुकःपूर्वमेवैसि ततो लुकि लक्ष्येलक्षणन्यायेन पुनरैसोऽप्राप्त्या दोषविरहाल्लक्षणग्रहणं व्यर्थमेवेतिचेन्न, सर्वस्मै हितं सर्वाहितमित्यत्रापि पूर्वोक्तरीत्या अन्तरङ्गानपीतिन्यायावृत्तौ पूर्वं स्माटि ततो निर्दिश्यमानसुब्लुकि स्माटः श्रवणापत्तेः। न चागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वेन तद्विशिष्टस्यैव प्रत्ययत्वं, लुक्पदार्थश्च कृत्स्नप्रत्ययादर्शनरूपः, एवञ्च स्माटः श्रवणे कृत्स्नप्रत्ययादर्शनरूपलुक्पदार्थव्याघातात्स्माड्विशिष्टस्य लुकि न स्माटः श्रवणमितिवाच्यम्, सुपो धात्वित्यत्र तदन्तविधिना सुबन्तस्य लुक्प्रसक्त्या तद्वारणाय निर्दिश्यमानपरिभाषाया अवश्यमाश्रयणीयतया ङेविभक्तेर्लुकि स्माटः श्रवणापत्तेस्तदवस्थत्वात्।

'लुक्पदोपादानादेव निर्दिश्यमानपरिभाषायास्तदन्तविधेश्च बाध इति स्माड्विशिष्टस्यैव लुकि सर्वाहितमित्यत्र न दोष' इत्यपि न, तत्पदमर्यादया—प्रत्ययनिमित्तकमेव कार्यमतिदिश्यते, न प्रत्ययस्थानिकमित्यर्थज्ञापनस्यैवौचित्यात्, साक्षाच्छास्त्रबाधापेक्षयाऽस्याः कल्पनाया एव युक्तत्वात्। [ सर्वनाम्नो वृत्तिमात्रे पुंवद्भावे तु 'रमापुत्र' इत्युदाहरणीयम्।] उच्चारणप्रसक्तरूपषष्ठ्यर्थाभावान्नैसितित्वयुक्तम्, अतिदेशविषये सर्वत्रारोपेणैव तादृशज्ञानस्य सम्भवात्। आरोपविषयेऽपि तात्त्विकतादृशज्ञानस्य स्वीकारे तु सर्वातिदेशशास्त्रवैयर्थ्यापत्तेः। निर्जरसावित्यादौ स्थानिवद्भावेन तद्बुद्धावपि उच्चारणप्रसक्तरूपषष्ठ्यर्थाभावेन जरसादेशानापत्तेश्च। नचैवं प्रत्ययोद्देश्यककार्यस्य प्रवृत्तावपि प्रत्ययस्थानिककार्यस्याभावेन नखनिर्भिन्ने ऐसापत्तिर्भट्टोक्ताऽयुक्तेति वाच्यम्, अवक्रुष्टः कोकिलयाऽवकोकिल इत्यत्र 'अवादयः क्रुष्टाद्यर्थे' इति समासे उपसर्जनह्रस्वप्रवृत्तेः पूर्वमिनादेशप्रवृत्तेरसम्भवेन ह्रस्वप्रवृत्त्यनन्तरमिनादेशप्रवृत्तेरेव दोषत्वात्। एवम्—एकया खट्वा क्रीतः—एकखट्व इत्यादौ तद्धितार्थोत्तरपदेति समासे क्रीतार्थकठञो लुकि 'लुक्तद्धितलुकी'ति टाब्लुकि प्रत्ययलक्षणेन भिस ऐसापत्तिश्च। टाङ्सीत्यत्र अदन्ताद्विहितानां टादीनामित्यर्थस्तु न वक्तुं शक्यः, तस्मादिति परिभाषाबाधे मानाभावात्। यैस्तैरिति रूपासिद्ध्यापत्तेश्च। 'त्यदादीनाम'इत्यत्र विषयसप्तमीत्वाभ्युपगमे तु 'अनेषका'इत्यादौ समासात्पूर्वं त्यदाद्यत्वे टाप्यापः सुप्परत्वाभावादसुप इति निषेधाप्रवृत्त्या प्रत्ययस्थादितीत्त्वापत्तेरिति सङ्क्षेपः। विस्तरस्त्वस्मत्पितामहश्रीचरणविरचितायां शब्देन्दुशेखरत्रिपुरसुन्दर्यां मत्कृतायामभिनवराजलक्ष्म्याञ्चानुसन्धेयः।

॥ अभिनव-चन्द्रिका ॥

स्थानिवद्भावेनासन्तत्वमादायात्वसन्तस्येति दीर्घो न। न च अतुसाहचर्यादसन्तमपि श्रूयमाणासन्तमेव गृह्यते इति नोक्तदोषः, अथवा निर्दिश्यमानपरिभाषया 'सुदृषत्प्रासाद'इत्यादौ निर्दिश्यमानस्यासोऽभावान्न दीर्घप्राप्तिरिति वाच्यं, 'सुदृष'च्छब्दात्प्रत्ययलक्षणेन स्थानिवद्भावेन वाऽसन्तत्वमादाय

॥ सदाशिवभट्टीयम् ॥

ननु निर्दिश्यमानपरिभाषया निर्दिश्यमानावयवाऽच एव दीर्घविधानात् कथमत्र तत्प्राप्तिरिति चेच्छृणु, असपदस्य षष्ठ्यन्तत्वाभावेन तत्परिभाषाया अप्रवृत्तेरिति। नन्वन्तरङ्गानपीति परिभाषये-त्सञ्ज्ञालोपाभ्यां प्रागेव जसो लुकि स्थानिवत्त्वेन जसन्तत्वमेव, नासन्तत्वं, न च स्थानिवत्त्वेन जसन्तत्वेऽसन्तत्वमार्थसमाजग्रस्तमिति वाच्यम्, एवं सत्याटिटदित्यादौ स्थानिवत्त्वेन ण्यन्तत्वे इति निर्दिश्यमान-णिबुद्धेरप्यार्थसमाजग्रस्तत्वेन षाष्ठद्वित्वस्यादेशत्वे णिलोपो न स्यादिति भाष्योक्तेरसङ्गत्यापत्तेः, एवञ्च कथमेतदुदाह्रियत इति चेत्—शृणु, फले विशेषाभावेनोक्तपरिभाषया 'तस्य लोप' इत्यस्याबाधनात्।

न च प्रकृतसूत्रारम्भे विशेषः, अन्यार्थमावश्यकत्वस्योक्तत्वात्, फले विशेषसत्त्वेपीत्सञ्ज्ञा तूक्तपरिभाषया न बाध्यते, आकडारा इति नियमारम्भेण सञ्ज्ञा न कस्यापि बाध्या, नवा कस्यापि बाधिकेत्यर्थस्य सामान्यतो ज्ञापनाङ्गीकारात्। अत एव 'गर्गा''विदा'इत्यादौ 'ञ्नित्यादि'रिति स्वरवारणार्थं 'लुकि स्वरविधौ प्रत्ययलक्षणं ने'ति वचनमारब्धं, नलुमतेति सूत्रे भाष्ये। इत्सञ्ज्ञाया लुकः प्रागप्रवृत्तौ तु तदसङ्गतिः स्पष्टैव। अत एव देवदारोर्विकारः फलं देवदारु, ओरञित्यत्र फले लुगिति लुक्, तस्य विकारे 'ञितश्च तत्प्रत्यया'दित्यञि दवदारवमित्युदात्तं सिध्यति। तथा विदस्य गोत्रापत्यानि विदाः, ततो विदस्य यून्यत इञ्, तस्य ण्यक्ष-त्रियेति ञितश्च प्रत्ययात् परत्वाल्लुकि विदः—इदं च। न चैवं भसञ्ज्ञापि लुका न बाध्येतेति राजपुरुषाऽसिद्धिरिति वाच्यम्, 'उपजनिष्ये'ति न्यायेन 'नलुमते'तिनिषेधेन प्रागपि तदप्रवृत्त्यङ्गीकारादिति बोध्यम्।

एवं पीतमम्बरं यस्याः सा पीताम्बरेत्यत्र सोर्लुकि स्थानिवत्त्वेनोगिदन्तत्वादुगितश्चेतिङीप् न। एवं शिखिनमाचष्टे इति णिचि टिलोपे क्विपि शिगित्यत्र स्थानिवत्त्वेन इन्नन्तत्वा'दिन्हन्नि'तिनियमेनोपधादीर्घ-वारणेपि तदनुवर्तमाने 'सौ चे'तिदीर्घो न। यदि तत्र नेत्यनुवर्तते तदा तलुनोस्यास्तीति तलुनी, तमाचष्टे णिचि क्विपि तलुनौ तलुन इत्यादावनुनासिकस्ये'ति 'सर्वनामस्थाने'ति वा दीर्घो न। बहवः शिखिनो यस्यां नगर्यां सा बहुशिङ् नगरीत्यत्रेनः स्त्रियामिति कप् न। एवं कल्याणधर्म्माणमाचष्टे कल्याणधर्म्मयति ततः क्विप् कल्याणधर्म्म, तस्य समीपमुपकल्याणधर्म्ममित्यत्रापि स्थानिवत्त्वेनानन्तत्वादनश्चेति टच् न।

एवमप्रजसमाचष्टे अप्रजयति, ततः क्विप् सोऽस्यास्तीत्यप्रज्वानित्यत्र स्थानिवत्त्वेनासन्तत्वादसन्तलक्षणो विन्नेति। अन्यथा कृत्स्नप्रत्ययलोपेपि स्थानिवत्त्वेन तदन्तत्वादुक्तोदाहरणेषु ते ते विधयस्स्युरेवेति बोध्यम्।

**प्रत्ययस्यासाधारणमिति**। अत्र प्रमाणं द्वितीयप्रत्ययग्रहणमिति भाष्यकृतः। अन्यथा तल्लक्षणमित्येव वदेदिति। तदाशयं कैयटः—प्रकृते तत्पदप्रत्ययपदयोः पर्यायत्वेपि प्रत्यासत्तिः प्रार्थनीय-स्याप्रार्थितस्यैव लाभायेति लाघवमिति तदाशयः—इत्याह। वस्तुतस्तु न तच्छब्दः कस्यचित्पर्याय इति मञ्जूषायां सिद्धान्तितम्। उद्द्योते—यत्तु पर्यायत्वमुक्तन्तत्तु केचिदाहुरित्युक्त्या मतान्तरमिति बोध्यम्। इतोपि लाघवमभिप्रेत्य स्थानिवत्पदानुवृत्तिरेव कार्य्येति—तदाशयं **कौस्तुभकृतः**। बहुव्रीहिलभ्यफलस्य नखभिन्न इत्यादेरन्यथासिद्धत्वादेवमुक्तमिति तदाशयः। नन्वेवं कात्स्न्र्यासाधारण्ययोर्विवक्षायै द्वयोरपि प्रत्ययपदयोः सामर्थ्यं वर्णनीयन्तच्चासम्भवि, लोपे स्थानिवदित्युक्तावतिप्रसङ्गस्योक्तत्वादुभयोरप्यभावे प्रत्यासत्तेरप्युक्ताया वक्तुमशक्यत्वात्, तृतीयस्य च प्रत्ययपदस्य भगवता प्रत्याख्यानात्, तथाच कोऽस्य भाष्यस्याशय इति चेदयम्,—तावन्मात्रफलकत्वे मात्रालाघवाय, प्रतिपत्तिलाघवाय च 'कृत्स्नप्रत्ययलोपे' इत्येव ब्रूयादिति। नन्वैवमपि प्रत्ययग्रहणसामर्थ्यादवधारणान्तर्भावेण समासेऽसाधारण्यं लभ्यतां, स्वसमा-नाधिकरणवर्णविशेषत्वरूपं प्रत्ययस्य प्राधान्यं दुर्लभम्, तं विनापि तस्य चारितार्थ्यात्। एवञ्च चित्रायां

रूपं यत्राश्रीयते तत्रैवे'ति । न चैवं 'दाधर्त्ती'ति सूत्रे—'तेतिक्ते' इति किं निपात्यते ? आत्मनेपदम्, नैतदस्ति—'अनुदात्तङित'इत्येवसिद्धम्, नियमार्थं तर्हि भविष्यति—'अत्रैव यङ्लुगन्तस्य, नान्यत्र वेभिदीति'—इत्युक्तम् । अस्य नियमत्वे तेनात्मनेपदं दुर्लभं

**ॐ अभिनव-चन्द्रिका ॐ**

'अस्मायामेधे'ति विनेरापत्तेदुर्वारत्वात् । 'अलसन्ते'त्यत्र अस्पदोत्तरषष्ठ्या अभावेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेश्च ।

नचैवमपि—'अर्थवद्ग्रहणे' 'लक्षणप्रतिपदोक्त' 'निरनुबन्धकग्रहणे', 'प्रत्ययाप्रत्यय'परिभाषाचतुष्टयस्यानिनस्मिन्ग्रहणेष्वप्रवृत्तये 'अनिनस्मि'न्निति परिभाषया एषु अन्त्वादिषु वर्णबोधकत्वावश्यकत्वेन अनल्विधाविति निषेधादेव स्थानिवद्भावो नापि प्रत्ययलक्षणमिति 'सुद्दषत्प्रासाद' इत्यादौ न दोषावतार इति वाच्यं, रमाशब्दाण्ण्यन्तात् क्त्वो ल्यपि प्रादिसमासे प्ररम्येत्यादौ 'प्रत्ययाप्रत्यययो'रितिपरिभाषया इदानीमापः प्रत्ययस्यैव ग्रहणापत्त्या, तत्परिभाषानङ्गीकारेऽपि—आपःप्रत्ययस्यापि ग्रहणापत्त्या, प्रत्ययलक्षणेन, स्थानिवद्भावेन वा—आप्त्वमादाय 'विभाषाप' इत्यनेन णेरयादेशे प्ररमय्येत्यस्याऽऽपत्तेः ।

'प्रत्ययस्यासाधारणं रूपं यत्र तत्रैव प्रत्ययलक्षण'मिति नियमस्वीकारे तु आप्त्वस्याप्लृधातावपि सत्त्वेनाप्त्वं प्रत्ययाऽप्रत्ययसाधारणमिति प्रत्ययलक्षणस्याप्यप्रवृत्त्या आप्लृधातोरेव 'विभाषा'ऽऽप'इति सूत्रे ग्रहणमिति न दोषः ।

नच 'मित्रशीः' 'अतृणे'डित्यादौ 'शास इदङ्हलोः' 'तृणह'इमित्यादि न स्यात्, हलादित्वस्य प्रत्ययाप्रत्ययसाधारणतया प्रत्ययलक्षणाप्रवृत्तेरितिवाच्यं, 'शासइदङ्हलो'रित्यत्र हलिति न क्रियते, 'शास इ'दिति, 'अङी'ति च योगो विभज्यते, अजादौ चेदङ्येवेति नियमेन 'तृणह इ'मित्यत्र

**ॐ चिदस्थिमाला ॐ**

भाष्यान्तरविरोधमत्र परिहरति—**नचेति** । एवम्=अस्य नियमार्थत्वे । तामुपपादयति—**अस्येति** ।

**ॐ ज्योत्स्ना ॐ**

ह्रस्वनद्याप इत्यत्र, निरूपयिष्यते च षट्चतुर्भ्यश्चेत्यत्र । तत्र वतीति । तत्फलन्तु 'दृषद्वती' त्यत्रात्वसन्तस्येति दीर्घाभावः । नच गवे हितमित्यादावल्विधौ स्थानिवद्भावासम्भवे तत्र विध्यर्थता शङ्क्या; अस्त्वस्येवात्त्वस्यापि प्रत्ययासाधारणरूपत्वाभावात् । असाधारण्यान्तर्भावेन नियमे किं प्रमाणमिति चेत्प्रत्ययलोपे तल्लक्षणमिति वक्तव्ये पुनः प्रत्ययग्रहणसामर्थ्यमित्येव । यथा—'न धातुलोप-आर्धधातुके'इत्यत्र धातुलोपइतिव्याख्यानाद्बहुव्रीह्यवगमाद्धाधातोर्लोपोयस्मिंस्तन्निमित्तके गुणवृद्धी न भवतः—इतिसूत्रार्थाश्रयणादेव बेभिद्यते रोरवीतीत्यादेर्व्यावृत्तावतिरिच्यमानार्धधातुकग्रहण-

**ॐ सदाशिवभट्टीयम् ॐ**

जाता चित्रेत्यादावनिष्टं ङीबादिविधायकत्वमेवास्य स्यान्न नियामकत्वमिति चेन्न; अकारान्ता ये टिदादयः तदन्तं यत्प्रातिपदिकं तदन्तादिति तदर्थाङ्गीकारेणानल्विधावित्यनुवृत्तेर्विधिपक्षे इव विशेषणसामर्थ्याद् श्रूयमाणाकारान्तादित्यर्थाङ्गीकाराद्वा तत्रास्या प्रवृत्तेः । स्पष्टश्चायमन्त्यः प्रकारः प्रकृतसूत्रे कैयटे, अस्त्रिसिचोऽपृक्त इति सूत्रे शेखरे च । नचान्त्यपक्षे सशमा रज्जुरित्यत्र ङीबर्थं न तु मात्रजिति प्रत्याहारनिर्देश इति सिद्धान्ते कति स्त्रिय इत्येतद्वारणायावश्यकत्वेनान्यत्रेवात्रसामर्थ्याभावादिति वाच्यम् । नषडिति निषेधेनापि कतीत्यस्य सुसाधुत्वात् । अस्तुवा श्रवणेत्यादिनिर्देशेनोक्तप्राधान्यस्य लाभ इति दिक् ।

**ॐ विषमपदविवृतिः ॐ**

अचैषीदित्यादौ आदेशरूपत्वेनैव षत्वसिद्धेरिति चेन्न; 'इन्द्रो मावक्षत्' 'स देवानयक्ष'दित्यत्र बर्हि-यजिभ्यां लेटि सपि प्रत्ययरूपसकारसम्भवादिहापीति भाष्यम् ।

ङित्त्वस्य प्रत्ययाप्रत्ययसाधरणत्वादिति वाच्यम्, 'आत्मनेपद'मित्यस्यैव सिद्धान्त्युक्तित्वात्। ततो 'विध्यर्थमिद'मिति वार्तिकानुसारिणा'अनुदात्तङित इत्येव सिद्ध'मिति शङ्किते-ऽतदनुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः ।

'प्रत्ययलोपे प्रत्ययव'दिति सिद्धे 'लक्षण'ग्रहणं–प्रत्ययनिमित्तकमेव न तु प्रत्यय-

**ॐ अभिनव-चन्द्रिका ॐ**

हलीतिपदमननुवर्त्य, 'नाभ्यस्ते'तिसूत्रान्नेत्यचीतिचानुवर्त्याजादौ न भवतीति निषेधेन च इदादेर-नैमित्तकत्वेन प्रत्ययपरकत्वस्यानुपजीव्यतया प्रत्ययलक्षणस्यानुपयोगेन दोषाभावात् ।

**प्रत्ययलोपे प्रत्ययवदित्येव सिद्धे** इति । 'प्रत्ययलोपे प्रत्ययव'दित्येतावतापि सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके कार्ये कर्तव्ये एव प्रत्ययलक्षणं यथा स्यादित्यर्थे ज्ञापकम्, अत एव नखभिन्न इत्यादौ प्रत्ययलक्षणेन भिस ऐस्न । नच

**ॐ चिदस्थिमाला ॐ**

हि=यतः । न च प्रत्ययस्य यत्र विशेष्यत्वं तत्रैवेति नियमशरीरमस्तु, एवञ्च तद्भाष्यं मुख्यपक्षाभिप्रायक-मेवास्त्विति वाच्यं, राजेत्यादौ पदत्वानापत्तेः, तदाह-**अन्यत्रेति** । उद्योतादावित्यर्थः ।

**ॐ ज्योत्स्ना ॐ**

सामर्थ्यादार्धधातुकत्वेन धातुलोपनिमित्तपरिग्रह इति धिन्विकृण्व्योर्विचि वलिलोपगुणनलोपेषु 'सुधे''सुक'रितिभवति, नतु गुणनिषेधे दीर्घनलोपयोः 'सुधी' 'सुकी'रिति । स्पष्टञ्चेदमिहैव सूत्रे भाष्यप्रदीपाध्ययनविभावनाजुषाम् । पठन्ति च—

सुधे[1] सुधेवाऽरिवधात्सुराणां, सुकौ[2] रणे लाघवतश्च रामः ।
विशेषणे द्वे य इहादिकर्तुर्वदेदधीतिः स हि कैयटीये ॥ इति ।

**स्यादेतत्** । अस्तु प्रकृते प्रत्ययग्रहणसामर्थ्यादसाधारण्यान्तर्भावेण नियमः, दृष्टान्ते त्वार्ध-धातुकग्रहणं 'तोतोर्ति' 'मोमोर्त्ती' त्यादौ तुर्वीमूर्च्छर्योर्यङ्लुकि 'राल्लोप' इति–च्छ्वोर्लोपे गुणनिषेधा-प्रवृत्त्यर्थं भवितुमर्हतीति—तदनुपपत्तिः । अथ—यङ्लुक् छान्दस इति भाष्यसिद्धान्तमभ्युपगम्य दृष्ट्यनुविधित्वाच्छान्दसे नानुपपत्तिरित्युच्यते; एवमपि 'क्ङिति चे'तिसूत्रभाष्योक्तरीत्याऽऽर्धधातुके इति योगविभागेन—तत्र धातोर्लोप इत्यर्थकं धातुलोपपदमनुवर्त्य 'धातोर्लोपनिषेधो यदि भवेत्तर्हि-आर्धधातुक एवे'ति नियमेन सार्वधातुके रोरवीतीत्यादौ 'क्ङितिचे'तिनिषेधाप्रवृत्तयेऽवश्या-श्रयणीयेन—तोतोर्तीत्यादावपि न धातुलोप इति योगान्तरप्राप्तनिषेधस्य वारयितुं शक्यत्वाद्यङ्-लुकश्छान्दसत्वबलकल्प्यनिषेधवचनतो लाघवादार्धधातुकग्रहणस्यार्थविशेषबोधने दृष्टान्तत्वोक्तिरनु-पपन्नैव । अत्रोच्यते–एवं हि रोरुत इत्यादौ सार्वधातुकनिमित्तोपि निषेधो बाध्येत, अथान्तरङ्गत्वा-यङ्निमित्त एव बाध्य इति मतं, तर्हि तोतोर्तीत्यादौ सार्वधातुकनिमित्तः कथमसौ बाधनीय इत्युभयतः पाशा रज्जुः–छान्दसत्वाभ्युपगमान्तरेण न निस्तरीतुं शक्यते इति–योगविभागाभ्युपगमस्यैकदेशि-मतत्वावसायादार्धधातुकग्रहणमार्धधातुकत्वेन आर्द्धधातुलोपनिमित्तपरिग्रहार्थमिति दृष्टान्तः सूपपन्नः। अत एव 'स्विवेर्मनिनि वलि लोपे—आस्रेमाणमित्यत्र लोपस्यार्द्धधातुकनिमित्तत्वाभावान्न धातुलोप आर्धधातुके इति निषेधो न प्रवर्त्तते'—इति भाष्ये उक्तम्। प्रत्ययावयवनिमित्ते लोपे प्रत्ययनिमित्तत्वं तु–इहैव प्रथमप्रत्ययग्रहणप्रत्युदाहरणे आग्नीयेत्यादौ प्रत्यावयवलोपे प्रत्ययलोपत्वोपपादनदिशेत्यलम्।

**ॐ सदाशिवभट्टीयम् ॐ**

**तत्रैवेतीति** । तदेतियुक्तम् । **अन्यत्रेति** । यङ्लुङन्तशेखर इत्यर्थः । एवं पास्पर्द्धीतीतिवक्तव्ये बेभिदीती-

१. 'सुध' इति प्रथमान्तं, प्रीतिप्रद इत्यर्थः । २. सुकाः=राक्षसहिंसकः ।

सस्थानिकमित्यर्थलाभार्थं, तेन 'नखभिन्न' इत्यादावैसादिकं नेत्येके । अतिदेशेना-ऽऽहार्यतद्बुद्धिम्पादनेऽप्युच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावान्निक्षादीति तदर्थमित्यपरे ।

**कार्यमिति** । प्राधान्यात्कार्यातिदेशोऽयमिति भावः । 'इहापि 'परिवी'रिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यती'ति भाष्येण-तृज्वत्सूत्रे शास्त्रकार्यातिदेशयो-रैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात्परिवीरित्यत्र तुग्दीर्घौ पर्यायेण न; किन्तु दीर्घ एव-परत्वात्, अन्यथाऽनेनैवोभयोर्विधानात्परत्वा-भावेन पर्यायो दुर्वार इति बोद्ध्यम् । तदाह—**जसि चेति गुणे प्राप्ते इति** । जसि चेति विहितेऽनेन गुणे प्राप्ते इत्यर्थः ।

### ॐ अभिनव-चन्द्रिका ॐ

लुगुत्तरमपि प्रत्ययलक्षणेनैसः प्राप्त्या लक्ष्ये लक्षणन्यायेन पुनरैसोऽप्राप्त्या अन्तरङ्गनिमित्त-विनाशकत्वस्य लुक्यभावेन 'अन्तरङ्गानपी' तिपरिभाषाऽप्रवृत्त्या लुकःपूर्वमेवैसि तत ऐसो लुकि दोषाभाव इति वाच्यं, रमायाः पुत्रः रमापुत्रः' इत्यादौ निरुक्तदिशा पूर्वं याटि 'निर्दिश्यमान'-परिभाषया याड्रहितस्य लुकि याटः श्रवणाभावाय प्रत्ययनिमित्तककार्य एव प्रत्ययलक्षणं, न तु प्रत्ययोद्देश्यककार्ये इत्यर्थस्यावश्यं वक्तव्यत्वात् । इदन्तु सर्वं भाष्यकृन्मतम् । **वार्तिककारस्तु**—अल्विधावपि प्रत्ययलक्षणार्थमिदं सूत्रमितिस्वीकरोति, अत एव 'मित्रर्शाः' 'अतृणे'ङित्यादौ न दोषः' 'गवेहितंगोहित'मित्यादौ 'वर्णाश्रये ने'ति परिभाषया न दोषः । 'सुदृषत्प्रासाद' इत्यादौ दोषवारणन्तु—'अनिनस्मि'न्निति परिभाषया वर्णबोधकत्वातिदेशेनैव बोध्यम् । 'विभापाप' इत्यत्र 'इकश्तिपौ धातुनिर्देशे' इतीका 'विभाषापे'रिति निर्देशेन पूर्वोक्तप्ररम्येत्यादौ न दोषः, 'युलुत्रो'-रिति साहचर्याद्विभाषाप इत्यत्रापि आप्लृधातोरेव ग्रहणमिति वा पूर्वोक्तदोषवारणं बोध्यम् ।

**उच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावादिति** । चिन्त्यमेतत्–वृत्तिविशेष्यतावच्छेदकतावच्छेदकता-कष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकरूपावच्छिन्नविशेष्यताकेष्टसाधनत्वप्र-कारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकताया एव स्थानपदार्थत्वेन स्थानपदार्थ-स्योच्चारणघटितत्वस्याभावात् । स्थानपदार्थस्योच्चारणघटितत्वे 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'-मित्यादौ स्थानपदार्थत्वानुपपत्तेश्च । 'इकोयणचि' 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मित्यादिशास्त्रैरिकर्मक-

### ॐ चिद्स्थिमाला ॐ

**एके**—दीक्षितादयः । सिद्धान्तमाह—**अतिदेशेनेति** । नन्वेवं परिवीरित्यत्र तुग्दीर्घौ पर्यायेण स्यातां, कार्यातिदेशेऽनेनैवोभयोरपि विधाने विप्रतीति सूत्राप्रवृत्तेरत आह—**इहापीति** । प्रतिपादितमिदमादौ स्थानिवत्सूत्रे । अन्यथा=तेषां तद्देशत्वानङ्गीकारे । तदाह—इति । तयोरैक्यमभिप्रेत्याहेत्यर्थः । एतेन–'इतिहेतौ, यत एतत्कार्यातिदेशकमत एव हेतोरित्यर्थः–' इति

### ॐ ज्योत्स्ना ॐ

**इति बोध्यमिति** । उपाध्यायास्तु–'सतिप्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवति'इति कार्यातिदेश-पक्षे सूत्रार्थमुक्त्वा परिवीयेत्यत्र सति प्रत्यये–दृष्टो दीर्घो न तुगिति परिवीरित्यत्रापि दीर्घ एव भवती-ति प्रतिसमादधते । नलुमताङ्गस्येत्यत्र–'प्रत्ययलोपे प्रत्ययलक्षण'मित्यनुवृत्त्या लुमच्छब्देन प्रत्ययलोपे प्रत्ययनिमित्तं कार्यमाङ्गमनाङ्गं वा न भवत्यङ्गस्य सम्बन्धि चेदिति यथाश्रुतसूत्रार्थं प्रत्यासत्तिलभ्यार्थतया

### ॐ विषमपदविवृतिः ॐ

तदाहेति । अतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्येतत्प्रमयमेवेत्यर्थः । प्रत्ययलोप इति ।

**न लुमता** । 'लु'शब्दयुक्ता लुमन्तस्तदाह—**लुगित्यादि** । **अङ्गकार्यमिति** । लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वेत्यर्थः । तेन 'पञ्च'त्यादौ पदसञ्ज्ञा भवति । राजपुरुषादौ भसञ्ज्ञा च न । अङ्गसञ्ज्ञा तु यथोद्देशत्वात्प्रत्ययसत्ताकाले जाता तिष्ठत्येव ।

❀ **अभिनव-चन्द्रिका** ❀

मुच्चारणं दर्भकर्मकं प्रस्तरणेष्टसाधनत्वप्रकारकभ्रमविषयः, यण्कर्मकमुच्चारणं, शरकर्मकं प्रस्तरणेष्टसाधनत्वप्रकारकप्रमाविषय इत्येव बोधनादिति दिक् । **इत्यर्थ इति** । लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययाङ्गसञ्ज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्ना च या उद्देश्यता तादृशोद्देश्यताके कार्ये कर्त्तव्ये प्रत्ययलक्षणं न भवतीति—नलुमताङ्गस्येति सूत्रार्थ इति भावः । तेन राजपुरुषादौ भसञ्ज्ञा, 'परमत्रिपुत्र'इत्यादौ त्रयादेशश्च न भवति । साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वनिवेशात्—उत्क्रामेत्यादौ न दोषः । **विस्तरस्तु–परिभाषेन्दु-**

❀ **चिदस्थिमाला** ❀

शास्त्र्युक्तमपास्तं, प्राचामसाङ्गत्यं ध्वनयन् **मान्याद्युक्तं** सूत्रसिद्धान्तार्थमाह—**लुप्तप्रेति** । प्रत्यासत्तिलभ्यमाह—**तदिति** । पूर्वस्येत्येव सिद्धेऽङ्गस्येति लब्धमाह—**लब्धाङ्गेति** । लुप्तप्रत्ययनिरूपितेत्यादिः । 'पूर्व' इत्यन्तस्य फलमाह—**तेनेति** । 'लब्धाङ्गे'त्यस्य फलं वक्तुमादौ प्राचां मतेनाह—**अङ्गेति** । सिद्धान्तमाह—**तत्काले इति** । प्रत्ययस्य सत्ताकाले इत्यर्थः । इदमपि कैयटादिरीत्या न भाष्यरीत्येति सूचयन्नाह—

❀ **ज्योत्स्ना** ❀

परिष्करोति–**लुप्तप्रत्यये परतो य इत्यादिना** । पदसञ्ज्ञा भवतीति । सुप्तिङन्तमिति पदसञ्ज्ञायाः प्रकृतिप्रत्ययसमुदायोपाधित्वेन निरुक्तोपाधिकार्यत्वाभावान्निषेधाप्रवृत्तेरिति भावः । **भसञ्ज्ञा च नेति** । तस्या निरुक्तोपाधिकार्यत्वान्निषेधादिति भावः । ननु 'राजपुरुष' इत्यादौ प्रत्ययलोपेऽङ्गसञ्ज्ञाया-अप्रवृत्तौ निरुक्तोपाधिकार्यत्वाभावोऽत आह—**अङ्गसञ्ज्ञा त्विति** । प्रत्ययसत्ताकाले=लोपात्पूर्वम् ।

**तिष्ठत्येवेति** । अन्तरङ्गत्वादिति भावः । ननु भसञ्ज्ञायामप्येतदविशिष्टं, न चान्तरङ्गानपीतिन्यायेन लुग्विधिः प्रबलः, अङ्गसञ्ज्ञायामपि तुल्यत्वात् । धर्मिग्राहकमानाद्विरोधे एव लुग्विधिः प्रबलो न चासावङ्गसञ्ज्ञयेति चेद्भसञ्ज्ञयापि कुत्रत्य सः ? । कार्यद्वारकस्त्वसावुभाभ्यामविशिष्टः । अथ ब्रूयादकृतव्यूहपरिभाषया लोपे प्रत्ययलक्षणनिषेधाद्भसञ्ज्ञायाः पूर्वमेवाप्रवृत्तावस्ति तया लुको विरोधो–नत्वङ्गसञ्ज्ञयापि, तस्या लब्धाङ्गसञ्ज्ञककार्योद्देश्यकत्वाभावेन निषेधाभावादितिमतं, तन्न, तस्याः परिभाषाया भाष्यकृता कण्ठरवेणानुक्तत्वादित्यस्वरसः । तथा हि–'इह किञ्चित्रपो' इति भाष्यात्सम्बुद्धिविषये प्रक्लृप्तं निषेधानित्यत्वमङ्गसञ्ज्ञायामपि तत्र न्यासे कल्पनीयमित्येके गौरवं । 'जिगमिष'विवृत्सेत्यत्र गमेरिट् परस्मैपदेषु, **'न वृद्भ्यश्चतुर्भ्यः'** इत्यताभ्यामिटो विप्रतिषेधौ प्रत्ययलक्षणनिषेधाद्दप्राद्यन्तौ [?] तत्र

❀ **सदाशिवभट्टीयम्** ❀

त्युक्तिमात्रमेकदेशिनः, अन्यत्सर्व्वं सिद्धान्तिन इति बोध्यम् ।

**न लुमताङ्गस्य** । **तदुद्देश्यकमिति** । तत्पूर्व्वत्वेन तदुद्देश्यकमित्यर्थः । अन्यथा सुबन्तत्वेन तत्पूर्व्वभागस्य राजनित्यस्योद्देश्यतासत्त्वाद्राजपुरुषे पदत्वं न स्यादिति बोध्यम् । **सञ्ज्ञा च नेति** । 'आद्ये पक्षे' इति शेषः । **जाता तिष्ठतीति** । वक्ष्यमाणरीत्या जातेपि लुकि तत्प्रवृत्त्या लुकोऽन्तरङ्गाङ्गसञ्ज्ञानिमित्तविनाशकत्वाभावेन तत्र कर्त्तव्यायान्तन्न्यायाप्रवृत्तेरिति भावः । भसञ्ज्ञायास्तु लुकि कृते न लुमतेतिनिषेधादप्रवृत्त्या तद्रूपान्तरङ्गनिमित्तविनाशकत्वं लुकोस्त्येवेति तत्र कर्त्तव्यायां तन्न्याया-

❀ **विषमपदविवृतिः** ❀

गुणे प्राप्ते' इति वक्तव्ये 'जसि चेति गुणे प्राप्ते' इत्युक्त्यैतल्लब्धम् । **न लुमताङ्गस्य** । वार्तिकमतेनैतत्सूत्रोदाहरणमाह–**राजपुरुषादाविति** । सर्वमतसाधारण्येनैतत्सूत्रोदाहरणन्तु–कतीत्यादि । 'लब्धाङ्गसञ्ज्ञक' इत्यस्य प्रयोजनमाह—**अङ्गसञ्ज्ञा त्विति** । **अन्यथान्तरङ्गानपीति** न्यायेनाङ्गसञ्ज्ञातः पूर्वं

—तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाप्रवृत्तेः। स्पष्टश्चेदं 'युवोरनाका'वित्यत्र कैयटे।

'न लुमते'त्यस्यानित्यत्वादङ्गसञ्ज्ञायामप्रवृत्तिरिति कश्चित्। अत एव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमिति 'तद्धितार्थे'ति समासे—ठकः—'अध्यर्धे'ति लुकि—'लुक्तद्धिते'ति स्त्रीप्रत्ययलुकि च 'पञ्चक्रोष्टृ' इत्यत्र तृज्वत्त्वम्।

ॐ अभिनव-चन्द्रिका ॐ

चन्द्रिकायां द्रष्टव्यः। कश्चिदिति। अचारुचिबीजन्तु—अङ्गसञ्ज्ञाया उपजीव्यत्वेन तन्निषेधस्य 'न लुमताङ्गस्ये'त्यनेन कर्तुमशक्यत्वमिति। तृज्वत्त्वमिति। 'पूर्वं जातं तिष्ठत्येवे'ति शेषः। तथाहि 'पञ्चक्रोष्टृ' इत्यत्र प्रत्ययलक्षणेनाङ्गसञ्ज्ञायां लुक्यपि तृज्वद्भावप्राप्त्या 'लुक्तद्धिते'ति लुकोऽन्तरङ्ग-स्त्रियाञ्चेति—शास्त्रनिमित्तविनाशकत्वस्याभावेन 'लुक्तद्धिते'त्यतः पूर्वमेव तृज्वद्भावेऽपि पश्चादध्यर्धेति लुकि 'लुक्तद्धिते'ति स्त्रीप्रत्ययलुकि च 'पञ्चक्रोष्टृ' इति तृज्वद्भावघटितस्य निर्बाधत्वात्।

ॐ चिदस्थिमाला ॐ

स्पष्टश्चेदमिति। वस्तुतोऽयुक्तमेवैतत्, 'न लुमता तस्मि'न्निति न्यासान्तरानुरोधेनाङ्गसञ्ज्ञायामपि निषेधौचित्यात्। लुप्तप्रत्ययनिमित्तकं तत्प्रकृतिसम्बन्धि यत्कार्यमित्यर्थौ हि तदा। एवञ्च सूत्रमतेऽपि लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतः तदुद्देश्यकमाङ्गमनाङ्गं वा यत्कार्यमित्यर्थ उचितः, नतु तत्र लब्धाङ्गसञ्ज्ञकत्वनिवेशः। सूत्रे अङ्गपदं पूर्वोपलक्षणमेव, 'योऽसौ लुमता लुप्यते तस्मिन्यदङ्गं तस्य यत्कार्यं तन्न भवती'ति प्रकृतसूत्रभाष्येऽप्येवम्। अत एव पक्षयोः समफलता, तत्प्रत्याख्यानसङ्गतिश्च। अत्रत्योद्योतस्तु कैयटानुरोधीति न तद्विरोधः, तदेतदभिप्रेत्य यथोद्देशे तद्रीत्या तस्याः सत्त्वेऽपि, तद्रीत्या कार्यकाले, सिद्धान्तरीत्या च पक्षद्वयेऽपि—अङ्गसञ्ज्ञां साधयति—न लुमतेत्यस्येति। 'इति तत्त्व'मिति पाठः। 'इति कश्चि'दित्यपपाठः, 'युवोरनाका'वित्यादिसूत्रस्थभाष्योद्योतविरोधात्। तस्याः फलमाह—अतएवेति। अनित्यत्वेनैनदप्रवृत्त्याङ्गसञ्ज्ञासत्त्वादेवेत्यर्थः।

प्रत्ययलुकीति। सोर्लुकि चेत्यपि बोध्यम्, अन्यथाङ्गेन प्रत्ययाक्षेपे 'उर'दित्यत्रेवावृत्त्या क्रोष्टुशब्दः प्रत्ययेऽङ्गसञ्ज्ञो भवति, तस्य च स्त्र्यर्थकप्रत्यये तृज्वद्भाव इत्यर्थेनाङ्गसञ्ज्ञादि न स्यात्, स्त्रीप्रत्ययस्तु गौरादित्वादत एव विधानाद्वा। यद्यपीदं कैयटमतेऽपि सिध्यति तथापि तन्न भाष्यसम्मतमिति ध्वनयन्नाह—

ॐ ज्योत्स्ना ॐ

परस्मैपदेष्वित्यस्योपलक्षणत्वात्परस्मैपदोपलक्षितसादेरार्धधातुकस्यैवेड्विधिर्निषेधश्च-सूत्राभ्यां विधेय इति भाष्यप्रदीपविवरणे कर्मन्दिदर्शितदिशा गौरवान्तरम्। नलुमताङ्गस्येति यथाश्रुतसूत्रन्यासे पुनरङ्गसञ्ज्ञाया अङ्गोद्देश्यककार्यत्वाभावान्नास्ति निषेधप्राप्तिरिति न किञ्चित्कल्पनीयम्, एवमङ्गात्परस्य सादेरार्धधातुकस्य विधीयमानयोरिड्विधिप्रतिषेधयोरप्यङ्गोद्देश्यककार्यत्वाभावादेव सिद्धिरिति कल्पनान्तरावकाश इति गौरवाभाव इत्याहुः।

ॐ सदाशिवभट्टीयम् ॐ

प्रवृत्तिरिति बोध्यम्। स्त्रीप्रत्ययेति। गौरादित्वात्। इदं—'स्त्रियाञ्चे'ति सूत्रे—भाष्यकारैकदेशिनः। तृज्वत्त्वमिति। जातन्तिष्ठतीति भावः। अङ्गसञ्ज्ञायां नलुमतेत्यस्याऽप्रवृत्तेः, एवञ्च लुकोऽन्तरङ्गसञ्ज्ञानिमित्तविनाशकत्वाभावा'दन्तरङ्गानपी'ति न्यायाप्रवृत्तेः पूर्वमङ्गसञ्ज्ञायां तृज्वत्त्वे ङीबादिरिति भावः।

ॐ विषमपदविवृतिः ॐ

लुक्प्रवृत्तौ यथोद्देशेपि स न स्यादिति भावः। अत एवेति। अङ्गसञ्ज्ञायामुक्तरीत्या न लुमतेति निषेधाप्रवृत्तेरेवेत्यर्थः। स्त्रीप्रत्ययलुकीति। इदमुपलक्षणं, तथाहि—इदं स्त्रियाञ्चेत्यत्र—स्त्रीई इति प्रश्लिष्य ईकारे परतः स्त्रियां तृज्वद्भावः, अत एव ज्ञापकात्तुनन्तान्ङीषिति भाष्योक्तपक्षान्तराभिप्रायेणायं ग्रन्थः ?, आहोस्वित् स्त्रियां क्रोष्टोरङ्गस्य तृज्वद्भाव इति पक्षान्तराभिप्रायेण ?; नाद्यः,

तदुक्तं भाष्ये—तृज्वदिति सूत्रे—'न चापरं निमित्तमाश्रीयते, किं तर्हि ? अङ्गस्य क्रोष्टुस्तृज्वदिति; अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेने'ति ।

न चोरदत्त्ववत्तृज्वत्त्वेऽपि परनिमित्ताश्रयणमिति—'पञ्चक्रोष्टृ' इत्यस्यासिद्धिरिति वाच्यम् , 'उर'दित्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेऽपि अङ्गसञ्ज्ञाद्वारोरदत्त्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव 'लिटयभ्यासस्ये'ति सूत्रस्थभाष्याशयात् ।

ॐ अभिनव-चन्द्रिका ॐ

**प्रत्ययलक्षणेनेति** । तथा च लुकोऽन्तरङ्गनिमित्तविनाशकत्वस्याभावेन 'अन्तरङ्गा'नितिपरिभाषाया अप्रवृत्त्या लुकः प्रागेव 'स्त्रियाञ्चे'ति तृज्वद्भावो भवतीति भावः । **अङ्गसञ्ज्ञाद्वारेति** । 'अचःपरस्मि'न्नित्यत्रान्यथासिद्धमपि परम्परयानिमित्तं 'परनिमित्त'मित्यनेन गृह्यते—इति भावः ।

ॐ **चिदस्थिमाला** ॐ

**तदुक्तमिति । न चापरमिति** । अस्मिन्परतः क्रोष्टुस्तृज्वद्भवतीत्येवमित्यस्य विच्छिन्नत्वाल्लक्षणानुरोधाच्च 'सर्वनामस्थाने' इत्यस्य नानुवृत्तिः । नचेकारे परतो विधानान्न**चापरं**मित्ययुक्तं; प्रश्लेषानाश्रयणेन स्त्रियां वर्तमान इत्यर्थात् तत्र च सति स इति भावः। यदि च तथा भाष्यसम्मतं स्यात्तदोक्तरीत्या तदपि सम्मतमेवेत्युक्तरीत्याऽङ्गत्वे निषेधाप्रवृत्त्या तत्सिद्धावपि तयैव तृज्वत्त्वं न स्यादिति तत्रानित्यत्वमेव शरणमिति तेनैव निर्वाहे तत्र तन्निवेशो व्यर्थोऽन्यथाभाष्यासङ्गतिरेवेति गूढाकूतम् । एतद्भाष्यस्यान्यभाष्यविरोधं परिहर्तुमङ्गेन प्रत्ययाक्षेपमतेऽङ्गसञ्ज्ञायामनित्यत्वादप्रवृत्तावपि तृज्वत्त्वस्य परनिमित्तत्वेन तत्र कर्तव्ये निषेध एवेति **नचापरमित्ययुक्तमे**वेति शङ्कते—**नचोरदत्वेति** । अङ्गेन प्रत्ययाक्षेपस्तत्रेति भावः । **दृष्टान्ते** तथा सत्त्वेऽत्रैवमापत्तिस्तत्रैव तथा नेत्याह—**उरदित्यत्रेति** । साक्षात्परनिमित्तत्वाभावेऽपि अङ्गसञ्ज्ञायाः परनिमित्तत्वेन परम्परया तदस्तीत्याह—**शब्दत इति** । एवेनाङ्गेन प्रत्ययाक्षेपनिरासः । अत एवाङ्गस्येति सूत्रे इव लिड्भ्यासस्येतिसूत्रेऽपि 'ग्रहिवृश्चतिभृज्जतीनामविशेष' इत्यत्र वृश्चिखण्डनायोरदत्त्वस्य स्थानिवद्भावादित्येवोक्तं, ननु तथा, तदेतद्ध्वनयन्नाह—**लिड्येति** । इदं तस्याप्युपलक्षणं, तदभावेऽपि

ॐ **ज्योत्स्ना** ॐ

**अङ्गसञ्ज्ञाद्वारेति** । कार्यकालपक्षे, 'क्ङिति'चेति सूत्रभाष्यरीत्या वा यथोद्देशपक्षे—सञ्ज्ञासूत्राणां विधिप्रदेशगतत्वाद्विधिसूत्राणां वा सञ्ज्ञाप्रदेशगतत्वादेकवाक्यत्वादिति भावः । एकवाक्यता च पदैकवाक्यतया, वाक्यैकवाक्यतया वेत्यन्यदेतत् । नन्वङ्गसञ्ज्ञासूत्रे—प्रत्यये इति यदि 'यस्य च भावेन भावलक्षण'मिति सप्तमी 'स्यात्तदा सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति न्यायात्तस्या निमित्तसप्तमीत्वं स्यात्, नत्वेतदस्ति,—तस्या औपश्लेषिकाधिकरणसप्तमीत्व-

ॐ **विषमपदविवृतिः** ॐ

स्त्रीप्रत्ययलुकि प्रत्ययलक्षणेन ईकारपरकत्वस्य न लुमतेति निषेधे जागरूके सत्यसम्भवेन तत्पक्षे तृचि क्रोष्ट्रे इति रूपस्यैव दुर्लभत्वात् । नान्त्यः, तत्पक्षे तृज्वत्त्वप्रवृत्तेः पूर्वं स्त्रीप्रत्ययस्यैवाभावेन तल्लुकः खपुष्पगन्धायमानत्वात् । तस्मात्पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमित्यर्थे ठकि तस्याऽध्यर्धेति लुकि 'पञ्चक्रोष्टु' इत्यत्र तृज्वत्त्वमिति वक्तुं युक्तम् । वस्तुतस्तु—पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमित्यर्थे ठकः पूर्वं तृज्वत्त्वविनाशकत्वाभावेनेति वक्तुं युक्तम् , अन्तरङ्गत्वात् । अङ्गसञ्ज्ञाया लुगुत्तरमपि प्रत्ययलक्षणेन प्रवृत्त्या लुकोऽन्तरङ्गतृज्वत्त्वविनाशकत्वाभावेनान्तरङ्गानपीति न्यायाप्रवृत्तेः । **अङ्गस्य क्रोष्टुरिति** । अङ्गस्यावयवो यः क्रोष्टुशब्द इत्यर्थः । **अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेनेति** । नन्विदं भाष्यं—पञ्चभिः क्रोष्ट्रीभिः क्रीतै रथैः—'पञ्चक्रोष्टूभी रथै'रित्युदाहरणे प्रवृत्तं, तत्र च श्रूयमाणभिसमाश्रित्याङ्गसञ्ज्ञा भविष्यतीति न प्रत्ययलक्षणोपयोग इति चेन्न; तस्य 'पञ्चक्रोष्ट्रे' इत्युदाहरणोपलक्षणेनादोषात् । तथाचोक्तदिशान्तरङ्गत्वेन तृज्वत्त्वस्य समाससञ्ज्ञातः पूर्वमेव तृज्वत्त्वप्रवृत्त्या न प्रत्ययलक्षणोपयोग इति वाच्यम् । 'अङ्गसञ्ज्ञा तु भवती'ति भाष्यस्य

नियमतः परबुद्धेः पूर्ववृत्तितया परनिमित्तत्वात् । अत एव 'चर्करीति' 'अजर्घा' इत्यादावत्वप्रवृत्तिः । 'अचिश्नु' इत्यादावजादिप्रत्यय इत्यर्थस्तु—'अङ्गस्ये'ति

॥ चिद्स्थिमाला ॥

कारणलक्षणाक्रान्तत्वमस्तीत्याह—**नियमत इति** । इदमेव युक्तं न तत्राक्षेप इत्याह—**अत एवेति** । भाष्यस्य तदाक्षेपपरत्वाभावादेवेत्यर्थः । अन्यथा प्रत्यासत्त्याऽभ्यासनिमित्तप्रत्ययस्यैव तत्र ग्रहणात्तस्य च लुका लुप्तत्वात् परनिमित्तत्वेनात्वस्य निषेधप्रवृत्त्या प्रत्ययलक्षणाभावात्तथात्वेऽपि तत्र स्यादिति महदनिष्टं, तस्मात्तथैव तद्भाष्यतात्पर्यमित्युभयोरपरनिमित्तत्वेन साम्यमिति न भाष्ययोर्विरोधप्रसङ्गः । एतेनोक्तभाष्यसजातीयस्य 'युवोरने'ति सूत्रस्थभाष्यस्यापि तदविरोध एवेति तत्र शङ्कापूर्वकं समाधानं कैयटोक्तं चिन्त्यमेवेति ध्वनितम् । नन्वेवं तावतामङ्गेन प्रत्ययाक्षेप इति कथैव निरस्ता, तथा सति कथममचिश्न्वित्यादावित्युक्तार्थलाभोऽत आह—**अचीति** । निराकाङ्क्षाध्याहारादिजक्लेशादाह—**यथाकथञ्चिदिति** । नन्वङ्गेन प्रत्ययाक्षेपाभावेऽपि कार्यकालपक्षे कैयटादिमतेऽङ्गसञ्ज्ञाशास्त्रस्य तत्रोपस्थितिरिति—तद्वत्तस्य परनिमित्तत्वमेवेति तयोरसिद्धिरेवेत्यत

॥ ज्योत्स्ना ॥

सिद्धान्तात् , अत उरदत्त्वस्य परनिमित्तत्वमनुपपन्नमत आह—**नियमतः परबुद्धेः पूर्ववृत्तितयेति** । एवञ्च प्रत्यये इत्यौपश्लेषिकसप्तम्यतः—तस्मिन्निति परिभाषासंस्कृतायाः परसप्तमीत्वं, परत्वस्य पूर्वबुद्धिनियामकत्वान्निमित्तसप्तमीत्वञ्चेति भावः । तथा चाचः परस्मिन्नित्यतिदेशे साक्षात्परम्परया वा परनिमित्तकत्वं ग्राह्यं,—नलुमताङ्गस्येतिप्रत्ययलक्षणप्रतिषेधे पुनः प्रत्ययनिमित्तकत्वं साक्षादेवेत्युक्तं भवति । अत एव 'न लुमता तस्मि'न्नितिवार्त्तिकन्यासे तस्मिन्निति चरितार्थम् । तद्धि 'प्रत्ययलोपे प्रत्ययलक्षण'मितिपूर्वसूत्रे लक्षणपदोपादानात्प्रत्ययनिमित्तकत्वलाभे सामर्थ्यात्साक्षात्प्रत्ययनिमित्तकत्वलाभार्थं विज्ञायते, तत्समानफलकत्वाय 'न लुमताङ्गस्ये'तिसूत्रन्यासेऽपि तथैवोचितमिति दिक् ।

**अत एवेति** । अङ्गसञ्ज्ञाद्वारा उरदत्त्वस्य परनिमित्तकत्वेन, 'न लुमताङ्गस्ये'त्यस्य च साक्षात्प्रत्ययनिमित्तककार्य एव प्रवृत्तेरेवेत्यर्थः । **चर्करीतीति** । अत्र यन्निमित्तकं यदङ्गं—प्रत्यासत्त्या तन्निमित्तकतदभ्यासस्य य ऋवर्णस्तस्योरदित्यनेनात्वं विधेयं, तच्च साक्षात्प्रत्ययनिमित्तकत्वे न स्यात्, न लुमताङ्गस्येति निषेधादिति भावः । ननु प्रत्यये परतो यस्मात्प्रत्ययविधिस्तदङ्गं तदवयवाभ्यासऋवर्णस्यादित्येवोरदित्यस्यार्थस्ततश्च चर्करीतीत्यत्र सत्यपि यङ्लुकमादाय नलुमताङ्गस्येति प्रतिषेधे तिब्निमित्ताङ्गसञ्ज्ञामादायास्य प्रवृत्तिरुपपत्स्यत इत्यस्वरसादाह—**अजर्घा इतीति** । अत्र नित्यत्वान्तरङ्गत्वाभ्यां हल्ङ्यादिलोपेऽल्विधित्वात्प्रत्ययलक्षणाप्रवृत्तौ तन्निमित्तोरदत्त्वानापत्तिः, स्थान्यल्वृत्तिधर्ममात्राश्रयणेऽनल्विधाविति निषेधप्रवृत्तेरभ्युपगमादिति भावः । स्थान्यत्साधारणधर्माश्रयणे एव तन्निषेधप्रवृत्तेः परिभाषाप्रदीपार्चिषि व्यवस्थापितत्वाच्चिन्त्यमेतत् ।

नन्वचिश्न्वित्यादावजादौ प्रत्यये इत्यर्थो नोपपद्यते, अङ्गसञ्ज्ञाद्वारा वाक्यैकवाक्यतया प्रत्ययस्य तत्र निमित्तभावेऽपि पदैकवाक्यतयाऽचीत्यस्य प्रत्ययविशेषणत्वाभावात्तदादिविध्यभावात्, किन्तु प्रत्यये यस्मात्प्रत्ययविधिस्तदाद्यङ्गं भवति, तस्य च श्न्वाद्यन्तस्याचीयङुवङौ स्त इत्यर्थः प्रदर्शनीयोऽत आह—**अचिश्न्वितीत्यादाविति** । विधिप्रदेशोपस्थितसञ्ज्ञया विधिवाक्यस्य पदैकवाक्यतयैवान्वयः, प्रत्यये यस्मात्प्रत्ययविधिस्तदादेरङ्गस्य योऽभ्यासस्तस्य-

॥ विषमपदविवृतिः ॥

लुकोन्तरङ्गनिमित्तविनाशकत्वाभावसम्पादनार्थत्वेनादोषात् । **नियमत इति** । नन्वेवं तृज्वत्त्वस्यापि परनिमित्तकत्वेन तस्मिन्नलुमतेति निषेधप्रवृत्त्यापत्तिरिति चेन्न; नलुमतेति निषेधे व्याख्याने न शब्दतः परनिमित्तकत्वस्यैवाश्रयणात् । **अत एवेति** । उरदित्यत्र शब्दतः परनिमित्तकत्वानाश्रयणे 'न लुमते'ति निषेधाप्रवृत्तेरेवेत्यर्थः । इदमयुक्तम्—अत्वप्रवृत्तावपि 'गुणो यङ्लुको'रिति निषेधेनेष्टसिद्धेः । यत्तु चर्करीत्यजर्घा इत्यादौ तयोस्तिब्निमित्तकाङ्गत्वमादायात्वप्रवृत्तिरिति पाठकेनोक्तं, तन्न ।

षष्ठ्या 'निमित्ते' इत्यध्याहारेण तस्य विशेष्यतया यथाकथञ्चिदुपपाद्यः, आकडाराधिकारस्थेषु कार्यकालत्वस्याभावाच्च ।

वस्तुतस्तु–'कार्यकालपक्षे क्रोष्टुशब्दः प्रत्ययेऽङ्गसञ्ज्ञो भवति, अङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रिया'मित्येवार्थः । तृज्वत्त्वमनैमित्तिकमेव । 'उर'दित्यादौ तु गतिरुक्तैव । पदैकवाक्यतयाऽन्वयस्तु–सञ्ज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम् ।

एतेन"––आवृत्त्याऽत्त्वं प्रति निमित्ततापि, वव्रश्चेति लक्ष्यानुरोधात्, न तथा प्रकृते, लक्ष्यानुरोधादेवेति तदाशयः । 'चर्करीति' 'अजर्घा' इत्यादौ तु 'न लुमते'ति-निषेधानित्यत्वादत्त्वप्रवृत्तिः, 'त्रपो' इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं

❀ अभिनव-चन्द्रिका ❀

**कार्यकालत्वस्याभावादिति** । कार्यकालपक्षीयविधिदेशीयतद्रूपांशस्याभावादितिभावः ।

❀ चिदस्थिमाला ❀

आह––**आकडारेति** । सञ्ज्ञाशास्त्रेष्वित्यर्थः । अन्यथा भादिसञ्ज्ञाया बाधो न स्यादिति भावः । व्यक्तीभविष्यति चैतदद्द्वयङ्शब्दे । ननु यत्रोपदेशतः सञ्ज्ञाद्वयप्रसङ्गस्तत्रानुपपत्त्या तदभावेऽप्यन्यत्र तदभावे न मानमित्यङ्गसञ्ज्ञायां तत्त्वे बाधकाभावः, **किञ्च** 'अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेने'ति सूत्रद्वयभाष्योक्तथा तत्र कार्यकालत्वमेव भाष्याभिमतम्, अन्यथा तथोक्तासङ्गतिः स्पष्टैव, एवञ्चोक्तदोषस्तदवस्थ एवात आह––**वस्तुतस्त्विति । प्रत्ययेऽङ्गेति** । 'नलुमते'त्यस्य नित्यत्वादङ्गसञ्ज्ञाविषयेऽप्राप्तिरत एव 'न लुमतातस्मि'न्निति न्यासे न दोषः, अत एव 'गुणो यङ्लुको'रित्यादीनामङ्गाधिकारे पाठः सङ्गच्छते । नन्वेवं 'वव्रश्चे'त्यस्यसिद्धिरत आह––**उरदिति** । अनुपदमेवेति भावः । नन्वेवमपि पदैकवाक्यतयान्वये तत्त्वमेवात आह–**पदैकेति । अन्यत्र**=उद्योतशब्दरत्नादौ । युवोरनाकावित्यादिसूत्रस्थकैयटाद्युक्तिं खण्डयति––**एतेनेति** । उक्तरीत्या 'पञ्चक्रोष्टृ' 'वव्रश्च' 'चर्करीती'त्यादेर्भाष्याविरोधेन सिद्धत्वेनेत्यर्थः । प्रकृते='युवोरनाकौ' 'तृज्वत्क्रोष्टु'रित्यादौ । **लक्ष्येति** ।'नन्दनं दधि''कारकं दधि''पञ्चक्रोष्टृ'इत्यादिलक्ष्ये इत्यर्थः । तदाशयः='युवो'रित्यादिसूत्रभाष्याशयः । नचैवमपि तत्रात्त्वं कथमत आह-**चर्करीतीति** । आक्षेपवाद्युक्तसमाधिं खण्डयति-

❀ ज्योत्स्ना ❀

उदित्यादिरूपेण सूत्रार्थमभ्युपगच्छतां दीक्षितप्रभृतीनां मतेप्याह––**आकडाराधिकारस्थेष्विति** ।

**कार्यकालत्वस्याभावाच्चेति** । किन्तु तत्र यथोद्देश एव पक्षस्तत्स्वरूपञ्च प्रगृह्यसञ्ज्ञाप्रदीपप्रदर्शितदिशा––यत्र सञ्ज्ञाशास्त्रोपदेशस्तत्रैव वाक्यार्थबोधेन गृहीतपदशक्तिग्रहोत्तरं 'भविष्यति किञ्चिदनेन प्रयोजन'मिति यथाश्रुतग्राहिप्रतिपत्तुः सर्वत्र शास्त्रे व्यवहारप्रयोजकत्वमिति नास्ति पदैकवाक्यतायाः सम्भव इति भावः । 'क्ङिति चे'ति सूत्रस्थप्रदीपप्रदर्शितदिशा–यथोद्देशपक्षेऽपि सञ्ज्ञाप्रदेशागतानां विधिसूत्राणामेकवाक्यतेत्यभ्युपगमे तु––तत्र वाक्यैकवाक्यतायाः––सञ्ज्ञाप्रकरणे सिद्धान्तितत्वादुरदित्यादौ नास्ति साक्षात्प्रत्ययस्य निमित्तत्वमित्येवेह सारम् ।

❀ विषमदविवृतिः ❀

अङ्गाधिकारस्थाभ्यासकार्याणामभ्यासाङ्गोभयनिमित्तप्रत्यये एव प्रवृत्तेः । अत एव जिहनीयिषतीत्यादौ न कुत्वम् । **कार्यकालत्वस्याभावाच्चेति** । इदमयुक्तं––'कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति यचिभ'मित्याद्यनेकभाष्यविरोधात् । कैयटोक्तं दूषयति––**एतेनेति** । आकडारस्थस्य कार्यकालत्वाभावेन प्रत्यये इत्यस्यावृत्तिं विनैवोक्तदिशा निर्वाहेण चेत्यर्थः । **पदैकवाक्यतयेति** । 'यत्राङ्गमिति श्रूयते तत्र यस्मात्प्रत्यय इत्युपतिष्ठते' इति सूत्रार्थाश्रयणात् । अस्मिन्पक्षे च

लुकि भवत्येवेति तु—भ्रुवे हितं भ्रूहितमित्यादावुवङापत्त्या चिन्त्यम्—" इत्यपास्तम् ।

**त्रिषु सरूपा इति** । 'ङे प्रथमयो'रिति सूत्रे युष्मानित्यादौ 'तस्माच्छसो न' इत्युपन्यासपरेण भाष्येण, 'स्वमोर्नपुंसका'दिति सूत्रे शिशीनुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन, तद्भाष्येण च, 'न ष'डिति निषेधेन च—लिङ्गसत्ताबोधनेऽपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः ।

'साम आक'मितिसूत्रस्थस्य—'अलिङ्गे युष्मदस्मदी' इतिभाष्यस्य 'पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयते' इत्यर्थ इति दिक् ।

**त्रेस्त्रयः** । अयं न सान्तः, 'निजां त्रयाणा'मिति निर्देशात् ।

---

### ❀ अभिनव-चन्द्रिका ❀

**इति दिगिति** । दिगर्थस्तु एकस्य मते—'अलिङ्गे युष्मदस्मदी'इतिवचनाद्युष्मदस्मदोर्लिङ्गं नास्ति, अन्येषां मतेऽस्तीति विवेकः ।

**त्रेस्त्रयः** । **अयङ् न कृत इति** । ङिच्चेति शास्त्रस्य—ङित्त्वसामर्थ्येन कल्प्यमानान्त्यादेशत्वानुवादकत्वेन प्रकृते ङित्करणसामर्थ्यात्—अन्त्यादेश एव भविष्यतीति कल्पनीयमिति गौरवम् । किञ्च त्रयाणामित्यस्य द्वित्वे स्थानिवद्भावेन सुबन्तत्वात्—'इ' शब्देन समासे समासत्वेन प्रातिपदिकत्वादाम्द्वयस्यापि लुकि

### ❀ चिदस्थिमाला ❀

**अङ्गेति** । ननु मूलं न लिङ्गाभावप्रातिपादकं, तथा सत्यलिङ्गाः इत्यस्यैवौचित्यात्, अव्ययप्रकरणसमीपे एवं युष्मदादेः प्रतिपादनौचित्याच्च, किन्तु तत्सत्त्वेऽपि सारूप्यप्रतिपादकं, तच्च विरुद्धमत आह—**ङेप्रेति** । अत्र भाष्यादेः-प्राबल्यं तथैवेति—विपरीतक्रमः । नन्वेवमन्यभाष्यविरोधोऽत आह—**साम इति** । मात्रं-कार्त्स्न्ये । अत एवाव्ययानामत्राग्रहणं, तेषां लिङ्गाभावादव्ययीभावस्य क्लीबत्वेऽपि लिङ्गान्तराभावाच्च । एतेन-'इदमुपलक्षणमव्ययस्यापि, युक्तितौल्या'दित्यादिरत्नाकराद्युक्तमपास्तमिति स्पष्टं भावप्रकाशे, तदाह—**इति दिगिति** ।

### ❀ ज्योत्स्ना ❀

**स्वमोर्नपुंसकादितिसूत्रे इति**—बहुव्रीहिः, 'स्वमोर्नपुंसका'दितिसूत्रं यस्मिंस्तस्मिन् साप्तमिके प्रथमे पादे—'नेतराच्छन्दसी'तिसूत्रे इत्यर्थः । **शिशीनुमादिभिरिति** । आदिना लुक् **वार्त्तिकेनेति** । 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने'ति वार्त्तिकेनेत्यर्थः ।

**तद्भाष्येण चेति** । 'नपुंसकादेशानामवकाशः—'त्रपु त्रपुणी, त्रपूणि', युष्मदस्मदो र्विभक्त्यादेशानामवकाशः—'त्वं ब्राह्मणोऽहं ब्राह्मणः, युवां ब्राह्मणावावां ब्राह्मणौ, यूयं ब्राह्मणाः वयं ब्राह्मणाः' इहोभयं प्राप्नोति—'त्वं ब्राह्मणकुलम्, अहं ब्राह्मणकुलं, युवां ब्राह्मणकुले, आवां ब्राह्मकुले, यूयं ब्राह्मणकुलानि, वयं ब्राह्मणकुलानि', युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन, अथेदानीं युष्मदस्मदोर्विभक्त्यादेशेषु कृतेषु—पुनः प्रसङ्गविज्ञानाच्छिशीलुङ्नुम्विधयः कस्मान्न भवन्ति ?, सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति भाष्येण चेत्यर्थः । अत्र वार्त्तिके भाष्ये च विभक्त्यादेशशब्दनाऽमेवोच्यते, स्थानिभेदमाश्रित्य तु बहुवचनमिति बोध्यम् । अत्राभिनवविवरणं—

### ❀ सदाशिवभट्टीयम् ❀

**स्वमोर्नपुंसकादिति सूत्र इति** । इत्यनुवर्त्तमाने नेतराच्छन्दसीति सूत्र इत्यर्थः ।

### ❀ विषमपदविवृतिः ❀

प्रत्यये इत्यस्यावृत्तिर्नापेक्षिता । **अङ्गाक्षिप्तप्रत्ययनिमित्तमिति** । न लुमतेति **निषेधस्तु** अङ्गा-

त्रेरयङ् न कृतः,—'अयङ् यी'त्यादाविवोच्चारणार्थत्वशङ्कावारणाय ।

**केचिदिति** । 'आमि सर्वनाम्न' इति साहचर्यादिति भावः । **वस्तुतस्त्विति** । साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावाच्चेति भावः ।

न च गौणमुख्यन्यायेनात्र नेति वाच्यम्, अप्रसिद्धत्व-गौणलाक्षणिकत्वान्यतररूप-गौणत्वाभावात् । अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता । इतर-विशेषणतामात्रेण तत्त्वाभावात्, पदकार्य एव तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः ।

---

### ॥ अभिनव-चन्द्रिका ॥

विशिष्टादामि 'त्रि-त्री-आ'मिति स्थिते-अयङ्-कल्पे 'त्रित्रयाणा'मिति स्यात् यथाश्रुतकल्पे 'त्रयाणा'मिति च फलभेदादयङ् कर्तुं न शक्यत इति बोध्यम् । **पदकार्य एवेति** । तत्त्वञ्च-स्त्रीत्वानिमित्तकत्वे सति विभक्त्य-

### ॥ चिदस्थिमाला ॥

आदिना अनड्त्वशङ्केति तच्छङ्काप्रयुक्तनिर्देशासङ्गतिजप्रतिपत्तिगौरववारणायेत्यर्थः ।

**केचिदिति** । प्रसादकारादय इत्यर्थः । तत्र निर्मूलत्वं दीक्षितशाब्दिदण्ड्याद्युक्तेरसाङ्गत्यं ध्वनयन्नपाकरोति—**आमीति** । तेषामाशयान्तरं खण्डयति—**नचेति** । शुद्धलक्षणानिरासायाह—**गौणेति** । 'अतएवे'त्यस्यार्थमाह—**इतरेति** । अभ्युपेत्याप्याह—**पदेति** । अतएव प्रियतिसेत्यादौ तिस्रादयो भाष्य-कृतोदाहृताः । एतेन 'त्रेः सम्बन्धिन्यामीति विज्ञानाद्गौणे ने'ति प्रकाशदण्ड्याद्युक्तमपास्तं, तत्रापि तथार्था-पत्त्या भाष्यासङ्गत्यापत्तेः, वैषम्ये तु न बीजं, तदाह—**इत्यन्यत्रेति** । शब्दरत्नादावित्यर्थः। ननु सङ्ख्येयपरत्वे

### ॥ ज्योत्स्ना ॥

"-भाष्ये-'शिशीलुग्विधय'इत्येव पाठः, 'शिशीलुङ्नुम्विधय'इति नुम्घटितः पाठस्त्वशुद्धः, अमः सर्वनामस्थानत्वाभावात्-" इति । अत्र ब्रूमः—शिना विप्रतिषेधे तुल्यबलत्वोपपादनाय भाष्येनुम् पठ्यते, तथाहि-यदि नुमा विप्रतिषेधो न स्यात्तदा 'यूयं ब्राह्मणकुलानी'त्यादौ विभक्त्यादेशं बाधित्वा-नित्यत्वाच्छिः स्यात् , न च तस्मिन् कृते विभक्त्यादेशोऽपि स्थानिवद्भावात्प्राप्नोतीति सोपि नित्यः; तदानीं नुमा परत्वात्तस्य बाधनादनित्यत्वात् । वार्त्तिके नुम्ग्रहणे सति पूर्वविप्रतिषेधाद्विभक्त्यादेशेन बाधनात्कृताकृतप्रसङ्गित्वाद्विभक्त्यादेशोऽपि नित्य इति शिना सह तस्य तुल्यबलत्वोपपत्तिः, अत एवेह मूले बृहच्छेखरे च शिशीनुमादिभिरिति नुमादिपदघटितः पाठो दृश्यते—इति सूक्ष्मदृश एव विदाङ्कुर्वन्तु । **उच्चारणार्थत्वशङ्कावारणायेति** । यथान्यासे सान्तत्वशङ्काया इव'त्रेरय'ङितिन्यासे

### ॥ सदाशिवभट्टीयम् ॥

**त्रेस्त्रयः । शङ्कावारणायेति** : तत्रापि न्यासे उक्तनिर्देशाश्रयणे तु जराया असुङीव प्रतिपत्तिगौरव-

### ॥ विषमपदविवृतिः ॥

श्लिष्टप्रत्ययनिमित्तककार्य एवेति चर्करीत्यादावप्रवृत्तिरिति भावः । **अनङापत्त्या चिन्त्यमिति** । इदञ्च विशेषणतया वर्णाश्रयणे प्रत्ययलक्षणं न भवतीति वार्तिकमतेन दूषणं, न वस्तुतः ।

**अपास्तमिति** । वस्तुतस्त्वाकडारीयेष्वपि कार्यकालपक्षस्योपपादितत्वात्कैयटोक्तमपि युक्तम् । आवृत्तिरप्यावश्यकी, अङ्गसञ्ज्ञायामुपक्षीणायाः परबुद्धेरङ्गसञ्ज्ञायामुपक्षीणत्वेनोरदत्वस्य प्रत्ययनिमित्त-त्वात् , कुलालपितुर्घटं प्रतीव, 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यादौ ब्राह्मणस्य प्रश्नक्रियां प्रतीवा-न्यथासिद्धत्वात् । **स्वमोर्नपुंसकादिति सूत्रे इति** । एतत्सूत्रोत्तरवर्त्तिनि 'नेतराच्छन्दसी'ति सूत्रे इत्यर्थः । **पदान्तरसन्निधानं विनेति** । वस्तुतो'ऽलिङ्गे युष्मदस्मदी'इत्यनेन टाबभावोपपादनार्थं प्रवृत्तत्वेनेदृशार्थकत्वं न युक्तम् । न चा'ऽटाव्यते' इत्यादौ पदान्तरसन्निधानं विना स्त्रियां वर्त्तमाने टाबित्यर्थ इति वाच्यम्, मानाभावात् । 'न षडि'त्यत्र षड्ग्रहणवैयर्थ्यापत्तेश्च । तस्मात्-'अलिङ्गे युष्म-दस्मदी'इति वार्तिकं कस्य चिद्द्वेषेर्मतमाश्रित्य प्रवृत्तमिति बोध्यम् । **उच्चारणार्थत्वशङ्कावारणायेति** ।

**द्विशब्दो नित्यं द्विवचनान्त इति ।** सङ्ख्यापरत्वेऽपीत्यर्थः । अत एव कस्य द्वित्वे इत्यर्थे 'कस्य द्वयो'रिति भाष्ये बहुष्विति सूत्रे प्रयुक्तम् ।

**त्यदादी ।** 'अष्टन' इत्यतो 'विभक्ता'वित्यनुवर्त्तते, तत्फलं—नकुलम्, सोर्लुक्यत्वं न ।

**इष्टिरिति ।** भाष्यकारस्येति भावः । **द्विपर्यन्तानां किमिति ।** युष्मदस्मदोरात्व-यत्वलोपैर्बाधात्, किमः कादेशविधानाच्च प्रश्नः । **भवान् भवन्ताविति**—अभ्युच्चयाय ।

**ङौ तु सवर्णदीर्घ इति ।** इदं सम्भावनामात्रेण । एषां ङौ—'इदूतौ च सप्तम्यर्थे' इतिसूत्रस्थभाष्यप्रामाण्येनानभिधानात् ।

**क्विबन्तवातेति ।** 'ईत्वमवकारादौ' इतिवार्त्तिकस्य, 'पावान' इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च—फलैक्यायेदृशेभ्यः क्विपोऽनभिधानमावश्यकमिति ।

---

❀ अभिनव-चन्द्रिका ❀

निमित्तकत्वं, स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययनिमित्तकत्वं वा, पदात्परत्वव्याप्य-विषयताप्रयोजकपदघटितशास्त्रविधेयताकत्वं वेत्यन्यत्र विस्तरः । **अभ्युच्चयायेति ।** यत्तु द्विशब्दात्प्रागेव भवच्छब्दः पठ्यते, तथा च भवानित्यादौ न दोष इत्यरुचेराह—**भवन्ताविति ।** स च भवांश्च इति भवन्ताविति विग्रहः । अत्र 'त्यदादीनां मिथःसहोक्तौ यत्परं तच्छिष्यते'इति तच्छब्दस्यैकशेषा-पत्तिरिति, तन्न; यथाश्रुतपाठं परित्यज्य अन्यथापाठं परिकल्प्य भाष्यकारेष्टेः खण्डनस्या-युक्तत्वात् । एतादृशरीत्या दोषवारणेऽनवस्थापाताच्च । **अनभिधानमिति ।** वस्तुतस्तु यथोत्तरमिति-परिभाषया ईत्वात्पूर्वमेव 'वेरपृक्तस्ये'ति लोपे हलादित्वाभावादेव नेत्त्वप्राप्तिः, 'धीवरी''पीवरी'त्यादौ

❀ चिदस्थिमाला ❀

तत्त्वं सिद्धमेवेत्युक्तिर्व्यर्थाऽत आह—**सङ्ख्येति ।** वार्तिकत्वभ्रमनिरासायाह—**भाष्येति । लोपैरिति ।** विशेषविहितैरत्वस्येत्यर्थः । **अभ्युच्चेति ।** दोषस्य नानारूपत्वप्रकाशनायेत्यर्थः । एनेन वैयर्थ्यं परिहृतम्, "ननु व्यक्तिपक्षेऽत्वसन्तस्येति सूत्रेऽस्याप्यतोरुपस्थितिसामर्थ्यात्सौ 'त्यदादीनाम'इत्यस्य न प्राप्तिरित्यपि शङ्का स्यादत आह—**भवन्ताविति**–"इत्यपास्तञ्च । **एषामिति ।** प्रतिपादितमिदमधस्तात् । 'यक्षानुरूपो बलि'रिति न्यायेन [ व्रतेन माधवो ? ] मनोरमादृतं मूलाशयं दूषयति पूर्ववद्—**ईत्वेति ।**

❀ ज्योत्स्ना ❀

उच्चारणार्थत्वशङ्काया अपि वारणस्य सम्भवाद्उपलक्षणमेतत्—,आचारक्विबन्तात्क्विप्यामि'त्रयाणा'मित्यत्र त्रिच्छब्देऽन्त्यादेशत्वापत्तेरित्याहुः । प्रतिपदिककार्येष्विष्टप्रवृत्तिकतया परिभाषाप्रदीपा-र्चिषि व्यवस्थापितेन 'अभिव्यक्तपदार्था ये' इति न्यायेन तत्रादेशाप्रवृत्तिकल्पना तु न, अन्यतो विधानज्ञापक-त्रयादेशविधान-सामर्थ्यात्तन्न्यायाप्रवृत्तेरितीह तत्त्वम् । **अभ्युच्चयायेति ।** प्रथमो-पात्तादविशेषकरोत्तरोपादानम्—अभ्युच्चयः । इदं जातिपक्षे,—व्यक्तिपक्षे तु–'असत्वन्तस्ये'ति-

❀ सदाशिवभट्टीयम् ❀

मिति भावः । **ईत्वमवकारेति ।** अस्य 'तथे'त्यादिः । 'आदा'विति फलितार्थकथनं, भाष्ये 'वकारे प्रतिषेध'

❀ विषमपदविवृतिः ❀

इदमयुक्तम्,—त्रयोदशेत्यादौ सान्तादेशविधायक–'त्रेस्रय' इत्यादाविवात्रापि सान्तत्वभ्रमवारण-सम्भवात् । **अभ्युच्चयायेति ।** भवानिति प्रत्युदाहरणस्यापि निर्दुष्टत्वादिति भावः । केचित्तु नुमः पूर्वं परत्वात्त्यदाद्यत्वे पश्चात्–'उगिदचा'मिति नुमि 'सर्वनामस्थाने चे'ति दीर्घे भवानिति सिध्यती-त्याहुः, तन्न, नलोपापत्तेः । झलन्तानामेवोगितां नुम्विधानाच्च, अन्यथा चिन्नुणि नुमापत्तेः ।

धीवरी पीवरीत्यादि तु 'ध्याप्योः सम्प्रसारणञ्च' क्विप्कनिप्च चेनेत्यर्थकात्-'जनसनखनां सञ्झलोः' 'घुमास्थागापे'तिसूत्रभाष्यपर्यालोचनया सिद्धात्-वार्त्तिकात्सिद्धम् । 'धीङ्ध्यायतेर्दधातेर्वे'ति 'क्विब्वची'तिवर्तिकस्थभाष्ये 'दधातेर्वे'त्युक्तिरेकदेशिनः।

❀ अभिनव-चन्द्रिका ❀

अन्तरङ्गपरिभाषाया अनित्यत्वान्न दोषः। परंतु-प्रकृतिविशेषोद्देश्यकक्विपि परत एव 'ईत्वमवकारादा'-विति वार्तिकं प्रवर्तते, शंस्था इत्यादौ 'स्थः क चे'ति चकारेण स्थाधातोः क्विपो विधानादीत्त्वं न जायते, 'धीवरी' 'वातप्रमी'रित्यादौ 'क्विप्चे'त्यनेन क्विपो विधानात्तत्र प्रकृतिविशेषोपादानाभावात्-'ईत्वमवकारादा'वित्यस्य विषयो नास्तीति-'ईत्वमवकारादा'विति वार्तिकमते वनिपा तत्प्रत्याख्यानपर-

❀ चिदस्थिमाला ❀

यद्यपि भाष्ये 'वकारे प्रतिषेध' इत्येव त्रिरुक्तं, तथापि कारप्रत्ययात्सवर्णनिर्देशो भगवदभिमत इत्यत्र्यहणात्तदादिविधिरित्याह-**अवकारादाविति** । ईदृशेभ्यः=ईत्वविषयाऽऽदन्तेभ्यः । 'आवश्यकमिति, इदमपि सम्भावनामात्रेण' इति पाठः । नन्वेवं धीवर्यादेरप्यनभिधानापत्तिरतो वार्त्तिकमते आह— **धीवरीति** । आदिना 'धी'रित्यादि । वार्त्तिकपाठे तथा वार्त्तिकानुपलम्भादाह—**ध्याप्योरिति** । चेनोभयसङ्ग्रहः । तत्राद्ये मानमाह—**जनेति** । द्वितीये तदाह-**घुमेति** । तत्राद्ये 'इयङादेशेऽसिद्धत्वे 'धियौ-धियः-पियौ-पियः' इत्यत्र दोषं दत्वा,-'नैतदीत्त्वं, किन्तर्हि ? ध्याप्योः सम्प्रसारणमेत'दित्युक्तम् । द्वितीये-'यावान' इत्यादिसिद्ध्यर्थमवकारादाविति वार्त्तिकस्वीकारे 'कथं धीवरी-पीवरी' ? इति प्रश्ने 'नैत'-दित्याद्युक्तम् । **सूत्रभाष्येति** । सूत्रयोर्भाष्ययोरित्यर्थः । वार्त्तिकात्=ध्याप्योः सम्प्रसारणञ्चे'त्यतः ।

नन्वेवं धीवरीत्यादिसिद्धावपि तद्भाष्यात्ततस्तदनभिधाने भाष्यान्तरविरोध एवात आह-**धीरिति** । **वार्त्तिकस्थेति** । तदग्रिमस्थ-'ध्यायतेः सम्प्रसारणञ्चे'ति वार्त्तिकस्येत्यर्थः । भाष्ये तथैव सत्त्वात् । अत एवोद्योतशब्दरत्नाविरोधोपि । **एकदेशिन इति** । तद्भाष्यस्य ततस्तदनभिधानाशयकत्वस्य सिद्धान्तत्ववादिमते क्विप एव ततोऽभावात्तदुक्तिस्तत्सिद्धान्तानभिज्ञस्येत्यर्थः । नन्वेवमपि तत्र 'स्थः क चे'ति-सूत्रस्थभाष्यविरोध एवात आह—**शंस्था इति** । तत्रत्यक्विप्पदं विच्परमिति भावः । 'अम्बाम्बे'ति सूत्रस्थे 'सव्येष्ठा' इत्यत्राप्येवं बोध्यम् । एतेन-'स्थः क चे'त्यत्र 'चात्क्वि'बिति **कौमुदी**, 'भाष्यप्रयोगादेवेत्त्वाभाव' इति **कैयट-हरदत्ता**द्युक्तिश्चापास्ता । एवञ्च तथा मूलाशयं सन्दूष्य **मान्योक्तं** मूलाशयमाह—**मीङ्मान इति** । [वस्तुतस्तु[1] 'सोमंनसी'ति स्वरस्येष्टानिष्टप्रवृत्तिनिवृत्त्योरन्यथा दुष्करयोः सिद्ध्यर्थं प्रत्ययलक्षणसूत्रस्य नियमार्थत्वावश्यकत्वेन साहचर्याऽनित्यत्वज्ञापने प्रकृतेऽपि फलाभावेन 'जीर्यतेर्वा ज'रितिपक्षे दृशिग्रहण-समुच्चेयापूर्वाऽत्ववद्धातेर्वा धीरितिभाष्यस्य तथाऽपूर्वेत्त्वाशयकत्वेन हलीत्यस्यानजादिपरकत्वे मानाभावेन व्याश्रयत्वाद्वार्णादाङ्गमित्यस्याप्रवृत्त्याऽन्तरङ्गत्वादपृक्तलोपे उभयोरप्राप्त्याऽऽदन्तेभ्यः क्विपि'घुमे'तीत्त्वं नैवेति-तत्सूत्रभाष्योपपत्त्या ततस्तदनभिधानस्य निर्मूलत्वम् । अत एव वार्त्तिकपक्षे 'कथं धीवरी'त्याद्युक्तिवत् 'कथं धी'रित्यादिनोक्तं, प्रत्याख्यानपक्षे कथं शंस्था इति विच्तत्र न क्विबिति नोक्तम् । अत एव 'स्थः कचे'ति सूत्र-भाष्यमप्याञ्जस्येनोपपद्यते। एवं 'दधातेर्वे'त्युक्तिरपि भाष्ये सिद्धान्तिन एव। किञ्च तत्र तथानुक्त्वा ङित्साहचर्येण श्रूयमाणे एव क्तिरीत्त्वप्रवृत्तिरित्येत्सूत्रभाष्याभिमतम्। एवञ्च शंस्था इत्यादौ ईत्वशङ्कैव न । उक्तञ्चैतत् स्पष्टं **दीक्षितमा**[3]**न्याभ्याम्** । तस्मात्प्रत्याख्यान पक्ष एव भगवत्संमतः । एवञ्च कैयटहरदत्ताद्युक्तमयुक्तमेव । अत एव नोद्योतादिविरोधोपि । एवं **मान्योक्ताशयो**प्ययुक्तः, हिंसार्थकस्य मीङो मानार्थकत्वे मानाभावात् , अत एव घुमेत्यत्र तद्ग्रहणं सफलम् । **आहु**रित्युक्त्या **मान्यै**रपि तत्रेयमरुचिर्ध्वनितेति च बोध्यम् । तदेतदरुचिद्वयं ध्वनयंस्तत्राह—**एकदेशिन इति** । ]

१ [ ] एतदन्तर्गतोऽयं पाठः सर्वत्र नोपलभ्यते, विसंष्ठुलश्चेति । २. ईत्त्वात्त्वयोः । ३. मान्यः=बृहच्छब्दरत्नकृत्-हरिदीक्षितः ।

'शंस्थाः' इत्यत्र विजेवेति न दोषः ।

❀ अभिनव-चन्द्रिका ❀

भाष्यमते च न फलभेद इत्याहुः । **एकदेशिन इति** । नेयमेकदेश्युक्तिरिति पूर्वमेवावोचाम ।

❀ ज्योत्स्ना ❀

सूत्रेऽस्याप्यतोरुपस्थितिसामर्थ्यात्सौ न'त्यदादीनाम'इत्यस्य प्राप्तिरिति शङ्का स्यादतो'भवन्ता'-वित्युक्तमित्याशयो वक्तुं शक्यः । **अनभिधानादिति** । अत्र यद्वक्तव्यन्तदन्यत्रोक्तम् ।

**ईदृशेभ्य इति** । आदन्तेभ्य इत्यर्थः । **क्विपोऽनभिधानमिति** । वस्तुतस्तु प्रत्ययलक्षणसूत्रस्य-नियमार्थत्वपक्षे क्विपोऽन्तरङ्गत्वादपृक्तलोपेऽल्विधित्वात्प्रत्ययलक्षणाभावादीत्वप्राप्तेरभावाच्च तदर्थ-मीत्वमवकारादाविति वार्त्तिकम्, अपि तु 'यावान' इत्यादौ क्वनिपीत्वाभावार्थवार्त्तिकमारब्धम्, अत एव भाष्यकृता 'यावान' इत्यादेर्वनिपा साधनेन तत्प्रत्याख्यातम् । एवञ्चारम्भप्रत्याख्यानयोः फलैक्यायाऽऽदन्तेभ्यः क्वनिप एवानभिधानं कल्पनीयं, न क्विपोऽपि, तस्माद्विश्वपावद्वातप्रमाशब्दः क्विबन्तो विजन्तो वा [अतो नाऽ–]नभिधानमर्हति, प्रमाणाभावादिति चिन्त्यमेतत् । 'क्विबन्तवातप्रमीशब्दस्ये'ति मूलमूलन्तु ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्त्तरि क्विबित्य-भिप्रायकमित्याहुः । **इति न दोष इति** । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वपक्षे क्विप्यपि न

❀ सदाशिवभट्टीयम् ❀

इत्येव त्रिरुक्तेः । **आवश्यकमितीति** । 'इदमपि सम्भावनामात्रेणे'ति शेषः । अत्र पक्षचतुष्टयमुपलभ्यते, तत्रावकारे प्रतिषेध इति वार्तिकारम्भ एव ज्यायान्, अन्यथा शंस्थाशब्दे प्रत्ययलक्षणेनातृणेडित्यत्रेवेत्त्वापत्ते-रित्येकः । प्रत्याख्यानमेकदेश्युक्तिरिति प्रत्ययलक्षणसूत्रञ्च वार्तिकानारम्भे प्रकृतेऽनिष्टत्वसिद्ध्यर्थमेव स्याद्यथोत्तरं मुनीनां प्रामाण्याच्च । क्विपीत्त्वं भवत्येव, इलीत्यस्यानचीत्यर्थकत्वात्, शंस्थाशब्दे विजेव, भाष्य-प्रयोगादीत्त्वाभाव इति **द्वितीयः** । वार्तिकमनारम्भणीयम्, अनल्विधाविति प्रत्ययलक्षणसूत्रेऽनुवर्तनीयमिति क्विपीत्त्वं नैव प्राप्नोति, दधातेर्व्वेति त्वेकदेश्युक्तिरेव । यत्तु दृशिग्रहणादपूर्व्वत्वाशयकत्वं तस्य, जीर्य्यते-र्य्युरित्यस्येवेत्याहुरिति तन्न सम्यक्; एवमपि जनसनेति सूत्रे थियौ थिय इत्यत्रेयङ्गीत्त्वस्यामीयासिद्धत्वन्तु न भवति; 'क्विपीत्त्वं, विभक्ताविय'ङिति व्याश्रयत्वादिति भाष्योक्तेरसङ्गत्यापत्तेरिति **तृतीयः** । ईत्वविषये क्विबेव नेति **चतुर्थः** । तस्यायं भावः–एवं सति वार्तिककारम्भप्रत्याख्यानयोः फलैक्यं संपद्यते, अनल्विधा-वित्यस्य स्वरितत्वप्रतिज्ञां मण्डूकानुवृत्तिं विनैव प्रत्ययलक्षणसूत्रे नियमार्थत्वञ्च । शंस्थाशब्दे च क्विपमङ्गीकृत्य वार्तिकारम्भावश्यकत्वकल्पनां भाष्यकारप्रयोगादीत्वाभावकल्पनञ्चापेक्ष्य'स्थः कचे' ति सूत्रक्लृप्तस्वरितत्व-प्रतिज्ञाकं विच्पदमेवानुवर्तते, नाक्लृप्तस्वरितत्वप्रतिज्ञाकं क्विप्पदमपि,–इयमेव कल्पना युक्ता । तत्र भाष्ये क्विप्पदन्तु वार्तिकानुसारिण इति । युक्तश्चायं क्विब्विधायके दृशिग्रहणेन कित्त्वप्रयुक्तकार्य्यादर्शने स न-दृश्यते इत्यस्यैव युक्तत्वादिति बोध्यम् । स्पष्टञ्चेदं सर्व्वं 'ग्रुमेति' सूत्रे भाष्यप्रदीपोद्योतेषु इति दिक् ।

**पर्यालोचनया सिद्धादिति** । इदं क्वनिबर्थं पाधात्वर्थञ्चोक्तं, शेषन्तु वार्तिकं, शेषे उपलभ्यत एवेति

❀ विषमपदविवृतिः ❀

अपरे तु–इदं जातिपक्षे, व्यक्तिपक्षे त्वलसन्तस्येति सूत्रेऽस्याप्यतोरुपस्थितिसामर्थ्यात्सौ न 'त्यदा-दीनाम' इत्यस्य प्राप्तिरिति शङ्का स्यात्, अतो भवन्ताविव्यपास्तमित्याहुः । **इति इदन्ताः** ।

**ईदन्तेभ्य इति** । वातप्रपूर्वान्माधातोः क्विपोऽनभिधानमित्यर्थः । वातप्रमीशब्दाचारक्विबन्तात् कर्त्तरि क्विबित्यन्ये ।

मीङ्—माने इतीकारान्तात् क्विबित्येके ।

वातप्रमीः—निःशृङ्गो मृगाकृतिर्जन्तुविशेषः ।

**बहुश्रेयसीति** । 'इयसो बहुव्रीहेर्ने'ति निषेधान्नोपसर्जनह्रस्वः ।

**यू स्त्र्या** । दीर्घयोरेव ग्रहणं—व्याख्यानात् । 'वा छन्दसी' ति पूर्वसवर्णदीर्घः । यू किं? मात्रे ।—'आण्नद्या'इति न । स्त्रियमाचक्षाते—स्त्र्याख्यौ ; मूलविभुजादित्वात्कः ।

'स्त्र्याख्या'वित्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरित्याह—**ईदूदन्ताविति** । 'आच्छीनद्यो'रित्यादौ नदीशब्दस्य तदवयवे लक्षणा बोद्ध्या ।

आख्याग्रहणान्नित्यत्वलाभस्तदाह—**नित्यस्त्रीलिङ्गाविति** । तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः ।

नित्यस्त्रीत्वञ्च—प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशिष्टार्थानभिधायकत्वम् ।

---

❀ अभिनव-चन्द्रिका ❀

**नित्यस्त्रीत्वञ्चेति** । तत्त्वञ्च–प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् ,प्रवृत्तिनिमित्तवैशिष्ट्यञ्च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व' 'स्वावच्छिन्न-

❀ चिदस्थिमाला ❀

एवञ्च मूलं चिन्त्यमेव । एतेन शाब्दिदण्ड्याद्युक्तमपास्तं वेदितव्यमिति स्पष्टं भावप्रकाशे, तदेतद्ध्वनयंस्तदर्थमाह—**वातेति** । **व्याख्येति** । लक्ष्यदर्शनमूलकतत्परिभाषासञ्चारेणेत्यर्थः । नन्वेव 'दीर्घाज्जसी'ति निषेधापत्तिरत आह—**वाच्छन्देति** । कर्मण्यणो बाधकमाह—**मूलेति** । विशिष्टपाठे इति भावः । यथाचैतत्तथा प्रतिपादितमादौ भावप्रकाशे । अत्र वर्णसञ्ज्ञापक्षो न युक्तः, तन्व्यादौ तस्य तदवाचकत्वात्, द्योतकतापक्षस्य सिद्धान्तत्वे गौर्यादावपि तथैव सत्त्वात्, तस्यान्यार्थत्वे लक्षणापत्तेः, अस्त्रीत्यत्र तदापत्तेश्च, तदेतद्ध्वनयन्नाह—**स्त्र्याख्याविताति** । नद्यन्तादिति तु अतिलक्ष्म्याद्यर्थमावश्यकं, केवले तु व्यपदेशिवद्भावेन तत्त्वम् । नन्वेवमाच्छीनद्योरिदौ दोषोऽत आह—**आच्छीति** । स्त्रियामित्येव वाच्ये आह—

❀ ज्योत्स्ना ❀

दोष इति बोध्यम् । **इत्येक इति** । अत्र पक्षे 'क्विबन्तवातप्रमीशब्दस्ये'ति मूले मीङ्प्रकृतिक क्विबन्तवातप्रमीशब्दस्येत्यर्थो बोध्यः ।

❀ सदाशिवभट्टीयम् ❀

बोध्यम् । **ह्रस्व इति** । कप्चनेति शेषः । **यूस्त्र्याख्यौ नदी** । **तदवयवे लक्षणेति** । शत्रन्तस्याङ्गसञ्ज्ञानिमित्तभूते नद्यवयवे इत्यर्थः । तेन 'तुदन् गौरी'त्यत्र न दोषः । नचैवमपि शत्रन्तान्मतुपि च 'तुदद्वती'-त्यत्र दोष एव, मतुपस्तदङ्गसञ्ज्ञानिमित्तत्वान्नद्यवयवत्वाच्च, नचेष्टापत्तिः, वर्णसञ्ज्ञापक्षेऽप्राप्तेरिति चेन्न, शीसाहचर्य्येणेकारप्रश्लेषेण वा ईकाररूपे नद्यवयवे इत्यर्थाङ्गीकारात् । नन्वेवमपि तुदते हितं तुदतीयम्, तमतति तुदतीयात्,तमाचष्टइति णिचि क्विपि टिलोपे यलोपे तुदती: 'ततोम तुपि ङीपि, तुदतीमती'त्यत्र दोष एवेति चेन्न, वर्णसञ्ज्ञापक्षेऽपि तत्र प्राप्त्या इष्टापत्तेः । अत एव 'शीङ्यो'रिति नासूत्रि । यदि तत्र नुमोऽनिष्टत्वे मानमुपलभ्यते, तदा चरमावयवे लक्षणेति बोध्यम् । **आख्याग्रहणादिति** । क्विप्पक्षे इदं, कपक्षे तु ख्यग्रहणेति युक्तम् । **अनभिधायकत्वेति** । येन प्रवृत्तिनिमित्तेन लिङ्गान्तरावैशिष्ट्येन स्वेनार्थो-

❀ विषमपदविवृतिः ❀

**वाच्छन्दसीति** । **मूलविभुजादिभ्य इति** । 'आतोनुपसर्गे क' इत्यनेन तु न, उपसर्गत्वात् । अत एव—

यस्मिन्दशसहस्राणि पुत्रे जाते गवां ददौ । ब्राह्मणेभ्यः क्रियाख्येभ्यः सोयमुञ्छेन जीवति॥'

—इति सिद्धम् ।

ङयन्तकुमार्यादीनां क्यचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय—'प्रवृत्तिनिमित्तैक्ये' इति ।

नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यादत आह—**प्रथमेति** । अर्थान्तरसङ्क्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसङ्क्रमेऽपि नदीत्वं वक्तव्यमित्यर्थः । यथोद्देशे पूर्वप्रवृत्तसञ्ज्ञामादायैव कार्यम् ।

ॐ अभिनव-चन्द्रिका ॐ

विशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोजकत्वे'तन्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यञ्च—'स्वपर्याप्त्यधिकरणत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यीयविषयतापर्याप्त्यधिकरणत्वे'तदुभयसम्बन्धेन । तात्पर्यविशेष्यतावैशिष्ट्यञ्च—'स्वावच्छेदकतद्व्यक्तित्वव्यापकानुपूर्वीव्याप्यधर्मावच्छिन्नत्व''स्वसमानाधिकरण्यो भयसम्बन्धेन ।

प्रवृत्तिनिमित्तवैशिष्ट्यघटकप्रथमसम्बन्धोपादानेन—'सेनानी'शब्दस्य न नित्यस्त्रीत्वम्, अन्यथा सेनात्वरूपप्रवृत्तिनिमित्तमादाय स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य, स्वावच्छिन्नविशेष्यतानिरूपित-स्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषस्य दुरुद्धरत्वं स्यात् । प्रथमसम्बन्धोपादाने तु—सेनात्वावच्छिन्नमुख्यविशेष्यता प्रयोजकत्वस्य सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तावभावान्न दोषः ।

द्वितीयसम्बन्धोपादानेन—जिह्रेतीति ह्रारित्यादौ धातुवाच्यतावच्छेदकमाध्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः । अन्यथा साध्यत्वस्य कस्यापि लिङ्गस्यान्वयितानवच्छेदकतया स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नमुख्यविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाऽप्रयोजकत्वस्य च साध्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुरुद्धरः स्यात् ।

तृतीयसम्बन्धोपादानेन—स्त्रीलिङ्गविषयकतात्पर्येणोच्चरित—सेनानी—शब्दे एव सेनाकर्मकनयनकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः, अन्यथा-सेनाकर्मकनयनकर्तृत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्वाद्दोषो दुरुद्धरः स्यात्[1] ।

शक्तिवैशिष्ट्यघटकप्रथमसम्बन्धानुपादाने—सेनानीशब्द एव सेनात्वरूपप्रवृत्तिनिमित्तमादाय'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य','स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य'-'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाऽप्रयोजकत्वस्य'च सेनात्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन तज्ज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्य सेनानीशब्दे सत्त्वाद्दोषो दुर्वारः स्यात् ।

शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानेन—वात्स्या आयः—वात्स्यायः, वात्स्यायं नयतीति—'वात्स्यायनी'त्यादौ वात्सीसम्बन्ध्यायकर्मकनयनकर्तृत्वावच्छिन्नविषयकबोधनात्पर्येणोच्चरिते वात्सीसम्बन्धियुवापत्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः ।

अन्यथा स्त्रीत्वविशिष्टवत्सयुवापत्यत्वरूपप्रवृत्तिनिमित्तस्य—'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य, 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारत्वाप्रयोजकत्वस्य' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वाभावस्य' च स्त्रीत्वविशिष्टवत्सयुवापत्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन तादृशशक्तिपर्याप्त्यधिकरणत्वस्य निरुक्तवात्स्यायनीशब्दे सत्त्वादोषो दुर्वारः स्यात् ।

बोधजनकप्रकारकतात्पर्यविशेष्यतावैशिष्ट्यदानेन बोधविषयत्वादिप्रकारकतात्पर्येणोच्चरितस्थले न दोष इति दिक् । **लिङ्गान्तरविशिष्टानभिधायकत्वमिति** । 'यत्प्रवृत्तिनिमित्तं

ॐ सदाशिवभट्टीयम् ॐ

भिधीयते यत्प्रकारकबोधजननेच्छयोच्चरितं तत्त्वं यदा स्वस्य तदा नित्यस्त्रीत्वमिति यावद्, यस्य नदीसञ्ज्ञा चिकीर्षिता स स्वपदार्थ इति बोध्यम् ।

१ तृतीयसम्बन्धोपादाने तु तत्र न दोषः, तादृशविशेष्यतानिरूपितस्त्रीत्वेतरपुंनपुंनसकालिङ्गनिष्ठप्रकारताप्रयोजकत्वस्यैव सेनानीशब्दे सत्त्वात् । सेनानीशब्दस्य त्रिलिङ्गत्वादित्याशयः ।

कार्यकालपक्षेऽपि 'कुमारी'त्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा । समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः । तन्मात्रबोधकत्वनिवेशे, प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम् ।

तदुक्तं भाष्ये—'अवयवस्त्रीविषयत्वात्सिद्धम्, अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यती'ति ।

"आकडारस्थसञ्ज्ञानां कार्यकालत्वाभावात् । अन्यथा तत्तद्विध्येकवाक्यत्वापन्नयोः कथं बाध्यबाधकभावः स्यादिति बोध्यम्—" इत्यपि—केचित् ।

❀ अभिनव-चन्द्रिका ❀

स्त्रीत्वस्यान्वयितावच्छेदकं तदेव प्रवृत्तिनिमित्त स्त्रीत्वेतरलिङ्गस्यान्वयितावच्छेदकं भवति तद्रूपविशिष्टानभिधायकत्वमित्यर्थः । अर्थात्—स्त्रीत्वान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गान्वयितानवच्छेदकञ्च यत्प्रवृत्तिनिमित्तं तादृशप्रवृत्तिनिमित्तविशिष्टार्थाभिधायकत्वमिति फलति । **स्त्रीविषय इति** । स्त्रीविषय

❀ चिदस्थिमाला ❀

**आख्येति** । एवम्=उक्तनित्यस्त्रीत्वाङ्गीकारे—तस्यातत्त्वात् । पक्षद्वयेऽपीदं न्यायसिद्धमित्याह—**यथोद्देश इति** । समासे तु बहुश्रेयसीत्यादिषु तु भविष्यतीति कार्यवेलायामपि भविष्यतीत्यर्थः । तेन यथोद्देशे इदमिति कैयटोक्तमपास्तं, तथाहि सति नदीसञ्ज्ञास्त्रीत्वेवं वदेत् । अवयवशब्देनात्र वृत्तिप्रकृतिभूतशब्दग्रहणम्, अत एव क्यजाद्यन्ते न दोषः,तत्रापीच्छादिविशेषणतया कुमारीशब्दादेर्नित्यस्त्रीलिङ्गार्थबोधकत्वादित्युपपादितमेव । एतेन—यथोद्देशे न्यायसिद्धमिदं, कार्यकाले तु वाचनिकमिदमिति सकलग्रन्थकारोक्तमपास्तम् ।

**कालत्वाभावादिति** । 'दोषाप्रसङ्ग एवे'ति शेषः । अन्यथा=तासां तत्त्वाङ्गीकारे । 'यत' इत्यादि । पन्नयोः=सञ्ज्ञयोः । केचिदित्यरुचिबीजन्तु अत्र तत्त्वाभावे भविष्यतीत्युक्तभाष्यविरोधः, तासामतत्त्वन्तु यत्र सञ्ज्ञाद्वयमुद्देशतः प्राप्तं तद्विषयमिति न तद्विरोध—इति ।

भाष्ये स्पष्टमित्येनेन तस्या अदोषत्वमत्रसूचितम् । यत्तु तद्धीत्याऽन्यथा शास्त्रिदण्ड्यादिभिरुक्तं तत्खण्डयति-

❀ ज्योत्स्ना ❀

**प्राधान्येन तद्बोधकत्वनिवेशे तु न मानमिति** । एवमग्न्यादिशब्दानामाचारक्विप्प्रकृतिककर्तृक्विबन्तानांस्त्रियां वृत्तौ 'तस्माच्छसो नः पुंसी'त्यादिना नत्वाद्यापत्तिः,तथा शकट्यादिस्त्रीलिङ्गशब्दामुक्तरीत्या पुंवृत्तावाङो नाभावाद्यनापत्तिः, अस्त्रियामिति निषेधादिति चिन्त्यमेतत् । **कार्यकालत्वाभावादिति** । कार्यकालपक्षे हि सञ्ज्ञाकार्याणां प्रायेणाङ्गत्वात्तत्प्रवृत्तिकालेऽर्थान्तरोपसङ्क्रान्तस्य स्त्र्याख्यत्वाभावात्सञ्ज्ञा न प्राप्नुयात्, नत्वाकडारस्थसञ्ज्ञानां कार्यकालत्वमस्तीति—यथोद्देशपक्षेऽन्तरङ्गत्वाद्भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानमात्रेणार्थान्तरोपसङ्क्रमात्पूर्वं सञ्ज्ञा प्रवर्त्तत एवेत्यवयवस्त्रीविषयत्वात्सिद्धमिति यथोद्देशपक्षाभिप्रायमेवेति भावः । **अन्यथेति** । कार्यकालपक्षे । **कथं बाध्यबाधकभाव इति** । तत्पक्षे सञ्ज्ञानां विधिप्रदेशगतत्वेनैकदेशस्थत्वात्परत्वाभावाद्बाध्यबाधकभावानापत्तिरिति भावः । **केचिदिति** । सञ्ज्ञयोः कार्यार्थमन्यदेशगमनेऽपि न स्वदेशीयत्वव्यवहारत्यागः, व्यवहारार्थं तत्तद्देशगतानां व्यवहर्तॄणामिवेतीहास्वरसः । अत्र यद्वक्तव्यं

❀ विषमपदविवृति ❀

**प्राधान्येन तद्बोधकत्वनिवेशे इति** । नन्वेवं कुमारी—वर्षाभू—शब्दे नदीसञ्ज्ञा दुर्वारा, विशेषणतया नित्यस्त्रीलिङ्गार्थबोधकत्वादिति चेत्सत्यम्; 'अवयवस्त्रीविषयत्वात्सिद्ध'मिति वार्तिकस्य यथोद्देशपक्षाभिप्रायेण प्रवृत्तेः । तथाचावयवस्त्रीविषयत्वात्सिद्धमिति भाष्यमुपादाय कैयटेनोक्तम्,—अन्तरङ्गत्वात्पूर्वमेव स्त्र्याख्यत्वात्प्रवृत्ता नदीसञ्ज्ञा पश्चादुपजायमाने लिङ्गान्तरयोगे न निवर्तते इति । **आकडारस्थेत्यारभ्य- केषाञ्चिन्मतम्** । 'कार्यकालत्वाभावा'दित्युत्तरम्-'अवयवस्त्रीविषयत्वात्सिद्धमित्येतद्यथोद्देशपक्षाभिप्रायकमेवे'तिशेषः । **कथमिति** । पौर्वापर्याद्यभावादिति शेषः ।

हे **बहुश्रेयसीति** । ह्रस्वे कृते गुणस्तु न । प्रक्रियालाघवाय 'अम्बार्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुण' इत्येव वाच्ये-ह्रस्वविधानसामर्थ्यात् । 'जसि चे'त्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम् ।

अम्बार्थानामपि गुणस्तु वक्तुमशक्यः, 'अनः क्लीबं जले शोके मातृस्यन्दनयोरपी'ति रभसाद्युक्ताऽनःशब्दस्याम्बार्थत्वेन गुणापत्तेः । ह्रस्वग्रहणे तु-'अचः' इत्युपस्थित्याऽजन्ताम्बार्थग्रहणान्न दोषः । तस्य नपुंसकत्वेऽपि 'हे वारे' इतिवत्पक्षे गुणः स्यादेव । गुणश्रुत्येक्परिभाषोपस्थितौ त्वम्बेत्यादावप्यनापत्तिः । अयं ह्रस्वः-'अनन्तरस्ये'ति न्यायात्-'ह्रस्वस्य गुण' इत्यस्यैव बाधकः । तेन मातरित्यत्र 'ऋतो ङी'ति गुणो भवत्येवेति दिक् ।

**आटश्च** । 'न माङ्योगे' इतिसूत्रस्थभाष्योक्ते-'अटश्चे'ति न्यासे तु-'वृद्धिरेची'ति

ॐ अभिनव-चन्द्रिका ॐ

लश्च पूर्वोक्तमेव बोध्यम् । **गुणापत्तेरिति** । 'हे जनयित्रि ! हे प्रभु' इत्यादौ गुणापत्तिर्बोध्या ।

ॐ चिदस्थिमाला ॐ

**अम्बार्थानामिति** । आदिना विश्वादि । ननु सोर्लुका लुप्तत्वात्तत्रापि न दोषोऽत आह-**तस्येति** ।

नन्वेवमपीगुपस्थित्या न दोषोऽत आह—**गुणेति** । ननूक्तरीत्या ह्रस्वस्य गुणबाधकत्वे मातरित्यादौ दोषोऽत आह—**अयमिति** । उक्तज्ञापकस्य विशेषापेक्षत्वे तु दोष एव न, तदाह—**दिगिति** । इह सूत्ररीत्या आटश्चेत्यस्योपन्यासो न भाष्यरीत्येति सूचयन्नाह—**नमाङ्योगे इति** । एतेन परत्वेन न्याय्यत्वा-

ॐ ज्योत्स्ना ॐ

तत्परिभाषाप्रदीपार्चिष्युक्तम् । **भाष्ये स्पष्टमिति** ।-''सङ्ख्याव्ययादेर्ङीबि'त्यतो 'दामहायनान्ताच्चे'त्यत्र 'सङ्ख्यादे'रित्यनुवर्त्ततेऽव्ययग्रहणं निवृत्तम्-''इति भाष्योक्तेः समासनिर्दिष्टानामप्येकदेशानुवृत्तेर्भाष्यकृदभिप्रेतत्वादिति भावः। 'ह्रस्वस्य गुण' इति भाष्ये त्वभ्युपगम्यैकदेशानुवृत्त्यभावम्-'अम्बार्थनद्योर्ह्रस्व' इत्यनन्तरं 'ह्रस्वस्ये'ति तदुत्तरन्यासस्य तु (?) योगं विभज्य अम्बार्थनद्योर्गुणबाधनार्थं पुनर्ह्रस्वं विधाय 'गुण' इति तृतीयसूत्रे 'ह्रस्वस्ये'त्यनुवर्त्तत इत्येवं परिहृतम् । **वक्तुमशक्य इति** । अम्बार्थनद्योर्गुण इति न्यासेनेत्यर्थः । तथा न्यासे हि 'ह्रस्वस्ये'ति तदुत्तरन्यासस्य 'जसि चे' त्यत्रानुवृत्तौ क्लेशाभाव इति लाघवमपि भवति ।

नन्वनःशब्दस्य नपुंसकत्वात्सोर्लुकि सम्बुद्धिपरत्वाभावाद्गुणो न प्राप्नोतीत आह—**तस्येति** । **पक्षे इति** । 'न लुमते'ति निषेधस्यानित्यत्वात्तदप्रवृत्तिपक्ष इत्यर्थः । चिन्त्यमेतत्—अनित्यस्थले लक्ष्यैकचक्षुष्कताया आवश्यकत्वेनात्र 'न लुमताङ्गस्ये'त्यस्याप्रवृत्तौ बीजाभावात्, नदीसाहचर्यात्स्त्रीलिङ्गस्यैवाम्बार्थस्य ग्रहणादनःशब्दे गुणप्राप्तेरभावाच्चेति—मौनिश्रीकृष्णभट्टाः । तत्रेदं वक्तव्यम् ,—इत एवापरितोषाद्युक्त्यन्तरेण

ॐ विषमपदविवृतिः ॐ

**भाष्ये स्पष्टमिति** । वस्तुतो नैवं भाष्यकृतोक्तं, किन्त्वम्बार्थानां ह्रस्वः । नदीह्रस्वयोर्न्यासे जसि चेति नद्या अपि गुणः प्राप्नोतीत्याशङ्क्यैवं तर्हि योगविभागः करिष्यते, ततो 'ह्रस्व' 'अम्बार्थनद्यो'रिति वर्त्तते । अनयोर्ह्रस्वस्य ह्रस्वो भवति, किमर्थमिदं, गुण' इत्यत्राम्बार्थनद्योर्ह्रस्व इत्यतदनुवर्त्तते इत्युक्तम्। **वक्तुमशक्य इति** । 'अम्बार्थनद्योर्गुण' इति न्यासेनेत्यर्थः । **गुणः स्यादेवेति**। अनित्यस्थले लक्ष्यैकचक्षुष्कताया आवश्यकत्वेन 'न लुमताङ्गस्ये'त्यस्याप्रवृत्तौ बीजाभावान्नदीसाहचर्यात्स्त्रीलिङ्गस्यैवाम्बार्थस्य ग्रहणादनःशब्दे गुणप्राप्तेरभावाच्चेति मौनिश्रीकृष्णभट्टाः । **अयं ह्रस्व**

बोध्यम् । अत्र अट् तु नुकुमशक्यः, अस्वपोऽहसन्नित्यत्र वृद्धिवारणाय 'आटश्चे'त्यत्र धातावित्यपकर्षेण वृद्ध्यनापत्तेः । 'वृद्धिरेची'त्यस्य तु पररूपं बाधकमिति बोध्यम् । ङेरिति सतन्येकवचनं व्याख्यानात् ।

इह परत्वादिति । सकृद्गतिन्यायाश्रयणादिति भावः । स्पष्टश्चेदं 'ह्रस्वनद्याप' यत्र भाष्ये । यद्यपीह आडपवादो नद्याम्, सर्वथाऽनवकाशत्वात् । 'अपवादो न्दीर्घत्वस्ये'ति 'दीर्घोऽकित' इतिसूत्रभाष्ये उक्तत्वेनाऽऽगमामादेशयोरपि तत्त्वसत्त्वात्,

ॐ अभिनव-चन्द्रिका ॐ

बोध्यमिति । न चाऽड्विधानसामर्थ्यादेव पररूपं न भवतीति आड्विधानं व्यर्थमिति वाच्यं, बहुश्रेयस्यामित्यादौ नुड्बाधेन अड्विधानस्य चारितार्थ्यात् । नचैवमपि अस्वपोऽहसन्नित्यादावुत्वस्य बहिरङ्गासिद्धत्वेन अटश्चेति न्यासेऽपि वृद्धिर्न प्राप्नोतीति तत्र धाताविलस्यापकर्षो व्यर्थ इति वाच्यम्, 'नाजानन्तर्ये'इति निषेधात्-'अन्तरङ्गपरिभाषाया अप्रवृत्तेरिति दिक् । सकृद्गतिन्यायाश्रयणादिति । एतेन यत्र परशास्त्राप्रवृत्तौ पूर्वशास्त्राप्रवृत्तिप्रयोज्यं परशास्त्राप्रवृत्तिर्वैयर्थ्यं तत्र 'सकृद्गति'-न्यायः, न्यत्र 'पुनःप्रसङ्गविज्ञान'न्याय इत्यपास्तम् । बहुश्रेयस्यामित्यादौ परशास्त्र-आण्नद्या इति

ॐ चिदस्थिमाला ॐ

दुपन्यास इति परोक्तमपास्तम् । नन्वनेन मास्तु,'वृद्धिरेची'त्यनेन भविष्यत्यत आह-वृद्धिरिति । व्याख्येति । 'व्यवस्थाया'मित्यादिनिर्देशमूलकात्तत इत्यर्थः । 'येन ने'तिन्यायविषयत्वमाह-सर्वथेति । नन्वागमादेशयोरविरोधात्कथं तत्त्वमत आह—अपवाद इति ।

अनवेति । सर्वथेत्यादिः । अयम्भावः—अत्र विषये तस्य पूर्वं प्रवृत्तिरित्येवापरबाधः

ॐ ज्योत्स्ना ॐ

दूषयति—गुणश्रुत्येक्यपरिभाषोपस्थितौ त्वित्यादीति । इदमपि चिन्त्यम्, अम्बार्थनद्योः क्रमात्सम्भवव्यभिचाराभावेनैकपदोपस्थितेरभावेन दोषाभावादिति मौनिश्रीकृष्णभट्टाः । अयं ह्रस्व इति । विधानसामर्थ्यलभ्यो, 'ह्रस्वस्ये'ति भाष्योक्तयोगविभागलभ्यो वा ह्रस्व इत्यर्थः ।

वृद्धिवारणायेति । नचान्तरङ्गायां वृद्धौ बहिरङ्गस्योत्त्वस्यासिद्धत्वादच्परत्वाभावः, 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्ति'रिति निषेधादिति भावः । इति बोध्यमिति । नचाऽड्विधानसामर्थ्यं, ङेरामि नुड्बाधनार्थं चरितार्थत्वात् । एवन्तु 'ह्रस्वनद्यापो नु'डित्यस्यानन्तरं 'ङेर्ने'त्येव ब्रूयादिति चिन्त्यमिति मौनिश्रीकृष्णभट्टास्तन्न, 'षट्चतुर्भ्यश्चे'त्याद्युत्तरसूत्रेषु नेत्यस्यानुवृत्तिप्रसङ्गात्, विधिप्रकरणसमाप्त्यनन्तरं तत्करणे तु 'श्रीग्रामण्योश्छन्दसी'त्यतश्छन्दसीत्यस्यापि तत्रानुवृत्तिप्रसङ्गादिति यत्किञ्चिदेतत् । सर्वथाऽनवकाशत्वादिति । न च वचनसामर्थ्यादाड्व्यवधाने प्रवृत्त्या सावकाश आमिति वाच्यं, समानफलकत्वाभावेऽपि विरोधमात्रेण बाध्यबाधकभावस्य—'अग्राश्रि

ॐ विषमपदविवृतिः ॐ

इति । विधानसामर्थ्यलभ्यो भाष्योक्तयोगविभागलभ्यो वा ह्रस्व इत्यर्थः । वृद्धिवारणायेति । न चान्तरङ्गायां वृद्धौ बहिरङ्गस्योत्वस्यासिद्धत्वं, नाजानन्तर्य इति निषेधात् । पररूपं बाधकमिति । न चाड्विधानसामर्थ्यं, ङेरामि नुड्बाधनार्थं चरितार्थत्वात् । यत्त्वेवं सति—'ह्रस्वनद्यापो नुडि'-त्यस्यानन्तरं 'ङेर्ने'त्येव ब्रूयादिति मौनिश्रीकृष्णभट्टाः, तन्न; 'षट्त्रिचतुर्भ्यश्चे'त्युत्तरसूत्रेषु 'ने'त्यस्यानुवृत्तिप्रसङ्गात् । ननु ह्रस्वनद्याप इति सूत्रे आङेरिति पाठ्यम् । अथवा-ङेराम्-उकारानुबन्धविशिष्टः कार्यः, तथाचैवं लघुन्यासेन सिद्धेऽड्विधानं पररूपबाधनार्थमिति चेन्न, सखीशब्दात् ङस्यटि पररूपेपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वेन 'ल्यत्या'दित्युक्त्वाप्रवृत्त्यर्थमड्विधानं स्यादित्या-

—तथापि अनवकाशत्वेन बाधेऽपवादप्रवृत्त्यनन्तरमुत्सर्गप्रवृत्तेर्न दोषः।

अत एव 'न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते, किंतर्हि? 'अनवकाशत्वा'दिति

❀ अभिनव-चन्द्रिका ❀

प्रवृत्त्यनन्तरं नुद्प्रवृत्तावपि परशास्त्रवैयर्थ्याभावेन 'सकृद्गति'न्यायाप्रवृत्तिप्रसङ्गात्। उत्सर्गप्रवृत्ते-रिति। 'तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते चारितार्थ्याभावरूपं बाधबीजं यत्र तत्र 'स्वप्रवृत्तियोग्यो यः स्वीयोद्देश्यतावच्छेदकावच्छिन्नस्तदतिरिक्तत्वेनोत्सर्गे सङ्कोच'इति नियमात्प्रकृते आम्प्रवृत्त्यनन्तरं

❀ चिदस्थिमाला ❀

—तत्र कृते यद्युत्सर्गप्राप्तिस्तर्हि भवत्येव स इति। अत्र मानमाह–अत एवेति। तत्र हि 'डौडौक्यत' इत्यादौ ह्रस्वदीर्घयोरन्यत्र सावकाशयोः परत्वादौकारस्यौकार एव दीर्घः स्यात्, ह्रस्वे कृत दीर्घापवादे गुणेऽपि तस्यैव दौर्लभ्यादिति दोषो न, अन्यार्थमावश्यकतयाऽभ्यासविकारेष्वित्यनया निर्वाहात्। अन्यत्फलमजीगणत्, अत्र गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधत इत्युक्त्वोक्तमाह–न गणेरिति। गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थाद्धलादिः शेषेण तन्निवृत्तौ तदवकाशं सर्वथेति तद्भावः। स्पष्टञ्चेदं परिभाषेन्दु-

❀ ज्योत्स्ना ❀

यूपो भवति, वाजपेयस्य चतुरश्र' इत्यष्टाश्रित्वचतुरश्रत्वयोरिव—दर्शनात्सामर्थ्यकल्पनातः प्राग् विरोधमूलकबाधकत्वेनानवकाशत्वोक्तिरित्याशयात्। आगमादेशयोरपि तत्त्वसत्त्वादिति। 'यंयम्यते' इत्यादौ हि 'अकित' इति निषेधाद्दीर्घाप्राप्तेर्विरोधान्नुद्दीर्घत्वयोरिवान्यत्रापि सति विरोधे बाध्य-बाधकभावस्येष्टत्वादिति भावः। अनवकाशत्वेन बाध इति। अनवकाशत्वोपलक्षितेन विरोधेन बाध इत्यर्थः। अत एवेति। समानफलकत्वाभावे विरोधमात्रेणापि बाधकत्वादेवेत्यर्थः। न गणेरीत्व-मपवादत्वादिति। 'ई च गण'इत्यत्र स्थानषष्ठी,—'अभ्यासस्ये'ति, हलादिःशेषे त्ववयवषष्ठी-[—अभ्यासस्येति,]–इति संस्कारभेदात्समानफलकत्वाभावात् सामान्यविशेषभावेऽपि गणेरीत्वं समान-फलकत्वलक्षणापवादत्वाद्धलादिःशेषेऽनन्तरं गणेरीत्वेनाजीगणदित्यस्य सिद्धिरित्यन्यदेतत्। स्पष्टं चेदं 'गुणो यङ्लुको'रिति सूत्रे भाष्यप्रदीपे। एतेनागमादेशयोर्लक्ष्यमात्रसंस्कारकत्वात्समानफलक-त्वेनैव तयोर्बाध्यबाधकभाव इत्यपास्तम्। उक्तरीत्यैकत्र स्थानषष्ठ्यत्र, परत्रावयवषष्ठीति संस्कारभेदे समानफलकत्वानङ्गीकारात्। समानफलकत्वेन बाधस्थले बाधकवृत्त्यनन्तरमुत्सर्गप्रवृत्तेर्दधिब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति कौण्डिन्ये दधिदानोत्तरं तक्रदानादर्शनापत्तौ ङेरामुत्तरमाङ-प्रसङ्गात्। विरोधमूलकबाध्यबाधकविषये तु यत्र सामान्यविशेषयोः परस्परं, सामान्यस्य वा विशेषेण विरोधस्तत्र विशेषप्रवृत्त्यनन्तरं निमित्ताभावात्सामान्यस्याप्रवृत्तावपि, यत्र विशेषस्यैव सामान्येन

❀ विषमपदविवृतिः ❀

शयात्। अत एवेति। अनवकाशत्वेन बाधेऽपवादप्रवृत्त्युत्तरमुत्सर्गप्रवृत्तेरेवेत्यर्थः। किन्त्वनव-काशत्वादिति। अलोन्त्यपरिभाषैकवाक्यतया गणेरन्त्यस्य अस्येत्वमित्यर्थेऽनवकाशत्वमिति भावः। वस्तुतस्त्वेवमर्थाश्रयणेनानवकाशत्वोपपादनेऽभ्यासविकारे बाध्यबाधकभावो नेति परिभाषाश्रयणेपि हलादिःशेषो न स्यात्, ईत्वस्योरीत्या निर्विषयत्वापत्तेः, तस्माद्युगपद्द्वयोरसम्भवेऽनवकाशत्वं, यथाऽडामोः, आमो द्विर्वचनापहारकत्वेनागमिन एवासत्त्वेन युगपत्तयोः प्रवृत्त्यसम्भवात्। नुर्दीर्घ-योस्तु युगपत्प्रवृत्तिसम्भवः, दीर्घेण सर्वस्यागमिनोऽनपहारात्। ईत्वहलादिःशेषयोरपि न युग-पत्सम्भवः, एकस्य स्थानिन आदेशद्वयासम्भवात्। प्रक्रियावासनावतामित्त्वं हि रूपान्तरप्राप्तिः, लोपः सर्वथा निवृत्तिरिति तथा च लोकेऽपि 'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टा'मिति भोजनपरिवेषणयोर्युगपदसम्भवेन स्वप्रवृत्तिसमये भोजनबाधेपि परिवेषणानन्तरं माठरकौण्डिन्ययो-

'गुणो यङ्लुको'रितिसूत्रभाष्ये उक्तम् । 'पादः पदि'तिसूत्रस्थं—'शब्दान्तरप्राप्त्याऽनियोराडात्यमोः परत्वादा'मिति भाष्यं त्वेकदेश्युक्तिरिति बोद्ध्यम् ।

**अङ्यन्तत्वादिति** । 'लक्षेमुट् चे'त्यौणादिक—'ई'—प्रत्ययान्तत्वादिति भावः । **कुमारीति** । ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणात्'गोस्त्रियो'रिति ह्रस्वो न ।

**अचि श्नु** । भ्रूशब्दोऽव्युत्पन्नं प्रातिपदिकं, भ्रमेर्डूप्रत्ययान्तो वा । इह 'य्वो'रिति धातोः समानाधिकरणं विशेषणं, तदाह—**इवर्णोवर्णान्तधातोरिति** । **इत्यस्येति** ।

❀ अभिनव-चन्द्रिका ❀

तत्प्रवृत्तियोग्यताया अभावेन औत्सर्गिकाद्प्रवृत्तौ बाधकाभाव इति भावः । **भाष्ये उक्तमिति** । तथाच अपवादशब्दस्य कृते चारितार्थ्यप्रयुक्तबाधो यत्र तत्र रूढिः, अन्यत्रायं गौण इति भावः ।

❀ चिदस्थिमाला ❀

शेखरादौ । भाष्यान्तरविरोधं परिहरति—**पाद इति** । स्पष्टञ्चेदमुद्योते । एतेन तथा परोक्तमपास्तम् । ननूङ् च गमादीनामिति वार्तिकनिष्पन्नभ्रूशब्दस्य धातुत्वादेव सिद्धमत आह—**भ्रूशब्दस्येति** । सिद्धान्तमत मुक्त्वा शाकटायनमतमाह—**भ्रमेरिति** । अन्ययोर्न, असम्भवादस्य तु तथा व्यभिचारादित्याह—**धातोरिति** । वैयधिकरण्ये क्षिपतीत्यादौ दोषो, ङित्त्ववैयर्थ्यं, सम्भवतीति न्यायविरोधश्चात आह—

❀ ज्योत्स्ना ❀

विरोधः, न तु विशेषेण सामान्यस्य, तत्र विशेषे प्रवृत्ते निमित्तसत्त्वात्प्रवृत्तिः सामान्यस्य भवत्येव, यथाऽऽमि सति—आटः, लोके च 'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टा'मिति भोजनपरिवेषणयोर्विरोधेऽपि परिवेषणानन्तरं माठरकौण्डिन्ययोर्भोजनदर्शनात्,—तथैव युक्तत्वात् । अत एव 'हयवरट्'सूत्रे भाष्ये उक्तन्यायमुपन्यस्य 'नदानीन्तौ भुञ्जाते'इति कालविशेषनिवेशनं कृतमित्यधिकं **परिभाषाप्रदीपार्चिषि** विस्तरेण निरूपितं तत एव द्रष्टव्यम् । **शास्त्रीयोपसर्जनग्रहणादिति**। लौकिकोपसर्जनग्रहणे यथा क्यजन्ते लुबन्ते वा न दोषस्तथा परिभाषाप्रदीपार्चिषि द्रष्टव्यम् ।

ननूङ्च गमादीनामिति वार्त्तिकेन क्विप्यनुनासिकलोपे ऊङि च निष्पन्नभ्रूशब्दस्य धातुत्वादेव सिद्धे सूत्रे तदुपादानं व्यर्थमत आह—**भ्रूशब्द इति** । **समानाधिकरणं विशेषणमिति** । वैयधिकरण्येन तथात्वे तु गौरवं, 'क्षिपती'त्यादौ दोषापत्तिश्च । वलिलोपेन तत्रेष्टसिद्धावपि ऊयतुरित्यादाववल्परे दोषः, तुल्यन्यायादुत्तरसूत्रे तथात्वापत्ते 'र्दिदिवतु'रित्यादौ यणापत्तिरिति भावः । **इत्यन्तस्येत्यर्थ इति**। अङ्गाधिकारे तदन्तविधेरिष्टत्वादिति भावः। यत्तु 'ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाद्भ्रूशब्दान्ते नोवङिष्यते, एवञ्च तत्र 'नेयङुव'ङिति नदीसञ्ज्ञानिषेधाभावात्, 'क्वासि हे सुभ्रु !' विभानिता सुभ्रु ! पितुर्गृहे कुतः ?' इत्यादिमहाकविप्रयोगेषु नदीत्वप्रयुक्तः सम्बुद्धिह्रस्वः सिध्यतीति, तन्न, 'ग्रहणवता प्रातिपदिकेने'ति प्रतिषेधस्य प्रत्ययविधिविषयत्वसिद्धान्तात् । यदितु—'ऊङ्चगमादीना'मिति वार्त्तिकनिष्पन्नभ्रूशब्दस्य रूढिशब्दत्वमभ्युपगम्य वार्त्तिकमते ऊङ्-

❀ विषमपदविवृतिः ❀

भोजनं दृश्यते । 'हयवरट्' सूत्रे च भाष्ये 'नेदानीन्तौ भुञ्जाते' इति कालविशेषप्रदर्शनञ्च कृतम् । 'च्छ्वो रिति सूत्रे च भाष्ये ऊठश्छित्त्वे ऊड्त्तरं वलोप उक्तः, ऊठ्-वलोपयोर्युगपदसम्भवादिति दिक् ।

ननू'ङ्च गमादीना'मिति वार्तिकनिष्पन्नभ्रूशब्दस्य धातुत्वादेव सिद्धे तदुपादानं व्यर्थमत आह—**भ्रूशब्दस्येति । सुभ्रुवाविति सिद्धमिति** । तथा च प्रयुज्यते—'गूढसूचितरहस्यविभेदः सुभ्रुवां प्रववृते परिहास' इति । एवमिवर्णोवर्णान्तधात्वन्तस्याङ्गस्येत्यर्थात्सुश्रियावित्यादावियङ्सिद्धिः । 'न भवती'-

इत्यन्तस्येत्यर्थः। तेन सुभ्रुवाविति सिद्धम्। **आन्तरेति**। स्थानत इति भावः। य्वोरिति किं? वव्रे। अचि किं? युयात्। **इनीयङीति**। सुधीशब्दे यण्निषेधारम्भादत्र प्रकरणे 'धातोः स्वरूपग्रहणे' इति परिभाषाया अप्रवृत्तिरिति भावः।

**एरनेकाचो। धात्ववयवसंयोगपूर्वो न भवतीति।** धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः। तद्भिन्नश्च धात्ववयवपूर्व एवेति—उदियावित्यादौ न दोषः। 'असंयोगा'दित्येव-धात्ववयवसंयोगभिन्नात्परस्येत्यर्थेन सिद्धे—पूर्वग्रहणं स्पष्टार्थम्। एः किम्? असंयोग-

❀ अभिनव-चन्द्रिका ❀

**अप्रवृत्तिरिति।** 'न भूसुधियो'रिति ज्ञापकेन-धातुत्वेतर-धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्य धातुविहिते प्रत्यये भवतीति-'धातोः कार्यमुच्यमान'मितिपरिभाषार्थकरणादिति भावः। नच'इकोयणची'-तियण्निषेधेन 'नभूसुधियो'रिति चरितार्थमिति कथमत्र ज्ञापकमिति वाच्यम्, 'इकोयणची'त्यनन्तरमेव निषेधे कर्तव्ये एतत्प्रकरणे निषेधकरणान्निरुक्तार्थज्ञापनसम्भवात्।'नभूसुधियो'रिति इयङ्घटितनिर्देशेन वा निरुक्तार्थज्ञापनसम्भवाच्च। अन्यथा धातोः कार्यमुच्यमानमिति परिभाषया इयङोऽप्राप्त्या तन्निर्देशा-सङ्गतिः स्पष्टैवेति दिक्। **स्पष्टार्थमिति।** चिन्त्यमिदम्-धात्ववयवसंयोगभिन्नात्परस्येत्यर्थे-'यव-क्रियौ'-'कटप्रुवा'वित्यादौ धात्ववयवसंयोगभिन्नः 'यवक्'-'कटप्' इति, तत्परत्वस्य इकारे सत्त्वेन यणापत्तेः।

नच धात्ववयवसंयोगभिन्नोऽपि पर्युदासन्यायेन धात्ववयवो गृह्यत इति नोक्तदोष इति वाच्यम्,

❀ चिदस्थिमाला ❀

**समेति।** अङ्गाधिकारादाह—**अन्त्यतस्येति।** य्वोः षट्त्रिंशत्वेन यथासङ्ख्यस्य व्यक्तिपक्षेऽप्राप्तेराह—**आन्तरेतीति।** ननु धातोरिति परिभाषया सुधीयङादेरप्राप्तिरेवेतीदमयुक्तमत आह—**सुधीति।** 'क्षिय' इत्यादिनिर्देशमूलकसामान्यापेक्षत्वमभिप्रेत्याह—**अत्रेति।** प्रसज्यप्रतिषेधस्य गुरुभूतत्वादतिप्रसङ्गापादकत्वाच्चाह—**धात्ववयवेति।** तत्फलमाह—**तद्भिन्नश्चेति। भिन्नादिति।** स च तत्सामर्थ्यात्पर्युदासेन

❀ ज्योत्स्ना ❀

प्रत्ययान्तभ्रूशब्दस्यातिरिक्तस्याभावात्सूत्रे व्यर्थं भ्रूग्रहणं-तदन्ते उवङःप्रवृत्त्यभावकल्पकमित्युच्यते, एवन्तु 'क्वासि हे सुभ्रु!' इत्यादिसिद्धावपि 'गूढसूचितरहस्यविभेदः सुभ्रुवां प्रववृते परिहासः' इत्यादिषूवङ् न स्यादि-त्यूङन्तस्य रूढिशब्दत्वं नाभ्युपगन्तव्यम्। 'सुभ्रु!' इति प्रयोगे ह्रस्वप्रमादस्य बहुसम्मतत्वादित्याशयेनाह—**इति सिद्धमिति।** वस्तुतस्तु भ्रूशब्दोपादानं भ्रूशब्दार्थप्राधान्ये एवोवङ्, नतूपसर्जने इत्यर्थसूचनार्थमिति-'क्वासि हे सुभ्रु!' इत्यादिबहुव्रीहौ नदीत्वप्रयुक्तह्रस्वसिद्धिः, 'सुभ्रुवां प्रववृते परिहासः' इत्यादावुवङ् तु-सुष्ठु भ्रमन्ति ताः सुभ्रुवस्तासामित्यर्थे उपसर्जनत्वा-भावान्नानुपपन्न इत्याहुः। **स्पष्टार्थमिति।** 'यवक्रिया'वित्यादौ धात्ववयवसंयोगभिन्नाद्रेफात्परत्वेना-तिप्रसङ्गात्, धात्ववयवसंयोगात्परस्य नेति व्याख्याने उदियावित्यादौ दोषाच्च-धात्ववयवसंयोगपूर्व-भिन्नइत्यर्थस्य स्पष्टं लाभार्थमित्यर्थः। वस्तुतस्तु धातोः सम्बन्धसंयोगभिन्नः, पूर्वः=पूर्वावयवोऽनन्तरो यस्येकारस्येत्यर्थः, सत्यभिधाने आनन्तर्यसम्बन्धेऽपि समासस्येष्टत्वादिति-'यवक्रिया'-

❀ विषमपदविवृतिः ❀

त्युक्त्या क्रियान्वयेन प्रसज्यप्रतिषेधशङ्कां निराकरोति-**धात्ववयवसंयोगपूर्वभिन्न इति। उदियाविति।** उत्पूर्वादीङ्गतावित्यस्मात्लिट्यपि रूपम्। **इत्यर्थेन सिद्धेरिति।** वस्तुतस्तु संयोगभिन्नात्संयोगैक-देशात्तद्घटितसमुदायाद्वा परस्य संयोगपूर्वकस्यापि यणापत्तेः। धात्ववयवसंयोगात्परस्य नेत्यर्थे तूदिया-दित्यादौ दोषः, पर्युदासाभावेनोक्तार्थालाभादिति-पूर्वग्रहणमावश्यकम्। **एः किमिति। पूर्वसूत्राद्**

पूर्वग्रहणमिवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूदिति । तेन 'यवक्रिया'वित्यादौ नातिप्रसङ्गः । 'लुलुवतु'रित्यादौ तु नातिप्रसङ्गः, 'ओः सुपी'ति नियमात् । विपरीत-नियमस्तु न, सुधीशब्दे अचि सुपि यण्निषेधारम्भात् ।

**कुमार्याविति** । अन्तर्वर्तिविभक्त्या पदत्वाच्छाकलं त्वत्र न, 'नः क्ये' इति निषेधात् । **प्रधीरिति** । 'प्रकृष्टं ध्यायती'ति विग्रहे नित्यस्त्रीत्वाभावान्न नदीत्वम् । 'प्रकृष्टा धीर्यस्ये'ति विग्रहे तु नदीत्वम् । **ग्रामणीरिति** । 'अग्रग्रामाभ्यां नयते'रिति णत्वम् ।

'गतिकारकपूर्वस्यैवे'ति भाष्ये पठ्यते, स च नियमः, तेन गतिकारकपूर्व-भिन्नस्य नेति फलति । तद्भिन्नश्च—तत्सदृशं, सपूर्वपदमेव । तेन 'निन्यतु'रित्यादौ यण्, तदाह—**गतिकारकेतरेति** । यत्तु—'अत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वा-द्गृह्यते' इति, तन्न; भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपो-पादानविषय-प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः । अत एव नदीसञ्ज्ञासूत्रस्थः 'प्रकृष्टा

❀ अभिनव-चन्द्रिका ❀

एवं तर्हि धात्ववयवसंयोगभिन्नधात्ववयवरेफमादायोक्तदोषस्य दुरुद्धरत्वादिति दिक् । **नःक्येइति-निषेधादिति** । नचैवमपि राजीयतेः क्विपि राज्यावित्यादौ 'इकोसवर्ण'इति शाकलं स्यादिति वाच्यम्, 'अत्रय' इत्यादाविव'यद्वृत्तिनिमित्तसुब्निमित्तिका पदसञ्ज्ञा चिकीर्षिता तद्घटकार्थवदव्यवहितपूर्वत्वा-भाववत्त्व' 'स्वघटकत्वै'तदुभयसम्बन्धेन तादृशवृत्तिविशिष्टत्वरूपोत्तरपदत्वस्य सत्त्वेन 'उत्तरपदत्वे-चापदादिविधा'विति निषेधेनादोषात् । **अप्रवृत्तेरिति** । प्रतिपदोक्तत्वेनाभिमतशास्त्रीयोद्देश्यता-वच्छेदकश्च, लाक्षणिकत्वेनाभिमतशास्त्रीयोद्देश्यतावच्छेदकश्च यद्रूपं तद्रूपावच्छिन्नोद्देश्यताकत्वरूप-लक्षणप्रतिपदोक्तपरिभाषालिङ्गस्याभावात् । यद्वा—'स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वाव-

❀ चिदस्थिमाला ❀

तदवयववत्तदघटक एव गृह्यते इति भावः। **इवर्णेति**—उपात्तत्वात्। **अङ्गेति**।—प्राधान्यात्। तदभावे आह—**लुलुवतुरिति** । अत्र शाख्याद्युक्तमयुक्तमिति स्पष्टं भावप्रकाशे । 'प्रथमलिङ्गे'त्यनेनाह—**प्रकृष्टेति** । तस्य विधिमुखेन प्रवृत्तेराह—**तेनेति** । **श्रीपतिदत्ताद्युक्तं** खण्डयति-**यत्त्विति** । **नदीति** । आद्येत्यर्थः। विग्रह-

❀ ज्योत्स्ना ❀

वित्यादौ नातिव्याप्तिः, पूर्वग्रहणस्यार्थवत्त्वञ्चेत्याहुः । **इवर्णविशेषणं यथा स्यादिति** । नच धातु-विशेषणेऽतिप्रसङ्गाभावः,—संयोगभिन्नस्य धातोरिति वाच्यं, गल्लीयतेः क्विप्—'गल्लीः, 'गल्लियौ' गल्लिय' इत्यादौ यणापत्तेः । **इति निषेधादिति** । एवञ्च लुबन्तकुमारीशब्दे पक्षे शाकल भवत्येव, यदि सुबन्तात्तद्धितोत्पत्तिरित्याहुः । **प्रतिपदोक्तत्वादिति** । एवञ्च प्रतिपदोक्तगतिसमाससाहचर्येण कारकसमासस्य 'कर्तृकरणे'इत्यस्यैव ग्रहणात् 'दुष्टा धीर्येषां' 'वृश्चिकाद्भी'रित्यर्थक—दुर्धी-वृश्चिकभी-शब्दयोर्यण्न प्राप्नोतीति मूलोक्तस्तत्समाधानप्रयासो व्यर्थ एवेति भावः ।

❀ विषमपदविवृतिः ❀

य्वोरित्यनुवृत्त्या सिद्धमित्याशयः। **निषेधादिति**। ननु 'खरकुट्यै ब्राह्मण्यै' इत्यादौ शाकलं प्राप्नोतीति चेन्न; 'उत्तरपदत्वे'इति वार्तिकारम्भे तत्प्राप्तावपि प्रत्याख्यानपक्षे तदप्रवृत्तेः। **प्रतिपदोक्तत्वादिति**। तथा च दुर्धियावित्यत्र बहुव्रीहौ यण्नेति तदाशयः । **विशिष्टरूपोपादानविषय इति**। 'दिक्समासे'

धीर्यस्या'इतिविग्रहाभिप्रायेण प्रवृत्तः—'प्रद्ध्यै ब्राह्मण्यै'इति भाष्यप्रयोगः सङ्गच्छते।

**शुद्धधियाविति**। 'शुद्धा धीर्यस्ये'ति विग्रहः। 'शुद्धं ध्यायती'ति विग्रहे—यणेव। आद्ये सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वाच्छुद्धत्वस्य कथमपि न कारकत्वमिति भावः।

**कथन्तर्हीति**। 'दुर्ध्यायन्ती'ति 'दुष्टा धीर्ध्यानं येषा'मिति, 'वृश्चिकाद्भी'रितिविग्रहाभिप्रायेण प्रश्नः। **दुःस्थितेति**। दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः। प्रकृष्टा धीरित्यादौ-प्रकर्षः प्रशब्दार्थो—धीशब्दोपात्तधात्वर्थे विशेषणमिति यण् भवत्येव।

**यत्क्रियेति**। या चासौ क्रियेत्यर्थः। **तं प्रति**=तद्वाचकं प्रति। यद्वा—यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः। **नेहेति**। ततश्च सम्बन्धसामान्यषष्ठ्यैव समासः। 'भीत्रार्थाना'मिति तु हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम्। विभक्तिप्रकरणे तु न कृतं, कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः। किञ्च हेतुत्वाविवक्षायां सम्बन्धत्वेन विवक्षया षष्ठी सूत्रारम्भेऽपीत्यपि बोध्यम्। अभ्युच्चयेनाह—**वृश्चिकसम्बन्धिनीति**। अत्र पूर्वपदान्तर्गतोत्तरपदलोपः—शाकपार्थिवादित्वात्।

**न भू**। अनन्तरस्येति न्यायेन 'एरनेकाचः' 'ओःसुपी'त्यनयोरेव निषेधः।

ॐ अभिनव-चन्द्रिका ॐ

च्छिन्नोद्देश्यतानिरूपितत्व' 'स्वावच्छिन्नत्वै'तदन्यतरसम्बन्धेन—'स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्व' 'स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्वै'तदुभयसम्बन्धेन—'यत्किञ्चिच्छास्त्रविशिष्टत्व'रूपप्रतिपदोक्तस्याभावाद्वेति भावः।

**इत्यर्थ इति**। 'जन्यबोधविषयीभूतक्रियाविशेषतात्पर्यग्राहकत्वे सति प्रादन्यतमत्व'मुपसर्गत्वमिति परिष्कारेण यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं यस्य प्रादेस्तन्निरूपितोपसर्गत्वं तस्येति स्वीकारादिति भावः। **नभूसुधियोः**। नच भूग्रहणं व्यर्थम्,

ॐ चिदस्थिमाला ॐ

फलमाह—**शुद्धमिति**। ननु धीशब्दस्य यौगिकत्वेन तत्रापि कुतो नात आह—**आद्ये इति**। शुद्धत्वस्य=तदवच्छिन्नस्य। विनिगमनाविरहादाह—**दुष्टेति**। सत्त्वभूतार्थकत्वनिरासायाह—**ध्यानमिति** पाठः।
नन्वेवं प्रकृष्टा धीरिति विग्रहेऽपि प्रधीशब्दे यण् न स्यात्, प्रशब्दस्य कृषिं प्रति गतित्वेऽपि धीशब्दं प्रत्यगतत्वादत आह—**प्रकृष्टेति**। क्रियायोगे उपसर्गत्वविधानादाह—**या क्रियेति**। नन्वेवं तामित्युचितमत आह—**तद्वाचकेति**। लक्षणामभिप्रेत्यैवाह—**यद्वेति**। **वाच्यया क्रियया**। इदश्चान्यत्र स्पष्टम्। एतेन—यस्य क्रियेति—न, प्रयाणीय इत्यादौ णत्वानापत्तेः, तत्र धातोरेव क्रियावाचकत्वेन तम्प्रति तस्य तत्त्वेऽप्यनीयरं प्रत्यतत्त्वादितिशास्त्रयुक्तमपास्तम्। नन्वेवमपि भीत्रेति सूत्रस्य षष्ठीबाधकत्वेनोक्तदोष एवात आह—**भीत्रेति**। शास्त्रयायुक्तिं खण्डयन्नाह—**विभक्तीति**। मूले भाष्यरीत्योक्तं, सूत्रमतेप्याह—**किञ्चेति**। **षष्ठीति**। 'वृश्चिकभिय' इत्यत्र। **सूत्रारम्भेपीति**। भीत्रेति सूत्रारम्भेऽपीत्यर्थः। अनेन मूलीयन्यूनता परिहृता। मूलं दूषयति—**अभ्युच्चयेनेति**। अनतिप्रसङ्गाय, कैयटादिसकलग्रन्थासाङ्गत्याय चाह—**अत्रेति**। **अनन्तरेति**। अत एव भूशब्देन तदन्तं ग्राह्यम्।

ॐ ज्योत्स्ना ॐ

**अनयोरेव निषेध इति**। एवञ्च—निषेधस्य सुप्येव फलितत्वात्सुद्ध्युपास्य इत्यादौ प्रवृत्तिर्नेति भावः।

ॐ विषमपदविवृतिः ॐ

इति वद्गतिसमास इति विशिष्टरूपोपादाने इत्यर्थः। **इतिविग्रहाभिप्रायेणेति**। 'प्रकृष्टन्ध्यायती'ति विग्रहे तु नित्यत्वीलाभावः। **सत्त्वभूतार्थकेति**। शुद्धधात्वर्थविशेषणत्वे तु कर्मकारकत्वमस्त्येवेति भावः। **सूत्रारम्भेऽपीति**। 'भयहेतु'रिति हेतुपदस्वारस्यात्। तथा च सूत्रारम्भेपि षष्ठीसमाससम्भवान्नोक्तस्थले यणिति भावः। **अभ्युच्चयेति**। पूर्वपरिहारेऽरुच्यभावादिति भावः।
**अनयोरेव निषेध इति**। तथा च सुद्ध्युपास्ये निषेधप्रवृत्तिर्नेति भावः। प्रकारान्तरमाह—**सुपीति**

१ अन्यतरसम्बन्धोऽत्र द्वितीयसम्बन्धघटकाऽऽनुपूर्वीवैशिष्ट्यनियामकः। उभयसम्बन्धस्तु—शास्त्रवैशिष्ट्यनियामक इति बोध्यम्।

'सुपी'ति वानुवर्त्तते, तदाह—**सुपीति । लोपाविति ।** 'अतो लोपः' 'लोपो व्योर्वली'त्याभ्यामिति भावः । यलोपे निषेधादल्लोपो न स्थानिवत् । वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते ।

**स्थानिवत्त्वादिति ।** एवञ्च यणादेशे यलोपे 'सख्' इति स्यादिति भावः । अन्तर्वर्तिविभक्त्या पदत्वात् 'न पदान्ते'ति निषेधस्तु न स्थानिवत्त्वस्य; 'नः क्ये' इतिसामान्यापेक्षनियमेनास्यापदत्वात् । परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च । क्विबपेक्षक्यच्सम्बन्धियलोपस्य यणि बहिरङ्गासिद्धत्वन्तु न, अनित्यत्वात् ।

**क्वौ लुप्तमिति**—भावे क्तः, लोप इत्यर्थः । 'गोमत्यतेरप्रत्यये गोमा'निति भाष्योक्तेरस्या-

❀ अभिनव-चन्द्रिका ❀

'वर्षाभ्वश्चे'ति नियमेन पूर्वस्य भूशब्दस्य यदि यण् तर्हि वर्षापूर्वकस्यैवेति नियमेन परमभुवावित्यादौ न दोषः । विपरीतनियमस्तु न, 'दन्करे'ति वार्तिकारम्भसामर्थ्यादिति वाच्यम् , आसीत् अकरोत् इति यस्यां क्रियायामिति समासे तस्य च्विप्रत्ययान्तेन भूशब्देन समासे 'भ्वासीदकरो'दिति जाते, तस्माण्णिचि तस्मात्क्विपि अशब्दादिना समासं कृत्वा पुनर्णिजित्यादिक्रमेण 'भ्वा'सिति जाते अकचि 'भ्वका'सिति जाते ततो णिचि तस्मात्क्विपि 'भ्व'किति स्थिते छ्वोरित्यूठि तत उशब्देन समासे 'भू' इति निष्पन्ने तत औविभक्तौ यणापत्तेरिति दिक् ।

**वेरपृक्तलोपात्पूर्वं वलिलोप इष्यत इति ।** वेरपृक्तलोपात्पूर्वं वलिलोपो यथा स्यात्तथा कर्तव्यमित्यर्थः । एतेन वेरपृक्तलोपात्पूर्वं वलिलोपेऽपि अतो लोपात्प्राक् पूर्वं वेरपृक्तस्येति लोपाप्रवृत्तौ मानाभावादन्तरङ्गत्वात्पूर्वं वेरपृक्तलोपे ततोऽल्लोपेऽपि 'लोपो व्योर्वली'त्यस्य प्राप्त्यभावाल्लोपो न स्यादित्यपास्तम् , निरुक्तार्थकरणेनातोलोपस्य वलिलोपस्य च वेरपृक्तलोपात्पूर्वमेव प्रवृत्तेः ।

❀ चिदस्थिमाला ❀

पूर्वविप्रतिषेधस्य प्राचोक्तस्य भाष्यानारूढत्वादाह—**वेरिति** । भगवता क्वाविति वार्तिकार्थस्य योगविभागेन साधितत्वादित्यन्यत्र स्पष्टं, यण्श्रवणं न मूलेष्टमित्याह—**एवञ्चेति** । स्थानिवत्त्वे चेत्यर्थः । सजातीयापेक्षत्वेन हलन्तरूपविशेषापेक्षत्वेप्याह—**परेति** । सप्तमीसमासलब्धोयमर्थ इति तत्रैव स्पष्टम् । 'नाजान्तर्ये' इति नातिरिक्ता, किन्त्वनित्यत्वमूलेति सिद्धान्तेनाह—**अनित्यत्वादिति** । कर्मण्यर्थासङ्गतेराह—**भावे इति** । ननु क्विलुगित्यत्र क्वावित्यस्य–क्वौविभिमित्येवार्थो नायमत आह—**गोमत्यतेरिति** ।

❀ ज्योत्स्ना ❀

प्रकारान्तरमाह—**सुपीति वेति । वलिलोप इष्यते इति** । लोपोव्योरिति विधेयस्य प्रथमनिर्देशेन वेरपृक्तलोपाद्वलिलोपस्य बलवत्त्वज्ञापनादिति भावः । अत एव 'व्योर्लोपे क्वावुपसङ्ख्यान'मिति वार्त्तिकं सङ्गच्छते, भाष्यकृता च–'लोपो व्योर्वली'त्यतोऽनन्तरं 'वे'रिति योगं विभज्य व्यन्तयोर्व्योर्लोपविधानाद्वार्तिकं प्रत्याख्याय—'अपृक्तस्येति' तृतीययोगे वेरित्यनुवृत्त्या वेरपृक्तलोपः साधित इत्याहुः ।

❀ विषमपदविवृतिः ❀

**यलोपे सख् इति** । यावत्पर्यन्तं 'लोपो व्यो'रित्यस्य प्रवृत्तिसम्भावना तावत्पर्यन्तं 'वेरपृक्ते'ति लोपो न प्रवर्त्तते । ननु 'नः क्ये' इति निषेधो दन्त्यान्तविषयकोऽनुनासिकान्त्यविषयो वा स्यादित्याशङ्क्य–'सति बाधके' इति न्यायाल्लक्ष्यानुरोधाच्च सामान्यापेक्ष इत्याह—**नः क्य इति** । **परपदस्थाजादेशस्यैवेति** । अपीपचञ्चिति पञ्चमीसमासप्रयोजनप्रदर्शनपरभाष्यप्रामाण्यादिति भावः ।

**अनित्यत्वादिति** । अन्तरङ्गपरिभाषाया अनित्यत्वेनैव निर्वाहे 'नाजानन्तर्य'परिभाषा नाश्रयितव्येति मतेनेदम् । नन्वल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते क्वौलुप्तं न स्थानिवदित्यसङ्गतं, लोपस्य लोपकर्मत्वाभावादित्यत आह—**भावे क्त इति** । अस्मादेव भाष्यप्रयोगात्क्वचित्सकर्मकेभ्योपि भावे क्तो

ऽप्यर्थस्य क्वचिदङ्गीकारः। 'क्वौ विधिं प्रति ने'त्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः।

**अनङिति**। 'अभिव्यक्तपदार्था ये'इति न्यायस्तु गौणमुख्यन्यायवत्पदकार्यविषय एवेति भावः। **दीर्घस्यापीति**। प्रयोगस्थयकारान्तानुकरणं, सूत्रेऽकारश्चोच्चारणार्थ इति भावः। **लूनीरित्यादि**। 'ल्वादिभ्यः' 'क्षायो मः' 'प्रस्त्योऽन्यतरस्या'मिति नत्व-मत्वे। 'शुषः कः' 'पचो वः' इति कत्व-वत्वे। **[ इति ईदन्ताः ]**

❀ अभिनव-चन्द्रिका ❀

**क्वचिदङ्गीकार इति**। नच 'क्वौ लुप्तं न स्थानिव'दित्यस्य 'सख्युर्गोमान् पदस्त्वं'ति यत् फलचतुष्टयमुक्तमभियुक्तैः तत्रैकमपि फलं न सम्भवति, तथाहि—सखीयतेः क्विपि सखीरित्यादौ यलोपस्य बहिरङ्गासिद्धत्वादेव न यणः प्राप्तिः, नाजानन्तर्ये निषेधस्तु न प्रवर्तते, तस्या अमत्त्वात्, तत्त्वेऽनित्यत्वाद्वा। एवं गोमानित्यपि फलं न सम्भवति, गोमत्यतेः क्विपि अतोलोपयलोपयोरतोलोपस्य स्थानिवद्भावात् नुमोऽप्राप्तावपि दीर्घे स्थानिवत्त्वनिषेधात्पूर्वमत्वसन्तस्येति दीर्घे—तस्यस्थानिभूतादचःपूर्वत्वेन दृष्टत्वस्याभावात् स्थानिवत्त्वाप्राप्त्या ततो नुमि रूपसिद्धेः। एवं 'पद' इत्यपि न फलम्, पादयतेः क्विपि शसि 'पद' इत्यादौ यद्यतोलोपस्य स्थानिवद्भावात्पदादेशो न स्यात्तर्हि 'पादस्य पा'दित्येव सिद्धे पादस्य लोपकरणेन सामान्यग्रहणार्थेन प्रकृते स्थानिवद्भावो न भवतीति वक्तुं शक्यत्वात्। एवं त्वमित्यपि न फलम्, युष्मयतेः क्विपि त्वमित्यादिरूपाणामनभिधानस्य मपर्यन्तशेखरे वक्ष्यमाणत्वादिति वाच्यम्, अक्यजन्तगोमानित्यादिरूपासिद्धेः, तथाहि सिद्धान्ते परं नित्यं नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घो भवति, त्वद्रीत्या तु क्यजन्तगोमानित्यादौ दीर्घस्य चारितार्थ्येन पूर्वं नुमि अत्त्वन्ताभावाद्दीर्घानापत्तिः। एवं त्वमित्याद्यपि फलं भवितुमर्हति, एतेषां यथाऽनानभिधानं तथा-मपर्यन्तेत्यत्र वक्ष्याम इति दिक्। **पदकार्यविषय एवेति**। पदकार्यत्वञ्च—'स्त्रीत्वानिमित्तकत्वे सति'

❀ चिदस्थिमाला ❀

भाष्यान्तरमप्यत्र मानमित्यन्यत्र स्पष्टम्। यद्यपि तत्र तस्योक्तमर्थं प्रदर्श्य 'लवमाचक्षाणो लौ'रित्यसिद्धिमाशङ्क्य—एवं तर्हि क्वौ विधिमिती'ति भाष्ये उक्तं, तथापि तदस्य काचित्कत्वपरं, न सर्वथाऽभावपरमित्युद्योते स्पष्टं, तदाह—**अन्यत्रेति**। **अभीति**। अभियुक्तैरिति भावः। ननु सूत्रेऽविकृतानुकरणेन विकारे नोभयसिद्धिरत आह—**प्रयोगेति**। निमित्तव्यवहारातिदेशे तृजन्तप्रयुक्तकार्यमेव स्यान्न क्रदन्तप्रयुक्तमित्यनिष्टापत्तिः, अर्थ-तादात्म्यातिदेशासम्भव एव, तयोरथैक्यस्य स्वत एव सत्त्वात्, सहप्रयोगाभावाच्च, शास्त्रकार्यातिदेशावपि न, तुजन्तस्याद्युदात्ततया तृज्वद्भावेन रेफरूपयणादेशनच्छास्त्र-

❀ ज्योत्स्ना ❀

**गौणमुख्यन्यायवदिति**। यदि तु परिभाषाप्रदीपार्चिष्युक्तरीत्या'ऽभिव्यक्तपदार्था ये' इति न्यायस्य प्रातिपदिककार्येष्वपि प्रवृत्तिरित्यभ्युपगम्यते तदाऽन ङ्णिद्वद्भावाविह न प्राप्नुतः, तर्हि—

❀ विषमपदविवृतिः ❀

भवति, यत्र प्रयोगस्य न गत्यन्तरमिति भावः। ननु 'नैवं विज्ञायते 'क्वौलुप्तं न स्थानिवत्, कथं तर्हि? क्वौविधिं प्रति न स्थानिव'दिति 'न पदान्त'सूत्रस्थ भाष्यात्क्वौलुप्तं न स्थानिवदिति नास्त्येवेत्याशङ्क्याह—**अस्याप्यर्थस्येति**। तथा चोक्तभाष्यं—'सर्वत्र नैवं विज्ञायते क्वौ लुप्तं न स्थानिवदिति, सर्वत्र क्वौ विधिम्प्रति न स्थानिवदिति विज्ञायते, इत्यर्थकमिति भावः। **पदकार्यविषय एवेति**। एवञ्चाभिव्यक्तपदार्था ये इति न्यायमूलकं 'प्रसिद्धे' इति—सर्वनामप्रकरणस्थग्रन्थविरुद्धं, तस्मान्न्यायप्रवृत्तावपि विशेषणतयाऽभिव्यक्तपदार्थकत्वमादायानङ् बोध्यः, क्विबन्तस्य धातुत्वमिव।

इति ईदन्ताः।

व्याख्यानात्, प्राधान्याच्च रूपातिदेशोऽयमित्याह—**क्रोष्टुशब्द इति**। तच्चोदात्त-ऋकारविशिष्टमतिदिश्यते, तृज्वदिति चकारोच्चारणात्। तेन 'क्रोष्टा' इत्यादौ 'उदात्तयण:' इति स्वरसिद्धिर्बोद्ध्या। पक्त्रादेस्तु नातिदेशः, अर्थत आन्तर्याभावात्।

इदं सूत्रं 'स्त्रियाञ्चे'ति च प्रयोगनियमफलकमिति बोद्ध्यम्।

**अप्तृन्**। ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थम्, अत आह—**नियमार्थमिति**—'अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां ने'ति। नेष्ट्रादयोऽप्युणाद्य एवेति भावः।—"तेषां 'तृन्नि'तिसूत्रस्थवार्तिकेन व्युत्पादनान्नप्त्रादीत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणम्—"इत्यन्ये। अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोद्ध्यम्।

**भाष्यप्रयोगादिति**। एवञ्चोणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः।

❀ अभिनव-चन्द्रिका ❀

विभक्त्यनिमित्तकत्व'मित्यादि पूर्वोक्तं न विस्मर्तव्यम्। **अन्येषामिति**। इदं फलितार्थकथनम्,

❀ चिदस्थिमाला ❀

प्रवृत्तावपि तस्योदात्तस्थानिकत्वाभावेनोदात्तयण इति स्वरानापत्तेः। इदमनुपदमेव वक्ष्यते, तस्माद्रूपातिदेश एव पर्यवसितस्तदाह—**व्याख्यानादिति**। प्राधान्यञ्चात्र सर्वप्रयोगनिष्पादकत्वेन बोध्यम्। तच्च=रूपम्।

अतिप्रसङ्गं निराचष्टे—**पक्त्रादेरिति**। लोके उभयप्रयोगसत्त्वादाह—**इदमिति**। नियमस्वरूपं प्रदर्शयन् सजातीयं तद्व्यावर्त्यमाह—**अन्येषामिति**। अतो धातृशब्दस्य दीर्घो भवत्येवेति भावः। आदिग्राह्यं सूचयन्नाह—**नेष्ट्राद्य इति**। इदं दूषयति—**तेषामिति**। नेष्ट्रादीनामित्यर्थः। मूलतात्पर्यं सिद्धान्तभूतमाह—**व्युत्पत्तीति**। यथाश्रुतप्रतीयमानमूलार्थस्य दूष्यत्वेनान्यथा तदाशयमाह—**एवञ्चेति**। तथाभाष्यप्रयोगेचेत्यर्थः। एवञ्च न नियमव्यावर्त्य इति भावः। ननु कृद्व्युत्पन्नस्य यौगिकत्वमात्रं दृष्टम्, अयन्तु सञ्ज्ञा-

❀ ज्योत्स्ना ❀

'अनङ्सा'वित्यत्र 'सोर्डे'ति वक्तव्येऽनङ्विधानमनभिव्यक्तार्थकसख्युरपि सूत्रे ग्रहणार्थं, न चैवमर्थाधिकारानुरोधेनोशनस्पुरुदंससोष्ठिलोपे सर्वनामस्थाने चासम्बुद्धाविति सान्तमहत इति च दीर्घः स्यादिति वाच्यम्, अङ्गवृत्तपरिभाषया समाधानात्। यत्तूशनसः सम्बुद्धावनङ्नलोपश्च वा वक्तव्य इति वृत्तौ पठ्यमानवचनार्थस्य ज्ञापकमिति, तन्न; तस्य वचनस्य भाष्यादावनुपलम्भादप्रामाणिकत्वस्य वक्ष्यमाणत्वादित्यलम्। **तृन्निति सूत्रस्थवार्त्तिके नेति**। 'तृन्विधावृत्विक्षु चानुपसर्गस्यानिट्त्वञ्चे'त्येतेनेत्यर्थः। तत्रा'नुपसर्गस्ये'त्युक्त्या प्रशास्तृ—प्रतिहर्त्रोस्तृजेव, न तृन्, इडभावार्थं तृणादिषु तद्व्युत्पादनमावश्यकं, तदाह—**आदिग्रहणात्प्रशास्तृशब्दस्यैवेति**। अस्य=उद्गातृशब्दस्यैव। **व्युत्पादनमप्रामाणिकमिति**। अनिट्त्वस्य स्वतः सिद्धत्वादिति भावः। नन्वेहमनर्त्विज्यपि

❀ विषमपदविवृतिः ❀

**प्राधान्याच्चेति**। सर्वेषां कार्याणां रूपनिष्पत्त्यर्थत्वादिति भावः। ननु रूपातिदेशे स्वरादेशो न स्यात्, वर्णसंस्थानविशेषस्यैव रूपत्वेन स्वरस्यारूपत्वात्, अत एव विभिन्नस्वरकयोर्विभिन्नार्थयोर्हरिणीशब्दयोः सरूपाणामित्येकशेष इत्याशङ्क्याह—**तच्चेत्यादि**। **अथ तदाकर्षाभावादिति**। यद्यपि स्थानषष्ठ्यभावेन स्थानेन्तरतमपरिभाषा नोपतिष्ठते, तथापि रूपातिदेशस्य फलतः स्थान्यादेशभावपर्यवसायित्वेनोक्तपरिभाषाप्रवृत्तिमभिप्रेत्येदम्। **सञ्ज्ञाशब्दानामिति**। इदमुणादिव्युत्पन्नानामित्यनेन पाक्षिकम्। **यथान्यास इति**। 'ण्वुल्तृचौ' 'अप्तृन्तृच्'इति यथान्यासे इत्यर्थः।

पङ्कजादिवद्योगरूढोऽयम्। ये त्वौणादिकत्वमेवास्य स्वीकृत्य भाष्यप्रयोगादेव दीर्घत्वमिच्छन्ति, ते मान्याः, भाष्यकृताऽन्यप्रयोगस्योदाहरणत्वेन दानेऽप्यस्य भाष्यप्रयोगत्वाभावात्।

'ण्वुल्तृचावि'ति भाष्ये तु—"तृचश्चकारो व्यर्थः, न च 'अप्तृन्तृ'जित्यादौ विशेषणार्थः, 'तृ' इत्येव सिद्धेः। न च 'तृ' इत्युच्यमाने मातरौ पितरावित्यादौ प्राप्नोति, तत्र हि तृप्रत्ययो निरनुबन्धक इति वाच्यं, नप्तृग्रहणस्य 'योनिसम्बन्धवाचिनाञ्चेद-स्यैव नान्येषां योनिसम्बन्धवाचिना'मिति नियमात्—"इत्युक्तम्। नेष्टृत्वष्टृहोतृपोतृणान्तृन्न-न्तत्वस्य, प्रशास्तुस्तृजन्तत्वस्य 'तृन्नि'तिसूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषाङ्ग्रहणं प्रपञ्चार्थमेव। एवञ्च यथान्यासे नियमफलं चिन्त्यम्।

**क्रोष्टेति**। अनङि 'सर्वनामस्थाने चे'ति दीर्घः, प्रथमोपस्थितत्वात्। क्रोष्टारा-वित्याद्यर्थन्तु तल्लेखः। यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः।

**विभाषा तृ**। अयमपि नियम एव—'तृतीयादावच्येवोभयमि'ति। तेन भ्यामादौ,

❀ अभिनव-चन्द्रिका ❀

नियमशरीरन्तु 'उणादिनिष्पन्नानां तृन्तृजन्तानां दीर्घो यदि भवति तर्हि नप्त्रादीनामेवेत्येवेति।

**अयमपि नियम एवेति**। अपिरेवार्थे, लाघवादेकस्य सूत्रस्य नियामकत्वे सिद्धे सूत्रत्रयस्य नियाम-कत्वे गौरवात्। **विशिष्टाभावस्य सुलभत्वादिति**। नच क्रोष्टूनित्यादौ तृन्नन्तत्वाभावप्रयुक्त एव विशिष्टाभावः कस्मान्न स्वीक्रियते, तथा च तुन्नन्तस्य प्रयोगो न स्यादिति वाच्यम्, 'विभाषा तृतीया-दिष्वची'ति नियमेन तुन्नन्तत्वविशिष्टतृजन्तत्वाभावस्यान्यत्र नियमनात् प्राधान्यादन्यत्र विशेष्या-भावप्रयुक्तविशिष्टाभावकल्पनेनैवोपपत्तौ गौरवादुभयाभावप्रयुक्त-विशिष्टाभावस्य विशेषणाभावप्रयुक्त-

❀ चिदस्थिमाला ❀

शब्द इति कथं तत्त्वमत आह—**पङ्कजादीति**। सकलप्राचीनवर्णितमूलाशयं खण्डयति—**ये त्विति**। इदमपि सर्वमभ्युपेत्योक्तं, वस्तुतश्चिन्त्यमिदमित्याह-**ण्वुल्तृचाविति**। अत एव तुः। 'उक्त'मित्यत्रान्वयः।

भाष्यान्तरमाह-**नेष्टृिति**। **क्षन्निति**। इदमपि भाषाविषयं, छन्दसि तृजन्तत्वस्य तत्रैवोक्तत्वात्। एवञ्च= मात्रादेर्निरनुबन्धकतृप्रत्ययान्तत्वे च। यथान्यासे=तृचश्च सत्त्वे। अन्यथोक्तरीत्या तत्प्रत्याख्यानासङ्गतिः स्पष्टैव। एतेन मूलानुयायिनः सर्वे निरस्ताः। तल्लेखः=अप्तृन्नित्यस्य लेखः। अत्रास्वारस्यादाह—**यद्वेति**। **विशेषेति**। प्रतिपदोक्तत्वादित्यर्थः। अनिरवकाशत्वेन तस्याबाधकत्वेऽपि पूर्वप्रवृत्तिनियामकत्वस्यान्यत्र स्पष्टत्वादिति भावः। सिद्धे आरम्भाच्छाब्दनियममाह—**अयमपीति**। तेन=अजादितृतीयाद्यभावेन।

❀ ज्योत्स्ना ❀

उद्गातृशब्दप्रयोगः प्राप्नोतीत्यत आह—**पङ्कजादिवद्योगरूढोऽयमिति। ते मान्या इति**। औणादिकत्वकल्पनमेकं, ततश्च प्राप्तस्य दीर्घाभावस्य भाष्यप्रयोगादभावकल्पनं द्वितीयं, 'होतृ-पोतृनेष्टोद्गातार' इति भाष्यप्रयोगात्तत्र दीर्घे इष्टापत्तावपि केवलोद्गातृशब्दे दीर्घाभावसाधनार्थ-मुपलक्षणता भाष्यप्रयोगस्य वक्तव्येति तृतीयति-अनेकगौरवग्रस्तत्वादेतस्य मतस्येति भावः।

**अन्यप्रयोगस्येति**। 'होतृपोतृनेष्टोद्गातार' इत्यस्येत्यर्थः। **नियमफलं चिन्त्यमिति**। भाष्योक्त-नियमेन मातृपित्रादिशब्दानां केवलतृप्रत्ययान्तत्वलाभात्तृजन्तत्वाभावाद्दीर्घप्राप्तेरभावादिति भावः। प्रथमोपस्थितत्वात्=अष्टाध्याय्यां प्रथमोपात्तत्वात्। एतदुल्लेखः='अप्तृ'न्नित्यस्योल्लेखः। विशेष-विहितत्वात्=तृन्तृचोः साक्षादुपादानेन दीर्घस्य विहितत्वात्। **शीघ्रोपस्थितिकत्वेनेति**। अन्तरङ्ग-

❀ विषमपदविवृतिः ❀

**नियमफलं चिन्त्यमिति**। मातरौ पितरावित्यादौ निरनुबन्धकत्वेन तृन्तृजन्तत्वा-

टासि, क्रोष्टुपुत्र इत्यादौ च न दोषः, सर्वत्र विशिष्टाभावस्य सुलभत्वात् ।

'तृज्वत्क्रोष्टुः' स्त्रियाञ्चे'त्याभ्यां सर्वनामस्थाने स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति । एतेन 'तृज्वत्सर्वनामस्थान एवेति नियमादिदं विध्यर्थ'मिति परास्तम् । न चैवमपि क्रोष्टूनित्याद्यसङ्गतम्, अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यं, 'तृज्वत्क्रोष्टु'रिति योगविभागस्यैवं सति वैयर्थ्यापत्तेः । न च 'तद्धितेष्वचामादेः' इको गुणवृद्धी' इति सूत्रयोः 'क्रौष्टः,' 'क्रोष्टीयाः' इति भाष्यप्रयोगासङ्गतिरिति वाच्यम्; ऋकारान्तस्यैव ऋषिवाचकत्वेनादोषात् ।

इदं सूत्रत्रयन्तु—शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम् ।

---

❀ अभिनव-चन्द्रिका ❀

विशिष्टाभावस्य च कल्पनायाः अन्याय्यत्वात् । सर्वनास्थानं स्त्रीलिङ्गं तृतीयाद्यजादिविभक्तिञ्च विहायान्यत्र सर्वत्र विशेष्यतृजन्तत्वाभावप्रयुक्त एव तुन्नन्तत्वविशिष्टतृजन्तत्वाभाव इति कल्पनेनादोषात् । सर्वनामस्थाने स्त्रियाञ्च-'स्त्रियाञ्च' 'तृज्वत्क्रोष्टु'रिति शास्त्रद्वयप्रामाण्यात्तद्विषये विशेषणतुन्नन्तत्वाभावप्रयुक्त एव विशिष्टाभाव इति सर्वनामस्थाने स्त्रियाञ्च तृजन्तमेव साधु, अन्यत्र तु तुन्नन्तः साधुरिति विवेकः । एवं 'पद्दन्नोमा'सित्यत्रापि बोध्यम् । तेनापि सूत्रेण पादशब्दादिसमानाधिकरणपच्छब्दादेरभावस्य शसादिव्यतिरिक्ते बोधनेन पच्छब्दाद्यभावप्रयुक्त एव विशिष्टाभावः प्राधान्याद्बोध्यते, अतो न शसादिव्यतिरिक्ते पद्दादीनां प्रयोगः । एवं 'विप्रतिषिद्धं चानाधिकरणे'ति सूत्रेणापि इतरेतरयोगद्वन्द्वत्वसमानाधिकरणसमाहारद्वन्द्वविधानादन्यत्र—[ अविप्रतिषिद्धद्रव्यवाचकादौ— ] विशेष्यसमाहारद्वन्द्वाभावप्रयुक्त एवोभयाभाव-

❀ चिदस्थिमाला ❀

तत्र विशेषणाभावमाह—**भ्यामादाविति** । विशेष्याभावमाह-**शसीति** । उभयाभावमाह-**क्रोष्टुपुत्र इति** । तदेवाह—**सर्वत्रेति** । अपिसमुच्चेयः प्रागुक्तनियमस्तु न शाब्दो नापि तृज्वद्भावीय इत्यतो विलक्षण इत्याह-**तृज्वदिति** । **विधानेनेति** । सर्वनामस्थानादौ तुन्नन्ते तृज्वत्त्वस्य कथमप्यप्राप्तत्वादित्यर्थः । एतेन विभाषेतिनियमार्थमन्यत्सूत्रद्वयं विध्यर्थमेवेत्यपास्तम् । एतेन=उक्तरीत्या तस्य विधायकत्वेन । इदं= 'विभाषे'ति सूत्रम् । एवमपि=विभाषेत्यस्य नियामकत्वेऽपि । **योगेति** । तेनैव सर्वनामस्थानेपि तृजन्तमात्रप्रयोगसिद्धया नियमस्य सजातीयविषयतया स्त्रियामुक्तप्रयोगनिरासाय तृज्वत्क्रोष्टुः स्त्रियामित्येव वदेदिति भावः । तस्मादुक्तनियमेनान्यत्र तुन्नन्तमेवेति सिद्धम् । तत्र शङ्कते-**न चेति** । यथाक्रममाह—**क्रौष्ट इति** । एवेनोकारान्तव्यवच्छेदः । सूत्रविरोधं परिहरति-**इदमिति** । अत्र मानमाह—**तदुक्तमिति** । मृगशब्दोऽत्र

❀ ज्योत्स्ना ❀

न्यायोऽत्र बाधकत्वे मूलमिति लक्ष्यते । एष एव=अप्तृन्निति दीर्घ एव । **प्रयोगनियमार्थत्वमिति** । 'तृज्वदेव सर्वनामस्थाने न तुन्नन्तम्' इत्येवं नियमेनेत्यर्थः। **परास्तमिति** । उपक्रमस्थतृज्वत्पदबोधितप्रधानार्थस्यान्यत्र सम्बन्धाभावबोधकनियमापेक्षया सर्वनामस्थानपदबोध्यनिमित्तत्वस्याऽप्रधानस्य तुन्नन्तनिरूपितत्वसङ्कोचकल्पने लाघवादिति भावः । **उक्तनियमस्येति** । तृतीयादावच्येवोभयमित्येवं रूपस्येत्यर्थः । **वैयर्थ्यापत्तेरिति** । तथा च तृतीयादावच्येवोभयमिति नियमादन्यत्र प्रधानस्य तुन्नन्तस्यैव प्रयोगकल्पनात्क्रोष्टूनित्यादेर्नासङ्गतिरिति भावः । अन्यत्र तुन्नन्तस्यैव प्रयोगकल्पने भाष्यप्रयोगविरोधमाशङ्क्य समाधत्ते—**नचेत्यादि** । **क्वचित्सवर्णस्येति** । इदं 'स्थाघ्वोरिच्चे'ति

❀ विषमपदविवृतिः ❀

भावादेव दीर्घापत्तेरिति भावः । **विशिष्टाभावस्येति** । भ्यामि तृतीयादिपरत्वेपि शस्यजादिविभक्तिपरत्वेऽपि-क्वचिद्विशेषणाभावेन क्वचिद्विशेष्याभावेन चाजादित्वविशिष्टतृतीयादिविभक्तिपरत्वाभावस्य सुलभत्वमित्यर्थः ।

**एतेनेति** । उक्तनियमस्यैव निर्दुष्टत्वेनेत्यर्थः । तथा च 'तृज्वत्क्रोष्टु'रित्यस्य तृज्वत्सर्वनामपरत्व-

तदुक्तं भाष्ये—'तृज्वद्भावविषये एतत्तृजन्तं मृगवाचीति, तृतीयाद्यजादिविभक्तिषु—'तृजन्तं तुन्नन्तञ्च मृगवाची'ति च । अनेन हि अन्यत्र तुन्नन्तमेवेत्यपि सूचितमिति दिक् ।

**ऋत उत्** । 'तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्यर्थं, तेनामू इत्यादिसिद्धि'रिति 'च्वौ'रिति सूत्रे कैयटः । यत्तु तपरत्वं 'ढ्लोप' इति दीर्घबाधनार्थमिति, तन्न,—

'सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ।
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ॥'—

—इति रामायणप्रयोगविरोधात् । 'उरण्रपर' इति सूत्रेऽण्ग्रहणाभावे 'ऊ-रपर' इति भाष्यप्रयोगविरोधाच्च ।

**सस्यैवेति** । संयोगान्तलोपेन सिद्धे नियमार्थं, तेन—ऊर्गित्यादौ नेति भावः । विपरीतनियमस्तु न, 'पुमान्स्त्रिया' इति निर्देशात् ।

'एरनेकाच' इति सूत्रमेरितिपदरहितं सानुवृत्ताऽऽवृत्तविशेषणं सवार्त्तिकञ्चानुवर्तते

॥ अभिनव-चन्द्रिका ॥

इतीतरेतरभावो भवत्येवेति दिक् । **इत्यादिसिद्धिरिति** । वस्तुतस्तु—अन्तरङ्गपरिभाषाया अनित्यत्वं स्वीकृत्य 'अदसोसे'रित्यत्र समाहारद्वन्द्वनिर्देशेनैवोपपत्तौ इयं परिभाषा विफला । **विपरीतनियम इति** । 'सस्य लोपश्चेद्रेफात्परस्यैवे'ति विपरीतनियम इत्यर्थः । **निर्देशादिति** । नच 'झरो झरि सवर्णे'इति लोपेनेदं रूपं सिध्यतीति न निर्देशासङ्गतिरिति वाच्यम्, अस्यासिद्धत्वेन 'नश्चापदान्तस्ये'त्यनुस्वारापत्त्या निर्देशासिद्धेः । एतेन व्यञ्जनात्परस्यैकस्यानेकस्य वा उच्चारणे वैलक्षण्याभावादिदमसङ्गतमिति परास्तम् ।

॥ चिदस्थिमाला ॥

हरिणादिजातिवाची । एतेन सामान्यतस्त्रिसूत्र्या नियमपरत्वं वर्णयन्तोऽन्ये सर्वे प्रत्युक्ताः । उक्तभाष्यप्रयोगात्तृतीयादिशब्देन तद्धितस्यापि ग्रहणमिति वदन्तोऽपि, हलादिषूभयान्तस्यैव प्रयोग इति वदन् शाकटायनिः(?) नदाह—**इतिदिगिति** । क्वचित्—उकारांशे । **कैयटकौस्तुभाद्युक्ति खण्डयति—यत्त्विति** । एवार्थलाभे बीजमाह—**संयोगान्तेति** । **विपेति** । 'रादेव सस्ये'त्येवमित्यर्थः । नन्वेवं परमलुवावित्यादिवत् सकृल्ल्वावित्यत्रापि यण्

॥ ज्योत्स्ना ॥

सूत्रे 'इच्चकस्य तकारेत्त्व'मिति वार्त्तिकव्याख्यानपरकैयटीये स्पष्टम् । **कैयट इति** । यद्यपि 'च्वौ'रित्यत्र 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाती'त्यर्थे एव ज्ञापकत्वं तेनोक्तं, तथाप्युक्तार्थे एव तस्य तात्पर्यम्, 'सनाशंसभिक्ष उः,' 'तनादिकृञ्भ्य उ'रित्यादौ सवर्णग्रहणस्येष्टत्वादिति भावः । अत्राधिकं यद्वक्तव्यं तत्परिभाषाप्रदीपार्चिष्युक्तम् । **कर्मत्वाद्यणिति** । एतेन क्रियाविशेषणानां कर्मत्वोक्तिः—'ततोऽन्यत्रापि दृश्यत' इति दृशिग्रहणसिद्धद्वितीयोपलक्षणम्, न कृद्योगे, षष्ठ्याः कर्मणि लकारस्य च तत्रादर्शनादिति परास्तम् । षष्ठीलकारविध्योः कर्मग्रहणस्य कर्तृसाहचर्याद्धात्वर्थे भेदेनान्वयिकर्मबोधकत्वेन दोषोद्धारादिति परिभाषाप्रदीपार्चिषि विस्तरः ।

॥ विषमपदविवृतिः ॥

एवेति नियमपरत्वे सर्वनामस्थाने तुन्नन्तस्यापि प्रयोगापत्तिः, आवृत्त्या द्विविधनियमपरत्वेऽपि 'क्रोष्टुपुत्र' इत्यादौ तृजन्तस्य प्रयोगापत्तिः, 'तृजन्तं सर्वनामस्थाने एवे'ति नियमे विभक्त्यन्तर एव

१ एव 'विभाषावृक्षमृगे'त्यत्रापि बहुप्रकृतेरेवेतरेतरयोगद्वन्द्वविशिष्टसमाहारविधानाद्वदरामलके इत्यादौ विशेष्याभावप्रयुक्त एवोभयाभावः ।

इत्याह—**धात्ववयवे**त्यादि । **गती**त्यादि च । सकृल्ल्वावित्यत्र क्रियाविशेषणत्वे कर्मत्वाद्यण् ।

'न भूसुधियो'रिति निषेधे प्राप्ते आह—**वर्षाभ्वश्चेति** ।--'वर्षाभूर्दर्दुरे पुमान्' **स्वार्थिक इति** । स्वस्याः प्रकृतेरर्थः--स्वार्थस्तत्र भव इत्यर्थेऽध्यात्मादित्वाट्ठञ् । द्वारादि स्वग्रामस्व ध्यायशब्दयोः पाठेन--'स्वशब्दादेश्चेदेतयोरेवे'ति नियमार्थकेनैजागमो न । पुनर्भू शब्दस्य रूढस्य नित्यस्त्रीत्वादाह—**यौगिक इति** ।—**इत्यूदन्ताः** ।

वर्णैकदेशानां वर्णग्रहणेनाग्रहणे रेफाभावादाह—**ऋवर्णादिति** । **व्युत्पत्तिपक्षे इति** । अव्युत्पत्तिपक्षेऽबादिष्वपाठाद्दीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धक तृप्रत्ययान्ता एवेति 'ण्वुल्तृचा'विति भाष्यस्वरसः ।—**इत्यृदन्ताः** ।

**वैकल्पिकेति** । '**यत्तदेतेभ्य**' इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य, 'क्षिय' इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः । अनुकरणस्यानुकार्य शब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वम् । अनुकार्य्यश्चानुकरणाद्भिन्नमेवेति 'मतौ छ इति सूत्रे भाष्ये स्पष्टम् । ईषदानुपूर्वीव्यत्ययेऽपि वाचकसादृश्यादर्थोपस्थापकत्व मिति–अत्र कैयटे, प्राग्दीव्यतोऽणित्यत्र भाष्ये च स्पष्टम् । अत एव 'किर' इत्यादितः

※ अभिनव-चन्द्रिका ※

**ऐजागमोनेति** । नच सौवर्यः सप्तम्य' इति निर्देशासङ्गतिः, स्वशब्दाचेत्स्वाध्यायसङ्ग्राम शब्दयोरिति नियमेनैचोऽप्राप्तिः, अत एव 'अप्राकृतस्तु यः स्वारः' इत्यादिनिर्देशाः सङ्गच्छन्त इति वाच्यं, स्वरशब्दस्य सुपूर्वकऋधातोरचि एकः, सुशब्दपूर्वकराधातोः कप्रत्यये द्वितीय इति द्विविधस्वरशब्दस्य स्वीकारेणादोषात् । अत्र च 'सौवर्यः सप्तम्यः' 'अप्राकृतस्तु यः स्वार' इत्यादि

※ चिदस्थिमाला ※

न स्यादत आह—**सकृदिति** । यादवमाह—**वर्षाभूरिति** । ऐजभावकृतासाधुत्वं निराचष्टे–**स्वस्या इति** । **द्वारादिष्विति** । स्वशब्दवत्तयोरपि पाठेनेत्यर्थः । स्वशब्देन केवलवत्तदादेरपि ग्रहणमिति भ्रम-निरासायाह–**नियमेति** । एतेन 'स्वार्थिकाः प्रकृतित'इति भाष्यप्रयोगान्नेति शास्त्र्युक्तमपास्तम् । वस्तुतस्त-स्यात्राप्राप्तिरेवेति बोध्यम् । ग्रहणपक्षेऽनुपयोगं सूचयन्नाह–**वर्णैकेति** । मूलासाङ्गत्यं वक्तुं तत्तात्पर्यमाह–**अव्युत्पत्तीति** । तदेवाह—**व्युत्पत्तीति** । **तृप्रत्ययान्ताः**–पित्रादयः । **यत्तदिति**–असन्देहायैकशेषो न कृतः । एतेन तदकरणेन वैकल्पिकत्वं ज्ञाप्यत इति **शास्त्रिदण्ड्या**द्युक्तमपास्तं, तद्ध्वनयन्नाह—**क्षियइति** ।

नन्वभेदपक्षे तस्येष्टार्थत्वाभावेन कथमिष्टसिद्धिरत आह–**अनुकरणेति** । मात्रपदेन तदर्थनिरासः । ननु भेद-सादृश्येनैव तदुपस्थितिरिति न तत्र वृत्तिरत आह—**अनुकार्यमिति** । **एवेन**—सकलग्रन्थकारोक्ताभेदपक्ष-निरासः । नन्वेवमपि तस्य विकारे आनुपूर्वीभेदात्कथं ततोऽप्रतीतिरत आह—**ईषदिति** । **वाचकेति** । अनुकरणेत्यर्थः । अर्थः=अनुकार्यम् । अत्र=मतौ छ इत्यत्र । 'कृधातो'रिति.पाठः । नन्वेवं 'भूसत्ताया'मित्यादौ

※ ज्योत्स्ना ※

**स्वग्रामस्वाध्याययोः पाठेनेति** । द्वारादिषु स्वशब्दस्य केवलस्य पाठात् तदादिग्रहणस्य तत्र चोदितत्वात्तेनैव स्वग्रामस्वाध्याययोरपि ऐचः सिद्धत्वात्तयोः पाठो नियमार्थ इति भावः । तत्र तदादिग्रहणे ज्ञापकं—द्वारादिषु पठ्यमानस्य श्वशब्दस्य 'श्वाभस्त्रि'रिति तदादौ प्राप्त्यभावात्,–
–श्वादेरिञिति सूत्रम् ।

※ विषमदविवृतिः ※

तृनन्तप्रयोगवारणात् । तत्र लक्षणवशेनेत्त्वप्रवृत्तावपि 'किर'इत्यस्यानुकरणत्वाभावात् ।

'धातोः कार्यमुच्यमान'मिति परिभाषा तु 'किरश्च पञ्चभ्य' इति निर्देशादनित्या ।

कधातुरिति बोधः । 'भू सत्ताया'मित्यादौ त्वित एव निर्देशात्कदाचिदनुकरणाद्विभक्त्य-भावोऽपि, स च सूत्रेष्वेवेति–प्रामाणिकाः । 'गवित्ययमाहे'ति वान्तस्यैवानुकरणम् , अनुकार्यस्वरूपभङ्गभिया च न वलोपः, 'झलां ज'शित्यादौ जश्त्वाभाववदित्याहुः ।

**इत्वे इति** । 'किरश्च पञ्चभ्य' इति निर्देशादधातुप्रत्ययेऽपि तत्प्रवृत्तिरिति भावः । **कीरिति** । कॄधातुरित्यर्थः । **गुणो नेति** । 'ऋत उ'दित्युत्वमप्यत एव न । अत एव 'ग्रो यङी'ति सूत्रनिर्देशः सङ्गच्छते ।—**इत्यृदन्ताः** ।

**अनङिति** । ऋऌवर्णयोः सावर्ण्यादिति भावः । **गम्ऌनिति** । ऌवर्णस्य दीर्घाभावादृवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्यकृता 'ऋति ऋवा' इत्यादिविधेययो रेफद्वयगर्भ-ऌद्वयगर्भयोरच्त्वदीर्घत्वाङ्गीकारेणात्र द्विऌकार ईषत्स्पृष्टो दुर्वारः, आमि च तथा धातॄणामित्यत्र रेफद्वयगर्भोऽपीति चेन्न; 'अकः सवर्णे' इति सूत्रे उक्तोत्तरत्वात् ।

**गम्लेति** । यत्तु—ऌण्सूत्रे 'उरण्रपर' इत्यत्र 'अ'जिति वक्तव्येऽण्ग्रहणसामर्थ्येनाणपूर्वेणैवे-

❀ अभिनव-चन्द्रिका ❀

निर्देशा एव प्रमाणमिति दिक् । **न वलोप इति** । गवित्यस्य सादृश्यज्ञानाधीनोपस्थित्याऽर्थविषयकबोधजनकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थित्याऽर्थविषयकबोधजनकत्वरूपार्थवत्सूत्रोक्तार्थवत्त्वस्याभावेन प्रातिपदिकत्वाभावादिति भावः । **उक्तोत्तरत्वादिति** । ह्रस्वऋकारद्वयस्थानिकस्यैव ईषत्स्पृष्टऋकारस्य, ह्रस्व ऋकार—ह्रस्वऌकार—एतदुभयस्थानिकस्यैवेषत्स्पृष्टऌकारस्य च

❀ चिद्स्थिमाला ❀

दोषोऽत आह–**भूसत्तायामिति** । उक्तभाष्याद्यविरोधायाह–**इत एवेति** । नत्वभेदपक्षोऽप्यस्तीति भावः। सच= अभावश्च । सूत्रेष्वेव–सूत्रादिष्वेव पाणिन्यादिपठितेषु । नन्वेवं गवित्ययमित्यादौ दोषोऽत आह–**गविति** ।

सोर्हल्ङ्यादिलोपादाह—**वान्तेति** । नन्वेवं वलोपापत्तिरत आह—**अनुकार्येति** । चस्त्वर्थे । **आहुरिति** । भाष्यतत्त्वविद इत्यर्थः । 'ननु धातोः स्वरूपे'तिपरिभाषासत्त्वे कथमत्रेत्त्वमत आह—**किरश्चेति** । सौत्रत्वादिकल्पनात इदमेवोचितमिति भावः । मूले न्यूनतां निराचष्टे—**ऋत उदिति** । अत एव=तपरत्वादेव । न स इष्ट इति मूलाशयनिरासायाह–**अत एवेति** । आदिना–ऌतिऌवेति । अत एव क्रमेणाह—**रेफेति** । अत्र=शसि । प्रसङ्गादाह—**तथेति** । शङ्कायुक्तिं खण्डयति—**यत्त्विति** । अस्य–

❀ ज्योत्स्ना ❀

**इत्याहुरिति** । अनुकरणाद्यथा विभक्तेरप्राप्तिस्तन्मतपरिष्कारश्चाइउणित्येतत्सूत्रव्याख्यायां दर्शितः।

❀ विषमपदविवृतिः ❀

**इत एव निर्देशादिति** । अनुकार्यानुकरणयोरभेदविवक्षा त्वप्रामाणिकीति भावः । **न वलोप इति** । 'लोपः शाकल्ये'त्यनेन । 'लोपो व्यो'रिति लोपस्तु छान्दसः, परनिमित्तकत्वेन बहिरङ्गश्च । यद्यपि 'लोपः शाके'ति लोपस्य पाक्षिकत्वेनापि परिहारः सुलभस्तथाऽपि पक्षेपि लोपाकरणस्योपपत्तिस्तेनेत्यदोषः । **इत्यृदन्ताः** ।

**उक्तोत्तरत्वादिति** । इदमयुक्तं, विवृतत्वसाम्येन कदाचिद्विवृतस्य, ऌकारसाम्येन कदाचिदीषत्स्पृष्टस्येत्याद्युक्तरीत्यैतद्दोषद्वयावारणात् । न च धातॄणामित्यत्र रेफद्वयाघटितत्वविवृतत्वरूपधर्मद्वयसाम्येन विवृत एव दीर्घो भविष्यतीति वाच्यं, तथा सति 'होतृ–ऌकार' इत्यत्रापि ऌकारद्वयाघटितत्वविवृतत्वरूपधर्मद्वयसाम्येन विवृतस्यैवापत्तावीषत्स्पृष्टस्य पक्षेप्यनापत्तेः । वस्तुतस्तु गमॄनित्यत्र-

त्युक्तं भाष्ये, ऌकारस्य यणि हि तत्र लपरत्वार्थं परेणाऽण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता। ऋकारस्य यणि तु 'रो री'ति लोपेन न विशेष इति, तन्न; ऋकारांशे हल्रूपाऽणि 'रोरी'ति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्याल्लृकारांशेऽपि हल्रूपाऽण्यप्रवृत्तिरित्याशयात्। वस्तुत ईदृशानामभिधाने दृढं मानं चिन्त्यम्।

**सेरिति**। इना सहेत्यर्थः। 'वोपसर्जनस्ये'ति सत्वम्। एकादेशस्य पूर्वान्तवत्त्वेऽपि लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वात्—अव्ययमिति—महासञ्ज्ञयाऽस्यानव्ययत्वान्न विभक्तिलुक्।

## ॐ अभिनव-चन्द्रिका ॐ

साधुत्वस्योक्तत्वादिति भावः। **लिङ्गाद्यन्वय्यर्थप्रातिपदिकत्वादिति**। नचैवमव्ययीभावस्य 'अव्ययीभावश्चे'त्यनेन नपुंसकत्वादव्ययीभावे तत्प्रयुक्तकार्यानुपपत्तिरिति वाच्यं, विनापि

## ॐ चिद्स्थिमाला ॐ

'विशेष इती'त्यत्रान्वयः। **ऌकारस्येति**। 'तत्रे'त्यादिः। **असङ्गता**—'स्या'दिति शेषः। तस्मात् गम्लृत्यादौ न यणितिभावः। ऋकारांशे तु नेदं फलमित्याह—**ऋकारेति**। **आशयादिति**। 'भाष्यस्ये'त्यादिः। तत्सूचिताऽरुचिमाह—**वस्तुत इति**। इदञ्चान्यत्र स्पष्टम्। नन्वेवं पूर्वान्तवत्त्वेनाव्ययत्वात्सोर्लुक् स्यादत आह—**एकेति**।

## ॐ ज्योत्स्ना ॐ

**दृढं मानं चिन्त्यमिति**। चिन्ताबीजन्तु—सूत्रमते ऋकाराल्कारयोः सावर्ण्याभावात्लृकारस्य लकारेऽपि उः स्थानेऽणोऽभावान्न लपरत्वप्राप्तिरित्यभिप्रेत्य पूर्वेणाण्ग्रहणे णकारानुबन्धस्य भाष्योक्तज्ञापकत्वं नानुपपन्नम्, भाष्योक्ता तत्र विकल्पानुवृत्तिस्तु सूत्रकृन्मताभिप्रायेणैव,तज्ज्ञापकस्य अणुदिदित्यत्र णकारानुबन्धस्याण्ग्रहणप्रत्याख्यानवादिवार्त्तिककृन्मतेऽभावात्, तथा च 'नाज्झला'वित्यत्र वार्त्तिके—अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वादिति,—परश्शतानीत्यत्र पारस्करादित्वात्सुटि श्चुत्वद्विवचनयोर्झरोझरीतिलोपाभावार्थं, तद्विकल्पानुवृत्तावनर्थकं भवेत्। तदेतदभिप्रेत्य हयवरट्सूत्रे'ऽत्यन्तसन्दिग्धमाचार्याणां,—वर्त्तते विभाषा नवेती'ति भाष्यमित्याहुः।

अन्ये तु—विकल्पानुवृत्तावपि 'उरण्रपर' इत्यत्र णकारोपादानस्य पूर्वेणाण्ग्रहणज्ञापकत्वपर-

## ॐ विषमपदविवृतिः ॐ

षत्स्पृष्टस्य शङ्कैव निर्दला, तस्य पूर्वसवर्णत्वाभावात्। गमृणामित्यत्र तु पक्षे ईषत्स्पृष्ट ऌकार इष्यत एव। **न विशेष इति**। ननु कृतेरा कृत्या, तेन कृतिरौ[1] इत्यत्र ऋत्यक इति प्रकृतिभावे ऋकारस्य यणि रपरत्वेन 'रोरी'ति लोपे 'ढ्रलोप' इति दीर्घे विशेषःस्पष्ट इति चेत्—न; यणो बहिरङ्गतया 'इको य'णित्येकवाक्यतापन्नोरण्रपर इत्यस्यापि बहिरङ्गतया रेफस्यासिद्धत्वेन दीर्घाप्राप्तेः।

यद्वा—ढसाहचर्येणाऽनागमकरेफपरत एव दीर्घाङ्गीकारेणादोषात्। यत्तु 'आ च आ च—'ऋ—आ'तेन 'ऋरा'इत्यत्र दीर्घापत्तिमाशङ्क्य यणोऽचः परेति स्थानिवत्त्वेन ऋकारपरत्वबुद्धौ लोपप्रयोजकरेफपरत्वाभावान्न दीर्घ' इत्युक्तं, तन्न; 'ढ्रे'ति सूत्रे पूर्वेणाण्ग्रहणस्य निश्चितत्वेन दीर्घप्राप्तेरेवाभावात्, पदान्तविधित्वेन स्थानिवद्भावस्य दुर्लभत्वाच्च। **दृढं मानश्चिन्त्यमिति**। इदमसङ्गतम्—अग्निपुराणे 'इको य'णित्यस्य लाकृतिरित्युदाहरणदर्शनात्। अलोन्त्यस्येत्यतोऽल्ग्रहणमपकृष्य शब्दाधिकारं चाश्रित्योः स्थाने लकारभिन्नोण् रलपर इत्यर्थाङ्गीकारेण लाकृतिरित्यग्निपुराणोक्तप्रामाण्येन मूलोक्तसाहचर्याश्रयणाद्वा नोरण् इति सूत्रस्थभाष्यविरोधः। **महासञ्ज्ञायाऽनव्ययत्वादिति**। यत्त्विदं

१ कृतिशब्दस्य ऋशब्देन समासे कृति—ऋशब्दात्—टाविभक्तौ रूपमिदम्। 'आ' इति ऋशब्दस्य सौ रूपम्। 'कृत्या' इति च 'कृति—ऋ' शब्दस्य सौ रूपमिति तत्त्वम्।

सादेशात्पूर्वमाद्गुणस्तु न; 'नेन्द्रस्ये'ति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः । न च 'नान्तः पाद'मितिसूत्रस्थेन—'न चैङः पदान्तात्परो रुरस्ती'ति भाष्येण विरोधात्सावीदृशानां प्रयोगोऽनुचितः, सावपि पदत्वसत्त्वादिति वाच्यम्, योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात् । 'सावप्रयोग एवे'त्यन्ये ।

**सय इति** । न चास्यान्तर्वर्त्तिविभक्त्या पदत्वात्—'एङः पदान्ता'दिति दुर्वारमिति वाच्यं, भाष्ये 'स्वादिष्वि'ति योगं विभज्य—स्वादिषु पूर्वं पदमित्यर्थः । ततो 'अ सर्वनामस्थाने यचि' । 'सुबन्त'मित्यनुवर्त्तते । 'अ यची'ति प्रसज्यप्रतिषेधः । तेन 'यजादौ सर्वनामस्थाने

❀ अभिनव-चन्द्रिका ❀

वतिमब्रह्मदत्तं ब्रह्मदत्तमाहेत्यादौ सादृश्यप्रतीतिदर्शनेनाव्ययीभावश्चेत्यनेन 'अनपुंसकोऽव्ययीभावो नपुंसक'मित्युक्त्या नपुंसकवदित्यतिदेशलाभेन नपुंसकप्रयुक्तकार्यसिद्धेः । **यजादौ सर्वनामस्थाने इति** । नच 'शम्भुरिवाचरति शम्भवति', 'परमकविरिवाचरति—परमकवयति'—एवं 'लेढीति लिहः' 'परमश्चासौ-लिहश्च परमलिहः'—तस्माण्णिजन्तादाचारक्विबन्ताद्वा वनिपि-परमलिह्वेत्यादौ,

❀ चिदस्थिमाला ❀

नन्वेवमप्यन्तरङ्गत्वाद्गुणे सादेशेऽदन्तरूपापत्तिः, तदभावे 'सहे' इत्येव स्यादत आह—**सादेशादिति** । नच=नहि । अत्र मानाभावादाह—**सावप्रेति** । 'दान्तादिति दुर्वार'मिति पाठः । **विभज्येत्यस्य**—व्याख्यानेऽन्वयः ।

❀ सदाशिवभट्टीयम् ❀

**त्रिलिङ्गेनेति** । [ पृ० २७५ ] नपुंसके ह्रस्वात्प्राक् समानाकारत्वमिति बोध्यम् ।

**सय इति** । **प्रसज्येति** । **अनुवर्तत इति** । सुप्तिङिति सूत्रादिति शेषः । **अयचीति** । इदश्चासर्वनामस्थाने इत्यत्रत्यनञ्सम्बन्धमभिप्रेत्य । **तेनेति** । इदमपि निषेधार्थकाऽशब्दमभिप्रेत्य ।

❀ विषमपदविवृतिः ❀

'स्वरादिनिपातमव्यय'मिति सूत्रविषयकम् । 'कृन्मेजन्त'इति सूत्रविषये तु अन्वर्थसञ्ज्ञा नाङ्गीक्रियते, अत एव कुम्भकारेभ्य इत्यत्राव्ययसञ्ज्ञापादककृन्मेजन्तसूत्रस्थभाष्यं सङ्गच्छते इति, तन्नः अव्ययीभावविषये वचनप्रामाण्याल्लिङ्गाद्यन्वयेऽव्ययत्वाङ्गीकारेऽप्यत्र तथाङ्गीकारे मानाभावात् । कृन्मेजन्तसूत्रस्थभाष्यं त्वेकदेश्युक्तिः । **आद्गुणस्तुनेति** । तस्मिन्सति उत्तरपदपरकसहशब्दाभावेन सादेशो न स्यात्, इकारैकदेशस्य तदुत्तरनिमित्तकत्वाभावेन न-अचःपरस्मिन्निति स्थानिवद्भावेनोत्तरपदत्वं प्रत्याशा । एतेनात्राद्गुणे विशिष्टस्य सादेशापत्त्याऽकारान्तं रूपमापद्येतेति मिश्रोक्तं परास्तम् ।

**इत्यन्ये इति** । इदं चिन्त्यम् । असिद्धवत्सूत्रे भाष्ये-'ओः सुपी'त्यत्राकारप्रश्लेषपर-'भुवोवुगिति-वार्तिकस्थ-ओरिति प्रयोगासङ्गतेः । सम्भवति चात्र पूर्वान्तत्वेनोकारस्य पदान्तत्वम् । तस्मात्सेरोः-सुपीत्यादौ पञ्चमीसमासेन स्थानिवद्भावान्नोत्वप्राप्तिरिति 'पदान्तादेङः परो रुर्नास्ति' इति भाष्यविरोधो न । एवम्—

'मदमत्तमयूरस्य पृष्ठे माल्यवतो गिरेः ।
सीताविरहसन्तप्तं रामं मुहुरमूमुहत् ॥'

—इत्यमियुक्तोक्तौ 'गिरा-इ'रिति कर्तृगुप्तोकावपि बोध्यम् । लद्रीत्या तस्याप्यसङ्गत्यापत्तिः ।

**अयचीति** । 'असर्वनामस्थाने'इत्यत्र 'अ' इति पृथक्पदं निषेधार्थकं, स एवात्राकारो निर्दिष्टः, नत्वसर्वनामस्थानेऽयचीति पदच्छेदः, नञ्द्वयवैयर्थ्यात् । **असर्वनामस्थाने इति** । 'प्रसज्यप्रतिषेध' इति वक्तुं युक्तम् । ननु सर्वनामस्थाने पूर्वं पदं नेत्येवास्तु, किं यचीति विशेषणेनेति चेन्न; 'सुवा'-

पूर्वं पदं न, मध्ये चेत्सुबन्तं तदपि पदं ने'ति व्याख्यानेनादोषात् ।

आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव । 'उत्तरपदत्वे चापदादिविधा'विति प्रतिषेधाच्च । 'उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्त्तव्येऽन्तर्वर्त्तिविभक्तेः प्रत्ययलक्षणं ने'ति तदर्थः ।

❀ अभिनव-चन्द्रिका ❀

एवं-'द्रोग्धीतिद्रुहः, परमश्चासौ द्रुहश्च-परमद्रुहः'तस्माण्ण्यन्तादाचारक्विवन्ताद्वनिपि परमद्रुह्वेत्यादौ च आरम्भपक्षे पूर्वरूपढत्वघत्वादिकं न भवति, प्रत्याख्यानपक्षे भवतीति फलभेद इति वाच्यम्, यजादौ सर्वनामस्थाने इत्यस्य-सुभिन्नप्रत्ययमात्रस्योपलक्षणत्वात् । नचैवमपि परमवाग्भ्यामित्यादावपि पदसञ्ज्ञानिषेधः स्यादितिवाच्यं, 'यजादौ सर्वनामस्थाने' इत्यस्य—हलादिस्वाद्यतिरिक्तप्रत्ययमात्रस्योपलक्षणतया निरुक्तदोषासम्भवात् । 'परमवाचा'मित्यादौ तु 'भ'मिति विभक्तसूत्रेण 'यजादौ सर्वनामस्थाने परे पूर्वं भसञ्ज्ञं, मध्ये चेत्सुबन्तं तदपि भं भवती'ति भसञ्ज्ञया पदसञ्ज्ञाया बाधाच्च न दोषः । न चारम्भपक्षे कार्यित्वनिवेशादुत्तरपदत्वे इति निषेधाप्रवृत्त्या-अटतीत्यट् परमश्चासावट् च परमाट्, तस्मादाचारक्विबन्तात् 'क्विच्क्वौ च सञ्ज्ञाया'मिति क्विपि प्रत्ययलक्षणेन पदत्वात् 'न पदान्ता'दिति ष्टुत्वनिषेधेन परमाट्तिरिति रूपं भवति, प्रत्याख्यानपक्षे च पूर्वोक्तदिशा पदसञ्ज्ञानिषेधात् ष्टुत्वेन 'परमाट्टि'रितिरूपमिति फलभेद इति वाच्यं, प्रत्याख्यानपरभाष्यप्रामाण्येन तस्यानभिधानात् ।

परे तु—कार्यित्वनिवेशे न मानम्, आरम्भप्रत्याख्यानयोः फलभेदात्पूर्वोक्तानां सर्वेषामेवानभिधानम् । यजादौ सर्वनामस्थाने इत्यस्योपलक्षणतया व्याख्यानं त्वयुक्तमेव, परमवाचावित्याद्यर्थं भमितियोगविभागेन मध्यस्य सुबन्तस्य च सञ्ज्ञाविधानस्यानर्थक्यापत्तेः । 'यजादौ सर्वनामस्थाने' इत्यस्य हलादिस्वाद्यतिरिक्तप्रत्ययमात्रस्य भवन्मते उपलक्षणत्वेन पदसञ्ज्ञानिषेधेनैवोपपत्तेरित्याहुः । **उत्तरपदस्येति** । उत्तरपदत्वञ्च—यद्वृत्त्यारम्भकसुब्निमित्तिका पदसञ्ज्ञा चिकीर्षिता

❀ चिदस्थिमाला ❀

ननूक्तरीत्योत्तरपदस्यापदत्वेन परादिवत्त्वेनापदत्वेऽपि पूर्वान्तवत्त्वेन स्यादेवात आह—**आदीति** । भाष्ये तथा प्रतिपादितत्वात् । उक्तप्रकारस्य गुरुभूतत्वेन लघुभूतं सिद्धान्तमाह—**उत्तरेति** । ननु नात्रोत्तरपदकार्यं, तस्यैवासत्त्वात्, तादृप्यानतिदेशाच्च, किन्तु पूर्वस्यैवात आह—**उत्तरेति** । अत्र बीजं ध्वनयन्नाह—**अन्तर्वर्तिविभक्त्येति** ।—पूर्वान्वयि । केचिदित्यरुचिबीजन्तु प्रत्याख्यानोत्तरं वचनस्थापनपरभाष्यप्रामाण्येन-

❀ ज्योत्स्ना ❀

भाष्याद्यव्यवस्थितविभाषात्वं कल्प्यमित्युक्तप्रयोगेष्वविरोधमाहुः । **उत्तरपदस्य तद्घटितस्येति** ।

❀ सदाशिवभट्टीयम् ❀

स्वादिषु पूर्वं पदम्भवति ततो यजादावसर्वनामस्थाने परे मध्ये चेत्सुबन्तन्तदपि पदम्भवतीति

❀ विषमपदविवृतिः ❀

गिति विशिष्टस्य सुबन्तत्वप्रयुक्तप्राप्तपदत्वस्यापि प्रत्ययलक्षणेन सर्वनामस्थानपरत्वेन निषेधापत्तेः ।

**पूर्वमिति** । सर्वनामस्थानं यस्माद्विहितं तदादीत्यर्थः, यस्मात्प्रत्ययविधिरित्यतस्तदनुवृत्तेः । **सुबन्तमिति** । 'सुप्तिङन्त'मित्यतः सुबित्यनुवर्तते इति भावः । **स्वमतेनाह—उत्तरपदत्वेचेति** । अत्र यद्वक्तव्यं तदन्यत्र वक्ष्यते । नन्वन्तर्भूतविभक्त्या मा भूत्पदत्वं, पूर्वान्तत्वेन तु दुर्वारमेवेत्यत आह—**आतिदेशिकस्यापीति** । **स्पष्टमेवेति** । प्रत्ययलक्षणेन प्राप्तपदत्वस्य तेन निषेधादिति भावः । **प्रतिषेधाच्चेति** । प्रतिषेधाद्वेत्यर्थः । पूर्वान्तत्वेन प्राप्तपदत्वस्य वारणायाह—**तद्घटितस्येति** । 'उत्तरपदत्वे'इत्यत्रोत्तरत्वावर्तते । एकमुत्तरपदपरम्, अपरन्तु उत्तरपदघटितपरं, वाशब्दश्चार्थे इति भावः ।

अतो न योगविभागमूलकप्रत्याख्यानेन फलभेद इति–केचित् ।

'इतोऽ'दित्यतोऽनुवृत्तं 'सर्वनामस्थाने' इति प्रथमया विपरिणम्यते, णिदित्यनेन सामानाधिकरण्यादित्याह—**सर्वनामस्थानमिति** । तत्र णितः कार्यस्यासम्भवात्–णिति यत्कार्यं तदतिदिश्यते । **शसेति** । अचीत्यधिकारात्तद्धितशसो न ग्रहणमिति भावः ।

**गामिति** । परत्वादत्र वृद्धिस्तु न, अनवकाशत्वेन आत्वस्यापवादत्वात् , तदाह–**ओतो णिदिति** । सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भावः । तेन चित्रगुरित्यादौ

❀ अभिनव चन्द्रिका ❀

तद्वृत्तिविशिष्टत्वं, वैशिष्ट्यञ्च 'स्वघटकार्थवद्व्यवहितपूर्वत्वाभाववत्त्व'—'स्वघटकत्वे'तदुभयसम्बन्धेन । तेन–अत्रयः–सृगवः–बहुपटवः–परमवाचा–परमलोम्निशयः–पूर्वदण्डिप्रियः–पञ्चगवधनः–इत्यादौ कुत्रापि न दोष इत्यन्यत्र विस्तरः । **प्रथमया विपरिणम्यत इति** । वस्तुतस्तु—विभक्तेः विपरिणाममकृत्वा णिदित्यत्र कर्मधारयं स्वीकृत्य गोशब्दाङ्गाव्यवहितोत्तरत्वविशिष्टसर्वनामस्थाने इत्सञ्ज्ञकणकारो भवतीत्यर्थेन सामञ्जस्यान्न विभक्तिविपरिणामः । न च 'गोतो वृद्धि'रित्येव सिद्धे णित्त्वकरणं व्यर्थमिति वाच्यं, 'णलुत्तमो वा' इत्यत्र 'णल्युत्तमे' इति वक्तव्यतया तन्त्रकपरिभाषोपस्थित्या 'चखादे'त्यादौ वृद्ध्यनापत्तेः । एवं गाङ्कुटादिसूत्रेण उत्तमणलो ङित्त्वाप्राप्त्या चुकुट चुकोटेतिरूपद्वयासिद्धेश्च ।

❀ चिदस्थिमाला ❀

एषामनभिधानमेवेति । एतेन 'थासः से' इत्यादिरनुकरणमिति दुण्डयुक्तमपास्तम् , अर्थासङ्गतेः । नञ्=प्राधान्यात्कार्यातिदेशे । ननु श्रूयमाणस्वरूपतद्धितशस एव ग्रहणेन कं साहचर्यमत आह—**अचीति** । **तदाह इति** । अपवादत्वमेव प्रकाशयन्नाहेत्यर्थः । मतान्तरासाङ्गत्यादाह—**सूत्रे इति** । प्रागन्यो-

❀ ज्योत्स्ना ❀

यद्यपि परादिवद्भावेनैकारमात्रमुत्तरपदं, तस्य च कार्यित्वं पूर्वरूपविधावस्ति, तथाप्यपदादिविधाविति पर्युदासात्प्रतिषेधो न प्राप्नोति, पूर्वान्तवद्भावात्तु पदत्वे आनीयमाने प्रतिषेध उक्तयुक्त्या प्रवर्त्तते इति भावः । **सूत्रे तपरकरणेनेति** । तद्धि 'चित्रगु'रित्यत्र णित्त्वाभावाय कृतं,

❀ सदाशिवभट्टीयम् ❀

वाक्यद्वयेन सुवाचेत्यादिसिद्धौ वाक्यत्रयकल्पना चिन्त्या । एवञ्च सौ परे फलभेदो नेत्यपरमनुकूलम् । शम्भवतीत्यादौ शमुपपदपूर्व्वसुबन्तभूशब्दादाचारक्विबन्ताल्लटि तिपि शपि गुणे पूर्व्वरूपमपि न, यजादौ· त्यादिशब्दस्य प्रकारवाचित्वेन शपोपि यजादित्वादिति । एवं सजनतीत्यादि बोध्यम् । **गोतोणित्** । **विपरिणम्यत इति** । **णित्कार्य्यमिति** । एवञ्च णिच्छब्दस्य णिद्वति लक्षणेत्यर्थः । वस्तुतः सप्तम्यन्तमेवास्तु, गोत इति तु षष्ठ्यन्तं, णिच्छब्दस्य णिन्निमित्तककार्य्ये लक्षणा । एवञ्च सर्व्वनामस्थाने परे

❀ विषमपदविवृतिः ❀

केचित्तु वाशब्दः पक्षान्तर बोधकः, उत्तरपदघटितत्वञ्चोत्तरपदाविषयकपदविषयकप्रतीत्यविषयत्वम्। 'से'इत्येतद्घटक–'ए'इत्यस्य परादिवद्भावेनोत्तरपदविषयत्वात्तदविषयकपदविषयकप्रतीत्यविषयत्वं घटादिपदे, तदविषयत्वं से इति समुदायस्य, तद्घटकत्वम्–ए इत्यस्य चेति तयोः पदत्वेन्तर्वर्तिविभक्तेः प्रत्ययलक्षणं न भवतीत्यर्थः । एतेन दधिसेगिति समुदायस्योत्तरपदघटितत्वेन समुदायोत्तरसुपस्तोः प्रत्ययलक्षणाभावप्रसङ्गात्तद्धटितस्येत्यसङ्गतमित्यपास्तमित्याहुः । **णित इति** । णिद्वत इत्यर्थः. वस्तुतस्तु 'सर्वनामस्थाने' इति सप्तम्यन्तं, 'गोत' इति षष्ठयन्तं, णित्पदं–णित्त्वप्रयुक्तकार्यपरम् । एवञ्च गोशब्दस्य सर्वनामस्थाने परतो णित्त्वप्रयुक्तं कार्यं भवतीत्येवार्थो युक्तः । **परत्वादिति** । 'आङ्गत्वा'दिति वक्तुं युक्तम् । **तपरकरणेनेति** । परे तु–त्वदुक्तरीत्या गोयोश्शब्दातिरिक्तौकारान्ताभावेन तयोश्च

न दोषः, अन्यथाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोऽन्तत्वाद्दोषः स्यादेव। मम त्वोकारान्तत्वाभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः।

परे तु—'गोतो णि'दिति सूत्रे भाष्ये तपरत्वं प्रत्याख्यातम्। चित्रगुरित्यादौ तु न दोषः, गोः पूर्वणित्त्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेधात्। 'हे चित्रगो' इत्यादौ तु लाक्षणिकत्वान्न दोष इति अत्रैव सूत्रे भाष्ये स्पष्टम्। 'द्योः सर्वनामस्थाने णित्त्वं वक्तव्य'मिति 'औतोऽ'मित्यत्र भाष्ये उक्तमित्याहुः। **सुद्यौरिति।** केवलद्योशब्दस्य स्त्रीत्वाद्बहुव्रीहिरुदाहृतः।

**विहितमिति।** यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोऽय यत्नः।

---

### ॐ अभिनव-चन्द्रिका ॐ

**व्यर्थोऽयं यत्न इति।** वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषा वर्णग्रहणे न प्रवर्तत इति परिभाषेन्दु-

### ॐ चिदस्थिमाला ॐ

कारान्तासत्त्वधिया 'गो' इत्युक्तावपि 'न त्वाचार्या' इति न्यायेन तस्यानिवर्त्यत्वात्तत उपस्थितद्योशब्दसङ्ग्रहाय 'तकार' इति; स तदविवक्षायां मानमिति सप्लुतानुकरणवारणेन सर्वतत्कालग्रहणेन तावतैव वा स चरितार्थः, अन्यथा वैयर्थ्यं स्पष्टमेवेति भावः। मूलं दूषयन् सिद्धान्तमाह—**परेत्विति।** नन्वेवमप्यन्यत्र दोषोऽत आह—**चित्रेति।** अत्रैव=गोतोणिदित्यत्रैव। नन्वेवमप्यव्याप्तिरत आह—**द्योरिति।** मूलं दूषयति—**यदि त्विति।** असन्दिग्धे सन्दिग्धवचनमेतत्—'वेदाश्चेत्प्रमाण'मितिवत्। 'भाष्यविरोधादस्य-

### ॐ ज्योत्स्ना ॐ

तपरसूत्रेऽणित्यनुवृत्त्या 'गो' इति समुदायस्यानण्त्वात्समकालग्राहकत्वाभावाद्व्यर्थ—गस्याविवक्षायां तात्पर्यग्राहकं—सम्पद्यते इति भावः।

**इत्याहुरिति।** अपरे तु—'गोत' इति तपरकरणादेव 'गोः पूर्वणित्त्वात्त्वे'ति वार्त्तिकं णित्त्वे प्रतिषेधः प्रत्याख्यातः स्थानिवत्सूत्रे भाष्ये। तस्यायं भावः—तपरसूत्रेऽण्ग्रहणाननुवृत्तिपक्षे 'गो' इत्येतत्समकालस्य णित्त्वार्थं तपरकरणमिति 'चित्रगु'रित्यत्र दोषाभावः, 'हे चित्रगो!' 'चित्रगवः' इत्यत्र गुणे कृते प्राप्तिसम्भवेऽपि लाक्षिणकसमकालिकस्याग्रहणाद्दोष इति। एवं स्थिते 'हे चित्रगो अग्र'मिति पूर्वत्वेऽपि प्रतिषेधः प्रत्याख्येयः, लाक्षणिकैङन्तगोशब्दत्वेन दोषाभावात्, 'न वर्णग्रहणे' ष्विति निषेधस्य वर्णप्राधान्यविषयत्वात्। औत्त्वेऽपि—औतोम्शसोरिति न्यासे प्रतिषेधेन न प्रयोजनम्,

### ॐ सदाशिवभट्टीयम् ॐ

गोशब्दस्य णिन्निमित्तककार्यम्भवतीत्यर्थं इतीदं चिन्त्यम्। **न दोष इति।** हे चित्रगो इत्यत्र न दोषो विहितविशेषणस्य वक्ष्यमाणत्वात्। **इत्याहुरिति।** गामित्यत्र वृद्धिस्तु न—। **इत्यजन्ताः पुंलिङ्गाः।**

### ॐ विषमपदविवृतिः ॐ

णित्त्वस्येष्टत्वेनात्राङ्गस्य विवक्षितत्वे द्योर्णित्त्वं वक्तव्यं स्यादिति लाघवाद्गकाराऽविवक्षैव। 'चित्रगो' इत्यादौ तु विहितविशेषणेन, लक्षणप्रतिपदोक्तपरिभाषाया वा—न दोषः। एवञ्च 'गोः पूर्वणित्त्वात्त्व'त्यत्र णित्त्वात्वग्रहणं न कार्यमित्यपरमनुकूलम्। ध्वनितञ्चेदं तपरकरणात्—'णित्त्वात्वयोः स्थानिवत्त्वप्रतिषेध'इति वार्त्तिकप्रत्याख्यानपरभाष्येण। प्रकृतसूत्रस्थं भाष्यन्त्वेकदेश्युक्तिरित्याहुः।

**स्मृतौरिति** । स्मृत उर्येनेत्यर्थः । यत्तु—एषामभिधाने—'अयवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं, तत्स्थानिकायादीनामस्वरितत्वाये'तिवार्त्तिकव्याख्यावसरे—'अवादेशे नास्त्युदाहरण'मिति—'स्वरितो वे'तिसूत्रस्थभाष्यविरोधः, प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानुदात्तत्वात्तदेकादेशस्य 'एकादेश उदात्तेने'त्युदात्तत्वे 'स्मृतवा'इत्यादौ तदुदाहरणसम्भवादिति, तन्न; तृतीयादिष्वनभिधानेऽपि अन्यत्र तत्सत्त्वे बाधकाभावात् । न च 'गोतः' इति सूत्रे—'द्योश्च वृद्धिर्वक्तव्ये'ति वार्त्तिके—द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम्; उपलक्षणतया व्याख्यानेनादोषात् । परे तु—ईदृशानामनभिधानेऽपि न क्षतिरित्याहुः ।

**रायो हलि** । 'अष्टन आ'इत्यत 'आ' 'विभक्ता'वित्यनुवर्त्तते ।

## इत्यजन्ताः पुंल्लिङ्गाः ।

---

❀ **अभिनव-चन्द्रिका** ❀

चन्द्रिकायां विस्तरेणाभिहितमिति तत एवावधारणीयम् । **अजन्ता इति** । अत्र कुत्वं न्याय्यम् ।

अन्ये तु 'अल्पाच्तर'मिति निर्देशादादिरन्त्येनेतिसूत्रबोधितमञ्ज्ञासु हलन्तनिमित्तकार्यं न प्रवर्तते इति प्रकृते कुत्वं नाशङ्कनीयमित्याहुरितिशिवम् । * **इत्यजन्ताः पुंल्लिङ्गाः** *

❀ **चिदस्थिमाला** ❀

मिधान'मिति **मान्यद्युक्तं** खण्डयति—**यत्त्विति** । स्मृतस्य=स्मृतशब्दस्य । तत्=वार्त्तिकम् । शास्त्यार्थोक्ति खण्डयति—**न चेति** । **गोत इति** । 'सूत्रे' इत्यस्य—'वृद्धिर्वक्तव्ये'त्यत्रान्वयः । वार्त्तिकोक्तिस्तु औतोऽमिति सूत्रस्थेति न पूर्वविरोधः । मूलं दूषयन् सिद्धान्तमाह—**परेत्विति** । * **इत्यजन्ताः पुंल्लिङ्गाः** *

❀ **ज्योत्स्ना** ❀

'अनन्विधा'विति निषेधात्, 'आ गोत' इतिषाष्ठवार्त्तिकन्यासे च तपरत्वात्, बहुगुमानित्यत्र स्वरोऽपि प्रतिषेधं न प्रयोजयति, 'न गोश्व'न्नित्यत्राष्टनो दीर्घादित्यतो दीर्घादित्यनुवर्त्य दीर्घान्तगोशब्दादिति व्याख्यानात्, 'चित्रगुना'मित्यत्र सत्यपि दीर्घान्तत्वे लाक्षणिकत्वादिति—'गोः पूर्वणित्त्वात्त्वस्वरेषु प्रतिषेधो वक्तव्य' इत्यस्य—व्याख्येय इत्येवार्थः । नचैवं गामित्यत्र परविप्रतिषेधाद्वृद्धिः प्राप्नोति, पूर्वविप्रतिषेधेनात्वस्यैव बाधकत्वात्, 'आगोत'इति षाष्ठन्यासस्यात्रैव तात्पर्यकल्पने लाघवात्, द्योर्णिद्वद्भावे तु न प्रयोजनं, 'सुद्यौ'रित्यादीनां दिव औत्वेन सिद्धत्वात्, 'यद्याव इन्द्र ते शत'मिति भाष्योदाहृतप्रयोगेषु वृद्धिश्छान्दसव्यत्ययेनेत्याहुः । **इत्याहुरिति** । अस्मिन्पक्षे भाष्यमुपलक्षणपरतया न व्याख्येयं, नापि स्वरितो वेति भाष्यतात्पर्यसङ्कोच इति भावः । ❀ **इत्यजन्ताः पुंल्लिङ्गाः** ❀

❀ **विषमपदविवृतिः** ❀

**तृतीयादिष्विति** । 'अजादि'ष्विति शेषः । **सूत्र इति** । अस्य 'वक्तव्ये'त्यनेनान्वयः । 'द्यौश्च वृद्धिर्वक्तव्ये'त्यस्य—'गोतोणिदि'ति सूत्रे द्योग्रहणं कर्तव्यमिति तात्पर्यम् । **वार्त्तिक इति** । '—'औतोम्शसो'रिति सूत्रस्थे—' इति शेषः । एतेनास्य वार्तिकस्य औतोमिति सूत्रे दर्शनाद्गोत इति शेखरोक्तिरसङ्गतेत्यपास्तम् । इदानीन्तनभाष्यपुस्तकेषु वार्तिकत्वेन नेदमुपलभ्यते, तथापि वार्तिकसाजात्याद्वार्तिकेत्युक्तम् । **ईदृशानामिति** । अजादिविभक्तिपराणां, सुपराणामित्यर्थः ।

❀ **इति अजन्ताः पुंल्लिङ्गाः** ❀

# अजन्तस्त्रीलिङ्गप्रकरणम् ।

**रमेति** । रमयतेः पचाद्यच् , टाप् । एकादेशस्य पूर्वान्तवत्त्वेन प्रातिपदिकत्वात्स्वादयः । 'वाचा' इत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते[2] ।

'आप'इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिरित्याह–**आबन्तादिति** । 'जसः शी'त्यतः–'शी'ति वर्त्तते ।

---

❀ **अभिनव-चन्द्रिका** ❀

**इत्याहेति** । वस्तुतस्त्वङ्गसञ्ज्ञानिमित्तस्याबन्ततदाद्यव्यवहितोत्तरत्वविशिष्टस्यौङः शी स्या-

❀ **चिदस्थिमाला** ❀

**अजिति** । एतदुपपत्तिरादौ भावप्रकाशे स्पष्टा । ङयाब्ग्रहणस्यान्यार्थताया प्रागुक्तत्वादाह—**एकेति** । मूलाशयमाह—**वाचेति** । तदर्थं तदावश्यकत्वे सर्वत्र तथैवेति—मूलतात्पर्यम् । **प्रतीति** । अनिरवकाशत्वेनात्र तस्याऽबाधकत्वेऽपि पूर्वप्रवृत्तिप्रयोजकत्वमस्त्येवेत्यन्यत्र स्पष्टमिति भावः । नन्वेवं सन्निपात-

❀ **सदाशिवभट्टीयम्** ❀

**रमेति** । क्रीडार्थकरमधातोः पचाद्यचि साधुः । **स्वादय इति** । आबन्तत्वाय[2] पूर्वान्तवद्भावस्यावश्यकत्वेन तत एव स्वादिसिद्धिरिति भावः । एतेन 'वाचे'त्यस्य सिद्ध्यर्थं लिङ्गविशिष्टपरिभाषासञ्चारस्यावश्यकत्वात्

❀ **विषमपदविवृतिः** ❀

**रमेति** । अमन्तत्वेन मित्त्वाद्ध्रस्वः । 'लिङ्गविशिष्टपरिभाषये'ति प्राचां ग्रन्थेऽभिहितत्वेन तद्विपरीतमाह--**पूर्वान्तवत्त्वेनेति** । **पञ्चम्येति** ।—'आबन्ता'दिति मूलानुसारेण ।

---

❀ **वरवर्णिनी** ❀

**नमो विद्वच्छिरोभूषारत्नाय न्यायवार्द्धये ।**
**पितामहाय गुरवे 'स्नेहिरामजि'शास्त्रिणे ॥ १ ॥**

**रमेति** । ण्यन्ताद्रमधातोः पचाद्यचि 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'त्यमन्तत्वान्मित्त्वे 'मितां ह्रस्व'इति ह्रस्वः । स्त्रीत्वं लोकात् । 'घञबजपः पुंसी'त्यादिलिङ्गानुशासनसूत्राणि तु 'लिङ्गमशिष्य'मित्यादिना भाष्यकारैः प्रत्याख्यातान्येव । 'सम्बन्धमनुवर्त्तिष्यते'इत्यत्र तु अनोर्योगे द्वितीया, इति—न घञन्तस्य क्लीबता । 'शेषं पुंव'दित्यत्र तु 'विजानीया'दित्यध्याहारेण तस्य कर्मतया निर्वाह इति न सम्बन्धादिपदानां क्लीबता साधीयसी, लोकाननुग्रहात्, न च तत्र बलवत्प्रमाणमपि पश्यामः । एवञ्च तथा **पर्वतीयोक्तिर्निरस्ता** ।

**विशेषणेनेति** । 'आप' इति विशेषणम्, 'अङ्गस्ये'ति विशेष्यमित्यर्थः । **परे** तु—'आप' इति प्रत्ययस्य ग्रहणात्प्रत्ययग्रहणपरिभाषया तदादेरुपस्थितौ, पञ्चम्यन्तस्याप इत्यस्य तद्विशेषणतया तदन्तविधौ, पुनरौङ इति प्रत्ययग्रहणात्प्रत्ययग्रहणपरिभाषया तदादेरुपस्थितौ, तद्विशेषणतया पुनस्तदन्तविधिः, एवञ्च—'आबन्ततदादितदन्तात्परस्याऽङ्गसञ्ज्ञाजनकस्यौङः शी'त्येवार्थः—इति न 'अङ्गस्ये'त्यस्य

---

१ भागुरिमते एव हलन्तेभ्यष्टापः प्रवृत्त्या तदन्यपाणिन्याद्याचार्यमते तु–बहुदामेति डाबन्तमुदाहार्यम् ।

२ लिङ्गविशिष्टपरिभाषाप्रवृत्तौ स्त्रीत्वावच्छिन्नविषयकबोधजनकप्रत्ययविशिष्टत्वज्ञानाय रमेत्यादावन्तवद्भावस्यावश्य प्रवर्त्तनीयतया तेनैव निर्वाहसम्भवात्परिभाषासञ्चारो गौरवपराहत इत्याशयो भट्टानाम् ।

**रमे इति** । 'यस्ये'ति लोपो न, अभत्वात् ।

**सम्बुद्धौ च** । 'बहुवचने झली'त्यतः-'ए'दिति, 'आङि चापः' इत्यत 'आप' इति चानुवर्त्तते । **एङ्ह्रस्वादिति** । सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्याब्भ्यादिलोपात्प्रथममेत्वेऽनेन सम्बुद्धिलोप इति भावः । सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्त्तते ।

**आङि चा** । चेन प्रकृतम्-'ओसी'ति परामृश्यते । 'घेर्ङिती'त्यतोऽनुवृत्तं-'ङिती'ति, आप-इति पञ्चम्या-षष्ठ्या विपरिणम्यते,-इत्याशयेनाह—**ङिद्वचनस्येति** ।

❀ अभिनव-चन्द्रिका ❀

दित्येवार्थः । **प्रतिपदोक्तत्वेनेति** । तदप्राप्तियोग्येऽचारितार्थ्यरूपबाधबीजस्य 'सम्बुद्धौ चे'त्यत्र सत्त्वादिति भावः । एतद्ग्रन्थलापनायैवैतद्बाधबीजकथनम् । वस्तुतस्त्वेतद्बाधबीजाकल्पनेऽपि 'हल्ङ्या' विति लोपे प्रत्ययलक्षणेनैतत्प्रवृत्तौ बाधकाभावान्न दोषः ।

❀ चिदस्थिमाला ❀

परिभाषया लोपो न स्यादत आह-**सन्निपातेति** । अत्र=सम्बुद्धिलोपे । स्पष्टं चेदं भाष्ये।पञ्चम्या=निरवकाशया ।

❀ सदाशिवभट्टीयम् ❀

प्रकृतेऽपि तथैव सिद्धौ पूर्वान्तवद्भावोद्भावनं चिन्त्यप्रयोजनमित्यपास्तम् । **प्रतिपदोक्तत्वेनेति** । नाऽप्राप्ते लोपेऽस्य बाधकत्वादित्यर्थः । एतेन लोपेऽप्याप इति प्रतिपदोक्तत्वेन तस्याल्लोपस्येत्यपास्तम् । **अनित्यत्वादिति** । भाष्योक्तपरिगणनस्य तु परिभाषास्वीकारे तात्पर्य्यं, नतु परिगणने, 'न हि भिक्षुकाः सन्ती'ति दृष्टान्तेन तथैव लाभात् । ध्वनितञ्चेदम्-'इतोन्यत्राप्रवृत्ति'रिति वदता'इतोऽन्यत्रे'त्यत्र रुत्वे उत्वे गुणे 'एङः पदान्ता'दिति पूर्वरूपं कुर्व्वता भाष्यकारेण, अन्यथाऽकारनिमित्तकत्वेनोत्वस्य गुणद्वारा पूर्वरूपात्तद्विघातकत्वात्तदसङ्गतिः स्पष्टैव ।

❀ विषमपदविवृतिः ❀

**अभत्वादिति** । एवञ्च नैतदर्थं स्यां प्रतिषेध इति भावः । **आप इति** । 'सम्बुद्धौ चे'ति सप्तम्या पञ्चम्यन्तत्वं परिकल्प्यत इति भावः । 'समानकार्थिलाभावेऽपवादत्वं ने'ति मतेनाह—**शीघ्रेति** । **अनेनेति** । प्रश्लेषपक्षे इदम् । वस्तुतस्तु हल्ङ्यादिलोपापवादत्वेन पुनरुत्सर्गाप्रवृत्तौ 'एङ्ह्रस्वा'दिति लोप इत्याशय उचितः ।

नन्वेवं सति'अचः परस्मि'न्निति सूत्रे पूर्वेत्यस्याभावेन 'हे गौरि'त्यादौ दोषमाशङ्क्य-एङ्ग्रहणसामर्थ्यादिति वर्णितम् , भवद्रीत्या तक्रकौण्डिन्यन्यायेन बाधे पुनरुत्सर्गाप्रवृत्तौ एङ्ह्रस्वादिति लोपस्यैवावश्यकत्वेन एङ्ग्रहणसामर्थ्यस्यासङ्गतत्वमिति चेत् , न; तस्य तक्रकौण्डिन्यन्यायानाश्रयणेन, ङ्याब्ग्रहणेऽदीर्घ' इति न्यासाश्रयणेन च प्रवृत्तत्वात् । **सन्निपातेति** । आतिदेशिकसन्निपाताविघातस्य

❀ वरवर्णिनी ❀

पञ्चम्या विपरिणामस्यावश्यकते'त्याहुः । 'सम्बुद्धौ चे'त्यत्रापि—'सम्बुद्ध्यव्यवहितपूर्वस्य आबन्ततदन्तावयवस्याल एकारः'—इत्येवं—तदादिद्वयं पूर्वोक्तरीत्योपस्थाप्याऽर्थो वर्णनीयः ।

१ 'प्रतिपदोक्तत्वेन'—इत्यस्य निरवकाशत्वेनेत्यर्थः । हल्ङ्यादिलोपानन्तरमपि प्रत्ययलक्षणेन 'सम्बुद्धौ चे'त्येत्वस्य प्राप्तावपि हल्ङ्यादिलोपाऽप्राप्तिविषये सर्वथाऽचारितार्थ्यस्य सत्त्वादेत्वस्य निरवकाशत्वमस्त्येवेति तदप्राप्तियोग्येऽचारितार्थ्यरूपप्रथमबाधबीजेन येननाप्राप्तिन्यायेनास्य बाधः । प्रतिपदोक्तत्वन्तूभयोः सममेवेति न तावता सिद्धिरित्याशयः । मूलोक्तं प्रतिपदोक्तत्वन्त्वेत्वस्य न युक्तं, सम्बुद्ध्यपेक्षया सुतिसीनामेव शीघ्रोपस्थितिकत्वाद्धल्ङ्यादिलोपस्य त्वदुक्तरीत्या प्रतिदोक्तत्वात्पूर्वं लोपापत्तेः । तस्माद्—आबिति प्रश्लेषाभावे—'हे रमे' इत्यत्र 'सम्बुद्धौ चे'ति एत्वे कृते स्थानिवत्त्वाद्धल्ङ्यादिलोपस्य प्राप्तावपि परत्वादेङ्ह्रस्वादिति सम्बुद्धिलोप इत्याशयः । आ—आबिति प्रश्लेषे तु—हल्ङ्यादिलोपस्य प्राप्तिरेव नेति युक्त एव 'एङ्ह्रस्वा'दिति सम्बुद्धिलोपः । सूत्रमतेऽपि परत्वादेङ्ह्रस्वेति सम्बुद्धिलोपः । न चोभयोर्लोपविधायकतया

**सर्वनाम्नः स्या** । आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः । तेन 'मास-पूर्वाये'ति सिद्धम् । अत्र ह्रस्वो न स्याटः, तस्य विधेयत्वेनोद्देश्यत्वासम्भवात् । नापि ङिद्वचनस्य, व्याख्यानात् ।—अत आपो ह्रस्व इत्याह—

ॐ अभिनव-चन्द्रिका ॐ

**सर्वनाम्नो विहितस्येति** । वस्तुतस्तु 'आबन्ताङ्गाभिन्नं यत्सर्वनाम ततः परस्य ङितः स्याट्, आपश्च ह्रस्व' इत्युच्यमानेऽपि 'मासपूर्वायै' इत्यादौ दोषाभावाद्विहितविशेषणे गौरवात्, 'तस्मा'दिति परिभाषायां जागरूकायां दिग्योगलक्षणपञ्चम्यन्तकल्पनां विहायान्यकल्पनायां माना-भावाच्च चिन्त्यमिदम् ।

ॐ चिदस्थिमाला ॐ

यथाश्रुते दोषादाह—**आबन्तादिति** । **फलाभावादिति** । शास्त्युक्तेरसाङ्गत्यं ध्वनयन्नाह—**तस्येति** । **व्याख्यानादिति** । आगमापेक्षयाऽवयवषष्ठ्यन्तत्वेन स्थानषष्ठ्यन्तत्वाभावादित्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

**सर्वनाम्नःस्या** । **असम्भवादिति** । 'टयुट्युलौस्तुट् चे'त्यादौ तु तयोरावृत्तिस्तत्सामर्थ्याच्च तन्नो-

ॐ विषमपदविवृतिः ॐ

न सन्निपातपरिभाषाप्रवर्तकत्वमिति भावः । **परस्येति** । तेन 'यस्यै' इत्यस्य सिद्धिः । **न स्याट् इति** । चेन द्वयोरेककालं विधेयत्वप्रतीतेरिति भावः । **नापीति** । नच विधानवैयर्थ्यम्, एक-वचने तत्साफल्यात् । **आप इति** । कार्यिभेदेऽपि सन्नियोगशिष्टत्वमात्रेण च समुच्चायकमिति भावः ।

ॐ वरवर्णिनी ॐ

विरोधाभावेन विरोधमूलकविप्रतिषेधपरिभाषायाः कथं प्रवृत्तिरिति वाच्यम्, उभयोरेककार्यबोधकत्वे एकस्यानुवादकत्वमवश्यं वाच्यमिति—कस्य तत्त्वमिति सन्देहेऽन्यत्र परस्य बलवत्त्वदर्शनात्पूर्वस्यैवानु-वादकत्वस्यौचित्येन परस्य सम्बुद्धिलोपस्यैव मुख्यत्वेन तेनैव व्यवस्थेत्याशयादित्याहुरस्मत्पितामहचरणाः ।

**सिद्धमिति** । मासेन पूर्वा मासपूर्वा, तस्यै—मासपूर्वायै—इत्यत्र 'पूर्वसदृशे'ति समासे 'तृतीया-समासे' इत्येन समुदायस्य सर्वनामसञ्ज्ञाया निषेधेन समुदायादुत्पन्नाया ङेविभक्तेः सर्वनाम्नो विहितत्वा-भावेन निरुक्तार्थकस्य याडपवादस्य 'सर्वनाम्नः स्या'डित्यस्याप्रवृत्त्या याट उत्सर्गस्यैव प्रवृत्त्या 'मास-पूर्वायै' इत्यस्य सिद्धिरित्याशयः ।

**असम्भवादिति** । 'स्याटो दीर्घस्य विधानान्न ह्रस्वः, अन्यथा स्यडेव विहितः स्या'दिति तु न युक्तं, 'नुडादिवत्स्यटोऽकार उच्चारणार्थ' इत्यस्याप्यापत्तेः । न चागमेष्वकारानुबन्धस्यादृष्टत्वान्नोच्चारणार्थत्व-सन्देह इति वाच्यं, 'नान्तादसङ्ख्यादेर्म'डित्यादावकारस्याप्युच्चारणार्थस्यागमे दृष्टत्वात् ।

**व्याख्यानादिति** । स्याटष्टित्वेनाद्यन्तौ टकिताविति परिभाषाप्रवृत्त्या 'ङित'इति षष्ठ्या अवयवार्थ-कतया तस्याः पुनः स्थानषष्ठीत्वकल्पने मानाभावादावृत्तौ गौरवाच्चेत्याशयः । **गुरवस्तु**—'ङित'इत्यवयव-षष्ठ्यन्तस्य स्थानषष्ठ्यन्ततया विपरिणामस्य—[पञ्चम्यन्तसर्वनामपदस्य षष्ठ्यन्ततया विपरिणामापेक्षया—] लघु-तया 'ङित' इत्यस्यैव स्थानषष्ठ्या विपरिणामः स्यान्न पञ्चम्यन्तसर्वनामपदस्य—[षष्ठ्या विपरिणामः] । नचैवं ङितः स्थानषष्ठ्या विपरिणामे लिङ्गे टुङ्गे इत्यत्र ह्रस्ववारणाय 'सर्वनाम्न' इत्यस्याप्यावृत्तिः करणीयेति गौरव-मिति वाच्यम्, 'आबन्तस्य ह्रस्व'इति वदतस्तवापि 'सर्वा'इत्यादौ ह्रस्ववारणाय 'ङित'इत्यस्याप्यावृत्ति-रावश्यिकैवेति उभयोस्तुल्यत्वात्, अतो मूलोक्तं न युक्तं, किन्तु चकारो वाक्यान्तरार्थः, सर्वनाम्नो ङित-स्याट्—इत्येकं वाक्यं, ततः 'ह्रस्वश्च'इति ।—ह्रस्वश्च स्यादित्यर्थः । तत्र कस्य ह्रस्वः ? इत्याकाङ्क्षायां पूर्वं श्रुतत्वात्सर्वनाम्नः सम्बन्धे—'सर्वनाम्नो ह्रस्व' इति फलति । एवञ्च न कोपि दोष इत्याहुः ।

**आपश्चेति** । आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह—**एकादेशस्येति** । **ग्रहणादिति** । सर्वनामशब्देनेत्यर्थः ।

न चैवमप्याबन्तत्वाभावः, एकादेशनिष्पन्नस्याप्त्वाभावात्, अत एव 'खट्वा' इत्यादौ परादिवद्भावेनाऽऽप्त्वमाश्रित्याऽऽबन्तादिति सोर्लोप उक्तः, परादिवद्भावेन तत्त्वं तु न लभ्यम्, उभयत आश्रयणेऽन्तादिवत्त्वाभावादिति वाच्यम्;

ॐ चिद्स्थिमाला ॐ

**आपश्चेतीति** । पूर्वत्र पञ्चम्यन्तमप्यत्र षष्ठ्यन्तमिष्टानुरोधादिति भावः । साकाङ्क्षत्वादाह—**सर्वेति** । अत एव=स्वत आप्त्वाभावादेव । नन्वेवमत्रापि तेनैव तत्त्वमस्त्वत आह—**परादीति** ।

ॐ ज्योत्स्ना ॐ

सुड्विधावाबन्तत्वातिदेशस्य प्रयोजनाभावेऽपि तुल्यन्यायात्स्याडादिविधावन्तवद्भावस्यत्र वक्तव्यतया तत्राबन्तत्वातिदेशस्यास्ति प्रयोजनमिति शङ्कते—**न चैवमिति** ।

ॐ सदाशिवभट्टीयम् ॐ

देश्यत्वम् । 'युष्मद्युपपदे' इत्यत्र तु तिङ्ग्रहणं तत्स्थानिकलकारे लाक्षणिकम्। **आपो ह्रस्वश्चेति** । इदञ्च ह्रस्वपदश्रुत्याऽन्त्यपरिभाषोपस्थित्या 'आप'इत्याबन्तात्सर्वनाम्नः परस्य ङितः स्याडचश्च ह्रस्वः, स चालोऽन्त्यपरिभाषयाऽन्त्यस्यैव स्यात्तत्फलितार्थकथनमापो ह्रस्व इति । एतेनाप इत्यस्यावृत्तिपरं व्यापनश्चिन्त्यम् ।

ॐ विषमपदविवृतिः ॐ

**नचैवमिति** । तुल्यन्यायात्सर्वस्यै इत्यादावप्युक्तरीत्येत्राभिप्रेतेति भावः ।

ॐ वरवर्णिनी ॐ

**आपश्च ह्रस्व इति** । 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीया'निति परिभाषया ह्रस्वस्य सर्वनाम्नैव यद्यपि सम्बन्ध उचितस्तथापि सर्वनाम्नः स्याड्विधावाबन्तस्यैवाश्रयणमिति 'आपो ह्रस्व'इति फलितमित्याशयः ।

सर्वेत्याबन्तस्य सर्वादिगणे पाठाभावात्सर्वनामत्वाभावात्सर्वासामित्यत्रामि सर्वनाम्न इति सुट् न स्यादत आह–**ग्रहणादिति–कौमुद्याम्** । **नचैवमिति** । एवं=सर्वाशब्दस्य सर्वनामत्वेऽपि । सर्वाशब्दस्याबन्तत्वं न स्यात्, दीर्घनिष्पन्नस्य'आ'इत्यस्याप्त्वाभावादाबन्तत्वस्य तत्र दुर्वचत्वादित्याशयः । **अत एव**=दीर्घनिष्पन्नस्याप्त्वाभावादेव । **'उक्तः'**—इत्यस्य 'भाष्ये'इतिशेषः । यदि दीर्घनिष्पन्नस्य खट्वाघटकस्य—'आ' इत्यस्याप्त्वं स्यात्तर्हि भाष्यकृतान्तदर्थं परादिवद्भावप्रवर्त्तनमसङ्गतं स्यात् । नच खट्वेत्यत्र परादिवद्भावेनाप्त्वमिव सर्वेत्यत्रापि परादिवद्भावेनैवाप्त्वं वक्तव्यमिति वाच्यं, पूर्वान्तत्वेन सर्वनामत्वं, परादिवद्भावेनाप्त्वमित्युभयतआश्रयणेऽन्तादिवद्भावाप्रवृत्तेरितिशङ्काग्रन्थाशयः । उभयत आश्रयणेऽन्तादिवद्भावाभावस्य सिद्धान्तिभाष्यानारूढत्वेन—पूर्वान्तवद्भावेन सर्वनामत्वं, परादिवद्भावादेकादेशनिष्पन्ने आप्त्वमितिसर्वेति समुदायस्याबन्तसर्वनामत्वमर्थसमाजग्रस्तमित्युत्तरम् । **इदमत्र निगूढमाकूतम्**—'उभयत आश्रयणे' इत्यनेन-व्यपवृक्तधर्मस्य पूर्वत्व परत्वादेरुभयत आश्रयणेऽन्तादिवद्भावनिषेधः, यथाऽमीयादित्यत्र-उपसर्गत्वं, ततःपरत्वञ्चेति तदुभयानयनेऽनेन निषेधः । सर्वेत्यादौ तु न पूर्वत्वं परत्वं वाऽऽनेयं, किन्तु सर्वेत्यस्यैव सर्वनामत्वमाबन्तत्वञ्चानेयमिति नानेनान्तादित्वनिषेधः । अतएव हेज्ञानेत्यत्र सम्बुद्ध्यवयवस्य मस्य लोपः, अन्यथा एङ्ह्रस्वादित्यत्र–'एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परः सम्बुद्ध्यवयवो हल्लुप्यते इत्यर्थे एकादेशेकृते पूर्वान्तवत्त्वेन ज्ञानेत्यस्याङ्गत्वेऽपि मस्य सम्बुद्ध्यवयवत्वं न स्यात्, उभयतआश्रयणे तन्निषेधात । ममतु– ज्ञाने'त्यत्राङ्गत्वं पूर्वान्तवत्त्वेन, परादिवद्भावेनामि च सम्बुद्धित्वं सुलभं, परत्वपूर्वत्वादिव्यपवृक्तधर्मानयनाभावेनोभयत आश्रयणे इति निषेधाप्राप्तेः । एतदर्थमेव—एङ्ह्रस्वादिति सम्बुद्ध्यवयवविशेषणं, न सम्बुद्धेः । ह्रस्वान्ताङ्गात्परीभूतायाः सम्बुद्धेरवयवो हल्लुप्यते इत्यर्थे हि–परत्वस्य व्यपवृक्तधर्मस्यानयनमपेक्षितं, तच्चोभयत आश्रयणेनान्तादिवदिति निषेधान्नेतुं शक्यमिति न सर्वेत्यादौ तत्परिभाषासत्त्वेऽपि दोष इत्यस्मद्गुरवश्चिपाठिपादा व्याकुर्वते । अस्मत्पितामहचरणाः श्रीस्नेहिरामशास्त्रिपादा अप्येवमाहुः ।

उभयत आश्रयणे तदभावस्य भाष्ये एकदेश्युक्तत्वेऽपि सिद्धान्तिसम्मतत्वाभावात्। एतच्च तिङन्ते इण्धातौ वक्ष्यामः।

परे तु—लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्, आबन्तत्वन्तु परादिवद्भावेनेत्याहुः। **सर्वस्यामिति**। इह परत्वात्स्याटि कृते सकृद्गतिन्यायात्सुण्न।

**प्रतिपदोक्तस्येति**। दिक्शब्दमुच्चार्य विहितत्वादस्य तत्त्वम्। **योत्तरेति**। 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। 'सर्वनाम्नो वृत्तिमात्रे' इतिमात्रग्रहणात्सम्प्रत्यसर्वनामत्वेऽपि पुंवत्त्वम्। 'योत्तरेति'—यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या

---

**ॐ अभिनव-चन्द्रिका ॐ**

**सकृद्गतिन्यायादिति**। निरनुबन्धकपरिभाषया 'आमि सर्वनाम्नः' इत्यत्रत्याम्पदेन—[ स्थानिवद्भावेन ङित्त्वेन— ]अस्यामोऽग्रहणात्सुण्न भवतीत्यपि बोध्यम्। एवं 'रमायां' 'बहुश्रेयस्या'मित्यादौ च नुण्न भवतीति बोध्यम्। एवञ्चाण्नद्या इत्यत्र 'अण्नद्याः' इति न्यासेऽपि न दोषः, निरनुबन्धकपरिभाषयैवास्याप्यामः—[ स्थानिवद्भावेन ङित्त्वात्— ]तत्रत्याम्पदेनाग्रहणेन

**ॐ चिदस्थिमाला ॐ**

एतच्च=एकदेश्युक्तित्वञ्च। अन्यथा सिद्धान्तमाह—**परे त्विति**। बहुव्रीहिपदाधिकाराविशेषादाह—**दिक्शब्दमिति**। द्वितीयं—'योत्तरेति'—फक्किकान्तर्गतं, नतु प्रतीकम्। द्वन्द्वोत्तरं त्वः। लक्षणां विनाऽसामानाधिकरण्येन बहुव्रीह्यनुपपत्तेरुद्देश्ये एव लक्षणाङ्गीकारादाह—**योत्तरेति**। विशेष्यशब्दो विशेष्यलिङ्गः। **गुणेति**। गुणोपसर्जनद्रव्यवाचकत्वादित्यर्थः, ज्ञानस्य विशेषणत्वात्। एवञ्च विशेषणत्वात्सप्तमीविशेषणे इत्यस्य प्राप्तिः। तत्र हि सप्तम्यन्तान्योत्तरपदार्थविशेषणस्य विषयताविशेषविशेषणत्वविशिष्टस्य ग्रहणं, वैपरीत्ये पूर्वनिपातवैपरीत्यापत्तिः, उद्देश्यविधेयभावप्रतीतिस्तु समासेऽपि; तदाह—**अन्यत्रेति**। शब्दरत्नादावित्यर्थः।

**ॐ ज्योत्स्ना ॐ**

**उत्तराशब्दस्य गुणवाचकत्वादिति**। उत्तरात्वप्रकारकज्ञानविशेष्यस्य लक्षणावृत्त्या बोधकत्वादित्यर्थः।

**ॐ सदाशिवभट्टीयम् ॐ**

**आहुरिति**। 'विभक्तौ लिङ्गविशिष्टे'ति निषेधः स्यादेव, तस्यानडुहीत्यत्र 'मनडुहः स्त्रिया'मितिवार्तिकेनाऽऽम्विकल्पत्वाभावार्थं विभक्तिनिष्ठनिमित्तताककार्य्ये इत्यर्थे आवश्यक इति, अत्रापि तेनैव निषेधः कुतो न स्यादिति चिन्त्यमेतत्। **उद्देश्यत्वविधेयत्वप्रतीत्येति**। एवञ्च 'पर्वतो वह्निमा'नित्यादाविवोद्देश्यस्य

**ॐ विषमपदविवृतिः ॐ**

**सिद्धान्तीति**। आबन्तत्वस्य पूर्वान्तवत्त्वेनापि सुलभत्वाच्चिन्त्यमेतत्। सर्वनामत्वमपि स्थानिवद्भावेन सुलभम्। **लिङ्गविशिष्टेति**। इदं यथोद्देशे, कार्यकाले तु मदुक्तरीतिरेव शरणम्।

**सकृद्गतीति**। बुद्धावित्यादिवत्सान्निपातपरिभाषयाऽपि सुवारः सुट्। **यत्तच्छब्दाभ्यामिति**। 'प्रतीत्ये'त्यन्तस्य—'इत्यर्थेने'त्यनेनान्वयः।

---

**ॐ वरवर्णिनी ॐ**

**परेत्विति**। अन्तवद्भावं विनाऽपि सर्वेत्यस्य सर्वनामता लिङ्गविशिष्टपरिभाषया, आबन्तत्वन्तु परादिवद्भावेनेति अन्तवद्भावानाश्रयणादुभयत आश्रयणाभावात्तत्परिभाषाप्रवृत्तिशङ्काकथैव नेति भावः।

**योत्तरेति**। 'उत्तरेय'मिति यदुत्तरात्वप्रकारकं ज्ञानं, तद्विशेष्यीभूता—प्रसिद्धपूर्वा=लोकप्रसिद्धापूर्वा दिग्यस्या इत्यर्थः। वस्तुतो या पूर्वा दिक् तस्यां यस्या उन्मुग्धाया उत्तरात्वप्रकारकं ज्ञानं तस्या इति भावः। या वस्तुतः पूर्वामपि दिशमुत्तरात्वेन जानातीतियावत्। एवञ्चोत्तराशब्द उत्तरात्वप्रकारकज्ञानविशेष्यीभूतां [वास्तवपूर्वाम्—] स्वार्थत्यागादाहेति महद्भूत इतिवद्गौणः, पूर्वाशब्दस्तु स्वार्थमेव—प्रसिद्ध पूर्वामाहेति—न स गौणइति—उत्तरापदस्य—गुणवाचकत्वात्=स्वार्थत्यागपूर्वकमर्थान्तरवाचकतया लौकिकोपसर्जनत्वात्पूर्वनिपातइतिश्रीत्रिपाठिचरणान्तेवसन्तो **गौडाः**।

सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः।

ॐ अभिनव-चन्द्रिका ॐ

नुटोऽप्राप्त्या अभिधानसामर्थ्यादेव पररूपाप्रवृत्तौ वृद्धेरेव च प्रवृत्त्या तथान्यासेऽपि लक्ष्यसिद्धेः। अन्यत्र विस्तर इति। शब्दरत्न इत्यर्थः।

ॐ ज्योत्स्ना ॐ

पूर्वापदे तु न तथा, तच्छब्दसामनाधिकरण्येन विधेयबोधकत्वात्—'न विधौ परःशब्दार्थ'इतिन्यायेन तत्र लक्षणाया अयोगात्। यद्यपि बहुव्रीहेरन्यपदार्थप्रधानत्वाद्वृत्तिपदार्थानुवादेनान्यपदार्थसम्बन्धित्व-धीस्ततः प्रतीयते, तथाप्यनुवादस्योद्देश्यविधेयभावेनैव विवक्षितत्वादेवमुच्यते। तत्रापि यदा तात्त्विकवस्तुविवर्त्तनिराकरणेऽतात्त्विकवस्तुस्थितिरनूद्यते—'यत्कुण्डलं तत्सुवर्णम्, एतत्सम्बन्धी'ति च तदा 'योत्तरा प्रसिद्धा पूर्वात्वप्रकारकज्ञानविशेष्या साऽस्ये'त्येवं विपरीतमुद्देश्यम्। 'न विधौ परः शब्दार्थ' इति न्यायस्तु नैवं सति प्रवर्त्तते, आरोपस्यैवेह विधेयत्वात्, अत एव 'या पूर्वा सोत्तरा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै' इत्युद्देश्यविधेयभाववैपरीत्येन विग्रहं प्रदर्शयतां प्रकाशकृतां

ॐ विषमपदविवृतिः ॐ

हेतुत्वञ्च तृतीयार्थः। तत्त्वञ्च 'न विधा'विति न्यायद्वारकम्। इत्यन्यत्रेति। अत्रायं सङ्ग्रहः—

'दैक्षितं[1] तज्जजं भाट्टं प्राक्रीयमतं तथा। विवेचयामि निष्कृष्य साधकैर्बाधकैस्तथा॥'

तथा हि—तत्रेदं प्राक्रीयं मतं''—सा पूर्वा उत्तरा यस्यास्तस्यै उत्तरपूर्वायै इत्येव, 'या पूर्वा सोत्तरा यस्ये'त्युक्तौ सचेतसामुत्तरापदस्यैव प्रवृत्तिप्रकारकज्ञानविशेष्यत्वस्य सर्वानुभवसिद्धतया तस्यैव गुणवाचकत्वेन पूर्वनिपातौचित्यात्। 'न विधा'विति न्यायस्तु श्रोतृप्रतिपन्नार्थस्य तं प्रति बोधनाय तद्विपरीतार्थबोधकस्यान्याय्यत्वमूलको नात्र प्रवर्तते, लोकानां तद्विपरीतबोधाजननस्यानुभवसिद्ध-त्वात्। 'यच्छब्दयोगः प्राथम्य'मित्यादि-असमस्तविषयकम्, 'सप्तमी विशेषणे'इति शास्त्रेण तन्न्याय-बाधात्। एतद्विरोधादेव च 'हितयोगे चे'तिवार्तिकस्थे उद्देश्यविधेयभावेन बोधे समासानिष्टत्वप्रति-पादनपरो शब्दरत्नग्रन्थोप्यपास्तः। हरिदीक्षितास्तु-विशेषणविशेष्यभावो हि लोकाधीनः, लोके च 'शुक्ती रजतं यस्य शुक्तिरजतको देवदत्त'इत्यादौ गुणपररजतपदसन्निधानेपि अधिष्ठानबोधकशुक्ति-पदस्यैव विशेषणसमर्पकत्वानुभवात्पूर्वाशब्दस्याधिष्ठानबोधकस्यापि पूर्वनिपातः। अत एव 'या पूर्वा सोत्तरा यस्योन्मुग्धस्य स पूर्वोत्तर' इति उद्देश्यविधेयभावानुगतपूर्वनिपातो भाष्यकृतोदाहृतः। 'न विधा'विति न्यायस्यतूक्तरीत्याऽप्रवृत्त्येदृशे विषये विधेये एव लक्षणेति वदन्ति। भट्टास्तु—'या पूर्वे'त्यादिभाष्ये उद्देश्यविधेयभावानुगतपूर्वनिपातस्यापि करणादुद्देश्यपदेऽपि लक्षणा भाष्यकृत्सम्मता अनुभवसिद्धा।'शुक्तिरजतको देवदत्त'इत्यादि त्वप्रामाणिकमेव। 'अधिष्ठानबोधकस्य विशेष्यसमर्पकत्व-

ॐ वरवर्णिनी ॐ

अन्यत्र=शब्दरत्ने। तत्र हि 'वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते,—योत्तरात्वप्रकारकज्ञान-विशेष्या, सा प्रसिद्धपूर्वा [ सूर्योदयनिर्णेया पूर्वात्वेन जगद्विदिता-] यस्या इत्यर्थात्। तत्रोत्तरापदस्य ज्ञानविशेष्यपर्यन्तलक्षकतया गुणवाचकत्वेन सप्तमीविशेषणे बहुव्रीहाविति—पूर्वनिपातः। उत्तरस्यां पूर्वात्व-प्रकारकज्ञानविशेष्यत्वन्तु न विधेयं, पूर्वापदस्य पूर्वनिपातापत्तेः। 'न विधौ परः शब्दार्थ' इत्युक्तेर्विधेयबोधके लक्षणानौचित्याच्च। त्वदुक्ते—'या पूर्वा सोत्तरा यस्या'—इति विग्रहे तु पूर्वापदस्य यच्छब्द-समभिव्याहारेणोद्देश्यसमर्पकतया तस्यैव लाक्षणिकत्वेन गुणोपसर्जनद्रव्यवाचकतया पूर्वनिपातापत्तिः—' इत्युक्तम्। परेतु—या जगत्प्रसिद्धा पूर्वा दिक् सा उत्तरा=उत्तरात्वप्रकारकज्ञानविशेष्या—यस्या मूर्खाया इति यथाश्रुत एवार्थ इति-प्राचोक्तमेव युक्तमाहुरित्यन्यत्र विस्तरः।

१ दैक्षितं=मनोरमाकृन्मतम्। तज्जजं=दीक्षितपौत्र-बृहच्छब्दरत्नकृद्धरिदीक्षितमतम्। भाट्टं=बृह-च्छेखरादिकृन्नागेशभट्टमतम्। प्राक्रीयं=मनोरमाकृता खण्डितं—'या पूर्वा सोत्तरो'त्याद्युक्तं परम-प्राचीनानां प्रक्रियाप्रकाशकृतां शेषश्रीकृष्णशास्त्रिणां मतम्। 'प्राकने'ति पाठः।

**स्पष्टार्थमिति**। 'दिङ्नामानी'त्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः। **अन्तरायै नगर्य्यै इति**। 'अपुरी'त्यस्य--पूःशब्दार्थस्याऽविशेष्यत्वे इत्यर्थ इति भावः। अत्र मानमन्वेष्यम्। **हे अम्बेति**। ह्रस्वे कृते 'सम्बुद्धौ चे'त्येत्वं न, 'आ-आ'विति प्रश्लेषात्।

❀ अभिनव-चन्द्रिका ❀

**अविशेष्यत्व इत्यर्थ इति**। पूःशब्दार्थनिष्ठविशेष्यत्वाऽप्रयोजकत्व इत्यर्थः। **अत्र मानमन्वेष्यमिति**। केचित्तु-'अपुरी'त्यस्याष्टाध्यायीस्थाऽन्तरं बहिर्योगेतिसूत्रे पाठे करणीये गणसूत्रपाठकरणमेव मानमित्याहुः। 'पुरी'शब्दस्य विशेष्यताप्रयोजकत्वे सर्वनामसञ्ज्ञा न भवतीत्येवार्थो लाघवादित्यन्तरस्यां नगर्यामित्यादौ स्याड्भवत्येवेति भावः।

❀ चिदस्थिमाला ❀

ननु प्रतिपदोक्तत्वेन तस्य लाभेऽपि तस्य कथं तत्त्वमत आह–**दिङ्नामानीति**। मूलं यथाकथञ्चिदुपपादयति–**अपुरीति**। मूलं--दूषयति–**अत्रेति**। **प्रश्लेषादिति**। एतेन–हल्ङ्याबिति सूत्रे दीर्घादिति योगविभागेन

❀ ज्योत्स्ना ❀

मतखण्डनप्रवृत्तमनोरमाग्रन्थस्य 'पूर्वनिपातवैपरीत्यापत्ति'रित्येवं रूपस्य––व्याख्यानावसरे—भ्रमाविष्ठानवबोधकपदापूर्वनिपातस्यायुक्तत्वादिति हेतूपन्यासपूर्वकं—'शुक्ती रजतं यस्य शुक्तिरजतको देवदत्त' इत्यप्यत एव सङ्गच्छते इत्युक्तं हरिदीक्षितैर्बृहच्छब्दरत्ने इत्याहुः। अत्र वदन्ति—तच्छब्दयोगि 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यादौ विधेयबोधकस्य विशेषणलोहितपदस्य पूर्वनिपातदर्शनादिहापि विधेयबोधकपदस्यैव न्याय्यः पूर्वनिपातः। विपरीतोद्देश्यविधेयभावेन विग्रहं

❀ सदाशिवभट्टीयम् ❀

विशेष्यत्वेन विधेयस्य प्रकारता स्यादितीदञ्चिन्त्यम्। एवञ्च पूर्वाशब्दस्य पूर्वात्वप्रकारकज्ञानलक्षणया पूर्वात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरेत्येव परमप्राचीनोक्तमुत्तरपूर्वेत्येव युक्तम्। 'न विधौ पर शब्दार्थः' इत्यपि चिन्त्यम्, 'आयुर्वै घृत'मित्यादौ घृतमायुर्जनकमित्यर्थेन विधेयायुःशब्दस्य लक्षणया तस्य दुष्टत्वात्।

❀ विषमपदविवृतिः ❀

मनुभवसिद्ध'मिति तु शपथैकसमधिगम्यम्। विधेयबोधके तु न लक्षणा, उक्तन्यायात्। एतद्प्रवृत्तिबीजकथनन्तु स्वमौर्ख्येनैव। ईदृशे विषये विधेयबोधके एव लक्षणायाः सार्वजनीनानुभवसिद्धत्वेन 'या पूर्वे'त्यादि भाष्यसङ्गतेः। उक्तभाष्याविरुद्धस्य प्रत्युत तदनुकूलस्योक्तन्यायस्य त्यागे बीजाभावाच्च। एवञ्च 'या पूर्वा सोत्तरे'त्यादिविग्रहे उद्देश्यविधेयभावानुगतपूर्वनिपात एवेति भाष्यानुसारिसरणिरिति वदन्ति। **अत्र मानमिति**। 'अन्तरायां पुरी'ति भाष्योदाहरणात्पूःशब्दस्य प्रयोगे

❀ वरवर्णिनी ❀

**स्पष्टार्थमिति**। केचित्तु 'दिक्सङ्ख्ये सञ्ज्ञाया'मित्यधिकारीय'तद्धितार्थे'ति विहितस्यापि ग्रहणापत्तौ–पञ्चभिरुत्तरैः क्रीता 'पञ्चोत्तरा' इत्यादौ सर्वनामतापत्त्या बहुव्रीहिग्रहणमावश्यकमित्याहुः।

**अन्तरायै इति**। पूःशब्दार्थनिष्ठविषयतानिरूपितविषयत्वाऽप्रयोजकोऽन्तरशब्दः सर्वनामसञ्ज्ञ इत्यर्थः। विशेष्यतां विहाय विषयतापदोपादानाच्च—पूःशब्दार्थस्य कदाचित्प्रकारताप्रयोजकत्वेन विवक्षायामपि न सर्वनामता, 'पूःशब्दार्थनिष्ठविशेष्यते'त्यादि **पर्वतीयोक्तौ** तु तादृशस्थले सर्वनामतापत्तिरेवेति **गौडाः**। **मानमिति**। शब्दे विशेष्यताप्रकारतयोर्बाधात्पुरर्थग्रहणेऽपि विषयताप्रयोजकताया यत्किञ्चिन्निष्ठाया ग्रहणे मानाभावादुपस्थितत्वाच्च पूःशब्दे एव तदौचित्यात्पूःशब्दप्रयोज्यविषयतानिरूपितविषयत्वाऽप्रयोजकोऽन्तरशब्द इत्येव वार्त्तिकार्थ इति 'अन्तरस्यै नगर्यै'इत्येवोचितमिति-**दीक्षितोक्त**मयुक्तमिति नागेशभट्टानामाशयं **गौडा** व्यावर्णयन्ति।

'द्व्यक्षरं यदी'ति पठित्वा—'द्व्यच्काम्बार्थकस्यैव ह्रस्व' इति नियममाश्रित्य—'डलकवतां ह्रस्वो ने'त्यस्य भाष्ये प्रत्याख्यानात्फलाभेदाय सामान्यतोऽपि वार्तिकमसंयुक्तविषयमित्याशयेनाह—**असंयुक्ता इति** । 'द्व्यक्षरं यदी'त्यस्याऽऽङ्गत्वात्—'द्व्यक्षराम्बार्थकान्तस्यैव ह्रस्व' इति नियमशरीराज्जगदम्बेत्यादौ ह्रस्वो भवत्येव ।

**यद्यपि जरसादेशस्येति** । एवञ्चैत्वशीनुड्याडामां नित्यत्वात्पूर्वमेषु क्व चिद्जादित्वाभावात्क्वचित्सन्निपातपरिभाषया जरसोऽनापत्तिरिति भावः । यद्यपि याडामोजरस-

ॐ अभिनव-चन्द्रिका ॐ

**फलाभेदायेति** । 'द्व्यक्षरं यदी'तिप्रत्याख्यानपक्षे 'हे अक्के'त्यादौ ह्रस्वः प्राप्नोति, 'डलकवतां ह्रस्वो ने'ति वार्तिकमते ह्रस्वो न प्राप्नोतीतिफलभेदवारणायाऽसंयुक्ता इति वक्तव्यमिति भावः ।

**ह्रस्वो भवत्येवेति** । न चादन्तत्वाट्टाप्स्यादिति वाच्यं, ह्रस्वस्य बहिरङ्गासिद्धत्वेन टापोऽप्राप्तेः । सन्निपातपरिभाषया टापः प्राप्त्यभावाच्च ।

**इति भाव इति** । वस्तुतस्तु क्वचित्परत्वात्क्वचित्पूर्वविप्रतिषेधेन पूर्वमेव जरसिति—एत्वशीनुड्याडामां वारणाय 'सम्बुद्धौ च' 'औङ आपः' 'ह्रस्वनद्यापः' 'याडापः' 'ङेरा'मित्यादिषु सर्वत्रा-

ॐ चिदस्थिमाला ॐ

ङ्याप्पोर्ग्रहणे सर्वत्र दीर्घयोरेव ग्रहणान्नेति शास्त्र्याद्युक्तमपास्तम् । एवं वार्तिकाभावादाह—**द्व्यक्षरमिति** । एतेन—तथा भाष्योदाहरणादस्य लाभ इति शास्त्र्युक्तमपास्तम् । प्रत्याख्याने न्यूनतां निराचष्टे—**द्व्यक्षरमिति** । **'कान्तकस्यैवे'**[कान्ताङ्गस्यैवे?]ति पाठः । लक्ष्मीशब्दस्य तु नाम्बार्थत्वमिति स्पष्टमेव । एतेन—सूत्रेण तदन्तविधिना प्राप्तोऽपि 'द्व्यक्षरं यदी'ति वचनेन वार्तिकप्रत्याख्यानात्तदन्ते न ह्रस्व—इति शास्त्र्युक्तमपास्तम् ।

मूलासाङ्गत्यं ध्वनयन् पूर्वपक्षतात्पर्यमाह—**एवञ्चेति** । तस्य तत्त्वेनाबन्तत्वे चेत्यर्थः । एवञ्चैतदर्थं न प्रश्लेष इति भावः ।

ॐ ज्योत्स्ना ॐ

प्रदर्शयतां प्रकाशकृतां तात्पर्यमप्यत्रैवेति । तर्हि 'या पूर्वा सोत्तरा यस्योन्मुग्धस्य स पूर्वोत्तर उन्मुग्ध' इत्युद्देश्यविधेयभावानुगतपूर्वनिपातो भाष्यकृता कथमुदाहृतः—इति चेत् ? या पूर्वा सैवोत्तराऽस्येत्येवकारार्थान्तर्भावेणेति ब्रूमः । यच्छब्दसमभिव्याहृतपूर्वापदस्य पूर्वात्वप्रकारकज्ञानविशेष्यत्वरूपविशेषणपरस्यैव तच्छब्दसामानाधिकरण्यगद्विधेयपरत्वाद्विशेषणसङ्गततदुत्तरैवकारेणायोगव्यवच्छेदकेनोत्तरस्यां पूर्वत्वभिन्नधर्मप्रकारकज्ञानविशेष्यत्वव्यवच्छेदविधेयताबोधनादिति दिक् । नन्वन्तरायां पुरि वसतीति भाष्योदाहरणात्—पूःशब्दसामानाधिकरण्य एव निषेधबोधकत्वमिति प्रतीयते, एवञ्चान्तरायै नगर्यै इत्यत्र कथं निषधोऽत आह—**पूःशब्दाथस्याऽविशेष्यत्व इति** । **एवञ्चेति** । जरसि कृते स्थानिवद्भावेनैत्वादीनां प्राप्तौ चेत्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

'सिंहो माणवक' इत्यादौ विधेयसिंहशब्दस्य सिंहसदृशे लक्षणायाः स्वयमुक्तेश्च । **नियमेति** । अत्र 'द्व्यक्षर' मित्यस्यार्थशब्दस्य विशेषणत्वेनोपपत्तौ नियमपरतया व्याख्यानं क्लिष्टम् । **भवत्येवेति** । पुनष्टाप् तु न

ॐ विषमपदविवृतिः ॐ

एवायं निषेध इति केचित् । अन्ये तु 'स्वं रूप'मिति शास्त्रात्पूःपदस्य स्वरूपपरत्वे प्रत्यासत्त्याऽन्तरशब्दार्थकविशेष्यसमर्पके पूःशब्देऽसतीत्यर्थः, एवञ्च नगरीविशेष्यत्वे सर्वनामत्वमिष्टमेवेत्याहुः । अत एवाजर्यं सङ्गतमिति सूत्रे 'मृगैरजर्यमि'त्यादौ 'सङ्गत'मिति विशेष्यमध्याहार्यमित्यभियुक्ताः । **प्रश्लेषादिति** । येन नाप्राप्तिन्यायमाश्रित्येदम् । **एत्वशीनुड्याडागमामिति** । इदम्—'एवमेत्वेपी'ति

पेक्षया परत्वात्तयोः कृतयोराद्येऽजादित्वविघातादन्त्ये सन्निपातपरिभाषया न जरसः प्राप्तिः, एत्वमेत्त्वेऽपि; तथापि तत्र प्रश्लेषफलं दर्शयितुमाह—**एवमिति** । अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम् । **स्वाश्रयमिति** । स्वं—श्रूयमाण आकारः ।

**स्थानिवद्भावेनाप्त्वमिति** । न च 'ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिव'-दिति ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वेन तल्लाभः ?,'ङ्याप्स्थानिको दीर्घ-भिन्न आदेशो न स्थानिव'दिति तदर्थ इति वाच्यं, 'याडापः' 'औङ आपः' 'आङि चापः' 'ङेराम्नद्याप्' 'हल्ङ्याप्'—इत्येतेष्वाकारप्रश्लेषमाश्रित्य—स्थानिवत्त्वनिषेधप्रत्याख्यात्-

ॐ अभिनव-चन्द्रिका ॐ

ऽऽकारप्रश्लेष आवश्यकः । यथा च पूर्वं जरस्-तथा निर्जरशब्दे एवावोचाम । **परत्वात्तयोरिति** । चिन्त्यमिदम्—पूर्वविप्रतिषेधेन जरसेव पूर्वं भवतीति—'जरसोऽवकाशः जरसा जरसे' इति 'जराया' इतिसूत्रभाष्यतो लाभात् । **निर्जरशब्दे उक्तमिति** । यदत्र वक्तव्यं तदस्माभिरपि तत्रैवोक्तमिति बोध्यम् । न च जरसि कृते स्थानिवद्भावेनाऽऽबन्तत्वेऽपि निर्दिश्यमानाऽऽपो-ऽभावादेत्त्वं नैव प्राप्नोतीति—तत्राऽऽकारप्रश्लेषो व्यर्थ इति वाच्यं, प्राचीनमते निर्दिश्यमानपरि-भाषाया वर्णग्रहणेऽप्रवृत्तेरित्याशयात् । वस्तुतस्तु 'हे अतिखट्वे'त्यादावेत्त्ववारणाय तत्र प्रश्लेष आवश्यक एवेति बोध्यम् ।

ॐ चिद्स्थिमाला ॐ

मूलमतेऽपि स्थलत्रये नैतदर्थं प्रश्लेष इत्याह—**यद्यपीति** । एतेनान्यथा **दण्ड्याद्युक्ति**रपास्ता, विरोधापत्तेः । तत्र=स्थलत्रये । इदमप्ययुक्तमित्याह—**अत्रेति** । 'यजादिसुब्निमित्तक'मित्यादि **दण्ड्याद्युक्ते**-रसाङ्गत्वादाह—**स्वमिति** । ननु तेन दीर्घस्य स्थानिवद्भावनिषेधेऽपि ह्रस्वस्य कथं तत्त्वव्यवच्छेदोऽत आह-

ॐ ज्योत्स्ना ॐ

**नित्यत्वादिति** । उक्तरीत्यैत्वादीनां कृताकृतप्रसङ्गादित्यर्थः । **क्वचिदजादित्वाभावात्**—नुड्याडोः । क्वचित्सन्निपातपरिभाषया—श्यामोः । एत्वविषये तु सन्निपातपरिभाषया जरसोऽना-पत्तिः, एत्वस्य सन्निपातलक्षणत्वेऽपि सन्निपातविघातकस्य जरसोऽनिमित्तत्वाभावात्, किन्त्वेत्त्वे-कृते यदि जरस् स्यात्,—एत्वप्रवृत्तिरनर्थिका स्यादिति जरस् न प्रवर्त्तते, अथापि एवमप्यु-भयोर्नित्यत्वादेत्वे कृते सकृद्गतिन्यायादेत्त्वं न प्रवर्त्तते इत्याशयः । एतदेवाभिप्रेत्य—यद्यपीत्या-द्युत्तरग्रन्थे याडामावपेक्ष्य एत्वस्य पृथगुक्तिः—**एवमेत्त्वेऽपीति** । त्रिष्वपि 'परत्वा'दिति हेतोः समानत्वे-ऽपि जरसप्राप्तिहेतोर्विशेषात् । नन्वाकारप्रश्लेषे सति शीनुटोरपि जरसि कृते प्राप्त्यभावाज्जरस इव तयोरप्यनित्यत्वं, तत्र प्रश्लेषो व्यर्थ इत्याक्षिपति—**यद्यपीत्यादिना** । **एवमेत्त्वेऽपीति** । परत्वा-त्कृते इत्यर्थः । जरसप्राप्तिस्तु सकृद्गताविति न्यायादिति प्रागुक्तम् । पुनः प्रसङ्गविज्ञानं त्वेतादृशे विषये नास्तीत्यचश्चेत्यत्र प्रदीपे स्पष्टम् । तत्र=एत्वयाडाम्शास्त्रेषु । **एवमितीति** । 'पद्दन्' इति सूत्रे 'प्रभृति'ष्वित्यस्य विषयसप्तमीत्वाभ्युपगमात्परां नित्यांश्चैत्वादीन् बाधित्वाऽन्तरङ्गत्वान्नसादिषु-

ॐ सदाशिवभट्टीयम् ॐ

भवति, बहिरङ्गासिद्धत्वात् । **उक्तमिति** । 'एवञ्चेन्निर्जरसे निर्जरस इत्येव भवितव्य'मिति भाष्यविरोधात् 'पूर्व-विप्रतिषेधेन जरस्'इत्येवोचितमिति निर्जरशब्दस्थशेखरश्चिन्त्य एवेति । **स्वं श्रूयमाणेति** । 'स्वम्=आदेशत्व'-

ॐ विषमपदविवृतिः ॐ

वक्ष्यमाणञ्च चिन्त्यम् । तथाहि—नित्यत्वस्य एत्वविषये जरस्यपि तौल्यादिति । तस्मात्परत्वादेत्वे पश्चाज्जरसि लक्ष्ये लक्षणस्येति न्यायेन पुनरेत्वाप्रवृत्तिरित्येव तत्त्वम् । **प्रश्लेषेति** । याडामोः

भाष्यनये-शङ्कासत्त्वेनादोषात् ।

अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेषामनभिधानं, यथा अतिखट्वस्य-अः-'अतिखट्वाः' इत्यादेः । वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ फलभेदस्यैवाभावश्च ।

यत्तु-'आकारान्तरं प्रश्लिष्य--'आकाररूप एव यो न कदाचिद्रूपान्तरं प्राप्त इत्यर्थ' इति, तन्न; मानाभावात्, भाष्ये तस्यानुक्तेश्च ।

❀ अभिनव-चन्द्रिका ❀

फलभेदस्यैवाभावाच्चेति । वस्तुतस्तु-'धालन्तयकोस्तु नित्य'मितिवार्तिकोदाहरणे 'सुनयिके'-त्यादौ गुणे स्थानिवत्त्वमन्तरा धातुत्वाभावे धालन्तयकारासम्भवेन तदसङ्गत्यापत्त्या चिन्त्यमिदम् ।

❀ चिदस्थिमाला ❀

ङ्यापाविति । नये इति । ननु वार्तिकमते इत्यर्थः । ननु कश्चिद्वार्तिकमतेन सुलोपः सूत्रभाष्यमते तत्प्रश्लेषेऽपि स्यादिति कथं तत्प्रत्याख्यानमत आह-अत्रेति । उक्तविषये इत्यर्थः । आदिना-'गङ्गा'मित्यादि । अभ्युपेत्येदं, वस्तुतोऽत्र स एव नेति तत्राप्यक्षत्या नास्यानभिधानमित्याह-वक्ष्येति । 'परे'त्विति मन्तशेषे 'किञ्चे'त्यादिनेत्यर्थः। 'स्यैवाभावश्चे'ति पाठः। फलाभेदाय कौस्तुभाद्युक्ति खण्डयन्ति-यत्त्विति । इत्यर्थः-

❀ ज्योत्स्ना ❀

कृतेषु स्थानिवद्भावात्प्राप्ता एत्वादयः आकार प्रश्लेषान्न भवन्तीति भावः । इत्यादेरिति । आदिना निष्कौशाम्बेरिर्निष्कौशाम्बीरित्यादेः सङ्ग्रहः । वक्ष्यमाणरीत्येति । वक्ष्यमाण'परे तु'मत-

❀ सदाशिवभट्टीयम् ❀

मिति वक्तुं युक्तम् । आकाराश्रयमाकारत्वमित्यर्थे पौनरुक्त्यं स्यात् । वक्ष्यमाणरीत्येति । सा च-परम्परा-सम्बन्धेन स्थानिनिष्ठधर्म्मस्य नातिदेश इत्येवं रूपा । एवञ्चेद्धात्वन्तयकोस्तु नित्यं,सुनयिका, अत्र नीधातोर्गुणे अयादेशे धातुत्वं,'शिवोऽर्च्य' इत्यत्र पूर्वरूपम् , 'आरतुः' 'आर'रित्यादावसंयोगाल्लिट्किदिति कित्त्वञ्च स्यात्, मध्ये किञ्चित्कार्य्याभावेन तद्वन्मौनतिदेशादितीदमपि चिन्त्यमेव । 'अभावश्चे'ति पाठः ।

❀ विषमपदविवृतिः ❀

कृतयोरपि पश्चाच्छिशादीनां प्राप्तिः सम्भवत्येव । आमि ङ्विवृद्धयैव पश्चाच्छिशादिप्रवृत्तेः सन्निपात-परिभाषाविरोधाभावादित्याशयः । यद्वा--'शस्प्रभृति'ष्विति विषयसप्तमीति पूर्वमेव निशादीनां प्रवृत्तिरिति भावः । फलाभावेनेति । 'इदं चिन्त्य'मिति 'शेषो घ्यसखी'ति सूत्रे निरूपितम् ।

❀ वरवर्णिनी ❀

इति=इतिवार्त्तिकेन । ह्रस्वे='अतिखट्वे'त्यत्र खट्वाशब्दस्य'गोस्त्रियो'रितिह्रस्वे । आप्त्वस्य विच्छेदात्=ह्रस्वनिष्पन्नेऽकाररे स्थानिवद्भावाऽप्रवृत्त्याऽऽप्त्वाभावात् । दीर्घे=अतिखट्वायेत्यत्र सुपिचेति दीर्घे कृते । तल्लाभः=आबन्तत्वलाभः । वार्त्तिकेन तन्निषेधाद्ध्रस्वे आप्त्वविरहे तत्स्थानिके दीर्घे कथमाप्त्वं स्यादित्याशयः । तदर्थः=वार्त्तिकार्थः । अदोषादिति । तन्मते 'ङ्याप्ग्रहणेऽदीर्घ'इति वार्त्तिका-भावेन ह्रस्वे आप्त्वस्यातिदेशे सति दीर्घे स्थानिवत्त्वेनाप्त्वस्यातिदेष्टुं शक्यत्वादित्याशयः ।

अनभिधानमिति । 'अतिखट्वाये'त्यत्र यद्यपि फलभेदस्तथापि सोऽन्यथाऽपि वारयितुं शक्यते इति न तस्यानभिधानम् । 'अतिखट्वाः'इत्यत्र तु हल्ङ्याप्सूत्रे तदन्तद्वयसत्त्वेन फलभेद आपततीत्यस्यान-भिधानमुचितमित्याशयः । अभावश्चेति । इत्वोत्तरमशब्देन समासे सवर्णदीर्घे आप्त्वस्याभावान्मुनि-त्रयमतेऽपि न फलभेद इत्याशयः । आकारान्तरमिति । आ-आ-आविति रीत्याऽऽकारद्वयं प्रश्लिष्य-

**आबन्तं यदङ्गमिति**। 'प्रत्ययग्रहणे' इति परिभाषयाऽतिखट्वस्य नाबन्तत्वं, यच्चाबन्तं—खट्वेति, न तदङ्गमिति भावः।

न चानयाऽऽबन्तग्रहणे तेनाङ्गविशेषणादाबन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यादौ दोषस्तदवस्थ इति वाच्यम्; अङ्गस्य विशेषणत्वात्।

एतेन—'श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्यादेव या'डि-त्यपास्तम्। तस्य लाक्षणिकत्वाच्च।

ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तत्कथमस्य तत्र प्राप्तिरत आह-**उपसर्जनेति**। 'स्त्रीप्रत्यये चानुपसर्जने ने'ति वचनस्यैव भाष्ये पाठादिति भावः।

अत्रोपसर्जनत्वं—लौकिकमेव, स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासम्भवात्।

---

❀ **अभिनव-चन्द्रिका** ❀

**आबन्तं यदङ्गमितीति**। आबन्ततदाद्यभिन्नं यदङ्गमित्यर्थः। **नाबन्तत्वमिति**। नाबन्त-तदादित्वमित्यर्थः। **यच्चाबन्तमिति**। यच्चाबन्तं तदादीत्यर्थः।

**लौकिकमेवेति**। शास्त्रीयोपसर्जनत्वसमानाधिकरणं लौकिकोपसर्जनत्वमेवेत्यर्थः। तेनैकदेशि-

❀ **चिदस्थिमाला** ❀

'उक्त' इति शेषः। तस्य=आकारान्तरप्रश्लेषस्य। अनया='प्रत्ययग्रहणे' इत्यनया। **विशेषणत्वादिति**। अत्र च तत्प्रत्याख्यानपरं भाष्यमेव मानम्। एतेन=आबन्ताङ्गाभावेन। वक्ष्यमाणरीत्याऽस्यायुक्तत्वादाह-**तस्येति**। आकारस्येत्यर्थः। अस्य=तदादिविधेः। ननु तथापि शास्त्रीयोपसर्जनत्वाभावस्तत्रास्त्येवात आह—**अत्रेति**।

❀ **ज्योत्स्ना** ❀

प्रस्तावे-'किञ्चाकारप्रश्लेषपक्षेऽपी'त्याद्युक्तरीत्येत्यर्थः। **वचनस्यैव भाष्ये पाठादिति**। परिभाषावृत्तिकाराः [सीरदेवाचार्यास्तु-] 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषायां तदाद्यंश-ग्राहके-'यस्मात्प्रत्ययविधिस्तदादी'त्यङ्गसञ्ज्ञासूत्रीययोगविभागे—'नेयङुवङ्'त्यतो 'ऽस्त्री'त्यनुवर्त्य शब्दाधिकाराश्रयणेनार्थपरत्वं सम्पाद्य-'स्त्रीप्रत्यये'इत्यर्थे 'यूस्त्र्याख्यौ' वित्यतः 'स्त्र्याख्ये'त्यनुवर्त्तते, तेन स्त्रीप्रत्ययस्य विशेषणात्—प्रधानस्त्रीप्रत्ययभिन्नप्रत्ययग्रहणे यस्मात्प्रत्ययविधिस्तदादेर्ग्रहणं भवतीत्यर्थादिदं लभ्येत्याहुः। 'गोस्त्रियो'रितिसूत्रभाष्यात्तु-परिभाषायां स्त्रीप्रत्ययविशेषणार्थ-

❀ **सदाशिवभट्टीयम्** ❀

**लौकिकमिति**। तच्च-वाक्यार्थवत्त्वे सति स्वार्थविशिष्टार्थान्तरबोधकत्वरूपं, नेतरविशेषणत्वरूपं, टापो द्योतकत्वेन सर्वत्रोपसर्जनस्यैव सत्त्वात्। इदञ्च समासे एव, वाक्ये तु न, तेन 'सर्वस्मै पुरुषाये'त्यादौ न दोषः।-**त्वासम्भवादिति**। तन्मात्रे लौकिकोपसर्जनत्वन्तु स्त्रीप्रत्ययान्तघटितत्वाद्बोध्यम्। यद्यप्येतादृशो-पसर्जनत्वं यत्रोदाहरणे-न तत्र तदादिनियमप्रसक्तिः, यत्र प्रसक्तिर्न तत्रोपसर्जनत्वं, तथापि परिभाषाया

---

❀ **वरवर्णिनी** ❀

आकाररूपो यो आ, तद्रूपो य आबित्यर्थ इत्याशयः। नच फलभेदाभाव एव मानमत आह—**भाष्ये इति**। **अङ्गस्य विशेषणत्वादिति**। इदमुत्तरं स्ववासनयैव नागेशभट्टैरुक्तम्। परेतु नायं प्राचीनाना-माशयः, किन्तु यत्र धर्मी सिद्धस्तत्र धर्ममात्रस्य तदादित्वस्यैवोपस्थिता न तदन्तद्वयमित्यनुपदमेवास्माभि-र्वक्ष्यमाणमेवात्र युक्तमुत्तरमित्याहुः। **लाक्षणिकत्वाच्चेति**। नागेशमते वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरि-भाषायाः प्रवृत्तेर्दीर्घनिष्पन्नाकारे आप्त्वस्य लक्षणनिष्पन्नतया निरासस्सम्भव इत्याशयः।

**लौकिकमेवेति**। स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छे-

यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति, तथापि–न तेन 'प्रत्ययग्रहणे' इति तदादिनियमप्रसक्तिः ।–एतत्सर्वं व्याख्यादर्शाद्यनुरोधेन ।

परे त्वस्याकारस्य लाक्षणिकत्वान्नात्र याट्, वर्णग्रहणेऽपि तत्प्रवृत्तेः–'ओ'दित्यादौ भाष्ये स्पष्टमुक्तत्वात् ।

❀ चिदस्थिमाला ❀

उक्तपरिभाषायामित्यर्थः । प्रसक्तिरिति ।–नेन निषेधः सफलो भवेत्, तस्मात्तस्याऽग्रहणमेवेति सिद्धम् ।

मूलं दूषयति–एतदिति । अत्र=अतिखट्वायेत्यत्र ।

❀ ज्योत्स्ना ❀

मनुपसर्जने इति प्रावोवाद इति लभ्यते, तदा तु परिभाषार्थसङ्ग्राहके—'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इति योगविभागे—'नेयङुव'ङ्स्थितोऽस्त्रीग्रहणं, 'वामी'त्यतो व्यवस्थितविभाषार्थकं वाग्रहणमनुवर्त्तनीयं, न तु 'स्त्राख्य'पदमपीति पूर्वोक्तार्थसिद्धिरनुगन्तव्येति । अधिकं जिज्ञासुभिः परिभाषाप्रदीपार्चिषि द्रष्टव्यम् ।

❀ सदाशिवभट्टीयम् ❀

अनुपसर्ज्जनस्त्रीप्रत्ययोपस्थापकस्त्रीप्रत्यये तदादिनियमो नेत्यर्थात् । ननु–अस्य स्त्र्यर्थेऽशब्दान्ङीपि 'यस्येति चे'ति लोपे'ई'ति जातं, तस्य निर्शब्देन समासे 'निरि'रित्यत्र 'एकविभक्ति चे'ति प्रत्ययमात्रस्य शास्त्रीयोपसर्ज्जनत्वसम्भव इति, न च फलाभावः, ह्रस्वस्तु स्वमते स्यादेवोपसर्ज्जनस्त्रीप्रत्ययान्तप्रातिपदिकत्वादिति वाच्यम्, 'स्त्रीभ्यो ढ'गिति निरिशब्दस्य स्त्रीप्रत्ययान्तत्वे ढकि अ.दिवृद्धिरिति चेन्न, 'स्त्रीभ्यो ढ'गित्यस्य—स्त्रीत्वरूपार्थवाचकाड्ढगित्यर्थस्यैव वक्ष्यमाणत्वेन निरिरित्यस्य तत्त्वाभावात्तदप्राप्तेः । वस्तुतस्तु 'कुम्भकारेयोप्यापद्येत' 'स्त्रीभ्यो ढ'गिति ढोऽत्र प्राप्नोती'ति भाष्यविरोधाच्चिन्त्यमिदं, तत्र शेखरोऽपि चिन्त्य एव, 'मातृष्वसेय'इत्यादि तु पृषोदरादित्वाद्बोध्यम् । न तेनेति । तेन=स्त्रीप्रत्ययान्तेन,किन्तु स्त्रीप्रत्यय एव तदादिनियमः प्राप्त इति तत्रैव निषेध उचित इति भावः । वस्तुतः शास्त्रीयोपसर्ज्जनत्वमेव स्त्रीप्रत्ययान्ते इति बोध्यम् । तत्र तदादिनियमप्रसक्तिस्तु—तवानुपसर्ज्जनस्त्रीप्रत्ययोपस्थापकस्त्रीप्रत्यये इवानुपसर्जनस्त्रीप्रत्ययान्तघटकस्त्रीप्रत्ययोपस्थाप्यस्त्रीप्रत्ययान्ते बोध्या । अत एव कृत्रिमाकृत्रिमन्यायस्य न बाधः, प्रत्युताश्रयणञ्च । अत एवा'र्द्धनपुंसक'मित्येकदेशिसमासप्रत्याख्यानपरभाष्येण फलभेदश्च न, तच्चार्द्धपिप्पलीत्यादौ कर्मधारयाश्रयणेन भाष्यकृता प्रत्याख्यातम् । तत्रारम्भे लौकिकोपसर्ज्जनत्वेन ह्रस्वो न, प्रत्याख्याने त्वनुपसर्ज्जनत्वाद्ध्रस्वः स्यादेवेतिफलभेदः। मम तु पूर्व्वमिदानीञ्च शास्त्रीयोपसर्ज्जनत्वाभावान्न ह्रस्व इति ।

❀ विषमपदविवृतिः ❀

वर्णग्रहणेपीति । वर्णग्रहणे तत्प्रवृत्तौ बहूपप्लवापत्तेः । ओदिति सूत्रस्थभाष्यस्य चैकदेश्युक्तिल-

❀ वरवर्णिनी ❀

दकताप्रयोजकत्वं–लौकिकोपसर्जनत्वं, तदेव–'स्त्रीप्रत्यये चानुपसर्जने ने'त्यत्र गृह्यते इत्याशयः । समन्वयस्त्वत्थं—

स्वं=टाबादिस्त्रीप्रत्ययः, स्वान्तः=अतिखट्वाशब्दः, तत्पर्याप्ता शक्तिः–खट्वाकर्मकातिक्रमणकर्तृत्वावच्छिन्ननिरूपिता, तन्निरूपकोऽर्थः=खट्वाकर्मकातिक्रमणकर्तृत्वावच्छिन्नरूपः, तन्निष्ठविशेष्यतानिरूपितप्रकारता खट्वानिष्ठा, तन्निरूपिता या स्त्रीत्वनिष्ठावच्छेदकता, तत्प्रयोजकत्वं टाबादौ स्त्रीप्रत्यये इति रीत्या बोध्यः ।

शास्त्रीयोपसर्जनत्वासम्भवादिति । यद्यपि–अस्य स्त्री–ई,या निष्क्रान्तो 'निरि'रित्यत्र शास्त्रीयोपसर्जनत्वं प्रत्ययमात्रेऽपि सुलभम्, प्रकृतेर्लुप्तत्वात्प्रत्ययमात्रस्यैव ईकारस्य शिष्टत्वात्तथापि—'स्त्रीप्रत्यये चानुपसर्जने ने'त्यस्याल्पविषयत्वापत्तेरतः-'एकविभक्ति चापूर्वनिपाते' इत्यादि–शास्त्रीयमुपसर्जनत्वं प्रकृते न गृह्यते, किन्तु लौकिकमेवेति तत्त्वम् ।

परे त्विति । अस्य=अतिखट्वायेत्यत्र दीर्घनिष्पन्नाकारस्य । नचेति । खट्वेत्यस्य सवर्णदीर्घनिष्पन्नतया-लाक्षणिकत्वात्, त्वया[मद्गेन]वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषासञ्चारस्य स्वीकारादित्याशङ्काशयः ।

न च 'खट्वायै' इत्यत्र याडनापत्तिः, सूत्रन्तु 'निशायै' इत्यादौ चरितार्थमिति वाच्यं, यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात्, न चेह तथा, एकादेशतः प्रागपि तद्रूपसत्त्वात्।

'पदाङ्गाधिकारे'इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च। अतएव—'आबन्तान्तं यदङ्ग'मित्यर्थाभिप्रायेण—'अतिखट्वाये'त्यतत्सिद्धये-'अतिखट्व—ए'इति स्थिते प्रवृत्तं 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्त्तिकं व्याख्याय,—श्रुताऽऽकारस्मृतानुबन्धाभ्यामाप्त्वेनाऽऽशङ्कां कृत्वा,—लाक्षणिकत्वेन समाधाय—आकारप्रश्लेषेण तत्प्रत्याख्याने—एतत्परिहारायोपायान्तराकथनं भाष्ये।

❀ अभिनव-चन्द्रिका ❀

समासप्रकरणतत्प्रत्याख्यानयोर्न फलभेद इति परिभाषेन्दुचन्द्रिकायां विस्तरः। **निशायै इत्यादाविति**। इदमुपलक्षणं—'बहुदामायै''बहुयज्वायै'इत्यादेः,। निशधातोरिगुपधलक्षणे के टापि निशाशब्दस्यापि खट्वाशब्दतुल्ययोगक्षेमत्वात्। **आबन्तान्तं यदङ्गमिति**। आबन्ततदाद्यन्ताभिन्नं यदङ्गमित्यर्थः।

❀ चिदस्थिमाला ❀

**न चेत्यस्यैवमिति** शेषः। वर्णग्रहणेऽपि तत्प्रवृत्त्यङ्गीकारे इत्यर्थः। इत्यत्र=इत्यादौ। **इह**=खट्वायै इत्यादौ। ननूपायस्योपायान्तरादूषकत्वान्मूलमपि युक्तमेवात आह—**पदाङ्गेति**। एवञ्च मूलमसङ्गतमेवेति भावः। स्वोक्तप्रकारावश्यकतामाह—**अत एवेति**। तेन निर्वाहादेवेत्यर्थः। **'अकथने'**ऽस्यान्वयः। **'अभिप्रायेणे'**त्यस्य—**प्रवृत्त**मित्यत्रान्वयः। **एतदिति**। द्वितीयशङ्केत्यर्थः।

❀ सदाशिवभट्टीयम् ❀

**निशायामिति**। हलन्ताट्टापोनभिधाने तु'बहुयज्वाया'मित्यादि बोध्यम्। **सत्त्वादिति**। एवन्त्वतिखट्वायेत्यत्र ह्रस्वात्पूर्वमाकारसत्त्वेन कथं तस्य लाक्षणिकत्वम्?। किञ्च तत्तच्छब्दानुवादेन विहितत्वरूपप्रतिपदोक्तत्वस्य सत्त्वेन कथं परिभाषया वारणमिति चिन्त्यमेतत्। तस्मादतिखट्वायेत्यत्र यकारमुपजीव्यजायमानो दीर्घो

❀ विषमपदविवृतिः ❀

मित्यन्यत्र प्रपञ्चितम्। **पदाङ्गेति**। शब्दस्वरूपस्याप्यध्याहारेण पृथक्तदन्तविधिरिति भावः।

**लाक्षणिकत्वेन समाधायेति**। एवञ्च तद्भाष्येणाकारप्रश्लेषोऽपि सूच्यते इति भावः। **वार्तिकस्येति**। 'चित्रायां जातश्चित्र' इत्यादौ दोषवारणायोभयोरप्यावश्यकत्वेन चिन्त्यमेतत्। यत्तु'निशे' इत्याद्यर्थं तस्यावश्यकत्वाच्चिन्त्यमित्याहुस्तत्तुच्छम्,'पद्'न्निति सूत्रस्य प्रयोगनियमार्थत्वात्। जरसपेक्षया याटः

❀ वरवर्णिनी ❀

इह=खट्वेत्यादौ। तथा=तादृशरूपम्। सवर्णदीर्घात्पूर्वमपि 'आ'इतिरूपस्य सत्त्वात्।

१ **अन्येतु**—ओदिति सूत्रभाष्यमेकदेश्युक्तिः, गोभवदित्यादावावश्यकेन गौणमुख्यन्यायेनैव'अदोऽभव'दित्यादिवारणसम्भवात्, एवञ्च वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते, अत एव गुणादिनिष्पन्नैकारादेर्हरये इत्यादावयादयःसिध्यन्ति। 'आदेच उपदेशे'इत्यादेरस्याः परिभाषाया अनित्यत्वज्ञापनापेक्षया वर्णग्रहणेऽप्रवृत्तिरित्यर्थज्ञापकत्वे लाघवमित्याहुः। इन एवारुचेराह—**पदाङ्गेति**। २ **अत एव**=अङ्गस्य विशेष्यतया तदन्तविधिद्वयलाभादेव। **सिद्धये** = स्थानिवत्त्वेनाबन्तत्वात्प्राप्तस्य याटोऽभावाय। लक्षणप्रतिपदोक्तपरिभाषाया मन्मते[भट्टमते—] वर्णग्रहणे प्रवृत्तावपि तया नात्र याड्व्यावृत्तिः, अतिदेशविषये तदप्रवृत्तेः। व्याख्याय=तेनातिखट्वायेत्यत्र याटो वारणं कृत्वा। **श्रुताकारेति**। समूहालम्बनज्ञानेनेति भावः। आप्त्वस्य आकारपकारसमुदायरूपत्वादिति तत्त्वम्। **लाक्षणिकत्वेनेति**। अतिदेशविषयाभावेन लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तौ बाधकाभावादित्याशयः। तत्प्रत्याख्याने=भाष्ये 'ङ्याब्ग्रहणेऽदीर्घ'इति वार्त्तिकस्य प्रत्याख्यानावसरे।

किञ्च—अङ्गस्य विशेषणत्वे वार्तिकस्य, तत्प्रत्याख्यानात्—आकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव ।

किञ्च—खट्वाया अर्द्धेऽर्द्धखट्वायामित्यादौ याडनापत्तिः ।

किञ्चाऽऽकारप्रश्लेषपक्षेऽपि दीर्घोत्तरं—'स्वाश्रयाकारत्वं, स्थानिवद्भावेनाप्त्व'मिति शङ्काऽयुक्तैव, दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे

❀ चिदस्थिमाला ❀

'तथा प्रवृत्त'मित्येनद्विशदयन्दोषान्तरमाह—किञ्चेति । एतेन 'तत्प्रत्याख्यानपरभाष्यमेव तत्र मान-मिति प्रागुक्तमपास्तम् । दोषान्तरमाह—किञ्चेति । परिनिष्ठितविभक्त्या समासमिनाह—अर्धे इति ।

❀ ज्योत्स्ना ❀

खट्वाया अर्धेऽर्द्धखट्वायामिति—विग्रहप्रदर्शनमेकदेशिसमासारम्भपक्षे दोषसद्भावसूच-नार्थम् । चिन्त्यमेतत्—सूत्रमते एकदेशिसमासारम्भादुपसर्जनत्वसद्भावेऽपि परिभाषाप्रदीपार्चिः-परिष्कृत-गोस्त्रियोरितिसूत्रस्थ-भाष्यप्रदीपोक्तदिशा ह्ल्ड्याबिति सूत्रस्थदीर्घग्रहणात्परिभाषाया-मनुपसर्जने इति विशेषणस्य प्रायोवादत्वाभ्युपगमात्तदादिनियमाभावादर्धखट्वायामित्यत्र दोषा-

❀ विषमपदविवृतिः ❀

परत्वाच्च जरसर्थमपि तत् । अर्द्धखट्वायामिति । 'अर्द्धं नपुंसक'मिति सूत्रप्रत्याख्यानपक्षे तु—गोवाद्यार्थे-

❀ वरवर्णिनी ❀

एतत्परिहाराय=श्नाकारस्मृतानुबन्धाभ्यामतिखट्वायेत्यत्र प्राप्तस्य याटः परिहाराय । अयम्भावः—वार्त्तिकाऽ-सत्त्वे—स्थानिवद्भावेनाप्त्वमादाय प्राप्तस्य याटो वारणमाकारप्रश्लेषेण कृतं भगवता । परन्तु वार्त्तिकाभावे श्नाकारस्मृतानुबन्धाभ्यां प्राप्तस्य याटो वारणाय कश्चनोपायो नोद्भावितः । सा च शङ्का नाकारप्रश्लेष-मात्रेणापनीयते, दीर्घनिष्पन्नाकारस्य दीर्घत्वानपायात् , अतो लक्षणप्रतिपदोक्तपरिभाषासञ्चारो[वार्त्तिकसत्त्वे इव तत्खण्डनेऽपि-] भाष्यकृदभिमत इत्यभ्युपेयम् । एवञ्च आबन्तान्तं यदङ्गमित्येवार्थः, वर्णग्रहणे लक्षण-प्रतिपदोक्तपरिभाषाप्रवृत्तिश्च भाष्यारूढेति **नागेशभट्टाशयः ।**

**परे तु** धर्मिसन्निधाने प्रत्ययग्रहणपरिभाषाया धर्ममात्रोपस्थापकतयाऽङ्गसन्निधाने तदादित्वमात्रस्यैवो-पस्थित्याऽऽबन्ततदाद्यभिन्नमङ्गमित्यर्थस्यैव लाभेन नातिखट्वायेत्यत्र याटः प्राप्तिरपि, एवञ्च-अङ्गस्य विशेष्य-ताया एवौचित्या'दिति नागेशभट्टोक्तं नास्माकं प्रतिकूलम्, अस्माभिरङ्गस्य विशेषणताया अनुक्तेः । किन्तु—तदादित्वधर्ममात्रोपस्थित्या न द्वितीयस्तदन्तविधिरित्यस्यैवास्माभिराश्रयणात् । वार्त्तिकखण्डनावसरे भाष्ये उपायान्तराकथनञ्चास्मदुक्तरीत्या धर्ममात्रोपस्थित्या द्वितीयतदन्तविधेरभावेनातिखट्वायेत्यस्याबन्ततदादि-त्वाभावेन याटः प्राप्तेरेवाभावादेव । ङयाब्ग्रहणवार्त्तिकव्याख्यावसरे भाष्ये लक्षणप्रतिपदोक्तपरिभाषया वार-णन्तूपायस्योपायान्तरादूषकतयैव । अङ्गस्य विशेषणताया [ प्राचीनानुसारिभिः—] अस्माभिरनुक्तेरेव '**किञ्चाङ्गस्ये**'त्यादि भट्टोक्तमपि नास्माकं प्रतिकूलमित्याहुः । **इतोऽरुचेराह—किञ्च खट्वाया इति ।**

**याडनापत्तिरिति ।** उपसर्जनस्त्रीप्रत्यये तदादिनियमेन अर्द्धखट्वेत्यस्याबन्तादङ्गत्वाभावादित्याशयः । एवञ्च तदन्तविधिद्वयमिहावश्यकमिति तत्त्वम् । **परेतु**—'स्त्रीप्रत्यये चानुपसर्जने ने'त्यत्र शास्त्रीयमेवोपसर्जनं गृह्यते, [शास्त्रीयोपसर्जने एव तदादिनियम इति यावत्,] 'खट्वाया अर्द्धे'मित्यत्र खट्वेत्यस्य तु न शास्त्रीय-मुपसर्जनत्वम्, 'एकविभक्तिचापूर्वनिपाते' इति शास्त्रीयोपसर्जनत्वस्य-'एकविभक्त्यषष्ठ्यन्तवचन' मित्य-नेन निषेधात् । एवञ्च मदुक्तरीत्या तदन्तविधिद्वयाभावेऽपि उपसर्जनस्त्रीप्रत्ययातिरिक्ते तदादिनियमा-भावादर्धखट्वायामित्यत्र न याडनापत्तिरित्याहुः । **इत एवारुचेराह—किञ्चाकारप्रश्लेषेति ।**

१ तदादित्वरूपधर्ममात्रोपस्थितिं वदद्भिः प्राचीनैरङ्गस्य विशेषणताया अनुक्तेश्चिन्त्यमिदम् ।

दीर्घे तदारोपस्य दुर्लभत्वात्, परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात् ।

'याडापः' इति सूत्रे भाष्येऽपि "–'अतिखट्वाये'त्यत्र स्थानिवत्त्वात्प्राप्तस्य याटः प्रतिषेधो वक्तव्यः, न वक्तव्यः,–'ङ्याब्ग्रहणेऽदीर्घ' इति स्थानिवत्त्वनिषेधात् । न च दीर्घत्वे-आबसौ भूतपूर्व इति याट् प्राप्नोति, लाक्षणिकत्वात् । स्थानिवत्त्वे तु तत्सामर्थ्या-न्नैतत्परिभाषाप्रवृत्तिः–"इत्युक्तम् ।

यद्यपि स्थानिवत्सूत्र-याडापसूत्रस्थभाष्याभ्यां–हल्ङ्याप्सूत्र-याडापसूत्रयोरेव प्रश्लेषो लभ्यते, तथापि भाष्यमुपलक्षणम्, इतरसूत्रविषयोदाहरणानभिधानं वेत्यनयोर्युक्तं सुधीभि-र्विचार्यमित्याहुः ।

❀ अभिनव-चन्द्रिका ❀

**इत्याहुरिति** । 'हे अतिखट्व', 'अतिखट्वेन', 'अतिखट्वाय', 'अतिखट्वयोः', 'अतिखट्वाना'-

❀ चिदस्थिमाला ❀

प्रागुक्तव्याख्याने दोषमाह—**किञ्चेति** । अपिरुक्तरीत्या वार्तिकमतसमुच्चायकः । **मानाभावादिति** । फलाभावादित्यर्थः । अतिदेशस्य कार्यार्थत्वात्—परम्परया कार्यमादाय तत्प्रवृत्तौ न मानमिति भावः ।

विशेषं वक्तुं स्वोक्तप्रकारे भाष्यान्तरसंमतिमप्याह—**याडाप इतीति** । '**उक्त**'मित्यत्रान्वयः । अन्यथा शङ्कते—**दीर्घत्वे इति** । इतः प्राक् '**नचे**'त्यपपाठः, अग्रे सत्त्वात्, तथैव भाष्यशैलीसत्त्वात् । नन्वनेनैव पूर्वत्रापि समाधाने तदानर्थक्यमत आह–**स्थानीति** । अतिदेशनिर्विषयतापत्तेरित्यर्थः । तमेवात एवाह–**यद्यपीति** । भाष्यं=भाष्यद्वयम् । **युक्तमिति** । उपलक्षणत्वे एकोक्त्यैव निर्वाहे द्वितीयकथनानुपयोगो

❀ ज्योत्स्ना ❀

भावात् । भाष्यमते त्वेकदेशिसमासस्य कर्मधारयमाश्रित्य प्रत्याख्यानादुपसर्जनत्वाभावेन दोष-शङ्काया अप्यभावादिति ।

❀ सदाशिवभट्टीयम् ❀

यकारसन्निपातविघातकयाटं न प्रवर्तयतीति सन्निपातपरिभाषया वारणं बोध्यम् । **मानाभावादिति** । अत्र यद्वक्तव्यन्तदुक्तं प्राक् ।

❀ विषमपदविवृतिः ❀

[गोवशायै!] इत्यादि बोध्यम् । **मानाभावादिति** । इदं चिन्त्यम्—'अतिखट्वाये'त्यादावुक्तरीत्यैव याड्प्रवृत्तौ आकारप्रश्लेषवैयर्थ्यापत्तेरेव मानत्वात् । 'अतिखट्वाये'त्यादौ सन्निपातपरिभाषयापि याटो वारयितुमशक्यत्वादिति बोध्यम् । अत्र निष्कर्षस्तु—'आबन्तान्त'मित्येव सर्वत्र वाक्यार्थः, पर-म्परयापि कार्यमालोच्य स्थानिवत्त्वं प्रवर्तते एव । 'अतिखट्वाये'त्यादावुक्तैव गतिः । 'आ आ'बिति प्रश्लेषस्तु 'चित्र' इत्याद्यर्थ इति सुधीभिराकलनीयम् ।

---

❀ वरवर्णिनी ❀

१ **दुर्लभत्वादिति** । **परेतु**—अतिखट्वायेत्यत्र स्थानिवद्भावेन याट्शङ्का–'अतिखट्व–ए' इत्य-वस्थायामेवेति न तत्र स्थानिवत्त्वे भट्टमतेऽपि बाधकं किञ्चित् । किञ्च—'सुनयिके'त्यादौ 'धात्वन्तयकोस्तु नित्य'मित्यस्य प्रवृत्तये गुणनिष्पन्नेऽपि स्थानिवद्भावो भवत्येवेति स्वीकरणीयमेवेति चिन्त्यमिदमित्याहुः ।

तत्सामर्थ्यात्=अतिदेशसामर्थ्यात् । न एतत्परिभाषाप्रवृत्तिः=न लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिः ।

२ **परेतु**—उपायस्योपायान्तरादूषकत्वान्न 'याडाप' इति सूत्रभाष्यविरोध इति प्राचीनोक्तमेव युक्तं, लाक्षणिकत्वादित्यादिना नागेशभट्टोक्तं सर्वमयुक्तमेवेत्याहुरस्मत्पितामहश्रीचरणाः । श्रीत्रिपाठिपादा अप्येवमाहुरिति **गौडाः** ।

❀ अभिनव-चन्द्रिका ❀

मित्यादौ,–'विभक्तिनिमित्तककार्यात्पूर्वमेव जरस् भवती'ति निर्जरशब्दे परेत्वित्यादिना सिद्धान्तितत्वेन जरसा, जरसे, जरसः, जरसोः, जरसामित्यादौ च याडादिवारणाय–'सम्बुद्धौ च' 'आङि चापः' याडापः' 'ङेराम्' इत्यत्र तत्तद्विधिसूत्रेष्वाकारप्रश्लेष आवश्यकः। अतिखट्वायेत्यादावाकारप्रश्लेषेऽपि याड्वारणाय 'स्त्रीप्रत्यये चे'ति परिभाषया उपसर्जनवाक्ये तदादिनियमसत्त्वेनाबन्ततदाद्यभिन्नं यदङ्गं ततः परस्य ङितो याडित्यवश्यं 'याडाप' इत्यस्यार्थो वक्तव्यः।

न चातिखट्वायेत्यादावाकारस्य लाक्षणिकत्वान्न याडिति नागेशभट्टैरुक्तमेवेति वाच्यं, वर्णग्रहणे फलाभावेनैतत्परिभाषाया अप्रवृत्तेरेवोचितत्वात्। नच ओत्सूत्रभाष्ये—'अदोऽभव'दित्यादौ प्रगृह्यसञ्ज्ञामाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया वारणपरभाष्यविरोधः–वर्णग्रहणेऽस्या अप्रवृत्ताविति वाच्यं, तस्य भाष्यस्यैकदेशयुक्तित्वेनाऽविरोधात्। अन्यथा 'गोऽभव'दित्यादौ दोषवारणायैतदग्रे एव भाष्ये गौणमुख्यन्यायस्य प्रवर्तितत्वात्तेनैवात्रापि दोषवारणे एतद्भाष्यासङ्गतिः स्पष्टैव। 'खट्वायै' इत्यादौ याड्रुपपत्तये 'यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्यैतत्परिभाषाविषयत्व'मिति रीत्या वारणापेक्षया च वर्णग्रहणे एतदप्रवृत्तेरेव लघीयस्त्वात्।

न च 'पदाङ्गाधिकारे'इतिपरिभाषया आबन्तं यत्तदादि तदन्तं यदङ्गं तस्मात्परस्य ङितो याडित्यर्थेनातिखट्वायेत्यादौ पुनरपि दोषो दुर्वार एवेति वाच्यं, यत्र धर्मी सिद्धः धर्मोऽसिद्धस्तत्र प्रत्ययग्रहणपरिभाषया अदग्धदहनन्यायेन तदादित्वरूपधर्ममात्रोपस्थित्या आबन्तं यदङ्गम्,—आप्–यस्माद्विहितस्तदादित्वविशिष्टं–तस्मात्परस्य ङितो याडित्यर्थेनादोषात्।

नच खट्वेव मनुष्यः खट्वा, ईषदूनः खट्वा बहुखट्वा, तस्मै–'बहुखट्वायै ब्राह्मणाय' इत्यादावाबन्ततदादित्वाभावादुपसर्जनवाक्येन याण्न स्यात्, एवं 'स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपित–स्त्रीत्वनिष्ठप्रकारतावच्छेदकत्वरूपोपसर्जनत्वस्य प्रकृते सत्त्वादनुपसर्जनवाक्येनापि न स्यादिति वाच्यम्, स्वान्ततदाद्यवधिकपूर्वत्ववत्पदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताऽवच्छेदकताप्रयोजकत्वमुपसर्जनत्वमितिकल्पे बहुचः पदत्वाभावेनानुपसर्जनत्वस्याक्षततया वाक्यभेदाभावेऽपि याट्सिद्धेः।

न च द्विवारं स्थानिवत्त्वप्रवृत्तौ प्रमाणाभावादिह आत्वमेव नेति वाच्यं, 'धात्वन्तयकोस्तु नित्य सुनयिका सुपाकिके'त्यादौ द्विवारं स्थानिवत्त्वप्रवृत्तिमन्तरा धात्वन्तयकारत्वासम्भवेन 'द्विवारं स्थानिवद्भावो न भवती'त्युक्तेः साहसमात्रत्वात्।

न चाबन्तं यत्तदादि तदन्तं यदङ्गमित्यभिप्रायेणातिखट्वादौ दोषवारणाय प्रवृत्तम्—'ङ्याब्ग्रहणेऽदीर्घः' इति वार्तिकं व्याख्याय–श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वसम्पादनेन शङ्कां कृत्वाः लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्यानकल्पे एतत्परिहारायोपायान्तरं भाष्ये नोक्तमिति–वर्णग्रहणे इयं परिभाषा प्रवर्तते इति कल्प्यते इति वाच्यम्, उपायान्तराकथनमात्रेणैतत्कल्पनायाः कर्तुमशक्यत्वात्। 'आबन्तं यदङ्ग'मित्यर्थस्यैव पूर्वमुपपादिततयाऽतिखट्वायेत्यस्याबन्ततदादित्वाभावेन प्रकृते च 'स्त्रीप्रत्यये चानुपसर्जने ने'ति परिभाषया तदादिनियमस्य सत्त्वादेव दोषवारणेन तदकथनेऽपि न्यूनत्वस्याभावाच्च।

न च खट्वाया अधमर्धखट्वा, तस्यामर्धखट्वायामित्यादौ याण्न स्यात्, निरुक्तोपसर्जनत्वस्य सत्त्वेनाबन्ततदादित्वाभावादिति वाच्यं, 'स्त्रीप्रत्यये चे'तिपरिभाषायां शास्त्रीयोपसर्जनत्वसमानाधिकरणलौकिकोपसर्जनत्वस्यैव स्वीकारात्, प्रकृते च 'एकविभक्तावषष्ठ्यन्तवचन'मितिवचनेन शास्त्रीयोपसर्जनत्वाभावात्तदादिनियमाभावेनादोषात्। अत एवैकदेशिसमासप्रकरणतत्प्रत्याख्यानयोर्न फलभेदः।

न च स्थानिवत्सूत्रस्थ—याडापइतिसूत्रस्थाभ्यां तयोरेवाऽऽकारप्रश्लेषो लभ्यते इति कथं सर्वत्राऽऽकारप्रश्लेष इति वाच्यं,

**व्रश्च**। अत्र राजिसाहचर्याद्भ्राजिः फणादिरेव, तेनान्यस्य विभ्रागित्येवेत्याहुः। छशौ वर्णौ, ताभ्यां शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह—**छशान्तयोरिति**।

※ अभिनव-चन्द्रिका ※

जरसा, जरसे, जरसोः, जरसामित्यादौ दोषवारणाय प्रश्लेषस्यावश्यकत्वेन प्रकृतभाष्ययोरुपलक्षणतया व्याख्येयत्वात्। केवलं सम्बुद्धौ चेत्यत्राकारप्रश्लेषस्य फलं चिन्त्यम्। 'हे अतिखट्वे'-त्यादौ 'स्त्रीप्रत्यये चे'ति परिभाषयाऽऽबन्ततदादित्वस्याभावान्निर्दिश्यमानपरिभाषया वा निर्दिश्यमानस्यापोऽभावेनैव एतस्याप्रवृत्तेः।

न च 'गङ्गायमुने'इत्यादौ 'औङ आपः'इति न प्राप्नोति, प्रकृते नवीनमते द्वन्द्वे समुदायविशेष्यकबोधेन स्त्रीप्रत्ययस्योपसर्जनत्वादुपसर्जनस्त्रीप्रत्यये तदादिनियमादाबन्ततदादित्वाभावादिति वाच्यं, 'गोस्त्रियो'रितिसूत्रेऽत्र ह्रस्ववारणाय कृतस्य 'द्वन्द्वे ने'ति वार्तिकस्य 'स्त्रीप्रत्यये' इत्यादि तदादिविधिनिषेधेऽपि तात्पर्यमित्यदोषात्। क्वचिद्विशेष्यान्तरस्य धर्मिणः सत्त्वेऽपि 'अनुत्तरपदस्यैवे'ति ज्ञापकात् क्वचित्तदादीति धर्म्युपतिष्ठते न तदादित्वरूपं धर्ममात्रमिति तदन्तविधिद्वयेनादोषाच्चेति प्राहुः।

**फणादिरेवेति**। अर्थवद्ग्रहणपरिभाषया 'राजृ दीप्ता'वित्यस्यैव ग्रहणेन तत्साहचर्याद्भ्राजिरपि फणादिरेव गृह्यते इति भावः। न च फणादिभ्राजधातुर्नैवास्ति, अन्यथा फणादेर्भ्रेजतुः, अफणादेश्च बभ्राजतुरितिरूपद्वयसिद्धेः, अफणादेश्च ऋकारेतरानुबन्धकरणेन—अबिभ्रजत्, फणादेश्च—ऋदित्त्वेन 'नाग्लोपी'ति निषेधादबभ्राजदितिरूपद्वयसिद्धेश्च—'भ्राजभासे'ति सूत्रे भ्राजिग्रहणमनर्थकं स्यादिति-वाच्यं, पेचुर्भ्रेजुर्यस्मिन्कर्मणि—इत्यत्र 'आख्यातमाख्यातेने'ति समासे णिचि टिलोपे चङि च 'अपेचुर्भ्रेज् इ अत्' इति स्थिते ह्रस्वविकल्पाय 'भ्राजभासे'त्यत्र भ्राजिग्रहणस्यावश्यकत्वात्।

'फणादौ 'भ्राजृ' इति, अन्यत्र 'भ्राजे'तिपाठेन, 'व्रश्चे'तिसूत्रे च 'राजृ' इति, पाठेन—'विभ्राड्'

※ चिदस्थिमाला ※

युक्तेस्तुल्यत्वादिति द्वितीयः पक्षो युक्त इति मम प्रतिभाति। एतेन मूलानुयायिनः शास्त्रिदण्ड्यादयःप्रत्युक्ताः।

**सीरदेवा**द्युक्तेरसाङ्गत्यं ध्वनयन्नाह—**अत्रेति**। व्रश्चेति सूत्रे इत्यर्थः। आहुरित्यनेन-भाष्यासम्मतत्व-

※ ज्योत्स्ना ※

**इत्याहुरिति**। यत्तु श्यन्विधौ फणादिषु च भ्राशतिस्तालव्यान्तः पठितः, तस्य षत्वे विभ्राडिति सिद्धेरत्र भ्राजिग्रहणं व्यर्थमिति, तन्न, भ्राजित्यस्य ग्रहणसामर्थ्याच्छ्यन्विधौ फणादिषु च दन्त्यान्त्यपाठनिर्णयस्याचार्यबोपदेव—प्रक्रियाकौमुदीकारयोः संमत्या परिभाषाप्रदीपार्चिषि व्यवस्थापितत्वात्।

※ सदाशिवभट्टीयम् ※

**व्रश्च। विभ्रागित्येवेत्याहुरिति**। एवञ्च भ्राशो विभ्राडिति, भ्राजो विभ्रागिति रूपद्वयसिद्धौ भ्राजिग्रहणं व्यर्थं, किञ्चैकानुबन्धकराजिसाहचर्य्यादेकानुबन्धकभ्राजेरेव कुतो न ग्रहणं, तथा च फणादेः षत्वन्न स्यादिति साहचर्य्यं चिन्त्यम्।

※ विषमपदविवृतिः ※

**आहुरिति**। अत्र पाठकाः—बिभ्राग् बिभ्राडिति—दीप्त्यर्थफणादितद्भिन्नभ्राजिभ्यां साध्यम्, तच्च फणादिदीप्त्यर्थकभ्राशिभ्राजिभ्यां सुसाधमिति सूत्रे भ्राजिग्रहणं व्यर्थम्, तस्मात्फणादिर्भ्राशिरशान्तः। 'वाभ्राशे'त्यत्र शान्तपाठात्तालव्यान्त इति तिङन्तशब्दरत्नग्रन्थस्तु चिन्त्य एवेत्याहुः, तच्चिन्त्यम्, भ्राशिति तालव्यान्तपाठस्य धातुसूत्रयोश्चिरतरसार्वजनीनसम्प्रदायसिद्धस्यापलापायोगात्। भ्राजिग्रहणन्तु विभ्राजयतेर्णिजन्तात्क्विपि टिलोपे षत्वार्थः। यत्तु—वृक्षं वृश्चतीति क्विबन्तात्णिजन्तात्क्विपि 'वृक्षव्' इति लण्सूत्रस्थकैयट-

'छशयो'रित्युक्तेऽपि न क्षतिरिति चिन्त्यं, 'पदस्ये'ति तु 'मृष्ट'मित्यादिसिद्धये व्यधिकरणमेव । **अन्तादेश इति** । 'अलोन्त्यस्ये'ति वचनात् । अत्र 'झलो झली'त्यतो 'झली'ति, 'पदस्ये'ति, 'स्को'रित्यतोऽन्ते इति चानुवर्त्तते । 'छ्वोः शू'डित्यत्र 'क्ङिती'त्यनुवृत्तेः-'प्रष्टे'त्यादौ शादेशाभावादशान्तत्वेन षत्वाप्राप्तौ छग्रहणम् । अत्रापि सतुङ्निर्देशो वोद्धव्यः ।

**तस्यासिद्धत्वादिति** । 'चयो द्वितीये'त्यस्य 'नादिन्ये'ति सूत्रे भाष्ये पाठादिति भावः । **टतयोरिति** । धुडभावे टस्य, धुटि तस्येत्यर्थः । **न भवतीति** । जश्त्वात्प्राक् षस्य नेत्यर्थः । जश्त्वे तु प्राप्तिरेव नेति बोद्धव्यम् ।

---

ॐ अभिनव-चन्द्रिका ॐ

'विभ्रा'गिति रूपद्वयसिद्धौ—भ्राजेः पुनः पाठोऽर्थवद्ग्रहणपरिभाषाज्ञापक इति केचित्; तन्न, विभ्राज्शब्दाण्ण्यन्तात्ति टिलोपे 'विभ्र्' इति स्थिते षत्वार्थं भ्राजिग्रहणस्य 'व्रश्चे'तिसूत्रे आवश्यकत्वादिति दिक् ।

ॐ चिदस्थिमाला ॐ

सम्मतत्वरूपाऽरुचिबोधिना । मूलादिकं खण्डयति—**छशयोरिति** । 'पदस्य विशेष्यत्व'मिति तु नेत्याह—**पदस्येति** । अयमेतत्सूत्रार्थ इत्याह—**अलोऽन्त्येति** । 'झली'त्यादेरुपपत्तिमाह—**अत्रेति** । व्रश्चेति सूत्रे इत्यर्थः । सिद्धान्तमाह—**छ्वोरिति** । तदनन्तरं त्वयुक्तमेव । एतेन तथा शास्त्र्याद्युक्तमपास्तम् । असिद्धत्वं पूर्वत्वसापेक्षमिति तदाह—**चय इति** । एकत्रोभयासम्भवादाह—**धुडेति** । यथाश्रुतमूलासङ्गतिं परिहरति— **जश्त्वादिति** । **परिशिष्टकाराद्याशयमाह—एकाच इति** । प्राचोक्तं खण्डयति—**यस्विति** ।

ॐ विषमपदविवृतिः ॐ

प्रयोगमुपादाय-टिलोपे आनुमानिकस्थान्यादेशभावे 'वृश्चवृश्' 'वृश्चव्' अनयोरेव [ एकदेशविकृतन्यायस्तु नार्द्धाधिकविकारे इति-] न षत्वमित्युक्तं विवरणकृद्भिः, तच्चिन्त्यम् : अर्थवतो वृश्चवृश्-वृश्चव्—अनयोःस्थान्यादेशभावस्य भ्राजिग्रहणसार्थक्यानुग्राहकस्य सम्भवेन षत्वप्राप्तेस्तदवस्थत्वात् । अत एवारुच्या 'वृश्चं वेति वाति वे'ति विग्रहप्रदर्शनं कैयटोपाध्यायैःकृतमिति सुधियो विभावयन्तु ।

**चिन्त्यमिति** । इदं चिन्त्यं—'धातो'रित्यस्यैकाच इत्युत्तरार्थमत्रानुवृत्तस्य विशेष्यत्वेन तदन्तविधेःसुलभत्वात् । **षत्वाप्राप्ताविति** । वाचादीनामनभिधानमिति भावः । **धुडभाव इति** । वर्ण-

---

ॐ वरवर्णिनी ॐ

**चिन्त्यमिति** । शब्दस्वरूपाध्याहारे फलाभावात्पदस्येत्यस्य तु वैयधिकरण्येन—पदावयवयोश्छशोरित्येवमन्वयात्तदन्तविधेरसम्भवाच्चिन्त्यमिदमित्याशयः । **परंतु**—'व्रश्चे'त्यत्र वाक्यद्वयम्, एकं भृडित्यादौ पदान्ते षत्वार्थं, द्वितीयं मृष्टमित्यादौ झलि परे षत्वार्थम् । एवञ्च 'मृष्ट'इत्याद्यर्थं झलि षत्वविधायके पदस्येत्यस्य वैयधिकरण्येनान्वयेऽपि पदान्ते षत्वविधायके वाक्ये वैयधिकरण्ये फलाभावादनौचित्याच्च पदस्य विशेष्यतया तदन्तविधिरुचित एवेति—'व्रश्चादीनां तदन्तानां छशान्तानाञ्च पदानामन्त्यालः षत्व'मिति—व्रश्चत्यादेरर्थं इति [ तदन्तविधेरसम्भवाभिप्रायिका— ] 'चिन्त्य'मिति शेखरोक्तिरसङ्गतैवेति श्रीत्रिपाठिचरणान्तेवसन्तो **गौडा** व्याचक्षते ।

**केचित्त्विति**। 'एकाचः' इत्युत्तरसूत्रेऽनुवृत्त्या मध्येऽपि सम्बन्ध एवोचित इति भावः। **जश्त्वेनेति**। यत्तु 'जश् झशी'ति निर्देशाच्शास्य न जश्त्वमिति, तन्न; अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वायोगात्, 'उपदेशेऽ'जित्यादिनिर्देशैः कुत्वाद्यनापत्तेश्च। अत्र मते भाष्यानुग्रहो विचार्यः।

'मांसपृतने'त्यस्य 'पद्दन्न' इति सूत्रे उपसङ्ख्यातत्वादाह—**शसादौ वेति**। **स्त्रीत्वादिति**। पुंस्त्वाभावादित्यर्थः। **नात्वं नेति**। 'स्त्रीत्वा'दित्यनुकृष्यते। अतएव 'पुंस्त्वाभावान्नत्वाभाव' इति नोक्तं, न हि पुंस्त्वाभावो नाभावे प्रतिबन्धकः, नपुंसकेऽपि तदङ्गीकारात्।

**ङिति ह्र**। अत्र वाक्यद्वयम्। आद्ये–'यू' इति, 'स्त्र्याख्या'विति, 'अस्त्री'ति, 'इयङुवङ्स्थाना'विति, 'वे'ति चानुवर्त्तते। अन्त्ये–'यू' इति, 'वे'ति, स्त्रीवाचकावित्ये-

❀ **अभिनव-चन्द्रिका** ❀

**निर्देशैरिति**। 'आदिरन्त्येने'तिबोधितसञ्ज्ञाशब्देषु हलसन्ध्यप्रवृत्तिज्ञापनादित्यर्थः।

❀ **चिदस्थिमाला** ❀

तत्र सूत्रे प्रतिवन्दीं सर्वोप्लवफलिकामभ्युपेत्याप्याह–**उपदेशे इति**। अत्र मते=केचिन्मते। **उपेति**। एतेन-'भाष्यवृत्त्योरेतन्नाश्रितं, मांस्पचन्या इत्युदाहरणात्,–'मांसस्य पची'तिवार्त्तिकेनान्यथा सिद्धिं मत्वा मूले एतदुक्त'-मिति शास्त्र्युक्तमपास्तम्। भाष्योदाहरणन्तु वक्ष्यमाणमूलरीत्योपपन्नमेवेति भावः। तत्त्वस्य तदभावासाधकत्वादाह–**पुंस्त्वेति**। मूलाशयमाह–**स्त्रीत्वादिति**। तमेव विशदयति–**अत एवेति**। आदौ सिद्धान्तमाह-**अन्त्रेति**। सूत्रे इत्यर्थः। अत एव चः। 'आद्ये'इत्यस्य–'तन्त्रे'त्यादिः। मात्रपदेन–नित्यत्वव्यवच्छेदः।

❀ **सदाशिवभट्टीयम्** ❀

'अविचार्य्य' इति तु च्छेदः। इति तु न सम्यगित्यर्थः। अविचारे युक्तिस्तु पूर्वोक्तैव। **ङिति ह्रस्वश्च**। **द्वयमिति**। अत एव सूत्रे चः। 'आद्ये' इत्यस्य–'तन्त्रे'त्यादिः।

❀ **विषमपदविवृतिः** ❀

ग्रहणे यदागमन्यायाप्रवृत्तिरिति भावः। **तन्त्रेति**। 'जश्ल'मित्यादिभाष्यकृत्प्रयोगनिर्वाहायोक्तार्थज्ञापकत्वस्य सम्भवेऽयस्मयादित्वकल्पनानौचित्यात्। अन्यथा 'पुमान् स्त्रिये'ति निर्देशस्यानुपदं स्त्वेनैव ज्ञापकत्वोक्तेरसङ्गतिरिति। तथा 'शास इत्''अनिदित्' 'असिद्धवत्''पूर्वपदा'दित्यादिषु सूत्रेषु भाष्यकृद्भिर्निर्देशज्ञापकत्वोक्तेरसङ्गतिः। **कुत्वाद्यनापत्तेश्चेति** तु–इष्टापत्त्या ज्ञापनादाह। 'अचोऽक्षु' इति तु ज्ञापकसिद्धस्यासार्वत्रिकत्वात्सिद्धम्। अत एव 'स्तोःश्चुने'त्यादौ विसर्गषत्वजश्त्वादीन्येवमेव न।

वस्तुतोऽस्मान्निर्देशादेकवर्णात्मके पदे पदान्तत्वप्रयुक्तकार्याणि न, विसर्गस्यायोगवाहकत्वेनाश्रयं विना तस्य प्रयोक्तुमनर्हत्वाच्च। स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वेन ङित्यादितः शादीनामबोधेनैकवर्णात्मके पदान्तत्वप्रयुक्तकार्याप्रवृत्तेर्युक्तिसिद्धत्वाच्च। 'अनुकार्यस्वरूपभङ्गभिये'त्येतदपि'स्थान्यर्थाभिधानसमर्थे'ति युक्तिमूलकमेव। 'सख्यु'रित्यादौ तु विकृतेनापि-स्थान्यर्थाभिधानाद्युक्तस्तत्रादेशादिः। अत एव 'त्रः संख्यायाः','ष्णान्ते'ति निर्देशोपपत्तिः। तत्र नलोपे हि शून्यमेवावतिष्ठेतेत्युक्तन्यायेन तत्र नलोपाप्रवृत्तिरिति सचेतसः परिभावयन्तु। **विचार्य इति**। 'हो ढ' इति सूत्रे भाष्ये 'एकाच' इत्युत्तरसूत्रे 'धातो'रित्यनुवृत्तेरुक्तत्वेन मध्यस्थेऽप्यस्मिन्ननुवृत्तेः स्पष्टत्वेन 'विचार्य' इत्युक्तिश्चिन्त्यैव।

तन्मात्रार्थकं 'स्त्र्याख्या'विति च। तत्र–ह्रस्वयोरप्राप्ते, दीर्घयोस्तु 'नेय'ङिति निषेधादप्राप्ते विभाषा।

इय्वादिष्वप्राप्तिमाशङ्क्य "–'ङिति ह्रस्वश्च'त्यत्र नित्यस्त्रीलिङ्गाविषयेऽविधौ नियमो नाश्रीयते–"इति कैयटस्तु–ह्रस्वांशमात्रविषय इत्याशयेनाह–**नित्यस्त्रीलिङ्गाविति**।

अत एवास्य दीर्घांशे निषेधविकल्पत्वं भाष्ये उक्तं—'यू स्त्र्याख्या'–विति सूत्रे। तत्फलं–'कटप्रुवे ब्राह्मण्यै' इति। लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावात्।

परेत्वत्र विकल्पो भवत्येव, आख्याग्रहणरहितस्यैवात्र सम्बन्धात्। यद्वा 'स्त्र्याख्या'-वित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र,शब्दाधिकारात्। तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम्।

ॐ **अभिनव-चन्द्रिका** ॐ

लिङ्गान्तरविशिष्टार्थाभिधायकत्वेनेति। 'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व'–'स्वावच्छिन्न-विशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठ-प्रकारताऽप्रयोजकत्वे'तत्रितयसम्बन्धेन प्रवृत्तिनिमित्तविशिष्टा या शक्तिः–'स्वपर्याप्त्यधिकरणत्व'—'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वै'तदुभय-सम्बन्धेन—तादृशशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वस्य 'कटप्रुवे ब्राह्मण्यै' इत्यादावभावादिति भावः।

ॐ **चिदस्थिमाला** ॐ

प्राचां मतमाह—**तत्रेति**। तयोर्मध्ये इत्यर्थः। **अप्राप्ते इति**। नच 'यूस्त्र्याख्या'वित्यत्र ह्रस्व-ग्रहणपक्षस्यापि भाष्ये उक्तत्वेनाऽप्राप्तिः कथमिति वाच्यं, तत्रैव पक्षे शेषपदमकृत्वा परत्वाद्विसञ्ज्ञया बाध इत्यर्थस्याऽप्युक्तत्वेनादोषात्। अत एव 'ह्रस्वघटितवाक्ये 'नेय'ङितिसूत्रं निवृत्त'मित्युक्तं 'यूस्त्र्याख्या'वित्यत्र भाष्ये। **निषेधादिति**। नच दीर्घवाक्ये इयङिति निवृत्त्या तदंशे उभयत्र विभाषात्वमेव कुतो नेति वाच्यम्, भावमात्रतात्पर्यकतालाघवानुरोधेनाऽप्राप्तविभाषात्वस्यैवौचित्यात्, उभयकल्पनात एककल्पने लाघवस्य वाक्ययोः साम्यस्य च सत्त्वात्। अक्रमकल्पनातः प्रतिप्रसवविधौ क्रमकल्पनप्रयुक्तलाघवमपि बोध्यम्। खण्डनकृदुक्त्यसाङ्गत्यं ध्वनयन् कैयटविरोधं परिहरति—**इय्वादीति**। आदिना–अशन्यादि।

**कैयट इति**। 'स्त्रीविषयार्थे'मित्यादिव्याख्यायामित्यर्थः। **ह्रस्वांशेति**। इय्वाद्यप्राप्तिरूपोपक्रमानुरोधात्। **यूस्त्र्याख्याविति सूत्रे**—उपक्रमे। अत्रानुवृत्तेयङुवङ्स्थानाविल्यंशस्य निषेधपरतया भाष्ये व्याख्यानेन तत्र ह्रस्वग्रहणपक्षे ङितीति योगविभागे 'ङिति चेयङुवङ्स्थानौ स्त्र्याख्यौ यू अस्त्री वा नदीसञ्ज्ञौ न भवतः–'इति कैयटोक्तेश्च–निषेधस्य प्राप्तिपूर्वकतया अत्रानुवृत्ततदंशे नित्यस्त्रीलिङ्गावित्यस्यावश्यकत्वाच्चेति-भावस्तदाह–**अत एवेति**। तस्य ह्रस्वमात्रविषयकत्वादेवेत्यर्थः। अस्य=ङितीति सूत्रस्य। मूलस्य युक्तत्वेपि सकलग्रन्थासाङ्गत्याय सिद्धान्तमाह–**परेत्विति**। एकदेशानुवृत्तेरयुक्तत्वात्, भाष्ये ह्रस्वघटितवाक्ये 'स्त्र्याख्या'विति कण्ठत उक्तत्वाच्चाह–**यद्वेति**। अत्रार्थभेदे बीजमाह–**शब्देति**।

ॐ **सदाशिवभट्टीयम्** ॐ

**ह्रस्वयोरप्राप्ते इति**। न च 'यूस्त्र्याख्ये'त्यत्र ह्रस्वग्रहणपक्षस्यापि भाष्ये उक्तत्वात्कथमप्राप्तिरिति वाच्यं, तत्रैव पक्षे शेषपदमकृत्वा परत्वाद्विसञ्ज्ञया बाध इत्यस्याप्युक्तत्वेनादोषात्। **निषेधादिति**। न च दीर्घ-वाक्ये इयङिति निवृत्त्योभयत्र विभाषात्वमेव कुतो नेति वाच्यम्, भावमात्रतात्पर्यलाघवानुरोधेनाप्राप्त-विभाषात्वस्यैवौचित्यात्। उभयत्र कल्पनात एककल्पने लाघवस्य वाक्ययोः साम्यस्य च सत्त्वात्।

**ह्रस्वांशेति**। इय्वाद्युपक्रमानुरोधात् एकदेशानुवृत्तेरयुक्तत्वात्, भाष्ये ह्रस्वघटितवाक्ये 'स्त्र्याख्या'वित्यस्य कण्ठत उक्तत्वाच्चाह—**यद्वेति**। **ङिदाक्षिप्तेति**। इदं प्राचीनवासनया, वस्तुतः प्रत्ययग्रहणपरिभाषया

ॐ **विषमपदविवृतिः** ॐ

**ङिदाक्षिप्तेति**। ननु ङित्त्वस्य प्रत्ययाप्रत्ययसाधारण्येन–अव्यभिचारस्यैवाक्षेपनियामकत्वेन

ॐ **वरवर्णिनी** ॐ

१ श्रीगुरुचरणास्तु–दीर्घवाक्ये ह्रस्ववाक्ये च नित्यस्त्रीलिङ्गावित्यर्थकस्त्र्याख्याविलस्य सम्बन्धो भवत्येव,

॥ वरवर्णिनी ॥

'यूस्त्र्याख्या'विति सूत्रभाष्यप्रामाण्यात् । तत्र हि—"ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक्च प्रवृत्तेः स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न पुंवचनौ, इहैव भवतु–'श्रियै ब्राह्मण्यै' 'अतिश्रियै ब्राह्मण्यै' 'अतिधेन्वै ब्राह्मण्यै' 'भ्रुवै ब्राह्मण्यै' अतिभ्रुवै ब्राह्मण्यै', इह माभूत्–'श्रिये ब्राह्मणाय' 'अतिश्रिये ब्राह्मणाय'। किमर्थमिदमुच्यते ?—'प्रथमलिङ्गग्रहण'मिति यदुक्तं तदत्र द्रष्टव्यं विजानीयात्—",–इत्युक्तम् । एवञ्च—'प्रवृत्तौ स्त्रीवचनावेव न पुंवचनौ'इति 'प्रवृत्तौ च प्राक्च प्रवृत्तेः स्त्रीवचनावेवे'ति च तद्भाष्योक्त्या उभयवाक्ये एव नित्यस्त्रीत्वार्थकस्त्र्याख्यावित्यस्य सम्बन्धः स्पष्टमेव लभ्यते । तदेवं–प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टम्–ईदूदन्तम् इदुदन्तञ्च यदङ्गं स्त्रीत्वनिष्ठप्रकारतानिरूपितविशेष्यताधिकरणीभूतं तन्नदीसञ्ज्ञं वेत्यर्थोऽस्य बोध्यः ।

प्रवृत्तिनिमित्तवैशिष्ट्यञ्च—'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरनिष्ठप्रकारताप्रयोजकत्व' 'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वै'तन्त्रितयसम्बन्धेन । शक्तिवै० 'स्वपर्याप्त्यधिकरणत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वो'भयसम्बन्धेन। इदमेव च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वरूपं नित्यस्त्रीत्वं निरुक्ताभाष्याभिमतम्। 'वाक्यद्वयेऽपि नित्यस्त्रीत्वस्यासम्बन्ध' इत्यभिप्रायकं–**नागेशोक्तन्तु** न युक्तं, यूस्त्र्याख्या विति सूत्रस्थनिरुक्तभाष्यविरोधात् ।

एवमेव "–'सत्यभिधाने इष्टापत्तेः, भाष्ये श्रिये ब्राह्मणायेति तु क्यजन्तात्क्विपि–"इति शेखरोक्तमप्ययुक्तं–'श्रियेब्राह्मणाये'त्यस्य तथासाधनेऽपि 'धेनवे ब्राह्मणाय' 'शकट्ये ब्राह्मणाये'त्यादेरसिद्ध्यापत्तेः । न च तत्रापि क्यजन्तादेव क्विपि न दोष इति वाच्यं, क्यचि 'अकृत्सार्वे'ति दीर्घे विसञ्ज्ञाभावापत्तेः ।

'विपरीतं नित्यस्त्रीत्वनिवेशे श्रीशब्दात्कनो लुपि 'श्रियै ब्राह्मणाये'त्यादौ विकल्पेन नदीत्वानापत्तिदोषः–" इत्यपि नागेशोक्तमयुक्तम्–एतद्भाष्यप्रामाण्यादेव 'स्त्रीत्वनिष्ठप्रकारतानिरूपितविशेष्यताधिकरणीभूत'मिति विशेषणदानेन कन्लुबन्ते निरुक्तदोषाभावात् ।

एवमेव—"एतत्सर्वं वामीत्यत्रापि बोध्यम्–"इत्यपि भट्टोक्तमयुक्तमेव, 'प्रथमलिङ्गग्रहण'मित्यस्य 'वामी'त्यत्र स्वीकरणीयत्वात्। भाष्ये 'तदत्र द्रष्टव्य'मित्यत्र 'अत्र' पदस्वारस्येन 'ङिति ह्रस्वश्चे'त्यत्रैव 'प्रथमलिङ्गग्रहण'मित्यस्य निवृत्तेर्लाभात्। किञ्च–आबितिटाविभक्तिमारभ्य सुपः पकारेण प्रत्याहारमाश्रित्य'वापि ह्रस्वश्चे'तिन्यासस्य–'ङितिह्रस्वश्च' 'वामी'त्युभयोः, स्थाने करणीये ङिद्ग्रहणाच्च तथा लाभात्। एवञ्च 'वामी'त्यत्र 'प्रथमलिङ्ग'मितिप्रवर्त्तते, 'ङिति ह्रस्वश्चे'त्यत्र च 'प्रथमलिङ्गग्रहणञ्चे'ति न प्रवर्त्तते–इति वैधर्म्यमनयोरस्त्येवेति तत्त्वम् ।

तदेवं—"यत्तु दीर्घवाक्ये" इत्यादिना शेखरकृता खण्डितं परमप्राचीनमतमेव युक्तं, केवलं तत्र परमप्राचीनमते "ह्रस्ववाक्ये 'स्त्रिया'मित्येतन्मात्रमुभयोर्विशेषणम्—" इत्ययमंश एवाऽसमीचीनः । पूर्वोक्तरीत्या उभयोरपि ह्रस्वदीर्घवाक्ययोर्नित्यस्त्रीत्वार्थकस्त्र्याख्यपदसम्बन्धस्य स्पष्टं लाभादित्याहुः ।

**श्रीबालशास्त्रिचरणाः—'सूत्रकृन्मते**—'स्त्रीत्वेतरलिङ्गावच्छिन्नविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारताऽसमानाधिकरण–स्त्रीत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं'सर्वत्रैकप्रकारमेव **नित्यस्त्रीत्वम्**। 'प्रथमलिङ्गग्रहणञ्चे'तिवदतां **वार्त्तिककृतां** मते तु–'स्त्रीत्वेतरलिङ्गावच्छिन्नविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रथमलिङ्गावच्छिन्नप्रकारत्वाऽसमानाधिकरणस्त्रीत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं' नित्यस्त्रीत्वम् । एवञ्च'बहुश्रेयस्यै ब्राह्मणाये'त्यत्रापि नित्यस्त्रीत्वम् । लिङ्गे प्राथम्यञ्च—शक्तिज्ञानाधीनविषयीभूतशक्त्यन्तरनिरूपकत्वम् । 'अवयवस्त्रीविषयत्वात्सिद्ध'मिति वदतां 'प्रथमलिङ्गे'ति वार्त्तिकं प्रत्याचक्षाणानां **भाष्यकृतां** मते तु—'स्त्रीत्वेतरलिङ्गावच्छिन्नविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारत्वासमानाधिकरणस्त्रीत्वावच्छिन्नविशेष्यताप्रयोजकत्वं' नित्यस्त्रीत्वम् । प्रथमलिङ्गावच्छिन्नत्वं, मुख्यविशेष्यत्वञ्च न दीयते इत्येव वार्त्तिकमतादत्र विशेष इति तत्त्वम्। 'बहुश्रेयसै ब्राह्मणाये'त्यादौ तु श्रेयसीत्वावच्छिन्नविशेष्यतामादायैव लक्षणसमन्वयो बोध्यः । **तादृशविशेष्यताया** हि–अन्यपदार्थनिष्ठमुख्यविशेष्यतानिरूपितप्रकारतासमानाधिकरणत्वेऽपि नित्यस्त्रीत्वे मुख्यपदानिवेशवादिनां भाष्यकृतां न तत्रानुपपत्तिः—' इत्याहुः ।

अत एव 'प्रथमलिङ्गग्रहणञ्चे'त्यस्यात्राऽप्रवृत्त्यन्वाख्यायके–'ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ च [-प्राक् प्रवृत्तेः-] स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो, न तु पुंवाचकाविति वक्तव्य'मिति वार्तिके–'अतिशकट्यै ब्राह्मण्यै', क्व मा भूत् ?–'अतिशकटये ब्राह्मणाय':

❀ चिद्स्थिमाला ❀

अत्र मानमाह–**अत एवेति**। उक्तार्थाङ्गीकारादेवेत्यर्थः। अत्र वक्ष्यमाणबोधकलक्ष्येषु वार्तिके=स्वाख्यानवचने।

❀ सदाशिवभट्टीयम् ❀

त्लाभः,'नेदं प्रत्ययमात्रग्रहण'मिति चेन्न,'वामी'ति साहचर्येण स्त्रीप्रत्ययग्रहणात्। अत एव 'हे गौरि-श्रेऽय'मित्यादौ नदीत्वविकल्पो न। अत्र='ङितिह्रस्वश्चे'ति सूत्रविषये। **अन्वाख्यायक इति**। अस्त्विदमपूर्वमिति भावः। अत एव 'तदाचार्यः सुहृद्भूत्वान्वाचष्ट' इत्युक्तम्। ह्रस्वौ=ह्रस्ववर्णावन्तौ शब्दौ, इयङादिस्थानिवर्णावन्तौ च तावित्यर्थः। **प्रवृत्तौ**–प्रवृत्तिः=अर्थान्तरसङ्क्रान्तिः,-तस्यां सत्यामिति केयटः। **न तु पुंवाचकेति**। यद्यपीदन्न भाष्ये तथापि नपुंसके नुमा बाधात्फलति। **वार्तिक इति**। इत्यर्थकवार्तिकव्याख्यानावसर

❀ विषमपदविवृतिः ❀

कथमत्राङ्गाक्षेपः ? नन्वियङुवङ्स्थानेकाराव्यवहितोत्तरवर्त्तिङित्प्रत्यय एवेति वाच्यम्, एवं सति तदव्यवहितोत्तरवर्त्तिङितः प्रत्ययासाधारणतया 'प्रत्ययग्रहणे' इति परिभाषोपस्थित्यैव निर्वाहेऽङ्गाक्षेपकरणानौचित्यात्। न चोपात्तरूपं ङित्त्वं प्रत्ययाप्रत्ययसाधारणमिति उपात्तरूपस्य प्रत्ययासाधारण्यनिमित्तकप्रवृत्तिकपरिभाषाया अप्रवृत्तिरित्याशय इति वाच्यम्,एवमपि धीचित्राविल्यादौ चित्रङादिङित इयङस्थानिनः परत्वेन व्यभिचार एव। न चेदमफलं सञ्ज्ञास्थलं, तत्स्थले नेयङ्-स्थानिनः परं ङित्त्वन्तु प्रत्ययासाधारणमेवेति वाच्यम्, 'द्वन्द्वे घी'त्यस्याप्रवृत्त्या मतिचित्रयोर्द्वन्द्वे 'चित्रमती' इत्येतत्सिद्धेरेव फलत्वात्। न च लौकिकविग्रहवाक्ये विभक्त्या व्यवधानेन ङित्परत्वा-भावेन नदीत्वाप्रवृत्तौ घिसञ्ज्ञायां 'द्वन्द्वे घी'त्यस्य प्रवृत्तौ पश्चात्प्रवृत्तनदीत्वेन प्रथमप्रवृत्तकार्यनिवृत्ति-रिति वाच्यं, 'दण्डदत्ता'वित्याद्यनुरोधेन प्रयोगसमवायिघित्वस्य तत्प्रवृत्तिप्रयोजकतया प्रकृते च नदीत्वेन बाधे घित्वस्य प्रयोगासमवायित्वेन 'द्वन्द्वे घी'त्यस्य प्रथममप्यप्रवृत्तेः। न च हरिश्चाह-श्चेति विग्रहे परिनिष्ठिते रूपे यणादेशेन घित्वस्य प्रयोगसमवायित्वाभावात्तत्र 'द्वन्द्वे घी'त्यस्याप्रवृत्ति-रिति वाच्यम्, यणादेशेऽपि स्थानिवद्भावेन घित्वस्य सुलभत्वात्, तदन्तसञ्ज्ञापक्षे घित्वस्य पट्त्ववदल्धर्मत्वाभावात्, शेषग्रहणप्रत्याख्यानपक्षे उपसञ्जनिष्यमाणन्यायेन भाविनदीत्वमालोच्य पूर्वं घित्वाप्रवृत्तेश्च। न च तदन्तविध्यर्थं शेषग्रहणस्य नव्यैः स्थापितत्वेन तत्पक्षे प्रथमतो घित्व-प्रवृत्तिर्निर्बाधैव, पश्चादाकडारीयत्वादत्र नदीत्वाप्रवृत्तिरिति वाच्यम्, 'अन्तरङ्गानपी'तिन्यायेन समासलुकः पूर्वं घित्वाप्रवृत्तेः,पश्चाच्च नदीसञ्ज्ञाविषयस्त्वेन न घित्वम्। न च ङित्परकत्वं निमित्ती-

❀ वरवर्णिनी ❀

अयमत्र विवेकः—वार्त्तिककृत्सम्मतं नित्यस्त्रीत्वं नागेशभट्टमते—'यूस्त्र्याख्यौ नदी' 'नेयङुवङ्स्थाना-वस्त्री'त्युभयत्रैव, न'वामी'त्यत्र, 'ङिति ह्रस्वश्च' 'वामी'त्यनयोर्नित्यस्त्रीत्वासम्बन्धस्यैव भट्टैः स्पष्टमुक्तेः। शेखरखण्डनप्रवृत्तानां श्रीगुरूणाम्मते च—'यूस्त्र्याख्यौ' 'वामि' 'नेयङुवङ्'–इतिसूत्रेषु वार्त्तिककृदभिमतं नित्यस्त्रीत्वम्। 'ङिति ह्रस्वश्चे'त्यत्र तु भाष्याभिमतं नित्यस्त्रीत्वमिति।

केचित्तु–'ङितिह्रस्वश्चे'त्यत्र वाक्यद्वयेऽपि–प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वं, प्रवृत्तिनिमित्त-वै० 'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाऽप्रयोजकत्वै'तत्त्रितयसम्बन्धेन। शक्तिवै०–स्वपर्याप्त्यधिकरणत्व' 'स्वनिरूपकतावच्छेदकनिष्ठस्त्रीत्वेतरलिङ्गावच्छिन्नविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्न-प्रकारतावच्छेदकत्वाऽसमानाधिकरणविषयताकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वो'भयसम्बन्धेनेत्याहुः। अत्रत्यं विशेषतस्तत्त्वमस्मत्पितामहश्रीचरणैराविष्कृतायां शब्देन्दुशेखरत्रिपुरसुन्दर्यामस्मदस्मूहितायाम-भिनवराजलक्ष्म्याञ्चानुसन्धेयम्।

'अतिश्रियै ब्राह्मण्यै' 'श्रियै ब्राह्मण्यै'। क्व माभूत्? 'अतिश्रिये ब्राह्मणाय' 'श्रिये ब्राह्मणाये'ति 'यू स्त्र्याख्यौ'विति सूत्रशेषे भाष्ये उक्तम्।

एवञ्चास्य निषेधविकल्पत्वमसम्भवि, समुदायस्य केनापि प्राप्त्यभावात्। अवयवस्य प्राप्तावपि—तस्यानेन विकल्पाभावात्; ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पात्। एतच्च 'प्रवृत्तौ—स्त्रीवचनौ' इत्यनेन सूचितम्।

**॥ चिदस्थिमाला ॥**

'अत एवे'ति विशदयति—**एवञ्चेति**। तथा तदुक्तौ चेत्यर्थः। अस्य=प्रकृतसूत्रदीर्घांशस्य। 'प्रथमलिङ्गे'त्यनेनाह—**अवयवेति**। कुतोऽवगतमिदमुक्तभाष्येऽत आह—**एतच्चेति**।

**॥ सदाशिवभट्टीयम् ॥**

इत्यर्थः। **ङिदाक्षिप्तेति**। 'यतो ङिद्विहितः तदादित्वाभावा'दित्युद्द्योतोक्तेरुक्त एवाशयोऽस्य मुख्योऽर्थान्तर-

**॥ ज्योत्स्ना ॥**

**निषेधविकल्पत्वमसम्भवीति**। 'निषेधविकल्पत्वमेवे'ति नियमासम्भवप्रदर्शनपरमेतत्, अर्थान्तरोपसङ्क्रमाभावे निषेधविकल्पत्वस्य 'श्रियै' 'श्रिय' इत्यादौ सम्भवात्, एवञ्चास्या 'नेय'ङिति निषेधांशमादाय प्राप्ताप्राप्तविध्यंशमादाय प्राप्तविभाषात्वं फलितं भवति। अयं भावः— यदि 'प्रथमलिङ्गग्रहणञ्चे'त्येतन्मूलभूतमवयवस्त्रीविषयत्वमादायाऽपि 'ङिति ह्रस्वश्चे'त्यस्य प्रवृत्तिस्तदा 'ऽतिश्रिये ब्राह्मणाये'त्यत्रापि नदीत्वविकल्पः स्यादिति समुदायस्त्रीविषयत्वमादायैव तस्य प्रवृत्तिर्वक्तव्या, एवञ्च 'प्रथमलिङ्गग्रहणञ्चे'त्यस्याप्रवृत्तिर्यद्यपि फलतः सम्पद्यते तथापि नित्यस्त्रीत्वस्येहाश्रयणे'ऽतिश्रियै ब्राह्मण्यै' इत्यत्र नदीत्वं न स्यादिति 'स्त्रीवाचका'वित्येतावन्मात्रं 'स्त्र्याख्य'-पदेन विवक्ष्यते—इति। **केनापीति**। 'यूस्त्र्याख्यौ'वित्यनेन विधेः, 'नेयङुव'ङित्यनेन निषेधस्य चेत्यर्थः।

**॥ विषमपदविवृतिः ॥**

कृत्य ङित्त्वे नदीसञ्ज्ञा, तदभावे तु नेति—'मती'त्युत्तरं 'चित्र'स्य व्यवस्थापने—नदीत्वस्यापि तस्येष्टत्वात्, ['द्वन्द्वे घी'त्येतत्प्रवृत्तिफलं सम्पादितमेव—] पूर्वं 'चित्र'स्य व्यवस्थापने तु न नदीत्वमित्युभयतः पाशेति वाच्यम्, चित्रे परतो मतिशब्दस्य नदीसञ्ज्ञया 'द्वन्द्वे घी'त्यस्याप्रवृत्तौ दीनां पूर्वनिपातापत्तेः। किञ्च कर्त्रीशब्दादाचारक्विबन्तात्सम्बुद्धौ सुलोपे चित्रङि परतो 'ङिति ह्रस्वश्चे'ति विकल्पेनदीसञ्ज्ञासिद्धिरिति फलम्। एतेन 'वामी'त्येतदकरणलाघवेन 'वाचि ह्रस्वश्चे तिवक्तव्ये 'ङिति ह्रस्वश्चे'त्युक्तिः सन्निपातपरिभाषाया अनित्यत्वज्ञापनायेति बृहच्छब्दरत्नोक्तमपास्तम्। ननु 'वामी'त्येतत्साहचर्येण ङित्प्रत्यय एवेति चेन्न, आमोऽपि प्रत्ययाप्रत्ययसाधारणत्वादिति चेत्,

अत्राहुः—इयङाक्षिप्तप्रत्ययेन ङिद्विशेषणात्तद्विशेषणेनाङ्गस्याक्षेप इत्याशय इति—'नेय'ङित्यादा इयङाक्षिप्तस्याङ्गस्येयङ्विशेषणतैवोचिता। प्रकृते च ङिदाक्षिप्तस्याङ्गस्य तुल्यन्यायान्ङिद्विशेषणत्वेपि स्त्रीत्वेन तद्विशेष्यत इति। **असम्भवीति**। अतिश्रिये इत्याद्युदाहरणविषय इत्यर्थः। श्रियै इत्यादौ तु सम्भवोऽस्त्येवेति भावः। एवञ्च प्राचां मते अतिश्रियै इति भाष्योदाहरणासङ्गतिः, 'अङ्गाक्षेप' इति युक्तिसिद्धत्वेन तस्य नित्यस्त्रीत्वाभावात्। **सूचितमिति**। 'प्रवृत्ता'वित्यस्य—नदीसञ्ज्ञाप्रवृत्तिकाले इत्यर्थः। एवञ्च यदा नदीसञ्ज्ञा कर्तव्या तदा स्त्रीवाचकावेव न पुंवाचकावित्यर्थेनान्यत्र पुंवचनत्वेऽपि प्रवृत्तिकाले पुंवाचकत्वाभावस्य विवक्षितत्वसूचनादिति भावः। 'इति वक्तव्य'मित्यस्य—'ङिति ह्रस्वश्चे'त्यपहायेत्याशयः। 'नदीसञ्ज्ञौ भवतः' इत्यक्षरस्वारस्येन स्वातन्त्र्येण विधायकत्वावगतेः। अनेन च वार्तिकेन 'कटप्रुवे ब्राह्मण्यै' इत्यादावपि नदीसञ्ज्ञा प्राप्नोत्येव, प्रवृत्तौ पुंवाचकत्वाभावात्। 'प्रथमलिङ्गग्रहणञ्चे'त्येतदप्रवृत्त्यन्वाख्यायकत्वन्तु 'श्रिये ब्राह्मणाये'त्युदाहरणविषय एव। 'अतिश्रिये' इत्याद्युल्लेखस्तु—यथाश्रुतसूत्रसत्त्वे ङिदाक्षिप्तस्याङ्गस्य स्त्रीत्वाभावान्नदीत्वाभावेन सिध्यतः कथमिदानीं सिद्धिरिति शङ्कानिरासाय, 'यङ्लुक्यवलोप' इति वार्तिकस्य 'त्ववित'ति

१ प्रवृत्तिः=अर्थान्तरोपसङ्क्रान्तिः। यथा बहुश्रेयसीत्यत्र श्रेयसीशब्दस्य।

अत एवात्र वाक्यद्वयेऽपि विधिविकल्प एव दर्शितः। एवञ्च—'अत्र नियमो नाश्रीयते'—इति कैयटो वाक्यद्वयपर एवोचितः। उपक्रमे निषेधपरतया व्याख्यानन्तु 'यूस्त्र्याख्या'वित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो 'यू इति ह्रस्वयोर्ग्रहण'मिति पक्षोपपादने उक्तिभूतमिति तन्नादरणीयम्।

यत्तु"–दीर्घवाक्ये 'स्त्र्याख्या'विति ईदूतोस्तदन्तस्य वा विशेषणं, पुनरङ्गेन तदन्तविधिः,

॥ चिदस्थिमाला ॥

अत एव=अस्य निषेधविकल्पकत्वासम्भवादेव। दर्शित इति। मूले इति भावः। एवं सति कैयटस्य सङ्कोचेन कृतं व्याख्यानमप्यफलमित्याह—एवञ्चेति। उभयत्र तथार्थकारे चेत्यर्थः। नियम इति। 'उक्तरूप' इत्यादिः। नन्वेवमुपक्रमविरोधोऽत आह—उपेति। एकदेश्युक्तित्वाद्विरोधः-इति भावः। प्राचोक्तं खण्डयति—यत्त्विति। दीर्घेति। नद्यादिनेत्यर्थः। सर्वत्र तयोस्तत्त्वासम्भवादत आह—तदन्तस्येति। मात्रपदेन–नित्यत्वव्यवच्छेदः। नन्वेवं 'नेय'ङित्यत्राप्येवमर्थः स्यादिति तत्सम्भव

॥ ज्योत्स्ना ॥

विधिविकल्प एवेति। दीर्घांशे क्वचिन्नेयङिति निषेधात्, क्वचित्त्वतोऽप्राप्तः, ह्रस्वांशे च सर्वत्रैवाऽप्राप्तेः–'पक्षे भवती'त्येवं रूपो विधिविकल्पो 'वा नदीसञ्ज्ञौ स्त' इति मूलग्रन्थेन दर्शित इत्यर्थः। ह्रस्वयोर्ग्रहणमिति। पक्षोपपादन इति। नदीसञ्ज्ञायां ह्रस्वयोर्ग्रहणे 'बहुशकटि'रित्यत्र कपमाशङ्क्य—'यूस्त्र्याख्यौ नदी' 'नेयङुवङ्स्थानावस्त्री' 'वामी'त्येतदुत्तरं—'ङिती'ति विभक्ते योगे'नेयङुवङ्स्थानावस्त्री' 'वा' 'नदी'त्यनुवृत्त्या निषेधविकल्पमुक्त्वा–ततो 'ह्रस्वा'विति योगान्तरे– 'नेयङुवङ्स्थानौ' 'वे'ति निवर्त्य,'स्त्र्याख्यौ' 'ङिति' 'नदी'त्यनुवर्त्य–'ङित्येव यू ह्रस्वौ नदीसञ्ज्ञा'-वित्येवं नियमे दोषाभावात्तस्य पक्षस्योपपादनं भवति।

॥ सदाशिवभट्टीयम् ॥

सङ्क्रमोऽङ्गस्यैवेति भावः। दर्शित इति। 'ह्रस्वे'ति वार्तिकव्याख्यानभाष्ये इति भावः। अजानत इति। अन्यथा 'ह्रस्वा'वित्यस्य नियमार्थतां न वदेत्, उभयलिङ्गादौ विध्यर्थत्वसम्भवात्। एकदेशीति। उक्तहेतो-

॥ विषमपदविवृतिः ॥

प्रयोजनदानवदृष्टान्तार्थं वेति भावः। वाक्यद्वयेपीति। 'ह्रस्वौ चे'त्यादि वार्तिके 'भवत' इत्युक्तत्वादिति भावः। यत्तु कौमुद्यां–'वा नदीसञ्ज्ञौ स्त'इत्यर्थो दर्शितस्तत्तुच्छम्, 'नित्यस्त्रीलिङ्गा'-वित्युक्तया निषेधविकल्पस्यावश्यकत्वेन 'वा नदीसञ्ज्ञौ स्त' इत्यस्य फलितविधिविकल्पाशयकत्वस्यैव निर्णयेन स्वाभिमतेऽर्थे तदुपष्टम्भकतयाश्रयणानौचित्यात्। ह्रस्वयोर्ग्रहणमिति पक्षोपपादन इति। इत्थं हि तदुपपत्तिः—'यू' इति- इत्वोत्वावच्छिन्नयोर्ग्रहणम्, न चैवं 'बहुशकटि'रित्यादौ कबापत्तिः, 'यूस्त्र्याख्यौ','नेयङुवङ्स्थानौ', 'वामी'त्येतदुत्तरं 'ङिती'ति विभक्ते योगे 'नेयङुवङ्स्थानावस्त्री,' 'वा' 'नदी'त्यनुवृत्त्या निषेधविकल्पं स्वीकृत्याग्रिमे 'ह्रस्वा'विति न्यासे–'इयङुवङ्स्थानौ वे'ति निवर्त्य 'ङिति' 'नदी'त्यनुवर्त्य 'ङित्येव यू ह्रस्वौ नदी'त्येवं नियमेनादोषादिति–पाठकाः। एवं शकट्यादिशब्देषु नदीत्वस्य 'ङित्येवे'ति नियमेन वारणेपि इष्वादिषूभयलिङ्गेषु नदीत्वानापत्तिः, अतः 'स्त्र्याख्यावित्यस्य नित्यस्त्रीत्वमजानत एकदेशिन' इत्यवश्यं वक्तव्यमिति भावः। वस्तुतस्तु शकट्यादीनां ङिति नदीत्व-विकल्पानापत्त्या नियामकत्वस्याग्रे दूष्यमाणत्वेन तद्भाष्यस्य पूर्वपक्ष्युक्तित्वस्य सर्वैर्वक्तव्यत्वेऽपि 'शेषो घी'ति सूत्रे शेषग्रहणमकृत्वा यथान्यास एव 'बहुशकटि'रित्यादौ घिसञ्ज्ञाया बाधेन दोषाभाव-प्रतिपादनावसरेऽपि भाष्ये निषेधविकल्पलक्षयनेन तद्भाष्यस्यैकदेश्युक्तित्वे मानाभावेन तदुक्ता-शयासङ्गतिः, तस्माङ्ङितीति सूत्रेऽङ्गाक्षेपस्य युक्तिसिद्धत्वेन प्राधान्यात्तस्यैव स्त्र्याख्यावित्यनेन सम्बन्धात्तस्य नित्यस्त्रीत्वार्थकत्वेऽप्रतिश्रिये इति भाष्योदाहरणासङ्गत्यापत्त्या इयङाद्यंशे तदसम्बन्धेन निषेधविकल्पमात्रबोधकत्वेऽपि तदसङ्गत्यापत्त्या 'नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिन' इत्याशयः।

अङ्गस्य च केवलस्त्रीत्वं विशेषणम् । एवं ह्रस्वघटितवाक्येऽपि 'स्त्रिया'मित्येतन्मात्रमुभयोर्विशेषणम्—" इति, तत्तु चिन्त्यं, भाष्यात्तदलाभात् । 'नेयङुव'ङित्यत्र तु न इयङाद्याक्षिप्ताङ्गस्य विशेषणं स्त्रीत्वं, तदाक्षिप्तस्येयङादिविशेषणताया एवौचित्यात् । 'यस्याङ्गस्येयुवौ' इति भाष्योक्तेः, 'स्त्र्याख्या'वित्यस्य—नित्यस्त्रीलिङ्गावित्यर्थकस्य 'यू' इत्यनेनैव क्लृप्तसम्बन्धत्वाच्च । अत एव 'अतिश्रिये ब्राह्मणाये'त्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्यं न ।

---

### ॐ चिदस्थिमाला ॐ

एवात आह—नेयङिति । आक्षिप्तस्याक्षेपकेऽन्वयस्यैवौचित्यादाह—तदेति । इयङाक्षिप्तस्येत्यर्थः । तत्र मानमप्याह—यस्याङ्गेति । तावत्पर्यन्तं तस्याङ्गासम्भवादाह-स्त्र्याख्यावित्यस्येति । तत्राङ्गाक्षेपकाभावादिति भावः । तथा व्याख्यानफलमाह—अत एवेति । तथा व्याख्यानादेवेत्यर्थः । सिद्धान्ते शङ्कते—

### ॐ ज्योत्स्ना ॐ

भाष्यात्तदलाभादिति । भाष्ये हि 'प्रवृत्ता च प्राक्च प्रवृत्तेः स्त्रीवचनाविवे'त्येतावदुक्तेर्नित्यस्त्रीलिङ्गावित्यनुक्तेश्च ततस्तदलाभः । नापि निषेधविकल्पपरभाष्यात्तल्लाभः, एकदेश्युक्तित्वस्य प्रागावेदितत्वात् । वस्तुतस्तु 'श्रियै' 'श्रिये'इत्यादौ 'नेय'ङितिनिषेधात्कटप्रुवै कटप्रुवे इत्यादौ नित्य-

### ॐ सदाशिवभट्टीयम् ॐ

गौरवाचास्य तत्त्वमिति भावः । तदन्तस्य वेति । तेन'कटप्रुवे ब्राह्मण्यै'इत्यत्र न नदीत्वं,'श्रिये ब्राह्मण्यै'इत्यत्र नदीसञ्ज्ञा । अत एव 'प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनाविवे'ति भाष्ये उक्तमिति भावः । तदलाभादिति । 'स्त्रीवचना'वित्येव भाष्योक्तेः,उक्तप्रयोगाणामनभिधानाच्च । अत एवोक्तवार्तिकद्वयरहितम् -'अपर आह'इत्यादिना पठित्वा—'कृन्मेजन्तश्चानिकारोकारप्रकृतिरनन्यप्रकृतिरिति वा वक्तव्य'मित्यादाविव न्याय्यत्वविचारो न कृतो भाष्यकृता । कैयटेनाप्युक्तं 'चशब्दोऽत्र नैतन्मते इति पूर्वस्माद्विशेषः, न हि प्राक् प्रवृत्तेः किञ्चिदनिष्टमापद्यते, 'अत्यशनये ब्राह्मण्यै' इति न सिध्येत्,तदन्ते तदनिवेशेऽत्यशनये अतीषवे ब्राह्मण्य इति न सिध्येत्,अयमेव चकारमपठतो वार्तिककारस्यापरस्य,'न हि प्राक् प्रवृत्तेः, किञ्चिद निष्टमापद्यते' इति कैयटस्य चाशयः । नित्यस्त्रीवचनस्य स्त्रीवचनत्वाव्यभिचार इति आद्यवाक्ये नित्यस्त्रीत्वनिवेशादेवोपक्रमे निषेधपरतया व्याख्याने न फलभेदः । तदुक्तनित्यस्त्रीत्वार्थमजानत एकदेश्युक्तिस्तु साहसमात्रम्, साधकान्तभाष्याभावात्, विपरीतस्यापि वक्तुं शक्यत्वाच्च । अतिश्रिये अतिभ्रुवे इत्यनयोस्तदन्तविधिनोपपत्तेश्च । अन्ते तन्निवेशादेव 'यू इति ह्रस्वयोर्ग्रहण'मिति पक्षे ह्रस्वश्चेत्यस्य नियमार्थता सिद्धान्तिता । अत एवाकडारसूत्रे एतत्सूत्रारम्भसामर्थ्यान्नदीसञ्ज्ञामाश्रित्य शेषग्रहणन्न कर्तव्यमित्युक्तम् । अन्यथा'गवां पत्यै स्त्रियै'इत्यादौ चारितार्थ्यात्सामर्थ्योक्तिरसङ्गतैवस्यात् । नित्यस्त्रीत्वञ्च वार्तिककृत्सम्मतमत्र । यत्तु अतिशकटये धेनवे इति स्वरसतो लुबन्तविषयकमपि भाष्यं सुयोजम् (?) । प्रतिषेधपरतया व्याख्यानस्यैकदेश्युक्तिन्तु नैव युक्तम्, 'अवयवविषयत्वात् सिद्ध'मिति चेत्—

### ॐ विषमपदविवृतिः ॐ

भाष्यादिति । 'द्वेष्यं विजानीया'दिति भाष्येण 'प्रथमलिङ्गग्रहणञ्चे'त्यस्याप्रवृत्तौ 'अतिश्रियै ब्राह्मण्यै' इति भाष्योदाहरणासङ्गतेरिति भावः । नदीत्वप्रयुक्तमिति । नित्यनदीत्वप्रयुक्तमित्यर्थः ।

यथेति । एतस्य दूरस्थितेन 'एव'मित्यनेनान्वयः । सादृश्यञ्च त्रिलिङ्गगतत्वेन । तत्फलन्तु नित्यस्त्रीत्वनिवेशे दोषाभावसूचनम् । यद्वा—नन्वित्यस्य—एवमित्यनेनान्वयः, तस्य च नित्यस्त्रीत्वानिवेशे इत्यर्थः । एवञ्च नित्यस्त्रीत्वानिवेशे 'खरकुट्यै' इत्यादौ भाष्यसम्मतत्रिलिङ्गत्वप्रकृते अनियतलिङ्गत्वेन नदीत्वापत्तिरिति वाक्यार्थः । न चैवं 'चञ्चा ब्राह्मणा'नित्यत्र नत्वापत्तिरित्यत

ननु यथा—

—'खरकुट्यै ब्राह्मणाये'त्यादौ लुबन्तस्य त्रिलिङ्गत्वेऽपि प्रथमलिङ्गग्रहणान्नित्यनदीत्वं भवतीति भाष्ये उक्तम्। 'चञ्चा ब्राह्मणान्पश्ये'त्यादौ युक्तवद्भावेन स्वलिङ्गप्रयुक्तकार्याभावस्याप्यतिदेशान्न नत्वम्। स्पष्टञ्चेदं 'तस्माच्छस' इति सूत्रे भाष्यकैयटयोः। यद्वाऽतिदेशेन प्रकृतिलिङ्गप्रयुक्तेन कार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याऽप्रवृत्तिः। स्पष्टञ्चेदं 'स्त्रिया'मिति सूत्रे भाष्ये। युक्तवद्भावादिप्रत्याख्यानेऽपि यथा दारादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं, तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति

❀ अभिनव-चन्द्रिका ❀

**तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिरिति** । चिन्त्यमिदम्—तदभाववत्तानिश्चयमुद्रयाऽतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्यैवाऽतिदेशस्वरूपसिद्धत्वात्। 'तदभावव्याप्यवत्तानिश्चयमुद्रयाऽतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्यन्तु भवत्येव, अन्यथा 'अधु'रित्यादावात्वानन्तरं 'विभाषा घ्राधेट्' इति लुगर्थं धेट्त्वातिदेशस्यावश्यकत्वात्—तदभावव्याप्यवत्तानिश्चयमुद्रया स्थानिवद्भावेनाऽतिदिश्यमानधेट्त्वविरुद्धस्वाश्रयाऽऽदन्तत्वप्रयुक्तस्य 'आत' इति झेर्जुसोऽप्रवृत्त्यापत्तेः।

❀ चिदस्थिमाला ❀

**नन्विति**। **यथेत्यस्य**—एवमित्यत्रान्वयः। लुबन्तस्य त्रिलिङ्गत्वे दोषमुद्धरति—**चञ्चा इति**। सामर्थ्यादाह—**स्वलिङ्गेति**। अपिना तत्समुच्चयः। अतिदेशस्वभावसिद्ध एवायमर्थ इति नात्र तदतिदेश इति, लाघवेनाह—**यद्वेति**। ननु युक्तवद्भावसत्त्वे इदं सुवचं, न तदभावे इति—तत्र पक्षे दोष एवात आह—**युक्तेति**। आदिना लुप्। ननु तावता पुंसि वृत्तिरेवेति कुतो न तदत आह—**पुंस्त्वे इति**। सूत्रे 'पुंसी'ति धर्मपरमिति भावः।

❀ ज्योत्स्ना ❀

स्त्रीत्वाभावादप्राप्ता पक्षे भवतीत्येवं विधिविकल्पसम्भवेऽपि 'निषेधाश्च बलीयांसो भवन्ती'ति भाष्योक्तन्यायात्कटप्रुवे इत्यादौ चारितार्थ्यान्नेयङ्त्विनेनैतद्बाधापत्तिरतो नेत्यनुवर्त्य वाक्यभेदेन निषेधं बाधित्वा वेत्यनुवृत्त्या प्राप्ताप्राप्तविभाषान्यायेन विकल्प इति सूचनाय नेत्यनुवृत्तिरिति भावः।

❀ सदाशिवभट्टीयम् ❀

इयङुवङ्स्थानिप्रतिषेधे यण्स्थानिप्रतिषेधः, अवयवस्येयङुवङ्स्थानत्वा'दिति वार्तिके '**प्रतिषेध**' इत्युक्तेरिति दिगित्याहुः। **ङितिह्रस्वश्चेति**—सूत्रस्य व्याख्योत्तरं—''—ङिति ह्रस्वश्च। यु'वाचि ह्रस्वश्चे'त्येव सूत्रेण सिद्धे 'ङिति ह्रस्वश्च''वामी'ति सूत्रद्वयं व्यर्थमिति तत्सामर्थ्यात्सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थम्—''इति, तन्न; यदागमपरिभाषायाः स्वमते वर्णग्रहणेऽपि प्रवृत्त्याऽऽत्राजादित्वानिर्देशादित्यनिर्देशेन विघाताभावेऽपि वस्तुनस्तद्विघातसत्त्वात्। न च प्रत्ययग्रहणपरिभाषया नदादेरित्यस्योपस्थित्या'पङ्क्त्वा'दित्यादाविवालाभ इति वाच्यम्, नेदं प्रत्ययमात्रग्रहणमिति। सूत्रान्तरसाहचर्यन्तु स्वयमेवान्यत्र खण्डितम्। किञ्चोक्तयुक्त्या तदादेरित्यस्यालाभेप्यत्र सप्तम्यन्तप्रत्ययस्याश्रयणेऽपि न षष्ठ्यन्ततदादिरित्यस्योपस्थितिस्स्याच्चेन च ह्रस्वपदेन सामानाधिकरण्यनैव सम्भवति, स्पष्टञ्चेदं 'परश्च तत्र पञ्चम्यन्तेने'त्यादिना परिभाषेन्दुशेखरे। त्वन्मते वार्तिकानुत्थानञ्च। किञ्चाङ्गविशेषणत्वे 'कटप्रुवे ब्राह्मण्यै'इत्यस्य परित्यागः किमर्थं कृत इति शङ्कानुद्धाराच्च। 'प्रथमलिङ्गग्रहणञ्चे'त्यस्य खरकुट्यै इति वचनं सङ्गच्छते। **विभक्तिविपरिणामेति**। शब्दाधिकारेण 'यु' इति ह्रस्वयोरपि सम्भवात्तयोर्ग्रहणेऽस्य विभक्तिविपरिणामेन ह्रस्वश्चेत्यत्रान्वयः।

❀ विषमपदविवृतिः ❀

आह—**चञ्चा इति**—इति [ वैद्यनाथ- ]-भट्टाः। पाठकास्तु—'**चञ्चान् ब्राह्मणान् पश्ये**'त्यारभ्य—'पुंस्त्वे वाच्ये नत्वमित्यर्था'दित्यन्तस्य—'**इत्यर्थान्न नत्व**'मिति कृतान्वयस्य—'**एव**'मित्यादिनान्वयं कृत्वा 'इति न च वाच्य'मिन्वयः कर्तव्यः—इत्याहुः। **तद्विरुद्धेति**। ननु तच्छब्देन प्रकृतिलिङ्गं परामृश्यते ? तत्कार्यं वा ?, नाद्यः—स्वाश्रयपुंस्त्वस्य प्रकृतिलिङ्गाविरुद्धस्य वक्ष्यमाणत्वात्। नान्त्यः—तत्प्रयुक्तकार्यस्यैवाभावातिदेशाप्रवृत्तेः। न च टाबादिरेव तत्फलम्, तावतापि स्वाश्रयनत्वस्य तदविरुद्धत्वादिति चिन्त्यमेतत्।

ननूक्तं हि प्रकारद्वयमतिदेशसत्त्वे एव, तत्प्रत्याख्याने तु कथमित्याह—**युक्तवद्भावादीति**।

न नत्वम्, 'पुंस्त्वे वाच्ये नत्व'मित्यर्थात्। न चैवं 'खरकुट्यै'इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम्, 'स्त्र्याख्यौ' वित्यस्य 'स्त्रीत्वविशिष्टमेव य आहे'त्यर्थात्। न चायं तथा, स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात्। यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति, तथापि व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपज[न]नेऽपि स्त्रीपदादिबोध्यत्वदशायां तत्सत्त्वे मानाभावात्। प्रकृते तु–'ब्राह्मणाये'त्यादिविशेष्यदर्शनेन तत्सत्तानुमानात्। स्पष्टञ्चेदं भाष्यकैयटयोः।

एवं—

—श्रीशब्दात्क्विनि लुपि 'श्रिये ब्राह्मणाये'त्यादौ विकल्पापत्तिः, युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तनात्, अत्र सूत्रे नित्यस्त्रीत्वानिवेशाच्चेति चेन्न,—

—सत्यभिधाने इष्टापत्तेः। भाष्ये दृश्यमानं–'श्रिये ब्राह्मणाये'त्यादि तु क्यजन्तात्क्विपि बोध्यम्।

विपरीतं–नित्यस्त्रीत्वनिवेशवादिनो लुबन्ते 'श्रियै ब्राह्मणाये'त्यादौ तदनापत्तिर्दोष इत्याहुः।

ॐ अभिनव-चन्द्रिका ॐ

इत्याहुरिति। परेतु सूत्रकृत्-प्रवृत्तिनिमित्तविशिष्टत्वं नित्यस्त्रीत्वम्। वैशिष्ट्यञ्च—'स्वविशिष्ट-

ॐ चिदस्थिमाला ॐ

एवं–तत्र युक्तवद्भावेन निर्वाहेणैवेति। एवञ्च प्रथमेत्युक्तभाष्यासङ्गतिरितिभावः। [पानातनुरिति पाठः ?।]

ननु शास्त्रीयलिङ्गत्रयस्य केवलान्वयित्वेन तथार्थो दुर्वचोऽत आह—यद्यपीति। लौकिकस्यासम्भवादाह—

—शास्त्रीयेति। उपजनेऽपि=प्रादुर्भावेऽपि। नन्वेवं प्रकृतेऽपि तदभाव एवेति तथार्थेऽपि तेनैव सिद्धा तदसाङ्गत्यं तदवस्थमेवात आह–प्रकृते त्विति। 'खरकुट्यै–ब्राह्मणाये'त्यादावित्यर्थः। एवमनूद्य तद्दृष्टान्तेन पूर्वपक्षमाह–एवमिति। तद्वदित्यर्थः। अत्रेति। उभयत्रेत्यर्थः। नन्वेवमुक्तभाष्यविरोधोऽत आह—भाष्ये इति। कैयटादिमतेऽयमपि दोष इत्याह–विपेति। तत्=विकल्पाभावापत्तिः।'परं तत्रे'ति शेषः।

ॐ ज्योत्स्ना ॐ

'चञ्चा ब्राह्मणान् पश्ये' त्यारभ्य 'पुंस्त्वे वाच्ये नत्वमित्यर्था' दित्यन्तस्य–'इत्यर्थाच्च नत्व'मित्येवञ्च कृतान्वयस्य 'एव'मित्यादिनाऽन्वयं कृत्वा—'इति न च वाच्य'मित्यन्वयः कर्त्तव्यः।

श्रियै ब्राह्मणायेत्यादि त्विति। आदिपदात्–'शकटये ब्राह्मणाये'त्येतत्। लुबन्तस्य तु शकटि-

ॐ विषमपदविवृतिः ॐ

ननु च पदार्थमात्रे शास्त्रीयलिङ्गत्रयस्यसम्भवादत आह–यद्यपीति। तत्सत्तानुमानादिति।

ननु 'गौर्यै पदार्थाये'ति विशेषदर्शनेन कुतो न पुंस्त्वानुमानं, तथा चाऽऽयनापत्तिरिति चेत्–न; भावानवबोधात्। अनुमानप्रकारस्तु"—खरकुटी'शब्दो वस्तुतः पुंस्त्वविशिष्टार्थप्रतिपादकः, प्रवृत्तिनिमित्तसमानाधिकरणपुंस्त्वसमानाधिकरणस्वभिन्नप्रवृत्तिनिमित्तवत्समानाधिकरणत्वात्, 'नीलो घट' इत्यादौ घटपदसमानाधिकरणनीलपदवत्–" इति। न च पूर्वोक्तो दोषो नोद्धृतः, द्वितीयप्रवृत्तिनिमित्ते व्यतिरेकित्वविशेषणदानात्। न चैवमपि 'गौर्यै प्रकाण्डाये'त्यादौ नदीत्वानापत्तिः, उक्तप्रवृत्तिनिमित्तवन्निष्ठतादात्म्यसंसर्गावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयत्वस्य हेतुत्वात्। न चैवं 'हरिणा देवतये'त्यादौ देवताया अपि विशेष्यत्वादस्त्रियामिति नात्वनिषेधापत्तिः, सामान्यविशेष्यभावे विशेष्यवाचकस्यैव विशेष्यत्वात्। वस्तुतस्तु स्वस्वप्रवृत्तिनिमित्ततानुयोगितावच्छेदकप्रवृत्तिनिमित्तवत्समानाधिकरणं हेतुः। न च गौरीत्वानुयोगितावच्छेदकप्रवृत्तिनिमित्तवत्सामानाधिकरण्यमिति वाच्यम्, तस्य गौरीत्वानुयोगिताव्यभिचरितत्वात्। न चैवमपि पदार्थादिशब्दे गौर्यादिप्रतिपादनकाले लिङ्गान्तरोपसर्जनेन नित्यस्त्रीत्वव्याहतिः यस्य नदीसञ्ज्ञा कर्तव्या तज्जन्यस्वार्थविशेष्यकरणस्वप्रवृत्तिनिमित्तकत्वस्य स्त्र्याख्यपदेन विवक्षितत्वादिति दिक्। इत्याहुरिति। अत्रेदं वक्तव्यम्—अङ्गाक्षेपस्तावदप्रामाणिकः, आक्षेपेऽपि

### ॐ अभिनव-चन्द्रिका ॐ

शक्तिविशिष्टत्व' 'स्वावच्छिन्नमुख्यविशेष्यतानिरूपितस्त्रीत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारताकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वै'तदुभयसम्बन्धेन । शक्तौ वैशिष्ट्यञ्च-'स्वावच्छिन्नविशेष्यताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वै'तत्त्रितयसम्बन्धेन । सम्बन्धघटकशक्तिवैशिष्ट्यञ्च—'स्वपर्याप्त्यधिकरणत्व'—'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वै'तदुभयसम्बन्धेनेति स्वीकरोति ।

एतल्लक्षणं—'बहुश्रेयस्यै ब्राह्मणाय', 'कुमार्यै ब्राह्मणाये'त्यादावव्याप्तमिति मत्वा—'प्रथमप्रयोलिङ्गग्रहणं कर्तव्य'मिति वदन्वार्तिककारश्च–प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम् । वैशिष्ट्यञ्च–स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व'—'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व'–'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वै'तत्त्रितयसम्बन्धेन ।

शक्तिवैशिष्ट्यञ्च—'स्वपर्याप्त्यधिकरणान्तत्व'—'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वै'तदुभयसम्बन्धेनेत्यभिप्रैति ।

'अवयवस्त्रीविषयत्वात्सिद्धमि'त्युक्त्वा'प्रथमलिङ्गग्रहणञ्चे'ति वार्तिकं प्रत्याचक्षाणो भाष्यकारः–'प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं'नित्यस्त्रीत्वम्, प्रवृत्तिनिमित्तवैशिष्ट्यञ्च–'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व'—'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व'—'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वै'तत्त्रितयसम्बन्धेन ।

शक्तिवैशिष्ट्यञ्च–'स्वपर्याप्त्यधिकरणत्व'–'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वै'तदुभयसम्बन्धेनेत्यभिप्रैति ।

तदेवं त्रिविधे नित्यस्त्रीत्वे–'ङिति ह्रस्वश्चे'त्यत्र 'प्रथमलिङ्गग्रहणं यच्चोदितं तदत्र द्वेष्यं विजानीया'दितिभाष्यप्रामाण्येन सूत्रकृत्संमतं यन्नित्यस्त्रीत्वं तदेव ङितिह्रस्वश्चेत्यत्र सम्मतमिति लभ्यते,'अत्रे'तिपदस्वारस्यात् ।

'वामी'त्यत्र–'प्रथमलिङ्गग्रहणञ्च अवयवस्त्रीविषयत्वात्सिद्ध'मित्याद्युक्त्या 'यूस्त्र्याख्यौ' इति सूत्रे इव 'वामी'त्यत्रापि वार्तिककृत्समतं, भाष्यकारसम्मतं, वा नित्यस्त्रीत्वं बोध्यम् । अत एव 'श्रीणां श्रियां ब्राह्मणाना'मित्यादौ 'वामी'ति विकल्पो भवत्येव । अत एवोपक्रमे—निषेधपरतया 'वामी'त्यस्य व्याख्यानं भाष्योक्तं सङ्गच्छते । अत एव 'ह्रस्वा च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसञ्ज्ञौ भवतः' इति वक्तव्यं,—'शकट्यै' 'अतिशकट्यै ब्राह्मण्यै', क्व माभूत् ? 'शकटये' 'अतिशकटये ब्राह्मणाय'; 'धन्वै अतिधेन्वै ब्राह्मण्यै'; क्व माभूत् ? 'धेनवेऽतिधेनवे ब्राह्मणाय'; 'श्रियै अतिश्रियै ब्राह्मण्यै', क्व माभूत् ? 'श्रिये ऽतिश्रिये ब्राह्मणाय', 'भ्रुवै–अतिभ्रुवै ब्राह्मण्यै', क्व माभूत् ? 'भ्रुवे–अतिभ्रुवे ब्राह्मणाय'इति भाष्यं सङ्गच्छते। अत्र 'प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवे'त्युक्त्या-पूर्वोक्तं सूत्रकारसम्मतं नित्यस्त्रीत्वं 'ङिति ह्रस्वश्चे'त्यत्र ग्राह्यमिति बोध्यते । अत्र षष्ठीबहुवचनोदाहरणादानेन च 'यूस्त्र्याख्या'वित्यत्रेव 'वामी'त्यत्रापि भाष्यवार्तिककारसम्मतं पूर्वोक्तं नित्यस्त्रीत्वमेव ग्राह्यमिति बोध्यते । एवञ्च तथा शेखरोक्तिरयुक्तैव ।

### ॐ विषमपदविवृतिः ॐ

इयङायंशे एव तस्यान्वयः । तथा च "ह्रस्वेयुवङ्स्थानयोः–प्रवृत्तौ च स्त्रीवचनौ" इति वार्तिकविरोधाभावादियङाद्यंशे नित्यस्त्रीत्वे बाधकाभावः । 'अतिश्रियै ब्राह्मण्यै' इत्यादावर्थान्तरसङ्क्रमप्राक्कालीननित्यस्त्रीत्वस्य ग्रहणेन भाष्यस्य सामञ्जस्यात् । न च 'अपर आहे'ति वार्तिके 'प्रवृत्तौ स्त्रीवचना'विति निश्चकारः पठ्यते । अग्रे गत्वा 'प्रथमलिङ्गग्रहणं चोदित'मित्यस्योपलक्षणत्वेन तत्प्रत्याख्यानरीतीनां तद्द्वेष्यं विजानीया'दित्युच्यते। एवञ्चातिश्रिशब्दघटकश्रीशब्दस्य कथं स्त्रीत्वविशिष्टार्थप्रतिपादकत्वं, न चावयवस्त्रीविषयत्वात्सिद्धमित्युक्तयुक्त्या सिद्धिः,नित्यस्त्रीत्वार्थप्रतिपादकत्वं किमिदं

### ॐ अभिनव-चन्द्रिका ॐ

यच्च–'भाष्ये दृश्यमानं श्रिये ब्राह्मणायेत्यादि तु क्यजन्तात् क्विपि बोध्य'मिति शेखरकृत्; तन्न; 'शकटये ब्राह्मणाय', 'धेनवे ब्राह्मणाये'त्यादौ क्यजन्तात्क्विपि 'अकृत्सार्वे'ति दीर्घापत्तेः, क्विवन्तात्क्विपि तु तुगापत्तेः।

यदपि–'पदार्थमात्रे शास्त्रीयं लिङ्गत्रयमस्ति, तथापि व्यक्तिवस्तुपदार्थादिशब्दबोध्यत्वकाले तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोध्यत्वदशायां मानाभावादिति शेखरकृत्, तदपि न; कस्य चित्प्रियस्य पुष्टिकामनादशायां तस्य पुंस्त्वेन बहुवारं बोधे पुष्ट्यापत्तेः, एवं द्वेषादिनाऽपुष्टिकामनया स्त्रीत्वेन बोधे तस्याऽपुष्टिप्रसङ्गात्। एवं यस्य साम्यकामना तस्य नपुंसकत्वेन बहुवारं बोधे साम्यप्रसङ्गाच्च, पुंस्त्वादिशास्त्रीयलिङ्गस्य सत्त्वाद्युपचयापचयादिरूपत्वात्।

न च 'चञ्चा ब्राह्मणा'नित्यादौ युक्तवद्भावेन स्त्रीलिङ्गत्वेऽपि स्वाश्रयपुंस्त्वप्रयुक्तनकारादेशापत्तिरिति वाच्यं, युक्तवद्भावेन प्रकृतौ यल्लिङ्गयद्वचनप्रयुक्तं कार्यं भवति, यल्लिङ्ग-

### ॐ विषमपदविवृतिः ॐ

प्राचीनरीत्या? उत नव्यरीत्या? नाद्यः, प्राचां मते प्रधानेन स्त्रीत्वनिवेशेन स्त्रीत्वनिवेशो न, उक्तन्यायात्। नान्त्यः, 'श्रियै ब्राह्मण्यै' इत्यादौ 'सर्वथा प्रथमलिङ्गग्रहणं चोदित'मित्यस्योपलक्षणत्वेन तत्प्रत्याख्यानरीतीनां सर्वासामप्यनाश्रयणसूचनात्। एतेन–'नित्यस्त्रीत्वं यथोद्देशेन सूपपाद'मिति अपास्तम्। न चैवं 'श्रियै' इत्यादीनां नित्यस्त्रीत्वमव्याहतं; लिङ्गान्तरप्रकारकबोधजनकत्वात्। नन्वेमपि 'अतिश्रिये ब्राह्मणाये'त्यत्र श्रीशब्दस्य लिङ्गान्तरावाचकत्वेनातिप्रसङ्गो दुर्वार इति चेन्न, घटकतयापि लिङ्गान्तरावाचकत्वस्य विवक्षितत्वात्। नन्वेवं सति श्रीशब्दस्य घटकतया स्त्र्यतिक्रान्तबोधकत्वेन तस्य च लिङ्गान्तरसमानाधिकरणबोधकत्वेन नित्यस्त्रीत्वार्थकत्वविशिष्टप्रातिपदिकत्वाभाव इति चेन्न, 'स्त्रीवचनावेवे'त्येवव्यावर्त्यलिङ्गान्तरांशे 'घटकतयापी'ति निवेशेऽपि सूत्रोपात्तनित्यस्त्रीत्वांशे तदनिवेशात्। न च लिङ्गान्तरासमानाधिकरणत्वेन च नित्यस्त्रीत्वार्थकत्वविशिष्टप्रातिपदिकत्वाभाव इति वाच्यं, स्त्रीवचनावेवेत्येवव्यावर्त्यलिङ्गान्तरांशे घटकतयापीति निवेशेऽपि सूत्रोपात्तनित्यस्त्रीत्वांशे तदनिवेशात्। न च लिङ्गान्तरासमानाधिकरणप्रवृत्तिनिमित्तवद्बोधकत्वं विशेष्यतया? यथाकथंचिद्वा? नाद्यः, 'अतिश्रियै' इत्यादौ प्रकृत्युत्तरं तदभावात्। नान्त्यः, 'अवयवस्त्रीविषयत्वात्सिद्ध'मिति न्यायाङ्गीकारापत्त्या 'प्रथमलिङ्गग्रहणं चोदितं तदिह द्वेष्यं विजानीया'दिति भाष्यविरोधात्। अत एव शेखरे 'एतच्च प्रवृत्तौ स्त्रीवचनावेवेति सूचित'मित्युक्तम्।

'किमर्थं पुनरिदमुच्यते—इत्युक्त्वा' 'प्रथमलिङ्गग्रहणं चोदितं तद्द्वेष्यं विजानीया'दित्युक्तथा 'प्रथमलिङ्गग्रहणञ्चे'त्येतदननुवृत्तितात्पर्यकमुक्तवार्त्तिकमित्यर्थस्य लाभात्। अन्यथा त्वद्रीत्या 'प्रथमलिङ्गग्रहणञ्च'त्यस्यास्य च उभयोरावश्यकत्वं कथनीयं स्यादिति चेत्—

अत्र ब्रूमः—'तद्द्वेष्यं विजानीया'दित्यस्य 'श्रिये ब्राह्मणाये'त्युदाहरणविषयत्वात्सामान्यप्रवृत्तभाष्यस्य–सति प्रतिबन्धके विशेषविषयत्वात्, बाधकानि च वक्ष्यामः। किञ्च 'शकट्यै ब्राह्मणाये'ति भाष्यविरोधः, तथा हि—किमत्र क्यजन्तात्क्विप्? उत क्विबन्तात्क्विप्? आहोस्वित्क्नो लुप्? नाद्यद्वितीयौ—दीर्घतुगापत्तेः। न तृतीयः,–स्वमते यथाकथञ्चित्स्त्रीत्वनिवेशेन 'श्रिये ब्राह्मणाये'त्यादाविव विकल्पापत्तेर्दुर्वारत्वात्।

यत्त्वत्र पाठकेनोक्तम्—'अतिशकट्यै ब्राह्मण्यै' इत्यत्र वृत्तेर्ब्राह्मणीबोधिकायाः स्त्रीत्वान्नदीत्वं, तदवयवस्यापि शकटिशब्दस्य नदीत्वसूचनाय—'शकट्यै ब्राह्मण्यै' इति। तथा 'अतिशकटये ब्राह्मणाये'त्यत्र वृत्तेर्ब्राह्मणबोधिकायाः पुंस्त्वान्नदीत्वाभावः, अवयवस्य सत्यपि स्त्रीत्वे नदीत्वाभावसूचनाय 'शकटये' इत्युक्तमिति, तत्तुच्छम्; अवयवशकटिशब्दस्य नदीत्वतदभावसूचनं पर्याप्त्या? उत स्वरूपसम्बन्धेन? नाद्यः—असम्भवित्वात्। नान्त्यः—फलाभावात्। विशिष्टस्य नदीसञ्ज्ञातदभावान्यतरोक्तावयवेऽतदन्यतरस्य सर्वैरुक्तत्वात्तत्सूचनस्य निस्सारत्वात्। किञ्चाऽङ्गस्यैव नदीसञ्ज्ञायां घटकस्य शकटिशब्दस्य घित्वस्याऽप्रतिबद्धप्रवृत्तिकतया 'ऽतिशकट्यै' इत्यादौ 'घेर्ङिती'ति

ॐ अभिनव-चन्द्रिका ॐ

यद्वचनप्रयुक्तस्वकार्यं न भवति तदुभयोर्भावाभावयोः—'अचः परस्मि'न्नित्यनेनैवातिदेश-स्वीकारेणादोषात् । न च 'श्रियै ब्राह्मणाये'त्यादौ युक्तवद्भावेन स्त्रियामङ्गस्य प्रवर्त्तनाद्विकल्पा-पत्तिरितिवाच्यम्, पूर्वोक्तसूत्रकृत्सम्मतनित्यस्त्रीत्वस्य प्रकृतावभावेन युक्तवद्भावेन प्रकृते कन्लु-वन्तेऽतिदेष्टुमशक्यत्वात् । एतेन तत्र विकल्प इष्यते एवेत्यपास्तम्, पूर्वोक्तभाष्यविरोधाच्च ।

तथा च पूर्वोक्तं सूत्रकृत्सम्मतं नित्यस्त्रीत्वमेव 'ङितिह्रस्वश्चे'त्यत्र ग्राह्यमिति सुधियो विभावयन्त्वित्याहुः।

ॐ विषमपदविवृतिः ॐ

गुणापत्तिः। किञ्चातिश्रियै इत्यादौ विशिष्टस्य नित्यस्त्रीत्वाभावेन नेयङिति निषेधाप्रवृत्तौ चरितार्थस्य नदीत्वस्य 'श्रियै' इत्यत्र 'निषेधाश्चे'ति न्यायेन 'नेय'ङिति निषेधापत्तिः। ननु शेषपदेन स्वरूपेण नदीशून्यत्वस्य विवक्षितत्वान्नाद्यः, वार्थे निषेधस्य प्रविष्टत्वेन 'निषेधाश्चेति' न्यायानवतारादिति चेन्न; 'हरेर्मतये' इत्यादौ दोषप्रसङ्गात्। 'स्वरतिसूती'ति सूत्रे स्वरतेरुदात्तत्वे एव 'निषेधाश्चे'ति संचारेण भाष्ये सल्लक्षणेट्त्वबाधकत्वापादनेन विधिमुखेन प्रवृत्तौ तदसञ्चारबोधकत्वाच्च ।

यत्तु पाठकेनोक्तं—'वाक्यभेदेन निषेधविकल्पकत्वमपी'ति; तत्तुच्छम्, भाष्यात्तदलाभात्, माला-भावाद्गौरवापत्तेश्च । किञ्च 'प्रथमलिङ्गग्रहणञ्चे'त्यस्य फलदर्शनावसरे 'लुप्—'स्वरकुट्यै ब्राह्मणाये'ति भाष्ये उक्तम्। स्त्रीत्वविशिष्टमेव य आह—मः स्त्र्याख्यः, न चायं तथा, स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानादित्यर्थकः—'स्वाश्रयस्य पुंस्त्वस्यानिवर्तनान्नायं स्त्रियं स्त्रियामेव वर्तते' इत्यादि कैयटेनोक्तम्। भवद्रीत्या 'तस्माच्छसो नः पुंसी'त्यादौ क्लृप्तस्य निरूपितत्वसम्बन्धेन किञ्चिल्लिङ्गविशिष्टस्य शक्तावन्वये, स्वनिरूपितशक्तिसम्बन्धेनेतरत्रान्वये वा शक्तिनिरूपकत्वस्य स्वनि-रूपकतावच्छेदकलिङ्गेऽपि लाभस्य सार्वजनीनानुभवसिद्धस्य च त्यागेनोक्तार्थकरणानौचित्यादुक्तभाष्य-कैयटासङ्गतिः । मन्मते तु 'श्रियै ब्राह्मणाये'त्यादौ लुपि विकल्पाभावः फलं, 'नित्यस्त्रीत्वस्य' ङिति ह्रस्वश्चे'त्यत्रापि सम्बन्धात्, 'प्रथमलिङ्गग्रहणञ्चे'त्यस्य तदविषयत्वाच्च ।

किञ्च—'सत्यभिधाने इष्टापत्ति'रिति शेखरः। तत्फलन्तु 'श्रियै ब्राह्मणाये'त्यादिना विवरणेन यूस्त्र्याख्याविति सूत्रस्थेन विरुद्धः ।

किञ्च निषेधविकल्पकत्वप्रतिपादकत्वे 'यूस्त्र्याख्या'विति सूत्रस्थभाष्यविरोधश्च, तस्यैकदेश्युक्तित्वकल्पनं त्वप्रामाणिकम्। किञ्च 'ङिति ह्रस्वश्चे'ति सूत्रे 'स्त्र्याख्या'विति विशिष्टानुवृत्तिप्रतिपादनपरानुवृत्तिपर-भाष्यस्वारस्येन 'ङिति ह्रस्वश्चे'त्यस्यापि नित्यस्त्रीत्वविषयकत्वमेव लभ्यते। वस्तुतस्तु 'ङिति ह्रस्वश्चे'ति सूत्रे ह्रस्वदीर्घयोरंशयोरपि स्त्र्याख्यपदानुवृत्तिपरभाष्यस्वारस्यान्नित्यस्त्रीत्वार्थकानामेवोदाहरण-दानाच्च 'ङिती'ति सूत्रं शब्दद्वयसाधारण्येनापि नित्यस्त्रीविषयमेव। अत एव 'यूस्त्र्याख्या'विति सूत्रे भाष्ये 'यू इति ह्रस्वयोर्ग्रहण'मिति पक्षोपपादनावसरे 'शेषो घी'ति सूत्रे शेषग्रहणमकृत्वा 'घिसञ्ज्ञया बाधेनादोषाद्ध्रस्वयोर्ग्रहण'मिति भाष्ये उक्तम्। ह्रस्वांशे स्त्र्याख्यावित्यस्याऽसम्बन्धे तु स्त्रीवाचक-पतिशब्दे 'पतिः समास एवे'ति नियमेन घित्वाप्रवृत्तौ नित्यनदीत्वप्राप्त्या तदसङ्गतिः स्पष्टैव ।

किञ्चाङ्गाक्षेपेऽतिश्रियै इत्यादौ विशिष्टस्य स्त्रीवाचकत्वाभावादेव नदीत्वाप्रवृत्तौ तदुदाहरणपरभाष्या-ऽसङ्गतिः स्पष्टैव। ननु''—'अवयवस्त्रीविषयत्वात्सिद्ध'मिति चेदियङुवङ्प्रतिषेधे यण्स्थानयोरपि ध्वोः प्रतिषेधः, एवञ्चाध्यै ब्राह्मण्यै'—''इति भाष्यासङ्गतिः। त्वन्मतेऽङ्गानाक्षेपेण 'ङिति ह्रस्वश्चे'ति विकल्प आपादयितुं शक्यो न तु निषेध इति चेन्न, तद्भाष्यस्य युक्त्यसहत्वेन चिन्त्यतायाः कैयटेनै-वोक्तेः । तथा हि—आध्यायतीति विग्रहो वा ? इत्यध्यानं धीर्यस्येति वा ? नाद्यः,—नित्य-स्त्रीत्वाभावेन नदीत्वाप्राप्तेः। नान्त्यः—'नद्यृतश्चे'ति कबापत्तेः। न च ऋदन्तसाहचर्येण समासा-

यू किं ? मात्रे । यद्यपि 'यू' इति दीर्घपरं, तथापि विभक्तिविपरिणामेन 'य्योर्ह्रस्वा'वित्यन्वयो वोद्ध्यः ।

एतत्सर्वं 'वामी'त्यत्रापि बोद्ध्यम् ।

'इदुद्भ्यामौदच्च घेः' इति सूत्रं योगविभागेन व्याचष्टे—

**इदुद्भ्याम्** । अनदीसञ्ज्ञकेषु 'अच्च घेः' 'औ'दित्याभ्यां बाधात्, 'ङेरा'मिति सूत्रान्नदीग्रहणानुवृत्तेर्वाऽऽह—**नदीसञ्ज्ञकाभ्यामिति** ।

---

### ॐ अभिनव-चन्द्रिका ॐ

**वामीत्यत्रापि बोध्यमिति** । चिन्त्यमिदं "-'प्रथमलिङ्गग्रहणं-यच्चोदितं तदत्र द्रेष्यं विजानीयात्—''इत्यत्रत्य—'अत्रे'तिपदस्वारस्यभङ्गापत्तेः । 'ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न तु पुंवाचका'वितिवार्तिकव्याख्यानावसरे षष्ठीबहुवचनोदाहरणादानाच्च । एतेन 'वाऽम्वि ह्रस्वश्चे'त्येव सिद्धे 'वाऽऽमि' 'ङिति ह्रस्वश्च'इति पृथग्योगकरणात्सन्निपातपरिभाषा ज्ञाप्यते इत्यपास्तम् । 'ङिति ह्रस्वश्चे'त्यत्र 'प्रथमलिङ्गग्रहणञ्चे'ति वार्तिकस्याभावेन 'वामी'त्यत्र तु तद्वार्तिकस्य सत्त्वेन कथमप्येकयोगस्य कर्तुमशक्यत्वात् । अत एव 'आपि ह्रस्वश्चे'ति न सूत्रितम् । आबिति·टा इत्यत आरभ्य सुपः पकारेण प्रत्याहार इति दिक् ।

### ॐ चिदस्थिमाला ॐ

'तत्रे'ति शेषः । एवञ्च तस्य ह्रस्वत्वविशेषणासम्भव इति भावः । भिन्नान्येव सूत्राणीति भ्रमनिरासायाह—**इदुद्भ्यामिति** । अग्रेऽपि सूत्रद्वयमित्याह—**आभ्यामिति** । ननु सन्निपातपरिभाषया यण् न स्यादत आह—

### ॐ ज्योत्स्ना ॐ

शब्दस्य युक्तत्वञ्चावादुक्तरीत्या नदीत्वविकल्प इष्यत एव । अत्र वदन्ति—शकटिशब्दे यदि क्यजन्तात्क्विप् क्रियते तदा दीर्घापत्तिः, अथाचाक्विवन्तात्क्विप् क्रियते—एवमपि तुगापत्तिः, 'आगमशास्त्रमनित्य'मिति तु स्वमतेनाङ्गीकृतमिति चिन्त्यमेतत् । 'शकट्यै, अतिशकट्यै ब्राह्मण्यै' क्व माभूत् ? 'शकटये अतिशकटये ब्राह्मणाये'ति भाष्ये 'शकट्यै शकटये'इत्यनयोरुपादानस्य तर्हि किं तात्पर्यम् ? अत्र ब्रूमः—'अतिशकट्यै ब्राह्मण्यै'इत्यत्र वृत्तेर्ब्राह्मणीबोधिकायाः स्त्रीत्वान्नदीत्वे तदवयवस्यापि शकटिशब्दस्य नदीत्वसूचनाय 'शकट्यै ब्राह्मण्यै'इत्युक्तम् । एवम्—'अतिशकटये ब्राह्मणाये'त्यत्र वृत्तेर्ब्राह्मणबोधिकायाः पुंस्त्वान्नदीत्वाभावेऽवयवस्य सत्यपि स्त्रीत्वे नदीत्वाभावसूचनाय 'शकटये' इत्युक्तिरिति । **य्वोर्ह्रस्वाविति** । सावर्ण्यं षष्ठ्यर्थः । **एतत्सर्वं वामीत्यत्रापीति** । नेयङुवङ्विशेषणत्वं, व्याख्या-

### ॐ विषमपदविवृतिः ॐ

त्पूर्वावस्थायामुत्तरपदस्य नदीत्वे एव कपः प्रवृत्तिरिति विवरणोक्तं युक्तं ? 'प्रियतिसृ'इत्यादौ समासोत्तरमपि ऋदन्तस्य सत्त्वात् । न च तत्र कपोऽनिष्टत्वं, तावतापि साहचर्यासम्भवात्—त्वदुक्तसाहचर्याश्रयो नद्युत्तरपदादित्यर्थो निष्फल एव स्यात् , प्रियचतसृक'मित्यादौ समासोत्तरमपि ऋदन्तस्य सत्त्वाच्च । तत्र तु मानाभावेन कबप्रवृत्तिकल्पनानौचित्यात् , कृशब्दस्य दीर्घान्तस्य पदान्तरेण बहुव्रीहौ नपुंसकह्रस्वत्वे समासोत्तरमपि ऋदन्तस्य सत्त्वेन साहचर्याश्रयणायोगाच्चेति बहुतरमुक्तं विचार्य—भाष्यकैयटाद्यारूढमन्योक्तं मामकं वेति सूक्ष्मधियो विभावयन्तु ।

**य्वोर्ह्रस्वाविति** । सावर्ण्यं षष्ठ्यर्थः । **बाधादिति** । नदीसञ्ज्ञकेष्वेवाभ्यां बाधः कुतो न, विनिगमनाविरहादित्यत आह—**नदीग्रहणानुवृत्तेश्चेति** । ननु 'तिस्रो भार्या यस्ये'ति बहुव्रीहौ 'स्त्रियाः पुंव'दिति

**मत्यामिति** । सन्निपातपरिभाषाया अनित्यत्वाद्वा ।

**त्रिचतुरोः** । 'अष्टन आ' इत्यतो 'विभक्ता'विति वर्तते । तत्फलं त्रिभार्यः । तृतीयान्तेन समासः । भार्यो—भरणीयः ।

**अचि र** । अलोऽन्त्यपरिभाषयैव सिद्धे'ऋत' इति,—अनुवर्तमान—'तिसृचतसृ' इत्यस्य षष्ठ्यन्तत्वकल्पनाय । अन्यथा 'त्रिचतुरो'रित्यस्यैवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक् ।

### ❀ अभिनव-चन्द्रिका ❀

**अनित्यत्वादिति** । 'सोऽचि लोपे चे'त्यादिनिर्देशेन सन्धिकार्ये सन्निपातपरिभाषा न प्रवर्तत इति भावः । **एतेनेति** । अर्थकृतबहिरङ्गत्वस्य स्वीकारे तिसृणामित्यादौ स्त्रीत्वरूपार्थनिमित्तकत्वेन तिस्रादेशस्य बहिरङ्गत्वेनासिद्धत्वात्पूर्वं त्रयादेशे नुटि दीर्घे च लक्ष्ये लक्षणस्येतिन्यायेन पुनर्दीर्घाप्रवृत्त्या 'न तिसृचतसृ' इतिनिषेधवैयर्थ्येनेत्यर्थः ।

**त्रयादेश इति** । इदमुपलक्षणं—नुड्दीर्घयोरपि । **ऋकारान्तोत्तरपदत्वाभावादिति** । 'नद्यृतश्चे'त्यत्र नदीसाहचर्येणालौकिकप्रक्रियावाक्ये ऋदन्तोत्तरपदकसमास एव कप्प्रवृत्तेः, अन्तरङ्गपरिभाषयाऽन्तरङ्गे कपि कर्तव्ये विभक्तिनिमित्तकत्वेन बहिरङ्गत्वेन तिस्रादेशस्यासिद्धत्वाच्च । एतेन 'कुण्डोध्नी' त्यत्र कबापादनपरभाष्यविरोधात्समानार्थालौकिकविग्रहवाक्ये समासत्वाभावारोपणे इदं चिन्त्यमित्यपास्तम् । 'समासार्थालौकिकविग्रहवाक्ये एव च कप्प्रवर्तने' इत्युक्त्या 'बहुकुमारिके'त्यादौ

### ❀ चिद्स्थिमाला ❀

**सञ्जीति** । बहुव्रीहौ पुंवद्भावेनेष्टसिद्धिराह—**तृतीयान्तेनेति** । तिसृभिर्भार्य इति विग्रहः । अत एव स न रूढ इत्याह—**भार्य इति** । एतेनोक्तरीत्या सिद्धेदं फलं सन्दूष्य 'त्रिप्रिय' इत्यादि तद्वदन्तो दृष्ट्यादयः परास्ताः । **रादेशेनेति** । अजादिविभक्ताविति भावः । वस्तुतस्तत्रैव स्वरितत्वं, न तत्र, 'अन्यथा अचि रश्चे'त्येव वदेत् । एवञ्च योग्यतयैव तत्कल्पनसिध्या तदनुष्ठार्थमेवेति बोध्यम् । तदाह—**इति दिगिति** । एतेन तथा शास्त्र्याद्युक्तमपास्तम् । ननु रस गुणादीनामिव नुटोऽप्य-

### ❀ ज्योत्स्ना ❀

वित्यस्य य्वोर्विशेषणत्वमित्येतत्सर्वमित्यर्थः । तत्फलन्त्वतिश्रीणां ब्राह्मणानामित्यादौ नदीत्वविकल्पो भवतीत्याहुः । **त्रिभार्य इति** । तिस्रो भार्या अस्येति न समासः, समानाधिकरणलक्षणपुंवद्भावेऽप्रतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात्त एव तिसृभावानापत्तेरत आह—**तृतीयान्तेन समास इति** । भार्याशब्दस्य सञ्ज्ञाशब्दत्वेन क्रियावाचित्वाभावात् 'कर्तृकरणे कृते'ति तृतीयासमासो न प्राप्नोतीत्यत आह—**भार्या भरणीय इति** । 'ऋहलो'रिति ण्यदिति भावः । एवमपि 'भृञोऽसञ्ज्ञाया'-

### ❀ विषमपदविवृतिः ❀

पुंवद्भावे ततस्तिसृभावानापत्तेराह—**तृतीयान्तेनेति** । **भार्या भरणीय इति** । **भार्याशब्दस्य** सञ्ज्ञाशब्दत्वे क्रियावाचित्वाभावात् 'कर्तृकरणे' इति तृतीयासमासो न प्राप्नोतीत्याशङ्कापरिहाराय 'भरणीय' इत्युक्तमिति पाठकाः, तन्न, सञ्ज्ञाशब्दस्य नित्यस्त्रीलिङ्गत्वेन तत्त्वशङ्काया असम्भावितत्वात्, तस्माद्वस्तुस्थितिकथनमेतत् । यत्तु पाठकेनोक्तं—'भृञोऽसञ्ज्ञाया'मिति क्यपा भाव्यमिति चिन्त्यमिति, तन्न, 'भृञोऽसञ्ज्ञाया'मितिसूत्रे तदनुबन्धकपरिभाषया भौवादिकस्य भृञो ग्रहणेन जौहोत्यादिकात् ण्यनुबन्धकाण्ण्यता रूपसिद्धेः ।

**अचिर** । **अलोन्त्यपरिभाषयैव सिद्धे इति** । एतदारभ्य—'इति दि'गित्यन्तस्यायं भावः—'तिसृचतसृ' इत्यनयोरनुवृत्तौ अचीति सप्तमीनिर्देशेन तस्य षष्ठ्यन्तत्वकल्पना

**नुमचिरेति** । अत्राचिरांशे 'न तिसृ' इति निषेधो मूलम् ।

एतेन स्त्रीत्वरूपार्थविशेषविभक्तिसञ्ज्ञानिमित्ततिस्राद्यपेक्षया नुडन्तरङ्ग इत्यपास्तम्। अतो निषेधादेवार्थसञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणात् । अन्यथाऽऽमितिप्रत्ययविशेषापेक्षत्वेऽपि सञ्ज्ञाऽर्थविशेषानपेक्षत्वेनान्तरङ्गत्वात्त्रयादेशे तदसङ्गतिः स्पष्टैव ।

वस्तुतः—स्वरूपेणोपादाने न बहिरङ्गत्वं, किन्तु केन चिद्विशेषधर्मेणोपादाने एवेति, विशेषापेक्षस्य बहिरङ्गत्वमेव नेति च रुदधातौ निरूपयिष्यामः ।

※ अभिनव-चन्द्रिका ※

'गोस्त्रियो'रिति ह्रस्वो न । न च बहु जस् कुमारी जस् इत्यस्यां दशायां परत्वात्कपि स्त्रीप्रत्ययान्तत्वरूपप्रातिपदिकत्वाभावाद्ध्रस्वो न भवत्येवेति वाच्यं, समासान्ते जाते यदागमपरिभाषया कब्विशिष्टे स्त्रीप्रत्ययान्ततदादित्वस्य, प्रातिपदिकत्वस्य च सत्त्वेन निर्दिश्यमानपरिभाषया ह्रस्वस्य प्रवृत्तेर्दुर्वारत्वात् ।

※ चिदस्थिमाला ※

पवादत्वमेव युक्तमिति कथं तदंशे विप्रतिषेधोऽत आह—**अत्रेति** । वार्तिके इत्यर्थः । **मूलमिति** । निषेधेन तदपवादत्वाभावस्य ज्ञापनादिति भावः । **स्त्रीत्वेति** । तद्रूपार्थविशेषश्च विभक्तिसञ्ज्ञा चैतदुभयनिमित्तकेत्यर्थः । एतेनेत्यस्यार्थमाह—**अत इति** । अस्मादित्यर्थः । **अर्थेति** । अर्थसञ्ज्ञोभयकृतेत्यर्थः ।

अस्य तत्त्वमाह—**अन्यथेति** । तदाश्रयणे इत्यर्थः । 'आमी'त्यस्य 'त्रयादेशे' इत्यत्रान्वयः । सञ्ज्ञा चार्थविशेषश्चैतदुभयानपेक्षत्वेनेत्यर्थः । इदमपि विशेषापेक्षस्य बहिरङ्गत्वमभ्युपेत्योक्तम्। वस्तुतस्तद्वत्तदपि नेति सविशेषमाह—**वस्तुत इति** । तत्रादौ विशेषमाह—**आदिमे**त्यन्तेन—स्वरूपणेति [?] ।

※ ज्योत्स्ना ※

मिति क्यपा भाव्यमिति चिन्त्यमेतत्। तस्मात्-'त्र्यम्बक' इतीह प्रत्युदाहार्यम् , तिसृभिरम्ब्यते= सेव्यते इति हि तत्र विग्रहः ।

'तिस्रो देव्यो यदा चैनं भजन्ते भुवनेश्वरम् । द्यौरापः पृथिवी चैव त्र्यम्बकस्तेन स स्मृतः' इति महाभारते । अप्शब्देन द्यावापृथिव्योरन्यस्तृतीयो द्योलोकस्तैः सेव्यमान इत्यर्थः । तदेतद्भुवनेश्वरमित्यनेन व्याख्यातम् । **असङ्गतिः स्पष्टैवेति** । केचित्त्वन्तरङ्गत्वात्त्रयादेशे तत-

※ सदाशिवभट्टीयम् ※

**दिगिति**। तिसृचतस्रित्यत्र विभक्तिविपरिणामेनोभयानुवृत्त्या त्रिचतुःस्थानिकयोस्तिसृचतस्रोरादेशो भवतीत्यनेन 'ऋत' इति स्पष्टार्थमिति दिगर्थः ।

**एतेनेति** । पूर्वविप्रतिषेधकरणेनेत्यर्थः । **त्रयादेश इति** । तत्रादेशे दीर्घे तदसङ्गतिरिति भावः।

※ विषमपदविवृतिः ※

सिद्धे 'ऋत' इति व्यर्थमिति शङ्काग्रन्थार्थः । यदि 'ऋत' इति नोच्येत तदा कस्य रेफ इत्याकाङ्क्षायां पूर्वत्र क्लृप्ततया क्लृप्तस्य 'त्रिचतुरो'रित्यस्यैवानुवृत्तौ रादेशस्तिसृचतस्रोरेव बाधकः स्यादिति समाधानग्रन्थार्थः । 'त्रिचतुरो'रित्यस्यैव कार्यतया क्लृप्तस्य 'ऋत' इत्यनेन सम्बन्धेन निर्वाहे 'तिसृचतसृ' इत्यस्यानुवृत्तिः स्थानिवद्भावान्वेषणमूलकलाघवानुरोधेन । [ तिसृचतसृ इत्यस्यानुवृत्त्युक्तिः । ] विप्रतिषेधासम्भवादाह—**अत्रेति** । असम्भवमेव व्यनक्ति—**एतेनेति** ।

**नुडन्तरङ्ग इति** । आमिति शब्दस्वरूपस्य श्रोत्रेन्द्रियेणैव सुग्रहत्वात् स्त्रीत्वविभक्तित्रिचतुराद्यपेक्षत्वेन ह्रस्वाद्यनपेक्षनुडपेक्षया बहिरङ्गत्वं तिसृचतस्रोरिति भावः । विनिगमनाविरहेण सञ्ज्ञार्थकृतबहिरङ्गत्वानाश्रयणे गमकमिदमित्याह—**अर्थसञ्ज्ञाकृतेति** । **सञ्ज्ञार्थेति** । पूर्वनिपातस्या-

तृज्वत्सूत्रे भाष्ये तु "—'न तिसृ'तिज्ञापकात्त्रादेशो नुड्विषये न । पूर्वविप्रतिषेधेन तु न सिध्यति, अपवादविषये विप्रतिषेधाप्रवृत्तेः, रादेशस्य सर्वापवादत्वात्—" इत्युक्तम् ।

त्रिचतुरोर्विशेषणादिति । स्त्रीनिष्ठसङ्ख्यायां वर्तमानयोरित्यर्थ इति भावः ।

॥ चिदस्थिमाला ॥

मूलं दूषयति—तृज्वदिति । एतेन प्राग्वच्छास्त्रस्याप्युक्तमपास्तम् । अश्रुतत्वात्ताङ्गविशेषणं, किन्तु श्रुतत्वात्तयोरेवेत्याह—स्त्रीनिष्ठेति । अन्यथाऽनिष्टापत्तिरित्याह—त्रीनिति ।

॥ ज्योत्स्ना ॥

स्त्रित्वभावे 'लक्ष्ये लक्षणस्ये'ति न्यायात्त्रयादेशस्य पुनरप्रवृत्तावस्य निषेधस्यानङ्गत्वभावाज्ज्ञापकत्वाभावमाहुः । अपरे तु त्रयादेशस्य विभक्तिविशेषापेक्षत्वाद्विभक्तिसामान्यापेक्षतिसृभावमपेक्ष्य नास्त्यन्तरङ्गभाव इति प्राहुस्तन्मतं दूषयति—वस्तुत इति । निरूपयिष्याम इति । ततोऽप्यधिकं जिज्ञासुभिस्तु परिभाषेन्दुशेखरे निरूपितं द्रष्टव्यम् । परिभाषाप्रदीपार्चिषि तु—'ह्रस्वनद्याप' इति सूत्रभाष्योक्तस्य—'कास्प्रत्ययादाम्' 'हुरा' मावनेकव्यतिरेकेण षष्ठीबहुवचनग्रहणस्यानेकज्ञापकसाध्यत्वेन स्त्रीरूपार्थविशेषापेक्षतिसृभावादल्पापेक्षत्वाभावात्त्रयादेशस्य नास्त्यन्तरङ्गत्वम् , अत एव त्रयादेशं बाधित्वा परत्वात्तिसृभावे 'सकृद्गते' न्यायेन त्रयादेशाभाव इति स्थानिवत्सूत्रे भाष्यकृतः । 'अर्थकृतं बहिरङ्गत्वं नाश्रीयते' इति त्वयुक्तं—'वर्णो वर्णेने'ति सूत्रे कर्मधारयबहुव्रीह्योरन्तरङ्गबहिरङ्ग-

॥ विषमपदविवृतिः ॥

ऽनित्यत्वादित्थं निर्देशः । ननु पाठकेनोक्तम्—'अन्तरङ्गत्वात्त्रयादेशेऽपि पश्चात्तिसृभावे 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनस्त्रयादेशाप्रवृत्तौ निषेधस्य साफल्याज्ज्ञापकत्वमनुपपन्नमिति; तन्न, 'न तिसृचतसृ' इत्यन्तरङ्गे निषेधे कर्तव्येऽर्थसञ्ज्ञापेक्षस्य बहिरङ्गस्य तिस्रादेशस्यासिद्धत्वेन तिसृग्रहणवैयर्थ्यापत्त्या तत्सामर्थ्येन सामान्यतोऽर्थकृतबहिरङ्गत्वानाश्रयणबोधनमित्याशयात् । न चान्तरङ्गत्वात्त्रयादेश इत्यपवादानुपयोग इति वाच्यम्, अस्य ग्रन्थस्य परत्वात्तिस्रादेशे 'सकृद्गति'न्यायेन पुनस्त्रयादेशाप्रवृत्तिरिति भाष्याविरोधस्य सूपपादत्वाद्दूषणान्तरस्य सुवचनार्थत्वात् । न च 'स्वाम्पी'-त्यादौ 'अप्तृ'न्नित्यस्य प्रतिपदोक्तत्वेन प्रथमतः प्रवृत्तिदर्शनात्प्रकृतेऽपि आमिति विशिष्य प्रत्ययविशेषनिमित्तकत्वेनास्य प्रतिपदोक्तत्वादिति चेन्न, तिसृविधावपि स्त्रियामित्युपपादनेनार्थविशेषविशिष्टप्रकृतेरुपादानेन प्रतिपदोक्तत्वस्योभयत्र तौल्यात् । अपरं तु—त्रयादेशस्य विभक्तिविशेषापेक्षत्वाद्विभक्तिसामान्यापेक्षतिसृभावमपेक्ष्य नास्ति अन्तरङ्गभाव इति प्राहुस्तन्मतं दूषयति—वस्तुत इति । ननु 'रुद्या'दित्यादौ 'रुदादिभ्य' इति प्रकृतिविशेषापेक्षाभ्यामडीड्भ्यां धातुमात्रापेक्षस्य यासुटोऽन्तरङ्गत्वमुच्यते, एवञ्च रुदादिभ्यः स्वरूपेणैवोपादानं न विशेषधर्मेणेति चेन्न; 'सार्वधातुके' इत्युक्त्या प्रकृते धातुत्वस्यावश्यकतया धातुत्वज्ञानमपि विशेषशास्त्रप्रवृत्तावौपयिकतयाऽपेक्षितमिति सामान्यशास्त्रप्रवृत्तौपयिकधातुत्वानुसन्धानं,तद्विधधर्मानुसन्धानञ्चेति यासुटोऽन्तरङ्गत्वेऽपि प्रकृते सार्वधातुकत्ववत्सामान्यधर्मापेक्षस्य विशेषधर्मस्यानुपपादनेन वैषम्यमित्याशयात् । यत्तु 'वर्णो वर्णेने'ति सूत्रे कर्मधारयबहुव्रीह्योरन्तरङ्गबहिरङ्गभावं विचारयता भाष्यकृतैवार्थकृतबहिरङ्गत्वस्याश्रयणादयुक्तमेतदिति पाठकेनोक्तं, तदतिमौढ्यात्, 'प्रत्यङ्गवर्ती लोक' इत्यादिना 'अचः परस्मिन्नि'तिसूत्रस्थभाष्योपपादितदिशोपस्थितिकृतान्तरङ्गबहिरङ्गभावाश्रयणेन तद्भाष्यप्रवृत्तेः । अत एव स्वार्थद्रव्यादिप्रयुक्तकार्याणामन्तरङ्गबहिरङ्गभावो'ऽचः परस्मि'न्नितिसूत्रस्थं भाष्यञ्च सङ्गच्छते । सङ्ख्यायामिति । स्वप्रवृत्तिनिमित्तभूतत्रित्वचतुष्ट्वसङ्ख्यायामित्यर्थः ।

**नेहेति**। त्रिशब्दस्य पुन्नपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति भावः। **आमि त्विति**। तत्र—'आम्'—षष्ठीबहुवचनमेव, अर्थाधिकारात्, अतो न ङेरामि त्रयादेश इति बोद्ध्यम्। **प्रियतिसेति**। अङ्गविशेषणत्वेऽत्राव्याप्तिः स्यादिति भावः।

'प्रिया जस् त्रि ज'सिति स्थिते 'अन्तरङ्गानपी'तिन्यायेन विभक्तिलुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः। ततो 'नद्यृतश्चे'ति कप्तु न, समासार्थालौकिकवाक्ये ऋकारान्तोत्तरपदत्वाभावात्। 'ऋद्रुशने'त्यनङ्।

**प्रियतिसृणी इत्यादि**। अत्र नुमः परत्वात्तिस्रादेशे पुनःप्रसङ्गविज्ञानेन नुम्। 'न तिसृ'ति ज्ञापकेन सामान्यत आगमविषये रादेशो नेति ज्ञाप्यते। 'प्रत्ययोत्तरे'ति सूत्रे चेमौ भाष्ये प्रयोगौ।

---

### ॐ चिदस्थिमाला ॐ

नन्वेवं सप्तम्येकवचनस्याऽऽम्यपि त्रयादेशापत्तिरत आह—**तत्रेति**। 'त्रेस्त्रय' इत्यत्रेत्यर्थः। स्त्रीनिष्ठसङ्ख्यायां वर्तमानत्वेऽपि अङ्गस्य स्त्रियामवृत्तेराह—**अङ्गेति**। आदेशमुपपादयति—**प्रियेति**। **न्यायेनेति**—। 'तिस्रादेशात्पूर्वं'मिति शेषः। **पुनरिति**। 'समासा'दित्यादिः। पदाङ्गाधिकारे तदन्तविधेः सत्त्वादाह—**तदन्तेति**। 'त्रिशब्दान्तत्वात्प्राप्त' इति शेषः।

नन्वेवं कबापत्तिरत आह—**तत्त इति**। पूर्वपदे 'स्त्रियाः पुंव'दिति पुंवद्भावोऽपि बोध्यः। नन्वत्र नुमः परत्वात्तिस्रादेशे 'सकृद्गति'न्यायेन नुम् न स्यादत आह—**अत्रेति**। नन्वेवमपि रादेशेन तद्बाध उचितोऽत आह—**न तिसृति**। भाष्यरीत्यैवाह—**सामेति**। उभयत्र बीजं ध्वनयन्नाह—**प्रत्येति**।

### ॐ ज्योत्स्ना ॐ

भावं विचारयता भाष्यकृता तदाश्रयणात्, नापि विभक्तिसञ्ज्ञामपि तिसृभावोऽपेक्षत इति ततस्त्रयादेशोऽल्पापेक्ष इति वाच्यं, सञ्ज्ञाकृतबहिरङ्गत्वस्यान्तरङ्गशास्त्रीयनिमित्तबहिर्भूतनिमित्तक-

### ॐ सदाशिवभट्टीयम् ॐ

**उत्तरपदत्वाभावादिति**। ऋकारान्तोत्तरपदकबहुव्रीहावित्यर्थः। एतेन 'बहुमातृक'इत्यादि तदुदाहरणेषु समासान्ताऽलौकिकप्रक्रियावाक्ये बहु जस् मातृ जस् इत्यत्रैव प्रवृत्त्या तत्र भावादित्यपास्तम्। ऋकारान्तोत्तरपदत्वा

### ॐ विषमपदविवृतिः ॐ

तेन 'प्रियत्रि'रित्यादौ प्रियास्त्रयो यस्यास्सेत्यर्थकेऽजहत्स्वार्थावृत्तिके पक्षे त्रिशब्दस्य विशिष्टार्थबोधकत्वं त्रिशब्दस्याक्षतमेवेति तिस्राद्यापत्तिरिति परास्तम्। **न ङेरामिति**। सन्निपातपरिभाषयापि त्रयादेशो वारयितुं शक्य इत्यपि बोध्यम्। यणादेशे तु न सन्निपातेति प्रवर्तते इति तु मूल एव स्फुटीकृतम्। ननु प्रिया जस् इत्याद्यलौकिकविग्रहवाक्ये कुतो न तिस्रादिस्तथा चालौकिकप्रक्रियावाक्यस्य ऋदन्तप्रकृतिकसुबन्तोत्तरपदत्वादलौकिके कप् स्यादित्याशङ्क्याह—**प्रिया जस् इति**।

**अलौकिकवाक्ये इति**। अपरिनिष्ठितत्वरूपं तत्त्वन्तु नातिदेशसहस्रेणातिदेष्टुं शक्यमिति भावः। एतेन 'बहुशकत्यै' इत्यादौ कबापादनं परास्तम्। सन्निपातपरिभाषयापि कप् सुपरिहर इत्यपि बोध्यम्।

**नुमः परत्वादिति**। इदमुपलक्षणं–शौ नुमः परत्वस्यापि। तिस्रादेशे पुनर्नुमभावस्तु सकृद्गतिन्यायादिति बोध्यम्। सामान्यापेक्षत्वे प्रमाणमाह—**प्रत्यय इति**। एवञ्च रादेशस्यापवादत्वेपि न

**ड्वेरत्वे इति** । बहिरङ्गासिद्धत्वन्तु 'न यासयो'रिति निर्देशेनानित्यत्वान्न प्रवर्त्तते। **विभक्ताविति** । 'युवोरनाका'वित्यत्र भाष्ये पाठात्, ङ्याप्सूत्रे तत्परिभाषादोषेषु पाठाच्च । 'सख्यशिश्वी'ति ङीप् । 'यस्येति चे'तीकारलोपः ।

**लक्ष्मीरिति** । 'कृदिकारा'दिति ङीपि—लक्ष्मीत्यपि । स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री । स्त्यायतेर्ड्रट्, टिलोपयलोपौ, टित्वान्ङीप् । **इयङिति** । स्त्रीशब्दस्येकारान्तत्वा-दियङेवानुवर्तते इति भावः ।

**गुणनेति** । 'जसि चे'ति गुणः । 'आङो ना' 'अच्च घेः' 'ह्रस्वनद्याप' इत्येतै-रित्यर्थः । **बाध्यते इति** । 'स्त्रीशब्दस्येयङ्' इत्यनेनान्वयः । नुम्—'इकोची'ति । पूर्वकारिकोक्तैर्बाधे सति यत्फलितं तदाह—**ओस्याविति** । अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य स्त्रियाः=स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणादिभिर्बाधादिति भावः । **पुंवद्भावादिति** । 'तृतीयादिषु भाषितपुंस्क'मित्यनेनेति भावः ।

ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य सम्बन्धेन स्त्रीशब्दावयवभिन्नह्रस्ववर्णान्तमित्यर्थेन कथमत्र प्राप्तिरत आह—**अस्त्रीति** । तत्र बीजमाह—**तत्सम्बद्धस्यैवेति** । प्रसज्य-प्रतिषेधस्तु न, वाक्यभेदाद्यापत्तेः ।

## ❀ चिदस्थिमाला ❀

नन्वापि—अत्वं बहिरङ्गासिद्धमत आह—**बहिरिति** । **अनित्यत्वादिति** । एतेन सन्निपातपरिभाषाया टाप्स्यादित्यपास्तम् । लिङ्गविशिष्टस्यानित्यत्वमूलकमिदमिति ग्रन्थासाङ्गत्यायाह—**युवोरनेति** । **तदिति** । लिङ्गविशिष्टेनीत्यर्थः । प्रतिपादितमिदमादौ **भावप्रकाशे** । **लोप इति** । तथाच न पूर्वान्तवत्त्वाशङ्काऽपि । **लक्ष्मीत्यपीति** । अत एव 'लक्ष्मीर्लक्ष्मी हरिप्रिये'ति द्विरूपकोशः । ननु समस्तत्वात्कथमेकदेशानुवृत्तिरत आह—**स्त्रीति** । स तत्रैव स्वरितत्वकल्पनात् । व्यवहितत्वादाह—**स्त्रीशब्देति** । **बाधे इति** । 'परत्वा'दित्यादिः । फलितत्वमेवार्थकथनेनाह—**अजादाविति** । सम्बन्धेन=तदापत्त्या । तथा सति स्त्रीशब्दभिन्नह्रस्ववर्णान्ता-दित्यर्थे फलाभावेन सामर्थ्यादाह—**स्त्रीशब्देति** । नन्वेवमपि प्रसज्यप्रतिषेधे दोष एवात आह—

## ❀ ज्योत्स्ना ❀

सञ्ज्ञासद्भाव एव धर्मिग्राहकमानसिद्धत्वादित्यादि निरूपितं तत एवावधारणीयम् । **अनित्यत्वादिति** । 'नाजानन्तर्य' इत्यस्याः परिभाषायाः अनाश्रयणादेवमुक्तम्, अनित्यत्वमूलिकैव 'नाजानन्तर्य' परिभाषेत्यपि वदन्ति । **भाष्ये पाठादिति** । ज्ञापकमप्यस्याः—'ङ्याप्प्रातिपदि'कादिति सूत्रे लिङ्गविशिष्ट-परिभाषाया अनित्यत्वफलक—ङ्याप्ग्रहणमेवेत्येके । 'शक्तिलाङ्गले'ति वार्तिके घटग्रहणेन सिद्धे घटीग्रहणाल्लिङ्गविशिष्टपरिभाषाया अनित्यत्वकल्पनमिह ज्ञापकमित्यपरे । विस्तरस्तु परिभाषा-प्रदीपार्चिषि द्रष्टव्यः । **टिलोपयलोपाविति** । डित्वसामर्थ्यादभस्यापि टेर्लोपः । 'लोपो व्यो'रिति च यलोपः । टिलोपस्य स्थानिवद्भावस्तु न भवति, यलोपे निषेधादिति बोध्यम् । **इत्यर्थेनेति** ।

## ❀ विषमपदविवृतिः ❀

दोष इति भावः । **न यासयोरिति** । पररूपस्यापि 'क्ङिति चे'ति सूत्रस्थभाष्यप्रतिपादिते औयत इत्यादि-लक्ष्यसिद्ध्युपपादकेऽसिद्ध इव पररूपस्याप्यसिद्धत्वमिति भावः । ननु स्त्रीभिन्नावयवे इत्यर्थेऽस्त्रीति निषेधस्यातिस्त्रिशब्दे कथन्निषेधे प्रवृत्तिसम्भावनेत्यत आह—**नन्विति** । 'ह्रस्ववर्णान्त'मिति पाठः । पञ्चम्यन्तपाठस्तु लेखकप्रमादात् । पाठकास्तु—स्त्रीशब्दस्य तदवयवे लक्षणायां मानाभावात्स्त्रीभिन्ना-वयवावित्येवार्थः, एवञ्च परमस्त्र्यादिशब्देषु निषेधो नैव प्रवर्तते इत्याहुः । नन्वस्त्रीत्यस्य प्रसज्य-प्रतिषेधत्वे इयङुवङ्स्थानाविति तत्सम्बन्धत्वमेव नेत्याह—**प्रसज्येति** । पाठकस्तु—ननु प्रसज्यप्रतिषेधे-

नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह—**दीर्घस्याय-मिति**। तत्र ह्रस्वपदाभावादिति भावः। श्रयन्त्येनामिति श्रीः। 'क्विब्वची'त्यादिना वागित्यत्रेव कर्मणि क्विब्दीर्घो। अङ्यन्तत्वान्न सुलोपः।

**नेयङु**। ङद्वयोच्चारणं स्पष्टार्थम्। स्थानशब्दो–भावल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। सा च बाधकाविषये एव, तेन प्रकृष्टा धीः प्रधीः,–प्रध्यै इत्यादौ न निषेधः। सा चोपलक्षणं–व्याख्यानात्, तेन 'हे श्री'रित्यादौ निषेधसिद्धिः; 'श्रिया'वित्यादौ तत्स्थितिसत्त्वात्। यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङादिस्थितिः

ॐ चिद्‌स्थिमाला ॐ

**प्रसज्येति**। आदिनाऽसमर्थसमासः। तत्र=पूर्ववाक्ये। अर्थान्तरायाह—**वागिति**। **कर्मणीति**। योग्यतया क्विपा अन्वेति। आवश्यकयथाश्रुतमूलयोजने सम्भवति फलितपरतया योजनं **शाखिदण्ड्या**दि-कृतमयुक्तमिति सूचयन्नाह—**स्थानेति**। 'अस्त्री'ति पर्युदासलभ्यमाह—**सा चेति**। **व्याख्येति**। 'नेयङुवङोरस्त्री'त्येव तत्सम्बन्धिनावीदूतावित्यर्थेन स्थान्यादेशसम्बन्धस्यान्तरङ्गत्वेन लाभे सिद्धे स्थान-ग्रहणात्तथाऽतद्गुणसंविज्ञानबहुव्रीहिरित्यर्थः। अत्रेयङुवङ्भ्यामङ्गाक्षेपादाह—**यत्रेति**। यच्छब्द विषयेइत्यर्थः।

ॐ ज्योत्स्ना ॐ

'अस्त्री'त्यत्र स्त्रीशब्दे तदवयवे लक्षणामपेक्ष्य तदन्तविधिना स्त्रीशब्दान्तभिन्नह्रस्वेवर्णान्तादित्यर्थे प्राप्तेरसम्भवेऽपि विशेष्याभावात्तदन्तविधेरयोगादेवमुक्तम्। नन्वस्त्रीति प्रसज्यप्रतिषेधे स्त्रीशब्दस्य ङिति विकल्पो नेत्यर्थे ङित्प्रत्ययाक्षिप्ताङ्गस्य विशेष्यसद्भावात्तदन्तस्यापि निषेधः प्राप्नोतीत्यत आह-**प्रतिषेधस्तु नेति**। **वाक्यभेदाद्यापत्तेरिति**। आदिनाऽसमर्थसमासापत्तिपरिग्रहः। पर्युदासपक्षे तु 'स्त्री'त्यस्य नञैकार्थीभावापन्नस्याङ्गाक्षेपे सत्यप्यन्वयो दुर्लभ इति बोध्यम्। एवन्तु स्त्रीशब्दे लक्षणासहितपर्युदासाल्लाघवाच्छुद्धपर्युदासेऽप्यतिस्त्रिशब्दे ह्रस्वप्रयुक्तनदीत्वविकल्पः सिद्धः, सम्बन्धानुवृत्तेरुक्तिरभ्युपगम्य फलाभावप्रदर्शनपरेति बृहच्छब्देन्दुशेखरोक्तव्याख्यैव ज्यायसी।

नच बहुव्रिविशिष्टे 'बहुस्त्री' 'सुन्दरस्त्री'त्यादौ च समुदायस्य स्त्रीरूपत्वाभावादस्त्रीति निषेधाप्रवृत्तौ दीर्घवाक्यान्नदीत्वविकल्पः स्यादिति वाच्यम्, इष्टापत्तेः, लक्षणारूपगौरवग्रस्तत्वेन प्रमाणान्तराभावाच्च पक्षान्तरपरिग्रहस्य शिथिलत्वादित्याहुः। अस्त्रीत्यस्येयङुवङ्स्थानावित्येतत्सम्बद्धस्यानुवृत्तावप्यतिस्त्रि-शब्दस्येयङ्स्थानत्वान्निषेधप्राप्तिमाशङ्कते—**नन्विति**। **तत्रेति**। इयङुवङ्स्थानावित्येतद्घटितवाक्ये इत्यर्थः। **स्पष्टार्थमिति**। इकारयकारोकारवकाराणि स्थानं ययोरित्यर्थे ह्रस्वेकारोकारयकारवकारस्थानि-नोरीदूतोः सञ्ज्ञावारणस्य ङद्वयोच्चारणे स्पष्टत्वादिति भावः। **इति बहुव्रीहिरिति**। व्यधिकरणपदो

ॐ सदाशिवभट्टीयम् ॐ

सूत्रान्तरसामर्थ्येन पूर्वोक्तार्थाङ्गीकारात्। **नेयङुवङ्स्थाना**। **बाधकाविषय इति**। इदञ्च स्वरूपकथनं नत्वपूर्वं, यण उवङोऽपवादत्वात्तस्यैव प्रवृत्तेः। **तयोरिति**। अत्र स्थानि-नोऽधिकरणत्वविवक्षया सप्तमी। **व्याख्यानादिति**। सूत्रारम्भसामर्थ्यादित्यर्थः। **हे श्रीरित्या-**

ॐ विषमपदविवृतिः ॐ

ङिदाक्षिप्ताङ्गेन स्त्रीशब्दस्य सम्बन्धात्तदन्तविधौ अतिस्त्रीत्यादावपि निषेधः स्यादित्यपि मूलाशयः सम्भवतीत्याह—**श्रयन्त्येनामिति**। इदमार्थिकार्थकथनं, विग्रहस्तु श्रीयते इत्येव। **कर्मणीति**। इदं क्रियान्वयि। **बाधकाविषयेति**। स्थितिशब्दस्वारस्यादिति भावः। **अङ्गेति**। नदीसञ्ज्ञाप्रयुक्त-कार्यप्रवृत्तिप्रयोजक-विभक्तिनिमित्तकलब्धाङ्गसञ्ज्ञक-समानानुपूर्वीकावयवत्वप्रयोज्यबाधकाबाधित–

क्वचित् दृष्टा-तस्य, तदवयवस्य च निषेध इति फलितम् ।

अत एव—प्रकृष्टा धीर्यस्याः, यस्य वा—'प्रधी'रित्यत्रावयवधीशब्दस्य नदीत्वं भवत्येव । तदुक्तं भाष्ये"—'अवयवस्त्रीविषयत्वात्सिद्ध'मिति चेत्—इयङुवङ्स्थानप्रतिषेधे यण्स्थानयोरपि य्वोः प्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात्—आध्यै—प्रध्यै, 'सिद्धं त्वङ्गरूपग्रहणात्' यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणं, न चैतयाङ्गस्येयङुवङौ भवतः-" इति । **श्रियै इति** । 'ङिति ह्रस्वश्चे'ति विकल्पः ।

**वामि** । 'आमी'तिच्छेदः । **प्रधीशब्दस्येति** । प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः । **वृत्तिकारादीनामिति** । **अयम्भावः**—भाष्ये 'आध्यै' 'प्रध्यै' इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य—'यत्र नदीकार्याश्रयेऽङ्गे'-इत्युक्तरीत्या समाहितम्।-तत्र न बहुव्रीहिः कबापत्तेः, किन्तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत् । तत्र कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या

❀ अभिनव-चन्द्रिका ❀

**फलितमिति** । न च 'प्रधी'रित्यादौ धीरूपेऽङ्गे इयङसिद्धेः क्वचिद्दृष्टत्वेन पुनरपि दोषस्तदवस्थ एवेति वाच्यम्, अजादिविभक्तिपरत्वप्रकारकसम्भावनाप्रयोज्या यस्मिन्नङ्गे इयङुवङ्प्रवृत्तिसम्भावनातस्य तदवयवस्य च नदीसञ्ज्ञा न भवतीत्यर्थेनादोषात् । यदङ्गावयवयोर्नदीसञ्ज्ञानिषेधश्चिकीर्षितस्तदुत्तरप्रत्ययेऽजादित्वं सम्भाव्य यस्मिन्नङ्गे इयङुवङौ सम्भाव्येते तस्य तदवयवस्य च नदीसञ्ज्ञा नेति फलितम् । एतेन भेकवाचकपुनर्भूशब्दादाचारक्विबन्तादजादिति पि [अधातुत्विप्रत्यये ?] सुप्परकत्वाभावेन 'अभ्यस्तस्य चे'त्यस्य अप्राप्तावुवङ्स्थितिदर्शनेन पुनर्भूशब्दे 'नेयङुव'ङितिनिषेधः स्यादित्यपास्तम् ।

**कैयटोक्तनित्यस्त्रीत्वेति** । 'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व' 'स्वावच्छिन्नविशेष्यता निरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व'-'स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वै'-तत्रितयसम्बन्धेन-प्रवृत्तिनिमित्तविशिष्टा या शक्ति-'स्वपर्याप्त्यधिकरणत्व'-'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वै'तदुभयसम्बन्धेन-तादृशप्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वेत्यर्थः ।

❀ चिदस्थिमाला ❀

क्वचित्=प्रयोगे । अत एव=ईदृशार्थाङ्गीकारादेव । एवन्तस्य फलमुक्त्वा तत्र मानमाह—**तदुक्तमिति** । 'यूस्त्र्याख्या'विति सूत्रे इत्यर्थः । 'प्रथमलिङ्गे'त्यस्य प्रत्याख्यानम्—'अवयवे'ति । 'प्रतिषेधे' इत्यस्य—'दोष' इति शेषः । तमेवाह—**यणिति** । द्वितीयैकवचने नदीकार्याभावादमीति तच्छेद इत्याह—**आमीति** ।

❀ ज्योत्स्ना ❀

बहुव्रीहिरित्यर्थः । अत एव 'मुग्धमार्कण्डेयशिशुश्रिये'ति मुक्तकश्लोके—'मुग्धो मार्कण्डेयो यस्मिंस्तस्य शिशोः श्रीर्यस्या'दिति व्यधिकरणपदो बहुव्रीहिः 'नेयङुवङ्स्थानावस्त्री'तिवदिति हेमाद्रिणा व्याख्यातम् । स्थानशब्दोऽधिकरणसाधनः, इयङुवङोः स्थानाविति षष्ठीसमासश्चेत्यपि वदन्ति ।

❀ सदाशिवभट्टीयम् ❀

**दाविति** । इयङुवङोः क्वापि स्थित्यभावात् । **नदीकार्याश्रयेऽङ्गे इति** । 'सुधी'त्यत्र सु सु धी-सु इति स्थिते समासान्त्यालौकिकप्रक्रियावाक्ये प्रवृत्त्या तत्र सुबन्ते नदीकार्याश्रयेऽङ्गे इयङुवङोः स्थितिः क्वापि न दृष्टा इति-तत्र निषेधाभावे 'यूस्त्र्याख्या'वित्यनेन नदीसञ्ज्ञायां कप् स्यात् । किञ्च नैकत्र गृहे काकदर्शने अन्यत्र गृहे 'काकवन्तो देवदत्तस्य गृहा' इति भवतीत्युपलक्षणताऽप्यशक्येति चिन्त्यमेतत् । तस्माद्यदर्थकयादृशधर्मावच्छिन्ने इयङुवङोः स्थितिर्दृष्टा तदर्थकतद्रूपावच्छिन्नस्येत्यादिशब्दार्थौ वक्तुं युक्त इत्यलम् ।

❀ विषमदविवृतिः ❀

प्रवृत्तिके इयङुवङ्स्थानभूताविति तु निष्कर्षः । तेन प्रधीशब्दघटकधीशब्दस्याङ्गत्वसत्त्वेपि न कश्चिद्दोषः । एतेन प्रधीति समासार्थालौकिकविग्रहवाक्ये नदीसञ्ज्ञाभावेनोपपादयिष्यमाणः कबभावो

भाष्यासङ्गतिः । अतः 'स्त्रीविषयावेव यौ यू नित्य'मित्यत्र भाष्ये-एवकारो भिन्नक्रमः, नित्यमेव यौ स्त्रीविषयावित्यर्थः । 'नित्यमेवे'त्यस्य-पदान्तरं विनापीत्यर्थः । खलपूकटप्रूग्रामणीत्यादीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः ।-पुंसः खल्वयमुचितो धर्मः, शक्तत्वाद्भयरहितत्वाच्च ।—अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम् । ध्यानादि तु स्त्रीपुंससाधारणमिति ।

अत्रारुचिबीजन्तु—सूत्रभाष्याद्यक्षरैरीदृशानित्यस्त्रीत्वालाभः, भाष्योदाहरणे बहुव्रीहिरेव । कन्तु न, ऋकारसाहचर्येण यस्य वृत्तेः प्राङ्नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः । धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वानिषेधात् । गतिपूर्वकत्वाद्यणपि सुलभः ।

"–'आध्यै' इति चिन्त्यमेतत्, क्रियाशब्दत्वेन नित्यस्त्रीत्वाभावात्'–"इति कैयटस्तु चिन्त्य एवेति दिक् ।

---

❀ अभिनव-चन्द्रिका ❀

**नित्यस्त्रीत्वाभावादिति** । निरुक्तनित्यस्त्रीत्वाभावादित्यर्थः ।

❀ चिदस्थिमाला ❀

अर्थान्तरे वक्ष्यमाणत्वादाह–**प्रकृष्टमिति** । एतेन 'बहुव्रीहिरय'मिति **शास्त्र्याद्युक्तमपास्तम्** । **इयङिति** । 'अवयवस्ये'त्यादिः । **कबिति** ।—नद्यृतश्चेति । तत्र=तथार्थके । पुंसः=पुंस एव हि । इतिः–भावसमाप्तौ । **सूत्रेति** । 'यथाश्रुते'इत्यादिः । तदुक्तदोषमुद्धरति—**भाष्योदेति** । यथाङ्गलाभस्तथा प्रागुक्तम् । किञ्च ग्रामनयनादि तद्धर्मो न ध्यानादिकमित्यत्र दृढतरमानाभावः । एतेन तथा **शाखिदण्ड्याद्युक्तमपास्तम्** । तदाह—**इति दिगिति** । अत्र मते पुंसि नदीत्वाभाव एवेति विशेषायाह—**स्त्रियामितीति** ।

❀ ज्योत्स्ना ❀

**ऋकारसाहचर्येणेति** । त्रियतिसेत्याद्यर्थमृकारांशे वृत्तेः प्राक्त्वस्यावश्यकतया तत्साहचर्यान्नयंशेऽपि तथात्वमिति भावः । **कैयटस्तु चिन्त्य एवेति** । नत्वशुद्ध इत्यर्थः । प्राचीनोक्तभाष्यदूषणमनूद्य-

❀ विषमपदविवृतिः ❀

व्याख्यात इति दिक् ।

'अमी'तिच्छेदभ्रमनिरासायाह—**आमीति** । **भिन्नक्रम इति** । सूत्राक्षरात्तल्लाभप्रकारस्तु इत्थम्—आख्यापदस्य रूढ्यर्थबोधजनकत्वपरत्वेन मण्डपादिपदानां रूढानां पदसमभिव्याहारविशेष एव यौगिकार्थबोधजनकत्वात्तेन चायमर्थ उपलक्ष्यते इति भावः । **मुख्येति** । पदान्तरासन्निधानाधीनेत्यर्थः । **स्त्रीपुंसेति** । समासान्ताजन्तः । **नित्यस्त्रीत्वलाभ इति** । स्वरसत इति भावः । इदमुपलक्षणं-'प्रथमलिङ्गग्रहणञ्चे'त्यस्य लुबन्त–'खरकुट्यै' इति भाष्योपन्यस्तफलस्य । अन्यथा तस्य पदान्तरसममिव्याहारं विना स्त्रियां वर्तमानत्वेन सूत्रेणैव सिद्ध्या तदसङ्गतिः । सम्भावितनदीत्ववत्प्रकृतिकसुबन्तोत्तरपदकादित्यर्थभ्रमं निराकर्तुमाह—**ऋकारसाहचर्येणेति** । 'प्रियतिसृणी'इति भाष्यादृकारांशे सम्भावितत्वानिवेशेन तेन सह द्वन्द्वनिर्दिष्टत्वात् । 'आध्यै' इति भाष्योदाहरणात्तत्त्वनिर्णय इति भावः । एतेन–'अलौकिकप्रक्रियावाक्ये तत्प्रवृत्तेः प्रागुपपादितत्वेन साहचर्याश्रयणं विफल'मित्यपास्तम् । 'आध्यै'इत्यारभ्य–'इती'त्यन्तः कैयटग्रन्थः । न्यूनतां परिहरति–**ईदृश इति** । **उक्तरीत्येति**। 'यत्र नदीकार्याश्रय'इत्युक्तरीत्येत्यर्थः । **विशिष्टस्यापीति** । 'न भूसुधियो'रिति यण्निषेधादित्यर्थः। **समुदायस्येति**। 'ह्रस्वौ चेयङुवङ्स्थानौ चे'ति वार्तिकादिति भावः। पूर्वं 'सुष्ठु धीर्यस्याः सा' 'सुष्ठु ध्यायती'ति विग्रहद्वयस्य उपक्रान्तत्वात्—

**लक्ष्मीवदिति** । 'स्त्रिया'मिति शेषः । **पुंवद्रूपमिति** । उक्तविग्रहे नित्यस्त्रीत्वाऽभावात्पुंसीव स्त्रियामप्यनदीत्वादिति भावः । **प्रकृष्टा धीरिति विग्रहे इति** । ईदृशपदघटितविग्रहे इत्यर्थः । तेन कर्मधारये बहुव्रीहौ च सर्वलिङ्गेऽपि मतद्वयेऽपि लक्ष्मीवत् । 'प्रथमलिङ्गग्रहणञ्चे'त्यवयवधीशब्दस्य नदीत्वात् । 'नेयङि'ति निषेधस्योक्तरीत्या प्राप्त्यभावादिति भावः । **विशेष इति** । लक्ष्मीशब्दाऽपेक्षयेत्यर्थः ।

**श्रीवदिति** । 'स्त्रिया'मिति शेषः । विशिष्टस्यापीयङ्स्थानत्वेन ङिदामोर्विकल्पस्य, अन्यत्र निषेधस्य च प्राप्तेरिति भावः । पुंसि त्वीदृशबहुव्रीहावपि न नदीत्वं, 'नेय'-ङित्यवयवस्य निषेधात्, समुदायस्याऽप्राप्तेश्च । **पुंवदिति** । 'सुष्ठु ध्यायतीति विग्रहे' इति शेषः । तस्य नित्यस्त्रीत्वाऽभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः ।

**इति विग्रहे त्विति** । ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ, कर्मधारये चेत्यर्थः । तत्र—बहुव्रीहाववयवस्य 'नेय'ङिति निषेधः, ङिति तु समुदायस्य विकल्प इति बोध्यम् ।

**स्त्रियाञ्च** । अत्र'असम्बुद्धौ सर्वनामस्थाने' इति न सम्बध्यते, आरम्भसामर्थ्यात् । **ऋन्नेभ्य इति** । तदन्तशब्दानां बहुत्वाद्बहुवचनम् । प्रातिपदिकविशेषणत्वात्तदन्त-विधिः । 'स्त्रिया'मिति चाधिकारः ।

**कासि हे सुभ्रु इति** । रावणेन सीताऽपहारोत्तरं रामविलापोयम् । विधिना-

ॐ चिद्स्थिमाला ॐ

**अनदीत्वादिति** । एवञ्चोभयत्र तुल्यं रूपमिति भावः । 'गतिसमासोऽय'मिति शास्त्र्याद्युक्तेरसाङ्गत्यायाह—**ईदृशेति** । तेन=तथा व्याख्यानेन । तत्रापि सर्वलङ्गहायाह—**सर्वेति** । **मतेति** । वृत्तिकैयटमतेनेत्यर्थः । उक्तरीत्या='यस्याङ्गस्येयुवा'विति भाष्योक्तरीत्या । अवान्तरविशेष इत्यर्थाऽभ्रमायाह—**लक्ष्मीति** । प्राग्वदाह—**स्त्रियामिति** । अपिना अवयवसमुच्चयः । शेषसूचितविशेषमाह—**पुंसि त्विति** । अपिना द्वितीयसमुच्चयः । विग्रहद्वयस्य प्रक्रान्तत्वादाह—**सुष्ठ्विति** । अत एव आद्ये मतान्तरे अनुक्तत्वादाह—**ईदृशेति** । मूले बहुव्रीहिरित्याह—**विग्रहके इति** । प्राग्वदत्र नेत्याह—**स्त्रीलिङ्गेति** । तथैवोक्तत्वादिति भावः । मतद्वयेऽपीति बोध्यम् । तत्र=तयोर्मध्ये । अन्यत्र मूलकृदायुक्तयसाङ्गत्यायाह—**तदन्तेति** ।

ॐ ज्योत्स्ना ॐ

कैयटेन चिन्त्यतामात्रोक्तेरशुद्धत्वानुक्तेरुक्तस्य चिन्त्यतोक्तप्रायत्वात् । **इति शेष इति** । **पुंसि** समुदायस्येवावयवस्यापि स्त्रीवृत्तित्वाभावात् । **उक्तरीत्येति** । 'सिद्धं त्वङ्गरूपग्रहणा'दिति भाष्योक्तरीत्येत्यर्थः । **समुदायस्याप्राप्तेश्चेति** । स्त्रियां वृत्तित्वाभावादिति भावः । **तदन्तशब्दानामिति** । ऋदन्तनान्तशब्दानामित्यर्थः। 'ऋन्नाभ्या'मिति द्विवचननिर्देशे मात्रागौरवञ्चेत्यपि बोध्यम् । 'ऋन्नान्थो'विति समाहारद्वन्द्वनिर्देशे लाघवमिति तु न, ऋदन्तान्नकारान्तादिवाऽवर्णान्तादपि

ॐ सदाशिवभट्टीयम् ॐ

**सीतापहारेति** । अत्र कृद्योगे षष्ठीसमासस्य निषेधात् 'सीताया अपहारे'ति वक्तुं युक्तम्। **विधिनेति**। विधिना त्वया हापितः त्याजितः किं कुर्वे, 'हे सुभ्रु त्वं कासी'त्येवं स बहु विललापे'ति योजना, न तु त्याजितः

ॐ विषमपदविवृतिः ॐ

प्राथमिकविग्रहे च 'ह्रस्वौ चे'त्युक्तवार्तिकेन नदीत्वविकल्पात्पुंवदित्यस्यासङ्गत्यापत्त्याह—**इति विशेष इति** । **समुदायस्य चेति** । समुदायस्य बहुव्रीहित्वान्नित्यस्त्रीत्वाभावात्तदंशेऽप्राप्तिलक्षणो बाध इति

त्वया हापितस्त्याजितः सः—'हे सुभ्रु ! क्वासि' इत्येवं बहु विललापेत्यर्थः। 'नेय'ङित्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः। **प्रमाद इति**। विरहपीडितत्वेनाऽनवधानलक्षणोऽत्र प्रमादः। स च विरहपोषकत्वात्काव्ये गुणः।

**एकाजुत्तर**। एकोऽज्यस्मिन्, तादृशमुत्तरपदं यस्येति—सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः। 'उत्तरपदे' इत्यनेनास्य वाक्यस्य समासपदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्य इत्याह—**तस्मिन्समासे इति**। **आरम्भेति**। 'प्रातिपदिकान्ते'त्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः। **पुनरिति**। णग्रहणेऽनुवर्त्तमाने इत्यर्थः। **यणमिति**। 'दृन्करे'ति यणमित्यर्थः।

**भेकजाताविति**। 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलि'रित्यमरादस्य बाह्वादित्वेन वा ङीपिति भावः।

अन्ये त्वस्य गौरादिपाठान्नित्यमेव ङीप्। 'भेक्यां पुनर्नवायां स्त्री'ति यादवस्य

---

**ॐ चिदस्थिमाला ॐ**

सः=लक्ष्मणः। मनोरमादिग्रन्थासाङ्गत्यायाह—**विरहेति**। दण्ड्याद्युक्ताक्षेपादेरसाङ्गत्याय सिद्धान्तमतेनाह—**उत्तरेति**। **सिद्धे इति**। एवञ्च वाऽननुवृत्तिः सिद्धेति भावः। पुनस्त्वोपपत्तये आह—**ग्रहणे इति**। 'न भूसुधियो'रिति निषेधात्सूत्राऽप्राप्तेराह—**हनिति**।

ननु तत्र तदभावेति स्त्रियां ङ्यन्तप्रयोगौचित्यमिति कथं वर्षाभूरित्युदाहृतमत आह—**शिलीति**। यादवानुरोधेनाह—**बाह्वादीति**। मूलादि दूषयति—**अन्येत्विति**। अमरानुरोधादाह—**नित्यमेवेति**।

**ॐ ज्योत्स्ना ॐ**

ङीबापत्तिसन्देहात्। तत्राऽदन्ताट्टापा बाधनेप्याकारान्तान्ङीपि दोष इत्यन्यत्र विस्तरः। **काव्ये गुण इति**। यथात्वत्र नदीसञ्ज्ञानिषेधो न प्रवर्तते तथोक्तमचि श्नुधात्वित्यत्र। **बाह्वादित्वेनेति**। 'बाह्वादिभ्यश्चे'त्यत्रोत इति तु नानुवर्तते, पद्धत्यवन्त्यादीनामिकारान्तानां गणे पाठात्। गणे तु

**ॐ सदाशिवभट्टीयम् ॐ**

स इति, त्वयेत्यस्यानन्वयापत्तेः। भावप्रकाशे तु–विधिना त्वया हापितः त्याजितः स लक्ष्मणः 'हे सुभ्रु ! त्वं क्वासी'त्येवं बहु विललापेत्यर्थः–इत्युक्तम्। तत्र लक्ष्मणस्य विलापे कर्तृत्वेन नान्वयः,'रामविलापोऽय'मिति स्वपरग्रन्थविरोधात्। किन्त्वयमप्येको विलापप्रकार इति बोध्यम्। परन्तु तच्छब्देन लक्ष्मणपरामर्शो दुर्लभः, तस्याप्रकान्तत्वाद्, राम इत्यस्यैव विलापे कर्तृत्वेनान्वयित्वस्यैव स्वरसतः प्रतीतेश्च। परन्त्वयमर्थो न प्रकरणस्यानुगुणो, नापि तत्पदव्याख्यायाः, तथाहि षष्ठसर्गे एकादशं भट्टिपद्यम्—

आःकष्टं बत ही चित्रं हूँ मातर्दैवतानि धिक्। हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः॥

शोकेनाक्रान्तमनाः विकल्पन्नाह—**आ इति**। पीडायाम्–'आः'। पितृवियोगात्पीडितः–'आ' इत्याह। अस्मद्वियोगमात्रात्पिता प्राणांस्त्यक्तवानित्याह—**कष्टं**—कृच्छ्रमिति। भर्तृमरणादस्मद्वियोगाच्च मातुः काऽवस्थेत्यभिप्रायेणाह—**बतेति**। बतशब्दः खेदे। सौमित्रिरपि सीतया शप्त इति विस्मितः—'ही'त्याह। ही विस्मये। यदि नाम सीतया मूढतयापि शप्तः, तथापि सौमित्रिणा विदुषा सतापि कथं तादृशशापो दत्त इत्यभिप्रायेणाह—**चित्रमिति**। चित्रमाश्चर्यं, यदेवंविधमनर्थजातन्तत्कैकयीप्रभवमिति क्रुध्यन् 'हूं मात' इत्याह। हूंशब्दः क्रोधे। अथवा सर्व्वमेवेदं दैवतविचेष्टितमिति नच तेषु ममाऽनुचितमित्यभिप्रायेण—**धिग् दैवतानीत्याह**। धिक् कुत्सायाम्। प्राणांस्त्यक्तवन्तमपि पितरं न पुनरहं द्रक्ष्यामीत्यभिप्रायेणाह—**हा पितः क्व द्रष्टव्योऽसि**। हा! शोके। हे सुभ्रु सीते! क्वासी'त्यादि तद्व्याख्यानञ्चेति बोध्यम्। **समुदायस्य चेति**। इदञ्च पदान्तरं विनापि स्त्रियां

**ॐ विषमपदविवृतिः ॐ**

निषेध इति बोध्यम्। **विरहपोषकत्वादिति**। एवञ्च विशिष्टधर्मबुद्ध्याऽसाधुशब्दोच्चारणे एवानिष्टोत्पत्त्या विरहपोषकत्वतात्पर्येण तदुच्चारणे न दोषः। वाक्यैकदेशन्यायेनाह—**समासपदघटकेति**।

'सुतः पुत्रः स्त्रियान्त्वमी, आहुर्दुहितरं निनिवीनिष्कङन्तत्वेऽप्युपपत्तेरित्याहुः । 'गौरादित्यादिकल्पनं मानमात्रादमरे 'वर्षाभूः कमठी दुलि'रित्येव पाठः—इति सुबोधिनीकार' इति माधवः'—तदनुसारेण मूलं बोध्यम् ।

**टाप्ङीपौ न स्त इति**। 'स्त्रियां यन्प्राप्नोति तन्ने'तिव्याख्यानादिति भावः। स्वस्रादिषु मातृशब्दस्य ननान्द्रादिसाहचर्यात्प्रसिद्धत्वाच्च सम्बन्धिकजननीवाचकस्यैव ग्रहणम्।

'सन्निपातपरिभाषयैव तिसृचतस्रोर्ङीबभावे सिद्धे तदनित्यत्वज्ञापनार्थन्तयोर्ग्रहण'मिति केचित्।'स्वस्रादिषु तिसृचतस्रोः पाठोऽनार्ष'इति कृन्मेजन्तसूत्रस्थभाष्यस्वरसः ।

**※ इत्यजन्ताः स्त्रीलिङ्गाः ※**

**❀ अभिनव-चन्द्रिका ❀**

**स्त्रियां यन्प्राप्नोतीति** । 'न षट्स्वस्रादिभ्यः' इत्यत्र 'टाबृचि' इत्यतष्टापः, 'ऋन्नेभ्यः' इत्यतो ङीपश्चानुवृत्त्योभयनिषेधेन 'डाबुभाभ्या'मित्यत्र 'न षट्स्वस्रादिभ्यः' इत्यनुवृत्त्या डापो निषेधश्चेति भावः । **प्रसिद्धत्वाच्चेति** । अवयवशक्तिग्रहानधीनशक्तिग्रहाधीनोपस्थितिविषयार्थे एव तात्पर्यकल्पनं युक्तमित्येतन्मूलिकया–'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी'ति परिभाषयेति भावः।

**❀ इत्यजन्तस्त्रीलिङ्गाः ❀**

**❀ चिदस्थिमाला ❀**

नन्वेवं वर्षाभूरिति बाह्वस्य वा गतिरत आह—**भेक्यामिति** । अन्येत्वित्यादिमूलेनामरुचिं ध्वनयन्मूलाशयमाह—**गौरेति** । आदिना बाह्वादित्वम् । नन्व 'नन्तरस्ये'ति न्यायेन ङीप एव निषेध उचित इति कथमुभयनिषेधोऽत आह–**स्त्रियामिति**। 'अभिव्यक्ते'ति न्यायेनाह–**प्रसिद्धत्वाच्चेति** । केचित्= कौस्तुभकारादयः । कैयटादिसकलग्रन्थाऽनाङ्गत्वादाह—**स्वस्रादिष्विति** । ❀इत्यजन्ताः स्त्रीलिङ्गाः❀

**❀ ज्योत्स्ना ❀**

वर्षाभूशब्दस्य पाठो नोपलभ्यते इति चिन्त्यमेतत् । अमरग्रन्थप्रामाण्यात्पाठभ्रंशकल्पनमपेक्ष्य तु 'भुवश्चे'त्यनेन ङीषः कल्पनं लघु। 'छन्दसी'त्यस्यानुवृत्तेस्तत्र सत्त्वेऽपि 'छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्ते' इति न्यायाश्रयणात्प्रयोगसिद्धेर्निष्प्रत्यूहलादित्याहुः ॥ ❀ इत्यजन्ताः स्त्रीलिङ्गाः ❀

**❀ सदाशिवभट्टीयम् ❀**

वर्त्तमानत्वं नित्यस्त्रीत्वमिति वृत्तिकारमतमनुसृत्योक्तम् । कैयटमते तु शोभने भ्रुवौ यस्या इति बहुव्रीहिः, शोभनं भ्रमतीति तत्पुरुषस्य वा नित्यस्त्रीत्वाभावान्नदीत्वप्राप्तिरेव नेति बोध्यम् । **भावप्रकाशे तु**—जयमङ्गलादौ भ्रुशब्दादप्राणिजातेश्चेत्यूङि तदन्तेन समासे उपसर्जनह्रस्वे कृतेऽपि स्वभावान्मनुष्यजातिवचनत्वेन पुनरूङुत इत्यूङि पूर्व्वान्तवत्त्वेन प्रातिपदिकत्वे सति सम्बुद्धौ ह्रस्वत्वम् , ऊङभावे तु दीर्घत्वमित्युक्तम् । 'ऊङुत गतादीना'मिति व्युत्पादितस्य क्रियाशब्दत्वाज्जातिवाचकत्वाभावे नोङ् सम्भवति, अव्युत्पन्नस्य ऊङ्प्रत्ययान्तस्य वा शुद्धरूढस्य प्राण्यङ्गवाचकस्य तु जातिवाचकत्वादूङ् भवति । तथा च धातुत्वाभावादुवङभावे सवर्णदीर्घे भ्रू इति । भ्रूग्रहणेन तु नोवङ्, तत्र धातुसाहचर्य्येण तस्यापि धातुसम्बन्धकस्यैव ग्रहणात् । अत एव कैयटे तत्प्रत्याख्यानम्। कप् तु न, समासान्तविधेरनित्यत्वात् । क्विबन्तप्राण्यङ्गयोगरूढिस्वीकारादमरे 'भ्रुवौ स्त्रिया'मिति प्राण्यङ्गे उवङप्युपपन्नः, तत्राप्यूङ् तु न, अजातिपर्य्युदासेन शुद्धरूढेभ्य एव तदुत्पत्तेरिति । ❀ इत्यजन्ताः स्त्रीलिङ्गाः ❀

**❀ विषमपदविवृतिः ❀**

एतन्न्याये बीजं कारके स्फुटीभविष्यति । व्यवहितस्यापि निषेधमाह–**स्त्रियां यदिति** । **भाष्येति** । तत्र हि सन्निपातपरिभाषाफलत्वेन तिसृ इत्यादौ टाबभाव उक्त इति स्वस्रादिषु पाठोऽप्रामाणिक इति तत्त्वमिति सिद्धम् । ❀ इत्यजन्ताः स्त्रीलिङ्गाः ❀

---

१ एवञ्च तदनुसारेण 'वर्षाभ्वश्चे'त्यत्रान्यथा कल्पयन्तः **पर्वतीया** मान्या एव । 'सुद्व्युपास्य' इत्यत्रत्यमनोरमोक्तिरपि न तेषामनुगुणेति स्पष्टं तद्विदाम् ।

# अजन्तनपुंसकलिङ्गप्रकरणम् ।

**अतोऽम्** । 'अत' इत्येतत्—अधिकृतस्याङ्गस्य विशेषणम् । 'स्वमोर्नपुंसका'दिति चानुवर्तते । अम्-लुग्बाधको 'येन नाप्राप्ते' इति न्यायात् ।

'अम्' इतिच्छेदो न तु 'म्-इति, 'ज्ञान'मित्यादौ 'सुपि चे'ति दीर्घापत्तेः । सन्निपातपरिभाषया दीर्घवारणे तु 'हेज्ञाने'त्यादौ सम्बुद्धिलोपस्यानापत्तिः । मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्यलोपेन विनाशात् ।

अत एव 'एङ्ह्रस्वा'दिति सूत्रे 'ज्ञाने'त्यादौ मलोपाय, 'कतर'दित्यादौ लोपाभावाय चाङ्गाक्षेप-व्यधिकरणान्वय-हल्पदानुवृत्तय आस्थिता भाष्ये, न तु 'म्'-इतिच्छेद उक्तः—इत्यलं भाष्यविरुद्धकल्पनयेति दिक् ।

---

❀ अभिनव-चन्द्रिका ❀

**येन नाप्राप्त इति न्यायादिति** । 'स्वमोर्नपुंसका'दित्येतदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टकृतेचारितार्थ्याभावविशिष्ट—स्वमोर्नपुंसकादित्येतत्प्रवृत्तिसम्भावनाप्रयोज्याऽतोऽमितिशास्त्रवैयर्थ्यसम्भावनारूपबाधबीजस्य 'अतोऽमि'त्यत्र सत्त्वादित्यर्थः ।

एतन्न्यायविषये च 'अतोऽमि'त्येतत्प्रवृत्तियोग्यातिरिक्तत्वेन 'अतोऽमि'तिशास्त्रविधेयघटितातिरिक्तत्वेन च 'स्वमोर्नपुंसका'दित्यत्र सङ्कोचो भवतीत्यतोऽमित्येतत्प्रवृत्तेः प्राक् तत्प्रवृत्त्यनन्तरं च 'ज्ञान'मित्यादौ 'स्वमोर्नपुंसका'दिति लुङ् न भवतीति बोध्यम् ।

**न तु मितीति** । अजहितकेवलहलादेशस्यास्मिञ्छास्त्रेऽदर्शनादिति भावः । **वारणे त्विति** । वस्तुतस्तु 'मुञ्जनी'इत्यादौ नुम्प्रवृत्तये सन्निपातपरिभाषाया अनित्यत्वस्यावश्यकत्वेऽपि 'मुञ्ज'इत्यादौ

❀ चिदस्थिमाला ❀

'अतोऽङ्गा'दिति उपपादयति—**अत इति** । सिद्धान्तमाह—**अमीति** । अत एव=वैषम्ये बीजाभावेन तदापत्तेरेव । एतेन तथा मनोरमादि सकलग्रन्था निरस्तास्तदाह—**इति दिगिति** ।

❀ ज्योत्स्ना ❀

**इति दिगिति** । दिगर्थस्त्वे'ङ्ह्रस्वात्सम्बुद्धे'रितिसूत्रे हल्ग्रहणानुवृत्त्यभावे कुण्डशब्दात्सम्बुद्धावमादेशे 'आदेः परस्ये'त्यकारलोपापत्तौ 'सुपि चे'तिदीर्घे 'हे कुण्डा'मिति प्राप्नोतीति भाष्योक्तिर्मिति

❀ विषमपदविवृतिः ❀

**अतोम्**। 'अङ्गस्ये'ति पञ्चम्या विपरिणम्यते इति भावः। 'दीर्घवारणे'त्विति तुनाऽरुचिर्बोधिता। तद्बीजन्तु—'आने मु'गिति सूत्रे भाष्ये मुडिति न्यासे 'पचमान' इत्यादौ 'अतो दीर्घो यञी'ति दीर्घापत्तिर्भाष्ये दत्ता । तथा 'एङ्ह्रस्वा'दिति सूत्रे भाष्ये हल्ग्रहणानुवृत्त्यभावे कुण्डशब्दात्सम्बुद्धौ अमादेशे 'आदेः परस्ये'त्यकारलोपे 'सुपि चे'ति दीर्घे 'कुण्डा'मिति प्राप्नोतीत्युक्तम् । एतद्भाष्यद्वयप्रामाण्यात्सामान्यतो दीर्घविषये सन्निपातपरिभाषानाश्रयणस्य स्वीकर्तव्यत्वात् । अत एव 'सर्वेषा'मित्यादौ 'बहुवचने झल्ये'दित्येत्त्वसिद्धिः । अत एव 'रामाये'त्यादौ 'सुपि चे'ति दीर्घसिद्धिः ।

न चैवं निकुचिते उपधात्वं निमित्तीकृत्य जायमानमकित्त्वं गुणस्य निमित्तं स्यादेवेति गुणापत्तिः, कित्प्रत्ययं निमित्तीकृत्य प्रवृत्तस्य नलोपस्य तद्विघातकाऽकित्त्वनिमित्तस्यायोगादेव दोषवारणात् ।

न च 'बहुवचने झली'ति सूत्रे झल्ग्रहणाद्धलि सर्वेषामिति निर्देशात्कष्टायेति निर्देशाच्च विशिष्य तत्र तत्राप्रवृत्तिः कल्प्यते इति वाच्यम्, प्रतिलक्ष्यमप्रवृत्तिकल्पनापेक्षया लाघवेन सामान्यत एव तत्कल्पनौचित्यमित्याशयात् । 'श्नान्नलोप' इति सूत्रस्थभाष्यन्तु 'सुपि चे'त्यपेक्षया नित्यत्वात्पूर्वं लोपः स्यादित्यभिप्रायकमिति न तद्विरोध इति दिक् । **मनिमित्तेति** । इदं चिन्त्यं—सन्निपात-

'जसः शी' 'औङ आपः' इत्याभ्यां 'शी' 'औङ' इति चानुवर्त्तते तदाह—**क्लीबादित्यादि** ।

**यस्येति च**। इश्च अश्च यं, तस्येत्यर्थो—व्याख्यानात्। भस्येत्यधिकारः, तेन 'नस्तद्धिते' इत्यतः 'तद्धित'इत्यनुकृष्यते, तदाह—**भस्येत्यादि** । भस्येति किं? गार्ग्यम् ।

**औङः श्यामिति** । इत एव निर्देशादस्य नित्यस्त्रीत्वं बोध्यम् । 'औङ' इति स्वरूपकथनं, 'सर्वे' इत्यस्य भाऽधिकारेण सिद्धेः ।

❀ अभिनव-चन्द्रिका ❀

'ह्रस्वस्य पिती'ति तुगागम्या—'ह्रस्वो नपुंसके' इत्यत्र 'सन्निपातपरिभाषाप्रयोज्यः सङ्कोचो नास्ती'ति समान्ध्नो वक्तुमशक्यत्वेन–सङ्कुचितसङ्कोचस्यैव यथाऽवदमङ्गीकरणीयत्वं, तथैव–'अतोऽ'मित्यत्रापि—'गुणात्सम्बुद्धे'रित्येव वक्तव्ये 'एङ्ह्रस्वा'दिति करणेन 'कष्टाये'त्यादिनिर्देशेन च सन्निपातपरिभाषाया अनित्यत्वस्यावश्यकत्वेऽपि–'अतोऽ'मित्येतच्छास्त्रीयाभ्यनुज्ञावाक्ये 'स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिम—'देङ्ह्रस्वा'दित्येतदतिरिक्त–स्वोपजीव्यविघातका-ऽतिरिक्तेन शास्त्रेण यस्य साधुत्वं बोध्येत तदपि साधु'–इत्येवं सङ्कुचितसङ्कोचस्यावश्यं वक्तव्यतया–मितिच्छेदेऽपि 'ज्ञान'-मित्यादौ 'सुपि चे'ति दीर्घो न प्राप्नोति, तस्य 'एङ्ह्रस्वा'दित्येतदतिरिक्त–स्वोपजीव्यविघातकत्वात्परिभाषाप्रवृत्त्या तद्वारणात् ।

एवञ्च सन्निपातपरिभाषया दीर्घवारणेऽपि 'हे ज्ञाने'त्यादौ सम्बुद्धिलोपानापत्तेरसत्त्वादिदमयुक्तम् , अतएव तुना अरुचिः सूचितेति बोध्यमित्याहुः ।

अन्ये तु–'सुपि चे'त्यत्र सन्निपातविघातकशास्त्रे एव 'कष्टाये'तिनिर्देशेन, एवं–'गुणात्सम्बुद्धे'-रित्येव वक्तव्ये एङ्ह्रस्वग्रहणेन 'एङ्ह्रस्वा'दित्यत्र च—''ङ्ये' इत्येनदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवति,''—''अतोऽमित्येनदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् लोपो भवति''—इति च सङ्कोचेन–'ज्ञान'मित्यादौ सन्निपातपरिभाषया न दीर्घः, सन्निपातविघातके 'सुपि चे'त्यत्र 'अतोऽ'मित्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घ' इत्येवं सङ्कोचस्याभावात् । नापि 'हेज्ञान'इत्यादौ सन्निपातपरिभाषया सम्बुद्धिलोपानापत्तिः, 'एङ्ह्रस्वा'दित्यत्र 'अतोऽमित्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् लोपो भवती'ति सङ्कोचेन 'अतो'मितिलोपे सन्निपातपरिभाषाया अप्रवृत्तेः। तदतिरिक्तत्वेनैव सङ्कोचात् । तथाच' मितिच्छेदे न कोऽपि दोषः, न वैङ्ह्रस्वादित्यत्राज्ञाक्षेपवैयधिकरण्यान्वयादिक्लेश-लेश इति प्राहुः ।

❀ चिद्स्थिमाला ❀

यस्य न ग्रहणं, 'सूर्यति ष्ये'ति सूत्रे पुनर्यग्रहणात्तदाह—**व्याख्यानादिति** । मनोरमादिसकलग्रन्थासाङ्गत्यायाह—**इत एवेति** । गौरादित्वान्ङीषिति भावः । वार्तिके आह—**औङ् इति** । **इतीत्यस्य**

❀ विषमपदविवृतिः ❀

परिभाषाया उपजीव्यविरोधस्यान्यायमूलकत्वेनाऽतोऽमिति मादेशोपजीव्यस्यादन्तसन्निपातस्याविनाशेन प्रकृतपरिभाषाया अप्रवृत्तेः । प्रकृतिप्रत्ययसन्निपातं प्रतियोगिणमादाय प्रकृतपरिभाषासञ्चारस्तु न, तस्य 'शैव' इत्यादि साधारण्येन 'अङ्गसञ्ज्ञा तद्धनिमित्तं स्या'दिति भाष्यैकदेश्युक्तित्वस्य वक्ष्यमाणत्वात् । भवतीत्यादावबादीनामप्यनापत्तौ 'दोषाः खल्वपी'तिकल्पेने'ति भाष्यासङ्गत्यापत्तेश्च । **व्याख्यानादिति** । 'सूर्यतिष्ये'ति सूत्रे यग्रहणादिति तु नोक्तम् , अन्ततो दीर्घशङ्कावारणाय व्याख्यानस्यावश्याश्रयणीयत्वेनेति भावः । **नित्यस्त्रीत्वमिति** । विभक्तिमपेक्ष्य स्त्रीलिङ्गनिर्देश इत्यसङ्गतम् , नदीत्वानापत्तेरिति । 'गौरादित्वान्ङी'षिति तु हेयमेव, गौरादित्वे मानाभावात्। वस्तुतस्तु 'जसः शी'ति निर्देशानुपपत्त्या गौरादित्वमेव न्याय्यमिति कैयटः ।

**जश्शसोः** । शस्–अत्र सुबेव, व्याख्यानात् ।

**नपुंसकस्य** । 'इदितो नु'मित्यतो 'नु'मिति, 'सर्वनामस्थाने' इति चानुवर्त्तते, 'अङ्गस्ये'ति च प्रकृतं, तच्च झलच्भ्यां विशेष्यते । 'नपुंसकस्ये'ति गृह्यमाणस्याभावादङ्गस्यैव विशेषणम्, 'अस्थिदधी'त्यादौ तु गृह्यमाणस्यैव, प्रकरणाच्छ्रुतेर्बलवत्त्वात् । अत एव 'त्रिचतुरो'रित्यत्र 'स्त्रिया'मिति तयोरेव विशेषणमित्याकरः ।

**उपधादीर्घ इति** । 'सर्वनामस्थाने चासबुद्धा'वित्यनेनेति भावः । **शेषमिति** । –कर्मणि घञ् । 'घञबपः पुंसी'ति प्रायोवादः ।

---

❀ **अभिनव-चन्द्रिका** ❀

**व्याख्यानादिति** । जस्साहचर्यादिति भावः । **बलवत्त्वादिति** । 'श्रुतानुमितयोः श्रुतसम्बन्धो

❀ **चिदस्थिमाला** ❀

भार्यी'ति पाठः । सिद्धेः=व्यावृत्तिसिद्धेः । धर्मिग्राहकमानेन येनानुबन्धेन सानुबन्धत्वे तदनुच्चारणे एव 'निरनुबन्धके'तिप्रवृत्त्या प्रकृतेऽप्राप्त्या साहचर्याश्रयणमित्याह–**व्याख्यानादिति** । अत एवैकश इति प्रयोगसङ्गतिः, तत्र 'तानी'त्युपक्रमान्नपुंसकैकशब्दाच्छस् । झलन्तस्येत्याद्यर्थोपायमाह—**इदित इति** । **सर्वेति** । 'उगिदचामित्यतः'इत्यादिः । हेतुसूचितमत्रैव प्रसङ्गादाह–**अस्थीति** । अत एव=ततस्तस्याः प्राबल्यादेव । भावेऽर्थासङ्गतेराह–**कर्मणीति** । नन्वेवं लिङ्गानुशासनविरोधोऽत आह–**वनेति** । लिङ्गस्य लोकाश्रयत्वात् ।

❀ **ज्योत्स्ना** ❀

च्छेदेऽपि तुल्यन्यायाद्दीर्घे सन्निपातपरिभाषाया अप्रवृत्तिरभ्युपगन्तव्येति । **प्रायोवाद इति** । अत एव-

❀ **विषमपदविवृतिः** ❀

**व्याख्यानादिति** । साहचर्याश्रयणेपि सुप्त्वेनैव तत्त्वमित्यत्र व्याख्यानमेव शरणमिति भावः । **प्रकरणाच्छ्रुतेरिति**। ननु कथमेतत्त्रिचतुरोरित्यादौ द्वयोरपि विशेष्यविशेषणयोः सूत्रोपात्तत्वेनोपस्थितत्वमूलकस्य 'प्रकरणाच्छ्रुते'रिति न्यायस्यावतारेपि, नपुंसकस्य प्रकृतेऽनुवर्तमानतया तन्न्यायाऽविषयत्वात्पूर्वसूत्रे नपुंसकस्येत्यस्याङ्गसम्बन्धित्वेन तस्यैव विशेषणत्वौचित्याच्च । किञ्च झलचोरपि श्रुतत्वान्नपुंसकस्येत्यनेनैव सम्बन्धापत्तावङ्गस्येति झलज्भ्यां विशेष्यत इति पूर्वग्रन्थासङ्गतिः। किञ्च नपुंसकस्येत्यस्याङ्गविशेषणत्वेन तदन्तविध्यापत्तावतिज्ञानानित्यादौ नुमापत्तिरिति चेन्न, भावानवबोधात् । तथाहि–अनुवृत्तौ तज्जातीयपदान्तरानुसन्धानत्वेनानुमन्धीयमानस्य नपुंसकपदस्य सूत्रे श्रूयमाणाऽस्थ्यादिभिरेवान्वयस्य 'प्रकरणाच्छ्रुते'रिति वाचनिक्यैव परिभाषा स्वीक्रियत इति । एतेन प्राधान्यादङ्गविशेषणं स्यादित्यपास्तम् । वाचनिक्याऽनया तद्बाधात् । किञ्च न्यायसिद्धत्वेऽपि तत्त्वार्थनिर्णयदशायां स्वान्वयितयेतराकाङ्क्षापेक्षणेन नपुंसकस्येत्याद्यन्वयवेलायामस्थ्याद्युपस्थितेरावश्यकत्वेन प्राकरणिकाङ्गानुसन्धानात्पूर्वमेव नियमेनास्थ्यादीनामुपस्थित्या तेनैवान्वयस्यौचित्यात् । नपुंसकानुवृत्तिरागमहत्वेनेति विहितक्यन्ते 'दधिने'त्यादावनङाद्यप्रवृत्तये । आध्यकारेण(?) सिद्धये सपूर्वग्रहणेन प्रत्ययविधौ प्रतिषेध इति न ज्ञाप्यते, किन्तु येनविधिरित्यस्यानित्यत्वं ज्ञाप्यते इति बोधनमात्रेण प्रकृतेऽङ्गविशेषणत्वेऽपि न क्षतिरित्याशयेन तथा करणात् । 'वा शा'विति वक्तव्ये 'वा नपुंसकस्ये'ति न्यासेन श्रुतस्यानुसन्धीयमानस्य वा विशेष्यविशेषणत्वान्यतररूपेण श्रुतेनैव सम्बन्धस्य ज्ञापनाच्च । तेनैवैवंविधे विषये श्रुतसम्बन्धत्यागबोधनाच्च । अन्यथा 'आच्छीनद्यो'रिति सूत्रेऽपि तथापत्तौ नपुंसग्रहणवैयर्थ्यंतादवस्थ्यं स्यात् । 'तच्च झलज्भ्यां विशेष्यते' इति ग्रन्थस्तु न्यायप्रवृत्तौ विशेषाभावेन तदनादरेण प्रवृत्त इत्यदोषः । **इति प्रायोवाद इति** । अत 'एव पुमः खय्यम्परे' इति सूत्रे 'सम्बन्धमनु-

**अद्ड्** । ड्डुति पाठः । तस्य ह्रस्वं, ह्रस्व संयोगान्तलोपश्चाऽऽदेशस्वरूपभङ्गभिया न कृत इति कैयटः । 'पञ्चभ्य' इति—अधिकव्यवच्छेदाय, अस्य सर्वाद्यन्तर्गणत्वात् । **परे तु** 'डतरादिभ्य' इति विरुद्धविभक्तिकपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति 'डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयो'रित्यर्थ इति सर्वादिसूत्रे भाष्ये स्पष्टम् । एवञ्च 'परमकतरं कुल'मित्यादौ नाद्ड् ।

यत्तु कैयटेनार्थद्वारकं विधानमाश्रयितव्यं, तेन 'परमकतर'दित्युक्तम्, तन्न; तस्य यदि डतराद्यर्थगतसङ्ख्याभिधायिनि इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसम्भवः; यदि षष्ठ्यर्थे पञ्चमी, तदा 'विरुद्धविभक्तित्वा'दितिभाष्यासङ्गतिः, विधानस्य सर्वथा-

ॐ अभिनव-चन्द्रिका ॐ

वलीया'निति परिभाषयेति भावः । **कैयट इति** । अत्राहुर्विबीजन्तु—हलनुबन्धात्प्रागचोऽननुपस्यानुबन्धस्य वा सर्वत्र दर्शनेन प्रकृतेऽपि उकारानुबन्धसहितोऽदुडित्येव पाठः सम्यगिति ।

**डतरादिभ्यो विहितयोरिति** । 'डतरप्रत्ययान्ततदादि–डतमप्रत्ययान्ततदादि–अन्य–अन्यतर–इतरे'त्येतभ्यो विहितयोः स्वमोः,—अङ्गाभिन्नानि यानि डतरान्ततदादि—डतमान्ततदादि–अन्य–अन्यतर–इतरे'त्येतानि, तेभ्यः परयोः स्वमोर्वा,–अद्डित्यर्थ इति भावः । एतादृशार्थकरणस्य फलमाह–**परमकतरं कुलमिति** ।

ॐ चिद्स्थिमाला ॐ

अत एव सम्बन्धमनुवर्तिष्यते' इति भाष्यप्रयोगसङ्गतिः, भावघञ्विषयत्वेनेदमिति तु न, 'मांसम्भक्षोऽस्ये'ति 'कर्मण्यण्'सूत्रस्थभाष्यप्रयोगात् । 'सूत्रे दस्य ष्टुत्वेन ड' इत्युक्तेर साङ्गत्यायाह—**द्ड्डेति** । प्राचीनग्रन्थासाङ्गत्याय सिद्धान्तमाह—**परेत्विति** । **तस्येति**—कैयटस्येत्यर्थः । **'यत' इत्यादिः** । इत्यर्थः=

ॐ ज्योत्स्ना ॐ

'सम्बन्धमनुवर्तिष्यते'इति भाष्यमुपादाय 'सम्बध्यते इति सम्बन्धः, कर्मणि घञ्, सम्बद्धमित्यर्थ

ॐ विषमपदविवृतिः ॐ

वर्तिष्यते'इति भाष्यमुपादाय 'सम्बन्ध'मिति कर्मणि घञ्, प्रथमान्तमिति कैयटेनोक्तम् । 'घञ्जप' इत्यस्य भावघञ्विषयकत्वन्तु न युक्तम्, 'कर्मण्य'णिति सूत्रे मांसं भक्षोऽस्येति भाष्यविरोधात् ।

**सरूपभङ्गायेति** । अस्याशय उक्तः–'त्रश्चे'ति सूत्रे ।

सर्वादिषु अन्यड्तरात्प्राक् पठित्वा 'अद्ड्न्यादिभ्य पञ्चभ्य' इत्येव सूत्रयितुमुचितम् । **नाद्ड्इति** । अत्र वदन्ति "—अङ्गस्येति षष्ठी, डतरादिभ्य इति पञ्चमी, तत्राशक्यं विरुद्धविक्तिकत्वाड्तरादिभ्य इत्यनेनाङ्गस्येति विशेषयितुं, तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययः, डतरादिभ्यो यो विहितः–"इति–भाष्यस्यायमर्थः, 'डतरादिभ्य' इति ल्यब्लोपे पञ्चमी, अर्थपरश्चायं निर्देशो लक्षणया । एतदर्थमेव बहुवचननिर्देशः, तथा च डतरार्थमाश्रित्य विहितयोः स्वमोरिति पर्यवसितम् । एवमेव षड्भ्यो लुगित्यत्रापि । न च 'कतरघन'-मित्यादावतिप्रसङ्गः, प्रत्यासत्त्योपस्थितडतरादिभ्यः परयोरेव विधानात् । न च लुप्तकबन्ते कतरशब्देऽतिप्रसङ्गः, तत्र कनुत्पत्तौ दृढतरमानाभावादुत्पत्तौ वास्येष्टत्वे बाधकाभावात् । न च कतर इवान्य इति विग्रहे कतरान्यशब्देऽतिप्रसङ्गः, व्याघ्रादित्वे मानाभावात्, तत्त्वे वा यादृशडतराद्यन्यतमार्थमाश्रित्य स्वमौ विहितौ ततः परत्वस्य विवक्षितत्वात् । न चोक्तानेकविधक्लेशाश्रये मानाभावः,

ऽनाश्रयणेनाऽर्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतिश्च ।

न चैतदर्थे उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यं, तत्प्रत्याख्यानायैवै-तद्भाष्यप्रवृत्तेः । परमकतरादिव्यावृत्तयेऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादि-व्यावृत्तौ स व्यर्थ इति तदाशयः। 'त्यदादीनामः' इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणम् । 'अस्थिदधि' इत्यादावङ्गं तथा तद्विशेषणं, व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः ।

---

### ❀ अभिनव-चन्द्रिका ❀

**इत्याहुरिति ।** परे तु–'सञ्ज्ञोपसर्जनीभूतानां प्रतिषेध' इति प्रतिषेधकवार्त्तिकारम्भकल्पे यथा 'सर्वस्मै' 'परमसर्वस्मै' 'अतिसर्वाय' 'कतरत्' 'अतिकतर'मित्यादिरूपाणि भवन्ति, तथा तत्प्रत्या-ख्यानकल्पेऽपि तथैव रूपाणि यथा भवेयुस्तथा वक्तव्यम् । त्वद्रीत्या'ऽङ्गाधिकारे यदुच्यते' इति प्रत्याख्यानकल्पे तु–'सर्वादीनी'त्यत्र यदि तदन्तविधिरस्ति तदा–'अतिसर्वात्' 'अतिसर्वाय' 'अतितत्' 'अतिकतर'मित्यादौ दोषो दुरुद्धरः स्यात् । यदि च तत्र तदन्तविधिर्नास्ति–तदा 'परमसर्वे'–'परमसर्वस्मै' 'परमसर्वस्मात्' 'परमसर्वेषां' 'परमसर्वस्मिन्' 'परमकतरत्' 'परमसः' 'परमसर्वत्रे'त्यादिरूपाणि न सिध्यन्तीति—'गृह्यमाणविभक्ते'रित्यस्य–गृह्यमाणार्थगतसङ्ख्याभिधायि-विभक्तौ परतः कार्याणि भवन्तीत्यस्य,–गृह्यमाणार्थगतसङ्ख्याभिधायिविभक्तेः कार्याणि भवन्तीत्यस्य चोपलक्षणतया निरुक्तभाष्यस्याऽवश्यं व्याख्येयत्वेन—'परमकतर'मित्येव भवति, न तु 'परमकतर-दिति शेखरकृतामुक्तिः साहसमात्रमेव ।

### ❀ चिदस्थिमाला ❀

सूत्रस्याभिमतः । **पञ्चमीति ।** 'इति तथा तदर्थोऽभिमत' इति शेषः । **तद्ग्रन्थेति ।** कैयटग्रन्थेत्यर्थः ।

भाष्यार्थे शङ्कते—**न चेति** । एतदर्थं=कैयटाभिमतार्थलाभार्थम् । अन्यथा प्राप्तेरेवाभावेन तदानर्थक्यं स्पष्टमेव । **एतदिति** । प्रक्रान्तसर्वादिसूत्रभाष्येत्यर्थः । सः=उपसर्जनप्रतिषेधारम्भः । **तदिति ।** सर्वादिसूत्रभाष्येत्यर्थः । प्रसङ्गादाह—**त्यदेति** । अतो विशेषमाह—**अस्थीति** । तथा=अर्थद्वारकं विभक्तिविशेषणम् । वैलक्षण्ये बीजमाह—**व्याख्यानादिति** । लक्ष्यानुरोधादित्यर्थः । प्रत्यासत्तेराह—

### ❀ ज्योत्स्ना ❀

—इति कैयटेन व्याख्यातम् । **विधानस्य सर्वथानाश्रयणेनेति ।** 'डतराद्यर्थसम्बन्धिनीत्युक्तेर्या विहिते'त्येवंविधानस्यानाश्रयणादित्यर्थः। वस्तुतस्तु–डतरादिभ्यो या विहितेत्यस्य डतराद्यर्थाद्या विहिते-त्यर्थः । अर्थाद्विधानञ्च शब्दद्वारकम् । अर्थात्परत्वाश्रयणे तु तथाभूतार्थबोधकादतिकतरमित्यादाव-वयवात्परत्वाद्दोषः स्यादतो विहितविशेषणमिति कैयटोपाध्यायानामाशयः । **इति तदाशय इति ।**

### ❀ सदाशिवभट्टीयम् ❀

**अद्ड्डतरादिभ्यइति ।** **एतद्भाष्यप्रवृत्तेरिति ।** एवञ्चेयत्रारम्भप्रत्याख्यानयोः फलभेदे सूत्राऽन-भिधानं किमर्थं क्रियते, फलान्तरसूचनायैव तद्भाष्यप्रवृत्तेरित्यस्य वक्तुं शक्यत्वात् । वस्तुतः 'कर्तॄ' 'धर्तॄ'-त्यादौ सुनिमित्ताऽनङि सन्निपातपरिभाषाविरोधात्सुलोपो न स्यादिति तदर्थं विभक्तित्वेऽपि तदनित्यत्वं ज्ञापनीयमेवात्रापि विभक्तिलोपे तदनित्यत्वान्न दोष इति चिन्त्यमेतत् । **विहितविशेषणेति** । यदि तु प्राचीनमते षडर्थगतसङ्ख्याभिधायित्वरूपम्विहितत्वमित्युच्यते तदा तेषामपि विरोधः ।

### ❀ विषमपदविवृतिः ❀

आरम्भप्रत्याख्यानस्यैव मानत्वात् । नव्यमते च उपसर्जनप्रतिषेधारम्भे परमकतरदिष्यते,

डित्त्वफलमाह—

**टेः** । 'ति विंशतेर्डिती'ति वर्त्तते, 'भस्ये'ति चाधिकृतम् । **पञ्चम इति** । डतो मटि भत्वाभाव इति भावः । **अन्यतमस्येति** । डतरादिष्वपाठादिति भावः । **एकतरमिति** । 'एकाच्च प्राचा'मिति डतरच् । एकतमस्य त्वेकतरादिष्वेव ।

**परत्वादिति** । 'नुमचिरे'ति शेषः ।—शब्दान्तरप्राप्त्या, झलन्ताजन्तलक्षणभेदाच्च नुमनित्य इति भावः । केचित्तु शिलान्तरस्याजन्तत्वमिति ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः । अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम् ।

**सान्तमहतः** । 'सान्ते'ति लुप्तषष्ठीकं पृथक्पदं—'संयोगस्ये'त्यनेन समानाधिकरणम् । 'नोपधायाः' 'सर्वनामस्थाने चासंबुद्धा'वित्यनुवर्त्तते, तदाह-**सान्तसंयोगस्येत्यादि**। उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणं, पारिभाषिकार्थस्येहासम्भवात । 'सर्वनामस्थाने' इति

---

### ❀ अभिनव-चन्द्रिका ❀

**'अद्ड्डतरादिभ्यः'**—इत्यस्य-'डतरान्ततदादि-डतमान्ततदादि-अन्य-अन्यतर-इतर'-त्वेनदर्थगतसञ्ज्ञाभिधायिनौ-यौ एतदव्यवहितोत्तरौ च-स्वमौ तयोरद्डित्यर्थः । एवं 'सप्तम्यात्र'-त्यादेः सर्वनामार्थगतसञ्ज्ञाभिधायिनी या सप्तमी-सर्वनामोत्तरा च-तदन्ततदादेस्त्रलादिर्भवतीति-'अतिकतरम्' 'अतिमर्वे' इत्यादौ कुत्रापि प्रत्याख्यानकल्पे न दोष इति प्राहुः। **निर्जरशब्दे उक्तमिति** । अत्र यद्वक्तव्यं तदस्माभिस्तत्रैवोक्तमिति बोध्यम् ।

### ❀ चिदस्थिमाला ❀

**नुमेति** । अपिना जरस् । प्रत्यासत्त्यनाश्रयणेनाह-**केचित्त्विति** । उभयमप्यसङ्गतमित्याह-**अत्रेति** ।**सान्तेति** । 'से'ति 'अन्ते'ति च उभयम्। महदंशेऽदोषादाह—**सान्तेति** । तस्याङ्गांशे उत्थिताकाङ्क्षत्वादाह-**यद्वेति** । परिभाषावश्यकत्वमन्यत्र स्पष्टम्। एतेन तथा मिश्राद्युक्तमपास्तम् ।ननु पृषोदरादिगणपठितवचनेनैव तत्सिद्धिरत

### ❀ ज्योत्स्ना ❀

वस्तुतस्त्वेवं सत्युपसर्जनप्रतिषेधारम्भ-वार्तिक-तत्प्रत्याख्यानयोः फलभेदप्रसङ्गः । विहिते तस्मादित्युत्तरस्येत्येतत्कृतसंस्कारानभ्युपगमो, विहितपदाध्याहारश्चेति गौरवं मत्वा वार्त्तिककृतोपसर्जनप्रतिषेधफलत्वेनातिकरमित्येतदुक्त्यस्तमतस्तन्मते तस्मादित्युत्तरस्यैतत्कृतसंस्काराद'ज्ञसञ्ज्ञानिमित्तयोर्डतरादिभ्यः परयोः स्वमोरद'डिति सूत्रार्थव्यवस्थापनात्परमकतरदित्येवेष्यते । नहि विरुद्धविभक्तिनिर्देशे सर्वत्र

### ❀ सदाशिवभट्टीयम् ❀

**सान्तमहतः** । **संयोगविशेषणमिति** । नन्वेवं हंसावित्यत्रैकादेशे जाते हंम् इति सान्तसंयोगस्य सर्वनामस्थान-औ-परकत्वाद्दीर्घः स्यात् , अन्तवत्त्वेनाकारान्तत्वन्तु न, ताद्रूप्यानतिदेशात्, सर्व्वनामस्थानपरकं सान्तसंयोगान्तं यदङ्गमित्यर्थेन सान्तत्वाभावाच्च भवतीति ।

### ❀ विषमपदविवृतिः ❀

प्रत्याख्याने तु नेति-फलभेदः स्पष्ट एव । किञ्च नव्यमते सञ्ज्ञोसर्जनप्रतिषेधप्रत्याख्यानावसरे-'परमकतर'मिति न सिध्यति,-इति वार्तिककृतं प्रति भाष्यकृता न्यूनतोद्भावनीया स्यादिति । **भत्वाभाव इति** । ननु यथोद्देशे डटि जातस्यानिवृत्तिरिति चेन्न; आकडारस्थेषु कार्यैक्यतारूपकार्यकालस्याऽभावेपि कार्यप्रवृत्तिकाले एव प्रवृत्तिकलरूपकार्यकालत्वस्वीकारस्य प्रागुपपादितत्वात्। प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन पूर्वपक्षस्वारस्यादाह—**यद्वेति** । नन्वन्त्यवर्णतद्वर्णयोरितराव्यवधाने एवेति

सान्तसंयोगस्य विशेषणम् । अत एव 'हंसशिरांसी'त्यादौ न दोषः । यद्वा 'अन्त्यविकारे ऽन्त्यसदेशस्ये'ति न दोषः ।

**मांस्पचन्या इति** । मांसस्य पचनीत्यर्थः । 'मांसस्य पचियुड्घञो'रित्यप्येतत्सिद्धार्थानुवाद एव । 'शब्दत्वेन च सादृश्यं, 'न लुमते'त्यस्य च नित्यत्व'मित्यभिमानः ।

**वृत्ताविति** । भाष्यस्वरसस्त्वननुवृत्ताविति भावः । **मासश्छन्दसीति** । मासस्तकारः स्याद्भादौ प्रत्यये छन्दसीत्यर्थः । 'माद्भिः शरद्भिर्दुरोदरं तवे'त्युदाहरणम् ।

**ह्रस्वो नपुंसके** । क्लीबवदर्थे वर्त्तमानस्याऽजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे

❀ अभिनव-चन्द्रिका ❀

**न दोष इति** । 'अनन्त्यविकारे'इतिपरिभाषास्वीकारेऽपि'सान्तमहत'इत्यत्र'सर्वनामस्थाने' इत्यस्य सान्तसंयोगविशेषणत्वाभावेऽपि निर्दिश्यमानपरिभाषयैव 'हंसशिरांसी'त्यादौ हंससम्बन्धिसान्तसंयोगे—'षष्ठीप्रकृतिजन्यशाब्दबोधीयविशेष्यताश्रयत्वे सति षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णघटितत्व'रूपनिर्दिश्यमानत्वस्याभावान्न दोष इत्यपि बोध्यम् ।

❀ चिदस्थिमाला ❀

आह—**मांसस्येति** । एतेन—'तेनापि सिध्या अत एवेत्येवासङ्गतिरतः सोऽप्यर्थ' इति भास्करशास्त्र्युक्तमपास्तम् । अभिमानग्रन्थमाह—**शब्दत्वेनेति** । अभिमानपदसूचिताश्चिरत्तु दोषद्वयरूपा प्रागुक्तैव, सुखेन सादृश्यं, 'नलुम'तेत्यस्यानित्यत्वाच्छसादिपरत्वमिति । एतेन मूलं तदनुयायिदण्ड्याद्युक्तञ्चाऽपास्तम् ।

तथोक्तेः फलमाह—**भाष्येति** । 'नपुंसके' इत्यर्थं आद्यजन्तमित्याह—**क्लीबवदिति** । एतेनार्थवदित्यतस्तदनुवृत्तिरिति शास्त्र्याद्युक्तमपास्तम् । धातुतिङन्तादौ तत्त्वासम्भवादाह—**सामर्थ्यादिति** ।

❀ ज्योत्स्ना ❀

विहितविशेषणमेवेति नियमः, 'युस्मदस्मद्भ्यां ङसो'शित्यादौ व्यभिचारादिति प्रत्याख्यानपक्षेऽपि तथैवोचितमित्याहुः । **इत्यभिमान इति** । अत्र यद्वक्तव्यं तदुक्तम् । **भाष्यस्वरसस्त्वननुवृत्ताविति** । अत्र पक्षे लोके पदादीनां प्रयोगो नानुपपन्नः, शस्प्रभृतिनियमस्यच्छन्दोविषयत्वात् ।

❀ सदाशिवभट्टीयम् ❀

**यद्वाऽन्त्यसदेशस्येति न दोष इति** । ननु परिभाषेन्दुशेखरे 'इयञ्चोभयोर्युगपत्प्राप्तावेवे'त्युक्तम् , अत्र तु नोभयोर्युगपत्प्राप्तिरिति चेन्न, यस्य कस्यचिल्लक्ष्ये युगपत्प्राप्तिरस्ति तस्यैकत्राप्राप्तावपि भवतीत्यर्थाच्छिरांसीत्यत्रोभयोः प्राप्तिरस्ति, हंसशिरांसीत्यत्रान्त्यस्यैवेति न दोषः ।

**ह्रस्वो नपुंसके । अजन्तस्येति** । ननु वारिणी इत्यत्र ह्रस्वः स्यात्तद्वारणाय प्रातिपदिकग्रहणमिति वाच्यं,

❀ विषमपदविवृतिः ❀

परिभाषेन्दुशेखरे उक्तं, तदनेन विरुध्यते इति चेन्न; शब्दत उद्देश्यत्वेनोपधाऽतिरिक्तकृताऽव्यवधान एवेति तदर्थेनादोषात् । प्रकृते च नकारो 'नोपधाया' इत्यतोऽनुवृत्त्या शब्दत उद्देश्यत्वेन नोपात्त इत्यदोषात् । **अभिमान इति** । अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् ।

❀ वरवर्णिनी ❀

**क्लीबवदर्थे वर्त्तमानस्येति** । तत्त्वञ्च—क्लीबनिरूपितशक्तिविशिष्टत्वं, वै० 'स्वपर्याप्त्यधिकरणत्व' 'स्वविशिष्टशाब्दबोधीयविषयताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यत्वोभयसम्बन्धेन । वै०—'स्वविषयकज्ञाननिष्ठजन्यतावच्छेदकोपस्थितीयविषयताप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारत्वाऽसामानाधिकरण्य' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयत्वो'भयसम्बन्धेन । 'कुलवधूः' 'कुलपुत्री' 'ज्ञानवापी'त्यादौ ह्रस्ववारणाय सम्बन्धघटकवैशिष्ट्यघटकः प्रथमः सम्बन्धः। 'वारिणे' इत्यादौ तदापत्तिवारणाय—

'प्रातिपदिक'ग्रहणं सत्त्वप्रधानस्येत्यर्थकम् । तेन 'काण्डे' इत्यादौ अन्तवद्भावेन

---

**ॐ अभिनव-चन्द्रिका ॐ**

सत्त्वप्रधानस्येत्यर्थकमिति । न च 'वारिणी'इत्यादौ ह्रस्वविधानाय प्रातिपदिकग्रहणं सूत्रे चरितार्थं,

**ॐ सदाशिवभट्टीयम् ॐ**

तत्त्वशो कर्तव्ये दोषतत्सर्वत्वपदेन ह्रस्वाभावापादनात् । ननु ह्रस्वाने 'विभक्त्यन्तानस्थान'मित्यनेन सर्वे-नानस्थानत्वात्तदा 'वारि' इत्यत्र 'नपुंसकस्ये'ति नुम्स्यादिति चेन्न, 'सुडनपुंसकस्ये'त्यत्र ऽनपुंसकग्रहणं न कर्तव्यं, विभक्त्यन्तस्यानमिति निषेधार्थं 'नपुंसकस्य' हि सत्येव सर्वनामस्थानत्वं भवति नान्यथेति निर्देशेन सिद्धं नपुंसकग्रहणमर्थेन ज्ञापकस्य निर्देशेन ज्ञापयति—'द्वितीयाद्वि'ति निर्देशाच्च नपुंसकमिह न सा—इति नायकेनाक्षेपात् । सत्त्वप्रधानेति । अन्तवद्भावस्य सत्त्वप्रधानेत्यर्थः ।

**ॐ विषमपदविवृतिः ॐ**

सत्त्वप्रधानस्येति । अत्र वदन्ति-शब्दादिदृशार्थालाभः, किञ्च पर्जन्यवल्लक्षणप्रवृत्त्या प्रथमतो ह्रस्व

---

**ॐ वरवर्णिनी ॐ**

स्वरयाव्यधिकरणत्वरूपः सम्बन्धः । एवञ्च 'वारिणी'इत्यादौ न दोषः, तथाहि—एका 'वारिणी' इति पर्याप्ता विभक्त्यर्थनिरूपिता शक्तिः, एका च विभक्त्यर्थाऽघटितार्थनिरूपिता वारिपर्याप्ता । पर वारिपर्याप्तशक्तेर्वारिणी इत्यत्राऽपर्याप्तत्वान्न नानाधाय दोषः । एवमेव—विकृत्य वेदितार्थनिरूपितशक्तेर्वारिणीपर्याप्तत्वसत्त्वेऽपि—तत्प्रयोज्यलिङ्गविशिष्टप्रकारतानिरूपितविषयताया:—तत्प्रयोजकत्वाभावान्तकतत्वनिष्ठ-सम्बन्धाख्य-विषयता—निरूपिता या पदार्थान्तरनिष्ठविशेष्यतानिरूपिता प्रकारता तादृशप्रकारतानानाधिकरणस्यैव—सत्त्वान्न नानाधायाऽपि दोषः । एवं काण्डे' इत्यादावपि ध्येयमिति शास्त्रपारगा जगन्मान्याः परमगुरवः श्रीबालशास्त्रिचरणाः, तदनुसारिणोऽस्मत्पितामहश्रीचरणाश्चाहुरिति गौडाः ।

**सत्त्वेति** । ननु सत्त्वप्रधानत्वं किं, न तावत्सत्त्वनिष्ठमुख्यविशेष्यताप्रयोजकत्वं, 'श्रीपं कुल'मित्यादौ कुलस्यैव मुख्यविशेष्यताप्रयोजकत्वेन श्रीपत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वाभावेन ह्रस्वानापत्तेः । नापि सत्त्वनिष्ठोद्देश्यतीयमुख्यविशेष्यताप्रयोजकत्वं तत्, 'काण्डे तिष्ठतः' इत्यादौ—प्रथमायाः प्रातिपदिकार्थे एव विहितत्वेन केवलश्रीपादिशब्दवत्प्रथमान्तस्य 'काण्डे' इत्यस्यापि सत्त्वनिष्ठोद्देश्यतीयमुख्यविशेष्यताप्रयोजकत्वेन ह्रस्वापत्तेस्तादवस्थ्यादिति चेत्—एवं तर्हि संसर्गताविशिष्टत्वं सत्त्वप्रधानत्वं, वै० 'स्वनिरूपित-प्रकारताप्रयोजकत्व' 'स्वविशिष्टाऽघटितत्वे'तदुभयसम्बन्धेन । वै० 'स्वनिरूपितप्रकारताप्रयोजकत्व' 'स्वनिरूपितप्रकारतानिरूपितविशेष्यताप्रयोजकपदाघटितत्वे'तदुभयसम्बन्धेन । 'ज्ञान'मित्यादौ—संसर्गता ज्ञान-ज्ञानत्वसमवायनिष्ठा, तन्निरूपितप्रकारता—ज्ञाननिष्ठा, तत्प्रयोजकत्वं ज्ञानपदे इति—तत्र सत्त्वप्रधान-त्वम् । 'काण्डे तिष्ठतः'इत्यत्र तु संसर्गता अभिहितत्वरूपा, तन्निरूपितप्रकारताप्रयोजकम् 'ए'इति, तद्घटितत्वा-त्काण्डे इत्यस्य—इति तत्र न सत्त्वप्रधानत्वम् । श्रियं पाति तत्कुलं—'श्रीप'मित्यत्रापि श्रीत्वावच्छिन्न-प्रकारतानिरूपिता—अमर्थ—कर्मत्व—निष्ठविशेष्यता यद्यप्यस्ति, तथापि कर्मत्वनिष्ठसंसर्गतानिरूपित-श्रीत्वावच्छिन्नप्रकारतानिरूपितरक्षणकर्तृत्वावच्छिन्नविशेष्यताप्रयोजक 'पा'पदाऽघटित—घटादि—पदाघटि-तत्वस्यैव श्रीपाशब्दे सत्त्वात्स्वविशिष्टघटाद्यघटितत्वात्स्वनिरूपितप्रकारताप्रयोजकत्वाच्च सत्त्वप्रधानत्वं तत्राक्षतमित्याहुः श्रीगुरवस्त्रिपाठिचरणाः ।

परे तु—'स्ववृत्तिसंसर्गताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यघटितत्व'—'स्वनिरूपिताऽप्रधानत्वसमा-नाधिकरणविशेष्यताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यघटितत्व'—'स्वावच्छिन्नशाब्दबोधीयप्रकारतानिरूपित-विशेष्यताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यघटितत्वाभाववत्त्वै'तत्त्रितयसम्बन्धावच्छिन्नप्रतियोगिताकसंसर्गाभाव-वत्त्वं सत्त्वप्रधानत्वम् ।

ॐ वरवर्णिनी ॐ

'श्रीप'मित्यादौ क्रियाकर्मभावादिसंसर्गत्वावच्छिन्ननिरुक्तसम्बन्धत्रयावच्छिन्नप्रतियोगिताकाभावस्य सुलभत्वाल्लक्षणसमन्वयः । 'काण्डे' इत्यादौ तु—अधिकरणक्रियाभावसंसर्गस्य स्ववृत्तिसंसर्गताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यैकारघटितत्वेन, स्वनिरूपिताऽप्रधानत्वसमानाधिकरणकाण्डवृत्तिविशेष्यताप्रयोजकत्वप्रकारकतात्पर्यविशेष्य-'काण्ड'-शब्दघटितत्वेन, स्वावच्छिन्नकाण्डत्वावच्छिन्नप्रकारतानिरूपित—कर्त्रादिबोधक-देवदत्तादिपद-प्रतिपाद्यतावच्छेदकावच्छिन्नविशेष्यताप्रयोजकदेवदत्तादिपदघटितत्वाभाववत्त्वेन—निरुक्तत्रितयसम्बन्धेन वैशिष्ट्यस्यैव सत्त्वेन तदभावाभावान्न सत्त्वप्रधानत्वम् । 'सप्तम्यर्थाधिकरणक्रियाभावस्यापि संसर्गतया भान'मिति सम्प्रदायविदः । संसर्गप्रतियोगिनि—संसर्गनिरूपिताऽप्रधानत्वस्य, संसर्गानुयोगिनि च संसर्गनिरूपितप्रधानत्वस्य व्यवहारः । संसर्गे प्रतियोगिनिरूपितं प्राधान्यम्, अनुयोगिनिरूपितमप्राधान्यञ्च व्यवह्रियते साम्प्रदायिकैः ।

'श्रीप'मित्यादौ श्रीशब्दार्थप्रतियोगिकक्रियाकर्मभावसंसर्गस्य प्रथमसम्बन्धद्वयेन वैशिष्ट्यस्य श्रीपशब्दादौ सत्त्वात्तादृशसंसर्गत्वावच्छिन्नप्रतियोगिकाभावाभावेनाऽव्याप्तिरतः—संसर्गत्वावच्छेदकतयाऽभावघटिततृतीयसम्बन्धोपादानम् । तदुपादाने तु—तदनुयोगिबोधक'प'शब्दघटितत्वस्यैव सत्त्वेन तदभावाभावेन त्रितयसम्बन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वात्सत्त्वप्रधानत्वमक्षतम् । आद्यानुपादाने—श्रीपशब्द एव तदनापत्तिः ।

ननु 'अरिपुत्रः' 'श्रीपपुत्रः' इत्यादौ विभक्तेर्लुका लुप्तत्वेन 'अरि'शब्दादेरेव संसर्गबोधकत्वेन 'काण्डे' इत्यादितुल्यतया ह्रस्वानापत्तिः । लुकः प्रागेव तु न ह्रस्वः, 'अन्तरङ्गानपी'ति न्यायेन लुकः प्राबल्यात्, लुगुत्तरं निरुक्तसत्त्वप्रधानत्वाभावेन ह्रस्वाऽप्राप्त्याऽन्तरङ्गनिमित्तविनाशकत्वस्य लुक्यक्षतत्वादिति चेन्न; लुक्स्थले—विभक्त्यर्थसंसर्गानुयोगिप्रतियोगिबोधक-पदद्वया-ऽऽत्मक'अरिपुत्रे'त्यादि-समुदायस्यैव संसर्गबोधकत्वस्वीकारेण तद्घटितत्वस्य अरिशब्दादावभावेन—[ 'काण्डे' इत्यादौ च तद्बोधकैकारघटितत्वस्यैव सत्त्वेन तत्तुल्यत्वविरहेण—] दोषाभावात् । नच काण्डवृत्तिसत्त्वप्रधानत्वस्यान्तवद्भावेन 'काण्डे' इत्यादावतिदेशाद्ध्रस्वापत्तिरिति वाच्यं, प्रातिपदिकग्रहणसामर्थ्येनान्तवद्भावाप्रवृत्तेः । तद्वति तदभावस्य अन्तवद्भावेनानतिदेशाच्च । 'प्रातिपदिकग्रहणसामर्थ्यादन्तवद्भावानतिदिष्टप्रातिपदिकत्ववतो ग्रहण'मिति वदतां कैयटोपाध्यायानामपि ह्रस्वे कर्त्तव्येऽन्तवद्भावो न प्रवर्त्तते इत्यत्रैव तात्पर्यं कल्पनीयम्, अन्यथाऽनतिदिष्टप्रातिपदिकत्वस्याऽपि अन्तवद्भावेनातिदेशेऽतिप्रसङ्गो दुरुद्धरः स्यात् । एवञ्च अतिदिष्टप्रातिपदिकत्ववत्यनतिदिष्टप्रातिपदिकत्वस्यानतिदेशः, तद्वति तदभावानतिदेशादिति सिद्धम् । यद्यपि सर्वोऽपि धर्मोऽभावरूपः सम्भवति, तथापि अभावत्वेन यत्र निमित्तता तस्मिन् कार्ये कर्त्तव्ये तद्वति तादृशाभावस्य तादृशाभाववतो वा नातिदेश इति तदाशयः । अत एव तत्रानतिदिष्टत्वविशेषणदानेन निस्तारः ।

'सप्तम्यधिकरणे चे'ति निर्देशाद्विभक्त्येकादेशो नान्तवदिति दीक्षितोक्तं समाधानन्तु हेयमेव, ज्ञानस्य अः—'ज्ञानाः' इत्यादौ ह्रस्वापत्तेरनिरासादित्याहुः ।

अन्ये तु—'कुलपुत्री' 'कुलवधूः' 'काण्डे' 'कुण्डे'इत्यादौ नपुंसकलिङ्गनिरूपितशक्तिपर्याप्त्यधिकरणत्वसम्बन्धेन ह्रस्वः प्राप्नोतीति प्रातिपदिकग्रहणं व्यर्थं सत्प्रधानाप्रधानन्याये सामान्यापेक्षं ज्ञापकम् ।

भाष्यकारस्तु—नपुंसकलिङ्गविशिष्टत्वं नपुंसकवदर्थे वर्त्तमानत्वं, वै० 'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वप्रकारकतात्पर्यविशेष्यत्व' 'स्वनिरूपितशक्तिविशिष्टत्वो'—भयसम्बन्धेन । शक्तिवै०—'स्वपर्याप्त्यधिकरणत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रयोजकत्वप्रकारकतात्पर्यविशेष्यत्वो'भयसम्बन्धेन । अस्य च नान्तवत्त्वेनातिदेशः, अत्र विद्यमानपदाध्याहारेण अस्य 'नपुंसके विद्यमानस्ये'त्येतत्पदसमुदायार्थतया 'तासौ नित्यानित्य'वत्पदशक्यत्वाभावेन—अशास्त्रीयत्वादित्याशयेन प्रातिपदिकग्रहणं प्रत्याचख्यौ—इत्याहुरिति शारदावताराः श्रीबालशास्त्रिचरणास्तदन्तेवसन्तश्च । अत्रत्यं तत्त्वमस्मत्कृतायामभिनवराजलक्ष्म्यामनुसन्धेयमिति गौडाः ।

❀ अभिनव-चन्द्रिका ❀

''–'वारिणी' इत्यादौ इनादेशे इकारोच्चारणसामर्थ्यादेव नोक्तदोषः–'' इति यद्यपि वक्तुं शक्यते तथापि 'वारिणे' 'वारिणा' इत्यादौ ह्रस्ववारणायैव प्रातिपदिकग्रहणं चरितार्थमिति वाच्यम्, अर्थवत्सूत्रात्प्रातिपदिकग्रहणमनुवर्त्य षष्ठ्या विपरिणामेनोक्तदोषवारणात्प्रातिपदिकग्रहणवैयर्थ्यस्यैव सत्त्वात्। ''—ह्रस्वो नपुंसके' इत्यस्य नपुंसकत्वशक्तिपर्याप्त्यधिकरणस्याजन्तस्य ह्रस्वो भवतीत्यर्थेन निरुक्तदोषवारणसम्भवात्प्रातिपदिकग्रहणं व्यर्थम्–'' इति तु न युक्तं, वैयाकरणमते सुबन्ते एव शक्तिपर्याप्त्यधिकरणत्वस्य सत्त्वेनोक्तदोषवारणस्य कर्तुमशक्यत्वात्। न च 'प्रातिपदिकग्रहणेऽनुवर्तमाने पुनः प्रातिपदिकग्रहणादनिर्दिष्टप्रातिपदिकस्यैव ग्रहण'मिति कैयटरीत्या, 'सप्तम्यधिकरणे चे'ति निर्देशाद्विभक्तेरेकादेशो नान्तवदिति दीक्षितरीत्या च 'काण्डे' इत्यादौ दोषाभावात्सत्त्वप्रधानस्यैव ह्रस्वो भवतीति निष्फलमिति वाच्यं, 'दोषाभूतमहः' इत्यादौ कैयटदीक्षितयोर्मते ह्रस्वस्य दुर्वारतया तत्र दोषवारणाय सत्त्वप्रधानस्यैव ह्रस्वो भवतीत्यस्यावश्यं वक्तव्यत्वात्।

'सत्त्वप्रधानस्ये'त्यत्र—सत्त्वपदेन लिङ्गान्वयितावच्छेदकं यद्रूपं तद्रूपपुरस्कारेण बुध्यमानं विवक्षितम्। प्रधानत्वञ्च-संसर्ग-विशेष्यैतदुभयवृत्तिः, निरवच्छिन्नविशेषणताश्रयाऽवृत्तिर्विशेष्यता-संसर्गताव्यापकीभूतः स्वरूपसम्बन्धविशेषः।

सत्त्वप्रधानत्वञ्च-यत्किञ्चित्प्रधानतानिरूपिताऽप्रधानत्वाऽसमानाधिकरणलिङ्गान्वयितावच्छेदक-रूपावच्छिन्नप्रधानताप्रयोजकत्वम्। 'काण्डे' इत्यादौ सप्तम्यर्थसंसर्गनिष्ठप्रधानतानिरूपिताऽप्रधानत्व-सामानाधिकरण्यस्यैव लिङ्गाऽन्वयितावच्छेदक–काण्डत्व–रूपावच्छिन्नप्रधानतायां सत्त्वान्नोक्तसत्त्व-प्रधानत्वम्।

स्यादेतत्–'श्रीपपुत्र' इत्यादौ ह्रस्वो न स्यात्, लिङ्गान्वयितावच्छेदक–श्रीकर्मकपालनकर्तृत्वा-वच्छिन्नप्रधानतायां जन्यजनकभावसंसर्गनिष्ठप्रधानतानिरूपिताऽप्रधानता सामानाधिकरण्यस्य सत्त्वात्, एवं 'श्रीपं—कुलं' 'सुलु—कुल'मित्यादावपि ह्रस्वो न स्यादिति चेन्मैवं;

'यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या प्रधानता तादृशप्रधानता-निरूपिताऽप्रधानत्वाऽसमानाधिकरणा या–[ यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयो-ज्यतावती–]–लिङ्गान्वयितावच्छेदकरूपावच्छिन्ना प्रधानता, तादृशप्रधानताप्रयोजकतापर्याप्त्यधि-करणत्वं सत्त्वप्रधानत्व'मिति परिष्कारेणाऽदोषात्। 'श्रीपपुत्रः' 'श्रीपं कुलं' 'सुलु–कुल'मित्यादौ संसर्गनिष्ठप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वस्य [ विनिगमनाविरहेणोपस्थापकशक्तेरानुभविक-शक्तेश्च समाने वाक्ये एव कल्पनेन–] तादृशे समुदाये एव सत्त्वेन तद्घटके–श्रीपादौ केवले निरुक्त-सत्त्वप्रधानत्वस्याऽव्याहतत्वात्।

न च 'श्रीपपुत्र' इत्यादौ समासात्प्रागेवान्तरङ्गत्वाद्ध्रस्वः स्यादित्ययं प्रयासो विफलः, पदाव-धिकान्वरूयाने च 'श्रीपंक कुल'मित्यादौ दोषाभावाच्चेति वाच्यं, 'श्रीपपुत्र' इत्यादौ समासे विभक्तिलुकि निरुक्तसत्त्वप्रधानत्वाभावेन–लुक्यन्तरङ्गनिमित्तविनाशकत्वस्य सत्त्वाद'न्तरङ्गानपी'ति परिभाषया पूर्वं ह्रस्वाऽप्रवृत्तौ समासोत्तरञ्च पूर्वोक्तरीत्या सत्त्वप्रधानत्वस्याऽभावेनैतादृशपरिष्कारस्या-ऽवश्यकत्वात्।

न च 'यः शिष्यते स लुप्यमानार्थाभिधायी'तिन्यायेन 'सुलु–कुलं' 'श्रीपं–कुल'मित्यादौ संसर्ग-निष्ठप्रधानताप्रयोजकतापर्याप्तिः 'श्रीप'इत्यत्र 'सुलु'इत्यत्र च सत्त्वात्पुनरपि निरुक्तसत्त्वप्रधानत्व-स्याभावाद्दोषतादवस्थ्यमिति वाच्यं, 'यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यता-वदुपस्थितीयप्रधानतानिरूपिताऽप्रधानत्वाऽसमानाधिकरणा—[–यस्यह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोज-कतानिरूपितप्रयोज्यतावती-] लिङ्गान्वयितावच्छेदकरूपावच्छिन्नोपस्थितीया प्रधानता तादृशप्रधानता-

प्रातिपदिकत्वेऽपि न ह्रस्वः। विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव। 'प्रथमाया अपि अन्याभिहितशक्तिरर्थः' इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम्।

❀ अभिनव-चन्द्रिका ❀

प्रयोजकत्वं सत्त्वप्रधानत्व'मिति परिष्कारेणाऽदोषात्। आकाङ्क्षाभास्ये सम्बन्धे उपस्थितीयप्रधानताया असत्त्वेन सत्त्वे एव तादृशोपस्थितीयप्रधानतायाः सत्त्वात्।

नचैवमपि 'काण्डे' इत्यादौ काण्डवृत्तिनिरुक्तसत्त्वप्रधानत्वस्य पूर्वान्तवद्भावेनैकादेशविशिष्टेऽतिदेशाद्ध्रस्वो दुर्वार इति वाच्यं, प्रातिपदिकग्रहणसामर्थ्येन सत्त्वप्रधानत्वस्य पूर्वान्तवद्भावेनाऽतिदेशो न भवतीति कल्पनेनादोषात्। एतेन 'कुलशब्दस्य अशब्देन समासे 'कुलाः' इत्यादौ ह्रस्वो दुर्वारः' इति, 'घटलोपस्थिति'रित्यादौ ह्रस्वापत्तिरिति चाऽपास्तम्। अपरनिमित्तके ह्रस्वे कर्त्तव्ये बहिरङ्गत्वेन एकादेशस्याऽसिद्धत्वाच्च। सत्त्वप्रधानत्वस्याशास्त्रीयत्वाच्च।

परे तु—'नपुंसकत्वावच्छिन्ननिरूपितशक्तिविशिष्टत्वं क्लीबत्ववदर्थे वर्त्तमानत्वं, वै० 'स्वपर्याप्त्यधिकरणत्व' स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वे'-तदुभयसम्बन्धेन। 'काण्डे'इत्यादौ च निरुक्तोभयसम्बन्धेन शक्तिवैशिष्ट्याभावान्न दोषः। एतदेवाभिप्रेत्यात्रत्यं प्रातिपदिकग्रहणं भाष्ये प्रत्याख्यातमित्याहुः।

❀ चिदस्थिमाला ❀

ननु सिद्धान्तेऽधिकरणशक्तिरूपस्य तस्य संसर्गतयाऽन्वयात्सत्त्वप्राधान्यमस्त्येवेति तथापि दोष एवात आह—विभेति। एतेन 'ज्ञानेभ्य' इत्यादौ ह्रस्वाभावो व्याख्यातः। 'असिद्धम्बहि'रिति तु न निर्वाहः, तावतापि तत्त्वानपायात्। ननु प्रथमास्थले प्रकृत्यर्थान्यथाभावादिदमुभयमप्यसम्भव्यत आह—प्रथेति। 'अभिहिते प्रथमे'त्यादिसिद्धान्तवार्तिकानुरोधेनाह—अन्येति। तत्=विभक्त्यर्थम्। तस्याः=शक्तेः। तत्रापि कश्चिद्विशेषमाह—

❀ ज्योत्स्ना ❀

आदेशपक्षनिराकरणेन भाष्यमते प्रकृत्यन्तरपक्षस्यैव च व्यवस्थापनात्। ननु श्रीपंज्ञानवदित्यनुपपन्नं

❀ सदाशिवभट्टीयम् ❀

तेन काण्डे इत्यत्र पूर्वान्तवत्त्वेन सत्त्वप्रधानत्वाद्दोषः तदवस्थ एवेति शङ्का नात्र। ह्रस्व इति। ननु काण्डे इत्यत्र पर्जन्यवल्लक्षणप्रवृत्त्या पूर्वं ह्रस्वे तत एकादेशे 'लक्ष्ये लक्षणस्ये'ति न्यायेन न पुनर्ह्रस्वप्राप्तिरेवेति चेन्न, भाष्यप्रामाण्येन नपुंसकघटकवर्णैकादेशभिन्ने लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेरित्यर्थात्। अत एव ज्ञानेभ्य इत्यत्र न दोषः। अन्यथा नपुंसकाजन्तप्रातिपदिकत्वाद्ध्रस्वः स्यात्। बहिरङ्गपरिभाषया वारणं वा। एवञ्च 'दसोसेर्ह्रदुदोम'इत्यत्रत्यशेखरोऽपि चिन्त्य एवेति बोध्यम्। स्थानिवत्सूत्रस्थभाष्यविरोधोऽपि

❀ विषमपदविवृतिः ❀

कृते'ऊखतुः'प्रेखतु'रित्यादाविव 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनः प्रवृत्तिरेव नास्ति। अत एव 'ज्ञानेभ्य' इत्यादौ न ह्रस्वः। किञ्च धनलक्ष्म्यादौ अतिप्रसङ्गवारणाय 'प्रधानाप्रधान' न्यायेन नपुंसकत्वविशिष्टार्थविशेष्यकबोधजनकस्यैव ह्रस्वस्य वक्तव्यतया 'काण्डे' इति सप्तम्यन्तजन्यबोधविशेष्यस्य नपुंसकत्वाश्रयत्वाभावादेव दोषवारणे उक्तप्रयासवैयर्थ्यम्। एतेन 'प्रातिपदिकपदमनतिदिष्टप्रातिपदिकत्ववत्परं, श्रीपादौ प्रत्ययलक्षणापदेशेनैव कृत्तद्धितसमासाश्चेति प्रातिपदिकसञ्ज्ञा। काण्डादौ प्रकृतिगतस्य प्रातिपदिकत्वस्यातिदेशेनानानतिदिष्टन्तत्। सत्त्वप्रधानस्येत्येतदपि प्रकृतिविषयकं फलितार्थकथनम्, एवं च न शब्दाधिक्यादर्थाधिक्यमिति परास्तम्। एतेन—एवं च नपुंसकपदं नपुंसकत्वपरं, तस्य च प्राधान्यासंभवान्न प्रधानन्यायावतार इति बालप्रतारकं निरस्तमिति चेच्चिन्त्यमेतत्। न चान्तवद्भावेन नपुंसकत्वविशिष्टार्थविशेष्यकबोधजनकप्रातिपदिकत्व-

'काण्डे तिष्ठन्' इत्यादावाख्यातार्थकर्तुः कर्तृक्रियाभावेन क्रियायामन्वये तदभिन्नप्रथमार्थस्यापि तेन सम्बन्धेनान्वयात्तस्य प्राधान्यम् ।—स्पष्टञ्चेदं भाष्ये ।

**ज्ञानवदिति** । दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । 'श्रीपाणी'त्यादौ 'एकाजुत्तरपदे' इति णत्वं भवत्येवेति बोध्यम् ।

**इकोऽचि** । 'सुपी'ति वक्तव्ये—'विभक्ता'विति चिन्त्यप्रयोजनम् । विभक्तौ किं ? मधुन इदं माधवम् । **हे वारे हे वारीति** । अत एव 'इकोऽची'तिसूत्रस्थम्—'इह किञ्चित्त्रपो' इति, 'ह्रस्वादि'तिसूत्रस्थं—'हे त्रपु' इति च भाष्यं सङ्गच्छते ।

**वृद्ध्यौत्वेति** । वृद्ध्यादीनां क्रमेण 'गावौ' 'हरौ,' 'क्रोष्टा,' 'हरये' इत्यत्रकाशः, नुमो—'वारिणी' इति ।

※ अभिनव-चन्द्रिका ※

**चिन्त्यप्रयोजनमिति** । वारिशब्दादाचारक्विबन्तायङ्लुकि तस्मात्तिबादौ नुमर्थं विभक्ताविल्यावश्यकमिति केचित् । वारिशब्दादाचारक्विबन्तादाशीर्लिङि 'वारि—ईर्षाष्टे'ति स्थिते नुमर्थं 'सुपी'ति विहाय 'विभक्ता'विति परे ।

※ चिदस्थिमाला ※

**काण्डे इति** । तस्य=प्रथमार्थस्य । तथा व्याख्यानफलमाह—**श्रीपाणीति** । **चिन्त्येति** । नामधातौ तिङि क्रियावाचकत्वेन नपुंसकत्वाभावात् । **माधवमिति** । अत्र नुमि टिलोपः स्यात् । मूलोक्तार्थे भाष्यसम्मतिमाह—**अत एवेति** ।

※ ज्योत्स्ना ※

श्रीपाणीत्यादावे'काजुत्तरपदे'तिणत्वकृतविशेषस्य सत्त्वात्, एतदाह—**दीर्घान्तत्वप्रयुक्त इति** । उक्तव्याख्याने फलमाह—**श्रीपाणीत्यादाविति** । **चिन्त्यप्रयोजनमिति** । चिन्ताबीजन्तु नपुंसकवृत्ते-

※ सदाशिवभट्टीयम् ※

विरोधोपि न, तत्र लक्षणान्तरेण पुनः प्राप्तेः । **प्राधान्यमिति** । तत्त्वञ्चात्र प्रकारतानाश्रयत्वम् ।

※ विषमपदविवृतिः ※

मपि स्यादिति कथं मध्यमः प्रकार इति वाच्यम्, अन्तवद्भावेनार्थानतिदेशात् । अन्यथा सत्त्वप्रधानत्वमप्यतिदिश्येत । ननु शब्दस्वरूपस्यापि कथमतिदेशः ? अशास्त्रीयत्वात् । तथा च बहूपप्लवापत्तिरिति चेन्न, तस्यापि स्वं रूपमिति शास्त्रबोधितत्वात् । न च तत्प्रत्याख्याने गत्यसंभवः, तत्प्रत्याख्याने शब्दप्रधानतया शब्दस्य शास्त्रीयत्वात् । अथवा लोड्रूपस्य मेर्निविधानेन शब्दस्याशास्त्रीयस्याप्यतिदेशबोधनात् । साड्रूपस्य सहेःकार्येण च तथैव बोधनात् । एकदेशविकृतन्यायेन सिद्धे तदनुपयोगाच्च । **प्राधान्यमिति** । प्रकारतानिरूपितत्वमित्यर्थः । एवञ्च प्रकारताभिन्नविशेष्यताशालिनी लिङ्गसङ्ख्याकारकान्वय्यर्थबोधजनकत्वरूपसत्त्वप्राधान्यस्याभावादिति भावः । तत्संसर्गक=तद्घटितसंसर्गकः । प्रथमार्थस्य=तत्प्रकृत्यर्थस्य । एवञ्च तिङः कर्तृत्वशक्तिमानर्थो द्योत्यः, कर्तृक्रियाभावश्च वाच्यः, एवं प्रथमायास्तिङर्थकाण्डार्थाभिन्नत्वञ्च प्रत्ययार्थः प्रधानमिति व्युत्पत्तिभङ्गः, काण्डार्थाभेदान्वितनतिङर्थस्योक्तसंबन्धेन क्रियायामन्वयात् । अन्ये तु 'कर्ट भीष्म'मित्यादिवत्पार्ष्णिकपरस्परावच्छेदः । उक्तसम्बन्धेन द्वयोरपि क्रियायामेवान्वयादित्याहुः । **चिन्त्यप्रयोजनमिति** । यत्तु पाठकेनोक्तं–'चिन्ताबीजन्तु नपुंसकवृत्तेरिदंशब्दादधुनाप्रत्यये इशादेशे नुमापत्तौ

**तृतीयादिषु** । भाषितः पुमान् येन शब्देनेत्यर्थे—पीलुशब्देऽतिप्रसङ्गस्तस्मात्-'भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे'—इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाऽऽक्षिप्तशब्दश्च कर्तृत्वेन समानानुपूर्वीकः, समानार्थश्च गृह्यते,—प्रत्यासत्तेः ।

❀ अभिनव-चन्द्रिका ❀

**तृतीयादिषु** । यत्प्रवृत्तिनिमित्तं पुंस्त्वस्यान्वयितावच्छेदकं तदेव यत्र नपुंसकत्वस्यान्वयितावच्छेदकं भवति तद्भाषितपुंस्कमित्यर्थः । पीलुशब्दे च वृक्षत्वव्याप्यजातिरूपं पुंस्त्वस्यान्वयितावच्छेदकं, फलत्वव्याप्यजातिरूपं च नपुंसकत्वस्यान्वयितावच्छेदकमिति न तस्य भाषितपुंस्कत्वमिति भावः ।

परे तु—भाषितः पुमान् यया शक्त्या सा भाषितपुंस्का, सा विद्यते यस्मिंस्तद्भाषितपुंस्कम्, अर्श आद्यजिति भावः । तत्त्वञ्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् । शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यञ्च 'स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्व'—'स्वावच्छिन्नविशेष्यतानिरूपित—

❀ चिदस्थिमाला ❀

विशेष्यैक्यासम्भवादाह—**प्रवृत्तीति** । विनिगमनाविरहादाह—**समानार्थश्चेति**' ।

❀ ज्योत्स्ना ❀

रिदम्शब्दादधुनाप्रत्यये इशादेशे नुमापत्तौ 'यस्ये'तिलोपो न स्यादित्याहुः । **भाषितः पुमान्येन शब्देनेति** । अर्थभेदेऽपि शब्दैक्यमितिमतेनेदम् । अतद्गुणसंविज्ञानश्च बहुव्रीहिः, पुंवाचकस्य क्लीबवृत्तित्वाभावात् । यद्वा 'येने'त्यस्य यज्जातीयेनेत्यर्थः, समानानुपूर्वीकेणेति यावत् । **इतिबहुव्रीहिरिति** । तेन—यस्मिन्प्रवृत्तिनिमित्तेक्लीबवृत्तिः शब्दः पुंवदिति सूत्रार्थः । तत्र यद्यर्थभेदे शब्दैक्याभ्युपगमस्तदातिव्याप्तितादवस्थ्यमित्याशङ्क्यार्थभेदाच्छब्दभेदाश्रयणेन समाधानमाह—**भाषणक्रियये-त्यादि** । **समानानुपूर्वीकः समानार्थश्चेति** । अत्र 'समानानुपूर्वीक' इत्येतावत्तैव प्रद्युशब्दे

❀ सदाशिवभट्टीयम् ❀

**समानानुपूर्वीक इति** । अन्यथा अजरशब्दे पुंस्त्वं प्रवृत्तिनिमित्तमादाय पुंवद्भाव उक्त इत्यम्बुशब्दे पुंवत्त्वापत्तिः।

नन्वेवमप्यर्थभेदेपि शब्दैक्यमिति दर्शने सर्वोयं प्रयासः सफलः, तत्र च दर्शने फलवाचकपीलुशब्देऽस्तीति पुंवत्त्वं दुर्वारमत आह—**समानार्थश्चेति** । तत्प्रकारकबोधेच्छयोच्चरित इत्यर्थः । एवञ्च यदा यत्र तत्प्रकारकबोधेच्छयोच्चार्यते तदा स पुंवदिति सूत्रार्थ इति भावः । **इत्यजन्ता नपुंसकलिङ्गाः** ।

❀ विषमपदविवृतिः ❀

यस्येति लोपो न स्यादिति', तत्तुच्छम्, 'नस्तद्धिते' इति–टिलोपेनापि तत्सिद्धेः । **अतिप्रसङ्ग इति** । प्रवृत्तिनिमित्तभेदाच्छब्दभेदे नायं दोषः । एवञ्च तत्पक्षे यथाश्रुतमेव रमणीयम् ।

**पुमान्यस्मिन्निति** । पुंसा प्रवृत्तिनिमित्तवृत्तित्वञ्च स्वनिष्ठाधेयतानिरूपिताधारतासम्बन्धेन । एवञ्च बोधनकर्मीभूतपुंस्त्वविशिष्टाधिकरणं प्रवृत्तिनिमित्तमित्यर्थः । ततोऽर्शआद्यचि तद्धेतुकप्रवृत्तिक इत्यर्थः । क्लीबपदं च लक्षणया क्लीबत्वविशिष्टार्थप्रतिपादकपरं, तत्र च तद्धेतुकप्रवृत्तिकस्याभेदेनान्वये धनवान् सुखीत्यादिवद्धर्मिपारतन्त्र्येण तस्याश्रयतासम्बन्धेनान्वयः । **समानानुपूर्वीक इति** । 'इदं प्रद्युशब्दव्यावृत्तये' इति पाठकाः, तत्तुच्छम्, 'ग्रामण्ये सेनान्ये कुलाये'त्यादौ पुंवद्भावेन ह्रस्वाप्रवृत्तिप्रतिपादनपरभाष्यासङ्गतेः, ह्रस्वेकारान्तस्य भाषितपुंस्कत्वाभावात् । इकः किं ? श्रीपेणे त्यग्रिमग्रन्थासङ्गतेश्च, अज्ग्रहणवैयर्थ्यापत्तेश्चेति यत्किञ्चिदेतत् । तस्माद्यस्येगन्तक्लीबस्य पुंवद्भावःकर्तव्यस्तस्य नपुंसकत्वप्रयुक्तकार्याप्रवृत्तिप्राक्कालीनरूपस्य भाषितपुंस्कत्वे पुंवदित्यर्थः । समानानुपूर्वीकत्वञ्च तत्कालीनमेव ग्राह्यम् । एतेन 'ऐडविडवृन्दारके कथं पुंवत्त्वमिडबिडशब्दस्य भाषितपुंस्कत्वाभावा'दिति परास्तम् । **प्रत्यासत्तेरिति** । 'समानानुपूर्वीके'त्यनेनान्वयि । 'समानार्थेने'ति

ततोऽर्शआद्यच्,—तत्फलितमाह—**प्रवृत्तिनिमित्तैक्ये** इति । 'इकोऽची'ति, 'नपुंसकस्ये'ति चानुवर्त्तते, ते च तत्र षष्ठ्यन्ते। अत्राऽर्थात्प्रथमान्ते। इक इति किं? श्रीपेण । टादौ किम्? अनादिनी । अयञ्च ह्रस्वनुमोरभावातिदेशः क्लीबत्वविशिष्टार्थवाचकस्य । पुंस्त्वविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तेरित्यन्यत्र विस्तरः ।

**अस्थिदधि** । नकारादकार उच्चारणार्थः । अनङ उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणम्—'असति यत्ने उदात्तादिशब्दैरनुपात्तो गुणोऽविवक्षितः' इति ज्ञापनार्थम् । 'त्रिचतुरो'रिति सूत्रे 'तिसृचतस्रि'त्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये आद्युदात्त-

॥ अभिनव-चन्द्रिका ॥

नपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वं तदुभयसम्बन्धेन । शक्तिवैशिष्ट्यञ्च—'स्वपर्याप्त्यधिकरणत्व'—'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वं'तदुभयसम्बन्धेन ।

पीलुशब्दे च—यदि वृक्षत्वव्याप्यजातिस्वरूपं प्रवृत्तिनिमित्तं ध्रियते तर्हि—स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्य तदवच्छिन्ननिरूपितशक्तौ सत्त्वेऽपि—स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्याभावात्,—यदि फलत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं ध्रियते तर्हि—तदवच्छिन्ननिरूपितशक्तौ—स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्य सत्त्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्याभावात् न दोष इत्याहुः ।

ज्ञापनार्थमिति । 'स्वं रूप'मित्यत्र रूपपदेनोदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वातिरिक्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्य ग्रहणमिति ज्ञापनार्थमिति भावः ।

॥ चिदस्थिमाला ॥

ते च इको नपुंसकस्येति प्रकाशादिग्रन्थासाङ्गत्यायाह—**अयञ्चेति** । 'नुम्ह्रस्वयो'रिति मनोरमादेसकलग्रन्थासाङ्गत्यायाह—**ह्रस्वनुमोरिति** । यद्यपि पुंवदित्यभावातिदेशस्तथापि टादौ पुंसि विहितस्याभावस्यातिदेश्यत्वाभावात्—अनन्तरेतिन्यायाश्रयणे'ने'त्येव च सिद्धेऽतिदेशवैयर्थ्यात्, व्यासिन्यायाश्रयणाच्च ह्रस्वनुमोर्निषेधाङ्गीकारे गौरवाच्चाह—**क्लीबत्वेति** । नचैवं 'नञ्विषये'इति स्वरनिषेधापत्तिः, 'भिन्नकर्तृकत्वात्, विषयपदेन नपुंसकत्वाभावेऽपि तत्प्रवृत्त्यङ्गीकाराच्च, प्रतिपादितश्चैतद्भावप्रकाशे, स्पष्टञ्चेदमीचद्विवचने इत्यत्र कैयटे,तदाह—**इत्यन्यत्रेति** । **अस्थिदधीति** । नुमोऽपवादोऽयम् । सत्यन्तफलं भाष्याद्यविरोधायाह—**त्रिचतुरोरिति** । कौस्तुभादिसकलग्रन्थासाङ्गत्यायाह—**तिस्रिति** । तस्योपपन्नत्वायाह—**नियेति** । तत्र

॥ ज्योत्स्ना ॥

पुंवद्भावाप्रवृत्तिसिद्धौ तदितरोपादानं चिन्त्यप्रयोजनम् । वस्तुतस्तु प्रवृत्तिनिमित्तवाचिभाषितपुंस्कशब्दादर्शआद्यचा क्लीबवाची शब्दो नाभिधीयते, किन्तु प्रवृत्तिनिमित्ताश्रयः क्लीबरूपोऽर्थ एवाभिधीयते, अर्थबोधकनपुंसकपदेन समानाधिकरण्यात्, तृतीयादावचि परे इगन्तस्य वाच्यं भाषितपुंस्कं नपुंसकं पुंवदिति सूत्रार्थ इति भाष्यप्रदीपयोः स्पष्टम् । एवञ्च भाषितः पुमान्यस्मिन्निति भाषणक्रियायां करणाङ्गायां यस्य तृतीयादिविभक्त्या पौर्वापर्य, तदिगन्ताङ्गमेव—सम्बध्यते, प्रत्यासत्ते-

॥ विषमपदविवृतिः ॥

तु उपरञ्जकतया । द्वन्द्वे प्रयुक्त इति । नन्वनन्त्यपि 'फिष' इत्यन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थं स्यात्, न च झलां जश् झशी'त्यादौ जशिति सञ्ज्ञाप्रतिपत्तये अयस्मयादित्वेन जस्त्वाप्रवृत्तिकल्पनवल्लक्ष्ये प्रवृत्त्यर्हस्य झटिति प्रतिपत्तये आद्युदात्तोच्चारणं न्याय्यमिति वाच्यम्,

निपातनं विवक्षार्थम् । निपातनं नाम—अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् । वधादेशेऽपि हन्त्यनुरूपेऽन्तोदात्तेऽनुदात्ते वोच्चारणीये आद्युदात्तोच्चरणं विवक्षार्थम् ।

---

❀ अभिनव-चन्द्रिका ❀

**विवक्षार्थमिति** । न च हन्धातोरेकाच्त्वेन वधादेश आद्युदात्तोऽन्तोदात्तो वा भवतीति 'स्थान्यनुरूपगुणेस्वरे उच्चारणीये' इत्यसङ्गतमिति वाच्यं, 'हनो वध' इत्यत्र 'फिष' इतिशास्त्रानुगुणेऽन्तोदात्तो वधादेशे उच्चारणीये आद्युदात्तोच्चारणस्य विवक्षितत्वात् । स्थानिनो हन आद्युदात्तत्वेऽपि 'धातो'रित्यनेनान्तोदात्तस्वरूपेण साधुत्वबोधनात्, तेनैव रूपेणान्तोदात्तो पठनीये आद्युदात्तोच्चारणस्य विवक्षितत्वाच्च, हनधातोरनुदात्तोपदेशत्वेन सर्वानुदात्ते वधादेशे पठनीये आद्युदात्तोच्चारणस्य विवक्षणीयत्वाद्वेति **दिक्** ।

❀ चिदस्थिमाला ❀

शास्त्रत आह—**उदात्त इति**। स्थानित आह—**अनुदात्ते वेति**। नन्वेवमस्थ्यादीनां 'नब्विषये'त्याद्युदात्त-

❀ ज्योत्स्ना ❀

रित्यर्थभेदे शब्दैक्यात्पीलुशब्दे नातिप्रसङ्गो, न वा प्रभुशब्देऽपीति वदन्ति। **अन्तोदात्तेऽनुदात्तेवेति**। 'धातो'रित्यन्तोदात्तविधानादनुनासिकलोपार्थमनुदात्तत्वप्रतिज्ञानादुपदेशेऽनुदात्तत्वाच्चेति बोध्यम् ।

❀ विषमपदविवृतिः ❀

एवं सति विशेषयत्नस्यैवाश्रयणात् । विशेषयत्नश्च—स्थान्यनुच्चारण—शास्त्रप्राप्तोच्चारणान्यतररूपः । अत एव सहस्योदात्तानुदात्तघटितत्वेन स्वरितस्यैव तदनुरूपत्वात्तदादेशे उदात्तोच्चारणं विवक्षार्थम् । प्रकृते च शास्त्रप्राप्तमुच्चारणं छान्दसत्वादिना शास्त्रप्राप्तत्वे 'न तिसृचतसृ' इत्यादावपि तुल्यम् । झटिति लक्ष्यप्रवृत्त्यर्हप्रतिपत्तिफलकशास्त्रप्राप्तोच्चारणं तदित्यपि न, चतसर्यपि तौल्यात् । किञ्च केवलास्थिशब्दस्यान्तानुदात्तत्वेनानुदात्ताद्यवयवकाऽनङोपि प्रवृत्त्यर्हस्य झटिति प्रतिपादकत्वाच्छान्दसत्वादिना फिट्शास्त्राप्रवृत्तिकल्पनमधिक एव यत्नः । लक्ष्येषु यद्यद्गुणकप्रवृत्त्यर्हं तत्तद्गुणस्य झटिति प्रतिपादनं स्वशक्यमेवेति चेत्; अत्र केचित्—आनङादीनां व्युत्पत्तिपक्षे आद्युदात्ततया तदेकवाक्यतायै अव्युत्पत्तिपक्षेपि 'फिष' इत्यस्येदृशविषये अप्रवृत्तिरिति प्राहुस्तन्न, ईदृशे विषये व्युत्पत्तिपक्षस्यैव निर्मूलत्वात् । तथाहि—अर्थपरे हि शब्दे मञ्चकादौ मञ्चकादिव्यावृत्त्यर्थं गवादौ गोण्यादिव्यावृत्तये प्रकृतिप्रत्ययकल्पनया साधुत्वान्वाख्यानेपि शब्दपरेष्वसाधोर्व्यावर्त्याऽभावात्तत्कल्पने मान भावात् । अन्यथा अनङादिकल्पकधात्वादिष्वपि भूवादिषु प्रकृतिप्रत्ययादिकल्पना स्यादित्यनवस्था स्यात् । कल्पकविशेषात्तन्निर्णये तूदात्तसम्पादकस्यापि कल्पनासम्भवाच्च । आद्युदात्तत्वे फिट्शास्त्रबाधापत्त्यानाधायकपक्षैक्यरूपाय व्युत्पत्तिपक्षेऽपि तस्यैव युक्तत्वाच्च । तस्माज्ज्ञापकोपवर्णनभाष्यप्रामाण्यादीदृशे विषये फिट्शास्त्राप्रवृत्तिकल्पनैव भाष्यतात्पर्यम् ।

तथा च वृद्धिसूत्रे भाष्यम्—''उभयमिदं गुणेषूक्तं—भेदका अभेदका इति, किं पुनरत्र न्याय्यम् ? अभेदका गुणा इत्येव न्याय्यम्, कुत एतत् ? यदयमस्थिदधिसक्थ्यक्ष्णानङुदात्त इत्युदात्तग्रहणं करोति—'' । अत्र वयं विचारयामः—स्वं रूपमिति शास्त्रारम्भे स्वरस्य रूपत्वाभावेन तस्यासङ्ग्रहत्वे 'फिष' इत्यादिशास्त्रप्राप्तस्वरघटितस्योच्चारणेऽपि तस्य तत्तच्छब्दाद्बोध्यत्वादस्याः परिभाषाया उपयोगश्चिन्त्य इत्यायाति । तत्प्रत्याख्यानपक्षेऽपि 'सख्यु'रित्यादौ विकृतस्याग्रहणन्तत् । पदत्वप्रयोजकसुबुत्पत्तिप्रयोजकप्रातिपदिकप्रवृत्तिकालीनतदाश्रयरूपस्य ग्रहणेनोदात्तादीनामग्रहणात् । 'यूस्त्र्याख्या' वेत्यादावपि प्रातिपदिकत्वाश्रयस्य प्रातिपदिकाश्रयसञ्ज्ञतेः प्रागस्वरकत्वमेव । ऐक्ष्वाकादावेकश्रुतेः

तदुक्तम्-'असनि यत्ने' इति। परमास्थिशब्दादावन्तोदात्ते उदात्तगुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम्। उदात्तत्वफलं-'दध्ने'त्यादावल्लोपे उदात्तनिवृत्ति-स्वरेण विभक्त्युदात्तत्वं, 'दधनी'त्यादौ श्रवणञ्च। ज्ञापनफलन्तु-तृन्तृजन्तानां भिन्न-स्वरकन्तानाम्—'ऋदुशने'त्यनेन तत्स्वरकाऽनङ्सिद्धिरिति दिक्। **तदन्तेति**। आङ्गत्वादिति भावः। अत्रापि 'नपुंसकस्ये'ति सम्बद्ध्यते, तेन धाञ 'आदृगमहने'ति किप्रत्यये 'दधिने'त्यादौ न। एतच्च गृह्यमाणस्यैव विशेषणं, तेनातिदध्ना ब्राह्मणेने-त्यादि सिद्धम्। **सुधियेति**। शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात्पुंवत्। प्रधीशब्दे प्रकृष्टज्ञानवत्त्वमेकं तत्। **मध्विनि**। मकरन्द-मद्य-माक्षिक-वाचिनः पुं-नपुंसकयोः सत्वात्पुंवत्त्वम्। मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न, स च 'माद्वाकं मधु न द्वयो'रित्यमरेणोक्तः। भाष्ये 'मधोःतृप्ता' इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु-'माध्वीर्गावो

❀ अभिनव-चन्द्रिका ❀

**गृह्यमाणस्यैव विशेषणमिति**। श्रुतानुमितपरिभाषयेति भावः। **एकप्रवृत्तिनिमित्तत्वादिति**।

❀ चिदस्थिमाला ❀

तयाऽन्तानुदात्तत्वेनान्तरतम्यात्प्राप्तानुदात्ते एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीति-ज्ञापितेऽपि न चारितार्थ्यमत आह—**परेति**। अपिना तत्रानुदात्तसमुच्चयः। लोपाभावपक्षे आह—**दधनीति**। **तत्स्वरकेति**। उदात्तस्वरकेत्यर्थः। एतेनान्यथा सकलप्राचोक्तमपास्तम्, तदाह-**इति दिगिति**। अत्रापि= अस्थिदधीति सूत्रेऽपि। तच्च=नपुंसकस्येति च। उक्तरीत्यैवाह-**गृह्येति**। आदिना-अतिदध्ना ब्राह्मणेनेति, तत्र ङीप्तु न, सन्निपातेति विरोधात्, बहिरङ्गतयानङोऽसिद्धत्वाच्च, अनेन भाष्येऽप्यतिदध्नेत्येव पाठो न तु प्रियदध्नेति। तत्रापि बहुव्रीहिर्न, किन्तु तत्पुरुष इति, तथा प्राचोक्तं चिन्त्यमिति सूचितमिति स्पष्टमन्यत्र। **पुंवदिति**। इयङ्सिद्धिः प्राग्वत्। शाश्वतीयक्रमविवक्षयाऽऽह-**मकरन्देति**। नन्वेवं मूले न्यूनताऽत आह-**मृद्वीकेति**। तत्र मानमाह-**स चेति**। ननूक्तरीत्यैव सिद्धे भाष्यासङ्गतिरत आह-**भाष्य इति**। लिङ्गान्वयः क्षीरवाचित्वे। तथा सति विशेष्यनिघ्नत्वादाह-**नपुंसकेति**। तत्र प्रसिद्धत्वाच्चैव सम्भवात्तात्पर्याच्च तस्यैव-

❀ ज्योत्स्ना ❀

**इतिदिगिति**। अयञ्च दिगर्थः—परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितः। **लिङ्गसिद्धेति**। गवां मधुसम्बन्धस्य क्षीरसमवायरूपस्यैव सामर्थ्यलभ्यत्वादेवमुक्तम्। **क्षीरवाचिनपुंसक-मधुशब्दाभिप्रायेणेति**। पुंवृत्तिप्रवृत्तिनिमित्तस्य मकरन्दत्वादेः क्षीररूपे क्लीबार्थे सत्त्वात्प्रवृत्ति-

❀ विषमपदविवृतिः ❀

सर्वस्वरसङ्ग्राहकत्ववत्प्रकृते स्त्रादावपि एकश्रुत्याऽनुक्तस्य शास्त्रकृत्कृतविकृतस्य सर्वस्वरसङ्ग्रा-हकत्वं भवत्येव। एवञ्चैषा परिभाषा निष्फला। तथाप्येवंविधार्थकस्य न्यायसिद्धार्थस्य बोधकमुदात्त ग्रहणमिति भाष्याशय इति तत्त्वमिति सुधियो विभावयन्तु। **अन्तोदात्तेति**। हन्तेराद्यचोरैक्या-दाद्युदात्तस्यापि तदनुरूपत्वं वक्तुं शक्यम्, तथापि धातोरित्यन्तत्वप्रयोज्यमेवोदात्तत्वं हन्तेरिति तदेव स्थान्यनुरूपमिति भावः। प्रयोगे शेषनिघातेनानुदात्तत्वात्स्थानिनो भविष्यत्कालीनप्रवृत्त्यर्हा-ऽनुदात्तोच्चारणस्य लक्ष्यश्रवणार्हगुणकझटितिप्रतिपत्तिजनकत्वादाह—**अनुदात्तो वेति**। यत्तु पाठकेनोक्तम्-'उपदेशेऽनुदात्तत्वाच्चे'ति, तत्तुच्छम्, उपदेशेऽनुदात्तत्वेप्यान्तरतम्यपरीक्षावसरे तस्या-ऽभावादनुपयोगात्। **तेनेति**। प्रतिपदोक्तपरिभाषानुसन्धाने नपुंसकपदानुसन्धाने च न विशेष इति भावः।

भवन्तु नः' इति लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक् ।

**स्नुर्वेति** । 'मांस्पृत्स्नूनां पदादिषूपसङ्ख्यान'मिति वार्त्तिकेनेति भावः । **पूर्वविप्रतिषेधेनेति** । न च नित्यत्वादेव नुम्सिद्धेः किं पूर्वविप्रतिषेधेनेति वाच्यं, तदन्ते नुमि कृतेऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन 'यदागमाः' इति न्यायेन नुम्विशिष्टस्य

❀ **अभिनव-चन्द्रिका** ❀

पुंस्त्वनपुंसकत्वयोः शोभनज्ञानवत्त्वस्यैवान्वयितावच्छेदकत्वादिति भावः । **दिगिति** । दिगर्थस्तु 'माध्वीर्गावो भवन्तु नः' इति मन्त्रेण मधुशब्दस्य माधुर्यमेवार्थ इति तत्रत्यमधुशब्दस्य पयोवाचित्वे न मानमिति दिक् ।

❀ **चिदस्थिमाला** ❀

ग्रहणं न तु तस्य,अतएवाभरविरोधोऽपीनेति भावः । एतेनोक्तभाष्यबलान्माक्षिकवाच्यपि नित्यनपुंसकलिङ्गः, शाश्वतस्य तु प्रमाद इति प्राचोक्तं, मधुश्चैत्रो मधु मद्यमिति प्रवृत्तिनिमित्तभेदेन भाषितपुंस्कत्वान्नपुंसकत्वान्न-पुंवदिति शाब्दिकरण्ड्याद्युक्तञ्चापास्तम्, तदाह—**इति दिगिति** । ननु सूत्रे पाठाच्छसादावेवेति कुतो नात आह—**मासिति** । अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तेऽपि तृज्वत्त्वप्राप्तेराह—**पूर्वेति** । नन्वेवमयं

❀ **ज्योत्स्ना** ❀

निमित्तैक्ये भाषितपुंस्कत्वाभावात्पुंवद्भावाप्राप्तेर्हि लिङ्गव्यत्ययोदाहरणत्वसङ्गतिरित्युक्ताभिप्रायवर्णनस्याभिप्रायः । **नित्यत्वादेव नुम्सिद्ध इति** । तृज्वद्भावस्तु न नित्यः, अङ्गस्य नुमि कृते तदवयवस्य निर्दिश्यमानक्रोष्टुशब्दस्य नुमा व्यवधानादप्रसङ्गात् । **तदन्तइति** ।'अस्य तृज्वत्वप्राप्ते'रित्यनेनान्वयः । तत्र हेतुः–**नुमि कृतेऽपीत्यादि** । नन्वेवं निर्दिश्यमानस्येतिपरिभाषाया अप्रवृत्तौ को हेतुरत आह–**सूत्रे षष्ठीनिर्देशाभावादिति** । तृज्वत्क्रोष्टुरितिप्रथमानिर्देशादिति भावः । एवं परमक्रोष्टुशब्दे तदन्ते तृज्वत्प्रसङ्ग इति मौनिश्रीकृष्णभट्टाः । अत्र केचिदिष्टापत्तिमभ्युपगम्य प्रतिविधति । वस्तुतस्तु-वृद्धिसूत्रे भाष्यप्रदीपयोरुक्तरीत्याऽर्थतः षष्ठीनिर्देशेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तेः सम्भवात्क्रोष्टुरितिषष्ठीतिपक्षे च सुतरां तथात्वादिष्टापत्तौ प्रामाणाभावाच्चिन्त्यमेवेदमिति ब्रूमः । **नुम्**–तु न नित्यः, शब्दान्तरप्राप्तेस्तत्र परत्वात्तृज्वद्भावे प्राप्ते पूर्वविप्रतिषेधान्नुम्, तेन च निर्दिश्यमानक्रोष्टुविभक्त्यानन्तर्यविघातात्तृज्वद्भावस्य पुनः प्रसङ्गाभावात्सकृद्गतिन्याय एवेदृशविषये व्यवस्थापकः । एतच्च सर्वं शेषपूरणसापेक्षात्तृज्वत्त्वप्राप्तेरित्येतस्माद्ग्रन्थादन्तरं तथाभूतस्यैव सकृद्गतिन्यायान्न पुनस्तृज्वत्वमितिग्रन्थस्य लेखनात्सूचितम् । एतेनाचश्चेतिसूत्रप्रदीपोक्तदिशा प्रथमप्रवृत्तसंस्कारवैयर्थ्यसम्पादको यत्र द्वितीयसंस्कारस्तत्र पुनःप्रसङ्गविज्ञानानङ्गीकारान्नुम्वैयर्थ्यसम्पादकस्य तृज्वत्वस्य सकृद्गतिन्यायाश्रयणेनाप्रवृत्तिसाधनं चिन्त्यमित्यपास्तम् । सर्वथा पुनःप्रसङ्गविज्ञानाभावे सकृद्गतिन्यायस्यैव व्यवस्थापकत्वे ग्रन्थतात्पर्याद्युक्तहेतोरपि शेषपूरणेनैव सङ्गाह्यत्वात् । यद्वा विभक्ताविस्याङ्गविशेषणत्वात्क्रोष्टुशब्दस्य विभक्त्यानन्तर्यविघाते सत्यपि तृज्वत्वप्रकृतेरप्रतिबन्धादुभयोरपि नित्यत्वात्पूर्वविप्रतिषेधान्नुमि तृज्वत्त्वस्याप्रवृत्तिः सकृद्गतिन्यायाश्रयणैकसाध्येत्यभिप्रायेणाह—

❀ **विषमपदविवृतिः** ❀

**ज्ञानवत्त्वेति** । लाघवानादरान्मतुप् । **लिङ्गसिद्धेति** । गवां मधुसम्बन्धस्य क्षीरसमवायिरूपस्यैव सामर्थ्याल्लाभ इति भावः । यद्यप्यनुपदोक्तमृद्वीकाविकारवाचिमधुशब्दस्य लिङ्गव्यत्ययोदाहरणत्वसम्भवेऽपि तादृशार्थविवक्षयेत्थमुक्तमिति भावः । **नित्यत्वादेवेति** । इदं चिन्त्यं, तृज्नुटोर्विप्रतिषेधोपपत्तयेऽवश्याश्रयणीयेन तृच्प्रवृत्त्युत्तरकालीनसंनिपातपरिभाषाप्रयुक्ताऽप्रवृत्तिप्रयुक्तानित्यत्वेनैव पूर्वविप्रतिषेधोपपत्तेः । **तद्ग्रहणेनेति** । इकोचीतिसूत्रस्थम्–'अतिराभ्या'मित्यादौ नुमि कृते रशब्दान्तत्वं नास्तीति–विवरणन्तु निर्दिश्यमानरैशब्दान्तत्वाभिप्रायकमिति तेन न विरोध इति

तद्ग्रहणेन ग्रहणात्सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेन तृज्वत्त्वप्राप्तेः। सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम्।

नन्वयं 'कृशक्रोष्टूने' इत्यस्यैव भाष्ये उदाहरणात्तृतीयादिष्वचीत्येतद्विषयक एव, अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे बीजानापत्तिरिति चेन्न; उदाहरणस्य सङ्कोचकत्वे मानाभावात्, तदुक्तं—'न चोदाहरणमादरणीय'मिति। 'उदाहृतातिरिक्तोदाहरणाभावः—'इत्येवम्परतया नादरणीयमिति तदर्थ इत्याहुः।

**सुल्वेति**। अत्र शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तम्। पुंवत्त्वे ह्रस्वाभावेनाऽघित्वान्नाभावो न, नुमभावाच्च यण्। **धातृ इति**। अनङ् न, 'न लुमते'तिनिषेधात्। धारणादिकर्तृत्वं चास्यैकं प्रवृत्तिनिमित्तम्। **हे धातरिति**। 'ह्रस्वस्य गुणः' इति गुणः।

❀ अभिनव-चन्द्रिका ❀

**इत्यस्याभावेनेति**। न च 'तृज्वत्क्रोष्टु'रित्यादौ निर्दिश्यमानपरिभाषाया अप्रवृत्तौ 'परमक्रोष्टे'त्यादौ परमक्रोष्टुशब्दस्य स्थाने तृजन्ततदादिरूपादेशापत्तिरिति वाच्यम्, 'अनुत्तरपदस्थस्ये'तिज्ञापकेन क्वचित्तदादिविधेरप्रवृत्त्या 'परमक्रोष्टु'इत्यस्य स्थाने 'स्थानेऽन्तरतम' इति परिभाषया-'परमक्रोष्टृ' इतितृजन्तादेशो भवतीत्यदोषात्।

❀ चिद्स्थिमाला ❀

दोषः पूर्वविप्रतिषेधेऽपि तुल्योऽत आह—**सकृदिति**। पूर्वविप्रतिषेधसामर्थ्यादित्यर्थः। अयं=पूर्वविप्रतिषेधः। नापत्तिः=तदभावापत्तिः। ननूदाहरणस्यानादरे विरोधोऽत आह-**उदेति**। आहुरित्यरुचिबीजं तु लक्ष्यानुरोधेन व्यवस्थितयोर्मध्ये नित्यत्वस्योक्तरीत्योभयोस्तुल्यत्वेन पुनःप्रसङ्गन्यायेन पूर्वविप्रतिषेधवचनापेक्षया सकृद्गतिन्यायेन तदनारम्भ एव लघुः। इदमेव सूचयितुं **सकृदिति** सामान्यत एवोक्तम्। किञ्चाबले तदुक्त्यैव निर्वाहात्तथोदाहरणे भगवतोऽज्ञानस्यैव मूलत्वापाताच्चायुक्तमिदं, किन्तु तथोदाहरणपरभाष्यप्रामाण्यात् पुंवत्त्वपक्षेऽप्यनभिधानेन तृज्वत्त्वाभाव इत्येव कल्पना न्याय्या। यतो भाष्यकृता सूत्रत्रयस्य प्रत्याख्यानायाश्रितस्य शब्दानां नियतविषयकत्वस्य सूत्रारम्भेऽप्यावश्यकत्वद्योतनाय पूर्वविप्रतिषेधवार्तिके तदुदाहृतम्। एवञ्च सर्वतृज्वद्भावविषयोऽयं, सत्वे नचोदेति न्यायात्, तस्य चोक्तोऽर्थः। तत्रोदाहृतेत्यस्य साभिप्रायमुदाहृतेत्यर्थ इतीति बोध्यम्। अत्र=सुलुशब्दे। 'निमित्तमेकमेव पुंस्त्रियो'रिति शेषः। तत्र पुंवत्त्वपक्षे आह— **पुंवत्त्वे इति**। **नुमेति**। अङ्गीबत्वेनेत्यादिः। **न लुमतेति**। 'प्रियतिसृ' इति भाष्योदाहरणेनानङ्विषये न लुमतेत्यस्य नित्यत्वाङ्गीकारादिति भावः। 'ऋतोऽङी'ति-तु असर्वनामस्थानत्वान्न। आदिना-पोषणं।

❀ ज्योत्स्ना ❀

**सकृद्गतिन्यायाच्चेति**। एतदपि विशेषपूरणसापेक्षग्रन्थलेखनाद्भ्रान्यकृत्कल्पनारूढमिति प्रतिभाति।

❀ विषमपदविवृतिः ❀

इति बोध्यम्। **षष्ठीनिर्देशाभावदिति**। अत्र मौनिश्रीकृष्णभट्टाः—'एवं सति परमक्रोष्टुशब्दे तदन्तविधिना विशिष्टस्यैत्रादेशापत्तिः। न च प्रयोगनियमार्थत्वेन निर्वाहः, क्रोष्टुशब्दस्तृज्वद्रूपको भवतीति शाब्दे निष्पन्ने क्रोष्टुशब्दस्य तद्वद्रूपकत्वासम्भवात्प्रयोगनियमस्य फलितत्वेन केवलक्रोष्टुशब्दग्रहणे तस्य सर्वनामस्थानपरत्वाभावाच्छ्रौतवाक्यार्थविषयकत्वफलितस्याप्यविषयत्वात्तृज्वद्भावस्यैवानापत्तेः। एतेनाङ्गसञ्ज्ञानिमित्ते सर्वनामस्थाने क्रोष्टुस्तृज्वदित्यपास्तम्।

**एच इक्** । 'आदेश'इति कर्मणि घञ् । ह्रस्वपदेन कर्मधारयः । निर्द्धारणे सप्तमी, सौत्रमेकवचनं, तदाह—**आदिश्येत्यादि** । 'मध्ये'इत्यपपाठः, तद्योगे षष्ठ्या एवौचित्यात् ।

एचां पूर्वभागोऽवर्णसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः, तत्रोभयान्तरतमह्रस्वाभावात्पर्यायेणावर्णादेः प्राप्ताववर्णाभावायेदं, तदाह—**इगेवेति** । यथाप्राप्तमेव नियम्यते

ॐ **अभिनव-चन्द्रिका** ॐ

यद्वा 'क्रोष्टु'रिति षष्ठ्यन्तमेव, 'तृज्व'दिति च मतुबन्तम् । तथा च क्रोष्टुशब्दस्य स्थाने तृज्वानादेशो भवतीत्यर्थ इति—षष्ठ्याः सत्त्वेन निर्दिश्यमानपरिभाषयैव दोषवारणाच्च । न च तुन्नन्तक्रोष्टुशब्दस्य कथं क्रोष्टुरिति षष्ठ्यन्तं रूपं स्यादिति वाच्यं, 'प्रकृतिवदनुकरण'मितिपरिभाषया अनेनैव तृज्वद्भावेन—'घेर्ङिती'ति गुणेन तद्रूपसिद्धेरिति दिक् ।

**एच इक् । निर्धारणे सप्तमीति** । यथा नागेशमते 'नृणां द्विजः श्रेष्ठ' इत्यादौ नृपदार्थस्य 'स्वघटकत्व'—'स्वघटकद्विजेतरयावदवृत्तिश्रैष्ठ्यवत्त्वै'तदुभयसम्बन्धेन, यथा वाऽस्मन्मते नृपदार्थस्य—'स्वघटकवृत्तित्व''स्वघटकद्विजेतरयावदवृत्तित्वै'तदुभयसम्बन्धेन श्रैष्ठ्येऽन्वयस्तथा प्रकृतेऽपि नागेशमते 'स्वघटकत्व' 'स्वघटकेतरावृत्त्येच्स्थानिकत्ववत्त्वै'तदुभयसम्बन्धेन ह्रस्वादेशपदार्थस्य-इक्पदार्थेऽन्वयः, अस्मन्मते च 'स्वघटकवृत्तित्व'—'स्वघटकेतरावृत्तित्वै'तदुभयसम्बन्धेनादेशपदार्थस्यैच्स्थानिकत्वेऽन्वय इति भावः ।

ॐ **चिदस्थिमाला** ॐ

तस्याप्राप्तेराह—**ह्रस्वस्येति । कर्मधारय इति** । अत एव निर्देशाद्विशेष्यस्य पूर्वनिपातः । जातावेकवचनमिति शाब्दिदण्ड्याद्युक्त्यसाङ्गत्यायाह—**सौत्रमिति । औचित्यादिति** । एतेन तद्घटितप्रतीकधारणं दण्ड्यादेरपास्तम् ।

सूत्रारम्भफलमाह—**एचामिति** । तत्र—उभयसादृश्ये सति । आदिना—इवर्णादि । यथासङ्ख्येऽनिष्टापत्तेराह—**यथेति** । ननु केषाञ्चिन्मते ह्रस्वस्यैचः सत्त्वात्स एव स्यादत आह—**ह्रस्व इति** । स च तच्छाखामात्र-

ॐ **ज्योत्स्ना** ॐ

निर्धारणस्यानेकविषयत्वादाह—**सौत्रमेकवचनमिति** : आत्वे कृते नुडनापत्त्येति । नच पूर्वस्मा-

ॐ **विषमपदविवृतिः** ॐ

—अङ्गाधिकारे तदन्तविधेः सत्त्वेनेति ग्रन्थासङ्गत्यापत्तेश्चे'ति वदन्ति । तत्राहुः—प्रत्ययग्रहणपरिभाषायां तदन्तांशस्य शब्दस्वरूपादिविशेष्याध्याहारमूलकत्वेनैकदेशान्वयस्वीकारादिना तृजन्तार्थलाभप्रयोजकतदन्तविध्यावश्यकतया तथैव पुनर्विशेष्यमध्याहृत्य तृजन्तान्तेत्यर्थस्वीकारेणादोषात् । एतेन 'षष्ठ्यर्थकविभक्तिमात्रस्य 'नाभि नभं चे'त्याद्यनुरोधेन निर्दिश्यमानपरिभाषाप्रवृत्तियोग्यताया वृद्धिसूत्रस्थभाष्यकैयटादिध्वनिततया षष्ठीनिर्देशाभावादित्याद्यसङ्गतमिति पाठकोक्तमपास्तम् । नाभ्यादौ प्रकृतपरिभाषावश्यकत्वे तदर्थं तत्र षष्ठ्यर्थावश्यकत्वेऽपि प्रकृते तदर्थकत्वे मानाभावात् । 'षष्ठीनिर्देशाभावा'दित्यस्य—तदर्थकविभक्तिनिर्देशाभावादित्यर्थः । 'यतश्चे'तिसूत्रे 'कारकेष्विति वदे'दिति—भाष्येण निर्धारणसप्तमीस्थले एकवचनान्तत्वस्यासाधुत्वादाह—**सौत्रमिति** ।

यत्तु पाठकेन—'निर्धारणसप्तमीस्थले प्रकृते समुदायबोधकत्वेऽनुद्भूतावयवभेदविवक्षया बहुवचनं स्यादित्यभिप्रायकं—निर्धारणस्यानेकविषयत्वादाहे'त्यवतारितं, तत्तुच्छम्, अनुद्भूतावयवभेदविवक्षया निर्देशोपपत्तौ सौत्रत्वकल्पनाया अन्याय्यत्वापत्तेः । **नियम्यत इति** । ननु यथासङ्ख्यपरिभाषैकवाक्यतया ऐच्स्थानिकऋऌवर्णविधायकत्वसम्भवे त्यागायोगः । न चैवमेजित्येव ब्रूयादिति वाच्यं, यथासङ्ख्यसम्पादनेन कृतार्थत्वात् । न च ह्रस्वादेश इति व्यर्थम्, ह्रस्वादेशे प्राप्ते इत्यर्थेन विषयविशेषबोधनेन साफल्यात् । किञ्च शास्त्रान्तरप्राप्तस्य नियामकत्वे एच इति व्यर्थं, परिभाषाप्रकरणानुरोधेनैतस्यापि परिभाषात्वेन परिभाषाणामनियमे नियमकारित्वेन' यस्येगनिग्ग्रस्वप्राप्तिस्तस्येग्रूपह्रस्वप्रापकत्वेन इगनिग्ग्रस्वप्राप्तेश्चैच एव सम्भवादिति चेन्न, परिभाषाप्रकरणानुरोधेनादेशपदानुरोधेन चैतस्य विध्यन्तरशेषतयैव लक्ष्यसंस्कारकत्वेन नियामकत्वस्य न्यायप्राप्तत्वात् ।

इति न यथासङ्ख्यम्। ह्रस्व एस्तु नास्त्येव, 'एओ' ङित्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये।

न चाद्धमात्र ऽवर्णस्याऽद्धमात्रेवर्णोवर्णयोरिति उत्तरसूत्रस्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम्, 'अर्द्धमात्राऽवर्णस्याऽर्द्धमात्रेवर्णोवर्णयो'रित्यस्यापि पक्षस्य—'प्लुतावैच' इति सूत्रे विनिगमनाविरहेण भाष्ये उक्ततया—समप्रविभागपक्षस्यैव भाष्यकृत्सम्मतत्वादित्याहुः।

प्रणीणामिति। न च 'रात्रो हली'ति विषयसप्तमीति प्रागेवाऽऽत्वं; निर्दिष्टपरिभाषाबाधे मानाभावात्। आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च।

केचित्—नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपात-

ॐ अभिनव-चन्द्रिका ॐ

आहुरिति। अभ्यनुज्ञावाक्ये, विघातकशास्त्रे वा सङ्कुचितसङ्कोचमकृत्वा सामान्यतः सन्निपातपरिभाषाया अनित्यत्वविषये सङ्कोचाभावे 'सुलु'इत्यादौ तुगापत्तिः। 'सुलुनी' इत्यादौ नुमर्थं सन्निपातपरिभाषाऽनित्यत्वस्यावश्यकत्वेन 'ह्रस्वो नपुंसके' इत्यत्राभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयोज्यसङ्कोचाभावे नुम इव तुकोऽप्यभ्यनुज्ञादाने प्रतिबन्धकाभावादित्यत्रारुचिर्बोध्या। सङ्कुचितसङ्कोचे तु सकलेष्टसिद्धिः। ॐ इत्यजन्तनपुंसकलिङ्गाः। ॐ

ॐ चिदस्थिमाला ॐ

विषय इति भावः। 'ऐचोश्चोत्तरभूयस्त्वा'दिति वार्त्तिकानुरोधेनाह—नचेति। आहुरिति। भाष्ये तत्प्रत्याख्यानं, ननु वार्त्तिकानुरोधेनेत्यरुचिराहुरित्यनेन सूचिता। अभ्युपेत्याह—निर्दिष्टेति। वस्तुतः सैव नेत्याह—आत्वे कृते इति। तद्विषये=नुड्विषये। एवं सति 'सुपिचे'त्येव—दीर्घ इति नेत्याह—'नामीतीति। अत्रारुचि-

ॐ ज्योत्स्ना ॐ

दपि विधौ स्थानिवद्भावान्नुडनापत्तिः सिद्धेति वाच्यं, स्थानिभूतादचः पूर्वस्यानिमित्तत्वेनाश्रितात्परस्य विधौ स्थानिवद्भाव इत्येव प्रदीपकृद्व्यवस्थापितेऽर्थे नुडनापत्तिरित्याशयात्। दीर्घेण विनाशावश्य-

ॐ विषमपदविवृतिः ॐ

आदेशपदं हि स्थानिनिमित्तसम्बन्धार्थकार्थेन नित्यसापेक्षत्वात्तेनैवान्वयि। तथा च एवः स्थाने आदिश्यमानेषु ह्रस्वेष्वित्यर्थे एतद्विधेयानामेतद्वाक्यविधेयज्ञानाधिकरणक्षणपूर्वक्षणावश्यकज्ञानविषयोद्देश्यज्ञानासमये ज्ञानसम्भवाच्छास्त्रान्तरप्रापितानामेव ग्रहणबोधनद्वारा विधायकत्वव्युदासात् यथासङ्ख्यशास्त्रप्रवृत्तौ विधायकत्वापत्त्याऽऽदेशग्रहणबोधितार्थासङ्गत्यापत्तेः। एतदर्थमेव ह्यादेशग्रहणम्। एज्ग्रहणं तु स्थानेन्तरतमपरिभाषाबाधनेन 'श्रीप'मित्यादाविग्रूपह्रस्वव्यवस्थापकनिरासाय।

न चैवमिग्ग्रहणमेव तत्र कुर्यादिति वाच्यं,सामर्थ्येन विनिगमनाविरहादजन्तेषु सर्वेषु एतस्य पाक्षिकप्रवृत्तिप्रसङ्गात्, अचश्चेतिपरिभाषाप्रवृत्त्यर्थं ह्रस्वग्रहणस्यावश्यकर्तव्यत्वाच्च। अनेकह्रस्वविधायकेषु ह्रस्वेग्ग्रहणयोः करणेऽत्यन्तगौरवापत्तेश्च। एतेन—'ह्रस्वे प्राप्ते एच इग्भवतीति विधायकमेवास्तु, किमितराङ्गबोधकादेशग्रहणेने'त्यपास्तम्; यथासङ्ख्यापत्तेः, परिभाषाप्रकरणबाधापत्तेश्च। 'भाव्यमानोप्युकार' इति परिभाषया दीर्घोकारस्यापि विधानापत्तेश्चेति सूक्ष्मचेतसो विभावयन्तु।

नचेति। इयं वृथा चिन्ता, विषयसप्तमीत्वस्यास्मिञ्छास्त्रे फलप्रमाणाभ्यामेवाश्रयणात्। अत्रेदं बोध्यं—प्रणीणामित्यत्र सन्निपातपरिभाषया पूर्वमात्वाप्रवृत्तावपि कृते दीर्घे तद्विरोधाभावादात्वे प्रराणामित्येव रूपम्। तद्विषय इति। नुड्विषय इत्यर्थः। एवञ्च सामान्यतो नुड्विषये संनिपातपरिभाषाऽप्रवृत्तिर्नामीतिशास्त्रेण बोध्यते इति भावः। नन्वेवं सति 'रामाणा' मित्यादौ 'नामी'ति दीर्घ इति

परिभाषाया विषय एव न । 'नामी'ति दीर्घस्तु 'सुपि चे'ति दीर्घं नित्यत्वाद्बाधते इति माधवाशयमाहुः ।

'ग्रामणि कुल'मित्यादौ नपुंसकह्रस्वत्वे 'ह्रस्वस्य पिती'ति तुङ्न, समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमात्राश्रयेऽन्तरङ्गे तुकि असिद्धत्वात् ।

ये तु—'षत्वतुकोरसिद्धः' इति वचनात्,—'न लोप' इति सूत्रे कृतितुग्ग्रहणाच्च—'ह्रस्वस्य पिती'ति सूत्रेऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति, तेषामुपजीव्यविरोधान्न तुक्, अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः ।

न चैवं सन्निपातपरिभाषा व्यर्था, तस्या अप्युपजीव्यविरोधमूलकत्वात्, किञ्च तस्या अपि स एवार्थः, अत एव सन्निपातपरिभाषादोषनिरूपणावसरे 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्या'दित्युक्तम् । न च 'न प्रत्ययः सन्निपातलक्षणः, अङ्गसञ्ज्ञा तद्विनिमित्तं स्या'दित्यग्रिमभाष्यविरोध इति वाच्यं, तस्यैकदेशयुक्तित्वात् ।

ॐ चिदस्थिमाला ॐ

बीजं तु दीर्घविषये तदप्रवृत्तावप्यत्रानित्यत्वात्तदप्रवृत्तौ न मानं, 'अनभिनिर्वृत्तस्ये'त्यादि, 'प्रसक्तस्यैव न जातस्ये'त्यादि च भाष्यमपि अत्र विरुद्धमिति । एतेन मनोरमानुयायिशाब्दिकदण्ड्याद्युक्तं निरस्तम् । अन्यत्र प्रसक्तदोषवारणमनयैवेति—प्रतिपादयितुमाह—**ग्रामणीति** । इदं दूषयति—**ये त्विति** । अन्यथोभयोर्वैयर्थ्यं स्पष्टमेव । **अजन्तत्वेति** । प्रातिपदिकेत्यादिः । एवम्=उक्तरीत्या तद्वारणे । भेदमभ्युपेत्योक्तं, वस्तुतः स एव नेत्याह—**किञ्चेति** । अत एव=तस्या अपि तदर्थत्वादेव । विचालः=नाशः । तत्र शङ्कते—**न चेति** ।

ॐ ज्योत्स्ना ॐ

**कत्वेनेति** । अत 'एङ्ह्रस्वात्सम्बुद्धे'रितिसूत्रे हल्ग्रहणानुवृत्त्यभावे सोरमादेशे 'आदेः परस्ये'त्यकारलोपे 'सुपिचे'तिदीर्घे 'हेकुण्डा'मिति स्यादितिभाष्ये उक्तमित्याशयः । **माधवाशयमाहुरिति** । अत्रास्वरसबीजं नामीतिसूत्रव्याख्यानावसरे उपपादितम् । **समुदितप्रातिपदिकापेक्षेति** । क्विविशिष्टस्य प्रातिपदिकत्वात्तदपेक्षह्रस्वस्यापि कृदनन्तरह्रस्वमात्रापेक्षतुकमपेक्ष्य बहिरङ्गत्वमित्यर्थः । तदाह—**वर्णमात्राश्रये इति** । यदा पित्कृत्प्रत्ययेन प्रकृतेराक्षेपात्—'ह्रस्वान्तप्रकृतेस्तुग्विधीयते' इति मतं,

ॐ विषमदविवृतिः ॐ

ग्रन्थासङ्गतिरत आह—**नामीतिदीर्घस्त्विवति** । **वर्णमात्राश्रयेति** । इदं चिन्त्यम्, तुग्विधौ 'यस्मात्प्रत्ययविधिस्तदादी'त्यस्योपस्थितौ तस्यापि प्रकृतिप्रत्ययसमुदायाश्रयणाद्बहिरङ्गत्वात् ।

न च पदद्वयाश्रयत्वेन ह्रस्वो बहिरङ्गः, तावतापि ह्रस्वशास्त्रीयनिमित्तसमुदायबहिर्भूतक्विन्निमित्तकत्वेन तुकोऽपि बहिरङ्गत्वात् । न च प्रातिपदिकसञ्ज्ञाया क्विबन्तत्वबुद्ध्यैव प्रवृत्त्या ह्रस्वस्यापि क्विबाश्रयत्वमस्त्येवेति वाच्यम्, एतस्य समासत्वनिमित्तकप्रातिपदिकत्वनिमित्तकत्वेनैतन्निमित्तकोटौ क्विपोऽप्रवेशात् । एतेन 'विश्वौह' इत्यादौ सम्प्रसारणस्य बहिरङ्गत्वं, समुदितप्रातिपदिकापेक्षत्वात्, गुणस्य त्वन्तरङ्गत्वमिति—अन्तरङ्गबहिरङ्गभावमाश्रित्यान्तरङ्गपरिभाषाज्ञापकवर्णनशेखरादियोजनाप्यपास्ता । बहिरङ्गशास्त्रीयनिमित्तसमुदायान्तःपातिणिनिमित्तकत्वाद्गुणस्य ।

किञ्च 'निमित्तञ्च सप्तम्याद्यन्तोपात्तमेवे'ति परिभाषेन्दुशेखरेण च विरुद्धमिदमत एव वाऽरुचेराह—**ये त्विति** । **अप्रवृत्तिमिति** । तत्फलन्तु 'प्रकृत्ये'त्यादौ ल्यपोऽसिद्धत्वाभावेन तुक्प्रवृत्तिः । **उपजीव्यविरोधादिति** । ग्रामणिकुलमित्यादाविति भावः । एवं हि कृति तुग्ग्रहणस्यान्तरङ्गपरिभाषाया-

अन्यथा 'शैव' इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम् ।

'ग्रामणिपुत्रो' 'ग्रामणि कुल'मित्यादौ पूर्वोक्तरीत्या तदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि तुगागमं सिद्ध्यतीत्याशयेन 'कृन्मेजन्तः' इति सूत्रे 'ह्रस्वस्य पिती'त्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम् ।

॥ इत्यजन्तनपुंसकलिङ्गाः ॥

❀ चिदस्थिमाला ❀

न त्वनुपपन्नमिति=अन्यथेति । तत्त्वाभावे इत्यर्थः । अपिना दाक्षिरित्यादिसङ्ग्रहः । एवञ्च वर्णाश्रय इति–विशेषणवैयर्थ्यमिति चेत्तत्राह—अन्यत्रेति । उद्योतादावित्यर्थः । नन्वेवं 'कृन्मेजन्त' इति सूत्रभाष्यविरोधोऽत आह—ग्रामणीति । षष्ठीतत्पुरुषः । अपिरुक्तसमुच्चये । इत्यादौ=तद्विषये । तस्य तत्त्वं चोक्तहेतुद्वयादेव इत्याद्यन्यत्र स्पष्टं, तदाह—इत्यलमिति ।

॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

❀ ज्योत्स्ना ❀

तदोभाभ्यां समसमुदायाश्रयणेऽपि ह्रस्वस्य क्लीबरूपार्थमापेक्षत्वाद्बहिरङ्गत्वमिति बोध्यं, स्पष्टञ्चेदं 'कृन्मेजन्त'इत्यत्र प्रदीपे । न प्रत्ययःसन्निपातलक्षणइति । अकारान्तप्रकृतिसन्निपातनिमित्तस्य प्रत्ययस्य तन्निमित्तकत्वाभावादिति भावः ।

अङ्गसञ्ज्ञा तर्हीति । [ २६० पृ० ] तस्याः प्रकृतिप्रत्ययसन्निपातनिमित्तकत्वादिति भावः । अनिमित्तं स्यादिति । प्रकृतिप्रत्ययविघातकस्यानिमित्तं स्यादित्यर्थः । अन्यत्र निरूपितमिति । अत्रारुचिबीजं तूक्तभाष्यस्यैकदेश्युक्तित्वे प्रमाणाभावः । शैव इत्यत्राङ्गसञ्ज्ञाया लोपनिमित्तत्वापादनं तु दाक्षिरित्यत्र प्रत्ययस्य तदनिमित्तत्वापादनेन तुल्यं, सामर्थ्यादाङ्गो वर्णविचालो भविष्यतीति प्रदीपकृदुक्तप्रतिविधानमपि तत्र तुल्यम् । अत्र तु मते शैव इत्यत्र चरितार्थस्य लोपस्य दाक्षिरित्यत्राकारान्तप्रकृत्युपजीवक इञ्निमित्तं न स्यादिति तत्र प्रतिविधानान्तरमास्थेयं स्यादित्याहुः ।

इत्यलमिति । स्वरूपव्याक्रियया पराकर्तव्यस्य मतस्यैतावत्येव पराकरणे समर्था, स नातोधिकमपेक्षत इत्यर्थः । तथाहि 'ह्रस्वस्य पिति कृती'तिसूत्रेऽन्तरङ्गपरिभाषयाबहिरङ्गत्वमित्यर्थः । अत्रारुचिबीजं तूक्तपरिभाषायाः सामान्येनाप्रवृत्तिरूपभाष्यैकदेश्युक्तित्वकल्पनागौरवपराहता । 'ग्रामणिकुल'–

❀ विषमपदविवृतिः ❀

स्तुविपर्ययऽप्रवृत्तिज्ञापकता भग्ना । स्वस्मिँश्चारितार्थ्यविरहाच्छङ्कते—अन्यथेति । समाधत्ते–तस्येति । अन्यत्र निरूपितमिति । अत्र पाठकाः—अत्रारुचिबीजन्तु उक्तभाष्यैकदेश्युक्तित्वे मानाभावः, 'शैव' इत्यत्राङ्गसञ्ज्ञाया लोपनिमित्तत्वापादनन्तु 'दाक्षि'रित्यत्र प्रत्ययस्य तदनित्यत्वापादनेन तुल्यम् । सामर्थ्यादाङ्गो वारणविचालो भविष्यतीति प्रदीपकृदुक्तम् प्रतिविधानमपि तत्र तुल्यम् । अत्र तु मते 'शैव' इत्यत्र चरितार्थस्य लोपस्य दाक्षिरित्यत्राकारान्तप्रकृत्युपजीवक इञ्निमित्तं न स्यात्, इति प्रतिविधानान्तरमास्थेयं स्यादित्याहुः, तत्तुच्छम् ; भवतीत्यादिषु विजातीयेषु बहुषु स्थलेषु सन्निपातपरिभाषाया अतिप्रसक्तत्वेन 'दोषाः खल्वपि साकल्येन परिगणिता' इति भाष्यासङ्गत्वापत्तेः। सन्निपातपरिभाषाया उपजीव्यविरोधमूलकत्वेन तत्सङ्गतेश्चेति दिक् । ननु 'कृन्मेजन्त' इतिसूत्रे 'ह्रस्वस्य पिती'ति सूत्रविषये एव सन्निपातपरिभाषायाः भाष्ये सञ्चरितत्वात्, तेन 'ग्रामणिपुत्र' इत्यादौ तुगभावः सन्निपातपरिभाषया सिध्यतीत्यर्थेन विरोधो—ह्रस्वस्य पितीति सूत्रेऽन्तरङ्गपरिभाषाया अप्रवृत्तेरिति स्वोक्तिरित्यर्थेन आह—एकदेशिन इति । * इत्यजन्ता नपुंसकलिङ्गाः । *

❀ ज्योत्स्ना ❀

मित्यत्र सन्निपातपरिभाषया तुग्वारणपरं भाष्यन्त्वेकदेश्युक्तिः, ग्रामणिच्छत्र'मित्यत्र तुगभावप्रसङ्गादिति स्पष्टं प्रदीपे। 'षत्वतुकोरसिद्धः' इतिवचनाज्जानन्तर्ये बहिष्ट्वप्रकृति'रितिपरिभाषा ज्ञाप्यते इति तु भाष्यादिग्रन्थप्रसिद्धो घण्टापथः। नच तुग्विधावजानन्तर्यमाश्रितमिति बहिरङ्गासिद्धत्वन समाधानपरभाष्यविरोधापत्त्या तत्रैकदेश्युक्तित्वकल्पनागौरवमेवमपि तुल्यमिति वाच्यं, बहिरङ्गशास्त्रे उपात्तो योऽच् तस्यान्तरङ्गशास्त्रे आनन्तर्याश्रयणेन तदन्यस्य कार्ये कर्तव्ये बहिरङ्गासिद्धत्वं नेतिपरिभाषार्थव्यवस्थापनाद्बहिरङ्गशास्त्रे उपात्तस्याचो ह्रस्वान्तरङ्गशास्त्रे तुग्विधौ पित्कृदानन्तर्याश्रयणेऽपि तदन्यस्य तुको विधानाभावात्परिभाषाप्रवृत्तेरभावात्। बहिरङ्गशास्त्रे उपात्तस्याचोऽन्तरङ्गशास्त्रे आनन्तर्याश्रयणं क्वचित्साक्षाद्यथा–'अक्षद्यू'रित्यत्र। द्यूरित्यत्र 'छ्वो'रिति बहिरङ्गशास्त्रे उपात्तस्य च ऊठ्पस्यान्तरङ्गशास्त्रे–'इकोयणची'त्यत्र। क्वचित्तत्स्थानिद्वारा–यथाक्षद्यूरित्यत्रैवान्तरङ्गे वलिलोपे ऊठ्स्थानिनो वकारस्य। कोऽसिचत् अधीत्येत्येतयोस्त्वेकत्र बहिरङ्गे उपात्तस्यैकादशरूपस्याच आनन्तर्याश्रयणेन तदन्यस्य षत्वं विधेयम्। अन्यत्र च तथाभूतस्य दीर्घैकादेशस्याचः पित्कृदानन्तर्याश्रयणेनासिद्धत्वबलाद्ध्रस्वबुद्ध्या गृहीतस्य तुग्विधेय इति,—परिभाषाप्रवृत्त्या 'षत्वतुकोरसिद्ध' इत्यस्य भाष्योक्तं तज्ज्ञापकत्वं, ज्ञापिते सति चारितार्थ्यं च नानुपपन्नम्। एवञ्च कृतितुग्ग्रहणस्य वैयर्थ्यशङ्कापि नास्ति। सन्निपातपरिभाषाया अनित्यत्वे तज्ज्ञापकं भवेद्ग्रामणिच्छत्रमित्यत्र तुगर्थमित्याद्यधिकजिज्ञासुभिः परिभाषाप्रदीपार्चिर्द्रष्टव्यः। ❀ इत्यजन्ता नपुंसकलिङ्गाः। ❀

नमो विद्वच्छिरोभूषारत्नाय न्यायवार्द्धये।
पितामहाय गुरवे 'स्नेहिरामजि'शास्त्रिणे॥ १॥
नुमोऽनवद्य-सद्ग्रन्थ-विद्योद्योतितदिङ्मुखान्।
मरुमण्डलमार्त्तण्डस्नेहिरामाऽभिधान् गुरून्॥ २॥



॥ श्रीः ॥

# हलन्तपुँल्लिङ्गप्रकरणम् ।

**हो ढः** । 'झलो झलि'त्यतो 'झली'ति,' 'पदस्ये'ति, 'स्कोरि'त्यतो'ऽन्ते' इत्यनुवर्त्तते । झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्य ढः स्यादित्यर्थः । ढस्तु न विहितः । झषन्तत्वाभावेन भष्भावाप्राप्त्या धुडित्याद्यसिद्धेः ।

**दादेर्धा** । दादिग्रहणमौपदेशिकदादित्वस्य लक्षकं, व्याख्यानादित्यभिप्रेत्य फलितार्थमाह—**उपदेशे इति** । एतच्च प्रकृतसूत्रे भाष्ये ध्वनितम् । तत्र हि "—'घत्वस्य सिद्धत्वाड्ढत्वं प्राप्नोती'त्याशङ्क्य—अपवादत्वेन समाधाय, 'अथवा एवं वक्ष्यामि—'होढोऽदादे'रिति, ततो 'धातो'रिति, 'दादे'रिति वर्त्तते, 'ने'ति निवृत्तम्—"इत्युक्तम् । द्रुहेस्तु 'वा द्रुहे'

❀ अभिनव-चन्द्रिका ❀

**पदान्ते विद्यमानस्येति** । हस्य पदविशेषणत्वं स्वीकृत्य—'हान्तं यत्पदं तत्र विद्यमानस्य निर्दिश्यमानस्ये'ति वक्तुं युक्तम् । यद्वा—धर्मिपारतन्त्र्येण 'हत्वसमानाधिकरणपदान्तत्वाश्रये विद्यमानस्य हस्ये'त्युचितम् । यद्वाऽन्ते'इत्यस्य षष्ठ्यन्तत्वं प्रकल्प्य—'पदान्तस्य हस्ये'ति व्याख्यानमुचितम् । यथाश्रुतन्तु न सम्यक्, 'लिड्भ्या'वित्यादौ 'ह्भ्या'विति समुदायस्यापि पदान्तत्वेन तत्र विद्यमानस्य हस्य ढत्वापत्तेरिति दिक्[1] ।

❀ चिदस्थिमाला ❀

त्रयाणामनुवृत्तौ वाच्यं वाक्यार्थमाह—**झलीति** । एतेन 'पदचरमावयवस्य हस्येत्यर्थः—' इति शास्त्र्युक्तमपास्तम् । प्रक्रियालाघवेनाह—**ढस्त्विति** । आदिना–'लेढो'त्यादि । वृत्त्याद्येकवाक्यतया आह—**दादीति** । **व्याख्यानादिति** । वक्ष्यमाणभाष्यमूलकाद्वृत्त्यादिकृतव्याख्यानादित्यर्थः ।'अभिप्रेत्ये'त्यनेन निर्बीजवाच्यार्थत्यागरूपोक्तार्थेऽरुचिर्बोधिता । **घत्वेति** । धुगादावित्यादिः । **धातोरिति** । धातोर्घ इतीत्यर्थः । नचात्र न्यासे द्रुहेर्ढत्वं न स्यात्, 'वाद्रुहे'त्यनेन तु घत्वस्यैव विधानात्, तथाच भाष्यमयुक्तमेवात आह—**द्रुहेस्त्विति** ।

❀ ज्योत्स्ना ❀

**असिद्धेरिति** । तथासति झषन्तत्वाभावाद्भष्भावो न स्यादिति तदसिद्धिरिति भावः ।

❀ विषमपदविवृतिः ❀

**होढः** । **ढस्त्विति** । 'प्रतिपत्तिलाघवाये'ति शेषः । **धुडित्याद्यसिद्धेरिति** । झषन्तत्वाभावेन भष्भावानापत्तेरिति भावः । आदिपदेन 'लीढ' इत्यादि ग्राह्यम् ।

---

[1] दिगर्थस्तु–'लिड्भ्यां' इत्यत्र 'ह्भ्यां'मितिसमुदायं पदान्ततयाऽऽश्रित्य ढत्वापत्तिर्न युक्ता, 'वसुस्रंसुध्वंस्वनडुहा'मित्यादिनिर्देशेन पदचरमावयवस्य हस्यैव ग्रहणात् । अत एव 'झली'त्यनुवृत्तिरपि सफला, अन्यथा 'लीढ' इत्यादौ 'ह्त' इति समुदायस्यापि पदान्ततयैव ढत्वसिद्ध्या तदर्थं तदनुवृत्तिर्व्यर्थैव स्यात् । एतेन 'वस्तुतस्तु'इत्यादिना दण्डिभट्टोक्तावपरितुष्यतां पर्वतीयानां—'पदावसाने विद्यमानस्ये'त्याद्यर्थसम्पादनायासो व्यर्थ एवेति सुधियो विभावयन्त्विति गौडाः प्राहुः ।

त्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति—तदाशयः। तत्र 'धातो'रिति—सूत्रे भाष्यकृत्कृत'दादे'रित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्दादिलक्षकं-सामर्थ्यात्। अर्थाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेऽप्येवम्। अत एव नामधातुविषये 'दामलि'डित्यादौ ढत्व-घत्वाभावौ सिद्धौ। एवञ्च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्य-उपदेशकालिकदादित्ववल्लक्षकतोचिता।

## ॐ अभिनव-चन्द्रिका ॐ

**फलान्तराभावेनेति।** दादिभिन्ने धातौ घत्वस्याऽसिद्धत्वाड्ढत्वेन न तत्र घत्ववारणाय सेति भावः। नन्वु दाद्यवयवभिन्नहस्य ढत्वविधानेन—लेढीति लिट्, दामनो लिट्—दामलिडित्यत्र हस्य दाद्यवयवत्वेन ढत्वानापत्तिरिति चेन्न; अर्थाधिकारानुरोधेनौपदेशिकदादिधात्ववयवभिन्नस्येत्यर्थसम्पादनेनाऽदोषात्। **परे** तु—'दादे'रित्यस्याऽनुवृत्तेः—अत्रार्थाधिकारानुरोधाद्दादिधात्व·

## ॐ चिदस्थिमाला ॐ

तुः—वैलक्षण्ये। समुच्चयार्थकवाशब्देन ढस्य समुच्चय इति भावः। अपिना—घत्वसमुच्चयः। अनुवृत्त्या च तल्लाभः। तदाशयः=भाष्याशयः। ध्वनितत्वं तत्राद्यपक्षे। [आद्यपक्षे] ध्वनयितुमन्त्यपक्षेऽर्थमाह-**तत्रेति**। अन्त्यपक्षे इत्यर्थः। **फलान्तरेति**। अ-दादिव्यावृत्तिरूपफलाभावेनेत्यर्थः। असिद्धत्वेन दादिभिन्नविषये ढत्वस्यैव प्रवृत्तेरिति भावः। तत्=अनुवृत्तदादेरिति पदम्। वृत्त्यैकवाक्यनयेति भावः। नन्वत्र सामर्थ्यात्तथार्थसम्भवेऽपि पूर्वत्र न, दादिव्यावृत्त्या साफल्यात्, एवञ्च-दामलिडित्यादौ वक्ष्यमाणवैयधिकरण्यान्वयेऽपि घत्वाभाववत् ढत्वमपि न स्यात्, अदादेरिति निषेधादत आह-**अर्थेति**। चस्त्वर्थे। एवं=तल्लक्षकम्। उभयत्र तथार्थकरणफलमाह—**अत एवेति**। धातुत्वसंपत्तये आह-**नामेति**। नचैवमपि न दामलिहो व्यावृत्तिः, उद्देशोपदेशयोः सङ्कीर्णत्वेनौपदेशिकत्वस्य धातुत्वस्य च सत्त्वादिति वाच्यं, दादेरित्यनुवृत्तिसामर्थ्यादत्रतयोर्भेदस्यैवाङ्गीकारादिति भावः। प्रकृतमाह—**एवञ्चेति**। तत्र तयोः सिद्धौ चेत्यर्थः। **तदेकेति**।

## ॐ ज्योत्स्ना ॐ

**फलान्तराभावेनेति**। चिन्त्यमेतत्—'अधो'गित्यत्र 'होढोऽदादे'रित्यनेन घत्वस्यासिद्धित्वात्प्राप्तस्य ढत्वस्य बाधनार्थं 'धातोरवयवस्य दादे'रिति वैयधिकरण्यान्वयप्रयोजिकाया दादेरित्यनुवृत्तेर्भाष्यकृतैवोक्तत्वात्। वृत्तिकृता त्विहोपदेशपदाथगर्भितो वाक्यार्थो दर्शितः—'धातोर्धातो'रित्यस्यावृत्त्या मिश्रप्रभृतिदीक्षितपर्यन्तार्वाचीनैर्व्याख्यातो न तु भाष्येऽप्येतदर्थग्रन्थ उपलभ्यते। ततो यथाभाष्यं-

## ॐ सदाशिवभट्टीयम् ॐ

, **दादेर्धातोर्घः। फलान्तराभावेति**। अत्र **कश्चित्**—दादेरित्यत्र कर्मधारयो-धातोरित्यवयवषष्ठी, धातोरवयवो य आदिर्दकारः,[सा पञ्चमी-]तस्मात्परस्य घः स्यादिति वाक्यार्थः,एवञ्च धुगित्यत्र दात्पराव्यवहितहकारासम्भवेन येन नाव्यवधानन्यायेनैकव्यवायेऽपि घत्वम्। 'दामलि'डित्यत्र बहूनां व्यवायसत्वान्न भवति। एवमधोगित्यत्रापि न दोष इति बोध्यम्। त्वन्मतेऽधोगित्यत्र घत्वाय दादेरित्यस्यावश्यकत्वात् नत्-फलान्तरं स्फुटम्। एवञ्च दादेरित्यावृत्तिर्लक्षणा च न कर्त्तव्या भवति, त्वन्मते धातोरिति व्यर्थं च। कथमधोगिति शङ्का च स्वरसतो न सङ्गच्छते, भाष्यन्तूपलक्षणमेवेत्याहुः।

## ॐ विषमपदविवृतिः ॐ

**दादेर्धातोः। ढत्वस्यापि विधानार्थमिति**। वाग्रहणं समुच्चयार्थमिति भावः। उक्ताशयम्=औपदेशिकदादित्ववति लक्षणेत्युक्ताशयम्।

---

## ॐ वरवर्णिनी ॐ

**दामलिडिति**। **परेतु**—अपवादत्वपक्षे नामधातुविषये क्यजन्तदामलिह्शब्दे घत्वप्रवृत्तेरवश्यमेव वाच्यतया तदैकवाक्यतया 'होढोऽदादे'रिति पक्षेऽपि तत्र घत्वमेवोचितम्, होढोऽदादे'रितिन्यासे औपदेशिकदादिभिन्नस्येत्यस्य भाष्यादलाभात्। 'सामान्यतो दादिभिन्नस्ये'त्यर्थे तु क्यजन्तदामलिह्शब्दे

तदन्तरं—'दादे'रिति वर्त्तते—इति भाष्यस्योक्ताशयमजानतः 'घोऽदादे'रित्युच्यते, कथमधो'गिति शङ्कायाम्—'एकाच' इतिसूत्रार्थमपि प्रसङ्गान्निर्गतं 'धातोरवयवो यो दादि'रित्यर्थमुक्त्वा—गर्दभयतेरप्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा—'दोग्धे'ति तु व्यपदेशिवद्भावात्सिद्धम्--" इति भाष्ये उक्तम् । तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता--तस्येहानावश्यकत्वं सूचितम् ।

## ❀ अभिनव-चन्द्रिका ❀

वयवभिन्नत्वेत्यर्थमन्तर्भाव्येन चारितार्थ्येनादृशाऽर्थकल्पने प्रमाणाभावः । न चैवं क्यजन्त-निष्पन्नदामलिट्शब्दे ढत्वं न स्यादिति वाच्यम्, इष्टापत्तेः । अत एव भाष्ये'—'घोऽदादे'-रित्युच्यते, कथमधोक् ?—'' इति शङ्कायां 'धातोरवयवो यो दादि'रिति वैयधिकरण्येनैव समा-धानमुक्तम् । दामलिट्शब्दे घत्ववारणाय तदर्थमवश्यं लक्षणाश्रयणे तु तेनैव 'अधो'गित्यत्र निर्वाहे 'घोऽदादेरित्युच्यते' इति शङ्कायाः, वैयधिकरण्येन तत्समाधानस्य चाऽसङ्गतिः स्पष्टैव । तस्मात्तादृशार्थे लक्षणाऽप्रामाणिकी । अत एव सूत्रे'धातो'रिति चरितार्थम्, अन्यथा औपदेशिक-

## ❀ चिद्स्थिमाला ❀

तत्पक्षैकेत्यर्थः । उचितेति । अन्यथा फलभेदेन पक्षभेदस्यैवासाङ्गत्यापत्तेरिति भावः । नन्वेवमभिन्नत्वं-भाष्यासङ्गतिरत आह—तदनन्तरमिति ।'घत्वस्यासिद्धत्वा'दित्यादि निवृत्त'मित्यन्तोक्तग्रन्थानन्तरमित्यर्थः । 'भाष्ये उक्त'मित्यत्रान्वयः । 'अजानत'इत्यस्य 'शङ्काया'मित्यत्रान्वयः । नन्वेवं शङ्कायोजनेऽप्युत्तरमतिव्याप्ति-वारणायावश्यकत्वात्तदेव वाच्यमत आह—एकाच इतीति । इत्यर्थमिति । तथाचाधोगित्यादिसिद्धिः । नन्वेवं दोग्धेत्यादि न स्यादत आह—दोग्धेतीति ।

तत्र=भाष्ये । अनावश्यकत्वमिति । लक्षणयैव निर्वाहात् । अन्यथाऽधोगित्यादौ घत्वप्रवृत्ति-रूपफलान्तरसिद्धयेऽत्रैव सूत्रे तस्यावश्यकत्वेनोत्तरत्र तदावश्यकत्वप्रतिपादनस्य निर्बीजतापत्तिस्तदाह—

## ❀ ज्योत्स्ना ❀

दामलिगिति घत्वेनैव भाव्यं,धात्ववयवदादित्वस्य दोग्धेत्यादौ व्यपदेशिवद्भावेनेवेहापि वक्तुं शक्यत्वात् । वैयधिकरण्यान्वयस्य न पक्षद्वयसाधारणत्वेऽप्यधोगित्यत्र ढत्वप्राप्तिराद्यपक्षे वचनप्रामाण्याद्बाधनीया । द्वितीयपक्षे घत्वस्यासिद्धत्वाद्योरग्रन्थेऽप्यदादेरितिबहुव्रीहिः प्रसज्यप्रतिषेधस्य वाऽऽश्रयणेन ना वारणीया । दादिकर्मोपपदे दादिहान्तधातोः क्विप्तु न, अनभिधानात्, सति तत्र गन्तप्रयोगानभिधानं, सिमादि-प्रकृत्यन्तरस्य तद्धिविषयतेति विशेष इत्याहुः । सीरदेवस्तु-परिभाषावललभ्यः सूत्रे उपदेशपदार्थ इति

## ❀ वरवर्णिनी ❀

दादिभिन्नत्वस्याभावाड्ढत्वं दुर्लभमेव । एवञ्च अपवादपक्ष—ढोढोऽदादेरितिन्यासपक्षयोरेकवाक्यता सम्पद्यते, एवञ्च—दामलिगित्येव रूपनिष्पत्ते । ननु नहि—'दादेरि'ति वर्त्तते'इत्यादिभाष्यासङ्गतिरिति चेन्न, अर्थाधिकारा-नुरोधेन दादिधात्ववयवभिन्नस्य हस्येत्यर्थसम्पादनेन तच्चारितार्थ्यात् । न च दादेरित्यनुवृत्त्यभावेऽपि 'हान्तस्य धातोर्हस्य घः' इत्यर्थेऽपि अधोगित्यादिसिद्धौ दाद्यनुवृत्तिर्व्यर्थेति वाच्यं, दाम गृह्णातीत्यर्थे-दामोपपदाद्ग्रहधातोः क्विपि दादिपदानुवृत्तिसत्वे धातुघटकदादित्वाभावेन 'धातो'रित्यस्याप्रवृत्त्या, दादित्वाड्ढोढोऽदादेरित्य-स्याप्यप्रवृत्त्या ढत्वघत्वयोरभावा'ज्झलां जशोऽन्ते' इति जश्त्वेन हस्य गत्वे—'दामगुक्' इति भवति, दादिपदानुवृत्त्यभावे तु—हान्ततया घत्वप्रवृत्त्या भष्भावेन 'दामघुक्' इति रूपं भवेदिति फलभेदस्य स्पष्टत्वात् । एवञ्चानुवृत्तमपि दादिपदं 'दादिर्यो धातु'रिति सामानाधिकरण्येनैवान्वेति—दामगुगादिसिद्धये इत्यभिदधत्यस्मद्गुरवस्त्रिपाठिपादाः ।

**ॐ चिदस्थिमाला ॐ**

तेन चेति । तेनापीत्यर्थः। वस्तुतस्तु 'दादेरिति वर्त्तते'इत्यस्य नोक्ताशयः-अग्रिमग्रन्थानां दुर्योजत्वापत्तेः। किन्त्वित्थम्-असिद्धत्वेनाशङ्कापवादत्वेन समाधाय-'अथवे'त्याद्युक्तं भाष्ये। तयोः पक्षयोरयं भेदः-पूर्वत्र सिद्धत्वमूरीकृत्यापवादत्वेन समाहितं, नचासिद्धशास्त्राबाधाय प्रतियोगं तदुपस्थानादेतत्सूत्रारम्भाच्च विकल्पोऽस्तु, श्रुत्या प्रकरणबाधस्यैव युक्तत्वेनोत्सर्गापवादयोर्विकल्पायोगात्, वाद्रुहेत्यत्र द्रुहग्रहणानर्थक्यापत्तेश्च। तस्मादेतद-सिद्धत्वाड्ढत्वे एतदानर्थक्यापत्तिरिति तदपवादत्वमस्य युक्तम्, इदानीन्तु मूलभूताऽसिद्धत्वादेरभावः प्रतिपाद्यते इति,-तथाहि होढोदादेरित्युक्तिमात्रेण वाक्यार्थद्वयाशयकेनापवादत्वान्यनिषेधप्रकारेण शङ्कासमाधाने-ऽप्यसिद्धत्वं,निषेधद्वारा विपरीतमपवादकल्पत्वं च पर्यवसितं न निरस्तमिति स्वीकृतमेव, नामधातुदामलिडाद्यर्थ-माद्यमावश्यकञ्चेति न पूर्वसमाधितो वैलक्षण्यमतोऽग्रे दादेरित्यनुवृत्तिः, तथा च भिन्नविषयत्वान्नापवादत्वं, न वा तत्कल्पत्वं, नाप्यसिद्धत्वमिति—ततो वैषम्यं स्फुटमेव। यद्वोक्तशङ्कायास्तथोक्तिमात्रेण समाधानेऽप्यग्रे यथान्यासीय एवार्थो नार्थान्तरमिदानीमिति स्पष्टं बोधनाय 'दादेरिति वर्तते नेति निवृत्त'मित्युक्तम्।

यद्वा पूर्वसूत्रेऽदादेरित्यत्र किंबहुव्रीहियुनञ्समासात्षष्ठी ? उत कर्मधारययुतनञ्समासात्पञ्चमी ? आद्योऽपि किं व्यधिकरणो बहुव्रीहिरुत समानाधिकरणः ? तत्र नाद्याद्यः-गमकाभावात्। आदिपदस्यावयववाचित्वेन प्रसिद्धत्वाच्च। आद्यान्त्ये-दादेरितिकस्य विशेषणं ? न धातोस्तस्याऽसत्त्वात्, न पदस्य, झल्यटितवाक्ये तद-सम्बन्धात् दुहादेर्धातोरनुकरणे अभेदविवक्षायां दुड्भवतीत्यापत्तेश्च, सकृच्छ्रुतस्यान्तपदेन क्लृप्तसम्बन्धत्वाच्च, आवृत्तौ मानाभावाच्च। नापि हस्य, दस्य हानवयवत्वात्, आदिपदस्य तत्त्वेन प्रसिद्धत्वात्। तथाच कर्मधारये आदिभूतदात्परस्य हस्य ढत्वं नेत्यर्थः पर्यवसितः, एवं हि दोग्धा धुगित्यादीष्टसिद्धावपि उक्तन्यायेन 'दंदग्धि'-धुगित्यादीनामसिद्धिः, अधोगित्यादौ ढत्वापत्तिश्च। नचैवमादिपदं व्यर्थं, दंदग्धि-अधोगित्यादावनिष्टकरणेन-साफल्यात्,—दंदड्ढीत्यादीष्टसाधनेन साफल्याच्च। अतो भगवता पूर्वत्रापि बहुव्रीहिणा धातोरेव विशेषण-मिदमिति सूचयितुं तथोक्तम्।

यद्वा—अदादेरिति लाघवात्पर्युदासे आदिभूतदभिन्नात्तत्सदृशात्परस्य हस्य ढत्वमित्यर्थे दोग्धेत्यादीनां सर्वेषामसिद्ध्यापत्तिः। नचोत्तरसूत्रानर्थक्यं, तथाहि सति विकल्पापत्तिरतः प्रसज्यप्रतिषेधः स न पर्युदास इति सूचयितुं तथोक्तम्। तदाहि दादिना नञोऽसम्बन्धात्केवलस्यानुवृत्तिः सुलभेति तदाकूतम्।

यद्वा—'अदादि'रिति च्छेदे तस्यैवाग्रेऽनुवृत्त्या ढत्वघत्वयोस्तुल्यविषयकत्वेन विकल्पापत्तिरतो भगवता तथोक्तमिति। न चैवमेवाशयकल्पने किं विनिगमकमिति वाच्यम्, अग्रे बहुषु ग्रन्थेषु दुर्योजनापेक्षयात्रैकत्रैव तथाशयकल्पने लाघवात्। एवञ्च भिन्नविषयतादिप्रतिपादकमिदमिति न तथार्थो लक्षणया भाष्याभिमतः, तथा च दामलिडादिप्रातिपदिकानामनभिधानमेव भाष्याभिमतम्, अन्यथा आद्यपक्षे नामधातुप्रातिपदिकभेदेन दामलिक् दामलिडिति रूपद्वयस्य ण्यन्ताण्यन्तभेदेन तक्-तडित्यादिरूपद्वयस्येव प्राप्त्या अन्त्यपक्षे नामधातो-दामलिगितिवत्प्रातिपदिकस्यापि अदादेरिति—निषेधात् ढत्वाभावाज्जश्त्वेन तदेवेति फलभेदापत्तेः। एतदर्थमेवाथवेति पक्षोक्तिः।

किञ्चान्यत्रोत्तरार्थत्वस्यावश्यकत्वोक्त्या सर्वथा तदावश्यकत्वस्य बहुषु स्थलेषु दृष्टत्वेनेहानावश्यकत्वकल्पनम-युक्तं, किञ्च तथाभिमतत्वे वदेत्तथाभाष्यकृत्, यतोनोक्तमतो नाभिमतं तस्य। किञ्चाधोक्सिद्धये वैयधिकरण्य-मेवोक्त्वा तस्येहावश्यकतां ध्वनयितुं न तस्यैवेहैवावश्यकत्वमपि तूत्तरत्रापीत्याह"—सा चावश्यमवयवयोगा-षष्ठी विज्ञेयोत्तरार्थे"ति। सा षष्ठी अवयवयोगाऽवश्यमुत्तरार्था च विज्ञेया,चात् इहार्थेत्यर्थः। तस्येह फलस्योक्तत्वा-त्तत्राह—'किंप्रयोजन'मिति। उत्तरयति—एकाचइति। इहापि यथा स्यात्-गर्धबिति। एवमुभयत्रावश्यक-त्वमुक्तम्। अतएव प्रकृते पुनः शङ्कते-'यदि तथा षष्ठी दोग्धेत्यादौ न प्राप्नोती'ति। समाधत्ते—एषोऽपी-त्याद्युक्तं-भाष्ये। यद्युक्तमन्थात्तथाभिमतं भवेत्तर्हि 'यद्यवयवयोगे'त्यादि ग्रन्थासङ्गतिरेव स्यात्। शङ्काया अज्ञानतो योजनेऽपि सिद्धान्ते तथाशयस्य प्रकाश्यत्वेन 'एषोऽपी'त्याद्यसङ्गतिरेव। तथा च भाष्यस्योक्त एवार्थो न तथेति दादेरित्यनुवृत्तेस्तथाशयकल्पने तदसङ्गतिरेवेति मदुक्ताशयकल्पनैवोचिता। अत्रार्थे धातुपद-

तेन च 'दादे'रित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः । धुगित्यादिसिद्धये गो नोक्तः ।

'औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमि'ति परिभाषा तु—तत्र—तत्रोपदेशग्रहणं कुर्वन्सूत्रविरोधेन 'तरप्तमपौ घः' 'अत्वसन्तस्ये'त्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी ।

तत्र हि भाष्ये इदमुक्तम्—"इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते—'यत्रास्यैतद्रूप'मिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, कोऽसौ ?, उपदेशो नाम—"इति ।

अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तं, न्यायस्यान्यत्रापि तुल्यत्वादिति बोध्यम् ।

---

### ❀ चिदस्थिमाला ❀

मपि लिङ्गम्, अन्यथा भवल्लक्षितार्थेनैवाऽधातुव्यावृत्तिसिद्धा तदानर्थक्यापत्तिः । 'उत्तरार्थत्वेपीह-किञ्चित्रो'इनित्यायेनेहकरणस्य सफलत्वौचित्ये इह तदभावात् । एवञ्च मूलादिदण्ड्यन्नाश्रित्यापत्तेति बोध्यं, तदाह—इत्यन्यत्रेति । बोढे इत्यर्थः । आदिना 'धुग्ध्व'मित्यादि । अन्यथा भष्भावादि न स्यात् ।

मूलस्याशयान्तरं निराचष्टे—औपेति । भाष्ये न्यूनतां परिहरति—अनुबन्धेति । पदादिलाघवा-

### ❀ ज्योत्स्ना ❀

वृत्तिकाराशयमुत्प्रेक्षते, तन्मतमनूद्य दूषयति—औपदेशिकप्रयोगिकयोरित्यादि । 'उपदेश-ग्रहणवत्सूत्रविरोधेने'ति पाठः । 'उपदेशग्रहणं कुर्वन्सूत्रविरोधेने'ति क्वचित्पठ्यते, तत्र करोतेः क्रियासामान्यवाचकत्वात्कुर्वदित्यस्यान्वियदित्यर्थो वा, सूत्रशब्देन—यथाकथञ्चित्सूत्रकारग्रहणाद्वा

### ❀ सदाशिवभट्टीयम् ❀

एकाचो । वक्तुं युक्तमिति । भष्प्रत्याहारोपि 'झषस्तथो'रित्यत्रैव कृतः, अतो भष् कर्तव्यः 'उज्झिते'त्यादिझान्तधातवः सेट्का एवेति भष्प्रत्याहार एवास्तु किं झष्प्रत्याहारेणेति चिन्त्यमेतत् । अशक्तीति । 'शक्त्यभावे'ति वक्तुं युक्तम् ।

### ❀ विषमपदविवृतिः ❀

अन्यत्र विस्तर इति । अन्ये तु पूर्वत्र निषेध्यसमर्पके दादेरित्यस्यौपदेशिकदादित्ववति लक्षणायां 'धातो'रित्युत्तरसूत्रे 'दादे'रित्यनुवृत्तिवैयर्थ्यम् । 'अपवादपक्षेपी'त्यापि न, औपदेशिकदादित्ववतो धातुत्वाव्यभिचारेण धातोरित्यस्य वैयर्थ्यापत्तेः, तस्माद्दादेरित्यस्यौपदेशिकदादित्ववति लक्षणायां मानाभावः । 'धातो'रित्युत्तरसूत्रे दादेरित्यनुवृत्तिस्त्वधोगित्यत्र पूर्वसूत्रप्राप्तढत्वनिवृत्त्यर्था । तथा हि—'धातोर्घ' इत्येतन्मात्रेण 'धु'गित्यादिसिद्धौ धातोरित्यनुवृत्तिर्वैयधिकरण्येनान्वयेनाऽदादावपि–'अधो'गित्यादौ घत्वार्था । तत्सामर्थ्येन च–'अधो'गित्यत्र न पूर्वेण ढत्वम् । धातोरिति तु दारुलिट्शब्दे घत्वाभावार्था । दामलिहमात्मन इच्छति दामलिह्यति, ततः क्विप्, दामलिगित्येव,घत्वप्रवृत्तेरेवेत्याहुः । इत्यादिसिद्धय इति । आदिपदेन दुग्धमित्यादिपरिग्रहः । तत्र हि घत्वे झषस्तथोरिति धत्वसिद्धिः । नन्वौपदेशिकप्रायोगिकयोरिति परिभाषयैवौपदेशिकदादित्ववतो ग्रहणे सिद्धे दादिग्रहणं व्यर्थमत आह—औपदेशिकेति । 'धातो'रिति सूत्रे 'दादे'रित्यनुवृत्तिर्व्यर्था ।

प्रयोगो नास्तीति कृत्वेति । 'औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहण'मिति परिभाषासत्त्वे तु लौकिकप्रयोगे सानुबन्धकानां प्रयोगो नास्तीति औपदेशिकप्रयोगग्रहणमिति भाष्यासङ्गतिः

**एकाचो** ॥ 'झष् झषन्तस्ये'ति वक्तुं युक्तं, भष्पदाशक्तिकल्पनेन लाघवात् ।
**निवृत्तमिति** । 'धुग्भ्या'मित्यादौ पदान्तत्वादेव सिद्धिरिति भावः । **सामर्थ्यादिति** । स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः । धातोः किं? 'तद्ध्रा'डित्यादि[1] ।

### ※ अभिनव-चन्द्रिका ※

दादित्ववतो धातुभिन्नस्याऽप्रसिद्ध्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । **वक्तुं युक्तमिति** । ननु 'सर्वे सर्वार्थवाचकाः' इति सिद्धान्ताद्झषो-भकारादि-षान्तसमुदाये शक्तिः सिद्धैवेति चेन्न; तदर्थं वक्तुस्तात्पर्यकल्पने गौरवात् । लाघवाद्झषो भषिति वक्तुं न युक्तं, 'झषस्तथो'रित्यत्र तदावश्यकत्वात् । अत एव-'उज्झ'धातोः क्विपि 'उग्धि'रितिसिद्धम् । **तद्ध्राडिति** । ननु भष्भावेऽपि पुनर्जश्त्वेन न दोष इत्यत **आह—आदीति** । आदिना 'गद्ध्रा'डित्यस्य सङ्ग्रहः ।

### ※ चिदस्थिमाला ※

दाह—**भष्पदेति** । नन्वन्यझल्व्यावृत्त्यर्थं तदिति कथं सामर्थ्यमत आह–**स्ध्वोरिति** । इतरझलित्यर्थः ।

### ※ ज्योत्स्ना ※

विवक्षिताऽन्वयलाभो वक्तव्यः । **इति वक्तुं युक्तमिति** । एवन्तु 'झष् झषन्तस्ये'ति यथासङ्ख्यान्वयापत्तेः ।

### ※ सदाशिवभट्टीयम् ※

**फलाभाव इति** । झलाद्योः स्ध्वोरित्यन्वयेन विशेषणत्वेनान्वयसम्भवेपि तयोर्झलाद्योरेव सम्भवेनानुवृत्तौ फलाभाव इति भावः । एतेन 'झलाञ्जशोऽन्ते' इत्यत्रान्तपदेनैव तन्निवृत्तौ स्ध्वोर्ग्रहणं व्यर्थमेवेत्यपास्तम् । ननु 'झलो झली'त्यत्र झल्पदं—झलादिप्रत्ययपरमित्युक्तं, तत्कथमुच्यते झलाद्योः स्ध्वोरिति ?, 'स्ध्व' इत्यनयोः प्रत्ययत्वाभावादिति वाच्यं, झल्पदस्य प्रत्ययावयवझल्परत्वस्य वक्तुं शक्यत्वेनाप्यन्वयसम्भवात् । **तद्ध्राडिति** । आदिना ह्विट् ।

### ※ विषमपदविवृतिः ※

उक्तपरिभाषयौपदेशिकप्रयोगस्य मुख्यत्वबोधनादिति भावः । ननूक्तपरिभाषयौपदेशिकदादित्ववतो ग्रहणेऽपि नोक्तभाष्यविरोधः, 'सानुबन्धकग्रहणेष्वित्युक्तयो'क्तभाष्यस्य सानुबन्धकविषयत्वादित्याशङ्क्योक्तभाष्यं सर्वविषयकं, न सानुबन्धकमात्रविषयं, न्यायस्य सर्वत्र तौल्यादित्याह—**अनुबन्धप्रस्तावादित्यादिना** । **वक्तुं युक्तमिति** । बशस्स्थाने आन्तरतम्येन भषमेव प्रवर्त्यार्थोज्झकारस्य निवृत्तेरिति भावः । वस्तुतस्तु मदोज्झमाचष्टे मधोगित्यादौ कुलप्रवृत्त्या प्रयोगे झान्तासम्भवेपि 'ञमङणन'मितिसूत्रस्थभाष्योक्तदिशा प्रातिपदिकसङ्ख्यासाम्यमादाय परत्वादन्तरतमपरिभाषां बाधित्वा यथासङ्ख्यशास्त्रप्रवृत्तौ गर्धवित्यादौ भकारापत्तेः।-अत एव 'भष् भषन्तस्ये'ति नोक्तम्, स्थान्यादेशनिमित्तानां यथासङ्ख्यविज्ञाने 'भान्तस्य यो बश् तस्य भ' इत्यादि सूत्रार्थपर्यवसाने गर्दभमित्यादौ भष्भावा[ना]पत्तेरिति दिक् । मूले-**झलीति निवृत्तमिति** । न च बुबुधिध्वे इत्यत्र भष्भावनिवृत्तये ध्वमो 'झली'ति विशेषणमावश्यकमिति वाच्यम् , इटो ध्वमोऽवयवत्वेपि भष्भावनिमित्तध्वशब्दानवयवत्वेनैकाच्ध्वशब्दयोरिटा व्यवधानेनादोषात् । **तद्ध्राडिति** । इदमयुक्तम् ,

[1] ननु तत्पूर्वकवह्धातोर्निष्पन्ने 'तद्ध्रा'डित्यादौ तदो दस्य भष्भावेऽपि पदान्ततया पुनर्जश्त्वेन न फले विशेष इति चेन्न, तद्ध्राडित्यस्य—[तं दूयते इति तदूः तम् आ समन्तादह्वोतीत्यर्थे—] एकाक्षरकोशप्रसिद्धतशब्दपूर्वकदूधातोः [क्विपि तदुपपदकदूधातोः-क्विपि वा] तत आङ्पूर्वकाऽह्धातो क्विपि–तद्ध्राडित्यत्र धात्ववयवदकारस्य भष्भावे जश्त्वप्राप्त्या फलभेदस्य स्पष्टत्वात् ।

ननु दुहृधत्वे धात्ववयवः--एकाज्रूपं 'दु' इति, 'उ'ष्विनि च, तत्राद्यो न अयन्तः, अन्त्ये न बश्, 'दु'घिति तु नावयवः—इति कथं भष्भावः ?, अत आह-**व्यपदेशिवदिति** । विशिष्टोऽपदेशो-मुख्यव्यवहारः—सोऽस्यास्तीति--व्यपदेशी, तेन तुल्यमित्यर्थः । इदमाद्यन्तवत्सूत्रे भाष्ये स्पष्टम् ।

**ॐ अभिनव-चन्द्रिका ॐ**

**व्यपदेशिवद्भावेनेति** । सूत्रकारः—'स्वघटकत्व' 'स्वघटकावधिकपरत्व' 'स्वघटकावधिकपूर्वत्वाभाववत्त्वं' तत्रितयसम्बन्धेन स्वविशिष्टत्वरूपाऽन्त्यत्वं, 'स्वघटकत्व' 'स्वघटकावधिकपूर्वत्व' 'स्वघटकावधिकपरत्वाभाववत्त्वं' तत्रितयसम्बन्धेन स्वविशिष्टत्वरूपादित्वञ्च स्वीकृत्य 'आभ्या'मित्यादौ अकारादौ स्वघटकावधिकपरत्वाभावेन अकारान्ताङ्गाभावेन दीर्घादीनामप्राप्त्या दीर्घादिविधीनां प्रवृत्त्यर्थमाद्यन्तेति सूत्रं प्रणीतवान् ।

तत्र वार्त्तिककारः—आदित्वाऽन्त्यत्वयोः—'पूर्वोक्तरीत्या स्वघटकावधिकपूर्वत्व' 'स्वघटकावधिकपरत्व'रूप सम्बन्धयोः प्रयोजनाऽभावेन तयोस्तत्रानुपादानेन 'आभ्या'मित्यत्र अकारान्तत्वस्य सुवचत्वेन सूत्रं निष्फलमित्याह ।

भाष्यकारस्तु—'स्वाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्व' 'स्वाभाववद्वृत्तितावच्छेदकत्वो'भयसम्बन्धेन स्वविशिष्टधर्मवत्त्वं घटकत्वं, 'स्वाभाववद्वृत्तितानवच्छेदकत्व' 'स्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वं' तदुभयसम्बन्धेन स्वविशिष्टधर्मवत्त्वं घटितत्वञ्च स्वीकृत्य,—'अ-भ्या'-मित्यत्र अकाररूपेऽङ्गे अकाररूपाऽऽधिकरणज्ञानवृत्तिककाराद्यभावप्रतियोगितावच्छेदककत्वादिधर्मवत्त्वाऽभावेन घटितत्वाभावाद्दीर्घाद्यर्थं 'व्यपदेशिवदेकस्मि'न्निति प्रणीतवान् । तथा च—एकस्मिन्= एकसम्बन्धविशिष्टे, व्यपदेशिवत्=सम्बन्धद्वयविशिष्टवत्—कार्यं कर्त्तव्यमिति फलितोऽर्थः । एतन्मूलकमेव—'अनया घटितत्व-घटकत्वे एवातिदिश्येते' इति साम्प्रदायिकानां प्रवाद इति दिक् ।

**तेन तुल्यमिति** । उपमानोपमेययोः समानविभक्तिकत्वनियमात्सप्तम्यन्ताद्वतिरुचितः । तथा च

**ॐ चिदस्थिमाला ॐ**

'धात्ववयव एकाज्रूप'मितिपाठः, अवयवशब्दस्याजहल्लिङ्गत्वात् । अत एवाग्रे तथैव पाठः । **भाष्ये इति** । तत्सूत्रप्रत्याख्यानपरे इत्यर्थः । रध्वोः किं ? दाद्धि । दधधातोर्यङ्लुकि लोटि हेर्धिरितिकेचित् ।

**ॐ सदाशिवभट्टीयम् ॐ**

**तेन तुल्यमिति** । नन्वेवमलोन्त्यपरिभाषयाऽन्त्यस्य स्यात्, तत्र जातेपि तसिद्धत्वेन न दोषः । नन्वस्य भष्भावे धकारादिरेव स्यादिति चेन्न, धस्य विधानं व्यर्थं

---

१ अयमाशयः—समुदायविशिष्टधर्मवत्त्वं घटकत्वं, वै० 'स्वव्यापकत्व' 'स्वव्यापकत्वाभाववत्त्वे' तदुभयसम्बन्धेन । व्यापकत्वञ्च–स्वाधिकरणवृत्त्यभावाप्रतियोगित्वम् । व्याप्यत्वञ्च—स्वाभाववदवृत्तित्वम् । अत्रोभयत्राधिकरणता, वृत्तिता, प्रतियोगिता च–विषयित्वसम्बन्धावच्छिन्ना ग्राह्या । ज्ञानरूपमधिकरणमादाय रामादिघटकरेफादौ समन्वयो बोध्यः । ककारे रामादिसमुदायघटकत्वमितिव्यवहारवारणाय-'स्वव्यापकत्व'-सम्बन्धोपादानम् । तदुपादाने तु—विषयित्वसम्बन्धेन रामेतिसमुदायाधिकरणज्ञानवृत्तिककाराभाव-प्रतियोगितावच्छेदक–कत्वावच्छिन्नत्वात्ककारो न रामशब्दघटकः । स्वस्मिन्नपि स्वघटकत्वव्यवहारवारणाय च स्वव्याप्यत्वाभाववत्त्वसम्बन्धोपादानम् । एवञ्च दण्डिभट्टोक्तं घटकत्वलक्षणं फलितम् ।

एवं घटितत्वमपि—'स्वव्याप्यत्व', 'स्वव्यापकत्वाभाववत्त्वे'तदुभयसम्बन्धेन स्वविशिष्टधर्मवत्त्वम् । अत्रापि व्यापकता–व्याप्यता–तद्घटकाधिकरणत्वादयश्च विषयित्वसम्बन्धावच्छिन्ना ग्राह्याः । रामेतिसमुदाये ककारादिघटितत्वव्यवहारवारणायाद्यः सम्बन्धः । एतत्फलित एव दण्डिभट्टोक्तो घटितत्वपरिष्कार इति गौडाः ।

एकाचः किं ? दामलिट् । बशः किं ? क्रोत्स्यति । झषन्तस्य किं ? दास्यति ।

**धुगिति** । 'अत्वसन्तस्ये'ति सूत्रेऽधातोरिति निषेधेन—कारकं प्रत्यप्रधानभूत-क्रियावाचकस्यापि धातुत्वा[1]दिति भावः । न च 'धातोरुच्यमानङ्कार्यन्तत्प्रत्यये भवती'ति परिभाषया कथमत्र घत्वादि?—तत्प्रत्ययः=धातुसंशब्दनेन विहितः प्रत्ययः—इति वाच्यम्, अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात् ।

※ अभिनव-चन्द्रिका ※

यथा व्यपदेशिवद्भावे=सम्बन्धद्वयविशिष्टे—कार्यं भवति, तथैकसम्बन्धविशिष्टेऽपि कर्तव्यमित्यर्थ इति उपपादितमेव पूर्वमित्यन्यत्र विस्तरः । **कारकमिति** । इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारता-नाश्रयरूपमुख्यपदार्थघटकेतरपदार्थे प्रत्ययेतरत्वेन सङ्कोचादिति भावः ।

**न चेति** । क्विपः प्रत्ययलक्षणेन—धातुसंशब्दनेन विहितप्रत्ययाव्यवहितपूर्वत्वविशिष्टहस्य पदान्ते विद्यमानत्वेन—तत्प्रवृत्तेः सुवचत्वाच्छङ्कासमाधाने अत्र निर्दले । किञ्च ज्ञापकसाजात्याद्धातुत्वेतर-धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्ये एव तस्याः प्रवृत्तिस्वीकारेण तस्या अत्राऽप्रवृत्तेश्चेति दिक् ।

※ चिद्स्थिमाला ※

ननु धातुत्वस्य क्रियावाचकत्वे सति भ्वादिगणपठितत्वरूपत्वेन क्रियाया अनुपसर्जनीभूतप्रधानरूपाया एव ग्रहीतुमौचित्यात्कथमत्र घत्वभष्भावौ ?, कृदर्थकर्तारं प्रति गुणभूतत्वादत आह—**अत्वसन्तेति** ।

**न चेति** ।'एवमपी'तिशेषः। आदिना-भष्भावः । ननु तत्प्रकृतिकप्रत्ययोऽस्त्येवात आह—**तत्प्रत्यय इति** । अस्य=धुगादिस्थघत्वादेः । 'पदान्ते'त्यादिबहुव्रीहिद्वयम् । परम्परया प्रत्ययनिमित्तकत्वेन तु न तत्प्रवृत्ति-

※ ज्योत्स्ना ※

ञीभप्'—स्वर्घौक् 'चण्डौट्' 'प्रेमधत्' इत्यादौ क्लीबभयति--स्वर्गौधयति-चण्डौढयति-प्रेमदधयतिप्रभृति-भ्योऽप्रत्यये, दध्धारणे--इत्यस्य यङ्लुकि 'दादद्धी'त्यत्रैव च स्यान्नत्वधोक्-गर्द्ध'वित्यादौ।'यत्रैका'जिति निषेधस्तु नास्मिन्सूत्रे प्रवर्तते, 'अजर्घा' इतिभाष्योदाहरणात् । अत एव 'एकाचो बशो भष् झषन्त-स्ये'ति ग्राह्यलाघवेऽपि न कृतमिति चिन्त्यमेतदिति भावः । यथोद्देशपक्षे त्वन्तरङ्गत्वात्प्राक् प्रवृत्तायां सञ्ज्ञायामर्थान्तरोपसङ्क्रमे सत्यप्यनपायादिति प्राहुः । **धातोरुच्यमानं कार्यमिति** । 'धातोः स्वरूपग्रहणे तत्प्रत्यये'इति पाठस्तु प्रस्त्यादौ 'अनुदात्तस्य चर्दुपधस्ये'त्यमापत्तेर्भाष्ये दूषितः । तत्र-स्वरूपग्रहणाभावेऽपि 'सृजिदृशो'रिति साहचर्यादिना धातोर्यथाकथञ्चिदुपपादनेन कार्यस्योच्यमानत्वा-ददोषः। **धातुसंशब्दनेन विहित इति**। स च तिङ् कृद्वा । **प्रत्ययनिमित्तत्वाभावादिति**। भ्रौणहत्येति

※ सदाशिवभट्टीयम् ※

तत्सामर्थ्याच्चर्त्वन्नेति चेन्न, एवमपि दामलिड्डित्यत्र ढत्वे भष्भावे जाते एकाज्ग्रहणसामर्थ्येनालोन्त्यपरिभाषा-बाधे ककाररूपस्य स्यादिति बोध्यमिति । नन्वन्त्यस्याभावेऽचोपि स्यादिति चेन्न, वस्तुतो झलांजशोऽन्ते इति सूत्रस्थं झलामित्यत्रैव कृत्वा झलामेव भष्भाव इति व्याख्येयमिति पूर्वककारस्यापि स्यादिति बोध्यम् ।

※ विषमपदविवृतिः ※

भष्भावे प्रवृत्तेपि 'झलां जशोन्ते' इति जश्त्वेन पुनर्दकारप्रवृत्तेः । **बशः किमिति** । 'झलां जशोन्ते' इतिसूत्रस्थझल्ग्रहणमत्रैव कृत्वा तस्यैव भष्विधेय इति भावः । **कारकं प्रतीति** । भावे क्विप्यपि न साध्यत्वमात्रेण भानं धात्वर्थस्येति तत्रापि धातुत्वं न सुलभमिति भावः । **प्रत्ययनिमित्तकत्वा-**

१ **धातुत्वादिति** । क्रियानिष्ठोपस्थितीयमुख्यविशेष्यताप्रयोजकत्वस्यैव कारकेतरनिष्ठविशेष्यतानिरू-पितप्रकारत्वाऽसमानाधिकरणा या क्रियानिष्ठोपस्थितीयमुख्यविशेष्यता तत्प्रयोजकत्वस्यापि धातुत्वादित्यर्थः ।

अत एव 'अप्रशा'निति चरितार्थम्, अन्यथा 'मो नो धातो'रित्यत्रापि तत्प्रवृत्त्या नत्वानापत्त्या तदसङ्गतिः स्पष्टैव ।

वा द्रुह । द्रुहः प्रामिगन्येषामप्राप्तेरुभयत्र विभाषेयम् ।

इग्यणः । यणः स्थाने इति । नन्वेवमदुहितरामित्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणाच्चादृन्त इति दीर्घापत्तिः; न च यथासङ्ख्यसम्बन्धाददोषः, तद्धक्सूत्रे 'लृकारोपदेशः किमर्थः' इत्यादिभाष्यविरोधादिति चेन्न; विधिप्रदेशेषु 'यण इ'त्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणान्न दोषः ।

❀ अभिनव-चन्द्रिका ❀

तद्भावितपक्षाश्रयणादिति । तेन भावितः—तद्भावितः । प्रयोज्यत्वं तृतीयार्थः । न च 'यदा तेन सञ्ज्ञा तदा तद्भावितत्वं, यदा च तद्भावितत्वं तदा तेन सञ्ज्ञे'त्यन्योन्याश्रय इति वाच्यं,

❀ चिदस्थिमाला ❀

इत्यादिक्रमेणाह-अत एवेति।प्रवृत्त्या=तदाप्तौ। अनापत्त्या=अप्राप्त्या।'शान् तेजने'इत्यस्य तु न तदृपमित्यन्यत्र स्पष्टम्। एवं=मूलोक्तार्थाङ्गीकारे। केवटृशान्त्याद्युक्तिं खण्डयति-नचेति। तत्र दण्ड्याद्युक्तदोषान् कृत्याह—लृकारेति । आदिना—इत्यत्र सूत्रस्थस्य—'अयं रेफो दवाभ्या'मित्यादिभाष्यस्य परिग्रहः । तद्भावीति ।

❀ ज्योत्स्ना ❀

धर्मिग्राहकमानेन सम्प्रसारणं एवेति—नियमादस्य सजातीयविषयत्वेन च नसम्बन्धपदेन प्रत्ययस्य नियमत्वप्रतिपादनेऽनियमप्रसक्तौ परिभाषाया नियमार्थत्वस्य व्यवस्थापनादिति भावः । तदसङ्गतिः स्पष्टेवेति । नचैवं गोधुग्भ्यामित्यादौ स्याद्रूपभावः,-'गोधुग्भ्या'मित्यादौ तु पदत्वस्य प्रत्ययनिमित्तत्वात्कार्य-कालपक्षे कथं स्यात्?, यथोद्देशपक्षस्यैवाश्रयणादिति चेद्भवेदेवं, परन्तु धातोरुच्यमानं कार्यं यद्धातु-विशेषोपादानेन तदेव न तु मंशब्देनोच्यमानं तथेति परिष्कारार्थं परिभाषाया ब्रूमः, तथाभूतो-दाहरणानां भाष्ये दर्शनादित्युक्तोदाहरणेषु न क्वापि परिभाषाप्रवृत्तिः, एवं चाऽविस्तुधातु' 'एरने-काचः' इत्यादीनां धातुप्रत्ययपरत्वाभावे 'सुधियौ' 'प्रध्या'वित्यादौ प्रवृत्त्यविघातात्परिभाषाया अनित्यत्वकल्पनागौरवं नास्तीत्यपरमनुकूलम् । 'नशेर्वे'त्यादेस्तद्धातुविशेषोपादानेनोच्यमानकार्यस्य नानक्तीनियड्लुकिप्रत्ययपरत्वे एव प्रवृत्तिः स्यान्न तु 'प्रणग्भ्या'मित्यादाविति, प्रत्ययनिमित्ते एव परि-भाषाप्रवृत्तिर्न पदान्तनिमित्तेऽपीति 'मृजेर्वृद्धि'रितिसूत्रस्थप्रदीपग्रन्थाशय इत्यत्र विस्तरः ।

भाष्यविरोधादिति । सम्प्रसारणसञ्ज्ञायां सङ्ख्यार्थं लृकारोपदेशस्यावश्यत्वे हि भाष्यविरोधः स्यादिति भावः ।

❀ सदाशिवभट्टीयम् ❀

स्पष्टैवेति । अप्रशानितिनिर्देशस्तु पदान्तेऽपि पदान्तप्रयोजकप्रत्यय इत्यर्थः । इग्यणः । हल इति दीर्घापत्तेरिति । यदि हल इत्यस्याङ्गपदस्य सम्प्रसारणपदं प्रत्यासत्त्या सम्प्रसारणनिमित्तप्रत्ययनिमित्ताङ्ग-त्यर्थं न दोष इत्युच्यते तदात्र न दोष इति बोध्यम् । अदोष इति । ननु ऊवतुरित्यत्र वेञो वयादेशे

❀ विषमपदविवृतिः ❀

भावादिति । ओणहत्ये तत्त्वनिपातनेन साजात्यात्प्रत्ययनिमित्तककार्ये एवास्याः प्रवृत्तिरिति भावः । केचित्तु संशब्देन विहितप्रत्ययः क्विबेव, तमाश्रित्यैव धुगित्यत्र घत्वादि । प्रत्ययनिमित्तककार्ये एवास्याः प्रवृत्तिरिति तु न, अनुदात्तस्य चर्दुपधस्याऽचि विभाषा इत्यादौ तदप्रवृत्त्यापत्तेरित्याहुः ।

इग्यणः । भाष्यविरोधादिति । ननु वकारस्य लृकारोऽप्यन्तरतम इति तद्वारणाय यथासङ्ख्य-

'वाक्यस्य सञ्ज्ञे'ति पक्षे भाष्ये—'सम्प्रसारणस्ये'त्यादौ 'सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहण'मित्युक्ततया तदेकवाक्यतयाऽत्र पक्षे तद्भावितस्य सञ्ज्ञेति भाष्ये सूचितम् । तेन 'द्युभ्या'मित्यादावपि न दीर्घप्राप्तिः । अत एव 'अक्षद्यूरचा-सावरुणश्च अक्षद्युरुण' इत्यादौ पूर्वरूपं न । समानाङ्ग²ग्रहणं तु भाष्ये प्रत्याख्यातम् ।

❀ अभिनव-चन्द्रिका ❀

सम्प्रसारणपदप्रयोज्यत्वस्योपलक्षणत्वेनाऽदोषात् , खण्डशः शक्तिस्वीकारेण विधेयस्थले सम्प्रसारणपदप्रयोज्यत्वस्य मोषेणादोषाच्चेत्युपपादितं 'प्रत्ययस्य लु'गित्यत्रैव । **तेन द्युभ्यामिति** । नन्वतद्भावितसञ्ज्ञापक्षेऽपि 'निरुतं' 'दुरुत'मित्याद्यर्थं 'हलः'इत्यस्य—सम्प्रसारणप्रयोजकप्रत्यय-निमित्तकाऽङ्गसञ्ज्ञावदवयवहलः परस्येत्यर्थाश्रयणेन नोक्तदोष इति चेन्न; 'निरुत'मितिभाष्यप्रामाण्येन सम्प्रसारणघटिताऽङ्गाघटकहलः परस्येत्यर्थस्वीकारेण तत्र दोषाऽभावेऽप्यत्र दोषतादवस्थ्यात् ।

न च तपरकरणसामर्थ्यान्न दीर्घ इति वाच्यं, दिव्शब्दप्रकृतिकक्यजन्तात्क्विपि निष्पन्ने द्यूशब्दे चारितार्थ्यादिति—'भाव्यमानोऽप्युकार'इत्यत्र विस्तरेणोपपादितम् । यदि तु 'निरुत'-मित्यादिभाष्यप्रामाण्यात्तादृगेवार्थ इत्यदुहितरामित्यत्र नोक्तो दोष इत्युच्यते तदाऽऽह—**अतएवेति** । ननु 'समानाङ्गग्रहणं कर्त्तव्य'मित्यस्य प्रत्याख्यानन्तु तद्भावितपक्षाभिप्रायेणैव, अतद्भावितपक्षे तु न तस्य प्रत्याख्यानमित्यत आह—**आदाविति** । आदिना 'द्युपुत्रः' इत्यस्य सङ्ग्रहः । तत्र हि—

❀ चिद्स्थिमाला ❀

'तत्राश्रयणेने'त्यादिः । इत्यादौ=अनुवादे । अत्रपक्षे=वर्णसञ्ज्ञापक्षे । अत एव पक्षयोः समफलता, अत्र-पक्षे तत्र स्थले दोषपरिहारौ च नोक्तौ भाष्ये । अवान्तरमप्याह—**तेनेति** । तपरत्वात्तद्वारणं कैयटादिकृतं तु न युक्तमिति स्पष्टं **भावप्रकाशे** । अस्य फलान्तरमप्याह—**अत एवेति** । तद्भावितत्वा-श्रयणादेवेत्यर्थः । दण्ड्याद्युक्तिं खण्डयति—**समानाङ्गेति** । तुल्ययुक्त्या भाष्यमुपलक्षणमित्याह—

❀ सदाशिवभट्टीयम् ❀

द्वित्वसम्प्रसारणयोः वयादेशयकारस्य सम्प्रसारणे प्राप्ते'लिटि वयो य'इति तन्निषेधे'वश्चास्ये'ति यकारस्य वकारे कृते तस्य सम्प्रसारणन्तु न, 'उश्चास्ये'त्येवसिद्धे वादेशविधानसामर्थ्यात् । तत्रोकारे सम्प्रसारणसञ्ज्ञायां पररूपार्थमेव वादेशविधानं स्यात्, मम तु पूर्वसूत्रात्सम्प्रसारणपदानुवृत्त्या पररूपस्यापि सिद्धौ वकार-विधानस्यासामर्थ्याभावादिति सुधियः ।

❀ विषमपदविवृतिः ❀

सम्बन्ध आवश्यक इति चेन्न, लकाराऽघटितत्वेनान्तर्यादुकारस्यैव प्रवृत्तेः । **अत्र पक्ष इति** ।

१ 'यण्स्थानिकेक्कर्तृका सत्तेत्यादि हि वाक्यस्य सञ्ज्ञेति पक्षे सूत्रार्थः, एवञ्च अनुवादस्थले स्थानित्वं पूर्वा-परीभावश्च सत्तया न सिध्यतीति तद्भावितपक्षाश्रयणमित्यर्थः। 'सम्प्रसारणपदस्य तद्भाविते लक्षणे'ति तु तत्त्वम्।

२ **समानाङ्गेति** । यदङ्गघटकं सम्प्रसारणं तदङ्गघटकेऽचीत्यर्थः। नन्वेवमपि 'अक्षद्युरुण'इत्यत्र समास-निमित्तकप्रत्ययनिमित्तकाऽङ्गसञ्ज्ञामादाय समानाङ्गत्वात्पुनरपि स एव दोष इति चेन्न; सम्प्रसारणनिमित्तक-[ क्विबादि ]—प्रत्ययनिमित्तकाङ्गसञ्ज्ञावद्घटकेऽचीत्यर्थेन तादृशक्विन्निमित्तकाङ्गत्वस्य समुदितेऽक्षद्युरुणे-ऽभावेनादोषात् ।

नन्वेवमपि 'सुध्युत'मित्यत्र सम्प्रसारणनिमित्तक-क्त-प्रत्ययनिमित्ताकाङ्गसञ्ज्ञावद्घटकात्त्वस्य सत्त्वात्पुनरपि स एव दोष इति चेन्न, सम्प्रसारणविशिष्टेऽचि पूर्वरूपमित्यर्थः, वै० 'स्वाव्यवहितोत्तरत्व' 'स्वाघटिताङ्गा-घटकत्वो'भयसम्बन्धेनेति स्वीकारेणादोषात्। स्वं—सम्प्रसारणं, स्वाघटितमङ्गम्—'उते'ति, तद्घटक एव उकार-

तथा च भाष्यं "—'इयङ्कुर्थ'मित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यम्?,—न कार्यम्, असम्प्रसारणत्वात्।—अन्योऽयं सम्प्रसारणाऽसम्प्रसारणयोः स्थाने एक आदिश्यते। यदि नेदं सम्प्रसारणम्? 'हलः' इति दीर्घत्वं न प्राप्नोति, वचनप्रामाण्याद्भविष्यति—" इति। 'न सम्प्रसारणे' इति निषेधोऽपि वचनप्रामाण्यात्पूर्वरूपोत्तरम्।

ॐ चिदस्थिमाला ॐ

न सम्भवति। नन्व नार्थे—नचेति। पूर्वरूपप्रवृत्तौ। सूत्रन्तु दीर्घविषये उभयरूपस्या चरितार्थमितिभावः।

ॐ विषमपदविवृतिः ॐ

वर्णस्थानपत्र इत्यर्थः। वचनप्रामाण्याद्भविष्यतीति। अन्ये तु वर्णस्थाने न स्थानिवत्त्वाश्रयणं, सूत्रादेकवचनेनान्यतरस्थानेऽन्यत्राश्रयत्वात्। 'अदुहितरा'मित्यत्र तु यथालक्ष्यविज्ञानाद् दोषः। 'ऌकारोपदेशः किमर्थः? ऌकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः' इति कल्पसूत्रभाष्यं भाष्यन्तु यथालक्ष्यशास्त्रप्रवृत्तेरप्युपलक्षणम्। एवञ्च वकारस्थाने ऌकारवारणायोक्तं कुमत्याश्रयणमपि न।

केचित्तु-'सम्प्रसारणस्ये'ति दीर्घारम्भसामर्थ्येन सम्प्रसारणप्रत्ययनिमित्ताङ्गावयवस्यैव हलः परस्य सम्प्रसारणान्ताङ्गस्यैव—'हल' इति दीर्घविधानेनादुहितरामित्यत्र न दीर्घः। सम्प्रसारणनिमित्तप्रत्ययस्यैवात्रसिद्धः। उक्तार्थाश्रयणफलन्तु 'निहत'मित्यादौ दीर्घाभाव इत्याहुस्तन्न, उत्तरपदनिमित्तकसम्प्रसारणस्य बहिरङ्गत्वेनासिद्धत्वा'द्धल' इति दीर्घाप्राप्तेः।

परत्वेनेको ह्रस्व? इति ह्रस्वबाधनापेक्षाच्च दीर्घस्य. 'द्युभ्या'मित्यत्र तु 'दिव उ'दिति तपरत्वसामर्थ्येन दीर्घबाधः। 'भाव्यमानो'ऽणुकारः सवर्णान्गृह्णाती'त्यस्यार्थस्यापि तपरत्वं ज्ञापकमस्तु, एकस्यानेककल्पकत्वे बाधकाभावात्।

वस्तुतो 'दिव उ'दिति तपरत्वं 'भाव्यमान' इति परिभाषाया ज्ञापकम्। 'धृत्व' इत्यस्याभिधाने 'चिकीर्षक' इत्यादिवद्बहिरङ्गत्वेनासिद्धत्वाच्च तपरत्वसामर्थ्येन दीर्घत्वस्य वारणम्। 'द्युभ्या'मित्यत्र तुल्यदीर्घत्वयोरन्तरङ्गपदत्वद्वारा भ्यामिनिमित्तकत्वेन नान्तरङ्गबहिरङ्गभावः। 'अक्षद्व्यरुण' इत्यत्रापि न पूर्वरूपम्। ऊठि पूर्वरूपात्परत्वादन्तरङ्गत्वाच्च तस्य 'हल'इति दीर्घेऽल्विधित्वेन स्थानिवत्त्वेन सम्प्रसारणत्वाभावात्।

यद्वा 'च्छ्वोः-शू'डित्यत्र ह्रस्वे विधातव्ये दीर्घविधानं 'च्छ्वो'रिति विहितस्योठः सम्प्रसारणपदेनाग्रहणज्ञापनार्थं, तेनाक्षद्व्यरुण इत्यत्र न पूर्वरूपमिति दिगित्याहुः।

सोर्लोपे 'द्युकाम' इत्यत्र 'सम्प्रसारणस्ये'ति दीर्घो न, उत्तरपदनिमित्तके सम्प्रसारणे एव तत्प्रवृत्तेः। न चाक्षद्व्यरुण इत्यत्र चरितार्थस्य 'सम्प्रसारणस्ये'ति दीर्घविधानस्य सामर्थ्येन 'हल' इति दीर्घस्य 'हूत' इत्यादौ प्रवृत्तिर्न स्यात्पूर्वरूपस्य सम्प्रसारणत्वाभावादिति वाच्यम्, पूर्वरूपस्य सम्प्रसारणग्रहणेन ग्रहणत्वकल्पनादिति दिगित्याहुः। ननु सम्प्रसारणासम्प्रसारणयोर्जातस्य पूर्वरूपस्य सम्प्रसारणाभावेन पूर्वरूपोत्तरं सम्प्रसारणं न स्यादित्याशङ्क्याह—न सम्प्रसारण इति। इदमयुक्तम्, अचः

ॐ वरवर्णिनी ॐ

रूपोऽजिति नोक्तदोषलेशः। नचैवमपि सुधियावित्यत्र पूर्वरूपापत्तिरिति वाच्यं, सम्प्रसारणविशिष्टेऽचि—इत्यर्थः। वै० 'स्वाव्यवहितोत्तरत्व' 'स्वघटिताङ्गघटकत्व' 'स्वाघटिताङ्गाघटकत्वै'तत्त्रितयसम्बन्धेनेत्युक्त्या-औविभक्तेःस्वघटिताङ्गघटकत्वाभावेनादोषात्। न च 'षष्ठ्या आक्रोशे'इत्यलुकि'सुधियःपुत्र' इत्यत्र दोष इति वाच्यम्, अज्विशिष्टे सम्प्रसारणे सति पूर्वरूपमित्यर्थः। वै० 'स्वाव्यहितपूर्वत्व' 'स्वाघटिताङ्गाघटकत्वो' भयसम्बन्धेनेत्यस्य विवक्षणेन—अज्घटितसुधीरूपाङ्गघटकत्वात्सम्प्रसारणस्य तदघटकत्वाभावेनादोषादिति सङ्क्षेपः—इत्यसद्गुरवो जगन्मान्याः श्रीहरिनारायणत्रिपाठिपादा व्याचक्षते।

न च 'यु–उ–अन्–अस्' इति स्थितेऽन्तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम्; अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाप्रवृत्तेः। न चैवं तत्र सवर्णदीर्घोत्तरं 'न सम्प्रसारणे' इति निषधो न स्यादिति वाच्यम्, 'अचः परस्मिन्नि'ति स्थानिवत्त्वादिति दिक्।

**वाह ऊठ्**। 'भस्ये'त्यधिकारः। 'वसोः सम्प्रसारण'मित्यतः 'सम्प्रसारण'मित्यनुवर्त्तते, तच्चोठो विशेषणं, तेन 'अलोऽन्त्यस्ये'ति न, तदाह–**भस्येत्यादि**। ह्रस्व ऊठ् न कृतः, वृद्ध्यनापत्तेः। वृद्धिविधावपि ह्रस्वग्रहणे 'जनौ'रित्याद्यसिद्धिः।

❀ चिदस्थिमाला ❀

अत एवाक्षद्यूशब्दस्य नपुंसके'ऽक्षद्यु'इत्यादौ'हल'इतिदीर्घो न, तपरत्वेन वारणन्त्वयुक्तमेवेत्युक्तम्। तदाह–**इतिदिगिति**। यत्नलाघवायाह–**ह्रस्वइति**।

❀ ज्योत्स्ना ❀

**अन्तरङ्गपरिभाषाया अनित्यत्वेनेति**। नाजानन्तर्यपरिभाषयाऽपीहाऽन्तरङ्गपरिभाषाया अप्रवृत्तिरिति वक्तुं शक्यते। **इहाप्रवृत्तेरिति**। तदप्रवृत्तौ हि परत्वात्'सम्प्रसारणाच्चे'तिपूर्वरूपं भवति। 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलव'दितिपरिभाषया तु नेह निर्वाहस्तस्या भाष्ये प्रत्याख्यानादिति भावः। वस्तुतस्तु—परादपि कृताऽकृतप्रसङ्गिणः सवर्णदीर्घस्य नित्यत्वात्तेन पूर्वरूपस्य बाधनाच्चिन्त्यमेतत्। तस्माद्धल इति वचनप्रामाण्यात्सम्प्रसारणस्थानिकैकादेशस्य सम्प्रसारणग्रहणेन सामान्यतो ग्रहणज्ञापनात्—'यून' इत्यत्र सवर्णदीर्घोत्तरं पूर्वरूपमित्येषा प्रक्रिया न्याय्येत्याहुः।

**तत्र सवर्णदीर्घोत्तरमिति**। तच्छब्देन पूर्वरूपं, तस्मिन्कृते यःसवर्णदीर्घस्तदुत्तरमित्यर्थः। **इति स्थानिवत्त्वादिति**। नच सदैव सम्प्रसारणाऽव्यवहितपूर्वत्वस्य यण्यलाभान्निषेधाऽप्रसङ्गस्तदवस्थ इति वाच्यम्, अनुवादे परिभाषाणामप्रवृत्तेः–'तस्मि'न्नित्यनेन तत्र संस्कारानाधानात्, षाष्ठभाष्येऽस्यार्थस्य ध्वननादिति दिक्। **इतिदिगिति**। स्वरूपव्याक्रियया पराकरणस्येयं दिक्, एतावतैव पराकरणोन्नयनस्य सुशकत्वलाभात्। तथा हि—पूर्वाचार्यानुरोधेन कृतायाः 'सम्प्रसारण'मितिमहासञ्ज्ञाया एकाक्षरसञ्ज्ञास्थानापन्नत्वादपृथगर्थोपस्थापकपदत्वाल्लाघवादिग्यण इतिविभक्तिद्वयावरुद्धप्रातिपदिकद्वयस्योद्देश्यविधेयभावबोधकत्वेनागौरवात्सामर्थ्याभावात्तद्भावितपक्षाश्रयणाभावाददुहितरामित्यादौ दोषवारणायोपाध्यायोक्तं यथासङ्ख्यं सम्बन्धाश्रयणमावश्यकम्। नच ॠऌक्सूत्रस्थभाष्यविरोधः, तस्यैकदेश्युक्तित्वेनासाधकत्वात्। उपाध्यायोक्तयथासङ्ख्यसम्बन्धस्यान्तरतमपरिभाषासङ्कोचकत्वाच्च। 'अक्षद्युरुण' इत्यत्र पूर्वरूपन्तु न, पर्जन्यवल्लक्षणप्रवृत्त्योठः स्थाने 'हल' इतिदीर्घेऽसम्प्रसारणत्वात् वर्णद्वयस्थानिकपूर्वैकादेशादेकवर्णस्थानिकस्य यणोऽन्तरङ्गत्वाच्च। विद्वमुक्तमित्यादौ समानाङ्गे परं पूर्वैकादेशेन यण् सामर्थ्याद्बाध्यत इत्याहुः। **दीर्घाप्राप्तेरिति**। इदमस्मदुपपादितदिशा पाक्षिकं वाक्यस्य सम्प्रसारणसञ्ज्ञापक्षेऽवतिष्ठते। वर्णसञ्ज्ञापक्षे तु'ज्वरत्वरे'त्युत्तरसूत्रे 'जूर्' 'तू'रिति सम्प्रसारणान्ताङ्गाभावाद्दीर्घाप्राप्तेरावश्यकः। पूर्वसूत्रेऽपि दीर्घ ऊठ् कृतः, तत्रापि 'द्वावूठा'वितिपक्षे सवर्ण-

❀ विषमपदविवृतिः ❀

परेति स्थानिवत्त्वेन पूर्वरूपस्य सम्प्रसारणत्वात्। **न चैवमिति**। पूर्वरूपोत्तरं वचनप्रामाण्यान्निषेधप्रवृत्तावपि सवर्णदीर्घोत्तरमपि तत्प्रवृत्तौ मानाभाव इति भावः।

---

१ **विशेषणमिति**। सम्प्रसारणसञ्ज्ञक ऊडित्येवमित्यर्थः। **तेनेति**। यद्यलोन्त्यपरिभाषयाऽन्त्यस्य ह्रस्व ऊठ् स्यात्तर्हि सम्प्रसारणसञ्ज्ञको न स्यादित्याशयः। २ **भस्येति**। वाहन्तस्य भस्याङ्गस्यावयवो यो निर्दिश्यमानो वाह्, तस्य यणः स्थाने इक् भवतीत्यर्थ इति यावत्।

'च्छ्वोः शू'डित्यत्रापि ह्रस्वकरणेऽ'अक्षू'रित्याद्यसिद्धिः। अतङ्भावितत्वेन तस्याऽसम्प्रसारणत्वात्—'हलः' इति दीर्घाप्रवृत्तेः।

**संप्रसा**। 'अनि पूर्व' इत्यतः 'पूर्व' इति, 'इको य'णित्यतः—'अची'ति, 'एकः पूर्वपरयो'रिति चानुवर्तते, तदाह—**सम्प्रसारणादचीत्यादि**। ऊठष्टित्वम्—'प्रष्ठौहर्ता'न्यत्र विशेषणार्थम्।

**छन्दस्येवेति**। 'छन्दसी'त्यनुवर्तमाने 'बहुल'मित्यनेनेति भावः। **णिजन्ताद्वि-जिति**। अनेन लोके विद्वद्रूपस्य साधुत्वमनुच्यते, न त्वस्योट्।

❀ अभिनव-चन्द्रिका ❀

'सम्प्रसारणस्ये'ति दीर्घापत्तिर्बोध्या। **अतङ्भावितत्वेनेति**। परेऽत्वतङ्भावितपक्षस्याश्रयणेऽपि न कश्चिद्दोषः। ननु 'द्युपुत्र' इत्यत्र 'सम्प्रसारणस्ये'ति दीर्घापत्तिः, नच उदिति तपरकरणसामर्थ्येन न ह्रस्व इति वाच्यं, दिवुशब्दात्क्यचि ततः क्विपि सम्प्रसारणे 'हलः' इति दीर्घे 'द्यूभ्या'मित्यादौ ह्रस्वार्थं तस्यावश्यकत्वादिति चेन्न; उत्तरपदार्थस्य सम्प्रसारणपदार्थे विशेषणत्वेन उत्तरपदनिमित्तकसम्प्रसारणस्यैव तेन दीर्घविधानात्। अतङ्भावितपक्षे 'समानाङ्गग्रहणं कर्तव्य'मिति वार्तिकस्य

❀ विद्वत्स्थिमाला ❀

ननु तत्र 'हल' इति दीर्घेऽनिष्टसिद्धिरत आह—**अतङ्भावीति**। एतेन तथा शास्त्र्याद्युक्तमपास्तम्। मूले ठित्वफलमुक्तमिति सूचयन्नाह—**ऊठष्टित्वमिति**। एतावता सर्वरूपसाधुत्वमिति नेत्याह—**अनेनेति**।

१ **अतङ्भावितत्वेनेति**। तङ्भावितपक्षानाश्रयणे तु 'द्युभ्या'मित्यत्र उन्नतपरकरणाकुले इति बहुल इति दीर्घाप्राप्त्या न दोषः। 'अद्युहितरा'मित्यत्र तु यथासङ्ख्यसम्बन्धेन न दोषः। न च भाष्ये लृकारोपदेशफलतयाऽस्य यथासङ्ख्यं सम्बन्धस्यापरिगणितत्वेन नैवं सम्भवतीति वाच्यं, प्रयोगाणामेव मुख्यतया तेषामेव फलतया परिगणनात्। किञ्च—नहि यावन्ति लक्ष्याणि तावन्ति निर्दिष्टव्यान्येवेति नियमः, एवञ्च ह्रस्वोठ्करणेऽपि न दोषः इत्याहुः। **परेतु** तङ्भावितपक्षानाश्रयणे 'द्युपुत्र' इत्यत्र 'हल' इति दीर्घापत्तिः। तपरत्वन्तु—दिवमिच्छति, क्यच्, कर्तरि क्विप्, ततः अल्लोपस्य यलोपे स्थानिवद्भावनिषेधाद्यलोपे, ऊठः क्वौविधित्वाच्छ्वोरित्यूठि, भ्यामि द्यू-भ्यामिति स्थितौ ह्रस्वोकारविधानाय चरितार्थम्, अन्यथा भाव्यमानपरिभाषायाः सवर्णादान्तरतम्याद्दीर्घ ऊकारः स्यात्। न चास्मिन्पक्षे द्युपुत्रे दीर्घवारणाय तपरकरणं चरितार्थमिति न तद्भाव्यमानोऽप्युकार इति परिभाषाज्ञापकमिति नान्तरतम्यात्तत्र दीर्घप्राप्तिरिति नोक्तदोष इति वाच्यम्, उत्तरकालप्राप्तिकस्य 'हल' इति दीर्घस्य तपरेण वारणाऽसम्भवात्तद्वैयर्थ्यस्य स्पष्टतया तेन परिभाषाज्ञापनस्य निष्प्रत्यूहत्वादित्याहुर्गौडाः।

२ **दीर्घाप्राप्तेरिति**। 'एत्येधत्यू'ठ्स्वत्र तन्त्रेण ह्रस्वदीर्घयोर्निर्देशे तु यस्य कस्याप्युकारस्य ग्रहणेऽतिप्रसङ्ग इत्याशयः।

३ **सम्प्रसारणाच्चेति**। यत्तु **पर्वतीयाः**—'अज्विशिष्टयणः सम्प्रसारणसञ्ज्ञाविधानादेवोपपत्त्या इदं व्यर्थमित्याशङ्क्य—विद्वांसमाचष्टे विदावयतीत्यत्रेष्टवद्भावेन नित्यत्वाट्टिलोपे 'विद्' इतिस्थितेऽचोऽभावेन सम्प्रसारणानापत्तिमाहुस्तद्बालविलोभनमात्रम्। प्रत्याहारेषु अज्विशिष्टयणामनिवेशेन अज्विशिष्टयणः सम्प्रसारणसञ्ज्ञाया वक्तुमशक्यत्वात्। अकारसहितांश्चतुरोऽपि यकारादीन्पठित्वा तथोपपादने तु विशिष्टरूपाश्रयणादर्थवत्परिभाषाप्रवृत्त्याऽनर्थकयकारादौ सम्प्रसारणानापत्तेश्च। 'इग्यणोऽज्वतः सम्प्रसारण' मित्येवं न्यासेन यथाकथञ्चित्तथा वक्तुं शक्यत्वेऽपि तत्र लाघवाभावात्। विदावयतीत्यादावपि स्थानिवत्त्वेन तद्वैशिष्ट्यस्यापि वक्तुं शक्यत्वाच्च, स्वविधौ न स्थानिवदित्यस्य स्वमात्रविधावित्यर्थस्य वक्तुं युक्तत्वाच्च। सति सम्भवेऽज्वत इत्यस्यापि वक्तुं शक्यत्वाच्च, विद्वयतीत्यस्यैवेष्टत्वाच्चेति प्राहुर्गौडाः।

णिलोपस्य स्थानिवत्त्वात्, अङ्ग-भ-सञ्ज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात्[१]।

विज्ग्रहणं क्विपोऽप्युपलक्षणं, 'वच्यादिभ्यो विहिते किती'ति व्याख्यानस्याचःपरस्मिन्नित्यत्र,काम्यच्सूत्रे च भाष्ये उक्तत्वेन ण्यन्तात्क्वौ सम्प्रसारणाप्राप्तेः। प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव 'क्वौ विधिं प्रति न स्थानिव'दित्यत्र ग्रहणेन णिलोपस्य स्थानिवत्त्वाच्च ।

तेन काम्यच्सूत्रोक्तविहितविशेषणपक्षतदितरपक्षयोर्न फलभेदः। वस्तुतो 'विभाषा पूर्वाह्णापराह्णाभ्या'मिति सूत्रे' 'प्रष्ठौह आगतं प्रष्ठवाड्रूप्य'मिति भाष्ये लौकिकविग्रहवाक्ये 'प्रष्ठौह' इति प्रयोगादन्यत्रापि ण्विः। तदुक्तम्—इति पक्षे इति ।

❀ अभिनव-चन्द्रिका ❀

सत्त्वाच्च 'अक्षद्यूः' इत्यादौ पूर्वरूपमित्याहुः । **णिलोपस्य स्थानिवत्त्वादिति** । नन्वेवं—'वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एवे'ति परिभाषेन्दुशेखरस्थग्रन्थविरोध इति चेन्न; तत्र बाहधातुप्रकृतिकयोस्तयोरनभिधानबोधनेनादोषात्। **अङ्गभसञ्ज्ञाक्षिप्तेति**। ननु 'न लुमताङ्गस्ये'त्यत्रोक्तदिशा प्रत्ययाक्षेपो न स्यादितीदमयुक्तमिति चेन्न; प्राचीनमतावलम्बनेनैव तद्ग्रन्थस्य सत्त्वात्।

❀ चिदस्थिमाला ❀

शुद्धभसञ्ज्ञाया अनाक्षेपकत्वाह—**अङ्गभेति**। अङ्गसहितभबोधकपदाभ्यामित्यर्थः। एतेनापरनिमित्तकत्वात्कथं स्थानिवत्त्वमित्यपास्तम्। मूले विजुक्तेः स्वारस्यमन्योक्तमसङ्गतमिति ध्वनयन् विचोऽसार्वत्रिकत्वान्मूलासङ्गतिं परिहरति—**विजिति**। नन्वेवं सम्प्रसारणापत्तिरत आह—**वच्यादीति**। नन्वेवमपि पक्षान्तरे स्यात्, णिलोपस्य स्थानिवत्त्वं तु 'क्वौ विधि'मिति निषिद्धमत आह—**प्रतीति**। ग्रहणेन=ग्रहणौचित्येन। तेन=द्वितीयप्रकारेण। आद्ये एकस्यैव पक्षस्योक्तत्वादाह—**काम्यजिति**। एतेनैतदर्थं ण्यन्तात् क्विपोऽनभिधानमित्यपास्तम्। विग्रहस्याछन्दस्त्वादाह—**लौकिकेति**। 'वहश्चे'त्यत्र तदनुवृत्तिरिति भाष्याकूतम्।

❀ ज्योत्स्ना ❀

दीर्घं बाधित्वा लघूपधगुणापत्तिरितिबोध्यम्। **अङ्गभसञ्ज्ञाक्षिप्तप्रत्ययेनेति**। इदं कार्यकालपक्षे, यथोद्देशपक्षे तु 'नचापरं निमित्तमाश्रीयते' इति साप्तमिकभाष्यप्रदर्शितदिशा प्रत्ययनिमित्तत्वाभावाण्णिजन्ताद्विजिति पक्षेऽपि विश्ववाट्शब्दे ऊठाऽत्र भवितव्यमेव। तत्राहुः—एवमपि णिलोपस्य स्थानिवत्त्वाद्वाहन्तस्य भत्वाभावादूठ् कथं स्यात्? माभूदिति चेत्,—यथोद्देश इव कार्यकालेऽपि भत्वाभावादेवोठोऽभावे वक्तव्ये 'भसञ्ज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणा'दिति तत्र हेतूपन्यासवैयर्थ्यमिति। अत्र ब्रूमः—'न पदान्त'—सूत्रभाष्योक्तरीत्या भसञ्ज्ञाविधौ पदमित्यस्यानुवृत्त्या पदं सङ्कं भवतीत्याश्रयणाद्भसञ्ज्ञाया अपि पदकार्यत्वात्पदान्तविधौ नेति स्थानिवत्त्वनिषेधाद्वाहन्तस्य भसञ्ज्ञायां यथोद्देशपक्षे ऊठ् निष्प्रत्यूहः। कार्यकालपक्षे तु प्रत्ययनिमित्तस्योठः पदकार्यत्वाभावा-

❀ विषमपदविवृतिः ❀

**अन्यत्रापि ण्वुलिति**। णिजन्ताद्विचि तु प्रष्ठौह इति रूपं दुर्लभम्। णिचा व्यवधानेनोठो-

१ **वाहो विशेषणादिति**। परेतु—अचःपरेतिस्थानिवद्भावस्य'स्थानी निवृत्तः आदेशो न जातः' इतिबुद्ध्युपपादकतया'वाही'तिबुद्धौ तस्यैव भत्वेन वाहो भत्वाभाव इत्याशयः। 'वाहो विशेषणा'दितिशेखरोक्तन्तुन युक्तम्, स्वमते आक्षेपाभावात्, फलाभावाच्चेति **गौडाः**।

चतुरनडु । 'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इति वर्त्तते ।

**सावन** । 'आच्छीनद्यो'रित्यतो 'नु'मनुवर्त्तते, 'आ'दिति च । तदाह—**आदित्यर्थानि** । **विशेषविहितेनेति** । यासुटा सीयुडिवेत्यर्थः । **न बाध्यत इति** । उपजीव्यत्वादिति भावः । **अमा चेति** । 'असम्बुद्धा'विति विशेषविहितेनाऽमेत्यर्थः । नुम उपजीवकत्वेन विरोधाभावात्, ततः प्राक् तस्याप्राप्तेश्चेति भावः ।

क्वचित्तु 'अमा च नुम्न बाध्यते' इति पाठः । तत्रायमर्थः—'चतुरनडुहो'रित्यादौ 'नपुंसकस्ये'ति नुम्—परत्वादाना बाध्येत, पुनःप्रसङ्गविज्ञानात्तु न बाध्यते इति । **रुत्वं नेति** । 'अनड्वांस्तत्रे'त्यत्र रुत्वं भवत्येव, 'तत्रोपदेशवैयर्थ्याभावात् । **संयोगान्तलोपस्येति** । हल्स्थानिकस्येत्यर्थः । एवञ्च नस्य प्रातिपदिकान्तत्वाऽभाव इति भावः । **अनड्वानिति** । अनः शकटं वहतीत्यर्थे—'वहेः क्विनसि, अनसो डश्च' ।—यजादित्वात्सम्प्रसारणम् ।

ननु हेऽनड्वन्नित्यत्र सम्बुद्धिलोपेऽवश्यं प्राप्ते अम आरम्भादमोऽपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः, विषयभेदेऽप्यचि—रादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्ये इति चेन्न; प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनाऽपवादत्वस्यैवाऽसम्भवात् । ध्वनितश्चेदं प्रत्ययलक्षणसूत्रे भाष्य-कैयटयोः । एवमेव 'अतृणेट्' 'अनड्'-

❀ चिद्स्थिमाला ❀

ततः=अनः । नस्य=नुमः । नन्वेवं नुमोऽविकृतरूपश्रवणार्थतयाऽनड्वांस्तत्रेत्यत्र रुत्वमपि न स्यात आह—**अनड्वानिति** । ननु सोस्तल्लोपपक्षे तस्यासिद्धत्वेऽपि नेष्टसिद्धिरत आह—**हल्स्थानीति** ।

ननु विषयैक्ये एवापवादत्वमिति नात्र तथाऽत आह—**विषयभेदेपीति** । सिद्धान्तमाह—**प्रत्ययेति** । **ध्वनितमिति** । तत्र हि आद्यप्रत्ययग्रहणस्याद्यफलं संखण्ड्य द्वितीयफले दत्ते जगदित्यादौ लोपोत्तरकालिकतुगभावापत्तिरूपदोषो दत्तः । ननु तत्र विलोपात्परत्वात्पूर्वं 'गमः क्वा'वित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तिरतः कैयटेनोक्तम्,—अन्तरङ्गत्वात्पूर्वं विलोपः, 'गमःक्वा'वित्ययं हि लोपोऽङ्ग-

❀ ज्योत्स्ना ❀

तत्र कर्तव्ये स्थानिवद्भावात्प्राप्त्यभावः इति विशेष इति । एतेन 'विश्ववाड्भ्या'मित्यादौ स्वादिष्वित्यनेन प्रत्ययनिमित्तपदसञ्ज्ञायाः स्थानिवद्भावाभावात् 'ढ्ोढ'इत्याद्यपि न प्राप्नोतीत्यपास्तम् । '**हल्स्थानिकस्ये**'त्यनेन—'हल्ङ्याप: सो'रितिदीक्षितोत्प्रेक्षितन्यासे सुस्थानिकसंयोगान्तलोपस्य व्यावृत्तिः । 'न ङिसम्बुद्ध्यो'रितिज्ञापकं तदसिद्धत्वाभावस्याप्युत्प्रेक्षणात् । विषयभेदेऽपि अपवादत्वाङ्गीकारे-साधकं दर्शयति—**विषयभेदेऽपि हीति** । हिर्हेतौ । **एवमेवेति** । प्रत्ययलोपविधायकैः प्रत्यया-

❀ विषमपदविवृतिः ❀

ऽप्रवृत्तेः । **तत्रोपदेश इति** । रुत्वशास्त्रवैयर्थ्याभावादित्यर्थः । 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' इति न्यायादिति भावः । भाष्ये ध्वनितत्वमेवाह—**एवमेवेति** । लोपेन प्रत्ययानुत्पत्तेरन्वाख्याने एवेत्यर्थः । अन्ये तु–विषयभेदे नोत्सर्गापवादभावः । अचि रादेशस्य नुडपवादत्वमपि न; विषयभेदात् । निरूपितश्चेदं

१ वस्तुतस्त्वित्यनेन दुविधानेनोगित्वान्नुमा च रूपसिद्धौ 'सावनडुह' इति न कार्यमिति केचित्तन्न, उकारविशिष्टस्यादेशत्वापत्तौ सर्वादेशत्वापत्तेः । व्याख्यानादिनोकारस्येत्सञ्ज्ञकत्वे त्वनडुदीतरेत्यत्रोगितश्चेति ह्रस्वापत्तेः ।

न्नित्यादेस्तत्सूत्रोदाहरणत्वमुपपद्यते इति दिक् ।

**सहेः सा** । 'अपदान्तस्य मूर्द्धन्य' इत्यधिक्रियते । **लोके त्विति** । एतेन 'तुराषाण्मेघवाहन' इति व्याख्यातम् । 'नहिवृती'त्यनेन क्विबन्तसहावेव दीर्घविधाना-दाह—**अन्येषामपीति** ।

**दिव औत्** । ननु—विधेयविषये उच्चारणार्थानामपीत्सञ्ज्ञोचिता,

❀ अभिनव-चन्द्रिका ❀

**दिगिति** । दिगर्थस्त्विदमयुक्तं, तथा सति 'सः' इत्यत्रापि प्रथमतो हल्ङ्यादिलोपे प्रत्यय-लक्षणेन त्यदाद्यत्वेऽपि विसर्गश्रवणं न स्यात् । किञ्च प्रत्ययस्थानिककार्ये कर्त्तव्ये प्रत्ययलक्षणाभावेन 'भवता'दित्यत्रातो हेरित्यनेन लुकि 'भवे'त्येकस्यैव रूपस्यापत्तेश्च, तस्मात्स्वविषये नाप्राप्तप्रत्यया-नुत्पत्तिरपि बाध्यते, ततश्च प्रकृतदोषस्तदवस्थ एव, तस्माद्धल्ङ्यादिलोपविषये तक्रन्यायस्यानि-त्यत्वमेवाश्रयणीयम् । तदनित्यत्वे प्रमाणन्तु—'इदमो मः' इति सूत्रमेवेत्यन्यत्र विस्तरः ।

यद्वा—'सावपि पदं भवती'ति सिद्धान्तादत्र 'भवे'दित्यत्रेव तल्लक्ष्यत्वाभावेन पुनः संयोगान्त-लोपेनेष्टसिद्धिरिति विचारणीयं सुधीभिः ।

❀ चिदस्थिमाला ❀

विशेषापेक्षत्वाद्बहिरङ्गः, भिन्नविषयत्वाच्च येननेत्यपि न, सति तस्मिन्न्यायेनैव विलोपः स्यात्, तस्मात् सति क्विपि नात्र तुकः प्राप्तिरपि तु विलोपे कृते इति । तत्र 'भिन्ने'तिवार्तिकरीत्या, सिद्धान्तस्तूक्तरीत्योक्त एवेति तत्त्वम् । एवमेव—उक्तप्रकारेणैव । एतेन तदानर्थक्यं परिहृतं, लाघवञ्चात्र मते इत्याद्यन्यत्र स्पष्टं, तदाह—**इति दिगिति** । **व्याख्यातमिति** । एतेन तत्र ण्विरेव दुर्लभः, प्रागेव तु षत्वमिति हरदत्तः परास्तः । सहावेव—नतु ण्यन्ते । सकलग्रन्थकाराशानं प्रकाशयन्नाह—**नन्वित्यादिना** । अनुवादे गत्यन्तरसत्त्वादाह—

❀ ज्योत्स्ना ❀

नुत्पत्तेरान्वाख्यानेनैवेत्यर्थः । **तत्सूत्रोदाहरणत्वमुपपद्यत इति** । अन्यथा तु परत्वादिन्न स्यादिति भावः । एतेन प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते इति वार्तिकेनेत्सञ्ज्ञाप्रतिषेधाल्लक्षणायामावश्यक-त्वमित्याशयकल्पनं परास्तम्, 'गुप्तिज्किद्भ्यः स'न्नित्यादौ प्रतिषेधप्रसङ्गात् । नच सनि प्रत्यया-नुकरणे प्रकृतिवदतिदेशेन प्रत्ययत्वप्रयुक्तप्रतिषेधात्, अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वा-भावाद्वा प्रातिपदिकत्वाभावात्प्रतिषेधाप्रसङ्गः, इत्सञ्ज्ञा तु प्रत्ययत्वप्रयुक्तव्यवसितान्त्यत्वादेवेति वाच्यं, 'परस्मैपदानां णलतुसुस्थलथुसणल्वमा' इत्यादौ द्वन्द्वसाधुत्वार्थं विभक्त्युत्पत्तिप्रातिपदिक-त्वयोरावश्यकत्वेन प्रतिषेधप्रसङ्गस्याऽप्यपरिहरत्वादत इत्सञ्ज्ञाविधौ प्रतिषेधे चोभयत्र प्रातिपदिक-शब्देन स्वरूपातिरिक्तार्थबोधकत्वमावश्यकमिति वाच्यमिति दिक् । नन्वस्तूक्तरीत्या प्रातिपदिक-

❀ विषमपदविवृतिः ❀

सविस्तरं त्रिपथगायाम् । तथा चोत्सर्गापवादभावाभावेऽनङ्गानित्यत्र प्रत्ययलक्षणसूत्रासत्त्वे नित्यत्वात्सोर्लोपे नुमोऽनापत्त्या तस्य तत्सूत्रोदाहरणत्वमुपपद्यते एव । इन्नुम्विधिसामर्थ्येन भूतपूर्वगत्याश्रयणसम्भवेऽप्यन्यार्थमारब्धव्येऽपि प्रत्ययलक्षणसूत्रेणैव निर्वाह उचित इति भाष्या-शयः । किञ्च लोपशास्त्रेणानुत्पत्तेरन्वाख्यानेऽप्युत्सर्गापवादभावस्यावर्जनीयतयाऽमादिविषये हल्ङ्यादिसूत्रेण प्रत्ययानुत्पत्तेरेवान्वाख्यानमसम्भवि । किञ्च 'हेगौरी'त्यादौ सन्निपातपरि-भाषया सम्बुद्धिलोपानापत्तिप्रतिपादकभाष्यासङ्गतिः । अपि च णिलोपशास्त्रेण णेरनुत्पत्ते-

१ एवञ्च तक्रन्यायस्य विभक्तिविषयेऽनित्यस्वीकारेणैवोपपत्तौ प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्त्यन्वा-ख्याने न मानमित्याशयः। २ तत्र=कैयटे । ३ प्रागेवेत्यव्ययं नितरामित्यर्थे । द्रागेवेति पाठेऽपि तथैव ।

—अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः । ध्वनितश्चेदमदङ्सूत्रे भाष्ये ।

तत्र हि—ङित्त्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्य—'अनुनासिकोपधत्वा'दिति समाहितं, न तूच्चारणार्थत्वादिति ।

किञ्च द्वितीयवर्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र-तत्र विशेषणार्थेष्विव हलन्त्यसूत्राप्रवृत्तौ मानाभावः । अत एव 'तस्य लोप' इति सूत्रेऽनुबन्धानामेकान्तत्वपक्षे

ॐ अभिनव-चन्द्रिका ॐ

**नतूच्चारणार्थत्वादिति** । ननु सम्बुद्धिलोपविषये सन्निपातपरिभाषाया अनित्यत्वादनुनासिकाकारपक्षे सम्बुद्धिलोपप्राप्त्या तस्यैकदेशयुक्तिलमावश्यकम् , अत एव तत्पक्षे 'साधीयोऽत्र सम्बुद्धिलोपः प्राप्नोती'ति भाष्ये उक्तमितिचेन्न, 'ग्रामणि कुल'मित्याद्यर्थं सङ्कुचितसङ्कोचस्यावश्यकत्वेन 'ह्रस्वस्य गुणः' 'अम्बार्थनद्योर्ह्रस्व' इत्येतद्वाक्यार्थे एङ्ह्रस्वेतिसम्बुद्धिलोपातिरिक्तत्वेन सन्निपातपरिभाषाप्रयुक्तसङ्कोचेऽपि—अत्र तदतिरिक्तत्वेन सङ्कोचे प्रमाणाभावः । 'साधीय' इति भाष्यमेकदेशिन इति च उपपादितमजन्तनपुंसकान्ते इति तत एवावधार्यम् ।

परेतूच्चरणार्थानां विनैवेत्सञ्ज्ञां निवृत्तिस्वीकारे न बाधकम् , 'उच्चारणार्थ'मित्यस्योच्चारणमेवार्थः प्रयोजनमित्यर्थस्य स्वयमेवोक्तत्वेनात्राकारस्योच्चारणे पूर्वसवर्णदीर्घसम्पादनेन चारितार्थ्यादत्रोच्चारणार्थत्वस्यासम्भवेन विनेत्सञ्ज्ञां तस्य निवृत्तेरसम्भवेनानुनासिकोपधः स स्वीकृत इति कोऽदङ्सूत्रस्थभाष्येण विरोधः? । दिवऔदित्यत्र तकारस्यापि सर्वादेशसम्पादनेन चारितार्थ्यादुच्चारणार्थासम्भवा'न्नानुबन्धे'ति परिभाषया फलाभावोपपादकं तद्भाष्यमिति कस्तेनापि विरोधः?। एवं 'तितिप्रत्ययग्रहणं कर्तव्य'मिति वार्तिकाभावे तकारस्य तित्त्वसम्पादनेन चारितार्थ्यादुच्चारणार्थत्वासम्भवाद्विनैवेत्सञ्ज्ञां निवृत्त्यभावेन तित्त्वमुक्तमिति कस्तेनापि विरोधः ? । तकारस्योच्चारणार्थत्वसम्पादनेन वार्तिकस्य साफल्यान्न वार्तिकवैयर्थ्यमपि । दर्विरित्यत्र लोपवारणायाऽनुनासिकत्वं स्वीकृत्यानुनासिकान्त्यस्येति व्याख्यानमिति—न तेनापि विरोधः ।

सिच इदित्त्वस्यामंस्त इत्यत्रानिदितामित्यस्य—न विद्यते इद्यस्मिन्नित्यर्थेन नलोपाभावार्थं तस्यावश्यकत्वेनेदित्वान्नुमः शङ्कापि युक्तैव । हनःसिजित्येतज्ज्ञापकादनिदितां धातूनामेव ग्रहणेनामंस्त इत्यस्य सिद्धिं मनसि निधाय सजादेशकरणेन समाहितम् । न च तज्ज्ञापकेन तत्र लोपाभावे फलाभावेन तस्योच्चारणार्थत्वात्पुनः सिजेव कुतो नोक्त इतिवाच्यम् , अभैत्सीदित्यत्र नुमभावसम्पादनेन तस्य चारितार्थ्यात्तस्योच्चारणार्थत्वा सम्भवादिति न तेनापि सह विरोधः ।

'यदपि अनुवादविषये' इत्यादि, तदपि न, सनःसकारे लक्षणा उत शक्तिः? आद्यत्वे तत्रापि न, विधौ परत्वस्य बाधात् । अन्त्यत्वे प्राचीनानामपि लक्षणां विनैव निर्वाहात् । यदपि—'गमेरि'डिति दृष्टान्तेनोपधालोपवारणं तदपि रभसादेव । दृष्टान्ते प्राचीनानामुच्चारणार्थेकारसत्त्वेन तन्मते

ॐ चिदस्थिमाला ॐ

**विधेयेति** । अपूर्वविधित्वादाह—**तान्तस्येति** । **अदङिति** । **हलन्त्येति** । **'प्राप्ते'त्यादिः** । अन्यानेकभाष्यसम्मतमपीदमित्याह—**अत एवेत्यादि** । अज्ञानेन तथोक्तावपि सिद्धान्तेऽपि तथा नोक्तमिति सूचयन्नाह—

ॐ विषमपदविवृतिः ॐ

रन्वाख्यानेन—'आटिट'दित्यादौ सणिच्कस्य द्वित्वानापत्तिः । यदि च 'द्विर्वचनेची'ति निषेधाद्वित्वे कर्त्तव्ये न तदनुत्पत्तिबुद्धिः, द्वित्वोत्तरं तु तदनुत्पत्तिरिति कथञ्चिदुच्यते तर्हि—अनड्—नित्यत्राप्यमा बाधात्तत्प्रवृत्तिकाले न तदनुत्पत्तिबुद्धिः, पश्चात्तु तथेति सुवचम् । अतृणेडिति तदुदाहरणं तु भवत्येव, 'तृणेढी'त्यादौ चरितार्थस्येमो हल्ङ्यादिलोपानपवादत्वादित्याहुः ।

**तान्तस्य विधानमिति** । इदमयुक्तं, 'तपरस्तत्कालस्ये'ति तत्कालस्य सञ्ज्ञित्वबोधनात् ।

'दिव औ'दित्यादीनां सर्वादेशत्वापादनं भाष्ये कृतम्। 'तित्स्वरित'मिति सूत्रे च भाष्ये—'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकस्य 'द्युभ्यामित्यादौ तदभावः फल'मित्युक्तम्। दित्त्वमाश्रित्य च प्रत्याख्यातन्तदित्यन्यत्।

किञ्चाऽऽदेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्सञ्ज्ञकत्वाभावात्तिति प्रत्ययग्रहणं व्यर्थमेव स्यात्।

तथा विधेयविषये—उच्चारणार्थानामप्यनुनासिकत्वेनेत्सञ्ज्ञा। अत एव 'वेरपृक्तस्ये'त्यत्राऽपृक्तग्रहणाभावे–'दर्वि'रित्यत्र लोपमाशङ्क्य—'अनुनासिकपरस्य वेर्ग्रहण'मिति भाष्ये उक्तम्।

अत एव 'इदितो नु'मिति सूत्रे भाष्ये-धातोरित्यस्याभावे सिच इदित्त्वादभैत्सीदित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितं, न तु सिच इकारस्योच्चारणार्थत्वादित्त्वाभावेन। ल्युडादावुकारस्यानाकाभ्यामेव निवृत्तिरिति न तस्येत्सञ्ज्ञा, [अनुनासिकत्वाभावात्][1]। अत एव नन्द्यादिभ्यो ल्युप्रत्यये 'नन्दने'ति टाबन्तप्रयोगो 'गाङ् लिटी'ति सूत्रे भाष्ये।

'ल्युः कर्त्तरि पुंसी'ति त्वमरस्य प्रमादः।

अनुवादविषये तु—हलन्त्यसूत्रभाष्योक्तरीत्या तेषां व्यवसितान्त्यत्वाभावेन, फलाभावेन चेत्सञ्ज्ञाशास्त्राऽप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्रहिते लक्षणा।

**❀ अभिनव-चन्द्रिका ❀**

तदप्राप्तौ दोषाभावात्। नुम् तु नाशङ्कनीयः, 'गम्'इति पृथक्करणेन तस्य धात्ववयवत्वाभावेन नुमप्राप्तेः। युवुत्पत्तिस्तु 'क्षिय'इत्यत्रेव प्रकृतिवदनुकरणं न भवतीत्यनेन सिद्धा। अस्तेर्भूरित्यत्र निर्विसर्गपाठ इति प्रमाद एवेत्याहुः।

**❀ चिदस्थिमाला ❀**

**दित्त्वमिति**। भाष्यान्तरमाह—**तथेति**। किञ्चेत्यर्थः। भाष्यान्तरमाह—**अत एवेति**। तेषामित्सञ्ज्ञकत्वादेवेत्यर्थः। नन्वेवं ल्युडादौ दोषोऽत आह—**ल्युडादाविति**। अनुनासिकत्वे सत्यपीति भावः। 'अनुनासिकत्वाभावा'दिति क्वाचित्कोऽपाठः, तदावश्यकत्वस्य भाष्ये एवं स्पष्टत्वात्। तत्र मानमाह—**अत एवेति**। तस्य तदभावादेवेत्यर्थः। भाष्यविरोधादेवाह—**ल्युरिति**। 'विधेये'त्युक्तेः फलमाह—**अनुवादेति**।

**❀ ज्योत्स्ना ❀**

शब्दः स्वरूपातिरिक्तबोधकः, इत्सञ्ज्ञाविधौ तु तस्यार्थवन्मात्रबोधाक्षतिरित्यस्वरसादाह—**फलाभावेन चेति**। नन्वनुवादे इत्सञ्ज्ञायाः फलमाकारमात्रोद्देश्यकत्वं, विधेरन्यथा तान्तस्य तथात्वापत्तिरिति फलाभावोक्तिरभिप्राय इति चेच्चिन्त्यमेतत्। तत्रहीकारविशिष्टस्तकारो लिङ्सम्बन्धी न सम्भवतीतीकारस्योच्चारणार्थत्वं, तस्य चेत्सञ्ज्ञायां फलाभाव इति बोध्यम्।

**इत्सञ्ज्ञाशास्त्राप्रवृत्तेरिति**। एवञ्च यत्रेत्सञ्ज्ञाशास्त्रप्रवृत्त्योच्चारणार्थरहितस्य शक्त्यैव तद्रहित-

**❀ विषमपदविवृतिः ❀**

**सर्वादेशत्वापादनमिति**। बोधकगतमनेकाल्त्वं बोध्ये उपकरोतीत्यभिप्रेत्येदम्। **तदभावः फलमित्युक्तमिति**। 'तित्स्वरित'मित्यत्र तित्पदं—तिद्बोध्यपरमित्यभिप्रेत्येदम्। तथाच कैयटेनोक्तं—तिता प्रत्यायितः सञ्ज्ञी सञ्ज्ञाधर्मेण कथ्यते इति—अस्ति तद्व्यपदेश आदेशस्येति। एतेन तपरसूत्रेणाज्मात्रस्य विधेयत्वात्तत्रानेकाल्त्वतित्त्वयोरभावादिदमप्ययुक्तमित्यपास्तम्। 'उच्चारणार्थानामपी'ति पाठः।

**अनुनासिकपरस्य वेरिति**। उच्चारणार्थानां विनैवेत्सञ्ज्ञां निवृत्तावनुनासिकपरस्य वेः कुत्राप्यभावेन सूत्रस्य निर्विषयत्वं स्यादिति भावः। उच्चारणार्थानामित्सञ्ज्ञां विना निवृत्त्यनिवृत्तिविचारः

१ [ ] एतदन्तर्गतोऽपपाठ इति चिदस्थिमाला।

विधौ तु नोचिता सा, 'न विधौ परः शब्दार्थः' इति न्यायात् । 'णौ गमि'रित्यादीनां नुम् तु न, स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वात् । 'गमेरि'डिति वच्च नोपधालोपः, अत एव सुबुत्पत्तिः, अन्यथा 'हनो वध लिङी'तिवत्सा न स्यात् ।

'अस्तेर्भू'रित्यत्रापि निर्विसर्ग एव पाठ इति केचित् । एवञ्चात्र तित्स्वरितापत्तिरिति चेन्न, दिव इकारस्योदात्तत्वेन स्रंसनधर्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वेनेकारस्य यणि 'उदात्तस्वरितयोर्यण' इति स्वरितसिद्ध्या फलाभावात्, 'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकेन तदप्राप्तेश्च । अन्तोदात्तं 'द्यौ'रिति तु द्यौशब्दस्य बोध्यम् । अल्विधित्वेनेति । 'अनल्विधा'वित्यत्र पञ्चमीसमासस्याप्याश्रयणादिति भावः ।

❀ चिदस्थिमाला ❀

नन्वेवं विधेयविषयेऽपि तथैवास्त्वत आह-विधौ त्विति । सा=लक्षणा । नन्वेवं कश्चिद्दोष एवात आह-इकः सत्त्वादिति । एवञ्च तत्स्वरूपबोधकत्वेन न दोषः। नन्वेवमुपधालोपापत्तिरत आह-गमेरिति। चस्त्वर्थे । मतान्तरमाह—अतएवेति । इगन्तत्वादेवेत्यर्थः । नन्वेवम्-'अस्तेर्भू'रित्यत्र विधेये कथं सुबुत्पत्तिरत आह—अस्तेरिति । केचिदित्यरुचिबीजन्तु प्रकृतिवदित्यस्याऽनित्यत्वेन तदुपपत्तिरिति न तत्त्वसाधकमिति । शङ्कापर्यवसानमाह-एवञ्चेति । तत्र तत्त्वे चेत्यर्थः। अत्र=द्यौरित्यादौ । उदेति । 'फिषोऽन्त' इत्यनेन । 'प्रत्ययाप्रत्यययो'रित्यस्यालक्ष्यसंस्कारकत्वेन भाष्ये क्वाप्यनाश्रयणादाह—तितीति । दित्वमाश्रित्य वार्तिकं प्रत्याख्यातमित्यन्यत्। नन्वेवं 'पृथिवी उत द्यौ'रित्यादौ पठ्यमानान्तोदात्तप्रयोगविरोधोऽत आह—अन्तोदात्तमिति । अलः स्थाने विध्यभावादाह—अनल्विति । उक्तरीत्याऽनुदात्तत्व-

❀ ज्योत्स्ना ❀

बोधकत्वं, तत्र च लक्षणा न, गौरवादित्युक्तप्रायम् । एतेन हयवरडित्यादौ उच्चारणार्थाकारस्य लक्षणयैव निवृत्तिः, अनुवादविषयत्वात्, अन्यथा तु इत्सञ्ज्ञाप्रवृत्तिर्हशादिप्रत्याहारे एव स्यान्न हल्प्रत्याहारे, ततश्च स्वप्रत्याहारखण्डनाद्युक्तदिशा 'मामांस्रायस्वे'त्यादौ दोषतादवस्थ्यमिति परास्तम् । इत्सञ्ज्ञाफलस्य हशादिप्रत्याहारेष्वप्रवेशस्य सत्त्वाल्लक्षणाहेतोरभावात् । हयवरेत्यादेः क्रमबोधकत्वेन अनुवादस्यासम्भवाच्च । वस्तुतस्तदुच्चारणमात्रार्थत्वादेव प्रत्याहारेषु उच्चारणार्थानां प्रवेशो नास्तीति स्वप्रत्याहारमण्डनावसरे निरूपितम्; तद्रीत्या—'सुद्दितिथो'रित्यादौ इकारादीनां निवृत्तिर्लक्षणामन्तरेणापि सिद्ध्यति । व्यर्थत्वादेव प्रत्याहारेष्वयं प्रयासः । न चैवं सजादेशकरणपरभाष्यविरोधः,तादृशभाष्यादर्शनात् । तथाहि-'इदितो नुम् धातो'रित्यत्रेद्ग्रहणाभावे'ऽभैत्सी'-दित्यत्र नुममाशङ्क्य-'नैतदस्ति प्रयोजनं, प्रयोजनं नाम तद्वक्तव्यं स्यात्-यन्नियोगतः स्यात् यच्चात्रेकारेण क्रियते तदकारेणापि कर्तुं शक्यम्-' इत्येतावद्धि भाष्यं, तत्र 'शक्यं कर्तु'मित्यनेन न तु तत्कृतमित्यर्थादुक्तं,व्याख्यातञ्च प्रदीपकृता-सकारस्योच्चारणार्थो य इकारः क्रियते इत्यकारेणापि सजित्येवं सकारः शक्यः कर्तुमिति उच्चारणार्थत्वस्य वक्तुमशक्यत्वात्, नतूच्चारणार्थानामपीत्सञ्ज्ञकत्वात् इत्यस्वरसस्योक्तत्वादिति बोध्यम् । स्वरितसिद्ध्येति । तथाच प्रयुज्यते 'द्यौः पितः पृथिवी मातरध्रु'गित्यादिः । अन्तोदात्तं द्यौरिति । 'पृथिवीमातध्रुगिरुत १ द्यौ'रित्यादौ तथा दर्शनादिति ।

❀ विषमपदविवृतिः ❀

काकदन्तपरीक्षामनुकरोतीति नात्रास्माभिः सूक्ष्मेक्षिका कृता। अतएव सुबुत्पत्तिरिति। इक्प्रत्ययान्तत्वादेव । णौगमिरित्यादीति । आदिपदेन 'ब्रुवो वचि'रित्यादि सङ्ग्रहः । नोपधालोप इति । 'वचि'रित्यत्र सम्प्रसारणमप्येवमेव न ।

ऊठ् तु नेति । इदमुतत्त्वपरत्वन्त्विति पूर्वग्रन्थेन विरुद्धम् । ज्ञापितेपि स्वस्मिंश्चारितार्थ्यासम्भवादुठोऽप्रवृत्तौ व्यञ्जनस्य स्थाने आन्तर्याद्ध्रस्वस्यैव प्रवृत्तेः ।

१ नन्वित्यनेन [ ३७८ पृष्ठस्थेन ] सहास्य सम्बन्धः ।

**पदान्त इति**। 'एङः पदान्ता'दित्यनुवृत्तस्य विभक्तिविपरिणाम इति भावः। अयमुकारोऽन्तोदात्तो निपात्यते, तेन 'द्युभिरक्तुभि'रित्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम्।

अत्र यथा 'हलः' इति दीर्घो न—तथोक्तम्। उतस्तपरत्वन्तु 'भाव्यमानोऽप्युकारः सवर्णग्राहकः' इत्यर्थज्ञापनार्थमिति 'तित्स्वरित'मिति सूत्रे भाष्ये उक्तम्।

'द्युभ्या'मित्यत्र ऊठ् न। 'क्ङिती'त्यनुवृत्तेः।

यत्तु—"अस्मात्तपरत्वात्—कुरुत इत्यादावुदितितपरत्वाद्गुणाभावो यथा स्थानिवत्सूत्रे भाष्ये उक्तः—तथा प्रकृते दीर्घाभावः—" इति कैयटः, तदेतेन परास्तम्। दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च। अत एव 'ऋत' इति तपरत्वेन 'चिकीर्षती'त्यादौ 'हलि चे'ति दीर्घस्य न व्यावृत्तिः। अत एव 'द्यचः' इत्यादौ 'चा'विति दीर्घसिद्धिः।

**षट्चतु**। रेफान्तस्य षट्सञ्ज्ञैव तु न कृता, 'चत्वारः' इत्यत्र लुगापत्तेः। तत्र 'रो न' इत्युक्तौ तु पदलाघवाभावः।

---

### ❀ अभिनव-चन्द्रिका ❀

**तथोक्तमिति**। तत्द्भावितपक्षाश्रयणादिति भावः। अतद्भावितपक्षेऽपि यथा न दोषस्तथोपपादितम्। **ज्ञापनार्थमिति**। स्वांशे चारितार्थ्यञ्च दिव्शब्दात्क्यचि ततः क्विपि ऊठि बोध्यम्। **अनुवृत्तेरिति**। अननुवृत्तौ तु क्विसाहचर्याद्धातुविहितप्रत्ययग्रहणेनादोषो बोध्यः। **परास्तमिति**। उक्तोदाहरणे तस्य चारितार्थ्याभावेन ज्ञापनासम्भवादिति भावः। **पदलाघवाभावादिति**। विहितविशेषणाभावेनातिचतुर्णामित्यत्रामः षट्सञ्ज्ञकात्परत्वेन नुट्सिद्धिरितिभावः।

### ❀ चिदस्थिमाला ❀

प्राप्तेराह—**सिद्धमिति**। उक्तं=तत्र तद्भावितत्वाश्रयेण। कैयटादिसकलोक्तिं खण्डयति—**यत्त्विति**। एतेन=भाष्यविरोधेन। **तपरत्वेनेति**। सामर्थ्यादसिद्धत्वेनेति शेषः। **नव्यावृत्तिरिति**। तन्निमित्तदीर्घस्तु जुगूषतीत्यादौ सफलः। 'ष्णान्ते'त्यत्र रेफप्रक्षेपेणाह—**रेफान्तेति**। तिस्रः, त्रीणीत्यादौ सन्निपातपरिभाषया दोषाभावादाह—**चत्वार इति**।

### ❀ ज्योत्स्ना ❀

**दीर्घसिद्धिरिति**। अत्र यद्वक्तव्यं तत्परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम्। **पदलाघवाभावादिति**। यदि—'षट्चतुर्भ्यश्च' 'षट्चतुर्भ्यो हलादि'रिति सूत्रद्वये चतुर्ग्रहणमकृत्वा 'ष्णान्ता ष'डिति पाठेन रेफान्तस्य षट्सञ्ज्ञा क्रियेत, अतिव्याप्तिपरिहाराय च 'षड्भ्यो लु'गित्यस्यानन्तरं 'रो ने'ति पठ्यते तदा सप्तमात्रात्मिका वृद्धिश्चतुर्ग्रहणात्। अर्धपञ्चमात्रात्मकग्रहणमत्र, सार्धमात्रं लाघवं, 'षड्भ्यो लुग्न'—इति न्यासे। ततोऽपि वाक्यभेदाभावप्रयुक्तं चाधिकम्। पदगौरवं तु नापयातीति भावः। वस्तुतश्चतसृणामित्यत्र स्वरार्थं 'षट्त्रिचतु'रित्यत्र चतुर्ग्रहणस्यावश्यकत्वम्, अन्यथा चतसृभावे कृते रान्तत्वाभावेन षट्त्वाभावादल्विधौ स्थानिवद्भावप्रतिषेधाच्च तदप्राप्तेः।

नच स्त्रीत्वसापेक्षचतसृभावात्पूर्वमन्तरङ्गत्वान्नुटि षट्स्वरे दोषाभावः, हलादित्वविशेषणसापेक्षत्वेन स्वरस्यान्तरङ्गत्वाभावात्। 'कास्प्रत्ययादाम्'—'औदाम्'—'ङेराम्'—इत्याम्त्रयव्यतिरेकेणानेकज्ञापकसाध्यषष्ठीबहुवचनग्रहणसापेक्षत्वान्नुटोऽप्यन्तरङ्गत्वाभावात्; ततश्च

### ❀ विषमपदविवृतिः ❀

**दीर्घस्य बहिरङ्गतयेति**। उत्त्वदीर्घयोस्तुल्यनिमित्तकत्वेनान्तरङ्गबहिरङ्गभावो न युक्तः। **पदलाघवाभाव इति**। 'षट्त्रिचतुर्भ्यो हलादिः' 'षट्चतुर्भ्यश्चे'त्यनयोश्चतुर्ग्रहणद्वयस्याकरणम्। 'षट्-

केचित्तु 'ष'डित्यादि षडाद्यर्थपरन् । अर्थात्परत्वञ्चास्य शब्दद्वारकम् । स चार्थः प्रधान एवेति न गौणेऽतिप्रसङ्ग इति, तन्न: 'शब्दद्वारक'मित्यस्य— शब्दनिष्ठपरत्वाद्यवधित्वस्य, परत्वस्य वा अर्थे आरोप इत्यर्थः; एवञ्च गौणत्वात्तत्र सम्बन्धे, तन्निरूपितसम्बन्धे च न विभक्तिः ।—'परम्परासम्बन्धेनान्वय' इत्यपि न; प्रकृतिप्रत्ययार्थयोः साक्षात्सम्बन्धेन क्लृप्तस्याऽन्वयस्य भङ्गापत्तेः ।

अत एव 'गङ्गायां घोषः' इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता । अत एवेदृशस्थले षष्ठ्यपि न । अत एव 'स्त्रियाः पुंव'दिति सूत्रे 'स्त्रियाः' इत्यर्थग्रहणमिति पक्षे भाष्यकृतोक्तं— 'भाषितपुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ती'ति ।

'दिक्शब्दयोगे' इत्यस्य—दिक्शब्दार्थान्वयभूतेऽवधित्वादौ सम्बन्धे पञ्चमीत्यर्थः । स च सम्बन्धो मुख्य एव साक्षात्सम्बन्ध एव च ग्रहीतुमुचित इति दिक् ।

ॐ चिद्स्थिमाला ॐ

दीक्षितादिसकलोक्तिं खण्डयति—**केचित्त्विति** । **तन्नेति** । 'यत' इति शेषः । लाघवादाह— **परत्वस्येति** । एवञ्च=आरोपे च । आद्ये आह—**तत्र सम्बन्धे इति** । द्वितीयेऽपि आह—**तन्निरूपितेति** ।

तत्र मानमाह—**अत एवेति** । तयोस्तथान्वयस्य क्लृप्तत्वादेवेत्यर्थः । अन्यथा तदसङ्गतिः स्पष्टैव । अतएव=भाष्यविरोधादेव । अतएव=उक्तरीत्या शब्दद्वारकपरत्वस्यासम्भवादेव, अन्यथा तदसङ्गतिः स्पष्टैव ।

नन्वेवं कथं पञ्चमी, साक्षाच्छब्दयोगाभावादत आह—**दिक्शब्देति** । वस्तुनो विहितविशेषणमित्यन्यत्र प्रतिपादितं, तदाह—**इतिदिगिति** । 'सिद्धीयमद्वित्वे' इति पाठः । ननु वर्गद्वित्वे तदप्रवृत्तिरत आह—

ॐ ज्योत्स्ना ॐ

परत्वाच्चतसृभावे दोषस्य सत्त्वात् । 'गौणे षट्चतुर्भ्यश्चेत्यस्याप्रवृत्ति'रिति मते 'प्रियचतसृणा'मित्यत्र चतसृभावे कृते ह्रस्वान्तत्वप्रयुक्ते नुटि दोषध्रौव्याच्च । 'चतसृभि'रित्यादौ 'हल्युपोत्तम'मिति स्वरस्य चतसृभावोत्तरमेव प्रसङ्गेनात्राप्याक्षेपात् । चतसर्याद्युदात्तनिपातनस्वरस्तु यथा षट्स्वरस्य न बाधकस्तथा स्पष्टम्भाष्ये इति दिक् । **केचित्त्विति** ।—मनोरमाग्रन्थानुवादः ।

**षडाद्यर्थपरमिति** । 'षट्चतुर्भ्या'मित्यन्वितार्थद्विवचननिर्देशे कर्तव्येऽनन्वितार्थत्वेन गुरुभूतबहुवचननिर्देशादिति भावः । नन्वर्थपरत्वेऽपि 'प्रियपञ्चा'मित्यादौ नुट् स्यादेव, शब्दद्वारकस्य अर्थात्परत्वस्य सत्त्वात्, अत आह—**स चार्थः प्रधान एवेति** । इदमर्थग्रहणसामर्थ्यलभ्यं, 'पञ्चमीनिर्दिष्टे यदुच्यते गृह्यमाणविभक्तेस्तद्भवती'ति—सर्वादिसूत्रस्थभाष्य—तद्व्याख्यानप्रदीपग्रन्थाभ्यान्तु षडर्थाद्विहितत्वमाम्नो नुट्प्रवृत्तौ निमित्तं, बहुवचननिर्देशादिति लभ्यते । विधानञ्च षडर्थसङ्ख्याबोधकत्वेनेति तन्मते गौणत्वे प्रसङ्ग एव नास्तीति बोध्यम् । **परत्वाद्यवधित्वस्येति** । विहितत्वावधित्वमादिपदग्राह्यम्, 'क्रियाकारकावधित्वमेव सम्बन्ध' इति मतेनेदम् । 'अतिरिक्तः सम्बन्ध' इति मतेऽप्याह—**तन्निरूपितसम्बन्धस्यैवेति** । **इति दिगिति** । अत्रेदमवधेयम्—

ॐ विषमपदविवृतिः ॐ

कती'त्यत्र तु चतुर्ग्रहणं कर्तव्यमेव, कतिग्रहणेन षडिति स्वरूपग्रहणात् । रान्तस्य षट्सञ्ज्ञायान्तु पदत्रयमिति पदगौरवमिति भावः । **स चार्थः प्रधान एवेति** । 'प्रधानाप्रधानयोः प्रधानस्यैव ग्रहण'मिति न्यायात् । **परत्वस्य वेति** । अवधितासम्बन्धेन शब्दनिष्ठपरत्वस्येत्यर्थः । **तत्र सम्बन्ध इति** । इदृशस्थले द्वयी गतिः—अवधित्वं पञ्चम्यर्थः, अवधितानिरूपकत्वं वा । तथा च तत्र सम्बन्धे= अवधित्वसम्बन्धे, तन्निरूपितसम्बन्धे=अवधितानिरूपितसम्बन्धे चेत्यर्थः । **परम्परासम्बन्धेनेति** । स्वबोधकप्रतियोगित्वसम्बन्धेनेत्यर्थः । 'गौणेऽर्थे न विभक्तिः' 'प्रकृतिप्रत्ययार्थयोः परम्परासम्बन्धेन नान्वयः' इत्युक्तार्थद्वये भाष्यं साधकमाह—**अत एव गङ्गायामिति** । परम्परासम्बन्धेनान्वये तु

**णत्वं द्वित्वमिति ।** ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इति णत्वात्पूर्वमेव द्वित्वं युक्तं, 'वाक्' 'वाक्क्' इतिभाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वात् ।

अन्यथा चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः, अवसाने चर्त्वस्यासिद्धत्वात्खर्परत्वाभावेन तस्य चर्त्वसम्भावनाऽपि न। न च कस्य द्वित्वेऽप्यवसाने

### ॐ अभिनव-चन्द्रिका ॐ

**गस्यैव द्वित्वे इति ।** ननु चर्त्वस्य जश्त्वापवादत्वात्कस्य द्वित्वे इति वक्तुं युक्तमितिचेन्न, 'माठरपरिवेषण'न्यायेन जश्पदार्थे चरतिरिक्तत्वेन सङ्कोचाज्जश्त्वात्पूर्वं तदप्राप्तेः । उपपादितञ्चेदं 'बाधित्वेतिशेष' इत्यत्र चन्द्रिकायाम् ।

**नचैवं कस्यापीति ।** न च 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेन चस्य द्वित्वमिति वक्तुं युक्तमिति वाच्यं, तेन हि असिद्धत्वाभावे बोधितेऽन्तरङ्गपरिभाषाप्रवृत्तौ बाधकाभावेनान्तरङ्गत्वाद्वित्वात्पूर्वं कुत्वे कस्यापीत्येवमेव वक्तुं युक्तत्वात्। अथ वर्णग्रहणेऽपि तत्प्रवृत्तौ 'स्र'गितिभाष्यप्रयोगे द्वित्वानापत्तिः, द्वित्वदृष्ट्या 'अ अ'इत्यस्य सिद्धत्वेन विवृतत्वस्याच्त्वाभावेनाच्परकत्वाभावात् । एवं मघ्वरिरित्यत्र ।

किञ्च द्वित्वाश्रयस्य नासिद्धत्वमित्यस्य स्वीकारे 'वाक्क्' इत्यत्र 'स्कोःसंयोगाद्यो'रित्येतद्दृष्ट्या कुत्वस्य सिद्धत्वेन संयोगादिलोपापत्तेः । मम तु 'वा'गिति भाष्यप्रयोगादवसाने चर्त्वस्य 'खरि चे'त्येतद्दृष्ट्याऽसिद्धत्वाभावबोधनेन द्वित्वाश्रयस्य कार्ये कर्तव्ये इत्यादि प्रत्यासत्त्या अर्थो न कल्पनीय इति न कश्चिद्विरोधो, नापि दोष इति चेन्न, 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेन द्वित्वदृष्ट्या असिद्धत्वाऽभावबोधनेऽपि 'आदिरन्त्येने'त्येतद्दृष्ट्या तस्यासिद्धत्वेन संवृतस्यापि तेनाच्त्व-बोधनेन'स्र'गित्यादि भाष्यविरोधाभावात् । 'वाक्क्' इत्यत्र संयोगसञ्ज्ञादृष्ट्या द्वित्वस्यासिद्धत्वेन संयोगसञ्ज्ञाया अभावेन लोपप्राप्तेः । किञ्च वर्णग्रहणेऽप्रवृत्तिं वदता भवतापि 'द्वित्वाश्रयस्ये'त्यवश्य-मुररीकर्तव्यम् । अन्यथा ऊढिमाख्यदौढिढदित्यत्र ढत्वादीनामसिद्धत्वात् 'कुहोश्चु'रित्यनेन चुत्वा-पत्तेः । वर्णग्रहणेऽप्रवृत्तिं स्वीकुर्वता भवतापि 'खरिचे'त्येतद्दृष्ट्या अवसाने चर्त्वस्य नासिद्धत्वमिति न वक्तुं शक्यते । अद्-धातोः क्विपि पश्चाद्दाशब्देन समासे ततो णिचि टिलोपे अद्दित्यत्र 'खरिचे'ति दस्य चर्त्वापत्तेरित्यलं पल्लवितेनेति दिक् ।

### ॐ चिदस्थिमाला ॐ

**वाक्किति ।** **भाष्योदेति ।** 'अनचिचे'त्यस्य । चर्त्वे=वावसाने इत्यनेन । ननु तस्यापि'खरिचे'ति चर्त्वमत आह—**अवेति ।** 'प्रकरणे प्रकरण'मिति पक्षस्त्वयुक्त इत्यन्यत्र स्पष्टम्। सिद्धान्ती शङ्कते—**न चेति।** जश्त्वे=

### ॐ ज्योत्स्ना ॐ

परत्वानुवादेन कार्यविधौ नह्यर्थेन पौर्वापर्यमस्तीति भाष्यात्परत्वस्य रशब्दावधिकस्यैव वक्तव्यत्वा-दुक्तदोषसद्भावेऽपि विधानानुवादेन कार्यविधौ तदभावः, 'ध्येकयो'रित्यादिविधानस्यार्थसापेक्षत्वेन 'जनिकर्तुः प्रकृति'रित्यनुशासनात्तदवधित्वस्यैव विधानानुवादे योग्यत्वात् । 'स्वमोर्नपुंसका'दिति-सूत्रे भाष्यकैयटयोः स्पष्टमेव तदित्याहुः । शब्दावधिकस्यार्थावधिकत्वे न बाधकं, शब्दार्थयोस्ता-दात्म्यात् । 'नह्यर्थेन पौर्वापर्यमस्ती'ति भाष्यन्तु तयोरौपाधिकभेदाभ्युपगमेनेत्यपि व्याचक्षते । **गस्यैव द्वित्वे इति।** इदञ्जश्त्वं चर्त्वमितिरामशब्दगतकौमुद्यां'जश्त्व'मित्यस्य 'बाधित्वे'ति शेषपूरणेन

### ॐ विषमपदविवृतिः ॐ

गङ्गापदार्थस्य प्रवाहस्य समीपवर्तितीरनिष्ठत्वसम्बन्धेनाधारत्वेऽन्वयसम्भवात्स्वरितत्वप्रतिज्ञाश्रयणं व्यर्थं स्यात् । एवं गौणेर्थे विभक्त्युत्पत्तावपि बोध्यम् । इदं भाष्यं गङ्गापदस्य तीरे लक्षणा-मनाश्रित्योक्तम् । **णत्वात्पूर्वमेवेति ।** इदं द्वित्वविषयेऽसिद्धं नेति 'पूर्वत्रासिद्ध'मित्यस्यार्थमभिप्रेत्य । **गस्यैव द्वित्वे इति ।** 'पूर्वत्रासिद्ध'मित्यस्य वर्णद्वित्वे प्रवृत्त्यभावे जश्त्वद्वित्वचर्त्वानामसिद्धत्वात्कुत्वे

चर्त्वस्यासिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारमिति वाच्यं; 'न मु ने' इतिवत्'पूर्वत्रासिद्धीय'मित्यस्य 'द्वित्वे कृतेऽपि-प्रत्यासत्त्या द्वित्वाश्रयस्य कार्य्ये कर्त्तव्येऽसिद्धत्वं ने'त्यर्थ इति न दोषः।

एतेन—'द्वित्वं परसवर्णत्वे सिद्धं वक्तव्यं, संय्यन्तेत्यत्र त्रियकारकत्वार्थ'मितिवचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिरित्यपास्तम्, एतदवयुत्यनुवादरूपत्वादिति चेन्न, 'पूर्वत्रासिद्धीय'मित्यस्य द्वित्वे कर्त्तव्येऽन्यदसिद्धं नेत्येवाऽर्थो न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थ इति—णत्वोत्तरमेव द्वित्वमिति भावः।

**रोः सुपि**। अत्र 'खरी'त्यनुवर्त्तते, तेन सप्तमीबहुवचनमेवात्र सुप्। एवञ्च 'खरवसानयो'रिति सिद्धे इतरनिवृत्तिफलक एवैष विधिरित्याह—**रोरेवेति**। विपरीतनियमस्तु न—'हलोऽनन्तराः संयोग' इति निर्देशात्। **द्वित्वे इति**। 'अचो रहाभ्या'मित्यनेन।

'अचो रहे'त्यतो 'द्वे' इति, 'नादिनी'त्यतो 'ने'ति च वर्त्तते। यदाह—**न द्व स्त**

❀ अभिनव-चन्द्रिका ❀

रोःसुपि। 'रोः सौ' इति वक्तुं युक्तम्, निरनुनासिकोकारवत्तया च न प्रथमैक-

❀ चिद्स्थिमाला ❀

झलां जशित्यनेन। **उक्तेति**। 'अवसाने' इत्याद्युक्तेत्यर्थः। **नमुने इति**। 'यत' इत्यादिः। उपसंहरति-**इतिनेति**। वर्णद्वित्वे तदप्रवृत्तौ साधकं ग्रन्थकारोक्तं खण्डयति—**एतेनेति**। अस्यार्थमाह—**एतदिति**। तत एव वचनादाह—**पूर्वत्रेति**। 'यत' इत्यादिः। अन्यथाऽनुस्वारादपि पूर्वमस्यैव द्वित्वे 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तौ तदसङ्गतिः स्पष्टैव। वाक्कित्यादेरेतावतैव सिद्धिरितिभावः। विस्तरस्तु भावप्रकाशे द्रष्टव्यः। सप्तमीबहुवचनादन्यस्य खरादेरसम्भवादाह—**तेनेति**। अत एव 'पयोभ्या'मित्यत्र विध्यर्थत्वशङ्का न। एवञ्च=तदनुवृत्तौ च। सिद्धान्तमाह—**इतरेति**। **विपरीतेति**। रोःसुप्येवेतीत्यर्थः। ननु द्वित्वेऽपि

❀ ज्योत्स्ना ❀

व्याख्याने न सङ्गच्छते, सङ्गच्छते चास्मदुपदर्शितयथाश्रुतव्याख्याने इति बोध्यम्।

अवयुत्यनुवादरूपत्वात्=एकदेशानुवादरूपत्वात्। **अन्वर्थसञ्ज्ञेति**। षडिवाचरति षट्—

❀ विषमपदविवृतिः ❀

द्वित्वचर्त्वयोरसिद्धत्वाज्जश्त्वे ततश्चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वे इत्यर्थः। **गकारे झशि परे इति**। इदं, 'गस्यैव द्वित्व'मिति पूर्वोक्तञ्च—स्वग्रन्थविरुद्धं, स्वेन पूर्वमवसाने चर्त्वस्य जश्त्वापवादत्वोक्तेः।

**उक्तरीत्यैवेति**। 'अवसाने चर्त्वस्यासिद्धत्वा'दित्युक्तरीत्यैवेत्यर्थः। **इत्येवार्थ इति**। द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थ इति भावः। अन्ये तु—'पूर्वत्रासिद्धीयमद्वित्वे' इदं पदद्वित्वविषये,—'द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्' 'उभौ साभ्यासस्ये'ति वार्तिकसूत्राभ्यां लिङ्गाभ्याम्। तेन 'ऊर्णुनाव' 'औजढ'दित्यादिसिद्धम्। अन्यथा परत्वाण्णत्वढत्वयोस्तदसिद्धिः। 'द्वित्वे कृते द्वित्वाश्रयस्य कार्यै कर्त्तव्येऽसिद्धत्वं ने'त्यपि न, मानाभावात्। 'अभ्यासे जश्त्वचर्त्वयोरेत्वतुको'रिति वार्तिकाच्च। अत एव फलभजिग्रहणं ज्ञापकम्—अभ्यासादेशसिद्धत्वस्येति—'अत एकह'लिति सूत्रे भाष्ये उक्तम्। त्वद्रीत्या द्वित्वाश्रयस्यैव जश्त्वासिद्धत्वाभावेन ज्ञापकोपन्यासवैयर्थ्यम्। 'सुपि भूतो द्विरुच्यते ?' इति पाठ इति दिगित्याहुः।

**सप्तमीबहुवचनमिति**। न तु प्रत्याहारान्तर्गतानां सप्तमीबहुवचनभिन्नानां, खरादित्वाभावात्। **एवञ्चेति**। सप्तमीबहुवचनस्य ग्रहणे सिद्धे इत्यर्थः। तथा च भ्यामादौ—

इति 'झरो झरी'ति लोपस्तु वैकल्पिकः ।

**प्रियचत्वार इति** । आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहो'रिति आम् । **गौणत्वे त्विति** । अत्र यद्वक्तव्यं तत्—'नामी'त्यत्रोक्तम् ।

यत्तु—'ष्णान्ते'त्यत्र सङ्ख्यापदानुवृत्तेः, तस्य च सङ्ख्याबोधकशब्दपरत्वात्प्रधान-न्यायेन सङ्ख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न । सङ्ख्यापदेन च सङ्ख्येयमुच्यते, अतः सङ्ख्येयपरपञ्चादौ तस्य प्राधान्यात्सञ्ज्ञा सिद्धा । यद्वा षडित्यन्वर्था सञ्ज्ञेति न गौणे सा—इति, तन्न;

—'प्रियपञ्चा द्रौपदी'त्यत्र 'न ष'डिति डाब्निषेधानापत्तेः। आकडारसूत्रे भाष्येऽस्या 'डु'सञ्ज्ञया व्यवहाराच्च । सर्वनामसञ्ज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च । सर्वनाम-सञ्ज्ञासूत्रस्थेन 'षड्भ्यः' इतिसूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम् ।

**कमलिति** । 'तदाचष्टे'इति णिचीष्ठवद्भावाट्टिलोपे कर्तरि क्विपि 'णेरनिटी'ति णिलोपः।

---

**❀ अभिनव-चन्द्रिका ❀**

वचनस्य, 'प्रत्ययाप्रत्ययग्रहण'परिभाषया च न 'सु'शब्दस्य ग्रहणमिति विभावनीयम् ।

**अत्र यद्वक्तव्यमिति** । अस्माभिरपि तत्रैवोपपादितश्च । **डाब्निषेधानापत्तिरिति** । स्त्रियां यत्प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन डाब्निषेधे सिद्धे चिन्त्यमेतत् । वस्तुतः षडिव ब्राह्मणः षडित्यत्र षष उपसर्जनत्वेन षडिवेत्यन्वर्थसञ्ज्ञयापि गौणे तत्प्रवृत्तेर्दुर्निवारणत्वादिति वक्तुं युक्तम् ।

**❀ चिदस्थिमाला ❀**

न क्षति'र्झरो झरी'तिलोपादत आह-**झर इति** । दीक्षितादिग्रन्थासाङ्गत्यायाह—**अत्रेति** ।

प्राचोक्तिं खण्डयति—**यत्त्विति** । नन्वेवमिष्टासिद्धिरेवात आह—**सङ्ख्यापदेन चेति** । लाघवादाह—**यद्वेति** । अस्याः=षडितिसञ्ज्ञायाः । नहि तदान्वर्थत्वं सम्भवति । ननु पक्षान्तरे सम्भव एवात आह—**सर्वेति**।

मुख्यदोषमाह—**सर्वेति** । तस्मात्तत्र षट्त्वेऽपि नुट् नोक्तप्रकारेणेत्येव तत्त्वम्, अधिकमन्यत्र स्पष्टं, तदाह—**इत्यलमिति** । लक्ष्मीपद्मान्यतरवाचकप्रकृतिकोऽयमित्याह—**तदाचष्ट इति** । शास्त्याद्यसङ्गतिं

**❀ ज्योत्स्ना ❀**

इत्याचारक्विबन्तषट्शब्दो हि सञ्ज्ञा, स च षडर्थसदृशाचरणकर्तृत्वेनेतरपरिच्छेदकलमात्र-स्वरूपेणार्थेनानुगत इत्यन्वर्थसञ्ज्ञेत्युक्तम् । **डाब्निषेधानापत्तेरिति** । विस्तरस्तु परिभाषा-प्रदीपार्चिषि निरूपितः, निरूपयिष्यते च स्त्रीप्रत्ययप्रकरणे । **षड्भ्य इति सूत्रविषयभाष्येणेति** । तथाच गौणे लुगेव तादृशभाष्यान्नेष्यते इति 'प्रियपञ्चे'त्यत्र डाब्निषेधानापत्तेरिष्टापत्तिर्न वक्तुं शक्यते—इत्युक्तं भवति । 'षड्भ्य इति सूत्रविषयेणे'त्युक्त्वा—'षट्चतुर्भ्यश्चे'त्यस्य गौणे प्रवृत्तिरिष्टेति

**❀ विषमपदविवृतिः ❀**

अप्राप्तविसर्गविधिरयं नेति भावः । **षडित्यन्वर्थसञ्ज्ञेति** । षडिवाचरतीति षट्, प्राधान्येन सङ्ख्येयबोधकः । **डाब्निषेधानापत्तेरिति** । 'स्त्रियां यद्यत्प्राप्नोति तन्ने'त्यर्थाश्रयण-सामर्थ्येन भूतपूर्वषट्त्वमादाय निषेधप्रवृत्तेः स्वेनोक्तलेन वृत्तेः प्राक् स्थितं षट्त्वमादाय निषेध-प्रवृत्तेः सम्भवाच्चिन्त्यमेतत् । 'यद्वे'त्युक्तं दूषयति—**आकडारसूत्र इति** । **षड्भ्य इति सूत्र-विषय इति** । तत्र हि षड्भ्यो लुगित्यत्र विहितविशेषणमाश्रितं, तद्रीत्या प्रियपञ्चानामित्यत्र षट्त्वाभावादेव लुगप्रवृत्तौ तदाश्रयणवैयर्थ्यम् । **इत्युक्तमिति** । प्रधानाप्रधानन्यायेनोपसर्जने षट्त्व-

वस्तुतो लण्सूत्रे—'न हि पदान्ताः परेऽणः सन्ति, ननु चायमस्ति 'कर्तृ हर्तृ'—इति भाष्यात्—'भोभगो' इति सूत्रे 'वृक्षव् करोती'ति भाष्यस्यैकदेश्युक्तित्वात् 'कमल्'—'वृक्ष'वित्यादेरनाभिधानमेवोचितम्। यान्तास्तु नैव सन्ति, क्विपि 'लोपो व्यो'-रिति यलोपात्। णिलोपस्य स्थानिवत्त्वन्तु न, यलोपे तन्निषेधात्।

**प्रशानिति**। शाम्यतेः क्विप्। 'अनुनासिकस्ये'ति दीर्घः। अयं शान्तिसाम्यान्यतरवद्वाचकः सत्त्ववाचीति—स्वरादिपाठेऽप्यस्य नाव्ययत्वम्। साम्यवाचिन्यसत्त्वार्थके तु स पाठः सार्थक इति दिक्।

❀ अभिनव-चन्द्रिका ❀

**अनभिधानमेवेति**। वस्तुतोऽनभिधाने दृढतरप्रमाणाभावेनास्याभिधानमेवोचितमित्युपपादित-

❀ चिदस्थिमाला ❀

ध्वनयन् हरदत्तादिसम्मतमाह–**वस्तुत इति**। स्पष्टञ्चेदं भावप्रकाशे। **क्विपीति**। 'ण्यन्ततोयादे'रित्यादिः।

नन्वस्य स्वरादिपाठादव्ययत्वे प्रशामावित्याद्यसङ्गतिरत आह–**अयमिति**।–अन्वर्थसञ्ज्ञाबलेन। पूर्वोत्तर-साहचर्येण त्वाह—**साम्येति**। स्वरादीनां तु पाठसामर्थ्यात्सत्त्ववाचित्वेऽप्यव्ययत्वमिति बोध्यम्।

'ण्विन्नन्तत्वादुपधावृद्धि'रिति–नैमिषीयोक्तं तु न युक्तं, लक्षणाभावात्तदाह–**इतिदिगिति**। यथाश्रुतन्यास

❀ ज्योत्स्ना ❀

लभ्यते। 'तन्नाम्नी'ति सूत्रे-इह चास्मदुपदर्शितदिशा चिन्त्यतामावहति। यद्वा–'षड्भ्य इति सूत्र-विषयभाष्येणे'त्यस्याङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति भाष्येणेत्यर्थः। तच्च भाष्यं 'षड्भ्य' इत्यत्रेव 'षट्चतुर्भ्यश्चे'त्यत्रापि युक्तितौल्यादविशिष्टमिति नुटोऽपि गौणे न प्रवृत्तिरित्याशयः।

**एकदेश्युक्तित्वादिति**। 'न पदान्ताः परेऽणः सन्ती'त्येतदुत्तरं—'ननु चायमस्ति–कर्तृ-हर्तृ'इति भाष्यात्परेषामणोऽवसानेऽनुनासिकत्वयोग्यानामचामभिधानसम्भवेऽपि तथाभूतानां तेषां हलामन-भिधानं यकारवकाराणां वक्तव्यं, न तु स्वर्–अन्तर्–लिडित्यादेः रेफहकारान्तस्यापि, 'अमोऽनु-नासिका न ह्रौ'इति निषेधेनानुनासिकत्वयोग्यताया अभावादिति भावः, तदाह–**कमल्वृक्षवित्यादे-रिति**। यकारान्तात्क्विप्सम्भवोऽपि नास्तीत्याह—**यान्तास्तु नैव सन्तीति**। **क्विपीति**। तोयादिशब्देभ्य आचक्षाण इत्यर्थे ण्यन्तात्कर्त्तरि क्विपीत्यर्थः। 'प्राग्दीव्यत'–इत्यत्र दीव्यति-शब्दैकदेशस्य यान्तस्यानुकरणसम्भवाच्चिन्त्यमेतत्। प्रदीपकृतस्तु–'भोभगो' इति सूत्रेऽश्ग्रहणस्य 'हलि सर्वेषा'मित्यत्राऽशा हलो विशेषणाद्धल्यशि लोपविधानात्—'वृक्षव्करोतीत्यत्र तदभावः प्रयोजन'मिति भाष्यकृता कण्ठरवेणोक्तत्वात्तदनभिधाने प्रमाणाभावः। न च 'न पदान्ताः परेऽणः सन्ती'ति भाष्यमेव प्रमाणम्, पराण्त्वावच्छिन्नप्रतियोगिताकाभावस्य तदर्थत्वे—'ननु चाय-मस्ति 'कर्तृहर्तृ'—'इति भाष्यविरोधात्तत्रानुनासिकत्वयोग्यहल्प्रतियोगिको विशेष्याभावप्रयुक्तो विशिष्टाभाव इत्यर्थो वक्तव्यः, स च 'वृक्षव्करोती'ति भाष्योदाहरणप्रतिकूल इत्यनुनासिकत्व-

❀ विषमपदविवृतिः ❀

वारणमशक्यम्, 'प्रियपञ्चाना'मित्यत्र पञ्चन्शब्दस्य प्राधान्येन सङ्ख्येयबोधकत्वात्। अन्यथा त्रिचतुरोरित्यादावर्थवत्परिभाषया, प्रधानन्यायेन च—प्राधान्येन त्रित्वादिविशिष्टबोधकग्रहणे 'प्रियतिसे'त्यादौ तिस्रादेशाद्यनापत्तिरित्युक्तमित्यनेन ध्वनयति—**अनभिधानमेवोचितमिति**। 'सुध्युपास्ये'त्यादिप्रयोगानुरोधेन 'न पदान्ताः परेणः सन्ती'ति भाष्यस्य—'कार्यभाज' इति पूरणावश्यकत्वेन कमल् वृक्षवित्यादेरणोऽप्रगृह्यस्येति कार्यभाक्त्वमस्त्येवेति भावः। **यान्तास्तु न सन्तीति**। 'एचोऽयवायाव'इति सौत्रो निर्देश इति भावः। 'अयादेश'इत्याद्यभियुक्तप्रयोगाच्चिन्त्य-

**विभक्ताविति** । 'अष्टन आ' इत्यतोऽनुवृत्तेरिति भावः । **अकच्सहितस्यापीति** । तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात् । अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच । यद्यपि निर्दिश्यमानपरिभाषया न प्राप्नोति ।—अत एव 'भिन्धकी'त्यत्राकचि धित्वं न

❀ अभिनव-चन्द्रिका ❀

मन्यत्र । **यद्यपि निर्दिश्यमानपरिभाषयेति** । ननु 'ककिं'शब्दे अकचः किम्शब्दनिष्ठोद्देश्यता-निरूपितविधेयत्वाश्रयत्वेन तन्मध्यपतितन्यायेन निर्दिश्यमानत्वादादेशः प्राप्नोत्येव, 'भिन्धकी'-त्यत्र तु अकचः तिङन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तिङन्तत्ववृत्तिह्यन्तत्वादेरारोपेऽपि हित्वस्यारोपे प्रमाणाभावेन हेरभावेनाकचि कृते धित्वं न प्राप्नोतीति भाष्योक्तमपि सङ्गच्छते, निर्दिश्यमानपरिभाषयेति तु भाष्ये नोक्तमिति चेन्न, परमकिंशब्दात्कुत्साविवक्षायामकचि परम-ककिम्शब्दे निरुक्तदिशा किंशब्दान्तत्वेऽपि निर्दिश्यमानकिंशब्दस्याभावेनादेशापत्तिरित्याशयेन तद्ग्रन्थस्य सत्त्वात् । 'निर्दिश्यमानपरिभाषया आदेशो न प्राप्नोती'त्यस्य—तादृश'परमककिं'शब्दे आदेशो न प्राप्नोतीत्यर्थादिति यावत् ।

❀ चिदस्थिमाला ❀

न्यासे आह—**तन्मध्येति** । ननु सुबन्तात्तद्धितोत्पत्या विभक्त्युत्पत्त्यनन्तरं परत्वात्कादेशे कृतेऽकचि 'कक' इत्येव स्यादत आह—**अङ्गेति** । अङ्गसञ्ज्ञानिमित्तप्रत्ययानपेक्षत्वेनेत्यर्थः । क्वचित्तथा पाठ एव ।

एतेन सञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणात्प्रकृतेराश्रयणाच्च चिन्त्यमित्यपास्तम् । जायमानाकचस्तदुत्तरमेव 'प्रियकुत्सनादिषु ततः प्रवर्तते' इति भाष्यात्प्रवृत्तावपि प्रातिपदिकादित्यस्यैवाधिकारेण सूत्रे सुपः शब्देन

❀ ज्योत्स्ना ❀

विशिष्टहल्लणभावो, विशेषणाभावप्रयुक्तश्च विशिष्टाभावस्तत्र विषयस्तथाच—'न पदान्ता' इत्यस्य पदान्ताः परेऽणोऽनुनासिकरूपकार्यभाजो न सन्तीत्यर्थ इत्याहुः । अत्र वदन्ति—सत्यामपि अण्ग्रहणानुवृत्तौ 'वृक्षवृहसती'त्यत्र 'हलि सर्वेषा'मित्यनेन लोपः कथं वारणीयः ?, अनभिधाना-च्चेत्, 'क्वचिदभिधानं, क्वचिदनभिधान'मित्यत्र प्रमाणाभावात्—'न पदान्ताः परेऽणः स'न्तीति भाष्यैकवाक्यतया लाघवात्प्रयोगमात्रावच्छेदेनानभिधानमेव क्षोदक्षममिति ।

❀ सदाशिवभट्टीयम् ❀

**किमः कः** । 'इम' इत्येव कर्त्तव्यम्, 'त्यदादे'रित्यनुवर्त्तते, तेनेमन्तत्यदादेः कादेश इत्यर्थात् । 'कुतिहोः' 'काती'त्यत्राप्येवमेवेति ककारोच्चारणसामर्थ्यात्त्यदाद्यत्वविषये इत्युक्तावपि दोषः स्यादेवात आह—**तन्मध्येति** । नचेमो निर्दिश्यमानत्वात्तस्यैव स्यादिति वाच्यम्, इवर्णान्तोवर्णान्तधातो-

❀ विषमपदविवृतिः ❀

मेतदिति केचित् । **अङ्गानपेक्षत्वेनेति** । सञ्ज्ञाकृतबहिरङ्गत्वस्यानाश्रयणाच्चिन्त्यमेतदिति केचित् ।

**अन्तरङ्गत्वाद्धित्वेऽकजिति** । 'अज्ञाताद्यर्थापेक्षत्वेनाकचो बहिरङ्गत्व'मिति कैयटोक्तरीत्येदम् । भाष्ये तु 'परत्वाद्धित्व'मित्युक्तम् । ननु यद्यकचः परत्वाद्धित्वं तर्हि कादेशेऽपि परत्वात्ततः प्राप्नोति, यद्यन्त-रङ्गत्वाद्धित्वं कादेशोऽप्यन्तरङ्गत्वात्ततः प्राप्नोतीति चेन्न, अकज्विधौ 'तिङश्चे'त्युक्त्या समनिमित्तकयो-

❀ वरवर्णिनी ❀

१ अत्र किम्शब्दो जिज्ञासिते शक्तः, उद्देश्यवाचकस्य किम्शब्दस्य विधेयवाचकशब्दसमभिव्याहारे तत्पदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वोपलक्षितो यो वक्तृजिज्ञासितो धर्मस्तद्धर्मावच्छिन्नबोधकता वाच्या। स च धर्मः—'को ब्राह्मणः' 'कः पण्डित' इत्यादौ चैत्रत्वादिरूप एव, न तु जिज्ञासाविषयतावच्छेदकांशे तस्यानुगमकस्य शक्यैक्यसम्पादकस्य धर्मस्य विशेषणत्वं, तेन रूपेण जिज्ञासाविषयतावच्छेदकधर्मस्य शाब्दबोधे मानाभावात् । एवञ्च 'को ब्राह्मण'इत्यतो 'ब्राह्मणत्वावच्छिन्नविधे-यतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मस्तद्वान् ब्राह्मण' इत्याकारकोऽन्वयबोधः श्रोतुरुत्पद्यते ।

प्राप्नोतीति भाष्ये पूर्वपक्षं कृत्वाऽन्तरङ्गत्वाद्वित्वेऽकजित्याद्युक्तम् । आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटः ।

**इदमो मः** । 'तदोः सः सा'वित्यतोऽनुवृत्तेराह—**साविति** ।

**इदोऽय्** । 'यः सा'वित्यतः 'सा'विति वर्त्तते ।

❀ **चिदस्थिमाला** ❀

निमित्तत्वेनानाश्रयणादकचस्तन्निरपेक्षतयाऽन्तरङ्गत्वमुक्तमेवेति भावः । अत एव=उक्तपरिभाषानङ्गीकारादेव । कैयट इति । कादेशविधानसामर्थ्यात्तदप्रवृत्तिः सुवचेत्यरुचिः ।

❀ **ज्योत्स्ना** ❀

तत्रेदं वक्तव्यं-'व्यो'रिति तत्र सूत्रकारनिर्देशः कथमेवं सति सङ्गच्छतामिति—तस्मादवर्णपूर्वस्य हल्यश्यनभिधानमिति केचित्, तन्न; 'नान्तः पादमव्यपरे' इति निर्देशासङ्गतेः । तत्र लोपः कथं वारणीय इति चेत्, 'हलि सर्वेषा'मित्यत्र यकारमात्रमनुवर्तते, वकारो निवर्तते इति वृत्तिकृन्मतमुपष्टभ्येति निर्णयति । अत्र बुधमनोहराकारः—'हलि सर्वेषा'मित्यत्र पदान्तग्रहणमवश्यमनुवर्तनीयं, 'वाद्यो वा'(?) 'त्रश्चे'त्यादौ लोपवारणार्थमिति—भो-भगो-अघो-अपूर्वस्येतदनुवृत्तिं तत्र वदद्भिः 'हरिवृहसती'त्यादौ लोपाभावः प्रयोजनमिति वक्तव्यम्, नचैतद्वकारानुवृत्त्यभावे सङ्गच्छते इति—'वृक्षवृहसती'त्यत्र लोपो भवत्येवेत्याहुः । वस्तुतस्तु वारि—अत्र वार्यत्रेत्यादौ पदान्तयकारस्य लोपाभावो—भोभगो इत्याद्यनुवृत्तेः प्रयोजनं वक्तुं शक्यम् । अतो 'हलि सर्वेषा'मित्यत्र वकारानुवृत्तेरावश्यकत्वे प्रमाणाभाव इत्यन्यत्र विस्तरः । **इति कैयट इति** । नच

❀ **विषमपदविवृतिः** ❀

रकच्चिभावयोः परत्वाद्वित्वे अकच्, 'घकालतने'ष्विति ज्ञापकेन सुबुत्पत्त्यनन्तरमकजुत्पत्तावप्यकचः प्रातिपदिकमात्रनिमित्तकत्वेनान्तरङ्गत्वादकचि ततः कादेशः । अत एव भ्यामादौ किमष्टेरेव प्रागकच्, न तु सुबन्तस्य टेः, तदेतत्परत्वाद्वित्वेऽकजिति 'हुझल्भ्यो हे'रिति सूत्रस्थभाष्येण, 'कादेशः खल्वपि अवश्यं साकच्कार्थो वक्तव्य' इति 'त्यदादीना'मिति सूत्रस्थभाष्येण च सूचितं भवति । ननु संनिकृष्टं

❀ **वरवर्णिनी** ❀

वक्तुश्च 'किञ्चिद्धर्मावच्छिन्नोद्देश्यतानिरूपितब्राह्मणत्वावच्छिन्नविधेयताशालिज्ञानम्मे जायता'मित्याकारिका जिज्ञासा प्रथमं भवति । सा च वक्तृवाक्यजन्यसमभिव्याहृतब्राह्मणादिपदार्थतावच्छेदकावच्छिन्नविधेयतानिरूपितकिञ्चिद्धर्मावच्छिन्नोद्देश्यताकबोधेन निवर्तते । न चैवम्प्रमेयो ब्राह्मण इतिवाक्यादपि तादृशजिज्ञासानिवृत्तिः स्यात्, एतद्वाक्यस्य किञ्चित्प्रमेयत्वादिरूपधर्मावच्छिन्नोद्देश्यकबोधजनकत्वादिति वाच्यम्, पूर्वोक्तानुगमकधर्मोपलक्षितधर्मस्य विधेयन्यूनवृत्तित्वेनापि विशेषणीयत्वादिति तत्त्वम् ।

विधेयबोधककिम्पदस्य तु—समभिव्याहृतपदार्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो धर्मस्तदवच्छिन्ने शक्तिः, यथा 'द्रव्यङ्किमस्ती'त्यादौ यत्र सर्वनामसञ्ज्ञकः किंशब्दः प्रयुज्यते तत्र पूर्वोक्तदिशा बोधः कल्पनीयः ।

वितर्कबोधककिंशब्दस्य त्वव्ययसञ्ज्ञकस्य प्रयोक्तृसमवेतसम्भावनात्मकज्ञानबोधकता ।—यथा 'किमिन्दुः? किम्पद्मं? किमु मुकुरबिम्बं? किमु? मुख'मित्यादौ । तादृशज्ञाने च प्रकारतासम्बन्धेनेन्द्वादिपदार्थस्यान्वयः । तादृशज्ञानस्य तु विशेष्यतया प्रथमान्तार्थेऽन्वय इति ध्येयम् ।

यत्र तु 'कति घटाः सन्ती'ति प्रयुज्यते—तत्रापि जिज्ञासित एव किम्पदार्थः । डतिप्रत्ययार्थः—सङ्ख्यात्वावच्छिन्नः । एवञ्च 'सङ्ख्यात्वन्यूनवृत्तिदशत्वत्वाद्यवच्छिन्नोद्देश्यतावच्छेदकताकज्ञानं जायता'मित्याकारकेच्छाविषयाऽभिन्नसङ्ख्याविशिष्टाः सन्तीति बोधः । 'दश घटाः सन्ती'तिवाक्यात्सा आकाङ्क्षा निवर्त्तते ।

यत्र 'कस्य राजा पटु'रित्यादावुद्देश्यतावच्छेदकीभूतषष्ठ्यर्थे किंशब्दार्थान्वयस्तत्र यादृशधर्मविशिष्टसम्बन्धे येन सम्बन्धेन जिज्ञासितान्वयस्तत्र तेनैव सम्बन्धेन विशेषधर्मावच्छिन्नान्विततादृशसम्बन्धधर्मितावच्छेदकबोधः । एवं सर्वत्रोहनीयमिति **भैरवमिश्राः** । विस्तरस्तु **शक्तिवादे** अस्मत्**पितामहश्रीचरण**विरचितायां **शब्देन्दुशेखरत्रिपुरसुन्दर्यां**ञ्चानुसन्धेयः ।

**दश्च** । इह 'अष्टन' इत्यतो 'विभक्तौ' वित्यनुवर्त्तते । साविदमो दस्याऽसम्भवात्तदाह—**विभक्ताविति** ।

**हलादाविति** । 'आपी'ति वर्त्तते । 'हल्यु'शिति वक्तुं युक्तम् ।—

❀ **चिदस्थिमाला** ❀

नन्वानन्तर्यात्तदोरित्यतः सावित्यस्यैवानुवृत्तिरुचिताऽत आह—**साविति** । 'विभक्ता'विति शेषः ।

❀ **ज्योत्स्ना** ❀

'किमः क' इत्यपनीय 'का'दित्येवं न्यासे 'त्यदादीनामः' इत्यनुवृत्त्या त्यदादीनां ककारात्परस्यादेः किम्शब्देकारस्याकारविधानेन 'क' इत्यादिरूपसिद्धौ विशिष्टयोः स्थान्यादेशयोरुच्चारणमेव साकच्ककिंशब्दस्यादेशविधानार्थं स्यादिति वाच्यम् , 'कुतिहोः' 'क्वाती'त्युत्तरसूत्रयोः 'किम' इत्यनुवृत्तेरावश्यकत्वात् , अन्यथा तत्र कद्वयप्रसङ्गात् । नचोतिहोर्वातीति न्यासे तदपि सिध्यति, पूर्वयोगेन सिद्धेऽनन्त्यार्थत्वनस्य, द्वयोरकारयोः पररूपेण चेष्टसिद्धिः, 'कुतिहो'रित्यत्रोतिहोरिति 'क्वाती'त्यत्र च 'वाती'ति न्यास इति न क्वापि दोष इ"युच्यते, तदा विशिष्टोच्चारणसामर्थ्यादेव साकच्कस्यादेश इति परिभाषाप्रदीपार्चिषि विस्तरः । एतेन"–'इमः कः' 'कुतिहोः' 'क्वाती'ति न्यासे त्यदादेरिमन्तस्य तत आदेशविधानात् साकच्कस्यापि सिध्यतीति यथाश्रुतः स्थान्यंशे विशिष्टनिर्देशो व्यर्थः । नचैवं निर्दिश्यमानपरिभाषया इम एव स्यादिति वाच्यम् , इमस्त्यदादित्वासम्भवनेन इमन्तस्यैव निर्दिश्यमानत्वादिति—"**मौनिश्रीकृष्णभट्टोक्तं** परास्तम् । साकच्कस्य निर्दिश्यमानकिंशब्दत्वाऽभाववन्निर्दिश्यमानत्यदादित्वाभावादिति दिक् । **इति वक्तुं युक्तमिति** । ननु तथोक्तं, पदलाघवाभावात् । वर्णलाघवन्वित्सञ्ज्ञालोप-

❀ **सदाशिवभट्टीयम्** ❀

यथानिर्दिश्यमानत्वन्तथात्रापीमन्त-त्यदादेरेव निर्दिश्यमानत्वात् । **अनाप्यकः । विभक्ताविति** । अत्र विभक्ताविति चिन्त्यप्रयोजनम् । **हलिलोपः** । सौ तु 'तक्रकौण्डिन्य'न्यायेनायं लोपबाधकः स्यादेवेति बोध्यम् ।

**वक्तुं युक्तमिति** । ननु लोपकरणे स्वरितो न भवति, अश्करणे त्वशः सम्पूर्णस्थानिकत्वात्स्वरितः

❀ **विषमपदविवृतिः** ❀

साविति कुतो वा नानुवर्त्तत इत्याशङ्क्याह—**साविदम इति** । इदमुपलक्षणं 'यः सा'वित्युत्तरसूत्रे

❀ **वरवर्णिनी** ❀

१ **विभक्ताविति** । एवञ्च विभक्तावित्यस्यात्र मण्डूकानुवृत्तिवारणाय 'इदोऽय् पुंसी'त्यादावपि तदनुवर्त्तनीयं, तस्य चोपपक्षणतया 'सा'वित्यनेन सहान्वयः ।

२ **आपीति । परे** तु—साविदोऽय्पुंसीत्यस्य प्रवृत्त्याऽन्येषाञ्चाजादित्वेन च दोषाभावादापीत्यनुवृत्तिर्व्यर्थैवेत्याहुः । **केचित्तु**—सौ लोपाऽयादेशयोः पर्यायापत्तिरत 'आपी'तीत्याहुः । वस्तुतस्तु तक्रन्यायेनाऽयादेशो लोपापवादो भविष्यतीति न तत्र पर्यायापत्तिरतो मूलाशयवर्णनमात्रमेतदित्याचक्षते ।

अन्ये तु विभक्तिकार्ये तक्रन्यायाऽप्रवृत्त्या पर्यायापत्तिरननुवृत्तौ दुरुद्धरैवेत्याहुः । **श्रीधराचार्यास्तु**—साकच्के चरितार्थस्य इशादेशस्य—'इतः' इत्यादावकच्रहितेऽयं लोपः परत्वाद्बाधकः स्यात् , तसिलादेः प्राग्दिशीयत्वेन विभक्तिसञ्ज्ञकत्वात् । अतः—आपीत्यनुवृत्तिरावश्यिकैव । परन्त्वेवमपि 'विभक्ता'विति व्यर्थमेव, आपस्तत्त्वाव्यभिचारादित्याहुः ।

३ **हल्यशिति** । ननु—इदमाचष्टे इदयति, अत्र आचक्षाणणिजन्तात्क्विपि टिलोपे भ्यामि—'इद्–भ्या'मित्यस्यां दशायामनेनाऽशादेशपक्षे—आभ्यामिति, लोपपक्षे तु—इदः इदानीमर्थवत्त्वेन—'नानर्थकेऽलोन्त्यविधि' रित्यस्याऽप्रवृत्त्याऽलोन्त्यपरिभाषया दस्य लोपे 'इभ्या'मिति फलभेदात्कथमयं न्यास इति चेन्न; णिलोपस्य स्थानिवत्त्वेन विभक्तिपरत्वाभावेन अश्लोपयोरप्रवृत्त्या फलभेदाभावात् । क्वौ विधित्वाभावेन च न स्थानिवद्भावनिषेधसम्भवः, 'क्वौ लुप्त'मिति तु न सार्वत्रिकमित्याहुः—पण्डितैकशेष—शेषावतार—त्रिपाठिचरणानुसारिणो गौडाः ।

—'अक' इति पर्युदासादिदं गौणे न प्रवर्त्तत इत्याहुः ।

नन्विदोऽन्त्यस्य लोपः स्यादत आह—**नानर्थके इति** । इयमनुपयमम्ब्रनामत्रे भाष्ये स्पष्टा, फलानामन्यथोपपादनेन भाष्ये प्रत्याख्याता च । प्रत्याख्याने 'अनाप्य'त्यतोऽनित्यनुवर्त्त्य 'हली'ति सप्तम्या षष्ठीं प्रकल्प्याऽन एव—'अलोऽन्त्यस्ये'ति लोपे—परत्वे चेष्टसिद्धिर्बोद्ध्या ।

ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे 'अ—भ्या'मिति स्थितेऽङ्गस्याऽकाररूपत्वेनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह—**आद्यन्तवदिति** । 'आदिरन्त्येने'तिसूत्रोक्तरीत्याऽऽद्यन्तशब्दयोर्विशिष्टशक्ततया तत्प्रयुक्तकार्याण्यसहाये न स्युरित्ययमारम्भः ।

---

❀ अभिनव-चन्द्रिका ❀

**अक इति पर्युदासादिति** । न च 'अक'इति बहुव्रीहिर्न तत्पुरुषः, तथाच पर्युदासादित्यसङ्गतमिति चेदत्र कश्चित्—'पर्युदासा'दित्यस्य निषेधकत्वादित्यर्थः । 'संसर्गवद्विप्रयोगस्ये'तिन्यायेनावत्सेतिवत्तस्यैव ग्रहणमित्याशयात् । परे तु—अर्शआद्यजन्त-क-शब्देन नञ्तत्पुरुषे पर्युदासादित्यपि सुसङ्गतमित्याहुः ।

'अक इती'त्यादि तु सिद्धान्तेऽपि, नत्वकरणे एव, एतेनाश्–लोपयोः कः फलभेदो येनाक इत्याद्युक्तमित्यपास्तम् । अथाऽकरणे उदात्तानुदात्तयोः स्थाने जायमानोऽश् स्वरित एव स्यादिति फलभेद इति चेत्—

अत्र कश्चित्—स्थान्यनुरूपे स्वरित एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं, तेन न स इत्याह, तन्न, इदंशब्देन नञ्तत्पुरुषे तस्मान्नामि 'अनाभ्या'मित्यत्र स्वरितश्रवणापत्तेः । सिद्धान्ते तु

❀ ज्योत्स्ना ❀

सर्वादेशपररूपप्रक्रियाकृतगौरवेण पराहतमिति हि भगवतो दाक्षीपुत्रस्याशयः । एतेन 'लोप आप्यकः', 'आस्म'न्निति विपरीतन्यासः प्रत्युक्तः, 'नानर्थके' इत्येतत्प्रत्याख्यानायाऽनोऽनुवृत्त्या लोपस्यापि वक्तुं शक्यत्वात् । नच प्रथमन्यासे लोपस्थानेऽकर्तव्य इति नैष दोषः । नच प्रक्रियागौरवम् , एवन्तर्हि 'अच्य'न्नितिद्वितीयन्यासस्थाने 'सोर'न्निति कृत्वा स्याद्विधायके 'सर्वनाम्नोऽस्य'ङिति न्यासात् , तथाकरणेन 'स्याड्ढ्रस्वश्चे'ति पदत्रयाकरणप्रयुक्तस्य लाघवस्य सत्त्वात् । अवङ्सूत्रस्थभाष्योक्तरीत्याऽस्यङः कदाचिदन्तोदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इति विभक्त्युदात्तत्वापत्तिरूपदोषः शब्दरत्नोक्तश्च चतसर्याद्युदात्तनिपातनादस्यङः सुवचत्वमभ्युपगच्छद्भिर्मौनिश्रीकृष्णभट्टैः पराकृत इति वाच्यम्, स्मैस्मात्स्मिनां प्रसङ्गादस्यङि दोषस्य स्पष्टत्वात् ।

न चाङ्गवृत्ते पुनर्वृत्तावविधिः' 'सञ्ज्ञापूर्वको विधिरनित्य'इत्येताभ्यां परिभाषाभ्यामिह निस्तारः, तयोरवलम्बनस्य कुशकाशावलम्बनरूपत्वात् । 'स्याड्ढ्रस्वश्चे'ति न्यासगौरवस्यैव चात्र प्रसङ्गादित्यन्यत्र विस्तरः । यत्तु गौणे ङेप्रभृत्यजादिविभक्तौ टौसोरनादेशो न प्राप्नोतीति, तन्नेत्याह—**अक इति पर्युदासादिति** । यद्यप्यक इति बहुव्रीहिघटकनञः संसर्गाभावबोधकत्वाद्भेदबोधाभावात्पर्युदासोक्तिरयुक्ता, तथापि निषेधस्य प्राप्तिपूर्वकत्वादवत्सा धनुरित्यतः सम्भावितवत्सा गौरिवाक इदमः सम्भावितककारस्यानुपसर्जनेदमः प्रतीतेरेव युक्तमिति भावः ।

❀ सदाशिवभट्टीयम् ❀

प्रसज्येतेति चेन्न, अशो निपातानुदात्तकरणेनादोषात् । **आहुरिति** । अत्रारुचिरुपसर्जनत्वात्पूर्वमेवाकचोऽप्रवृत्तौ प्रतिबन्धकत्वाभाव इति तदनन्तरं गौणत्वेऽपि प्रवर्त्तत एवेति बोध्यम् ।

❀ विषमपदविवृतिः ❀

सुग्रहणाच्चेत्यपि बोध्यम् । **अदन्तत्वाभावादिति** । 'तस्य चे'त्यनाश्रित्येदम् । **विशिष्टशक्ततयेति** । सत्यन्यस्मिन्पूर्वो नास्ति तत्रादिशब्दस्य,सत्यन्यस्मिन्यस्मात्परो नास्ति तत्रान्त्यशब्दस्य शक्ततयेत्यर्थः ।

**एकस्मिन्निति** । असहाय इत्यर्थः । तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त-इवासहायेऽपि स्यादित्यन्वयः । उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह—**आदाविवेति** । 'एकस्मि'न्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽज्न । आदिवत्त्वफलमौपगवेऽण आद्युदात्तत्वम् । कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव, तदाह—**कार्यमिति** ।

ननु 'इद्-ए' इति स्थिते स्मैभावात्परत्वादनादेशे 'सकृद्गतौ' इति न्यायेन स्मै न स्यादत आह--**नित्यत्वादिति** । स्मै—आदेशे तु न अनादेशो, हलिलोपेन बाधात् । लक्ष्यानुरोधेन बाधकाऽबाधितकृताऽकृतप्रसङ्गस्यैवात्र ग्रहणात् ।

'अकोऽको'रित्यनयोः फलमाह—**ककारयोगे त्विति** । 'अव्ययसर्वनाम्ना'मित्य-

ॐ अभिनव-चन्द्रिका ॐ

तत्पुरुषे इत्यनेन पूर्वपदप्रकृतिस्वरत्वाच्छिष्यमाणाकारस्योदात्तत्वमिति । परे तु 'इद' इत्यनुवर्त्य तत्स्थाने-ऽशविधानेनादोष इत्याहुः । न च 'हलिलोप'इत्यत्र 'झलि लोप' इत्येव सूत्रं कर्तव्यमिति वाच्यं, वेदे—आपःस्थाने यादेशे तत्र लोपानापत्तेरित्यलम् ।

**असहाये इति** । असहायत्वपरिष्कारस्तु मनोरमाटिप्पण्यां द्रष्टव्यः । **नित्यत्वादिति** । परेतु उपसञ्जनिष्यमाणन्यायेनात्रानादेशस्य प्राप्तिरेव नेति नित्यत्वलक्षणे बाधकाबाधितत्वादिनिवेशकल्पनन्तु मन्दप्रयोजनमित्याहुः । ननु सञ्ज्ञोपसर्जनयोस्त्यदाद्यत्वाप्राप्त्या तत्र विधानार्थमशविधानं चरितार्थ-

ॐ चिदस्थिमाला ॐ

शास्त्युक्तेरसाङ्गत्यायाह—**कार्यस्येति** । सर्वेषां कार्यार्थत्वात् । ननु स्मै कृतेऽप्यनादेशप्राप्तेः सोऽपि नित्योऽत आह—**स्मायिति** । नन्वेवमपि कृताकृतप्रसङ्गमात्रेण नित्यत्वमनादेशस्य तावद-स्त्येवात आह—**लक्ष्येति** । 'अनापि' 'नेदमे'ति क्रमेणाह—**अक इति** । अन्तादात्ताद्युत्तरपदादित्यतो

ॐ ज्योत्स्ना ॐ

**प्रवर्तत इति** । अन्येतु त्यदादीनामित्यस्यानुवृत्त्येममर्थमभ्युपगच्छन्ति । **उपमेयेति** । 'एकस्मि'न्नित्यत्रेत्यर्थः । **सप्तम्यन्तादिवार्थ इति** । 'मथुरावत्स्रुघ्ने' इत्यादौ तथा दृष्टत्वादिति भावः । **कार्यस्य प्राधान्यादिति** । 'व्यपदेशातिदेशोऽय'मिति प्राचामुक्तिस्तु सम्भवाभिप्रायेति बोध्यम् । **अकोऽकोरित्यनयोरिति** ।

ॐ सदाशिवभट्टीयम् ॐ

**आद्यन्तवदे** । एतल्लब्धमेव व्यपदेशिवदेकस्मिन्निति बोध्यम् । **बाधकाबाधितेति** । ननु कृताकृत-प्रसङ्गमात्रेणैव नित्यत्वमस्तु मास्तु चेदम्, 'असै' इत्यत्र स्मै तु पुनः प्रसङ्गविज्ञानात्स्यादिति चेन्न, 'इदम्-ए' इति स्थिते त्यदाद्यत्वापेक्षया नित्यत्वादनादेशापत्तेः । वस्तुतस्त्व-तरङ्गत्वादुपजनिष्यमाणेति

ॐ विषमपदविवृतिः ॐ

**असहाये इति** । असहायत्वं चात्र मुख्यव्यपदेशनिमित्तरहितत्वम् । तच्चौपगवः आभ्यामित्यनयो-रस्ति । सत्यन्यस्मिन्निति विशेषणस्याभावात् । तथा च यन्निरूपितमादित्वमन्त्यत्वमवयवत्वं वा स्वस्यानेयं तदवयवस्वेतरद्वितीयासमभिव्याहृतत्वमसहायत्वम् । 'सभासन्नयने', दरिद्राधातौ चाकार इत्यनयोर्नासहायत्वं, तत्समुदायाघटकस्वेतरवर्णसत्त्वात् । 'हरी' इत्यादौ द्विवचननिरूपितमन्तत्वम् । ईकारस्यानेयं तदवयवः स्वेतरो न कोपीति—असहायत्वं सुस्थम् । एवं 'व्यतिसे' इत्यादावपि । 'हरिषु' इत्यादौ सोर्न पदत्वं, यस्माद्विहितस्तदाद्यवयवकत्वस्य तत्तत्सत्त्वगर्भस्य व्यपदेशिवद्भावालभ्य-त्वात्, एवं 'प्रचिकीर्ष्य गत' इत्यादौ नायादेशः । अवयवत्वतद्व्याप्यधर्माणां व्यपदेशिवद्भावलभ्यत्वेपि लघुपूर्वत्वस्य तदलभ्यत्वात् । अत एव 'दध्नी'त्यादौ न यण्, अच्परकत्वस्य व्यपदेशिवद्भावालभ्य-त्वात् । केचित्तु मुख्यव्यपदेशमात्रघटकत्वमसहायत्वमित्याहुः । **अकोकोरिति** । 'अनाप्यकः' 'नेदमद-सोरको'रित्यनयोरित्यर्थः । नन्वशोऽनुदात्तत्वविधानं व्यर्थम्, आभ्यामित्यादावूडिदंपदादिति विभक्ते-

क्चीति भावः । अस्यानवयवत्वेऽपि तन्मध्यपतितन्यायात्तद्विशिष्टे प्राप्तिरिति बोध्यम् ।

**इदमोऽन्वा** । अनुदात्तत्वम्–'आभ्या'मित्यादौ 'ऊडिद'मिति 'सावेकाच'इति वा विभक्त्युदात्तत्वाभावाय,–उभयत्राप्यनुवृत्त्यपकर्षाभ्यामन्तोदात्तादित्यस्य सम्बन्धात् । एवञ्चाभ्यामित्यादि सर्वानुदात्तम्, 'एभिरग्ने प्रेषां तदेषा'मित्यादौ तथा श्रवणात् ।

नन्वेवमप्यत्रे हलिलोपेनाऽऽभ्यामित्यादेः सिद्धावनुदात्तत्वेनैव सिद्धावश्विधानं व्यर्थमत आह–**साकच्कार्थमिति** । शित्वात्सर्वादेश इति भावः । सञ्ज्ञोपसर्जनयोस्तु नेदम्, 'एतदस्त्रतसो'रित्युत्तरसूत्रसाहचर्यात् । न च त्यदाद्यत्वेन सिद्धेऽकारविधानमेव साकच्चि सर्वादेशार्थं भविष्यति, किं शित्त्वेनेति वाच्यम् ?—अन्यार्थतापत्तेः ।

---

❀ अभिनव-चन्द्रिका ❀

मित्यत आह–**सञ्ज्ञोपसर्जनयोरिति** । **साहचर्यादिति** । ननूत्तरसूत्रसाहचर्यस्याप्रयोजकत्वं स्वयमेव शब्दरत्ने उक्तमिति–अत्र कथं तेन निर्वाह इति चेन्न, 'साहचर्या'दित्यस्यार्थाऽधिकारानुरोधादित्यर्थ-स्वीकारेणादोषात् । **अन्यार्थतापत्तेरिति** । तद्विधानसामर्थ्यादतो गुणे 'सुपिच' 'बहुवचने झली'-

❀ चिद्स्थिमाला ❀

यथाक्रममाह–**उभयत्रेति**। एवमपि=इदमोऽनुदात्तात्वमात्रविधावपि।**शित्वादिति**।शित्वसामर्थ्यादेव निर्दि-श्येत्यस्याप्रवृत्तिरिति भावः। **उत्तरेति** । तत्र सञ्ज्ञोपसर्जनेनदस्त्रतसोरसम्भवेन तादृशस्याग्रहणात् । **अन्यार्थेति** ।

❀ ज्योत्स्ना ❀

'अनाप्यक' इत्यत्रत्यस्य 'नेदमदसोरको'रित्यत्रत्य चेत्यर्थः ।

**उभयत्रापीति** । 'ऊडिदम्पदाद्यप्युम्रैद्युभ्य' इत्यत्र 'सावेकाचस्तृतीयादिर्विभक्ति'रित्यत्र चेत्यर्थः । **अनुवृत्त्यपकर्षाभ्यामित्यस्य** 'क्रमा'दिति शेषः । **अन्तोदात्तादित्यस्य सम्बन्धादिति** । 'अन्तो-दात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' इति सूत्रगतस्येति शेषः । **आभ्यामित्यादेः सिद्धाविति** । अन्वादेशाऽनन्वादेशसाधारण्येन अनुदात्तत्वेनैव सिद्धावित्यर्थः । **अन्यार्थतापत्तेरिति** ।

❀ सदाशिवभट्टीयम् ❀

न्यायान्नादेशः ।—नास्त्येवेदं फलमिति बोद्धव्यम् । **अन्यार्थतापत्तेरिति** । सामर्थ्यादकारस्यैव स्यादिति

❀ विषमपदविवृतिः ❀

रुदात्तत्वेन शेषनिघाते नाऽशोऽनुदात्तत्वसिद्धेरित्याशङ्क्याह–**अनुदात्तन्त्विवति** । **शित्वादिति** । अश्-विधानसामर्थ्याच्च निर्दिश्यमानपरिभाषाऽकचो व्यावर्त्तनाय न प्रवर्त्तते इति भावः। ननु तदादेरित्यस्य विशेष्यतया तदन्तविधावनाभ्यामित्यादौ सनुट्कस्यादेशापत्तेर्निर्दिश्यमानपरिभाषाया अप्रवृत्तेरिति चेन्न, अकज्व्यावृत्तिफलिकाया एव तस्या अप्रवृत्तिकल्पनात्, नुड्व्यावर्त्तिका सा प्रवर्त्तत एव ।

ननु सञ्ज्ञोपसर्जनयोस्त्यदाद्यत्वाप्रवृत्तावश्वचनं सार्थकमिति न तत्सामर्थ्यं, तथा च साकच्के-निर्दिश्यमानपरिभाषयाऽऽदेशो न स्यादित्याशङ्क्याह–**सञ्ज्ञोपसर्जनयोरिति** । **अन्यार्थतापत्तेरिति** ।

---

❀ वरवर्णिनी ❀

१ **उत्तरसूत्रेति** । नच सूत्रान्तरसाहचर्याश्रयणस्य नागेशाऽसम्मततया कथमेतदिति वाच्यं, 'द्वितीया-टौस्वेन'इत्युत्तरसूत्रे इदम एतदश्चाऽनुवृत्त्या तस्य च तत्राऽनुपसर्जनस्य ग्रहणेन–प्रकृतेऽपि अर्थाधिकारा-नुरोधात्सञ्ज्ञोपसर्जनव्यावृत्तस्यैवेदमो ग्रहणेनादोष इत्याशयात्–इत्यस्मद्गुरवस्तात्याशास्त्रिपादाः प्राहुः ।

२ नचाऽन्त्यस्यादेशे फलाभावादलोऽन्त्यपरिभाषाया अप्रवृत्त्या सर्वादेशश्चैव स्यादिति वाच्यम् 'अन्त्यबाधेऽन्त्यसदेशस्ये'ति परिभाषयाऽन्त्यसदेशस्यापत्तेरित्याशयादित्यस्मद्गुरवः प्राहुः ।

**द्वितीयाटौ** । पूर्वसूत्रात्—'इदम' इति, 'एतदस्त्रतसो:'इत्यत 'एतद'इति चानुवर्त्तते, 'अनुदात्त' इति च—। **विधातुमिति** । विधानमत्र—अज्ञातज्ञापनमेव, न तु प्रवर्त्तनाविषयत्वं, तच्चेदमैवेति नाग्रहः । स्पष्टञ्चेदं भाष्ये ।

**सुगण्ट्स्विति** । 'ङ्णो'रिति टुक्, तस्यासिद्धत्वान्न जश्त्वम् । **नलोप इति** । नकारलोप इत्यर्थः । न चात्र प्रत्ययान्तत्वात्—'अप्रत्यय' इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यं, पर्युदासे यथोद्देशेन सिद्धेः ।

न च कार्यकालपक्षे दोषः, व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्ध्या पक्षान्तरेण दोषदानस्य काप्यदृष्टत्वात् । ध्वनितञ्चेदं प्रगृह्यसञ्ज्ञाप्रकरणे भाष्ये ।

न च—प्रसज्यप्रतिषेधे दोषः, तत्पक्षे लोपेनेव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वादिति वाच्यं, 'न ङिसम्बुद्ध्यो'रिति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात् । स्पष्टञ्चेदमर्थवत्सूत्रे भाष्ये ।

---

❀ अभिनव-चन्द्रिका ❀

त्यादेर्बाधापत्तेः । नच साक्षाद्विधिबाधकल्पनापेक्षया लाघवादलोन्त्यपरिभाषाबाध एवोचित इति वाच्यं, विनिगमनाविरहात्कदाचित्–तस्मिन्निति परिभाषाया अपि बाधापत्तेः ।

❀ चिद्स्थिमाला ❀

'मोराजी'ति वदाम्यामिमिरित्यादौ विकाराभावार्थतापत्तेरित्यर्थः । पूर्वसूत्रादेवाह—**अन्विति** । **भाष्ये इति** । अत्रैव सूत्रे 'अन्वादेशश्च कथितानुकथनमात्रं, नत्विदमा कथितमिदमैव यदनुकथ्यते' इति ग्रन्थेन ।

लोपो नेत्यर्थनिरासायाह—**नकारेति** । **ध्वनितमिति** । यथा चैतत्तथाऽन्यत्र स्पष्टम् । **निषेधेति** । 'अप्रत्यय' इति निषेधेत्यर्थः । **स्पष्टञ्चेदमिति** । तत्र हि पक्षद्वयेऽपि दोषमाशङ्क्य ज्ञापकेन परिहृतः ।

❀ ज्योत्स्ना ❀

हलि लोपं बाधित्वेकारस्य अनन्त्यविकार इति परिभाषया वा दकारस्य स्थाने आदेशस्य, मोराजीतिवदेभिराभ्यामित्यादौ विकाराभावार्थत्वस्य चापत्तेरित्यर्थः । **न तु प्रवर्तनाविषयत्वमिति** । तथात्वे हि–'इमकाभ्यां छात्राभ्यां रात्रीरधीता, आभ्यामहरप्यधीत'मित्यादिभाष्याद्युदाहरणविरोधः । तथाच 'कथितानुकथितमात्रमन्वादेशः' इति वार्तिककृतोक्तम् । तत्र मात्रग्रहणस्य व्यावर्त्यमाह–**इति नाग्रह इति** । न च 'ईषदर्थे क्रियायोगे मयादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥' इति भाष्यप्रयोगे एनादेशाकरणादिदमाकथितस्यैवानुकथनेऽन्वादेश इति कल्पनीयमित्याह–**स्पष्टं चेदं भाष्य इति** । 'तद्वेष्यं विजानीयादिदमा कथितमिदमैवानुकथ्यते इति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे कथितानुकथितमात्रमन्वादेश इति वार्तिकव्याख्यानपरभाष्य इत्यर्थः । तथा प्रयोगः—'एवं तयोक्ते तमवेक्ष्य किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला । ऋजुप्रणामक्रिययैव तन्वी

❀ सदाशिवभट्टीयम् ❀

तदर्थमेव कुतो न तत्स्यादिति भावः । **पर्युदासेति** । प्रसज्यप्रतिषेधे तु शास्त्रीयत्वात्प्रसज्यलक्षणेन निषेधः

❀ विषमपदविवृतिः ❀

'आभ्या'मित्यादौ दीर्घादिबाधनार्थत्वापत्तेरित्यर्थः । **नकारलोप इत्यर्थइति** । इदानीन्तनमूलपुस्तकेषु नलोप इत्येव पाठः । **पर्युदासइति** ।प्रसज्यप्रतिषेधे तु पूर्वजातप्रातिपदिकत्वस्यापि निवृत्त्यापत्तिरितिभावः

**न ङि । ङौ तु छन्दसीति** । 'राजनी'त्यादौ भत्र नलोपाप्राप्तेः । राजनीवाचरतीत्यर्थे 'अधिकरणाच्चे'ति क्यच्तु लोके नास्त्येव, अनभिधानात् । अत एव 'परमे व्योम'न्नित्यादावव्ययस्मयादित्वाङ्गत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छते इति भावः ।

**सामर्थ्यादिति** । 'न लुमते'तिनिषेधाऽनित्यत्वप्रतिपादनद्वारेत्यर्थः । एतद्नित्यत्वबललब्धमेव 'वा नपुंसकाना'मिति बोद्धयम् । न च 'परमेव्योम'न्नित्यत्र घोषवत्त्वाऽल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे'स्वादि'ष्विति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनेदं चरितार्थमिति वाच्यम् ; 'अन्तरङ्गानपी'ति न्यायेन,—संयोगान्तलोपस्यासिद्धत्वेन च—पूर्वसवर्णेऽपि,—लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात् । स्पष्टञ्चेदं भाष्ये । **ङावुत्तरपदे इति** । एतद्बललब्धमेव 'ङौ तु छन्दस्युदाहरण'मित्युक्तम् ।

**न चेति** । पञ्चमीसमासेन प्राप्तिः । **षाष्ठीमिति** । 'वाह ऊठ्'इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिः प्रागुक्ता ।

**जञोर्ज्ञ इति** । ज-ञयोगे लोक-वेदसिद्धतादृशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनं, न त्विदं वर्णान्तरं, शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अत एव 'तज्ज्ञान'मित्यादौ श्चुत्वसिद्धिः ।

**सुब्विधाविति** ।—सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम् ।

ॐ चिदस्थिमाला ॐ

छन्दःपर्यन्तधावने बीजमाह—**राजनीत्यादि** । **आचरतीति** । भिक्षुके राजन्यतीति प्रयोगविषयेत्यर्थः । अत एव=अनभिधानादेव । अन्यथा तदर्थमावश्यकत्वे तदसङ्गतिः स्पष्टैव । साक्षात्तदसम्भवादाह—**न लुमतेति** । अत्र लाघवमप्याह—**एतदिति** । आदिना निरनुनासिकत्वम् ।

**दकारे इति** ।—संयोगान्तलोपेऽपि च । '**न्यायेने**त्यस्य' '**लुक एवे**'त्यत्रान्वयः । तदप्रवृत्तौ पूर्ववर्णेऽपि तस्यासिद्धत्वेन च लुक एवेत्यर्थः । अपिना तदभावसमुच्चयः । **स्पष्टञ्चेदमिति** । 'न क्वचित्—ङिर्लोपेन लुप्यते, सर्वत्र लुमतैव, स यथेह भवति परमे-व्योमन्निति, एवमिहापि स्याच्चर्मतिल इति, तस्मान्न ङिसम्बुद्ध्योरनुत्तरपदे इति कार्य'मिति तत्रोक्तं, तदाह—**एतदिति** । एतेनान्यथा शास्त्र्याद्युक्तमपास्तम् । मूलमुपलक्षणमित्याह—**कार्येति** । सूत्रादावपाठान्नेदमपूर्वविधायकमित्याह **जञोरिति** । **शिक्षादाविति** । तत्र 'त्रिषष्टिः चतुःषष्टिर्वे'त्युक्तेः । सर्वसङ्ग्रहायाह—**सर्वेति** ।

तन्त्रादिना आह—**विधीति** । अत एव=परिसङ्ख्यायामप्येवमङ्गीकारादेव । इत एव परिसङ्ख्याप्यत्र नियमव्यवहारार्या । 'निषेधमुखेन प्रवृत्ति'रिति प्राचां ग्रन्थास्त्वयुक्ता एव,

ॐ ज्योत्स्ना ॐ

प्रत्यादिदेशैनमभाषमाणा ॥' इत्यादौ तदादिनोपात्तस्य पुनरुपादानेऽन्वादेशो दृश्यते । 'एतमातं ङितं विद्या'दित्यत्र तु—अन्वादेश एव न, तच्छब्दोपात्तस्य पुनरुपादानेऽपि धर्मान्तरज्ञापनाभावादित्याहुः ।

**त्रिपाद्यां तदप्रवृत्तिरिति** । वस्तुतस्तु कार्यकालपक्षाश्रयणेन दोषदानमप्रयोजकं, व्यवस्थितपक्षद्वयमध्येऽन्यतरपक्षाश्रयणेन लक्ष्यसिद्धौ तदयोगादिति समनन्तरमेवोक्तत्वादिति । तत्र यद्वक्तव्यं तदपि प्रागेवोक्तम् । **सर्वविभक्त्यन्तावयवकः समास इति** । यद्यपि भाष्ये 'सर्वविभक्त्यन्तः समास' इत्येवोक्तं, तथापि समासस्य सर्वविभक्त्यन्तत्वासम्भवादुक्तप्रकारेण तत्प्रदीपकृता

ॐ सदाशिवभट्टीयम् ॐ

स्यादिति भावः । **जञोर्ज्ञः । ध्वनेरिति** । ध्वन्यनुवादकत्वं शब्दस्य बाधितमत आह—**लिपीति** ।

**नलोपःसुप् । सर्व्वविभक्त्यन्त इति** । सम्बन्धसामान्यषष्ठ्या समासोऽत्र कर्तुमुचितः ।

विधिशब्दो—भावसाधनः, कर्मसाधनश्च । तत्र स्वरादिविषये—भावसाधनः । सुब्विषये—कर्मसाधनः । 'कृती'त्येतत्—सामर्थ्यात्तुक एव विशेषणमित्याह—**कृति–तुगिति**। 'पूर्वत्रासिद्ध'मित्येव सिद्धेऽन्यनिवृत्तिफलकोऽयं, तदाह—**नान्यत्रेति** ।

अन्यनिवृत्तिफलक–सिद्धविषयक-विधित्वमेव नियमत्वम्।[1]

---

**ॐ अभिनव-चन्द्रिका ॐ**

**अत एव पस्पशायामिति** । परे तु सर्वविधमांसभक्षणस्य रागतः प्राप्तत्वादिच्छायाश्च सङ्कोचस्यासम्भवात्कचिन्निषेधमुखेनापि नियमस्य प्रवृत्तिरङ्गीकार्या, गमेर्ज्ञानार्थकत्वेन शाब्दबोधविषय इत्यर्थेनाविरोधात् ।

**ॐ ज्योत्स्ना ॐ**

व्याख्यातमिति भावः । **सुब्विषये कर्मसाधन इति** । नचैवं सम्बन्धसामान्ये षष्ठीति स्थानेयोगत्वं प्राप्नोति, अनुवादे परिभाषाणामनुपस्थितिरिति चेत्—एवं तर्हि प्रदीपकृदुक्तव्याख्यानान्तररीत्या विधिशब्दो भावसाधन एव, सम्बन्धसामान्यषष्ठ्या सर्वविभक्त्यन्तार्थान्तर्भावात्,

**ॐ सदाशिवभट्टीयम् ॐ**

**कर्मसाधन इति** । एवञ्च विधिशब्दस्याऽऽवृत्तिरिति भावः । यदि तु सुप्शब्दस्य सुप्सदृशे लक्षणा, तदा तु न

**ॐ विषमपदविवृतिः ॐ**

**अतएवेति** । सप्तम्यन्ताद्राजन्शब्दात्क्यचोऽनभिधानादेवेत्यर्थः । **नलोपःसुप्** । 'नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिर्न निषेधमुखेने'त्याह—**अन्यनिवृत्तिफलकेति** । **पस्पशायामिति** ।

---

**ॐ वरवर्णिनी ॐ**

१ अन्यनिवृत्तिः फलं यत्रासौ—अन्यनिवृत्तिफलकः । सिद्धः='पूर्वत्रासिद्ध'मित्यादिविध्यन्तरैः सिद्धः—विषयो यस्यासौ—सिद्धविषयकः । अन्यनिवृत्तिफलकश्चासौ सिद्धविषयको विधिश्च—अन्यनिवृत्तिफलक–सिद्धविषयक–विधिः, तस्य भावस्तत्त्वमिति विग्रहः । तदुक्तं—

'**विधिरत्यन्तमप्राप्तौ, नियमः** पाक्षिके सति । तत्र चाऽन्यत्र च प्राप्तौ **परिसङ्ख्ये**ति गीयते ॥' ति ।

तदेवं—'स्वर्गकामो यजेत' 'अश्वमेधेन यजेत' इत्यादि**र्विधिः** । 'ऋतौ भार्यामुपेया'दित्यादौ ऋतावुपेयादेवेत्यर्थस्य मीमांसकसिद्धान्तिसम्मततया 'ऋतौ भार्यामुपेया'दिति—**नियमः** । यद्वा 'व्रीहीनवहन्ती'ति **नियमो**दाहरणम्। [मीमांसकैकदेशिमते तु—ऋतावेव भार्यामुपेयादित्यर्थे—'ऋतौ भार्यामुपेया'दिति—**परिसङ्ख्या** ।] 'पञ्च पञ्चनखा भक्ष्याः' इति तु सर्वसम्मतं **परिसङ्ख्यो**दाहरणं, रागतस्तत्र चाऽन्यत्र च प्राप्तेः ।

व्याकरणे च—'इको यणची'त्यादीनि विधिशास्त्राणि । 'विप्रतिषेधे पर'मित्यादीनि—नियमशास्त्राणि । 'कृत्तद्धितसमासाश्च' 'नलोपः सु'बित्यादीनि परिसङ्ख्याशास्त्राणि । 'भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते' इति भाष्योक्तेरत्र व्याकरणे परिसङ्ख्याशास्त्राणां नियमशास्त्रत्वेन च व्यवहारः ।—इति विवेकः ।

इदमत्र तत्त्वम्—एवकारार्थे यत्र विधेयस्याऽन्वयस्तत्र **नियमः**,—यथा 'व्रीहीनवहन्यादेव'। 'ऋतौ भार्यामुपेयादेवे'ति । उद्देश्यस्य यत्रैवकारार्थेऽन्वयस्तत्र तु **परिसङ्ख्या**—यथा मीमांसकैकदेशिमते—'ऋतावेव भार्यामुपेयात्–, इति, पञ्चनखाः पञ्चैव भक्ष्याः' इति च । व्याकरणे च 'विप्रतिषेध परमेवे'ति **नियमः** । 'समास एव प्रातिपदिकसञ्ज्ञा नान्यत्रे'ति च **परिसङ्ख्ये**ति ।

अत्र श्रीबालशास्त्र्यनुयायिनः''—इदमत्र हृदयं-शास्त्रविशिष्टशास्त्ररहितत्वं **विधित्वं**, वै०'स्वीयोद्देश्यतावच्छेदकावच्छिन्नोद्देश्यकत्व'सम्बन्धेन। यत्किञ्चिच्छास्त्रविशिष्टत्वञ्च **नियमत्वं**; वै०—'स्वविशिष्टोद्देश्यतावच्छे-

अत एव पस्पशायां भाष्ये—'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र 'भक्ष्यनियमेऽभक्ष्यप्रतिषेधो

## ॐ ज्योत्स्ना ॐ

सर्वविभक्त्यन्तत्वोक्तिरिति चिन्त्यमेतत् । गम्यते इत्युक्तमिति । एवञ्चाभक्ष्यवाचकत्वं तत्र नास्ती-

## ॐ सदाशिवभट्टीयम् ॐ

विधिशब्दस्यावृत्तिरिति बोध्यम्। भक्ष्यनियम इति। अत्र व्याकरणशास्त्रे नियमस्य सामान्यशास्त्रबाधकत्वमिति

## ॐ विषमपदविवृतिः ॐ

स्पृशेर्यङ्न्तादप्रत्यये सञ्ज्ञापूर्वकविधेरनित्यत्वात्पृषोदरादित्वाद्वा साधुः । गम्यत इत्युक्तमिति । तेन

## ॐ वरवर्णिनी ॐ

दकावच्छिन्नोद्देश्यताकत्व' 'स्वविधेयतावच्छेदकावच्छिन्नविधेयताकत्वो'भयसम्बन्धेन। सम्बन्धघटकं वै०, 'स्वविधे-यवत्त्व' 'स्वविधेयाभाववत्त्वो'भयसम्बन्धेन । यथा 'व्रीहीनवहन्ती'त्यत्र-'च हननिमित्तं तण्डुलाः सम्पाद्याः' इति वाक्येन कदाचिन्नखविदलनेन तत्सम्पादनस्य कदाचिदवघातेन तत्सम्पादनस्य तण्डुलादौ यथेच्छं प्राप्ततया नखविदलनेऽवघाताभावस्य सत्त्वेन लक्षणसमन्वयः । एवमेव—'ऋतौ भार्या'मित्यादौ रागप्राप्तस्यैव नियामकतया रागेण कदाचिद्गमनस्य कदाचित्तदभावस्यापि प्राप्ततया समन्वय ऊहनीयः ।

परिसङ्ख्यात्वञ्च—यत्किञ्चिच्छास्त्रविशिष्टत्वं, वै० 'स्वीयोद्देश्यतावच्छेदकव्याप्योद्देश्यतावच्छेदककत्व' 'स्वीयविधेयतावच्छेदकावच्छिन्नविधेयताप्रयोजकत्वो'भयसम्बन्धेन । यथा'ऋतावेवे'त्यर्थक'ऋतौ भार्यामुपेया'-दित्यस्य रागप्राप्त-भार्योपगमन-विधायकतया तदुद्देश्यतावच्छेदकीभूत-भार्यात्व-व्याप्य-ऋतुमद्भार्यात्वा-वच्छिन्नोद्देश्यताकतया परिसङ्ख्यात्वमित्याहुः ।

इदमत्र गूढमाकूतं—नियमशास्त्रेण नियम्यशास्त्रविधेये तदीयोद्देश्यतावच्छेदकव्यापकत्वं बोध्यते । यथा 'व्रीहीनवहन्ति' 'विप्रतिषेधे पर'मित्यादौ । परिसङ्ख्याशास्त्रेण च—परिसङ्ख्येयार्थवदित्यादिशास्त्रीयो-द्देश्यतावच्छेदकावच्छिन्नस्वीयोद्देश्यतावच्छेदकव्यापकीभूत-परिसङ्ख्येयशास्त्रीयोद्देश्यतावच्छेदकव्याप्यभूत — रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचो विधीयते । ततश्च परिसङ्ख्याशास्त्रेण स्वयमेव स्वविधेयं विधीयते । इयमेव च 'विधिमुखेन प्रवृत्ति'रित्युच्यते ।

निषेधमुखेन प्रवृत्तौ तु—स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तो यः स्वीयोद्देश्यतावच्छेदकव्यापक-परिसङ्ख्येयशास्त्रीयोद्देश्यतावच्छेदकव्याप्य-रूपावच्छिन्नस्तदतिरिक्तत्वेन परिसङ्ख्येयशास्त्रीयोद्देश्यतावच्छेदका-वच्छिन्ने सङ्कोचमात्रं परिसङ्ख्याशास्त्रेण विधीयते, कार्यन्तु परिसङ्ख्येयशास्त्रेणैव, एवञ्च तत्र तदुद्देश्यतावच्छे-दकावच्छिन्नेतरत्र निषेधमात्रमनेन विधीयते—इति । परिसङ्ख्यात्वमते—'ऋतौ भार्या'मित्यत्र, 'पञ्चनखाः' इत्यत्र च रागप्राप्तस्यैव परिसङ्ख्येति । परिसङ्ख्याशास्त्राणां विधिमुखेनैव व्याकरणे प्रवृत्तिरिति स्वमतं सूचयन्नाह-फलकेति । अन्यनिवृत्तिः फलति, न तु परिसङ्ख्याशास्त्रेण अन्यनिवृत्तिः शब्दतः क्रियते, विधि-मुखेनैव प्रवृत्तिरित्याशयः ।

पस्पशेति । परे त्विदं शेखरोक्तं चिन्त्यं—पूर्वोक्तरीत्या यत्किञ्चिच्छास्त्रविशिष्टत्वाभावेन 'पञ्च पञ्च-नखाः' इत्यस्य परिसङ्ख्यात्वाऽभावेन 'नलोपःसु'बित्यस्य च 'पूर्वत्राऽसिद्ध'मिति शास्त्रविशिष्टतया परि-सङ्ख्यात्वेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । किञ्च भवद्रीत्या व्याकरणे परिसङ्ख्याशास्त्रवत्तुल्ययुक्त्या लोकेऽपि 'पञ्च पञ्चनखाः' इत्यादीनामपि परिसङ्ख्याशास्त्राणां विधिमुखेन प्रवृत्त्यापत्तौ 'अहरहः सन्ध्यामुपासीते'ति-विध्युल्लङ्घने इव मांसाभक्षणे विध्युल्लङ्घनप्रयुक्तप्रत्यवायापत्तेः ।

किञ्च व्याकरणेऽपि सर्वत्र परिसङ्ख्याशास्त्राणां विधिमुखेनैव प्रवृत्तिर्न सम्भवति—'हन्तेरत्पूर्वस्ये'त्यादाव-सम्भवात् । तथाहि—यदि हन्त्यवयवनकारातिरिक्तत्वेन 'हन्ते'रित्यत्र सङ्कोचःस्यात्तर्हि 'हन्ते'रित्यस्यो-दाहरणदारिद्र्यप्रसङ्गः, यदि चात्पूर्वकहन्त्यवयवनकारातिरिक्तत्वेन 'हन्ते'रित्यत्र सङ्कोचस्तर्हि 'वृत्रघ्न' इत्यत्र णत्वापत्तिः, तस्मात्—अत्पूर्वकहन्त्यवयवनकारातिरिक्त-हन्त्यवयवनकारातिरिक्त-हन्त्यवयवनकारस्य णत्वं भवतीति रीत्या निषेधमुखेनैव प्रवृत्तिरावश्यकी ।

❀ वरवर्णिनी ❀

एवमेव 'तपस्तपःकर्मकस्यैवे'त्यत्रापि विधिमुखेन प्रवृत्तिर्दुर्लभा, तथाहि–'तपस्तपः'इति सूत्रे भाष्ये–'तपः' 'तपः कर्मकस्यैवे'ति योगद्वयं कृत्वा–'कर्मवत्कर्मणे'त्येव सिद्धे 'तपः' इति योगः–सकर्मकाणाञ्चेत्तप एवेति नियमार्थ इति स्वीकृत्य 'सकर्मकाणां प्रतिषेधः' इति वार्तिकं तत्र भगवता प्रत्याख्यातम् । एवं 'तपः'इत्येव सिद्धे 'तपःकर्मकस्ये'त्यपरो योगः–'सकर्मकस्य तपश्चेत्तर्हि तपःकर्मकस्यैवे'ति नियमार्थस्तेन तपोव्यतिरिक्त-कर्मके नेति । तत्र योगे एवकारस्तु विपरीतनियमवारणार्थः––इत्युक्तम् । नियमशास्त्राणां विधिमुखेन प्रवृत्तौ तु–'तपः'इत्यत्र सकर्मकतपधात्वतिरिक्तत्वेन यदि सङ्कोचस्तदा 'तपः' इत्यस्य वैयर्थ्यापत्तिः । यदि तपःकर्मकतपधात्वतिरिक्तत्वेन सङ्कोचस्तदा'उत्तपति स्वर्णं सुवर्णकारः' इत्यत्राप्यापत्तिः ।

तस्मात्तत्रापि 'तपःकर्मकातिरिक्त–सकर्मकतपधात्वतिरिक्त–तपधातोः कर्त्ता कर्मव'दिति रीत्या निषेधमुखे-नैव प्रवृत्तिर्ज्यायसी । एवं 'डाबुभाभ्या'मित्यत्रान्यतरस्यांग्रहणेन शेखरोक्तरीत्या नियमेऽपि निषेधमुखेनैव प्रवृत्तिः । एवं 'मृजेर्वृद्धिः' 'अजादौ क्ङिति वेष्यते'इत्यत्र योगं विभज्य भाष्यप्रदर्शितनियमे च निषेध-मुखेनैव प्रवृत्तिरिति–शारदावतारश्री**बालशास्त्र्यनु**सारिण **उमानाथ**शास्त्रिणः प्राहुः ।

**मञ्जूषा**यान्तु––एवकारसमभिव्याहृते न विधेयतायां तात्पर्यं, किन्त्वार्थ्यामन्यनिवृत्तावेव इति **तान्त्रिकाः** ।

एवञ्च एवकारसमभिव्याहारेऽपि आर्थ्येव परिसङ्ख्या, सा चोपात्तातिरिक्ते समभिव्याहृतधनुर्धरादि-पदार्थाभावप्रत्ययरूपा, यथा 'पार्थ एव धनुर्धरः' इत्यादौ 'नान्यो धनुर्धरः' इति । सच नैवकारघटित-वाक्यार्थः, किन्तु आर्थ एव, उक्तरीतेः । शाब्दी परिसङ्ख्या तु–'त्वन्मुखं त्वन्मुखेनैव' इत्यादौ ।

'पञ्च पञ्चनखा भक्ष्याः'––इत्यादावप्युक्तरीत्या आर्थ्येव परिसङ्ख्या । अत एव 'युष्मद्युपपदे' इत्यादौ नियमार्थोऽयमारम्भः । 'युष्मदि मध्यम एव, युष्मद्येव मध्यमः इति चे'ति भाष्ये उक्तम् । तेन हि नियमशास्त्राणामेवकाराभावेऽपि तदर्थान्तर्भावेण बोधकत्वं सूचितम् ।

यत्तु–पञ्चपदस्य पञ्चातिरिक्ते लक्षणा, भक्ष्यपदस्य भक्ष्यत्वाभाववति लक्षणा, तेन 'पञ्चातिरिक्ता भक्ष्य-त्वाभाववन्त' इति बोध इति, तन्न; पदद्वये लक्षणापेक्षया उक्तप्रकारस्यैव न्याय्यत्वात् ।

किञ्चैवं शास्त्रप्राप्तस्य शास्त्रीयनियमे विकल्पवारणाय सामान्यविशेषन्यायेन विधेस्तद्विषयत्वाभावकल्पन-मित्यतिगौरवम्,'किमासेव्यं पुंसां ? सविधमनवद्यं द्युसरितः' इत्यार्थपरिसङ्ख्योदाहरणमिति काव्यप्रकाशादि-ग्रन्थासङ्गतेश्च । त्वद्रीत्या हि द्युसरित्सविधातिरिक्तमनसेव्यमिति बोधेन तस्याः शाब्दत्वात् । अत एव शाब्दपरिसङ्ख्यायां 'किं भूषणं ? सुदृढमत्र यशो, न रत्नमि'त्युदाहृतम् ।

भाष्यकारोऽपि **पस्पशा**यामाह––"–'किं शब्दापशब्दयोरुभयोरुपदेशः कार्यः ? ' उतान्यतरो-पदेशः ?, अन्यतरोपदेशेन कृतं स्यात् ,––तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते, 'पञ्च पञ्चनखा भक्ष्या' इत्युक्ते गम्यते एतत्––अतोऽन्ये न भक्ष्या इति । अभक्ष्यप्रतिषेधेन भक्ष्यनियमः, तद्यथा 'अभक्ष्यो ग्राम्यकुक्कुट' इत्युक्ते––गम्यते एतत्––'आरण्यो भक्ष्य' इति । एवमिहापि 'गौ'रित्युपदिष्टे, गम्यते एतत्––गाव्यादय अपशब्दा इति । गाव्यादिषु चोपदिष्टेषु गम्यते एतत्–'गौरित्ययं शब्द इति'––" इति । तत्र सुशब्दोपदेशः साधुत्वबोधनद्वारा प्रयोगविध्यर्थः । अपशब्दोपदेशस्तत्प्रति-षधार्थः । अत्र भाष्ये 'गम्यते' इत्युक्त्या–तस्य तज्जन्यशाब्दबोधाविषयत्वं स्पष्टमेवोक्तम् । किञ्च लक्षणा-वादिमते दृष्टान्तदार्ष्टान्तिकयोर्महद्वैषम्यम् । 'नियमेने'त्यस्य चोपदेशेनेत्येवार्थः संदर्भबलाद्गम्यते । शब्दा-न्तरेणानुपदेशात्, अर्थतोऽलाभाच्च। अयं न मुख्य उपदेश इति नियमपदप्रयोगः। ईदृश इतरनिवृत्तिफलक उपदेश एव च नियमपदेनोच्यते इति **प्रामाणिकाः** ।

**परेतु–'इमामगृभ्णन् रशनामृतस्ये'त्यश्वाभिधानीमादत्ते'** इत्यत्र-**-लिङ्गाद्**गर्दभरशनायामपि प्राप्तस्य मन्त्रस्याऽपूर्वविधिद्वारा परिसङ्ख्या । तदुक्तं तन्त्रवार्त्तिके,––

❀ वरवर्णिनी ❀

अपूर्वविधिरेवायमतो मन्त्रश्च निश्चितः। परिसङ्ख्या फलेनोक्ता,-इति,

आलङ्कारिका अपि-परिसङ्ख्याप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात्, स्वतुल्यान्यव्यवच्छेदं गमयतीति। भागवतेऽपि—

'लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना।

व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा'॥ इति

नित्याः=रागतः प्राप्ताः। जन्तोः=प्राणिमात्रस्य। अतस्तत्र चोदना=विधिर्नास्ति। नन्वेवं'ऋतौ भार्यामुपेयात्' 'हुतशेषं भक्षयेत्' 'सौत्रामण्यां सुराग्रहान्गृह्णाति' इत्येतेषां वैयर्थ्यं, भार्या=विवाहितामित्यर्थः, तत्राह-**व्यवस्थितिरिति**। तेषु पुनः प्रापणमित्यर्थः। रागतो नित्यप्राप्तत्वान्नैते नियमविषयः, पाक्षिक्यां हि प्राप्तौ नियमो भवति, किन्तु प्राप्तस्याप्यर्थस्य पुनःप्रापणमनर्थकमित्यपूर्वविधिद्वारा अन्यनिवृत्तिः फलति, तदाह—**आसु निवृत्तिरिति**। भाष्येऽपि नियमपदेनाभ्यनुज्ञा,'ऋतुस्नातां तु यो भार्या'मिति दोषश्रवणं तु मनसि कामे सत्यपि तस्यां द्वेषादिनाऽनुपगमे बोध्यम्। एवञ्च'ऋतौ भार्या'मित्यस्य ऋतावेव,तत्र भार्यामेव, तत्र तामुपेयादेव-इत्यर्थत्रये तात्पर्यम्। अतएव गृहस्थस्यानृतौ अनुपगमे ब्रह्मचर्यमुक्तम्। अविवाहितागमने, ऋतौ भार्यागमनाभावे प्रायश्चित्तं प्रोक्तं स्मृतिषु। 'तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते' इत्यस्य शाब्दी आर्थी चेत्यर्थः। 'इजादेःसनुमः' इति सूत्रे कैयटोप्याह-नियमे प्राप्तबाधः, सिद्धस्य पुनरुपादानात्-अनुवाददोषश्चेति। 'यस्य हलः' इति सूत्रेऽपि-नियमे श्रुतार्थत्यागेन अश्रुताया अन्यनिवृत्तेः सामर्थ्यात् परिकल्पनमुक्तानुवाददोषश्चेति। 'अनुपराभ्यां कृञः' इति सूत्रे भाष्येऽपि-'प्रतिषिध्यते तत्र परस्मैपदं' 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' आत्मनेपदं भवती'त्युक्तं, तेन हि विधेरेव प्रतिषेध आर्थं फलमिति स्पष्टमेवोक्तम्। एवकारोऽपि स्वसत्त्वे स्फुटं तदर्थद्योतक एव,नतु तत्समभिव्याहारेऽपि शाब्दबोधे तद्भानम्। तत्समभिव्याहारेण मनसा बुध्यमानत्वमपि द्योतकत्वम्। एवकारासमभिव्याहारेऽपि अनुवादबलादेव तदर्थलाभः। शाब्दपरिसङ्ख्या तु—

'त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केन चित्।'

'किम्भूषणं सुदृढमत्र यशो-न रत्नम्॥' इत्यादिष्वेव।

'युष्मदि मध्यम एव, युष्मद्येव मध्यमः' इति भाष्येणैवकारसमभिव्याहारासमभिव्याहारयोस्तुल्यार्थत्वमेव सूचितमित्याहुः। पक्षद्वयेऽपि स्वार्थहानिपरार्थकल्पना प्राप्तबाधरूपदोषत्रयन्तु यथाश्रुते प्रतीयमाने स्वार्थे तात्पर्याभावात्, तात्पर्यतस्त्यागोऽन्यार्थे तात्पर्याङ्गीकारेण तात्पर्यतः परार्थकल्पना प्राप्तबाधश्चेति सूपपादम्। ननु 'व्रीहीनवहन्ती'त्यादौ पक्षप्राप्तस्य नियमे अवहननैव व्रीहीन्संस्कुर्यात्-न नखविदलनादिनेति प्रतीतिस्तत्रापि त्रैदोष्यं प्राप्तमिति-परिसङ्ख्यायाः तस्य लघुत्वव्यवहारानुपपत्तिरिति चेन्न,पक्षे स्वरसत एव तस्याप्राप्त्या क्लृप्तबाधकल्पना, परिसङ्ख्यायां तु नित्यप्राप्तस्याक्लृप्तबाधस्यैव बाधकल्पनमिति ततः परिसङ्ख्याया गुरुत्वात्। क्लृप्तप्राप्तिकस्यैव च प्राप्तिबोधनेनापूर्वविधेरपि नियमस्य लघुत्वम्। अस्मच्छास्त्रे नियमस्तु आत्मनेपदविधायके मध्यमादिविधायके च प्रकृत्युपपदनियमरूपः। तद्विषये हि प्रत्ययानां पाक्षिकी प्राप्तिः। अत एव 'युष्मदी'ति सूत्रे उपपदनियम प्रकृत्य 'समे देशे यजेते'तिवत्पाक्षिक्यां प्राप्तौ नियम इति कैयटः। नच तत्सूत्रे भाष्योक्तप्रत्ययनियमानुपपत्तिः, प्रत्ययनियमस्य परिसङ्ख्यात्वेन गुरुत्वादिति वाच्यम्, एतदनपेक्ष्यैतरत्फलमस्ति नवेत्येतावन्मात्रेण प्राप्तबाधसत्त्वेन द्वयोः समतामाश्रित्य भाष्ये विचारसत्त्वेनादोषात्। एवञ्च 'पञ्च पञ्चनखा' इत्यादेः 'पतिः समास एव' इत्यादेश्च विधिमुखेनैव प्रवृत्तिः। अवधारणविषयत्वबोधात्, पुनरनुवादाद्वा सामान्यप्रापकप्रमाणस्य तदतिरिक्ताविषयकत्वरूपः सङ्कोचः। तेन च आर्थस्तत्कार्याभावः। तमादाय नियमशास्त्रस्य निषेधत्वव्यवहारः, नान्यत्रेत्यादिप्रतिनिर्देशश्चेत्यन्यत्र विस्तरः-इत्युक्तं भट्टैः।

गम्यते' इत्युक्तं,—तदाह-इत्यसिद्धत्वादिति ।—इत्यन्यत्र विस्तरः ।

सुब्विधिशब्देन सुप्त्व-तद्व्याप्यधर्मा-वच्छिन्नोद्देश्यकविधेर्ग्रहणम् । एतेन—'दण्डिषु'-

ॐ अभिनव-चन्द्रिका ॐ

किञ्च 'पञ्च पञ्चनखा भक्ष्या' इत्यस्य विधित्वेऽहरहः सन्ध्यामुपासीतेत्यनेन सन्ध्याकरणाभावस्या-निष्टजनकत्वबोधनवत्पञ्चनखाऽभक्षणस्याप्यनिष्टजनकत्वबोधापत्त्या—'प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला' इत्येतद्विरोधापत्तेः । किञ्च विधिमुखेन प्रवृत्तिस्वीकारे—'तपस्तपः कर्मकस्यैवे'त्यत्र 'तपः' इति योगं विभज्य 'सकर्मकाणाञ्चेत्तप एवे'ति नियमेन 'सकर्मकाणां प्रतिषेधो वक्तव्य' इति वार्तिकं खण्डयता भगवता च स्वीकृते तत्र योगद्वयेऽन्यतरयोगस्य वैयर्थ्यापत्तेः । निषेधमुखेन प्रवृत्तिस्वीकारे यथा च न वैयर्थ्यं तथा निरूपयिष्यते । सुब्विधिशब्देनेति । वस्तुतस्तु

ॐ चिदस्थिमाला ॐ

तदाह—इत्यन्यत्रेति । मञ्जूषादावित्यर्थः । न्यूनतां परिहरति—सुबिति । तद्व्याप्येति । ननु

ॐ ज्योत्स्ना ॐ

स्यर्थादुक्तम् । यत्तु—'एच इ'गिति सूत्रे भाष्य्यं—नानेनेको निर्वर्त्यन्तेऽपि त्वनिको निवर्त्यन्ते' इति, यच्च-वार्तिकम्—'उभयप्राप्तौ कर्मणी'ति प्रतिषेधेऽकादिप्रयोगे प्रतिषेधः' इति तत्र=अनेन=एच इगिति शास्त्रेण, इको न निर्वर्त्यन्ते,—ह्रस्वविधायकसामान्यशास्त्रेण सिद्धत्वात्, अपि तु विशेषशास्त्रातिरिक्तविषयकत्वस्य सामान्यशास्त्रे कल्पनेन फलतोऽनिको निवर्त्यन्ते इत्येव चार्थः । परत्र—'कर्तृकर्मणोःकृती'त्यस्योभयप्राप्तौ कर्मातिरिक्तविषयकत्वकल्पनादन्यः प्रतिषेध इत्यर्थः । तात्पर्यसङ्कोचस्थले लक्षणामन्तरेण नैयायिकमते मतान्तरस्थे लत्तांशे विशेषबोधस्येष्टत्वात् (?)। यत्पुनः—'स्थानेऽन्तरम'सूत्रभाष्ये—'किं पुनरिदं निव-र्तकम्—आहोस्वित्—प्रतिपादक'मित्येवं स्वतन्त्रविधिनियमपक्षावुपन्यस्याद्यपक्षे विसं मुसलमित्यत्र सकारस्यान्तरतमे सकारे—'आदेशप्रत्यययो'रितिषत्वापत्तिः, अन्ते च सामान्यशास्त्रप्राप्ता-नामनन्तरतमानामनिषेधात्सूत्रवैयर्थ्यमुक्त्वा—सामान्यशास्त्राशेषभावेन विधायकत्वपक्षः परिग्रहीतः, तत्—सामान्यशास्त्रस्य तात्पर्यसङ्कोचलक्षणरीतिगौरवमभिप्रेत्य । नचान्तरतमपदस्यान्तर-तमाभावपरत्वं, लक्षणागौरवस्य तदवस्थत्वात् । वचनद्वयप्रामाण्याद्विकल्पापत्तेर्वारणाय सामान्य-शास्त्रतात्पर्यसङ्कोचादौ गौरवाधिक्याच्च । अत एव 'वस्वेकाचाद्धसा'मितीटि कृते—आकारलोपा-नापत्तिरिति सन्निपातपरिभाषादोषपरिगणनावसरे—भाष्ये उक्तम् । न चैवमर्थवदितिसामान्यप्राप्ते-रेव समासग्रहणकृतविधानसङ्कोचः स्यान्नतु तुल्यबलविरोधिन्याः कृदन्तत्वप्रयुक्तप्राप्तेरपीति—'मूल-कोपदंश'मित्यत्र दोष इति वाच्यं; 'विप्रतिषेधे परमेवे'ति नियमेन तस्या अपि सङ्कोचाभ्युक्ति-पक्षे तथैवावश्यं वक्तव्यत्वात् । एतेन नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति परास्तम् । तदेत-दभिप्रेत्याह—इत्यन्यत्र विस्तर इति । इत्युक्तमिति । सत्युत्तरनिपाते तूत्तरपदत्वे चेति निषेधा-

ॐ सदाशिवभट्टीयम् ॐ

वचनस्य वचनेन बाध इति नियमत्वं युक्तम् । 'पञ्च पञ्चनखा' इत्यस्य तु नैवं, तत्र सर्वमांसभक्षणस्य रागतः प्राप्तत्वेन बाध्यवचनाभावात्, भाष्यन्त्वितरमांसभक्षणनिषेधतात्पर्य्यकम् । किञ्च तथा सति वाक्ये प्रातिपदिक-सञ्ज्ञाया साधुत्वं स्यात् ,—एवञ्च पञ्चनखभक्षणाभावे प्रत्यवायः स्यात्, भवति तु नेति—वैलक्षण्य-सत्त्वाच्चिन्त्यमेतत् । तद्व्याप्येति । स च भिस्त्वादिः । यदि तु पूर्वत्रासिद्धमित्यतो 'नलोपः सुप्स्वरे'ति-

ॐ विषमपदविवृतिः ॐ

प्रतिषेधस्याऽशाब्दत्वमुक्तं भवति । 'क्रन्मेजन्त' इति सूत्रस्थे 'द्विधिराकारलोपस्ये'ति भाष्यं, 'भोभगो' इति सूत्रस्थं—'किं पुनः कारणं सुकारपर एवोदाह्रियते' इति भाष्यञ्चात्रार्थे गमकं बोध्यम् । प्रतिषेधस्य शाब्दत्वे स्वार्थहानि—परार्थकल्पनयोरापत्तिश्च दोषो बोध्यः। न च 'मूलकेनोपदंश'मित्यत्र कृदन्तत्व-

इत्यादौ षत्वस्यसुब्विधावप्राप्तावसिद्धत्वविधानार्थमिदम्—'इत्यन्यत्र, वैरूप्यापत्तेश्च।

सञ्ज्ञाविधौ—'दण्डिदत्तौ' 'दत्तदण्डिनौ'। अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातनियमापत्तिः, इष्यते त्वनियमः, असिद्धत्वे तु—अघित्वान्नियमाभावादनियम इति।

न च पूर्वनिपाते नलोपो, नलोपे च घित्वे पूर्वनिपातः' इत्येवमुक्तं,—

—'यस्य पूर्वपदत्वे घित्वं भावि—तत्पूर्वमेव प्रयोक्तव्य'मिति सूत्रार्थान्न दोषः।

ॐ अभिनव-चन्द्रिका ॐ

'पूर्वत्रासिद्ध'मित्यतः 'पूर्वत्रे'त्यनुवर्त्य पूर्वसुप्स्वरसञ्ज्ञातुग्विधिषु कर्तव्येषु नलोपोऽसिद्ध इत्यर्थकरणात्षत्वस्य पूर्वत्वाभावादप्राप्त्या तादृशार्थे प्रमाणाभावः। किञ्च तन्मये-'इकोऽची'त्यस्य सुब्विधित्वाभावेन नपुंसकदण्डिन्शब्दादाम्नि नलोपे इकोऽचीत्यत्राज्ग्रहणाभावपक्षे पुनर्नुमि 'लक्ष्ये-लक्षण'न्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणेन, तत्र सूत्रे अज्ग्रहणे तु तदश्रवणेन फलभेदादिह किञ्चित्त्रपो इति भाष्यविरोधापत्तिः। यद्यपि सुप्त्वव्याप्यधर्मावच्छिन्नविषयताके इत्याद्यर्थस्वीकारेण न भाष्यविरोधस्तथाप्य'शुद्धं कृत्वा कुचोद्य'मिति न्यायेनात्र न तादृशार्थः कर्तुमुचित इति दिक्।

यस्य पूर्वपदत्वे घित्वं भावीति। अत एव दिव्शब्द-ब्रह्मवाचककशब्दयोर्द्वन्द्वे 'द्युका'वित्यत्र

ॐ चिदस्थिमाला ॐ

व्यापकेत्यर्थः। स्वरादिसाहचर्येण षत्वादेरेतत्सूत्रदृष्ट्याऽसिद्धत्वेन च नलोपशास्त्रतः पूर्वशास्त्रविहित-सुब्विधेरेव ग्रहणादितिभावः। एतेन=तस्यैव ग्रहणेन। वस्तुतस्तत्र भवनादाह-**सुब्विधाविति**। **अप्राप्तेति**। षत्वस्य परत्वान्नलोपस्य पूर्वत्वात्। इदं=सुब्विधावित्यंशरूपम्। अत एवोभयस्वीकारादाह—**वैरूप्येति**। तत्र—सुब्विधौ मूले उदाहृतं,स्वरविधौ मनोरमायाम्। अन्यत्र विशेषवशादुदाहरति-**सञ्ज्ञेति**।'त्वघित्वा'दिति पाठः। अन्योन्याश्रयमाशङ्कते-**नचेति**।

ॐ सदाशिवभट्टीयम् ॐ

सूत्रे 'पूर्वत्रे'त्यनुवर्त्य पूर्वेष्वेषु विधिष्वित्युच्यते तदेदं व्यर्थं,षत्वस्य सपादिस्थत्वाभावात्। **वैरूप्यापत्तेश्चेति**। सा च सुब्विधौ विधित्वम्, इतरेषु नियमत्वमित्येवंरूपा। 'विधिशब्दे एकत्र भावसाधनत्वमेकत्र कर्म-साधनत्व'मिति वैरूप्यस्य त्वन्मतेऽपि सत्त्वाच्चिन्त्यमेतत्। तस्मात्पूर्वत्रेत्यत्राप्यनुवृत्तिरेव ज्यायसीति बोध्यम्।

ॐ विषमपदविवृतिः ॐ

प्रयुक्तप्राप्तस्य समासग्रहणकृतनियमेन परत्वाद्बाधो न स्यादिति वाच्यं,गम्यप्रतिषेधस्यैव परत्वेन बाधकत्व-सम्भवात्। यत्तु 'एच इ'गिति सूत्रस्थं भाष्यं-'नानेनेको निवर्त्यन्तेऽपि तु अनिको निवर्त्यन्ते'इति, यच्च वार्त्तिकम्-'उभयप्राप्तौ कर्मणीति निषेधेऽकादिप्रयोगेऽप्रतिषेध'इति,—तदुभयं गम्यमानप्रतिषेध-परम्। 'नानेनेको निवर्त्यन्ते' इत्यस्य नानेनेकोऽपूर्वा विधीयन्त इत्यर्थः। **अप्राप्त्यासिद्धत्वेति**। परत्र षत्वे पूर्वस्य नलोपस्यासिद्धत्वाप्राप्तेरित्यर्थः। **वैरूप्येति**। स्वरविध्यादौ नियमार्थत्वं, सुब्विधौ तु विध्यर्थत्वमिति वैरूप्येत्यर्थः। वस्तुतस्तु क्तादिसूत्रवत्, कृत्तद्धित इति सूत्रवच्च-नियमशास्त्राणां विधिमुखेन प्रवृत्त्या शाब्दबोधे न वैरूप्यम्। **यस्य पूर्वं पदत्वे इति**। एतत्फलन्तु

१ **अप्राप्तेति**। नलोपशास्त्रस्य नलोपः सुबित्यतः प्राक्सपादसप्ताध्याय्यां पाठे तु आगत्य आहत्ये-त्यादौ 'अनुदात्तोपदेशे'ति नलोपासिद्ध्या तुकोऽप्रवृत्त्यापत्तिः।

२. अन्योन्याश्रयादित्यर्थः। एवञ्च घित्वाप्रवृत्तौ 'दत्त सु-दण्डिन्-सु' इतिविग्रहे 'दत्तदण्डिना'वि-त्यस्य, 'दण्डिन्—सु—दत्त—सु' इति विग्रहे'दण्डिदत्ता'विति सिद्ध्यत्येवाऽनियम इति शङ्काशयः।

३. अत्रार्थे सञ्ज्ञाग्रहणमेव मानं, नच 'पञ्चे'त्यत्र सञ्ज्ञाविधौ नलोपाऽसिद्ध्या षट्त्वा'न्न ष'ड्भिति टाम्निषेधेन तच्चरितार्थमिति वाच्यं,सञ्ज्ञापदेनाऽत्र घिसञ्ज्ञाया एव ग्रहणस्य भाष्यारूढत्वात्। 'पञ्चे'त्यत्र तु स्त्रियां यत्प्राप्नोतीत्येवंरीत्या न टाबिति स्पष्टमन्यत्र।

न च घित्वे बहिरङ्गतया नलोपोऽसिद्ध इति वाच्यं, सञ्ज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् ।

कृति तुग्विधौ—'वृत्रहभिः' । कृतीति किं ? 'वृत्रहच्छत्रम्' । अस्मादेव सञ्ज्ञाकृतं, बहिर्भूतनिमित्तकसञ्ज्ञाकृतञ्च—बहिरङ्गत्वं परिभाषायां नाश्रीयते, अन्यथा 'वृत्रहभि'-रित्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तो नलोपोऽसिद्धः स्यादिति तद्वैयर्थ्यं स्यात् ।

भाष्ये तु—सन्निपातपरिभाषया 'वृत्रहभि'रित्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातं, पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात् । सन्निपाताऽनिमित्तकनलोपविषयाणां-'वृत्रहधन'मि-त्यादीनामनभिधानमिति तदाशयः ।

---

❀ अभिनव-चन्द्रिका ❀

घुशब्दस्य पूर्वनिपातः सिद्धः। ननु सूत्रे सञ्ज्ञाग्रहणं न कर्तव्यं, 'द्वन्द्वे घी'त्यस्य द्वन्द्वकालिकघित्ववत एव पूर्वं प्रयोग इत्यर्थादनियमो 'दत्तदण्डिना'वित्यादौ सिद्ध एवेति चेन्मैवं, 'ग्रामणिवृषा'वित्यादावपि

❀ चिदस्थिमाला ❀

अन्यत्रैव भाविसञ्ज्ञाविज्ञानेन परिहरति—**यस्येति** । 'यत' इत्यादिः । 'घित्वं भावि तत्पूर्वं-मेवे'ति पाठः । अस्मादेव=कृति—तुग्ग्रहणादेव । तत्त्वमुपपादयति—**अन्यथेति** । तदाश्रयणे इत्यर्थः । इदं=तुग्ग्रहणम् । ननु न लोपो भिस्सन्निपातनिमित्तकोऽत आह-**पदत्वेति** । नन्वेवमपि तदन्य-विषयार्थमावश्यकत्वमत आह—**सन्नीति** । आर्थिकमाह—**तदेति** । तुकोऽभावे इत्यर्थः । मात्रं कार्त्स्न्ये । **छत्रमिति** । तथा च नियमोऽफलः । एतेन बहिरङ्गपरिभाषाया अनित्यत्वज्ञापकं'कृति-तुग्ग्रहण'मिति सकल-

❀ ज्योत्स्ना ❀

नलोप एव न प्राप्नोतीति भावः । **घित्वे बहिरङ्गतयेति** । घित्वं प्रकृतिमात्रसम्बन्धि,नलोपस्तु प्रकृति-प्रत्ययोभयापेक्षपदसञ्ज्ञां प्रातिपदिकसञ्ज्ञाञ्चापेक्षते इति ततो बहिरङ्ग इति भावः । **तद्वैयर्थ्यं स्या-दिति** । चिन्त्यमेतत्—बहिर्भूतनिमित्तकसञ्ज्ञाकृतबहिरङ्गत्वस्य परिभाषायामनाश्रयणे वाह ऊडिति सूत्रस्थोठ्ग्रहणज्ञापकपरभाष्यविरोधः स्यादिति सञ्ज्ञामात्रकृतबहिरङ्गत्वानाश्रयणे ज्ञापकत्वं, किन्त्वेवं ति कृति तुग्ग्रहणस्य चारितार्थ्यासम्भवः । नाजानन्तर्यपरिभाषाश्रयणे तु ज्ञापकत्वमप्यसम्भवि ।

न च 'दत्तदण्डिना'विति सञ्ज्ञाविधौ भाष्योक्तनलोपासिद्धत्वोदाहरणस्य बहिरङ्गासिद्धत्वेनान्यथा-सिद्धिरिति वाच्यं,सञ्ज्ञायां कार्यकृतविरोधस्यैव वक्तव्यत्वेन कार्यकालपक्षे 'द्वन्द्वे घी'त्यनेनैकवाक्यतापन्न-घित्वस्य नलोपापेक्षया बहिरङ्गत्वादित्याहुः। **तदाशय इति** । 'नलोपः सु'बिति सूत्रस्थभाष्याशय इत्यर्थः।

❀ सदाशिवभट्टीयम् ❀

**न दोष इति**। ननु सञ्ज्ञाग्रहणं मास्तु,अयमर्थश्च न कर्तव्यो नियमश्च स्यादेवेति चेन्न, 'ग्रामणिपुत्रा'वित्यत्र द्वन्द्वे ग्रामणिशब्दस्य पूर्वनिपातोत्तरह्रस्वप्राप्त्या पूर्वं घित्वाभावात्पूर्वनिपातो न स्यात् । ब्रह्मवाचककशब्देन

❀ विषमपदविवृतिः ❀

'घुलिहा'वित्यत्र 'द्वन्द्वे घी'ति पूर्वनिपातः । **कृतीति किमिति** । कृति परतो विधौ नलोपोऽसिद्ध इत्येव सिद्धे तुग्ग्रहणं चिन्त्यप्रयोजनम् । **अस्मादेवेति** । एतत्प्रयोजनं चिन्त्यम् । 'वाह ऊठ्'-

---

१. नच तुकि किञ्चिन्निमित्तकाङ्गसञ्ज्ञावतो हनो निमित्तता, नलोपे तु 'वृत्रहे'त्यस्येति नलोप एव बहिरङ्ग इति वाच्यं, 'वृत्रे'तिसम्बुद्ध्यन्तस्य पृथक्पदतया—शब्दतः किञ्चिन्निमित्तकतुको बहिरङ्गत्वस्य सुस्थत्वात् ।

२ **परे** तु—तुग्ग्रहणं—मघवेवाचरतीत्यर्थे क्यङन्त'मघवाय'शब्दादाचारक्विपि अल्लोपयलोपयोर्मघवेत्याकारा-न्तान्नामधातोर्ण्वुलि—'मघवायक' इत्यत्र कृति परतो 'आतो युगिति युकि कर्त्तव्ये नलोपाऽसिद्धत्वाभावाय, अन्यथाऽऽदन्तत्वाभावाद्युङ् न स्यात् । अल्लोपस्य तु न स्थानिवत्त्वं, क्वौ लुप्तत्वादिति चिन्ताबीजमाहुः ।

तदभावे 'कृती'त्यपि व्यर्थमेव। न च सन्निपातपरिभाषया तुङ्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं 'कृती'ति,—'कृति तुगेव न, अन्यस्तु भवत्येवे'ति इति वाच्यं,—'वृत्रहच्छत्र'मित्यत्र नलोपस्य सन्निपातलक्षणत्वाभावादिति दिक्।

**राजनीति**। 'विभाषा ङिश्योरि'त्यल्लोपविकल्पः। **प्रतिदिव्नेति**—कनिनन्तम्।

**हलि च**। 'र्वोरुपधायाः' इति सूत्रं, 'सिपि धातो'रित्यतो 'धातो'रिति चानुवर्त्तते। 'र्वो'रिति च धातोर्विशेषणम्। 'पदस्ये'ति सम्बद्ध्यमानमपि इक एव व्यधिकरणं विशेषणं, तद्ध्वनयन्नाह—**प्रतिदीव्न इति**। अत्र वान्तस्य भत्वाभावात्—'न भकुर्छुरा'मिति निषेधो न। धातोः किम्? अग्निः करोति।

❀ अभिनव-चन्द्रिका ❀

अनियमप्रसङ्गात्। तत्र समासे पूर्वपदत्वे 'इको ह्रस्व'इति ह्रस्वत्वे पूर्वनिपातचिकीर्षायां घित्वेऽपि द्वन्द्वसञ्ज्ञाकालिकघित्ववत्त्वाभावात्—'यस्य पूर्वपदत्वे' इत्याद्यर्थस्यावश्यकतया सञ्ज्ञाग्रहणस्यावश्यकत्वात्।

❀ चिदस्थिमाला ❀

ग्रन्थकारोक्तमपास्तं, तदाह—**इति दिगिति**। **अत्रेति**। तत्र र्वोरित्यनुवृत्त्या तदन्तस्यैव भस्य ग्रहणात्। नेन=उपधात्वापेक्षनियमेन। अपिना—उक्तमेव। नन्वनन्तरविषयक एव नियमः कुतो न? सर्वनामेत्यनुवृत्तेरत आह—

❀ ज्योत्स्ना ❀

अत एव 'कृन्मेजन्त' इति सूत्रे 'नलोपो वृत्रहभि'रिति वार्त्तिकेन—सन्निपातपरिभाषायास्तुगभावः प्रयोजनमुदाहृत्य—'एतदपि नास्ति प्रयोजनम्, असिद्धो नलोपस्तस्याऽसिद्धत्वान्न भविष्यति'—इति भाष्यस्य 'बहिरङ्गत्वा'दिति शेषपूरणेन प्रदीपकृता व्याख्यानं कृतमित्याहुः। अपरे तु प्रदीपकृदुक्तव्याख्यानान्तरमनुरुन्धाना'असिद्धो नलोपः' इति 'कृन्मेजन्त' सूत्रभाष्ये-'असिद्ध' इत्यस्य 'कृतितुग्ग्रहणा'दिति वाक्यशेषमभ्युपगम्य वृत्रहधन'मित्यादेरभिधाने प्रमाणाभावमपश्यन्तः कृति—तुग्ग्रहणप्रत्याख्यानपराऽऽष्टमिकभाष्यस्यैकदेश्युक्तित्वमिच्छन्ति। युक्तञ्चैतत्,—नाजानन्तर्यपरिभाषाविरोधाद्बहिरङ्गत्वादितिशेषपूरणेनासिद्धो नलोप इति भाष्यव्याख्याया अनुचितत्वादिति दिक्।

❀ सदाशिवभट्टीयम् ❀

दिव्शब्दस्य समासे 'द्युका'वित्यत्र पूर्व्वनिपाते सति घित्वं प्राप्नोति,—नोत्तरप्रयोगे इति तदर्थमेवैतादृशसूत्रार्थाश्रयणस्यावश्यकत्वात्। तत्रोत्तरपदे प्रत्ययलक्षणं न, 'उत्तरपदत्वे चे'तिनिषेधात्। तन्निपातोत्तरन्तु न तन्निषेधप्राप्तिः, उत्तरपदस्य कार्य्यित्वे एव तन्निषेधप्राप्तेरिति वदन्ति। नन्वेवमपि'हरिहरा'वित्यत्र पूर्व्वमेव घित्वप्रवृत्त्या दोषः, न च तदुत्तरमपि तत्प्रवृत्त्या न दोष इति वाच्यम्, 'यद्देशे एव घटो वर्त्तते तद्देशे एव 'घटो भवती'ति प्रतीत्यापत्तेरिति चेन्न, 'द्वन्द्वे घी'त्यस्यावृत्त्यार्थद्वयाङ्गीकारात्।

**हलि च**। रेफान्तधातोरुदाहरणानि—सुरधातोः क्विपि 'सूःकरोती'त्यादीनि। **धातोः किमग्निः करोतीति**। नन्विदुदुपधस्येति व्यर्थं स्यादिति तदवयवाङ्गत्वेन तत्प्रवृत्तिरिति चेन्न, 'हरिर्य्यंणती'त्यादौ

१ **अन्यथा**—रेफवान्तस्य धातोरुपधाया य इक् तदन्तस्य पदस्येति सामानाधिकरण्येनान्वये तु 'दधिरै' शब्दाद्दधिवीशब्दाचाचक्षाणण्यन्तादच्चो यदिति यति 'दधीर्यः' 'दधीव्यः' इत्यत्रैव दीर्घः स्यान्नतु 'प्रतिदीव्नो' 'गीर्यती'त्यादौ। रेफवान्तस्य पदस्यावयवो यो धात्ववयव इगित्यर्थे तु सुन्दरं ग्रामणि यन्त्रेति समासे 'सुन्दरग्रामणि'रित्यत्र विसर्गस्य त्रैपादिकत्वेनासिद्धत्वेन रेफान्ततया—[ स्वतश्च पदत्वात्—] दीर्घापत्तिः। अतो 'रेफवान्तस्य धातो'रित्येवार्थो युक्त इति **श्रीगुरुचरणाः**।

. **न संयोगा** । अन्तग्रहणं स्पष्टार्थं, संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् । 'सर्वनामस्थाने चासम्बुद्धा'वित्येव सिद्धे नियमोऽयमित्याह—**शावेवेति** । **उपधाया इति** । तेन 'अनुनासिकस्ये'त्यस्यापि नियम इति भावः ।

अत्र सर्वनामस्थानग्रहणं न सम्बद्ध्यते, तेन 'वृत्रहणी' 'वृत्रघ्नः' 'वृत्रघ्नी'इत्यादौ न 'अनुनासिकस्ये'ति दीर्घः ।

**इति निषेधे इति** । एतत्फलभूते निषेधे इत्यर्थः । 'शिस्वो'रिति वक्तव्ये-

ॐ **अभिनव-चन्द्रिका** ॐ

**तेन वृत्रहणी इति** । सर्वनामस्थानपदासम्बन्धेनेत्यर्थः । यद्यत्र सर्वनामस्थानपदसम्बन्धः स्यात्तदा 'सर्वनामस्थाने यदि दीर्घस्तदा शावेवे'तिनियमसम्भवात्—'वृत्रहणी'इत्यादाव'नुनासिकस्ये'ति दीर्घः

ॐ **चिदस्थिमाला** ॐ

**अत्रेति** । सिद्धान्ते मूलासङ्गतेराह–**एतदिति** । पदलाघवादाह–**शिस्वोरिति** । दण्ड्यायुक्तेरसाङ्गत्यायाह–

ॐ **ज्योत्स्ना** ॐ

**स्पष्टार्थमिति** । प्रयोजनस्यान्यथासिद्धत्वादिति भावः । तदाह—**संयोगेत्यादि** ।

**चिन्त्यमेतदिति** । अन्तग्रहणाभावे हि 'वम' इति षष्ठ्यपि सम्भाव्येतेति—वकारमकारसम्बन्धी यः संयोग इत्यर्थः स्यात्तश्च—'जम्भासुहरिततृणसोमेभ्यः' इति कृतसमासान्तस्य जम्भादेः शसादौ निषेधापत्तिरिति । मौनिश्रीकृष्णभट्टास्तु—'येन विधिस्तदन्तस्ये'त्यस्यानित्यत्वज्ञापकमन्तग्रहणमिदमिति 'समासप्रत्ययविधौ प्रतिषेध' इत्यादेः क्रोडीकारमाहुः । नियमशास्त्राणां विधिमुखेन प्रवृत्तिसिद्धान्तादाह—**एतत्फलभूत इति** । ननु वृत्रहणमाचष्टे वृत्रहयतीत्यादौ—अव्यवधाने चारितार्थ्य-

ॐ **सदाशिवभट्टीयम्** ॐ

'हलि चे'ति दीर्घापत्तेः । **न संयोगात्** । अत्र–'न हलो वमा'दित्येव सूत्रयितुमुचितं, हलः परौ यौ वमौ ततः परस्याऽनोऽकारस्येत्यादिसूत्रार्थः । नन्वेवं 'पण्मन' इत्यत्र पद्धशब्दाण्णिचि ततो मनिन्प्रत्यये णिचि टिलोपे तस्य पञ्चमीसमासेन स्थानिवत्त्वेन हल्परत्वाभावाल्लोपः स्यात्, संयोगग्रहणेन संयोगसञ्ज्ञाया द्विष्ठत्वात्परस्यैव न स विधिरिति–न स्थानिवद्भाव इति चेन्न, तस्याऽनित्यत्वात् ।

**इन्हन्** । **अनुनासिकस्येति दीर्घे इति** । एतेन 'नोपधाया' इति सूत्रस्योपधाग्रहणस्येदमेव

ॐ **विषमपदविवृतिः** ॐ

सूत्रस्थोद्ग्रहणस्य बहिरङ्गपरिभाषायां ज्ञापकत्वस्य भाष्योक्तस्यासङ्गतिश्च, अकृति तुगेव नेति,—अयं सूत्रतात्पर्यविषयो नियमो न तु शब्दमर्यादया लभ्य इति बोध्यम् । **स्पष्टार्थमिति** । अन्तग्रहणाभावे 'वम' इत्यस्य षष्ठीत्वसम्भावनायां वकारमकारसम्बन्धी यः संयोग इत्यर्थः स्यात्तश्च 'जम्भासुहरिततृणसोमेभ्य' इति कृतसमासान्तस्य सुजम्भादेः शसादौ निषेधापत्तिरिति केचित् । 'वमा'दिति न्यासे तु दोषश्चिन्त्यः । **श्रीकृष्णभट्टास्तु**—'येनविधिस्तदन्तस्ये'त्यस्यानित्यत्वज्ञापकमन्तग्रहणमिति 'समासप्रत्ययविधौ प्रतिषेध' इति सिद्धमित्याहुः । 'वृत्रहणी' इत्याद्यनेकोदाहरणोपन्यसनं वैचित्र्यार्थम् । नियमशास्त्राणां विधिमुखेन प्रवृत्तेरित्याशङ्क्याह—**एतत्फलभूते इति** । ननु 'वृत्रहयती'त्यत्रा-

१—'न हलो वमा'दिति तु न सूत्रितं, राजीयतेः क्वनिपि अल्लोपे यलोपे शसि'राजीवनः' इत्यादौ 'नलोपः सु'बिति नियमेन नलोपस्याऽसिद्धत्वाभावेन निषेधानापत्त्याऽल्लोपापत्तेः । यथाश्रुतन्यासे तु संयोगसञ्ज्ञायाः सञ्ज्ञाविधित्वेन तत्र च नलोपस्यासिद्धत्वेन एतन्निषेधप्रवृत्त्या न दोष इत्याहुः । घिसञ्ज्ञाया एव तत्र ग्रहणाच्चिन्त्यमिदमिति तु परे ।

'सो चे'ति योगविभाग उत्तरार्थः ।

**हो हन्तेः** । ञ्णिन्नकारा हस्यैव विशेषणम् । तत्र ञ्णिद्भिर्यद् येननाव्यवधान-न्यायेन द्वाभ्यां व्यवाये—'घातक' इत्यादावेव, न तु हननीयतेर्ण्वुल्यनेकव्यधाने ।

'धातोः कार्यमुच्यमान'मिति परिभाषया धातुसंशब्दनेन विहितप्रत्यय एव, तेन वृत्रहण-माचष्टे 'वृत्रहयती'त्यादौ न । ने तु परे—'वृत्रघ्न' इत्यादावेव, स्थानिवत्त्वकृतव्यवधानेऽपि श्रौताऽव्यवधानसत्त्वात्, न तु 'हनन'मित्यादौ श्रौतव्यवधाने—इति स्पष्टं भाष्ये ।

'वृत्रघ्न' इत्यादौ णत्ववारणाय—'हन्तेरत्पूर्वस्ये'ति विभज्य व्याचष्ट—**हन्तेरिति** । 'उपसर्गादसमासेऽपी'त्यत 'उपसर्गा'दिति वर्त्तते,'रषाभ्या'मिति च ।

तात्स्थ्यात्ताच्छब्द्यमित्याह—**उपसर्गस्थादिति** । प्रकृतोपयुक्तमाह—**अत्पूर्वस्येति** । 'अत' इति सिद्धे 'पूर्व'ग्रहणं स्पष्टार्थम् । अत्रोपसर्गादित्यस्य निवृत्त्यां णत्वमात्रस्यायं नियम इत्याह—**एकाजुत्तरेति** । **णत्वमपीति** । अपिना 'प्रातिपदिकान्ते'त्यस्य, 'कुमतिचे'

ॐ अभिनव-चन्द्रिका ॐ

स्यादेवेति भावः । **उत्तरार्थ इति** । 'अत्वसन्तस्ये'त्येतदर्थ इत्यर्थः । **हकारस्यैवेति** । अङ्गस्य तु न, नकारपरकाङ्गासम्भवात् । ननु ञ्णितोरेवाङ्गेऽन्वयोऽस्तु, किमव्यवहितपदार्थे सङ्कोचेनेति चेन्न,

ॐ चिदस्थिमाला ॐ

**ञ्णिन्नेति** । तत्र=तेषां मध्ये । ननु वक्ष्यमाणाऽव्यवधाने साफल्येन घातक इत्यादावपि न स्यादत आह—**इदमिति** । ने तु=नकारे तु । उक्तं प्रासङ्गिकमिति सूचयन्नाह—**प्रकृतोपेति** । 'अत' इति पञ्चमी

ॐ सदाशिवभट्टीयम् ॐ

फलमिति सूचितं, यदि त्वनन्तरस्येति न्यायो, बाध्यसामान्यचिन्तेति चाश्रीयते—तदाऽत्वसन्तस्येति सूत्रे उपधाग्रहणानुवृत्तये तत् । गोमा'नित्यत्र नुम्दीर्घयोः प्राप्तावुभयोरेकविषयत्वेन दीर्घस्य नुमपवादत्वं स्यादिति 'गोमा'नित्यत्र नुम्नैव स्यात् । उपधाग्रहणे तु उपधाया दीर्घो, नुम् तूगित इतिभिन्नोद्देश्यत्वान्नबाध इति ।

**वृत्रहयतीति** । नन्वत्राकारस्यात उपधाया इति वृद्धिः स्यादिति चेन्न; अत्र 'उपधाया' इत्यत्रोपधाशब्देन पूर्वपदाघटकस्यैव ग्रहणात् । अत एव वृक्षवयतीत्यत्र वृक्षोत्तराकारस्य वृद्धिर्न, स्थानिवत्त्वन्तु न, 'नपदान्ते'ति निषेधात् । अत एव जगच्छब्दाण्णिचि जागयतीत्यत्र वृद्धिः, अन्यथा तुल्यत्वाद्वृद्धिर्न स्यात् ।

**स्यायं नियम इतीति** । ननु हल्ङ्यादिसूत्रे णत्वसिद्धिरेव तत्फलमिति विधित्वसम्भव इति कथं नियमत्व-मिति चेन्न; 'रषाभ्या'मित्यनुवृत्त्या रेफषकाराभ्यां परस्येति सूत्रार्थाश्रयणेन नियमस्य साधयितुमुचितत्वात् । वस्तुतोऽत्पूर्वस्येति परिभाषा, हन्तेर्णत्वमात्रमस्या लिङ्गम् । एवञ्च येन वाक्येन हन्तेर्णत्वन्तत्र पूर्वस्येत्युप-

१ मुख्यत्वाद्धस्येत्यर्थः । हन्तेस्तु विशेषणतया 'न ह्युपाधेरुपाधि'रित्युक्तेर्न तत्रान्वयः । किञ्च नकारे परे 'वृत्रघ्न' इत्यादौ हन्तेरसम्भव इति तत्त्वम् ।

२ उपसर्गादित्येव केवलं नानुवर्त्तते, किन्तु 'प्रातिपदिकान्ते'ति 'एकाजुत्तरपदे' इति 'कुमतिचे'ति चानुवर्त्तते इत्याशयः । 'उपसर्गा' दित्याद्यनुवर्त्तते' इति लेखस्तूचितः । उपसर्गादित्यस्य निवृत्तौ तु—'अरिहनन' मित्यत्र नाप्राप्तणत्वविधानार्थतयाऽस्य नियमत्वं न स्यात् । मम तु 'अरिहनन'मित्यत्र 'वृत्रहनन'मित्यत्रच न दोषः,'उपसर्गा'दित्यादीनामनुवृत्त्या उपसर्गस्थनिमित्तात्परस्य प्रातिपदिकान्तनुम्वि-भक्तिस्थस्यैकाजुत्तरपदस्थस्य कवर्गवत्युत्तरपदे विद्यमानस्य हन्तेरत्पूर्वस्य नस्य णत्वमित्यर्थादिति तत्तत्सूत्रैः सिद्धस्यैवानेन विधानान्नियमार्थता सुस्थेति गौडाः ।

त्यस्य च सङ्ग्रहः । बाढ्यसामान्यचिन्ताश्रयणात्सर्वबाधः ।

इदमत्पूर्वग्रहणं 'हस्थानिककवर्गाभाववद्धन्ते'रुपलक्षणम् , अतो 'बहुवृत्रहाणी'त्यत्र,

❀ अभिनव-चन्द्रिका ❀

तथा सत्येकधर्मावच्छिन्नेऽनन्वयाद्धन्द्वानापत्तेः । इदमिति । नच ञ्णित्वस्य धातावपि सत्त्वेनास्य प्रत्यय-निमित्तकत्वाभावेन नात्र प्राप्तिरिति वाच्यम्, अस्याऽङ्गाधिकारीयतयाऽङ्गस्य च प्रत्ययांशे उत्थिता-काङ्क्षतया प्रत्ययनिमित्तकत्वात् । औताव्यवधानसत्त्वादिति । नकारे परे कुत्वविधिसामर्थ्यात् औताव्यवधानस्य निमित्तत्वमाश्रीयत इति भावः । औतव्यवधाने तदप्रवृत्तिस्वीकारादेव सूत्रे ञ्णिदित्यस्य चारितार्थ्यम्, अन्यथा तत्राप्यनेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

अत्रोपसर्गादित्यस्य निवृत्त्येति । ननूपसर्गादित्यस्य निवृत्तौ अनुपसर्गात्परस्य णत्वविधानेन

❀ चिदस्थिमाला ❀

मात्रं—कात्स्न्र्ये, तत्र बीजमाह—बाध्येति । दीक्षितादिमतेन 'कुव्यवाये' इति वार्तिकप्रत्याख्यानप्रकारमाह—इदमिति । अन्यथा वार्तिकमते 'बहुवृत्रहाणी'त्यत्र णत्वं, सूत्रमते तु न तत्र । बहिरङ्गत्वेन दीर्घस्यासिद्धत्वे तु 'प्राघानी'त्यत्र दोषः । तथा सूत्रमते 'प्रघनाघनः'इत्यत्र णत्वं, वार्तिकमते तु नेति फलभेदः स्पष्ट एवेति भावः ।

❀ ज्योत्स्ना ❀

सम्भवाद्वाभ्यां व्यधाने 'घातक' इत्यादावपि न स्यादत आह—इदमिति । कुमति चेत्यस्य सङ्ग्रह इति । 'सन्निपातलक्षणस्य घत्वविधेस्तद्विघातकत्वायोगाच्चिन्त्यमेत'दिति—जगन्नाथपण्डितराजः ।

शब्दरत्नकारस्तु—'नियमव्यावर्त्यणत्वमात्रे कवर्गव्यवायाश्रयणेन तत्र सन्निपातपरिभाषाप्रवृत्तौ नियमवैयर्थ्यादनित्यत्वमावश्यक'मिति चिन्ताबीजमाह । अत्र वदन्ति—उक्तरीत्या सन्निपात-परिभाषयैव णत्वमात्रव्यावृत्ताविष्टापत्त्याऽत्पूर्वस्येति योगविभागस्य, तत्रोपसर्गादित्येतदसम्बन्ध-कल्पनेन णत्वमात्रव्यावृत्तिरितित्वदुक्तकल्पे संनिपातपरिभाषाया अप्रवृत्तिश्चिन्त्यैव । अत एव'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः'-किंप्रयोजनं ? वृत्रघ्नः, 'स्रुघ्नः' 'प्राघानि'—हन्तेरत्पूर्वस्येत्यत्रात्पूर्वग्रहणं न कर्तव्य'मित्युक्तम् । तत्र 'वक्तव्य'इत्यस्य—सन्निपातपरिभाषया व्याख्येय इत्यर्थः । 'अत्पूर्वग्रहणं न कर्तव्यं भवती'त्यस्य—चोपसर्गादित्येतदसम्बन्धपूर्वकमत्पूर्वस्येति योगविभागो न कर्तव्यः, 'प्राघानी'त्यत्र णत्ववारणार्थं 'हन्तेरत्पूर्वस्ये'त्येको योगस्तु कर्तव्य एवेति तदर्थ इति ।

वस्तुतस्तु 'कुमति चे'त्यस्यैव सन्निपातपरिभाषया व्यावृत्तिः कर्तुमुचिता, नत्वेकाजुत्तरपदे णः' 'प्रातिपदिकान्तनुम्विभक्तिषु चे'त्यनयोरपि । तयोर्हि नकारान्तर्यसम्पादकाऽल्लोपात्प्रागेव प्राप्तिस्ततो लोपे कृते कुत्वस्येति—सन्निपातपरिभाषाया निमित्ताभावादप्रवृत्तेः । नचाल्लोपात्प्राग्णत्वप्रवृत्तिः, अत्पूर्व-स्येतिनियमेनाभ्यनुज्ञायमानाऽकृतव्यूहपरिभाषयाऽत्पूर्वत्वस्य विनाशोन्मुखत्वेन तदसम्भवात् । नच पूर्वस्मादपि विधौ स्थानिवद्भावादत्पूर्वत्वम् , अनिष्टस्थले प्रवृत्त्यभावार्थं तस्य क्वाचित्कत्वव्यवस्थापनात्, नचात्र णत्वमिष्टम् । 'अत' इति पञ्चमीनिर्देशेनैव सिद्धावत्पूर्वस्येति पूर्वग्रहणाच्छिष्यमाणाऽत्पूर्वत्वे णत्वस्याभ्यनुज्ञानाच्च । एतेन लोपस्य बहिरङ्गासिद्धत्वादत्पूर्वत्वमित्यपास्तम् । नचैवं 'बहुवृत्रहाणी'-त्यत्रापि नियमेन णत्वं न प्राप्नोति, अतिरिक्तवार्तिकारम्भेणाऽत्पूर्वस्येत्यंशस्य सर्वथा प्रत्याख्याने तु

❀ सदाशिवभट्टीयम् ❀

तिष्ठते—इत्यनियमे नियमकारिणीत्वाभिप्रायेण 'नियम' इत्युक्तम् । हस्थानिकेति । 'अत्पूर्वस्ये'त्यस्य भाष्ये

❀ विषमपदविवृतिः ❀

ऽव्यवधान एव स्यान्न द्वाभ्यां व्यवधाने 'घातक' इत्यादावित्याशङ्क्याह—इदमिति । प्रघनाघन इत्यत्रेति । केचित्त्वभ्यासस्य निरर्थकत्वान्नात्र णत्वम् । 'मूर्तौ घन' इति निपातनात् उपसर्गयोगे प्रघन

'प्राघानि' 'प्रघनाघन' इत्यत्र च न दोष इत्यन्यत्र विस्तरः ।

यत्तु—कार्यकालपक्षे वहिरङ्गदीर्घासिद्धत्वात् 'वहुवृत्रहाणी'त्यादौ न दोषः, 'प्राघानी'त्यादौ यथोद्देश एव लक्ष्यानुरोधादिति, तन्न; तत्पक्षेऽपि त्रिपाद्यां तत्परिभाषाया अप्रवृत्तेरुक्तत्वात् । 'प्रघनाघन' इत्यत्र दोषाच्च ।

ॐ अभिनव-चन्द्रिका ॐ

चारितार्थ्यं, न चास्य परिभाषालक्षीकारेण 'हनवयवनकारस्थानिकमूर्धन्यविधायकशास्त्रेऽपूर्वस्येत्युपतिष्ठते'इत्यर्थान्न दोष इति वाच्यं, 'कुमतिचे'त्यत्रापि तदुपस्थित्या'हरिकामिणा'विन्यादौ णत्वानापत्तेरिति चेन्न, 'हनवयवनकारस्य णत्वं भवति चेदत्पूर्वस्यैवे'ति नियमोऽत्राश्रीयते न तूपसर्गात्परस्य हनोऽवयवस्य नस्य चेदत्पूर्वस्यैवे'ति नियम इति'नियमवाक्ये उपसर्गादित्यस्य निवृत्त्ये'त्यर्थविवक्षणेनादोषात् ।

ॐ चिदस्थिमाला ॐ

वस्तुतस्तु-यथोत्तरं मुनीनां प्रामाण्यादुपलक्षणत्वे मानाभावादुक्तदोषत्रयापत्तेश्च तत्करणयोगविभागोपलक्षणत्वज्ञापकत्वनियामकत्वापेक्षया वार्तिकमेव ज्यायः, अत एव तदाश्रित्य तत्खण्डकभाष्यसङ्गतिरिति बोध्यं, तदाह-इत्यन्यत्रेति । उद्योतादावित्यर्थः ।

खण्डनकृदाद्युक्तिं खण्डयति—यत्त्विति । तत्पक्षेऽपि—कार्यकालपक्षेऽपि । विस्तरस्तु भावप्रकाशे

ॐ ज्योत्स्ना ॐ

गौरवमिति वाच्यं, योगविभागवादिमते—'एकाजुत्तरे'ति सूत्रे आरम्भसामर्थ्यान्नित्यं णत्वे सिद्धे पुनर्णग्रहणान्नियमबाधनाद्वार्तिकारम्भेऽपि अत्पूर्वग्रहणमिव पुनर्णग्रहणमपि न कर्तव्यं भवतीति गौरवाभाव इति—वक्तुं शक्यत्वात् । तर्हि 'वृत्रघ्न' इत्यत्र पुनर्णग्रहणात्—'एकाजुत्तरपदे' इति णत्वं कस्मान्न स्यादिति चेच्छ्रूयमाणैकाजुत्तरपदे 'वहुवृत्रहणी' इत्यादौ चारितार्थ्यात्—प्रागुक्तरीत्या नियमेनैव तस्य बाधनादित्याहुः । वयन्तु तर्कयामः—पुनर्णग्रहणात्—'एकाजुत्तरे'त्यस्य नियमेन न बाधः, 'वृत्रघ्न' इत्यत्र तु न तत्प्रवृत्तिः,-एकाजुत्तरपदस्य विनाशोन्मुखत्वेन लोपात्प्राक् तदप्रवृत्तेः, कृते त्वल्लोपेऽपूर्वस्येति पूर्वग्रहणात्, सन्निपातपरिभाषया वा तदभाव इति 'प्रातिपदिकान्ते'ति वैकल्पिकणत्वस्यैव नियमेन व्यावृत्तिः । 'कुव्यवाये हादेशेषु' इतिवार्तिके 'वृत्रघ्न'इति भाष्योक्ततदुदाहरणस्य प्रदीपकृतोक्तरीत्यैव व्याख्यातत्वादित्यलम् । यथाश्रुतयोगविभागे वा दूषणाभिधानाग्रहः । इदमिति । हस्थानिकेति तेन 'करणेयोऽविद्धु'ष्वित्यनेन हन्तेरप्प्रत्यये घनादेशे वहःस्थाने कुत्वविधानाभावात् द्रुघण इत्यत्र पूर्वपदात्सञ्ज्ञायामिति णत्वं भवत्येव। कुठारस्य द्रुघणसञ्ज्ञा। कुव्यवायेहादेशे ष्विति वार्तिके हादेशेष्वित्यंशस्यैतदेव फलमिति शब्दरत्नः । तदाह—अन्यत्र विस्तर इति। प्रघनाघन इत्यत्र दोषाच्चेति। अत्र हि'हन्तेर्घत्वञ्चे'ति वार्तिकेन हन्तेः पचाद्यचि द्विर्वचनागागमयोरिव हस्य घत्वस्याऽविधीयमानत्वाद्धस्थानिककवर्गव्यवायस्यासत्त्वाण्णत्वाप्रवृत्तेरिष्टत्वादित्याशयः। 'षाष्ठद्विर्वचनस्य द्विःप्रयोगनियमः, तत्रोत्तरभागएवार्थवान्, अभ्यासखण्डस्त्वनर्थक' इति स्वयं व्यवस्थापनीयत्वात्—अर्थवद्ग्रहणपरिभाषयोपसर्गात्परहन्तेर्णत्वप्राप्तेरभावाच्चिन्त्यमेतत् । हरिदीक्षितास्तु—'प्रघनाघन'इत्यत्र णत्वप्राप्तेरिष्टापत्तिं कृत्वा वार्तिकस्य कुव्यवाये न सर्वत्र णत्वाभाव इत्यत्र तात्पर्य-

ॐ सदाशिवभट्टीयम् ॐ

प्रत्याख्याने तु हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणत्वाद्धादेशेषु प्रतिषेधो वक्तव्य इत्यस्याप्यत्रैव तात्पर्य्यम् ।

प्रघनाघन इति । नन्वभ्यासस्य नैरर्थक्यादर्थवद्धन्तित्वाभावान्न णत्वं, परस्य त्वभ्यासव्यवायान्नेति चेन्न,

ॐ विषमपदविवृतिः ॐ

इत्यत्र वार्त्तिकमतेपि प्राप्तणत्ववारणाय 'अगारैकदेशे प्रघण'इति कृतणत्वनिर्देशस्योपसर्गात्परस्य घनो

**माधवेनोक्तमिति** । 'वृत्रघ्नो' 'वृत्रघ्ण' इति रूपद्वयं तेनोक्तम् । **तद्भाष्येति** । "–'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः', वृत्रघ्नः, सुघ्नः, प्राघानि, हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवति–"इति भाष्येत्यर्थः । अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः ।

**अनिनिति** । एतच्च 'येन विधि'रिति सूत्रे भाष्ये स्पष्टम् । अन्यत्र तु अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेनेति हन्ग्रहणे प्लीहन्ग्रहणं न ।

---

❀ **चिदस्थिमाला** ❀

द्रष्टव्यः । **वृत्रघ्न इति** । भसञ्ज्ञायामल्लोपे उत्तरपदमनच्कम्, अल्विधित्वान्न स्थानिवत्त्वमिति,–एकाजुत्तरत्तरपदत्वाभावात्प्रातिपदिकान्तेति विकल्पो भवतीत्यादिः । **कुव्यवेति** । कुव्यवायनिमित्तके णत्वविधिमात्रे हस्थाने आदेशेषु प्रत्यासत्त्या कवर्गरूपेषु सत्सु प्रतिषेधो वक्तव्य इत्यर्थः । अधिकमन्यतोबोध्यम् । अन्य-

❀ **ज्योत्स्ना** ❀

मपि तु–योगविभागेन णत्वमात्रस्य निवृत्तिर्घटेत तस्मिन्नर्थे इति कल्पयन्ति । **मौनिश्रीकृष्णभट्टास्तु**–'मूर्तौ घनः' इत्यनेन निपातितस्योपसर्गयोगे 'प्रघन'इत्यत्र सूत्रमते अत्पूर्वत्वात्, वार्तिकमते हस्थानिककवर्गव्यवायाभावाच्च णत्वं प्राप्नोति, नचेष्टापत्तिः–'आगारैकदेशे प्रघणःप्रघाणश्चे'ति कृतणत्वनिर्देशस्य वैयर्थ्यप्रसङ्गादित्याशङ्क्य–प्रकृतिप्रत्ययोभयस्थानेऽखण्डादेशनिपातनमिति भाष्योक्तपक्षे प्रकृतिप्रत्ययसम्मोहात्प्रकृतिनकाराभावाण्णत्वप्राप्तेरभावात्तदेकवाक्यतया 'हन्तेरप्रत्ययो घनादेशश्चे'तिभाष्योक्तयत्नान्तरेऽप्य'गारैकदेशे प्रघण' इति कृतणत्वनिर्देशेनोपसर्गात्परस्य घनस्य णत्वाभावज्ञापनाद्दोषपरिहारसङ्गतिरिति । वयन्तु कल्पयामः—हन्तेरत्पूर्वस्येति वक्तव्यं, 'हन्तेरत्पूर्वस्ये'ति धातुनिर्देशबोधकतिप उपादानाद्धन्तेः स्वरूपेणोपादान एव णत्वप्रवृत्तेर्ज्ञापनात् 'प्रघन'इत्यादौ सर्वविकारे न तत्प्रवृत्तिः । एवं 'प्राघानी'त्येकदेशविकारेऽपि–इति सामर्थ्यादत्पूर्वस्येतियोगविभागेनोपसर्गादित्तदसम्बन्धपूर्वकयोगान्तरप्राप्तणत्वस्य निवृत्तेः सुशकत्वान्न कश्चित्क्षुद्रोपद्रव इति दिक् ।

**कुव्यवायहादेशेष्विति** । हादेशेषु सत्सु यः कुव्यवायो–हादेशरूपकुव्यवायस्तत्र प्रतिषेधो वक्तव्य इत्यर्थः । **अत्पूर्वग्रहणस्येति** । 'अत्पूर्वस्ये'ति योगविभागस्येत्यर्थः । **तदाशय इति** । भाष्याशय

❀ **सदाशिवभट्टीयम्** ❀

हन्तेरित्यस्यार्थवद्धन्तिसम्बन्ध इत्यर्थेन णत्वापत्तेरित्याशयात् । अत एव प्रणिहन्यादित्यादौ न णत्वम्, 'उभौ साभ्यासस्ये'ति चात्र लिङ्गम् । **न कर्तव्यमिति** । तत्तु प्रत्याख्यानपक्षे प्राचान्तु न दोषः, तत्पक्षे तन्मते वचनेनैव निर्वाहात् । 'हादेश' इति चेदं वार्तिककृता सूत्रस्य प्रतीकं गृहीतम् । 'कुव्यवाये' इत्यादिणत्वविधायकशास्त्रेषु णत्वस्य प्रतिषेध इत्यर्थः । तेन टीकोक्ता द्विरुक्तिशङ्का प्रत्युक्ता ।

❀ **विषमपदविवृतिः** ❀

नस्य णत्वं नेत्यर्थज्ञापकत्वाश्रयणाच्चेत्याहुः । **हादेशेष्विति**—अर्थतः कवर्गविशेषणं, तत्फलं तु 'करणेयोविद्रु'ष्वित्यनेन हन्तेरप्रत्यये घनादेशे च 'द्रुघण' इत्यत्र 'पूर्वपदात्सञ्ज्ञे'ति णत्वसिद्धिः । हस्थानिककवर्गाभावात् । ननु 'वृत्रघ्न'इत्यादौ न णत्वं,नकारमुपजीव्य जातस्य तद्विघातकणत्वानिमित्तत्वादिति चेन्न,त्रैपादिके कार्ये सन्निपातपरिभाषाया अप्रवृत्तेः । अत्र चेदं वार्त्तिकं भाष्यं च मानम् ।

---

१ हादेशाभिन्नकवर्गव्यवाये न णत्वमित्यर्थः । हादेशवत्सु कुव्यवेतेषु इति यावत् ।

**मघवा बहुलम्** । षष्ठ्यर्थे प्रथमा, 'तृ' इति च वर्त्तते । **ऋ इदिति** । तेन अनेकाल्त्वाभावान्न सर्वादेशः ।

**उगिदचाम्** । 'अचा'मित्यञ्चुधातोर्ग्रहणं—व्याख्यानात् । **नलोपिन इति** । अकारलोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादिति भावः । अत्रोगित्—झलन्त एव, व्याख्यानात् । तेन 'शमी' 'शमिना'वित्यादौ नातिप्रसङ्ग इति—'युवोरनाका'वित्यत्र भाष्ये स्पष्टम् । **उपधादीर्घ इति** । 'सर्वनामस्थाने चे'त्यनेन । असिद्धत्वाभावकल्पने मानमाह—**तथा चेति** । **निपातनादिति** । 'वनो र चे'ति सूत्रे भाष्ये तु—'मघवञ्शब्दोऽव्युत्पन्नं प्रातिपदिक'मित्युक्तम् ।

**मघशब्दादिति** । धनार्थादित्यर्थः । **भाषायामपीति** । अपिना—छन्दसि । 'मघवानमीमहे' इति मध्योदात्तं वनिपि बोद्ध्यम् ।

॥ चिद्स्थिमाला ॥

त्र=अन्नादिभिन्नस्थले । षष्ठ्यन्ततया व्याख्याने बीजमाह—**षष्ठ्यर्थे इति** । अजिति न प्रत्याहारः, 'नपुंसकस्ये'ति सूत्रे पुनरज्ग्रहणात्तदाह—**व्याख्यानादिति** । **नलोपिन इतीति** । नचैवं नलोपिन एव यथा स्यान्न पूजार्थस्येत्येतदर्थमचामित्यस्य चारितार्थ्यात् कथं मूलाद्युक्तनियन इति वाच्यं, भाष्यप्रामाण्येनाऽचामित्यस्यावृत्त्या तस्यापि सुलभत्वात् । एकं तु नियमशरीरं मूलोक्तमेव, 'अञ्चतेश्चेत्तर्हि नलोपिन एवे'त्यपरं, तत्र च बीजं—सूत्रे नलोपेन निर्देश एवेति भावः । ननु क्विन्नन्तानुकरणेन स न्यायसिद्ध एवेति कथं तस्य तद्बीजत्वमत आह—**अकारेति** । 'अकारलोपस्यापि न्यायप्राप्तत्वेने'त्यादिः । एवञ्च पूजार्थस्य प्राञ्चीत्यादयोऽपशब्दा एव, अत एव प्राञ्चावित्यादौ नकारद्वयश्रवणाशङ्कापि नेत्यपरमनुकूलमिति भावः । अपकर्षणादच्साहचर्याच्चेत्याह—**व्याख्यानादिति** । **निपातनादितीति** । महेर्हस्य घः, अवुगागमः कनिप्रत्ययश्चेति त्रयस्य निपातनादित्यर्थः । अत एवेदं परमते नेति सूचयन् सिद्धान्तमाह—**वनो र चेतीति** । 'मघोनी'त्यत्र कुतो नेति शङ्कायामिति भावः । नन्वेवं कथं छन्दसि मध्योदात्तसिद्धिरत आह—**मघेति** । भाष्याभावा-

॥ ज्योत्स्ना ॥

**इत्यर्थः। भाष्ये स्पष्टमिति** । विशेषश्च परिभाषाप्रदीपार्चिषि द्रष्टव्यः। **उगिज्झलन्त एव व्याख्यानादिति** । व्याख्यानमूलन्तु—झलन्तेनाऽचां साहचर्यमिति । **इति युवयोरनाकावित्यत्र भाष्ये इति** ।

॥ विषमपदविवृतिः ॥

तेन 'जग्ध'मित्यादौ घत्वादिसिद्धिरित्यन्यत्र विस्तरः । मूले—**अनिनस्मन्निति** । 'अल्लोपोनः'—अन उदाहरणं,—राज्ञः, अस्थ्ना । इन उदाहरणम्—'इनहन्'—दण्डी, वाग्मी । अस उदाहरणम्-'अत्वसन्तस्य चाधातोः',—सुपयाः, सुस्रोताः । मन उदाहरणं—'मनः',—सुशर्मा, सुप्रथिमा । अत्र च ज्ञापकमत्वसन्तस्येति सूत्रेऽधातोरिति पर्युदासः, 'न संयोगा'दिति निषेधश्च । असतेर्विचि, यज्वनो, ब्रह्मणश्च,—णिजन्ताद्विचि,—तस्मिन्नुपपदेऽनितेर्विचि,—निषेधौ सफलाविति केचित् । **अलैवानर्थकेनेति** । अत्र च ज्ञापकं—'नेदमदसो'रिति सूत्रेऽदसो ग्रहणम् । **इति युवोरनाकावित्यत्रेति** । इतिशब्देनातिप्रसङ्गा-

१. 'नपुंसकस्य झलचः' इत्यत्राज्ग्रहणादित्यर्थः । नच 'बहूर्जि' इत्यत्र नुम्वारणाय तत्र 'अचः' इति पञ्चम्यन्तमिति वाच्यम् , एवं सति 'ज्ञानानी'त्यादावप्युगिदचामित्येव सिद्धे—'इकोऽची'त्यत्राचीति पृथक्कृत्य भाष्ये 'ज्ञानानी'त्यादौ सर्वनामस्थाने नुम्साधनस्य वैयर्थ्यापातादित्याशयात् । यद्वा 'प्रत्यय' इति निर्देशमूलकाद्व्याख्यानादित्यर्थः ।

**आकरे इति**। 'केशाद्वे'ति सूत्रे कैयटे इत्यर्थः। एवञ्च मतुपि 'अत्वसन्तस्ये'ति दीर्घसत्त्वेन, त्रादेशे तदभावे फलभेदे प्रत्याख्यानासम्भव इति भावः।

नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं, मतुपि तु--'ह्रस्वनुड्भ्या'मिति प्राप्तस्य मतुबुदात्तत्वस्य-'न गोश्व'न्निति प्रतिषेधेन पित्त्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदोऽस्त्येवेति चेन्न; त्रादेशपक्षे दीर्घवत्-बहुलग्रहणेन घकाराकारोदात्तत्वस्याप्यङ्गीकारात्; तत्रैव मानान्तरमाह-**हविरिति**। 'मघवानृजीषी' इत्यस्याप्युपलक्षणमिदम्।

'अर्वणस्तृ[१] मघोनश्च न शिष्यं-छान्दसं हि तत्।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्।

-इत्यत्रत्यवार्त्तिकरीत्या मघवञ्शब्दस्य लोकेऽसाधुत्वं लभ्यते। तथा च तृज्वत्सूत्रे

ॐ चिदस्थिमाला ॐ

तथोक्तेराह—**केशादिति**। एवञ्च=प्रत्याख्याने तथा सत्त्वे च। एवमपि=दीर्घाभावप्रयुक्तफलभेदाभावेऽपि। **अङ्गीकारादिति**। अन्यथा फलभेदे प्रत्याख्यानासम्भव एव। अत एव 'चे'ति विहाय 'बहुल'मित्युक्तम्। तत्रैव= असिद्धत्वाभावकल्पने एव। न्यूनतानिरासाय वैदिकप्रयोगमप्याह-**मघेति**। उक्तासाङ्गत्याय सिद्धान्तमाह-**अर्वेण इति**। 'तृ' इति स्वरूपपरं नपुंसकम्, अन्यथा 'ते'ति वदेत्। शब्दस्य=तस्यापि। ननु मतुबादिविधौ

ॐ ज्योत्स्ना ॐ

इतिशब्देनातिप्रसङ्गाभावरूपसाध्यांशमात्रं विवक्षितं, तेनोगिदचां सर्वनामस्थानेऽधातोरित्यस्यानन्तरं 'झल' इति योगं विभज्य—ततो 'नपुंसकस्याच' इति न्यासे 'झल इत्युभयोः शेषः'

ॐ विषमपदविवृतिः ॐ

भावरूपसाध्यांशमात्रं विवक्षितम्। भाष्ये—'नपुंसकस्य झलचः' इति सूत्रे योगविभागेनोक्तार्थज्ञापनात्। **तत्रैवेति**। असिद्धत्वाभावकल्पने एव। **असाधुत्वं लभ्यत इति**। अविशेषेण प्रवृत्त-

१. अर्वणस्तृप्रत्ययो मघोनश्च तृप्रत्ययः—इदं द्वयं-न शिष्यं=न विधेयं, हि-यतः, तत्-मघवन्नादिशब्दद्वयं, छान्दसम्। नच छान्दसप्रयोगसिद्धयेऽपि सूत्राणि क्रियन्ते एवेत्यत आह—**मतुबिति**। ऋधातोर्विजन्ताच्छन्दसीवनिपौ चेति वनिपाऽर्वन्नित्यस्य, मतुपाऽर्वच्छब्दस्य, एवं मघशब्दान्मतुपा मघवच्छब्दस्य च सिद्धिरत्र त्रादेशविधेरानर्थक्यम्। ननु त्रादेशसत्त्वे सौ नान्तस्यान्यत्र तान्तस्य रूपं भवति, त्रादेशाभावे तु सौ तान्तस्यापि रूपापत्तिरिति चेदत आह—'छन्दस्युभयदर्शना'दिति। वेदे उभयथापि रूपदर्शनात्—यथायथं रूपाणि साधनीयानीति वार्त्तिकार्थः। एवञ्च वार्त्तिकरीत्या मघवच्छब्दस्यच्छान्दसत्वमिति नागेशाशयः।

**परे** तु वार्त्तिके 'छान्दसं हि त'दित्यत्र तत्पदेन तृविधानस्य ग्रहणात्-'तृप्रत्ययान्तानां छान्दसत्वात्तृविधानं विनापि रूपसिद्धेस्तृविधानं व्यर्थ' मित्यर्थस्यैव लाभान्मघवञ्छब्दस्य लोके प्रयोगे बाधकाभावेन नागेशोक्तमयुक्तं, मघवञ्छब्दस्य लोकेऽप्रयोगे च मानाभावात्। वार्त्तिकरीत्या त्रन्तस्यैव छान्दसत्वेन लोकेऽप्रयोगात्। 'हविर्जक्षिति निश्शङ्को मखेषु मघवानसौ' इत्यत्र तु न त्रन्तस्य प्रयोगः, अपि तु तत्र 'मघवा-अनसौ' इति च्छेदः। अनसौ=गतप्राणे-गतासुकल्पे वा-मघवा हविर्भुङ्क्ते इत्यर्थः। एवम्—'अविशेषविहिता अपि शब्दा नियतविषयाः' इति भाष्यस्य-क्रोष्टुशब्दस्य जम्बुक-मुनिविशेष-वाचकत्वेऽपि 'तृज्वत्क्रोष्टु'रिति जम्बुकवाचिन्येव यथा प्रवर्त्तते, तथा छन्दःपदाभावेऽपि त्रादेशविधौ छान्दसावित्यर्थ इति न तद्विरोधः—इत्याहुरस्मद्गुरवश्विपाठिपादाः। अस्मत्पितामहश्रीचरणा अप्येवमाहुः।

भाष्यम्—'अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्ते' इति—इत्यन्यत्र विस्तरः।

**छन्दस्येवेति**। न च वनिवन्तस्य सम्प्रसारणे 'यस्येति'लोपे 'मघोन' इत्यसिद्धिः, व्याश्रयत्वान्नाभीयासिद्धत्वं लोपे सम्प्रसारणस्य; नापि बहिरङ्गासिद्धत्वं—तस्या 'वाह ऊठ-सूत्रस्थतयाऽऽभीयत्वेनाभीयान्तरङ्गस्य तदृष्ट्याऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः, अन्तरङ्ग-शास्त्राश्रय एव तदाश्रय इति—समानाश्रयत्वमव्याहतमिति वाच्यं; निपातिताऽन्तोदात्त-मघवञ्शब्दमादाय सिद्धेः। 'एकादेश उदात्तेनोदात्त'इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषा-ऽभावात्। छन्दस्यापाद्यरूपाभावान्नाऽनिष्टापादनम्। **अन्तोदात्तन्त्विति**। कन्यन्तत्वाद-व्युत्पन्नत्वाद्वा तत्त्वम्।

**अन्नन्तानामिति**। 'अल्लोपोऽनः' इत्यपकृष्यते। तत्र नकारं प्रश्लिष्य नान्ताना-

---

❀ **चिदस्थिमाला** ❀

छन्दसीत्यस्याप्रक्रान्तत्वात्कथं तत्त्वमत आह—**तथा चेति**। तथा च सामान्यतस्तेषां लोके असाधुत्वम्। प्रकारान्तरसमुच्चितछान्दसत्वं तत्त्वे हेतुर्न केवलमतो न छान्दसलक्ष्यसाधकसर्वसूत्रप्रत्याख्यानम्। एतेन मूलादि-सकलग्रन्थाः कविप्रयोगाश्च परास्तास्तदाह—**अन्यत्रेति**। शब्दरत्नादावित्यर्थः। **तदेति**। परिभाषेत्यर्थः।

ननु रूपसिद्धावपि स्वरे विशेषोऽत आह—**एकेति**। तल्लाभे बीजमाह—**अल्लोप इति**। यद्यपि 'ऋत्व्क्'

❀ **ज्योत्स्ना** ❀

इतिहेत्वन्तरेणोक्तार्थस्य भाष्ये दर्शनेऽपि दोषाभाव इति बोध्यम्। **नानिष्टापादानमिति**। यस्येतिलोपेनानिष्टापादनं नेत्यर्थः। 'अन्नन्ताना'मिति वृत्तिरयुक्ता, अनुवृत्तेरभावादत आह—**अल्लोपोऽनइत्यपेति**। 'अन' इत्यस्यापकर्षे दोषाभावोऽपकर्षविधिना तुल्ययोगक्षेम इति दर्शयितु-

❀ **सदाशिवभट्टीयम्** ❀

**मघवा बहुलम्**। **लोकेऽसाधुत्वमिति**। इदं चिन्त्यं, मघञ्शब्दस्य श्रन्तादेशस्यासाधुत्व-बोधनेनोपपत्तौ विशिष्टस्यासाधुत्वबोधने मानाभावात्, अत एवे'न्द्रो मरुत्वान्मघवा' इत्यादयो लोके प्रयोगा बहवो दृश्यन्ते। अत एव वार्तिके 'त'दित्येकवचनप्रयोगः सङ्गच्छते, अन्यथा 'एता'विति वक्तुमुचितं स्यात्। **आभीयान्तरङ्ग इति**। न चाभीयान्तरङ्गस्यासिद्धत्वेपि पररूपस्याभावेनान्तरङ्ग-परिभाषाप्रवृत्तिः स्यादिति, एवञ्च सम्प्रसारणस्यासिद्धत्वेपि पररूपस्यासिद्धत्वाभावाद्यस्येतिलोपः स्यादिति वाच्यं, सम्प्रसारणाश्रयपूर्वरूपे तन्निष्ठधर्म्मस्यातिदेशात्। अत एवान्तरङ्गपरिभाषाज्ञापनपरभाष्यं सङ्गच्छते, अन्यथा बहिरङ्गसम्प्रसारणस्यासिद्धत्वेपि पररूपस्यासिद्धत्वाभावाल्लघूपधगुणे 'विश्वौह' इति सिद्धौ चारितार्थ्या-भावेनाऽसङ्गतत्वं स्पष्टमेव। वस्तुतो'ऽसिद्धवदत्राभा'दित्यत्र जाताऽसिद्धत्वमेव, अत एव भाधिकारे परत्वा-दिना बाध्यबाधकभावो भवति, अतएव च नवीनाः (?)। अन्यथा तेनेदं बाध्यमुतानेनेति विनिगमनाविरहः

❀ **विषमपदविवृतिः** ❀

वार्तिकस्य कनिप्रत्ययान्तविषयकत्वस्यापि कल्पनात्। 'मतुब्वन्योर्विधाना'दित्युक्त्यनुरोधेन वनिबन्तविषय-कत्वे तु कन्यन्तार्थं तदावश्यकत्वेन 'मघोनश्च न शिष्य'मित्यसङ्गतं स्यादिति भावः। ननु कनिन्प्रत्य-यस्य लोकवेदसाधारण्येन विधानादुक्तवार्तिकस्य कन्यन्तविषयकत्वमसम्भवीत्याशङ्क्याह—**तथाचेति**।

ननु निपातितान्तोदात्तमादाय मघो इत्यस्य सिद्धावपि वनिबन्तमादाय 'यस्येति चे'ति लोपः

मित्यर्थः। तेन 'मघवतः' इत्यादौ नाऽल्लोपसम्प्रसारणे, 'धीवरी'त्यादौ च नाऽल्लोपः। स्पष्टञ्चेदम्—'ऋऌक्'सूत्रे भाष्ये।

परे तु—नकारप्रश्लेषाभावेऽपि न दोषः। 'अलोऽन्त्यस्ये'त्यस्य सत्त्वेनाऽनः स्थानित्वाभावेन स्थानिवत्सूत्रेणान्नन्तत्वालाभात्। 'सर्वे सर्वपदादेशाः' इत्यनेनापि मघवञ्शब्दस्यैव स्थानित्वं, नाऽनः। अर्द्धविकारे प्रत्यभिज्ञाऽभावान्नैकदेशविकृतन्यायावसरः। ध्वनितश्चेदं 'श्वयुवे'त्यत्र भाष्ये इत्याहुः। **मघवतीति**। पुंयोगेन स्त्रियां वृत्तौ 'उगितश्चे'ति ङीप। विभक्तौ लिङ्गविशिष्टाऽग्रहणान्नुम्न।

**शुन इति**! ननु सम्प्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वत्वं बाधित्वा

❀ चिद्स्थिमाला ❀

सूत्रे भाष्ये एकदेशविकृतन्यायाङ्गीकारे 'राज्ञः कचे'त्यादावदोपाय पक्षान्तरत्वेनोक्तं '—श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ'मिति, तत्प्रकृतमुत्तरत्रानुवर्तिष्यते—'अल्लोपो नः' नकारान्तस्येती'ति; तथापि तत्खण्डनप्रकारं सिद्धान्तभूतमाह—**तेनेति**। अन्नन्तत्वाभावेनेत्यर्थः। ननु स्थानिवत्त्वेनान्नन्तत्वमत आह—**अलोऽन्त्येति**। सिद्धान्तेऽपि नेत्याह—**सर्वे सर्वेति**। लौकिकन्यायेनापि नेत्याह—**अर्धेति**। उक्तभाष्यस्येदमेव तात्पर्यमित्याशयेनाह—**ध्वनितमिति**। एतेन नकारप्रश्लेषाभिप्रायं तदिलपास्तम्, योगविभागेन तत्प्रत्याख्यानपरभाष्यविरोधापत्तेः, 'ऋऌक्'सूत्रभाष्यविरोधापत्तेश्च। **ङीबिति**। 'अत' इत्यधिकारेण 'पुंयोगा'दिति ङीष्नेति। ननु लिङ्गविशिष्टेति नुम् स्यादत आह—**विभक्ताविति**। परम्परया

❀ ज्योत्स्ना ❀

माह—**धीवरीत्यादौ चेति**। मघवच्छब्दस्यैव स्थानिवत्त्वमिति धीवञ्शब्दे न स्थानिवत्त्वमिति बोध्यम्। **ध्वनितश्चेदं श्वयुवेत्यत्र भाष्ये इति**। तत्र हि 'श्वादीनां सम्प्रसारणे

❀ सदाशिवभट्टीयम् ❀

स्यादिति प्रकृते तदभावादन्तरङ्गपरिभाषाप्रवृत्तिः स्यादिति चिन्त्यमेतत्। **न दोष इति**। ननु स्थानिवद्भावेनाऽन्त्वाभावेप्यन्नन्तत्वं स्यादेव—सुबन्तत्वमिवेति चेन्न,'अल्लोपोऽन'इत्यत्रानो निर्दिश्यमानस्यैव सत्त्वेन तस्यैवात्रानुवृत्त्यात्राप्यनो निर्दिश्यमानस्यैव ग्रहणात्, अर्थाधिकारानुरोधात्। यद्वा वैयधिकरण्येन—'एषामन' इत्यर्थोऽत्र, स च निर्दिश्यमान एव, तस्याऽऽवृत्त्या तदन्तविधिरन्नन्तस्येत्यादिरिति न दोषः।

❀ विषमपदविवृतिः ❀

स्यादित्याशङ्क्याह—**छन्दसीति**। **नाल्लोपेति**। अल्लोपो दृष्टान्तार्थः। **अन्नन्तत्वाभावादिति**। ननु वन्नसादाविव स्थानिवद्भावेनान्नन्तत्वं सुलभं, स्थानिनि मघवञ्शब्देऽन्नन्तत्वसत्त्वात्। न चान्नन्तत्वविशेषणवैयर्थ्यं, 'युवतीः पश्ये'त्यादौ सप्रसारणनिवृत्त्यर्थत्वात्। न चात्र 'विभक्तौ लिङ्गविशिष्टाग्रहण'मिति निषेधः शङ्क्यः, तदननुसन्धानेनैव तत्प्रवृत्तेरिति चेन्न; 'अन इत्युभयोः शेषः' इति भाष्यस्याऽकारवकारयोरुक्तं कार्यद्वयम्—अन्सम्बन्धिनोस्तयोर्बोध्यमिति वाक्यार्थाश्रयणेनादोषात्। 'अन्नन्तत्वाभावा'दिति शेखरग्रन्थो, 'नन्वादेशेकृतेऽन्नन्तत्वमस्ती'ति कैयटग्रन्थश्चासङ्गत एव। अल्लोपदृष्टान्तोऽप्ययुक्तः, अनोऽकारस्यैव लोपविधानेनाऽन्नन्तत्वस्य श्रौतमानुमानिकञ्च स्थानिवत्त्वमाश्रित्य दुर्लभत्वेन धीवरीत्यादिवल्लोपवारणस्य सुकरत्वेप्यन्नन्तत्वमाश्रित्य प्रवर्तमानसम्प्रसारणस्य दुर्वारत्वात्। अथवा 'युवतीः पश्ये'त्यादौ 'विभक्तौ लिङ्गविशिष्टाग्रहण'मिति परिभाषया सम्प्रसारणाभावमभिप्रेत्य'अन इत्युभयोः शेषः' इति भाष्यं प्रवृत्तम्। एवञ्चानामित्यर्थमित्यर्थेपि न दोषः, विशेषणसामर्थ्येन श्रूयमाणान्नन्तत्वविवक्षणात्। **लिङ्गविशिष्टग्रहणादिति**।

'अल्लोपोऽनः' इति लोपे 'शुनः' इति सर्वोऽनुदात्तं स्यात्; उदात्तनिवृत्तिस्वरेणाऽन्तोदात्तं वा स्यात्; पूर्वरूपेणाद्युदात्तमिष्यते।—तत्र हि वकारस्थानिकोकारस्य स्वसन्धर्महल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयोऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात्।

किञ्च—लोपे स्थानिवत्त्वेन यण्प्रसङ्गः; 'अतः शुनः' इत्यादिनिर्देशैस्तद्वारणे तु—'बहुश्वा' 'बहुमघवा' 'बहुयुवे'त्यत्र 'अन उपधालोपिनः' इति ङीब्विकल्पापत्तिः, 'मघोनः' इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्चेति चेन्न; वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात्। श्वन्शब्दे आभीयतया सम्प्रसारणाऽसिद्धत्वेन 'न संयोगा'दिति निषेधाच्च।

❀ चिद्स्थिमाला ❀

निमित्तत्वमादायाह—**उदात्तेति**। ननु लोके न स्वरनैयत्यमिति न दोषः, वेदेऽपि तत्त्वादेव न दोषोऽत आह-**किञ्चेति**। **तदिति**। यणित्यर्थः। **बह्विति**। बहवः श्वानोऽस्यामित्याद्यर्थः। श्वन्शब्दस्य गौरादिषु पाठेऽप्यनुपसर्जनाधिकारात्तदप्रसङ्गः। एवं लोपे दोषध्रौव्ये फल्गुदोषमप्याह—**मघोन इति**। अनित्यत्वस्यागतिकगतित्वादाह—**श्वन्निति**।

❀ ज्योत्स्ना ❀

नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ'मिति वार्तिकप्रत्याख्यानाय 'श्वयुवे'त्यस्यानन्तरमल्लोप इति योगं विभज्य ततः-'अन' इत्युभयोः शेषः' इत्युक्तम्। समनन्तरप्रदर्शितव्याख्यानमन्तरेणानुपपन्नं तदाक्षिपतीति भावः। **वार्णपरिभाषाया अनित्यत्वेनेति**। सतुङ्निर्देशश्चात्र ज्ञापकः, 'विश्नः' 'प्रश्नः' इत्यत्र हि वार्णे तुकं बाधित्वाऽऽन्तरे शादेशे कृते तुगप्राप्तिस्तन्निवृत्तये क्रियमाणस्य सतुक्निर्देशस्य कथमन्यथोपपत्तिः। न च वार्णपरिभाषा समानाश्रये विषये, समानाश्रयत्वञ्च समाननिमित्तकत्वम्। नचैवं सति सतुक्निर्देशानुपपत्तिः, तुकः शादेशस्य च निमित्तभेदादन्तरङ्गत्वात्पूर्वं प्रवृत्तस्य तुको निवृत्तये तस्यावश्यकत्वात्। प्रकृते चाल्लोपपूर्वैकादेशयोर्निमित्तभेदात्परिभाषासञ्चारस्यासम्भवात्तदनित्यत्वपर्यन्तानुधावनं व्यर्थम्, अन्तरङ्गत्वात्पूर्वैकादेशेऽभिप्रेतसिद्धेरिति वाच्यं, तथा सति 'अभ्यासस्यासवर्णे' इति सूत्रस्य वार्णपरिभाषाज्ञापकत्वासम्भवः प्रसज्येत, इयाय इयेषेत्यादौ 'द्विर्वचनेऽची'ति रूपातिदेशाद्द्विर्वचने कृते बहिरङ्गौ वृद्धिगुणौ बाधित्वाऽन्तरङ्गे सवर्णदीर्घे व्यर्थं सूत्रं ज्ञापकं वक्तव्यं, सवर्णदीर्घस्य गुणवृद्ध्योश्च निमित्तभेदात्तदसम्भव इत्यन्यत्र विस्तरः। भाष्यकारास्त्वसवर्णे इति सवर्णपर्युदासमात्रस्य ज्ञापकत्वमाहुः। तत्रायं भावः—इयायेयेषत्यत्रान्तरङ्गोऽपि सवर्णदीर्घो—वृद्धिगुणाभ्यां निमित्तस्य

❀ विषमपदविवृतिः ❀

इदमुपलक्षणम्-झलन्तस्योगितोग्रहणादित्यपि बोध्यम्। **सर्वानुदात्तं स्यादिति**। 'न गोश्व'न्नित्युदात्तनिवृत्तिस्वरस्यापि निषेधाङ्गीकारादिति भावः। 'सावेकाच'इत्यस्यैव 'न गोश्व'न्निति निषेध इत्यभिप्रेत्याह-**उदात्तनिवृत्तिस्वरेणेति**। अत्राद्यपक्ष एव श्रेयान्-'एवन्तर्हि न वयं लक्षणस्य प्रतिषेधं शिष्मः, किं तर्हि? येन केन चित्प्राप्तस्य विभक्तिस्वरस्यायं प्रतिषेधः' इति असिद्धवत्सूत्रस्थभाष्यविरोधः। 'यदि पुनरयमुदात्तनिवृत्तिस्वरस्यापि प्रतिषेधो विज्ञायेत नैवं शक्य'मिति तदुत्तरभाष्यन्तु विभक्तिग्रहणमनुवर्त्य स्वरमात्रप्रतिषेधपक्षखण्डनपरम्। **आद्युदात्तत्वमिष्यत इति**। 'सावेकाच' इति विभक्तिस्वरस्तु 'न गोश्वन्नि'ति प्रतिषिद्ध इति भावः। **इदमयुक्तम्**—अल्लोपपक्षेऽप्युक्तरीत्योदात्तनिवृत्तिस्वराप्रवृत्तौ 'फिषः' इत्यस्य पुनः प्रवृत्त्या 'शुने'त्यस्याद्युदात्तत्वात्। नच लक्ष्ये

न[1] सम्प्रसारणे । अनुवृत्त्यैव निषेध्यसमर्पके लब्धे पुनः सम्प्रसारणग्रहण-

❀ चिदस्थिमाला ❀

'ह्वः सम्प्रसारण'मित्यत आह—अन्विति । मात्रं—कात्स्न्ये ।

❀ ज्योत्स्ना ❀

विनाशोन्मुखत्वं दृष्ट्वा न क्रियते-इत्यन्तरङ्गत्वस्य प्राबल्यप्रयोजकत्वाभावाद्विप्रतिषेधे परत्वाद्वृद्धि-गुणयोः कृतयोरचः परस्मिन्निति स्थानिवद्भावस्य दीर्घविधौ प्रतिषेधादभ्यासस्येत्यंशस्य चारितार्थ्येऽपि–ईषतुरित्यत्रेयङभावार्थं क्रियमाणोऽसवर्णस्येति पर्युदासोऽभ्यासापेक्षियङो बहिरङ्गस्य वर्णमात्रापेक्षत्वादन्तरङ्गेण सवर्णदीर्घेण बाधनादनर्थको—यथोक्तार्थज्ञापनात्फलवत्त्वं लभते । नचासावियर्तीत्यादौ चरितार्थः, तथा सत्यर्तेश्चेत्येव ब्रूयात् ; 'ष्वो'रित्यनुवृत्त्यार्त्तेरिवर्णस्येयङित्यर्थेन तत्सिद्धेरिति । एवञ्च निमित्तांशमादाय समानाश्रयत्वे निरूप्यमाणे न प्रकृते दोषो नान्यलक्ष्या-सङ्गहो,नापि ज्ञापिते सति चारितार्थ्यासम्भव इति चिन्त्यमेतत् । अतएवासिद्धवत्सूत्रप्रत्याख्यानपक्षे-ऽजादीनामटं विधायाऽटश्चेति न्यासेन विधीयमाना वृद्धिरासन्नित्यादौश्नसोरल्लोपात्प्रागेव । अन्तरङ्गत्वा-न्नानाश्रयत्वाच्च वर्णादाङ्गं बलीय इत्यस्याप्रवृत्तिस्ततस्तपरकरणाल्लोपाभाव इति प्रदीपकृत्कृतकार्यांश-मादाय समानाश्रयत्वे तु लक्ष्यासिद्धिः,तत्र पक्षे तपरकरणवैयर्थ्यं प्रसज्यते तच्च निमित्तांशमादायैव-समानाश्रयत्वे ज्ञापकं स्यात्, एवं सतुक्निर्देशोऽपीति वयं ब्रूमः । प्रायेण शास्त्रे लक्ष्यसिद्ध्युपयोगि-समानाश्रयत्वं—समाननिमित्तत्वलक्षणमेव परिभाषायां निबन्धॄणामभिमतम् । अतः क्वचित्—'सार्वधातुकमपि'दित्यादौ लक्ष्यस्य प्रकारान्तरेण सिद्धौ समानकार्यित्वे परिभाषासञ्चारस्तेषामभ्यु-पगमवादः,-तथान्यत्र 'अदस औ सु लोपश्चे'त्यादौ पूर्वपक्ष्याशयप्रदर्शनमात्रमिति निष्कर्षः ।

अतएवोखतुरित्यत्र'सवर्णदीर्घस्यान्तवत्त्वादभ्यासत्वाद्ध्रस्वः प्राप्तो न भवति,सकृत्प्रवृत्तत्वात्-आङ्गत्वा-द्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घो 'वार्णादाङ्गं बलीय' इति न्यायात्परत्वाच्चेति' प्रथमहेतु-मभ्युपगम्य द्वितीयहेतुना सिद्धान्तस्त्विष्टन्ते व्यवस्थापयिष्यते । न च प्रथमहतोनभ्युपगमे द्वितीयहेतुर-किञ्चित्करः, आङ्गत्वात्प्रत्ययापेक्षह्रस्वापेक्षदीर्घस्यान्तरङ्गत्वेन प्रबलत्वात्, कथमन्यथाऽभ्यासोत्तरा-ऽजपेक्षसवर्णदीर्घापेक्षयाऽभ्यासमात्रापेक्षह्रस्वोऽन्तरङ्गत्वान्माधवाचार्यैरभ्युपगतो मनोरमायां ह्रस्व-त्वस्याङ्गत्वेन बहिरङ्गत्वादित्यादिना दूषित इति वाच्यं, यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्याश्रयणं तत्र बहिरङ्गपरिभाषा न प्रवर्त्तते इति हरदत्तोत्प्रेक्षितार्थिकया—नाजानन्तर्यपरिभाषया दोषा-भावात् । वार्तिककारास्तु—'नाभ्यासादीनां ह्रस्वत्वे' इति ह्रस्वाभावार्थमन्तवत्त्वप्रतिषेधमारभमाणा नाजानन्तर्य इति परिभाषासञ्चारमिह नाभ्युपगच्छन्ति । बहिरङ्गशास्त्रे उपात्तस्याचोऽन्तरङ्ग-शास्त्रे पश्चादुपादाने बहिरङ्गपरिभाषा न प्रवर्तते इत्यजन्तनपुंसकशेषेऽस्मन्निष्कृष्टपरिभाषार्थ-स्तेषामभिमतः । यद्यपि यथोद्देशपक्षे 'न वा परं निमित्तमाश्रियते' इति युवोरनाकाविति सूत्रभाष्योक्तदिशाऽङ्गस्यापि ह्रस्वस्य प्रत्ययनिमित्तकत्वाभावात्—ह्रस्वस्य बहिरङ्गत्वाभावस्तथापि कार्यकालपक्षेऽङ्गसञ्ज्ञयैकवाक्यत्वाभावेन प्रत्ययनिमित्तत्वमव्याहतमिति युवोरनाकावित्यत्र भाष्य-कैयटयोः स्पष्टम् । माधवाचार्यास्तु—कार्यकालपक्षे वचनस्यावश्यकत्वेऽपि यथोद्देशपक्षेऽभ्यास-मात्रापेक्षे पूर्वं ह्रस्वे ततो दीर्घे सकृत्प्रवृत्त्या पुनर्ह्रस्वाभाव इति सूत्रकाराशयमाहुरिति दिक् ।

---

१ न सम्प्रसारणे इति । नन्विदं सूत्रं न कार्यं, किन्तु 'सम्प्रसारणाच्चे'त्यत्रैव 'सम्प्रसारणादस-म्प्रसारणे' इति कार्यं, 'यून' इत्यादौ असम्प्रसारणग्रहणसामर्थ्याद्वकारस्य पूर्वं सम्प्रसारणं, ततो यकारस्य सम्प्रसारणेऽपि सम्प्रसारणपरतया पूर्वरूपाप्रवृत्त्या यणि 'यून' इतीष्टरूपसिद्धेरिति चेन्न; वाक्यसंस्कारपक्षे—'एष यूनः पश्यती'त्यादौ यणः स्थानिवत्त्वेन 'एतत्तदो'रिति सुलोपानापत्तेरित्यस्मद्गुरुचरणाः ।

सामर्थ्यात्तन्मात्रनिषेध इति—दूरस्थस्यास्य, 'व्यथो लिटी'त्यस्य च निषेधः।

न च व्यथि-व्यद्ध्यादावस्य चारितार्थ्येन 'यूनः' इत्यादौ पूर्वसवर्णदीर्घरूपैकादेशे तस्य 'अचः परस्मि'न्निति स्थानिवत्त्वेन सम्प्रसारणत्वेऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथं निषेध इति वाच्यं; 'व्यथ' इति सूत्रे 'य'ग्रहणेनैव सिद्धा सम्प्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन—व्यवहितेऽपि प्रवृत्तेः, 'यूनस्ति'रिति निर्देशाच्चेत्याशयेनाह—**इति यकारस्येति**। न च कार्यकालपक्षे-'इग्यणः' इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणाऽन्वयेन 'येननाव्यवधान'न्यायेन पूर्वस्य सम्प्रसारणाऽप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यं, तत्पक्षेऽपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव सम्बन्धस्योक्ततया विधायकेषु 'यणः' इत्यस्याभावात्। अत्र चेदमपि ज्ञापकं बोद्ध्यम्।

ननु सकृत्प्रवृत्त्यैवोभयोः सम्प्रसारणे जाते निषेधो व्यर्थो, निमित्तत्वानुपपत्तिश्चेत्यत आह—**अत एव ज्ञापकादिति**। तदुक्तं भाष्ये "—इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति—'परस्य पूर्वं

❀ चिदस्थिमाला ❀

अत्र गौरवादाह—**यूनस्तिरिति**। तथा च निर्दिष्टाङ्गविकलपरिभाषाप्रवृत्तिरिति भावः। **पूर्वस्येति**। अनेकव्यवहितस्याऽपि यस्येत्यर्थः। 'सम्प्रसारणाप्राप्ते'रिति पाठः। **अपिना** पक्षान्तरम्। **वाक्येति**। अत एव 'भस्येत्युपस्थितमिदं भवति-यचि भमिती'ति भाष्ये उक्तम्। इदमपि=सूत्रमपि। **उभयोरिति**। एतेन 'शब्दपरविप्रतिषेधेनापि सिद्धा—अत एव ज्ञापकादित्यत्र एवासङ्गतेरप्यर्थत्वं तस्ये'ति भ्रान्तोक्तमपास्तम्;

❀ ज्योत्स्ना ❀

**अनुवृत्त्यैवेति**। 'ह्वः सम्प्रसारण'मित्यतः। निषेध्यसमर्पके='सम्प्रसारण'मित्येतस्मिन्। **तन्मात्रेति**। मात्रशब्दः कार्त्स्न्ये, यावत्सम्प्रसारणे इत्यर्थः। **दूरस्थस्येति**। षाष्ठचतुर्थपादे 'वसोः सम्प्रसारण'मित्यधिकारे पाठादस्य दूरस्थत्वं, साप्तमिकचतुर्थपादे—'द्युतिस्वाप्योः सम्प्रसारण'मित्यधिकारे पाठाद्व्यथो लिटीत्यस्येति बोध्यम्। **यग्रहणेनैव सिद्धेति**। एवं व्यथि-व्यध्यादौ पूर्वस्य

❀ विषमपदविवृतिः ❀

लक्षणस्येति न्यायावतारः, स्थानिभेदेन संप्रसारणस्येव 'किष' इत्यस्यापि पुनः प्रवृत्तिसम्भवात्। अत एवासिद्धवत्सूत्रे भाष्येऽल्लोपेन वा निवृत्तौ, पूर्वत्वेन वा निवृत्तौ, स्वरे विशेषाभावप्रतिपादनं सङ्गच्छते। **तन्मात्रनिषेध इति**। मात्रशब्दः—कार्त्स्न्ये, सर्वसम्प्रसारणनिषेध इत्यर्थः।

**पूर्वमिति**। यकारस्य सम्प्रसारणप्राप्तेः पूर्वं—पूर्वरूपोत्तरं सवर्णदीर्घरूपैकादेश इत्यर्थः। नन्वनवः

१ तत्पक्षेऽपि=कार्यकालपक्षेऽपि। वाक्यभेदेन=वाक्यैकवाक्यतया। उपजीव्योपजीवकभावापन्नविषयताप्रयोजकपदघटितत्वं वाक्यैकवाक्यत्वम्। एवञ्च कार्यकालपक्षे प्रतिपत्ता ज्ञानदुर्बल इति तदर्थं तत्र सञ्ज्ञाशास्त्रस्य पृथग्वाक्यार्थबोध एवोचित इतिभावः। उपजीव्योपजीवकभावापन्नविषयताप्रयोजकपदञ्च यण्पदं सम्प्रसारणपदञ्च। पदैकवाक्यत्वे तु–विशेष्यविशेषणभावेनान्वयः, निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वञ्च पदैकवाक्यत्वमिति पूर्वमेवावेदितम्।

२ परे तु अनेकस्थानिघटितेषु लक्ष्येषु न युगपदेव शास्त्रं प्रवर्त्तते, किन्तु पर्यायेणैव, अन्यथा 'व्यथो लिटी'त्यस्य तक्रन्यायेन यकारथकारनिवर्त्तकहलादिःशेषसूत्रापवादतदा थस्य हलादिःशेषेण निवृत्तिर्न स्यात्। मम तु यकारनिवर्त्तकहलादिःशेषसूत्रस्य 'व्यथो लिटी'त्यस्यापवादकत्वेऽपि थकारनिवर्त्तकहलादिःशेषसूत्रस्य न व्यथो लिटीत्यपवाद इति 'सकृत्प्रवृत्त्यैवे'तिशेखरोक्तिश्चिन्त्यैव, अत एव वाऽरुच्या निमित्तत्वानुपपत्तिपर्यन्तानुधावनमिति पण्डितैकशेष—शेषावतार—श्रीत्रिपाठिचरणा व्याचक्षते॥

भविष्यती'ति—" । 'लक्ष्ये लक्षणस्ये'ति न्यायस्य तु नायं विषयः, कार्याश्रयवर्णभेदेन लक्ष्यभेदात् ।

**अर्वणस्तृ । न तु साविति** । पर्युदास एव सूचितः ।–प्रत्ययत्वेन च सादृश्यम् । 'अनञः' इति बहुव्रीहिः, 'वाजमर्वत्सु'इति प्रयोगात् । तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थेऽत्र न स्यात् । सुरत्र–प्रथमैकवचनम् ।

ॐ चिद्स्थिमाला ॐ

विरोधाभावात्, तद्विषये 'विप्रे'ति सूत्राप्रवृत्तेर्भाष्ये स्पष्टत्वाच्च । ननु 'लक्ष्ये लक्षे'ति न्यायेन सिद्धेर्वैयर्थ्यं तदवस्थमेवात आह—**लक्ष्ये इति । भेदादिति** । अत्रापीदमेव मानम् । दण्ड्याद्युक्तसाङ्गत्यायाह—**पर्युदास इति** । वाक्यभेदादिदोषाभावादिति भावः ।

नन्वार्वतं पदमित्यादौ तद्धिते न स्यादत आह-**प्रत्येति** । अत एवार्वगर्व इत्यादौ न दोषः, न लुमतेति निषेधेन प्रत्ययपरत्वाभावात । अन्यत्र पर्युदासेऽपि विशेषमाह—**अनञ इतीति** ।–अर्वणो विशेषणम् ।

अनुनासिकोकारपाठादाह–**सुरत्रेति** । सुपरत्वाद्व्यङ्गविकलमेतत्प्रत्युदाहरणमिति–यथाश्रुतासङ्गतेराह—

ॐ ज्योत्स्ना ॐ

सम्प्रसारणनिषेधार्थत्वं सम्प्रसारणग्रहणस्य नास्तीति भावः । **कार्याश्रयवर्णभेदेन लक्ष्यभेदादिति** । ननु युगञ्च वरत्रा च तयोः समाहारो युगवरत्रं, तस्मै युगवरत्राय, युगवरत्रार्थं युगवरत्रेभ्य इत्यादौ प्राप्तस्य नपुंसकह्रस्वत्वस्य प्रतिषेधार्थं यञ्येकादेशदीर्घेत्वेषु प्रतिषेध इति वचनेन 'न वा बहिरङ्गलक्षणत्वा'दिति तत्प्रत्याख्यानभाष्येण च विरोधः । न च दीर्घाद्युत्तरं कार्याश्रय-वर्णभेदोऽस्ति तत्रेति वाच्यम्, उदवह्–स्–तामिति स्थिते परत्वाद्वह ओकारे 'उदवोढा'मित्यत्र सकृत्प्रवृत्तत्वात्पुनर्वृद्धिर्नेति 'सहिवहोरो'दितिसूत्रस्थभाष्यप्रामाण्यात् लक्ष्ये प्रथमलक्षण-प्रवृत्तिप्रयोजकानुपूर्वीतरशब्दाप्रयोज्यविकारान्यानुपूर्व्यभेदे लक्ष्यभेदाभावस्येष्टत्वात् । तत्रेतरशब्दा-प्रयोज्यत्वस्य विकारविशेषणत्वात् । 'युगवरत्राये'त्यादौ लक्ष्यभेद एव । विकारग्रहणं त्वागम-प्रयुक्तानुपूर्व्यभेदे लक्ष्यभेदज्ञापनार्थम्–अत एव 'शदेः शित'इति सूत्रे भाष्ये 'ऋधातोरटि सादृकस्य-ऋच्छादेशे पुनराट्, पुनः ऋच्छादेश इति चक्रकव्यवस्था प्राप्नोति' इत्युक्तम् । 'इकोगुणे'ति सूत्रे तु भाष्ये–'मृजेर्वृद्धिरच इति न्यासेऽटोऽपि वृद्धिः प्राप्नोती'त्युक्तम् । **कैयटोपाध्यायास्तु**—'अन-न्यविकारेऽन्त्यसदेशस्ये'ति भाष्योक्तसमाधानाल्लक्ष्ये लक्षणमितिन्यायादटो वृद्ध्यभावे समाधानान्तरं वदन्तः शब्दान्तरप्रयोज्यानुपूर्वीभेदे एव लक्ष्यभेदस्तदभावे तु विकारागमाभ्यामानु-पूर्वीभेदेऽपि लक्ष्यभेदेऽपि लक्ष्यभेदं नाभ्युपगच्छन्तीति सर्वथा लक्ष्यभेदस्य प्रकृते दुर्वचत्वा-च्चिन्त्यमेतत् । न चैवं सम्प्रसारण इत्यस्य वैयर्थ्यम्, पूर्वस्य सम्प्रसारणोत्तरं पक्षे प्राप्तस्य परसम्प्रसारणाभावार्थं परस्यैव सम्प्रसारणे पूर्वस्य सम्प्रसारणाभावो यथा स्यादिति तत्सार्थक्यात् । एतेन–'वव्रश्चे'त्यत्र यथोद्देशपक्षे 'न वा परमिति समाश्रीयते' इति 'युवोरनाका'विति सूत्रभाष्योक्त-रीत्योरदत्वस्य परनिमित्तकत्वाभावात्, 'अचः परस्मि'न्निति स्थानिवद्भावाभावात्सम्प्रसारण-शब्दः सम्प्रसारणस्थानिलक्षक इति भाष्योक्तपक्षान्तरे पूर्वस्य निषेधे परस्य सम्प्रसारणोत्तरं सम्प्रसारणस्थानिपरत्वाभावा'त्तौस'दिति निदर्शने भ्रष्टावसरन्यायस्य शास्त्रेऽनाश्रयणाच्च पूर्वस्य

ॐ विषमपदविवृतिः ॐ

किमिति प्रश्ने'ऽनर्वा यज्वव'दिति प्रत्युदाहरणं–नोपपद्यतेऽसाविति प्रतिषेधविषयत्वेन द्व्यङ्गविकलत्वादत

१ 'पथ' इत्यत्र पुनर्लोपस्य वारणाय च 'स्वप्रवृत्तिसमानकालिकत्व'स्य तत्र दानमुचितमिति भावः ।

२ नचात्रापि 'वाज'मित्यस्यानन्त्वात्ततः परत्वेन भविष्यतीति वाच्यम्, 'अनञ'इत्यत्र पर्युदास-स्याश्रयणेन नञ्सादृश्यस्य विभक्तिरहितत्वेन ग्रहणाच्च [ 'वाज'मित्यस्य च सविभक्तिकतया ] बहुव्रीह्यभावे तत्र न स्यादित्याशयादिति गौडाः ।

**अनञः किमिति** । 'अनञः' इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः। उत्तरम्—**अनर्वेति** । यज्वन्शब्दसदृशोऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः ।

नन्विह निरनुनासिकोच्चारणेऽपि तपरसूत्रस्याऽनणीत्र विधीयमानेऽपि विद्ध्यर्थत्वात्—नस्यान्तरतम्यादनुनासिकः स्यात्, तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तावणग्रहणानुवृत्तौ च मानाभावादत आह—**आ—आदिति** । विशेष्य-विशेषणभावेनाऽन्वयान्न सर्वादेश इति भावः।

भाष्ये तु—"अनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानम्—"इत्युक्तम् ।

---

❀ **चिदस्थिमाला** ❀

**अनञ इत्यस्येति** । गुणानां भेदकत्वाऽभेदकत्वसाधारण्येन शङ्कते—**नन्विहेति** । नन्वेवं डादाविव सर्वादेशापत्तिरत आह—**विशेष्येति** । विधाने=आन्तरतम्येन तदङ्गीकारे । इदं भाष्यं कुत्रत्यमिति विचार्यम् ।

❀ **ज्योत्स्ना** ❀

सम्प्रसारणं स्यादेवे'त्यपास्तम् । न चैवं सम्प्रसारणस्थानिककार्यमनेन निषिध्यते इति भाष्योक्तपक्षान्तरासङ्गतिः । जातिपक्ष सकृत्प्रवृत्त्योभयोः सम्प्रसारणे 'लक्ष्ये लक्षणस्ये'ति न्यायाऽप्रवृत्तिरित्याशयवर्णनादिति । नन्वनञः किमिति प्रश्ने 'ऽनर्वा यज्ववे'दिति प्रत्युदाहरणं नोपपद्यते, असाविति प्रतिषेधविषयत्वेन ध्यङ्गविकलत्वादत आह—**अनञ इत्यस्येति** । **अनर्वन्शब्दो व्यावर्त्य इति** । तत्फलन्तु अनर्वाणावित्यादीति भावः । केचित्त्व'नर्वाऽयज्ववे'दिति मूले अनर्वेति नपुंसके बहुव्रीहिः कुलपरे विवक्षितः । अयज्ववदिति च छेदः । तत्रापि कुलवान्विबहुव्रीहेर्वृत्तिः। नचैवमप्यङ्गेन प्रत्ययाक्षेपाभावात्(?)। नच 'वाहैरलुप्यत सहस्रहगर्वगर्वः' इति श्रीहर्षप्रयोगविरोधः, 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि त'दिति वार्तिकश्लोकेऽसाधोस्तस्य विरोधे बाधकत्वाभावात् । मतुबन्ततामआश्रित्य त्रादेशप्रत्याख्यानपक्षे तान्तप्रयोगस्य तत्र साधुत्वाच्च, 'नतु सा'विति प्रसज्यप्रतिषेधपरतया व्याचक्षाणस्य मूलकृतस्तथैवेष्टत्वाच्च। एतेनाऽसाविति पर्युदासाद्विभक्तिलुकि त्रादेशो नेति प्रत्युक्तम् । 'सुडनपुंसकस्ये'तिज्ञापकात्—प्रसज्यप्रतिषेधेऽपि नञ्समासस्य साधुत्वाभ्यनुज्ञानात् । 'अधातु'रित्यादिपर्युदासादर्थवत्त्वलाभेऽर्थवत्सूत्रेऽर्थवद्ग्रहणात्—'नञिव युक्त'न्यायस्याऽनित्यत्वकल्पनाच्चेति यथाश्रुतमेव मूलं व्याचक्षते । तेन नान्तत्वप्रयुक्ते ङीपि-अर्वन्तीत्यत्रार्वन्तमिति तद्धिते च त्रादेशसिद्धिः । अपरे तु—अङ्गेन प्रत्ययाक्षेपात् प्रत्ययनिमित्तकत्वस्यान्यथाऽसिद्धत्वाद्विभक्तित्वेन सादृश्यग्रहणस्योचितत्वाद्वनिवन्तस्य ङीप्यर्वरी, तद्धिते चार्वणमित्येव, त्रादेशेन न भाव्यमित्याहुः । **इति भाव इति** । प्रश्लेषसामर्थ्यादेव च तपरसूत्रस्यात्र बाध इत्यपि भाव इह प्रदर्शनीयः, अन्यथा वाच्यवृत्त्याऽनुनासिकव्यावृत्तेस्तेनालाभादित्याहुः ।

ननु पर्यायेण सकलाकारविधानार्थं प्रश्लेषस्योपक्षीणत्वान्न सामर्थ्यमित्यस्वरसं प्रश्लेषपक्षे सूचयन् पक्षान्तरमाह—**भाष्ये त्विति** । 'अष्टन आ विभक्ता'वित्यत्र—प्रसङ्गागतविचारमुपक्रम्य भाष्ये इत्यर्थः ।

❀ **विषमपदविवृतिः** ❀

आह—**अनर्वन्शब्दो व्यावर्त्य इत्यर्थ इति** । तत्फलन्त्वर्वाणावित्यादीति भावः ।

ननु 'परस्मैपदाना'मित्यादाविवाऽऽकारसमुदायस्य विधेयत्वेऽनेकाल्त्वात्सर्वादेशः स्यादित्याशङ्क्याह—**विशेष्येति** । **भाष्ये त्विति** । 'अष्टन आ विभक्ता'विति सूत्रे इति शेषः । एतेन 'पथिमथी'ति सूत्रे

---

१ पूर्वाकारस्य निरनुनासिकत्वे मानं मृग्यं, निश्चिते हि निरनुनासिकत्वे विशेषणतया तद्व्यावर्तकं स्यादपि, नत्वनिश्चये सति तथेति गौडाः ।

कश्चित्तु—इदं सर्वं 'गुणा भेदकाः' इति पक्षे। 'वृद्धिरादै'च्सूत्रभाष्यसंमतेसिद्धान्तभूते 'गुणा अभेदकाः' इति पक्षे, जातिपक्षे च तत्प्राप्तस्यापि सवर्णग्रहणस्याऽप्रत्ययग्रहणेन निषेधेनादोषात्। अत एव भाष्ये—'तपरस्तत्कालस्येति प्राप्नोती'त्युक्तम्।

'अप्रत्ययः' इति च वाक्यभेदेन सर्वप्रतिषेधकम्, अण्ग्रहणस्य च तत्रासम्बन्ध इति तदाशयः। अत एव भाष्ये 'भाव्यमानेन सवर्णानां ग्रहणं ने'त्येव पठितं, न त्वणेति।

एतदेवाभिप्रेत्याऽणुदित्सूत्रेऽनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्य—अप्रत्यय-

ॐ चिदस्थिमाला ॐ

दीक्षितादिसकलप्राचीनग्रन्थासाङ्गत्यायाह—**केचिदिति**। रत्नाकरादयइत्यर्थः। इदं सर्वं=पूर्वपक्षसिद्धान्तरूपम्। पक्षे=तत्रैव। कुत इत्यत आह—**वृद्धीति**। **तदिति**। अभेदकेत्यर्थः। अपिना—जातिपरिग्रहः। अत एव=तत्रोक्तरीत्याऽदोषादेव। तत्र पक्षे उदित्सम्बन्धस्य नैवेष्टत्वादाह—**अप्रत्येति**। **सर्वेति**। अण्ग्रहणजात्यभेदकपक्षप्राप्तेत्यर्थः। नन्वेवमण्सम्बन्धात्प्राप्तिरेव कथमत आह—**अणिति**। अत एव=तथा तस्य सर्वनिषेधकत्वादेव। तदेवं पोषयति—**एतदेवेति**। **ग्रहणस्येति**। अविधीयमान इत्यर्थकस्येत्यर्थः।

ॐ ज्योत्स्ना ॐ

एतेन तत्सूत्रे तादृशभाष्यानुपलम्भादसङ्गतमेतदिति मौनि-श्रीकृष्णभट्टोक्तं भाष्यानुपस्थितिमूलकं दूषणं बोध्यम्। 'गुणानामभेदप्रयुक्ता प्राप्तिः प्रश्लेषान्निवार्यते' इति दीक्षितोक्तिं दूषयन्मतान्तरमाह—**केचित्त्विति**। **गुणा भेदका इति पक्षे इति**। विध्यर्थत्वप्रयुक्ततपरसूत्राऽप्राप्तेस्तत्पक्ष एव सम्भवात्। पक्षद्वयोक्तस्तु परिहारोऽपि भेदकपक्ष एवेति भावः।

**तत्प्राप्तस्यापीति**। तच्छब्दाऽपिशब्दाभ्यां—गुणाभेदकपक्षजातिपक्षप्रयुक्तप्राप्तिद्वयसङ्ग्रहः। **निषेधेनादोषादिति**। प्रागुपन्यस्तपक्षाभ्यां तु न तयोः पक्षयोर्दोषपरिहारः, इतरनिवृत्तेर्वाच्यवृत्त्या अलाभादिति भावः। **अत एवेति**। जातिपक्षप्रयुक्तस्य गुणाभेदकत्वप्रयुक्तस्य च सवर्णग्रहणस्य विधेयविषयेऽप्रवृत्तेरेवेत्यर्थः।

**इत्युक्तमिति**। नचानयोरपि पक्षयोस्तपरसूत्रस्य व्यापारः, षण्णां ग्रहणस्य प्राप्तत्वेन नियमार्थस्य तत्र वक्तव्यतया व्यक्तिपक्षगुणभेदकत्वयोरेव तस्य प्रापकत्वसम्भवादितिभावः। "जातिपक्षप्राप्तस्य गुणाभेदकत्वप्राप्तस्य 'अप्रत्यय'ग्रहणेन निषेधे"—इत्यस्याशयमाह—**अप्रत्यय इति चेत्यादि**। **सर्वप्रतिषेधकमिति**। अण्ग्रहणप्राप्तस्येव जातिपक्ष-गुणाभेदकत्वाभ्यामपि प्राप्तस्य प्रतिषेधकमित्यर्थः। **नत्वणेति**। अण्ग्रहणप्राप्तस्यैवाऽप्रत्यय इति निषेधे तु—'भाव्यमानेनाऽणे'त्येव पठेदितिभावः।

ॐ विषमपदविवृतिः ॐ

एवं भाष्ये नोपलभ्यते इति कस्य चिच्छङ्का निरस्ता। **तत्प्राप्तस्येति**। 'गुणाभेदकत्वप्रयुक्ता प्राप्तिः प्रश्लेषान्निवार्यते' इति दीक्षितोक्तं दूषयन्मतान्तरमाह—**केचित्त्विति**। **इदं सर्वमिति**। 'प्रतिपत्तिलाघवेन तथैवोच्चारणे कर्त्तव्ये' इत्यादिभाष्योक्तम्, 'आ—आदिति प्रश्लेषा'दिति मूलोक्तं चेत्यर्थः।

**तत्प्राप्तस्येति**। गुणाभेदकत्वेन प्राप्तस्य, जातिपक्षेण प्राप्तस्य चेत्यर्थः। **अतएवेति**। गुणाभेदकत्वप्रयुक्तप्राप्तेरप्यणनण्साधारण्येनाऽप्रत्यय इत्यनेन निषेधादेवेत्यर्थः। **इत्युक्तमिति**। 'षण्णां ग्रहस्य प्राप्तत्वेन जातिपक्षगुणभेदकत्वपक्षयोस्तपरसूत्रस्य नियमार्थत्वेन प्रापकत्वासम्भवा'दिति पाठकस्तन्न, नियमशास्त्राणां विधिमुखेन प्रवृत्तेः। 'गुणाभेदकत्वेन प्राप्नोती'त्यनुक्त्वा 'तपरस्तत्कालस्येति प्राप्नोती'त्युक्तः तया गुणाभेदकत्वेन प्राप्तस्याप्यप्रत्यय इत्यनेन निषेध इति सूचितं भवतीत्याशयस्तूचितः। तथा च

१ अयं भावः—'भेदकत्वं गुणाना'मितिपक्षे हि तपरसूत्रे विध्यर्थंमतोऽनुनासिकाकारप्राप्तिशङ्का, प्रश्लेषादिनोत्तरञ्चोपपद्यते, अभेदकत्वपक्षे तु तपरसूत्रस्य नियमार्थतयाऽणुदित्सूत्रप्राप्तस्यैव नियामकतया,

ग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम् ।—तेन च तस्याऽव्यापकत्वं सूचितम्, अप्रत्ययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम् ।—तेन जातिग्रहणप्राप्तस्य, गुणाऽभेदकत्वपक्षप्राप्तस्य चानयाऽणनण्साधारण्येन निषेध इति सूचितम् ।

वस्तुतोऽणुदित्सूत्रस्थाऽप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्य एकदेशानुमतिद्वारा परिभाषा बोध्यत इत्यथः । 'प्रतीयत' इत्यस्य—विधीयते इत्यर्थाऽप्रसिद्ध्या कैयटोक्तव्याख्या चिन्त्या। परिभाषायां सवर्णपदेन—समानजातीयो भिन्नधमा—उच्यते । तेन जशादिविधौ जत्वादिजात्याश्रय—सर्व—जकारादिग्रहणसिद्धिरित्याहुः ।

एतेन—'पथीयतेः क्विपि पन्थाः इत्यादी'त्यपास्तम् ।—अत्र शुद्धार्थं तदनुच्चारणस्याऽऽवश्यकत्वेन भाष्यासङ्गतेः ।—तस्मात्तदनभिधानमेवोचितम् ।

ॐ चिदस्थिमाला ॐ

तदेवाह—**तेन चेति** । फलितमाह—**तेनेति** । ज्ञापकतात्र विलक्षणेति सिद्धान्तमाह—**वस्तुत इति** । ननूक्तार्थकत्वे परिभाषाया अतिप्रसङ्गापत्तिर् आह—**परीति** । अस्य सिद्धान्तत्वेऽपि **केचिदित्यरुचिबीजं** गुणानां भेदकत्वं न सिद्धान्ते, मूलाशुद्धिरेवेति । पथीयतेः=क्यजन्तात् । अत्र दीर्घश्रवणार्थमाद्विधानमिति तदाकूतम्। एतेनेत्यस्यार्थमाह—**अत्रेति** । **भाष्येति** । 'भाष्ये'त्वित्युक्तभाष्येत्यर्थः । अत एव शङ्कते—

ॐ ज्योत्स्ना ॐ

यत्त्वर्वाचीनग्रन्थेषु पठ्यते—'भाव्यमानोऽण् न सवर्णान्गृह्णाती'ति, तत्-उदिदंशे'ऽप्रत्यय'इति निषेधव्यापाराऽभावतात्पर्यकं, 'कुहोश्चु'रित्यादौ विधेये उदिदुच्चारणादित्यन्यत्र विस्तरः । **तस्येति** । यथाश्रुतार्थकाऽप्रत्ययग्रहणस्येत्यर्थः। **मदुक्तरीत्येति** । 'वाक्यभेदेन सर्वप्रतिषेधकत्व'मिति रीत्येत्यर्थः। 'प्रतीयते=विधीयते'इत्यन्वर्थतामाश्रित्याऽप्रत्ययग्रहणस्येदृशार्थेन सामर्थ्यात्परिभाषार्थसङ्ग्रह इति कैयटमतेऽस्वरसं सूचयन् प्रकारान्तरेण परिष्कुर्वन्नाह—**वस्तुत इति** । **इत्याहुरिति** । अत्रारुचिबीजन्तु अप्रत्ययग्रहणस्यैकदेशानुमत्या ज्ञापकत्वे चारितार्थ्यासम्भवः । किञ्च—'गुणाभेदकत्वप्रयुक्तप्राप्तेः प्रतिषेध' इतिवक्तुमशक्यं, गुणभेदेऽपि व्यक्त्यैक्यमिति हि—'गुणा अभेदका'इत्यत्राभिप्रेतं, न च तत्र व्यक्तिभेदप्रयुक्ततत्सवर्णत्वसमानधर्मत्वयोः सम्भव इत्याद्यधिकं परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम् । भाष्ये तु—शुद्धोच्चारणसामर्थ्याद्गुणानामभेदकत्वं बाध्यते, एवमेव भेदकत्वाद्गुणानां तपरत्वप्रयुक्तसवर्णग्रहणं, जातिपक्षे च—जात्याश्रयव्यक्तिग्रहणमपि तथैव बाध्यते—इत्याशय इत्याहुः ।

ॐ विषमपदविवृतिः ॐ

'तपरस्तत्कालस्येति प्राप्नोती'ति भाष्यं'गुणा अभेदका'इत्यभिप्रायकम् । सर्वत्र=सर्वविषये जातिपक्षप्रयुक्तप्राप्तेश्च प्रतिषेधकमित्यर्थः। **तत्रेति** । अप्रत्यय इत्यत्रेत्यर्थः । तदाशयः='गुणाभेदकत्वेन प्राप्नोतीत्यनुक्त्वा तपरस्तत्कालस्येति प्राप्नोती'ति वदतो भाष्यकारस्याशय इत्यर्थः । गुणाभेदकजातिपक्षयोरण्ग्रहणस्याभावेनाऽण्ग्रहणस्य च तत्र सम्बन्ध इत्ययुक्तमिति बोध्यम् । अत एव=अप्रत्यय इत्यत्र अण्ग्रहणासम्बन्धादेव । ननु जशादिविधौ जश्त्वजात्याश्रयसर्वजकारग्रहणासिद्धिः, 'भाव्यमानेने'ति निषेधात्, तत्र चाण्ग्रहणसत्त्वादित्यत आह—**परिभाषायामिति** ।

तस्य चाप्रत्यय इति निषेधाच्छङ्कैव नोदेति । एवं—प्रश्लेषेऽपि, शुद्धोच्चारणेऽपि च—गुणानामभेदकत्वेऽनुनासिककाकारप्राप्तिर्दुष्परिहरेति उत्तरमप्यसङ्गतमेवेति श्रीत्रिपाठिचरणानुसारिणो गौडाः ।

न च 'अ'दित्येवास्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः, पररूपन्तु न, 'पथिमथ्यृभुक्षां लोपः' 'भस्य टेः', 'इतोऽत्सर्वनामस्थाने' इति न्यासेन नकाराऽश्रवणसिद्धावकारविधानसामर्थ्यादिति वाच्यं, ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात् ।

**इतोऽत्** । 'आ'दित्यनुवृत्त्यैव सिद्धेऽद्वचनमृभुक्षणमित्यादौ 'वा षपूर्वस्ये'ति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम् ।

'इत'इति 'अ'दिति च तपरत्वं मुखसुखार्थम्, 'एर'दित्युक्तौ ततो लाघवाभावात्, अन्यथा विधेयेऽपि तपरकरणात्कुरुत इत्यादौ गुणाभाववत्—'पन्थाना'वित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः ।

**थो न्थः** । 'थो नु'डिति नोक्तम् ; इत्सञ्ज्ञाया, 'आद्यन्ता'वित्यस्य चानुसन्धाने प्रक्रियागौरवात् ।

**भस्य[२] टेः** । भस्य किं ? पथिभ्याम । **सम्बुद्धौ नपुंसकानामिति** । इदं 'न लुमते'तिनिषेधाऽनित्यत्वमूलकमित्युक्तम् । यद्यपि भाष्ये 'वा नपुंसकाना'मित्येव पठितं,

❀ चिद्स्थिमाला ❀

**न चेति** । सूत्रक्रमेणाह—**नकारेति** । लोपानुवृत्तये आह—**भस्येति** । **स्पष्टार्थमिति** । एतेनान्यथा सकलग्रन्थकारोक्तमपास्तम् । **हरदत्तादिसकलग्रन्थासाङ्गत्यायाह—इत इतीति** । फलाभावाद्युक्त्यन्तरमाह—**एरदिति** । अन्यथा =तदर्थत्वानङ्गीकारे । एतेनात इति स उच्चारणार्थः, इत इति स तु उक्तव्यावृत्त्यर्थः—इत्यपास्तम् । इलन्तेभ्य आचारक्विप्तु नास्त्येवेत्युक्तम् ।—अतो न तदन्तात्क्विपि नपुंसके 'पथीनी'त्यादावत्त्वाभावाय तपरकरणम् । एतेन—'इति तपरकरणेनैवात्रेनहन्निति नियमबाधपूर्वकं दीर्घत्वानुमानं पुंस्यपीति तदर्थं तपरकरणम्, आदेशे तूच्चारणार्थमिति **मिश्रोक्तिश्चिन्त्ये'ति शास्त्र्युक्तमपास्तम्** । अधिकं शब्दरत्नभावप्रकाशतोऽवगन्तव्यं, तदाह—**अन्यत्रेति** । यत्तु आगमशास्त्राऽनित्यत्वज्ञापनार्थमिति, तन्न; तस्याः असत्त्वात्तदाह—**इत्सञ्ज्ञाया इति** । नेदमपूर्वमित्याह—**इदमिति** । उक्तं=इलङ्यादिसूत्रे ।

❀ ज्योत्स्ना ❀

**तपरत्वं मुखसुखार्थमिति** । **पदमञ्जरी–शब्दकौस्तुभयोरप्येवं, मनोरमायान्तु** 'पथीयतेः क्विपि पन्थियावित्यादिव्यावृत्तिस्तपरकरणस्य प्रयोजन'मित्युक्तम् । तत्र प्रागुक्तरीत्या सावेकवचने 'पन्था'इत्यस्यैवानभिधानम्, 'पन्थिया'वित्यादेस्तु तथात्वे प्रमाणाभावः ।

यद्वा–सावात्त्वे कर्तव्ये क्यजकारलोपस्य स्थानिवद्भावादात्वाप्रवृत्त्या 'पन्थी'रित्येवं रूपम्, 'क्वौ विधिं प्रति न स्थानिव'दित्यर्थस्य व्यवस्थापनेन निषेधाप्रवृत्तेः । 'पन्थिया'वित्यादौ तु 'क्वौ लुप्तं न स्थानिव'दित्याश्रीयते। **इत इतीति** । तपरकरणसामर्थ्यादितीष्टसिद्धिः(?)एवं 'थो नु'डिति कर्तव्ये थादेशादधिकार्था-

❀ वरवर्णिनी ❀

१ वस्तुत इदमयुक्तं, यथाश्रुतेऽपि 'षष्ठीस्थाने' इति परिभाषासञ्चारेण तौल्यात् । अतश्चोऽनास्थायां बोध्यः । प्रक्रियागौरवं=ज्ञानगौरवम् ।

२ **भस्य टेरिति** । भात्परः प्रत्ययो डिद्वद्वतीत्यर्थकं 'भाडि'दित्येव तु न सूत्रितं, सुपथिन इदं-'सौपथ'मित्यादौ 'टे'रिति लोपस्य 'इनण्यनपत्ये'इत्यनेन निवृत्त्यापत्तेः । 'भस्य टेर्लोप'इति यथाश्रुतन्यासे तु 'भस्य टे'रित्यस्याऽप्राकरणिकतया 'इनण्यनपत्ये' इत्यनेन न निवृत्तिः । किञ्च—सुपथिन्शब्दादिष्ठनि इष्ठेमेयस्सुटेर्लोप इत्यर्थकेन 'टे'रित्यनेन इनो लोपे पुनर्भस्य टेर्लोप इति टिलोपे 'सुपिष्ठ' इतीष्यते, तदिदानीं न सिध्येत्, समानाश्रयत्वेनाऽभीयत्वेन विभक्तिनिमित्तकटेरिति लोपे कर्तव्ये इष्ठन्निमित्तकटिलोपस्याऽसिद्धत्वात् । यथाश्रुते 'भस्य टेर्लोप' इति सूत्रन्तु नाभीयमिति न दोष इति—**उमानाथपण्डिताः** ।

अन्ये तु–सुपथिन्शब्दात्तत आगत इत्यणि 'नस्तद्धिते'इति टिलोपेऽनेन डित्वेऽपि जातस्य 'नस्तद्धिते' इति टिलोपस्याऽऽभीयासिद्धत्वेन 'टे'रित्यस्याप्राप्त्या 'सौप'मितीष्टं रूपं न स्यात्, 'सौपथ'मित्येवानिष्टं रूपञ्च

तथापि सूत्रे ङिग्रहणस्य प्रत्याख्याततत्वेन, 'हे चर्मन्', 'हे चर्म', इति सम्बुद्धावेवोदाहृतत्वेन च तावन्मात्रविषयताऽस्येति भावः।

**ष्णान्ता**। विशेष्यसाकाङ्क्षात्स्त्रीलिङ्गनिर्देशात्प्रकृतं 'सङ्ख्ये'त्याकृष्येत। सङ्ख्याशब्देन च—सङ्ख्याप्रकारकबोधजनकाः—पञ्चादयो गृह्यन्ते, 'सङ्ख्ये'तिशब्दे, बहुगणडतिषु च तदन्तत्वासम्भवात्; तदाह—**सङ्ख्येति। सन्निपातेति**। बहिरङ्गासिद्धत्वं न, सञ्ज्ञायाः कार्यकालपक्षत्वेन समत्वात्। स्पष्टञ्चेदं भाष्ये।

**नोपधा**। नलोपस्यासिद्धत्वान्नामीतिदीर्घाप्राप्तेरयमारम्भः। 'नामी'त्यस्याङ्गविशेषणतैव न्याय्या, नामः प्रत्ययत्वात्; एवञ्च 'पञ्चाना'मित्यादौ पकाराऽकारस्य दीर्घवारणायोपधाग्रहणम्।

नेति किं? चतुर्णाम्। नामि किं? चर्मणाम्। **नलोप इति**। 'भुवः पञ्चाना'मिति लिङ्गान्न सन्निपातपरिभाषाविरोधः।

**अष्टन आ**। 'अनण्त्वान्नानुनासिकः' इति भाष्ये स्पष्टम्। जातिग्रहणेन गुणाऽभेदकत्वेन तु न सः, भाव्यमानत्वात्। 'शुद्धोच्चारणा'दिति तु नात्र वक्तुं शक्यम्; 'रायो हली'त्युत्तरार्थन्तस्य चारितार्थ्यात्। प्रश्लेषेणापि न निर्वाहः, वाच्यवृत्त्याऽनुनासिकव्यावृत्तेस्तेनाऽलाभात्, प्रत्युत तत्रापि गुणाऽभेदकत्वादेदुर्वारत्वेनाऽऽन्तरतम्यादनुनासिकस्यैव प्राप्तेः। प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात्। एवमन्यत्रापि बोद्ध्यम्।

---

❀ चिदस्थिमाला ❀

भाष्ये=न ङीति सूत्रस्थे। प्रकृते आह—**सङ्ख्येति**। 'आदन्ततः सङ्ख्या सङ्ख्येये'इत्युक्तेः। पूर्वत्र स्वरूपपरत्वादाह—**सङ्ख्येतीति**। कृत्रिमन्यायेनाह—**बहिरिति**। 'उपधाग्रहणं व्यर्थ'मिति मिश्रशास्त्र्याद्युक्तेरसाङ्गत्यायाह—**नामीति**। एवेन—दीर्घश्रुत्योपस्थिताऽच्व्यावृत्तिः। अङ्गांश तस्योत्थिताकाङ्क्षत्वायाह—**नाम इति**। सूत्रमतेनाह—**अनण्त्वादिति**। भाष्यमतेनाह—**जातीति**। तुश्चार्थे। दीक्षितादिसकलोक्तिं खण्डयति—**शुद्धोच्चेति**। ननु प्रश्लेषसामर्थ्यान्न तथाऽत आह—**प्रश्लेषेति**। हलादावित्यर्थे बीजमाह—

❀ ज्योत्स्ना ❀

तस्यापि सिद्धिरित्याशयः कल्प्यः। **एवमन्यत्रापीति**। जनादेरात्वविधावित्यर्थः। वस्तुतस्तु—परिभाषा-

❀ विषमपदविवृतिः ❀

**पञ्चानामित्यादाविति**। नन्वप्यन्त्यबाधेऽन्त्यसदेशस्येति परिभाषया सिद्धे उपधाग्रहणं व्यर्थम्, 'अत उपधायाः', 'णौ चङ्युपधायाः' इत्यादावुपधाग्रहणं न व्यर्थं, 'ननन्द' 'अचकाङ्क्ष'दित्यादौ वारणार्थत्वात्। अत्र हि नोक्तपरिभाषया निस्तारः, अन्त्यसदेशानन्त्यसदेशयोरेकस्मिँल्लक्ष्ये प्राप्त्यभावादिति चेन्न, पकारावित्यादावृतोङीति गुणं बाधित्वा दीर्घवारणायोत्तरार्थं तदावश्यकत्वात्। **चतुर्णामिति**। इदं 'तितऊना'मित्यस्योपलक्षणम्।

**लिङ्गादिति**। वस्तुतस्तु अस्मान्निर्देशान्नतिसृचतसृ इति धर्मिग्राहकमानाच्च त्रिपाद्यां सन्निपातपरिभाषा न प्रवर्त्तते इति तत्त्वम्। तत्रापि=प्रश्लिष्टेपि। ननु प्रश्लिष्टेपि गुणाभेदकत्वाश्रयणेन प्रश्लेषवैयर्थ्यमित्याशङ्क्याह—**प्रश्लेषेणेति**। **एवमन्यत्रापीति**। 'आ सर्वनाम्न' इत्यादौ।

---

स्यादतो 'भस्य टेर्लोप' इत्येवमुक्तम्। एवञ्चास्याऽऽभीयत्वविरहेण जातस्य टिलोपस्यासिद्धत्वाभावान्न 'सौप' मित्यभिमतं रूपं सिध्यतीत्याहुस्तन्न, नित्यत्वाद्भस्य टेर्लोप इति टिलोपे नान्तत्वाभावात्पुनर्नस्तद्धिते टिलोपाप्राप्त्या 'सौपथ'मित्यस्यैव सिद्धान्तसिद्धत्वात्तस्य चास्मिन्न्यासेऽपि सुसाधतयाऽदोषादतः 'सुपिष्ठ' इत्येत्सिद्ध्ये यथाश्रुतन्यास आश्रयणीय इति **गौडाः**।

१ नान्त्वस्य 'नामयतीति नाम्'–इत्यत्र नम्धातुनिष्पन्नेऽपि सत्त्वात्सुप्त्वव्याप्यत्वाभावेऽपि—सुप्त्व-

'रायो हली'त्यतो 'हली'त्यपकृष्यते ।

**अष्टाभ्य औश्** । 'उ'ङिति तु नोक्तं, सकारस्योकारे 'अष्टा—अ—उ' इति स्थिते 'इग्ङिशीनामाद्गुणः सवर्णदीर्घत्वा'दिति न्यायेना[१]ऽन्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणे 'अष्टौ' इत्यस्यासिद्ध्यापत्तेः । 'हली'त्यपकर्षे कृताकारादित्यनुपपन्नमत आह—**कृतात्वेति** । कृतात्वानुकरणमित्यर्थः । लक्षणवशसम्पन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य

❀ चिदस्थिमाला ❀

**अपकृष्यते इति** । यत्लाघवादाह-**उङितीति** । तत्फलमाह-**लक्षणेति** । दीक्षिताद्युक्तेरसाङ्गत्यादाह—

❀ ज्योत्स्ना ❀

प्रदीपार्चिष्युक्तरीत्या गुणाभेदकत्वप्रयुक्तप्राप्ते'र्भाव्यमानेन सवर्णग्रहण'मित्यनेन निषेद्धुमशक्यत्वात् तत्प्रयुक्तप्राप्तेः प्रतिविधानार्थं यत्नः कर्तव्यः, स चेत्थं'पथिमथ्यृभुक्षामा'दित्यत्र शुद्धोच्चारणाद्गुणानां भेदकत्वादिष्टसिद्धौ तपरकरणाद्भेदकत्वप्रयुक्तसमकालसवर्णग्रहणस्य प्राप्तिः प्रक्रियाप्रकाशकृदुक्तरीत्या 'भाव्यमानेन सवर्णग्रहणं नास्ती'तिपरिभाषया वारणीयेति । दोषाधायकतपरकरणाधिक्यादुच्चारित-तत्तद्व्यक्तिसजातीयस्थानान्तरोपात्तविधेयव्यक्तेरभेदज्ञापनादष्टनो विधीयमानाकारस्यापि तपरत्व-प्रयुक्तगुणभेदकत्वाबाधपूर्वकं समकालग्रहणस्य 'भाव्यमानेन ने'ति निषेधः । नचैवं ज्ञापितेऽपि तपरत्वस्य चारितार्थ्याभावः, 'रायो हली'त्यादौ चारितार्थ्यात् । पथ्यादेराकारविधाने शुद्धोच्चारणेन गुणाभेदकत्वस्य बाधितुमशक्यत्वेन तद्बाधनार्थं तस्यावश्यकत्वादित्याहुः ।

**उङितीति**। 'अलोऽन्त्यस्ये'त्यन्त्यादेशे सिद्धे 'आदेःपरस्ये'त्यस्य बाधनाय ङित्वमिति बोध्यम् । **अन्तरङ्गत्वात्सवर्णदीर्घ इति** । यद्यपि प्रकृतिप्रत्ययोभयापेक्षात्सवर्णदीर्घात्प्रत्ययमात्रापेक्षो गुण एवान्तरङ्गस्तथापि गुणनिमित्तस्योङः प्रकृतिप्रत्ययोभयापेक्षत्वाद्बहिरङ्गं गुणमपेक्ष्य वर्णमात्रापेक्षत्वा-त्सवर्णदीर्घोऽन्तरङ्ग इत्याशयः । न च 'नाजानन्तर्ये'इतिनिषेधः प्राप्नोति, उत्तरकालप्रवृत्तिकेऽजा-नन्तर्याश्रयणे एव तत्प्रवृत्तेः, 'पर्यवस्थाते'त्यत्र प्रकृतिप्रत्ययोभयापेक्षाज्निमित्तकयणादेशस्याप्यन्त-रङ्गत्वानापत्तौ परत्वाद्गुणे प्राप्ते 'गुणाद्यणादेशोऽन्तरङ्गत्वा'दिति सिद्धान्तव्याकोपः स्यात् । एवन्तर्हि इहोत्तरकालप्रवृत्तिकेऽन्तरङ्गे गुणेऽजान्तर्याश्रयणादन्तरङ्गपरिभाषाया अप्रवृत्तौ गुणं बाधित्वा परत्वात्सवर्णदीर्घः स्यादिति–भगवतः सूत्रकारस्य प्रकारान्तरेणाशयं वर्णयामः । **अल्विधित्वेनेति** । यथोद्देशपक्षे इदम् । [नतु-] प्रथमप्रवृत्तपरशास्त्रप्रवृत्तेर्वैयर्थ्यासम्पादकपूर्वशास्त्राप्रवृत्तौ पुनःप्रसङ्ग-विज्ञानाश्रयणस्याचश्चेतिसूत्रे प्रदीपकृता व्यवस्थापनात्तदाश्रयणेऽस्वरसं सूचयन्प्रकारान्तरमाह—**यथोद्देशपक्षस्यैवेति** । नचाल्विधिः, षट्त्वस्य नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मान्तर-स्वरूपत्वात् । तस्य–'नान्तसङ्ख्यावाचकत्वपर्यवसन्नं त'दिति पक्षेऽल्विधित्वेऽप्येकदेशविकृतन्याये-नाभिप्रेतसिद्धिः । सच न्यायश्छिन्नपुच्छश्वदृष्टान्तेन लोके प्रसिद्धः,—'प्राग्दीव्यत' इति विकृत-निर्देशेन शास्त्रेऽप्यङ्गीक्रियते नत्वानुमानिकस्थान्यादेशभावमूलक इत्यन्यत्र विस्तरः ।

तद्व्याप्यधर्मावच्छिन्नविषयताया एव 'नलोपः सु'बित्यत्र निवेशेन—अत्र च-शाब्दबोधीयाया विषयताया अङ्गसञ्ज्ञाप्रयोजकत्वेन सङ्कुचितत्वान्नाम्त्वावच्छिन्नशाब्दबोधीयविषयतायाः सुप्त्वव्याप्यधर्मावच्छिन्ननिरूपित-त्वेनादोषादित्याशयः ।

१ 'न्यायेने'त्यस्य पूर्वोपस्थितनिमित्तकत्वेनेत्यर्थः । न च—'अष्ट—अ—उ'इत्यत्र प्रकृतिप्रत्ययोभय-घटकाऽवर्णद्वयापेक्षसवर्णदीर्घापेक्षया प्रत्ययमात्रघटकाऽकारोकारनिमित्तकगुणस्यान्तरङ्गतया पूर्वं गुणे पश्चा-द्वृद्धावष्टाविति निर्बाधमेवेति वाच्यं, शसि 'अष्टा—ओ' इति जाते भत्वादातोधातोरिति लोपापत्तेः न च नात्राकारान्तधातुरिति वाच्यं, धातुग्रहणस्याबन्तनिवृत्तिमात्रफलकतायाः पूर्वमेवोपपादितत्वादित्यवधेयम् ।

**गुरवस्तु**—न च प्रत्ययमात्रापेक्षत्वेन गुणोऽप्यन्तरङ्गः, न हि पूर्वोपस्थितनिमित्तकत्वमेवा-न्तरङ्गत्वं नैतदित्यत्र प्रमाणं पश्याम इति वाच्यम्; उभयोरन्तरङ्गतया तौल्येऽपि सवर्णदीर्घेऽपवादत्वस्य विशेषतया दीर्घस्यैवापत्तेः, एवञ्च उङ् न कर्तुं शक्यते—इत्याहुः । इतोऽधिकं ज्योत्स्नायां द्रष्टव्यम् ।

इत्येव वदेदिति भावः । **ज्ञापयतीति** । अयं भावः—'हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थं, तेन 'अष्टन'इत्यस्य क्वचिदक्ष्वपि प्रवृत्ति'रिति । **आत्वमिति** । आत्वमात्रमित्यर्थः ।

**सूत्रे इति** । दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्तेति तदर्थः । **ज्ञापकादिति** । तद्धि 'अष्टभि'रिति ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थम् । एवञ्च ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम् ।

न च 'अष्टाभि'रित्यत्र सावकाशस्य 'अष्टन' इति सूत्रस्याऽष्टभिरित्यत्र परत्वात्–'झल्युपोत्तम'मित्यनेन बाधे–सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्, न ह्यष्टाभिरित्यत्र 'झल्युपोत्तम'मिति प्राप्नोति, कार्यकालपक्षेऽनान्तत्वेन षट्त्वाभावात्,

ॐ **चिदस्थिमाला** ॐ

**अयमिति** । सन्निधिनिरासायाह—**आत्वमात्रमिति** । मात्रं–कार्त्स्न्ये । ज्ञापकस्य साधारणत्वात्तदाह—**दीर्घान्तादिति** । एवञ्च=तत्र तद्व्यावृत्त्यर्थत्वे च । ज्ञापितेऽप्यचारितार्थ्यं शङ्कते—**नचेति** । ननु दीर्घपक्षेऽपि तत्प्राप्त्या तस्य निरवकाशत्वेन तदपवादत्वमत आह—**नह्यष्टाभिरिति** । हलीत्यपकर्षाभावज-

ॐ **विषमपदविवृतिः** ॐ

**उडिति** । ञ्नित्यादिः परस्येत्यस्य बाधनार्थम् । अष्टन्शब्दो घृतादित्वादन्तोदात्तः । **व्यर्थमेव तदिति** । तथाचात्वस्य वैकल्पिकत्वेन ज्ञापकमिति भावः ।

न च प्रक्रियालाघवाय–ओशि विधातव्ये उड्विधानसामर्थ्यात्पूर्वं गुणे ततो वृद्धौ रूपसिद्धिरिति वाच्यम्, ओशि 'नादिची'ति निषेधेन पूर्वसवर्णदीर्घस्याप्रवृत्त्या उडि तस्य, 'तस्माच्छसोन'ति नत्वस्य च प्रवृत्त्या फलभेदाज्ज्ञापितेपि स्वस्मिन्न चारितार्थ्यमिति भावः। **कार्यकालपक्षइति** । यथोद्देशपक्षे तु 'झल्युपोत्तम'मिति स्वरेऽल्विधिभिन्ने स्वरे कर्त्तव्ये स्थानिवत्त्वेन षट्त्वं सुलभं, षट्त्वस्य समुदायवृत्तित्वेनाल्वृत्तित्वाभावात्। 'भविष्यति किञ्चित्कार्य'मित्यभिसन्धायात्वप्रवृत्तेः पूर्वं कार्याभावेपि षट्त्वप्रवृत्तेः । ननु कार्यकालपक्षे आत्वात्पूर्वं कार्याभावेन षट्त्वाप्रवृत्तावपि परत्वान्नित्यत्वाच्च 'झल्युपोत्तम'मिति बाधित्वाऽऽत्वे कृते स्थानिवद्भावेन नान्तत्वमाश्रित्य षट्सञ्ज्ञा क्रियते इत्याशङ्क्याह—

१ नन्वेकमात्रालाघवेऽपि पर्यायशब्दतया विसर्जनीयान्यतरस्यामित्यादिवल्लाघवगौरवचर्चाया अनुचितत्वमिति चेन्न, लक्षणवशसम्पन्नत्वे हि—'अष्टन्छब्दस्येदं रूपमुत–आकारान्तानुकरणेऽष्टाशब्दस्य इदं रूप'मिति सन्देहसम्भवात्,—असन्देहाय–'अष्टभ्य' इत्येव कस्मान्नोक्तमित्याशयात् । अष्टभ्य इति निर्देशे तु 'अष्टन्छब्दस्येदं रूपमुत–अकारान्तानुकरणाऽष्टशब्दस्यैवेदं रूप'मिति सन्देहो न भवति, अकारान्तानुकरणे'ऽष्टेभ्य' इत्यस्यापत्तेरित्यसन्देहायाऽष्टभ्य इति वक्तव्ये सन्देहाधायकः–कृतात्वनिर्देशो ज्ञापक इत्याशयेन लाघवगौरवचर्चानादरादित्यस्मद्गुरवः प्राहुः ।

२ अन्यथाऽत्रैव 'हली'ति कुर्यात्, न 'रायो हली'त्यत्रेत्याशयः । इदमत्र तत्त्वं—पूर्वरीत्या 'अष्टाभ्य' इति कृतात्वस्य निर्देश इति ज्ञापितेऽपि–यद्यपि—'अष्टन आ विभक्तौ' वित्यत्र 'हली'त्यस्यापकर्षाज्जश्शसोरात्वं न प्राप्नोति, तथापि अत्रैव हलीति कर्त्तव्ये उत्तरत्र कृत्वाऽत्रापकर्षेण तत्सम्बन्धादष्टाभ्य इति निर्देशोपपत्तिरपि–[जश्शसोरात्वप्रवृत्तिः–]—सूत्रकृत्सम्मता, एवञ्चापकृष्यमाणस्य 'हली'त्यस्य जश्शसतिरिक्तविषयतेति—आत्वज्ञापनं नापूर्वं, किन्त्वाचार्योक्तेनैव लब्धम् । अन्यथाऽत्रैव हलीति कुर्यादिति ।

३ यद्यपि '—अष्टाभ्य' इति कृतात्वनिर्देशोय'मिति, 'आत्वं जश्शसोः परतः'—इति चांशद्वयस्य ज्ञापनेऽपि पुनरपि कृतात्वनिर्देशो व्यर्थः, कृतात्वेऽपि स्थानिवत्त्वेनाष्टन्छब्दतया 'अष्टभ्य' इत्युक्तावपि दोषाभावेन ज्ञापितेऽपि स्वांशेऽचारितार्थ्यात्, तथापि—कृतात्वनिर्देशोऽनुमितात्वस्य वैकल्पिकतां ज्ञापयितुमिति—'अष्टे'त्यादिकारणाय तच्चारितार्थ्यमित्यंशत्रयज्ञापकता कृतात्वनिर्देशस्येति श्रीगुरुचरणाः।

अल्विधित्वेन[1] स्थानिवत्त्वाभावाच्चेति वाच्यं, पुनःप्रसङ्गविज्ञानबोधनद्वारा,—एतद्विषये यथोद्देश[2]पक्षस्यैवाश्रयणबोधनद्वारा वा,—तद्विकल्पे ज्ञापकमित्याशयादित्यन्यत्र विस्तरः।

**अष्टानामिति**। 'हली'त्युक्तेरादौ नुट्, तत आत्वम्।

यत्तु 'सन्निपातपरिभाषयाऽत्र नात्वं, किन्तु 'नोपधाया'इति दीर्घे नलोपः। अन्तोदात्तत्वन्तु 'षट्त्री'त्येव सिद्धं, नलोपे तु न सन्निपातपरिभाषा, नलोपस्यासिद्धत्वादिति;

ॐ चिदस्थिमाला ॐ

लाघवादाह—**एतदिति**। षटसञ्ज्ञेत्यर्थः। एवेन—तदनित्यत्व–कृतात्वषट्सञ्ज्ञयोर्निरासः। यथोद्देशे विभक्तिसापेक्षत्वेनाऽऽत्वस्य बहिरङ्गतया विभक्तेः प्राक् षट्त्वे जाते तत आमि नुटः प्राक् नित्यत्वादात्वे आमुत्तरमसिद्धत्वात्पूर्वं सञ्ज्ञा ततो नुटः प्राक् नित्यत्वादात्वे वा नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मरूपस्य षट्त्वस्यापि स्थान्यल्धर्मत्वाभावेन तत्प्रयुक्तस्य 'षट्त्री'त्यादिस्वरादेरल्विधित्वाभावात्स्थानिवत्त्वेनैकदेशेति न्यायेन वाऽऽकारान्तस्यापि षट्त्वेनाऽऽकारान्तेऽपि 'झल्युपोत्तम'मित्यस्य प्राप्त्याऽष्टन्स्वरस्य तदपवादत्वेनाऽष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि तत्प्रवृत्तिः स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं विकल्पज्ञापकं सफलं तत्र पक्षे भविष्यतीत्यनेन पूर्वमेव प्रवृत्तेस्तदाह—**इत्यन्यत्रेति**। शब्दरत्नादावित्यर्थः। दण्डयुक्तिं खण्डयति—**यत्त्विति**। ननु तथा नलोपोऽपि न स्यादत आह—**नलोपे त्विति**। पूर्वत्र=नुटि।

ॐ ज्योत्स्ना ॐ

**नलोपस्यासिद्धत्वादिति**। 'पूर्वत्रासिद्ध'मित्यस्य पूर्वशास्त्रसम्बन्धिकार्येऽसिद्धत्वमित्यर्थः।

ॐ विषमपदविवृतिः ॐ

**अल्विधित्वेनेति**। **यथोद्देशपक्षस्यैवेति**। ननु यथोद्देशपक्षस्यैवाश्रयणेन ज्ञापनेऽपि स्वस्मिन्न चारितार्थ्यम्, अष्टन्शब्दस्य 'त्रः सङ्ख्याया' इत्याद्युदात्ततयाऽन्तानुदात्तत्ववारणायाऽष्टनो दीर्घादित्यस्य शसि प्रवृत्तेरावश्यकतया तत्र 'झल्युपोत्तम'मित्यस्याप्राप्त्या चरितार्थस्याष्टनो दीर्घादित्यस्याष्टाभिरित्यादौ 'झल्युपोत्तम'मित्यनेन परत्वाद्बाधः स्यादेवेति चेन्न, अष्टन्शब्दस्य घृतादित्वेनान्तोदात्तत्वात्।

नन्वेवमपि दीर्घग्रहणस्य न स्वस्मिंश्चारितार्थ्यं, स्वरविधौ स्थानिवत्त्वनिषेधेनाष्टाभिरित्यत्र 'झल्युपोत्तम'मित्यस्याप्राप्तेरिति चेन्न, 'अनन्तर'स्येति न्यायेना'चः परस्मि'न्नित्यस्य स निषेध इत्यङ्गीकारात्। नन्वेवं सत्यष्टानामित्यत्रा'ष्टनो दीर्घा'दिति विभक्त्युदात्तत्वं न स्यात्, नलोपस्यासिद्धत्वेनाऽष्टन्शब्दस्य दीर्घान्तत्वाभावादित्याशङ्क्याह—**अन्तोदात्तत्वं त्विति**। **तत्प्रकृते इति**। नुटि कृते

१ नान्तसङ्ख्यावाचकस्य षट्त्वेन तत्र विशेषणतयाऽल्त्वाश्रयणमित्यभिमानः।

२ अयम्भावः—'भविष्यति किञ्चिदनेन प्रयोजन' मित्यभिसन्धिमात्रेण विभक्त्युत्पत्तेः प्रागेवाऽन्तरङ्गत्वात्षट्सञ्ज्ञायां विभक्तौ तत आत्वेऽपि नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपषट्त्वस्याल्धर्मत्वविरहेण स्थानिवद्भावेनातिदेशेऽष्टाभिरित्यत्रापि 'झल्युपोत्तम'मित्यस्य प्राप्तिरिति अष्टन्स्वरो निरवकाशतया 'झल्युपोत्तम'मित्यस्य बाधकस्तथा च अष्टाभिरित्यत्रेव अष्टभिरित्यत्रापि स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं ज्ञापकमिति **भैरवमिश्राः**।

**श्रीगुरुचरणास्तु**—नान्तसङ्ख्यावाचकत्वस्य पूर्वमपि सत्त्वान्नोद्देश्यतावच्छेदकमेव विधेयतावच्छेदकमिति नान्तसङ्ख्यावाचकत्वमुद्दिश्य तत्समानाधिकरणषट्त्वस्य विधानात्षट्त्वं नाल्विधिरिति आत्वे कृतेऽपि स्थानिवत्त्वेन जातषट्त्वेन कार्यसिद्धिरिति तदाशयमाहुः। आकारान्ते षट्त्वेऽपि जश्शसो न लुक्, औङ्विधिवैयर्थ्यापत्तेरिति तदाशयः।

नचाष्टन्स्वरोऽष्टानामित्यत्र चरितार्थ इति वाच्यं, 'षट्त्रिचतुर्भ्यो हलादि'रिति हलादिस्वरस्यैव तत्र प्राप्त्याऽष्टन्स्वरस्य निरवकाशत्वात्। नन्वेवमपि 'प्रियाष्टाभि'रित्यत्राष्टन्स्वरश्चरितार्थ इति वाच्यं, दीर्घग्रहणज्ञापकपरभाष्यप्रामाण्येन तस्य गौणेऽप्रवृत्तेरिति तत्त्वम्। स्पष्टञ्चेदं ज्योत्स्नादौ।

तन्न, पूर्वत्र कर्त्तव्ये नलोपाऽसिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावात्, सन्निपातस्याऽशास्त्रीयत्वेन तस्य नलोपाऽसिद्धत्वेनाऽलाभाच्च, आरोपिताऽसिद्धत्वेऽपि वस्तुतो नलोपे तद्विघातस्य जायमानत्वेन नलोपेऽपि तस्या दुर्वारत्वाच्च ।

—अत एव 'गव्यिता', 'नाव्यिते'त्यादौ सन्निपातपरिभाषया यलोपो न । –अन्यथा 'यस्य हल'इति यलोपस्य बहिर्भूततृज्निमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गाऽवादेशं प्रत्यसिद्धतया निमित्तविघाताऽभावः स्पष्ट एव।

—तस्मान्नलोपस्यापि परिभाषाऽनित्यत्वेनैव साध्यतया तस्याऽसिद्धत्वादात्वमव युक्तं–तदनित्यत्वेन । किञ्च—षट्सञ्ज्ञासन्निपातेन जातस्य नुट आत्वे नलोप वा न तद्विघातकत्वं, स्थानिवद्भावेन कृतात्वेऽपि षट्त्वसत्त्वात् ।

ॐ चिदस्थिमाला ॐ

अभ्युपेत्याह–सन्नीति। आरोपितेति च। अत एव=हेतुत्रयाङ्गीकारादेव। अन्यथा=हेतुत्रयानङ्गीकारे। तस्य=नलोपस्य आत्वदृष्ट्या। तत्=परिभाषा। वस्तुतस्त्वमाह–किञ्चेति। अपिना लोपसमुच्चयः।

ॐ ज्योत्स्ना ॐ

पूर्वशास्त्रञ्च नुड्विधायकं, तत्सम्बन्धि कार्यं–नुडिव–तस्य नान्तसन्निपातोऽपीति–तत्र कर्तव्ये नलोपस्यासिद्धत्वमुच्यते, एवञ्च नुटः सुब्विधित्वात्तत्सम्बन्धिकार्ये सन्निपाते 'नलोपः सु'बिति-नियमेनाऽप्यसिद्धत्वव्यावृत्तिः कर्तुं न युज्यते इति भावः। शास्त्राऽसिद्धत्वमाश्रित्याह—पूर्वत्र कर्त्तव्ये इत्यादि । कार्यासिद्धत्वेऽप्याह—सन्निपातस्याशास्त्रीयत्वेनेति । आरोपितेति । अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याप्रवृत्तेरतिदेशस्वभावसिद्धत्वादयमभ्युच्चयः । अत एवेति । शास्त्रप्रवृत्तौ कर्तव्यायामेवाऽसिद्धत्वं नतु कृतायामपीत्याद्युक्तरीतेरेवेत्यर्थः । परिभाषाऽनित्यत्वे-नैवेति । सन्निपातपरिभाषाया–अनित्यत्वेनैवेत्यर्थः । तस्याऽसिद्धत्वादिति । नलोपस्याऽसिद्धत्वा-दित्यर्थः। सन्निपातविघाताभ्युपगमेन दोषं परिहृत्य वस्तुतः सन्निपातविघाताभावादेव दोषपरिहार-माह—किञ्चेति । स्थानिवद्भावेनेति । यथा त्वल्विधिः षट्त्वं न भवति तथा प्रागुक्तम् ।

ॐ विषमपदविवृतिः ॐ

इत्यर्थः । तथाच नुड्दृष्ट्या नलोपस्यासिद्धत्वेन नुटो न स्वोपजीव्यविघातकाऽदर्शनमिति–संनिपात-परिभाषायाः प्रवृत्तिरिति न वाच्यमिति भावः। इदं कार्यकालपक्षेऽपि बहिरङ्गपरिभाषायास्त्रिपाद्याम-प्रवृत्तिप्रतिपादकस्वग्रन्थविरुद्धम् । 'नार्कुट' इत्यस्य पूर्वत्र वृद्धौ कृतायामपि परस्य विसर्गस्यासिद्धत्वा-श्रयणेन त्रिपाद्यां तदप्रवृत्त्युपपादनात् । अन्तरङ्गपरिभाषादृष्ट्या विसर्गासिद्धत्वन्तु तत्र पक्षे न त्रिपाद्यां तदप्रवृत्त्युपपादकम्, 'यद्यपीदं तत्रासिद्धं तत्त्विह सिद्ध'मिति भाष्योक्तरीत्या तत्र पक्षेऽ सिद्धत्वेप्यन्यपरिभाषाणामिवास्या अपि प्रवृत्तेर्दुर्वारत्वात् । अशास्त्रीयत्वेनेति । 'राजभ्या'मित्यादौ नान्तत्वस्याऽदन्तत्वाभावस्य वा अशास्त्रीयस्य दीर्घाप्रवृत्तयेऽतिदेशदर्शनादिदमयुक्तम् । सुबादि-विधावेव नलोपस्यासिद्धत्वेन सन्निपातपरिभाषया नलोपस्यासिद्धत्वे मानाभावः, सुब्विधौ कृते इत्यर्थे तु न मानमिति वक्तुं युक्तम् । नलोपो वेति । वाशब्द इवार्थः । नन्वेवमात्वे हलीत्यस्यापकर्षः—

१ मानाभावादिति । अन्यथाऽभवन्नित्यत्र कस्यापि सापादिकस्याऽप्राप्त्या तकारलोपेन चरितार्थः संयोगान्तलोपोऽनड्वानित्यत्र हल्ङ्यादिलोपं प्रत्यसिद्ध इति—हल्ङ्यादिलोपानन्तरमपि न प्रवर्त्तेतेति हकारलोपानापत्तिरेवञ्च कृते तत्रासिद्धत्वे न मानमित्याहुर्गुरवः । दुर्वारत्वाच्चेति । किञ्च—भाष्ये सन्नि-पातपरिभाषादूषणतया 'हे कुमारि—हे किशोरी'त्यत्र सम्बुद्धिनिमित्तकह्रस्वेऽनया सम्बुद्धि-लोपो न स्यादित्युक्तं, तव तु प्रत्ययलक्षणेन सन्निपातविघातविरहाद्भाष्योक्तमसङ्गतं स्यादित्यपि-बोध्यमिति गौडाः ।

कार्यकालपक्षे तत्तद्विद्ध्येकवाक्यतापन्नषट्त्वस्य बहिरङ्गतयाऽऽत्वे कृतेऽनान्तत्वेन षट्त्वाभावान्नुण्न स्यादिति--'हली'त्यपकर्षः। दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्सञ्ज्ञाश्रयणे,—अत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात्पूर्वं षट्त्वे नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा—प्रतिपत्तिगौरवमिति बोद्धयम्।

ॐ चिदस्थिमाला ॐ

नन्वेवं किमर्थमपकर्षोऽत आह–कार्येति। 'हलीत्युभयोः शेष' इति भाष्यमपि कार्यकालाशयकमिति भावः। दीक्षिताद्युक्तौ दोषमाह–दीर्घेति। पक्षान्तरं प्रागुक्तमेवाह–अत्रेति। षट्सञ्ज्ञायामित्यर्थः।

ॐ ज्योत्स्ना ॐ

इदमप्युपलक्षणं–लौकिकैकदेशविकृतन्यायस्य। नन्वेवं चेदुक्तरीत्याऽस्यापकर्षो व्यर्थः, स्थानिवद्भावेन कृतात्वेऽपि षट्त्वस्य सद्भावा'दष्टाना'मिति नुट्प्रतिषेधाभावादत आह–कार्यकालपक्षे इति। आत्वे कृते इति। आत्वस्येव षट्त्वस्यापि बहिरङ्गत्वात्तुल्यबलत्वात्परत्वान्नित्यत्वाद्वा आत्वमिति भावः।

दीर्घग्रहणाज्ज्ञापकादिति। तद्धि 'अष्टभि'रित्यत्र ह्रस्वात्परविभक्तेरन्तोदात्तत्वव्यावृत्त्यर्थं क्रियमाणमष्टाभिरित्यत्र कृतात्वस्य षट्त्वाभावादष्टन इत्यंशान्तरस्य चरितार्थस्य परत्वात् 'झल्युपोत्तम'-मित्यनेन बाधसिद्धौ व्यर्थं सत्कृतात्वस्य षट्सञ्ज्ञायां ज्ञापकमित्यष्टाभिरित्यत्रापि 'झल्युपोत्तम'-मित्यस्य प्राप्त्याऽष्टभिरित्यत्र निरवकाशत्वादुपोत्तमस्वरबाधकं स्यात्, तन्माभूदिति चरितार्थं सम्पद्यते—इति स्पष्टं भाष्यकैयटयोः। नचैवमपि 'अष्टा'वित्यत्र शस्यष्टन्स्वरश्चरितार्थ इति वाच्यं, घृतादिपाठादन्तोदात्ताष्टन्शब्दैकादेशस्यैकादेश उदात्तेनोदात्तः—इत्यनेनापि सिद्धत्वादित्याशयात्। तथापि 'प्रियाष्ट्ने'त्यादावष्टन्स्वरस्य चारितार्थ्यसम्भवाज्ज्ञापकत्वं कथमिति चेत्—एवं तर्हि एवमत्र कल्पयामः,—'षट्त्रिचतुर्भ्यो हलादि'रित्यतः प्राक्—'अष्टनो हलादिः'-ततः 'षट्त्रिचतुर्भ्यो झल्युपोत्तम'मिति न्यासः करिष्यते। यद्वा 'शतुरनुमो नद्यजादी' इत्यत्रान्तोदात्तादित्यनुवृत्तेः सर्वसम्मतत्वेन ततः प्राक्पठ्यमानेऽष्टनः स्वरे मण्डूकानुवृत्तिक्लेशभिया तत्सम्बन्धादन्तोदात्ताष्टन्शब्दादेव स्वरो विधेयः। उभयथापि 'प्रियाष्ट्नः' इत्यादौ विभक्तिस्वरो न प्राप्नोतीति—भाष्योक्तज्ञापकं नानुपन्नं, किन्तु 'प्रियाष्टाभि'रित्यादौ आद्यपक्षे स्वरे इष्टापत्तिर्न द्वितीयपक्षे इति विशेषः। 'कदष्टा'वित्यादौ अव्ययपूर्वपदप्रकृतिस्वरे पक्षद्वयेऽपि स्वरो न प्रवर्तते इति चापरो विशेष इति दिक्। केचित्तु 'कदष्टा'वित्यादौ यथाश्रुतसूत्रे-

ॐ विषमपदविवृतिः ॐ

परत्वान्नित्यत्वाच्च नुटं बाधित्वाऽऽत्वे नुट् न स्यादिति तत्प्रवृत्तये, यदि च कृतात्वस्यापि षट्त्वं तदा स व्यर्थ इत्याशङ्क्याह—कार्यकालपक्षे इति। ननु कार्यकालेपि नुडर्थं षट्सञ्ज्ञायां ततः प्राप्तनुटं परत्वाद्बाधित्वाऽऽत्वेपि स्थानिवत्त्वेन षट्त्वमाश्रित्य नुट् सुलभ इत्याशङ्क्याह—तत्तद्विधीति। ततश्च नुटमिव षट्त्वमपि बाधित्वा परत्वादात्वमिति भावः। ननु लक्ष्यानुरोधेन यथोद्देशपक्षस्यैवाश्रयणेन नुट्सिद्धौ कार्यकालपक्षाश्रयणेन दोषोद्भावनं तत्परिहाराय हलीत्यपकर्षश्चायुक्त इत्याशङ्क्याह—दीर्घग्रहणादिति। प्रतिपत्तिगौरवमिति। 'हलीत्यपकर्षापेक्षये'त्यादिः। वस्तुतस्तु यथोद्देशपक्षे षट्त्वस्य स्थानिवद्भावेन सुलभत्वे 'षट्सञ्ज्ञायामुपदेशवचनं कर्तव्यम्, तातात्यष्टनो नुडर्थं, अष्टानामित्यत्रात्वे कृते षट्सञ्ज्ञा न प्राप्नोत्युपदेशग्रहणाद्भवती'ति भाष्यवार्तिकयोरसङ्गतिः। तस्मात् षट्त्वस्य नान्तत्वविशिष्टसङ्ख्यावाचकत्वेनाल्घटितत्वान्नातिदेशसाध्यत्वम्, सञ्ज्ञापदस्य तद्विधावुद्देश्यतावच्छेदक-

वृत्त्याद्यनुसारेणाह-**गौणत्वे त्वित्यादि । स्थानिवद्भावादिति** । 'पूर्वत्रासिद्धे' इति तु 'तस्य दोष'इत्यनेन निषिद्धमिति भावः । 'कार्यकालपक्षे' इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । **प्राधान्य एवेति** ।-बहुवचननिर्देशात् । एवञ्च गौणे औशोऽप्रवृत्तौ तज्ज्ञाप्याऽऽत्वमपि नेति भावः ।

परे तु-'ष्णान्ता'इति सूत्रे भाष्ये-'अष्टाना'मित्येतत्सिद्धये 'हली'त्यपकर्षमुक्त्वा तत्र पक्षे "-'प्रियाष्टौ' 'प्रियाष्टा' इति न सिद्ध्यति, 'प्रियाष्टानौ' 'प्रियाष्टान' इति प्राप्नोति-" इति शङ्किते-'यथालक्षणमप्रयुक्ते' इति समाहितम्। तत्र 'यथालक्षण'मिति प्रतीकमुपादाय "यस्य विशिष्टः प्रयोगो न स्मर्यते, नापि प्रयोगनिषेधस्मृतिः, तद्यथालक्षणमनुगन्तव्यं, तदत्र मा भूदात्वमित्यर्थः-" इत्येकमर्थमुक्त्वा-"नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव

❀ चिदस्थिमाला ❀

खण्डनीयत्वादाह—**वृत्त्येति । तस्येति** । तत्र हि णत्वं सर्वं गृह्यत इत्युक्तम् । पक्षान्तरं खण्डयति—**कार्येति** । प्रतिदीव्न इत्यत्र । **आदेशेति**—औशित्यर्थः । एतेन काशिका विपरीता चिन्त्येति सूचितम् । वृत्त्याद्युक्त्या सूचितमाह—**परे त्विति** । तत्र=अपकर्षपक्षे । तत्र= भाष्ये । **यथेति** । शास्त्रमनतिक्रम्येत्यर्थः । तदाह—**तदत्रेति** ।

❀ ज्योत्स्ना ❀

दीर्घस्वरप्राप्तेर्ज्ञापकानुपपत्तिमौश उदात्तनिपातनेन परिहरन्तोऽष्टन्शब्दस्य घृतादिपाठकल्पनामप्रामाणिकीं मन्यन्ते, तन्न, 'अष्टाविंशतिश्च मेऽष्टाचत्वारिंशच्च मे' इति श्रुतावन्तोदात्तदर्शनात् । तत्र हि 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु' 'सङ्ख्ये'ति पूर्वपदप्रकृतिस्वरोऽष्टन्शब्दस्य घृतादिषु पाठे 'त्रेः सङ्ख्याया' इत्याद्युदात्तापत्त्या विरुध्यते इत्युक्तम् । **स्थान्यन्तरधर्मत्वाभावेनेति** । नान्तसङ्ख्यावाचकत्वं पर्यवसन्नं षट्त्वं न तु तत्समानाधिकरणधर्मान्तरविशेषरूपं तदिति पक्षेऽलिविधित्वात् , स्थानिवद्भावाप्राप्तावप्येकदेशविकृतन्यायेन तत्त्वं बोध्यम् ।

**प्राचामनुरोधेनेत्युक्तमिति** । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेरिति भावः । अत्र यदधिकं वक्तव्यं तदस्माभिः प्रागेव निरूपितम् । ननु 'यथालक्षणमप्रयुक्ते'त्यस्य मुनित्रयतात्पर्यानुगृहीतलाघवप्रयुक्तलक्षणानतिक्रमेण प्रयुक्तस्यानुगमः=अनुमितिः-'अप्रयुक्ते दीर्घसत्रव'दिति पस्पशोक्तन्यायेन,-कर्तव्येति-पदस्फोटाभ्युपगतमतावलम्बेनाद्यं व्याख्यानं, तत्रानुमितेः परोक्षरूपव्याप्त्यात्मकत्वात्परोक्षस्य तथा कर्तुमशक्यत्वात् शिष्टप्रयुक्तवाक्यघटकपदानामेव च तथात्वात्सर्वदेशान्तरे इति पस्पशोक्तप्रकारेण प्रयुक्तानामपि देशान्तरे उपलम्भादुपलम्भफलको यत्नः कर्तव्यो नतु ततः प्राक् साधुत्वापरोक्षव्यञ्जिका लक्षणप्रवृत्तिः, प्रयुक्ते यथा अलक्षणं तथा कर्तव्यमित्यर्थमाश्रित्य वाक्यस्फोटवादिमतावलम्बनापरं व्याख्यानमुपाध्यायैरुक्तम् । अत्र द्वितीयव्याख्याने लक्षणोपप्लवाभाव एव वक्तव्यः, लक्षणाप्रवृत्तेरुक्तिः—साधुत्वनिर्णयाजनकत्वं प्रवृत्ताव-

❀ विषमपदविवृतिः ❀

रूपेणैव प्रायेण सञ्ज्ञिबोधकत्वात् । अन्ये तु-हलीत्यपकर्षे नुटि कृते न आत्वं, सन्निपातपरिभाषाविरोधात् , नलोपे तु न सा, न तिस्रिति धर्मिग्राहकमानेन सपादसप्ताध्याय्यामेव तत्प्रवृत्तेः, अत एव 'जग्ध'मित्यादौ घत्वादिः । अत एव 'दोदद्घो'रिति सूत्रे भाष्ये दान्तत्वे थान्तत्वे च नत्वधत्वे, थान्तत्वेऽदोषस्तस्मात्थान्त एवेत्युक्तम् । एवञ्च 'हलीत्युभयोः शेष' इति प्रतीकमुपादाय नुटि कृते आत्वमिति कैयटग्रन्थश्चासङ्गत एवेत्याहुः । **तज्ज्ञाप्यात्वमपि नेति** । इदमयुक्तम्—

लक्षणनान्वाख्यानात्-"इति व्याख्यानान्तरमुक्तम्। तत्रान्त्यव्याख्यानमेव ज्यायः,—अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः। आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः, प्रयुक्तेऽपि लक्षणानतिक्रमात्। 'प्रयुक्तानामिदमन्वाख्यान'-मित्यन्यत्र भाष्योक्तेश्च।

किञ्च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता। एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च। 'न वा' इति सूत्रे भाष्ये पक्षभेदेनैकस्यैव साधुत्वासाधुत्वयोस्तिरस्काराच्च। अत एव हल्ङ्यादिसूत्रादौ—अस्य 'अप्रयुक्ते लक्षणाभाव' इत्येव व्याख्याऽऽदृता कैयटेन।

'नाम्रेडितस्ये'ति सूत्रेऽपि कैयटः—'प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्तिः'-इति। एवञ्चैषामनभिधानमेवोचितम्। अत एव 'अष्टाभ्य औ'शिति सूत्रे भाष्ये—'विभाषा आत्वं, यद्‌यमात्वभूतस्य ग्रहणङ्करोति—'अष्टाभ्य' इति; अन्यथा 'अष्टन' इत्येव ब्रूयात्—' इत्युक्तम्। कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव।

---

❀ चिदस्थिमाला ❀

उक्तं=कैयटेन। तत्र=तयोर्मध्ये। 'अलक्षण'मिति च्छेदेन नञ्समासेनाव्ययीभावेनाप्रयुक्ते इति। तत्र दोषान्तरमाह—**प्रयुक्तानामिति**। **फक्किकेत्यनेन**-वचनत्वं निरस्तम्। कैयटसम्मतमपीदमेवेत्याह—**अत एवेति**। अन्त्यस्य ज्यायस्त्वादेवेत्यर्थः। एषां=गौणानाम्। इदं भाष्यान्तरेण द्रढयति—**अत एवेति**। तदनभिधानादेवेत्यर्थः।

❀ ज्योत्स्ना ❀

वगमयन्ती प्रथमव्याख्याने लक्षणप्रवृत्तिं साधुत्वपरोक्षफलिकां व्यवस्थापयति, नत्वसाधुत्वनिर्णय-स्तत्र। अत एव बाधतेरात्मनेपदित्वाद्बाधतीति परस्मैपदघटितस्य च्युतसंस्कृतित्वं, 'वचन्ती'त्या-दीनां व्याकरणलक्षणानुगमात्तदभावादप्रयुक्तत्वमात्रमिति विशेष उक्तः **कण्ठाभरणे**—राज्ञा भोजेन।

तथा-'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन्! रुमायां लशुनस्य कोऽर्घः? ॥'

—इति परस्परान्वयाननुभावकपदकदम्बरूपवाक्येऽपार्थत्वमुदाहरता—प्रत्येकपदेऽन्वितार्थ-पदच्छायामात्रेण साधुत्वानुमानं, तन्निर्णयस्तु न वाक्यस्यैव मुख्यशब्दत्वात्,(?) तद्घटक-शिष्टप्रयुक्तान्वितार्थपदसंस्कारस्य वा सर्गान्वाख्यानोपायस्य व्याकरणविषयत्वादित्यर्थमङ्गीकृतं,

वृद्धिसूत्रे च भाष्ये 'कृतमनयोः साधुत्व'मित्युक्ते, 'वृद्धिः—आदैच्' इत्यनयोः पदयोः साधुत्वम-भ्युपगम्यैवाचार्यस्य अकृत्वा साधना तु प्रागन्वयाननुभावकत्वादनर्थकत्वमाशङ्कितं, तत्राप्युक्त एवाशय इति प्रियाष्टन्शब्दस्य शिष्टाऽप्रयुक्तस्य लक्षणानुसारेण साधुत्वानुमाने को दोषः? । एतेन 'प्रियाष्टाभ्या'मित्यादौ भाष्यतात्पर्यानुसारेणास्मदुत्प्रेक्षितं न्यायानु(?) द्वयोर्न क्वापि प्रतिकूला भवती-त्यस्वरसादाह—**अत एवेति**। **तदसङ्गतिः स्पष्टैवेति**। शक्यते त्वत्रापि वक्तुं यत्—अष्टन इत्यल्लोपाभावे निर्देशो गौणेऽल्लोपयोग्यत्वव्यावर्तक इति कृतात्वबहुवचननिर्देशस्यात्वविकल्प-ज्ञापकत्वे नास्त्यसङ्गतिरिति, तथापि तुल्यन्यायात् 'अष्टन आ विभक्ता'वित्यस्यापि गौणे प्रवृत्तिर्न्याय्येति गूढाभिसन्धिराह—**एवञ्चेति**। वस्तुतस्तु 'अष्टन आ विभक्ता'वित्यत्र 'हली'-

❀ विषमपदविवृतिः ❀

'प्रियाष्टानौ प्रियाष्टान इति न सिध्यति,' 'प्रियाष्टानो प्रियाष्टान इति प्राप्नोती'ति 'ष्णान्ते'ति सूत्रस्थभाष्यविरोधात्। तत्र ह्यात्वं कृत्वा—औश् न कृतो हलीत्यस्यापकर्षपक्षे प्रियाष्टाभ्यामित्यादाविव प्रियाष्टानामित्यादावप्यात्वप्रवृत्तेः सुलभत्वाच्च। अत एव=अनभिधानादेव। **विशेषणार्थं इति**।

एवञ्च तत्प्रयोगविचारः सर्वोऽपि निष्फल एवेत्याहुः ।

**निरुपपदादिति** । नुमोऽसमास एव विधानेन, सोपपदे 'चोः कु'रिति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः । **कनाविति** । इदमुपलक्षणम्—उच्चारणार्थेकारस्यापि । ककारो गुणप्रतिषेधार्थः, नकारः 'क्विन्प्रत्ययस्ये'त्यत्र विशेषणार्थ इति भाष्ये स्पष्टम् ।

**सन्निहिते इति** । तत्फलन्तु—णिजादीनां सञ्ज्ञाऽभावः ।

❀ चिदस्थिमाला ❀

**विचार इति** । हरदत्तादिशास्त्यन्तानाम् । सोपपदे क्विनोऽफलत्वमाह—**नुम इति** । प्राचीनसकलग्रन्थासाङ्गत्याय सिद्धान्तमते मूलन्यूनतां परिहरति—**इदमिति** । आदिना वृद्धिप्रतिषेधादि ।

❀ ज्योत्स्ना ❀

ल्यपकर्षादेव न गौणव्यावृत्तिः 'प्रियाष्टानौ' 'प्रियाष्टान' इत्यजादिविभक्तिव्यावृत्तेरेव तन्मुख्यफलत्वात् । नचैवं लोपाविशिष्टनिर्देशवैयर्थ्यं, हलीत्यपकर्षे तस्य तात्पर्यग्राहकत्वेन वर्णनीयत्वात्, इत्येतत्सर्वमभिप्रेत्यैवास्य मतस्यादौ परेत्विति तुशब्देनावसाने आहुरित्यनेन सूचितमिति प्रतीयते इत्यलम् । **इदमुपलक्षणमिति** । अत्र यद्वक्तव्यं तदुक्तम् । **विशेषणार्थं इति** । भाष्यकैयटयोस्तु तदनुबन्धकपरिभाषया 'क्विप्रत्ययस्ये'त्युच्यमानेऽपि क्विपो ग्रहणं

❀ विषमपदविवृतिः ❀

अन्यथा 'ऽनुनासिकस्य क्विझलो'रित्यादाविव क्विपोऽपि ग्रहणापत्तिरिति भावः । वस्तुतस्तदनुबन्धकग्रहणेति परिभाषया क्विपोऽग्रहणे सिद्धे नकारोऽपि व्यर्थ एवेति भाष्यकैयटयोः स्पष्टम् ।

**णिजादीनामिति**। णिचः कृत्वे देवदत्तेन पाचयतीत्यादौ 'कर्तृकर्मणो'रिति षष्ठ्यापत्तिः, णिचः प्रकृतेः पचेरर्थे देवदत्तस्य कर्तृत्वात् । जन जनने इत्यस्माण्णिचि 'जनिवध्यो'रिति वृद्धिनिषेधापत्तिः ।

---

१ परेतु '–सर्वनामानि' 'प्रष्ठोऽग्रगामिनी'त्यादौ क्वचित्प्रयुक्तेऽपि 'प्रातिपदिकान्ते'तिणत्वस्यातिक्रमो दृश्यते एव, अप्रयुक्ते तु यथाशास्त्रं प्रयोग इति नातिक्रम इति न वाक्यशेषाऽनुपपत्तिः । यथा च सहस्रवार्षिकयज्ञबोधकवचनानां कदाचित्सहस्रवार्षिकपुरुषैः कृत्वाचारितार्थ्यमुरीक्रियते, तथैव प्रियाष्टनादीनां कदाचित्प्रयुक्तत्वमादाय तदर्थमेतदिति न—'प्रयुक्तानामिदमन्वाख्यान'मित्यनेनापि विरोधः, यदेमे प्रयुक्ताः स्युस्तदा चारितार्थ्यस्य सुवचत्वात्। कैयटप्रदर्शिते द्वितयीऽर्थे च न मानं, किञ्च–यथालक्षणमितिच्छेदो भाष्यकृदभिमतः स्यात्तर्हि भाष्यकृताऽवश्यमेव स प्रदर्शितः स्यात, नहि भाष्यकृतामियं शैली–यत्सन्दिग्धानामंशानामव्याख्यानमिति । एवमञ्चिकीर्तदित्यादेर्भाष्योक्त्याऽसाधुतालाभात्कदाचित्प्रयुक्ता अपि तेऽसाधव एवेति—न हलङ्यादिसूत्रस्थकैयटविरोधोऽपि । 'अष्टाभ्यः' इत्यत्र तु—'किमष्टाशब्दस्य लक्ष्यस्यानुकरणमिदमुत लक्षणनिष्पन्नोऽत्राकारः ? इति विचारावसरे इदमुक्तं भाष्ये, "–यदि लक्षणनिष्पन्न आकारः स्यादष्टन्छब्दानुकरणमेव सूत्रकृत्कुर्यात्, दृश्यते च आकारः–'अष्टाभ्यः' इति, अतो वैकल्पिकमिदमात्वम्–" इति । [ अत्र च भाष्ये नैकवचनबहुवचनयोरादरोऽपि तु—अनुकरणे एव विचारः, –कृतात्वस्यानुकरणमष्टन्छब्दस्य वेति] एवञ्च भट्टोक्तदोषाभावात्प्रथमव्याख्यैव युक्ता न द्वितीयव्याख्यानम् ।

किञ्च लक्ष्यैकचक्षुष्केन तथैव वक्तव्यमिति न राजाज्ञाऽस्ति । किञ्च स्वयं भाष्यकृल्लक्ष्यैकचक्षुष्कोऽपि लक्षणैकचक्षुष्कं छात्रं प्रति तथा वक्तुं शक्नोत्येव । किञ्च–नैकफक्किकाव्याख्यानभेदेन एकस्य साधुत्वासाधुत्वे ब्रूमः, किन्तु साधुत्वमेव ब्रूमः इति—अभिधानमेवैषामित्यस्मद्गुरवः शेषावताराः श्रीत्रिपाठिपादाः प्राहुः । अस्मत्पितामहश्रीचरणा अप्येवमेव व्याचक्रुरिति **गौडाः** ।

अतिङ् किं ? 'रुरुदिवे'त्यादौ 'नेड् वशि कृती'ति निषेधो माभूदिति । ज्ञापकेन निर्वाहस्तु व्याख्यानाद्वरं करणमिति न्यायाननुगृहीत इति सूत्राशयः ।

**युजेर** । 'उगिदचा'मित्यतः 'सर्वनामस्थाने' इति, 'इदितो नुं'मित्यतो नुमिति चानुवर्त्तते ।

**क्विन्प्रत्यय** । प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिः । न च तदभावे वस्य कुत्वापत्तिः, तथा सति 'क्विनो घ' इत्येव वदेत्, 'नशेर्वा' इत्यत्र घानुवृत्ता-वप्यदोषादिति बोध्यम् ।

❀ चिदस्थिमाला ❀

**ज्ञापकेनेति** । तत्र कृद्ग्रहणेनेत्यर्थः । सूत्राशयइत्यनेन सिद्धान्ते फलत्वमेव सूचितम् । वस्य=तस्यैव ।

❀ ज्योत्स्ना ❀

न भविष्यतीति नकारः प्रत्याख्यातः । **ज्ञापकेन निर्वाहस्त्विति** । 'अकृत्सार्वधातुकयो'रित्यत्र सार्वधातुकग्रहणं तिङः कृत्सञ्ज्ञाया अभावे ज्ञापकम्, अन्यथा 'चिनुया'दित्यादौ कृत्त्वादेव निषेध-सिद्धौ तद्वैयर्थ्यप्रसङ्ग इति भावः । **घ इत्येवेति** । यद्यपि नादस्याल्पप्राणस्य वकारस्य तादृशो वर्गतृतीयः [-'कु'रिति न्यासे प्राप्तः-'क्विनो ग' इति न्यासेन ] ग एव विधातुमुचितस्तथापि

❀ सदाशिवभट्टीयम् ❀

**क्विन् प्रत्ययस्य कुः** । **घ इतीति** । यदि घस्यान्तरतम्याद्गकारः फलमपेक्षते इति तर्ह्यत्रापि न्यासे 'ग'

❀ विषमपदविवृतिः ❀

किञ्च चेचीयत इत्यादावकृत्सार्वेति दीर्घानापत्तिः, यङन्तत्वात् । **रुरुदिवेति** । नन्विदमयुक्तमिति चेन्न, 'नेड्वशी'त्यत्र तिङो व्यावर्त्यत्वासम्भवेन कृद्ग्रहणसामर्थ्येन कृत्त्वावच्छेदेन क्रादिनियमं बाधित्वाऽस्य प्रवृत्तिविज्ञानादित्याशयात् । 'नेड्वशी'त्यस्यापि क्रादिनियमेन बाधात्-'रुदिव' इत्युचितम् । तत्र हि 'रुदादिभ्यःसार्वे'तीडिष्यते, कृते तु नेड्वशीति निषेधः स्यात् । **ज्ञापकेनेति** । 'अकृत्सार्वधातुके'ति सूत्रे सार्वधातुकग्रहणेन तिङां कृत्सञ्ज्ञाभावकल्पनयेति भावः । ननु 'जागृया'दित्यत्र रीङोऽप्रवृत्तये, 'क्रिया'दित्यत्र तत्प्रवृत्तये रिङ्विधावसार्वधातुकग्रहणमात्रस्यानुवृत्त्यर्थं तदिति चेन्न, एकदेशानुवृत्तौ मानाभावेन तत्रापि समुदायानुवृत्तौ लिङ्ग्रहणवैयर्थ्यापातेन पर्युदासस्यैवाऽप्रवृत्तेरित्याशयात् ।

**क्विनो घ इति** । यद्यप्यल्पप्राणप्रयत्नसाम्यादिति वक्तुमुचितम्, तथापि वकारस्य महाप्राणता क्विनो

१ नचात्र 'नेड्वशी'ति प्राप्तस्यापि प्रतिषेधस्य क्रयादिनियमेन निवृत्त्या रूपसिद्धिर्निर्बाधैवेति वाच्यं, क्रयादिनियमो हि 'मध्येऽपवाद'न्यायेन 'एकाच उपदेशे' इति, 'श्र्युकः किती'ति सूत्रेण वा प्राप्तस्यैव निवर्त्तको न तु 'नेड्वशी'ति सूत्रप्राप्तस्येत्याशयात् । परन्त्वेवं सति बभूविवेति रूपस्य पुरःस्फूर्त्तिकत्वा-त्तत्यागस्य निर्बीजत्वापत्तेः, अशोकवनिकान्यायेन योजनन्तु क्लिष्टमिति 'अरुदिवे'ति पाठ एवात्र युक्तः । लङो रूपमेतत् । अत्र प्राप्तस्य 'रुदादिभ्यः सार्वधातुके' इतीटः प्रतिषेधः स्यादिति भावः । ननु तिङः कृत्सञ्ज्ञाऽभावे'ऽकृत्सार्वधातुकयो'रित्यत्र सार्वधातुकग्रहणमेव ज्ञापकं, तद्धि 'चिनुया'दित्यादौ दीर्घा-ऽप्रवृत्त्यै, यदि च तिङः कृत्सञ्ज्ञा स्यात्तर्हि कृत्पर्युदासेनैव सिद्धे सार्वधातुकग्रहणं व्यर्थमेव स्यात् ।

किञ्च तिङः कृत्सञ्ज्ञायाङ्कृदन्तत्वात्प्रातिपदिकत्वेऽतिशायने तमविष्ठनावित्येव तमपः सिद्धौ 'तिङश्चे'ति सूत्रमपि व्यर्थमेव स्यादिति तदेव ज्ञापकं भविष्यतीत्यत आह—**ज्ञापकेनेति** । **वरं करणमिति** । तादृशार्थ-बोधकशब्दोपादाने हि शब्दात्तथार्थोपस्थितिः, व्याख्यानेन तथाकल्पने तु विवक्षितार्थस्यानुमितिवाच्या, अनुमितिसमग्री च गुरुतरव्याप्तिज्ञानादिघटितेति गौरवं स्पष्टमेवेति ज्योत्स्नानुसारिणो **भैरवमिश्राः** ।

**चोः कुः** । 'स्को'रित्यतो'ऽन्ते' इति, 'झलो झली'त्यतो 'झली'ति चानुवर्त्तते, पदस्ये'ति चाधिकारः । **कुत्वस्यासिद्धत्वादिति** । अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः ।

**सुयुगिति** । 'सत्सूद्विषे'ति क्विप् । **धातुपाठेति** । व्याख्यानादिति भावः । **युगिति** । 'क्विप् चे'ति क्विप् । **इहेति** । 'सृजिदृशो'रिति सूत्रे-'रज्जुसृड्भ्या'मिति भाष्यप्रयोगात्काम्यच्सूत्रे भाष्ये—'उपयट्काम्यती'ति प्रयोगात् 'क्विन् प्रत्ययस्ये'ति कुत्वं नेत्यर्थः ।

**परिमृडिति** । धातोरुच्यमानं कार्य्यं तत्प्रत्यये'इति परिभाषयाऽत्र सुब्निमित्तिका मृजेर्वृद्धिर्न, क्विन्निमित्तिका तु 'क्ङिति चे'ति निषेधान्न ।

**परौ व्रजे** । 'क्विब्वची'त्युणादिपठितमिति मते—ततः क्विब्दीर्घावनुवर्तेते,

❀ चिदस्थिमाला ❀

समासे क्विनोऽभावादाह—**अतद्गिति** । तथा=बहुव्रीहितः । प्राप्तेराह—**इहेतीति** । ननु परिमृडित्यत्र मृजेर्वृद्धिरिति स्यात् ,-प्रत्ययलक्षणेन सुप्त्वात् , नच मृज्प्रकृतिकप्रत्यये एव सेति वाच्यं, तथापि मृज्धातोः क्विपि मृडित्यादौ दोषध्रौव्यादत आह—**धातोरिति** । **निषेधान्नेति** । एतेन मृडित्यपि सिद्धम् । अस्यासिद्धान्तत्वायाह—**क्विब्वचीति** । व्रश्चादौ तथा क्लृप्तेराह—**व्याख्येति** । चस्त्वर्थे । यत्तु 'न वा झलो लोपा'-

❀ ज्योत्स्ना ❀

'वर्गाणां प्रथमद्वितीया विवृतकण्ठाः श्वासानुप्रदाना अघोषाः, एके अल्पप्राणा इतरे महाप्राणाः, तृतीयचतुर्थाः संवृतकण्ठा नादा घोषवन्त एकेऽल्पप्राणाः, इतरे महाप्राणा यथा तृतीयास्तथा पञ्चमाः' इति तुल्यास्यसूत्रस्थभाष्योक्त—शिक्षावा स्याद्वर्गाणामेवाल्पप्राणत्वलाभात्—'नादिनो हझशः स्मृताः, ईषन्नादा-यणश्चैवे'ति पाणिनीयशिक्षया—ईषच्छुक्लः शुक्ल एवेति लौकिकदर्शनसहकारगृहीतनादानुप्रदानभावस्य तादृशयोरिव वर्गतृतीयचतुर्थयोः प्राप्तेर्विनिगमकाभावेऽपि शब्दपरविप्रतिषेधाच्चतुर्थस्य घस्य प्राप्तिरिह विवक्षितेत्यष्टमे भाष्यप्रदीपयोः स्पष्टम् । तत्राभिनवविवरणे तु—वकारस्य महाप्राणता—'क्विनो घ' इति प्रदीपोत्प्रेक्षितन्यासानुमेयेति व्याख्यातं,—तादृशशिक्षाप्रातिशाख्यादिमूलान्वेषणयत्नेन प्रमाणीकृत्य व्यवस्थापनीयम् । केचित्तु—'शल ऊष्माणः सस्थाने द्वितीया हकारेण चतुर्था'' इति शब्दकौस्तुभप्रदर्शितशिक्षायाम्—ऊष्मत्वं=वायुप्रधानत्वम् , तच्च महाप्राणत्वमेव, 'शषसहानां वर्गद्वितीयचतुर्थयोश्चे'ति व्याख्यानाच्छेषभूतानां वर्गप्रथमतृतीयपञ्चमानामिव यणामल्पप्राणत्वस्यार्थलभ्यत्वं प्रतिज्ञाय नादिनोऽल्पप्राणस्य वस्य तादृशतृतीयप्राप्तेः 'क्विनो ग' इति न्यासस्यैव भाष्याशयत्वेन वर्णयन्तः प्रदीपोपमर्देन व्याचक्षते । **इति मते इति** । यदा तु

❀ सदाशिवभट्टीयम् ❀

इत्येवोचितम् ,अस्यासिद्धत्वेन जश्त्वाप्रवृत्तेः,प्रक्रियालाघवाच्च । तथापि कैयटानुरोधेन घ उक्तः,तदाशयस्तु विवरणे द्रष्टव्यः। न च यथा कथञ्चिद्धकारस्य वकारान्तरतमत्वोपपादनेऽपि 'नशेर्वे'त्यत्र शकारस्य षत्वजश्त्वाभ्यां डकारेडकारान्तरतमत्वन्दुर्वचमेवेति कथमुच्यते-नशेर्वेत्यत्र घानुवृत्तावप्यदोषादिति वाच्यं,'गृहं गन्तुम्प्रवृत्तस्य कपाटं पर्य्याटयाग्रे'इति न्यायेन तेन तस्य तद्वदेव सुवचतरत्वात्। यद्वा'झषस्तथो'रित्यतः प्राक्'क्विनो घोऽन्ते नशेर्वा झलाञ्जशः'इति न्यासेन जश्त्वे सुलभे फलभेदाभावः। नन्वेवमपि प्रक्रियालाघवाय गे विधेये'घ'विधानस्य कोऽभिप्राय इति चेच्छृणु;'दादे'रित्यतस्तदनुवृत्तिसम्भवेन विधेयानुपादाने लाघवमिति । तथाचैवं न्यसनीयम्-'चोः कु'रित्यस्यानन्तरं-'नहो धः' 'आहः स्थः' 'व्रश्चभ्रस्ज' 'ढोढः' 'दादेर्धातोः' 'वा द्रुहः' 'क्विनोन्ते' 'नशेर्वा' 'एकाचो वशो' 'दधस्तथोः' 'झलाञ्जशि'ति ।

❀ विषमपदविवृतिः ❀

'घ'इति वदेदिति कैयटोत्प्रेक्षितन्यासानुमेयेति विवरणे स्पष्टम् । **इति मते इति** । यदा त्व'न्येभ्योपि

व्याख्यानाच्च ताभ्यां 'पदान्ते' इत्यस्यासम्बन्धः, किन्तु षेणैवेत्याह—**क्विबित्यादि** ।

**विश्वस्य** । 'ढ्रूलोपे'इत्यतो 'दीर्घ' इत्यनुवर्त्तते । ननु षत्वादीनामसिद्धत्वेन राट्-शब्दपरत्वाभावः, अत आह—**पदान्तेति** । तेन 'विश्वराजा'वित्यादौ न, 'विश्वाराड्भ्या'-मित्यत्र च भवति । 'आदित्यविश्ववसवः' इत्यत्र तु न दीर्घः, 'नरे सञ्ज्ञाया'मित्यतः सञ्ज्ञापदापकर्षणात् ।

**स्कोः स** । 'झलो लोपः संयोगान्तलोप' इति भाष्योक्तेरत्र 'झल' इत्यस्यासम्बन्धः, तेन झलः परयोः स्कोर्लोप इति नार्थ इत्यन्यत्र प्रपञ्चितम् । 'झली'त्यनुवर्त्तमानं झलादि-प्रत्ययपरम् । 'झलो झली'त्यत्र 'उदः स्थे'त्यारम्भेण तदर्थकतयाऽर्थाधिकारात् ।

---

❀ **चिदस्थिमाला** ❀

दिति भाष्यादत्रापि पञ्चम्यन्तझल इत्यस्य सम्बन्धेन 'मृ'डित्यत्र न लोप इति, तत्खण्डयति—**झल इति** । तदग्रे इति भावः । अन्यत्र—उद्योतादौ । ननु विशेष्यासन्निधेः कथं तथाऽत आह—**झल इति** । तृतीया-

❀ **ज्योत्स्ना** ❀

'अन्येभ्योऽपि दृश्यते' इति सूत्रे कार्यविशेषसङ्ग्राहकादृशिग्रहणादुणादिसूत्रस्य तत्समानाकारस्य वार्तिकार्थस्य वा प्रत्याख्यानमित्युच्यते तदा—क्विब्दीर्घयोस्तेनैव सिद्धत्वात् 'परौ व्रजे'रित्येताव-न्मात्रं कतव्यम् । 'एकाचो बश' इति सूत्रे स्ध्वोर्ग्रहणात् झलीत्यस्य निवृत्तेरावश्यकत्वा-द्व्याख्यानात्ततः पूर्वमेव तन्निवृत्तेर्वक्तुं शक्यत्वादित्याहुः । **सञ्ज्ञापदापकर्षणादिति** । एवञ्च 'निमित्तनिमित्तिपदद्वयेन चेतसञ्ज्ञा गम्ये'त्येवमाश्रयणादुदाहृतकोशप्रयोगे न दीर्घ इति भावः ।

वस्तुतस्तु दीर्घविधावुत्तरपदाधिकारात्तस्य च पूर्वपदाक्षेपकत्वात्पूर्वपदभूतविश्वशब्दस्य विधीय-मानो दीर्घोऽनेकपदद्वन्द्वघटककोशस्थविश्वशब्दस्य न भवति, पूर्वपदशब्दस्य समासपूर्वावयवे रूढत्वादिति बोध्यम् । 'संयोगान्तलोपेयणः प्रतिषेधो वक्तव्यः, दध्यत्र । संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः, काक्यर्थं वास्यर्थम्—'इत्यस्यानन्तरं—'न वा झलो लोपात्, बहिरङ्गत्वाद्वे'ति भाष्ये दृष्टयोरुभयोः परिहारयोर्मध्ये उत्तरस्येव पूर्वस्यापि संयोगादिलोपविषयकत्वार्थं 'झलो-झली'ति सूत्रे 'झल' इति पञ्चम्याः षष्ठीप्रक्लृप्त्योभयत्रानुवृत्त्यपकर्षाभ्यामन्वयेन झलन्तसंयोगाद्योः स्कोस्तादृशसंयोगान्तपदस्य च लोपविधानेनेष्टसिद्धेः, 'संयोगादिलोपलत्वे'ति वार्तिके संयोगादि-लोपग्रहणं न कर्तव्यमिति केचिदाहुस्तन्मतं निराकर्तुमाह—**झलो लोप इत्यादि** । 'न वा झलो लोपा'दिति वार्तिकव्याख्यानभाष्ये—'झलो लोपः=संयोगान्तलोपः—'इत्येवोक्तं, न तु संयोगादिलोपस्याप्युल्लेखः कृतः, तत्र झल्ग्रहणस्य संयोगादिलोपेऽनुवृत्तौ तदसङ्गतिः स्पष्टैव, तदाह—**तेन झल्परयोः स्कोरिति** । वाक्यर्थमित्यादौ दोषवारणन्तु वचनारम्भेण तृतीयपक्षा-वलम्बेन वा कर्तव्यम् । 'संयोगादिलोपलत्वे'ति वार्तिके संयोगादिग्रहणन्तु लोपलत्वाभ्यां समानप्रतिविधानमिति 'न पदान्त'सूत्र एवोक्तम् । क्वचित्पाठः—'झलः परयोः स्को'रिति; तन्न, संयोगान्तलोपे षष्ठ्यादिविपरिणामेनाऽपकृष्टव्यस्य तेनैव रूपेणोत्तरत्रान्वयौचित्यात्, 'सुवृट्' 'परिमृट्' 'मृष्ट' इत्याद्यसङ्ग्रहप्रसङ्गाच्च । 'मस्जेरन्त्यात्पूर्वो नुम्—संयोगादिलोपार्थ'मिति वार्तिके संयोगादिलोपग्रहणवैयर्थ्यापत्तेश्चेत्याहुः । **अन्यत्र प्रपञ्चितमिति** । बृहच्छब्दरत्ने

❀ **विषमपदविवृतिः** ❀

दृश्यते' इति दृशिग्रहणा'त्क्विब्वची'त्यादि सिद्धमित्युच्यते तदाऽनेन षट्त्वमात्रं पदान्ते विधीयते क्विब्दीर्घौ त्वन्येभ्योपि दृश्यत इति बोध्यम् ।

तेन 'पृथक्स्थाता','पयःस्थिति'रित्यादौ न दोषः। 'सङी'ति वार्तिकाच्च। सनस्सकारमारभ्य-आ महिङो ङकारात्सङिति प्रत्याहारः। 'भूयास्ता'मित्यादौ 'व्यञ्जनपरस्ये'ति न्यायेन लोपाभावेऽपि न क्षतिः।

केचित्त्वप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितं, 'सङीति वक्तव्यं—काष्ठशक्स्थाता'—इति वार्तिकस्य प्रत्याख्यानपरेण 'काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता?'—इति भाष्येण तथैव बोधनादित्याहुः।

'प्रत्याख्यानमेकदेश्युक्तिः, 'सङी'ति वक्तव्यमेवे'ति—परे।

'चोः कु'रित्येतत्त्वत्वेनापवादत्वाद्बाध्यते, 'क्विन्प्रत्ययस्ये'त्यस्य तु क्विन्विधान-सामर्थ्यादेव न बाध इत्याह—**क्विन्नन्तत्वादिति**। ऋत्विक्शब्दो यज्ञसम्बन्धि-पुरुषविशेषे रूढः।

'त्यदादीना'मित्यनुवृत्तेराह—**त्यदादीनामिति**। तेन 'आतपः' इत्यादौ न।

---

**ॐ चिद्स्थिमाला ॐ**

तृतीन्तार्थेऽन्वयः, अन्यथा तेनैव सिद्धे तदानर्थक्यं स्पष्टमेवेति तत्रैवोक्तं, प्रकारान्तरमाह—**सङीतीति**। नन्वेवं भूयास्तामित्यादौ दोषोऽत आह—**भूयास्तामिति**। भाष्यमूलकं प्राचोक्तमाह—**केचित्विति**। तदेवाह—**सङीतीति**। केचित्त्विति सूचितामरुचिमाह—**प्रत्येति**। अत एव 'धिक्स्फीत'मित्यादा न दोष इत्युद्योते स्पष्टम्। ननु क्विन्प्रत्ययस्यासिद्धत्वेन न्याय्यत्वा'च्चोकु'रित्युचितमत आह—**चोः कुरिति**। क्वौ वक्ष्यमाणा-ऽऽशङ्कायाह—**क्विनिति**। अवयवार्थस्याविवक्षितत्वादाह—**ऋत्विगिति**। एतेन—ऋतौ ऋतुं वा यजतीति

**ॐ ज्योत्स्ना ॐ**

हरिदीक्षितैरित्यर्थः। **प्रदीपकृतस्तु**—पञ्चम्यन्तझल्ग्रहणानुवृत्तेः—झलः पूर्वयोः स्कोर्लोप इति तदर्थं कल्पयन्तः—संयोगादिलोपेऽपि 'झलो लोपा'दिति परिहारमभ्युपगच्छन्ति। अत एव भाष्ये 'संयोगान्तस्य झलो लोप' इति वक्तव्ये 'झलो लोपः संयोगान्तलोप' इति लोपपदं वारद्वयमुपात्तम्, तेन संयोगश्चासावन्तश्चार्थात्पदस्य, तत्सम्बन्धी यो लोपः–संयोगाद्योः स्कोर्झलः पूर्वयोः स्थाने स भवतीति एकः, अपरश्च संयोगान्तं यत्पदं तदन्तस्य झलः स्थाने लोपो भवतीति–अर्थद्वयस्य क्रोडीकारलाभः। तत्रेयं विप्रतिपत्तिः–झलः पूर्वयोः स्कोरित्यर्थः 'तस्मादित्युत्तरस्ये'ति परिभाषाबाधमन्तरेण कथं सङ्गच्छतामिति। अत्रोच्यते–झलः परयोः स्कोः पदान्ते झलि च परे यः संयोगस्तदाद्योरसम्भव एव, झल्परयोर्झलि परे संयोगाद्योः स्कोः–'पयःक्षारं' 'पयःस्थिति'रित्यादौ सम्भवेऽपि तत्र 'संयोगाद्यो'रित्यस्य विशेषणस्य वैयर्थ्यमतो 'झलः पूर्वयोः स्कोर्झलि पदान्ते च यः संयोगस्तदाद्योर्लोप' इत्यर्थलाभः। तत्रैतत्स्यात्–'संयोगाद्यो'रित्यस्य विशेषणस्य वैयर्थ्यमिति, तन्न, अनुवर्तमानेन पदस्येत्यनेन संयोगविशेषणात्पदस्य यः संयोगो न पदयो-स्तदवयवझल आदिभूतयोः स्कोरित्यर्थलाभेन 'पयःस्थाता' 'पृथक्स्थिति'रित्यादौ लोपाभावार्थं तत्सार्थक्यात्, पूर्वसमीपबोधकाऽऽदिग्रहणाच्च—'तस्मा'दितीत्युत्तरांशस्येहाप्रवृत्तिरितीह तत्त्वम्।

**इत्यारम्भेणेति**। अत्र यद्वक्तव्यं तदुक्तम्–'उदःस्थे'त्यत्र। **इति परे इति**। अपरे तु–'पृथक्-स्थाता' 'पयःस्थिति'रित्यादौ अन्तरङ्गत्वाज्जश्त्वे रुत्वे च कृतेऽल्विधौ स्थानिवद्भावाभावात्स्कोः-संयोगादिलोपाभावः। 'द्विष्टरां–पयोधावती'त्यनयोः ह्रस्वादङ्गत्वेत्येदप्रवृत्तिरप्येवम् [?]। स्कोरित्यत्र झल इत्यनुवृत्त्या झलः पूर्वयोः स्कोरित्यर्थलाभे संयोगग्रहणात्संयोगान्तस्य लोप इति लोपाधिकारे पदान्तरप्रयुक्तकार्यस्याप्रवृत्तिरिति सार्वत्रिकः परिहारः, 'ईषत्स्थान'मित्यादौ 'झलो झली'त्यस्या-प्रवृत्तेरपि तत एव सिद्धत्वात्। सङीत्येतत्प्रत्याख्यानसंरम्भेण भाष्यकृत्प्रदर्शितसमाधानानामिहैव-तात्पर्यस्य 'परेश्च घाङ्कयो'रित्यत्र प्रदीपकृत्प्रदर्शितस्येत्थमेव व्याख्येयत्वादित्याहुः।

तदोः किं? यः। 'तो'रिति तु नोक्तम्, 'अनेषे'त्यादौ नस्याप्यापत्तेः। न च नुटो बहिरङ्गत्वेनाऽसिद्धत्वं, बहिर्भूतसुनिमित्तकत्वेनाऽस्यैव बहिरङ्गत्वात्।

इदञ्च 'तस्मान्नुडची'ति सूत्रे भाष्ये ध्वनितम्। सौ किं? तौ। **अत्वसत्वे नेति।** गणकार्यत्वादिति भावः।

**ङे प्रथ।** 'युष्मदस्मद्भ्यां ङसोऽशि'त्यतो 'युष्मदस्मद्भ्या'मिति वर्त्तते। 'ङे'-इति पृथक्पदम्, अत एव-'प्रथमयोरित्युच्यते', कयोः प्रथमयोः?-विभक्त्योः, वचनयोस्तु न ग्रहणं, 'शसो ने'ति लिङ्गा'दिति भाष्यं सङ्गच्छते।

**त्वाहौ।** यद्यपि युष्मदस्त्वादेशः-'त्वमावेकवचने' इति सिद्धः, तथापि युष्मानतिक्रान्तोऽतित्वमित्यर्थमत्र विधानम्। न चैवं तत्रास्य चारितार्थ्यात्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यं, 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः' इत्यस्य वक्ष्यमाणत्वात्। 'युष्मदस्मदोरनादेशे' इत्यतो 'युष्मदस्मदो'रिति वर्त्तते।

**शेषे।** आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह 'शेष'शब्दार्थस्तदाह-**आत्वयत्वेत्यादि।** स्पष्टञ्चेदं 'युष्मदस्मद्भ्यां ङस'इत्यत्र, प्रकृतसूत्रे च भाष्ये। अत एव 'साम आक'मिति ससुट्कनिर्देशः सङ्गच्छते।—एवञ्च शेषग्रहणं स्पष्टार्थं,

### ॐ चिदस्थिमाला ॐ

विग्रहः, 'वसन्ताय कपिञ्जलानालभेते'त्यादौ तेषामपि देवतात्वदर्शनादित्यपास्तम्। आदिना तारक इत्यादि। प्राचोक्ते 'अनश्व' इत्यादौ तस्य साफल्यादाह—**अनेषेत्येति**। कैयटाद्युक्तमाह-**नचेति**। पदद्वयाश्रितत्वेन बहिरङ्गत्वम्। **इदञ्चेति**। तत्र हि 'तस्मा'दित्यस्य टानुबन्धस्य चावश्यकत्वम्, अन्यथा नञो नुटि नलोपङमुटोर्दुर्वारत्वादित्युक्तम्। दीक्षिताद्युक्तद्वितीयपक्षासाङ्गत्यायाह-**ङे इतीति**। द्विवचने 'युवावा'विति विषयत्वादाह-**युष्मानिति**। युष्मानिति युष्मद एकार्थवाचित्वाभावेन तत्र तस्याप्राप्तेः।—एतेन 'यथासङ्ख्यार्थं युष्मदस्त्वादेशवचन'मिति शास्त्र्युक्तं, 'युवामतिक्रान्त इत्यत्र तदर्थ'मिति दण्ड्युक्तञ्चापास्तम्। एवम्=अस्य तदर्थत्वेन। **तद्विषयेति**। तन्निमित्तेत्यर्थः। अत एव=तथा व्याख्यानादेव। शेषस्येति व्याख्याने तदसङ्गतिः स्पष्टैव, अत एवाह—**एवञ्चेति**। अर्थान्तराभावे चेत्यर्थः। एतेन तथा सकलप्राचोक्तमपास्तम्।

### ॐ ज्योत्स्ना ॐ

**भाष्ये ध्वनितमिति**। तत्र हि नुगचीत्येवाजादौ पदे नञो नुग्विधानान्नुडचीत्यत्र तस्मादिति न कर्तव्यमिति पूर्वपक्षे—तत्राप्ययमर्थः-'तदोसःसा' वित्यत्र 'तो'रिति वक्तव्येऽनेष इति नस्य सकारव्यावृत्त्यर्थं कृतं—'तदो'रिति न कर्तव्यमिति लाघवमुक्त्वा-नञो नुग्विधिं ङमुडापत्त्या दूषयित्वा यथान्यासः समर्थितः। अत एव पदद्वयाश्रितत्वाद्बहिरङ्गनुटमपेक्ष्य विभक्तिपरत्वादादिमात्रापेक्षसत्वस्य बहिरङ्गत्वमित्याशयकं परादावपि नुटि बहिरङ्गत्वात्तोः सश्चाविति अपि क्रियमाणे सत्वं न भविष्यतीति भाष्यदूषणे प्रवृत्तस्य कस्यचिद्दूषणमनूद्य-'इति चिन्त्य'मिति तस्य चिन्ता-

### ॐ विषमपदविवृतिः ॐ

**भाष्ये ध्वनितमिति**। तत्र हि 'नुगची'ति न्यासे 'तदोः ससा'वित्यत्राऽनेष इत्यादौ सत्ववारणाय 'तदो'रिति न वक्तव्यं, 'तो'रित्येव सिद्धेरित्युक्तम्।

१ निर्दिश्यमानपरिभाषायास्त्वप्राप्तिरत्र, निर्दिश्यमानत्वस्य नुड्विशिष्टेनच्छब्देऽभावेपि निर्दिश्यमानैतच्छब्दावयवत्वस्य नकारे निर्बाधत्वात्। 'अन्त्यबाधे'इति परिभाषाऽपि न प्राप्नोति, अनन्त्यसदेशानन्त्यसदेशयोरव्यवधाने एव तत्प्रवृत्तेः। अतएव 'यून'इत्यत्र उकारव्यवधानान्न सेति गौडाः।

२ स्पष्टञ्चेदं भैरव्यां,—तत एवावधार्यम्।

विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसम्भवात् । **अन्त्यस्येति** । अलोऽन्त्य-परिभाषयेति भावः ।

'त्वाहादयोऽकारान्ताः' इति वृत्त्याद्यनुसारेणाह—**अतो गुण इति** । 'त्यदादीनामः' इति सूत्रभाष्यकैयटाभ्यां 'हलन्ता एवादेशाः' इति लभ्यते, तदा पररूपस्य प्राप्तिरेव न ।

यद्यप्युच्चारणार्थानामपीत्सञ्ज्ञालोपाभ्यां निवृत्तिः कार्या, तथापि 'अतो गुणे' इत्यस्याऽप्रवर्त्तनेन प्रक्रियालाघवमत्र पक्षे । इत्सञ्ज्ञालोपयोस्तु सूत्र एव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौरवम् । 'त्वाहौ सा'विति गुरुनिर्देशस्तु—'श्वेतवहोक्थश'सिति-वन्नार्थसाधकः । णिजन्तात्क्विपि—'युष्म्' 'अस्म्'—इति प्रातिपदिकयोरादेशा एव नेति तदाशयः । 'मपर्यन्तस्ये'तिभाष्यसम्मतश्चायमर्थ इत्यनुपदं स्फुटीभविष्यति । **अन्तरङ्गत्वादिति** । परनिमित्तानपेक्षत्वेन तत्त्वमिति भावः ।

**अलिङ्गे इति** । एवञ्च स्त्रियामनयोरवृत्तेर्न टाबिति भावः । इदं 'साम आक'-मित्यत्र भाष्ये स्पष्टम् । **यद्वेति** । इदं—'त्यदादीनामः'इति सूत्रे भाष्ये स्पष्टम्, 'साम आक'मित्यत्र च ।

---

❀ चिदस्थिमाला ❀

सकलप्राचीनग्रन्थासाङ्गत्यादाह—**त्वाहेति** । सिद्धान्तमाह—**त्यदेति** । ननु हलन्तत्वे उच्चारणार्थत्वादि-त्सञ्ज्ञादि वाच्यमिति को विशेषोऽत आह—**यद्यपीति** । ननु गुरुनिर्देशबलात्तथा, अन्यथा 'त्वहा'वित्येव तत्सिद्धिरत आह—**गुर्विति** । मान्तयोरादेशपक्षे विभक्त्युदात्तत्वार्थमकारो विवक्षित इति शास्त्र्युक्तेर-साङ्गत्यायाह—**णिजन्तादिति** । भाष्यान्तरमप्यत्र गमकमित्याह—**मपर्यन्तेति** ।

❀ ज्योत्स्ना ❀

प्रदीपकृतोक्ता, तस्यायमाशयः—सत्वविधेराङ्गत्वाद्विभक्तिपरत्यदाद्यन्ताङ्गापेक्षा, ततो नुड्विधेः पूर्वोत्तरपदापेक्षत्वेऽप्यन्तर्भूतनिमित्तकत्वादन्तरङ्गत्वं स्पष्टमेवेति दिक् । **इति लभ्यत इति** । तथाहि 'त्यदादीनाम'इत्यत्र 'द्विपर्यन्ताना'मिति वचनप्रत्याख्यानाय 'शेषे लोप'इत्यस्य ज्ञापकत्वमुक्त्वा 'टिलोपष्टाबभावार्थ' इत्यनेन 'शेषे लोप' इत्यस्य 'युस्मभ्यं ब्राह्मणीभ्यः, युष्मत्—ब्राह्मणीभ्यः—इत्यत्र सप्रयोजनत्वेन भाष्यकृता ज्ञापकत्वाभाव उक्तः । एवमपि तवाद्यादेशानामदन्तत्वपक्षे कृतेषु 'वार्णादाङ्गं बलीयः' इति न्यायादन्तरङ्गमपि 'अतो गुणे' इत्येतद्बाधित्वा शेषे लोपे प्राप्तं टाप्प्रसङ्गमवस्थाने हलन्तत्वमुपाश्रित्य कैयटोपाध्यायैः परिहृतमिति भावः । ननु मपर्याच्छेषस्य लोपे विज्ञायमाने चतुर्थीपञ्चमीषष्ठीष्वेव शेषे लोपः प्राप्नोति, त्वाद्यादेशविषये तु नित्यत्वात्तेषु

❀ विषमपदविवृतिः ❀

**अत एवेति** । शेषग्रहणस्य विभक्तिविशेषणादेव । **एवञ्चेति** । मपर्यन्ताच्छेषबोधकत्वाभाव इत्यर्थः ।

**हलन्ता एव आदेशा इति** । तत्र हि भाष्ये—'द्विपर्यन्ताना'मितिवचनप्रत्याख्यानाय 'शेषे लोप' इत्यस्य ज्ञापकत्वमुक्त्वा, 'टिलोपष्टाबभावार्थं' इत्यादिना शेषग्रहणस्य टिलोपार्थत्वमुक्त्वा तत्खण्डितम् । एवमपि तवाद्यादेशानामदन्तत्वे वार्णादाङ्गस्य बलीयस्त्वात्पररूपं बाधित्वा शेषे लोपे टापः प्रसङ्गतादवस्थ्यं मनसिकृत्य तवममादिषु चादेशेष्वकार उच्चारणार्थो हलन्ता एव त्वादेशा इति न क्वचिट्टाप्प्रसङ्गः—इत्युक्तम् । ननु 'हलन्ता आदेशा' इति पक्षे णिजन्तात्क्विपि मान्तयोर्हलन्तेषु त्वाहादेशेषु कृतेषु शेषे लोपे वकारहकारयोर्निवृत्त्यापत्तिरित्याशङ्क्याह-**णिजन्तात्त्विति** । णिचमाश्रित्य तु न 'प्रत्ययोत्तरपदयो'रित्यादेशः, बहुलार्थकाभ्यामेव ताभ्यां णिज्विवक्षणात् ।

**मपर्यन्ताच्छेषस्येति** । इदमुपलक्षणं,—तेन 'त्व'मित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि न ।

ननु अदन्तत्वे आदेशानां 'वार्णादाङ्ग'मिति परिभाषया पररूपात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः, अकारस्य कार्यद्वयेऽपि स्थानित्वेन समानस्थानिकत्व-मस्तीति चन्न; 'हलन्ता एवादेशा' इति कैयटेनात्रैवोक्तत्वेनादोषात् ।—'शेष' इत्यंस्य सामर्थ्यात्तन्न्याप्रवृत्तिरत्र—'इत्यन्ये; तन्न, युष्मभ्यम्—युष्मत्--युष्माकमित्यादौ टाब्निवृत्त्या चारितार्थ्यात् ।—तस्मादनित्यत्वात्तदप्रवृत्तिरित्येके । तदाह—**अतो गुणे कृते इति** ।

अत्र वदन्ति"—तत्तद्भाष्यप्रामाण्याच्छेषग्रहण—ससुटकनिर्देशाभ्याञ्चास्य सूत्रस्य-आवृत्त्याऽर्थद्वये तात्पर्य, तच्च लक्ष्यानुरोधाद्व्यवस्थितम् । तेन भ्यमि टिलोपे 'युष्म्भ्य' मिति न । अत एव—'भ्यसोभ्य'मिति सूत्रे—'यदि भ्यमादेशः, शेषे लोपोऽन्त्यलोप इति —एत्वं प्राप्नोति, अथाऽभ्यमादेशः,—शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति, यथेच्छसि तथाऽस्तु'—इत्येवोक्तं, न तु भ्यमादेशे टिलोपमादाय फलभेद उक्तः।

वस्तुतस्तु टिलोपो व्यर्थः, अत एव 'लिङ्गाभावाट्टिलोपवचनानर्थक्य'मिति 'साम आक'मित्यत्र भाष्ये उक्तम् । अत्र 'लिङ्गाभावा'दित्युपलक्षणं,—'शिशीलुङ्नुम्बिधिभ्यो

❀ चिदस्थिमाला ❀

**उपेति** । ननु विशेषणे न क्षतिः, साम्प्रतिकाभावे भूतपूर्वगत्याश्रयणात् , यद्यपि 'युष्मभ्य'मित्यत्र साम्प्रतिकसम्भवस्तथापि नैकमुदाहरणं योगारम्भप्रयोजकमिति तात्पर्यं भविष्यतीत्युक्तमेव वक्तुमाह—**नन्विति** । 'कैयटादिमते व्याश्रयत्वान्न से'ति शास्त्र्युक्त्यसाङ्गत्यायाह—**अकारस्येति** । मतान्तरमाह—**शेषे इति** । तदिति । वार्णेत्यर्थः । अत्र=त्वमित्यादौ । 'एके' ति सूचितारुचिमाह—**अत्रेत्यादिना**—इती-त्यन्तेन [ ४३७ पृ० ] । तत्रादौ यथाश्रुतभाष्यद्वयप्रामाण्यादित आह—**तत्तदिति** । उक्तमिदम् । तथा सत्यनतिप्रसङ्गायाह—**तच्चेति** । **नन्विति** । अन्यथा तदनुपन्यासे निर्बीजत्वापत्तिरिति भावः । सिद्धान्त-माह—**वस्त्विति** । अत एव=तस्याफलत्वादेव ।

भाष्यन्यूनतां परिहरति—**अत्रेति** । उक्तभाष्ये इत्यर्थः । प्रकारान्तरस्यापि तदेवाह —**शिशीति** ।

❀ ज्योत्स्ना ❀

कृतेषु **मपर्यन्ताच्छेषत्वाभावाल्लोपाभावमाशङ्क्याह—इदमुपलक्षणमिति** । 'टेर्लोप' इति वक्तव्ये 'शेषे लोप' इति शेषग्रहणात् । आदेशविधावुपयोगेतरभागस्य मपर्यन्ताच्छेष इत्युपलक्षणम्, योग्यतानिवेशाच्चतुर्थीपञ्चमीषष्ठीबहुवचनेषु नात्व्याप्तिरिति भावः । इदञ्च—शेषो लोपो मपर्यन्तस्ये-त्येकयोगत्वे चोपयुक्तादितरस्येवोपयोक्ष्यमाणादितरस्यापि शेषत्वमभ्युपगम्योक्तम् । इतोऽप्य-स्वरसाट्टिलोपपक्षस्य हेयतां सूचयन्नन्त्यलोपपक्षं व्यवस्थापयति—**वस्तुतस्तु इत्यादि** । **सन्निपात-परिभाषया टाबभावस्येति** । एतेन त्वाद्यादेशानां हलन्तत्वकल्पनायाष्टिलोपपक्षान्त्यपक्षयो-

❀ विषमपदविवृतिः ❀

**इदमुपलक्षणमिति** । न तु विशेषणमित्यर्थः । **अत्रैवोक्तत्वेनेति** । त्यदादीनामित्यत्रैवोक्तत्वे-नत्यर्थः । **युष्मभ्यमिति** । संयोगान्तलोपस्तु न, झल्ग्रहणसम्बन्धादिति भावः । **अतएवेति** । अर्थद्वयस्य व्यवस्थितत्वादेव । शेषलोप इत्यस्यार्थद्वये तात्पर्यमित्यंशं, भ्यमादेशोपि युक्त इत्यंशं च दूषयितुमाह—**वस्तुत इति** । अभ्यमसूत्रे इति । पूर्वोक्तस्य वस्तुतस्त्वित्यस्यात्रापि सम्बन्धः ।

युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने'ति—'नेतराच्छन्दसी'तिसूत्रस्थभाष्यवार्त्तिकत्वेन लिङ्गवत्त्वेऽपि सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वम् ।

अत एव सन्निपातपरिभाषया 'बुद्धा'वित्यत्र टाबभावः—'कृन्मेजन्त'सूत्रे भाष्ये उक्तः ।

शेषग्रहणन्तु भाष्ये प्रत्याख्यातमेव । 'त्यदादीनामः' इतिसूत्रस्थं—'टिलोपष्टाबभावार्थं' इति तु—वार्त्तिकैकदेशिवचनमिति न दोषः । एतच्च भाष्यप्रदीपोद्द्योते निरूपितम् ।

अभ्यम्सूत्रे—'यथेच्छसि, तथा स्वि'ति प्रौढोक्त्या—'भ्य'मितिच्छेदस्य प्रौढवादत्वं भगवतैव सूचितम् । 'त्वं यथेच्छसि तथाऽस्तु, तत्र दोषोद्धारो मया सुकरः'—इति तत्तात्पर्यात् ।

'अभ्य'मित्येव तुच्छेदो न्याय्यः । अत एव 'युष्मदस्मदोरनादेशे' इति सूत्रे 'न चाऽऽदेशो हलादिरस्ती'ति भाष्योक्तिः सङ्गच्छते—"इति ।

**परमत्वमिति** । आङ्गत्वात्तदन्तविधिरिति भावः । गौणेऽप्रवृत्तौ बीजाभावादाह—**अतित्वमिति** ।

**युवावौ** । द्विवचनशब्दोऽत्र यौगिको—व्याख्यानात् , द्वयोर्वचनं=बोधनं, तत्र समर्थयोर्युष्मदस्मदोरित्यर्थो, भाष्यप्रामाण्याच्च तद्वक्ष्यमाणयुष्मदस्मदोरेव विशेषणं, न तदन्तस्य; अङ्गाधिकाराद्धि तदन्तग्रहणमित्याशयेनाह—**द्वयोरुक्ताविति** । एतत्फलं गौणोदाहरणेषु मूले एव स्फुटम् ।

**मपर्यन्तस्य किमिति** । अधिकारसूत्रं किमर्थमित्यर्थः । ननु समुदायाऽऽदेशत्वेऽपि 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् , अन्यत्र तु सुबन्तस्य टेः प्रा'गिति व्यवस्थाया युष्मदस्मद्विषये 'त्वयके'त्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद्युवामित्येतत्सिद्ध्युत्तरमकजिति—'युवका'मित्यत्र न दोषः ।—अत आह—**त्वयेति** ।

### ❀ चिदस्थिमाला ❀

लिङ्गवत्त्वे हेतुरयम् । नन्वेवं शेषग्रहणस्य का गतिरत आह—**शेषेति** । नन्वेवमप्युक्तभाष्यस्य का गतिरत आह—**त्यदेति** । '—शेषे लोप इति स्मृतः । लुप्तशिष्टं हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥'-इति तच्छेषः । लुप्ते यः शिष्टस्तस्मिन्कार्यस्य=टाबभावस्य सिद्धिरिति—तस्य=शेषे इत्यस्य—फलमाहुरिति—तदर्थः । उक्तभाष्यगतिमप्याह—**अभ्यमिति** । तत्त्वमाह—**अभ्यमिति** । 'द्वित्वे' इत्येव सिद्धे वचनग्रहणसामर्थ्यमूलकमाह—**व्याख्येति** । तस्य साकाङ्क्षत्वादाह—**तत्रेति** । चस्त्वर्थे । अनुवृत्तस्यापि गृह्यमाणत्वस्यान्यत्र प्रपञ्चितत्वात्तस्य तत्त्वे बीजमाह—**अङ्गेति** । एतेन तथोक्तावपि तदन्तस्यापि विशेषणतापत्तौ गौणे समासे दोष एवेत्यपास्तं, तदाह—**एतदिति** । विधौ फलाभावे तद्व्यर्थमेवेत्याह—**अधीति** । अनतिप्रसङ्गायाह—**युष्मदिति** ।

### ❀ ज्योत्स्ना ❀

उभयोरपि अनावश्यकत्वमुक्तम् । व्याख्यानादिति । लक्ष्यानुरोधिव्याख्यानमूलिकोभयगतिरिह भवतीति परिभाषयेति भावः । इत्यत्र न दोष इति । 'तथा च युवकाभ्या'मित्यादौ दोषः स्यादेवेत्युक्तम् । दोषोऽकचि कृते युवावयोः सर्वादेशत्वादकचः श्रवणानापत्तिरूप इति केचित् । वयन्तु ब्रूमः—'भिन्धकी'त्यत्राकचि कृते धिभावो न स्यादिति—'हुझल्भ्य' इत्यत्र भाष्या-

### ❀ विषमपदविवृतिः ❀

अन्तरङ्गत्वादिति । 'अज्ञाताद्यर्थानपेक्षत्वेने'ति शेषः । वस्तुतस्तु परत्वाद्युवादिषु पश्चादकचीति

नन्वत्रापि 'अच्ये' इति न्यासेनैकारादेशेऽयादेशे च सिद्धेराह—**युवकाभ्यामिति**। 'हलन्ता आदेशाः' इति पक्षे तु 'त्वये'त्यादेरसिद्धिः, एवं मादेशस्य सर्वादेशत्वञ्च न स्यादिति बोद्धयम्।

नन्वेवमपि 'मान्तस्ये'त्येवोच्यतां, किं 'परि'ग्रहणेनेति चेन्न, युष्मयत्यादेः क्विपि सुप्यादेशाभावार्थं तत्सत्त्वात्,—पर्यन्तशब्देन मान्तापेक्षया शेषस्य लाभात्।—'कटि-पर्यन्तं वासः' इत्युक्ते 'अग्रे किञ्चिदस्ती'ति नियमेन प्रतीतेः। एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशाः।—अत एव भाष्ये—'अवधिद्योतनार्थं परिग्रहणं कर्त्तव्यं, 'मान्तस्ये'त्युच्यमाने—यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः, क्व च मान्ते? युष्मयतेरस्मयतेश्चाऽप्रत्यये'--इत्युक्तम्। 'अवधिद्योतनार्थ'मित्यस्यान्तशब्दस्यावधि-वाचकताद्योतनार्थमित्यर्थः। 'पर्यन्त'शब्दस्य लोके तथैव प्रयोगात्। अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च। 'तत्रैवे'त्यस्य—'अनिष्टे एवे'त्यर्थः।

परिग्रहणाभावे तु—'यतः पूर्वोऽस्ति, परश्च नास्ति सोऽन्त्यः' इतिभाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायाऽत्रैव स्यात्, 'क्वौ लुप्त'मित्यस्य प्रवृत्तिश्च स्यात्। 'अभिव्यक्तपदार्थाः' इति न्यायश्च पदकार्यविषय इति-तदाशयः। अत एव भाष्ये प्रयोगदर्शनं न कृतम्।

---

### ॐ चिदस्थिमाला ॐ

इदमपि प्राचां मतेनेति—सूचयन्—सिद्धान्ते फलमाह—**हलन्ता इति**। एवमपि=उभयथा अवश्यकत्वेऽपि। **किं परीति**। अन्तशब्दस्यावयववाचित्वात्। **तत्सत्त्वादिति**। सामानाधिकरण्येनान्वया-न्मुख्यतत्त्वसत्त्वात्तत्रैव स्यात्। कृते वारणमाह—**पर्यन्तेति**। एवञ्च=परिग्रहणे कृते च। एवं चागत्या वैयधिकरण्यमेव। अत्र मानमाह—**अत एवेति**। परेस्तत्त्वाभावादाह—**अवधीति**। **अन्तेति**। 'परिसमभि-व्याहृते'त्यादिः। अत एवाह- **पर्यन्तेति**। अन्यसिद्धमपीदमित्याह—**अग्रे इति**। इष्टत्वाभावादाह—**अनिष्टे एवेति**। दोषमुपपादयति- **परीति**। **भाष्योक्तेरिति**। आदिरन्त्येनेति सूत्रे इति भावः। अत एवान्यथा-नुपपत्त्या आह—**क्वाविति**। नन्वभिव्यक्तेतिन्यायेन वारणमत आह—**अभीति**। अत एव=तत्रानिष्टत्वादेव।

### ॐ ज्योत्स्ना ॐ

दकज्विषये निर्दिश्यमानपरिभाषाप्रवृत्तेरावश्यकत्वात्, साकच्कस्य युवावौ नैवं स्यातामिति दोषः—इति परिभाषाप्रदीपार्चिषि विस्तरः। **इति तदाशय इति**। सर्वनामप्रकरणे तु सञ्ज्ञा-

### ॐ विषमपदविवृतिः ॐ

युक्तम्। अत एव 'हुझल्भ्य'इति सूत्रे भाष्ये 'भिन्धकी'त्यत्र परत्वाद्धिभावेऽकजित्युक्तम्।

**युवकाभ्यामिति**। 'ओकारसकारभकारादा'विति न निमित्तकोटिप्रविष्टं, किन्त्वौकारसकारभकार-भिन्नविभक्तौ युष्मदस्मदोः सुबन्तयोष्टेः प्रागकजित्येव वचनशरीरम्, इतरविभक्तौ त्वर्थात्सुबुत्पत्तेः प्रागेव प्रातिपदिकस्य टेः प्रागकजित्याश्रित्येदम्। अन्यथा 'भिन्धकी'त्यादाविव परत्वाद्युवावयोः पश्चादकचि दोषाभावादसङ्गतमेतत्स्यात्। उक्तव्याख्याने तु—विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्किमादा-विव युष्मदस्मदोरप्यादेशात्पूर्वमकचि निर्दिश्यमानपरिभाषया युवावौ न स्यातामिति दोषः स्पष्टः।

**अग्रे कस्य चित्सत्त्वे एवेति**। 'अङ्गुष्ठमारभ्य मस्तकान्तं कुष्ठ' इत्येव प्रयोगः, न तु मस्तकपर्यन्त-मपीति भावः। **पदकार्यविषय इति**। सर्वनामप्रकरणे सञ्ज्ञाव्यावृत्तेरभिव्यक्तपदार्था इति न्यायेन

यत्तु'—परिग्रहणाभावे मान्ते यत्र ते-तत्रैव स्यात्, सामानाधिकरण्येनान्वयस्यौचित्यात्। सति तु तस्मिन्सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानाद्दान्ते, व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि च-सिद्ध्यति। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति तु प्रत्ययविधिविषयम्—' इति, तन्न;—परिग्रहणस्य वैयधिकरण्येनान्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात्। तत्र हि—सामानाधिकरण्याऽस-

❀ अभिनव-चन्द्रिका ❀

दिगिति। परेतु 'पर्यन्तपदस्य यतोऽग्रे किञ्चिदवशिष्यते तत्र शक्ति'रित्यस्य केनाप्यबोधनेन—तवापि पर्यन्तपदस्थ-'परी'त्यस्य तादृशार्थे मणिमन्त्रादिन्यायेन अन्तपदशक्तेर्नियामकत्वमावश्यकम्। किञ्च तादृशार्थनियामकत्वेऽपि वैयधिकरणेनान्वयस्यावश्यकत्वमिति लाघवात्तत्सामर्थ्येन मदुक्तार्थ एव कल्पनीयः। ननु तत्रावधिद्योतनार्थं इत्यक्षरास्वरस्यमिति चेत्—सत्यं, परन्तु तवापि 'तत्रैवे'त्यक्षरास्वारस्यम्। 'तत्रैवे'त्यस्यानिष्टे एत्रेत्यर्थत्वन्मयापि 'अवधिद्योतनार्थ'मित्यस्य वैयधिकरण्येनान्वयबोधनद्वाराऽवधिद्योतनार्थमित्यर्थस्य कर्तुं शक्यत्वात्। अत एव कैयटेन 'क्वौ लुप्त'मित्यस्य प्रवृत्तिफलत्वेन युष्मयतेः क्विपि निष्पन्नस्य-युष्म्-शब्दस्य 'त्व'मित्यादिरूपमुक्तम्। तस्मादनभिधानेऽस्य न दृढं मानम्। नच तथा सति परिग्रहणं न कार्यं, मान्तस्येत्येवोच्यताम्, अन्तग्रहणसामर्थ्याद्वैयधिकरण्येनान्वयो भविष्यति, किं परिग्रहणेनेति वाच्यम्, अन्तग्रहणाभावे मकारस्यैव निर्दिश्यमानत्वेन मकारस्यैव त्वाद्यादेशापत्तेरित्यलं क्षोदक्षेमेणेत्याहुः।

❀ चिद्स्थिमाला ❀

कैयटाद्युक्तिं खण्डयति—**यत्त्विति**। ते=युष्मदस्मदी। सामर्थ्याद्=तदुक्तिसामर्थ्यात्। नन्वेवं मान्तयोरादेशप्रसङ्गोऽत आह-**अन्वयेति**। 'असमासे' इति सूत्रस्थकैयटविरोधादत्रत्यकैयटो निषेधोपन्यासपरो न युक्त इत्याह-**व्यपेति**। अक्षरमर्यादया नियामकत्वासम्भवादाह-**मणीति**। ननु तत्त्वागरनवापीति को विशेषोऽत आह-**तत्र हीति**। उक्तार्थे हीत्यर्थः। ननूपायस्योपायान्तराऽदूषकत्वमत आह—

❀ ज्योत्स्ना ❀

व्यावृत्तेरभिव्यक्तपदार्था इति न्यायेन स्वयमभिधानादिदं विरुध्यते। किञ्चैवं सञ्ज्ञाभूतयुष्मदस्मदोरादेशापत्तिस्तस्माद्गौणमुख्यन्यायस्यैव पदकार्यविषयत्वम्, अयं न्यायस्तु प्रातिपदिककार्येष्वपीति परिभाषाप्रदीपार्चिषि व्यवस्थापितम्। ततश्च नान्ते कार्यप्रवृत्तेरसम्भवाद्दान्तयोर्युष्मदस्मदोरवयवमान्तभागस्य परिग्रहमन्तरेणापि कार्यं भविष्यतीति नियमेनैव तन्मतोपपादनावसरे उपाध्यायैः केचिदिति तु शब्देनारुचिः सूचितेति सूचयन्नुपाध्यायोपदर्शितमतान्तरमुपक्षिपति—**यत्त्वित्यादि**। अत्र यच्छब्दो हेतुपरः, यस्मादिति दोषराहित्येन मतं प्रदर्शितं तस्मात्तत्सम्भावितदोषं प्रागुपदर्शितमतमुत्तरत्रोपपाद्यमानं तदुपायादानञ्च नेत्यन्वयः। **मान्ते यत्र ते तत्रैव स्यादिति**। नचाभिव्यक्तपदार्था इति न्यायस्य प्रातिपदिककार्येष्वपि प्रवृत्तेरसम्भवः; सामानाधिकरण्येनान्वयबलात्तन्मात्रवृत्तेरिह विवक्षितत्वात्। **क्विपि च सिध्यतीति**। नच 'कटिपर्यन्तं वासः' इत्युक्ते यथाग्रेऽपि किञ्चिदस्तीति प्रतीयते तथेहापि प्रतीतेर्मान्तायत्राग्रे किञ्चिदवशिष्टं, तत्र—दान्ते-एवादेशाः स्युरिति वाच्यम्, 'अङ्गुष्ठमारभ्य मस्तकपर्यन्तं कुष्ठोऽस्ती'त्यादौ शेषा-

❀ विषमपदविवृतिः ❀

स्वयमभिधानात्तद्विरुद्धमेतत्। **अत एवेति**। आदेशप्रवृत्तेरनिष्टत्वादेवेत्यर्थः। **प्रयोगदर्शनमिति**। त्वादेशघटितप्रयोगदर्शनमित्यर्थः। ननु यूयमित्यत्र शीभावस्य प्रत्ययकार्यत्वेनाङ्गकार्य-

म्भवाद्वैयधिकरण्याऽन्वय इत्यन्यत् । किञ्चात्र व्याख्याने 'अवधिद्योतनार्थ'मितिभाष्याक्षरा-ऽस्वारस्यम्[1] । 'मपर्यन्तस्ये'ति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक् ।

**अङ्गकार्ये इति** । अङ्गाधिकारस्थे इत्यर्थः। **मकारान्तमिति** । '–'शसो ने'त्य-नेन संहितया पाठे–' इति शेषः ।

परे तु—शेषविभक्तिभूताऽमादि–युष्मदादि–सन्निपातेन जातस्य लोपस्य तद्वि-घातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याद्यभावः । सुटस्त्वाकमवयवत्वान्न तेन सन्निपातविघात इति ससकारनिर्देशः—'साम आक' मित्यत्र ।

अत एव--'कृन्मेजन्त'सूत्रे 'ह्रस्वत्वं तुग्विधेर्ग्रामणि कुल'मितिसन्निपातपरिभाषाप्रयोजन-

❀ चिदस्थिमाला ❀

**किञ्चेति** । अत्र=कैयटोक्ते–न तु सिद्धान्तेऽपि । एवं सति मं विहायादेशापत्तिरत आह–**मपर्यन्तेति** । अतएवाङ्गुष्ठमारभ्य मस्तकान्तं कुष्ठ इत्येव प्रयोगो न तु 'मस्तकपर्यन्त'मिति । एतेन तथाऽन्योक्तमपास्तम्, तदाह–**दिगिति** । अर्थान्तरनिरासार्थं परिभाषाऽर्थेन उपनिबद्धेति सूचनाय वक्ष्यमाणदोषोपपत्तये चाह–**अङ्गाधीति** । तत्सम्भवबीजमाह–**शस इति** । सिद्धान्तमाह–**परेत्वित्यादिना**–**आहुरित्यन्तेन** । एवेनोक्त-व्यवच्छेदः ।–नन्वेवमनयैव तत्रापि निर्वाहे 'साम'इति निर्देशासङ्गतिरत आह–**सुटस्त्विति** । अत एव=

❀ ज्योत्स्ना ❀

भावेऽपि पर्यन्तशब्दप्रयोगात् , किन्तु वैयधिकरण्येनान्वये सामर्थ्याभावादभिव्यक्तपदार्था इति न्यायेन युष्मयत्यादेः क्विपि नैव स्यादिति चेदत्र बृहच्छेखरः—'एवं तस्यापि अभिव्यक्तपदार्थ-त्वा'दिति । तत्रायं भावः–"अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥"इत्यत्र 'अभिव्यक्तपदार्था' इत्यनेनाप्रसिद्धपदार्थसञ्ज्ञाशब्दानां व्यावृत्तिः। 'स्वतन्त्राः' इत्यनेन प्रकरणादिसहकारेणार्थबोधकानां गौणलाक्षणिकादीनाम् । लोकविश्रुताः=लोके विशेषतयाऽर्थ-बोधकत्वेन श्रुता इत्यनेन सर्वथार्थशून्यानामनुकरणानाम्, अर्थसद्भावेऽप्यप्रयुक्तानां वचन्त्यादीनाञ्च । नच ण्यन्तार्थ एष्वन्यतमः । ननु च गौणलाक्षणिकानामनियतार्थत्वेन सन्दिग्धार्थकत्वाद्यथा

❀ विषमपदविवृतिः ❀

त्वाभावेनोक्तपरिभाषया तद्वारणसम्भव इत्याशङ्क्याह—**अङ्गाधिकारस्थ इत्यर्थ इति** । ननु विशेषण-समासे मकारस्य पूर्वनिपातापत्तिः, असमासे संयोगान्तलोपाप्रवृत्तौ 'म्' इत्यस्य श्रवणापत्तिरित्या-शङ्क्याह—**संहितया पाठ इति** । तथा च मकारद्वयोच्चारणेपि 'न व्यञ्जनपरस्ये'ति न्यायेनैकमकारो-च्चारणाद्विशेषः । असंहितया पाठे तु–व्यञ्जनपरत्वाभावे विशेषः स्यादेवेति भावः । केचित्तु संहितया पाठे जातिपक्षाश्रयणेन द्वयोरपि मकारयोरेक एवादेश इति भाव इत्याहुः । **सुटस्त्विति** । ननु यदागमन्यायस्यातिदेशरूपत्वे पर्यवसानात्तन्न्यायकृतसन्निपातविघाताभावेपि वास्तवसन्निपात-विघातकत्वस्यैवेति परिभाषाप्रवृत्तिर्दुर्वारा । अत एव 'कृन्मेजन्त'इति सूत्रे आत्वं पुग्विधेरनिमित्तं

[1] परेतु परिग्रहणाभावे सामानाधिकरण्येनान्वये 'युष्म्'—इत्यत्रैव स्यान्न युष्मदादौ, परिग्रहणे कृते तु उभयत्रापिभवति । 'अवधिद्योतनार्थ'मिति भाष्याक्षरास्वारस्यन्तु न, वैयधिकरण्यलाभे हि—मपर्यन्तग्रहणेऽवधिलाभस्य स्पष्टत्वात्, [परिपदाभावे हि मान्तस्यैव न दान्तस्य,तत्सत्त्वे तु मान्तभागस्यैवेति–अवधिलाभस्य स्पष्टं प्रतीयमानत्वात् ,] मान्तादग्रे सत्त्वेऽसत्त्वे वाऽग्रहणात् । भाष्येण च 'युष्म्' इत्यादावादेशाप्रवृत्तिर्नैव लभ्यते। 'आब्रह्म स्तम्बपर्यन्त'मित्यादौ त्वदुक्तार्थातिरिक्तेऽपि पर्यन्तशब्दप्रयोगाच्चेति चिन्त्य एवायं शेखर इतिश्रीत्रिपाठिचरणानुसारिणो **गौडाः** ।

व्याख्यावसरे—'यदा ह्रस्वमात्रस्य तुगागमो, न तदन्तस्य—तदेदं प्रयोजन'मिति व्याख्यात कैयटेन ।

मूलोक्तन्तु न युक्तं,—भाष्यानुक्तेः ।

अत एव—'नेतराच्छन्दसी'ति सूत्रे भाष्ये—'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने'ति वार्त्तिकं व्याख्याय—'तेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति ?, सकृद्गतिन्याया'दित्युक्तम् ।—त्वद्रीत्या पुनः प्रसङ्गस्यैवाभावेन तदसङ्गतिः स्पष्टैव ।

❀ अभिनव-चन्द्रिका ❀

तदेदं प्रयोजनमिति । अवयवावयवन्यायेन तत्त्वेऽपि अवयवावयवन्यायप्रवृत्तिप्राक्क्षणे

❀ चिदस्थिमाला ❀

अत एव=आगमस्यावयवत्वेन तदविघातकत्वादेव । 'व्याख्यातं कैयटेने'त्यत्रान्वयः । अन्यथा तथा व्याख्यानासङ्गतिः स्पष्टैव । ननूपायस्योपायान्तरादूषकत्वान्मौलमप्यस्तु, अत आह—मूलोक्तमिति । मकारान्तरप्रश्लेषरूपमित्यर्थः । एतेन तस्योपलक्षणत्वं स्वीकृत्य प्रकारान्तरद्वयं दण्डिशास्त्र्याद्युक्तमपास्तम् । नन्वेवमप्यप्रतिषिद्धत्वादनुमतमेवाऽत आह—अत एवेति । तस्य अयुक्तत्वादेवेत्यर्थः । 'सूत्रे भाष्ये' इति पाठः । तेषु=

❀ ज्योत्स्ना ❀

स्वतन्त्राभावस्तत्करोति तदाचष्टे इति ण्यन्तार्थस्यापि, नैतदस्ति, अर्थविशेषे शास्त्रबोधितसाधुत्वानां तथात्वानङ्गीकारात्, 'इतोऽत्सर्वनामस्थाने' इत्यत्र 'पथीयति'व्यावृत्त्यर्थं कृतेन तपरकरणेनोक्तार्थत्वस्यावश्यकत्वाच्चेति दिक् । ननु 'ङे प्रथमयोर'मिति मकारान्तरप्रश्लेषे द्वितीयमकारलोपः संयोगान्तलोपेन वक्तव्यः ।—स च भिन्नपदत्वपक्षे संयोगान्तस्य पदत्वाभावादप्राप्तः,—'संयोगान्तस्ये'ति शब्दकौस्तुभोपदर्शितप्रकारेण भवेन्नत्वसाविह रक्षाकर उपायः ।—अम् चासौ मृ्चेति कर्मधारयेणैकपदत्वपक्षे संयोगान्तस्य पदत्वेऽपि यणः प्रतिषेधोरम्भात् झलो लोपाच्च भवेत् । 'बहिरङ्गलक्षणत्वाद्वे'ति तृतीयपक्षे प्राप्नोति, किन्त्वम्—म्—इति विशेषणसमासे विशेषणस्य पूर्वनिपातापत्तौ रूपाप्रसिद्धिरित्यत आह—शसो नेत्यनेन संहितयेति । [४४०पृ०] तत्र हि जातिपक्षाश्रयणेन द्वयोरपि मयोरेक एवादेश

❀ सदाशिवभट्टीयम् ❀

न तु ससुट्कमेव [?] । एवन्तु न—'युष्मदस्मदोरनादेशे' इत्यनादेशपदं 'योची'त्यत्रैव क्रियेत इति, तेनोक्तरूपत्वसौलभ्यादिति चेन्न, युष्मयतेर्युष्माकमित्यत्राकारश्रवणार्थन्तदावश्यकत्वात् । न च पञ्चमीसमासेन स्थानिवत्त्वेनात्रिष्टव्य एवाभ्यम्भ्यमोःफलभेदापत्तिरिति वाच्यम्, पञ्चमीसमासस्याऽनित्यत्वेन तत्राश्रयणेन फलभेदाभावेऽप्यत्राश्रयणे मानाभावात् । एवं दोषः सुक्षेयेति बोध्यम् ।

किञ्च युष्मदस्मदोरित्यस्यापि [सादेशे] च चारितार्थ्येऽनादेशेऽचि हलि चोभयत्रापि यत्वापत्तिरिति तत्राचीति न कर्त्तव्यं स्यादत्राप्यनादेशत्त्वे तु परिशेषलब्धमेव तद्भवतीति न कार्य्यमितीदानीं गौरवापत्तिः । एवञ्चेदं सम्यगेवेति बोध्यम् । किञ्च योचीत्यत्राप्यनादेश इति मास्तु, द्वितीयायाञ्चेत्यात्वविधानाज्ज्ञापकादादेशेऽचि तदभावादिति। इदन्तु पुनश्चिन्त्यम् । आकमित्येव टिलोपेन सुटोऽप्राप्तेः ससुट्कनिर्देशो व्यर्थः। व्याख्यातमिति।

❀ विषमपदविवृतिः ❀

स्यात्कापयती'त्युक्तमिति चेन्न, यदागमन्यायस्यातिदेशत्वं नेत्याशयात् । 'आत्वं पुग्विधेरनिमित्त'मित्यपि पूर्वपक्षिभाष्यम् । अत एव 'प्रतिविधेयं दोषे'ष्विति सिद्धान्तभाष्यव्याख्यावसरे—'कापयती'त्याकारान्तभक्तः पुक् न व्यवधायक' इति—कैयटेनोक्तम्। अन्ये तु—कृतितुग्ग्रहणं सन्निपातपरिभाषाया अनित्यत्वे गमकम् । अतः 'कापयती'त्यादौ पुक् सिध्यति । ससुट्कनिर्देशोप्यत्रैव गमकान्तरम् तेन यदागमन्यायस्यातिदेशत्वेप्यवयवावयवस्य समुदायावयवत्वेपि 'ग्रामणि कुलं', 'वृत्रहभिः', 'कापयती'त्यादौ सन्निपातपरिभाषोपन्यासपरभाष्यविरोधो नेत्याहुः । न तदन्तस्येति । 'यदा चावयवावयवः समुदायवयवो ने'त्यपि पूरणीयम् । त्वद्रीत्येति । ननु त्वद्रीत्यापि युष्मदस्मदोर्विभक्त्या-

अत एव च तत्र युष्मदादेर्विभक्त्यादेशस्य 'यूयं ब्राह्मणाः' इत्याद्यवकाशप्रदर्शनं कृतम् ।–अन्यथा तत्रापि जसः शीप्राप्त्या तदसङ्गतिः । 'यूय'मित्यादिप्रयोगकरणेन, तत्र श्यादिशङ्कासमाधानाऽकरणेन च भाष्यकृताऽत्र सन्निपातपरिभाषाविषयत्वं सूचितम् ।

अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यं, तस्या अङ्गसम्बन्धिकार्यविषयत्वात् । सूत्रभाष्यस्वरसोऽप्येवमेव । वस्तुतो नैषा लक्ष्यसंस्कारिका, 'द्व्यो'रित्यादिनिर्देशासङ्गतेः । –अत एव भाष्ये 'किमेतस्या ज्ञापने प्रयोजन'मिति प्रश्ने–'पिबेर्गुणप्रतिषेधो न वक्तव्यः'–इत्येव प्रयोजनमुक्तं, न तु प्रयोगसिद्धिः प्रयोजनमुक्तमित्याहुः ।

---

ॐ अभिनव-चन्द्रिका ॐ

तद्विघातस्य सत्त्वात्तत्प्रवृत्तिः स्पष्टैव । 'आद्यन्ता'विति सूत्रसहकारेणावयवत्वविशिष्टतत्तत्कार्यस्य विधानेन कस्मिंश्चिदपि क्षणे न सन्निपातविघात इति भावः । आहुरिति । परे तु–प्राचीनमतमेव ज्यायः । यत्तु–नेतराच्छन्दसीति सूत्रे 'नपुंसकाङ्गेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने'ति वार्तिकं व्याख्याय तेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति ? सकृद्गतिन्याया' इत्युक्तं, तत्तु मकारप्रश्लेषमबुद्ध्वा अङ्गवृत्तपरिभाषाया प्रत्याख्यानाच्च सकृद्गतिन्यायेन समाहितमिति

ॐ चिदस्थिमाला ॐ

विभक्त्यादेशेषु । त्वद्रीत्या=मकारान्तरप्रश्लेषेण । प्राग्वदाह–अत एव चेति । उक्तोऽर्थः । तत्र=उक्तसूत्रभाष्ये विप्रतिषेधोपपादनावसरे । एवं तस्य तदनभिमतत्वमुक्त्वा स्वोक्तस्य तदभिमतत्वमाह–यूयमिति । अत्र= 'यूय'मित्यादौ । मूलादिकृतकलोक्तिं खण्डयति–अङ्गेति । तत्रादौ प्राचां मतेनाह–तस्या इति । कार्येति । आङ्गेत्यर्थः । सूत्रेति । 'ज्यादादी'त्यादीत्यर्थः । सिद्धान्तमाह–वस्तुत इति । ननु ततोऽस्या अनित्यत्वमत-आह–अत एवेति । अस्या लक्ष्यासंस्कारिकात्वादेवेत्यर्थः । यथोत्तरं मुनीनां प्रामाण्यमिति भावः । अपिना 'युवावा'विति समुच्चयः ।'अन्यथे'त्यस्य–'यत' इत्यादिः । 'युवावा'विति सूत्रोक्तरीत्या 'एकत्वे' इत्येव सिद्धे

ॐ ज्योत्स्ना ॐ

इति भावः । सन्निपातपरिभाषाविषयत्वं सूचितमिति । यदि तु विभक्तिसन्निपातेन कृतस्य शेषे-लोपस्यादन्तत्वप्रयुक्तश्यादेशे सत्यपि विभक्तिबुद्धेरविघातात्सन्निपातविघातकत्वाभाव इत्युच्यते तदेह परत्वाच्छीभावे कृते सकृद्गतिन्यायादेव भाष्योक्तरीत्या समाधेयम् । न च 'यूयं ब्राह्मणा.'·

ॐ सदाशिवभट्टीयम् ॐ

शेषग्रहणस्य पूर्वं कर्तव्यताया उक्तत्वाच्छेषग्रहणमनुवर्त्यैव भाष्योक्तरीत्या स्वादिविषये त्वमादेशवारणस्यौ-चित्येन विप्रतिषेधकल्पनं भाष्यानुक्तं मूलकृतामयुक्तम् । एवं शेषग्रहणस्य स्वमते स्पष्टार्थोक्त्या तदनुमानस्या-शक्यात् । पूर्वविप्रतिषेधाश्रयणभेदेनापि न तदप्यसङ्गतमेतदर्थं शेषग्रहणस्यावश्यकत्वाच्चेति चिन्त्यमेतत् ।

ॐ विषमपदविवृतिः ॐ

देशेषु कृतेषु न लुकः प्राप्तिरतोमित्यमा बाधात् , प्राप्तिमात्राभिप्रायकत्वे ममापि तुल्यमिति चेत्— सत्यम् । परिभाषाविषयत्वं सूचितमिति । 'तुभ्यं', 'मह्यं', 'त्वत्', 'मत्', 'तव', 'मम'त्यादौ स्मै, स्मात्–स्यादयोऽनयैव परिभाषया नेति बोध्यम् । युष्मदस्मदोर्विभक्त्यादेशे कृते भिद्विभक्ति-स्थानिकादेशे कृते पुनरादेशान्तरं नेत्यशि शिस्त्वेन ज्ञाप्यते इति केचित् । 'अम् मान्त एवावशिष्यते' इति व्याख्याने–'तुभ्य'मित्यादेः सिद्धावपि 'त्व'दित्यादेरसिद्धिः, अतः सन्निपातपरिभाषया वारणप्रकार एव युक्तः । अङ्गसम्बन्धीति । इदं न युक्तं—धर्मिग्राहकमानविरोधात् । अत एव 'ज्यादादीयस' इति सूत्रे भाष्य-किमर्थं ज्यात्परस्येयस आत्वमुत्वमुच्यते ? लोपः प्रकृतेऽनुवर्त्यताम् , 'अकृत्-कारे'इतिदीर्घो भविष्यति,एवं तर्हि सिद्धे सति यदात्वं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा

**त्वमाविति** । अत्रापि 'विभक्ता'विति सम्बद्ध्यते, अन्यथा 'प्रत्ययोत्तरपदयोश्चे'ति व्यर्थं स्यात् ।–तत्फलन्तु–त्वं सुन्दरः पुत्रो यस्य–'युष्मत्सुन्दरपुत्र' इति त्रिपदबहुव्रीहौ नाऽऽदेश इति । अत्रैकवचनशब्दो यौगिको–व्याख्यानात् , तदाह–**एकस्येति** ।

**अविभक्तिकमिति** ।–व्याख्यानात् ।

**योऽचि** । अनादेश इति किं ? त्वत्, मत् । 'पञ्चम्या अ'दित्यदादेशः । आत्वविधायके च भ्यम् व्यावर्त्यः ।

वस्तुत उत्तरार्थमेव तत्, 'अभ्य'मित्येवच्छेदादिति भाष्ये स्पष्टम् ।

**हलादाविति** ।–परिशेषलब्धम् । 'हली'त्यनुवृत्तौ तु–'योऽची'त्यज्ग्रहणं मास्तु ।

❀ अभिनव-चन्द्रिका ❀

नास्माकं प्रतिकूलम् । तथापि सन्निपातपरिभाषामवुद्ध्वेदं भाष्यं प्रवृत्तमित्यवश्यं वक्तव्यम्, अन्यथा सन्निपातपरिभाषयैव निर्वाहे सकृद्गत्याश्रयणमसङ्गतमेव स्यात् । नच लोकप्रसिद्धपरिभाषयैव निर्वाहे मकारप्रश्लेषे गौरवमितिवाच्यं, 'ते प्राग्धातो'रित्यादिनिर्देशैर्जसश्शीतिसूत्रविषये सन्निपात-परिभाषाप्रयुक्तसङ्कोच एव नेति ज्ञापनेन तस्या अत्राप्राप्तेः । नच—न मया विधेये सङ्कोचः स्वीक्रियते, अपि तु अनुज्ञावाक्ये एव, तथाच 'ते' इति निर्देशेन 'त्यदादीनाम' इत्यस्यानुज्ञावाक्ये 'जसः' शी'त्येतदतिरिक्तत्वेन सङ्कोचेऽपि अत्र सङ्कोचे मानाभाव इति वाच्यम्, 'उपजीव्यविरोधो न न्याय्य' इत्यक्षरस्वारस्यभङ्गापत्तेः । नहि तेन न्यायेनोपजीव्यविरोधकर्तुरनुज्ञादानं पापजनकमिति बोध्यते, अपि तूपजीव्यविरोधस्य पापजनकत्वमुच्यते, अत एव लोकेऽपि उपजीव्यविरोधकर्त्तैव निन्दितो भवति, न तु तन्मन्त्रयिता, प्रत्युत तन्मन्त्रयितुः प्रतिष्ठा जायते इत्यलं प्रसक्तानु-प्रसक्त्येत्याहुः ।

त्वत्–मदिति । त्वमित्यपि बोध्यम् । **परिशेषलब्धमिति** । नन्वनादेशग्रहणस्यात्र फलाभाव इत्यनुपदमेवोक्तत्वेन त्वमित्यत्र यत्वाप्राप्त्या 'हली'त्यननुवृत्तौ तत्राप्यात्वं प्रसज्येतेतिचेन्न, तथा सति 'द्वितीयायाञ्चे'त्यस्य वैयर्थ्येन 'अनादेशे भवति चेत् द्वितीयायामेवे'ति नियमात्तत्र तदप्राप्त्या अनादेशाजादौ यत्वेन बाधात्परिशेषलब्धमित्यस्य सुवचत्वात् ।

❀ चिदस्थिमाला ❀

वचनग्रहणसामर्थ्यलभ्यमाह–**व्याख्यानादिति** । 'ङे प्रथमयो'रिति प्राप्तस्य निषधोऽयमस्त्विति भाष्यीय-शङ्कामूलकमाह–**व्याख्येति** । तथैव तु न, स्त्रीक्लीबयोर्नत्वाप्राप्तेः,अलिङ्गत्वे सर्वत्रैवाऽप्राप्तेश्च, युष्मानित्याद्य-सिद्ध्यापत्तेः। अनुवृत्तफलमाह–**अनेति** । 'युस्म'दितिसूत्रे फलमाह–**आत्वेति** । अयमपि न सिद्धान्त इत्याह–**वस्तुत इति** । तत्=अनादेशग्रहणम् । उक्तम्–अनुपदमेव । तत्र=तयोर्मध्ये । ननु तत्रोदात्तलोपशब्देन यथा-

❀ विषमपदविवृतिः ❀

'अङ्गवृत्ते पुनर्वृत्तावविधि'रिति । लोपश्च प्रत्ययसम्बन्धिकार्यं नेति दिक् । **तत्फलन्त्विति** । विभक्ता-

१ परे तु–एवमपि मकारप्रश्लेषे पुनः प्रसङ्गाभावेन भाष्यासङ्गतिरस्त्येवेति नेदं युक्तं, किन्तु उपायस्यो-पायान्तरादूषकतया न सकृद्गतिन्यायाश्रयणेनोत्तरमयुक्तमित्येववाच्यमित्याहुः ।

२ परेतु—'तस्मिन्' 'तेने'त्यादिनिर्देशाऽसङ्गत्या त्यदाद्यत्वे सन्निपातपरिभाषाया अप्रवृत्तिरित्येव कल्प-नीयमित्याहुः ।

३ परेतु–अन्यथासिद्ध्या प्रश्लेषमानाभाव इत्याहुः ।

भ्यसोभ्य ।–अत्र यद्वक्तव्यं तदुक्तम् । पक्षद्वयेऽपीति । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे–'एकादेश उदात्तेने'त्यभ्यम आद्याकार उदात्तः । टिलोपेऽपि–'यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त'–इत्यर्थकेन 'अनुदात्तस्य च यत्रे'त्यनेन स उदात्त एवेति न विशेष इति भावः ।

नन्वाकमः पूर्वं लोपाभावेनाऽदन्तत्वाभावात्सुडागमाऽप्रसक्तेः ससुट्कनिर्देशो व्यर्थः, सूत्राऽसङ्गतिश्चेत्यत आह–भाविन इति । आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः ।

अयं भावः–'सामः प्रसङ्गे आक'मित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते । स्थान्यादेशभावविषये सर्वत्रैवमेव । यथा–आर्द्धधातुकविषयेऽस्तेरप्रयोगो, भूप्रयोगश्च-'अस्तेर्भू'रित्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः, शब्दाऽनित्यत्वप्रसङ्गात्,–किन्तु प्रसक्तबुद्धेरेव निवृत्तिः। सकारबुद्धिप्रसक्तेश्च प्रकृते साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणं–सकारोच्चारणसामर्थ्यादिति,–प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम् ।

[यद्वा–]तन्निवृत्तिश्चाऽऽमोऽभावात् ।–अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन

❀ अभिनव-चन्द्रिका ❀

नन्वाकम इति । ननूपजनिष्यमाणन्यायेनाऽकृतव्यूहपरिभाषया च पूर्वं यत्वाप्राप्त्याऽऽकमः पूर्वमन्त्यलोपेऽदन्तत्वात्सुटि तद्विशिष्टस्याकम्विधानार्थं ससुट्कनिर्देशः आवश्यक इति न निर्देशवैयर्थ्यं, नवा सूत्रासङ्गतिश्चेतिचेन्न, पर्युदासविषये तन्न्यायप्रवृत्तेर्भाष्यसम्मतदृढतरफलाभावात् । अकृतव्यूहपरिभाषा च नास्त्येवेति ग्रन्थकृतैवोक्तत्वाच्च ।

❀ चिदस्थिमाला ❀

कथञ्चिदुदात्तलोपग्रहणेऽपि स स्वरोऽन्त्यस्य स्यात्, 'कर्षात्वतोघञोऽन्त इत्यतोऽऽन्त' इत्यनुवृत्तेः, तन्निवृत्तौ सम्पूर्णस्यैव स्यादितिचेन्न,यत्रेति सप्तमीनिर्देशेनानुदात्तस्य वर्णात्परस्य निमित्तत्वानादरेण लोपस्थानिभूतवर्णात्परस्यैव ग्रहणेनादेरेव तत्प्रवृत्तेस्तदाह–यत्रेति । दीक्षितादिसकलग्रन्थासाङ्गत्याय सिद्धान्तमाह–अयमिति । शाब्दमुक्त्वा तात्पर्यार्थमाह–सुडामोरिति । अत्र विषये=आकम्विषये । न केवलमत्रैवेत्थं किन्त्वन्यत्रापीति प्रसङ्गादाह––स्थान्यादेशेति । 'सर्वं नाम धातुज'मिति रीत्या सूत्रपाठे प्राथम्याच्च––दिक्प्रदर्शनार्थमुदाहरणमाह––यथेति । एतेन 'इको यणची'त्यस्य त्यागे बीजं चिन्त्यमित्यपास्तम् ।

ननु सर्वत्र किमित्येवमङ्गीकारोऽन्यथापि गतिसम्भवादत आह–नत्विति । सतो निवृत्तिस्तु नेत्यर्थः। नन्वेवं स्थान्यादेशव्यवहारो न स्यात्, निवर्त्यनिवर्तकत्वाभावादत आह––किन्त्विति । तथाच यद्बुद्धेर्यत्––द्बुद्धिनिवर्तकत्वं तयोरपि तत्त्वमारोपेणाऽविरुद्धमिति भावः । प्रकृतमाह––सकारेति ।

नन्वेवमपि कथं तन्निवृत्तिरत आह–तन्निवृत्तिरिति । आकमि कृते आमोऽभावात्सुडप्राप्तिरित्यर्थः । एवञ्चाप्रसक्तिरेव तन्निर्देशेन बोध्यते इति भावः। ननु स्थानिवत्त्वेनाम्त्वात्कथं तदभावोऽत आह–अत्रेति ।

❀ ज्योत्स्ना ❀

इत्यवकाशप्रदर्शनविरोधः, 'त्वं ब्राह्मणः' इत्यत्र चरितार्थेन विभक्त्यादेशेन 'यूयं ब्राह्मणाः' इत्यत्र परत्वाच्छ्यादेशबाधने 'सकृद्गति'न्यायेन तच्छ्रवणनिर्णये तत्रावकाशस्य 'यूयं ब्राह्मणकुलानी'-

❀ विषमपदविवृतिः ❀

-वित्यस्य फलमित्यर्थः। तन्निवृत्तिश्चेति। अस्य 'वस्तुत' इति शेषः। पूर्वग्रन्थेनैकग्रन्थत्वे सांप्रतिक्या-

साम्त्वमेव, नत्वाम्त्वम् । उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः । सैवाऽप्रसक्तिः ससुट्क-निर्देशेन बोध्यते इति तत्त्वम्–[–बोध्यम्–] ।

अत एव–'अतित्वाक'मित्यादौ 'प्रत्ययोत्तरपदयो'रितिभाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेण आदेशः, आदेशस्याऽऽम्त्वाभावाच्चात्र न नुट् ।

❀ अभिनव-चन्द्रिका ❀

**नत्वाम्त्वमिति ।** ननु आमि साम्त्वस्यारोपेऽपि स्वतः सिद्धाऽऽम्त्वानतिदेशो दुर्वच इति चेन्न; ससुट्कनिर्देशसामर्थ्यादाम्त्वेतरधर्मस्यैवातिदेशबोधनात् । 'अस्जो रोपे'त्यत्रेवात्रोभयपर्याप्तैक-स्थानितानिरूपितादेशताऽऽकमि, तथाचाम्त्वस्य स्थान्येकदेशवृत्तित्वेन न तस्यातिदेशः, पदत्वा-दिकन्तु आनुमानिकस्थान्यादेशभावेन सिद्धम्, आकमि सुप्त्वातिदेशस्य तु नोपयोग इति परे ।

अपरेतु-साश्च म् चेति—साम्, आक् च अम् चेत्याकम् । एवञ्च–यथासङ्ख्येन 'सा'शब्दस्य स्थाने 'आक्' आदेशः,मकारस्य स्थाने च अमादेशः। तथाचाम्त्वस्य स्थान्यवृत्तित्वेन न तस्यातिदेशः। अत्रैव तात्पर्यग्राहकः ससुट्कनिर्देश इत्याहुः ।

'ससुट्कनिर्देशादाकमि ङित्त्वारोपेण टिलोपेन सुटो नुटश्चाप्राप्ति'रित्यन्ये ।

केचित्तु—ससुट्कनिर्देशाद्युष्मदस्मदोरन्त्यस्य सकारं विधाय युष्मदस्मच्छब्दान्ताङ्गाद्विहित-विभक्त्यन्ततदादेरवयवस्य सामः आकम्विधानेनाम्त्वस्य स्थान्येकदेशवृत्तित्वेन न तस्यातिदेश इत्याहुः।

❀ चिद्स्थिमाला ❀

सूत्रे इत्यर्थः। **स्थानिवत्त्वेनेति ।** 'आकमी'त्यादिः। तुर्हेत्वर्थे । अभ्युपेत्येदं,वस्तुतस्तदेव नेत्याह–**उक्तेति ।** बुद्धिप्रसङ्गस्याऽयौगपद्येन चेत्यर्थः । नन्वेवं निर्देशो व्यर्थोऽत आह–**सैवेति ।** उक्तार्थस्यावश्यकतां ध्वन-यितुमाह–**अत एवेति ।** उक्तार्थाङ्गीकारादेवेत्यर्थः। ननु प्रयोगे आम एव सत्त्वेन कथं सामः स्थानित्वोक्तिः सङ्गताऽत आह-**आम्येवेति ।** आरोपफलं तूक्तमेव । एवञ्च सूत्रे सग्रहणं, भाष्यादौ सुड्ग्रहणञ्च आगमो-

❀ ज्योत्स्ना ❀

त्यत्र परत्वाच्छीबाधकनपुंसकशेबांधानाय प्रदर्शनेन विरोधाभावात् । न च पुनः प्रसङ्ग-विज्ञानेन पाक्षिको दोषः, प्रथमप्रवृत्तायाः परशास्त्रप्रवृत्तेर्वैयर्थ्यसम्पादकस्य पुनःप्रसङ्गविज्ञानस्य 'अचश्चे'ति सूत्रे प्रदीपकृता तिरस्कृतत्वात् । एतेन स्यादेशे इष्टापत्तिरित्यपास्तम् ।

**स्थानिवत्त्वेन साम्त्वमेवेति ।** यद्यपीदं वक्ष्यमाणरीत्या साम्त्वस्याशास्त्रीयत्वेनानतिदेशात्प्रयोजना-भावाच्च वक्तुमशक्यं, तथापि अस्य ग्रन्थस्याम्त्वातिदेशाभावे तात्पर्यं, तदाह—**नत्वाम्त्वमिति ।**

**न स्थानिवद्भावप्रसक्तिरिति ।** स्थानिवद्भावेन या सुटः प्रसक्तिः सा नेत्यर्थः । 'उक्तरीत्ये'त्यारभ्य 'बोध्य'मित्यन्तोऽपाङ्क्तः पाठः, शब्दरत्नग्रन्थेऽप्युपलम्भादित्याहुः । **आकम्नुडभावाविति ।** आकम् च नुडभावश्चेति द्वन्द्वः । नन्वतित्वाकमित्यत्राकमेव दुर्लभः, गौणे सामः प्रसङ्गाभावादत आह— **साम्त्वस्याहार्यारोपेणेति ।** आहार्यारोपे निमित्तन्तु—साम्त्वसम्भावनागमकमुख्यार्थयुष्मदस्मद्-

❀ विषमपदविवृतिः ❀

अभावेन भाविन्या ग्रहणमिति पूर्वग्रन्थस्य 'स्थानिवत्त्वेन साम्त्वमेव नत्वाम्त्व'मित्युत्तरग्रन्थस्य विरोधा-पत्तिः । स्थानिवत्त्वेनाम्त्वाभावेन भाविन्या अपि सकारप्रसक्तेरसम्भवात् । **साम्त्वमेवेति ।** यद्यपि

१ **न नुडिति ।** ननु स्थानिवत्सूत्रेण स्थानितावच्छेदकधर्मसमानाधिकरणधर्मस्याप्यानयनं भवति, अन्यथाऽत्रैवाकमि सुप्त्वाभावात्पदत्वं न स्यात्, एवञ्च साम्त्वसमानाधिकरणस्याऽऽम्त्वस्याप्यानयनसम्भवा-न्नुडापत्तिरिति चेन्न, आहार्यारोपस्य सुडनुड्व्यावृत्तये एवाश्रयणीयतया—भवद्रीत्याऽऽम्त्वारोपान्नुटि तद्वैयर्थ्यस्य स्पष्टतया 'आम—आक' मित्येवं सूत्रयितव्ये 'साम आक'मिति सूत्रणादाम्त्वस्यानतिदेशात् । एवञ्चारोपवैयर्थ्यादाम्त्वानयनं न सम्भवति, सुप्त्वादिकन्त्वानीयत एवेति 'यद्वा'कल्प एवात्र युक्त इति गुरवः प्राहुः ।

न च यत्र साम्—भावी–तत्रैवायं; सामो भावित्वस्य सर्वथा दुरुपपादत्वात्, साम्त्वस्याऽशास्त्रीयत्वेनाऽतिदेशाऽलभ्यत्वादिति–भाष्यविरुद्धकल्पना व्यर्थेति दिक् ।

ह्रस्वादिरकम् तु न कृतः, अन्त्यलोपेऽप्यकारस्यैत्वनिवृत्त्या चारितार्थ्येन पररूपापत्तौ 'युष्माक'मित्यसिद्ध्यापत्तेः ।

❀ अभिनव-चन्द्रिका ❀

कश्चित्तु—साम आकमित्यत्र नलोपेन नकारं प्रश्लिष्य, सवर्णदीर्घेण निषधार्थकमकारञ्च प्रश्लिष्य–'सुट्नुटौ न भवतः, आमः आकम्च भवती'त्यर्थकल्पनेन न कश्चिद्दोष इत्याह, —इत्यलमतिविस्तरेणेति दिक् । अशास्त्रीयत्वेनेति । ननु सामः 'स्वं रूप'मिति शास्त्रग्राहितसङ्केतकत्वेन शास्त्रीत्वादशास्त्रीयत्वं दुर्वचमितिचेन्न, 'शास्त्रग्राहित–सङ्केतकत्वे सति शास्त्रग्राहितसाधुत्वकवृत्तिविषयताप्रयोजकशास्त्रघटकपदप्रतिपाद्यत्व'रूपशास्त्रीयत्वग्रहणेनात्र सामः शास्त्रग्राहितसङ्केतकत्व—शास्त्रघटकपदप्रतिपाद्यत्वयोः सत्त्वेऽपि शास्त्रग्राहितसाधुत्वकवृत्तिविषयताप्रयोजकपदप्रतिपाद्यत्वाभावेनाशास्त्रीयत्वस्य सुवचत्वात् ॥ एतादृशशास्त्रीयत्वाश्रयणे प्रमाणाभावात्फलाभावाच्चेत्यरुचेराह-भाष्यविरुद्धेति । अकम्–तु न कृत इति । परे तु युष्मयतेरस्मयतेः

❀ चिदस्थिमाला ❀

पलक्षणमिति भावः । दुरुपपादत्वे हेतुमाह–साम्त्वस्येति । एवञ्च भाष्यविरोधापत्तिस्तस्मात्तत्प्रामाण्यादुक्तार्थस्वाकारस्तदाह–इति भाष्येति । एवञ्चान्यथा मनोरमोक्तं तथा दण्ड्याद्युक्तञ्चायुक्तमेव,

❀ ज्योत्स्ना ❀

घटितसमुदायसङ्ख्यासमर्पकत्वमेव । 'अतित्वाक'मिति भाष्यप्रयोगश्चेह लिङ्गमिति बोध्यम् ।

ननु भाविसकारबुद्धिमादाय आकमि स्थानिवद्भावेन साम्त्वमस्त्येवेत्यत आह—साम्त्वस्याशास्त्रीयत्वेनेति । एत्वनिवृत्त्या चरितार्थेनेति । 'अक'मित्यकारस्याप्यनुच्चारणे'तु 'बहुवचने झल्ये'त्येत्वप्रसङ्ग इति भावः ।

❀ विषमपदविवृतिः ❀

स्थानिवत्सूत्रेण स्थानितावच्छेदकधर्मातिदेश एवातिदिश्यते इति न नियमः, आर्द्धधातुकत्वाद्यतिदेशानापत्तौ 'ल्यपी'त्यादेर्वैयर्थ्यापत्तेः, तथापि सम्भावितमामं विहाय सांप्रतिकस्य सामः स्थानिवत्त्वेनोपादानसामर्थ्येन साम्त्वमत्रातिदिश्यते, न त्वाम्त्वमिति कल्पनान्न दोषः । प्रत्ययत्वसुप्त्वादीनां तु न व्यावृत्तिः, 'आ'मिति निर्देशेन प्रसक्तस्थानितावच्छेदकभावस्याम्त्वस्यैव व्यावृत्तेः ।

ननु 'युष्माक'मित्यत्र सामो भावित्वं सम्भवति, न त्वतित्वाकमित्यत्र, तथाह्याकमः स्थानिवत्त्वेनाम्त्वात्सुटः प्रवृत्त्या सकारस्य श्रूयमाणत्वात् । 'अतित्वाक'मित्यत्र सुटोऽप्रवृत्त्या न साम्त्वं भावीत्यत आह—साम्त्वस्याशास्त्रीयत्वेनेति । यद्यपि 'निर्जरसा'वित्यादौ जराशब्दवदाकम्याम्त्वमशास्त्रीयत्वेऽप्यतिदेष्टुं शक्यं, साम्त्वं तु सुटमादायार्थसमाजग्रस्तं नातिदेशतो लभ्यम् , तथाप्याकमः सुडुत्तरं आम्त्वप्रयुक्तशास्त्रीयकार्याभावेन स्थानिवद्भावेनाम्त्वं दुर्लभं, साम्त्वस्याशास्त्रीयत्वेन शास्त्रीयकार्यप्रवृत्त्यप्रयोजकत्वेनातिदेशालभ्यत्वात्=अतिदेशत्वाप्रयोज्यत्वादिति शेखरार्थः । किञ्च यत्र साम् भावि तत्राकमित्यर्थे—आकमुत्तरं सुटः प्रवृत्तौ तस्य श्रवणापत्तिस्तदेतदभिप्रेत्याह—इति दिगिति ।

१ युष्मद्—आमित्यवस्थायामनादेशाजादिविभक्तिपरतया 'योऽची'त्यस्य प्राप्त्याऽऽम्वग्रत्वनिमित्ततरविभक्तिपरत्वाभावेन शेषेलोपाप्राप्त्याऽदन्तत्वविरहेण सुटः कथमपि प्राप्त्यभावात् 'साम्'–इति रूपस्य भाविताया वक्तुमप्यशक्यत्वादित्याशयः । उपसञ्जनिष्यमाणन्यायेन 'योची'त्यस्याप्राप्त्या शेषे लोपेन तथात्वं तु दुर्वचम्, आकम्प्रवृत्तिसम्भावनायामेव तथा वक्तव्यतया 'साकम्'–इत्यस्यैव रूपस्य तावताऽपि सम्भावनीयतया 'साम्–' इति रूपस्य सम्भावनाया उपपादनस्यासम्भवात् । अथापि—सुटः सम्भावनया जातेऽप्याकमि—तत्रैव स्थानिवद्भावेनाऽऽम्त्वबुद्ध्या सुटि—साम्त्वस्यार्थसमाजग्रस्तत्वमिति चेन्न;

द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति—**द्व्येकत्वेति** । द्वित्वैकत्वविशिष्टवाचिनी इत्यर्थः । **समासार्थो**-मुख्यविशेष्यः । **अन्यसङ्ख्यः**-युष्मदाद्यर्थगतसङ्ख्येतरसङ्ख्यायुक्तश्चेदित्यर्थः । **स्त इति** । अर्थपरत्वाश्रयणादिति भावः ।

**एते इति**—कर्तृपदम् । **युवावाविति**—कर्मपदम् । एवं 'त्वमा'वित्यपि । **पूर्वविप्रतिषेधत इति** । विप्रतिषेधे पूर्व इति—'सुप्सुपे'ति समासः । अत एव 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रभाष्ये—'त्वमा'विति सूत्रे 'शेषे' इत्यनुवर्त्य—सु-जस्-ङे-ङस्-व्यतिरिक्तविभक्तावेताविति व्याख्यातम् । **त्वमौ न चेति** । अर्थपरत्वाश्रयणादेवेति भावः ।

**इति विग्रहे इति** । 'एवं विग्रहे यादृग्रूपाणि तानि वक्ष्यन्ते' इति शेषः । **अतित्वाकमिति** । अत्र यथाऽऽकम्नुडभावौ —तथोक्तम् ।

**पदस्य** । 'अपदान्तस्य मूर्द्धन्यः' इत्यतः प्रागयमधिकारः । तत्फलन्तु—'राजाना'-वित्यादौ नलोपाभावः ।—इयञ्च—क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी । 'हो ढः' इत्यादावाद्या । 'मादुपधाया' इत्यादावन्त्या । तेन 'वृक्षवन्ता'वित्यादौ वत्वसिद्धिः, अन्यथा मत्वन्तपदा-

❀ अभिनव-चन्द्रिका ❀

क्विपादेरनभिधाने प्रमाणाभावस्य पूर्वमुक्तत्वेन तत्र दीर्घोच्चारणस्य चारितार्थ्यमित्याहुः। अत्रेदं चिन्त्यम्, युष्मदस्मदोः, 'हली'ति वर्तते, ततो 'योऽच्यनादेशे' इति पाठेनाऽऽत्वेन सिद्धावाकन्याकारोच्चारणं न कर्तव्यमिति भावः। सामोतिदेशेऽपि भाष्योदाहृते अतित्वाकमित्यत्र सुडप्राप्त्या तत्राकमनापत्तिः, नुडापत्तिश्चेति भावः । **द्वित्वैकत्वविशिष्टेति** । समासे युष्मदस्मदर्थगतसङ्ख्याया अभावादिति भावः । **युक्तश्चेदिति** । युक्तश्चेदपीत्यर्थः । तेन द्वित्वैकत्ववाचिन्यन्यपदार्थेऽपि त्वमौ युवावौ च भवन्त्येवेति दिक् ।

❀ चिदस्थिमाला ❀

तदाह—**इति दिगिति** । अपिना टिलोपपक्षसमुच्चयः । यथाश्रुताऽसङ्गतेराह—**द्विस्वेति** । 'मुख्यविशेष्यः' इति पाठः । एतेनान्यथा आदितो यद्याख्यातं दण्ड्यादिभिस्तदपास्तम् । **अर्थेति** । 'द्विवचनैकवचनशब्दयो'-रित्यादिः । एवमग्रेऽपि । द्वितीयेन साम्यमाह—**एवमिति** । पूर्वः=आदेशः । ततस्तृतीयान्तात्तसिः । एवं 'परविप्रतिषेध'शब्दोऽपि व्याख्येयः । अत्र मानमाह—**अत एवेति** । पूर्वविप्रतिषेधस्येष्टत्वादेवेत्यर्थः । साकाङ्क्ष-त्वादाह—**एवंविग्रहे इति** । उक्तं=सामआकमित्यत्र । विरोधिनिर्देशादाह—**अपदान्तस्येति** । भाष्य-सिद्धान्तमाह—**इयञ्चेति** । अङ्गस्येतिवदुत्तरत्रानुवर्त्तमानेत्यर्थः । लक्ष्यानुरोधाद्याख्यानाच्चेति भावः । तदाह—**होढ इति** । 'वृक्षवा'नित्यत्रैव स्यादित्याह—**वृक्षवन्ताविति** । **भाष्ये इति** । एतेनान्तग्रहणसामर्थ्या-

❀ ज्योत्स्ना ❀

ननु नलोपसूत्रेऽन्तग्रहणं मुख्यप्रातिपदिकान्तस्यैव न व्यपदेशिवद्भावेन प्रातिपदिकस्य लोपार्थं,

❀ सदाशिवभट्टीयम् ❀

**विग्रह इति** । न च विग्रहे रूपाणामभाव इतीदमयुक्तमिति वाच्यं,विग्रहो यस्येति बहुव्रीहिणा समासस्या-पेक्षणीयत्वात् । **पदस्य** । **अन्त इति** । नन्वन्तग्रहणं मुख्यार्थलाभार्थं, तेनान्त इत्यत्र न दोषः,तत्रान्तत्वस्य

❀ विषमपदविवृतिः ❀

**विप्रतिषेधे पूर्वमिति** । अन्ये तु पूर्वशास्त्रप्रवृत्तिप्रयोजकीभूतो विप्रतिषेधस्तुल्यबलविरोधस्तेनेत्यर्थ-

---

साम्त्वस्याऽशास्त्रीयत्वेनातिदेष्टुमशक्यत्वात् , शास्त्रकारीयसङ्केतविषयतावच्छेदकधर्मवत्त्वं हि शास्त्रीयत्व-मिति नागेशभट्टाशयः । परेतु जातेऽप्याकमि तत्रामत्वबुद्ध्या सुट्यपि 'साकम्' इत्यस्यैव रूपस्य भावित्वं, न 'साम्' इत्यस्य रूपस्य । स्थानिबुद्ध्या हि प्रवृत्तिनिवृत्ती भवतो न तु वस्तुमोषेऽपीति न सामो भावित्वं कथमपीति प्राहुः । अत्रलं तत्त्वन्तु—अस्मदभ्यूहितायामभिनवराजलक्ष्म्यां द्रष्टव्यमिति गौडाः ।

ऽभावान्न स्यात्। अत एव 'नलोपः' इति सूत्रेऽन्तग्रहणं चरितार्थमिति स्पष्टं भाष्ये। 'न्रः सङ्ख्यायाः' इत्यत्र नलोपाभावस्तु—'झलाञ्जश् झशी'इत्यत्र जश्त्वाभाववद्बोध्यः।

**पदात्**। 'कुत्सने च सुपी'त्यतः प्रागयमधिकारः। 'अनुदात्तं सर्व'मित्यादि-पदत्रयमापादसमाप्तेः। सर्वग्रहणन्तु—'तिङ्ङतिङ'इत्यादौ सर्वानुदात्तत्वस्य विनिगमना-विरहाल्लाभेऽपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम्। 'आदेः परस्य' 'अलोऽन्त्यस्ये' त्यनयोस्तु न प्राप्तिः, 'पदस्ये'त्यस्य—'अनुदात्तं' 'तिङ्'—इत्यादिश्रुतप्रथमान्तानुरोधेन-प्रथमया विपरिणामेन स्थानषष्ठ्यभावात्। तत्र पादशब्देन ऋक्पादः, श्लोकपादश्च अविशेषाद् गृह्यते। 'अपादादि'शब्देन—पादान्तपादमध्यस्थवच्छन्दोहीनवाक्यस्यापि ग्रहणम्।—'ग्रामे कम्बलो मे स्व'मिति भाष्यात्।

**षष्ठ्यादीति**। 'सर्वस्य' 'पदस्ये'त्युभयाधिकारसामर्थ्यादिदं लभ्यते इत्यन्यत्र विस्तरः। **तौ चानुदात्ताविति**। अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः।

**उक्तविधयोरिति**। पदात्परयोरपादादौ स्थितयोरित्यर्थः। द्वितीयायां त्वामयो-

❀ चिदस्थिमाला ❀

न्मुख्यान्त एव नलोपप्रवृत्तिः, अत एव 'न्रः' इति निर्देशसङ्गतिरित्यपास्तं, भाष्यविरोधात्, तद्भनयन्नाह—**न्र इति**। तत्राप्यनुवृत्तौ 'चैत्रः पचति पूती'त्यत्रैव निघातः स्यान्न तु 'पचति पूती'त्यत्रेत्यत आह-**कुत्सने चेति**। 'ङमुट्'सूत्रे भाष्ये स्पष्टमिदम्। नचादेरित्यादिनिवृत्यर्थं कुतो नात आह—**आदेरिति**। तत्र= अपादादावित्यत्र। पर्युदासन्यायोऽत्र नेत्याह-**अपादादीति**। भाष्यात्=तदुदाहरणात्। यथाश्रुतमनोरमा-ग्रसाङ्गत्यायाह—**सर्वस्येति**। स्वग्रहणं तु अन्यार्थमिति वक्ष्यते, भ्यामादौ तयोः पदत्वेन केवलतत्सा-मर्थ्यादपि न लाभस्तदाह—**इत्यन्यत्रेति**। शब्दरत्नादावित्यर्थः। ननु सूत्रे द्वन्द्वे पूर्वनिपातशास्त्र-

❀ ज्योत्स्ना ❀

तत्फलं तु 'न्रः सङ्ख्याया'इत्यत्र लोपाभाव इत्याशङ्क्याह—**न्रः सङ्ख्याया इत्यत्रेति**। **प्रथमया विपरिणामेनेति**। प्रागुपपादितदिशा 'पदस्ये'त्यस्यावयवषष्ठीत्वमनाश्रित्येदमुक्तम्। **आदेशे**

❀ सदाशिवभट्टीयम् ❀

निर्दिष्टत्वादिति चेन्न;उक्तार्थज्ञापने मानाभावात्,न पूर्वमित्यादावनुदात्तमित्यस्यानधिकारात्। **श्रुतप्रथमेति**। वस्तुतः परस्येत्यस्यानुपदमेव व्यधिकरणत्वोक्तेर्विपरिणामकथनमयुक्तम्। न च 'तृज्वत्क्रोष्टु'रिति वन्नामि नभक्षेतिवच्च स्थान्यादेशभावकल्पनस्यौचित्यात्तिङन्तस्यानुदात्ताच्क आदेशो भवतीत्यर्थादुदात्तसाम्यनाद्युदात्त-एकानुदात्तत्वोभयविशिष्टादेशापत्तिः, पचतीत्याद्यनुदात्तत्वैकोदात्तविशिष्टो वा स्यादतः सर्वग्रहणे सर्वानुदात्त इति कर्त्तव्यमेवेति चेन्न, तिङिति भाष्योक्तज्ञापकात्तत्र-तत्रान्तग्रहणाच्चात्र तिङन्तावयवस्य लक्षणीय—तिङित्य-वयवश्चानुदात्तत्वक इत्यर्थे विनिगमनाविरहेण सर्वथावयवस्य सिद्धे वैयर्थ्यमित्याशयात्। न च तिङन्तावयवस्येति स्थानषष्ठीत्वादादेःपरस्येत्यापत्तिः, एकैकावयवस्थानेनानुदात्तत्वविधानादादित्वस्य वक्तुमशक्यत्वात्। आदित्वस्य समुदायविधाने एव सत्त्वात्। यदि तत्र-तत्रान्तग्रहणाल्लाघवात्तिङ्समुदायस्यैव षष्ठीङ्कल्पयित्वा विधान-मित्युच्यते तदात्वादेरिति प्रवर्तते एवेति 'सर्व'मिति कर्तव्यमेवेति चिन्त्यमेतत्। **मे स्वमिति**। न च

❀ विषमपदविवृतिः ❀

स्वस्य क्रियाविशेषणत्वाभिप्रायेण 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'ति वार्तिक-प्रयोगः। करणत्वविवक्षया च तद्व्याख्यानभाष्ये च विप्रतिषेधत्वेनेति निर्देशः। एवं 'गुणवृद्ध्यौत्वे'त्यत्र। नव्योक्तरीत्या समासे तु 'पूर्वविप्रतिषेधत' इत्यस्य 'त्वमावपि प्रबाधन्ते' इत्यनेनान्वयापत्तिः। उक्त-भाष्यवार्तिकयोरनन्वय इत्याहुः।

अत एव=पदस्येत्यस्य प्रायेणावयवषष्ठीत्वादेव। ननु नलोपसूत्रेऽन्तग्रहणं मुख्यप्राति-पदिकान्तस्य ग्रहणार्थं, तेन 'न्रः सङ्ख्यायाः' इत्यादौ व्यपदेशिवद्भावेनप्रातिपदिकान्तस्य नलोपो नेत्याशङ्क्याह-**न्रः सङ्ख्याया इति**। **त्वामयोरिति**। अजादित्वाद्वाविति भावः।

रपवादत्वादाह–**षष्ठीचतुर्थ्येकेति** ।

विभक्तिक्रमलब्धद्वितीयादिक्रमेणोदाहरति–**श्रीश इति** । 'दत्ता'दित्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम् । **संवेद्योऽस्मानिति** । नन्वत्र सन्ध्यभावे नवाक्षरत्वेनाऽनुष्टुप्पादत्वानापत्तिः, सन्धौ तूभयत आश्रयणेऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेन्न; 'संवेद्यो' इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात्, 'स्मा'नित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्ताऽस्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात् । सन्धिश्चाऽन्तरङ्गत्वादादेशात्पूर्वमेव ।

'—आदेशे सति 'नः कृष्णः सर्वदाऽवतु'—इति पादादित्वापत्त्योपजीव्यविरोधान्न-आदेशः–'इत्यन्ये ।

## ❀ अभिनव-चन्द्रिका ❀

**अस्मच्छब्दत्वेनेति** । नन्वस्मच्छब्दस्य परिच्छिन्नधर्मसमनियतधर्मत्वेनाऽल्पपरिमाणत्वात्कथन्तत्प्रवृत्तिः । नचैवम्–'उदके केवले'इतिसूत्रस्थभाष्यविरोधः, तत्र हि दकशब्दे उदकशब्दत्वमेकदेशविकृतन्यायेनोक्तमिति वाच्यम्, उदकशब्दान्तसमासघटकोत्तरपदाव्यवहितपूर्वपदस्यान्त उदात्तो भवतीत्यर्थेन 'ओदक'शब्दे परादिवद्भावेन उदकशब्दत्वात्तदन्तसमासघटकोत्तरपदमेकदेशविकृतन्यायेन 'दके'ति, तदव्यवहितपूर्वपदत्वस्य पूर्वान्तवद्भावेन 'गुडो'शब्दे सत्त्वात्तदव्यवहितपूर्वपदं–गुडो इति, तस्यान्तोदात्तत्वस्यान्यथैव सिद्धत्वात्तस्यैकदेश्युक्तित्वाच्चेति अरुचेराह—**आदेशे सतीत्यादि** ।

**उपजीव्यविरोधादिति** । तया विधेये स्वप्रवृत्तिनिमित्तविघातकातिरिक्तत्वेन सङ्कोचादिति भावः । विधेये एवानया सङ्कोचो न तु पूर्वसूत्रानुज्ञावाक्ये इति पूर्वमुपपादितमेव । अत एव—"नचादिरेव नकार उदात्तगुणविशिष्टान्तरतमाऽप्राप्तोऽस्त्विवति वाच्यम्, तथा सति

## ❀ चिदस्थिमाला ❀

बलात् षष्ठ्याः पूर्वनिपातेन तत्क्रम उचितोऽत आह–**विभक्तीति** । खण्डनकृदुक्तं दोषमुद्धरति–**नन्वत्रेति** । सिद्धान्तमतेन तदभ्युपेत्य हेतुमाह–**संवेद्यो इत्यादि**–आशयादित्यन्तेन । **तत्प्राप्तिरिति** । सन्धौ कृते इति भावः । ननु सन्धेः प्रागेव प्राप्तिरिति कुतो नोक्तमत आह—**सन्धिश्चेति** । नाजानन्तर्यनिषेधादाह-

## ❀ सदाशिवभट्टीयम् ❀

'तद्ग्रामे कम्बलो मे स्व'मिति च्छान्दसत्वस्यैवोदाहरणं न वाक्यस्येत्यस्तु पर्युदास इति वाच्यं, 'शालीनान्ते' इत्यत्रच्छान्दसत्वस्य वक्तुमशक्यत्वात् ।

## ❀ विषमपदविवृतिः ❀

अन्ये तु 'क्त्वो ल्यप्', 'श्नःशानज्झौ', 'जृव्रश्च्योः क्त्वि'–इत्यादिनिर्देशेन 'आतो धातो'रित्यत्र धातुपदमनाप्परं, तेन त्वामोरित्युचितम् । अजादित्वेन टाप्कल्पने न प्रमाणमित्याहुः । **नवाक्षरत्वेनेति** । तथा च नवाक्षरस्य पादत्वाभावेन पादादिस्थत्वाभावात्प्रत्युदाहरणासङ्गतिरिति भावः । वस्तुतो 'नवा एकाक्षरेण छन्दांसि वियन्ती'ति ऐतरेयब्राह्मणवचनान्नवाक्षरत्वेपि पादत्वमस्त्येवेति वाच्यम् । **स्मानित्यस्य चेति** । इदमयुक्तम्—एवं सति 'गणेश' इत्यादौ ष्टुत्वापत्तेः । तस्मादेवं विषये नैकदेशविकृतन्याय इति पूर्वं निरूपितम् । ननु सन्ध्युत्तरमपादादाविति निषेधप्रवृत्तावपि सन्धेः पूर्वं नवाक्षरत्वेन तदप्रवृत्तौ आदेशो दुर्वार इत्याशङ्क्याह—**सन्धिश्चेति** । इदमयुक्तम्—'यद्धितुपर'मिति सूत्रस्थभाष्यकैयटाभ्यां पदद्वयनिमित्तकार्यात्प्रागन्तरङ्गोप्येकादेशो नेति कल्पनात् ।

सन्धेः पूर्वमादेशप्रवृत्तिशङ्कायाः परिहारं मतान्तरेणाह–**नः कृष्णेति** । **उपजीव्यविरोधादिति** । नात्र सन्निपातपरिभाषाभिप्रेता, किन्तु 'यतोनाव' इत्यत्र द्व्यच्कतामुपजीव्य प्रवृत्तस्वरस्य द्व्यच्कता-

'उभयत आश्रयणेऽपि तस्य स्वीकार इति इण्धातौ निरूपयिष्यामः'—इति परे।

ननूक्तरीत्या षष्ठ्याद्यन्तानामेवादेशा भविष्यन्ति, किं 'स्थ'ग्रहणेनात आह—**स्थेति**। अहानौ 'स्थ'शब्द इति भावः।

**युष्मत्पुत्र इति**। युवयोर्युष्माकं वा पुत्र इत्यर्थः। यद्यपि वृत्तौ सङ्ख्याविशेषानवगम इति भाष्ये स्पष्टं, तथापि सम्बोध्यत्वेनैवाऽनेकव्यक्त्यवगतिर्न तु द्वित्वादेर्भानं, नाप्येकत्वस्येति—त्वमौ न कृतौ। विग्रहे तु सङ्ख्याविशेषभानाद्द्विवचनादि भवत्येव।

तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वम्। अत एव 'वध्वोरगारं वध्वगार'मिति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम्। वचनद्वयविषयसूत्रप्रत्युदाहरणलाभाय—'इति त्वत्पुत्रः' इति न प्रत्युदाहृतम्।

**समानवाक्ये इति**[1]। 'निमित्त—निमित्तिनोरेकवाक्यस्थत्वे' इत्यर्थकं—'समानवाक्ये' इति—प्रकृत्य—विधेया इत्यर्थः। निघातो नाम—अनुदात्तः। **एकतिङिति**।—बहुव्रीहिः, एकतिङन्तघटितमित्यर्थः। तेन 'पचती'त्येतन्मात्रस्य न वाक्यत्वम्।

❀ अभिनव-चन्द्रिका ❀

निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तेः—"इत्यादि परिभाषेन्दुशेखरोऽत्रत्यं भाष्यं च सङ्गच्छते। अन्यथा 'वान्तो यि प्रत्यये'इत्यस्योदात्तस्य निमित्तविघातकत्वाभावे तेनानुज्ञादाने बाधकाभावेनैतदसङ्गतमेव स्यादिति विभावनीयम्। **परे इति**। अव्यवहितपूर्वत्वाऽव्यवहितपरत्वयोर्व्यपवर्गधर्मत्वेन तस्यातिदेशस्तेन दुर्लभ इतीदं चिन्त्यमित्याहुः। उक्तरीत्या=सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादित्यर्थः। **एतन्मात्रस्येति**। मात्रशब्दोऽत्रावधारणे। 'पचती'त्यस्यैव नैकवाक्यत्व-

❀ चिदस्थिमाला ❀

आदेशे सतीति। तदुक्तिरप्ययुक्तेत्याह—**उभयेति**। **उक्तेति**। सर्वस्य पदस्येत्यधिकारादित्यर्थः। त्वमयोरभावायाह—**युवयोरिति**। तस्य तत्रैव शक्तेराह—**संबोध्येति**। वृत्तावित्युक्तिफलमाह—**विग्रहेत्विति**। अत्र मानमाह—**अत एवेति**। ततस्तदवगतेरेवेत्यर्थः। ननु प्रथमत्यागे किं बीजमत आह—**वचनेति**। तस्यैव कार्यत्वेनासिद्धत्वादाह—**प्रकृत्येति**। अधिकृत्येत्यर्थः। फलितमाह—**एकेति**। कर्मधारये तु स्यादिति भावः।

❀ ज्योत्स्ना ❀

**सतीति**। सन्धेः पूर्वं नवाक्षरस्य पादत्वाभावेन पादादित्वाभावादिति भावः। **सम्बोध्यत्वेनैवेति**। 'त्वत्पुत्र' इत्यनुक्त्वा 'युष्मत्पुत्र' इति विशेषरूपेण सम्बोध्यत्वेनेत्यर्थः। **अनेकव्यक्त्यवगतिरिति**। एकमित्रत्वेन सामान्यरूपेणाऽवगतिर्न द्वित्वबहुत्वादिरूपेणेत्यर्थः, तदाह—**नत्विति**।

❀ विषमपदविवृतिः ❀

भिघातकत्र्यच्कतासम्पादकता नेत्याकरोक्तदिशा न्यायान्तरमेतदिति बोध्यम्। **इति परे इति**। इदमप्ययुक्तम्—इण्धातौ वक्ष्यमाणरीत्योभयत आश्रयणे इत्यस्याभावेप्यन्तादिवद्भावेन व्यपवर्गस्यालाभादेवैनैकादेशे कृते पदात्परास्मच्छब्दाभावात्। एकवचनेन विग्रहे प्रत्ययोत्तरपदयोरित्यादेशमाशङ्क्याह—**युवयोरिति**। न तु द्वित्वादिनाऽप्येकत्वस्य भानं किन्तु सम्बोध्यत्वेनैवानेकव्यक्त्यवगतिरिति त्वमौ न कृताविति योजना। तथा च 'सङ्ख्यानवगति'रिति भाष्यस्य—विशेषरूपेण सङ्ख्यानवगम इत्यर्थ इति न कश्चिद्दोषः। **पचतीत्येतन्मात्रस्येति**। एतस्य वाक्यत्वे'ऽनन्त्यस्यापि प्रश्नाख्यानयो'रिति प्लुतः स्यादित्याशयः।

१ **समानवाक्ये इति**। स्वशास्त्रमात्रोपयोग्येकवाक्यत्वलक्षणमाह—**एकेति**। **तिङन्तघटितमिति**। घटितत्वञ्च व्यपदेशिवद्भावानतिदिष्टं ग्राह्यमिति भावः। 'स्वघटितत्व' 'स्वेतरतिङन्ताऽघटितत्वो'-भयसम्बन्धेन तिङन्तविशिष्टत्वमेकवाक्यत्वमिति तु पर्यवसितम्। न चैवं पदद्वित्वे 'देवदत्त ! ब्रूहि-ब्रूही'-

इदं—स्वशास्त्रकार्योपयोगि एकवाक्यत्वलक्षणम् । तेन 'पश्य मृगो धावती'त्यादौ लौकिकैवाक्यत्ववत्यपि नाऽव्याप्तिः। समर्थसूत्रे भाष्ये स्पष्टमेतत् । अत एव 'तिङ्ङतिङः' इत्यत्रैतदाश्रित्य 'अतिङः'—इति प्रत्याख्यातं भाष्ये ।

लौकिकैकवाक्यत्वञ्च--'सुप्तिङन्तचयो वाक्यं, क्रिया वा कारकान्विते'त्यमरेणोक्तम् ।

❀ अभिनव-चन्द्रिका ❀

मपि तु तद्घटितसमुदायस्यापि । 'पचती'त्येतन्मात्रस्य तत्त्वफलन्तु-'अनन्त्यस्यापि प्रश्नाख्यानयो' रिति प्लुतसिद्धिः। नन्वेकतिङन्तघटितत्वरूपैकवाक्यत्वस्वीकारे 'त्वया शयितव्य'मित्यस्यैकवाक्यत्वानापत्तिः। 'त्वया शयितव्यमिति—रामो वदती'त्यत्रैकवाक्यत्वापत्तिश्चेतिचेन्न, मुख्यविशेष्यताप्रयोजकत्वयोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविषय-पदाघटक-पदद्वयाघटितत्वरूपतत्त्वस्वीकारेण 'त्वया शयितव्य'मित्यादौ मुख्यविशेष्यताप्रयोजकत्वयोग्या या शयनक्रिया तादृशशयनक्रियाप्रतिपादकत्वेन तात्पर्यविषयभूतं यत्पदं—शयितव्यमित्येकमेव पदं, न तु तादृशं पदद्वयमत्रास्तीति-तादृशपदद्वयाघटितत्वं 'त्वया शयितव्य'मिति वाक्यस्येति—लक्षणसमन्वयः। 'त्वया शयितव्यमिति रामो वदती'त्यत्र तु—निरुक्तक्रियाप्रतिपादकत्वेन तात्पर्यविषयीभूतं पदद्वयं-'वदति' 'शयितव्य'-मिति, तद्घटितत्वमेव-'त्वया शयितव्यमिति रामो वदती'तिवाक्यस्येति नातिव्याप्तिः । 'ब्रूहिब्रूहि-रामे'त्यत्राऽव्याप्तिवारणार्थं 'पदाघटकत्व'मिति निवेशः ।

नचैवमपि 'ग्रामङ्गच्छ घटः' इत्यस्य निरुक्तदिशा तत्त्वापत्तिरिति वाच्यं, परस्परनिरूप्यनिरूपकभावानापन्नविषयताकपदाघटितत्वमिति विशेषणदानेनादोषात् ।

यद्वा—'स्ववृत्त्यानुपूर्वीमत्त्व''स्वप्रयोज्यविषयताप्रयोजकत्वै'तदुभयसम्बन्धेन-मुख्यविशेष्यताप्रयोजकत्वयोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविशेष्यकपदविशिष्टेतरद्यन्मुख्यविशेष्यताप्रयोजकयोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविशेष्यं पदं, तादृश—पदद्वयाघटितत्वे सति, परस्परनिरूप्यनिरूपकभावानापन्नविषयताप्रयोजकपदाघटितत्वमेव तत्त्वम् । लक्षणसमन्वयस्तु स्वयमुन्नेय इत्यलं विस्तरेण ।

❀ चिदस्थिमाला ❀

व्यपदेशिवद्भावस्तु शास्त्रीयकार्ये इति भावः। अव्याप्तिनिरासायाह—इदमिति । समर्थेति । इदमनुपदमेव स्फुटीभविष्यति । अत एव=अस्यैव शास्त्रकार्योपयोगित्वादेव । ननु तत्र किं लौकिकवाक्यत्वमत आह—

त्यादेरेकवाक्यत्वानापत्तिः, अस्य—स्थानेद्वित्वेऽपि तत्त्वप्रत्यभिज्ञया प्रत्येकमपि तिङन्तत्वात् । अतएव 'वृक्षं-वृक्ष'मित्यादावनुस्वारादिसिद्धिरिति वाच्यम्; इतरतिङन्तस्य विभिन्नानुपूर्वीकस्य ग्रहणात् ।

न चैवं 'चैत्रोऽन्नं चरति, मैत्रो ग्रामं चरती'त्यादेरप्येकवाक्यतापत्तिरिति वाच्यं, 'ब्रूहि-ब्रूही'त्याद्यर्थं स्वेतरतिङन्तस्य—स्ववृत्तितिङन्तत्वाभाववतो ग्रहणेनादोष इत्याशयात्; स्थाने द्वित्वेन 'ब्रूहि-ब्रूही'ति समुदायेऽपि तिङन्तत्वात् ।

न चैवमप्याख्यातमाख्यातेनेति समासे'पचतभृज्जता-अस्ती'त्यादेरेकवाक्यत्वानापत्तिरिति वाच्यं,समुदायविशिष्टत्वमेकवाक्यत्वं, वै०'स्वतादात्म्य' 'स्वघटक यत्पदाघटकं तिङन्तं तद्विशिष्टतिङन्तघटितभिन्नत्व' 'स्वघटकपदप्रयोज्यविषयत्वाऽनिरूपितविषयताप्रयोजकपदाघटितत्वै'तन्त्रितयसम्बन्धेन । तिङन्ते तिङन्तवैशिष्ट्यञ्च-'स्ववृत्तितिङन्तत्वाभावसमानाधिकरण-स्वभिन्नत्वसमानाधिकरण-पदघटकत्वाभाववत्त्व'सम्बन्धेन । घटकता च व्यपदेशिवद्भावानतिदिष्टा । 'स्ववृत्तिङन्तत्वाभावसामानाधिकरण्य'निवेशाच्चैव ब्रूहिब्रूहीत्यादावेव नाव्याप्तिः । 'स्वभिन्नत्व'निवेशात्-'चैत्रः पचती'त्यादावेव नाव्याप्तिः। 'पदघटकत्वाभाव'निवेशात्-'पचतभृज्जतास्ती'त्यादौ नाव्याप्तिः।'तिङन्ताऽघटितत्वे'त्याद्येव वक्तव्ये'तथाविधतिङन्तघटितभिन्नत्वे'त्युक्त्या'देवदत्तेन

'वा'शब्दश्चेदर्थे । कारकान्वितक्रिया चेत्,-'बोद्ध्ये'ति शेषः । तेन निरर्थकशब्द-समुदायव्यावृत्तिः । सुप् च तिङन्तश्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तं, तेषामेकशेषः । तेन कारकान्वितक्रियाबोधकसुबन्तचय–तिङन्तचय—सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वलाभः । तत्र सुबन्तचयो—'देवदत्तेन शयितव्यम्' । द्वितीयं—'पचति-भवती'त्यादि । तृतीयं—'चैत्रः पचती'त्यादि ।

एतत्समानार्थकमेव-'तिङ्ङतिङः' इति सूत्रे–'अतिङः' इति वदत्सूत्रकाराभिप्रेतं वाक्य-लक्षणम्—'आख्यातं सविशेषणं वाक्य'मिति समर्थसूत्रभाष्ये उक्तम् ।

तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते । तेन 'त्वया शयितव्य'मित्यादेः सङ्ग्रहः । 'सविशेषण'मित्यस्य–साक्षात्परम्परया वा यद्विशेषणं, तत्सहितमित्यर्थः । तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्यादेः समानवाक्यस्थत्वसिद्धिः । सविशेषणत्वेन–विभागे साकाङ्क्षत्वं लब्धम् ।

---

**ॐ चिदस्थिमाला ॐ**

**लौकिकेति । निरर्थकेति** । 'दश दाडिमानी'त्यादि । सर्वसंग्रहायाह—**सुप्चेति** । तत्र=तेषां मध्ये । उक्तं=वार्तिककृता । न्यूनतां निराचष्टे–**तत्रेति** । वार्तिके इत्यर्थः । इत्यादेः=इत्यादेरपि । तथैवाह–**सवीति** । वक्ष्यमाणैकवाक्यत्वायाह—**सवीति** ।

**ॐ ज्योत्स्ना ॐ**

**सुप्तिङन्तश्चेति** । अत्र सुप्पदं–सुबन्तपरम् । एवं 'सुब्विशिष्टतिङन्त'मित्यत्रापि । सुबन्तचयो—'देवदत्तेन शयितव्य'मिति । यदा त्वस्तिर्भवन्तीपरः सर्वत्राऽप्रयुज्यमानोऽप्यस्तीति वचनादस्तीत्य-ध्याहारेणैवमादौ वाक्यत्वमित्युच्यते—तदा 'रूढानी'त्यर्थेन सुबन्तचयस्य वाक्यत्वाभावः ।

'सुप्तिङन्तचय' इत्य त्वयमर्थः–सुप्च तिङ् च सुप्तिङौ,तौ अन्ते यस्य स चासौ चयः=समुदाय इति । 'चैत्रः पचती'त्युदाहरणम् । जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानी'त्यादौ परस्परसम्बन्धाभावान्निरथकसुप्तिङ्समुदाये त्विष्टापत्तिः, वाक्यत्वमभ्युपगम्या-आलङ्कारिकैर्दुष्टत्वमात्रस्य व्यवस्थापनात् । किन्त्वेवं 'पचति भवती'त्यादिकेवलतिङन्तसमुदाये-ऽव्याप्तेर्लक्षणान्तरं—'क्रिया वा कारकान्विते'ति । तथाच 'पचति भवती'त्यादौ क्रियाकारक-भावेनान्वयस्य भाष्याद्यभिप्रेतत्वाल्लक्षणसङ्गतिः । प्रागुदाहृतजरद्गववाक्ये तु परस्परान्वय-

**ॐ विषमपदविवृतिः ॐ**

**निरर्थकशब्दसमुदायेति** । 'दश दाडिमानी'त्यादिशब्दसमुदायेत्यर्थः । **देवदत्तेन शयितव्यमिति** । 'अस्तिर्भवन्तिपरोऽप्रयुज्यमानोप्यस्ती'ति भाष्यन्तु साध्यत्वेन भासमान-क्रियाप्रधानसुबन्तातिरिक्तविषयमित्याशयः । **तृतीयं चैत्रं पश्यतीत्यादीति** । एतदुत्तरं च "एतत्समानार्थकमेव 'तिङ्ङतिङ' इति वदत्सूत्रकाराभिप्रेतं वाक्यलक्षणं 'आख्यातं सविशेषणं वाक्य'मिति समर्थसूत्रे भाष्ये उक्तमित्यादिः–एकतिङित्यस्यैकानुपूर्वीकैकतिङन्तवदित्यर्थ

---

शयितव्य'मित्यादौ नाव्याप्तिः । 'पदाद्यघटकत्वे'तिनिवेशादेव'पचतिकल्पयति चैत्र' इत्यादौ-नाव्याप्तिः । 'पचतिकल्पं भवती'ति वत्–'चैत्रः पचतिकल्पं, हसति च'त्यस्याप्येकवाक्यतेष्टैव । तृतीयसम्बन्धफलं–'चैत्रः पचति पुत्रो राज्ञः' इत्यादौ नाव्याप्तिरित्याहुः । निरूप्यनिरूपकभावानापन्नविषयत्वाप्रयोजकपदकदम्बकत्वरूप-मेकवाक्यतां लौकिकीं दर्शयति–**पश्य मृगेति** ।–इति श्रीबालशास्त्रिचरणानुसारिणो गौडेन्द्रा व्याकुर्वते।

एतदेवैकोद्देश्यकैकविधेयकत्वरूपैकार्थत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम् । 'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति जैमिन्युक्तेः ।

अनेन च 'ब्रूहि-ब्रूही'त्यस्याऽसङ्ग्रहः,-विशेषणानुपादाने सविशेषणत्वाभावात् । वाक्यत्वफलन्त्वत्र प्रश्नोत्तरे 'अनन्त्यस्यापि प्रश्नाख्यानयो'रित्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अतः स्वशास्त्रपरिभाषितं लक्षणम्—'एकतिङ् वाक्य'मित्युक्तम् । अत एव एतदुदाहरणं 'ब्रूहि 'ब्रूही'त्येव भाष्ये दत्तम् । यत्तु—'अत्रोदाहरणे 'देवदत्ते'ति विशेषणं पूरणीय'मिति, तन्न; पूर्वलक्षणेनैव सिद्धेः, द्विः प्रयोगस्य भाष्ये व्यर्थत्वापत्तेश्च । यद्यपि पदद्वित्वेऽवान्तरपदत्वमप्यस्ति, तथापि 'एकति'ङित्यस्य एकानुपूर्वीकैकतिङन्तवदित्यर्थ इति न प्रकृते दोष इत्यलम् ।

**ओदनं पचेत्यादि ।** समर्थपरिभाषा त्वत्र न प्रवर्त्तते । एकार्थीभावविषय एव तत्प्रवृत्तेरिति भावः । **एते वांनावादय इति ।** इदञ्च 'सपूर्वाया' इत्यत्र भाष्ये स्पष्टम् ।

❀ अभिनव-चन्द्रिका ❀

**समर्थपरिभाषा त्वत्रेति** । वार्तिकारम्भसामर्थ्यादिति भावः । ननु समर्थपरिभाषाया अत्र प्रवृत्तिरेवास्तु, वार्तिकञ्च मास्त्वित्याशङ्क्याह—**तत्प्रवृत्तेरिति** । युष्मदस्मदादेशानां प्रवृत्त्यापत्तेरित्यर्थः । यद्वा यतो हि तत्प्रवृत्तेरेकार्थीभाव एव विषयः=विधेयमतोऽत्र न प्रवर्त्तते—लक्ष्यानुरोधादिति भावः ।

❀ चिदस्थिमाला ❀

तदेवाह—**एतदेवेति** । अनेन=लौकिकवाक्यलक्षणेन भाष्यीयेन । इत्यस्य=एकतिङित्युदाहरणस्य , नन्वफलत्वात्तदभाव एवेष्टोऽत आह—**वाक्यत्वेति** । अत एव=फलसिद्धेस्तेनाभावादेव । कैयटाद्युक्तिं खण्डयति—**यत्त्विति** । ननु एवं तिङन्तद्वयेन कथमेकतिङन्तत्वं तत्राह—**यद्यपीति** । **एकानुपूर्वीकेति** । एकशब्दः समानवाची । यत्तु वाक्शब्दस्वारस्यादर्थस्यापि वाक्यत्वमिति—तद्व्याख्याकृत्तन्न, अर्थे वाक्यशब्दाप्रयोगात्, 'वचोऽशब्दसञ्ज्ञाया'मिति निषेधेन कुत्वाप्रसक्तेः ।

एतेन—'एकतिङित्यस्यैकतिङन्तार्थमुख्यविशेष्यकमित्यर्थः । इदमेव मुख्यमेकवाक्यत्वं-भाष्येऽग्रे उक्तेः । 'पचती'त्यादौ कारकवचैत्रेण शयितव्यमित्यादावस्तीत्यध्याहारात्, अत एव 'तिङ्समानार्थी'ति वार्तिकसङ्गतिः । 'आख्यातं सविशेषण'मित्यत्राख्यातपदेन धातुः, 'सर्वमाख्यातजं नामे'त्यत्र तथा दर्शनात् । तेन 'चैत्रेणशयितव्य'मित्यादौ नाव्याप्तिः । 'अर्थैक्या'दित्यत्रार्थशब्दोऽभिधेयपर इति मीमांसकाः । फलपरइति नैयायिकाः । इदं तु प्रत्युदाहरणविरुद्धं, तद्देकस्य विभागे साकाङ्क्षत्वस्य प्रमाणनिरूपणरूपफलैकत्वव्यागसाधनत्वरूपफलैकत्वस्य च सत्त्वात् । कोशे-आद्यं तिङन्ताध्याहारेणैव सर्वत्र बोधे, द्वितीयं तं—विनापि बोधे इति विवेकः । 'तिङन्तचय' इत्यादि 'वाक्य'मित्यन्तशेखरस्तु चिन्त्यः, शास्त्रीयेणैव निर्वाहे लौकिके फलाभावात । तिङन्ते सर्वत्र क्रियासत्त्वेन 'क्रिया चे'त्यस्याऽफलत्वाच्च । 'पचती'त्यादौ केवले प्रकृतिप्रत्ययसमुदाये लौकिकैकवाक्यतायाः सर्वसम्मतत्वेन भवद्रीत्या तिङ्सुबन्तचयत्वाभावेनाव्याप्त्यापत्तेश्च,अतिङ्ग्रहणप्रत्याख्यानं वार्तिकाशयवर्णनमात्रं,नत्विष्टम्, आष्टमिकद्वित्वस्य द्विःप्रयोगपक्षे 'लुनीहि-लुनीही'त्यादौ तन्निषेधार्थं तस्य साफल्या'दिति **मन्दोक्तमपास्तम्** । उक्त्युक्तेरन्यदोषगणस्य मञ्जूषादौ स्पष्टत्वाच्च। अधिकमुद्योतादौ स्पष्टं, तदाह-**इत्यलमिति**। नन्वत्रासामर्थ्यादेवाप्राप्तिरत आह-**समर्थेति** । **इदञ्चेति** ।"—युष्मदस्मदोर्विभाषाऽनन्वादेशे इति वक्तव्यम्, 'ग्रामे

❀ विषमपदविवृतिः ❀

इति न ब्रूहि-ब्रूही'त्यत्र दोष इत्यल'मित्यन्तो ग्रन्थः क्वचित्पुस्तके दृश्यते । केचित्तु 'सुप्तिङन्तचय' इत्यस्य सुप्तिङन्तयोश्चय इत्येवार्थः । 'देवदत्तेन शयितव्य'मित्यत्रास्तीत्यध्याहारान्नातिव्याप्तिः ।

१ नचैकार्थीभावे समर्थपरिभाषोपस्थितिः, तदुपस्थितौ चैकार्थीभाव इत्यन्योन्याश्रय इति वाच्यम्, 'एकार्थीभावविषये'त्यस्य—'पदविधिविषये' इत्यर्थात् ।

**न चवा** । चादयः समुच्चयविकल्पाऽद्भुतखेदाऽवधारणार्थाः, तेषामन्यतमेन योगे इत्यर्थः । ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह—**युक्तग्रहणादिति** । **साक्षादिति** । युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । **परम्परेति** । स्वार्थाश्रयान्वय्यन्वयित्वादिरूपेत्यर्थः ।

**चेतसेति** । 'अनालोचनार्थै'रित्येव पर्युदासेन सिद्धे—'पश्यार्थै'रित्येतदिन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः । **परम्परेति** । स्वान्वितान्वयित्वादिरूपेत्यर्थः । तदुक्तं भाष्ये—"पश्यार्थैश्च प्रतिषेधः—'समानवाक्ये' इति प्रकृत्य वक्तव्यः, इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं,—तत्र प्रतिषेधः स्यात्, 'ग्रामस्त्वां सम्प्रेक्ष्य गतः' इति, इह न स्यात्—'ग्रामस्त्वं स्वं सम्प्रेक्ष्य गतः—" इति । 'समानवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेधः'—इति कैयटः ।

एवञ्च 'न चवे'ति सूत्रे 'युक्त'ग्रहणं स्पष्टार्थमेव, तदभावेऽपि प्रकृतसूत्रस्येव तस्यापि

❀ अभिनव-चन्द्रिका ❀

यद्वा—सा परिभाषा एकार्थीभावविशिष्टपदमुद्दिश्य 'तत्तत्समासविधायकपदजन्यप्रतीतिविषयत्वेन पाणिनितात्पर्यविषयः' इति विधत्ते, तथाच वार्त्तिकारम्भसामर्थ्येन भाष्यप्रयोगेण च युष्मदस्मदादेशानामेकार्थीभावाभावेऽपि प्रवृत्तिस्वीकारेण तस्या अत्राप्राप्तिरित्यनेकप्रकारेणायङ्ग्रन्थो यथाकथञ्चिन्नापनीयः । **इन्द्रियजन्यसकलेति** । ननु ज्ञानमात्रे आत्ममनःसंयोगस्य कारणत्वेन सर्वमपि ज्ञान-

❀ चिदस्थिमाला ❀

कम्बलस्तव स्वं "ग्रामे कम्बलो मे स्वं" "कम्बलोत्र मम स्वम्' । [एतदुदाहरणदर्शनेन 'तेमयावेकवचनस्ये'त्यस्यैव वैकल्पिकत्वमिति प्राप्ते—] अपर आह—'सर्व एते वांनावादयोऽनन्वादेशे विभाषेति । न तर्हीदानीमिदञ्च वक्तव्यं—'सपूर्वाया विभाषा'इति?, वक्तव्यम्—अन्वादेशार्थमिति—"इति तत्रोक्तम् । सूत्रे 'नपुंसके भावे क्तः' इत्याह—**योगे इति** । निर्धारणषष्ठ्या व्याख्यानं शाब्दिकुतमयुक्तं, समासाभावापत्तेस्तच्छ्रनयन्नाह—**ननु तृतीयेति** । **स्वार्थेति** । चार्थसमुच्चयाश्रय—हरिहरान्वयिस्वामित्वान्वयित्वत्यर्थः । नन्वनेतिपर्युदासेन बहिरिन्द्रियजन्यज्ञानार्थयोगे एव स्यादिति 'चेतसे'त्ययुक्तमत आह—**अनेति** । अत्र प्राग्वन्नेत्याह—

❀ ज्योत्स्ना ❀

लक्षणयोग्यतायाः शाब्दबोधे कारणत्ववादिनां मते वाक्यत्वाभावेऽप्यसंसर्गाऽग्रहस्यैव तत्र कारणत्ववादिनां—तत्त्वमस्त्येवेति वयं ब्रूमः । **युक्तयुक्ते चेति** । समानवाक्याधिकारलभ्योऽयमर्थः, तथाहि—'आख्यातं साऽव्ययकारकविशेषणं वाक्य'मिति वाक्यलक्षणे कारकस्येव कारकविशेषणस्यापि ग्रहणादिति । **स्पष्टार्थमेवेति** । 'न चवे'त्यत्र 'समानवाक्ये' इत्यस्याऽसम्बन्धमभिप्रेत्येदम् । प्रकृत-

❀ विषमपदविवृतिः ❀

'जरद्गवः कम्बलपादुकाभ्यां द्वारिस्थितो गायती'त्यदौ परस्परसम्बन्धान्निरर्थकसुप्तिङन्तसमुदाये वाक्यत्वमिष्टमेव । अत एवालङ्कारिकैरपि अस्य वाक्यत्वमभ्युपगम्य दुष्टत्वमात्रं व्यवस्थापितम् । किं त्वेवं 'पचति—भवती'त्यादिकेवलतिङन्तसमुदायेऽव्याप्तेर्लक्षणान्तरं 'क्रिया वा कारकान्विते'ति । जरद्गवादिवाक्यस्य तु न वाक्यत्वं, पदार्थानां परस्परमनन्वयात् । "लोके त्वर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति—'देवदत्त गामानय', अनर्थकानि—'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डम्—"इति वृद्धिसूत्रस्थभाष्ये 'दश दाडिमानी'त्यादेर्वाक्यत्वव्यवहारस्तु भाक्त इत्याहुः ।

**स्वार्थइति** । स्वं=चशब्दस्तदर्थः=समुच्चयस्तदाश्रयो=हरिः, तदन्वयी=स्वामी, तदन्वयित्वं='मे' इत्यस्य । **प्रकृतसूत्रस्येवेति** । 'पश्यार्थै'रिति सूत्रस्येवेत्यर्थः । तत्र 'समानवाक्ये'इत्येतत्सम्बन्धाग्रमेव

साक्षात्सम्बन्धे एव प्रवृत्तिः स्यात्, 'समानवाक्ये' इत्येतत्सम्बन्धात्तु अस्य युक्तयुक्तेऽपि प्रवृत्तिरित्यन्यत्। अत एव 'देवदत्तस्य पुत्राद्यज्ञदत्तः पृथ'गित्यादौ देवदत्तशब्दान्न पञ्चमीत्याहुः। **भक्तस्तवेति**। इह 'तवे'त्यस्य रूपेण सम्बन्धो, न तु साक्षाद्ध्यायतिनेति भावः।

**सपूर्वा**। सहशब्दो विद्यमानवाची। अवधेरपि सम्बन्धित्वेन विवक्षायां पष्ठ्यर्थेऽन्यपदार्थे 'अनेक'मिति समासो, 'वोपसर्जनस्ये'ति सः; तदाह—**विद्यमानपूर्वादिति**।

प्रत्ययग्रहणे तदन्तग्रहणमित्याह-**प्रथमान्तादिति**। ननु 'एते वांनावादयः' इत्यनेनैव विकल्पसिद्धेः किमेतेनेत्यत आह—**अन्वादेशेऽपीति**। अत्र 'ने'ति निवृत्तं, तदाह—**आदेशा वेति**। **तेनेति**। भक्तत्वेनेत्यर्थः। प्रक्रान्तार्थत्वान्न यच्छब्दोपादानापेक्षेति भावः। स्पष्टञ्चेदं सप्तमोल्लासे काव्यप्रकाशादौ। अत्र 'तेन हरिस्त्वा'मित्येकमुदाहरणं, 'स मा'मित्यपरं, 'त्रायते' इत्यस्य च मध्यमणिन्यायेन तन्त्रेणोभयत्रान्वयः।—तेन 'स' इत्यस्यापि समानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोद्धव्यम्।

---

ॐ चिद्स्थिमाला ॐ

**स्वान्वितेति**। स्वं=तादृशधात्वर्थः। एवञ्च=तदभावे तथार्थोक्तौ च। भाष्योक्तं द्रढयति—**अत एवेति**। गमकाभावे साक्षात्सम्बन्धस्येष्टत्वादेवेत्यर्थः। एतेन पूर्वत्र युक्तग्रहणेनात्र परम्परासम्बन्धेपि निषेधो ज्ञाप्यते इति शाब्दिकण्ड्याद्युक्तमपास्तम्। 'तेन सहेति बहुव्रीहि'रिति शाब्दिकण्ड्याद्युक्तेरसाङ्गत्यादाह—**अवधेरपीति**। एतेन=सूत्रेण। यत्तु-अप्राप्तो निषेधोऽनेन विकल्प्यते, तथा सति विधिविकल्पः फलतीति, तन्न; गौरवात्तदाह—**अत्रेति**। असम्भवादिति भावः। **स्पष्टमिति**। तत्र हि 'प्रक्रान्त—प्रसिद्धानु-भूतार्थकतच्छब्दो यच्छब्दोपादानं नापेक्षते'इत्युक्तं, अनुपादानेऽपि–यत् प्रक्रान्तं, यत्प्रसिद्धं, यदनुभूतमित्येवं तदर्थस्य सामर्थ्यादेवाक्षेपसम्भवादिति तद्व्याख्यातारः। द्वितीये प्राचोक्तदोषाभावायाह—**अत्रेति**। तत्फलमाह—**तेनेति**। एतेन 'त्रायते इत्यनेन हरिस्त्वामित्यनेनैव शाब्दोऽन्वयः, 'स मा'मित्यत्रत्वध्याहारः।

ॐ ज्योत्स्ना ॐ

**सूत्रस्येवेति**। 'पश्यार्थै'रिति सूत्रस्येवेत्यर्थो विवक्षितः। तत्र 'समानवाक्ये' इत्येतत्सम्बन्धात्प्रागियं वाचोयुक्तिः सम्भवेत्, किन्तु तथा सति दार्ष्टान्तिकसमानत्वादस्य दृष्टान्तत्वव्याघातः। 'समानवाक्ये' इत्यस्य सम्बन्धे तु युक्तयुक्तेऽपि प्रवृत्त्या दृष्टान्तत्वस्योक्तिसम्भव एव नास्तीति चिन्त्यमेतत्। तस्माद्विनानानाभिस्तृतीयान्यतरस्यामिति दृष्टान्तत्वेनेह प्रदर्शयितुं युक्तमित्याशयः। **अनेकमिति समास इति**। 'मत्वर्थे बहुव्रीहिः—कर्मकर्तृवचनेनाऽप्रथमायाः' इति वार्तिकानुरोधेनेदं, 'तेन सहे'ति तु न समासः, 'तुल्ययोगे' इत्युक्तेः।

**काव्यप्रकाशादाविति**। काव्यप्रदीप आदिपदग्राह्यः। 'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्। अत सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः'इत्यादौ तथा दृष्टत्वादिति भावः। नन्वतिदिश्यमानधर्म-

ॐ विषमपदविवृतिः ॐ

वाचोयुक्तिः। **अत एवेति**। युक्तग्रहणाभावेपि साक्षाद्योगस्य ग्रहणादेव। **न पञ्चमीति**। 'पृथग्विना-नानाभिस्तृतीयान्यतरस्या'मित्यनेन। एवञ्च युक्तग्रहणाभावेन पश्यार्थैरित्येतत्परम्परासम्बन्धेपि प्रवर्तते इति मूलोक्तमयुक्तमिति भावः। **सम्बन्धित्वेन विवक्षायामिति**। 'मत्वर्थे बहुव्रीहि'रिति वार्तिकानुरोधेनेदम्। 'तेन सहे'ति तु न समासस्तुल्ययोग इत्युक्तेः। **काव्यप्रकाशादाविति**। काव्यप्रदीप आदिपदग्राह्यः।—कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।

अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥' इत्यादौ तथा दृष्टत्वादिति भावः। ननु सञ्ज्ञाविधौ

**सामन्त्रितम्** । 'सम्बोधने चे'त्यतः 'सम्बोधने' इति वर्त्तते । 'से'त्यनेन प्रथमा परामृश्यते । आमन्त्रणम्—आमन्त्रितमिति महासञ्ज्ञाबलात्तदन्तविधिरित्याह—**तदन्तमिति** । अत एव है-हे-भो इत्यादीनामपि सञ्ज्ञासिद्धिः । अन्यथा'अन्तरङ्गानपी'ति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन 'नखनिर्भिन्न'इत्यत्रेसभाववदत्र सञ्ज्ञा न स्यात् । यद्यप्येषां सम्बोधने शक्तेः प्रातिपदिकार्थसूत्रेणैव प्रथमा, तथापि सम्बोधनविषयप्रथमासत्त्वान्न दोषः । एतदर्थमेव 'प्रथमे'त्यनुवर्तमाने 'से'ति पदम् ।

अन्ये तु-'सम्बोधने चे'त्यस्य तत्र वर्तमानादित्यर्थे अन्यत्रेवात्रापि 'सम्बोधने चे'ति प्रथमा । प्रातिपदिकोक्तत्वस्याऽव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्धकत्वात्, 'तिङ्कृत्तद्धितसमासै'रिति परिगणनाच्च । 'से'ति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः ।

---

ॐ अभिनव-चन्द्रिका ॐ

मिन्द्रियजन्यमेवेति पुनरपि तद्वैयर्थ्यमिति चेन्न, 'इन्द्रियजन्य'मित्यस्येन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानस्य ग्रहणेन सर्वज्ञानस्येन्द्रियजन्यत्वेऽपि तत्तदिन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वस्याभावेनादोषात् । **बलात्तदन्तविधिरिति** । 'सञ्ज्ञाविधा'विति परिभाषा तु नास्त्येवेति पक्षे

ॐ **चिदस्थिमाला** ॐ

न च वैपरीत्यं, अध्याहारस्यानुपपत्तिमूलकत्वेनाग्रे एव युक्तत्वात्, तथाचाध्याहृतस्यागन्तूनामन्ते निवेश इति न्यायेनान्ते एव निवेशेन श्रूयमाणस्य समानवाक्यस्थत्वाभावेन च 'स' इति प्रथमान्तस्य विद्यमानपूर्वत्वाभावात्कथं द्वितीयोदाहरण'मिति प्राचोक्तमपास्तम् । ननु सञ्ज्ञाविधाविति निषेधात्कथं तदन्तविधिरत आह—**आमन्त्रणमिति** । निपातनात्करणे क्तः । यद्वा आमन्त्रणमामन्त्रः, करणस्य शेषत्वविवक्षया, स सञ्जातो यस्येतीतच् । विभक्त्यन्तेन चामन्त्र्यते, नतु केवलया विभक्त्येति भावः । एतेन भावे क्तः, उपचारात्तत्साधने वृत्तिरिति तदुक्तमपास्तं, जघन्यवृत्तिकल्पनापत्तेः । अतएव=तदन्तविधेरेव । **सञ्ज्ञेति** । आमन्त्रितेतीत्यर्थः । अन्यथा=तदन्तविध्यभावे । **शक्तेरिति** । कोशे विशिष्योक्तत्वेनेति शेषः । सिद्धान्तमाह—**अन्ये त्विति** । अन्ये च रामेत्यादाविव'है' इत्यादावपि उक्तार्थानामिति नेत्याह—**प्रातीति** । नन्वेवं'से'ति व्यर्थं, प्रथमेत्यनुवृत्त्यैव सिद्धेरत आह—**सेति त्विति** । दृष्टान्तेन निवृत्तिः परप्रयोगो वेत्यर्थान्तरनिरासः ।

ॐ **सदाशिवभट्टीयम्** ॐ

**अन्येत्विति** । ननु त्वमित्यस्यापि सम्बोधने वर्तमानत्वे प्रथमैव स्यादिति त्वामित्याद्यसङ्गतमिति

ॐ **विषमपदविवृतिः** ॐ

तदन्तविधिर्दुर्लभ इत्याशङ्क्याह—**आमन्त्रणमिति** । ननु प्रथमाया आमन्त्रितसञ्ज्ञायामप्यामन्त्रितस्य प्रत्ययमात्रवृत्तित्वेन प्रत्ययग्रहणपरिभाषया प्रदेशेषु तदन्तविधिसम्भवेनामन्त्रितसञ्ज्ञायां तदन्तविध्यभावेपि न कश्चिद्दोष इति महासञ्ज्ञाकरणं व्यर्थमित्याशङ्क्याह—**अत एवेति** : तदन्तविधिस्वीकारादेव । **अत्र सञ्ज्ञा न स्यादिति** । नन्वेवं सुप्सञ्ज्ञाया अप्यप्रवृत्तौ 'सुप्तिङन्त'मिति पदत्वं हैहे इत्यादीनां न स्यात् । तस्मादन्तरङ्गानपीति न्यायो धर्मिग्राहकमानबलेन सञ्ज्ञाविधिभिन्नविषय इति न कश्चिद्दोष इति चेत्सत्यम्; अव्ययादाबित्यादावुपजीव्यत्वेन सुबादिसञ्ज्ञायाः लुकः पूर्वं प्रवृत्तावप्यामन्त्रितसञ्ज्ञायास्ततः पूर्वं प्रवृत्तौ मानाभाव इत्याशयः । **एतदर्थमेवेति** ।

---

१ गुरवस्तु—'आमन्त्र्यते स्म येने'ति बाहुलकात्करणेक्तः—इत्याहुः ।

२ द्योतकविषये 'उक्तार्थाना'मित्यस्याप्रवृत्तिरिति तत्त्वम् ।

**अविद्यमानवदिति** । 'गोतो णि'दितिवत्सिद्धं वत्करणमतिदिश्यमानविरुद्ध-स्वाश्रयस्यापि लाभार्थम्। तेन 'आम् भो देवदत्ते'त्यादौ'आम एकान्तरमामन्त्रितमनन्तिके' इति एकान्तरत्वप्रयुक्तामन्त्रितानिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये । न चात्र 'नामन्त्रिते समानाधिकरणे' इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम् ; अस्य सम्बोधन-मात्रद्योतकत्वेन विशेष्यवचनत्वाभावात् , देवदत्तस्यैव विशेष्यत्वाच्च ।

**इहेति** । 'अग्ने तव' 'देवास्मा'नित्यत्रादेशाः, अग्ने नय'इत्यत्र 'तिङ्ङतिङः' इति निघातः, 'अग्ने इन्द्रे'त्यत्र 'आमन्त्रितस्य चे'ति-निघात इति विवेकः । अत्र पूर्वमित्यनेन

ॐ अभिनव-चन्द्रिका ॐ

न सामर्थ्यवर्णनमित्यवोचाम । **सिद्धे इति** । **ननु** तदभावे अस्य त्रिपाद्यां प्रवृत्तिर्न स्यात्; राद्धान्ते तस्य वतिघटितत्वेन वतिघटितशास्त्राणां त्रिपाद्यां प्रवृत्तेः पूर्वमुपादितत्वादिति चेन्न, वन्दर्थघटितानामपि त्रिपाद्यां प्रवृत्तिबोधनात् । अत एव प्रत्ययलक्षणसूत्रस्य त्रिपाद्यां प्रवृत्तिरित्यन्यत्र विस्तरः ।

ॐ चिद्स्थिमाला ॐ

अत्र=आम् भो देवदत्तेत्यादौ । अस्य=भो इत्यादेः । निषेध्यानां त्रित्वादुदाहरणानां चतुष्ट्वाद्यथासङ्ख्या-सम्भवादाह—**अग्ने इति** । अनतिप्रसङ्गामाह—**अत्रेति** । सूत्रे इत्यर्थः । एतेन परं प्रत्यविद्यमानवत्त्वेऽपि

ॐ ज्योत्स्ना ॐ

विरुद्धस्वाश्रयकार्यलाभार्थं यदि वत्करणं तदाग्ने तवेत्यादावादेशप्रसङ्गो दोषः। अथाविद्यमानवत्त्वाति-देशसामर्थ्यादादेशे स्वाश्रयकार्यस्य बाधः,–तर्हि एकान्तरितत्वेऽपि तुल्यन्यायात्प्राप्नोतीत्यत आह–**स्पष्टं भाष्ये इति** । तथा च साक्षात्पदात्परस्य कार्ये कर्त्तव्ये स्वाश्रयकार्यस्य वचनसामर्थ्याद्बाधकल्पनेऽपि

ॐ सदाशिवभट्टीयम् ॐ

चेन्न, अत्र सम्बोध्यत्वेन ज्ञानवत्पदार्थो युष्मदर्थः । अत एव चेतनेऽस्य प्रयोगः, 'अहमनेन सम्बोधित' इति—अचेतनस्य ज्ञानवत्त्वाभावात् । एवञ्च सम्बोध्यत्वप्रकारकज्ञानवदर्थकत्वेऽपि न सम्बो-धनार्थकत्वमित्यदोषात । नचैवमपि भवच्छब्दस्य सम्बोधनार्थकत्वाभावात् भवन्नमित्याद्यसङ्गतम् , प्रथमाया एवापत्तेरिति वाच्य, चेतनाचेतनसाधारणतया सम्बोध्यत्वमात्रार्थकत्वेऽपि प्रवर्तनाविषयसम्बोध्यत्वा-भावात , अत्र प्रवर्तनाविषयसम्बोधनस्यैव ग्रहणात् । हे भवन्नित्युक्ते हि तस्य प्रवर्तनाविषयकं ज्ञानम्भवति—'मया यत्किञ्चित्कारयती'ति । भवानित्युक्ते तु ममद्वय क्रियान्वयिसम्बोधने[?] प्रथमा। त्वां भवन्नमित्यत्र तु क्रि-यान्वयित्वाभावेनादोषः। परन्तु **गदाधरेण** क्रियान्वयित्वमस्योक्तम् वस्तुत एतादृशक्लिष्टकल्पनापेक्षया सेति पदस्य स्वरसतः सार्थक्याय च पूर्वोक्तमेव युक्तमिति प्रतिभाति । **आमन्त्रितम्** । **वत्करणमिति** । नच तदभावे-

ॐ विषमपदविवृतिः ॐ

'विभाषा दिक्समासे' इत्यादाविव लक्षणप्रतिपदोक्तपरिभाषया सम्बोधनपदमुच्चार्य विहितप्रथमाया ग्रहणवारणार्थं 'से'ति पदं, तत्सामर्थ्याच्च प्रथमामात्रं 'से'ति परामृश्यत इति भावः । ननु सम्बोधन-पदात्प्रातिपदिकार्थेति प्रथमायामप्यामन्त्रितसञ्ज्ञापत्तिः । सम्बोधनमात्रबोधकत्वं तु अग्ने इत्यादावपि न, एकत्वादेरपि ततो बोधादिति चेन्न, सम्बोधनमभिमुखीकरणं, तच्च प्रत्यासत्त्या प्रकृतक्रिया-विषयं, तथा च सम्बोधनमस्तीत्यादौ प्रकृतक्रियायामभिमुखीकरणाभावान्नात्र सम्बोधने प्रथमा, कर्मशब्दे द्वितीयाभाववत् । प्रकृतक्रियायां तद्विवक्षणे तु–'सम्बोधने च'त्यनेनैव प्रथमा, न प्राति-पदिकार्थसूत्रेण, सम्बोधनस्याधिक्यात्, 'कर्म गच्छती'त्यादौ प्रथमाभाववत् । अत्रापि हेहे इत्यत्रापि सम्बोधनपदादस्या वारणमुक्तदिशा बोध्यम् । **स्वाश्रयस्यापीति** । कतिपयस्येति शेषः । वत्करणेन

१ विशेष्यताप्रयोजकत्वाभावादित्यर्थः । भोशब्दस्य सम्बोधनवाचकतायाः स्वयमवोक्ततयाऽत्रारुचिः ।

परस्याऽऽक्षेपात्पूर्वं परस्य कार्येऽविद्यमानवदित्यर्थः । तेन 'देवास्मा'नित्यत्र 'देवे'त्यस्या-मन्त्रिताद्युदात्तत्वं भवत्येव । पूर्वं किं—पाहि देव । अत्रामन्त्रितनिघातो भवत्येव । **प्राचीनमिति** । एवमेव 'लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामी'त्यादिसिद्धिः । 'नृसिंहाश्रम ! ते ख्याति'रित्यादौ—'गेये केन विनीतौ वा'मित्यादाविव विभक्त्यन्तप्रतिरूपक-

❀ अभिनव-चन्द्रिका ❀

**नृसिंहाश्रम ते ख्यातिरित्यादाविति** । न च नृसिंहाश्रमेत्यस्याऽविद्यमानवद्भावेऽपि 'नृ' इत्यस्य विद्यमानत्वात्ततः परस्य युष्मच्छब्दस्य 'ते' इत्यादेशः स्यादेवेति निताताश्रयणं विफलमिति वाच्यम्, 'नृ'—इत्यवयवावृत्तिधर्मस्य—अविद्यमानवत्त्वस्य—समुदायेऽतिदेशमहत्त्वेणा-प्यतिष्ठुमशक्यत्वाऽवयवेऽप्यविद्यमानवत्त्वारोपस्यावश्यकत्वात् । अत एवेमं मे गङ्गे इत्यत्र 'गङ्गे' इत्यादीनां निघातसिद्धिः, अन्यथा 'गङ्गे' इत्यस्याऽविद्यमानवद्भावेऽपि गकारस्य विद्यमानवत्त्वेन

❀ चिद्स्थिमाला ❀

पूर्वं प्रति तदभावात्कथं 'रक्षे'त्यादितः परत्वमस्मदादेरित्यपास्तम्, परस्य कार्ये स्वनिमित्तेऽन्यनिमित्ते वा पूर्वं परं प्रति वा तदतिदेशात् । स्पष्टञ्चेदं कैयटे । अस्यावश्यकत्वमाह—**एवमेवेति**। तत्रैवाश्रयणमिति भावः । आदिना 'दयिते ! ते करिशावककुम्भलक्ष्म्या'इत्यादिपरिग्रहः । उक्तप्रकारासम्भवादाह—**नृसिंहेति** । 'अख्यातिरन्यथाख्यातिरसत्ख्यातिस्तु ते द्विषा'मिति—'यात्वनिर्वचनीयता'मिति चाद्यन्तयोः शेषः। एतेन पूर्वार्थस्य-

❀ ज्योत्स्ना ❀

परम्परयैकान्तरित्वे तथाकल्पने प्रामाणाभाव इति भाष्यकृदाकूतमिति भावः । **इत्यादि-सिद्धिरिति** । 'विद्याबलं दैवबलं तदेवे'ति पूर्वपादस्थितैवशब्दात्परत्वादिति भावः ।

❀ सदाशिवभट्टीयम् ❀

ऽस्याऽदर्शनापत्तिः, नच लोप एव कार्येऽविद्यमानग्रहणेनाविद्यमानवदित्यर्थः, लोपे षष्ठ्या आपत्त्याऽलोन्त्यस्येत्य-स्यापत्तेः—सर्वादेशार्थमावश्यकमेवेदमिति वाच्य, सर्वथा लोपे तदर्थबोधे नैव स्यादिति तद्बोधार्थं परं प्रयोगस्तु स्यादितीदं पूर्वप्रयोगाभावमात्रफलकं स्यात्, तथाच 'राजदन्तादिषु पर'मित्युक्तम्, आमन्त्रितमित्येव परप्रयो-गात्सिद्धेरिदं व्यर्थमेव स्यादिति वत्करणार्थः प्रतिपद्यते इति अयं वतिर्व्यर्थ एव, न च 'शिष्यमाणं लुप्यमाने'ति न्यायेन सिद्धे परप्रयोगाय नावश्यकं; सजातीयविषये तत्प्रवृत्तेः । ननु 'व्यास' इत्यत्र पूर्वलोपे विजातीयेना-प्यर्थबोध इति प्रकृतेऽपि तथैव स्यादिति सर्वलोपार्थमावश्यकमिति चेन्न, 'लोपपर'इत्येवसिद्धे सामर्थ्यादित्यर्थ-सिद्धेः । नचैवं त्रिपाद्यां प्रवृत्तये वतिघटितत्वमिति वाच्यं, तथासति 'स'न्नित्यस्याविद्यमानत्वेन तत्र ङमुण्न-स्यादित्यनिष्टमेवापद्येतेति तदप्रवृत्तेरिष्टापत्तेः । नचैवं वत्करणे मूलोक्तरीत्या त्रिपाद्यां प्रवृत्तिः स्यादिति पूर्वं ङमुडनापत्तिः, तर्हि पूर्वेण परस्य प्रत्यासत्त्या ग्रहणे एव प्रवृत्तिः कल्प्यते ।**नामन्त्रितं । आमन्त्रितात्परस्येति।** यत्र तत्रेदमित्यर्थः । एवमनुगतरूपेण कल्पनया आम् भो इत्यत्राप्यामन्त्रितात्परत्वे नाश्रयणाभावेनात्रप्रवृत्त्या सर्वत्रानुगतरूपेणादोषात् । नचैवं प्रत्यासत्त्यैव निर्वाहे वतिर्व्यर्थः, प्रत्यासत्तिलाभार्थमिहावश्य-कत्वादिदमेवकेचित्, स्वाश्रयमिति दिक् । **स्मरामीति** । न च 'पश्यार्थै'रिति निषेधः, इन्द्रियजन्ये एव निषेधात्, स्मरणस्येन्द्रियजन्यत्वाभावात्, संस्कारजन्यत्वात् । यद्वा साक्षात्कारार्थकेतिनिषेधः, स्मरणन्तु न साक्षात्कारः, मानसं ध्यानन्तु साक्षात्कारवत् । एवं मनसा साक्षात्करोमीति सङ्गच्छते । इन्द्रियजन्यत्वं

❀ विषमपदविवृतिः ❀

सर्वथाऽविद्यमानं, न किन्तु तत्सदृशमिति बोधनात् । **पूर्वं किमिति** । इदमत्र पूर्वमित्यादिपूर्वग्रन्थेन गतार्थम् । **एवमेवेति** । 'विद्याबलं दैवबलं तदेवे'ति पूर्वपदस्थित एवशब्दात्परत्वादादेश इति भावः । वस्तुतस्तु नैतद्युक्तम्, एवशब्दस्य स्मरामीति तिङन्तघटितवाक्यस्थत्वभावेन समानवाक्य-स्थत्वाभावात्, 'पश्यार्थै'रिति निषेधाच्च । 'व्रजानि देवदत्ते'तिवद्वक्ष्यमाणरीत्या कथञ्चित्सम्भवेऽपि—तस्मात्ते इति विभक्तिप्रतिरूपकमव्ययमित्येव युक्तम् । **इत्यादाविवेति** । नन्वेतदप्येतत्समशीलमिति

१ अब्भक्षन्यायेन परस्यैव यत्कार्यं, न पूर्वपरयोरित्यर्थेन 'हरेऽवे'त्यत्र 'हरे' इत्यस्य नाऽविद्यमानतेति पूर्वरूपसिद्धिरिति गुरवः । २ अत्र कियानप्यंशस्त्रुटित इवाभाति ।

निपाताङ्गीकारेणादोषः। अयं समाधिः प्रकृतेऽपि,—'नः' इत्यस्य विभक्तिप्रतिरूपकत्वात्। अन्यार्थन्तु मूलोक्तकल्पनावश्यकत्वं, तदाह—**एवमिति**। **सर्वेषां निघात इति**। 'अस्य प्राप्तः' इति शेषः। तत्र—'यमुने' 'सरस्वती'त्यनयोर्बाधकाभावाद्भवति, 'शुतुद्री'त्यस्य तु न, पादादिस्थत्वात्। एतेन 'आदिभ्यः' 'सर्वेषा'मिति बहुवचनमसङ्गतमित्यपास्तम्।

**अग्ने तेजस्विन्निति**। 'अनुदात्तं' 'सर्व'मित्यनयोः सम्बन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणाऽपादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्तिरिति भावः।

❀ चिदस्थिमाला ❀

पदात्परत्वेनादेशा इति; नृसिंह—आश्रमेतिपदद्वयम्, आश्रमेति विशेषणम्, एवञ्च पूर्वस्य 'नामन्त्रिते'इतिनिषेधान्न दोष इति वेत्यपास्तम्, पूर्वार्धेऽस्तीत्यध्याहारेण पारिभाषिकैकवाक्यत्वाभावात्, पदद्वयाभावाच्च। नन्वेवमनेनात्रापि सिद्धे इद व्यर्थमत आह—**अयमिति**। तेषां तदश्रवणान्मूलासङ्गतेराह—**अस्येति**। तत्र=तेषां मध्ये। एतेन=उक्तव्याख्यानेन। **सर्वेषामितीति**। इति चेतीत्यर्थः। जात्येकवचनेनाह—**बह्विति**। सोऽपि पदकालिको, न संहिताकालिकः, तत्रैकश्रुतिविधानादिति बोध्यम्। नन्वनुदात्तं सर्वमित्यस्याप्यपरिमनासंज्ञिकारेणाग्न इत्यस्य च पादादिस्थत्वात्कथमविद्यमानत्वप्राप्तिरेवात आह—**अनुदात्तमिति**। पर्यायेषु=द्वेध्यादिषु।

❀ ज्योत्स्ना ❀

**अन्यार्थमिति**। स्वरार्थमित्यर्थः। **सम्बन्धानर्हत्वेनेति**। अविद्यमानवद्भावविधायकस्य सर्वानुदात्तविधायकत्वे वाक्यभेदापत्तेः—सम्बन्धानर्हत्वमितिभावः।

❀ सदाशिवभट्टीयम् ❀

तत्रास्यास्तीत्याग्रहे तु निपाताऽङ्गीकार एवेति बोध्यम्। **निवृत्तिरिति**। नन्वग्ने इत्यस्यच्छन्दोवत्त्वाभावादपादादाविति सत्त्वेपि न दोषइति चेच्चिन्त्यमेतत्। 'अग्ने इन्द्रवरुणे'ति बहुच उदाहरणार्थमावश्यकमेवैतदित्य-

❀ विषमपदविवृतिः ❀

कथमस्य दृष्टान्तत्वमिति चेन्न, हे लवकुशौ! गेये=गाने प्रबन्धे वां=युवां केन=पुरुषेण विनीतौ=शिक्षिताविवत्यर्थस्य विवक्षितत्वेन द्वितीयार्थकर्मत्वादेरनन्वयेन विभक्तिप्रतिरूपकाव्ययस्यात्रावश्यकत्वात्। नन्वेवं नार्थतो विभक्तिप्रतिरूपकत्वमिति वाच्यम्, परिष्करिष्यमाणस्य तस्य सत्त्वात्।

**प्रकृतेपीति**। 'सदा रक्ष देव नः'इत्यत्र। **अन्यार्थमिति**। स्वरार्थमित्यर्थः। **बहुवचनमसङ्गतमिति**। 'इत्यादिभ्य'इत्यनेन गृहीतानामत्र 'सर्वेषा'मित्यनेन ग्रहणमित्यभिमानेनेदम्। 'गङ्गे'इत्यादीनां ग्रहणे तु यथाश्रुतमेव साधु। **निवृत्तिरिति**। वस्तुतोऽस्य छन्दोविषयत्वाभावेन न पादादिस्थत्वम्।

नन्वग्ने तेजस्विन्नित्यनयोः परस्परं विशेषणविशेष्यभावोस्ति वा? न वा? नाद्य—'न ङिसम्बुद्ध्यो'रिति सूत्रस्थभाष्यविरोधात्। तत्र हि 'ङिसम्बुद्ध्योरुत्तरपदे,—राजवृन्दारकः। सम्बुद्ध्यर्थेन नार्थः, न सम्बुद्ध्यन्तानां समासः। किं वक्तव्यमेतत्? समाससमानार्थेन वाक्येन भवितव्यम्, नचेहार्थो वाक्येन गम्यते नाप्री जातु चित्समासेन, अवयवसम्बोधनं वाक्येन गम्यते, समुदायसम्बोधनं समासेन—'इति भाष्यम्। कैयटश्च—सम्बुद्ध्यन्तानामिति। पृथगवयवार्थयोरभिमुखीकरणे परस्परंकार्थीभावलक्षणसामर्थ्यायोगादिति। नान्त्यः—सामान्यवचनत्वविशेषवचनत्वयोर्विशेषणविशेष्यभावाधीनत्वेन तदभावे प्रकृतसूत्रस्यासम्भवदुक्तिकत्वापत्तेरिति चेदथेच्छसि तथास्तु। शब्दतः प्रथमं सम्बुद्ध्यन्तार्थयोः परस्परं विशेषणविशेष्यभावानवगाहिशाब्दबोधोपगमेऽप्यरुणाधिकरणन्यायेन पार्ष्णिकपरस्परावच्छेदमाश्रित्य सूत्रस्योक्तिसम्भवोपपत्तेः। सर्वथा विशेषणविशेष्यभावाभावेपि वाऽभिल-

आमन्त्रित किं ? देव करोषि सामान्यवचनं किम् ?—'अघ्न्ये देवि सरस्वति इडे काव्ये' इत्यादौ पर्यायेषु परेषु निषेधो मा भूत् ।

❀ अभिनव-चन्द्रिका ❀

तेन व्यवधानात् पदात्परामन्त्रिताभावेन निघाताप्राप्त्यापत्तेरित्यलं क्षुद्रोपद्रवाणां विद्रावणेन ।

**देव करोषीति** ननु देवपदार्थस्य सिबर्थाश्रयत्वेऽपि तस्य कृधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारता-प्रयोजकत्वेन उक्तरीत्या विशेष्यताप्रयोजकत्वरूपसामान्यवचनत्वाभावान्न प्राप्तिरिति चेन्न 'सामान्यवचन'मित्यस्य व्यापकत्वरूपार्थस्वीकारेण देवेत्यस्य करोतिक्रियापेक्षया व्यापकत्वेनादोषात् । यद्वा स्वोत्तर—स्वसमानाधिकरणपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वे सति नामपदप्रयोज्य-विषयतानिरूपिताऽभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वाभाववत्त्वमेव सामान्यवचनत्वम् । तथाच— 'हरे दयालो नः पाही'त्यत्र हरिपदोत्तरसमानाधिकरणदयालुपदप्रयोज्यविषयतानिरूपिता हरिपदप्रयो ज्या प्रकारताख्यविषयता तत्प्रयोज्यकत्वं 'हरे'इत्यस्य, किञ्च नामपदप्रयोज्यविषयतानिरूपिताऽभेद-

❀ सदाशिवभट्टीयम् ❀

न्यदित्यादि बोध्यम् । **करोषीति** । सिबर्थ आश्रयः, तेनैकाधिकरण्यरूपसामानाधिकरण्यमस्त्येव ।

❀ विषमपदविवृतिः ❀

तेजस्विलयोः सामान्यविशेषभावमात्रेण सूत्रस्योक्तिसम्भवाच्च । तदुक्तं कैयटेन—'अग्ने देवि सरस्वति इडे काव्ये विहव्ये' एतेषां पर्यायत्वेन सामान्यवचनत्वाभावः, सामान्यस्य विशेषापेक्षत्वादिति ।

**देवकरोषीति** । अत्र देवपदार्थस्य कारकप्रकरणे वक्ष्यमाणरीत्या भेदसम्बन्धेन क्रियायामन्वयेऽपि तिङन्तप्रकरणे क्रियाश्रयावतोरभेद इति वक्ष्यमाणरीत्या-क्रियया सममभेदस्य अवास्तवस्य सत्त्वेपि तिङर्थेन वास्तवस्य सत्वेन सामानाधिकरण्योपपत्तिः । अत्र 'सामानाधिकरण्ये' इति चिन्त्यप्रयोजनम् ।

❀ वरवर्णिनी ❀

**देवेति** । इदमिह तत्त्वम्—'आमन्त्रिते'ग्रहणाभावे देवाऽभिन्नाश्रयबोधके करोतिशब्दे परे देवस्य नि-षेधापत्तिः स्पष्टैव, वैयाकरणमते आश्रयस्य तिबर्थत्वेन सम्बोधनप्रकृत्यर्थस्याप्याख्याताश्रयेऽभेदान्वयेन एकधर्मि-बोधकत्वरूपसामानाधिकरण्यस्य स्पष्टत्वात् । क्वचिदस्यैव तिपः पाकाश्रयबोधकत्वेन, क्वचिद्गमनाश्रयबोधकत्वेन, क्वचित्करणाश्रयबोधकत्वेन, देवपदस्य च क्वचिद्गमनाश्रयीभूतदेवबोधकत्वेन, क्वचित्पाकाश्रयीभूतदेवबोध-कत्वेन, क्वचित्करणाश्रयीभूतदेवबोधकत्वेन च तस्य तिबपेक्षयाऽव्याप्यवचनत्वस्य स्पष्टत्वाच्च । तथाविधाश्रय-बोधकतिब्घटितत्वेनैव करोतेरपि तथाविधाश्रयबोधकत्वमिति तस्यापि सामानाधिकरण्यमव्याप्यवचनत्वञ्च देवापेक्षया स्पष्टमेवेति भावः ।

'क्रिया-कारक-सङ्ख्या-कालादिपञ्चकन्धात्वर्थ' इति मते तु—उक्तसामानाधिकरण्यमुक्तसामान्यवचनत्वञ्च धातोरेवेति तस्मिन्नेव परे आपत्तिर्बोध्या । यत्तु व्याप्यत्वाभावविशिष्टव्यापकत्ववद्बोधकत्वमिह सामान्यवचन-त्वम् । एवं—व्यापकत्वाभावविशिष्टव्याप्यतावद्बोधकत्वं विशेषवचनत्वमिह विवक्षितमिति, तन्न; तथा सति-'हरे दयालो नः पाही'ति-'अग्ने तेजस्विन्नि'ति मूलोक्तोदाहरणे एव कुठारपातापत्तेः, दयालुत्वस्य त्राणकर्तृ-त्वस्य च शिवादावपि सत्त्वेन भवद्रीत्याऽत्र सामान्यवचनत्वस्य कथमपि दुर्वचत्वादिति प्राहुः ।

**परे** तु'देवकुरुष्वे'त्यादिसम्बोधनप्रथमान्तपदघटितवाक्यजन्यबोधे आख्यातार्थाश्रयस्य सम्बोधनप्रकृत्यर्थेऽभेदेन प्रकारता । सम्बोधनप्रकृत्यर्थश्च स्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन व्यापारे प्रकारः । तत्रैव च व्यापारे— सम्बोधनप्रकृत्यर्थप्रकारीभूताख्यातार्थाश्रयस्याऽपि वृत्तित्वसम्बन्धेन प्रकारता । एवं स्थिते सामान्यवचनपदस्य विशेष्यवचनपरत्वमेवास्तु, अस्तु च विशेषवचनत्वमपि विशेषणवचनत्वमेव, तथाप्यत्र दोषः स्पष्ट एव, देवस्य करोत्यर्थाश्रयविशेष्यत्वात् , 'देवे'त्यस्य करोतिना एकधर्मिबोधकतारूपसामानाधिकरण्याच्च ।

सामानाधिकरण्यञ्च-एकार्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक्।

## * अभिनव-चन्द्रिका *

संसर्गावच्छिन्नविषयतानिरूपितविषयताप्रयोजकत्वाभाववत्त्वमपि तस्मिन्निति लक्षणसमन्वयः। 'देव करोषी'त्यत्र सदाशिवभट्टोक्तरीत्या युष्मच्छब्दमध्याहृत्य युष्मच्छब्दसामानाधिकरण्येन-भेदसम्बन्धान-वच्छिन्नविषयताप्रयोजकत्वेऽपि तद्विषयतायाः नामपदप्रयोज्यविषयतानिरूपितत्वाभावेन दोषाभावः इति सूक्ष्मः

## * चिदस्थिमाला *

नन्वत्र सामानाधिकरण्यमेवात आह-सामेति। एतेन द्वन्द्वविकल्पेनेदमिति सिद्धम्, तदाह-इति दिगिति।
ननु सकर्मकत्वात्कर्मण्यात्यधिकारबाधे मानाभावः, नच तेषामसामर्थ्यात्तद्बाधः, स्थाने केवलदेवार्थे-

## * ज्योत्स्ना *

न तु प्रवृत्तिनिमित्तभेदेति। अत्र यद्वक्तव्यं तदकारान्तपुँल्लिङ्गशेष उक्तम्।

## * सदाशिवभट्टीयम् *

**नतु प्रवृत्तीति**। ननु 'घटो घट' इत्यर्थे प्रवृत्तिनिमित्तभेदगर्भस्य विवक्षणेऽपि 'घटः कलश' इत्यादौ घटत्वकल-शत्वरूपप्रवृत्तिनिमित्तभेदमादाय शाब्दबोधवदत्राप्यव्यादिपदानामर्थपरत्वस्य पूर्वमुक्तत्वादर्थभेदेऽपि पूर्ववद्भेदाभेदोप्यस्त्येवेति किमर्थं 'नतु'-ग्रन्थ इति चेच्चिन्त्यमेतत्। परे त्वव्यादिशब्दाः शब्दपरा एव, अर्थपरत्वे तु-एतानि तेऽव्ये इति पुनरव्ये इति पदवैयर्थ्यापत्तिः। अव्ये एतानि तव नामानी'त्येव स्वारसिकोऽर्थः, न चैकार्थ-बोधकत्वरूपसामानाधिकरण्याभावः, तव नामानीत्युक्ते त्वदर्थे शक्तिरेषामित्यर्थो बोध्यत इति तत्परत्वात्। नच पुनरर्थपरत्वम्, उच्चारणकाले शब्दपरत्वमेव, तव नामानीति वाक्यबोधोत्तरं त्वेषामेकार्थतेति, सामानाधि-करण्यन्तु वर्ततेऽर्थपरत्वन्तु नेति पूर्वग्रन्थाभिप्रायो नत्विति ग्रन्थ इत्याहुः। ननु सामानाधिकरण्य-मभेदान्वयार्थप्रतिपादकत्वमेवास्त्विति न दोषः, न च 'देव करोषी'त्यत्राप्येवंवारणम्; आमन्त्रिते-त्यस्य वैयर्थ्यमपरमनुकूलमेवेति। यद्वा तत्राप्यभेदान्वयोऽस्ति, क्रियातद्वतोस्तादात्म्याङ्गीकारात्। नच त्वमित्यनेनाभेदान्वयेऽपि न देवेत्यनेनाभेदान्वयः, देव त्वमिति वाक्ये एकदेशन्यायेन देवेत्ये-तन्मात्रप्रयोगेतु त्वंपदार्थस्य तस्मिन्नेवान्तर्भावेनाभेदान्वयस्य सूपपादत्वात्। करोषीत्यस्य [सुन्दरं करोषीत्यस्य ?-] सुन्दरं करोषीत्यर्थे प्रयोगे सुन्दरपदार्थे भेदस्य सत्त्वाच्चेति चेन्न, अव्यादिशब्दानां

---

## * वरवर्णिनी *

एवमेव च तत्र बोधः स्वीकर्तव्यः, अन्यथा यत्र सम्बोध्यौ चैत्रमैत्रौ तत्र च-हे चैत्रमैत्रः पठत्विति प्रयोगस्यापि प्रामाण्यापत्तेः। नच मैत्रस्यापि सम्बोध्यत्वे मैत्रपदादपि सम्बोधनप्रथमयैव भवितव्यमिति वाच्यं, सम्बो-ध्यत्वविशिष्टबोधतात्पर्येणोच्चरितादेव प्रथमाया विधानेन चैत्रपदे एव तादृशतात्पर्यविषयत्वस्य सत्त्वेन मैत्रपदे-ऽभावेन च मैत्रपदात्प्रथमाया अनवकाशात्। मम तु मैत्राऽभिन्नाश्रयस्य सम्बोधनप्रकृत्यर्थचैत्रेऽभेदा-न्वयबाधान्न तथाविधः प्रयोगः।

नन्वेतदर्थे सम्बोधनप्रकृत्यर्थस्यैवाख्यातार्थाश्रयेऽप्यभेदेनान्वयोऽस्तु, एवं चैकविशिष्टेऽपरवैशिष्ट्यमिति-रीत्याऽभेदेन मैत्रविशिष्टाश्रये चैत्राभेदान्वयबाधान्न तथा प्रयोगः इति चेन्न, एवमप्युक्तस्थले एव 'हे चैत्रमैत्र पठत'मितिप्रयोगापत्तेः, 'एकत्र द्वय'मिति रीत्या उभयाऽभेदसम्भवात, मम तु एकविशिष्टस्यापरत्र-वैशिष्ट्यमिति रीत्याऽभेदेन मैत्रविशिष्टाश्रयस्य चैत्राऽभेदान्वयबाधान्न तथाविधः प्रयोगः। 'हे चैत्र हे मैत्र ! युवां पठत'मित्यादौ तु नानुपपत्तिः, एकमुभयत्रेति रीत्या त्वन्मदभिन्नाश्रयस्य चैत्रे मैत्रे चाभेदान्वयाबाधात्। 'हे चैत्रमैत्रौ त्वं पठतम्'-इति प्रयोगस्तु न, अभेदेन त्वद्विशिष्टाश्रयस्य चैत्रमैत्रोभयत्र द्वित्वावच्छेदेना-ऽभेदस्य बाधादित्यलं पल्लवितेनेति **श्रीबालशास्त्रिचरणाः** प्राहुः।

**सुपादिति**। शोभनौ पादावस्येति—बहुव्रीहिः। 'सङ्ख्यासुपूर्वस्ये'त्यकारलोपः समासान्तः।

**अश्वेः सुपीति**। निपातनैः साहचर्यादिति भावः।

**अनिदिताम्**। इत्सञ्ज्ञेकारवद्भिन्नानामित्यर्थः। 'अङ्गस्ये'त्यधिकारः।

**अञ्चतेर्भस्येति**। 'अल्लोपोऽनः' इतिवदस्यापि प्रत्यञ्चमञ्चति तेन प्रत्यक्चेत्यादौ-

❀ अभिनव-चन्द्रिका ❀

**इत्सञ्ज्ञकेकारवदिति**। 'अनिदिता'मिति बहुव्रीहिरिति भावः। **तद्भिन्नानामिति**। तद्घटित-भिन्नानामित्यर्थः। तेनामंस्तेत्यत्र न दोषः। **प्रत्यक्केत्यादाविति**। अल्लोपस्य स्थानिवद्भावादकारेण

❀ चिदस्थिमाला ❀

आह—**निपेति**। अतएव भाष्याविरोधः सुपीतिप्रकरणबाधाभावश्चेति भावः। नञ्समासगर्भबहुव्रीहा-वनिष्टापत्तिरिष्टासिद्धिश्चातो बहुव्रीहिगर्भो नञ्समासः इत्याह—**इत्सञ्ज्ञेकारेति**। इदञ्चाङ्गविशेषणमित्याह—**अङ्गेति**। नन्वेवमप्यतिप्रसङ्गोऽत आह—**अल्लोपोन इतीति**। यथाङ्गाऽवयवस्य यजादिस्वादिपरस्य-

❀ ज्योत्स्ना ❀

ननु सकर्मकत्वादश्वेः कर्मण्युपपदे क्विपा भाव्यम्, न च निपातनसामर्थ्यात्—कर्मणीत्यधिकार-बाधः, सुपीत्यधिकारस्यापि बाधापत्तेरित्यत आह—**निपातनैरिति**। संस्कारविशेषज्ञापकेना-ञ्चित्वत्यनुबन्धनिर्देशेन सुपीति प्रकरणबाधस्यान्याय्यत्वादिपि भावः। **अल्लोपोन इति वदिति**।

❀ सदाशिवभट्टीयम् ❀

शब्दपरत्वेन वारणेप्यर्थपरत्वेन तदसत्त्वात्। नन्वर्थपरत्वे विशेष्यविशेषणरूपसामान्यवचनत्वमप्यस्तीति कथं तेन वारण; 'सामान्यवचन'मित्यस्याव्यापकधर्मावच्छिन्नमर्थः 'घटो'नील'इत्यत्र नीलापेक्षया'घटस्याव्यापकधर्मा-वच्छिन्नत्वमिव प्रकृतेऽभ्न्यादिपदार्थानां समनियतत्वेनाव्यापकधर्मावच्छिन्नत्वमिति न दोषः।

अथ किमर्थं समानाधिकरणे इति पदमिति चेन्न, पाचकपाठकश्च युवां पचतमित्यादावव्यापकधर्मा-वच्छिन्नत्वरूपसामान्यवचनत्वस्य सत्त्वादापत्तेस्तदावश्यकत्वात्। ननु प्रथमान्तपदातिरिक्तस्य समुच्चय एव नास्तीति सम्बोधनान्तरस्यापि समुच्चयाभाव इति 'चार्थे द्वन्द्व'इति सूत्रे शेखरेउक्तत्वादिदं प्रत्युदाहरणम-सङ्गतमिति चेन्न, उश्च उश्चेति मनोरमादिषु प्रामाण्यप्रयोगेषु तदतिरिक्तसमुच्चयस्वीकारे बाधकाभावात्, तत्र समानाधिकरणपदमपि मानमस्त्विति दिक्। **निपातनैरिति**। ननु युजादिषु निरुपपदेऽपि निपातनसत्त्वात्कथं साहचर्येण सुबुपपदत्वलाभ इति चेन्न, सर्वत्राऽलाक्षणिकस्य निपातनस्य सत्त्वेन तत्साहचर्यादस्याप्यलाक्षणिक-सुबुपपदकत्वरूपं निपात्यत इत्याशयात्।

**अनिदिताम्**। **इत्सञ्ज्ञकेति**। नन्वबुदिदित्यत्रानापत्तिः, नच तत्र लोपोऽनिष्ट एवेति वाच्यम्, इर इत्सञ्ज्ञा वाच्येति वार्तिकसत्त्वे तत्र लोपस्य जायमानतया तद्वत्प्रत्याख्याने इत्सञ्ज्ञके-कारवत्त्वात्तदनापत्त्या फलभेदे प्रत्याख्यानानापत्तेः। यद्यपीदित्पदस्य शब्दरूपमध्याहृत्य तदन्तविधिनेत्सञ्ज्ञकेकारान्तभिन्नत्वेन न दोषः। न च रेफलोपादन्त्यएवेकारः,

❀ विषमपदविवृतिः ❀

ननु सकर्मकत्वादश्वेः सुप्युपपदे क्विपा भाव्यम्, न च निपातनसामर्थ्यात्कर्मणीत्यधिकार-बाधः, सुपीत्यधिकारस्यापि बाधापत्तेरित्यत आह—**निपातनैरिति**। संस्कारविशेषज्ञापकेन अञ्चित्वत्यनुबन्धनिर्देशेन सुपीति प्रकरणबाधस्यान्याय्यत्वादिति भाव इति केचित्। अलाक्षणिकस्यापि कार्यस्य पूर्वोत्तरनिपातनेषु दर्शनेन तत्साहचर्यादत्राप्यश्वतेः सुप्युपदे एव क्विन्, न तु युजेरिव निरुपपादादित्यर्थ इत्यन्ये।

**अनिदिताम्**। हलः किं? त्रुनः। उपधायाः किं? नष्टम्। अन्त्यसदेशपरिभाषा तु अन्त्यसदेशानन्त्यसदेशयोरेकस्मिँल्लक्ष्ये युगपत्प्राप्त्यभावेन न प्रवर्त्तते। **प्रत्यक्केति**। अन्ये तु 'सुपात्पदः, 'विश्ववाड्–घटौह' इत्यादौ पूर्वस्य पद्भावसम्प्रसारणे प्राप्नुतः। नह्ययमन्त्यसदेशस्येति

पूर्वाकारे न प्रवृत्तिः । 'अच' इत्यञ्चतेर्लुप्तनस्य ग्रहणं, व्याख्यानात् ।

भस्य किं ?—प्रत्यञ्चौ । लुप्तनस्येति किं ?—पूजायां–प्रत्यञ्चा ।

**चौ** । नेदं वर्णग्रहणं,–व्याख्यानात्, तदाह—**लुप्तेत्यादि** । **अण इति** । 'कर्तृचः' इत्यादीनामनभिधानमिति भावः । एवञ्चाऽण्ग्रहणम्–उत्तरत्र 'सम्प्रसारणस्ये'त्यत्र 'तृतीयः'इत्येतद्व्यावृत्त्यर्थमावश्यकम्–इहापि सम्बद्ध्यते, न त्वत्रास्य व्यावर्त्यमस्तीत्याकरे-स्पष्टम् ।

---

**ॐ अभिनव-चन्द्रिका ॐ**

चकारेण वा व्यवधानादिति भावः । **व्याख्यानादिति** । अकारलोपाकरणपूर्वकनलोपकरणेन लोपस्य विवक्षितत्वादिति भावः ।

**ॐ चिद्रस्थिमाला ॐ**

अञ्चतेरकारस्येत्यर्थस्तद्वदितिभावः । 'आतो धातो'रित्यारम्भात्प्रतीचोयदित्यादि निर्देशाच्चाह—**व्याख्यानादिति** । एतेन प्रत्याहारस्य पचाद्यचो वा कुतो न ग्रहणमित्यपास्तम् । **प्रत्यञ्चाविति** । नुमि जातेऽपि प्रथमनस्य लोपाल्लुप्तनकारत्वम् । 'अच' इति निर्देशादुत्तरपदाधिकाराच्चाह–**व्याख्यानादिति** । नन्वेवं 'कर्तृचे'-हर्तृच' इत्यादौ दीर्घो न स्यादत आह—**कर्तृच इति** । यद्यप्यस्यां शङ्कायां—'हल' इति सूत्रे—यथालक्षणमप्रयुक्त इति भाष्योक्तप्रथमसमाधौ माभूदत्रदीर्घत्वमित्यादौ कैयटेन व्याख्यानं, तथापि नास्त्येवेदृशः प्रयोग इति द्वितीयव्याख्यानमेव सिद्धान्त इतिभावः । एवञ्च=तदनभिधाने च । 'अण्ग्रहणमुत्तरत्र सम्प्रसारणस्येत्यत्र तृतीय इत्येतद्व्यावृत्त्यर्थ'मितिपाठः । उत्तरत्र=हलइत्यत्र-सम्प्रसारणस्येत्यनुवृत्तेस्तदंशे विशेषणत्वेन तदर्थमावश्यकमित्यर्थः । स्पष्टञ्चेदं 'षष्ठी स्थाने' इति सूत्रे भाष्ये इतिन नैवोचोत निरूपितम् । पाठान्तरन्तु कल्पितम् । अतएव इदमपि निपातनानङ्गीकारे, तदङ्गीकारे तु तत्रापि [तृतीय इत्यत्रापि] तस्य न फलमिति 'हल' इति सूत्रभाष्ये एव स्पष्टं, तदेतद्ध्वनयन्नाह–**आकरे इति** । एतेन तथा दण्ड्याद्युक्तमपास्तम् ।

**ॐ ज्योत्स्ना ॐ**

अत्र यद्वक्तव्यं तदल्लोपोऽन इत्यत्रोक्तम् । **व्याख्यानादिति** । 'वचोऽशब्दसञ्ज्ञाया'मिति निर्देश-

**ॐ सदाशिवभट्टीयम् ॐ**

तदन्तविधिघटितवाक्यार्थसामर्थ्यादन्त्येदितो ग्रहणात्, तथाप्येकदेशे शब्दाध्याहारस्य कर्तुं शक्यत्वे दोष एव । नचेदितो नेति प्रसज्ये तत्सम्भवः, प्रसज्यस्यात्र अदृश्यमानत्वादिति चेत्, पर्युदासश्चिन्त्य एव, किन्तु प्रसज्ये तु शब्दस्वरूपाध्याहारेण तदन्तत्वे दोषः इति तत्त्वम् । **न प्रवृत्तिरिति** । अनन्त्यविकार इति, प्रत्ययाप्रत्ययविशेषणाद्वेति भावः । **व्याख्यानादिति** । 'चा'विति लिङ्गात् । अच्प्रत्याहारग्रहणे हि तस्यासम्भव एव स्यात् । न च वर्णग्रहणं तत्रेति वाच्यं, 'छिचे'ति वैयर्थ्यापत्तः, अन्यथा सर्वस्य परे दीर्घस्येव सत्वन 'दीर्घा'दित्येव सिद्धेऽसङ्गतिः स्पष्टैव । नचोत्तरपदे इत्यधिकाराच्चवर्गेपूत्तरपदे एव दीर्घसत्त्वादुत्तरपदाभावे 'च्छेचे'ति चरितार्थम्, तर्हि चावित्यत्र स्वरितेनाधिककार्याद्वर्गग्रहणन्तु इति पठितस्य च ग्रहणं नेति तत्त्वम् । **अनभिधानमिति** । तृतीय इत्यत्रैव प्रयोजनस्य भाष्ये कथनात् ।

**ॐ विषमपदविवृतिः ॐ**

परिभाषाया विषयः । तथा च प्रत्यासत्त्या पदान्तस्याङ्गस्य यत्कार्यं तस्यैव तत्कार्यमित्येष पन्थाः शरणम् । तेनैव च न्यायेन 'प्रत्यक्चे'त्यादिसिद्धावन्त्यबाधपरिभाषा व्यर्थैव, तदेतदभिप्रेत्यैषा परिभाषा भाष्ये प्रत्याख्यातेत्याहुः । **प्रत्यञ्चाविति** । प्रथमं नकारस्य लोपे पुनर्नुमि प्रत्यञ्चाविति रूपम् । तथा च तन्मध्यपतितन्यायेन नुम्विशिष्टस्याप्यच इत्यनेन ग्रहणं स्यादिति भावः । नकाररहितं प्रत्यग्भ्यामित्यपि बोध्यम् । नन्वण्ग्रहणानुवृत्तौ 'कर्तृचे'त्यादौ दीर्घानापत्तिरतस्तदनुवृत्तिर्न कर्त्तव्येत्यत आह—**कर्तृचेति** ।

**अक्रृतेति** । तत्परिभाषाऽभावे तु–'चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्य'इति वचनमेव भाष्योक्तं शरणम् ।

**विष्वग्दे** । चात्–'आ सर्वनाम्नः–इत्यतः 'सर्वनाम्नः' इत्याकृष्यते । सामर्थ्या-दुपसर्जने प्रवृत्तिः ।

'अप्रत्यये' इति पाठे—अविद्यमानः प्रत्ययः–क्विबादिरित्यर्थः । 'वप्रत्यये' इति पाठेऽप्यकारस्याविक्षितत्वात्स एवार्थः । अद्र्यादेश–सध्र्यादेशावन्तोदात्तौ—निपातना-दिति स्पष्टं भाष्ये ।

**अदसो** । 'असे'रितीकार उच्चारणार्थः । 'अदस' इत्यवयवषष्ठी । 'स'ग्रहणं तत्स्थानिकौकाररेफयोरप्युलक्षणं,–तेन 'अदस्यति' 'अदोऽत्र' 'अदः'–इत्यादौ न दोषः । 'दा'दिति किम् ?–'अमुयो'रित्यत्रान्त्यस्य मा भूदिति ।

**समाहारद्वन्द्व इति** । इदमर्वाचामनुरोधेन, वस्तुतोऽयुक्तमेतत्'उ स् ऊ स्' इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्व-सवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य

---

❀ अभिनव-चन्द्रिका ❀

**प्रत्यङ्गस्येति** । अन्तरङ्गस्येत्यर्थः । **सामर्थ्यादिति** । पदान्तरनिष्ठविशेष्यतानिरूपितप्रकारता-प्रयोजकत्वरूपोपसर्जनत्वस्य सर्वत्रैव सत्त्वादिति भावः ।

परे तु स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावात्तच्छब्द-स्योपसर्जनत्वाभावेन सामर्थ्यवर्णनमसङ्गतम् , अत एवातिसर्वद्र्यगित्यत्रात्वं नेत्याहुः ।

**वस्तुत इति** । परे त्वत्र प्राचीनमतमेव ज्यायः, परनिमित्तापेक्षस्य बहिरङ्गत्वाश्रयणे प्रमाणाभावः,

❀ चिदस्थिमाला ❀

मूलाद्यसङ्गतेः सिद्धान्तमाह—**तदिति** । परसंमतेत्यर्थः । **चादिति** । अतएवादसोऽद्रेरिति वार्तिकसङ्गतिः । नन्वेव सञ्ज्ञाकार्यत्वादुपसर्जने न स्यादतआह—**सामर्थ्यादिति** । सएव= क्विबादिरेव । वरूपः प्रत्यय इतिव्युत्पत्तेः । अपिना तस्यैव समुच्चयः, तदाह—**अदस्यतीति** ।

❀ ज्योत्स्ना ❀

मूलकादित्यर्थः । **इत्यत्रान्त्यस्येति** । मुत्वस्यासिद्धत्वाद्यदावत्वपररूपत्वे त्यामादेशेषु यकारस्यालोऽन्त्य-

❀ सदाशिवभट्टीयम् ❀

'**विष्वग्** । अत्र चावित्येव कृत्वाऽप्रत्ययग्रहणं न कार्यमिति केचित् । 'कृकमादा'विति पठित्वा तदपि वक्तव्यं नास्तीत्युक्तं, न च गणग्रहणापत्तिः, कृ—आदिसमुदायघटके उत्तरपदे इत्येवमर्थस्य विलम्बोपस्थितिकतया कृ—आदिर्यस्य तस्मिन्नुत्तरपदे इत्यर्थस्य शीघ्रोपस्थितिकतया तदभावादित्याहुः । **निपातनादिति** । क्वचिदन्तोदात्तस्यापि स्थानित्वादन्यादृशप्रयोगे प्राप्ते—अन्यादृशकरणरूपस्याभिमतनिपातनाभावादिदं चिन्त्यम् । [अभेदका एव च गुणाः । भेदकाइति स्वीकर्तृमते तु युक्तमेवेति तत्त्वम् । **अदसोऽसेः** । **न दोष इति** । नन्वदकयतेः क्विपि मुत्वापत्तिरिति चेन्न, निर्दिश्यमानत्वाभावेन वारणात् । नचाकज्विषयेन सा, तस्याः तिङन्तविषयादावेव प्रवृत्तेरुक्तत्वात् । नचैवममुके इत्यसङ्गतं, तस्यासाधुत्वात् । परे तु क्विबन्तेपीष्टमेव मुत्वमिति—नामुके इत्यसङ्गतमित्याहुः ।

❀ विषमपदविवृतिः ❀

**विवक्षितत्वादिति** । तथा च वकाररूपे प्रत्यये इत्यर्थे क्विबादिरित्येवार्थः पर्यवस्यतीति

शब्दान्तरप्राप्त्याऽनित्यत्वेन—निमित्तद्वयनिमित्तत्वेनान्तरङ्गत्वाच्च—ह्रस्वे ततः सवर्णदीर्घे 'उ' इतिरूपासिद्धेः । अत एव 'ऊकाल' इत्यत्र—'उकाल' इति न कृतम् ।

ॐ अभिनव-चन्द्रिका ॐ

फलाभावश्च । 'ऊकाल' इति निर्देशस्तु—इतरेतरद्वन्द्वेनाप्युपपादयितुं शक्यः । 'अनोऽभिचत्र तपरकरणन्तु मुखसुखार्थम् । अथ आश्व इत्यत्र—अभिन्नेदं रूपम् । अत एव 'अदसोऽसेर्दादु' इति ह्रस्वनिर्देशः सङ्गच्छते, अन्यथा तत्रापि पूर्वं ह्रस्वे ततो दीर्घे दीर्घश्रवणापत्तेः ।

'भाव्यमानोऽप्युकार' इति परिभाषा तु नास्त्येव, फलाभावात् । अत एव 'नाप्नोति' इत्यस्य भाष्यं सङ्गच्छते—इत्युपपादितमन्यत्र । [अत एव अप्रत्ययग्रहणं चरितार्थम्, इदमपि तत्रैवोपपादितम् ।] अत एवा'चस्ताक्ष'दितिसूत्रस्थं भाष्यं सङ्गच्छत इति स्पष्टं विपश्चिताम् । नच परिभाषेन्दुचन्द्रिकोक्त-दिशा पूर्वनिमित्तत्वरूपबहिरङ्गत्वाकारणोभयोः समत्वात् इतरेतरापि सम्भविनि वाच्यं, फलाभावात् । अत एव 'दोषो णौ'वित्यादौ दीर्घविधानं सङ्गच्छते, अन्यथाऽऽन्तरतम्यादुपधस्यैव विधानं भविष्यतीति तद्वैयर्थ्यं स्पष्टमेव । अत एव च 'उ-ऊ' इति प्रश्लेषेण 'ओत्'इति निर्देशः प्रत्याख्यातः । अत एव 'दुधूपति' 'सुस्वूर्षती'त्यादीनि सिध्यन्ति । अन्यूनानतिरिक्तमनुभवस्य ययोः शास्त्रयोर्निमित्तत्वं तत्रैवापरनिमित्तकशास्त्रस्यान्तरङ्गत्वमित्याद्यनेकक्लिष्टकल्पनाश्रयणाद्वरं प्राचीनमतानुसरणमिति विचारयन्तु धीवरा इत्याहुः ।

ॐ सदाशिवभट्टीयम् ॐ

शब्दान्तरेति ।दीर्घे कृते तद्व्यक्तेरभावेन ह्रस्वस्यापि शब्दान्तरप्राप्तिकत्वमिति चिन्त्यमेतत् । अपरनिमि-त्तकत्वेनेति । सुस्वूर्षति सुस्यूर्षतीत्यादावप्युक्तान्तरङ्गत्वाद्भिन्नेऽभ्यासे उकारश्रवणापत्तिरिति तद्द्वा-न्तरङ्गत्वम्-अत्रविषये जातबहिरङ्गस्थले एव, ननु समकालप्राप्तिके इत्युक्तम्, एवञ्च प्रकृतेऽपि तथा नान्त-रङ्गत्वमिति चिन्त्यमेतत् । [चुन्चुप्चणपोर्यङ्वृद्धिकृतलक्ष्यभेदानाश्रयणमित्येवोच्यते ?] यद्वा उदवोढामित्यर्थ-मेकव्यक्तिवृत्तिविकारकृतलक्ष्यभेदानाश्रयणमित्येवोच्यते । प्रकृते तु व्यक्तिद्वयवृत्तिर्दीर्घे उकारस्य भेद एवेति न लक्ष्येलक्षणन्यायप्रवृत्तिः । ननूषतुरित्यत्र व्यक्तिद्वयवृत्तित्वात् पुनर्ह्रस्वापत्तिरिति चेदेवं वक्ष्यतः—पूर्वोक्ताकारस्य नपुंसकत्वमुत्तरस्य तु पुस्त्वं, तयोः समाहारे सुपोधात्वित्यपेक्षया पूर्वं दीर्घे ह्रस्वे इष्ट-सिद्धिरिति चिन्त्यमेवैतत् । उकाल इत्यपि चिन्त्यमेव, तन्मतेऽप्युकारेण सवर्णग्रहणात् । असन्देहाय ह्रस्व उच्चारित इति चेत्सत्यं—प्रकृतेऽपि वाच्यमिति । वस्तुतस्तत्स्वीकारे सनाशंसेत्यादावापत्तिः । आदेश एवेत्युक्ते तु सङ्कोच एव दोषः स्यात् । किञ्चोदुपधाया इत्यत्रानयैव सिद्धे प्रश्लेषपरभाष्यविरोधः ।

किञ्च भाव्यमानेनेत्यत्र स्वरितातिरिक्तविशेषणाविषेधाप्राप्त्या वैयर्थ्याभावः । अष्टादशानां ग्रहणन्तु न, तत्र प्रयोजनाभावात् । स्वरमात्रस्यैवोपयोगात् । किञ्च तपरप्राप्तस्य नाऽनया निषेध इति 'पथिमथी'त्यत्र शेखरे उक्तत्वात्तपरकरणं चरितार्थमेव । किञ्चादसोमादित्युक्तदिशायतेनेप्रश्लेषसिद्धौ प्रयोजनाभावः(?)। नचेकारे एव प्रगृह्यार्थं चरितार्थम् । अत्राप्यदसः–'अमु'–इत्यादेशविधानेनैव सिद्धे गुरूपन्यासादेव तत्सिद्धेः । अमुक इत्यत्र सर्वादेशापत्तिस्तु न, तस्यासाधुताया उक्तत्वात् । अदमुयङर्थं न, तत्रादव्यक्तित्येवेति सिद्धान्तयिष्यमाणत्वात् ।

ॐ विषमपदविवृतिः ॐ

भावः । अन्त्यस्येति । यस्येत्यर्थः । न्याय्यसिद्धेर्थे गमकमप्याह—अतएवेति । अनेक-

१ समाहारे मात्रालाघवेऽपि 'पथिमथी'त्यत्र समाहाराकरणात्तथालाघवं न सूत्रेषु प्रायो गण्यते इत्याशयः ।
२ 'सनाशंसे'त्यत्र दोषाचेत्यपि बोध्यम् । परे तु—अप्रत्ययग्रहणेन 'सनाशंसे'त्यत्र न दोष इति तदाश्रयणेऽपि न क्षतिरित्याहुरिति—श्रीशिवकुमारशास्त्रिचरणाः प्राहुः—इत्यस्मद्गुरवः ।

तस्मात्—'दिव उत्' 'ऋत उ'दिति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वात्सिद्धमिति बोद्ध्यम् ।

'ष्यङः सम्प्रसारण'मिति सूत्रे भाष्ये—'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति परिभाषा पठिता । अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । 'अनन्त्यविकार' इति च लिङ्गम् ।—तामर्थतः पठति—**अन्त्यबाधे इति** । अन्त्यस्य बाधे—कार्याप्राप्तौ,—अर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः । अन्यथा 'णो नः' इत्यादि—'नेता' इत्यादावेव स्यात्, न तु 'नमती'त्यादाविति भाष्ये स्पष्टम् । 'अल्लोपोऽनः' 'अचः' 'सान्ते'त्यादावनेकक्लिष्टकल्पनापेक्षयेयं न्याय्या ।

किञ्च—भसञ्ज्ञायां कार्यकालपक्षाश्रयणमशक्यं, परत्वेन पदसञ्ज्ञाबाधकत्वाऽनुपपत्तेः । 'राज्ञः'इत्यादौ नलोपस्यासिद्धत्वात्पूर्वम्—'अल्लोपोऽनः' इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगान्नलोपापत्तेश्च ।

---

❀ अभिनव-चन्द्रिका ❀

**अनन्त्यसदेशयोरिति** । 'क्वचि'दिति शेषः । तेनामू इत्यत्रोभयोः प्राप्त्यभावेऽपि न क्षतिः । **अन्त्यसदेशस्येति** । 'तत्रोपतिष्ठते' इति शेषः । **इति च लिङ्गमिति** । चेनावयवत्वावच्छिन्नोद्देश्यताकशास्त्रत्वस्य सङ्ग्रहः । 'अन्त्यविकाराभावे' इत्यस्य—यत्समुदायनिरूपितावयवत्वावच्छिन्नोद्देश्यता तत्समुदायघटकस्यान्त्यस्य विकाराभावे इत्यर्थः । अत एव 'राज्ञ' इत्यत्र राजेति समुदायघटकान्त्यस्यैव लोपरूपे कार्ये कर्तव्ये अस्या अप्रवृत्त्यापत्तेः । वस्तुतो 'ऽल्लोपोनः' इत्यत्र नास्याः प्रवृत्तिरिति पूर्वमवोचाम । **अनुपपत्तेरिति** । यदा तु सञ्ज्ञाशास्त्राणामप्यष्टाध्यायीपाठकृतपरत्वस्याश्रयणे न दोषः । 'आयादय' इति सूत्रस्थभाष्यं तु परत्वादुत्कृष्टत्वादित्यर्थकरणेन न विरुणद्धीत्युच्यते—तदायं दोषः प्राचामकिञ्चित्करः । **नलोपानापत्तेरिति** । यदा लेवंरीत्या सर्वत्र लोपप्राप्त्याल्लोपस्याऽपवादत्वात्तदेकवाक्यतापन्नभसञ्ज्ञाया अप्यपवादत्वमुच्यते तदायं ग्रन्थश्चिन्त्यः । तत्सामर्थ्यादाकडारीयसञ्ज्ञासु यथोद्देशपक्षस्यैव ज्ञापनमित्याशयाद्वा ।

❀ चिदस्थिमाला ❀

अन्त्यस=न्यस । द्वन्द्वे—'समाहारे'त्यादिः । अतएवाह—**नपुंसेति** [४६४पृ०] । प्राचोक्तमेवाह—**तस्मादिति** । एतेनतत्खण्डयन्तः शास्त्रिदण्ड्यादयः परास्ताः । यथाश्रुतमूलाद्यसङ्गतेराह—**ष्यङ इति** । 'लिङ्गवती परिभाषे'ति सिद्धान्तादाह—**अनन्त्येति** । तदेवाह—**अन्त्येति** । एतेनान्यथा शास्त्रिदण्ड्यादिव्याख्यानमपास्तम् । अन्यथा=तथार्थाभावेन, यथाश्रुतार्थाङ्गीकारे । नन्वियं भाष्ये प्रत्याख्याताऽत आह—**अल्लोपइति** । आद्ये दोषान्तरमाह—**किञ्चेत्यादिना—त्वाभइत्यन्तेन** । प्रकृतेऽपि दोषमाह—**राज्ञ इति** । **एतदिति** । अल्लोपोन इतीत्यर्थः ।

❀ ज्योत्स्ना ❀

परिभाषया स्यादित्यर्थः । **इति बोध्यमिति** । अत्र यद्वक्तव्यं तद्भाव्यमानोऽप्युकारः सवर्णान्गृह्णातीत्येतद्व्याख्यानावसरे परिभाषाप्रदीपार्चिषि विस्तरेण निरूपितम् । **अनेकक्लिष्टकल्पनेति** । आकडारीयेषु कार्यकालपक्षाश्रयणं, पदैकवाक्यता, अङ्गांशे उत्थिताकाङ्क्षत्वेन यजादिप्रत्ययेनाऽनो विशेषण-

❀ विषमपदविवृतिः ❀

**क्लिष्टकल्पनेति** । आकडारीयेषु कार्यकालपक्षाश्रयणं, तदेकवाक्यता, अङ्गांशे उत्थिताकाङ्क्षत्वेन यजादिप्रत्ययेनानो विशेषणमित्यादिक्लिष्टकल्पनेत्यर्थः । **नलोपस्यासिद्धत्वादिति** । नलोपः सुप्स्वरे'ति सुब्विधौ नलोपस्यासिद्धत्वात्, 'अल्लोपोऽन'इत्यस्य च सुब्विधित्वात् । **बाधायोगादिति** ।

तस्मादाकडारस्थसञ्ज्ञासु यथोद्देशाश्रयणमेवावश्यकमिति—'यजादिस्वादिपरो योऽ'निस्यर्थस्य न तत्र लाभः।

'ष्यङः सम्प्रसारण'मिति सूत्रस्थं"—'कार्यकालं सञ्ज्ञा--परिभाषं, 'भस्ये'त्युपस्थितमिदं भवति–'यचि भ'मिति; तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अनाअकारम्—"इति भाष्यन्त्वेकदेश्युक्तिः। यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तन्त्रऽनो विशेषणायोगाच्च। अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि—"—तन्मात्यान्येतस्याः परिभाषायाः प्रयोजनानि–तदर्थमेषा कर्त्तव्या—"इति उपसंहृतं भाष्ये इति भावः।

❀ अभिनव-चन्द्रिका ❀

**एकदेश्युक्तिरिति**। सञ्ज्ञाशास्त्राणां परिकवाक्यतायाः कथनप्युपपादयितुमशक्यत्वादिति भावः। **अङ्गांशे उत्थिताकाङ्क्षतयेति**। अव्यवहितपूर्वत्वाव्यवहितपरत्वैतदन्यतरत्वावच्छिन्नोद्देश्यताकत्वे सति स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वस्वीकारात्प्रत्ययत्वस्याङ्गांशे उत्थिताकाङ्क्षत्वादिति भावः।

परे त्वेतादृशप्रत्ययत्वस्वीकारे मानाभावः, तादृशतत्त्वस्वीकारेऽपि पुत्रत्वस्य जन्यत्वघटितस्य जनकांशे उत्थिताकाङ्क्षत्वाज्जिज्ञास्यमानदेवदत्तपदार्थस्याऽजिज्ञासितार्थपुत्रत्वेऽन्वयवदत्राप्यङ्गस्य प्रत्ययत्वेऽन्वयेऽपि प्रत्ययस्याङ्गांशे विशेषणत्वे प्रमाणाभावः, लौकिकरीतिविरुद्धश्चेत्येतत्सर्वमविचारमूलमित्याहुः।

❀ चिदस्थिमाला ❀

पूर्वत्वादितिभावः। सञ्ज्ञासु=उपदेशतो युगपत्प्राप्तासु। नन्वेवं भाष्यविरोधोऽत आह—**ष्यङ इति**। तत्र=उपस्थितौ सत्याम्। उक्तदोषद्वयसत्त्वात्तृतीयं दोषमाह—**यजादीति**। परिभाषैव भगवतः संमता–न प्रत्याख्यानमिति तद्विरोधोऽपि नेत्याह—**अतएवेति**। अस्या न्याय्यत्वावश्यकत्वाभ्यामेवेत्यर्थः।

❀ ज्योत्स्ना ❀

मित्यादिक्लिष्टकल्पनेत्यर्थः। भाष्यन्त्वेकदेश्युक्तिरिति।"–योह्युत्सूत्रं कथयेन्नादो गृह्येत, 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके–"इति भाष्याद्युक्तेः–सूत्राक्षरारूढस्यैवार्थस्याप्रामाण्ये वादिनामुक्तिरित्यर्थः। स्मृतिशास्त्रत्वात् पाणिनिना सूत्रस्यैतावन्तोऽर्था अत्र सन्निहिता इति—प्रतीतौ यथेष्टं तदन्वयकल्पनालक्ष्यसिद्धिर्वक्तव्या, नतु सूत्रविरुद्धवचनेनेति तदाशयः। स्पष्टश्चेदं 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिव'दिति वचनप्रत्याख्यानावसरे'न पदान्त'सूत्रे भाष्ये। तत्रैतावत्प्रक्रान्तेऽवशिष्यते–'राज्ञ'इत्यादावल्लोपोऽन इत्येकदेशस्थया भसञ्ज्ञया पदसञ्ज्ञाया बाधानापत्तौ नलोपः स्यादिति, नच; 'आकडारादेके'त्येतावतैव सिद्धे सञ्ज्ञाग्रहणात्—सम्यग्ज्ञायमाना=कार्यकालपक्षे प्रधानदेशागमनेऽप्युपदेशदेशकृत-

❀ सदाशिवभट्टीयम् ❀

अत एवेयं नाश्रयणीयैवेत्यन्यत्र विस्तरः। **एवावश्यकमिति**। इदन्तु तत्त्वं–भसञ्ज्ञा पदत्वरूपे शास्त्रीयेऽपि भवति, न पदं तु–भाष्यादिति नलोप इति सूत्रेपि यचिभमिति भ्यामि प्रवृत्त्या पदत्वप्रतिबन्धान्नलोपाभावार्थं कार्यकालत्वं युक्तमेव (?)। किञ्चाष्टाध्यायीकृतपरत्वाश्रयणात् परत्वात् भसञ्ज्ञैवेति न दोष इति तत्त्वम्। एवञ्च भाष्यमपि नैकदेश्युक्ति। अङ्गेन प्रत्ययाक्षेपस्य सर्वत्रोक्तेः, प्रत्यय इत्युपस्थितस्याऽनो विशेषणाच्च उत्थिताकाङ्क्षत्वमत्र तिरस्कृतम्।

❀ विषमपदविवृतिः ❀

सञ्ज्ञाशास्त्रेण कार्यकापक्षे स्वदेशत्यागेनाकडारीयत्वाभावादसिद्धत्वाच्च। **उपसंहृतं भाष्ये इति**। वस्तुतस्तु यथोद्देशपक्षेप्यन्नन्तस्य भस्याङ्गस्यातो लोप इत्यर्थेपि नाऽनस्त्वङ्गेत्यादौ दोषः, निर्दिश्यमानान्त्यनकार एव लोपप्रवृत्तेः। अस्य सः–इदंस इत्यादौ–तद इदमश्च तकारस्य दकारस्य च 'तदोः ससा'विति सत्ववारणायोक्तकल्पनाया आवश्यकत्वात्। न ह्यत्रानन्त्यविकार इति परिभाषा-

**अन्त्यसदेशस्येति** । अन्त्येन समानो देशो यस्येत्यर्थः । तत्त्वञ्च—अन्त्यवर्ण-तद्वर्णयोरितराव्यवधाने भवति । 'चलीक्लृप्यते'इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशत्वसम्भव इति न तत्रैतत्परिभाषाप्रवृत्तिः ।

अत एव 'न सम्प्रसारणे'इत्युदाहरणीभूतस्य—'विद्ध' इत्यादेर्नानया सिद्धिः । अत एव 'न सम्प्रसारणे'इति सूत्रं सार्थकम् । 'नैतस्याः परिभाषायाः प्रयोजनानी'ति तत्सूत्रस्थभाष्यस्य त्वयमर्थः—एतत्सूत्रसाध्यानि 'विद्ध' इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति । अन्त्यसदेशत्वाभावादिति च—तद्भावः ।

**परस्यैवेति** । द्रशब्दस्यैवेत्यर्थः । **अः सेरिति** । अत्र अकारेण आकारस्यापि ग्रहणं,

❀ अभिनव-चन्द्रिका ❀

**इतराव्यवधाने इति** । अत्रत्यन्तत्त्वं पूर्वमुपपादितं, विस्तरेण तत एवावधार्यमिति दिक् ।

❀ चिदस्थिमाला ❀

यथाश्रुतासङ्गतेराह—**अन्त्येनेति** । तस्याप्यसङ्गतेराह—**तत्त्वञ्चेति** । अन्त्यसमानदेशत्वञ्चेत्यर्थः । 'भवती'तिपाठः । 'सदेशत्वसम्भव'इति पाठः । अतएव=तत्त्वस्य तत्रैव स्वीकारादेव । अतएव=तस्यानया-ऽसिद्धेरेव । एवं सति भाष्यविरोधं परिहरति—**नैतस्या इति** । **तत्सूत्रेति** । 'न सम्प्र'तिसूत्रेत्यर्थः । **इतिरर्थसमाप्तौ** ।

तदाशयमाह—**अन्त्येति** । चो–व्युत्क्रमे, तद्भावश्चेत्यर्थः । एकवचनस्वारस्यादाह—**द्रशब्देति** ।

❀ ज्योत्स्ना ❀

व्यवहारमत्यजन्तीत्यर्थाश्रयणादुपदेशदेशीयपूर्वापर्येणादोषादित्याहुः । **अन्त्यवर्णतद्वर्णयोरिति** । अत्र तच्छब्देनान्त्यवर्णसदेशकार्यिवर्ण इत्यर्थः । अन्त्यत्वावच्छेदकवर्णवृत्त्युपाध्यवच्छिन्नतत्तत्सदेश-कार्यिणो व्यवधानाभाव इति पार्यन्तिकार्थः, तेन 'हंसशिरांसी'त्यादौ संयोग–तत्सदेशकार्यिणोरितरा-व्यवधानादेतत्परिभाषोपस्थितिरिति–'सान्तमहत' इति सूत्रस्थस्वग्रन्थेन न विरोध इति बोध्यम् ।

❀ विषमपदविवृतिः ❀

प्रवृत्तिः सम्भवति, त्यदाद्यत्वं बाधित्वा पूर्वमेव प्रवृत्त्याऽन्त्यवर्णतद्वर्णयोरितराव्यवधानाभावात्, एतच्छब्दस्य कृताकच्कादःशब्देन समासे 'एतदमुक'इत्यादौ तत्परिभाषाप्रवृत्तिशङ्काया अप्यभावाच्च ।

न चोपसर्जनत्वात्पूर्वस्य न तत्त्वम्, एवमप्यस्यायम्–इदमीयं, यूयं पुत्रा यस्य स युष्मत्पुत्रस्तस्य त्वं युष्मत्पुत्रत्वम्–इत्यादावण्अमाद्यादेशापत्तेश्च । तस्मादेतत्परिभाषाप्रत्याख्यानमेव भाष्यकृतोऽभिप्रेतम्। 'यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्त्तव्ये'ति भाष्यन्तु प्रौढ्या, प्रयोजन-विशेषमप्रदर्श्य सामान्येन तथोक्तेः। भसञ्ज्ञायां कार्यकालपक्षोऽप्याश्रयितुं शक्यः, तत्पक्षे परि-भाषाणामिव सञ्ज्ञानामपि स्वदेशप्रच्युतौ मानाभावात् । 'अयादिभ्यः परैव प्रगृह्यसञ्ज्ञे'ति भाष्यस्य प्रगृह्यसञ्ज्ञाप्रयुक्तप्रकृतिभाव इत्यर्थ इति दिक् । **इतराव्यवधान एवेति** । ननु 'हंसशिरांसी'त्यत्रैत-त्परिभाषाप्रवृत्तिर्न स्यात्, कार्यिणोऽन्त्यवर्णस्य च सकारेण व्यवधानादिति चेन्न, इतरपदेन निमित्त-तया विशिष्य सूत्रानुपात्तस्यैव ग्रहणेनादोषात् । केचित्त्वत्र तच्छब्देनान्त्यवर्णसदेशकार्यिवर्ण इत्यर्थः । अन्त्यत्वावच्छेदकवर्णवृत्त्युपाध्यवच्छिन्नतत्तत्सदेशकार्यिणो व्यवधानाभाव इति तावत्पार्यन्तिकोऽर्थः ।

१ अन्त्यविशिष्टत्वमन्त्यसदेशत्वं,–वै० 'स्वावधिकपूर्वत्व' 'स्वावधिकपूर्वत्वघटितराव्यवहितपूर्वत्वाभाव-वत्त्वो'भयसम्बन्धेन । अदमुयङ्ङित्यत्र रेफव्यवधानेऽपि मुत्वप्रवृत्तये इयं परिभाषा । रेफस्य मस्थानित्वा-भावात् । उत्वे रेफोऽपि स्थानीत्यन्यदेतदिति **गौडाः** ।

तेनाऽमूदृगित्यादिसिद्धिः । तत्र हि 'आ सर्वनाम्नः' इति पूर्वमदन्तस्याऽऽत्वम् ।

**त्यदाद्यत्वेति** । त्यदादीनामत्वविषय इत्यर्थः । **पक्षे इति** । अत्र तन्त्रेणाऽर्थद्वयेऽपि सूत्रतात्पर्यम् । तत्र लक्ष्यानुरोधाद्व्यवस्था ।

अत्र प्रमाणमुपन्यस्यति—**उक्तञ्चेति** । **लत्ववदिति** । 'चर्लीक्लृप्यते' इत्यत्र यथा लत्वं रीगृकारयोर्भवति तथेत्यर्थः ।

अत्र 'अदमुय'ङ्ङितिरूपवादिमतं न्याययुतं, लत्वे उक्तरीत्यैतन्न्यायप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाभावात् । अत एव भाष्ये—'अदसोऽनोस्रे'रितिवार्त्तिकप्रत्याख्यानाय—'अथवा—अः से'रिति पक्षमुक्त्वा "—यद्येवम्—'अमुमुय'ङ्ङिति न सिद्ध्यति, 'अदद्य'ङ्ङिति प्राप्नोति, 'अदमुय'ङ्ङिति भवितव्यम्—'अनन्त्यविकार' इति—"इत्युक्तम् । अत्र 'इति प्राप्नोती'त्युक्त्या तत्राऽसम्मतिरुक्ता । 'इति भवितव्य'मित्यनेन 'पृथक्त्व'मिति पक्षे

❀ अभिनव-चन्द्रिका ❀

न्याययुक्तमिति । परे तु सहेतुकवाक्यस्यैव प्रामाणिकत्वेन 'नेत्येके'इत्यस्य सहेतुकत्वादद्यङ्ङित्येव-रूपं भाष्यकृदभिप्रेतम् । अत एव सर्वत्र केचिदित्युक्त्वाऽत्र 'एके' इत्युक्तम् । 'अमुमुयङ्ङिति न सिद्ध्यती'त्यादि भाष्यन्तु—अस्मिन् पक्षेऽमुमुयङ्ङिति न सिद्ध्यति, 'अदद्य'ङ्ङिति प्राप्नोति, अनन्त्यविकारपरिभाषयाऽदमुयङ्ङिति भवितव्य'मिति वस्तुस्थितिप्रतिपादकं भाष्यमिति न तेन सह

❀ चिदस्थिमाला ❀

त्य आद्यो येषां तस्येत्यर्थनिरासायाह—**त्यदेति** । ननु मन्त्रदुचरेतास्कथननेकार्थलाभोऽत आह—**अत्रेति** । असेरित्यत्रेत्यर्थः । तत्र=नयोर्मध्ये । अत्र=तन्त्रे । प्रमाणं=वार्त्तिकम् । अत्र सिद्धान्तमाह—**अत्रेति** । एतेषां मतानां मध्ये इत्यर्थः । **उक्तेति** । उत्तरभागेन व्यवधानादित्यर्थः । **अनोस्रेरिति** । सान्त ओकारान्त-रेफान्त-भिन्नस्यादस इत्यर्थः ।

**अः सेरितीति** । मौलतृतीयपक्षमित्यर्थः । नन्वेतावता कथमुक्तार्थलाभोऽत आह—**अत्रेतीति** । भाष्ये इत्यर्थः । चो व्युत्क्रमे—अप्रयुक्तत्वञ्च । तत्र शब्दे=अमुमुयङ्ङित्यत्र । यथाश्रुतमप्युदाहरणासङ्गतेराह—**चस्येति** ।

❀ ज्योत्स्ना ❀

**नोस्रेरिति** । ओकारसकाररेफान्तभिन्नस्याऽदस इत्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

**अत्वविषय इति** । तेन आत्वविषयस्यापि सङ्ग्रहः ।

**मानाभावादिति** । अत्र गुरुचरणाः—क्वचिदन्त्यसदेशानन्त्यसदेशयोः प्राप्तिप्रसिद्ध अन्त्यसदेशो-पस्थितिः, अत्रोत्वस्य तथात्वेऽपि न प्रवृत्तिः, अवधारणगर्भानन्त्यसदेशस्यैव विकाराभावात् । अमुमित्यत्रापि प्राप्तेर्मकारादावपि न प्रवृत्तिः, एकप्रयोगेऽदद्रिशब्देन्त्यसदेशानन्त्यसदेशयोः प्राप्त्यभावात्, रेफेण व्यवधाना-दन्त्यसदेशत्वाभावात् । अत एवादमुयङ् इति भाष्यप्रयोग उपपन्नः, अन्यथान्त्यसदेशत्वाभावान्मुत्वानापत्ति-स्तस्मादप्रवृत्तिरेव युक्तेति' । नापि—अदमुयङ्ङितिभवितव्यमिति भाष्यविरोधः, तत्र अः सेरिति पक्षे एवं भवितव्यं, तत्र स्यादिति शङ्कायाम्—'उक्तञ्चे'ति समाधानेनादोषात् । 'समाधानन्तु केचिदिच्छन्ति, वस्तुतस्तु नेत्येवे'ति भाष्याशयेनादोषात् । तस्माददद्यङ्ङित्येवेष्टं, न द्वयमिति सिद्धान्तमाहुः । अत एव द्विः प्रयुक्त इति सुधियः ।

❀ विषमपदविवृतिः ❀

तेन 'हंसच्छिरांसी'त्यादावन्त्यसंयोगतत्सदेशकार्यिणोरितराव्यवधानादेतत्परिभाषोपस्थितिरित्याहुः । **अत्र प्रमाणमिति** । तन्त्रेणार्थद्वये इत्यर्थः ।

सम्मत्यभावो दर्शितः। 'इति भवितव्य'मित्युक्त्या च तत्र शब्देऽप्रयुक्तत्वं सूचितमित्याहुः।

**विष्वग्देवयोः किमिति।** चस्याप्युपलक्षणमिदम्। ननूत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थात्—'विष्वगञ्चन'मित्यादेर्व्यावृत्तौ व्यर्थमप्रत्ययग्रहणमत आह—**अप्रत्ययेति। तेनेति।** अन्यथा 'अतः कृ' इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेऽपि 'कृधातुरूपे उत्तरपदे' इत्यर्थापत्तौ 'अयस्कृ'दित्यादावेव स्यादिति भावः।

**उद ईत्।** अत्र 'अच'इत्यनुवर्त्तते।

**समः स।** 'समो मि'ङिति, 'सम इ'गिति वा न कृतं, परिभाषाज्ञानकृतगौरवापत्तेः।

ॐ अभिनव-चन्द्रिका ॐ

विरोध इत्याहुः। **गौरवापत्तेरिति।** ननु समोऽव्ययत्वादकचि सकं, तदञ्चतीति समीच इत्यत्र ङित्त्वादन्त्यादेशे फलभेदसत्त्वेन गौरवपर्यन्तमनुधावनं विफलमितिचेन्न, साकच्कापहारकादेशविषये तन्मध्यपतितन्यायस्याप्रवृत्तेः परिभाषेन्दुशेखरचन्द्रिकायामुक्तत्वेनात्र तदप्राप्त्या निर्दिश्यमानत्वाभावेन सिद्धान्ते एतस्याप्रवृत्तेः। नच राद्धान्ते तस्याप्रवृत्तावपीदानीं तस्य साकच्कानपहारकत्वेन तत्प्रवृत्त्या

ॐ चिदस्थिमाला ॐ

तदपवादत्वायाह—**अत्रेति।** जीर्णानुक्तमाह—**सम इति।** ततोऽपि प्रयत्नलाघवादाह—**सम इगितीति।**

ॐ सदाशिवभट्टीयम् ॐ

**समो मिङिति।** नन्वकचि कृते विशिष्टस्यादेशार्थं यथान्यास एवास्त्विति शङ्कावसर इति चेन्न, सर्वनामसाहचर्येणाव्ययस्यापि वाचकत्वरूपप्राधान्ये एव प्रवृत्तिर्नतु द्योतकस्थले, प्रकृते तु समो-द्योतकत्वान्नाकचः प्रसङ्ग इति तात्पर्यात्। ननु 'नलोपो नञ' इत्यत्राशिति न्यासे—'अक ब्राह्मण' इत्यत्र दोषदानात्साहचर्यं नाऽभिप्रेतमिति चेदुच्यते, उपसर्गस्यायतावित्यत्र भाष्येणोपसर्गविषयेऽकचोऽनभिधानात्।

ॐ विषमपदविवृतिः ॐ

**सूचितमित्याहुरिति।** अन्ये त्वत्र सूत्रवार्तिकभाष्यकृतामसेरित्यस्य प्रतिषेध एव तात्पर्यम्। वार्तिककृता—'अदसोद्रे'रिति वचनपाठेन, एतत्सूत्रभाष्ये भाष्यकृता—'पदाधिकारादपदान्तस्य मुत्वं न प्राप्नोती'त्याशङ्क्य'—यदयमसेरिति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—अपदान्तस्यापि भवती'त्युक्तेश्च। 'अमुमुयङिति न सिध्यती'त्युक्त्येदमेव रूपं साधुत्वेन भाष्यकृतोऽभिप्रेतम्, 'अदद्र्यङिति प्राप्नोती'त्युक्त्या तत्रासंमतेः सूचनात्। 'अदमुयङिति भवितव्यम्, अन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति भाष्यं त्वेकदेशिनः, स्वखण्डितपरिभाषाश्रयणेन रूपापादनरूपत्वात्तस्येत्याहुः। ननु 'विष्वग्देवयो'रित्यस्याभावेपि चकारेण सर्वनाम्नामनुकर्षणादश्वाचीत्यादौ नास्य प्राप्तिरित्याशङ्क्याह—**चस्यापीति। ज्ञानकृतगौरवापत्तेरिति।**—

१ परे तु—'अदमुय'ङित्यस्य भाष्यकृद्भिरेव प्रयुक्ततयाऽदद्र्यच्छब्दस्याऽप्रयुक्तत्वं दुर्वचम्। किञ्च—यदीदमप्रयुक्तं स्यात्तर्हि द्विवचने उभयशब्दस्येव, ण्यन्तयोर्युष्मदस्मदोरिव वाऽदमुयङिति रूपं भाष्ये न प्रयुक्तं स्यात्। एवञ्च 'अदमुय'ङित्येव न्याय्यम्। अदद्र्यङिति तु नेष्टम्। असेरित्येवमर्थेन तत्साधने हि पाणिनेः प्रच्छन्नवादितापत्तेरित्याहुरिति त्रिपाठिचरणानुसारिणो गौडाः।

२ यदागमपरिभाषया कृधातुरूपोत्तरपदत्वादित्याशयः। 'अयस्कार' इत्यत्र न स्यादिति तु हृदयम्।

३ अर्थाधिकारानुरोधाल्लुप्तनकार इत्यर्थोऽत्र बोध्यः। 'अप्रत्यय' इत्यप्यनुवर्त्तते इति बोध्यम्।

४ मिङ—आदेशः। इक्—आगमः। 'परिभाषे'ति—इत्सञ्ज्ञाया अप्युपलक्षणम्।

**तिरसस्ति** । 'अलोपे'इत्यत्र शकन्ध्वादित्वात्पररूपेणाऽकारः प्रश्लिष्यते । अस्य—अलोपो=लोपाभावो यस्मिन्नञ्चतावित्यर्थस्तदाह—**अलुप्ताकार इति** ।

**तिरश्चेति** । श्चुत्वेऽल्लोपस्य स्थानिवत्त्वं तु न, पूर्वत्रासिद्धीये तन्निषेधात् ।

**पूजार्थस्येति** । पूजारूपार्थस्य गम्यत्वे इत्यर्थः । अत एवाऽव्याकुलं गच्छतीत्यर्थके 'अञ्चितं गच्छती'त्यादौ नलोपो न । अव्याकुलगमनेन च पूजा गम्यते, न त्वञ्चेरेव सोऽर्थ इति स्पष्टम्—'अञ्चोऽनपादाने'—इति सूत्रे भाष्य-कैयटयोः ।

---

ॐ अभिनव-चन्द्रिका ॐ

निर्दिश्यमानत्वेनादेशः स्यादिति फलभेद एवेति वाच्यम्, 'अकचि कृते धिचं न प्रत्ययो'र्न'ति भाष्याद्'नेकालि'तिसूत्रे सर्वपदेनाकजघटितस्यैव ग्रहणेनोत्सर्गसमानदेशा अपवादा' इति न्यायेन 'ञ्चे'त्यत्रापि अकजघटितनिर्दिश्यमानान्त्यस्य ग्रहणेनादोषात् । मण्डूकप्लुत्या एकाचपदानुवृत्त्या दोषाच्चेत्यलम् ।

तिरस इति । अकारादावञ्चतौ परे इत्यर्थकं 'तिरसस्तिर्ये' इति तु सूत्रितम्; 'तिरोयञ्चती' त्यत्र तिर्यादेशानापत्तेः, राद्धान्ते तु अत्र टिलोपस्याऽकारपर्याप्तस्थानिनाकादेशत्वाऽभावेनाऽलोपे इति

ॐ चिद्स्थिमाला ॐ

दण्ड्याद्युक्तव्याख्याने उपचारदोषादाह—**अलोपे इति** । बहुव्रीहिणा मौलं सामानाधिकरण्यं भाष्य-विरोधादयुक्तमित्यत आह—**पूजेति** ।—कर्मधारयः । शेषेण भेदेनान्वय इति भावः । तदेवाह—**अत एवेति** । तथार्थादेवेत्यर्थः । कैयटमाह—**अव्याकुलेति** । नन्वेवं पूर्वत्रापि नलोपो न, स्याद् प्रकृष्टं गच्छती'ति व्युत्पत्त्या

ॐ सदाशिवभट्टीयम् ॐ

तत्राञ्चयनावित्युपसर्गविशेषणं ? रेफस्य वा ?, आद्ये परेः प्रतिषेधः, अन्त्ये प्रनेरपूर्वविधिरित्युक्तम् । यद्यकजुपसर्गे स्यात्तदा परिवदकच्यपि निषेध आवश्यक इति तदनुक्त्याऽनभिधानमावश्यकमित्याहुः ।

तिरसः । अत्र 'तिर्ये' इति, अञ्चीति, अञ्चीति वास्त्विति केचित् । तत्रायं विचारः—आद्ये अम्—अञ्चतीति—आञ्चित्यत्र आकारपरत्वादापत्तिः । अलोपग्रहणेनैकादेशापहृतिरूपलोपसत्त्वेन नापत्तिः । द्वितीयेपि—अ इत्यस्यानुकरणे प्रकृतिवदनुकरणं नेति पक्षे 'अ—अङ्' इत्यत्रापदान्तादकारादतोगुणे

ॐ विषमपदविवृतिः ॐ

इदमुपलक्षणं, साकच्के च विशेषात् । **अव्याकुलङ्गच्छतीत्यर्थक इति** । एतेनाञ्चुगतिपूजनयो-रित्यस्य स्थानेऽञ्चुगतौ, अञ्चि पूजायामित्येव सिद्धे-'नाञ्चेः पूजाया'मिति व्यर्थमित्यपास्तम् ।

---

१ अकारादावञ्चतौ परे तिरसस्तिरिरित्यर्थकं—'तिरसस्तिर्ये'इति तु न सूत्रितं,'तिर्यो'ञ्चित्यादावादेशा-नापत्तेः । तत्र—'ओ'ञ्चिति च सम्बोधनार्थके—'ओ'शब्दे उपपदे अञ्चेः क्विति 'एङः पदान्तादती'ति पूर्वरूपे निष्पन्नम् । एवमञ्चेः क्विपि—'अच्–' इत्यस्य आष्टमिके पदद्वित्वे ततश्च तिरसा समासे शसि अनन्त्यविकारपरिभाषयोत्तरखण्डाकारलोपे'तिरोऽक्च'इत्यत्र सिद्धान्ते कृतद्वित्वा'ऽक्च्' इतिरूपस्योत्तर-खण्डेऽल्लोपात्—अलोपाभाववत्त्वाभावेन तिर्यादेशो नेष्यते, 'तिरसस्तिर्ये' इति न्यासे तु अकाराद्यञ्चतिपरतया तिर्यादेशापत्तिरिति—शब्देन्दुशेखरदीपिकायामुमानाथपण्डितः । २ कौमुद्यां—'पूजायां गम्यमानाया'-मित्येवं वृत्तिरुचितेत्याह—**गम्यत्वे इति** । धातोर्गत्यर्थत्वेऽपीति शेषः । ३ परे तु—अञ्चतेरव्याकुलार्थकत्वे कोशादिप्रामाण्याभावादिदमसङ्गतम्, अतः—'अञ्चित'मित्येवोदाहार्यं, गत्यर्थत्वेऽपि समभिव्याहारादिना पूजाया गम्यमानत्वादिति गौडाः । ४ 'इच एकाचोऽ'मित्यतः ।

पूर्वोदाहृतं—'प्राच' इत्यादि—चिरन्तनादिरूढस्येति बोध्यम् ।

एतेन 'अञ्चतेर्गता'विति नियमेनैव सिद्धौ 'नाञ्चेः पूजाया'मिति व्यर्थमित्यपास्तम्[१]।

**नलोपाभाव इति**। ओपधत्वबोधनद्वारेत्यर्थः। स्पष्टञ्चेदं—'परेश्च घे'ति सूत्रे भाष्ये।

अपिना 'च'समवधाने 'चोः कु'रिति कुत्वाभावो, निरुपपदात्क्विन्निति च निपात्यते,—

❀ अभिनव-चन्द्रिका ❀

पर्युदासस्याप्रवृत्त्या तत्सिद्धयति। **ओपध इति**। नन्वस्य ओपधत्वे सूत्रे पाठो व्यर्थोऽनो नोपधत्वमेव युक्तं, नच नोपधत्वे कुत्वशङ्कापरभाष्यविरोध इति वाच्यं, तादृशभाष्येणाऽनुस्वारपरसवर्णयोः कुत्वदृष्ट्या सिद्धत्वबोधनेनादोषादिति चेन्न, तथापि अनुस्वारस्यासिद्धत्वाभावेन 'चोःकु'रित्यनेनैव कुत्वे सिद्धे इह-एतत्पाठवैयर्थ्यस्य तादवस्थ्यात् ।

❀ चिदस्थिमाला ❀

तत्रापि तद्वत्पूजाया गम्यत्वादत आह—**पूर्वोदिति**। एवञ्च तत्र तथात्वे तदभाव इष्ट एवेति भावः। एतेन= उक्तरीत्या पूजायामित्यस्यावश्यकत्वेन। ननु भाष्यविरुद्धं यथाश्रुतमूलमत आह—**ओपधेति**। तदेवाह—**स्पष्टमिति**। 'क्रुञ्चे'त्यत्र 'चोःकुर्झली'ति कुत्वं प्राप्नोति,'सङी'ति वचनान्न,एतदपि न फलम्, ऋत्विगादिसूत्रे

❀ ज्योत्स्ना ❀

**प्राच इत्यादिति**। नलोपाभावाभावविशिष्टं प्राच इत्यादिरूपमित्यर्थः। **इत्यपास्तमिति**। एवमेवाञ्चि पूजायाम्, अञ्चुगताविति धातुद्वयेन सिद्धे 'नाञ्चेः पूजाया' मित्यस्य प्रकारान्तरेणापि वैयर्थ्यं निरसनीयमित्याहुः। **अपिनेति**। 'नलोपाभावोऽपी'त्यपिनेत्यर्थः। **समवधान इति** 'क्रुञ्चौ' 'क्रुञ्च' इत्यत्र चकाररूपझल्समवधाने अकारस्य 'चोकु'रिति प्राप्तकुत्वाभाव

❀ सदाशिवभट्टीयम् ❀

इति पररूपे 'अ'ङितिजाते आदेशः स्यात्, अलोपग्रहणेतूक्तरीत्या लोपसत्त्वेन नादेश इति न दोष इति। तृतीये-अचीत्युक्ते आङित्यत्र दोषतादवस्थ्यात्, अतः पक्षद्वयन्तु सर्वत्रैवेत्याहुः(?)। **नाञ्चेः। रूढस्येति**। ननु प्राचीन इत्यादौ—विशिष्टरूढत्वस्यादृष्टत्वेन वक्तुमशक्यत्वाद्यौगिके—नलोपानापत्तिः, पूजाया-गम्यमानत्वादिति वाच्यं,प्राचोक्तं पदं क्वचित् पूजयोपादीयते, क्वचिन्निन्दया च,तत्र निन्दायां लोपयुक्तः प्रयोगः, पूजायान्तु नकारसहितएवेति केचित्। **अपास्तमिति**। वस्तुतः उत्तरार्थं नकारस्यावश्यकत्वेन, अत्र नियमप्रयुक्तगौरवेण च तदयुक्तमेवेति भाति। एतेनाञ्चुगतावञ्चिपूजायामिति पठ्यते, इदित्वादेव 'अञ्ची' नलोपाभावे नाञ्चेरिति सूत्रमेव व्यर्थमित्यपास्तम्। पूजाया गम्यत्वेऽपि नलोपापत्तेः,'अञ्चुयुजिक्रुञ्चा'मित्यत्र-उकारकरणादञ्चीत्यस्याग्रहणापत्तेश्च,उकाराकरणेन तस्यापि ग्रहणे'ऽञ्चीत्येके'इत्यस्याप्यापत्तेः,तत्राकारान्तरं कृत्वा ह्यनुबन्धकत्वादग्रहणमिति चेत्, गौरवमेवेति दिक्। **ओपधत्वेति**। 'क्रुञ्च्या'दित्यत्राशीर्लिङि तत्त्वन्तत्र

❀ विषमपदविवृतिः ❀

**ओपधत्वबोधनद्वारेति**। 'नकारजावनुस्वारपञ्चमौ झलि धातुषु'इत्यपि प्रायिकम्। **अपिनेति**।

---

१ एतेन 'अञ्चीत्येके' इति धातुपाठे उक्तेः [नवीनधातुकल्पनागौरवाभावात्-]–'अञ्चि पूजाया'मिति 'अञ्चु गतौ' इति च धातुद्वयं स्वीकार्यम्, एवञ्च इदित्वादेव–'अञ्च्या'दित्यत्र न नलोपः। 'अच्या'-दिति तु गत्यर्थकस्य 'अञ्चु'इत्यस्य, तदेवं—'नाञ्चेः पूजाया'मिति व्यर्थम् ।

किञ्च 'अञ्चु'इत्यस्योदित्त्वाद्यस्य विभाषेतीडभावे–'अक्त'त्येव। पूजायान्तूदित्त्वाभावादञ्चितेति रूपमिति–रूपद्वयस्यान्यथाऽपि सिद्ध्या 'अञ्चेः पूजाया'मित्यपि सूत्रं व्यर्थमित्यपास्तम्। पूजायां द्योत्यायामिष्टस्य 'अञ्चित'-मित्यादेर्गत्यर्थकस्यापि–असाधुतापत्तेरित्याहुः। स्पष्टञ्चेदं सदाशिवभट्टीये **तिलके** इति तत्रैव द्रष्टव्यमिति **गौडाः**।

—इति बोध्यम् । 'सङ्गी'ति वचनाद्वा कुत्वाभावः ।

**षत्वं—स्कोरितीति ।** सलोपे षत्वस्यासिद्धत्वात्सलोपे कृते पञ्चम् ।

**व्रश्चेः** क्विपि 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः ।

**सुवृड्रूस्विति ।** चर्त्वस्यासिद्धत्वात् 'ङः सी'ति वा धुट् ।

**निपात्यन्ते इति ।** 'अतिप्रत्ययान्ता' इति शेषः । तत्र—पृषद्बृहतोर्गुणाभावश्च, मस्जेर्जगादेशश्च, महेः कर्मणि प्रत्ययश्च—निपातनात् ।

**शतृवदिति ।** प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः । 'शातुरनुम'इति सूत्रे 'बृहन्महतोरुपसङ्ख्यान'मिति तु पृषदादिव्यावृत्तये नियमार्थमिति बोध्यम् ।

※ चिद्रस्थिमाला ※

'क्रुञ्चामिति निपातनात् सिद्ध'मिति तत्रोक्तम् । तेन त्वौपदेशिको नकारो लभ्यते, अन्यथा नकारस्यानुस्वारे परसवर्णे च जाते तयोरसिद्धत्वाच्चोः कुरित्यस्य प्राप्तेरेवाभावेन तदसङ्गतिः स्पष्टैव । इदं प्रत्याख्यानपक्षेणोक्तं, सिद्धान्तमतमाह—**सङ्गीति** । एवञ्च द्वितीयमेवापिसमुच्चेयमिति भावः । यथाश्रुतमसङ्गतं मूलं 'पाठक्रमादार्थक्रमो बलीया'निति न्यायेन योजयति—**सलोपे इति** । अत एव मूले षत्वे इति सप्तम्यन्तं न पठितम् । क्वचित्तु मूले 'स्कोरिति सलोपः, व्रश्चेति षत्वं, जश्त्वचर्त्वे' इत्येव पाठ इति बोध्यम् । तत्र सलोपान्तप्रक्रियामाह—**व्रश्चेरिति** । सामान्यमाह—**अतीति** । तथाप्रक्रमात् । विशेषमाह—**तत्रेति** । तेषां मध्ये इत्यर्थः । केवलकार्याभावादाह—**प्रत्ययेति** । नन्वेवं वार्तिकवैयर्थ्यमत आह—**शतुरिति** ।

※ ज्योत्स्ना ※

इत्यर्थः । **इति बोध्यमिति** । निपातनेन कुत्वाभावपरभाष्योक्तिर्हि नोपधत्वमन्तरेणानुपपन्ना—परसवर्णानुस्वारयोरसिद्धत्वात्कुत्वप्राप्तेरेवाभावात्—नोपधत्वमाक्षिपतीति—तत एव नलोपाभावं बोधयति, तच्च धातुमात्रविषयं, क्विबन्तविषये तु 'क्रुञ्चन्ती'त्यत्र कुत्वापत्तिरिति भावः ।

ननु नोपधत्वेऽपि नलोपाभावमात्रं निपातनीयं, कुत्वाभावस्तु परसवर्णासिद्धत्वादर्थसिद्धः, अत एव 'नकारजावनुस्वारपञ्चमौ झलि धातुषु' इति वृद्धोक्तिरनुकूलिता भवतीत्यतो नोपधत्वपक्षे किं लाघवमित्यत आह—**सङ्गीति वचनाद्वेति** । एवञ्च कुत्वाभावार्थं निपातनमपि नाश्रयणीयमिति लाघवमिति भावः । कुत्वाभावनिपातनपरभाष्यात्तु सङ्गीति वचनस्याऽभावः प्रतीयते, तथैव च निरूपितमेतत्प्राक् । नोपधत्वपक्षस्तु अनुस्वारपरसवर्णगौरवपराहत इति दिक् । **सलोपे कृते षत्वमिति** । एतेन—'षत्वं स्कोरिति सलोप' इति मूले—पाठक्रमादर्थक्रमस्य बलवत्त्वेन वैपरीत्याद्व्याख्यानं सूचयति ।

※ सदाशिवभट्टीयम् ※

नोपधप्रयोजनं क्रुञ्च्यादिति,तत्र कुचीतीदित्पठनेनापि सिद्धमिति क्रुञ्चेति पाठो व्यर्थः स्यादतोयं न नोपधः। कथन्तर्हि कुत्वमाशङ्कितं, तर्हि तद्भाष्यात्कुत्वविषयेऽनुस्वारपरसवर्णत्वयोः सिद्धत्वमेव प्रतिपाद्यताम्, आशीर्लिङि क्रुच्यादित्येव रूपमस्त्विति चेत्, चिन्त्यमेतत् । **शतृवदिति** । नन्वतृप्रत्ययान्ता एव निपात्यन्तां, किमनेन गुरुभूतेनेति वाच्यम्, अतृप्रत्ययस्यप्रकरणपठितत्वाभावात्, 'पूरणगुणे'ति निषेधार्थमपि शतृ-

※ विषमपदविवृतिः ※

नलोपाऽभावोपीत्यपिनेत्यर्थः । **सलोपे कृते षत्वमिति** । एतेन 'षत्वं स्कोरिति सलोप'इति मूले—पाठक्रमादर्थक्रमस्य बलवत्त्वेन वैपरीत्येन व्याख्यानं सूचयति । **पृषदादिव्यावृत्तये इति** । 'अतिप्रत्ययान्तस्य चेदेतयोरेवे'ति नियम इति भावः। ननु लाघवाय शत्रन्ता एवैते निपात्यन्ते, बृहन्महतो-

**अत्वसन्त** । चस्त्वर्थे । 'अतु'-इति लुप्तषष्ठीकं पृथक्पदम् । 'अधातो'रिति असन्तस्यैव विशेषणं-'तु'शब्दात्। तदाह—**धातुभिन्नेति** । अत एव 'उगिदचा'मिति सूत्रे—गोमत्यतेरप्रत्यये—गोमानिति प्रयोगो भाष्ये सङ्गच्छते ।

अङ्गविशेषणतयाऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम् । **परमिति** । वचनसामर्थ्यादुपधापदासम्बन्धेन चारितार्थ्यादित्यभिमानः ।

### ❀ अभिनव-चन्द्रिका ❀

तुशब्दादिति । त्वर्थक-चशब्दादित्यर्थः ।

### ❀ चिदस्थिमाला ❀

अत्र योगविभागात्तथार्थलाभ इति कैयटादिसकलग्रन्थासाङ्गत्यायाह—**चस्त्वर्थे इत्यादि** । अत एव=तस्य तद्विशेषणत्वादेव । **अन्तेति** । एतेनान्तमात्रग्रहणार्थं तत्, अन्यथोपदेश एव येऽत्वन्तास्तेषामेव ग्रहणं स्यादिति रत्नाकरोक्तमपास्तम्, तदभावेऽपि शब्दमर्यादया तदलाभात् । ननु निरवकाशत्वेन कथं परत्वमत आह—**वचनेति** ।

### ❀ ज्योत्स्ना ❀

अत एव 'षत्वे-सलोप' इति मूले न कृतमिति बोध्यम् । **तुशब्दादिति** । त्वर्थ-च-शब्दादित्यर्थः ।

**अनुवादकमन्तग्रहणमिति** । नन्वङ्गस्याऽत्वन्तत्वं न तावल्लौकिकप्रयोगसमवायि, असम्भवात्, नाप्यौपदेशिकम्-अङ्गस्योपदेशाभावात् । 'उपदेशे योऽतुशब्दस्तदन्ताङ्गस्ये'ति व्याख्यानेऽपि समुदायोपदेश एव सर्वत्र ऋषितात्पर्येण क्तवतु-मतुबेकदेशस्यातोरुपदेशाभावेन दोषतादवस्थ्यम् । वचनसामर्थ्यादङ्गत्वयोग्याऽत्वन्तस्य भवत्वित्यादेः सम्भवेऽपि मतुब्क्तवत्वाद्यन्ते 'गोमान्' 'यावा'नित्यादौ मान्तस्यात्वन्तत्वाभावाद्दोषतादवस्थ्यमिति चेत्, अत्राहुर्वार्तिककाराः—'अत्वन्तस्य दीर्घत्वे पित उपसङ्ख्यान'मिति । वस्तुतस्तु नेदमपूर्वं वार्तिकं, किन्त्वतिरिच्यमानान्तग्रहणलभ्योऽर्थः। तथाहि सति-अन्तग्रहणेऽत्वन्ताङ्गस्येत्यर्थे क्तवत्वादेरौपदेशिकमत्वन्तत्वं सम्भवत्येव । मतुबादेस्तन्नास्तीति चेत्तत्रापि आनुमानिकमस्त्येवेति ब्रूमः । कथमिति चेत्-'उपदेशे'जित्येतद्वाक्यार्थस्य 'हलन्त्य'मित्येतद्वाक्यार्थाधीनत्वात्तदुत्तरप्रवृत्तिकत्वात्पकारस्येत्सञ्ज्ञायां लोपे च कृते उकारेत्सञ्ज्ञावेलायां लोपात्प्रागत्वन्तत्वास्ति सम्भव इति स्पष्टमिहैव सूत्रे प्रदीप इति दिक् । नचान्यत्र लब्धावकाशस्य तस्य परेण बाधो वक्तव्यः, न चान्यत्र दीर्घो लब्धावकाश-इत्यत आह—**वचनसामर्थ्यादिति** । **उपधापदासम्बन्धेनेति**। तथाच नुमि कृते दीर्घस्यावकाशसम्भव इति भावः । इदञ्च 'निरवकाशत्वे सत्यपवादत्व'मिति

### ❀ सदाशिवभट्टीयम् ❀

वदित्यतिदेशस्यावश्यकत्वाच्चेत्याहुः । **अत्वसन्तस्य** । **अनुवादकमिति** । वस्तुतस्तच्छ्रूयमाणासन्तप्रतिपत्त्यर्थं, तेन चन्द्रमयतेः क्विपि 'चन्द्र'मित्यत्र न दीर्घः, णिलोपस्य तु न स्थानिवत्त्व, दीर्घविधौ तन्निषेधात् ।

### ❀ विषमपदविवृतिः ❀

रुपसङ्ख्यानस्येष्टनियमपरत्वात्सिद्धिः, महच्छब्दे यगाद्यभावनिपातनस्वीकारापत्तेश्च । मन्मते तु शतृप्रत्ययान्तस्य यत्कार्यं तदतिदिश्यते, न तु शतृप्रत्यये परतो यत्कार्यं तदपीति दिक् ।

**अत्वसन्तस्य चाधातोः** । **तुशब्दादिति** । त्वर्थचशब्दादित्यर्थः । **अतएवेति** । 'अधातो'रित्यस्याऽसन्तांश एव सम्बन्धादेवेत्यर्थः। **अनुवादकमिति** । केचित्त्वन्तग्रहणमौपदेशिकात्वन्तप्रतिपत्त्यर्थम् । न चोपदेशे गोमानित्यतुबन्तं नात्वन्तमिति वाच्यम्, 'उपदेशे'जिति वाक्यार्थबोधस्य 'हलन्त्य'मित्येतद्वाक्यार्थबोधाधीनत्वात्तदुत्तरप्रवृतिकत्वात्पकारस्येत्सञ्ज्ञायां लोपे च कृतेऽत्वन्तत्वस्य सम्भवादित्याहुः । नन्वन्यत्र लब्धावकाशस्य परेण बाधो वक्तव्यः, न चान्यत्र दीर्घो लब्धावकाश इति, अत आह—**वचनसामर्थ्यादिति** । तथा च नुमि कृते दीर्घस्यावकाशसम्भव इति भावः ।

अयमभ्युच्चय इत्याह—**नित्यमिति**। कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः। **सामर्थ्यादिति**। वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यते इति भावः।

**धीमानिति**। न चैकानुबन्धकपरिभाषया मतुपोऽत्राग्रहणं, सूत्रन्तु सर्वादिपठितेऽनुनासिकोकारविशिष्टे 'भवतु'शब्दे चरितार्थमिति वाच्यं, पकारादेः समुदायानुबन्धत्वेऽप्यतोऽननुबन्धकत्वाभावात्। अवयवानां नान्तरीयकतया समुदायोपदेश एव ऋषितात्पर्यमित्यर्थस्य–'आदेच उपदेशे' इति सूत्रस्थभाष्यसम्मतत्वेन–यदुपदेशप्रयुक्ता यस्येत्सञ्ज्ञा तस्य तदनुबन्धताया एव स्वीकारात्।

न चोकारलोपेऽत्वन्तत्वस्याप्यभावः; उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात्। एतेन तदाश्रयणे अतुबन्तमेतन्नात्वन्तमित्यपास्तं, तदाश्रयणाभावात्।–तस्मादनुनासिकोकारविशिष्टो य उपदेशेऽत्–तदन्तस्य प्रयोगस्थस्य दीर्घ इति सूत्रार्थ इति न दोषः।

❀ अभिनव-चन्द्रिका ❀

एकानुबन्धपरिभाषयेति। तदनुबन्धकपरिभाषयेत्यर्थः।

❀ चिदस्थिमाला ❀

'अभिमान' इति सूचितामरुचिमाह—**अयमिति**। इत्याह=इत्यत आह। नन्वेवमसम्भवोऽत आह—**सूत्रं त्विति**। अव्युत्पत्तिपक्षे इति भावः। तत्र तथैव पाठादाह–**सर्वादीति**। तत्र मानमाह–**अवयवेति**।

भाष्यायुक्तं खण्डयति—**एतेनेति**। तदाश्रयणे=भूतपूर्वगत्याश्रयणे। एतेनेत्यस्यार्थमाह—**तदाश्रेति**। उकारवत्पकाराश्रयणाभावादित्यर्थः। तथा सति सूत्रार्थं निर्देष्टुमाह—**तस्मादिति**। मूले न्यूनतां

❀ ज्योत्स्ना ❀

वार्तिकमताभिप्रायेणोक्तं,'सत्यपि सम्भवे बाधनं भवती'ति भाष्यमतानुसारेणाह–**अयमभ्युच्चय इति**।

**अनुनासिकोकारविशिष्ट इति**। तदुपलक्षित इत्यर्थः। उपलक्षणत्वाव्यहितोच्चारण-

❀ सदाशिवभट्टीयम् ❀

टिलोपः स्यादिति मतेऽदोषेण कथं तदुपरि 'व्याख्यानेन निर्वाह' इति दोषो दत्तः, एतद्वचनेन निर्वाहादिति चेन्न, इदमपूर्ववचनं न, किन्तुच्छण् इत्यस्यच्छ आदेशे स्थानिवन्मूलकः, छे णकारघटकत्वमारोप्यते इत्यारोपमूलको वा, तत्राद्येऽनेकान्तवादिनामुपरि न दोषः(?)। अन्त्येतु स्वावयववावयविनि घटकत्वमारोप्यते इति तदाऽवयवत्वस्यैवाभावेन तदवयविनि तद्घटकत्वस्यारोपेऽपि नमशक्यत्व(?)व्याख्यानाश्रयस्यावश्यकत्वमिति न विरोध इति—यत्किञ्चिदेतत्। अत्रेदन्तत्त्वं—'नोपधाया' इत्युपधापदाभावे–प्रकृते कृते नुमि दीर्घस्य चारितार्थ्यसम्भवात्—तक्रकौण्डिन्यन्यायेन दीर्घेण नुमो बाधापत्तिः, तत्सत्वेऽनवकाशत्वाद्बाधे

❀ विषमपदविवृतिः ❀

इदञ्च 'निरवकाशत्वे सत्येवापवादत्व'मिति वार्तिकमताभिप्रायेणोक्तम्, 'सत्यपि सम्भवे बाधनं भवती'ति भाष्यमतानुसारेणाह—**अयमभ्युच्चय इति**। वस्तुतस्तु विद्यमानमपि परत्वमन्यत्र चारितार्थ्याभावेन विप्रतिषेधशास्त्रप्रवृत्त्यनुपयोगीत्युच्यते—'परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घ' इतिमूलग्रन्थेन। अत्रोत्सर्गे नुमि कृते अपवादस्य चारितार्थ्याभावेन नात्र 'तक्रकौण्डिन्य' न्यायविषय इति दीर्घे कृतेऽपि नुम् प्रवर्तत एव। नन्वाश्रीयमाणे एव भूतपूर्वगतिस्वीकारेप्युपदेशे पकारस्य सत्त्वेनोपदेशेऽत्वन्तस्याङ्गस्य दीर्घ इति वाक्यार्थसम्भव इत्याशङ्कां मनसिकृत्य तन्निरासाय-भूतपूर्वगत्याश्रयणेन लब्धमर्थमाह—**तस्मादिति**।

**नियमार्थमिति**। 'धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवे'ति नियम इति भावः। तेन 'उखास्रत्-ब्राह्मणी'त्यादौ नुम्ङीपौ न। न्यायप्राप्ताल्लोपाऽकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः। यद्यपि 'अञ्चतेश्चेन्नलोपिन एवे'ति नियमेऽप्यञ्चति-ग्रहणं चरितार्थं, तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमो युक्त इति बोध्यम्।

नन्वत्र धातुत्वात्कथं नुमत आह—**अधातोरिति**। न चौपदेशिकधातुविषयक एव नियमोऽस्तु, किमनेनेति वाच्यम्, औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षनियम-ज्ञापनार्थत्वात्। तत्फलं—'पर्णध्व'त्यादाविव 'गोमा'नित्यादिनामधातौ 'उगितश्चे'ति ङीबभाव इति दिक्।

क्यच्पक्षेऽल्लोपो न स्थानिवत्, क्वौ लुप्तत्वात्। अत्राऽऽचारक्विबर्वाचीनमतेन; वस्तुतो हलन्तेभ्यस्तदभाव इति—'ह्रस्वनद्याप' इत्यत्र भाष्ये स्पष्टम्।

**उभे अभ्य**। लक्ष्यानुसारेण गर्गदण्डनन्यायादत्र समुदाये वाक्यसमाप्तिरित्याह—**उभे समुदिते इति**। 'द्वे' इत्यनुवृत्त्यैव सिद्धे—'उभे'ग्रहणं स्पष्टार्थम्।

ॐ **अभिनव-चन्द्रिका** ॐ

**हलन्तेभ्यस्तदभाव इति**। तत्र हि 'मिदमिदोर्न विशेष' इत्युक्तम्। अन्यथा मित्त्वादन्त्याचः परत्वेन हलन्तेषु विशेषसत्त्वान्मिदमिदोर्न विशेष इत्यस्यासङ्गत्यापत्तेः। विस्तरस्त्वन्यत्र द्रष्टव्यः। **गर्गदण्डनन्यायादिति**। प्रकृते-उद्देश्यतापर्याप्त्यनुयोगितावच्छेदको धर्मो द्वित्वं, स एव विधेयतापर्याप्त्यनुयोगितावच्छेदक इति-अस्यात्र प्रवृत्तिः स्वविषयादिति भावः।

ॐ **चिदस्थिमाला** ॐ

परिहरति-**धातोश्चेदिति**। ननु नलोपस्य शास्त्रीयत्वेन कथं तथा नियमोऽत आह—**न्यायप्राप्तेति**। अनेन=अधातोरित्यनेन।

भाष्यसंमतमपीदं तादृशनियमलाभगमकं, न स्पष्टतरञ्च तदाह—**इति दिगिति**। द्वितीयपक्षं दूषयति—**अत्रेति**। न्यायात्=तदाश्रयणात्। **स्पष्टार्थमिति**। न च 'द्वे'इत्यस्य विधेयसमर्पकस्य कथमनुवाद्यत्वमिति वाच्यं,

ॐ **ज्योत्स्ना** ॐ

विषयत्वेनेति बोध्यम्। अत्र यद्वक्तव्यं तदुक्तम्। **नलोपिनोऽञ्चतेरिति**। यथाश्रुतार्थे तु

ॐ **सदाशिवभट्टीयम्** ॐ

पुनरुत्सर्गप्रवृत्तिर्भवतीति न दोष इति—सुधियः। केचित्त्वतुपदमौपदेशिकात्वन्तलाभार्थं, मतुप्यपि हलन्त्यमिति संस्कारानन्तरमानुमानिकादेशत्वमस्त्येवेति—अपित्युपसङ्ख्यानं नापूर्वमित्याहुः। **नलोपिन इति**। यथाश्रुते प्राङ्ब्राह्मणीत्यत्रो'गित' इति ङीबापत्तिः। **उभे**। **लक्ष्यानुइति**। वस्तुतस्तूभशब्दस्य द्वित्वावच्छिन्नबोधकत्वादुद्देश्यतावच्छेदकद्वित्वरूपमेकमेवेति न वाक्यभेदः। किञ्च विधेयतावच्छेदकभेदेन वाक्यभेदेऽप्युद्देश्यतावच्छेदकभेदे वाक्यभेद एव न, यथा 'घटपटौ स्त' इत्यत्र। ननु गर्गा इत्यत्र शतनिष्ठ-स्वत्वनिष्ठस्वत्वनिवृत्तिविधेयाधारत्वं, स्वत्वनिवृत्तिपूर्वकस्वस्वत्वप्रकारकेच्छाया दण्डनपदार्थत्वात्, एवञ्च-तिष्ठतेरेकत्वेपि विधेयतावच्छेदकं यत्तत्वम्। तथाच वाक्यभेदादेव वाक्यभेदो—नतु विधेयतावच्छेदक-

ॐ **विषमपदविवृतिः** ॐ

**नलोपिन इति**। इदं विशेषणं—'प्राङ्ब्राह्मणी'त्यत्र ङीबभावार्थम्।

यत्तु—उभेग्रहणं सामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकं; तेन समुदित इत्यर्थलाभ इति; तन्न, अशाब्दार्थत्वात्। शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतोपहसितत्वाच्च। ध्वनितञ्चेदं 'तत्—असति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते' इति ग्रन्थेन भाष्ये।

अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य—'सहग्रहणं कर्तव्य'-मिति वार्त्तिकं प्रत्याख्यातम्। तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्यान-मेवेति सुधियो विभावयन्तु।

---

### ॐ चिद्स्थिमाला ॐ

'पूर्वोऽभ्यास'इत्यत्र पूर्वशब्दस्य साकाङ्क्षत्वेन तत्र तस्य तत्त्वस्य क्लृप्तत्वात्। 'पूर्व'इति तु नानुवर्त्तते,अस्वरितत्वात्। योगविभागस्य, सञ्ज्ञान्तरकरणस्य च वैयर्थ्यापत्तेश्चेति भावः। मान्यादिसर्वग्रन्थकारोक्ति खण्डयति—यत्त्विति। इदम्=अस्याशब्दत्वम्। अन्यथा सप्तम्यन्तं न वदेत्। अत एव=तत्तदलाभादेव। यत्तु—उभे यत्र श्रूयेते तत्र सञ्ज्ञा, नत्वभ्यासलोपे इत्येतदर्थमुभेग्रहणम्, अन्यथा ऐर्त्सनादौ अभ्यस्ताश्रयो झेर्जुस् स्यात्,

### ॐ ज्योत्स्ना ॐ

'प्राङ् ब्राह्मणी'त्यत्राप्युगितश्चेति ङीप्प्रसङ्ग इति बोध्यम्। असति प्रयोजने इति। प्रयोजनाभावे सत्यशब्दार्थप्रयोजनवत्त्वोक्तेरुपहासपरत्वदिति भावः। अभिप्रेतप्रयोजनवत्त्वस्यान्यथासिद्धत्वाच्चेत्याह—अत एवेति। विभावयन्त्विति। उभेग्रहणात्सहभावोपसर्जनद्वित्वविशिष्टबोध इति व्याख्यानवता-मुपाध्यायानान्त्वयं भावः, यथेकोगुणवृद्धी इति सूत्रे गुणवृद्धिग्रहणानुवृत्तौ पुनर्गुणवृद्धि ग्रहणादाश्रितशब्दस्वरूपव्यापारयोर्गुणवृद्ध्योर्बोधः, एवं द्वे इत्यनुवृत्त्यैव सिद्धौ पुनरुभेग्रहणाद्व्या-सज्यवृत्तित्वेन द्वित्वावच्छिन्नबोधः। गर्गदण्डन्यायेनोक्तार्थलाभस्तु पाक्षिकः। 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ता'मित्युक्ते प्रयोजकव्यापारस्य समुदायविषयत्वेऽपि प्रयोज्यव्यापारस्यादनरूपतत्फलस्य तृप्तिरूपस्य प्रत्येकवृत्तित्वेन भाष्यकृता प्रदीपे दर्शितत्वादित्याहुः। ऐर्त्सेत्यादौ जुसभावार्थमुभे-

### ॐ सदाशिवभट्टीयम् ॐ

भेदादिति स्वीकारेण प्रकृतेविधेयताया अभेदेनादोषात्। यद्वा स्वत्वं न विधेयतावच्छेदकम्, आनन्त्य-प्रसङ्गात्, अपितु स्वस्वत्वेनानुगतरूपेणेति न विधेयतावच्छेदकं भिन्नम्। न च ज्ञाननिवृत्तिर्गर्गेषु नास्तीति वाच्यम्, एकदेशद्वारा सत्त्वादित्यलम्। असतीति। प्रयोजनाभावे सत्यशब्दार्थप्रयोजन-

### ॐ विषमपदविवृतिः ॐ

'उगितश्चे'ति सूत्रे भाष्ये तु—'अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातो'रित्येव नियम-शरीरमुक्तं कैयटेन। न च 'नाञ्चेः पूजाया'मिति यदा न नलोपस्तदा प्रतिषिध्यते तदापि ङीप् भवतीत्युक्तम्। असति प्रयोजन इति। प्रयोजनाभावे सत्यशब्दार्थप्रयोजनार्थत्वोक्ते-रुपहासपरत्वामिति भावः। विभावयन्त्विति। केचित्तु यथे'को गुणवृद्धी'इति सूत्रे गुणवृद्धिग्रहणा-नुवृत्तौ पुनर्गुणवृद्धिग्रहणादाश्रितशब्दस्वरूपव्यापारयोर्गुणवृद्ध्योर्बोधः। एवं द्वे इत्यस्याऽनुवृत्त्यैव सिद्धे पुनरुभेग्रहणाद्द्वित्वपर्याप्त्याश्रयसमुदायबोधो 'गर्गदण्डन'न्यायेन। उक्तार्थलाभस्तु—पाक्षिकः। 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ता'मित्युक्ते प्रयोजकव्यापारस्य समुदायविषयत्वेपि प्रयोज्यव्यापारान्नफलतृप्तेः प्रत्येकवृत्तित्वेन भाष्यकैयटाभ्यां प्रदर्शितत्वात्। तस्मादुभेग्रहणं सहार्थ-मिति कैयटोक्तमपि युक्तमेवेत्याहुः। 'ऐर्त्स'मित्यादौ जुसभावार्थं तूभेग्रहणं स्यादिति आक्षिप्येदं

तत्र ध्यादिशब्दानामेकापायेऽप्रवृत्तेः 'ऐर्त्स'न्नित्यादावभ्यासलोपे कार्यकालपक्षे न सञ्ज्ञेति न जुस् । एकादेशात्पूर्वमायन्नादिषूपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशेऽपि 'सर्वे सर्वपदादेशा' इति न्यायेन स्थानिवद्भावाज्झित्वेन जुसापत्तिः ।

किञ्चैकादेशे जुसोऽपवादविषयस्य जायमानत्वेन 'प्रकल्प्य चापवादविषय'मिति न्यायेन पूर्वमन्तिभावाप्रवृत्तौ एकादेशे जुसापत्तिः। यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाभ्यासलोपे सत्त्वेऽपि पञ्चमीसमासेनैकादेशस्य स्थानिवत्त्वान्न तत्प्रवृत्तिः । अत एव 'अत्यैषिष'न्नित्यादौ न दोष इत्यलम् ।

**नाभ्यस्ता।** बहुयोगव्यवच्छिन्नोऽपि नुमिहानुवर्त्तते, सामर्थ्यात्तदाह—**नुम्नेति।**

ॐ अभिनव-चन्द्रिका ॐ

एकापाये इति । तत्र द्वित्वाभावादिति भावः । कुत्वस्यासिद्धत्वे शबुध्यैत्र जश्त्वप्रवृत्ति-

ॐ चिदस्थिमाला ॐ

र्त्सेनादौ–नाभ्यस्तादिति नुम्निषेधश्च स्यादिति, तत्रेत्याह—**तत्रेति** । तस्मिन्सतीत्यर्थः । **एकादेशादिति** । 'अन्यथे'त्यादिः। शपा सह पररूपादित्यर्थः । शित्वार्थमाह–**सर्व इति** । अभ्युपत्येदं, वस्तुनः स एवादौ नेत्याह–**किञ्चेति** । एकादेशे–कृते सति। अपवादशब्दो धर्मपरः, तदाश्रयस्य अपवादस्येति यावत्। 'प्रकल्प्य-चे'ति पाठः । ननु कार्यकाले तथा वारणेपि यथोद्देशे दोष एवात आह–**यथोद्देश इति** । उक्तरीत्या अनि-र्वाहादस्यावश्यकतामाह—**अत एवेति** । पञ्चमीसमासस्वादेवेत्यर्थः । एतेन पञ्चमीसमासस्य पाक्षिकत्व वदन्तः परास्तास्तदाह—**इत्यलमिति ।**

ॐ ज्योत्स्ना ॐ

ग्रहणं स्यादित्याक्षिप्य समाधत्ते—**तत्रेति** । यथोद्देशपक्षे तु भाष्यकृता कण्ठरवेणोक्तं समाधान-मनुपदमेव वक्ष्यते। ननु झस्यान्तादेशो न झेरिति स्थानिवद्भावेन झित्वाभावाज्जुसनापत्तिरत आह—**एकादेशादिति** । वर्णद्वयाश्रितत्वेनान्तरङ्गत्वात् सनकार–शबकारयोरेकादेशादित्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

कथनस्योपहासपरत्वादिति भावः । **अन्तरङ्गत्वादिति** । वस्तुतो बोभवत्वित्यत्राभ्यस्तस्वरानापत्त्येदमा-यन्सूत्रविषयकमेव, अन्यथाऽन्तरङ्गत्वादन्त्यादेशे तदा शप एवाभावेन तद्विचारासङ्गतिः । एवञ्चान्तरङ्गत्वा-दित्ययुक्तमेवेति बोध्यम् । किञ्चेत्यप्ययुक्तमेव, 'अजक्षु'रित्यत्र जुसश्चारितार्थ्येन सामर्थ्याभावात्, सामर्थ्यमूलक एव प्रवृत्तेः। तत्रापि शबभ्यस्तसञ्ज्ञाद्यपेक्षया बहिरङ्गत्वादन्तिः स्यादेवेति सामर्थ्यं सूपपाद-मिति केचित्। **न दोष इति** । वस्तुन ऐर्त्सन्नित्यत्रैकादेशे परादिवत्त्वेन झित्वेप्यभ्यस्तत्वाभावः। नचैकदेशविकृतन्यायेन तत्त्वं, तस्य फलाभावेनानाश्रयणात् । अत एव स्थानिवत्सूत्रे इमामुपन्यस्यैकदेशवि-कृतस्येति वक्तव्यमित्युक्तम्। तत्र 'वक्तव्यं भवती'त्येव फलमुक्तं, न लक्ष्यसिद्धिरूपमुक्तं भाष्ये । तदाश्रयणे-वाऽर्द्धविकारे तदप्रवृत्तिरेवेत्यत्राभ्यस्तत्वाभावादेव न दोषः। एवञ्च समासानाश्रयणेपि न क्षतिः। अभ्यस्ता-द्विहितत्वेन वारणं त्वयुक्तमेव, 'जुहुवतु'रित्यत्राभ्यस्तत्वानापत्तेः। साहचर्यमपि पूर्वमुक्तमित्यलम् ।

ॐ विषमपदविवृतिः ॐ

प्रयोजनं कार्यकालपक्षे ? आहोस्विद्यथोद्देशपक्षे वा ?, नाद्य इत्याह–**कार्यकालपक्ष इति** । ननु उक्त-समाधानप्रयासो व्यर्थः, अन्तरङ्गत्वादन्तादेशे श्रौतस्थान्यादेशभावमादायातीत्यत्र न झित्वम्, तथाचान्तिभावे कृते न जुसापत्तिरित्याशङ्क्याह—**अन्यथेति** । ध्यादिशब्दानामेकापाये प्रवृत्त्य-भावस्यानङ्गीकारे । **एकादेश इति** । शप्सनोरकारयोरेकादेशे । नान्त्य इत्याह—**यथोद्देशे इति ।**

दाञः शतरि शपः श्लौ 'श्लौ' विति द्वित्वेऽभ्यासह्रस्वत्वे 'श्नाभ्यस्तयो'रित्यालोपे 'दद्'दिति।

**त्यदादिषु** । आलोचनमिह—ज्ञानमात्रम् ।

**आम्** । 'दृग्दस्वतु'ष्विति सूत्रमनुवर्तते। **षत्वापवादत्वादिति** । 'कुः क्विन्यतः' इति न्यासेन 'दृष्ट' इत्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थादौ वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषयं लक्षणमचरितार्थमिति भावः ।

**खकार इति** । अघोष-महाप्राण-शकार-तुल्यत्वादिति भावः। **कैयटेति** । 'क्विन्प्रत्ययस्ये'तिसूत्रस्थेत्यादिः ।

**असिद्धत्वादिति** । यद्यपि जश्त्वापवादोऽपि कुत्वं, तथापि शस्थानिकजश्त्वस्यैव, न तु खस्थानिकस्यापीति भावः । वस्तुत इदं चिन्त्यं, प्रत्ययग्रहणस्य बहुव्रीहि-

❀ अभिनव-चन्द्रिका ❀

दुर्वारेति शङ्कां वारयति—न तु खस्थानिकेति । ननु यम्प्रतीत्यनेन कुत्वैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र पूर्वपदार्थे जश्त्वातिरिक्तत्वेन सङ्कोचात्कथं जश्त्वदृष्ट्याऽसिद्धत्वमिति चेन्न, अपवादसूत्रारम्भसामर्थ्येनापवादप्रवृत्तिप्राक्क्षणेऽपवादशास्त्रस्यासिद्धत्वाभावबोधनेन तस्य चारितार्थ्यात् । सर्वथाऽसिद्धत्वबाधे प्रमाणाभावेनात्र कुत्वप्रवृत्तिप्राक्काले तस्यासिद्धत्वाभावेऽपि तत्प्रवृत्त्युत्तरकुत्वस्यासिद्धत्वेन तद्दृष्ट्या तस्य तत्रापि प्रवृत्तिमत्त्वेन तदप्रवृत्तेरित्याशयात् ।

❀ चिदस्थिमाला ❀

अन्याप्रसक्तेराह—सामर्थ्यादिति । निषेधसामर्थ्यादित्यर्थः । मात्रमिति । ननु पश्यार्थैरित्यत्रेव चाक्षुषमात्रं, गमकाभावादिति भावः । ननु सूत्रस्य साफल्ये कथमपवादत्वमत आह—कुरिति । कुत्वमिति । अत एव षत्वाद्यपवादत्वादिति कैयटः । मात्रमवधारणे । अत एव निर्देशाश्रयणेऽपि न फलम् । एतेन—'एतावत्—कैयटादिमतं संदूष्य तदेव ज्ञापकाश्रयणेन समाधत्ते—'दिगादौ'ति

❀ ज्योत्स्ना ❀

जुसापत्तिरिति भावः । **इदञ्चिन्त्यमिति** । जश्त्वं प्रति कुत्वस्यासिद्धत्वादिनीदमित्यर्थः । **जश्त्वे षत्वापवादता न युक्तेति** । वस्तुतस्तु प्रत्ययग्रहणफलीभूतबहुव्रीहिफलत्वे न मानं, 'स्र'गिति भाष्यकृतोदाहरणात्षत्वापवादत्वमपि तदभिप्रेतमेव, अन्यथा सृजेर्विशेषविहितेन षत्वेन पदान्ते रज्जुसृड्भ्यामित्यादाविव कुत्वबाधप्रसङ्गात्तदसङ्गतेः । न च कुत्वे तस्यासिद्धत्वात्षत्वं जश्त्वञ्च स्यादिति वाच्यम्, एवमपि 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनःकुत्वाप्रवृत्तेः; प्रथमप्रवृत्तकुत्वप्रवृत्तेर्व्यर्थकत्वात्, उदाहरणासङ्गतेस्तदवस्थत्वाद्वचनसामर्थ्यादसिद्धत्वबाधनात् । स्पष्टञ्चेदं 'क्विन्प्रत्ययस्ये'त्यत्र भाष्यप्रदीपयोः। एवं स्थिते तादृग्भ्यामित्यादौ शस्य कुत्वेन खकारेऽसिद्धत्वाभावाच्च-षत्वं न प्रवर्तते, जश्त्वन्तु प्रवर्तत एव, दिगा-

❀ सदाशिवभट्टीयम् ❀

केचित्तु देवदत्तादयो भोज्यन्तामिति स्वीकारे प्रत्येकमर्थापत्तिरित्युभेयग्रहणमित्याहुः । **चिन्त्यमिति** । केचित्तु बहुव्रीहिफलत्वे न मानम्, स्रगिति भाष्योदाहरणेनापवादत्वं युक्तमेव, अन्यथा 'रज्जुसृड्भ्या'-

❀ विषमपदविवृतिः ❀

**श्लाविति द्वित्वे इति** । अन्तरङ्गत्वात् 'श्नाभ्यस्तयो'रित्यालोपं बाधित्वेति शेषः । **श्नाभ्यस्तयोरात इति**। न चालोपे कर्तव्ये शपः श्लोः स्थानिवद्भावः शङ्क्यः,तस्याऽपरनिमित्तकत्वात् ,अभ्यस्तग्रहणस्याचारितार्थ्याच्च । आदन्तस्य यङ्लुक्यभिधाने दृढप्रमाणाभावात् । **इह ज्ञानमात्रमिति** । न तु पश्यार्थैरित्यत्रेव चाक्षुषमित्यर्थः । **इदं चिन्त्यमिति** । केचित्तु 'क्विन्प्रत्ययस्य कु'रिति सूत्रे भाष्ये प्रत्ययग्रहणं अतद्गुणसंविज्ञानबहुव्रीहिविज्ञानार्थं. तेन सम्प्रति क्विनोऽभावेपि कुत्वं, 'मानो अस्राक्' 'मानो अद्रा'गित्युक्तम् । तदेतत्कुत्वस्य षत्वापवादत्वाभावे न सङ्गच्छत, 'रज्जुसृड्भ्या'

मात्रफलकताया एव भाष्यकृतोक्तेः । तस्माद्धृक्—अञ्चु—युजि—क्रुञ्चु अस्य चारितार्थ्येन जश्त्वषत्वापवादता न युक्तेति । तदेत'न्मते' इति वदता सूचितमिति दिक् ।

**नगिति** । ष-ड-ग-काः प्राग्वत् । **नञ्चामिति** । 'मस्जिनशो'रिति नुम् तु न; धातुप्रत्यये तद्विधानात् ।

**स्पृशोऽनु** । अनुदके किम् ?—उदकस्पर्शः ।

**अन्तोदात्तत्वमिति** । नित्त्वादाद्युदात्तत्वं प्राप्तम् । कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादाह—**कुत्वात्पूर्वमिति** ।

**र्वोरु** । 'सिपि धातो'रित्यतो 'धातो'रिति वर्त्तते, तच्च र्वाभ्यां विशेष्यते । पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वेऽल्लोपो न स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात् ।

---

❀ अभिनव-चन्द्रिका ❀

**उदकस्पर्श इति** । ननु तत्सत्त्वेऽपि वासरूपन्यायेनाणि अस्येष्टत्वादिदं प्रत्युदाहरणं चिन्त्यमिति चेन्न, उदकस्पृङित्यस्योपलक्षणत्वेनादोषात् । **पूर्वत्रासिद्धे तन्निषेधादिति** । नच पद-

❀ चिदस्थिमाला ❀

इति शास्त्र्युक्तमपास्तं. तदाह–**इतिदिगिति** । निपातनोपयोगमाह–**नित्वादिति** । रेफवान्तस्य धातोरिति-व्याख्यानवीजमाह-**सिपीति** । पिपठीरित्यस्य प्रक्रियामाह-**पिपेवि** । **प्रातीति** । कृदन्तत्वेनेत्यादिः ।

❀ ज्योत्स्ना ❀

दिभ्यो यदिति–निर्देशश्चात एव सङ्गच्छते । तथासत्युपयद्काम्यतीति 'काम्यच' सूत्रस्थो, रज्जुसृग्भ्यामित्यादिः 'सृजिदृशो'रिति सूत्रस्थो भाष्यप्रयोगश्च कथं सङ्गच्छतामिति? ।–तत्रेदमुत्तरं–'क्विन्प्रत्ययोयस्मादिति बहुव्रीह्यभिधेयावधित्वस्य सृजौ निरुपपदलक्षणस्य यजावनुपगोपपदलक्षणस्यैवाश्रयणाददोषादिति दिक् । **तन्निषेधादिति** । नच 'वेतस्वा'नित्यत्र पदान्ते इत्यत्र पदेऽन्त इत्यर्थेन स्थानिवत्त्वनिषेध-

❀ सदाशिवभट्टीयम् ❀

मित्यत्रैव षत्वापत्तेः । नच कथमुपयट्काम्यतीत्यत्र षत्वं, बहुव्रीह्यभिधेयापेक्षावधित्वस्य सृजो निरुपपदलक्षणस्य प्राद्युपसर्गोपपदलक्षणस्य चाश्रयणेनादोषादित्याहुः । **तन्निषेधादिति** । ननु पदचरमावयवविधाय-

❀ विषमपदविवृतिः ❀

मित्यादाविव कुत्वमपवादत्वाद्बाधित्वा षत्वापत्तेः । न चो'पपयट्काम्यति' 'रज्जुसृड्भ्या'मिति भाष्यप्रयोगौ कथं सङ्गच्छेतामिति वाच्यं, क्विन्प्रत्ययो यस्मादिति बहुव्रीह्यवधित्वस्य सृजौ निरुपपदलक्षणस्य यजौ अनुपसर्गोपलक्षणस्यैवाश्रयणेनादोषादित्याहुः । **षडगकाः प्राग्वदिति** । ईदृशे विषये जश्त्वापवादत्वं चर्त्वस्य नेत्यनेन सूचयति । **उदकस्पर्श इति** । केचित्तूदकस्पृङिति प्रत्युदाहरणमुचितम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीह्यर्थावधित्वस्योदकाभिन्नोपपदलक्षणस्यैवाश्रयणेन कुत्वस्याप्रवृत्तेः । न चैवं त्यदादिषूपपदेषु दृशेः क्विनो विधानेन केवले दृगित्यादौ कुत्वं न स्यादिति वाच्यम्, त्यदाद्युपपदस्य दृशः क्विन्प्रत्ययप्राग्वर्तित्वेन दृष्टत्वेन केवले तत्त्वस्यार्थात्सिद्धेः । 'उदकस्पर्श' इति तु न युक्तम्, वासरूपन्यायेन कर्मण्यणः पक्षे इष्टत्वादित्याहुः ।

**नित्त्वादिति** । न च स्वरे प्रत्ययलक्षणाभावात्कथमेतदिति वाच्यम्, एकपदस्वरे लुमता लुप्ते प्रत्ययलक्षणाभावेऽपि तदन्यत्र तत्सत्त्वात् । **पूर्वत्रासिद्धे तन्निषेधादिति** । न च 'वेतस्वा'नित्यत्र

नुम्वि । 'इण्को'रिति वर्तते । व्यवधानेऽप्राप्तेरिदम् । अयमप्यधिकारः । अत एव 'निंस्स्वे'त्यत्र धातोः सस्य नानेन षत्वम् । 'व्यवाय'शब्दस्य प्रत्येकं सम्बन्धो—व्याख्यानात्, तदाह—**प्रत्येकमिति** । अपिनाऽव्यवधानेऽपि । **नुम्स्थानिकेति** । प्रकृतसूत्रस्थं, हयवरट्सूत्रस्थञ्च भाष्यमत्र मानम् ।

ॐ अभिनव-चन्द्रिका ॐ

चरमावयवातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात्कथमत्र तेन निषेध इति वाच्यं, यस्मिन्प्रत्यये परतोऽच् लुप्यते तच्छ्रूयमाणप्रत्ययाव्यवहितपूर्वत्वविशिष्टपदसञ्ज्ञात्रचरमावयवकत्रैपादिकस्य ग्रहणेनात्र लोपनिमित्तकश्रूयमाणप्रत्ययाभावेनादोषादित्यन्यत्र विस्तरः ।

ॐ चिदस्थिमाला ॐ

निर्दिष्टपरिभाषाप्रवृत्तेराह—**व्यवेति** । सिद्धान्तमतमाह—**अयमिति** । अपिना—इण्कोरित्यादि । द्वन्द्वान्ते इति न्यायात्, 'निसेः प्रतिषेधो वक्तव्यः'—इति वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्याच्चाह—**व्याख्यानादिति** ।

तत्रोपलक्षणत्वांशे आह—**प्रकृतेति** । 'निंसेः प्रती'तिवार्तिकं, व्यवधानाश्रयणेन तत्प्रत्याख्यानपरं भाष्यं-चेत्यर्थः । नुम्स्थानिकत्वांशे आह—**हयेति** । संयोगान्तलोपविषयेऽकृतेत्यनया पूर्वं सन्निमित्तकषत्वा-

ॐ ज्योत्स्ना ॐ

परभाष्यप्रामाण्यात्—'पूर्वत्रासिद्धे न स्थानिव'दित्यत्र पदचरमावयवातिरिक्तस्यैव त्रैपादिकस्य ग्रहणा-द्वैतस्थानित्यत्र 'पूर्वत्रासिद्धे न स्थानिव'दिति निषेधो न प्रवर्तते—इति 'न पदान्ते'तिसूत्रस्थस्वग्रन्थ-विरोध इति वाच्यं, लोपसमाननिमित्तकपदत्ववच्चरमावयवविधायकातिरिक्तत्वस्य तत्र विवक्षि-तत्वादित्याशयात् । **नानेन षत्वमिति** । सति त्वस्याधिकारत्वे सकारस्यादेशरूपत्वं प्रत्ययावयवत्वं नास्तीति न षत्वम् ।—अस्य स्वतन्त्रविधित्वे तु स्यादिति भावः । **प्रकृतसूत्रस्थमिति** । 'नुम्विसर्जनीये'ति सूत्रस्थं,—'प्रत्येकं—व्यवधानाश्रयणे नित्यः प्रतिषेधो वक्तव्यः'—इति वार्तिकप्रत्याख्यानपरमित्यर्थः ।

ॐ सदाशिवभट्टीयम् ॐ

कातिरिक्तस्य ग्रहणादत्राप्रवृत्तिरेव स्यात्, 'न पदान्ते'ति सूत्रशेखरविरोधश्चेति चेन्न; लोपसमाननिमित्तक-पदचरमावयवविधायकातिरिक्तस्य तत्र विवक्षणमित्याशयात् । ननु 'कौ लुप्त'मित्येव दोष इति वाच्यं, पिपठि-षतेः क्विन्निमित्तकाल्लोपस्य कौ लुप्तत्वाभावात्, तस्यासार्वत्रिकत्वाच्च । पदसञ्ज्ञानिमित्तकप्रत्यय-निमित्तकाभावादेशविषयत्वस्य वा परिष्कारेणादोषात् । तस्मिन् प्रत्यये परे यो लोपः तस्मिन् प्रत्यये परे एव कार्ये कर्त्तव्य इत्यर्थे वा न दोषः । तद्धितनिमित्तकलोपातिरिक्तलोपो न स्थानिवदित्यर्थो वा । तेन पटयतेः पडित्यत्र, जनयतेः जन् ततो जात इति लापनेन जज्ञात इत्यत्र श्चुत्वं, सिद्धमन्यथा निषेधाप्रवृत्त्या लोपस्य स्थानिवत्त्वात्तदनापत्तिरिति । श्रूयमाणप्रत्ययनिमित्तकपदचरमावयवातिरिक्त इति वा निवेशनीय इति सुधियः । **नुम्स्थानिक इति** । शरिति प्रत्याहारग्रहणम्, अत्र मानं—तदभावे केवलानुस्वारोपलक्षणार्थमेव

ॐ विषमपदविवृतिः ॐ

पदेन्त इत्यर्थेन स्थानिवत्त्वनिषेधपरभाष्यप्रामाण्यात्पूर्वत्रासिद्धे न स्थानिवदित्यत्र पदचरमावयवा-तिरिक्तस्य पूर्वत्रासिद्धस्य ग्रहणाद्वैतस्थानित्यत्र पूर्वत्रासिद्धे न स्थानिवदिति निषेधो न प्रवर्तत इति 'न पदान्त'सूत्रस्थस्वग्रन्थविरोध इति वाच्यम्, भसञ्ज्ञाप्रयोजकप्रत्ययपरकत्वादिनिमित्तकपदत्व-वच्चरमावयवातिरिक्तस्येत्यर्थेनादोषात् । **नानेन षत्वमिति** । सति त्वस्याधिकारत्वे उत्तरसूत्रैक-वाक्यतयाऽऽदेशप्रत्यययोरेवानेन षत्वविधानाच्च कश्चिद्दोषः । **प्रकृतसूत्रस्थमिति** । 'नुम्विसर्जनीय-शर्व्यवाये—निंसेः प्रतिषेधः, निंस्से, निंस्स्वे'ति प्रकृतसूत्रस्थं भाष्यं प्रत्येकं व्यवधानेन इत्यत्र मानम्,

**व्रश्चेति ष इति ।** सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायान्त्रिपादीस्थस्याप्रवृत्ते-र्हल्ङ्यादिलोपोत्तरं—विविश्स्—इत्यवस्थायां षत्वस्याऽसिद्धत्वात्संयोगान्तलोपे ष इत्यर्थः ।
**कलोप इति ।** पदान्ते संयोगादिलोपस्य संयोगान्तलोपापवादत्वादिति भावः ।

**तडिति ।** तक्ष्णोतेः क्विप् । **ण्यन्ताभ्यामिति ।** णिलोपस्य स्थानिवत्त्वात् 'तक्स्थाते'त्यादौ संयोगादिलोपाप्राप्तेः 'काष्ठशगेव नास्ति, कुतः 'काष्ठशक्स्थाते'ति 'परेश्च घाङ्कयो'रितिसूत्रस्थभाष्येण न विरोधः । तत्र झल्परसंयोगादिलोपमाशङ्क्य तथोक्तम् ।

ॐ चिदस्थिमाला ॐ

प्राप्तेराह—**व्रश्चेतीति** ।–न युक्तं–तस्या असत्त्वात्, तद्धनयन्नाह—**सपादेति** । ननु 'परेश्चे'ति सूत्र-भाष्यप्रामाण्यादेताद्दृशेभ्यः क्विपेव दुर्लभोऽत आह—**णिलोपस्येति** । तदेवाह—**तत्रेति** । तथाचाण्यन्त-विषये एव तदभावाङ्गीकारो न ण्यन्त इति भावः । यत्तु—क्वौ लुप्तमिति निषेधो दुर्वारः, अत एवमधु-श्चुतमाचष्टे मधुगिनीष्यते इति 'स्वरितो वे'ति सूत्रस्थकैयट. सङ्गच्छते, अन्यथा णिलोपस्य स्थानिवत्त्वात्संयो-

ॐ ज्योत्स्ना ॐ

**हयवरट्सूत्रस्थमिति ।** 'अवश्यं नुमो ग्रहणं कर्त्तव्यं, नुमो योऽनुस्वारस्तत्र यथा स्यादिह माभूत्-पुंस्वितो'त्यर्थः । **भाष्यमत्रेति ।** प्रत्येकं व्यवधानाश्रयणे नुम्स्थानिकाऽनुस्वारोपलक्षणे चेत्यर्थः ।
**सपादसप्ताध्यायीस्थकार्येति ।** अत्र सपादसप्ताध्यायीशब्देन षत्वशास्त्रात्पूर्वः सूत्रसमुदायो लक्ष्यते, तत्स्थकार्यशब्दस्तु प्रकृते—संयोगान्तलोपाभिधायकः । **त्रिपादीस्थस्याप्रवृत्तेरिति ।** अकृतव्यूह-परिभाषयेतीह—विवक्षितं, न तु कार्यासिद्धत्वमाश्रित्य–निरधिष्ठानारोपासम्भवेन जातस्य कार्यस्य निवृत्तिः क्रियते, शास्त्रासिद्धत्वसिद्धान्तात्, तत्राप्यौजढदित्यादावन्तरङ्गत्वाड्ढत्वादौ कृते ढशब्दस्यैव 'ह्–त'शब्दबुद्ध्या द्वित्वमिति प्राग् व्याख्यातत्वात् । यत्तु—'षत्वस्यासिद्धत्वादिति क्वाचित्कोऽपपाठः, अफलत्वा'दिति बृहच्छेखरे उक्तम्, तदकृतव्यूहपरिभाषामाश्रित्येत्याहुः । **षत्वस्यासिद्धत्वादिति ।** झलि परे षत्वस्यासिद्धत्वादित्यर्थः । **संयोगान्तलोपे ष इति ।** पदान्ते ष इत्यर्थः । ननु तक्षि-रक्षिभ्यां ण्यन्ताभ्यां णेः स्थानिवद्भावस्य संयोगादिलोपे 'पूर्वत्रासिद्धे न स्थानिवत्—'इत्येतत्प्रति-प्रसवे सत्यपि 'क्वौ लुप्त'मित्यनेन तन्निषेधे संयोगादिलोप एवोचितः, अन्यथा 'तक्स्थाते'त्यादौ झलि संयोगादिलोपप्राप्तिस्तदवस्था, सा च 'काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाते'ति भाष्यविरुद्धेत्या-शङ्कायामाह—**णिलोपस्येत्यादि ।** **न सार्वत्रिकमिति ।** सति गमकत्वस्यैव तदिति–'सख्युर्गोमान्'

ॐ सदाशिवभट्टीयम् ॐ

नुम्ग्रहणमावश्यकं शर्ग्रहणे तु केवलानुस्वारस्य तद्घटकत्वेन ग्रहणे सिद्धे नुम्ग्रहणं सामर्थ्यात् तत्स्थानि-कानुस्वारोपलक्षणार्थम् । नुम् शुद्धस्तु न गृह्यते, विसर्गसाहचर्येणायोगवाहस्यैव ग्रहणात्, नुम्स्थानिकानुस्वार एव पर्यवसन्न इति बोध्यम् । **तकिति ।** नन्वत्र संयोगादिलोपे तस्यासिद्धत्वेन पुनः संयोगान्तलोपस्य प्राप्तिरेवेति चेन्न, तक्रकौण्डिन्यन्यायस्य त्रिपाद्यां स्वीकारेणादोषात् । एतन्मूलकमेव यं प्रत्यपवादत्वं तस्यासिद्धं नेत्युक्तम् । इदमेव त्रिपाद्यां न्यायप्रवृत्तौ मूर्द्धाभिषिक्तोदाहरणमित्यलम् । **षत्वस्यासिद्धेति ।** अन्यथा

ॐ विषमपदविवृतिः ॐ

'अवश्यं नुमो ग्रहणं कर्त्तव्यम्—अनुस्वारविशेषणं नुम्ग्रहणं, नुमो योऽनुस्वारस्तत्र यथा स्यात्—इह मा भूत्पुंसु–'इति हयवरट्सूत्रस्थं भाष्यं तु 'नुम्स्थानिके'त्यर्थे मानमिति बोध्यम् ।
**सपादसप्ताध्यायीस्थे कार्ये इति ।** अत्र सपादसप्ताध्यायीशब्देन षत्वशास्त्रात्पूर्वः सूत्रसमुदायो

**तस्य दोष इति।** 'कौ लुप्त'मिति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः। **कुत्वस्यासिद्धत्वादिति।** 'पिपच् स्'—इत्यवस्थायाङ्कुत्वस्यासिद्धत्वात्तदभावे 'स्को'रित्यस्याऽप्राप्तेः संयोगान्तलोप इति भावः। **दिधगिति।** 'दादे'रिति घः। 'एकाचः' इति भष्भावः। **विद्वानिति।** 'विदेः शतुर्वसु'वदादित्वाच्छपो लुकि शतुर्ङित्त्वाद्गुणाभावे उगित्त्वान्नुमि 'सान्ते'ति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न।

**वसोः।** प्रत्ययग्रहणे तदन्तग्रहणं, 'भस्ये'त्यधिकारः, तदाह—**वस्वन्तस्येत्यादि।** न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैव ग्रहणं स्यान्न लिडादेश-क्वसोरिति वाच्यं; 'वसु'सादेशेन तस्यापि ह्यनुबन्धकत्वादिति भाष्ये स्पष्टम्।

❀ चिद्स्थिमाला ❀

गादिलोपो दुर्लभः,—नच सकारोपदेशसामर्थ्यात्स इति कैयटाशयः, संयोगान्तलोपेऽपि सस्य कुत्वे 'वो'रिति दीर्घे मधुगिति रूपसिद्ध्यर्थं तस्यावश्यकत्वादिति, तन्न; तस्याश्रयणे दृढतरमानाभावेन, 'नपदान्ते'ति सूत्रे तक्षयतेस्तगिति कैयटविरोधेन च तस्य कैयटस्य प्रौढिवादपरत्वात्तदाह—**इत्यन्यत्रेति।** उद्योतादावित्यर्थः। उत्तरशेषकुत्वस्येत्याद्यपाठः(?) 'सनोऽल्लोपस्य स्थानिवत्त्वेनापि वारणसम्भवा'दिति कश्चित्,'न्याय्यकथनपरमेतत्, सिद्धत्वेऽपि संयोगादिलोपाप्राप्ते'रिति शास्त्री, तदुभयमसङ्गतमित्यत आह—**पिपचिति।** तदभावे=ककाराभावे। यद्यपि सकलग्रन्थकारोक्तप्रकारेणाप्यत्र निर्वाहस्तथापि भाष्योक्तमेवाह—**वसुसेति।**

❀ ज्योत्स्ना ❀

पदस्त्वन्व कौ लुप्तस्य निदर्शन'मिति तदुदाहरणं शब्दकौस्तुभग्रन्थे स्पष्टम्। **अन्यत्र विस्तर इति।** 'दीधीवेवीटाम्'–'अचःपरस्मिन्'–इत्यादिसूत्रस्थभाष्याद्याकरग्रन्थेषु इत्यर्थः। एतेन 'तक्षयतेः—त'गिति 'न पदान्ते'तिसूत्रस्थः प्रदीपग्रन्थो व्याख्यातः। नन्वेवं मधुश्चुतमाचष्टे मधुगिति 'स्वरितोवानुदात्ते पदादा'विति सूत्रस्थतदीयग्रन्थान्तरस्य का गतिः?, श्चोततेरुपदेशे सकारादित्वमेवेति ब्रूमः। न च सन्श्चोततीत्यादौ शितुग्व्यावृत्तिस्तत्फलमिति वृहच्छेखरोक्तिर्युक्ता। तावन्मात्रार्थकत्वे श्चुत्वं धुटि सिद्धं वक्तव्यं–विनिमाय—'शितुगश्चुती'ति न्यासेनैव सर्वसामञ्जस्ये सकारोपदेशत्वस्य मधुगित्येतत्फलकत्वावधारणादिति दिक्। **पिपच्सित्यवस्थायामिति।** चत्वस्यासिद्धत्वादित्यनेन तुल्ययोगक्षेमतया कुत्वस्यासिद्धत्वादित्येतद्व्याख्येयमिति भावः। **वसुसादेशेनेति।** नन्वेवमपि

❀ सदाशिवभट्टीयम् ❀

'षढोःक' इत्यापत्तिः, तर्हि तन्निमित्तलोपातिरिक्तनिवेशे पदचरमावयवेति न निवेशनीयमित्यपि लाघवमिति। पडित्यत्र तु न दोषः, श्रूयमाणतद्धितेनेति निमित्तत्वादिति दिक्। **विस्तर इति।** ननु मधुश्चोततीति मधुगिति कथमिति चेत्,अयं सोपधः, तेन संयोगादिलोपे इष्टसिद्धिरिति केचित्। **दिधगिति।** ननु दिदहित्युपदेशाभावाश्रयणेनापि दहित्युत्तरखण्डस्योपदेशत्वम्, आगन्तूनामन्ते निवेश इति तस्य तत्वाभावात्। न च स्थानिवत्त्वेन विशिष्टे तत्त्वम्, स्थाने द्वित्वानङ्गीकारात्। किञ्च स्थानिवत्त्वेनोपदेशो ग्रहीतुमशक्यः। नच भवत इत्यत्रादुपदेशत्ववदत्र स्थानिवत्त्वेन तत्त्वं स्यादेव, तत्र प्रत्ययस्य निमित्तत्वेनाश्रयणादुपदेशप्रत्ययकालिको ग्राह्य इति तत्र स्थानिवत्त्वेन तदाश्रयणेऽप्यत्र कस्यापि निमित्तत्वेनानाश्रयणात्। उपदेशप्रत्ययकालिकस्य स्थानिवद्भावोपदेशस्य ग्रहीतुमशक्यत्वेन हलन्त्यमित्यत्रेव स्वभावसिद्धोपदेशस्य गृहीतुमशक्यत्वादुपदेशत्वाभावात्, इत्वाभाव एव प्राप्त इति चिन्त्यमिति। एवञ्च दिधडिति जैमिनीयोक्तमेव युक्तमिति सुधियः।

**वसोः। वसुसादेशेनेति।** नन्वेवमपि वसुस्तम्भे हलस्यैव ग्रहणं स्यादिति वाच्यम्, सामान्यग्रहणं

**विदुष इति** । सम्प्रसारणपूर्वत्वस्य 'षत्वतुको'रित्यसिद्धत्वं तु न, पदान्तपदाद्यो-रेकादेशस्यैव तेनासिद्धत्वात् ।

**सेदिवानिति** । षद्लृधातोः—'भाषायां सदे'ति लिटः क्वसौ द्वित्वे 'अत एके'त्येत्वा-भ्यासलोपयोः—'वस्वेकाजा'दितीट् ।

**अकृतेति** । परे तु—पदावधिकेऽन्वाख्याने 'सद्-वस्-अस्'—इति स्थिते इट्-सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे वलादित्वा-भावादिटः प्राप्तिरेव नेति—'सेदुष' इत्यादिसिद्धिरित्यकृतव्यूहपरिभाषा निष्फला । लक्ष्यानुरोधादत्र पदावधिकमेवान्वाख्यानमित्याहुः ।

ॐ **अभिनव-चन्द्रिका** ॐ

**प्रतिपदोक्तत्वेनेति**। एत्वाभ्यासलोपात्प्राक् 'आर्धधातुकस्ये'तीडागमापेक्षयेति भावः। नच 'नेड्वशी'ति

ॐ **चिदस्थिमाला** ॐ

ननु षत्वे पूर्वत्वस्यासिद्धत्वे कथं षत्वमत आह—**सम्प्रेति**। मूलादि दूषयन् सिद्धान्तमाह—**परेत्विति**। नन्वेवमपि क्रमेणान्वाख्याने दोष एवात आह—**लक्ष्येति** ।

ॐ **ज्योत्स्ना** ॐ

'वसुस्तम्भे' इत्यस्यैव ग्रहणं स्यादिति वाच्यम्–सामान्यग्रहणार्थस्य वसुसः सकारेण द्व्यनुबन्धकत्वस्य वैयर्थ्यप्रसङ्गात्। धातोरपि ग्रहणं स्यादिति चेत्, एवं तर्हि स्थानिवद्भावादेवोगित्वे लब्धे उकार एव-वसुसः सकारानुबन्धसामर्थ्याद्व्यनुबन्धकयोः क्वसुवसोरेव सामान्यग्रहणं, न तु एकानुबन्धस्य धातोरपीति—ज्ञापनार्थं इति सकलेष्टसिद्धिरित्याशयात् । एतेन—वसोः स्थानिवद्भावेनैवोगित्त्वे लब्धे उकारानुबन्धः क्वसुसामान्यग्रहणार्थो भविष्यतीति भाष्यारूढमधिकसकारानुबन्धासञ्जनं व्यर्थमित्यपास्तम् । 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहण'मिति परिभाषया धातुव्यावृत्तेर्भाष्या-सम्मतत्वात्, न हि क्वचिदप्यसौ परिभाषा लक्ष्यसिद्ध्युपयोगिनी भगवता व्याख्यातेति दिक् । **इत्याहुरिति** । अत्र यद्वक्तव्यं तदन्यत्रोक्तम् ।

ॐ **सदाशिवभट्टीयम्** ॐ

नैकानुबन्धस्य धातोरपीति ज्ञापनार्थं इति सकलेष्टसिद्धिरित्याशयात् । एतेन वसोः स्थानिवत्त्वेनैवोगित्त्वे लब्धे उकारानुबन्धवसोः सामान्यग्रहणार्थं भविष्यतीति भाष्यारूढमधिकसकारानुबन्धासञ्जनं व्यर्थ-मित्यपास्तम् । प्रत्ययाप्रत्यययोः प्रत्ययस्याङ्गीकारादिति केचित् । उकारोच्चारणसामर्थ्यादस्यापि ग्रहणम्, अपिना एकान्तत्वादेकस्योपस्थितत्वादन्त्यस्यैव प्रत्ययस्यैव ग्रहणौचित्याच्च । धातोरग्रहणं परिभाषां विनापि जातमित्यपि केचिदाहुः । नचैवं स्रंस इति साहचर्यात्तत्र सूत्रे धातोर्ग्रहणापत्तिः, अत्र वसोरिति प्रत्ययस्यैव ग्रहणात्तत्रापि तस्यैव ग्रहणौचित्यात्, सान्तेतिविशेषणाच्च, नहि धातोर्विशेषणे फलमस्ति, सर्वत्र सान्तस्यैव सत्त्वेनाव्यभिचारादिति दिक् । **परेत्विति** । 'वस्वेके'त्यस्यापि प्रतिपदोक्तत्वमिति चेत्, सद इत्यवस्थाया-मेत्वलोपाभ्यामेव प्रतिपदोक्तत्वात् सम्प्रसारणेन बाध इत्यन्यत्र विस्तरः ।

ॐ **विषमपदविवृतिः** ॐ

लक्ष्यते, तेन संयोगान्तलोपसङ्ग्रहः । **प्रतिपदविधित्वेनेति** । ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तेः स्वसिद्धान्तत्वेन 'वस्वेकाजाद्घसा'मिति इटोपि प्रतिपदविधित्वमिति चेन्न; 'आर्द्धधातु-कस्ये'ति सूत्रविहितेटोऽनुवादरूपत्वेन प्रतिपदविधित्वाभाव इत्याशयात् । पूर्वोपस्थितिनिमित्तक-मन्तरङ्गमित्यत्र निमित्तशब्देन सप्तम्यन्तोपात्तस्यैव ग्रहणमिति तदाशयः । **स्वरप्रवृत्तौ दोषात्** ।

**साहचर्यादिति** । न च महत्यतेः क्विपि महतोऽपि धातुत्वसम्भव इति वाच्यम्; औपदेशिकधातुत्वासम्भवेन तत्साहचर्येणौपदेशिकधातुभिन्ननान्तसंयोगस्य ग्रहणमित्याशयात् । **सुहिनिति** । नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न । 'हिसी'त्यस्येदित्वात्–'अनिदिता'मिति नलोपो न । **ध्वदिति** । ध्वंसु अवस्रंसने, क्विन् , अनिदित्वान्नलोपः, 'वसु'इति दत्वम् ।

**विवक्षिते इति** । भाष्ये–'असुङ्व्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वा'दित्युक्तेरिति भावः । वस्तुतो वचनमेव ज्यायः, विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं 'परमपुमा'नित्यादौ स्वरप्रवृत्तौ दोषात् ।

**बहुपुंसीति** । विभक्तौ लिङ्गविशिष्टाग्रहणान्नासुङ् । विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः। **पूञ इति** । 'पाते'रिति पाठान्तरम् । 'स्त्रिया'मिति सूत्रे भाष्ये तु–'सूतेः सस्य पः, ह्रस्वः, म्सुन्प्रत्ययः'–इत्युक्तम् । वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला । **पुमानिति** । 'सान्ते'ति दीर्घः ।

**उशनेति** । वशेः कनसिः, 'ग्रहिज्ये'ति सम्प्रसारणम् ।

---

ॐ अभिनव-चन्द्रिका ॐ

निषेधः शङ्क्यः, 'उपसर्जनिष्यमाण' न्यायेन तस्यात्राप्राप्तेरित्यन्यत्र विस्तरः । **निमित्तकत्वेनेति** । स्वार्थप्रयुक्तकार्यस्यान्तरङ्गत्वादिति भावः । **विभक्ताविति** । ङीपा व्यवधानान्नर्सवनामस्थान-

ॐ चिद्स्थिमाला ॐ

**भिन्नेति** । तद्भिन्नसम्बन्धिसान्तेत्यर्थः । एतेन यथाश्रुतमूलायसङ्गतिः सूचिता ।–मूलादि दूषयति–**वस्तुत इति** । नन्वत्रासुङ्-'लिङ्गविशिष्टे'त्यनया कुतो नात आह—**विति** । ननु मूलमते विवक्षितसप्तमीसत्त्वेन परत्वादन्तरङ्गत्वाच्च ङीपं बाधित्वाऽसुङि उगित्वस्यानुबन्धकार्यत्वेन स्थानिवत्त्वेन लाभात् , ङीप्यपि बहुपुमसीति रूपापत्तिरत आह—**विभक्तीति** । सिद्धान्ते तु नैव दोषः । एतेन पूर्वविरुद्धमित्यपास्तम् । उभयमपि दूषयति—**स्त्रियामितीति** । मूलादिखण्डयति—**वस्तुत इति** । 'वृत्ता'वित्यनेन मूलादिदोषनिरासस्तेषामनुवादकत्वात् , एतेन तथा शास्त्र्युक्तमपास्तम् ।

**इदम्**=उभयम्। एवञ्च हे उशन इत्येव रूपं तत्र साधिविति भावः। एतेनानङ् हरदत्तादिसम्मतत्वादिष्ट एवेति तदुक्तमपास्तम्। ननु विशिष्टस्यासन्तत्वाद्धातुभिन्नत्वाच्च दीर्घापत्तिरेव,न च धातोर्नेति प्रसज्यप्रतिषेधः, वाक्यभेदासमर्थसमासापत्तेरतः पिण्डग्र इत्यादि भाष्योदाहरणमूलकलक्षणया आह—**अधातोरितीति** ।

ॐ ज्योत्स्ना ॐ

**ततः पूर्वमिति** । विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गादसुङः पूर्वमित्यर्थः । इत्यादौ स्वरप्रवृत्तौ= समासान्तोदात्तत्वप्रवृत्तौ, दोषात्=पुंशब्दोकारस्यैवोदात्तत्वप्रसङ्गेन 'परमपुमान्' इति मकारोत्तराकारस्यैवं रूपात् । किन्त्वेवं सति विषयसप्तम्याश्रयणं किमर्थं स्यादिति समाससञ्ज्ञासापेक्षादन्तोदात्तात्प्राग् असुङेव भवतीति भगवतो दाक्षिपुत्रस्य पाणिनेराशय इत्याहुः । **निष्फलेति** । अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् ।

**अस्य सम्बुद्धाविति** । एतच्च वृत्तौ वाचनिकं पठितम् । वशधातौ माधवस्तु—
'सम्बोधने तूशनसस्त्रिरूपं—सान्तं तथा नान्तमथाप्यदन्तम् ।'
—इति श्लोकवार्त्तिकमप्याह । भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रामाणिकाः ।

उशना=शुक्रः । अनेहा=कालः । 'नञि हन एह चे'त्यसुन्, हन एहादेशश्च ।

[1]**-सुव इति** । 'अधातो'रित्यस्य धात्ववयवभिन्नाऽसन्तस्येत्यर्थ इति भावः । अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम् ।

**अदस औ** । 'अदस' इति षष्ठी । 'तदोः सः' इत्यतः 'सा'विति वर्त्तते । औत्वं त्यदाद्यत्वापवादः ।

ननु 'सोर्डा'वित्येवास्त्विति चेन्न; असावित्यत्र[2] टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा

ॐ अभिनव-चन्द्रिका ॐ

सम्भावनाया एवेति भावः । **टिलोपे कृते इति** । यदि सत्व-त्यदाद्यत्वयोः प्रतिपदविधित्वेन अपवादत्वात्पूर्वमत्वप्रत्वे रूपसिद्धिरित्युच्यते तदा सुत्रच एवायं न्यास इत्याहुरिति सङ्क्षेपः ।

ॐ चिदस्थिमाला ॐ

सौत्रत्वाद्वृत्तिरिति भावः। एतदर्थमेव पिण्डग्र इत्याद्युक्तम्। अग्रे मूले पञ्चम्या मनोरमादौ दूषितत्वादाह—**अदस इति** । सुलोपसन्नियोगशिष्टत्वादयं सावेव तदाह—**तदोरिति** । अत एवाह—**औत्वमिति** ।

ॐ ज्योत्स्ना ॐ

**टिलोप कृते इति** । अभत्वेऽपि डित्त्वसामर्थ्यकल्प्यटिलोपस्यादस्विषयत्वेन प्रतिपदविधित्वमभिप्रेत्येदम् । **नित्यत्वादिति** । दस्थानिकसत्वस्य त्ववकाशः—साकच्विषये 'असकावसुक' इति [यथेति]

ॐ सदाशिवभट्टीयम् ॐ

**पुंसो** । **वस्तुत इति** । गौरवादेतदुक्तयुक्तं भवति । **अदसः** । **प्रसिद्धेरिति** । नच तक्रन्यायेन सिद्धिः, इत्यादिसिद्धये तदादिविषये तदप्रवृत्तिस्वीकारात् । नन्वनन्त्यग्रहणप्रत्याख्याने इदम एवेति नियमे प्रकृतेऽत्वं यदि स्यात्, दकाराभावेन स नियमोऽसङ्गतः स्यादतस्सामर्थ्यादत्वं न प्रवर्तते इत्यदोषः ।

ॐ विषमपदविवृतिः ॐ

केचित्त्वेवं सति विषयसप्तम्याश्रयणं किमर्थं स्यादिति—'समासञ्ज्ञासापेक्षान्तोदात्तात्प्रागेव [असुङ्] भवतीति भगवतो दाक्षीपुत्रस्याशय इत्याहुः। **नित्यत्वात्सत्वम्बाधित्वेति** ।—इदं पूर्वान्वयि। टिलोपे कृते

१ नन्ववयवे लक्षणायां किं मानं, नच धातुरूपाऽसोऽसम्भवाद्धातुरूपो योऽस् तदन्तभिन्न इति नार्थः, किन्तु धात्ववयवो योऽस् तदन्तभिन्न इत्यर्थ इति वाच्यं, व्यस्—अलस्—शब्देऽसूरूपधातोः सम्भवादिति चेन्न, एवं सति—'अत्वसन्तस्य चानसः' इत्येव ब्रूयात् । [ नच स्वस्य भेदे—स्वमेव व्यावर्त्यस्वमेव ग्राह्यञ्चेति विरुद्धमिति वाच्यम्, 'अनसे'रित्येवमिका निर्देशेन अस्धातुर्व्यावर्त्यः, पयसादिर्ग्राह्य इत्येवं वक्तुं शक्यत्वात् । ] एवञ्च—'अधातो'रिति,—पिण्डग्रसादिव्यावर्त्यर्थमित्येव वक्तव्यं, तच्चावयवे लक्षणां विनाऽनुपपन्नमतोऽवयवे लक्षणया—धात्ववयवभिन्नो योऽस्, तदन्तस्य दीर्घ इत्यर्थ इति—'पिण्डग्र' इति भाष्यमप्युपपन्नमिति श्रीबालशास्त्रिचरणाः प्राहुरित्यसद्गुरवः। २ नित्यत्वात्सत्वं बाधित्वा टिलोपे इत्यन्वयः । "—**टिलोप इति** । 'नित्यत्वा'दित्यादिः । 'डित्त्वसामर्थ्या'दित्यप्यस्यादिः । **नित्यत्वात्सत्वम्बाधित्वेति** । न च 'त्यदादीना'मिति सङ्ग्राहकशब्दाददस इत्यस्य पार्थक्येन कल्पनायामदसो दस्य स—

त्यदाद्यत्वे 'असा'विप्यसिद्धेः । **अमुक इति**। 'अमुकः' इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्द इत्याहुः ।

**एत ईत्**। बहुवचनशब्दो यौगिक इत्याह—**बह्वर्थेति**—तेन 'अमी' इति सिद्धम् । **पश्चादुत्वेति** । 'उत्वे'त्युपलक्षणमीत्वस्यापि ।

ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह—**न मु ने इति**। **कर्त्तव्ये कृते चेति**।

ॐ चिद्स्थिमाला ॐ

**असाविति** । अस्याशयो भावप्रकाशे प्रतिपादितः । सकलग्रन्थासाङ्गत्यं ध्वनयन्नाह—**अमुक इति**। ननु पारिभाषिकग्रहणेऽपि अमीभिरित्यादि सिद्धिरेवात आह—**तेनेति**। अन्यथा एकारस्य बहुवचनपरत्वाभावादसिद्धिः स्पष्टैव । 'पश्चादुत्वे'ति ग्रन्थस्य मध्यमणिन्यायेन पूर्वान्वयित्वमतीति सूचयन्नाह—**उत्वेत्युपेति** ।

ॐ सदाशिवभट्टीयम् ॐ

किञ्च परत्वात्सत्वे सकृद्गतिन्यायेन त्यदाद्यत्वमिति सुवचमेवेति चेन्न, तत्प्रत्याख्यानपक्षमादायैतद्ग्रन्थप्रवृत्तेः । वस्तुत'स्त्यदादीनाम'इत्यत्र 'विभक्ता'विति विषयसप्तमी, विहितविशेषणादिगौरवात् सैवोचितेत्युक्तत्वात् । एवञ्च सकारस्यात्वे पररूपे औडादेशे टिलोपे सकृद्गतिन्यायेन पुनरत्वाप्रवृत्त्याऽदोषात् । नच पररूपात्पूर्वमेवान्तरङ्गत्वाट्टोपेऽसकावित्यत्र टाप्यै ङः स्याद्यापत्तिरौकारे विभक्तित्वादिति वाच्यं, द्विवचनौकारविभक्तेरेवौङिति सञ्ज्ञास्वीकारात् । प्रत्ययस्यादितीत्त्वापत्तिरिति चेत्, ङित्वसामर्थ्यात् पररूपानन्तरमेव टिलोपस्य वक्तव्यत्वात्, अन्यथा सौरौदित्येव वदेत्, एवञ्चेदश्चिन्त्यमित्याहुः ।

**न मु ने** । ननु 'मु'ग्रहणं मास्त्विति चेन्न, पञ्चाम्र्मनमुनेत्यत्र नाभावे कृते नलोपस्यान्यथाऽसिद्धत्व-

---

इत्यंशो न चरितार्थ इति तत्सामर्थ्यादिदमेव वाक्यं त्यदाद्यत्वस्य बाधकं भविष्यतीति वाच्यम्, साकच्के 'असुक' इत्यादावस्य चारितार्थ्यात् । ननु 'डौ' आदेशः—'सत्यपि सम्भवे बाधनम्भवती'तिन्यायेन त्यदाद्यत्वापवाद इति त्यदाद्यत्वात्प्रथमं—'डौ' आदेशे कृते परत्वाच्छब्दान्तरप्राप्त्याऽनित्यं टिलोपं बाधित्वा सत्वे पुनःप्रसङ्गविज्ञानन्यायेन टिलोपेऽमाविति सिद्धम् । न च सकृद्गतिन्यायात्कारे कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाट्टिलोपप्रवृत्तेः स्वीकारेऽपि वा—दोष एवेति वाच्यं, प्रकृतसूत्रेऽदस इति योग विभज्य 'तदोः सः' इत्यनुवर्त्याऽदस एव दकारस्य सत्वं नान्यस्य दकारस्येतिनियमेनानन्त्यग्रहणप्रत्याख्यानरीत्याऽधुनापि विभक्त्याऽदस इत्यस्यारम्भसामर्थ्यात्त्यदाद्यत्वबाधकत्वेनेष्टसिद्धेरिति चेन्न; अनन्त्यग्रहणप्रत्याख्यानरीत्या दोषाभावेऽपि योगविभागादिक्लेशेन प्रत्याख्याने गौरवमित्यनन्त्यग्रहणमन्त्यव्यावर्त्तकमावश्यकमिति सूत्रकारमतम् । तन्मते टिलोपे पूर्वोक्तरीत्या पूर्वम्प्रवृत्तेऽन्त्यत्वात्सत्वाप्राप्तौ रूपासिद्धिप्रसङ्ग इत्याशयात्—" इति भैरवमिश्राः ।

१ अत्र 'नाभावे कर्त्तव्ये कृते च किमपि नासिद्ध'मित्यर्थकं 'न ने' इति नास्त्रि, मनस इः—मन–इः, तेन 'मन–इना' इत्यादौ नाभावे कर्त्तव्येऽसिद्धत्वानापत्त्या गुणापत्तौ वित्वाभावेन नाभावानापत्तेः । एवम्—उञोऽनुकरणेन उकारेण किमः समासे टाविभक्तौ अनुकरणस्य प्रकृतिवदनुकरणमित्युक्त्वातिदेशे 'मय उञो वो वे'ति वादेशे 'किम्वा'–इति स्यात्,—नाभावइच्छ्या वत्वस्येदानीमसिद्धत्वाभावात् । सिद्धान्ते तु वत्वस्यासिद्धत्वान्नाभावे 'किमुना' इतीष्टं रूपम्भवति । नाभावोत्तरमच्परत्वाभावेन वत्वाप्राप्तेरिति मैथिलोमानाथौ । नाभावे कर्त्तव्ये कृते च उत्वं नासिद्धमित्यर्थकं 'नो ने' इति तु न सूत्रितम्, 'करोषि पटो' इत्यत्रामिपूजितेऽर्थे 'एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्यार्द्धस्याऽऽदुत्तरस्येदुता' वित्यनेन उकारे 'पटा ३ उ' जाते तदनुकरणे उत्वस्याऽसिद्धत्वान्नाभावे—'पटा ३ उना' इत्येवं वित्वाद्नाभावेऽनिष्टापत्तेरिति मैथिलाः ।

एवञ्च 'ने' इति विषयसप्तमीति भावः । भाष्ये तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोऽप्याक्षिप्त इति व्याख्यातम् । 'मु' इति समाहारद्वन्द्वः । 'कृते चे'त्युक्तेर्मुत्वे 'सुपि चे'ति दीर्घो न । **अमीभिरिति** । 'नेदमदसो'रित्यैस् न ।

## इति हलन्ताः पुँल्लिङ्गाः ।

### ॐ चिदस्थिमाला ॐ

आवृत्तिरिति दण्डयुक्तेरसाङ्गत्यायाह—**एवञ्चेति** । तथेष्टत्वे चेत्यर्थः । सर्वासाङ्गत्यायाह—**भाष्येत्विति** । एकवचनोपपत्तये आह—**मुइतीति** । द्वितीयव्याख्यानफलमाह—**कृते चेति** । सन्निपातपरिभाषा तु 'सुपि चे'ति दीर्घविषये न प्रवर्तते, एतेन—तया सिद्धिं कुर्वन्तः शाब्दिकण्ड्यादयः परास्ताः ।

ॐ इति हलन्ताः पुँल्लिङ्गाः ॐ

### ॐ ज्योत्स्ना ॐ

भावः । यत्तु न ङित्त्वसामर्थ्यादभस्याऽदसष्टिलोपः कल्प्यते, किन्त्वदसः—सर्वनामस्थानस्य तत्सञ्ज्ञाफलाभावमात्रं, भसञ्ज्ञाटिलोपौ तु स्वस्वशास्त्रेणैवेति परत्वात्सत्त्वेऽपि लोपे दोषाभाव इति; तन्न, अकृतव्यूहपरिभाषया टिलोपानन्तरं भाव्यमानं सत्वाभावमादाय पूर्वमेव सत्वाप्रवृत्तेः, कृतस्येति वचनाद्वा । अकृतव्यूहपरिभाषाया लक्ष्यसंस्कारानुपयोगित्वमभ्युपगच्छतान्त्वत्रपक्षे 'सोर्डा' विति न्यासे इष्टापत्तिरित्याहुः । ननु म्—च उश्चेतीतरेतरयोगद्वन्द्वे द्विवचनापत्तिरत आह—**समाहारद्वन्द्व इति** ।

* इति हलन्ताः पुँल्लिङ्गाः । * [ समाप्तश्चायं[1] ग्रन्थः । ]

### ॐ सदाशिवभट्टीयम् ॐ

निषधापत्त्या अवर्णान्तत्वेन 'अमें चावर्ण'मिति स्वरापत्तेः। ने कृतेऽव्यवहितस्यैवासिद्धत्वनिषेध इति न दोष इति चेदत्र ने इत्यस्य विषयसप्तमीत्वेनौपश्लेषिकसप्तम्यभावेन तस्मिन्नितिपरिभाषाया अप्रवृत्त्या व्यवहितत्वांशस्य लब्धुं शक्यत्वादिति दिक् । ॐ इति हलन्ताः पुँल्लिङ्गाः ॐ

### ॐ विषमपदविवृतिः ॐ

दस्यान्त्यत्वाभावात्सत्वाप्राप्तेः, दस्थानिकसत्वस्य तु साकच्के चारितार्थ्यम् । ननु म् च उश्चेति इतरेतरद्वन्द्वे द्विवचनापत्तिरित्याशङ्क्याह—**मु इति समाहारद्वन्द्व इति** ॥

* इति हलन्ताः पुँल्लिङ्गाः *

१ त्रिष्वपि पुस्तकेषु इतोऽग्रे ज्योत्स्ना नोपलभ्यते ।

# अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

**नहो धः** । 'झलो झली'त्यतो 'झली'ति, 'पदस्ये'ति, 'स्को'रित्यतो 'ऽन्ते चे'ति चानुवर्त्तते । झलि परे पदान्ते विद्यमानस्येत्यर्थः । 'अलोऽन्त्यस्ये'त्येतलब्धं—**हस्येति** । उपपूर्वात्–'णह बन्धने' इत्यतः क्विप्, 'नहिवृती'ति पूर्वपदस्य दीर्घः । सोर्हल्ङ्यादिलोपे धत्व-जश्त्व-चर्त्वादि ।

**दलोपषत्वे इति** । पूर्वपदान्तस्य लोपो, धातोः सस्य षत्वम् । 'आदेशप्रत्यययो'रिति तु न षत्वं, 'पदादादि'रिति पक्षे—'सात्पदाद्यो'रिति निषेधात् ।

**हस्य ध इति** । कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः । 'उष्णिगञ्चि'ति निर्देशात्कुत्वस्य जश्त्वे नासिद्धत्वम् । स्वरीत्या तु ढ-ड-ग-का इति बोध्यम् ।

**द्यौरिति** । 'दिव औ'दित्यौत्वं, यण् । **चतस्र इति** । परत्वादामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनराम्नेति स्थानिवत्सूत्रे भाष्ये । **चतसृणामिति** । 'न तिसृ' इति दीर्घनिषेधः । **सर्वावदिति** । सर्वाशब्दवदित्यर्थः । अत एव–'सर्वनाम्नो

## ॥ चिद्स्थिमाला ॥

वृत्त्यर्थलाभोपायमाह–**झल इत्यादि** । 'हो ढः' इत्यतो 'हा'नुवृत्तिरिति शब्दशक्त्यैवमात्रत्याह–**अलोऽन्त्येति** । 'उपान'दित्यस्य प्रक्रियामाह–**उपेति** । सम्पदादित्वात्कर्मणीति भावः । चर्त्वादीति पाठः। उदोदान्तत्वेन 'तलोपषत्वे' इति पाठोऽसाङ्गत्याह—**दलोपषत्वे इतीति** । द्वितीये निपातनवैयर्थ्यं परिहरति–**आदेशेति** । पक्षे=सिद्धान्तभूते । इदं कैयटादिमतेनेत्याह—**कैयटादीति** । अत एव वक्ष्यति–**स्वरीत्येति** । नन्वेवमपि कुत्वाऽसिद्ध्या जश्त्वं कथमत आह—**उष्णिगिति** । 'नाजानन्तर्ये' इति निषेधादिदं यणि नासिद्धमित्याह—**यणिति** । **भाष्ये—स्पष्टम्** ।

## ॥ सदाशिवभट्टीयम् ॥

**पक्ष इति** । 'पदस्यादि'रिति पक्षे तु—'गतिकारके'तिकृदन्तेन समासे पदत्वाभावेन निषेधो नेति

## ॥ विषमपदविवृतिः ॥

**नहो धः** । दत्वे विधातव्ये धत्वविधानन्तु 'नद्ध'मित्यत्र 'झषस्तथो'रिति धत्वार्थम् । मूले–'दलोपषत्वे' इति पाठः सुगमः, 'उदःस्थास्तम्भो'रिति निर्देशेनोदित्यस्य दान्तत्वात् । **इति पक्षे इति** । 'पदस्यादि'रिति पक्षे तु निषेधो न प्राप्नोति, 'गतिकारकोपपदाना'मिति प्राक् सुबुत्पत्तेः समासे

---

१ 'स्को'रित्यतो 'ऽन्ते चे'त्यनुवर्त्तने, तेन झलि परतः पदान्ते विद्यमानस्य च नहो हस्येत्यर्थः । यद्यप्यन्ते इत्यनुवृत्तिर्विफला, पदविशेषणतया नहन्तस्य पदस्येत्यर्थस्य लाभसम्भवात्तथाऽपि–वाक्यभेदाय ततश्चकारानुवृत्तेरावश्यकतया 'अन्ते' इत्यस्यानुवृत्तिं विना तत्सन्नियोगशिष्टचकारानुवृत्तेरसम्भवादन्ते इत्यस्यानुवृत्तिरिहादृता । 'अन्ते' इति सप्तमी च प्रकृते षष्ठ्यर्थे वाच्या, सामानाधिकरण्यादिति–नहन्तस्य पदस्येति, झलिपरे इति चार्थो लभ्यते इति गौडाः । २ **क्विबिति** । कर्त्तर्यर्थानुपपत्तेर्बाहुलकात्कर्मणि क्विब्बोध्यः । ३ उष्णिगितिनिर्देशादित्यर्थः । ४ आमं='चतुरनडुहो'रिति विहितम् । ५ 'सन्तस्य [ स्थानिवत्त्व– ] प्रतिषेधो वक्तव्यः'–इत्यादि हि तत्रोक्तम् ।

वृत्तिमात्रे'इति न पुंवत्त्वं, शब्दपरस्य कदाऽपि सर्वनामत्वाभावादिति भावः।

**यः सौ** । पुंस्यया बाधात्, क्लीबे सोर्लुका लोपात्स्त्रियामिदम्। **वागिति**। वचेः 'क्विब्वची'त्यादिना क्विप्, दीर्घोऽसम्प्रसारणञ्च।

**अपो भि**। 'अच उपसर्गात्तः' इत्यतस्त इत्यनुवर्त्तते। 'अ'बिति न प्रत्ययो,—व्याख्यानात्। **दिगिति**। 'दिश अतिसर्जने'—क्विप्। ष-ड-ग-काः प्राग्वत्। 'स्त्रिष गतौ' अस्मात् क्विप्, जश्त्व-चर्त्वे। 'जुषी प्रीती'त्यतः क्विप्, सहस्य सभावे—सजूः।

**अमूभिरिति**। अदन्तत्वाभावादेत्त्वाभावेन 'एत ई'दित्यस्याभावे मूत्वमेव।

## इति हलन्ताः स्त्रीलिङ्गाः।

---

### ❀ चिदस्थिमाला ❀

अत एवेत्यस्यार्थमाह—**शब्देति**। 'मात्र'ग्रहणेन हि—यद्वृत्तिघटकस्य तत्त्वं कदाचिद्दृष्टं तस्य तत्त्वमिति बोध्यते। अत एव सर्वा नाम काचित्तत्पुत्रः 'सर्वापुत्र' इत्यादौ न पुंवत्त्वमिति स्पष्टमाकरे। एतेन 'सर्वव'दिति प्रतीकं धृत्वा 'सर्वनाम्न' इति पुंवत्त्वमिति दण्ड्याद्युक्तमपास्तम्। प्रत्ययः= 'ऋदोर'बितिविहितः। 'अद्भिः संस्कृत'मिति लिङ्गमूलकमाह—**व्याख्यानादिति**। **क्विनिति**। 'ऋत्वि'-गादिनेति भावः। **क्विबिति**। 'क्विप्चे'त्यनेन। एवमग्रेऽपि। **मूत्वमेवेति**। स्त्रियां सर्वत्रेति भावः।

इति हलन्ताः स्त्रीलिङ्गाः।

### ❀ सदाशिवभट्टीयम् ❀

तत्त्वम्। वस्तुतः पञ्चमीसमासेन 'बहुसेचा'वित्यत्र निघातापत्तिरिति बोध्यम्। **अपो**। **व्याख्यानादिति**। सानुबन्धकपरिभाषया उभयोः सत्त्वे शास्त्रीयग्रहणम्, अत्र तु लौकिक एव सम्भवतीति भावः। नच 'प्रत्ययाप्रत्ययो'रिति न्यायेन दोषः, तदभावात्, 'अद्भि'रिति निर्देशाच्चेत्याहुः।

❀ इति हलन्ताः स्त्रीलिङ्गाः ❀

### ❀ विषमपदविवृतिः ❀

उत्तरभागस्य पदत्वाभावादिति भावः। **व्याख्यानादिति**। उपात्तस्य रूपस्य लौकिके प्रयोगेऽनुपलम्भाच्छास्त्रीयस्य सानुबन्धकरूपस्याश्रयणम्। अस्तीह निरनुबन्धकरूपस्य प्रातिपदिकस्य लौकिके प्रयोगे उपलम्भ इति—प्रत्ययलक्षणं नैव प्राप्नोतीति व्याख्यानपर्यन्तानुधावनं व्यर्थमिति केचित्। 'दिश् अतिसर्जने क्वि'निति पाठः। 'क्वि'बिति लपपाठः। **जश्त्वचर्त्वे इति**। इदमेतन्मते सप्तमीबहुवचनविषयम्।

❀ इति हलन्ताः स्त्रीलिङ्गाः ❀

---

१ 'सर्वनाम्नो वृत्तिमात्रे' इत्यत्र 'मात्र'पदेन भूतपूर्वसर्वनामसञ्ज्ञावतो ग्रहणेऽपि शब्दपरस्य कदापि तत्त्वाभावान्न दोष इत्याशयः। २ वक्तीति वागिति कर्त्तरि क्विबिति प्राञ्चः। उच्यते इति वागिति बाहुलकात्कर्मणीति तु भट्टाः। बाहुलकाश्रयणदूषितमेतन्मतमिति तु परे।

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

**दत्वमिति** । 'वसुस्रंस्वि'त्यस्य पदाधिकारस्थत्वात्तदन्तेऽपि दत्वम् । एवमाङ्गन्त्वादामपि । **पूर्वपदस्येवेति** । प्रत्ययलक्षणेनेति भावः । अत एव राजपुरुषादौ नलोपादिसिद्धिः ।

**उत्तरपदत्वे चेति** । 'उत्तर'शब्देनोत्तरपदं लक्ष्यते[1]। उत्तरपदशब्दश्च समासचरमावयवे रूढः । तेन-तस्य पदत्वे=तत्प्रयुक्तकार्ये कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न, पदादिविधौ त्वयं निषेधो नेत्यर्थः[2] । तेन 'परमवाचे'त्यादौ न कुत्वं, 'दधिसेचा'वित्यादौ 'सात्पदाद्यो'रिति षत्वनिषेधश्च । निरुपपदादेव[3] क्विप् षष्ठीसमासोऽत्र । 'सोपपदाद्विचोऽनभिधान'मिति-कैयटः । 'सेचयतेः क्वि'बित्यन्ये ।

ॐ चिद्रस्थिमाला ॐ

अस्यावश्यकत्वमाह-**अत एवेति** । उत्तरे'ति लुप्तषष्ठ्यन्तं पृथक्पदमित्याह-**उत्तरेति** । भीमसेनादिवत् । अस्य फलमाह-**तेनेति** । भेदेनेत्यर्थः । तस्य=समासचरमावयवस्य । 'पदसञ्ज्ञाया'मिति सकलग्रन्थासाङ्गत्यायास्य लक्ष्यार्थमाह—**तद्वेति** । अस्य तत्सूत्र पाठादाह—**लुमतेति** । अन्यथा-वक्ष्यमाणगौरवनिरासाय गुरुभूतमपि प्रसज्यप्रतिषेधमाह—**पदादीति** । तेन=उभयेन । तत्राद्यस्य फलमाह-**परमेति** । द्वितीयस्याह—**दधीति** । अत एव 'च'सङ्गतिः । उपपदसमासे 'गर्ने'त्यादिप्रवृत्तेः क्विबन्तस्य पदत्वमेव नात आह-**निरुपेति** । नन्वेवमपि सोपपदाद्विचि 'दधिसेचा'विति किन्न स्यादत आह—**सोपेति** ।

ॐ सदाशिवभट्टीयम् ॐ

**उत्तरपदत्वे** । ननु कार्यित्वनिवेशे फलसत्त्वेऽपि प्रमाणाभाव इति चेत्पदादिविधाविति पर्युदास एवावेहि । तथाहि-पूर्वकालाव्यवहितकालवृत्तिर्हि पदादिविधिर्यथा सेच इति सकारस्य पूर्वकालाव्यवहितकालवृत्तित्वम् । एवञ्च तत्साहचर्यात्परकालाव्यवहितकालवृत्तिरूपपदान्तकार्ये एव । तथाच-कार्यित्वनिवेशोऽर्थात्फलितः । यद्वाऽभावाभाववृत्तित्वेन साहचर्यं, यथा 'स'इत्यत्र प्रागभाववृत्तित्वं, तथाच—ध्वंसवृत्तित्वं पदान्तकार्ये एवेति न 'पदव्यवायेपी'त्येतद्विषये प्रवृत्तिः । अभावप्रतियोगित्वेन वा सादृश्यमिति न दोषः । न च पदादिविधिर्नान्तेत्यादौ णत्वविधौ पूर्वस्याभावेन पूर्वकालाव्यवहितकालवृत्तित्वं बाधितमिति वाच्यम्, उत्तरपदकार्ये पदादिविधेस्तथात्वेनादोषात् । ननु पदप्रयुक्तकार्ये उत्तरपदीये कर्तव्ये पूर्वपदीयपदत्वस्यापि निषेधादिति चेन्न, उत्तरपदीयेनेति निवेशनोत्तरपदसम्बन्धिनि कार्ये इति निवेशेन वाऽदोषात् । अत्रत्यकार्यित्वादिफलमुक्तं ङमुट्सूत्रे । **अनभिधानमिति** । अभिधाने हि—'गतिकारके'ति सुबुत्पत्तेः प्राक्

ॐ विषमपदविवृतिः ॐ

**सोपपदाद्विच इति** । तथा सति 'गतिकारकोपपदाना'मिति सुबुत्पत्तेः प्राक् समासे उत्तरपदस्य

---

१ **लक्ष्यते इति** । अत्र च 'कर्तुरीप्सिततमं कर्म' 'दृष्टं साम' इत्यादिनिर्देशा एव प्रमाणम् । उत्तरशब्दस्य-लक्षणया तथार्थाभावे हि 'कर्मे'त्यादौ नलोपानापत्तिः, सामान्यतो यत्किञ्चिदुत्तरत्वस्य तत्रापि सत्त्वात् । एवञ्च 'आर्द्रं चर्मे'त्यत्र नानेन प्रत्ययलक्षणनिषेध इति नलोपसिद्धिरित्याहुर्गौडाः ।

२ 'नलुमते'त्यत्रास्य वार्त्तिकस्य पाठादाह—**लुमतेति** । द्वितीयांशार्थमाह—**पदादिविधाविति** । तेन='उत्तरपदत्वे चे'ति निषेधेन, कुत्वं=पदत्वप्रयुक्तं 'चोःकु'रिति कुत्वं नेत्यर्थः । 'षत्वनिषेधश्चे' त्यस्य—पदादिविधित्वेन 'उत्तरपदे चे'तिप्रत्ययलक्षणनिषेधाप्रवृत्त्या प्रत्ययलक्षणेन पदत्वात्सात्पदाद्योरिति षत्वनिषेधसिद्धिः—'अपदादिविधा' वित्यस्य फलमित्यर्थः ।

३ **निरुपपदादिति** । सिञ्चतः—इति सेचौ, विच्, गुणः । दध्नः सेचौ— दधिसेचौ । करणस्य

पदादिविधिश्च प्रतिपदोक्तत्वा 'त्सात्पदाद्यो'रित्येव । तेन 'परमबुधा'वित्यादो भष्भावो न । 'उत्तरपदादिः, कणा वर्णलक्षणा'दित्यादौ तूत्तरपदशब्दस्य समासचरमावमात्रे रूढेर्न दोषः ।

अयञ्च निषेधः-उत्तरपदस्य कार्यित्व एवेति ङमुट्सूत्रे उक्तम् । बहुच्पूर्वके 'बहुवाचौ' 'बहुसेचा'वित्यादावपि न दोषः । 'बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षण'मिति वचनान्तरात् ।

❀ चिदस्थिमाला ❀

'कैयट' इति सूचितारुच्या आह-**उत्तरेति**। नन्वेवं 'कर्णो वर्णे'त्यादौ निषेधापत्त्या दोषोऽत आह-**उत्तरेति** । 'मात्र'पदेन पदत्वव्यवच्छेदः । अन्यथापि तत्रादोषं सूचयन्नाह-**अयञ्चेति** । आद्य इत्यर्थः । तेन 'माष-कुम्भवापेने'त्यादौ 'पदव्यवायेऽपी'ति निषेधसिद्धिः । नन्वेवमपि 'बहुवाचा'वित्यादौ कुत्वादिकं स्यादेवात आह—**बहुजिति** । 'बहुसेचा'वित्यावित्यादावदोषायानुवृत्त्या आह—**पदादीति** । अत एव नियमोऽयं,

❀ विषमपदविवृतिः ❀

पदत्वं षत्वेपि दुर्लभं स्यादिति भावः । **सात्पदाद्योरित्येवेति** । 'स्वरितो वाऽनुदात्ते पदादा'विति तु पदादावनुदात्तेय एकादेशस्तस्य रितविधिर्न तु पदादेः साक्षाद्विधिरिति सोपि पदादिविधिशब्देन न गृह्यते इति भावः । ननु 'सात्पदाद्योरित्यत्रे'त्यसङ्गतम् ,उत्तरपदादिरित्यधिकृत्य 'कर्णो वर्णलक्षणा'दि-त्यादिविध्यन्तरस्यापि सद्भावादित्याशङ्क्याह-**उत्तरपदादिरिति**। अन्यथा 'कर्णो वर्णलक्षणा'दिति स्वरो न पदादिविधिः, अकारस्यानादित्वात्, स्वरविधौ व्यञ्जनमविद्यमानवदित्यादित्वव्यपदेश [?]। सूत्रं चासमासार्थं स्यात् ।-कर्णशब्दादर्श-आद्यचि कृते तु-'शुक्लः कर्ण' इत्याद्युदात्तत्वं यथा स्यादित्यत आह—**उत्तरपदादिति** ।

शेषत्वविवक्षया षष्ठी । 'नलोके'ति निषेधेन—'नलोके'ति सूत्रविषये कारकविभक्तेः शेषत्वविवक्षया नोत्पत्तिरित्यस्य कल्पनेऽपि प्रकृते तदभावात्करणस्य शेषत्वविवक्षया षष्ठ्युत्पत्तौ न किञ्चिद्बाधकमित्यपि **केचित्**। 'दध्ना सेचौ' इत्येवं करणतृतीयासमासस्यापि उपपदसमासवदेव 'गतिकारकोपपदाना'मिति परिभाषया सुबुत्पत्तेः पूर्वमेव समासे निरूक्तदोष एवेति शेषत्वविवक्षाऽनुधावनम् ।

सोपपदाद्विचि हि 'उपपदमति'ङिति समासस्य 'गतिकारकोपपदानां कृद्भि'रिति परिभाषया सुबुत्पत्तेः पूर्वमेव प्रवृत्त्या उत्तरपदे सुपोऽभावेन प्रत्ययलक्षणप्राप्तेरभावेन तन्निषेधस्य-'उत्तरपदत्वे चे'त्यस्य सुतरां प्राप्तेरभावेन 'अपदादिविधा' वित्यंशस्य वैयर्थ्यं स्पष्टमेव, अतो निरुपपदादेव विजाश्रितः ।

सोपपदाद्विचोऽनभिधाने मानञ्च,-'उत्तपदत्वे चे'त्यस्य 'सात्पदाद्यो'रित्यत्र-पदादादिः—पदादिरिति पञ्चमीसमासेन प्रत्याख्याने—सोपपदान्निरुपपदाच्च विचि 'दधिसेचा'वित्यत्र पदात्परस्य सेचः सस्य आदिभूततया षत्वनिषेधः, आरम्भे तु—पदस्यादिः पदादिरिति षष्ठीसमासस्यैव सत्त्वेन सोपपदाद्विचि निरुक्तपदादित्वाभावेन षत्वनिषेधाप्रवृत्त्या षत्वं भवति, निरुपपदाद्विचि तु सुबुत्पत्त्यनन्तरं समासे निरुक्त-पदादित्वात्षत्वनिषेध इति फलभेद एव । एवञ्चारम्भप्रत्याख्यानयोः फलैक्याय सोपपदाद्विचोऽनभिधानं, निरुपदादेव च सिचो विच् । निरुपपदाद्विचि हि-'उत्तरपदत्वे चे'त्यस्यारम्भेऽपि न षत्वं, प्रत्याख्यानेऽपि न षत्वमिति न फलभेदः ।

अत्र **कैयट** इत्युक्त्याऽरुचिः सूचिता,—सा च आरम्भपक्षेऽपि 'पदादादि'रिति पञ्चमीसमासस्त्वे बाधकाभावेन सोपदान्निरुपपदाच्च विचि षत्वनिषेधप्रवृत्तेः फलभेदाभावात्सोपपदाद्विचोऽनभिधाने न मानमिति सम्प्रदायविदो **गौडेन्द्रा** व्याचक्षते ।

सेचयतः=णिजन्तात् । एवञ्च णिङ्निमित्तो गुणः सुलभ इति न 'क्ङिति चे'ति निषेधशङ्कयाश्रयः ।

१ **कार्यित्व एवेति** । एवञ्च 'परमदण्डिना'वित्यत्र दण्डिन्नित्यस्योत्तरपदस्य ङमुडात्मककार्याभावान्न

※ तरङ्गिणी ※

'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधप्रवृत्तिरिति तु [illegible] रुमुडित्यर्थेन [अविभक्तेश्च पदत्वाभावात्-] न रुमुडित्यादयः। [illegible] णत्वनिषेधप्रवृत्तये प्रत्ययलक्षणस्यावश्यकतया कार्यित्वनिवेश आवश्यक इति—नागेशभट्टः.

परेतु-'पूर्वदण्डिप्रियः' इत्यत्र 'दण्डी'त्यस्य नलोपकार्यितयोत्तरपदत्वे चेति प्रत्ययलक्षणनिषेध [illegible] मत्वानाक्रान्तोत्तरपदस्य कार्ये कर्त्तव्ये प्रत्ययलक्षणं ने'त्येव तदर्थो वाच्य इति—'पूर्वदण्डिप्रिय' इत्यत्र 'दण्डी'- मध्यमत्वाक्रान्तमेवोत्तरपदमिति प्रत्ययलक्षणनिषेधाप्रवृत्त्या पदत्वात्तल'प इति 'माषकुम्भवापेने'त्यत्रापि तथैव प्रत्ययलक्षणनिषेधाप्रवृत्तौ कार्यित्वनिवेशो व्यर्थः। मध्यमपदत्वञ्च—यत्किञ्चित्समुदायविशिष्टत्वं, वै० 'स्वघटकत्व' 'स्वघटकाव्यवहितपूर्वत्व' 'स्वघटकाव्यवहितोत्तरत्व' त्रितयसम्बन्धेनेति तृतीयमध्यमपदत्वस्य कुम्भेत्यत्राऽक्षतेरित्याहुः।

अत्र नागेशभट्टानुसारिणः—मध्यमपदत्वं न स्वदुक्तरीत्या यत्किञ्चित्समुदायविशिष्टत्वरूपं, किन्तु वृत्तिविशिष्टत्वं, वै० 'स्वारम्भकत्व' 'स्वारम्भकावधिकपूर्वत्व' 'स्वारम्भकावधिकोत्तरत्व' त्रितयसम्बन्धेनेति- 'माषकुम्भवापेने'त्यत्र कुम्भे न निरुक्तमध्यमपदत्वाक्रान्तत्वम्। तथाहि—'माषकुम्भवापेने'त्यत्र हि वृत्तिद्वयं, माषस्य कुम्भ इति षष्ठीसमासात्मिका एका वृत्तिः, तं वपतीत्युपपदसमासात्मिका अपरा, तत्र यदि आद्या- वृत्तिर्गृह्यते तदा न तदारम्भकावधिकपूर्वत्वं कुम्भस्य, अपरा वृत्तिर्यदि वृत्तिरत्र गृह्यते तर्हि न तदारम्भकः कुम्भमात्रं, किन्तु माषकुम्भमिति समुदायः, वाप इति चेत्—कुम्भे निरुक्तरीत्या मध्यमपदत्वाभावात्कार्यित्व- निवेशाऽभावे प्रत्ययलक्षणनिषेधो दुर्वारः। न च वृत्तिविशिष्टत्वरूपं मध्यमपदत्वं स्वीकृत्य कार्यित्वनिवेशा- पेक्षया यत्किञ्चित्समुदायविशिष्टत्वरूपं मध्यमपदत्वमादृत्य कार्यित्वनिवेशाभिनिवेशो निरस्तनीय इति वाच्यं, 'प्रत्यङ्ङिस्फुलिङ्गः' 'सनाद्यन्ता धातवः' 'यणादिपरं' 'सुप्तिङन्तं पदम्' 'अनाद्यन्तस्यार्थानां'त्यादिनिर्देशो- पात्तये वृत्तिविशिष्टत्वरूपमध्यमपदत्वस्वीकारस्यैवावश्यकत्वात्। यत्किञ्चित्समुदायविशिष्टत्वं मध्यमपदत्व- मितिस्वीकारे हि-पूर्वत्राग्न्यादिशब्दादेर्मध्यमपदत्वाक्रान्तत्वमत्वादुत्तरपदत्वे चेतिनिषेधाप्रवृत्त्या प्रत्ययलक्षणेन पदत्वान्ङमुडापत्तेर्दुर्वारत्वादिति प्राहुः।

परे तु—कार्यित्वनिवेशमनभ्युपगच्छतामस्माकं नये-'ङमि चे'त्यतः 'पदे' इत्यस्यानुवृत्तेरभावात् 'प्रत्यङ्ङिस्फुलिङ्ग'इत्यादौ ङमुड्भिध्यत्ये एव, 'सनाद्यन्ता'इत्यादौ तु 'हेमपरे वे'त्यादि विभाषाद्वयमध्ये 'ङमो ह्रस्वे'ति पाठसामर्थ्यादेव तस्य नित्यत्वे सिद्धे नित्यपदोपादानेन ङमुट्सूत्रस्य कादाचित्कत्वबोधनाच्च ङमुट् , अत एवैको यणचीत्यादिनिर्देशसङ्गतिरिति न वृत्तिविशिष्टत्वं मध्यमपदत्वं, न वा कार्यित्वनिवेश आवश्यकः।

किञ्च—'माषकुम्भवापेने'ति कार्यित्वनिवेशस्य फलं न सम्भवति। तथाहि—'आर्द्रगोमयेणे'त्यादौ 'पदव्यवायेऽपी'ति णत्वनिषेधाप्रवृत्तये कृतं—[तद्धितपरकपदव्यवाये न णत्वनिषेध इत्यर्थकम्—] 'अतद्धिते इति वक्तव्य'मिति वार्त्तिकं पदे परतो यो व्यवाय इत्यर्थमाश्रित्य—'आर्द्रगोमयेणे'त्यादौ पदे परतो व्यवायाभावेन 'पदव्यवायेऽपी'ति निषेधाप्रवृत्त्या दोषाभावात्प्रत्याख्यातं,तत्र वार्त्तिकारम्भे—'माषकुम्भवापेने'त्यत्र सुबुत्पत्तेः पूर्वं समासे 'पदव्यवायेऽपी'ति णत्वनिषेधः, प्रत्याख्याने तु—पदे परतो व्यवायाभावात्पदव्यवायेऽपीति निषेधाऽप्रवृत्त्या 'आर्द्रगोमयेणे'तिवण्णत्वापत्तिरिति फलभेदेन प्रत्याख्यानासम्भवात्पदव्यवायेऽपीति सूत्रे 'पदपदं पदत्वयोग्योपलक्षण'मित्यवश्यमाश्रयणीयमिति—'माषकुम्भवापेने'त्यत्र 'वापे'त्यस्य पदत्वयोग्यत्वा- 'त्पदव्यवायेऽपी'ति निषेधः, 'आर्द्रगोमयेणे'त्यत्र तु पदत्वयोग्यत्वस्य मयटि प्रत्ययेऽभावान्न णत्वनिषेध इति कार्यित्वनिवेशाभावेऽपि 'माषकुम्भवापेने'त्यत्र णत्वनिषेधसम्भवः स्पष्ट एव। पदत्वयोग्यत्वञ्च—पदत्व- प्रयोजकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदक—[ प्रातिपदिकत्व—]धर्मवत्त्वमेव। इत्थञ्च नागेशा- नुसारिरीत्या वृत्तिविशिष्टत्वरूप—मध्यमपदत्वस्वीकारेऽपि 'माषकुम्भवापेने'त्यत्र न कार्यित्वनिवेशफलं, पदपदस्य पदत्वयोग्योपलक्षणत्वादित्याहुः।

❀ वरवर्णिनी ❀

अत्र नागेशानुसारिणः—कार्यित्वनिवेशमस्वीकुर्वता भवता—मध्यमपदत्वाक्रान्ते उत्तरपदे—प्रत्ययलक्षणं क्रियते ? न वा ?, यदि 'उत्तरपदत्वे चे'त्यस्य मध्यमत्वानाक्रान्ते एव प्रवृत्तिं स्वीकृत्य मध्यमत्वाक्रान्ते प्रत्ययलक्षणं क्रियते तदा—त्रयो गावो भव्या यस्येति त्रिपदेऽवान्तरतत्पुरुषोत्तरं बहुव्रीहौ टचि 'त्रिगवभव्येने'त्यत्र प्रत्ययलक्षणेन 'गो' इत्यस्य पदत्वादे'ङः पदान्तादती'ति,—'अवङ्स्फोटायनस्ये'ति वा स्यान्नादेशः, यदि मध्यमपदत्वाक्रान्तेऽपि 'उत्तरपदत्वे चे'ति निषेधप्रवृत्त्या प्रत्ययलक्षणं नेत्युच्यते तर्हि—'गो' इत्यस्य पदत्वाभावा'त्पदव्यवायेपी'ति निषेधाऽप्रवृत्त्या णत्वापत्तिरित्युभयतःपाशा रज्जुः।

कार्यित्वनिवेशवादिनामस्माकन्तु अवादेशे 'गो' इति कार्यीति-'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधः, णत्वे तु न कार्यीति तत्र प्रत्ययलक्षणनिषेधाप्रवृत्त्या पदत्वाण्णत्वनिषेध इति—न दोष इति कार्यित्वनिवेश आवश्यक एवेत्याहुः ।

परे तु—मध्यमपदत्वाक्रान्तेऽपि 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधस्वीकारात्पदत्वाभावा- 'त्रिगवभव्येने'त्यत्र न पूर्वरूपापत्तिः. 'पदव्यवायेऽपी'त्यत्र पदपदस्य पदत्वयोग्योपलक्षकतया च तेन निषेधान्न णत्वमिति कार्यित्वनिवेशस्य नेदं फलमित्याहुः ।

[ननु अत्रेरपत्यानि—अत्रयः इत्यत्र ढकि—'अत्रिभृगुकुत्से'ति बहुत्वे तल्लुकि जसि 'जसि चे'ति गुणे प्रत्ययलक्षणेन षष्ठ्यन्तत्वात्पदत्वे 'एङः पदान्ता'दिति पूर्वरूपापत्तिः, 'उत्तरपदत्वे चे'ति निषेधस्य तु न प्राप्तिः, समासचरमावयवत्वाभावात्, यदि तु 'वृत्तिचरमावयवस्य कार्ये' इत्यर्थस्तथापि अत्रिशब्दस्य वृत्ति चरमावयवत्वं नास्ति, ढकस्तथाभूतस्य लुप्तत्वादिति चेन्न, वृत्तिघटकाऽव्यवहितपूर्वत्वाभाववत्त्वं वृत्तिचरमावयवत्वमिति स्वीकारेण—अत्रिशब्दस्य वृत्तिचरमावयवत्वेन 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधप्रवृत्तेः ।

नचैवं राजेत्यत्रापि वृत्तिचरमावयवत्वात्प्रत्ययलक्षणनिषेधे नलोपानापत्तिरिति वाच्यं, यस्य सुपः प्रत्ययलक्षणं चिकीर्षितं स वृत्तिघटको ग्राह्य इत्यस्य स्वीकारेण 'राजे'त्यत्र सुप्रत्ययस्य वृत्तिघटकत्वाभावेन प्रत्ययलक्षणनिषेधाप्रवृत्तेः। नचैवमपि परमञ्च तल्लोम च परमलोम, परमलोम्नि—चरतीति—'परमलोम्निचरः' इत्यत्र वृत्तिघटकङिप्रत्ययाव्यवहितपूर्वत्वेन वृत्तिचरमावयवत्वस्य लोमन्शब्देऽसत्त्वात्प्रत्ययलक्षणेन नलोपापत्तिः, ङौ परतो भत्वन्तु न, ङिप्रकृतित्वस्य 'परमलोम'न्निति समुदाये सत्त्वेऽपि लोमन्छब्दमात्रेऽसत्त्वादिति वाच्यं, यद्वृत्तिघटकसुपः प्रत्ययलक्षणं चिकीर्षितं तद्वृत्तिचरमावयवत्वस्य ग्राह्यतया ङेस्तद्वृत्तिघटकत्वाभावेन तदव्यवहितपूर्वत्वेऽपि तद्वृत्तिचरमावयवत्वस्य लोमन्शब्दे सुस्थतया 'परमलोम्निचर' इत्यत्र न नलोपः इत्यस्य सुवचत्वात् ]-एवञ्च 'माषकुम्भवापेने'त्यत्र यस्य सुपः प्रत्ययलक्षणं चिकीर्षितं, तद्वृत्तिघटको न वाप शब्द इति—कुम्भशब्दस्य वृत्तिचरमावयवतया प्रत्ययलक्षणं न स्यादिति—'पदव्यवायेऽपी'त्यस्याऽप्रवृत्तौ णत्वापत्तिरिति कार्यित्वनिवेश आवश्यकः, तन्निवेशे तु वृत्तिचरमावयवत्वेऽपि 'कुम्भे'त्यस्य कार्यित्वाभावेन प्रत्ययलक्षणनिषेधाप्रवृत्त्या "पदव्यवायेऽपी'ति णत्वनिषेधः सिध्यति । न च यत्तदोरननुगतत्वेन 'यस्य सुपः' इत्याद्यनुक्त्वा—'वृत्तिघटकप्रत्ययेतराव्यवहितपूर्वत्वाभाववत्त्व'मेव वृत्तिचरमावयवत्वमिति वाच्य, 'राजीयती'त्यत्र क्यजूपप्रत्ययेतराव्यवहितपूर्वत्वाभावेन निरुक्तवृत्तिचरमावयवत्वस्याक्षततया 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधात्पदत्वाऽप्राप्त्या 'नः क्ये' इत्यस्य विधायकत्वस्यैवापत्त्या भाष्योक्तस्य नियामकत्वस्य भङ्गापत्तेः । एवञ्च 'माषकुम्भवापेने'त्यत्र णत्वनिषेधप्रवृत्तये पदत्वाय प्रत्ययलक्षणस्यावश्यकत्वा'दुत्तरपदत्वे चे'त्यत्र कार्यित्वनिवेश आवश्यक इत्याहुः ।

परे तु—सुबन्तत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयेतरप्रत्ययेतराव्यवहितपूर्वत्वाभाववत्त्वस्यैव वृत्तिचरमावयवत्वेन—'राजीयती'त्यादौ वृत्तिचरमावयवत्वविरहात्प्रत्ययलक्षणेन पदत्वे सिद्धे 'नःक्ये' इत्यस्य नियमार्थता सूपपन्ना,'परमलोम्निचर' इत्यत्र च वृत्तिचरमावयवत्वाक्षतेर्न नलोपः, नापि यत्तदनुप्रवेशप्रयुक्त-

पूर्ववार्त्तिकमपि 'उत्तरपदत्वे च पदादिविधा'वित्येवमेव पठितम् ।

एतत्प्रत्याख्यानप्रकारस्तु गुरुणा इति न युक्त इति [illegible]—प्रत्याख्यानेऽपरं पुनर्न- घटितैतद्वचनपाठेनेति—न स्म लिखितः । उत्तरपद[illegible]न [illegible]क्रान्तोत्तरपदस्य

---

ॐ चिदस्थिमाला ॐ

ननु कथमेकदेशानुवृत्तिः ? [illegible] पाठो भाष्येऽत आह—पूर्वेति । [illegible] इति भावः ।

ननु एतावता [illegible], न प्रत्याख्यानपरो भाष्ये [illegible] आह—एतदिति । मूले [illegible] ध्वनितं [illegible]—प्रत्येति । [illegible] 'पूर्वत्रासिद्धे' [illegible] उत्तरपद- त्वेन प्रत्ययलक्षणनिषेध[illegible] आह—उत्तरेति । प्रत्याख्यान[illegible]-

ॐ सदाशिवभट्टीयम् ॐ

[illegible]ऽवयवत्वादसिद्धः स्यादिति भावः । न स्म लिखित इति । ननु [illegible] [illegible]वचनं

ॐ विषमपदविवृतिः ॐ

**पूर्ववार्तिकमपीति** । भाष्ये 'उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवती'ति वचनं पठित्वा—ततः स्वादिषु पूर्वं पदं भवतीत्याद्यनेकविधयोगविभागेन प्रत्याख्याय— 'दधिसेचा'वित्यादौ षत्वार्थे पदादाविति पञ्चमीसमासाश्रयणे 'बहुसेचौ' 'बहुसेच' इत्यादौ दोषमुद्भाव्य—'तदुत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं भवती'ति वक्ष्यामि, तन्नियमार्थं भविष्यति पदादिविधावेव न पदान्तविधाविति । कथं 'बहुसेचौ'?'बहुचू'त्रस्य पदादिविधावेव न पदान्तविधा'वित्युक्तम् । तत्रघटितैतद्वचनपाठेनेति । अन्ये तु प्रत्याख्यानप्रकार एव युक्तः,

---

गौरवमिति 'माषकुम्भवापेने'त्यत्र पदचरमावयवत्वाभावात्प्रत्ययलक्षणप्रवृत्त्यानिषेधाऽप्रवृत्त्या प्रत्ययलक्षणेन पदत्वाण्णत्वनिषेधसिद्धेन कार्यित्वनिवेशस्य किञ्चिदपि फलमित्याचक्षते ।

अत्र **नागेशभट्टानुसारिणः सदाशिवभट्टाः**—अटतीत्यट्, परमश्चासावट् च परमाट्, ततोऽशब्देन समासे परमाडः, तस्मादाचारक्विबन्तात्क्विपि अल्लोपे 'नितुत्रे'तीडभावे 'परमाट्'ति'रित्यत्र 'पूर्वत्रासिद्धे न स्थानिव'दित्यल्लोपस्य स्थानिवत्त्वाभावात्प्राप्तस्य ष्टुत्वस्य 'न पदान्ताट्टो'रिति निषेधाय कार्यित्वनिवेश आवश्यकः, अन्यथा 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधापत्तौ पदत्वाभावात्टुत्वनिषेधो न स्यात्, कार्यित्व- निवेशे तूत्तरपदस्य अडित्यस्य कार्यित्वाभावादुत्तरपदत्वे चेति निषेधाप्रवृत्त्या पदत्वात्ष्टुत्वनिषेध इत्याहुः ।

**परे तु**—लेहनं लेट्,'इयाद्ये'ति णः, परमश्चासौ लेट्श्च-परमलेटः, स इवाचरति—परमलेटति, ततो'ऽन्येभ्योऽपी'ति वनिपि अल्लोपे 'नेड्वशी'तीडभावे 'परमलेड्ड्'त्यत्र 'उत्तरपदत्वे चे'ति निषेधारम्भ- पक्षे प्रत्ययलक्षणनिषेधात्ष्टुत्वाभावः, प्रत्ययलक्षणेन प्राप्तायाः पदसञ्ज्ञायाः—'स्वादिषु' 'असर्वनाम- स्थानेयचि' 'भम्' इति—योगविभागेन निरासात्प्रत्याख्याने तु-प्रत्ययलक्षणेन प्राप्तायाः पदसञ्ज्ञाया वनिपो यजादित्वाभिदिन्नत्वात्सर्वनामस्थानभिन्नत्वात्कप्प्रत्ययावधिद्दिर्भूतत्वाच्च बारयितुमशक्यत्वादारम्भ- प्रत्याख्यानयोः फलभेदापत्तिः, अतः—'भ'मितिसूत्रेऽनुवृत्तस्य यजादिपदस्य सर्वनामस्थानभिन्न- यजादिस्वादीतरप्रत्ययमात्रपरत्वस्यावश्यकत्वमिति—वनिपादौ भत्वान्न ढत्वमिति न फलभेदः । एवमेव परमाट्—तिरित्यत्रापि यजादिस्वादीतरक्विप्प्रत्यये परतः पूर्वस्य भत्वात्ष्टुत्वनिषेधाप्राप्त्या परमाट्ट्- रत्येवं ष्टुत्वमिष्यते एवति न तत्र कार्यित्वनिवेशफलमिति प्राहुः । तदेवं—शेखरकृदुक्तः कार्यित्वनिवेशो व्यर्थः, 'उभि च पदे' इत्यत्रत्यं भाष्यमेकदेशिनोक्तिप्रत्युक्तिभूतमेव, 'पदे' इति तु लक्षणप्रतिपदोक्त- परिभाषाया अनित्यत्वज्ञापनायैव, तत्फलन्तु 'मित्सती'त्यत्र कृतदीर्घस्यापि मिनोतेः 'सनि मीमे'त्यत्र ग्रहणमिति—सम्प्रदायविदो गौडाः प्राहुः ।

विस्तरस्त्वत्रत्यः—शब्देन्दुशेखरत्रिपुरसुन्दर्यामस्मत्पितामहश्रीचरणाकलितायाम्, अस्मदस्यूद्धितायां शब्देन्दुशेखराऽभिनवराजलक्ष्म्याञ्चानुसन्धेयः, परीक्षार्थिविद्यार्थिसार्थानुपयोगित्वान्नेह तन्यते ।

ग्रहणं व्याख्यानात् । तेन 'पूर्वदण्डिप्रिय' इत्यादाववान्तरतत्पुरुषोत्तरपदेऽपि नलोपादिसिद्धिः । **कादेशो नेति** । इदम्शब्दे 'यः सा'विति च नेत्यपि बोद्ध्यम् ।

**वक्तव्य इति** । 'द्वितीयाटौस्स्वि'ति–अत्र सम्बद्ध्यते । अयञ्च सामर्थ्याल्लुका लुप्तेऽपि भवति ।

एनद्देशोऽपि'एन'मित्यादिसिद्ध्यर्थं वक्तव्यः। 'येननाप्राप्ति'न्यायेनैनतस्त्यदाद्यत्वापवादत्वेन

❀ चिद्स्थिमाला ❀

मूलकमाह—**व्याख्यानादिति** । न्यूनतां निराचष्टे–**इदमिति** । अयञ्च 'अम्येवे'ति सकलग्रन्थासाङ्गत्याय 'तत्सूत्रे एव वार्तिकपाठः' इत्याशयेनाह—**द्वितीयेति** । अत एवाह—**अयञ्चेति** । आंशिकविधि-सामर्थ्यादित्यर्थः । नन्वेवमस्यावश्यकत्वेनान्यत्र त्यदाद्यत्वेन सिद्ध्या एनादेशस्य वैफल्यमत आह–**एनेति** ।

❀ सदाशिवभट्टीयम् ❀

जसि यञो लुकि ह्रस्वस्य गुणो भवति, तत्र पदत्वादेङः पदान्तादिति दुर्वारं, न चानेन निषेधः, उत्तरपदत्वा-भावात्, एतत्प्रत्याख्याने तु यजादौ सर्वनामस्थाने पूर्वस्य पदत्वनिषेधेनादोषादिति चेन्न, उत्तरशब्देनो-त्तरपदं न लक्ष्यते किन्तु वृत्तिचरमवर्ति, तथा च प्रकृते निषेधसौलभ्यमिति बोध्यम् । युक्तञ्चैतत्, अन्यथा प्रत्याख्यानेऽस्मादेवाचारक्विपि शपि 'मघवति' 'शम्भवती'त्यत्र गुणे कृते पूर्वरूपापत्तिः, अत्र सर्वनामस्थाना-भावेन तस्य निषेद्धुमशक्यत्वात् । मन्मते—वृत्तिचरम एव स इति निषेधः स्पष्टैवेति दिक् ।

**सम्बध्यत इति** । ननु तत्सम्बन्ध एनयोरित्यत्र चारितार्थ्यात् 'सामर्थ्याल्लु कालुप्तेपी'त्यसङ्गतमिति चेन्न, प्राचीनानुरोधित्वात् ; तस्य स्वमते ह्येकवचने एवेति बोध्यम् । इदमत्र तत्त्वम्, एनो न वक्तव्यः, न च तत्र न्यायेन त्यदाद्यत्वबाधः, त्यदादिविषयेऽप्रवृत्तेरुक्तत्वात्, यदि सोपि न दोषावहः, 'एनदेव कर्त्तव्य' इति भगवतः सिद्धान्तस्त्वैनदेव कर्त्तव्य' इति शङ्कितेऽपरेण 'यद्येनत्क्रियते तर्ह्येनोऽपि न कार्य' इति तदुपर्युपहासपरतया तत्सार्थक्यादिति सुधियः । ननूपसर्जने तकारचारितार्थ्यमतः

❀ विषमपदविवृतिः ❀

'उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेधः' 'बहुच्पूर्वस्य चापदादिविधा'विति वचनद्वया-पेक्षया प्रत्याख्यानस्य लघुत्वात् । तथा हि–'स्वादिषु'–पूर्वं पदं भवति, ततो'ऽसर्वनामस्थानेयचि'-पूर्वं तद्घटकं च पदं न । ततो—'भम्' । यजादावसर्वनामस्थाने पूर्वं तद्घटकं च भं भवतीत्यर्थं इति सर्वेष्टसिद्धिः स्पष्टा । न च 'दधिसेचा'वित्यादौ षत्वापत्तिः, पदादादिरिति पञ्चमीसमासाश्रयणात् । न च 'बहुसेचा'वित्यत्र षत्वापत्तिः, पद्यते गम्यतेऽर्थोनेनेति व्युत्पत्त्या पदपदस्यार्थवत्परत्वात् ।

पदञ्च प्रकृतिभिन्नमेव–सातिग्रहणात् । तेन 'प्रतीषिषती'त्यत्र न दोषः । अर्थवदिति तु—'षि'-शब्दमादायोत्तरस्य षत्ववारणाय । एवञ्च सति–षष्ठीतत्पुरुषेऽपि न दोषः । न चैवं 'कुमारी'ष्वित्यत्र षत्वनिषेधापत्तिः, सातिग्रहणे न पदसञ्ज्ञाशून्ये प्रत्यये पदादित्वप्रयुक्तप्रतिषेधाप्रवृत्तिज्ञापनात् । प्रत्याख्यानोत्तरं नञ्घटितैतद्वचनपाठस्त्वेकदेशिनः।'कथं तर्हि पदादादिः पदादि'रिति भाष्यग्रन्थोऽपि तथैव । किञ्च वचनारम्भपक्षे कश्यपेन प्रोक्तमधीयते 'काश्यपिन' इत्यादौ नलोपापत्तिः, 'छन्दो-ब्राह्मणानी'त्यनेन प्रोक्तप्रत्ययान्तस्याध्येतृप्रत्ययं विनाऽप्रयुक्तत्वबोधनेऽपि सुबुत्पत्तेः प्राक् तत्प्रवृत्ति-बोधकत्वे मानाभावात् । किञ्च जम्ब्वाः फले 'जम्ब्वा'वित्यत्र'को सवर्ण' इति प्रकृतिभावापत्तिः । न ह्यत्र फलप्रत्ययस्य सुबुत्पत्तेः पूर्वत्वं प्रत्याशापि । किञ्च 'बहुचर्मिके'त्यत्र वचनारम्भे नलोपा-नापत्तिः, प्रत्ययलक्षणप्रतिषेधेन पदत्वाभावात् । कप्रत्ययनिमित्तं पदत्वन्तु समुदायस्य, ततश्च

१ सामर्थ्यात्=तकारोच्चारणसामर्थ्यादित्यर्थः । त्यदाद्यत्वस्यावश्यं प्रवृत्त्याऽदन्तत्वेनैव व्यवहर्त्तव्ये तकारोच्चारणं नपुंसके श्रवणार्थमित्याशयः । नपुंसके त्यदाद्यत्वं तु न, लुका लुप्ते तत्प्रवृत्तौ मानाभावात्,

तत्र कृते त्यदाद्यत्वाप्राप्तेः ।

अत एव भाष्ये 'नपुंसकैकवचने एनद्वक्तव्यः, कुण्डमानय प्रक्षालयैन'-दित्युक्तम् । अत्र 'नपुंसकैकवचने' इत्युक्तयाऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो 'यद्येन'दित्यादिरुक्तिः । 'यदि'गर्भवाक्ये पूर्वपक्षयुक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फल्गुत्वान्नात्रोत्तरमुक्तम् । सिद्धान्ती तु—'किमुच्यते—नपुंसकैकवचने इति, सर्वत्र एनदेव वक्तव्यः' इत्येवं-शब्दैः प्रत्याख्यानं कुर्यात् । अनयोरप्यादेशयोः 'एतदश्चतसो'रित्येतस्मादिन्वयेणोपसर्जने

## ❀ चिद्स्थिमाला ❀

तत्र=एनति । अत एव=तस्यावश्यकत्वादेव । अन्यत्रेति । अन्यथा तत्र तत्प्रयोग एव न स्यादितिभावः ।

नन्वेतदंश बाधकग्रन्थसत्त्वात्कथमस्य सिद्धान्त्युक्तित्वमत आह—अपवादत्वमिति । यदीति । 'प्राय' इति शेषः ।

नन्वेवं तदंशे भगवता कुतो न तदुत्तरमुक्तमत आह—भाष्येति । फल्गुत्वात्=सर्वप्रसिद्धत्वेन तुच्छत्वात् । अत्र=एकदेश्युक्तौ । ननु तथापि सा सिद्धान्त्युक्तिमत्प्रत्याख्यानपरा कुतो नेति आह—सिद्धान्तीत्विति । विशेषमाह—अनयोरपीति । एतन्नोरित्यर्थः । अपिनाऽन्वम् । स्याहेति । तस्योपानुपसर्जनादेव

## ❀ विषमपदविवृतिः ❀

यत्प्रातिपदिकसञ्ज्ञकं तदर्थनिष्ठि,—न तदन्यम्, यच्च पदं—वस्तुतः तन्निष्ठिति, न तत्प्रातिपदिकमिति तल्लोपो दुर्लभः। अपि च वचनारम्भे 'पूर्वद्विगुवदिष्यं' इत्यादयः 'मध्यमत्वानापत्ते'रिति विशेषणेऽनिर्णायकत्वमिति यत्किञ्चिदेतदित्याहुः । अत एवेति । एतदस्त्यदाद्यत्वापवादत्वादेवेत्यर्थः । अनयोरपीति । एना-देशस्य, एनतश्चेत्यर्थः । 'एनतमादाये'त्यादि'कदेश्युक्ति'रित्यन्तो ग्रन्थोऽपवादत्वमजानत एकदेशिनो—'यद्येनदित्याद्युक्ति'रिति पूर्वग्रन्थेन पुनरुक्तोऽपि तद्विवरणपरतया कथञ्चिन्नेयः । अन्ये तु—'यद्येनत् क्रियते एनो न वक्तव्य'इत्यादि भाष्यस्वारस्येन 'द्वितीयाटौस्स्वेन' इत्यत्रैव एनद्वक्तव्य इति लभ्यते ।

न च येन नाप्राप्तिन्यायेनैतदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेः यद्येनदित्याद्येक-देश्युक्तिरिति वाच्यम्, 'न लुमते'ति निषेधानित्यत्वेन 'कुण्डमानय प्रक्षालयैन'दित्यत्राप्येनदः

---

औटि शसि च तकारं विनाऽपि—एनौ एनानिति सुसाधनतो द्वितीयाऽनुवृत्तेरस्येव तकारश्रवणं फलमिति अनित्यत्वात्प्रत्ययलक्षणनिषेधाप्रवृत्तौ एनदादेशः क्लीबे सिद्धः । येननाप्राप्तिन्यायेन=तक्रकौण्डिन्यन्यायेन ।

१ त्यदाद्यत्वाप्राप्तेरिति । एवञ्च एनादेशाभावे एनमिति रूपं न स्यादत एनादेशोऽपि वक्तव्य इति भावः ।

परे तु इदं चिन्त्यम्, 'इदमो म इति सूत्रारम्भसामर्थ्येन—सप्तम्यन्तपदप्रयोज्यविभक्तित्वावच्छिन्न-निमित्तताकं कार्ये तक्रन्यायाप्रवृत्तेः, अन्यथा तदप्राप्तियोग्येऽचारितार्थ्यात्त्यदाद्यत्वस्याऽऽदेशेनैव बाधा-न्मकारादेशविधानवैयर्थ्यं स्पष्टमेव । सुब्विषये प्रवृत्तये—सप्तमीति । तत्र हि—आमीति षष्ठ्यर्थे सप्तमीति तत्र तत्प्रवृत्तिरित्याहुः । २ औचित्यादिति । परे तु एकदेश्युक्तित्व न प्रमाणं, यदियमेकदेश्युक्तिः स्यात्तदा भाष्य-कृताऽस्या उत्तरमवश्यं दत्तं स्यात् । 'इत्येवं शब्दैः प्रत्याख्यानं कुर्या'दित्यप्यसङ्गतं, नहीयं राजाज्ञाऽस्ति—एवमेव प्रत्याख्यानं करणीयमिति । एवं सूत्रान्तरसाहचर्याश्रयणमप्ययुक्तमेव । 'त्यदाद्यत्वेन सिद्ध'मिति भाष्यस्य तु स्वयमेव एकदेश्युक्तित्वस्योक्ततया तस्य प्रमाणत्वेनोपन्यासोऽयुक्त एवेति शेखरोक्तम-युक्तमेवेत्याहुः ।

न प्रवृत्तिः, 'त्यदाद्यत्वेन सिद्ध'मिति भाष्यासङ्गतेश्च ।

एनतमादायैनादेशप्रत्याख्यानपरं 'यद्येनत्क्रियते'इत्यादि भाष्यं त्वेकदेश्युक्तिरिति[1] भाष्यप्रदीपोद्योते निरूपितम् ।

अन्वादेशविषये इदमेतदोः समासस्यानभिधानमेव;"—'यद्येनत्क्रियते, एनो न वक्तव्यः, कथमेनमित्यादि ?,–त्यदाद्यत्वेन सिद्धम्, यद्येवमेतच्छ्रितको न सिद्ध्यति, 'एनच्छ्रितक' इति प्राप्नोति;–यथालक्षणमप्रयुक्ते'[2]—"इति भाष्यात् ।

**ब्राह्मणी इति** । 'न संयोगा'दिति निषेधादल्लोपो न ।

**रोऽसुपि–अहर्भातीति।** 'अह'न्निति रुत्वे 'अहो भाती'ति स्यादिति भावः । **नलोपे प्राप्ते इति** । न च नलोपेऽकारस्य रौ रे वा विशेषाभावेनान्यतरेणैवोपपत्तावुभयविधान-सामर्थ्यादेव लोपो नेति वाच्यं, सम्बुद्धौ नलोपनिषेधेन 'अहर्गच्छे'त्यादावुत्वाभावेन, 'दीर्घाहो निदाघे'त्यादावुत्वसम्पादनेन च चारितार्थ्यात् ।

न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुकरणेन नान्तस्याहन्शब्दस्येति

ॐ चिदस्थिमाला ॐ

सम्भवादिति भावः । सूत्रान्तरस्थसाहचर्यानाश्रयणे हेत्वन्तरमाह—त्यदेति । अन्यथोपसर्जनेऽत्वाप्राप्त्या तेनाऽसिद्धत्वात्तदसङ्गतिः स्पष्टैव । ननु ततस्तस्य प्रत्याख्यानं स्फुटं प्रतीयते इति कथं तत्त्यागोऽत आह—**एनतमिति । इत्यादीति** । अनुपदमेवेदं व्यक्तीभविष्यति । अग्रिमस्य न सर्वस्य तत्त्वं किन्त्वंशस्येति सूचयितुं विशेषान्तरमाह—**अन्वादेशेति** । तदेवं तदग्रिमं भाष्यमाह—**यद्येनदिति** । एतेन तथा तत्प्रत्याख्यानादरङ्कुर्वन्तो दण्डिशास्त्र्यादयः प्रत्युक्ताः। **अल्लोप इति।** 'विभाषा ङिश्यो'रित्यनेन। प्राचीनकृता-ऽहनित्युपन्यासस्याऽयुक्ततां ध्वनयन्नाह–**रोऽसुपि-अहर्भातीति।** तदेवाह–**अहनितीति** । रेफसाफल्यमाह–**अहरिति।** रुत्वसाफल्यमाह–**दीर्घेति।** उभयत्र 'हे'इत्यादिः। एवमग्रेऽपि। **नकारोच्चेति।** 'अह'इत्येव वाच्ये

ॐ सदाशिवभट्टीयम् ॐ

सामर्थ्याऽभाव इत्यत आह—**अनयोरिति । अहन् । निषेधेनापीति** । अपिना तक्रन्यायः ।

ननु निषेधविषये चारितार्थ्यात्तक्रन्यायो न दृष्ट इति चेन्न, 'ब्राह्मणेभ्यो दधि दीयतां' न रात्रौ, तक्रङ्कौण्डिन्याये'त्यत्र बाधदर्शनात् । न च वाक्यद्वये कार्ये वाक्यत्रयकरणसामर्थ्याद्बाधोस्तु, अत्र किङ्गमकमिति वाच्यं, 'ब्राह्मणेभ्यो गौडेभ्यो दधि तक्रं श्मश्रुमलं चे'त्यत्र वाक्यद्वयेऽपि बाधदर्शनात्। अत्र प्राचीनं ग्रामात् हस्वा आम्रा ये बर्हिणस्ते न्यग्रोधा इत्यत्र च दर्शनात् । ननु 'न ङी'ति

ॐ विषमपदविवृतिः ॐ

प्रवृत्त्या तत्र च त्यदाद्यत्वाप्रवृत्त्या येन नाप्राप्तिन्यायाऽप्रवृत्तेः । सत्वस्य त्यदाद्यत्वानपवादत्वस्येव तक्रकौण्डिन्यन्यायाऽनित्यत्वेनैनतोपि तदनपवादत्वस्योपपत्तेश्च । "यद्येवमेतच्छ्रितको न सिद्ध्यति, 'एनच्छ्रितक' इति प्राप्नोति"–इत्यग्रिमभाष्यं त्वेकदेश्युक्तिः, उपसर्जनत्वेनैनदादेशस्य तत्राप्रवृत्तेः,

१ एकदेश्युक्तिरिति । उपसर्जने एनदादेशे त्यदाद्यत्वाप्राप्तेस्तत्प्रत्याख्यानस्याशक्यत्वादित्याशयः ।
२ 'यथालक्षण'मित्यत्र च—अप्रयुक्ते यथा लक्षणं तथैव अवगन्तव्यमिति प्रथमव्याख्यैव ज्यायसीति पूर्वमुपपादितमेव । एवञ्च अत्रापि 'एनच्छ्रितक'इत्येव लक्षणतः प्राप्नोतीति तदेवरूपं युक्तमिति परे ।

व्याख्यानान्नलोपो नेति वाच्यं, 'दीर्घाहो निदाघे'ष्वादौ सम्बुद्धौ प्रवृत्त्या स्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः ।

आवर्त्येति । आवृत्तौ मानञ्च—'रूपरात्रि'ति वार्त्तिकमेव । अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्यप्रामाण्याच्च तस्य सम्बुद्धावप्रवृत्तिः । तज्ज्ञापकसिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः । आवृत्तस्य पदान्ते अहन्निति निपात्यते इत्यर्थः ।

इदमसम्भवे प्राप्तवादत्वमिति वार्त्तिकमते 'अह'न्नित्यस्य नलोपोत्तरञ्चारितार्थ्याभिमानेन । वस्तुतः—'सत्यपि सम्भवे बाधनं भवती'ति भाष्यसिद्धान्तात्—रुत्वरत्वे नलोपापवादभूते एव । निषेधविषयेऽपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वात् । निषेधेनापि तस्य बाध इत्यन्यत् । एतेन 'सम्बुद्धौ चारितार्थ्य'मित्यपास्तम् ।

ध्वनितञ्चेदम्–'अपवादो रुर्नलोपं बाधिष्यते' इत्यर्थकभाष्येण । एतदग्रे-नलोपे कृतेऽकारे सावकाशत्वशङ्का—तत्समाधानादि वार्त्तिकानुसारिणोरित्यलम् ।

ॐ चिद्रस्थिमाला ॐ

इत्यादिः । 'अह्न' इति वाच्येऽहन्निति निर्देशो लिङ्गनावृत्ताविति शास्त्रानुक्तमयुक्तम्, उक्तरीत्या तस्य साफल्यात्तदुन्नयन्नाह—रूपेति । ननु सम्बुद्धौ नलोपाभावेन तस्य साफल्यमत आह—भाष्येति । तथोदाहरणादिपरभाष्येत्यर्थः । तस्त्वर्थं । ननु तत्रो वाचनिकत्वेऽपि चेत्तत्राह—तदिति । वार्त्तिकेत्यर्थः ।

नन्वेवमपि कथं तत्तल्लाभोऽत आह–आवृत्तस्येति । मूलादि खण्डयति–इदमिति । मूलं'कशङ्कासमाधिरूपमित्यर्थः । ननु निषेधाविषये न येननाप्राप्तिरत आह—निषेधेति । विषयेति । विषयस्येत्यर्थः ।

अत्रैवाह–निषेधेनेति । अपिना तयोः समुच्चयः । तस्य=नलोपस्य । एतेन=तत्रापि तथा ताभ्यां बाधेन । अत्रापि वैपरीत्यशङ्का यथा न तथा सविशदं स्पष्टमुद्योते । एतेन तथा सकलग्रन्थकारोक्तमपास्तम् ।

ॐ सदाशिवभट्टीयम् ॐ

निषेधं पर्यालोच्य 'न लोप' इत्यस्य सङ्कोचे प्राप्तिरपि दुर्लभेति चेन्न, सङ्कोचस्य वाक्यार्थकालिकत्वेन वाक्यार्थात्पूर्वमेव च व्याप्यव्यापकज्ञानसत्त्वेन पूर्वं शास्त्रस्य तद्बाधज्ञानादेतद्विषयसङ्कोचस्य सुलभतया दोषात् । निषेधशास्त्रस्य च प्रतियोग्यपेक्षत्वेन पूर्वं तत्सङ्कोचाभावात् । नचाहयतेः क्विप्यह् इत्यत्र नान्तत्वाभावात्कथं

ॐ विषमपदविवृतिः ॐ

'न लुमते'ति निषेधाच्च । न लुमतेत्यस्यानित्यत्वं तु धर्मिग्राहकमानेनैकपदाश्रितलुक्येव । तथाचैतेन कृतमेतत्कृतमित्यादौ नैनदादेशप्रवृत्तिरित्याहुः । इत्यलमिति । अन्ये तु–'सावकाशः कः, कोऽवकाशः ? अनन्त्यः–' इत्यादि 'नलोपः प्रातिपदिके'ति सूत्रस्थभाष्यप्रामाण्येन त्रिपाद्यां न तक्रकौण्डिन्यन्यायः, 'स्कोः संयोगाद्यो'रित्यादि तु निरवकाशत्वेन संयोगान्तलोपादि बाधकम् । अत एव रथीतरसिद्धिः, अन्यथा नलोपं बाधित्वा नस्येत्त्वे तस्यासिद्धत्वात्सवर्णदीर्घानापत्तिः । अत एव 'धुक्' 'सुत्र'डित्यादौ भष्भावघत्वादिषु कृतेषु जश्त्वादिसिद्धिः । अन्यथाऽपवादत्वात्तैर्जश्त्वापवादत्वापत्तिः। 'रहाभ्या'मिति निमित्तत्वेन कार्यित्वबाधस्तु 'हयवर'डिति सूत्रस्थभाष्यबलादेव । अस्तु वा त्रिपाद्यामितरविधिषु यथा तथा, नलोपविषये तु 'ईत् रथीनः'—'रथीतरः' । 'भूरिदाम्नस्तुट्'–'भूरिदावतर'इति भाष्यप्रयोगबलेन नोत्सर्गापवादभावः । अत एव 'नलोपः प्रातिपदिकेति'सूत्रे भाष्येऽपि—'अनवकाशो रुर्नलोपं बाधिष्यते, इत्युक्तं, न त्वपवादो रुरित्याहुः ।

**तदन्तस्यापीति** ।—पदाधिकारस्थत्वात् । 'ग्रहणवते'ति निषेधस्तु प्रत्यय-विधिविषय इति—'असमासे निष्कादिभ्य' इति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः ।

**तस्यासिद्धत्वादिति** । अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम् । दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोद्ध्यः । **सम्बुद्धौ त्विति** । सुपोऽत्र हल्ङ्यादि-र्लोपादसम्बुद्धा'वित्युक्तेर्दीर्घाभावे रुत्वे 'हशि चे'त्युत्वे आद्गुणः । **स्रग्वीणीति** । इन्ग्रहणेऽनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः । **बहुवृत्रहाणीति** । अत्र यद्वक्तव्यं तदुक्तम् ।

**पदान्ते कुत्वमिति** । 'क्विन्प्रत्ययस्ये'त्यस्यासिद्धत्वात् 'व्रश्चे'ति षत्वे कुत्व-मित्यर्थः । षत्वन्तु 'सृष्ट'मित्यादौ सावकाशमिति भावः । **भाष्यप्रयोगादिति** । अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोद्ध्यते। तेनासृगित्यत्र न दोषः । **कुत्वापवाद इति** । सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एवो'पयट्काम्यती'ति काम्यच्सूत्रस्थो भाष्यप्रयोगः सङ्गच्छते ।

**निपातनादेवेति** । निपातनेन । योरपवादाप्रत्तिमात्रबोधनं, कुत्वन्तु स्वशास्त्रेणैव । एतेन निपातनादपदान्तेऽपि कुत्वापत्तिरिति निरस्तम् ।

**असृक्शब्दस्त्विति** । इदमेव न्याय्यम् । **ऊर्गिति** । अयं पुल्लिङ्गोऽपि-,

---

**ॐ चिदस्थिमाला ॐ**

तदाह—**इत्यलमिति** । मूलादि दूषयितुं तदाशयमाह—**अकृतेति** । एतत्सूचितारुचिमाह-**दीर्घस्त्विति** । सा नास्त्येवेतिभावः । प्रागुक्तपरिभाषांशस्येदं फलमित्याह—**इनिति** । **अत्रेति** । यथाश्रुतसङ्गतेराह—**क्विनिति** । ननु षत्वं निरवकाशमत आह-**षत्वं त्विति** । झलीति भावः । एवञ्च 'मानो अस्राक्'"मानो अद्रा'गित्यत्रापि कुत्वसिद्धिरिति बोध्यम् । भाष्यस्य विशेषापेक्षत्वे विश्वसृडाद्यसिद्धिः, सामान्यापेक्षत्वेऽसृगा-द्यसिद्धिरत आह—**अनेनेति** । 'ननु 'सृष्टमित्यादौ षत्वं सावकाश'मित्युक्तमिति कथं तस्य तदपवादत्वमत-आह—**सृजीति** । यथाश्रुतमूलासङ्गतेराह—**निपातनेनेति** । अनयोः=स्रक्-ऋत्विक्शब्दयोः ।

मात्रव्यवच्छेद्यमेवाह—**कुत्वन्त्विति** । एतमेव दोषमाह—**एतेनेति** । उक्तव्याख्यानेनेत्यर्थः । निपात्यान्तर-साहचर्येण पदान्त एव कुत्वनिपातनमिति दुर्वचमिति भावः । पूर्वमते विषयपरिज्ञानस्यासम्भवात, क्षीर-स्वाम्यादिप्रतिपादितत्वाच्चाह-**इदमेवेति** । स्वरभेदस्तु न लोके, तदनादरात, वेदेऽनापाद्यत्वाच्चेति भावः ।

**ॐ सदाशिवभट्टीयम् ॐ**

नान्तप्रातिपदिकत्वमहन्शब्द इति वाच्यं, पदान्ताहन्शब्दस्य सर्वत्र नान्तस्यैव सत्त्वेन तस्य तद्व्याप्यतायाः संलभ्यादिति दिगिति—विभावयन्तु सुधियः । **ऊर्गिति** । 'इयमूर्जी'ति वैदिकप्रयोगादस्य

**ॐ विषमपदविवृतिः ॐ**

**न्याय्यमिति** । अन्ये तु-'क्विन्प्रत्ययस्य कु'रिति सूत्रे "-इदं तर्हि प्रयोजनं-यभ्यः क्विन् विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्-मानो अस्राक्, मानो अद्रा'गिति भाष्यात्कुत्वस्यासिद्धत्वा-त्षत्वे 'क्विन्प्रत्ययस्ये'ति कुत्वं भवत्येव । षत्वस्य कुत्वापवादत्वं तु न, त्रिपाद्यां तक्रकौण्डिन्यन्याया-ऽप्रवृत्तेः, पदान्ते विशिष्य षत्वविधिकल्पकाभावाच्च । 'विश्वसृ'डादौ तु न कुत्वम् । 'क्विन्प्रत्ययस्ये'-त्यतद्गुणसंविज्ञानबहुव्रीहेर्विज्ञानेपि 'स्पृशोऽनुदके' इति सूत्रेऽनुदकग्रहणेन क्विन्प्रत्ययविधायक-शास्त्रानुपात्तोपपदके क्विप्प्रत्ययान्ते 'क्विन्प्रत्ययस्ये'त्यस्याप्रवृत्तेः । अनुदकग्रहणं तूदके उपपदे क्विपः

**षण्णामिति** । कुक्पक्षे त्रयाणां, गतौ त्रयाणामित्यर्थः । **चत्वस्येति**। तेन गतौ त्रयाणामाधिक्यं नेत्यर्थः । **कुक्पक्ष इति** । पूजायामित्यर्थः । **अश्वाशीति** । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । **यः शतेति** । शतृप्रत्यय इत्यर्थः ।

**आच्छीन** । 'वे'ति वर्त्तते, उत्तरसूत्रे नित्यग्रहणात् । 'नाभ्यस्ता'दित्यतो 'ने'ति तु नानुवर्त्तते, निषेधस्य प्राप्तिपूर्वकत्वात् , अत्र च प्राप्त्यभावात् । नुम्ग्रहणन्तु स्पष्टार्थम् । **शतुरवयव इति** । 'परो यः शते'ति तु नोक्तं, 'तुदन्ती'त्यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन, व्यपवर्गालाभेन च नुमभावापत्तेः । अवर्णश्च शतृभिन्नावयव एव गृह्यते—शत्रकारेणाव्यभिचारात्[1] ।

**शप्श्यनोः** । 'आ'दिति 'भान्ती'त्यादौ नित्यनुमभावाय, अन्यथा प्रत्ययलक्षणेन स्यात् । 'आ'दित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम् । 'नलुमते'ति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्ये एवेति भावः । 'पचन्ती'त्यादिबहुवचने 'नपुंसकस्य झलचः'इति नुम् ।

**निरवकाशत्वमिति** । इदं 'छदिरुपधिबलेर्ढ'ञिति सूत्रे 'शेषाद्विभाषे'ति सूत्रे च भाष्ये स्पष्टम् ।

❀ चिदस्थिमाला ❀

इति न्यायाच्च । तथा च नपुंसकत्वेनासर्वनामस्थानत्वान्नुम्नेत्यर्थः । तथैव वाच्ये एवमुक्तिरेका क्रियेति न्यायेनेति बोध्यम् । एकत्र तदभावादाह—**कुगिति** । अनेनोभयोरनिवारणमित्याह-**तेनेति** । अत एवाह—**पूजायामिति** । तथाचात्रष्टापत्तिरिति भावः । ऋदुशनसित्यनङिति सूचनायाह—**शत्रिति** । **नित्येति** । नचानेनैव नुमि सिद्धे 'शप्श्यनो'रित्यारम्भसामर्थ्यादेवास्य वैकल्पिकत्वं तस्य च नित्यत्वं सिद्धमिति व्यर्थं नित्यग्रहणमिति वाच्यम् ,-वैपरीत्यापत्तेः । तदुक्तं **भाष्ये**-'तिष्ठतु तावत्सांन्यासिकं नित्यग्रहण'मिति । यत्तु प्रतिषेधसम्बद्धानुवृत्तिर्माभूदिति नुम्ग्रहणं, नचात्र न क्षतिः, उत्तरसूत्रेणापि निषेधस्यैव नित्यतापत्तेरिति, तन्नेति ध्वनयन्नाह-**नाभ्यस्तादिति । अभावादिति** । एवञ्च सामर्थ्यादेव निषेधनिवृत्तिसिद्धिरत एवाह-**नुमिति** । आदेशे-कृत । प्राचां मतेनाह-**उभेति** । सिद्धान्तमतेनाह-**तेनेति** । **आदिति** । 'भान्ती'ति पाठः । अङ्गस्य=तत्सम्बन्धकस्य । 'शप्श्यनो'रित्यस्याप्राप्तेराह-**पचन्तीति** । **छदिरिति** । तत्र हि-'छादिषेयञ्च'मेत्यत्र चर्मणोऽञिति

❀ सदाशिवभट्टीयम् ❀

त्वानुम्नेति । वस्तुतः सर्वनामस्थानत्वमेव न । नपुंसकत्वादिति तु चिन्त्यम् । **अश्वेति** । समासे भूतशब्दस्य पञ्चशतपरत्वम्, एवमक्षिशब्दस्य विंशतिपरत्वम् । अन्यथा भूतादेः पञ्चद्विसप्तसङ्ख्याकत्वेन चतुर्दशसङ्ख्यात्वस्यैवापत्तेः । **आच्छी** । **परो यः शतेति** । इदमेव युक्तम् । अन्यथा शतृभिन्नावयवेत्यर्थेऽपि शत्रकारे समुदायावयत्वमादायापत्तिरेव स्यादिति । शतृभिन्नावयवोऽर्थवान् ग्राह्य इत्युक्ते गौरवं स्यात्; पूर्वान्तवत्त्वेन तस्य यत्राऽर्थवत्त्वं तत्रैव प्रवृत्तिरन्यत्र तु नेति कल्पनं चेति । नच त्वन्मते व्यपवर्गाभावः, परत्वेन दृष्टो यः शतेति व्याख्यानेनादोषात् ।—उक्तगौरवेणास्याकिञ्चित्करत्वात् ।

१ **शत्रकारेणेति** । शतृभिन्नावयवाकारग्रहणात्तदकारस्य शतृनिरूपिताङ्गत्वमवश्यं भावीति अवर्णान्तादङ्गात्परो यः शत्रन्तोऽङ्गसम्बन्धक इति लभ्यते । तथाऽग्रहणे त्वङ्गावृत्तौ मानाऽभावादवर्णान्तादङ्गादित्यर्थाऽलाभं कुर्वती अदतीत्यादौ नुमापत्तिः । तादृशाऽवर्णग्रहणे तु नात्र प्राप्तिरिति तदनुवाद एव कौमुद्यामुभयत्राऽङ्गपदसम्बन्ध इत्याशयः ।

परे तु निरवकाशत्वस्य प्रतिपदोक्तत्वस्य वा बाधकताप्रयोजकत्वम्। प्रकृते तदभावेनाबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि 'स्वाम्पी'त्येवेत्याहुः।

धनुरिति। 'र्वो'रिति दीर्घस्तु न, रेफान्तस्याधातुत्वात्। 'श्रेयांसी'त्यादौ युगपद्द्वयोरन्त्यादचः परत्वयोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न, सकृद्गतिन्यायात्।

किञ्च—'अन्त्यादचः परो मित्प्रयोक्तव्य' इति 'मिदचः' इत्यस्यार्थेन द्वयोर्मितोरन्त्यादचः परप्रयोगासम्भवेन नात्र नुम्द्वयप्रसक्तिः—पुनःप्रसङ्गविज्ञानेऽपि।

किञ्च—सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति 'नपुंसकस्ये'ति सूत्रे भाष्ये स्पष्टम्।

## इति हलन्ता नपुंसकलिङ्गाः।

❀ चिदस्थिमाला ❀

बाधित्वा पूर्वविप्रतिषेधाड्ड'मित्युक्तम्। अन्यथा प्रतिपदोक्तत्वेनैव टचाऽस्नो बाधसिद्धौ किं तेन ?। छदिश्चर्मविकारोऽपि। 'चर्मणोऽ'मित्यस्य चर्मविकारवाचकात्मिद्ध्यर्थः। शेषादिति। तत्र हि 'शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ती'त्याशङ्क्य 'अनवकाशा हि विधयो बाधका भवन्ति, समासान्ताश्च कबभावे सावकाशाः' इत्युक्तम्। मूलादि दूषयन् सिद्धान्तमाह—परेस्त्विति। नचात्र पुनः प्रसङ्गविज्ञाने दोष एवात आह—किञ्चेति। अभ्युच्चयमप्याह—किञ्चेति। ❀ इतिहलन्ता नपुंसकलिङ्गाः ❀

❀ सदाशिवभट्टीयम् ❀

उभयविरोधः कथं परिहार्य इति चिन्त्यम्। अन्ये तु च्छदिषः विकृतित्वं तृणेष्वेव प्रसिद्धमिति 'छदिरुपधी'त्यस्य प्रतिपदविधित्वेऽपि—चर्मणि तदप्रसिद्धेः प्रतिपदविधित्वाभावाच्चर्मणोऽ'मित्यस्य परत्वात्तत्प्राप्तौ पूर्वविप्रतिषेधारम्भ इत्येकेऽत्र परिहरन्ति। अन्यत्र शीघ्रोपस्थितिकत्वान्नित्यविहितैष्टच्प्रभृतिभिः कपो बाधसम्भवेऽपि तथाविधकब्विधेरप्रवृत्तिपक्षे ऊर्द्ध्वजानुरित्यत्र पाक्षिककपोऽनिष्टस्यापत्तौ भाष्यतात्पर्यान्न सः, किन्तु मूर्द्धाद्विभाषेति पाक्षिको मुरित्याहुः। अपरे तु 'लोहितान्मणा'वित्यनेन पुंसि चारितार्थ्येन स्त्रियां प्रतिपद्विधानमात्रात्लिङ्गबोधकप्रत्ययबाधे प्राप्ते क्रियमाणा'लोहितालिङ्गबाधनं वे'ति तद्वार्तिकात्तद्विरुद्धोक्तभाष्यद्वयेप्येकदेश्युक्तित्वं कल्पयन्तः तुल्यन्यायात् प्रकृते प्राप्तस्यापि दीर्घस्याऽकृतव्यूहपरिभाषया नुमि अकारनिष्ठोपधात्वस्य विनाशोन्मुखत्वेन दीर्घाप्रवृत्तेः 'स्वम्पी'त्येकमेवेत्याहुः। ❀ इति हलन्ता नपुंसकलिङ्गाः ❀

❀ विषमपदविवृतिः ❀

स्वाम्पीत्येवेति। अत एव 'सुस्वाम्पि तटानी'ति प्रयोगः सङ्गच्छते।

❀ इति हलन्ता नपुंसकलिङ्गाः ❀

१ पुनः प्रसङ्गविज्ञानेऽप्याह—किञ्च अन्त्यादच इति। २ नन्वेव 'पचती'त्यादौ धातोरव्यवहितो लडादिर्भवति, तस्य च स्थाने तिबादिरिति शबादीनामपि व्यवधायकत्वादनापत्तिः, अतो 'मदुत्तरप्रवृत्तिमता शास्त्रेण यद्बोध्यते तदपि साधु' इति तत्तच्छास्त्रैरभ्यनुज्ञाऽवश्यं वाच्या [ चरमप्रवृत्तिमता शास्त्रेणैव परिनिष्ठितत्वं, मध्ये प्रवर्त्तमानैः शास्त्रैस्तु शास्त्रप्रवृत्तियोग्यतैवानीयते इति विवेकः ] एवञ्च पूर्वप्रवृत्तनुमुत्तरम् अपरोऽपि नुम्—उद्देश्यतावच्छेदकाक्रान्तेः—प्राप्नोतीति—अज्नुमोर्मध्ये अपरोऽपि नुम्स्यादेवेत्यरुचिः, अत आह—किञ्च सत्यपीति।

# अथ अव्ययप्रकरणम् ।

**स्वरादि** । स्वरादीनामपि निपातसञ्ज्ञैव तु न कृता । स्वरादौ 'निपाता आद्युदात्ता'इत्यापत्तेः । एतेन 'चादीनामप्यव्ययसञ्ज्ञैव कार्ये'त्यपास्तमित्यन्यत्र विस्तरः ।

**स्वरित्यादि** । अनुकरणान्येतानि । तत्रेत एव निर्देशान्न स्वाद्युत्पत्तिः, तेन विसर्गादिकं न ।

स्वरादीनामनेकशक्तिप्रधानता । 'स्वरागतः', 'स्वः स्थितः', 'स्वः पश्ये'त्यादिदर्शनात् । गणे च तन्त्रेण सर्वेषामुच्चारणम् । 'उच्चै'रित्यादीन्यधिकरणशक्तिप्रधानानि,

ॐ चिदस्थिमाला ॐ

**स्वरादीनामपीति** । प्राग्रीश्वरान्निपाताः 'स्वरादीनीत्यादि अव्ययीभावश्चे'त्यन्तं पठित्वा, चादयोऽसत्त्वे इत्यादि अधिरीश्वरे इत्यन्तं पाठ्यम् । **आपत्तेरिति** । नहि तत्र 'चादय'इति सुपठः, ऊर्यादीनामसङ्ग्रहापत्तेः, सङ्ग्रहे वा क्रूआदियोगाभावेऽप्युदात्तत्वापत्तेः। एतेन=इष्टाद्युदात्तत्वालाभेन। **चादीनामिति** । 'प्राग्रीश्वरादव्ययानी'ति पाठेनेति भावः । आद्ये-'असत्त्वे' इत्यस्य-इह शास्त्रे ये चादयस्तेऽसत्त्वे ज्ञेया इत्यर्थः। 'निपात एका'जित्यत्र 'चादिरेका'चिति पाठ्यम् । तेनोच्चकैरित्यादौ न दोषः । एतेन तत्र तदापत्त्या तथा दुर्वचमिति दण्डयुक्तनपास्तं, तदाह-**इत्यन्यत्रेति** । उद्योतादावित्यर्थः । **अन्विति** । 'प्रयोगस्थाना'मित्यादिः । यत्त्वभेदविवक्षायामर्थवत्त्वाभावेन भूसत्तायामितिवन्न सुविति तत्र तत्पक्षस्य निर्मूलत्वादिति मञ्जूषायां स्पष्टं, तदेतद्ध्वनयन्नाह-**तत्रेत एवेति** । अनुकरणत्वे सतीत्यर्थः । **इत्यादीति** । प्रयोगेत्यर्थः । नन्वेवं कथं सर्वसङ्ग्रहोऽत आह—

ॐ सदाशिवभट्टीयम् ॐ

**स्वरादि** । **आपत्तेरिति** । ननु 'चादय आद्युदात्ता' इत्येवं पाठेन तत्र न दोषः। ननु 'स्वरादयोऽसत्त्वे' इति पाठे स्वरादीनामसत्त्वे एवाव्ययत्वापत्तिः, अव्ययमिति महासञ्ज्ञया सिद्धान्तेप्यसत्त्व एवेष्टत्वात्, सत्त्ववाचकानान्तु क्वचित्सतिगमक एवेति न दोष इति चेन्न, तत्र च चादय इति पदद्वयकरणेन निपातप्रदेशेषु चादिपाठेन गौरवापत्तेः । यदि सञ्ज्ञाप्रदेशेषु-निपाता इत्यव्ययमित्युच्यते तदा तु सिद्धान्तेन सममेव । स्वरादिसूत्रे निपातग्रहणं न कार्यमिति त्वत्र पक्षे लाघवं । न चोपसर्गादीनामाद्युदात्तानापत्तिश्चादित्वाभावादिति वाच्यं, चादिगणे एवोपसर्गा इत्यारभ्या'धिरीश्वरे' इत्यन्तं पाठेन चादित्वसिद्धेः, प्रादय इति च न कार्यमिति च लाघवं । नच चादीनामप्युपसर्गगत्योरप्यापत्तिः, उपादिग्रहणस्य नियमार्थत्वात् । नच कर्मप्रवचनीयेष्वप्युपसर्गगत्योरप्यापत्तिः, उपसर्गादीनां गणे पाठत्वेन निपातवत् कर्मप्रवचनीयत्वाप्राप्त्याऽपि समावेश इति वाच्यं, 'कर्मप्रवचनीया' इत्यत्र कर्मप्रवचनीया एवेति पठित्वा गत्यादिबाधसिद्धेः, अन्ययोगव्यवच्छेदोऽवकारेण । स्वघटितपदत्यागे एवनिवेशे च किं लाघवमिति चेत्-एकं पदं कार्यमिति विशेषः। इदमत्र तत्त्वम्-'स्वरादयोऽव्यय'मित्येव सूत्र्यताञ्चादयोऽपि तत्रैव पाठ्याः, 'चादौ प्रादय एवोपसर्गा' इत्येवकारेणोपसर्गादिबाधः, चादीनाञ्चादय आद्युदात्ता इत्येव च पाठ्यम् । असत्त्वे इति पठित्वा चादीनां पाठः कार्यः, तत्र कर्तव्यं वा, तथा च चादयोऽसत्वे इति 'प्राग्रीश्वरान्निपाता' इति 'स्वरादिनिपात'मित्यत्र निपाता इति चन कार्यमिति । एतत्पक्षे निपातपदमनुक्तमिति लाघवं, निपात एकाच्-इत्यादिषु चादय इति पाठे च गौरवेऽपि सप्तपदाकरणात् मात्रालाघवं त्वतिशयितमेव । नच सञ्ज्ञाकृतलाघवं, तदनाश्रयणस्योक्तत्वात् । ननु स्वरादिषु चादिपाठे स्वरादेराकृतिगणत्वादतिरिक्ताव्ययानामसम्भवे पाठे तेषां चादित्वस्याप्यापत्त्याद्युदात्त।-

ॐ विषमपदविवृतिः ॐ

**स्वरादिनिपातमव्ययम्** । **सर्वेषामिति** । तत्तच्छक्तिप्रधानानां सर्वेषामित्यर्थः ।

शब्दशक्तिस्वभावात् । हिरुगादीनि—क्रियाप्रधानानि । क्रियाप्राधान्यञ्चैषां क्रियाविशेषणत्वेन । स्पष्टञ्चेदं 'तद्धितश्चे'ति सूत्रे कैयटे ।

सायं, चिरं—मान्ते अव्यये । 'सायञ्चिर'मितिसूत्रस्थभाष्यप्रामाण्याच्चिरमित्यव्ययमप्रामाणिकमिति परे ।

वदिति । 'तन तुल्यं' 'तत्र तस्येव' 'तदर्ह'मिति विहितः । 'उपसर्गाच्छन्दसी'ति विहितस्य च्छान्दसत्वादेव न सञ्ज्ञा । वस्तुतः 'तद्धितश्चे'त्येव सिद्धेर्वद्ग्रहणं व्यर्थम् ।

अन्तराऽन्तरेणेति । 'अन्तरान्तरेण युक्ते' इति सूत्रे भाष्येऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्तः ।

अस्तीति । धनवानित्यर्थके 'अस्तिमा'नित्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः । विनिगमनाविरहेण विभक्तिप्रतिरूपकस्य शब्दोऽर्थतश्च ग्रहणात् । 'तेनैव सिद्धि'रिति तु—मतुप्सूत्रे भाष्यकैयटयोः । सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति—तद्भावः । एवञ्चाऽस्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम् ।

नमसिति । 'महसां नमसा'मिति प्रयोगस्तु सत्त्ववाचकत्वे बोध्यः ।

प्रताम्प्रशामिति । 'प्रता'निति नान्ताव्ययस्य पृथक्पाठसामर्थ्यादपदान्तत्वाच्चास्य

---

ॐ चिदस्थिमाला ॐ

गणे चेति । ननु प्राधान्येन तद्बोधकत्वरूपं न तत्त्वमत आह—क्रियेति । मूलादि दूषयन्सिद्धान्तमाह—सायमिति । तत्र हि 'अनव्ययभूताकारान्तयोः प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते'इत्युक्तम् । विनिगमनाविरहादाह—तत्रेति । इत्यन्यतमविहित इत्यर्थः । अनतिप्रसङ्गमाह—उपेति । छान्दइति । एतेनान्यथा सकलग्रन्थकारोक्तमपास्तम् । सिद्धान्तमाह—वस्तुत इति । एतेन विपरीतं दण्डयुक्तमपास्तम् । मूलादिखण्डयति—अन्तरान्तेति । ननु विभक्तिप्रतिरूपकत्वादेव सिद्धस्य पाठो व्यर्थोऽत आह—धनेति ।

ननु तथापि शब्दतस्तत्त्वमस्त्येवात आह—विनिगमेति । एतेनास्तीति सत्तायामिति सकलग्रन्थकारोक्तमपास्तम् । मूलादि खण्डयन् सिद्धान्तमाह—तेनैवेति । अर्थतः—ततोऽपि । अपप्रयोग' इति शाख्यायुक्तेरनाङ्गत्वायाह—महसामिति । अस्य=प्रतामादेः । प्रशामित्यत्र प्रशानितिपाठपरमूलादि खण्डयति—प्रशानिति ।

ॐ सदाशिवभट्टीयम् ॐ

पत्तिरिति चेन्न, आकृतिगणेऽन्त्ये एव पाठ्य इत्यत्र विनिगमकाभावेन चादितः पूर्वमेव तेषां पाठेनाऽदोषादिति प्रक्रियाचातुर्यवतां परममधुर इति मात्सर्यमुत्सार्य विचारयन्तु सुधियः । सत्त्ववाचकत्वे इति । स्वरादिषु सत्त्ववाचकत्वेऽप्यव्ययत्वस्वीकारात् ।

ॐ विषमपदविवृतिः ॐ

भाष्यप्रामाण्यादिति । एवं हि तत्र भाष्यम्—'अथ सायञ्चिरयोः किं निपात्यते ? प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते । नैतदस्ति—मकारान्तः सायंशब्दः—' इति । कैयटश्च—'अनन सायशब्दः प्रत्याख्यायते, अव्ययादेव ट्युट्युलोः सिद्धत्वात् । चिरमित्यस्य तु मान्तत्वं निपात्यते—' इति । 'चिर'मित्यव्ययत्वे तु सायशब्दवच्चिरशब्दस्यापि प्रत्याख्यानं भाष्यकृत्कैयटौ वदेतामिति भावः ।

ननु वत्यन्तस्याव्ययसञ्ज्ञायां 'यदुद्वतो निवत' इत्यादौ विभक्तिश्रवणानापत्तिरित्याशङ्क्याह—उपसर्गाच्छन्दसीति ।

---

१ 'चिरमास्वाद्य नरेन्द्रसम्पदः' 'चिरन्दध्यौ' 'चिरम्भुङ्क्ते' इत्यादौ तु 'कालाध्वनो'रिति द्वितीयाबोध्येत्याशयः । परे तु—भाष्यमुपलक्षणं, सायमित्यस्य प्राथम्यात्तत्र भाष्यकृता विचारे कृते तुल्यन्यायाच्चिरमित्यत्रापि तस्य योजनीयत्वादित्याहुः ।

नत्वाभावः । 'प्रशा'निति नान्तपाठोऽसाम्प्रदायिकः, मान्तानुकरणे नत्वाप्राप्तेः, स्वरादौ रुत्वादिवत् । 'कृन्मेजन्त'सूत्रस्थभाष्यस्वरसोऽप्येवमेव ।

नञः—स्वरादिष्वप्रामाणिकः पाठः । 'अव्यये नञ्कुनिपातानां'मित्यत्र पृथङ्नञ्ग्रहणन्तु 'अकरणि'रित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थमित्याकरः ।

एवं—माङोऽपि स्वरादौ प्रक्षिप्तः पाठः । यावत्तावच्छब्दौ—अव्युत्पन्नौ ।

**उपसर्गविभक्ति** । अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते । 'गेये केन विनीतौ वा'मित्यत्रापि 'वा'मित्यस्य युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव । स्वरांशे तु नाऽर्थतोऽसम्भवात् ।

एतेन 'युगं पतती'त्यादिव्युत्पत्त्याश्रयणेन 'युगप'दित्यादीनां विभक्ति-

❀ चिद्स्थिमाला ❀

**भाष्येति** । तत्र हि—'शाम्यतेः क्विबन्तस्य रूपं—प्रशानिती'त्युक्तम् । नञ्सूत्रे भाष्येऽस्य चोनकताया उक्तत्वादाह—**स्वरादिष्विति** । तत्र नञ्ग्रहणं स्पष्टार्थमिति कैयटासाङ्गत्यायाह—**अव्यय इति**। एतेन तत्र पृथक्पाठाच्चादिष्वप्रामाणिकः पाठ इत्यपास्तम् । **माङोऽपीति** । यत्तु सत्त्ववचनस्याव्ययत्वार्थं स्वरादिपाठ इति, तन्न, तस्याऽमाङ्त्वात् । नच ङकारोऽविवक्षितः, 'मा' इति पृथक्पाठवैयर्थ्यापत्तेः, लक्ष्मीवाचकस्यापि तत्त्वापत्तेश्च । एतेनानयोरुभयत्र पाठश्चिन्त्य इति दण्डिशास्त्र्याद्युक्तमपास्तम् । व्युत्पन्नयोः सत्त्ववचनत्वादाह—**यावदिति** । अत्र=उपसर्गविभक्त्युभयविषये । **समेति** ।—कर्मत्वात् । तत्फलमाह—**स्वरांशे इति** । अत एवाल्पाच्तरस्यापि परनिपातः । एतेन=अर्थतोऽपि तदाश्रयणेन । अत एव=तस्याप्य-

❀ सदाशिवभट्टीयम् ❀

**वामिति** । यद्यपि विभक्त्यन्तार्थेन न सादृश्यन्तथापि प्रकृत्यर्थेन तत्त्वम् ।

❀ विषमपदविवृतिः ❀

**भाष्यस्वरसोऽप्येवमिति** । एवं हि तत्र भाष्यम् "—अथ वा पुनरस्तु कृदन्तं मकारान्तमिति, कथं 'प्रतामौ' 'प्रताम' इति ? आचार्यप्रवृत्तिर्ज्ञापयति—न प्रत्ययलक्षणेन सञ्ज्ञा भवतीति,—यदयं प्रशाम्शब्दं स्वरादिषु पठतीति—" । यदि च स्वरादिषु प्रशाम्शब्दपाठस्तदा 'शान–तेजने' इत्यस्मात्क्विपि तत्राव्ययसञ्ज्ञार्थं पाठस्य चारितार्थ्येन ज्ञापकत्वासङ्गतिः । तस्मात्क्विपोऽनभिधानकल्पनन्तु क्लिष्टमिति भावः । **नञःस्वरादिष्विति** । निपातत्वादेव सिद्धेरिति भावः । **अव्ययेति** । इदं 'तत्पुरुषे तुल्यार्थे'ति सूत्रस्थं वचनम् । अव्ययग्रहणे एतेषां ग्रहणमिति तदर्थः । **अकरणिरिति** । 'आक्रोशे नञ्यनि'रिति कृनोऽनिरिति भावः । **माङोपीति** । निपातत्वादेव सिद्धेरिति भावः ।

नन्वर्थतः सारूप्यग्रहणे 'गेये केन विनीतौ वा'मित्यत्राव्ययसञ्ज्ञा न स्यात्, वामित्यस्य कर्मत्वाबोधकत्वादित्याशङ्क्याह—**गेये केनेति** । **विभक्त्यन्तसमानार्थत्वस्येवेति** । युष्मच्छब्दप्रकृतिकविभक्त्यन्तसमानार्थत्वं 'युवा'मिति प्रथमाद्विवचनमादाय, शब्दतः सारूप्यं 'वा'मिति द्वितीयाद्विवचनान्तत्वमादाय । नन्वेवं सति युगपदित्यादीनामपि—एककाले इति विभक्त्यन्तमादायार्थतः सारूप्यं, युगं पततीत्यर्थकयुगपच्छब्दमादाय शब्दतः सारूप्यं, तथा च विभक्तिप्रतिरूपकत्वादेव 'युगप'दित्यादीनामव्ययत्वे सिद्धे 'युगप'दित्यस्य पाठो व्यर्थ इति चेन्न, यच्छब्दप्रकृतिकविभक्त्यन्तमादायाऽर्थतः सारूप्यं तच्छब्दप्रकृतिकविभक्त्यन्तमादायैव शब्दतः सारूप्यस्य विवक्षितत्वेनादोषात् । नन्वेवं स्वरप्रतिरूपकत्वमपि शब्दतोऽर्थतश्च विवक्षणीयं स्यादित्याशङ्क्याह—**स्वरांशे तु नेति** । अन्ये तु स्वरावैकरूप्याय शब्दत एव सारूप्यं नार्थतः, तेन तस्मादित्यर्थक'त'दित्यस्य प्रथमान्तार्थक'वा'मित्यस्य चाव्ययत्वसिद्धिः । अत एव धनवाचिनोऽस्तिशब्दस्य विभक्तिप्रतिरूपकत्वेनाव्ययत्वसिद्धिरिति मतुप्सूत्रे भाष्यकैयटोक्तं सङ्गच्छते । विभक्त्यन्तञ्च पदद्वयाघटितमेवेति

१ स्वराः='अ-इ-उ ऋ-' इत्यादयो गणे पठिताः ।

प्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम् ।

एवं 'त'दित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम् । अत एव 'अविद्या तच्चिनोर्योगः' 'तत्तदर्थविभागः'इत्यादौ 'त्यदादीनी'ति नैकशेषः ।

**अवदत्तमिति** । अत्र क्रियायोगेऽपि—

'अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते ॥'

—इति भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोध्यते इत्याशयः ।

**आकृतीति** । 'अहः'—इति—अहर्नीत्यर्थे । ओमिति च—स्वरादिषु ।—तच्च—अश्च उश्च म् चेति व्युत्पत्त्या शिवादिवाचकम्, 'अवतेष्टिलोपश्चे'ति सिद्धं—ब्रह्मण्यङ्गीकारे च । —उभयोरपि स्वरादित्वं व्याख्यानात् । अन्त्ये 'कृन्मेजन्तः' इति तु न सिद्ध्यति, 'च्विरव्यय'मित्युणादिपठितेन नियमादप्राप्तेः । 'उणादिव्युत्पन्नानाञ्चेचादिस्वराद्यपठितानां भवति, तर्हि च्व्यन्तानामेवे'ति तदर्थः । अन्यथा च्व्यन्तानां निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

'स्वरादिनिपात'मित्यत्र निपातपदे गौणमुख्यन्यायाप्रवृत्तिः, अनित्यत्वात् ।

---

**ॐ चिदस्थिमाला ॐ**

व्ययत्वादेव । **नैकशेष इति** । त्यदादिसाहचर्येणानव्ययस्यैव तत्र ग्रहणम् । अत्र द्वितीयप्रयोगो वीप्सादि-र्वचनेनापि सूपपाद इत्यन्यत्र स्पष्टम् ।-उपायस्योपायान्तरादूषकत्वम् । नन्वत्र क्रियायोगादुपसर्गत्वमस्त्येव, नचैवं तकारापत्तिः, अवदत्तमिति भाष्योक्तेः पक्षे तदप्रवृत्तेः, एतेन तथा सकलग्रन्थकारोक्तमयुक्तमिति चेन्न, साक्षात् प्रधानतकारबाधापेक्षया गुणभूतोपसर्गसञ्ज्ञाया बाधस्यैव तद्बोध्यत्वस्यौचित्यात्, तदाह-**अत्रेति** । निपातत्वाव्ययत्वयोः । फलं त्वव्ययं नञ्कुनिपातानामित्यव्ययपूर्वपदप्रकृतिस्वरत्वमेवेति बोध्यम् ।

आद्ये तत्त्वफलमाह-**ओमितीति** । **शिवादीति** । विष्ण्वादीत्युचितम् । सिद्धं=सिद्धञ्च । अनेन दण्ड्यादिग्रन्थे न्यूनता ध्वनिता । लाक्षणिकत्वाद्यविरोधमूलकमाह—**व्याख्यानादिति** । नियमस्वरूपमाह—**उणादीति** । अन्यथा=तस्यानियामकत्वे ।

**ॐ सदाशिवभट्टीयम् ॐ**

**तत्तदर्थेति** । यद्यप्येकस्यैव द्विरुक्त्याऽपीदं सिद्ध, तथाप्येकतच्छब्दस्य प्रकृतिपरत्वेन एकस्य प्रत्ययपरत्वेन तदसम्भवः । नच 'तच्चिनो'रित्यत्र तदित्यस्य तस्येत्यर्थकस्य प्रथमान्तचिदित्यनेन सामानाधिकरण्याभावाद्द्वन्द्वो दुर्लभः, परिनिष्ठितविभक्त्या समासेनादोषात् । नहि द्वन्द्वसूत्रे 'शेष' इत्यस्यानुवृत्तिर्येन प्रथमान्तानामेव स स्यादिति भावः । अत्र केचित्—यद्विभक्तिसमानानुपूर्वीकत्वं तद्विभक्ति-

**ॐ विषमपदविवृतिः ॐ**

न युगपदित्यादीनां पाठवैयर्थ्यमित्याहु । **लुप्तषष्ठीकमिति** । इदमयुक्तम्—प्रथमान्तानामेव द्वन्द्वविधानेन तच्चितोरिति द्वन्द्वे षष्ठ्यन्तस्य प्रवेशानर्हत्वात् । **तत्तदर्थविभाग इति** । प्रकृतिप्रत्यय-विभागस्तत्तदर्थविभागश्चेति वाक्यस्थतच्छब्दयोः प्रकृतिप्रत्ययपरयोर्द्वन्द्व इति भावः । शब्दरत्ने तु—वीप्सायां कृतद्विर्वचनस्य तच्छब्दस्याऽर्थशब्देन तत्पुरुष इत्युक्तम् । **चादिस्वरादिपठितानामिति** । इदं विशेषणं व्यर्थं, गौरित्यादावव्ययत्वापादकम् । 'इण आसि'रिति निष्पन्ने 'अयाः' इत्यादावव्यय-त्वानापत्तिस्तु नास्माकं, स्वरादिपाठसामर्थ्येन तत्सिद्धेः ।

अन्यथा 'ओ'दिति प्रगृह्यत्वमिदमपि न स्यात् ।

एवमतिशयेन साधुरित्यर्थे—'साधीय' इत्यपि ।

सर्वशब्दोऽत्र 'सर्वः पटो दग्ध' इतिवत्—अवयवकार्त्स्न्ये इत्याशयेनाह—**यस्मात्सर्वेति** । वचनत्रयात्मिकेत्यर्थः । **नेति** । किन्त्वेकवचनमेवेत्यर्थः ।

ननु—'सङ्ख्याकारकबोधकैरेकवाक्यतया सुपां विधान'मिति पक्षेऽव्ययार्थे सङ्ख्याकारकयोरभावात्कथं विभक्तिः ? 'अव्ययादाप्सुप' इति ज्ञापकाश्रयणे च सर्वाऽपि ।

किञ्च—विहितानां नियमपक्षेऽपि नास्योपपत्तिः, तत्पक्षे सर्वेष्वर्थेषु—विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनैव जातस्य निवृत्तिः । तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते ।

—नियमश्च द्विविधः—अर्थनियमः, प्रत्ययनियमो वा । अन्त्योऽपि द्विविधः—प्रकृतार्थापेक्षः, सामान्यापेक्षो वा । तत्र 'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव', 'कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवे'त्यादिरर्थनियमः । अत्र पक्षे सर्वास्सप्तापि विभक्तयोऽव्ययेभ्यो,—विभक्तीनामनियतत्वात् ।

---

### ❀ चिदस्थिमाला ❀

अन्यथा=तत्प्रवृत्तौ । इदम्=अव्ययत्वम् । च्व्यन्ते इति शेषः । स्वरादावेवाह—**एवमिति** । ओमितिवदित्यर्थः । अत एव 'कश्च साधीय' इति तत्र-तत्र भाष्यं सङ्गच्छते ।

यद्यपि सर्वशब्दः प्रकारकार्त्स्न्येऽस्ति, यथा सर्वान्नीनो भिक्षुरिति, सर्वप्रकारान्नभक्षक इत्यर्थः । तथापि न स इह गृह्यते, अव्ययेभ्यः सर्वासामेकवचनान्युत्पद्यन्त इति पक्षेऽपि सूत्रस्यासम्भवदुक्तिकतापत्तेः, नहि सर्वा विभक्तयस्तत उत्पद्यन्तेऽत आह—**सर्वेति** । **वचनेति** । त्रिके एव प्राचां विभक्तिव्यवहारात् ।

विशेषणांशे आक्षिपति—**नन्वित्यादि** चेदित्यन्तेन । 'द्व्येकयोः' 'कर्मणि द्वितीये'त्यादिभिरित्यर्थः । **कथमिति** । एवञ्चैकवचनमपि नेति भावः । चस्त्वर्थे । **सर्वापीति** । तथाचाऽसर्वविभक्तित्वबाधः ।

पक्षान्तरेऽपि दोषमाह—**किञ्चेति** । निवृत्तिः-नियमेन । तत्र=तेषां मध्ये । **तद्योग्येति** । कर्मादियोग्येत्यर्थः । **प्रातिपदिकेति** । 'तादृशे'त्यादिः ।

### ❀ सदाशिवभट्टीयम् ❀

समानार्थकत्वमेव प्रत्यासत्त्येति वामित्यादीनां पाठ विनाऽव्ययत्वानुपपत्तिरित्याहुः । **साधीय इति** । 'कश्च साधीय' इति भाष्यात् । **सर्वेति** । अत्र विभक्तिपदं त्रित्वे पर्यवसन्नं, प्रत्येकमेकवचनादाविति भावः । **द्वितीयैवेति** । 'द्वितीयायाः कर्मत्वमेवार्थ' इत्यर्थे तात्पर्यादर्थापेक्षत्वम् ।

### ❀ विषमपदविवृतिः ❀

**विहितानां नियमपक्ष इति** । इदमुपलक्षणं,—प्राप्यमाणानां नियमपक्षेऽपीत्यस्यार्थस्य । **अस्योपपत्तिरिति** । असर्वविभक्तित्वस्योपपत्तिः । 'अत्र पक्षे' इत्यस्य-'जातस्य निवृत्ति'रित्यनेनान्वयः । 'सर्वेष्वर्थेष्वि'त्यस्य—'सर्वविभक्त्युत्पत्ता'वित्यनेनान्वयः । सर्वेषु=कर्मादिष्वर्थेषु द्वितीयाद्यैकैकविभक्त्युत्पत्तौ जातायामित्यर्थः । **कर्माद्यर्थयोग्यात्प्रातिपदिकाच्चेत्कर्मणि विभक्तिरिति** । 'प्रातिपदिकाच्चेत्कर्मणिविभक्तिस्तदा द्वितीयैवे'त्येव सिद्धौ 'कर्माद्यर्थे'त्यादिविशेषणं व्यर्थम् । **तद्योग्यप्रातिदिकात्प्रथमैवेति** । इदं विशेषणम्—अव्ययेभ्योऽपि द्वितीयाद्यर्थम् । **अर्थनियम इति** । 'यत एवकारस्ततोऽन्यत्र नियम' इति सिद्धान्तात् । **अत्र पक्ष इति** । अर्थनियमपक्षे इत्यर्थः ।

'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव, न करणादौ'; 'कर्मादियोग्य-तद्रहित-तत्प्रातिपदिकार्थे एव प्रथमा, न कर्मादौ'; 'सङ्ख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि, न द्वित्वादा'वित्यादिः—प्रकृतार्थापेक्षप्रत्ययनियमः। अत्रापि पक्षे सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यो लभ्यन्ते।

अथ 'प्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव, नान्यत्र'; 'प्रातिपदिकाच्चेत्प्रथमा तदा—मात्रग्रहणात्पर्युदासन्यायेन—कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवे'त्यादिः सामान्यापेक्षः प्रत्ययनियमस्तदाऽव्ययेभ्यो विभक्तिप्राप्तिरेव नेति-पूर्वोक्तज्ञापकादेव सेति सर्वाऽपि।

यद्यपि—सुपां तिङां सङ्ख्याकर्माद्यर्थकत्वेन 'कर्मण्येव नान्यत्रे'ति वक्तुमशक्यं, तथापि 'कर्मण्येव, न तु तदभावे'इत्याकारो वक्तुं शक्यः। स्पष्टञ्चेदं सर्वं 'बहु'ष्वित्यादिसूत्रेषु भाष्ये। तत्र हि—अर्थनियमे, प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्तयः सम्पूर्णा उक्ताः, सामान्यापेक्षप्रत्ययनियमे च सुपोऽप्राप्तिरेवोक्ता। 'अव्ययादाप्सुप' इति सूत्रे भाष्येऽपि स्फुटमिदमिति चेत्—

अत्र 'तद्धितश्चे'ति सूत्रे भाष्यकृतः—

—'एकवचन'मित्येव सूत्रं कार्यम्, एकग्रहणञ्च न कार्यम्। विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गः। तस्य द्वित्वबहुत्वयोरितरे बाधके भविष्यतः।

❀ चिद्गस्थिमाला ❀

'करणादा'वित्यादिना कर्मादियोग्यतद्रहितप्रातिपदिकार्थस्यापि ग्रहणम्। **कर्मादीति**। 'तादृशप्रातिपदिकाच्चे'दित्यादिः। **तदिति**। कर्मादीत्यर्थः। 'एवे'त्यस्य 'नान्यत्रे'ति शेषः। 'नियम'इत्यस्य 'इत्युच्यते' इति शेषः। भाष्योक्तं चरमनियमासम्भवमाह—**यद्यपीति**। सङ्ख्याकर्माद्युभयार्थकत्वोक्तिसामर्थ्यादाह—**कर्मण्येवेति**। सर्वं=पक्षत्रयम्। तदेवाह—**तत्र हीति**। आद्यसाधारणमाह—**अव्ययादिति**। अत्र=शङ्कायाम्। नन्वेवं कुतस्तदत आह—**विभक्तीति**। एवञ्च=तत्रानतिप्रसङ्गं च। अपिसमुच्चयमेवाह—

❀ विषमपदविवृतिः ❀

प्रकृतार्थापेक्षप्रत्ययनियमपक्षमाह—**कर्माद्यर्थेति**। सामान्यापेक्षप्रत्ययनियमपक्षमाह—**अथेति**।

ननु सर्वेष्वेतेषु पक्षेषु अव्ययानां प्रातिपदिकार्थसूत्रोदाहरणत्वमनुपपन्नं?—तथा च 'प्रातिपदिकार्थग्रहणं किमर्थम्? उच्चैर्नीचैरित्यत्रापि यथा स्या'दिति प्रातिपदिकार्थसूत्रस्थं भाष्यं विरुध्यते, प्रातिपदिकार्थसूत्रस्य पर्युदासन्यायेन कर्मादियोग्यप्रतिपदिकार्थ एव प्रथमाबोधकत्वादिति चेत्-प्रातिपदिकार्थसूत्रस्योक्तनिष्कृष्टार्थमनाश्रित्याऽव्ययानां तदुदाहरणत्वेनोपन्यास इत्याशयात्। वस्तुतस्तु—प्रातिपदिकार्थसूत्रे कर्मादियोग्यप्रातिपदिकादित्यर्थे मानाभावादव्ययानां तदुदाहरणत्वमुपपन्नम्। तत्रार्थनियमे कर्मादिरहितप्रातिपदिकार्थे प्रथमैवेति नियमेन प्रथमैवाव्ययेभ्यः प्राप्नोति न द्वितीयादिः। 'अर्थनियमे सिद्ध'मिति। '**बहु'ष्विति सूत्रस्थभाष्यस्य** प्रथमाया वचनत्रयं सिद्धमित्येवार्थः, प्रकृतार्थापेक्षप्रत्ययनियमे 'कर्माद्यर्थप्रतिपादनयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मणि सत्येव, न तु तदसत्त्वे' इत्यादिरेव सूत्रार्थः। तेन 'गां दोग्धी'त्यादावपादानत्वादावपि द्वितीयादिः। '**बहु'ष्विति सूत्रस्थस्य** 'एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु-' इति भाष्यस्यापि 'सङ्ख्यावत्त्वयोग्येषु चेदेकवचनं तर्हि एकत्वे सत्येव न तु तदसत्त्वे' इत्यर्थः, 'न द्वयोर्न बहु'ष्विति तु फलितार्थकथनमिति दिक्।

१ केचित्तु—'युष्मद्युपपदे एव मध्यमः पुरुषः' 'अस्मद्युपपदे एवोत्तमः पुरुषः' इत्येवं नियमेन शेषे प्रथमपुरुषोपपत्तेः 'शेषे प्रथमः' इत्यपि 'तद्धितश्चे'ति सूत्रभाष्योक्तरीत्या त्यक्तुं शक्यमित्याहुः।

एवञ्चैकत्ववत्यपि भविष्यति, अलिङ्गसङ्ख्येभ्योऽव्ययेभ्यश्चैकवचनं, द्विवचनादि-विधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासञ्ज्ञाबोद्ध्यैकत्वाभावेऽपि तत्प्रवृत्तेः । द्वित्वबहुत्वयो-र्द्विबहुवचनोक्तावर्थादेकवचनस्य—'एकवचन'मित्येतद्वचनं विनाऽपि—द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन सामर्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेऽप्येतत्प्रवर्त्तते इति—विनिगमना-विरहात्सर्वविभक्त्येकवचनमनेन ।

अत एव 'अव्ययादाप्सुप' इति प्रत्याहारग्रहणं चरितार्थं, 'तृतीयासप्तम्यो'रिति च । प्रथमाऽपि मात्रग्रहणाद्यत्र—प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति तस्या अप्यप्राप्तिरव्ययेभ्यः ।

'पचतिकल्प'मित्यादौ तु नानेन सर्वैकवचनं, सर्वथाऽप्राप्तावेव तस्य विध्यर्थ-त्वात् । अत्र च न तथा, कर्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोद्ध्यम् ।

यत्तु—कैयटेन प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनस्यै-वानेनोत्सर्गत्वं बोद्ध्यते इति 'तद्धितश्चे'ति सूत्रे, रूपप्सूत्रे चोक्तं, तन्न; स्वादि-सूत्रे प्रथमायाः प्राथम्येऽपि नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वेन

---

॥ चिदस्थिमाला ॥

**अलिङ्गेति** । नन्वयुक्तमेतत् , तथापि महासञ्ज्ञया आद्ये एवौचित्यादत आह—**द्विवचनेति** । नन्वेवमपि कर्मादावेव स्यान्नत्वव्ययेष्वत आह—**द्वित्वेति** । नन्वेवमपि सुरेव स्यादत आह—**विनेति** **इति**= इत्यत्र । इति च=चरितार्थम् । नन्वव्ययेभ्यः प्रथमा सूत्रत एव सिद्धा अत आह—**प्रथमापीति** । अत एव सर्वा विभक्तय इति बहुवचनान्तविग्रहं त्यक्त्वैकवचनान्तविग्रहो दर्शितो भाष्ये । एवञ्चैतत्पक्षे सङ्ख्या-प्रकरणं विध्यर्थमेव । ध्वनितश्चेदमेकवचनस्योत्सर्गत्वमितरयोस्तद्बाधकत्व च वदता भाष्यकृता । नन्वेवमति-प्रसङ्गोऽत आह—**पचतीति** । अत्र=पचतिकल्पमित्यादौ च । न तथा=न विध्यर्थत्वम् । 'क्रियाया'मित्यस्य मध्यमणिन्यायेनान्वयः। **कैयटेनेति** । सुप्तिङ्विधिभ्यामस्य वाक्यैकवाक्यत्वाच्च न तिङन्तादिभ्यः प्रसङ्ग । एवञ्च सर्वा विभक्तिर्नोत्पद्यते इत्यर्थे न कश्चिद्दोष इति भावः । आद्ये दोषमाह—**स्वादीति** ।

॥ विषमपदविवृतिः ॥

नन्वेकवचनमिति सूत्रं व्यर्थं, द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तावर्थादेकवचनस्य तदविषये प्रवृत्तिसिद्धेरित्यत आह **द्वित्वबहुत्वयोरिति** । **अप्राप्तप्रापणार्थमिति** । सामान्यापेक्षप्रत्ययनियमपक्ष एव सिद्धान्त्यभिप्रेत इति भावः । अन्ये तु सामान्यापेक्षः प्रत्ययनियमः, तत्र हुंफडादिभ्यो निरर्थके-भ्यो विभक्तेरप्राप्तौ एकवचनमित्यौत्सर्गिकमेकवचनम् । सार्थकाव्ययेभ्यस्तु 'प्रातिपदिकार्थ' इति प्रथमै-कवचनं, 'दोषामन्यमहः' 'अत्युच्चै'रित्यादिवृत्तिविषये कर्मत्वान्वयाद्द्वितीयैकवचनं, तेना'त्यादयः क्रान्ताद्यर्थे द्वितीयये'ति समासः । एवं स्वःशब्दाद्द्वितीयापञ्चमीसप्तम्येकवचनानि—'स्वः पश्य', 'स्व आगतः', 'स्वः स्थित'इत्यादिप्रयोगदर्शनात् । एवमपदिशेत्याद्यव्ययीभावात्तदर्थकर्मत्वादिसत्त्वेन द्वितीया-तृतीया-सप्तम्येकवचनानीत्यादि यथायथं बोध्यमित्याहुः । **नानेन सर्वैकवचनमिति** ।

तस्याऽविनिगमकत्वात्। 'निजां त्रयाणा'मित्यत्र त्रयाणाङ्ग्रहणेन 'आद्युदात्तश्चे'ति सूत्रे आदिग्रहणेन च पाणिनिना स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च।

अत्र -'प्रथमा सम्पूर्णाऽव्ययेभ्यः', 'प्रथमाया एवैकवचन'मित्यादिपक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते, तान्यसङ्गतानि; उक्तरीत्या तेषामुक्तिसम्भवाभावात्।

'घट'इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन द्वित्वाद्यप्रतीतौ सङ्ख्यात्वदर्शनेन सत्त्वभूतत्वात्, प्रकरणाच्च। 'बहुषु'इत्यादिसूत्रभाष्योक्तपक्षस्त्वेकदेशिनो—न सिद्धान्तिन इति तत्त्वम्।

'असर्वविभक्ति'रितिबहुव्रीहिलभ्यो विशेष्य इत्याह—**तद्धितान्त इति**। केवलस्य तद्धितस्य प्रयोगाभावेन फलाभावात्सञ्ज्ञाविधावपि तदन्तविधिरिति भावः।

नन्वेवमपि 'पचतिकल्प'मित्यादावतिव्याप्तिः, उक्तरीत्या तेषामसर्वविभक्तित्वात्, उभयशब्दे चातिव्याप्तिः, ततो द्विवचनानुत्पादादत आह—**परिगणनमिति**। एवञ्च सूत्रं न कार्य्यमिति भावः।

**तसिलादय इति**। 'पञ्चम्यास्तसि'ल्लित्यारभ्य—'द्वित्र्योश्च धमुञ्'—इत्यन्ता इत्यर्थः।

❀ चिद्स्थिमाला ❀

तस्य न्यायस्य अभ्युपेत्येदम्। वस्तुतः स एव नेत्याह—**निजामिति**। स्पष्टञ्चैतत् भावप्रकाशे प्रारम्भे। सकलग्रन्थकारोक्तिं खण्डयति—**अत्रेति**। अव्ययविषये इत्यर्थः। आदिना—तत्रापि विभक्तयः। अत एवाह—**पक्षान्तराणीति**। ननु सिद्धान्ते 'घट' इत्युक्ते एकत्वानिश्चयात्तत्संशयापत्तिरत आह—**घट इति**। स्पष्टञ्चेदं मञ्जूषायाम्। नन्वेवमुक्तभाष्यीयपक्षाणां का गतिरत आह—**बहुष्विति**। निषेधाप्रवृत्तौ बीजं शास्त्रयाथुकेऽसाङ्गत्यायाह—**केवलेति**। प्राचां ग्रन्थेषु न्यूनतां सूचयन्नाह—**उभयेति**। दण्ड्यादि- ग्रन्थासाङ्गत्यायाह—**पञ्चम्या इत्यादि**। 'आरभ्ये'त्यस्य 'उभयत्रोक्ताः' इति शेषः। यत्तु शास्त्री—'सोऽपि

❀ सदाशिवभट्टीयम् ❀

**त्रयाणामिति**। अन्यथा कपिञ्जलाधिकरणन्यायेनायमेक इमे त्रय इत्यपेक्षाबुद्धिरेव चतुष्टय- जनिका, प्रथमोपस्थितित्रित्वावच्छिन्नबोधनेनैव बहुवचनसार्थकत्वे तद्वैयर्थ्यं स्पष्टमेव। अत्रेदन्तत्त्वं— सर्वविभक्त्येकवचनत्वाङ्गीकारे 'गङ्गाया आनये'त्यतः सर्वविभक्त्येकवचनापत्तिर्नहि तथाचानुभवः, तस्मादेकैव विभक्तिस्तत्र। 'स्वःस्थित' इत्यत्र सप्तम्येव, 'स्वर्गत' इत्यादौ पञ्चम्येव। एवञ्च सुबित्यादौ हि प्रत्याहारश्चरितार्थः, अस्य तत्र सप्तमीपञ्चम्यादेर्लुगर्थत्वात्। त्वदुक्तमसर्वविभक्तित्वम- युक्तमुक्तयुक्तेः। नच येषामपादानादिर्नास्ति तेषां तु सर्वैकवचनाप्तिरिति वाच्यम्, अर्थे प्रथमैत्येव वक्तव्ये प्रातिपदिकग्रहणात् प्रथमैवेत्यदोषात्। 'कर्मादियोग्ये'त्यर्थस्तु न प्रातिपदिकपदवैयर्थ्यापत्तेः,

❀ विषमपदविवृतिः ❀

किन्तु प्रथमाद्वितीयातृतीयैकवचनान्येवेत्यर्थः। **ज्ञापनाच्चेति**। इदमुपलक्षणम्-'अव्ययादाप्सुप' इति प्रत्याहारग्रहणाच्चेत्यपि बोध्यम्। नन्वेकत्वे एकवचनस्याविधानेन घट इत्युक्ते एकत्वनिश्चयो न स्यादित्याशङ्क्याह-**घट इत्युक्त इति**। ननु 'बहु'ष्वित्यादिसूत्रेष्वेकवचनमिति योगविभागमनाश्रित्योक्त- नियमपक्षान् आश्रित्याव्ययेभ्यः सर्वविभक्तीनां सर्वाणि वचनानीत्युक्तं तत्कुतो नोक्तमित्यत आह— **बहुष्वित्यादिसूत्रेति**। ननु विशेष्यासन्निधानात्तद्धितान्त इति तदन्तविधिः कथमत आह— **बहुव्रीहिलभ्यं विशेष्यमिति**। **इत्याहेति**। इत्यभिप्रेत्याहेत्यर्थः।

**शस्प्रभृतय इति** । 'बह्वल्पार्थाच्छस्'-इत्यारभ्य 'अव्यक्तानुकरणा'दिति डाजन्ताः। यत्तु—'इवे प्रतिकृतौ' इत्यधिकारे-'प्रत्नपूर्वविश्वेमात्थाल्छन्दसी'ति थाल्, तस्य स्वरादौ 'आस्-थालौ'इति पाठेनाव्ययत्वम् । तत्र 'इण आसि'रित्युणादिसूत्रविहितः-आसिः । 'अया' इत्युदाहरणम् । आसिविधायके 'छन्दसी'ति नानुवर्त्तते । एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम् । अत्र च स्वरादावासिपाठ एव लिङ्गम् । 'अयासा वयासा' इति तु च्छान्दसम् ।

**अम्—आमिति** । 'अमु च च्छन्दसि' 'किमेत्ति'ङिति विहितौ । **कृत्वोर्था इति** । कृत्वसुच्सुज्धाः । **तसिवती इति** ।'तेनैकदिक्' 'तसिश्च' 'तेन तुल्य'मित्यादि-विहितौ। एवञ्च स्वरादिषु 'व'दिति पाठे फलं चिन्त्यम् । **ना—नाञाविति** । 'विनञ्भ्यां नानाञौ न सहे'ति विहितौ ।

**कृन्मेजन्तः । कृद्यो मान्त इति** । 'कारयाम्—' इत्यामन्ते 'आमः' इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद्विशेषणं, गणे प्रशाम्शब्द-पाठात् । अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन 'प्रतामौ' लवमाचक्षाणो-'लौ'रित्यादौ नातिप्रसङ्गः ।

न च—'आधये' 'हे आधे', 'कुम्भकारेभ्यः' इत्यादौ गुणे एत्वे च कृते एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः, सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञा-कार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात्; लिङ्गसङ्ख्याद्यन्वयित्वेऽप्यव्ययीभावादाविवात्रा-प्यापत्तेरिति वाच्यं, सन्निपातपरिभाषया बाधात् ।

ॐ चिदस्थिमाला ॐ

प्रकारवचनथाला सदृश इति तदन्तस्यापि सङ्ग्रहः' इति, तन्नेति सूचयन्नाह—यत्त्विति । स्वरादौ=गणे ।

प्रसङ्गादाह-**तत्रेण इति** । सूत्रक्रमेणाह-**कृत्वेति** । आदिना-'तत्र तस्येवे'त्यादि । उक्तमेव दार्ढ्यायाह-**एवञ्चेति** । नन्वेवमामोऽकृत्वादेधामित्यादौ दोषोऽत आह—**कारयामिति** । तत्र 'ले'रित्यत्रानुवृत्ते-राह—**आम इतीति** । वैपरीत्येऽपि कुतः श्रुतत्वाद्विशेष्यत्वेन दोष इति सूचयन्नाह—**कृदन्तस्येति** । एतत्=मान्तादि । गणे=स्वरादिगणे । तेन=तथा व्याख्यानाभावेन । सिद्धान्ते शङ्कते—**नचेति** । आदिना चिकीर्षवे इत्यादि । **एजन्तेति** । व्यपदेशिवद्भावेन । नचान्तग्रहणाच्चित्ययोगबहुव्रीहिणोपदेशे एजन्त इत्यर्थादत्र न दोष इति शास्त्र्याद्युक्तं युक्तं, तयैव सिद्धेऽन्तग्रहणं न कार्यमिति भाष्याशयात् । **सञ्ज्ञेति** । विशिष्टस्येति भावः । कार्यकालपक्षे लुग्विध्येकवाक्यतापन्नसञ्ज्ञायाः समत्वमित्याह—**सञ्ज्ञायाः कार्येति** । नन्वेतावतापि-किमत आह—**सञ्ज्ञेति** । नन्वेवमपि लिङ्गाद्यन्वयित्वेन सत्त्ववाचकत्वान्नात्र तत्प्राप्तिर्महासञ्ज्ञा-विरोधादत आह—**लिङ्गेति** । आदिना कारकम् । कान्तं तस्य विशेषणं, बाधे हेतुगर्भं स्यादिति ।

ॐ सदाशिवभट्टीयम् ॐ

किञ्च पचतिकल्पमित्यादौ स दुर्वारः, विशिष्टकर्तृत्वस्य केनाप्यनुक्तत्वात् । **कृन्मे** । **सञ्ज्ञाया अपीति** । अत एव 'तेभ्यः' 'एषा'मित्यादिसिद्धिः, आद्ये येन विधिस्तदन्तसञ्ज्ञां प्रति त्यदाद्यत्वस्यासिद्धत्वापत्त्याऽदन्तत्वानापत्तिः

ॐ विषमपदविवृतिः ॐ

**सञ्ज्ञाकार्यस्येति** । लुक इत्यर्थः । तत्त्वेन=बहिरङ्गत्वेन । **अव्ययीभावादाविति** ।

१ इदानीन्त्वस्य पाठो नोपलभ्यते ।

न च तया सन्निपातविघातकत्वेऽपि बाधेऽपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम्, एज्विषयसन्निपातनिमित्तकाऽऽर्द्धधातुकसन्निपातविघातकस्य 'क्ङिति चे'ति निषेधस्य तया निवृत्तावपि 'उपदास्ते'त्यत्र कित्त्वापत्तेः । कित्त्वफलन्तु तत्सन्नियोगशिष्टत्वसिद्धिः । एवञ्चोपादस्तेति स्यात् । तत्र हि—किदिति व्यपदेशातिदेश एव, इत्त्वप्रवृत्तिकाले कित्कार्यस्याऽतिदेश्यस्याभावात् ।—

तस्मादनया सन्निपातविघातकशास्त्रस्येव तच्छास्त्रप्रवृत्तिनिमित्ताऽतिदेश-सञ्ज्ञानामपि निवृत्तिरवश्यं वाच्या । 'साक्षात्परम्परया वा स्वसन्निपातविघातकस्य स्वयमनिमित्त'मिति परिभाषार्थः । एतेनात्राकजादि स्यादित्यपास्तम् । अकजादेक-वाक्यतापन्नाऽव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च । लुगेकवाक्यतापन्ना तु न गुणादितो-ऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात् ।

**अव्ययादा** । 'ण्यक्षत्रिये'त्यतो 'लु'गनुवर्तते । **विहितेति** । अङ्गसञ्ज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः । आप्सुब्भ्यामाक्षिप्ताङ्गस्य-अव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः । तेन 'कुम्भकारेभ्यः' इत्यादौ सन्निपात-परिभाषयाऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुङ्निवृत्तिपरभाष्येण न विरोधः ।

**अत्युच्चमाविति** । अत्राऽधिकरणशक्तिप्रधानस्यापि उच्चैश्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद्द्वितीयान्ततया 'अत्यादयः क्रान्ताद्यर्थे' इति समासे अवयवभूतोच्चैः शब्दा-दव्ययात्परत्वेन लुक् स्यात् । समुदायस्य तु नाव्ययत्वं, लिङ्गाद्यन्वयित्वादित्यभिमानः ।

❀ चिदस्थिमाला ❀

कित्त्वाप्रवृत्तौ तु तत्संनियोगशिष्टत्वादित्त्वस्याप्यप्रवृत्तिरिति भावः । ननु कित्त्वप्रयुक्तमन्यदेव कार्यं कुतो न, तदभावे तु कित्त्वमपि न स्यादिति नोक्तदोषोऽत आह—**तत्र हीति** । तस्मात्=तदन्यथानुपपत्तितः । अनया= प्रकृतया । **सञ्ज्ञानामिति** । व्यक्त्यभिप्रायं बहुवचनम् । ननु अवश्यं वाच्यापि कथं ततो लभ्यते इत्यत आह—**साक्षादिति** । अत्र च तया तद्वारणपरभाष्यमेव मानम् । एतेन=उक्तार्थकया तयाऽव्ययत्ववारणेन । 'अकच्स्या'दिति पाठः । ननु कार्यकालपक्षे लुगेकवाक्यतापन्नसञ्ज्ञाबाधेऽप्यकजेकवाक्यतापन्ना स्यादेवात आह—**अकजेकेति** । 'अन्तरङ्गाया'मित्यादिः । **गुणादेरिति** । 'बहिरङ्गे'त्यादिः । नन्वेवं तस्या अप्येव वारणेन भाष्यासङ्गतिरेवात आह-**लुगेवेति** । अधिक गदायां स्पष्टम् । नन्वेवम्–''अनन्यप्रकृतिरिति वक्तव्यं, कुम्भ-कारेभ्यः, न वा 'सन्निपाते'ति सिद्ध''मिति 'कुम्भेजन' इति सूत्रभाष्यविरोधः, त्वद्रीत्या तत्र लुको-ऽप्राप्तेरतोऽन्यग्रन्थासाङ्गत्याय मूलस्यान्यथा तात्पर्यमाह—**अङ्गेति** । ननु नेदमङ्गाधिकारस्थमत आह—**आबिति** । **तेनेति** । तथा व्याख्यानेनेत्यर्थः ।

❀ विषमपदविवृतिः ❀

वस्तुतस्त्वव्ययीभावस्य शक्तिलिङ्गविशेषयोगेपि वचनादव्ययत्वम् । 'आधे'इत्यादरन्वर्थसञ्ज्ञा-बलेनाव्ययत्ववारणसम्भवेऽपि सन्निपातपरिभाषाप्रयोजनकथनार्थं भाष्यकृतैतदुपेक्षितम् । **उपादस्तेति**—समूर्धन्यः पाठः । सन्निपातपरिभाषया क्ङिति चेति निषेधस्य निवृत्तिरित्याशयेन सगुणः पाठः ।

१ 'अक'जित्यत्र 'आदि'पदरहितः पाठश्चिदस्थिमालासम्मतः । २ परिभाषेन्दुटीकायामेतत्कृतायाम् ।

समुदायस्यापि तत्त्वमाशङ्क्य समाधत्ते—**यद्यपीति । तदन्तेति** ।—शब्दस्य विशेष्यत्वात् । 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति वाचनिकस्तदन्तविधिरिति भावः।

**न गौणे इति** । अयं भावः—'सामानाधिकरण्यसम्बन्धेन[1] लिङ्गाद्यनन्वय्यर्थ-बोधकत्वविशिष्टाव्ययपदवत्त्वेन हि अव्ययपदं बोधयतु—'[2] इति तादृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाऽव्ययत्वमिति ।

---

❀ चिदस्थिमाला ❀

तत्त्वम्=अव्ययत्वम् । **इति वाचनिक इति** । इत्यादिनेत्यर्थः । 'बोधयत्विती'त्येवपाठः । अभिमान-पदसूचितां मूलादावरुचिं ध्वनयन् सिद्धान्तमाह—**वस्तुत इति** ।

❀ सदाशिवभट्टीयम् ❀

अन्त्ये गुरुसञ्ज्ञाम्प्रति दीर्घस्यासिद्धत्वात्तस्या अप्यनापत्तिः । वस्तुतोऽव्ययीभावश्चेत्यत्र सामर्थ्यात् महासञ्ज्ञायास्त्यागेप्येतद्विषये महासञ्ज्ञायास्त्यागे मानाभाव इति सुधियः ।

**अयं भाव इति** । नन्वस्य 'वस्तुतः'कल्पेन न वैलक्षण्यम् , अत एव ध्वननपरत्वेन तदर्थलापनं कुर्वन्ति केचिदिति चेन्न, 'अयंभावः'इति कल्पे समानाधिकरण्यसम्बन्धेन लिङ्गान्वयित्वं विशिष्टस्य, न केवलस्येत्याशयः । द्वितीये केवलस्यापि नेत्याशयः ।

ननु तथापि 'वस्तुतो' ग्रन्थेन 'अत एवे'त्यसङ्गतं, तत्प्रत्याख्यानरीतेरभावादिति चेन्न, सर्वनामसञ्ज्ञासाहचर्येणास्याप्यन्यार्थत्वेन प्रत्याख्यानेनादोषात् । प्रधानन्यायोपन्यासस्तु चिन्त्यो, 'वृद्धोयूने'त्यादिगमक एव तत्प्रवृत्तेरिति दिक् ।

❀ विषमपदविवृतिः ❀

वस्तुतस्त्विलप्रवृत्तिपूर्वकालिकमेत्वमात्वस्योपजीव्यं, तच्च न 'क्ङिति चे'ति निषेधविनाश्यं, यच्च निषेधेन विनाश्यमित्वोत्तरकालिकं, न तदात्वस्योपजीव्यं, तस्मादेज्विषये लात्वविधानादकित्त्वसन्निपातनिमित्तमात्वं 'स्याध्वो'रिति कित्वस्यानिमित्तं, कित्त्वसन्नियुक्तश्चेत्त्वमिति कित्त्वाभावे न भवतीति कैयटोक्तरीत्यैव सन्निपातपरिभाषाविरोध उपपादनीयः । तत्र चात्वोपजीव्यकित्त्वस्य साक्षादेव कित्त्वेन विनाशः, भावाभावयोर्विरोधादिति नैषा प्रतिबन्दी युक्ता ।

तस्माद्व्याख्यानाद्भाष्यप्रामाण्याच्च सन्निपातविघातकत्वं परम्परयाप्याश्रीयत इत्येवेत्ययुक्तम् । तादृशमहासञ्ज्ञाकरणात्समुदायस्य नाव्ययत्वमित्येव वक्तुं युक्तम् । 'तादृशार्थाना'मित्यारभ्य मानाभावेने'त्यन्तो ग्रन्थः प्रकृतानुपयुक्तः, न ह्यत्रान्तर्गणकार्यं किञ्चित्प्राप्नोति येनोपयुज्येत ।

'साहचर्येणे'त्युत्तरमर्थस्येति शेषः । प्रसिद्धश्चासावन्तरङ्गश्चासौ पदान्तरानपेक्षश्चासावनुपसर्जनी-

---

१ वृद्धिगुणादिसञ्ज्ञोद्देश्यतावच्छेदकाऽऽत्वादेः शक्ततावच्छेदकत्वे शक्तिनानात्वापत्तौ—हर्याद्यनेकार्थवत्तेषामुपस्थितावपि कस्य चिदेकस्य ग्रहः स्यान्न सर्वेषां, सकृदुच्चरितन्यायात् । एवञ्च आदैच्समानाधिकरणवृद्धिपदवत्त्वेनेव लिङ्गाद्यन्वयितावच्छेदकसमानाधिकरणाव्ययपदवत्त्वेन अव्ययपदाद्बोधः । एवं हि—शक्ततावच्छेदकैक्यं, तेन रूपेण च सर्वेषां ग्रहः । 'आदैचो वृद्धिपदाऽभिन्नाः' इति शेखरोक्तस्याप्यत्रैव तात्पर्यमिति श्रीगुरुचरणाः ।

२ इति=इत्यर्थम् । 'महासञ्ज्ञाकरणा'दिति हेतुतया पूर्वान्वयि । 'बोधक'मितीत्यपि पाठान्तरम् ।

वस्तुतोऽत्रार्थस्य प्रधानाप्रधानन्यायेन सर्वनामसञ्ज्ञासाहचर्य्येण च प्रसिद्धो-ऽन्तरङ्गपदान्तरानपेक्षानुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन—न समुदायस्य, नाप्यवयवस्य सञ्ज्ञा । अत एव भाष्ये—सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्या 'अत्युच्चैसा'वित्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम् ।

एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव, अव्ययात्परस्वस्याप्यभावात् । 'उच्चैरौ' 'उच्चैराभ्या'मित्यादेरभिधाने तु न मानम् । अत एव भाष्ये एतन्नोक्तम् ।

**अलिङ्गत्वादिति** । नन्विदं 'सदृशं त्रिषु'इति विरुद्धमत आह—**लिङ्गेत्यादि** ।

अयं भावः'—यथोच्चनीचैर्महदल्पम्ल्यां वृद्धपरया अन्यस्य: श्रुतेर्भाष्यप्रामाण्या-दत्रोपसंहारः, तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरताऽपि—'इति ।

❀ चिद्स्थिमाला ❀

**अत्रार्थेति** । अव्ययपदयोगलभ्यार्थेत्यर्थः । अत एव=तत्साहचर्याश्रयणादेव । एवञ्च=उक्तरीत्या तयोरनव्ययत्वे च । मूलादिमनेनाह—**विहितेति** । स्वोक्ताशयकतयाह—**अङ्गेति** । 'स्वस्याभावा'दिति पाठः । 'परत्वस्याप्ये'ति पाठोऽपरिवार्थे । ननु विहितविशेषणत्वे स्वोक्तप्रकारेऽन्यादिना[ममामेन]क्वचित्र निर्वाह [?] इति भाष्यासङ्गतिरिवात आह—**उच्चैराविति** । 'औ' इति अशब्दस्य द्विवचनम् । तत्रकादेशस्य परादि-वद्भावात् सुप्त्वम् । उच्चैराभ्या'मित्यस्य 'ब्राह्मणीभ्या'मिति शेषः । अत्राऽत्वं पूर्वान्तवत्त्वेन । तद्ध्वनि—**अत एवेति** । **अस्या इति** । आथर्वणप्रणवविभागतायाः इत्यर्थः । अत्र=अव्यये । इतिर्भावसमाप्तौ ।

❀ सदाशिवभट्टीयम् ❀

**उच्चैराविति** । अकारो वासुदेवस्तस्मादौ प्रत्ययः, परादित्वेन सुप्त्वम् । एवमिदम्शब्दात् भ्यामि

❀ विषमपदविवृतिः ❀

भूतश्चेति विग्रहः। अत्र 'प्रसिद्धान्तरङ्गपदान्तरानपेक्षे'ति विशेषणं व्यर्थम्, 'अनुपसर्जनीभूतलिङ्गाद्यनन्व-यिन'इत्येतावता पूर्तेः। **अत एवेति**। अत्युच्चैसावित्यत्रावस्थाप्यव्ययसञ्ज्ञाभावादेवेत्यर्थः । **व्यर्थ एवेति**। अव्ययसञ्ज्ञायां कार्यकालपक्षाश्रयणात् 'अत्युच्चकै'रित्यादावकजय प्रवृत्ताव्ययसञ्ज्ञामादाय न लुक् ।

**उच्चैराविति** । उच्चैःशब्दात्परो द्विवचनान्तोऽशब्दो बोध्यः । तस्य च परादिवत्त्वेन विभक्तित्वाद्विहितविशेषणाभावे लुगापत्तिरित्याशङ्कावारणायेदम् । **उच्चैराभ्यामिति** । विहित-

१ सूत्रान्तरसाहचर्याश्रयणाच्चेदं युक्तमिति परे । **भैरवमिश्रास्तु**''—ननु प्रधानाप्रधानन्यायो ह्यर्थनिर्देशविषयः, यथा—'पुमान् स्त्रिये'त्यत्र पुमर्थशब्दस्य स्त्र्यर्थकस्य च निर्देशे । अत्र हि 'ब्राह्मणवत्सा ब्राह्मणीवत्सश्चे'त्येवं सहोक्तौ प्रधानाप्रधानन्यायेन प्रधानस्त्रीपुंसभिन्नाऽप्रधानस्त्रीपुंसकृतस्यापि विशेषस्य सत्त्वादेकशेषो न भवति । प्रकृते तु—'स्वरादिनिपाते'तिशब्दपरं न त्वर्थपरमिति न प्रधानाप्रधानन्याया-वसर इत्यत आह—**सर्वनामसञ्ज्ञासाहचर्येणेति** । साहचर्यमत्र सादृश्यम् । तत्र यथा 'सर्वनामे'तिमहा-सञ्ज्ञाकरणेन विलक्षणोऽर्थः क्लृप्तस्तथाऽत्राप्यव्ययमितिमहासञ्ज्ञाकरणेनैतादृशोऽर्थः कल्प्यत इति भावः ।

२ **प्रसिद्धान्तरङ्गेति** । प्रसिद्धश्चान्तरङ्गश्चेति समासङ्कृत्वा—प्रसिद्धमित्यादेर्व्याख्यानभूतं—यत् 'पदान्तरानपेक्षानुपसर्जनीभूत'मिति—तेन कर्मधारयः । अत्र 'प्रसिद्ध'मित्यनेन सञ्ज्ञाशब्दव्यावृत्तिः । सञ्ज्ञाशब्दो हि यदा सञ्ज्ञिबोधनाय प्रयुज्यते तदा 'चैत्रनामकोय'मित्येवंरीत्या प्रयोगो भवति, तथात्रापि 'स्वरनामक' इत्येव प्रयोग इति पदान्तरसापेक्षता स्फुटैव । 'अन्तरङ्ग'मित्यस्यैव व्याख्यानम्—'अनुपसर्जनी-भूत'मिति । उच्चैःशब्दो हि केवलः प्रयुक्त ऊर्ध्वदेशनिष्ठाधिकरणतां प्रतिपादयति । तस्य स्वार्थमात्रप्रति-पादकतयाऽन्तरङ्गत्वम् । 'अत्युच्चैसा'वित्यादौ तु यथा वृत्तिघटकस्य 'राजपुरुष'इतिसमासावयवस्यैकार्थीभाव-बलाद्राजशब्दस्य राजसम्बन्धिपुरुषप्रतिपादकता, पुरुषशब्दस्य च राजसम्बन्धिपुरुषप्रतिपादकता तथोच्चैःशब्दस्याप्यूर्ध्वदेशाभिन्नाधिकरणकर्मकातिक्रमणकर्तृप्रतिपादकतया बहिरङ्गत्वमिति भावः । एतेन 'प्रसिद्धानुपसर्जनीभूते'त्येव सिद्धेऽधिकविशेषणद्वयोपादानमनर्थकमिति शङ्काया निरास इत्याहुः ।

विभक्ति-वचनशब्दौ कारक-सङ्ख्यापरौ, प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः। 'लिङ्गे'ष्वित्यादि विषयसप्तमी। तत्तद्विषये सादृश्यञ्च—लिङ्गाद्यभावाश्रयत्वेन। लिङ्गाभावेन—सादृश्यमव्ययीभावातिरिक्तविषये, तस्य लिङ्गयोगसत्त्वात्।—सङ्ख्याऽभावस्तु सर्वसाधारणः। तदभावादिसादृश्यादेव यद्विविधं रूपं तन्न प्राप्नोतीत्यर्थः।

प्रसङ्गादाह—वष्टीति। वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः। 'भागुरिः'—आचार्यः। अपिसाहचर्यादेवेऽप्यादेरकारस्यैव लोपः।

इदं भाष्ये न दृश्यते। निश्—दिशोरिगुपधलक्षणे केऽदन्तत्वादेव टाप्। क्विनि 'दि'गित्यपि।

अत एव 'ङ्याप्प्रातिपदिका'दिति सूत्रे"—आब्ग्रहणं न कार्यम्, अकारान्ताट्टाप्, तत्राऽन्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धं, यस्तर्ह्यनकारान्तात्—'क्रुञ्चा' उष्णिहा' 'देवविशा' इति ?, अत्राप्यकारान्तादेव—'क्रुञ्चानालभेत', 'उष्णिहककुभौ', 'देवविश'मिति—"।

अन्ये"—'कप्रत्यय एवंविषयः[1]'—इत्युक्त्वा—'बहुराजे'ति डाबन्तार्थमाब्ग्रहणम्—" इति भाष्ये उक्तं सङ्गच्छते। तस्माद्वाचेत्यसाध्वेवेति शिवम्।

## इति—अव्ययानि।

### ❀ चिदस्थिमाला ❀

श्रुतावाह—विभक्तीति। अन्वयायाह—लिङ्गेष्विति। अस्य व्यवस्थामाह—लिङ्गाभावेनेति। तदिति। सङ्ख्येत्यर्थः। दण्डयुक्तावतरणासाङ्गत्यायाह—प्रसङ्गादिति। मूलादि दूषयति—इदमिति। नन्वेवं कथं तत्प्रयोगसिद्धिरत आह—निशिति। इद द्रढयति—अत एवेति। अस्याभावादेवेत्यर्थः। अन्येव=देवविशमित्यत्र। तस्मात्=उभयोरेवान्यथासिद्धत्वात्। ❀ इत्यव्ययप्रकरणम् ❀

### ❀ सदाशिवभट्टीयम् ❀

द्विर्नायमपि। नच समासे उपसर्जनत्वमेवेति वाच्यं, कुगतिसमासे उभयपदार्थप्राधान्यात् 'उच्चैराभ्या'मित्यादावदोषात्। ननु प्रत्ययग्रहणपरिभाषयैवात्र लुङ्न प्राप्नोतीति कथमनभिधानमिति चेन्न, अन्ये 'स्त्रीप्रत्यये चानुपसर्जने ने'ति निषेधादिति कश्चित्। प्रत्येकमेवेति—स्वरे विशेषादिति शिवम्।

**हयग्रीवपदाम्भोजद्वन्द्वकारुण्यपूर्त्तये।**
**मया शेखरचन्द्रस्य रचिता वरचन्द्रिका॥ १॥**

### ❀ चन्द्रिकाया अव्ययानि समाप्तानि ❀

### ❀ विषमपदविवृतिः ❀

विशेषणाभावेऽत्र टापो लुगापत्तिरिति भावः। निश्ममाथौ भ्वादिः। 'यन्नव्येति तदव्यय'मिति वाक्यशेषं व्याचष्टे-तदिति। 'त'दिति पदं तस्मादित्यर्थकमित्यभिप्रेत्य व्याचष्टे—अभावादिसादृश्यादेवेति। 'यद्यती'ति व्याचष्टे—यद्विविधं रूपमिति। 'ने'तीति व्याचष्टे—न प्राप्नोतीति।

❀ इत्यव्ययानि समाप्तानि। इति सुब्विभक्तिकार्याणि। ❀

१. एवं विषय इति। तत्रैव भाष्ये—'यस्तर्ह्यनकारान्तात्क्रुञ्चा उष्णिहा देवविशेति,—तत्र हलन्ताट्टापि कृते सुबुत्पत्तिराब्ग्रहणप्रयोजन'मित्युक्त्वा—'अत्राप्यकारान्तात्तत् प्रवृत्तिर्लक्ष्यते'—क्रुञ्चानालभेत उष्णिहककुभौ देवविशश्च मनुष्यविशश्चे'ति। ततः शङ्कितं—'नास्ति विशेषः—अकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वे'ति। 'स्वरे विशेषः—यदि क्विबन्तोऽयन्तदा कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तात्परविभक्तेरनुदात्तत्वम्भवति, यदा तु मूलविभुजादित्वात्कान्तस्तर्हि थाथादिस्वरेणान्तोदात्तात्परविभक्त्या सहैकादेशे पदमन्तोदात्तमिति, तस्मात्क एष एवं विषयः।" इति। [भाष्ये तस्मादित्यस्य-पूर्वोक्तानामन्यथासिद्धत्वादित्यर्थः]।

# अथ स्त्रीप्रत्ययप्रकरणम् ।



**स्त्रियाम्** । अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुं–स्त्री–नपुंसकत्रयम्—'एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्व'मिति भाष्योक्तेरर्थनिष्ठं केवलान्वयि. 'इयं व्यक्तिः', 'इदं वस्तु' 'अयं पदार्थः' इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात् ।

❀ चिदस्थिमाला ❀

ननु स्तनकेशवत्त्वादिलौकिकलिङ्गस्य खट्वादावभावात् कथं टाबादीत्यत आह—**अचेतनेति** । 'न वैयाकरणैर्लौकिकं लिङ्गमाश्रयितुं युक्तं, 'दारा'नित्यादौ तत्त्वाभावप्रसङ्गात्, किन्त्ववश्यं कश्चित् स्वसिद्धान्त आस्थेयः' इति भाष्योक्तेराह—**सत्त्वादीनामिति** । सत्त्वरजस्तमसामित्यर्थः । सकलग्रन्थाऽ-

❀ विषमपदविवृतिः ❀

**स्त्रियाम्** । सत्त्वादीनां गुणानामिति । ननु ब्रह्मशब्दस्य नपुंसकत्वमात्मशब्दस्य पुंस्त्वं

❀ वरवर्णिनी ❀

**सूत्रकृन्मते**'स्त्रिया'मित्यस्य धर्मिपरतया स्त्रियां वर्तमानादित्यर्थः, अतएव 'अव्ययात्त्यप्'इत्यत्र आब्ग्रहणं चरितार्थं, तद्धि'तत्र शालाया'मित्यत्र स्त्रियां वर्तमानात्तत्रेत्यस्मात्तद्धितस्य टापो लुगर्थम् ।

**भाष्यकृत**स्तु स्त्रियामिति धर्मपरं, तेन स्त्रीत्वे द्योत्ये इत्यर्थः। तत्रेत्यस्याऽव्ययतयाऽलिङ्गत्वेन स्त्रीत्वस्याभानान्न टाबित्यभिप्रयन्ति। अत्र **भैरवमिश्राः**–'नन्वयं स्त्रीशब्दो न कञ्चिदर्थविशेषेऽत्र शास्त्रे सङ्केतितोऽतः पारिभाषिकमर्थमभिधातुं नालम् । नाप्ययं जातिशब्दः, रमा मानुषी खट्वागवादिसाधारण्येन प्रयोगदर्शनात्सर्वसाधारणस्याऽनुगतसंस्थानस्याभावेन तद्व्यङ्ग्यत्वस्य तत्रासम्भवात् । नापि लोकप्रसिद्धं—'लिङ्गाख्यावयवविशेषसमवेतत्वे सति प्राणित्वं पुंस्त्वं', 'योनिसमवेतत्वे सति प्राणित्वं स्त्रीत्वं, 'तदुभयासमवेतत्वे सति प्राणित्वं क्लीबत्व'मिति वक्तुं शक्यं, अचेतनखट्वा-वृक्ष फलादिसाधारणस्य पुंस्त्वादिव्यवहारस्यानुपपत्तेरत आह—**सत्त्वादीनामिति** । सत्त्वरजस्तमसां गुणानामुपचयः **पुंस्त्वं**, तेषामपचयः **स्त्रीत्वं**, साम्यञ्च **क्लीबत्व**मित्यर्थः । साम्यमेव च 'स्थिति'पदेनोच्यते । तदुक्तम्भाष्ये—''तटे सर्वलिङ्गानि दृष्ट्वा

१ 'लिङ्गं शब्दवृत्त्यैव शब्देन बोध्यते'इति तार्किकोक्तिं खण्डयितुमाह—**एकार्थे इति** । तार्किकानुसारिणो **गौडास्तु**–'एकार्थे=अर्थैक्येऽपि शब्दान्यत्वात्=शब्दभेदात्–'बुद्धिः' 'प्रत्ययः' 'ज्ञानं' 'देवः', देवता' 'दैवत'मित्यादौ लिङ्गान्यत्वस्य दर्शनाल्लिङ्गं शब्दवृत्त्यर्थवे'ति भाष्यस्य स्वरसतो योजयितुं शक्यतया लिङ्गस्य शब्दनिष्ठत्वे न किञ्चिद्बाधकमिति प्रगल्भन्ते । **गुरवस्तु**—शब्दनिष्ठमेव तत्, तच्च सदर्थपरिच्छेदकं; पदार्थनिष्ठं तु न पुंस्त्वादि, व्यक्त्यादिष्वपि पुंस्त्वेन परिच्छेदापत्तेरिति **प्राञ्चः** ।
**नवीनास्तु**—शब्दनिष्ठत्वे-छागपदनिष्ठं छागमात्रपरिच्छेदकं स्यादेवञ्च छाग्यापि यागापत्तिः, किञ्च घटशब्दनिष्ठेन सर्वेषां घटानां परिच्छेदापत्तौ 'घटा'इति रूपानापत्तिः, अतोऽर्थनिष्ठमेव पुंस्त्वादि, तच्च यथाशब्दं परिच्छेदकमिति–'पशुने'त्यत्र पुंस्त्वविवक्षयोच्चारणे तथैव परिच्छेदकता, एवं-बुद्धिगतस्त्रीत्वस्य ज्ञानपदेन तद्विवक्षायां नपुंसकत्वेनैव यथाशब्दं परिच्छेदकतेत्यभिप्रयन्तीत्याहुः ।

२ **पदार्थमात्रे इति** । व्यक्तिपदबोध्यो हि देवदत्तरूपोऽर्थस्तत्र चेल्लिङ्गत्रयं न स्यात्तदा व्यक्तिपदोपस्थितस्त्रीत्वस्य कथं तत्रान्वयः स्यात् , एवञ्च व्यक्तिपदार्थेन सममभेदान्वयो न स्यादिति सर्वत्र सर्वाणि लिङ्गानीत्युपपन्नमित्याशयः ।

## ॐ वरवर्णिनी ॐ

कोऽव्यवस्यति—अयम्पुमान्, इयं स्त्री, इदन्नपुंसकमिति ?, तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्; अवश्यञ्चश्चित्स्वकृतान्त आश्रेयः; कोसौ स्वकृतान्तः ? 'संस्त्यानप्रसवौ लिङ्गमास्थेयौ ।' किमिदं 'संस्त्यान-प्रसवा'विति ?, 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमा'निति—" । अत्र भाष्ये साङ्ख्यमतावष्टम्भेन 'स्वकृतान्त' इत्युक्त्या—साङ्ख्यशास्त्रानुसारित्वं व्याकरणस्येति सूचितवान् । अत्र 'संस्त्यानप्रसव'शब्दाभ्यां तृतीयाऽवस्थापि लक्ष्यते । संस्त्यानं=तिरोभावः, एतदेवाऽपचयशब्देनोच्यते । यद्यपि—संस्त्यानं=सङ्घः, 'स्त्यायेते शुक्रशोणिते यस्या'मितिव्युत्पत्त्या लोकेऽपि स्त्रीशब्दो ड्रट्प्रत्ययान्त एतस्यैवार्थस्य प्रतिपादक-स्तथापि स्त्रीत्वस्य खट्वादिसाधारण्योपपत्तये तिरोभावपरत्वमेव तस्य स्वीकृतम् । एवं 'सूतेः स'वित्यनेन सूङ्धातोरौणादिको 'म्सुन्प्रत्ययः, सस्य प इत्यादेशो ह्रस्वश्चेत्येवंरीत्या 'पुम्स्'शब्दो व्युत्पादितः । सूते-ऽपत्यञ्जनयतीत्यर्थेन यद्यपि प्राणिनि पुरुषे एव पुम्स्शब्दस्य शक्तिर्लभ्यते तथापि—तस्य वृक्षादिसाधारण्यो-पपत्तये प्रवृत्तिः—आविर्भावरूपा—पुमानित्यनेनोच्यते । एवं यदा न तिरोभावो न वा प्रवृत्तिः किन्तु साम्यावस्था—सैव स्थितिर्नपुंसकशब्देनोच्यते । ततः पुनः शङ्कितं भाष्ये—'कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमानिति ?-गुणानाम्, केषां ? शब्दस्पर्शरूपरसगन्धानाम्'—"“सत्त्वरजस्तमांसि गुणाः, तेषाम्परिणामरूपा एव तेभ्योऽभिन्नाः शब्दादयः पञ्च गुणाः । सर्वाः पुनर्मूर्त्तय एवमात्मिकाः । गुणसमुदायो द्रव्यम् । सर्वस्य जगतः सुखदुःखमोहरूपतया तत्कारणत्वेन सत्त्वादिरूपत्वङ्कल्प्यते, ततः सर्वपदार्थव्यापित्वं पुंस्त्वादीनां दर्शितम् । प्रवृत्तिः खल्वपि नित्या । अत्र 'प्रवृत्ति'रित्यनेन लिङ्गसामान्य-लक्षणं निदर्शितम् । नित्या—सार्वदिकत्वात्सार्वत्रिकत्वाच्च । सत्त्वादीनामाविर्भावादिरूपः प्रवृत्तिशब्द-वाच्यो नित्यः परिणामः—" इति कैयटः । "यद्यपि पुरुष आत्मपदव्यवहार्यो नित्योऽपरिणामी, तथापि मोक्तृत्वात्प्रकृतिधर्मापन्न इव भवति, अत एव 'पुरुषः' 'चितिः' 'चैतन्य'मिति लिङ्गत्रययोगः । भोक्तृत्वा-वस्थायाम्भोग्यवस्तुशबलितमेव चैतन्यम्प्रतीयते तदेव शब्दगोचरं, यथा—'गच्छति पुरुषः' इति क्रिया-योगस्तद्वत् । न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते, वर्द्धते वा यावदनेन वर्द्धितव्यम्, अपायेन वा युज्यते, तच्चोभयं सर्वत्र । यद्युभयं—कुतो व्यवस्था ? विवक्षातः, संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयोरविवक्षायान्नपुंसकमिति—" । एतेन प्रघट्टकेन शास्त्रीयलिङ्गस्य केवलान्वयित्वं दर्शितम्भवति । केवलान्वयित्वञ्च प्रकृते—अन्योन्याभावप्रतियोगितानवच्छेदकत्वम् ।—इति व्याचक्रुः ।

अयं हि साङ्ख्यमतनिष्कर्षः—"अनन्तानन्तपुरुषसम्बन्धिनी त्रिगुणात्मिका प्रकृतिर्हि—नाना । घटत्वेनानेकेषां घटानामैक्यवद्भिन्नापि प्रकृतिः—प्रकृतित्वेन एकेतित्वन्यदेतत् । सत्त्वरजस्तमसां गुणानां साम्यदशायां सा 'प्रकृति'रित्युच्यते । सा च सृष्टिविषयकपुरुषसङ्कल्पात्सत्त्वाधिक्ये महत्तत्त्वरूपेण विपरिणमते । महत्तत्त्वमेव च बुद्धिरित्युच्यते । इयञ्च द्रव्यविशेषः, न तु तार्किकाणामिव गुणविशेषः । महत्तत्त्वञ्चा-हङ्काररूपेण परिणमति । अहङ्कारार्धभागात्—एकादशेन्द्रियाणि, अपरार्धभागाच्च शब्दादिपञ्चतन्मात्राणि । प्रकृते नैयायिकानां पृथिव्यादिपरमाणुवन्निरवयवः शब्दाद्यारम्भको वस्तुविशेषश्च 'तन्मात्र' शब्देनोच्यते ।

तत्र शब्दतन्मात्रेणाकाश उत्पद्यते, शब्दतन्मात्र-स्पर्शतन्मात्रैर्वायुः, शब्दस्पर्शरूपतन्मात्रैरग्निः, शब्द—स्पर्श—रूप—रस—तन्मात्रैर्जलं, शब्दस्पर्श—रूप—रस—गन्धतन्मात्रैः पृथिवी । एभ्यो महाभूतेभ्यश्च घटपटादि-कार्याणि—स्वस्वकारणेषु पृथिव्यादिषु सूक्ष्मरूपेण तिष्ठन्त्येव प्रादुर्भवन्ति । तादृशानि च कारणानि—उपादान-कारणानीत्युच्यन्ते । न्यायनये च समवायिकारणतयैवोपादानकारणानां व्यवहारः । उत्पत्तिश्च परिणाम एव । सुखदुःखभोक्तृत्वञ्च प्रकृतेरेव, पुरुषस्तु पुष्करपलाशवन्निर्लेपः । प्रकृतिनिष्ठसुखदुःखादीनां निर्लेपेऽपि पुरुषे-जले सूर्यादेरिव प्रतिबिम्बमात्रम् । यथाच मेघादिनाऽऽच्छन्ने जलादौ प्रतिबिम्बो नायाति, तथैव व्यक्ताव्यक्तज्ञ-विज्ञानादिना तत्तज्जन्मसुखदुःखानुभवजनितप्रकृतिवृत्तिसंस्कारस्य नाशरूपे आच्छादने [ पुरुषप्रकृत्यो-र्मध्ये ज्ञानाग्निना व्यवधाने तयोःसम्बन्धाभावात्—] पुरुषे सुखदुःखप्रतिबिम्बाभावेन पुरुषो मुक्तो भवति ।

### ॐ वरवर्णिनी ॐ

प्रकृतिपुरुषौ तु नित्यावेव, पुरुषश्च सर्वदा स्थिर एव । प्रकृतिवृत्तिजन्यसुखदुःखानुभवजनितसंस्कारनाशप्रयोजनान्तरैः सम्बन्धनाश एव मोक्षः । पुरुषस्तु निर्धर्मकोऽनिर्वाच्योऽपि प्रकृतिवृत्तिधर्मारोपेणैव बुध्यते । सृष्ट्युत्पत्तिकारणीभूतत्रिगुणात्मकप्रकृतेरनादित्वे सृष्टेरप्यनादित्वम्—" इति ।

अयमाशयः—सात्त्विकांशाधिक्येन परिणामे पुमान्, राजसांशाधिक्येन परिणामे स्त्री, तामसांशाधिक्येन परिणामे नपुंसकमित्येतत्त्रितयं व्यक्तिमात्रवृत्तितया केवलान्वयि, वस्तुमात्रस्य प्रतिक्षणपरिणामितया सत्त्वरजस्तमसामुपचयापचयस्थितीनाम्-[वृद्धि-ह्रास-साम्यानाम्-] अवश्यम्भावात् । अत एव—एकैव व्यक्तिः सात्त्विकेन पुंस्त्वधर्मेण कञ्चित्सुखयति, राजसेन स्त्रीत्वधर्मेण कञ्चिद्दुःखयति, तामसेन नपुंसकत्वधर्मेण कञ्चिन्मोहयतीति—सर्वजनानामनुभवः । एवञ्च सत्त्वस्योपचयः—इतरयोरपचयः स्थितिर्वा पुंस्त्वं, रजस उपचयः—इतरयोरपचयस्थित्यन्यतरत्—स्त्रीत्वं, तमस उपचयः इतरयोरपचयस्थित्यन्यतरन्नपुंसकत्वमिति फलितमिति केचित् ।

**अन्ये** तु—प्रतिक्षणं परिणामिनि वस्तुमात्रे कदाचिदुपचितः परिणामो भवति, 'यादृशो मासात्पूर्वमासीत्तत इदानीं पुष्टो भवानिति प्रतीतेः । कदाचिच्चापचितः परिणामो भवति, 'पूर्वापेक्षया कृशोऽसी'त्यादिप्रतीतेः । कदाचिच्च सम एव परिणामः,—'यादृशः पूर्वमासीत्तादृशमेव पश्यामी' त्यादिव्यवहारात्, एवञ्च सत्त्वादिसकलगुणानामुपचयः पुंस्त्वम्, सत्त्वादिसकलगुणानामपचयः स्त्रीत्वं, सत्त्वादिसकलगुणानां साम्यं नपुंसकत्वम् । उपचयादिकञ्च पूर्वपूर्वपरिणामाद्यपेक्षयेत्याहुः ।

**परेतु**—वस्तुमात्रेऽनेके त्रिगुणात्मकास्त्रिकूटाः सन्ति । तेषु च कश्चित्त्रिकूटः स्वारम्भकत्रिकूटापेक्षया उपचितः, कश्चिदपचितः, कश्चिच्च समइति—तादृशत्रिकूटरूपाऽवयवादिवृत्त्युपचयादिकमादायैव पुंस्त्वस्त्रीत्वादिव्यवहारः इत्याचक्षते ।

**अपरेतु**—अत्र वस्त्वन्तरापेक्षयोपचयादिर्ग्राह्यः, सर्वमपि वस्तु किञ्चिदपेक्ष्य उपचितं किञ्चिदपेक्ष्य सममिति—तादृशोपचयादिकमादाय पुंस्त्वादिव्यवहार इति वदन्ति । अत्र सर्वेष्वपि कल्पेषु पुंस्त्वादेः केवलान्वयित्वं स्पष्टमेव । नन्वेवं सत्त्वादिगुणानामुपचयापचयादेः पुंस्त्वादिरूपत्वे—'पुरुषः' 'चितिः' 'चैतन्यम्' इत्यादिव्यवहारानुपपत्तिः, पुरुषस्य परिणामित्वाभावादितिचेन्न, पुरुषस्य निर्धर्मतयाऽनिर्वचनीयतायाः पूर्वमुक्ततया निर्धर्मकस्य च शब्देन प्रतिपादयितुमशक्यतया किञ्चिद्धर्मारोपेणैव शाब्दबोधस्य वक्तव्यतया तुल्यत्वात्पुंस्त्वादेरप्यारोपादिनैव प्रतीतिरुपपादनीयत्वादिति—श्रीबालशास्त्रिचरणानुसारिणो गौडेन्द्राव्याचक्षते ।

**दण्डिभट्टास्तु**—'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः' इतिलक्षणवाक्ये स्तनकेशपदं भगार्थकं, लोमपदं लिङ्गार्थकमेवञ्च लिङ्गवत्त्वं पुंस्त्वमित्यादिलक्षणनिष्परया खट्वादौ तदसम्भवाद्बाधापत्तिमाशङ्क्य—साङ्ख्यमते पुरुषातिरिक्तपदार्थमात्रस्य सत्त्वरजस्तमोरूपप्रकृतिपरिणामस्वरूपतया त्रिगुणात्मकत्वेन सत्त्वादीनां गुणानाञ्चोपचयापचयादेः सम्भवाच्चेतनाचेतनसाधारणं—गुणोपचयापचसाम्यस्वरूपं पुंस्त्रीनपुंसकाख्यं लिङ्गं ग्रन्थकृत्स्वीचकार । ईदृशलिङ्गस्य केवलान्वयितया च पदार्थमात्रे इयं व्यक्तिरिदं वस्त्वयं पदार्थ इति व्यवहारः सूपपद्यते । एवं सति पुरुषादिशब्देभ्यः स्त्रीत्वनिमित्तटाबाद्यापत्तिः, रामशब्दादौ अतोऽमित्यमादेशापत्तिः, अतः—अचेतनखट्वादिनिष्ठप्रवृत्तिनिमित्तकशब्दानां गुणोपचयादिरूपं शास्त्रीयलिङ्गबोधकत्वमेव, चेतननिष्ठप्रवृत्तिनिमित्तकपुरुषलक्ष्म्यादिशब्दानान्तु पूर्वोक्तशास्त्रीयलिङ्गविशिष्टभगादिमत्त्वरूपलिङ्गबोधकत्व-

केनचिच्छब्देन किञ्चिद्वस्तु एकैकविशिष्टमेव[1], केनचित्पर्यायेण लिङ्गद्वयविशिष्टं, केनचिल्लिङ्गत्रयविशिष्टमिति—लिङ्गानुशासनादितो निर्णेयम् । तत्र—

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः'

❀ चिदस्थिमाला ❀

साङ्गत्यायाह—एकार्थे इति । इति=इत्यादि । केवलान्वयि=तद्वत्(?) । तत्र हेतुमाह—इयमिति। व्यवहारस्येति। सर्वत्राप्रतिबद्धप्रसरस्येत्यर्थः । अत एव 'स्वमो'रिति सूत्रे भाष्ये 'नपुंसका'दित्यनेनान्दिग्धेनार्थग्रहणेन भवितव्यं, नहि नपुंसकं नाम शब्दोऽस्ती'ति उक्तम् । 'पुंलिङ्गः शब्द' इत्यादि तु वाच्यवाचकयोरभेदात् । अर्श आद्यजन्तं वा । नन्वेवं कथं व्यवस्थाऽत आह—केनचिदिति । आदिना व्याकरणशिष्टप्रयोगौ । एषु च नैषां शब्दानां वृद्ध्यादिवच्छास्त्रीयः सङ्केतः । तत्र टिघुभादिवल्लघुभूतसञ्ज्ञाकरणस्य युक्तत्वेन गुरुभूतसञ्ज्ञाकरणसामर्थ्यान्नत्वादिशास्त्रप्रवृत्तौ लौकिकमपि लिङ्गं निमित्तत्वेनाश्रीयते । कृत्रिमेति न्यायस्त्व-

❀ विषमपदविवृतिः ❀

चितिशब्दस्य स्त्रीत्वं कथम् ? सत्त्वादीनां गुणानां तत्राभावादिति चेन्न, 'पराऽस्य शक्तिर्विविधैव' 'आत्मनि चैवं विचित्राश्च ही'ति श्रुतिसूत्राभ्यामात्मनि पुंशक्त्यादिसत्त्वेन सर्वलिङ्गोपपत्तेः, सतामपि सर्वलिङ्गानां तत्तच्छब्दप्रतिपाद्यत्वावच्छेदेनैवाभिव्यक्तिरिति नातिप्रसङ्गः । शशविषाणादौ त्वसदेव लिङ्गं विषाणत्वादिवदवभासते । यद्वाऽन्यथाख्यातिस्वीकारादन्यत्र सच्छशीयत्वमसति विषणेऽवभासते इति लिङ्गव्यवस्थासिद्धिः । केचित्तु—शशविषाणादावन्तःपदार्थसद्भावात्तद्वारको लिङ्गयोग इत्याहुः ।

'अज'शब्दस्य स्त्रियाम्, 'अजा'शब्दस्य पुंसि कदाप्यप्रयोगाच्छास्त्रीयमेव टाबाद्यभिधेयमिति वक्तुमशक्यमित्यभिप्रेत्याह—तत्रेति । तत्सम्भवे त्विति । अन्ये तु लौकिकलिङ्गस्य प्रतिपाद्यत्व-

❀ वरवार्णिनी ❀

मिति स्वीकरणीयम् । दारादिशब्दादेश्च शास्त्रीयलिङ्गबोधकत्वमेव, तटादेश्च लिङ्गत्रयबोधकत्वं कस्यचिल्लिङ्गद्वयबोधकत्वमित्यादौ कोशलोकव्यवहार एव मानमित्याहुः । यत्तु चेतनादौ शास्त्रीयलिङ्गस्वीकारो व्यर्थः, केवलमचेतनखट्वादावेव शास्त्रीयं लिङ्गं स्वीकार्यमिति, तन्न, 'दारा'नित्यादौ नत्वापत्तेः । यत्तु—"एकस्मिन्पदार्थे युगपत्सत्त्वादिगुणानामुपचयापचयादेरसम्भवाद्द्विर्देवता, वरुणो देवनेत्यादा युगपदेकपदार्थगतपुंस्त्वस्त्रीत्वबोधकवह्नि देवता-शब्दप्रयोगानुपपत्तिरिति, तन्न; युगपत्त्रयाणां गुणानामुपचयापचयादेरसम्भवेऽपि—एकस्य गुणस्योपचयेऽपरस्यापचयःसम्भवत्येवेति त्वदुक्तदोषाभावात् । नच सत्त्वादीनां गुणतया तत्रोपचयापचययोर्महदणुपरिमाणरूपयोरसम्भवः, गुणे गुणानङ्गीकारादितिवाच्यं, सत्त्वरजस्तमसां द्रव्यस्वरूपत्वात् । नच लिङ्गस्य केवलान्वयित्वमसम्भवि, आत्मनःसत्त्वादिगुणानात्मकतयोपचयादेरसम्भवादितिवाच्यम्, अहङ्कारस्य त्रिगुणात्मकतया तद्विशिष्टस्यात्मनस्तादृशलिङ्गवत्त्वे बाधकाभावात् । शुद्धे आत्मनि निर्लेपे पुरुषे चाहङ्कारादिगतस्य तस्याऽध्यासेनैव लिङ्गव्यवहार उपपादनीयइति च तत्त्वविदो वदन्ति ।

१ एकैकेति । यथा घटस्य वस्तुतो द्रव्यस्यापि द्रव्यत्वेन रूपेण घटशब्देन न भानं, शब्दस्वाभाव्यादेव, तथैव प्रकृते शब्दस्वाभाव्यादेव लिङ्गभानव्यवस्था, अतएव च'घट'इत्यनेन स्त्रीत्वेन कुतो न भानमित्यपास्तम् ।

—इत्यादिलौकिकलिङ्गासम्भवे शास्त्रीयं कार्यं शास्त्रीये उक्त एव । तत्सम्भवे तु शास्त्रीयविशिष्टे लौकिके ।

शास्त्रीयमपि—शब्दतो बुध्यते, तथाऽनुभवात् । उपचयापचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां—'सामान्ये नपुंसक'मिति प्रवाद इत्यन्यत्र विस्तरः ।

**अत इति ।** वर्णग्रहणात्तदन्तविधिस्तदाह—**अकारान्तस्य चेति । वाच्यं यत्स्त्रीत्व-मिति ।** तद्वाच्यमजन्तं यत्तद्वाच्यं स्त्रीत्वमित्यर्थः । एवं व्याख्याने फलमग्रे स्फुटम् ।

---

**ॐ चिदस्थिमाला ॐ**

नित्यः, सोऽप्यनुपि निश्चयादाह—**तत्रेति** । ... **शास्त्रीयेति** । 'स्वमोर्नपुंसका'दित्यादिः । **लौकिक इति** । न केवलं लैङ्गिके ... इति भावः । **शास्त्रीयमपीति** । लौकिकमिदम् । नन्वेवं 'सामान्ये नपुंसक'मित्यस्य को विषय इत्यत आह—**उपचयेति** । तत्र नपुंसकत्वस्यैव सत्त्वादिति भावः। एवमुक्तरीत्या 'पशुना यजेते'त्यादौ पुंस्त्वस्य विवक्षितत्वान्न स्त्रिया याग इति मीमांसको-द्घोषः । नन्वेवमविकारिणि ब्रह्मणि एतदभावेन 'ब्रह्मे'त्यादौ नपुंसकत्वाबाधनापत्तिरिति वाच्यं, साक्षादसत्त्वेऽप्यात्मनि सर्वस्याध्यस्तत्वेन परम्परया तत्रापि तत्सत्त्वात् । एतेन नपुंसकत्वादि जातिरूपं लिङ्गमिति वैशेषिकमतं, तदनुपाधिशास्त्राद्युक्तं त्वापास्तमिति मञ्जूषायां स्पष्टं, तदाह—**इत्यन्यत्रेति** ।

यथाश्रुतात्सम्बन्धिकसिद्धान्तेन व्याचष्टे—**तद्वाच्येति** । स्त्र्यादयः शब्दा धर्मपरा धर्मिपराश्चेति भावः । अग्रे=मूले एवानुपदम् । एतेन फलमपि निरस्ता ।

**ॐ विषमपदविवृतिः ॐ**

सम्भवे तदेव, नोभयं, गौरवादित्याहुः । 'उपचयाऽपचययोः'—तनोरिति शेषः । **तन्मात्रविवक्षाया-मिति** । विवक्षा च लोकव्यवहारानुवादिनी ग्राह्या, न तु प्रायोगिकी । तदुक्तं हरिणा—

'सन्निधाने निमित्तानां किञ्चिदेव प्रवर्त्तकम् ।
यथा तटादिशब्दानां लिङ्गेषु नियमस्तथा ॥
भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः ॥' इति ।

**लिङ्गं चार्थगतमेव—न शब्दगतमिति**—प्रकृतसूत्रस्थभाष्यात्स्वमोर्नपुंसकादिति सूत्रस्थभाष्याच्च स्पष्टमेव गम्यते । स्त्रीपुंनपुंसकादिशब्दानां प्रवृत्तिनिमित्तमेव लिङ्गं, न ततोऽन्यत् । तदपि प्रायेण शास्त्रीयमेव, सति सम्भवे लौकिकमपि । **तद्वाच्यार्थगतमिति** । इदं विशेषणं व्यर्थं—व्यावर्त्याभावात् । **एवं व्याख्यान इति** । षष्ठ्यन्तत्वमाश्रित्याऽजादीनां वाच्यं यत् स्त्रीत्व-मिति व्याख्याने इत्यर्थः ।

---

**ॐ वरवर्णिनी ॐ**

**तत्सम्भवे इति** । अत एव 'पशुना यजेते'त्यत्र लौकिकपुंस्त्वविशिष्टस्य शास्त्रीयपुंस्त्वस्य शब्दसंस्कार-कत्वान्न पशुस्त्रिया यागाङ्गता, पशुशब्दस्य 'पश्वा न तायु'मित्यादिप्रयोगात्स्त्रीलिङ्गत्वेऽपि नाभावदर्शनेन शास्त्रीयपुंस्त्वस्यैव शब्दसंस्कारकत्वादिति भैरवमिश्राः ।

**अनुभवादिति** । स्वभावादित्यर्थः । एवञ्च शास्त्रकृता शास्त्रीयलिङ्गे नवीना शक्तिर्नाधीयते, किन्तु अनुभवबलादेव शास्त्रीयलिङ्गमपि लोके शब्दैर्बुध्यते, खट्वेत्युक्ते हि स्त्रीत्वस्य लोकेऽप्यनुभवादिति गौडाः ।

ननु स्थितिः यदि साम्यमुच्यते तर्हि सत्त्वादिगुणानां साम्यावस्थायां सृष्टेरेवाभावेन कथं घटादौ इदं-वस्त्विति क्लीबत्वव्यवहारोपपत्तिरितिचेन्न, स्थितिपदेन सत्ताया एव ग्रहणेन तस्याश्च सर्वत्र सत्त्वेनादोषात् । केचित्तु सत्त्वस्योपचयो देवादिषु, रजसोऽसुरेषु, तमसः पाषाणभूतादिषु तिर्यक्षु चेत्यप्याहुः ।

अतधातोः क्विपि अत इति न रूपं, 'गोधाया'इति निर्देशानुपपत्तेरत आह—**वर्णेति** ।

'अजाद्यतः' इत्यत्र 'अत' इति पञ्चम्यन्तं पृथक्पदम्, 'उगि र्णग्रहणवर्ज'मिति वा, 'वर्णग्रहणे सर्वत्र तदन्तविधि'रिति वा, शब्दस्वरूपविशेष्यको वा तदन्तविधिः । 'अजादी'ति च लुप्तषष्ठ्यन्तं पृथक्पदं,

**तत्र द्योत्ये इति** । प्रत्ययार्थत्वे हि तस्य विशेष्यतापत्तिः । द्योत्यस्य तु विशेषणत्व-मेवेति स्पष्टमाकरे । वागादिषु विनाऽपि टाबादिकं तस्य बोधाच्च । अत एव 'व्यावक्रोशी'-

ॐ चिदस्थिमाला ॐ

उक्तमर्थं व्यतिरेके दोषदानेन द्रढयति—**प्रत्ययेति** । तस्य=स्त्रीत्वस्य । एवमग्रेऽपि । अत एव=

ॐ वरवर्णिनी ॐ

तच्चावर्त्तते, तत्र एकञ्च अजादिवाच्येऽर्थे लाक्षणिकं, द्वितीयं गणपठितशब्दपरम् । निष्ठत्वञ्च षष्ठ्यर्थः, अधिकृतं 'स्त्रिया'मिति च धर्मपरम्, एवञ्च—अजादिवाच्यार्थनिष्ठं यत्तद्वाच्यं—अकारान्तवाच्यार्थगतं यद-कारान्तवाच्यं—स्त्रीत्वं तत्र वर्त्तमानाट्टाबित्यर्थः। 'अत' इत्यस्य पञ्चम्यन्तत्वेऽप्यैकरूप्याय षष्ठ्यन्तवदेव तद्व्या-ख्यातम् । 'अजादिवाच्य'मित्यादेः—अजत्वाद्यवच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकबोधता-त्पर्येणोच्चरितात्प्रातिपदिकाट्टाबित्यर्थः । ननु प्रत्ययविधौ परश्चेत्युपस्थित्या पञ्चम्या उचितत्वेन षष्ठ्यन्तत्व-कल्पनाऽनुचितेत्यत आह—**एवं व्याख्याने इति** [५२१पृ०] । षष्ठ्यन्ततया व्याख्याने इत्यर्थः । पञ्चम्यन्तत्वे हि—अनुपसर्जनाधिकारेणामहत्पूर्वग्रहणेन च स्त्रीप्रत्यये तदन्तविधेः स्वीकारेण पञ्चानामजानां समाहारः पञ्चाजीत्यत्राजाद्यन्तत्वाट्टाबापत्तिर्दुरुद्धरा, षष्ठ्यन्तत्वे तु तस्य स्त्रीत्वेऽन्वयात्तदन्तविधेरभावात्पञ्चाजीत्यत्र समाहारवाच्यमेव स्त्रीत्वं नत्वजादिशब्दार्थगतमिति न दोष इत्याशयः । नन्वेवं षष्ठ्यन्तत्वस्वीकारस्या-वश्यकत्वेऽपि आवृत्त्यादिना—तद्वाच्यार्थगतं यत्तद्वाच्य'मित्येवं तदर्थाश्रयणं नागेशभट्टानां व्यर्थमेव, अभक्षन्यायेनाजादिमात्रवाच्यमित्यर्थस्य लाभात्—'पञ्चाजी'त्यत्र स्त्रीत्वस्य समुदायवाच्यतयाऽजादि-मात्रवाच्यत्वाभावेनैवोक्तदोषवारणसम्भवादिति चेत्—

अश्वः—अः=विष्णुः—यस्याः सा इत्यर्थे 'अश्वा'शब्दादन्तवद्भावेनाश्वशब्दत्वाट्टाबापत्तेर्वारणाय—'अजाद्यर्थगत'मित्यस्योपादानम् । अन्यथाऽजादिगणपठिताऽश्वशब्दवाच्यस्त्रीत्वाट्टाप्स्यादेव । तदुपादाने तु अन्यपदार्थगतं स्त्रीत्वन्नत्वजाद्यर्थगतमिति न दोषः । [ 'अत' इत्यस्यावृत्त्या पूर्वत्राप्यन्वयः, टायामित्यादि तु भाष्यप्रामाण्यादेवेति मते तु अत्र दोषश्चिन्त्य एव । ] 'अजादिवाच्य'मित्यंशानुपादाने—तुरगशब्दा-दपि टाबापत्तिः, अजादिगणपठिताऽश्वशब्दार्थगतस्त्रीत्वस्य सत्त्वात् । 'अजादिवाच्य'मित्युपादाने तु—न दोषः । एवमजैव धनमित्यत्र धनशब्दादपि टाबापत्तिः, अजशब्दार्थगतस्त्रीत्वे वर्त्तमानत्वादित्यन्ये प्राहुः ।

एवमदन्तवाच्यं यत्स्त्रीत्वमित्यर्थे 'स्त्रीत्व'शब्दादपि टाबापत्तिः, अदन्तवाच्यस्त्रीत्वस्य सत्त्वादतोऽदन्त-वाच्यार्थगतमित्यपि तदंशे विशेषणं देयम्, एवञ्चाकारान्त'स्त्रीत्व'शब्दवाच्यार्थगतं न स्त्रीत्वं,किन्तु 'त्वान्तं क्लीब'मिति लिङ्गानुशासनात्क्लीबत्वमेवेति न दोषः। एवम्—'अदन्तवाच्य'मित्यस्यानुक्तौ दारशब्दार्थगतस्त्रीत्वस्य सत्त्वाट्टाबापत्तिः, तदुक्तौ तु—'दाराः पुंभूम्नी'तिकोशप्रामाण्येन दारवाच्यत्वस्य स्त्रीत्वेऽभावान्न दोषः ।

**भैरवमिश्रास्तु**"—'अजादिशब्दवाच्ये स्त्रीत्वे टा'बितिमूलोक्तार्थस्यैव स्वीकारे 'तुरगी'त्यत्र टाप्प्राप्नोति, अजादिष्वश्वशब्दस्य पाठनाऽश्वशब्दवाच्यस्त्रीत्वस्य तुरगशब्दार्थे सत्त्वादत आह—'तद्वाच्यार्थगतमिति । एवमुक्तौ तद्वाच्यार्थस्य यादृशविशेषणविशिष्टस्य तच्छब्दजन्योपस्थितिविषयता तादृशविशेषणावच्छिन्न-तद्विषयताविशिष्टं यत्स्त्रीत्वमिति विवक्षितम् । शब्दादुपस्थितिश्चार्थस्य—शब्दप्रकारिकाऽर्थविशेष्यिका जायते । एवञ्च अश्वशब्दजन्योपस्थितिविषयताविशिष्टं यत्स्त्रीत्वन्तदश्वशब्दसामानाधिकरण्येन भासते—न तु तुरग-शब्दसामानाधिकरण्येन । तथा च 'तत्तच्छब्दसामानाधिकरण्येन भासमानं यत्तच्छब्दवाच्यस्त्रीत्वन्तस्मि-न्द्योत्ये तत्तच्छब्दाट्टा'बितिफलितम्—''इत्याहुः । 'अजादिपदावच्छिन्नाजत्वाद्यवच्छिन्नविशेष्यतानिरूपित-स्त्रीत्वनिष्ठप्रकारताप्रयोजकाट्टा'बित्याद्यर्थ इति तदाशयः ।

तस्य=स्त्रीत्वरूपार्थस्य । **विशेष्यतेति** । 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्य'-मिति व्युत्पत्तेः । एवञ्च—अजाशब्दादजवृत्तिस्त्रीत्वमित्येवं बोधापत्तिरित्याशयः । स्त्रीत्वविशिष्टाजेत्येव तु तत्र बोध इष्टः । ननु प्रत्ययार्थस्य विशेष्यत्वैवेति न नियमः, 'क्रियाप्रधानमाख्यात'मित्युक्त्या 'देवदत्तः पचती'त्यादौ 'देवदत्ताऽभिन्नैकाश्रयिका पचिक्रिये'ति बोधे प्रत्ययार्थस्यापि विशेषणत्वादिति प्रत्ययार्थत्वेऽपि स्त्रीत्वस्य विशेषणत्वं सम्भवतीत्यरुच्याऽऽह—**वागादीति** । आदिना—'आशीः' 'दि'गित्यादि ग्राह्यम् ।

१ अतएव=स्त्रीत्वस्य प्रकृत्यर्थतया टाबादेस्तद्वाचकत्वाभावेन द्योतकत्वस्यैव तत्र वक्तव्यत्वादेव ।

इत्यादौ 'कर्मव्यतिहारे णच् स्त्रिया'मिति णचि 'णचः स्त्रिया'मित्यञि च ङीप्सिद्धिः, 'व्यतिलुनीते'इत्यादौ 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेन समुच्चयस्य दृष्टत्वात् ।

**टाप्स्यादिति** । स चाधिकारात्प्रातिपदिकादेव, तच्च सन्निधानादजादिरूपमेव ।

❀ चिद्स्थिमाला ❀

द्योतकत्वादेव । ननु तत्रानुक्तार्थानामिति न्यायेन दोष एवात आह—**व्यतीति** । 'व्यतिलुनीते' इति पाठः । इयायोगे सम्बन्धः, इहैव न्योर्विधेयत्वादित्याह-**प्रावीति** । अनतिप्रसङ्गायाह—**तच्चेति** । 'अकारान्ते'त्यनेन हलन्तपाठमाफरं ध्वनितम् ।

❀ विषमपदविवृतिः ❀

अत एव=स्त्रीत्वस्य द्योत्यत्वादेव । समुच्चयस्य=द्योतकसमुच्चयस्य । वाचकसमुच्चयस्तु प्रायेण न दृश्यते इति भावः । **अजादिरूपमेवेति** । नन्वेवं चटकिकाऽजिकेत्यादौ जातिलक्षणो ङीप् दुर्वारः, अज्ञातार्थयोगेपि जातिलक्षणानपायात्, कान्तस्यानजादित्वेन टापोऽप्रवृत्तेरिति चेन्न, अज्ञातत्वाद्यधिकप्रवृत्तिनिमित्तत्वे जातिमात्रप्रवृत्तिनिमित्तकत्वाभावान्ङीषोऽप्रवृत्तेरिति दिक् ।

❀ वरवर्णिनी ❀

एवञ्च स्त्रीत्वं प्रकृत्यर्थमेव, लाघवात्, प्रकृतेः प्रत्ययस्य च तद्वाचकत्वे स्त्रीत्वस्य द्विर्भानापत्तिः प्रत्ययमात्रस्य तद्वाचकत्वे—वागादौ तदभावात्तदभानापत्तिः, प्रकृतिप्रत्ययसमुदायस्य तद्वाचकत्वेऽपि स एव दोषः, शक्ततावच्छेदकगौरवञ्चेत्याशयः ।

**सिद्धिरिति** । वाचकत्वे हि-वाचकसमुच्चयस्योक्तार्थानामिति न्यायेनानुचितत्वान्ङीन्न स्यादित्याशयः।

अत्र स्त्रियामेव णचि ततो जातस्याऽञः स्वत एव स्त्रीत्वद्योतकत्वलाभात्पुनः 'स्त्रियाम'मित्यत्र 'स्त्रिया'-मित्युक्तिः 'स्वार्थिकाः क्वचित्प्रकृतितो विशिष्टा भवन्ती'ति ज्ञापनायेति भागशब्दस्य पुंस्त्वेऽपि भागधेयशब्दस्य क्लीबत्वं स्त्रीत्वञ्चेति **परे** ।

**समुच्चयेति** । क्रियाव्यतिहारस्य प्रकृते धातुवाच्यतया व्यतिपदात्मनेपदयोर्द्योतकत्वमेव तत्रास्थेयमित्याशयः । एवञ्च समुच्चयदर्शनादेषां द्योतकत्वमेवेति तत्त्वम् । **तच्च**—प्रातिपदिकञ्च । अधिकारात्सामान्यस्यैव लाभेऽपि सन्निधानात् [—प्रत्यासत्त्या, उपस्थितत्वादिति यावत् ] अजादिलाभः ।

'अजाद्युक्ति'रित्यत्र अजादौ—अकारान्तानाम्-उक्तिः—'अजाद्युक्ति'रिति सप्तमीसमासमभिप्रेत्याह—**अजादिष्विति** । एवञ्च अजादिगणेऽदन्तानां पाठो ङीषो ङीपश्च बाधनायेत्यर्थः । अजादिगणेऽनदन्तानामपि-[ हलन्तादीनाम् ]-पाठ'श्चेषाञ्चातथात्वादजादेरुक्तिरिति षष्ठीसमासो न सम्भवतीत्यतः सप्तमीसमासपर्यन्तानुधावनमिति भावः ।

केचित्तु-'अत'इत्यस्यावृत्त्या पूर्वत्रापि सम्बन्धादजादिगणेऽनदन्तानां पाठस्याप्रामाणिकतया अदन्तमात्रस्यैव तत्र गणे पाठात्षष्ठीसमासेऽपि न दोषः, न चानदन्तानां गणे पाठाभावे 'टायामादेशः' 'क्त्वायामिट्' इत्यादिभाष्यप्रयोगानुपपत्तिः, मम तु अजादेराकृतिगणत्वादेव तद्रूपसिद्धिरिति वाच्यं, तादृशभाष्यप्रामाण्येन तत्र टाब्वारोपेणैव तस्योपपादयितुं शक्यत्वात् । अत एव 'औङः श्या'मिति निर्देशोऽपि सङ्गच्छते ।

नच तद्भाष्यप्रमाण्यादनदन्तस्यापि टाशब्दादेरजादिगणे पाठ एवाभ्युपेय इति वाच्यं, तथा सति 'ङ्याप्प्रातिपदिका'दितिसूत्रभाष्यविरोधापत्तेः । तत्र हि–अन्तादिवद्भावेन टाब्विषये आब्ग्रहणस्य गतार्थत्व-माशङ्क्य—'बहुराजे' त्यादौ डाब्विषये तत्फलमुक्तं, टाशब्दस्याजादिगणे पाठे तु—टाशब्दाट्टापि-'आतोऽनाप' इति वार्त्तिकैकवाक्यतया धातुग्रहणस्य आब्भिन्नवृत्तिमात्रार्थतयाऽऽतोधातोरित्यनेन लोपेऽन्त-वद्भावाप्रवृत्त्या टाप्यपि प्रयोजनसत्त्वेन डाप्पर्यन्तं भाष्यकृतामनुधावनमसङ्गतं स्यादित्याहुः ।

तत्रापरे क्षमन्ते,-'आतो धातो'रित्यत्र 'आतोऽनापः'इतिवार्त्तिकैकवाक्यतया आत्पदस्य स्त्रीत्वावच्छिन्नबोधक-घटकभिन्नाकारार्थकतया टाप्शब्दाट्टाप्यपि लोपाभावेन एकादेशस्यैव तत्र सत्त्वेन टापि फलाभावेन डाप्पर्यन्ता-

नन्वजादिष्वकारान्तपाठो व्यर्थो'ऽत' इत्येव सिद्धेरत आह—**अजाद्युक्तिरिति**। येननाप्राप्तिन्यायादिति भावः। एतेन 'ङीपि कृतेऽपि लिङ्गविशिष्टपरिभाषया टाप् चरितार्थ' इत्यपास्तम्।

ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप्स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः। स्त्रीत्वञ्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह—**अजादिभिरिति**। व्याख्यानादे- तत्षष्ठ्यन्तमिति वः। अन्यत्र तु 'स्त्रिया'मिति तदन्तस्यापि विशेषणं, व्याख्यानादेव, एवञ्च पञ्च सुत्वानो यस्यां सा—पञ्चसुत्वरीत्येव।

**पञ्चाजीति**। पञ्चानामजानां समाहार इति द्विगौ—'अकारान्तोत्तरपद' इति स्त्रीत्वे 'द्विगो'रिति ङीप्।

'अजादिभ्यः' इति व्याख्यानेऽमहत्पूर्वग्रहणेनाऽनुपसर्जनाधिकारेण च 'वनो र चे'त्यत्रेवात्रापि तदन्तविधिसम्भव इति भावः। न च तदन्तविधावपि श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम्, अनुपसर्जनाधिकारेण तदन्त- ग्रहणस्येव 'स्त्रिया'मित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात्।

❀ **चिदस्थिमाला** ❀

एतेन=न्यायतो बाधेन। 'सत्यपि सम्भवे' इति भाष्योक्तेः। उक्तव्याख्यानमाक्षेपपूर्वं साधयति— **नन्वित्यादिना**। एवेनोक्तार्थव्यवच्छेदः। लक्ष्यदर्शनमूलकमाह—**व्याख्येति**। एवमग्रेऽपि। अपिनोपात्तस्य, तत्रैव सम्बन्ध इत्यर्थे मानाभावात्। नन्वजादिभ्य इति व्याख्यानेऽपि प्रत्ययविधौ तदन्तविधिप्रतिषेधान्नात्र टापः प्राप्तिरिति ङीबेव स्यादत आह—**अजादीति**। **वनो रचेतीति**। अत एव 'अतिधीवरी'त्यादिसिद्धिः।

❀ **विषमपदविवृतिः** ❀

**तदन्तस्यापीति**। तदन्तस्यैवेत्युचितम्। **व्याख्यानादेवेति**। अनुपसर्जनाधिकारमूलकात्।

❀ **वरवर्णिनी** ❀

नुधावनस्योचितत्वादुक्तभाष्यविरोधाभावेन 'टा'शब्दस्याजादिषु पाठस्यैव कल्पनीयतयाऽजादिगणेऽनदन्तानां पाठाभावस्यानुचितत्वादत इत्यस्यावृत्त्या योजने मानाभावादित्युमानाथपण्डिताः।

**येन नाप्राप्तीति**। तक्रकौण्डिन्यन्यायादित्यर्थः। कृतेपि ङीषि ङीपि वाऽजादिगणपठितत्वेन टापो विषयतया कृते चारितार्थ्यसम्भवात्तक्रन्यायप्रवृत्तेरेवोचितत्वात्। **पर्वतीयास्त्वत्र** भ्रान्ता एव। केचित्तु—अत- इत्यावर्त्याजादावपि तत्सम्बन्धान्न ङीषि ङीपि कृते चारितार्थ्यमिति तक्रन्यायाप्राप्तिरेव, अतएव अजमाचष्टे अजयति, ततः क्विपि 'अज्' इत्यत्र न यावित्याहुः। अधिकम**भिनवराजलक्ष्म्यां** द्रष्टव्यम्।

**अपास्तमिति**। त्रुटि नुट इव पुनस्तदप्रवृत्तेः। 'कन्यायाः' इति निर्देशेन ङीपो वारणे तु—गणे पाठो व्यर्थः, अदन्तत्वादेव सिद्धेः, अतो गणे पाठान्ङीषादिव्यावृत्तिरित्याशयः।

**पञ्चसुत्वरीति**। सुयजोर्ङ्वनिप्। वनोरचेति सूत्रेण विहितयोर्ङीब्रेफयोर्विकल्पेन विधायकं'बहुव्रीहौ वे'ति वार्त्तिकमिति मतेनेदम्। परेतु चिन्त्यमेतत्—'अनो बहुव्रीहे'रिति निषेधेन ङीपोऽप्राप्तेः। एवञ्च बहुधीवरी- त्यस्योपधालोपिन उपलक्षणमिदमित्याहुः। **अमहत्पूर्वग्रहणेनेति**। इदमेव समाधानं युक्तम्, अनुप- सर्जनाधिकारेणे'तिवृत्तिग्रस्तं, यत्रानुपसर्जनादित्यस्य सम्बन्धस्तत्र तस्य तदन्तविधिज्ञापकत्वेऽपि सर्वत्र तथाज्ञापकत्वे मानाभावादित्यस्य वक्तुं शक्यत्वादित्याहुर्गुरवः। षष्ठ्यन्तत्वेतु केनापि समानाधिकरण्याभावान्न तदन्तविधिप्राप्तिरिति हृदयम्। **अजादीनामेवेति**। 'गुणः कृतात्मसंस्कार' इतिन्यायादित्याशयः अतः पञ्चम्येव युक्तेतितत्त्वम्। **बोधनादिति**। श्रुतानुमितपरिभाषाऽप्रवृत्तिबोधनद्वारेतिशेषः

**अत्र हीति** । समासेऽजशब्दान्तत्वेऽपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं, नाऽजशब्दमात्रवाच्यम् । सामर्थ्येनाऽजादिभिरत्र स्त्रीत्वस्यैव ग्रहणादिति भावः ।

**चटकेति** । क्षिपकादित्वादित्वं न । **ह्रस्व इति** । असञ्ज्ञायान्तु 'भस्त्राफले'-त्येव । 'सम्भस्त्रे'ति, 'सदच्'ति, 'मूलान्नञः' इति च—'पाककर्णे'ति प्राप्तस्य ङीपो बाधनार्थम् । एवञ्च 'श्वेतफला' 'त्रिफले'त्यत्र बोध्यम् ।

**शूद्रा चेति** । जातिलक्षणङीषोऽपवादः । जातिश्चेद्वाच्येत्यर्थः । 'पञ्चशूद्री'ति-समाहारे जातिवाचकत्वाभावात्, शूद्रशब्दार्थगतस्त्रीत्वाभावाच्च न दोषः ।

---

॥ चिदस्थिमाला ॥

अन्वयेन शङ्का, व्यतिरेकेण समाधिः । सामर्थ्येन=विशेषणसामर्थ्येन । 'भस्त्रे'त्यादौ पूर्वोक्तवचनात् एव श्रवणं, 'अत्यजे'त्यादावदन्तत्वप्रयुक्तः पुनष्टाप्, 'पञ्चाजी'त्यत्र तु द्विगोरिति ङीपा तत्त्वास्य बाध्यते । 'अजादिभ्य' इति व्याख्याने तु तदन्तांशेऽचरितार्थत्वाद्द्विगोरिति ङीपो बाधकः स्यादिति भावः । षष्ठ्यन्तत्वे तु फलाभावान्नाजाद्यंशे तदन्तविधिरिति बोध्यम् । शाक्तिदण्ड्याद्युक्तेरसाङ्गत्यायाह—**क्षिपकेति** । सञ्ज्ञात्वप्रयुक्तो ह्रस्वो न छान्दसत्वप्रयुक्त इति सूचयन्नाह—**असञ्ज्ञेति** । एतेन 'पाककर्णे'त्यत्र भाष्ये दृश्यमानो दीर्घपाठः समर्थितः, मूलं तु माधवानुरोधेनेति सूचितं च । इति च—चिन्त्यम् । अजादिभिः स्त्रीत्वस्य विशेषणमिव नात्र शूद्रशब्देन स्त्रीत्वं विशेष्यते, किन्तु 'शूद्रशब्दस्थानं लभते तदन्तस्त्रीत्वे' इति,—तदभिप्रेत्याह—**जातिश्चेदिति** । तत्फलमाह—**पञ्चेति** ।

॥ सदाशिवभट्टीयम् ॥

**शूद्रा चेति** । **निरूपितमिति** । नच महाशूद्रसमुदायस्य निषेधेऽप्यवयवाट्टाप् स्यादिति वाच्यम्, महत्पूर्वग्रहण-वैयर्थ्यापत्तेः । नच समुदायनिषेधेऽवयवाट्टापि सत्यां टाबवचनादेवेति तत्फलमिति वाच्यम्, स्त्रीवाचकस्य ह्यर्थं समुदायादवयवाच्च प्राप्तौ 'वृक्षप्रचलन'न्यायेनावयवादनुत्पत्तेः । नच 'कुम्भकारेभ्यश्चान्दघेने'ति भाष्यविरोधः—एतन्न्यायेनाऽवयवादनुत्पत्तेरिति वाच्यं, स्त्रीप्रत्ययान्तादित्यर्थस्यैव सिद्धान्तत्वात् । परन्तु अनुपसर्जनाधिकारेण तदन्तविधौ 'महाशूद्री'ति न स्यादित्यमहदिति निषेधः । नच शूद्रशब्दार्थस्य स्त्रीत्वाभावः, महाशूद्रेति स्त्रीत्व-विवक्षायामपि नागेशमते टाबनापत्तेः । नचादन्तलक्षणः टाप्, ङीषा बाधात् । वस्तुतो विवक्षादिकमप्रयोज-कम्, 'उपजनिष्ये'ति न्यायेन समासात् प्राक् टाबनुत्पादात् । अवयवे जात्यारोपेण जातित्वसत्त्वाट्टाप् स्यादेवेति चेन्न, प्रिया महाशूद्रा यस्येति विग्रहे यत्स्त्रीप्रत्ययान्तं शूद्रेति न तदुपसर्जनमिति ह्रस्वो न स्यादित्यन्यत्र बोध्यम् । महाशूद्रान्ङीप्, अवयवाट्टाप् च स्यात्, तत्र 'यस्ये'ति लोपेऽपि 'वृक्षे'ति न्यायस्य फलभेदेऽप्रवृत्तेर्ङगाग्रादान-

॥ विषमपदविवृतिः ॥

**सामर्थ्येनेति** । 'अजाद्यत' इत्यस्य पञ्चम्यन्तत्वाश्रयणसामर्थ्येनेत्यर्थः । **जातिश्चेद्वाच्येति** । भाष्यकैयटयोस्तु 'जाति'रित्यस्य न 'शूद्रे'त्यंशे सम्बन्धः, किन्तु 'अमहत्पूर्वे'त्यंशे, शूद्रस्य स्त्री शूद्रेत्यत्र गौणमुख्यन्यायेन टाबनेत्युक्तम् । प्रातिपदिककार्येऽपि स्त्रीप्रत्यये गौणमुख्यन्यायः प्रवर्तत इति तद्भावः । एवं त्वजस्य स्त्री अजीत्येव, गौणमुख्यन्यायेन टापोऽप्रवृत्तेः । यद्वा मुख्यार्थकेष्वजादिषु जातिलक्षणङीषं बाधित्वा चरितार्थस्य टापः पुंयोगे परत्वान्ङीषा बाधः, 'अयजे इन्द्र'मित्यादौ सवर्णदीर्घस्य गुणेनेव । **जातिवाचकत्वाभावादिति** । प्राधान्येन जातिविशिष्टावाचकत्वादित्यर्थः ।

---

॥ वरवर्णिनी ॥

ननु अजशब्दनिष्ठं पञ्चशब्दनिष्ठं वा न स्त्रीत्वं तर्हि कस्य वाच्यं प्रकृते स्त्रीत्वं ?, समुदायस्यावयवान-तिरेकादिति गतं स्त्रीत्वमत आह—**नाजशब्दमात्रेति** । **सामर्थ्येन**—'अजादिभिरत्र स्त्रियं विशेषयिष्यामः' इति भाष्यप्रामाण्येन । **अत्रेति** । 'श्वेताच्च' 'त्रेश्चे'त्यनयोरप्यत्र पाठस्य सत्त्वादित्याशयः । **शूद्रशब्दार्थेति** ।

'जातिश्चे'दित्यस्य कृत्यमाह—**पुंयोगे त्विति** । न चात्र गौणत्वं, सदृशलाक्षणिकत्वस्यैव गौणत्वात् , गौणमुख्यन्यायस्य पदकार्यविषयत्वाच्चेति भावः ।

'अमहत्पूर्वे'त्यत्रापि 'जातिश्चे'दिति सम्बद्ध्यते । 'महत्पूर्वो न टापं लभते जातिश्चेद्वाच्ये'ति तदर्थः ।

तत्फलन्तु—जात्यन्तरनिवृत्तिपरत्वे पूर्वञ्जातिमात्रविवक्षया महच्छब्देन 'मृगक्षीर'-'कुक्कुटाण्ड'वत्समासे ततः स्त्रीत्वविवक्षायां 'महती—शूद्रे'त्यर्थे 'महाशूद्रे'ति टाबेव ।

**❀ चिदस्थिमाला ❀**

नेदं प्रतीकम् । **जातिश्चेदिति** । विधिवाक्यस्येत्यर्थः । कैयटोक्तं जातिग्रहणवैयर्थ्यं तदंशे शङ्कते—**न चात्रेति** । अत्रापि=निषेधेऽपि । **परत्वे**—'तात्पर्येणे'ति शेषः । मात्रशब्देन स्त्रीत्वव्यवच्छेदः । इदमेव व्यतिरेकमुखेन द्रढयति—**अमहदिति** । 'जाते'रित्यत्राह—**अनुपेति** । तत्सत्वे आह—**शूद्रेति** ।

**❀ सदाशिवभट्टीयम् ❀**

शङ्केति बोध्यम् । **कुकुटाण्डेति** । नच वार्तिकाभावे कुक्कुट्यण्डमिति स्यात्, प्रत्याख्यानभाष्येणानभिधानात् ।

**❀ विषमपदविवृतिः ❀**

**नचात्र गौणत्वमिति** । ननु शूद्रस्य स्त्री शूद्रैव, तथा च कथं शूद्रशब्दः शूद्रसम्बन्धित्वेन स्त्रीबोधक इति तत्र गौणः ?, शक्यतावच्छेदकारोप एव गौणी वृत्तिरिति नव्यसिद्धान्तात् , अत एवाग्नायी देवताऽस्याग्नेय इत्यत्र 'भस्याढे'इति पुंवद्भावः, अन्यथा तुल्ये प्रवृत्तिनिमित्ते भाषितपुंस्कत्वाभावात्स दुर्लभ इति चेन्न; अशूद्रा यदा शूद्रस्य स्त्री विवक्षिता तदा गौणत्वमित्याशयात् । **जातिमात्रविवक्षयेति** । कैयटे त्वसति जातिग्रहणेऽमहत्पूर्वेति प्रतिषेधसामर्थ्यादन्तरङ्गोपि टाब्बाध्येतेत्युक्तम् । न चाभीर्यां प्रतिषेधचारितार्थ्यं, तत्रापि समासस्त्रीकारेण सुबुत्पत्तेः पूर्वं टापो दुर्वारत्वात् ।

**❀ वरवर्णिनी ❀**

अमहत्पूर्वग्रहणादिना श्रुतानुमितपरिभाषाया अप्रवृत्तिज्ञापनेन 'स्त्रिया'मित्यस्य तदन्तविशेषणत्वसम्भवादिदञ्चिन्त्यमितिश्रीगुरवः ।

**पुंयोगेत्विति** । भर्तृकृतपापपुण्यादिभाक्तया दाम्पत्यसम्बन्धाद्धोपादेःस्वपत्न्यां लक्षणा । **पदकार्येति** । स्त्रीत्वनिमित्तकत्वे सति विभक्त्यनिमित्तकत्वन्तत्त्वम् । स्त्रीत्वनिमित्तकञ्चेदमतो न पदकार्यम् । "यत्तु इदमेव जातिग्रहणं गौणमुख्यन्यायस्य पदकार्यविषयकत्वे ज्ञापकमिति, तन्न; सदृशलाक्षणिकानामेव गौणमुख्यन्याये गौणपदेन ग्रहणात्पुंयोगलाक्षणिकत्वे टाबभावाय तस्य सार्थक्या"दित्युमानाथः ।

नन्वदन्तत्वप्रयुक्तटापोऽस्य वार्तिकस्यापवादत्वादप्राप्त्या शूद्रेति वार्त्तिकविहितस्य च जातावेव प्रवृत्त्या तन्निषेधस्याऽपि जातावेव प्रवृत्त्या तत्र जातिपदसम्बन्धो व्यर्थ इत्याशङ्क्याह—**तत्फलन्त्विति** । जात्यन्तरं=ब्राह्मणत्वादि । **जातिमात्रेति** । नायं ब्राह्मणःक्षत्रियो वा, किन्तु 'शूद्र'इति जातिमात्रविवक्षा । 'स्त्री वा पुमान्वे'ति तु नाद्यापि ज्ञातं, किन्तु सम्मुखाकारमेव 'शूद्र'इति ज्ञानमित्याशयः । **'स्त्रीत्वविवक्षाया'**-मित्यस्य—'स्त्री वा पुमान्वे'त्याकाङ्क्षाशान्तये इतिशेषः । **'टाबेवे'**त्यस्य—'न निषेधः, समुदितस्य जातिवाचकत्वाभावा'दिति शेषः । ननु किं नाम तादृशं जातिवाचकत्वं यन्महाशूद्रशब्दव्यावृत्तं ?, न तावज्जातित्वावच्छिन्नविषयताकोपस्थितिजनकत्वन्तत्, समासे समुदायशक्तेर्महाशूद्रशब्दान्महत्त्वावच्छिन्नप्रकारतानिरूपितशूद्रत्वावच्छिन्नविशेष्यताकोपस्थितेः सत्त्वेन शूद्रत्वावच्छिन्नविषयताकोपस्थितेरपि सत्त्वाज्जातिवाचकत्वस्य

१ **स्त्रीत्वविवक्षायामिति** । न चैवं तवमते 'सामान्ये नपुंसक'मिति शूद्रशब्दस्य क्लीबत्वेन 'परवल्लिङ्ग'-मिति शूद्रशब्दलिङ्गत्वस्यापत्तिरिति वाच्यं, शब्दसाधुत्वार्थमेव लिङ्गविवक्षाया अत्राभिप्रेतत्वात् । विशेषतो लिङ्गाविवक्षायामपि सामान्यतो लिङ्गविवक्षायामेव तत्प्राप्तेरिति केचित् । अन्ये तु पश्चात्समुदाये स्त्रीत्वस्य विवक्षाया इवावयवेऽपि स्त्रीत्वविवक्षाया अभिप्रेतत्वान्न क्लीबलिङ्गतापत्तिरित्याहुः ।

'अमहत्पूर्वे'त्यत्र 'जाति'रित्यस्याऽसम्बन्धेऽनुपसर्जनाधिकारेण प्रधानेन तदन्तविधिसत्त्वात् 'जाते'रिति ङीप् स्यात्। शूद्रशब्दे जातिवाचकत्वस्य, स्त्रीत्वे शूद्रशब्दार्थसमवेतत्वस्यापि सत्त्वेनात्र टाप् निर्बाध इति भाष्यप्रदीपोद्योते निरूपितम्।

❀ विषमपदविवृतिः ❀

ननु 'महाशूद्र'शब्दस्य महत्त्वविशिष्टशूद्रत्वप्रवृत्तिनिमित्तकत्वेन जातिमात्रप्रवृत्तिनिमित्तकत्वाभावेन कथं ङीपित्यत आह—प्रधानेनेति।

❀ वरवर्णिनी ❀

महाशूद्रशब्देऽप्यातेरितिचेन्नः—स्वप्रयोज्यविषयतानिरूपितविषयतानिरूपिताऽवच्छेदकत्वाऽसमानाधिकरण-जातिनिष्ठप्रकारताप्रयोजकत्वस्य वक्तव्यतया तत्र महाशूद्रशब्देऽभावात्। तस्य जातिवाचकत्वं चिकीर्षितं तत्त्वम्। महतीशूद्रेत्यर्थकस्य महाशूद्रशब्दस्य न जातिवाचकत्वं, तथाहि—स्वं=महाशूद्रशब्दः, स्वप्रयोज्या विषयता= महत्त्वावच्छिन्ना प्रकारताख्या, तन्निरूपिता विषयता–शूद्रत्वावच्छिन्ना विशेष्यताख्या, तन्निरूपितावच्छेद-कतैव शूद्रत्वे इति तादृशावच्छेदकत्वासामाधिकरणजातिनिष्ठप्रकारताप्रयोजकत्वस्यैवाभावात्।

'शूद्राऽस्ती'त्यादौ तु शूद्रशब्दस्य जातिवाचकत्वं भवत्येव, शूद्रत्वावच्छिन्नप्रकारताख्यविषयतानिरूपि-ताश्रयत्वावच्छिन्नविशेष्यतानिरूपिता—अवच्छेदकताऽऽश्रयत्वे, अनवच्छेदकता शूद्रत्वे इति तदसमाना-धिकरणजातिनिष्ठप्रकारताप्रयोजकत्वात्। 'शूद्रे'त्यत्र तु विषयतानिरूपितविषयतानिरूपितावच्छेदकत्व-मुपादाने, तदसमाधिकरणजातिनिष्ठप्रकारताप्रयोजकत्वं शूद्रत्वेऽत्रेति तत्र जातिवाचकत्वं सुस्थमेवेति गुरवः। एवञ्च जातिविशिष्टत्वं जातिवाचकत्वं, वै० 'स्वनिष्ठप्रकारताकोपस्थितिजनकत्व' 'स्वावच्छिन्नविषयता-निरूपितविषयतानिरूपकोपस्थितिजनकत्वो'भयसम्बन्धेनेति फलितम्। स्वं=शूद्रत्वादि। स्वावच्छिन्ना विषयता शूद्रत्वावच्छिन्ना विशेष्यताख्या, तन्निरूपिता महत्त्वावच्छिन्ना प्रकारताख्या विषयता, तन्निरूपकत्वमेव महाशूद्रशब्दजन्योपस्थितावेति न तस्य जातिवाचकत्वम्। आभीरार्थकरूढमहाशूद्रशब्दे तु–शूद्रत्वावच्छिन्नविषयतानिरूपितमहत्त्वावच्छिन्नविषयताकोपस्थितिजनकत्वाज्जातिवाचकत्वं भवत्येवेति सङ्क्षेपः। अत्रत्यं तत्त्वमसत्कृताथामभिनवराजलक्ष्म्यामनुसन्धेयम्।

ङीप्स्यादिति। 'तत्र जातेर्गृह्यमाणविशेषणतये'ति—शेषः। जातिवाचकशूद्रशब्दान्ताट्टाबित्यर्थेन टापः प्राप्तावपि 'अमहत्पूर्वे'तिनिषेधाट्टाप्न स्यादिति भावः। जातेरित्यस्य सम्बन्धे टाप्सिद्धि प्रकारं स्वमतेनाह—शूद्रशब्दे इति। एवञ्च 'महाशूद्रघटकशूद्रशब्दे जातिवाचकत्वस्यासत्त्वान्महाशूद्रेत्यत्र कथं टाप्सिद्धि'रित्याशङ्का समाहितेति तत्त्वम्।

१ अयमत्र निष्कृष्टोऽर्थः:–शूद्रशब्दाट्टाप्स्यात्तदन्तेन जातिश्चेट्टाच्या,महत्पूर्वशूद्रशब्दष्टापं न लभेत समुदायेन जातिश्चेट्टाच्येति वार्त्तिकार्थः। नच अमहत्पूर्वग्रहणाभावेऽपि 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधि-निषेधान्महत्पूर्वकाच्छूद्रशब्दाट्टापोऽप्राप्त्या तद्व्यर्थमिति वाच्यं, तत्सामर्थ्यादेव स्त्रीप्रत्यये तदन्तविधेर्ज्ञापनेन 'महाशूद्री'त्यत्र टाब्वारणाय तदावश्यकत्वात्। नच 'स्त्रिया'मित्यस्य 'पञ्चाजी'त्यादौ टाब्वारणाय गृह्यमाण-विशेषणतायाः पूर्वं सिद्धान्तिततया 'महाशूद्री'त्यत्र शूद्रशब्दार्थसमवेतस्त्रीत्वाभावान्महाशूद्रनिरूपितशक्तेः समुदायनिष्ठतया तद्घटकशूद्रमात्रस्यानर्थक्याच्च टापोऽप्राप्त्या ज्ञापितेऽपि स्वांशेऽचारितार्थ्यमितिवाच्यं, तदन्त-विधिज्ञापकत्वपरभाष्याप्रामाण्याच्छूद्रशब्दार्थगतस्त्रीत्वस्यापि महाशूद्रघटकशूद्रशब्दे स्वीकारात्स्वांशे चारिता-र्थ्यात्। अनुलोमसङ्कराणां मातृजातिवृत्तित्वेन-शूद्रजीविकादिदर्शनान्महाशूद्रे शूद्रत्वस्यारोपाच्छूद्रेत्यस्य सार्थ-कत्वाच्च। 'शूद्राभीर'मित्यादौ सामान्यविशेषवाचित्वेन साहित्याभावाद्द्वन्द्वाभावमाशङ्क्य—'आभीराः—जात्य-न्तराणी'ति भाष्यन्तु–अनारोपाभिप्रायेण। निषेधकोटौ–'जाति'रित्यस्य सम्बन्धात्–ब्राह्मणादिजात्यन्तरनिवृत्तये जातिमात्रविवक्षायां स्त्रीत्वाद्यविवक्षायां महच्छब्दस्य शूद्रशब्देन कुक्कुटाण्डवत्समासे पुनःस्त्रीत्वविवक्षायां ['महाशूद्रे'तिसमुदायेन कस्याश्चिदपि जातेरप्रतीतेः-] जातिवाचकत्वाभावान्निषेधाऽप्रवृत्त्या 'शूद्रे'ति प्रथमांशेन तत्र टाप्सिद्धिः, अन्यथा महत्पूर्वत्वाट्टापो निषेधे 'जातेरस्त्री'त्यत्र तदन्तविधेर्ङीषापत्तिः स्यात्।

महाशूद्रीति। 'आभीरी तु महाशूद्री'त्यमरः। ब्राह्मणादुग्रकन्यायाम्-'आभीरः'। नृपाच्छूद्रायामुत्पन्ना-'उग्र'जातिकन्या। अत्रानुलोमसङ्कराणां मातृजातिवृत्तित्वात्तत्र तां जाति-

❀ चिदस्थिमाला ❀

'—जातिर्युंयोगयोः समे'त्यमरशेषः। 'ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते' इति स्मृत्यर्थमाह—**ब्राह्मणादिति**। 'वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृता'विति स्मृत्यर्थमाह-**नृपादिति**। 'अमह-त्पूर्वेति व्यर्थ'मिति दण्डिशास्त्र्याद्युक्तेरसाङ्गत्यामाह—**अत्रेति**। महाशूद्रीत्यत्रेत्यर्थः। यत्तु—तेषां मातृजातीयत्वमिति; तन्न, स्मृतिषु मातृजातिवृत्तेरेवोक्तत्वात्, तद्धनयन्नाह—**जातिवृत्तित्वादिति**। तथाचास्त्येव टापः प्रसङ्ग इत्यमहत्पूर्वेत्यावश्यकमेवेति भावः। नन्वेवं तदन्तविधिज्ञापकत्वासङ्गति-

❀ विषमपदविवृतिः ❀

**उग्रायामिति**। उग्र्यामित्युचितम्, अजादित्वं वा कल्प्यम्। क्वचिदुग्रकन्यायामिति पाठः। **अनुलोमसङ्कराणामिति**। उत्तमवर्णादधमवर्णायामुत्पन्नानामित्यर्थः।

**मातृजातिवृत्तित्वादिति**। मातृजातिमत्त्वेन स्मृतिबोध्यत्वादित्यर्थः। अतएव='महाशूद्री'त्यत्र शूद्र-शब्दस्याऽर्थवत्त्वादित्र। ब्राह्मणादीनां क्षत्रियादिभिः क्रमेणान्वयः। अत्र क्षत्रियाद्या अनूढा एव ग्राह्याः।

ननु ब्राह्मणादुग्रायामुत्पन्नस्य शङ्खस्मृतिबलेन शूद्रत्वावगमात्–'तत्र तां जातिमारोप्ये'ति पूर्व-ग्रन्थासङ्गतिः, अत एव श्रीमत्कृष्णद्वैपायनादिभिः क्षत्रियासूत्पादितानां पाण्डवादीनां क्षत्रियत्व-मिति चेन्न, औशनसस्मृतावनुलोमसङ्कराणां केषाञ्चिज्जात्यन्तरकथनेन 'त्यदादीनी'ति सूत्रे भाष्ये आभीरत्वस्य शूद्रत्वव्याप्यत्वाभावोक्त्या च तत्र सम्पूर्णशूद्रत्वानङ्गीकारात्। अत एव तत्र महाशूद्रशब्दस्य प्रयोगो–न केवलशूद्रशब्दस्य,शूद्रादुत्तमत्वात्तस्य। शूद्रधर्माश्च सर्वे न तत्र प्रवर्त्तन्ते। शङ्खस्मृत्या शूद्रत्वारोपाच्च केचिच्छूद्रधर्मास्तत्र प्रवर्त्तन्ते। अयमारोपो न गौणमुख्यन्यायप्रवर्त्तकः, शास्त्रबोधितत्वात्कतिपयधमप्रापकत्वाच्च। इमां कुसृष्टिमनाश्रित्य तु कैयटेनोक्तम्-"अमहत्पूर्वेति निषेधो न वक्तव्यः, न हि 'महाशूद्री'त्यत्र शूद्रार्थगतं स्त्रीत्व"मिति। 'टाब्वारणाय 'जातिश्चेद्वाच्ये'त्यस्य मुख्य-जातिमती चेद्वाच्येत्यर्थस्यावश्यकतयाऽऽभीर्यां शूद्रत्वारोपेण टापोऽप्रवृत्तेरमहत्पूर्वेति निषेधो व्यर्थ' इत्यपास्तम्, अस्यारोपस्य शास्त्रबोधितत्वेन च मुख्यसमशीलत्वात्। ननु 'महाशूद्री'त्यत्र योगार्थ-स्यापि सत्त्वेन जातिमात्रप्रवृत्तिनिमित्तकत्वाभावेन ङीष् न स्यादिति चेन्न, अवयवार्थस्य सम्भवमात्रेणा-श्रयणेपि रूढ्यर्थप्रवृत्तिनिमित्तस्य व्यभिचारवारणायानाश्रयणेन 'जातिमात्रे'ति मात्रपदेन तादृशस्यैव व्यावर्त्यत्वेनादोषात्। अत एव योगेन मन्वपत्यबोधकत्वेपि गोत्रप्रत्ययान्तमानुषीत्यत्र जाति-

❀ वरवर्णिनी ❀

ननु अविवक्षितस्य पुनर्विवक्षा नोचितेति चेन्न, 'कृतपूर्वी कट'मित्यादौ पूर्वमविवक्षितस्याप्यंशस्य विवक्षाया भाष्यकृता प्रतिपादनात्।

यदि 'कुक्कुटाण्ड'मित्यादौ स्त्रीत्वविवक्षया पुनष्टाबादेरदर्शनात्पूर्वं विवक्षितस्यांशस्य पुनर्विवक्षया स्त्रीप्रत्ययो न भवतीति कल्प्यते, किञ्च अनुपसर्जनाधिकारस्य तदन्तविधिज्ञापकत्वपरभाष्यासङ्गतिः, 'बहुकुरुचरे'त्यादौ पूर्वं स्त्रीत्वाविवक्षया समासे तत्र ङीब्वारणाय तत्सार्थक्यादेवञ्च न शेखरोक्तदोष इत्युच्यते तर्हि उपसर्जनिष्यमाणन्यायेन समासात्पूर्वमपि 'महाशूद्रे'त्यत्र टाञ्च स्यादिति दोषो बोध्यः। 'जाते'-रित्यस्य सम्बन्धे तु समुदायेन जातेरप्रतीतेर्महत्पूर्वकत्वेऽपि निषेधाप्रवृत्त्या टाप्सुलभ इति न दोषः—इति। केचित्तु उपसर्जनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचेऽपि तद्घटकातिरिक्तत्वेन सङ्कोचा-भावान्न जातेरित्यस्य सम्बन्धे फलमित्याचक्षते।

**परे** तु–पर्याप्त्या यत्र जातिवाचकत्वं स्त्रीत्वञ्च तत्रैव टाबित्यर्थः, एवञ्च महत्पूर्वके रूढे पर्याप्त्या तदभावान्महाशूद्रीत्यत्र टापः प्राप्तेरेवाभावादमहत्पूर्वग्रहणं न कार्यम्, महती शूद्रेत्यर्थे 'महाशूद्रे'तीष्यते एव, पर्याप्त्या शूद्रशब्दे स्त्रीत्वजातिवाचकत्वयोः सत्त्वात्। तदन्तविधिज्ञापनपरभाष्यन्तु–अधिकार्थपरतया लापनीयम्। अत एव कैयटेन–'गौरखरेन्द्रगोप–कृष्णसर्पादिवन्महाशूद्रशब्दो रूढ्या जात्यन्तरमाह, न च

मारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्रशब्दोऽर्थवानेवेति—शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति।

तदर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तदन्तात्, 'ग्रहणवते'ति निषेधादिति तदन्तविधिज्ञापकता नास्त्येव। अत एव शङ्खस्मृतौ—'ब्राह्मण-क्षत्रिय-वैश्यैः क्षत्रिया-वैश्या-शूद्रासूत्पन्नाः क्षत्रिय-वैश्य-शूद्रा एव भवन्ती'त्युक्तमिति भावः।

यत्तु—'शूद्राभीर'मित्यादौ सामान्यविशेषवाचित्वाद्द्वन्द्वाभावमाशङ्क्य--'आभीरा जात्यन्तराणी'ति 'त्यदादीनी'ति सूत्रे भाष्य उक्तं, तत्तु अनारोपाभिप्रायेणेति न तद्विरोधः।

अजादिराकृतिगणः। तेन 'न नु ने'इति सूत्रे 'टायामादेशः'इति भाष्यप्रयोगः सिद्धः। प्रथमाध्यायचतुर्थपादे 'चमसवदविशेषा'दिति सूत्रे शाङ्करभाष्यवाचस्पत्योरजायां—'छागा'—इति टाबन्तप्रयोगो दृश्यतेऽतश्छागशब्दोऽप्यजादिष्विति केचित्।

ॐ चिदस्थिमाला ॐ

रत आह—तदर्थेति। शूद्रशब्दार्थेत्यर्थः। प्रत्यासत्त्या आह—शूद्रशब्दादेवेति। ज्ञापकता—भाष्योक्ता। अत एव=अनुलोमसङ्करेषु तत्त्वान्मातृजात्यारोपेणैव। यथामङ्क्ष्यमत्र बोध्यम्। उक्तेऽर्थे भाष्यविरोधं परिहरति—यत्त्विति। चमसवदिति। श्वेताश्वतरोपनिषदि श्रूयमाणाया'मजामेका'मित्यत्र किमजाशब्देन प्रधानम्? उत तेजोऽबन्नात्मिका छान्दोग्ये प्रसिद्धाऽवान्तरप्रकृतिरिति संशये न जायत इति व्युत्पत्त्या साङ्ख्यसिद्धा प्रकृतिरेवाजा प्रधानमिति साङ्ख्यं तदिति पूर्वपक्षे—योगस्यातिप्रसक्तत्वाल्लोहितादिशब्दानां रूपविशेषेषु रूढिर्न रज आदाविति तेन सत्त्वगुणमिति दुर्निर्धारम्। यथा'ऽर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यस्मिन्मन्त्रेऽर्वाग्बिलत्वादेरन्यत्रापि सत्त्वादयञ्चमस इति दुर्वचं तथाजामन्त्रेऽप्यजात्वादेरविशेषान्न प्रधाननिर्णय इत्यशब्दं प्रधानमित्यर्थः। केचिदिति। अत्रारुचिबीजन्तु—तथा दुर्वचं, तथा सति 'छागी'ति

ॐ विषमपदविवृतिः ॐ

लक्षणशेषसिद्धिः। केचिदिति। 'छागी'ति भूयः प्रयोगदर्शनमत्रारुचिः।

ॐ वरवर्णिनी ॐ

तत्र कथमपि शूद्रशब्दार्थसमवेतस्त्रीत्वं सम्भवती'त्युक्तम्। अत एव-'आभीरा जात्यन्तराणी'ति भाष्यं स्वरसत उपपद्यते। अत एव च प्रकृतसूत्रे भाष्ये 'शूद्रा चामहत्पूर्वे'त्यत्र 'महती शूद्रे'त्यर्थे 'महाशूद्रे'ति प्रदर्श्य, अमहत्पूर्वांशे जातेः सम्बन्धमुक्त्वा-[तदन्तविधिज्ञापकोपपाद-] तदुदाहरणं नोपन्यस्तम्, अतो ज्ञायते-ज्ञापितेऽपि तदन्तविधौ स्वांशे चारितार्थ्यं नास्तीति। एवञ्चाऽमहत्पूर्वग्रहणं व्यर्थमेवेत्याहुः।

परे तु—'ततः स्त्रीत्वविवक्षायामित्यादि चिन्त्यमेव शब्दोच्चारणप्रयोजकेच्छारूपाया विवक्षायाः शब्दात्पूर्वमेव सत्त्वेन पूर्वमविवक्षा पश्चाद्विवक्षेति वक्तुमशक्यत्वात्। न च 'कृतपूर्वी'त्यत्र पूर्वं कर्मणोऽविवक्षया क्त पूर्वशब्देन समासे इनिप्रत्यये पश्चात्कटरूपस्य कर्मणो विवक्षया'कृतपूर्वी कट'मिति भाष्ये साधितत्वात्पूर्वमविवक्षा पश्चाद्विवक्षेति वक्तुं शक्यमिति वाच्यं, तत्र पदसंस्कारपक्षे—'कृतपूर्वी'ति कर्मवाचकपदसन्निधानाभावात्सिद्धस्य पदस्य—वाक्ययोजनावसरे कर्मणा कटेन सम्बन्ध इत्यस्यैव भाष्यतात्पर्येण प्रकृते च महाशूद्रेति समुदायस्यैकपदत्वेन तादृशरीतेरसम्भवात्पूर्वमविवक्षा पश्चाद्विवक्षेत्यस्य वक्तुमशक्यत्वादित्याहुः।

१ सामान्यविशेषवाचिनां कर्मधारय एव, न समुच्चयोऽनभिधानात्साहित्याभावाद्वेत्याशङ्कितुराशयः।

२ अनारोपेति। इष्टसिद्धये हि आरोपानारोपावित्याशयः। आरोपे हि—शूद्रशब्दस्य विशेषवाचित्वाच्छूद्राभीरमित्यत्र 'घटो घट' इतिवद्बोधो न स्यादिति शङ्काभाष्यविरोधः। एवमुत्तरभाष्यविरोधोऽपि स्पष्ट एवेति तत्त्वविदो वदन्ति। ३ परेतु 'छागी' 'छागे'त्युभयविधप्रयोगदर्शनादजादिगणे 'छागाद्वे'ति पाठ्यमिति नागेशाशयं कल्पयन्ति ते तथा मानाभावादुपेक्ष्याः।

**उगितश्च** । उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः । 'प्रत्ययविधा'-विति निषेधस्तु न, 'उगिद्वर्णग्रहणवर्ज'मित्युक्तेः,--तदाह—**उगिदन्तादिति** । **भवतीति** । 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधस्तु—सूत्रोपात्ताऽन्ताऽऽदिशब्द-विषय एवेति भावः । भवत्विति—उगितः प्रातिपदिकस्यापि सत्त्वात्प्रत्ययमात्रग्रहणाभावेन '[१]प्रत्ययग्रहणे' इति परिभाषाया अप्रवृत्त्या 'निर्यवमती'त्यादौ न दोषः । **अञ्चतेस्त्विति** । नलोपिनोऽञ्चतेरित्यर्थः । नियमोऽपि नलोप्यञ्[२]चतिविषय एवेति निरूपितम् ।

व्यपदेशिवद्भावलब्धमर्थं[३] स्पष्टप्रतिपत्तये आह—**वन्नन्तादिति** । नन्वेवं प्रत्ययग्रहण-परिभाषया 'बहुधीवरी' न सिद्ध्येदत आह—**तदन्ताच्चेति** । तत्परिभाषालब्धवन्नन्तेन प्रातिपदिकस्य विशेषणादिति भावः । **सामान्येति** । सूत्रेऽनुबन्धानुच्चारणात्तदनुबन्धक-परिभाषाया विषयो नेति भावः। इदं 'मतुवसोः''जाग्रोऽवी'तिसूत्रयोर्भाष्यकैयटयोः स्पष्टम्।

इदं सूत्रं न ङीब्विधायकं, किन्तु 'ऋन्नेभ्यः' इति प्राप्तङीबनुवादेन तत्सन्नियोग-शिष्ट'र'भावमात्रविधायकम्, उभयविधौ गौरवात् ।

---

**❀ चिदस्थिलामा ❀**

प्रयोगोच्छेदापत्तेस्तस्मात्स असाधुरेवेति । विशेषणात्=विशेष्यीकरणात् । ननु 'व्यपदेशिव'दिति निषेधात्कथं 'भवती'त्यत्रात आह—**व्यपेति** । नन्वेवमपि प्रत्ययग्रहणपरिभाषया 'निर्यवमती'त्यादौ दोषोऽत आह—**भवत्विति** । सर्वादौ 'भातेर्डवतु'रिति व्युत्पादनं तु अप्रामाणिकम्, अत्रत्यभाष्यासम्मतेः, गणे उदि-त्पाठाच्च । एतेन तथा दण्डव्याद्युक्तमपास्तम् । प्रागुक्तसिद्धान्तेनाह—**नलोपीति** । तदाह—**नियमोऽपीति** । उक्तिवैयर्थ्यं परिहरति—**व्यपेति** । एवं=तथा व्याख्याने । वनः प्रत्ययत्वादाह—**प्रत्ययेति** । **तदिति** ।

**❀ विषमपदविवृतिः ❀**

**इत्युक्तेरिति** । वस्तुतस्तु उगिद्वर्णग्रहणवर्ज्यमिति व्यर्थम्, 'उगितश्चे'त्यत्र'वनो र चे'त्यादा-विवाऽमहत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदन्तविधिज्ञापनेनादोषात् । उगित्त्वाऽत्त्वयोः प्रातिपदिक-साधारण्येनोक्तनिषेधस्योगितश्चाऽत इत्यत्रनयोरप्रवृत्तेश्च । स्पष्टं चेदमुगितश्चेति सूत्रे भाष्ये ।

---

**❀ वरवर्णिनी ❀**

१ **भाव इति** । परे तु प्रातिपदिकग्रहणे एव तन्न्यायप्रवृत्तिः । तच्च—'उगिद्ग्रहणभिन्नत्वे सति वर्णग्रहण भिन्नत्वे सति प्रत्ययग्रहणभिन्नत्व'मिति परिभाषेन्दुशेखरभूतौ विवेचितं श्रीगुरुचरणैः । **सत्त्वादिति** । [*]एवञ्चोगित्पदस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वाभावेनेह प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या-तदादेरनुपस्थितौ—यवमत एवोगिदन्ततदादितया निर्यवमत उगिदन्ततदादित्वस्याभावेऽपि ङीप्सिद्ध इत्याशयः । यवमतो निष्क्रान्तेतिविग्रहान्न पूर्वं ङीप्प्राप्तिरित्यवधेयम् । २ **नलोपिन इति** । एवञ्च पूजायां नलोपाभावे स्त्रियामपि 'प्राङ्' 'प्राञ्चा'वित्येवरूपं, न तु 'प्राञ्ची'त्यादीत्याशयः ।

३ वनः प्रत्ययतया तदादेरुपस्थित्या तद्विशेषणतया तदन्तविधिः, पुनःप्रातिपदिकविशेषणतया तदन्त-विधिरिति वन्नन्तं यत्तदादि तदन्तं यत्प्रातिपदिकमित्येवार्थः, तत्फलितमाह—**वन्नन्तात्तदन्ताच्चेति** । नच वनधातोर्विच्चि प्रातिपदिकस्यापि वनःसम्भवात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या तदादिनियमाभावात् 'बहुधीवरी'त्यादौ वन्नन्तादित्यर्थेऽपि 'वनोरचे'त्यस्य प्रवृत्त्या द्वितीयतदन्तविधिर्व्यर्थ एवेतिवाच्यं,वन्त्वस्य प्रत्यय

**शर्वरीति** । शृधातोः–'अन्येभ्योऽपि दृश्यते' इति वनिप् । एतत्सिद्ध्यर्थमाह–**हशन्ताद्विहित इति** । अर्थवतो ग्रहणान्नेह–मघोनी । 'कनि'प्रत्ययान्तनिपातितस्येदम् ।

**बहुव्रीहौ वा** । 'अनो बहुव्रीहे'रिति प्रतिषेधे प्राप्ते इदम् । एतच्च वार्तिकम्–'अन उपधे'तिसिद्धङीबनुवादेन रादेशविधायकम्, अत एवेदमनुपधालोपिनि'सुपर्व'-त्यादौ नेति विकल्पोऽयमिद्धः । 'वनो र च'त्येतत्तु 'ऋन्नेभ्य' इत्येतन्ङीब्विषयमेवे-त्युक्तम् । **पक्षे डाविति** । तेन द्विवचने रूपत्रयम् ।

**कृतसमासान्त इति** । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवनाऽर्थाधिकारानु-रोधादिति भावः । तेन पादयतेः क्विबन्तस्य ग्रहणं न । **द्विपदीति** । 'द्वौ पादावस्या' इति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्ये'ति पादशब्दान्तलोपस्ततो ङीपि—पादः पत् ।

**टाबृचि** । 'पूर्वसूत्रप्राप्तङीपोऽपवाद' इति प्राञ्चः[1], तच्चिन्त्यम्, 'शेषाद्विभाष'ति

---

ॐ चिद्स्थिमाला ॐ

प्रत्ययेति परिभाषेत्यर्थः । अर्थवतः=वनः । ननु वनिबन्तत्वे नत्वमस्त्येवात आह—**कनीति** ।

ननु भाष्ये 'वन उपसङ्ख्यान'मित्येवोक्तेर्विकल्पो निर्मूलोऽत आह—**एतच्चेति** । **ङीबिति** । 'वैकल्पिके'-त्यादिः । **रादेशेति** । तन्मात्रेत्यर्थः । तेनाऽपूर्वङाब्व्यवच्छेदः । लाघवादिति भावः । ननु 'वनोरचे'त्यनेन सिद्धिरत आह—**वन इति** । 'अनन्तरस्ये'ति न्यायेन, प्रत्यासत्त्या चेति भावः । अत्र सूत्रे गमकाभावात् । दकारोत्तराकारलोपः समासान्तः । **पत्**–भत्वात् । दण्डिशास्त्र्याद्युक्ति खण्डयति–**पूर्वेति** । **'यत्वि'**त्यादिः ।

ॐ सदाशिवभट्टीयम् ॐ

**टाबृचि** । **शेषात्सूत्रभाष्येति** । नच परत्वाट्टाबृचीत्यस्यापवादतेति वाच्य, प्रत्याख्यानभाष्येण पूर्वविप्रतिषेधाङ्गीकारात् ।

---

ॐ वरवर्णिनी ॐ

मात्रवृत्तित्वाभावेऽपि प्रातिपदिकत्वावच्छिन्नाया विषयतायाः सङ्कुचिताया एव सत्त्वेनादोषात् । तथाहि—विजन्तस्य वन्धानुनिष्पन्नस्य वनः प्रत्ययलक्षणेन कृदन्ततया–प्रातिपदिकत्वे कृदन्तत्वावच्छिन्ना तत्र विषयता, न प्रातिपदिकत्वेन सङ्कुचिता वन्त्वाऽवच्छिन्ना । यतो हि–वनोऽत्र कृदन्तत्वेन [प्रातिपदिकत्वात्–] अत्र ग्रहणं प्राप्नोति, न वन्त्वेनेति—प्रत्ययग्रहणपरिभाषाविषयतायाः सम्भवोऽस्त्येवेति तदन्तविधिद्वयाश्रयण-मावश्यकमिति श्रीगुरुचरणाः ।

**द्विवचने इति** । 'बहुधीवानौ''बहुधीवर्यौ' 'बहुधीवे'इतिरूपत्रयमित्यर्थः । एकवचने तु'बहुधीवरी' बहुधीवा'इति रूपद्वयमित्याशयः । **तस्यैवेति** । चरणार्थकेन केवलेन ऋचोऽभिधानासम्भवादित्याशयः । पादयतेः=णिजन्तस्य पदधातोः । **पूर्वसूत्रेति** । 'पादोऽन्यतरस्या'मितिसूत्रेत्यर्थः ।

---

१ **प्राञ्च इति** । अयमाशयः–'ङ्याप्प्रातिपदिका'दिति सूत्रे पादशब्दसमानार्थकं पदशब्दमाश्रित्य 'एकपदे'ति रूपमदन्तलक्षणटापा प्रसाध्य 'टाबृची'ति सूत्रं भाष्यकृता प्रत्याख्यातं, तेन च सूत्रारम्भ-पक्षेऽपि–पूर्वसूत्रेण प्राप्तस्य ङीपोऽनेन बाधात् ऋचि 'एकपदे'त्येव रूपम्भवतीति,पादन्तस्य ऋच्यनभिधान-मिति च लभ्यते, अन्यथा पादसमानार्थकपदशब्दमाश्रित्य प्रत्याख्यानपक्षे–पूर्वसूत्रापवादत्वे–एकपदेति, अनपवादत्वे तु 'ऋचि'एकपदी' 'एकपात्' 'एकपदे'ति रूपत्रयम्, आरम्भपक्षे तु–'एकपदी' 'एकपदे'ति रूपद्वयमिति–फलभेदेन प्रत्याख्यानाऽसङ्गत्यापत्तिः । एवञ्चारम्भेऽपि पूर्वसूत्रप्राप्तङीपोऽपवादत्वेन 'एकपदे'-

सूत्रस्थभाष्यविरोधात् । तत्र हि—प्रतिपदविहितसमासान्तानां कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तं, तद्रीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । 'बहुव्रीहेरूधस' इत्यत्रापि भाष्ये स्पष्टमेतत् ।

अत एव 'ङ्याप्प्रातिपदिका'दिति सूत्रे पादशब्दसमानार्थमकारान्तं—

❀ चिदस्थिमाला ❀

सावकाशत्वादिति । 'तदसम्भव इती'ति शेषः । अत एव=तदपवादत्वादेव । अस्योभयत्रान्वयः ।

❀ विषमपदविवृतिः ❀

अत एवेति । टापोऽनपवादत्वेन ऋचि ङीपः प्रवृत्तेरेवेत्यर्थः ।

❀ वरवर्णिनी ❀

तत्र=भाष्ये । शेषाद्विभाषेत्यस्य अनुक्तसमासान्तादित्यर्थाभावे इति शेषः। प्रतिपदविहितसमासान्तानां= 'गन्धस्येदुत्पूति'—'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यादीनाम् ।

कबभावे इति । अभावपर्यन्तं विधेयता तु न कबादेः, 'मुमुक्षते' इत्यत्र 'मुचोऽकर्मके'ति गुणाभावस्यापि विधेयत्वे'ऽत्र लोपोऽभ्यासस्ये'ति अभ्यासलोपापत्तेः । तत्र 'अत्रे'त्यस्य—एतत्प्रकरणविधेये इत्यर्थः। तस्मादुभयत्रविभाषास्थले एवाभावपर्यन्तं व्यापारो न सर्वत्रेति—'पादोऽन्यतरस्या'मित्यस्य अप्राप्तविभाषात्वेन अभावपर्यन्तं व्यापाराभावात्पक्षे 'टाबृची'त्यस्य चारितार्थ्यमिति नापवादत्वसम्भव इति भावः । एतत्=पक्षे प्रवृत्त्या सावकाशस्यापवादत्वाभावादिरूपम् ।

परे तु—अपवाद इत्यस्य बाधक इत्यर्थः । एवञ्च 'द्विपदी मानुषी'त्यत्र 'पादोऽन्यतरे'ति चरितार्थं, 'द्विपदा ऋ'गित्यत्र ङीबभावे टाप्चरितार्थं इति ङीप्प्रवृत्तिस्थले परत्वाट्टाप् ङीपो बाधक इत्यर्थः । एवञ्च ऋचि 'एकपदे'ति टाबेव न ङीप् । न च वयं निरवकाशत्वेनात्र टापो बाधकत्वं ब्रूमो येन त्वदुक्तभाष्यविरोधः स्यात्, किन्तु परत्वेन बाधकतां ब्रूमः । यथा चापवादस्थले नोत्सर्गप्रवृत्तिस्तथा परत्वेन बाधस्थलेऽपीति साम्यादेवात्र बाधकेऽप्यपवादपदप्रयोगः । 'शेषाद्विभाषे'ति भाष्ये तु—कप एव परत्वेन प्रतिपदविधीनां

त्येकमेव, प्रत्याख्यानेऽपि पादन्तस्य ऋच्यनभिधानादेकपदेत्येकमेवेति । एवञ्च सूत्रप्रत्याख्याने 'एकपदी' 'एकपा'दिति रूपयोरपि ऋच्यापत्तिरतस्तन्निरासाय—'टाबृची'त्यारम्भणीयमेव, प्रत्याख्यानपरं भाष्यन्तु प्रौढ्युक्तिरिति निरस्तमिति—प्राचीनमतपरिष्कारः ।

शेखरकृतस्तु—'शेषाद्विभाषे'तिसूत्रभाष्यरीत्या—पक्षे चारितार्थ्यादस्य पूर्वसूत्रापवादत्वमयुक्तम् । प्रत्याख्यानपक्षे यथा 'एकपदी' 'एकपात्' 'एकपदे'ति रूपत्रयं पात्पदशब्दाभ्यां निष्पद्यते, तथैव सूत्रारम्भपक्षेऽप्युपपादनीयमिति—'अन्यतरस्या'मित्यस्य सम्बन्धाद्वाभ्यां विकल्पाभ्यां पूर्वोक्तं रूपत्रयं साध्यमिति न फलभेदलेशः ।

पादन्तस्य ऋच्यनभिधानेतु शेषाद्विभाषेतिसूत्रभाष्योक्तरीत्या सूत्रकृन्मते इष्टस्य 'एकपदी'त्यस्याप्यनभिधानापत्त्याऽनिष्टप्रसङ्गः । ननु प्राचीनैर्ऋचि वाच्यायां पादन्तस्यानभिधानस्यैवाश्रयणात्सूत्रमते 'एकपदी' त्यस्य कथमिष्टत्वलाभः, न च प्रत्याख्यानपरभाष्यरीत्या पाच्छब्दान्तस्य ऋच्यनभिधाने 'एकपदे'ति, 'टाबृची'ति सूत्रं विदधतो भगवतः पाणिनेस्तु पादन्तस्यानभिधानं वक्तुमशक्यमित्यपवादत्वाभावपक्ष 'एकपदी' 'एकपदे'ति रूपद्वयमिति—फलभेदेनारम्भप्रत्याख्यानयोरैक्यायाऽन्यतरस्याङ्ग्रहणेन रूपत्रयमेवारम्भे इव प्रत्याख्यानेऽपि साध्यमिति—'एकपदी'तीष्टमेवेति वाच्यं, टाबुद्देश्यत्वेनापरिकल्पितस्य ङीबाद्युद्देश्यत्वेन कल्पितस्यैव च पादन्तस्यानभिधानकल्पनया फलभेदानवकाशादितिचेन्न, 'न षट्स्वस्रादिभ्यः' इत्यत्र 'ङीप्टापौ न स्त'इत्यर्थस्य लाभाय 'टाबृची'त्यत्र ङीपोऽनुवृत्तेरावश्यकतया 'ऋचि वाच्यायां ङीप्टापौ स्त' इत्यर्थस्यैव तत्र लाभेन 'एकपदी'त्यस्य सूत्रमते इष्टत्वमेवेत्यस्य स्पष्टं लाभसम्भवात् । मण्डूकप्लुतौ तु गौरवमेवेति-ऋचि 'एकपदी' 'एकपात्' 'एकपदे'त्येव रूपत्रयमित्याचक्षते इति श्रीत्रिपाठिचरणाः ।

रमानाथस्तु—ङीप्पदे मण्डूकानुवृत्तिप्रयोजकस्वरितत्वस्यैव कल्पनादत्र ङीपोऽनुवृत्त्यभावादेकपदीति सूत्रमते इष्टमिति पादन्तस्यानभिधानेऽपि न दोष इति प्राह ।

पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यातम् ; "—श्रूयते च छन्दसि—'तस्याः सप्ताक्षरमेकं पदम्', एकः पाद इत्यर्थः—" इति च भाष्योक्तं सङ्गच्छते।

तदा हि ऋच्यपि 'एकपदी' 'एकपा'दितीष्यत एव। एवञ्च 'एकपात्-ऋ'गित्यस्य सूत्रमते सिद्धये 'टाबृची'त्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम्।

'पादन्तस्य ऋच्यनभिधान'मिति तु न भाष्याशयः, ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्याऽसिध्यापत्तेरिति बोध्यम्। केवलपाच्छब्दस्य स्त्रियाम्, ऋचि वाऽसम्भवेनात्र तदन्तविधिः।

❀ चिदस्थिमाला ❀

ननु तस्य तत्त्वे एव न मानमतो भाष्यीयमेव तद्ग्रिनमाह—श्रूयते चेति। छन्दसि—विषये। 'तस्याः एकं पदमिती'ति पाठः। ननु तत्र पद शाब्दीयमेव कुतो नात आह—एकः पाद इति। इतिभाष्योक्तत्वेलर्थः। तत्र तन्निवृत्तये सूत्रमिदमिति दण्ड्यादिग्रन्थासाङ्गत्यायाह—तदा हीति। तदपवादत्वे हीत्यर्थः : अपिना तदन्यसमुच्चयः। एवञ्च=तदिष्टत्वे च। अन्यतरेति। अन्यतरस्यां ग्रहणमपीत्यर्थः। प्राचोक्तं खण्डयति—पादन्तस्येति। आदयनेः सम्भवादाह—ऋचि वेति। ननु नलोपस्य 'पूर्वत्रे'त्यसिद्धत्वेनाप:

❀ सदाशिवभट्टीयम् ❀

सूत्ररीत्येष्टस्येति। पादन्तसमानान्तस्यानभिधाने 'द्विपदी'ति सामान्यतोऽपि न सिध्येदिति भावः। नच सूत्रवैयर्थ्येनेति—ऋच्येवानभिधाने—'सूत्ररीत्ये'तिग्रन्थासङ्गतिरिति वाच्यं, सूत्रमते 'द्विपदी'ति सिद्धं कृत्वा पश्चादृगिति लापने यत्—सिध्यति—तत्र सिध्येदित्यर्थात्। नचैवमेकपादिति

❀ विषमपदविवृतिः ❀

एतत्प्रत्याख्यातमिति। 'प्रत्याख्यान'मित्युचितः पाठः। एतस्य 'सङ्गच्छते'इत्यनेनान्वयः। सूत्ररीत्येष्टस्येति। इदं चिन्त्यं, ङीबन्तप्रयोगस्य सूत्ररीत्येष्टत्वे मानाभावादिति तर्कचन्द्रिकाकारा मौनिकृष्णभट्टाः। केचित्तु पक्षेत्यादौ टाम्ङीपोरुभयोर्निषेधाय 'न ष'डिति सूत्रे ङीपोऽनुवृत्तेरावश्यकतया मण्डूकप्लुतौ मानाभावेन 'टाबृची'त्यनेन ङीपो विधानं सूत्रकृत्संमतमित्याहुः। असम्भवेनेति।

❀ वरवर्णिनी ❀

परत्वाभावादपवादत्वेन तैः कपो बाधशङ्कायां भाष्यप्रवृत्त्या भाष्यं सूपपन्नमित्याहुः। अत एव=सावकाशत्वेनापवादत्वाभावादेव,-[एकपदीत्यस्यापि ऋचि इष्टत्वादेव।] तदा हि=प्रत्याख्याने हि।

दृश्यते एवेति। पदशब्दप्रयोगेऽजाबन इति टापि 'एकपदे'ति, पादन्तप्रयोगे 'पादोऽन्यतरस्या'मिति विकल्पे—'एकपदी' 'एकपा दित्येवं रूपत्रयं प्रत्याख्याने लभ्यते। एवञ्च तदुभयं रूपं यथा सिध्येत्तथा यतितव्यमिति—पक्षे चरितार्थ्यादपवादत्वाभावेन ङीपः प्रवृत्त्या 'एकपदी'ति,'अन्यतरस्या'मित्यस्यानुवृत्त्या चै'कपा'दिति सिद्धमिति आरम्भप्रत्याख्यानयोस्तुल्यतेति भट्टानामाशयः। अनुवर्त्यमिति। यद्ययं टाबपवादः स्यात्तर्हि एतत्प्रत्याख्यानपक्षेऽपवादस्याभावे 'पादोऽन्यतरस्या'मिति केन वारितं स्यादिति फलभेदापत्तिः, अत आरम्भपक्षेऽपि अपवादता न युक्तेति—'एकपदी' 'एकपदे'ति सिद्धम्, अन्यतरस्यामित्यस्यानुवृत्त्याचै'कपा'दिति सिद्धमिति हि भट्टानां हृदयम्।

नचारम्भेऽपवादत्वात्-एकपदेति, प्रत्याख्याने त्रीणीति फलभेदनिरासाय-ऋचि पादन्तस्यानभिधानमिति प्राचोक्तमेव युक्तमितिवाच्यम्, अपवादत्वस्य पूर्वोक्तभाष्यरीत्याऽसम्भवेन सूत्ररीत्या पाक्षिकस्य 'एकपदी'त्यस्यासिध्यापत्तेः। 'एकपा'दित्यत्रैव तव मम च विवादः। 'एकपदी'ति तु सूत्ररीत्या तवेष्टमित्यभिमानो नागेशभट्टानाम्।

परे तु—परत्वाद्बाधात्सूत्रसत्त्वे 'एकपदे'त्येवेति एकपदीति न सूत्रसत्त्वेऽपीष्टमिति—नेयं प्रतिबन्दी प्राचां बाधिकेति पादन्तस्यानभिधानमेव युक्तमिति श्रीगुरुचरणा व्याचक्षते।

**असिद्धत्वादिति** । आपः परिगणितेष्वभावान्न तत्र नलोपासिद्धत्वम् । इदञ्च कार्यकालपक्षे । अयं निषेधः—'प्रियपञ्चा द्रौपदी'त्यादौ तदन्तेऽपि । 'स्त्रियां यत्प्राप्नोति तन्ने'त्यर्थात् 'अन उपधे'ति ङीबपि नेति बोध्यम् । ध्वनितञ्चेदं भाष्ये ।

परेत्वत्र बहिरङ्गासिद्धत्वाप्राप्तिः, नलोपस्य तत्त्वाभावात् ,-सञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणात् । 'पञ्चे'त्यत्र तु 'स्त्रियां यत्प्राप्नोति तन्ने'त्यर्थाश्रयणबलाद्भूतपूर्वषट्त्वाश्रयो निषेधः ।

---

**❀ चिदस्थिमाला ❀**

प्राप्तिरेव नेति—असिद्धत्वोपवर्णनं व्यर्थमेवात आह—**आप इति** । सुबादिष्वित्यर्थः । तत्र=आपि ।

**इदञ्चेति** । यथोद्देशे तु एकदेशविकृतन्यायेनैव षट्त्वरूपो धर्मः सुलभस्त च नाल्धर्म इत्यन्यत्र स्पष्टम् । एतेन तथा प्रकाशदण्ड्याद्युक्तम् ,-'यथोद्देशे षट्सञ्ज्ञा स्थानिवत्त्वास्सिध्यतीतीदूत्सूत्रे सिद्धान्तितत्वान्मनोरमा चिन्त्ये'ति रत्नाकरोक्तं चापास्तम् । आदिना-'अतिसृभ्यां कुलटाभ्या'मित्यादि । तदन्तविधिरत्र-प्रकरणे सत्त्वात् , बहुवचनस्य शब्दबाहुल्येनैवोपपत्त्या प्राधान्ये एव प्रवृत्तौ मानाभावात् । 'अनन्तरे'ति न्यायबाधे मानमाह—**ध्वनितमिति** । प्रकृतसूत्रे इति भावः । मूलादि दूषयति—**परे त्विति** । **तत्त्वेति** । बहिरङ्गत्वेत्यर्थः। परम्परया सुब्निमित्तत्वेन तत्त्वाश्रयणे मानाभाव हृदि निधायाह—**सञ्ज्ञेति** ।

नन्वेवमिष्टासिद्धिरेवात आह—**पञ्चेत्यत्रेति** । तस्य भाष्यध्वनितत्वादाह-**स्त्रियामिति** । इदमेव भाष्य-

**❀ सदाशिवभट्टीयम् ❀**

सिद्धं कृत्वा ऋगिति लापने सूत्रमतेऽपि तत्सिध्यतीत्यनभिधानशङ्कासङ्गतिरिति वाच्यम् , अस्य ग्रन्थस्य लक्ष्यानुरोधेन व्यवस्थिततयाऽत्र तदभावे एकपदी, ऋगगावपक्षे टाबिति सूत्रकारमते ङीबन्तस्यासिद्धिरित्याशयः ।

**❀ विषमपदविवृतिः ❀**

**अमहत्पूर्वग्रहणाच्च** । **कार्यकालपक्ष इति** । यथोद्देशपक्षे तु नान्तत्वसमानाधिकरणषट्त्व स्थानल्धर्मत्वेन स्थानिवत्त्वेनापि सौलभ्यमिति भावः । **तदन्तमिति** । अमहत्पूर्वग्रहणेन 'स्त्रिया'मित्यधिकारस्थविधिनिषेधसाधारण्येन तदन्तविधिज्ञापनादिति भावः । **स्त्रियां यत्प्राप्नोतीति** । नन्वेवं सति 'प्रियपञ्चे'त्यादौ 'डाबुभाभ्या'मित्यपि न स्यादिति चेत्—इष्टापत्तेः । केचित्तु टाम्ङीपोरुभयोरनुवृत्त्या तयोर्निषेधेपि डाम्निषेधे मानाभावः, ङीबंशे बाध्यसामान्यचिन्तया'ऽन उपधे'ति ङीबपि नेत्याहुः । **आश्रयणबलादिति** । बाध्यसामान्यचिन्ताश्रयणस्याऽन उपधेति ङीबभावस्य

---

**❀ वरवर्णिनी ❀**

परिगणितेषु=नलोपः सुबित्यत्र परिगणितेषु सुप्स्वरादिषु । तत्र=टापि कर्त्तव्ये । एवञ्च परिभाषयैवासिद्धत्वमावश्यकमित्याशयः । 'नलोपः सु'बित्यत्र 'सु'बिति—'सु'प्रत्ययमारभ्य चापः पकारेण प्रत्याहारे टापः परिगणितेष्वन्तर्भावस्य सम्भवेऽपि बहुचर्मिकेत्यादौ नलोपस्याऽसिद्धत्वादित्त्वानापत्त्या भाष्ये तस्य पक्षस्य दूषितत्वाट्टापः परिगणितबहिर्भाव इहोपन्यस्तो भट्टैः ।

**कार्यकाल इति** । यथोद्देशे तु जसो लुगर्थं जातायाः षट्सञ्ज्ञाया नलोपेऽपि स्थानित्त्वेन सुलभत्वान्नासिद्धत्वफलमतः कार्यकालपक्षाश्रयणम् । प्राचाम्मते च कार्यकालपक्षे त्रिपाद्यामपि तत्परिभाषाप्रवृत्तिरित्याशयः। **अयं**=न षट्स्वस्रेति निषेधः। **ङीबपीति** । अपिशब्दाड्डाबपीति बोध्यम् । **शेखरे** परेत्वित्यादिग्रन्थस्तु-कौमुद्यां-'नलोपस्यासिद्धत्वा'दित्येव पाठो न तु—"नलोपः सुप्स्वरे'ति नलोपस्यासिद्धत्वात्—" इति तत्र पाठ इत्यभिप्रायेणेति तत्त्वविदः ।

**तत्त्वाभावादिति** । बहिरङ्गत्वाभावादित्यर्थः । प्रकृतेरेव षट्सञ्ज्ञकतया तदवयवस्यैव लोपेन बहिरङ्गत्वस्य वक्तुमशक्यत्वादिति तदाशयः । विषयतायाः क्वचित्सुबन्तोद्देश्यकपदत्वावच्छिन्नाया आधिक्येऽपि सञ्ज्ञाकृतबहिरङ्गत्वस्यानाश्रयणान्न बहिरङ्गत्वमिति तत्त्वम्। सञ्ज्ञाकृतबहिरङ्गत्वाश्रयणे हि—जस्निमित्तकपदत्वनिमित्तकत्वान्नलोपस्य बहिरङ्गत्वं स्यादपि, तदेव तु नेत्याकूतमिति **त्रिपाठिचरणानुसारिणो गौडा** व्याचक्षते ।

अत एव 'प्रत्ययसञ्ज्ञायां नलोपासिद्धत्वस्य न फल'मिति 'नलोपः सु'पित्यत्र भाष्ये उक्तमित्याहुः ।

**मनः । न डाबिति ।** अयम्, 'अन' इति च-उत्तरीत्या टाब्ङीपोरुभयोरपि निषेधः । एतेन "-'सीमभ्यां' 'बहुयज्वभ्यां' 'बहुधीवभ्या'मित्यत्र डाब्ङीपोरभावे नलोपे टाब्दुर्वारः-" इत्यपास्तम् ।

**डाबुभा ।** उभाभ्यामित्यग्रहणे सन्निहितस्याऽन एवानुवृत्तिः सम्भाव्येत । वचनसामर्थ्याड्डाब्निषेधयोः पर्याये सिद्धे'ऽन्यतरस्या'मिति स्पष्टार्थम् ।

भाष्ये तु-अन्यतरस्याङ्ग्रहणं वाक्यभेदेन-'अनो बहुव्रीहे'रित्यनुवर्त्य ततः पक्षे 'ऋन्नेभ्य'

❀ चिद्रस्थिमाला ❀

सम्मतमित्याह—**अत एवेति** । सकलग्रन्थासाकल्यं प्रतिपादयन्मौलन्यूनतां निराचष्टे-**अयमिति** । **उक्तेति** । स्त्रियामिति व्याख्यानेनेत्यर्थः । एतेन=तथा व्याख्यानेन । 'निषेधडापो'रिति दण्डयुक्तशङ्कामाशङ्क्याह—**डाब्निषेधयोरिति** । यत्तु-'नाभ्यां मुक्ते ङीबर्थोऽयमर्थं नत्, नचैवं मन्नन्तादपि ङीप्प्रसङ्गः, व्यवस्थितविभाषाश्रयणा'दिति शास्त्र्युक्तं; तन्न, तासां परिगणनात्तद्धनयन्नाह—**वाक्येति** । योगविभागेनेति भावः । अत एव 'मन' इत्यस्य निवृत्तिस्तदाह—**अन इति** । ननः=अन्नन्तात् ।

❀ विषमपदविवृतिः ❀

फलत्वेनानुपदमेव कीर्तनाच्चिन्त्यमेतत् । **बहुयज्वभ्यामिति** । इदमपि चिन्त्यम्, अन्नन्तत्वाभावेना'ऽनो बहुव्रीहे'रित्यस्याप्राप्तेः । यथाचाऽन्नन्तत्वाभावस्तथोपपादितं 'श्वयुवे'ति सूत्रे शेखरे । 'स्त्रियां यत्प्राप्नोति तन्ने'त्यर्थाश्रयणबलाद्भूतपूर्वगतिरित्याशयो वा कल्प्यः । वस्तुतस्त्वन्नन्तत्वमपि स्थानिवद्भावेनानेतुं शक्यं,'श्वयुवे'ति सूत्रस्थः शेखरस्तु चिन्त्य एव । ननु 'श्वयुवे'ति सूत्रस्थं भाष्यं कथं सङ्गच्छतामिति चेन्न,अनोऽवयवस्याकारस्यैवा'ऽल्लोपोऽन'इति लोपविधानादन्त्यस्य 'श्वयुवे'ति-

❀ वरवर्णिनी ❀

**वाक्यभेदेनेति । 'अनो बहुव्रीहेः'**-अन्नन्ताद्बहुव्रीहेर्न ङीबिति तदर्थः, ननः-'**अन्यतरस्या**'मिति । अत्र 'अनो बहुव्रीहे'रित्यनुवर्तने, एवञ्च अन्नन्ताद्बहुव्रीहेर्वा न ङीबिति तदर्थः । ननो '**डाबुभाभ्या**'मिति । एवञ्चान्यतरस्यामित्यनेन विकल्पेन ङीब्निषेधे-पक्षे-'**ऋन्नेभ्य**' इति ङीप्सुलभ एवेति, उपधालोपिनि अनुपधालोपिनि च अन्नन्तबहुव्रीहौ'अन्यतरस्या'मिति विकल्पस्यैव प्राप्त्या'ऽन उपधालोपिनोऽन्यतरस्या'मिति सूत्रं नियमार्थं,-'अन्नन्तबहुव्रीहेश्चेदुपधालोपिन्येवे'ति । एवञ्च 'बहुव्रीहाविवे'ति वार्त्तिकं न करणीयमिति प्रघट्टकार्थः ।

अत्र नियमशास्त्राणां निषेधमुखेन प्रवृत्तौ गौरवाद्विधिमुखेनैव प्रवृत्तौ-'अन्यतरस्या'मित्यत्रान्नन्तबहुव्रीहीतरत्वेन सङ्कोचे तस्योदाहरणं चिन्त्यम्, एतदीयोद्देश्यतावच्छेदकीभूतोपधालोप्यन्नन्तबहुव्रीहीतरत्वेन सङ्कोचस्य फलं चिन्त्यमेव 'बहुयज्वन'इत्यादावन्यतरस्यामिति ङीप्प्रवृत्तेर्दुर्वारत्वात् । तस्मान्निषेधमुखेनैवात्र-नियमशास्त्रस्य प्रवृत्तिरास्थेया, एवञ्च उपधालोपीतरान्नन्तबहुव्रीहेर्ङीब्निषेध एव फलम्, उपधालोप्यन्नन्तबहुव्रीहेर्ङीब्विधानमन्यतरस्यामिति योगफलमित्याहुः ।

यत्तु-'अन्यतरस्यामिति योगो विभज्यते' इत्यस्यायमर्थः—'अनोबहुव्रीहेरन्यतरस्या'मित्येको योगः । अन्नन्तबहुव्रीहेर्वा न ङीबिति च तदर्थः । एवञ्च निषेधमात्रमेतद्विधेयं, निषेधाभावे ऋन्नेभ्य इति विहितस्य ङीपोऽनुवादमात्रम् । एवञ्च 'अन उपधे'ति व्यर्थं सत्-'ऋन्नेभ्य' इत्यत्रैवान्नन्तबहुव्रीहीतरत्वेन सङ्कोच

इति ङीबिति तत्सन्नियोगेन रेफादेशः सिद्ध्यतीति 'बहुव्रीहौ वे'ति वचनं प्रत्याख्यातम् ।
'अन उपधे'ति 'ऋन्नेभ्य' इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः ।

**अन उ** । 'बहुव्रीहेरूधस' इत्यतो 'बहुव्रीहे'रिति 'सङ्ख्याऽव्ययादे'रित्यतो 'ङी'बिति चानुवर्त्तते । 'अनुपसर्जना'दित्यनुवृत्तमप्यत्र न सम्बद्ध्यते, तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चाऽन्नन्तबहुव्रीहावनुपसर्जनस्यासम्भवात्[1]। ध्वनितञ्चेदं 'वनो र चे'तिसूत्रे भाष्ये ।

❀ चिदस्थिमाला ❀

**नियमेति** 'अनो योऽसौ विकल्पः स उपधालोपिन एवे'तीत्यर्थः । तेन 'सुपर्वे'त्यादि सिद्धम् । न च पूर्वेणैव विकल्पसिद्धौ तत्रान्यतरस्यामिति व्यर्थम्, असति हि तस्मिन्नित्यार्थो विधिरेव स्यान्न नियमः । 'बहुराज्ञी'त्यादौ 'ऋन्नेभ्य' इत्येव ङीप् । तत्फलमाह—**बहुति** । ननु नियमशास्त्राणां सिद्धान्ते विधिमुखेन प्रवृत्त्योपधालोपिनि 'बहुधावरी'त्यादौ ङीपि सिद्धेऽपि अस्य प्रकरणान्तरस्थत्वेन नान्तलक्षणङीप्सन्नियोगशिष्टं रत्वं न स्यात्, 'वनोरचे'त्येतत्तु नोभयविधायकं गौरवात्, तथात्वे वा ङीपि निषिद्धे रोऽपि दुर्लभः, सन्नियोगशिष्टत्वात्, तथा चानोबहुव्रीहेरित्यग्रे उपधालोपिनो वेति वाच्यमित्यन्यतरस्याङ्ग्रहणमन उपेतिसूत्रञ्च मास्त्विति कथमिदमत आह—**अन उपेति** । अपिना फल्गुपक्षसमुच्चयः । यद्यपि बहूनि दामानि सन्ति येषु पुरेषु तानि बहुदामानि तान्यतिक्रान्ता नगरीत्यत्र ङीबभावस्तस्य व्यावर्त्यः, अनुपसर्जनं योऽन्नन्तो बहुव्रीहिरित्यर्थात्, तथापि लक्ष्यासम्भव एवेत्याह—**अनुपसर्जेति** । असम्बन्धे मानमाह—**ध्वनित-**

❀ विषमपदविवृतिः ❀

सूत्रस्थशेखररीत्याऽऽनेतुमशक्यत्वात् । एतेन 'धीवरी'त्यादावल्लोपापादनमपास्तम् । **अन उपधालोपिनः । गृह्यमाणस्य चान्नन्तस्येति** । धीवन्नित्यादेरित्यर्थः । **ध्वनितञ्चेदमिति** । अनुपसर्जनादित्येतन्न

❀ वरवर्णिनी ❀

कृत्वा उपधालोपिनि—अन्नन्तबहुव्रीहेर्ङीपं विधत्ते' इति केचित्तन्न, एवमप्यनोबहुव्रीहेरन्यतरस्यामिति योगस्य फलाभावात्, बहुयज्वन्शब्दादौ नियमेनैव ङीपो व्यावृत्तेः सिद्धत्वात् ।

अन्ये तु—'अनो बहुव्रीहे'रिति सूत्रं मास्तु, 'उभाभ्या'मित्यपि मास्तु, 'डाबनोबहुव्रीहेरन्यतरस्या'मित्येव सूत्रमस्तु, 'मन'इत्यनुवर्त्तते, एवञ्च अन्नन्तबहुव्रीहेर्मन्नन्ताच्च वा डाप् + पक्षे—मन्नन्तान्ङीन्निषेधः, अन्नन्तबहुव्रीहेश्च ङीप् । एवञ्च 'अनउपधे'तिव्यर्थं सत्—नियामकम् । नियमश्च—'ऋन्नेभ्यं'इत्यत्रान्नन्तबहुव्रीहीतरत्वेन सङ्कोचरूप एव । ततो'ऽन्यतरस्या'मिति, 'अन उपधालोपिन'इति वर्त्तते, 'अन्नन्ताद्बहुव्रीहेर्वा-ङीप्'इत्यर्थः । एतदभावे 'अन उपलाधलोपिन'इत्यनेन ङीपि 'अन्यतरस्या'मिति व्यर्थं सन्नियमयति—'अन्नन्ताद्बहुव्रीहेरुपधालोपिनो यदि ङीप्स्यात्तर्हि विकल्पेनैवेती'त्यप्याहुः । **विवेचकास्तु**—''अनुपसर्जनादिति बहुव्रीहिविशेषणं,तेन'अतिबहुराजे'त्यादौ न ङीप्—''इतिशब्दरत्नेनायं ग्रन्थो विरुणद्धि । यत्तु शब्दरत्नग्रन्थ एव चिन्त्यः, 'उपधालोपिनो वे'ति न्यासपरभाष्यविरोधात् । यथाश्रुते हि—अनुपसर्जनाधिकारादतिबहुराजेत्यत्र ङीन्न भवति, 'उपधालोपिनोवे'ति न्यासे तु ङीपापत्तिरिति फलभेदेन तन्न्यासस्य वक्तुमशक्यत्वादिति, तन्न, 'अनो बहुव्रीहेः' 'अनुपसर्जनात्' 'उपधालोपिनो वे'तिन्यासे तत्तात्पर्यात् । एवञ्च शब्दरत्नेन सह विरोधादनुपसर्जनादित्यस्य सम्बन्ध आवश्यक इत्युमानाथपण्डितः ।

१ नन्वनो गृह्यमाणस्यान्नन्तबहुव्रीहावनुपसर्जनस्याऽसम्भवेऽपि अतिबहुराजन्शब्दादौ बहुव्रीहेरुपसर्जनतया तत्र ङीपो वारणायानुपसर्जनादित्यस्य सम्बन्ध इहावश्यक इति चेन्न; अन्नन्तबहुव्रीहेर्वृत्तत्वात्ततो ङीपः प्राप्तेरेवाभावात्, 'वृत्तस्य विशेषणयोगो ने'त्युक्तत्वात् । सुन्दरबहुराजन्शब्दादौ बहुव्रीहिगर्भे बहुव्रीहौ तु—द्वितीयबहुव्रीहिरनुपसर्जन एवेति न तद्वारणं फलम् । प्रथमबहुव्रीहिस्तु वृत्त एवेति न ततो ङीपः प्राप्तिरिति तत्त्वविदो गौडा व्याचक्षते ।

तत्र हि—'अनो बहुव्रीहे'रित्यनन्तरम् 'उपधालोपिनो वे'ति न्यासो दर्शितः ।

विध्यर्थमिदम् । अन्यतरस्याङ्ग्रहणन्तु—अनुपधालोपि—'सुपर्वे'त्यादौ सावकाशयो-र्डाप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति ।—अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

**ककारादिति** । अनेन—'वर्णमात्रं विवक्षितम्, अकार उच्चारणार्थ'इति सूचयति । न च 'कारिके'त्यत्राकारेण व्यवधानाद्दाप्परककाराभावेनेत्त्वानापत्तिः, एकादेशोऽपि 'अचः परस्मि'न्निति स्थानिवत्त्वाद्व्यवधानेनेव । 'आपि परतोऽकारस्य कात्पूर्वस्ये'त्यर्थेऽपि

॥ चिद्रस्थिमाला ॥

**मिति** । तत्सम्बन्धस्येष्टत्वे तु तथा दुर्वचं, तस्य तदधिकारबहिर्भूतत्वादिति भावः । 'विधिनियमे'ति न्यायेन प्रागुक्तसूत्रे मतमाह-**विध्यर्थमिति** । 'अन उपधे'ति सूत्रमित्यर्थः । नन्वेवमन्यतरस्यामिति व्यर्थं, विधानसामर्थ्यादेव डाप्ङीप्प्रतिषेधानां पर्यायसिद्धेरत आह—**अन्यतरेति** । ङीपा='अन उपधे'त्यादि-विहितेन । अन्यथा=अन्यतरस्यामित्यस्याभावे । तत्=अन्यतरस्यामिति । एतेन—"इदं सर्वं वार्तिककारीयं, न तु भाष्यीयं, तेन हि सूत्र एव बहुधीवर्यादिसिद्धौ सूत्रभङ्गो नोचित इति दूषितप्रायम् । तथाहि—उक्तरीत्या सूत्राशयवर्णनं तावदयुक्तम्-'अन उपे'त्यस्यापूर्वविधित्वलिप्सया ङीप्समुच्चायकस्य नत्वाऽन्यतरस्या'-मित्यस्य 'सुपर्वे'त्यनुपधलोपिविषयकत्वस्यैवापत्तेः । नन्वेवमुपधालोप्यनुपधालोपिसाधारण्येनैव ङीब्विकल्पस्य-फलिततया 'अनोबहुव्रीहे'रित्येव सूत्रयितव्यमिति वाच्यम्, 'अन उपे'त्यस्यापूर्वविधित्वमते लक्ष्यभेदस्य स्पष्टत्वात् । तथाहि—'सुपर्वे'त्यत्र ङीपौ स्याताम्, 'बहुधीवरी'त्यत्र तु न, 'अन उपे'त्यस्य तत्प्रकरणस्थत्वेन तत्वाप्रवृत्तौ 'बहुधीवर्ना'त्येव स्यादिति । तस्माद'न उपे'त्यस्य 'ऋन्नेभ्य' इत्येतत्प्रतिप्रसवत्वं वाच्यमिति फले न वैलक्षण्यमिति सामर्थ्याद'न उपे'त्येतत्फलतो नियमार्थम् । वस्तुतस्तु परिसङ्ख्यारूपनियमस्य 'सुपर्वे'त्यादौ पक्षे प्राप्तस्य ङीपो निषेध एव विधेयो न ङीबिति ङीपि निषिद्धे रोपि दुर्लभ इत्ययुक्तमित्य-वधेयम् । एतेन वस्तुतस्तु डाप्सूत्रस्थमन्यतरस्यामिति मास्तु, प्रकरणान्तरस्थमत उपत्येतद्विध्यर्थमेवास्त्वित्य-पास्तम्—'इत्यास्तां तावत्–"इति शब्देन्दुशेखरमपास्तं, भाष्यविरोधापत्तेः । यथा शब्दरत्नादिविरोधो न तथा स्पष्टं भावप्रकाशे । अनेन=कारप्रत्ययकरणेन । **मात्रमिति** । 'सूत्रे 'इति शेषः । 'आपीति ककारविशेषणं'"सर्विके'-त्यादावेकादेशस्य स्थानिवत्त्वेनाकारव्यवधानेऽपि वचनाद्भविष्यती'ति प्रसादोक्तमाह—**आप्परककारेति** । सन्निहितत्वात्साक्षाद्विध्युद्देश्यत्वेन प्राधान्याच्च प्रकाशशङ्करादिसकलग्रन्थकारोक्तमाह—**आपीति** । उभय-

॥ विषमपदविवृतिः ॥

सम्बध्यते इत्येतदित्यर्थः । **इत्यन्तरमिति** । अनुपसर्जनाधिकारात्प्राग्वर्तिनि 'अनो बहुव्रीहे'रितिसूत्रे 'उपधालोपिनो वे'ति न्यासकरणेन तत्रानुपसर्जनाधिकारासम्बन्धो ध्वनित इति भावः ।

**अन्यतरस्याङ्ग्रहणन्त्विति** । 'उपधालोपिनो वे'ति वाग्रहणन्त्वित्यर्थः । **अन्यथेति** । 'सुपर्वे'त्यादौ डाप्प्रतिषेधयोः सावकाशत्वाप्रतिसन्धाने इत्यर्थः । अन्ये तु-गृह्यमाणस्यान्नन्तबहुव्रीहेर्बहुधीवेत्यादे-रनुपसर्जनस्य सम्भवेन बहुदामानि पुराण्यतिक्रान्ता नगरी—अतिबहुदामेत्यादावन्नन्तबहुव्रीहेरुप-सर्जनस्य च सत्त्वेनानुपसर्जनादित्यत उपधेति सूत्रे सम्बध्यत एव । 'अनो बहुव्रीहिप्रतिषेधे उपधा-लोपिनो वेति वक्तव्य'मिति 'वनो रचे'ति सूत्रस्थं भाष्यन्तु 'डाबुभाभ्याम्' 'उपसर्जना'दित्युत्तरं तद्वक्तव्यमित्येवं परमित्याहुः ।

**अनेनेति** । वर्णात्कार इतिविहितकारप्रत्ययान्तनिर्देशेनेत्यर्थः । **न प्राप्नोतीति** । सामर्थ्यान्निर्दिष्ट-

निर्दिष्टपरिभाषोपस्थितेर्व्यवहिते न प्राप्नोतीति वाच्यम्, आनन्तर्यांशोपस्थितावपि 'येन नाव्यवधान'मिति न्यायेनाऽकारव्यवधानेऽपि प्रवृत्तेः। रथकट्यादौ च नातिप्रसङ्गः।

'के'ति सङ्घातग्रहणे तु—'एतिके'त्याद्यसिद्धिः, अकच्यकारस्योच्चारणार्थतया कशब्दाभावात्। 'न यासयो'रिति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते। अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्त्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवं, तावताऽपि प्रत्ययस्थत्वांशानुपपत्तेश्च।

न च वर्णग्रहणपक्षे 'एतिके'त्यादावकारद्वयव्यवधानादित्त्वाप्राप्तिः, द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात्।

पुनः स्थानिवत्त्वन्तु न, लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः[1]। टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यं, तस्य टाबेकादेशेनापहारेणाऽदर्शनात्।—अत एव 'न यासयो'रितिनिषेधसार्थक्यम्।

'स्थ'ग्रहणन्तु स्पष्टार्थं, केवलककारस्य प्रत्ययस्याभावात्।

---

**ॐ चिदस्थिमाला ॐ**

मकारविशेषणमिति भावः। 'पूर्वस्ये'त्यस्य सत्त्वादाह—**आनन्तर्यांशोपेति**। 'अनुवादे' इति परिभाषाया अनृत्त्वं, सूत्रद्वयविषयकत्वं वेति भावः। वस्तुतः श्रौताव्यवधानमादाय तत्राप्रवृत्तिरिति तत्त्वं स्वमतमपिना सूचितम्। **नातिप्रसङ्ग इति**। न्यायादिनैवेति भावः। ककारव्यवधानं कात्पूर्वस्येत्युक्तिबलादेव सोढव्यं, 'रथकट्य'त्यादौ श्रौतव्यवधाने प्रवृत्तौ तु न मानमिति बोध्यम्। ननूक्तन्यायाद्यसञ्चारजलाघवेन सङ्घातग्रहणमेवेति न तत्र दोषोऽत आह—**केतीति**। 'पचतकी'त्यादिसिद्धये आह—**अकचीति**। ननु 'न यासयो'रिति ज्ञापकात्तत्र सिद्धिरत आह—**न यासयोरिति**। अपूर्ववचनाकल्पनलाघवादाह-**इत्येवेति**। अत एवाह—**अकजिति**। अभ्युपेत्याप्याह—**तावतापीति**। इत्सञ्ज्ञाद्युत्तरमेव प्रत्ययसञ्ज्ञासत्त्वादिति भावः।

उक्तन्यायेन निर्वाहपक्षे शङ्कते—**नचेति**। ननु पुनः स्थानिवत्त्वेन तथाऽत आह—**पुनरिति**। विकारान्यानुपूर्व्यैक्येनाह—**लक्ष्ये इति**। ननु तस्यैव तत्त्व, न टापा सहैकादेशस्येति नायं दोष एवात आह—**टाबेति**। 'यावता विने'ति न्यायेनाह—**अत एवेति**। 'एतिके'त्यादावुक्तरीत्यङ्गीकारादेवेत्यर्थः।

वर्णग्रहणे सत्याह—**स्थेति**। अत एवाह—**केवलेति**। नच कान्तादित्यर्थेऽकजेव स्यादिति वाच्यं,

**ॐ विषमपदविवृतिः ॐ**

**परिभाषाबाधे तु रथकट्यादावतिप्रसङ्ग इति भावः। उच्चारणार्थतयेति**। 'धकित्' 'हिरुगि'त्याद्यनुरोधेनेत्यर्थः। **प्रत्ययस्थत्वांशेति**। निर्मुक्तानुबन्ध एव प्रत्ययसञ्ज्ञाप्रवृत्त्याऽकचि 'के'ति समुदायस्य प्रत्ययत्वाभावादिति भावः। **केवलेति**। न च कान्तात्प्रत्ययादित्यर्थवारणाय 'स्थ'ग्रहणमिति वाच्यं, 'क्षिपकादीनां चे'ति निषेधेन ककारस्य प्रत्ययविशेषणत्वज्ञापनेनादोषात्।

---

१ **सकृदेवेति**। परे तु—अतिदेशविषये लक्ष्ये लक्षणन्यायाप्रवृत्त्या स्थानिवत्त्वस्य पुनः प्रवृत्तौ बाधकाभावः। अत एव 'सुनयिका' 'सुपाकिके'त्यादौ 'धात्वन्तयकोस्तु नित्य'मितीत्वं प्रवर्त्तते, अन्यथा 'ने' इत्यत्र धातुत्वाभावे 'नय्' इत्यत्रापि तदभावादित्त्वं न स्यादिति चिन्त्य एवायं ग्रन्थः। 'न यासयो'रिति निषेधसामर्थ्यादेव न स्थानिवद्भाव इत्येव समाधानन्तु वक्तुं युक्तमित्याहुः।

केचित्तु—**पुनः** स्थानिवद्भावेऽपि अत्वजात्याक्रान्तस्यैव व्यवधानेनाधिकव्यवधानाभावान्न दोष इत्याहुः। अतिदेशस्य कार्यार्थतया सञ्ज्ञास्थले लक्ष्येलक्षणपरिभाषाया अप्रवृत्तिवदतिदेशेऽपि तस्या अप्रवृत्तावपि—निरधिष्ठानारोपासम्भवेन—[आकारे 'अ–आ'बुद्धावपि अकारस्यानयनाभावादाकारस्य स्थानिवद्भावाभावादारोपासम्भवात्–] न द्वितीयस्थानिवद्भावप्रवृत्तिरित्याहुर्गौडाः।

'असुप' इति बहुव्रीहिणा नाऽङ्गविशेषणं, 'बहुचर्मिके'त्यादावित्त्वानापत्तेः। प्रत्यय-लक्षणेनाङ्गस्य सुबन्तत्वात्। 'न लुमते'ति तु नात्र, लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये तन्निषेधप्रवृत्तेः, इदन्तु टाप्यङ्गमिति दिक्।

**सर्विकेति**। 'अव्ययसर्वनाम्ना'मित्यकच्। **कारिकेति**। करोतेर्ण्वुल्। नौशब्दात्स्वार्थे कः। 'सुपः परो ने'ति प्रसज्यप्रतिषेधेन व्याख्याने फलमाह—**बहुपरिव्राजकेति**। पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन सुबन्तभिन्नत्वेन च ततः परत्वादित्त्वं दुर्वारमिति भावः। परिपूर्वाद्व्रजेर्ण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनाऽऽपः सुबन्तात्परत्वं बोध्यम्।

**कटुकेति**। आपा सह सवर्णदीर्घात्पूर्वं वर्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्च

❀ चिदस्थिमाला ❀

'क्षिपकादीनाञ्चे'ति निषेधवैयर्थ्यापत्तेः, नहि तत्र कान्तः प्रत्ययः सम्भवतीति भावः। एतेनात्र प्रकाश-दीक्षितदण्डिशास्त्र्याद्युक्तं सर्वमपास्तमिति स्पष्टं भावप्रकाशे, तदाह—**इति दिगिति**।

यथाश्रुते आह—**सुब्भिन्नत्वेनेति**। तदन्तविधावाह—**सुबन्तेति**। **बोध्यमिति**। 'बहुचर्मिके'त्यादौ।

❀ सदाशिवभट्टीयम् ❀

**प्रत्ययस्था**। ननु 'सर्वा' इति कृत्वाऽनन्तरमकचि पूर्वत्वेन दृष्टस्य कार्याभावेन स्थानिवत्त्वाप्रवृत्त्या तत्राव्यवधाने चारितार्थ्येन 'कारिके'त्यत्र स्थानिवत्त्वेन व्यवधानान्न स्यात्, 'समर्थाना'मित्यनुवृत्तेरित्यत्र तन्त्रैकत्वात्कृतसन्धेः कार्यस्योचितत्वादिति वाच्यं, 'क्षिपकादीनाञ्चे'ति निषेधाज्ज्ञापकाद्व्यवहितेऽपि प्रवृत्तेः। अत्रेदन्तत्त्वम्—'आपि यः ककार' इत्युक्तेः सामर्थ्याज्ज्ञापकेन वा एकवर्णव्यवधानं सोढव्यम्, आपि योऽकार इत्युक्ते तु वर्णद्वयव्यवधानम्।

१ सर्विकेत्येव सिद्धे पुनः 'कारिके'त्युदाहरणदानाभिप्रायस्तु—कृतसन्धेस्तद्धितोत्पत्त्या 'सर्वे'ति कृत दीर्घादकचि—अकचोऽकारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेनादिष्टादचः पूर्वत्वेन दृष्टस्य कार्याभावेन स्थानिवत्त्वाऽप्रवृत्त्या [ परादिवद्भावेनाप्यत्वात्— ] आपःपूर्वस्याव्यवहितककारस्य सम्भवाच्चरितार्थमिदं सूत्रं, 'कारिके'त्यत्र ककारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वादकारव्यवाये न प्रवर्तते इति शङ्काव्युदासाय।
नच 'कारिके'त्यत्र कथमेकवर्णव्यवधाने प्रवृत्तिरिति वाच्यं, 'क्षिपकादीनाञ्चे'ति निषेधारम्भेण लिङ्गेनैकवर्णव्यवधानेऽपीत्त्वप्रवृत्तिकल्पनादिति श्रीमन्त्रिपाठिपादा भणन्ति।

२ अयमाशयः—अथ पूर्वग्रहणं मास्तु, नच पूर्वग्रहणाभावेऽपि दिग्योगपञ्चम्युपपत्तये दिग्वाचक-शब्दाध्याहारे प्रसक्ते 'तस्मा'दितिपरिभाषया परस्येत्युपस्थित्या 'सर्विके'त्यादौ परत्वात्सवर्णदीर्घं बाधित्वा ककारोत्तराकारस्येत्त्वे यणि 'सर्वक्ये'त्यापत्तिरिति, वाच्यं, 'सर्विके'त्यादावन्तरङ्गत्वात्सवर्णदीर्घे ककारा-त्परस्य ह्रस्वाकारस्याभावेन सामर्थ्यादेव ककारात्पूर्वस्याकारस्येत्त्वसिद्धेः। नच एकादेशस्य 'अचः परस्मि'न्निति स्थानिवत्त्वात्कृतेऽपि दीर्घे ह्रस्वाकारलाभात्परस्यैवाकारस्येत्त्वापत्तिरतः पूर्वग्रहणमावश्यक-मिति वाच्यं, स्वविधौ स्थानिवत्त्वाभावस्योपपादितत्वेन तदलाभात्। न चैवं टाप्परत्वाभावः, परादिवद्भावेनापि तस्योपपादयितुं शक्यत्वात्। न चान्तरङ्गमप्येकादेशं 'येन नाप्राप्ति'न्यायेना-पवादत्वाद्वार्णादाङ्गमिति न्यायाद्वा बाधित्वा परस्याकारस्येत्त्वापत्तिरतः पूर्वस्येत्यावश्यकमिति वाच्यं, ककारोत्तराकारस्यैवेत्त्वेऽत इत्यस्य वैयर्थ्येन तत्सामर्थ्यादेव पूर्वस्येत्यस्य लाभादित्याशयात्।
न च भवतु एव भवत्कु, अ इवाचर अ, भवत्कु—अ यस्यां क्रियायां सा 'भवत्क्वे'त्यत्र ककारोत्तरस्य वस्येत्त्ववारणायाऽत इत्यस्य चारितार्थ्यात्—न तत्सामर्थ्येन—'पूर्वस्य न परस्ये'त्यस्य लाभ इति वाच्यं,

१ न च टाबेकादेशस्य स्थानिवत्त्वादकारेण व्यवधानान्न तत्रेत्त्वमिति वाच्यं, 'नपदान्ते'ति निषेधात्।

अन्त्यककाराद्नुत्तरस्याकारस्येत्त्वं स्यादिति भावः । **मामकेति** । कस्य प्रत्ययस्थत्वा-भावादप्राप्ते वचनम् । 'ममेय'मिति विग्रहे 'युष्मदस्मदोरन्यतरस्या'मित्यणि 'तवकममका-वेकवचने' इति ममकादेशे आदिवृद्धिः । **नरानिति** । 'कै–शब्दे' इत्यस्य 'आदेच उपदेशे' इत्यात्त्वे 'आतोऽनुपसर्गे' इति के–'आतो लोप इटि चे'त्यालोपः ।

**न यासयोः** । 'प्रत्ययस्था'दिति प्राप्ते निषेधोऽयम् । **यकेति** । यत्तदोरकच्, त्यदाद्यत्वे टाप् । सन्निपातपरिभाषाऽस्मादेव निषेधान्निर्देशाच्चाऽनित्येति तद्विरोधात्कथं टाबिति न शङ्क्यम् ।

**त्यकनश्चेति** । 'मृदस्तिक'न्निति इत्त्वभूतनिर्देशेन ज्ञापकेनास्येत्त्वं वारयितुं शक्य-मिति भाष्यकृतः । पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे–'पञ्चमृत्तिक' इत्यस्यानभिधानमिति-तदाशयः । अत्र त्यिकनि कर्त्तव्येऽकारोच्चारणादित्त्वं नेति न वक्तुं शक्यं,

---

ॐ **चिदस्थिमाला** ॐ

यथेत्त्वं तथा स्फुटीभविष्यति । कस्य=ककारस्य । 'मामिके'त्यस्य प्रक्रियामाह—**ममेयमिति** । सञ्ज्ञाछन्दसो-रभावान्न 'केवले'ति ङीप् । तच्च नियमार्थमित्यन्यत्र स्पष्टमित्यणन्तत्वप्रयुक्तोऽपि स न । नस्यानैमित्तिकत्वेनान्तरङ्ग-त्वादाह–**आदेच** इति । यत्तु 'या इत्यस्योदीचामिति विकल्पे प्राप्ते निषेधोऽय'मिति—न्यासकृत्तन्न, 'अतः स्थाने' इत्यंशस्येहाभावात ; तद्ध्वनयन्नाह-**प्रत्ययेति** । ननु विभक्तिसन्निपातकृतमत्त्वं कथं टापं प्रवर्तये-त्सन्निपातपरिभाषाविरोधादत आह–**सन्नीति** । अन्यथाऽकारस्याप्परत्वाभावेनाप्राप्तौ वैयर्थ्यं स्पष्टमेव ;

दण्ड्यादिग्रन्थासाङ्गत्यायास्य प्रत्याख्यानं सिद्धान्तभूतमाह—**मृद इति** । ज्ञापकेन=सामान्यापेक्षेण । अत एव 'नैवज्ञातीयकाना'मित्युक्तं तत्र । ननु तद्धितलुकि श्रवणार्थं तदावश्यकमिति कथं ज्ञापकमन्यथा तन्नार्थे 'आर्हादगोपुच्छे'ति ठको'ऽध्यर्धे'तिलुकि 'लुक्तद्धो'ति टापो लुकि निमित्ताभावा'त्प्रत्ययस्था'दितीत्त्वं न स्यात् । नच लुकः प्रागेवान्तरङ्गत्वादित्त्वम्, 'अन्तरङ्गानपी'ति न्यायविरोधादत आह—**पञ्चभिरिति** ।

प्राचोक्तं खण्डयति—**अत्रेति** । 'उपाधिभ्या'मिति सूत्रे इत्यर्थः । ननु प्रत्ययलक्षणेनाप्परत्वादिष्ट-

ॐ **सदाशिवभट्टीयम्** ॐ

**त्यकनोऽकारस्येति** । 'तिकनीकारकरणेन ने'ति भाष्यम् । नच प्रक्रियालाघवेन तथाकरणं, प्रथमो-पस्थिताऽकारत्यागे बीजानापत्तेस्तादृशलाघवानादरात् ।

---

तावताऽपि तपरकरणस्य वैयर्थ्येन तत्सामर्थ्येनैव पूर्वांशस्य लाभ इति तद्वैयर्थ्यमिति शङ्काशयात् ।

अन्ये तु भवितका अ यस्यां क्रियायां सा भवितकेत्यत्र टापि परतः ककारादुत्तरस्य दीर्घाकारस्येत्त्व-वारणाय तपरकरणमपि सफलमिति न तत्सामर्थ्येन पूर्वांशलाभः ।

नच भवितका–अ इत्यवस्थायामेव दीर्घे ततष्टाबप्राप्तिरेव, अदन्तत्वाभावादिति वाच्यं, 'भवितके'त्यस्य–'अनन्त्यस्यापि प्रश्नाख्यानयो'रिति प्लुतत्वात्प्रकृतिभावेन दीर्घाप्रवृत्त्या 'भवितका ३ अ' इत्यतष्टापि दीर्घे भवितका ३ आ—इत्यत्र [इत्त्वस्य पदान्तविधित्वेन तत्र कर्त्तव्ये स्थानिवद्भावाप्रवृत्त्या अकारेण व्यवधाना-भावात्—] परादिवद्भावेनाप्परत्वादित्त्वापत्तेरित्याशयात् । न चेत्त्वमपि प्रगृह्यत्वेन वार्यतामिति वाच्यं, प्लुतकार्यस्य प्रगृह्यस्य अपूर्व–विधित्वाभावेन—[ अनुवादकत्वेन— ] पदान्तविधित्वाभावात्तत्र कर्त्तव्ये 'न पदान्ते'तिनिषेधाऽप्रवृत्त्या स्थानिवत्त्वेनाकारनिमित्तिकैव प्रगृह्यसञ्ज्ञेति तया टान्निमित्तकेत्त्वस्यावारणात्, अज्ग्रहणाद्यन्निमित्तिका प्रगृह्यसञ्ज्ञा तन्निमित्तककार्यस्यैव तया वारणात् । प्रकृते च स्थानिवत्त्वेन अ–निमित्तिका प्रगृह्यसञ्ज्ञा टान्निमित्तकन्त्वित्त्वमिति न प्रगृह्यत्वेनेत्त्ववारणसम्भव इति पूर्वस्यैव यथा स्यादिति पूर्वग्रहणमित्याहुः । नच सर्विकेत्यत्रैव दोषे कट्टकापर्यन्तानुधावनं व्यर्थमिति वाच्यम् ; सर्वेषाऽनेत्त्वेऽनिष्टापत्तिरिति सूचनार्थन्तदुक्तेः । विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेय इति गौडाः ।

'पञ्चोपत्यको ग्राम' इत्यादावकारश्रवणानापत्तेः । इतो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न, उभयोरपि 'न लुमते'त्यनेन निषेधात् । अत एव 'कर्त्री'त्यादौ वार्त्तिकमतेऽपि न गुण इत्यन्यत्र विस्तरः ।

**आशिषि वु** । आशिषि विहितस्य वुनोऽस्येत्त्वं नेत्यर्थः । 'जीवता'दित्यर्थे 'आशिषि चे'ति वुन् । देवदत्तशब्दादनुकम्पायां कनि 'अनजादौ च विभाषा लोपो वक्तव्य' इति 'दत्त'शब्दस्य लोपः । 'देवदत्तिके'त्युपन्यासस्तु दत्तलोपमभिव्यङ्क्तुम् ।

**ध्रुवकेति** । 'ध्रु—स्थैर्ये' पचाद्यचि कुटादित्वाद्गुणाभावे उवङ्, ततोऽज्ञातार्थे कः, 'केऽण' इति ह्रस्वः, पुनष्टाप् । चटेः—सञ्ज्ञायां क्वुन् । वार्त्तिकोक्ता गणा—आकृतिगणाः । तेन 'कन्यका' 'ध्रुवका' 'अलका' 'इष्टका'दयः साधवः ।

**उदीचान्त्विति** । अत्रापि 'शकुना'विति सम्बद्ध्यते, तेनान्यत्र नित्यमेवेत्त्वम् ।

**सूतका पुत्रि** । 'पुत्रके'त्यकारसहितः पाठोऽपपाठः, कैयटाद्यसम्मतेः । सूतशब्दात् स्वार्थे कन् । वृन्दशब्दात्—'शृङ्गवृन्दाभ्यामारक'न्निति मत्वर्थीय आरकन् । 'वृन्दारक'शब्दो मुख्यवाची त्रिलिङ्ग इति भावः । **ङीन इति** । शार्ङ्गरवादित्वाज्जातस्येति भावः । **अन्यत्र**—सूतकादौ ।

**उदीचाम्** । य-क-पूर्वत्वञ्चाव्यवहितमेव, एवं 'प्रत्ययस्था'दिति सूत्रे कात्पूर्वत्वमपि,

❀ चिद्स्थिमाला ❀

सिद्धिरेवातो वार्त्तिकमतेनाह—**प्रत्ययेति** । भाष्यमतेनाह—**स्थानीति** । अत एवाह—**उभयोरिति** । अत एव=तेन निषेधादेव । एतेन वार्त्तिकमते तस्यैव स निषेध इति स्थानिवत्त्वेन गुणः स्यादेवेति परास्तं, तदाह—**इत्यन्यत्रेति** । उणादावित्यर्थः । 'जीवके'त्यस्य प्रक्रियामाह—**जीवतादिति** । 'देवके'त्युदाहरणस्य प्रक्रियामाह—**देवेति** । नन्वेवन्देवदत्तिकेत्यनुपयुक्तमत आह—**देवेति** । 'ध्रुव-स्थैर्ये' इतोऽपि 'क्षिपके'त्यत्रेवेगुपधलक्षणः कः' इति दण्डिशास्त्याद्युक्तेरसाङ्गत्यादाह—**ध्रुस्थैर्ये इति** । 'चटके'त्यत्राप्ययमेव प्रकार इति तदुक्त्यसाङ्गत्यादाह—**चटेरिति** । भेदनार्थादित्यर्थः । आदिना 'करका'–'परका'–'मेनका'दयः । एतेन कन्यकाशब्दस्य भाष्येऽदर्शनादनुचितः पाठ इत्यपास्तम् ।

शकुनावेव विकल्प इत्याह—**अत्रापीति** । अन्यत्र=शकुनिभिन्ने । भाष्ये क्वचित्पुस्तके दृश्यमानपाठं खण्डयति—**पुत्रकेतीति** । देवतावाचिनः 'वृन्दारका दैवतानी'त्यमरात्पुंस्त्वेऽपि 'त्रिपृत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्या'वित्यमरोक्तेराह—**मुख्येति** । अत एव 'वृन्दारका' 'वृन्दारिके'ति भाष्ये उदाहृतम् । ननु सूतकादावकारस्याकारविधानं व्यर्थमत आह—**अन्यत्रेति** । अर्थगतं स्त्रीत्वमाकारे आरोप्य 'यकपूर्वाया'इति स्त्रीलिङ्गनिर्देश इति सूचयन्नाह-'**यकेति**। तत्कत्वञ्चेत्यर्थः । एतेनान्यथा सकलग्रन्थकारोक्त-

❀ सदाशिवभट्टीयम् ❀

**उदीचाम्** । न च स्त्रीबोधकाकारस्य साङ्काद्यकेऽभावो वुनस्तत्र शक्तेरभावात्,

❀ विषमपदविवृतिः ❀

**अणीति** । टिड्ढेति ङीप् तु न, 'केवलमामके'ति नियमात् । **वार्तिकमतेपीति** । भाष्यकारमते तु प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेन 'न लुमते'त्यनेन स्थानिवत्त्वस्य निषेधे प्रत्ययलक्षणमप्यर्थान्निषिद्धं, प्रत्ययलक्षणसूत्रस्य स्थानिवत्त्वानुवादकत्वात् । 'कन्यके'त्युत्तरं 'ध्रुवके'त्यपाठः, गणेऽपठितत्वात्

'उदात्तस्वरितयो'रित्यादाविवानुवादेऽपि निर्दिष्टपरिभाषाप्रवृत्तेः। तेन 'कृशरा'शब्दात्के ह्रस्वे इत्त्वविकल्पो न। 'ने'त्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वा-दाह—**इद्वेति**। **आतः किमिति**। 'उदीचां यकपूर्वायाः' इत्येवास्तु। य—क—पूर्वस्त्रीबोधकाकारस्येत्यर्थः। साङ्काश्यके च नातिप्रसङ्गः, प्रत्ययावयवत्वेनाकारस्य स्त्रीबोधकत्वाभावादिति प्रश्नः।—'बहुलक्ष्यसंस्कारानुरोधादवयवषष्ठ्येव स्यात्, न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवात्र ग्रहणं, विशिष्य तदनुपादाना'दित्युत्तरम्।

**स्त्रीप्रत्ययस्य किमिति**।'यकपूर्वाया' इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः। **धात्वन्तेति**। धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थः। 'इत्त्व'मिति शेषः।

**भस्त्रैषा**। अयमपि निषेधविकल्प इत्याह—**अत इति**। अत्राप्यातः स्थाने इत्य-नुवर्त्तते। **तदन्तेति**।'येन विधि'रिति सूत्रे 'त्यदादिविधिर्भस्त्रादिग्रहणञ्च प्रयोजन'मिति भाष्यात्। अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः। अत्र 'नञ्पूर्वाणामपी'ति स्पष्टार्थं, 'पदाङ्गाधिकारे तस्य चे'ति सिद्धेः। **उपसर्जनार्थमिति**। एवञ्चानुपसर्जने 'आदाचार्याणा'मित्यात्त्वं भवत्येव, उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात्। **अन्यस्य**—अनुपसर्जनस्य। उत्तरसूत्रम्—'अभाषितपुंस्काच्चे'ति।

**अन्तर्वर्त्तिनीमिति**। 'न—एत—द्—सु' इति स्थिते अकचि कृते अकृते वा नञा तत्पुरुषे 'अन्तरङ्गानपी'ति न्यायेन त्यदाद्यत्वात्प्राक् सुपो लुकि ततोऽकचि वा

॥ चिदस्थिमाला ॥

मुभयत्रापास्तम्। यथाश्रुतासङ्गतेराह—**नेत्येति**। **अवयवेति**। तथाच तत्त्वादत्रातिप्रसङ्ग इति तदा-वश्यकमिति भावः। यथाश्रुतासङ्गतेराह—**धात्वन्तेति**। 'नित्य'मित्यस्य निषेधनिवृत्तये शेषमाह—**इत्त्व-मिति**। अत्रापि प्राग्वदेवेत्याह—**अयमपीति**। अतएव स्त्रीलिङ्गा एव निर्दिष्टा इति बोध्यम्। यत्त्वित एव ज्ञापकादिह तदन्तविध्यभाव इति तत्खण्डयितुमाह—**येनेति**। दोषान्तरमाह—**अपिनेति**। किञ्च यत इत्यादिः। विनिगमनाविरहात्सहनञिति। एवञ्च तवापीदमिष्टमिति फलाभावादिति भावः। अतएव मूलं युक्तमित्याह—**नञिति**। अतएव 'निर्भस्त्रिके'त्यादि भाष्योदाहरणं सङ्गच्छते। एवञ्चेत्यस्यार्थमाह—**उपेति**।

॥ सदाशिवभट्टीयम् ॥

आनतिक्रान्ताऽस्या, अज्ञाता अस्या,—अस्यकेत्यादौ च 'ङ्याब्ग्रहणेऽदीर्घ' इत्यस्य प्रत्याख्याने अकारस्य स्थानिवत्त्वेन स्त्रीबोधकत्वान्न दोष इति वाच्यम्, तद्रूपप्रयोगाभावात्प्रत्याख्येयमेवेत्याशयात्। 'उदीचामापो यकाभ्या'मिति वक्तव्यमत्र। नच प्रतिपदोक्तः 'आपोन्यतरस्या'मिति ह्रस्व एव स्यादिति वाच्यम्, आर्यकेत्यत्रापि ह्रस्वं बाधित्वाऽस्य प्रवृत्त्या दोषात्। 'बहुचटकिके'त्यत्र ह्रस्वाभावेनाऽस्य चारितार्थ्येन बाधना-योग इति वाच्यम्, एवञ्चेदत इति नानुवर्तते, तथा च आर्यकेत्यत्र स्थानिवत्त्वेनाप्त्वाददोषात् 'ङ्याब्ग्रहणे'-इति तु प्रत्याख्यातमेव। अन्ये तु स्विक्षुच्छायिकेत्यत्र विकल्पः स्यात्, सिद्धान्ते तु स्त्रीबोधकेत्यस्यार्थस्य सिद्धान्तितत्वेन नपुंसकादेशस्य स्थानिवत्त्वेन विशिष्टे स्त्रीबोधकत्वेप्यवयवे अभावान्नेत्त्वविकल्पः।

॥ विषमपदविवृतिः ॥

**निर्दिष्टपरिभाषाप्रवृत्तेरिति**। उत्तरांशविकलतस्मादितिपरिभाषाप्रवृत्तेरित्यर्थः। **अनञ्पूर्वाणाम-पीति स्पष्टार्थमिति**। सूत्रेऽपिशब्दो नञ्पूर्वकमिश्रार्थकः—सोपि स्पष्टार्थ इत्यर्थः। **अकचि वा पुनर्विशिष्टात्सुपीति**। ननु नञर्थान्वितैतदर्थेऽज्ञाताद्यर्थविवक्षायां समुदायात्सुबुत्तरमेवाकज्युक्त इति

पुनर्विशिष्टात्सुपि प्रवृत्त्यर्थे टापि समासात्पूर्वं तत्सुपः परत्वं टापीति भावः । बहुव्रीहौ तु 'प्रियैतका' 'प्रियैतकका' वा, कबभावे 'प्रियैतक'इत्येव,—सर्वथा नेत्त्वप्राप्तिः ।

**अनेपकेति** । अज्ञाता एना एनका, न एनकेति विग्रहः । पूर्वं नञ्समासे—अज्ञाता अनेना इति । **असम्भवादिति** । 'एषाद्वे'ति निर्देशात्सञ्ज्ञोपसर्जनयोरप्राप्तेरिति भावः ।

**अकृतेह इति** । एवञ्च तदकारस्याऽऽतःस्थानिकत्वाभाव इति भावः । **अर्थान्तरे निव्रति** । अन्यत्र निवर्तन्त्वित्यर्थः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति कोशादिति भावः ।

**कप्रत्ययान्तत्वादिति** तत्र च नान्तवर्तित्वेऽकस्य सुपः परत्वं, केन व्यवधानादिति भावः । 'नञ्पूरणयो'श्चे'ति निषेधेन सञ्ज्ञाया अपि भाषितपुंस्कत्वबोधनेन सञ्ज्ञाभूते न—'अभाषितपुंस्काच्चे'त्यनेन सिद्धिः, आत्मीयत्वपुरस्कारेणैव सञ्ज्ञाकरणादिति बोद्धव्यम् ।

**नित्यमेवेति** । तत्र ह्यकचि कृते आतःस्थानिकत्वाभाव इति भावः। एवमत्यन्तस्वार्थिक-कान्तेऽपि नित्यमेवेत्त्वम्, अकचोऽत्यन्तस्वार्थिकापवादत्वाभावात् । **निःस्वकेति** । स्वस्या निष्क्रान्तेति विग्रहः । उपसर्जनह्रस्वः, टाप् , अज्ञातादौ कः ।

**अभाषित** । 'स्त्रीविषयाचे'ति नोक्तम् । स्त्रीनपुंसकदामशब्दाद्धापि अज्ञाता दामा—'दामिका' 'दामका' 'दामके'त्यसिद्ध्यापत्तेः। 'विहितस्ये'ति व्याख्याने फलमाह— **बहुव्रीहेरिति** । अविद्यमाना खट्वा यस्या इति विग्रहे—पाक्षिककबभावे 'गोस्त्रियोः' इत्युपसर्जनह्रस्वेऽखट्वशब्दादापि सुप्यज्ञातादौ के सुब्लुकि 'केऽण' इति ह्रस्वे पुनष्टापि अभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनैतद्विकल्पाप्राप्तावुत्सर्गेण नित्यमेवेत्त्वं, पर-

ॐ चिदस्थिमाला ॐ

एतेन तत्राप्यात्त्वबाधनार्थं भस्त्राग्रहणमित्यपास्तम् । **समासादिति** । 'प्रत्ययलक्षणेने'त्यादि । सपूर्वत्वे तत्पुरुषे उक्तवाबहुव्रीहावाह—**बह्विति** । विनिगमनाविरहादाह—**पूर्वमिति** । एकवचननिर्देशात्के एवार्थ इति भ्रमनिरासायाह—**आसेनेति** । तत्र च=प्रियस्वकेत्यादौ । अत एव 'बहुचर्मिके'त्यादावित्त्व-सिद्धिः । ननु सञ्ज्ञाभूतो न इहोदाहरणं, तस्य 'अभाषितपुंस्काच्चे'त्यनेनैव सिद्धत्व आह—**सञ्ज्ञेति**। नन्वेवमपि तस्य भाषितपुंस्कत्वं कथमत आह—**आत्मीयत्वेति** । एवं प्रत्युदाहरणान्युक्त्वोदाहरणान्याह—**मूले— निर्भस्त्रकेत्यादि** । मौलन्यूनतां निराचष्टे—**एवमिति** । तत्र तन्न्यायाप्रवृत्त्या तदंशस्य तत्राप्यभावादिति भावः । एतेन 'नित्यमेवेत्यस्याकज्विषय इति शेषः, सञ्ज्ञोपसर्जनीभूत इत्यप्यकजभाववदुपलक्षणम् , अतएव स्वाशब्दादत्यन्तस्वार्थिके के इत्त्वविकल्पो भवत्येव, न ह्यकजत्यन्तस्वार्थिकस्याप्यपवाद'इत्यपास्तम् । पदलाघवादेराह—**स्त्रीविषयेति** । अनन्यभावे विषयशब्दः । उत्सर्गेण=प्रत्ययस्थादित्यनेन । **तादृशेति** । अभाषित-पुंस्केत्यर्थः । 'बहुव्रीहि'रित्युपसर्जनोपलक्षणं, तेन 'निःस्विके'त्यादावपि नित्यमेवेत्त्वमिति बोध्यम् । कबभावे

ॐ विषमपदविवृतिः ॐ

चेत्सत्यम्, पाठक्रमवैपरीत्येन योजनेनादोषात् । एवमत्यन्तस्वार्थिककान्तेपीति । एतेन— 'हंसं तनौ सन्निहितचरन्तं मुनेर्मनोवृत्तिरिव स्विकाया'मिति प्रयोगो व्याख्यातः, अकचि स्वाडापत्तेः। **स्वस्या निष्क्रान्तेति** । स्वस्माच्चिष्क्रान्तेति विग्रहे तु नेत्त्वविकल्पः, 'शाखे'ति निर्देशेन स्त्रीत्व-

विशेषणत्वे तु तादृशखट्वाशब्दात्परत्वेन दोषः स्यादेवेति भावः ।

**शैषिके कपीति** । न खट्वा सु इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससञ्ज्ञायां 'समासान्ताः' इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तान्तसमासरूपप्रातिपदिकाभावात् 'गोस्त्रियो'रिति ह्रस्वाभावे'केऽणः' इति ह्रस्वे–'न कपी'ति निषिद्धे 'आपोऽन्यतरस्या'मिति ह्रस्वे कपः प्राग्वर्त्तिनः खट्वाशब्दात्परस्यापोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः, ह्रस्वाभावे तु 'अखट्वाके'ति इति भावः ।

**अयमेवेति** । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानमेव स्त्रियाम्,

॥ चिदस्थिमाला ॥

इत्युक्तेस्तत्रैव फलमाह—**शैषिके इति** । सञ्ज्ञायां=कर्तव्यायाम् । ह्रस्वे–पाक्षिकेत्यादिः । अस्य फलत्रयं प्राचोक्तं क्रमेण निराचष्टे–**आचारेति** । **एतदिति** । अस्योक्तार्थज्ञापकतापरेत्यर्थः । **स्त्रीति** । व्यक्तिविशेषणं,

॥ सदाशिवभट्टीयम् ॥

नच समासेऽवयवगतस्त्रीत्वं, तथा सत्यर्द्धपिप्पलीत्यत्रावयवनिष्ठनपुंसकत्वेन ह्रस्वापत्तेः । वस्तुतस्त्वार्यकेत्यत्र स्थान्यल्निष्ठत्वेनाप्त्वन्दुर्लभमिति केचित् । परेत्वत्यकेत्यत्रापोऽभावेन विकल्पानापत्तिरित्याहुः । अत्र फलभेदान्ङ्याब्ग्रहणेऽदीर्घइति प्रत्याख्यानासम्भवइति तत्त्वम् । **अनुपसर्जनात्** । **आचारक्विबन्तेति** । नच कर्तृक्विप्यतो लोपे अदन्तत्वाभावादेवादोष इति वाच्यं, गौरादिपठितानडुह् इत्यादिक्विबन्तस्यानभिधानमित्याशयात् । नचोपसर्जनत्वं स्वार्थविशिष्टार्थान्तरबोधकत्वम्, अतएव 'तदो'रिति सूत्रे 'द्व इति प्राप्नोति स्व इति चेष्यते' इति भाष्यस्यैकदेश्युक्तित्वकल्पनाऽभावः, एवञ्चोपसर्जनत्वाभावः प्रकृते इति वाच्यम्, 'अर्थान्तरवत्त्वेन दृष्टं यत्स्वार्थबोधकत्वं' तद्रूपोपसर्जनत्वात् । वस्तुनोऽदृष्टपदनिवेशे मानाभावः, तदोरिति

॥ विषमपदविवृतिः ॥

बोधकस्वशब्द एवेत्त्वप्रवृत्तेरिति भावः ।

**अनुपसर्जनात्** । **अनभिधानमेवेति** । ननु टिड्ढाणञित्यादावत इत्यधिकारेणादन्तात्क्विपि तुको लोपस्य वा प्रसङ्गेन ङीपोऽप्रसङ्गादनभिधानं निर्मूलं व्यर्थं चेति चेन्न, दीर्घादप्यूङो विधानेनानभिधानस्य तदभिप्रायकत्वोपपत्तेः । अत्रोपसर्जनत्वं न शास्त्रीयं, किन्तु लौकिकं, 'पूर्वसूत्रेऽप्रधानस्योपसर्जनसञ्ज्ञा क्रियते यावद्ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति ताव'दित्यनुपसर्जनादिति

॥ वरवर्णिनी ॥

ननु आचारक्विबन्तप्रकृतिककर्तृक्विबन्तरूपोपसर्जनात्स्त्रीप्रत्ययानुत्पत्त्यर्थमनुपसर्जनाधिकारस्य चरितार्थतया तदन्तविधिज्ञापकत्वासम्भव इत्यत आह—**आचारक्विबन्तेति** । नन्वकारान्तादाचारक्विबन्तात्कर्त्तरि क्विपि सर्वत्राकारस्य लोपेनैव भाव्यम्, इगाद्यन्तात्क्विपि तु तुको–विचि तु गुणस्यैव- प्राप्त्या स्त्रीप्रत्ययविधौ च प्रायोऽत इत्यस्य सम्बन्धात्तत्राऽदन्तत्वाभावेनैव टाबादेरप्राप्त्याऽनभिधानाश्रयणमसङ्गतमेवेति चेन्न, गौरादिगणे स्वच्छब्दस्यानडुच्छब्दस्य च पाठात्तत्राचारक्विबन्तात्कर्त्तरि क्विपि अनड्वानिवाचरति–अनडोहति,—अनडुह् इत्यादौ फलभेदस्य स्पष्टत्वात् । नचैवमपि क्यजन्तात्कर्त्तरि क्विप्यपि तस्य चारितार्थ्येन सामर्थ्यस्योपक्षीणतया तदन्तविधिज्ञापकत्वासम्भव इति वाच्यं, तस्याप्यनभिधाने भाष्यतात्पर्यात् ।

**केचित्तु**—अनभिधानवादी शेखरोऽयञ्चिन्त्य एव,—'तदोः सः सा'वित्यत्र—"द्वीयतेरप्रत्यये'द्व' इति प्राप्नोति, 'स्व'इति चेष्यते"—इति भाष्यप्रामाण्येनाचारक्विबन्तात्कर्त्तरि क्विप्युपसर्जनत्वस्याभावात् ।:

—एतद्भाष्यप्रामाण्यात् ।

पञ्च गावो धनं यस्य स–'पञ्चगवधन' इत्यत्रार्थवत्सूत्रोक्तार्थवत्त्वा-भावाट्टजन्तस्य प्रातिपदिकत्वाभावेन न ङीप् ।

आपिशलिना प्रोक्तमधीते 'आपिशला ब्राह्मणी'त्यत्र तु न ङीप्, प्रोक्ताणः स्त्रिया-

॥ [illegible] ॥

ननु किं प्रोक्त[illegible] ? [illegible] ? [illegible]—इत्यत [illegible]—प्रोक्ताण इति [illegible]

॥ [illegible]भट्टीयम् ॥

[illegible] । पञ्चगवधन इति । [illegible]

[illegible]

॥ विषमपदविवृतिः ॥

[illegible]स्थभाष्यात् । ननु 'पञ्चगवधन' इत्यत्र 'द्विगोः' इति 'टिड्ढ' इति वा [illegible] स्यात्, [illegible]श्यमानदिशा टित्त्वस्य प्रत्ययवृत्तित्वेन प्रत्ययग्रहणपरिभाषया अप्रवृत्तावपि अवयवे टित्त्वस्याचारितार्थ्येन समुदायोपकारकत्वात्तत्सम्भावात् [illegible] नेयं रीतिः [illegible] इत्यत्र [illegible], इत्यत आह—पञ्चेति । आपिशलिनेति । 'इञश्च' इत्यण्, [illegible]ऽध्येतृप्रत्यया [illegible] इत्यण्, तस्य

॥ वरवर्णिनी ॥

[illegible]मुपसर्जनत्वञ्चानन्तपुल्लिङ्गे [ १९० पृष्ठ ] परिष्कृत्यानेन विस्तरेणायाति [illegible]भावेयम् ।

**प्रोक्ताण इति** । 'स्त्रिया'मित्यस्य [illegible] इत्यर्थादिति भावः । **काशकृत्स्नेति** । काशकृत्स्नशब्दात्प्रोक्त[illegible] काशकृत्स्नं [illegible]ऽधीयते [illegible] 'लुगचि' ति [illegible], ततोऽपि काशकृत्स्नेति सिद्धम् । यत्तु—'प्रोक्तागन्तात्प्रोक्ताणः प्रागेवाऽध्येत्रण्, तस्य च 'प्रोक्तात्लुगि'ति लुक्, ततः प्रोक्तागन्तान्ङीप्, तस्य 'लुक्तद्धिते'ति लुक्, ततश्चापि—काशकृत्स्नेति सिद्धम् ।

नन्वेवमत्रैव ङीपो निवृत्त्येऽनुपसर्जनाधिकारः सफल इति वाच्यं, तत्र ङीप्यपि लुकाऽपहारेण फलं विशेषा-भावात्—" इति केचित्तन्न; प्रोक्ताणन्तार्थगतस्त्रीत्वस्य शाब्दोपस्थितिकतयाऽध्येत्रणः प्रागेव ततो ङीप्प्रवृत्ते-र्दुर्वारत्वात् । 'अन्तरङ्गानपी'ति न्यायस्तु—अन्तरङ्गनिमित्तविनाशक लुक एव प्राबल्यं बोधयतीति न तेनापि अध्येत्रणः प्राक्प्रवृत्तिर्वक्तुं शक्यते, एवञ्च प्रोक्तागन्तादेव ङीबिति प्रक्रियैव युक्तेति बोध्यम् ।

अनुपसर्जनत्वञ्च—उपसर्जनभिन्नत्वम् । उपसर्जनत्वञ्च—शक्तिवैशिष्ट्यं, वै० स्वपर्याप्त्यधिकरणत्व, 'स्वनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताकोपस्थितिप्रयोजकत्वै'तदुभयसम्बन्धेन । उपस्थितिप्रयोजकता च-विशिष्टार्थोपस्थितिजनकीभूतविशिष्टार्थनिरूपितशक्तिग्रहजनकग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्वेन बोध्या । शक्तिनिरूपकत्वञ्च—शक्तिविषयताश्रयत्वरूपमिति विवेकः ।

ननु कुरुचरीत्यादावुपसर्जनत्वलक्षणातिव्याप्तिः, तथाहि—शक्तिः-टप्रत्ययाऽकारनिष्ठा शक्तिः, तत्पर्याप्ति-स्वकारे, एवं—तदनिरूपकोऽर्थः—विशिष्टः—कुरुदेशाधिकरणकचरणकर्त्तृत्वावच्छिन्नरूपः, तन्निष्ठविशेष्यता-निरूपित—कर्त्तृत्व—निष्ठप्रकारताप्रयोजकत्वञ्चास्तीति चेन्न; तत्र विशिष्टस्य शुद्धातिरिक्ततया कुरुदेशाधिकरणकचरणकर्त्तुः शुद्धकर्त्तृभिन्नत्वाभावात् । [ शुद्धस्य=टप्रत्ययार्थकर्त्तुर्यथाशक्तिनिरूपकत्व-स्यैव तादृशविशिष्टकर्त्तुरपीति तदनिरूपकत्वाभावात्तत्रोपसर्जनत्वमिति तत्त्वम् । ] 'बहुकुरुचरे'त्यत्र तु लक्षणसमन्वयो भवत्येव, तथाहि—टनिष्ठशक्तिनिरूपकभिन्नोऽर्थो ग्रामादिरन्यपदार्थः, तन्निष्ठविशेष्यता-निरूपितप्रकारताकोपस्थितिप्रयोजकतया तत्र निरुक्तलक्षणसमन्वयः स्पष्ट एव । "–ट्ट' इति प्राप्नोति 'स्व' इति चेष्यते–" इति 'तदोः सः सा'विति सूत्रस्थभाष्यन्त्वेकदेश्युक्तिः, पूर्वोक्तशक्तिविशिष्टत्वरूपो-पसर्जनत्वस्य तत्र सत्त्वात्, 'ट्ट' इत्यस्यैव न्याय्यत्वादिति नागेशभट्टाः ।

मवर्त्तनात्। अध्येत्रण्तु लुप्तः, 'अण्योऽकार' इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात्।

अध्येत्रर्थगतस्त्रीत्वमादाय तदण्निमित्तकस्य न प्राप्तिः, 'स्त्रिया' मित्यस्य गृह्यमाण-विशेषणत्वात्तदण एतत्स्त्रीत्वेऽवर्त्तनात्।

अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते 'काशकृत्स्ना ब्राह्मणी' त्यत्रापि न ङीप्। प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप्, 'लक्ष्ये लक्षणस्ये' ति न्यायात्।

तस्मात्—'बहुकुरुचरे' त्येव तद्व्यावर्त्यम्।—तत्र च तदन्तविधिं विना प्राप्तिरेव न।

ॐ चिदस्थिमाला ॐ

इत्याह—अध्येत्रिति। ननु प्रत्ययलक्षणेन सोऽस्त आह—**अण् योकार इति**। **तदणिति**। प्रोक्ताणित्यर्थः। निमित्तकस्य=ङीपः। लक्ष्यानुरोधेनाह—**स्त्रियामिति**। 'काशकृत्स्ने' त्यत्रैव शङ्कते—**प्रोक्तेति**। अध्येत्रर्थगतस्त्रीत्व-मादाय तु न शङ्का, उक्तयुक्तेः। इत्येव=इत्याद्येव तु। ननु 'स्त्रिया' मित्यस्य गृह्यमाणविशेषणत्वान्नेदमपि व्यावर्त्यमत

ॐ विषमपदविवृतिः ॐ

'प्रोक्ताल्लु' गिति लुक्। **अध्येत्रण् तु लुप्त इति**। 'अतस्तन्निमित्तको न ङी' विति वाक्यशेषः।

ननु तस्य लुप्तत्वे प्रत्ययलक्षणेन तमाश्रित्य ङीब्दुर्वार इत्याशङ्क्याह—**अण्योऽकार इति**। **तदण्-निमित्तकस्येति**। प्रोक्त ण्निमित्तकस्येत्यर्थः। तदणः=प्रोक्ताणः। एतत्स्त्रीत्वे=अध्येतृस्त्रीत्वे।

**अत एवेति**। वर्णाश्रये प्रत्ययलक्षणाभावादेवेत्यर्थः। **न ङीबिति**। 'अध्येत्रणमाश्रित्ये' ति शेषः। **तदन्तविधिं विनेति**। ननु 'ग्रहणवते' ति निषेधः स्वरूपेणोच्चारिते प्रातिपदिक एव नान्यत्र, टित-

ॐ वरवर्णिनी ॐ

श्रीबालशास्त्रिचरणास्तु—'तदोः सः सा' विति भाष्यस्यैकदेश्युक्तित्वे न दृढं प्रमाणमिति—तदनुरोधात्पदविशिष्टत्वमेवोपसर्जनत्वं वक्तव्यं, वै० 'स्वतादात्म्य" स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यता-निरूपितप्रकारताप्रयोजकत्वो' भयसम्बन्धेन।

'आपिशले' त्यादौ प्रोक्ताणः स्वविशिष्टत्वादुपसर्जनत्वं, 'तथाहि—यः शिष्यते स लुप्यमानार्थाभिधायी' ति न्यायेन—लुप्ताऽणर्थभूताध्येतृनिरूपितशक्तिपर्याप्तिस्तत्र प्रोक्ताणन्ते [-स्वान्ते]—इति प्रोक्ताणि पर्याप्त्या-ऽध्येत्रण्निरूपिता शक्तिः, तन्निरूपकोऽध्येता, तन्निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं, स्वतादात्म्यञ्च-प्रोक्ताणि स्पष्टमेवेति तत्रोपसर्जनत्वं सुलभम्। 'ह्रीयतेरप्रत्यये ह्र' इत्यादौ च नोपसर्जनत्वं, 'यः शिष्यते' इति न्यायेनाऽऽचारक्विबर्थनिरूपिता कर्तृक्विबर्थनिरूपिता विशिष्टार्थनिरूपिता च शक्तिर्ह्रिशब्दपर्याप्ता,—इति निरुक्तानां तिसृणामपि शक्तीनां स्वपर्याप्तत्वेन स्वपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतोप-स्थितिप्रयोजकत्वस्यैव सत्त्वात्स्वान्तपर्याप्तत्वाभावात्। एवञ्च—आचारक्विबन्तप्रकृतिककर्तृक्विबन्ते निरुक्तोपसर्ज-नत्वाभावेन तदनभिधानपर्यन्तानुसरणं **नागेशभट्टानामसङ्गतमेवेत्याहुः**। विस्तरस्त्वजन्ते [ १९० पृष्ठे ]।

नन्वेवं बह्वादिगणेऽह्नश्छब्दस्य पाठेन अनुपसर्जनस्य च तस्य स्त्रियामवर्त्तमानत्वेन तत्सामर्थ्यात्तदंशे-ऽनुपसर्जनाधिकारबाधेन 'दीर्घाह्नी प्रावृ' डित्यादौ ङीषिष्यते, भवद्रीत्या तु आचारक्विबन्तात्कर्त्तरि क्विपि स्त्रियां वर्त्तमानत्वेन अनुपसर्जनत्वेन च तत्र ङीष्विधानाय पाठस्य सार्थक्येनानुपसर्जनाधिकारस्य तदंशे बाधे मानाभावेन 'दीर्घाह्नी' त्यत्र ङीष् न स्यादिति चेन्न; 'ऋन्नेभ्य' इति ङीपा रूपसिद्धेरप्रत्यूहत्वात्।

इदमत्रावधेयम्—अनुपसर्जनाधिकारस्य त्रीणि ज्ञाप्यानि—'स्त्रिया' मित्यस्य तदन्तविशेषणता, 'अनुपसर्जना'-दित्यस्य गृह्यमाणविशेषणत्वम्, स्त्रीप्रत्यये तदन्तविधिश्चेति। तत्राद्यस्य फलम्—अतिधीवरीति, तत्र हि ङीब्रौ सिद्धा भवतः। द्वितीयांशफलं—'बहुकुरुचरे' त्यत्र टिदन्तस्य 'बहुकुरुचरे' त्यस्यानुपसर्जनत्वेऽपि 'कुरुचरे' त्यस्यो-

ज्ञापिते तु तदन्तविधौ प्राधान्यादेतदारम्भाच्च 'स्त्रिया'मिति ङीप्प्रकृतिविशेषणमेव।

❀ विद्वत्प्रभाला ❀

आह—ज्ञापिते त्विति। एवञ्च=एतदर्थसम्बन्धावश्यकत्वे च। नन्वेवमनुपसर्जनादित्यपि तद्विशेषणं स्यादिति

❀ विषमपदविवृतिः ❀

इत्यनयोस्त्वादुक्तनिषेधाप्रवृत्तौ तदन्तविधिः सुलभ एवेति चेन्न, 'ग्रहणम्—उपादानमात्रं न तु स्वरूपेणे—त्युपितार्थत्व सूत्रे कैयटेनोक्तेः। अत एव 'कुम्भकारमुपकुम्भश्च' 'वृद्धाच्छ' इत्यादौ न तदन्तविधिः।

❀ वरवर्णिनी ❀

पत्तर्जननत्रार्थिकभवः तदन्तविधिः फलञ्च—कौम्भकारेयमिति सिद्धिः तदाह-तदन्तविधाविति। ननु कुम्भकार-शब्दस्य कुलालवाचित्वेन जातिवाचितया 'जातेरस्त्रीविषयादयोपधा'दिति ङीष एव भविष्यति न 'स्त्रीभ्यो ढ'गिति ढगिति तदन्तान्ङीप्रकृतौ न विशेषः, किञ्च—'कारे'त्यस्यार्थवत्सूत्रोक्तार्थवत्त्वाभावेनेत्यस्यानुपदमेव वक्ष्यमाण-तयाऽण्णन्ततदादेः 'कारे'त्यस्य प्रातिपदिकत्वाभावेन, 'कुम्भकार'त्यस्य च प्रातिपदिकत्वेऽपि अण्णन्ततदा-दित्वाभावेन ङीबेवात्र न स्यादिति वक्तुमुचितं, किञ्च—कारशब्दान्ङीप्यपि 'स्त्रीप्रत्यये चानुपसर्जनेने'ति परिभाषया कुम्भकार्यामपि ङीबन्ततदादित्वारोपेण प्रत्येकं समुदायाच्च ढकः प्राप्तौ वृक्षप्रचलनन्याया-त्समुदायादेव ढग्भविष्यतीति नोक्तदोष इति चेत्—शृणु—प्रकृते कुम्भकारपदस्य यौगिकतया कुम्भोत्पादक-मात्रपरत्वान्नाद्यो दोषः। नापि द्वितीयः—'तन्निभ' इत्यादौ निभादीनामर्थवत्त्वस्य सिद्धये एतत्सञ्ज्ञाफलभूत-विभक्तौ तस्मिन्पूर्वतदभिन्नत्वेन [अजन्ते १९पृष्ठे] सङ्ख्यातत्वस्योक्तत्वात्—'अर्थवत्सूत्रोक्तार्थवत्त्वाभावेने'त्याद्युत्तर-ग्रन्थस्य प्राचीनानुसारितयैव लापनीयत्वात्। न तृतीयः—कारशब्दान्ङीपि-कुम्भकारीशब्दादिवार्थे कृते तस्य 'लुम्मनुष्ये'इति लुपि ढकि च 'कौम्भकारेय' इत्येव रूपमिष्यते, अत्रोपसर्जनतया 'स्त्रीप्रत्यये चानुपसर्जनेने'-त्यस्याप्रवृत्त्या 'कुम्भकारी'तिसमुदाये स्त्रीप्रत्ययान्ततदादित्वाभावेनावयवात्कारीशब्दादेव ढकि 'कुम्भकारेय' इत्यस्यापत्तेः सुस्थत्वात्। एतदभिप्रेत्यैव च—'कदाचित्तनोऽपि ढकी'त्यत्र 'कदाचि'दित्युक्तं, कल्पवन्ते 'कुम्भकारेय' इत्यस्य, अन्यत्र च 'कौम्भकारेय' इत्यस्य विकल्पस्येष्टत्वात्।

ननु 'स्त्रीभ्यो ढ'गित्यस्य कोऽर्थः ?, नच स्त्रीवाचकाड्ढगित्यर्थे शुभ्रादिषु 'विमातृ'शब्दपाठो व्यर्थः स्यात्, तस्य स्त्रीवाचकतया 'स्त्रीभ्यो ढ'गित्यनेनैव तत्र ढकः सिद्धेः, एवञ्च स्त्रीप्रत्ययान्ताड्ढगित्येव तदर्थो वाच्यः, अत एव दरच्छब्दा'द्व्यन्मगधे'त्यणि स्त्रिया'मतश्चे'ति तस्य लुकि निष्पन्नाद्दरच्छब्दादपत्येऽर्थेऽणिसद्धः, अन्यथा ढक्स्यादिति वाच्यं, शुभ्रादिषु विमातृशब्दपाठस्य प्रक्षिप्तत्वेन स्त्रियां दरदादेरनभिधानाच्च स्त्रीप्रत्ययान्तादित्यर्थे प्रमाणाभावात्। अत एव पितृष्वसृ-मातृष्वसृभ्यां ढकि 'ढकि लोप' इति लोपवचनं चरितार्थम्। अत एव च शृगालवाचकजम्बूशब्दाड्ढगापादनपरं भाष्यञ्च सङ्गच्छते, अन्यथा स्त्रीप्रत्ययान्तत्वा भावात्तदसङ्गतिः स्यात्। एवञ्च कारशब्दान्ङीपि तस्य स्त्रीवाचकत्वेऽपि कुम्भकारीशब्दस्यापि स्त्रीवाचक-तया वृक्षप्रचलनन्यायेन समुदायात्कुम्भकारीशब्दादेव ढकि नात्र 'कुम्भकारेय' इत्यस्यापत्तिरिति चेन्न; यत्रावयवकार्यं समुदायकार्यनान्तरीयकं न भवति, समुदायकार्यञ्चावयवकार्यनान्तरीयकं भवति तत्रैव वृक्षप्रचलनन्यायप्रवृत्त्या प्रकृते वृक्षप्रचलनन्यायविषयत्वस्यैवाभावात्। 'समुदायोद्देश्येन विधाने तादृश-विधेयस्य तादृशसमुदायरूपोद्देश्येन यः सम्बन्धः स सम्बन्धस्तादृशसमुदायीययावदवयवैः सह भवति, अवयवोद्देश्येन विधाने च तादृशविधेयस्य तादृशावयवरूपोद्देश्येन सह यः सम्बन्धः स तादृशसमुदायस्य न भवति तत्रैव वृक्षप्रचलनन्यायः प्रवर्त्तते' इति यावत्।

यथा लोके 'वृक्षः प्रचलन्सहावयवैः प्रचलती'त्यत्र चलनरूपविधेयस्य शाखात्मकावयवेन सह कर्तृत्वसम्बन्धे सत्यपि मूलात्मकावयवेन तादृशचलनात्मकविधेयस्य कर्तृत्वसम्बन्धाभावेन, चलनस्य वृक्षात्मकसमुदायेन सह सम्बन्धे च तदीययावदवयवैः सह सम्बन्धसत्त्वाच्च स न्यायस्तत्र प्रवर्त्तते। शास्त्रेऽपि—'भवती'त्यादौ

अत एव धीवानमतिक्रान्ता—'अतिधीवरी'ति सिद्धम् ।

ॐ वरवर्णिनी ॐ

द्विरुच्चारणरूपविधेयस्य 'भू'विति समुदाये कर्मतासम्बन्धे तदीययावदवयवैः सह सम्बन्धो भवति, तादृश-द्विरुच्चारणरूपविधेयस्य समुदायावयवीभूत'भू'शब्देन कर्मत्वसम्बन्धे तु 'भू'विति समुदायेन सम्बन्धो न भवतीति तत्र वृक्षप्रचलनन्यायविषयता सुस्था । 'कौम्भकारेय' इत्यत्र तु ढग्रूपविधेयस्य 'कारी'रूपावयवेन सह स्वावधिकाव्यवहितोत्तरत्वसम्बन्धे समुदायेन 'कुम्भकारी'शब्देनापि तत्सम्बन्धस्य जायमानतया ढक्प्रयोज्यादि-वृद्धिरूपविधेयस्य च समुदायेन कुम्भकारीशब्देन सम्बन्धे अवयवेन कारीशब्देन सम्बन्धस्याजायमानतया न वृक्षप्रचलनन्यायविषय इत्याहुः ।

ननु 'प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणीभूतप्रातिपदिकात्प्रत्ययो भवती'ति नियमोऽवश्यमाश्रयणीयः, अत एव राजपुरुषस्यापत्यमित्यर्थे पुरुषशब्दादत इञितीञ् न भवति, एवञ्च 'स्त्रीभ्यो ढ'गिति ढक्प्रत्ययार्थभूतापत्यार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणतायाः 'कुम्भकारी'त्यत्रैव सत्त्वेन कारीशब्देऽसत्त्वेन ततो ढगनापत्त्या नोक्तदोष इति चेन्न; 'परमगार्ग्यायणः' 'शिवभागवत' इत्यादिभाष्यप्रयोगदर्शनेन तादृशनियमे 'प्रत्ययनिष्ठोद्देश्यतावच्छेदकताकप्रत्ययनिष्ठविधेयताक कार्यातिरिक्तत्वेन' सङ्कोचात्कारीशब्दादपि ढकः प्राप्तेः। 'स्त्रीभ्यो ढ'गित्यत्र स्त्रीप्रत्ययनिष्ठोद्देश्यतावच्छेदकतायाः ढक्प्रत्ययत्वावच्छिन्नायाश्च विधेयतायाः सत्त्वात् । अत एव शिवस्य भगवतो भक्त इत्यर्थे 'शिवभागवतः' इति, परमगार्ग्यस्यापत्यमित्यर्थे च 'परमगार्ग्यायण' इति सिध्यति ।

ननु कारशब्दान्न ङीपः प्रसक्तिः, स्त्रीत्वान्वयितावच्छेदकीभूतो यादृशो धर्मस्तादृशधर्मावच्छिन्नवाचकता-पर्याप्त्यधिकरणत्वस्य कारशब्देऽसत्त्वादिति चेन्न; 'तण्डुलानां पाचिके'त्यादौ तण्डुलकर्मकपचनकर्तृत्वस्यैव स्त्रीत्वान्वयितावच्छेदकत्वेऽपि पाचकशब्दाट्टाबादिदर्शनेन तादृशव्युत्पत्तेरभावात् । 'कृद्ग्रहणपरिभाषया विशिष्टादेव ङी'बिति तु वक्तुमशक्यं, तस्याः कृद्ग्रहणमात्रविषयत्वात् । 'स्त्रीप्रत्यये चानुपसर्जनेने'ति परिभाषया, स्त्रीप्रत्ययतदादिघटितेऽतदादौ स्त्रीप्रत्ययतदादित्वमारोप्यते नतु स्त्रीप्रत्ययनदादिघटितेऽनदादौ स्त्रीप्रत्ययतदादित्वमारोप्यते इत्याशयः । वस्तुतः समुदायान्ङीपि कारीशब्दस्याऽप्रातिपदिकत्वादेव तस्मान्न ढक्, कुम्भकारीशब्दे तत्त्वन्तु लिङ्गविशिष्टपरिभाषयेत्यपि केचित् ।

नच 'स्वस्मिन् स्वघटितत्वं स्वघटकत्वञ्चारोप्यते व्यपदेशिवद्भावेने'त्यस्यैव सिद्धान्ततया तदन्तविधिद्वय-सत्त्वेऽपि कारशब्देऽण्गन्तान्तत्वस्य व्यपदेशिवद्भावेनाऽक्षततया ततो ङीब्दुर्वार एव, वृक्षप्रचलनन्यायस्य तु नात्र विषय इति पूर्वमेवोक्तमिति वाच्यम्, अवयवात्समुदायाच्च स्त्रीप्रत्ययप्राप्तौ समुदायादेव स्त्रीप्रत्ययस्य 'क्रीतात्करणपूर्वा'दित्यनेन ज्ञापनात्समुदायादेव ङीबुत्पत्तेः, अन्यथा गतिकारकपरिभाषया टापः प्राक्समास-प्रवृत्तावपि तदुत्तरमन्तरङ्गत्वात्क्रीतशब्दाट्टापि अदन्तत्वाभावेन ङीषोऽप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेवेति प्राहुः ।

परे तु—पर्याप्त्यैकार्थीभावाधिकरणादेव नियमेन वृत्तावपि प्रकृते लिङ्गविशिष्टपरिभाषया कुम्भकार-वृत्त्येकार्थीभावस्य कारीशब्देऽतिदेशेन ततो ढगापत्तिः, लिङ्गविशिष्टपरिभाषाया हि—लिङ्गबोधकप्रत्ययान्त-तदादौ लिङ्गबोधकप्रत्ययीयोद्देश्यताधिकरणवृत्तित्वाभावाभाववच्छक्तिपर्याप्त्यधिकरणवृत्तिधर्मस्यारोप इत्यर्थः। प्रकृते च लिङ्गबोधकप्रत्ययीयोद्देश्यता—'कार'निष्ठा, तदधिकरणवृत्तित्वाभावाभाववती शक्तिः—कारवृत्तिशक्तिवत्कुम्भकारवृत्तिः शक्तिरपि, तत्पर्याप्त्यधिकरणं कुम्भकारः, तद्वृत्तिर्य एकार्थीभावस्तस्य कारीशब्देऽतिदेश इति तस्मादपि ढक्स्यादिति तदन्तविधिरावश्यकः । उद्देश्यतासामानाधिकरण्ये वक्तव्ये अभावघटितोक्त्या राजपुरुषस्य स्त्रियः—राजपुरुष्यः, तासां समूह इत्यर्थे—'पुरुषाद्वधविकार-समूहतेनकृते'ष्विति ढक् राजपुरुषीशब्दान्न, भवन्मते तु पुरुषवृत्तिशक्तेः तादृशोद्देश्यतासामानाधिकरण्यस्य स्पष्टतया तादृशशक्तिमत्पुरुषवृत्तिपुरुषशब्दत्वस्य राजपुरुषीशब्देऽतिदेशापत्तौ तत्रो ढगापत्तिर्दुरुद्धरैवेति शारदावतारश्रीबालशास्त्रिचरणानुसारिण उमानाथपण्डितादयो व्याचक्षते ।

एवञ्चापिशल्येत्याद्यप्यस्यैव व्याख्यम् । 'अनुपसर्जना'दिति च सामर्थ्याद्गृह्यमाणविशेषणमेवेति भावः ।

**तदन्तविधिमिति** । अणन्तादेः प्रातिपदिकविशेषणत्वेनाऽणन्तान्तमित्येवंरूपमित्यर्थः, अन्यथा प्रत्ययविधौ प्रतिपत्तिस्तु दुर्लभः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः, 'प्रातिपदिका'दित्यनेन सहानन्वयापत्तेः ।

तत्फलं—'कौम्भकार्येय'सिद्धिः, अन्यथा—'कुम्भकारेय' इत्यापद्येत:—

॥ विद्वत्स्थिमाला ॥

कथं तर्हि स्त्र्यावर्त्यतेऽत आह—**अनुवर्तत इति** । अन्यथेन्द्रियार्थं नष्टमेव । चस्त्वर्थे । तदन्तविधिश्च-नास्तीत्याह—**अणगन्तान्त इति** । अन्यथा=अस्य ज्ञापकत्वाभावे । नन्वयं तदन्तविधिरन्यदपि निषेध इति चेदपि शङ्क्योऽत आह—**प्रत्ययेति** । सिद्धिः=ङीनात्र सिद्धिः । अन्यथा=तदन्तविध्यभावे । **इत्यापद्येतेति** । इत्यप्यापद्येतेत्यर्थः । प्रत्ययग्रहणपरिभाषया कुम्भकारस्याणन्तत्वेन ततो ङीबभावे विशिष्टाङ्‌ढकोऽभावात् ।

नचैवं केवलकारशब्दस्याणन्तत्वेऽपि अनर्थकत्वेनाप्रातिपदिकत्वात्कुम्भेनैकार्थीभूततया निष्कृष्य स्त्रीत्वेनान्वयस्य दुर्वचत्वाच्च 'कुम्भकारी'ति सिद्धिरेव तदन्तग्रहणफलं कुतो नोच्यते इति वाच्यं, कारशब्दस्यापि प्रातिपदिकत्वेन लिङ्गस्य तदर्थधर्मतया च तस्यापि स्त्रीत्वेन योगात्तद्गतस्त्रीत्वे द्योत्ये प्रत्ययोत्पत्तेः सुवचनत्वात्, निष्कृष्यान्वयाभावेऽप्यक्षतेः । एवञ्च कारीशब्दस्यैव स्त्रीप्रत्ययान्ततया तत एव ढकि 'कुम्भकारी'त्यस्य तन्निरूपिताङ्गत्वाभावेन 'कु'शब्दोकारस्य वृद्धिर्न स्यात् ।—इत्यवनिष्टापत्तिरुक्ता । पक्षे इष्टसिद्धिरप्यस्ति

॥ सदाशिवभट्टीयम् ॥

**रूपमित्यर्थ इति**। यदि भावसाधनो विधिशब्दस्तदा पदेऽलक्षणा स्यादतः कर्मसाधनेन तदन्तशब्देन कर्मधारयः, तथा च तदन्तं यद्विधीयमानमणगन्तान्तमेवेत्यं रूपमित्यर्थः । **प्रत्ययविधाविति** । नच विशिष्यतद्ग्रहणोपादाने एव 'ग्रहणवते'ति निषेधप्रवृत्त्या न ज्ञापकतेति वाच्यं, 'षिद्गौरे'तिसूत्रे विशिष्योपादानात्तदानात्र फलमित्याशयात् । नच तथापि न ज्ञापकतेति 'कुम्भकारेया'पादनपरभाष्यासङ्गतिरिति वाच्यम्, एतद्भाष्यप्रामाण्येन विशिष्येत्यस्य चिन्त्यत्वात् । **अनन्वयापत्तेरिति** । नच एरपत्यं स्त्री ई-इत्यादौ सम्भव इति वाच्यं, 'प्रत्ययग्रहणे'इत्यस्य वाचनिकत्वेन तत्स्थानेन निषेधाभावादिति तत्त्वम् । **कुम्भकारेय इति** । ननु 'स्त्रिया'मिति गृह्यमाणविशेषणान्न दोषो 'बहुकुरुचरे'त्यादौ, नाप्य'तिधीवरी'ति फलं, 'शूद्रा चे'ति ज्ञापकेन सिद्धेः । नच 'शूद्रा चे'ति ज्ञापकेन 'बहुकुरुचरे'ति व्यावर्त्यमेवेति वाच्यं, तथापि ज्ञापकतासङ्गतेः । किञ्च 'शूद्रा चे'त्यनेन तत्सूत्र एव तदन्तज्ञापनम्, 'अतिधीवरी'ति तु 'बहुव्रीहौ वे'ति ज्ञापकात्तत्सूत्रे तदन्तम् । यत्तु तेन चात्र सिद्धं, कुम्भकारेयस्यापि निष्कृष्यैकार्थीभावाभावे वृत्त्यभावेनानापत्तिः । नच 'परमगार्ग्यायण' इति भाष्यादस्याश्च तदभावेऽपि वृत्तिः, तथा सत्यपि 'वृक्षप्रचलनन्यायेन' समुदायादेवोत्पत्तिः स्यात् ।

नच फलभेदे 'वृक्षप्रचलन'न्यायाऽप्रवृत्तिः, 'बभूवे'त्यादावपि तदप्रवृत्तौ दोषात्फलभेदेऽपि तत्प्रवृत्तिरित्यङ्गीकारात् ।

किञ्च पारिष्कारिकार्थवत्त्वाभावेन प्रातिपदिकत्वाभावादेव न दोषः। नच 'मूलकेनोपदंश'मित्यत्र प्रातिपदिकत्वार्थं नियतसमभिव्याहारातिरिक्तस्य तत्र ग्रहणेनार्थवत्त्वमेवेति वाच्यं, 'निपातस्यानर्थकस्ये'ति स्थाने-'ऽव्ययस्ये'ति पठनाददोषात् । नच भाष्यप्रामाण्यादर्थवत्त्वं, तर्हि नियतसमभिव्याहारातिरिक्ते विशिष्टस्य स्त्र्यर्थवाचकत्वेनावयवस्य स्त्र्यर्थवाचकत्वाभावेनादोषात् । नचैतदप्यारोपितं वर्तते, भाष्यादिति वाच्यं,

॥ विषमपदविवृतिः ॥

**स दुर्लभ इति** । अणन्तस्य गृह्यमाणत्वन्तूक्तदिशा बोध्यम् । **अनन्वयापत्तेरिति** । ननु एरपत्यं स्त्री 'ई' इत्यत्राण्रूपं प्रातिपदिकं सम्भवत्येवेति चेत्सत्यम्, द्व्यसजातीये तन्मात्रस्य

१ अस्य इयम्—'ई'त्यत्र अशब्दाच्छैषिकेऽणि यस्येतिलोपेऽणः प्रातिपदिकस्य सम्भव इत्यप्यन्ये आहुः।

—कुम्भेन समासे ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्यर्थे तदयोगस्य वक्तुमशक्यत्वात्, कदाचित्ततोऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः ।

'निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्त'मिति तु वक्तुमशक्यं, 'तद्धितार्थे'त्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या न तथा विशिष्टादेव ङीबुत्पत्ति प्रत्याशा ।

न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाऽण्णन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि 'कुम्भकारेयो' दुर्वारः, किञ्च—समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि स दुर्वार इति वाच्यम्,

॥ चिदस्थिमाला ॥

अत एव तथा व्याख्यातं, तत्सूचयन् युक्त्यन्तरमाह—**कुम्भेनेति** । **ङीपि**—उक्तरीत्या कारशब्दमात्रात् । अपिभ्यां केवलान्ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन समुदायाड्ढकीष्टसिद्धिसमुच्चयः ।

ननु निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्यत्वेन तदभावात् न कारीशब्दात् कदापि ढगत आह—**निष्कृष्यैकेति** । समुदायेन तत्सत्त्वेऽवयवान्नैवेति शङ्कापि तत एव नेत्याह—**समुदेति** । ननु कृद्ग्रहणपरिभाषया विशिष्टादेव ङीबिति न पाक्षिकदोषोऽत आह—**कृदिति** । फलाभावात्तत्वं विघटयति—**नचेति** ।

॥ सदाशिवभट्टीयम् ॥

तर्हि 'वृक्षेति'न्यायेनैव दोषदानस्य सुवचत्वात् । न चावयवादुत्पत्तावपि विशिष्टस्यापि प्रकृतित्वेनोभयोर्वृद्धौ दोषो नेत्युक्तन्यायेन खण्डनमसङ्गतमिति वाच्यं, 'घाटप्रकारेये' दोषतात्पर्यात्, तत्रोभयवृद्धौ दोषादिति चेन्न, वृक्षेतिन्यायस्यैतद्भाष्यादप्रवृत्तेः । नच करोतीति करा कुम्भस्य करेति टाबन्तेन समासेऽवयवादेवोत्पत्तौ 'कुम्भकारेयो' गले पतित इति वाच्यं, 'गतिकारकोपपदाना'मिति पूर्वं समासेऽनन्तरं टापि तदभावात्, 'षष्ठी शेषे' इत्यस्यापि कारकत्वाङ्गीकारात् । नच 'सेनान्तलक्षणकारिभ्यश्चे'ति ण्येन बाधाड्ढगेव नेति वाच्यं, विशेषविहितत्वेन ढक एव प्रवृत्तेः । यद्वा कुम्भकारीव मनुष्यः—'कुम्भकारी', तस्यापत्यमित्यर्थे 'स्त्रीभ्यो ढ'गित्यस्य स्त्रीप्रत्ययान्तादित्यर्थेऽवयवान्ङीप्यवयवे निष्कृष्यैकार्थीभावाभावाड्ढगनुत्पत्तौ 'कौम्भकारेयो' न सिध्यतीत्यनुपसर्जनाधिकाराभावे दूषणम् । नच 'स्त्रीभ्यो ढ'गित्यत्र स्त्रीवाचकादित्यर्थेनादोष इति वाच्यं, कन्नन्तस्य बहुव्रीहौ ह्रस्वानापत्तेः, अनुपसर्जनाधिकाराभावे विशिष्टस्योपसर्जनत्वेऽप्यवयवस्योपसर्जनत्वाभावात् । यदि शास्त्रीयमुपसर्जनं तत्र गृह्यते तर्हि प्रत्याख्यानं वरमिति दिक् । नच 'टिड्ढे'तिसूत्रे तदन्तग्रहणं कर्तव्यमिति वाच्यं, तथा सति यदि तदन्ते स्त्रियामिति विशेषणं तर्हि 'बहुकुरुचरे'ति दूषणं, यदि गृह्यमाणस्य तदाऽऽपिशलेति दूषणं, सिद्धान्ते त्वनुपसर्जनादिति गृह्यमाणविशेषणादुभयं सिध्यतीति बोध्यम् । **अर्थवत्त्वाभावेनेति** । न चानुपसर्जनाधिकाराभावेऽवयवस्याप्रातिपदिकत्वेन ङीबुत्पत्तिः कृता, इदानीन्तु तदभाव इति विरोध इति वाच्यं, तदधिकाराभावे ईदृशार्थवत्त्वग्रहे प्रमाणाभावात्तदधिकारसत्त्वे तेनेदृशार्थवत्त्वज्ञापनादिति च बोध्यम् । निष्कृष्यैकार्थीभावत्वञ्चापत्याद्यर्थान्वयितावच्छेदकावच्छिन्नवृत्तिमत्त्वम् । नच 'विशिष्टं शुद्धान्नातिरिच्यते'इति न्यायात्केवलोऽप्यन्वयितावच्छेदकावच्छिन्न इति वाच्यम्, अत्र पर्याप्तिमत्त्वस्य निवेश्यत्वात् । **असहाय एवेति**। तत्त्वञ्चातिदिदिक्षितधर्मावच्छिन्नासमभिव्या-

॥ विषमपदविवृतिः ॥

प्रातिपदिकत्वासम्भवेन तदन्तविधौ तत्साहचर्येण तदंशेपि स इत्याशयात् । **निष्कृष्यैकार्थीभाव इति** । ययोर्वृत्तिस्तन्मात्रवृत्त्येकार्थीभाव इत्यर्थः । **अप्रातिपदिकत्वाच्चेति** । नन्वेवं 'कदाचित्ततोपि ढकी'ति

एतदधिकारादेव ज्ञापकात्–असहाये च व्यपदेशिवद्भावप्रवृत्तेः, अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाऽगन्तस्याप्रातिपदिकत्वाच्च, तदादिनियमाभावेन अधिकस्य कार्यं बोध्यते, न तु न्यूनस्येत्यदोषाच्च ।—अन्यथा तदन्तग्रहणे कर्तव्ये तद्वैयर्थ्यं स्पष्टमेव ।

एतदेव मित्रप्रत्यत्र भाष्ये उक्तं–'समासे च कृतेऽवयवादुत्पत्तावयवस्य वृद्धिः स्या'दिति ।

ॐ चिदस्थिमाला ॐ

ननु न्यूनस्येति । तदर्थः—यतः प्रत्ययग्रहणे इति नियमेनाऽधिकस्यैव व्यावृत्तिर्न न्यूनस्य, अस्य कुम्भकारमित्यर्थेऽसमासाद्वेति यद्येति तर्हि वक्तिर्न्न्येति फलेऽनापत्तेः । एवञ्च तन्निषेधेन तेन व्यावर्तकस्यैव सङ्कोचो न व्यवच्छेद्यस्य न्यूनस्य, अत एव तत्र 'स्वस्य चे'त्युक्तिरपि सफलेति ।

अन्यथा-उक्तप्रकारद्वयानङ्गीकारे । 'एतदधिकारादेव ज्ञापका'दित्यस्य हेतुत्वेऽन्वयः । अत एव सर्वान्ते 'अन्यथे'त्याद्युक्तम् । एवंच-व्यपदेशिवच्छेदः । तद्धेतुः—केवलकारस्याप्रातिपदिकत्वेन ततो ङीबभावेन पाक्षिकानिष्टाभावः । प्रत्ययान्तत्वेनार्थवत्सूत्राप्राप्तिरेकार्थीभावेनेत्यादिमूलं स्वार्थवत्त्वाभावेन गुरुचरणोक्तसूत्रद्वयसाधारणार्थवत्त्वाभावेन च 'कृत्तद्धि'ति सूत्राप्राप्तेरिति । समासे चेत्यादि । एकदेशयुक्तभाष्यानुरोधेनायं ग्रन्थः । अत एवावयवादुत्पत्तिरिति भाष्यव्याख्यावसरे–'कृत्तद्धितेत्यत्र कृद्ग्रहणे इत्यस्य सञ्चारेण समुदाये प्रातिपदिकत्वेन तत एव स्यात् ङीबिति कैयटोक्तशङ्कायां—'वस्तुतोऽवयवस्याप्रातिपदिकत्वात्समुदायस्य चानगन्तत्वान्ङीपोऽप्राप्तिरेवेति शङ्कितुमुचित'मित्युद्योतोक्तिः सङ्गच्छते । एवञ्च 'कुम्भकारी'ति सिद्धिरेव मुख्यं तदन्तविधेः फलम् , अत एव–'इदं तर्हि प्रयोजनं–प्रधानेन तदन्तविधिर्यथा स्यात्–कुम्भकारी नगरकारी'ति भाष्यं सङ्गच्छते इति । अवयवादिति । अयं भावः—कारशब्दस्यागन्तत्वादर्थवत्त्वमस्त्येव, वृत्त्याऽर्थबोधजनकत्वस्य कल्पितस्य भीतपूर्विकस्य सत्त्वात् ,—वृत्तिद्वयस्य भिन्नत्वेन तद्धेतुभूतैकार्थीभावस्यापि भिन्नत्वात्कारमात्रवृत्त्येकार्थीभावेन लौकिकप्रसिद्धत्वस्य सत्त्वाच्च । नहि प्रसिद्धत्वेऽपि स्वातन्त्र्यं विवक्षितम् । किञ्च 'पञ्चगवधन' इत्यादौ पूर्वं त्रयाणां बहुव्रीहौ तदेकार्थीभावेन व्यापकेनैव घटककार्यं

ॐ सदाशिवभट्टीयम् ॐ

हृतत्वं, धर्मश्च स्ववृत्तिधर्मनिरूप्यः, तेन 'राम' इत्यत्र न सर्वशब्दत्वातिदेशः, सर्वशब्दत्वस्य रामशब्दत्वनिरूपितत्वाभावात् । न चासमभिव्याहृतत्वमिति मास्तु, 'दरिद्रे'त्यत्र तस्याभावान्न दोषः, अन्तत्वञ्च स्वघटकप्रागभावानधिकरणत्वमितीकारवृत्तिनिरूप्यत्वं नास्तीति वाच्यं, तदनधिकरणत्वरूपाऽकारवृत्तिधर्मस्याभाव इकारेऽस्तीति तादृशाभावरूपेकारवृत्तिधर्मेण तदधिकरणरूपाकारवृत्तिप्रतियोगित्वस्य निरूपितत्वात्तदेवाश्रीयते । नच तदधिकरणभिन्नत्वमिति स्वस्मिन्स्वभेदानङ्गीकारेण नान्तत्वमिकारस्येति वाच्यं, पूर्वोक्तरीत्याऽप्यन्तत्वस्यानेतुं शक्यत्वादतोऽसमभिव्याहृतत्वमिति । एवञ्चैकदेशयुक्तित्वमावश्यकमेव । वस्तुत एकस्मिन्नित्यस्यैकव्यक्तित्वमित्ते इत्यर्थः, न त्वसहाये इति । व्यपदेशश्च विशिष्टवैशिष्ट्यं, तथा चैकव्यक्तिभिन्ने विशिष्टवैशिष्ट्यवत् कार्यं, विशिष्टत्वं च घटकत्वघटितत्वादिरूपम् । अस्यापत्यमिरित्यादौ घटकत्वातिदेशेऽर्थात्तदनधिकरणत्वरूपमन्तत्वमिति लक्षणसमन्वयः । 'इयाये'त्यादौ च घटितत्वातिदेशेऽर्थादवयवित्वप्रतीतिः । 'दरिद्रे'त्यादौ तद्घटकत्वातिदेशेऽपि न तदनधिकरणत्वरूपमिवर्णान्तत्वमायातीति नातिव्याप्तिः । 'इः–इया'वित्यादौ तदादित्वानतिदेशेऽपि स्थानिवद्भावेन तद्धितान्तत्वमानेयम् , अत एव 'न प्रत्ययमात्रस्य तदन्ततां ब्रूम' इति दीक्षितग्रन्थसङ्गतिः । न चास्यापत्यमिति विग्रहे अ-अणित्यवस्थायां प्रत्ययमात्रस्य प्रातिपदिकत्वापत्तिः, इष्टापत्तेः । नचौपगवेत्येकदेशाकारस्यापि प्रातिपदिकत्वापत्तिः, वृक्षप्रचलनन्यायेनादोषादिति निर्दुष्टः पन्थाः ।

ॐ विषमपदविवृतिः ॐ

पूर्वग्रन्थासङ्गतिरिति चेन्न, कर्मण्यणि यस्य 'ठिड्ढाण'मित्यत्रोपस्थितिसामर्थ्येनाप्रातिपदिकत्वेऽपि ततो ङीबिति पूर्वग्रन्थाशयात् । तदन्तविधौ तु सम्प्रति 'कुम्भकारे'तिसमुदायं प्रातिपदिकमादाय

—कुम्भेन समासे ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्यर्थे तद्योगस्य वक्तुमशक्यत्वात्, कदाचित्ततोऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः ।

'निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्त'मिति तु वक्तुमशक्यं, 'तद्धितार्थे'त्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या न तया विशिष्टादेव ङीबुत्पत्ति प्रत्याशा ।

न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाऽण्णन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि 'कुम्भकारेयो' दुर्वारः, किञ्च—समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि स दुर्वार इति वाच्यम्,

❀ चिदस्थिमाला ❀

अत एव तथा व्याख्यातं, तत्सूचयन् युक्त्यन्तरमाह—**कुम्भेनेति** । **ङीपि**—उक्तरीत्या कारशब्दमात्रात् । अपिभ्यां केवलान्ङीप्यपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन समुदायाड्ढकीष्टसिद्धिसमुच्चयः ।

ननु निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्यत्वेन तदभावात् न कारीशब्दात् कदापि ढगत आह—**निष्कृष्यैकेति** । समुदायेन तत्सत्त्वेऽवयवात्रैवेति शङ्कापि तत एव नेत्याह—**समुदेति** । ननु कृद्ग्रहणपरिभाषया विशिष्टादेव ङीबिति न पाक्षिकदोषोऽत आह—**कृदिति** । फलाभावात्तत्वं विघटयति—**नचेति** ।

❀ सदाशिवभट्टीयम् ❀

तर्हि 'वृक्षेति'न्यायेनैव दोषदानस्य सुवचत्वात् । न चावयवादुत्पत्तावपि विशिष्टस्यापि प्रकृतित्वेनोभयोर्वृद्धौ दोषो नेत्युक्तन्यायेन खण्डनमसङ्गतमिति वाच्यं, 'घाटप्रकारेये' दोषतात्पर्यात्, तत्रोभयवृद्धौ दोषादिति चेन्न, वृक्षेतिन्यायस्यैतद्भाष्यादप्रवृत्तेः । नच करोतीति करा कुम्भस्य करेति टाबन्तेन समासेऽवयवादेवोत्पत्तौ 'कुम्भकारेयो' गले पतित इति वाच्यं, 'गतिकारकोपपदाना'मिति पूर्वं समासेऽनन्तरं टापि तदभावात्, 'षष्ठी शेषे' इत्यस्यापि कारकत्वाङ्गीकारात् । नच 'सेनान्तलक्षणकारिभ्यश्चे'ति ण्येन बाधाड्ढगेव नेति वाच्यं, विशेषविहितत्वेन ढक एव प्रवृत्तेः । यद्वा कुम्भकारीव मनुष्यः—'कुम्भकारी', तस्यापत्यमित्यर्थे 'स्त्रीभ्यो ढ'गित्यस्य स्त्रीप्रत्ययान्तादित्यर्थेऽवयवान्ङीप्यवयवे निष्कृष्यैकार्थीभावाभावाड्ढगनुत्पत्तौ 'कौम्भकारेयो' न सिध्यतीत्यनुपसर्जनाधिकाराभावे दूषणम् । नच 'स्त्रीभ्यो ढ'गित्यत्र स्त्रीवाचकादित्यर्थेनादोष इति वाच्यं, कन्नन्तस्य बहुव्रीहौ ह्रस्वानापत्तेः, अनुपसर्जनाधिकाराभावे विशिष्टस्योपसर्जनत्वेऽप्यवयवस्योपसर्जनत्वाभावात् । यदि शास्त्रीयमुपसर्जनं तत्र गृह्यते तर्हि प्रत्याख्यानं वरमिति दिक् । नच 'टिड्ढे'तिसूत्रे तदन्तग्रहणं कर्तव्यमिति वाच्यं, तथा सति यदि तदन्ते स्त्रियामिति विशेषणं तर्हि 'बहुकुरुचरे'ति दूषणं, यदि गृह्यमाणस्य तदाऽऽपिशलेति दूषणं, सिद्धान्ते त्वनुपसर्जनादिति गृह्यमाणविशेषणादुभयं सिध्यतीति बोध्यम् । **अर्थवत्त्वाभावेनेति** । न चानुपसर्जनाधिकाराभावेऽवयवस्याप्रातिपदिकत्वेन ङीबुत्पत्तिः कृता, इदानीन्तु तदभाव इति विरोध इति वाच्यं, तदधिकाराभावे ईदृशार्थवत्त्वग्रहे प्रमाणाभावात्तदधिकारसत्त्वे तेनेदृशार्थवत्त्वज्ञापनादिति च बोध्यम् । निष्कृष्यैकार्थीभावत्वञ्चापत्याद्यर्थान्वयितावच्छेदकावच्छिन्नवृत्तिमत्त्वम् । नच 'विशिष्टं शुद्धान्नातिरिच्यते'इति न्यायात्केवलोऽप्यन्वयितावच्छेदकावच्छिन्न इति वाच्यम्, अत्र पर्याप्तिमत्त्वस्य निवेश्यत्वात् । **असहाय एवेति** । तत्त्वञ्चातिदिदिक्षितधर्मावच्छिन्नासमभिव्या-

❀ विषमपदविवृतिः ❀

प्रातिपदिकत्वासम्भवेन तदन्तविधौ तत्साहचर्येण तदंशेपि स इत्याशयात् । **निष्कृष्यैकार्थीभाव इति** । ययोर्वृत्तिस्तन्मात्रवृत्त्येकार्थीभाव इत्यर्थः । **अप्रातिपदिकत्वाच्चेति** । नन्वेवं 'कदाचित्ततोपि ढकी'ति

एतदधिकारादेव ज्ञापकात्—असहाय एव व्यपदेशिवद्भावप्रवृत्तेः, अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाऽण्णन्तस्याप्रातिपदिकत्वाच्च, तदादिनियमाभावेनाधिकस्य कार्यं बोध्यते, न तु न्यूनस्येत्यदोषाच्च ।—अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव । एतदेवाभिप्रेत्यात्र भाष्ये उक्तं—'समासे च कृतेऽवयवादुत्पत्ताववयवस्य वृद्धिः स्या'दिति ।

## ❀ चिद्स्थिमाला ❀

**ननु न्यूनस्येति ।** युक्तञ्चैतद्—यतः प्रत्ययग्रहणे इति नियमेनाऽधिकस्यैव व्यावृत्तिर्न न्यूनस्य, अस्य ध्रुवान्तत्वमित्यर्थेऽश्रुतादिति यस्येति लोपे यञिञ्श्चेति फकोऽनापत्तेः । एवञ्च तन्निषेधेन तेन तद्व्यावर्त्यस्यैव सङ्कोचो न त्वतद्व्यावर्त्यस्य न्यूनस्य, अत एव तत्र 'स्वस्य चे'त्युक्तिरपि सफलेति ।

**अन्यथा**—उक्तप्रकारत्रयानङ्गीकारे । **'एतदधिकारादेव ज्ञापका'**दित्यस्य हेतुत्रयेऽन्वयात् । अत एव सर्वान्ते 'अन्यथे'त्याद्युक्तम् । एवेन-मतान्तरव्यवच्छेदः। तच्चेत्थं—केवलकारस्याप्रातिपदिकत्वेन ततो ङीबभावेन पाक्षिकानिष्टाभावः । प्रत्ययान्तत्वेनार्थवत्सूत्राप्राप्तिर्वैदकार्थीभावेनेत्यादिमूलोक्तार्थवत्त्वाभावेन गुरुचरणोक्तसूत्रद्वयसाधारणार्थवत्त्वाभावेन च 'कृत्तद्धिते'ति सूत्राप्राप्तेरिति । **समासेचेत्यादि ।** एकदेशयुक्तभाष्यानुरोधेनायं ग्रन्थः । अत एवावयवादुत्पत्तिरिति भाष्यव्याख्यावसरे—'कृत्तद्धितेत्यत्र कृद्ग्रहणे इत्यस्य सञ्चारेण समुदाये प्रातिपदिकत्वेन तत एव स्यात् ङो'बिति कैयटोक्तशङ्कायां—'वस्तुतोऽवयवस्याप्रतिपदिकत्वात्समुदायस्य चानणन्तत्वान्ङीपोऽप्राप्तिरेवेति शङ्कितुमुचित'मित्युद्योतोक्तिः सङ्गच्छते। एवञ्च 'कुम्भकारी'ति सिद्धिरेव मुख्यं तदन्तविधेः फलम् , अत एव—'इदं तर्हि प्रयोजनं—प्रधानेन तदन्तविधिर्यथा स्यात्—कुम्भकारी नगरकारी'ति भाष्यं सङ्गच्छते इति । **अवयवादिति ।** अयं भावः—कारशब्दस्याणन्तत्वादर्थवत्त्वमस्त्येव, वृत्त्याऽर्थबोधजनकत्वस्य कल्पितस्य भौतपूर्विकस्य सत्त्वात् ,—वृत्तिद्वयस्य भिन्नत्वेन तद्धेतुभूतैकार्थीभावस्यापि भिन्नत्वात्कारमात्रवृत्त्येकार्थीभावेन लौकिकप्रसिद्धत्वस्य सत्त्वाच्च । नहि प्रसिद्धत्वेऽपि स्वातन्त्र्यं विवक्षितम् । किञ्च 'पञ्चगवधन' इत्यादौ पूर्वं त्रयाणां बहुव्रीहौ तदेकार्थीभावेन व्यापकेनैव घटककार्ये

## ❀ सदाशिवभट्टीयम् ❀

हृतत्वं, धर्मश्च स्ववृत्तिधर्मनिरूप्यः, तेन 'राम' इत्यत्र न सर्वशब्दत्वातिदेशः, सर्वशब्दत्वस्य रामशब्दत्वनिरूपितत्वाभावात् । न चासमभिव्याहृतत्वमिति मास्तु, 'दरिद्रे'त्यत्र तत्त्वाभावान्न दोषः, अन्तत्वञ्च स्वघटकप्रागभावानधिकरणत्वमितीकारवृत्तिनिरूप्यत्वं नास्तीति वाच्यं, तदनधिकरणकत्वरूपाऽकारवृत्तिधर्मस्याभाव इकारेऽस्तीति तादृशाभावरूपेकारवृत्तिधर्मेण तदधिकरणरूपाकारवृत्तिप्रतियोगित्वस्य निरूपितत्वात्तदेवाश्रीयते । नच तदधिकरणभिन्नत्वमिति स्वस्मिन्स्वभेदानङ्गीकारेण नान्तत्वमिकारस्येति वाच्यं, पूर्वोक्तरीत्याऽप्यन्तत्वस्यानेतुं शक्यत्वादतोऽसमभिव्याहृतत्वमिति । एवञ्चैकदेशयुक्तित्वमावश्यकमेव । वस्तुत एकस्मिन्नित्यस्यैकव्यक्त्यभिन्ने इत्यर्थः, न त्वसहाये इति । व्यपदेशश्च विशिष्टवैशिष्ट्यं, तथा चैकव्यक्तिभिन्ने विशिष्टवैशिष्ट्यवत् कार्यं, विशिष्टत्वं च घटकत्वघटितत्वादिरूपम् । अस्यापत्यमिरित्यादौ घटकत्वातिदेशेऽर्थात्तदनधिकरणकत्वरूपमन्तत्वमिति लक्षणसमन्वयः । 'इयाये'त्यादौ च घटितत्वातिदेशेऽर्थादवयवित्वप्रतीतिः । 'दरिद्रे'त्यादौ तदघटकत्वातिदेशेऽपि न तदनधिकरणत्वरूपमिवर्णान्तत्वमायातीति नातिव्याप्तिः । 'इः—इया'नित्यादौ तदादित्वानतिदेशेऽपि स्थानिवद्भावेन तद्धितान्तत्वमानेयम् , अत एव 'न प्रत्ययमात्रस्य तदन्ततां ब्रूम' इति दीक्षितग्रन्थसङ्गतिः। न चास्यापत्यमिति विग्रहे अ-अणित्यवस्थायां प्रत्ययमात्रस्य प्रातिपदिकत्वापत्तिः, इष्टापत्तेः । नचौपगवेत्येकदेशाकारस्यापि प्रातिपदिकत्वापत्तिः, वृक्षप्रचलनन्यायेनादोषादिति निर्दुष्टः पन्थाः ।

## ❀ विषमपदविवृतिः ❀

पूर्वग्रन्थासङ्गतिरिति चेन्न, कर्मण्यणि यस्य 'ठिड्ढाण'मित्यत्रोपस्थितिसामर्थ्येनाप्रातिपदिकत्वेऽपि ततो ङीबिति पूर्वग्रन्थाशयात् । तदन्तविधौ तु सम्प्रति 'कुम्भकारे'तिसमुदायं प्रातिपदिकमादाय

'येन विधि'रिति सूत्रे च प्रत्ययग्रहणे तदादितदन्तविधेः प्रयोजनं—'गार्ग्यायणः' 'परमगार्ग्यायणः' इत्युक्तं भाष्ये । तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गार्ग्यायण इति तदर्थो वाच्यः, तथा सति—नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात् ।

मम तु—परमगार्ग्यस्यापत्यमित्यर्थेऽप्युक्तन्यायाद्गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्, तथा सति 'पारमगार्ग्यायण' इति स्यादिति तत्प्रयोजनत्वोक्तिसङ्गतिः ।

कैयटोऽपि—'तदादिनियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायण इत्युपन्यासः' इत्युक्तवान् ।

यत्तु सर्वादिसूत्रे भाष्ये—'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इत्युक्तं, तत्तु—अत्र वार्त्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति भाष्यप्रदीपोद्योते विस्तरः ।

❀ चिदस्थिमाला ❀

सिद्धे पृथक् तदनङ्गीकारेऽप्यत्र पूर्वं कृद्वृत्तौ प्रकृतिप्रत्ययमात्रवृत्त्यकार्थीभावेन न्याय्येन समासासिद्ध्या तत्पर्याप्तस्य भिन्नस्य तस्यावश्यकत्वात् । उपपदत्वेऽपि समासविकल्पस्य क्वचिददर्शनात् । अत एव 'नगरकारी'त्यतोऽग्रिमम्—'अत्र हि-तदादिनियमादवयवादुत्पत्तिः स्यात्, कृद्ग्रहणे इत्यस्यास्तु कृदकृद्ग्रहणादसञ्चारः । एवं नहींकारान्तेन समासो भविष्यति, यद्येवं लभ्येत कृतं स्यात् 'गतिकारकोपे'ति समास एव हि तावद्भवति । तत्र च कृतोऽवयवादुत्पत्ति'रित्यादिभाष्यमत्रत्यं, 'येन विधि'रित्यत्रत्यवक्ष्यमाणभाष्यञ्च सङ्गच्छते, अन्यथा तयोर्दत्तजलाञ्जलित्वापत्तिः स्पष्टैव । किञ्च तदनङ्गीकारे गतिकारेत्यत्रोपपदग्रहणानर्थक्यापत्तेः, त्वद्रीत्याऽर्थवत्त्वाभावेनाप्रातिपदिकत्वात्सुप एवाप्राप्तेः। अत एवोद्योते 'शङ्कितु'मित्युक्तं, 'वक्तु'मिति नोक्तम् । तस्याः शङ्काया उत्तरमिदमेव । न चैवमपि गुरुचरणोक्तरीत्याऽर्थवत्त्वं नायातीति वाच्यं, तत्र तथाऽर्थवत्त्वाङ्गीकारे एतत्सूत्रस्य गतिकारेत्यत्रोपपदग्रहणस्य च गमकत्वेनेतः प्राक्तदनङ्गीकारः, किन्तु पूर्वोक्तस्यैवदोषात्, एतत्सत्त्वे तु तदङ्गीकार इति तदेतद्ध्वनयंस्तदेव भाष्यमाह—**येनेति** । तदर्थः=भाष्योदाहरणार्थः । कैयटोक्तमपि स्वमते एव सङ्गतं न परमते इत्याह—**कैयटोऽपीति** । एकाज्द्विर्वचनन्यायेन तु न निर्वाहः, समुदायकार्येणावयवानामननुग्रहात् । उक्तभाष्यस्य पूर्वभाष्यविरोधं परिहरति—**यत्त्विति** । **वार्त्तिकेति** । इत्थं हि तेनोक्तं-'प्रत्ययविधौ तदन्तविधिप्रतिषेधात्, स्त्रियामिति गृह्यमाणविशेषणमेव, अमहत्पूर्वेत्यादि क्वचिदेव तदन्तविधिज्ञापकं—'वनोरचे'त्यादौ, 'कुम्भकारी'त्यादौ कारशब्दादेव ङीप् , उक्तयुक्तेः । केवलकारीशब्दाड्ढक्तु न—अनभिधानात्, अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावाच्च समुदायाड्ढ'गिति । एवञ्चात्रत्यभाष्यं सिद्धान्तः, तदेकदेश्युक्तिः, एवञ्चात्रान्यथा कैयटादिसकलग्रन्थकारोक्तमपास्तमिति स्पष्टीकृतं भावप्रकाशे, तदाह—**उद्योते विस्तर इति** । यथाश्रुते

❀ विषमपदविवृतिः ❀

तदुपस्थितिचारितार्थ्ये सामर्थ्यविरहः । 'कर्मण्य'णित्यत्र सिद्ध 'शीलिकामी'ति णविधानेनाप्रातिपदिकत्वेऽपि ङीपः प्रवृत्तिरित्याशयः। **उद्योते विस्तर इति** । अन्ये तु 'अतिधीवरी' 'प्रियपञ्चे'त्यादा- 'वुगितश्च' 'वनोरच' 'न षडि'त्यादिविधि—प्रतिषेध—प्रवृत्तयेऽमहत्पूर्वग्रहणेन 'स्त्रिया'मित्यधिकारे तदन्तविधेर्ज्ञापितत्वान्न तदर्थमनुपसर्जनाधिकारः, किञ्चानुपसर्जनाधिकारेण तदन्तविधिज्ञापनात्प्रागप्यणन्तात्प्रातिपदिकादित्यर्थस्त्वयाऽङ्गीकृतस्तथा च—'आपिशला ब्राह्मणी'त्यत्र प्रोक्ताणमादाय ङीब्वारणायानुपसर्जनाधिकार आवश्यक इति न तस्य तदन्तविधिज्ञापकता । 'अतिमहती'त्याद्यर्थं 'स्त्रिया'मित्यस्य प्रकृतिविशेषणनिर्णयेन प्रोक्ताणः स्त्रियामवृत्तावपि तदन्तस्य स्त्रियां वृत्तेः ।

ननु 'स्त्रिया'मित्यस्य प्रकृतिविशेषणत्वमप्यनुपसर्जनाधिकारज्ञाप्यमेवेति चेन्न, तदन्तविधिज्ञापकत्वमिच्छतोऽप्येतज्ज्ञापनं विना वैयर्थ्यानुद्धारेणावश्यकत्वात् । स्त्रियामित्यस्य प्रकृतिविशेषणत्वे ज्ञापिते उक्तस्थले ङीब्वारणाय चारितार्थ्येन तदन्तविधिज्ञापकत्वासम्भवः । अनुपसर्जनाधिकारस्थेषु तदन्तविधे-

**टिड्ढा**। 'ठ'स्येव सिद्धे ठक्-ठञोरुपादानं ठन्-ञिठयोर्व्यावृत्त्यर्थम्। **अदन्तामिति**। प्रत्यासत्त्या टिदाद्यवयवकारान्तमित्यर्थः। तेन 'पञ्चाश्वे'त्यादौ ठगिनिमित्तोऽपि न ङीप्।

**कुरुचरीति**। कुरुषु चरतीत्यधिकरणे उपपदे चरेष्टः। टितोऽप्रत्ययस्यापि सत्त्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्याऽत्र टिदन्तत्वं कुरुचरशब्दस्येति बोद्धव्यम्।

**वक्ष्यमाणेति**। वचेर्लृटः शानच्। **टित्त्वादिति**। 'स्थानिवत्त्वेने'त्यादिः। 'न ल्यपी'ति लिङ्गाडित्त्वादेरशास्त्रीयस्यातिदेशः, अनुबन्धकार्ये-'अनल्विधा'विति-निषेध प्रवृत्तिरत्रेति भावः।

**ङित्त्वेनेति**। लिङादेशानां स्थानिवत्त्वेनैव सिद्धे तद्व्यर्थ्यं स्पष्टमेव, तद्धि अवयवेऽचरितार्थतया समुदायोपकारकम्। न चेदं ङित्त्वं—'स्तुया'दित्यादावनिग्लक्षणवृद्धिनिषेधार्थमिति वाच्यं, विनिगमनाविरहात्। 'उत औ'दिति वक्तव्ये

ॐ भिदुरश्चिन्तामणिः ॐ

वक्ष्यमाणदोषादाह—**प्रत्येति**। **न ङीबिति**। अन्यथा—प्रत्ययलक्षणेन ढगन्तत्वाच्छ्रूयमाणाकारान्तत्वाद्वीप इति भावः। ननु नायं टित्, नापि टिदन्तोऽत आह—**टितोऽप्रेति**। स्वतोऽसत्त्वादाह—**स्थानीति**। नन्वनुबन्धवैशिष्ट्यरूपटित्त्वादेरशास्त्रीयत्वेन कथमतिदेशः? किञ्चानल्विति निषेधो जागरूकोऽत आह—**न ल्यपीति**। अस्योभयत्रान्वयः। ननु कथमन्यथा सिद्धिरत आह—**लिङेति**। ननु तेषां सिद्धावपि न तस्य सिद्धं, सूत्रेण हि तस्य विधीयतेऽत आह-**तद्धीति**। **वृद्धीति**। 'उतो वृद्धि'-

ॐ सदाशिवभट्टीयम् ॐ

**टिड्ढाण**। **टिदाद्यवयवेति**। नच 'टिदाद्यवयवोऽकार' इत्युक्तेरकारस्य प्रत्ययत्वात्तदन्तग्रहणाऽभावेन प्रातिपदिकविशेषणेनैव तदन्तविधौ 'परमकुरुचरी'ति न स्यादिति वाच्यम्, एकस्मिन्नपि तदन्तविधौ टिदाद्यवयवाऽकारान्तत्वस्य 'प्रत्ययाप्रत्ययग्रहणे प्रत्ययग्रहण'मित्यस्याऽप्रवृत्त्या समुदायेऽपि सत्त्वात्।

नन्वैवं बहुकुरुचरेत्यत्रापि वारणार्थमनुपसर्जनाऽधिकारस्य चारितार्थ्येन ज्ञापकताऽसम्भव इति वाच्यं, टिदित्यादिप्रत्ययग्रहणेन तदन्तग्रहणेन टिदन्तमित्यर्थात्समुदाये तदभावेनाचारितार्थ्यात्, 'टिदाद्यवयवाकारान्त'मित्युक्ते तु परिभाषाबाधः स्यात्। तथाच टिदन्तान्तं यदकारान्तमित्युक्ते 'पञ्चाश्वे'ति प्रत्ययाऽकारष्टिदाद्यवयवो ग्राह्य इत्याकलनीयम्। **परेत्विति**। नच कचिदनल्विधावितिनिषेध इत्यस्याऽभावेन 'चक्राण' इत्यत्र स्थानिवत्त्वेन टित्त्वात् टेरेत्वं स्यादिति वाच्यं, 'टित' इत्यत्र 'तङा'मित्यनुवर्तते, 'टितस्तङां टेरे'-इति न्यासेन वाऽदोषात्। नच ङिदादेशानां न ङित्त्वमित्यस्याभावे 'लविषीष्टे'त्यत्र गुणो न स्यादिति वाच्यं, 'लिङ्सिचा'वितिक्ङिति किरवविधानाज्ज्ञापकात् क्वचिन्न ङिदादेशानां ङित्त्वमित्युच्यमानत्वात्।

ॐ विषमपदविवृतिः ॐ

रूपयोगाभावश्च। ननु तत्प्रयोजनं 'कुम्भकारेय' इत्यस्य पाक्षिकस्य वारणमिति चेन्न, 'अनुपसर्जने स्त्रीप्रत्यये' इत्यनेन तदादिविधिप्रतिषेधेन तत्रापि पाक्षिकाऽनिष्टप्रसङ्गस्य दुर्वारत्वात्। 'अर्थवत्सूत्रोक्तार्थवत्त्वाभावेने'ति दूषणं तत्रापि समम्। 'कर्मण्य'णित्यस्यात्रोपस्थितौ मानाभावः। 'तदादिनियमाभावेनाधिकस्य कार्यम्बोध्यते न न्यूनस्ये'त्यपि निर्मूलम्। किञ्च 'शौलिकामी'ति ज्ञापकाश्रयणेन कथञ्चिदुक्त-

ॐ वरवर्णिनी ॐ

'ओर्गुण'इत्यादावित्परिभाषोपस्थिताविग्लक्षणत्वापत्त्या 'लैगवायन'इत्यादौ वृद्धिनिषेधापत्तिः स्यादतो वर्णरूपस्थानिनिर्देशे इक्परिभाषा न प्रवर्तते इति कल्प्यते। 'वर्णरूपे'त्युक्तेः 'सार्वधातुकार्धधातुकयो'रित्यादावङ्गस्येति स्थानिनिर्देशेऽपि सा प्रवर्तते एव। अयञ्च नियमो न सार्वत्रिक इत्याह—**उत औदिति**। एतत्फलञ्च 'सुया'दित्यादावुतोवृद्धिरिति प्राप्ताया वृद्धेर्निषेध इत्याहुः।

वृद्धिग्रहणेन स्थानिनिर्देशोऽपीक्परिभाषोपस्थित्या तस्या अपीग्लक्षणत्वाच्च ।

नन्वेवं 'ब्रूता'दित्यत्र ब्रुव ईट् प्राप्नोति, लाश्रयानुबन्धकार्यस्य तदादेशेष्वभावेऽपि तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने मानाभावादत आह—**श्न इति** । **क्वचिदिति** । लक्ष्यानुरोधेन च व्यवस्था ।

परे तु—यासुटो ङित्त्वं न ज्ञापकं, 'पिदर्थं ङित्त्व'मिति भाष्यात् । 'सार्वधातुक'मिति सूत्रेऽपिदित्यावर्त्य प्रसज्यप्रतिषेधसिद्धेन 'ङिच्च पिन्न, पिच्च ङिन्ने'त्यनेन 'हलः श्न' इतिसूत्रभाष्योक्तेन पित्सु ङित्त्वाप्रसक्तेः ।

शानचः शित्त्वमपि तत्सूत्रे एव भाष्ये प्रत्याख्यातम् । हेरपित्त्वस्य तातङो ङित्त्वस्य वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं भाष्ये । तस्मा'द्वक्ष्यमाणे'त्यादौ सत्यभिधानेऽजादिपाठाट्टाप् ।

---

**❀ चिदस्थिमाला ❀**

रितीत्यर्थः । नन्वन्तरङ्गमेव प्रथमोपस्थितित्वरूपं विनिगमकमत आह—**श्न इति** । एवं=तेन तथा ज्ञापने ।

**ईडिति** । इतीडित्यर्थः । 'तदादेशे' इत्यस्यैव व्याख्या—**तातङीति** । नन्वेवमव्यवस्थापत्तिरत आह—**लक्ष्येति** । मूलादि सर्वान्ग्रन्थान्दूषयति—**परे त्विति** । ननूक्तरीत्या तत्रापि तत्सिद्धमिति तदसङ्गतिरेवात आह—**सार्वेति** । **प्रसज्येति** । 'स्त्रीक्रियमाणे'त्यादिः । द्वितीयं ज्ञापकमपि दूषयति—**शानच इति** । तत्सूत्रे एव='हलः श्न'इति सूत्रे एव । ननु तावतापि सूत्रमते तस्य तत्त्वमेवात आह—**हेरिति** । चो व्युत्क्रमे-'ङित्त्वस्ये'त्यग्रे योज्यः । एवं सति तत्र गतिमाह—**तस्मादिति** । 'सती'त्यनेन

**❀ विषमपदविवृतिः ❀**

प्रतिबन्दीवारणसम्भवेऽपि काष्ठश्रिताया अपत्यं-'काष्ठश्रैतेय' इति प्रयोगवारणाय निष्कृष्यैकार्थीभाव एव प्रायेण वृत्तिनिमित्तम्, भाष्यादिप्रामाण्यात्तु क्वचित्तदभावेऽपि तद्धितादिः ।

किञ्च 'स्त्रीभ्यो ढ'गित्यत्र स्त्रीवाचकानां ग्रहणमिति त्वदुक्तदिशा सर्वमिदं गजस्नानसमं, तस्मा'दापिशले'त्यादौ ङीब्वारणमेवानुपसर्जनाधिकारप्रयोजनम् । तदुक्तमत्र सूत्रे भाष्ये "—आपिशलमधीते-'आपिशला ब्राह्मणी'त्यत्र ङीम्माभूदित्ययमधिकार इति, इदं तर्हि प्रयोजन—प्रधानेन तदन्तविधिर्यथा स्यात्-'कुम्भकारी, अत्र हि प्रत्ययग्रहणे इति परिभाषयाऽवयवादुत्पत्तिः प्राप्नोतीति-''इतत्सूत्रस्थं भाष्यम्, 'अनुसर्जनादित्येष योगः प्रत्याख्यायते' इति सर्वादिसूत्रस्थं भाष्यञ्चैकदेश्युक्तिः, उक्तबाधकबलादिति सुधियो विभावयन्त्वित्याहुः ।

**प्रयोजनाभावादित्यादिनेति** । ननु 'भविषीष्टे'त्यत्र भाष्यमते गुणापत्तिरिति चेदत्र केचित्,-'भूसुवो'रिति सूत्रे तिङः 'सार्वधा'तिति विशेषणादार्धधातुके लिङि गुणनिषेधो नेत्याहुः ।

---

**❀ वरवर्णिनी ❀**

**ङिच्च पिन्नेति** । इदञ्च 'सार्वधातुकमपि'दित्यत्र—अपिदिति योगो विभज्यते । स चावर्त्तते, प्रसज्यप्रतिषेधश्चायं-पिन्न भवतीति तदर्थः, किं न भवतीत्याकाङ्क्षायां-ङिन्न भवतीत्यस्य सम्बन्धः, एवञ्च 'पिच्च ङिन्ने'ति लब्धम् । अपरस्य च ङित्पिन्न भवतीत्यर्थः। एवञ्च ङित्त्वपित्त्वयोरेकाधिकरणावृत्तित्वं बोध्यते, यदा ङित्त्वं परमनवकाशञ्च तदा ङिदेव, यदा च पित्त्वं परमनवकाशञ्च तदा पित्त्वमेवेत्येवं व्यवस्था बोध्या । 'ङिच्च पिन्ने'त्यंशस्य फलं-'युया'दित्यत्र परेण यासुटो ङित्त्वेन पित्त्वस्यातिदेशिकस्य बाधाद्युयादित्यादावुतोवृद्धिरिति न वृद्धिः । 'पिच्च ङिन्ने'त्यपरांशस्य फलन्तु—'अकरोदि'त्यादौ तिपि लङ्वृत्तिङित्त्वस्यानतिदेशाद्गुणनिषेधाभावः । तत्र च लङ्विधायकशास्त्रापेक्षया तिबादिविधायकशास्त्रं परमिति तेनैव व्यवस्थेति **तत्त्वविदः** ।

यत्तु—'क्ङिति चे'तिसूत्रभाष्ये यासुटो ङिद्वचनस्य न ङिदादेशानां ङित्त्वमित्यर्थे ज्ञापकतोक्ता, तत्तु वार्त्तिकमतं, 'ङिच्च पिन्ने'त्यादेस्तेनानुक्तेः।

यदपि—'गाङ् लिटी'ति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशेऽनुबन्धास्थानिवत्त्वस्य ज्ञापकमुक्तं वार्त्तिककृता, तदपि 'प्रयोजनाभावा'दित्यादिना भाष्ये दूषितमित्याहुः।

निरनुबन्धकस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्य ढको ग्रहणमित्याह—**सौपर्णेयीति**। 'सुपर्णी'शब्दादपत्ये 'स्त्रीभ्यो ढ'गिति ढक्। स्पष्टञ्चेदं भाष्य।

**ऐन्द्रीति**। 'साऽस्य देवते'त्यण्। **ऊरुदघ्नीत्यादि**। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः'। 'सङ्ख्याया अवयवे तयप्' । 'मात्र'जिति मात्रशब्दारभ्याऽयचश्चकारेण प्रत्याहार इति 'उभयी'ति सिद्धिः।—तत्र ह्ययच् प्रत्ययान्तरम्, अत एवोभयशब्दस्य जसि सर्वनामत्व-विकल्पो नेति 'नवेती'त्यत्र भाष्ये स्पष्टम्।

**आक्षिकीति**। 'तेन दीव्यती'ति ठक्। 'तदस्य पण्य'मित्यधिकारे 'लवणाट्ठञ्'। यादृर्यां—'त्यदादिषु दृश' इति कञ्। **इत्वरीति**। 'इणनशिजी'ति क्वरप्।

---

### ❀ चिदस्थिमाला ❀

वस्तुतोऽनभिधानमेव सूचितम्। भाष्यद्वयविरोधमस्य परिहरति—**यत्त्वित्यादिना**। 'आदेशे स्थानिवत्त्वेने-त्कार्याभावस्ये'ति पाठः। आदिना तिवाद्यादेशेषु पित्त्वाद्यसिद्धिरूपदोषपरिग्रहः।

ननु निरनुबन्धकेत्युपस्थित्या 'शिलाया ढः' 'सभाया यः' 'ढश्छन्दसी'त्येव कुतो नोदाहृतमत आह—**निरनुबन्धेति**। तथा भाष्योक्तेराह—**स्त्रियामिति**। सानुबन्धकस्य=तस्यापि। प्रागुक्तसिद्धान्तमाह—**मात्रजिति**। तत्र=उभयशब्दे। 'लावणिकी'त्यत्राह—**तदस्येति**। **ठञिति**। इत्यनेन ठञित्यर्थः।

### ❀ विषमपदविवृतिः ❀

अन्ये तु—गाङो ङित्त्वेन न ङिदादेशानां ङित्त्वमिति ज्ञाप्यते, तेन 'भविषीष्टे'त्यत्र न दोषः, उक्तज्ञापकेनैवाचिनवमित्यादिसिद्धौ 'पिच्च ङिन्ने'ति तु 'भवन्ती'त्यादौ शपः 'सार्वधातुक'मिति प्राप्तङित्त्वनिषेधार्थमित्याहुस्तन्न; गाङो ङित्त्वस्य 'गाङ्कुटे'ति सूत्रे विशेषणार्थत्वात्। तत्फलमिणो गादेशे कर्मणि लुङि 'अगासातां ग्रामो देवदत्तेने'त्यत्राऽङित्त्वान्नेत्त्वम्। 'न ल्यपी'ति धर्मिग्राहक-मानाल्लादेशभिन्नमेवानुबन्धकार्यं स्थानिवद्भावेन,तेन 'भविषीष्ट' 'वक्ष्यमाणे'त्यादौ न दोष इत्यन्ये।

ननु निरनुबन्धकपरिभाषया ढग्रहणे ढको ग्रहणं न स्यादित्याशङ्क्याह—**निरनुबन्धकस्येति**। 'शिलाया ढः,'छन्दसी'त्यादेः। **स्पष्टं चेदं भाष्ये इति**। निरनुबन्धकस्येत्याद्युक्तमित्यर्थः। ननु स्वरे

---

### ❀ वरवर्णिनी ❀

**स्पष्टञ्चेदमिति**। "ननु चायमस्ति 'शिलाया ढ' इति ?, नैष स्त्रियां वर्त्तते" । [ अत्र कैयटः—शिलेव शिलेयमिति नपुंसकलिङ्ग एव शिलेयशब्दः—स्वभावादिति।] "अयन्तर्हि 'सभाया यः' 'ढश्छन्द-सी'ति ?। एषोऽपि न स्त्रियां वर्त्तते—कथं स्त्री नाम सभायां साध्वी स्यात् ?। यज्ञसभायां विदुषामेव पुरुषाणां साधुत्वाधिकारात्। ननु सभायां साधुरियं ब्राह्मणपङ्क्तिः परिषदेति सम्भवति स्त्रिया साधुत्वम्" —इति तत्रोक्तम्। एतेन छन्दसि सभेयशब्दस्यैवंविधायां स्त्रियाम्प्रयोगाभाव इति विज्ञायते।

---

१ 'सानुबन्धकादेशे स्थानिवत्त्वेनेत्कार्याभावस्ये'ति पाठोऽत्र चिदस्थिमालासंमतः।

अनुबन्धद्वयोपादानं स्पष्टार्थम् , वरज्व्यावृत्तेरन्यतरेणापि सिद्धेः ।

**चौरीति** । चुरा शीलमस्या इत्यर्थः ।

**नञ्स्नञ्** । तरुण-तलुनयोः—'वयस्यचरमे' इति ङीपि सिद्धेऽपि गौरादिपाठात्परत्वा-त्प्राप्तेन ङीषा बाधाभावाय पुनरत्र ग्रहणम् । तयोश्च स्वरे विशेषः ।

—एतौ हि 'त्रो रश्च लो वे'त्युननन्तत्वादाद्युदात्तौ । स्त्रीपुंसाभ्यां—नञ्स्नञौ । 'प्रहरण'मित्यधिकारे—'शक्तियष्ट्योरीकक्' । 'आढ्यसुभगे'ति ख्युन् ।

**यञश्च** । 'प्राचां ष्फे'त्यत्र यञ एवानुवृत्तये योगविभागः ।

**हलस्त** । 'हल' इति पञ्चमी, 'यस्ये'ति सूत्रात् 'ईती'त्यनुवर्त्तते, 'सूर्यतिष्ये'त्यतो 'य उपधाया'इति च । यलोपेऽल्लोपस्याभीयासिद्धत्वाद्यस्य ईकारपरत्वाभावाद्वचनसार्थक्यायो-पधाग्रहणानुवृत्तिः ।

---

ॐ चिदस्थिमाला ॐ

**सिद्धेरिति** । तेनेश्वरेत्यत्र न ङीप् । ईश्वरीत्यत्र तु पुंयोगलक्षणो ङीप् , वन्नन्तेशधातो'र्वनोरचे'ति ङीब्रश्च बोध्यः । वैयर्थ्यशङ्कामादौ तत्र जातां परिहरति—**तरुणेति** । 'सूत्रेण सिद्धि'रिति शाब्दिग्रन्था-स्वाङ्गत्याह—**अचरमे इति** । तयोश्च=ङीप्ङीषोस्तु ।

तत्प्रसङ्गादाह—**एताविति** । तरुणतलुनावित्यर्थः। अथोद्देशक्रमेण लक्ष्यप्रक्रिया आह—**स्त्रीति** । चानुकृष्ट-त्वादुत्तरसूत्रे तद्ग्रहणाच्च तद्धिते इत्यस्य नानुवृत्तिरित्याह—**ईतीति** । ननु यञोऽकारलोपे यस्येकार-परत्वेन लोपसिद्धिर्यलोपे स्थानिवत्त्वनिषेधादित्युपधापदानुवृत्तिर्व्यर्थाऽत आह—**यलोपे इति** । अपत्या-धिकारान्यार्थाधिकारस्यादित्यर्थे 'द्वैप्ये'त्यस्य सिद्धावपि 'दैव्ये'त्यस्यासिद्धिरत आह—**अपत्येति** ।

नन्वापत्यग्रहणं कर्तव्यमित्येव वार्तिकमिति कथमधिकारलाभोऽत आह—**यञिति** । तस्य सूत्रत्रयेऽकार-

ॐ सदाशिवभट्टीयम् ॐ

**नञ्स्नञी** । **पुनरत्रेति** । नच वयोवाचिनां वैकल्पिकजातिकार्यत्वाद्पुंयोगे रूपद्वयं सिद्धं, पुंयोगे 'वयस्यचरमे' इति बाधित्वा 'पुंयोगादाख्याया'मिति ङीषेव स्यादिति वार्तिकम् । तत्र कृतेऽपि वार्तिकेन ङीषं बाधित्वा ङीबेव स्यादिति गौरादिपाठः । तत्सामर्थ्यात्पक्षे ङीषिति रूपद्वयं सिद्धम् ।

ॐ विषमपदविवृतिः ॐ

विशेषः, ङीपोऽप्युदात्तनिवृत्तिस्वरेणोदात्तत्वादित्याशङ्क्याह—**एतौ हीति** । **उपरञ्जकतयेति** । इष्टनि

---

ॐ वरवर्णिनी ॐ

एतेन स्वभावतः पुंस्त्वं निदर्शितम् । अत एव=अयचः प्रत्ययान्तरत्वादेव । **अनुबन्धद्वयोपादानमिति** । अस्य 'प्रकृतसूत्रे' इति शेषः । **वरज्व्यावृत्तेरिति** । अत एव 'तमीश्वरा साधु चचार सादरे'ति सिद्धम् । 'स्थेशभासे'ति वरच् । 'ईश्वरी'ति तु पुंयोगे सिद्धम् । ईशधातोर्वनिपि 'वनो र चे'ति वा इत्यर्थ इति ।

**चौरीति** । यद्यप्यत्र 'छत्रादिभ्यो ण'इति णस्तथापि-'ताच्छीलिके णेऽपी'ति परिभाषया ङीप् । **वयस्य-चरम इति** । प्रथमवयोवाचित्वाभावाद्वयसि प्रथमे इति यथाश्रुतसूत्रेण तु न सिद्धिः । पुनरत्र ग्रहणम्= वार्त्तिके ग्रहणमित्यर्थः। तयोः=ङीबन्तङीषन्तयोः। यत्तु 'तरुणतलुनयोर्वार्त्तिके ग्रहणङ्गौरादिपाठोप्यनयोर्माऽस्तु' किन्तु बह्वादौ पाठोऽनयोः कार्यस्तेन 'बह्वादिभ्यश्चे'ति पक्षे ङीष् , तदभावे 'वयस्यचरमे' इति ङीप् भविष्यतीति स्वरस्यापि सिद्धिरिति; तन्न, 'नञ्स्नञी'ति प्रतीकमुपादाय—''तरुणतलुनशब्दयोरवयोऽर्थे-ग्रहणं—'तरुणी सुरे'ति, प्राणिधर्मो हि वयः—'' इति कैयटेन समाधानस्य सूचनात् । वार्त्तिकेऽवयसि टाबन्तप्रयोगनिवृत्त्यर्थमनयोरुपादानमावश्यकम् । न चैतावताऽन्तोदात्तस्य सिद्धिस्तदर्थं गौरादिषु बह्वादिषु वा पाठ इत्यत्र फलतो न विशेषः'—इति **मिश्राः** ।

ननु यञोऽपि 'टिड्ढे'ति सूत्रे एवोपादानङ्कुतो न कृतमत आह—**प्राचां ष्फ इत्यत्रेति** ।

**अनपत्याधिकारस्थादिति** । अपत्याधिकारस्थभिन्नादित्यर्थः । यञ्शब्देन व्याख्यानादपत्याधिकारस्थस्यैव ग्रहणमिति भावः ।

**प्राचां ष्फ** । 'यञ' इति वर्तते, 'अत' इति च । यञो योऽकार इति चार्थः । तेन 'वतण्डी'त्यत्रोदीचां मते सावकाशं शार्ङ्गरवादिङीनं वाधित्वा 'आवट्यायनी'त्यादाविव 'सर्वत्र'ग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न । अत्र हि 'वतण्डाच्चे'ति यञो 'लुक्स्त्रिया'मिति लुक् , वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम् ।

---

### ❀ चिदस्थिमाला ❀

प्रक्षेपेण प्रत्याख्यानस्य भाष्यानुकूलत्वमाह–व्याख्येति । एतेना'धिकारग्रहणपक्षे आभिजितीति न स्यादि'त्यधिकारग्रहणं मौलं चिन्त्यं, प्रक्षेपे 'दैव्ये'त्यस्य सिद्धिरिति दण्डिशास्त्रगाद्युक्तमपास्तम्; मण्डूकप्लुत्या तत्राऽस्त्रियामित्यनुवृत्त्या स्त्रियां यञेव नेति 'दैव्ये'त्यत्र ङीप्सम्भावनाया दूरोत्सारितत्वात् । 'आभिजिनी'निरूपसिद्धिस्तु जातित्वान्ङीपेति न तत्र प्रक्षेपः । बहुत्वे तु अयञोऽभावेऽपि 'तद्राजस्ये'ति लुक् सिद्ध इत्याद्यन्यत्र विस्तरः ।

प्रत्यासत्त्या आह–यञ इति । 'सर्वत्रे'त्यस्य 'मध्यमणि'न्यायेनान्वयः । अत्र हि='वतण्डी'त्यत्र हि ।

### ❀ सदाशिवभट्टीयम् ❀

न च बह्वादिषु पाठः कार्यः, किंवा'मनोरौ वे'त्यनन्तरं वार्तिकं कार्यं, तेन सर्वत्र रूपद्वये सिद्धे गौरादिपाठः किमर्थं इति वाच्यम्, एवं सिद्धे एवं क्रियमाणेन वैकल्पिकं जातिकार्यस्यानित्यत्वं बोध्यते, तस्माच्च बह्वादिपाठस्यापुंयोगे चारितार्थ्यं, पुंयोगे परत्वान्ङीषेव स्यात् , एवं 'मनोरौ वे'त्युक्तेरनन्तरं पाठेऽपि पुंयोगे चारितार्थ्येनापुंयोगे ङीषेव स्यात् , तस्माद्गौरादिपाठो वार्तिकं चेति बहवः । अनित्यत्वफलन्तु वृद्धा स्थविरेत्यत्र नैव ङीप् ।

अत्रैवं नूनः "–'तरुणी सुरे'त्यत्र वयोवाचकत्वाभावादप्राप्ते ङीबर्थं वार्तिकं, तत्रापुंयोगे वैकल्पिकजातिकार्यत्वेन रूपद्वयेऽपि परत्वात्पुंयोगे ङीषेव स्यात् , वार्तिकं त्वत्र चरितार्थमिति–पुंयोगे ङीप्घटितमेकमेव रूपं स्यादिति सिद्धमिष्टं, गौरादिपाठश्च व्यर्थ इति–" ।–अत्र विचारयन्तु सुधियः ।–वार्तिकस्यान्यार्थतापत्तेश्चेत्यर्थः । **इकगिति** । [पृ० ५५६] तत्रेकगितिह्रस्वः पाठ्यः, 'शक्तिषष्ट्योरिक्'गेव विधेयः, विधानसामर्थ्यान्न यस्येति लोपः, अन्यथा कगमेव विदध्यात् 'बहिषष्टिलोप' इत्यत्र 'बहिषः षलोपो यञ्च, इक'गिति पाठ्यं, तेन न दोषो विधानसामर्थ्यान्न लोप इति चेन्न; तीयादिकिकि तार्तीयीकासिद्धेः । नच तत्र दीर्घोऽस्त्वेव ह्रस्वः, तार्तीयीकीत्यसिद्धेः ।

**हलस्तद्धितस्य । उपधाया इति** । [पृ० ५५६] नच सामर्थ्याद्व्यवधानेपि भवति, 'गार्ग्यायणी'त्यत्र तु 'येननेे'ति न्यायेन न दोष इति वाच्यम् , उपधापदानुवृत्तेर्वचनकरणापेक्षया लघीयस्त्वात् ।

**प्राचां ष्फ** । ननु ष्फडेव विधेयः किन्तद्धितग्रहणेन ?, डित्त्वसामर्थ्याद्वा'सुरेरुपसङ्ख्यान'मिति सिद्धमिति चेन्न; संहितापाठे टित्त्वमपि सम्भाव्येत, किञ्च तस्यार्धमात्रिकत्वेनाऽविशेषात् , किञ्च गौकक्ष्याशब्दाद्गर्गा-

---

### ❀ वरवर्णिनी ❀

नन्वनपत्याधिकाराप्रसिद्ध्याऽनपत्याधिकारस्थादित्यनुपपन्नमत आह—**अपत्याधिकारस्थभिन्नादिति** ।

**व्याख्यानादिति** । 'आपत्यग्रहणङ्कर्तव्य'मित्येवार्थः कर्तव्यः, स चार्थो द्वैप्येऽपि सम्भवति–या द्वीपे भवा सा कस्य चिदपत्यम्भवत्येवेति—चेन्न; एतद्वार्त्तिकप्रत्याख्यानैकवाक्यतया प्रतिपदोक्तपरिभाषयाऽपत्यशब्दस्यापत्याधिकारपरतयाऽत्यशब्दस्य तदधिकारभवपरत्वात् । तथाहि—"तर्त्तर्हि वक्तव्यं ? न वक्तव्यम् , नैवं विज्ञायते—'कञ्करपः यञश्चे'ति, कथन्तर्हि ? कञ्करपोऽयञश्चेति । अयमयञ्प्रत्ययो गर्गादिभ्यो विधीयते तत्राकारोऽनुनासिकः इत्सञ्ज्ञक इह विशेषणार्थः" इति ।—यञो ग्रहणाभावाद्द्वैप्ये नातिप्रसङ्गः. 'यस्कादिभ्यो गोत्रेऽयञञोश्चे'त्यत्राप्यकारप्रक्षेपः । न च विच्छिद्य पाठेऽनुकरणे प्रकृतसूत्रघटकेऽकारश्रवणापत्तिरिति वाच्यम्, आर्षः संहितापाठ एव, व्याख्यातृकल्पितस्तु पृथक् पाठः । अनुकरणादुपस्थिते स्वित्सञ्ज्ञयाऽकारनिवृत्तिः ।

**षः प्र** । 'आदिर्ञिटुडवः'इति सूत्रादादिरित्यनुवर्त्तते । प्रत्ययस्येति किं ? षोडश । 'षष उत्त्व'मित्यत्र षष्शब्दस्य निपातनादुपदेशस्थोऽयं षकारः । वस्तुत 'उपदेशे' इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपितम् । 'आदि'रिति तूत्तरत्रावश्यकमुपरञ्जकतयाऽत्रापि सम्बन्धितम् ।

**आयने** । आयनो नस्य नेत्त्वं,-फिनो नित्करणात् । तत्साहचर्यादीनोऽपि नस्य नेत्त्वम् । आदिग्रहणं किम् ? ऊरुदघ्नम् । प्रत्ययेति किं ? 'फक्कति' 'खनति' ।

खच्-भ्रआदौ-'घिण्णयतोः' 'खित्यनव्ययस्ये'त्यादिलिङ्गादित्सञ्ज्ञैव, नादेशाः । उणादीनां बहुलवचनान्नादेशाः ।

घचश्चित्त्वसामर्थ्यादेते प्रत्ययसम्बन्ध्यादेशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव, तेनान्तोदात्तत्वाय चित्त्वं सफलम्, अन्यथाऽऽद्युदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । ननु स्त्रियामेव ष्फविधाना'दुक्तार्थानामप्रयोग'इति ङीष् न स्यादत आह-**षित्त्वसामर्थ्यादिति** ।

**ष्फेणोक्तेऽपीति** । द्योतितेऽपीत्यर्थः । 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेन क्वचित् समुच्चयस्य दृष्टत्वात् । षित्त्वमपि तदाश्रयेण ज्ञापकम् ।

**सर्वत्र** । सर्वेषां मते इत्यर्थस्तदाह-**नित्यमिति** । 'प्राचा'मित्यस्य निवृत्त्या

❀ चिदस्थिमाला ❀

ननूपदेशग्रहणानुवृत्त्या नात्र दोषोऽत आह-**षष इति** । इदं प्राचां मतेन, सिद्धान्तमाह-**वस्तुत इति** । पूर्व=प्रारम्भे । ननु 'अविषो' 'महिष'इत्यादौ फलाभावान्नेत्त्वं, टित्त्वान्ङीपि 'महिषी'त्यस्य हि नित्त्वान्महिषशब्दस्यान्तोदात्तत्वेनोदात्तत्वेनोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वस्यापि सिद्धेरत आह-**आदिरितीति** । एतेन तस्यात्र सफलत्वमन्यथा वदन्तो **दण्डिशास्त्र्यादयः** परास्ताः । **दण्डिशास्त्र्यादि**ग्रन्थासाङ्गत्यायाह-**आयन इति** । **फिन इति** । असञ्जातविरोधित्वन्यायसहकृतादित्यर्थः । 'छिनत्ति' 'घूर्णते' इत्यपि बोध्यम् ।

तदसाङ्गत्यायान्यथानतिप्रसङ्गमाह-**खजिति** । नन्वेवमपि 'शङ्कः' 'षण्ढ' इत्यादौ स्यात्, तत्र हि फलाभावान्नेत्सञ्ज्ञाऽत आह-**उणादीति** । 'आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थ'मिति वार्तिकखण्डनमाह-**घच इति** । पूर्वमेवेत्यस्य-'भवन्ती'ति शेषः । वाचकतापक्षस्य दूषितत्वादाह-**द्योतीति** । नन्वेमपि तदप्रवृत्तिः कुतोऽत आह-**द्विरिति** । क्वचित्='द्वौ ब्राह्मणौ' 'व्यतिलुनत' इत्यादौ ।

❀ सदाशिवभट्टीयम् ❀

दियञन्तप्रकृतिकक्रौड्यादियङन्तप्रकृतिकचाबन्तात्तद्विवक्षायां 'भस्याढे' इति पुंवत्त्वार्थं तस्याऽऽवश्यकत्वात् । नच भाष्ये तत्प्रत्याख्यातमिति वाच्यं, तद्वदस्यापि कृतप्रायत्वात् । प्रत्याख्याने 'षाद्यञ' इति चापि गौकक्षात्तस्मात् ष्फ इति सिद्धा-गौकक्ष्यायणी । नच गौकक्ष्या इति स्यात्, ष्फस्य चापोऽपवादकत्वादिति वाच्यं, 'प्राचां ष्फ' इत्यत्र सर्वत्रग्रहणाऽनुवृत्तिस्तच्च बाधकविषयेपि प्रवृत्त्यर्थम् । गौकक्ष्या इति तूदीचां मते । एवञ्च 'गौकक्ष्यायाः प्रतिषेधो वक्तव्य' इति सम्प्रसारणनिषेधकं वार्तिकमपि नारम्भणीयमित्यपरमनुकूलम् ।

**षः प्रत्यय** । **आदिरुपरञ्जकेति** । 'अविमह्योष्टिष'जित्यादावनायासतो वारकतयेति केचित् । **नादेशा इति** । नचेत्सञ्ज्ञा भवतु, लोपं बाधित्वाऽऽदेशः स्यादेवेति वाच्यम्, इदिति महासञ्ज्ञया लोपं विना सञ्ज्ञाऽप्रवृत्तेः ।

**सर्वत्र** । सर्वेषामिति फलितार्थः, सप्तम्यास्त्रलुत्पत्तेः । **आवट्यायनीति** । 'प्राचां ष्फ तद्धितः सर्वत्रे'तिन्यासेन

❀ वरवर्णिनी ❀

**षित्त्वसामर्थ्येनेति** । नच षिद्भिदादिभ्योऽङित्यङो विधानाय षित्त्वं सफलमिति वाच्यं, भिदादिसाहचर्येण तत्र धातोरेव षितो ग्रहणात् । अत्र भाष्ये ष्फस्य षित्त्वसामर्थ्यादेव अप्रातिपदिकत्वेऽपि 'षिद्गौरादिभ्यश्चे'ति ङीष् स्यादिति प्रातिपदिकत्वसम्पत्तये तद्धितग्रहणं न कार्यमितिरीत्या प्रत्याख्यातम् ।

नित्यत्वे सिद्धेऽपि 'प्राचां ष्फे'त्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषयेऽपि प्रवृत्त्यर्थं तत्। तेन 'आवट्यायनी'त्यत्र 'आवट्याच्चे'ति चापं बाधित्वा प्राचां मते ष्फ एव।

अवटो—गर्गादिः। चाप्तु उदीचां मते प्राप्तङीब्बाधनेन चरितार्थः। सर्वत्रग्रहणाद्बाधकत्वमेव चापो, न तु—अनन्तरष्फबाधकत्वम्। चापि कृते तु न ष्फप्राप्तिः—'अत' इत्यधिकारात्।

लोहितादिर्गर्गाद्यन्तर्गणः। यद्यपि—तत्र 'कत-शकल-कण्वे'ति पाठात् शकलस्य लोहितादि-कण्वादिबहिर्भूतत्वात् ष्फाणौ न ततः प्राप्नुतस्तथापि 'कतन्तेभ्यः' 'कण्वादिभ्य' इत्युभयत्रापि षष्ठीतत्पुरुष-बहुव्रीह्योरेकशेषेण न दोषः। 'कतन्त'शब्दे शकन्ध्वादित्वात्पररूपं, तेन 'शाकल्यायनी', शाकल्यस्य छात्राः—'शाकला' इति च सिद्धम्।

**टाप्ङीषोरिति**। 'कौरव्य'शब्दे योपधप्रतिषेधाट्टाप्, 'माण्डूक'शब्दे जातित्वान्ङीषिति भावः। 'टाब्ङीषोरपवाद' इति पाठस्तु प्रामादिकः।

**वयसि**। प्राणिनां कालकृतावस्थाविशेषो—वयः। 'वयसी'त्यस्य वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थस्तदाह—**प्रथमवयोवाचिन इति**। तेन 'उत्तानशये'त्यादौ न, प्रकरणादिना वयःप्रतीतावपि नायं तद्वाचकः, याऽपि व्याध्यादिवशादुत्ताना शेते तस्या अपि प्रतीतेः। 'द्विवर्षे'त्यादिरपि न वयोवाची, शालादावपि प्रयोगात्।

कौमार-यौवन-वृद्धत्वभेदात्त्रीणि वयांसि, आयुषश्चतुर्भिर्भागैश्चत्वारि वा।

---

❀ चिदस्थिमाला ❀

तत्=तदर्थक-सर्वत्र-ग्रहणम्। अवटः=तच्छब्दः। यत्तु चाब्विषये प्राचां मते ष्फः प्राप्तः, उदीचां मते ङीष्, तत्राविशेषाच्चावुभयोरपि बाधकः स्यात्, 'अनन्तरे'ति न्यायाश्रयणे तु ष्फस्यैव स्यादिति तत्खण्डयति—**चाप्त्विति**। ग्रहणात्=तत्सामर्थ्यात्। ननु चापि कृतेऽपि एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणे ततः ष्फसिद्ध्या सर्वत्रग्रहणं व्यर्थमेवात आह—**चापीति**। सर्वत्रग्रहणस्येहकरणन्तु वैचित्र्यार्थम्। यथासङ्ख्यमाह—**ष्फाणावित्यादि**। **एकेति**। स्वरभिन्नामिति बहुव्रीहिः शेषः। उभयोः फले क्रमेणाह—**तेनेति**।

**इति चेति**। एतेन लोहितादिकार्यार्थं कतशब्दात्प्रागेव शकलशब्दः पाठ्य इत्यपास्तम्। **प्रामादिक इति**। एतेन 'मतान्तराशयेन स पाठ' इति दण्डयुक्तं, 'स एव पाठः, नव्यमते तु—टाब्ङीषोरिति पाठ्यं स्या'दिति शास्त्र्युक्तं चापास्तम्। कौरव्यसाहचर्यान्माण्डूकेत्यपत्यप्रत्ययान्तग्रहणं, तेन "यद्यसौ कूपमाण्डूकि! तवैतावतिकः स्मयः" इति भट्टिप्रयोगः समर्थितः। तत्र हि मण्डूकस्येयं भार्येति तस्येदमित्यण्। आदिना लोहितपादेति। **नायमिति**। शब्दात्तथाऽप्रतीतेः; तत्र हेतुमाह—**यापीति**।

**त्रीणीति**। तदुक्तं—"पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥" इति। बालत्व-मध्यत्व-वृद्धत्वभेदात् त्रीणीत्यन्ये, तदुक्तं—"आषोडशाद्भवेद्बालो यावत्क्षीरान्नवर्तकः। मध्यमः सप्ततिं यावत् परतो वृद्ध उच्यते॥" इति। **चत्वारि वेति**। तदुक्तं—'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति॥" इति। सर्वथापि वार्तिकमावश्यकं यौवनस्याप्रथमत्वात्। बालकशब्दस्याजादिषु पाठाट्टाबेव। उपचयापचयलक्षणे द्वे एव वयसीति मते तु वार्तिकं नावश्यकमित्याहुः।

**उभयत्राह—समेति**। अनीकमग्रता। यद्यपि 'पाककर्णे'ति सूत्रे 'सम्भस्त्रे'त्यग्रे 'त्रेश्वे'ति पठ्यते, तथापि

न्यनीक्षा । समाहारे 'तद्धितार्थे'ति द्विगुः । अकारान्तोत्तरपदत्वात्स्त्रीत्वम् ।

**अपरिमाण** । अत्र परिमाणशब्देन 'परिमाणन्तु सर्वत'इति पारिभाषिकमेव गृह्यते, 'सुवर्णविस्तौ हेम्नोऽक्षे' 'कम्बल्यमूर्णापलशत'मिति कोशबलेनोन्मानभूतविस्त-

❀ चिद्स्थिमाला ❀

त्वात्सर्वेम जादेराकृतिगणत्वे एव तात्पर्यग्राहकमिति भावः । अत्र=निषेधे । सर्वतः=आरोहतः परिणाहतश्च । तेन प्रस्थादिशब्दस्य नैव शक्तिग्रहात् । नन्वेवमुन्माने 'द्विनिष्की'ति न स्यादत आह—**सुवर्णेति** ।

❀ सदाशिवभट्टीयम् ❀

सिद्धम् । एतेनापकर्षः परास्तः । आरम्भसामर्थ्यादुत्तरसूत्रे नित्यत्वसिद्धेः । नच माण्डूकस्याण्णन्तत्वेन ङीप्प्राप्त इति 'टाप्ङीपो' रिति सुगम इति वाच्यं,कौरव्यसाहचर्येण गोत्राणन्तमात्रस्य ग्रहणेन तत्र जातिलक्षणङीपा बाधा-दिति सुधियः ।

❀ वरवर्णिनी ❀

ननु 'कौरव्यामाण्डूकाभ्यां चे'त्यत्रासुरेरुपसङ्ख्यानादासुरायणीति भवति, अत्र ष्फस्यातद्धितत्वे 'यस्येति-चे'तिलोपानापत्तिरिति तद्धितग्रहणप्रत्याख्यानपरं भाष्यमयुक्तमिति चेन्न;तावन्मात्रप्रयोजनकत्वे ष्फङेव विधेयः, ङित्वाल्लोपसिद्धिरिति तद्धितग्रहणं व्यर्थमेवेति तदाशयात् । यत्तु—अत एव तद्धितग्रहणात्स्त्रीप्रत्ययमात्रे तद्धितपदसम्बन्धे तद्धिताधिकारो व्यर्थ इति तन्न; सर्वत्र तद्धिताधिकारे ङीपो ङस्येत्त्वानापत्तेः, 'शुनी'त्यादौ 'श्वयुवे'तिसम्प्रसारणानापत्तेश्चेति स्पष्टमन्यत्रेति श्रीबालशास्त्र्यनुसारिणः प्राहुः ।

**अपरिमाणेति** । अयम्भावः—अत्र सूत्रे परिमाणशब्द आरोहतः परिणाहतश्च येन मीयते तत्परि-माणमित्येवमाढककुडवादिपरः, न तु परिच्छेदकमात्रपरः—'परिमाणन्तु सर्वत'इत्युक्तेः । तथाच बिस्त-कम्बल्ययोरुन्मानभूतयोरपरिमाणत्वादेव 'पञ्चाश्वे'तिवद्द्विबिस्ता द्विकम्बल्येत्यादौ–निषेधे सिद्धे तयोः पुनर्ग्रहणं नियमार्थम्—'उन्मानस्य चेन्ङीन्निषेधस्तर्हि बिस्तकम्बल्ययोरेवे'ति, तेन 'द्विनिष्की'त्यत्रोन्माने निषेधाभावा-न्ङीप्सिद्धः । 'द्विवर्षा' 'द्विहस्ता' 'द्विशते'त्यादौ चापरिमाणान्ततया ङीन्निषेधः सिद्धः । 'आचितो दश भाराः स्यु'रित्यादिकोशादाचितशब्दस्योन्मानवाचकतया नियमार्थतेति केचित्, वस्तुतस्तु–'आचितः शाकटो भार'इति कोशादस्य परिमाणवाचकत्वेनापरिमाणान्तादितिनिषेधो न सिध्येदिति तदुपादानमिति **भट्टाः** ।

अत्रेदं चिन्त्यं,-परिमाणशब्दोऽयं परिच्छेदकमात्रपर एव, अत एव प्रकृतसूत्रे भाष्ये–इमौ द्वौ प्रतिषेधावुच्येते–'अपरिमाणे'ति 'न तद्धिते'ति च। तत्रैकः शक्योऽकर्त्तुम्, एवं वक्ष्यामि–'परिमाणान्तात्तद्धित-लुकि' इति । 'द्विगो'रित्यनन्तरमेनत्पठित्वा एवं व्याख्यास्यामः–पूर्वेण सिद्धे नियमार्थमेतत्–'तद्धितलुकि परिमाणान्तादेव द्विगो'रिति, तेन 'आढकी'त्यत्र ङीप्, 'पञ्चाश्वे'त्यत्र च न । नन्वेवं परिमाणान्ततया 'द्विबिस्ते'त्यत्रापि ङीप्स्यादिति चेत्-ततो 'बिस्ताचितकम्बल्येभ्यो नेति', 'तद्धितलुकी'त्येव, एवञ्च पूर्वोक्त नियमात्प्राप्तो ङीबनेन निषिध्यते, द्विबिस्ते'त्यादि उक्तम् । यद्यत्र परिमाणशब्दः सङ्केतितार्थपरः स्यात्तर्हि पञ्चाश्वेत्यादाविव 'द्व्याचिता' 'द्विकम्बल्ये'त्यादावपि तेनैव नियमेन वारणा'द्विस्ताचितकम्बल्येभ्यो ने'त्युत्तरसूत्रं व्यर्थमेव स्यादतोऽत्र परिमाणपदेन परिच्छेदकमात्रग्रहणमिति—नियमेन ङीपि प्राप्ते स निषेधः सफलः । किञ्च 'कम्बलाच्च सञ्ज्ञाया'मित्येतत्सूत्रस्थभाष्यादपि 'परिच्छेदकमात्रपरः परिमाणशब्दः' इति लभ्यते, तत्र हि साध्वर्थे 'तत्र साधु'रिति यतं कृत्वा 'कम्बल्य'मिति रूपं प्रसाध्य 'कम्बलाच्चे'ति सूत्रं प्रत्याख्याय 'सञ्ज्ञाया'मिति वक्ष्यामि—इह माभूत्—कम्बलीया ऊर्णे'-त्युक्त्वा—'एतदपि नास्ति प्रयोजनं, परिमाणपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते परिमाणार्थं, परिमाणञ्च सञ्ज्ञैवे'त्युक्तम् । यद्यत्र परिमाणपदं परिच्छेदकमात्रपरं न स्यात्तर्हि कम्बल्य-मित्यत्र पारिभाषिकपरिमाणत्वाभावात् परिमाणपर्युदासाप्राप्त्या भाष्योक्तमसङ्गतमेव स्यात् ।

किञ्च 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे'त्यत्र भाष्ये–'परिमाणान्तस्यासञ्ज्ञाशाणयो'रिति सिद्धे

कम्बल्यग्रहणन्तु—'उन्मानस्य चेद्विस्तकम्बल्ययोरेवे'ति नियमार्थम्। तेन 'द्विनिष्की' सिद्धा। द्वेवर्षे भूतः, द्वाभ्यां शताभ्यां क्रीतेत्यर्थे-'द्विवर्षा', 'द्विशता', तिर्यङ्माने-'द्विहस्ता भित्ति'रित्यादौ च निषेधः सिद्धः।

'काण्डान्ता'दिति तु 'क्षेत्रे एवे'ति नियमार्थं, तेन 'द्विकाण्डी रज्जु'रित्यत्र न।

ॐ चिद्स्थिमाला ॐ

चेति निषेधः। अर्थगतस्त्रीत्वस्य शब्दे आरोपादाह—सिद्धेति। पारिभाषिकग्रहणफलमाह—द्वे इति। 'वयसि प्रे'ति सूत्रभाष्यप्रयोगमाह—द्वे वर्षेति। नन्वेवं 'काण्डान्ता'दिति व्यर्थमत आह—काण्डान्तादिति। वैपरीत्यनिरासाय तत्स्वरूपमाह—क्षेत्रे एवेति। एतेन 'काण्डान्ता'दित्यत्रत्य-तथामनोरमामनूद्योक्तं यत्—शाब्दिगा-तत्र, विस्तकम्बल्यग्रहणवैयर्थ्यापत्तेः, उक्तकोशात्तयोरुन्मानवचनत्वस्य स्वयमेव कौस्तुभे उक्तत्वात्। नच द्वौ बिस्तौ पचतीति उदाहरता न्यासकृताऽऽद्यस्य परिमाणविशेषवाचित्वमङ्गीकृतमिति मिश्रोक्त्या नाद्यवैयर्थ्यमिति वाच्यम्, एवमपि द्वितीयवैयर्थ्यतादवस्थ्यात्,

ॐ विषमपदविवृतिः ॐ

इत्सञ्ज्ञावारणायात्राप्यादिरित्यावश्यकमित्यन्ये। द्वे वर्षे भूतेति। 'तेने'ति शेषः। 'अपरिमाणे'त्यत्र परिच्छेदकमात्रस्याग्रहणेन पारिभाषिकपरिमाणस्यैव ग्रहणेन चेति तस्यार्थः। वर्षशब्दः संवत्सरवाच्यदन्तो नपुंसकः,तस्माट्ठञो 'वर्षाल्लुक् चे'ति विहितस्य 'चित्तवति नित्य'मिति लुक्। ननु बिस्त-

ॐ वरवर्णिनी ॐ

संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्यान्यत्राग्रहणार्थं, तेन 'द्विवर्षा बाले'त्यादावपरिमाणबिस्ताचितेति ङीन्निषेधः सिद्धः'इत्युक्तम्। परिमाणपदेन पारिभाषिकपरिमाणस्य ग्रहणे तु तेनैव कालपर्युदासेसिद्धे तादृशज्ञापनफलत्वोक्तिरसङ्गतैव स्यात्। परिच्छेदकमात्रस्य परिमाणपदेन ग्रहणे तु कालस्य परिमाणग्रहणेन ग्रहणे ङीबापत्तिरतो ज्ञापनेन परिमाणपदग्राह्यत्वस्य निरासे निषेधः सिध्यतीति।

परे तु—सूत्रकारैर्नन्द्वयघटितमपरिमाणबिस्तेति सूत्रं कुर्वद्भिः परिमाणपदेन सर्वतो मानमेव गृह्यते इति सूच्यते, तदनुसारेण च नागेशभट्टैरित्थं व्याख्यातमिति न—सूत्रभाष्यविरोध आपादनीयः। भाष्यमते तु नन्द्वयखण्डनादिना—'परिमाणपदेन परिच्छेदकमात्रग्रहण'मिति लभ्यते एवेत्याहुः।

यत्तु केचित्—'द्विहस्ता भित्ति'रित्यत्र भाष्यमतेऽपरिमाणान्तत्वाभावान्ङीप्, सूत्रमते तु अपरिमाणान्तत्वात्तन्निषेध इति फलभेद इति दोषमाहुस्तत्तुच्छं, तादृशानामनभिधान एव भट्टानां तात्पर्यादित्यसद्गुरुचरणा व्याचक्षते। अभिनवशारदावताराः श्रीबालशास्त्रिचरणास्तु—"-'परिमाणपदं सर्वतो मानार्थकं, बिस्तादिग्रहणञ्च नियमार्थम्, एवं 'काण्डान्ता'दित्यपि नियमार्थम्–"इति नागेशोक्तिश्चिन्त्यमेव, किन्तु अत्र शास्त्रे परिमाणपदं परिच्छेदकमात्रपरमेवञ्च सर्वतोमानप्रमाणोन्मानत्रितयपरमेव, बिस्तादिग्रहणं काण्डान्तादिति च विध्यर्थमेव।

अत एव—'असमासे निष्कादिभ्य' इति सूत्रस्थम्–'असमासग्रहणमितः प्राक्तदन्तविधिरिति ज्ञापयती'ति भाष्यं सङ्गच्छते। अन्यथा 'आर्हादगोपुच्छे'त्यत्र परिमाणपदेन भवद्रीत्या सर्वतो मानमात्रस्य ग्रहणे निष्कस्योन्मानतया त्वदुक्तपरिमाणत्वाभावेन 'नैष्किकं' 'परमनैष्किक'मित्यत्र 'आर्हादगोपुच्छे'ति ठकः प्राप्तावसमासे निष्कादिभ्य' इति सूत्रेऽसमासग्रहणं निष्कशब्दादसमासे एव ठञ्नान्यत्रेति नियमार्थतया सफलमिति—तदन्तविधिज्ञापकत्वासङ्गतिः स्पष्टैव। मम तु 'आर्हादगोपुच्छे'त्यत्रापि परिमाणपदं परिच्छेदकमात्रपरमिति निष्कस्यापरिमाणत्वाभावेन [–परिमाणतया–] तेन ठकोऽप्राप्तौ विध्यर्थमेवाऽसमासे इति—तदन्तविधिज्ञापकता तस्य सम्भवत्येव। एवञ्च 'द्विहस्ती भित्ति'रित्येव तत्र प्रयोगः, नतु द्विहस्तेति, हस्तस्य परिमाणतयाऽपरिमाणत्वाभावेनापरिमाणबिस्तेति निषेधाऽप्रवृत्त्या-'द्विगो'रिति ङीपो निर्बाधत्वादिति प्राहुरित्युमानाथप्रभृतयो व्याकुर्वते। अत्रत्यन्तत्त्वमभिनवराजलक्ष्म्यां द्रष्टव्यम्।

**द्वौ बिस्तौ पचतीति** । पचेर्द्वीभावानुकूलो व्यापारोऽप्यर्थः, अत्रोन्मानत्वाट्ठको लुक् । 'आचितः शाकटो भार'इत्युक्तेराचितः परिमाणमित्येके । 'आचितो दश भाराः स्यु'रित्युक्तेरुन्मानमेतदिति–एतदपि नियमार्थमित्यन्ये ।

**प्रमाणे इति**। षोडशहस्तप्रमाणदण्डवाचक–काण्डशब्दस्या–ऽऽयाममात्रपरिच्छेद-कत्वेन प्रमाणत्वमिति भावः ।

**पुरुषात्प्रमाणे** । पुरुषस्योर्ध्वाऽधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वात्–'उन्मानस्य चेद्बिस्तादेरेवे'ति नियमान्निषेधाप्राप्त्या नित्यं ङीपि प्राप्ते विकल्पार्थमिदम् ।

अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची। अत एव तस्य पुरुषविशेषणता नासङ्गता । जातिवचनस्यापि पुरुषशब्दस्य–'पञ्चारत्निः पुरुष' इति शुल्वसूत्रादत्र प्रमाणे इति विशेषणाल्लोकव्यवहाराच्च–परिच्छेदकवाचित्वमपि ।

**द्विपुरुषीति** । 'द्वौ पुरुषौ प्रमाणमस्या' इत्यर्थे–'तदस्य परिमाण'मिति प्रत्ययस्य 'अध्यर्द्धे'ति लुकि–उदाहरणम् । तत्र हि परिमाणशब्देनोत्तरसूत्राऽनुरोधात्परिच्छेदक-मात्रस्य ग्रहणमिति–सिद्धान्तः ।

---

**ॐ चिद्स्थिमाला ॐ**

तस्मात् परिमाणमूर्ध्वमानं च द्वयमपि परिमाणशब्देन गृह्यते, नतु प्रमाणं सङ्ख्याकालौ च। नच 'काण्डान्ता'-दिति लिङ्गात्प्रमाणमपि ग्राह्यं, तथात्वे तस्य विध्यर्थत्वापत्त्या नियमार्थत्वाभावे 'द्विकाण्डी रज्जु'रिति सिद्धावपि तुल्यन्यायतया 'द्विशमे'त्यादावपि ङीप् स्यात्, तेषां कोशतः प्रमाणवाचित्वावगमात् , स च नेष्ट इति; तदपास्तम् , उक्तयुक्तेः, शमादीनामूर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेन वस्तुन आद्ये लुगप्राप्त्या 'द्विशमद्वयसी'त्याद्येवेति बोध्यम् । अधिकमन्यतोऽवगन्तव्यम् । बिस्तशब्देनाक्ष-परिमितं सुवर्णं, तस्य प्रसिद्धपाकासम्भवादाह—**पचेरिति** । **ठक इति** । न तु ठञः ।

अस्य सार्थक्यायाह—**आचित इति** । मतान्तरमाह–**आचित इति** । अपिना–बिस्तादिसमुच्चयः । **आयाममात्रेति** । तिर्यङ्मानमात्रेत्यर्थः । तल्लक्षणे तस्यैव तेन ग्रहणं, नतून्मानस्य, 'ऊर्ध्वमानं किलोन्मान'मिति पृथगुक्तेरिति भावः । पुरुषस्य शमादिवैषम्ये तदसाङ्गत्यायाह—**पुरुषेति** । अत एव मात्रपदम् । तेन निषेधः । आदिना–आचितकम्बल्ये । **नित्यं**–'द्विगो'रित्यनेन । नन्वेवं पुरुषस्य कदापि तिर्यगवस्थितवस्त्वपरिच्छेदकत्वेनाप्रमाणत्वात् 'प्रमाणे' इति विशेषणासङ्गतिरत आह—**अत्रेति** । सामर्थ्यादिति भावः । मात्रङ्कात्स्न्र्ये । ननु पुरुषशब्दस्य जातिवाचित्वं प्रसिद्धमितीदमपि दुर्वचमत आह—**जातीति** । अत्र=सूत्रे । 'द्विपुरुषी'त्यत्र तद्धितलुकीत्यनुवृत्तिसामर्थ्याल्लुगाक्षेप इति सकलग्रन्था-साङ्गत्यायाह—**द्विपुरुषीतीति** । प्रत्ययस्य=ठकष्ठञो वा । ननु परिमाणग्रहणात्तस्यैवाप्राप्तिरत आह—**तत्र हीति** । 'तदस्य'सूत्रे हीत्यर्थः । **उत्तरेति** । 'सङ्ख्यायाः सञ्ज्ञासङ्घे'ति सूत्रेत्यर्थः । अत एव

**ॐ विषमपदविवृतिः ॐ**

शब्दस्येयत्ताविशिष्टसुवर्णपरत्वात्तस्य च विक्लृत्त्यसम्भवा'त्पचती'त्यनुपपन्नमित्याशङ्क्याह—**पचेरिति** ।

**अत्रोन्मानत्वादिति** । ननु–'आर्हादगोपुच्छे'ति सूत्रे परिमाणशब्देन पारिभाषिकपरिमाणग्रहणेऽपि उन्मानस्यापि ग्रहणमिति स्वेन वक्ष्यमाणत्वादसङ्गतमेतदिति चेन्न,नव्यविवरणे 'आर्हादि'ति सूत्रे परिमाणशब्देनोन्मानस्य न ग्रहणमिति पक्षान्तरस्याप्युक्तत्वेन तद्रीत्यैतद्ग्रन्थसत्त्वात् । **पुरुषस्येति** । 'पञ्चारत्निः पुरुष' इति वचनादिति भावः। उन्मानशब्देन तुलायामारोप्य यन्मीयते तत् ,ऊर्ध्वाधर-दिगवस्थितवस्तु परिच्छेदकं चेत्युभयमपि गृह्यत इति भावः । **लोकव्यवहारादिति** । 'द्विपुरुषी परिखे'ति लोकव्यवहारादित्यर्थः। **उत्तरसूत्रानुरोधादिति**। 'सङ्ख्यायाः सञ्ज्ञासङ्घे'त्युत्तरसूत्रानुरोधा-

**ऊधसो**। समासान्तोऽयम्। तत्र 'स्त्रिया'मित्युपसङ्ख्यानादाह—**स्त्रियामिति**। 'बहुव्रीहौ सक्थ्यक्ष्णो'रित्यतो 'बहुव्रीहा'वित्यनुवर्त्तते। ङित्वाच्चास्याऽदेशत्वम्।

**डाब्ङीब्निषेधेष्विति**। समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या पूर्वमनङ्येषां प्राप्तिः। 'अन उपधालोपिन'इत्यत्रास्यानुवृत्त्या ङीपोऽपि बाधः। एतेन—मध्येऽपवादन्याया-ड्डाब्निषेधयोरिदं बाधकमित्यपास्तमिति भावः। **ङीपिति**। ङीपि तु कुण्डोधन्शब्दे पूर्वपद-प्रकृतिस्वरेण धकाराकारस्यानुदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्याऽन्तोदात्तत्वं न सिद्ध्येत्।

कुण्डमिवोधो यस्या इति विग्रहः। बहुव्रीहेः किम्?—ऊधः प्राप्ता प्राप्तोधाः, 'प्राप्तापन्ने' चे'ति समासः। **अव्ययग्रहणाननुवृत्तेरिति**। अस्वरितत्वादिति भावः।

**निषेधावपीति**। अपिना 'अन उपधे'ति ङीप्, अन्ग्रहणेऽनर्थकस्यापि ग्रहणात्।

**द्विहायनी बालेति**। 'द्विहायनी द्विवर्षा गौ'रिति प्रायोवाद इत्येके।

'बाले'त्यस्य गौरित्यर्थ इत्यन्ये।

**नित्यं सञ्ज्ञा**। ननु सञ्ज्ञाशब्दा नियतानुपूर्वीका अनादयः, छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवात् 'अन उपधे'त्येव सिद्धे इदं व्यर्थमिति चेत्—उत्तरार्थत्वात्। योगविभागस्तु व्यर्थ एव।—तद्ध्वनयँल्लक्षणान्तर-सिद्धमुदाहरति—**वेदे पञ्चदाम्नीति**। क्वचित्तु 'शतमूर्ध्नी'ति पाठः।

---

❀ चिदस्थिमाला ❀

सङ्ख्यायास्तत्रानेन विशेषणे षष्टिर्जीवितपरिमाणमस्य स षाष्टिक इति सिद्धम्। मात्रं—कात्स्न्यें। समासान्त-प्रकरणस्थत्वेऽपि अनङो न प्रत्ययत्वं, ङित्ववैयर्थ्यापत्तेरिति प्राचीनासाङ्गत्याह—**समेति**।—कबपवादः। अत एव स न। अस्याऽस्त्यधिकारस्थत्वादाह—**तत्रेति**। चतुर्थस्थेऽनङ्विधावित्यर्थः। प्रत्ययत्वेऽप्यविरोधा-दाह—**ङित्वादिति**। ननु अनङेवादौ कथमत आह—**समासान्तेति**। ननु मध्येऽपवादन्यायेनेदं डाब्निषेधयोरेव बाधकं, नत्वन उपेति ङीपः, तस्य परत्वादत आह—**अन उपेति**। **पूर्वपदेति**। 'बहुव्रीहित्व-प्रयुक्ते'त्यादिः। 'कुण्डोध्नी'त्यत्राह—**कुण्डमिति**। भाष्यकृताऽननुवर्तितत्वादिति दण्ड्यसाङ्गत्यायाह—**अस्वरितेति**। नन्वतोऽनर्थकत्वमत आह—**अनिति**। मूलानुरोधेन कोशस्यान्यथानयनमाह—**द्वीति**।

कोशानुरोधेन मूलस्यान्यथानयनमाह—**बालेत्यस्येति**। वेदेऽपि न फलमित्याह—**छन्दसि चेति**। छन्दस्यपीत्यर्थः। तत्र=उभयत्र। नन्वेवं योगविभागो व्यर्थोऽत आह—**योगेति**। **लक्षणान्तरेति**। 'दामहायनान्ताच्चे'तीत्यर्थः। 'एतेनायमपपाठः, 'दामे'त्यनेन सिद्धत्वा'दिति दण्डयुक्तम्, 'एतच्च क्वचित्पठ्यमानं

❀ विषमपदविवृतिः ❀

दित्यर्थः। सङ्ख्या हि न पारिभाषिकपरिमाणम्। **बहुव्रीहेरूधसः**। नन्वनङ्ङीषोः समानविषय-कत्वेन पर्यायेण तयोः प्रवृत्त्या ङीप्पक्षे नानङिति,—कथं 'डाब्ङीब्निषेधेषु प्राप्ते'ष्विति. ग्रन्थः सङ्गच्छतामित्यत आह—**समासान्तानामिति**। तथा च पूर्वमनङ्, पश्चान्ङीषिति नानयोः पर्याय इति—'डाब्ङी'विति मूलं युक्तमिति भावः। **बहुव्रीहेः किमिति**। ऊधश्शब्दस्य नपुंसकत्वात्केवला-त्तदन्तादुत्तरपदार्थप्रधानात्तत्पुरुषाच्च न ङीष्। 'अत्यूधः'शब्दस्य स्त्रियां वृत्तावपि ततः 'सङ्ख्या-व्ययादे'रिति ङीपा भवितव्यं, तथा च 'बहुव्रीहे'रित्यनुक्तावपि त एत एव पर्यवस्यन्तीति भावः। **प्राप्तोधा इति**। 'अत्यूधा इती'ति तूत्तरस्थबहुव्रीहिग्रहणप्रत्युदाहरणमित्युपेक्षितम्। यद्यपि 'ध्नो ङी'षिति

**केवलमामक** । अस्मच्छब्दादाणि 'तवकममकावेकवचने' इति ममकादेशः । भागशब्दात्पुंल्लिङ्गात्स्वार्थे धेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्त्वात्स्त्रीत्वम् ।—'पाप'शब्दोऽर्शआद्यचा तद्वति वर्त्तमानः स्त्रियाम् ।

'अपरः'—पवर्गमध्यो घृतादित्वादन्तोदात्तः, 'उतापरं यक्षि देवा'नित्यादौ 'उतापरीभ्यो मघवे'त्यादौ चान्तोदात्तपाठात् । 'पूर्वमनयन्नापर'मित्यादौ पठ्यमानमाद्युदात्तत्वमपि वृषादित्वात् । 'अपरा पूर्वामभ्येती'त्यादावजादिपाठाट्टाबपि ।

आर्येण कृतेति प्राक् सुबुत्पत्तेः समासेऽदन्तत्वम् । 'भषज'शब्दोऽव्युत्पन्न औषधे रूढः । भिषज इदमित्याणि भैषजशब्दोऽपि तत्र । 'सुमङ्गलीरियं वधू'रिति तु मत्वर्थीये 'ई'प्रत्यये बोध्यम् ।

**प्रकृतिभागाविति** । नुक्सन्नियोगेनेति भावः । **मतुबिति** । वत्वन्तु 'मादुपधाया'इति सिद्धम् । **यज्ञेन सम्बन्ध इति** । स्त्रिया इत्यर्थः । संयोगपदं—सम्बन्धोपलक्षणं, सम्बन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वं, तदाह—**तत्कर्तृकेति** ।

**विभाषा** । 'सह'शब्दो विद्यमानवाची, 'पूर्व'शब्दोऽवयववाची, व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवादव्यभिचाराच्च, पतिशब्देन तदन्तं गृह्यते

---

**ॐ चिदस्थिमाला ॐ**

पूर्वेणैव सिद्धमिति समानमूर्ध्नीत्युदाहार्य'मिति शास्त्र्युक्तञ्चापास्तम् । लक्ष्यप्रक्रिया आह—**अस्मदिति** । **धेये**=धेय प्रत्यये । 'अभेदोपचारा'दिति दण्डयुक्तेरसाङ्गत्यायाह—**अर्श आद्यचेति** । **मध्य इति** । न दन्त्योष्ठ्यमध्य इत्यर्थः । तत्र ङीप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमेवेत्याह—**उतापरीभ्य इति** । अन्यथा 'स्काङ्गशिटा'मित्याद्युदात्तत्वे ङीपि तदसङ्गतिः स्पष्टैव । नन्वेवं लक्ष्यान्तरविरोधोऽत आह—**पूर्वमिति** । भिषज इयमित्यणि आदिवृद्धेरपवादोऽस्मादेव निपातनादेकार इति दण्ड्यसाङ्गत्यायाह—**तत्रेति** । औषधे रूढ इत्यर्थः । ततोऽणन्तत्वात्स्त्रियां 'भैषजी'त्येव । **प्रत्यये इति** । 'छन्दसीवनिपा'वित्यनेन । अनतिप्रसङ्गायाह—**लुगिति** । पत्युरन्वयाभ्रमायाह—**स्त्रिया इति** । मुख्यसंयोगासम्भवात्तथा व्याख्यातमित्याशयेनाह—**संयोगेति** । **विद्येति** । न तुल्ययोगवाची, पूर्वस्य नकारादेशप्रसङ्गात् । **अवयवेति** । न व्यवस्थावाची, वाक्येऽतिप्रसङ्गात् । एवञ्च सहविद्यमानः पूर्वावयवो यस्मिन्प्रातिपदिके तस्येति तदर्थः । तत्र=तथार्थे सति ।

ननु 'प'रूपावयव एव पूर्वशब्देन गृह्यतामत आह—**अव्यभीति** । तथा च 'सपूर्वे'ति विशेषणं व्यर्थमेव

**ॐ विषमपदविवृतिः ॐ**

सुवचं, तथाप्युत्तरार्थं बहुव्रीहिग्रहणम् । **लक्षणान्तरसिद्धमिति** । 'दामहायनान्ताच्चे'ति सूत्रसिद्धमित्यर्थः । **घृतादित्वादिति** । अयं विचारः प्रासङ्गिकः । ननु 'सुमङ्गली'रित्यत्र हल्ङ्यादिसूत्रेण लोपेन भवितव्यमित्याशङ्क्याह—**ईप्रत्यय इति** । 'छन्दसीवनिपा'वित्यनेन । **विभाषासपू** । यद्यप्यमहत्पूर्वग्रहणेन 'स्त्रिया'मित्यधिकारे तदन्तविधिज्ञापनेन 'सपूर्वस्ये'त्यनुक्तावपि तस्य नत्वं सिध्यति, तथापि असति तस्मिन्ननुपसर्जनादिति पत्युर्विशेषणं स्यात्तस्य गृह्यमाणविशेषणत्वनियमात् , तथाच 'दृढपत्नी'ति बहुव्रीहौ न स्यादतः सपूर्वग्रहणम् ।'सपूर्वस्ये'त्युक्तौ तु तस्यैव विशेषणं—गृह्यमाणत्वात् । फलान्तरमपि मूले स्पष्टीभविष्यति । किं पूर्वावयवोऽर्थवानेव उतानर्थकोपि नाद्य इत्याह—**विद्यमानपूर्वावयवत्वेति** । नान्त्य इत्याह—**अव्यभिचाराच्चेति** । अमहत्पूर्वग्रहणेन 'ग्रहणवते'ति

इत्याह—**पतिशब्दान्तस्येत्यादि** । **न पत्युरिति** । 'सपूर्वस्ये'त्यनेन पत्यन्तस्य गृह्यमाणत्वादिति भावः । 'बहवो वृषलपतयो यस्या' इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसम्बन्धः' इत्यन्ये । 'बहुव्रीहा'वित्युपसर्जनोपलक्षणं, तेन पतिमतिक्रान्ता—अतिपत्नीत्यपि ।

**व्यस्ते इति** । 'विभाषा सपूर्वस्ये'त्यत्र 'यज्ञसंयोगे' इति न सम्बद्ध्यते, भाष्ये—'कथं तुषजकस्य पत्नी'ति व्यस्ते एव प्रश्नात् । वृषलत्वेन यज्ञसंयोगाभावात्पूर्वेणाऽप्राप्तेः, सपूर्वत्वाऽभावाच्चैतदप्राप्तेरिति भावः ।

**उपचारादिति** । पाणिग्रहणाश्रयणादिति भावः । **यद्वेति** । इदं प्रौढ्या, तत्प्रकृतिककर्त्तृक्विपि दृढमानाभावात् । पूर्वसूत्रे 'यज्ञसंयोगे' इति तु 'वृषलस्य पतिः स्त्री'ति प्रयोगसाधनार्थम् । **सपूर्वस्य किमिति** । अवयववाची पूर्वशब्दः किमर्थ इति प्रश्नः ।

**गवां पतिरिति** । स्वामिनीत्यर्थः। **निपात्यते इति** । तेन चोदात्तसादेशस्यैव प्रवृत्त्या

---

### ❀ चिद्स्थिमाला ❀

स्यादिति भावः । नन्वेवमत्र प्रकरणे तद्गृह्यमाणविशेषणमिति सिद्धान्तभङ्गोऽत आह—**स पूर्वेति** ।

मूलादि खण्डयति—**बहव इति** । मौलन्यूनतां परिहरति—**बहुव्रीहाविति** । तन्मात्रेत्यर्थः ।

ननु 'यज्ञसंयोगे' इत्यस्य सम्बन्धेन 'वृषलपत्नी'ति षष्ठीतत्पुरुषेऽप्यनुपपत्तिसत्त्वाद्व्यस्ते इति विशिष्योपादानं व्यर्थमत आह—**विभाषेति** । अत एवाह—**सपूर्वत्वेति** । मूलादि खण्डयति—**इदमिति** । नन्वेवं पूर्वत्र 'यज्ञसंयोगे'इति किमर्थमत आह—**पूर्वेति** ।

नन्वेवमपि तस्योदात्तत्वे न मानमितीष्टस्वरासिद्धिरत आह—**तेन चोदेति** । निपातनेन चेत्यर्थः । अपिना—तस्यैव समुच्चयः । एतेन विशिष्टपाठसामर्थ्यात् 'सपत्नीपाचिके'त्यादौ पुंवत्त्वं नेत्यपास्तम् ।

### ❀ सदाशिवभट्टीयम् ❀

**विभाषा । बहवो वृषलपतय इति** । नचात्र प्रयोजनादनुपसर्ज्जनादिति ज्ञापनाऽसङ्गतिरिति वाच्यम्, अत्रैव कर्त्तव्ये तत्र करणात् । नचात्र विशिष्टस्याऽनुपसर्जनत्वमेव, सपूर्वपतिशब्दत्वाभावात् । पतिशब्देन समासकाले बहुवृषलेत्यस्याऽनवयवत्वात् । 'तदन्तस्ये'तिनासूत्रि, मूलोक्ते दोषात् । 'समासस्ये'ति तु नासूत्रि, बहुच्पूर्वेऽनापत्तेः । बहुवृषलपतौ तु न दोषः, प्रत्यासत्त्या पतिशब्देन केवलेन जातस्य समासस्यानुपसर्जनस्य ग्रहणात् । 'वृत्ते'रिति तु नोक्तं, पतिरिव मनुष्यः—पतिरित्यत्रापत्तेः, व्यपदेशिवत्त्वेन सपूर्वत्वात् ।

### ❀ विषमपदविवृतिः ❀

निषेधस्यात्र प्रकरणे प्रवृत्त्यभावज्ञापनात्प्रत्ययविधानाभावाच्चेत्यपि बोध्यम् । **इत्यन्ये इति** । वस्तुतस्तु 'बहुवृषलपति'रिति बहुव्रीहेरपि पत्यन्तत्वात्तस्य चानुपसर्जनत्वादत्रापि नकारो भवत्येव । ननु मूले 'व्यस्ते कथ'मित्युक्त्या समस्ते 'वृषलपत्नी'त्यादौ नत्वानुपपत्तिशङ्का नेति लभ्यते, तच्चासङ्गतं, 'विभाषे'ति सूत्रे 'यज्ञसंयोगे'इत्यनुवृत्त्या वृषलस्य यज्ञानधिकारेण तत्राप्यनुपपत्तिशङ्कातादवस्थ्यादित्याशङ्क्याह—**न सम्बध्यत इति** । अत्र प्रमाणमाह—**भाष्ये इति** । **वृषलस्य पतिरिति** । वृषलकर्तृकसुकृतस्वामिनीत्यर्थः । ननु 'सपूर्वस्य किं? गवां पति'रिति मूलमसङ्गतम्, सपूर्वस्येत्युक्तावप्येतद्दोषतादवस्थ्यात्, 'गवा'मित्यस्य पूर्वोच्चारितस्य सत्त्वादित्याशङ्क्याह—**अवयववाचीति** । तेन=निपातेन ।

सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम् । किञ्च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीब्नकारविशिष्टोच्चारणम् । अत एव समानस्वामिकदासीभूम्यादौ 'सपति'-रित्येव । समानत्वं चैकस्यैव तत्तत्पत्नीसम्बन्धेन भेदमारोप्य बोध्यम् । मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोग इष्यते । **त्रिसूत्रीति** । व्याख्यानादिति भावः । **सन्नियोगशिष्ट इति** । तेन तदभावे ङीबपि नेति भावः ।

'ङित्वान्ताना'मित्यत्राकार उच्चारणार्थः। 'नितन्ताना'मिति पाठे जश्त्वाभावः सौत्रः।

**त्रीण्येतानीति** । अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तमनुपसर्जनमेव । 'अनुपसर्जना'दिति चात्र तदन्तविशेषणम् । अत एव गृह्यवृत्तिकृता नारायणेनात्र बहुव्रीहिं कृत्वाऽनेन ङीवित्युक्तं, तदनुसारेण चेदम् ।

❀ चिदस्थिमाला ❀

नन्वेवं सपत्न्यादिष्विवत्येव युक्तमत आह—**किञ्चेति** । ननु 'समान-एकवीर-पिण्डपुत्र-भ्रातृदास-छन्दसीति समानादिगणपाठसत्त्वेन समानपत्न्यादिष्विति युक्तमत आह—**समानस्वामीति** । विशिष्टोच्चारणादिति भावः । रूढेः फलान्तरमप्याह—**समानत्वञ्चेति** । यत्तु '—'पूतक्रत्वादीनां पुंयोगप्रकरणे वचन'मिति वार्तिके बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसन्नमिति—' **शास्त्री**, तन्न; तन्न्यायस्येहानाश्रयणात् । तद्ध्वनयन्नाह—**व्याख्यानादिति** । तस्य भाष्यीयोदाहरणमूलकादित्यर्थः । 'सन्नियोगे'ति न्यायप्रवृत्तेराह—**तेनेति** । **तदन्तमिति** । 'चित्रं किर्मीरे'ति कोशादेतशब्दस्य चित्रवाचकत्वेऽपि तत एव [ वृत्तिप्रामाण्यादेव ] शुक्लपर्यायत्वमिति भावः । मूलादिसर्वोक्तिं खण्डयति

❀ सदाशिवभट्टीयम् ❀

सपूर्वग्रहणन्तु वृत्त्यभावे चरितार्थम्। **त्रीण्येति** । 'कुम्भकपाललोहिनी'त्यत्र न प्राप्नोत्यत इयं व्याख्या—**गृह्यमाणविशेषणमिति** । त्रिष्वेनीत्यर्थो बोध्यः । सपत्नीति निपातात् स्त्रीविशेष एवेत्यर्थः ।

❀ वरवर्णिनी ❀

**त्र्येण्येति**। अयमत्र वर्तुलितोऽर्थः—'त्र्येण्ये'त्यत्र त्रीणि एतानि यस्याः सेति विग्रहे 'वर्णादनुदात्ता'दिति ङीप् । वृत्त्यादिप्रामाण्येन प्रकृते—अनुवृत्तस्यानुपसर्जनादित्यस्य तदन्तविशेषणतया एतशब्दस्योपसर्जनत्वेऽपि त्र्येतशब्दस्यातथात्वेन तत्प्रवृत्तेर्निष्प्रत्यूहत्वात । 'एनी'त्यादौ तु तदन्तत्वाभावेऽपि व्यपदेशिवद्भावेन ङीप्, नादेशश्चेति—प्राञ्चः । नव्यास्तु—'अनुपसर्जना'दित्यस्य गृह्यमाणविशेषणतैव, तदन्तविशेषणत्वे तु ज्ञापितेऽपि तदन्तविधौ 'बहुकुरुचरे'त्यादौ टिदन्तस्य बहुव्रीहेरनुपसर्जनतया ङीपो दुर्वारत्वेनानुपसर्जनादित्यस्य वैयर्थ्यं स्पष्टमेव । 'अनुपसर्जना'दित्यस्य गृह्यमाणविशेषणत्वादेव च—'शस्त्रीश्यामा' इत्यत्र शस्त्रीश्यामेवेत्युपमितसमासे वृत्त्या देवदत्तादेर्लाभेन श्यामाशब्दस्य देवदत्तनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतया इतरार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपलौकिकोपसर्जनत्वाद्गोस्त्रियोरिति ह्रस्वत्वे रूपसिद्धावपि कुम्भकपालं लोहितमिव—'कुम्भकपाललोहिनी'त्यत्र 'वर्णादनुदात्ते'ति ङीब्न स्यादित्युक्तमुपमानानीति सूत्रे भाष्ये । 'अनुपसर्जना'दित्यस्य तदन्तविशेषणत्वे तु 'कुम्भकपाललोहिते'त्यस्यानुपसर्जनतया ङीप्स्यादेवेति—भाष्योक्तमसङ्गतं स्यात्। गृह्यमाणविशेषणत्ववादिवो मम तु—गृह्यमाणस्य 'लोहिते'त्यस्य सति समासे समासार्थोपमेयविशेषणतयोपसर्जनत्वान्ङीब्न स्यादिति भाष्योक्तम्—'ईकारो न प्राप्नोती'ति सूपपद्यत एव । समासात्प्राक् न ङीपः प्राप्तिः, लोहितशब्दस्य तदानीं क्लीबत्वात् , समासे तु समासार्थभूतोपमेयलिङ्गेन स्त्रीलिङ्गत्वान्ङीपः प्रसक्तिर्यद्यप्यस्ति, तथापि तत्रोपसर्जनत्वाल्लोहितशब्दादीकारो न प्राप्नोतीति दोषः—'उपमेयं समासवाच्य'मिति पक्षे भाष्योक्तः सङ्गच्छते,

एवञ्च 'अनुपसर्जना'दिति गृह्यमाणविशेषणमेव, 'त्र्येण्ये'त्यत्र तु पूर्वम्—'एनी'शब्दं संसाध्य पश्चात्त्रिशब्देन 'सुप्सुपे'ति समासे त्रिषु एनी—त्र्येणी, तया त्र्येण्येति साध्यमित्याहुः ।

श्रीगुरवस्तु—त्रिष्वेनीत्येवं सप्तमीसमासे समस्यमानपदार्थयोः परस्परं सामर्थ्याभावादेनीशब्दस्य

परे तु—'उपमानानी'तिसूत्रस्थभाष्यस्वरसात्, 'टिड्ढाण'मित्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्तत्वाच्चात्रापि तथैवोचितम्। तत्र हि—'शस्त्रीश्यामेत्यादौ श्यामाशब्दः शस्त्र्यामेव, उपमेयन्तु समासवाच्य'मिति पक्षे—'शस्त्रीश्यामो देवदत्त'इत्यत्र ह्रस्वत्वन्न सिद्ध्यति, यद्युपसर्जनस्येति ह्रस्वत्वं, तदा 'कुम्भकपाललोहिनी'त्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोती'त्युक्तम्। 'श्येण्ये'त्यस्य त्रिषु स्थानेषु एन्येत्यर्थो बोध्य इत्याहुः।

आर्षमत्र णत्वम्। वर्णात्किं ?—प्रकृता। 'गतिरनन्तर' इत्याद्युदात्तः। **अन्तोदात्त इति**। 'श्वेतो वाजी जायते'इत्यादौ तथा पाठादिति भावः। 'छन्दसि क्न'मिति नादेशापवादः, तेन 'उत्सर्गसमानदेशा अपवादा' इति न्यायात्तस्यानित्यत्वं, ङीप्संनियोगशिष्टत्वञ्चास्य बोध्यम्। 'विशुद्धिवाची'ति पाठे—तत्प्रवृत्तिनिमित्तक इत्यर्थः।

**अन्यतो**। सन्निधानाद्व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनाऽन्वय इत्याह—**तोपधभिन्नादिति**। वर्णात्किं ? खट्वा।—आद्युदात्तः।

## ॐ चिद्रस्थिमाला ॐ

**परेत्विति**। आचनाह—**तत्र हीति**। 'उपमाने'ति सूत्रे इत्यर्थः। **त्रिष्विति**। सुप्सुपेति समासः। सकलग्रन्थातात्पर्यायाह—**आर्षमिति**। अनतिप्रसङ्गायाह—**नादेशेति**। नकारादेश इत्यर्थः। **तत्प्रवृत्तीति**। 'त्रीणि यस्यावदातानि विद्या योनिश्च कर्म चे'त्यादौ तथैव प्रतीतेः, 'दैप्-शोधने' इति स्मरणाच्च। 'अवदातः सित' इति कोशे तु विशुद्धत्वनापन्यर्थादुपनिबद्ध इति भावः। 'उपमानानी'ति सूत्रे भाष्ये-'तित्तिरिकल्माषी'ति ङीबन्तोदाहरणमूलकनाह—**व्याख्येति**। अव्याङ्गविकलत्वायाह—**आद्युदात्त इति**।

## ॐ वरवर्णिनी ॐ

विद्यमानैन्यां लक्षणा वक्तव्या। किञ्चाऽगतिकगतिना'सुप्सुपे'ति समासेनापि न बहुव्रीह्यर्थलाभः।एवञ्चात्र तदन्तविशेषणमेवानुपसर्जनादित्यास्थेयमतो 'श्येण्ये'ति वृत्तिरीत्या बहुव्रीहिणैव साध्यम्। 'शस्त्रीश्यामो देवदत्त' इत्यत्र तु घन इव श्याम इतिवत्पूर्वपदस्य तत्सदृशे लक्षणा, उत्तरपदेन चोपमेयार्थस्य बोध इति श्यामशब्दस्योपमेयदेवदत्तबोधकतया पुंस्त्वेन टापः प्रसङ्ग एव नेति-'ह्रस्वत्वं न प्राप्नोती'त्यादि भाष्यमेकदेशिनोरुक्तिप्रत्युक्तिभूतमिति न तद्गृह्यमाणविशेषणत्वसाधकम्। किञ्च 'गोस्त्रियो'रित्यत्र च 'एकविभक्तिचापूर्व'इतिशास्त्रीयोपसर्जनस्यैव ग्रहणेन श्यामाशब्दस्यो'पमानानि सामान्यवचनै'रित्यत्र तृतीयानिर्दिष्टतयाऽनियतविभक्तिकतया च तादृशोपसर्जनत्वाभावाद्गोस्त्रियोरित्यस्याप्राप्त्या भाष्यमेकदेश्युक्तित्वेव नेयम्। 'गोस्त्रियो'रित्यत्र लौकिकोपसर्जनग्रहणे तु इच्छामयजन्तप्रकृतिककर्तृक्विबन्तकुमारीशब्देऽपि ह्रस्वापत्तिरतस्तत्र शास्त्रीयमेवोपसर्जनं ग्राह्यमिति सिद्धान्त आस्थेय एव।

तस्मादत्र भाष्ये-'गोस्त्रियो'रित्यत्र लौकिकोपसर्जनग्रहणमित्यभिमानेन भाष्ये यथा-'यद्युपसर्जनस्येतिह्रस्वत्व'मित्युक्तिस्तथैव—'अनुपसर्जनलक्षण ईकारो न प्राप्नोती'त्युक्तिरपि—'अनुपसर्जनादित्यस्य तदन्तविशेषणत्वमत्रे'ति सिद्धान्तमबुद्ध्वैव प्रवृत्तेति-न साऽनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वसाधिका। 'बहुकुरुचरे'त्याद्यर्थं 'टिड्ढे'त्यादावनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वेऽपि प्रकृतेऽपि तथैव स्वीकार्यमिति न नियमः, शब्दानां सम्बन्धस्यानेकरूपत्वात्। अत एव नीलशब्दः क्वचिन्नीलं घटं, क्वचिन्नीलं गुणं, 'नीले'त्येतत्स्वरूपञ्च स्वाभाव्यात्प्रतिपादयति। एवञ्च प्राचोक्तमेव युक्तमित्याहुरिति पण्डितैकशेष शेषावतारश्रीत्रिपाठिपादानामन्तेवसन्तो गौडा व्यावर्णयन्ति।

**नर्त्तकीति**। शिल्पिनि ष्वुन्। गौरशब्दो वर्णवाच्यप्यन्तोदात्त इतीह पाठः। **अनड्वाहीति**। 'आमनडुहः स्त्रियां वे'ति वचनात्पक्षे—आम्।

**सूर्येति**। **स चेद्य इति**। 'सूर्यादीनामङ्गानामुपधाया' इति व्याख्याने तु 'सौरी बलाके'ति न सिद्ध्येत्। सूर्येणैकदिगित्यणन्तान्ङीपि अणन्तमङ्गं न सूर्यशब्द इति तदसिद्धिः। वचनन्तु—'सूरी कुन्ती'त्यत्र चरितार्थम्। अणो लोपेऽप्याभीयत्वेन सोऽसिद्धः, अण्निमित्तकाऽल्लोपस्तु व्याश्रयत्वान्नाऽसिद्ध इति 'य'स्योपधात्वम्, उपधाग्रहणादेव भाधिकारमभिव्याप्याऽऽभीयासिद्धत्वमिति बोद्ध्यम्। 'य'ग्रहणन्तूत्तरार्थम्। 'ङ्या'मिति निर्देशात्सप्तम्येकवचनस्याऽग्रहणम्।

**नक्षत्राणीति**। नक्षत्रवाचकाद्योऽण् तत्रेत्यर्थः। तेन तिष्येण युक्तं—'तैषमहः', तिष्ये भवस्तैष इत्यादि सिद्धम। **मातरि षिच्चेति**।—पितामहीसिद्ध्यर्थमिदम्।

**दंष्ट्रेति**। दंशेः 'दाम्नीशसे'ति करणे ष्ट्रन्। अयमजादिषु पठ्यते।'—गौरादिषु मातामहशब्दपाठोऽनार्ष' इत्यन्ये।

❀ चिदस्थिमाला ❀

**ष्वुनिति**। इति ष्वुनित्यर्थः। षित्वस्यावयवेऽचरितार्थत्वात् प्रातिपदिके तत्कार्यमिति भावः। **अन्तोदात्त इति**। 'सरो गौरे यथा पिबे'त्यत्र फिट्स्वरेण तत्त्वस्य दर्शनादिति भावः। तथाव्याख्यानफलमाह—**सूर्येति**। तामेवोपपादयति—**सूर्येणेति**। अत्राङ्गत्वं ङीनिरूपितं बोध्यम्। इत एव भस्येत्यनुवृत्तमपि अङ्गस्य समानाधिकरणमुपधाया व्यधिकरणं विशेषणं, न सूर्यादीनामिति बोध्यमिति केचित्। ननु वचनसामर्थ्यात्स्यादत आह—**वचनं त्विति**। नन्वणो लोपे 'एकदेशे'तिन्यायेन सूर्यशब्दस्याङ्गत्वमस्त्येवात आह—**अण इति**।· ङीनिमित्तके इत्यर्थः। अत एवोपधात्वम्। नन्वेवमप्यण्निमित्तकाल्लोपस्यापि तेनैवासिद्धत्वेन यस्य नोपधात्वमत आह—**अण्नीति**। **उपधेति**। अन्यथा यान्तानां सूर्यादीनां लोपो ङ्यादावित्यर्थेनैवैकदेशविकृतन्यायेन 'सौरी'त्यादिसिद्धौ सूर्यशब्दस्य ङीनिरूपिताङ्गत्वाभावादेव 'सूर्यचरी'त्यादि व्यावृत्ता च—तद्द्वैयर्थ्यं स्पष्टमेव। एतेषां तत्त्वस्य तदन्यत्राभावादाह—**यग्रहणेति**। यत्तु 'नक्षत्रशब्दमुच्चार्यविहितेऽणीत्यर्थ' इति कश्चित्। 'नक्षत्रसम्बन्धी योऽण्—'नक्षत्रेण' 'सन्धिवेले'ति सूत्रद्वयविहितस्तस्मिन्नित्यर्थ' इति **दण्डी च**, तत्रेति ध्वनयन्नाह—**नक्षत्रेति**। आदिना तिष्यस्येदं 'तैषं' तिष्यो देवता अस्य 'तैष'मित्यादि। प्रत्युदाहरणं तु तिष्यसञ्ज्ञकस्येदं तैष्यमित्यादि। ननु मातामहशब्दस्य गौरादिपाठादेव सिद्धे 'पितृव्यमातुले'ति सूत्रस्थमिदं वार्तिकं व्यर्थमत आह—**पितेति**। तत्पाठस्तत्रानार्ष इति भावः। मूलादि खण्डयति—**गौरादिष्विति**। 'मातामहशब्दे'ति पाठः।

❀ सदाशिवभट्टीयम् ❀

**सूर्य**। सूर्यादीनामङ्गानामित्यर्थे सौरी न स्यात्। **यग्रहणमिति**। सूर्यमानयतीति सूर्याणीत्यत्रैकादेशे आकारस्य सूर्यसम्बन्धित्वादुपधात्वाच्च लोपः स्यादित्यावश्यकमिति केचित्। उपधात्वाभावान्नेत्यपरे।

**ङ्यामिति**। 'विसारिणो मत्स्ये' इति निर्देशादसन्देहाय ङावित्येव वक्तव्यत्वाद्वा सप्तम्या अग्रहणम्। **नक्षत्रवाचकादिति**। न चामत्रसामान्यपरत्वेनानुगतत्वान्न जातित्वमित्यप्राप्तङीष एव विधानं न नियम इति

❀ विषमपदविवृतिः ❀

**तत्रेत्यर्थ इति**। तत्र सूत्रे इत्यर्थः। **तेनेति**। तत्र सर्वत्रेत्यङ्गीकारेणेत्यर्थः। आद्ये 'नक्षत्रेण युक्त' इत्यण्। द्वितीये 'सन्धिवेले'त्यण। 'तस्य विकार' इत्यणि तु नेदम्, प्रतिपदोक्तपरिभाषया नक्षत्र-

**जानपदीति** । जनपदे भवेत्यर्थः । उत्सादित्वादञ् । ङीष्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थं वचनम् । वृत्तिः—अनुच्छेद्या जीविका । **अमत्रय इति** । तथा च क्रियाशब्दोऽयमिति भावः । **अमत्रे**—कमण्डलुरूपे । 'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमा'निति मेदिनीकोशात्स तत्र नित्यस्त्रीलिङ्ग इति भावः ।

यदि तु—'पिठरे तु न ना कुण्ड'मिति विश्वकोशे तस्य नपुंसकत्वमप्युक्तं, पिठराऽमत्रशब्दौ च पर्यायौ ।—'पिठरं स्थाल्युखा कुण्ड'मित्यमरे नपुंसकत्वमात्रोक्तिस्त्वव-युत्याऽनुवाद इत्युच्यते,—तदाऽनेकविधसंस्थानेषु अमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तो ङीषिति बोद्धयम् । 'स्त्रीविषयत्वा'दित्युपलक्षणमिति बहवः ।

कमण्डलुसंस्थानस्यानुगतत्वात्तद्रूपाऽमत्रवाचिनो जातित्वमप्यस्ति, सूत्रन्तु नियमार्थमेव, 'अमृते जारजायां कुण्डेत्येवे'त्यपरे ।

आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीषो विधिः । 'आवपन'मिति सामान्ये नपुंसकम् ।

**गुणयोगादिति** । गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः । विधित्वानुरोधाद्गौणे एवास्य प्रवृत्तिः ।

---

ॐ चिदस्थिमाला ॐ

**कुण्डीति** । 'अस्त्री कमण्डलु' कुण्डी'त्यमरोऽप्यनुसन्धेयः । अमरस्य विश्वविरोधं परिहरति—**पिठरमिति** । **अभावादिति** । अनुगतसंस्थानव्यङ्ग्यत्वाभावादिति भावः । नन्वेवं मूलासङ्गतिरत आह—**स्त्रीविषयेति** । उक्तमतं दूषयन्सिद्धान्तमाह—**कमण्डल्विति** । अपिनोक्तरीत्याऽस्त्रीविषयत्वम् । ननु 'कुण्डमग्न्यालये मानभेदे देवजलाशये' इति मेदिन्यां कमण्डलोरपि जलाशयत्वेन तत्र नपुंसकत्वोक्त्याऽस्त्रीविषयत्वं, देवस्य जलाशये इति षष्ठीतत्पुरुषाश्रयणात् । अत एवाग्न्यालये इति पृथक्पदम् । अत एव 'सूर्यकुण्ड'मित्यादयो व्यवहाराः पुराणेषु सङ्गच्छन्ते । नन्वेवं किमर्थममत्रग्रहणमत आह—**सूत्रं त्विति** । प्रकृतसूत्रेऽमत्रग्रहणं त्वित्यर्थः । तत्फलमाह—**अमृते इति** । एतेन मूलादि सर्वं परास्तम् । वस्तुतस्तु तयोः पर्यायत्वे न मानं, पिठरादिचतुर्णामोदनादिपचनपात्रवाचकत्वस्य 'सर्वमावपनं भाण्डं पात्रामत्रञ्च भाजन'-मित्यत्र सर्वपदेन पिठरादेः प्रागुक्तस्य ग्रहणेन तत्सामान्यवाचकत्वस्यामरेणोक्तत्वात् । एवञ्चामत्रशब्दस्य पात्रसामान्यवाचित्वं, पिठरशब्दस्य तद्विशेषकमण्डलुभिन्नवाचित्वमिति पिठरेऽग्न्यालयादौ चामरमेदिनीप्रामाण्यान्नित्यनपुंसकत्वप्राप्तावपि पिठरे विश्वप्रामाण्यात्स्त्रीत्वमपि, अमत्रे तु नित्यनपुंसकत्वमित्यत्र तेन कमण्डलुरूपस्यैव ग्रहणं, तत्र चोक्तामरमेदिनीप्रामाण्यान्नित्यस्त्रीत्वमेवेति यथाश्रुतमेवंमूलं युक्तमिति बोध्यम् ।

मूले **गौणान्येति** । यस्या यादृच्छिकं नाम । 'अभिव्यक्ते'त्यस्य पदकार्यविषयत्वादत्राप्रवृत्तिरिति भावः । नन्वेवं 'गौणमुख्ये'ति न्यायान्न स्यादत आह—**गौणत्वेपीति** । ननु मुख्ये एव कुतो नात आह—**विधित्वेति** । पिठरे तूभयमिति तस्य तत्रास्त्रीविषयत्वात्तेनैव सिद्धमिति न तत्रास्योपयोग इति

ॐ सदाशिवभट्टीयम् ॐ

व्यावर्त्यन्तु तिष्यसञ्ज्ञकपुरुषस्येदन्तैष्यमित्याहुः । दंष्ट्रा इत्यस्याजादौ पाठः । **अपरे इति** । 'कमण्डला'विति मेदिन्या—'पिठरे'त्विति 'पिठर'मिति च कोशस्य सङ्कोचेनानुगतत्वाज्जातित्वमित्याशयः । वस्तुत एकेन कोशेन कोशद्वयसङ्कोचस्यानुचितत्वात्, कोशद्वयेन तर्हि 'कमण्डला'विति कोशे उपलक्षणतया व्याख्यापत्तिरेवं

ॐ विषमपदविवृतिः ॐ

पदघटितशास्त्रेण विहिताणएव ग्रहणात् । **इत्यपर इति** । इदमेव युक्तम् । **विधित्वानुरोधादिति** ।

**वर्णश्चेदिति** । तद्विशिष्टश्चेदित्यर्थः । अन्यथा 'गुणे शुक्लादयः पुंसी'त्युक्त्या-ऽसङ्गतं स्यादिति बोध्यम् । सूत्रे वर्णशब्दोऽर्श आद्यजन्तः । **कालाऽन्येति** । क्रौर्यगुणयुक्तेत्यर्थः ।

**नील्या अनिति** ।—वृत्त्यनुसारेणेदम् ।

'—प्रतिपदोक्तत्वात्—अन्प्रकृतिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं, न त्वस्य, लाक्षणिकत्वात्' । 'अनाच्छादने' इति—'नीलवर्णवती शाटी'त्यर्थे 'नीली'ति वारणाय चरितार्थम् । 'नील्या रक्ता गौ'रित्यर्थे 'नीले'त्येवोचितम्—'इति परे ।

'मैथुनेच्छा'शब्दोऽर्शआद्यजन्तस्तद्वतीत्यर्थः । **अन्येति** । मैथुनादन्यद्या—इच्छति । कर्मेः 'लषपते'त्युकञ् । शोणशब्दो वर्णवाची,—'वर्णानां तणे'त्याद्युदात्तः । 'अन्यत' इति सिद्धे स्पष्टार्थमिदम् ।

**वोतो** । अत्र 'गुणवचन'शब्देन समस्त— कृदन्त—तद्धितान्त—सर्वनाम—जाति-

---

❀ चिदस्थिमाला ❀

'विधिनियमे'ति न्यायादिति भावः । यथाश्रुते दोषमाह—**अन्यथेति** । नन्विदं सूत्रतः कथं लब्धमत आह— **त्रे इति** । 'यस्या यादृच्छिकं नामे'ति कस्यचिदुक्तेरसाङ्गत्यायाह—**क्रौर्येति** । नन्वस्य लाक्षणिकत्वान्न सूत्रे ग्रहणमत आह—**वृत्त्येति** । शास्त्रवैयर्थ्यं तु नेति सूचयन् सिद्धान्तमाह—**प्रतीति** । परिभाषानाश्रयणे मानाभावादिति भावः । **शब्दस्यैवेति** । प्रथमोपस्थितत्वाच्चेति भावः । नन्वेवमना-च्छादने इति व्यर्थं स्यादत आह—**अनेति** । ननु वृत्तिमते नील्या रक्ता—'नीली गौ'रित्यस्येष्टस्यात्रासिद्धि-रत आह—**नील्येति** । 'बहुव्रीहिः सूत्रनिर्देशादेव व्यधिकरणोऽपि साधु'रिति हरदत्तासाङ्गत्यायाह—**मैथुनेच्छेति** । एतेन यथाश्रुतासङ्गतिः परिहृता । अन्यत्=धनादिकम् । 'शोणः कोकनदच्छवि'रित्यमरादाह—**शोणेति** । 'प्राचा'मित्युक्तेराह—**विकल्पेति** । गुणो नेहादेङ्रूपः, उत इति विशेषणात्, वचनग्रहणाच्च । नच 'संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते । गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृत'मित्युक्त्या विशेषण-मात्रं, तत्र सव्यापारमित्यस्येतरव्यापाराधीनव्यापारकमित्यर्थः, तच्च कुठारादीति वाच्यम्, 'आखुर्द्रव्य'-मित्यादौ क्रियायाश्चातिप्रसङ्गात् । नापि नैयायिकाभिमतो गुणः, मृद्वीत्याद्यसिद्ध्यापत्तेः । यत्तु सञ्ज्ञाजाति-क्रियान्यशब्दा इह तत्त्वेन विवक्षिताः—चतुष्टयीशब्दानां प्रवृत्तिरिति भाष्यपर्यालोचनया तथैव लाभादिति प्राञ्चो दण्ड्यादयस्तदसदित्याह—**अत्रेति** । **तत्सञ्ज्ञेति** । गुणवचनसञ्ज्ञेत्यर्थः ।

❀ सदाशिवभट्टीयम् ❀

बोध्यम् । 'नील्या अ'नित्यत्र—प्रतिपदोक्तस्येति बोध्यम् ।

❀ विषमपदविवृतिः ❀

मुख्यार्थैतत्प्रवृत्तौ तत्र 'जातेरस्त्री'त्यनेन सिद्धौ नागग्रहणस्य नियमार्थत्वं वाच्यं स्यादिति भावः । गौरित्यर्थे इति । वृत्तिमते त्वत्र 'नीली'त्येव, प्रतिपदोक्तपरिभाषायास्तेन प्रवृत्त्यनङ्गीकारादिति बोध्यम् ।

---

❀ वरवर्णिनी ❀

'वोत'इति सूत्रे गुणशब्दो न कृत्रिमाकृत्रिमन्यायेनादेङ्बोधकः, 'उत'इत्यस्य विशेषणस्योपादानात्, नापि—'संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते । गुणत्वम्परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ॥'

—इति लक्षणलक्षितङ्गुणशब्दबोध्यं विशेषणमात्रं-प्रथमलक्षणेन 'संसर्गिभेदक'मित्यनेनोच्यते ।—'सव्यापार'

सङ्ख्या-सञ्ज्ञाशब्दा-ऽतिरिक्तशब्दो गृह्यते । 'आकडार'सूत्रभाष्यपर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् ।

तत्र हि—प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाऽग्रे तद्बाधकत्वेनैताः क्रमेण पठिताः । 'गुणवचने'त्यन्वर्थसञ्ज्ञया गुणोपसर्जनगुणिवाचकानामेव तादृशानां सा सञ्ज्ञेति न रूपादीनां ग्रहणम् । जातिपदेनाऽकृतिग्रहणद्रव्यवृत्तिजाति-

❀ चिद्स्थिमाला ❀

तत्र हि=आकडारसूत्रभाष्ये हि । मात्रं—कार्त्स्न्ये । शुक्लादीनां गुणगुणिनोरभेदविवक्षया गुणपरत्वेन न तद्धितान्तत्व, भेदविवक्षायां मतुपोऽनभिधानेन वार्तिकस्योक्तरीत्या भाष्ये प्रत्याख्यानात् । नन्वेवं रूपादीनामपि ग्रहणापत्तिरत आह-**गुणवचनेति** । तादृशानां=शुक्लादीनाम् । ननु तेषां जातित्वेनैव निरासोऽत आह-जातीति ।

❀ वरवर्णिनी ❀

मिति द्वितीयं लक्षणं, तस्य-इतरव्यापाराधीनव्यापारकमित्यर्थः । 'आखुर्द्रव्य'मित्यत्राखुशब्दस्य द्रव्यात्मक-संसर्गिभेदकतयाऽतिप्रसङ्गात्, क्रियायामतिप्रसङ्गाच्च । नापि नैयायिकपरिभाषाविषयो गुणः—'मृद्वी' 'पट्वी'त्याद्यसिद्ध्यापत्तेरत आह—**अत्र गुणवचनेति** । इत्थं हि तत्र भाष्यम् "—'अर्थवत्प्रातिपदिकं' 'गुणवचनञ्च' 'समासकृत्तद्धिताव्ययसर्वनामाऽसर्वलिङ्गा जाति'रिति । 'गुणवचनञ्चे'त्यत्रार्थवदित्यनुवर्त्तते ।

एवञ्च प्रातिपदिकसञ्ज्ञा गुणवचनसञ्ज्ञयोरेकविषयत्वात्समावेशार्थञ्चकारस्य करणाच्चोभयोः समावेशः । भाष्ये—कृत्तद्धितपदञ्च तदन्तपरम् । उभयत्र 'प्रातिपदिक'मित्यनुवर्त्तते । एवञ्च प्रातिपदिकसञ्ज्ञापूर्विका कृदन्त-सञ्ज्ञा तद्धितान्तसञ्ज्ञेति—एताभ्याम्प्रातिपदिकसञ्ज्ञायाः समावेशः । प्रातिपदिकसञ्ज्ञासामानाधिकरण्यो-पपत्तये कृत्तद्धितपदन्तदन्तपरत्वेन स्वीकृतम् । गुणवचनसञ्ज्ञा त्वेताभ्यां बाध्यते, तेन 'कर्त्रीत्वं' 'द्वारवतीत्व'-मित्यत्र 'त्वतलोर्गुणवचनस्ये'ति न पुंवत्त्वम् । न च गुणिपरशुक्लादीनां गुणवचनसञ्ज्ञा—तद्धितान्त-त्वान्न प्राप्नोति, मतुपोऽत्र लोपादिति वाच्यं, श्रूयमाणतद्धितान्तस्य सञ्ज्ञाविधानात् । अथ वा गुणगुणिनो-रभेदोपचारादेव गुणिनि शुक्लादिशब्दानाम्प्रवृत्तिसम्भवेन मतुप एवानुत्पत्तेः । रूपादिशब्दानातु न गुण-वचनसञ्ज्ञा, जातिसञ्ज्ञया बाधात्, तेन तेभ्यः ष्यञ्न । जातिसञ्ज्ञा त्वसर्वलिङ्गत्वात्प्रवर्त्तते । एवम-व्ययादिसञ्ज्ञाभिरपि प्रातिपदिकग्रहणानुवृत्त्या समावेशः । न च प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञा यदि, तदा 'गुणवचनब्राह्मणादिभ्य' इति सूत्रे ब्राह्मणादिग्रहणं व्यर्थमिति वाच्यं, प्राणभृज्जातिलक्षणा-ऽण्बाधनार्थत्वात्, जातिसञ्ज्ञया बाधाच्च । 'ऐक्यं' 'राजपौरुष्य'मित्यादौ ष्यञ् तु—ब्राह्मणादित्वात् । एवं सङ्ख्याषट्सञ्ज्ञा । एताः सञ्ज्ञा अपि बाधिकाः, एकद्रव्योपनिवेशिनी हि सञ्ज्ञा ।

"–रूपादिशब्दानाङ्गुणवचनसञ्ज्ञां प्रकारान्तरेण वारयति–**गुणवचनेत्यन्वर्थेति** । **बहुविशेषणानां वैयर्थ्यादिति** । [पृ० ५७२] सत्त्वं=द्रव्यं—गतम्=आश्रीयते, तत एव–पाकादिना पूर्वगुणस्य निवृत्तिरपि भवति, विभिन्नजातीयेषु–घटपटादिपु दृश्यते । एतेन जातिनिरासः । द्रव्यत्वं हि–विभिन्नजातीयेषु जलपृथिव्यादिपु यद्यपि दृश्यते तथापि कदापि नापैति । **असत्त्वप्रकृतिः**=अद्रव्यस्वभावः। तेन भिन्नजातीयतन्त्वा-रब्धस्याऽसमवायिकारणनाशजन्यनाशप्रतियोगिनः पटस्य निरासः । क्रियावारणायाह—**आधेय इति** । आधीयते उत्पाद्यते इत्यर्थः । एतेनाऽनित्यत्वस्य लाभे'ऽक्रियाज' इत्यनेन नित्यत्वस्य च लाभे–'नित्या-नित्यवृत्तिजातिमा'निति फलितम्, तेन क्रियाव्यावृत्तिः स्फुटा । न चैवमपि तादृशसत्ताजातिमत्त्वस्य क्रियायां सत्त्वादतिव्याप्तिरेवेति वाच्यं, द्रव्यावृत्तित्वस्यापि जातिविशेषणत्वात् । एतेनैव सर्वगुणसङ्ग्रहे 'सत्त्वे निविशते' इत्यादि व्यर्थमिति भावः-"इति भैरवमिश्राः । अन्येत्वेवं व्याचक्षते—

"–**गुणिवाचकानामिति** । द्रव्यवाचकानामित्यर्थः । 'गुणवचनेभ्यो मतुपो लुगिष्ट'इत्यत्र तु गुणवचन-पदेन गुणवाचकस्यैव ग्रहणं नतु गुणिवाचकस्य,—लक्ष्यानुरोधात् । ननु रूपत्वरसत्वादिजातीनां जाति-सञ्ज्ञयैव बाधसम्भवान्नोक्तदोषोऽत आह–**जातिपदेनेति** । आकृत्या=अवयवसन्निवेशविशेषेण–गृह्यमाणा या

वाचकानामेव तत्र ग्रहणात् । कठादिशाखा—तदध्येतृणाञ्च तद्धितान्तत्वादेव व्यावृत्तिः । एतत्सूत्रभाष्योक्तं—

'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥'

—इति गुणलक्षणं त्वेकदेश्युक्तिर्बहुविशेषणानां वैयर्थ्यात्, भाष्यकृताऽव्याख्यानाच्च । —तस्मादाकडारसूत्रोक्तमेव भाष्यसंमतमिति भाष्यप्रदीपोद्द्योते निरूपितम् ।

ॐ चिदस्थिमाला ॐ

**ग्रहणेति** । जातेर्विशेषणम् । नन्वेवं कठादिनिरासो न स्यादत आह—**कठादीति** । कठादिशाखाश्च तदध्येतारश्च तद्वाचिनामित्यर्थः । चस्त्वर्थे । क्वचित्समस्तत्वात्,—यथा बह्वृचादेरिति बोध्यम् । दण्ड्यादिग्रन्थासाङ्गत्यायाह—**एतदिति** । **लक्षणमिति** । 'उपैत्यन्य'दिति लक्षणान्तरञ्चेत्यपि बोध्यम् । यद्यपि स्वयं तदपि तत्परतया योजितं तथापि तथापि कैयटरीत्या आह—**बह्विति** । ननु स्वोक्तरीत्या न तत्त्वमत आह—**भाष्यकृतेति** ।

ॐ सदाशिवभट्टीयम् ॐ

**वोतोगु । सत्त्वे निविशतेऽपैति पृथगिति** । अभावेऽतिव्याप्तेः—सत्त्वे निविशते इति । जातावतिव्याप्तेः—अपैतीति । आत्मनिष्ठधर्मेऽतिव्याप्तेः—पृथगिति । आश्रयेऽतिव्याप्तेः—अक्रियाज इति । क्रिया नाम—कृतिसाध्या, जन्यस्य क्रियात्वात्तस्य च निषेधः । अत्रेदं बोध्यम्, अत्र भाष्ये तु गुणलक्षणमभिहितम्, आकडारा इत्यत्र भाष्ये तु गुणवचनलक्षणमभिहितम्, एवं च विरोधाभावाद्बहुविशेषणसार्थक्यात् भाष्यं सुयोजमित्येकदेश्युक्तित्वं चिन्त्यम् । स्पष्टं चेदं शब्दरत्ने । शुचिशब्दे कृदिकारादिति स्यादित्याह—

ॐ विषमपदविवृतिः ॐ

**न रूपादीनामिति** । उवर्णान्तत्वाभावेन ङीषोऽप्रवृत्तावपि 'गुणवचने'ति ष्यङ्वारणायैषां

ॐ वरवर्णिनी ॐ

द्रव्यवर्त्तिनी जातिस्तत्प्रवृत्तिनिमित्तकानां जातिसञ्ज्ञेति,—भाष्योक्त—'जाती'त्यस्यार्थः, अतएव गुणमात्रपर—रूपादि—समभिव्याहारे 'जातिकालसुखादिभ्यः परा निष्ठे'ति परनिपातो नेति तत्त्वम् ।

१ **सत्त्वे इति** । सत्त्वे=द्रव्ये, निविशते=सम्बध्यते, तदाश्रित्य उत्पद्यते— तिष्ठति चेत्यर्थः, एवम्—तत एव-अपैति=नश्यति, पृथग्जातिषु=नानाजातीयेषु घटपटादिषु, दृश्यते=समवायेन तिष्ठति—स गुणइत्येकं लक्षणम् ।

एवञ्च—'द्रव्याधिकरणकोत्पादविनाशशालित्वे सति नानाद्रव्येषु समवायसम्बन्धेन वर्त्तमानत्व'मिति लक्षणं फलितम् । समन्वयश्चास्य—रूपरसादिषु, तेषां घट-पटा-ऽऽम्र-जम्बीर जम्बू-जल पनस प्रियालादिषु-नैकविधेषूत्पादविनाशयोस्तिग्ममरीचिसम्पर्कादिना स्पष्टमापामरमनुभूयमानत्वात् । घटत्वद्रव्यत्वादिजातीनां घटपटादौ द्रव्ये सत्त्वेऽपि पृथग्जातीयेषु दृश्यमानत्वपि च तासां नित्यतयाऽपायाभावान्न गुणत्वम् । अथापि गत्यादिक्रियायामपि द्रव्याश्रितत्वात्ततो निवृत्तेश्च समवायेन द्रव्ये सम्बन्धाच्चोक्तलक्षणातिव्याप्तिः, किञ्च घटरूपद्रव्यस्यापि कपालरूपद्रव्ये समवायेन सत्त्वात्कदाचित्ततो नाशाच्च गुणत्वापत्तिरत आह—**आधेयश्चेत्यादि** । आधीयते इत्याधेयः=उत्पाद्यः, अक्रियाजः=अनुत्पाद्यः । असत्त्वप्रकृतिः=अद्रव्यस्वभावः । एवञ्च 'नित्यानित्यवृत्तिजातिमत्त्वे सति द्रव्यभिन्नत्वं गुणत्व'मितिलब्धम् । क्रियात्वं हि न नित्यवृत्ति, नित्यक्रियाया अप्रसिद्धेरतस्तद्व्यावृत्तिः । गुणत्वन्तु शब्दादिषु नित्येषु घटरूपादिष्वनित्येषु च वर्त्तमानमिति तत्र लक्षणसमन्वयः । घटपटादिद्रव्याणां सत्त्वप्रकृतित्वादेव निरासः । अन्येतु—'आधेय' इत्यस्य—आधेय एवेत्यर्थः । एवञ्च 'सर्वाधारतानियामकसम्बन्धेतरसम्बन्धेन द्रव्याधिकरणत्व'मिति फलितम् । 'अक्रियाजश्चे'त्यस्य—क्रियाजन्यतावच्छेदकरूपावच्छिन्नभिन्नत्वमित्यर्थः । 'असत्त्वप्रकृति'रित्यस्य द्रव्यभिन्नमित्यर्थ इत्यप्याहुः ।

२ **वैयर्थ्यादिति** । तदेवं—'निविशते'इति व्यर्थम्, 'अपैती'त्यनेनैव जातिव्यावृत्तेः । एवम्-'आधेय'इति

**शुचिरिति**। शुचेरौणादिकः क्विदिन् । 'उत' इत्यस्याभावेऽपि 'खरुसंयोगोपधान्ने'-त्येतत्सामर्थ्येनाऽत इत्यस्यात्राऽसम्बन्धः। उणादीनामव्युत्पन्नत्वात्कृदिकारादित्यस्यात्राप्रवृत्ति-रित्यभिमानः । 'शुक्ले'ति तु प्रत्युदाहरणमुचितम् ।

तपरः किं ? 'वधूः', 'कासूः । 'वधूः स्नुषा नवोढा स्त्री', 'कासूर्विकलवाचि स्या'दितिकोशबलेन नवोढात्वस्य, विकलवाक्त्वस्य च प्रवृत्तिनिमित्तत्वेन 'खरु'शब्द-वद्गुणवचनत्वात् ।

---

❀ चिदस्थिमाला ❀

**क्विदिनिति** । 'सर्वधातुभ्य इ'न्नित्यनेन । न च 'उत' इत्यस्याभावेऽप्यत इत्यस्याधिकारात्कथ-मत्रातिप्रसङ्गोऽत आह—**उत इति** । नन्वत्र 'कृदिकारा'दिति दुर्वारमेवात आह—**उणादीति** । 'अभिमान'पदसूचितारुचिस्तु व्युत्पत्तिपक्षे तस्य प्रवृत्तिरेवेति न फलं, किञ्च तदभावेऽत्र तदसम्बन्धे मानाभावः, वार्तिकं तु नित्यानुवादो 'नान्तरिक्षे' इति (?) वदिति तदेतद्ध्वनयन्नाह—**शुक्लेतीति** ।

❀ सदाशिवभट्टीयम् ❀

**शुक्लेति**। नच संयोगोपधत्वेन निषेधः, 'खरु'माहचर्येण संयोगोपधेतिनिषेधोऽप्युकारान्तस्यैवेत्याशयात्।

❀ विषमपदविवृतिः ❀

गुणवचनत्वं नेष्यत इति बोध्यम्। 'ऐक्य'मित्यत्र 'ब्राह्मणादित्वात्ष्यञ्'। **शुक्लेति** त्विति । इदमप्य-युक्तम्, 'खरुसंयोगोपे'ति निषेधात् । 'पीते'त्युचितम् ।

---

❀ वरवर्णिनी ❀

व्यर्थम्—'अक्रियाज' इत्यनेनैव क्रियाव्यावृत्तेः, क्रियायाः क्रियाजन्यत्वाभावात्। एवम्–'अक्रियाज' इत्यनेन द्रव्यव्यावृत्तावसत्त्वप्रकृतिरिति व्यर्थमित्याद्यवधेयमित्याशयः। अत्र—'निविशते'इत्यस्य सम्बध्यते इत्यर्थं कृत्वा 'सत्त्वे निविशते इत्यनेन जातेर्निवृत्तिसम्भवे'इत्यादि वदन्तोमान्या एव **पर्वतीयाः**, घटत्वादिजातीनां द्रव्ये सम्बन्धस्यापि सत्त्वात्तावता तद्व्यावृत्तेरसम्भवादिति **गौडाः** ।

**परेतु**—सर्वेषामपि विशेषणानां साफल्यमेव, तथाहि—'सत्त्वे निविशतेऽपैती'त्याद्यविशेषणस्यानुक्तौ–द्रव्याधिकरणकोत्पादविनाशशालित्वमित्यस्यालाभे—अभावस्यापि गुणत्वापत्तिः, एवं नित्यैकमात्रवृत्त्याकाश-त्वादेर्गुणत्वापत्तिः । अत्रापि विशेषणे उत्पत्तिमात्रोक्तौ–ध्वंसेऽतिव्याप्तिः, नाशमात्रोक्तौ–प्रागभावेऽति-व्याप्तिः । 'पृथग्जातिषु'इत्यस्य च—जातिभ्यः पृथगित्यर्थः, अस्यानुक्तावुत्पादविनाशशालिन्या तत्तद्व्यक्ति-वृत्तित्वविशिष्टब्राह्मणत्वादिजातेरपि गुणत्वापत्तिः, उत्पादविनाशौ चास्याः–संस्कारपातित्यमद्यसेवनादिना तत्त-द्व्यक्तिवृत्तित्वविशिष्टब्राह्मणत्वादिजातिरुत्पादविनाशयोः सकलानुभवसिद्धतयाऽऽश्रयौ । 'आधेय'इत्यस्य सर्वाधारतानियामकसम्बन्धेतरसम्बन्धेन द्रव्यवृत्तित्वमित्यर्थं इति मते—तदनुक्तौ घटादीनां गुणत्वापत्तिः । गुणस्यापि कालिकेन द्रव्याधिकरणतयाऽऽधेय एवेत्यस्यासङ्गतिरतः सर्वाधारतानियामकेतरत्वं सम्बन्ध-विशेषणम् । क्रियाव्यावृत्तये'ऽक्रियाजश्चेति' । 'आधेयश्चाक्रियाजश्चे'त्येकं तृतीयं विशेषणं, 'नित्यानित्य-वृत्तिजातिमत्त्व'मिति तदर्थं इति भैरवमिश्रव्याख्याने तु—क्रियाव्यावृत्तये तत् । एवं द्रव्यभिन्नत्वस्यानुक्तौ घटादिद्रव्येऽतिव्याप्तिरिति न विशेषणवैयर्थ्यमित्याहुः । एवञ्चान्यत्राकडारसूत्रस्थभाष्यस्य व्यवस्थापकत्वेऽपि प्रकृतसूत्रस्थत्वेन 'सत्त्वेनिविशते' इत्यादिलक्षणस्यैव प्रकृते व्यवस्थापकत्वमित्यवधेयम् । सूत्रे बह्वादिग्रहण-सार्थक्यप्रयोजकसङ्ख्यानिष्ठगुणत्वाभावायैकमात्रवृत्तित्वमप्यत्र विशेषणं देयम्, नचैवमप्येकत्वेऽतिव्याप्तिरिति-वाच्यम्, अनेकनिरूपितवृत्तितावच्छेदकसङ्ख्यात्वादिधर्मानवच्छिन्नत्वस्यैवैकमात्रवृत्तित्वपदेनोपादानादेकत्वे चातथात्वादित्याहुः—श्री**बालशास्त्रि**चरणानुसारिणो दीपिकाकृत **उमानाथ**पण्डिताः ।

**शुक्लेति** । 'खरुसंयोगोपधान्ने'ति निषेधस्तु खरुशब्दसाहचर्यादुकारान्त एवेतिभावः। यद्वा'शुक्ले'ति-'पीते'त्यस्योपलक्षणम्। 'शोणात्प्राचा'मित्यस्यैवंरीत्या वैयर्थ्येन—'अदन्ताच्चेच्छोणशब्दादेवे'ति नियामकत्वे तु पीतेत्यादौ दोषाभावात्प्रत्युदाहरणान्तरं हरिदिदितिकारान्तमत्र बोध्यम् । **नवोढेति** । नवोढात्वस्य लज्जाभय

**पतिंवरेति** । पतिलाभोत्कण्ठावतीत्यर्थः ।

**बह्वादि** । बहुशब्दस्योक्तरीत्या गुणवचनत्वाभावेन ग्रहणम् । 'कृदिकारा'दिति, 'सर्वत'इति च गणसूत्रे । अकृतोऽपीत्यर्थः । 'व्यवस्थितविभाषाश्रयणात्क्वचिन्न, सुगन्धिः, प्रियकतिर्वैश्येत्यादी'ति वृत्तिः । पुराणशब्दोऽत्र पठ्यते । स यद्यपि 'अयं पन्था अनुवित्तः पुराणः' इत्याद्यावन्तोदात्तदर्शनेन घृतादिपाठादन्तोदात्त—इत्युदात्तनिवृत्तिस्वरेण ततो ङीब्ङीषोः स्वरे विशेषाभावस्तथाप्यत्र पाठसामर्थ्यात्पक्षे टाबेवेति बोध्यम् ।

**अजननिरिति** । 'आक्रोशे नञ्यनि'रिति जनेरनिः । अहन्शब्दोऽत्र पठ्यते, सामर्थ्यादनुपसर्जनाधिकारबाधः, 'दीर्घाह्नी प्रावृ'डिति ङीष्यन्तोदात्तम् ।

बह्वादिराकृतिगण इति—गणरत्नकृत् ।

**पुंयोगादा** । हेतौ पञ्चमी । आख्यायामिति पञ्चम्यर्थे सप्तमी ।

---

ॐ **चिदस्थिमाला** ॐ

गुणवचनत्वायाह—**पतीति** । 'बहुशब्दस्य गुणवचनत्वात्पूर्वेणैव सिद्धेप्युत्तरार्धं चिन्त्यप्रयोजनं वा त'दिति शब्ददण्ड्यादिग्रन्थासाङ्गत्यायाह—**बहुशब्देति** । आकडारसूत्रोक्तेत्यर्थः । 'सर्वत' इत्यस्यार्थमाह—**अकृत इति** । अपिना-कृतः । 'प्राचा'मिति वर्तमाने पुनर्वाग्रहणादाह—**व्यवस्थितेति** । क्वचित्= आदेशादौ । तथा च **परिशिष्टम्**—'इतो क्त्यर्थादनादेशादकते'रिति । **वृत्तिरित्यरुचिबीजन्तु** तासां भाष्ये परिगणितत्वरूपं, 'वे'ति तु स्वस्वमतप्रच्युतिदोषपरिहाराय, 'सुगन्धि'रित्यादौ त्वनभिधानान्नेति। शकटिशब्दो-ऽत्रशकटवाची—'पृषोदरादित्वा'त्साधुः । बहु-पद्धति-यष्टि-विकट-विशाल-कल्याण-पुराण-कृपाण चण्ड-'कृदिकारादक्तिनः' 'सर्वतोऽक्तिन्नर्थादित्येके' 'शक्तिः शस्त्रे' 'शक्तिः शस्त्री'ति पाठे शब्दद्वयम्, 'इतः प्राण्यङ्गात' 'चन्द्रभागान्नद्याम्' अहन्निति च बह्वादिस्तदाह—**पुराणेति** । **इतीति** । टित्त्वान्ङीपीति शेषः ।

बहुव्रीहित्वसूचनायाह—**प्रावृडिति** । उपसर्जनतत्पुरुषे तु नास्य प्रवृत्तिरित्यग्रे स्फुटीभविष्यति । परपञ्चम्यभ्रमायाह—**हेताविति** । नन्वेवं कुतः प्रत्ययोऽत आह—**आख्यायामितीति** । अविरोधायाह-

ॐ **सदाशिवभट्टीयम्** ॐ

वस्तुतः 'श्यामे'त्युदाहरणीयम् । **प्रियकतिरिति** । 'न षट् स्वस्रादिभ्य' इत्यस्य स्त्रियां यत्प्राप्नोतीति

---

ॐ **वरवर्णिनी** ॐ

पराधीनरतिकत्वस्वरूपतया रतेश्च सुखविशेषरूपत्वेन गुणत्वं स्पष्टमेव । **विकलेति** । विकलवाक्त्वस्य विकल-वचनस्वरूपतया शब्दत्वेन गुणत्वमनुसन्धेयम् । उत्कण्ठायाश्च-स्मरणरूपतया गुणत्वम् । कोमलत्व-कठोरत्वादीनाञ्च संयोगविशेषरूपतया गुणत्वमित्याहुः ।

उक्तरीत्या=सङ्ख्यासञ्ज्ञया गुणवचनसञ्ज्ञाया बाधेन । 'सर्वत'इत्यस्यार्थमाह—**अकृतोऽपि** । अपिना-कृतः । 'शोणात्प्राचा'मितिसूत्रा'त्प्राचा'मित्यनुवृत्त्यैव सिद्धे'वोत' इतिसूत्रे 'वा'शब्दोपादानं व्यवस्थित-विभाषात्वसूचनाय तदाह—**व्यवस्थितेति** । **वृत्तिरिति** । 'देवत्रात'इत्यादिना तस्याः परिगणनाद्देवत्राता-दिष्वस्यापाठादिह व्यवस्थितविभाषात्वन्न युक्तमित्यरुचिः । तदुक्तप्रयोगसिद्धस्तु लिङ्गस्य लोकाश्रयत्वा-त्तत्रार्थस्य शास्त्रीयलिङ्गाभावकल्पनेन । वाग्रहणन्तु सर्वमते विकल्पार्थम् । **ङीब्ङीषोरिति** । **पुराण-शब्द इति** । स हि ट्युलन्तः, 'पुराणप्रोक्ते'ति निपातनात्तुडभावः, एवञ्च टित्वान्ङीप् प्राप्तः । **सामर्थ्या-दिति** । केवलस्य स्त्रियां वृत्त्यसम्भवात्तस्मादुपसर्जन एव प्रवृत्तिरिति—**मिश्राः** ।

**पञ्चम्यर्थे इति** । अधिकरणे सप्तमीति स्वीकारे आख्यानमाख्येति विग्रहेणाख्याशब्दस्य ज्ञानपरत्वे-

'आख्या'शब्दो बोधकपरः। आख्या चोपस्थितत्वात्पुंस एव न स्त्रियाः। स्त्रियां वर्त्तमानस्य स्त्र्याख्यत्वाऽव्यभिचारादाख्यापदवैयर्थ्यापत्तेः। पुंस्येव यः प्रसिद्ध शब्द इत्यर्थः। पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्त्तमानात्पुंबोधकाच्छब्दान्ङीषित्यर्थः।

योगः–सम्बन्धः। पुंयोगात्किं ? 'देवदत्ता'।

❀ चिदस्थिमाला ❀

आख्येति। 'पु'मिति लुप्तविभक्तिकपदावृत्त्योभयत्र सम्बन्ध इति दण्डिशास्त्र्याचसाङ्गत्यायाह—आख्या चोपेति। तत एव तत्पदार्थमाह—पुंस्येवेति। 'सर्वं वाक्य'मिति न्यायेनेति भा...।

अथ सूत्रार्थमाह—पुंयोगाद्धेतोरिति। संयोगनिरासायाह—सम्बन्ध इति। देवदत्तेति। अयं हि

❀ सदाशिवभट्टीयम् ❀

व्याख्यानेनात्राऽपि निषेधे इदं फलं चिन्त्यं, 'सुगन्धि'रिति तु फलम्। पुराणशब्दस्याण्णन्तत्वमिति ङीप्–ङीषोः स्वरे विशेषाभाव इत्युक्तम्। पुंयो। स्त्रियां वर्तमानस्येति। पुंस्येवेति। नच ज्येष्ठाकनिष्ठेत्यजादिनिपातनं व्यर्थं, ङीषोऽप्राप्तेः, पुंस्येवविद्यमानत्वाभावादिति वाच्यम्;–एवस्याप्रयोजकत्वात्। अत एव 'शूद्री'ति पुंयोगे सिद्धः।

❀ विषमपदविवृतिः ❀

पुंयोगादा। पुंस्येव यः प्रसिद्ध इति। ननु शूद्रादिशब्देभ्यो वस्तुतः शूद्रत्वविशिष्टायां शूद्रस्य स्त्रीत्वेन रूपेण विवक्षितायां ङीष् न प्राप्नोतीति चेन्न; इष्यत एवात्र ङीष्, 'चतुर्भिः प्रकारैरतस्मिन्स' इत्येतद्भवति,—'तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्या'दिति प्रकृतसूत्रस्थभाष्यादिति केचित्। अन्ये तु—'अथवा पुनरस्तु तस्यामेव प्रष्ठशब्द' इति तदुत्तरभाष्यादुक्तविषयेऽपि ङीषिष्यते। वस्तुतस्तु जातिमत्त्वेऽपि शूद्रस्य स्त्रीत्वेन रूपेण विवक्षिता न तु शूद्रत्वजातिमत्त्वेनेति न ततष्टाप्। सर्वत्र शक्यतावच्छेदकारोप एव लक्षणेति न नियमः, सति सम्भवे शक्यतावच्छेदकारोपो लक्षणेति न 'आग्नेयः स्थालीपाक' इत्यत्र पुंवद्भावानापत्तिरित्याहुः।

❀ वरवर्णिनी ❀

पुंयोगाद्धेतोर्ज्ञाने वर्त्तमानात्प्रातिपदिकादित्यर्थे सम्पन्ने शब्दस्य ज्ञाने वर्त्तमानत्वस्य जनकत्वसम्बन्धेन सम्भवात्पुंयोगाद्धेतोर्ज्ञानजनकादित्यर्थस्य फलतो लाभेऽपि जनकताया वृत्त्यनियामकत्वात्पञ्चम्यर्थे सप्तमीत्युक्तं भट्टैः। परेतु षष्ठ्यर्थे सप्तमी, वैशिष्ट्यञ्च तदर्थः, तच्च जनकत्वसम्बन्धेनेति न किमप्यनुपपन्नमित्याहुः।

पुंस्येवेवेति। परेतु–तथासति गोपस्य स्त्री–'गोपी' शूद्रस्य स्त्री–'शूद्री'त्यादौ सूत्रं न प्रवर्त्तेत, गोपशूद्रादिशब्दानां स्त्रियामपि प्रसिद्धत्वात्, सूत्रन्तु–चैत्रस्य स्त्री चैत्री'त्यादौ चरितार्थमित्ययुक्त एवायं ग्रन्थ इत्याहुः। पुंयोगादिति। अत एव चैत्रस्य स्त्री चैत्रीत्यादौ चैत्ररूपपुंप्रतियोगिकस्वत्वरूपसम्बन्धप्रयोज्यो यश्चैत्रत्वारोपस्तादृशारोपप्रकारीभूततादृशचैत्रत्वपुरस्कारेण चैत्रस्त्रीबोधकाच्चैत्रपदादनेन ङीष्। नन्वेवं गोपी–शूद्रीत्यादौ ङीप् दुर्लभस्तत्र गोपत्व-शूद्रत्वादिरूपप्रवृत्तिनिमित्तस्य स्त्रियां स्वत एव सत्त्वेनारोपाऽभावादिति चेन्न; अगोप्यामपि गोपस्त्रियामनेन ङीप्विधानात्, गोप्यान्तु जातिलक्षण एव ङीष्। या तु स्वयमपि गोरक्षिका गोरक्षकस्त्री च, परं गोपत्वजातिविशेषाभाववती तत्र–गोरक्षकस्य स्त्री–'गोरक्षिके'त्येव।

नन्वेवं शूद्रातात्पर्येण शूद्रस्य स्त्रीतिव्युत्पत्त्याऽपि 'शूद्री'ति न स्यात्, जातौ टापा बाधात्, पुंयोगे च शूद्रत्वस्य स्त्रीसाधारणत्वेनारोपासम्भवादितिचेदत्रोच्यते,–अत्राप्यशूद्रजातीयायामेव शूद्रस्त्रियां 'शूद्री'ति प्रयोग इष्यते। शूद्रजातीयायान्तु पुंयोगेऽपि–शूद्रस्य स्त्री–शूद्रजातीया चेत्–शूद्रेत्येवेष्यते इति। केचित्तु पुंवृत्तित्वविशिष्टशूद्रत्वस्यारोपेण शूद्रजातीयायामपि 'शूद्री'ति प्रयोगः, शूद्रादिपदाच्च शूद्रस्त्रीबोधोऽपि–आरोपितपुंव्यक्तिवृत्तित्वविशिष्टशूद्रत्वपुरस्कारेणैवेत्याहुः। यद्वा–यत्र शूद्रस्त्रियां शूद्रत्वमज्ञातं, तत्र पुंव्यक्तिवृत्तित्वविशिष्टशूद्रत्वारोपेणाऽस्तु शूद्रादिपदाच्छूद्रत्वादिपुरस्कारेण बोधः, तद्धर्मावच्छिन्नविशेष्यताकबोधे तद्धर्मपर्याप्तप्रकारताकविशेष्यताकज्ञानत्वेन न कारणत्वमपि तु तद्धर्मनिष्ठप्रकारताकविशेष्यताकज्ञानत्वेनैव।

आख्यायां किं ?—'प्रसूता' । तदभावे हि 'स्त्रियां वर्त्तमानं यत्प्रातिपदिकं पुंयोगहेतुकप्रवृत्तिनिमित्तक'मित्यर्थोऽपि सम्भाव्येत, अस्ति हि तत्प्रवृत्तिनिमित्ते प्रसवे पुंयोगहेतुकत्वम्, उक्तपुमाख्या तु नैवेति भावः ।

पुंयोगोऽत्र—दाम्पत्यरूप एवेति भाष्यस्वरसः, 'यथेयं भर्तृपापकृतान्बन्धादीँल्लँभते, एवं तच्छब्दमपी'ति भाष्योक्तेः । 'देवकी'त्यादि तु गौरादिषु बोध्यमिति केचित् ।

**गोपालिकेति** । गाः पालयतीति—गोपालः, स एव गोपालकस्तस्य स्त्रीत्यर्थः । ण्वुलन्तस्य तु कारकषष्ठ्या समासनिषेधाच्छेषषष्ठ्या समासे आपः सुपः परत्वादित्वं दुर्लभम् ।

वस्तुतः—शेषषष्ठ्या अप्यत्र कारकत्वात्सुबुत्पत्तेः पूर्वमेव तत्रापि समासः । यथाकथञ्चित्कारकग्रहणेऽपि कथञ्चित्कारकत्वमादाय—'गतिकारकोपपदाना'मित्यस्य प्रवृत्ते

❀ चिद्स्थिमाला ❀

सञ्ज्ञाशब्दत्वात्स्वभावत एव स्त्रियाम् । ननु तदभावे कथमत्रातिप्रसङ्ग उक्तसूत्रार्थाविषयत्वादत आह-**तदेति**। अपिना तस्य समुच्चयः । **तदिति** । प्रसूताशब्देत्यर्थः । सकलग्रन्थासाङ्गत्यायाह—**पुंयोगोऽत्रेति** । एतेन जन्यजनकभावनिरासः । नन्वेवं देवकीत्यादेः का गतिरत आह—**देवकीति** । आदिना केकयी । 'असाधव एव ते' इत्यरुचिः केचिदित्यनेन सूचिता । ननु गवां पालक इति विग्रहे कारकषष्ठ्या समासस्य निषिद्धत्वाद्गतिकारेत्यस्याप्रवृत्त्या शेषषष्ठ्या सुबन्तेन समासे आपः सुपः परत्वादित्व दुर्लभमेवात आह—**गाः पेति** । तदेवाह—**ण्वुलन्तस्येति** । 'तृजकाभ्या'मित्यनेनेति भावः । इदञ्च प्राचां मतेनोक्तम् । सिद्धान्तमाह—**वस्तुत इति** । तत्रापि=शेषषष्ठ्यामपि । नन्वयुक्तमेतत्, परिभाषायां प्रतिपदोक्तपरिभाषया कारकाधिकारविहितसञ्ज्ञानिमित्तकविभक्त्यन्तस्यैव ग्रहणेन तत्राप्राप्तेरत आह—**यथा कथञ्चिदिति** । **अत्रत्येति** । '—'गोपालिकादीनां प्रतिषेध' इति वार्तिकसिद्धये—' इति शेषः ।

❀ विषमपदविवृतिः ❀

**गौरादिषु बोध्यमिति** । 'देवकदुहिते'त्यर्थे तेन ङीषोऽविधानादसङ्गतमेतत् । **तन्निषेधस्य**='तृजकाभ्यां कर्त्तरीति निषेधस्य ।

❀ वरवर्णिनी ❀

अतएव 'नीलो घट' इति—ज्ञानात्मकविशेष्यतावच्छेदकविशिष्टज्ञानात्सुन्दरो घट इति बोधः, न चैवं विशिष्टधर्मारोपो व्यर्थः, शूद्रत्वाज्ञानदशायां शूद्रस्त्रियां शुद्धारोपस्यापि सम्भवादिति वाच्यम्, आरोपत्वस्य भ्रमत्वव्याप्यत्वेन भवद्भिरारोपत्वेनाभिमतस्य तादृशज्ञानस्य तद्वति तत्प्रकारकत्वेन यथार्थतया भ्रमत्वस्यैवाभावेनारोपत्वस्य तादृशज्ञाने वक्तुमशक्यत्वात् । अस्तु वा घटे पाकरक्ततादशायां रक्तत्वाभावात्मकनिश्चये रक्तत्वारोपः, प्रकृते शूद्रस्त्रियां शूद्रत्वाभावभ्रमात्मकनिश्चये शुद्धशूद्रत्वस्यैवारोपस्तथापि सिद्धमेव नःसमीहितमित्युमानाथः ।

प्राचाम्मतं कटाक्षयति-**पुंयोगोऽत्रेति** । एतेन जन्यजनकभावनिरासः । तथा सति देवकीत्यादिप्रयोगाणाङ्का गतिरत आह-**देवकीत्यादि त्विति** । आदिना 'कैकेयी' 'शूद्री'त्यादिप्रयोगाणां सङ्ग्रहः । केचित्त्वेषामनभिधानमाहुस्तेमान्याः, सकलपुराणेतिहासव्यवहारविलोपापत्तेः । **परेतु**-बाह्वादेराकृतिगणत्वस्योक्ततया तत्पाठेन गौरादिपाठेन वा तेषां साधुत्वं वदन्ति । **अन्येतु** जन्यजनकभावोऽपि पुंयोगपदेन गृह्यते, एतत्प्रामाण्यादेवेत्याहुः । गोपालिके'त्यत्र गवां पालिकेति न विग्रहस्तदाह—**गां पालयतीति** । इदम्प्राचाम्मतमनुरुध्य, वस्तुतस्तादृशविग्रहेऽपि न क्षतिरित्याह—**वस्तुत इति** । ननु 'गतिकारकोपपदाना'मित्यत्र कारकपदोपादानेन कारकसञ्ज्ञासमानाधिकरणसञ्ज्ञानिमित्तकविभक्त्या समास इत्येव लभ्यते इति 'षष्ठ्यन्तस्य समासः सुबुत्पत्तेः प्रा'गिति कथं लभ्यते ? अत आह—**यथाकथञ्चिदिति**।

रैत्रत्यभाष्यात्, 'उपपदमति'ङितिसूत्रभाष्याच्च लाभात् । यद्वा—तन्निषेधस्यानित्यत्वादप्रवृत्तौ कारकषष्ठ्या सुबुत्पत्तेः पूर्वं समासेन तत्रापीत्वं सुलभम् ।

**सूर्येति** । सर्त्तेः क्यप्याद्युदात्तसूर्यशब्दाच्चाप्यन्तोदात्तमिदम् । एतेन ङीष्निषेधेन टापैव सिद्धिरित्यपास्तम् ।

## ॐ चिदस्थिमाला ॐ

तेषामेव सिद्धये **इत्यर्थ** इतीत्यर्थः । **उपपदेति** । तत्र हि"—षष्ठीसमासादुपपदसमासो विप्रतिषेधेने"ति वार्तिकम्, 'अथवा विभाषा षष्ठीसमासः, यदा न षष्ठीसमासस्तदोपपदसमास' इति तत्प्रत्याख्यानञ्च । 'तदोपपदसमास' इत्यस्योपपदमतिङिति सूत्रविहितसमाससञ्ज्ञा तत्पुरुषसञ्ज्ञा च स्यास्यतीत्यर्थः। विप्रतिषेधस्य तु न प्राप्तिर्युगपदुभयविहितसमासतत्पुरुषसञ्ज्ञयोः प्रवृत्तिसम्भवेनासम्भवरूपविप्रतिषेधाभावात् । अन्यादृशविरोधस्य तत्प्रवृत्तिनिमित्तत्वे न मानमिति तत्तात्पर्यम् ।

नच नित्यत्वानित्यत्वज्ञानकृतविरोधः कैयटेनोक्त एवेति वाच्यं, बोधे बाधज्ञानस्याप्रतिबन्धकत्वात् । एवञ्च षष्ठीसमासोऽप्येतद्विषये नित्य एव फलितः, तद्बोधिताऽभावांशस्यैतद्विरोधेनैतद्विषये त्यागात्, 'नित्यं क्रीडे'त्यादिविषये तस्य क्लृप्तबाधत्वादिति भावः । यद्यपि 'षष्ठी'ति सूत्रे 'सुपे'त्यस्य सम्बन्धात्तत्र तदभावेनोपपदसमासस्यान्तरङ्गत्वाभिप्रायकं 'न वा षष्ठीसमासाभावादुपपदसमास" इति उक्तं पूर्ववार्तिकखण्डनाय तयोर्मध्ये वार्तिककृता, तथापि—पूर्वपक्षसिद्धान्तरूपवार्तिकद्वयप्रत्याख्यानपरम्—'अथवे'त्यादि भाष्यं न वार्तिकम् । नचायुक्तमेतत्, उक्तरीत्या विप्रतिषेधासम्भवेन तत्प्रत्याख्यानेऽप्यन्तरङ्गत्वस्योपपादितत्वेन तदसम्भवादिति वाच्यं, परिभाषायां 'गतिकारकोपपदा'दित्यत्र च सामान्यतः कारकपदोपादानेन प्रतिपदोक्तपरिभाषाया अनित्यत्वादप्रवृत्त्या स्वरसतस्तया तथार्थालाभेन च कारकविभक्त्यन्तेन समासमात्रस्य सुबुत्पत्तेः पूर्वमेव कृद्भिर्लाभात् । तथा च षष्ठीसमासोऽपि तथेत्यन्तरङ्गत्वमेवैतस्य नास्तीति न दोषः । एतेन कारकतद्विशेषमात्रयोरुपादाने एव परिभाषाप्रवृत्तिरित्यपास्तं, तस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकमात्रत्वेन च-'उपादाने एवे'त्यर्थालाभाच्चेति दिक् । स्पष्टञ्चेदं परिभाषेन्दुशेखरादौ । ण्वुलन्तपक्षेऽप्याह—**यद्वा तदिति** । तृजकेत्यर्थः । तत्रापि= ण्वुलन्तपक्षेऽपि । 'सूर्याने'त्येव वाच्यमित्याह—**निषेधेनेति** । एवेन—चाब्विधि-

## ॐ वरवर्णिनी ॐ

**कथञ्चित्कारकत्वमिति** । शेषत्वेनापि वस्तुतः कर्मण एव ग्रहणमिति भावः । १ **अत्रत्यभाष्यादिति** । एवं हि **भाष्ये** उक्तम्-'**गोपालिकादीनां प्रतिषेधः** । गोपालिकादीनां प्रतिषेधो वक्तव्यः । गोपालिका, पशुपालिका—'इति । [अत्र 'गोपालिकादीनां प्रतिषेधप्रतियोगित्वासम्भवादाह **कैयटः**-'सिद्धये इति वाक्यशेष' इति ।] एतेन 'तृजकाभ्यां कर्त्तरी'त्यस्य प्रवृत्त्या कर्मषष्ठ्या समासासम्भवाच्छेषषष्ठ्यैव समासो वाच्यः, तत्र यदि 'गतिकारकोपपदाना'मिति परिभाषाप्रवृत्तिर्न स्यात्तदाऽऽपः सुपः परत्वादित्वन्दुर्लभमिति भाष्योक्तस्येत्वघटितस्य प्रयोगस्य सिद्धये शेषषष्ठीविषयेऽपि 'गतिकारके'तिपरिभाषाप्रवृत्तिरिति लभ्यते ।

२ ननु प्रकृतसूत्रस्थभाष्यस्य गोपालशब्दं साधयित्वा ततः स्वार्थे केऽपि सिद्धिरित्यत आह-**उपपदेति** । तत्र हि-षष्ठीसमासस्य वैकल्पिकत्वात्तदभावे चोपपदसमास इति 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेने'तिवार्त्तिककृतोक्तस्य विप्रतिषेधस्य खण्डनायोक्तम् । अत्र विप्रतिषेधविचारेण षष्ठीसमासस्यापि सुबुत्पत्तेः प्राक् प्राप्तिः, षष्ठीसमासस्य तु तदनन्तरमिति विप्रतिषेधविचारोऽसङ्गत एव स्यादतः षष्ठीसमासस्यापि सुबुत्पत्तेः प्राक् प्रवृत्त्या प्राप्तिरिति स्पष्टमेव लभते षष्ठीसमासस्य सुबुत्पत्तेः प्राक् प्रवृत्तिमनभ्युपगम्यापि समाधानान्तरमाह—**यद्वेति** । तन्निषेधस्य='तृजकाभ्यां कर्त्तरी'ति निषेधस्य । अनित्यत्वात्= 'तत्प्रयोजको हेतुश्च' 'जनिकर्त्तुः प्रकृति'रितिनिर्देशेनाऽनित्यत्वात्। **आद्युदात्तेति** । धातुस्वरेणाद्युदात्तेत्यर्थः । एतेन=अन्तोदात्तस्य सूर्याशब्दस्यासाधनेन । ङीम्निषधेन=सूर्यानेतिन्यासेन ।

**सूरीति** । सूर्यस्य स्त्री या कुन्ती—इयं मानुषी, न देवतेत्यर्थः ।

**महत्त्वे इति** । तद्योगे एवैषां स्त्रीत्वमिति भावः । **यवनाल्लिप्यामिति** । लिप्यर्थकोऽत्र ङीष्, 'तस्येद'मित्यण्बाधक इति बहवः । लिपिः—अक्षरविन्यासः ।

**मातुलेति** । मातुलान्नित्ये प्राप्ते उपाध्यायादप्राप्ते विभाषेयम् । **या तु स्वयमेवेति** । 'अपादाने स्त्रियां घञ उपसङ्ख्यानं, तदन्ताच्च वा ङी'षिति तृतीये 'इङश्चे'ति सूत्रे वार्त्तिकादिति भावः। उपेत्याऽधीयते यस्या इति विग्रहः । 'अर्ये'ति ह्रस्वादिस्तदाह—**स्वामिनीति** । 'अर्यः स्वामिवैश्ययो'रित्युक्तेः । 'आर्ये'ति पाठस्तु कैयटाद्यसंमतः ।

**स्वार्थ इति** । अत एव भाष्ये—'अर्याणी, अर्या'—इत्येवोक्तम् । पुंयोग एव प्रवृत्तौ तु 'उपाध्यायी'तिवत् 'अर्यी'ति पक्षे ङीषमेवोदाहरेत् ।

---

### ॐ चिदस्थिमाला ॐ

वैयर्थ्यनिरासः । 'इय'मित्यस्याधिक्यं निराचष्टे—**सूर्यस्येति** । अनतिप्रसङ्गायाह—**तद्योग एवेति** । महत्त्वादियोग एवेत्यर्थः । अत एवैषामित्युक्तिः । वार्तिकस्य 'घञ्विधि'सूत्रस्थत्वादाह—**घञ इति** । तत्—तदेव ध्वनयन् । **आर्येतीति** । भाष्यपुस्तके क्वचिद्दृश्यमान इत्यादिः । यद्यपि भाष्ये 'स्वार्थे' इति न पठितं, तथापि तदभिमतमित्याह—**अत एवेति** । एतेन वृत्त्यनुसारेणेदमित्यपास्तम् ।

अत एवामरसिंहः—"अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि । उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः । आचार्याणीति पुंयोगे स्यादर्यी क्षत्रियी तथा"—इति । ननूक्तप्रकारेणैवेन्द्राणीत्यादेरपि सिद्धा-

### ॐ सदाशिवभट्टीयम् ॐ

**महद्धिममिति** । नच 'स्वार्थे परिपूर्णं पदमर्थान्तरमाकाङ्क्षते' इति न्यायेन सुबुत्पत्त्यनन्तरं महत्त्वविवक्षायां ङीष् जायमानः सुबन्तात्स्यादिति वाच्यं, प्रातिपदिकादित्यधिकारेण तदव्यवहितोत्पत्त्या सुबन्तेऽपि दोषाभावात्, तद्धिते तु प्रातिपदिकप्रकृतिके लक्षणया सुबन्तादेवोत्पत्तिरिति ज्ञेयम् ।

**यवनाल्लिप्याम्**। यवनशब्दस्य यवनलिप्यामौपचारिकत्वेन तस्येदमित्यणोऽप्राप्त्या चारितार्थ्येन यवनानां लिपिरित्यत्राणबाधकः परत्वात्स्यादिति बोध्यम् । एवञ्चाणबाधको ङीषिति बहव एव ग्रन्थाश्चिन्त्याः । अयं पुंयोगेऽपि ङीष्,—कालीत्यत्र न, जानपदेति सूत्रे वर्णग्रहणात्, अन्यथा वर्णादिति सूत्रे कालादित्युक्त्या वर्ण एव तादृशरूपसिद्धेः । नच तेन ङीब्भवतीत्यनुदात्तः स्यादिति वाच्यम् , कालशब्दस्यान्तोदात्तत्वेनोदात्तस्वरेण ङीष्ङीपोः स्वरे विशेषाभावात् । यदि तु वर्णग्रहणं मात्रागौरवात्पदगौरवमिति ज्ञापकतया

---

### ॐ वरवर्णिनी ॐ

ननु सूरी कुन्तीत्यनेनैव स्त्रीत्वाभिव्यक्तिसम्भवादियमिति व्यर्थमित्याशङ्कानिवारणायाह—**सूर्यस्येति** । ननु पुंयोगस्य दाम्पत्यभावरूपस्यैव पूर्वं व्यवस्थापितत्वात्तस्य विवाहितायामप्रसिद्धेः कथमियं सूर्यस्य स्त्री ?, विवाहात्प्राक्सूर्यसम्बन्धेन कर्णस्योत्पत्तिरिति प्रसिद्धमिति चेन्न, "सूर्यस्य स्त्री सूरी, देवतायां किं-सूर्या" एतद्भाष्ये उक्तं, तत्प्रामाण्येन 'देवतावाचकस्य पुम्शब्दस्य तद्देवकर्तृकस्वीकारकर्मत्वसम्बन्धप्रयोज्या यस्याम्प्रवृत्तिः साऽपि तत्स्त्रीत्वेन गृह्यते' इति स्वीकारात् । एवमेवेन्द्राणीत्यादीनामुपपत्तिः । न च जन्यजनकभावादिसाधारणः पुंयोगः कुतो न गृह्यत इति वाच्यं, पुंयोगोपपादनावसरे—"यथैव ह्यसावकुर्वती किञ्चित्पापम्भर्तृकृतान्वधबन्धेनकुशांल्लभते एवम्प्रष्ठशब्दमपि"—इतिभाष्यस्वारस्यात् ।

**कर्मण्यणिति** । सूत्रन्तु 'इन्द्री'त्यादिव्यावृत्त्यर्थमिति भावः ।

**क्रीतात्** । 'करणा'दिति वक्तव्ये—पूर्वग्रहणादनुवृत्तप्रातिपदिकरूपाऽन्यपदार्थाऽवयववाचिपूर्वशब्देन बहुव्रीहिः, तेन—वस्त्रेण क्रीतेति वाक्ये न । 'अत' इति चानुवर्त्तते । करणे किं ? 'सुक्रीता' । **धनक्रीतेति** । 'कर्तृकरणे' इत्यत्र बहुलग्रहणेन 'गतिकारकोपपदाना'मित्यस्यानित्यत्वादत्र सुबुत्पत्त्यनन्तरमेव समास इति भावः । इदमुपपदमतिङिति सूत्रे कैयटे स्पष्टम् । अयमजादिष्वित्यन्ये । एवञ्च 'गत्री'त्यादेरनित्यत्वे न मानमिति तदाशयः । अत एवैतत् 'कर्तृकरणे' इति सूत्रे बहुलग्रहणफलत्वेन भाष्ये नोक्तम् । 'अम्बाम्बे'ति सूत्रे गवादिग्रहणन्तु नियमार्थं, तेन 'दिस्थ' इत्यादौ षत्वं नेति दिक् ।

**अभ्रलिप्तीति** । 'क्तादल्पाख्याया'मिति प्राप्ते 'कृद्ग्रहणे गतिकारकपूर्वस्यापी'ति विशिष्टस्य क्तान्तत्वम् । 'अल्पाख्याया'मिति समुदायोपाधिः । अल्पत्वं करणगतं, क्रियागतं वा । **क्तान्तादिति** । क्तान्तान्तादित्यर्थः, प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात् ।

**ऊरुभिन्नीति** । 'जातिकालसुखादिभ्यः परा निष्ठे'ति भिन्नशब्दस्य परनिपातः ।

---

### ❀ चिदस्थिमाला ❀

'विन्द्रवरुणे'ति सूत्रं व्यर्थमत आह—**सूत्रं त्विति** । **नन्तरमेवेति** । तथा च ततः पूर्वमेवान्तरङ्गत्वाट्टापि अदन्तत्वाभावान्न ङीषिति भावः । 'कैयट' इत्यनेन सूचितारुच्या सकलग्रन्थासाङ्गत्याय सिद्धान्तमाह—**अयमिति** । अत्र मानमाह—**अत एवेति** । ततस्तदनित्यत्वाभावादेवेत्यर्थः । एतेन बहुलग्रहणस्यैव मानत्वात्—'न मानमित्ययुक्त'मित्यपास्तम् । नन्वेवम्—'अम्बाम्बे'ति सूत्रे गवादिग्रहणं व्यर्थं, 'गोष्ठ' इत्यादौ 'सुपि स्थ' इति के तथा सुबुत्पत्तेः पूर्वं समासे 'सात्पदाद्यो'रिति निषेधाप्राप्तेः 'आदेशप्रे'त्येव सिद्धेः, तत्र हि 'स्थ' इति प्रतिपदोक्तपरिभाषया 'सुपि स्थ' इति विहितकप्रत्ययान्तानुकरणमत आह—**अम्बाम्बेतीति** । एतेनोक्तरीत्या गवादिग्रहणमेव तदनित्यत्वे मानमित्यपास्तम् । 'पदस्यादि'रिति पक्षे तस्य तत्त्वसम्भवेऽपि 'पदाद्आदि'रिति सिद्धान्तपक्षे तस्य तत्त्वासम्भवाच्च । अत्रान्ये इत्यनेनारुचिः सूचिता, तद्बीजं तु 'पदेऽन्त' इति सप्तमीसमासपक्षे 'गोत्रे'त्यादेस्तदनित्यत्वं विना न सिद्धिरिति केचित् । 'पदे' इत्यस्य पदत्वयोग्योपलक्षणत्वेन तत्सिद्धेरयुक्तमेतदिति परे । तदाह—**इति दिगिति** । यद्यपि क्तान्तादित्यस्य वक्ष्यमाणरीत्या क्तान्तान्तादित्यर्थः सम्भवति, तथापि सम्भवात्प्रकारान्तरमाह—**कृदिति** । क्तान्तस्य तत्रावृत्तेराह—**अल्पेति** । ङीषेव वास्य द्योतकः । ननु अल्पत्वस्याऽभ्रगतत्वात्कथं तस्य समुदायोपाधित्वमत आह—**करणेति** । तदल्पत्वे सति तद्विलेपनस्याप्यल्पत्वस्यावश्यभावित्वेन तस्य तत्त्वाक्षतेस्तदाह—**क्रियेति** । परिभाषायां कृत्प्रकृत्यर्थनिरूपितकारकत्ववतो ग्रहणात् पूर्वोक्तपरिभाषयाऽत्रानिर्वाहादाह—**क्तान्तादिति** । एतेन तथा च वृत्तौ क्तपदं क्तान्तपरम् । 'निष्ठे'तिपूर्वनिपाताभावायाह—**जातीति** ।

### ❀ सदाशिवभट्टीयम् ❀

चरितार्थमित्युच्यते, तदा पुंयोगे ङीषिष्ट एवेति बोध्यम् । **अम्बाम्बेति** । नच पदाद्आदिरित्यर्थे गोष्ठ इत्यत्र सुबुत्पत्तेः पूर्वं समासेऽपि निषेधप्रवृत्त्या षत्वार्थमावश्यकमिति वाच्यम्, पदस्यादिरित्यभिप्रेत्य प्रवृत्तत्वेनाऽस्य चिन्त्यत्वात् । एवञ्च नियमार्थत्वमप्रयुक्तम् । 'हृदिस्थ' इत्यपि पदादिरिति विग्रहेणैव

### ❀ विषमपदविवृतिः ❀

**नियमार्थमिति** । पदस्यादिरिति विग्रहे सुबुत्पत्तेः प्राक् समासात्स्थशब्दस्यापदत्वात्षत्वनिषेधस्य 'सात्पदाद्यो'रित्यनेनाऽसिद्धत्वात् ।

**पाणिगृहीतीति** । अग्निसाक्षिकतया गृहीतपाणिकेत्यर्थः । भाष्ये तु 'पाणिगृहीत्यादीनां विशेषे' इत्युक्तम् ।

**अस्वाङ्गपूर्व** । न स्वाङ्गम्—अस्वाङ्गं, पूर्वञ्च तत्पदं पूर्वपदं, पुनः कर्मधारयः । अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेरित्यर्थः । उत्तरसूत्रे भाष्ये—'कल्याणपाणिपादे'त्यादौ तत्प्रवृत्तिवारणाय तत्रैतदनुवर्त्य कर्मधारयस्याश्रयणेनात्रापि तथैवौचित्यात् । तत्र यदुपसर्जनं 'पाणिपाद'मिति समुदायो, न स स्वाङ्गम् ।—स्वाङ्गसमुदायश्च न स्वाङ्गशब्देन गृह्यते ।—यच्च स्वाङ्गं—'पादे'ति, न तदस्वाङ्गरूपपूर्वपदात्पर'मित्युक्तम् । एवञ्च 'करमुखी'त्याद्यसाध्वेव ।

'जातिपूर्वा'दितीहापि सम्बध्यते, अन्यथा बहु-नञादीनामस्वाङ्गत्वेन विकल्पस्य तत्पूर्वके दुर्वारत्वात्तदाह—**नित्ये प्राप्ते इति** । **वस्त्रच्छन्नेति** । बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरे शेषनिघाते चानुदात्तान्तोऽयम् । 'पुत्रादिनी'त्यादौ 'सुप्यजाता'विति-णिनिदर्शनेनाऽऽकृतिग्रहणत्वाद्यभावेन च पुत्रशब्दस्य जातिवचनत्वाभावेऽपि 'पुत्रहती'त्यादौ गौरादिङीषिति बोध्यम् ।

'अस्वाङ्गा'दित्येव सिद्धे पूर्वपदग्रहणं स्पष्टार्थम् । किञ्च तदभावेऽस्वाङ्गादिति प्राधान्याद्बहुव्रीहिविशेषणं स्यादिति ।

**स्वाङ्गाच्चो** । 'तदन्ता'दित्युपसर्जनग्रहणलब्धम् । 'बहुव्रीहे'रित्यनुवर्त्तमाने उपसर्जनग्रहणफलमाह—**अतिकेशीति** । 'एकविभक्ती'ति केशानामुपसर्जनत्वम् , अप्रधानत्वञ्च ।

### ॐ चिदस्थिमाला ॐ

बहुव्रीहिरत्र नेत्याह—**अस्वाङ्गमिति** । एतद्व्याख्यानफलमुत्तरसूत्रे इति—अर्थाधिकारानुरोधादत्रैवमितिसूचयन्नाह—**उत्तरेति** । तत्र=उत्तरसूत्रभाष्ये । 'उक्त'मित्यत्रान्वयः । चो ह्यर्थे । यच्च पाणीति, न तदन्तमदन्तं प्रातिपदिकमित्यपि बोध्यम् । **रूपपूर्वेति** । एतेनास्वाङ्गादित्येव सिद्ध पूर्वपदग्रहणमप्युत्तरार्थमिति सूचितम् ।

एवञ्च=तत्र तदनुवृत्तौ च । 'पुत्रहती'त्यादावनेन ङीषिति कैयटस्य तदुपपादकदण्ड्यादेश्चासाङ्गत्यायाह—**पुत्रादिनीति** । अत्रैवाह—**अस्वाङ्गादिति** । फलसत्त्वे इदमयुक्तमत आह—**किञ्चेति** । उत्तरार्थत्वञ्च प्राक्सूचितमेवेति पुनरत्र नोक्तम् । एतेन तद्विरुद्धमिदमित्यपास्तम् । 'समासप्रे'तिनिषेधनिरासमाह—**तदन्तादिति** । शास्त्रीयोपसर्जनत्वमस्तीत्याह—**एकेति** । लौकिकमप्यस्तीत्याह—**अप्रेति** ।

### ॐ सदाशिवभट्टीयम् ॐ

सिद्धमितिशेषः । **अस्वाङ्ग** । अस्वाङ्गादिति बहुव्रीहिविशेषणेऽपि न स्वाऽङ्गं यत्रेति विग्रहेण 'सुरापीती'त्यादिसिद्धौ दोषाभावेन पूर्वग्रहणं स्पष्टार्थमेवेति वाच्यम् , उत्तरसूत्रे न स्वाङ्ग यत्रेति कर्तुमशक्यत्वेन स्वाङ्गाभिन्नात्पूर्वपदात्परं यत्स्वाङ्गन्तदन्तादनुपसर्जनादित्यर्थे 'कल्याणपाणिपादे'त्यत्रापत्तिः स्यात् । पूर्वपदग्रहणे तु यत्स्वाङ्गं—न तत्पूर्वपदं, यच्च पूर्वपदं—न तत्स्वाङ्गमित्यदोष इति बोध्यम् । **स्वाङ्गाच्चो** । **एकविभक्तीति** । शास्त्रीयमुपसर्जनमेव ग्राह्यम् , अत एवापराश्च ते केशाश्च अपरकेशाः, आ=ईषदपरकेशा

### ॐ वरवर्णिनी ॐ

यद्यपि भाष्ये 'भार्याया'मिति नाभिहितन्तथापि तत्र विशेषे इत्यभिधानादेवङ्कथनमित्यभिप्रायेणाह—**भाष्ये त्विति** । न चान्य एव विशेषः कल्प्यतामिति वाच्यं, "पाणिगृहीती भार्या, यस्या हि यथाकथञ्चित्पाणिर्गृह्यते पाणिगृहीता सा भवती"ति भाष्यात्तथोक्तमित्यभिप्रायात् ।

शिखेति। इदमेव प्रत्युदाहरणम्। 'शोभने'त्यादि 'सुशिखा'न्तं प्रक्षिप्तम्।

### ॐ चिद्‌स्थिमाला ॐ

शिखेतीति। अन्यथा टापं वाधित्वा पक्षे ङीष् स्यादिति भावः।

### ॐ सदाशिवभट्टीयम् ॐ

इति विग्रहे आपरकेशीत्यत्र परादिवद्भावेन 'आपरे'ति पूर्वपदम्, तस्मात्परं स्वाङ्गं 'केशे'ति-शास्त्रीयोपसर्जनकमिति ङीष्भवति, लौकिकाऽप्रधानत्वग्रहणे तु तत्र तदभावेन ङीप् न स्यादिति–कृत्रिमन्यायेन शास्त्रीयस्यैव ग्रहणमुचितमिति बोध्यम्। एवञ्चाऽप्रधानत्वञ्चेति ग्रन्थश्चिन्त्यः, समुच्चयार्थको वेति सुधियः।

शिखेति। प्रत्युदाहरणमिति। नचोपसर्जनादित्यस्याऽभावे बहुव्रीहेरित्यनुपसर्जनादित्युभयमपि प्राप्तं-

### ॐ वरवर्णिनी ॐ

सुशिखेति। वस्तुत इदमेव युक्तं, 'कल्याणपाणिपादे'त्यादौ ङीप्व्यावृत्तयेऽस्वाङ्गपूर्वपदादित्यनुवर्त्य 'अस्वाङ्गाभिन्नपूर्वपदात्परं यत्स्वाङ्गं तदन्तात्प्रातिपदिका'दित्यादिभाष्योक्तार्थस्य स्वेनैव पूर्वसूत्रे उक्ततया 'शिखे'त्यादावस्वाङ्गपूर्वपदात्परत्वाभावेन ङीषोऽप्राप्तेः। अत एव च भाष्ये 'अशिखे'तिप्रत्युदाहृत, 'सहन'-ल्लक्षणनिषेधस्तु न शङ्क्यः, अस्य=विष्णोः—शिखेत्यर्थेन नञोऽत्राभावात्। न च तत्र समासात्प्रागेव टापि अदन्तत्वाभावान्न ङीषः प्राप्तिरिति वाच्यम्, उपसञ्जनिष्यमाणन्यायेन, 'शूद्रा चामहत्पूर्वे'त्यत्रोक्तरीत्या कुक्कुटाण्डवत्स्त्रीत्वाविवक्षया वा समासात्पूर्वं टापोऽप्रवृत्तेः। 'शीङः खो ह्रस्वश्चे'त्युणादिनिष्पन्नतया 'गतिकारकोपपदानां कृद्भि'रितिपरिभाषया सुबुत्पत्तेः प्रागेव समासे टापोऽप्राप्त्या ङीष एव प्रवृत्तेश्च।

नागेशानुयायिनस्तु–उपसञ्जनिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेनैव सङ्कोचो न तु भविष्यदपवादविषयघटकातिरिक्तत्वेन, अत एव 'व्याघ्री'त्यादेर्गतिकारकेतिपरिभाषाफलत्वं भाष्योक्तं सङ्गच्छते। अन्यथा तत्रापि उपसञ्जनिष्यमाणन्यायेनैव भविष्यदपवादविषयघटकव्याघ्रातिरिक्तत्वेन सङ्कोचे टापोऽप्राप्ताबुदाहरणपरभाष्यासङ्गतिः स्पष्टैव। तथा च प्रकृते ङीष्विषयः=सुशिखेति—तद्विषयाऽतिरिक्तत्वेन सङ्कोचे 'सुशिखे'त्यस्माट्टाप् न स्यात्. तथापि तद्घटक–'शिख'शब्दात्तु टाप्स्यादेव। [तद्घटकातिरिक्तत्वेन सङ्कोचे तु शिखशब्दाट्टाब्व्यावर्त्तयितुं शक्येताऽपि, तदेव तु न, 'व्याघ्री'त्याद्युदाहरणपरभाष्यप्रामाण्येन तद्घटकातिरिक्तत्वेन सङ्कोचस्य कर्त्तुमशक्यत्वात्—]एवञ्च शिखशब्दात्समासात्प्रागेव टापि अदन्तत्वाऽभावेन ङीषोऽप्राप्त्या 'सुशिखे'त्यादि प्रत्युदाहरणं न सम्भवति। उणादयस्त्वव्युत्पन्ना एवेति न 'गतिकारकोपपदाना'मिति परिभाषया सुबुत्पत्तेः पूर्वं समाससम्भव इति शिखेत्येव प्रत्युदाहरणं युक्तम्, 'अस्वाङ्गपूर्वपदा'दित्यस्य च प्रसज्यप्रतिषेधेन स्वाङ्गपूर्वपदात्परत्वाभावविशिष्टादित्येवमर्थ इति नोक्तदोष इत्याहुः।

परे तु''—ननु 'अस्वाङ्गपूर्वपदाद्वे'त्यनुवृत्तिपरभाष्यविरोधाच्छिखेत्येतत्प्रत्युदाहरणं न सम्भवतीति चेच्छृणु—बहुव्रीहिपदानुवृत्त्यैव 'शिखा–' इत्यादौ ङीष्व्यावृत्तिसम्भवे उपसर्जनग्रहणं–'यस्मात्प्रातिपदिकान्ङीष् चिकीर्षितस्तन्निरूपितोपसर्जनत्वविशिष्टस्वाङ्गवाचकान्तप्रातिपदिकान्ङी'षित्यर्थसम्पादनद्वारा स्वाङ्गसमुदायवाच्युत्तरपदके 'कल्याणपाणिपादे'त्यादौ ङीष्व्यावृत्त्या साफल्यमुक्त्वा—'अस्वाङ्गपूर्वपदा'दित्यनुवृत्त्या तद्वैयर्थ्यमाशङ्क्य[1]—उपसर्जनग्रहणस्य–'उपसर्जनमात्राद्यथा स्यात्–'निष्केशी यूका' 'अतिकेशी माला', न बहुव्रीहिमात्रा'दित्यादिप्रयोजनमभिहितं भाष्ये।''—अथ 'निष्केशी यूके'त्याद्यर्थत्वे बहुव्रीहिपदेऽस्वरितत्वाभ्युपगमेनाऽपि तदननुवृत्तौ सिद्धायामुपसर्जनग्रहणं किमर्थम्–''इति शङ्कायामेव–'अनुपसर्जना-

---

१ 'कल्याणपादे'त्यतो ङीष् चिकीर्षित इति तन्निरूपितोपसर्जनत्वं 'पाणिपादे'त्यस्य समुदायस्य तच्च न स्वाङ्गमिति–अत्र ङीषभाव एवोपसर्जनग्रहणफलमित्याशङ्क्य—तच्च 'स्वाङ्गे'त्याद्यनुवृत्त्याऽपि सिद्धमिति नोपसर्जनग्रहणफलमत्रेति—समाधायेत्यर्थः।

विशिष्टेऽदन्तत्वाभावेनाप्राप्तेः। यद्यपि भाष्ये 'अशिखे'ति प्रत्युदाहृतं, तस्याप्येकदेश एव तात्पर्यं, नञ्पूर्वे 'सहन'ञिति निषेधेन प्राप्त्यभावात्। एतेन 'क्रोडादिषु शिखाशब्द-पाठ' इत्यपास्तम्।

**ॐ चिदस्थिमाला ॐ**

- विशिष्टे=टाबन्ते। तेनैव समासात्। अत्र भाष्यविरोधं परिहरति—यद्यपीति। एतेन=अनेन निषेधे फलाभावेन। लाघवादाह—एवञ्चेदमिति। तथा च लक्षणान्तरमिदमित्यपास्तम्।

**ॐ सदाशिवभट्टीयम् ॐ**

तत्राऽनुपसर्जनादिति सम्बन्धे 'सुशिखे'त्यत्र टापं बाधित्वा ङीबुपसञ्जनिष्यतीति न्यायेनेति सम्यगेव ग्रन्थः। 'अशिखे'त्यत्रापि न 'सहन'ञितिनिषेधः, अस्य शिखेत्येवं भाष्याऽभिप्रायादिति वाच्यम्, अत इत्यनुवृत्तौ शिखेत्यत्र टापं बाधित्वा ङीष्स्यान्न तु सुशिखेत्यत्र उपसञ्जनिष्यन्यायस्य सामर्थ्यमूलकत्वात्, शिखेत्यत्र चारितार्थ्यादित्येतद्ग्रन्थसङ्गतिरिति कश्चित्। वस्तुत उपसञ्जनिष्यन्यायस्याऽपि प्रवृत्तिरिति सम्यगेव मूलाभिमतम्।

**ॐ वरवर्णिनी ॐ**

दिति किं? शिखा'—इति ग्रन्थप्रवृत्तेः। एवञ्च बहुव्रीहिपदानुवृत्तिमभिप्रेत्योपसर्जनग्रहणफलनिराकरणप्रवृत्त-भाष्यस्यैवास्वाङ्गपूर्वपदादित्यनुवृत्त्यभिलापकत्वेन—'स्वाङ्गाच्चोपसर्जना'दिति यथाश्रुतन्यासे 'यस्मात्प्रातिपदिका-न्ङीष् चिकीर्षितस्तन्निरूपितोपसर्जनत्वविशिष्टस्वाङ्गवाचकान्तप्रातिपदिका'दित्यर्थस्य सत्त्वेन 'कल्याण-पाणिपादे'त्यादौ दोषाभावेनाऽस्वाङ्गपूर्वपदादित्यनुवृत्त्यभावस्यैव सत्त्वेनोपसर्जनग्रहणाऽभावे 'शिखे'त्यादि-दोषदानं सूपपन्नमित्याहुः। नचैवमपि 'कल्याणपाणिपादे'त्याद्येव उक्तार्थसम्पादनायोपसर्जनग्रहणव्यावर्त्यं भाष्योक्तमेवोचितमिति वाच्यं, भाष्येऽपि 'शिखे'त्यस्यैव प्रथमं प्रत्युदाहृततया प्रथमत्यागे मानाभावात्।

यत्तूक्तरीत्यार्थकरणे—कल्याणं घटपादं यस्या इति बहुव्रीहौ 'कल्याणघटपादे'त्यादौ ङीषोऽनापत्तिः, स्वाङ्गवाचके पादशब्दे उपसर्जनत्वपर्याप्तेरभावात्, एवञ्च सिद्धान्तभूते बहुव्रीहिपदाननुवृत्तिकल्पेऽपि यस्मात्प्रातिपदिकादित्याद्युक्तप्रत्यासत्तिमनाश्रित्यास्वाङ्गपूर्वपदादित्यनुवृत्त्यैव 'कल्याणपाणिपादे'त्यादौ ङीष्-व्यावर्त्य इति 'शिखे'ति प्रत्युदाहरणं चिन्त्यमेवेति; तत्तुच्छं, बहुव्रीहिपदाननुवृत्तिकल्पे—अस्वाङ्गपूर्वपदा-दित्यनुवृत्त्यैवोपसर्जनग्रहणव्यावर्त्य—कल्याणपाणिपादेत्यादि–सिद्धावुपसर्जनग्रहणं बहुव्रीह्यधिकारनिवृत्त्य-र्थम्—'इति भाष्यविरोधापत्तेः—'कल्याणघटपादे'त्यादेरनभिधानस्यैवोचितत्वात्, अन्यथा उपसर्जनग्रहणे सत्युक्तरीत्या प्रत्यासत्तिमाश्रित्यार्थकरणे 'कल्याणघटपादे'त्यादौ ङीप् न भवति, अस्वाङ्गपूर्वपदादित्यनु-वृत्तौ तु ङीष् स्यादिति फलभेदस्तत्र स्पष्ट एव।''—यदि च 'स्वाङ्गवाचकोत्तरपदकबहुव्रीहे'रित्यर्थक—'स्वाङ्गोत्तरपदका'दितिन्यासेन सिद्धावुपसर्जनग्रहणं बहुव्रीहिनिवृत्त्यर्थमिति भाष्यतात्पर्यं, यद्वा—'कल्याणघटपादे'-त्यादौ फलभेदाभावाय तादृशप्रत्यासत्तिरेव नाश्रीयते, नतु तावता तदनभिधानकल्पनमुचितम्, एवञ्च तदनभिधाने मानाभावेन बहुव्रीहिपदानुवृत्तिकल्पैकवाक्यतया तदननुवृत्तिकल्पेऽपि तादृशप्रत्यासत्ति-र्नाश्रयणीयाऽपि तु 'कल्याणपाणिपादे'त्यादौ ङीषो व्यावृत्तयेऽस्वाङ्गपूर्वपदादित्यनुवर्तनीयमिति—प्रोच्यते—तर्हि 'शिखे'ति प्रत्युदाहरणं नोचितमिति केचित्।

वस्तुतस्तु 'कल्याणघटपादे'त्यादौ ङीष् नेष्यते, किन्तु टाबेव। अतएव बहुव्रीहिपदानुवृत्तिकल्पे 'कल्याण-पाणिपादे'त्यर्थमेवास्तूपसर्जनग्रहणमिति भाष्योक्तं सङ्गच्छते। उक्तरीत्या प्रत्यासत्त्यनङ्गीकारे—उपसर्जन-ग्रहणस्य कथमपि 'कल्याणपाणिपादे'त्यादौ ङीष् व्यावर्त्तकत्वं न सम्भवतीति बोध्यम्।

नच कृते उपसर्जनग्रहणे उक्तरीत्या प्रत्यासत्त्याश्रयणेऽपि च 'कल्याणपाणिपादे'त्यादौ ङीष् दुर्वारः, स्वाङ्ग-समुदायेऽपि स्वाङ्गावयवत्वस्यानुभवसिद्धतया पाणिपादात्मकद्वन्द्वस्य तादृशपाणिपादोभयात्मकस्वाङ्गवाच-कतायाः सम्भवादिति वाच्यं, स्वाङ्गत्वव्याप्यकरत्वपादत्वादिधर्मावच्छिन्नवाच्यतानिरूपितवाचकतापर्याप्त्य-धिकरणीभूतस्यैव स्वाङ्गवाचकत्वव्यवहारेण समुदायत्वविशेषपुरस्कारेण वाचकस्य पाणिपादात्मकसमुदायस्य स्वाङ्गवाचकत्वाभावादित्युमानाथपण्डितो व्याचष्ट।

ननु स्वमङ्गं स्वाङ्गञ्चेत्–'सुमुखा शाले'त्यत्रापि स्यात्, मुखस्य शालाङ्गत्वात्, 'सुकेशी रथ्ये'त्यत्र च न स्यात्, केशानां तदङ्गत्वाभावादत आह—**अद्रवमिति** । स्पर्शवद्द्रव्यपरिमाणं–मूर्तिः । **रथ्येति** । इदानीं प्राणिस्थत्वाभावात्पूर्वलक्षणेनाऽसिद्धिः । एवञ्चेदं 'पूर्वलक्षणे प्राणिस्थत्वमुपलक्षण'मित्यत्र तात्पर्यग्राहकमिति भावः ।

प्रतिमादिगतस्तनस्य प्राणिनि कदाप्यदृष्टत्वादाह—**तेन चेदिति**। अप्राणिनोऽपि स्वाङ्गं तेन–तज्जातीयेन वस्तुना प्राणी यथा सम्बद्धस्तथाऽप्राणी सम्बद्धश्चेदित्यर्थः । अत एव 'तस्य चेत्तत्तथा युत'मित्यस्य 'अप्राणिनोऽपि स्वाङ्ग'मिति शेषो भाष्ये दर्शितः ।

**पुरस्तादिति** । स ह्यनन्तरस्यैव बाधकः । **मद्ध्ये इति** । स हि पूर्वस्यैव बाधकः । **प्रामाणिका इति** । एवञ्च 'सुगात्री'त्यादयोऽपप्रयोगा एवेति भावः । **उरः क्रोडेति** । टबन्तोऽयं स्वभावतो विशेषविषयः ।

**शूर्पणखेति** । 'पूर्वपदात्सञ्ज्ञाया'मिति णत्वम् । केवलयौगिकत्वे तु 'शूर्पनखी'त्येव ।

---

ॐ चिदस्थिमाला ॐ

एवञ्च लक्षणद्वयमेव । एतेन लक्षणत्रयमिति **दण्ड्याद्युक्तमपास्तम्** । अस्य न प्राणिसम्बद्धविषयकत्वमित्युक्तं स्पष्टयितुं शेषमाह—**अप्राणिनोऽपीति** । 'स्वाङ्गं तेने'ति पाठः । मध्ये'यदी'त्यपपाठः, अग्रे 'चे'दित्यस्य सत्त्वात् । तेनेत्यस्य व्याख्यानन्तस्येत्यादि । तथेत्युक्तिलब्धमाह–**प्राणीत्यादि** । तदर्थमाह—**अप्राणीति** । शेषे मानमाह—**अत एवेति** । अस्य तदन्यविषयत्वादेवेत्यर्थः । भाष्यीयपाठमाह--**तस्य चेति** । करणस्य शेषत्वविवक्षया षष्ठी । तुदादौ 'क्रुड निमज्जने' इति धातौ माधवोक्तानुवादो मूले इत्याशयेनाह—**टाबन्तोयमिति** । तेन समासे उपसर्जनह्रस्वत्वेऽदन्तत्वात्प्राप्तिः । क्रोडादौ टाबन्तमात्रस्य पाठाद्बुजान्तरवचनक्रोडशब्देन बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्पो भवत्येव 'कल्याणक्रोडी' 'कल्याणक्रोडा'। हरदत्तस्वरसोऽप्येवम् । 'केवले'त्यनेन रूढिनिरासः । अत्रोभयं नेत्याह–

---

ॐ वरवर्णिनी ॐ

सूत्रस्थ'स्वाङ्ग'शब्दस्य वार्त्तिककारीयपरिभाषाविषयत्वन्न तु केवलयौगिकत्वमिति प्रदर्शयितुमाशङ्कते–**नन्विति** । **स्वमङ्गमिति** । स्वीयमङ्गमित्यर्थः । स्वशब्दस्यात्मीयपरत्वात् । द्रवतीति द्रवं, न द्रवम्—अद्रवम् । मूर्त्तिः=काठिन्यम्, अथ वा–असर्वगतद्रव्य–परिमाणम्, अविभुपरिमाणमिति यावत् । एतेनाऽऽकाशादेर्व्यावृत्तिः, तत्फलितार्थमाह—**स्पर्शवदिति** । सा=मूर्त्तिर्यस्यास्ति तत्—स्वाङ्गम् । स्वेदस्य स्वाङ्गत्वप्राप्तिर्द्वितीयार्थं एवेति द्वितीयार्थ एव तात्पर्यम् । ज्ञानस्याऽद्रवत्वात्तत्रातिव्याप्तिवारणाय **मूर्त्तिमदिति** । 'सुमुखा शाले'त्यत्रातिव्याप्तिवारणाय—**प्राणिस्थमिति**। 'सुशोफे'त्यत्रातिव्याप्तिवारणाय–**अविकारजमिति**। विकारो=वातादिवैषम्यं, तस्माद्यन्न जातन्तत्तथा। 'सुकेशी' 'दीर्घकेशी'-रथ्येत्यत्र स्वाङ्गत्वसिद्धये आह—**अतत्स्थन्तत्र दृष्टञ्चेति** । 'सुस्तनी' 'सुस्तना'—वा प्रतिमे'त्यस्य सिद्धये—**'तेन चेत्तत्तथा युतमिति** । भाष्ये तु—'तस्य चेत्तत्तथा युत'मिति पाठो दृश्यते, तस्यापि प्राणी=स्त्र्यादिर्यथास्तनादिना स्वेनाङ्गेन युतो भवत्येवमेवाप्राणी—प्रतिमादिरपि युतश्चेत्तदा तदङ्गाकारोऽवयवः स्तनादिः—प्रतिमादिगतोऽपि स्वाङ्गमुच्यते इत्येवमेवार्थः । तत्र 'तस्ये'ति करणस्य शेषत्वाविवक्षया षष्ठी । अत्र 'अतत्स्थन्तत्रदृष्टञ्चे'ति लक्षणान्तरमिति प्रतीयते तन्न युक्तम्, प्रथमलक्षणेनैव द्वितीयलक्षणसङ्ग्राह्यस्य सङ्ग्रहसम्भवे लक्षणान्तरस्वीकारस्य गौरवपराहतत्वादित्याशयेनाह—**एवञ्चेदमिति** । पूर्वलक्षणेनासङ्ग्रहादाह—**प्रतिमादीति** । अत एव=तृतीयवाक्यस्याप्राणिविषयकत्वादेव ।

**न ङीबिति** । अस्वरितत्वादिति भावः । **इति शब्द इति** । एवञ्च 'भाषाया'मिति व्यर्थं, 'छन्दसी'त्यस्य 'दिक्पूर्वपदा'दित्यत्रासम्बन्धेनास्वरितत्वाद-सम्बन्धसिद्धेः ।

परे तु–'दि'गिति सूत्रे, 'वाह' इत्यत्र च 'छन्दसी'ति वर्त्तते । लोके त्वन्तोदात्तमेव 'प्राङ्मुखी'ति । एवञ्च तन्निवृत्तिबोधनाय 'भाषा'ग्रहणम् । इति-श्चार्थे, तेन–छन्दस्यपि, अत एव 'ङेरा'मिति सूत्रे कैयटे–'सख्यशिश्वी च भाषा'मिति पाठो दृश्यते इत्याहुः ।

**क्वचिदिति** । सर्वविधीनां छन्दसि वैकल्पिकत्वेन 'सखा सप्तपदी भवे'ति सिद्धम् । न विद्यते शिशुरस्या इत्यशिश्वी । क्वचिदस्याद्युदात्तत्वन्तु छान्दसत्वात् ।

जातिशब्देन अर्थे कार्यासम्भवात्तद्वाचकग्रहणमित्याह–**जातिवाचीति** । अनन्य-भावे विषयशब्द इत्याह–**न च स्त्रियां नियतमिति** । 'भिन्नेष्वभिन्नाभिधानप्रत्यय-निमित्तं जातिः' 'नित्यमेकमनेकानुगतं सामान्य'मित्यस्य च शुक्लादिगुणस्यैकत्वनित्यत्वपक्षे

ॐ चिदस्थिमाला ॐ

**नखीत्येवेति** । राक्षस्यामपीति भावः । 'नान्दीमुख्यो मातर' इत्यत्र तु ङीषेव, नान्दी=कर्मसमृद्धि-स्तन्मुखत्वेन=तद्दातृत्वेन योगेन तत्र तच्छब्दप्रवृत्तेरसञ्ज्ञात्वात् । किञ्च सर्वत्र शास्त्रे सञ्ज्ञापदेन पौरुषेयसङ्केतितस्य केवलरूढस्य च ग्रहणेन तत्र च तस्येश्वरसङ्केतस्य सत्त्वेन योगरूढत्वेन वा अतत्त्वात् । अत एव दिक्षु विश्वेषां देवानामित्यादौ च सर्वनामत्वमित्याहुः । मूलतात्पर्यार्थमाह–**एवञ्चेति** । उभयत्रेष्टत्वे चेत्यर्थः । **असम्बन्धेति** । वृत्तिकृतेति भावः । मूलादि दूषयन् सिद्धान्तमाह–**परे त्विति** । एवञ्च=तयोस्तदनुवृत्तौ च । अत एव=तस्य चार्थत्वादेव । **क्वचिदस्येति** । 'आधेनवो धुनयन्तामशिश्वी'-रित्यत्रेत्यर्थः । 'अश्वी'त्यादिवैयर्थ्यापत्त्या स्वरूपग्रहणशङ्कैव नेत्याह—**जातीति** । **भिन्नेष्विति** । नन्वित्यादिः । तयोर्निमित्तमित्यर्थः । लक्षणान्तरमाह—**नित्यमिति** । तत्र=गुणे । सामानाधि-करण्येन स्त्रीत्वौचित्यादाह—**सामान्ये इति** । 'सस्थानमाकृतौ मूर्त्या'मिति कोशोक्तसंस्थानपदार्थ-

ॐ वरवर्णिनी ॐ

**भिन्नेष्वभिन्नेति** । इदं वेदान्तिमतसिद्धं लक्षणम् । अभिधीयतेऽनेन यत्तदभिधानम्, प्रत्ययः, प्रतीतिः, ज्ञानमित्यनर्थान्तरम् । अभिधानञ्च प्रत्ययश्च–अभिधानप्रत्ययौ, अभिन्नयोरभिधानप्रत्यययोर्निमित्तम-भिन्नाऽभिधानप्रत्ययनिमित्तम् । भिन्नेष्विति सप्तम्यर्थो विषयत्वम् । एवञ्च–भिन्नेषु=शुक्लनीलादिभेद-भिन्नेषु घटादिषु,–अभिन्नाभिधाननिमित्तं जातिरित्येकोऽर्थः, अभिधानेऽभिन्नत्वञ्च–घटत्वाद्येकरूपपुरस्कारेण बोधकत्वम् । घटत्वपटत्वादियद्रूपपुरस्कारेण घटपटादेरभिधानस्य=नाम्नः, घटपटाद्यनेकधर्मिबोधकता तदेव रूपं–जातिरिति यावत् । एवं 'भिन्नेष्वभिन्नप्रत्ययनिमित्तं जाति'रित्यपरं लक्षणम् । प्रत्यये अभिन्नत्वञ्च–एकरूपनिष्ठप्रकारतानिरूपकत्वम् । घटत्वादियद्रूपपुरस्कारेण प्रत्ययस्य=ज्ञानस्यानेकावगाहित्वं तत्त्वमिति-तत्त्वम् । घटादावभावादौ चातिव्याप्तिवारणाय विशेषणान्तरनिवेशोऽप्यास्थेय इतित्वन्यत् ।

नैयायिकाभिमतं जातिलक्षणमाह—**नित्यमिति** । 'नित्यत्वे सत्येकत्वे सति समवायसम्बन्धेनानेकवृत्तित्व'-मिति तदर्थः । 'नित्यत्वे सती'त्युक्त्या–घटस्यानेककपालसमवेतत्वेऽपि न जातित्वं, नित्यत्वाभावात् । एकत्वञ्च–सजातीयद्वितीयरहितत्वं, तच्च–स्वविशिष्टाधिकरणवृत्तित्वाभावरूपं, वै० 'स्वसामानाधिकरण्य' 'स्वाभावसामानाधिकरण्य' 'स्वसमानाधिकरणाभावप्रतियोगित्व' 'स्वावृत्तिजात्यभाववत्त्वैं'तच्चतुष्टयसम्बन्धेन । यस्य घटत्वादेर्जातित्वं विवक्षितं तत्त्वम् । 'एकत्वे सती'त्युक्त्या च–विभुद्वयसंयोगस्वीकर्तृमते

तत्रातिव्याप्तिः । 'जननेन प्राप्यते सा जाति'रिति च युवत्वादावव्याप्तमत आह-**आकृतीति** । 'ग्रहण'मिति करणे ल्युट् । सामान्ये नपुंसकम् ।

आकृतिः = अवयवसन्निवेशः । 'आकृतिर्ग्रहणं यस्या' इति विग्रहस्तदाह-**अनुगतेति** । 'ईदृशाकारो गौ'रित्याकृत्युपदेशादिव्यङ्ग्येत्यर्थः ।

न च बाल्याद्यवस्थाभेदभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन तत्रातिव्याप्तमिदमिति वाच्यं, समानकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येत्यर्थात् ,

❀ चिद्‌स्थिमाला ❀

माह—**अवयवेति** । आदिना आकृतिदर्शनम् । विशेषणदानेन 'निर्वाह इत्याह—**समानेति** । तद्भिनापि

❀ सदाशिवभट्टीयम् ❀

**जातेरस्त्री** । देवदत्तेऽति व्याप्तेः-**समानकालिकाऽनेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येति** । तत्र समान-

❀ चरवर्णिनी ❀

दिग्गगनसंयोगादेर्न जातित्वं, पूर्वोक्तचतुष्टयसम्बन्धेन स्वविशिष्टो यो दिक्कालसंयोगस्तत्सामानाधिकरण्यस्यैव दिगाकाशसंयोगे सत्त्वेन निरुक्तैकत्वाभावात् । निरुक्तवैशिष्ट्यघटक**प्रथमसम्बन्धा**नुपादाने—पटादिगततद्व्यक्तित्वे घटत्ववैशिष्ट्यस्य सत्त्वात्तत्सामानाधिकरण्यस्यैव सत्त्वेन निरुक्तैकत्वाभावाद्घटत्वादौ जातिलक्षणाऽव्याप्तिः । तदुपादाने तु—पटगततद्व्यक्तित्वे घटत्वाधिकरणघटवृत्तित्वाभावेन घटत्वसामानाधिकरण्याभावान्न क्षतिः । **द्वितीयसम्बन्धा**नुपादाने-घटगततद्व्यक्तित्वे घटत्ववैशिष्ट्यस्य सत्त्वेन तत्सामानाधिकरण्यस्यैव घटत्वे सत्त्वाद्घटत्वेऽव्याप्तिरतस्तदुपात्तम् । तदुपादाने तु—घटगततद्व्यक्तित्वे घटत्वाभावाधिकरणपटाद्यवृत्तितया घटत्ववैशिष्ट्यस्य तत्राभावेन नोक्ताऽव्याप्तिः । **तृतीयसम्बन्धा**नुपादाने—पृथिवीत्ववैशिष्ट्यस्य द्रव्यत्वसत्तादौ सत्त्वेन पृथिवीत्वेऽव्याप्तिः । तदुपादाने तु—पृथिवीत्वाधिकरणवृत्त्यभावप्रतियोगित्वस्य द्रव्यत्वादावभावान्न पृथिवीत्वे जातिलक्षणाव्याप्तिः । **चतुर्थसम्बन्धा**नुपादानेऽपि पृथिवीत्वेऽव्याप्तिः, पृथिवीत्ववैशिष्ट्यस्य पार्थिवपरमाणुगगनसंयोगे सत्त्वात्तत्सामानाधिकरण्यस्यैव सत्त्वात् । तदुपादाने तु-पृथिवीत्वसामानाधिकरण्यस्य, पृथिवीत्वाभावाधिकरणगगनवृत्तित्वस्य,[संयोगस्याव्याप्यवृत्तित्वेन-]पृथिवीत्वाधिकरणवृत्तितादृशसंयोगाभावप्रतियोगित्वस्य च सत्त्वेऽपि पृथिवीत्ववृत्तिसंयोगत्वजातिमत्तया तादृशजात्यभाववत्त्वाभावात्पृथिवीत्ववैशिष्ट्यस्य तादृशसंयोगेऽभावात्तत्सामानाधिकरण्येऽपि न तत्र जातिलक्षणाऽव्याप्तिरिति न दोषः ।

अन्ये तु—एतत्फलं घटत्वपटत्वमठत्वादिजातिसमुदायस्य न जातित्वम्, अन्यथा तादृशजातिसमुदायस्य तत्तदवयवजात्यात्मकतया नित्यत्वेनाऽनेकवृत्तित्वेन च तत्त्वं स्यादेव । यदि तु समुदायस्यावयवात्मकतया जातिसमुदायेऽपि जातित्वमिष्यते तर्हि विशेषसमुदायस्य जातित्वाभावश्चतुर्थसम्बन्धफलमित्याहुः ।

**शुक्लादीति** । शुक्लादिगुणानामेकत्वं—भिन्नेष्वभिन्नाभिधाननिमित्तत्वाद्घटत्ववत्सकलश्वेतपटदुग्धदधिशङ्खाम्बुजादिवृत्तित्वात् । नित्यत्वमपि-घटत्वादिवदेवेति भावः । 'पक्षे'इत्युक्त्या तत्रानास्था सूचिता, एवं हि भिन्नेष्वभिन्नाभिधाननिमित्तमात्रेण शुक्लादेर्जातित्वे घटादेरपि नीलपीतरक्तघटादिषु तथात्वान्नित्यत्वापत्त्या जातित्वापत्तिं को नाम निवारयेत् , अतो न शुक्लादिकं जातिरिति भावः । उक्तलक्षणद्वयेऽतिव्याप्तिं प्रदर्श्य तृतीयं लक्षणमाह—**जननेनेति** । 'स्वतादात्म्य' 'स्वाधिकरणद्रव्योत्पादकसामग्रीतराऽप्रयोज्यानुयोगिताकसम्बन्धप्रतियोगित्वो'भयसम्बन्धेन स्वविशिष्टत्वं जातित्वम् । यस्य जातित्वं च्चिकीर्षितं तत्स्वम् । घटत्वाधिकरणघटोत्पादकसामग्र्येव घटत्वप्रतियोगिकसमवायीयघटनिष्ठानुयोगितायाः प्रयोजिकेति घटत्वादौ लक्षणसमन्वयः । युवत्वप्रयोजकसामग्र्या देवदत्तप्रयोजकसामग्रीतरतयाऽव्याप्तिं तृतीयस्याऽपि प्रदर्श्य चतुर्थं लक्षणमाह—**आकृतीति** । तार्किकादिसम्मतस्य देवदत्तत्वादीनाञ्जातित्वस्य-[ नचेत्यादिनाऽऽशङ्क्य]—खण्डनमुपन्यस्यति—**समानेति** । समानकालिका या अनेकव्यक्तयस्तद्वृत्ति यदनुगतं संस्थानम्

अवस्थाभेदेऽपि तद्भेदाप्रतीतेश्च, 'स एवाय'मिति प्रतीतेश्च, 'तज्जातीयोऽय'मित्यप्रतीतेश्च।

अत एवेन्द्रत्वादिकं न जातिः, पञ्चेन्द्रोपाख्यानादिभिरनेकेषां समकालिकत्वेऽपि सर्वेषां संस्थानस्यैकत्वे मानाभावात्। 'दुर्गा' 'अपर्णे'त्यादौ स्त्रीविषयत्वादपि न ङीष्।

**तटीति**। अनुगतसंस्थानव्यङ्ग्यमेतत्। जलसमीपदेशविशेषो हि–तटम्।

नन्वेवं वृषलत्वादीनां जातित्वं न स्यात्, अवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन तस्या आकृतिग्रहणात्वाभावात्, किन्तु साक्षादुपदेशगम्या सेत्यत आह–**लिङ्गानामिति**। इयमपि जातिरित्यर्थः। 'लिङ्गाना'मिति कर्मणि षष्ठी।

### ❀ चिदस्थिमाला ❀

निर्वाहमाह—**अवस्थेति**। **तदिति**। देहेत्यर्थः। तामेवान्वयव्यतिरेकाभ्यामाह—**स एवेत्यादि**।

अत एवेत्यस्यार्थमाह—**पञ्चेन्द्रोपेति**। अपिना कल्पभेदेन दुर्गाशरीराणां भिन्नत्वेन समानकालिकत्वाभावेनाजातित्वसमुच्चयः। एतत्=तटत्वम्। एवम्=उक्तलक्षणमात्राङ्गीकारे। आदिना ब्राह्मणत्वादि। आदिना क्षत्रियादि। ब्राह्मणादौ शिखायज्ञोपवीतादेरपि तुल्यत्वात्। तस्याः=वृषलत्वादिजातेः। 'ग्रहणात्वे'ति पाठः।

**अत इति**। अतो लक्षणान्तरमप्याहेत्यर्थः। चो भिन्नक्रमः-इतिसूचयन् तदर्थघटितमाह–**इयमपीति**। अनेन मूले **सुग्रहे**त्यस्य सुग्रहापीत्यर्थः सूचितः। इति-इत्यत्र। 'निर्ग्राह्ये'त्यन्तमिदं लक्षणमिति सूचयन्नाह—

### ❀ वरवर्णिनी ❀

=आकारप्रकारविशेषः, तज्जन्यज्ञानविषयीभूता 'जातिरित्यर्थः। यथा समानकालिकवृषलाद्यनेकव्यक्तिवृत्तिसंस्थानविशेषज्ञानजन्यज्ञानविषयीभूता वृषलत्वादिजातिरित्याशयः। चैत्रत्व-मैत्रत्व-देवदत्तत्वादेश्च समानकालिकानेकव्यक्तिवृत्तित्वाभावान्न जातित्वमिति तत्त्वम्। परिहारान्तरमाह—**अवस्थाभेदेऽपीति**। एवञ्च परस्परं विभिन्नतया प्रतीयमानानेकव्यक्तिवृत्तित्वविशिष्टसंस्थानज्ञानजन्यज्ञानविषयीभूता जातिरिति लक्षणं बोध्यमित्याशयः। अवस्थाभेदेऽपि=धर्मस्य युवत्वादेर्भेदेऽपि। तद्भेदाऽप्रतीतेः=देवदत्तरूपधर्मिभेदाप्रतीतेः। नन्वेवं जात्याश्रयव्यक्तेरप्याकृतिग्राह्यतया जातित्वापत्तिरिति चेन्न; 'ईदृशाकारो गौ'रित्युपदेशवाक्यस्य गोत्वबोधेच्छाप्रयोज्यतया 'ईदृशाकारे गोत्व'मित्येतत्समानाकारकतया गोत्वबोधे एव तात्पर्येण तादृशाकारविशिष्टधर्मिणः प्रत्यक्षादिनाऽवगमे गोत्वादिजात्यवगतेरेव तादृशाकारज्ञानाधीनत्वात्; धर्मिणः प्रत्यक्षेणैव गृहीतत्वात्। अत एव=समानकालिकानेकव्यक्तिवृत्तित्वविशिष्टानुगतसंस्थानव्यङ्ग्याया एव जातित्वादेव। इन्द्रत्वन्तु भूतभविष्यद्यावदिन्द्रवृत्ति एकमेव; देवदत्तादिपदवत्तत्तद्व्यक्तित्वप्रवृत्तिनिमित्तकत्वे नानार्थकत्वापत्त्या श्रुत्यादिस्थेन्द्रपदस्यैकैकेन्द्रव्यक्तिबोधकतापत्त्या तदितरेन्द्रपूजने यागादिवैगुण्यापत्तेः। एतेन इन्द्रत्वस्य देवदत्तत्वाद्यविशेषेण पौनरुक्त्यमित्यपास्तम्।

लक्षणान्तरमाचष्टे—**लिङ्गानाञ्चेति**। या सकललिङ्गान्वयितावच्छेदिका न भवतीत्यर्थः। एवञ्च 'लिङ्गान्वयितावच्छेदकत्वकूटाभाववत्त्वे सति 'अयं ब्राह्मण' इत्याकारकवाक्यात्मकोपदेशविशिष्टत्वं' जातित्वमिति फलितम्। वै० 'स्वविशिष्टग्रहप्रकारकत्व'सम्बन्धेन। वैशिष्ट्ये वैशिष्ट्यञ्च–'स्वजन्यज्ञानजन्यत्व' 'स्वजन्यज्ञानविधेयीभूतगोत्वादिधर्मविधेयकत्व' 'स्वजन्यज्ञानीयधर्मिताश्रयेतरधर्मिताकत्वै'तन्त्रितयसम्बन्धेन।

यथा 'अयं ब्राह्मण' इत्याद्युपदेशात्,—एतद्व्यक्तिधर्मिकब्राह्मणत्वप्रकारकज्ञाने—'एतत्पिता ब्राह्मण' इति ज्ञानं स्वविशिष्टं, तत्प्रकारत्वं ब्राह्मणत्वे, किञ्च 'स्त्रीपुंसयोरपत्यान्ता द्विचतुष्षट्पदोरगाः' इत्युक्तेर्ब्राह्मणत्वस्य नपुंसकत्वान्वयितानवच्छेदकत्वेन लिङ्गान्वयितावच्छेदककूटाभाववत्त्वमपि तत्रैवेति–ब्राह्मणत्वस्य

सर्वाणि लिङ्गानि न भजतीति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि भाष्यप्रामाण्यात् 'भजो ण्विः,' समासश्च । आख्यातम्=आख्यानम्,–उपदेशः। कथनात्=उपदेशात् । एकत्रेन्द्र इत्युपदिष्टेऽन्यत्र तद्ग्रहे मानाभावान्नेन्द्रत्वादि तथा । ब्राह्मणत्वन्तु—एकत्रोपदिष्टे तत्तत्पित्रादिषु सुग्रहम् । वृषलत्वं—तदपत्यतत्सहोदरादौ सुग्रहम् ।

अत्र–'आकृतिग्रहणे'ति नित्यानित्यसाधारणमिति-युवत्वादिकमपि जातिरेतन्मते । 'अपर आहे'त्यादिना यावद्द्रव्यभावित्वमित्यनित्यव्यावृत्तं लक्षणान्तरं भाष्ये दर्शितम् । एवञ्च भिन्नऋषिकर्तृकलक्षणद्वयप्रामाण्येन कुमारादिशब्दे जातिकार्यविकल्पः, अत एव 'युवजानि'रित्यत्र पुंवत्त्वं, 'युवतितरे'त्यत्र तदभावश्च भाष्ये उदाहृतः ।

नन्वेताभ्याम'प्यौपगवी' 'कठी'त्यादेरसङ्ग्रहोऽनुगतसंस्थानव्यङ्ग्यत्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह–**गोत्रञ्चेति** ।

### ❀ चिदस्थिमाला ❀

आख्यातमिति । भावे क्त इत्याह—**आख्यानमिति** । अनुवादनिरासाय तदर्थमाह—**उपेति** । स च=ब्राह्मण्यामुत्पन्नोऽयंब्राह्मण इत्यादिरूपः । अस्यापि तत्र नातिप्रसङ्ग इत्याह—**एकत्रेति** । तथा=जातिः । नन्वेवमपि ब्राह्मणत्वादेर्जातित्वं न स्यात्, तस्योपदेशगम्यत्वेप्येकत्र कथितेऽन्यत्र सुग्रहत्वाभावात्, एवञ्च 'ब्राह्मणीभार्य' इत्यत्र 'जातेश्चे'ति पुंवत्त्वनिषेधानापत्तिरत आह—**ब्राह्मेति** । तुरुक्तवैलक्षण्ये । आदिना—पितामहादि । एतेन 'वृषलीपर्यन्तधावनेन मूले ब्राह्मणत्वं नैव जाति'रिति-भ्रान्तिर्निरस्ता; तस्योपलक्षणत्वात् । यत्तु युवत्वादिकमाकृतिग्रहणमपि न जातिर्नित्यत्वाभावादत एव 'वृद्धे'त्यादौ न ङीष्, 'युवजानि'रित्यादौ पुंवद्भावश्च । 'युवतितरे'त्यत्र तु ङ्याप्सूत्रभाष्योदाहरणप्रामाण्यान्न पुंवत्त्वं, तान्त्रिकोक्तनित्यत्वादेरप्यत्रापेक्षणादिति; तन्न; भाष्यविरोधादिति–ध्वनयन् यथाभाष्यं तथाह—**अत्रेति** । अनयोर्मध्ये इत्यर्थः । अत एवाह--**परेति** । **उद्देति** । 'वृद्धे'त्यादौ त्वजातित्वाट्टाविति-बोध्यम् । एताभ्यामपि लक्षणाभ्यां क्रमेणाह—**अनुगतेति** । 'कठः, 'कठी' 'कठमिदङ्कुलं' 'औपगवङ्कुल'-मिति दर्शनेनासर्वलिङ्गत्वाभावादाह—**सर्वेति** । 'अपत्याधिकारादन्यत्वेनात्र तेनापत्यमात्रग्रहणं, तथा यूनि-

### ❀ वरवर्णिनी ❀

जातित्वं सिद्धम् । ननु सकललिङ्गविशिष्टशूद्रत्वविशिष्टार्थकतत्पदादिबोधे शूद्रत्वादीनामपि सकल-लिङ्गान्वयितावच्छेदकतया त्वदुक्तादृशकूटाभावाभावाच्छूद्रत्वादेर्जातित्वानापत्तिरिति चेन्न; तत्र तत्तल्लिङ्ग-प्रतियोगिकसम्बन्धस्यापि पदार्थतयाऽऽकाङ्क्षाभास्यतावच्छेदकविलक्षणरूपावच्छिन्नसंसर्गताश्रयत्वरूपान्वयि-त्वस्याभावेन—[ प्रकृते 'लिङ्गानाञ्च ने'त्यत्र च तादृशान्वयितावच्छेदकत्वस्यैव विवक्षितत्वेन ] अदोषात् ।

**परे तु** 'लिङ्गानाञ्च न सर्वभा'गिति शब्दविशेषणं, 'जाति'रित्यस्य च जातिवाचीत्यर्थ इति तच्छब्दस्यातथात्वान्न दोषलेश इति प्राहुः ।

**पित्रादिष्विति** । ब्राह्मणाद्ब्राह्मण्यामुत्पादितस्यैव ब्राह्मणत्वात् । ब्राह्मणपुत्रभ्रात्रादिषु तु न तद्गृहीतुं शक्यं, ब्राह्मणपुत्रस्य ब्राह्मणभ्रातुश्च शूद्रादेरपि सम्भवात् । एवमग्रेऽपि बोध्यम् ।

**युवत्वादिकमपीति** । मृदुसंस्थानव्यङ्ग्या कुमारत्वजातिः, कठिनसंस्थानव्यङ्ग्या युवत्वजातिः, शिथिलसंस्थानव्यङ्ग्या च वृद्धत्वजातिरिति बोध्यम् । **यावद्द्रव्येति** । स्वाधिकरणद्रव्यसत्ताव्यापक-सत्ताकत्वं जातित्वमित्यर्थः । कुमारत्वादीनां स्वाधिकरणीभूताया युवत्वावस्थापन्नाया व्यक्तेर्या सत्ता तद्व्यापकसत्ताकत्वाभावान्न जातित्वमित्याशयः । चैत्रत्वादीनां जातित्वाभावाय—'समानकालिकानेक-व्यक्तिवृत्तित्वा'दिविशेषणमत्रापि लक्षणे बोध्यम् ।

शास्त्रीयमत्र गोत्रम्। अत एव 'गोत्राद्यूनि प्रत्ययो भवति, 'स्त्रियां लु'गिति न्यासे "–'औपगवी माणविके'त्यत्राण् योऽनुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति, मा भूदेवमणन्तादनुपसर्जनादित्येवं भविष्यति–"इति प्रौढ्या पूर्वप्रक्षिणोक्ते,—तदङ्गीकृत्यैव–'इह तर्ह्यौपगवीभार्य्यः,–जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति, मा भूदेवं–'वृद्धिनिमित्तस्ये'त्येवं भविष्यति, एवन्तर्हि ग्लुचुकायनीभार्ये दोषः' इति 'एको गोत्रे' इतिसूत्रस्थभाष्ये युवापत्यस्य जातित्वाभावकथनं सङ्गच्छते। अन्यथा जातिलक्षणङीष एव परत्वाद्वक्तुं युक्तत्वं, 'पुंवत्त्वप्रतिषेधो न प्राप्नोती'त्यसङ्गतिश्च। ग्लुचुकायनीभार्ये दोषस्तु–ङीष्पुंवत्त्वप्रतिषेधयोरसिद्धिरूपो बोद्ध्यः।

'सर्वतोऽक्तिन्नर्था'दिति ङीषि तु—पुंवत्त्वप्रतिषेधाऽसिद्धिरेव दोषः।

---

### ❀ चिदस्थिमाला ❀

लुक्सूत्रभाष्योक्तेः, 'अवन्तिकुन्ती'ति भाष्येऽनन्तरापत्ये उदाहरणाच्चात एव तथा व्याख्यान'मिति–**दीक्षित-दण्ड्याद्युक्तेरसाङ्गत्यायाह—शास्त्रीयमिति** । 'अपत्यं पौत्रे'ति सूत्रोक्तमित्यर्थः। अत्र भाष्यसंमतिमाह—**अत एवेति** । अत्र तेन तद्ग्रहणादेवेत्यर्थः। 'सङ्गच्छते' इत्यत्रान्वयः। अत एव तदुक्तिरपि सफला। अन्यथा 'अपत्य'मित्येव वदेत्। **न्यासे**–क्रमेण सूत्रभेदे उक्ते सति। तदन्तविशेषणत्वे तदन्तान्तस्यापि विशेषणादनुपसर्जनाधिकारवैयर्थ्यादाह—**इति प्रौढ्या पूर्वपक्षीत्यादि** । अन्यथा=मूलोक्तपक्षे।

ननु सिद्धान्ते चरमे को दोषोऽत आह–**ग्लुचुकेति** । ङीष् च पुंवत्त्वप्रतिषेधश्च तयोरित्यर्थः। अत एव=अपत्यविशेषस्य जातित्वादेव। एवमर्थासङ्गतिमुक्त्वा तत्र दोषमप्याह—**किञ्च बाह्य इति**। उपसंहरति–

### ❀ सदाशिवभट्टीयम् ❀

कालिकेति विशेषणं व्यर्थमनेकवृत्तीत्यनेनैव गतार्थत्वात्। **गोत्रञ्चेति । शास्त्रीयमिति । औपगवीभार्ये पुंवत्त्वनिषेधो न प्राप्नोतीति**। नचाऽत्राऽपि शास्त्रीयं गोत्रं वर्तते इति वाच्यम्, एतद्भाष्यप्रामाण्याद्विशेष्ये तस्य स्पर्शवद्द्रव्यपरिमाणमित्यत्र परिमाणपदं व्यर्थं, व्यावर्त्याऽलाभाल्लक्षणया गोत्रस्य विवक्षितत्वात्(?)।

---

### ❀ वरवर्णिनी ❀

जातिवाचकताप्रयुक्तशास्त्रीयकार्यप्रवृत्तये आरोपितजातिमत्त्वं व्याचष्टे—**गोत्रमिति** । 'अपत्यमात्रं गोत्रमत्रे'ति प्राचीनमतं खण्डयितुमाह—**शास्त्रीयमिति** । **न प्राप्नोतीति** । औपगवस्यापत्यं स्त्रीत्यत्र 'अत इ'ञितीञ्, तस्य लुकि कृतेऽनुपसर्जनाधिकाराद्गोत्रप्रत्ययस्य चाणोऽर्थद्वारेणोपसर्जनत्वात्तदर्थस्य युवप्रत्ययार्थं प्रति विशेषणत्वादणूलक्षण ईकारो न प्राप्नोतीति भावः। **भविष्यतीति** । 'यःशिष्यते'इति न्यायेन प्रत्यये लुप्ते प्रकृतिरेव प्रत्ययार्थमाहेति अण्णन्तस्यानुपसर्जनत्वमिति भावः। नच सिद्धान्तेऽपि गोत्रापत्यत्वावच्छिन्नमुख्यविशेषताकबोधतात्पर्येण तथा प्रयोग इष्यते, तथा विवक्षायान्त्वधुनाऽपि स्यादेव, युवापत्यत्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणैव युवप्रत्ययोत्पत्तेरिति नैष दोष इति वाच्यं, युवापत्यत्वावच्छिन्नमुख्यविशेष्यताकबोधेच्छायाम्—स्त्रीगोत्रापत्यगतस्त्रीत्वबोधतात्पर्येण 'औपगवा'–इत्यस्याप्यापत्तेः। तच्च सिद्धान्तेऽनिष्टं, विशिष्टताद्दृशार्थनिरूपितशक्तेः केनापि शास्त्रेणागृहीतत्वात्तदर्थबोधतात्पर्येण न स प्रयुज्यते, इदानीन्तु तथा प्रयोगापत्तिरिति तत्त्वम्।

अन्यथा=अपत्यमात्रस्य जातित्वे। परत्वात्='ठिड्ढे'त्यपेक्षया परत्वात्। **युक्तत्वमिति**। तव मते

अत एव 'ब्राह्मोऽजाता'विति सूत्रेऽपत्ये जातौ नेत्यर्थः सङ्गच्छते । तत्र त्वपत्यस्य जातित्वाव्यभिचारात्तदसङ्गतिः, 'ब्राह्मो नारद' इत्यसिद्धिः । अतः सामर्थ्येनात्र शास्त्रीयगोत्रस्यैव ग्रहीतुमौचित्यम् ।

'अनन्तरापत्यप्रत्ययान्ते 'अवन्ती'त्यत्र जातिप्रयुक्तो ङी'पित्यनुपसर्जनादितिसूत्रभाष्यन्त्वनन्तरेऽप्यत्यास्मिन्न्ौगायनित्वद्गोत्रत्वारोप इत्यभिप्रायेण । यूनि तु न शास्त्रीयगोत्रत्वारोपः, तत्र 'युवैव न गोत्र'मिति नियमेन तत्सञ्ज्ञानिषेधात्,–तदाह–**अपत्यप्रत्ययान्त इति**। 'अपत्यं पौत्रप्रभृती'ति परिभाषित इति शेषः । **शाखाध्येत्रिति** । षष्ठीतत्पुरुषः, शाखायामस्त्रीविषयत्वाभावात् । **जातिकार्यं लभते इति** । अनेनास्यातिदेशत्वं बोधयति । 'कठेन प्रोक्तमधीते' इति–वैशम्पायनान्तेवासित्वात्प्रोक्तार्थणिनेः 'कठचरका'दिति लुक्, अध्येत्रणः प्रोक्ताल्लुक् । 'बह्वय ऋचोऽध्येतव्या यस्या' इति विग्रहे—

❀ चिद्स्थिमाला ❀

'अत' इति षष्ठी औचित्यान्वयेन । नन्वेवमनुपसर्जनादिति सूत्रभाष्यविरोधोऽत आह—**अनन्तरेति** ।

नन्वेवं रीत्या तत्रापि स्यादिति पूर्वोक्तभाष्यासङ्गतिरत आह—**यूनि त्विति** । यथाश्रुतासङ्गतेराह—**अपत्यं पौत्रेति** । **शाखाध्येत्रिति** ।–द्वन्द्वः । चरणशब्दः–कठादिषु शाखाभेदेषु, तदध्यायिपुरुषेषु चेति प्रकृते उभयोरपि ग्रहणमित्य'नुवादे चरणाना'मित्यत्र कौस्तुभपदमञ्जर्यौः, तत्खण्डयति—**शाखेति** ।

'कठी'त्यत्र प्रक्रियामाह—**कठेनेति** । 'लुक्=इति लुक्' । 'बह्वृची'त्यत्र प्रक्रियामाह—**बह्वय इति** । ननु स्त्रीणां 'पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथे'ति मनूक्तेः

❀ वरवर्णिनी ❀

लौकिककापत्यमात्रे जातित्वस्य सत्त्वादिति भावः । **असङ्गतिरिति** । 'जातेश्चे'त्यस्य प्राप्तेः, तव लौकिकापत्यमात्रे जातित्वादित्याशयः ।

**अवन्तीति** । अवन्तेरपत्यं स्त्रीत्यर्थे'वृद्धेत्कोशलाजादाञ्ञ्य'ङित्यनेन ञ्यङ्, तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्चे'ति लुकि 'जातेरस्त्री'ति ङीष् ।

अत्रेत्थं विचार्यते—'शास्त्रीयमेव गोत्रमत्र गृह्यते' इति नवीनमते 'एको गोत्रे'इतिसूत्रस्थं भाष्यं प्रमाणं, 'लौकिकमेव गोत्र'मिति प्राचां मते तु–'अनुपसर्जना'दितिसूत्रस्थं भाष्यं प्रमाणमित्युभयोस्तुल्यतया कस्य मतं समीचीनमिति । यत्तु नवीनमते–'ब्राह्मोऽजाता'वित्यत्रापत्ये जातौ टिलोपो नेत्यर्थसङ्गतिः, 'ब्राह्मो नारद'इतिप्रयोगसिद्धिश्च प्रमाणम्, अन्यथाऽपत्यमात्रग्रहणेऽपत्यस्य जातित्वावश्यंभावादपत्ये जातौ टिलोपो नेत्यर्थासङ्गतिः, तन्न, 'अजाता'वित्यस्य समुदायोपाधितयाऽपत्यप्रत्ययान्तेन ब्राह्मणत्वरूपजातावगम्यायामित्यर्थस्य तवाप्यवश्यं वक्तव्यतयाऽदोषात्, अन्यथा नवीनस्य तवापि शूद्ररूपे ब्रह्मणो युवापत्ये विवक्षिते 'ब्राह्मण' इत्यापत्तेः, तत्र 'अजाता'विति निषेधेन टिलोपाप्राप्तेः। प्राचीनस्य मम मते तु–शूद्रे वाच्ये समुदायेन ब्राह्मणत्वं नावगम्यते इति 'अजाता'विति निषेधाप्रवृत्त्या टिलोपे 'ब्राह्म'इत्येव भवतीति दिगित्युमानाथपण्डितः ।

**परे तु**—श्रूयमाणोऽनुपसर्जनं यो गोत्रप्रत्ययस्तदन्तस्य जातित्वमित्यर्थेन लौकिकगोत्रस्य ग्रहणेपि 'औपगवी माणविके'त्यत्र श्रूयमाणस्याऽणोऽनुपसर्जनत्वाभावेन जातित्वाभावादनुपसर्जनलक्षण ईकारो न प्राप्नोतीत्युक्तम् । 'ईकार' इत्यनेन टिड्ढेतिङीपो ग्रहणम् । 'औपगवी भार्य्ये'त्यत्रापि एवंरीत्यैव जातित्वाभावकथनं, न तु शास्त्रीयगोत्रत्वस्य स्वीकारेण । 'ब्राह्मोऽजाता'वित्यत्र चाऽजातिग्रहणसामर्थ्यादाकृतिग्रहणेत्याद्यनतिदिष्टजातेरेव ग्रहणं, 'ब्राह्मो नारद' इति च अजातावेव, नारदे नहि ब्राह्मत्वं जातिः। देवर्षित्वन्तु पृथगेव । ब्रह्मणोऽपत्यत्वेन ब्राह्मत्वस्य जातित्वे हि चाण्डालादेरपि तत्त्वापत्तिरित्याहुः ।

'ऋक्पू'रित्यप्-समासान्तः । स्त्रिया अध्ययनाभावेऽपि तद्वंश्यत्वात्ताच्छब्द्यम् ।—यथा-ऽनधीयाने माणवके । 'ब्राह्मणी'त्यत्रापत्येऽणि 'ब्राह्मोऽजाता'वित्युक्तेष्टिलोपाभावः।

परे तु 'आकृतिग्रहणे'त्येव लक्षणम्। आकृतिपदम्-उपदेशोपलक्षणम्। आकृति-द्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरित्यर्थः । तत्र-'ईदृशाकारो गौ'रित्याकृत्युपदेशग्राह्या गोत्वादिजातिः । 'अयं ब्राह्मण' इतिसाक्षादुपदेशग्राह्या-ब्राह्मणत्वादिजातिः ।

यद्वा—आकृतिग्रहणं-जातिग्राहकोपदेशस्याप्युपलक्षणम्, 'लिङ्गानाञ्च न सर्वभा'गिति

## ※ चिदस्थिमाला ※

पूर्वकल्पे तत्सत्त्वेऽपि नेदानीमत आह—**स्त्रिया इति** । एतेन "-'बह्वृची'त्यस्य शाखेत्यर्थः । 'अनृच-बह्वृचावध्येतर्यैवे'त्यस्य निर्मूलत्वादिदमयुक्तम्,'अनृचो माणवके, बह्वृचश्चरणाख्याया'मिति भाष्यविरुद्धम्, अर्थान्तरे तयोः साधुतापत्तिर्माणवकशाखयोरसाधुतापत्तिश्च। बह्वृचशब्दस्य क्वचिदध्येतरि प्रयोगस्तु भाक्तः-" इति रत्नाकरोक्तमपास्तम्, भाष्यार्थानवबोधात्, शाखायां 'पुंयोगा'दिति ङीष् सिद्धेस्तत्रास्त्रीविषयत्वा-भावाच्च, पुंवत्त्वस्यापि भाषितपुंस्कत्वाभावादेवाप्राप्तेश्चेति दिक् । सिद्धान्तलक्षणांशे आह—**परे त्वित्यादि**-आहुरित्यन्तेन । सर्वसङ्ग्रहायाह—**उपदेशोपेति** । तन्मात्रमित्यर्थः । तदाह—**आकृतीति** । **तत्र**= तयोर्मध्ये । 'गौ'रिति पाठः । 'गौ'रितिपाठो वृषाभिप्रायः । विनिगमनाविरहादाह—**यद्वेति** । नन्वेवम-ग्रिमवैयर्थ्यमत आह—**लिङ्गानाञ्चेति** । एतावान् शब्द इत्यर्थः । **तदिति** । जातीत्यर्थः । **अनुवादकमिति** पाठः ।

## ※ सदाशिवभट्टीयम् ※

**परेत्त्विति** । प्रथमपक्षे उपदेशान्तर्गतत्वेनाकृत्याश्रयान्यतरोपदेशव्यङ्ग्या, 'यद्वा'पक्षे आकृतिग्रहणो-पदेशव्यङ्ग्या चेत्यर्थः । अत्रेदन्तत्त्वम्-औपगवीभार्ये न दोषः, युवप्रत्ययलक्षणेन गोत्रत्वं न प्रत्ययाप्रत्यय-

## ※ वरवर्णिनी ※

'आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्ये'ति समष्ट्या एकमेव लक्षणं, नतु लक्षणद्वयमित्याह—**परेत्त्विति** । नन्वेवं शुक्लादिगुणानां जातित्वं दुर्वारम्, 'अयं शुक्ल'इत्युपदेशग्राह्यत्वादत आह—**यद्वेति । जातिग्राहकोपेति** । 'स चेदृशाकारो गौः' इति, 'अयं ब्राह्मणः' इति च । 'अयं शुक्ल' इत्यादिश्च गुणग्राहकोपदेशः । **अपिर्निश्चये** । नच जातिलक्षणे जातेः प्रवेशादात्माश्रय इति वाच्यम्, उपदेशविशिष्टत्वं जातिग्राहकोपदेशत्वं, वै०—'स्वतादात्म्य' 'स्वप्रयोजकेच्छीयज्ञाननिष्ठोद्देश्यतानिरूपिता-वच्छेदकतासमानाधिकरणा या-विशेष्यत्वाऽसमानाधिकरणा प्रकारता-तादृशप्रकारताकज्ञानजनकत्वो'भय-सम्बन्धेनेत्येवं विवक्षणेनादोषात् । 'अयं ब्राह्मणः' 'ईदृशाकारो गौ'रित्याद्याकारको यो वृद्धोपदेशः, तत्प्रयोजिका या—'अस्य गोत्वज्ञानं जायता'मित्याद्याकारिका इच्छा, तादृशेच्छीयोद्देश्यता-गोत्वविषयक-ज्ञाने, तन्निरूपिताऽवच्छेदकता-विषयित्वसम्बन्धावच्छिन्ना—गोत्वे, तादृशावच्छेदकतासमानाधिकरणा तादृशोपदेशजन्या च-'अयं गौ'रित्याकारकज्ञानीयप्रकारताख्या विषयता-गोत्वनिष्ठा, सा च विशेष्यत्वाऽ-समानाधिककरणाऽपीति-तन्निरूपकज्ञानजनकस्योक्तोपदेशस्य ग्रहणम्। 'अयं शुक्ल'इत्याद्याकारकोपदेशजन्य-ज्ञानीया शुक्लादिनिष्ठा तादृशोपदेशप्रयोजकेच्छीयोद्देश्यतावच्छेदकतासमानाधिकरणा प्रकारता न विशेष्यत्वा-ऽसमानाधिकरणा, अपि तु गुणत्वव्याप्यशुक्लत्वनिष्ठप्रकारतानिरूपितविशेष्यतासमानाधिकरणैवेति—नात्र-तादृशोपदेशस्य जातिग्राहकोपदेशपदेन ग्रहणमिति तत्त्वम् । न चा'यमभावः'इत्याकारकोपदेशज्ञानीया-ऽभावत्वनिष्ठप्रकारतायास्तादृशत्वात्तन्निरूपकज्ञानजनकस्य'अयमभावः'इति ज्ञानजनकोपदेशस्यापि ग्रहणा-पत्तिरिति वाच्यम्, अभावत्वस्यानुयोगिताविशेषरूपत्वेन तन्निष्ठप्रकारताया विशेष्यत्वाऽसमानाधिकरणत्वा-ऽभावादित्याहुः । **स्वरूपानुवादकमिति** । तादृशोपदेशग्राह्यस्य सकललिङ्गनिष्ठाऽपदार्थसंसर्गावच्छिन्न-

तत्स्वरूपानुवादकं, तेन शुक्लादिगुणानामेकत्वेऽपि जातित्वाभावो बोधितः ।

अत एव—'विशेषणानाञ्चे'ति सूत्रे जातेराविष्टलिङ्गत्वं भाष्ये उक्तम् । आविष्टलिङ्गत्वं—नियतलिङ्गत्वमिति कैयटः । 'तच्च प्रायिक'मिति केचित् । भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता, 'तटं त्रि'ष्वित्यादिकोशकृतां प्रमाद' इत्यन्ये ।

'सकृदाख्यातनिर्ग्राह्ये'त्यनेनैकत्वमनेकानुगतत्वञ्च बोधितम् । सकृत् = एकवारं क्वचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्येति तदर्थः । 'गोत्रञ्चे'त्यादि प्राग्वदेव । अत एव—

'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥'

—इति लक्षणान्तरं भाष्ये उक्तम् । "—'सत्त्वस्य—द्रव्यस्य प्रादुर्भावविनाशाभ्यां या तौ प्राप्नोति सा जाति'रिति लक्षणम् । यावद्द्रव्यभाविनीति तदर्थः । अनेन गोत्वब्राह्मणत्वाद्योरुभयोरपि सङ्ग्रहः । गुणैर्युगपद्द्रव्येण सम्बध्यते । यथा निर्गुणस्य द्रव्यस्य

---

❀ चिदस्थिमाला ❀

अनुवादफलमाह—**तेनेति** । अनुवादेनेत्यर्थः । व्यङ्गविफलतानिरासायाह—**एकत्वेऽपीति** । एकत्वमिति मतेऽपीत्यर्थः । अत एव=जातेरसर्वलिङ्गत्वादेव । प्रकृतोपयोगायाह—**आविष्टेति** । तटादौ सर्वलिङ्गत्वादाह—**तच्चेति** । केचित्=प्राञ्चः । सिद्धान्तमाह—**भाष्येति** । नन्वेवं कोशस्य का गतिरत आह—**तटमिति** । नन्वेवमप्यंशान्तरं किमर्थमत आह—**सकृदिति** । प्राग्वदेव=अतिदेश एव । अत एव=पूर्वत्र तथार्थाङ्गीकारादेव । तौ=प्रादुर्भावविनाशौ । इति=एतावन्मात्रम् । तस्य फलितार्थमाह—**यावदिति** । अनेन=एकलक्षणेन । आकाङ्क्षाशान्तये शेषमाह—**द्रव्येणेति** ।—सहार्थयोगे तृतीया । **गुणैरिति** । प्रकृत्यादित्वा-

❀ सदाशिवभट्टीयम् ❀

साधारणत्वात् । किञ्चाऽणि जातित्वं पूर्वं कृत्वेदानीं प्रत्ययलक्षणेन जातित्वाभावात् तस्यापि साधारणत्वात् । किञ्च तावन्मात्रे जातित्वेपि ततः पर—स्त्रीप्रत्ययाऽभावेन जातित्वाऽभावः । किञ्चालिविधित्वेन पूर्वभाष्ये लब्धे लौकिकगोत्राश्रयणमनुचितम् । नापि 'ब्राह्मो नारद' इत्यसिद्धिः, तत्र जातिपदेना'ऽऽकृति'—इति लक्षणकस्य घटत्वेत्यादिलौकिकस्य वा ग्रहणात् । अत एव 'ब्राह्मो रावण' इति सिद्धिः, अन्यथा तत्र गोत्रत्वेन जातित्वाद्दोषःस्यात्, एवञ्च 'अवन्ति'रिनिभाष्यमप्यनुकूलमिति तत्त्वविदः । अत्रेदम्बोध्यम्,—'तटं त्रि'ष्विति कोशस्य प्रामादिकत्वमनुचितम् । किञ्च कस्य लिङ्गस्य त्याग इति विनिगमनाऽभावः । जातेराविष्टलिङ्गस्वभावस्याऽपि—आविष्टं=प्राप्तं, स्वत एव नाऽन्यतो लिङ्गं यस्येतिविग्रहेण स्वनिष्ठलिङ्गत्वेऽपि—न दोषः । शुक्लादौ त्वाश्रयव्यक्तिगतत्वान्नाविष्टलिङ्गत्वम् । 'असर्वलिङ्ग'मित्यस्यापि सर्वेषां यानि स्वतोऽन्यस्य वेति तदभाववान्—किन्तु स्वाश्रयमात्रलिङ्गवतीत्यर्थेनाऽविरोधः । एतयोरिति द्वित्वनिर्देशोऽपि कुमारशब्दविषये इति न दोषः, कुमारशब्दे ह्या'कृती'ति 'लिङ्गानां चे'ति द्वयमेवेति नदोषः । एवञ्च 'गोत्रञ्चे'त्यस्य साहचर्य्येण सञ्ज्ञात्वमेव, अतिदेशेमानाऽभावात् । **स्पष्टैवेति** । महाशूद्रीति,भाष्यमेकदेश्युक्तिः । बहूनामजा-

---

❀ वरवर्णिनी ❀

प्रकारतानिरूपितविशेष्यतावच्छेदकत्वाभावादिति भावः । 'तट त्रि'ष्वित्यादि कोशस्य प्रमाद एवेत्यस्य वक्ष्यमाणत्वात् । अत एव=असर्वलिङ्गत्वादेव । **प्रायिकमिति** । 'तटं त्रि'ष्वित्यादिकोशबलादिति भावः ।

स्वमतसिद्धान्तमाह—**भाष्येति** । अत एव=गोत्वब्राह्मणत्वयोरेकलक्षणेन सङ्ग्रहादेव । **लक्षणान्तरमिति** । गोत्वब्राह्मणत्वोभयसङ्ग्राहकमित्यर्थः । यावद्द्रव्यभावीत्यस्यार्थः—प्रागेवोक्तः । उत्तरलक्षण-

नोपलम्भस्तथा जातिरहितस्यापीत्यर्थः-" इति कैयटः। इदं स्वरूपकथनमेव। अत्र लक्षणे 'असर्वलिङ्गा'मित्येतन्मदुक्तार्थकमेव, न तु लक्षणान्तरम्, अनुपयोगात्। बह्वर्थाम्— सर्वव्यक्तिव्यापिनीमित्यर्थः। एतदेकवाक्यतया पूर्वलक्षणेऽपि मदुक्तव्याख्यैवोचिता।

अत एव-कः पुनरेतयोर्जातिलक्षणयोर्विशेषः? यथा पूर्वलक्षणं तथा-'कुमारीभार्य' इति भवितव्यं, यथोत्तरं तथा 'कुमारभार्य'-इति भाष्ये-'लक्षण'मित्येकवचनमेव प्रयुक्तम्। अत एवाऽऽकडारसूत्रशेषे-'आकृतिग्रहणा जाति'रित्येवोक्तं भाष्ये इत्याहुः।

**बलाकेति**। अयञ्च बिसकण्ठिकापदवाच्यजातिविशेषवाची, स च बकत्वव्याप्योऽन्यो वेत्यन्यदेतत्। 'अस्त्रीविषया'दित्यस्य-प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादित्यर्थः। एतेन—बलां कायतीति यौगिकस्य सर्वलिङ्गत्वात्,—

'बलाका बकपङ्क्तिः स्याद्बलाका बिसकण्ठिका।
बलाका कामुकी प्रोक्ता बलाकश्च बको मतः—॥'

—इति कोशे पुँल्लिङ्गस्याप्यभिधानाच्च—नेदं युक्तमित्यपास्तम्।

अत एव—'पाककर्णे'ति सूत्रं चरितार्थं, तद्धि स्त्रीविषयार्थम्। अन्यथा

---

ॐ चिद्स्थिमाला ॐ

तृतीया। अस्य तात्पर्यमाह—**यथेति**। प्राग्वदाह—**इदमिति**। भ्रमं निराचष्टे-**अत्रेति**। एवव्यवच्छेद्यमेवाह-**नत्विति**। सम्भवेऽप्याह-**अनुपेति**। अत एव=उक्तरीत्या पूर्वत्रैकलक्षणत्वादेव। **एकवचनमेवेति**। अन्यथा तदसङ्गतिः स्पष्टैव। तस्य जात्यभिप्रायत्वं त्वगतिकगतिः, अत एवान्यदपि मानमाह—**अत एवेति**।पूर्वत्रैक-लक्षणत्वादेवेत्यर्थः। **जातिविशेषवाचीति**। अत एव नित्यस्त्रीलिङ्गः। नन्वेवमप्याद्ये स्त्रीविषयत्वमस्त्येवात आह—**अस्त्रीति**। एतेन=उक्तरीत्या तस्याऽस्त्रीविषयत्वेन। कोशे=शाश्वताख्ये। अत एव=योगार्थाग्रहणेन पूर्वोक्तरीत्या स्त्रीविषयत्वादेव। अन्यथा=उक्तरीत्याऽस्त्रीविषयत्वानङ्गीकारे। तेषामपि=पाकाद्युत्तरपदानामपि। 'द्रोणी' 'कुटी'त्यादयो गौरादिषु बोध्याः। द्रोणशब्दः परिमाणे पुमान्, गवादन्यां स्त्री। कुटशब्दो घटे पुमान्, गेहे स्त्री। पात्रशब्दो भाजनसामान्येऽर्धर्चादिः, भाजनविशेषे स्त्री। अत्रौणादिके ष्ट्रनि षित्वान्ङीषित्यपि बोध्यम्। भाष्ये तु मौल्या क्वचिदस्त्रीविषयमित्यर्थरूपं पक्षान्तरमाश्रित्य द्रोणीत्यादयः साधिताः। मालाबलाकयोस्त्वजादिपाठात् सिद्धमित्युक्तम्। एवञ्च 'पाककर्णे'ति सूत्रं न कार्यमिति तद्भावः। अत्र पक्षेऽस्त्रीविषयादित्यस्य प्रत्युदाहरणमन्वेषणीयम्। कुलीनेत्यत्राजादित्वाट्टाब्बोध्यः।

---

ॐ वरवर्णिनी ॐ

वत्पूर्वस्याप्युभयसङ्ग्राहकता युक्तेति भावः। अनेन=पूर्वोक्तेन एकलक्षणेन। अयञ्च=बलाकाशब्दश्च। स च=तादृशजातिविशेषश्च। नन्वस्त्रीविषयादित्यस्याभावे 'बलाके'त्यत्र ङीष् स्यादिति दीक्षितोक्तमयुक्तं, 'बलाका'शब्दस्य बकत्वव्याप्यजातिवाचकतया पुंसि स्त्रियाञ्च सत्त्वेनाऽनियतस्त्रीलिङ्गतया प्रत्युदाहरणासङ्गते-रित्यत आह—**अस्त्रीति**। लिङ्गान्तरं=स्त्रीलिङ्गभिन्नं—पुंनपुंसकं, तद्रहितं=नित्यस्त्रीलिङ्गं—बलाकादि, तद्भिन्नं—वृषलादिपदमित्यर्थः। एवञ्च बकत्वव्याप्यबिसकण्ठिकात्वप्रवृत्तिनिमित्तकस्य बलाकाशब्दस्य— लिङ्गान्तररहितया स्त्रीविषयत्वमेवेति प्रत्युदाहरणं सङ्गतमेवेत्याशयः। पुंसि बकत्वं प्रवृत्तिनिमित्तं, स्त्रियान्तु तद्व्याप्यं बिसकण्ठिकात्वमिति प्रवृत्तिनिमित्तभेदेनाऽस्त्रीविषयत्वेऽपि बिसकण्ठिकात्वरूपप्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नत्वाभावादस्त्रीविषयत्वं नास्तीति दीक्षितोक्तिर्युक्तैवेति हृदयम्। एतेन='अस्त्रीविषया' दित्यस्य पारिभाषिकोक्तार्थकरणेन। **अपास्तमिति**। पुंसि बिसकण्ठिकात्वजातेः प्रवृत्तिनिमित्तत्वाभावा-

तेषामपि यौगिकेऽर्थे लिङ्गान्तरसम्भवेन पूर्वेण सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

**पाककर्ण** । जातिवाचिनः किं ?–'बहुपुष्पा शाखा' । **स्त्रीविषयादपीति** । अजात्यर्थन्तु न, प्राक्पुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु 'सदच्काण्डे'त्यादिनिषेधात् ।

**योपधादपीति** । पुनर्जातिग्रहणादिति भावः । 'अस्त्रीविषया'दिति तु पूर्वसूत्रेण विच्छिन्नम् । **तित्तिरिरिति** । 'स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः' इत्यमरादयं स्त्रियामपीति भावः । इतः किं ?—दरत् । 'द्व्यञ्मगधे'त्यणः 'अतश्चे'ति लुक् ।

**ऊङुतः** । ङकारो 'नोङ्धात्वो'रिति विशेषणार्थः, अन्यथा 'यवाग्वे'त्यादावपि निषेधः स्यात् । दीर्घोच्चारणं प्रश्लेषेणोकारद्वयविधानद्वारा 'ब्रह्मबन्धू'रित्यादिबहुव्रीहौ

❀ चिद्स्थिमाला ❀

दपी'ति पूर्वसूत्रेण सिद्धे स्त्रीविषयार्थमिदमिति भावः । नन्वजात्यर्थमेव किं नात आह—**अजात्येति** । सूत्रानन्तर्यस्याविशेषादवान्तरानन्तर्यग्रहणे इष्टासिद्धेर्दोषाच्च अनन्तरस्येतिन्यायेनानिर्वाहादाह—**प्रागिति** । निषेधात्=तदारम्भात् । अन्यथाऽनुवृत्त्यैव सिद्धेराह—**पुनरिति** । ननु 'तित्तिरिः ककुभो लाव' इति साहचर्यात् पुंस्त्वेनास्य स्त्रीत्वाभावोऽत आह—**स्त्रीपुंसयोरिति** । इदमुपलक्षणं-नपुंसकस्यापि, अयोगव्यवच्छेदार्थत्वात् । अत एव 'गोत्रञ्चे'त्यस्यावतरणेन न विरोधः, तस्यैकदेशयुक्तित्वाद्धेति बोध्यम् ।

**बहुव्रीहाविति** । ब्रह्म वेदो बन्धुषु यस्या न तु स्वस्मिन्नित्यर्थः । मनुष्यजातिविशेषे रूढोऽयम् । स्पष्टञ्चेदं

❀ वरवर्णिनी ❀

दुक्ताऽस्त्रीविषयत्वाभावादिति भावः । अत एव='प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहिते'त्यादिरूपाऽस्त्रीविषयत्वस्य 'जातेरस्त्री'त्यत्र ग्रहणादेव । सूत्रम् = अग्रिमसूत्रम् । तद्धि=पाककर्णेतिसूत्रं हि । स्त्रीविषयार्थं='शालपर्णी'त्यादिनित्यस्त्रीलिङ्गेष्वपि ङीप्सिद्धये । अन्यथा=बलाकेत्यादौ प्रवृत्तिनिमित्तभेदेऽपि अस्त्रीविषयत्वस्वीकारे, पारिभाषिकपूर्वोक्ताऽस्त्रीविषयत्वानङ्गीकारे इतियावत् । तेषां=शालपर्ण्यादीनां 'पाककर्णे'त्युदाहरणभूतानाम् । **यौगिक इति** । शालसदृशपर्णशालित्वादिप्रवृत्तिनिमित्तमादाय पुंलिङ्गादौ प्रयोगसम्भवादस्त्रीविषयत्वाज्जातेरस्त्रीत्येव तत्र ङीष्सिद्धौ 'पाककर्णे'ति व्यर्थं स्यादित्यर्थः । **बहुपुष्पेति** । यौगिकोऽयं-न जातिप्रवृत्तिनिमित्तकः । ननु पाककर्णेतिसूत्रमप्राप्तप्रापकतयाऽजात्यर्थमेव किं नेष्यत आह—**अजात्यर्थमिति** । तद्धि पाककर्णेतिङीष्बाधनार्थमारब्धम् । **निषेधादिति** । यदि 'पाककर्णे'तिसूत्रमजात्यर्थं स्यात्तर्हि 'अस्त्रीविषया'दित्यस्य प्रकृतसूत्रेऽपि सम्बन्धात्प्राक्पुष्पादौ जातिवचनेषु नित्यस्त्रीलिङ्गेषु अस्त्रीविषयत्वाभावात् 'जातेरस्त्री'त्यस्य 'पाककर्णे'त्यस्य चाप्राप्त्याऽदन्तलक्षणटापा रूपसिद्धेः 'सदच्काण्डे'त्यादिवार्त्तिकारम्भो व्यर्थः स्यादिति भावः । पूर्वसूत्रेण=पाककर्णेत्यनेन । स्त्रीविषयत्वात्तस्य । ननु 'तित्तिरिः ककुभो लावः' इत्यमरे 'साहचर्याच्च कुत्र चि'दितिपरिभाषणात्ककुभलावादिसाहचर्येण तित्तिरिशब्दस्य पुंस्त्वनिर्णयादिदं प्रत्युदाहरणमयुक्तमत आह—**स्त्रीपुंसयोरिति** । अपत्यान्ताः=अपत्यप्रत्ययान्ताः—औपगवादयः, द्विचतुष्षट्पदोरगाः=द्विपद–चतुष्पद–षट्पद–सर्पादिवाचिनः, ब्राह्मण–मृग–भ्रमरोरगादयः शब्दाः—पुंसि स्त्रियाञ्च बोध्या इत्यर्थः । तेन'तित्तिरि'शब्दस्य द्विपदत्वात्स्त्रियामपि प्रयोगो लभ्यत एवेत्याशयः । इदं क्लीबत्वस्याप्युपलक्षणम्, 'औपगवकुल'मित्यादिप्रयोगदर्शनात् । दरत्=सीमाप्रदेशस्थ–'गिलगित'–'देरागाजीखाँ' आदिप्रदेशः । अन्यथा='नोङ्धात्वो'रित्यत्र ङकारानुच्चारणे । **ब्रह्मबन्धुरिति** । ब्रह्म=वेदो बन्धुषु यस्याः सा ।

परकन्निवृत्त्यर्थं, रूपाणां सवर्णदीर्घेण सिद्धेरिति भाष्ये स्पष्टम्। 'श्वश्रू'रिति तु 'श्वशुरः श्वश्र्वे'ति निर्देशात्सिद्धम्। **कुरूरिति**। एकादेशस्य पूर्वान्तवत्त्वात्स्वादयः।

**अध्वर्युरिति**। अध्वर्युशाखाध्यायिवंशोद्भवेत्यर्थः। **रज्ज्वादीति**। 'उत' इति तु नेह सम्बध्यते, 'अलाबू'रिति भाष्योदाहरणादिति भावः। 'कृकवाकु'रित्यत्र मनुष्यजातित्वाभावात्पूर्वेणापि न।

**पङ्गोश्च**। 'पङ्गु'शब्दो गुणवाचीति पूर्वेणाप्राप्तिः। **श्वशुरस्येति**। 'श्वश्र्वे'ति निर्देशादन्त्याकारस्य लोपः। तन्निर्देशसिद्धमेवैतत्। भाष्ये त्विदं न दृश्यते। 'ङ्याबि'तिसूत्रस्थभाष्यस्वरसस्त्वयमनूङन्तोऽव्युत्पन्नं प्रातिपदिकमिति।

---

### ॐ चिदस्थिमाला ॐ

भाष्यकैय्यटयोः। **परेति**। अन्तरङ्गोऽपि सः। **कबिति**। शैषिकेत्यर्थः। नद्युत्तरपदकत्वाभावा'न्नदृतश्चे'त्यस्य प्राप्तिरेव न। एतेन 'ब्रह्मबन्धूक' इति तुङन्तावयवको बहुव्रीहिरिति नद्युत्तरपदलक्षणः कप् भवत्येवेति शास्त्र्युक्तमपास्तम्। 'दीर्घोच्चारणं श्वश्रूशब्दार्थ'मिति दण्ड्याद्युक्तेरसाङ्गत्यायाह—**श्वश्रूरिति**।

'लिङ्गविशिष्टपरिभाषया स्वादय इति' शास्त्रिदण्ड्याद्युक्तेरसाङ्गत्यादाह—**एकेति**। यथाश्रुतासङ्गतेः प्रागवदाह—**अध्वर्युशाखेति**। ननु सूत्रत एव तत्सम्बन्धे व्यर्थमिदमत आह—**उत इति**। पूर्वेण सिद्धे वैयर्थ्यं परिहरति–**पङ्गुरिवेति**। अन्त्याकारस्य=तस्यैव। तेनाद्याकारव्यवच्छेदः। नन्वस्यापूर्वत्वेनायुक्तमेतदत आह—**तन्निर्देशेति**। अत एवाह–**भाष्ये त्विति**। मूलादिसकलग्रन्थासाङ्गत्यायाह—**ङ्याबितीति**।

**अत इति**। पूर्वपदस्योपमानवाचित्वाभावात्तत्रोपमानत्वेन प्रतीत्यभावादिति यावत्। अत एवोत्तरपदग्रहणं

---

### ॐ वरवर्णिनी ॐ

ब्रह्मबन्धूः। पूर्वान्तवत्त्वेन स्त्रीप्रत्ययान्ततया 'गोस्त्रियो'रिति ह्रस्वस्तु न, उभयत आश्रयणेऽन्तादिवद्भावनिषेधात्। **स्पष्टमिति**। तत्र हि—"किमर्थो ङकारः?—विशेषणार्थः—'नोङ्धात्वो'रिति; 'नोधात्वो'रित्युच्यमाने'यवाग्वा''यवाग्वे'इत्यत्रापि प्रसज्येत। अथ दीर्घोच्चारणं किमर्थं?—'ब्रह्मबन्धूः' 'वीरबन्धूः'–'नदृतश्चे'ति कप्प्रसज्येत। नैष दोषः–'नद्यन्तानां यो बहुव्रीहि'रित्येवं तत्, न चैष नद्यन्तानां बहुव्रीहिः। शेषलक्षणः—[ 'शेषाद्विभाषे'ति ] तर्हि कप्प्राप्नोति, तस्माद्दीर्घोच्चारणं कर्त्तव्यम्—" इत्युक्तम्। 'उकारद्वयन्दीर्घेण निर्दिष्टं, तत्र द्वितीयउकारः परत्वाद्बाधकस्य शेषलक्षणस्य कपो बाधनाये'ति कैयटस्तदाशयमाह।

ननु यद्येक एव उकारो विधीयते तर्हि 'श्वशुरस्योकाराकारे'त्यत्रापि तस्यैव सम्बन्धे 'श्वश्रू'रिति दीर्घोकारश्रवणं न स्यादतः कथं भाष्यादिसङ्गतिरत आह—**श्वश्रूरितीति**। तथा च निर्देशादेव तद्रूपं सिध्यति, न तु तदर्थं वचनान्तरमाश्रयणीयमित्याशयः। ननु स्त्रिया वेदेऽनधिकारादध्वर्युरित्यसङ्गतमत आह—**वंशोद्भवेति**। **अलाबूरिति**। ऊङि सत्यलाब्वेत्यत्र 'नोङ्धात्वो'रिति विभक्त्युदात्तत्वप्रतिषेधः सिध्यतीत्याशयः। **गुणवाचीति**। 'न तु जातिवाची'ति शेषः। पूर्वेण='ऊङुत'इत्यनेन। **आद्याकारेति**। एवञ्च प्रथमाकारलोपापत्तिर्नेत्याशयः। इदं='श्वशुरस्योकाराकारे'ति वार्त्तिकम्। **ङ्याप्सूत्रस्थेति**। तत्र हि "—'ङ्याब्ग्रहणं किमर्थं? 'प्रातिपदिका'दित्येव सिद्धं, नैवम्–'अप्रत्यय'इति प्रातिपदिकसञ्ज्ञाप्रतिषेधः प्राप्नोति। एवन्तर्हि–ङ्याब्ग्रहणवत्यूङोऽपि ग्रहणं कर्त्तव्यं,–'युवतिका' 'ब्रह्मबन्धूका' 'वीरबन्धूका', नार्थस्तिग्रहणेन तिप्रत्ययस्य तद्धितत्वात्सिद्धं तत्र प्रातिपदिकत्वम्। एवम्—ऊङो ग्रहणेनापि नार्थः,—उकारान्तादुत्पत्तावूङन्ताद्वोत्पत्तौ न विशेषः, ऊङन्तादपि कपि 'केऽण'इति ह्रस्वविधानात्। यद्वा ऊङन्तादपि

**ऊरूत्त**। उपमीयतेऽनयेत्युपमा–उपमानं, तद्भाव औपम्यम्–उपमानत्वम्। एवञ्च तद्बोधकोरूत्तरपदादित्यर्थः। उत्तरपदाक्षिप्तं पूर्वपदं प्रत्यासत्त्योपमानवाच्येव, अतः 'करभोपमोरू'रित्यत्र न। तदाह—**उपमानवाचीति**। **करभेति**। मणिबन्धादाकनिष्ठं करबहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः। **उपचारादिति**। शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरोपादित्यर्थः। एवञ्च समासस्योपमानोपमेयभावाबोधकत्वेन न पूर्वसूत्रप्राप्तिः, तदारोपे च स निमित्तमित्यन्यदिति भावः।

ननु सहशब्दग्रहणं व्यर्थं, सर्वस्योरुमत्त्वेन सहशब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन 'सहोरू'रिति प्रयोगस्यैवाभावादत आह—**सहेते इति**। 'रतिश्रम'मिति शेषः। सह=विद्यमानावूरू यस्या इत्यर्थ इति कैयटः। अतिरमणीयावित्यर्थ इति तदाशयः, 'कमलानि कमलानी'तिवत्। **कद्रूरिति**।—नागमातुः सञ्ज्ञा।

---

❀ चिदस्थिमाला ❀

सफलं, अन्यथोर्वन्तादित्येव वदेत्। **शफेति**। 'शफः खुरं गवादीनां मूले विटपिनामपी'ति हेमकोशात् पुंस्त्वं, 'शफं क्लीबे खुरः पुमा'निति अमरात्क्लीबत्वमपि। अत एव 'शफाविव जर्भुराणे'ति श्रुतिरपि। प्रवृत्तिनिमित्तस्य=खुरत्वस्य, शफत्वस्य वा। सादृश्यमूलक आरोपो न तु तत्प्रतीतिस्तदाह—**एवञ्चेति**। तथारोपे चेत्यर्थः।

सः=उपमानोपमेयभावः। एतेनोपचारेऽपि पूर्वपदस्योपमानवाचित्वमप्याह—तमेवेति—मन्दोक्तमपास्तम्, एवञ्च करभोरुशब्देऽप्यारोपाविवक्षायामूङ् न भवत्येव। एतेन 'विचकरेण करेण करोरुभि'रितिमाघो व्याख्यातः। 'पीवरोरु पिबतीह बर्हिण'इति कुमारप्रयोगस्तु चिन्त्य एव। एतेन 'सञ्ज्ञापूर्वके'ति गुणो नेति तत्सिद्धिरिति **शाब्दिकञ्च**(?)ायुक्तमपास्तं, तस्या अप्रामाणिकत्वात्। **व्यर्थ**–वार्तिके। मूलीत्य ? द्वितीयपक्षं समूलमाह—**सहेति**। तत्र दृष्टान्तमाह—**कमलेति**। मूले-कद्रुरिति कुत्सितो वृक्षविशेष इत्यर्थः। वृक्षविशेषस्य

❀ सदाशिवभट्टीयम् ❀

दिपाठात्–द्रोणी कुटीत्यादयो गौरादिषु बोध्याः॥ **ऊरू**॥ उपमाशब्देन सादृश्ये प्रतीते तस्मात्स्वार्थे ष्यञ्,

---

❀ वरवर्णिनी ❀

पूर्वान्तवत्त्वेन सिद्धम्—" इत्युक्तं, 'श्वश्रू'शब्दो यद्यूङन्तः स्यात्तर्हि तत्रोऽङन्तात्कपि अन्यथा च विशेषस्य स्पष्टतया तदर्थमूङ्ग्रहणस्यावश्यकतया भाष्यासङ्गतिः स्पष्टैव। एवञ्च'श्वश्रू'शब्दो नोङन्तः किन्त्वव्युत्पन्न इति लब्धम्।

'ऊरूत्तरपदा'दित्यधिकारप्राप्तप्रातिपदिकविशेषणमूरूत्तरपदादिति बहुव्रीहिः, 'औपम्ये' इति सप्तम्यर्थो वाचकत्वम्। पूर्वपदस्योपमानवाचकत्वे समुदायस्यौपम्यवाचकत्वसम्भव इत्याशयेनाह—**उपमीयत इति**। अतः=उपमानवाचकस्य पूर्वपदस्य ग्रहणेन। **करभोपमोरूरित्यत्रेति**। अत्र पूर्वपदस्योरुशब्दसामानाधिकरण्येनोपमानवाचकत्वाभावः स्पष्ट एव। यतः पूर्वपदस्योपमानवाचकस्य विवक्षाऽत एवोत्तरपदग्रहणञ्चरितार्थमन्यथोर्वन्तादित्येव **वदेत्**। उपचारो—लक्षणा, सा च शक्यतावच्छेदकारोपात्मिका तदाह—**शफशब्देति**। सः=उपमानोपमेयभावः।

**सहेते इतीति**। एवञ्च 'सह'शब्दः सौत्रः क्रियाशब्दो न तु साहित्यवाचीत्युक्तम्भवति। मूलोक्तं–'यद्वे'ति द्वितीयार्थकल्पनमेव समूलमित्याशयेनाह–**सह विद्यमानाविति**। सर्वस्यापि विद्यमानोरुमत्त्वेन विशेषणवैयर्थ्यशङ्कानिवारणायाह—**अतिरमणीयावित्यर्थ इति**। तत्र दृष्टान्तमाह—**कमलानीति**।

**अच्छन्दोऽर्थमिति** । छन्दसि 'कद्रुकमण्डल्वोश्छन्दसी'त्येनेनैव सिद्धिरिति भावः ।

**अञो य इति** । 'शार्ङ्गरवादी'ति लुप्तपञ्चम्यन्तम्, 'अञ' इति च षष्ठी, 'अनुपसर्जना'दिति विभक्तिविपरिणामेनास्य विशेषणम्। एवं 'टड्ढा'—इत्यत्रापि सुवचम्। तद्वदत्र पञ्चम्यन्तत्वमपि सुवचम् । 'अञ्योऽकार' इत्यपि पाठः क्वचित् । शार्ङ्गरव्यां जातिलक्षणे ङीषि प्राप्ते वचनम् । अणि आदिवृद्ध्योर्गुणौ ।

पुत्रशब्दोऽत्र पठ्यते,—तस्य पाठसामर्थ्याज्जातित्वाभावेऽपि ङीन् ।

**नृनरयोरिति** । यद्यपि 'नारी'ति नृशब्देन सिद्धं, 'नरी' इति तु पुयोगे ङीषा दुर्वारं, जातिग्रहणानुवृत्त्या तत्रास्याप्रवृत्तेरिति नरग्रहणं व्यर्थं, तथाऽपि नरत्वजातिमात्र-

❀ **चिदस्थिमाला** ❀

सन्देयमिति कश्चित् । कमण्डलुशब्दश्चतुष्पाज्जातिवचनः । अत एव 'चतुष्पाद्भ्यः' इत्यत्र 'कामण्डलेय'इति वक्ष्यति । पात्रवाची तु न स्त्रीलिङ्ग इति न प्रत्युदाहरणम् । अत्राञोऽकार इति पाठाशयमाह—**शार्ङ्गेति** । अस्य=अञः ।—समानाधिकरणम् । विनिगमनाविरहादाह—**तद्वदिति** । अत एवाह—**अञ्योऽकारेति** । यत्तुशृङ्गरुशब्दादपत्येऽणि आदिवृद्ध्योर्गुणयोर्ङीपि उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वे प्राप्ते ङीन्विधिरिति; तन्न, ङीपं बाधित्वा परत्वान्ङीषः प्राप्तेस्तदाह—**शार्ङ्गरव्यामिति** । अत्र=शार्ङ्गरवादौ । अस्य स्त्रीत्वम्—अमरादित्यन्यत्र प्रतिपादितम् । ननु तस्यानेन बाधः कुतो नात आह—**जातीति** । तत्र=पुंयोगे । एवञ्च जातिलक्षणङीष एव बाधकमिति भावः । अतः 'किन्नरीणां नरीणा'मिति प्रयोगः सङ्गच्छते, मूलादि-

❀ **सदाशिवभट्टीयम्** ❀

सादृश्यविशिष्टपूर्वपदाक्षेपापेक्षया केवलपूर्वपदमाक्षिप्यौपम्य इति विशेषणं, तेन करभोपमोरुरित्यत्रादोष इति चिन्त्यम् ।

❀ **वरवर्णिनी** ❀

'तदा जायन्ते गुणा यदा सहृदयैर्गृह्यन्ते । रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि' । अत्र च शुद्धकमलत्वमुद्देश्यतावच्छेदकं, शोभादिगुणयुक्तकमलत्वावच्छिन्नस्य विधेयत्वमिति नोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरेकत्वाच्छाब्दबोधानुपपत्तिरिति । लोके 'कद्रू'रिति कस्य बोधकमत आह—**नागमातुरिति** । कमण्डलुशब्दश्च चतुष्पाज्जातिवचनः । अत एव 'चतुष्पाद्भ्यो ढ'ञिति सूत्रस्य 'कामण्डलेय' इत्युदाहरणसङ्गतिः । पात्रवाची तु न स्त्रीलिङ्गः ।

'अञ' इत्यस्याकारविशेषणत्वं, शार्ङ्गरवादेस्तु नेति द्वन्द्वानुपपत्तिरत आह—**शार्ङ्गरवादीति** । अस्य=अञ इत्यस्य । **एवं टिड्ढेत्यत्रापीति** । तस्य षष्ठ्यन्तत्वेऽनुपसर्जनादितिविभक्तिविपरिणामेन तद्विशेषणम् । विनिगमनाविरहादाह—**तद्वदत्रेति** । अञोऽकारविशेषणत्वे फलं—'शूरसेनी'ति । 'जनपदशब्दा'दित्यञो'ऽतश्चे'ति लुकि जातिलक्षणो ङीष्, तेनान्तोदात्तं पदम् । शार्ङ्गरव्याः साधुत्वमाह—**अणि आदीति** । 'शृङ्गरु'शब्दादपत्येऽणि आदिवृद्धौ गुणेऽगन्ताच्छृङ्गरुशब्दप्रकृतिकान्ङीप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम् । यदि तु गोत्रेऽण् तदा जातिलक्षणो ङीष् परत्वान् ङीपम्बाधित्वा स्यात्तथापि प्रत्ययस्वरेणान्तोदात्तत्वमेव स्यादतो ङीन्—आद्युदात्तत्वसिद्ध्यर्थं विधीयते इति । **सामर्थ्यादिति** । पुत्रशब्दस्य पाठसामर्थ्यादित्यर्थः ।

'नृनरयो'रितिगणसूत्रे नरशब्दोपादानस्य प्रयोजनं वक्तुं शङ्कते—**यद्यपीति** । 'नरी'ति प्रयोगनिवृत्तिरेव प्रयोजनमस्त्वित्यत आह—**नरीति त्विति** । अत्र मात्रपदेन पुंयोगव्यावृत्तिः, पुंयोगे तु 'नरी'तीष्यत, अत एव 'किन्नरीणा'मिति प्रयोगोपपत्तिः । 'नर'शब्दान्त्याकारस्य लोपेनापहारेऽलोन्त्यपरिभाषया

प्रतिपिपादयिषायां 'नरी'ति व्यावृत्त्यर्थं तद्ग्रहणम् । अत्राद्याऽकारस्यैव वृद्धिर्लक्ष्यानुसारि-व्याख्यानात् ।

वस्तुत इदं गणसूत्रमनार्षं, नुर्नरस्य च धर्म्या 'नारी'ति 'ऋतोऽ'ञिति सूत्रेण 'नरस्य चेति वक्तव्य'मिति वार्तिकेन चाद्युदात्तनार्याः सिद्धेः । रूढ्या योग्यतया तद्भार्या नरत्वजातिविशिष्टैव बुद्ध्यते, अत एव 'वसेस्तव्यत्कर्त्तरि णिच्चे'ति वचनं-वास्तुनि भवो वास्तव्य इति दिगादित्वात्संसाध्य प्रत्याख्यातं भाष्ये । 'नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कार्य'मिति कैयटः । 'रूढ्या सर्वदोषपरिहार' इति तदाशयः ।

**यङश्चाप्** । पकारो 'याडाप' इत्यत्र सामान्यग्रहणार्थः । चकारस्य त्वनुबन्धकत्व-सम्पादनद्वारा सामान्यग्रहणाविघातकत्वेन चारितार्थ्येऽपि 'आम्बष्ठ्या, आवट्ये'-त्यादौ परत्वाच्चित्स्वरः पित्स्वरं बाधते इति बोध्यम् ।

**षाद्यञ इति** । एवञ्च गौकक्ष्यशब्दस्य गर्गादियञन्तस्योदीचां मतेनैव चापः सिद्धेः स क्रौड्यादिषु न पाठ्यः, सम्प्रसारणन्तु तस्य नेष्टमिति स्पष्टं भाष्ये ।

**यूनस्तिः** । 'ऋन्नेभ्य' इति ङीपोऽपवादः । **उत्तरार्थ इति** । इह करणं तद-नित्यत्वज्ञापनार्थमिति केचित् । *** इति स्त्रीप्रत्ययाः ***

---

**ॐ चिदस्थिमाला ॐ**

सकलग्रन्थं खण्डयति—**वस्तुत इति** । अर्थभेदोऽपि नेत्याह—**रूढ्येति** । अत्र मानं सूचयन्नाह—**अत एवेति** । उक्तरीत्याऽर्थभेदाभावादेवेत्यर्थः । इत्यत्र=इत्यादौ । प्राचां मते ष्फस्य सत्त्वादाह—**उदीचामिति** । 'सिद्धेः क्रौड्यादिषु न पाठः कार्य' इति पाठः । नन्वेवं 'गौकक्षीपुत्र' इत्यत्र 'ष्यङः सम्प्रसारण'मिति न स्यादत आह—**सम्प्रेति** । नन्वत्र करणं व्यर्थमत आह—**इहेति** । तत्=लिङ्गविशिष्टेति । घटीग्रहणेनैव तज्ज्ञापनसिद्ध्या नास्येदं फलमित्यरुचिः केचिदित्यनेन सूचिता ।

॥ इति स्त्रीप्रत्ययाः ॥

* इति सदाशिवभट्टीयां स्त्रीप्रत्ययाः समाप्ताः[1] *

**ॐ विषमपदविवृतिः ॐ**

**इति श्रीमद्राघवेन्द्राचार्यकृते विषमयाख्ये लघुशब्देन्दुशेखरव्याख्याने स्त्रीप्रत्ययप्रकरणम् ।**

---

**ॐ वरवर्णिनी ॐ**

अन्त्यस्य रेफस्य वृद्धिः स्यादत आह—**अत्राद्येति** । **व्याख्यानादिति** । नरः अः–नरः, कतन्तव-त्पररूपं, ना च नरश्चेति द्वन्द्व इति व्याख्यानादित्यर्थः । **अनार्षमिति** । तत्रादर्शनात् । आद्युदात्तस्य रूपस्य तर्हि कथं सिद्धिरत आह—**नुर्नरस्य चेति** । योगार्थमादायान्यत्रास्य प्रवृत्तिं वारयति—**रूढ्येति** । **अत एव**=रूढिस्वीकारेऽर्थभेदाभावादेव ।

प्राचाम्मते ष्फस्य सत्त्वादाह—**उदीचाम्मत इति** । सः=गौकक्ष्यशब्दः । **न पाठ्य इति** । ष्यङ्प्रत्ययस्तत्र पाठे भवति ततो 'यङश्चा'बिति चाप् जायेत, स च चाप्–अधुना 'षाद्यञ' इत्यनेन सिद्ध इति भावः । ननु 'गौकक्षीपुत्र' इत्यत्र 'ष्यङः सम्प्रसारण'मिति सम्प्रसारणन्न स्यादित्यत आह—**सम्प्रसारणन्त्विति** । **नेष्टमिति** । तदुक्तम्भाष्ये–'षाद्यञश्चाप् वक्तव्यः—'शार्कराक्ष्या',

---

१ अतः परं सदाशिवभट्टीयं तिलकं नोपलभ्यते । ज्योत्स्नापि हलन्तपर्यन्तमेव लब्धा । अभिनव-चन्द्रिकाऽपि हलन्तपुंलिङ्गपर्यन्तमविच्छिन्ना ततो मध्ये २ विच्छिन्नैव लभ्यते । अतस्तन्मुद्रणाद्विरमामः ।

❀ वरवर्णिनी ❀

'पौतिमाष्या' गर्गादियञन्ता एवेति कैयटः । तत्रायमर्थः—गोकक्ष्यशब्दः क्रौड्यादिषु पठ्यते, स न पठितव्यो भवति, यदि न पठ्यते—'गौकक्षीपुत्र' इति सम्प्रसारणञ्च प्राप्नोति, इष्टमेवैतत्सङ्गृहीतं गौकक्ष्यापुत्र इत्येव भवितव्यम्, एवं हि सौनागाः पठन्ति—'ष्यङः सम्प्रसारणे गोकक्ष्यायाः प्रतिषेधः' इति। इयञ्च सौनागानामुक्तिस्तत्र गौकक्ष्यशब्दस्य पाठसत्त्वे बोध्या । नन्वस्य तद्धिताधिकारस्योत्तरार्थत्वे इहकरणं व्यर्थमत आह—इहेति । के चिदिति । घट—घटीग्रहणेनैव तदनित्यत्वस्य सिद्धेरिदमपि प्रयोजनमन्यथासिद्धमित्यस्वरुचिः''—इति मिश्राः ।

नमो विद्वच्छिरोभूषारत्नाय न्यायवार्द्धये ।
मरुमण्डलमार्त्तण्ड—स्नेहिरामजिशास्त्रिणे ॥ १ ॥
पितामहपदद्वन्द्वचिन्तनावाप्तबुद्धिना ।
शब्देन्दुशेखरे प्रौढा रचिता वरवर्णिनी ॥

इति राजराजराजीमुकुटकुटीकोटरशायिचरणनखकिरण-प्रत्यग्रशङ्कराचार्यावतार-पुंभाववाग्देवता-सिद्धसारस्वत-षड्शास्त्रवाचस्पति-न्यायरत्न-मरुमण्डलमार्त्तण्ड-जगद्विदित-कैलासवासि-श्री १०८ श्रीस्नेहिरामजिशास्त्रिणां पौत्रेण, दिग्विजयप्रथित-प्रचण्डपाण्डित्य-वादिवारणपञ्चानन-प्रतिवादिभयङ्करभयङ्कर-न्यायाचार्य-सिद्धसारस्वत-कैलासवासि-श्री १०८ श्रीशिवनारायणशास्त्रिणान्तनुजनुषा, सतीसार्वभौम-राजलक्ष्मी-गर्भसम्भवेन, श्रीराधाकृष्णजिपोद्दारलब्धसाहाय्येन, व्याकरणाचार्य-न्यायाचार्य-दर्शनाचार्य-श्रीगुरुप्रसादशास्त्रिणाऽऽकलितायां शब्देन्दुशेखरवरवर्णिन्यां स्त्रीप्रत्ययप्रकरणम्।
माघशुक्लप्रतिपत् वै० १९९२ शुभम्॥ श्रीः॥ शुभम्॥

[ पूर्ण पृष्ठ सङ्ख्या-१०४० ]



* श्रीः *

यस्तर्काम्बुनिधिः प्रचण्डधिषणस्तेजस्विचूडामणि-
र्मीमांसायुगलैकसिन्धुरवरो योगेषु योगेश्वरः ।
साक्षाद्व्याकरणे पतञ्जलिरलं षट्शास्त्रवाचस्पति-
र्वादीन्द्रः स पितामहो विजयते श्रीलेहिरामाभिधः ॥ १ ॥

* * * *

मध्वध्वान्तनिवारणैकतरणिर्वादीभकण्ठीरवो
न्यायाचार्यपदाङ्कितः सुमहितः साहित्यपाथोनिधिः ।
मीमांसारसमांसलः किमपरं पुंभाववाग्देवता
तातो मे सुकृतीश्वरो विजयते नारायणान्तः शिवः ॥ २ ॥

* * * *

शिवनारायणोद्भूतो राजलक्ष्मीसमुद्भवः ।
गुरुप्रसादनामाऽसौ शेखरं पर्यभूषयत् ॥ ३ ॥

* श्रीः *

# कारकप्रकरणम् ।

'स्वौजसमौ'डितिविहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह—**प्रातिपदिकार्थेति** । इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते, अन्ततोऽस्तिक्रियाया सर्वत्र सत्त्वात् ।

❀ विजया ❀

**नुमोऽनवद्यसद्ग्रन्थविद्योद्योतितदिङ्मुखान् ।**
**मरुमण्डलमार्त्तण्ड-स्नेहिरामाभिधान् गुरून् ॥ १ ॥**

द्वितीयादिवत्प्रथमाया अपि कारकविभक्तित्वं सूचयति—**इदमिति** । ननु 'चैत्र'इत्यादौ न क्रियायोगोऽत आह-**अन्तत इति** । तत्राप्यस्तीत्यध्याहारेण बोध इति भावः । अतएव 'तिङ्समानाधिकरणे प्रथमे'ति वार्त्तिकं सङ्गच्छते । तत्र तिङ्समानाधिकरण्यञ्च तिङ्बोध्यकर्त्रादिकारकबोधकत्वरूपत्वात् । नन्वेवं 'त्रयःकाला'इत्यादीनामसाधुतापत्तिः, कस्या अपि क्रियाया अध्याहारस्य तत्र कर्त्तुमशक्यतया क्रियायोगाभावेन प्रथमाया अप्रवृत्तेः, नच 'सन्ती'त्यध्याहारः शक्यते कर्त्तुं, लडर्थस्य वर्त्तमानत्वस्य भूतभविष्यतोर्बाधितत्वादिति चेन्न; 'ज्ञायन्ते'इत्यस्याध्याहारेण—वर्त्तमानकालिकज्ञानविषयत्वस्य कालत्रयेऽपि सम्भवेनादोषात् । वस्तुतस्तु सन्ती'त्यस्याध्याहारोऽपि कर्त्तुं शक्यते, नच तत्र वर्त्तमानत्वं बाधितमिति वाच्यं, 'धातुविशिष्टत्वं वर्त्तमानत्व'मिति परिष्कारेणाऽदोषात् । वै० 'स्वोच्चारणाधिकरणत्व' 'स्वबोध्यत्वेन तात्पर्यविषयीभूतक्रियाधिकरणत्व' 'स्वोच्चारणप्रतियोगिक-प्रागभाव ध्वंसाऽन्यतराधिकरण-कालाऽघटितत्वै'तत्त्रितयसम्बन्धेन । कालत्रयानुस्यूतैकमहाकालकर्त्तृकसत्तायामध्याहृतास्धातुविशिष्टकालावच्छिन्नत्वस्याऽबाधात्समन्वयः । उच्चारणकालात्प्राक् यत्र काले पाकः कृतस्तत्पर्यन्तमेकमखण्डं कालखण्डमादायातिव्याप्तिवारणाय—'प्रागभावाधिकरणकालाघटितत्व'विशेषणम् । एवं—यत्रागामिनि काले पक्ष्यति तत्पर्यन्तमुच्चारणकालात्परमेकमखण्डं कालखण्डमादायातिप्रसङ्गभङ्गाय'ध्वंसाधिकरणकालाघटितत्व'मिति केचित् ।

अन्यतु—'स्वप्रतिपाद्यक्रियानधिकरणकालाघटितत्व' 'स्वोच्चारणाधिकरणत्व' 'स्व-प्रतिपाद्य-

❀ चिदस्थिमाला ❀

अव्यवहितसङ्गत्यभावाद्व्यवहितसङ्गतिमाह—**स्वौजसिति** । 'प्रथमा त्वकारकविभक्तिस्तदधिकारापाठा'दिति प्राचीनग्रन्थासाङ्गत्यायाह—**इदमपीति** । अपिना तदधिकारस्थसूत्रविहितसञ्ज्ञाहेतुकविधिसमुच्चयः । **अन्तत इति** । 'अग्रे' इति शेषः । 'अस्तिर्भवन्तीपर' इति भाष्यार्थमाह—**अस्तीति** । 'सर्वत्र

❀ विषमपदविवृतिः ❀

**क्रियायोग एवेति** । 'प्रायेणे'ति शेषः । तेन पचतिरूपादिभ्योऽग्रेवणादिभ्यश्च प्रथमासिद्धिः । नन्वेवं 'त्रयः कालाः' इत्यादौ प्रथमा न स्यात् 'सन्ती'त्यध्याहारस्यासम्भवादिति चेन्न, 'ज्ञायन्ते' इत्यध्याहारसम्भवात् ।

❀ वरवर्णिनी ❀

**टीकान्तरेषु विश्रामं भजमानेषु कारके ।**
**प्रथिमानं परं धत्ते शेखरे वरवर्णिनी ॥ १ ॥**

१ ननु 'करोति कर्तृकर्मादिव्यपदेशा'निति व्युत्पत्त्या कारकशब्दस्य क्रियापरतया कारकाधिकारीयद्वितीयादिविभक्तीनां क्रियान्वये एव प्रवृत्तावपि प्रथमाविधायके तदधिकारभावात्क्रियान्वये एवास्याः प्रवृत्तौ न मानमिति चेन्न; 'सहयुक्तेऽप्रधाने' इत्यत्राप्रधानग्रहणाभावेऽपि अप्रधाने एवेयं तृतीया भविष्यति, प्रधाने तु कारकविभक्तितया प्रथमा बाधिका भविष्यती'त्यादिरीत्या भाष्येऽस्याः कारकविभक्तित्वेन व्यवहारात्प्रथमाया अपि कारकविभक्तितया क्रियान्वय एव तस्याः प्रवृत्तेरौचित्यात् ।

१ छात्रलाभायकारकेऽस्मत्पितृभिर्न्यायाचार्यैः श्रीशिवनारायणशास्त्रिभिराकलिता विजया प्रदीयते ।

—आख्यातार्थकर्त्रादिनाऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोध्यः ।

ॐ विजया ॐ

क्रियाधिकरणत्वे'तत्त्रितयसम्बन्धेन धातुविशिष्टत्वं वर्त्तमानत्वम् । क्रियाद्वयान्तर्गतो यः कश्चित्सूक्ष्मःकाल उपलभ्यते तत्रापि यत्नविशेषादिरूपक्रियाऽस्त्येवेति-[ न तादृशे काले स्वप्रतिपाद्यक्रियानधिकरणकालत्वमिति—] न तमादाय प्रथमसम्बन्धासत्त्वप्रयुक्ता सर्वत्राऽव्याप्तिः ।

'त्रयःकाला'इत्यत्र च भूतभविष्यद्वर्त्तमानभेदभिन्नत्रित्वसङ्ख्याविशिष्टो य एको महाकालस्तत्कर्त्तृका सत्ता निरुक्तत्रियतयसम्बन्धेनाध्याहृतासुधातुविशिष्टकालावच्छिन्ना भवत्येवेति 'सन्ती'त्यध्याहारोऽपि शक्यते कर्त्तुमित्याचक्षते ।

परेतु—अस्तीत्यादिप्रयोगावच्छिन्नो यः सत्तादिक्रियाधिकरणीभूतःकालः स एव वर्त्तमानः, स एव च लडर्थः । 'कीदृशकालावच्छेदकले प्रयोग' इति परिचयायैव प्रागभावध्वंसाधिकरणकालाघटितत्वादिसम्बन्धघटितं धातुविशिष्टत्वादिरूपं लक्षणमुपन्यस्तम् । 'प्रयोगावच्छिन्नक्रियाधिकरणे'-त्यस्य प्रयोगावच्छिन्ना या क्रियाऽधिकरणता तद्विशिष्टः कालो लडाद्यर्थ इत्यर्थः । विशिष्टस्यैव क्रियायामन्वय इति महाकालमादाय न क्षतिरिति विभाव्यतामित्याहुः ।

ननु प्रथमान्तार्थस्यापि न साक्षात्क्रियाऽन्वय इति कथन्तस्य कारकत्वं, साक्षात्क्रियान्वयित्वस्यैव हि कारकत्वादत आह–तद्द्वारक इति । नन्वेवं परम्परासम्बन्धेन क्रियान्वयिनोऽपि कारकत्वे 'राज्ञःपुरुषोऽस्ती'त्यादावपि परम्परया पुरुषद्वारा राज्ञोऽपि सत्ताक्रियान्वयितया राजादेरपि कारकत्वापत्तिः, नच'क्रियानिष्ठविषयतानिरूपितविषयतासमानाधिकरणविषयतानिरूपितविषयताश्रयत्व'मेव परम्परया क्रियान्वितत्वं गृह्यते, तादृशश्च पुरुषादावेव, नतु तदन्वयिनि राजादावपीति न दोष

ॐ चिदस्थिमाला ॐ

विशेषक्रियाशून्ये' इति शेषः । अत एव 'तिङ्समानाधिकरणे प्रथमे'ति वार्तिकसङ्गतिः । ननु प्रथमान्तार्थस्य न साक्षात्क्रियायोगोऽत आह—आख्यातार्थेति ।—तद्घटकप्रत्ययार्थे । अत्र मानमाह—

ॐ वरवर्णिनी ॐ

१ श्रीगुरुचरणास्तु—प्रयोगविशिष्टत्वं वर्त्तमानत्वं; वै०'स्वोच्चारणाधिकरणत्व' 'स्वजन्यबोधविषत्वेन तात्पर्यविषयीभूतफलविशिष्टत्वो'भयसम्बन्धेन । फलवै०—'स्वनिष्ठजन्यतानिरूपितजनकतावद्व्यापारप्रतियोगिकध्वंसानधिकरणत्व' 'स्वनिष्ठजन्यतानिरूपितजनकतावद्व्यापारप्रतियोगिकप्रागभावानधिकरणत्वे'तदुभयसम्बन्धेन । पचतीत्याद्युच्चारणकाले तज्जन्यबोधविषयविक्लित्तिरूपफलजनकव्यापाराणां प्रागभावस्य ध्वंसस्य चाभावाल्लक्षणसमन्वयः—इत्याहुः । विस्तरस्त्वभिनवराजलक्ष्म्यामस्मदभ्यूहितायामनुसन्धेयः ।

२ न च क्रियानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकात्प्रथमेत्यर्थे—सत्ताक्रियानिष्ठविशेष्यतानिरूपितप्रकारताया तिबर्थे आश्रये एव सत्त्वाच्चैत्रादिपदात्प्रथमा न स्यादिति वाच्यं, क्रियानिष्ठविशेष्यतानिरूपिततिङर्थाश्रयनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारताप्रयोजकात्प्रातिपदिकात्प्रथमेत्यर्थेन चैत्रादिपदात्प्रथमासिद्धेरित्याशयात् । तदाह—क्रियानिष्ठविषयतेत्यादि ।

न चैवमपि 'कुशलश्चैत्रः पचती'त्यत्र चैत्रस्य तादृशप्रकारताप्रयोजकत्वेऽपि कुशलादिपदस्याऽतथात्वात्प्रथमा न स्यादिति वाच्यं, 'क्रियानिष्ठमुख्यविशेष्यतानिरूपिताऽऽश्रयनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितसाक्षात्परम्परासाधारणप्रकारताप्रयोजकात्प्रातिपदिकात्प्रथमे'त्यर्थेन चैत्रादेः साक्षात्प्रकारताप्रयोजकत्वात् कुशलशोभनादिपदानाञ्च परम्परया प्रकारताप्रयोजकत्वात्ततः प्रथमासिद्धेः ।

ॐ विजया ॐ

इति वाच्यं, 'चैत्रेण स्वस्य पुत्रो दृश्यते' इत्यादौ चैत्रादेरेव स्वपदार्थतया स्वपदार्थस्यापि कारकत्वापत्तेः, त्वन्मये दर्शनक्रियानिष्ठविशेष्यताख्यविषयतानिरूपिताऽऽश्रयाभिन्नपुत्रनिष्ठप्रकारताख्यविषयतासमानाधिकरणविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेन परम्परया क्रियान्वयित्वात्, एवञ्च स्वपदादपि तृतीयापत्तिरिति चेन्न; कारकक्रियाभावत्वव्याप्य-कर्तृक्रियाभावत्वादिरूपघटावच्छिन्नसंसर्गेतर-जन्यजनकभावादिसंसर्गाघटितपरम्परया क्रियान्वयित्वस्यैव कारकत्वात्।'चैत्रोऽस्ती'त्यादावाख्यातार्थकर्त्तरि चैत्रपदार्थस्य विशेष्यविशेषणभावेऽपि—अभेदस्यासंसर्गतया तद्घटितत्वेऽपि [जन्यजनकभावाद्यघटितत्वात्]—परम्परया क्रियान्वयित्वं सुलभम्। 'राज्ञः पुरुषः' इत्यादौ तु तदितरजन्यजनकभावसंसर्गघटितत्वेन तादृशसंसर्गानवच्छिन्नप्रकारताप्रयोजकत्वविरहान्न कारकत्वमित्याहुः।

अन्ये तु—'क्रियायोगे एव प्रवर्त्तते' इत्युक्त्या—क्रियानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकात्प्रथमेत्यर्थे—राहुशिरसोरभेदाद्राहोःशिरोऽस्तीत्यादौ सत्तानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य शिरश्शब्दवद्राहावप्यक्षततया तस्य कारकत्वापत्तिः, ततः प्रथमापत्तिश्च। 'क्रियानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकात्प्रथमे'त्युक्तौ तु-'घटोऽस्ती'त्यादौ सत्तानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकत्वस्य तिवर्थाश्रय एव सत्त्वेन घटस्यातथात्वात्प्रथमानापत्तिः, अतः—क्रियानिष्ठविशेष्यतानिरूपिताऽऽधेयत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूताश्रयत्वावच्छिन्नविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकात्प्रथमेत्यर्थः, एवञ्च शिरो-घटादेस्तथात्वात्प्रथमा, राह्वादेः साक्षात्प्रकारत्वाप्रयोजकत्वान्न सा। नचैवं 'नीलो घटोऽस्ती'त्यादावपि नीलस्य साक्षात्तादृशप्रकारताप्रयोजकत्वाभावेन प्रथमा न स्यादितिवाच्यं, धर्मिपारतन्त्र्येण नीलपदार्थस्यापि 'कटं भीष्मं कुर्वि'त्यादिवत्क्रियायां साक्षादेवान्वयात्ततः प्रथमासिद्धेरित्याहुः।

---

ॐ वरवर्णिनी ॐ

न चैवं परम्परयाऽपि तादृशप्रकारताप्रयोजकात्प्रथमास्वीकारे—'चैत्रस्य पुत्रः पठती'त्यादौ पठनादि-क्रियानिष्ठविशेष्यतानिरूपिताऽऽश्रयनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितसाक्षात्प्रकारतायाः पुत्रपदार्थनिष्ठतया तादृशपुत्रनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपित—जन्यजनकभावसम्बन्धावच्छिन्नप्रकारतायाश्च चैत्रनिष्ठतया तस्यापि परम्परया तादृशप्रकारताप्रयोजकतया ततोऽपि प्रथमापत्तिरिति वाच्यं, 'क्रियानिष्ठमुख्यविशेष्यतानिरूपिताश्रयनिष्ठप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारतासमानाधिकरणविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकात्प्रथमे'त्यर्थेन चैत्रनिष्ठप्रकारताया जन्यजनकभावरूपभेदसम्बन्धावच्छिन्नत्वेनाभेदसम्बन्धावच्छिन्नत्वाभावात्।

न चैवमपि 'पण्डितस्य चैत्रस्य पुत्रः पठती'त्यत्राऽभेदसम्बन्धावच्छिन्नाया अपि तादृशप्रकारतायाः पण्डिते सत्त्वात्तादृशपरम्परया प्रकारताप्रयोजकात्पण्डितपदात्प्रथमापत्तिरिति वाच्यं, 'भेदसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारत्वाऽप्रयोजकत्वे सति क्रियानिष्ठमुख्यविशेष्यतानिरूपित—वृत्तित्वसम्बन्धावच्छिन्नाश्रयनिष्ठप्रकारता—समानाधिकरणविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकात्प्रथमेत्यर्थेन पण्डितस्य,—चैत्रनिष्ठजन्यजनकभावात्मकभेदसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारताप्रयोजकतया विशेषणाभावप्रयुक्त-विशिष्टाभावात्प्रथमायास्ततोऽप्रसङ्ग इत्याशयादिति पण्डितैकशेष—शेषावतारश्रीहरनारायणत्रिपाठि-गुरुचरणानामाशयं **गौडा** व्यावर्णयन्ति।

तदयमत्र निष्कर्षः—क्रियानिष्ठविशेष्यतानिरूपित—वृत्तित्वसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यताविशिष्टात्प्रातिपदिकात्प्रथमेत्यर्थः, वै० 'स्वनिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताश्रयबोधकत्व' 'स्वसमानाधिकरणभेदसम्बन्धावच्छिन्नप्रकारत्वाऽप्रयोजकत्वो'भयसम्बन्धेन। 'चैत्रः स्वस्य पुत्रं पश्यती'त्यादौ स्वपदार्थस्य तिवर्थाश्रयाऽभिन्नत्वेन क्रियान्वयित्वेऽपि भेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वान्न प्रथमा। 'सुन्दरो नीलो घटोऽस्ती'त्यादौ च प्रथमा सिद्धेति।—विस्तरस्त्व**भिनवराजलक्ष्म्यां** द्रष्टव्यः।

प्रथमान्तार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः ।

ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणमनर्थकमत आह—**नियतेति** । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः ।

❀ विजया ❀

अन्ये तु—क्रियानिष्ठविशेष्यतानिरूपिताश्रयत्वसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यतया साक्षात्परम्परया वा निरूपिता या संसर्गानवच्छिन्ना प्रकारता, तादृशप्रकारताप्रयोजकात्प्रथमेत्यर्थः, 'नीलो घटोऽस्ती'त्यादौ सत्तानिष्ठविशेष्यतानिरूपिताऽऽश्रयत्वावच्छिन्नप्रकारतासमानाधिकरणीभूताऽऽश्रयनिष्ठविशेष्यतया साक्षान्निरूपिताया घटे, परम्परया निरूपितायाः सम्बन्धानवच्छिन्नप्रकारतायाश्च नीले सत्त्वा तोऽपि प्रथमा सिद्धिः । 'राहोःशिर'इत्यत्र तु राहौ तादृशप्रकारताया स्त्वेऽपि तादृशप्रकारतायां संसर्गानवच्छिन्नत्वाभावेन न राहुशब्दात्प्रथमेत्याहुः ।

श्रीगुरुचरणास्तु—'भेदसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यतानिरूपितप्रकारत्वाऽप्रयोजकत्वे सति,—क्रियानिष्ठोपस्थितीयमुख्यविशेष्यतानिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकात्प्रथमेत्यर्थः । अतो न 'चैत्रः स्वं पश्यती'त्यत्र स्वपदात्प्रथमा, तादृशप्रकारताप्रयोजकचैत्रात्स्वस्याऽभिन्नत्वेऽपि प्रयोजकता तत्तन्निष्ठैवेति स्वपदस्य तादृशप्रकारताप्रयोजकत्वाभावात् । अत एव 'सुन्दरस्य चैत्रस्य पुत्रोऽस्ती'त्यादौ सुन्दरपदान्न प्रथमेत्याहुः ।

**कारकविभक्तीति** । क्रियाजनकार्थकविभक्तित्वं—कारकविभक्तित्वम् । 'मातुः स्मरती'त्यत्र मातुः—स्मरणक्रियाजनकत्वेऽपि सम्बन्धस्य क्रियाजनकत्वाभावेन षष्ठ्या न कारकविभक्तित्वम् । नचैवं मातुः स्मरणक्रियाजनकत्वेन कारकत्वापत्त्या'मातृस्मरण'मित्यादौ'गतिकारके'तिस्वरापत्तिरिति वाच्यं, 'क्रियाजनकत्वेन विवक्षितत्वं कारकत्व'मित्यर्थेन दोषात् , मातुः शेषत्वेनैव विवक्षणात्कारकत्वाभावात् ।

अत एव 'शक्तिरर्थ'इति न युक्तं, तथासति कर्मत्वादेः क्रियाजनकत्वाभावेन विभक्तेः कारकविभक्तित्वानापत्तेः इत एवारुचेः 'सम्बन्धः शक्तिरेव वे'त्यत्र 'वे'त्युपात्तम् ।

ननु लिङ्गस्यापि प्रातिपदिकार्थतया लिङ्गग्रहणं व्यर्थमत आह—**नियतेति** । नियता उपस्थितिर्यस्येति बहुव्रीहिः । निपूर्वकयमधातोर्व्यापकत्वमर्थः, क्तप्रत्ययार्थ आश्रयः, उपस्थितिर्ज्ञानविशेषः, यत्पदोत्तरषष्ठ्या विषयत्वमर्थः । एवञ्च—यद्विषयिणी उपस्थितिर्व्यापकताश्रयीभूता स प्रातिपदिकार्थ इति लब्धम् । तत्र व्यापकत्वस्य निरूपकांशे साकाङ्क्षतयाऽऽकाङ्क्षाशान्तये आह—**यस्मिन्निति** । एवञ्च—प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकताश्रयीभूतोपस्थितिनिरूपितविषयताश्रयः प्रातिपदिकार्थ इति फलितम् । तदेवं शाब्दबोधविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वं, वै० स्वजनकशक्तिज्ञाननिरूपितत्व' 'स्वजनकशक्तिज्ञानजन्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वे'तदुभय-

❀ चिद्स्थिमाला ❀

**प्रथमान्तेति** । 'अत एवे'त्यादिः । अस्याः=प्रथमायाः । भाष्ये=अनभिहिते तत्र—तत्र अत्र सर्वसङ्ग्रहाय

❀ वरवर्णिनी ❀

अत्राहुर्दण्डिभट्टाः—अत्र व्याप्यतावच्छेदकश्च सम्बन्धः—स्वजन्यश्रावणप्रत्यक्षसमवायित्वं, व्यापकतावच्छेदकसम्बन्धश्च—समवायः, तथा च स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धावच्छिन्नप्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति फलितम् । वस्तुतस्तु प्रातिपदिकोच्चारणे व्याप्यतास्वीकारे, स्वजन्यश्रावणप्रत्यक्षसमवायित्वस्य च व्याप्यतावच्छेदकसम्बन्धस्य स्वीकारे गौरवात्'स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्व'मित्येव वक्तुं युक्तम् । एतेन—नियतलिङ्गघटादिपदस्य

ॐ विजया ॐ

सम्बन्धेनेति यावत् । पुंस्त्वादेस्तटादिपदजन्यबोधजनकशक्तिज्ञानजन्यतटत्वतटादिविषयक... बोधनिष्ठभेदप्रतियोगितावच्छेदकविषयताश्रयतया न निरुक्तं प्रातिपदिकार्थत्वमिति लिङ्गग्रहणं सफलम् । अलिङ्गपूर्वरादिषु हि–प्रवृत्तिनिमित्तं, तदाश्रयः, तयोः सम्बन्धश्चेति त्रयं प्रातिपदिकार्थः। नियतलिङ्गेषु कृष्णरामादिषु–प्रवृत्तिनिमित्तं, तदाश्रयः, तयोः सम्बन्धः, पुंस्त्वं, पुंस्त्वं, तयोः सम्बन्धश्चेति–षट्कं प्रातिपदिकार्थः लिङ्ग–प्रवृत्तिनिमित्ताश्रययोः पुंस्त्व–घटयोः सम्बन्धस्त्वाकाङ्क्षा-भास्योऽपदार्थ एव। अनियतलिङ्गतटादिशब्देषु तु प्रवृत्तिनिमित्तं, तदाश्रयः,तयोः सम्बन्धश्चेति त्रयमेव प्रातिपदिकार्थः, पुंस्त्वादि तूपलक्षणीभूय भासत–इति तटादौ–भेदप्रतियोगितावच्छेदक-विषयताश्रयत्वं लिङ्गे चालनीन्यायेन सुलभमिति तत्त्वम् ।

ॐ वरवर्णिनी ॐ

बधिरनिकटे उच्चारणेपि उपस्थितेरभावान्निरुक्तप्रातिपदिकार्थत्वं तादृशस्थले न स्यादित्यपास्तम् । 'स्वविषयक-श्रावणप्रत्यक्षसमवायित्वसम्बन्धेन बधिरात्मनि प्रातिपदिकस्याभावेन तत्रोपस्थितेरभावेपि क्षतिविरहात् ।

नन्वेवमपि यस्य पुरुषस्य नियतघटादिपदशक्तिज्ञानं नास्ति तस्य नियतोपस्थितेरभावात्तादृशस्थले निरुक्तप्रातिपदिकार्थत्वमव्याप्तं, न च 'स्वनिष्ठशक्तिज्ञानसमवायित्व' 'स्वविषयकश्रावणप्रत्यक्षसमवायित्वै'-तदुभसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं—प्रातिपदिकार्थत्वमिति परिष्कारेणाऽदोषः, शक्तिज्ञानाभाववदात्मनि 'स्वविषयकश्रावणप्रत्यक्षसमवायित्व'-सम्बन्धेन प्रातिपदिकस्य सत्त्वेऽपि 'स्वनिष्ठशक्तिज्ञानसमवायित्व'सम्बन्धेन प्रातिपदिकस्य तत्राभावेनोपस्थितेर-भावेपि क्षतिविरहादिति वाच्यम्, यत्रात्मनि शक्तिज्ञानं जातं तज्जनितसंस्कारश्च लुप्तः तत्रोपस्थितेरभावेन निरुक्तप्रातिपदिकार्थत्वस्याव्याप्तत्वात् । न च 'स्वविषयकश्रावणप्रत्यक्षसमवायित्व' 'स्वनिष्ठशक्तिज्ञान-जन्यसंस्कारसमवायित्वै'तदुभयसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायिसम्बन्धावच्छिन्नव्याप-कतावदुपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषः, लुप्तसंस्कारकात्मनि स्वनिष्ठशक्ति-ज्ञानजन्यसंस्कारसमवायित्वसम्बन्धेन प्रातिपदिकस्याभावेनोपस्थितेरभावेपि क्षतिविरहादिति वाच्यं, यस्यात्मनि शक्तिज्ञानजन्यसंस्कारो वर्तते परन्तु संस्कारो नोद्बुद्धस्तत्र निरुक्तप्रातिपदिकार्थत्वस्य पुनर-व्याप्तेः सत्त्वात्। न च 'स्वविषयकश्रावणप्रत्यक्षसमवायित्व' 'स्वनिष्ठशक्तिज्ञानजन्योद्बुद्धसंस्कारसमवायित्वे'-तदुभसम्बन्धावच्छिन्नप्रातिपदिकनिष्ठव्याप्यतानिरूपितसमवायसम्बन्धावच्छिन्नव्यापकतावदुपस्थितिविषयत्वं—प्रातिपदिकार्थत्वमिति परिष्कारेणादोषः,अनुद्बुद्धसंस्कारकात्मनि स्वनिष्ठशक्तिज्ञानजन्योद्बुद्धसंस्कारसमवायित्व-सम्बन्धेन प्रातिपदिकस्याभावेन तत्रोपस्थितेरभावेपि क्षतिविरहादिति वाच्यम् , एवं 'तटं त्रिषु लिङ्गेषु शक्त'मिति यस्य शक्तिज्ञानं तज्जनितसंस्कारो यत्रोद्बुद्धस्तत्र लिङ्गत्रयोपस्थितिर्न भवतीत्यस्य वक्तुमशक्य-त्वेन सूत्रे लिङ्गग्रहणवैयर्थ्यस्य तदवस्थत्वेन तस्य परिष्कारस्याप्रयोजकत्वादिति चेन्मैवं, 'स्वजन्यबोधविषयत्व-प्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व' 'स्वाभाववत्त्वै'तदुभयसम्बन्धेन स्वविशिष्टत्वं प्रातिपदिकार्थत्वमिति परिष्कारेणादोषात् । अभावश्च–'स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्व' 'स्वनिष्ठशक्तिविशिष्टावच्छेदकताव-द्विषयताश्रयत्वे'तदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । शक्तिवैशिष्ट्यञ्च–'स्वविषयविषयतानिरूपकत्व-सम्बन्धावच्छिन्नत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वै'तदुभयसम्बन्धेन ।

प्रवृत्तिनिमित्ते तदाश्रये च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्वरूपसम्बन्धाभावादेकमत्त्वेऽपि द्वयं नास्तीति रीत्या निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्सुलभ इति सर्वत्र लक्षणसमन्वयः ।

नियतलिङ्गस्थले पुंस्त्वादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य सत्त्वेपि स्वनिष्ठशक्तिविशिष्टावच्छे-दकतावद्विषयताश्रयत्वरूपसम्बन्धस्याभावात्तत्रापि निरुक्तदिशा उभयसम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभाव-स्सुलभ इति तत्रापि लक्षणसमन्वयः ।

॥ विजया ॥

नन्वेतावता प्रातिपदिकोच्चारणे व्याप्यता उपस्थितौ च व्यापकतेति लब्धं, तच्च नोपपद्यते, उच्चारणस्य समवायेनोच्चारयितरि उपस्थितेश्च श्रोतरि सत्त्वेनोच्चारणोपस्थित्योः समानाधिकरण्यस्यैवाभावेन 'तद्वन्निष्ठात्यन्ताभावाऽप्रतियोगित्व रूपव्यापकत्वस्योपस्थितावभावेन तयोर्व्याप्यव्यापकभावस्यैव

॥ वरवर्णिनी ॥

अनियतलिङ्गस्थले 'तटी'त्यादौ च स्त्रीत्वादौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य 'पुंस्त्वविषयकबोधे स्त्रीत्वत्वेन स्त्रीत्वविषयको बोधो ने'ति भेदमादाय चालनीन्यायेन स्वनिष्ठशक्तिविशिष्टावच्छेदकताविषयताश्रयत्वस्य च सत्त्वात्तत्र न निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाव इति लिङ्गग्रहणं सार्थकम्।

अत्र प्रथमसम्बन्धोपादानेन अश्वविषयकबोधनाशर्येणोच्चरितहरिशब्दादिन्द्ररूपप्रातिपदिकार्थे प्रथमा न भवति, अन्यथा 'अश्वारूढ इन्द्र' इति प्रकृत्यर्थप्रत्ययार्थयोराधाराधेयभावसम्बन्धेनान्वयबोधापत्तिः। अभावीयप्रतियोगितावच्छेदकप्रथमसम्बन्धदानात्तदादिपदस्थले तत्तत्पदार्थस्य प्रातिपदिकार्थत्वं सिद्ध्यति।

तत्रैव द्वितीयसम्बन्धदानात्सूत्रे लिङ्गग्रहणं सार्थकम्। शक्तिवैशिष्ट्ये प्रथमसम्बन्धदानात् नियतलिङ्गस्थले 'प्रमेयत्वेन पुंस्त्वविषयताको ने'ति भेदमादाय पुंस्त्वादौ नाव्याप्तिः। एवं शक्तिवैशिष्ट्ये द्वितीयसम्बन्धदानान्नियतलिङ्गस्थले पुंस्त्वादेरपि प्रातिपदिकार्थत्वसिद्धिरिति सङ्क्षेपः।

यत्तु प्रातिपदिकपदविशिष्टत्वं प्रातिपदिकार्थत्वं, वैशिष्ट्यञ्च—'स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकविषयतावत्त्व' सम्बन्धेनेति; तन्न, हर्यादिनानार्थस्थले विष्णुत्वविष्ण्वादीनां प्रातिपदिकार्थत्वानापत्तेः।

यदपि—प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। शक्तिवैशिष्ट्यञ्च 'स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वो'भयसम्बन्धेन।

अत्र प्रथमसम्बन्धदानात्साध्यत्वाविषयकबोधस्य कुत्राप्यजननात्तत्र द्वितीयसम्बन्धसत्त्वेपि नातिव्याप्तिः। द्वितीयसम्बन्धेन तटादौ लिङ्गस्य न तत्त्वम्। नानार्थस्थले तु शक्तेर्भेदान्न दोष इति; तदपि न; तत्पदस्थले तत्पदार्थे प्रातिपदिकार्थत्वानापत्तेः।

एतेन प्रातिपदिकनिष्ठशक्तिविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यञ्च—'स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधविषयतात्वावच्छिन्ननिरूपितव्यापकतावत्त्वो'भयसम्बन्धेनेत्यपास्तं, तत्पदस्थले दोषस्य दुरुद्धरत्वापत्तेः। तत्पदेन च नियमेन कस्यापि बोधस्यानुदयान्निरुक्तविषयतात्वावच्छिन्नव्यापकत्वस्य दुर्लभत्वात्। न च भवत्परिष्कारेऽपि 'तत्पुरुष' इत्यादौ तत्पदार्थस्य प्रातिपदिकार्थत्वानुपपत्तिः, स्वप्रयोज्यपुरुषत्वावच्छिन्नधर्मितानिरूपितप्रकारतावत्त्वस्य चालनीन्यायेन पूर्वोक्तदिशा स्वनिष्ठशक्तिविशिष्टावच्छेदकताविषयतावत्त्वस्य च सत्त्वेन स्वाभावस्य अभावादिति वाच्यं, स्वप्रयोज्यधर्मितानिरूपितप्रकारताया अपि अपदार्थसम्बन्धावच्छिन्नविशेषणदानेनादोषात्। 'अपदार्थसम्बन्धावच्छिन्ने'त्यस्य शक्तिभास्यसम्बन्धानवच्छिन्नेत्यर्थः। आकाङ्क्षाभास्यसम्बन्धावच्छिन्नेति यावत्। तथा च 'तत्पुरुष' इत्यादौ पुरुषत्वावच्छिन्नधर्मितानिरूपिततत्पदार्थनिष्ठप्रकारता, -एकार्थीभावाङ्गीकारेण—शक्तिभास्यसम्बन्धावच्छिन्नैवेति न दोष इति दिक्। [ धर्मिता—सावच्छिन्नाविशेष्यतेति तार्किकसङ्केतः ]

अन्ये तु शाब्दबोधविशिष्टविषयकताकत्वं प्रातिपदिकार्थत्वम्। शाब्दबोधवैशिष्ट्यञ्च 'स्वजनकशक्तिज्ञानजन्यशाब्दबोधविषयत्वावच्छिन्नव्यापकत्व' 'स्वजनकशक्तिज्ञानप्रयोज्यत्वो'भयसम्बन्धेन। तत्पदार्थस्थले च 'बुद्धिस्थस्तत्पदवाच्य' इति शक्तिज्ञानं न शाब्दबोधजनकं, किन्तु 'घटत्वावच्छिन्नस्तत्पदवाच्य' इत्यादिविशिष्य शक्तिज्ञानमेव शाब्दबोधजनकमिति तज्जन्यशाब्दबोधविषयत्वावच्छिन्नव्यापकत्वं, तत्पदार्थेऽव्याहतमिति तत्र न दोषः। 'तटं त्रिषु शक्त'मित्यादिशक्तिज्ञानमेव च नियतलिङ्गस्थले शाब्दबोधजनकमिति तत्र कस्यापि लिङ्गस्य नियमेनाभानात् स्वजन्यशाब्दबोधविषयविषयतात्वावच्छिन्नव्यापकत्वं लिङ्गविषतायां नास्तीति लिङ्गग्रहणं सार्थकम्। पूर्ववत्साध्यत्वेऽतिव्याप्तिवारणाय द्वितीयसम्बन्धोपादानमित्याहुः—'' इति प्राहुः।

❀ विजया ❀

दुर्वचत्वादिति चेन्न; 'स्वजन्यश्रावणप्रत्यक्षसमवायित्व'सम्बन्धस्यैव व्याप्यतावच्छेदकतया प्रातिपदिकोच्चारणजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणस्य च श्रोतरि सत्त्वेन तत्रैवात्मनि समवायेनोपस्थितेश्च सत्त्वेनैकत्रैवात्मन्युभयोः स्थित्या सामानाधिकरण्यस्य सूपपादत्वात्। एतेन 'प्रातिपदिकोच्चारणेऽपि बधिरस्य तत उपस्थितेरभावाद्व्याप्यव्यापकभावो दुर्घट' इत्यपास्तम्। बधिरात्मनि निरुक्तव्याप्यतावच्छेदकसम्बन्धेन प्रातिपदिकोच्चारणस्यैवाभावादुपस्थितेर्व्यापकत्वभङ्गाभावात्। तदेवं–'प्रातिपदिकोच्चारणनिरूपित—'स्वजन्यश्रावणप्रत्यक्षसमवायित्व'सम्बन्धावच्छिन्न—ऽधिकरणतावन्निरूपितवृत्तितावदभावीयप्रतियोगितानवच्छेदकधर्मावच्छिन्नोपस्थितीयविषयताश्रयत्वं तत्त्वम्—" इति फलितम्। नन्वेवमगृहीतशक्तिकस्य घटादिपदादुपस्थितेरभावेन-[तादृशव्याप्यतावच्छेदकसम्बन्धेन श्रोतरि प्रातिपदिकोच्चारणसत्त्वेऽपि घटत्वादेरुपस्थितेस्तत्रासत्त्वभावात्—] व्यापकत्वभङ्गः, एवं गृहीतशक्तेरपि–लुप्तसंस्कारस्याजातसंस्कारस्यापि वा तत उपस्थितेरभावाद्व्यापकत्वभङ्ग इति चेन्न; 'स्वकर्मीभूतप्रातिपदिकनिष्ठशक्तिविषयकोद्बुद्धसंस्कारसमवायित्व' 'स्वजन्यश्रावणप्रत्यक्षसमवायित्वो'-भयसम्बन्धस्यैव व्याप्यतावच्छेदकत्वेनादोषात्। व्यापकता च न प्रातिपदिकोच्चारणमात्रनिरूपिता, असम्भवात्, नापि तत्तत्प्रातिपदिकव्यक्त्युच्चारणनिरूपिता, तस्याः सर्वत्र सत्त्वेनाऽव्यावर्त्तकत्वात्, किन्तु तत्तदानुपूर्वीमदुच्चारणनिरूपितैवेति तत्त्वविदः। न चैवं घटपदोच्चारणव्यापिका घटपटोभयविषयिणी समूहालम्बनात्मिकोपस्थितिरपीति तदीयविषयताश्रयीभूतपटादेरपि घटरूपप्रातिपदिकार्थत्वापत्तिरिति वाच्यं, 'प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितोपस्थितिनिष्ठव्यापकतावच्छेदकीभूतविषयताऽऽश्रयत्व'मित्यर्थेन पटादिविषयतायाश्च व्यापकत्वाभावेनादोषात्।

न च कृष्णरूपवदर्थान्तरनिरूपितशक्तिग्रहवतः कृष्णादिपदप्रत्यक्षेऽपि वसुदेवापत्यत्वादिरूपार्थोपस्थितेरभावादुपस्थितेर्व्यापकत्वं दुर्घटमिति वाच्यं; व्याप्यव्यापकत्वलक्षणे तत्तद्रूपेणैव तस्य विवक्षणात्, एवं व्याप्यतानियामकसंसर्गकुक्षावपि शक्तेस्तत्तद्रूपेणैव प्रवेशात्तत्र व्यापकत्वभङ्गाभावेन क्षतिविरहात्। एवञ्च 'कृष्णत्वाद्यवच्छिन्ननिरूपितकृष्णादिपदनिष्ठशक्तिग्रहसमवायित्व' 'स्वोच्चारणजन्यप्रत्यक्षसमवायित्वो'भयसम्बन्धेन तत्तत्प्रातिपदिकाधिकरणनिरूपितवृत्तितावदभावप्रतियोगितानवच्छेदकीभूतोपस्थितीयविषयताश्रयः कृष्णादिस्तत्तत्प्रातिपदिकार्थ इति सिद्धम्।

नन्वेवमपि निरुक्तोभयसम्बन्धेन नियतलिङ्गरामादिशब्दोच्चारणवतीवाऽनियतलिङ्गतटादिशब्दोच्चारणवत्यपि समवायेन लिङ्गत्रयोपस्थितेरपि नियमेन सत्त्वात्तत्रापि लिङ्गस्य प्रातिपदिकार्थत्वमेवेति लिङ्गग्रहणं व्यर्थमिति चेन्न; उपस्थितिपदेन शाब्दबोधस्य[1] ग्रहणेन—पुंस्त्वादिबोधस्य तत्र

---

❀ वरवर्णिनी ❀

१ अयमाशयः—तटाद्यनियतलिङ्गानां शब्दानां लिङ्गत्वोपलक्षितधर्मावच्छिन्ने तटत्वाद्यवच्छिन्ने च शक्तेः स्वीकारा'ल्लिङ्गत्वोपलक्षितधर्मावच्छिन्नस्तटत्वाद्यवच्छिन्नश्च तटादिपदशक्य' इति समूहालम्बनशक्तिज्ञानाल्लिङ्गत्रयोपस्थितेः सम्भवात्पुंस्त्वादिविषयकोपस्थितेरपि नियमेन सत्त्वाद्व्यापकत्वात्पुंस्त्वादेस्तटादिप्रातिपदिकार्थत्वापत्तिरतोऽत्रोपस्थितिपदेन शाब्दबोध एव ग्राह्यो न स्मृतिः। शाब्दबोधे हि—तात्पर्यज्ञानस्यापि हेतुतया सर्वलिङ्गविषयकबोधस्यैकदैकपदादसम्भवेन तथातात्पर्यविरहात्पुंस्त्वविषयकबोधतात्पर्येणोच्चरितात्तटपदात्स्त्रीत्वविषयकस्य बोधस्यानुत्पादाच्चालनीन्यायेन [ निरुक्तसम्बन्धेन-] पुंस्त्वादिविषयकबोधतात्पर्येणोच्चरिततटपदाधिकरणे आत्मनि स्त्रीत्वादिविषयकबोधाभावाद्व्यापकत्वाभावेन पुंस्त्वादेर्न तटादिप्रातिपदिकार्थत्वमिति। न चोपस्थितिपदेन शाब्दबोधस्य ग्रहणे शाब्दबोधे तात्पर्यज्ञानस्यापि कारणतया तदभाववत्यात्मनि निरुक्तसम्बन्धेन घटादिपदसत्त्वेऽपि शाब्दबोधानुत्पादाद्घटत्वादीनामपि प्रातिपदिकार्थत्वानापत्तिरिति वाच्यं, स्वविशेष्यकतात्पर्यज्ञानसमवायित्वस्यापि व्याप्यतावच्छेदकसम्बन्धतया तादृशतात्पर्य-

❀ विजया ❀

विसर्गाऽम्ङीप्समभिव्याहारनियततया ङीष्समभिव्याहृततटशब्दश्रवणे पुंस्त्वादिविषयकबोधस्य, अम्समभिव्याहृततटशब्दश्रवणे पुंस्त्रीविषयकबोधस्य, विसर्गसमभिव्याहृततटशब्दश्रवणे स्त्रीक्लीबलिङ्गविषयकबोधस्य चाऽनुदयेनानियतलिङ्गस्थले लिङ्गबोधस्याव्यापकत्वात्तदर्थं लिङ्गग्रहणात्। नियतलिङ्गघटादिस्थले तु घटत्वादिवत्पुंस्त्वादेरपि नियतं शाब्दबोधाल्लिङ्गबोधस्य व्यापकतेति लिङ्गमपि प्रातिपदिकार्थ एव। ननु योग्यताऽऽकाङ्क्षातात्पर्यज्ञान–विभिन्नविषयकप्रत्यक्षसामग्रीविरहादि–शाब्दबोधकारणाभावे तटशब्दोच्चारणेऽपि शाब्दबोधानुदयादुपस्थितव्यापकत्वभङ्ग इति चेन्न; स्वकर्मीभूतप्रातिपदिकजन्यशाब्दबोधसमवायित्व'स्यापि व्याप्यतावच्छेदकसम्बन्धतयाऽदोषात्। अनियतलिङ्गतटादिशब्दस्थले च—तत्तल्लिङ्गबोधजनिका विसर्गादितत्तत्समभिव्याहारघटिता भिन्नैव सामग्रीति—पुंस्त्वबोधजनकविसर्गरूपसामग्री निरुक्तोभयसम्बन्धेन यत्रात्मनि तत्र लिङ्गान्तरविषयकबोधानुदयान्न तत्र लिङ्गबोधस्य व्यापकत्वमिति तत्त्वविदोऽस्मत्तातपादाः **श्रीस्वेहिरामशास्त्रिणः** प्राहुः।

परे तु—शेखरोक्तरीत्या प्रातिपदिकोच्चारणे व्याप्यतास्वीकारे गौरवाल्लाघवात्प्रातिपदिकज्ञाने एव व्याप्यता स्वीकार्या, व्याप्यतावच्छेदकसम्बन्धता च—'स्वजन्यश्रावणप्रत्यक्षसमवायित्व' स्वनिष्ठशक्तिविषयोद्बुद्धसंस्कारसमवायित्व' 'स्वजन्यशाब्दबोधसामग्रीसमवायित्वा'दावित्याहुः।

ननूपस्थितिपदेन यदि शाब्दबोध एव गृह्यते, तदाऽनेकार्थकहर्यादिपदात्कस्याप्यर्थस्य नियतो-

❀ वरवर्णिनी ❀

ज्ञानाभाववति तादृशसम्बन्धेन घटादिपदानामप्यभावेन शाब्दबोधाभावेऽपि व्यापकत्वभङ्गाभावात्।

न चैवं पुंस्त्वत्वाद्यवच्छिन्नपुंस्त्वतटादिविषयकबोधजनकत्वप्रकारकतात्पर्येणोच्चरिततटादिप्रातिपदिकव्यापकत्वस्य पुंस्त्वत्वाद्यवच्छिन्नबोधेऽपि सत्त्वात्पुंस्त्वादेर्व्यापकत्वापत्त्या लिङ्गस्यापि प्रातिपदिकार्थत्वापत्तिरिति वाच्यं,

'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकतटत्वादिधर्मावच्छिन्नविशेष्यताकतात्पर्यज्ञानसमवायित्व'सम्बन्धस्यैव स्वीकारेण तेन सम्बन्धेन पुंस्त्वविषयकबोधेच्छयोच्चरितस्याऽपि तटादिपदस्य स्त्रीत्वविषयकबोधेऽपि सत्त्वेन व्यापकत्वविरहाल्लिङ्गग्रहणस्य साफल्यादित्याशयः।

१ परे तु–ननु नानार्थहर्यादिस्थले विष्णुत्वावच्छिन्नविषयकबोधेच्छयोच्चरितहरिपदनिष्ठविषयताव्यापकत्वस्य यमत्वावच्छिन्नविषयतायामभावेन यमत्वावच्छिन्नविषयताकबोधेच्छयोच्चरितहरिपदनिष्ठविषयताव्यापकत्वस्य च विष्णुत्वावच्छिन्नविषयतायामभावेन चालनीन्यायेन हरिपदवाच्यानां कासामपि विषयतानां हरिपदजन्यबोधे व्यापकत्वविरहात्कस्याप्यर्थस्य हरिप्रातिपदिकार्थत्वं न स्यादिति चेदुच्यते,—उच्चरितप्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वं, वै० 'स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयविषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकताश्रयत्वो'भयसम्बन्धेन।

एवञ्च हरिपदनिष्ठविष्णुत्वावच्छिन्ननिरूपितशक्तिज्ञानाधीनविष्णुत्वपुंस्त्वत्वादिविषयकोपस्थितिप्रयोज्यत्वस्य,—हरिपदनिष्ठविष्णुत्वावच्छिन्ननिरूपितशक्तिज्ञानाधीननिरुक्तोपस्थितिप्रयोज्यपुंस्त्वत्वावच्छिन्नप्रकारतानिरूपितविष्णुत्वावच्छिन्नविशेष्यतानिरूपकशाब्दबोधीयविषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकत्वस्य च विष्णुत्वपुंस्त्वत्वादिविषयतानां सत्त्वाद्विष्णुत्वादीनां प्रातिपदिकार्थत्वं सुलभमित्याहुः।

केचित्तु—प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं तत्त्वं, वै० 'स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वो'भयसम्बन्धेन। हरिपदनिष्ठविष्णुत्वावच्छिन्ननिरूपितशक्तिविषयक—पुंस्त्वत्वावच्छिन्नविष्णुत्वावच्छिन्नविषयकज्ञानाधीनपुंस्त्वत्वविष्णुत्वादिविषयकोपस्थितिप्रयोज्यत्वस्य, विष्णुत्वावच्छिन्ननिरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्य–पुंस्त्वत्वावच्छिन्नप्रकारतानिरूपितविष्णुत्वावच्छिन्नविशेष्यताकशाब्दबोधनिष्ठ— 'घटत्वनिष्ठविषयतावान्न'त्याकारकभेदीयप्रतियोगितावच्छेदकविषयताभिन्नत्वस्य च पुंस्त्वत्व-विष्णुत्वादिविषयतायां सत्त्वाल्लक्षणसमन्वयः।

ॐ विजया ॐ

पस्थितिकत्वाभावेन कस्याप्यर्थस्य प्रातिपदिकार्थत्वानापत्तेरिति चेदुच्यते; प्रातिपदिकनिष्ठशक्तिविशिष्ट-विषयताश्रयोऽर्थः प्रातिपदिकार्थः, वै० 'स्वप्रयोज्यत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोध-निष्ठभेदप्रतियोगितानवच्छेदकत्वो'भयसम्बन्धेन । एवञ्च तटशब्दनिष्ठशक्तिप्रयोज्यस्त्रीत्वावच्छिन्न-विषयताकबोधानुयोगिताकस्य—तादृशशक्तिप्रयोज्यपुंस्त्वावच्छिन्नविषयताकबोधप्रतियोगिताकस्य—'स्त्रीत्वावच्छिन्नविषयताको बोधः पुंस्त्वाद्यवच्छिन्नविषयताको ने'त्याकारकस्य शाब्दबोधनिष्ठभेदस्य सत्त्वेन तादृशभेदीयप्रतियोगितावच्छेदकविषयताश्रयत्वस्यैव पुंस्त्वादौ सत्त्वेन लिङ्गस्य न तत्त्वमिति नोक्तदोषः । इत्थञ्च तटशब्दनिष्ठैकशक्तिप्रयोज्यतत्तल्लिङ्गविषयकेषु अनेकेषु बोधेषु परस्परं भेदस्य सत्त्वेन लिङ्गस्यातत्त्वेऽपि—नानार्थहर्यादिस्थले विष्णुत्वाद्यवच्छिन्नविषयतायाः—हर्यादिप्रातिपदिक-निष्ठविष्णुत्वाद्यवच्छिन्ननिरूपितशक्तिप्रयोज्यविष्णुत्वाद्यवच्छिन्नविषयकबोध—निष्ठभेदप्रतियोगितान-वच्छेदकतया तदाश्रयविष्ण्वाद्यर्थस्य प्रातिपदिकार्थत्वे न किमपि बाधकम् । 'तटादिषु एकैव शक्तिः, हर्यादिषु तु नानार्थनिरूपिता नानैव शक्तिरिति भेद' इति तत्त्वम् । नन्वेवमपि—'विष्णुत्वाद्य-वच्छिन्नविषयताकशाब्दबोधो विष्णुत्वाद्यवच्छिन्नविषयताकानुमितिर्ने'ति भेदीयानुमितिनिष्ठप्रति-योगितानिरूपितावच्छेदकतावद्विषयताश्रयत्वेन विष्ण्वादेर्हर्यादिप्रातिपदिकार्थत्वं न स्यादिति चेन्न; प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं तत्त्वं, वै० 'स्वप्रयोज्यत्व''स्वविशिष्टभेदप्रतियोगिता·

ॐ वरवर्णिनी ॐ

अनियतलिङ्गतटादिस्थले तु—तटादिपदनिष्ठशक्तिज्ञानजन्योपस्थितिप्रयोज्यपुंस्त्वादिविषयकबोधे 'स्त्रीत्वादि-विषयतावान्न'त्याद्याकारकभेदस्य चालनीन्यायेन सम्भवात्तन्निष्ठविषयताया निरुक्तभेदीयप्रतियोगितावच्छेदक-तया न पुंस्त्वादीनां तटादिप्रातिपदिकार्थत्वम् । मदुक्तरीत्या परिष्कृतप्रातिपदिकार्थत्वस्वीकारादेव—'निरवच्छिन्नविषयताया आश्रयभेदेनैव भेद'इति नियमात्तद्घटवृत्तिघटत्वनिष्ठविषयताव्यापकत्वस्यैतद्घटवृत्ति-घटत्वनिष्ठविषयताया अभावेन केषामपि घटादीनां प्रातिपदिकार्थत्वं न स्यादिति शङ्काया नावकाशः । पूर्वोक्त—'शाब्दबोधीयविषयताव्यापकविषयताश्रयत्व'सम्बन्धेन प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रय-त्वस्य तथात्वे तु निरुक्तशङ्काया दुरुद्धरत्वमेवेत्याहुः । अन्ये तु—निरुक्तशङ्कावारणाय प्रातिपदिकनिष्ठ-शक्तिविशिष्टविषयताश्रयत्वं तत्त्व, वै० 'स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्य-शाब्दबोधीयप्रवृत्तिनिमित्तनिष्ठविषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकताश्रयत्वो'भयसम्बन्धेन । नियत-लिङ्गघटादिस्थले—पुंस्त्वनिष्ठविषयतायां घटत्वादिरूपप्रवृत्तिनिमित्तनिष्ठविषयताव्यापकत्वस्य स्पष्टतया घटत्व-निष्ठविषयतायाञ्च'स्वस्मिन्नपि स्वव्यापकत्व'मिति रीत्या घटत्वादिप्रवृत्तिनिमित्तनिष्ठविषयताव्यापकत्वा-त्पुंस्त्वघटत्वादेस्तादृशविषयताश्रयतया प्रातिपदिकार्थत्वं सुलभम् । अनियतलिङ्गतटादिस्थले तु—पुंस्त्वादि-निष्ठविषयताया तटत्वादिप्रवृत्तिनिमित्तनिष्ठविषयत्वाऽव्यापकतया न तत्त्वमित्याहुः । तत्रापरे क्षमन्ते—वारि घनरसशब्दयोरेकप्रवृत्तिनिमित्तकतया घनरसशब्दस्य च पुंक्लीबलिङ्गतयाऽनियतलिङ्गत्वेन—घनरस-शब्दजन्यपुंस्त्वविषयकबोधे वारिशब्दनिष्ठशक्तिप्रयोज्यजलत्वरूपप्रवृत्तिनिमित्तनिष्ठविषयतायाः सत्त्वेन—जलत्वरूपप्रवृत्तिनिमित्तनिष्ठविषयताव्यापकत्वस्य वारिशब्दप्रयोज्यक्लीबत्वविषयतायामसत्त्वात्क्लीबत्वे नियत-लिङ्गवारिशब्दप्रातिपदिकार्थत्वस्याभावापत्तेरतोऽन्येतुरीत्यैव परिष्कार आस्थेय इति तत्त्वविदो वदन्ति ।

१ ननु 'वस्तुपदजन्यपटत्वविषयतावच्छाब्दबोधो ने'ति भेदमादाय पटत्वादिविषयतायास्तादृश-भेदीयप्रतियोगितावच्छेदकत्वेन पटत्वादेः प्रातिपदिकार्थत्वानापत्तिरिति चेन्न; द्वितीयसम्बन्धस्थाने 'स्वविशिष्ट-भेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वाभाववत्त्वस्य' निवेशनीयतया 'वस्तुपदजन्यपटत्वविषयता-वच्छाब्दबोधो ने'ति भेदीयप्रतियोगितावच्छेदकताया 'वस्तुपदजन्यत्व'–'पटत्वो'भयपर्याप्ततया तादृश-पर्याप्त्यनधिकरणत्वस्य पटत्वविषयतायां सत्त्वेन पटत्वस्य प्रातिपदिकार्थत्वानपायात् ।

❀ विजया ❀

नवच्छेदकत्वो'भयसम्बन्धेन। वै० 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधानुयोगिताकत्व''स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिताकत्वो'भयसम्बन्धेन। एवञ्चानुमितिप्रतियोगिकभेदस्य तादृशशाब्दबोधप्रतियोगिकत्वाभावेन न पूर्वोक्तदोषः। तत्र—'स्वप्रयोज्यत्व'सम्बन्धानुपादाने—'सर्वं वाक्यं क्रियायामेव परिसमाप्यते'इत्यभियुक्तोक्त्या सर्वत्र क्रियाविशेष्यकबोधस्यैवोत्पत्त्या क्रियाविषयकबोधे व्यापकतायाः सत्त्वात्तादृशबोधीयविषयताश्रयतया सत्तादिक्रियाया अपि प्रातिपदिकार्थतापत्तिः, तदुपादाने तु सत्तादिक्रियायाः प्रातिपदिकनिष्ठशक्तिप्रयोज्यविषयताश्रयत्वाभावेन नोक्तदोष इत्याहुः।

नन्वेवमपि—तच्छब्दस्य बुद्धिस्थत्वोपलक्षितत्तद्धर्मावच्छिन्ने एकस्या एव शक्तेः स्वीकाराद्घटपटादिसर्वविषयकशाब्दबोधस्य तत्र जायमानतया चालनीन्यायेन सर्वेषु बोधेषु सर्वबोधप्रतियोगिताकभेदस्य सत्त्वेन सर्वासामेव बोधीयविषयतानां भेदप्रतियोगितावच्छेदकत्वात्तटादिशब्दे पुंस्त्वादेरिव कस्यापि तच्छब्दार्थस्य प्रातिपदिकार्थत्वं न स्यादिति चेदुच्यते; प्रातिपदिकविशिष्टोऽर्थः प्रातिपदिकार्थः, वै० 'स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधविषयत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्व' 'स्वप्रतियोगिकाभाववत्त्वो'भयसम्बन्धेन। अभावश्च—'स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयधर्मितानिरूपिताऽऽदार्थसम्बन्धावच्छिन्नप्रकारताश्रयत्व' 'स्वविशिष्टाऽवच्छेदकतावद्विषयताश्रयत्वं'तदुभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। वै० 'स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व' 'स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वो'भयसम्बन्धेन। यथा—घटरूपार्थस्तच्छब्दस्य, स च—'घटः तच्छब्दरूपप्रातिपदिक-

❀ वरवर्णिनी ❀

१ अयमाशयः—तत्पदनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यघटत्वादिविषयकबोधे'पटत्वविषयतावान्ने'तिभेदस्य, एवं पटत्वविषयकबोधे च 'घटत्वविषयतावान्ने'त्याकारकभेदस्य सत्त्वाच्चालनीन्यायेन सर्वासामपि विषयतानां प्रतियोगितावच्छेकतया कस्याप्यर्थस्य तच्छब्दप्रातिपदिकार्थत्वं न स्यादतः—प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वं, वै० 'स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व''स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वाभाववत्त्वो'भयसम्बन्धेनेति वक्तव्यम्।

तच्छब्दे च—'बुद्धिस्थत्वोपलक्षितघटत्वावच्छिन्नस्तत्पदशक्य'इत्याकारकशक्तिविशिष्टविषयताया घटत्वादिनिष्ठत्वात्तदाश्रयाणां प्रातिपदिकार्थत्वं सुलभम्। अथापि'घटत्वावच्छिन्नः पटत्वावच्छिन्नश्च तत्पदशक्य'इतिसमूहालम्बनशक्तिज्ञानप्रयोज्यघटविषयकबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य पटादिविषयतायां, पटविषयकबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य च घटविषयतायां सत्त्वाद्घटपटविषयतयोस्तत्पदप्रातिपदिकार्थत्वानापत्तिरतः प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं तत्त्वं, वै० 'स्वज्ञानाधीनोपस्थितीयविषयताप्रयोज्यत्व' 'स्वाभाववत्त्वो'भयसम्बन्धेन। अभावीयप्रतियोगितावच्छेदकः सम्बन्धश्च—'स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वो'भयसम्बन्धेन। तटादिस्थले लिङ्गनिष्ठविषयतायां स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य निरुक्तरीत्या सत्त्वात्स्वाभाववत्त्वाभावेन लिङ्गस्य न तत्त्वम्। तत्पदे च—स्वप्रयोज्यघटनिष्ठविषयतायां—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वसत्त्वेऽपि [ सावच्छिन्नविशेष्यताया एव धर्मितापदेन ग्रहणात्—] स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्वाभावेनैकसत्त्वेऽपि द्वयं नास्तीति न्यायान्निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य तत्र सत्त्वात्तत्पदप्रातिपदिकार्थत्वं घटत्वादेः सूपपादमिति सूक्ष्मदृशो निगदन्ति। विस्तरस्त्वस्मत्पितामहश्रीहरिरामशास्त्रिश्रीचरणाविष्कृतायां शब्देन्दुशेखरत्रिपुरसुन्दर्यां श्रीबालशास्त्रिचरणकृते जटाजूटे चानुसन्धेयः।

ॐ विजया ॐ

निष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधविषयो भवतु' इत्याकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणम्, निरुक्तोभयसम्बन्धेन स्वप्रतियोगिकाभाववानपीति तत्र लक्षणसमन्वयः । 'घट' इत्यत्र घटः— घटत्वं, घटत्व—घटत्वयोः समवायश्च प्रातिपदिकार्थः, तत्र समवायसम्बन्धस्य शक्तिभास्यत्वेन पदार्थतया घटत्वेऽपदार्थसम्बन्धावच्छिन्नप्रकारत्वाभावात् ,समवाये प्रकारत्वाभावाच्चाऽभावीयप्रथमसम्बन्धस्यासत्त्वेन उभयाभावसत्त्वाल्लक्षणसमन्वयः । 'राम' इत्यादौ नियतलिङ्गस्थले- रामः, रामत्वं, तत्समवायः, पुंस्त्वं, पुंस्त्वत्वञ्च प्रातिपदिकार्थः, तत्र राम-रामत्व समवायेषु अभावीयप्रतियोगितावच्छेदकौ निरुक्तौ द्वावपि सम्बन्धौ न स्तः, पुँस्त्वे तु खण्डशः शक्तेः सत्त्वेन रामत्वावच्छिन्नरामनिष्ठविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताया अपदार्थसम्बन्धावच्छिन्नतया निरुक्ताभावीयप्रथमसम्बन्धस्य सत्त्वेऽपि द्वितीयसम्बन्धाभावात्प्रातिपदिकप्रतियोगिकाभाववत्त्वमेवेति तस्य रामादिनियतलिङ्गप्रातिपदिकार्थत्वं सिद्धम् । एवञ्च नियतलिङ्गस्थले लिङ्गस्य प्रातिपदिकार्थत्वसिद्धयेऽभावीयद्वितीयसम्बन्धोपादानम् ।

घटत्वादीनां तच्छब्दप्रातिपदिकार्थत्वसिद्धये चाभावीयः प्रथमः सम्बन्धः । सत्तायामतिप्रसङ्गवारणाय प्रातिपदिकवैशिष्ट्यनियामकः प्रथमः सम्बन्धः। अनियतलिङ्गतटादिशब्दस्थले लिङ्गस्य प्रातिपदिकार्थत्ववारणाय स्वप्रतियोगिकाभाववत्त्वे' ति द्वितीयः सम्बन्धः । तदुपादाने च-स्वं=तटशब्दः, तन्निष्ठा—लिङ्गत्वोपलक्षिततटत्वावच्छिन्ननिरूपिता शक्तिः, तत्प्रयोज्यो बोधः—पुँस्त्वविषयको बोधः, तन्निष्ठो भेदः—'पुंस्त्वविषयताको बोधः स्त्रीत्वविषयताको ने' ति भेदः, तत्प्रतियोगिता—स्त्रीत्वविषयकबोधे, तन्निरूपिताऽवच्छेदकता—स्त्रीत्वे, [ किञ्च सा-स्त्रीत्वनिष्ठा भेदप्रतियोगितावच्छेदकता—तादृशतटशब्द निष्ठलिङ्गत्वोपलक्षिततटत्वावच्छिन्ननिरूपितशक्तिविषय विषयता-निरूपित निरूपकत्वसम्बन्धावच्छिन्नाऽपीति—] तादृशावच्छेदकतावती या विषयता, तादृशविषयताश्रयत्वमपि स्त्रीत्वे, एवं चालनीन्यायेन तटशब्दनिष्ठशक्तिप्रयोज्यबोधविषयेषु पुंस्त्वस्त्रीत्वनपुंसकत्वेषु त्रिष्वपि निरुक्ताभावीयसम्बन्धद्वयसत्त्वात्स्वप्रतियोगिकाभाववत्त्वाभावेन न पुंस्त्वादेः प्रातिपदिकार्थत्वम् ।

शक्तिवैशिष्ट्ये प्रथमसम्बन्धोपादानात् ,—नियतलिङ्गरामादिस्थले—'पुँस्त्वविषयताको बोधः-'स्त्रीत्वेन पुंस्त्वविषयताको न'—'प्रमेयत्वेन पुंस्त्वविषयताको ने' त्यादिभेदीयप्रतियोगितानिरूपितावच्छेदकतावद्विषयताश्रयत्वेऽपि पुंस्त्वादेः प्रातिपदिकार्थत्वसिद्धिः, 'प्रमेयत्वेन पुंस्त्वविषयताको ने' त्यादिभेदीयतादृशपुंस्त्वविषयताया रामादिप्रातिपदिकनिष्ठशक्तिविषयत्वाभावादग्रहणात् । शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानात्—'तटादिपदप्रयोज्यस्त्रीत्वादिविषयको बोधः—रामेतिप्रातिपदिकनिष्ठशक्तिप्रयोज्यपुंस्त्वविषयताको ने' तिभेदीयप्रतियोगिता—[-निरूपित—रामशब्दनिष्ठशक्तिविषयविषयता—निरूपित—निरूपकत्वसम्बन्धावच्छिन्ना—]ऽवच्छेदकतायाः शक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नतया तादृशावच्छेदकतावद्विषयताश्रयस्यापि रामशब्दवाच्यपुंस्त्वस्य प्रातिपदिकार्थत्वम्, तादृशावच्छेदकतायाः स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वाभावात् । अन्यथोक्तरीत्या निरुक्तोभयसम्बन्धावच्छिन्नस्वाभावस्य तत्र पुँस्त्वादौ असत्त्वाद्रामादावपि पुँस्त्वादेः प्रातिपदिकार्थत्वं न स्यात् । 'अपदार्थसम्बन्धावच्छिन्ने' त्यस्य च—शक्त्यभास्यसम्बन्धावच्छिन्नेत्यर्थः, आकाङ्क्षाभास्यसम्बन्धावच्छिन्नेतियावत् । एतद्विशेषणानुपादाने 'तत्पुरुष' इत्यादौ तत्पदार्थस्य प्रातिपदिकार्थत्वानुपपत्तिः, स्वप्रयोज्यपुरुषत्वावच्छिन्नधर्मितानिरूपितप्रकारतावत्त्वस्य, चालनीन्यायेन स्वनिष्ठशक्तिविशिष्टावच्छेदकतावद्विषयतावत्त्वस्य च सत्त्वेन स्वाभावस्याभावात् । एवमेव लोमादीनां लोमवल्लाङ्गूलावच्छिन्नवाचकपशुपदार्थत्वानुपपत्तिः, तदुपादाने तु—समासे विशिष्टे शक्तेरभ्युपगमात्—पुरुषत्वावच्छिन्नधर्मितानिरूपिततत्पदार्थनिष्ठप्रकारता शक्तिभास्यसम्बन्धावच्छिन्नैव, नत्वाकाङ्क्षाभास्यसम्बन्धावच्छिन्नेति—प्रथमसम्बन्धाभावा-

ॐ विजया ॐ

त्वाभाववत्त्वाभावान्नानुपपत्तिः, एवमेव लोमवल्लाङ्गूलावच्छिन्नवाचकपशुपदे लोमादेरपि प्रातिपदिकार्थत्वं, तत्र तेषां सम्बन्धस्य शक्तिभास्यत्वेन पदार्थतयाऽपदार्थत्वाभावात्प्रथमसम्बन्धाभावेनोभयाभावसत्त्वात्स्वाभाववत्त्वस्य सुलभत्वादित्याहुरस्मद्गुरुचरणाः।

नन्वेवं परिष्कारेऽपि वासुदेववाचककृष्णशब्दनिष्ठशक्तिविषयपुंस्त्वस्य प्रातिपदिकार्थत्वं न स्यात्, गुणवाचककृष्णशब्दनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्य—क्लीबत्वप्रकारक-बोधनिष्ठभेदीयप्रतियोगितानिरूपिताया अवच्छेदकतायाः—[ वासुदेवार्थककृष्णशब्दनिष्ठशक्तिविषयपुंस्त्वविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नायाः—] सत्त्वेन—तादृशावच्छेदकतावद्विषयताश्रयत्वस्य कृष्णपदप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्वस्य च तत्र सत्त्वेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्याभावादिति चेन्न; स्वाभाववत्त्वं विहाय—'स्वनिष्ठशक्त्यभाववत्त्व'स्यैव तत्र निवेशेन शक्ततावच्छेदककृष्णत्वरूपानुपूर्व्यैक्येऽपि तत्र शक्यतावच्छेदक—नीलरूपवत्त्व—वसुदेवापत्यत्वरूपभेदेन शक्तेर्भेदाद्वसुदेवापत्यरूपार्थनिरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्यपुंस्त्वप्रकारकबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य, वसुदेववापत्यरूपार्थनिरूपितशक्तिविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्वस्य च पुंस्त्वविषयतायामसत्त्वादुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वनिष्ठशक्त्यभाववत्त्वस्य तत्र सुलभत्वेन पुँस्त्वस्य प्रातिपदिकार्थत्वानपायात्।

परे तु—प्रातिपदिकनिष्ठशक्तिविशिष्टत्वं प्रातिपदिकार्थत्वं, वै० 'स्वप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविषयतापर्याप्त्यधिकरणत्व' 'स्वनिष्ठशक्त्यभाववत्त्वो'भयसम्बन्धेन। अभावश्च 'स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्व' 'स्वविशिष्टावच्छेदकतावद्विषयतावत्त्वै'तदुभयसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। वै० 'स्वविषयविषयतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नत्व' 'स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानिरूपितत्वो'भयसम्बन्धेन, अत एव नीलरूपावच्छिन्नवाचककृष्णपदप्रातिपदिकार्थत्वं पुंस्त्वस्य न, अन्यथा पूर्वोक्तरीत्या वासुदेवनिरूपितशक्त्यभावस्य निरुक्तोभयसम्बन्धेन सत्त्वात्तत्त्वापत्तिः। प्रातिपदिकवैशिष्ट्यं विहाय शक्तिवैशिष्ट्यदाने तु—नीलरूपवत्पटादिपरकृष्णपदवाच्यपुंस्त्वे वासुदेवनिरूपितशक्तिप्रयोज्यबोधविषयत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वस्याभावाच्छक्तिविशिष्टत्वरूपप्रातिपदिकार्थत्वाभावान्न तदापत्तिरित्याहुः।

ननु सम्प्रसारणप्रातिपदिकस्य यण्स्थानिकेकि, सम्प्रसारणपदप्रयोज्यविधेयताश्रये च खण्डशः शक्तिः स्वीक्रियते, अत एव 'वाह ऊ'ठितित्यादौ विधेयस्थले सम्प्रसारणपदप्रयोज्यविधेयताश्रयत्वांशस्य मोषेण नान्योन्याश्रयः, विशिष्टे शक्तेः स्वीकारे तु मोषासम्भवादन्योन्याश्रयो दुर्वारः। एवञ्च प्रथमान्तसम्प्रसारणपदस्थले एकखण्डविषयको बोधः, अन्यत्र चोभयविषयकः। सर्वत्र यण्स्थानिकेग्विषयिण्येव तु न शक्तिस्तत्र वक्तुं शक्यते, 'द्युभ्या'मित्यादौ 'हल' इति दीर्घापत्तेः। एवञ्च 'हल' इत्यादौ सम्प्रसारणपदप्रयोज्यविधेयताश्रयत्वप्रकारकयण्स्थानिकेग्विशेष्यताको बोध आवश्यक इति सम्प्रसारणपदप्रयोज्यविधेयताश्रयरूपार्थस्योक्ताऽपदार्थसम्बन्धावच्छिन्नप्रकारताश्रयत्वेन स्वविशिष्टावच्छेदकताश्रयत्वेन प्रकृते सम्प्रसारणेतिप्रातिपदिकार्थत्वाभावेन—'अनेन सम्प्रसारणं कृत'मित्यादिवाक्ये सम्प्रसारणपदात्प्रथमा न स्यादिति चेन्न; 'अनेन सम्प्रसारणं कृत'मित्यादि वाक्येऽपि सम्प्रसारणपदप्रयोज्यविधेयताश्रयरूपांशस्य मोषाददोषात्। प्रथमेतरविभक्त्यन्तसम्प्रसारणपदसमभिव्याहारज्ञानस्य सम्प्रसारणपदप्रयोज्यविधेयताश्रयत्वप्रकारकयण्स्थानिकेग्विशेष्यताकबोधम्प्रतिहेतुत्वस्वीकारेण 'हल' इत्यादौ नैकखण्डविषयको बोधोऽपि तूभयखण्डविषयक एव, तत्र सम्प्रसारणपदस्य षष्ठ्यन्तत्वादिति प्राचीनमतं समर्थयन्ते—श्रीगुरुचरणाः।

अन्वयानुपपत्तिपूर्विका लक्षणा पदे एव, प्रत्ययोत्पत्तिः सर्वत्र शक्यार्थ एव, शक्यतावच्छेदकारोप एव च लक्षणेति—न लक्ष्यासङ्ग्रहो दोषः।

तटादिशब्दानां तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं ततो नियतोपस्थितिकमिति—न तद्बोध्यलिङ्गस्यात्र 'प्रातिपदिकार्थ'शब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः।

**लिङ्गमात्रेति**। लिङ्गस्यैवाधिक्ये इति—क्रमेणार्थः। यद्यपि विशेष्यविशेषणभावोऽप्यधिको भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोध्यम्।

❀ विजया ❀

ननु 'सिंहो माणवक' इत्यादौ लक्ष्यार्थस्य माणवकादेर्नियतोपस्थितिकत्वाभावेन सिंहादिरूपप्रातिपदिकार्थत्वं न स्यादत आह—**पद एवेति**। 'सुप्तिङन्तं पद'मित्युक्त्या सुबन्ते एवेत्यर्थः। 'सिद्धे' इत्यर्थ इत्युमानाथः। परिनिष्ठिते इति यावत्। प्रथमाविभक्त्युत्पत्त्यनन्तरं 'सिंहे'ति प्रातिपदिकस्यैव स्वघटके माणवके लक्षणेति प्रघट्टकार्थः, शक्यार्थे समाधिते पदे तद्घटकप्रातिपदिकमात्रस्य लक्षणया सिंहादिबोधतात्पर्येणोच्चारणे क्षतिविरहात्। [ एतेन सुविभक्त्यन्ते शक्तिविरहाल्लक्षणायास्तत्रायुक्तत्वाच्छेखरोऽयं चिन्त्य इत्यपास्तम्। ]

**परे तु**—'प्रातिपदिकार्थलक्षणे शक्तिमात्रस्य प्रवेशे 'सिंहो माणवक' इत्यादौ सिंहादेः प्रथमा न स्यादित्याशङ्क्य 'शक्ति'स्थाने 'वृत्ति'पदं प्रक्षिप्य लाक्षणिकस्यापि सङ्ग्रहः कार्य इति नोक्तदोष इत्युत्तर'मितिरीत्या ग्रन्थमिमं लापयन्ति।

ननु 'नीलो घटः' इत्यादौ प्रातिपदिकार्थेतरविशेष्यविशेषणभावे वर्त्तमानतया नीलादिपदात्प्रथमा न स्यादत आह—**यद्यपीति**। यद्यपि शाब्दबोधे विशेषणतया विशेषणं, विशेष्यतया विशेष्यञ्च भासते, न तु विशेष्यता विशेषणता वा-भासते पदादनुपस्थितेः,तथापि मीमांसकमते बोधोत्तरं 'जानामि न वा' ? इति 'अहमस्मि न वे'ति च संशयस्यानुदयाज्ज्ञानमात्रे मिति मातृभासकत्ववत्—

❀ चिदस्थिमाला ❀

कारकान्तर्भावः केषां चिदुक्त इति सूचयन्नाह—**अन्वयेति**। तत्प्रतिसन्धानेत्यर्थः। सिद्धान्तमाह—**शक्यतेति**। शङ्कानिवारणमाह—**तटादीति**। **तद्बोध्येति**। तटादिबोध्येत्यर्थः। तस्य वस्तुनस्तत्त्वेऽप्यत्राह—**अत्र प्रातीति**। अयमवधारणे इत्याह—**लिङ्गस्यैवेति**। आद्यर्थमाह—**क्रमेणेति**। नन्वेवं 'वीरः पुरुषः' इत्यादौ प्रथमा न स्यादिति शङ्के—**यद्यपीति**।

❀ विषमपदविवृतिः ❀

ननु 'मञ्चाः क्रोशन्ती'त्यादौ प्रथमा न स्याल्लक्ष्यार्थस्याऽनियतोपस्थितिकत्वादित्याशङ्क्याह—**पद एवेति**। अत्र समाधानान्तरमाह—**शक्यतावच्छेदकेति**। तथा च प्रातिपदिकस्य लक्षणायामपि लक्ष्यार्थस्य नियतोपस्थितिकत्वं सुलभमिति भावः। अत एवाग्नायी देवताऽस्य स्थालीपाकस्याऽऽग्नेय इत्यत्र 'भस्याढे' इति पुंवत्त्वसिद्धिः। लक्ष्यासङ्ग्रहः=लक्षणास्थलाऽसङ्ग्रहः।

ननु 'वीरः पुरुषः' इत्यत्र प्रथमा न स्याद्विशेषणविशेष्यभावस्याधिकस्य सत्त्वेन लिङ्गस्यैवाधिक्याभावादित्याशङ्क्याह—**यद्यपीति**। **प्रथमप्रवृत्तेति**।—इदं पदसंस्कारपक्षे।

❀ वरवर्णिनी ❀

**अधिको भासत इति**। यथा मीमांसकनये 'अहमस्मि न वे'ति संशयस्येव 'इदं ज्ञानं न वे'ति संशयस्यानुदयान्मितिमातृभासकत्वं ज्ञानमात्रस्येति नियमः। एवमस्मिन्मतेऽपि 'ज्ञातो घट' इतिज्ञानानन्तरं 'इदं

ॐ विजया ॐ

'घटो मज्ज्ञानविषयो न वे'ति संशयस्याप्यनुदयाद्विषयतायामपि ज्ञानभास्यता [ विषयता- ] उपगम्यते एवेत्याशयेनैतद्ग्रन्थसत्त्वान्न दोषः ।

ॐ वरवर्णिनी ॐ

ज्ञानं नीलनिष्ठविशेषणताकं न वा' 'घटनिष्ठविशेष्यताकं नवे'तिसंशयानुदयाज्ज्ञानमात्रे विशेषणविशेष्यभावोपि भासते इति स्वीकारेणेदमुक्तम् । एतेन विषयताविषयकशाब्दबोधस्यानुभवसिद्धत्वाभावादिदमसङ्गतमित्यपास्तम् । न च लिङ्गमात्रस्यैवाधिक्ये प्रथमेत्युक्तत्वेन घट इत्यादौ पुंस्त्वस्त्वातिरिक्तस्यपुंस्त्वस्याधिकस्य भानात्कथं प्रथमेति वाच्यं, पुंस्त्वादिलिङ्गतद्वृत्तिपुस्त्वस्त्वादि-तदनुयोगिकसम्बन्धैतन्मात्राधिक्ये प्रथमेत्यर्थकांशेनादोषात् । एतदर्थमेव लिङ्गमात्राद्याधिक्ये इति 'आदि'पदोपादानम् । 'आदि'पदेनच पुंस्त्वादेस्तत्प्रतियोगिकसम्बन्धस्य च ग्रहणम् । न चैवमपि मात्रशब्दः प्रत्येकं सम्बध्यत इत्युक्त्या पदार्थपदात्प्रथमानुपपत्तिः, पदार्थेतरस्याप्रसिद्धत्वादिति वाच्यं, 'प्रातिपदिकार्थमात्रे प्रथमे'त्यस्य प्रातिपदिकार्थसम्पादकविषयेतरविषयत्वाप्रयोजकं प्रातिपदिकार्थमात्रवृत्तित्वमिति विवक्षितत्वेनादोषात् । **लिङ्गस्यैवाधिकक्ये इति** । लिङ्गतदनुयोगिकसम्बन्धतद्वृत्तिपुंस्त्वस्त्वादेराधिक्ये इत्यर्थः-इति **दण्डिभट्टाः** ।

इदमप्यनुसन्धेयम्—इतरयोगव्यवच्छेदार्थकमात्रशब्दस्य भेदे आश्रये योगे व्यवच्छेदे च खण्डशः शक्तिः, तत्र प्रातिपदिकार्थस्य प्रतियोगित्वसम्बन्धेन भेदे, तस्य च स्वरूपसम्बन्धेनाश्रये, तस्य च प्रतियोगित्वसम्बन्धेन योगपदार्थे विषयतानिरूपकबोधजनकत्वरूपे सम्बन्धे, तस्य च स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनाभावरूपे व्यवच्छेदे, तस्य च स्वरूपसम्बन्धेन प्रातिपदिकेऽन्वयः । एवञ्च 'प्रातिपदिकार्थमात्रे प्रथमे'त्यस्य—प्रातिपदिकार्थप्रतियोगिकभेदाश्रयनिष्ठ'विषयतानिरूपक—बोधजनक'सम्बन्धनिष्ठप्रतियोगिताकाऽभाववत्प्रातिपदिकात्प्रथमेत्यर्थः । प्रातिपदिकार्थविषयकबोधजनकत्वे सति तदितरविषयकबोधाजनकात्प्रथमेति यावत् । न च प्रमेयत्वावच्छिन्नप्रतियोगिकभेदाप्रसिद्ध्या'प्रमेयो घट'इत्यादौ प्रमेयपदात्प्रथमा न स्यादिति वाच्यम्, अप्रसिद्धप्रतियोगिकाभावस्यापि शाब्दिकनये सत्त्वेन दोषाभावात् ।

केचित्तु—प्रातिपदिकविशिष्टनिरवच्छिन्नविषयताप्रतियोगिकभेदवन्निरवच्छिन्नविषयत्वाप्रयोजकात्प्रथमेत्यर्थः । वै० 'स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यत्व''स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितत्वो'-भयसम्बन्धेन । प्रकृते प्रमेयत्वनिष्ठनिरवच्छिन्नविषयताकभेदस्य घटत्वनिष्ठविषयतायां सत्त्वेन तादृशभेदवन्निरवच्छिन्नविषयत्वाप्रयोजकतया प्रमेयपदात्प्रथमा सिध्यतीत्याहुः । **परे तु**—प्रकृत्यर्थतावच्छेदकावच्छिन्नविषयतानिरूपकबोधजनकत्वे सति प्रकृत्यर्थतानवच्छेदकानवच्छिन्नविषयताकबोधजनकं यत्प्रातिपदिकं ततः प्रथमेत्यर्थः । प्रमेयपदस्य—प्रथमाप्रकृत्यर्थतावच्छेदकप्रमेयत्वावच्छिन्नविषयकबोधजनकत्वात्तदनवच्छेदकोदासीनघटत्वाद्यवच्छिन्नविषयकबोधाजनकत्वात्ततः प्रथमा सिध्यतीत्याहुः । इदमत्र तत्त्वम्—प्रातिपदिकविशिष्टात्प्रातिपदिकात्प्रथमेत्यर्थः । वै० 'स्वविशिष्टविषयताप्रयोजकत्व' 'स्वविशिष्टविषयताभिन्नविषयत्वाऽप्रयोजकत्वो'भयसम्बन्धेन । उभयत्रापि वै० 'स्वप्रयोज्यत्व''स्वविशिष्टविषयताविशिष्टत्वो'भयसम्बन्धेन । स्ववै० 'स्वप्रयोज्यधर्मितानिरूपितत्व' 'स्वाऽप्रयोज्यसंसर्गतानिरूपितत्व' 'स्वजन्यबोधनिष्ठभेदप्रतियोगितानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयत्वै'तन्त्रितयसम्बन्धेन । विषयतावै०—'स्वभिन्नत्व''स्वनिरूपिताऽवच्छेदकत्वाख्यविषयताभिन्नत्वो'भयसम्बन्धेन । प्रमेयपदविशिष्टा विषयता—प्रमेयपदप्रयोज्यैव, साच प्रमेयत्वावच्छिन्ना प्रमेयत्वत्वावच्छिन्ना च, न घटत्वाद्यवच्छिन्ना, एवञ्च स्वविशिष्टविषयताभिन्ना—घटत्वावच्छिन्ना घटत्वत्वावच्छिन्नघटत्वादिनिष्ठा-विषयता, तदप्रयोजकत्वं प्रमेयशब्दे इति ततः प्रथमा सिध्यतीत्याहुरिति**सूक्ष्मदृशो** मैथिलाः ।

**एतत्सूत्रघटक**'वचने'त्यंशस्यार्थस्तु—'द्व्येकयो'रित्याद्येकवाक्यतया प्रातिपदिकार्थेतरत्राऽवर्त्तमानात्प्रातिपदिकादेकत्वद्वित्वादिसङ्ख्यायां प्रथमा, तत्र सङ्ख्यामात्रं प्रथमावाच्यं, प्रातिपदिकवाच्यत्वे तु तत्रैव वर्त्त-

अभेदेन संसर्गेणेति । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः । 'अभेदस्तु न संसर्ग' इत्यन्यत्र प्रपञ्चितम् ।

इहोक्तार्थत्वादिति । उक्तार्थानामप्रयोगात्, प्रातिपदिकप्रतिपादितसङ्ख्याविशिष्टे

❀ विजया ❀

इतरेति । 'सम्बन्धानवच्छिन्नविशेष्यविशेषणभावेनेत्यर्थ' इत्येव वक्तुं युक्तम्, 'इतर' इत्य्यर्थमेव, अभेदस्य सम्बन्धत्वाभावे तद्व्यावर्त्यालाभात् । संसर्गपदन्त्वयुक्तमेव, विशेष्यविशेषणभावस्य संसर्गतायां मानाभावादिति श्रीबालशास्त्रिचरणाः ।

❀ चिद्‌स्थिमाला ❀

संस्कारेति । प्रथमान्तेत्यर्थः । भावेति । तद्‌संसर्गेणेत्यर्थः । यथाश्रुत्वाग् योजनाद्—अभेदस्त्विति । 'राहोः शिर' इत्यादावौपाधिकभेदेन व्यपदेशिवद्भावेन षष्ठ्युपपादनस्याप्यन्यत्र भाष्ये कृतत्वात् । अधिकं मञ्जूषाभावप्रकाशयोः स्पष्टं, तदाह–अन्यत्रेति । ननु द्वौ ब्राह्मणा' वित्यादौ न्यायो व्यभिचरितो अत आह—प्रातीति । केवलप्रकृतिप्रयोगाभावाद्विभक्तौ त्वनियमापत्तिरिति गूढाकूतम् ।

❀ विषमपदविवृतिः ❀

इतरसम्बन्धेति । न विद्यते भेदो=भेदसंसर्गोऽवच्छेदकतया यत्र–विशेषणविशेष्यभावे–इति अभेदेनेत्यत्र बहुव्रीहिरिति भावः । न संसर्ग इति । संसर्गत्वे नीलो घट' इत्यादौ षष्ठ्यापत्तिः, विशेषणविशेष्यभावे तु न षष्ठी, तस्य बोधसामान्यसाधारणत्वेनाऽन्यलभ्यत्वात् । वचनग्रहणाभावे प्रातिपदिकप्रतिपादितसङ्ख्याबोधकवचनस्याप्राप्तिमाह—उक्तार्थानामिति । प्रातिपदिकप्रतिपादितसङ्ख्यान्यसङ्ख्याप्रतिपादकवचनस्याप्यप्राप्तिरित्याह—प्रातिपदिकेति । तदप्राप्तिः=प्रथमाया अप्राप्तिः ।

❀ वरवर्णिनी ❀

मानत्वेन प्रातिपदिकार्थेतरत्र वर्तमानत्वाभावेन प्रथमा न स्यात् । वचनग्रहणादितरयोगव्यवच्छेदरूपमात्रपदार्थैकदेशे इतरत्र लिङ्गातिरिक्तत्वेन सङ्कोचः, एवञ्च लिङ्गांशस्य—लिङ्गेतरो यः प्रातिपदिकार्थस्तत्राऽवर्त्तमानात्प्रातिपदिकार्थे वर्त्तमानात्प्रातिपदिकात्सङ्ख्यायां प्रथमे'त्यर्थः । अत्रापि सङ्ख्या प्रथमार्थः । एवं परिमाणग्रहणाच्च—प्रातिपदिकार्थे वर्त्तमानात्, लिङ्गेतरप्रातिपदिकार्थभिन्नेऽवर्त्तमानात् प्रातिपदिकात्परिमाणे सङ्ख्यायाञ्च प्रथमेत्यर्थोऽपि लभ्यते । एवञ्चात्रार्थे परिमाणं सङ्ख्या चोभयं—प्रथमार्थः । तत्र सङ्ख्यायाः प्रकृत्यर्थेऽन्वयः, परिमाणे च प्रकृत्यर्थस्यैवाभेदेनान्वयः, तस्य च व्रीह्यादौ परिच्छेद्यत्वसम्बन्धेनान्वयः । प्रातिपदिकार्थमात्रेऽत्र प्रथमाविधाने तु नामार्थयोः साक्षाद्भेदसम्बन्धेनान्वयस्याव्युत्पन्नतया द्रोणादिपदार्थस्य व्रीह्यादौ परिच्छेद्यत्वसम्बन्धेनान्वयो न स्यात् । परिमाणस्यापि तत्र प्रथमार्थत्वे तु—प्रत्ययनामार्थयोर्भेदाऽन्वयेऽपि क्षतिविरहात्तथाऽन्वयः सुलभः । नन्वेवं भेदसम्बन्धेनान्वये 'द्रोणो व्रीहिमानये'त्यस्याप्यापत्तिः, अभेदान्वयस्थले एव समानविभक्तित्वस्य तन्त्रत्वादिति चेन्न; अभेदेन प्रकृत्यार्थान्वितः प्रत्ययार्थो यत्र भेदेनापि पदार्थान्तरान्वयी तत्रापि समानविभक्तिकताव्युत्पत्तेरङ्गीकारात् ।

नन्वेवं कृष्णादिप्रातिपदिकादपि प्रमाणे प्रथमायां 'कृष्णो व्रीहि'रित्यपि स्यात्, प्रत्ययार्थे प्रमाणे समानकालिकत्वादिना प्रकृत्यर्थान्वये प्रत्ययार्थस्य च परिच्छेद्यतयाऽन्वये बाधकाभावादिति चेन्न; अभेदेन प्रातिपदिकार्थान्वयिनि परिमाणे एवानेन प्रथमाविधानेन कृष्णादेश्च प्रत्ययार्थेनाभेदस्य बाधात्तदप्राप्तेस्तथा प्रयोगापत्तेरभावात् । घटकलशादेरपि प्रस्थादिवत् परिमाणवाचकत्वे 'कलशो व्रीहि' 'घटो व्रीहि'रित्यादि साध्वेवेत्याहुः । अन्ये तु—परिमाणपदमावर्त्य—परिमाणत्वव्याप्यद्रोणत्वाद्यवच्छिन्नरूपप्रातिपादकार्थमात्रे वर्त्तमानात्परिमाणे प्रथमेत्यर्थेन 'कृष्णो व्रीहि'रित्यत्र परिमाणे प्रथमां वारयन्ति ।

वचनग्रहणं कुर्वताञ्च सूत्रकृतामयमाशयः—द्वित्वादितो विभक्तिं विनापि सङ्ख्याबोधकताया अनुभवसिद्धतया विभक्तेः सङ्ख्याद्योतकत्वस्य दुर्वचतया, सङ्ख्यावाचकत्वस्याप्युक्तार्थानामिति न्यायेन वक्तुमशक्यतया—[सङ्ख्याऽबोधकविभक्तेश्च 'द्व्येकयो'रित्यादिनियमेनानुत्पत्त्या] 'एकवचनमुत्सर्गत' इत्यादि भाष्यादेकवचनस्यैव द्व्यादिभ्यः प्राप्तौ प्रकृतिप्रतिपाद्यसङ्ख्याबोधकतावच्छेदकरूपावच्छिन्नाया निरर्थिकाया अपि प्रथमाया

सङ्ख्यान्तराभावाच्च तदप्राप्तिः। अनन्विताथैकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वान्न द्व्यादिभ्यः सर्वविभक्त्यापत्तिरिति भावः। लिङ्गविशिष्टपरिभाषया—'इन्द्राणी'त्यादौ प्रथमासिद्धिः। परिमाणशब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोध्यम्।

परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं, तदाश्रयश्च। स च मुख्य इवाऽऽरोपिततदाश्रयोऽपि। अत एव 'गोपी'त्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः।

ॐ विजया ॐ

परे त्विति। एवञ्च प्रवृत्तिनिमित्तविशिष्टत्वं प्रातिपदिकार्थत्वं, वै० 'स्वतादात्म्य' 'स्वाश्रयत्वा'-ऽन्यतरसम्बन्धेनेत्याशयः। न च घट-घटत्व—तत्समवायानां घटादिपदार्थतया तद्वाचकघटादिपदात्प्रथमानापत्तिः, नव्यमते प्रवृत्तिनिमित्ततदाश्रययोरेव ग्राह्यतया मात्रग्रहणेनाधिकव्यावृत्तेरिति वाच्यं, मात्रपदेन तदीयसमवायादिसम्बन्धातिरिक्तस्यैव व्यावृत्तेः कल्पनीयतयाऽदोषात्। एवञ्च—प्रातिपदिकार्थे विद्यमानत्वे सति समवायेतर—प्रातिपदिकार्थेतरार्थेऽविद्यमानात्प्रातिपदिकात्प्रथमेत्यर्थः। परे तु— नव्यनयेऽपि समवायस्यापि प्रातिपदिकार्थत्वमभिप्रयन्ति, 'द्विक'मित्यनेन।

ॐ चिदस्थिमाला ॐ

अत एव सिद्धान्ताशयमाह—अनन्वितेति। एकशब्दादौत्सर्गिकैकवचनेन निर्वाहादाह—द्व्यादिभ्य इति। सर्वविभक्तीति। सर्वप्रथमेत्यर्थः।

मूले न्यूनतां परिहरति-लिङ्गेति। उन्मानेति। 'पल घृत'मित्यादावित्यर्थः। मूलादिसकलासाङ्गत्याय सिद्धान्तमाह-परेत्वित्यादिना आहुरित्यन्तेन। नान्यत्रेति सूचयन्नाह-अत्र सूत्रे इति। स च=तदाश्रयश्च। तत्=प्रवृत्तिनिमित्तम्। अपिस्तस्यैव समुच्चये। अत एव=लिङ्गस्य प्रातिपदिकार्थत्वादेव। अत्र सूत्रान्तर-

ॐ विषमपदविवृतिः ॐ

न च 'न केवला' इति न्यायविरोध इति वाच्यम्, इदानीं तदननुसन्धानात्। ननु वचनग्रहणे कृतेपि द्व्यादिभ्य एकवचनाद्यापत्तिर्वचनशब्दस्य सङ्ख्यामात्रबोधकत्वादित्याशङ्क्याह—अनन्वितार्थकेति। द्व्यादिभ्य इति। एकशब्दस्तु नोपात्तः, औत्सर्गिकैकवचनेनैव सिद्धेरिति भावः।

ॐ वरवर्णिनी ॐ

उत्पत्तिरिति। एवञ्च सङ्ख्यावाचकात्प्रातिपदिकार्थे वर्त्तमानात्प्रातिपदिकात्स्ववाच्यवाचकतावच्छेदकरूपावच्छिन्नात्प्रथमा भवतीत्यर्थः। वाचकत्व—द्योतकत्वान्यतरविधया सङ्ख्याबोधकेतरविभक्तेरसाधुत्वमित्यर्थबोधकस्य 'द्व्येकयो'रित्यादिनियमस्यात्रांशेऽप्रवृत्तिरिति तु तत्त्वमिति प्राचीनमतपरिष्कारः।

नागेशः स्वसिद्धान्तमुपन्यस्यति—परेत्विति। एवञ्च तत्पदप्रवृत्तिनिमित्तविशिष्टस्तत्पदप्रातिपदिकार्थः, वै० 'स्वाश्रयत्व' 'स्वतादात्म्या'न्यतरसम्बन्धेनेत्यर्थः पर्यवस्यति। 'वाच्यत्वे सति' वाच्यवृत्तित्वे सति, वाच्योपस्थितिप्रकारत्वं' प्रवृत्तिनिमित्तत्वम्। तत्र 'वाच्यत्वे सती'त्युक्त्या—शब्दाश्रयत्वस्य नाकाशपदप्रवृत्तिनिमित्तत्वं, तस्याकाशशब्दवाच्यत्वाभावात्। 'वाच्यवृत्तित्वे सती'त्युक्त्या 'जात्याकृतिव्यक्तयः पदार्थ' इति मते—अवयवसमवेतायाः संयोगात्मकावयवसन्निवेशविशेषरूपाया आकृतेर्न गवादिपदप्रवृत्तिनिमित्तत्वं, वाच्यत्वेऽपि तस्या गोरूपवाच्यवृत्तित्वाभावात्। न च स्वसमवायि समवेतत्वसम्बन्धेनावयववृत्त्याकृतेर्गवादौ वृत्तितया स दोषस्तदवस्थ एवेति वाच्यं, साक्षाद्वाच्यवृत्तिताया एव ग्रहणात्। निरुक्तसम्बन्धेनावयवद्वारा गोवृत्तित्वेऽपि साक्षादाकृतेर्गोवृत्तित्वाभावात्। सोऽपि सम्बन्धो वाच्य एव ग्राह्यः, एवञ्च कालिकादिनाऽऽकृतेर्गवादिवृत्तित्वेऽपि न प्रवृत्तिनिमित्तता, तादृशपरम्परासम्बन्धस्य वाच्यत्वाभावात्। तदेवं साक्षात्त्वनिवेशोऽपि नावश्यक इति लाघवम्।

'वाच्योपस्थितिप्रकारत्व'निवेशात्—आधाराधेयभावसम्बन्धेन इर्यादिपदवाच्याश्रवृत्ति—इर्यादिपदवाच्येन्द्रादौ, घटादिपदवाच्ये घटादिपदवाच्यवृत्तौ च समवायसम्बन्धे न प्रवृत्तिनिमित्तत्वम्; वाच्योपस्थितिप्रकारत्वस्य समवायसम्बन्धे इन्द्रादौ चाभावात्।

## ॐ विजया ॐ

लिङ्गादेरेव व्यावृत्तिरित्याशयात्। नन्वेवं प्रमेयादिपदात्प्रथमा न स्यात्, प्रमेयादिप्रातिपदिकार्थेनगाऽप्रसिद्धेरिति चेन्न, प्रवृत्तिनिमित्तविशिष्टविषयताऽप्रयोजकत्वप्रयत्नेत्यर्थः, वै० 'स्वानवच्छिन्नत्व' 'स्वावृत्तित्वे'तदुभयसम्बन्धेन । एवञ्च—प्रमेयपदस्य प्रवृत्तिनिमित्तप्रमेयत्वावृत्तिः—प्रमेयत्वानवच्छिन्ना च या घटत्वावच्छिन्नविषयता तादृशविषयत्वाऽप्रयोजकतया ततः प्रथमासिद्धिर्निष्प्रत्यूहैव ।

प्रवृत्तिनिमित्तत्वञ्च—प्रातिपदिकनिष्ठशक्तिविशिष्टत्वं, वै० 'स्वप्रयोज्योपस्थितीयप्रकारताश्रयत्व' 'स्वप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपिताऽपदार्थसम्बन्धावच्छिन्नप्रकारतानिरूपिताऽवच्छेदकत्वानाश्रयत्वे'तदुभयसम्बन्धेन । तेन पुंस्त्वपुंस्त्वत्वादेर्न प्रवृत्तिनिमित्तत्वम्। खण्डशश्शक्तेस्तत्र स्वीकारेण शक्तिप्रयोज्योपस्थितीयप्रकारताश्रयत्वस्य [ घटत्वे पुंस्त्वत्वे च सत्त्वेऽपि— ] पुंस्त्वेऽभावात्पुंस्त्वं न प्रवृत्तिनिमित्तम्। पुंस्त्वत्वस्य·घटपदनिष्ठशक्तिप्रयोज्योपस्थितीयपुंस्त्वनिष्ठविशेष्यतानिरूपित प्रकारताश्रयत्वेऽपि, घटपदनिष्ठ–घटत्वावच्छिन्ननिरूपितशक्ति-प्रयोज्यशाब्दबोधीय–घटत्वावच्छिन्ननिष्ठ-विशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वस्यैव पुंस्त्वत्वे सत्त्वेनानवच्छेदकत्वस्य तत्राऽभावान्न तस्य प्रवृत्तिनिमित्तत्वेति-घटत्वस्यैव तत्त्वम् । प्रकारताया अपदार्थसम्बन्धावच्छिन्नाया एव ग्रहणात्—लोमवल्लाङ्गूलावच्छिन्ने पशुपदस्य शक्त्या लाङ्गूलावच्छिन्ननिरूपितशक्तिप्रयोज्यशाब्दबोधीयलाङ्गूलावच्छिन्ननिष्ठविशेष्यतानिरूपितलाङ्गूलनिष्ठप्रकारतानिरूपितसाक्षादवच्छेदकतायाः

## ॐ वरवर्णिनी ॐ

अन्ये तु—द्रव्यादिपदादपि घटत्वाद्युपलक्षितघटादौ शक्तिग्रहाद्घटत्वादिना घटादेरुपस्थितेः सत्त्वाद्घटत्वस्य प्रवृत्तिनिमित्ततावारणाय 'वाच्यत्वे सती'त्युक्तम्। एवमवयविरूपदध्नो–वाच्यत्वात्, अवयवरूपदधिवृत्तित्वाच्च तत्र दध्नः प्रवृत्तिनिमित्तत्ववारणाय तृतीयं विशेषणमित्याहुः ।

श्रीमन्तोदण्डिभट्टास्तु–प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वं, वै०'स्ववाच्यत्व' 'स्ववाच्यवृत्तित्व' 'स्वजन्यशाब्दबोधीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविशेष्यतानिरूपितप्रकारताश्रयत्वै'तत्त्रितयसम्बन्धेन । तेन पुंस्त्वत्वादेर्न प्रवृत्तिनिमित्तत्वं, तत्राद्यसम्बन्धद्वयसत्त्वेऽपि, लिङ्गे खण्डशः शक्त्या पुंस्त्वनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वस्य तत्र सत्त्वेऽपि तादृशोपस्थितीयविशेष्यतायां स्वजन्यशाब्दीयमुख्यविशेष्यतासामानाधिकरण्याभावेन तृतीयसम्बन्धाभावात्। एवञ्च लिङ्गग्रहणं सफलम्। विशेष्यतानिरूपितत्वञ्च प्रकारतायां साक्षात्परम्परासाधारणमिति—पशुपदार्थप्रवृत्तिनिमित्तलोमत्वादौ नाव्याप्तिः, तस्यापि परम्परया तादृशोपस्थितीयप्रकारताश्रयत्वात्। यद्वा—प्रातिपदिकविशिष्टप्रकारताश्रयत्वं तत्त्वं, वै० 'स्वजन्यशाब्दबोधीयमुख्यविशेष्यतानिरूपितत्व' 'स्वप्रयोज्यधर्मितानिरूपितप्रकारत्वाभाववत्त्वे'तदुभयसम्बन्धेन । अभावश्च—'आश्रयत्व' 'अवच्छेदकत्वै'तदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । पुंस्त्वे पुंस्त्वत्वे चाश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन स्वप्रयोज्य–घटत्वाद्यवच्छिन्न–धर्मितानिरूपितप्रकारत्वमेवास्ति, तत्त्वेनदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इति न पुंस्त्वत्व–पुंस्त्वयोः प्रवृत्तिनिमित्तत्वम्। अत्र स्वप्रयोज्य–धर्मितानिरूपिताप्रकारता–अपदार्थसम्बन्धावच्छिन्ना विवक्षितेति–लोमवल्लाङ्गूलावच्छिन्नवाचकपशुपदप्रवृत्तिनिमित्तलोमत्वादौ कुकुदादौ च नाव्याप्तिः, लाङ्गूलावच्छिन्नधर्मितानिरूपितलोमलोमत्वादिनिष्ठप्रकारतायाः समवायादिपदार्थे–[ शक्तिभास्य– ]–सम्बन्धावच्छिन्नतयाऽपदार्थे—[–आकाङ्क्षाभास्य–]–सम्बन्धावच्छिन्नत्वाभावात् । नन्वेवमेवपदार्थप्रवृत्तिनिमित्तभेदत्वादावव्याप्तिः, एवपदप्रयोज्याभावत्वावच्छिन्नधर्मितानिरूपिताऽपदार्थसम्बन्धावच्छिन्नप्रकारताया अवच्छेदकत्वाश्रयत्वैतदन्यतरसम्बन्धेन तत्र सत्त्वेन तदभावस्याभावादिति चेन्न; प्रातिपदिकविशिष्टप्रकारताश्रयत्वं प्रवृत्तिनिमित्तत्वं, वै० 'स्वपर्याप्तशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिरूपितत्व' 'स्वप्रयोज्यधर्मितानिरूपिताऽपदार्थसम्बन्धावच्छिन्ना—पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती च या—प्रकारता—['अवच्छेदकत्व' 'आश्रयत्वै'तदन्यतरसम्बन्धा-

अत एव लिङ्गग्रहणं सार्थकम् । अन्यथा 'स्वमोर्नपुंसका'दित्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव ।

अत एव 'स्त्रिया'मिति सूत्रे—'स्त्रीत्वे द्योत्ये' इत्यर्थ इति भाष्ये सिद्धान्तितम् ।

❀ विजया ❀

लाङ्गूलत्वे परम्परया लोमवत्त्वे लोमत्वे च सत्त्वेऽपि न लोमत्वादावव्याप्तिः । लाङ्गूलादिनिष्ठप्रकारतायाः शक्तिभास्यसम्बन्धावच्छिन्नतयाऽऽकाङ्क्षाभास्यसम्बन्धानवच्छिन्नत्वात् । पशुपदस्थलेहि-लोमादिसम्बन्धस्यापि पदार्थत्वात् । एवं 'सत्कृत्यालङ्कृतां यो ददाति स कूकुद' इत्यत्रापि न दोषः । नन्वेवमपि अन्ययोगव्यवच्छेदरूपे एवकारार्थे अभावस्य मुख्यविशेष्यतया तन्निरूपिताऽपदार्थसम्बन्धावच्छिन्नसम्बन्धनिष्ठप्रकारतानिरूपितावच्छेदकत्वस्यैव भेदादौ सत्त्वेन तत्र प्रवृत्तिनिमित्तलक्षणाऽव्याप्तिः, तत्र प्रकारतावच्छेदकस्य सम्बन्धस्यापदार्थत्वादिति चेन्न; प्रकारतानिरूपितावच्छेदकताया इतरार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वासमानाधिकरणाया एव ग्रहणेन प्रकृते च पार्थ एव धनुर्धर' इत्यादावेवकारेतर-पार्थ-पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासमानाधिकरणाया एव सत्त्वेनादोषादित्याहुरिति सङ्क्षेपः ।

प्रवृत्तिनिमित्ततदाश्रययोर्द्वयोरेव प्रातिपदिकार्थत्वमिति स्वमते प्रमाण दर्शयति—**अत एवेति** । अन्यथा=अत्र सूत्रे प्रातिपदिकवाच्यस्य प्रातिपदिकार्थपदेन ग्रहणे । तद्वैयर्थ्यं=लिङ्गग्रहणवैयर्थ्यम् । अत एव=लिङ्गस्यापि प्रातिपदिकार्थत्वादेव । लिङ्गस्य प्रातिपदिकार्थत्वाभावे तु तस्य प्रत्ययवाच्यत्वस्यैव वक्तव्यतया 'स्त्रीत्वे वाच्ये टा'बित्येवार्थो भाष्यकृता वक्तव्यः स्यादतो लिङ्गस्यापि प्रातिपदिकार्थत्वमास्थेयमेव । प्रकृतसूत्रे तु लिङ्गग्रहणसामर्थ्याद्द्वयोरेव ग्रहणमिति त्वन्यदित्याशयः ।

ननु 'पुंसि विद्यमानस्य शसः सस्य नत्व'मित्यर्थक'तस्मा'दिति शास्त्रप्रामाण्याल्लिङ्गं प्रत्ययाथ

❀ विषमपदविवृतिः ❀

**सर्वविभक्तीति** । वचनत्रयात्मकविभक्तीत्यर्थः । तद्धितश्चासर्वविभक्तिरितिवत् । **अत एव लिङ्गेति** ।

❀ वरवर्णिनी ❀

वच्छिन्नप्रतियोगिताक-] तादृशप्रकारत्वभाववत्त्वै'तदुभयसम्बन्धेन । विशेष्यत्वाभावश्च 'तादात्म्य' 'अवच्छेदकत्वै'तदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः । 'पार्थ एव धनुर्द्धर'इत्यादौ च पार्थत्वावच्छिन्न-प्रतियोगिताकभेदवत्कर्णादिप्रतियोगिकतादात्म्यसम्बन्धाभावस्य धनुर्द्धरे बोधनात्—प्रतियोगित्वसम्बन्धावच्छिन्न-पार्थत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताया—अभावत्वावच्छिन्नविशेष्यतानिरूपिताऽपदार्थसम्बन्धावच्छिन्न-भेदनिष्ठप्रकारतायां तादात्म्येन, भेदत्वनिष्ठप्रकारातायाञ्च अवच्छेदकतया च वर्त्तमानतया तादृशविशेष्य-त्वाभाववतीयं प्रकारता न जातेति न तत्राव्याप्तिः । पुंस्त्वत्वपुंस्त्वादौ च कस्यापि पदार्थस्यानन्वया-त्प्रातिपदिकप्रयोज्यधर्मितानिरूपिताऽपदार्थसम्बन्धावच्छिन्न—पुंस्त्वादिनिष्ठप्रकारता'ऽवच्छेदकत्व'—'तादा-त्म्यै'तदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववती जातेति तादृश-प्रकारताऽत्र—आश्रयत्वावच्छेदकत्वैतदन्यतरसम्बन्धेन पुंस्त्वादौ पुंस्त्वत्वादौ च वर्त्तते एवेति—न तादृश-प्रकारत्वाभाव इति न तत्रातिव्याप्तिरिति लिङ्गग्रहणं सफलमिति सुधियो विभावयन्त्वित्याहुः ।

**उमानाथसुधियस्तु**—स्वनिष्ठशक्तिविशिष्टत्वं तत्त्वं, वै० 'स्वनिरूपकत्व' 'स्वप्रयोज्योपस्थितीयमुख्य-विशेष्यत्वाभाववत्त्व' 'स्वप्रयोज्यशाब्दबोधीयधर्मितानिरूपिताऽपदार्थसम्बन्धावच्छिन्नधर्मितानात्मकप्रकारता-वच्छेदकत्वाभाववत्त्वै'तत्त्रितयसम्बन्धेन । आद्यसम्बन्धोपादानादवाच्ये न तत्त्वम् । द्वितीयोपादानाद्घटादेर्न-तत्त्वम् । तृतीयसम्बन्धोपादानात्—पुंस्त्वादेर्न तत्त्वमित्याहुः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

'तस्माच्छस' इत्यत्र 'पुंसी'त्यस्य पुंशब्दस्य प्रकृतित्वे इत्येवार्थः । 'अभिहिते प्रथमे'ति वार्तिकस्य 'तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाऽभिहितायां स्वार्थे प्रातिपदिकात्प्रथमे'-त्यर्थ इति न तद्विरोधः । एतेन 'तन्नये कारकस्य प्रत्ययार्थत्वं, तत्र तु तन्नेति विरोध' इत्यपास्तम् ।

तटादिशब्दानामपि लिङ्गं वाच्यमेव, द्योतकास्तु विसर्गादयः । पूर्वं तत्तल्लिङ्गं बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम् ।

नियमांशनिवेशे तु न मानम्, इदमेवाभिप्रेत्य वृत्तौ—'प्रातिपदिकार्थः सत्ते'-

ॐ विजया ॐ

एवात आह—**तस्माच्छस इति** । एवञ्च लिङ्गस्य विभक्तिवाच्यत्वे प्रमाणाभाव इति भावः ।

ननु 'तिङ्कृत्तद्धितसमासनिपातैरभिहितकारकवाचिनी प्रथमे'त्यर्थकाभिहिते प्रथमेति वार्तिकबलाद्-भिहितकारकाणामपि प्रथमार्थत्वलाभात्'प्रातिपदिकार्थमात्रे प्रथमे'त्यसङ्गतमत आह **न तद्विरोध इति** । एतेन=मदुक्तार्थकरणेन । तन्नये='अभिहिते प्रथमे'ति वार्तिककृन्नये । तत्र तु=प्रातिपदिकार्थमात्रे प्रथमेत्यर्थं वदतो दीक्षितस्य तु । ननु—'अभिहिते प्रथमेति वार्तिकस्ये'त्यादिशेखरः—'पञ्चकं प्रातिपदिकार्थ' इति बुद्ध्वा ? आहोस्विज्जाति–व्यक्ति–लिङ्गेति त्रयं तथेति बुद्ध्वा वा ? । नाद्यः–तथा सति प्रवृत्तिनिमित्ततदाश्रयरूपप्रातिपदिकार्थेतरत्र कारकादौ प्रातिपदिकमात्रस्य वर्तमानतया 'कृष्ण' इत्यादौ क्वापि प्रथमा न स्यादित्येव वक्तव्यं स्यात् । न द्वितीयः—लिङ्गान्तत्रितयस्यैव प्रातिप-दिकार्थत्वे वार्तिकविरुद्धार्थाभिधायित्वस्यैवाभावेन विरोधस्यैवाप्रसक्तया निरुक्तग्रन्थानुत्थितिप्रसङ्गा-दिति चेन्न; 'द्व्येकयो'रित्यादिशास्त्रबलेन मात्रपदेन सङ्ख्याया अव्यावर्तनवत्, 'तिङ्समाना-धिकरणे प्रथमे'ति वार्तिकबलेन मात्रपदेन कारकस्याप्यव्यवच्छेदात्पञ्चकपक्षं बुध्वैवायं ग्रन्थ इत्येवं वक्तुं शक्यत्वात् । इत्थञ्च मात्रपदेन कारकस्याव्यवच्छेदेऽभिहिते प्रथमेत्यपि मानमित्युमानाथ-पण्डितादयः ।

**द्योतका इति** । 'तटः' इत्यत्र विसर्गस्य, 'तट'मित्यत्र मकारस्य च तात्पर्यग्राहकत्वरूपं द्योतकत्वमित्यर्थः । अत एव 'तटस्वामी'त्यादौ सति तात्पर्ये तटांशे पुंस्त्वादिबोधो भवत्येव, तात्पर्यग्राहकत्वमात्ररूपद्योतकत्वाश्रयं विनाऽपि तत्तदर्थप्रतीतेरनुभवसिद्धत्वात्, अन्यथा मकार-विसर्गादेरभावेन 'तटस्वामी'त्यादौ तात्पर्ये सत्यपि पुंस्त्वादेर्भानं न स्यात् । 'तटी'त्यत्रेकारस्य तु तात्पर्यग्राहकत्वे सत्याकाङ्क्षाग्राहकत्वरूपं द्योतकत्वम्, अत एव 'तटस्वामी'त्यादौ ङीप्समभिहारं विना तटांशे न स्त्रीत्वबोधः, आकाङ्क्षाग्राहकस्वरूपं द्योतकं विना तदर्थबोधाभावस्यैवानुभवसिद्धत्वात् ।

**न मानमिति** । लिङ्गग्रहणसामर्थ्येन 'नियतोपस्थितिक' इत्याद्यर्थस्वीकारे तु न मानमित्यर्थः ।

ॐ चिद्स्थिमाला ॐ

विरोधं परिहरति—**तस्मादिति** । एवेन पुंसि विद्यमानस्य राम इत्यस्य व्यावृत्तिः । वार्तिकविरोधमपि परिहरति—**अभिहिते इति** । प्राचोक्तं खण्डयति—**एतेनेति** । उक्तार्थेनाविरोधेनेत्यर्थः । तत्र च= वार्तिकमते । ननु तटादिस्थले लिङ्गं न प्रातिपदिकार्थोऽत आह—**तटादीति** । तावन्मात्रात्कृष्णादिवद्-प्रतीतेराह- **पूर्वमिति** । विभक्तेरिति भावः । ननु न ततो नियमेन बुद्धिस्थताऽत आह—**नियमांशेति** । एतेनावशिष्टस्याभिमतत्वं सूचितम् । इदमेव वृत्तिकारसंमतमित्याह—**इदमेवेति** । नन्वेवमपि न्यूनताऽत

ॐ विषमपदविवृतिः ॐ

प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रयमात्रग्रहणादेवेत्यर्थः । **न मानमिति** । प्रत्युत हर्यादि-शब्देभ्यो नानार्थेभ्यः प्रथमा न स्यादिति बोध्यम् । तस्य=परिच्छेदस्य । अनेकत्वेन=अनेक-

त्युक्तम् । 'सत्ते'ति-प्रवृत्तिनिमित्तोपलक्षणम् । आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः ।

एवञ्च प्रातिपदिकार्थ इत्यस्य अलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहरणम् ।

लिङ्गविशिष्टपरिभाषया 'स्त्री'शब्दोऽप्यस्यैवोदाहरणम् ।

अन्ये सर्वे 'लिङ्गाधिक्ये' इत्यस्य—।

द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थः । एवञ्च तस्य लिङ्गवत्प्रातिपदिकार्थत्वाभावात्परिमाणग्रहणम् ।

❀ विजया ❀

**उपलक्षणमिति** । यथा सत्ता व्यापिका एवं तत्पदजन्यबोधे प्रवृत्तिनिमित्तविषताऽपि व्यापिकेति व्यापकत्वसाधर्म्यात्तदुपलक्षणमित्याशयः । एतेन 'नियतोपस्थितिकस्याप्युपलक्षणं सत्तेत्यपि वक्तुं शक्यते, विनिगमनाविरहा'दित्यपास्तम् । **परे** तु सत्तापदेन जगदधिष्ठानभूतं वस्तूच्यते एवञ्च प्रकृतेऽपि तत्पदप्रतिपाद्येषु अधिष्ठानरूपो घटादिर्धर्मी सत्तापदेनोच्यते, तस्य चाधिष्ठानरूपधर्मिणो यद्धर्मविनिर्मोकेण प्रतीतेरसम्भवः स प्रवृत्तिनिमित्तरूपो धर्मोऽप्याक्षिप्यते इति प्रवृत्तिनिमित्ततदाश्रययोर्वृत्तिग्रन्थेन प्रातिपदिकार्थता लभ्यते इति न सत्तापदस्य तदुपलक्षणत्वे विनिगमनाविरह इत्याहुः । **स्त्रीशब्दोऽपीति** । स्त्यायतेर्ड्रट् टित्वान्ङीपि स्त्रीशब्दस्य साधुतया ङ्यन्तस्याप्रातिपदिकत्वमिति शङ्का, लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वमेवेत्युत्तरमिति भावः ।

परिमाणपदकृत्यमाह—**द्रोणत्वादीति** । **परिमाणमपीति** । परिमाणत्वावच्छिन्ने द्रोणत्वावच्छिन्ने च द्रोणपदस्य खण्डशः शक्तिः, तयोरभेदश्च शाब्दबोधे आकाङ्क्षाभास्यः, परिमाणञ्च लिङ्गवद्द्रोणादौ विशेषणमेव, अत एव परिमाणत्वं न द्रोणपदप्रवृत्तिनिमित्तं पुंस्त्वादिवत्, किन्तु द्रोणत्वमेव तथेति भावः । **परिमाणग्रहणमिति** । एवञ्च तद्ग्रहणसामर्थ्यान्मात्रपदेन परिमाणस्याव्यावृत्तिरित्याशयः । ननु विशेष्यांशेऽधिकावगाहिशाब्दबोधस्य केनाप्यस्वीकारा- 'द्रोणः परिमाण'मिति वाक्यस्याप्रामाण्यापत्तिः, परिमाणाऽभिन्नद्रोणत्वावच्छिन्नविशेष्यक-परिमाणत्वावच्छिन्नप्रकारताकबोधतात्पर्येणैवोच्चरितत्वेन विशेष्यांशे तस्याधिकावगाहित्वात्, शुद्धपरिमाणत्वावच्छिन्नविशेष्यकबोधतात्पर्येणोच्चरितस्य तु प्रामाण्यं स्यादिति त्वन्यदेतदत आह—

❀ चिदस्थिमाला ❀

आह-**सत्तेतीति** । तथापि न्यूनतैवात आह—**आश्रयस्त्विति** । सिद्धान्ते पर्यवसितमाह-**एवञ्चेति** । तेन तयोर्ग्रहणे चेत्यर्थः । क्रमेण तयोः स्वरूपे आह—**अव्ययेति** ।

ननु स्त्रीशब्दो न प्रातिपदिकं, ततो लिङ्गाधिक्यमपि नेति कथं तत्रात आह-**लिङ्गेति** । अत एव प्रातिपदिकार्थे किमुदाहरणमिति प्रश्ने-'स्त्री पुमान्नपुंसक'मिति भाष्ये उक्तम् । अन्ये सर्वे='कृष्णः' 'श्रीः' 'ज्ञानं' 'तटः'-'तटी' 'तट' मित्यादयः । कुमारीशब्दादयोऽप्यस्यैव, न हि तत्र लिङ्गं प्रवृत्तिनिमित्तं किन्तु विशेष्ये विशेषणमित्येवं यं धर्मं प्रकारीकृत्य वृत्तिग्रहस्तस्यैव प्रवृत्तिनिमित्तत्वात् । पदे न लक्षणेति न लाक्षणिकेषु दोषस्तदेतदभिप्रेत्य परिमाणोदाहरणमाह-**द्रोणत्वादीति** । तच्चेयत्ताविशेषावच्छिन्नपात्रादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणोऽखण्डोपाधिरूपो धर्मो, जातिविशेषो वा, सूत्रभाष्यप्रमाण्येन तथैवानुभवेन लाघवेन च तादृशस्य तस्यैव प्रवृत्तिनिमित्तत्वस्वीकारादिति भावः । **चोऽप्यर्थे इति** । धर्मितावच्छेदकत्वेन धर्मितावच्छेदकसमानाधिकरणत्वेन विशेष्यत्वेन वा शक्तिग्रहविषयस्य बोधविषयत्वाङ्गीकारान्नातिप्रसङ्ग इति बोध्यम् । तस्य=परिमाणस्य । तत्र लिङ्गमात्राधिक्याभावादित्यपि बोध्यम् । नन्वेवं 'द्रोणः परिमाण'मित्यादि न स्यादत आह—**द्रोण इति** । अभ्युपेत्येदं, वस्तुतो नैवमित्याह—**द्रोणेति** ।

'द्रोणः परिमाण'मित्येव तु 'द्वौ ब्राह्मणा'वितिवत्प्रयोगः, द्रोणशब्दस्यानेकार्थत्वाद्वा ।

मूलोक्तन्तु न युक्तं, 'द्रोणो व्रीहिमानये'त्यस्यापत्तेः ।

किञ्च—'तिङ्समानाधिकरणे प्रथमे'तिवार्त्तिकैकवाक्यतया भेदान्वये 'द्रोणो व्रीहि'-रित्यनिष्टम् । न च—'यदा मेये द्रोणादीनां वृत्तिस्तदा तस्याऽनेकत्वेन, परिमाणमात्रपरत्वे तद्बोधेन च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाभावेनाऽप्रातिपदिकार्थत्वाद्-सिद्धौ कर्मव्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहण'मिति कैयटोक्तं युक्तमिति वाच्यं, 'सिंहो माणवक' इत्यस्यासिद्ध्यापत्तेः, तद्वदस्यापि सिद्धेश्च, नियमांशनिवेशे मानाभावाच्च ।

'एकः' 'द्वा'वित्यादिसिद्धये तु वचनग्रहणम् , अन्यथैतत्सूत्रोपस्थित—'अनभिहिते'

ॐ विजया ॐ

**द्वौ ब्राह्मणावितिवदिति** । तत्र-द्योतकाभ्यामौपदाभ्यां, वाचकाभ्यां द्विपदब्राह्मणपदाभ्याञ्चैकस्यैव द्वित्वस्य यथा प्रतीतिरेवमत्रापि द्वाभ्यामपि एकमेव परिमाणं प्रतीयते, 'सम्भेदेनान्यतरवैयर्थ्य'मिति न्यायात् । **अनेकार्थत्वादिति** । एवञ्च परिमाणांशस्य तादृशस्थले मेयेण विशेष्यांशेऽधिकानवगाहनात्तादृशप्रयोगोपपत्तिरित्याशयः । **अप्यापत्तेरिति** । अपिना—'प्रमेयो व्रीहि'-रित्यादौ 'प्रमेयाऽभिन्नं यत्परिमाणन्तत्परिच्छिन्नो व्रीहि'रित्येवं बोधापत्तेरपि ग्रहणम् । 'प्रत्ययार्थपरिमाणस्य स्वबोधकविभक्तिसजातीयविभक्तिप्रकृत्यर्थ एवान्वयः' एवं—'प्रत्ययार्थे परिमाणे परिमाणत्वव्याप्यद्रोणात्वाद्यवच्छिन्नस्यैवात्राऽभेदान्वयः' इत्यादिव्युत्पत्तिस्वीकारेण दोषवारणन्त्वयुक्तं, तादृशव्युत्पत्तौ प्रमाणाभावात्, अस्यैव प्रातिपदिकार्थसूत्रस्याकाङ्क्षानियामकतया तादृशव्युत्पत्तिकल्पनस्याऽसम्भवदुक्तिकत्वाच्च । **असिद्ध्यापत्तेरिति** । 'घट' इत्यादावपि तत्तद्घटव्यक्तीनां भाने नियमाभावात्कदाचित्काचिदेका व्यक्तिः कदाचित्सर्वा व्यक्तयो भासन्ते इत्यनुभवसिद्धतयाऽसम्भव एव दोषो देयो न त्वव्याप्तिरेवेति—**श्रीदण्डिभट्टाः** ।

**सिंहो माणवक इति** । अत्रापि माणवकस्य नियतोपस्थितिकत्वाभावेन प्रातिपदिकार्थत्वानापत्तिरिति भावः । ननु शक्यार्थे एव प्रथमया पदसाधुत्वं विधाय ततो लक्षणेतिपूर्वोक्तरीत्या न दोष इत्यत आह—**तद्वदिति** । एवञ्च तदर्थं परिमाणग्रहणं व्यर्थमेवेत्याशयः ।

वचनग्रहणफलमाह—**एक इति** । अन्यथा=वचनग्रहणाभावे । **एतदिति** । प्रातिपदिकार्थ-

ॐ चिदस्थिमाला ॐ

मूलोक्तप्रकारेण परिमाणग्रहणसार्थक्यं खण्डयति—**मूलोक्तमिति** । ननु वार्त्तिकानुरोधात्समानविभक्तिकनामान्तरार्थान्वये एव साधुत्वमिति नायं दोषोऽत आह—**किञ्चेति** । 'यत' **इत्यादिः** । तदनुरोधादभेदान्वये एव साधुत्वमित्यर्थस्याप्यङ्गीकर्तुमुचितत्वादिति भावः । कैयटोक्तमन्यथा तत्सार्थक्यं खण्डयति—**न चेति** । **सिंह इति** । 'एवमपी त्यादिः । **तद्वदिति** । तत्र सदृशस्य नियतोपस्थितिकत्वेन स्वार्थे पदसंस्कारोत्तरं लक्षणया वेति भावः । इदमप्यभ्युपेत्य, वस्तुतस्तदेव नेत्याह—**नियमांशे इति** ।

ननु प्रातिपदिकार्थादिषु विहितप्रथमाया अनुवादकत्वेऽपि सङ्ख्यारूपार्थबोधकतया सार्थक्येन घटादिभ्यस्तदुत्पत्तावपि एकादिभ्यो न स्यात्तत्र सङ्ख्याया अप्युक्तत्वात् , उच्चैरादिवदेकवचनोत्पत्तिश्चेत्—द्व्यादावपि तस्यैवापत्तिः, सर्ववचनोत्पत्तिर्वा स्यादत आह—**एक इति** । अन्यथा=वचनग्रहणाभावे । **एतदिति** । प्रातिपदिकार्थेतीत्यर्थः । अत्र=प्रातिपदिकार्थशब्दे । नन्वेवमपि 'रामा'वित्यादौ प्रथमा न स्यात् । लिङ्गाधिक्येऽपि तन्मात्राधिक्याभावात्, सङ्ख्याधिक्यस्यापि सत्त्वात् , वचनग्रहणस्यैकार्थ्ये चारितार्थ्यादत

इत्यस्यात्र फलाभावादेतदेकवाक्यतापन्नसङ्ख्यावाक्यान्वयित्वेन तदप्राप्तेः। 'रामा'वित्यादौ सङ्ख्याधिक्ये प्रथमा तु—'द्व्येकयो'रित्याद्येकवाक्यतयेति बोद्ध्यम्।

मात्रग्रहणाभावे तु यथा 'कर्मणि द्वितीये'ति नियमेन कर्मत्वाऽज्ञानसमान-

ॐ विजया ॐ

सूत्रत्यर्थः। फलाभावादिति। तत्सम्बन्धे हि—अनभिहिते प्रातिपदिकार्थे इत्येवार्थः स्यात्. तत्र प्रातिपदिकार्थस्यान्येनाभिधानाभावेन तद्व्यावर्त्यालाभ इति तदसम्बन्ध एवास्थेय इति भावः।

एतदिति। प्रातिपदिकार्थसूत्रेत्यर्थः। सङ्ख्यावाक्यान्वयित्वेन= द्व्येकयो'रित्यादिसङ्ख्यावाक्यार्थान्वयित्वेन। 'अनभिहिते' इत्यस्ये'ति शेषः। नन्वेवं सङ्ख्यावाक्येऽनभिहिताधिकारसम्बन्धे 'घट' इत्यादावपि प्रथमा न स्यात्पक्षकं प्रातिपदिकार्थे इति मते प्रकृत्यैव सङ्ख्याया अभिधानादिति चेन्न; 'प्रत्ययः' 'आद्गुणः' इत्यादिनिर्देशैः-'स्वघटितवाक्यघटकेन स्वभिन्नेन पदेनागृहीततात्पर्यकं यदेकत्वं तत्र वर्त्तमानादेकवचनं भवती'त्यर्थस्यैव कल्पनेन प्रकरणादिना तात्पर्यस्य गृहीतत्वेऽपि एकवचनघटित—'घटोऽस्ती'त्यादिवाक्यघटकेन स्वभिन्नेन केनाऽपि पदेन तात्पर्यस्यागृहीततया एकत्वे एकवचनस्य सिद्धावपि 'एकोऽस्ती'त्यादौ स्वभिन्नेन तादृशवाक्यघटकीभूतनैकपदेन गृहीततात्पर्यके एकत्वे वर्त्तमानादेकपदादेकवचनं न स्यात्। 'एकः पूर्वपरयो'रित्यादिनिर्देशेन 'एकवचनमुत्सर्गतः' इति वा एकशब्दादेकवचनस्य सिद्धावपि द्व्यादिशब्दाद्द्विवचनानापत्तिः स्यादिति वचनग्रहणस्यावश्यत्वदित्याशयः।

ननु रामावित्यत्र सङ्ख्याधिक्ये प्रथमा न स्यान्मात्रग्रहणादित्यत आह—**रामाविति**। एवञ्च 'द्व्येकयो'रित्यादिशास्त्रबलात्सङ्ख्याया मात्रपदेन न व्यवच्छेद इति लभ्यते इत्याशयः।

ॐ चिद्स्थिमाला ॐ

आह—**रामाविति**। कर्मत्वादियोग्यत्वरहिते एकत्वादिविशिष्टे स्वार्थे एवेत्येवमेकवाक्यतया नियमाङ्गीकारात्तदाधिक्ये भवत्येवेति भावः। मात्रग्रहणफलमाह—**मात्रग्रहणाभावे त्विति**। 'नियमः स्या'दित्यत्रान्वयः। न च कर्मण्येव द्वितीयेति प्रत्ययनियमे कर्मत्वादिविशिष्टे वारणार्थं तदिति वाच्यम्, अत्रापि प्रातिपदिकार्थे एवेतिनियमादस्य तत्राप्राप्तेरत एवाह—**यथेति**। **त्वाज्ञानेति**। तदभावसमानाधिकरणेत्यर्थः।

ॐ विषमपदविवृतिः ॐ

विधत्वेन। **तद्वदिति**। शक्यार्थमादाय प्रथमां कृत्वा पश्चाल्लक्षणेत्युक्तदिशेत्यर्थः। **सङ्ख्यावाक्येति**। 'द्व्येकयोर्द्विवचनैकवचने' इति वाक्येत्यर्थः। एतेन "–'एको 'द्वा'वित्यादौ वचनग्रहणाभावेप्युक्तार्थानामितिन्यायेन प्रथमा न स्यादिति न युक्तम्, 'एक'मित्यादौ तन्न्यायेन द्वितीयाद्यनापत्तेः। 'सङ्ख्या विभक्त्यर्थ' इति पक्षेऽनभिहिते इत्यस्यारम्भ इत्याकरे उक्तत्वेन तत्पक्षे सूत्रजबोधे सङ्ख्यायाः प्राधान्येनोक्तार्थानामिति न्यायस्य निर्बाधत्वात्। न च सङ्ख्यामात्रस्य प्रातिपदिकेनोक्तत्वेपि कर्मत्वादिबोधनायद्वितीयेति वाच्यम्, 'एको द्वा'वित्यादावपि आश्रयपुंस्त्वादिबोधनाय प्रथमेति सुवचत्वात्। तस्य प्रातिपदिकेनोक्तत्वं तु न–प्रथमाप्रवृत्तिप्रतिबन्धकम्–" इति **हरिदीक्षितोक्तमपास्तम्**।

अत्र केचित्–'प्रातिपदिके'त्यादि सूत्राणि अर्थविधायकानि। स्वादिसूत्रेणैकवाक्यतया प्रातिपदिकार्थादिषु प्रथमाविधायकानीत्येकः पक्षः, स्वादिसूत्रेण विहितानां नियामकानीत्यपरः पक्षः। तत्रापि द्वौ पन्थानौ,–अर्थनियमः, प्रत्ययनियमश्चेति। तत्र 'प्रातिपदिकार्थ एव प्रथमा, कर्मण्येव द्वितीये'ति प्रत्ययनियमः। 'यत एवकारस्ततोऽन्यत्र नियमः'–इत्यभियुक्ताः। 'प्रातिपदिकार्थे प्रथमैवे'त्यादिरर्थनियमः।–उक्तयुक्तेः। तत्र 'प्रातिपदिकार्थ एव प्रथमे'ति प्रत्ययनियमपक्षे मात्रग्रहणं व्यर्थं, नियमशरीरेणैव मात्रशब्दार्थलाभात्। अर्थनियमपक्षेऽपि मात्रग्रहणं व्यर्थं, 'कर्मणि द्वितीयैवे'त्यादिनियमेन कर्मत्वाद्याधिक्येन प्रथमाया व्यावृत्तिसिद्धेरित्याहुः। तत्र पक्षान्तरे मात्रग्रहणस्यानावश्यकत्वेपि प्रत्ययनियमपक्षे तस्यावश्यकत्वमाह—**मात्रग्रहणाभाव इति**। **अपादानत्वादिबोधेऽपीति**।

कालिकार्थान्तरस्यैव व्यावृत्तिः, न तु तज्ज्ञानसमानकालिकस्यार्थान्तरस्य। अत एव 'गां दोग्धि पयः' इत्यादावपादानत्वादिबोधेऽपि द्वितीया। एवञ्च 'कर्मणि सत्येव द्वितीया, न तु तदसत्त्वे' इति नियमाकारः। तथाऽनेनापि 'प्रातिपदिकार्थसत्त्व एव प्रथमा, न तु तदसत्त्वे' इत्येव नियमः स्यात्, एवञ्चाऽनर्थकनिपातेभ्यः प्रथमा नैव स्यात्, एवञ्च तत्समभिव्याहारे 'सपूर्वायाः प्रथमे'त्यादिशास्त्रप्रवृत्तिर्न स्यात्।

तत्सत्त्वे--'कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे' इत्यर्थान्न दोषः। इदमेव मात्रग्रहणं—'कर्मणि द्वितीये'त्यादेरुक्ताकारनियमत्वे मानम्। मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते। तदकरणलाघवेन तु–'कर्मणि द्वितीयैवे'त्यर्थनियम उक्तो भाष्यादौ। स्पष्टञ्चेदं सर्वं भाष्ये इति–भाष्यप्रदीपोद्योते निरूपितमित्याहुः।

---

## ॐ चिद्रस्थिमाला ॐ

एवमग्रेऽपि। अर्थान्तरस्यैव=प्रथमातृतीयाद्यन्तार्थस्य। अव्यावृत्तेर्लक्ष्यमाह–**अत एवेति**। तादृशस्याव्यावर्तनादेवेत्यर्थः। **बोधेऽपीति**। अत एवाकडारादिति सूत्रे–'अपादानमुत्तराणि कारकाणि बाधन्ते' 'गां दोग्धि पयः'–अत्र परत्वात्कर्तुरिति कर्मत्वमिति भाष्यं सङ्गच्छते। दुहेरन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारोऽर्थः, 'ग्रामादायाति' 'ग्रामं गच्छती'त्यादौ तयोरवकाश इति तद्भावः। इदमग्रे स्फुटीभविष्यति। दृष्टान्तमुक्त्वा प्रकृतमाह—**तथेति**। अनेनापि=प्रातिपदिकार्थेति सूत्रेणापि। अनेन नियमेन प्रातिपदिकार्थत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिः स्यान्न तु तत्समानाधिकरणकर्मत्वादेरित्यर्थः।

इष्टापत्तावाह—**एवञ्चेति**। तथा नियमे चेत्यर्थः। तत्रापीष्टापत्तावाह—**एवञ्चेति**। तेभ्यस्तदनुत्पत्तौ चेत्यर्थः। 'निपातस्ये'ति वार्तिकन्तु स्वरादिप्रवर्तनेन सफलमिति भावः। ननु तत्सत्त्वे कथं निर्वाहोऽत आह—**तत्सत्त्वे त्विति**। मात्रग्रहणसत्त्वे त्वित्यर्थः। कर्मशब्दः—शक्तिपरः। कर्मत्वादियोग्येति तदर्थः। तत्सत्त्वे द्वितीयादेरेव जायमानत्वाद्योग्यतानिवेशः। **तद्रहितेति**। कर्मत्वादियोग्यत्वरहितप्रातिपदिकार्थे एवेत्यर्थः। इत्यर्थात्=इत्यर्थकप्रत्ययनियमात्। तथाचानेन कर्मत्वादिसमानाधिकरणप्रातिपदिकार्थस्यैव व्यावृत्तिर्न तु निरर्थकस्य, तस्य तद्योग्यार्थकप्रातिपदिकत्वाभावात्, तथा च तत्र प्रथमोत्पत्त्या तच्छास्त्रप्रवृत्तिर्युक्तेति न निरर्थकेऽनिष्टं, तदाह—**न दोष इति**। ननु तेन दृष्टान्तेनात्र तथा नियमः उक्तः, तत्रैव च तथा नियमे किं मानमत आह—**इदमेवेति**। अन्यथोक्तरीत्याऽस्य वैयर्थ्यं स्पष्टमेव। नन्वर्थनियमेनेदं सुवचमत आह—**मात्रेति**। चस्त्वर्थे। भाष्याद्यसमतत्वामाह—**सूत्रेति**। नन्वेवं भाष्यविरोधोऽत आह—**तदेति**। मात्रग्रहणेत्यर्थः। एवञ्च मात्रग्रहणवत्सम्बोधने चेति सूत्रं लिङ्गादिग्रहणञ्च भाष्यमते न कार्यमिति बोध्यं, तदाह—**स्पष्टञ्चेदमिति**। सिद्धान्तमतेनाह—**तत्रेति**। प्रातिपदिकादित इत्यर्थः।

## ॐ विषमपदविवृतिः ॐ

दुहेर्व्यापारद्वयार्थकत्वेऽपादानत्व-कर्मत्वोभयप्राप्तौ परत्वात्कर्मत्वम्। तदुक्तं भाष्ये–'अपादानमुत्तराणि कारकाणि बाधन्ते'–इति। **नियमाकार इति**। 'यथे'ति शेषः। ननु मात्रग्रहणे कृतेऽपि 'प्रातिपदिकार्थमात्रे सत्येव प्रथमे'ति नियमाकारपर्यवसानेनोक्तदोषतादवस्थ्यमित्याशङ्क्याह—**तत्सत्त्वे त्विति**। मात्रग्रहणसत्त्वे त्वित्यर्थः। **कर्मादियोग्येति**। यथा 'अवत्सैवे'त्यत्र व्यवच्छेद्यसबन्धयोग्यस्यैव एवपदेन व्यावृत्तिस्तथा मात्रग्रहणव्यवच्छेद्यकर्मादियोग्यार्थकस्यैव व्यावृत्तिर्मात्रग्रहणसत्त्वे इति भावः।

**सम्बोधने च** । तत्र वर्त्तमानादित्यर्थः । सम्बोधनम्—अभिमुखीकरणम् । तत्फलं—प्रवृत्ति-निवृत्ती । सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना तत्त्वासम्भवा

ॐ विजया ॐ

**सम्बोधनमिति** । सम्बोध्यत्वञ्चात्र सम्बोधनम्, सम्बोध्यत्वञ्च—स्वजन्यबोधसमवायित्वेन वक्त्रिच्छोद्देश्यत्वम् । एवञ्च—स्वोद्देश्यकेच्छाविषयीभूतबोधविषयत्वं सम्बोधनविभक्तेरर्थः । तदेकदेशे उद्देश्यतायां रामादेः स्वप्रकृत्यर्थस्यान्वयः, तादृशसम्बोधनविभक्त्यर्थस्य च क्रियायामन्वयः । रामादेश्च—क्रियाविशेषणीभूते आख्यातार्थे आश्रयेऽपि अभेदेन धर्मिपारतन्त्र्येणान्वयः । एवञ्च इतरकर्तृकपालनेच्छायां 'राम मां पाही'ति न प्रयोगः । तदेवं प्रातिपदिकार्थमात्रे वर्त्तमानात्सम्बोधनवाचिनी प्रथमेतिसूत्रार्थः । यद्वा—लिङ्गादिवत्प्रातिपदिकार्थापेक्षया सम्बोधनमात्रस्याधिकस्य भानेऽपि प्रथमेत्यर्थः । स्वोद्देश्यकेच्छाविषयीभूतबोधविषयत्वञ्च प्रातिपदिकार्थ एव, स च पदार्थोऽपि क्रियायां संसर्गतया भासते । एवञ्च—रामस्य धर्मिपारतन्त्र्येण क्रियायां स्वोद्देश्यकेच्छाविषयीभूतबोधविषयत्वसम्बन्धेन, तद्विशेषणे आख्यातार्थीभूते आश्रये चाभेदेनान्वयात्—'राम मां पाही'त्यादौ 'रामाभिन्नाश्रयवृत्तिः—रामोद्देश्यकेच्छाविषयीभूतबोधविषयो मत्कर्मकं रक्षण'मिति बोधः । प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वबोधस्तु आर्थिकः । 'राजा भव युद्धयस्वे'ति तात्पर्येण 'राजन्युद्धयस्वे'ति न प्रयोगः, राजत्वस्यासिद्धत्वेनेच्छोद्देश्यत्वासम्भवात् । 'व्रजानि

ॐ विषमपदविवृतिः ॐ

**सम्बोधने च** । **प्रवृत्तिनिवृत्तीति** । निवृत्तेरुदाहरणं—'हे चैत्र अग्रे व्याघ्रोऽस्ती'ति।'निवर्तस्वे'-

ॐ वरवर्णिनी ॐ

१ परेत्वेवं व्याचक्षते—नव्यमते प्रकृतवाक्यार्थबोधाश्रयत्वप्रकारकेच्छोद्देश्याभिन्नो रामादिः सम्बोधनविभक्त्यर्थः । रामादेः स्वोद्देश्यकप्रवर्त्तनाविषयत्वसम्बन्धेन क्रियायामन्वयः । एवञ्च 'राम मां पाही'ति वाक्यस्य प्रकृतवाक्यार्थबोधाश्रयत्वप्रकारकेच्छोद्देश्याऽभिन्नरामोद्देश्यकप्रवर्त्तनाविषयो मत्कर्मकं रक्षणमिति बोधः ।

ननु 'व्रजानि देवदत्ते'त्यादौ विधेयभूतक्रियाया अभावात्सम्बोधनफलभूतप्रवृत्तिनिवृत्त्योरभावाच्च सम्बोधनासम्भवात् तत्प्रयोज्या विभक्तिस्तत्र नव्यनये कथमित्यत आह—**व्रजानीति** । **समानवाक्यस्थत्वमिति** । देवदत्तस्य—स्वनिष्ठविषयतानिरूपितविषयतानिरूपितविषयताश्रयत्वसम्बन्धेन व्रजनक्रियायामन्वयादिति भावः । तथाहि स्वन्देवदत्तः, तन्निष्ठा प्रकारताख्या विषयता, तन्निरूपिता ज्ञाननिष्ठा विशेष्यताख्या विषयता, तन्निरूपिता व्रजननिष्ठा—कर्मताख्या विषतया, तदाश्रयत्वं—व्रजनस्यास्तीति,—तेन सम्बन्धेन व्रजनक्रियायां देवदत्तस्यान्वय इति ।

यत्किञ्चित्पदविशिष्टत्वञ्च समानवाक्यत्वं, वै० 'स्वघटितत्व' 'स्वप्रयोज्यविषयतानिरूपितविषयतानिरूपितविषयताप्रयोजकपदघटितत्व' 'स्वप्रयोज्यविषयत्वाऽनिरूपितविषयताप्रयोजकपदाऽघटितत्वै'तन्त्रितयसम्बन्धेन । समन्वय ऊहनीयः । तिङन्तविशिष्टत्वञ्च वाक्यत्वं, वै० 'स्वार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकपदघटितत्व' 'स्वेतरतिङन्ताघटितत्व' 'स्वार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकपदघटितत्वै'तन्त्रितयसम्बन्धेन । वै० 'स्वतादात्म्य' 'स्वनिरूपितत्वै' तदुभयसम्बन्धेन । यत्र साक्षादन्वयः-'राम मां पाही'त्यादौ तदर्थं—'स्वतादात्म्ये'ति । यत्र परम्परयान्वयः—'व्रजानि देवदत्ते'त्यादौ, तदर्थो—द्वितीयः सम्बन्धः । [ 'राम मां पाही'त्यत्र हि—रामस्य 'स्वोद्देश्यकप्रवर्त्तनाविषयत्व'सम्बन्धेन रक्षणे साक्षादन्वयः । 'व्रजानी'त्यादौ तु व्रजनस्य ज्ञाने, ज्ञाने चोद्देश्यतया देवदत्तस्यान्वय इति परम्परयाऽन्वयो व्रजने देवदत्तस्य— ]—इति नवीनाः ।

प्राञ्चस्तु—सम्बोधनविभक्तेरुद्देश्यतायामिच्छायां, प्रकृतवाक्यार्थविषयकबोधे च खण्डशः शक्तिः । एवञ्च—'राम मां पाही'त्यत्र रामशब्दस्य 'स्वनिष्ठत्व'सम्बन्धेनोद्देश्यतायामन्वयः, उद्देश्यतायाश्च स्वनिरूपितत्व'सम्बन्धेनेच्छायामन्वयः, इच्छायाश्च 'स्वविषयत्व'सम्बन्धेन प्रकृतवाक्यार्थबोधेऽन्वयः, तस्य च 'स्वविषयत्व'सम्बन्धेन मत्कर्मकरक्षणेऽन्वयः । तथा च रामनिष्ठोद्देश्यतानिरूपिता या इच्छा तादृशेच्छा-

दनुवाद्ये एवैषा विभक्तिः । अत एव विधेयभूतक्रियायामेवतदर्थान्वयः—उद्देश्यतया ।

ॐ विजया ॐ

देवदत्ते'त्यत्र तु 'जानीही'त्यध्याहारं विनाऽपि—'देवदत्तोद्देश्यकेच्छाविषयीभूतबोधविषयो मत्कर्तृकं व्रजन'मिति बोधस्य निर्बाधतया—'जानीही'त्यध्याहारं विनाऽपि तस्य साधुत्वमिति प्राचीनाः ।

**नवीनास्तु**-प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्य-राममितदुभयत्र रामादिप्रातिपदिकस्य खण्डशः शक्तिः, उद्देश्यस्य रामादावभेदेनान्वयः, रामादेश्च-क्रियाविशेषणीभूते तिवर्थे आश्रये-ऽभेदेनान्वयः, क्रियायाश्च—स्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन रामादेरन्वयः । प्रवर्त्तना च 'मत्कर्मकरक्षणे रामं प्रवर्त्तयानी'त्याकारिका प्रवृत्त्यनुकूला कृतिः । रक्षणे च फलताख्या कृतिविषयता । क्वचिच्च स्वोद्देश्यकनिवर्त्तनाविषयत्वसम्बन्धेन रामादेः क्रियायामन्वयः । एवञ्च 'व्रजानि देवदत्त'-त्यादौ मत्कर्तृकगमने देवदत्तोद्देश्यकप्रवर्त्तनाविषयत्वस्य बाधितत्वाज्जानीहीत्यध्याहारेणैव बोधः । अध्याहारे तु मत्कर्तृकगमनज्ञाने देवदत्तोद्देश्यकप्रवृत्त्यनुकूलकृतिविषयत्वस्याबाधितत्वात्सम्बोधन-विभक्तिस्तत्र साध्वी । अन्यथा तु तादृशः प्रयोगोऽसाधुरेव ।

एवञ्च सम्बोधनविभक्त्यन्तप्रयोगात्मकस्य स्वजन्यबोधाश्रयत्वेनेच्छोद्देश्यत्वबोधकव्यापारस्य प्रवृत्तिर्निवृत्तिर्वा फलं यत्र न सम्भवति, तत्र सम्बोधनविभक्त्यन्तप्रयोगोऽसाधुरेवेति फलितम् । अत एव 'राजा भव युध्यस्वे'त्यत्र न सम्बोधनविभक्तिः । एतदर्थमेव तादृशो-द्देश्यस्य रामादिविशेषणतयाऽभेदेन भानमङ्गीकृतम् । तादृशोद्देश्यत्वमेवाभिमुखीभवनं, तादृशो-द्देश्यत्वबोधकसम्बोधनविभक्त्यन्तशब्दप्रयोगात्मको व्यापार एवाभिमुखीकरणमित्याहुरित्युमा-नाथपण्डितः । श्रीदण्डिभट्टास्तु प्रकृतवाक्यजन्यशाब्दबोधाश्रयत्वप्रकारकेच्छोद्देश्यत्वेनबोध-नमेवाभिमुखीकरणम् । प्रवृत्तिनिवृत्त्यन्यतरप्रयोज्य—प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छो-द्देश्यत्वरूपसम्बोधनविभक्त्यर्थस्याश्रयत्वसम्बन्धेन प्रकृत्यर्थेऽन्वयः, अभेदेन प्रथमान्तार्थरामाद्यन्विता-ख्यातार्थकर्त्रादेरप्यभेदेन सम्बोधनविभक्तिप्रकृत्यर्थे रामादावन्वयः । तस्य च 'स्वोद्देश्यकप्रवर्त्तना-विषयत्व'सम्बन्धेन क्रियायामन्वयः । तथा च 'राम मां पाही'त्यतः-प्रकृतवाक्यजन्यबोधाश्रयत्व-प्रकारकेच्छोद्देश्यताश्रययुष्मच्छब्दार्थाभिन्नरामोद्देश्यकप्रवर्त्तनाविषयो मत्कर्मकं रक्षणमिति बोधः ।

प्राचीनमते च सम्बोधनप्रकृत्यर्थरामादिनिष्ठोद्देश्यतानिरूपितेच्छाप्रकारीभूताश्रयत्वनियामक-बोधविषयो मत्कर्मकं रक्षणमिति बोधः । तथा च तुल्यवित्तिवेद्यतया प्रकृतवाक्यजन्यबोधाश्रयत्व-प्रकारकेच्छोद्देश्यत्वलाभः । 'व्रजानि देवदत्ते'त्यत्र तु नव्यमते 'जानीही'त्यस्य शेषः, अन्यथाऽस्म-च्छब्दाभिन्नव्रजनकर्त्रभेदस्य सम्बोधनप्रकृत्यर्थे देवदत्ते बाधात्तदसाधुत्वापत्तिरित्याहुः । विस्तरस्तु मञ्जूषायां द्रष्टव्य इतिसङ्क्षेपः ।

ॐ चिदस्थिमाला ॐ

हरिसंमतमाह-सम्बोधनमिति । अत एवाह-सम्बोध्येति । अतएव=अस्या अनुवाद्यविषयत्वादेव ।

ॐ विषमपदविवृतिः ॐ

त्यध्याहारः। तत्त्वासम्भवादिति । तेन रूपेण सम्बोधनासम्भवादित्यर्थः। उद्देश्यतयेति । स्वोद्देश्यक-

ॐ वरवर्णिनी ॐ

विषयीभूतो यः प्रकृतवाक्यार्थविषयको बोधस्तद्विषयीभूतं मत्कर्मकं रक्षणमिति बोधः । प्राचीनमते च प्रवृत्तिनिवृत्त्योरभावेऽपि सम्बोधनं भवतीति सिद्धान्तः, एवञ्च 'व्रजानी'त्यादौ 'जानाही'ति शेषस्य नोपयोगः । तत्र च देवदत्तनिष्ठोद्देश्यतानिरूपितेच्छाविषयीभूतप्रकृतवाक्यार्थबोधविषयीभूतप्रार्थना-विषयीभूतं मत्कर्तृकं व्रजनमित्येव बोधः, प्रार्थनायां चात्र लोडिति वदन्ति । नव्यनये सम्बोधन-विभक्त्यर्थस्य प्रकृत्यर्थे प्रकारतयाऽन्वयः, प्राचीनमते तु विभक्त्यर्थे प्रकृत्यर्थस्य प्रकारतयाऽन्वय इति तत्त्वमिति श्रीगुरवश्चिपाठिपादा व्याचक्षते ।

अत एव 'राजा भव,—युद्धयस्व' 'राजन् ! युद्धयस्वे'त्यनयोर्व्यवस्थयैव[1] प्रयोगः ।
—'राम मां पाही'त्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकं प्रवर्तनाविषयो रक्षणमिति बोधः।
व्रजानि देवदत्ते'त्यादावपि 'जानीही'त्यादिः शषो बोद्धव्यः । तत्र व्रजनस्य कर्मत्वाद्देवदत्त-स्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम् । 'एकतिङ्वाक्य'मित्यस्य च श्रूयमाणैकतिङित्यर्थ इति न दोषः। उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलव्यापारश्च—सम्बोधन-विभक्त्यन्तशब्दप्रयोगरूपः। 'व्रजानी'ति प्राप्तकाले लोट् । अत एव 'गच्छे'त्याद्यध्याहारे 'धिङ् मूर्खे'त्यादौ प्रथमा, अनध्याहारे तु द्वितीयैवेति दिक् ॥ **इति प्रथमा** ॥

### ॐ चिद्स्थिमाला ॐ

एतन्मूलक एव सम्बोधने कर्तृकारकत्वव्यवहारो वृद्धानां, तस्यैव त्वंपदार्थत्वेन विनियोज्यक्रियाकर्तृत्वात्।

अत एव 'तिङ्समे'ति वार्तिकमते सम्बोधने प्रथमासिद्धिः । अधिकं मञ्जूषादौ स्पष्टम् । **अत एवेति** । व्यवस्था प्राग्वत् । 'इन्द्रशत्रो ! विवर्धस्वे'ति भागवतं त्वार्षम् । अत्र मते तस्य प्रकृत्यर्थत्वात्तत्र प्रकारत्वमेवेत्याह—**अभिमुखीति** । लेडर्थमाह—**प्रवर्तनेति** । नन्वेव 'व्रजानी'त्यादावेतदसम्भवेन तत्र निघातासिद्ध्या हरिग्रन्थासङ्गतिरत आह—**व्रजानीति** । परमतेनाह—**शेष इति** । सिद्धान्तस्त्वन्यत्र स्पष्टः । तत्र=ज्ञाने । **समानेति** । लौकिकोक्तलक्षणसत्त्वात् । नन्वेवमपि तिङन्तद्वयसत्त्वेन तन्नियामकपारिभाषिकैकवाक्यत्वस्या-भावात्तदसिद्धेरेवात आह—**एकेति** ।—बहुव्रीहिणा श्रूयमाणसमानानुपूर्वीकैकतिङन्तघटितमित्यर्थः । इदमपि प्राचीनरीत्या, वस्तुतो वाक्यैकदेशन्यायेन तत एव तद्बोध इति न श्रूयमाणत्वविशेषणोपयोग इत्यन्यत्र स्पष्टमिति बोध्यम् । न दोषः=निघातासिद्धिरूपः । नन्वेवमप्युद्देश्यत्वलाभः कुतोऽत आह—**उद्देश्येति** ।

ननु कोऽसौ व्यापारोऽत आह—**अभिमुखीति** । नन्वेव 'व्रजानी'त्यत्र कथं लोट्?, ज्ञानस्यैव विधेयत्वेनात्र विध्याद्यसम्भवादत आह —**प्राप्तेति** । प्रैषेति सूत्रेण । अत एव=अस्य क्रियान्वयादेव । एवञ्च यदत्र हरिकैयटदीक्षितादिभिरन्यथोक्तं तच्चिन्त्यमिति स्पष्टं मञ्जूषादौ, तदाह—**इति दिगिति** । **इति प्रथमा** ।

### ॐ विषमपदविवृतिः ॐ

प्रवर्तनाविषयतयेत्यर्थः । **व्यवस्थयेति** । राजत्वस्यासिद्धावाद्यः, सिद्धौ च द्वितीयः प्रयोग इत्यर्थः ।

सम्बोधनम्—अभिमुखीभवनानुकूलो व्यापारस्तत्र विशेष्यभूतव्यापारस्याविवक्षयाऽभिमुखीभवनमेव विभक्तिद्योत्यं,विशेषणविशेष्यभावव्यत्यासेनाभिमुखीकरणप्रयोज्यमभिमुखीभवनं विभक्तिद्योत्यं वा,तच्च प्रकृत्यर्थविशेषणं,प्रकृत्यर्थश्च स्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धेन रक्षणे विशेषणमिति । ननु 'व्रजानि देवदत्ते'त्यत्र व्रजने देवदत्तस्य प्रवृत्तिनिवृत्त्योरभावात्-'तत्फलं प्रवृत्तिनिवृत्ती' इत्यसङ्गतमत आह—**जानीहीत्यादिः शेष इति** । शेषशब्दार्थो नाध्याहारः, किन्तु वाक्यैकदेशन्यायेन श्रूयमाणस्य तदर्थान्तर्भावेण वृत्तिः, तेन 'श्रूयमाणैकतिङित्यर्थः'—इति वक्ष्यमाणग्रन्थेन न विरोधः ।

**उद्देश्यविधेयभाव इति** । स्वोद्देश्यकप्रवर्तनाविषयत्वमित्यर्थः। [प्रवर्त्तना=प्रेरणा]। प्राचीनमते तु-देवदत्तनिष्ठं यदभिमुखीभवनं तदनुकूलव्यापारविषयीभूतं व्रजनमिति बोधः,सम्बोधनञ्च विभक्तिवाच्यं, 'जानीही'त्यस्य न शेषः। 'तत्फलं प्रवृत्तिनिवृत्ती'इत्यपि तन्मते नास्ति । न चैवं सति 'देवदत्तयज्ञदत्त-विष्णुमित्रास्त्वं पचे'ति प्रयोगापत्तिरितिवाच्यं, सम्बोध्यैकदेशस्य युष्मच्छब्देन परामर्शानङ्गीकारात्, तथैव व्युत्पत्तेरिति बोध्यम् । 'व्रजानी'त्यत्र विध्यादेरसम्भवात्कथं लोडित्याशङ्क्याह—**प्राप्तकाले इति** । **अत एवेति** । विधेयभूतक्रियायामेवान्वयादेवेत्यर्थः । **इति प्रथमा** ।

---

१ यौवराज्यसमये 'राजा भवे'त्यस्य, राज्यारोहणानन्तरञ्च द्वितीयस्य प्रयोग इति हि व्यवस्था ।

**कारके ।** कारकत्वं—क्रियाजनकत्वं, भाष्ये—'करोति-क्रियां निर्वर्त्तयती'ति-व्युत्पत्तिप्रदर्शनात् । 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यादौ ब्राह्मणस्य न कारकत्वं, पुत्रेणाऽन्यथासिद्ध्या तत्त्वाभावात् ।

अत एवैषां क्रियायामेवान्वयः, 'क्रियाजनक'मिति ज्ञाते—कां ता क्रियेत्याकाङ्क्षोदयेन, क्रियाया जनकाकाङ्क्षया च—तत्रैवान्वयस्यौचित्यात् ।

सर्वेषाञ्च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोध्यम् ।

❀ विजया ❀

**क्रियाजनकत्वमिति ।** जन्यजनकभावघटितक्रियाकारकभावसम्बन्धेन क्रियान्वयीत्यर्थः । अत एव 'क्रियायामेवान्वयः' इत्यग्रिमग्रन्थसङ्गतिः, जनकत्वञ्चात्र कारणत्वरूपं विवक्षितं, तत्फलमाह—**ब्राह्मणस्येति ।**

**अन्यथासिद्ध्येति ।** चतुर्थ्याऽन्यथासिद्ध्या कुलालजनकस्येवेति भावः । नन्वेवमपि 'ब्राह्मणस्य पितरं पन्थानं पृच्छती'त्यत्र ब्राह्मणस्य कारकत्वं दुर्वारं, न च रासभस्येव पञ्चमान्यथासिद्ध्या निर्वाह इति वाच्यं, 'ब्राह्मणपितुरेव मया पन्थाः प्रष्टव्यो नान्यतः' इति प्रतिज्ञावत्पुरुषकर्तृकमार्गप्रश्नबोधके 'ब्राह्मणस्य पितरं पन्थानं पृच्छती'ति वाक्ये कारकत्वापत्तेस्तथापि दुरुद्धारत्वात्, तत्र ब्राह्मणपितृत्वेनैव मार्गप्रश्नं प्रति कारणत्वादिति चेन्न; दण्डत्वादेरिव प्रथमया ऽन्यथासिद्ध्यैव तन्निरासम्भवात् ।

**औचित्यादिति ।** क्रियात्वस्य साध्यत्वरूपत्वेन साध्यतायाश्च जन्यत्वविशेषरूपतया तस्य च जनकांशे नित्यसाकाङ्क्षत्वात्तत्र तदन्वयस्यौचित्यं स्पष्टमेवेत्याशयः ।

**स्वस्वावान्तरेति ।** अत एव 'वह्निना स्थाल्यां तण्डुलं पचति चैत्रः' इत्यादौ तत्तत्कार्यं तत्तदितरेण नोत्पद्यते इत्यनुभवोऽप्यनुकूलः ।

**प्रधानक्रियेति ।** प्राधान्यञ्चात्र—फलजनकत्वरूपम् । यथा 'वह्निना स्थाल्यान्तण्डुलं पचति चैत्र' इत्यत्र विक्लित्तिजनकतया पच्धातूपात्तव्यापारस्य प्राधान्यम् ।

❀ चिदस्थिमाला ❀

प्राचीनसकलग्रन्थासाङ्गत्यायाह—**क्रियेति ।** कर्मणो निमित्तस्य ब्राह्मणस्याकथितञ्चेति कर्मत्वापत्तिस्तच्च सूत्रप्राप्तापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवर्तते इत्यग्रे स्पष्टीभविष्यति । अत एव=क्रियायास्तज्जन्यत्वादेव । एषां=कारकाणाम् । तदेवोपपादयति-**क्रियेति ।** तस्या अप्याकाङ्क्षायामुभयाकाङ्क्षासत्त्वायाह—**क्रियाया इति ।**

ननु कथमिदं सर्वेषामित्यत आह—**सर्वेषाञ्चेति ।** यत्तु क्रियाजनकत्वं न कारकत्वं, पूर्वोदाहरणे पुत्रस्य कारकत्वाभावापत्तेः, तं विना प्रश्नक्रियायाः अनिष्पत्तेस्तस्यापि जनकत्वमिति चेत्तथापि सम्प्रदानेऽव्याप्तिः, अविद्यमानसम्प्रदानकस्यापि दानस्य जायमानत्वेन तस्य नियतपूर्ववृत्तित्वाभावात् । नच यागस्य पूर्ववृत्तित्वाभावेऽपि अपूर्वद्वारा जनकत्ववत्सम्प्रदानादिज्ञानस्य पूर्ववृत्तित्वेन तद्वारा तस्यापि जनकत्वं सूपपादमिति वाच्यं, क्रियानिष्ठविषयतानिरूपकविषयताश्रयत्वरूपक्रियान्वयित्वापेक्षयाऽनन्यथासिद्धनियतपूर्ववर्तित्वघटितक्रियाजनकत्वस्य गुरुत्वात् । आश्रयरूपकृदर्थोपपत्तिस्तु जनके इवान्वयिन्यपि सूपपादा, 'असदुत्पद्यते' इति वादे 'घटो जायते' 'घटं करोती'त्यादौ कर्तृकर्मणोरव्याप्तेश्चेति **दीक्षित-भूषण-कृदा·**

❀ विषमपदविवृतिः ❀

**क्रियाया इति ।** साध्यत्वेन भानात्साधनाकाङ्क्षेति भावः । ननु क्रियाशब्दस्य प्रधानक्रियायां मुख्यत्वेन कर्मादिकारकाणां तदनिर्वर्तकत्वेन कथं कारकत्वमित्यत आह—**सर्वेषाञ्चेति ।**

असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालकत्वेनैव जनकत्वम् । एवं 'स्तोकं पचती'त्यादौ फलस्यापि ।

'घटं करोति' 'स्मरती'त्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोध्यम् ।

ॐ विजया ॐ

-नतु 'जनिष्यमाणपुत्रस्य गां दास्यामी'त्यादौ कथं सम्प्रदानत्वं, तस्येदानीमसन्निहितत्वेन कारकत्वा-

ननु सम्प्रदानासत्त्वेऽपि तज्ज्ञानमात्रेणैव तदुद्देशेन दानदर्शनात्सम्प्रदानस्य क्रियाजनकत्वा-भावेन कारकत्वं न स्यादत आह—असन्निहितेति । स्वज्ञानपूर्वकालत्वेनेति । सम्प्रदानज्ञान-वर्तिन्या दानजनकतायाः सम्प्रदाने आरोप इति भावः । नन्वेवमपि घटस्यानुत्पत्तिदशायामेव 'घटं करोती'ति प्रयोग इष्यते, स इदानीं न स्यात्, तदानीं घटाभावेन तत्र क्रियाजनकत्वा-सम्भवात् । एवं 'घटं स्मरती'त्यादावपि घटे स्मरणजनकत्वासम्भवात्कारकत्वानापत्तिरत आह—घटमिति । अत्र-'घटं करोती'त्यत्र मृदादिवृत्तिजनकत्वस्य, 'घटं स्मरती'त्यत्र सम्बन्धिज्ञाननिष्ठ-जनकत्वस्य च घटे आरोप इति भावः । अत्र सर्वत्रारोपे प्रमाणन्तु—तस्य तस्य भाष्यादौ कारकत्वेन व्यवहार एव । एतेन 'स्वेच्छयैव जनकत्वारोपेण कारकत्वे सर्वस्यैव कारकत्वापत्ति'रित्यपास्तम् ।

केचित्तु—'करोति क्रियां निर्वर्तयती'त्यस्य—क्रियाविषयकनिराकाङ्क्षबोधोत्पादक इत्यर्थः, ज्ञानमात्रं प्रति विषयस्य कारणत्वात् । क्रियाविषयकबोधस्य तत्तत्कारकावगाहित्वे हि—'किं कर्तृकेय'-मित्याद्याकाङ्क्षा शाम्यति । क्रियापदस्य क्रियाविषयकबोधपर्यन्तार्थस्वीकारवल्लक्षणपदस्यापि लक्षणविषयकबोधपर्यन्तार्थस्वीकारेण च-'मयास्य लक्षणं कृत'मित्यादिव्यवहार उपपद्यते । तत्र हि वाक्यविशेषरचनद्वारा पृथिव्यादिलक्षणज्ञानमेव तेन क्रियते, न तु लक्षण, तस्य वस्तुनिष्ठत्वेन कर्तुमशक्यत्वात् । एवञ्च क्रियाविषयकनिराकाङ्क्षबोधजनकत्वं कारकपदस्य योगार्थतावच्छेदकम् । क्रियाया अपि स्वविषयकनिराकाङ्क्षबोधजनकत्वात्तत्र कारकत्वातिप्रसङ्गभङ्गाय कारकपदवत्त्वं रूढ्यर्थतावच्छेदकमित्यपि स्वीकार्यम् । क्रियाया अपि क्रियाजनकत्वस्य 'यागाय याति' 'द्रष्टुं याती'-त्यादौ दर्शनात्तत्र कारकत्वव्यवहारापत्त्या 'क्रियाजनकत्वं कारकत्व'मिति कल्पेऽपि कारकपदवत्त्वस्य रूढ्यर्थतावच्छेदकत्वं स्वीकार्यमेवेत्याहुः

बौद्धेति । ज्ञानमात्रं प्रति विषयस्य कारणतया घटोत्पत्तेः पूर्वं घटस्याभावे तद्विषयकज्ञाना-नुत्पत्तिप्रसङ्ग इति बौद्धघटस्य कल्पनेत्याशयः । बौद्धघटस्यानुत्पादनीयतया नियतपूर्ववर्त्तितया ज्ञानजनकत्वं सुस्थमिति श्रीदण्डिभट्टाः । परे तु—एवं बौद्धघटादेः स्मृत्यादिनिष्पादकत्वेऽपि बौद्धघटाद-रेव कर्मत्वं स्यान्न बाह्यघटादेरिति स्वज्ञानस्यैव पूर्वकालत्वेनात्रापि क्रियाजनकत्वं बोध्यमित्याहुः ।

ॐ चिदस्थिमाला ॐ

दयत्तदसदित्याह—असन्निहितेति । तावतैव दानक्रियानिष्पत्तेः । आदिना 'घटो जायते' इत्यादिक्रिया-

ॐ विषमपदविवृतिः ॐ

सम्भवादित्यत आह—असन्निहितेति । स्वज्ञानपूर्वकालत्वेनेति । स्वज्ञानस्य पूर्वकालवृत्तित्वेने-त्यर्थः । ननु पुत्रेणेव स्वज्ञानेन तस्यान्यथासिद्धत्वमिति चेन्न, ज्ञानस्य सम्प्रदानत्वासम्भवेन ततोऽस्य विशेषात् । फलस्यापीति । वस्तुतः 'स्तोकेन पचति,' 'ज्योतिष्टोमेन यजेते' त्यादौ भावनाभाव्य-तृप्तिस्वर्गादिनिर्वर्तकत्वेन करणत्वस्येव 'स्तोकं पचती'त्यादौ फलस्य भावनाजनकत्वमुपपादनीयम् ।

इयांस्तु विशेषः—करणत्वेन विवक्षायां तृतीया, उत्पाद्यत्वेन विवक्षायां द्वितीयेति । अत एव 'पचती'त्यस्य पाकेन करोति, पाकं करोतीति द्वेधा विवरणं दृश्यते । बौद्धघटादेरिति । तदस्यास्त्या-स्मि'न्निति सूत्रे भाष्यकैयटयोर्बौद्धपदार्थान्—अङ्गीकृत्य तत्र शब्दानां शक्तिमभ्युपेत्य तत्सादृश्या-द्बाह्यपदार्थेषु घटादिशब्दप्रयोग इति सविस्तरं निरूपितम् । बौद्ध इति । स्मृतिं प्रति ज्ञानद्वारा

**कर्तुरीप्सित** । 'ईप्सित'शब्दोऽत्र क्रियापरो, नाभिप्रेतपरो रूढः । स्पष्टञ्चेदं— 'वारणार्थाना'मित्यत्र भाष्यकैयटयोः ।

'कर्तु'रिति 'क्तस्य च वर्तमाने'इति कर्तरि षष्ठी—।

॥ विजया ॥

अत्र=कर्तुरीप्सितसूत्रे । इदमुपलक्षणं—'तथायुक्तं' 'स्पृहेरीप्सित ' 'वारणार्थाना'मित्यत्रापि क्रियापर एव सः । क्रियापरः=यौगिकः । एवञ्च सम्बन्धार्थकादाप्धातोः सनि निष्पन्नतया सम्बन्धेच्छाविषयपर ईप्सितशब्दो, न रूढः =नाभीष्टार्थकः । 'अभीष्टेऽभीप्सितं हृद्य'मितिकोशादभिपूर्वस्यैवाभीष्टे रूढत्वादीप्सितपदस्य रूढौ मानाभावादित्यर्थः । रूढत्वे हि कर्तृषष्ठ्यन्तकर्तृपदस्यानन्वयापत्तिः, आक्षिप्तक्रियान्वयापेक्षया श्रौतक्रियान्वयस्यैव युक्तत्वादित्याशयः ।

भाष्यकैयटयोरिति । तथा च भाष्यम् ''-'वारणार्थानामीप्सितः,' किमुदाहरणं ?—'मापेभ्यो गा वारयति' । भवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः, यस्य तु खलु गावो न माषाः,कथन्तस्य माषा इप्सिताः स्युः ?—तस्याऽपि माषा एवेप्सिताः, आतश्चेप्सिताः—यदेभ्यो गा वारयति—'' इति । तत्र च ''—अभिप्रेतपर्यायमीप्सितशब्दं मत्वोक्तं—भाष्ये—'कथन्तस्य माषा ईप्सिताः स्यु रिति । 'माषा एवेप्सिता'इत्यत्र—एवकारो भिन्नक्रमः, माषा ईप्सिता एवेत्यर्थः। अन्यथा गवामपीप्सिततया 'माषा एवे'त्यसङ्गतमेव स्यात् । ईप्सितशब्दोऽत्र क्रियाशब्दः, यौगिक इति यावत् । एवञ्च तत्र वारणक्रियया परकीया अपि माषा वारयितुरीप्सिता भवन्ति, मा नशन्नेते गोभक्षणेनेति— एतेभ्यो गा वारयति—'' इत्यादिरीत्या च कैयटेनोक्तम् । एवञ्चेप्सितशब्दस्य सम्बन्द्धुमिष्यमाणमित्यर्थ इतीप्सितशब्दस्य यौगिकत्वं स्पष्टमेव भाष्यकैयटाभ्यां लब्धमिति तत्त्वम् ।

केचित्तु निरुक्तभाष्यात्स्पष्टन्तदलाभात्तमब्ग्रहणमेव निरुक्तरीत्या यौगिकत्वे मानमित्याहुः ।

**कर्तरि षष्ठीति** । कर्तृपदश्चात्र व्यापाराश्रयत्वरूपस्वातन्त्र्यपुरस्कारेण बोधकं, कर्तरि षष्ठी च कर्तृ-

॥ चिद्स्थिमाला ॥

निष्ठजन्यतानिरूपकजनकत्वमखण्डोपाधिरूपं तत्र निविष्टमिति न गौरवमिति बोध्यम् ।

**अत्रेति** । इदमुपलक्षणं-'तथायुक्तं' 'स्पृहेरीप्सितः' 'वारणार्थाना'मिति सूत्राणामपि । **रूढ इति** । अय भावः 'कर्तु'रिति कर्तृषष्ठ्येव युक्ता न शेषे षष्ठी, 'घटे नैल्यं करोती'त्यत्रापि घटे परत्वात्कर्मत्वापत्तेः, 'जासिनिप्रे'ति शेषे कर्मणि षष्ठीविधानाल्लिङ्गाच्च, एवञ्चास्या क्रियाशब्दत्वे 'कर्तु'रिति कर्तृकारकानन्वयापत्तिस्तत्साधनीभूतक्रियाया अभावे केवलपदार्थस्याभीष्टत्वासम्भवेनानन्वयापत्तिश्च, नच पान–भोजनासन–भोगाद्यर्थमेव वस्तुनोऽभीष्टत्वेनाक्षिप्तक्रियायामेव सा कारकषष्ठीति वाच्यं, श्रौतक्रियामादाय तथैव युक्तत्वात्, घटे इत्यादिप्रागुक्तदोषद्वयापत्तेश्च । एतेन 'रूढिर्योग'मिति न्यायेन तथोक्तमिति, पङ्कजादिवद्योगरूढिरिति च निरस्त, तद्भेदाङ्गीकारे फलाभावाच्चेति । अत्र संमतिमाह—**स्पष्टञ्चेदमिति** । अत एवाह—**कर्तुरिति** ।

॥ विषमपदविवृतिः ॥

जनकत्वायोगादेवमुक्तम् । पूर्वकालत्वेन=अव्यवहितपूर्वकालस्थत्वेन । सत्कार्यवादे तु न कश्चिद्दोष इति बोध्यम् । **कर्तुरीप्सिततमं कर्म** । **नाभिप्रेतपर इति** । कोशे 'अभीष्टेऽभीप्सित'मिति अभिपूर्वस्यैव तत्र रूढत्वात् । **कर्तरि षष्ठीति** । ननु प्रकृत्यर्थकर्तुः प्रत्ययार्थकर्तरि कथमभेदान्वयो 'घटो घट'

॥ वरवर्णिनी ॥

१ अत्राहुः–श्रीगुरुचरणाः–ननु कर्तुरित्यत्र षष्ठ्याः कर्त्रर्थकतया प्रकृतिप्रत्ययार्थयोः कर्त्रोः 'घटो घट' इति वदभेदान्वयो न स्यात्, 'तद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारण'मिति व्युत्पत्तेरिति चेन्न; 'सार्थाद्धीयते' इत्यादौ कर्मणि लकारसिद्धयेऽत्र सूत्रे कर्तृपदस्य स्वतन्त्रोपलक्षकतया स्वतन्त्राभिन्नो यः कर्तेत्येवं शाब्दबोधे बाधकाभावात् ।

॥ विजया ॥

पदवत्त्वेन बोधिकेति विरूपोपस्थित्याऽनयोरभेदान्वयः सिद्धः। अत्रत्यकर्तृपदस्य स्वातन्त्र्यपुरस्कारेण बोधकत्वादेव 'पर्वतश्चैत्रं त्यजति' 'सार्थ एनं त्यजती'त्यादयर्थे–'पर्वताद्धीयते चैत्रः' 'सार्थाद्धीयते चैत्र' इत्यादौ 'अपादाने चाहीयरुहो'रिति ज्ञापकेन–[ त्यागकर्तृत्वेऽपि पर्वतसार्थयोः कर्तृसञ्ज्ञां बाधित्वा–] अपादानसञ्ज्ञायामपि पर्वतसार्थयोर्निरुक्तस्वातन्त्र्यस्याक्षततया निरुक्तकर्तृत्वेन 'कर्तुरीप्सिततम'मित्यनेन चैत्रादेः कर्मसञ्ज्ञायां हीयते इत्यत्र चैत्रादिरूपकर्मणि लकारः सिद्धः। अत्रत्यकर्तृपदस्य स्वान्त्र्यपुरस्कारेणाबोधकत्वे–[कर्तृत्वशक्तिमत्त्वेनैव बोधकत्वे] तु सार्थपर्वतयोः कर्तृसञ्ज्ञाया अभावात्कर्तृपदवत्त्वाभावेन सङ्केतसम्बन्धेन कर्तृपदवत्पर्वतादिवृत्तिव्यापारप्रयोज्यफलाश्रयत्वसम्बन्धप्रकारकेच्छोद्देश्यत्वस्य चैत्रादावभावेन चैत्रादेः कर्मसञ्ज्ञाया असिद्ध्या कर्मणि लकारो दुर्लभ एव स्यात्। सार्थादेरपादानत्वन्तु–'अपादानवाचकात्तसिः स्यात्, हीयरुहनिरूपितापादानं वर्जयित्वे'त्यर्थकात् 'अपादाने चाहीयरुहो'रित्यत्राहीयरुहेतिपर्युदासाश्रयणात्–कर्तृसञ्ज्ञां बाधित्वाऽपादानसञ्ज्ञायाः प्रवृत्तेः स्वीकारादेव। अन्यथा हाधातोस्त्यागार्थकतया पर्वतसार्थयोस्तत्कर्तृतया चैत्रादेश्च तत्कर्मतया तद्योगेऽपादानसञ्ज्ञाया अप्रसक्त्या पर्युदासो व्यर्थ एव स्यात्। न चैवं कर्तृपदस्य निरुक्तरीत्या स्वातन्त्र्यपुरस्कारेणैव बोधकत्वेऽपि तदुत्तरषष्ठ्याः कर्तृत्वशक्तिमत्त्वेनैव बोधकतया सार्थपर्वतयोश्चातथात्वात्पुनरपि चैत्रादेः कर्मत्वमनेन न स्यादिति कर्मणि लकारो दुर्लभ एवेति वाच्यं, प्रकृते तदुत्तरषष्ठ्या आश्रयमात्रार्थकतया प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यतया चैत्रादेः कर्मत्वस्य सुलभत्वात्।

केचित्तु-वैयाकरणमते शब्दस्यापि घटादिपदजन्यबोधे भासमानतया निरूपोपस्थित्या 'कर्तु'रित्यत्र प्रकृत्यर्थप्रत्ययार्थयोरभेदान्वय उपपद्यते। नैयायिकैरपि–घटपदस्य घटपदवाच्ये घटे, कलशपदस्य च कलशपदवाच्ये घटे लक्षणायां विरूपोपस्थित्याऽभेदान्वय इष्यते एव। न चैवं सर्वत्रैवाभेदान्वय उपपादयितुं शक्यते इति वाच्यं, 'घटो घट' इत्यादौ शब्दस्य भाने स्वीकृतेऽपि विरूपोपस्थितेरभावादभेदस्य वक्तुमशक्यत्वात्। केचित्तु–'आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वे'तिकारिकोक्तेः षष्ठ्या आश्रयमात्रमर्थ इति 'नीलघटो घट' इतिवदभेदान्वयमुपपादयन्तीत्युमानाथसुधियः।

॥ वरवर्णिनी ॥

किञ्च वैयाकरणनये 'पदमपि पदार्थः' इति नियमस्य सत्त्वेन कर्तृपदाभिन्नो यो व्यापाराश्रयस्तदभिन्नो यो ङस्पदाभिन्नो व्यापाराश्रय इत्येवं शाब्दबोधस्य 'नीलघटो घट' इतिवदुपपत्तेश्च। किञ्च 'अभिहितः सोऽर्थोऽन्तर्भूतः' इति भाष्येण करोतेस्तृचि अनुद्भूतकर्तृत्वस्य बोधः, ङस्पदेनोद्भूतकर्तृत्वस्य बोध इति तयोर्वैरूप्येणाभेदबोधे बाधकाभावः—इत्येवं व्याचक्षते।

अत्रेदं बोध्यम्–आप्धातोः सम्बन्धरूपोऽर्थः, सन्प्रत्ययार्थ इच्छा, क्तप्रत्ययार्थ आश्रयत्वम्। सम्बन्धश्च प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वरूपकर्तृपदार्थकुक्षिप्रविष्टव्यापारद्वारक एव। यद्यपि व्यापारेण साक्षादन्वयः कर्तुमशक्यस्तस्य क्षणिकत्वात्तथापि स्ववृत्तिव्यापारविशिष्टफलाश्रयत्वसम्बन्धेन तस्यान्वये बाधकाभावः। वै० 'स्वप्रयोज्यत्व' 'स्ववाचकधातुवाच्यत्वो'भयसम्बन्धेन। अत्र सम्बन्धे स्वप्रयोज्यत्वांशस्तमपा लभ्यः, —एवञ्च 'वारणार्थानामीप्सित'इत्यादौ तमबभावात् स्वप्रयोज्यत्वांशालाभात्स्ववाचकधातुवाच्यत्वसम्बन्धेनैव व्यापारविशिष्टफलाश्रयत्वं–सम्बन्धः। आप्धात्वर्थसम्बन्धस्य च स्वप्रकारकत्वसम्बन्धेन सनर्थेच्छायामन्वयः, इच्छाया उद्देश्यत्वेन क्तप्रत्ययार्थे आश्रयेऽन्वयः। तमबर्थश्चातिशय आप्धात्वर्थे सम्बन्धे एव विवक्षितः,—'लघुप्रयत्नतर' इत्यत्र लघ्वर्थेऽतिशयवत्। न तु सनर्थे इच्छायामतिशयो विवक्षितः, अनिच्छया ग्रामादिगमने 'ग्रामं गच्छती'ति प्रयोगानापत्तेः, इच्छायामतिशयितत्वाभावात्। केचित्तु—क्तप्रत्ययस्योद्देश्यत्वमर्थः, तत्र चाप्धात्वर्थसम्बन्धस्य स्वप्रकारकत्वसम्बन्धेनान्वयः, कर्तुश्च स्ववृत्तित्वसम्बन्धेन व्यापारेऽन्वय इत्याहुः। एवञ्च–कर्तृवृत्तिव्यापारविशिष्टफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्यर्थः। वै० 'स्वप्रयोज्यत्व' 'स्ववाचकधातुवाच्यत्वो'भयसम्बन्धेनेति श्रीगुरुचरणाः।

आप्नोतेः सन्नन्त'न्मतिबुद्धी'ति वर्त्तमाने कर्मणि क्तः । 'मतिः—इच्छे'ति तत्राऽऽकरः । एवञ्च कर्त्राऽऽप्तुमिष्यमाणं कर्मेत्यर्थः। आप्तिश्चात्र सम्बन्धः, स च कर्तृपदार्थ-

॥ विजया ॥

एवञ्चेति । 'कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयः कर्मे'त्यर्थ' इति स्थितम् । फलाश्रयत्वञ्च फलतावच्छेदकसम्बन्धेन बोध्यम्, एवञ्च कालिकसम्बन्धेन पचनस्य विक्लित्तिरूपफलाश्रयत्वप्रकारकेच्छा इष्यत्वेऽपि 'पचनं पचती'त्यादौ न प्रयोगः ।

फलतावच्छेदकसम्बन्धश्च न फलनिष्ठकार्यतावच्छेदकः सम्बन्धः, कालिकसम्बन्धेन फलनिष्पत्तौ कालस्यापि हेतुतया कालिकसम्बन्धस्यापि फलतावच्छेदकसम्बन्धतापत्तेः । किञ्च—त्यजति-विभजत्योः फलतावच्छेदकसम्बन्धस्यैक्ये 'ग्रामं त्यजती'तिवत् 'ग्रामाद्विभजते' 'चैत्राद्विभजते' इत्यादौ कर्मत्वापत्तेः, नहि तयोर्भेदेन कार्यकारणभावो विद्यते । किञ्च विभजतेरपि विभागानुकूलव्यापारार्थकत्वं, त्यजतेरपि विभागानुकूलव्यापारार्थकत्वमिति विभागनिष्ठकार्यतावच्छेदकसंसर्गस्य समवायस्य फलतावच्छेदकत्वे उभयोरपि सकर्मकत्वापत्तिरकर्मकत्वापत्तिर्वा स्यात्, फलतावच्छेदकसम्बन्धेन फलाधिकरणवृत्तिव्यापारार्थकत्वस्यैवाकर्मकत्वात्, फलतावच्छेदकसम्बन्धेन फलव्यधिकरणव्यापारार्थकत्वस्यैव सकर्मकत्वाच्च ।

किन्तु—तत्तद्धातुनिष्ठशक्तौ व्यापारे फलनिरूपितं स्वरूपसम्बन्धविशेषरूपमनुकूलत्वं, फलाधिकरणञ्च भासते, तत्र फलनिरूपिताऽधिकरणता यत्सम्बन्धावच्छिन्ना प्रविष्टा स समवायादिः फलतावच्छेदकः । एवञ्च शक्यतावच्छेदकानुपूर्वीभेदे शक्तिभेदात्—विभजतिनिष्ठा शक्तिर्भिन्ना, त्यजतिनिष्ठा शक्तिश्च भिन्नेति—त्यजतिनिष्ठशक्तौ विभागाधिकरणता प्रतियोगित्वसम्बन्धावच्छिन्नैव प्रविष्टा, विभजतिनिष्ठशक्तौ तु अनुयोगित्वसम्बन्धावच्छिन्नैव प्रविष्टेति प्रतियोगित्वरूपफलतावच्छेदकसम्बन्धेन विभागरूपफलाधिकरणग्रामादिव्यधिकरणचैत्रादिसमवेतव्यापारवाचकत्वेन त्यजेः सकर्मकत्वम् । अनुयोगितारूपफलतावच्छेदकसम्बन्धेन फलाधिकरणचैत्रसमवेतव्यापारवाचकत्वेन विभजतेरकर्मकत्वं सिद्धम् ।

॥ चिदस्थिमाला ॥

पुनर्बुद्धिग्रहणादाह—**मतिरिति** । व्याप्तिनिरासायाह—**आप्तिश्चात्रेति** । यत्तु कर्मत्वादीनां शब्द-

॥ विषमपदविवृतिः ॥

इतिवदिति चेन्न, 'हरिं भजती'त्यादिप्रयोगसमवायित्वार्थकर्तुः प्रकृत्यर्थत्वेनाप्नोतिकर्तुः षष्ठ्यर्थत्वेन तयोर्भेदात् । **सन्नन्तादिति** । 'ग्राममाप्नोती'त्यादावाप्नोतेः संबन्धानुकूलव्यापारे शक्तत्वेन तमादायेच्छायाः समानकर्तृकत्वं बोध्यम् । 'ईप्सित'मित्यत्र तु 'पिपक्षितस्तण्डुल' इत्यादाविव व्यापारजन्यफलसम्बन्ध आप्नोत्यर्थः । **अत्र सम्बन्धइति** । फलसम्बन्ध इत्यर्थः । योग्यता-

॥ वरवर्णिनी ॥

**एवञ्चेति** । अत्राहुर्दुण्डिभट्टाः—फलाश्रयत्वञ्च फलतावच्छेदकसम्बन्धेन ग्राह्यं, फलतावच्छेदकसम्बन्धश्च तत्तद्धातुभेदाद्भिन्नः । यथा—'ग्रामङ्गच्छती'त्यादावनुयोगित्वविशिष्टः समवायः फलतावच्छेदकसम्बन्धः,

अत एव संयोगस्य द्विष्ठत्वेन तस्य समवायेन ग्रामे इव चैत्रेऽपि सत्त्वेऽपि 'चैत्रो ग्रामङ्गच्छती'तिवच्चैत्रः स्वं गच्छतीति न प्रयोगः,अनुयोगित्वविशिष्टसमवायस्य चैत्रेऽसत्त्वात्। एवं 'ग्रामं त्यजती'त्यादौ प्रतियोगित्वविशिष्टः समवायः फलतावच्छेदकः । 'ग्रामाद्विभजते' इत्यादौ चानुयोगित्वविशिष्टः समवायः फलतावच्छेदकः । अत एव त्यजिविभज्योरुभयोर्विभागावच्छिन्नव्यापारवाचकत्वेऽपि 'ग्रामन्त्यजती'तिवत्—'ग्रामं विभजती'ति न प्रयोगः,ग्रामस्यानुयोगित्वविशिष्टसमवायेन विभागावच्छिन्नव्यापारवत्त्वाभावात्। अत्र च फले कर्तृनिष्ठव्यापार-प्रयोज्यविभागरूपफलाश्रयत्वस्य सत्त्वेन त्यजेः सकर्मकत्वम्। न च चैत्रमैत्रोभयकर्तृकविभागस्थले प्रतियोगित्व-

विशेषणीभूतव्यापारद्वारक एव, उपस्थितपरित्यागेनानुपस्थितकल्पने मानाभावात्।

※ विजया ※

ननु यत्रोभयव्यापारजन्य उभयनिष्ठप्रतियोगितानुयोगिताक एको विभागो जन्यते तत्र 'चैत्रान्मैत्रो विभजते' इत्यादावनुयोगितासम्बन्धेन चैत्रस्यापि विभागाश्रयत्वेन चैत्रस्य कर्मत्वापत्तिरिति चेन्न; फलव्यापारयोः संसर्गतया भासमान-स्वसामानाधिकरण्य-घटकीभूतफलाधिकरणतावच्छेदकत्वेन तत्तत्पदजन्यशाब्दबोधे यः सम्बन्धो विषयः स एव फलतावच्छेदक इत्यस्य स्वीकारणाऽदोषात्। 'चैत्रान्मैत्रो विभजते' इति वाक्यजन्यशाब्दबोधे तात्पर्यादिना मैत्रवृत्तिव्यापारस्यैव बोध्यतया मैत्रवृत्तिरेवानुयोगिता तादृशवाक्यघटकविभजतेः फलतावच्छेदकः सम्बन्धः। एवञ्च प्रयोगभेदेन फलतावच्छेदकस्य भिन्नत्वान्न दोषः।

नन्वेवं 'चैत्रो मैत्रं विभजते' इत्यस्याप्यापत्तिः, मैत्रवृत्त्यनुयोगितायास्तादृशाधिकरणतावच्छेदकतया वक्तृतात्पर्यविषयत्वेन शक्तिभ्रमादिना तादृशवाक्यात्तादृशबोधस्यानुभविकतया साकाङ्क्षत्वस्यापि सत्त्वादिति चेन्न; 'फलाधिकरणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितावान् व्यापारः'—अकर्मकधातुशक्यः, 'फलाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितावान्व्यापारः' सकर्मकधातुशक्यः, तत्र च यत्सम्बन्धावच्छिन्ना फलाधिकरणता स एव सम्बन्धः फलतावच्छेदकः—इति—येन विभजतिना चैत्रसमवेतो व्यापारो बुबोधयिषितस्तस्य चैत्रवृत्तिरनुयोगितैव फलतावच्छेदक इति चैत्रवृत्त्यनुयोगितया फलाधिकरणसमवेतत्वस्य मैत्रवृत्तिव्यापारेऽसम्भवेन तथा प्रयोगापत्तेरभावात्। अकर्मकधातौ फलाधिकरणसमवेतव्यापारनिरूपितैव शक्तिरिति तज्जन्यबोधस्य चैत्रसमवेतव्यापारांशे मैत्रवृत्त्यनुयोगितया विभागाधिकरणमैत्रसमवेतत्वस्य बाधितत्वेनावगाहनासम्भवात्। एवञ्च तन्निष्ठशक्तिजन्यशाब्दबोधे फलाधिकरणता यत्सम्बन्धावच्छिन्ना भासते स सम्बन्धः फलतावच्छेदक इति नियमेन अत्र 'चैत्रान्मैत्रो विभजते'इति वाक्यघटकविभजतेश्चैत्रवृत्त्यनुयोगिता फलतावच्छेदकः सम्बन्धः।

'चैत्रान्मैत्रो विभजते'इत्यत्र 'चैत्रो मैत्रं त्यजती'ति प्रयोगस्तु इष्ट एव,-तत्र त्यजेः सकर्मकतया फलाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तितावद्व्यापारे एव शक्तेः सत्त्वाच्चैत्रवृत्त्यनुयोगितया विभागाधिकरणीभूत-चैत्र-निरूपितवृत्तितायाः कालिकसम्बन्धावच्छिन्नाया मैत्रवृत्तिव्यापारे सुलभत्वात्। नन्वेवं 'चैत्रान्मैत्रो विभजते' इत्यत्र 'चैत्रः स्वं त्यजती'ति प्रयोगापत्तिरिति चेन्न; परया कर्त्तृसञ्ज्ञया कर्मसञ्ज्ञाया बाधात्तथाप्रयोगापत्तेरभावात्। एवञ्च फलतावच्छेदक-

※ चिदस्थिमाला ※

विशेषोपाधिकत्वात्कारकाधिकाराच्च केनाप्तुमिष्टमित्याकाङ्क्षायां प्रकृतधातूपात्तव्यापारेणेत्यर्थाल्लभ्यते, तथाच 'अनुग्वलङ्गामी'ति सूत्रस्थमूलोक्तरीत्या सङ्कोचे मानाभावेन च फलानुकूलव्यापारेण सम्पूर्णधात्वर्थेन यदीप्सितं तण्डुलादि तदेव कर्मसञ्ज्ञं भवतीति सूत्रार्थ इति न फलस्य कर्मत्वमिति कश्चित्, तन्न; प्रकरणाच्छ्रुतेर्बलीयस्त्वेन फलान्यव्यापारस्यैव कर्तृशरीरे विशेषणतया प्रविष्टत्वेन तस्यैव करणत्वेनान्वयौचित्यादिति मान्यास्तदेतदभिप्रेत्याह—कर्तृपदार्थेति। कर्मत्वादीनां क्रियोपाधिकत्वात्प्रधानीभूतधात्वर्थव्यापाराय रूपेत्यादिः। प्रकृतसूत्रोक्तकर्तृपदार्थे विशेषणीभूतक्रियाफलावच्छिन्नत्वेनैवोपस्थित्या तस्या एव करणत्वमिति भावः। तत्र हेतुमाह—उपेति। 'प्रकरणाच्छ्रुते'रित्यनेन तुल्यार्थोयं न्यायः, तथाचाधिकारप्राप्तकारक-

※ वरवर्णिनी ※

विशिष्टसमवायेन चैत्रे विभागरूपफलसत्त्वेऽपि 'चैत्रो मैत्रं विभजते' इति प्रयोगापत्तिरिति वाच्यम्, अकर्मकधातुस्थले फलसामानाधिकरण्यस्य व्यापारे सत्त्वेन तत्र फलाधिकरणतायाः समवायेन विवक्षितत्वेन मैत्रवृत्तित्वविशिष्टसमवायेन फलस्य चैत्रेऽभावेनादोषात्, परत्वात्कर्त्तृसञ्ज्ञया बाधाच्च।

एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्द्धुमिष्यमाणमित्यर्थः। यथा—'तण्डुलं पचती'त्यादौ।

फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम्, अत एव—

❀ विजया ❀

सम्बन्धेन फलाश्रयः कर्मेति निर्दुष्टमिति न 'कालं पचति' 'पर्वतं पचती'त्यादयः प्रयोगाः।

फलस्यापीति। ननु घटितत्व—घटकत्वमात्रस्यैव व्यपदेशिवद्भावेनातिदेशात्फले फलाश्रयत्वस्य कथमतिदेश इति चेन्न; स्वस्मिन्स्वघटितत्वस्यातिदेशे सति घटितत्वसम्बन्धावच्छिन्नायाः फलाऽधिकरणताया आर्थसमाजग्रस्तत्वात्।

यदि च फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मताया वक्तव्यतया घटितत्वस्य फलतावच्छेदकत्वाभावादिदं न युक्तमित्यास्थीयते तदा,—फलव्यापारयोः संसर्गतया भासमान-तादृश तादृशसामानाधिकरण्यघटकाधिकरणतावच्छेदकतया—'तादात्म्यं'—तण्डुलादेः कर्मत्वव्यवहार-नियामकः—'समवायादिश्चेति'–एतदन्यतरसम्बन्धः शक्तौ विषय इति समवायादिवत्तादात्म्यस्यापि फलतावच्छेदकतया तेन सम्बन्धेन फलऽपि फलसम्बन्धित्वस्याबाधान्न दोषः।

केचित्तु—'पचती'त्यस्य पाकं करोतीति विवरणात् पच्यादेर्विक्लित्त्युत्पत्त्यनुकूलव्यापारादिरर्थ इति उत्पत्तिरूपफलाश्रयत्वेन विक्लित्त्यादेः फलस्य, विक्लित्त्यादिरूपफलाश्रयतया तण्डुलादेश्च-कर्मत्वमिति 'स्तोकं पचति' 'तण्डुलं पचती'त्यादिसिद्धिः।

❀ चिदस्थिमाला ❀

पदलभ्योक्तार्थस्य बहिरङ्गत्वादेकसूत्रोपात्तकर्तृपदलभ्यस्य तस्यान्तरङ्गत्वेन प्राबल्यात्कल्पनं न्याय्यमिति भावः। एतेन कर्तृग्रहणं व्यर्थम्, ईप्सिततेत्यनेन तदाक्षेपात्, 'वारणार्थाना'मित्यादाविव प्रत्यासत्त्या प्रकृत-धात्वर्थद्वारकसम्बन्धेनैव यत्–क्रियेप्सितं तस्यैव कर्मत्वेन न माषादावतिप्रसङ्ग इति तदर्थमपि तन्मास्त्विति-त्यपास्तम्। एवञ्च कर्त्रा स्वनिष्ठव्यापारेण संबन्द्धुमिष्यमाणमित्यर्थः, सम्बन्धश्चात्र जन्यतारूपो, जन्याश्रयता-रूपश्च, इष्यमाणत्वञ्च–तद्व्यापारोद्देश्यत्वमेव, सना गर्भितमिदञ्च साक्षात्फलरूपे धात्वर्थे, क्रियाया फलेच्छा-पूर्वकेच्छाविषयत्वात्–तदाश्रयत्वात्तण्डुलादेरपि तत्त्वम्। जन्यत्वं च तज्जन्यसाधारणम्, अत एव 'चैत्रं ग्रामं गमयती'त्यादौ ग्रामस्य कर्मत्वं, फलसम्बन्धश्चाश्रयता, तदभिप्रेत्य फलितार्थमाह—एवञ्चेति। तस्य तद्द्वारकत्वे चेत्यर्थः। ण्यन्तसङ्ग्रहायाह-प्रयोज्येति। अव्याप्तिं निराचष्टे-फलस्यापीति। तत्फलमाह—

❀ विषमपदविवृतिः ❀

व्याख्यानाच्च। व्यपदेशिवद्भावेनेति। वस्तुत उत्पत्तिरूपफलाश्रयत्वात्कर्मत्वं,पाकं करोतीति विवरण-

❀ वरवर्णिनी ❀

व्यपदेशिवद्भावेनेति। प्रकृते फलघटितसम्बन्धस्य विवक्षणादिति भावः। 'फलाश्रयत्व'मित्यस्य फल-घटितत्वमित्यर्थः। वस्तुतस्तु—धातोः सर्वत्र फलावच्छिन्ने व्यापारे फलोत्पत्त्यनुकूलव्यापारे च पृथक् शक्तिः स्वीक्रियते, तथा च 'स्तोकं पचती'त्यादौ सर्वत्र क्रियाविशेषणानां विक्लित्त्युत्पत्तिरूपफलाश्रयत्वस्य सत्त्वा-त्कर्मत्वं सिद्ध्यति। केचित्तु'क्रियाविशेषणानां कर्मत्व'मितिवचनादेव 'स्तोकं पचती'त्यादौ कर्मत्वमित्याहुः।

परे तु धातोः सर्वत्र फलविशिष्टे व्यापारे शक्तिः, वै० 'स्वसामानाधिकरण्य' 'स्वानुकूलत्वै'-तदुभयसम्बन्धेन। तथा च व्यापारनिष्ठविशेष्यतानिरूपितफलनिष्ठप्रकारतावच्छेदकसामानाधिकरण्य-घटकाधिकरणता यत्सम्बन्धावच्छिन्ना स सम्बन्धः,–तादात्म्यश्चेत्युभयं फलतावच्छेदकः सम्बन्धः। सामाना धिकरण्यघटकाधिकरणतानियामकश्च सम्बन्धस्तत्तद्धातुभेदात्—कचिदनुयोगित्वविशिष्टः समवायः, क्वचित्

तत्समानाधिकरणे 'स्तोकं पचती'त्यादौ कर्मत्वसिद्धिः ।

क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितं, तेन 'कटं कृतवान्' 'करिष्यती'त्यादिसिद्धिः ।

❀ विजया ❀

**न विवक्षितमिति** । तदादिपदस्थले'बुद्धिस्थत्ववद्वर्त्तमानत्वस्योपलक्षणतया विशेषणत्वेन तद्व्यावर्त्तकं नेत्यर्थः । शाब्दबोधे विषयस्तु भवत्येव । एतेन—वर्त्तमानत्वस्याविवक्षितत्वे वर्त्तमानार्थबोधतात्पर्येणोच्चरितक्तप्रत्ययप्रयोगे षष्ठीत्यर्थकस्य'क्तस्य च वर्त्तमाने'इत्यस्य प्रवृत्त्यनापत्तिरित्यपास्तम् ।

अयमाशयः-यथा 'तच्छब्दे बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदशक्य' इत्याकारकशक्तिग्रहानन्तरं स्वरूपतो घटत्वादिप्रकारकः पुनः शक्तिग्रहो जायते, एवमेव प्रकृतेऽपि-'कर्तुरीप्सिततम'-मितिवाक्यजन्यवर्त्तमानत्वावगाहिशाब्दबोधात्मकशक्तिग्रहानन्तरं 'कर्मणि द्वितीये'त्यादिवाक्यजन्यशाब्दबोधोपयोगिवर्त्तमानकालाविषयकं मानसं शक्तिज्ञानं जन्यते । एवञ्च द्वितीयबोधस्यैव लक्ष्योपकारकत्वात्कटङ्करिष्यतीत्यादिसिद्धिरिति प्राहुः ।

**सिद्धिरिति** । ईप्सितत्वप्रदकर्मकपाणिनिकर्तृकोच्चारणाधिकरणीभूतकालात्प्राक्परो वा यो यः कालस्तद्वृत्तिक्रियाबोधतात्पर्येण 'कटङ्करिष्यती'त्यादिसिद्धिरित्यर्थः । एवञ्च तादृशक्रियाबोधतात्पर्येण 'कटङ्करोती'त्याद्यपि सिद्धमित्यपि बोध्यम् । पाणिनिकर्तृकोच्चारणाधिकरणीभूतकालवृत्तिक्रियाबोधतात्पर्येण तत्कालात्प्राक् प्रयोगे 'कटङ्करिष्यती'ति, तत्कालात्परप्रयोगे 'कटङ्कृतवा'निति च यथा भवति, तथा तत्समानकालप्रयोगे 'कटङ्करोती'ति च स्यादेवेति भावः ।

वर्त्तमानत्वञ्च—प्रयोगविशिष्टत्वं, वै० 'स्वोच्चारणाधिकरणत्व' 'स्वबोध्यत्वेन तात्पर्यविषयीभूतक्रियाधिकरणत्व' 'स्वबोध्यक्रियावयवावच्छिन्नप्रागभावध्वंसान्यतराधिकरणकालाघटितत्वै'तत्त्रितयसम्बन्धेनेत्यन्यत्र विस्तरः ।

❀ चिदस्थिमाला ❀

**अत एवेति** । तस्यापि तत्त्वादेवेत्यर्थः । तामेवान्यत्र निराचष्टे-**क्तप्रत्ययोपात्तेति** । 'सूत्रे लिङ्गवचनम-

❀ विषमपदविवृतिः ❀

दर्शनात् । **कर्मत्वसिद्धिरिति** । ननु प्रथमयापि रूपसिद्धिरिति चेन्न, तथा सति 'सपूर्वायाः

❀ वरवर्णिनी ❀

प्रतियोगित्वविशिष्टः समवायः-इत्यादिरीत्या भिन्नो भिन्नः स्वीक्रियते,—इति न काप्यनुपपत्तिः । तादात्म्यस्यापि फलतावच्छेदकसम्बन्धत्वस्वीकारात्स्तोकं पचतीत्यादौ न दोष इत्याहुः ।

१. अयमाशयः—ननु 'स्तोकं पचती'त्यत्र स्वघटितत्वरूपव्यपदेशिवद्भावेऽपि 'स्तोकं तण्डुलं पचती'त्यत्र मुख्यधर्मवतः फलाश्रयस्य तण्डुलादेः समभिव्याहारस्य सत्त्वात्ससहाये व्यपदेशिवद्भावाभावात्कर्मत्वं न स्यादिति चेन्न; 'व्यपदेशिवद्भावेने'त्यस्य-'क्रियाविशेषणाना'मिति वचनेनेत्यर्थेनादोषात् ।

वस्तुतस्तु-'क्रियाविशेषणानां कर्मत्वं क्लीबत्व'मिति वचनस्य धातुवाच्यव्यापारे एव स्तोकादेरन्वय इति स्वीकर्तृणान्तार्किकाणां मते आवश्यकत्वेऽपि फलव्यापारयोर्धातुवाच्यत्वमङ्गीकुर्वतां शाब्दिकानां मते तदनावश्यकमेव, स्तोकादेर्धातुवाच्ये फले एवान्वयेनाऽसत्त्वरूपस्य फलस्य च क्लीबत्वेन तद्विशेषणस्यापि 'सामान्ये नपुंसक'मिति क्लीबत्वौचित्यात्क्लीबत्वस्य, सङ्ख्याऽप्रतीतेरौत्सर्गिकैकवचनस्य, स्वघटितत्वेन व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वस्य चान्यथैव सिद्धेरिति यथाश्रुतमेव सम्यगिति अन्ये तु सर्वेषां धातूनामुत्पत्त्यनुकूलव्यापारार्थकतया फलस्याप्युत्पत्तिरूपफलाश्रयतया कर्मत्वमिति 'स्तोकं पचती'त्यस्य स्तोकं पाकं करोतीति-विवरणादुत्पत्तिरूपफलाश्रयत्वात्कर्मत्वमिति न व्यपदेशिवद्भावस्यावश्यकतेति वदन्ति ।

**न विवक्षितमिति** । वर्त्तमानत्वञ्च धातुविशिष्टत्वं, वै० 'स्वप्रयोगाधिकरणत्व' 'स्वजन्यशाब्दबोधविषयत्वेन तात्पर्यविषयीभूतक्रियाकदम्बविशिष्टत्वो'भयसम्बन्धेन । वै० 'स्वघटकक्रियाप्रागभावानधिकरणध्वंसासमानाधिकरणत्व' 'स्वघटकक्रियाध्वंसानधिकरणक्रियाप्रागभावानधिकरणत्वै'तदुभयसम्बन्धेन ।

### ॐ वरवर्णिनी ॐ

'स्वप्रयोगाधिकरणत्व'निवेशात्पूर्वदुस्तनवर्त्तमानकालिकक्रियातात्पर्येण द्वितीयदिने 'पचती'ति न प्रयोगः। 'स्वजन्यशाब्दबोधे'त्यादिद्वितीयसम्बन्धदानाच्च—यत्र काश्चित्क्रिया जाताः, काश्चिद्वर्त्तमानाः, काश्चिद्भाविन्यस्तत्राऽपि तत्क्रियातात्पर्येण 'पचती'ति प्रयोगः सिद्ध्यति । क्रियाकदम्बविशिष्ट्यघटकप्रथमसम्बन्धदानात्पाकानन्तरं 'पचती'ति न प्रयोगः । नत्रैव द्वितीयसम्बन्धदानाच्च पाकपूर्वकालस्य न वर्त्तमानत्वम्। 'अविवक्षित'मित्यस्य शक्तावविवक्षितमित्यर्थः । 'शक्तावविवक्षे'त्यस्य च कर्मपदशक्तौ वर्त्तमानत्वमुपलक्षणं तत्पदशक्तौ बुद्धिस्थत्ववन्नतु विशेषणमित्यर्थः।

ननु वर्त्तमानत्वस्याविवक्षायां 'क्तस्य च वर्त्तमाने' इति षष्ठ्यनुपपत्तिरिति चेन्न; 'तस्यापत्य'मित्यत्र लिङ्गवचनयोरुपलक्षणतया भानेऽप्युद्देश्यतावच्छेदकविशेषणतया भानाभाववत्प्रकृते वर्त्तमानत्वस्योद्देश्यतावच्छेदकविशेषणतया भानाभावेऽपि उपलक्षणतया [ वर्त्तमानत्वस्य ] भानेन षष्ठ्युपपत्तेः ।

केचित्तु-'गमेरिट् परस्मैपदे'ष्वित्यत्र परस्मैपदपदस्य तङानयोरभावपरत्ववद्वर्त्तमानपदस्य भूतभविष्यत्कालाबोधजनकपरतया षष्ठ्युपपत्तिमाहुः । **अन्ये तु**—षष्ठ्युपपत्तये "—'कर्मणि द्वितीये'तिशास्त्रघटक-'कर्म'-पदजन्यलक्ष्यधर्मिकसाधुत्वप्रकारकबोधानुपयोगिवर्त्तमानत्वविषयकबोधो जायताम्"—इति पाणिनेरिच्छाकूलयित्वा षष्ठीमुपपाद्य, 'कटङ्करिष्यती'त्याद्यर्थञ्च "—'कर्मणि द्वितीये'ति शास्त्रघटक-'कर्म'—पदजन्यलक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिवर्त्तमानत्वाविषयको बोधो जायताम्—" इत्येवम्पाणिनेरिच्छाकूलयन्ति । एवञ्च द्वितीयवाक्यार्थबोधस्यैव लक्ष्यसंस्कारकतया 'कटङ्करिष्यती'त्यादिसिद्धिरित्याहुः ।

**श्रीद्रविडभट्टास्तु**—'वर्त्तमानत्वाविवक्षे'त्यस्य कर्मपदशक्यतावच्छेदकतया क्तप्रत्ययार्थवर्त्तमानत्वस्याऽविवक्षेत्यर्थः। यथा तत्पदस्थले 'बुद्धिविषयतावच्छेदकत्वोपलक्षितघटत्वादितत्तद्धर्मावच्छिन्नस्तत्पदजन्यबोधविषयतावान् भवतु' इतीच्छायां बोधविषयत्वे धर्मिपारतन्त्र्येण विशेषणीभूतस्तत्तद्धर्मविशेष एव शक्यतावच्छेदको न तु बुद्धिविषयतावच्छेदकत्वं शक्यतावच्छेदकं, किन्तूपलक्षणमेव, तथैव प्रकृतेऽपि-'कर्त्तृव्यापारविशिष्टफलाश्रयत्वप्रकारकवर्त्तमानकालिकेच्छोद्देश्यं कर्मपदजन्यबोधविषयतावद्भवतु' इति पाणिनीच्छायां बोधविषयत्वे तादृशेच्छोद्देश्यत्वस्य विशेषणतया धर्मिपारतन्त्र्येणेच्छोद्देश्यत्वस्यैव विशेषणत्वेन कर्मपदशक्यतावच्छेदकत्वं, न तु वर्त्तमानत्वस्य तथा, धर्मिपारतन्त्र्येण तत्राविशेषणत्वात् , किन्तु बुद्धिविषयतावच्छेदकत्ववत्तदुपलक्षणमेवेति 'कटङ्करिष्यती'त्यादौ न दोष इत्याहुः ।

ननु वर्त्तमानत्वस्य धर्मिपारतन्त्र्येणानन्वयात्कर्मपदशक्यतानवच्छेदकत्वेऽपि कर्मपदशक्तिज्ञानविषयतया वर्त्तमानत्वस्याप्युपस्थित्या 'कटङ्करिष्यती'त्यादौ कर्मत्वानुपपत्तिरस्त्येवेति चेन्न; यथा तच्छब्दे 'बुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदशक्य' इति प्राथमिकशक्तिज्ञानानन्तरं 'घटत्वावच्छिन्नस्तत्पदशक्य' इति विशेषतः शक्तिज्ञानं जायते, एवमेव 'कर्त्तृवृत्तिव्यापारविशिष्टफलाश्रयत्वप्रकारकवर्त्तमानकालिकेच्छोद्देश्यं कर्मपदशक्य'मिति सामान्यतः शक्तिज्ञानानन्तरं—'कर्त्तृवृत्तिव्यापारविशिष्टफलवत्त्वप्रकारकेच्छोद्देश्यं कर्मपदशक्य'मिति विशेषतः शक्तिज्ञानमेव लक्ष्यसंस्कारकमिति तादृशप्रयोगोपपत्तेरित्यप्यन्ये प्राहुः। वर्त्तमानत्वाविवक्षायां मानन्तु 'कर्मणि हन' इत्येवेत्यवधेयम् ।

**परे तु**—प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वस्य वर्त्तमानत्वे पूर्वदिने घटिकाद्वयात्मककाले यत्र पाकस्तादृशकालबोधतात्पर्येणाद्यापि पचतीत्यापत्तिः, प्रारब्धापरिसमाप्तक्रियोपलक्षिततादृशकालबोधनायैव पचतीत्यस्योच्चारणात् । तादृशक्रियोपलक्षितोच्चारणाधिकरणीभूतकालग्रहणेऽपि कालस्याखण्डत्वान्न निस्तारोऽतः—प्रयोगविशिष्टत्वं वर्त्तमानत्वं, वै० 'स्वोच्चारणाधिकरणत्व' 'स्वजन्यबोधविषयत्वेन तात्पर्यविषयफलविशिष्टत्वो'भयसम्बन्धेन । वै० 'स्वनिष्ठजन्यतानिरूपितजनकताववद्व्यापारप्रतियोगिकध्वंसानधिकरणत्व' 'स्वनिष्ठजन्यतानिरूपितजनकताववद्व्यापारप्रतियोगिकप्रागभावानधिकरणत्वो'भयसम्बन्धेनेति विवक्षणीयम् ।

एवञ्च पचतीत्युच्चारणकाले तज्जन्यबोधविषयफलजनकव्यापाराणां प्रागभावस्य ध्वंसस्य वाऽभावे एव तथा

❀ वरवर्णिनी ❀

प्रयोगात्फूत्कारादेर्यत्किञ्चिद्व्यापारस्य ध्वंसादेः सत्त्वेऽपि न तत्र 'पचती'ति प्रयोगानापत्तिः । तथा च कालस्याखण्डनया पूर्वदिनभवपाकबोधकैतद्दिवसीय-'पचती' प्रयोगकाले व्यापारप्रतियोगिकध्वंसाधिकरणत्वस्य सत्त्वान्न पचतीति प्रयोगः ।

एवञ्च क्तप्रत्ययोपात्तवर्त्तमानत्वस्य विवक्षायां पाणिनिकर्तृकेप्सितपदोच्चारणकाले पाकादिकर्मत्वस्यौदनादौ सत्त्वेऽपि आधुनिकोच्चरितानामोदनं पचतीत्यादीनां विलयापत्तिः, तादृशफलेन सम्बन्धविषयकवर्त्तमानकालिक-पाणिनीच्छाभावात्, कर्तृवृत्तिव्यापारविशिष्टफलवत्त्वप्रकारकवर्त्तमानकालिकेच्छोद्देश्यस्यैव कर्मत्वात् । पाणिन्युच्चरितेप्सितपदप्रयोगकाले एव कटादिकरणेच्छायां 'कटङ्करोती'ति स्यात्, इदानीमस्मदाद्युच्चारणकाले वर्त्तमानकालिकतादृशपाणिनीच्छाया अभावात्कटङ्करोति ओदनं पचतीत्यादिप्रयोगा नैव स्युः, एवञ्च तदविवक्षैवोचिता । 'कटङ्करिष्यती'त्यादिशेखरोक्तं—'कटङ्करोती'त्यस्याप्युपलक्षणमित्यास्थेयमित्याहुः ।

श्रीगुरुचरणास्तु—'धातुसम्बन्धे प्रत्ययाः' इत्यनेन 'वसन्ददर्शे'त्यत्रेवात्राप्यस्तिक्रियाध्याहारेण ईप्सितपदे क्तप्रत्ययः । प्रधानीभूतक्रियाधिकरणीभूतकालवृत्तित्वस्य वर्त्तमानत्वेन तादृशकालोत्तरकालवृत्तित्वस्य भविष्यत्त्वेन, तादृशकालपूर्वकालवृत्तित्वस्य च भूतत्वेन—'वसन्ददर्शे'त्यत्र वासस्य दर्शनसमकालवृत्तितया वर्त्तमाने, 'शुश्रुवानुदतिष्ठ'दित्यत्र तादृशक्रियाधिकरणीभूतकालपूर्वकालवृत्तितया भूते च प्रत्यय उपपन्नः, एवं—'वन्यान्विनेष्यन्निवे'त्यत्र प्रधानीभूत'विचचारे'तिविचरणक्रियाधिकरणीभूतकालोत्तरकाले विनयनस्य सत्त्वाद्भविष्यति च प्रत्यय उपपन्नः । 'सोमयाज्यस्य पुत्रो भविते'ति कौमुद्युदाहरणं तु तत्र चिन्त्यं, प्रधानीभूतभवनक्रियापूर्वकाले सोमयाजिनोऽभावाद्भूते णिनेरप्राप्तेः । प्रकृते ईप्सितपदे प्रधानीभूतसत्ताक्रियाधिकरणकाले तादृशच्छोद्देश्यत्वसत्त्वाद्वर्त्तमाने क्तः सुलभः, इष्यमाणं सत्कर्मेति च तदर्थ इत्याहुः ।

कृतवानिति । इदं 'करोती'त्यस्याप्युपलक्षणं, प्रकृते वर्त्तमानकालस्य विवक्षायां पाणिनिप्रयोगाधिकरणकालस्यैव वर्त्तमानतया पाणिनिपूर्वकालिकानां लोकानां 'करिष्यती'त्यस्य, पाणिनिसमकालिकानाञ्जनानां 'करोती'ति प्रयोगस्य, पाणिन्युत्तरकालिकानां 'कृतवा'निति प्रयोगस्य च सिद्धत्वेऽपि पाणिनिपूर्वकाले तत्समकाले तदुत्तरकाले च 'करिष्यति' 'कृतवा'निति प्रयोगाऽसिद्ध्यापत्तेरिति श्रीदण्डिभट्टाः ।

[ ननु फलाश्रयत्वेनेच्छोद्देश्यस्य कर्मत्वे स्वजनकव्यापाराश्रयत्वसम्बन्धेन कर्तुरपि फलाश्रयत्वात्—'विक्लित्यादिफलजनकव्यापारवानहं स्या'मितीच्छीयोद्देश्यताश्रयत्वस्यापि सत्त्वात्कर्तुरपि कर्मत्वापत्तिरिति चेन्न; परत्वात्कर्तृसञ्ज्ञया बाधात् । न चैवमपि स्वजनकत्वसम्बन्धेन व्यापारस्यापि फलाश्रयतया कर्मत्वं स्यादिति वाच्यं, 'फलनिष्ठाधेयतानिरूपिताधिकरणतावत्त्व'रूपफलाश्रयत्वस्य आधेयतावच्छेदकसमवायसम्बन्धस्यैव स्वीकारेण तादृशसम्बन्धेन विक्लित्यादिफलस्य तण्डुलादावेव सत्त्वेन स्वजनकत्वसम्बन्धेन फलाश्रयस्यापि व्यापारस्य कर्मत्वाभावात् । नन्वेवं 'घटं जानाती'त्यत्र ज्ञानविषयीभूतस्य घटस्य समवायेन ज्ञानरूपफलाश्रयत्वाभावेन कर्मत्वानापत्तिरिति चेन्न, विषयतासमवायान्यतरसम्बन्धावच्छिन्नाया आधेयताया ग्रहणेन तत्र विषयतया तथात्वेनादोषात् । नचैवमपि 'यवेभ्यो गां वारयती'त्यत्र संयोगानुकूलव्यापाराभावानुकूलव्यापारवाचकस्य वारयतेः संयोगानुकूलव्यापाराभावात्मकफलस्य स्वरूपसम्बन्धेनैव वृत्तितया निरुक्तसमवाय-विषयत्वान्यतरसम्बन्धावच्छिन्नाधेयताया अभावेन गोः कर्मत्वानापत्तिरितिवाच्यं, समवाय-विषयता-स्वरूपैतदन्यतमसम्बन्धावच्छिन्नाधेयतायाः स्वीकारेणादोषादिति केचित् ।

'कर्मपदात्कर्तृनिष्ठव्यापारवाचक—कर्तृनिष्ठव्यापारप्रयोज्य—फलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मपदाद्बोद्धव्य'मिति 'कर्तुरीप्सिते'ति सूत्रबोधितशक्तौ तव्यप्रत्ययार्थविषयतायां धर्मिपारतन्त्र्येण न वर्त्तमानकालो विशेषणमिति तस्य शक्तावुपलक्षणत्वमेव, तत्पदस्थले बुद्धिस्थत्ववत् ।

यद्यपि पूर्वं सामान्यतो वर्त्तमानकालपुरस्कारेण 'कर्तुरीप्सिततम'मिति शक्तिग्रहो वृत्तस्तथापि पुनर्वर्त्तमानकालविषयकस्य शक्तिग्रहस्य—'बुद्धिस्थस्तत्पदशक्यः' इति शक्तिग्रहानन्तरं 'घटस्तत्पदवाच्य' इत्यादिशक्तिग्रहवदुत्पत्त्या नोक्तलक्ष्यासिद्धिर्न वा षष्ठ्याद्यनुपपत्तिः ।

१ इयं वरवर्णिनी ६३१ पृष्ठस्थव्याख्यानशेषभूता बोध्या ।

## ॐ चिद्स्थिमाला ॐ

नन्व'मित्युक्तदोषादिति । अन्यत्रोक्तमिति । 'किमिदं कारके इति ? सञ्ज्ञानिर्देश इति' । अयं भावः—उक्तहेतो रेवान्वर्थं सञ्ज्ञा करोति=निर्वर्तयतीति कारकं, किमिति साध्याकाङ्क्षायां क्रियाया एव शब्दतः साध्यत्वेन प्रतीतेः क्रियैव तत्वेन सम्बध्यते, न तु द्रव्यादि, करोतीत्यादिपदान्तरसमभिव्याहारे एव तस्य तथा प्रतीत्या शब्दात्तथाऽप्रतीतेः । तथा च क्रियानिर्वर्तकमुद्दिश्य कारके इत्यनेनैव सञ्ज्ञा क्रियते नतु विभक्त्यैकवाक्यतया, महासञ्ज्ञाकरणसामर्थ्यादिति 'ध्रुवमपाये' इति योगविभागं कारकपदानुवृत्तिञ्च विना सूत्रद्वयसामर्थ्यात् पर्याये सिद्धे 'ध्रुवमपाये' इति योगविभागेन तत्र कारके इत्यनुवृत्त्या च प्रतिवाक्यं कारकसञ्ज्ञाविधानसामर्थ्यात्समावेशार्थमवश्यं त्वयाप्यन्वर्थत्वं स्वीकार्यम्, अन्यथा 'ग्रामस्य समीपादायाती'त्यादावतिप्रसङ्गः कारकादिसञ्ज्ञायाः । एतेन सञ्ज्ञिनामनुपादानात्कथं तेन सञ्ज्ञाविधानमित्यपास्तम् । समावेशफलं त्वनुपदमेव 'ग्रामेवास' इति स्फुटीभविष्यतीति । 'यावद्ब्रूयात्—क्रियायामिति तावत्कारके इती'ति भाष्योक्त-

## ॐ वरवर्णिनी ॐ

इदमप्यनुसन्धेयम्—ईप्सितपदे विषयता—आश्रयत्वञ्च त्वार्थः, व्यापाराश्रयस्य वृत्तितया व्यापारेऽन्वयः, तस्य च वैशिष्ट्यनियामकसम्बन्धाभ्यां फलेऽन्वयः, फलस्य च प्रकारितयेच्छायामन्वयः, तस्याश्च निरूपितत्वेन विषयतायां, तस्याः स्वरूपेणाश्रये, तस्याऽभेदेन कारके, तस्य चाऽभेदेन कर्मण्यन्वयः, एवञ्च व्यापाराश्रयाभिन्न व्यापाराश्रयवृत्तिव्यापारविशिष्टफलाश्रयत्वप्रकारकेच्छानिरूपितविषयताश्रयाभिन्नं कारकं कर्मसञ्ज्ञं भवतीत्यर्थः, वै० 'स्ववाचकधातुवाच्यत्व' 'स्वप्रयोज्यत्वो'भयसम्बन्धेनेतितत्त्वम् । माषक्षेत्रे पुष्ट्यर्थमश्वबन्धेन 'माषेष्वश्वं बध्नाती'त्यत्र माषाणां कर्मत्ववारणायाद्यः सम्बन्धः, 'अग्नेर्माणवकं वारयती'त्यत्राग्नेः कर्मत्ववारणाय द्वितीयः सम्बन्धः ।

नच यत्र 'तण्डुलनिष्ठविक्लित्त्यनुकूलव्यापारवानहं भवेय'मित्याकारकतण्डुलाद्यविशेष्यकेच्छाधीनैव पाकक्रिया, तत्र तण्डुलादाविच्छीयविशेष्यताया विरहादात्मन्येव च तत्सत्त्वात्तण्डुलं पचतीत्यनापत्तिः, 'आत्मानं पचती'त्यापत्तिश्च, यदि च तादृशेच्छीयविषयताश्रयः कर्मेत्येवार्थस्तर्हि व्यापार—फलादीनामपि तत्त्वाविशेषाद्व्यापारं पचति, फलं पचतीत्याद्यापत्तिरितिवाच्यं, 'मद्वृत्तिव्यापारप्रयोज्यविक्लित्त्याश्रयस्तण्डुलो भवतु' इतितण्डुलविशेष्यकेच्छाया एव—'मद्वृत्तिव्यापारजन्या तण्डुलनिष्ठा विक्लित्तिर्भवतु' 'तण्डुलनिष्ठविक्लित्तिजनको मदीयव्यापारो भवतु' 'तण्डुलनिष्ठविक्लित्तिजनकव्यापारवानहं भवेय'मित्यादिशब्दैरभिलापेन तादृशाभिलप्यमानेच्छीयमुख्यविशेष्यतायास्तण्डुलेऽक्षतत्वादित्याद्यन्यत्र विस्तरः ।

नन्वेवमपि स्वजनकव्यापारवत्त्वसम्बन्धेन देवदत्तस्यापि तादृशफलाश्रयतया कर्मत्वापत्तिः, किञ्च कालिकेन पाषाणादेरपि विक्लित्त्याश्रयतया 'पाषाणं पचती'त्यस्याप्यापत्तिरितिचेन्न; विषयता—समवाय—प्रतियोगित्वै—तदन्यतमसम्बन्धेन फलाश्रयस्यैव तत्त्वात् । 'घटंजानाती'त्यादौ विषयतया, 'ओदनं पचती'त्यादौ समवायेन, ग्रामं त्यजती'त्यादौ च प्रतियोगित्वसम्बन्धेन ग्रामादेर्विभागाश्रयतया कर्मत्वम् । कालपाषाणादेस्तु निरुक्तान्यतमसम्बन्धेनातत्त्वान्न दोष इत्याहुः ।

परेतु फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वं, फलतावच्छेदकः सम्बन्धश्च क्वचित्पचत्यादौ समवायः, क्वचिद्विषयतैवेति न 'पाषाणं पचती'त्यादयः प्रयोगाः । अत्र फलता च—कार्यता, एवञ्च कार्यतावच्छेदकः सम्बन्ध एव 'फलतावच्छेदक' इत्युच्यते, येन सम्बन्धेनाधिकरणे कार्यमुत्पद्यते स एव सम्बन्धः फलतावच्छेदक इति यावत् । यथा समवायेन तण्डुलादौ विक्लित्तिरूपं कार्यमुत्पद्यते इति समवाय एव फलतावच्छेदकः, एवञ्च न 'पाषाणं पचती'त्यादयः प्रयोगा इत्यन्यत्र विस्तरः । ]

१ इयं वरवर्णिनी ६३६ पृष्ठस्थस्य एवञ्चेत्यस्य व्याख्यानभूता ।

**कारकं कर्मसञ्ज्ञं स्यादिति** । 'कारके' इति प्रथमार्थे सौत्री सप्तमी। तेन कारकं सत्कर्मसञ्ज्ञमित्यर्थः । सञ्ज्ञिनः क्रियाजनकत्वन्तु महासञ्ज्ञयाऽऽक्षिप्तम् । यद्वा सप्तमी यथाश्रुतैव, कारकपदञ्च क्रियापरं, 'करोति कर्तृकर्मादिव्यपदेशा'निति व्युत्पत्तेः । —'जनक'मित्यध्याहारः ।—विषयत्वं सप्तम्यर्थः ।

कारकग्रहणे च स्वरितत्वप्रतिज्ञया तदधिकारोक्तकर्त्रादिषट्कमेव, तेन 'नटश्रवण'-मित्यादौ न कृदुत्तरपदप्रकृतिस्वरः । 'ग्रामेवास' इत्यादौ च तत्स्वरसिद्धिरित्यन्यत्र विस्तरः ।

**कर्तुः किमिति** । तदभावेऽपि केनाऽऽप्तुमित्याकाङ्क्षायां कारकाधिकाराद्व्यापारलाभ इति प्रश्नः । **माषेष्विति** । माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थः ।—तदाह—**कर्मण इति** ।

ॐ विजया ॐ

तत्फलसिद्धिः=थाथादिस्वरसिद्धिः । तत्पदेन 'गतिकारके'ति स्वरस्य तु न परामर्शः, थाथादिस्वरस्य तदपवादत्वादिति भैरवमिश्राः । **व्यापारलाभ इति** । तथा च तदभावेऽपि कारकवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्यर्थः स्यादेवेति कर्तुरितिकिमिति प्रश्नाशयो बोध्यः । इति=इतीच्छया । **बध्नातीति** । अश्वो हि बध्नातेः कर्म, नतु कर्ता, एवञ्च तदीप्सिता माषा अपि

ॐ चिदस्थिमाला ॐ

माह—**करोतीति** । स्वजनकत्वेनैनान्व्यपदेशान्करोतीत्यर्थः । विषयता—जनकत्वेनेत्याह—**जनकमिति** ।

नन्वत्र पक्षेऽतिप्रसङ्गोऽत आह—**कारकेति** । 'नटश्रुत'मित्यत्र सर्वथाऽन्तोदात्तस्यैवेष्टत्वादाह—**नटश्रवणमिति** । आदिना 'नटश्रुतिः' । पूर्वत्र समावेशफलमपि सूचयन्नाह—**ग्रामे इति** । **तत्स्वरेति** । 'थाथे'तिस्वरसिद्धिरित्यर्थः । यत्तु 'गतिकारके'ति कृदुत्तरपदप्रकृतिस्वरसिद्धिरित्यर्थ इति—तन्न, तदपवादत्वेन 'थाथे'त्यन्तोदात्तत्वस्यैव प्राप्तेः । यदपि—कैयटादिदण्डयन्ताः—"तत्र समावेशफलं—'स्तम्बेरम' इति, अत्राधिकरणत्वात्सप्तमी, कारकत्वात्कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति, अन्यथा 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरः स्यात्, 'स्तम्बकर्णयो'रिति निर्देशात्प्रातिपदिकस्योपपदत्वेऽपि सप्तम्यन्तस्यातथात्वान्नोपपदस्वरेणान्यथासिद्धिः, नापि थाथादिस्वरेणान्तोदात्तत्वं शक्यम्, अपा साहचर्येण एरच एव तत्रोपादानात्—" इति प्राहुः—तदपिनः उपपदत्वादेव सिद्धेः । 'उपपद'मिति महासञ्ज्ञया सुबन्तस्यैवोपपदताया उपपदसञ्ज्ञासूत्रे भाष्ये उक्तत्वात् । त्वन्मतेऽपि पूर्वान्तवत्त्वेन तत्रोपपदत्वस्य सुवचत्वाच्च । अत एव 'कृत्तद्धिते'ति सूत्रस्थसमासपदस्योक्तनियमार्थत्वमपि सङ्गच्छते । 'शयवासे'ति सप्तम्या अलुक्, तदाह—**अन्यत्रेति** । उद्योतादावित्यर्थः ।

यथाश्रुतासङ्गतेराह—**माषेषु प्रसक्तमिति** । अयम्भावः—यथा धात्वर्थप्रधानव्यापारजन्यफलाश्रयस्य

ॐ विषमपदविवृतिः ॐ

प्रथमाया' इति विकल्पापत्तेः, 'सक्तुल्वा'वित्यत्र यणनापत्तेश्च । **ग्रामेवास इति** । सञ्ज्ञाद्वयसमावेशबलमिदम् । **व्यापारलाभ इति** । इदं निष्प्रयोजनम् । **अन्यत्र बध्नातीति** । न चान्यत्र

ॐ वरवर्णिनी ॐ

**विषयत्वमिति** । तच्च निरूपितत्वरूपं, निरूपितत्वञ्च सम्बन्धः । क्रियानिष्ठजन्यतानिरूपितजनकत्वाश्रय इत्यर्थ इत्याहुः ।

**अन्यत्र बध्नातीति** । अयम्भावः—अत्रकर्मवृत्तिगलबिलाधःसंयोगरूपं फलं नेच्छाविषयः, किन्तु माषनाशाद्यभावमेव, नच यत्र पुष्ट्यर्थमेव माषेष्वश्वं बध्नाति तत्राश्वरूपकर्मवृत्तिगलबिलाधःसंयोगरूप-

तमव्ग्रहणं किमिति ।—अवयवद्वारा समुदायस्य प्रश्नः,—'कर्तुरुद्देश्यं कर्म'-त्येवास्त्विति भावः ।

ॐ विजया ॐ

कर्मसञ्ज्ञकाः स्युरित्याशयः समाधातुः । न च कर्तृग्रहणेऽप्ययं दोषस्तदवस्थ एव, अश्वस्य भक्षण-क्रियाकर्तृत्वादिति वाच्यं, कर्तृग्रहणसामर्थ्यात्प्रकृतधात्वर्थकर्तुरेव प्रकृत कर्तृपदेन ग्रहणेनादोषात् । यद्धातुवाच्यफलाश्रयत्वेनेष्टस्य कर्मसञ्ज्ञा चिकीर्षिता तद्धात्वर्थनिरूपितकर्तुरेव ग्रहणमिति तु तत्त्वम् ।

नचैवमपि 'गां दोग्धि पयः' इत्यादौ दुहादेर्व्यापारद्वयार्थकत्वकल्पे उभयोः कर्मत्वाय प्रयोज्यत्वलाभ-सम्पादकतमब्ग्रहणस्य सत्त्वेन—यत्र पुत्र्यर्थं माषक्षेत्रेऽश्वबन्धनं तत्र भक्षणस्यापि बन्धनप्रयोज्य तया चैत्रकर्तृकबन्धनानुकूलव्यापारप्रयोज्यभक्षणरूपफलाश्रयत्वेन माषाणां कर्मत्वन्तत्र दुर्वारमेवेति वाच्यं, कर्तृग्रहणसामर्थ्येन फलव्यापारयोरुभयोरपि प्रकृतधातुवाच्ययोरेव ग्रहणेनादोषात् । प्रकृते बन्धनप्रयोज्यस्यापि भक्षणस्य बध्नात्यर्थत्वाभावात् । एवञ्च कर्तरि प्रकृतधात्वर्थनिरूपितत्वमपि न देयमित्युमानाथादयः । कर्तुरुद्देश्यमिति । उद्दिशेरिच्छार्थत्वाद्यत्प्रत्ययस्य चोद्देश्यताख्यविषयताश्रयार्थ-कत्वात्कर्तृवृत्तीच्छीयोद्देश्यताश्रयः कर्मेत्यर्थः । पयसेति । करणे तृतीया । अयम्भावः—ईप्सित-ग्रहणाभावे यत्किञ्चित्प्रकारकेच्छोद्देश्यस्य कर्मत्वं दुर्वारं, तत्सत्त्वेतु—फलाश्रयत्वप्रकारकेच्छोद्देश्यस्यैव कर्मतया यत्किञ्चित्प्रकारकेच्छोद्देश्यत्वेऽपि फलाश्रयत्वप्रकारकेच्छोद्देश्यत्वाभावान्न दोषः, फलाश्रयत्वेने च्छायान्तु'पयो भुङ्क्ते'इतीष्यत एवेति ।

परेतु—अत्र यत्किञ्चित्पदेन साधकतमत्वग्रहणे करणसञ्ज्ञाया अपवादतया तदापत्तिरेव, भोजनकर्मत्वादीनां ग्रहणे त्विष्टापत्तिरेव, तस्मात्पयसेति हेतावेषा तृतीया न करणे, एवञ्च पयोलाभ-हेतुकभोजनस्थले इदम्प्रत्युदाहरणमिति लभ्यत्वेनैवेच्छोद्देश्यस्य पयसः कर्मत्वापत्तिः, लाभद्वारा ओदनभोजनरूपक्रियाजनकत्वस्यापि सत्त्वेन क्रियाजनकत्वरूपकारकत्वस्याप्यबाधितत्वात् । ईप्सित ग्रहणे तु भोजनानुकूलव्यापारवाचकधातुवाच्यफलाश्रयत्वेनेष्टत्वस्वरूपस्येप्सितत्वस्य तत्र बाधान्न कर्मत्वमित्याहुः ।

ॐ चिदस्थिमाला ॐ

कर्मत्वं तथा धात्वर्थतावच्छेदकफलभूतबन्धजन्यैतत्कालिकैतन्माषभक्षणाश्रयमाषाणामपि तत्त्वं दुर्वारम्; अधिकरणसञ्ज्ञा तु 'कटे आस्ते' इत्यादौ सावकाशेति । कर्तुरित्युक्तौ तु कर्तृपदकारकपदलभ्यधात्वर्थयोः प्रत्यासत्त्यैकधात्वर्थत्वलाभात्कर्तृव्यापारवाचकोपात्तधात्वर्थतावच्छेदकफलाश्रयत्वं लब्धमिति न दोषः । अत एव कर्मकारकस्य फलेऽन्वयः, तदाश्रयत्वेन तस्योद्देश्यत्वात्तत्र तेन वारणमिति भावः । पयोग्न्युभयव्यावर्त-कैकप्रकर्षस्य दुर्वचत्वेनेदं न तमव्यावर्त्यमिति यथाश्रुतासङ्गतेराह—अवयवेति । नन्वेवं कस्य सञ्ज्ञा-ऽत आह—कर्तुरिति । नन्वेवं पयसो न तदुद्देश्यकत्वमेवात आह—यदेति । नन्वेवं कथमनेन वारणमत

ॐ विषमपदविवृतिः ॐ

बन्धनस्य माषनिष्ठाश्वगलबिलाधःसंयोगो न फलमिति वाच्यम् , अरण्यस्थदण्डस्येवान्यत्र बन्धन-स्यापि स्वरूपयोग्यतारूपफलजनकत्वमित्याशयात् । कर्तृपदाभावे प्रकृतधात्वर्थव्यापारजन्येत्यर्थो-

ॐ वरवर्णिनी ॐ

फलस्य कर्तुरिच्छाविषयत्वान्माषाणां कर्मसञ्ज्ञा दुर्वारेति वाच्यं, कर्तृग्रहणसत्त्वेऽपि माषभक्षणेनाश्वपुष्टि-र्भवत्वितीच्छायाः कर्तृवृत्तित्वेन एतद्दोषवारणस्य कर्तुमशक्यतया कर्तृग्रहणसामर्थ्यात्प्रत्यासत्तिन्यायेन कर्तृनिष्ठव्यापारवाचकधातूपात्तं यत्कर्तृनिष्ठव्यापारप्रयोज्यं फलं तदाश्रयत्वेनेच्छोद्देश्यस्यैव कर्मसञ्ज्ञेत्यर्थस्य कर्तव्यतया गलबिलाधःसंयोगरूपफलस्य बध्नात्यर्थत्वाभावेनैतद्दोषवारणात् ।

**पयसौदनमिति ।** यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणं, तत्क्रियायाः पय—उद्देश्यकत्वात् । 'ईप्सिततम'शब्दस्य तु क्रियाशब्दत्वात्पयसस्तदा फलाश्रयत्वेनाऽविवक्षणान्न दोष इति भावः ।

तमस्य फलन्तु—'अग्नेर्माणवकं वारयती'ति । तदभावे हि—'वारणाना'मिति सूत्रमस्यापवादः स्यात् , एवञ्च माणवकस्य कर्मत्वं न स्यात् ।

❀ विजया ❀

केचित्तु—ईप्सितग्रहणे—सम्बन्धत्वेन बोधकेनाप्याब्धातुना व्यापारवाचकधातुवाच्यफलाश्रयत्वरूप एव सम्बन्धो बोध्यते नतु व्यापारसमानकालिकफलाश्रयत्वमात्रादिरूपोऽपीति-येन प्रत्यासत्त्यादिरूपप्रमाणेन भवतोच्यते, तेनैव प्रमाणेन मयापि तत्प्रकारिकैवेच्छा ग्रहीष्यते इति—'कर्तुरिष्टं कर्मे'त्येव सुवचम् । नागेशोक्तं—'कर्तुरुद्देश्यं कर्मे'ति तु न युक्तम् , उद्देश्यमित्यत्र उदो देश्यस्य च पदत्वेन पदद्वयतया गौरवापत्तेः । 'अग्नेर्माणवकं वारयती'त्याद्यर्थं प्रयोज्यत्वलाभसम्पादकं तमब्ग्रहणं क्रियतान्तत्र नास्माकमाग्रहः, अनुपदमेव वक्ष्यमाणया रीत्या तदपि मास्तु वेत्याहुः । वस्तुतस्तु—ईप्सितपदसत्त्वे 'आब्धातूपस्थाप्यः सम्बन्धः प्रकृते क्रियाघटित एव गृह्यते'इत्येवं रूपेण तात्पर्यं निश्चेतुं शक्यते, ईप्सितपदाभावे तु पदादनुपस्थितत्वेन किम्प्रकारिकेच्छेत्याकाङ्क्षामुत्थाप्य-प्रत्यासत्त्या सम्बन्धविशेषप्रकारिकेत्येवं प्रत्यासत्तिमहिम्ना नैव लब्धुं शक्यते—इतीप्सितग्रहणं तात्पर्यनिश्चयायावश्यकमेव । एवञ्च तत्सत्त्वे 'पयसे'तिकरणतृतीयान्तं प्रत्युदाहरन्तोऽप्यपास्ताः । उक्तरीत्या कर्तृपदार्थविशेषणीभूतव्यापारद्वारकसम्बन्धप्रकारिकेच्छा—क्रियाप्रयोज्यफलाश्रयत्वप्रकारिका, क्रियावाचकधातुवाच्यफलाश्रयत्वप्रकारिकेच्छा वा—एतदन्यतरदेव गृह्यते, एवञ्च—'रामेण बाणेन हतो वाली'त्यादौ बाणोद्देश्यकसाधकतमत्वप्रकारकेच्छायां तथात्वाभावेन तत्र करणसञ्ज्ञायाः सावकाशतया प्रकृते पयोलाभेच्छाधीनैव भोजनेच्छेति प्रकृते पयसः कर्मत्वापत्तिरिति तदावश्यकमित्युमानाथीये स्पष्टम् । तमब्ग्रहणफलमाह—**अग्नेरिति । अस्यापवाद इति ।** ननु यद्यपि निवारकस्य दुष्टामात्यादेर्यत्र 'अयं माणवको राजपुत्रोऽग्निं संयुनक्तु'इत्यपीच्छा, परं राजभयेन तं माणवकं=बालं निवारयति तत्र निवारणानुकूलप्रधानीभूतव्यापाराश्रयामात्यादिनिष्ठा तद्वृत्तिव्यापारवाचकवारयतिधातुवाच्यसंयोगरूपफलाश्रयत्वप्रकारिकेच्छा अग्न्युद्देश्यिकेति—तत्रोभयोः 'कर्तुरीप्सित'मितिसूत्रेण कर्मसञ्ज्ञायाः प्राप्तिस्तथापि—यत्र'माणवकोऽग्निं संयुनक्तु'इतीच्छाऽमात्यादेर्नास्ति तत्र भृत्यवृत्तिव्यापारवाचकधातुवाच्यसंयोगरूपफलाश्रयत्वप्रकारकभृत्यसमवेतेच्छोद्देश्यत्वाभावादग्नेः 'कर्तुरीप्सित'मितिसूत्रेण कर्मसञ्ज्ञाया अप्राप्तेस्तत्रापादानसञ्ज्ञार्थं 'वारणार्थाना'मित्यस्य चरितार्थतयाऽनवकाशत्वाभावादपवादत्वोक्तिरयुक्तेति चेन्न; तत्रापि 'तथायुक्तञ्चानीप्सित'मित्यनेन परत्वात्कर्मत्वापत्तौ तद्वैयर्थ्यस्य स्पष्टत्वात् । न चैकदेव-ईप्सितत्वेन 'वारणार्थाना'मित्यनेनापादानसञ्ज्ञाप्राप्तिः, अनीप्सितत्वेन च'तथायुक्त'मित्यनेन कर्मसञ्ज्ञाप्राप्तिरिति—बाधितमिदमिति वाच्यं, 'वारणार्थाना'मित्यत्र कर्तृपदाभावात्कारकसामान्यवृत्तीप्साया ग्रहणं, 'तथायुक्त'मितिसूत्रे तु पूर्वसूत्रात्कर्तृ-

❀ चिद्अस्थिमाला ❀

आह—**ईप्सितेति । अविवेति ।** किन्तु करणत्वस्यैव विवक्षणादित्यर्थः । पञ्चकं प्रातिपदिकार्थपक्षे उभयविवक्षायान्तु परत्वात्कर्मत्वमेवेति भावः । तामेव विशदयति—**तमस्येति ।** तन्मात्रस्येत्यर्थः । **तदिति ।** तमेत्यर्थः । इष्टापत्तावाह—**एवञ्चेति । माणवकस्येति ।** तस्यापीत्यर्थः ।

❀ विषमपदविवृतिः

लाभेनाश्वनिष्ठभक्षणजन्यो गलबिलाधःसंयोग इत्यर्थप्रतीतिर्वा । **फलाश्रयत्वेनाविवक्षणादिति ।** तथा च फलाश्रयत्वेन विवक्षायां-'पयो भुङ्क्ते' इति, करणत्वेन विवक्षायां-'पयसा भुङ्क्ते' इति

—न चाग्नौ चरितार्थं, तस्यापि तद्वृत्तिव्यापारजन्यसंयोगरूपफलाश्रयत्वात् ।

❀ विजया ❀

पदानुवृत्त्या कर्तृमात्रवृत्तीप्सया ग्रहणेन विरोधाभावेन बाधानवकाशात् । तथा हि—अग्नेर्माणवकात्मककर्मरूपकारकवृत्तीप्साविषयत्वस्य सत्त्वेनापादानसञ्ज्ञाप्राप्तिः, वारकभृत्यरूप—प्रधानीभूत-व्यापाराश्रयकर्तृ-वृत्तीप्साविषयत्वाभाववत्त्वेन च 'तथायुक्त'मित्यनेन कर्मत्वप्राप्तिश्चेति को विरोधः? । फलत्वञ्च - [illegible] भूतव्यापारप्रयोज्यत्वमेवापि तु 'धात्वर्थेऽनुकूलत्वसम्बन्धेन प्रकारताश्रयत्वे सति धात्वर्थत्व रू[illegible] संयोगादीनामपि वारयतिधातुफलत्वं सुवचमेवेत्यन्यत्र स्पष्टम् ।

❀ चिदस्थिमाला ❀

तस्यापि=अग्नेरपि । अग्निना माणवकस्सम्बन्धः । तद्रूपेति । वारयत्युरस्याप्येत्यर्थः । एतेन 'वारणार्थानां

❀ वरवर्णिनी ❀

**कर्तुरुद्देश्यं कर्मेत्यवास्त्विति** । प्रधानव्यापारवाचकधातूपात्तफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्यर्थकं 'कर्तुरुद्देश्यं कर्म'त्येव सूत्रमस्त्वित्यर्थः ।

पयस उद्देश्यत्वञ्च—तद्विषयकेच्छाप्रयोजकेच्छाविषयत्वम् । पयोभोजनेच्छया ओदनभोजनेच्छा-जायते इति-ओदनभोजनेच्छ प्रयोजकत्वं पयोविषयकेच्छायां सुलभमिति तद्विषयत्वात्पयस उद्देश्यत्वम् ।

**अपवादः स्यादिति** मनुष्यग्रहणाभावे हि कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मेत्येव सूत्रतो लाभादिति भावः । न च मनुष्यग्रहणाभावेऽपि—कर्तृनिष्ठव्यापारवाचकधातूपात्तफलाश्रयत्व-प्रकारकेच्छोद्देश्यं कर्मेत्यर्थापेक्षया—लाघवात्—कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यङ्कारकङ्कर्मे-त्यर्थस्य स्वीकारेणाग्नेर्माणवक वारयतीत्यादावग्नेः कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वस्याभावात्कर्मसञ्ज्ञा न प्राप्नोतीति तत्र 'वारणार्थाना'मित्यस्य चारितार्थ्यमिति वाच्यं, कर्तृवृत्तिव्यापारप्रयोज्यविभागरूपफलाश्रयत्वस्य 'प्रयागात्काशीङ्गच्छती'त्यत्र प्रयागेऽपि सत्त्वेन तस्य कर्मसञ्ज्ञावारणाय फले—[कर्तृनिष्ठव्यापारप्रयोज्यत्व-निवेशेऽपि]—कर्तृनिष्ठव्यापारवाचकधातूपात्तत्वनिवेशस्यावश्यकत्वेनोभयनिवेशे गौरवाल्लाघवात्कर्तृनिष्ठव्यापार-वाचकधातूपात्तफलाश्रयत्वेनेच्छोद्देश्यस्यैव कर्मसञ्ज्ञाया वक्तव्यत्वेनाग्नेरपि कर्मसञ्ज्ञायाः प्राप्त्या 'वारणार्थे'ति सूत्रानवकाशस्य स्पष्टत्वात् । तथा च तमप्फलं—फले कर्तृनिष्ठव्यापारप्रयोज्यत्वलाभ एव ।

न चाग्नेर्माणकं वारयतीत्यादावग्निसंयोगोऽपि यदा वारयितुरभिप्रेतः, स्वामिभयादिना चाऽग्निसंयोगानुकूल-व्यापाराभावानुकूलव्यापारोऽप्यभिप्रेतः, तदाऽत्राऽग्निसंयोगाश्रयत्वप्रकारकेच्छोद्देश्यत्वादग्नेः कर्मत्वम्प्राप्नोति, अग्निसंयोगानुकूलव्यापाराभावाश्रयत्वप्रकारकेच्छोद्देश्यत्वाच्च माणवकस्य कर्मत्वमित्येवंरीत्या तस्य निरवकाशत्वोप-पादनेऽपि यदा 'माणवकोऽग्निं संयुनक्तु'इतीच्छा भृत्यस्य नास्ति तत्राग्नेः कर्मसञ्ज्ञाया अप्राप्त्या तादृशस्थले 'वारणार्थाना'मिति सूत्रं सावकाशमेवेतिवाच्यं, 'माणवकोऽग्निं संयुनक्तु'इतीच्छाया अभावेन 'कर्तु'रित्यस्य प्राप्तेरभावेऽपि 'तथायुक्तञ्चे'त्यनेन कर्मत्वप्राप्त्या तन्निरवकाशत्वस्य स्पष्टत्वात् । [ 'तथायुक्त'मित्यस्य हि—कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयः कर्मेत्येवार्थ इति तेन कर्मसञ्ज्ञाप्राप्तेः स्पष्टत्वात् । ] तमब्ग्रहणे तु कर्तृवृत्तिव्यापारप्रयोज्यत्वस्य फलेऽभावान्न दोष इति **श्रीदण्डिभट्टाः** ।

अयमाशयः—ननु 'अग्नेर्माणवकं वारयती'त्यत्राग्नेः कर्तृवृत्तिव्यापारवाचकधातूपात्तसंयोगरूपफला-श्रयत्वेऽपि कर्तृवृत्तीच्छोद्देश्यत्वाभावात्कर्तुरित्यस्याऽप्राप्त्या तत्र 'वारणार्थाना'मित्यस्य चारितार्थ्या-न्माणवकस्यानेन परत्वात्कर्मसञ्ज्ञयाऽभीष्टसिद्धौ तमब्ग्रहणं व्यर्थमिति चेन्न, तमब्ग्रहणाभावे समभिव्या-हृतधात्वर्थ—प्रधानव्यापार—वाचकधातूपात्तफलाश्रयत्वरूपेप्सितमवत्क्रियायुक्ततया तथायुक्तमित्यनेनाग्नेः कर्मत्वप्राप्त्याऽन्यतरत्वावच्छिन्नव्यापकतामादाय'वारणार्थाना'मित्यनेन 'कर्तु'रिति 'तथायुक्ते'त्यनयोर्बाधा-पत्त्या माणवकस्याप्यपादानत्वापत्तेरित्याशयात् । यत्र तु कर्तृवृत्तीच्छोद्देश्यत्वमग्नेरस्ति तत्र 'कर्तुरीप्सिते'ति-

वारयतेश्च—संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः।—एष एव प्रवृत्तिविघातः। 'ईप्सित'शब्द उभयत्रापि क्रियाशब्द एव । न च संयोगो न तत्कर्तृव्यापारजन्य इति तत्र कर्मत्वाप्राप्तिरिति वाच्यं, 'कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्व'मित्यर्थस्यैव

ॐ विजया ॐ

ननु वाचकवाच्यत्वापेक्षया स्वरूपसम्बन्धरूपप्रयोज्यत्वस्य लघुभूततया तस्य स्वत एव लाभे सिद्धे तल्लाभाय तमब्ग्रहणं किमर्थमिति चेन्न; पुष्ट्यर्थं माषक्षेत्रेऽश्वबन्धने 'माषेष्वश्वं बध्नाती'त्यत्र माषाणां कर्मत्वाभावाय प्रत्यासत्त्या कर्तृग्रहणसामर्थ्येन वाचकवाच्यत्वस्यावश्यं ग्राह्यतया प्रयोज्यत्वसम्बन्धस्य-लाभो न स्यादतस्तमब्ग्रहणमित्याशयात् । एवञ्च 'स्वप्रयोज्यत्व' 'स्ववाचकधातुवाच्यत्वो'भयसम्बन्धेन निरुक्तव्यापारविशिष्टफलाश्रयत्वेनेच्छोद्देश्यं कर्मत्वर्थः सिद्ध इत्याकूतम् ।

अत्र च संयोगानुकूलव्यापारो-बालस्य, तदभावानुकूलव्यापारो दूरीकरणादिर्वारयितृभृत्यनिष्ठः। उभयत्र=''कर्तुरीप्सिते'ति सूत्रे 'वारणार्थाना'मित्यत्र च । क्रियाशब्दः=यौगिकः । न त्वभीष्टार्थको रूढः। एवञ्चाग्नेरपीप्सितत्वेत्याशयः । संयोगः=फलम्। न तत्कर्तृव्यापारजन्यः=न वारयतिकर्तृ-भृत्यादिव्यापारप्रयोज्यः । 'किन्तु तत्कर्ममाणवकव्यापारजन्य एवे'ति शेषः । अत्र=अग्नौ । एवञ्च 'वारणार्थे'तिसूत्रचरितार्थमित्याशयः।कर्तृव्यापारेति । वारयतिकर्तृभृत्यादिनिष्ठप्रकृतधातूपात्त-

ॐ चिदस्थिमाला ॐ

कर्मण ईप्सित' इत्येव न्यासः कार्य इत्यपास्तम् । तथाचैतदभावे सर्वत्र कर्मत्वप्राप्तौ 'वारणे'त्यस्य वैयर्थ्यात्तद्योगेऽपवादत्वापत्त्यानिष्टं सुस्थमेवेति भावः ।

ननु प्रवृत्तिविघातस्यैव वारणार्थत्वेन संयोगरूपफलं न वारयतिवाच्यमत आह—**वारयतेश्चेति** ।

ॐ विषमपदविवृतिः ॐ

व्यवस्थया प्रयोगद्वयसिद्धेः । **अवयवद्वारेति** । एतेन 'तमब्ग्रहणं कि'मिति यथाश्रुतमूलमसङ्गतमिति ध्वनितम् । **वारयतीति** । इदं स्वार्थणिजन्तम् । **फलाश्रयत्वमित्यर्थस्यैवेति** । तथा च 'कर्तु'रिति

ॐ वरवर्णिनी ॐ

सूत्रेण कर्मत्वप्राप्तिरग्नेरस्ति । तमब्ग्रहणे तु—समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयरूपे-प्सिततमवत्व क्रियायुक्तत्वस्वीकारेण—[अत्र समभिव्याहृतो—वारिधातुः, तदर्थप्रधानव्यापारः-संयोगानुकूल-व्यापाराभावानुकूलव्यापारः, तत्प्रयोज्यत्वं न संयोगरूपफले, किन्तु संयोगानुकूलव्यापाराभावरूपे फल एवेति—]—न दोष इत्याहुः ।

**संयोगाद्यनुकूलेति** । नन्वत्र 'संयोगानुकूलव्यापाराभाव'पदेन कोऽभावो विवक्षितः ?, न तावद-न्योन्याभावः, संयोगानुकूलव्यापारभेदस्य तदतिरिक्तभोजनगमनादिक्रियामात्रे सत्त्वेन पचत्यपि चैत्रे 'माणवकं वारयती'त्यापत्तेः, भेदस्य नित्यतया तदनुकूलत्वस्य व्यापारे बाधितत्वाच्च । अतएव नात्यन्ता-भावस्तथा, तस्यापि नित्यत्वात्तदनुकूलव्यापारस्य बाधितत्वात्। नापि ध्वंसः, अग्निसंयोगायोद्यते हि माणवके-अग्निसंयोगस्याजातत्वात्प्रतियोगिनोऽग्निसंयोगस्याभावात्तद्ध्वंसस्यात्यसम्भवात्। यत्र त्वग्निसंयोगो माणवकस्य

१ ''—ननु व्यापाराभावानुकूलत्वं व्यापारे बाधितम्, अत्यन्ताभावस्यान्योन्याभावस्य च नित्यत्वात्, प्रागभावस्याप्युत्पत्तेरभावात्तदनुकूलत्वं बाधितम् । व्यापारे प्रध्वंसाभावानुकूलत्वसम्भवेपि सोयमभावः प्रकृते ग्रहीतुं न शक्यते, उत्पन्नस्यैव ध्वंसात्, पूर्वमग्निसंयोगस्य माणवकेऽवश्यमपेक्षितत्वादितिचेन्मैवम्, अभावा-नुकूलत्वं प्रकृते नाभावजनकत्वं, किन्त्वभावप्रयोजकत्वमित्युच्यते, यथा घटाभावप्रयोजकत्वं दण्डाभावे ।

केचित्तु अभावपदेनात्र प्रागभाव एव गृह्यते, तत्प्रयोजकत्वञ्च प्रागभावजन्यकार्यानुत्पत्त्या प्रागभावनाश-सामग्रीविघटनद्वारा प्रागभावसत्ताप्रयोजकत्वमित्याहुः—''इति **श्रीदण्डिभट्टा** अपि व्याचक्षते ।

तेन लाभात् । तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः ।

ईप्सिततमत्वञ्च–प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वं, —तच्च नाग्न्यादौ ।

❀ विजया ❀

प्रधानीभूतवारणानुकूलव्यापार—वाचकवारयतिधातूपात्त-संयोगरूपफलाऽऽश्रयत्वङ्कर्मत्वमित्यर्थस्यैव ईप्सितपदघटितकर्तुरिति सूत्राल्लाभ इति भावः । एवञ्च मेर्वादिधातूपात्तनाहशसंयोगरूपफलाश्रयत्वात्कर्मतेति तत्त्वम् । ईप्सितमात्रे=प्रकृतव्यापारवाचकधातूपात्तफलाश्रये वह्न्यादौ । ईप्सिततमे=

❀ चिदस्थिमाला ❀

तत्सूत्रस्थभाष्यादिति भावः । आदिना–भक्षणं, तथा च क्वचिद्भक्षणादिजनकव्यापाराभावानुकूलव्यापारः, क्वचित्संयोगानुकूलव्यापाराभावानुकूलव्यापार इति फलितम् । तथा च तद्धात्वर्थप्रयोज्यफलाश्रयोऽपादानमिति 'वारणार्थे'ति सूत्रार्थ इति बोध्यम् । नन्वीप्सितशब्दस्याभिप्रेतपर्यायस्य रूढस्य तत्र ग्रहणेन 'यवेभ्यो गां वारयती'-त्यादौ यवादेः स्वत्वे सतीप्सितत्वेन तत्रैव तत्प्राप्तिर्न तु गवि, गवादेः स्वत्वे तु तत्रैव तत्त्वेन तत्प्राप्तिः, उभयत्र स्वत्वेऽपि न स्वत्वेन ईप्सितत्वं नियतं, स्वत्वाक्रान्तेऽप्यनीप्सितत्वस्य लोके प्रसिद्धत्वात्, एवं चेष्टसाधने एव तत्त्वमित्यन्यतरस्यैव तदिति कथमुभयत्र युगपत्तदापादनमत आह–**ईप्सितेति** । अत एव 'कूपादन्ध'मित्यादौ

❀ विषमपदविवृतिः ❀

न कर्मणि षष्ठी, किन्तु सम्बन्धे । सम्बन्धश्च स्वनिष्ठव्यापारवाचकधातूपात्तत्वं, तच्च फलान्वयि । 'कर्तरि षष्ठी'ति पूर्वोक्तं तु प्राचामनुरोधेनेति भावः । वस्तुतः 'कर्तरि षष्ठी'ति प्राचीनोक्तपरित्यागे न किञ्चित्फलमग्नेर्माणवकमित्यत्र दोषदानातिरिक्तमिति तमब्ग्रहणं व्यर्थमेवेति केचित् ।

**ईप्सिततमत्वञ्चेति** । अयं भावः—तमप्प्रत्ययः क्वचित्प्रकृत्यर्थतावच्छेदकगतातिशयबोधको

❀ वरवर्णिनी ❀

जातस्तत्राग्नेर्माणवकं विभाजयतीत्यस्यैव प्रयुज्यमानत्वात् । नापि प्रागभावः, तस्य घटादिरूपप्रतियोगिसमवायिकारणमृदादिवृत्तित्वशीलस्य स्वप्रतियोग्युत्पादकत्वनियमेन माणवकस्याग्निसंयोगापत्तेरिति चेन्न; अत्यन्ताभावस्यैवात्राभावपदेन विवक्षणात् । प्रधानव्यापारे तदनुकूलता च न तज्जनकत्वरूपा, किन्तु तादृशसंयोगाभावाऽभावप्रयोजकाऽभावप्रतियोगित्वरूपा । तथा च संयोगानुकूलव्यापाररूप–तदभावाऽभाव–प्रयोजकाऽभावप्रतियोगित्वं निवारकभृत्यादिवृत्तिव्यापारे निर्बाधम् । अभावयोः प्रयोज्यप्रयोजकभावश्च–स्वरूपसम्बन्धविशेष एव, व्यापकाभावप्रयोज्यत्वस्य व्याप्याभावे व्यवहारात्, यथा वह्न्यभावप्रयोज्यत्वस्य धूमाभावे व्यवहारः । केचित्तु—प्रागभाव एव तादृशाभावपदेन ग्राह्यः, नन्वेवमग्निसंयोगरूपप्रतियोग्युत्पत्तिप्रसङ्ग इति वाच्यं, स्वरूपयोग्यतारूपकारणताऽऽश्रयवृत्तेः प्रतियोग्युत्पत्तिकारणत्वशून्यस्य विलक्षणस्यैव प्रागभावस्यात्र विवक्षणीयत्वात् । आदृतश्चायं **शङ्करमिश्रैः** कणादसूत्रव्याख्यावसरे मुक्तिपदार्थनिरूपणप्रस्तावे इति न तादृशप्रागभावस्य नवीनकल्पनापत्तिप्रसङ्ग इति **श्रीबालशास्त्रिचरणानुसारिणः** प्राहुः ।

ईप्सिततमलक्षणमाह—**ईप्सिततमत्वञ्चेति** । 'स्वप्रयोज्यत्व' 'स्ववाचकधातुवाच्यत्वो'भयसम्बन्धेन व्यापारविशिष्टफलवत्त्वरूपः सम्बन्ध आख्यातोरर्थः, तत्र प्रयोज्यत्वं तमपा लभ्यते, स्ववाचकधातुवाच्यत्वं–कर्तृग्रहणलभ्यं, व्यापारे प्राधान्यांशश्च कर्तृग्रहणमहिमलभ्य इति तत्त्वम् ।

केचित्तु प्रयोज्यत्वलाभफलकं तमब्ग्रहणं न कार्यमेव, प्रयोज्यत्वालाभे परत्वादनया कर्मसञ्ज्ञया

१ तत्र हि–'प्रतियोग्यनुत्पादकोऽयं स्वरूपयोग्यतात्मककारणताश्रयवर्ती ज्ञानादिपरिरक्ष्यः प्रागभावविशेष एव दुःखाभाव'इत्याद्युक्तम् । ज्ञाने तादृशाभावपरिरक्षकता च–तत्प्रतियोगिदुःखोत्पादकव्यापारध्वंसकारणत्वाद्बोद्धव्या ।

फल—व्यापारयोः प्रकृतधात्वर्थत्वन्तु—प्रत्यासत्तिलभ्यम् । तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाऽश्वबन्धनं तदा 'माषेष्वश्वं बध्नाती'त्यादौ माषाणां न कर्मत्वं, बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि भक्षणस्य बध्नात्यर्थत्वाभावात् ।

'प्रयोज्यत्व' निवेशात्—'गां पयो दोग्धी'त्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थक-

ॐ विजया ॐ

माणवके। अनेन='कर्तु'रितिसूत्रेण। **गां दोग्धीति**। 'दुहेर्भाष्योक्तरीत्या व्यापारद्वयार्थकत्वे' इति शेषः।

**विभागेति**। अत्र विभागः—पयोनिष्ठः, तदनुकूलो व्यापारो गोनिष्ठः, तदनुकूलो व्यापारो

ॐ चिद्स्थिमाला ॐ

कूपादेरपादानत्वं, अन्यथा राजाऽधर्मभयादितो माषादेर्नाशाभावरूपफलाश्रयत्वेन गोस्वाम्यभिप्रेतत्वेऽप्यत्र कूपस्याऽतत्त्वात्तन्न स्यादिति भावः। तेन कर्तृग्रहणेन तथोक्तं, तत्रैव फलस्य तद्धात्वर्थत्वपर्यन्तेऽनाग्रहात् । एवञ्च वारणार्थकधातुप्रतिपाद्यव्यापारजन्यफलाश्रयत्वमेव तत्रेप्सितत्वमिति भावः । एतेनेप्सितं किं 'कूपादन्धं वारयती'ति 'कर्तु'रिति सूत्रे प्रत्युदाहरन्तो रत्नाकरादयः प्रत्युक्ताः। मात्रमवधारणे। अयम्भावः—प्रवृत्तिनिमित्तगतप्रकर्षे तमबादिर्विधीयते । प्रवृत्तिनिमित्तञ्च तत्रेच्छा, तस्याः स्वतः प्रकर्षसम्भवेऽपि व्याख्यानाद्विशेषणीभूतव्याप्तिगतः स गृह्यते, व्याप्तिप्रकर्षश्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्य-धात्वर्थफलीयत्वरूपः ।

न च कर्तृग्रहणात्सिद्धमेतत् ,-सूत्रे एवेप्सित इति कर्मणा कर्तुराक्षेपेणैव लाभे सिद्धे पुनः कर्तृग्रहणेन प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयस्यैव तेन ग्रहणादिति वाच्यं, लघुना तमग्रहणेन कर्तुरित्यस्य प्रत्याख्याने तात्पर्यात्फलांशे प्रकृतधात्वर्थत्वस्य व्यापारांशे इव प्रत्यासत्त्यैव लाभेन 'माषेष्वश्व'मित्यादावदोषात् । एवञ्च न पूर्वविरोध इति तदाशयः। नन्वेवमपि वक्ष्यमाणरीत्या 'माषे'ष्वित्यत्रातिप्रसङ्ग एव, बन्धनप्रयोज्यभक्षणरूपफलाश्रयत्वात् , तस्य प्रकृतधात्वर्थत्वविवक्षायामुक्तायां मानाभावादत आह—**फलेति** । तदा=तदापि ।

जन्यत्वत्यागे बीजमाह—**प्रयोज्यत्वेति** ।

ॐ विषमपदविवृतिः ॐ

यथा 'विद्वत्तम' इत्यादौ, प्रकृते तु—प्रकृत्यर्थतावच्छेदकतावच्छेदकीभूतफलसम्बन्धनिष्ठप्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यत्वरूपातिशयबोधक इति प्रत्यासत्तिलब्धमिति । तथा च कर्तुरिति न कर्तव्यम् । **प्रयोज्यत्वनिवेशादिति** । जन्यत्वनिवेशे तु पयोनिष्ठविभागस्य प्रधानीभूतव्यापारप्रयोज्यत्वेऽपि तदजन्यत्वात्कर्मत्वं न स्यात् । प्रयोज्यत्वञ्च साक्षात्परम्परासाधारणमिति न

ॐ वरवर्णिनी ॐ

बाधापत्त्या'वारणार्थाना'मित्यस्य वैयर्थ्येन तत्सामर्थ्यादेव प्रयोज्यत्वलाभसम्भवात् । साक्षाच्छास्त्रबाधाऽपेक्षया मदुक्तरीतेरेवौचित्यादित्याहुस्तन्न; रथकाराधिकरणन्यायेन बाधस्यैवौचित्यादिति श्री**बालशास्त्रिणः** ।

इदमप्यनुसन्धेयं—'काशीमगच्छन् काशीं गच्छती'त्यादिप्रयोगदर्शनात्कर्तुरीप्सितसूत्रविहितकर्मसञ्ज्ञाविषये तज्ज्ञाप्यकर्मत्वशक्तिवत्-विशेषणतया तद्बोधकपदोत्तरद्वितीयया कर्तृवृत्तिव्यापारप्रयोज्यफलवत्त्वप्रकारकेच्छोद्देश्यत्वमपि बोध्यते, ततश्च चैत्रवृत्तीच्छीयोद्देश्यत्वविशिष्टकाशीकर्मकगमनकर्तृत्वाभाववद्वृत्तिः काशीकर्मकगमनानुकूलो व्यापार इति बोधः, 'अगच्छ'न्नित्येतत्समभिव्याहृतकाशीपदोत्तरद्वितीयया निरुक्तरीत्योद्देश्यत्वस्योपस्थितेः, 'गच्छती'त्येतत्समभिव्याहृतकाशीपदोत्तरद्वितीयया चोद्देश्यत्वानुपस्थितेः । विशिष्टाभावश्च तादृशोद्देश्यत्वरूपविशेषणाभावप्रयुक्तोऽत्र बोध्यः । एवं 'तण्डुलं पचती'त्यादावपि कर्तृवृत्तीच्छोद्देश्यतण्डुलकर्मकपाकानुकूलो व्यापारश्चैत्राभिन्नाश्रयवृत्तिरिति बोध इति श्री**बालशास्त्रिचरणा**नुसारिणो व्याचक्षते ।

**प्रत्यासत्तीति** । कर्तृग्रहणसामर्थ्यलभ्यमित्यर्थः ।

१ 'न शूद्रं याजये'दित्यस्य यथा 'रथकारं याजये'दित्यनेन साक्षादेव बाधस्तथैवेत्यर्थः ।

—दुहियोगे पयसः कर्मत्वसिद्धिरिति—स्पष्टं भाष्ये ।

ॐ विषमपदविवृतिः ॐ

काप्यनुपपत्तिरिति भावः । इदं विचार्यते—'कर्तुराप्यतमं कर्मे'त्येव कुतो न सूत्रितं, तथा सति 'कर्तुरीप्सिततमं,' 'तथायुक्तं'चेति च सूत्रद्वयं न कर्तव्यं भवति । कर्तृनिष्ठव्यापारप्रयोज्यफलसम्बन्धाश्रयस्य कर्मत्वमिति सूत्रार्थः । 'अग्नेर्माणवकं वारयती'त्यत्र त्वग्नेर्न कर्मत्वं तन्निष्ठफलसम्बन्धस्य कर्तृव्यापाराप्रयोज्यत्वात् । अत्र वदन्ति—'काशीं गच्छन् पथि मृत' इत्यत्र काश्याः कर्मत्वार्थमीप्सिततममिति, तथा चानीप्सितसङ्ग्रहार्थं 'तथायुक्तं'चेति, न हि काश्याः संयोगरूपफलाश्रयत्वमस्ति ।

एवं 'तण्डुलं पिपक्षन्मृत' इत्यादौ तण्डुलस्य फलसम्बन्धानाश्रयत्वेन कर्मत्वानापत्तिः, 'ईप्सिततम'मित्युक्तौ तु फलसम्बन्धप्रकारेच्छाविषयत्वात्कर्मत्वसिद्धिः । नन्वेवं 'काशीं न गच्छती'त्यत्र काश्याः कथं कर्मत्वं, संयोगप्रकारेच्छाविषयत्वाभावादिति चेन्न, नञ्समभिव्याहारे संयोगाभावानुकूलव्यापारस्यैव गम्यर्थत्वेन संयोगाभावरूपफलाश्रयत्वेन कर्मत्वसिद्धेः । न चैवम्—'अग्नेर्माणवकं न वारयती'त्यत्रोक्तदिशा उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारस्य नञ्समभिव्याहारे वारयत्यर्थतयाऽग्नेः कर्मत्वापत्तिः, दुहियोगे पयस इवाग्नेरपि प्रधानीभूतव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वादिति वाच्यं, कर्मत्वलक्षणे प्रधानीभूतव्यापारजन्यत्वस्यैव निवेशनाददोषात् । पयोनिष्ठविभागस्य गोनिष्ठव्यापारजन्यत्वेऽपि गोपनिष्ठव्यापारजन्यत्वस्यापि सत्त्वेन पयसः कर्मत्वसिद्धेः ।

न चैवं सति 'घटं जानाति-इच्छती'त्यादौ कर्मत्वं न स्यात्, स्वविषयीभवनानुकूलव्यापारस्य ज्ञानादिरूपस्य धात्वर्थतया स्वविषयीभवनस्य ज्ञानादिजनकालोत्पत्तिकस्य ज्ञानाद्यजन्यत्वात् । एवम्—'अग्नेर्माणवकं वारयती'त्यत्र माणवकस्य कर्मत्वानापत्तिः, उत्तरदेशसंयोगानुकूलव्यापाराभावस्य माणवकनिष्ठस्य प्रागभावरूपस्यानादित्वेन प्रधानीभूतव्यापाराजन्यत्वादिति वाच्यम्, अस्तु तर्हि प्रयोज्यत्वनिवेशः, स्वविषयीभवनादेरपि स्वप्रयोज्यत्वस्यानुभवबलेनाङ्गीकारेणाद्य दोषाभावात् । द्वितीये च कण्टकापसरणाद्दुःखाभाव इत्याद्यनुरोधेन प्रागभावस्यापि प्रयोज्यत्वस्य कारेणाऽदोषात् । 'अग्नेर्माणवकं न वारयती'त्यत्र तु नञ्समभिव्याहारे उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारः—अग्निं प्रति गच्छन्तं माणवकं दृष्ट्वाऽपि तूष्णीं स्थितिरूपः,—स च नाग्निसंयोगप्रयोजको माणवकव्यापारेणान्यथासिद्धेः, कारणत्वस्यैव प्रयोजकत्वस्याप्यन्यथासिद्धेरङ्गीकारात् । पयोनिष्ठविभागं प्रति तु गोपनिष्ठव्यापारमद्वारीकृत्यैव प्रयोजक इति पयसः कर्मत्वसिद्धिः । 'कर्तुरीप्सिततम'मिति सूत्रे कर्तृग्रहणं त्वग्नेर्माणवकं वारयतीत्यत्राग्नेः कर्मत्वाभावाय,—अग्निर्माणवकस्येप्सितो न चैत्रस्य ।

ननु कर्तृग्रहणं व्यापाराश्रयमात्रपरम्, अन्यथा 'सार्थाद्धीयते'इत्यत्र कर्मणि लकारस्य, 'शत्रूनगमयत्स्वर्ग'मित्यत्र च स्वर्गे कर्मत्वस्यानापत्तेः, आद्ये सार्थस्यापादानत्वात्, द्वितीये प्रधानानुरोधिकार्यस्य बलवत्त्वेन कर्तॄणां शत्रूणां कर्मत्वात् ।—तथा च माणवकनिष्ठव्यापारस्य प्रयोज्यसंयोगाश्रयस्याग्नेः कर्मत्वं दुर्वारम् । अथ तद्धातुजन्यबोधे मुख्यविशेष्यव्यापाराश्रयपरं कर्तृपदं, तथा सति

ॐ वरवर्णिनी ॐ

**स्पष्टञ्चेदं भाष्ये इति ।** एवञ्च फले प्रकृतधात्वर्थत्वविशेषणं,—पुष्ट्यर्थं माषेष्वश्वं यत्र बध्नाति तत्र माषाणां कर्मत्वाभावार्थं, 'व्यापारप्रयोज्यत्व'विशेषणन्तु पूर्वोक्तरीत्या माणवकस्य कर्मत्वार्थम् । 'जन्यत्व'मपहाय गुरुशरीरं प्रयोज्यत्वन्तु—'गां पयो दोग्धी'त्यत्र पयसः कर्मत्वार्थम् । व्यापारे प्रकृतधात्वर्थत्वविशेषणमपि—माणवकस्यापादानत्ववारणायैव, अन्यथा वारिधातोर्विशेषणीभूतसंयोगानुकूलव्यापारस्य गमधात्वर्थत्वेन तत्प्रयोज्यसंयोगरूपफलाश्रयत्वेनाग्नेरपि कर्मत्वापत्त्या 'वारणार्थाना'मित्यस्यानवकाशत्वं स्यात् । व्यापारे प्रधानीभूतत्वविशेषणमपि—'वारणार्थाना'मित्यस्यानवकाशत्ववारणार्थमेव, अन्यथा प्रकृतधात्वर्थो—विशेषणीभूतसंयोगानुकूलव्यापारोऽपि, तत्प्रयोज्यप्रकृतधात्वर्थसंयोगरूपफलाश्रयत्वादग्नेरपि कर्मत्वप्राप्त्या 'वारणार्थाना'मित्यस्यानवकाशत्वं स्पष्टमेवेत्यस्मद्गुरुचरणाः प्राहुः । विस्तरस्त्वभिनवराजलक्ष्म्यामनुसन्धेयः ।

कर्मेत्यनुवृत्ताविति । 'अधिशीङ्स्थासा'मिति सूत्रात् ।
आधारेति । कर्तृकर्म द्वारा क्रियाश्रयो हि सः । तदाह—गेहमित्यादि ।

ॐ विजया ॐ

गोपनिष्ठ इत्याशयः ।

सिद्धिरिति । 'कर्त्तुरिति सूत्रेणे'ति शेषः । कर्तृकर्मेति । प्रकृते गेहस्य कर्त्राधारतेति भावः । स इति । न चैवं 'धातोः कर्मण' इति व्यर्थं स्यात्, 'पठितुमिच्छती'त्यादौ पठनादेरिच्छाकर्त्र-

ॐ विषमपदविवृतिः ॐ

प्रधानीभूतव्यापारप्रयोज्यत्वार्थकतमब्ग्रहणवैयर्थ्यापत्तेः, 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ते'त्यादावप्रधानीभूतव्यापाराश्रयेऽपि कर्तृपदप्रयोगदर्शनेन कारकप्रकरणे कर्तृशब्दस्य व्यापाराश्रयमात्रपरस्यौचित्याच्चेति चेत्सत्यम्,—व्यर्थमेव 'कर्तु'रिति, 'प्रत्याङ्भ्या'मित्यादौ कर्तृपदस्य 'पूर्वस्ये'त्येतत्संनिधानेन व्यापाराश्रयमात्रवाचित्वेऽपि 'कर्तु'रित्यत्र कर्तृपदं मुख्यव्यापाराश्रयमात्रपरमेवेति ।

तमब्ग्रहणन्तु इच्छागतोत्कटत्वबोधकं, तेन 'पुष्पाणि स्पृहयती'त्यत्र सम्प्रदानत्वं बाधित्वा परत्वात्कर्मत्वसिद्धिः । उत्कटे च 'शेवन्तिका पुष्पे ममेच्छा, मल्लिकापुष्पे च उत्कटेच्छा' इति अनुभवद्वयसिद्धिः । 'पुष्पेभ्यः स्पृहयती'त्यत्र स्पृहधातुरिच्छामात्रवाची, 'पुष्पाणि स्पृहयती'त्यत्र फलावच्छिन्नेच्छावाची । 'स्पृहेरीप्सित' इत्यत्र धात्वर्थजन्यफलाश्रयत्वमात्रं विवक्षितं, न तु फलस्य धात्वर्थत्वेऽप्याग्रहः । कर्मसञ्ज्ञायां तु यथा लाभस्तथोक्तं शेखरे । वक्ष्यमाणं यत्तन्निर्बीजम् । फलसम्बन्धानुकूलव्यापारार्थकस्याप्नोतेः कर्मप्रत्ययसमवधाने व्यापारप्रयोज्यफलसम्बन्धार्थकत्वेन कर्मलक्षण इवात्रापि प्रत्यासत्त्या फले प्रकृतधात्वर्थत्वस्य दुर्वारत्वात् । 'तमब्ग्रहणं किमग्नेर्माणवकं वारयती' त्याद्याकरग्रन्थस्तु प्रौढिवादेन प्रवृत्तः । ननु 'तण्डुलं पचती'त्यत्र घटस्यापि कर्मत्वापत्तिः, 'तण्डुलो विक्लिन्नो भूयाद्घटश्च भूया'दिति समूहालम्बनेच्छामादाय घटस्यापि फलसम्बन्धप्रकारेच्छाविषयत्वादिति चेन्नैवम्, फलसम्बन्धनिष्ठप्रकारतानिरूपितेच्छीयविशेष्यताश्रयत्वस्य विवक्षणेनादोषात् ।

पर तु सन्ग्रहणं फलाश्रयत्वयोग्यत्वस्य निवेशे तात्पर्यग्राहकम्, अन्यथा 'भूमिं पतत्पर्णं मध्ये चन्द्रेण धृत'मित्यत्र भूमेः कर्मत्वानापत्तेः, न हि तत्र 'भूमिर्मत्संयुक्ता भूया'दिति पर्णस्येच्छा, तस्याचेतनत्वात् । योग्यतानिवेशे तु पतनस्य भूमिसंयोगं प्रति स्वरूपयोग्यतारूपजनकत्वाद्भूमेः पतनजन्यसंयोगयोग्यत्वात्कर्मत्वसिद्धिः । 'तथा युक्त'मिति तु अस्यैव प्रपञ्चः । 'पुष्पाणि स्पृहयती'त्यत्र नव्योक्तरीतिरेवानुसरणीयेत्यलं पल्लवितेनेत्याहुः ।

ॐ वरवर्णिनी ॐ

कर्तृकर्मद्वारेति । फलतावच्छेदकसम्बन्धेन फलाश्रयो यस्तदधिकरणं, व्यापारतावच्छेदकसम्बन्धेन व्यापाराश्रयो यस्तदधिकरणमेतदन्यतरस्मिन्नेवाधारपदस्य रूढत्वात् । पूर्वसूत्रे एतदर्थपरस्यैव तस्य दृष्टत्वेनार्थाधिकारानुरोधादत्रापि तादृशार्थपर एव स्यात् । एतेन तत्र तादृशार्थकतायाः सूत्रारम्भसामर्थ्याल्लाभेऽपि प्रकृते क्रियाधारत्वमेव स्यादिति न दोष इत्यपास्तमिति भावः ।

एतेन—'साक्षात्क्रियाधारयोः कर्तृकर्मसञ्ज्ञाभ्यां बाधादाधारपदेनात्र कर्तृकर्माधारग्रहण'मित्या'धारोऽधिकरण'मितिसूत्रशेखरोक्तमपास्तम् । कालिकादिसम्बन्धेन साक्षात्क्रियाधारस्य लाभसम्भवात्, तत्र कर्तृकर्मसञ्ज्ञाभ्यां बाधस्तु न सम्भवति, फलतावच्छेदक-व्यापारतावच्छेदकान्यतरसम्बन्धेन फलव्यापारानधिकरणत्वात् ।

केचित्तु—'आधारपदं-फलतावच्छेदक-व्यापारतावच्छेदकान्यतरसम्बन्धेन फलव्यापारान्यतराधिकरणे एव रूढं, तत्र च कर्तृकर्मसञ्ज्ञाभ्यां बाधाच्छेखरोक्तं कर्तृकर्माधिकरणमेव तत्राधारपदेन ग्राह्य'मिति शेखरं लापयन्ति, तन्न युक्तं, निरुक्तमुख्यार्थपरस्याधारपदस्य क्वाप्यदर्शनात् । 'तण्डुलो विक्लित्याधारः' इत्यादौ समवायस्य फलतानवच्छेदकत्वात्, प्रयोगभेदेन फलतावच्छेदकसम्बन्धभेदस्य व्यवस्थापिततया समवायस्य प्रकृतवाक्यघटकधात्वर्थफलतावच्छेदकत्वविरहादिति ध्येयम् ।

## ॐ विजया ॐ

नाधारतया कर्मत्वाप्राप्तेरिति तदेव त्वाधारपदाननुवृत्तौ ज्ञापकं भविष्यतीति वाच्यं, बोद्धुमिच्छति बुभुत्सते इत्यादौ ज्ञानार्थकेषु ज्ञानकर्मघटादीनामिच्छाविषयतया क्रियाश्रयत्वेन तद्द्वारा बोधस्य क्रियाश्रयत्वात्। इच्छा हि विषयतया घटेऽन्वेति, घटश्च विषयितया ज्ञानेऽन्वेतीति—विषयिता-सम्बन्धेन घटादिकर्माश्रय-ज्ञानार्थके तच्चरितार्थत्वात्।

न च 'कर्मणि हन' इति सूत्रं व्यर्थं सदत्राधारपदाननुवृत्तौ ज्ञापकमस्त्विति वाच्यं, 'पितृव्यं हतवान्—पितृव्यघाती'त्यादौ यत्र हन्ता पितृव्योपरि उपविश्य तं हतवान्, तत्र हननकर्तृद्वारा क्रियाधारतया पितृव्ये कर्मत्वस्य सत्त्वात्तस्य चारितार्थ्यादिति श्रीगुरुचरणाः।

---

## ॐ वरवर्णिनी ॐ

यत्तु 'धातोः कर्मणः समानकर्तृकात्' 'कर्मणि हनः' इत्याद्यारम्भसामर्थ्यात्कर्तुरीप्सितसूत्रे आधार-पदाननुवृत्तिरिति; तन्न; क्रियाधारकर्तृकर्मादिनिरूपिताधारताया: कालिकसम्बन्धावच्छिन्नायाः सर्वत्र सुलभतया तयोः सार्थक्यसम्भवात्। नन्वेवं 'गेहं प्रविशती'त्यत्रैव स्या'दितिमूलासङ्गतिः, एवंरीत्या 'तण्डुलं पचती'त्यादावपि कर्मसञ्ज्ञायाः प्रवृत्तेः सम्भवादिति चेन्न; 'आधारोऽधिकरण'मितिपूर्वसूत्रे आधारपदस्य कर्तृकर्माधारपरत्वेन विवक्षितार्थपरतया प्रकृतेऽप्यर्थाधिकारात्तादृशकर्तृकर्माधारतया विवक्षितार्थपरनैव स्यात्, एवञ्च—कर्तृकर्माधारत्वेनाविवक्षायां 'तण्डुलं पचती'त्यादौ कर्मसञ्ज्ञा न स्यादित्येवं मूलग्रन्थस्य योजनीयत्वात्।

तदेवं—'कर्तृविशिष्टा या इच्छा तन्निरूपितोद्देश्यताख्यविलक्षणविषयताश्रयः-सङ्केतसम्बन्धेन कर्मपदवान्'-इति निष्कृष्टः सूत्रार्थः। कर्तृवै०—'स्ववृत्तिव्यापारविशिष्टफलनिरूपितफलतावच्छेदकसम्बन्धावच्छिन्नाश्रयत्वप्रकार-कत्व' 'स्वसमवेतत्वो'भयसम्बन्धेन। व्यापारवैशिष्ट्यञ्च—'स्ववाचकधातुवाच्यत्व' 'स्वप्रयोज्यत्वै'तदुभय-सम्बन्धेन। इच्छायां कर्तृवृत्तित्वविशेषणाच्चैत्रस्य तथेच्छायां 'मैत्रः पचती'ति न प्रयोगः। अन्येषां फलन्तूक्त-मेव। न चैवं यत्रोभयव्यापारजन्य एकः संयोगो विभागो वा तत्र 'चैत्रः स्वं त्यजति' 'चैत्रः स्वं गच्छती'-त्याद्यापत्तिः, निरुक्तरीत्या तद्वृत्त्यनुयोगिताया: फलतावच्छेदकत्वादिति वाच्यं, परत्वात्कर्तृसञ्ज्ञया बाधेन व्यापारसमानाधिकरणस्य फलस्यात्राऽग्रहणात्। न चैवं व्यापारासमानाधिकरणस्य फलस्य ग्रहणे 'चैत्रः स्वं जानाती'त्यत्राव्याप्तिरिति वाच्यम्, अन्तःकरणावच्छिन्नात्मनोऽत्र ज्ञानाश्रयतया कर्तृत्वेन, शरीराव-च्छिन्नजीवात्मनश्च कर्मत्वेन व्यापारस्य फलव्यधिकरणत्वस्योपपादयितुं शक्यत्वात्। एवञ्च 'शरीरविशेषा-वच्छिन्नः शरीरविशेषावच्छिन्नं गच्छति त्यजति वे'ति तात्पर्येण 'चैत्रः स्वं गच्छती'तीष्टमेव। इतरथा तु कर्तृसञ्ज्ञयैव बाधः स्यादिति तादृशापत्त्यसम्भवः। एवञ्चाऽकर्मकधातुस्थले न कर्तुः कर्मसञ्ज्ञेति श्रीबालशास्त्रिचरणान्ते वसन्तो मान्या व्याचक्षते।

**गेहमित्यादीति** ।"—न च धात्वर्थः—फलं, व्यापारश्च, तत्र फलाश्रयस्य कर्मसञ्ज्ञया व्यापाराश्रयस्य कर्तृसञ्ज्ञया बाधादगत्या कर्तृकर्मद्वारा धात्वर्थाश्रयस्यैवाधिकरणसञ्ज्ञा भवतीति कर्म-पदानुवृत्त्यैव सिद्धे कर्मग्रहणं व्यर्थमिति वाच्यं, कालिकादिसम्बन्धेन फलाश्रयस्य कर्मसञ्ज्ञायाः, कालिकादि-सम्बन्धेन व्यापाराश्रयस्य कर्तृसञ्ज्ञायाश्च वारणाय फलतावच्छेदकसम्बन्धेन फलाश्रयस्य कर्मसञ्ज्ञेत्यस्य, व्या-पारवच्छेदकसम्बन्धेन व्यापाराश्रयस्य कर्तृसञ्ज्ञा भवतीत्यस्य चावश्यं वक्तव्यत्वेन, तदनुसारेण अधिकरणसञ्ज्ञाया अपि फलतावच्छेदकसम्बन्धेन धात्वर्थाधारस्यैवाधिकरणसञ्ज्ञा भवतीत्यस्य—[ कालिकादिसम्बन्धेन धात्वर्था-धारस्याधिकरणसञ्ज्ञावारणाय—]—अवश्यंवक्तव्यत्वेन कर्मपदानुवृत्तौ 'गेहं प्रविशती'त्यादौ गेहाद्याधारस्यैव अधिकरणसञ्ज्ञा स्यादिति कर्मपदस्यावश्यकत्वात्। न च 'धातोः कर्मण' इति सूत्रारम्भसामर्थ्यादेव कर्तृकर्मद्वारा क्रियार्थाधारस्य कर्मसञ्ज्ञा भवतीति पुनरपि तमब्ग्रहणं व्यर्थमिति वाच्यम्, 'आत्मानं बुभुत्सते'इत्यादौ साक्षा-

**अनुक्ते कर्मणीति** । कर्मपदेनैतच्छास्त्रबोधितकर्मसञ्ज्ञकं कर्मत्वशक्तिमद्गृह्यते । सर्वेत्यादि इतद्वितीयादीनां कर्मत्वशक्तिमानर्थः । क्रियाकारकभावः सम्बन्धश्च तदर्थः । "–'राज्ञः पुरुषः' इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका, 'कष्टं श्रितः' इत्यत्र क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका–" इतिसमर्थसूत्रस्थभाष्यात् । एवञ्च 'हरिं भजती'त्यादौ हरिकर्मकं भजनमिति बोधः ।

**अभिहिते त्विति** । अनभिहिताधिकारादिति भावः । 'पञ्चकं प्रातिपदिकार्थः' इत्यत्र 'कर्मणि द्वितीये'त्यादेः 'द्व्येकयो'रित्यादेश्च नियमत्वम् । एतदभावेऽपि सूत्रेण 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे' इति--कर्मादौ सङ्ख्यायाञ्च स्वादीनां सिद्धेः । यत्र यदा 'कर्मणी'त्यादे'र्द्व्येकयो'रित्यादेश्चैकवाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यं–तदा नार्थोऽनेन, सूत्रजबोधविषयप्रधानविषयेण 'उक्तार्थाना'मिति न्यायेन सिद्धेः ।

॥ विजया ॥

ईप्सितानीप्सितादिभेदात्कर्मणो विभिन्नतया तत्रैतत्सूत्रप्रवृत्तये आवृत्तिः करणीया स्यादत आह—**कर्मपदेनेति** । **सर्वेति** । इप्सितानीप्सितेत्यर्थः । **कर्मत्वशक्तिमानिति** । न त्वीप्सितानीप्सितत्वेन तत्र भेद इत्याशयः । अर्थः=द्योत्यः ।

तदर्थ इति । क्रियाकारकभावसम्बन्धोऽपि द्वितीयादिवाच्य इत्यर्थः । एवञ्च कर्मत्वशक्तिमद्धरिविशिष्ट क्रियाकारकभावेन भजनमिति बोधः । सम्बन्धस्य वाच्यत्वे मानमाह—**राज्ञ इति** ।

॥ चिदस्थिमाला ॥

प्राचीनमकलग्रन्थासाङ्गत्याय सिद्धान्तमाह—**कर्मेति** । कर्मसञ्ज्ञकं=तन्मात्रम् । तद्बोध्यमाह—**कर्मत्वेति** । बोधोऽपि तथा—( कर्मत्वशक्तिमत्त्वेन )—न तु प्राचीनरीत्येत्याह—**सर्वेति** । आदिना—तृतीयादि ।

**क्रियेति** । क्रियात्वकारकत्वसमूहः सम्बन्ध इत्यर्थः । चेन तद्गतविशेषणत्वसमुच्चयः । द्वितीये मानमाह-**राज्ञ इति** । इति=इत्यत्र । 'अनभिहिते' इत्यस्य प्रत्याख्यानप्रकारं सिद्धान्तमतेनाह-**पञ्चकेति** ।

॥ विषमपदविवृतिः ॥

**शक्तिमानर्थ इति** । द्योत्योऽर्थः । **तदर्थ इति** । वाच्योऽर्थ इत्यर्थः ।

**हरिकर्मकमिति** । क्रियाकारकभावसम्बन्धेन कर्मत्वशक्तिमद्धरिविशिष्टं भजनमिति बोधः । **नियमत्वमिति** । ननु कथं नियमत्वं, क्रियाकारकभावसम्बन्धस्य प्रकृत्यर्थत्वाभावेन तत्र स्वादीनामसिद्धेः । न च सोऽपि प्रकृत्यर्थः, विभक्तिस्तु द्योतिकेति वाच्यं, तथा सति तस्य विशेषणतापत्तेः । किञ्च क्रियाकारकभावसम्बन्धस्य विभक्तिवाच्यत्वं न तु सूत्राक्षरलभ्यत्वमिति चेन्न, सम्बन्धस्य सूत्राक्षरालभ्यत्वेऽपि भाष्यप्रामाण्येन द्वितीयावाच्यत्वाङ्गीकारात् । कर्मत्वशक्तेस्तु

॥ वरवर्णिनी ॥

क्रियाधारस्य [ गेहं प्रविशतीत्यादौ गेहस्येव ] आत्मनस्सत्त्वात्तत्र 'धातोः कर्मणः' इतिसूत्रस्य चारितार्थ्येन तत्सूत्रस्य वैयर्थ्याभावात् । **क्रियाकारकभाव इति** । इदं परिचायकं, क्रियाकर्मभावक्रियाकरणभावादीनां तत्तत्सम्बन्धानाम्—"इति श्रीदण्डिभट्टाः ।

**सूत्रजबोधे इति** । सूत्रजन्यबोधे यत्किञ्चिन्निष्ठप्रकारतानिरूपितविशेष्यतया भासमानो योऽर्थः स चेत्पदान्तरेणोक्तस्तदा तस्मिन्नर्थे पदान्तरं शास्त्रेण न प्रयुज्यते इति हि तन्न्यायार्थः ।

१ 'राजपुरुष इति'—इति पाठाऽभिप्रायेणेदं व्याख्यानम् ।

यद्यपि 'द्विर्बद्धं सुबद्ध'मिति न्यायेन 'द्वौ ब्राह्मणौ' 'व्यतिलुनते' इत्यादौ द्योतकवाचकयोर्द्योतकयोरत्र समुच्चयो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात् । एवञ्च कर्मादीनां द्योत्यत्वमेव ।

यदा तु 'कर्मगते एकत्वे' इत्यन्वयेन सङ्ख्यायास्तत्त्वं तदा सूत्रनारम्भव्यम् ।

भाष्ये एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव, न त्वेतावता तच्छक्यत्वमेतेषां भ्रमितव्यं; नियमत्वानुपपत्तेरिति-स्पष्टं 'बहु'ष्विति सूत्रे भाष्यादिषु ।

द्योतकविषयेऽप्युक्तार्थानामिति न्यायः—'अधिपरी'ति सूत्रे भाष्ये दृश्यते । तत्र हि 'अध्यागच्छती'त्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामितिन्यायेनाभावमाशङ्क्य—'अपूपौ द्वौ' इत्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम् । तत्र हि द्विशब्दापूपशब्दयोर्वाचकयोः, प्रकृतिप्रत्यययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः ।

अत एव 'द्विदशाः' इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम् । तत्र हि—समासः सुचेत्युभयमपि द्योतकम् । सुजर्थश्च—क्रियाजन्मेति तत्रैव वक्ष्यते ।

तथा —तद्धितद्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं 'माषशः' इत्यादाविति 'सर्वस्य द्वे' इति सूत्रे भाष्ये उक्तम् ।

---

❀ चिदस्थिमाला ❀

**एतदिति** । उभयेत्यर्थः । तत्र=नियमत्वे । **द्विर्बद्धमिति** ।दृढतरत्वबोधनार्थम् ।'समासस्येति सूत्रभाष्योक्ते'त्यादिः । 'व्यतिलुनते' इति पाठः । यथाक्रममाह—**द्योतकेति** । एवञ्च=पञ्चकपक्षे च । एवं प्रत्याख्यानमतमुक्त्वा सूत्रमतमाह—**यदा त्विति** । तत्त्वं=सूत्रजबोधे प्राधान्यम् । अत्र द्योतकतापक्षस्यैव मुख्यत्वमित्याह—**भाष्य इति** । 'सुपां कर्मादयोऽपी'त्यादिना । एतावता=तथा भाष्योक्त्या । **नियमत्वेति** । 'उक्तरीत्या प्रतिपादिते'-त्यादिः । आदिना कुत्सितसूत्रभाष्यादि । नन्वेवं वाचकविषयकस्योक्तार्थानामिति न्यायस्य कथं सञ्चारोऽत आह—**द्योतकेति** । 'तत्र हि'त्यस्य 'कृत'मित्यत्रान्वयः । समाधिमुपपादयति-**तत्र हीति** । तयोः=प्रकृति-प्रत्यययोः । केवलद्योतकस्थलमाह-**अत एवेति** । तत्रापि तत्सञ्चारादेवेत्यर्थः । ननु कोऽसौ सुजर्थोऽत आह—**क्रियेति**। **तत्रैव**='सङ्ख्यायाऽव्यये'तिसूत्रे एव। भाष्यान्तरमप्याह-**तथेति** । किञ्चेत्यर्थः ।'द्योतकयो'रित्यस्य'मध्ये'

❀ विषमपदविवृतिः ❀

प्रकृत्यर्थत्वात्तदंशे नियामकत्वमुपपद्यत एव । **द्योतकयोरिति** । उपसर्गात्मनेपदयोः । तत्र हि 'हरिः सेव्यते'इत्यत्र द्योतकयोस्तिङ्सुपोः समुच्चये दोषः, 'पक्वस्तण्डुल'इत्यादौ द्योतकवाचकयोः कृत्सुपोः

---

❀ वरवर्णिनी ❀

**न्यायेन सिद्धेरिति** । अयंभावः-एकत्वविशिष्टे कर्मणि बुबोधयिषिते द्वितीया भवतीति कर्मणि द्वितीयेति-सूत्रार्थः । तथा च तत्र कर्मत्वरूपार्थस्य प्रधानत्वात्तस्यान्येनाभिधाने तद्बोधिका द्वितीया न भवति, अर्थ-निबन्धनकार्यविषये प्रधानाप्रधानयोरिति न्यायेन प्रधानार्थस्योक्तत्वेनोक्तार्थानामप्रयोग इति न्यायप्रवृत्तेः । अप्रधानसङ्ख्यारूपार्थस्यान्येनाभिधानेपि तद्बोधिका विभक्तिर्भवत्येवेति अनभिहिते इति सूत्रं व्यर्थमिति । उक्ता-र्थानामिति न्यायस्यापि अर्थनिबन्धनकार्यविधायकत्वेन तत्र प्रधानाप्रधानन्यायप्रवृत्तौ बाधकाभावात् ।

एवं [-च-] धातोरपि क्रियात्व-क्रिया-काल-कारक-सङ्ख्यारूपं पञ्चकमर्थः। अत एव तद्विषयेऽपि 'द्व्येकयो'रित्यादेर्भावकर्मणोरित्यादेश्च नियमत्वं भाष्यसम्मतं सङ्गच्छते।

अत एव 'दधि' 'अजर्घाः' 'अवे'दित्यादौ प्रातिपदिक-धातुभ्यामेव सर्वबोधः। अत एव 'भावकर्मणो'रित्यस्य-तद्वृत्ताद्धातोरित्यर्थः-'स्नुक्रमो'रिति सूत्रे भाष्ये दर्शितः। -द्योत्यत्वादेवोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः।

**प्रथमैवेति**। सा हि प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येवेति भावः। अत एव 'अभिहिते प्रथमे'ति वार्त्तिकं सङ्गच्छते। 'तिङ्'दित्यादिपरिगणनादेव-'कटं भीष्मं कुरु'-इत्यादौ विशेष्यादुत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात्सा।

यदा तु प्रक्रियादशायां कटोऽपि कर्म, भीष्मादयोऽपीत्याश्रयणात्—कटत्वविशिष्टकट-निष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततोऽपि सा।

❀ चिदस्थिमाला ❀

इति शेषः। उक्तप्रकारमन्यत्राप्यतिदिशति—**एवञ्चेति**। नियमत्वानुपपत्त्या ह्यत्र तथा स्वीकारे चेत्यर्थः। न केवलं तदेकवाक्यतैव, किन्तु गमकमन्यदपि तत्रास्तीत्याह—**अत एवेति**। उक्तोऽर्थः। **सर्वेति**। लुप्तस्मरणं तु लोपमजानतोऽसंभवि, 'सरूप'सूत्रे प्रत्ययलक्षणकार्ये लोपफलं वदता भाष्यकृता तिरस्कृतञ्च, 'उच्चारित एव प्रत्यायकः' इत्यणुदित्सूत्रभाष्यविरुद्धञ्च। अन्यदप्याह—**अत एवेति**। उक्तोऽर्थः। पर्यवसितमाह—**द्योत्यत्वादेवेति**। एतेन प्राचीनसकलग्रन्थकाराऽन्यथोक्तमपास्तमिति स्पष्टं मञ्जूषादौ, तदाह—**अन्यत्रेति**।

ननु तत्रापि तदधिकारात्सापि दुर्लभाऽत आह—**सा हीति**। अन्यथा तद्वैयर्थ्यमेवेति भावः।

अत्र गमकान्तरमप्याह-**अत एवेति**। परिगणनावश्यकतामाह—**परीति**। तत्प्रत्याख्यानप्रकारमाह—**यदा त्विति**। 'प्रत्ययाना'मिति न्यायेनाह-**कटत्वेत्यादि**। यत्त्वत्र पक्षे सर्वेषां कारकत्वाविशेषेण विनिगमना-

❀ विषमपदविवृतिः ❀

समुच्चये सः। तत्त्वं=सूत्रजबोधे प्राधान्यम्। **दधि अजर्घा इति**। ननु 'व्यतिसे' इत्यत्र प्रत्ययादेव सर्वबोधः, एवम्—'अस्य स्त्री ई'त्यादौ प्रत्ययादेव सर्वबोधः। यदि 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायेन तत्र निर्वाह इत्युच्यते तदा प्रकृतेऽपि समं, किञ्च 'विदाः' 'गर्गाः' इत्यादौ प्रकृतेरेवापत्यार्थवाचित्वदर्शनेन प्रत्ययस्य यञादेरपत्यवाचित्वानापत्तिरिति चेत्सत्यं, बाहुल्येन धातुप्रातिपदिकाभ्यामेव सुप्तिङर्थबोधेन तयोरेव वाचकत्वं, 'व्यतिसे'इत्यादौ तु क्वचि-देव शिष्यमाणद्योतकप्रत्ययात्प्रकृत्यर्थबोध इति विशेष इत्याशयात्, 'व्यतिसे इत्यस्य नव्यमते-ऽसाधुत्वाच्च। **प्रातिपदिकार्थस्येति**। प्रातिपदिकार्थनिष्ठकर्मत्वादेरित्यर्थः। तेन=कृदादिना। एवञ्च 'प्रातिपदिकार्थमात्रे'इति मात्रग्रहणेन अन्यानभिहितकर्मत्वाद्याधिक्यस्यैव व्यवच्छेदः, न त्वन्या-भिहितकर्मत्वाद्याधिक्यस्य। अत्र तार्किकाः—'अनभिहिते' इति सूत्रं कर्मादेर्विशेष्यत्वे द्वितीयादि-रित्यर्थतात्पर्यग्राहकम्। 'हरिं भजती'त्यत्र कर्मत्वादेर्विशेष्यत्वाद्द्वितीयादिः। 'कृतः कटः'

❀ वरवर्णिनी ❀

'तिङ्कृत्तद्धिते'त्यादि न परिगणनं, किन्तूदाहरणमात्र'मिति प्राचां मतं खण्डयति—**परिगणनादेवेति**। **कटत्वविशिष्टेति**। 'कटपदोत्तरद्वितीयये'ति शेषः। प्रक्रियादशायां कटादितत्पदोत्तरद्वितीयाद्यर्थकर्मत्वस्य स्वप्रकृत्यर्थमात्रान्वितस्यैव सत्त्वादिति भावः।

**विशेषणात्सेति**। अस्मिन्पक्षे 'कर्मणि द्वितीये'त्यस्य क्रियाकर्मभावेतरसम्बन्धाघटितसम्बन्धेन फले परम्परयाऽन्वयविवक्षायां द्वितीयेतिसूत्रार्थः। अभेदस्य संसर्गत्वाभावात् क्रियाकर्मभावेतरसम्बन्धाघटितपर-म्परया 'कटं भीष्मं कुरु'—इत्यादौ भीष्मादेरप्यन्वयात्कर्मसञ्ज्ञा सिध्यतीति श्रीद**ण्डिभट्टाः**।

—बोधन्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव । कारकाणां भावनाऽन्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वाऽन्वयविषयेति—तदा परिगणनं भाष्ये प्रत्याख्यातम् ।

'तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य कर्मता तस्य सर्वस्यापि कर्मतामाहु'रिति—'कृतः कटः सुन्दरः'—इत्यादौ न क्वापि द्वितीयेति दिक् ।

❀ विजया ❀

तिङ्कृतौ=कर्मार्थकतिङ्कृतौ । स्वप्रकृत्यर्थं=स्वप्रकृतिभूतधात्वर्थम् । **कर्मतेति** । यस्य यत्फलाश्रयत्वेन कर्मता तस्य सर्वस्यापि कर्मतामाहुरित्यर्थः । **एवञ्च** 'अजा ग्रामं नीयते' इत्यत्र 'प्रधाने नीहृकृष्वहा'मित्युक्तत्वेन प्रधाने कर्मणि तिङ्प्रत्यये—संयोगानुकूलव्यापारवत्त्वरूपफलाश्रयतया- ऽजाया प्रधानकर्मतयोक्तत्वमिति—संयोगानुकूलव्यापारवत्त्वरूपफलाश्रयत्वेन यावन्तो विवक्षितास्ते सर्वे उक्ता भवन्ति—यथा 'स्थूला अजा ग्रामं नीयते' इत्यत्र स्थूलेत्यस्याप्युक्तत्वम् । नीधात्वर्थ-

❀ चिद्स्थिमाला ❀

विरहाद्भावनायामन्वयः, पार्ष्ठिकस्तु परस्परावच्छेदबोध इति प्राञ्चस्तदसदिति ध्वनयन्नाह—**बोधस्त्विति** । 'अत्रापि पक्षे' इति शेषः । नन्वेवं व्युत्पत्तिविरोधोऽत आह—**कारकाणामिति** । स्पष्टञ्चेदं मञ्जूषायां समासवादे । 'इतो'त्यस्य—'उच्यते' इति शेषः । नन्वेवं 'कृतः कटः सुन्दर'इत्यादौ दोषोऽत आह—**तिङ्कृताविति** । तिङ्कृतौ स्वित्यर्थः । 'न प्रकृत्यर्थस्य कर्मतामाहुः किन्त्वि'ति शेषः । एवञ्च परिगणनं व्यर्थमेव । एतेनात्रापि अन्यथा सकलप्राचीनोक्तमपास्तं, तदाह—**इति दिगिति** । मूलादिकं मान्याद्युक्त्या खण्डयति—

❀ विषमपदविवृतिः ❀

इत्यादौ न तथेति न द्वितीयादिरिति—वदन्ति । तत्र 'हरिः सेव्यते'इत्यादौ वैयाकरणमते तिङर्थे कर्मादौ प्रथमान्तार्थान्वयेन तस्य विशेष्यत्वाद्द्वितीयाद्यापत्तेः । **बोधस्त्विति** । 'परिनिष्ठिते प्रयोगे' इति शेषः । **स्वाश्रयद्वारेति** । स्वविशेष्यद्वारेत्यर्थः ।

❀ वरवर्णिनी ❀

**विशेषणविशेष्यभावेनेति** । अयंभावः—'कटं भीष्मं कु'र्वित्यादौ भीष्मस्यापि कटस्य सम्भवात्, अकटस्यापि भीष्मस्य सम्भवादुभयोरप्युत्पत्तिर्बोध्यते, तत्र भीष्मपदार्थस्य धर्मिपारतन्त्र्येण फले कटे चाभेदेनान्वय इति ।

ननु परिनिष्ठिते तर्हि कीदृशो बोधोऽत आह—**बोधस्त्विति** । भीष्माभिन्नकटकर्मकं करणमित्याकारक इत्यर्थः । ननु प्रक्रियादशायां यथा कटत्वविशिष्टकटनिष्ठकर्मत्वस्य कटपदोत्तरद्वितीययोक्तावपि भीष्मत्वगुणविशिष्टकटनिष्ठकर्मत्वस्यानुक्तत्वं, तथैव परिनिष्ठितेऽपीति—'प्रक्रियादशाया'मिति विशिष्य शेखरोक्तमयुक्तमिति चेन्न, परिनिष्ठिते कटांशे भीष्मस्य विशेषणतया भीष्माभिन्नकटस्यैव कटपदोत्तरद्वितीयार्थकर्मत्वान्वयाद्भीष्मत्वविशिष्टनिष्ठकर्मत्वस्य स्वातन्त्र्येणाऽभानात्,—भीष्माभिन्नकटनिष्ठकर्मत्वस्य भानमित्येतावतैव हि—तयोरभिन्नत्वाद्भीष्मनिष्ठस्यापि कर्मत्वस्य भानं, न तु स्वातन्त्र्येण भीष्मनिष्ठकर्मत्वस्य भानम् ।

अयम्भावः—प्रकारांशे साक्षात्परम्परया वा विशेषणीभूता यावन्तो धर्मास्तावन्तः सर्वेऽपि तन्निष्ठप्रकारताया अवच्छेदकाः, एवं विशेष्यांशेऽपि विशेषणीभूता यावन्तो धर्मास्ते सर्वेऽपि तन्निष्ठविशेष्यताया अवच्छेदका इति हि नियमः, अत एव 'चैत्रस्य कम्बलमानये'तिवाक्यजन्यबोधस्य चैत्रस्वामिकैककम्बलविषयकत्वे एव प्रमात्वं, न तु मैत्रस्वामिकैककम्बलविषयकत्वे, चैत्रनिरूपितस्वत्वविशिष्टकम्बलस्यैव द्वितीयार्थकर्मत्वेऽन्वयात् ।—एवञ्च चैत्रीयस्वत्वविशिष्टकम्बलत्वावच्छिन्नस्यैकस्यैवानयनमिति ।—एवञ्च न दोषः। अत एव चैत्रीयैककम्बलसत्त्वे चैत्रभिन्नमैत्रस्वामिकैककम्बलसत्त्वे च कम्बलद्वयतात्पर्येण 'चैत्रस्य कम्बला विति न प्रयोगः, चैत्रस्वत्वविशिष्टकम्बलत्वावच्छेदेन द्वित्वस्य बाधादितीत्याहुः—**श्रीबालशास्त्रिचरणानुसारिणः** ।

गत्य इति । अत्र वदन्ति"-कर्मादिपद इवात्रापि न विभक्तिवाच्यतावच्छेदक-रूपेण कर्मादेर्भानम्, अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहर्तुम् । तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या भानं, तेनैव तद्धितान्तादिभिस्समुदायशक्त्या ।

ॐ विजया ॐ

संयोगरूपफलवत्त्वेन तु यस्य ग्रामादेः कर्मता तस्य तु तिङा नाभिधानं, यत्फलाश्रये यस्मिन् कर्मणि प्रत्ययस्तस्यैवाभिधानात् । अजारूपे प्रधाने कर्मणि च प्रत्ययो न तु संयोगरूपफलाश्रये-ऽप्रधाने ग्रामरूपे कर्मणीति-न तस्याभिधानमिति न ग्रामपदोत्तरद्वितीयानुपपत्तिः । नीधातोश्च संयोगानुकूलव्यापारानुकूलव्यापारोऽर्थ इति श्रीगुरुचरणाः ।

तदुक्तं दण्डिभट्टैः—नन्वेवम् 'अजा ग्रामं नीयते'इत्यादौ ग्रामपदोत्तरं द्वितीयानुपपत्तिः, स्वप्रकृत्यर्थम्प्रति यस्य यस्य कर्मत्वं तस्य सर्वस्यापि कर्मतामाहतु'रित्युक्तत्वादिति वाच्यं, 'स्वप्रकृत्यर्थ-म्प्रती'त्युक्त्या यादृशव्यापारप्रयोज्यफलाश्रयत्वरूपकर्मत्वं यस्य यस्य तस्य सर्वस्य कर्मतामाहतुरि-त्यर्थेनादोषात्। तथा च प्रकृते अजा-ग्रामयोरेकफलाश्रयत्वरूपकर्मत्वस्याभावेन अजारूपकर्मण उक्तत्वे-ऽपि ग्रामरूपकर्मण अनुक्तत्वान्न ग्रामपदाद्द्वितीयानुपपत्तिर्दोषः । नीधातोस्संयोगानुकूलव्यापारानुकूल-व्यापारार्थकत्वात् । 'भीष्मः कटः क्रियते'इत्यादौ तु कटभीष्मयोरुभयोरपि उत्पत्तिरूपफलाश्रयत्वेन

ॐ चिदस्थिमाला ॐ

**अत्रेति** । स्वरूपेण=उक्तशक्तिमत्त्वेन । समासस्याह—**चित्रगुरिति** । तत्र च=उभयत्र च । **एतदिति** । अनभिहिते इतीत्यर्थः । दृष्टानामेव=प्रवृत्तिनिमित्ततदाश्रयरूपाणाम् । अनेन तत्र षष्ठ्यां वारितायां तु तस्यापि प्रातिपदिकार्थपदेन ग्रहणमित्यन्यत् । अत एव प्रकृतसूत्रे भाष्ये 'कर्मणि द्वितीये'त्याद्यनन्तरसूत्रेषु तद्धित-समासपरिगणनफलममुक्त्वा सर्वान्त्यषष्ठीविषये 'औपगवश्चित्रगु'रित्येतत्फलमुक्तम् । इदमपि न युक्तमित्याह—

ॐ विषमपदविवृतिः ॐ

वाच्यतावच्छेदकेति । तच्च रूपं नियमेन क्रियाकाङ्क्षोत्थापकतावच्छेदकवैजात्यम् ।

ॐ वरवर्णिनी ॐ

श्रीबालशास्त्रिचरणानां गुरुचरणाः—श्रीराजारामशास्त्रिणस्तु—'कटं भीष्मं कु'र्वित्यादौ भीष्मत्वविशिष्टमपि कर्म, कटत्वविशिष्टमपि कर्म, कटकर्मकत्वावच्छिन्नकृञादिधात्वर्थे च भीष्मकर्मकत्वस्यान्वयः । विशिष्ट-वैशिष्ट्यावगाहिबोधमर्यादया च भीष्मकटयोरप्यभेदो बोधे भासते इति न कोऽपि दोष इत्याहुः । स्पष्टञ्चेदं जटाजूट-दीपिका-त्रिपुरसुन्दर्यादावितिगौडाः ।

**अत्र वदन्तीति** । विभक्तिवाच्यतावच्छेदकविलक्षणोद्भूतशक्तिरूपपुरस्कारेण कर्मादिभासकतासामर्थ्यं यथा कर्मादिपदानां नास्ति, एवं तद्धितादेरपीति शत्रादिपदादुक्तविलक्षणरूपपुरस्कारेण बोधकताशीलानां-द्वितीयादीनामापत्तिर्न सम्भवति, अतश्चित्रगुशब्दादौपगवशब्दाच्च चित्रगवीनिष्ठस्वत्वनिरूपकत्वस्य; उपगु-निरूपिताऽपत्यत्वान्वयिनिरूपितत्वस्य च बोधिका षष्ठी नोत्पद्यते—इत्यनभिहिताधिकारफलम् । तथा हि—तत्र चित्रगव्युपगुनिरूपितः सम्बन्धः पदार्थोऽपि तत्पदजन्यबोधे संसर्गतयैव भासते, संसर्गतया स्वार्थबोधक-षष्ठ्यर्थ एव तद्धितबहुव्रीह्योर्विधानात् । प्रातिपदिकार्थसूत्रे च—तत्पदजन्यबोधे प्रकारतया भासमानस्यैव-प्रवृत्तिनिमित्ततदाश्रयान्यतरस्य प्रातिपदिकार्थशब्देन ग्रहणम् । 'शेषे षष्ठी'त्यत्र च शेषपदेन उपयुक्तादन्यो गृह्यते ।—एवञ्च प्रथमाप्रवृत्तावुपयुक्तो यः प्रवृत्तिनिमित्तादिस्तदितरोऽत्र शेषपदार्थ इति लब्धम् । तत्वञ्च चित्रगव्युपगुसम्बन्धादेः स्पष्टमेवेति तदर्थे षष्ठी दुर्वारैव । अनभिहिताधिकारे तु—प्रकृत्यैव तदर्थस्योक्तत्वान्न तदर्थे षष्ठीति प्रघट्टकार्थः ।

न च कट—घट—पटादिशब्दादेव कटत्वादिप्रतियोगिककटाद्यनुयोगिकसमवायरूपे प्रातिपदिकार्थे

एतदधिकाराभावे च 'घट' इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टतामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात्, तद्भिन्नस्यैव च षष्ठीविवक्षायां शेषपदेन ग्रहणं स्वादिस्वत्वस्वसम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः।

वस्तुतस्तु–'कटं भीष्म'मिति परिगणनफलमुक्त्वा तत्प्रत्याख्यानाय 'अशेषत्वान्नात्र शेषलक्षणा षष्ठी, अन्यानभिहितकर्मादीनामभावाच्च नान्या'–इत्याशङ्क्य "—'न केवला' प्रकृति'रिति समयः कृतः, न चान्योऽप्ययमानः एतमभिसम्बन्धमुत्सहते वक्तुमिति कृत्वा द्वितीया–" इत्युक्तं भाष्ये। तेनौपगवादावपि षष्ठी वारितैवेति तयोरप्यप्रत्युदाहरणत्वमेव।

तदुक्तम्–'अनेक'मित्यत्र भाष्येऽपि–'चित्रगुरि'त्यत्र षष्ठ्यर्थस्य नियमेन भानात् षष्ठी प्राप्नोती'त्याशङ्क्य 'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमे'-त्युक्तम्। अनेनाशेषत्वरूपं षष्ठ्यप्राप्तिबीजमुक्तम्। 'अन्तर्भूत' इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोध्यम्"–[–इति]।

❀ विजया ❀

कर्मत्वमित्युभयोरप्यभिहितत्वमिति। **षष्ठीं वारयितुमिति।** अयम्भावः-संसर्गतया भासमानस्यापि प्रकारतया भासमानत्वे प्रातिपदिकार्थत्वसम्भवात्सर्वत्र प्रथमायाः प्राप्त्या षष्ठी निरवकाशा स्यात्, तस्मात् षष्ठ्यर्थैकशतसम्बन्धघटकसम्बन्धविवक्षायां षष्ठी भवति. अन्यत्र प्रथमेत्यवश्यं व्यवस्था आदर्तव्या। तथा च 'औपगव'इत्यादौ निरूपनिरूपकभावस्य षष्ठ्यर्थत्वात् षष्ठीप्राप्त्या तां बाधितुमनभिहिता-ऽधिकार इति।

ननु द्वितीयादौ संसर्गतया भासमानः कर्मादिरुपयुज्यतां नाम, प्रातिपदिकार्थसूत्रे तु प्रवृत्ति-निमित्ततदाश्रययोरेव प्रातिपदिकार्थतया तत्र संसर्गतया भासमानस्याभिलादिपदार्थस्योपयुक्तत्वे न मानमत आह—**तदुक्तमिति।** अत एव 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेने'ति

❀ चिद्रस्थिमाला ❀

**वस्तुतस्त्विति।** बोध्यमित्यत्रान्वयः। कान्तादेरुक्तमित्यत्रान्वयः। अत्र=भीष्मादौ। अन्याः=द्वितीयादयः। नव=नहि। एतम्=क्रियाकारकभावम्। तेन=भाष्येण। अन्यदपि मानमाह—**तदुक्तमिति। षष्ठ्यर्थस्येति।** 'अशेषत्वात् षष्ठ्यप्राप्तिमुक्त्वैवमपी'त्यादिः। तदेवाह–**तत्रेति।** भाष्ये इत्यर्थः। **इतिर्वदन्ती**तिमतसमाप्तौ।

❀ विषमपदविवृतिः ❀

**तद्भिन्नस्यैवेति।** अत्र मूलं मृग्यम्। एतदेवाभिप्रेत्याह—**वस्तुतस्त्विति।**

समयः=समाधानम्। **नचान्येति।** अनन्वितार्थकविभक्त्यपेक्षयानुवादकविभक्तेरेव न्याय्यत्वमिति भावः। **षष्ठी वारितैवेति।** सम्बन्धस्य प्रातिपदिकार्थत्वेनादोषत्वादिति भावः। **अनेनेति।** 'प्रातिपदिकार्थः सम्पन्न' इत्यनेन। **सम्बन्धस्यैवेति।** 'कृत्तद्धितसमासेभ्यः

❀ वरवर्णिनी ❀

षष्ठी आपाद्यतां, तस्य प्रवृत्तिनिमित्ततदाश्रयातिरिक्तत्वात्, किमौपगवादिपर्यन्तानुधावनेनेति वाच्यं, समवायस्य षष्ठ्यर्थत्वाभावेन षष्ठ्यप्राप्तेः। **षष्ठ्यवाच्यत्वेन दृष्टानामिति।** बोधीयसंसर्गतयाऽभासमानाना-मित्यर्थः, 'षष्ठीवाच्यः संसर्गतयैव भासते' इति नियमात्।

औपगवादिप्रत्युदाहरणं खण्डयितुं प्रकारतावादी प्राह—**वस्तुत इति।**

**अशेषत्वादिति।** उपयुक्तादन्यस्यैव शेषतया कर्मत्वस्य च द्वितीयायामुपयोगात्तस्य शेषत्वाभावेन न तत्र षष्ठी, नापि च द्वितीया, कर्मत्वस्य सत्त्वेऽप्यन्यानभिहितत्वाभावात्तदप्राप्तेः, नापि ततस्तृतीयादिः, तन्निमित्तस्य कर्तृत्वादेरभावात्। तदुक्तम्—**अन्यानभिहितकर्मादीनामिति।** अन्यानभिहितत्वरूप-

१ 'चित्रगु'रित्यादौ सम्बन्धस्य संसर्गतया भानवादिमतमुक्त्वा तस्य प्रकारतया भानमिति वादिनां मतेनाह—**वस्तुत इति।**

परे तु—'शत्य' इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रयादेर्भानम्, अत एव न तत्रेतरकारकाणामन्वयः । इदञ्च 'कर्तृकर्मणो'रित्यत्र निरूपयिष्यते । एवं 'प्राप्तानन्दः' इत्यादौ यत्कर्मकप्राप्तिकर्त्ताऽऽनन्द इति विग्रहतो बोधे समासतश्च-आनन्दकर्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्यात्, वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च ।

किञ्च तथा-सति बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः ।

### ❀ विजया ❀

सिद्धान्तव्याकोपो न, अन्यथा स्वामित्वादेः संसर्गतया भाने प्रकृतिजन्यबोधे प्रकारत्वस्यैवाभावात्स्वामित्वादेर्भावार्थकतद्धितार्थत्वं दुर्लभमेव स्यादित्युमानाथादयः ।

नन्वेवं शत्य इत्यादौ तादृशेऽर्थे मा भूद्द्वितीया, तद्धितार्थक्रयादौ कारकान्तरस्य 'देवदत्तेन' 'काश्या'मित्यादेरन्वयापत्तिर्दुर्वारैवेति 'देवदत्तेन शत्योऽश्व' इत्याद्यापत्तिरित्यत आह-परेत्विति । ननु विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावकल्पनं युक्तमेवेत्यरुचेराह-वृत्तिविग्रहेति । ननु सामानार्थत्वं

### ❀ चिदस्थिमाला ❀

सिद्धान्तमाह—परेत्वित्याद्याहुरित्यन्तेन । कारकान्वययोग्यक्रिया धातूपस्थितैव, नतु तद्धिताद्युपस्थितेत्याह-शत्य इति । तत्र=शतेन क्रीत इत्यर्थकशत्यपदोपात्तक्रियायां—'शत्यो देवदत्तेने'त्यादिरीत्या । 'अधिका खारी द्रोणेने'त्यत्र तु हेतौ प्रकृत्यादित्वाद्वा तृतीया । इदञ्चेति । तत्र हि ग्रन्थकारेण-'कृतो ये कर्तृकर्मणी तत्रैव यथा स्यात्, तद्धितस्य ये कर्तृकर्मणी तत्र माभू'दिति भाष्ये उक्तमित्युक्तम् । द्वितीये दोषं वक्तुमाह—एवमिति । बोधे प्राचीनसर्वग्रन्थकारसंमते दोषान्तरमाह—वृत्तीति । तस्मात्=उक्तदोषगणात् । भाष्य-

### ❀ विषमपदविवृतिः ❀

सम्बन्धाभिधानं भावप्रत्ययेने'त्यनुशासनादिति भावः।'इति बोध्य'मित्युत्तरम्-'इतीति'शेषेण वदन्तीति पूर्वेणान्वयः । इतरकारकाणामिति । 'देवदत्तेन शत्य' इत्यप्रयोगादिति भावः ।

### ❀ वरवर्णिनी ❀

विशेषणाभावप्रयुक्तविशिष्टाभावान्न द्वितीया, अन्यानभिहितत्वेऽपि कर्त्रादेरभावाद्विशेष्याभावप्रयुक्तविशिष्टाभावान्न तृतीयादिः । न चास्तु प्रथमैवेति वाच्यं, 'तिङ्समानाधिकरणे प्रथमे'त्युक्तेस्तदप्राप्तेः । एवञ्च—कस्या अपि विभक्तेरप्राप्तावपि—'अपदं न प्रयुञ्जीते'ति कस्याश्चिद्विभक्तौ प्रयोक्तव्यायामनन्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेवौचित्यात्कटादिपदोत्तराऽमादिबोध्यसम्बन्धबोधिका प्रयोक्तव्येति भाष्याकूतम् । अनेन भाष्येण च संसर्गतया भासमानं कर्मत्वादि उपयुक्तत्वेनैव स्वीकृतमिति प्रथमायामपि—संसर्गतया भासमानमपि स्वत्वादि उपयुक्ततयैव ग्राह्यमिति शेषत्वस्य तत्र विरहादेव न षष्ठीत्युमानाथादयो व्याचक्रुः ।

समानार्थत्वभङ्गेति । अयमाशयो भट्टानां "—वृत्त्यारम्भकाणि पदानि यादृशार्थानि तादृशार्थान्येव विग्रहे उचितानीत्यर्थः । वृत्त्यारम्भकपदानामसमासाद्यवस्थायां यादृशं रूपं तादृशेन रूपेण तेषां प्रदर्शकं वाक्यमेव च विग्रहः । विग्रहार्थानुसारेणैव च वृत्त्यर्थः कल्प्यते । एवञ्च प्राप्तस्यानन्दस्य अयमित्येवात्र विग्रहः । प्राप्तानन्द इति च वृत्तिः । अत्र च यादृशार्थकानि विग्रहे पदानि तादृशार्थकान्येव वृत्ताविति उभयोः समानार्थत्वम् । समुदायेनान्यपदार्थोऽधिको भासते इति त्वन्यत् । वृत्तिघटक-विग्रहघटकपदानान्तुल्यार्थता त्वक्षता । 'पाठक—इत्यस्य पठतीत्यर्थः' इत्यत्रापि 'पाठ्' इत्येतावन्मात्रस्यैव 'पठ्' इति विवरणम्, ण्वुलादिस्तु स्वातन्त्र्येण पदं न भवतीति—तस्य पदान्तरेणैव विवरणम् । एवञ्च

—किञ्चैवं प्राप्ता भार्या यं स प्राप्तभार्ये इत्यादौ पुंवद्भावापत्तिः।

पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याभावात् ।

## ॐ विजया ॐ

नाम—यावन्तोऽर्था विग्रहवाक्ये तावन्त एव समासे इत्येव, तच्चात्राप्यस्त्येव,—प्राप्ति—आनन्द-कर्मेति पदार्थानां समासेऽप्यवैषम्यात्। विशेष्य-विशेषणभावव्यत्यासस्तु शाब्दवैषम्यकृतो न वैलक्षण्याधायकोऽतोऽरुचेराह—किञ्च तथासतीति। सामानाधिकरण्यस्येति। सामानाधिक-रण्यञ्च-स्वप्रयोज्याऽभेदीयोपस्थितीयमुख्यविशेष्यतासमानाधिकरणविषयतया साक्षान्निरूपिता या उपस्थितीयमुख्यविशेष्यतासमानाधिकरणा विषयता तन्निरूपकबोधजनकत्वम्। यथा 'पीताम्बर' इत्यत्र स्वं—पीतपदं, स्वप्रयोज्या—विशेषणताख्या विषयता, हि—अभेदसम्बन्धावच्छिन्ना, पीतत्वा-वच्छिन्नपीतनिष्ठोपस्थितीयविशेष्यतासमानाधिकरणैव चास्तीति,—तया साक्षान्निरूपिता—अम्बरत्वा-वच्छिन्नाम्बरनिष्ठोपस्थितीयमुख्यविशेष्यतासमानाधिकरणा विशेष्यताख्या—विषयता, तत्प्रयोज-कत्वमम्बरपदस्य। एवं-पीतपदस्यापि,—तथाहि-स्वम्-अम्बरपद, स्वप्रयोज्याऽभेदीयोपस्थितीय-मुख्यविशेष्यतासमानाधिकरणा विशेष्यताख्या विषयता, तया च साक्षान्निरूपिता या पीतत्वावच्छिन्ना उपस्थितीयमुख्यविशेष्यतासमानाधिकरणा प्रकारताख्या विषयता, तत्प्रयोज-कत्वं पीतशब्दे इति समन्वयः। अनुलोमविलोमक्रमेण समन्वयायैव विशेष्यत्वादिकं विहाय विषयताया निवेशः ।

'प्राप्तानन्द' इत्यत्र तु 'आनन्दाऽभिन्नकर्तृकप्राप्ति'त्यादिबोधः, तत्र स्वम्—आनन्दपदं, तत्प्रयोज्याऽभेदीयानन्दनिष्ठप्रकारताख्यविषयतानिरूपिता क्तप्रत्ययार्थकर्तृनिष्ठा विशेष्यताख्या विषयता, सा उपस्थितीयमुख्यविशेष्यतासमानाधिकरणा नास्ति, क्रियामुख्यविशेष्यकबोधस्यैवो-दयात्, या तु प्राप्तिनिष्ठा—उपस्थितीयमुख्यविशेष्यतासमानाधिकरणा विशेष्यताख्या विषयता, सा तु—अभेदीयविषयतया साक्षान्निरूपिता नास्तीति न तत्र सामानाधिकरण्यम्। उपस्थितीया विशेष्यता प्राप्तौ, अभेदीया तु कर्त्तरीति वैषम्यमिति तत्त्वमिति **नागेशभट्टाशयः** ।

**परे तु**—स्वप्रयोज्याऽभेदीयविषयतानिरूपितविषयतानिरूपकबोधजनकत्वमेव समानाधिकर-ण्यम्, 'उपस्थितीयमुख्यविशेष्यतासामानाधिकरण्य'निवेशे तु न मानम्, एवञ्च—आनन्दप्रयोज्याऽ-भेदीयप्रकारताख्यविषयतानिरूपितकर्तृनिष्ठविशेष्यताप्रयोजकत्वस्य प्राप्तपदे सत्त्वात्सामानाधिकरण्य-मक्षतम्। कर्त्तरि उपस्थितीयविशेष्यतासमानाधिकरणविशेष्यताया अभावेऽपि विशेष्यतायाः सत्त्वेन लक्षणसमन्वयात्, उपस्थितीयविशेष्यतासामानाधिकरण्यस्यानिवेशादित्याहुरित्यस्मत्तात-पादा **श्रीस्नेहिरामशास्त्रिणः**। अत एवारुचेराह—**किञ्चैवमिति** ।

पूर्वोत्तरपदयोः=प्राप्तपद-भार्यापदयोः। **अभावादिति**। 'स्वप्रयोज्याऽभेदीयोपस्थितीयमुख्य-विशेष्यतासमानाधिकरणविषयतया साक्षान्निरूपितोपस्थितीयमुख्यविशेष्यतासमानाधिकरणविषयता-प्रयोजकत्ववति उत्तरपदे परतः स्त्रियाः पुंव'दित्यर्थस्यैव सत्त्वेन तदप्राप्तेरिति **नागेशभट्टाशयः**।

## ॐ वरवर्णिनी ॐ

प्राचीनमते—'प्राप्तिकर्त्रभिन्नानन्दः' इति विग्रहार्थः, आनन्दकर्तृकप्राप्तिर्वृत्त्यर्थ इति समानार्थत्वभङ्गः स्पष्ट एव।

नवीनानां नागेशभट्टानां मते तु—प्राप्तिकर्त्रभिन्नानन्द इत्येव वृत्तिविग्रहयोरर्थः, समुदायशक्त्या च कर्मत्ववतोऽधिकस्य भानमिति वृत्तिविग्रहघटकपदानां न समानार्थत्वभङ्ग इति।

प्राप्तिकर्त्रभिन्नानन्दनिरूपितकर्मत्वं यत्पदार्थे पुरुषे बाधितमिति—'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामतः' इति न्यायेन—आनन्दविशेषणीभूत—प्राप्ति—निरूपितं तदत्र

तस्मात्—'कालाः परिमाणिने'त्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः सामानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः 'प्राप्तिकर्त्रानन्दकर्मे'त्येव बोधः । विशेष्ये तन्निरूपकत्व-बाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानं—'स्वर्गी ध्वस्त' इतिवत् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्यः ।

## ❀ विजया ❀

परे तु—स्वप्रयोज्याऽभेदीयविषयतानिरूपितविषयताप्रयोजकत्ववत्युत्तरपदे पुंवदित्यर्थ इति न पुंवत्त्वानापत्तिरिति शेखरोक्तमयुक्तमित्याहुः । इत एवारुचेराह—तस्मादिति ।

**इत्येव बोध इति ।** परे तु—विभक्त्यर्थस्य शाब्दबोधे विशेष्यत्वस्य क्वाप्यदर्शनात्क्रियानिष्ठ-विशेष्यतानिरूपितप्रकारताया एव तत्र सत्त्वादिदं चिन्त्यम् । एवञ्च—यत्कर्मकप्राप्तिकर्ता आनन्द इत्येव विग्रहे बोधः । समासे तु विशिष्टशक्त्या कर्मत्वस्य विशेष्यतया भानमिति शेखरोक्त एव 'प्राप्तिकर्त्रा-नन्दकर्मे'ति बोध इत्यन्यत् । 'कालाः परिमाणिने'ति सूत्रोक्तस्य'वृत्तिविग्रहयोः समानार्थत्व'मिति भाष्यस्य वृत्तिविग्रहयोः-तद्घटकघटकपदानां समानार्थत्वमित्यर्थ इति-वृत्तिविग्रहयोस्तुल्यार्थकपदत्व-मित्यस्यैव ततो लाभः, अत एव विग्रहेऽन्यपदार्थस्य विशेषणत्वे, वृत्तौ विशेष्यत्वे च न दोषः, शाब्द-बोधीयविषयताया विपर्यासेऽपि अर्थाभेदादिति प्राहुः ।

ननु कर्मत्वं क्रियानिरूपितं नानन्दरूपद्रव्यनिरूपितमित्यत आह—**विशेष्ये इति ।** विशेष्ये=आनन्दे । **तन्निरूपकत्वेति ।** कर्मतानिरूपकत्वेत्यर्थः । तत्पर्यवसानं=निरूपकत्वपर्यवसानम् । शाब्दबोधः= प्राप्तिकर्त्रानन्दनिरूपितकर्मतेत्यादिबोधः । विशिष्टे=प्राप्तिरूपविशेषणविशिष्टे । तदारोपेण=निरूप-कत्वारोपेण । अत्र=शस्य इत्यादौ । शब्दात्=शस्यशब्दात् ।

## ❀ चिद्स्थिमाला ❀

संमत्यर्थभेदेनाह—**काला इति** । ननु बाधितमिदमत आह—**विशेष्ये इति ।** नन्वेवं कथं तथा बोधोऽत आह—**शाब्देति** । प्रकृतमाह—**एवञ्चेति** । द्वितीये मानमाह—**अत एवेति** । उक्तद्वितीय-

## ❀ विषमपदविवृतिः ❀

**वृत्तिविग्रहयोः प्राप्तिकर्त्रेति ।** 'प्राप्त आनन्दो य'मिति विग्रहवाक्ये यच्छब्दार्थो विशेष्यो द्वितीयार्थो विशेषणं,व्युत्पत्तिवैचित्र्यात् । द्वितीयार्थे च कर्मत्वे आनन्दपदार्थस्य निरूपितत्वसम्बन्धेनान्वयो व्युत्पत्ति-वैचित्र्यात् । **शब्दादिति ।** प्राप्तिक्रियायाः शब्दतः साक्षात् कर्मण्यनन्वयादानन्दस्यैव तत्रान्वया-

## ❀ वरवर्णिनी ❀

विश्राम्यतीत्याह—**प्राप्तिकर्त्रानन्देति** । ननु 'वृत्तिविग्रहयोः समानार्थत्व'मित्यर्थस्वीकारे 'इष्यते पुत्रः' इत्याद्यर्थे'पुत्रीयती'ति न प्रयोगः, समानार्थत्वाभावात्—"इति भाष्यविरोधः, पुत्रमात्ररूपविग्रहतः पुत्रमात्र-रूपवृत्त्यारम्भकपदस्य समानार्थकतया भिन्नार्थकत्वाभावादिति चेन्न; 'धातोः कर्मण'इत्यतोऽनुवर्त्तमनिच्छा-पदार्थस्य सुबन्तार्थनिरूपितविशेष्यत्वे एव क्यजित्यर्थस्य सिद्धान्ते येन प्रमाणेन भवतां मते सिद्धिस्तेनैव ममापि सिद्ध्याऽदोषात् । अन्यथा 'पुत्रमिच्छतीत्याद्यर्थे क्यज्भवति, इष्यते पुत्र इत्यादौ न भवती'त्यस्य 'वृत्तिविग्रहयोः समानार्थत्व'मित्येतावन्मात्रेण साधयितुमशक्यतया भाष्यविरोधस्य तव सिद्धान्तेऽपि दुरुद्धरत्वापत्तिः । 'इष्यते पुत्र' इत्येव चेद्विग्रहस्तदा तदनुरोधेन पुत्रीयतीत्यस्यापि तादृशार्थस्यैव कल्पनीयतया समानार्थत्व-भङ्गाभावात् । एवञ्च भाष्यसङ्गतये सिद्धान्तिनापि यथा निरुक्तोऽर्थोऽत्र कल्प्यते तथैव मयापि कल्प्यते इति न भाष्यासङ्गतिरित्याहुरस्मानाथादयः ।

एवञ्चात्र शब्दात्कर्मादेः क्रियाजनकत्वेन, विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानम्, अतो न विभक्तिप्रसक्तिः। अत एव 'गतिकारकोपपदा'दिति सूत्रे 'गतिकारकोपपदादिति किमर्थं ?—परमं कारकं परमकारक'मिति प्रतीकमुपादाय 'यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति, तथा कारकशब्दोऽपीति। कृदन्ता हि क्रियायोग्यताविष्टद्रव्यवाचिनो न तद्भूतां कारकशक्तिं प्रतिपादयन्ती'ति कैयटेनोक्तम्। अत एव तस्य कर्मत्वस्य न क्रियान्वयनियमः, अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन कर्मादिप्राधान्यानापत्तिः।

एवं कर्मादिपदैरिव पक्वादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम्।

ॐ विजया ॐ

**कारकशब्दोऽपीति**। अन्यथा 'गतिकारकोपपदा'दित्यस्योपादानेऽपि कारकशब्दस्य कारकरूपताप्रतिपादकत्वेन तत्राभेदेनान्वितस्य परमेत्यस्यापि कारकरूपताप्रतिपादकत्वात्कृदुत्तरपदप्रकृतिस्वरापत्तिः, तथा 'कारकघट'इत्यत्रापि स दोषः स्यादित्याशयः। **प्रतिपादयन्तीति**। अत एव 'ग्रामङ्गच्छती'त्यादौ 'कर्म गच्छति' 'सम्प्रदानाय ददाती'त्यादयो न प्रयोगाः। 'कारकशब्दोऽपी'त्यस्य—'नोद्भूतां शक्तिं प्रतिपादयती'ति शेषः। कृदन्ताः='चैत्रेण कृत' इत्यादौ 'कृत' इत्यादयः।

ॐ चिद्स्थिमाला ॐ

रूपेण मानाभावादेवेत्यर्थः। तत्रादौ 'परमकारक'मिति प्रतीकस्थमाह—**यथेति**। **इतिस्तत्समाप्तौ**। तदुक्तं हरिणाऽपि—'स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते, विभक्त्यादिभिरेवास्तावुपकारः प्रतीयते' इति। स धर्मः=शक्तिरूपः। 'विभक्त्यादिभि'रित्यादिनाऽन्तरेत्याद्यव्ययग्रहणं,'दधि तिष्ठती'त्यादौ प्रातिपदिकग्रहणञ्च। उपकारशब्दोऽर्शआद्यजन्तत्वेन प्रातिपदिकार्थस्य स्वावेशेन विशेषणत्वनियामकत्वादुपकारक **इत्यर्थकः**। 'क्रियाया' इति शेषः। 'नैतत्कारक'मिति प्रतीकस्थमाह—**कृदन्ता हीति**। तस्य=कृदन्तादिप्रतिपाद्यस्य। क्वचित्सत्त्वादाह—**नियम इति**। प्रसङ्गादाह—**एवमिति**। उक्तभाष्यादेवेति भावः। नन्वेवं परिगणना-

ॐ विषमपदविवृतिः ॐ

दिति भावः। अधिकरणसप्तमीस्थले तु साक्षात् क्रियान्वयाभावेपि कारकत्व भाष्यप्रामाण्यादिति बोध्यम्। परे तु—'शत्य'इत्यत्र साध्यत्वेन क्रियादेर्भानाभावेऽपि कर्मत्वस्य तन्निरूपितत्वे बाधकाभावः। न च 'कर्तुरीप्सिते'त्यत्र कारकाधिकारात् क्रियाजनकत्वसमानाधिकरण कर्मत्वं साध्यत्वेन क्रियाभानमन्तरा न सम्भवतीति वाच्यं, विशेषणतया भासमानस्य कर्मत्वादेः साध्यत्वेन भासमानक्रियापेक्षत्वेऽपि विशेष्यतया भासमानस्य तस्य तेन रूपेण क्रियाभानमन्तरेणाप्युपपत्तेः। 'समानार्थत्वभङ्ग'इत्यप्ययुक्तम्, तावतामर्थानां सम्भवेन तत्त्वोपपत्तेः। अत एव वैयाकरणनये 'पाचक' इत्यस्य 'पचती'ति विवरणं सङ्गच्छते। 'सामानाधिकरण्यस्य हानि'रित्यप्ययुक्तम्। एकार्थीभावकल्पनातः पूर्वं स्थितस्य तस्योपजीव्यत्वात्। एतेन 'किञ्चे'त्याद्यपास्तम्, 'शब्दात् कर्मादे'रित्यप्ययुक्तं, शब्दतः क्रियान्वयित्वस्य कारकत्वप्रयोजकत्वे मानाभावादित्याहुः। 'उद्भूतशक्तित्वेन चे'ति पाठः।

**अत एव गतीति**। विभक्तिवाच्यतावच्छेदकरूपेण कर्मत्वादिशक्तेः सर्वत्र भानाभावादेव। **तस्य कर्मत्वस्येति**। 'प्राप्तानन्द'इत्यादौ भासमानकर्मत्वस्य, विभक्त्यवाच्यकर्मत्वस्येति वार्थः। **न क्रियान्वयनियम इति**। क्रियायां विशेषणतयाऽन्वयनियमो नेत्यर्थः। **क्रियाविशेषणत्वनियमेनेति**। 'प्रातिपदिकार्थद्वारे'ति शेषः। विभक्तिप्रयोजकरूपेण=विभक्तिप्रवृत्तिप्रयोजकरूपेण। तत्तच्छक्तित्वेन=

'तिङ्कृत्तद्धितसमासैरभिधाने' इत्यस्यायमर्थः—यत्तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिः। अत्रैव 'अनभिहिते'इति तात्पर्यग्राहकम्। ध्वनितञ्चेदं 'सुप आत्मन'इति सूत्रे भाष्ये। तत्र हि–'इष्टः पुत्रः, इष्यते पुत्र' इत्यर्थे क्यचमाशङ्क्य 'स्वशब्देनोक्तत्वान्ने'ति समाहितम्। इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वावगतावपि 'पुत्रः'–इति सुबन्तं न कर्मवाचीति न ततः क्यजिति तद्भावः। स्वं=कर्मत्वम्। तद्वाचकशब्देन पुत्रगतं कर्मत्वमुक्तं, न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थः। 'सुप आत्मन' इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थ इति तदाशयः। वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे 'इह भवन्त'इत्यादिना समाध्यन्तरमुक्तम्। वाक्ये फलं विशेष्यं, वृत्तौ व्यापार इति–समानार्थत्वाभावात्तत्रार्थे वृत्तिर्नेतीत्याहुः।

प्राचीनानुसारेणोक्तस्य 'प्रायेणे'त्यस्य फलमाह—**क्वचिदिति**। परे त्वत्र तुमुनः साधुत्वायेष्यते इत्यध्याहार आवश्यकः, अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः स्यात्। अध्याहारे तु 'इच्छार्थेषु तुमु'न्निति सुलभः। 'विषवृक्षोऽपि संवर्द्ध्य छेत्तुमिष्यते इति यत्तदसाम्प्रतम्–अन्याय्य'मित्यर्थः। एवञ्चाध्याहृततिङाऽभिधानान्न द्वितीया। तादृशेच्छाया अन्याय्यत्वञ्च–तद्विषयस्यान्याय्यत्वेन।

---

ॐ विजया ॐ

**तिङाऽभिधानान्न द्वितीयेति**। **परे तु**—इष्यते इत्यत्रान्वयविवक्षायां न द्वितीया,

ॐ चिदस्थिमाला ॐ

ह्यसङ्गतिरत आह—**अत्रैवेति**। अनुद्भूतशक्तिककर्मादिग्रहणं नेत्यत्रैवेत्यर्थः। एवञ्चाभिधानविषये प्रातिपदिकस्योद्भूतच्छक्तौ वृत्त्यभाव इति उद्भूतकर्मणि वर्तमानाद्द्वितीयेत्यर्थः सूत्रस्य फलित इति बोध्यम्। भाष्यान्तरमप्यत्र मानमाह—**ध्वनितञ्चेति**। ध्वनितमपीत्यर्थः। तदाशयमाह—**इष्टेति**। शाब्दार्थमाह—**स्वमिति**। ननु कथमेतावता सूत्राप्राप्तिरत आह—**सुप इति**। ननु कर्मत्वस्य विशेषणत्वे तथावारणेऽपि उपलक्षणत्वे दोष एवातः सिद्धान्तमाह—**वस्तुत इति**। [ कर्मत्वमुपलक्षणं न तु विशेषणमिति–**वस्तुत इति**। तदङ्गं न तु पृथगिति भावः। ] **उक्तं**–तत्रैव भाष्ये। तदेवाह–**वाक्ये इति**। मूलादिसकलग्रन्थासाङ्गत्य तथावतरणेन सूचितं प्रतिपादयितुं सिद्धान्तमाह—**परे त्वित्याद्याहुरित्यन्तेन**।

परमतेनाह–**अध्याहार इति**। सिद्धान्तस्त्वन्यतो द्रष्टव्यः। अन्यथा=तदनध्यहारे। सूत्रान्तरविषयोऽपि नेत्याह—**शकादीति**। तदर्थं तथा सत्याह—**विषेति**। यद्यपि 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा'–इत्यमरस्तथापि निपातानामनेकार्थत्वादाह—**अन्याय्यमिति**। ननु नेच्छायाःस्वतोऽन्याय्यत्वमत आह—**तादृशेच्छाया इति**। अन्यत्राप्यदोषमाह—**एवमिति**। स च शब्दो विभक्त्यन्त-

ॐ विषमपदविवृतिः ॐ

तत्तच्छक्त्याविष्टत्वेन। **भानमिति**। शब्दशक्तिस्वभावादिति भावः। अत्र प्रमाणमाह—**ध्वनितञ्चेदमिति**। **इष्टशब्दसामानाधिकरण्यादिति**। यद्यपीदं विग्रहे एव न वृत्तौ, तथापि विग्रहे कर्मत्वविशिष्टवाचिसुबन्तादित्यर्थोऽत्र विवक्षित इति भावः। **तद्वाचकशब्देनेति**। विग्रहस्थेष्टशब्देन 'इष्यते' इति शब्देन चेत्यर्थः। **कर्मत्वविशिष्टबोधकसुबन्तादिति**। प्रथमान्तं च न तादृशं सुबन्तमिति भावः। **वस्तुतः कर्मत्वविशिष्ट इति**। वास्तवकर्मत्वविशिष्ट इत्यर्थः। **वाक्ये फलं विशेष्यमिति**।—–सति सम्भव वृत्तिविग्रहयोरर्थसाम्यं विशेषणविशेष्यभावसाम्यञ्चापेक्षितमिति भावः।

एवम्—'अमुं नारद इत्यबोधि सः' इत्यादौ 'नारद इती'ति श्रीकृष्णीयज्ञानाकारानुकरणम्। नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ इति प्रथमान्तस्याऽप्रातिपदिकत्वान्न तत्र द्वितीया।—अत एव 'अधिहरी'त्यादौ समासः। तद्वचनसामर्थ्येन ह्यस्य परिगणनत्व-कल्पनैव युक्ता, अत एव 'अभ्र आँ अपः' इत्यादौ सप्तमी।

किञ्च निपातेनाभिधानेऽपि प्रातिपदिकादुद्भूततत्तच्छक्तिमत्त्वेनैव भानमिति

❀ विजया ❀

वर्धनादावन्वयविवक्षायान्तु प्रधानक्रियानुरोधिनी प्रथमैव। एवम्-'ओदनम्पक्त्वा भुज्यते' इत्यत्रा-प्यूह्यम्। अयमेवार्थः—'प्रधानमनुरुध्यते' इति कारिकायामप्याहुः। न द्वितीयति। वस्तुतस्तु अयं प्रयासो निष्फलः, इतिशब्दस्य बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तत्वेन प्रकृते 'नारद' इत्यस्य तात्पर्यग्राहकत्वेन इतिशब्दार्थनारदस्य कर्मसञ्ज्ञायामपि तस्याव्ययत्वेन तदुत्तरोत्पन्नद्विती-याया लुप्तत्वाद्दोषलेशस्याप्यभावात्।

❀ चिदस्थिमाला ❀

इत्याह—प्रथमान्तेति। अत एव=परिगणनादेव। ननु तद्वचनसामर्थ्यात्तत्र स इति सकलग्रन्थकारोक्त-मेवात आह—तद्वचनेति। ऋषितात्पर्यस्य ऋषिवचनैव निर्णेतुमुचितत्वात्। उक्तमेव विशदयति-अत एवेति। परिगणनादेवेत्यर्थः। परिगणनप्रत्याख्याने गतिमाह—किञ्चेति। अत्र मानमाह—

❀ विषमपदविवृतिः

तद्विषयस्य=छेदनस्य। अबोधीति। बुधेः कर्तरि 'दीपजने'ति चिण्। ज्ञानाकारानुकरणमिति। ज्ञानविषयबोधकः शब्द इत्यर्थः। शब्दाभिलप्यमानाकारइति। शब्दजन्यबोधविषयक इत्यर्थः।

प्रथमान्तस्येति। प्रथमान्तघटितस्य नारद इती'तिशब्दस्येत्यर्थः। तथा नारद इतीत्यस्य नारद इत्येतच्छब्दजन्यबोधविषयोर्थः, एवञ्च विशिष्टार्थस्य कर्मत्वेपि तद्बोधकस्याप्रातिपदिकत्वान्न द्वितीयेत्यर्थः।

तद्वचनसामर्थ्येनेति। यादृशविभक्त्यन्तेनाव्ययीभावः प्रत्यासत्त्या तद्विभक्त्यर्थे वर्तमानमव्यय-मित्यर्थ इति भावः। अभ्र आँ अप इति। छान्दसत्वान्नात्राव्ययीभावः 'निपात एका'जिति न

❀ वरवर्णिनी ❀

अप्रातिपदिकत्वान्नेति। 'श्रीराजारामशास्त्रिणो गुरुचरणास्तु—अत्र नारद इतिशब्दार्थः, तस्य तदर्थत्वे नारदपदं तात्पर्यग्राहकम्। इतिपदाच्चोत्पन्नाया द्वितीयाया 'अव्ययादाप्सुप' इति लुगिति न दोष इत्याहुः'—इति श्रीबालशास्त्रिणः। किञ्च निपातेति। तेषां समभिव्याहारे उद्भूततत्तच्छक्तिमत्त्व-पुरस्कारेण भानं न भवतीत्यत्रैवानभिहिताधिकारस्य तात्पर्यग्राहकतयेदञ्चिन्त्यमित्युमानाथ.।

इदमप्यनुसन्धेयं—नञ्समभिव्याहारे 'ग्रामं न गच्छती'त्यादौ ग्रामस्य तादृशेच्छोद्देश्यत्वाभावेऽपि बौद्धं तादृशेच्छोद्देश्यत्वमादाय कर्मत्वमुपपादनीयम्। श्रीबालशास्त्रिचरणानुसारिणस्तु—'मातुः स्मरती'त्यादौ मात्रादेस्तादृशेच्छोद्देश्यत्वेऽपि कर्मत्वाभावा'द्विवक्षातः कारकाणि भवन्ती'त्यस्यावश्य-माश्रयणीयतया — 'कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वनिष्ठविशेष्यतानिरूपितनिष्ठत्वसम्ब-न्धावच्छिन्नप्रकारताश्रयत्वेन वक्त्रा विवक्षितो यः स कर्मेत्यर्थो लभ्यते। उद्देश्यत्वनिष्ठविशेष्यतानिरूपित-निष्ठत्वसम्बन्धावच्छिन्नप्रकारता च विवक्षीया ग्राह्या। एवञ्च—'ग्रामं न गच्छती'त्यादौ व्यापारप्रयोज्य-फलाश्रयत्वप्रकारकेच्छीयग्रामनिष्ठोद्देश्यत्वाभावविशेष्यक–विवक्षा–निरूपिता–ऽभावनिष्ठविशेष्यता–निरूपित-प्रकारतासमानाधिकरणविशेष्यता—उद्देश्यत्वनिष्ठा, तन्निरूपिता तादृशी प्रकारता—ग्रामेऽस्तीति न कोऽपि दोषः। 'चैत्रो ग्रामं गच्छती'त्यादौ चैत्रनिष्ठव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छीयग्रामनिष्ठोद्देश्यत्व—विषयिणी विवक्षाऽस्त्येवेति तत्रापि कर्मत्वसिद्धिरित्याहुः। विस्तरस्तु अन्यत्र द्रष्टव्य इत्युमानाथादयः।

तत्र विभक्तिः सुलभा। शब्दशक्तिस्वभावादस्यैवार्थस्य द्योतकोऽधिर्निपातः। अत एव परिगणनप्रत्याख्यानेऽपि न दोष इत्याहुः।

**तथायुक्तम्**। तत्त्वञ्च—समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयत्वरूपम्। पराधीनतया विषं भुञ्जानेऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धम्। तदुक्तं भाष्ये—'आतश्च विषमीप्सितं यत्तद्भक्षयती'ति। तस्मात् 'चोरान् पश्यती'ति द्वेष्योदाहरणम्। विषयेन्द्रियसम्बन्धात्–दृश्यमाना अपि ते न दर्शनोद्देश्याः, अपि तु अनिष्टदर्शना एवेति स्पष्टं भाष्यकैयटयोः। एवञ्च तत्र पूर्वेणाऽप्राप्तौ वचनम्।

अनीप्सितम्=अनुद्देश्यम्, तच्च—द्वेष्यम्, उदासीनञ्च।

❀ **विजया** ❀

**फलाश्रयत्वरूपमिति**। न च यादृशतृणकर्मकश्च स्पर्शः प्रसिद्धो न भवति तत्तात्पर्येण योग्यताभ्रमादिना 'ग्रामङ्गच्छन् तृणं स्पृशती'ति प्रयोगो जायते, स इदानीं न स्यात्, तृणे फलाश्रयत्वाभावादिति वाच्यं, फलान्वयित्वेन विवक्षायां कर्मसञ्ज्ञा भवतीत्यर्थेनादोषात्। अत एव 'ग्रामं न गच्छती'त्यत्र ग्रामे फलाश्रयत्वस्याभावेऽपि फलान्वयित्वेन विवक्षायाः सत्त्वात्कर्मसञ्ज्ञा सिध्यति। एवं सर्वत्र कारकप्रकरणे बोध्यम्।

❀ **चिदस्थिमाला** ❀

**शब्देति**। अधिकं भावप्रकाशे स्पष्टम्। एतेन सकलग्रन्थकारोक्तं मूलानुयायि परास्तम्। तत्त्वञ्च=तथायुक्तत्वञ्च। **श्रयत्वरूपमिति**। अस्य फलं व्यक्तीभविष्यति। मूलादिसकलग्रन्थासाङ्गत्याय सिद्धान्तम। रेति। अपिना स्वाधीनतया भोजनम्। आतश्च=इतोऽपीति व्यतिरेकोक्तिः। भाष्योक्तं तत्त्वमेवोपपादयति–**विषयेन्द्रियेति**। ते=चोराः। तदेव लक्ष्यमिति भ्रमनिरासाय प्रागुक्तरीत्याह—**अनीप्सितमिति**। द्वितीयविषयं

❀ **विषमपदविवृतिः** ❀

प्रगृह्यत्वं, किं त्वनुनासिकविधानसामर्थ्यात्संहिताया अविवक्षणाच्छान्दसत्वाद्वा न सन्धिः। तिङ्कृत्तद्धितसमासैरिति परिगणनाभावपक्षे आह—**किञ्चेति**। **अस्यैवार्थस्येति**। अधिकरणत्व-

❀ **वरवर्णिनी** ❀

तत्त्वञ्च=तथायुक्तत्वञ्च। **तद्धात्वर्थेति**। समभिव्याहृतधात्वर्थेत्यर्थः। स्वसमभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेन वक्त्रा विवक्षितत्वमिति यावत्, कारकाणां विवक्षाधीनत्वात्। ईप्सिततमत्वं हि—समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वेन विवक्षितत्वम्; ईप्सितत्वन्तु तादृशफलाश्रयत्वमात्रम्, 'अनीप्सिते'ति नञा पूर्वसूत्रे सन्प्रत्ययक्तप्रत्ययाभ्यां लब्धस्य इच्छोद्देश्यत्वस्य व्यवच्छेदादिति विवेकः। तदेवं—कर्तृवृत्ति-प्रकृतधात्वर्थप्रधानीभूतव्यापारविशिष्टफलाश्रयत्वेन वक्त्रा विवक्षितोऽर्थः कर्मसञ्ज्ञः, वै० 'स्ववाचकधातुवाच्यत्व' 'स्वप्रयोज्यत्वो'भयसम्बन्धेनेतिसूत्रार्थः। 'ओदनं भुञ्जानो विषं भुङ्क्ते' इति नास्योदाहरणं सम्भवति, ओदनत्वेन विषेऽपीच्छोद्देश्यत्वस्य सत्त्वेन पूर्वेणैव कर्मत्वस्य सिद्धेः। यत्र तु भयादिना विषं भुङ्क्ते तत्रापि विषभोजनाद्यभावरूपादधिकसुखरूपेष्टसाधनत्वप्रकारकग्रहस्य विषभक्षणे सत्त्वात्कर्तुरीप्सितेत्यनेनैव विषस्य कर्मत्वसिद्धेः सम्भवात्। अत आह—**चोरानिति**। **द्वेष्यमिति**। द्वेष्यत्वञ्च—इच्छोद्देश्यीभूता-ऽभाव-प्रतियोगित्वम्। उदासीनत्वञ्च—इच्छोद्देश्यत्वाभाववत्त्वम्। आद्योदाहरणं—'चौरं पश्यती'ति, तत्र चौराभावस्तादृशाभावपदेन ग्राह्यः। द्वितीयोदाहरणं—'ग्रामं गच्छंस्तृणं स्पृशती'ति। नन्वनीप्सितग्रहणं व्यर्थं 'तथायुक्ते'त्यस्य सादृश्यार्थकथाल्घटितत्वेन ईप्सिततमसदृशेत्यस्य ततो लाभेन–[ईप्सिततमवत्क्रियया युक्तस्य—]

**तृणमिति** । यथा प्रधानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादिफलाश्रयत्वं तथैव तृणादेरपीति भावः ।

अनीप्सितपदाभावे ईप्सितस्य प्रकर्षहीनस्याप्यनेन सञ्ज्ञाप्राप्तौ 'वारणार्थाना'-मित्यनवकाशं स्यात् ।

तथायुक्तमिति किम् ? 'विषेणौदनं भुङ्क्ते' इत्यादौ करणत्वमात्रविवक्षायां विषस्य

ॐ विजया ॐ

**अनवकाशं स्यादिति** । 'अग्नेर्माणवकं वारयती'त्यादौ अग्नेरपि माणवकवृत्तिव्यापारप्रयोज्य-प्रकृतधात्वर्थफलान्वयित्वेनानेन कर्मसञ्ज्ञाविधाने 'वारणार्थाना'मित्यस्य निरवकाशत्वमिति भावः ।

**तथा युक्तमितिकिमिति** । अयम्भावः—'अनीप्सित'मित्येव सूत्र्यतां, यदनीप्सितमित्यस्ये-प्सितभिन्नमित्यर्थः क्रियेत तर्हि करणादिसञ्ज्ञाभिरस्याः सञ्ज्ञाया बाधः स्यात् ; करणत्वमात्रविव-क्षायामित्यग्रिमग्रन्थासङ्गतिश्च, तस्मादनीप्सितमितिपर्युदासः, नञिवयुक्तन्यायेनेप्सितत्वव्यापक-द्वेषविषयत्वाभाववत्त्वेनैव च सादृश्यङ्ग्राह्यम् । तथा च 'विषेणौदनं भुङ्क्ते' इत्यादौ विषस्य न कर्म-

ॐ चिद्स्थिमाला ॐ

मौलं युक्तमिति—तदुपपादयति—**यथेति** । गङ्गादेः=ईप्सितस्य तृणादेः=औदासीन्येनानुद्देश्यत्वेनानीप्सितस्य । अनीप्सितग्रहणं व्यर्थं, तथायुक्तमित्यारम्भादेवेष्टसिद्धेरिति दण्डिशास्त्र्यायुक्तेरसाङ्गत्यायाह—**अनीप्सि-तेति** । अत्र विषस्य स्वव्यापारजन्यत्वसम्बन्धेन व्यापारे एवान्वयविवक्षेति फलाश्रयत्वमित्याह—

ॐ विषमपदविवृतिः ॐ

शक्तेरित्यर्थः । **तथायुक्तञ्चानीप्सितम्** । **प्रकर्षहीनस्यापीति** । प्रधानधात्वर्थाऽप्रयोज्यस्यापीत्यर्थः ।

**अनवकाशं स्यादिति** । तथा च 'अग्नेर्माणवकं वारयती'त्यत्र माणवकस्याप्यपादानत्वापत्तिरिति भावः । इदं चिन्त्यं, 'तथायुक्त'मित्यस्य वारणार्थानामित्यनेन अपवादत्वाद्बाधेऽपि कर्तुरित्यनेन परत्वात्कर्मत्वोपपत्तेः । न हि तस्याप्यपवादः, प्रकर्षहीने तदप्राप्तेः, तथायुक्तत्वाभावादित्यर्थः ।

ॐ वरवर्णिनी ॐ

अनीप्सितस्य स्वत एव लाभसम्भवात् । ईप्सिततमसदृशस्येप्सिततमस्यैव तु न ग्रहणं, तथा सत्यस्य सूत्रस्य वैयर्थ्यापत्तेरत आह—**प्रकर्षहीनस्येति** ।

**अनवकाशं स्यादिति** । ननु प्रयोज्यत्वरूपप्रकर्षस्य त्यागेऽपि अग्नेः कर्तृवृत्तीच्छोद्देश्यत्वाभावा-दनेन कर्मत्वाप्राप्त्या तत्र 'वारणार्थाना'मिति सावकाशमिति चेन्न; प्रकर्षवदिच्छाया अपि त्यागेनाऽग्नेरपि कर्मत्वाक्रान्तत्वात्, अत एव 'प्रकर्षहीनस्यापी'त्यपिघटितमुक्तम् । अपिना—इच्छायाः परिग्रहः । विनिगमनाविरहादुभयोस्त्याग इति भावः । एवञ्च 'तथायुक्त'पदेन कर्तृवृत्तिव्यापारवाचकधातुवाच्य-फलाश्रयत्वेन वक्त्रा विवक्षितस्य लाभेऽग्नेरपि तथात्वाद्वारणार्थानामिति व्यर्थमिति तस्य कर्मसञ्ज्ञापवादत्वा-पत्त्याऽग्निपदादिव माणवकपदादपि पञ्चमीप्रसङ्ग इत्याशयो भट्टानामिति **गुरवः** । ननु तथा सति 'तथायुक्त'मित्यस्यानवकाशत्वापत्तिरिति 'वारणार्थाना'मिति नास्यापवाद इति माणवकस्य परत्वात्कर्तुरिति-सूत्रेण कर्मत्वस्य सूपपादतया न दोष इति चेन्न; यत्र वारयितुर्भृत्यादेर्माणवकोद्देश्यिका संयोगानुकूल-व्यापाराभावप्रकारिकेच्छा नास्ति, केवलं स्वामिभयेन वारणन्तत्र कर्तुरीप्सितसूत्राप्राप्त्या,—'तथायुक्ते' त्यस्य तु 'वारणार्थाना'मित्यनेनानवकाशत्वाद्बाधे'ऽग्नेर्माणवक'मित्यत्राग्नेर्माणवकाद्वारयतीत्यस्यापत्तेर्दुरुद्धरत्वात् ।

ननु अनीप्सितपदस्य न ईप्सितमनीप्सितमिति नञ्समासनिष्पन्नतया नञिवयुक्तन्यायादीप्सिततमवदित्या-दिलाभसम्भवे तथायुक्तग्रहणं किमर्थमित्याशङ्क्ते—**तथायुक्तमिति** । तदभावे कर्तृवृत्तिव्यापारप्रयोज्यफला-श्रयः कर्मेत्यर्थः स्यात्, तथा च 'विषेणौदन'मित्यादौ विषादेरपि गलाधःसंयोगरूपतादृशफलाश्रयत्वा-त्कर्मत्वापत्तिरित्याह—**विषस्येति** । एतेन तथायुक्तग्रहणाभावेऽपि सर्वत्र तत्प्राप्तौ 'वारणार्थाना'मित्यस्य

मा भूत् । 'प्रयागात्काशीं गच्छती'त्यत्र प्रयागस्य च मा भूत् । तत्सत्त्वे तु प्रकृत-धात्वर्थफलाश्रयत्वरूपतत्त्वाभावान्न दोषः ।

**अपादानादिविशेषैरिति ।** तत्तद्रूपेणाऽभासमानमित्यर्थः ।

—अकथितशब्दोऽत्राऽसङ्कीर्तितपरो नाप्रधानपर इति भावः । एवञ्च पूर्वविधि-

❀ विजया ❀

सञ्ज्ञा, विषयस्य द्वेषविषयत्वात् । 'चोरान्न पश्यती'त्यादौ चोराणामपि द्वेषविषयत्वेन कर्मसञ्ज्ञाया अप्राप्त्याऽयङ्गन्थोऽरुङ्क्षिग्रस्त इति वदन्ति ।

परे तु—प्रकृतधातूपात्तकर्तृवृत्तिव्यापारप्रयोज्यफलसम्बन्धे तत्प्रकारकज्ञानविषयताश्रयत्वेन विवक्षायां कर्मसञ्ज्ञा भवतीति सूत्रार्थः । तथा च 'आप्तुमिष्टतमङ्कर्मे'त्येव सूत्रमस्तु, तथाच न कुत्रापि दोष इत्यरुचेराह—**प्रयोगात्काशीमितीति**—लापयन्ति । वैयाकरणमते चेच्छोद्देश्यत्वमपि शाब्दबोधे भासते, अत एव 'कर्तुरीप्सिततमङ्कर्म,' 'तथायुक्तञ्चानीप्सित'मितिसूत्रद्वयकरणञ्च सङ्गच्छते । अत एव 'काशीमगच्छन् काशीङ्गतः,' 'प्रयागं गच्छन् काशीङ्गत' इत्यादौ च काश्या- 'स्तथायुक्त'मिति कर्मसञ्ज्ञा, प्रयागस्य च 'कर्तु'रिति कर्मसञ्ज्ञेति सर्वेष्टसिद्धिरिति चन्द्रिकाकाराः ।

**तत्तद्रूपेणाऽभासमानमिति ।** तद्रूपपुरस्कारेणाभासमानमित्यर्थः ।

❀ चिदस्थिमाला ❀

**तत्सत्त्वे त्विति ।** यथाश्रुतासङ्गतेः सिद्धान्तमतेनाह—**तत्तद्रूपेणेति ।** अपादानत्वादिविशेषरूपेणेत्यर्थः । तत्फलमाह—**एवञ्चेति ।** तस्य तत्परत्वे चेत्यर्थः । विषयशब्दो भावप्रधानः, तद्विहितसञ्ज्ञापरो वा ।

❀ विषमपदविवृतिः ❀

ननु विभागस्य धात्वर्थत्वाभावे प्रकृतधात्वर्थविभागाश्रयत्वनिबन्धनमपादानत्वमपि प्रयागस्य कथमिति चेन्न, फलतावच्छेदकसम्बन्धेन फलाश्रयत्वं हि कर्मत्वोपयोगि, प्रयागादित्यत्र देवदत्त-निष्ठसमवायस्यैव फलतावच्छेदकसम्बन्धत्वेन प्रयागे तेन सम्बन्धेन फलाभावात् ।

**अकथितं च । तदपवादत्वेनेति ।** एतदुत्तरं 'कर्तुरित्येतदेकवाक्यतापन्न-'कर्मणि द्वितीये'त्यादे-रपि तथापत्त्ये'ति पूरणीयम् ।

❀ वरवर्णिनी ❀

वैयर्थ्यात्तत्सामर्थ्यात् 'विषेणे'त्यादौ न दोष इत्यपास्तम्, अग्निसंयोगरूपफलस्य कर्तृवृत्तिप्रधानव्यापार-प्रयोज्यत्वाभावेनाग्न्यादेः कर्मत्वाप्राप्त्या तत्र 'वारणार्थाना'मित्यस्य चारितार्थ्यसम्भवात् । ननु अनीप्सित-मिति पर्युदासेन प्रकृतधात्वर्थव्यापारप्रयोज्यफलाश्रयत्वेन वक्त्रा विवक्षितत्वेन सादृश्यग्रहणाद्विषस्य न प्राप्तिरित्यरुचेराह—**प्रयागादिति** । अन्ये तु कारकाणां विवक्षाधीनत्वात्कर्तृवृत्तिव्यापारप्रयोज्यफला-श्रयत्वेन वक्त्रा विववक्षितस्यैव कर्मसञ्ज्ञेति-करणत्वेन विवक्षितस्य विषस्य न कर्मसञ्ज्ञाप्राप्तिरत आह—**प्रयागादितीत्यवतारयन्ति ।**

'प्रयागा'दित्यत्र हि गमनप्र ज्यविभागरूपफलाश्रयत्वेन प्रयागस्य कर्मत्वापत्तिः, तथायुक्तग्रहणे तु व्यापारवाचकधातुवाच्यत्वस्यापि फले लाभाद्विभागस्य च प्रकृतगम्धातुवाच्यत्वाभावान्न दोष इतिभावः । ननु ध्रुवमपाये इत्यत्र शे रे विभागस्यापि गत्यर्थकधातुवाच्यत्वस्य वक्तव्यतया तथायुक्तग्रहणाद्व्यापारवाचक-धातुवाच्यत्वस्य फले लाभेऽपि प्रयागस्य कर्मत्वापत्तिर्दुर्वारैवेति चेन्न; तथायुक्तग्रहणेन फलतावच्छेदक-सम्बन्धेन धातुवाच्यफलाश्रयस्यैव कर्मतेत्यर्थस्य लाभेन प्रयागस्य चाऽतथात्वेनादोषात् । तथायुक्तग्रहणाभावे तु फलतावच्छेदकसम्बन्धेन धातुवाच्यफलाश्रयस्येत्यादिलाभो न स्यादित्युमानाथादयो व्याचक्षते ।

**अकथितञ्च ।** अत्र प्राचीनाः—''दुहादीनां विभागाद्यनुकूलव्यापारानुकूलव्यापारार्थकत्वेन विभाग-रूपफलाश्रयतया पय-आदेः, विभागानुकूलव्यापाररूपफलाश्रतया गवादेश्च कर्मत्वस्य'कर्तुरीप्सित'त्यनेनैव

विषयप्रसक्तिपूर्वकं तदविवक्षायां, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोद्धव्यम् ।

अपादानत्वादिविवक्षायां पञ्चम्याद्येव । केन रूपेण विवक्षेति चेत् ? कर्मत्वेनेति गृहाण । कारकत्वव्याप्यसञ्ज्ञानां स्वबोद्ध्यार्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात् ।–बोधोऽपि तथैव ।

## ॐ विजया ॐ

**पञ्चम्याद्येवेति** । न चापादानत्वेन विवक्षायां यदि पञ्चम्येव, तदा 'अपादानमुत्तराणि कारकाणि बाधन्ते–'गान्दोग्धि पयः' इति भाष्यविरोध इति वाच्यम्, अपादानत्वेन कर्मत्वेन चेत्युभयविवक्षायां परत्वात्कर्मसञ्ज्ञेति भाष्यतात्पर्येणापादानत्वमात्रविवक्षायां कर्मसञ्ज्ञाया अप्राप्त्या पञ्चम्येवेति तद्ग्रन्थसङ्गतेः ।

## ॐ चिदस्थिमाला ॐ

तथा सति फलितमाह—**अपादानेति** । 'तेने'त्यादिः । अन्यथा तद्विवक्षायामपि परत्वादनेन कर्मत्वमेव स्यादिति भावः । प्राचां ग्रन्थासाङ्गत्याय साकाङ्क्षमाह–**केनेति** । नन्वित्यादिः । तत्र बीजमाह–**कारकत्वेति** ।

ननु न तथा बोधोऽत आह–**बोधोऽपीति** । दीक्षितादिसकलप्राचीनग्रन्थकारोक्तिं खण्डयति–**तत्तदिति** ।

## ॐ वरवर्णिनी ॐ

सिद्धावपि—[ ईदृशरीत्या गवादेः प्रधानकर्मतया तत्र लकारेण 'गौः पयो दुग्धे'इत्यादेः सिद्ध्या 'गौणे-कर्मणि दुह्यादे'रित्यस्याऽवक्तव्यत्वेऽपि ] गवादिनिष्ठकर्मत्वस्य सम्बन्धत्वेन विवक्षायामपि षष्ठीं बाधित्वा कर्म-सञ्ज्ञायाः प्रवृत्तये इदं सूत्रम् । एवञ्चैतत्सूत्रबोधितकर्मसञ्ज्ञावदर्थबोधकगवादिपदोत्तरद्वितीयादिनः सम्बन्धत्व-पुरस्कारेणैव कर्मत्वादि बोध्यते"—इत्याहुस्तत्कटाक्षयन्नाह–**तत्तद्रूपेणेति** । अपादानत्वादिविशेषरूपेणेत्यर्थः ।

अत्र=अकथितञ्चेत्यत्र । **असङ्कीर्तितेति** । असङ्कीर्तितत्वञ्च क्वचित्प्रसक्तस्याप्यपादानादेरपादानत्वादिरूपेणा-विवक्षितत्वं, क्वचिच्च सर्वथैवाऽपादानत्वादिप्राप्तिराहित्यम् । तत्र—आद्यं–'गां दोग्धि पय'इति । द्वितीयं–'बलिं याचते वसुधा'मिति, अत्रापादानत्वस्याप्रसक्तेः शेखरकृताऽनुपदमेव वक्ष्यमाणत्वात् । **एवञ्चेति** । असङ्कीर्तितत्वस्य द्विविधत्वे च । तस्माद्व्यापारद्वयार्थकत्वे 'कर्तुरीप्सित'तिसूत्रेण सिद्धावपि विभागानुकूलव्या-पारमात्रस्य धात्वर्थत्वे फलतावच्छेदकसमवायात्मकसम्बन्धेन विभागरूपफलाश्रयस्य पय–आदेः कर्मसञ्ज्ञायाः 'कर्तुरीप्सित'सूत्रेण सिद्धावपि फलतानवच्छेदकावधित्वरूपसम्बन्धेन तादृशविभागरूपफलाश्रयस्य गवादेः कर्मसञ्ज्ञार्थमकथितसूत्रम् ।

अत एव 'अप्रधाने दुहादीना'मित्याद्यपि सङ्गतम् । एवञ्च यद्यपादानत्वेन गवादेर्विवक्षा तदा पञ्चम्येव, यदा च कर्मत्वेन विवक्षा तदा द्वितीयैव, क्षीरान्वयिसम्बन्धप्रतियोगित्वेन यदा विवक्षा तदा षष्ठ्येव । 'स्वान्वययोग्यनामार्थेऽन्वये सम्भवति षष्ठ्यर्थस्य क्रियायामन्वयोऽव्युत्पन्नः'इति क्रियायां सम्बन्धत्वेना-ऽन्वयविवक्षायां षष्ठ्यपि न । एवञ्च 'एतत्सूत्रं यदि न स्यात्तदा षष्ठी स्या'दिति सम्भावनयाऽस्य षष्ठ्यपवा-दत्वमाश्रित्य सम्बन्धत्वेन कर्मादिबोधकताकल्पने कर्तुरीप्सितसूत्रविहितकर्मसञ्ज्ञावद्बोधकपदोत्तरद्वितीयाया अपि सम्बन्धार्थकतापत्तेः, षष्ठीविधायकस्य कर्मसञ्ज्ञाविधायकस्य च विरोधाभावेन बाध्यबाधकभावाप्रसक्तेश्च प्राचीनोक्तं चिन्त्यमेव । कर्मत्वपुरस्कारेण कर्मवाचकताविधायकत्वे, सम्बन्धत्वपुरस्कारेण कर्मवाचकता-विधायकत्वे च 'कर्मणि द्वितीये'त्यस्य वाक्यभेदापत्तेश्च । एकवाक्येन च वैरूप्येण बोधस्याशक्यत्वात् ।

न चैतद्वैरूप्येण बोधकत्वं भवतोऽप्यावश्यकं, 'दिवः कर्म च' 'अधिशीङ्स्थासां कर्म' 'कर्तुरीप्सिततमं कर्म' त्याद्यनेकसूत्रविहितकर्मसञ्ज्ञकार्थकपदोत्तरद्वितीयाया एकरूपेणाबोधकत्वादिति वाच्यं, करणाधारादिरूप-कर्मणां भेदेऽपि तावत्सु कर्मत्वशक्तेरैक्येन कर्मत्वशक्तिमद्बोधिका द्वितीयेत्यर्थे वैरूप्याभावात् । प्राचीननये तु एतद्विहितद्वितीयायास्तादृशशक्तिपुरस्कारेण बोधकत्वाभावाद्वैरूप्यं दुर्वारमेव ।

तत्तच्छास्त्राभावे सर्वत्र षष्ठीप्राप्त्या सर्वासां तदपवादत्वेन तदपवादत्वमात्रेण सम्बन्धार्थकत्वं न युक्तम् ।—अत एव 'कर्मणि द्वितीये'त्यस्य न वैरूप्यम् ।

अत एवैतत्सूत्रशेषे भाष्येऽनेनैव सिद्धे आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्येप्सितमात्रस्याऽप्यनेन सञ्ज्ञायां 'वारणार्थाना'मिति सूत्रस्यानवकाशत्वे माणवकादपि पञ्चमी स्यादिति

❀ चिदस्थिमाला ❀

ध्रुवमपाये इत्यादीत्यर्थः । तदपवादत्वेनेति–अयुक्तत्वे हेतुः । प्राचां ग्रन्थमाह–**तदपेति** । अत एव=तेनैवरूपेण बोधादेव ।एवमत्र भाष्यसंमतिमप्याह–**अत एवेति** ।'उत्तरित'मित्यत्रान्वयः । मात्रं–कात्स्र्न्ये । आदिना तथा–

❀ विषमपदविवृतिः ❀

**वैयर्थ्यमिति** । दुह्याजिति परिगणनमनाश्रित्येदम् । तद्रीत्या तु कर्मत्वेन बोधार्थं सूत्रद्वयस्यावश्यकतया तद्वैयर्थ्यशङ्काया असङ्गतिः । **माणवकादपीति** । अपिशब्दादग्नेरपादानत्वाविवक्षायामुभयत्र द्वितीया स्यात् , तद्विवक्षायां तूभयत्र पञ्चमी स्यादिति

❀ वरवर्णिनी ❀

केचित्तु प्राचीनोक्तमेव समर्थयन्ते । तथा हि—यदुक्तं–'यदीदं न स्यात्तदा षष्ठी प्रवर्तेते'तिसम्भावनामात्रेणापवादतामाश्रित्य सम्बन्धार्थकत्वे सर्वत्र तथापत्ति'रिति, तन्न, तत्तत्सूत्रसत्त्वे कर्मत्वादिना विवक्षायां शषत्वाभावेन षष्ठ्यप्राप्त्या तत्र सम्बन्धार्थकत्वासम्भवेऽपि प्रकृतसूत्रे सत्यपि षष्ठीप्राप्त्याऽपवादत्वस्य स्पष्टतया सम्बन्धार्थकत्वसम्भवात् । यदप्युक्तं–'सञ्ज्ञाशास्त्रेण विधेरबाध' इति, तदप्ययुक्तं, कर्मप्रवचनीयसञ्ज्ञावदर्थबोधकोत्तरं द्वितीयाविधानाय कल्प्यमानद्वितीयाविधेः षष्ठीबाधकत्वमित्यस्य स्वेनैव वक्ष्यमाणतया तद्रीत्याऽत्रापि वक्तुं शक्यत्वात् । वैरूप्यं तु अस्मिन् मते सह्यमेवेत्यलम् ।

स्वमते प्रमाणमुपन्यस्यति—**अतएवेति । आद्यसूत्रद्वयेति ।** 'कर्त्तुरीप्सित'—'तथायुक्तं'ति सूत्रद्वयेत्यर्थः । **वैयर्थ्येति** । सूत्रद्वयविषयेऽपि फलाश्रयत्वविवक्षायामनेनैव सिद्धेः, फलतानवच्छेदकसम्बन्धेनाप्यत्र फलाश्रयत्वस्य ग्रहणात् । ननु कर्त्तुरीप्सितसूत्रबोधितसञ्ज्ञावदर्थपरपदोत्तरद्वितीयया इच्छोद्देश्यत्वमपि प्रत्याय्यते,तदभावे तु तत्प्रतीत्यनापत्तिरिति चेन्न;कर्त्तुरित्यस्यैवमावश्यकत्वेऽपि 'तथायुक्तं'त्यस्य वैयर्थ्यात् किञ्च बोधवैलक्षण्यमनादृत्यापि बहुत्र खण्डने भाष्यकृत्प्रवृत्त्याऽत्राऽपि तथात्वे क्षत्यभावः । न चात्र परिगणनमावश्यकम्, अन्यथा सर्वेषां द्विकर्मकतापत्तिरित्यपरिगणितधातुयोगे कर्मत्वायोक्तसूत्रद्वयं सावकाशमिति वाच्यम् , परिगणनमबुद्ध्वैवैतद्ग्रन्थप्रवृत्तेः, स्पष्टञ्चेदं विषम्याम् । एवञ्च 'वारणार्थेना'मित्यस्य वैयर्थ्योपपादनमपि युक्तम्, अन्यथाऽपरिगणितत्वाद्वारयतेस्तन्न युज्येतेति तत्त्वविदः । **अनवकाशत्वे इति** । नच यत्र कर्मत्वेन विवक्षा तत्रैव कर्मसञ्ज्ञा स्यादित्यपादानत्वेन विवक्षायां 'वारणार्थाना'मिति सूत्रं चरितार्थमिति वाच्यम् , 'अनेनैव सिद्धे'इत्यस्य 'कारकमात्रं कर्मसञ्ज्ञमित्यर्थकाऽकथितञ्चेत्यनेन सिद्धे' इत्यर्थेनापादानत्वविवक्षायाञ्च प्रवृत्त्या वैयर्थ्यस्य स्पष्टत्वात् । नन्वेवं कारकमात्रं व्यर्थं स्यादिति चेत् ?, का नो हानिः 'वारणार्थाना'मितिसूत्रवैयर्थ्यस्यापि सत्त्वात् । न चैवं 'नटस्य शृणोती'त्यादावेव दूषणं देयं स्यादिति वाच्यम् , तस्य दूषणान्तरत्वेऽप्येतद्दूषणस्यापि सम्भवादित्याहुः ।

केचित्तु 'कर्मत्वेन विवक्षे'त्यस्य फलाश्रयत्वेन विवक्षेत्येवार्थः । 'वारणार्थाना'मित्यत्रापादानत्वेन विवक्षेत्यस्यापि स एवार्थं इत्यपादानत्वविवक्षायामपि कर्मसञ्ज्ञा स्यादेवेति तत्सूत्रं व्यर्थं स्यादेवेत्याहुः ।

ननु धात्वर्थविभागाश्रयस्यैवापादानसञ्ज्ञाया वक्ष्यमाणतया 'ध्रुवमपाये'इत्यपि व्यर्थं स्यादिति चेत्, अस्तु—तथाऽप्येतद्वैयर्थ्यं दुर्वारमेवेत्याहुरुमानाथादयः ।

'ईप्सिततम'मित्याद्यारब्धव्यमित्युत्तरितम् । एतेन—दुह्यादीनां व्यापारद्वयार्थकत्वे 'कर्तु'रिति कर्मत्वे तत्त्वेनाऽविवक्षायामप्यनेन कर्मत्वमिति परास्तं, वदतो व्याघातात् । अत एव 'कर्तु'रित्यनेन सिद्धिमाश्रित्याऽस्य वैयर्थ्यं भाष्ये नाशङ्कितम् ।

**कारकमिति** । क्रियाजनकमित्यर्थः । नन्वेवं 'नटस्य शृणोती'त्यादावतिप्रसङ्गः, सर्वथा तत्र तदप्राप्तेः, गीतद्वारा च तस्य क्रियाजनकत्वम्; न च तस्य कर्मयुक्त्वाभावः, तदंशस्यापि परिगणनलभ्यत्वात्, नटस्यापादानत्वविवक्षा तु न कदापि, 'आख्यात'इति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरपादानत्वाविवक्षाया बोधनात्; अतः परिगणनमाह—**दुह्याचिति** ।

कर्मयुक्त्वं—धात्वर्थव्यापारात्प्राक् तदनन्तरं वा तत्सम्बद्धत्वम् । तत्र ब्रुविशास्यतिरिक्ते धात्वर्थव्यापारात्प्रागेव तत्सम्बद्धत्वं, तद्विषये तु तदनन्तरं तत्सम्बद्धत्वं बोध्यम् ।

---

**ॐ चिद्स्थिमाला ॐ**

युक्तमिति **दीक्षिताद्युक्तिं** खण्डयति—**एतेनेति** । 'कर्मत्व'मिति पाठः । तत्त्वेन=कर्मत्वेन । एतेनेत्यस्यार्थमाह—**वदत इति** । अत एव=नियमेन व्यापारद्वयार्थत्वाभावेनैकव्यापारार्थकत्वे तदविवक्षायामन्यतोऽसिद्धा कर्मत्वार्थमस्यावश्यकत्वादेव । अत एवोद्देश्यत्वादेरत्राभाव इति भावः । प्राचां ग्रन्थानामसाङ्गत्याय सिद्धान्तमाह—**क्रियेति** । एवं=तथा सूत्रार्थे । न हि द्वितीयाविषयोयमित्याह—**सर्वथेति** । आख्यातेति सूत्रमाह—**गीतेति** । 'द्वारेण द्वारिणो नान्यथासिद्धि'रिति भावः । यत्तु नटान्निःसरन्तं शब्दं गृह्णातीत्यर्थात्प्राप्तापादानत्वाविवक्षैवात्रेति प्राञ्चस्तन्नेत्याह—**नटस्येति** । 'आख्यातोपे'ति सूत्रभाष्ये स्पष्टमित्याह—**परीति** । एतेन **शास्त्र्या**-द्युक्तावतरणं परास्तम् । **दुह्याचितीति** । अनुकरणत्वाज्जश्त्वं न । शाब्दिदण्ड्यादिग्रन्थासाङ्गत्यायाह—**कर्मयुक्त्वमिति** । **तदिति** । 'कर्तु'रिति विहितकर्मेत्यर्थः । तद्व्यवस्थामाह—**तत्रेति** । दुहादीनां मध्ये **इत्यर्थः** । 'प्रागपी'ति पाठः । अपिना याचिविषये रुधिप्रच्छि-विषये च तदनन्तरस्य समुच्चयो न तु सर्वत्र । प्रागेवेति पाठे एवोऽप्यर्थे, अत एव न मञ्जूषाविरोधः । तद्विषये तु=ब्रुविशासिविषये तु । तदनन्तरं=तदनन्तरमेव ।

**ॐ विषमपदविवृतिः ॐ**

भावः । **परास्तमिति** । कर्मत्वेत्यंशस्तत्त्वेनेत्यंशश्चेत्येतद्द्वयमपास्तमित्यर्थः । अतएव=प्रथमांशस्य अपास्तत्वादेव । तदपास्तत्वं लग्ने स्फुटीभविष्यति । केचित्तु—अत एव=सम्बन्धार्थकत्वाभावादेव । 'नाशङ्कित'मित्युत्तरं—'सम्बन्धार्थकत्वं वक्तु'मिति शेष इत्याहुः । **कर्मयुक्त्वाभाव इति** । कर्मणोऽनु-

---

**ॐ वरवर्णिनी ॐ**

**उत्तरितमिति** । षष्ठ्यपवादतया यदीदं सम्बन्धत्वेन विवक्षायामेव प्रवर्त्तेत तदा कर्मत्वविवक्षायां प्रवर्त्तमानाभ्याङ्कर्तुरीप्सिततेति-तथायुक्तेतिसूत्राभ्यामस्य सामानाधिकरण्याभावादेव वैयर्थ्यशङ्काया अनुत्थितौ तत्समाधानप्रयासो विफल एव भाष्यकृतां स्यादित्याशयः । **नाशङ्कितमिति** । दुहादीनां व्यापारद्वयार्थकत्वे गवादीनामपि फलाश्रयत्वात्कर्तुरित्यनेनैव कर्मत्वे सिद्धेऽकथितञ्चेति सूत्रं व्यर्थमित्याशङ्क्य भगवता कर्मत्वेनाऽविवक्षायां प्राप्तां षष्ठीं वारयितुं स'इत्युक्तं स्यात्, परं तथाऽनुक्त्या कर्मत्वेन विवक्षायामेवास्य प्रवृत्तिरिति लभ्यते इत्याशयः ।

---

१ 'कर्मत्व'मिति चिदस्थिमालासम्मतः पाठः । २ अयमेव पाठश्चिदस्थिमालासम्मतः ।

तत्र सति सम्भवे—प्राक् तत्सम्बद्धत्वमेव ग्राह्यम्। एतेन स्थाल्यादेरपि तद्व्यापारादनन्तरं पयःसम्बद्धत्वेन कर्मत्वं तेषां दुर्वारमित्यपास्तम्। तेन 'गां पयो दोग्धि स्थाल्या'मित्यादौ स्थाल्यादेरधिकरणत्वाऽविवक्षायामपि नानेन कर्मत्वम्।

एवञ्चापादानादीत्यादिशब्देनाऽपादानसम्प्रदानाधिकरणान्येव। करणन्तु न गृह्यते, हस्तादेः करणस्य पय-आदिकर्मयुक्त्वाभावात्।

यद्यपि—

'गां दोग्धी'त्यादौ गौः पयस्त्यजति, गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या 'कर्तुरीप्सिततम'मित्येव सिद्धं; प्रधानकर्मत्वञ्च गवादीनामिति तत्रैव लादिसिद्धिः।

प्रधानकर्मत्वञ्च—कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वं,

---

❀ चिदस्थिमाला ❀

ननु पूर्वविषये सर्वत्र तदनन्तरं तत्सम्भवेनैकरूप्याय तस्यैव ग्रहणेनातिप्रसङ्गोऽत आह—तत्रेति। तद-तिरिक्तेष्वित्यर्थः। अपिसङ्ग्राह्यस्थले निर्वाहायाह—सतीति। शास्त्रिदण्ड्याद्युक्तिं खण्डयति—एतेनेति। सम्भवे तस्यैव ग्रहणेनेत्यर्थः। आदिना पाणिः। तस्य फलमाह—तेनेति। तदनन्तरं तत्सम्बन्धेऽपि ततः पूर्वं तत्सम्बन्धाभावेनेत्यर्थः। शास्त्रिदण्ड्यादिग्रन्थासाङ्गत्याह—एवञ्चेति। तस्यैव ग्रहणे चेत्यर्थः। आदिशब्देन=आदिघटितशब्देन। एवेन तदुक्तकर्तृकर्मकरणहेतूनां निरासः। तत्रैवांशिकमाह—करणन्त्विति। अयमेव भाष्यस्वरस इति स्पष्टमन्यत्र। 'उभाभ्यां सिद्ध'मिति दीक्षितादिग्रन्थासाङ्गत्यायाह—कर्तुरिति। तथा प्रतीत्याऽन्तःस्थितद्रवद्रव्यविभागानुकूल—व्यापारानुकूल—व्यापाराद्यर्थकत्वेन दुहादेर्गोः कर्तृव्यापार जन्य—फलाश्रयत्वं, पयसस्तत्प्रयोज्य—फलाश्रयत्वमिति गोपयसोरुभयोरपि तेन सिद्धमित्यर्थः। गोर्विभागाश्रयत्वेन तु न कर्मत्वं, पयोनिष्ठ—विभागीय—सम्बन्धस्यैव फलतावच्छेदकत्वात्, तत्त्वेना-नुद्देश्यत्वाच्चेति भावः। नन्वेवमपीष्टरूपासिद्धिरत आह—प्रधानेति। चो व्युत्क्रमे। सिद्धिश्चेत्यर्थः।

ननु कथमिदमत आह—प्रधानेति। चस्त्वर्थे। अन्यत्र तदसम्भवादाह—कर्तृप्रत्ययेति। कर्तृन्निष्ठेति

❀ विषमपदविवृतिः ❀

पादानात्। तदुपादाने तु तत्रैव नटस्यान्वयेन कारकत्वाभावः। सति सम्भव इति। 'अविनीतं विनय'मित्यत्र तु असम्भवादनन्तरमिति बोध्यम्[1]। नानेन कर्मत्वमिति। ननु 'शास्त्रेण माणवकं धर्मं ब्रूते' इत्यत्र शास्त्रस्य 'अकथितं चे'त्यनेन कर्मत्वं दुर्वारं, शास्त्रस्य धर्मेण प्रतिपाद्यप्रतिपादक-भावसम्बन्धसत्त्वादिति चेन्न, तत्तद्धातुयोगे तत्तसम्बन्धविशेषस्यैव कर्मयुक्शब्देन विवक्षितत्वात्। ब्रूञ्योगे माणवकस्य धर्मेण स्वविषयकज्ञानेन आश्रयाश्रयिभावसम्बन्ध एव तेन विवक्षितः। एतेन 'क्षेत्रे धान्यं याचते' इत्यत्र क्षेत्रस्य धान्यसंयोगेपि न कर्मत्वम्, स्वस्वामिभावसम्बन्धस्यैव तत्र ग्रहणात्। एतत्सर्वं व्याख्यानतो निर्णेयम्। सम्प्रदानेति। 'माणवकं धर्मं ब्रूते' इति संप्रदानो दाहरणम्। 'व्रजमवरुणद्धी'ति अधिकरणोदाहरणम्। प्रधानकर्मत्वं च गवादीनामिति। इदम-कथितसूत्राभावे बोध्यं, तत्सत्त्वे तु अकथितसूत्रविहितकर्मत्ववत्त्वमेवाप्रधानकर्मत्वं, तत्रैव लादयः।

---

❀ वरवर्णिनी ❀

१ गुरवस्तु विनयं जानन्तमप्यननुतिष्ठन्तमित्याद्यर्थेन—विनयस्य पूर्वमपि सम्बन्धमुपपादयन्ति।

ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्रहात् । प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठ-व्यापारस्तदनुकूलव्यापारस्य शब्दतः प्राधान्यात् ।

'गर्गाः शतं दण्ड्यन्ता'मित्यत्र गर्गाणामेव तत्त्वम् , उद्देश्यत्वरूपमार्थं प्राधान्यन्तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न—वृद्धिसूत्रस्थभाष्यविरोधः । एवमेव 'शकारमसि चोदित' इत्याद्युपपत्तिः । अत एव—

'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥'

—इत्युक्त्वा—'उत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के' ?, इति प्रश्ने—

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥'—इत्युक्तम् ।

तत्र न्यादिग्रहणं तव कृषिवन्मम व्यापारद्वयार्थकधातूपलक्षणम् , एवञ्चेदं सूत्रं व्यर्थं, तथापि—

यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थस्तदाऽपादानत्वाद्यविवक्षाया-मन्येनाऽसिद्धकर्मत्वार्थमिदमावश्यकम् । तदा च 'अप्रधाने दुहादीना'मित्युक्तेरप्रधाने गवादावेव लादयः । अप्रधानकर्मत्वञ्चोक्तप्रधानकर्मभिन्नकर्मत्वम् , तच्चोक्तार्थे गवादीनामस्त्येव, फलानाश्रयत्वात् ।

---

ॐ चिदस्थिमाला ॐ

स्वरूपकीर्तनं, व्यापारस्य विशेषणेत्यर्थः । अस्यावश्यकत्वमाह—**ण्यन्तेति** । एवमन्येषामपि द्विकर्मकत्वमिति सूचयन्नाह—**गर्गा इति** । तत्त्वं=प्रधानकर्मत्वम् । नन्वेवं भाष्यविरोधोऽत आह—**उक्तप्रेति** । भाष्या-न्तरविरोधोऽपि नेत्याह—**एवमेवेति** । गर्गाणां तत्त्वादेवेत्यर्थः । अत एव=उक्तरीत्या व्यापारद्वयार्थत्वेन द्विकर्मकत्वादेव । नन्वेवमपि दुहादेर्न तथा तत्त्वलाभोऽत आह—**तत्रेति** । दृष्टान्तेन तदावश्यकता सूचिता ।

पूर्वपक्षमुपसंहरति—**एवञ्चेति** । आदिना याच्यादिसम्बन्धी । एवेन तदनुकूलव्यापारनिरासः । अत एव तदुक्तिसाफल्यमित्याह—**यदाचेति** । ननु तेषां प्रधानकर्मत्वमुक्तमत आह—**अप्रधानेति** । चस्त्वर्थे ।

ॐ विषमपदविवृतिः ॐ

**गोनिष्ठेति** । स च व्यापारो लोकप्रसिद्धः । वृद्धिसूत्रारूढभाष्यविरोधमाशङ्क्य परिहरति—**गर्गा इति** । **एवमेवेति** । व्यापारद्वयार्थकत्वेनैवेत्यर्थः । **अत एवेति** । परिगणितातिरिक्तानामपि व्यापारद्वयार्थ-कानां धातूनां सत्त्वादेवेत्यर्थः । **कर्तुश्च कर्मणइति** । तद्बोधकान् लादीनाहुरित्यन्वयः । द्विकर्मणा-मित्यत्र गणनिर्दिष्टानां ग्रहणान्न पुनरुक्तिः । **उक्तप्रधानेति** । कर्तृप्रत्ययसमभिव्याहारेत्युक्तेत्यर्थः ।

---

ॐ वरवर्णिनी ॐ

**शब्दत इति** । शाब्दबोधीयविशेष्यत्वरूपप्राधान्यस्य तत्र सत्त्वादित्यर्थः ।

**शकारमसीति** । इदं भाष्यं 'परस्मैपदानां णले'त्यत्र दृश्यते । स्पष्टञ्चेदमुद्योते—'आख्यातोपयोगे' इत्यत्र । जिज्ञासाज्ञापनं हि ण्यन्तस्य चोदयतेरर्थः । चोदित इति च कर्मणि क्तः । कर्मप्रत्ययसमभिव्याहारे च ज्ञानरूपस्य फलस्यैव प्राधान्यं, तथा च—मद्वृत्तिव्यापारजन्यं यत् शकारविषयकजिज्ञासाविषयकं ज्ञानं तदाश्रयस्त्वमिति बोधः । अत्र हि—निरुक्तं शाब्दं प्राधान्यं युष्मदर्थस्येति—तस्मिन्नेव कर्मणि क्त इत्यन्ये ।

**गां दोग्धीति** । अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादानत्वाविवक्षायामनेन कर्मत्वं, तद्विवक्षायां पञ्चमी, गोः पयस्यन्वये षष्ठी । द्विकर्मकेषु गवादीनां कर्मत्वाविवक्षया क्रियाऽन्वये षष्ठी न, अनभिधानात्, षष्ठ्यन्तस्य स्वान्वययोग्य-नामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतो व्युत्पत्तेश्च । अत एव 'तण्डुलानामोदनं पचती'त्यत्र 'द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी'त्येव 'कर्तु'रिति सूत्रे भाष्ये उक्तमिति दिक् ।

**बलिं याचते इति** । यदा परस्वत्वनिवृत्ति—स्वस्वत्वोत्पत्ति—उभयानुकूलो व्यापारो याचेरर्थः, स्वत्वे बलेर्निरूपकतयाऽन्वयस्तदाऽनेन कर्मत्वम् । पूर्वविषयस्य कस्याप्यभावात् ।

न चात्रापादानत्वप्रसक्तिः, विभागस्य धात्वर्थत्वाभावात् । 'न हि याचनादेवापायो भवति, याचितो यदि ददाति तदाऽपायेन युज्यते'—इति भाष्योक्तेः । 'असङ्कीर्तित-पर्यायाऽकथितग्रहणे—'गां दोग्धि' गोर्दोग्धी'ति च, याचिपृच्छिभिक्षियोगे कर्म-सञ्ज्ञैवेत्येपा व्यवस्था'—इति च सिद्धान्ते कैयटोक्तेश्च । व्यापारद्वयार्थत्वे तु 'कर्तु'रिति कर्मत्वं बोध्यम् । वसुधायाः स्वामित्वसम्बन्धात्कर्मयुक्तत्वम् ।

---

### ❀ चिदस्थिमाला ❀

उक्तप्रकारेणैवोपपादयति—**फलानाश्रयेति** । तत्र = विभागे । ननु क्रियाऽन्वयेऽपि कर्मत्वाविवक्षायां षष्ठी सूपपादाऽत आह—**द्विकर्मकेष्विति** । तद्विषये इत्यर्थः । अत्र मानमाह—**अत एवेति** । तत्र तदभावा-देवेत्यर्थः । विक्लेदनं निर्वर्तनञ्च पचेरर्थः, निर्वर्तने च पाकस्य करणत्वेनाऽन्वयः, तण्डुलविकारमोदनपाकेन निर्वर्तयतीत्यर्थः । एवञ्च तदन्वये प्राप्तषष्ठीबाधनार्थमिदं सूत्रमिति सकलग्रन्थकारोक्तमपास्तं, तदाह—**इति दिगिति** ।

**स्वत्वेति** । स्वामिनिरूपितस्वत्वेत्यर्थः । **व्यापार इति** । 'दीयता'मित्याद्यभिलापादिरूपो दिदापयिषा-व्यञ्जक इत्यर्थः । तत्र हेतुमाह—**न याचेति** । तन्मात्रादेवेत्यर्थः । **गोर्दोग्धीति चेति** । दोग्धि वेतीत्यर्थः । अग्रे चकार उभयोः समुच्चये । यदेत्याद्युक्तेः फलमाह—**व्यापारेति** ।

### ❀ विषमपदविवृतिः ❀

अनभिधाने बीजमाह—**अत एवेति** । कर्मसञ्ज्ञैवेत्यनेन अपादानत्वव्यवच्छेदः ।

---

### ❀ वरवर्णिनी ❀

परः = वसुधाधिपो बलिः । स्वं = याचकः । व्यापारः=दिदापयिषाव्यञ्जकः—'दीयता'मित्युच्चा-रणात्मकः । अनेन=अकथितसूत्रेण । 'बले'रितिशेषः । एकव्यापारार्थकत्वाद्याचेरित्याशयः । वसुधायास्तु 'कर्तु'रित्यनेनैव कर्मत्वमिति तत्त्वम् । अत्र=बलिरूपेऽर्थे । अपायेन=बौद्धेन विभागेन । **कर्मसञ्ज्ञैवेति** । कर्मसञ्ज्ञाऽभावे षष्ठ्येव, न कर्मसञ्ज्ञातिरिक्ता अपादानादिसञ्ज्ञा इत्याशयः । **व्यापारद्वयार्थत्वे इति** । याचेः—स्वत्वनिवृत्त्यनुकूलव्यापारानुकूलव्यापारार्थकत्वे इत्यर्थः । स्वत्वनिवृत्तिरूपफलाश्रयतया बलेः 'कर्तुरीप्सिते'ति कर्मत्वमित्यर्थः । **वसुधाया इति** । वसुधानिष्ठस्वत्वनिरूपितस्वामित्वसम्बन्धेन स्वं—वसुधा, स्वामिनि—बलौ सम्बध्यते इति—कर्मणा=बलिना, वसुधायाः—योगः सम्बन्धोऽस्तीति कर्मयुक्तत्व-

**अविनीतमिति** । याचेः—स्वीकारानुकूलव्यापारोऽर्थः, स्वीकारश्च 'इदमवश्यं करिष्यामी'तिशब्दप्रयोगजनको ज्ञानविशेषः । विनयेन च तद्विनयज्ञानवत्त्वं सम्बन्धः ।

**तण्डुलानिति** । तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य 'कर्तु'रितिसूत्रस्थ-भाष्यकैयटसम्मतत्वेन 'कर्तु'रित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम् ।

एवं स्वसम्प्रदानकदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थदण्ड्यादियोगेऽपि तेनैव सिद्धम् । एवं व्यापारद्वयार्थत्वेन--सति प्रयोगे-बहूनां द्विकर्मकत्वं बोद्धव्यम् ।

**व्रजमिति** । निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः ।—व्रजे गौस्तिष्ठति, अत्र तां निर्गमप्रतिबन्धपूर्वकं चिरं स्थापयतीति सम्प्रत्ययात् । अधिकरणत्वाविवक्षायामनेन कर्मत्वम् ।—व्यापारद्वयार्थत्वे 'कर्तु'रिति कर्मत्वम् ।

**पन्थानमिति** । जिज्ञासाविषयार्थज्ञानानुकूलः 'केन पथा गन्तव्य'मित्यभिलापादिरूपो व्यापारः पृच्छेरर्थः । ज्ञानविषयत्वेन पथः कर्मत्वम् । माणवकेन च तज्ज्ञानाश्रयत्वं

---

ॐ विजया ॐ

**पृच्छेरर्थ इति** । वस्तुतस्तु ज्ञानानुकूलशब्दप्रयोगानुकूलकृतिविषयकेच्छाज्ञानानुकूलो व्यापारः,

ॐ चिद्स्थिमाला ॐ

**याचेरिति** । 'अत्रे'त्यादिः । फलतावच्छेदकसम्बन्धो विषयता, तेन कर्त्तरि नातिप्रसङ्गः । अत्रापि न सम्प्रदानत्वप्राप्तिः, याचनमात्रेण विनयसम्बन्धाभावात् ।

नन्वेवं कथमत्र ततः प्राक् तत्सम्बद्धत्वमत आह—**विनयेन चेति** । **तदिति** । विनयेत्यर्थः । विक्लेदनं निर्वर्तनं च पचेरर्थ इत्याह—**तण्डुलानिति** । एवमन्यासङ्गतिमप्याह—**एवमिति** । तद्वदित्यर्थः । स्वं–कर्त्ता । आदिसङ्ग्राह्यमेवाह—**एवमिति** । उक्तरीत्येत्यर्थः । अनतिप्रसङ्गमाह—**सतीति** । यत्किञ्चित्=व्रजादि । तदनुकूलमेवाह—**व्रजे इति** । प्राग्वदाह—**व्यापारेति** । एवमग्रेऽपि । प्राग्वदाह–

ॐ विषमपदविवृतिः ॐ

**विनयेन चेति** । 'अविनीतस्ये'ति शेषः । **यद्याचष्टे तदापायेनेति** । स्वगतं ज्ञानं स्वस्मात्तत्र गच्छतीति कल्पनया ।

---

ॐ वरवर्णिनी ॐ

मित्याशयः । **स्वीकारेति** । विनयं जानन्तमपि तथा अननुतिष्ठन्तं स्वीकारयतीत्याशयः । एवञ्च विनयेन पूर्वमपि सम्बन्धोऽस्त्येवेत्याशयः । **अर्थ इति** । 'तदेदमकथितञ्चेत्यस्योदाहरण'मितिशेषः ।

**ज्ञानविशेष इति** । तादृशज्ञानानुकूलव्यापारश्च प्रकृते याचेरर्थ इत्याशयः । **तद्विषयेति** । विनयविषयकेत्यर्थः । तादृशज्ञानवत्त्वमविनीते इत्याशयः । तादृशधात्वर्थव्यापारात्पूर्वमप्यविनीते विनयज्ञानस्य सत्त्वादिति तत्त्वम् । **सम्बन्ध इति** । 'अविनीतस्ये'ति शेषः । कर्मत्वसिद्धेः= तण्डुलानां कर्मत्वसिद्धेः । अस्य='तण्डुलानोदनं पचती'त्यस्य । **एतदिति** । अकथितसूत्रेत्यर्थः । स्वं=राजा, तत्सम्प्रदानकं यद्दानं, तदनुकूलो यो गर्गवृत्तिर्व्यापारः, तदनुकूलो यो राजवृत्तिर्गर्गादि-सान्त्वना-प्रशंसादिरूपो व्यापारस्तदर्थको–न तु दण्डनार्थको–यो दण्डयतिस्तद्योगेऽपि, तेनैव='कर्तुरी-प्सिते'त्यनेनैव सिद्धमिति नाकथितञ्चेत्यस्येदमुदाहरणमित्यर्थः । बहूनां=भाष्यानुक्तानामपि नीवह्यादीनाम् ।

एकव्यापारार्थकत्वपक्षे रुधेरर्थमाह—**निर्गमेति** । तत्र=व्रजे । तां=गाम् । **स्थापयतीत्यस्य**–'गोपादि'रिति शेषः । अनेन='अकथितञ्चे'त्यनेन । **व्यापारद्वयेति** । रुधेस्तादृशयत्किञ्चिदधिकरणक-चिरस्थित्यनुकूलव्यापारानुकूलव्यापारार्थकत्वे इत्यर्थः । **कर्मत्वमिति** । 'व्रजस्य चिरस्थित्याश्रयतये'ति शेषः । जिज्ञासाविषयीभूतोऽर्थः=पथिरूपः । व्यापारः=एक एव । **तज्ज्ञानेति** । पथिविषयकज्ञानेत्यर्थः ।

—सम्बन्धः। अपादानत्वं तु नात्र,—'न हि प्रश्नादेवापायो भवति, पृष्टोऽसौ यदाचष्टे तदाऽपायेन युज्यते'—इति भाष्योक्तेः। सम्प्रदानत्वमपि न, कर्मसम्बन्धवत्त्वेनेच्छा-विषयत्वाभावात्, व्यापारद्वयार्थत्वे तु 'कर्तु'रिति कर्मत्वम्।

**वृक्षमिति।** विभागपूर्वकाऽऽदाने चिञ्।—वृक्षात्फलान्यादत्ते इत्यर्थात्। अपादानत्वाविवक्षायामनेन कर्मत्वम्।

**धर्मं ब्रूते इत्यादि।** ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञर्थः। प्रवृत्ति-पर्यवसायी स शासेः। स च 'धर्मं कुरु' इत्यादिविधिघटितोपदेशरूपः। विषयता च फलतावच्छेदकः सम्बन्धः। वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्तस्य सम्प्रदानत्वं; तदविवक्षायाञ्चानेन कर्मत्वम्। अत्र कर्तृव्यापारानन्तरं तज्ज्ञानाश्रयत्व-रूपो माणवकस्य धर्मेण सम्बन्धः।

**नयतेः**—संयोगानुकूलव्यापारानुकूलव्यापारोऽर्थः। स एव स्कन्धग्रहणादिपूर्वो **वहेरर्थः**। गत्यनुकूलव्यापारविशेषः—**कृषेः**। बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं—**हरतेः**।

ॐ **विजया** ॐ

प्रथमज्ञाने धर्मिविषयकत्वस्यान्वयः, कृतौ गुरुवृत्तित्वस्यान्वयः। एतेनोदासीनस्यापि यत्र जिज्ञासा-विषयार्थज्ञानं जायते, तत्र 'उदासीनं पृच्छती'ति न प्रयोगः। 'जिज्ञासाज्ञानानुकूलः शब्दप्रयोगः पृच्छेतरर्थं' इति गदाधरोक्तमपि न युक्तं, सिद्धेरिच्छाम्प्रति प्रतिबन्धकत्वेन तादृशस्थले 'पृच्छती'ति प्रयोगानापत्तेरिति दण्डी।

**ज्ञानानुकूलशब्दप्रयोग इति।** ज्ञानानुकूलशब्दप्रयोगानुकूलकृतिरर्थ इति बोध्यम्।

ॐ **चिदस्थिमाला** ॐ

**ज्ञानेति। माणेति।** तस्य व्यापारे सम्बन्धत्वसामान्येनान्वयः, जनकत्वेनेति यावत्। **ज्ञानेति।** विषयतये-त्यादिः। स=उक्तो व्यापारः। स च=द्विविधश्च। आदिना शासिः। सम्प्रदानत्वं—प्राप्तमिति शेषः। चस्त्वर्थे। अत्र=ब्रूशास्योरुभयत्र। **संयोगेति।** उत्तरदेशेत्यादिः। संयोगश्च फलतावच्छेदकः सम्बन्धः, ग्रामनिष्ठ-

ॐ **वरवर्णिनी** ॐ

सम्बन्धः=पथः सम्बन्धः। **अपादानत्वमिति।** माणवकस्यात्रापादानत्वं न प्राप्नोतीत्यर्थः। अपायेन=बौद्धेनापायेन। **कर्मेति।** पथिरूपकर्मसम्बन्धवत्त्वेनेत्यर्थः।

**विषयत्वाभावादिति।** एवञ्च कर्मत्वाभावे षष्ठ्येवेत्याशयः। **व्यापारद्वयेति।** जिज्ञासाविषयपथि-रूपार्थविषयकज्ञानानुकूल—माणवकनिष्ठव्यापारानुकूल—प्रष्टृनिष्ठव्यापारार्थत्वे इत्यर्थः। **इत्यर्थादिति।** एवञ्च वृक्षस्यापादानता प्राप्नोतीत्याशयः। ज्ञानानुकूलः=धर्मादिविषयकज्ञानानुकूलः। व्यापारः=वक्तृनिष्ठो व्यापारः। सः=धर्मादिविषयकज्ञानानुकूलशब्दप्रयोगरूपो वक्तृनिष्ठो व्यापारः। प्रवृत्तिपर्यवसायी=प्रवृत्तिफलकः। ब्रूञस्तु तादृशकथनमात्रमर्थः, प्रवृत्तिरस्तु मा वास्तु, तत्र नाग्रह इति तयोर्भेद इत्याशयः। सच=उभयत्रापि तादृशो व्यापारश्च। **विषयतेति।** एवञ्च तादृशविषयताश्रयत्वाद्धर्मस्य 'कर्तु'रिति कर्मतेति भावः। माणवकस्य तु 'अकथितञ्चे'त्यनेनैव कर्मतेत्यपि बोध्यम्। विषयतां विहाय समवायसम्बन्धस्य फलतावच्छेदकत्वे तु माणवकस्य 'कर्तु'रित्येव कर्मसञ्ज्ञा सिद्धेति श्रीगुरवः। तदविवक्षायां=सम्प्रदानत्वा-विवक्षायाम्। अनेन—अकथितसूत्रेण। व्यापारानन्तरं=धात्वर्थीभूत—'धर्मं कु'र्वित्यादिशब्दप्रयोगरूप—कर्तृव्यापारानन्तरम्। **तज्ज्ञानेति।** धर्मज्ञानेत्यर्थः। प्रकृते—आश्रयत्वञ्च समवायेनेति बोध्यम्।

एषु 'कर्तु'रिति कर्मत्वं बोद्धम्। एवञ्च भाष्यानुक्तानामत्र ग्रहणं प्राचामनुरोधेनेति तत्त्वम्। भाष्योक्ता हि–'दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः'।

**अर्थनिबन्धनेयमिति।** इदमपि कैयटानुरोधेन। वस्तुतस्तु येषामेतदर्थानां द्विकर्मकत्वमिष्टं तेषां व्यापारद्वयार्थत्वेन 'कर्तु'रित्येव सिद्धम्, अन्यथा 'आख्यातोपयोगे' इतिसूत्रभाष्योक्तपरिगणनभङ्गापत्तिः। किञ्च भाष्ये भिक्षिग्रहणवैयर्थ्यापत्तिः,

उभयार्थकयाचिग्रहणेनैव सिद्धेरित्यन्ये।

**अकर्मकधातुभिरिति।** तेषां स्वकरणकव्यापने वृत्त्या व्याप्तिरूपफलाश्रयत्वेन 'कर्तु'रिति कर्मत्वम्। 'मासमास्ते' इत्यादेर्मासमासनेन व्याप्नोतीत्यादिक्रमेणार्थ इति भावः।

यत्त्विदमेव कर्मसञ्ज्ञाविधायकमिति, तन्न; भाष्ये तादृशवचनानुपलम्भात्।

---

### ॐ चिदस्थिमाला ॐ

स्तदनुकूलव्यापारश्चाजानिष्ठः, प्रधानव्यापारजन्यफलाश्रयत्वादजा प्रधानं, तत्र लादयः, उक्तभाष्यात्। सर्वत्र तथोक्तेः फलमाह—**एष्विति**। पर्यवसितसिद्धान्तमाह–**एवञ्चेति**। तथा तेन सिद्धौ चेत्यर्थः। 'वस्तुतस्तु' इत्यस्य 'सिद्ध'मित्यत्रान्वयः। **परेति**। 'दुहादी'त्यादिः। **अन्ये**–भाष्यतत्त्वविदः। सिद्धान्तमाह–**तेषामिति**। अकर्मकधातूनामित्यर्थः। स्वम्–आसनादि। **फलेति**। नचैवमपि नासनजन्यत्वं व्याप्ताविति कथं तत्त्वमिति वाच्यम्, आसनजन्यत्वस्य व्याप्तावारोपेण तस्याः फलत्वात्। मूलकृदादिमतं खण्डयति—**यत्त्विति**।

### ॐ विषमपदविवृतिः ॐ

प्राकृतं = कर्तुरित्यनेन विहितम्। एकार्थकत्वे उक्तं—वेति। **व्याप्नोतीत्यर्थकत्वे प्राप्नोतीति।**

---

### ॐ वरवर्णिनी ॐ

व्यापारविशेषः=कर्षणादिरूपः। भाष्यानुक्तानाम्=भाष्योक्तदुहाद्यष्टातिरिक्तानाम्। **भाष्योक्ता हीति।** तदुक्तं भाष्ये—'किमुदाहरणं? ''दुहि–याचि–रुधि–प्रच्छि–भिक्षि–चिञामुपयोगनिमित्तमपूर्वविधौ[1]।

ब्रुवि–शासिगुणेन[2] च यत्सचते तदकीर्तितमाचरितं[3] कविना''–इति'–इति।

**किञ्चेति।** परे तु—'भिक्ष—भिक्षायां लाभे अलाभे चे'त्युक्त्या भिक्षेर्लाभेऽलाभे च प्रयोगो नतु याचेस्तथेति भिक्षिग्रहणमावश्यकमेव, उभयार्थकयाचिग्रहणेन भिक्षिग्रहणासम्भवात्। किन्तु विपरीतं–भिक्षिग्रहणेन सिद्धे याचिग्रहणमेव व्यर्थं, याचत्यर्थस्य भिक्षतिनाऽन्तर्भावात्तद्ग्रहणेन याचतेर्ग्रहणस्य सम्भवात्। एवञ्च शेखरश्चिन्त्य एवेत्याहुः। श्रीगुरुचरणास्तु—'भिक्षिग्रहणवैयर्थ्यापत्ति'रिति काकुः, भिक्षिग्रहणवैयर्थ्यापत्तिः? न वैयर्थ्यापत्तिः, पूर्वोक्तरीत्या याचिग्रहणेन भिक्षिग्रहणासम्भवादिति तदाशयः। एवञ्च याचिग्रहणमेव व्यर्थमित्येव शेखरकृदाकूतमित्याहुः। अधिकमभिनवराजलक्ष्म्यादावनुसन्धेयमिति **गौडाः।**

**उभयार्थकेति।** पूर्वोक्त–'परस्वत्वनिवृत्ति'–'स्वस्वत्वोत्पत्ति'—एतदुभयानुकूलव्यापारार्थकेत्यर्थः। तेषाम्=अकर्मकधातूनाम्। **स्वकरणकव्यापने इति।** स्वार्थकरणकव्याप्त्यनुकूलव्यापारे इत्यर्थः। वृत्त्या=शक्त्या। **कर्मत्वमिति।** मासादीनामिति शेषः।

---

१ उपयुज्यते इत्युपयोगः—पयः–फलादि, तस्य निमित्तं=गवादि। अपूर्वविधौ=विध्यन्तरविषयापादानत्वाद्यविवक्षायाम्। २ ब्रुविशास्योर्गुणः=साधनं–प्रधानकर्म, धर्मादि तेन सचते=सम्बध्यते इत्यर्थः। ३ तत्–पाणिनिनाऽकथितमिति व्यवहृतमित्यर्थः।

'अकथितञ्चे'ति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां 'कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणां,—देशश्चे'ति भाष्ये उक्तम्। तच्च न विधायकं, 'हि'शब्दघटितत्वात्।

किञ्च 'कालाध्वनो'रिति सूत्रे—'कालाध्वानौ कर्मवदिति वक्तव्य'मिति वार्त्तिक-प्रत्याख्याने 'प्राकृतमेवैतत्कर्म, यथा कटं करोती'त्युक्तम्। अस्य वचनत्वे 'उक्तं वा, प्राकृतं वे'ति वदेत्।

तस्मादुक्तरीत्या कालादीनां तद्योगे कर्मतया द्विकर्मकत्वमित्येव तत्तात्पर्यम्।

अत एव 'समां समां विजायते'इति सूत्रे—'समायां समायां विजायते' इति विग्रहकथनपरं भाष्यं सङ्गच्छते, अन्यथा अनेन द्वितीयाया एव तत्र साधुत्वेन तद-सङ्गतिः स्पष्टैव।

अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका—

'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥' इति।

सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणा द्विकर्मकत्वं, तुल्यन्यायात्।

❀ चिदस्थिमाला ❀

उपलम्भभ्रमं निराचष्टे-**कथितमिति**। तच्च=तत्तु। प्रत्याख्याने=तन्निमित्ते। **प्राकृतमिति**। आदौ कृतं-प्रकृतमुत्सर्गसूत्रं, ['कर्तु'रिति] तेन बोधितमेवेत्यर्थः। तद्भाष्ये समायामिति आसनादिमात्रवृत्तावधिकरणत्वा-त्सप्तमीति भावः। **अन्यथेति**।अस्य वचनत्वेऽधिकरणत्वाविवक्षायां चरितार्थेनानेन तद्विवक्षायामपि परत्वा-त्प्रवृत्तेन प्राप्तकर्मसञ्ज्ञया तद्बाधादित्यर्थः। उक्त एव भाष्यार्थ इत्यत्र मानमाह—**अत एवोक्तेति**। कारिकायामकर्मकग्रहणमवयुत्यानुवाद इति सूचयन्नस्य वचनस्यावश्यकत्वमाह—**सकर्मकेति**। अनेन=

❀ वरवर्णिनी ❀

परे तु—निश्चयार्थकोऽत्र'हि' शब्दः, 'खल्वपी'तिवत्। किञ्च 'कालभावाध्वे'ति श्लोकवार्त्तिकमिद-मुपात्तमिति पादपूरणार्थोऽत्र हिः, श्लोकपूरणार्थानां व्यर्थानां पदानां बहुशो भाष्येऽपि प्रयोगो दृश्यते एवेत्ययं शेखरोऽयुक्त एवेत्याहुः। इत एवारुचेराह—**किञ्चेति**। **कर्मवदिति**। द्वितीयाविधानं न कार्यं, किन्तु कर्मवद्भाव एव विधेय इति कर्मवदतिदेशादेव द्वितीया सेत्स्यत्येवेति तद्भावः। अस्य=कालभावाध्वे'ति वचनस्य। **वदेदिति**। परे तु वार्त्तिकोक्तस्य वार्त्तिककृदुक्तवचनान्तरेणैव यत्र प्रत्याख्यानं तत्रैव—'उक्तं वा' 'प्राकृतं वे'ति भाष्ये प्रयुज्यते, प्रकृते तु—'कालभावाध्वे'ति वार्त्तिकोक्तस्य भाष्यकृद्वचनेन प्रत्याख्यानमिति—'प्राकृतं वा' 'उक्तं वे'ति नोक्तं, किञ्च तत्रापि 'कर्त्तु'रिति वचनस्यैव तत्र विधायकतया भाष्ये 'प्राकृतं वे'ति, 'उक्तं वे'ति वा कुतो नोक्तमिति वयमपि पृच्छामः। अतः—''अस्य वचनत्वे 'उक्तं वा' 'प्राकृतं वे'ति वदेत्—''इति नागेशोक्तं व्यर्थमेवेति प्राहुः। इत एवारुचेराह—**अत एवेति**। परे तु—कारकाणां वैवक्षिकतया कालस्याधिकरणत्वेन विवक्षायां तदुपपत्तेः—चिन्त्योऽयं शेखर इति प्राहुः।

इत एवारुचेर्हरिकारिकामुपन्यस्यति—**कालभावेति**। परे तु—कारिकायाम्—'अन्तर्भूतक्रिया-न्तरै'रिति करणे तृतीया, एवञ्च—अकर्मकलक्षणमेतत्,—'फलरूपक्रियान्तर्भावेण येऽकर्मका'इति। एवञ्च नेदं भट्टोक्तार्थसाधकम्। अन्यथा-धात्वर्थस्य व्यापनस्य मुख्यत्वात्क तस्यान्तर्भावः, यश्चासनादिरन्तर्भूतो न तेन कर्मतेति शेखरोक्तमसङ्गतमेव स्यादित्याहुः।

तेन 'मासमोदनं पचती'ति भवति ।

तत्र कालादिकर्म—अप्रधानं, द्रव्यकर्म तु प्रधानम् । कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात् ।

किञ्च कठिनपाक्यस्य महापरिमाणस्य बहुसङ्ख्यस्य च चिरेण पाकोऽन्यस्य-अचिरेणेति द्रव्यधर्मं पर्यालोच्य—क्रियासु कालयोग इति—स बहिरङ्गः ।

अपि च साधनसम्बन्धे जाते क्रियायाः परिच्छेदकबाह्यकालाकाङ्क्षेति स बहिरङ्गः । अकर्मकव्यवहारस्तु धातूनां द्रव्यकर्माभावनिमित्त एव । अत्र बीजं वक्ष्यते । तदुक्तम्—

'अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः ।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते ॥' इति ।

❀ चिद्स्थिमाला ❀

व्यापनादिवृत्त्यङ्गीकारेण । अस्य वचनत्वे तु सकर्मकत्वान्न स्यादिति भावः । इति=इत्यादि । नन्वेवं कथं गुणप्रधानभावोऽत आह—तत्रेति । तयोर्मध्ये इत्यर्थः । चेन त्रयाणां समुच्चयः । पर्यालोच्येति । 'ज्ञायमाने'ति शेषः ।

नन्वेवमकर्मकत्वव्यवहारोच्छेदापत्तिरत आह—अकर्मकेति । वक्ष्यते-तदुक्तं हरिणा इत्यादिना । अतः=अविवक्षादितः । तैः=कालादिभिः । द्रव्यैरेवाकर्मकः । एवञ्चाकर्मकशब्देनात्यन्ताविद्यमानकर्मकस्येव-

❀ विषमपदविवृतिः ❀

द्रव्यद्वारैवेति । इदं चिन्त्यं, कालिकसम्बन्धस्य परिच्छेद्यपरिच्छेदकभावस्य वा साक्षात्सम्बन्धस्य सम्भवात् । पर्यालोच्येति । इदमपि प्रायिकम् , तण्डुलादितात्पर्येणापि 'मासं तण्डुलं पचती'ति प्रयोगात् , तण्डुलादेरचिरेणैव पाकात् । स बहिरङ्ग इति । तेन 'मासमोदनः पच्यते' इत्यत्र मासरूपे कर्मणि न लकार इति भावः । तैः=कालादिभिः । कर्मणि भावे चेति । यथा कर्मणि तथा भावे चेत्यर्थः ।

परे तु 'कालभावाध्वे'ति भाष्योक्तवचनस्य युक्तिसिद्धार्थकत्वेपि भाष्योक्तिष्वेव तथा कल्पना नान्यत्र । तथा च सकर्मकविषयमपीत्ययुक्तम् , अकर्मकाणामित्यस्य पूर्वेणाभिसम्बन्धात् । त्वन्मते 'कालभावाध्वगन्तव्यादेश्च कर्मसञ्ज्ञा' इति वक्तव्ये 'अकर्मकाणा'मित्यस्य वैयर्थ्यम् । 'मासमोदनं पचती'त्यत्र तु 'कालाध्वनो'रिति द्वितीया । अत्यन्तसंयोगाविवक्षायां—'मासस्य द्विरोदनं पचती'त्येव । 'कालभावाध्वे'त्यत्र कालग्रहणं तु मासं द्विःशेते इत्यादौ कर्मत्वार्थम् , 'आस्यते मास'इत्यादौ कर्मणि लकारार्थञ्च । 'कालाध्वनो'रित्यत्र कालग्रहणन्तु

❀ वरवर्णिनी ❀

तुल्यन्यायादिति । परे तु नात्र किञ्चिन्मानमिति यत्किञ्चिदेतदित्याहुः ।

तेनेति । परेतु—प्रकृते 'कालाध्वनो'रिति द्वितीयेति न तदुक्तप्रकारेण तत्र द्विकर्मकत्वमिति शेखरोक्तमयुक्तमेवेत्याहुः । प्रधानमिति । ननु 'जन्यानां जनकः कालः' इत्युक्त्या कालस्य सर्वत्र सत्त्वेन तस्यैव च साक्षात्क्रियान्वयितया तस्यैव (—कालस्यैव—) प्राधान्यमितीदमसङ्गतमेवेत्यरुचेराह—किञ्चेति । कठिनपाक्यस्य=माषद्विदलादेः । महापरिमाणस्य=आढकादिमितस्य कन्दादेः ।

तदुक्तमिति । 'हरिणे'ति शेषः । तैः कर्मभिः=कालादिकर्मभिः, युक्तोऽपि धातुः—द्रव्यैः=ओदनादिद्रव्यकर्मभिः—अयुक्तः सन्—'अकर्मक' इति व्यवहारं लभते, एवञ्च कालाद्यतिरिक्तकर्मशून्यतया अकर्मकत्वनिबन्धनो भावे लकारो,—'मासमास्यते देवदत्तेने'त्यादौ सिद्ध्यति । एवं—मासादिरूपकर्मवत्तया सकर्मकत्वस्यापि वक्तुं शक्यतया सकर्मकत्वप्रयुक्तः—'आस्यते मासः' इत्यादौ कर्मणि लकारश्च सिद्ध्यतीत्यर्थः । अत्र कारिकायां द्रव्यपदं कालादिभिन्नद्रव्यसामान्यपरमिति मासादिरूपकालादेरपि लिङ्गसङ्ख्यान्वयित्वरूपद्रव्यत्वस्य सत्त्वेऽपि नासङ्गतिरिति तत्त्वविदः ।

**गतिबुद्धिप्र** । शब्दः—कर्म—कारकं येषामित्यर्थो—व्याख्यानात् । तन ह्वाययति-क्रन्दयत्योर्न ।

❀ विजया ❀

**गतिबुद्धि** । अयम्भावः—'देवदत्तं ग्रामं गमयती'त्यादौ ण्यन्तगमिधातोः संयोगानुकूलव्यापारानुकूलव्यापारार्थकतया प्रधानीभूतव्यापारप्रयोज्य-संयोगानुकूलव्यापारात्मक-फलाश्रयत्वेनच्छोद्देश्यतया 'कर्त्तु'रित्यनेन देवदत्तादेः कर्मत्वं प्राप्तं, णिच्प्रकृतिभूतगम्धात्वर्थप्रधानीभूतव्यापाराश्रयत्वेन च तस्यैव कर्त्तृत्वमपि प्राप्तं, तत्र परत्वात्, ण्यर्थद्वितीयव्यापारसापेक्षकर्मत्वापेक्षया प्रकृतिमात्रार्थव्यापारापेक्षतयाऽन्तरङ्गत्वात्, [ 'तत्प्रयोजको हेतुश्चे'ति–कर्त्तृप्रयोजकस्य हेतुतया 'हेतुमतिचे'त्यनेन कर्त्तृप्रयोजकव्यापारे णिचो विधानात्तदर्थव्यापारापेक्षकर्मसञ्ज्ञां प्रति कर्त्तृसञ्ज्ञायाः—] उपजीव्यतया च कर्त्तृसञ्ज्ञैव प्राप्नोतीति—तां बाधित्वा गत्यादिसूत्रेण कर्मसञ्ज्ञा देवदत्तादेर्विधीयते इति प्राञ्चः । तदुक्तं दीक्षितैर्मनोरमायां—

'परत्वादुपजीव्यत्वादन्तरङ्गतयाऽपि च ।
प्रयोज्यस्याऽस्तु कर्त्तृत्वं, गत्यादेर्विधितोचिता ॥' इति ।

अत एव 'आकडारादेका सञ्ज्ञे'ति सूत्रे भाष्ये"—आकडारात्परङ्कार्य' मिति पाठे गतिबुध्यादीनां ण्यन्तानां कर्म–कर्त्तृसञ्ज्ञामपि प्राप्नोति, आरम्भसामर्थ्याच्च कर्मसञ्ज्ञा, परङ्कार्यत्वाच्च कर्मसञ्ज्ञा प्राप्नोति—" इति दोष उक्तः । तत्र 'आरम्भसामर्थ्या'दित्यस्य–गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थः । गत्यादिसूत्रस्य नियमार्थत्वे तु—गत्याद्यतिरिक्ते'पाचयत्योदनं देवदत्तेने'त्यादौ देवदत्तादेः 'कर्त्तु'रिति प्राप्तकर्मसञ्ज्ञाव्यावृत्त्यर्थं गत्यादिसूत्रस्य चरितार्थतयाऽऽरम्भसामर्थ्यादित्यशुक्तं स्यात् । एवञ्च गतिबुद्धीति सूत्रं विध्यर्थमेवेति ।

ननु शाब्दबोधीयविशेष्यताश्रयत्वरूपस्य शाब्दप्राधान्यस्य णिजर्थव्यापार एव सत्त्वेन तदनुरोधिन्याः कर्मसञ्ज्ञाया अपि तथैव प्राधान्यात्प्रधानकार्यं सर्वतो बलवदिति कर्मसञ्ज्ञैव—[ कर्त्तृसञ्ज्ञां प्रबाध्य–] प्राप्नोतीति गतिबुद्धीति सूत्रं व्यर्थं सन्नियमार्थमेवेति चेन्न; शाब्दबोधीयविशेष्यताश्रयत्वलक्षणशाब्दप्राधान्यस्य प्रयोजकव्यापारे सत्त्वेऽपि उद्देश्यत्वरूपस्यार्थप्राधान्यस्य प्रयोज्यव्यापारे सत्त्वेन [उद्देश्यत्वरूपशाब्दप्राधान्याश्रयकार्यस्यैव चाकडारसूत्रभाष्यादितः प्राबल्यस्य स्वीकरणीयत्वेन ] तदनुरोधिकर्त्तृ–सञ्ज्ञाया एव प्रधानकार्यतया प्राबल्यात्प्राप्त्या कर्मसञ्ज्ञार्थं गत्यादिसूत्रस्य विधायकत्वस्यौचित्यात् । स्पष्टञ्चेदं मनोरमायाम् । इति प्राञ्चतम् ।

❀ चिदस्थिमाला ❀

अविवक्षितकर्मकस्यापि ग्रहणं, तेन'मासं पचती'त्याद्यपि भवत्येवेति बोध्यम् । येषामिति । कृत्रिमे कार्यसम्प्रत्ययात्, कर्मग्रहणसामर्थ्याच्च । शब्दक्रियकाणामित्यर्थे हि 'गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणा'मित्येव ब्रूयात्, अर्थशब्दस्य प्रत्येकं सम्बन्धस्य तुल्यत्वादिति भावस्तदाह—व्याख्यानादिति ।

❀ विषमपदविवृतिः ❀

सकर्मकधातुयोगे द्वितीयार्थम् । 'प्राकृतमेवैतत्कर्मे'ति भाष्यं तु एकदेश्युक्तिः । किञ्च सकर्मकधातुस्थलेऽपि मासादेः कर्मत्वे आप्नोत्यर्थकर्मण्येव लादयः स्युः, तस्य प्राधान्यात्, 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणा'मिति वचनात् । ननु सम्बन्धप्रयोजकमासाद्येव 'मासमास्ते' इत्यादौ धात्वर्थः, 'आसनेन व्याप्नोती'ति तु फलितार्थकथनमिति चेन्न, एवमपि 'कुरून् तण्डुलं पचती'ति प्रयोगापत्तिः, इष्यते तु 'कुरुषु तण्डलं पचती'ति । 'कुरवस्तण्डुलं पच्यन्ते' इति प्रयोगापत्तिश्च, कठिनपाक्यस्येति लदुक्तयुक्तेरनवतारात् । न चाधाररूपं कर्म बहिरङ्गं, दुधेः व्रजरूपे कर्मणि लकारश्च न भवत्येव, 'अप्रधाने दुहादीना'मित्युक्तेरिति वाच्यं, व्यापारद्वयार्थकत्वेन व्रजस्य 'कर्तु'रिति कर्मत्वपक्षे तत्र लकारानापत्तेः, आधारत्वमात्रेण बहिरङ्गत्वस्य निर्बीजत्वाच्चेत्याहुः ।

**अणाविति** । णिच्यनुत्पन्ने इत्यर्थः । अत्र णिच् हेतुमण्णिजेव, 'स णा'वित्यत्रापि स एव–व्याख्यानात् । अत एव भक्षेर्निषेधश्चरितार्थः । स हि नित्यण्यन्तश्चुरादिरिति बोद्ध्यम ।

अन्यानधीनत्वलक्षणाऽऽर्थप्राधान्य-शाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद्बलवत्त्वेन 'कर्तु'रित्येव सिद्धे—

ॐ विजया ॐ

नवीनास्तु—शाब्दबोधीयविशेष्यताश्रयत्वलक्षणस्य शाब्दप्राधान्यस्य, अन्यानधीनत्वलक्षणस्यार्थप्राधान्यस्य च णिजर्थव्यापारे एव सत्त्वेन तत्सापेक्षकर्मसञ्ज्ञायाः प्राधान्यात्प्राबल्येन कर्मसञ्ज्ञायाः सिद्धौ गत्यादिसूत्रं नियमार्थमेव ।

आकडारसूत्रे भाष्ये च—'आरम्भसामर्थ्या'दित्यस्य नियमार्थकगत्यादिसूत्रारम्भसामर्थ्यादित्येवार्थः; यद्वा ण्यन्तधातुविषयक'कर्त्तु'रितिसूत्रारम्भसामर्थ्यादित्यर्थ इति न ततो विध्यर्थतालाभसम्भवः । अत एव—

'गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मताङ्गतः ।
नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाऽभिधीयते ॥'

—इति हरिकारिकायां 'नियमा'दित्युक्तम् । गुणक्रियायाम्=अण्यन्तगमादिक्रियायां–स्वातन्त्र्येण तस्य कर्तृसञ्ज्ञायाः प्राप्तावपि प्रधानीभूतण्यन्तक्रियासन्निधौ तदनुरोधिकर्मत्वस्यैव युक्तत्वात्कर्मत्वस्य प्राप्तौ गत्यादिसूत्रस्य नियमार्थतया कर्मसञ्ज्ञाया अप्रवृत्त्या स्वधर्मेण=कर्तृधर्मेण तृतीयारूपेण 'पाचयत्योदनं देवदत्तेने'त्यादौ देवदत्तादिरभिधीयते—इति तदर्थः ।

ननु—'कर्तृप्रत्ययसमभिव्याहारे यथा व्यापाराश्रयः कर्त्ता प्रधानं, तथा कर्मप्रत्ययसमभिव्याहारे फलाश्रयः कर्मे'ति फलव्यापारयोरुभयोरपि शाब्दबोधीयविशेष्यताश्रयत्वरूपं शाब्दप्राधान्यमिति कथं प्रयोजकव्यापारे एव शाब्दं प्राधान्यम्?–किञ्च प्रयोज्यव्यापारेऽपि आर्थं प्राधान्यमप्यस्त्युद्देश्यत्वरूपं, तत्प्रेरणायैव प्रयोजकव्यापारप्रवृत्तेरिति—कर्तृप्रत्यय एव प्राबल्यात्प्राप्नोतीति विध्यर्थतोचितेति चेन्न; जनकत्वरूपप्राधान्यस्य पित्रादिषु दृष्टस्य सर्वतो मुख्यस्य प्रयोजकव्यापारे सत्त्वात्तत्सापेक्षकर्मसञ्ज्ञायाः प्राबल्यात् ।

ॐ चिदस्थिमाला ॐ

ण्यन्तलक्ष्ये तदभावासम्भवादाह—**णिच्येति** । 'यः कर्ते'ति शेषः । अणीत्यादि—एकं पदं, भिन्नं वा लुप्तविभक्त्यन्तम् । अत्र=अणीत्यत्र । उत्तरसूत्रस्य शब्दाधिकारेणाप्युपपत्तेर्न तस्यात्र तत्त्वमिति सूचयन् व्याख्यानमेव विशदयति–**अत एवेति** । सकलप्राचां ग्रन्थासाङ्गत्याय सिद्धान्तमाह—**अन्येति** । अव्यवहितान्वयीदम् । अपिना परोपजीव्ययोः समुच्चयः । बलवत्त्वात्प्राप्तिः,—पच·

ॐ वरवर्णिनी ॐ

**गतिबुद्धि** । अत्र प्राञ्चः—"–'गतिबुद्धी'ति सूत्रं विध्यर्थं, तथाहि—'गमयति देवदत्तं यज्ञदत्त'इत्यादौ गम्धात्वर्थसंयोगानुकूलव्यापारानुकूलव्यापारप्रयोज्य–प्रथमव्यापाररूप-फलाश्रयस्य देवदत्तस्य-कर्तृभूतयज्ञदत्तवृत्तिव्यापारप्रयोज्यफलाश्रयतया कर्मसञ्ज्ञा, गम्धातूपात्तव्यापाराश्रयत्वेन कर्तृसञ्ज्ञा च प्राप्नोति, तत्र—**परत्वात्**, णिजर्थव्यापारप्रयोज्यफलाश्रयत्वरूपकर्मत्वापेक्षया प्रकृत्यर्थव्यापाराश्रयत्वरूपकर्तृत्वस्य **अन्तरङ्गत्वात्**, कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयस्य कर्मसञ्ज्ञाविधानेन कर्तृसञ्ज्ञां विना कर्मसञ्ज्ञाया असम्भवेन कर्तृसञ्ज्ञायाः कर्मसञ्ज्ञोपजीव्यत्वाच्च–देवदत्तस्य कर्मसञ्ज्ञां बाधित्वा कर्तृसञ्ज्ञैव स्यादिति—अप्राप्तकर्मसञ्ज्ञाविधानार्थं गतिबुद्धिसूत्रम् ।

न च शाब्दबोधे प्रयोजकव्यापारविशेष्यकबोधदर्शनात्तत्सापेक्षकर्मसञ्ज्ञायाः प्राधान्यात्प्रधानकार्यस्य च सर्वोऽपेक्षया बलवत्त्वात्कर्मसञ्ज्ञैव प्राप्नोतीति गतिबुद्धिसूत्रं व्यर्थं सन्नियमार्थमेवेति वाच्यं, प्रयोजक-

—'णिजर्थेनाप्यमानस्य चेद्गत्यर्थादीनामेवे'ति नियमार्थमिदं; तेन पाचयत्यादियोगे नेति–'हेतुमति चे'ति सूत्रे **भाष्यकृतः** ।

'प्रधानकार्यं सर्वतो बलव'दिति आकडारसूत्रे कैयटे स्पष्टम् । तेन गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं, पाचयत्यादियोगे कर्तृत्वशक्तिमत्त्वमेवेति बोद्धव्यम् ।

**गमयति देवदत्तेनेति** । यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको व्यापार इति बोधः । अत्र देवदत्तस्य न कर्मत्वम् ।

**नियन्त्रिति** । नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः । प्रापणार्थवहेर्गत्यर्थत्वा-भावेऽपि 'ग्रामं प्राप्त' इत्यादौ तत्प्राप्तेर्गतिं विनाऽसम्भवादाक्षिप्तगत्याऽपि गत्यर्थत्वमित्य-भिमानेन वार्तिकारम्भः ।

**❀ चिदस्थिमाला ❀**

धात्वर्थनिष्ठ विशेष्यता निरूपितप्रकारतानाश्रयत्वरूपप्राधान्यसत्त्वादिति भावः । तत्रापि यज्ञदत्तस्येष्टत्वादाह–**देवदत्तेति** । यथाश्रुतासङ्गतेराह–**नियन्त्रिति** । इदमर्थद्वारकं ण्यन्तविशेषणम् । तत्प्रकृतिभूतत्वं=तद्घटकत्वम् । अन्यथात्राप्यसङ्गतिः स्पष्टैव । नियन्ता च 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथि'रित्युक्तः सारथि-रेव, न किन्तु पशुप्रेरकमात्रं, तेन 'वाहयति बलीवर्दान्यवा'निति सिद्धम् । प्रापणं=प्राप्त्यनुकूलव्यापारानुकूल-व्यापारः । प्राप्तिश्च सम्बन्धमात्रं, 'सुखं प्राप्तः' 'धनं प्राप्त' इत्यादौ समवायस्वस्वामिभावादेर्भानात्तदाह—**प्रापणार्थेति** । 'अभिमान'इत्यनेन सूचितं–'वस्तुतो न्यायसिद्धार्थानुवाद एव वार्त्तिक'मिति बोध्यमिति । नन्वेवं कर्मत्वेन 'भूः प्राप्ते'त्यादिसिद्धावपि 'गत्यर्थाकर्मके'त्यप्राप्त्या 'सुखं प्राप्त' इत्याद्यसिद्धिरतस्तत्रापि स्याद्गत्याक्षेप

**❀ विषमपदविवृतिः ❀**

'प्रधानकार्य'मित्यस्य प्रधानानुरोधिकार्यस्य सर्वतो बलवत्त्वादित्यर्थः । तत्फलं तु 'मूलकेनोपदंशं भुङ्क्ते' इत्यत्र मूलकस्य उपदंशक्रियानिरूपितकत्वेऽपि प्रधानभुजिक्रियानिरूपितकरणत्वनिबन्धनतृतीया-सिद्धिः । परत्वात्तत्र तृतीयाया उपपादने तु अस्य फलं मृग्यमिति केचित् ।

परं तु उपदंशक्रियायां कर्मत्वेन अन्वितस्यैव भोजने करणत्वादन्तरङ्गत्वाद्द्वितीया प्राप्ताऽनेन

**❀ वरवर्णिनी ❀**

व्यापारस्य प्रयोज्यमुद्दिश्यैव प्रवृत्तेरुद्देश्यत्वरूपस्याऽऽर्थप्राधान्यस्य प्रयोज्यव्यापारेऽसत्त्वात्परत्वान्तरङ्गत्वो-पजीव्यत्वादितश्च कर्तृसञ्ज्ञाया एव प्राप्त्याऽस्य विध्यर्थत्वस्यैवौचित्यात् । न च प्रयोजकव्यापारस्य प्रयोज्यान-पेक्षतया स्वतन्त्रत्वात्–अन्यानधीनत्वलक्षणमार्थप्राधान्यं, शाब्दबोधीयमुख्यविशेष्यताश्रयत्वरूपं शाब्दप्राधान्य-ञ्चास्तीति प्रकृते तत्सापेक्षकर्मसञ्ज्ञैव प्राप्नोतीति नियमार्थतैवोचितेति वाच्यं, कर्मप्रत्ययसमभिव्याहारे नव्यमते फलविशेष्यकबोधोदयात्तत्र प्रयोजकव्यापारे इव मम प्रयोज्यव्यापारेऽपि निरुक्तशाब्दप्राधान्यस्यो-द्देश्यत्वलक्षणार्थप्राधान्यस्य च सत्त्वेनोभयोस्तुल्यत्वेन परत्वादन्तरङ्गत्वादुपजीव्यतया च कर्तृसञ्ज्ञाया एव प्राप्तेरस्य विध्यर्थत्वस्यैव युक्तत्वादित्याहुः । **नव्यास्तु**–सर्वापेक्षया बलवतो जनकत्वरूपस्य, अन्यानधीनत्व-लक्षणस्य चार्थप्राधान्यद्वयस्य कर्तृव्यापारे सत्त्वात्तदनुरोधिकर्मत्वस्य प्राप्त्या'गतिबुद्धी'तिसूत्रं नियमार्थमेव, अत एव 'हेतुमति चे'तिसूत्रे भाष्येऽस्य नियामकत्वमुक्तमित्याहुः । तदाह—**अन्यानधीनेति** ।

**न कर्मत्वमिति** । ननु अणावित्यस्याभावे 'गमयति–देवदत्तो–यज्ञदत्त'मित्यत्रैव दोषदानमुचितं, कर्तृसञ्ज्ञां बाधित्वा देवदत्तस्य कर्मसञ्ज्ञाया अनेन प्राप्तेः । न च लटा कर्तुरुक्ततया तस्य कर्मत्वेऽपि प्रथमाया एव प्रवृत्त्या न फलभेद इति वाच्यं, देवदत्तस्य कर्मसञ्ज्ञायामिदानीं लटोक्तौ मानाभावात्, कर्तृत्वस्यैव लटोक्तेस्तस्य च देवदत्तेऽभावादिति चेन्न; 'कर्तुरीप्सिते'ति सूत्रादीप्सिततममित्यस्यानुवृत्त्या

'सुखं प्राप्त' इत्यादौ न तदाक्षेपः। तत्र कर्तरि क्त आदिकर्मणि बोध्यः। अत एव 'ग्रामं प्रापयति देवदत्तेने'त्येवेति–ध्वनितं–'न गती'ति 'न वे'ति सूत्रे च भाष्ये।

नयतेस्तु 'या––प्रापणे'इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोध्यम्।

**अदिखाद्योरिति** । प्रत्यवसानार्थत्वात्प्राप्तिः । **प्रत्यवसानं**–भक्षणम् ।

---

### ❀ चिद्स्थिमाला ❀

इति गतिरेव तदर्थः कुतो नात आह–**सुखमिति** । अत एव=प्रापणस्य गतिभिन्नत्वादेव । **न गतीति** । तत्र ह्युक्तं–'न वहिर्गत्यर्थ' इत्यादि । **नवेतीति** । तत्र ह्युभयत्र विभाषागणनावसरे 'हृक्रोरित्युभयत्र विभाषे'त्युक्त्वा प्राप्तेऽभ्यवहरतिमुदाहृत्य, अप्राप्ते 'हरति भारं देवदत्तो' 'हारयति भारं देवदत्त'मित्युदाहृतम् । **नयतेस्त्विति** । तुनारुचिर्बोधिता, नयतेरपि 'वहि'तुल्यत्वं, न 'या'तुल्यत्वमिति। अत एव शब्दरत्नादिविरोधो नेति स्पष्टं **भावप्रकाशे** । हिंसाङ्ग इति बहुव्रीहिः, षष्ठीतत्पुरुषो वा । **मनोरमा**चुक्तप्रकारे विसंवादिनं प्रत्याह—

### ❀ विषमपदविवृतिः ❀

वार्यते । उभयत्र मूलकस्य शाब्द एवान्वयः, अन्यथा समामानापत्तेः । अत एव 'कर्तुं शक्यते घटः' इत्यत्र प्रधानानुरोधिनी प्रथमा । हरिरपि–'शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते' इतीत्याहुः ।

ननु सुखं प्राप्त इत्यत्र आक्षिप्तगत्यापि 'गत्यर्थे'ति कर्तरि क्तो न स्यादित्याशङ्क्याह–**कर्तरि क्त इति**। अत एव=आक्षिप्तगत्या गत्यर्थकत्वमित्यस्याभिमानिकत्वादेव । **तस्य गत्यर्थत्वमेवेति** ।

---

### ❀ वरवर्णिनी ❀

अणावित्यस्याभावेऽपि कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयस्यैवानेन कर्मसञ्ज्ञाविधानेन द्वितीयणिचं विना देवदत्ते कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वस्यासम्भवाद्द्वितीयणिच्पर्यन्तानुधावनमित्याशयात् ।

न च संयोगानुकूलव्यापारानुकूलव्यापारार्थकस्य ण्यन्तगमादेर्न गत्यर्थत्वं, प्राधान्येन संयोगानुकूलव्यापारमात्रार्थकस्यैव गत्यर्थत्वादिति वाच्यम्, अणावित्यनतत्सामर्थ्याद्यथाकथञ्चित्संयोगानुकूलव्यापारार्थकस्यैव गत्यर्थपदेन ग्रहणमिति ज्ञापनात्।

**आक्षिप्तेति** । 'ग्रामं प्राप्तः' 'ज्ञानं प्राप्तः' 'सुखं प्राप्तः' इत्यादौ संयोग–समवायादिसम्बन्धस्यापि प्रत्ययात्प्राप्तेः सम्बन्धमात्ररूपत्वेऽपि 'ग्रामं प्राप्त'इत्यादौ सम्बन्धत्वेन भासमानाया वस्तुनः संयोगरूपायाः प्राप्तेर्गतिं विनाऽनुपपद्यमानतया तत्र गतेराक्षेपः । यत्र तु गतिं विनापि प्राप्तेः सम्भवो यथा 'धनं प्राप्तः' 'ज्ञानं प्राप्तः' 'सुखं प्राप्त'इत्यादौ, तत्र न गत्याक्षेपकत्वं प्राप्तेरित्याशयः । वस्तुतः प्रधानगत्यर्थके गमादौ चरितार्थं सूत्रमाक्षिप्तगत्यर्थके न प्राप्नोतीति व्यर्थमिदं वार्त्तिकमित्याहुः श्रीगुरवः ।

अत्र=प्राप्त इत्यत्र । **आदिकर्मणीति** । गत्यर्थत्वाभावेन गत्यर्थाकर्मकेत्यस्याप्राप्तेरित्याशयः । एवञ्च 'सुखं प्राप्त'इत्यस्य सुखप्राप्त्यारम्भ इत्येवार्थ इति तत्त्वम् । अत एव=प्राप्तेरगत्यर्थकत्वादेव । **इत्येवेति** । कर्मत्वाभावेन न द्वितीयेत्यर्थः । **हिंसाङ्गेति** । हिंसा=दुःखजनको व्यापारः–अङ्गं=फलं यस्येत्यर्थः । हिंसाफलके इति यावत् । यथा 'मनुष्यं भक्षयति'इति । परः=कृषीवलादिः ।

**भक्षयति बलीवर्दानिति ।** हिंसाङ्गे भक्षणे भक्षेर्वृत्तिः । परकीयसस्यभक्षणे परो हिंसितो भवतीति तत्स्वामिनोऽत्र हिंसा द्रष्टव्या ।

**जल्पयतीति ।** पुत्रो धर्मं जल्पति—तद्बोधकवाक्यानि कथयति, देवदत्तो जल्पयति धर्मं पुत्रमित्यर्थः । **शब्दाययतीति ।** शब्दं करोतीत्यर्थे 'शब्दवैरे'त्यादिक्यङन्ताण्णिच् ।

**परे** तु 'शब्दक्रियाणा'मित्यर्थे ह्वाययति-शब्दाययति-क्रन्दयतीनां प्रतिषेध उक्तो भाष्ये, न तु 'शब्दकर्मकाणा'मिति पक्षे । एवञ्च तत्र पक्षे भाष्ये शब्दाययतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम् । शब्दस्य धात्वर्थसङ्गृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्मणोऽभावे मानाभावात्—ह्वयताविवेति—चिन्त्योऽयं निषेध इत्याहुः ।

**येषामिति ।** अयं भावः—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्मणामणि कर्ता

ॐ विजया ॐ

**गत्यर्थानामेवेति ।** न च 'नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं, नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नस्यैव नियमशरीरकल्पन'मिति सिद्धान्तः । प्रकृते च नियामकशास्त्रीयोद्देश्यतावच्छेदक-गत्याद्यर्थकधातुत्व-व्यापकं सकर्मकधातुत्वं न भवति, अविवक्षितकर्मकधातौ गत्याद्यर्थकत्वस्य सत्त्वेऽपि सकर्मकत्वस्याभावादितीदमसङ्गतमिति वाच्यं, 'कर्मान्वययोग्यार्थकधातूनाञ्चेद्गत्यर्थकानामेवे'तिनियमशरीरकल्पनेनादोषात् । एवञ्च—'सकर्मकाणाञ्चे'दित्यस्य—कर्मान्वययोग्यार्थकधातूनाञ्चेदित्यर्थ इति वदन्ति ।

**येषामितीति ।** अयमत्र प्राचामाशयः—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्मणामणि कर्ता स णा'-

ॐ चिदस्थिमाला ॐ

**परकीयेति ।** यत्तु अकर्मकत्वादेव सिद्धे इदं व्यर्थमिति, तन्न—इत्याह—**पुत्रो धर्ममिति ।** एतेनात्र यज्ञदत्तमिति शेषः, लाडनपूर्वकशब्दोच्चारणे धातोर्वृत्तिः,'जल्पति पुत्रं यज्ञदत्त'इति पूर्वावस्थेत्याशय इत्यपास्तम् । **इत्यादीति ।** 'विहिते'ति शेषः । मूलादि दूषयति—**परे त्विति ।** 'शब्दस्य कर्मणः अभावे' इति छेदः । 'ह्वेञ्—स्पर्धायां, शब्दे चे'त्यत्र शब्दपदेन ह्वेञ्धात्वर्थनिर्देशात्तदर्थकशब्दपदात् क्यङि पुत्रादिकर्मयोगसम्भवात्तदाह—**ह्वयताविवेति ।**

अस्यार्थस्य स्वरसतो मुनित्रयोक्तितो लाभादाह—**अयमिति ।** यद्यपि 'अणि कर्ता स णा'वितिभिन्नविधिं कृत्वा 'गतिबुद्धी'त्यपरम्—अकर्मकपदरहितं नियमार्थमिति कैश्चिदुक्तं तथापि भाष्यानुरोधेनाह—**गतीति ।** अपेक्षत्वात्=सकर्मकविषयत्वात् । 'भवतीती'ति पाठः । सत्येव च=सत्यपि ।

ॐ विषमपदविवृतिः ॐ

**परे तु** 'नवे'तिसूत्रे भाष्ये—अप्राप्ते 'हारयति भारं देवदत्तः'इति, 'न गती'ति सूत्रे च 'न वहिर्गत्यर्थे'

ॐ वरवर्णिनी ॐ

**उक्त इति ।** 'शब्दक्रियाणामिति चेत् ह्वयत्यादीनां प्रतिषेधः' इत्येवमित्यादिः । पक्षे=सिद्धान्तभूते पक्षे । यद्यस्याकर्मकत्वं स्यात्तदा सिद्धान्तपक्षेऽपि अकर्मकतया कर्मसञ्ज्ञायाःप्राप्त्या तद्वारणार्थं कश्चनोपायो भाष्यकृता कृतः स्यात् । तत्र पक्षे=शब्दकर्मकाणामिति सिद्धान्तपक्षे । **न मानमिति।** अकर्मकशब्दाययतिसद्भावे तु तत्र कर्मत्ववारणायोपायोऽवश्यकर्त्तव्यः स्यादित्याशयः । **ह्वयताविवेति ।** कैशब्दे-

स णा'विति सूत्रे—नियमस्य सजातीयापेक्षत्वात्—'सकर्मकाणाञ्चैदेषामेवे'ति नियमपरम् ।

❀ विजया ❀

विति नियमार्थं, नियमश्च सजातीयापेक्षः, 'सकर्मकाणाञ्चेद्गत्यादीनामेवे'ति च नियमाकारः । तथा च 'मासमासयति देवदत्त'मित्यादावास्धातोरकर्मकतया नियमाक्रान्तेरभावात्कर्तुरीप्सितेति कर्मत्वसिद्धावकर्मकग्रहणं प्रकृतसूत्रे व्यर्थं सत्—येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मका धातव इति बोधयति । अकर्मकपदघटक'कर्म'पदेन देशकालाद्यतिरिक्तकर्मण एव ग्रहणमिति तदाशयः । एवञ्च'मासमासयति देवदत्त'मित्यादौ मासादिकर्मसत्त्वादत्रास्धातोः सकर्मकतया नियमाक्रान्ततया कर्तुरित्यनेन कर्मत्वाप्राप्तावपि अकर्मकग्रहणात्कर्मत्वसिद्धिः । 'पाचयति देवदत्तेने'त्यादावोदनादिकर्मणोऽविवक्षायान्तु नाऽकर्मकग्रहणात्कर्मत्वापत्तिः, ओदनादिविवक्षास्थले पच्धातोर्देशकालादिभिन्नौदनादिकर्मणां सम्भवेन—[ येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मका इत्यादिरीत्या—]-निरुक्तस्याकर्मकत्वस्य तत्राभावात् । गत्यादिसूत्रस्य विधित्वपक्षेऽपि अकर्मकग्रहणं व्यर्थमेव, व्याप्त्यर्थान्तर्भावेण वृत्तौ सर्वेषामेव [ सकर्मकाणामकर्मकाणाञ्च—] धातूनां सकर्मकत्वस्य सम्भवेन—न विद्यते कर्म येषान्तादृशानां धातूनामप्रसिद्धेः । तदुक्तं भाष्ये—'न च केचिद्देशकालादिभिरकर्मकाः'—इति । एतद्भाष्यप्रामाण्याच्च—'असम्भवत्कर्मको धातुरेवाऽकर्मकः'—इति लभ्यते, अन्यथा व्याप्त्यर्थान्तर्भावाभावे मासादीनामपि कर्मत्वासम्भवाद्देशकालाद्यतिरिक्तद्रव्यकर्मणाञ्च स्वत एवाभावाच्चाकर्मकधातोः सम्भवे 'न च केचिद्देशकालादिभिरकर्मका'इतिभाष्योक्तमसङ्गतमेव स्यात् । असम्भवत्कर्मकस्य धातोरत्राऽकर्मकपदेन ग्रहणे तु—व्याप्त्यर्थान्तर्भावे देशकालादेः कर्मणः सम्भवादसम्भवत्कर्मकत्वाभावेन तादृशाकर्मकत्वस्यासम्भवात्—'न च केचिद्देश-

❀ वरवर्णिनी ❀

इत्यादेरप्युपलक्षणम् । यथा कै-गै-रै-ह्वेत्यादेः शब्दार्थत्वेऽपि कर्मविशेषापेक्षायां 'श्लोकं गायती'त्यादि प्रयुज्यते तद्वदस्य शब्दार्थत्वेऽपि कर्मविशेषपुत्रादित्यागे मानाभाव इत्याशयः । अयं निषेधः='शब्दायतेर्ने'ति निषेधः ।

**सजातीयेति** । गत्यादीनां चतुर्णां सकर्मकत्वादिति भावः । एषां=गत्यादीनां चतुर्णाम् । तेन भिदिच्छिद्यादीनां व्यावृत्तिः, तेषां सकर्मकत्वात् ।

यद्यपि कर्मणोऽविवक्षायां गत्याद्यर्था अपि अकर्मका उपलभ्यन्ते इति सकर्मकत्वेन साजात्यं दुर्वचं, तथापि [—कर्माविवक्षायां शब्दकर्मत्वासम्भवात्—] तत्सूत्रोपात्तशब्दकर्मणः सर्वदा सकर्मकस्यैव सम्भवेन—तत्साहचर्येण गत्याद्यर्थकानामपि सकर्मकाणामेवात्र ग्रहणेन तादृशसाजात्यस्य सुवचत्वान्न क्षतिः ।

नन्वेवं फलभेदः, तथाहि—अकर्मकग्रहणे सति—कर्मणोऽविवक्षयाऽकर्मकाणां गत्याद्यर्थानां समवधाने-णिच्समभिव्याहारे कर्म सञ्ज्ञा भवति, तदभावे तु भवद्रीत्या शब्दकर्मसाहचर्यात्सकर्मकाणामेव गत्यादीनां ग्रहणादविवक्षितकर्मके गत्यादौ न सा प्राप्नोतीति फलभेदः स्फुट इति चेदत्र ब्रूमः—'शब्दकर्मणामपि कर्त्ता स णौ'इत्येको योगः, अयमेव च 'सकर्मकाणाञ्चेच्छब्दकर्मकाणा'मितिनियमार्थः । एवञ्च शब्दकर्मातिरिक्ते गत्यर्थादिसकर्मकमात्रेऽपि कर्मत्वाप्राप्त्या 'गतिबुद्धिप्रत्यवसानार्था'मिति कर्मसञ्ज्ञाविधानार्थोऽपरो योगः । गत्याद्यर्थानामपि कर्त्ता णौ कर्म भवतीति च तदर्थः । एवञ्च सर्वथा कर्मरहितानामकर्मकाणां, कर्मणोऽविवक्षयाऽकर्मकाणां गत्यादीनाञ्च योगे'कर्तु'रिति सूत्रेणैव कर्मसञ्ज्ञा सिद्धा, सकर्मकत्वाभावेन नियमाक्रान्तत्वाभावात्। तदेवमकर्मकग्रहणं व्यर्थं सदुक्तार्थं ज्ञापयतीति श्री**बालशास्त्रि**चरणानुसारिणः प्राहुः ।

एवं सिद्धेऽकर्मकग्रहणं सामर्थ्याद्देशकालादिभिन्नकर्माभाववतोऽकर्मकग्रहणेन ग्रहणार्थम् । तच्च सामान्यापेक्षं ज्ञापकं—'शास्त्रेऽकर्मकपदेन ईदृशानामेव ग्रहण'मिति । तेन 'मासमास्यते'इत्यादौ भावे लो भवति–[इति] ।

**न त्विति** । तदविवक्षा हि द्वेधा—तदन्वययोग्यधात्वर्थत्यागात्, सत्येव तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयविवक्षणाद्वेति भावः ।—इदं कैयटानुरोधेन ।

---

**ॐ विजया ॐ**

कालादिभिरकर्मकाः'इति भाष्यं स्वरसतः सङ्गच्यते । तदेवमकर्मकग्रहणं व्यर्थं सद्देशकालादिव्यतिरिक्ताऽसम्भवत्कर्मक एवाकर्मकपदेन ग्राह्य इति ज्ञापयति, तेन–'आसयत्सलिले पृथ्वी'मित्यादौ कर्मत्वसिद्धिः,निरुक्ताकर्मकत्वस्य तत्र सत्त्वात्। 'पाचयति देवदत्तेने'त्यत्र च न कर्मत्वं, देशकालादिभिन्नौदनादिकर्मणां क्वचित्—[-विवक्षास्थले–] सम्भवादिति । अत्रैव प्राचीनमते स्वभावनया नागेशः—''सामान्यापेक्षमिदं ज्ञापकं, तेन सत्यपि मासरूपे कर्मणि 'मासमास्यते देवदत्तेने'त्यादौ भावे ल.सिध्यति–''इति योजयति, वस्तुतो नेदं प्राचां मतमिति तत्खण्डनेन न प्राञ्चते काप्यनुपपत्तिरिति । स्पष्टश्चेदमस्मत्पितृचरणैः श्रीस्रेहिरामशास्त्रिभिराविष्कृतायां शब्देन्दुशेखरत्रिपुरसुन्दर्याम् ।

**ॐ चिदस्थिमाला ॐ**

**कैयटेति** । स चाग्रे स्फुटः । मूलादि दूषयति–**परे** त्वित्यादि **वदन्ती**त्यन्तेन । अपिना तत्समुच्चयः ।

**ॐ विषमपदविवृतिः ॐ**

इति भाष्याच्च गत्युपसर्जनप्रापणार्थकस्य आक्षिप्तगत्या गत्यर्थकस्य च न गत्यर्थपदेन ग्रहणं,'या–प्रापणे' इत्यत्र तु प्रापणं गतिश्च धात्वर्थः । 'गतिबुद्धी'ति सूत्रे अणावित्यस्य प्रयोजनं निवृत्तप्रेषणाद्गमेः ण्यन्ताण्णौ बोध्यमित्याहुः । **सामर्थ्यादिति** । शब्दाधिक्यादर्थाधिक्यमिति भावः । **सामान्यापेक्ष-**

---

**ॐ वरवर्णिनी ॐ**

**एवं सिद्धे इति** । अकर्मकत्वेन नियमानाक्रान्ततया 'कर्त्तु'रित्येव कर्मत्वे सिद्धे इत्यर्थः । 'ग्रहण' मित्यस्य–'व्यर्थमत' इतिशेषः । **देशेति** । तेषां सर्वत्रसत्त्वस्य सम्भवेन केवलान्वयित्वादित्याशयः ।

**ग्रहणार्थमिति** । एवञ्च अकर्मग्रहणाभावे—'सकर्मकाणाञ्चेद्गत्याद्यर्थानामेवे'ति नियमाक्रान्तत्वा-'न्मासमासयति देवदत्त'मित्यत्र'कर्त्तु'रिति–कर्मत्वं न स्यात् , अकर्मकग्रहणे तु तत्सामर्थ्यान्मासाद्यतिरिक्तकर्मशून्यतयाऽकर्मकत्वान्नियमाऽप्रसक्तेः कर्मत्वं सिद्ध्यतीति तत्त्वम्। एतावन्मात्रमेव प्राचां मतम् । अग्रे तु 'तच्चे' त्यादिना शेखरकृता स्वभावनयैव प्राचाम्मतं व्याख्यातमिति न तथा तेषां मतमिति न प्राचांमते कोऽपि दोषः सम्भवतीतितत्त्वविदः । तच्च=अकर्मकग्रहणञ्च । सामान्यापेक्षकतां दर्शयति–**शास्त्रे इति** । व्याकरणशास्त्रमात्रे इत्यर्थः । तेन=सामान्यापेक्षज्ञापनेन। **भावे इति** । 'मासादिरूपकालादिकर्मसत्त्वेऽपी'त्यादिः ।

**परे** तु–अकर्मकग्रहणसामर्थ्यादत्र गत्यादिसूत्र एव तादृशानामकर्मकपदेन ग्रहणमित्येव प्राचामाशयः, न तु तेन शास्त्रमात्रे तथा विवक्षितमिति न कोऽपि दोष इत्याहुः । स्वभावनयैवेदमप्युपपादयति–**तदविवक्षेति** । ओदनादिरूपकर्मेत्यर्थः । **धात्वर्थेति** । विक्लित्यादिरूपेत्यर्थः । तस्मिन्नर्थे=विक्लित्यादिरूपेऽर्थे । तत्र=विक्लित्तिरूपेऽर्थे । **सम्बन्धित्वेनेति** । न तु कर्मत्वेनेति भावः । 'ओदनादे'रितिशेषः । एवञ्च तत्र 'ओदनस्य पचती'त्येव भवतीति तत्त्वम् ।

परे त्वविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणम्, क्तादीनामविवक्षितकर्मकेभ्यः 'कृतपूर्वी कट'मित्यादौ भाष्यकृता कैयटेन चाङ्गीकारात्। लुनातेर्निवृत्तप्रेषणाण्णिचि

❀ विजया ❀

परे त्विति। अयमाशयो भट्टश्रीनागेशपादानाम्—सर्वत्राऽत्र शास्त्रे प्रकृतसूत्रे चाकर्मकपदेन अविवक्षितकर्मणोऽपि ग्रहणम्, अत एव 'कृतपूर्वी कटं' 'भुक्तपूर्वी ओदन'मित्यादौ कर्मणोऽविवक्षयाऽकर्मकत्वेन भावे 'क्त' उपपद्यते, अन्यथा भावे क्तप्रत्ययानापत्तिः। 'लावयति केदार'मिति कैयटप्रयोगानापत्तिश्च। न चात्रार्थान्तरतयैवाऽकर्मकत्वं, न त्वविवक्षितकर्मतयेति न कैयटप्रयोगासङ्गतिरिति वाच्यं, प्रेरणांशत्यागेऽपि फलांशे तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वस्य वक्तुमशक्यत्वात्। अविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणादेव अधीगर्थेतिसूत्रभाष्यप्रयोगे कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते'इत्यत्र भावे'ल'उपपद्यते। न च भट्टमतेऽविवक्षितकर्मणां, देशकालादिभिन्नं कर्म येषां न सम्भवति तेषाञ्चाकर्मकपदेन ग्रहणस्य सिद्धये—नास्ति कर्म—कर्मान्वय्यर्थो—येषामित्येव तदर्थो वाच्यः, [ 'असम्भवत्कर्मका'इति तु न तदर्थो वक्तुं शक्यते, अविवक्षितकर्मणां कर्मविवक्षादशायां कर्मणः सम्भवेनाकर्मकत्वानापत्तेः—] एवञ्च 'न च केचित्कालभावाध्वभिरकर्मकाः' इति भाष्यं भट्टमते न सङ्गच्छते, व्याप्त्यर्थानन्तर्भावे मासादेः कर्मत्वासम्भवेनाऽऽसधातोः कर्मानन्वय्यर्थकत्वरूपाकर्मकत्वस्य सम्भवादिति अविवक्षितकर्मणामकर्मकपदेन न ग्रहणमिति वाच्यं, निरुक्तरीत्याऽकर्मकग्रहणस्य व्यर्थतया तत्सामर्थ्यादवस्थान्तरे कर्मरहितस्यैवाऽकर्मकग्रहणेन ग्रहणात्, भाष्ये 'कश्चियेऽकर्मका'इत्यस्य अवस्थान्तरे कर्मरहिता इत्यर्थेन—[ 'अवस्थान्तरे' इत्यस्य—कालादेः कर्मसञ्ज्ञाप्रयोजकव्याप्तिरहिते, कर्मणोऽविवक्षायाञ्चेत्यर्थतया—] अविवक्षितकर्मणोऽप्यकर्मकग्रहणे दोषाभावेन भट्टमते निरुक्तभाष्यविरोधाभावादिति—भट्टानुसारिणः प्राहुः।

परे तु—'अवस्थान्तरेऽकर्मका' इत्यर्थे मासादिकर्मान्वयकाले आस्धातोरकर्मकत्वं न स्यात्, न च व्याप्त्यादिरहितेऽर्थेऽयमासधातुः कर्मरहित इति मासादिसम्बन्धेऽपि भवत्येवाऽकर्मक इति वाच्यं, तथा सति तण्डुलाद्यन्वयकालेऽपि पचधातोरकर्मकत्वापत्तिरोदनादिकर्माविवक्षास्थले कर्मशून्यस्य तस्योपलम्भात्। अर्थभेदेन शब्दभेदाद्विवक्षितकर्मकपचधातोरविवक्षितकर्मकपचधातुर्भिन्न इति तु न युक्तम्, आस्धातावपि तथा वक्तुं शक्यत्वादित्याहुः।

परे तु—'गतिबुद्धी'तिसूत्रे अकर्मकपदसामर्थ्यादत्रैव सूत्रेऽकर्मकपदेनाऽविवक्षितकर्मकाकर्मकाणाङ्ग्रहणन्न भवतीति कल्प्यते, न शास्त्रमात्रे। तेनाविवक्षितकर्मकेभ्यो भावे क्त-पर-'कृतपूर्वी कट'मित्यादिभाष्यकैयटाभ्यां,'अधीगर्थे'तिसूत्रस्थकर्मणः शेषत्वविवक्षया अकर्मकत्वेन 'मातुः स्मर्यते इत्यत्र भावे ल इत्यनेन, अकर्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानेन च—न विरोधः। अत एव प्रकृतसूत्रभाष्ये—'कालकर्मणामुपसङ्ख्यानं कर्तव्यं ? न कर्तव्यं, न च केचित्कालभावाध्वभिरकर्मकाः,

❀ चिद्स्थिमाला ❀

स्वविरोधोऽपि तस्येति सूचयन्नाह—कैयटेति। हेत्वन्तरमाह—लुनातेरिति। 'उभये'ति नियमादाह—

❀ वरवर्णिनी ❀

[६८०पृष्ठे-] इदं=येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकाः, नत्वविवक्षितकर्माणोऽपीति। **अकर्मकपदेनेति**। 'गतिबुद्धी'ति सूत्रे, व्याकरणमात्रे चेति शेषः। **अङ्गीकारादिति**। परे तु नायं प्राङ्मते

१ प्राचीनमते तु व्याप्त्यर्थान्तर्भावेणासधातोर्वृत्तौ मासादिकर्मसम्भवादसम्भवत्कर्मकत्वस्यासधातोरभावात्—'नच केचित्कालभावाध्वभिरकर्मकाः' इति भाष्यं स्वरसत एव सङ्गच्छते इत्याशयः।

'लावयति केदारं देवदत्तः' इत्यादौ केदारस्य कर्मद्वितीयान्तस्य 'णेरणा'वित्यत्र कैयटेन प्रयोगाच्च ।

न चात्रार्थान्तरे वृत्त्याऽकर्मकत्वं न त्वविवक्षयेति वाच्यं, तत्त्वप्रत्यभिज्ञया-ऽर्थान्तरत्वाभावात् । तदुदाहरणं तु—'स्यन्दते' इत्याद्यर्थकं—'नदी वहती'त्याद्याकरे स्पष्टम् । 'अधीगर्थे'ति सूत्रे कर्मणः शेषत्वाविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते'इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च ।

यत्तु प्रकृतसूत्र भाष्ये "—कालकर्मणामुपसङ्ख्यानं कर्त्तव्यम्? न कर्त्तव्यम्,—न च केचित्कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः—'क्वचिद्येऽकर्मका' इति—"इत्युक्तम्।

❀ विजया ❀

त एवं विज्ञास्यामः-क्वचिद्येऽकर्मका' इति भाष्यं सङ्गच्छते । लुनातेर्निवृत्तप्रेषणाण्णिचि 'लावयति केदारं देवदत्त' इति 'णेरणा'विति सूत्रे कैयटोदाहरणन्तु चिन्त्यमेवेत्याहुः ।

❀ चिदस्थिमाला ❀

**कैयटेनेति** । तदाशयमन्योक्तं खण्डयति—**न चेति** । अत्र='लावयति केदारं देवदत्त'इत्यत्र । तत्=अर्थान्तरे वृत्त्याऽकर्मकस्य । हेत्वन्तरमाह—**अधीति** । भाष्यान्तरविरोधम्परिहरति—**यत्त्विति** । **कालेति** । 'अकर्मकग्रहणे' इत्यादिः । 'मासमासयति देवदत्त'मित्याद्यर्थमिति भावः ।

❀ विषमपदविवृतिः ❀

**मिति** । अयमनुक्तोपालम्भः 'लः कर्मणी'ति सूत्रे एतद्विरुद्धमनोरमाग्रन्थदर्शनात् । **तत्त्वप्रत्यभिज्ञेति** । विशेष्यांशत्यागेऽपि विशेषणांशे स एवात्रार्थ इति प्रत्यभिज्ञयेत्यर्थः ।

❀ वरवर्णिनी ❀

दोषः, प्रकृतसूत्र एवाकर्मकपदेनाविवक्षितकर्मणामकर्मकपदेनाग्रहणमित्यस्यैव प्राचामभिमततयाऽन्यत्र तथाग्रहणे बाधकाभावात् । नहि शास्त्रमात्रे तेन तथाऽग्रहणं प्राचामभिमतमित्याहुः । अस्मिन्नपि सूत्रेऽकर्मकपदेनाविवक्षितकर्मणां ग्रहणे मानमाह—**लुनातेरिति** । निवृत्तप्रेषणात्=द्विधाभवनार्थकात् । 'णिची' त्यस्य 'छेदनेऽर्थे' इत्यादिः । अविवक्षितकर्मणामकर्मकपदेनात्र सूत्रेऽग्रहणे तु गतिबुद्धीति कर्मत्वानुपपत्तौ-द्वितीयानुपपत्तिरित्याशयः । **अर्थान्तरे इति** । छेदनरूपोऽर्थो भिन्नः, द्विधाभवनरूपोऽर्थश्च भिन्न इत्याशयः । 'अकर्मकत्व'मित्यस्य 'लूधातो'रित्यादिः ।

एवञ्चात्र सूत्रेऽविवक्षितकर्मणो ग्रहणाभावान्न प्राङ्मते कश्चन दोष इति शङ्कितुराशयः । तदुदाहरणन्तु= अर्थान्तरे वृत्तेरुदाहरणन्तु । **नदी वहतीति** । परे त्वेवं वहधातावपि तत्त्वप्रत्यभिज्ञया स एवायमिति वक्तुं शक्यतयाऽर्थान्तरत्वाभावाद्वहेरप्यविवक्षितकर्मतापत्त्यार्थान्तरवृत्तेरुदाहरणाप्रसिद्ध्यापत्तिरतो द्विधाभवनार्थको लूधातुश्छेदनार्थकाद्भिन्नः—वहधातुवदेव, न तु तत्त्वप्रत्यभिज्ञया स एवेति न कैयटविरोध इति-प्रकृतसूत्रेऽविवक्षितकर्मग्रहणे न मानम् । किञ्च कैयटविरोधोऽकिञ्चित्कर एवेति न तेन तथा कल्पनमुचितमित्याहुः ।

**उदाहृतत्वाच्चेति** । परे तु प्रकृतसूत्र एवाकर्मपदेनाविवक्षितकर्मणामग्रहणमित्यस्यैव प्राचां मते स्वीकाराचतोऽन्यत्र तेन तथा ग्रहणे बाधकाभावे लकारे प्राङ्मते न किञ्चिद्बाधकमित्ययं शेखरोऽकिञ्चित्कर एवेत्याहुः । 'उपसङ्ख्यान'मित्यस्य–'गतिबुद्धीति कर्मसञ्ज्ञाया'मित्यादिः । तेषां सकर्मकतया कर्मसञ्ज्ञाया अप्राप्तेरिति भावः । **क्वचिदिति** । अनेन भाष्येण स्वरसतः—'येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मका नत्वविवक्षितकर्माणोऽपी' ति प्राचोक्तमेव लभ्यते–,तथा हि—यद्यविवक्षितकर्मणामपि

'क्वचि'दित्यस्य-'कालादेः कर्मसञ्ज्ञाप्रयोजक-व्याप्त्यादिरहितेऽर्थे' इत्यर्थः। तस्यायं भावः—उक्तरीत्याऽकर्मकपदसामर्थ्यादत्र शास्त्रेऽकर्मकपदस्याऽवस्थान्तरे कर्मरहिता इत्यर्थः—इति ।

तादृशत्वञ्च—सर्वथा द्रव्यकर्माभावात्तदविवक्षणाद्वेत्युभयविधमपि 'कृन्पूर्वी'त्यादि-भाष्याद्ग्राह्यं, विनिगमनाविरहाच्च । अत एवाकर्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानं सङ्गच्छते ।

अकर्मकशब्दे च धातुरेवाऽन्यपदार्थः, अर्थभेदेन च शब्दभेदः। कर्मत्वेन कालाद्य-तिरिक्तकर्मानन्वय्यर्थकत्वञ्च तत्त्वमिति बोध्यम्। 'न च केचि'दिति भाष्येण धातुमात्रस्य कालकर्मकार्थवृत्तित्वमिति दर्शितम् । यद्वा 'यत्कर्म भवति न च भवति तेनाकर्मकाणां,

❀ चिद्स्थिमाला ❀

न च=नहि । इतिर्भावसमाप्तौ । तादृशत्वञ्च=अवस्थान्तरे कर्मरहितत्वं च । हेत्वन्तरमाह—विनीति । अत्र मानं सूत्रयन्नाह—अत एवेति । उभयविधग्रहणादेवेत्यर्थः । सूत्रद्वय एव तथा नान्यत्रेति वैषम्ये तु न मानं, व्याख्यानमपि भाष्यादिसम्मतमेव निर्णायकं न तु यत्किञ्चिदिति भावः । यत्तु अकर्मकपदे कर्म-पदस्य कर्मवदर्थे लक्षणया बहुव्रीहौ धातुपरत्वमवयवार्थेऽन्यपदार्थे बहुव्रीहिः, ततो लक्षणया धातु-परत्वमिति, तत्रेत्याह-अकर्मकेति । नन्वेवं तस्यैक्यादिष्टासिद्धिरेवात आह—अर्थेति । ननु धातोस्तत्त्वं बाधितमेवात आह—कर्मत्वेनेति । 'मातुः स्मर्यते' इत्यादिसङ्ग्रहायेदम् । अवस्थान्तरे इत्यप्ययुक्तमित्याह—यद्वेति । भाष्यमाह—यदिति । एतत्=कालादिरूपम् । तत्=अकर्मकपदस्य । अर्थोऽपि-तस्यैव ।

❀ विषमपदविवृतिः ❀

अर्थभेदेन चेति । वहधातोः स्यन्दनप्रापणरूपार्थभेदेन शब्दभेद इत्यर्थः । कर्मत्वेनेति । इदं

❀ वरवर्णिनी ❀

प्रकृतसूत्रे ग्रहणं स्यात्तर्हि 'न च केचित्कालभावाध्वभिरकर्मकाः' इति भाष्यमसङ्गतं स्यात्, मासादे-रप्यविवक्षयाऽकर्मकत्वस्य तत्रापि सम्भवात् ।

एवञ्च भाष्यकृत्कृतं वार्त्तिकप्रत्याख्यानमसङ्गतमेव स्यात्, अतोऽत्राविवक्षितकर्मणामग्रहणमिति लभ्यते, तथा च प्राचीनमतोपोद्बलकमिदं भाष्यं नवीनमते विरुद्धमित्यनरस्तत्स्वमते योजयन्ति नागेशभट्टः—क्वचिदित्यस्येति । कालादेः कर्मसञ्ज्ञायाःप्रयोजको यो व्याप्त्यादिरूपोऽर्थस्तद्रहितेऽर्थे इत्येवं योजना । उक्तरीत्या=नियमस्य सजातीयापेक्षतयेत्यादिरीत्या । अवस्थान्तरे=व्याप्त्यादिरहितार्थत्व-दशायाम् । द्रव्यकर्मेति । 'कालाद्यतिरिक्ते'त्यादिः। 'अवस्थान्तरे'इत्युक्तेः। भाष्यादिति । तत्राविवक्षित-कर्मणो ग्रहणस्य दर्शनादित्याशयः । विनिगमनेति । 'द्रव्यकर्माभाववत एव ग्रहणे'इत्यादिः । परे तु क्वचिदकर्मका इति भाष्यं प्राचाम् [अस्माकं] मते स्वरसत उपपद्यते इति नेदं भाष्यमस्मन्मते विरुणद्धीति शेखरप्रयासो नास्माकं मतं दूषयितुमलमित्याहुः। अत एव=अविवक्षितकर्मणामत्र शास्त्रे ग्रहणादेव ।

सङ्गच्छते इति । परे तु नेदं प्राचां मते विरुणद्धि, प्रकृतसूत्र एव तैरकर्मकग्रहणेन तदग्रहणमित्य-स्याङ्गीकारान्न तु शास्त्रमात्र इत्याहुः ।

नन्वानुपूर्वीभेदे शब्दभेदादानुपूर्व्यैक्ये शब्दैक्याद्व्यापारमात्रार्थाविवक्षितकर्मपचाद्यपेक्षया फल-व्यापारोभयार्थकपचादेरभेदेन 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'त्यादावपि कर्मसञ्ज्ञापत्तिः, पचादिधातो-रेवाकर्मकपदरूपबहुव्रीहावन्यपदार्थत्वादत आह—अर्थभेदेनेति ।

तत्त्वम्=अकर्मकत्वम् । पूर्वत्र—अकर्मकवत्तुल्यन्यायात्सकर्मकविषयेऽपि पाकेन व्याप्नोतीत्याद्यर्थे मासादेः कर्मतोक्ता; तां द्रढयति—न चेति । धातुमात्रस्य=सकर्मकाकर्मकधातुसामान्यस्य । पक्षान्तरेण=यद्वाकल्पेन । तत्सामर्थ्यात्=अकर्मकग्रहणसामर्थ्यात् । व्यभिचारीति । मासादिस्तु न कदाचिद्व्यभि-

न चैतत्कर्म क्वचिदपि न भवती'तिभाष्योक्तपक्षान्तरेण तत्सामर्थ्याद्व्यभिचारिद्रव्य-कर्मरहितेत्यर्थो बोधितः। एवञ्च मासादिप्रयोगेऽपि तदवस्थायामेवाकर्मकत्वं बोध्यम्।

ॐ विषमपदविवृतिः ॐ

'मातुः स्मर्यते' इत्याद्यर्थम्। तत्सामर्थ्यादिति। नियमेन सिद्धेऽकर्मकग्रहणसामर्थ्यादित्यर्थः। अन्यथा कालादेः कर्मसञ्ज्ञाप्रयोजकव्यापारादिरहितेर्थे एव अकर्मकत्वं स्यान्न तु 'मासमास्यते देवदत्तेने'त्यादौ इति वदन्ति।

परे तु 'इच्छता क्रियते'इत्यत्र भावे लः, 'पीता गावो' 'भुक्ता ब्राह्मणा'इत्यादौ भावे क्तान्तात्-अर्श आद्यजिति हरदत्तादिग्रन्थात् 'गतं तिरश्चीन'मित्यादिप्रयोगाच्च 'लः कर्मणी'ति सूत्रे 'तयो-रेवे'ति सूत्रेऽविवक्षितकर्मणामपि अकर्मकपदेन ग्रहणम्। 'गतं तिरश्चीन'मित्यत्र गत्यर्थ इति भावे क्त इत्यन्ये। इह सूत्रे तु अकर्मकपदेन अविवक्षितकर्मकाणां ग्रहणे न मानम्। 'लावयति केदारं देव-दत्त' इत्यत्र तु अर्थान्तरे वृत्त्याऽकर्मकत्वं नाविवक्षया प्रेषणांशत्यागात्। विशेषणांशे तत्त्वप्रत्य-भिज्ञायामपि विशेष्यांशत्यागेनार्थान्तरत्वसम्भवात्। प्रत्युत 'न च केचित्कालभावाध्वभिरकर्मकाः तदेवं विज्ञास्यामो 'यत्कर्म भवति न च भवति तेनाकर्मणां' 'न चैतत्कर्म क्वचिदपि न भवती'ति भाष्याभ्यामत्यन्ताविद्यमानकर्मकाणामेव गतिबुद्धीति सूत्रे ग्रहणमिति लभ्यते। अन्यथा कालादि-कर्मणोऽविवक्षायां कालादिकर्मराहित्यसम्भवेन तदसङ्गतिः स्पष्टैव। एवं 'गत्यर्थाकर्मके'तिसूत्रे-ऽपि अविवक्षितकर्माणो न गृह्यन्ते, 'दत्तवान्' 'पक्वा'नित्याद्यर्थे 'दत्तः' 'पक्व' इत्याद्यापत्तेः। न चैवं उक्तभाष्याभ्यां सकर्मकधातुयोगेपि कालादीनामकर्मकत्वमिति गतमिति वाच्यं, 'न च केचिदप्यकर्मकाः कालभावाध्वभिरकर्मका न भवन्ती'ति पूर्वभाष्यस्य—'न चैतत्कर्म कालादिरूपं क्वचि-दप्यकर्मके न भवति किं तु सर्वत्राकर्मके भवती'त्युत्तरभाष्यस्य च अर्थाङ्गीकारात्। 'यत्कर्म भवति न च भवती'ति भाष्यस्य तु तण्डुलादिरूपं कर्म क्वचित्सकर्मके भवति, क्वचित्सकर्मके न भवतीति तेनैव कर्मणाऽकर्मकत्वं ग्राह्यं, न तु कालादिकर्मणा, तस्याकर्मकमात्रे सत्त्वादित्यर्थः।

न च कालादिकर्मणां सकर्मकेष्वभावेन तैरेवाकर्मकाः पच्यादयोऽकर्मकपदेन गृह्यतामिति वाच्यं, तथा सति 'गतिबुद्धी'ति सूत्रे गत्यादिग्रहणवैयर्थ्यापत्तेः। अत एव ओदनादेः सम्बन्धित्वेन विवक्षायां 'पाचयत्योदनस्य देवदत्तेने'त्यादय एव प्रयोगा न तु 'देवदत्त' इति वदन्ति। पूर्वकर्मणोऽविव-क्षया भावे क्तः पश्चात्कर्मणो विवक्षा इति तु 'कृतपूर्वी कटम्' 'अधीती व्याकरणे' इत्यादिप्रमित-प्रयोग एव न तु सर्वत्र। तेन तथाऽविवक्षया 'तण्डुलान्पच्यते' इति 'तण्डुलान्पक्व' इति च भावे लक्तादयोऽसाधवः। इन्विषये तु 'तण्डुलेषु पक्वी' 'पक्वपूर्वी तण्डुल'मित्यादयः साधव एव। 'क्तस्येन्विषयस्ये'ति, 'कृतपूर्वी कट'मिति वार्तिकभाष्यप्रयोगाभ्यां तथावगमात्। 'भ्रान्तं देश'मित्यत्र तु

ॐ वरवर्णिनी ॐ

चरतीति न तथेत्याशयः। तदवस्थायां=व्याप्त्यर्थकतावस्थायाम्। एतेन=तत्तद्भाष्यकैयटविरोधेन। शास्त्रे इति। परे तु प्रकृतसूत्रमात्रेऽयं शास्त्रशब्दप्रयोग इति न प्राचांमते कश्चिद्दोष इति कैयटोक्तं युक्तमेवेत्याहुः।

व्यभिचारीति। ओदनं हि—पचताविव कर्म, न गच्छतौ, न वा जक्षधातौ, न वा पठधातौ—इति ओदनरूपं कर्म व्यभिचारीत्युच्यते, मासादिरूपकर्म तु सर्वधातुषु तुल्यमेव, सकर्मके कर्माविवक्षायामपि मासादिकर्मणः सम्भवात्, नैवमोदनादि सर्वधातूनां कर्म भवति, एवञ्च मासादिकर्माव्यभिचारि, ओद-नादिरूपं कर्म तु व्यभिचारीत्याशयः। अत्यन्ताविद्यमानकर्मकाणाम्=असम्भवत्कर्मकाणाम्। 'न त्वविव-क्षितकर्मकाणा'मिति शेषः।

एतेनात्र सूत्रे 'न च केचि'दिति प्रतीकमुपादाय –'कालादेरविवक्षया तरकर्मकत्वसम्भवो-ऽस्त्येवे'त्याशङ्क्य 'अत्यन्ताविद्यमानकर्मकाणामेवात्र शास्त्रेऽकर्मकपदेन ग्रहणम्, अन्यथा पचादीनामविवक्षितकर्मत्वे लादयः स्यु'रिति कैयटेनोक्तं तत्परास्तम्। अतिप्रसङ्ग-स्त्वनभिधानाद्वारणीय इति वदन्ति।

**हृक्रोरन्य**। तत्राभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थकरोतेश्चाकर्मकत्वात्प्राप्ते, अर्थान्तरे चाऽप्राप्ते–उभयत्र विभाषेयम्।

**अभिवादिदृ**। हेतुमण्ण्यन्तस्याभिवादेः,- दृशिप्रकृतिकण्यन्तस्य चेत्यर्थः।

**अधिशीङ्**। 'आधार' इत्यनुवर्त्तते। तस्यैव कर्मत्वशक्तिमत्ताऽनेन बोध्यते।

---

### ॐ चिद्स्थिमाला ॐ

एतेन=उक्तभाष्यादिविरोधेन। न चैवं कैयटोक्तातिप्रसङ्ग एवात आह—**अतिप्रसङ्ग इति**। गत्यादेर-नुवृत्तेराह—**तत्रेति**। तयोर्मध्ये इत्यर्थः। चो व्युत्क्रमे। स्पष्टञ्चेदं भाष्ये। एतेन यदाह—हृक्रावकर्मकौ तदा प्राप्ते यदा तु चौर्याऽभूततद्भावार्थकौ तदात्वप्राप्ते इति शास्त्र्युक्तमपास्तम्। यत्तु–'वद–सन्देशवचने' चुरादिराधृषीयोऽभिपूर्व इति **दण्डी**, तन्न, 'अभिवदति गुरुं देवदत्तः' 'अभिवादयति गुरुं देवदत्त'मिति भाष्यविरोधात्, तद्धन यन्नाह—**हेत्विति**। प्रकरणाविरोधायाह—**दृशीति**। एवञ्चाद्यस्याप्राप्ते द्वितीयस्य प्राप्ते विकल्पोऽयमिति बोध्यम्। अत्र द्वितीयार्थो न मुख्यङ्कर्मत्वं, किन्त्वाधारत्वमिति **शास्त्र्युक्ते**-साङ्गत्यायाह—**तस्यैवेति**। व्याख्यानेऽल्पाच्तरस्यापि परनिपातकरणस्येदृशसमुदायविवक्षणार्थत्वादित्यर्थः। अत एव 'सत्त्वे निविशतेऽपैती'ति भाष्यप्रयोगः सङ्गच्छते।

### ॐ विषमपदविवृतिः ॐ

गत्यर्थके साधुत्वम्। 'ओदनस्य पच्यते देवदत्तेने'त्यादौ भावे लकारस्तु साधुरेव, 'मातुः स्मर्यते'इति भाष्यात्। सर्वथा ओदनादेः कर्मणोऽविवक्षया 'पच्यते देवदत्तेने'त्यादौ भावे लो भवत्येव। 'इच्छता क्रियते'इत्यत्र भावे ल इति हरदत्तेनोक्तत्वात्। एवञ्च कर्मणोऽविवक्षा त्रेधा,–

---

### ॐ वरवर्णिनी ॐ

**लादय इति**। परे तु—लादय इति कैयटेन नोक्तं, भट्ट एव स्ववासनया तथाऽभिधत्ते, एवञ्च पचादीनामविवक्षितकर्मत्वेऽकर्मकत्वस्य सम्भवादकर्मकत्वप्रयुक्तकार्याणि स्युरिति अकर्मकग्रहणं सफलमिति तस्य वैयर्थ्याभावात्कथं तज्ज्ञापकमिति शङ्कापनोदाय तस्य कैयटस्य प्रवृत्तिरिति न कैयटा-सङ्गतिरित्याहुः।

**अतिप्रसङ्ग इति**। अविवक्षितकर्मणोऽप्यत्राकर्मकग्रहणेन ग्रहणे 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने' त्यत्र कर्मत्वापत्तिरूपोऽतिप्रसङ्ग इत्यर्थः।

**अनभिधानादिति**। अविवक्षितकर्मत्वे 'पाचयत्योदनं देवदत्तो यज्ञदत्त'मित्येव रूपं प्राप्नोति, तद्यनिष्टन्तर्हि तस्यानभिधानमास्थेयमित्याशयः।

**इति वदन्तीति**। अत्र प्राचीननये 'अत्र'पदेन गत्यादिसूत्रमेवाभिमतं, तदबुद्ध्वा च नव्यैर्नागेश-भट्टैः–अत्र शास्त्रेऽकर्मकपदेनाविवक्षितकर्मणां ग्रहणे भाष्यं प्रमाणतयोपन्यस्तम्, एवञ्च तदेतत्सर्वं व्यर्थमेव। तस्मादत्र गत्यादिसूत्रे येषां देशकालादिभिन्नं कर्म न सम्भवति ते एवाकर्मकपदेन ग्राह्याः, अन्यसूत्रेषु तु अविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणमिति प्राचीनमतमेव युक्तं, 'लावयति केदार'मिति कैयटस्तु चिन्त्य एवेति **श्रीगुरुचरणाः**।

**अभिनिविश** । व्याख्यानात्—'अभिनी'इति द्वन्द्वे—तत्पूर्वो विशिति समासः। अभिनिवेशः—आग्रहः । सन्मार्गविषयकाऽऽग्रहवानित्यर्थः ।

**व्यवस्थितेति** । 'परिक्रयणे'इत्यतोऽन्यतरस्याङ्ग्रहणानुवृत्तेरस्य वैकल्पिकत्वम्, अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। एतच्च 'एष्वर्थेष्वभिनिविष्टाना'मिति प्रतीके समर्थसूत्रे कैयटे।

**परे** त्वेतद्भाष्यप्रयोगात्—'अभिनिवि'शित्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः, अन्यतरस्याङ्ग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः ।

ॐ चिदस्थिमाला ॐ

समासः=शाकपार्थिवादीनामित्यनेन । वैषयिकश्चायमाधार इत्याह—**विषयकेति** ।

सः=कैयटः । मूलादि दूषयति—**परे त्विति** । **व्यवस्थितेति** । अत एव भाष्यान्तर-

ॐ विषमपदविवृतिः ॐ

सर्वथा तदप्रयोगः,सम्बन्धित्वेनाविवक्षया तत्प्रयोगः, पूर्वमप्रयोगः पश्चात् प्रयोगश्चेत्याहुः। **द्वन्द्वेति** । वस्तुतः प्रयोगस्था'ऽभिनी'ति समुदायस्यानुकरणं न तु द्वन्द्वः, नेः पूर्वनिपातापत्तेः, 'न्यभिविशते सन्मार्ग'मित्यत्र कर्मत्वापत्तेश्च । **अविकृताया इति** । 'अभिनिविश्'इत्यानुपूर्व्याः प्रयोगे तदर्थाधारः

ॐ वरवर्णिनी ॐ

सङ्घातग्रहणे मानमाह—**व्याख्यानादिति**। अल्पाच्तरस्यापि नेः पूर्वनिपाते करणीये तदकरणादभेश्च तत्करणादित्यर्थः ।

**व्यवस्थितेति** । यत्राधिकरणता—न तत्र कर्मता, यत्र कर्मता—न तत्राधिकरणतेति व्यवस्थाश्रयणात् 'अभिनिविशते सन्मार्ग'मिति कर्मणि द्वितीयादर्शनादभिनिविशते सन्मार्गे इत्यधिकरणसञ्ज्ञाप्रयुक्तसप्तमीघटितः प्रयोगो न भवतीत्याशयः । ननु व्यवस्थितविभाषाश्रयणमशक्यं, तस्य भाष्ये 'देवत्रातो गलो ग्राह' इत्यादिना परिगणनादत आह—**परिक्रयणे इतीति** । नन्वस्य वैकल्पिकत्वे पक्षे 'अभिनिविशते सन्मार्गे' इत्यस्यापत्तिरत आह—**अतिप्रसङ्ग इति** । **एतदिति** । 'एष्वर्थेष्वभिनिविष्टाना'मित्येतदित्यर्थः ।

अविकृतायाः=विकाररहितायाः । अभिनिविष्टाना'मित्यत्र तु षत्वेन तादृश्या आनुपूर्व्या विकृतत्वान्नैतत्प्रवृत्तिरित्याशयः। न च षत्वस्य त्रिपादित्वादसिद्धत्वेन न विकार इति वाच्यम्, असिद्धत्वेन प्रवृत्तेर्निवृत्तेर्वाऽव्याख्यानेऽपि श्रवणवारकत्वाभावेन षत्वश्रुत्या विकृतत्वस्य वक्तुं शक्यत्वात्। अत एव 'श्रवणे'इत्युक्तम् ।

केचित्तु 'अविकृताया' इत्यस्य विकारो विकृतं, भावे क्तः, विकरणमित्यर्थः, अकाररूपं विकृतं यस्यां सा अविकृता तस्याः—अविकृताया इत्यादिरीत्या—अकाररूपविकरणशून्याया इत्यर्थः । तेन 'अभिनिविष्टानामि'त्यादावकाररूपविकरणाभावात्, 'पापेऽभिनिवेश' इत्यत्र अकारसत्त्वेऽपि तस्य विकरणत्वाभावाच्च न दोष इत्याहुस्तन्न; 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इत्यत्राकाररूपविकरणसत्त्वेन कर्मत्वापत्तेः, विकारशून्याया इत्यर्थे तु न दोषः, पूर्वरूपात्मकविकारस्य सत्त्वात् । 'चैत्रोऽभिनिविशते सन्मार्ग'मित्यादि तु न प्रयुज्यते, किन्तु—'अभिनिविशते चैत्रः सन्मार्ग'मित्याद्येव प्रयुज्यते, अन्यथाऽविकृताया आनुपूर्व्या अभावात्कर्मत्वं न स्यादित्याहुः। केचित्तु 'अपवादविषये'इति पदं व्यधिकरणबहुव्रीहिणा—अपवादीयोद्देश्यतावच्छेदकावच्छिन्नघटितलक्ष्यपरं, किञ्च—'अपवादविषय'मिति द्वितीयान्तं पदान्तरञ्चाध्याहार्यं, तथा च—अपवादीयोद्देश्यतावच्छेदकावच्छिन्नघटितलक्ष्येऽपवादविषयमप्युत्सर्गोऽभिनिविशते—इति तत्परिभाषार्थ इति—सप्तम्यन्तार्थस्य द्वितीयान्तार्थे एवान्वयादभिनिवेशेऽनन्वयाच्च कर्मत्वप्राप्तिरित्याहुरिति **श्रीबालशास्त्रिचरणानुसारिणः श्रीहरिरामशास्त्रिचरणा** उमानाथोङ्कारनाथशास्त्रिप्रभृतयश्च ।

**उपान्वि** । अलुग्विकरणत्वात्—श्वादेरेव ग्रहणमित्याह—**वसतेरिति** । भाष्ये 'अश्यर्थस्य ने'त्युक्तम् । 'मशकार्थो धूम' इतिवदशिनिवृत्त्यर्थस्येति तदर्थः, तत्फलितमाह—**अभुक्त्यर्थस्य नेति** । 'उपोष्य रजनीमेका'मित्यादौ 'कालाध्वनो'रिति द्वितीया । 'ग्रामे उपवसती'त्यत्र 'ग्रामे वसन् त्रिरात्रमुपवसती'त्यर्थ इतीदं न कार्यमिति भाष्ये स्पष्टम् ।

उपपदविभक्तिमाह—**उभेति** । उपपदविभक्तीनां सम्बन्धोऽर्थः, विशिष्यानुक्तेः, षष्ठ्यपवादत्वाच्च । उभसर्वयोस्तसाविति विग्रहः । उभांशे उभयशब्दनिष्ठं प्रकृतित्वमुभशब्दे आरोप्य तत्प्रकृतिकत्वं षष्ठ्यर्थः । उभयशब्द—सर्वशब्द-प्रकृतिकतसन्तयोगे इत्यर्थः।

---

**॥ चिदस्थिमाला ॥**

विरोधो नेति भावः । श्वादेः=निवासार्थस्य । एतेनाच्छादनार्थनिरासः । यथाश्रुतमूलासङ्गतिं परिहरति—**भाष्ये इति** । वसेरिति शेषः । यत्त्वन्यतरस्याङ्ग्रहणानुवृत्त्या व्यवस्थितविभाषया च सिद्धमिदम्, अत एव क्वचिद्भुक्त्यर्थयोगेऽपि 'उपोष्य रजनी'मित्यादाविति, तन्न, उक्तहेतोस्तच्छन्नयन्नाह—**उपोष्येति** । आदिना 'हरिदिनमुपोषित' इत्यादि । एतेनान्यथा शास्त्रिदण्ड्याद्युक्तमपास्तम् ।

अस्य प्रत्याख्यानप्रकारमाह—**ग्रामे इति । विग्रह इति** । प्रकृतिद्वित्वात् 'तसो'रितिद्वित्वनिर्देशः । प्राचीनसकलग्रन्थासाङ्गत्यायाह—**उभांशे इति** । अस्याग्रेऽन्वयः । तथासत्यर्थमाह—**उभयेति** । एतेन 'नित्य'मिति विभक्त्याऽयचोऽन्तरङ्गत्वेन वृत्तिविषये पूर्वमेवोत्पत्तौ ततो विहितत्वेऽपि नोभशब्दात्तदित्यपास्तम् ।

**॥ विषमपदविवृतिः ॥**

कर्मेति सूत्रार्थः । आरोप्येति । अयचोऽन्तरङ्गत्वेन ततः पूर्वं प्रवृत्तेरिति भावः । अत्रेदं बोध्यम्—'ऋते द्वितीये'ति चान्द्रसूत्रात् 'पुरुषाराधनमृते'इति प्रयोगाच्च ऋतेयोगे द्वितीयापि साध्वी ।

---

**॥ वरवर्णिनी ॥**

**श्वादेरिति** । 'निवासार्थस्ये'ति शेषः, तेनादादेराच्छादनार्थस्य न ग्रहणमिति लब्धम् । **निवृत्त्यर्थेति** । शाकपार्थिवादित्वान्निवृत्तिपदलोप इत्याशयः । उपवासार्थकतया निषेधप्रवृत्तिमाशङ्क्याह—**उपोष्येति** । 'वसेरश्यर्थस्य ने'ति वार्त्तिकप्रत्याख्यानप्रकारमाह—**ग्रामे इति** ।

**त्रिरात्रमिति** । एवञ्चोपवासाधिकरणताया त्रिरात्र एव सत्त्वेन ग्रामे तदभावान्न तत्र कर्मताप्राप्तिरपि, 'त्रिरात्र'मिति च 'कालाध्वनो'रिति द्वितीयेति 'अश्यर्थस्य ने'ति वार्त्तिकं नावश्यकमित्याशयः ।

ननु विशिष्यानुक्तावपि स्वार्थ एवार्थः कुतो नोच्यते, तासां सम्बन्धोऽर्थ इति च कुतो लभ्यते इत्यत आह—**षष्ठ्यपवादत्वादिति** । सम्बन्धत्वेन विवक्षायां षष्ठीप्राप्त्या तत्र द्वितीयाविधानसामर्थ्यात्षष्ठ्या बाधेऽपि सम्बन्धत्वेन सम्बन्धस्य द्वितीयया भाने बाधकाभावादुपपदविभक्तेः सम्बन्धार्थकता युक्तैव । कर्मसञ्ज्ञास्थले तु सम्बन्धत्वेन सम्बन्धस्य भानविवक्षायां षष्ठी प्राप्ता, तां बाधित्वा च जायमाना कर्मसञ्ज्ञा—'सम्बन्धस्य कर्मत्वेन भान'मिति बोधयति, एवञ्च कर्मसञ्ज्ञादिस्थले कर्मत्वेनैव सम्बन्धस्य भानमिति सम्बन्धत्वेन तस्य भानं न सम्भवति ।

अकथितसूत्रविषये तु न सम्बन्धार्थकत्वं, तथाहि सम्बन्धविशेषा हि अपादानत्वादय इति विशेषरूपेणाऽविवक्षायां सामान्यरूपेण सम्बन्धत्वेन भानात्षष्ठी प्राप्ता, ततश्चाकथितसूत्रेण—'कर्मत्वेन सम्बन्धस्य भान'मिति बोध्यते, एवञ्च तत्र सम्बन्धसामान्यार्थकताऽनुचितैवेति गूढाकूतम् ।

**उभयशब्देति** । उभयशब्दसर्वशब्दप्रकृतिकतस्प्रत्ययप्रकृतिकसम्बन्धप्रतियोगिवाचकादित्यर्थः ।

**आम्रेडितान्तेष्विति** । कृतद्विर्वचनेष्वित्यर्थः । **धिक् कृष्णेति** । धिगर्थो निन्दा । कृष्णाभक्तसम्बन्धिनी निन्देत्यर्थः । उपर्यादीनां समीपोर्ध्वदेशादिवृत्तित्वमर्थः । 'अभितः' 'परित' इत्यत्र 'पर्यभिभ्याञ्चे'ति तसिल् । तत्राद्यस्योभयत इत्यर्थोऽन्त्यस्य सर्वत इत्यर्थ इति 'पर्यभिभ्याञ्चे'त्यत्र भाष्ये ।

**अन्तराऽन्तरेण** । अन्तरेणेत्यटाबन्तसाहचर्यादन्तरेणेत्यटाबन्तम्, अन्तरेत्यतृतीयान्तसाहचर्यादन्तरेणेत्यतृतीयान्तम् । साहचर्यं—सादृश्यम् । 'तद्यथाऽस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः—' इति दृष्टान्तपरभाष्येण सदृशानामेव प्रयोगे सहायतेत्यर्थस्य प्रतिपादनात् । तेन 'किमनयोरन्तरेण ज्ञातेने'ति सिद्धम् । अन्तरेण—विशेषेणेत्यर्थः । एवञ्चैतयोरव्यययोरेव ग्रहणम् ।

यद्वा 'अन्तरा'शब्दस्य प्रथमैकवचनान्तस्यानभिधानात् 'अन्तरा'इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्तरेणेत्यप्यव्ययमेव ।

❀ **चिदस्थिमाला** ❀

आम्रेडितं न शब्दो, नापि लौकिकं, तत्रापि सञ्ज्ञानुपयोग इत्याह—**कृतेति** । **उपर्यादीति** । 'द्विरुक्ते'त्यादिः । आदिना समीपाधस्तनादिसामीप्यरूपः सम्बन्धो द्वितीयार्थः । एवमग्रेऽपि । लोकसमीपोर्ध्वभागवृत्तिरित्यादिक्रमेण बोधः । रामलक्ष्मणावित्यादिवन्मिथः साहचर्यमाह—**अन्तरेणेति** । ननु प्रकृते न सह चरणं तद्वदत आह—**सादृश्यमिति** । **तद्यथेति** ।—भाष्यान्तर्गतम् । भाष्यानुरोधेनाह—**यद्वेति** । विनार्थव्यवच्छे-

❀ **विषमपदविवृतिः** ❀

एवं 'वौ श्रमेः' 'आत्मोदरकुक्षिष्वि'ति चान्द्रसूत्रात् 'कति न सन्ति कुक्षिम्भराः','विश्रामहेतु'रित्यादिप्रयोगाच्च विश्राम—कुक्षिम्भरादयः साधवः । एवं 'गीष्पतिर्धिषणो गुरुः', 'आप्यमम्मयम्' इत्यादिप्रयोगाद्गीष्पत्यादयो व्याकरणान्तरे साधवो ज्ञेयाः । ये तु एतद्व्याकरणविरुद्धा व्याकरणान्तरे साधुत्वेन अनुक्ताः 'तदपि चुलयां कुम्भयोनिश्चकारे'त्यादयः प्रयोगाः—ते त्वसाधव एवेति । **अटाबन्तमिति** । 'अन्तरायां पुरी'ति भाष्यप्रयोगात् स्त्रियामप्यन्तरशब्द इति भावः । **तस्यैवेति** । अवधित्वस्यैवेत्यर्थः । तेन 'हलोऽनन्तरा'इति सूत्रे 'द्वयोश्चैवान्तरे'ति भाष्यप्रयोगः सङ्गच्छते ।

❀ **वरवर्णिनी** ❀

**धिगर्थ इति** । 'चैत्रं धिक्कुरुते'इत्यादौ धिक्शब्देन निन्दायाः प्रतीतेरित्याशयः । निन्दा च खेदजनकः 'त्वं निन्दितः' इत्याद्यभिलापरूपो व्यापारः । **अतृतीयान्तेति** । यद्यपि आचक्षाणणिजन्तप्रकृतिककर्तृक्विबन्तात्तृतीयायामन्तरेति रूपस्य सम्भवस्तथापि तस्य लाक्षणिकतया तस्यात्राग्रहणमित्याशयेनातृतीयान्ततया साहचर्याश्रयणमित्याशयः ।

अस्य गोः=वृषभस्य । द्वितीयेन=सहायभूतेन वृषभेन । अर्थः=प्रयोजनम् । **प्रतिपादनादिति** । एवञ्च साहचर्यं सादृश्यमेवेति लभ्यते इत्याशयः । अन्तराशब्दस्य=टाबन्तस्यान्तराशब्दस्य । अदृष्टापचारः=निपातत्वेनाव्यभिचरितः ।

**परे** तु—प्रथमैकवचने सुलोपे'अन्तरा'इति प्रकृतिमात्रस्यावशिष्टतया तस्य चा'न्तरायां पुरी'त्यादौ प्रयुज्यमानतयाऽनभिधानोक्तिः साहसमात्रमेव । सुश्रवणे हि सुप्प्रत्ययान्तस्याऽनभिधानं वक्तुं शक्यं, प्रकृते तु अन्तरेति प्रकृतिमात्रमेवावशिष्यते, तस्य च निरुक्तभाष्यप्रयोगे दर्शनादनभिधानं वक्तुमशक्यमित्याशयः, 'अन्तराशब्दोऽयमदृष्टापचार'इति भाष्यन्त्वेकदेश्युक्तिरित्याहुः—**श्रीगुरुचरणाः** ।

तदुक्तं भाष्ये—'अन्तराशब्दोऽयमदृष्टापचारो निपात एवेती'ति बोद्ध्यम् । अवधित्वरूपः सम्बन्धो मध्यत्वान्वयी मद्ध्यार्थान्तराशब्दयोगे द्वितीयार्थः । तस्यैव सम्बन्धत्वेन बोधे षष्ठी ।

हर्यादिपदात्तु न द्वितीया, 'उपपदविभक्ते'रिति न्यायेन तत्र प्रथमाया एव प्राप्तेः । 'युक्त'ग्रहणन्तु स्पष्टार्थम् ।

**अधिकृत्येति** । 'विभाषा कृञी'त्यन्तमिति बोद्ध्यम् । महासञ्ज्ञाकरणन्त्वन्वर्थत्वाय । कर्म—क्रियां प्रोक्तवन्तः—कर्मप्रवचनीयाः । बाहुलकात्कर्तरि भूते अनीयः । तेन—सम्प्रति क्रियां न द्योतयन्ति, किन्तु क्रियानिरूपितं सम्बन्धविशेषं द्योतयन्ति ।

क्वचित्सम्बन्धविशेषाद्योतकेऽपि वचनसामर्थ्यात्सञ्ज्ञा, यथा—'अधिपरी अनर्थकौ' 'सुः पूजाया'मिति च । निपातसञ्ज्ञासमावेशस्त्वस्या अप्युक्तः ।

---

### ❀ विजया ❀

तस्यैव=अवधित्वस्यैव । सम्बन्धत्वेन=सामान्यरूपेण । अवधित्वस्य सम्बन्धविशेषरूपत्वात् । **प्राप्तेरिति** । परे तु 'त्वां मामन्तरा विद्यमानस्य हरेर्धन'मित्यादौ कारकविभक्तेरप्राप्त्या हर्यादिपदाद्द्वितीयापत्तिस्तदवस्थैवेति शेखरोऽयश्चिन्त्य एव । तस्मात्सम्बन्धप्रतियोगिवाचकादेव द्वितीयेत्यर्थस्य स्वीकारेणैव—[हर्यादेश्चान्तराशब्दार्थानुयोगितया]—हर्यादिपदाद्द्वितीयापत्तिर्वारणीयेति प्राहुः । **स्पष्टार्थमिति** । न कैयटोक्तार्थबोधकमिति भावः । **प्रोक्तवन्त इति** । 'भव्यगेये'ति कर्त्तरि अनीयर् । स च बाहुलकाद्भूते बोध्यः । भूतेऽनीयरिति बोधनाय च भूतार्थक्तवतुना विग्रहो दर्शितः । तेन=भूते प्रत्ययेन । अनुगच्छतीत्यादावनुना पूर्वं पश्चाद्गमनादिरूपा क्रिया द्योतिता, इदानीन्तु सा न द्योत्यते इति कर्मप्रवचनीयताऽनोरिति भावः । सम्बन्धविशेषं=क्रियानुयोगिकव्याप्त्यादिरूपसम्बन्धविशेषम् । 'कारकप्रतियोगिक'मितिशेषः । **वचनेति** । तत्तदित्यादिः । **निपातसञ्ज्ञेति** ।—तृतीयासमासः ।

### ❀ चिद्स्थिमाला ❀

दायाह—**मध्येति** । तत्र तु प्रतियोगित्वं द्वितीयार्थः, अभाववांस्तदर्थः । हरिशब्दस्तद्भक्तिलाक्षणिकः । 'अविद्यमाना अन्तरा येषां' 'द्वयोश्चैवान्तरा' 'तव मम चान्तरा कमण्डलु'रित्यादिप्रयोगसिद्धये आह—**तस्यैवेति** । विशेषसम्बन्धस्यैवेत्यर्थः । स्पष्टश्चेदं 'चतुर्थी तदर्थे'ति सूत्रे भाष्ये । एतेन युक्तग्रहणात्तत्र नेति कैयटादिसकलग्रन्थकारोक्तमपास्तं, तद्ध्वनयन्नाह—**युक्तेति** । एतेन युक्तग्रहणाद् 'अन्तरा त्वां मां कृष्णस्य मूर्ति'रित्यादौ कृष्णादिशब्दान्नेतिदण्ड्युक्तमपास्तम् । 'त्वन्मद्वधिकमध्यवृत्तिर्हरि'रिति हरिप्रतियोगिकाभाववद्वृत्तिः सुखसत्त्वाभाव इति च बोध उभयत्र । यत्तु कर्मपदेन क्रियानिरूपितः सम्बन्धः—स प्रोच्यते—व्यवच्छिद्यते—विशेषे व्यवस्थाप्यतेऽनेनेति करणेऽनीयरिति, तन्न, लक्षणापत्तेरत आह—**कर्मक्रियामिति** । **द्योतयन्तीत्यस्य**-'इति लभ्यते' इति शेषः। चेनातिरतीत्यस्य समुच्चयः। अपिना गत्यादिः। **उक्तः**।'प्राग्रीश्वरा'-

---

### ❀ वरवर्णिनी ❀

**षष्ठीति** । 'गुरोरिदं गुर्वर्थ'मिति 'चतुर्थी तदर्थार्थे'तिसूत्रभाष्यप्रयोगे तादर्थ्यस्य सामान्यतः सम्बन्धत्वेन विवक्षायां षष्ठीदर्शनाद्विशेषतस्तादर्थ्यादिविवक्षायामेव षष्ठ्यपवादभूत—तादर्थ्यचतुर्थ्यादेः साधुत्वमभ्युपेयते, तेन'तव मम चान्तरा कमण्डलु'रित्यत्रावधित्वरूपसम्बन्धस्य सम्बन्धत्वेन विवक्षायां षष्ठी सिध्यति ।

अन्वर्थतामेव दर्शयति—**कर्मेति** । अनीयः='तव्यत्तव्ये'त्यनीयर्प्रत्ययः ।

**उक्त इति** । 'अधिरीश्वरे' इत्येतत्सूत्रमभिव्याप्य प्राङ्निपातसञ्ज्ञाः सन्तो गत्यादिसञ्ज्ञा भवन्ती

**लक्षणे इति** । तत्सम्बन्धे लक्ष्यलक्षणभावरूपेऽनुना द्योत्ये इत्यर्थः । **अपवाद इति** । तद्द्योत्यसम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिः। तेन प्रकृते 'गतिर्गता'विति निघातो न।

द्वितीयार्थो लक्ष्यलक्षणभावः सम्बन्धो, हेतुश्च अनुना द्योत्यते । लक्षणत्वञ्च–ज्ञानजनकज्ञानविषयत्वम् । जपज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते । जपाभिन्नहेतु-

❀ विजया ❀

लक्षणेइति। सूत्रे लक्षणशब्दो भावप्रधानः, एवञ्च लक्षणत्वे इत्यर्थः ।तस्य च निरूपकांशे साकाङ्क्षतया लक्षणत्वनिरूपकं लक्ष्यत्वमपि लभ्यते, तदेवं–लक्ष्यलक्षणभावे द्योत्ये इति फलितोऽर्थः। 'लक्षणे' इति सप्तम्यर्थश्च द्योतकत्वम् । तदिति । अनुद्योत्येत्यर्थः । सम्बन्धस्य=लक्ष्यलक्षणभावस्य । क्रियान्वयात्=क्रियासम्बन्धित्वात् । तयोः=गत्युपसर्गसञ्ज्ञयोः । तेन=गतिसञ्ज्ञाविरहेण ।

**लक्ष्यलक्षणभाव इति** । परे तु—'कदा वृष्टिर्बभूवे'ति प्रष्टुर्वृष्टिविषयकसामान्यकालविषयकज्ञानमस्तीत्यवश्यं वक्तव्यम् , कालाभावे वृष्टेरसम्भवात् । एवञ्च 'कदा वृष्टि'रिति विशेषकालजिज्ञासयैव प्रश्ने 'जपमनु प्रावर्ष'दित्युत्तरं प्रयुज्यते । तस्य च जपजन्या जपकाले वृष्टिरित्यर्थः । एवञ्च तावतैव कालविशेषविषयिण्यास्तदाकाङ्क्षायाः शान्तेर्लक्ष्यलक्षणभावविषयकबोधानुदयाल्लक्ष्यलक्षणभावो न द्वितीयार्थः । किन्तु सामानाधिकरण्यं, हेतुत्वञ्चेत्युभयमेव द्वितीयार्थः, अनुस्तद्द्योतकः । सामानाधिकरण्यञ्च स्वाधिकरणीभूतकालवृत्तित्वम् । स्वं—जपः । तादृशवृत्तित्वञ्च वर्षणक्रियायामिति समन्वयः । एवञ्च 'जपजन्यं जपाधिकरणकालवृत्ति वर्षण'मित्येवानुभवसिद्धो बोधः । जपे लक्षकता वृष्टौ लक्ष्यता च मानसबोधविषयः, न शाब्दबोधे भासते, घटे द्रव्यत्वस्य वस्तुतः सत्त्वेऽपि घटजन्यबोधे तदभानवत् । प्रकृते वस्तुतो जपे लक्षकतया–प्रतीयमानो लक्ष्यलक्षणभावस्तु वस्तु सन्निमित्तं न द्वितीयावाच्यकोटिप्रविष्ट इत्याहुः । श्रीदण्डिभट्टास्तु-'जपोत्तरकालिकं वर्षण'मित्येव शाब्दबोधः । वर्षणे जपोत्तरकालिकत्वज्ञाने च तत्र ज्ञाप्यत्वमनुमीयते एवेत्याहुः ।

**ज्ञानेति** । वर्षणज्ञानेत्यर्थः । ज्ञानविषयत्वं=जपज्ञानविषयत्वम् । 'जपे' इति शेषः । **ज्ञाप्यते इति** । 'स्वाधिकरणीभूतकालवृत्तित्वसम्बन्धेने'त्यादिः । जपाभिन्नेति । हेतुत्वस्य

❀ चिदस्थिमाला ❀

दितिसूत्रे। यथाश्रुतासङ्गतेर्लक्षणयाप्याह–**तत्सम्बन्धे इति** । हेतुहेतुमद्भावादिसम्बन्धे इति शास्त्र्यासाङ्ग्त्यायाह–**लक्ष्येति**। प्रत्यासत्तेराह–**अनुनेति**। **तद्योत्येति**। क्रियानिरूपितसम्बन्धपरिच्छेदकत्वेऽपीत्यादिः। एतेनैकशेषस्य द्वन्द्वापवादत्ववदत्रापवादत्वमिति केन चिदुक्तं, गम्यमाननिशमनक्रियामपेक्ष्य तयोः प्राप्तिरस्तीति सम्भवनामात्रेण मूलमिदमिति दण्डिशास्त्र्याद्युक्तम्, यथाश्रुत प्रक्रियामूलं 'वृक्षंवृक्षं प्रति सिञ्चती' त्येवम्परमिति भ्रान्तोक्तञ्चापास्तम । तत्फलमाह–**तेनेति** । अग्रिमावतरणमाह–**द्वितीयेति** । तस्योभयत्रान्वयः । कर्मप्रवचनीयसञ्ज्ञकत्वादाह–**लक्ष्ये हीति** । हेतुतृतीयाबाधकत्वादाह—**हेतुश्चेति** । ततो भेदायाह–**लक्षणत्वञ्चेति** । वृष्टेर्ज्ञातत्वादाह—**कालेति** । तत्त्वेन तस्या अज्ञातत्वात् । अत एव 'कदा वृष्ट' इति प्रश्ने इदमुत्तरम् । तथा च–ज्ञानजन्यज्ञानविषयत्वं फलितं, तदाह—**जपाभिन्नेति** । जपाभिन्नहेतु-

❀ वरवर्णिनी ❀

त्येवं 'प्राग्रीश्वरा'दित्यस्यार्थं प्रकल्प्य निपातसञ्ज्ञासमावेशः साधितः, एवञ्च 'स्वरादिनिपाते'तिसूत्रेण कर्मप्रवचनीयानामन्वादीनामव्ययसञ्ज्ञेति भावः । स्पष्टञ्चेदं 'प्राग्रीश्वरा'दित्यत्र शेखरे ।

**ज्ञानजनकेति** । कालविशेषविशिष्टवृष्टिज्ञानजनकं यज्जपज्ञानं तद्विषयीभूतत्वं जपे इति समन्वयः । तदाह—**जपज्ञानेनेति** । **कालविशेषेति** । पूर्वं वृष्टिज्ञानसत्त्वेऽपि तत्कालज्ञानाभावात्कालविशेषविशिष्टवृष्टिज्ञानं जपज्ञानेन भवतीत्यभ्युपेयम् । तदाह—**जपाभिन्नेति** ।

ज्ञानजन्यज्ञानविषयो वर्षणमिति बोध इत्याह—**हेतुभूतेति** । **परापीति** । कर्मप्रवचनीय-सञ्ज्ञावकाशो हेतुत्वाविवक्षायां, हेतुतृतीयावकाशो 'धनेन कुल'मिति, प्रकृते च हेतुत्व-विवक्षायां परत्वात्तृतीयाप्राप्तिरिति भावः । **पुनःसञ्ज्ञेति** । 'लक्षणेत्थम्भूते'त्येव सिद्धे पुनः सञ्ज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादित्यर्थः । एतेन सञ्ज्ञया विजातीयत्वा-द्विभक्तिबाधः कर्तुमशक्य इति परास्तम् । स्पष्टञ्चेदं भाष्ये ।

**तृतीयार्थे** । 'तृतीया'शब्देन तन्निमित्तशब्दः 'सहयुक्ते' इत्यत्रोपात्तोऽनन्तरत्वात् 'सह'शब्दो लक्ष्यते । तदर्थे साहित्ये द्योत्ये इत्यर्थः । साहित्यरूपः सम्बन्धोऽनुद्योत्यो द्वितीयार्थस्तदाह—**नद्येति** । **क्त इति** । कर्तरीति भावः ।

## ॐ विजया ॐ

द्योत्यतया विशेषणत्वात् हेत्वभिन्नजपज्ञानजन्यज्ञानविषय इत्येव बोध उचित इति तु परे ।

**हेतुत्वाविवक्षायामिति** । जपस्य हेतुत्वेनाविवक्षायान्तृतीयाया अप्राप्तेरित्याशयः । प्रकृते='जपमनु प्रावर्ष'दित्यत्र । एतेन=पूर्वोक्तरीत्या विभक्त्यैव विभक्तेर्बाधस्य प्रदर्शनेन । **विजातीयत्वादिति** । 'न हि काको वार्यते इत्यधिकारो निवर्त्तते'—इति 'तत्र तस्येवे'ति सूत्रभाष्योक्तदृष्टान्ताद्विजा-तीयेन विजातीयस्य बाधायोगादिति भावः । तदर्थे=सहार्थे । **कर्त्तरीति** । अविवक्षितकर्मतयाऽकर्मकत्वा-द्गत्यर्थाकर्मकेति सिनोतेः कर्त्तरि क्त इत्यर्थः । अर्थासम्प्रत्ययाच्च न स्यते रूपमित्यवधेयम् ।

## ॐ चिदस्थिमाला ॐ

लक्षणकं वर्षणमिति तु शाब्द इत्याह—**इत्याहेति** । फलितमाहेत्यर्थः । यथाश्रुतमूलासङ्गतिमाह—**एतेनेति** ।

**स्पष्टमिति** । न च 'लक्षणेत्थ'मिति सूत्रविहितसञ्ज्ञाया गत्युपसर्गसञ्ज्ञाबाधद्वारा 'जपमनुसिञ्चती'त्यादौ-षत्वाभावसम्पादनेन कृतार्थतया द्वितीयाविधायकत्वे मानाभावेन तद्विधानार्थमस्याः सावकाशत्वेन कथं तृतीया-बोधकत्वमिति वाच्यं, कार्यकालपक्षे 'कर्मप्र'ेति सूत्रे तस्योपस्थितिसामर्थ्येन तस्या अपि लाभात्तद्बा-धकत्वेऽपि द्वितीयां प्रत्यनिमित्तत्वे मानाभावात् । सञ्ज्ञाया बहुकार्यसाधकत्वेन शाब्दफललाभार्थं द्वितीया-र्थत्वस्याप्यावश्यकत्वाच्चेति भावः । यत्तु **दीक्षितदण्ड्यादयः**—सम्बन्धोऽर्थः, स चेह साहित्यरूप एवानु-द्योत्य इति तत्र षष्ठ्या विशेषरूपेणैव सम्बन्धाना वाच्यत्वं, न तु सम्बन्धत्वेनेति—तदपवादाया अस्या अपि तथैवौचित्यात् । यत्तु **शास्त्री**—'येनाङ्ग'ेति तृतीयार्थो न, 'कर्मप्रवे'त्यस्य 'अनन्तरे'तिन्यायेनाप्रधान-तृतीयामात्रबाधकत्वाभ्युपगमादिति; तन्न, आनन्तर्याभावात् ; तदेतद्ध्वनयन्नाह—**तृतीयेति** । 'रामेण बाणेन वाली अनुहन' इत्यत्र कर्तृकरणयोः कारकविभक्तेरन्तरङ्गत्वेनास्याः सञ्ज्ञायाः फलाभावादाह—**तन्निमित्तेति** । येनाङ्गत्यादिनिरासायाह—**अनन्तरेति** । तथा सति सूत्रार्थमाह—**तदर्थे इति** ।

## ॐ वरवर्णिनी ॐ

**लक्ष्यते इति** । न चैवं 'सहार्थे' इत्येव लाघवादुक्तव्यमिति वाच्यम्, 'समानकालिकक्रियादिमत्त्व'-रूपतृतीयानिमित्तभूते सहार्थे द्योत्ये इत्यर्थलाभायैव तथा सूत्रणात् । तेन सादृश्यमात्रद्योतकस्यानोर्न कर्म-प्रवचनीयत्वम् । अत एव 'गङ्गायां घोष' इत्यादौ 'गङ्गातीरे घोष' इति न प्रयुज्यते, शैत्यपावनत्वादि-प्रतीतेस्तथाप्रयोगेऽलाभादित्याहुर्गौडाः । ननु द्रोणे खार्यपेक्षया न्यूनतायाः 'खारी द्रोणचतुष्टय'-मित्यादिनाऽवगततया खार्यपेक्षयाऽधिकत्वं द्रोणे कथमत आह—**तेनेति** । उभयं=खारी, द्रोणश्चेत्युभयम् । तेन द्रोणेनाधिका खारीत्यर्थः । पञ्च द्रोणा इति यावत् ।

**उपोऽधिके च**। चाद्दीने। **सप्तमीति**। 'यस्मादधिक'मित्यनेनेति भावः। 'उप खार्यां द्रोण' इति यथा। खार्यपेक्षयाऽधिकत्ववान् द्रोण इत्यर्थः। तेनोभयमस्तीति फलति।

इत्थम्भूतः-कञ्चित्प्रकारं प्राप्तः, स आख्यायतेऽनेनेति इत्थम्भूताख्यानं-प्रकार-विशेषनिरूपकम्। 'भाग'शब्देनार्श आद्यजन्तेन तत्स्वामी उच्यते। वीप्साया द्विर्वचन-विशिष्टवृक्षशब्दबोध्यत्वादाह-**विषयभूतेष्विति**। **वृक्षं प्रतीति**। वृक्षप्रकाशेन विद्यु-द्विद्योतदेशज्ञानाद्वृक्षो-लक्षणम्[1]। **वृक्षं वृक्षमिति**। वृक्षस्य व्यापकतासम्बन्धेना-न्वयो यद्यपि द्विर्वचनबलादेव, तथापि प्रत्यादिसत्त्वे सोऽपि तन्निर्णायक इति सम्बन्ध-परिच्छेदकत्वं बोध्यम्।

❀ विजया ❀

**इत्थमिति**। इदमेतदोस्तृतीयान्तयोः क्रियाप्रकारे द्योत्ये थमुप्रत्यये इत्थम्शब्दः सिध्यति, तत्प्रतिरूपकश्चायं सर्वविभक्त्यन्तो निपातः-ईदृशइत्यर्थकः। प्रकृते च'भूत'इत्यस्य कर्मीभूतोऽयमिति द्वितीयान्तताऽस्यास्थेया। थमुप्रत्ययान्तस्तु नायं, तस्य तृतीयान्ततया द्वितीयान्तत्वासम्भ-वात्। तद्धितान्तस्य—'इत्थं पठती'त्यादावेतत्प्रकारेणेत्याद्यर्थः, 'इत्थम्भूत' इत्यत्र—इत्थमित्यस्य तु-ईदृशमित्यर्थ इति तयोर्भेदेन तत्प्रतिरूपकमव्ययमिदमित्यस्यावश्याश्रयणीयत्वादिति श्रीगुरुचरणाः।

निरूपकं=बोधकम्। **बोध्यत्वादिति**। वीप्सायास्तादृशवृक्षशब्दद्योत्यत्वाभावादित्यर्थः। **लक्षणमिति**। इदञ्च न शाब्दबोधे भासते, किन्तु वस्तुसन्निमित्तम्। स्वसमानदेशत्वरूपः सम्बन्धो द्योत्यो द्वितीयार्थश्च। अन्वयः=सेचनेऽन्वयः। द्विर्वचनबलात्=वीप्साद्विर्वचनबलात्। **सोऽपि**=प्रत्यादिशब्दोऽपि।

❀ चिदस्थिमाला ❀

एतेन 'पुत्रेण सहे'त्यादौ सहशब्देनैव साहित्योपस्थितेः सत्त्वेन तस्य तृतीयावाच्यत्वाभावेन 'तृतीयार्थ' इति सूत्रं, तथा सहेत्यर्थः, साहित्यरूपः सम्बन्धोऽनुद्योत्यः-इति कथनं वाऽयुक्तमित्यपास्तम्। तदाह—**साहित्येति**। न्यूनतानिरासायाह-**उपेति**। खारीपरिमाणस्य द्रोणपरिमाणतोऽधिकत्वाद्वाक्यतात्पर्यमाह-**तेनोभयमिति**। खारी द्रोणश्चेत्यर्थः। आख्यानञ्च निरूपणमित्याह-**निरूपकमिति**। लक्षणादिसाह-चर्येणाह—**भागेति**। तत्प्रतियोगिनो वाच्यत्वादाह-**उच्यते इति**। लक्ष्यलक्षणभावसम्बन्धस्य द्वितीयार्थस्य प्रत्यादिद्योत्यत्वादाह—**वृक्षप्रेति**। वृक्षज्ञानजन्यज्ञानविषयो विद्युद्विद्योत इति बोधः। वीप्सा-विषयभूतव्याप्यत्वस्य बुद्धिस्थयावत्प्रकृत्यर्थनिष्ठस्य द्विर्वचनद्योत्यत्वादाह—**वृक्षस्येति**। व्याप्यत्वविशिष्ट-स्येत्यादिः। सेचने इति भावः। **सोऽपीति**। 'व्यतिलुनते' इत्यादिवत्। एवञ्च लक्षणादिसाहचर्यमप्यबाधितं

❀ विषमपदविवृतिः ❀

**उभयमस्तीति**। यत्र द्रोणो व्रीहिरस्तीत्युच्यते तत्र खारी व्रीहिरप्यस्त्येव, खार्या द्रोणव्याप्यत्वादिति भावः। **निरूपकमिति**। एवञ्च 'भक्तो विष्णुं प्रती'त्यत्र निरूपकत्वं द्वितीयार्थः। **स्वामीति**। तथा च 'लक्ष्मीर्हरिं प्रती'त्यत्र स्वामित्वं द्वितीयार्थ इति भावः। भागशब्देन च स्वत्वविशिष्टमुच्यते। यद्यपि स्वत्वं स्वामित्वं द्वितीयार्थ इत्युक्तावपि न किञ्चिद्बाधकं, तथापि लक्षणत्वस्य द्वितीयाप्रकृत्यर्थनिष्ठत्वेन तदनुरोधादेवमुक्तं, भागवाचकाद्द्वितीयापत्तिभ्रमवारणार्थञ्च। **अन्वय इति**। कर्मत्वे इति शेषः। परिच्छेदकत्वम्=निर्णाय-

१ परे तु—'वृक्षं प्रति विद्योतते विद्यु'दित्यादौ वृक्षसमानदैशिकं विद्युद्विद्योतनमित्येव बोधः। अत एव 'क विद्योतते' ? इति प्रश्ने—'वृक्षं प्रति विद्योतते' इत्युत्तरवाक्यं प्रयुज्यते। तथा च यत्र यत्र लक्ष्यलक्षणभावस्तत्र तत्तत्कालघटितसम्बन्धेन, देशघटितसम्बन्धेन वाऽन्वयो बोध्य इत्याहुः।

वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाविवक्षायामनेन द्वितीया। किञ्च यद्यत्र कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात्प्रतिवृक्षमितिसमासानापत्तिः।

किञ्च प्रत्यादेः क्रियाविशेषकत्वेऽन्वर्थतया कर्मप्रवचनीयसञ्ज्ञाया एवानापत्तिः।

---

### ॐ विजया ॐ

प्राचीनं खण्डयितुं व्यवस्यति—**वृक्षादीनामिति**। **कर्मत्वेऽपीति**। एवञ्च कर्मत्वादेव द्वितीया सिद्धेति भावः। तत्त्वेन=कर्मत्वेन। कर्मत्वेनाविवक्षायां सम्बन्धत्वेन च विवक्षायां प्राप्तां षष्ठीं बाधित्वा द्वितीयाविधानार्थमिदमित्याशयः।

परे तु कर्मत्वविवक्षायां कर्मणि द्वितीयायाः सिद्धावपि षत्वाभावाय निरुक्तसञ्ज्ञायाश्चारितार्थ्येन अकर्मकस्थले 'वृक्षं प्रति विद्योतते विद्यु'दित्यत्राऽप्राप्तद्वितीयाविधानार्थं तस्याश्चारितार्थ्येन च सम्बन्धत्वेन विवक्षायां प्राप्तायाः षष्ठ्या बाधे न मानम्, एवञ्च तत्र षष्ठ्येवेत्याहुः।

**सामर्थ्याभावादिति**। वृक्षस्य क्रियाकर्मभावसम्बन्धेन क्रियायामेवान्वयात् प्रतिना एकार्थीभावाभावादित्यर्थः।

परे तु—सेचनक्रियानिष्ठव्याप्यव्यापकभावस्य प्रतिद्योत्यतया वृक्षस्य सेचनक्रियायामन्वयवत्तद्विशेषद्योतकप्रतिनाऽपि अन्वयस्य निर्बाधतया सामर्थ्यस्य सत्त्वान्न समासानापत्तिर्दोष इत्याहुः।

क्रियाविशेषकत्वे=क्रियापरिच्छेदकत्वे। 'प्रतिसिञ्चती'त्यत्र सिक्तस्य पुनः सेचनमर्थः, अनुसिञ्चतीत्यत्र पश्चात्सेचनमर्थः, परिसिञ्चतीत्यत्र सर्वतः सेचनमर्थ इत्यभिमानः। अयमाशयो भट्टानां—यदि वृक्षस्य क्रियायामन्वयेनैव ततो द्वितीया तदा पूर्वोक्तरीत्या प्रत्यादीनां क्रियापरिच्छेदकतयाऽन्वर्थकर्मप्रवचनीयसञ्ज्ञानापत्तिः। अस्मन्मते तु द्वितीयासम्पत्तये एव प्रत्यादयः प्रयुज्यन्ते, तव तु क्रियान्वयेनैव द्वितीयेति द्वितीयायामनुपकारकाः सन्तः प्रत्यादयः क्रियागतं—सर्वतो-

### ॐ चिदस्थिमाला ॐ

भवति, कर्मप्रवचनीयतया तत्त्वस्य युक्तत्वादिति भावः। सिद्धान्तमाह—**वृक्षादीनामिति**। दोषान्तरं तत्राह—**किञ्चेति**। एवमग्रेऽपि। उक्ते भाष्यसम्मतिमाह—**अत एवेति**। भाष्यान्तसम्मति-

### ॐ विषमपदविवृतिः ॐ

कत्वम्। तथा च 'विषयभूते'ष्वित्यस्य प्रत्यादिद्योत्येषु चेत्यर्थ इति भावः। **सामर्थ्याभावादिति**। वृक्षस्य सेचने एवान्वयादिति भावः। ननु प्रतिपरिच्छेद्यसम्बन्धस्य वृक्षान्वयात्सामर्थ्यं सूपपाद-

---

### ॐ वरवर्णिनी ॐ

'वृक्षं वृक्षं प्रती'त्यत्र कर्मणि द्वितीयेत्यनेन द्वितीयायाः सिद्धत्वात्कर्मप्रवचनीयसञ्ज्ञायाः षत्वाभावः फलमिति प्राचीनमतङ्कटाक्षयन्नाह—**वृक्षादीनां सेचने इति**। अत्र कर्मणि द्वितीयेत्यनेन द्वितीयायां दूषणमप्याह—**किञ्च यद्यत्रेति**।

ननु प्रतेः क्रियाविशेषद्योतकतया प्रतिद्योत्यक्रियाविशेषे च वृक्षस्यान्वयात्सामर्थ्यस्याक्षततया समासः सुलभ एवेत्यरुचेराह—**किञ्चेति**। क्रियाविशेषकत्वे=क्रियाविशेषविषयकतात्पर्यग्राहकत्वे। अन्वर्थत्वं कर्मप्रवचनीयसञ्ज्ञाऽनापत्तौ हेतुः। 'कर्मप्रवचनीया' इत्यस्य 'पूर्वं क्रियां प्रोक्तवन्त' इत्यर्थेनेदानीं क्रियाविशेषद्योतकत्वे तदनापत्तिः स्पष्टैव। अत्र कर्मप्रवचनीयत्वादेव द्वितीया, न कर्मत्वादित्यत्र भाष्यसम्मति-

---

१ प्रतेर्द्योतकतया व्याप्यव्यापकभावस्य प्रतिद्योत्यस्य धात्वर्थतया धातुना वृक्षस्य सामर्थ्ये प्रत्यर्थेनापि सामर्थ्यं स्पष्टमेव। 'प्रतिद्योत्यव्याप्यव्यापकभावेनैव [ तद्वारैव ] क्रियान्वय' इति तु तत्त्वमिति गौडाः।

अत एव भाष्ये—'किमर्थं पुनरिदमुच्यते ?, न चोपसर्गसञ्ज्ञाबाधनार्थं, क्रियायोगाभावा'दित्युक्त्वा 'द्वितीयार्थ'मिति सिद्धान्तितम् । अत एव [च] 'प्रत्यर्थं शब्दनिवेशः'

ॐ विजया ॐ

भावादिकं द्योतयिष्यन्तीति । **अनापत्तिरिति** । सम्बन्धद्योतकत्वे एव हि कर्मप्रवचनीयसञ्ज्ञा, क्रियाविशेषकत्वे तु तेषां क्रियापरिच्छेदकतया सम्बन्धद्योतकत्वाभावात्सा न स्यादित्याशयः ।

परे तु—'प्रतिसिञ्चती'त्यादौ न प्रतेः क्रियापरिच्छेदकतया सिक्तस्य पुनः सेचनादिरर्थः, किन्तु व्याप्यव्यापकभावसम्बन्धद्योतकतैव—[ तत्परिच्छेदकतैव ]—तत्र प्रत्यादेरिति न कर्मप्रवचनीयसञ्ज्ञानापत्तिरित्याहुः । अत एवं=अस्य द्वितीयाविधानार्थत्वादेव । इदं='लक्षणेत्थ'मिति सूत्रम् । न च=न हि । उपसर्गसञ्ज्ञाबाधनार्थत्वे हि षत्वाभावार्थमिदं सूत्रं स्यात् । क्रियायोगाभावात्=क्रियापरिच्छेदकत्वाभावात् । सम्बन्धपरिच्छेदकत्वादिति यावत् । **द्वितीयार्थमितीति** । यदि क्रियायोगादेव द्वितीया स्यात्तदाऽस्य द्वितीयाविधानार्थत्वाभावेन भाष्योक्तमसङ्गतमेव स्यादिति भावः ।

ॐ चिद्स्थिमाला ॐ

माह—**अत एव चेति** । एतेनो'पपदविभक्ते'रितिन्यायेनात्र कर्मण्येव द्वितीया, प्रत्यादयस्तु क्रिया-

ॐ विषमपदविवृतिः ॐ

मित्यरुचेराह—**किञ्च प्रत्यादेरिति** । **क्रियाविशेषकत्वे इति** । इदं चिन्त्यम् , क्रियाविशेषद्योतकत्वस्य प्राचीनैरप्यनङ्गीकारात् , व्याप्यव्यापकभावसम्बन्धस्यैव तन्निर्णयत्वोक्तेः । वस्तुतस्तु 'प्रत्यर्थ'-मित्यत्र प्रतिशब्दार्थः—सम्बन्धो वीप्सा च । 'अर्थमर्थम्प्रती'ति विग्रहवाक्ये तु प्रतिशब्दः सम्बन्धमात्रे वर्तते न तु वीप्सायाम् । वीप्सा तु द्विर्वचनयोत्या इति नाव्ययीभावः । तदुक्तं हरदत्तेन—"—'अर्थमर्थम्प्रती'त्यत्र प्रतिशब्दो न वीप्सायां वर्तते, किं तर्हि ? कर्मवचनीयत्वात् सम्बन्ध-

ॐ वरवर्णिनी ॐ

माह—**अत एवेति** । भाष्यान्तरस्थं प्रयोगमपि प्रमाणयति—**अत एवेति** ।

श्रीबालशास्त्रिचरणास्तु"—वस्तुतस्तु कर्मणि द्वितीयेत्यनेनैव वृक्षपदाद्द्वितीया,'उपपदविभक्ते'रिति न्यायात्। एवञ्च षत्वाभाव एव कर्मप्रवचनीयसञ्ज्ञाफलन्न द्वितीया । कर्मत्वाविवक्षा तु कर्तुमशक्या, तथा सति 'नित्यवीप्सयो'रितिद्वित्वस्यैवानापत्तेः । तथा हि—'नित्यवीप्सयो'रितिद्वित्वं पदे एव प्रवर्त्तते, पदञ्च द्विरुच्चारणीयत्वेनाभिमतनिष्ठपदसञ्ज्ञाप्रयोजकविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावदर्थबोधकरूपं ग्राह्यम्—अत एव 'वृक्षो वृक्षः सिञ्चती'ति न प्रयोगः, तत्र कर्मतासम्बन्धावच्छिन्नव्यापकताया एव द्विर्वचनेन बोधयितुमिष्टतया कर्मत्वस्य सुप्रत्ययार्थत्वाभावात् । अत एव चैत्रवृक्षमात्रसेचनेऽपि कालिकादिसम्बन्धेन वृक्षादिव्यापकतायाः सेचने सत्त्वेऽपि 'वृक्षं-वृक्षं सिञ्चती'त्यादयो न प्रयोगाः, तत्र तादृशविभक्त्यर्थसम्बन्धावच्छिन्नव्यापकत्वाभावात् । एवञ्चात्र यदि कर्मणि द्वितीया विधीयते तदा द्विरुच्यमानवृक्षपदनिष्ठ—पदसञ्ज्ञा—प्रयोजक—अम्प्रत्ययार्थीभूत—कर्मत्व—सम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यतावद्वृक्षबोधकस्य वृक्षमित्यादिपदस्य प्राग्द्वित्वं, ततश्च तद्व्यापकत्वद्योतकत्वप्रयुक्तैव प्रतेः कर्मप्रवचनीयसञ्ज्ञेति 'वृक्षं-वृक्षं प्रतिसिञ्चती'त्यादौ षत्वनिषेधस्यापि सिद्धिः । कर्मत्वाविवक्षायान्तु—निरुक्तव्यापकतानिरूपितव्याप्यता-

१ 'गत्युपसर्गसञ्ज्ञापवाद' इति वदतां **दीक्षितानामयमाशयः**,—क्रियानिरूपित—लक्षकत्वादि—सम्बन्धविशेषपरिच्छेदकत्वात्प्रतेः क्रियापरिच्छेदकत्वेन—क्रियायोगस्य सत्त्वाद्गत्युपसर्गसञ्ज्ञे प्राप्नुतस्तदपवादोयमिति । भाष्ये तु—सम्बन्धपरिच्छेदकत्वेऽपि क्रियापरिच्छेदकत्वाभावात्क्रियायोगाभावेन न गत्युपसर्गसञ्ज्ञे प्राप्नुत इति न तद्बाधनार्थोऽयं योग इत्याशयेन—'क्रियायोगाभावा'दित्युक्तम् ।

२ यस्य पदस्य द्विर्वचनं चिकीर्षितं तदर्थतावच्छेदकावच्छिन्नस्य यद्रूपावच्छिन्नसंसर्गेण यद्रूपावच्छिन्नेऽन्वयो भवति तद्रूपावच्छिन्नस्य तत्सम्बन्धावच्छिन्नव्यापकतासम्बन्धेन तद्रूपावच्छिन्नेऽन्वयविवक्षायामेव 'नित्यवीप्सयो'रित्यनेन द्वित्वविधानादिति तत्त्वम् ।

इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेऽपि 'अर्थमर्थं प्रती'ति विग्रहो भाष्ये दर्शितः। वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्यदित्यास्ताम् ।

फलान्तरमप्याह—**अत्रेति** । **यदत्रेति** । यद्वस्तु मम भागः स्यादित्यर्थः ।

❀ विजया ❀

परे तु—'वृक्षं प्रति विद्योतते'इत्यादावकर्मकस्थले द्वितीयाया अप्राप्त्या तदभिप्रायेण भाष्येऽस्य द्वितीयार्थत्वमुक्तम् । सकर्मकस्थले तु द्वितीयायाः स्वतः सिद्धतया न तत्र द्वितीयाविधानं फलं, किन्तु षत्वाभाव एव फलम् । किञ्च अनेन भाष्येण—'तत्त्वेनाविवक्षायामप्यनेन द्वितीये' त्यस्यार्थस्य न लाभ इति चिन्त्य एवायं शेखर इत्याहुः । अत एव = द्वितीयाप्रयोजनत्वादेव ।

**दर्शितइति** । तस्याधिकरणत्वेऽपि तदविवक्षायामनेन द्वितीया, तद तु सप्तमी दुर्वारेति नागेशभट्टाशयः । **वीप्साया अपीति** । अपिशब्दाद्द्वितीयासम्पादकश्चेत्याशयः ।

❀ चिद्स्थिमाला ❀

विशेषका एवेति **हरदत्त दीक्षित-दण्ड्या**युक्तमपास्तम् । तदाह—**आस्तामिति** । एवं सति मूलासङ्गतिं परिहरति—**फलान्तरमिति** । यच्छब्दस्य बुद्धिस्थत्वेन भागवाचकत्वादाह—**यदिति** ।

❀ विषमपदविवृतिः ❀

मतच्छिनत्ति, वीप्सा तु द्विर्वचनद्योत्या । अतो'ऽर्थमर्थम्प्रती'त्यत्र नाव्ययीभावः । 'प्रत्यर्थ'मिति वृत्तौ तु वीप्सायां प्रतिरस्तीति समासो भवति, प्रतिनोक्तत्वाद्वीप्साया द्विर्वचनाभावः । तथा च लक्षणेत्थम्भूते'ति सूत्रे वीप्सापदं तद्विषयसम्बन्धपरम् । तेन 'अर्थमर्थम्प्रती'ति वाक्ये, 'प्रत्यर्थ'मिति वृत्तौ च प्रतेः कर्मप्रवचनीयत्वादुभयत्र द्वितीयासिद्धिः—'' इति । तदेतत्सर्वमभिप्रेत्याह-**वृत्तिविषये इति** ।

❀ वरवर्णिनी ❀

वदर्थबोधकत्वाभावात्पूर्वं द्वित्वं न स्यात्, ततश्च कर्मप्रवचनीयसञ्ज्ञापि नैव स्यात्, द्वित्वसहकारेणैव प्रत्यादेर्व्यापकताद्योतकत्वात् । प्रतेर्व्यापकताद्योतकत्वाभावादेव प्रतेःप्रयोगं विनापि 'वृक्षं–वृक्षं सिञ्चती'त्यादौ-व्यापकताप्रत्ययः, द्वित्वाभावे प्रतेः प्रयोगेऽपि 'वृक्षं प्रति सिञ्चती'त्यादौ व्यापकताप्रत्ययाभावश्चोपपद्यते । न च द्वित्वेन प्रत्येतव्यव्यापकताद्योतकत्वप्रयुक्तैव कर्मप्रवचनीयसञ्ज्ञा द्वित्वात् प्रागेव स्यादितिवाच्यं, द्वित्वसहकारेणैव व्यापकताद्योतकस्य प्रत्यादेर्द्वित्वात्प्राग्व्यापकताद्योतकत्वे मानाभावात् ।

'प्रतिवृक्ष'मित्यत्र समासानापत्तिरपि न 'अव्ययं विभक्ती'त्याद्यव्ययीभावसमासस्य वाचकाव्ययैरेवाङ्गीकृततया समासार्थे प्रतेरपि व्यापकतावाचकत्वस्यावश्यंवक्तव्यतया तदर्थव्यापकतायां वृक्षादिपदार्थान्वयेनैकार्थीभावोपपत्तेः । विग्रहप्रदर्शनन्तु व्यापकत्वबोधकत्वरूपकिञ्चिदंशसाम्येनैव । 'क्रियाविशेषकत्वेऽन्वर्थकर्मप्रवचनीयसञ्ज्ञानापत्ति'रित्यपि न युक्तं, पूर्वकालिकक्रियाविशेषकत्वमात्रस्यैवान्वर्थतावलम्भ्यतया तस्य चेदानीमप्यक्षततया विरोधाभावात् । किञ्च भाष्यविरोधोऽपि न, तद्भाष्यस्य—'वृक्षं प्रति विद्योतते' इत्याद्यकर्मकस्थलाभिप्रायत्वात् । नापि 'प्रत्यर्थं शब्दाभिनिवेश' इत्यादावर्थमर्थं प्रतीति विग्रहप्रदर्शनासङ्गतिः, तथाहि–तत्र हि सत्तानुकूलव्यापारो निविशतेरर्थः, प्रकारतारूपार्थपदार्थान्वयि चात्र सत्तारूपं फलं, प्रयोज्यत्वञ्च फलतावच्छेदकः सम्बन्धः । एवञ्च—तादात्म्यसम्बन्धावच्छिन्नप्रकारता-निष्ठव्याप्यतानिरूपित–प्रयोज्यत्वसम्बन्धावच्छिन्न – फलीभूतसत्ता–ऽऽश्रयत्वरूप – कर्मत्व–सम्बन्धावच्छिन्न-व्यापकता द्विर्वचन–[प्रत्यादि]–द्योत्या–शब्दनिष्ठसत्तानुकूलव्यापारान्वयिनीति–तत्रापि तादृशफलाश्रयतया 'कर्तु'रित्येव कर्मत्वमिति कर्मणि द्वितीयासिद्धेर्न काप्यनुपपत्तिः । वस्तुतो 'ऽभितः परित'इत्येव तत्र द्वितीयेति न कश्चिद्दोषलेशोऽपीति प्राचीनमतमेवात्र साधीय इत्यस्मद्गुरवः—**श्रीराजारामशास्त्रिणो** व्याचक्षते-'' इति प्राहुरित्युमानाथोङ्कारनाथ–जगन्नाथशास्त्रिप्रभृतयः ।

**कुतोऽधीति** । 'कुत' इत्यपादाने पञ्चमी । द्वितीया तु न, कर्मप्रवचनीयद्योत्य-सम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावात् ।

**गतिसञ्ज्ञाबाधादिति** । धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद्गतित्वं प्राप्तं, विशेष-द्योतकत्वाभावात्त्वनर्थकत्वव्यवहारोऽपीति भावः ।

**सुसिक्तमिति** । सेकगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्वकृते तत्तत्क्रियाकर्तुः पूज्यत्वे गम्ये एवैषा सञ्ज्ञा । अत एव 'सुषिक्तं किं तवे'त्यत्र न ।

अतिक्रमणम्—उचितादधिकानुष्ठानम् । चात् 'पूजाया'मित्यनुकृष्यते ।

---

### ॐ विजया ॐ

परे तु—'अभितः परित' इति वचनादेव तत्र द्वितीया, न कर्मप्रवचनीयसञ्ज्ञयेति षत्वा-भावार्थोऽयं योगो, न द्वितीयार्थः । कर्मत्वेनाविवक्षायाञ्च षष्ठ्येवेत्याहुः ।

### ॐ चिदस्थिमाला ॐ

यत्सम्बन्धि यद्भागकर्तृकैतदधिकरणिका सत्ता प्रेरणाविषयस्तत्कर्मकं प्रेरणविषयो दानमिति बोधः ।

नन्वनयोरनर्थकत्वेन प्रजयत्यादिवत्क्रियाविशेषद्योतकत्वाभावेन क्रियायोगाभावात्कथं गतिसञ्ज्ञाप्राप्तिरत आह—**धात्वर्थे**ति । 'आङ्सहिते'त्यादिः। नन्वेवं कथमनर्थकत्वमत आह- **विशेषे**ति । आङ्द्योत्यार्थापेक्षया विशेषेत्यर्थः । **सेके**ति । पूज्यसेचनकर्त्रेति बोधः । अनतिप्रसङ्गायाह—**क्रिये**ति । अव्यभिचारात्पदस्यार्थे

### ॐ विषमपदविवृतिः ॐ

ननु 'क्रियायोगाभावा'दिति कथमुक्तं, प्रतिद्योत्यसम्बन्धस्य क्रियागतत्वादिति चेन्न, 'उपसर्गाः क्रियायोगे' इत्यत्र क्रियायोगस्त्रेधा,-स्वार्थात् प्रच्याव्य धातोरर्थान्तरे स्थापनं, यथा 'अनुभवती'ति । क्वचित्क्रिया-गतविशेषोक्तिः—यथा 'प्रपचती'ति । पाकगतप्रकर्षो हि प्रशब्दार्थः । क्वचित्तद्धात्वर्थानुवादकत्वम् ,— यथा'कुतोऽध्यागच्छती'ति । कर्मप्रवचनीयत्वद्योत्यसम्बन्धस्तु उभयगतत्वान्न क्रियामात्रगत इति भाष्या-शयात् । कर्मप्रवचनीयसञ्ज्ञाया उपसर्गसञ्ज्ञापवादव्यवहारस्तु तदप्राप्तिमात्रेण । एतेन तद्द्योत्य-सम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिरिति शेखरोक्तमपास्तम् । **युक्तत्वस्याभावादिति** । 'कर्मप्रव-चनीययुक्ते द्वितीये'त्यत्र युक्तशब्दः सम्बन्धप्रतियोगिपर इति भावः । **धात्वर्थमात्र इति** । 'उप-सर्गाः क्रियायोगे'इत्यत्र धात्वर्थानुवादकत्वमपि योगशब्दार्थ इति भावः । **अत एवेति** । 'उपर-

---

### ॐ वरवर्णिनी ॐ

**सम्बन्धप्रतियोगित्वेति** । अधिपर्योरनर्थकतया सम्बन्धद्योतकत्वस्यैवाभावेन तत्प्रतियोगित्वस्य सुतरामभाव इति भावः । **धात्वर्थमात्रेति** । अभिमुखगमनादिरूप—आङ्विशिष्टधात्वर्थमात्रद्योतकत्वेने-त्यर्थः । **विशेषेति** । आङ्विशिष्टधात्वर्थाऽधिकार्थद्योतकत्वाभावादित्यर्थः । **गम्ये एवेति** । सोः पूजार्थकतयैव तल्लाभे पुनः पूजायामित्युक्तेस्तथा लाभ इत्याशयः । **सुषिक्तमिति** । अत्र सेचन-क्रियायाः शोभनत्वेऽपि तस्या अन्यक्षेत्रादिषु सेचनान्निष्फलतया सेककर्तुर्निन्दैवेति नेयं सञ्ज्ञेत्याशयः ।

अन्ये तु 'पूज्यसेकः किं त्वत्कर्तृक' इति काका न त्वत्कर्तृक इत्याद्यर्थत्वान्निन्दा गम्यते इत्याहुः ।

**अतिदेवानिति** । देवेभ्योऽधिको, देवपूज्य इति वाऽर्थः । द्वितीये 'कुगती'ति समासस्याभावस्तु—अनभिधानात् । आद्ये तु—प्राप्तिरेव न, 'स्वती पूजायामेवे'त्युक्तेः ।

**अपिः पदार्थ** । पदस्य–अप्रयुज्यमानपदान्तरस्य—अर्थः–पदार्थः । **सर्पिषोऽपीति** । अत्र 'बिन्दु'रित्यादेः पदस्यार्थोऽपिद्योत्यः । तदुक्तं वृत्तिकृता–'मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपिर्वर्तते' इति ।

**सम्भावनायां लिङिति** । 'उपसंवादाशङ्कयोश्चे'तिसूत्रभाष्ये पठितेन 'उपसंवादाशङ्कयोर्लिं'ङित्यनेन । तच्च लोकसाधारणमित्यपि तत्रैव भाष्ये स्पष्टम् ।

❀ विजया ❀

वस्तुतस्तु इदं सर्वमयुक्तं, प्राचीनमतमेव तु युक्तं, यतो यद्विभक्त्यन्तस्य द्वित्वं चिकीर्षितं तद्विभक्तिवाच्यसम्बन्धावच्छिन्ना व्यापकता वीप्सा द्विर्वचनेन प्रतीयते इति नियमः । प्रकृते च कर्मद्वितीयान्तस्य द्वित्वं चिकीर्षितमिति—कर्मद्वितीयावाच्य-क्रियाकर्मभाव-सम्बन्धावच्छिन्ना व्यापकता वीप्साद्विर्वचनेन बोध्यते । तथा च वृक्षनिष्ठव्याप्यतानिरूपिता या क्रियाकर्मभावसम्बन्धावच्छिन्नाव्यापकता तादृशव्यापकतावत्सेचनमिति बोधः । तस्मात् कर्मप्रवचनीयसञ्ज्ञातः पूर्वकाचिद्विभक्तिरपेक्षितैव । नच समासानापत्तिर्दोष इति वाच्यं, प्रतियोगित्वव्यापकत्वरूपार्थे वृक्षस्यान्वयेन सामर्थ्यसत्त्वात् समासस्योपपत्तेः । किञ्च प्रतेः क्रियानिरूपितव्यापकत्वसम्बन्धद्योतकत्वेन क्रियाद्योतकत्वाभावादन्वर्थत्वक्षतिरेव नेति कर्मप्रवचनीयत्वे बाधकाभावः । नच 'किमर्थं पुनरिदमित्युच्यते' इति शेखरोक्तभाष्यविरोध इति वाच्यं, तस्य भाष्यस्य पूर्वपक्षसाधकत्वात्, अत एव तदुत्तरं भाष्ये—'नैतदस्ति प्रयोजनं, कर्मद्वितीययैव सिद्धि'रित्युक्तम् । नच प्रत्यर्थं शब्दनिवेश इत्यस्यार्थमर्थं प्रतीति विग्रहो भाष्योक्तो विरुध्येत, अर्थस्य निवेशनक्रियानिरूपिताऽधिकरणत्वेन द्वितीयाया असम्भवादिति वाच्यम्, अधिकरणस्यापि कर्मत्वविवक्षया द्वितीयाया उपपत्तेः । इदञ्च नागेशेनाप्यभ्युपेतव्यम्, अन्यथा कर्मप्रवचनीययोगनिमित्तद्वितीयापेक्षया कारकविभक्तित्वेन सप्तम्या एव प्राबल्यात्तदापत्तिर्दुरुद्धरैव स्यादिति सङ्क्षेपः ।

❀ चिदस्थिमाला ❀

इति नेत्याह–**पदस्येति** । अर्थः=शक्यः । पदस्य=अप्रयुज्यमानस्य । **द्योत्य इति** । तद्वाचकपदाध्याहारोऽपि द्योत्य इत्यर्थः । पठितेन=वार्तिकेन । ननु तद्वत्तस्यापि छान्दसत्वादयुक्तमिदमत आह—**तच्चेति** । वार्तिकञ्चेत्यर्थः । तत्र=वार्तिके । एतेन—'सम्भावनेऽल'मित्यत्र 'सम्भावने' इति योगविभागेन लिङ् । अग्रिमन्तु

❀ वरवर्णिनी ❀

**देवेभ्योऽधिक इति** । 'यशोमाहात्म्यादिभि'रिति शेषः । वार्थः=चार्थः । द्वितीये=देवपूज्य इत्यर्थे । समासस्य=गतित्वविरहेऽपि प्रादित्वादेव प्राप्तस्य प्रादिसमासस्य । आद्ये=आधिक्यर्थे ।

**पदस्येति** । ननु सम्भावनान्ववसर्गादीनामपि यत्किञ्चित्पदार्थतया पुनः पदार्थपदोपादानं व्यर्थमिति चेन्न, 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपः' इति वार्तिकेन अप्रयुज्यमानपदस्य लोपेन—अप्रयुज्यमानपदस्यार्थे अपिरुक्तसञ्ज्ञ इत्यर्थेनादोषात् । न चैवमपि कर्मप्रवचनीयाऽपिद्योत्यस्य सम्बन्धस्य [ 'कर्मप्रवचनीया' इति महासञ्ज्ञया लब्धस्यापि ] आकाङ्क्षास्यतयाऽप्रयुज्यमानपदान्तरार्थतया सिद्धे पुनरपि पदार्थग्रहणं व्यर्थमिति वाच्यम्, सम्बन्धानात्मको योऽप्रयुज्यमानपदान्तरार्थ इत्यर्थं विवक्षायां अप्रयुज्यमानपदार्थस्य सम्बन्धानात्मकस्यापिद्योत्यत्वे कर्मप्रवचनीयसञ्ज्ञार्थं पदार्थग्रहणस्य चारितार्थ्यात् ।

**सर्पिषोऽपि स्यादिति** । 'तर्हि रुचिर्भवेद्भोजनं मधुरं स्वादु स्यात्, बलं सम्पद्येते'ति शेषः ।

अर्थः = लेशादिः । उपसंवादः=पणबन्धः [ 'शर्त्त मारना' 'बाजी लगाना' ] **तच्चेति** । 'छन्दो-

तत्राऽऽशङ्का—उत्प्रेक्षा । सम्भावनाऽप्युत्कटकोटिकाऽऽशङ्कैवेति भावः ।

कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह—**तस्या एवेति** । सम्भावनाया एवेत्यर्थः । 'कर्तृदौर्लभ्य'मिति षष्ठीतत्पुरुषः । 'कर्तृ'पदं प्रकृताभिप्रायम् । 'सर्पिषोऽपि पिबे'दित्यादौ 'कर्मदौर्लभ्ये'त्यादि बोद्ध्यम् । तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य च द्योतकोऽपिः । **सम्बध्यत इति** । स्यात्पदवाच्यक्रियायामपिद्योत्यबिन्दोः कर्तृतया, द्योत्योक्तसम्बन्धेन चान्वयादिति भावः । तदाह—**अपिशब्दबलेनेत्यादि** । एवञ्च सर्पिरवयवबिन्दुदौर्लभ्य-प्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनाविषयः सत्तेति बोधः । विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे दौर्लभ्यस्यापि सम्भावनाविषयत्वमनुभवसिद्धम् ।

नन्वेवं कर्मप्रवचनीयद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वात् द्वितीया स्यादत आह—**द्वितीया त्विति । न त्वपिनेति** । बिन्दुना योगेऽप्यपिद्योत्य-

ॐ चिदस्थिमाला ॐ

'सिद्धाप्रयोगे एवे'ति नियमार्थं, यथान्यासे तु प्राप्तेरभावादत्र न स्यादिति केन चिदुक्तम्; "उक्तरीत्या तदप्राप्तेः सम्भावनायामित्यादि सम्बध्यत इत्यन्तग्रन्थ उपेक्ष्यः, तस्मात्प्रार्थने लिङ्, सर्पिष इत्यादिशब्दप्रयोक्तृ-निष्ठेच्छाविषयीभूतबिन्द्वभिन्नाश्रयकं भवनमिति बोधः—" इति **शास्त्र्युक्तञ्चापास्तम्** । आद्ये तस्य भाष्यानारूढत्वाद्गौरवाच्च । द्वितीये ततः सर्पिर्दौर्लभ्यप्रतीत्यनापत्तेः, प्रार्थ्यमानस्यासिद्धतया बाहुल्यस्यैव प्रतीत्यापत्तेश्च । वक्ष्यमाणरीत्या दौर्लभ्यविशिष्टसत्तायां प्रार्थ्यमानत्वान्वयात् । न च प्रार्थ्यमानत्वेनैव तस्य दौर्लभ्यलाभः कर्तृदौर्लभ्यसम्बन्धेन चान्वयो मास्तु इति वाच्यं; 'यदत्र कर्मप्रवचनीययुक्तं नादः प्रयुज्यते बिन्दुरिति'—भाष्यविरोधात्तद्द्योत्यसम्बन्धेनान्वय एव—नान्त्यः, निरूपयितुमशक्यत्वात्, सम्बन्धोऽप्यन्यो निरूपयितुमशक्य एवेति दिक् । सप्तमीसमासाद्यभ्रमायाह—**कर्त्रिति** । न्यूनतां परिहरति—**कर्त्रिति** । क्रियादौर्लभ्यं कारकदौर्लभ्यप्रयुक्तमेव, प्रकृते च धातोरकर्मकत्वात्; कारकान्तरानुक्तेश्च तदैवेतिभावः । फलितमाह—**तत्रेति** । मौलवाक्ये इत्यर्थः । सर्वत्र क्लृप्तत्वादाह—**कर्तृतयेति** । प्रकृते ईदृशसम्बन्धेनाप्यनन्वय इत्यत्रापिरेव तात्पर्य-ग्राहक इत्याह—**द्योत्योक्तेति** । दौर्लभ्यप्रयुक्तदौर्लभ्येत्यर्थः । एकपदार्थयोरपि मिथोऽन्वया-ङ्गीकारादिति भावः । एतेन सामान्यतोऽशब्दार्थस्य दौर्लभ्यस्यापिशब्दद्योत्यत्वायोगात्कर्तृदौर्लभ्येत्यादि चिन्त्यम् । इदमोऽव्यवहितपरामर्शान्याय्यत्वञ्चेति **शास्त्र्युक्तम्**, अपिद्योत्यं भवनदौर्लभ्यमेव, बिन्दुप्रतीतिस्त्वाक्षेपादिति **दण्डयुक्तञ्चापास्तम्** । **मूले—इयमेवेति** । बिन्दुद्योतकतैवेत्यर्थः । **तदिति** । तदभिन्नैके-त्यर्थः । एवं=बिन्दोरपि तद्द्योत्यत्वे । अर्थे=बिन्दौ । **दण्ड्यादिग्रन्थासाङ्गत्यायाह—बिन्दुनेति** । महासञ्ज्ञाबलेन तत्रैव द्वितीयाविधानादाह—**कर्मप्रेति** । **बिन्दुरिति** । तथा च भाष्यं **यदत्रेत्यादि**—प्रागुक्तं,

ॐ वरवर्णिनी ॐ

मात्रविषयकलेड्विधायकसूत्रस्थत्वेऽपी'ति शेषः । **कर्मप्रवचनीयत्वादिति** । न तु पदार्थत्वात्, 'सम्बन्धानात्मकत्वे सती'ति विशेषणादिति भावः । **कर्तृदौर्लभ्यमिति** । कर्तुरभावे तत्सत्तायाः स्वत एवाभाव इत्याशयः । 'कर्मदौर्लभ्ये'त्यादावपि—कर्माभावे तत्सत्ताया अभावः स्वत एवेति बोध्यम् । **तद्दौर्लभ्येति** । बिन्दुदौर्लभ्यप्रयुक्तसत्तादौर्लभ्येत्यर्थः । **अन्वयादिति** । 'स्यात्पदबोध्यक्रियाया'मित्यादिः । **सम्भावनाविषय इति** । लिङन्तेऽपि धात्वर्थमुख्यविशेष्यकबोधस्यैव भट्टैरङ्गीकारादिति भावः । विशिष्टसत्तायाः=दौर्लभ्यविशिष्टसत्तायाः । **अनुभवसिद्धमिति** । घटविषयकज्ञानविषयकेच्छायां

सम्बन्धेनान्वय इत्यर्थः। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वं, प्रकृते चापि-द्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी, न सर्पिरिति भावः। यदा स्पष्टप्रतिपत्तये-ऽपिद्योत्यस्यापि बिन्दोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपदविभक्तेरिति प्रथमैव। तत्र कारकविभक्तित्वं क्रियाजनकत्वार्थकविभक्तित्वमिति दिक्।

सञ्ज्ञाफलमाह—**अनुपसर्गत्वादिति** । **अपि स्तुयादिति**। पूर्ववल्लिङ्। क्रियाविषयशक्यत्वादिना सम्भावनमपिद्योत्यम्। प्रकृतेऽवाङ्मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणम्। अत्युक्तिः—असम्भाव्यार्थसम्भावनम्। सम्भावन-पदस्येदृशार्थकत्वे व्याख्यानमेव शरणम्। विष्णुविषयायाः शक्यत्वसम्भावने चान्य-विषयानिश्चयेन—'शक्या कर्तु'मिति—फलति। 'शक्त्युत्कर्ष'मित्यौचित्योत्कर्षादेरप्युपलक्ष-णम्। 'अपि वेदान्तपारगं हन्या'दित्यादौ हननक्रियायां सम्भावनाविषयौचित्यौत्कर्ष-

❀ चिदस्थिमाला ❀

यस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमिति—तदर्थः। बिन्दोस्तु न द्वितीया, तस्याऽप्रयुज्यमानत्वात्।

प्रयुज्यमानत्वेऽप्याह—**यदेति**। यत्तु अन्तरङ्गत्वात् प्रथमेति तन्न, एवं हि सर्वत्रोपपदविभक्तिविषये-ऽन्तरङ्गत्वात्प्रथमापत्तौ तत्तच्छास्त्रवैयर्थ्यापत्तेरत आह—**उपपदेति** । ननु प्रथमायाः कारकाधिकारा-पाठात्कथन्तरत्वमत आह—**तत्रेति**। **न्यायेति**। 'अभिहिते प्रथमे'ति वार्तिककारस्वारस्यात्। द्वितीया तु कर्मप्रवचनीयद्योत्यसम्बन्धार्थिकैवेति न कारकविभक्तिः। न्यायस्तु वाचनिक एव। एतेन प्रथमा न कारक-विभक्तिरिति प्राचोक्तमपास्तम्। तदाह—**दिगिति**। प्राचां ग्रन्थासाङ्गत्यायाह—**पूर्वेति**। पूर्वतो भेदायाह—**क्रियेति**। तदत्रास्तीत्याह—**प्रकृते इति**। मानान्तरानुपलम्भादाह—**सम्भावेति**। विष्णु-कर्मिकैतत्कर्तृका शक्यत्वेन सम्भाव्यमाना स्तुतिरिति बोधः। अत आह—**विष्णुवीति**। न्यूनतां परिहरति—**शक्त्युत्कर्षमिति**। अत्र हेतुमाह—**अपीति**। 'सम्भाविते'त्यस्मात एवेत्यादिः। स्पष्टश्चेदं

❀ वरवर्णिनी ❀

घटविषयकज्ञानवद्घटस्यापि परम्परया विषयत्वस्य सर्वैरेवाङ्गीकारात्तथैव प्रकृतेऽपि दौर्लभ्यस्य परम्परया सम्भावनाविषयत्वमिति भावः। बिन्दुना=अल्पार्थेन बिन्दुना। **प्रयोग इति**। न च बिन्दुशब्दस्य प्रयोगेऽपिशब्दस्याप्रयुज्यमानपदार्थद्योतकत्वस्यैवाभावेन कर्मप्रवचनीयसञ्ज्ञाया अप्रवृत्त्यो-पसर्गत्वात्षत्वं स्यादिति वाच्यम्, अविद्यमानपदार्थद्योतकत्वस्योपलक्षणतया क्वचित्सर्पिषोऽपि स्या-दित्यादावप्रयुज्यमानपदार्थद्योतकत्वेन दृष्टस्येदानीं प्रयुज्यमानपदार्थद्योतकस्याऽपि कर्मप्रवचनीयसञ्ज्ञाया वक्तुं शक्यत्वादित्याशयात्। **पूर्ववदिति**। सम्भावनायामित्यर्थः। क्रियाविषयं=स्तुति—भेदनादिक्रिया-विषयकम्। शक्यत्वादिना=शक्तिसाध्यत्वादिना। अपिद्योत्यम्=अपिशब्दद्योत्यम्। यथा 'अपि स्तुयाद्वि-ष्णुम्' 'अपि गिरिं शिरसा भिन्द्या'दित्यादौ। **आविष्करणमिति**। आविष्करणं=व्यञ्जनया बोधनम्। यत्र च वाक्येऽपिपदं न श्रूयते, परं तस्याः क्रियाया अननुष्ठानमेव तात्पर्यविषयस्तत्र अपिशब्दो-ऽध्याहार्यः। यथा—

'विष्णोर्नाम न गृह्णीयान्न स्पृशेत्तुलसीदलम्।
परनिन्दा न कर्त्तव्या परचिन्ता कदा च न॥' इत्यादौ।

विष्णुविषया=विष्णुकर्मकस्तुतिविषया। वेदान्तपारगं=वेदान्तनिष्णातमपि आततायिनम्। हनन-

द्योतनात् । सम्भावितौचित्यस्य चानुष्ठानमयुक्तमिति–अस्य स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः सङ्गच्छते । कामाचारः—इच्छया प्रवृत्तिः । स्तुहि मा वा; यथेष्टं कुर्विति यावत् । 'प्रैषातिसर्गे'ति लिङ् ।

**अपि स्तुयाद्वृषलमिति**। 'उपसंवादे'तिसूत्रपठितवार्तिकेन परेणान्तरङ्गेण च 'गर्हायां लडपी'ति बाधित्वा सम्भावने लिङ् । क्रियागतं गर्ह्यत्वमपिद्योत्यं वृषलपदसमभिव्याहारात्स्तुतेर्गर्ह्यत्वेन तत्कर्त्तुर्गर्ह्यत्वं फलति, तदेव 'धि'गित्यादिनाऽनूद्यते ।

**अपि सिञ्चेत्यादि**। 'अपि'द्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं सञ्ज्ञायामुभयत्रापि षत्वाभावः ।

**कालाध्वनो**। अत्यन्तसंयोगो—निरन्तरसम्बन्धः । स च गुणक्रियाद्रव्यैरभावेन च । तेन 'मासं भोजनाभावः' इत्यादेः सङ्ग्रहः । गुणादिभिः कालाध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाध्ववृत्तिभ्यां द्वितीयेत्यर्थः ।

---

॥ चिद्स्थिमाला ॥

मिताक्षरायां-लक्ष्म्याञ्च । **गर्हायामिति**। 'कालत्रये सर्वलकारापवादो लडेव युक्त इति लिङत्र चिन्त्य' इति शास्त्र्यसाङ्गत्यायाह—**उपेति**। वार्तिकेन=प्रागुक्तेन । तस्य सूत्रबाधकत्वेऽपि वार्तिकाबाधकत्वात् ।

तत्र हेतुमाह—**वृषलेति**। नन्वेवं कथं देवदत्तनिन्दाऽत आह–**स्तुतेरिति**। नन्वेवं किमर्थं तदुल्लेखोऽत आह—**तदेवेति**। अन्यतरवैयर्थ्यं परिहरति—**अपिद्वयेति**। अन्तं विराममतिक्रान्त इति योगेनाह—**निरन्तरेति**। व्याप्तिरित्यर्थः। वृत्तिदण्डिग्रन्थासाङ्गत्यायाह—**अभावेनेति**। नन्वेवं कुतो द्वितीयाऽत आह—**गुणादीति**। स्वरूपग्रहणं तु न, व्याख्यानात् , तद्वाच्यात्यन्तसंयोगस्य कस्मिन्नपि पदार्थेऽसम्भवाच्चात आह—**वृत्तीति**। एकमासव्यापकाध्ययनस्थलेऽपि मासान्तरेऽध्ययनाभावसत्त्वेन मास-

॥ विषमपदविवृतिः ॥

स्थलं त्वया सुषिक्तं किं तवात्र फलं भवती'त्यत्र सेकस्य पूजात्वेऽपि तत्कर्त्तुर्मूर्खत्वेन निन्दा प्रतीयते न पूजेति भावः । **प्रथमैवेति**। 'बिन्दुपदा'दिति शेषः । **इति द्वितीया** ।

---

॥ वरवर्णिनी ॥

क्रियायां=वेदान्तपारगकर्मकहननक्रियायाम् । सम्भावितौचित्यस्य=सम्भावनाविषयौचित्यस्य । **अयुक्तमिति**। एवञ्च वेदान्तपारगातिरिक्तं सर्वमप्याततायिनं हन्यात्, वेदान्तपारगन्तु आततायिनमपि न हन्यात्, किन्तु त्यजेदेवेत्यर्थो बोध्यः । तदेव=कर्तृगतं गर्ह्यत्वमेव । **समुच्चयेति** । धवश्च खदिरश्चेति 'च'द्वयेन समुच्चयद्योतनवदित्याशयः । निरन्तरसम्बन्धः=व्याप्तिरूपः सम्बन्धः । प्रत्यासत्त्या=सूत्रे उपस्थितत्वात् । **बुद्धिस्थेति**। अनध्याय–शौचादिकालातिरिक्तयावदवयवदिनसम्बन्धरूपेत्यर्थः । *

ननु निरन्तरसम्बन्धः—व्याप्तिरूपः, स च किन्निष्ठ इत्याकाङ्क्षायामाह—**स चेति**।

नन्वेवं गुणादिभिरत्यन्तसंयोगे द्वितीयेति–समुदायान्यतमे कालाध्वनिष्ठव्याप्यतानिरूपितव्यापकतायां विवक्षितायां द्वितीयेत्यस्य लाभेऽपि द्वितीयाप्रकृतेरलाभ इत्यत आह—**प्रत्यासत्त्येति**। ननु यत्रैकमासव्यापकं गणेशस्तोत्राध्ययनं तत्र 'मासमधीते गणेशस्तोत्र'मिति प्रयोगो न स्यात्, मासान्तरे तत्स्तोत्रा-

**मासमधीत इति** । बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयाऽर्थः । 'एकादश्यां रात्रौ जागृया'दित्यादावधिकरणत्वविवक्षणान्न द्वितीया ।

## * इति द्वितीया *

**स्वतन्त्रः कर्त्ता** । कारकाधिकारात्क्रियाजनने स्वतन्त्र इत्यर्थस्तदाह—**क्रियायामिति** । स्वातन्त्र्यञ्च—कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् ।

### ॐ चिदस्थिमाला ॐ

व्याप्यकतायाः अध्ययने बाधवारणायाह—**बुद्धिस्थेति** । **अवयवेति** । दिनरूपेत्यर्थः । अतिप्रसङ्गं निराचष्टे—**एकेति** । ॐ **इति द्वितीया** ॐ । साकाङ्क्षत्वादाह—**कारकेति** ।

### ॐ विषमपदविवृतिः ॐ

**कर्तृप्रत्ययसमभिव्याहारेति** । कर्मप्रत्ययासमभिव्याहारेत्यर्थः । भावप्रत्ययसमभिव्याहारेति वा । तेन नान्योन्याश्रयः ।

### ॐ वरवर्णिनी ॐ

ध्ययनस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावस्य सत्त्वादत आह—**बुद्धिस्थयावदवयवेति** । अवयवः=दिनादिरूपः । एवञ्च 'मासमधीते'इत्यत्र मासपदं बुद्धिस्थतत्तन्मासपरं, तदवयवयावद्दिननिष्ठ-व्याप्यतानिरूपितव्यापकता यत्र तत्रैव तादृशः प्रयोगः । मासपदञ्च-त्रिंशद्दिनसमुदायपरम् । दिनपदञ्च—एकसूर्योदयावधिकापरसूर्योदयपर्यन्तस्थिताऽखण्डजन्यद्रव्यपरं, न तु षष्टिघटीसमुदायो दिनपदार्थः । यत्र प्रत्यहमेकघट्यां गणेशस्तोत्राध्ययनन्तत्रापि घट्यन्तरेऽध्ययनभावस्यसत्त्वेन 'मासमधीते'इति-प्रयोगानुपपत्तेः ।

मासनिष्ठा व्याप्यता च—तादात्म्यसम्बन्धावच्छिन्ना, व्यापकता तु—कालिकसम्बन्धावच्छिन्ना, व्यापकता-घटकाभावश्च—प्रतियोगिव्यधिकरणो-विवक्षितः । अत एव तन्मासावयवदिनेऽपि यद्घट्यवच्छेदेन नाध्ययनं तदवच्छेदेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाध्ययनाभावस्य सत्त्वेपि न 'मासमधीते'इति प्रयोगानुपपत्तिः ।

'एकादश्यां रात्रौ जागृया'दित्यत्र द्वितीयातिप्रसङ्गन्निराचष्टे—**एकादश्यामिति** । न चैवमपि'एकादश्यां नान्नम्भुञ्जीते'ति यत्रोच्यते तत्रैकादशीव्यापकस्य भोजनाभावस्य तात्पर्यविषयत्वाद्द्वितीयापत्तिरिति वाच्यं, तादृशतात्पर्ये त्वेकादश्यान्न भुञ्जीतेत्येव प्रयोगात् । प्रकृते त्वेकादशीरूपस्य कालस्य भोजनाभावाधि-करणत्वविवक्षैव । स चाभावः—प्रतियोगिव्यधिकरण एव विवक्षितोऽतो नानुपपत्तिः ।

न च 'मासमधीते'इत्यत्र धातोरध्ययनपूर्वकव्यापने वृत्तिकल्पनया 'कर्तु'रित्येव कर्मत्वं सिद्धमिति 'कालाध्वनो'रिति सूत्रवैयर्थ्यमिति वाच्यं.'मासन्देवदत्तस्य कौटिल्यम्भोजनाभावश्चे'ति यत्र प्रयोगस्तदर्थमस्या-वश्यकत्वात् । 'मासस्य द्विरधीते'इति यत्र प्रयोगस्तत्र तु मासव्यापकत्वनिवृत्तावेव तात्पर्यन्न तु मासाधि-करणकत्वनिवृत्ताविति 'कृत्वोऽर्थप्रयोगे' इति सूत्रेण षष्ठ्येव, न त्वनेन द्वितीयेति बोध्यमिति **मिश्राः** ।

## ॐ इति द्वितीया ॐ

**स्वतन्त्रः**। ननु किं नाम स्वातन्त्र्यं ?, न तावत्—व्यापाराश्रयत्वमात्रं, सर्वेषां कारकाणां स्वस्वव्यापार-द्वारैव प्रधानक्रियानिष्पादकत्वेन कर्त्तृत्वापत्तेः। नापि धात्वर्थव्यापाराश्रयत्वं तत् , 'अग्नेर्माणवकं वारयती'-त्यादौ माणवकस्यापि धात्वर्थ—संयोगानुकूलव्यापाराश्रयतया कर्त्तृत्वापत्तेः । नापि प्रधानीभूतधात्वर्थ-व्यापाराश्रयत्वन्तत् , 'पक्वस्तण्डुलो देवदत्तेने'त्यादौ कर्मप्रत्ययस्थले फलस्यैव प्राधान्येन व्यापारस्यान्यथात्वेन तदाश्रयस्य देवदत्तस्य कर्त्तृत्वानापत्तेरत आह—**कर्त्तृप्रत्ययेति** । ननु कर्तृत्वं स्वातन्त्र्यमेवेति स्वातन्त्र्यलक्षणे स्वातन्त्र्यप्रवेशादात्माश्रयः, न च कर्तृत्वं सङ्केतसम्बन्धेन कर्तृपदवत्त्वमेव, न स्वातन्त्र्यमिति नोक्तदोष इति वाच्यं, कर्तृपदवत्त्वरूपकर्तृत्वज्ञानं—स्वातन्त्र्यज्ञानात्, स्वातन्त्र्यज्ञानञ्च कर्तृपदवत्त्वज्ञानादित्यन्योन्या-

'पक्वस्तण्डुलो देवदत्तेने'त्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये 'कर्तृप्रत्ययसमभिव्याहारे'इति।

---

❀ वरवर्णिनी ❀

श्रयस्य तावताऽपि दुरुद्धरत्वादिति चेदत्र केचित्—प्रधानीभूतधात्वर्थाश्रयत्वमेव स्वातन्त्र्यम्। प्राधान्यञ्च न शाब्दबोधीयविशेष्यताश्रयत्वरूपं, किन्तु जनकत्वेन प्रतीयमानत्वमेव, तच्च व्यापारेऽक्षतम्। कर्मप्रत्ययसमभिव्याहारे व्यापारस्य शाब्दबोधीयविशेष्यताश्रयत्वाभावेऽपि निरुक्तप्राधान्यस्य तत्राक्षतत्वात्पच्यते देवदत्तेनेत्यादौ देवदत्तस्य कर्तृत्वं सूपपन्नमित्याहुः।

**परे तु**—धातुविशिष्टव्यापाराश्रयत्वं स्वातन्त्र्यं, वै० 'स्वजन्यबोधविषयत्वेन तात्पर्यविषयत्व' 'स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतार्थनिरूपितजन्यत्वेनाऽप्रतीयमानत्व' 'स्वबोध्यत्वेन तात्पर्यविषयनिरूपितजन्यत्वेन प्रतीयमानो योऽभावस्तत्प्रतियोगित्वाभाववत्त्वे'तन्त्रितयसम्बन्धेन। 'पाचयति देवदत्तेन यज्ञदत्त' इत्यादौ प्रयोज्यस्य पच्धातुविशिष्टव्यापाराश्रयतया पच्धातुनिरूपितं कर्तृत्वं, प्रयोजकस्य तु णिजन्तपाचिधातुविशिष्टव्यापाराश्रयतया पाचिनिरूपितं कर्तृत्वम्। 'अग्नेर्माणवकं वारयती'त्यादौ वारयतेः संयोगानुकूलव्यापाराभावानुकूलव्यापारार्थकतया प्रथमव्यापारस्य माणवकनिष्ठस्य जन्यत्वेनाप्रतीयमानत्वेन प्राप्तायाः कर्तृसञ्ज्ञाया वारणाय तृतीयसम्बन्धोपादानम्। माणवकस्य च तादृशाभावप्रतियोगित्वान्न तत्त्वमित्याशय इत्याहुः।

**अन्येतु**—धातुविशिष्टोऽत्र स्वतन्त्रपदेन ग्राह्यः। वैशिष्ट्यञ्च स्वार्थनिरूपितकारकाप्रयोज्यं यत्स्वार्थनिरूपितकारकत्वं तदाश्रयत्वसम्बन्धेन। यथा'देवदत्तः पचती'त्यादौ देवदत्तः स्वतन्त्रपदेन गृह्यते, पच्धात्वर्थनिरूपितकारकत्वस्य तत्र सत्त्वात्, पच्धात्वर्थनिरूपितकारकाप्रयोज्यत्वाच्च। ओदनादेः स्वतन्त्रत्ववारणाय'स्वार्थनिरूपितकारकाप्रयोज्य'मिति। तस्य पच्धात्वर्थनिरूपित-देवदत्तरूप-कर्तृकारकप्रयोज्यत्वस्यैव सत्त्वान्न स्वतन्त्रत्वमित्याशयः। न चैवं सौकर्यादिविवक्षायां 'स्थाली-पचति' 'असिश्छिनत्ती'त्यादौ स्थाल्यादेः कर्तृत्वानापत्तिः, स्थाल्यादिनिष्ठक्रियाजनकत्वस्य चैत्रादिरूपपचादिकर्तृप्रयोज्यत्वादिति वाच्यं, स्वार्थनिरूपितकारकत्वेन विवक्षिताऽप्रयोज्यं यत्स्वार्थनिरूपितकारकत्वन्तदाश्रयत्वस्यैव सम्बन्धतया 'स्थाली-पचती'त्यादौ पाककर्तृत्वेन चैत्रादेरविवक्षितत्वेन स्थाल्यादेः कर्तृत्वस्य सुवचत्वात्। नन्वेवं काष्ठव्यापारस्य स्थाल्यादिव्यापाराप्रयोज्यत्वात्त्वदुक्तस्वातन्त्र्यस्य तत्राक्षतत्वात्काष्ठैः स्थाली-पचतीत्यादौ काष्ठादेः कर्तृत्वापत्तिरत आह—**स्वातन्त्र्यञ्चेति**। कर्तृप्रत्ययसमभिव्याहारे 'स्वजन्यबोधीयमुख्यविशेष्यताश्रयीभूतार्थाश्रयत्व'सम्बन्धेन धातुविशिष्टत्वं स्वातन्त्र्यमिति फलितम्। विशेष्यतायां मुख्यत्वञ्च—स्वप्रयोजकप्रयोज्यविशेष्यतानिरूपितप्रकारत्वाऽसामानाधिकरण्यम्। ननु चैत्रेण मैत्रस्तण्डुलं पाचयतीत्यादौ णिचो द्योतकतया विक्लित्त्यनुकूलव्यापारानुकूलव्यापारस्य पचधात्वर्थतया प्रयोज्यचैत्रनिष्ठविक्लित्त्यनुकूलव्यापारस्य निरुक्तमुख्यविशेष्यताश्रयत्वाभावेन तदाश्रयस्य चैत्रस्य कर्तृत्वानापत्तिरत आह—**णिचस्त्विति**। एवञ्च णिच्प्रकृतिभूतविक्लित्त्यनुकूलव्यापारवाचकपच्धातुनिरूपितकर्तृत्वस्य प्रयोज्यकर्त्तरि, णिजन्तपाचिनिरूपितकर्तृत्वस्य च प्रयोजककर्त्तरि-सुलभत्वान्न काप्यनुपपत्तिरिति ध्येयमित्याहुः।

श्री**बालशास्त्रि**चरणानुसारिणोऽस्मत्पितामहश्री**स्नेहिरामशास्त्रि**चरणास्तु—कर्तृप्रत्ययसमभिव्याहारे' इत्यपहाय 'तृच्प्रत्ययसमभिव्याहारे'इति वक्तव्यम्, अन्यथा स्वातन्त्र्यलक्षणे कर्तुः प्रवेशेऽन्योन्याश्रयापत्तिः। फलाश्रयस्य स्वातन्त्र्यवारणाय प्रधानीभूतत्वं विशेषणम्। ननु 'चैत्रः स्थाल्यां पचती'त्यादौ स्थाल्याः कर्तृत्वं स्यात्, [ सौकर्यविवक्षायां-]-'स्थाली पचती'त्यत्र प्रधानीभूतधात्वर्थाश्रयत्वादिति चेन्न, तृच्प्रत्ययप्रकृतिभूतधातुविशिष्टविषयताश्रयीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यं, वै० 'स्वप्रयोज्यत्व' 'स्वप्रयोज्य-

णिचस्तु वाचकत्वमेव, अतस्तत्र ण्यन्तधातु—तत्प्रकृतिधातु—एतदुभयवाच्य-व्यापारयोः स्व-स्वार्थं प्रति प्राधान्यात् 'देवदत्तेन यज्ञदत्तः पाचयती'त्यादौ प्रयोज्यव्यापारा-

ॐ चिदस्थिमाला ॐ

इदं ण्यन्तेऽप्यक्षतमित्याह—**णिचस्त्विति** ।

ॐ वरवर्णिनी ॐ

प्रकारत्वासामानाधिकरण्यं'तदुभयसम्बन्धेनेति स्वीकारेणादोषात् । समन्वयो यथा—'देवदत्त ओदनं पचती'त्यत्र तृच्प्रत्ययप्रकृतीभूतपच्धातु–प्रयोज्यविषयता–विक्लित्यनुकूलव्यापारनिष्ठा विशेष्यताख्या विषयता, तदाश्रयः स एव व्यापारः, तदाश्रयत्वं देवदत्तस्य । किञ्च व्यापारनिष्ठा या विशेष्यताख्या विषयता—सा,—पच्धातुप्रयोज्य–पच्धात्वर्थविक्लित्तिनिष्ठप्रकारत्वाऽसमानाधिकरणाऽपीति—देवदत्तस्य स्वातन्त्र्यम् । एवञ्च तत्तद्धातुवैशिष्ट्यं तत्तद्विषयतायामपेक्षितमिति न दोषः । एतच्च तत्पदनिवेशं विनैव वैशिष्ट्यमहिम्नैव लभ्यते [तथा हि—]स्वपदेन यत्र यो धातुर्गृहीतस्तत्र तद्धातुवैशिष्ट्यस्य विषयतायामपेक्षितत्वात् । 'देवदत्तः स्थाल्यां पचती'त्यादौ पच्धातुवैशिष्ट्यं देवदत्तनिष्ठव्यापारवृत्तिविषयतायामिति देवदत्तस्य तत्त्वम् । 'स्थाली पचती'त्यत्र तु पच्धातुवैशिष्ट्यं स्थालीवृत्तिव्यापारवृत्तिविषयतायामिति तत्र स्थाल्याः कर्तृत्वम् ।

'स्वप्रयोज्यत्वे'त्यस्यानुपादाने पच्धातुवैशिष्ट्यं गमनानुकूलव्यापारवृत्तिविषयतायामपि स्यादतस्तदु-पादानम् । वैशिष्ट्यघटकद्वितीयसम्बन्धानुपादाने गमनानुकूलव्यापारस्य यत्र [ ण्यन्तस्थले ] फलत्वं, तत्र तादृशव्यापारवृत्तिद्वितीयव्यापारनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणविषयतायामपि गमिधातु-वैशिष्ट्यापत्तिरित्येवं व्याचक्रुः ।

**प्रयोज्यव्यापारेति** । ननु प्रयोजकव्यापाराश्रयस्य कर्तृत्वसिद्धिर्बोद्धव्या, तथा हि—स्वमते द्योत्यार्थस्य विशेषणत्वस्यैव स्वीकाराद्द्वितीयव्यापारस्य णिज्द्योत्यत्वे तस्य प्रयोज्यव्यापारे विशेषणत्वमेव स्यात्, तथा च 'चैत्रेण मैत्रः पाचयती'त्यादौ मैत्रवृत्तिव्यापारप्रयोज्यश्चैत्रवृत्ति-विक्लित्त्यनुकूलो व्यापार इत्येव स्यादिति प्रयोज्यव्यापारस्यैव प्राधान्यात्तदाश्रयस्यैव कर्तृत्वं स्यान्न तु प्रयोजकव्यापाराश्रयस्य, द्वितीयव्यापारस्य णिजर्थत्वे तु तस्यैव प्राधान्यमिति-प्रयोजकव्यापाराश्रयस्य कर्तृत्वसिद्धिरिति चेन्न; द्वितीयव्यापारस्य णिज्द्योत्यत्वेऽपि बोधे द्वितीयव्यापारस्य अनुभवबलेन विशेष्यत्वस्यैवाङ्गीकारात्प्रयोज्यव्यापाराश्रयस्य कर्तृत्वानापत्तिर्वाचकत्वपक्षे तूभयवाच्यव्यापारयोः स्वस्वार्थं प्रति प्राधान्यात्प्रयोज्यव्यापाराश्रयस्यापि कर्तृत्वसिद्धिरित्यस्य निर्दुष्टतया वक्तुं शक्यत्वात् । नन्वेव-मपि द्योत्यार्थस्य विशेष्यत्वकल्पनमेव द्योतकतावादिमते दोष इति चेदस्तु, 'चैत्रेण मैत्रः पाचयती'त्यादौ प्रयोज्यस्य चैत्रादेः कर्तृत्वानापत्त्याऽपि द्योतकतापक्षस्य दुष्टतया तस्य तथा दुष्टत्वे इष्टापत्तेरिति प्राहुः ।

केचित्तु द्योतकत्वपक्षेऽपि बोधे वाचकतापक्षाद्वैलक्षण्यमनभ्युपगच्छतां द्योतकतावादिनामयमाशयः—'हेतुमति चे'त्यत्र हेतुमत्पदं—हेतुः=प्रयोजको विद्यते यस्येति व्युत्पत्त्या प्रयोज्यव्यापारार्थकमेव । एवञ्च प्रयोज्यव्यापाररूपे हेतुमति द्योत्ये णिजिति हेतुमति चेत्यस्यार्थस्तथा च विक्लित्त्यनुकूलस्य प्रयोज्यनिष्ठ-व्यापारस्यैव णिज्द्योत्यत्वेन द्योत्यार्थस्य च विशेषणत्वेन प्रयोजकव्यापारविशेष्यक एव बोधः, स च द्योतकत्व-वादिमते इव वाचकतावादिमतेऽपीत्यविशेषः । नच प्रयोज्यव्यापारस्य णिज्द्योत्यत्वे—पचतीत्यादौ णिचो द्योतकस्याभावे प्रयोज्यव्यापाराप्रतीत्यनापत्तिरिति वाच्य, पचतीत्यादितोऽन्तर्भावितण्यर्थतामङ्गीकृत्य-व्यापारद्वयबोधस्यानुभविकतया प्रयोजकव्यापारस्य णिज्द्योत्यत्वमतेऽपि तत्र तद्बोधानुपपत्त्या द्योतकं विनापि द्योत्यबोधस्याङ्गीकारादित्याहुरुमानाथादयः ।

ननु कर्तृलक्षणे एव कर्तृत्वं प्रविष्टमित्यात्माश्रयः, कर्तृपदस्य कर्तृबोधनियामक–तिबादिसमभिव्याहृत-शप्श्यनादितत्तद्विकरणपरत्वेऽननुगमः । यद्भिन्नविकरणत्वेनानुगमस्त्वशक्यः, 'पक्ष्यते'इत्यादौ स्वसम-

श्रयस्यापि कर्तृत्वसिद्धिः । द्योतकत्वे तु नैतत्सिध्येत् । 'कारके' इति सूत्र-भाष्यात्स्वक्रियाकारकप्रवर्तकत्वं स्वातन्त्र्यमिति लभ्यते, प्रकृतसूत्रभाष्याच्चेति मञ्जूषायां निरूपितम् । **प्रकृष्टेति** । यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम् ।

**तमब्ग्रहणं किमिति** । कारकाधिकारात्करणल्युडन्त 'करणे'तिमहासञ्ज्ञया च साधकत्वे लब्धे 'साधक'ग्रहणमेव साधकतमार्थं भविष्यतीति प्रश्नः ।

**गङ्गायामिति** । 'अधिकरण'मित्यधिकरणल्युडन्तमहासञ्ज्ञयैव सिद्धे 'आधार'ग्रहण-सामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात् , एवञ्चेदं सूत्रं 'तिलेषु तैल'मित्यादावेव प्रवर्तेत, न हि गङ्गा तीरं वा सर्वावयवैर्व्याप्तं, तीरधर्मस्य घोषाधारत्वस्यात्यन्तसामीप्यात्प्रवाहे आरोपोऽत्र बोद्ध्यः ।

❀ चिदस्थिमाला ❀

प्राचां तत्र द्योतकतापक्षोऽप्युक्त एवेत्याह—**द्योतकेति** । अन्तर्भावितण्यर्थे तु प्रयोज्यस्य कर्मत्वमेव न कर्तृत्वमिति बोध्यम् ।

स्वतन्त्रपदस्य तत्रापरिभाषणादुक्तासङ्गतेः सिद्धान्तमाह—**कारक इति** । इत्थं हि तत्रोक्तं–'प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा, किम्पुनः प्रधानं ? कर्ता, कथं ज्ञायते ? कर्ता प्रधानमिति ? यत्सर्वेषु कारकेषु सन्निहितेषु कर्ता प्रवर्तयिता भवती'ति । **भाष्याच्चे**त्यस्य 'स्वेच्छाधीनप्रवृत्तिनिवृत्तिकमपि स्वातन्त्र्यमिति लभ्यते' इति शेषः । तत्र हि प्रयोज्यस्यास्वतन्त्रत्वात्कर्तृसञ्ज्ञा न प्राप्नोतीति पूर्वपक्षे तस्यापि स्वेच्छाधीनप्रवृत्तिकत्वरूपस्वातन्त्र्यं साधितम् । क्रिया=फलम् । प्राचां ग्रन्थेषु न्यूनता परिहरति–**करणेति** । अधिकरणार्थमस्या रीतेरावश्यकत्वमिति भावः । अत एवाह—**अधीति** । सिद्धे आधारस्य तत्सञ्ज्ञालाभे । आदिना 'दध्नि सर्पि'रित्यादि । प्राचां ग्रन्थासाङ्गत्यायाह—**गङ्गेति** । तच्चाद्यपक्षमुपपादयति—**तीरेति** । तादृश-

❀ विषमपदविवृतिः ❀

**असाधुत्वेति** । 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा तत्र करणंतत्तदा स्मृत'मिति । अत्र विवक्ष्यते इत्युक्त्या अतथाभूतेऽपि विवक्षया करणत्वसूचनात् ।

❀ वरवर्णिनी ❀

भिव्याहारे व्यभिचारादिति चेन्न; अनुकूलत्वेनाप्रतीयमानधात्वर्थाश्रयत्वस्यैव कर्तृत्वात् । अनुकूल्यत्वेनाप्रतीयमानत्वञ्च—प्रयोज्यत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानाश्रयत्वम् , अनुकूलत्वसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वं वा । कर्तृप्रत्ययसमभिव्याहारे च फलस्य व्यापारेऽनुकूलत्वप्रयोज्यत्वादिसम्बन्धेनान्वयात्तादृशसम्बन्धावच्छिन्नप्रकारताश्रयत्वस्यैव फले सत्त्वान्न तदाश्रयस्य कर्तृत्वमित्यवधेयम् । विस्तरस्तु—श्रीबालशास्त्रिविरचिते **शब्देन्दुशेखरजटाजूटे**, तदनुसारिण्यामस्मत्पितामहविरचितायां **त्रिपुरसुन्दर्या**-मुमानाथीये च द्रष्टव्यः, परीक्षानुपयोगित्वान्नेह तन्यते इति सङ्क्षेपः ।

ननु तमब्ग्रहणाभावे 'साधकं करण'मित्यस्य निरपायभूते'काष्ठैः पचति' 'पादाभ्यां गच्छती'त्यादौ काष्ठादौ चरितार्थतया 'धनुषा विध्यति' 'बाणेन विध्यती'त्यादावपायवति धनुरादौ 'ध्रुवमपाये'इत्यनेनापादानसञ्ज्ञा निरवकाशत्वात्स्यादतस्तमब्ग्रहणं, तत्सत्त्वे तु क्रियासिद्धौ प्रकृष्टोपकारकतया'धनुषा विध्यती' त्यादौ करणसञ्ज्ञा सिध्यतीति क तमब्ग्रहणवैयर्थ्यमित्यत आह—**कारकाधिकारादिति** । एवञ्च तमब्ग्रहणं विनाऽपि 'धनुषा विध्यती'त्यादौ करणसञ्ज्ञा स्यादेवेति तमब्ग्रहणवैयर्थ्यमित्याशयः ।

**सर्वावयवेति** । करणसञ्ज्ञास्थले इव तुल्यन्यायादधिकरणसञ्ज्ञास्थलेऽपि प्रकर्षलाभापत्तौ'गङ्गायां घोषः'

यदा तु व्यवहितो गङ्गातो घोषस्तदा गङ्गाशब्दस्य तत्तीरे लक्षणा। तमग्रहणेन 'शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञाप्यते इति—गौणाधारस्याप्यधिकरणसञ्ज्ञा सिद्ध्यति। एवञ्च 'गङ्गायां गावः' इत्यप्युदाहरणम्। सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात्। गौणमप्याधारत्वादि सप्तम्यादिशक्यमेवेति बोध्यम्। इदं प्रकृतसूत्रे भाष्ये स्पष्टम्।

यदि तु—महासञ्ज्ञया तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरितार्थं, साधकशब्दस्य व्यापारानन्तरमव्यवधानेन फलोत्पादस्तत्र शक्तिः, आधारशब्दस्य चाध्रियते-

---

❀ चिद्स्थिमाला ❀

सामीप्ये एवाधारताप्रतीतिर्न तु व्यवहितसामीप्ये इति 'संहितायां'मिति सूत्रे भाष्ये स्पष्टत्वादिति भावः।

द्वितीयपक्षमुपपादयति—**यदा त्विति**। उभयथा तमग्रहणफलमाह—**तमेति**। एतेन लक्षणापक्षे न फलं तीरे घोषाधारत्वस्य सत्त्वात्, तथा च तत्र पक्षे तमग्रहणं चिन्त्यप्रयोजनमिति शास्त्रिदण्ड्याद्युक्तमपास्तं, तदापि सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात्। 'अधिकरणं किमाचार्यो न्याय्यं मन्यते? यत्र कृत्स्न-आधारात्मा व्याप्तो यथा 'तिलेषु तैलं' 'दध्नि सर्पि'रितिभाष्येण तथैव लाभादिति भावः। अत एव तावत्पर्यन्तं भावनकृतम्। प्राचां भ्रमनिरासाय मूलीयन्यूनतां परिहरति—**एवमिति**। एतदर्थमाह—**सर्वेति**। तदसाङ्गत्यायैवाह—**गौणमिति**। इदं=निरुक्तपक्षरूपम्। पक्षान्तरमाह—**यदि त्विति**। साधारणमाह-**महेति**। युक्त्यन्तरमाह—**साधकेति**। संसिद्ध्यर्थक 'साध'धातुनिष्पन्नत्वादिति भावः। रूढ्यर्थमाह—

---

❀ वरवर्णिनी ❀

'गङ्गायां गावः'इत्यादावधिकरणसञ्ज्ञानापत्तिरित्याशयः। **सामर्थ्यगम्य इति**। कारकप्रकरणे प्रकर्षार्थप्रत्ययं विना 'अधिकरण'-'करणे'त्यादिमहासञ्ज्ञाकरणसामर्थ्यलभ्यः प्रकर्षो नाश्रीयते इत्यर्थः। **सिध्यतीति**। एवञ्च करणसञ्ज्ञायां प्रकर्षलाभाय तमब्ग्रहणं चरितार्थमित्यपि बोध्यम्। मुख्याधारत्वाभावात्=गङ्गाया मुख्याधारत्वाभावात्।

केचित्तु—यदि'करणाधिकरणयोश्चे'तिल्युड्विधायके करणपदं लोकव्यवहारादेव गृहीतशक्तिकं भवेत्तदेदं युज्येत, तथा सति च लोकव्यवहारादेव तत्सूत्रस्थकरणपदे साधकतमनिरूपिता शक्तिर्गृह्येतेति—महासञ्ज्ञाबलादेवान्वर्थतया करणल्युडन्तकरणशब्देनैव साधकतमस्यापि लाभो भविष्यतीति—साधकग्रहणमपि व्यर्थमेव। न चोद्देश्यपरिचयाय 'साधकतम'ग्रहणमिति वाच्यं, तथा सति 'अर्थः करण'मित्येतावताप्युद्देश्यलाभसम्भवात्। एवमाधारोऽधिकरणमित्यत्राधारपदमपि निरर्थकमेव, 'करणाधिकरणयोश्चे'त्यत्राधिकरणपदस्य शक्तिग्राहकमूर्धन्यलोकव्यवहारादेव गौणमुख्यसाधारणाधिकरणपरतयाऽऽधारोऽधिकरणमित्यत्राधिकरणपदेनाऽपि तथा लाभसम्भवादित्याहुरुमानाथजगन्नाथशास्त्रिप्रभृतयः।

**परे** तु प्रकृतसूत्रभाष्यप्रामाण्याल्लोकव्यवहारस्य विवक्षाधीनत्वेन सङ्कीर्णस्योपलम्भाच्च न केचिदुक्तरीत्या साधकपदवैयर्थ्यमिति यथावस्थितमेव रमणीयमित्याहुः। विस्तरस्तु श्रीबालशास्त्रिचरणाभ्यूहिते **शब्देन्दुशेखरजटाजूटे** तदनुसारिव्याख्यानान्तरेषु चानुसन्धेयः, परीक्षानुपयोगित्वान्नेह तन्यते।

ननु आधारग्रहणसामर्थ्यादस्तुन आधारस्यैवाधिकरणसञ्ज्ञा स्याच्चारोपिताधारस्य गङ्गादेरित्यत आह—**गङ्गायां गाव इतीति**। ननु 'करण'मित्यादिमहासञ्ज्ञया तत्तदर्थनिरूपितशक्तिग्रहो न मन्दाधिकारिसाधारण इत्यत आह—**यदि त्विति**।

यस्मिन्निति व्युत्पत्त्या—कर्तृकर्मणोर्धारणक्रियां प्रति सर्वावयवव्याप्त्या-य आधारस्तत्र शक्तिरित्युच्यते, तदा-उक्तप्रयोगादिसाधनाय कारकप्रकरणे उद्देश्यवाचके पदे स्वरितत्व-प्रतिज्ञया गौणाधारादेर्ग्रहणं वाच्यम्, स्वरितेनाधिकं कार्यमित्यर्थात्। तमपा तु प्रकृते तद्भावो बोध्यते। एवञ्च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयान्तप्रयोगस्या-साधुत्वबोधनं तमप्फलम्। एतत्तमब्बलादेवान्यत्र स्वरितत्वमिति ज्ञायते इति दिक्। स्पष्टञ्चेदं 'स्वरितेने'ति सूत्रे भाष्ये।

**रामेणेति**। कर्तृतृतीयायाः—कर्तृत्वादिशक्तिमान्, कर्तृक्रियाभावसम्बन्धश्चार्थः। करणतृतीयायाः—करणत्वशक्तिमान्, क्रियाकरणभावः सम्बन्धश्चार्थः। तच्छक्तिमत्त्वञ्च व्यापारवत्त्वेव। रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः।

**प्रकृत्यादिभ्य इति**। इदं—यथाप्रयोगं सर्वविभक्त्यपवादः।

**दिवः कर्म च**। चेन—सञ्ज्ञयोः समावेशः।—तेन दिवः साधकतमस्य शक्ति-द्वययोगो बोध्यते।—तेन 'अक्षैर्देवयते' इत्यत्र तृतीया परत्वात्, कर्मत्वाच्च कर्मत्व-प्रयुक्तपरस्मैपदाभावः।

अत्र विप्रतिषेधशास्त्रबलात्तृतीयैव शक्तिद्वयबोधिका। यदाऽक्षाणां फला-श्रयत्वसमानाधिकरणकर्मत्वविवक्षा तदा 'अक्षान्दीव्यती'त्यादि साधु। 'अक्षाणां

---

ॐ चिदस्थिमाला ॐ

**कर्त्रिति**। अत्रापि पक्षे मूलं सङ्गतमेवेत्याह—**एतदिति**। सर्वथा 'गौणमुख्ये'तिन्यायोपन्यासः प्राचामसङ्गत एव, तस्य पदकार्यविषयत्वात्, विशिष्टरूपोपादाने एव तत्प्रवृत्तेश्च, तदाह—**दिगिति**।

इदं=पक्षान्तरम्। प्राचां ग्रन्थानामसाङ्गत्याय सिद्धान्तमाह—**कर्त्रिति**। अनतिप्रसङ्गायाह—**तच्छक्तीति**। 'यथाप्रयोग'मिति पाठः। पर्यायस्यानुवृत्त्या एकसञ्ज्ञाधिकारेण च सिद्धेराह—**चेनेति**। हरदत्तादिसकलप्राच्यग्रन्थासाङ्गत्याय सिद्धान्तमाह—**तेनाक्षैरिति**। द्वितीयाऽभावायाह—**परत्वादिति**। **परस्मैपदाभावः**—'अणावकर्मका'दिति प्राप्तेत्यादिः। नन्वेवं कथं तच्छक्तिबोधोऽत आह—**अत्रेति**। नन्वेवम्—'अक्षान्दीव्यती'ति नैव स्यादत आह—**यदेति**। नन्वेवं कथं 'मनसा

---

ॐ वरवर्णिनी ॐ

**सर्वविभक्तीति**। 'गोत्रेण गार्ग्य' इत्यत्र गोत्राभिन्नो गार्ग्य इत्यर्थे **प्रथमा** प्राप्नोति, गोत्रसम्बन्धि-गार्ग्यत्ववानित्यर्थे **षष्ठी** प्राप्नोति। 'द्विद्रोणेन धान्यं क्रीणाती'त्यादौ द्विद्रोणाभिन्नं धान्यं क्रीणाती-त्यर्थे **द्वितीया** प्राप्नोति। 'गोत्रेण गार्ग्याय गां ददाती'त्यादौ **चतुर्थी** प्राप्नोति। 'वर्णेन गौराद्धावतो-ऽश्वात्पतती'त्यादौ **पञ्चमी** प्राप्नोति। 'प्रकृत्या सुन्दरे वाजिनि तिष्ठती'त्यादौ **सप्तमी** प्राप्नोती-त्यवधेयम्।

भाष्यानुसारिणस्तु—'गोत्रेण गार्ग्य' इत्यत्र 'कृत' इत्यध्याहृत्य गोत्रेण कृतो गार्ग्य इत्यर्थेनाध्याहृत-क्रियाकरणतया तृतीया, समेनैतीत्यादावपि समेन पथा एतीत्यर्थेन करणे तृतीयेति वार्तिकमिदं प्रपञ्चार्थ-मित्याहुः। विस्तरस्तु भाष्यादावनुसन्धेयः। सञ्ज्ञयोः=कर्तृकर्मसञ्ज्ञयोः।

'सञ्ज्ञाद्वयसमावेशात्तृतीयाद्वितीये पर्यायेण भवतः, अत एव 'मनसा—देव' इतितृतीया' इति प्राचां मतं कटाक्षयति—**कर्मत्वेति**। नन्वेवं प्रकृते द्वितीयाघटितप्रयोगाणां का गतिरत आह—**यदेति**। 'कर्तुरीप्सित'सूत्रेण कर्मत्वेन विवक्षायां द्वितीयायाः साधुत्वा-दिति भावः। कृद्योगे तृतीयातोऽपि परत्वात्कर्तृकर्मणोः कृतीति षष्ठीत्याह—**अक्षाणामिति**।

देविते'त्यादौ तृतीयातः परत्वात्कृद्योगलक्षणा षष्ठी । 'मनसा-देव' इत्यादौ हेतु-तृतीयान्तेन पचाद्यजन्त'देव'शब्दस्य समासः ।

न च शक्तिद्वयस्वीकारेऽत्र कर्मणि लकारे करणत्वशक्तेरनुक्तत्वेन तृतीयापत्तिरिति वाच्यम्, 'अपादानमुत्तराणी'त्यस्योदाहरणे 'गां दोग्धी'त्यादौ तत्र कर्मणि लकारे पञ्चम्यापत्तिवारणायैव द्रव्यगतानेकशक्तिमद्भ्ये एकस्या अभिहितत्वे परस्या अपि तद्वत्प्रकाशेनाक्षतेः ।

'एकैव शक्तिः सञ्ज्ञाद्वयोपयोगिनी'ति तु चिन्त्यम्, कर्मादिपदानां कर्मत्वादि-तत्तच्छक्तिरूपेण बोधकतया तयोर्भेदस्यैवौचित्यादिति मञ्जूषायां विस्तरः ।

**फलप्राप्तिरिति** । तस्याञ्च सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति-'फलप्राप्ति'शब्देन तत्पूर्वकस्त्याग उच्यते । त्यागस्य च फलप्राप्तिर्व्यङ्ग्येत्यन्यत्र विस्तरः । **नायात इति** । अनेन फलाप्राप्तिरेव स्फुटमुच्यते ।

**सहयुक्ते** । 'पृथग्विनानानाभि'रितिवत् 'सहेने'त्येव सिद्धे 'युक्त'ग्रहणं शब्दविशेषा-नादरेणार्थयोगे भवत्वित्यर्थमित्याह-**सहार्थेनेति** । अत एव क्वचिच्छब्दयोगं विनापि भवति तदाह-**विनापीति** ।

---

❀ चिद्स्थिमाला ❀

देव' इत्यादि हरदत्तादिप्रयोगस्तत्रापि षष्ठ्यौचित्यादत आह—**मनसेति** । 'तत्पुरुषे कृती'तिबहुलग्रहणादलुक् । वाक्यं तूचितम् । **पत्तिरिति** । एवं सति सञ्ज्ञयोः स्वत इव कार्यद्वारकस्यापि विरोधस्याभावेन परत्वाविषय-तया समावेशापत्त्या'ऽपादानमुत्तराणी'त्यादिभाष्यासङ्गत्यापत्तिरेवेति तथाकल्पनमावश्यकमिति भावः । सकलतदुक्तिं खण्डयति—**एकैवेति** । यथाश्रुतासङ्गतेराह—**तस्याञ्चेति** ।

अनतिप्रसङ्गायाह—**तदिति** । एतावता विशिष्टं शक्यमिति भ्रमनिरासायाह—**त्यागस्येति** । यत्तु क्तादिना त्याग उक्त इति तन्न; अतीतत्वप्रतीतावपि निवृत्तिरूपत्यागाप्रतीतेस्तदाह—**इत्यन्यत्रेति** । गुरुशेखरादावित्यर्थः । यथाश्रुतमूलासङ्गतिं परिहरति—**पृथगिति** । नन्वेवमुत्तरग्रन्थासङ्गतिरत आह—

❀ विषमपदविवृतिः ❀

**षष्ठीति** । इदमयुक्तम् । कर्तृसाहचर्येण साक्षाद्धात्वर्थाश्रये कर्मण्येव षष्ठीप्रवृत्तेः । अत एव 'स्तोकं पाक' इत्यादौ न षष्ठी । करणं तु न धात्वर्थाश्रयः । धात्वर्थे भेदेनान्वयि कर्म गृह्यते इति तु न युक्तम्, 'मासं शयिता' 'कुरूनधिशयिता' इत्यादौ षष्ठ्यापत्तेः । 'मासं शयिते'त्यत्र आप्नोत्यर्थस्य कल्प्यमानत्वेन 'शेते' इति स्वाभाविकार्थस्य मासो नाश्रयः । तेन 'मनसा देवी'त्यादौ करणे तृतीया

---

❀ वरवर्णिनी ❀

नन्वेवं 'मनसादेव' इत्यत्र षष्ठी दुर्वारेत्यत आह—**हेत्विति** । एवञ्च कर्तृकर्मबोधकत्वात्र मनसःषष्ठी प्राप्तिरित्याशयः । **समास इति** । 'मनसः सञ्ज्ञाया'मित्यलुगित्यपि बोध्यम् । अत्र='अक्षा दीव्यन्ते' इत्यत्र ।

**भेदस्यौचित्यादिति** । **श्रीराजारामशास्त्रिचरणास्तु**-शक्तिरेकैव, तत्र च करणत्वशक्तित्वं कर्मत्वशक्तित्वमिति च रूपद्वयं भिन्नं भिन्नं, तत्र करणत्वशक्तित्वेन बोधे करणसञ्ज्ञा, कर्मत्वेन बोधे कर्मसञ्ज्ञेति विवेक इति प्राहुरिति-**श्रीबालशास्त्रिचरणाः** ।

**सहयुक्ते** । प्रधानत्वं-शाब्दगुणाद्यन्वयित्वम्, अप्रधानत्वञ्च-शाब्दगुणाद्यन्वयित्वाभाववत्त्वम् । 'पुत्रेण सह स्थूलः पिते'त्यादौ मुख्योदाहरणे पितुः शब्दतः स्थौल्यादिगुणान्वयित्वात्प्राधान्यम् । पुत्रादेस्तु

न्यायसिद्धेऽर्थे लिङ्गमप्याह—**वृद्ध इति**। सहार्थः—साहित्यं, तच्च स्वसमभिव्याहृत-क्रियादिसमानकालिकतक्रियादिमत्त्वं, क्वचित्समानदेशक्रियावत्त्वम्। अत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे 'तिलैः सह माषान्वपती'ति भवति।

यद्यपि 'पुत्रेण सहागत' इत्यादौ आगमनक्रियाकर्तृत्वादेव पुत्रात्तृतीया सिद्धा तथापि 'पुत्रेण सह स्थूलः' इत्यादि—अस्य मुख्यमुदाहरणमिति भाष्ये स्पष्टम्।

**अङ्गेन**—अवयवेन। इदं सन्निधानलब्धम्। **अङ्गिनः**—अवयविनः। सूत्रे—अङ्गशब्दोऽर्शआद्यजन्तो व्याख्यानादिति भावः।

**अक्ष्णा काण इति**। यद्यप्यक्ष्येव काणं, तथाप्यवयवधर्मस्य समुदाये आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति ध्येयम्।

यद्यपि 'काण'शब्दोऽक्षिगतविकारवाचक एव तथापि 'द्वौ विप्रा'वितिवत्

❀ चिदस्थिमाला ❀

**न्यायेति**। आदिना गुणद्रव्ये। **मत्त्वमिति**। तत्समनियतोऽखण्डोपाधिर्वा। आदिना—'शिष्येण सहोपाध्यायस्य गौ'रिति। अर्थान्तरनिरासाय प्रसिद्धत्वादाह—**अवयवेनेति**। येन गुणेनार्थात् गुणिनो विकार इत्येव सिद्धेऽङ्गपदवैयर्थ्यमूलकादङ्गशब्दोऽयं समुदायशब्द इति भाष्याच्चाह—**व्याख्येति**। तदवच्छिन्ने=जीवे। फलाभावादाह—**निरूढ इति**। **एवेति**। तथा चाक्षिशब्दप्रयोगो व्यर्थः। **द्वाविति**। 'द्वावानय' 'कौ द्वौ

❀ विषमपदविवृतिः ❀

साध्वेव। **साहित्यमिति**। विद्यमानत्वमपि सहशब्दार्थः। तेन 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'त्यत्र तृतीया सिद्धा। पुत्राणां विद्यमानत्वेऽपीति तदर्थः। **समानकालिकेति**। तात्कालिकेतिवत्सामानकालिकेति युक्तम्। **क्रियादिमत्त्वमिति**। 'पुत्रेण सहागत'इत्यादौ पुत्रकर्तृकागमनक्रियासमानकालिकागमनकर्ता पिता आगत इति बोधः। केचित्तु समभिव्याहृतक्रियासमानकालिकत्वमेव सहार्थः, तच्च आगमनक्रियान्वयि, अत एव 'सहकृत्वा' 'सहयुध्वे'ति सिद्धमित्याहुस्तन्न, 'सपुत्रं पितरं हन्ती'ति प्रयोगानापत्तेस्तस्मात् सहार्थस्य पितर्येवान्वयः, अप्रधाने इति तु 'पुत्रेण सह पितुस्स्थौल्य'मित्यत्र पितृपदात्तृतीयावारणाय। पुत्रनिष्ठस्थौल्यसमानकालिकस्थौल्यवत्पितुः स्थौल्यमिति बोधः। **कर्तृत्वादेवेति**। सहार्थघटकमप्यागमन धात्वर्थवत्साध्यत्वेन भासत इति भावः। **मुख्यमुदाहरणमिति**। ननु 'तिलैः सह माषान् वपति' 'पुत्रेण सह पितरं हन्ती'त्यत्र कर्मत्वेन द्वितीया प्राप्नोतीति तदपि मुख्यमुदाहरणमिति चेदस्तु।

❀ वरवर्णिनी ❀

स्थूलत्वादिभिरन्वयो न शाब्दः, किन्त्वार्थ एवेति शाब्दगुणाद्यन्वयित्वाभावादप्रधानत्वमिति मिश्राः।

पुत्रादेः सहशब्देन स्थूलादिपदसमभिव्याहारबलादेव स्थूलत्वेनान्वय इति न शाब्दस्तस्य स्थूलत्वेनान्वय इत्याशयः।

यद्यपि 'पुत्रेण सहागतः पिते'त्यादौ पुत्रशब्दार्थस्य साहित्येऽन्वयेऽर्थात्स्थूलत्वादिभिरन्वयस्तथापि न शाब्दबोधविषयीभूतं तदन्वयित्वं 'पुत्रसाहित्यवान् पिताऽऽगमनकर्त्ते'त्येव बोधात्, एवञ्च तत्र शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः [ —शाब्दगुणक्रियाद्यन्वयित्वाभावः। ]

'एकेनैव सुपुत्रेण सिंही स्वपिति निर्भया।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी॥'—

इत्यादौ विद्यमानतावाचि'सह'शब्दयोगे पुत्रशब्दार्थे क्रियान्वयित्वमेव नेति विशेष्याभावकृतो विशिष्टाभाव इति तत्राप्यनेन तृतीयेति मिश्राः। विस्तरस्तु व्युत्पत्तिवादादौ द्रष्टव्यः।

'अक्ष्णे'ति प्रयोगस्य साधुत्वम् । ईदृशशरीरस्येदृशानां साधुत्वे चेदमेव मानम् ।

षष्ठ्यपवादोऽयमित्याह—**अक्षिसम्बन्धीति** । **अङ्गविकारः किमिति** । अङ्गग्रहणप्रयोजनप्रश्नः । **अक्षि काणमिति** ।—प्रथमां बाधित्वाऽत्रैव स्यात् । लेशतोऽपि दर्शनसामर्थ्यहीनत्वं—काणत्वम् ।

'इत्थं'शब्दः प्रकारमात्रपरः । प्राप्त्यर्थाद्भुवः कर्तरि क्तः । कर्मविभक्त्यन्तेनेत्थंशब्देन 'भूत'शब्दस्य समास. । 'लक्षण'शब्दः करणसाधनः, तस्य कर्मषष्ठ्यन्तेनेत्थंभूतशब्देन समास इत्याह—**कश्चिदि**त्यादि ।

**जटाभिरिति** । यद्यपि ताभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां करणत्वादिदं सिद्धं,

ॐ चिदस्थिमाला ॐ

विप्रा'विितवत्सामान्योपक्रमेऽक्ष्णेत्युक्ते भवत्याकाङ्क्षा—'पश्यति काणो वे'ति तत्रान्यनिवृत्तये तत्प्रयोगे न दोष इत्यर्थः ।

इदं सूत्रं विशिष्टनिरासायाह—**अङ्गेति** । असत्यङ्गग्रहणे आह—**प्रथमामिति** । येन गुणेन—काणत्वादिनाऽवयवस्य विकारो लक्ष्यते ततस्तृतीयेति सूत्रार्थादिति भावः 'अतिशायन' इति सूत्रभाष्यसिद्धान्तमाह—**लेशतोऽपीति** । अवतरणमाह—**इत्थमिति** । लक्षणया आह—**प्रकारेति** । मात्रपदेन प्रकृत्यर्थव्यवच्छेदः । **साधन इति** । एतेन 'सहैव पुत्रै'रित्यादौ विद्यमानतावाचिसहशब्दयोगे 'इत्थम्भूते'ति तृतीयेत्यपास्तम् ।

प्राचोक्तं सूत्रवैयर्थ्यं खण्डयति—**यद्यपीति** । ननु तदविवक्षायां षष्ठीबाधस्य हेतुतृतीययैव सिद्धिरत आह—

ॐ वरवर्णिनी ॐ

साहित्यञ्च—स्वसमभिव्याहृतशब्दबोध्यक्रियादिविशिष्टक्रियादिमत्त्वं, वै० 'स्वसजातीयत्व' 'स्वविशिष्टत्वै'तदुभयसम्बन्धेन । वै० 'स्वसमानकालिकत्व' 'स्वसमानदेशवृत्तित्वै'तदन्यतरसम्बन्धेनेति शब्देन्दुशेखर **त्रिपुरसुन्दर्या**मसत्पितामहश्रीचरणाः ।

**येनेति** । इदमत्रावधेयं—काण-खञ्ज-कुब्जादिशब्दा यदोपचारादिनाऽङ्गिपरास्तदाऽङ्गवाचकादक्ष्यादिशब्दात्तृतीया, यथा—'अक्ष्णा काणः' 'पादेन खञ्जः' इत्यादौ । यदा तु काणादिशब्दा अङ्गपरास्तदा त्वङ्गवाचकादक्ष्यादिपदात्प्रथमैव, यथा—'अक्षि काणमस्य' 'पादः खञ्जोऽस्ये'त्यादौ । एतच्चार्थ—आवजन्ताङ्गपदबलादेव लभ्यते, तदभावे तु यदाङ्गऽपरस्तदैव स्यादित्याह—**अत्रैवेति** । 'अक्षि काणमस्ये'त्यादावयवपरकाणादिशब्दघटिते एवेत्यर्थः । विकृताऽङ्गरूपशक्यार्थपरकाणादिग्रहणसम्भवे तादृशाङ्गविशिष्टरूपलक्ष्यपरकाणादिपदसमवधाने तत्प्रवृत्तेरनौचित्यादत्रैव स्यादिति भावः ।

**इत्थम्भूतेति** । एवञ्च—तापसत्वादिरूपप्रकारविशिष्टस्य तापसादेर्ज्ञानं येन जटादिना तद्वाचकजटादिपदरूपलक्षणवाचकात्तृतीयेति सूत्रार्थः फलितः । एवञ्च 'जटाभिस्तापस' इत्यत्र जटापदोत्तरैतत्सूत्रविहिततृतीयायाः स्वज्ञानजन्यज्ञानविषयत्वमर्थः, तस्य तापसत्वादिविशिष्टेऽन्वयः । वस्तुतस्तु साङ्ख्यमते ज्ञापकत्व-स्थापकत्वोत्पादकत्वादिभेदेन त्रिविधस्यापि हेतोः—'हेतौ' इति तृतीयाविधायके सूत्रे हेतुपदेन ग्रहणमावश्यकम्, अत एव धूमज्ञानजन्यज्ञानविषयो वह्निरित्यर्थतात्पर्येण 'धूमेन वह्नि'रित्यादिवाक्यानां, स्वजन्यस्थित्याश्रयो नर इत्यर्थतात्पर्येण 'पृथिव्या नरः' इत्यादिवाक्यानां, स्वजन्योत्पत्त्याश्रयो घट इत्यर्थतात्पर्येण 'दण्डेन घटः' इत्यादिवाक्यानाञ्च प्रामाणिकत्वं सिद्धम् । एवञ्च स्वज्ञानजन्यज्ञानविषयत्वार्थकतृतीयाया 'हेतौ' इत्यनेनैव विधानस्य सिद्धेस्तदर्थकत्वे सूत्रस्यैव वैयर्थ्यापत्तिरतो लक्षणपदं भावप्रत्ययान्ततया ज्ञानपरम् । इत्थम्भूतपदं तूत्तरार्थमेव, इत्थम्पदार्थप्रकारश्चात्र जटादिरेव, एवञ्च जटादिरूपप्रकारविशिष्टतापसादिविषयकज्ञानजनकात्

तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम् ।

इत्थम्भूतस्य यत्र लक्षणवाचकात्पृथगुपस्थितिरेव तत्रैवानेन तृतीया । तेन 'कमण्डलुपाणिं छात्रमद्राक्षी'दित्यादौ कमण्डलुपदान्न तृतीया। न चोत्पन्नायास्तृतीयायाः 'सुपो धातु'–इति लुगिति वाच्यं, कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकानवयवत्वादिति कैयटे स्पष्टम् । कमण्डलुः पाणौ यस्येति–बहुव्रीहिः ।

परे तु—'कमण्डलुपाणि'शब्दादत्र तृतीयापत्तिः, कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात् ।

तदुक्तम्—'अनुर्लक्षणे' इति सूत्रे भाष्ये–'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवती'ति । 'तदेवे'त्यस्य कमण्डलुपाणित्वमेवेत्यर्थः । कमण्डलोर्लक्षणत्वे हि 'स एवे'ति वदेत् ।

किञ्च–'तन्मध्यपतित'न्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन तस्य तदनवयवत्वोक्तेरनौचित्येन लुको दुर्वारत्वम् ।

अत एव 'नरम्मन्य'इत्यादाविजन्तस्योत्तरपदपरत्वाय पूर्वं सुपो लुकि उत्पन्नस्याऽमः 'सुपो धातु'–इति लुक्—अम्विधिसामर्थ्येन वारितः–'इच एकाचोऽ'मिति सूत्रे भाष्ये इत्याहुः ।

ॐ विजया ॐ

इत्याहुरिति । परे तु—परे त्वित्यादिनोक्तं सर्वं चिन्त्यमेव, तथाहि—कमण्डलुशब्दस्य लक्षणवाचकत्वेन ततः तृतीयापत्तिर्दुरुद्धरैव । 'स चेति वदे'दिति यदुक्तं, तदप्ययुक्तम्—'उद्देश्यप्रति-

ॐ चिदस्थिमाला ॐ

लक्ष्येति । प्राचामनुरोधेन विशेषमाह—इत्थमिति । अपृथगुपायोगद्वादित्वमभिप्रेत्याह[?]कमण्डेति । 'कैयटे' इति सूचितारुचिं प्रकटयन् सिद्धान्तमाह—परे त्विति । 'कमण्डे'ति बहुव्रीहिः । तस्यैवेति । विशिष्टस्यैव लक्षणवाचकत्वादित्यर्थः । अभ्युपेत्याप्याह—किञ्चेति । अत्र भाष्यसम्मतिमाह—

ॐ विषमपदविवृतिः ॐ

न तृतीयेति । कमण्डलुपाणिपदार्थस्य लक्ष्यलक्षणभावेन छात्रेन्वयविवक्षायामिदम् । 'सविशेषणे विधिनिषेधा'विति न्यायेन विशेषणे कमण्डलौ लक्षणत्वपर्यवसानसम्भवात् । लुको दुर्वारत्वमिति । उरण्सूत्रस्थम्—अभ्यासे 'ववृते' इत्यत्र हलादिःशेषो न सिध्यतीति भाष्यं, तत्रत्य विवरणग्रन्थश्च

ॐ वरवर्णिनी ॐ

जटादिपदात्तृतीयेति सूत्रार्थः । वैशिष्ट्यमात्रं तृतीयार्थः । जटाविशिष्टतापस इत्येव च बोधः । एवञ्च 'घटत्वेन वह्निर्नास्ति' 'रजतत्वेन रङ्गं जानाती'त्यादौ घटत्वादिपदोत्तरा प्रतियोगित्व–प्रकारित्वादिरूपवैशिष्ट्यार्थिका तृतीया अनेनैव ; वैशिष्ट्यार्थकत्वायानेकेषां प्रकृत्यादि–गणे पाठे गौरवापत्तेः । जटाज्ञानजन्यज्ञानविषयत्वं, तापसत्वविशिष्टस्य वस्तुतो भवति नैतावताऽसौ कस्याप्यर्थ इति प्राहुः श्रीदण्डिभट्टादयः ।

इत्थंभूतस्य लक्षणवाचकात्पृथगुपस्थितिरेवेति । लक्षणवाचकपदाप्रयोज्या यत्र इत्थंभूतस्योपस्थितिरित्यर्थः ।

आहुरिति । वस्तुतस्तु यदुक्तं 'कमण्डलोर्लक्षणत्वे स एव वदे'दिति, तदयुक्तम्—'उद्देश्यप्रतिनिर्देश्ययो-

❀ विजया ❀

निर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाग्भवती'ति सिद्धान्तेन लक्षणशब्दस्य नपुंसकलिङ्गतया 'तदेव लक्षण'मित्यस्योपपन्नत्वात् । यदपि 'तन्मध्यपतितन्यायेने'त्यादि, तदपि चिन्त्यं, तथाहि—'तद्विशिष्टत्वं तन्मध्यपतितत्वं, वै० 'स्वघटकावधिकपूर्वत्व' 'स्वघटकावधिकोत्तरत्व' 'स्वपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वै'तत्रितयसम्बन्धेनेत्यवश्यं स्वीकार्यम्, अन्यथा ज एव जकः, जकं रातीतीत्येवं निष्पन्नस्य'जकरा'शब्दस्य ['जनरा'शब्दादेश्च] जराशब्देन ग्रहणं स्यात् । एवञ्चात्र तृतीयायाः 'कमण्डलुपाणि'पदपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वाभावेन निरुक्ततन्मध्यपतितत्वाभावेन लुकोऽप्राप्त्या तस्य दुर्वारत्वोक्तेरसङ्गतिः स्पष्टैव । न चैवं'नरम्मन्य'इत्यत्राऽमोऽपि निरुक्ततन्मध्यपतितत्वाभावेन लुकोऽप्राप्तेर्विधानसामर्थ्येन तद्वारणपरम्—'इच एकाचोऽ'मिति सूत्रस्थं भाष्यमसङ्गतं स्यादिति वाच्यं, 'स च स्वाद्यन्तवत्'इत्यतिदेशेन तस्यापि प्रातिपदिकत्वावयवत्वस्य लाभेन लुकः प्राप्त्याऽम्विधानसामर्थ्येन लुको वारणस्य भाष्योक्तस्य सङ्गतेः सुवचत्वादित्यस्मत्तातपादाः श्रीस्नेहिरामशास्त्रिणः प्राहुः ।

अन्ये तु 'नरम्मन्य'इत्यत्र खिदन्ते उत्तरपदे पूर्वपदस्येजन्तस्येत्यर्थात्पूर्वोत्तरपदयोरुद्देश्यतया-समुदायस्य च तदनतिरेकात्तन्मध्यपतितन्यायप्राप्तिरस्त्येवेत्याहुः ।

श्रीदण्डिभट्टास्तु–कमण्डलुपाणिशब्दात्तृतीयां बाधित्वा'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'तिपरिभाषणाद्द्वितीयाया एव प्रवृत्तेः कैयटोक्तमेव समीचीनम् । न चा'नुर्लक्षणे'इतिसूत्रस्थभाष्यविरोधः, तत्र हि 'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षण'मित्युक्तम् । भवदुक्तरीत्या तु 'स एव लक्षण'मित्युक्तं स्यादिति वाच्यं, सर्वनाम्नामुद्देश्यप्रतिनिर्देश्यगतलिङ्गबोधकत्वेन प्रकृते लक्षणशब्दस्य नपुंसकत्वेन 'तदेवे'ति कथनस्य समञ्जसत्वात् ।

न च कमण्डलुशब्दादुत्पन्नाया विभक्तेस्तन्मध्यपतितन्यायेन तृतीयाविशिष्टस्य समासग्रहणेन ग्रहणाल्लुकि न दोष इति वाच्यं, 'स्वघटकाव्यवहितपूर्वत्व' 'स्वघटकाव्यवहितोत्तरत्व''स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वै'तत्रितयसम्बन्धेन यत्किञ्चित्समुदायविशिष्टत्वरूपतन्मध्यपतितत्वस्य-अभावेन तृतीयाविशिष्टस्य समासग्रहणेनाग्रहणाल्लुकोऽप्राप्तेः ।

न च'नरम्मन्य'इत्यादौ त्वदुक्ततन्मध्यपतितत्वस्याभावेन लुग्विधानसामर्थ्यादमो लुङ्न भवतीति भाष्यविरोध इति वाच्यं, वै० 'स्वघटकाव्यवहितपूर्वत्व' 'स्वघटकाव्यवहितोत्तरत्व' 'स्वनिष्ठोद्देश्यदलीयविषयतानिरूपितविधेयताश्रयत्वै'तत्रितयसम्बन्धेन स्वविशिष्टत्वं तन्मध्यपतितत्वमिति परिष्कारेणादोषात् ।

तथा हि–'इच एकाच' इतिसूत्रे उत्तरपदे इत्यधिकारसत्त्वेनोत्तरपदशब्दस्य समासचरमावयवे रूढत्वात्, समासवैशिष्ट्यमतिवर्तत इति तन्मध्यपतितन्यायेन लुक् प्राप्नोतीति 'लुङ्न भवती'ति भाष्यसङ्गतिरित्याहुः ।

---

❀ वरवर्णिनी ❀

रैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाग्भवती'त्यस्य भाष्य एवोक्ततया लक्षणशब्दानुरोधेन नपुंसकनिर्देशात् । यदुक्तं 'तन्मध्यपतित'न्यायेन लुको दुर्वारत्वमिति, तदपि न, तन्मध्यपतितस्य तत्समुदायनिष्ठोद्देश्यतानिरूपितविधेयताश्रयस्यैव तद्ग्रहणेन ग्रहणस्य तन्न्यायेन बोधनात्, अत एव जनराशब्दे न जरस् । नापि–'ग्रामं प्राप्तः' इत्यादौ 'प्राप्तापन्ने'ति समासः, तद्घटकस्योद्देश्यत्वेऽपि समुदायस्यानुद्देश्यत्वात् । 'नरंमन्य' इत्यादौ तु खिदन्तोत्तरपदसमासावयवपूर्वपदस्य खिदन्तरूपोत्तरपदपरकस्य नृरूपस्येजन्तैकाचोऽम् विधीयत इति समुदायस्यापि उद्देश्यत्वं परम्परया अस्त्येवेति न 'इच एकाचः' इति सूत्रस्थभाष्यविरोधापत्तिः । यदुक्तं–कमण्डलुपाणिपदात्कमण्डलुयुक्तपाणिरूपकमण्डलुपाणित्वविशिष्टवाचकात्तृतीयावारणाय वाचकादित्थम्भूतस्य पृथगुपस्थितिरपेक्ष्यते इति,

**सञ्ज्ञोऽन्यतर** । दैवादिकस्य जनेर्न ग्रहणं, तस्याकर्मकत्वात्तदाह—**जानातेरिति** । कर्मत्वशक्तिरेवात्र तृतीयाऽर्थः ।

**हेतौ** । हेतुरिह कारणं, न शास्त्रीयः, तस्य कर्तृसञ्ज्ञाया अपि सत्त्वेन कर्तृतृतीयैव सिद्धेः । ननु लौकिकहेतुरपि करणमित्यत आह—**द्रव्यादीति** । आदिना गुणक्रिये । **साधारणमिति** । तज्जनकेऽपि वर्तते इत्यर्थः । करणं तु क्रियाजनकमेवेति भावः । वैषम्यान्तरमाह—**निर्व्यापारेति** । करणन्तु व्यापारवदेवेति भावः । एवञ्च करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यम् ।

स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह—**करणत्वन्त्विति** । हेतुहेतुमद्भाव एव तृतीयार्थः । दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम् । पुण्ये क्रियाजनकत्वेऽपि निर्व्यापारत्वान्न तत्त्वम् । **फलमपीहेति** । **इह** - एतत्सूत्रोदाहरणे । क्वचित्फलमपि हेतुत्वेन विवक्ष्यत इत्यर्थः, तस्यापि स्वज्ञानद्वारा जनकत्वात् । एतच्च 'प्रत्ययः'—इत्यादिसूत्रेषु कैयटे स्पष्टम् ।

ननु 'अलं श्रमेणे'त्यादौ क्रियावाचकपदाभावात्क्रियाया अप्रतीत्या कथं करणत्वमत आह—**गम्यमानाऽपीति** । 'श्रमेणे'त्यादिपदजबोधविषयापीत्यर्थः । न तूच्चार्यमाणतद्वाचकपदजबोधविषयैवेति भावः । 'अलं'शब्दो निषेधार्थस्तदाह—**साध्यं नास्तीति** ।

ननु साध्यमित्यर्थज्ञानेऽपि तस्य 'श्रमेणे'ति नामार्थत्वेन न क्रियात्वमत आह—**इहेति** । स्ववाच्यक्रियां प्रति स्वस्य करणत्वमित्यर्थः । स्पष्टं चेदम्—'इग्यणः'इति सूत्रे 'प्रविश 'पिण्डी'मिति वाक्यार्थे वाक्यैकदेशप्रयोगः'इत्यादिना भाष्ये इति मञ्जूषायां विस्तरः ।

**अशिष्टेति** । अशिष्टानां=सङ्कीर्णाचाराणां यो व्यवहारः=क्रिया तद्बोधकपदप्रयोगे

---

❀ **चिदस्थिमाला** ❀

**वैषम्यान्तरमिति** । हेतुत्वमखण्डोपाधिः । एवं सत्यग्रिमवैयर्थ्यं परिहरति—**स्फुटेति** । **न तत्त्वमिति** । एवं च व्यापारव्यवधानेन फलोत्पादकं क्रियाजनकमपि हेतुरेवेति बोध्यम् । एतेनान्यथा दण्डव्याद्युक्तमपास्तम् । प्रागुक्तविरोधेन यथाश्रुतासङ्गतेराह—**इहेति** । आदिना—'तदर्थं विकृतेः'’धातोरेकाच'इत्यादि । प्रसङ्गसङ्गतिमाह—**नन्विति** । सिद्धान्तेऽध्याहाराभावादाह—**ज्ञानेपीति** । **तस्येति** । श्रमेणेतिवाच्यविशिष्टैकदेशसाधनक्रियां प्रतीत्यर्थः । ननु विरुद्धमिदमत आह—**स्पष्टमिति** । **इत्यादिना**=ग्रन्थेन । यथाश्रुतासङ्गतेः कर्मधारयनिरासायाह—**अशिष्टानामिति** । तद्भिन्नस्येदानीं प्रायशः सर्वत्र सत्त्वादाह—**सङ्कीर्णेति** । इदं 'दाणश्चे'तिसूत्रे भाष्ये स्पष्टम् । अपूर्वं तेनैव वा ज्ञापितं, 'सा चे'दित्यनेन तस्याः क्वाचित्कत्वं ज्ञाप्यते

❀ **विषमपदविवृतिः** ❀

प्रौढ्येति न तद्विरोधः । लक्षणे इत्येव सिद्धे इत्थम्भूतेति व्यर्थमिति केचित् । **दैवादिकस्येति** । तस्यापि अल्लोपे सञ्ज्ञ इति रूपसम्भवात् । **व्यापारवदेवेति** । तज्जन्यत्वे सति तज्जन्यजनको व्यापारोऽत्र विवक्षितः,

---

❀ **वरवर्णिनी** ❀

तदयुक्तम् । कारकविभक्तित्वे तु बलीयस्या प्रथमया बाधात् । तत्र कारकविभक्तित्वञ्च प्रधानार्थनिमित्तकत्वमित्यन्यत्रोक्ततया न कर्मणः शेषत्वविवक्षायां कमण्डलुपाणेश्छात्रस्याद्राक्षीदित्यादावव्याप्तिरिति । तस्मात्कैयटोक्तमेव युक्तमित्याहुरित्युमानाथादयः ।

-प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य सङ्कीर्णाचारत्वं-तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । **दास्येति** । दासीसम्प्रदानकं रतिफलकं दानमिति बोधः । **इति तृतीया** ।

**दानस्येति** । दाधात्वर्थस्येत्यर्थः । इदमुपलक्षणं—क्रियामात्रस्य । **कर्मणेति** ।

ॐ **विजया** ॐ

इदमत्रावधेयं—'ब्राह्मणाय गां ददाती'त्यादौ सम्प्रदानचतुर्थ्या ब्राह्मणादिसम्प्रदानकत्वं दानादौ बोध्यते । सम्प्रदानत्वञ्च मुख्यभाक्तसाधारणं-क्रियाकर्मसम्बन्धितया कर्त्रभिप्रेतत्वम् । क्रियाकर्मत्वञ्च—क्रियाजन्यफलशालित्वम् । तद्वता सम्बन्धश्च—तन्निष्ठफलभागित्वमेव, तथा च दानादिक्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वन्तत्त्वमिति पर्यवसन्नम् 'कर्मणा यमभिप्रैती'ति सूत्रस्याप्ययमेवार्थः—'कर्मणा यमभिप्रैती'त्यस्य 'कर्मणा यमभिसम्बन्द्धुमिच्छती'ति शाब्दिकैर्विवरणात् । निरुक्तस्थले च त्यागरूपक्रियाजन्यगोनिष्ठस्वत्वभागितया दातुरिच्छाविषयो ब्राह्मण इति तस्य सम्प्रदानत्वं सिद्ध्यति ।

ॐ **चिदस्थिमाला** ॐ

तेनाशिष्टेत्ययमपि भाष्योक्तांशः सिद्धः । एतेनार्धजरतीयं दण्डिशास्त्र्याद्युक्तमपास्तम् । प्राचाङ्ग्रन्थासाङ्गत्याय सिद्धान्तमाह—**दासीसम्प्रेति** । दास्यै दत्त्वा तामुपभुङ्क्ते, तस्य धात्वर्थत्वादिति तत्त्वम् । मूले-धर्म्ये=धर्मादनपेते । ॐ **इति तृतीया** ॐ

अर्थान्तराभ्रमायाह—**दानेति** । अत एव प्राचां भाष्यविरोधेनासाङ्गत्यायाह—**इदमिति** । मात्रं

ॐ **विषमपदविवृतिः** ॐ

न धात्वर्थमात्रम् । **निर्व्यापारत्वादिति** । पुण्यजन्यस्य दर्शने हेतोरन्यस्याभावात् । **स्वज्ञानद्वारेति** । ज्ञाननिष्ठं हेतुत्वं विषये आरोप्यत इति भावः । ॐ **इति तृतीया** ॐ

**क्रियामात्रस्येति** । तेन 'दाशगोघ्नौ सम्प्रदाने' 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने' इत्युपपन्नं

ॐ **वरवर्णिनी** ॐ

**तात्पर्यमिति**। [पृ० ७१२]ननु हेतुत्वस्य करणत्वनियतत्वाभावेऽपि करणत्वस्य हेतुत्वनियतत्वाद्धेतुतृतीययैव सिद्धे करणतृतीया व्यर्थेति चेन्न; हेतुतृतीयावाच्यहेतुत्वशक्त्यपेक्षया करणतृतीयावाच्यकरणत्वशक्तेर्विलक्षणतया करणत्वेन करणबोधार्थं तदावश्यकत्वादित्याहुः । **स्ववाच्येति** । स्वघटितपदवाच्येत्यर्थः । 'ग्रामस्य हिरु'गित्यादौ द्वितीयावारणाय'धातुवाच्यतावच्छेदकविलक्षणरूपेण नाम्नः क्रियावाचकत्वं नास्ती'त्यस्यावश्यंस्वीकरणीयत्वेऽपि 'इग्यणः सम्प्रसारण'मितिसूत्रस्थभाष्यप्रामाण्येन'पिण्डी'मित्यादौ धातुवाच्यतावच्छेदकविलक्षणरूपपुरस्कारेणैव क्रियावाचकत्वमभ्युपेयते इति भाव इति—**श्रीबालशास्त्रिचरणाः** ।

**दानस्येतीति** । सम्प्रदीयतेऽस्मै इत्यर्थकसम्प्रदानमितिमहासञ्ज्ञया दानस्येति लब्धमित्याशयः । परे तु'खण्डिकोपाध्यायस्तस्मै चपेटां ददाती'त्यादौ भाष्यप्रयोगे न्यासाद्यर्थपरत्वेऽपि चतुर्थीदर्शनात्क्रियामात्रोपलक्षणं दानस्यतीत्यस्यावश्यंवक्तव्यतया पूर्वाचार्यानुरोधेनैव महासञ्ज्ञेत्यभ्युपेयमित्याहुः ।

ननु'दाने'तिप्रातिपदिकस्य क्रियात्वाभावेन 'दानस्य कर्मणे'त्यनुपपन्नमत आह—**दाधात्वर्थस्येति** । दापदेन दो—देङ्—दा—दाण् इत्यादेर्ग्रहणं बोध्यम् । इदं='दाधात्वर्थस्ये'त्येतत् । क्रियामात्रस्य=धात्वर्थमात्रस्य । तेन'बालाय कथां कथयति' 'शिष्याय फक्किकां व्याचष्टे'इत्यादौ सम्प्रदानत्वाच्चतुर्थी सिध्यतीत्याशयः ।

अत एव भाष्ये—"क्रियाग्रहणं कर्तव्यम्, इहापि यथा स्यात्—'श्राद्धाय विगर्हते', 'युद्धाय सन्नह्यते','पत्ये शेते'इति, तत्तर्हि वक्तव्यं ? न वक्तव्यं, कथं ? क्रियां हि नाम लोके'कर्मे'त्युपचरन्ति,—'कां क्रियां करिष्यसि'—किङ्कर्म करिष्यसीति—"इत्युक्तम् । एवञ्च 'कर्मणा यमभिप्रैती'त्येवंसूत्रसत्त्वेऽपि क्रिया लभ्यते एव, पुनः क्रियाग्रहणं न कार्यं, बहुलक्ष्यसंस्कारानुरोधाच्च कर्मपदेन कर्म—क्रिययोर्ग्रहणमित्याशयः । 'सम्प्रदान'मिति महासञ्ज्ञया दानक्रियामात्रग्रहणे तु भाष्योक्तप्रयोगासिद्धिः स्फुटैवेति क्रियामात्रोपलक्षकतोचितेति तत्त्वविदः ।

॥ विजया ॥

अथ निरुक्तस्य सम्प्रदानत्वस्य कर्मत्वाऽविशेषः-'कर्तुरीप्सिते'तिसूत्रेण कर्तुः क्रियया व्याप्तुमिष्टस्य कर्मसञ्ज्ञाविधानात्, क्रियया व्याप्तुमिष्टत्वमपि हि-क्रियाजन्यफलभागितयेच्छाविषयत्वमेव। न च 'तथायुक्तं चानीप्सित'मित्यनेन क्रियाजन्यफलभागितयाऽनभिप्रेतस्यापि क्रियाजन्यफलाश्रयस्य कर्मसञ्ज्ञाविधानात्-कर्मत्वं क्रियाजन्यफलशालित्वमेव, न त्विच्छागर्भं, सम्प्रदानत्वं त्विच्छागर्भमतो भेद इति वाच्यं, कर्मत्वस्येच्छयाऽघटितत्वे सूत्रभेदवैयर्थ्यापत्तेः।

न च फलाश्रयत्वेनाऽनभिप्रेतस्यापि कर्मत्वे—तत्साधारणक्रियाजन्यफलाश्रयतयेष्टस्यापि ग्रामादेः कर्मत्वोपपत्ताविच्छाघटिततत्सूत्रवैयर्थ्यं दुर्वारमेवेति वाच्यम्, इच्छाघटितस्य निरुक्तरूपस्य यत्र बाधस्तत्र कर्मप्रत्ययेन तादृशमपि रूपं बोध्यते-इत्येतत्प्रतिपादनाय सूत्रद्वयप्रणयनात्।

अत एव यत्रौदनस्य गलाधःसंयोगेच्छया यो व्यापारस्ततो विषादेरपि गलाधस्संयोगस्तत्र विषादौ क्रियाजन्यफलशालित्वाभावबाधेपि तेन रूपेणेच्छाविषयत्वाभावोऽबाधितस्तत्र 'विषमनेन न भुज्यते' इतिप्रयोगोपपत्तिः। इच्छाद्यघटितकर्मत्वतात्पर्येण च 'दैवाद्विषं भुज्यते' इतिप्रयोगस्य चोपपत्तिः।

न च धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं कर्मत्वं, तदनवच्छेदकफलशालित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति विशेषः, स्वत्वध्वंसावच्छिन्नत्याग एव ददात्यर्थो न तु परस्वत्वरूपफलावच्छिन्नोऽपीति वाच्यम् उपेक्षाया अपि ददातेर्मुख्यार्थतापत्तेरिति चेत्—

मैवम्-फलाश्रयतयेष्टत्वमेव हि कर्मत्वं, फलसम्बन्धितयेष्टत्वन्तु सम्प्रदानत्वम्। ब्राह्मणादिश्च न त्यागजन्यस्वत्वाश्रयतया दातुरिष्टः, अपि तु तन्निरूपकतयैवाऽतो न तस्य कर्मता।

न चाश्रयत्वमपि सम्बन्धविशेष इति गवादेरपि सम्प्रदानत्वं दुर्वारम्, आश्रयत्वेनाभिप्रायस्थले कर्मसञ्ज्ञया बाधादन्य एव हि सम्बन्धः सम्प्रदानताघटक इति यद्युच्येत ? तदा 'वृक्षायोदकमासिञ्चति' 'पत्ये शेते' इत्यादौ सेकजन्यजलसंयोग-शयनजन्यप्रीत्याद्याश्रयतयाऽभिप्रेतस्य वृक्ष-पत्यादेः सम्प्रदानत्वानुपपत्तिरिति वाच्यं, धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसम्बन्धस्य सम्प्रदानत्वशरीरे निवेशेन सामञ्जस्यात्। 'वृक्षायोदकमासिञ्चती'त्यादौ द्रवद्रव्यक्रियानुकूलव्यापारो धात्वर्थः सम्प्रदानतानिर्वाहकसंयोगश्च न तादृशधात्वर्थतावच्छेदक इति तदाश्रयत्वं निरुक्ताश्रयताभिन्नमेवेति तत्प्रकारकाभिप्रायविषयवृक्षादेः सम्प्रदानतानिर्वाहात्।

न च पत्ये शेते' इत्यादौ धात्वर्थतावच्छेदकफलाऽप्रसिद्ध्या तदनुपपत्तिः-भेदप्रतियोगिप्रविष्ट

॥ चिदस्थिमाला ॥

कार्त्स्न्ये। अत एव वार्तिकस्य, 'गत्यर्थे'त्यस्य च प्रत्याख्यानं भाष्योक्तं सङ्गच्छते। 'खण्डिकोपाध्यायस्तस्मै चपेटा'मिति भाष्यप्रयोगः। 'रजकस्ये'ति शेषत्वविवक्षया सिद्धम्। 'अजां ग्राम'मित्यादौ ग्रामस्य तु न,

॥ वरवर्णिनी ॥

भाष्ये 'श्राद्धाय विगर्हते'इत्यस्य-श्राद्धं निन्दति-नास्तिकत्वादित्यर्थः। युद्धाय सन्नह्यते=युद्धविषयकं सन्नहनपूर्वकं निश्चयं करोति। पत्ये शेते=पतिमुपसृत्य शेते इत्यर्थः। 'कर्मणा यमभिप्रैती'त्यत्र कर्मपदं न दानक्रियाकर्मपरं, किन्तूच्चारितवाक्यघटकधात्वर्थक्रियाकर्मपरम्। तदेवं—कर्मसम्बन्धवत्त्वेनेच्छाविषयो यः स सम्प्रदानमिति सूत्रार्थः। 'अजां ग्रामं नयती'त्यत्र 'अजाग्रामयोः सम्बन्धो जायता'मित्येवेच्छा, न तु 'ग्रामोऽजासम्बद्धो जायता'मितीच्छेति-कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वस्य ग्रामेऽभावान्न तस्य सम्प्रदानता। यदा तु संयोगानुकूलव्यापारमात्रं नीधात्वर्थः, ग्रामसंस्कारार्थञ्चाजानयनं, 'ग्रामोऽजासम्बद्धो जायता'मित्येवञ्च तत्रेच्छा—तदा 'ग्रामायाजां नयती'ति प्रयोग इष्यते एवेति मिश्राः।

१ वस्तुतस्तु—'पतिः शेता'मितीच्छया [-स्वनिष्ठशयनक्रियासजातीयशयनक्रियासम्बन्धवत्त्वप्रकारकेच्छया-] कामिनी स्वयं शेते इत्यर्थ इति श्रीगुरवस्त्रिपाठिपादाः प्राहुः।

'सम्बन्द्धु'मिति शेषः । **अभिप्रैति**—इच्छति । कर्मणा सम्बन्धश्च-स्वत्वादिरूपः ।

## ॐ विजया ॐ

धात्वर्थतावच्छेदके फलत्वानिवेशेन प्रसिद्धिसम्भवात् । एवञ्च नार्किकमते 'ब्राह्मणाय गां ददाती'त्यादौ ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्तेति बोधः । निरूपितत्वेन कर्तुरिच्छाविषयत्वं द्वितीयान्तार्थगोवृत्तित्वान्वयिधात्वर्थतावच्छेदकस्वत्वान्वयि चतुर्थ्यर्थः, स्वत्वजनकत्यागश्च ददात्यर्थः।

अत्र केचित्—ददातियोगे धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमेव सम्प्रदानत्वं, तदेव मुख्यं, तथा च तत्र निरूपितत्वमात्रं चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वेऽन्वेति, अत एव 'श्राद्धस्य पित्रपेक्षया यागत्वमेव, दानत्वं तु ब्राह्मणापेक्षये'ति शूलपाणिः, तत्र त्यज्यमानेऽन्ने पितॄणां स्वत्वानुत्पत्त्या सम्प्रदानत्वासम्भवात् । स्वत्वभागित्वेनोद्देश्यत्वं यदि सम्प्रदानत्वं स्यात्तदा पितृणामपि तथात्वाऽक्षतेः पित्रपेक्षयापि दानत्वं स्यात्, न हि श्राद्धे पितॄणां स्वत्वभागित्वेन नोद्देश्यत्वम्, 'पितर् ! एतत्तेऽन्नं स्वधे'त्यादिश्राद्धरूपत्यागाभिलापस्वधार्थे त्यागे चतुर्थ्याः स्वत्वभागित्वेन पित्रादेरुद्देश्यत्वबोधकत्वात् । स्वत्वभागित्वेनोद्देश्यभूतस्यापि पित्रादेः स्वीकाराभावान्न स्वत्वम्, ब्राह्मणानां तत्रानुद्देश्यत्वेपि स्वत्वं प्रतिपत्तितो जायते । अनुद्देश्यत्वेपि च सम्प्रदानत्वमुपपादितमेव । पितृणामिव ब्राह्मणानामपि च स्वत्वभागित्वेनोद्देश्यत्वमप्यविरुद्धम् ।

धात्वर्थतानवच्छेदकफलभागितया यत्र सम्प्रदानत्वं—'वृक्षायोदकं सिञ्चति' 'पत्ये शेते' इत्यादौ—तत्रोद्देश्यत्वांशनिवेश आवश्यकः—यत्रान्योद्देशेन क्षिप्तजलस्य दैवाद्वृक्षसंयोगोऽन्योद्देशेन शयनादितश्च पत्यादेः फलसम्बन्धस्तत्र तथाप्रयोगविरहात् । अत एव तत्र चतुर्थ्यर्थः-स्वनिष्ठतया कर्त्रभिप्रेततत्फलं प्रति जनकत्वं, तच्च सेकादिक्रियायामन्वेति, भाक्तं च तत्र सम्प्रदानत्वम्, उद्देश्यत्वागर्भसम्प्रदानत्वे एव लाघवाच्छक्तेः, इतरत्र लक्षणाया अभ्युपगमात् । 'पितृभ्यो दद्यात्' इत्यादावनिर्धारितकर्तृकसम्प्रदाने चतुर्थी, तत्त्वं च तत्र त्यागजन्यस्वत्वभागितयोद्देश्यत्वमेव ।

अथ यत्र जनान्तरस्य वृक्षादिनिष्ठजलसंयोगादिरिच्छाविषयोऽन्येन च जनेनाऽन्योद्देशेन क्षिप्तजलादेर्वृक्षादिसंयोगस्तत्रापि 'वृक्षायोदकमासिञ्चति जनः' इत्यादिप्रयोगापत्तिः, तत्तद्व्यक्तित्वस्य पदेनानुपस्थानात्, तेन रूपेण विशेष्यभूतकर्तृव्यक्तीनामिच्छांशे भानासम्भवात्, उपस्थितजनत्वावच्छिन्नेच्छाविषयत्वस्य च वृक्षसंयोगादावबाधात् । एवं तदीयकालान्तरीणेच्छामादायाप्यतिप्रसङ्गतादवस्थ्यमिति चेन्न, वृक्षादिनिष्ठत्वेनेच्छैव हि चतुर्थ्यन्तार्थः—तस्याश्च 'स्वविषयसंयोगादिजनकत्व''स्वजन्यत्वो'भयसम्बन्धेन सेकादिक्रियायामन्वयः, उक्तस्थले च यत्क्रियाव्यक्त्या जलसंयोगादिर्वृक्षादौ जन्यते तत्र कालान्तरीणपुरुषान्तरीणेच्छायाः स्वविषयसंयोगादिजनकत्वसम्बन्धसत्त्वेपि स्वजन्यत्वाभावान्नोभयसम्बन्धेनेच्छावैशिष्ट्यमित्ययोग्यतैवेति वदन्ति ।

## ॐ चिदस्थिमाला ॐ

अजाया इव परत्वात् 'कर्तु'रितिकर्मसंज्ञया बाधात्, ग्रामस्याजानयनोद्देश्यत्वाभावाच्च । 'अजा ग्रामसम्बद्धा भव'त्वितीच्छया हि नयनं, न तु 'ग्रामोऽजासम्बद्धो भव'त्वितीच्छया तत्राजानयनम् । यदा तु नयतेः संयोगानुकूलव्यापारमात्रमर्थः, फलतावच्छेदकसम्बन्धोऽजामात्रनिष्ठस्तदा भवत्येवाजां ग्रामाय नयतीति प्रयोग इति दिक् । तृतीयोपपत्तये आह—**सम्बन्द्धुमिति** । अर्थान्तरनिरासायाह—**इच्छतीति** । संयोगनिरासायाह—**कर्मणेति** । आदिना स्वामित्वम् । प्राचामसाङ्गत्याय सिद्धान्तमाह—

## ॐ वरवर्णिनी ॐ

'कर्मणे'ति तृतीयोपपत्तये आह—**सम्बन्द्धुमितीति** । सम्बन्द्धुं=सम्बन्धं कर्तुम् । **इच्छति**—दाता यजमानादिरिति शेषः । 'स्वत्वादी'त्यादिपदेन स्वामित्वम् ।

ॐ विजया ॐ

अत्रेदमपि बोध्यम्—उद्देश्यत्वाऽगर्भस्यैव त्यागजन्यस्वत्वभागित्वस्य ददातिसम्प्रदानतारूपत्वे चैत्रमात्रोद्देशेन यद्दत्तं तत्र तादृशदानेन 'दम्पत्योर्मध्यगं धन'मित्यतस्तत्पत्न्या अपि स्वत्वस्य प्रामाणिकतया सम्प्रदानत्वेन 'चैत्रपत्न्यै दत्त'मिति व्यवहारापत्तेः । न च पत्युः स्वत्वमेव पत्नी-स्वत्वं जनयति न तु तत्सामग्रीति वाच्यं, स्वत्ववति स्वत्वान्तरानुत्पत्तेः, तथा च सर्वत्रैवोद्देश्यत्वा-न्तर्भावः, भवतु च 'पितृभ्यो दद्या'दित्यत्रापि मुख्यमेव सम्प्रदानत्वं चतुर्थ्यर्थः ।

अस्तु वा स्वस्वत्वेच्छाधीनतत्कत्वमेव मुख्यं दानक्रियासम्प्रदानत्वं, पितृस्वत्वाप्रसिद्ध्या न तेषां सम्प्रदानत्वम् । चतुर्थ्यर्थो-धात्वर्थतावच्छेदकस्वत्वान्वयि निरूपितत्वम् , स्वत्वस्य च स्वस्वत्वध्वंसेच्छा-रूपे त्यागे—'स्वजनकत्व' 'स्वेच्छाधीनत्वो'भयं सम्बन्धः । तल्लाभश्च विशिष्टस्य धातुशक्यतामते शक्तित एव, तदन्तर्भावेनैव शक्त्युपगमात् । फलव्यापारयोः पृथक् धात्वर्थतामते तु—आकाङ्क्षाबला-देव तादृशसम्बन्धलाभः । 'पितृभ्यो दद्या'दित्यत्र च धात्वर्थान्तर्गतस्वत्वे चतुर्थ्यां पित्राद्यन्वयी निरूपितत्वरूपो मुख्योऽर्थो बाधितत्वान्न प्रत्याय्यते, अपि तु निरूपितत्वेनेच्छाविषयत्वरूपो लक्ष्यार्थ एव, ददातिस्तु तत्र मुख्य एव—श्राद्धस्यापि ब्राह्मणापेक्षया दानत्वात् । 'श्राद्धे ब्राह्मणस्य सम्प्रदानतानिर्वाहायाऽस्ति चोद्देश्यतापि ब्राह्मणस्ये'त्यादिकमभिदधानस्य शूलपाणेरपि सम्प्रदा-नत्वशरीरे उद्देश्यत्वांशापरित्यागे निर्भरोऽवगम्यते, 'कर्मणा यमभिप्रैती'ति प्रणयतो महर्षेः पाणिनेरपि सम्मतोऽयमर्थः ।

'शत्रवे भयं ददाती'त्यादौ जनयतीति भाक्तोऽर्थः, एवं चोत्पादकव्यापाररूपे धात्वर्थे भयरूपं कर्म, तद्योगितयोद्देश्यत्वाच्छत्र्वादेः सम्प्रदानत्वम् ।

'युद्धाय संनह्यते' इत्यादौ सन्नहनादिक्रियाजन्यफलाऽसम्बन्धाद्युद्धादेर्न सम्प्रदानतानिर्वाह इति नेयं सम्प्रदानचतुर्थी, अपि तु 'एधानाहर्तुं व्रजती'त्यर्थे 'एधेभ्यो व्रजती'त्यत्रेव 'युद्धं कर्तुं सोढुं वा सन्नह्यते' इत्यर्थविवक्षया 'क्रियार्थोपपदे'ति सूत्रान्तरेण । तस्य च 'स्थानिनो-ऽप्रयुज्यमानस्य क्रियार्थोपपदस्य तुमुन्नन्तधातोः कर्मणि=स्वार्थनिष्ठकर्मत्वे विवक्षिते-स्वोत्तरं चतुर्थी'-त्यर्थः, तथा चाऽऽहरणकरणसहनाद्युद्देश्यकत्वं तादृशचतुर्थ्यर्थ इत्यवधेयम् ।

अथ 'यदग्नये च प्रजापतये च सायं जुहोती'त्यादावग्न्यादेरिव 'सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमूर्जित'मित्यादौ सर्वप्राणिनामिव च 'पशुना रुद्रं यजते' इत्यादावपि त्यागविशेष-रूपक्रियायां रुद्रादेरनिराकर्तृसम्प्रदानत्वं दुर्वारमिति तत्रापि चतुर्थी स्यादिति चेन्न, न—गौरवा-न्वितप्रीतिहेतुक्रिया यज्यर्थस्तदर्थतावच्छेदकफलं प्रीतिस्तदाश्रयतया रुद्रस्य विवक्षितत्वात् कर्मसञ्ज्ञ-कत्वेन द्वितीयैव न तु चतुर्थी, त्यागात्मकतादृशक्रियायां निरुक्ताऽनिराकर्तृसम्प्रदानत्वे सत्यपि तदविवक्षणात् । प्रीतिभागितयोद्देश्यत्वरूपसम्प्रदानत्वविवक्षायां च 'रुद्राय यजते' इत्यपि प्रयोगः । उभयविवक्षायां परत्वेन कर्मसञ्ज्ञया बाधाद्द्वितीयैव । जुहोत्युत्सृजत्यादेः प्रीतिरूपफलावच्छिन्न-त्यागाऽबोधकतया त्यागरूपक्रियाजन्यप्रीतिभागिनो देवतादेस्तत्कर्मताविरहान्नैव 'प्रजापतिं जुहोति' 'भूतान्युत्सृजती'त्यादयः प्रयोगाः ।

'रजकस्य वस्त्रं ददाती'त्यत्र ददातिर्न त्यागार्थकोऽपि तु परायत्तीकरणार्थको गौणः, तदा-यत्तीकरणं च प्रकृते तत्कर्तृकनिर्णेजनेच्छाप्रकाशको व्यापारः, तदेकदेशे कर्तृत्वे रजकस्य सम्बन्ध-विवक्षायां शैषिकी षष्ठी ।

'हन्तुः पृष्ठं ददाती'त्यत्र तत्कर्तृकताडनानुमतिप्रकाशको व्यापार एव ददात्यर्थः, तदेक-देशे कर्तृत्वे हन्तुः सम्बन्धविवक्षायां षष्ठी । एवं 'संवाहकस्य चरणं ददाती'त्यादावूहनीयमिति श्रीगदाधरभट्टाचार्याः प्राहुः ।

सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः, स एवोद्देश्य इत्युच्यते । क्रियाकारकभावः सम्बन्धश्च तदर्थः । विप्रसम्प्रदानकं दानमिति बोधः । कर्मणेति किं ?—तदभावे हि कर्मणोऽप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्यैव सञ्ज्ञा स्यात्, कर्मसञ्ज्ञया तु पर्यायो भविष्यति ।

'यं—स'ग्रहणं किं ?—तदभावे क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादिस्तस्यैव स्यात् । कर्तृसञ्ज्ञा त्वकर्मकविषये सावकाशा । न च कर्तुः कर्तृत्वाभावे कथं गोः कर्मत्वं ?—कर्मसञ्ज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वात् । अत एव 'सार्थाद्धीयते' इत्यत्र कर्तुरपादानत्वेऽपि कर्मणि लकारः सिद्धः । ७

॥ चिदस्थिमाला ॥

सम्प्रेति । तदुक्तिमपि योजयति—स एवेति । तदाशयं प्रकाशयति—क्रियेति । उभयमतसाधारण्येनाह—विप्रसम्प्रेति । सूत्राशयमाह—कर्मणेतीति । ननु कर्मसञ्ज्ञानवकाशात्तर्हि(?)वृत्तिमतासाङ्गत्याय भाष्यमतेन आह—कर्मेति । 'गत्यर्थे'ति तु प्रत्याख्यातमिति भावः। तस्यैवेति । श्रुतपदार्थसम्बन्धेन निराकाङ्क्षत्वेऽध्याहारे मानाभावादिति भावः । ननु कर्तृसञ्ज्ञानिरवकाशा स्यादत आह—कर्त्रिति । कैयटादिमतेनेदं, वस्तुतोऽत्रापि विकल्पो बोध्यः । ततश्चोपाध्यायाय शिष्येण गौर्दीयत इत्यर्थे 'शिष्यायोपाध्यायस्य गौर्दीयते' इति स्यादिति भावः। कर्तुः=शिष्यादेः । उक्तं द्रढयति—अत एवेति । उपलक्षणत्वादेवेत्यर्थः । नत एवाह—

॥ विषमपदविवृतिः ॥

भवति । तत्र कर्मसम्प्रदानयोर्भक्ष्यभक्षयितृभावः सम्बन्धः । एवमन्यत्रापि यथाप्रयोगं सम्बन्ध ऊहनीयः। 'सम्प्रदान'मिति महासञ्ज्ञाकरणं 'सर्वनामस्थान'मितिवत् । स एवोद्देश्य इति। अत एव 'उद्देश्यत्वं चतुर्थ्यर्थः' इत्यभियुक्ताः ।

अन्तरङ्गत्वादिति । 'विप्रापेक्षये'ति शेषः । कर्म फलेनाभिसम्बन्धुमिष्टम्, विप्रस्तु फलाश्रयेणाभिसम्बन्धुमिष्ट इति स बहिरङ्गः । सावकाशेति । न च क्रियया यमभिप्रैति तत्रापि यं-स-ग्रहणा-

॥ वरवर्णिनी ॥

शक्तिमानिति। 'शक्तिरेव वे'ति मते तु तादृशशक्तिमात्रमर्थ इत्याहुः । स एव=सम्प्रदानत्वशक्तिमान् ब्राह्मणादिरेव । दाने ब्राह्मणादेरेवोद्देश्यत्वात् । तदर्थः=चतुर्थ्यर्थः । उद्देश्यतयेति । दाधात्वर्थफलाश्रयत्वेनेच्छाविषयत्वाद्गवादेरुद्देश्यत्वेनेत्यर्थः । अन्तरङ्गत्वादिति । दातुर्यजमानादेरादौ धात्वर्थफलाश्रयत्वप्रकारकेच्छा, ततो विप्रादेस्तत्सम्बन्धित्वप्रकारकेच्छेति पूर्वोपस्थितत्वेनान्तरङ्गत्वात्कर्मण एव सम्प्रदानत्वापत्तिरित्याशयः । पर्याय इति । परे तु—'पत्ये शेते'इत्यादावकर्मकस्थले सावकाशा सम्प्रदानसञ्ज्ञेति—'विप्राय गां ददाती'त्यादौ सकर्मकस्थले कर्मसञ्ज्ञा निरवकाशत्वात्सर्वथा सम्प्रदानसञ्ज्ञाया बाधिका भविष्यतीति 'विप्रं गां ददाती'त्यापत्तिरेव दोषो देय इत्याहुः ।

कर्मणा योऽभिप्रैतीति । 'कर्मणाऽभिप्रैती'त्युक्ते आख्यातार्थकर्तुरुपस्थितत्वाद्योऽभिप्रैतीत्यस्य लाभो भविष्यतीत्यभिप्रायः । न च 'यः स'इत्यस्याध्याहारो भविष्यतीति वाच्यं, श्रुतपदार्थसम्बन्धेनैवाकाङ्क्षाशान्तेरध्याहारे मानाभावात् । ननु कर्तुरीप्सितं हि कर्म भवति, न हि तदा कर्त्तास्तीति कथं कर्मसञ्ज्ञेत्याह—न च कर्तुरिति । स्वतन्त्रोपलक्षणत्वादिति । स्वातन्त्र्यञ्च धात्वर्थप्रधानीभूतव्यापाराश्रयत्वं, तच्च प्रकृते कर्तृसञ्ज्ञाभावेऽप्यक्षतमेवेति भावः । 'कर्तुः सम्प्रदानत्वे इष्टापत्ति'रिति तु न भ्रमितव्यम्, 'उपाध्यायाय शिष्येण गौर्दीयते'इति प्रयोगो यत्र तत्र-'शिष्यायोपाध्यायस्य गौर्दीयते'इति प्रयोगापत्तेः । अत एव=कर्तृत्वोपलक्षणत्वादेव । कर्तुरपादानत्वेपीति । सार्थं पुनस्त्यजति अयञ्च

ननु 'कर्मणे'त्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह—**क्रिययेति।** कर्मरहितक्रिययेत्यर्थः ।

सकर्मकेषु कर्मसञ्ज्ञा अस्या बाधिकेत्याशयेनाह—**पत्ये शेते इति।** न च दानादीनान्तदर्थत्वात्तादर्थ्यचतुर्थ्यैव सिद्धे किमनया सञ्ज्ञयेति वाच्यं, 'दाशगोघ्नौ सम्प्रदाने'-इत्यर्थत्वात्, 'तत्सम्प्रदानकं दान'मिति बोधार्थं तदावश्यकत्वाच्च।

❀ चिदस्थिमाला ❀

**कर्मेति।** ननु तदर्थं कृतस्य तत्राप्यतिप्रसङ्गः स्यादेवात आह—**सकर्मेति।** आदिना शयनादि। बहुवचनमवयवाभिप्रायम्। तदर्थत्वात्–पुष्टिद्वारा विप्रार्थमिति। अत एव क्रियार्थोपपदस्येत्यनेनापि न गतार्थतेति भावः। **सम्प्रेति।** यथाकथञ्चिदुपकार्योपकारकभावसत्त्वात्तदर्थत्वेऽपि दानजन्यस्वर्गादिफलभोक्तृत्वेन तस्याः कर्त्रर्थत्वादिति भावः। यत्तु चतुर्थ्याः समासे कारकपूर्वपदकार्यार्थमावश्यकमिदमिति तन्नेत्याह—

❀ विषमपदविवृतिः ❀

भावेन अकर्मकविषयेऽपि वार्तिकेन सम्प्रदानसञ्ज्ञा दुर्वारेति वाच्यं, 'घटो भवती'त्यत्र कर्तृसञ्ज्ञायाश्चारितार्थ्यात्। न हि तत्र वार्तिकं प्रवर्तते, अचेतनत्वेन इच्छाया असम्भवात्। एवं 'रथो गच्छती'-त्यादिसकर्मकविषयेऽपि कर्मसञ्ज्ञा चरितार्थेति बोध्यम्। **बाधिकेति।** 'क्रियये'ति सहयोगे तृतीया, 'पत्ये शेते' इत्यत्र च पतिशयनयोरुद्देश्योद्देश्यभावः सम्बन्ध इति भावः। केचित्तु करणे तृतीया, शयनादिक्रियया सुखादिनायं सम्बन्धुमिच्छति स सम्प्रदानमिति वार्तिकार्थं इत्याहुः। **किमनयेति।** 'कर्मणे'ति सूत्रं 'क्रियये'ति वार्तिकं च व्यर्थमिति भावः।'दाशगोघ्नौ तादर्थ्ये' इत्येव सिद्धमत आह—

❀ वरवर्णिनी ❀

सार्थाद्धीयते इति क्तः सम्प्रत्ययः। सार्थश्च मनुष्यसमुदायः, समुदायश्च समुदाय्यवयवाभिन्नोऽयमपि तत्समुदायावयव इति—सार्थस्यापादानत्वेऽपि निरुक्तत्वात्तन्त्र्यन्तस्यास्तीति भावः। अकर्मकक्रियोद्देश्यस्य='पत्ये शेते'इत्यादौ पत्यादेः। नन्वकर्मकक्रियास्थलेऽतिप्रसङ्गनिवारणाय कृतस्य 'क्रियया यमभिप्रैती'ति-वचनस्य कर्मण्यप्यतिप्रसङ्ग इत्यत आह—**कर्मरहितेति।** इदञ्च व्याख्यानन्नापूर्वमित्याशयेनाह—**सकर्मकेष्विति।** तदर्थत्वात्=सम्प्रदानत्वेनाभिप्रेतो यो विप्रादिस्तत्पुष्ट्यादिप्रयोजकतया विप्रार्थत्वात्।

**दाशगोघ्नावित्येतदर्थमिति।** सम्प्रदाने कारकेऽनेन सूत्रेण दाशगोघ्नशब्दयोर्निपातनात्। अत एव मूले—दाशन्ति तस्मै दाशः, गां हन्ति तस्मै गोघ्नोऽतिथिरिति—तयोरर्थं वक्ष्यन्ति दीक्षिताः। ननु सम्प्रदान-शब्दस्य सम्प्रदीयते यस्मै यत्पुष्ट्यादिकामनयेत्यर्थः कल्प्यतेऽतो न तत्सूत्रानुपपत्तिरत आह—**तत्सम्प्रदानकमिति।** सम्प्रदानसञ्ज्ञायास्सत्त्वे 'विप्राय गान्ददाति''दानीयो विप्र'इतिवाक्याद्विप्रसम्प्रदान-कन्दानमिति, दानसम्प्रदानाभिन्नो विप्र इत्यादिरीत्या बोधो भवति। तादर्थ्य एव चेच्चतुर्थीविधानन्तदा यूपाय दार्विति शब्दाद्यथा यूपार्थन्दार्विति बोधो भवति तथा 'विप्राय गान्ददाती'त्यादिशब्दाद्विप्रार्थगोकर्म-कन्दानमित्यादिशब्दाद्विप्रार्थगोकर्मकन्दानमित्यायेव बोधः स्यादिति भावः। किञ्च सम्प्रदानत्वेन तेभ्यः शब्देभ्यो बोधश्चेत्स्वीक्रियते तदा 'कर्मणा य'मितिसूत्रस्य 'क्रियार्थोपपदस्य चे'तिसूत्रेण गतार्थता न भवति, अन्यथा विप्रम्पोषयितुमित्याद्यर्थकल्पनयाऽस्य सूत्रस्य तेन सूत्रेण गतार्थता स्यात्। अत एव=सम्प्रदान-सञ्ज्ञासत्त्वादेव। यत्तु चतुर्थीसमासे कारकपूर्वपदकत्वाद्गतिकारकोपपदादिति सूत्रन्तद्विषये प्रवर्त्तते इति, तन्न,''तादर्थ्यचतुर्थ्यैव सिद्धे 'चतुर्थी सम्प्रदाने'इति सूत्रं 'रुच्यर्थाना'मित्यादिविषये चतुर्थ्यर्थं''मिति भाष्या-त्तद्विषये कारकपूर्वपदकस्वराभावस्यापि कल्पनसम्भवात्। किञ्च 'चतुर्थी तदर्थार्थे'तिसूत्रेण प्रकृतिविकृति-

अत एव—"तादर्थ्यचतुर्थ्या दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियाया-स्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिः—" इति–हेलाराजः ।

तादर्थ्यचतुर्थ्यैव सिद्धे 'चतुर्थी सम्प्रदाने' इति सूत्रे 'रुच्यर्थाना' मित्यादिविषये चतुर्थ्यर्थमिति भाष्ये स्पष्टम् ।

**पशुनेति** । कर्म–तृतीयाऽर्थः । सम्प्रदानं–द्वितीयाऽर्थः । एतच्च दानार्थक'यज'-धातुविषयं, पूजार्थत्वे तु पशोः करणत्वं न्यायसिद्धम् । इदं छान्दसमिति कैयटः ।

**अन्यकर्तृक इति** । अभिलष्यतिकर्त्रपेक्षयाऽन्यत्—अभिलष्यतिकर्म—तत्कर्तृक इत्यर्थः। यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयोऽभिलष्यतिकर्ता, 'हरिर्भक्तिमभिलष्यती'ति प्रत्ययात् । यत्किञ्चिन्निष्ठप्रीत्यनुकूलः प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्त्तेति–अभिलषते रुच्यर्थत्वाभावान्न तद्योगे सम्प्रदानत्वमिति भावस्तदाह—**हरिनिष्ठेति** ।

ॐ विजया ॐ

**अभिलषते रुच्यर्थत्वाभावादिति** । अयम्भावः—यद्यप्यभिलषते रोचतेश्च प्रीत्यनुकूल-

ॐ चिदस्थिमाला ॐ

**तादर्थ्येति** । अन्यत्वस्य साकाङ्क्षत्वादाह–**अभीति** । ननु कोऽसावत आह–**यत्किञ्चिद्वीति** ।

ॐ विषमपदविवृतिः ॐ

**तत्सम्प्रदानकमिति** । अतएव = सम्प्रदानान्वितदानबोधार्थत्वादेव । **तदर्थत्वाभावेनेति** । 'मुक्तये हरिं भजती'त्यत्र ज्ञानद्वारा हरिद्वारा भजनस्येव गवादिद्वारा दानस्य तादर्थ्यसम्भवात् । प्रौढ्येदम्,

ॐ वरवर्णिनी ॐ

भाव एव समास इति वक्ष्यते, यदि तादर्थ्ये एव सर्वत्र चतुर्थी तदा प्रकृतिविकृतिभावस्य सर्वत्रैव सत्त्वेन वक्ष्यमाणव्यवस्थाप्यनुपपन्ना स्यादित्याहुर्भैरवमिश्राः ।

**पूजार्थत्वे त्विति** । एतेन शाब्दबोधेऽपि वैलक्षण्यं सूचितम् । **कैयट इति** । मानाभावेऽत्रारुचिः ।

**अन्यकर्तृक इति** । समवायसम्बन्धेन प्रीत्याश्रयकर्तृको व्यापारोऽभिलषतेरर्थः । विषयतासम्बन्धेन च प्रीत्याश्रयकर्तृको व्यापारो रुचेरर्थः ।

**अभिलषतीति** । 'हरिर्भक्तिमभिलषती'त्यादावभिलषतिकर्त्ता=हरिः, तदपेक्षया भिन्नम्—अभिलषति-कर्म=भक्तिः, तत्कर्तृकोऽभिलाष एव–['हरये रोचते भक्ति'रित्यादौ]–रुचिरित्यर्थः । अभिलषतौ यत्कर्म–[ भक्तिः ] तदेवात्र रुच्धातौ कर्तृभूतमिति तत्त्वम् । **यत्किञ्चिदिति** । भक्तीत्यर्थः। **अभिलषतिकर्त्तेति** । विषयतासम्बन्धावच्छिन्न—[–भक्तिनिष्ठ–]—प्रीत्यनुकूलप्रीतिव्यधिकरणव्यापाराश्रयो **हरिरित्यर्थः** ।

**यत्किञ्चिन्निष्ठेति** हरिनिष्ठ-समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलः—प्रीतिव्यधिकरणो यो व्यापारः= प्रीत्युत्पादनात्मकः—तदाश्रयो रोचतेः कर्त्ता=भक्तिरित्यर्थः । **रुच्यर्थत्वाभावादिति** । प्रीत्यनुकूल-व्यापाररूपधात्वर्थस्यैक्येऽपि फलतावच्छेदक–सम्बन्धयोर्विषयत्वसमवाययोर्भेदात्तयोर्भेद इत्याशयः ।

१ **अन्वयानापत्तिरिति** । परे तु दानस्यातदर्थत्वेऽपि देयस्य गवादेस्तदर्थत्वारोपाद्दानमपि तदर्थ-मेवेति चिन्त्यमिदमित्याहुः । न च कारकविभक्त्यर्थातिरिक्तविभक्त्यर्थस्य धात्वर्थैकदेशेन सममन्वयो-ऽव्युत्पन्न इति वाच्यं, 'मातुः स्मरती'त्यादौ व्यभिचारात् ।

पथीति । न च 'प्रीयमाण'पदाभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां सञ्ज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसञ्ज्ञया बाधसिद्धेः कथमेतदिति वाच्यं, 'देवदत्तं रोचते'इत्यस्याप्यापत्तेरित्याशयात् । तत्सत्त्वे त्वस्य कर्मसञ्ज्ञापवादत्वान्न दोषः ।

### ॐ विजया ॐ

व्यापार एवार्थः, तथाप्यभिपूर्वलषधातुस्थले विषयता फलतावच्छेदकः सम्बन्ध इति, फलतावच्छेदकविषयतासम्बन्धेन प्रीतिरूपफलाश्रयत्वाद्भक्तेः कर्मत्वं, रुचधातुस्थले च समवायः फलतावच्छेदक इति फलतावच्छेदकसमवायसम्बन्धेन प्रीतिरूपफलस्य हरावेव सत्त्वेन भक्तावभावात् 'हरये रोचते' इत्यादौ भक्तेर्न कर्मत्वमिति"।

### ॐ चिद्स्थिमाला ॐ

ननु प्रकृते कोऽसावत आह–यत्किञ्चिदिति । कारकाधिकारादाह–क्रियेति । षष्ठीविषये इति भावः।

### ॐ वरवर्णिनी ॐ

इदमप्यवधेयम्—विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणः प्रीतिविषयीभवनरूपो यो व्यापारः स रुचेरर्थः । 'हरये रोचते भक्ति'रित्यत्र—समवायेन हरौ वर्त्तमानाऽपि प्रीतिर्विषयतासम्बन्धेन भक्तावप्यस्ति, प्रीतेर्भक्तिविषयकत्वात्, एवञ्च विषयतासम्बन्धावच्छिन्नभक्तिनिष्ठप्रीत्यनुकूलः–विषयतासम्बन्धेन प्रीत्यधिकरणभक्तिनिष्ठः प्रीतिविषयीभवनात्मको यो व्यापारस्तदाश्रयो भक्तिरिति समन्वयः । 'हरिर्भक्तिमभिलष्यती'त्यत्र—निरुक्तरीत्या विषयतासम्बन्धावच्छिन्नभक्तिनिष्ठप्रीत्यनुकूलो विषयतासम्बन्धावच्छिन्नप्रीत्यधिकरणभक्त्यवृत्तिर्हरिनिष्ठो यः प्रीतिसमवायीभवनरूपो व्यापारस्तदाश्रयो हरिरिति समन्वयः । 'हरिं भजती'त्यादौ तु प्रीतिविशिष्टो व्यापारो नामकीर्त्तनादिरूपो भजेरर्थः। वै० 'स्वीयविषयत्वासामानाधिकरण्य' 'स्वीयसमवायित्वासामानाधिकरण्य' 'स्वानुकूलत्वै'तन्त्रितयसम्बन्धेनेति-परस्परमेषां भेदः । किञ्च फलांशे सर्वत्र व्यापारसामानाधिकरण्यं भासते, तत्र धातोर्भिन्नो भिन्नः फलतावच्छेदकः संसर्गः सामानाधिकरण्यं नियमयतीत्यपि भेद इति श्रीबालशास्त्रिचरणानुसारिणः प्राहुः ।

अन्ये तु प्रीतिविषयीभवनं रुचेरर्थं इति रुच्धातुरकर्मकः, प्रीतिजनकस्य कस्यापि व्यापारस्य भक्तावनुपलम्भात् , अभिलषति-प्रसादयत्योस्तु विषयतासम्बन्धावच्छिन्नेत्याद्यर्थं इति सकर्मकौ ताविति ततो भेदः । अतो 'गुरुं प्रसादयति' 'हरिर्भक्तिमभिलषती'त्यादौ न चतुर्थीति कौमुद्याशय इत्याहुः ।

नन्वेवमपि 'हरये रोचते भक्ति'रितिवत्—'हरिं प्रीणयति भक्ति'रित्यत्र चतुर्थी कस्मान्नेति चेदुच्यते, समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः प्रीधातोरर्थः, विषयतासम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिसमानाधिकरणो व्यापारश्च रोचतेरर्थ इति तयोर्भेदः । तत्र प्रीधात्वर्थे फलतावच्छेदकसमवायसम्बन्धेन प्रीत्याश्रयत्वाद्धरेः कर्मत्वं, रुच्धातौ तु फलतावच्छेदकविषयतासम्बन्धेन प्रीत्याश्रयस्य भक्तेः कर्मसञ्ज्ञा प्राप्ता परत्वात्कर्तृसञ्ज्ञया बाध्यते इति तस्याऽकर्मकतेति परस्परं तयोर्भेदान्न प्रीधातुयोगे 'रुच्यर्थाना'मिति चतुर्थीति **तत्त्वविदः** । **आपत्तेरिति** । वस्तुतस्तु कर्मत्वादिरूपव्याप्यशक्त्यविवक्षायामपि क्रियाजनकत्वरूपकारकत्वविवक्षा–'आख्यातोपयोगे' इत्यत्रोपयोगग्रहणात्—'नटस्य शृणोती'त्यादावेव भवति, न सर्वत्र, अत एव तदर्थकशेषषष्ठ्या न कारकत्वम् । एवञ्च व्याप्यकर्मत्वादिशक्तिविवक्षाया आवश्यकत्वात्तत्तत्सञ्ज्ञया बाधे इदं बाध्यसामान्यचिन्तया सर्वस्यापवादः स्यादिति षष्ठ्यश्चतुर्थ्यापत्तिरित्येवापत्तिरत्र बोध्या । सर्वत्र तथा विवक्षाया अभावादेव—'वारणार्थानामिति सूत्रमस्यापवादः स्या'दिति पूर्वोक्तं सङ्गच्छते, अन्यथा क्रियाजनकत्वमात्रविवक्षायां 'वारणार्थाना'मित्यस्य चारितार्थ्येन कर्मत्वेन विवक्षायां 'हरिं रोचते भक्ति'रित्यस्यापत्तेर्दुरुद्धरत्वमेव स्यादित्युमानाथप्रभृतयः प्राहुः । तादर्थ्य=तदिच्छाधीनेच्छाविषयत्वम् ।

**गोपी स्मरादिति** । श्लाघादिः स्तुत्यादिना बोधनमर्थः । 'स्मरा'दिति हेतौ पञ्चमी । स्तुत्याऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः । स्तुतिश्च कृष्णस्यैव ।

एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यथः ।—ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव । एवं—स्थित्या शपथेन च कृष्णं स्वानुरागं बोधयतीत्यर्थः । यद्वा स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयति, स्थित्या शपथेन च कृष्णं तं बोधयतीत्यर्थः,—ज्ञीप्स्यमानपदं ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः । स्तुत्यादिमात्रार्थत्वे 'कृष्णं श्लाघते' 'कृष्णं ह्नुते'इत्येव । 'ज्ञीप्स्यमान' इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच् ।

**धारेरु** । 'धृङ् अवस्थाने'इति ण्यन्तस्य ग्रहणं—व्याख्यानात् । **भक्तायेति** ।

---

ॐ विजया ॐ

फलाश्रयत्वेन विवक्षायामिति । [पृ. ७२०] स्पृहधातोरिच्छाप्रयोजव्यापारे तदनुकूलव्यापारे च शक्तिः, यदा इच्छाप्रयोजकव्यापारः स्पृहेरर्थस्तदा 'पुष्पेभ्यः स्पृहयती'ति भवति, अनुकूलत्वसम्बन्धावच्छिन्नप्रकारत्वाश्रयत्वरूपफलत्वस्य इच्छायामभावेन कर्मसञ्ज्ञाया अप्रवृत्तेः । यदा इच्छानुकूलव्यापारः स्पृहेरर्थः, तदा—'पुष्पाणि स्पृहयती'ति । यद्वा-विषयताकेच्छानुकूलव्यापारः स्पृहेरर्थः, यदा च विषयतायां पुष्पवृत्तित्वान्वयविवक्षा तदा 'पुष्पेभ्यः स्पृहयती'ति, यदा इच्छारूपफलेऽन्वयविवक्षा तदा—'पुष्पाणि स्पृहयती'ति भवति ।

यद्वा—इच्छानुकूलव्यापार एव स्पृहेरर्थः । विषयता च फलतावच्छेदकः सम्बन्धः, तथा च विषयतासम्बन्धेन फलाश्रयत्वं यदा विवक्षितं तदा 'पुष्पाणि स्पृहयती'ति, फलतानवच्छेदकसमवायसम्बन्धेन फलाश्रयत्वं यदा विवक्षितं तदा कर्मसञ्ज्ञाया अप्राप्त्या अनेन सम्प्रदानसञ्ज्ञायां 'पुष्पेभ्यः स्पृहयती'ति श्रीदण्डिभट्टाः ।

ॐ चिदस्थिमाला ॐ

विनिगमनाविरहादाह-देवेति । तत्सत्त्वेति । अत एव'आदित्यो रोचते' इति दीप्त्यर्थे सञ्ज्ञा नेति भावः। प्राचां मतासाङ्गत्यायाह-श्लाघादेरिति । प्रत्यासत्तेराह-स्तुतिश्चेति । कर्मसञ्ज्ञापवादः, हेतुत्वापवादो वा । प्राग्वदाह-ह्नुतिरिति । पक्षद्वयोपपत्तिक्रमेणाह—ज्ञीप्स्येति । प्राधान्यादाह—ण्यर्थेति । तत्स्वारस्यादाह-प्रकृत्यर्थेति । यद्विषयकज्ञानानुकूलव्यापारानुकूलव्यापारस्तस्यत्यर्थः । अन्यथा 'ज्ञाप्यमान' इत्येव वददिति भावः । एतेन 'प्रथमोपस्थितत्वात्तस्यैव ग्रहण'मिति केनचिदुक्तं, 'प्राधान्यात्तस्यैव ग्रहण'मित्यन्योक्तं चापास्तं, तदाह-इत्यन्यत्रेति । मञ्जूषादावित्यर्थः । मात्रपदेन बोधनव्यवच्छेदः । तदुपायमाह-ज्ञीप्स्येति । इति=इत्यत्र । धृञो वारणायाह—धृङिति । इति=इत्यस्य । असम्भवमूलकमाह—

ॐ विषमपदविवृतिः ॐ

पतिमनुकूलयितुं शेते इति सम्प्रत्ययात् 'क्रियार्थोपपदस्ये'ति सिद्धम् । देवदत्तमिति । अधिकरणसञ्ज्ञावत् कर्मसञ्ज्ञाप्यस्या बाधिका स्यादिति भावः । ज्ञीप्समानपदेनेति । सन्नन्तस्यापि 'बुद्धिभक्षार्थयो'रित्यनेन ग्रहणमिति भावः। 'ज्ञाप्यमान' इत्येव सुवचम् । एवं 'स्पृहेराप्य'मिति सुवचम् ।

---

ॐ वरवर्णिनी ॐ

**देवदत्तो रोचते इत्यस्याप्यापत्तेरिति** । वस्तुतस्तु कारकत्वव्याप्यधर्मपुरस्कारेणाऽविवक्षितस्य क्रियाजनकत्वेन विवक्षायाः शास्त्रकृदनभिमतत्वेन चारितार्थ्याभावेन 'पथी'तिप्राचीनोक्तं प्रत्युदाहरणमेव युक्तम् ।

ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते इत्यर्थः। प्रेरणाया भक्तासत्त्वेऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोद्ध्यम्। अवश्यदेयत्वेन मोक्षेऽपि ऋणत्वं बोद्ध्यम्।

**प्रकर्षविवक्षायान्त्विति**। फलाश्रयत्वेन विवक्षायामित्यर्थः।

**परत्वादिति**। इदं सूत्रं विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः। पुष्पसम्प्रदानिकेच्छेति चतुर्थीसमभिव्याहारे बोधः।

'कुमार्य्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च।'

—इत्यत्र क्रियासम्बन्धित्वमात्रविवक्षया षष्ठी।

अन्ये तु 'भोगाये'त्यध्याहृत्य, 'कान्ताये'ति विभक्तिविपरिणामेन वा व्याख्येयमित्याहुः।

स्पृहधातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये—सम्प्रदानत्वम्, अन्त्ये—कर्मत्वम्। ईप्सितत्वं धात्वर्थजन्यफलाश्रयत्वं, न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः। कर्मसञ्ज्ञायान्तु यथा तल्लाभस्तथोक्तम्।

**भार्यामीर्ष्यतीति**। नात्र भार्यां प्रति कोपः, किन्तु परैर्दृश्यमानां तां न सहते इत्येव। एवञ्चात्र न कोपजन्येर्ष्या किन्त्वन्यपुरुषदर्शनजन्येति भावः। हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् 'क्रियया य'मित्यनेन न सिद्धिः। 'न ह्यकुपितः क्रुद्ध्यती'ति भाष्येण प्ररूढकोप एव क्रोध इति [ बोधनेन ] कुपेस्तदर्थत्वाभावेन न तद्योगे इदम्। 'कुप्यति कस्मैचि'दित्याद्यसाध्वेव।

'उपसृष्टयो'रित्यस्यार्थमाह—**सोपसर्गयोरिति**। वैयाकरणनिकाये एष एतदथ-

---

**ॐ चिद्स्थिमाला ॐ**

**व्याख्येति**। तत एव तदर्थमाह—**स्वरूपेणेति**। अत्र कारकत्वं स्वारसिकमेवेत्याह—**प्रेरणेति**।

ननु ऋणो नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानं, तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा, उभयथापि नेह प्राप्तिः, मोक्षस्योक्तरूपऋणत्वाभावेन भक्तस्योत्तमर्णत्वाभावादत आह—**अवश्येति**। षष्ठ्यपवादः। मूलमते कर्मसञ्ज्ञापवादत्वं स्पृहेरित्यस्य, ईप्सितमात्रे ऽयन्तद्विवक्षायां परत्वात्सेत्युक्तः। एवञ्चोभयत्र शेषत्वेन विवक्षिते षष्ठ्येवेति फलितम्। हरदत्तोऽप्येवम्। इदमयुक्तं, शेषत्वेन विवक्षितातिरिक्तस्येप्सितमात्रस्य दुर्वचत्वात्। प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यफलाश्रयत्वस्यैवात्र सत्त्वेन वारयतिवैलक्षण्यात्। एतेन तथा **दण्डिशास्त्र्याद्युक्तमपास्तमत** आह—**फलेति**। अत एव 'स्पृहणीयशोभ'मित्यादौ कर्मण्यनीयर्। यत्तु शेषत्वविवक्षायां चरितार्थमिति प्राञ्चस्तन्न, कारकाधिकारात्कारकत्वेन विवक्षायामेवैतत्प्रवृत्तेरौचित्यात्। अत आह—**इदमिति**। तत्स्वरूपमाह—**क्रियेति**। मात्रपदेन तदाश्रयत्वव्यवच्छेदः। साधारणमाह-**पुष्पेति**। स्पृहेरिच्छार्थत्वात्। प्राचाङ्ग्रन्थासाङ्गत्यायाह—**कुमार्यइति**। **विवक्षयेति**। इयमेव षष्ठीविषयः। प्राचां मतमाह—**अन्ये त्विति**। गौरवमत्रारुचिः। सिद्धान्तमाह—**स्पृहेति**। मात्रपदेन फलव्यवच्छेदः। प्रकृते आह—**ईप्सितेति**। एवञ्च शेषषष्ठ्यपवादः। एतेन कर्मसञ्ज्ञायाः शेषषष्ठ्याश्चापवाद इति हेलाराजाऽिभिर्दण्डिशास्त्र्यादिश्चोक्तमपास्तम्, शेषत्वविवक्षायां चारितार्थ्येन कर्मसञ्ज्ञाबाधकत्वायोगादिति भावः। **दण्डिशास्त्र्याद्युक्तिं** खण्डयति—**हरेरिति**। अत एवान्यदपि दण्डयुक्तमसदित्याह—**न हीति**। 'इति बोधनेने'ति पाठः। **यस्येति**।—यत्सम्बन्धिशुभाशुभपरम्,

**ॐ विषमपदविवृतिः ॐ**

**क्रुधद्रुह**। क्रोधादयो ज्ञानादिवत्सविषयाः। 'यं प्रति कोप' इत्यस्य यद्विषयकः कोप इत्यर्थः।

कत्वेन प्रसिद्धः । पूर्वसूत्रापवादोऽयम् ।

**यदीय इति** । यदीयशुभाशुभसम्बन्धीत्यर्थः । राधीक्ष्योः प्रश्नविषयार्थपर्यालोचनमर्थः । कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ, अत एव इयन्, 'राधोऽकर्मकादेवे'त्युक्तेः । कृष्णसम्प्रदानकं शुभाशुभपर्यालोचनमर्थः ।

**प्रत्याङ्भ्याम्** । व्याख्यानात्प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति—**गां प्रतिशृणोतीति** । अनयोः प्रवर्तनापूर्वकाभ्युपगमोऽर्थः, तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम् ।

**अनुप्रति** । 'अनुप्रती'ति भिन्नं पदं लुप्तपञ्चम्यन्तम् । 'गृण' इति श्नान्तानुकरणात् षष्ठी । शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः ।

**पूर्वव्यापारस्येति** । शंसनस्येत्यर्थः । **प्रोत्साहयतीति** । 'ओथामे'त्यादिशब्दैरिति शेषः । **शतायेति** । करणस्यैव सम्प्रदानत्वेन भानमत्र । शतव्यापारश्च दानरूप एवेति बोध्यम् ।

**तादर्थ्ये** । तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः । यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी—गुरोरिदं गुर्वर्थमिति,—अत्र भाष्ये स्पष्टम् ।

**क्लृपीति**—सप्तमी । अर्थग्रहश्चात्र । सम्पत्तिः—उत्पत्तिः । क्लृप्तयर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थीत्यर्थः । **हितयोगे च** । चात्सुखयोगेऽपि ।

**क्रियार्थोप** । क्रिया—अर्थः—फलं यस्य तत्—क्रियार्थम् । तेन स्ववाचकं लक्ष्यते । क्रियाफलकार्थवाचकमुपपदं यस्येत्यर्थः । सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव । स्थानिशब्दश्च अप्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः । क्रियार्थक्रियोपपदत्वञ्च

ॐ चिद्स्थिमाला ॐ

अन्यथाऽसङ्गतेरित्याह—**यदीयेति** । प्रतीत्यनुवृत्त्यैव सिद्धे यत्स्येति चिन्त्यप्रयोजनमिति हरदत्तादयः । **अकर्मकाविति** । एतेनैतयोः कर्म कारकमिति प्राचो वृत्तिः प्रत्युक्ता । **व्याख्येति** । द्विवचननिर्देशमूलकादित्यर्थः । तत एवाह—**अनयोरिति** । तत्र=तथा सति । पञ्चमीसमासविध्यभावादाह—**भिन्नमिति** । व्याख्यानात् । 'प्रकृतिव'दित्यतिदेशेनाव्ययत्वादाह—**लुप्तेति** । तत एवेहापि पूर्ववत्प्रत्येकं निमित्तत्वमित्याह—**अनयोरिति** । उपस्थितत्वादाह—**शंसेति** । प्राचामसाङ्गत्यायाह—**करणेति** । तस्य व्यापारनियतत्वादाह—**शतेति** । इकोऽभ्रमायाह—**सप्तमीति** । व्याख्यानादाह—**अर्थेति** । अन्यार्थनिरासायाह—**उत्पत्तिरिति** । वाक्यार्थमाह—**क्लृप्तीति** । अन्यथानुपपत्तेराह—**तेनेति** । तथा सति विशिष्टार्थमाह—**क्रियेति** । सोऽर्थः=क्रियाफलकार्थः । निकाये=शास्त्रे । तथा सत्यन्यपदार्थस्वरूपं सम्भवादाह—**क्रियार्थेति** । मूलमुप-

ॐ विषमपदविवृतिः ॐ

**दानरूपमिति** । स्वत्वोत्पत्तिरित्यर्थः ।

तुमुनादेरेवेत्याह—**क्रियार्था क्रियेति** । 'फलेभ्यो याती'त्यादौ फलकर्मकाऽऽहरणफलकं यानमिति बोधः । यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले 'प्रविश पिण्डी'मित्यादौ तस्यैव पदस्य सम्पूर्णवाक्यार्थशक्तता तथाऽस्य समुदायस्याऽऽहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलात् । 'स्थानिन' इत्युक्तेस्तत्प्रयोगे नेति बोध्यम् । अयमेवार्थाध्याहारः ।

**नमस्कुर्मो नृसिंहायेति** । 'नमःस्वस्ती'त्यनेन तु न सिद्धिः, 'उपपदविभक्ते'रिति न्यायेन द्वितीयापत्तेः । 'पिण्डी'मित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय 'क्रियार्थोपपदस्ये'ति ।

**तुमर्थात्** । 'तुम्'शब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः । **इति सूत्रेणेति** । भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः । **यागायेति** । यागफलकं यानमित्यर्थः ।

**उपपदविभक्तेरिति** । वाचनिकमेवेदं भाष्ये पठितमिति केचित् । क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति—'अन्तराऽन्तरेणे'ति सूत्रे कैयटः ।

अत्राहुः—एवं सति 'नमस्यति देवा'नित्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वयेन—परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य—भाष्योक्तस्यासङ्गतिः । एतेन प्रधानत्वात्

॥ चिदस्थिमाला ॥

लक्षणमित्याह—**तुमुनादेरिति** । यत्तु स्थानिग्रहणसामर्थ्यादेव पदजन्योपस्थित्यभावेऽपि शाब्दबोधविषयत्वमिति दीक्षितादयः, अर्थाध्याहारेण बोध इत्यन्ये, तदुभयमसदिति ध्वनयन् सिद्धान्तमाह—**यथेति** । तदेवाह—**प्रेति** । अनतिप्रसङ्गायाह—**स्थानीति** । प्राचामसाङ्गत्याय तदुपपादयति—**अयमिति** । प्राग्वदाह—**तुमिति** ।

अत एव ततो लब्धमाह—**इतीति** । तदर्थः=तत्सूत्रार्थः । सिद्धान्तमाह—**वाचेति** । एवेन प्रधानान्तरङ्गन्यायलब्धत्वम् । **भाष्ये इति** । तत्र हि'कार्यमित्यस्येव दीयते इत्यर्थस्यापि वैयर्थ्यशङ्कावसरे मासे इति न भावलक्षणसप्तमी किन्त्वौपश्लेषिकेऽधिकरणे'इत्युक्तम् । अन्यथोभयोरपि प्रधानक्रियान्वयित्वेन तन्निमित्तकार्यस्त्वेन तयोरविषयत्वात्तदसङ्गतिः स्पष्टैव । एतेन क्रियान्वयित्वं कारकत्वमिति **दीक्षिताद्युक्तमपास्तम्** , 'यस्य चे'ति सप्तम्या अपि तत्त्वात् । मतान्तरमाह—**क्रियेति** । **अन्तरङ्ग इति** । तथा च तन्निमित्ता विभक्तिरन्तरङ्गेति भावः । **कैयटः** । सीरदेवोऽप्येवम् । 'अन्वयेन'ति पाठः । तस्य चासङ्गतावन्वयः । तत्र नमःपदार्थस्यापि क्रियात्वं, मुण्डयतौ मुण्डस्येव । 'प्रधानन्यायमूलिके'यमिति **सीरदेवाद्युक्तिं** खण्डयति—**एतेनेति** ।

॥ वरवर्णिनी ॥

**उपपदविभक्तेरिति** । अस्यान्तरङ्गमूलकत्वं कैयटोक्तमयुक्तं, वाचनिकत्वमपि तथैवाऽयुक्तम् , किन्तु 'एतेने'त्यादिना दूषितं मतमेव युक्तम् । प्रधानकार्यस्य सर्वतो बलवत्त्वादित्याहुराराध्यचरणाः ।

**भाष्योक्तस्येति** । क्रियाकारकभावसम्बन्धनिमित्तकत्वेन द्वितीयाया अन्तरङ्गत्वात्सैव स्यादिति परत्वाच्चतुर्थीशङ्काऽसङ्गतिः स्पष्टैव, तस्माद्वाचनिकमेवेदमुपपदविभक्तेरिति । एवञ्चानेन वचनेन द्वितीया·

क्रियायास्तत्सम्बन्धनिमित्तकत्वेन बलवत्त्वमित्यपि परास्तम् । कारकविभक्तित्वञ्च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम् । अन्याभिहितानुक्तकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि, 'अभिहिते प्रथमे'तिवार्तिकस्वारस्यात् , अतः प्रथमापि कारकविभक्तिरिति बोध्यम् ।

'द्वा'वित्यादौ द्वित्वादेरिव 'देवदत्तः पचती'त्यादौ उभाभ्यामेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिः ।

**नमस्करोति देवानिति** । उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्वबोधस्तदनुकूलव्यापाररूपनमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वम् । स्वशब्देन प्रयोक्ता । नमःशब्दस्य साक्षात्प्रभृतिषु ऊर्यादिषु वा पाठेन गतित्वात्सत्वम् । 'एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय' इति तु न युक्तम् , 'नमस्यति देवा'नित्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात् , 'सहयुक्ते' इत्यादिसूत्रस्थभाष्यविरोधाच्च ।

**अलमितीति** । 'अल'मित्यनेन पर्याप्त्यर्थानां ग्रहणं, व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह—**तस्मै प्रेति** । षष्ठ्या अपि साधुत्वे बीजं-**स एषामिति** ।

❀ चिदस्थिमाला ❀

उक्तदोषेणेत्यर्थः । 'कारकाधिकारपठितसञ्ज्ञानिमित्तकविभक्तित्वं कारकविभक्तित्व'मिति नियमनिरासायाह—**कारकेति** । ननु नेदं प्रथमाया इति 'सहयुक्ते' इति सूत्रभाष्यासङ्गतिरेवात आह—**अन्येति** । नचैवं तत्र द्विःकर्तृबोधापत्तिरत आह—**द्वाविति** । 'ज्ञानबोध'—इति पाठः । व्यापारश्च ज्ञानमेव । यद्यपि तादृशबोधाश्रयत्वं तटस्थप्रेक्षितुरपि समवायेन, तथापि स्वविषयविषयावधित्वसमानाधिकरणसमवायोऽत्र फलतावच्छेदकसम्बन्धो बोध्यः । 'स्वविषये'त्यत्र स्वशब्देनापकृष्टत्वज्ञानरूपं फलम् । उत्तमपुरुषाशयेनाह—**प्रयोक्तेति** । आदिना नमस्कर्ता । उक्तोर्थोऽत्र कृधातोरेव नमःशब्दो निपातो द्योतकस्तदाह—**नमःशेति** । 'हरये नम' इत्यादौ तु स्वरादिपठितो बोध्यः । प्राचोक्तिं खण्डयति—**एकस्या इति** । पर्याप्तिः= सामर्थ्यम् । भूषणवारणनिषेधार्थकस्य क्रियासमभिव्याहारावश्यकत्वेन तत्र क्रियानिमित्तकारकविभक्तिर्बाधात्पर्याप्त्यर्थेति न्यायसिद्धेति हरदत्तादयः । वस्तुतः कारकस्य शेषत्वविवक्षायां तत्र चतुर्थीवारणार्थं व्याख्यानादेव पर्याप्त्यर्थग्रहणम् , ध्वनितञ्चेदं भाष्ये तदाह—**व्याख्येति** । एवं सत्यग्रिमामङ्गतिं परिहरति—**तत्रेति** । अर्थपरत्वे इत्यर्थः । **षष्ठ्या अपीति** । एतेन यथासङ्ख्यमन्वयः सूचित इति यथाश्रुता-

❀ विषमपदविवृतिः ❀

**न तद्बोधावृत्तिरिति** । प्रातिपदिकार्थसूत्रस्थशेखरणास्य विरोधपरिहारश्चिन्त्यः ।

'साक्षात्प्रभृतीनि चे'त्यत्र 'च्व्यर्थे' इत्युनेराह—**ऊर्यादिष्विति** । **एकस्या एवेति** ।

❀ वरवर्णिनी ❀

चतुर्थ्योः प्राप्तयोः परत्वाच्चतुर्थी स्यादिति भाष्यसङ्गतिः । इदमपि अन्तरङ्गत्वमबुध्वैवोक्तम्, अन्यथा द्वितीयाचतुर्थ्योरुभयोरन्तरङ्गत्वस्य समत्वेन प्रकृतेऽन्तरङ्गत्वस्य बाधबीजत्वाभावे परत्वाच्चतुर्थ्याशङ्कायां तस्य द्वितीयाव्यवस्थापकत्वाभावाद्भाष्यासङ्गतिः स्पष्टैवेत्युमानाथादयः । एतेन=पूर्वोक्तरीत्या भाष्यासङ्गतिप्रदर्शनेन । **परास्तमिति** । चतुर्थ्या अपि क्रियासम्बन्धनिमित्तकत्वेन कारकविभक्तितया तेन द्वितीयाया बलवत्त्वासम्भवादित्याशयः । विस्तरस्त्वन्यत्र द्रष्टव्यः, परीक्ष्यानुपयोगित्वान्नेह प्रतन्यते ।

नमःपदार्थमाह—**उत्कृष्टनिष्ठो यः स्वनिष्ठेत्यादिना** । यथा देवदत्तयज्ञदत्तविष्णुमित्राः क्रमेणोत्तरोत्तरं कनिष्ठास्तत्र विष्णुमित्रकर्तृकयज्ञदत्तकर्मकनमस्कारेण यज्ञदत्ते विष्णुमित्रनिष्ठकनिष्ठत्वप्रकारको यो बोधस्तदनुकूलव्यापारं यदा विष्णुमित्रः करोति तदा 'विष्णुमित्रो यज्ञदत्तं नमस्करोती'ति भवति । वस्तुतस्तु एवं

**आशीर्विवक्षायामिति** । आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः—कुशलं मङ्गलं वा । स्वस्तियोगे चतुर्थ्या अवकाशः—'स्वस्ति जाल्मायास्ती'ति तत्त्वकथनम् । 'कुशलार्थैराशिषी'त्यस्यावकाशः—स्वस्तिभिन्नाः कुशलार्थाः । स्वस्तिशब्दोऽनव्ययमपि—

'प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु मे नित्यं सुखञ्चानुत्तमं तथा' ॥—

—इति भविष्योत्तरे प्रयोगात् ।

**मन्यकर्मणि** । **तिरस्कार इति** । अनादरो—न आदराभावमात्रम्, अपि तु नञोऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति भावः । तत्रानादर इति मन्यकर्मविशेषणं, तद्द्योतकं यत्कर्मेत्यर्थः । तेन युष्मच्छब्दाच्चतुर्थी न । तिरस्कारश्च—व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते, न त्वपकृष्टसादृश्यरूपः । तत्प्रतीतिश्च नञ्समभिव्याहारे एव । तृणतुल्यमपि न मन्ये इत्यर्थः । 'तृणाय मत्वा रघुनन्दनोऽपी'त्यादौ नञोऽध्याहारः, तदाह—**न त्वां तृणमिति** । कर्माऽत्र चतुर्थ्यर्थः ।

**श्यनेति** । न तु यका, व्याख्यानादिति भावः । श्यंस्तूपलक्षणम् । तेन लिङादावपि भवति । तद् ध्वनयन्नाह—**तानादिकयोगे नेति** ।

❀ चिदस्थिमाला ❀

सङ्गतिः परिहृता । आशीः—स्वस्त्यर्थः । सा च परहितेच्छा, हितान्वयी सम्बन्धश्चतुर्थ्यर्थ इति, तन्न, भूयादित्याशीर्लिङादेः प्रयोगानापत्तेः । 'प्रत्यभिवादे' इति सूत्रस्थभाष्याच्छूद्रे आशिषोऽभावेन 'स्वस्ति वृषलाये'त्यादौ चतुर्थ्यनापत्तेश्च, मङ्गलार्थो हि तत्र स्वस्तिशब्दः । मङ्गलार्थत्वस्यैव प्रामाणिकैरुक्तेश्चेति दिक् ।

अत आह—**स्वस्त्यर्थेति** । सूत्रेऽव्ययस्यैव ग्रहणमिति ध्वनयन्नाह—**स्वस्तीति** । तिरस्कारलाभोपायमाह—**अनादेति** । अत्र = सूत्रे । अनादरस्य द्वेधासम्भवादाह—**तिरस्कार इति** । 'प्रकृष्य कुत्सितग्रहणं कर्तव्य'मिति वार्त्तिकमूलकं, कुत्सित इति वक्तव्येऽतिशयितानादरप्रतिपत्त्यर्थानादरग्रहणमूलकं चाह—**व्याख्येति** ।

न्यूनतां परिहरति—**श्यंस्त्विति** । **लिङिति** । न त्वान्तृणाय मेने'इत्यादावित्यर्थः । ननु भाष्ये 'अनावादिष्विति वक्ष्यामि न त्वां नाव मन्ये न त्वामन्नं मन्ये' इत्युक्ताऽत्र येषु प्राणिषु नेष्यते ते तादृशो भविष्यन्ती'त्युक्तं,

❀ विषमपदविवृतिः ❀

एकजातीयाया इत्यर्थः । यथा 'इको यणची'त्यादौ । अधिकरणसप्तम्याः सतिसप्तम्याश्च प्राप्तौ आद्या बलवतीति । **मेनित्यमिति** । अत्र षष्ठ्येव । 'नमःस्वस्ती'त्यत्र साहचर्येणाव्ययस्यैव ग्रहणात् ।

❀ वरवर्णिनी ❀

स्वीकारेऽपि पूर्वोक्तविष्णुमित्रव्यापारेण देवदत्ते तथा बोधस्तत्रापि देवदत्तो विष्णुमित्रं नमतीति प्रयोगापत्तिः, तस्मादपकर्षविशिष्टव्यापारो नमःपदार्थः, वै० 'स्वसमवायिसमवेतत्व' 'स्वनिरूपितोत्कर्षविशिष्टबोधानुकूलत्वो'भयसम्बन्धेन । वै० 'स्वसमवायिसमवेतत्व' 'स्वविषयकत्वो'भयसम्बन्धेन । अत्र सम्बन्धघटितप्रथमसम्बन्धस्वीकारेण पूर्वोक्ता आपत्तिर्न । सम्बन्धघटितद्वितीयसम्बन्धस्वीकारेण आक्रोशादिविषयको यत्र बोधस्तत्रापि न नमनव्यवहारः । प्रथमसम्बन्धाऽस्वीकारे व्यापारस्यान्यसमवेतत्वे तथा व्यवहारः स्यादित्याहुः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

**नौकाकेति।** भाष्ये 'येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ती'ति येष्विति बहुवचनेन, वृत्त्युदाहरणबलेन चैष्वेवानिष्टनिर्णय इति भावः।

**गत्यर्थकर्म।** कर्मण्यपि चतुर्थ्यर्थः। गत्यर्थेति किम् ?—'ओदनं पचति'। कर्मणीति किं ?—'अश्वेन गच्छति'। **चेष्टायां किमिति।** धात्वर्थस्य क्रियात्वप्रत्वात् प्रश्नः। 'शरीरक्रियाया एव ग्रहण'मित्युत्तरम्। **पन्थानमिति।** अध्वशब्दोऽर्थपरो व्याख्यानादिति भावः। **अधिष्ठित इति।** शब्दप्रयोगसमकालिकगन्तृव्यापारजन्य-फलाश्रय इत्यर्थः। अध्वपदेन गन्तृव्याप्तोऽर्थ उच्यते, तेन गन्तृयुक्तस्त्रियां 'स्त्रियं गच्छती'त्यादौ न। स्पष्टञ्चेदं भाष्ये। **उत्पथादिति।** उत्पथं सन्त्यज्येत्यर्थः।

**इष्यत इति।** न त्वाक्रान्त इत्यर्थः। **उत्पथेनेति।** 'गन्तुमशक्त' इति शेषः।

*** इति चतुर्थी ***

**ध्रुवमपायेऽपा।** ध्रुवं—स्थिरम्। अपायो—विभागजनको व्यापारः, तदनाश्रय-इति यावत्।

---

**ॐ चिदस्थिमाला ॐ**

न तु परिगणनं तत् कथं मूलं, यदि तदाह—तदुदाहरणप्रामाण्येनोदाहृता एव नावादयस्तर्हि शृगालोक्ति-रसङ्गता, नहि तदुदाहरणं भाष्ये दत्तमत आह—**भाष्ये इति।** एतेन व्यवस्थितविभाषेति-दण्डयुक्तम-पास्तम्। धात्वर्थस्य=गत्यर्थस्य। क्रियायाः=परिस्पन्दरूपायाः। 'अनध्वनी'त्यत्राध्वशब्दस्य स्वरूपपरत्वे उत्तरासङ्गतिं परिहरति-**अध्वेति।** अन इति वाच्येऽनध्वनीत्यतन्मूलकामर्थस्यैव तत्सञ्ज्ञाविधेः कर्मणीत्यनेन सामानाधिकरण्यमूलकम्-अध्वन्यर्थग्रहणमिति वार्तिकमूलकञ्चाह-**व्याख्येति।** 'आस्थितप्रतिषेधो वक्तव्य' इति वार्तिकमूलकमाह—**शब्देति।** आस्थितः=सम्प्राप्तः। उपलक्षणतया न्यूनतां परिहरति—**अध्वेति।** ल्यब्लोपे पञ्चमीत्याह—**उत्पथमिति।** करणत्वासम्भवादाह—**गन्तुमिति।** ॐ **इति चतुर्थी** ॐ

'ध्रु गतिस्थैर्ययो'रित्यतः कुटादेः पचाद्यच्। 'ध्रुव स्थैर्ये'इति पाठे इगुपधलक्षणः कः:—इत्यभिप्रेत्याह—**स्थिरमिति।** तावतापि सर्वेष्टसिद्धेराह-**अपाय इति।** तदुक्तं हरिणा—'गतिर्विना त्ववधिना नापाय इति कथ्यते' इति। अवध्यन्वययोग्यविभागानुकूलत्व विनेति तदर्थः। एतेन पातमात्रमपाय इति निरस्तम्। वृक्षमजहत्यपि पर्णे-'भूमिं स्पृशति' 'वृक्षस्य पर्णं पतती'ति प्रयोगात्। अधोदेशसंयोगानुकूलव्यापारो हि तत्र पतेरर्थः। 'तदनाश्रय इती'ति पाठः। एवञ्चापाये=तद्विषये, ध्रुवं=प्रकृतधातुवाच्यव्यापाररहितं कारक

**ॐ विषमपदविवृतिः ॐ**

अव्ययत्वन्तु नात्र. लिङ्गसङ्ख्यायोगात्। इत्यादौ नेति। चतुर्थी नेत्यर्थः। क्रिया अपि गन्तृ-प्राप्यत्वेनाध्वत्वादिति भावः। तेन गन्तृप्राप्ते ग्रामे 'ग्रामं गच्छती'त्येव। गच्छनधिष्ठिते ग्रामे तु 'ग्रामं ग्रामाये'त्युभयं साधु। नीवह्योर्गत्यर्थत्वाभावात्तद्योगे न चतुर्थी। 'चतुर्थी चे'ति वक्तव्ये द्वितीया-ग्रहणं परामपि कृद्योगलक्षणां षष्ठीं बाधितुमिति वृत्तिः। ॐ इति चतुर्थी ॐ

---

**ॐ वरवर्णिनी ॐ**

ध्रुधातोः स्थैर्यार्थकात्कुटादेः पचाद्यचि निष्पन्नो ध्रुवशब्द इत्याशयेनाह—**स्थिरमिति।** **विभागेति।** नच लोके नाशे एवापायशब्दः प्रसिद्ध इति कथमेतदिति वाच्यं, विभागजनकव्यापारस्य स्वजनक-विभागजनकत्वसम्बन्धेनोत्तरदेशसंयोगनाशसम्बन्धितयाऽपायपदस्य तत्र व्यापारे लक्षणास्वीकारेण

विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पित-सम्बन्धपूर्वको बुद्धिकल्पितोऽपि ।—'माथुराः पाटलिपुत्रकेभ्य आढयतराः' इत्यादौ बुद्धि-कल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात् ।

कर्तृवारणाय—'ध्रुव'मिति, अन्यथा कर्तृसञ्ज्ञाया इयमपवादः स्यात्, अपायविषये यत् कारकं=तद्रूपक्रियाजनकं—तदपादानमित्यर्थसम्भवात् । कर्तृसञ्ज्ञा तु पचत्यादियोगे चरितार्था ।

हरिरप्याह—'अपाये यदुदासीनञ्चलं वा यदि वाऽचलम् ।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते' ॥—इति । स्पष्टञ्चेदं कैयटादौ ।

भाष्यानुसारिणस्तु—एवं हि 'त्रस्तादश्वात्पतितः' 'धावतः पतित' इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य—'अध्रौव्यस्याविवक्षितत्वमत्र, यतः सतो-ऽप्यविवक्षा भवती'ति समाहितं भाष्ये, तदसङ्गतं स्यात् । त्वदुक्ताध्रुवत्वस्य गतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतोऽध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । सिद्धान्तेऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचितमिति तदसङ्गतिश्च । लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । 'अतदावेशा'दित्यस्य हरिकारिकायां—तदावेशाविवक्षणादित्यर्थः । तस्मादपाये गतिविशेषे सति यद् ध्रुवम्—अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधि-त्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः । त्रासादेरवधित्वोपयोगित्वाश्रयणेन

---

**ॐ चिदस्थिमाला ॐ**

प्रत्यासत्त्या प्रकृतविभागाश्रयस्तदपादानमिति सूत्रार्थः । सर्वसंग्रहायाह—**विभागश्चेति** । ध्रुवपदे-नोक्तार्थलाभ इत्याह—**कर्तृवारेति** । नन्वेवं कर्तृसञ्ज्ञा निरवकाशा स्यादत आह—**कर्तृसञ्ज्ञेति** । एतेन 'ग्रामादागच्छति शकटेने'त्यत्र परत्वात्करणसञ्ज्ञया बाधितत्वाद्वृक्षस्य पर्णमित्यत्राकारकत्वाच्चाव्याप्तेर-भावाद्ध्रुवग्रहणं व्यर्थमिति **हरदत्तदीक्षिताद्युक्त**, 'कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेन विवक्षाभावदशायां करणसञ्ज्ञाया अप्रसङ्गेन प्राप्तापादानसञ्ज्ञावारणार्थं त'दिति—**शास्त्र्याद्युक्तञ्चा-**पास्तम् । आदिना मनोरमादिसिद्धान्तं पूर्वत्रारुचिसूचकमाह—**भाष्येति** । एवं हीत्यस्यासङ्गता-न्वयः, तदेवाह—**पतेति** । नन्वेकदेश्युक्तिरास्तामियमत आह—**सिद्धान्तेऽपीति** । लोकविरुद्धो-ऽप्युक्तार्थ इत्याह—**लोकेति** । 'ध्रुवमस्य शील'मित्यादौ तदप्रतीतेः । हरेरपि न तत्र तात्पर्यमिति तदविरोध-मप्याह—**अतदेति** । तदविरुद्धं तदुभयार्थं कथयन्सूत्रार्थमाह—**तस्मादिति** । न विषयसप्तमीत्याह—**सतीति** । 'अनाश्रयस्त'दिति पाठः । अत्रोभयत्र भाष्यं योजयति—**त्रासेति** । आदिना धावनादि ।

---

**ॐ वरवर्णिनी ॐ**

अदोषात् । पचत्यादियोगे='देवदत्त ओदनं पचती'त्यादावपायरहिते । **कर्तृवारणायेति** । 'प्रकृतधात्वर्थ-प्रधानीभूतव्यापारानाश्रयत्वे सति प्रकृतधातूपात्तप्रधानीभूतव्यापारजन्यविभागाश्रयत्वं ध्रुवत्व'मिति प्राचः कैयटादेराशयः । किञ्च प्राचां मते—'अतदावेशा'दित्यस्य—विभागजनकव्यापारानाश्रयत्वादित्यर्थः ।

**सिद्धान्त इति** । 'असत्पक्षाश्रयेण शङ्कायामपी'त्यादिः । **त्वदुक्तेति** । प्रकृतधातूपात्तप्रधानीभूतव्यापारा-नाश्रयत्वे सति प्रकृतधातूपात्तप्रधानीभूतव्यापारजन्यविभागाश्रयत्वलक्षणध्रुवपदार्थेत्यर्थः । नव्यमते च 'अतदावेशा'दित्यस्य—अध्रुवत्वाविवक्षणादित्यर्थः । चलनादेरविवक्षणादिति यावत् । अवधिभावोपगमा-श्रयत्वे सति=अवधित्वेन विवक्षितत्वे सति । तदतिरिक्तस्य=अवधिभावोपगमातिरिक्तस्य । अवधित्वोपयोगि-

—शङ्का । 'वृक्षात्पर्ण'मित्यादौ तस्यासत्त्वान्न तदुपयोगित्वं तस्य, प्रकृते विद्यमानस्यापि तस्याऽविवक्षितत्वान्न तदुपयोगित्वं तस्येत्युत्तरम् ।

[ध्रुवम्—] 'अपाये' इति तु—'वृक्षस्य पर्णं पतती'त्यादौ वस्तुतस्तस्यैव पर्णद्वारा पातजनकत्वात्प्राप्ताऽपादानत्ववारणाय । एवञ्चापाये इति—'कारके' इत्यस्य क्रिया-जनकत्वेन विवक्षिते इत्यर्थे तात्पर्यग्राहकं बोद्धयम् । 'ध्रुव'ग्रहणन्तु—कारकान्तराणा-मिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनायेत्याहुः ।

अपादानत्वशक्तिश्च—प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति—अपादान-

❀ चिद्स्थिमाला ❀

तस्य=त्रासादेः । नन्वेवं कथमुत्तरमत आह—प्रकृते इति । 'त्रस्ता'दित्यादावित्यर्थः। एवं सति लोकाविरोधः स्पष्ट एवेति बोध्यम् । नन्वत्र पक्षे न कर्तर्यतिप्रसङ्गोऽत आह—ध्रुवेति । भाष्योक्तमेवाह—वृक्षस्येति । तस्यैव=वृक्षस्यैव । नन्वेवं कथं वारणमत आह—एवञ्चेति । तदुक्तौ चेत्यर्थः । नन्वेवं ध्रुवपदं व्यर्थमत आह—ध्रुवेति । वैषम्ये दृष्टान्तः । सिद्धान्तमनेनाह—अपादानेति । पतनेऽत्र विभागजन्यः

❀ विषमपदविवृतिः ❀

इत्याहुरिति । परे तु—'सतो ध्रौव्यस्याविवक्षितत्व'मिति भाष्यस्यायमर्थः—अध्रौव्यस्य सतोऽपि अविवक्षितत्वं=ध्रुवपदव्यावर्त्यत्वेनाविवक्षितत्वम्, प्रकृतधात्वर्थव्यापाराश्रयत्वरूपा-ऽध्रौव्यस्यैव ध्रुवपदव्यावर्त्यत्वात् । यद्यपि ध्रुवपदस्य सामान्यतो व्यापारानाश्रये शक्तिः, तथापि अपायपदसन्निधानात् प्रकृतधात्वर्थव्यापारानाश्रयपरं ध्रुवपदम् । 'तदावेशाविवक्षणा'दित्यप्य-युक्तम्, तथा सति त्रस्तादिपदप्रयोगानापत्तेः ।—अर्थविवक्षया हि शब्दप्रयोगः । 'विभागो-पयोगित्वेनाविवक्षणा'दित्यर्थे तु—'लोकसिद्धातिरिक्तेऽर्थे' इत्युत्तरग्रन्थासङ्गतिः । 'पर्णद्वारे'त्यप्य-युक्तम्, एवमेव 'ब्राह्मणस्य पितरं पन्थानं पृच्छती'त्यादौ ब्राह्मणस्यापि कारकत्वापत्तेः, तात्पर्य-ग्राहकं विनापि सर्वत्र 'कारक'मित्यस्य क्रियाजनकत्वेन विवक्षितमित्यर्थकत्वात् । 'तात्पर्यग्राहक'-मित्यप्ययुक्तम् । 'अपाये'त्यस्याभावे 'नटस्य शृणोति' 'फलानां तृप्तः' 'माषाणामश्नीया'दित्यादौ प्राप्ताऽपादानत्ववारणाय 'अपाये'इत्यस्यावश्यकत्वात् । 'अपाये' इत्युक्तौ अपाये धात्वर्थे सत्येव

❀ वरवर्णिनी ❀

व्यापारस्य=अवधिताप्रयोजकप्रकृतपतादिधात्वर्थव्यापारस्य—चलनत्रासादिरूपस्य । **अवधित्वोपयो-गित्वेति** । अवधित्वोपयोगित्रासाद्याश्रयत्वेन—भाष्ये—'त्रस्तादश्वात्पतित'इत्यादौ कथमपादानते'ति शङ्के-त्यर्थः। तस्य=त्रासधावनचलनादेः । तदुपयोगित्वम्=अवधिभावोपयोगित्वम् । तस्य=निरुक्तस्थले त्रासादेः ।

इति=इत्याशयेन । त्रासादेरध्रुवत्वाप्रयोजकतेत्याशयेनेति यावत् । 'उत्तर'मित्यस्य 'भाष्ये'इति शेषः । तस्य=वृक्षस्य । पातजनकत्वात्=पतनरूपक्रियाजनकत्वात् । **प्राप्तेति** । 'अवधित्वेन विवक्षितत्वरूपा-ऽवधिभावोपगमा-ऽतिरिक्तव्यापारानाश्रयत्वे सति क्रियाजनकत्वाद्वृक्षस्यापादानत्वं प्राप्नोतीत्याशयः । अपायग्रहणे तु अपायस्य—गतिविशेषस्याजनकत्वान्न दोष इति भावः ।

ननु गतिविशेषरूपपतनक्रियाजनकतापि वृक्षस्य पर्णद्वारा परम्परयाऽस्तीत्यत आह—**एवञ्चेति** । एवञ्च क्रियाजनकत्वेन विवक्षितत्वाभावात्सम्बन्धित्वेनैव विवक्षितत्वाच्च वृक्षस्यापादानता, तत्त्वेन विवक्षायान्तु 'वृक्षात्पर्णं पतती'ति भवत्येवेति तत्त्वम् । **तात्पर्यग्राहकमिति** । अन्यथा वैयर्थ्यादित्याशयः । **व्यापारा-भावेति** । एवञ्च सौकर्यविवक्षायां 'असिश्छिनत्ति' 'स्थाली पचती'त्यादिवत्—'अश्वः पतती'ति न प्रयोग इति महाशयः ।

समभिव्याहारे विभागोऽपि धात्वर्थ इति बोध्यम्। एवञ्च 'वृक्षात्पतती'त्यादौ तदपादानक-विभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। 'वृक्षाद्भूमिं पतती'त्यादौ वृक्षापादानक-विभागपूर्वकसंयोगानुकूलो व्यापार इति बोधः।

'परस्परस्मान्मेषावपसरतः' इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं, परस्पर-पदोपात्तयोरेव विभागाश्रयत्वादपादानत्वम्।—मेषपदोपात्ते तदविवक्षणात, प्रयोगा-नुसारित्वाद्विवक्षायाः। विभागपूर्वकं पृष्ठतो गमनमपसरणम्। 'आत्मानमात्मने'त्यादा-वन्तःकरणाद्युपाधिकृतभेदवत् शब्दरूपोपाधिकृतभेदाऽग्रहणे मानाभावात्, शब्दा-लिङ्गितार्थभानस्यैव सत्त्वाच्चेत्यन्यत्र विस्तरः।

यत्तु—'अपसरतः' इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिं प्रतीतस्या-ऽपादानत्वमविरुद्धमिति, तन्न; वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवा-ऽपायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे भाष्ये उक्तं—'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति, क्रियाया एकत्वा'दिति। 'धनुषा विध्यती'-त्यत्र निःसरच्छरजन्यवेधार्थत्वाद्व्यधेरपादानत्वकरणत्वोभयप्राप्तौ परत्वात्करणत्वं बोध्यम्।

---

**❀ चिदस्थिमाला ❀**

संयोगोऽर्थ इत्यभिप्रेत्य प्राचां मतेनाह—**तदिति**। अत्र विभागजन्यसंयोगानुकूलव्यापारोऽर्थ इत्याशयेन प्राचां मतेनाह—**वृक्षाद्भूमिमिति**। सिद्धान्तमेवाह—**परेति**। एवाभ्यां तयोर्व्यवच्छेदः। नन्वेवमपि विपरीतमपि स्यादत आह—**मेषेति**। एकस्यैव विभागस्योभयानुयोगिकत्वोभयप्रतियोगिकत्वेऽपि कस्य चिदेव प्रतियोगित्वेन विवक्षेति नातिप्रसङ्ग इति भावः। तत्र बीजमाह—**प्रयोगेति**। अत एव 'चैत्रमैत्रा-वन्योन्यमाश्लिष्यत' इत्यादौ तयोः कर्मत्वसिद्धिः, अन्यथा परत्वात्कर्तृत्वमेव स्यात्। एतेनेदृशे विषये 'मेषः स्वस्मादपसरती'ति स्यादित्यपास्तम्। प्रतियोगिताया अवच्छिन्नावच्छेदकसम्बन्धभूतायाः स्वपदवाच्ये कदाप्यविवक्षणात्। नन्वपसरणं विभाग एवेति कथमिदमत आह—**विभागेति**। स्पष्टा चेयं रीतिः 'कर्मवत्कर्मणे'ति सूत्रे भाष्ये इति ध्वनयन्—तत्र हेतुमाह—**आत्मानमिति**। वैषम्ये दृष्टान्तः, तत्र तु शब्दकृतभेदाभावात्तदुपादानं भाष्ये। 'चैत्र आत्मानं हन्ती'त्यादौ शब्दभेदादेव तदुपपत्तिः, तदाह—**इत्यन्यत्रेति**। उद्योतादावित्यर्थः। **हरिकैयटदीक्षितदण्डिशास्त्र्याद्युक्तिं** खण्डयति—**यत्त्विति**।

अत्र भाष्यसम्मतिमाह—**अत एवैकेति**। धातुना तस्या एवोपादानादेवेत्यर्थः। **एकेति**। सरूपसूत्रे इत्यर्थः। धात्वर्थे प्रकृतत्वञ्च न शब्दोपात्तत्वं, किन्तु विवक्षितत्वमात्रमित्यभिप्रेत्याह—**धनुषेति**।

**❀ विषमपदविवृतिः ❀**

अपादानसञ्ज्ञेति न कश्चिद्दोषः। किञ्च सन्नियोगे अपादानत्वाभावाय—अपाये इति। तत्र हि विभागो न धात्वर्थ इति वक्ष्यते। 'व्यापाराभावबोधनाये'त्यप्ययुक्तम्। 'धावतोऽश्वात् पतित' इत्यादौ व्यापारे सत्यपि ध्रुवत्वस्य भवताऽङ्गीकारेण तदभावबोधनासम्भव इत्याहुः।

**क्रियाश्रयत्वादिति**। तत्त्वेन विवक्षणादित्यर्थः। **शब्दरूपेति**। परस्परमेषशब्दरूपवाचकशब्दोपा-धिकृतो वाच्यमेषभेदः। अपायस्य=अपसरणस्य। उपादानात्=बोधनात्। एतदुत्तरं 'परस्परशब्दार्थस्या-पायाश्रयत्वादपादानत्वं दुर्लभ'मिति शेषः। 'उभयो'रित्यतः पूर्वं 'क्रियाभेदेऽपी'ति शेषः। **क्रियाया एकत्वादिति**। भेदेनाप्रतिभासमानत्वादित्यर्थः। एकत्वारोपादिति वा। **परे तु** 'पञ्चकृत्वः पचति' 'पुनःपुनः पचती'त्याद्यनुरोधेन धातूपात्तक्रियायामेकत्वारोपाङ्गीकारेऽपि 'परस्परस्मान् मेषावपसरतः,

**ग्रामादायातीति** । आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः। 'वृक्षं-त्यजती'त्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसञ्ज्ञयाऽपादानसञ्ज्ञाया बाधः ।

स्पन्देस्तु न विभागोऽर्थ इति—'वृक्षे स्पन्दते' इत्येव । चलतेस्तु—'आसनाच्चलित' इति प्रयोगादस्त्येव विभागार्थत्वम् ।

'सार्थाद्धीयते' इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि 'अपादाने चाहीयरुहो'रिति ज्ञापकात्कर्मप्रत्ययान्त'हीं'धातुप्रयोगेऽपादानत्वम् । कर्मसञ्ज्ञायाञ्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि लकारः । सार्थेन त्यज्यते देवदत्त इत्यर्थः ।

---

### ॐ चिद्स्थिमाला ॐ

त्यजेरत्र विभागानुकूलव्यापारार्थत्वादाह—**वृक्षमिति** । ननु विभागानुकूलस्पन्दस्य धात्वर्थत्वे 'वृक्षात्स्पन्दते' इति स्यादत आह—**स्पन्देस्त्विति** । स्पन्दस्य सत्यपि यत्किञ्चिद्विभागानुकूलत्वे च वृक्षानेकविभागजनकत्वेऽपीति शेषः । ननु 'सार्थाद्धीयते' इत्यादौ धात्वर्थव्यापाराश्रयत्वं सार्थस्यास्ति ? न वा ? नाद्यः, 'अपादानमुत्तराणी'ति तस्य कर्तृत्वापत्तेः । नान्त्यः, चैत्रस्य कर्तृत्वापत्तौ तत्र कर्मणि लाघनापत्तेः । 'वृक्षन्त्यजती'त्यादौ वृक्षादेरिव सार्थस्य कर्मतापत्तौ 'सार्थो हीयते चैत्रेणे'त्यस्यापत्तेश्चात आह—**सार्थादिति** । हीयतिनिर्देशादाह—**कर्मेति** । अत एव 'चैत्रः सार्थं जहाती'त्यादौ न । **हीति**। जहातीत्यर्थः । अत एव 'भूमेरुज्जिहीते' इत्यादौ न । 'स्वरतः' इत्यादौ तु तृतीया, न पञ्चमीति स्पष्टमन्यत्र । **इत्यर्थ इति** । सम्प्रदानसञ्ज्ञासूत्रे कैयटस्वरसोऽप्येवमेव, रत्नाकरोऽप्येवमेव । एतेन '—कैयटोक्तं चिन्त्यं,

### ॐ विषमपदविवृतिः ॐ

इत्याद्यनुरोधेनारोपितैकत्वाविरुद्धोपि वास्तवभेदो ध्रुवत्वसम्पादक इत्यङ्गीक्रियते । अन्यथा ध्रुवत्वोपपादनासम्भवात् । तदुक्तं हरिणा—'मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथगिति । भाष्यानुसारिमतं तु न क्षोदसहमित्युक्तम् । प्रधानक्रियान्वयित्वेन विवक्षितं कर्तृसञ्ज्ञमिति न परस्परशब्दार्थस्य कर्तृत्वम् । अधिकमग्रे स्पष्टीभविष्यतीत्याहुः।

'ग्रामादायाती'त्यत्र विभागस्य द्विष्ठत्वेपि देवदत्तनिष्ठसमवायस्यैव फलतावच्छेदकसम्बन्धत्वेन विवक्षणात्तेन सम्बन्धेन ग्रामस्य विभागानाश्रयत्वान्न कर्मत्वम् । देवदत्तनिष्ठविभागं प्रति प्रतियोगित्वरूपमवधित्वमस्त्येवेति पञ्चमी भवति । **संयोगानुकूल इति** । तेन 'ग्रामादायाति नगर'मित्यत्र नगरस्य कर्मत्वम्। **व्यधिकरणेति** । वृक्षनिष्ठसमवायस्यैवात्र फलतावच्छेदकसम्बन्धत्वात्तेन सम्बन्धेन विभागव्यधिकरणो व्यापार इति भावः ।

**बाध इति** । एवमेव 'ग्रामं गच्छति चैत्र' इत्यत्र संयोगस्य द्विष्ठत्वेन चैत्रे ग्रामस्य तस्य कर्तृत्वेन बाधः । चैत्रनिष्ठसमवायो न फलतावच्छेदसम्बन्धत्वेन विवक्षितः, किन्तु ग्रामनिष्ठः स तथेत्यपि केचित् । एतेन 'चैत्रस्य कर्मत्ववारणाय कर्मलक्षणे परसमवेतत्वं विशेषणं देय'मिति तार्किकोक्तमपास्तम् । उक्तरीत्या निर्वाहे तस्य व्यर्थत्वात् । एतेन—'ग्रामादायातीत्यादौ ग्रामस्य कर्मत्ववारणाय व्यापारव्यधिकरणफलाश्रयत्वं कर्मत्वम्, आयातेस्तु व्यापारसमानाधिकरणविभागार्थतया, न कर्मत्व'मिति प्रयासोप्यपास्तः । विभागद्वयानङ्गीकारेऽपि उपपत्तेरुक्तत्वात् । **अपादानत्वस्य बाध इति** । अपादानत्वलक्षणे फलतावच्छेदकसम्बन्धेन विभागाश्रयत्वं

---

### ॐ वरवर्णिनी ॐ

**वृक्षं त्यजतीति** । त्यजतेर्विपूर्वकभजधातोश्च विभागानुकूलव्यापार्थकत्वेऽपि त्यजधातुविषये प्रतियोगित्वविशिष्टसमवायः फलतावच्छेदकसम्बन्धः। एवञ्च फलतावच्छेदकसम्बन्धेन फलाश्रयत्वात्कर्मसञ्ज्ञायां द्वितीया । विपूर्वकभजधातुस्थले च अनुयोगित्वविशिष्टसमवायः फलतावच्छेदक इति—वृक्षस्य फलतावच्छेदकसम्बन्धेन फलानाश्रयत्वात्कर्मसञ्ज्ञाया अप्राप्त्या अपादानसञ्ज्ञायां 'वृक्षाद्विभजते' इति रूपमित्याहुः ।

❀ चिदस्थिमाला ❀

'माषेष्वश्व'मित्यादावतिप्रसङ्गापत्तेः–"इति कौस्तुभोक्तम्, "–उक्तयुक्त्या तत्र न, किन्तु कर्मकर्तर्येव लकारः, अपगमना जहातेरर्थः । 'चैत्रं सार्थो जहाति'—अपगमयतीत्यर्थः । सा च सार्थस्यापगमना–यत् क्षुदुपघातादिना चैत्रस्यापगमने तत्समर्थाचरणं, यदा तु क्षुदुपघातादिना स्वयमेवापगच्छति तदा कर्म-कर्तृत्वम् । हीयते इत्यस्य स स्वयमेवापगच्छतीत्यर्थः । पुनः कुतो हीयते इत्यपेक्षायां—सार्थेन सम्बन्धः–" इति हरदत्तमाधवदीक्षिताद्युक्तञ्चापास्तम् । "—प्रकृते स्वातन्त्र्यसत्त्वेऽपि अश्वे तदभावेन वैषम्यात्, भक्षणस्याशाब्दत्वात् । किञ्च जहातेः कर्तृस्थक्रियत्वेन कर्मवदतिदेशाप्रवृत्त्या तत्र लकारासम्भवात्, जहातेरप्रसिद्धार्थकल्पने मानाभावात् । 'सार्थाद्धीयते य घट' इत्याद्यभावापत्तेस्तेन तस्य स्वतोऽपगमनायोगात् । 'सार्थाद्गच्छतो हीन'मिति 'ध्रुवमपाये' इति सूत्रभाष्यप्रयोगे तु 'गत्यर्थाकर्मके'ति कर्तर्येव क्तः । तत्र ह्यविवक्षितकर्मणोऽपि ग्रहणम्, अत एव 'भिन्नः कुसूल' इत्यत्र 'गत्यर्थाकर्मके'ति कर्मकर्तरि क्त इति कर्मवत्सूत्रे कैयटः । न चैवम् 'आशितः कर्ते'त्यत्रत्यभाष्यविरोधस्तत्र ह्याङ्पूर्वाद् अश्नातेः सकर्मकत्वात् कर्तर्यप्राप्तः क्तो निपात्यते इत्युक्तम् । अन्यथा 'मातुः स्मर्यते' इतिवदवक्षितकर्मत्वेनाकर्मकतया सूत्रेणैव सिद्धे निपातनं व्यर्थं स्यादिति वाच्यं, तस्य भाष्यस्य 'आशितमोदनं देवदत्तः' इत्याद्युदात्त-प्रयोगस्येष्टत्वेन तदर्थं निपातनमित्याशयस्यापि वक्तुं शक्यत्वात् । अत एव 'आशितः कर्ते'ति—निर्देशस्यायुक्तत्वं न विचारितं भगवता । दत्तवानित्याद्यर्थे 'दत्त' इत्यादि तु नापाद्यं, विवक्षायाः प्रयोगा-धीनत्वात् । एतेन 'सार्थाद्गच्छतो हीन' इति भाष्यप्रयोगानुपपत्तिरपि दोषः, क्त्वाच्यस्यैव

❀ विषमपदविवृतिः ❀

न निविष्टम्, किन्तु विभागप्रतियोगित्वरूपमवधित्वमेवेत्यपादानत्वस्य प्राप्तिः । 'देवदत्तयज्ञदत्तौ परस्परं त्यजतः' इत्यादौ देवदत्तनिष्ठव्यापारमादाय यज्ञदत्तस्य कर्मत्वं, यज्ञदत्तनिष्ठव्यापारमादाय च देवदत्तस्य कर्मत्वम् । व्यापारव्यधिकरणफलाश्रयत्वस्य कर्मलक्षणे निवेशेऽयं प्रयासः समाश्रयणीयो-भवति । फलतावच्छेदकसम्बन्धेन फलाश्रयत्वं कर्मत्वमित्याश्रयणे तु उक्तक्लेशो नादरणीयः ।

परे तु 'इमावन्योन्यं स्पृशतः', 'अन्योन्यं त्यजतः', 'सृजत्यात्मानमात्मना' इत्यादौ कर्मणः परत्वात् कर्तृसञ्ज्ञा प्राप्नोति । न च शब्दोपाधिकृतमर्थभेदमादायात्र व्यवस्था, तथा च देवदत्तादिशब्दार्थादन्योन्यादिशब्दार्थो भिन्न एव, तथा च तत्र फलतावच्छेदकसम्बन्धेन फलाश्रयत्वं, व्यापारव्यधिकरणफलाश्रयत्वं वास्तीति कर्मत्वम्, कर्तृत्वं च न तदर्थे विवक्षितं, किं तु देवदत्तादिशब्दार्थे इति वाच्यं, तथापि 'मेषान्तरक्रियापेक्ष'मिति हर्युक्तपक्षे कर्तृत्वस्य दुर्वारत्वात् ।–न हि हरिणा शब्दोपाधिकृतार्थभेदः समाश्रितः । तथा सति क्रियाभेदकल्पनवैयर्थ्या-पत्तेः । किञ्च 'सकर्मकाणां प्रतिषेधो वक्तव्यः'—'अन्योन्यं स्पृशतः' इति भाष्यविरोधः, शब्दो-पाधिकृतभेदाश्रयणे कर्तृकर्मणोर्भेदेन कर्मस्थक्रियया तुल्यक्रियकर्तुरभावात् । कल्पितभेदेन निर्वाहे वास्तवाभेदमादाय दोषापादनायोगात् ।–तस्मात् प्रधानव्यापारप्रयोज्यफलान्वयि कर्म । 'प्रयोज्ये'ति 'अग्निर्माणवकं वारयती'त्यत्राग्नेः कर्मत्ववारणाय ।—कर्तु'रिति 'तथायुक्त'मिति च अत्रैव तात्पर्यग्राहकम् । एवञ्च 'ग्रामं गच्छति देवदत्त' इत्यत्र देवदत्तस्य न कर्मत्वं, फलानन्वयात् ।

प्रधानव्यापारान्वयी कर्ता । तेन 'परस्परस्मान्मेषावपसरतः' 'अन्योन्यं स्पृशतः' '—त्यजतः' इत्यादौ परस्परादिशब्दार्थस्य न कर्तृत्वम्, प्रधानक्रियानन्वयात् । 'ध्रुवमपाये' इत्यस्यायमर्थः—'अपायो = विभागानुकूलो व्यापारः, तस्मिन् साध्ये–ध्रुवं = विभागानुकूलव्यापारानाश्रयत्वे सति विभागाश्रयः–अपादानम् । इदमवधित्वम् । तत्र प्रत्यासत्त्या यद्विभागाश्रयत्वेनापादानत्वं तद्विभागा-नुकूलव्यापारानाश्रयत्वम् । तेन 'पर्वतात्पततोऽश्वात्पतती'त्यादौ पुरुषनिष्ठविभागमादायापादानत्वं, तदनुकूलव्यापारानाश्रयत्वमश्वस्यास्त्येवेत्यश्वस्यापादानत्वम् । एवं 'त्रस्तादश्वा'दित्यादौ बोध्यम् ।

**धावत इति ।** क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधात्वर्थपत्तनाद्यनाविष्टात्, धावनस्य अविक्षणाद्वा ध्रुवत्वं वोद्धव्यम् ।

॥ चिदस्थिमाला ॥

कर्तुः कर्मवदतिदेशात्—" इति शास्त्र्युक्तमपास्तम् । स्पष्टञ्चेदमन्यत्र । प्राचां मतमाह—प्रकृतेति । सिद्धान्तमाह—धावनेति । वार्तिकार्थमाह—जुगुप्सेति । 'कस्य बिभ्यतीति'रामायणोपपत्तये आह—

॥ विषमपदविवृतिः ॥

यद्यपि पतनत्रासादेरपि पुरुषाश्वविभागानुकूलत्वं वास्तवमस्ति, तथापि यद्धात्वर्थं प्रत्यपादानत्वं विभागानुकूलतद्धात्वर्थानाश्रयत्वं तस्य सुस्थमेव । ननु 'परस्परस्मान्मेषा'विल्यादौ धात्वर्थत्रया-द्दोषो दुर्वार इति चेत्सत्यम्; यत्कर्तृनिष्ठव्यापारजन्यविभागमादायापादानत्वं तत्कर्तृव्यापारानाश्रयत्वं ध्रुवत्वम् । तच्च मेषान्यतरक्रियापेक्षं सुलभम् । धातुना निवृत्तभेदक्रियाप्रतिपादनेपि वस्तुतस्तत्तत्कर्तृनिष्ठक्रियाभेदोऽस्त्येवेति तमादाय व्यवस्था सम्भवत्येव । तथा च यत्कर्तृनिष्ठ विभागानुकूलव्यापारमादायाऽपादानत्वं तद्व्यापारानाश्रयत्वं तद्व्यापारे ध्रुवत्वं फलितम् । 'मनोऽध्रुव-त्वस्ये'ति भाष्यस्योक्त एवार्थः । 'ध्रुव'मिति तु एकपर्णतात्पर्येण 'पर्णात्पर्णं पतती'ति प्रयोगवारणाय । पर्णनिष्ठविभागानुकूलव्यापारस्य पर्णे सत्त्वात् । एवं 'चैत्रश्चैत्रं गच्छती'ति प्रयोगवारणाय कर्म-लक्षणे प्रधानव्यापारानाश्रयत्वं विशेषणं देयम् । 'ग्रामादायाती'त्यत्रोक्त एवार्थः । 'ग्रामं त्यजती'-त्यत्र संयोगनाशानुकूलो व्यापारस्त्यजेरर्थः, न तु विभागानुकूलः सः । विभागस्तु संयोग-नाशाद्भिन्न एव । तेनापाये इत्युक्तेर्नात्रापादानत्वम् । अपाये इत्यनुक्तौ 'ग्रामं त्यजति' 'ग्रामादा-याती'त्यनयोरविशेषप्रसङ्गः ।

ननु 'वृक्षात्पर्णं पतति' 'ग्रामादायाती'त्यादौ विभागरूपफलाश्रयत्वेन कर्मत्वे प्राप्ते अपादानत्वारम्भादपादानत्वं तदपवादः स्यात्, तथा च 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यासङ्गतिः । किञ्च 'गोः पयो दोग्धी'त्यत्र गोपयसोर्विभागाश्रयत्वा-विशेषात्कर्मत्वम्, अपादानत्वं वा स्यादिति चेन्न; पतत्यायात्योर्व्यापारसमानाधिकरणो विभा-गोर्थः । सामानाधिकरण्यविशिष्टविभागत्वं फलतावच्छेदकः सम्बन्धः । विभागस्यैकत्वेपि तदव-च्छिन्नाधिकरणत्वं न वृक्षग्रामयोरिति न कर्मत्वप्राप्तिः । वृक्षग्रामनिष्ठविभागीयसमवायस्य फलता-च्छेदकसम्बन्धत्वानङ्गीकाराद्वा । तथा च 'ग्रामं त्यजती'त्यत्र विभागस्य फलत्वाङ्गीकारेऽपि न दोषः । ग्रामनिष्ठविभागीयसमवायस्यैव फलतावच्छेदकसम्बन्धत्वेन तेन सम्बन्धेन फलाश्रयत्वात् ग्रामस्य कर्मत्वम् । व्यापारसमानाधिकरणविभागानुकूलव्यापार एवापायशब्दार्थ इति त्यजति-योगे नापादानत्वम् । अपादानत्वस्य कर्मत्वेन बाधो वा । त्यजत्यर्थशरीरे व्यापारव्यधिकरणत्व-निवेशो व्यर्थ एव । ग्रामनिष्ठसमवायस्यैव फलतावच्छेदकसम्बन्धत्वे वास्य तात्पर्यम् । एक-व्यापारार्थकत्वे पयोनिष्ठसमवायस्य फलतावच्छेदकत्वेन तस्य कर्मत्वम् । गोस्तेन सम्बन्धेन विभागा-नाश्रयत्वाच्च कर्मत्वम् । व्यापारद्वयार्थकत्वे तु प्रधानव्यापारानाश्रयत्वाद् ध्रुवत्वं गोरित्यपादानत्वं प्राप्तं—कर्मत्वेन बाध्यते इत्याशयेन 'अपादानमुत्तराणी'त्युक्तं भाष्ये । विभागानुकूलव्यापारस्या-पायशब्दार्थत्वे तु व्यापारद्वयार्थकदुहेरतथात्वान्न गोरपादानत्वप्रसक्तिः । तथापि नयतेरिव विशे-षणतयाऽपायार्थत्वमाश्रित्य बाध्यबाधकभाव उक्तो भाष्ये । 'अपाय'मित्यस्य प्रयोजनमुक्तमेवेत्याहुः ।

**जुगुप्सेत्यादि** । जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानम् । तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां सम्बन्धित्वेन च विवक्षायां 'पापस्य जुगुप्सते' इति षष्ठी भवत्येव-सत्यभिधाने । एवमुत्तरसूत्रेष्वपि बोध्यम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धेर्दं वार्त्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये ।

भयं भीः, त्राणं त्राः, तदाह—**भयार्थानामिति** । हेतुतृतीयापवादोऽयम् । **अरण्ये इति** । भयाद्यर्थानां योगे कारकमपादानमित्यर्थेऽविशेषात्सर्वसञ्ज्ञापवादः स्यादिति भावः।

**पराजेः** । असोढो—ग्लानिविषयः । एवञ्च पराजेरकर्मकत्वे उदाहरणत्वं,—तदाह—**ग्लायतीत्यर्थ इति** । **अभिभवतीति** । तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः ।

**प्रवृत्तिविघात इति** । भक्षण-संयोगादि-जनकव्यापाराभावानुकूलो व्यापार इत्यर्थः।

---

❀ विजया ❀

व्यापाराभावानुकूलेति । सर्वत्रानुकूल इत्यस्य—जनक इत्यर्थः । तथा च तादृशव्यापाराभाव-निष्ठजन्यतानिरूपितजनकतावान् व्यापार इत्यर्थः । अत्र नैयायिकाः-'अत्यन्ताभावस्य नित्यत्वेन

❀ चिदस्थिमाला ❀

**तस्यैवेति** । 'सती'त्वेनेनातिप्रसङ्गो वारितः । प्राचां ग्रन्थासाङ्गत्यायाह-**एषामिति** । तेच सप्त एतेन मुख्यार्थमादाय षष्ठीप्रयोगापत्त्या नेदं युक्तम् , अनभिधानं त्वगति'रितिकौस्तुभमपास्तम् । 'यथोत्तर'मिति-न्यायेन षष्ठ्या अनभिधानस्य वेष्टत्वात् , कौमुदीविरोधाच्च । अर्थान्तरभ्रमवारणायाह—**भयमिति** । हेतुः पञ्चम्यर्थ इत्याह—**हेत्विति** । नन्वत्र परत्वादधिकरणसञ्ज्ञा स्यादितिभयहेतुग्रहणं चिन्त्यप्रयोजनमिति कौस्तुभे उक्तमत आह—**भयेति** ।—अयं=योगः । एतेन, सप्तम्युपलक्षणं "—कारकशेषत्वविवक्षायामति-प्रसङ्गापत्त्या 'अरण्यस्य चोराद्बिभेती'ति न स्यात्—" इति **दण्डिशास्त्र्युक्तमपास्तं**, यथाश्रुतसामञ्जस्यात् । अत्रापि प्राग्वत् **कौस्तुभकृद्दण्डिशास्त्र्याद्युक्त्यसाङ्गत्यायाह—असोढ इत्यादि** । "असहनं ग्लानिरिति भावः । एतेनानिष्टत्वं धात्वर्थः । अध्ययनजन्यमनिष्टमिति बोधः-" **इतिशास्त्र्युक्तमपास्तं**, तथाबोधा-ननुभवात् : असोढशब्दात्तदर्थालाभात्, प्रेक्षापूर्वकारी मनुष्योऽध्ययनस्य दुःखत्वं दुर्धरत्वादि पर्यालोच्य बुद्ध्या प्राप्य ततो निवर्तते'इति भाष्यात्सर्वथाऽध्ययनाप्रवृत्तावपि अस्य प्रयोगस्येष्टत्वस्य लाभेन तत्रा-निष्टस्याध्ययनजन्यत्वासम्भवाच्च । **भक्षणेति** । भक्षणञ्च संयोगश्च तदादीत्यर्थः । अभावप्रतियोगिव्यापार-

❀ विषमपदविवृतिः ❀

**अविवक्षणादिति** । स्वरूपत एवेत्यर्थः । अवधित्वोपयोगित्वेनेत्यन्ये । **भयम्भीरिति** । क्विबन्ता-वेताविति भावः । धातुनिर्देशे तु व्यधिकरणबहुव्रीहिराश्रयणीयः स्यादिति भावः ।

**सर्वसञ्ज्ञापवाद इति** । इदमयुक्तम्, सञ्ज्ञान्तराप्राप्तिविषये 'चोराद्बिभेती'त्यादौ चारितार्थ्यात् । तस्मात् 'कस्य बिभ्यति देवाश्चे'त्यादौ हेतुत्वस्याविवक्षायां सम्बन्धित्वेन विवक्षायामपादानत्वा-भावाय । हेतुग्रहणे तु हेतुत्वेन विवक्षायामेव तत् । भयग्रहणं किम् ? 'दुर्भिक्षेऽन्नेन त्रायते'-त्यत्र मा भूत्, हेतौ तृतीयैव यथा स्यात् । 'भयहेतु'रित्युक्तौ तु भयत्राणार्थकत्राधातुयोग एवैषा, तेना'त्रस्य हेतोस्त्रायते' इत्यपि सिद्धम् । अन्यथा कारकविभक्तेर्बलवत्त्वात् पञ्चम्येव स्यात् ।

**तिरस्कारेति** । नन्वत्र कर्मसञ्ज्ञा बाधिकेति चेन्न; 'अध्ययनात्पराजयते' इत्यत्रापि अध्ययनविषयकग्लानिबोधेन तत्रापि 'घटं जानाति' 'भार्यामीर्ष्यती'तिवत् कर्मत्वप्राप्तेः ।

**संयोगादीति** । 'कूपादन्धं वारयती'त्यत्र संयोगः । 'पापान्माणवकं वारयती'त्यादिसङ्ग्रहाय-

**ईप्सित इति ।** वारणार्थधात्वर्थफलाश्रय इत्यर्थः । उदाहरणे च तद्धात्वर्थ-व्यापारजन्यसंयोगादिरूपफलाश्रयत्वाद्यवानामपादानत्वम् ।

'ईप्सित' इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपः, कर्मलक्षणे तु तमब्ग्रहणात्प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः।

**अन्तर्धौ ।** अन्तर्द्धिः–अन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थिति-रूपः,–तद्घटकं यत्कर्तृकदर्शनाभावमिच्छति तदपादानमित्यर्थस्तत्फलितमाह–**व्यवधाने सतीति ।** 'येने'त्यत्र 'कर्तृकर्मणो'रिति षष्ठी न, सौत्रत्वात् । 'आत्मन' इति प्रत्यासत्ति-लब्धम् । 'मातुर्निलीयते'इत्यादावाक्षेपलभ्येच्छा बोद्ध्या ।

**चोरानिति ।** चोरकर्मकदर्शनेच्छाऽभाव इति शाब्दोऽर्थः, स च चोरकर्तृक-स्वदर्शनाभावायेति—प्राप्तिः । इच्छामात्रस्याक्षेपलभ्यत्वे इव विशिष्टस्याक्षेपलभ्यत्वेऽपि स्यादिति भावः । प्रकृते नान्तर्द्धिरिति–न दोषः । 'येने'त्यस्याभावे हि स्वकर्मकदर्शना-भावं य इच्छतीत्यर्थे कर्तुरेव स्यादतस्तत् ।

---

ॐ विजया ॐ

तज्जनकत्वं व्यापारे न सम्भवतीत्याहुः, तन्न, 'कार्याभावः करणाभावप्रयोज्य' इत्यादि तदुक्तेरेव विरुद्धत्वात्। तस्मादत्यन्ताभावनिरूपितजनकता व्यापारे स्वीक्रियते एव । केचित्तु-'अभावानुकूले'-त्यस्य प्रागभावरक्षणानुकूलव्यापार इत्यर्थ इति वदन्ति, तेषां न काप्यनुपपत्तिरिति प्राहुः ।

ॐ चिदस्थिमाला ॐ

जन्यफलाश्रयोपादानमित्याह—**वारणेति** । **व्यापारेति** । अभावप्रतियोगीत्यर्थः । ननु तस्य न कर्तृत्व-मिति कथमिदमत आह—**ईप्सित इति** । 'यत'इत्यादिः । आश्रयमात्रस्य=कर्तुः । नन्वेवं कर्मनापत्तिरत आह—**कर्मेति** । कर्तुरीप्सितमित्यर्थः । प्रत्युदाहरणविषये प्राग्वत् कौस्तुभाद्यसङ्गतिर्बोध्या । पदार्थमाह–**अन्तर्धिरिति** । रूपः=व्यापारः । वाक्यार्थमाह—**तद्घटकेति** । अन्तर्धिघटकमित्यर्थः । 'वृक्षे शाखे'ति-वत्सप्तमी। एतेन सत्सप्तमीति शास्त्र्युक्तमपास्तम् , उपपदेतिन्यायात् । ननु येनेत्यत्र षष्ठ्यापत्तिरत आह–**येनेति । सौत्रत्वादिति** । एतेनात्मन इत्यस्य गम्यमानत्वेनोभयप्राप्तिसत्त्वेनोभयेति नियमान्न षष्ठीति **दण्ड्याद्युक्तम्** , 'अत एव निर्देशादनित्यं त'दित्यन्योक्तम् , 'कर्तुः करणत्वविवक्षया से'ति **शास्त्र्युक्तं** चापास्तम् । अधात्वर्थत्वादाह–**मातुरिति** । प्राग्वत् **कौस्तुभदण्डिशास्त्र्याद्युक्त्यसाङ्गत्यायाह-इच्छेति** । मात्रमवधारणे । विशेषणदाने त्वाह—**प्रकृते इति** । तावन्मात्रसत्त्वे येनेत्याद्यभावे अन्तर्ध्यर्थकस्य कारक-मपादानमित्यर्थेऽधिकरणादेरपि तत्त्वापत्तिर्बोध्या । अत एवाह–**येनेति । इच्छतीति** । **स्यात्**–अपादानत्व-

ॐ विषमपदविवृतिः ॐ

आदिपदम् । अत्र 'कूपो मत्संयुक्तो भूया'दिति नान्वस्येच्छा, तथापि 'उत्तरदेशो मत्संयुक्तो भूया'दितीच्छामादाय कूपस्य अन्धेप्सितत्वम् । 'व्यापारमात्रस्याक्षेप' इति पाठः । प्रयोज-काकाङ्क्षायामिति शेषः । **दर्शनाभावानुकूल इति** । 'दर्शनाभावेच्छये'ति वक्तुमुचितम् ।

**प्रत्यासत्तिलब्धमिति** । तथा च तस्या अप्रयोगान्नोभयप्राप्तावित्यस्यायं विषय इति भावः । **विशिष्टस्याक्षेपलभ्यत्वेपीति** । वस्तुतस्तु कर्मसञ्ज्ञाऽत्र बाधिका भविष्यति । तस्मा'न्मात्रा स्वस्यादर्शनमिच्छती'त्यत्र मातुर्मा भूत् । न च कर्तृसञ्ज्ञा बाधिका, अन्तर्धावित्यस्याभावे

**इच्छतिग्रहणं किमिति** । अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तद-पादानमित्यर्थोऽस्त्विति भावः । **सत्यपीति** । अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः । अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः ।

**नियमेति** । 'उपयोग'शब्दस्य तत्रैव रूढेः। नियमो—ब्रह्मचर्यादिः। **नटस्येति** । नटजन्यं श्रवणमिति बोधात्कारकत्वम् । नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम् ।

**जनिक** । प्रकृतिः—उपादानकारणं, ब्रह्म च—मायाशबलं जगदुपादानकारणम् । वृत्तौ 'हेतु'पदमप्युपादानकारणपरमेवेति बोद्धव्यम् । 'विभाषे'त्येव सिद्धे इदमपादानत्वेन बोधनार्थम् । तत्र हि 'गुणेऽस्त्रिया'मिति प्रायिकम्, 'बाहुलकं प्रकृतेस्तनुदृष्टे'रिति वार्त्तिकप्रयोगात् ।

**भुवः** । प्रभवनं—प्रथमप्रकाशः, 'प्र'ग्रहणात् । तदधिकरणमपादानमित्यर्थः । 'प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने' इति विश्वः । 'प्रकाशते' इत्यस्य योगे तु न, प्रथमप्रकाशार्थत्वाभावात्तदाह—**तत्र प्रकाशते इत्यर्थ इति** ।

❀ विजया ❀

**यत्र दर्शनाभाव एव तत्रैवेति** । गुरवस्तु—कारकाणां विवक्षाधीनत्वाद्यदा इच्छाया विवक्षितत्वं तदाऽपादानत्वम्, अन्यथा नेति—इच्छतिग्रहणं व्यर्थमेवेति वदन्ति ।

❀ चिदस्थिमाला ❀

मितिशेषः। प्राचां मतेनाह—**सतीति** । अन्तर्धिघटकेति सिद्धान्तः । विरोधभावायाह—**अदर्शेति** । एतेन दर्शनव्यवच्छेदः । लक्षणानिरासायाह—**उपेति** । **बोधादिति** । एतेन मूले—'गाथा'मित्यस्यापाठः सूचितः । एवञ्च तदाशयेनान्यथाव्याख्यानं **दण्डिशास्त्र्यादेरयुक्तमिति** बोध्यम् । स्पष्टञ्चेदमन्यत्र ।

आख्यातेतितृजन्तमित्याह—**वक्तृत्वेति** । वृत्त्यादिग्रन्थासङ्गत्यायाह—**प्रकृतिरिति** । तस्य तत्रैव प्रसिद्धेः, प्रत्याख्यानपरभाष्यसम्मतत्वाच्च । 'ततो वा इमानी'त्यादिश्रुतेराह—**ब्रह्म चेति** । वेदान्तसिद्धान्तोऽयम् ।

एवं सति मूलासङ्गतिं परिहरति—**वृत्ताविति** । 'पुत्रात्प्रमोदो जायते'इत्यादावपादानत्वारोपेणापादानत्वमिति भावः । **बोधनार्थमिति** । एतेन कारकपूर्वपदत्वनिमित्तकोत्तरपदप्रकृतिस्वरार्थमित्यपास्तम् ।

ननु गुणेऽस्त्रिया'मित्युक्तेस्तदप्राप्तिरेवात आह—**तत्रहीति** । पूर्वेण गतार्थत्वायाह—**प्रभवनमिति** । अत एव, 'भवनमपीदमेव हिमवत'इति भाष्योदाहरणाच्च, अधिकरणे अवित्याह—**तदधीति** । **जन्महेतौ** । जन्मभूमावितिपाठान्तरम् । आद्योपलब्ध्यपां स्थाने इति पाठः । 'प्रभवो जन्मकारणे। आद्योपलम्भनस्थानेऽपां

❀ विषमपदविवृतिः ❀

अपादानत्वस्य कर्तृत्वापवादत्वापत्तेः । अन्तर्धावित्युक्तौ तु दर्शनाभावेच्छापूर्वकव्यवहितदेशस्थिति-पर्यन्तार्थकधातुयोग एव अपादानत्वमिति न कश्चिद्दोषः । मायाशबलम् = मायावच्छिन्नम् । जगदुपादानेति । विवर्त्तोपादानमिति शङ्करमतम्, परिणाम्युपादानमिति भट्टभास्करमतम् ।

❀ वरवर्णिनी ❀

उपादानकारणं=समवायिकारणम् । **तनुदृष्टेरिति** । सर्वस्य नाम्नो धातुजत्वादुणादिषु च तन्वीभ्यः= अल्पाभ्यः प्रकृतिभ्य एव प्रत्ययानां विधानादवशिष्टप्रयोगसिद्धये 'उणादयो बहुल'मित्यत्र बाहुलकमाश्रितमित्यर्थः । वार्त्तिकप्रयोगात्='उणादयो बहुल'मित्यत्र वार्त्तिकप्रयोगात् । तत्र हि—'दृष्टे'रिति स्त्रीलिङ्गादपि पञ्चमी दृश्यते इत्याशयः ।

**भुवः प्रभवः** । 'जनिकर्त्तु'रित्यस्यानुवृत्त्या सिद्धे 'भू'ग्रहणं—कर्तृत्वेतरकारकत्वाक्रान्त-अनि-

**ल्यब्लोपइति** । ल्यबन्तशब्दाऽज्ञाने इत्यर्थः । **कर्मणीति** । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । **प्रासादादिति** । 'फलेभ्यो यातीं'त्यत्रेव बोधप्रक्रिया ।

'आजघ्ने विषमविलोचनस्य वक्ष' इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी । 'वक्ष' इत्यस्य 'प्राप्ये'ति शेषः । **गम्यमानाऽपीति** । विशिष्य तद्वाचकपदानुपात्ताऽपीत्यर्थः । 'कस्मात्त्व' मित्यादौ 'फलेभ्यो याती'त्यत्रेव बोधप्रक्रिया ।

**अन्येत्यर्थेति** । तदर्थश्च—भेदवान्, अत एव 'घटभिन्नः' इत्यादिसिद्धिः । नञर्थश्च भेद एवेति 'घटो न पट' इत्यत्र न पञ्चमी ।

परे तु—'ध्रुव'मिति सूत्रे 'अपाय'शब्देन भेदस्यापि ग्रहणम्, 'पञ्चमी विभक्ते' इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात्। 'भिदिर् विदारणे' इत्यत्र भेदज्ञानविषयत्वमपि विदारणम्, एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात् । अत एव 'घटाद्भेदः' इति सिद्धं, तद्योगेऽप्यपादानत्वात् । तस्यैव सम्बन्धत्वेन विवक्षायाङ्घटीयो भेद इत्यपि ।

अन्यशब्दार्थस्याक्रियात्वात्तद्योगे एतद्विधानम् ।

ॐ चिद्स्थिमाला ॐ

मूले मुनिभिद्यपी'ति हैमोऽपि । प्रत्यासत्त्या तदर्थकधातुयोग एवाप्रवृत्तेराह—**प्रथमेति** । **तत्रेति** । अन्यथा तत इत्युच्येतेति भावः । सिद्धान्तेऽध्याहाराभावेन प्राचां व्याख्यानासाङ्गत्यायाह—**ल्यबन्तेति** । अनतिप्रसङ्गायाह—**प्रत्येति** । **बोधेति** । 'वाक्यैकदेश'न्यायेनेति भावः । नन्वाजघ्नेत्यादौ यथाश्रुतान्वये सकर्मकत्वं, स्वाङ्गकर्मकत्वाभावेनात्मनेपदं कथमत आह—**आजघ्ने इति** । नन्वेवं तस्यासम्बद्धत्वापत्तिरत आह—**वक्ष इति** । 'शेष'इत्यनेन शब्दज्ञानसत्त्वाल्लोपाभावादनेन पञ्चमीति सूचितम् । 'वाक्यैकदेश'न्यायेन तस्याः शाब्दत्वेन यथाश्रुतासङ्गतेराह—**विशिष्येति** ।

अत एवाह—**कस्मादिति** । **भेदवानिति** । अत एव घटस्य भेदो घटीयो भेद इत्यादि सङ्गच्छते । मूलादि दूषयति—**परे त्विति** । **भेदस्यापीति** । सम्बन्धाभावसमनियतविभागस्य वेति भावः । अत्र हेतुमाह—**पञ्चमीति** । ननु स न धात्वर्थोऽत आह—**भिदिरिति** । अत एव = तस्यापि तत्र ग्रहणादेव । तदेवाह—**तद्योगेऽपीति** । तेनेति भावः । नन्वेवं कथमुक्तप्रयोगोऽत आह—**तस्यैवेति** । नन्वेवमत्रान्येति व्यर्थमत आह—**अन्येति** । दण्डिशास्त्र्यादिग्रन्थासाङ्गत्यायाह—

ॐ विषमपदविवृतिः ॐ

'यथोर्णनाभिः सृजते गृह्णते चे'ति दृष्टान्तानुरोधात् । ब्रह्मशरीरं मायोपादानं न तु ब्रह्म, न ह्यूर्णनाभिश्चेतनः तन्तूपादानं किन्तु तच्छरीरं, तथात्रापि औपचारिकमिति परे । **तत्र प्रकाशत इति** । 'प्रथम'मित्यस्याध्याहारेपि धातोर्न प्राथम्यमर्थ इति बोध्यम् । **शेषत्वविवक्षयेति** । तेन 'आजघ्ने' इति आत्मनेपदसिद्धिः । तत्राकर्मकाधिकारादविवक्षितकर्मणोप्यकर्मकत्वात् । **इति शेष इति** । तेन न ल्यब्लोप इति भावः । **न पञ्चमीति** । ननु निपातानां द्योतकत्वेन नात्र दोषः, अन्यथा पटपदोत्तरं षष्ठी स्यात् । एवं घटाद्भेद इत्यत्रापि न दोषः, अन्यपदेन विशेषणतया वा

ॐ वरवर्णिनी ॐ

कर्तृप्रथमप्रकाशाधिकरणस्यापादानत्वनिरासाय, तेन'हिमवति गङ्गा प्रभवती'त्यादौ नापादानत्वमित्याहुः ।

—अत एव 'घटः पटो ने'त्यादौ न पञ्चमी, नञो भेदवदर्थकत्वेऽपि अक्रियात्वात् । 'घटादेक' इत्याद्यसाध्वेव । अत एवेतरग्रहणञ्चरितार्थम् । अत एव भाष्येऽर्थग्रहणं नोक्तमित्याहुः ।

आराद्दूरसमीपयोः । एतद्योगे 'दूरान्तिकार्थै'रिति प्राप्तम् । नन्वयं देशवाची न दिक्शब्दोऽत आह—**दिशि दृष्ट इति ।** शब्दग्रहणादिति भावः । ते च रूढ्या दिग्विशेषवाचकाः पूर्वाद्य एव गृह्यन्ते, न ऐन्द्रीककुबादयो—व्याख्यानात् ।

**अवयववाचीति ।** तद्वाचिपूर्वादियोगेऽवयविवाचकान्नेत्यर्थः, ज्ञापकस्य सजातीयापेक्षत्वात् । अत एवास्मादयं पूर्वो भागः कायस्येति सिद्धम् । अवयवस्य पूर्वत्वम्—अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोद्ध्यम । **अञ्चूत्तरपदस्येति ।** दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं, तेन 'सध्र्यङ्' इत्याद्यर्थं तन्नेति भावः ।

**बाधितुमिति ।** 'परत्वात्प्राप्त'मित्यादिः । यदि तु 'षष्ठ्यतर्थे'त्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्यय एव प्रवृत्तिस्तदेदं माऽस्त्विति तत्त्वमिति भाष्ये स्पष्टम् ।

**दक्षिणा ग्रामादिति ।** दक्षिणस्यां दिशीत्यर्थे 'दक्षिणादाच्' 'आहि च दूरे'इत्याजाही । 'षष्ठ्यतसर्थे'त्यस्यापवादः ।

**प्रभृतियोग इति ।** प्रभृत्यर्थयोग इत्यर्थः ।'अपादाने पञ्चमी'ति सूत्रे 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी, 'कार्त्तिक्या आग्रहायणी मासे'—इति वार्त्तिकप्रत्याख्यानाय

---

ॐ चिदस्थिमाला ॐ

**अत एवेति** । अस्यार्थमाह—**नञ इति** । अयं=पूर्वादिः । ते च=दिशि दृष्टाश्च । अनेनातिप्रसङ्गो वारितः । आद्यफलम् 'ऐन्द्री'ति, अन्त्यफलं 'ककु'बिति । लक्ष्यमूलकमाह—**व्याख्येति** । नन्वेवमवयववाचिपूर्वादियोगेऽपि स्यादत आह—**अवेति** । यथाश्रुतासङ्गतेराह—**तद्वाचीति** । तदेवाह—**अत एवेति** । तत एव निषेधेनान्यतः प्रवृत्तेरेवेत्यर्थः । अन्यथाऽस्मादित्यत्रापि न स्यादिति भावः ।

ननु भागे किं पूर्वत्वमत आह—**अवेति** । ननु 'सध्र्य'ङित्यादावदिग्वाचके पञ्चम्यर्थं तदस्त्वत आह—**दिगिति** । यद्यपि अस्य फलं तस्य व्यावर्त्यं चेदमेकमेव भाष्ये उक्तमित्यन्यतरवाक्यमकर्तुमिति प्राप्तं तथापि लाघवादाह—**षष्ठ्यतेति** । रत्नाकरोऽप्येवम् । एतेन मूलाद्युक्तं विपरीतं चिन्त्यमिति सूचितम् ।

ॐ विषमपदविवृतिः ॐ

अन्यत्वार्थकग्रहणादित्यरुचेराह—**घटादेक इति** । अर्थग्रहणेऽत्र पञ्चमी स्यादिति भावः । एवं 'त्व'शब्दयोगेऽपि । असाधुत्वे गमकमाह—**इतरग्रहणमिति** ।

---

ॐ वरवर्णिनी ॐ

**ल्यबन्तेति** । अत्र तदादिविशेष्यकस्तदन्तविधिः । विशिष्य=विभिद्य, पृथक्कृत्येति यावत् । एकेनैव क्रियाकारकयोरुपस्थितेरित्याशयः ।

**इत्याहुरिति** । परे तु—अन्यारादित्यत्रान्यपदं भावप्रधाननिर्देशेनान्यत्वपरम्, अन्यत्वञ्च भेद एवेति 'घटाद्भेद' इत्यादौ पञ्चमी । एवमेव च 'घटादेक' इत्यपि साध्वेव, इतरग्रहणन्तु प्रपञ्चार्थमेवेत्याहुः ।

**सध्र्यङिति** । एवञ्च—'षष्ठ्यतसर्थे'ति बाधनार्थ—[ दिक्छब्दत्वादेव सिद्धे ]—पुनरञ्चूत्तरे-

"इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते—कार्तिक्याः प्रभृत्याग्रहायणी--मासे" इति भाष्येण 'प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी'त्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी'ति वचनसत्त्वस्य भगवता बोधितत्वात्। अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः। एवञ्च तदर्थकारभ्यशब्दयोगेऽपि पञ्चमी।—यथा "अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः"—इति पातञ्जलभाष्यप्रयोगे। 'प्रभृती'त्यस्य चावधिमादायेत्यर्थः। 'आरभ्ये'त्यस्यैतदर्थकतापि। अवधौ पञ्चम्यन्तार्थस्याभेदेनान्वयः। तद्विशेषणत्वेऽपि न द्वितीया, 'प्रभृत्यर्थयोगे पञ्चमी'ति भाष्यकृद्बोधितवचनात्। 'आरभ्ये'त्यस्य गृहीत्वेत्यर्थेन 'अवीचिमारभ्ये'त्यादौ द्वितीया।

वस्तुतोऽवधित्वं तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा। कार्तिकीतो विभक्ते—अत एव कार्तिक्यवधिके—आग्रहायणी-

---

ॐ विजया ॐ

अलं विस्तरेणेति। एतादृशाध्याहारादि—क्लिष्टकल्पनया वार्तिकस्य प्रत्याख्यानमयुक्त-

ॐ चिदस्थिमाला ॐ

यथाश्रुतासङ्गतेराह—**प्रभृत्यर्थेति**। **भाष्येणेति**।—करणे तृतीया। तद्विशेषणमाह—**प्रभृतीति**। अन्यथा=प्रभृतिशब्दयोगे एव पञ्चम्यङ्गीकारे। प्रभृतीत्यस्य—अव्ययस्य। नन्वेवं तद्वत्ततो द्वितीयापत्तिरत आह—**तद्विशेषणेति**। तस्यावयवित्वञ्च समभिव्याहृतपदार्थापेक्षं, यथा 'भवा'दित्यत्र मरणान्तकालस्य भवोऽवधिः, मरणान्तकालावधिं भवकालमादाय तावत्कालं हरिः सेव्यः इति बोधः। नन्वेवं कथमवीचिमारभ्येतीत्यत आह—**आरभ्येति**। इत्यर्थेन=तन्मात्रार्थेन। आदिना 'आद्यक्षणमारभ्य' 'प्रातः कालमारभ्ये'त्यादि। तद्विनावधिनिर्वाहायाह—**वस्तुत इति**। पूर्वतो वैलक्षण्यमाह—**समभीति**। तामेवाह—**विभक्ते इति**।

ॐ विषमपदविवृतिः ॐ

**वचनावश्यकत्वेनेति**। यतश्चाध्वकालनिर्माणमिति वचनावश्यकत्वेनेत्यर्थः। **पञ्चम्यन्तार्थस्येति**। स्वार्थे पञ्चमीति भावः।

**अत एवेति**। विभक्तेत्यध्याहारादेवेत्यर्थः। विभागद्वारकञ्च कार्तिक्यवधिकत्वं आग्रहायण्या

---

ॐ वरवर्णिनी ॐ

त्युक्तं, सध्र्यङादीनां सहार्थकतयाऽदिक्छन्दत्वेनाप्राप्तविधानार्थं तदावश्यकत्वादिति केषाञ्चिदुक्तिः परास्तेति भावः। तस्य='कार्त्तिक्या' इत्यस्य। **समभिव्याहृतपदार्थेति**। मासपदार्थेत्यर्थः।

**गम्यमानक्रियेति**। विभजनक्रियेत्यर्थः। कार्त्तिकीतः=कार्त्तिकपूर्णिमातः। कार्त्तिकपूर्णिमातो विभक्तः=तां त्यक्त्वा मार्गशीर्षकृष्णप्रतिपदात आरभ्य आग्रहायणीपर्यन्तं यस्त्रिंशद्दिनात्मको मार्गशीर्षमासः, स यदि कार्त्तिकीपूर्णिमाघटितस्तदा मार्गशीर्षशुक्लचतुर्दशीपर्यन्तमेव त्रिंशद्दिनात्मकः सम्पद्यते इति—ततोऽग्रिमे दिने [ एकत्रिंशे ३१ दिने ] आग्रहायणी भवतीत्यर्थः। 'कार्त्तिकीमादाये'त्यस्य--'मार्गशीर्षचतुर्दशीं याव'दिति शेषः। गते=व्यतीते सति। 'परत' इति शेषः।—एकत्रिंशे दिने इति यावत्। 'अत एवे'त्यारभ्य 'मासे' इत्यन्तं स्वरूपप्रदर्शनमात्रं, नार्थं इत्यवधेयम्। तथा च कार्त्तिकीतो विभक्ते मार्गशीर्षे कार्त्तिकीयुक्ते गते सति—ततोऽग्रे आग्रहायणीति बोध इति—**श्रीगुरुचरणाः**। **अवीचिर्नरकभेदः**।

घटित' मासे कार्तिकीमादाय गते, आग्रहायणीति बोधः । 'भवात्प्रभृति आरभ्य वे'त्यत्र भवकालाद्विभक्ते–अत एव भवावधिके मरणान्ते काले–भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्यमित्यलं विस्तरेण ।

**ज्ञापकादिति** । पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः । अयं भावः—परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव । तद्योगे 'पञ्चम्यपाङ्परिभि'-रिति वचनात्, लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धः समासः–तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्त-पञ्चम्यैव सिद्धः समासः–इति व्यर्थं तद्बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापनार्थमिति । इदम्–'अपपरिबहि'रिति सूत्रे भाष्ये स्पष्टम् ।

**पञ्चमीति** । सापीत्यर्थः । तेन 'करस्य करभो बहि'रिति सिद्धम् ।

---

**❀ विजया ❀**

मिति गुरवः । **सापीत्यर्थे इति** । अपिना षष्ठ्याः सङ्ग्रहः । अत एव ज्ञापिते चारितार्थ्यम्, अन्यथा ज्ञापितायामपि पञ्चम्या एव सम्भवात्तद्वैयर्थ्यं स्पष्टमेव ।

**❀ चिदस्थिमाला ❀**

तच्चावधित्वम्–अवधिमादायेत्याद्यर्थयोगेन तद्बोधकप्रभृत्यादियोगेन च गम्यते, अप्रयोगेऽपि 'वाक्यैकदेश'-न्यायेन तत्प्रतीतिः पञ्चमीबलादेव, तत्साहचर्यवशाच्च, यदा त्वारभ्येत्यस्य प्रथमक्रियारूपमारम्भं कृत्वेत्यर्थस्तदा तद्योगे सप्तम्यपि, 'आरभ्य तस्यां दशमीं तु यावत्प्रपूजये'दिति यथा, तदाह–**इत्यलमिति** ।

यथाश्रुतासङ्गतेराह—**पञ्चम्यन्तेनेति** । ननु तस्यापादियोगे चारितार्थ्यात्सामर्थ्येनान्यसुबन्तेनैव समासोऽस्त्वित्यत आह—**अयमिति** । तत्र='अपपरिबहिरञ्चव' इत्यत्र । तत्=पञ्चम्येति । यथाश्रुता-सङ्गतेराह—**सापीति** । अपिना यथाप्राप्तषष्ठीसमुच्चयः । अत एवाह—**तेनेति** । एतेन पञ्चमीप्रकरणेऽपि बहिर्ग्रहणं कर्तुं युक्तमित्यपास्तम् । एतेन ज्ञापकसिद्धमितिपरिभाषासञ्चारः प्राचां विफल इति सूचितम् । सम्बन्धः=प्रतियोगित्वादिः । अत एव आह—**अस्मादेवेति** ।

**❀ विषमपदविवृतिः ❀**

इति भावः । **कार्तिकीमादाय गते इति** । इदं 'प्रभृती'त्यस्य विवरणम् । तथा च 'कार्तिक्या' इत्यस्य विभक्ते' इत्यनेन शाब्दोऽन्वयः, 'प्रभृती'त्यनेनार्थोऽन्वयः । **भवकालमादायेति** । अत्र 'गते'इति न शेषः । तथा 'अवीचिमारभ्ये'त्यत्र 'विभक्त'इत्यस्य न शेषः । अवीचिः–भूभागविशेषः । **एवमन्यत्रापीति** । 'पाटलिपुत्रात्प्रभृति मथुरापर्यन्तं वृष्टो देव' इत्यत्र । **पञ्चम्या अपीति** ।

---

**❀ वरवर्णिनी ❀**

भवकालाद्विभक्ते=भवकालं विहाय एष्यमाणे । **इति बोध इति** । परे तु एवं बोधे न मानं, नाप्यनुभवः, भाष्येऽपि 'प्रयोज्यं सन्न प्रयुज्यते' इत्युक्तमतो वचनमारम्भणीयमेवेत्याहुः । अन्ये तु कार्त्तिक्या अव्यवहितो-त्तरत्वसम्बन्धेन मासेऽन्वयः, तस्य च घटकत्वसम्बन्धेनान्यत्वसम्बन्धेन वाऽग्रहायण्यामन्वय इति वचनं नावश्यकमित्याहुः ।

**वचनादिति** । परे तु—अपेत्ययं कर्मप्रवचनीय एवेत्यत्र न मानम्, एवञ्च तत्साहचर्यात्परेः कर्मप्रवचनीयस्य ग्रहणेऽपि न मानमित्याहुः । अत एवारुचेराह–**लक्षणेति** । तत्='पञ्चम्ये'ति । **अपीति** । अपि शब्दात्षष्ठ्या अपि । अन्यथा ज्ञापितेऽपि पञ्चम्यैव समासलाभा'त्पञ्चम्ये'ति पुनरपि व्यर्थमेव स्यात् । मम तु षष्ठ्यन्तवारणाय तच्चरितार्थमित्याहुः । इति सिद्धम्=बहिर्योगे षष्ठी सिद्धा ।

**प्रतिनिधि।** 'यस्मा'दिति पञ्चम्यर्थः सम्बन्धः। अस्मादेव निपातनात् पञ्चम्यर्थे पञ्चमी। प्रतिनिधि-प्रतिदानशब्दौ कर्म-'कि'-भाव-'ल्यु'डन्तौ। प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः। प्रतिनिधिः-सदृशः, प्रतिदानम्-दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम्।

**कर्तृवर्जितमिति।** कर्तृसञ्ज्ञारहितमित्यर्थः। ऋणत्वं वस्तुसन्निमित्तं न तु पञ्चमीवाच्यकोटिनिविष्टम्। **हेतुभूतमिति।** तेन करणत्वविवक्षायान्तृतीयैवेति भावः।

**विभाषा गुणे। योगविभागादिति।** 'बाहुलकं प्रकृतेस्तनुदृष्टे'रित्युक्तवार्तिक-प्रयोगात्—'गुणेऽस्त्रिया' इति प्रायिकमित्यन्ये। **धूमादिति।** 'धूम'पदं स्वज्ञाने, 'अग्निम'त्पदं स्वज्ञानविषये लाक्षणिकं बोद्ध्यम्। **समुच्चयार्थमिति।** स्पष्टञ्चेदं भाष्ये।

---

### ❀ विजया ❀

**सदृश इति।** स्वनिर्वाह्यकार्यनिर्वाहकत्वेन सादृश्यम्।

### ❀ चिदस्थिमाला ❀

अन्यत्रापि प्रयोगायाह-**नियेति।** आभ्यां योगे इति भावः। एवञ्चैतद्योगे षष्ठ्या न साधुत्वम्। एतेन=अनेनैव सूत्रेण तत्र पञ्चमीति निरस्तम्, एतद्घटकीभूतयोः प्रतिनिध्याद्यर्थकत्वाभावेन कर्मप्रवचनीयत्वाभावात्। कर्मकिल्युडन्ताविति **हरदत्तोक्तसाङ्गत्यायाह—भावेति।**

वाक्यार्थमाह-**प्रतीति। कर्मेति।** तदर्थकप्रतिरूपेत्यर्थः। ननु तत् 'दत्तप्रत्यर्पण'मिति **हरदत्तोक्ति**-रयुक्ता, असम्भवादत आह-**तुल्येति।** यथाश्रुतासङ्गतेरर्थान्तरप्रतीतिश्चाह-**कर्तृसञ्ज्ञेति।** तेन हेतुतृतीया-पवादत्वेन मौलो योगविभागो'हेतुमनुष्येभ्य'इत्यत्र पदमञ्जर्यां स्पष्टः। एवञ्च भाष्यानारूढत्वादयुक्त इति सूचयन् सिद्धान्तमाह-**बाहुलेति। उक्तेति।** उणादय इत्यर्थः। जन्यजनकभावस्य ज्ञाननिष्ठत्वा दाह—**धूमेति।** न च तस्य समुच्चयार्थत्वे मानाभावः, विकल्पार्थत्वेऽपि पक्षे षष्ठीसाधनेन तस्य चारितार्थ्यादिति वाच्यम्, अन्यतरस्याङ्ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीति भाष्यप्रामाण्येन तस्य तत्त्वाङ्गी-कारात्। निपातानामनेकार्थकत्वमिति तदाशयः, तदाह—**स्पष्टमिति।** एतेन=भाष्यविरोधेन।

### ❀ विषमपदविवृतिः ❀

पञ्चम्या एव ज्ञापने पुनः पञ्चम्येति सूत्रं व्यर्थं स्यादिति भावः। **अस्मादेव निपातनादिति।** अनेन सूत्रेणात्र पञ्चमीत्यन्ये। 'तत्प्रयोजको हेतुश्चे'ति विहितकर्तृसञ्ज्ञावर्जितमित्यर्थः। तेन 'शतेन देवदत्तेन यज्ञदत्तो बन्धित' इत्यत्र न। अत्र शतं 'तत्प्रयोजक' इति हेतुसञ्ज्ञं कर्तृसञ्ज्ञञ्च।

---

### ❀ वरवर्णिनी ❀

'प्रतिनिध्यादियोगेऽस्मादेव निर्देशात्पञ्चमी'ति मनोरमोक्तिं खण्डयति—**अस्मादेवेति।** एवञ्च लोके प्रतिनिध्यादियोगे षष्ठ्यदर्शनाद्बलयेन सूत्रे प्रयोग इति न तस्य ज्ञापकतेति भावः। **दत्तेति।** तिलेत्यर्थः। वस्तुनः=माषस्य। प्रत्यर्पणं=दानम्। **वस्तु सदिति।** येन बन्धस्तद्दृणमेव वस्तुतो यदा भवतीत्येवार्थो न तु 'शता'दिति पञ्चम्या ऋणमर्थ इति भावः। **पञ्चमीवाच्येति।** पञ्चमीवाच्यतावच्छे-दककोटिप्रविष्टमित्यर्थः। **स्वज्ञानेति।** धूमज्ञानस्यैवाग्निमज्ज्ञानं प्रति हेतुत्वादिति भावः। ज्ञाननिष्ठो हेतु-हेतुमद्भावश्च विषये आरोप्यते। एतेन=समुच्चयार्थकत्वस्वीकारेण। **पदद्वयमिति।** षष्ठ्यन्तमन्यतरस्येत्येकं

एतेनान्यतरस्य—आम्=अङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम् । विकल्पविषयेऽप्यर्था-सङ्गतेश्च ।

**परे** तु—द्वितीयासमुच्चयो न फलम् । 'विना वातं विना वर्ष'मित्यादौ 'ऋते'शब्द-योग इव 'ततोऽन्यत्रापि दृश्यते' इत्यनेन द्वितीयासिद्धेः । अत एव भाष्ये द्वितीया-समुच्चयो नोक्तः । 'पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषधो वक्तव्यः,—दक्षिणेन ग्रामं दक्षिणतो ग्रामस्य'—इति प्रकृतसूत्रस्थभाष्येण 'एनपा द्वितीये'ति सूत्रं 'षष्ठ्यत-सर्थे'त्यतः प्रागिति च सूचितम् । अन्यथा सौत्रक्रमत्यागे, न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः । अत एव 'करणे चे'ति सूत्रे द्वितीयासमुच्चयो नेत्याहुः ।

**करणे च** । करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम् । चकारः 'तृतीयान्यतरस्या'मित्यनुकर्षणार्थः । षष्ठी —'गापोष्ट'गितिवत् ।

---

### ॐ विजया ॐ

**इत्याहुरिति** । **वस्तुतस्तु** षष्ठीतो द्वितीयायाः प्राथम्यात्प्रथमं तदुपादानमिति न्याय्यमेवेति तावन्मात्रेण द्वितीयासमुच्चयखण्डनमयुक्तमेव । **इतिवदिति** । तत्र यथानन्तरपदाध्याहारेण षष्ठी तथात्रापीति भावः ।

### चिदस्थिमाला

दोषान्तरमाह—**विकल्पेति** । मूलादि दूषयन् सिद्धान्तमाह—**परे त्विति** । तस्य तदर्थत्वस्य सिद्धान्तत्वे-ऽप्याह—**द्वितीयेति** । यदर्थं तथोक्तं तदन्यथासिद्धिमाह—**विनेति** । आदिना'केनेमौ पातितौ द्रुमौ' इत्यादि । सान्निध्यात्तत्समुच्चय इत्यत्र दोषमाह—**पञ्चम्या इति** । सूचितं च । अत एव=तथासौत्र-क्रमेण तदसमुच्चयादेव । एतेन भाष्यानुरोधी **हरदत्तो** युक्त एवेति तं भाष्यविरोधादिना दूषयन् **शास्त्री**-परास्तः । अतएवाह—**चकार इति** । ननु प्रत्ययविधौ पञ्चम्यौचित्यमत आह—**षष्ठीति** । तस्य तत्त्वविवक्षयेति भावः । द्रव्यवचनभिन्नेभ्य इत्यर्थनिरासायाह—**द्रव्येति** । अनतिप्रसङ्गायाह—**द्रव्येति** ।

### ॐ विषमपदविवृतिः ॐ

**अर्थासङ्गतेरिति** । अत्र भावाभावान्यतरस्याङ्गीकार इत्यर्थ इति केचित् । **अन्याय्यविपरीतेति** । अन्याय्यविपरीतपूर्वनिपातस्य द्वन्द्वे । एतेन प्रत्युदाहरणस्य 'दक्षिणेन ग्राम'मित्यस्य पूर्वं निर्देशो निर्बीजः स्यादिति भावः । सूत्रद्वये पञ्चमीपदानुवृत्तये वार्तिकम् । **द्रव्यभिन्नेति** । स्तोक-

---

### ॐ वरवर्णिनी ॐ

अङ्गीकारार्थकम्—'आम्' इति चेति पदद्वयमित्यर्थः । **अपास्तमिति** । 'तथासति समुच्चया-नापत्ते'रिति शेषः ।

**विकल्पेति** । विकल्पविषये निषेधविकल्पयोरुभयोरिष्टत्वेनान्यतरस्याङ्गीकाराभावादर्थासङ्गतिः स्पष्टैवेति भावः । ऋतेशब्दयोगे='पुरुषाराधनमृते' इत्यादौ । **इत्यनेनेति** । 'चैत्रं यावच्छीत'मित्यादौ यावत्तावद्योग इवेत्यर्थः । 'प्रतिषेध' इत्यस्य 'पञ्चम्या' इति शेषः । **बीजानापत्तिरिति** । परे तु स्वौजसित्यादिक्रमानुरोधेन द्वितीयायाः पूर्वं प्रयोगः । किञ्च पूर्वनिपातप्रकरणस्याऽनित्यतया तद्बलेनाष्टाध्याय्यां पाठव्यत्यासे न मानम् । 'करणे चे'त्यत्र द्वितीयासमुच्चयस्तु तथा व्यापाराभावाद्व्याख्यानाच्च नेति चिन्त्य एवायं शेखर इत्याहुः । **अनुकर्षणार्थं इति** । तेन समुच्चयो बोध्यः । **षष्ठीति** । 'सौत्रत्वा'-

**अद्रव्येति ।** द्रव्यभिन्नवचनेभ्य इत्यर्थः । द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं, लिङ्गनिरूपितविशेष्यं वा । स्तोकशब्दो यद्धर्मावेशाद्द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः । स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेव । शुक्लादिवच्चैते धर्मवचना अपि । करणत्वञ्च परम्परया । ईदृशार्थ एव च साधुत्वं सूत्रबलादिति स्पष्टम्–'अलुगुत्तरपदे' इत्यत्र कैयटे ।

करणे किं ? स्तोकम्पचति । असत्त्वरूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्त्ववचनत्वमिति दिक् ।

**दूरान्तिका ।** अत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्या'मित्यतः समुच्चयार्थकान्यतरस्या-ग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्याना-दित्याह–**चादित्यादि । प्रातिपदिकार्थमात्रे इति ।** व्याख्यानादिति भावः ।

**❋ इति पञ्चमी ❋**

---

**❀ चिदस्थिमाला ❀**

तद्वचनत्वमुपपादयाति—**स्तोकेति ।** अत्र=शास्त्रे । ननु सामानाधिकरण्यदर्शनात्–कथमिदमत आह–**शुक्लादीति । धर्मेति ।** केवलेत्यादिः । द्विविधप्रयोगात् । अतएवासत्त्ववचनेनेति भावः । नन्वेवं कथं तस्य करणत्वमत आह—**करणेति ।** अनतिप्रसङ्गायाह—**ईदृशेति ।** 'स्तोकं चलति'क्रियाविशेषणे कर्मणि मा भूदिति तदितिकाशिकाद्यसाङ्गत्यायाह—**स्तोकं पचतीति ।** एतेन क्रियाया विशेष्यत्वेन द्रव्यत्वापत्त्या तद्विशेषणस्य तस्यापि तत्त्वान्नातिप्रसङ्ग इति **हरदत्तोक्तं** काशिकादूषणमप्यपास्तम् । तदाह—**इति दिगिति ।** शब्दाधिकारेऽनिष्टसिद्धेराह—**अर्थेति ।** ननु व्यवहितसमुच्चयः प्राङ्निरस्तोऽत आह—**व्याख्येति ।** तद्वैयर्थ्यलक्ष्यानुपपत्तिमूलकादित्यर्थः । एतेन पूर्वविरुद्धमिदमित्यपास्तम् ।

ननु पूर्वसूत्रादग्रे तेभ्यो द्वितीया चत्येव सिद्धे प्रकृतिपुनर्निर्देशो व्यर्थ इति वाच्यं, गुरुनिर्देशस्य स्वार्थ-विधानार्थत्वात् । पूर्वविभक्तिवैलक्षण्यबोधनार्थं हि तथोक्तेः । तेभ्य इत्युक्ते हि उपस्थितशेषरूपपूर्वविषये एव प्रवृत्तिः स्यात्तदाह—**व्याख्येति ।** ❀ **इति पञ्चमी** ❀

**❀ विषमपदविवृतिः ❀**

शब्दे द्रव्यवाचित्वस्यापि सत्त्वेन द्रव्यवचनभिन्नेत्यर्थो न सम्भवतीति भावः । अर्थभेदाच्छब्दभेदे तु तथोक्तावपि न दोषः । द्रव्यभिन्नवचनत्वं विशेष्यतया विवक्षितम् । ननु धर्मवचना अपीति–वक्ष्यमाणत्वात्सर्वनामपरामर्शयोग्यत्वं स्तोकत्वस्यास्तीत्यरुचेराह—**लिङ्गेति ।** नपुंसकभिन्नलिङ्गेत्यर्थः ।

**परम्परयेति ।** द्रव्यद्वारेत्यर्थः। **स्तोकम्पचतीति ।** 'ज्योतिष्टोमेन यजेते'तिवत् करणतया फलस्या-न्वये तु तृतीयापञ्चम्यौ भवत एवेति बोध्यम् । द्रव्यविशेषणभिन्नवचनत्वम्–अद्रव्यवचनत्वमित्यन्ये ।

❀ **इति पञ्चमी** ❀

---

**❀ वरवर्णिनी ❀**

दिति शेषः । अत्र=सूत्रे । सर्वनाम्नो बुद्धिस्थपरामर्शकतयाऽव्यवस्थाऽत आह—**लिङ्गेति ।** 'विशेष्य'मित्यस्य विशेष्यताश्रय इत्यर्थः; । एवञ्च गुणक्रिययोरपि द्रव्यपदेन ग्रहणं, तद्भिन्नञ्च प्रवृत्तिनिमित्तमिति तत्त्वम् ।

स्तोकशब्दः=स्तोकादिशब्दः । 'अल्पादी'त्यस्य—स्तोकादीत्यर्थः । अल्पत्व-स्तोकत्वादीति यावत् । धर्मवचनाः=स्तोकत्वादिप्रवृत्तिनिमित्तमात्रवाचकाः । परम्परया=स्तोकत्वाश्रयद्वारा । व्याख्यानात्=-'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे' इति न्यायमूलकाद्व्याख्यानात् । ❀ **इति पञ्चमी** ❀

**षष्ठी शेषे।** शेषे उक्तादन्यः।--स च तत्तद्रूपेण स्वत्वादिः, सम्बन्धत्वेन रूपेण च। कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम्। तत्रापि तन्मूलके सम्बन्धे विवक्षिते षष्ठी। तदाह—**कारकेति। स्वस्वामिभावादि-रिति।** स्वत्व-स्वामित्वसमूहः सम्बन्ध इत्यन्यत्र विस्तरः। एवं सर्वत्र बोध्यम्।

❀ विजया ❀

स्वत्वस्वामित्वसमूह इति। प्राचीननैयायिकानां मते स्वामित्वं, सम्बन्धस्तच्च न युक्तम्, पुरुषे स्वामित्वाभावात्तत्सम्बन्धेन राजपुरुषेऽपि राजाभावापत्तिः स्यात्। एवं स्वत्वं सम्बन्ध

❀ चिद्स्थिमाला ❀

नव्यग्रन्थाशङ्कायामाह—**तत्रापीति।** कारकविभक्तिविषयेऽपीत्यर्थः। यत्तु स्वत्वं स्वामित्वं वा षष्ठ्यर्थ इति; तन्न, तस्यैकमात्रवृत्तितया सम्बन्धत्वायोगात्। सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयसम्बन्धी, न च तदप्येकत्राश्रयतयाऽपरत्र निरूपकतयाऽस्त्येवेति वाच्यं; निरूपकत्वस्य वृत्त्यनियामकत्वेनोभयत्र सम्बन्धकत्वप्रतीत्यनापत्तेस्तदाह—**इत्यन्यत्रेति।** मञ्जूषादावित्यर्थः। अवयवावयविभावा-

❀ विषमपदविवृतिः ❀

**तत्तद्रूपेणेति।** चैत्रसंयुक्ते धने 'देवदत्तस्येदं न चैत्रस्ये'त्यादौ। **सम्बन्धत्वेनेति।** 'देवदत्तस्य पुत्रपाणिकम्बलानी'त्यादौ। **तन्मूलके सम्बन्ध इति।** यथा 'छात्रस्य हसितं', 'अहेः सुप्त'मित्यादौ कर्तृक्रियाभावमूलकजन्यजनकभावसम्बन्धविवक्षा। **समूह इति।**

❀ वरवर्णिनी ❀

स च=शेषश्च। तत्तद्रूपेण=स्वत्वस्वत्वादिरूपेण। नन्वेवं 'मम हस्त' इत्यत्र स्वत्वत्वेन स्वत्वबोधेऽपि अवयवत्वेन तद्बोधानापत्तिरत आह—**सम्बन्धत्वेनेति।** स्वत्वादिव्यापकधर्मेण सम्बन्धत्वेन भासमानः स्वत्वादिरपि शेष इत्यर्थः। 'राज्ञः पुरुषोऽस्ती'तिवाक्यजन्यशाब्दबोधानन्तरं 'पुरुषो राजस्वत्ववान्न वा' इति सन्देहानुदयाद्यथा विशेषरूपेण वाच्यता कल्प्यते, तथा तादृशबोधानन्तरं 'राजसम्बन्धी न वा' इति सन्देहानुदयात्सामान्येन सम्बन्धत्वेन रूपेण च वाच्यता कल्प्यते इति तत्त्वम्।

तत्रापि=तत्तद्रूपेण बोधकस्थले। तन्मूलके=क्रियाकारकभाव–क्रियाकर्तृभाव—क्रियाकर्मभावादिर्मूलं यस्य तादृशे—उपकार्योपकारभाव–प्रकृतिविकृतिभावादिरूपे सम्बन्धे–बोध्यत्वेन विवक्षिते—क्रियाजनकत्व-समानाधिकरणकर्तृत्वकर्मत्वादिरूपेण चाविवक्षिते षष्ठ्येवेति **फक्किकार्थः**। कर्तृत्वादेः सम्बन्धत्वेन विवक्षिते षष्ठ्येवेति यावत्, तथा च 'ब्राह्मणाय ददाती'त्यादावुपकार्योपकारकसम्बन्धेन ब्राह्मणविशिष्टं दानमित्यर्थ-विवक्षायां 'ब्राह्मणस्य ददाती'त्येवं षष्ठी भवत्येव। एवं 'काष्ठं भस्म करोती'त्यत्र प्रकृतिविकृतिभावेन काष्ठविशिष्टं भस्म करोतीत्यर्थे 'काष्ठस्य भस्म करोती'ति भवत्येव। एवं 'ग्रामस्य गच्छती'त्यादावपि बोध्यमिति पण्डितैकशेष-शेषावतारश्रीत्रिपाठिपादाः प्राहुः।

ननु षष्ठीवाच्यः सम्बन्धः–स्वत्वं स्वामित्वं वा? नाद्यः, तस्य राजवृत्तित्वाभावेन तत्र सम्बन्धत्वस्य वक्तुमशक्यत्वात्, स्वनिरूपितस्वामित्वसम्बन्धेन तस्य राजवृत्तित्वन्तु वक्तुमशक्यं, तादृशसम्बन्धस्य वृत्त्य-नियामकत्वात्। नाप्यन्त्यः,—स्वामित्वस्याधेयतासम्बन्धेन राजवृत्तित्वेऽपि पुरुषाऽवृत्तित्वात्। स्वनिरू-पितस्वत्वाश्रयत्वसम्बन्धस्तु वृत्त्यनियामक इत्यत आह—**समूह इति।** सम्बन्धस्य द्विष्ठत्वादित्याशयः। एतेन 'स्वामित्वं सम्बन्ध' इति जरन्नैयायिकानां, 'स्वत्वं सम्बन्ध' इति नव्यनैयायिकानाञ्च मतं निरस्तम्।

**सर्वत्रेति।** अवयवावयविभाव–जन्यजनकभाव-क्रियाकर्मभाव–क्रियाकर्तृभाव–प्रकृतिविकृतिभावोपकार्यो-पकारकभावादिसम्बन्धस्थले सर्वत्र तादृशसमूह एव तत्र सम्बन्ध इत्यर्थः। षष्ठ्यर्थस्य=स्वस्वामिभावादेः।

षष्ठ्यर्थस्य संसर्गविधयैव भानम् । कारकविभक्तिभ्योऽपि क्रियाकारकभावस्य संसर्गविधया भानमित्युक्तम् । **सम्बन्धमात्रविवक्षायामिति** । सम्बन्धत्वेन भाने इत्यर्थः ।

ॐ विजया ॐ

इति नवीननैयायिकमतमपि न युक्तम्, सम्बन्धस्य द्विष्ठत्वात्स्वत्वस्याप्यन्यधात्वात्. अतः स्वत्वस्वामित्वसमूहात्मकः सम्बन्धो वैयाकरणैरङ्गीक्रियते ।

संसर्गविधयैवेति । स्वस्वामिभावसम्बन्धेन राज्ञः पुरुषेऽन्वये लाघवादिति भावः । प्रकारतया भानस्वीकारे तु षष्ठ्याः स्वत्वमर्थः, तत्र राज्ञो निरूपितत्वसम्बन्धेनान्वयः, तस्य पुरुषे स्वरूपेणान्वय इति सम्बन्धद्वयकल्पने गौरवं नैयायिकानाम् ।

ननु स्वामित्वस्य सम्बन्धत्वस्वीकारेऽपि स्वामित्वस्य स्वनिरूपकत्वसम्बन्धेन स्वत्वेऽभावाभावाच्च दोष इति चेन्न, निरूपकत्वसम्बन्धस्य वृत्त्यनियामकत्वादभावप्रतियोगितावच्छेदकत्वाभावात्तेन सम्बन्धेनान्वयाऽसम्भवात् ।

ॐ चिदस्थिमाला ॐ

दावप्येवमित्याह—**एवमिति** । 'षष्ठी शेषे' इतिसूत्रभाष्यसम्मतम् ।

प्राचां ग्रन्थानामसाङ्गत्यायाह—**षष्ठ्यर्थेति** । एकरूपत्वाय आह—**कारकेति** । दीक्षितादिमतेनाह—**सम्बन्धेति** । 'सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां वा क्रियायामभिधीयते'

ॐ विषमपदविवृतिः ॐ

निरूप्यनिरूपकभावापन्न इति शेषः । प्रत्येकं तु न सम्बन्धत्वम्; अद्विष्ठत्वात् । **संसर्गविधयेति** । लाघवात् । प्रकारतयाभाने तत्प्रतियोगिकसम्बन्धान्तरस्य भानमङ्गीकर्तव्यमिति गौरवम् । **'प्रत्ययार्थः**

ॐ वरवर्णिनी ॐ

'भान'मित्यस्य 'लाघवा'दिति शेषः । अयम्भावः—षष्ठ्यर्थस्य संसर्गत्वे हि—स्वस्वामिभावसम्बन्धेन राजविशिष्टः पुरुष इति बोधः, तत्र सम्बन्धश्चाकाङ्क्षाभास्य इति न स पदार्थान्तरमिति—बोधे लाघवं, प्रकारतावादिमते तु–तादृशसम्बन्धस्य प्रकारत्वे प्रकारतानिरूपकसम्बन्धान्तरकल्पनात्–राजनिरूपित–स्वस्वामिभावसम्बन्धस्य स्वरूपसम्बन्धेनाश्रयः पुरुष इति बोध ति सम्बन्धद्वयकल्पनाद्गौरवमिति । [ प्रकारतया भाने सोऽपि पदार्थ इति–राजनिरूपित–[ प्रकारतया–] सम्बन्धवानिति बोधः, संसर्गत्वे तु–निरूपितत्वादिसम्बन्धद्वयाकल्पनमिति तत्त्वं श्रीत्रिपाठिचरणानुसारिणस्तत्त्वविदो गौडाः सङ्गिरन्ते । ]

केचित्तु व्युत्पत्तिवादोक्तरीत्या प्रतिबध्यप्रतिबन्धकभावलाघवानुरोधेन षष्ठ्यर्थस्य प्रकारतयैव मानमाश्रयणीयमिति प्राहुः ।

**परे तु**—प्रतिबध्यप्रतिबन्धकभावो व्यर्थ एव, ज्ञानद्वयस्य युगपदसम्भवेन ज्ञानघटितसामग्रीककार्यद्वयासम्भवात् । न चैकस्यापि समूहालम्बनज्ञानस्य कार्यद्वयप्रयोजकस्य सम्भव इति वाच्यं, प्रत्यक्षात्मकस्य शाब्दात्मकस्यापि वैकस्य समूहालम्बनात्मकस्य कार्यस्यैकदा सम्भवाद्विरोधाभावात्प्रतिबध्यप्रतिबन्धकभाववैयर्थ्यस्य तावतापि सुस्थत्वात् । यद्यपि—मनसः परमाणुरूपस्य निरवयवस्य सत्त्वेन युगपज्ज्ञानद्वयासम्भवेन नैयायिकानां कथञ्चित्प्रतिबध्यप्रतिबन्धकभावाभ्युपगम आवश्यक इत्युच्यते, तथापि 'अन्यतया सावयवं मनः' इति साङ्ख्यमतानुसारिणां शाब्दिकानां प्रतिबध्यप्रतिबन्धकभावोऽनावश्यक एवेति षष्ठ्यर्थस्य संसर्गतयैव भानमुचितम्, एकदेशावच्छिन्नेन मनसा एकस्य, अपरदेशावच्छिन्नेन मनसा चापरस्य ज्ञानस्य युगपदुपपादयितुं शक्यत्वात् । अत एव दीर्घशष्कुलीभक्षणादावनेकज्ञानानां युगपदनुभवो मञ्जूषादावुपपादित इत्युमानाथजगन्नाथशास्त्रिप्रभृतयः श्रीबालशास्त्रिचरणानुसारिणः प्राहुः । युक्तञ्चैतत्—

१ सम्बन्धत्वेन भाने=क्रियाकारकभावसम्बन्धस्य सम्बन्धत्वप्रकारेण भाने ।

यद्वा क्रियाकारकभावमूलकसम्बन्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः। कर्तुरपि तथा विवक्षा 'क्तस्य च वर्तमाने' इति सूत्रे 'छात्रस्य हसित'मित्यादौ भाष्ये स्पष्टा।

❀ चिद्स्थिमाला ❀

इति हर्युक्तेरिदमसदित्याह—यद्वेति। कारकशब्देन करणत्वादिशक्तयः। क्रियाकारकसम्बन्धः कारणं, शेषसम्बन्धस्तु फलभूतः। स च श्रूयमाणक्रियोऽश्रूयमाणक्रियश्च। स च—विशेषणत्वरूपं विशेषणत्वमेव, निमित्तत्वमेव वा—सम्बन्धत्वेन विवक्षितस्तदाह—सम्बन्धेति। एवव्यवच्छेद्यमेवाह—न त्विति। अप्रसिद्धत्वनिरासायाह—कर्तुरपीति। विशेषमनतिप्रसङ्गायाह—संयोगेति। तथा=सम्बन्धत्वेन। तथा च 'पर्वतस्य वृक्षा' इति न, वृक्षपर्वतयोराधाराधेयभावमूलकसम्बन्धाभावात्। संयोगो हि नाधाराधेयमूलको, विपरीतं तस्यैव तन्मूलकत्वात्। किञ्च संयोगो न सम्बन्धस्तस्य पदार्थयोजनामात्रहेतुत्वात्, संयोगस्य स्वतः पदार्थत्वात्, सांसर्गिकविषयतया तस्याभानाच्च। सम्बन्धश्च षष्ठ्यादिभिरेवोच्यते,सम्बन्धपदेनापि सांसर्गिकविषयतावत्त्वेन नोच्यत इति—सम्बन्धः सर्वथा पदागम्यः, संयोगस्तु न कदापि षष्ठ्यादिना तथा विषयतयोच्यते, इमौ संयुक्तावित्येव तत्र व्यवहारात्। तत्र सम्बन्धत्वव्यवहारस्तु उभयाश्रितत्वरूपसम्बन्धधर्मवत्त्वाद्गौण

❀ विषमपदविवृतिः ❀

प्रधान'मिति व्युत्पत्तिशरीरे प्रधानपदं प्रकारतान्यविषयतावत्परम्। सम्बन्धस्यैवेति। तथा च

❀ वरवर्णिनी ❀

अत एव 'राज्ञः पुरुष' इत्यत्र 'राजा विशेषणं पुरुषो विशेष्यः' इत्युक्तं 'षष्ठी शेषे' इति सूत्रे भाष्ये। सम्बन्धस्य प्रकारत्वे तु सम्बन्धं विशेष्यतया विशेषणतया वा ब्रूयादिति तत्त्वविदः।

ननु क्रियाकर्मत्वादिना भानस्थले क्रियाकारकभावसम्बन्धस्यापि सत्त्वात्तत्र द्वितीयाद्यनापत्तिरत आह—यद्वेति। क्रियाकारकभावो मूलं यस्य—उपकार्योपकारकभावादेरित्यर्थः। तद्विवक्षायां=क्रियाकारकभावसम्बन्धविवक्षायाम्।

ननु सम्बन्धस्य द्विष्ठत्वात्सम्बन्धे विधीयमाना षष्ठी राजपदादिव पुरुषपदादपि कस्मान्नेति चेन्न; विशेषणवाचकस्य राज्ञ इत्यादेः पदस्य केवलस्य प्रयोगेऽपि अनियतविशेष्यनिरूपितं विशेषणत्वं प्रतीयते, तच्च [ विशेषणत्वं—]—सम्बन्धसाकाङ्क्षमिति विशेषणवाचकाद्राजपदादेव सेत्यदोषात्। स्पष्टं चेदं भाष्यकैयटयोः।

श्रीदण्डिभट्टास्तु—न चानेन प्रतियोगिवाचकादिव अनुयोगिवाचकादपि षष्ठी कस्मान्न जायते, 'राज्ञः पुरुष' इत्यादौ स्वस्वामिभावसम्बन्धस्योभयनिष्ठत्वेन पुरुषपदादपि षष्ठ्या दुर्वारत्वादिति वाच्यम्—'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायेन—प्रथमाया अपि कारकविभक्तित्वस्वीकारेण—अदोषात्। कारकविभक्तित्वञ्च—प्रधानभूतार्थनिमित्तकविभक्तित्वमिति 'राज्ञः पुरुषस्य धन'मित्यादौ पुरुषपदार्थेन धनानुयोगिकसम्बन्धबोधिकैव षष्ठी, न तु पुरुषानुयोगिकसम्बन्धबोधिका, अत एव'सहयुक्तेऽप्रधाने' इति सूत्रे भाष्येऽप्रधानग्रहणप्रत्याख्यान सङ्गच्छते, अन्यथा 'पुत्रेण सहागतस्य पितुर्धन'मित्यादौ पितृपदोत्तरं तृतीयावारणाय [ षष्ठ्याः कारकविभक्तित्वाभावात्— ] अप्रधानग्रहणस्यावश्यकत्वेन तदसङ्गतिः स्पष्टैवेति प्राहुः।

मूले 'कर्मादीनामपि सम्बन्धमात्रविवक्षाया'मित्युक्त्या कर्तुस्तथा विवक्षा नेति भ्रमनिरासायाह—कर्तुरपीति। तथा=सम्बन्धत्वेन, क्रियाकारकभावमूलकसम्बन्धत्वेन वा।

संयोगसम्बन्धावच्छिन्नाधारस्य न तथा विवक्षा। अत एव 'घटवद्भूतल'मितिप्रयोग-साधकं मतुप्सूत्रे 'अस्मि'न्निति चरितार्थमिति तत्रैव भाष्ये स्पष्टम्। 'लोहितोष्णीषा' इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोध्यः।

**एधो दकस्येति**। एधः—कर्तृ, कर्ता वा। दकस्य—उदकस्येत्यर्थः। 'एध'शब्दोऽदन्तः पुँल्लिङ्गः 'कारक' इति सूत्रे भाष्ये प्रयुक्तः—एधाः पक्ष्यन्त इति। सान्तः क्लीबोऽपि।

**हेतौ द्योत्ये इति**। हेताविति वर्तते, हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः। तेनान्नं हेतुं पश्येत्यादौ न। **षष्ठीति**। हेतुवाचकादित्यर्थः। **निमित्तेत्यादि**। निमित्तादिप्रयोगे तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः। **किं निमित्तमिति**।—प्रथमान्तं द्वितीयान्तञ्च।

**प्रायग्रहणादिति**। एवञ्च 'षष्ठी हेतुप्रयोगे' 'सर्वनाम्नस्तृतीया चे'ति सूत्रे व्यर्थे इति बोध्यम्।

---

❀ चिद्स्थिमाला ❀

इति भावः। अत्र सम्मतिमाह—**अत एवेति**। तस्य तथाऽविवक्षणादेवेत्यर्थः। तत्रैव=मतुप्सूत्र एव।

नन्वेवं तत्र दृश्यमानबहुव्रीहिप्रयोगस्य का गतिरत आह—**लोहीति**। 'भुवनममृतं जीवनीयं दकं चे'तिहलयुधकोशादाह—**उदकेति**। तत्र द्वितीयेऽप्रसिद्धत्वान्मानमाह—**एधेति**। तमेवाह—**एधा इति**। द्वितीयलाभोपायमाह—**हेताविति**।

अनतिप्रसङ्गाय तल्लक्ष्यार्थमाह—**हेत्विति**। प्रत्यासत्तेरुभयत्तङ्क्ष्याह—**हेतुवाचकेति**। तथैवाह-**निमित्तेति**। न्यूनतां निराचष्टे—**किमीति**। गतार्थत्वादाह—**एवञ्चेति**। पञ्चम्यपवादत्वनुत्पादयति-

❀ विषमपदविवृतिः ❀

'सतां गत'मित्यादौ सर्वत्र जन्यजनकभावसम्बन्धस्यैव विवक्षेत्यर्थः। **संयोगसम्बन्धाव-च्छिन्नेति**। संयोगसम्बन्धेऽपि न षष्ठी, चैत्रसंयुते अन्यस्वामिके धने 'चैत्रस्येदं धन'मिति प्रयोगापत्तेः। अत एव मतुप्सूत्रे भाष्ये—'पर्वते वृक्षाः सन्ति न तु ते तस्य किञ्चि'दिति।

---

❀ वरवर्णिनी ❀

न तथा विवक्षा=तादृशाधारतायाः शेषत्वेन न विवक्षा। अत एव=तस्याः शेषत्वेन विवक्षाया विरहादेव। **चरितार्थमिति**। अन्यथाऽऽधारतायाः शेषत्वेन विवक्षया घटोऽस्यास्तीत्यर्थे घटवानिति सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। 'अस्मिन्निती'त्यस्य 'पद'मिति शेषः। तत्रैव=मतुप्सूत्र एव। नन्वेवमाधारस्थले षष्ठ्यन्तत्वाभावात्षष्ठ्यर्थे बहुव्रीहिर्न स्यादत आह—**लोहितेति**। लोहिता उष्णीषा येषु ऋत्विक्षु—इत्येवमित्यर्थः। कर्तृ=सान्तं क्लीबमेधः कर्तृ। कर्ता=अदन्त एधशब्द उपस्करणस्य कर्ता।

**हेताविति**। हेताविति सूत्राद्धेतावित्यनुवर्तते, हेतौ द्योत्ये इति तदर्थः। वस्तुनो हेतुत्वेऽपि हेतुहेतुमद्भावेनान्वयो यदा तदैव हेतुवाचकात्षष्ठी भवति—'अन्नस्य हेतो'रिति, न तु हेतुहेतुमद्भावेना-न्वयाभावे षष्ठी,—'अन्नं हेतुं पश्ये'ति। अत्र हि—यद्यपि वस्तुनोऽन्नस्य हेतुता, हेतुशब्दप्रयोगश्च, तथापि अन्नस्य दर्शने हेतुत्वेन नान्वयः, किन्तु क्रियाकर्मभावेनेति नात्र षष्ठी। 'अन्नस्य हेतोर्वसती'त्यत्र तु वासेऽन्नं हेतुरिति तत्र षष्ठी भवत्येवेति हृदयं गौडा व्यावर्णयन्ति।

**हेतुवाचकेति**। श्रुतत्वादित्याशयः। तेभ्यः=निमित्तादिशब्देभ्यः। तत्समानाधिकरणशब्देभ्यः=अन्नादिशब्देभ्यः। **द्वितीयान्तञ्चेति**। मूले तन्त्रेण निर्देश इत्याशयः। एवञ्च=षष्ठ्यादीनां लाभे च।

**व्यर्थे इति**। सूत्रद्वयसाध्यप्रयोगाणामनेनैव सिद्धेः।

**षष्ठ्यत** । दिक्शब्दत्वात्पञ्चम्यां प्राप्तायामिदम्। 'ततः पश्चा'दित्यत्र तु सार्वविभक्तिकः षष्ठ्यन्तात्तसिः। **षष्ठ्यपीति** । स्पष्टश्चेदं वृत्तौ, भाष्ये तु न दृश्यते । विपरीतं 'षष्ठ्यतसर्थे'ति सूत्रात्पूर्वम्—'एनपे'त्यस्य पाठ इति लभ्यते इति 'पृथग्विनानाने'ति सूत्रे उक्तम्।

**दूरान्तिकार्थैः** । यदपेक्षं दूरत्वादिकन्ततः षष्ठीत्यर्थः । **पञ्चमी चेति** । तस्या एव समुच्चयो, न द्वितीयातृतीययोरपीति भावः ।

**ज्ञोऽविदर्थ** । अत्र सूत्रे'ऽविदर्थस्ये'ति च्छेदो व्याख्यानात्। **सर्पिषो ज्ञानमिति** । जानातेः—प्रवृत्तिरर्थः । सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः ।

**अधीग** । अधीगर्थः—स्मृतिः । कर्मणि किं ?—मातुर्गुणस्मरणम् । करणे शेषेऽनेन षष्ठ्यभावे समासो भवत्येव। अत एवात्र सूत्रे भाष्ये 'शेष इति वर्तते

---

### ॐ चिदस्थिमाला ॐ

**दिगिति** । नन्वेवं भाष्यप्रयोगासङ्गतिरत आह—**तत इति** । एतेन **दीक्षितदण्डिशास्त्र्याद्युक्तं**, 'तत्प्रयोगात्तद्योगे पञ्चम्यन्ताभ्यां दक्षिणोत्तराभ्यां स्वार्थेऽतुसु'जिति अन्योक्तञ्चापास्तम् । मूलादि दूषयति—**भाष्ये त्विति** । अप्रतिषिद्धमितिन्यायनिरासायाह—**विपरीति** । तदेवाह—**षष्ठ्यतेति** । भाष्यादिति भावः । 'स्त्र्यधिकारात्परेणे'त्यत्र तृतीयान्तं शास्त्रं विशेष्यम्। एवं 'तत्रागार'मित्रापि तोरणं विशेष्यम् । 'ततः परेणे'त्यत्रोक्तरीत्यैव तसिरिति भावः। अनतिप्रसङ्गाय प्रत्यासत्तेराह—**यदेति**। शास्त्रिग्रन्थासाङ्गत्याय साम्प्रदायिकमनोरमापाठसूचनायाह—**तस्या एवेति** । **छेद इति** । अन्यथाऽसन्देहार्थं 'विदर्थस्य ज्ञः करणे' इत्येव वदेत्तदाह—**व्याख्येति** । लक्षणया आह—**जानातेरिति** । भेदभ्रमनिरासायाह—**अधीति** ।

व्यावृत्तिफलमाह—**करणे इति** । गुणे इत्यर्थः। ननु तत्सम्बन्धे एव न मानमत आह—**अत एवेति** ।

### ॐ विषमपदविवृतिः ॐ

**तस्या एवेति**। 'अन्यतरस्यां'—ग्रहणं समुच्चयार्थमिति भावः ।

**मातुर्गुणस्मरणमिति** । गुणैर्मातुः स्मरणमित्यर्थः । गुणानां करणानां शेषत्वविवक्षया षष्ठी । **भवत्येवेति** । 'अनेन षष्ठ्यां तु समासो न स्या'दिति शेषः । तत्र हेतुः—'समासनिषेधा'दिति वक्ष्यमाणः । **अत एवेति** । शेष इत्यस्यानुवृत्तेरेवेत्यर्थः । **अविवक्षित**

---

### ॐ वरवर्णिनी ॐ

'इद'मित्यस्य—'तद्बाधनाये'तिशेषः । **ततः पश्चादिति** । पश्चाच्छब्देऽतसर्थप्रत्ययस्य सत्त्वेनानेन षष्ठ्याः प्रवृत्त्या पञ्चम्या अभावेऽपि षष्ठ्यन्तादेव तसिरित्याशयः । 'षष्ठ्यपी'त्यस्य—'एनबन्तयोगे' इत्यादिः ।

**न दृश्यते इति** । एवञ्च नेदं साधुत्वानुशासकमिति तदाशयः । 'विपरीत'मित्यादिग्रन्थस्तु न युक्तः, 'पृथग्विने'ति सूत्रे एवास्माभिर्भट्टोक्तेर्दूषितत्वात् । एवञ्च भाष्येऽनुपलम्भ एवास्याप्रामाणिकत्वे दृढो हेतुरिति **गौडाः** । तस्याः=पञ्चम्याः । 'समुच्चय'इत्यस्य—'अन्यतरस्या'मिति पदेन । सन्निहितत्वादिति भावः । **द्वितीयेति** । असन्निहितत्वादित्याशयः । न च तृतीया सन्निहितैवेति तस्या एव समुच्चय उचित इति वाच्यं, तथा सत्यन्यतरस्याङ्ग्रहणवैयर्थ्यापत्तेः, एवञ्च समुच्चयार्थकान्यतरस्याङ्ग्रहणसामर्थ्यादेव पञ्चम्याः समुच्चय इत्यन्ये । **व्याख्यानादिति** । 'विदर्थस्य ज्ञ'इत्येवासन्देहाय सूत्रयितव्ये सन्देहजनकयथाश्रुतन्यासरूपाद्व्याख्यानादित्यर्थः ।

नन्वेवमप्यसन्देहाय—'अविदर्थस्य ज्ञ'इत्येव कुतो न सूत्रितमिति चेन्न; एकमात्रालाघवाद्यथाश्रुतन्यास इत्याशयात् ।

**भवत्येवेति** । 'षष्ठी शेषे'इत्येव सिद्धेऽधीगर्थेत्यादेरारम्भादेतद्विहितषष्ठ्या समासो नेति लभ्यते,

इत्युक्तम् । 'प्रतिपदविधाना षष्ठी न समस्यते' इति—एतैः षष्ठीसमासनिषेधान् ।

**एधो दकस्येति** । 'एध' इति पृथक्पदं, 'दक'शब्द उदकवाची ।

**रुजार्थानाम्** । रोगार्थानां धातूनामित्यर्थो व्याख्यानात् । धातोर्वचनस्या-व्यभिचारेण सामर्थ्याद्वचनेनेति कर्तरि ल्युट् । भावशब्देन सिद्धप्रयोगोऽर्थ उच्यते, ल्युट्प्रकृत्यर्थोऽविवक्षितस्तदाह—**भावकर्तृकाणामिति** । **रोगकर्तृकमिति च** । रोगोऽत्र क्षयादिः । भावकर्तृकाणां किं ?—श्लेष्मणश्चौररुजा । श्लेष्मात्र न भावः ।

**सर्पिषो नाथनमिति** । 'सर्पिर्मे भूया'दित्याशासनमित्यर्थः ।

**जासिनि** । 'जसु-मोक्षणे' इति दैवादिकस्य न ग्रहणम्, 'जासी'ति निर्देशात्, 'हिंसाया'मित्युक्तेश्च । निप्रोपसृष्टो हनो—निप्रहणः । शब्दपरत्वेऽपि सौत्रत्वा'द्धन्ते'रिति

ॐ विजया ॐ

जासिनिप्र । **दैवादिकस्य न ग्रहणमिति** । हेतुमण्ण्यन्तस्येत्यर्थः । किन्तु 'जसु-हिंसायां'—'जसु—ताडने' इतिचौरादिकयोरेव ग्रहणं, स्वार्थिकण्यन्तस्यान्तरङ्गत्वादित्याशयः ।

ॐ चिदस्थिमाला ॐ

तत्र तस्येष्टत्वादेवेत्यर्थः । नन्वनेनापि षष्ठ्यां तदुत्तसमासे किं बाधकमत आह—**प्रतीति** । इति=वार्तिको-क्तेरित्यर्थः । एतैः=सूत्रैः । तथा च तदभावार्थोऽयं सूत्रगण इति सूचितम् । प्राग्वदाह—**एध इति** । पदार्थमाह—**रोगेति** । यद्यपि रुजा व्याधौ रूढेतिधातुग्रहणे एव न मानं, तथापि 'भावकर्तृकाणा'मि-त्यस्य 'नदी कूलानि रुजती'ति भाष्ये प्रत्युदाहरणादत्र धात्वर्थमात्रपर इत्याह—**व्याख्येति** । इति=इत्यत्र । रूपोऽर्थः—घञादिवाच्यः । भावस्य वक्तृत्वासम्भवादाह—**अवीति** । तत्प्रकटनार्थमेवाभिनमित्याह—**रोगेति** । ततो भेदायाह—**रोगोत्रेति** । कैयटाद्युक्ताङ्गत्यायाह—**श्लेष्मण इति** । आशिषमाह—**सर्पिरिति** । 'जसु-ताडने'जसु-हिंसाया'मितिचुराद्योर्ग्रहणायाह-**जस्विति** । हेतुमण्णिचा तस्यापि नस्सम्भवा-दाह—**हिंसायामिति** । अर्थान्तराश्रमाय मूलानुक्तं विशेषमाह—**निप्रोपेति** । अन्यत्र तदप्रयोगमाह—

ॐ विषमपदविवृतिः ॐ

**इति** । अन्ये तु धातूनामनेकार्थत्वाद्वचिः करोत्यर्थे, ल्युट् च कर्तरि । तथा च

ॐ वरवर्णिनी ॐ

एवञ्चाधीगर्थेतिसूत्रेण षष्ठ्यां 'गुणस्मरण'मिति समासो न स्यात्, अनेन षष्ठ्यभावे तु समासो भवत्येवेत्या-शयः । अत एव='शेष'इत्यनुवृत्त्याऽस्य नियमार्थत्वादेव । एवञ्च कर्मत्वपुरस्कारेण बोधार्थमेभिः षष्ठी-विधानमिति साफल्यात् कथं समासाभावबोधनमेतद्विहितषष्ठ्यन्तानामित्यपास्तम् । एतेषां नियमार्थत्वे वार्तिक-मपि प्रमाणयति—**प्रतिपदेति** । इति=इत्यनेन वचनेन । एतैः=एतद्विहितषष्ठ्यन्तैः । **पृथगिति** । एतद्विहितषष्ठ्या समासासम्भवादिति भावः । **धातूनामिति** । धातुं विना कर्मत्वासम्भवादिति भावः । ल्युट्प्रकृत्यर्थः=वचधात्वर्थः । भावस्य वचनकर्तृत्वासम्भवादिति भावः ।

**क्षयादिरिति** । न तु 'रुजो भङ्गे'इत्युक्तेरुपस्थितो भङ्गादिरिति शेषः । **चौररुजेति** । अत्र षष्ठ्या एतत्सूत्रविहितत्वाभावात्षष्ठीसमासो भवत्येवेत्याशयः । **न भाव इति** । 'किन्तु द्रव्य'मिति शेषः ।

**दैवादिकस्येति** । किन्तु 'जसु हिंसायां'जसु ताडने'इति चुराद्योर्ग्रहणमिति शेषः । **निर्देशादिति** । न च दैवादिकाद्धेतुमण्णिचि निर्देशसङ्गतिरत आह—**हिंसायामिति** । एवञ्च हेतुमण्ण्यन्तस्य दैवादिकस्य ग्रहणेऽनन्वयापत्तिरिति भावः । ननु शब्दपरत्वे णत्वाप्राप्तिः, 'हन्ते'रिति श्तिपा निर्देशाद्धातुपरत्वलाभेन

णत्वन् । **चुरादिरिति** । घटादेस्तु न ग्रहणं, दीर्घनिर्देशात् । **क्राथनमिति** । घटादेः क्रथेः 'क्राथे'ति सूत्रे निपातनाद्वृद्धिरिति **वृत्तिः** ।

**परे** तु एतत्सूत्रप्रामाण्यान्नटसाहचर्य्याच्चायमपि चुरादिर्बोध्यः, तस्याकृतिगणत्वात् । निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां 'चोरस्य क्राथन'मित्यस्यानापत्तिः । सामान्येन निपातने चिण्णमुल्विषये 'क्रथं क्रथ'मित्यादेः 'क्रथयती'त्यादेश्चानापत्तिरित्याहुः ।

**समर्थयोरिति** । समर्थ्योर्द'सं'शब्देन समासः, शकन्ध्वादित्वात्पररूपं वा । **ब्राह्मणपणनमिति** । 'आय'प्रत्ययो वैकल्पिकत्वान्न कृतः । उदाहरणे स्तुतावेवेति नियमादपि न ।

---

### ॐ चिदस्थिमाला ॐ

**सौत्रत्वादिति** । तदुक्तिफलमाह—**घटादेरिति** । नट नृत्तावित्यस्येत्यर्थः । क्रथेः=हिंसार्थकस्य । वृत्तिः= तदादयः सर्वे । इदं दूषयति—**परे त्विति** ।

ननु तत्रानुपलम्भोऽत आह—**तस्येति** । चुरादेरित्यर्थः । एतेन मित्त्वसामर्थ्यात्परत्वाच्च—निपातनं बाधित्वा चिण्प्रत्ययेह्रस्वसाधुत्वायैव स इति णमुल्विषये 'चिण्णमुलो'रित्यस्य प्रवृत्तिरिति प्राचोक्तमपास्तम् । तस्याप्रसिद्धत्वादाह—**शकन्ध्वेति** । तत्रान्यप्रकारमप्याह—**उदेति** । 'उत्तरसूत्रद्वयारम्भसामर्थ्यादिति

### ॐ विषमपदविवृतिः ॐ

वचनशब्दः कर्तृशब्दसमशील इत्याहुः । **कर्मत्वेन विवक्षायामिति** । इदमुपलक्षणम्, हिंसायां 'चोरस्य क्राथन'मित्यस्यानापत्तिः, हेतुमण्णिचि प्रेरणाबोधापत्तेः । **क्रथं क्रथमित्यादेरिति** । ननु निपातनात्परत्वा'च्चिण्णमुलो'रिति दीर्घविकल्पे 'क्रथं—क्रथ'मित्यस्य सिद्धिः, 'क्रथयती'त्यादि तु नेष्यत एवेति चेन्न; निपातस्य शेषषष्ठीसन्नियोगशिष्टत्वाभावे णिच्सन्नियोगशिष्टत्वे चान्तरङ्गत्वाद्दीर्घे पश्चात्प्रवर्तमानदीर्घविकल्पेन जातस्यानिवृत्तेः । एवं सति मित्त्ववैयर्थ्यमापततीति चेन्न; तद्बलेन चौरादिकत्वमपीति कुतो न कल्प्यते ? घटादिस्थलचौरादिकत्वयोः कल्पने सूत्रे 'क्राथे ति निर्देशोऽप्युपपन्नः, 'क्रथयती'त्यपि सिध्यति । त्वन्मते निपातनाद्वृद्धिः कल्प्या, मित्त्वसामर्थ्येन 'क्रथं क्रथ'मित्यादौ जातनिवृत्तिश्च कल्प्या । मन्मते तु चुरादित्वमेकं कल्प्यम्, तदप्याकृतिगणत्वात्सिद्धमिति कल्पनालाघवम् । एवं सति घटादेः 'क्रथं-क्रथं'

---

### ॐ वरवर्णिनी ॐ

धातुत्वस्य च क्रियावाचकत्वे एव सम्भवेनानुकरणे तदसम्भवादित्यत आह—**सौत्रत्वादिति** । सौत्रत्वेन धातुत्वारोपादित्यर्थः । 'न ग्रहण'मित्यस्य 'नटधातो'रिति शेषः । **दीर्घेति** । घटादेस्तु मित्त्वाद्ध्रस्वस्य प्रवृत्त्या दीर्घासम्भवादित्याशयः । घटादिगणपठितग्रहणात्सिद्धेरेतत्सूत्रप्रामाण्यं वक्तुमशक्यमित्यरुचेराह—**साहचर्यादिति** । अयं=क्राथधातुः । तस्य=चुरादेः । साहचर्यस्यानित्यत्वादरुचेराह—**निपातनस्येति** । एवञ्च घटादिर्ग्रहीतुं न शक्यते इति चुरादेरेव ग्रहणमित्याशयः । **चौरस्येति**—'कर्तृकर्मणो'रिति कर्मणि षष्ठी । नन्विष्टापत्तिरित्यरुचेराह—**सामान्येनेति** । 'मितां ह्रस्व' इत्यस्य निपातनेन बाधाद्रूपासिद्धिरित्याशयः । परे तु—कर्मषष्ठ्यां 'चौरस्य क्राथन'मिति वृद्धिदर्शनात्सामान्येनैव निपातनमेतत् । चिण्णमुल्विषये वृद्धिनिपातनापेक्षया परत्वाच्चिण्णमुलोरिति दीर्घविकल्पे क्रथं—क्रथमित्यस्य सिद्धिर्निष्प्रत्यूहैव । 'क्राथयती'त्येव च भवतीति कौमुद्यामेवोक्तम् । मित्त्वस्य फलन्तु कौमुद्युक्तं—क्रथं क्रथमितीत्येवेत्याहुः ।

समशब्दत्वे त्वाह—**पररूपमिति** । 'उदाहरणे' इत्यस्य—'प्रकृतसूत्रे'त्यादिः । 'ने'त्यस्य 'आयप्रत्ययः' इत्यादिः । व्यवहारार्थे एवोदाहरणादित्याशयः ।

**दिवस्त ।** **कर्मणि षष्ठी स्यादिति** । 'शेषे' इति तत्र न सम्बद्ध्यते, व्याख्यानात् । अत एव–'द्वितीया ब्राह्मणे' इति सूत्रे 'गामस्य तदहः सभायां दीव्येयु'-रित्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति–भाष्ये उक्तं तद्धटते । तिङन्तमुदाहरति—

**॥ चिद्स्थिमाला ॥**

प्राचोक्तमयुक्तं,पक्षे समासार्थत्वेन द्वितीयार्थत्वेन च तस्य साफल्यादिति **शास्त्री**,तन्न, 'नोपसर्गे' इति न्यासेन 'दिव' इत्यस्य निषेधे शेषषष्ठ्या समासविकल्पेन रूपद्वयस्य सिद्धत्या विभाषाग्रहणस्य तथापि वैयर्थ्या-पत्तेः । अत्र सम्बन्धे विभाषेत्यत्रापि सम्बन्धेन तत्र सम्बन्धे द्वितीयेत्यस्य सार्थक्येऽपि, विभाषेत्यत्रा-सम्बन्धे द्वितीयेत्यस्य वैयर्थ्यापत्तेश्च । तद्धनयन्नाह—व्याख्येति । वक्ष्यमाणयोरुक्तिमात्रमूलकमित्यर्थः । 'गां प्रतिदीव्यती'त्यत्र पूर्वेणापि सिद्धमाह–गामिति । कैयटोक्तिमाह–नित्यमिति । 'दिवस्तदर्थस्ये'त्यर्थः ।

**॥ विषमपदविवृतिः ॥**

'कथयति' 'अकथी'ति च सिध्यति, तत्र तु तन्न सिध्येदित्यभिप्रायेण 'कथयती'त्यादेश्चाना-पत्तिरित्युक्तम् । 'अकथी'त्यादेश्चेति पाठस्तु सुगमः ।

**द्वयारम्भाच्चेति** । ग्रामस्येति कर्मणि द्वितीयया सिद्धम् । न च शेषत्वविवक्षायां द्वितीयार्थम् , वैदिकोदाहरणे शेषत्वविवक्षयैव प्रयोग इत्यत्र मानाभावात् । 'विभाषोपसर्गे' इति च व्यर्थमेव । समासविकल्पस्य शेषषष्ठ्यैव सिद्धौ 'दिवस्तदर्थस्य' 'नोपसर्गे' इति न्यासेनैव सिद्धेः । **द्वितीयार्थमिति** । 'शेष' इत्यस्य सम्बन्धे कर्मत्वविवक्षायां 'कर्मणि द्वितीये'त्यनेनैव द्वितीयासिद्धौ एतद्भाष्यासङ्गतिरिति भावः । वेदे शेषत्वविवक्षयैव द्वितीयान्तं प्रयुक्तमित्यत्र

**॥ वरवर्णिनी ॥**

**कर्मणीति** । शुद्धे कर्मणि, न तु शेषत्वेन विवक्षिते इत्यर्थः । दीक्षितमतेनाह—**शेष इति** । व्याख्यानमेवाह—**अत एवेति** । **उक्तमिति** । 'गा'मित्यत्र–'कर्मणि द्वितीये'त्यस्य बाधकं कर्मणि षष्ठी-विधायकं—'दिवस्तदर्थस्ये'ति प्राप्तं, तद्वारणाय 'द्वितीया ब्राह्मणे'इति सूत्रमिति भाष्याशयः । तव तु शेष इत्यनुवृत्तौ शेषत्वेन विवक्षायामेव षष्ठीविधानाच्छुद्धे कर्मणि 'कर्मणि द्वितीये'त्यनेनैव सिद्धे तदर्थं स्यात् । मम तु शुद्धे एवानेन षष्ठीति तत्प्राप्त्या तद्वारणाय'द्वितीया ब्राह्मणे' इति चरितार्थमिति तत्सङ्गतिरित्याशयः ।

**भैरवमिश्रास्तु**–'व्याख्याना'दित्यस्य–'विभाषोपसर्गे' 'द्वितीया ब्राह्मणे'इति सूत्रद्वयारम्भमूलकाद्व्याख्याना-दित्यर्थः । अयम्भावः-यद्यत्र 'शेषे'इत्यस्य सम्बन्धस्तदा'विभाषोपसर्गे'इत्यत्र शेषपदसम्बन्धोऽस्ति न वा ? आद्ये 'दिव' इति सूत्रेण षष्ठ्यां समासाभावस्य सिद्धौ 'विभाषोपसर्गे'इति सूत्रवैयर्थ्यम् । न च यदा नानेन षष्ठी तदा 'षष्ठी शेषे'इतिसूत्रेण षष्ठी तदा समासप्रवृत्तिरेव फलमस्त्विति वाच्य, 'नोपसर्गे' इति न्यासेन 'दिव'सूत्रस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयसिद्धौ विभाषाग्रहणस्य तथापि वैयर्थ्यानुद्धारात् । द्वितीये—'विभाषे'तिसूत्रस्य कर्मण्येव विकल्पेन षष्ठीविधायकतया छन्दस्यापाद्यमानरूपाभावाद्ब्राह्मणे 'विभाषे'तिसूत्रविहितषष्ठ्यभावे 'कर्मणि द्वितीये'ति सूत्रेण द्वितीयायाः सिद्धौ 'द्वितीया ब्राह्मणे' इति सूत्र-वैयर्थ्यन्दुर्वारमेव । न च तन्निरुपसर्गे द्वितीयार्थमस्त्विति वाच्यं, कर्मत्वविवक्षायान्दिवःसूत्रस्याप्राप्तेस्तत्र 'कर्मणि द्वितीये'ति सूत्रेण द्वितीयायाः सिद्धौ तस्य सूत्रस्य वैयर्थ्यानुद्धारात् । 'द्वितीया ब्राह्मणे' इति सूत्रे शेषपदसम्बन्धेन शेषत्वविवक्षायां द्वितीयार्थन्तदिति तु वक्तुमशक्यम् , 'विभाषोपसर्गे' इति सूत्रेण विच्छिन्नस्य शेषपदस्य पुनस्तत्र सम्बन्धासम्भवात् । न च कृदन्तेन योगे 'द्वितीया ब्राह्मणे' इतिसूत्रे विभाषापदसम्बन्धेन पक्षे 'दिव' इति सूत्रसिद्धषष्ठ्याः पुनर्विधानेन समासाभावार्थन्तदस्त्विति वाच्यं, 'द्वितीया ब्राह्मणे' इतिसूत्रभाष्ये—'किमुदाहरणं ? प्रतिदीव्यन्ति', पूर्वेणाप्येतत्सिद्धम् । इदन्तर्हि— 'गामस्य तदहः सभायान्दीव्येयु'रित्युदाहरणेन कृदन्तेन योगे तस्य प्रवृत्त्यस्वीकारादिति प्राहुः ।

**शतस्य दीव्यतीति** । यद्यपि पूर्वसूत्रे 'दिव' पठित्वा 'तदर्थस्ये'ति त्यक्तुं शक्यते तथापि योगविभाग उत्तरार्थः, 'शेष' इत्यस्यासम्बन्धार्थश्च ।

**विभाषोप** । अत्रापि 'शेषे' इति न सम्बद्ध्यते, 'तदर्थस्ये'ति च वर्तते । तदाह—**पूर्वयोगेति** । अत एवेयं प्राप्तविभाषेति 'नवे'ति सूत्रे भाष्ये स्पष्टम् ।

**कृत्वोऽर्थप्रयो । शेषे किमिति** । 'दिवस्तदर्थस्ये'त्यादिना विच्छेदादधिकरणकारक एव षष्ठीविधानं युक्तमिति **प्रश्नः** ।

**द्विरह्नीति** । वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । 'अधीगर्थे'ति सूत्रे 'कर्मादीनामविवक्षा शेष' इति भाष्ये बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च । वस्तुतस्तु 'कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचन'मिति

ॐ चिद्स्थिमाला ॐ

व्याख्यानं प्रकटयति—**यद्यपीति** । सङ्कोचे मानाभावेन फलद्वयस्यापि सुवचत्वादाह—**शेष इति** । बीजस्योक्तत्वादाह—**अत्रापीति** । आदिना 'यजेश्च करणे' । इत्थं भाष्यसंमत्या शेषपदसम्बन्धमाह—**अधीति** । तदाशयं प्राचां ग्रन्थासङ्गतिञ्च प्रकाशयन् सिद्धान्तमाह—**वस्तुत इत्यादि** । प्राचोक्तसूत्रा-

ॐ वरवर्णिनी ॐ

प्रमाणान्तरमप्याह—**यद्यपीति** । **दिव इति** । 'व्यवहृपणदिवां समर्थाना'मिति पठित्वेत्यर्थः । उत्तरार्थः='विभाषोपसर्गे' इत्यत्र 'दिव' इत्येतन्मात्रसम्बन्धार्थः । ननु 'सङ्ख्याव्ययादे'रित्यादिवदेकदेशे स्वरितत्वप्रतिज्ञानात्तन्मात्रसम्बन्धसिद्धेर्योगविभागो व्यर्थ इत्यरुचेराह—**शेष इति** । 'असम्बन्धार्थ' इत्यस्य—'पूर्वतो वैजात्यबोधनद्वारे'त्यादिः । अत एव='शेषे' इत्यस्यासम्बन्धादेव । अन्यथा शेषत्वेन विवक्षिते 'दिव' इत्यस्याप्राप्त्याऽप्राप्तविभाषात्वमेव स्यादिति वदन्ति । **मिश्रास्तु**—अत्र शेषग्रहणानुवृत्तौ 'दिवस्तदर्थस्ये'त्यनेनैव समासाभावस्य सिद्धाविदं सूत्रमेव व्यर्थं स्यात् । न च 'विभाषोपसर्गे' इत्यनेन विकल्पेन षष्ठीविधाने पक्षे शेषषष्ठीप्रवृत्त्या तत्पक्षे समासप्रवृत्तेः फलत्वान्नेदं सूत्रं व्यर्थमिति वाच्यं, 'नोपसर्गे' इति न्यासेन 'दिवस्तदर्थस्ये'ति प्राप्तषष्ठीनिषेधे औत्सर्गिकशेषषष्ठीप्रवृत्त्या वैकल्पिकसमासेन रूपसिद्धौ फलभेदाभावाद्विभाषाग्रहणवैयर्थ्यापत्तेश्शेषग्रहणासम्बन्धस्यैवोचितत्वात् ।

**परे तु**—सञ्ज्ञाशब्दानामर्धमात्रिकतया 'विभाषोपसर्गे' इति न्यासापेक्षया लाघवाभावान्नोपसर्गे इति न्यासो नोचित इति मिश्रोक्तं नोचितम् । किन्तु भाष्यप्रामाण्यादेव शेषग्रहणाननुवृत्तिः । तदेतदाह—**अत एवेति**—इत्याहुः ।

**दिवस्तदर्थस्येत्यादीत्यादिना** 'प्रेष्यब्रुवोः' 'विभाषोपसर्गे' इत्यनयोः परिग्रहः । विच्छेदात्=शेषाधिकारस्य विच्छिन्नत्वात् । 'शेषग्रहणानुवृत्तेरभावा'दिति शेषः । 'मण्डूकानुवृत्ति'रित्यस्य—'शेषे'—इत्यस्ये'ति शेषः ।

ननु वृत्त्याद्युक्तिर्न दृढं मानमत आह—**अधीगर्थेतीति** । **बहुवचनेनेति** । 'कर्मादीना'मित्यादिना 'ज्ञोऽविदर्थस्ये'त्यत्र करणस्य, 'कृत्वोर्थप्रयोगे' इत्यत्राधिकरणस्य च ग्रहणे बहुवचनमुपपन्नं भवति, नान्यथा, अतो 'ज्ञोऽविदर्थस्य'—'अधीगर्थे'त्यत्रेव 'कृत्वोऽर्थे'ति सूत्रेऽपि शेषपदसम्बन्ध आवश्यक इत्याशयः । तथा सति च कर्म—करणा—ऽधिकरणानां लाभाद्बहुवचनं सूपपद्यते इत्याहुः । **अत्रापीति** । 'व्यवच्छेदेऽपी'ति शेषः । कर्माश्रयषष्ठीविषये=अधीगर्थादिप्रेष्यब्रूपर्यन्तसूत्रविहितषष्ठीविषये । **सूत्रोपात्तेति** । अधीगर्थेत्यादिसूत्रोपात्तेत्यर्थः । सकर्मकाणां=स्मरत्यादिधातूनाम् । 'मातुःस्मरती'त्यादौ सकर्मकस्थले कर्मणि षष्ठीविधानेऽपि कर्मान्वितार्थप्रतिपादकत्वेन स्मरत्यादेः सकर्मत्वेनाऽकर्मकत्वाभावान्मातुः स्मर्यते इत्यत्र भावे लकारानापत्तिः, 'माता स्मर्यते' इति कर्मणि लकारापत्तिश्चेति वार्तिकारम्भः ।

वार्तिकप्रत्याख्यानाय—'शेषे इति वर्तते' इति भाष्यकृतोक्ते, परेण—'शेषश्च कः ?' इति पृष्टे—'शेषे षष्ठी'ति सूत्रोक्तं—'कर्मादीनामविवक्षा शेषः' इति सिद्धान्तिना स्मारितं; नैतावता 'कृत्वोर्थे'त्यत्र तत्सम्बन्धो लभ्यते ! ।

किञ्चैतद्भाष्यबलात् 'दिव' इति सूत्रेऽपि शेषपदसम्बन्ध आवश्यकः, अन्यथा वार्तिकरीत्या 'शतस्य दीव्यते' इति भावे इष्टस्य प्रयोगस्यासिद्धिः ।

अत एव वार्तिकव्याख्यायाम्—'अर्धीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते'—

❀ चिद्रस्थिमाला ❀

न्तरव्यवच्छेदाय । कर्मादिष्वित्यस्यार्थमाह—कर्माश्रयेति । 'अर्धीगर्थे'त्यादि दिव'इत्यन्तसूत्रेषु [illegible]। नेनेति । उपक्रमस्य तत्रैव सत्त्वाद्बहुवचनस्य तदाशयत्वाच्च । पूर्वत्र विपरीतं दोषमाह—किञ्चेति । [illegible] वहितोक्तम् । उक्तन्तदर्थं प्रमाणयति—अतएवेति । तत्र तदसम्बन्धस्पष्टत्वादेवेत्यर्थः । अन्यथा 'कृत्वोर्थे-

❀ विषमपदविवृतिः ❀

उपक्रमोपसंहारादिकं तात्पर्यलिङ्गं न किञ्चिदस्ति । भावे इष्टस्येति । इदं चिन्त्यं, शेषषष्ठ्या

❀ वरवर्णिनी ❀

वार्तिकेऽकर्मकवद्भावाद्भावे ले—'मातुः स्मर्यते' इति सिद्धमित्याशयः । 'परेणे'त्यस्य 'प्रसङ्गा'दिति शेषः । इति=इत्येतत् । स्मारितमिति । 'षष्ठी शेषे' इत्यनेन हि—कर्मादीनां षण्णामपि कारकाणामविवक्षायां षष्ठीविधानात्तत्र 'कर्मादीना'मिति बहुवचनं स्वरसतः सङ्गच्छते । 'अर्धीगर्थे'त्यत्र तु प्रसङ्गादेव 'कर्मादीना'-मित्याद्युपात्तमिति न बहुवचनोपपादनायाधिकरणस्य तत्र ग्रहणमावश्यकमिति भट्टाशयः । एतावता=भाष्ये बहुवचनोपादानात् । तत्सम्बन्धः='शेषे' इत्यस्य सम्बन्धः । एवञ्च शुद्धे एवाधिकरणेऽनेन षष्ठीति सूचितम् ।

परे तु—स्मारणे हि—"उक्तः शेषः, किमुक्तः ? कर्मादीनामविवक्षा शेषः—" इत्येवं भाष्यकृतोक्तं स्यात्, तथा शैलीसिद्धत्वात्, एवञ्च नेदं स्मारणभाष्यमिति—'कर्मादीना'मिति बहुवचनं प्रकृताभिप्रायमेवेति बहुवचनोपपत्तये शेषानुवृत्तिरत्रोचितेत्याहुः । इत एवारुचेराह—किञ्चेति । एतद्भाष्यबलादिति । पूर्वोक्त—'शेषे इति वर्तते'इत्यादिभाष्यबलादित्यर्थः । अन्यथा='दिव' इत्यत्र शेषपदासम्बन्धे । वार्तिकरीत्येति । 'कर्माश्रयषष्ठीविषये'इत्यादिवार्तिकसत्त्वे हि वार्तिकबलादकर्मकवद्भावे 'शतस्य दीव्यते' इति रूपं भवति, शेषपदानुवृत्त्या तत्खण्डने तु—'दिवस्तदर्थस्ये'त्यत्र शेषपदानुवृत्त्यभावेऽकर्मकत्वाभावाद्भावे लकारानुपपत्तिरित्यारम्भप्रत्याख्यानयोः फलभेदाद्दिव इत्यत्रापि 'शेषे' इत्यस्य सम्बन्ध आवश्यक इत्याशयः । नच 'दिव' इति सूत्रे शेषे इत्यस्याननुवृत्तावपि शेषत्वविवक्षायां कर्मत्वेन बोधकत्वाभावादकर्मकत्वेन 'शतस्य दीव्यते' इत्यस्य [—वार्तिकाभावेऽपि—] भावे लकारेणोपपत्त्या न भाष्यविरोध इति वाच्यं, वार्तिकरीत्या कर्मत्वेन कर्मबोधकत्वदशायामपीष्टस्य 'शतस्य दीव्यते' इत्यस्यासिद्ध्यापत्त्या विरोधस्य स्पष्टत्वात् । तथा च 'दिव' इत्यत्रापि शेषपदानुवृत्तिरुचितेति नारम्भप्रत्याख्यानयोः फलभेद इति फक्किकार्थः ।

अपरे तु—'दिव' इत्यत्र 'शेषे' इत्यस्यासम्बन्धेन शुद्धे कर्मणि षष्ठ्यामपि कर्मणः शेषत्वेन विवक्षायां 'शतस्य दीव्यते' इत्यस्योपपत्तेर्नोक्तविरोध इति चिन्त्यमेतदित्याहुः । इत एवारुचेराह—अत एवेति । एवञ्च 'दिव' इत्यस्यापि तन्मध्यपतितत्वाच्छेषे इत्यस्य सम्बन्धो लभ्यते, तन्मध्यपतितत्वाभावाच्च 'कृत्वोर्थे'-त्यत्र न शेषपदसम्बन्ध इत्याशयो भट्टानाम् ।

परे तु—कैयटविरोधस्याकिञ्चित्करतया'दिव' इत्यत्र शेषपदसम्बन्धे न मानम् । भाष्यप्रामाण्याच्च

इति कैयटः। एवञ्च शेष इत्यनुवृत्त्या वार्तिकप्रत्याख्यानवदेतत्सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यम्। 'द्वितीया ब्राह्मणे' इति सूत्रस्थभाष्यन्तु वार्तिकरीत्येत्याहुः।

—किञ्च 'यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति,—'स्मराम्यहं मातर'मिति भाष्ये उक्तम्। त्वद्रीत्या तु यदा 'कर्माद्यविवक्षितं भवती'ति वदेत्। एवञ्च 'ज्ञोऽविदर्थस्ये'त्यत्रापि तदसम्बन्ध एव। एवञ्च तद्योगे न कदापि तृतीया। 'शतं दीव्यती'-

---

❀ विजया ❀

**सूत्रद्वयप्रत्याख्यान इति।** 'विभाषोपसर्गे'–'द्वितीया ब्राह्मणे'इति सूत्रद्वयेयर्थः। 'दिवस्तदर्थस्यानुपसृष्टस्ये'ति न्यासेनोपसृष्टे शेषे षष्ठीति-षष्ठ्या विकल्पेन समाससिद्धौ 'विभाषोपसर्गे' इत्यस्य प्रत्याख्यानम्। 'दिवस्तदर्थे'त्यस्य शेषत्वविवक्षायां प्रवृत्त्या कर्मत्वेन विवक्षायां 'कर्मणि द्वितीये'त्यनेन द्वितीयासिद्धौ 'द्वितीया ब्राह्मणे'इत्यस्य वैयर्थ्येन प्रत्याख्यानं बोध्यम्।

❀ चिद्स्थिमाला ❀

पर्यन्ता' इति वदेत्। तत्र तत्सम्बन्धेऽपीदं मानमन्यथा 'दिवपर्यन्ता' इत्येव वदेत्। **पर्यन्ता इति।** कर्माश्रयषष्ठीविषयसूत्रोपात्तसकर्मका इत्यर्थः। वार्त्तिकस्थकर्मादिपदेनेति भावः। परिशब्देन तत्त्यागोऽपि सूचितः। **एतत्सूत्रेति।** 'विभाषोप'·द्वितीयाब्रे'तीत्यर्थः। **भाष्येति।** उक्ताधीगर्थेतिसूत्रस्थभाष्येत्यर्थः।

एवं सति प्रागुक्तभाष्यविरोधं परिहरति—**द्वितीयेति।** प्रकृते दोषान्तरमाह—**किञ्चेति।** तदग्रिमभाष्यमेवाह—**यदेति।** अपिना प्रकृतसमुच्चयः। उभयफलमाह—**एवञ्चेति।** उभयत्र तदसम्बन्धे, तत्र तत्सम्बन्धे चेत्यर्थः। तत्पदेनोभयम्। अत एव [ आदिना ? ] न सप्तमी।

द्वितीयाफलमन्यथाऽऽह—**शतमिति।** चो व्युत्क्रमे। तवैवं कथं तत्रानुवृत्ति·

❀ विषमपदविवृतिः ❀

उक्तप्रयोगसिद्धेः। **एतत्सूत्रद्वयेति।** 'विभाषोपसर्गे' 'द्वितीया ब्राह्मणे'ति सूत्रद्वयेत्यर्थः। **भाष्यन्त्विति।** 'नित्यषष्ठीप्राप्तौ द्वितीयार्थ'मिति भाष्यमित्यर्थः।

---

❀ वरवर्णिनी ❀

'कृत्वोर्थे'त्यत्र शेषपदसम्बन्ध उचित इत्याहुरस्मद्गुरुवराञ्चिपाठिचरणाः, अस्मत्पितामहाः—श्रीस्नेहिरामशास्त्रिचरणाश्च। **सूत्रद्वयेति।** 'विभाषोपसर्गे' 'द्वितीयाब्राह्मणे' इति सूत्रद्वयेत्यर्थः। 'दिवस्तदर्थस्यानुपसर्गे' इत्येव पाठ्यमिति तदाशयः। अन्ये तु 'व्यवहृपणानुपसृष्टदिवां समर्थाना'मिति पठित्वा 'दिवस्तदर्थस्य'- 'विभाषोपसर्गे' इति सूत्रद्वयं न कार्यम्, एवं 'द्वितीया ब्राह्मणे' इत्यपि न कार्यमित्याशयमाहुः।

अन्ये तु निरुक्तरीत्या भाष्यतात्पर्यकल्पने न दृढं मानमित्याहुः।

ननु वार्त्तिकस्य प्रत्याख्यातत्वान्न तदनुरोधि तद्भाष्यमिति 'कृत्वोर्थे'त्यत्र शेषानुवृत्तिरुचितैवेत्यरुचेराह—**किञ्चेति।** कर्मविवक्षितं=कर्मत्वेन विवक्षितं, शेषत्वेनाविवक्षितमिति यावत्। त्वद्रीत्या=कृत्वोऽर्थसूत्रेऽपि शेषपदसम्बन्धे। एवञ्च='कर्माद्यविवक्षितं भवती'त्यनुक्त्या कर्मग्रहणे एव शेषपदानुवृत्तेर्लाभादधीगर्थेत्यत्रैव तत्सम्बन्धे च। तदसम्बन्धः=शेषे इत्यस्यासम्बन्धः। एवञ्च=करणे एव षष्ठीविधाने च। तद्योगे=अज्ञानार्थकजानातियोगे। 'तृतीयां बाधित्वा षष्ठीविधाना'दिति शेषः।

**सिध्यतीति।** दिवस्तदर्थेत्यत्र पूर्वोक्तरीत्या शेषपदानुवृत्त्या शेषत्वेन विवक्षायां षष्ठ्याः प्रवृत्त्या शुद्धे कर्मणि द्वितीयाप्रवृत्तेरित्याशयः।

त्यादि च सिद्ध्यति । 'अधीगर्थे'त्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु ।

---

❀ विजया ❀

विभावयन्त्विति । परे तु-इदं सर्वमयुक्तं, तथाहि-यदुक्तं—'स्मारित'मिति, तदयुक्तं, तथा सति 'उक्तः शेषः' इति भाष्यकारो ब्रूयात्, तस्मादादिपदेन बहुवचनेन च करणाधिकरणयोर्ग्रहणं कर्तव्यमेव । यच्च 'शतस्य दीव्यते इति भाष्ये इष्टस्ये'ति,—इदमप्ययुक्तं, भाष्यकृदभीष्ट—शेषपदानुवृत्तिमबुद्ध्वा प्रवृत्तस्य वार्तिकस्य—विरोधेऽपि बाधकाभावात् । किञ्च कर्मत्वविवक्षायां 'दिवस्तदर्थस्य'त्यस्य प्रवृत्त्या शेषत्वविवक्षायां 'शेषे षष्ठी'त्यनेन षष्ठ्या भावप्रत्ययेन च 'शतस्य दीव्यते' इति प्रयोगस्य सिद्धत्वादिदमयुक्तम् । यदपि-'इति कैयट' इति, इदमप्ययुक्तं, सूत्रवार्तिकभाष्याणामविरोधे कैयटविरोधस्याकिञ्चित्करत्वात् । बहुषु स्थलेषु 'इति कैयटस्तु चिन्त्य एवे'ति वदता नागेशेनापि तत्स्वीकाराच्च । 'दिवभिन्ना'इति वा तत्र कैयटे पूरणीयम् । इति वदन्तीति ।

❀ चिदस्थिमाला ❀

भाष्योक्त्या-आह—अधीति ।

❀ विषमपदविवृतिः ❀

सुधियो विभावयन्त्विति । केचित्तु वृत्त्यादिप्रामाण्यात्, 'कर्मादीनामविवक्षा शेष'इति भाष्ये बहुवचननिर्देशाच्च 'कृत्वोर्थे'त्यत्र शेष इति सम्बध्यते । न च 'षष्ठीशेषे'ति सूत्रोक्तं भाष्यकृता स्मृतमिति वाच्यम्, अत्र मानाभावात् । 'दिवस्तदर्थस्ये'ति सूत्रे तु शेषपदं न सम्बध्यते, उत्तरसूत्रद्वयारम्भात् । 'शतस्य दीव्यते'इति भावे लकारस्तु शतस्येत्यत्र शेषे षष्ठीमाश्रित्य सुलभः । न चैवं सूत्रोपात्त'सकर्मकाणामकर्मकवद्वचन'मिति वार्तिकवैयर्थ्यमिति वाच्यं, कर्मणि षष्ठ्यामेव 'मातुः स्मर्यते'इत्यादौ भावे लकार इत्यभिसन्धाय वार्तिकप्रवृत्तेः । 'शेष इति वर्तते' इति प्रत्याख्यानभाष्यं तु 'स्मराम्यहं मातर'मिति प्रयोगसिध्यर्थं मुख्यतः प्रवृत्तम् । आनुषङ्गिकं तु 'मातुः स्मर्यते'इत्यत्र भावे लकारसाधनम् । 'अधीगर्थादयः प्रेष्यब्रूपर्यन्ता' इति कैयटग्रन्थे तु 'दिवस्तदर्थस्ये'त्येतद्भिन्ना इति पूरणीयम् । 'नपदान्त' सूत्रे 'वरेयलोपस्वरवर्जद्विर्वचनादीनी'ति भाष्यग्रन्थे पर्युदासकोटौ दीर्घपदस्य भवता पूरणात् । एवं च सति 'द्वितीया ब्राह्मणे' इति सूत्रस्थभाष्यमप्युपपन्नम् । 'ज्ञोऽविदर्थस्ये'त्यत्रापि शेष इति सम्बध्यते, अन्यथा मण्डूकानुवृत्तिस्वीकारापत्तेः । 'शतं दीव्यती'त्यादि तु अर्थान्तरे साधु । एवञ्च 'अक्षैर्दीव्यती'त्यत्रापि 'दिवस्तदर्थस्ये'ति षष्ठी भवत्येव । क्रीडाव्यवहाराभ्यामन्यत्रा'क्षैर्दीव्यती'ति प्रयोगः । अनयोरर्थयोस्तु तृतीयां बाधित्वा परत्वात्षष्ठ्येव । 'मनसादेवी'ति तु द्युत्याद्यर्थान्तरे साधु । एतेन 'प्रतिपदविधाना षष्ठी न समस्यते' इति वचनं षष्ठीविधानसामर्थ्यलभ्यमिति केन चिदुक्तमपास्तमित्याहुः ।

---

❀ वरवर्णिनी ❀

ननु 'ज्ञोऽविदर्थे'त्यत्र शेषपदासम्बन्धेऽधीगर्थेत्यत्र कथं तत्सम्बन्ध इत्यत आह—अधीगेति ।

परे तु—प्रकृतसूत्रीय 'भाष्ये स्मराम्यहं मातर'मित्युदाहरणानुरोधेनैव 'कर्मे'त्युक्तम् । प्रकृतसूत्रोदाहरणे तदतिरिक्तासम्भवादिति 'त्वद्रीत्ये'त्याद्युक्तमकिञ्चित्करमेव । 'ज्ञोऽविदर्थस्ये'त्यत्र शेषपदसम्बन्धो भवत्येव । अज्ञानार्थकजानातियोगे तृतीया भवत्येव । 'शतं दीव्यती'त्याद्यसाध्वेव । एवञ्च मण्डूकानुवृत्तिस्वीकारावश्यकता नास्त्येव, 'ज्ञोऽविदर्थे'त्यत्र शेषपदानुवृत्त्याऽधीगर्थेत्यत्रापि स्वारसिकानुवृत्तेः सम्भवादिति सुधियो विभावयन्त्वित्याहुः । "—यदि च प्रकृताभिप्रायकत्वेन 'यदा कर्मे'त्यादिभाष्यं योज्यते तदा तु मण्डूकानुवृत्तौ मानाभावः । केचित्तु शेषानुवृत्तिरेव प्रयत्नलभ्या, आरम्भसामर्थ्येन समासाभावकल्पने गौरवात्, शेषपदाननुवृत्तिस्तु स्वारसिकी, एवञ्चाधीगर्थेत्यत्र निरुक्तभाष्यप्रामाण्याच्छेषपदसम्बन्धेऽपि उत्तरत्र मानाभावाच्छेषपदासम्बन्धः इत्याहुः—" इति जगन्नाथोङ्कारनाथोमानाथ जनार्दनशास्त्रिप्रभृतयः ।

**कर्तृकर्मणोः** । अत्र 'शेष' इति न सम्बध्यते, सूत्रवैयर्थ्यापत्तेः, 'कृद्योगा षष्ठी समस्यते' इति वार्तिकेन तत्र समासस्येष्टत्वात् । **कृतिरिति** ।-भावे क्तिन् । कृष्णः-कर्ता । **जगत इति** ।–कर्मेदम् ।

कर्तृसाहचर्यात्कर्मापि धात्वर्थे भेदनान्वय्येव गृह्यते । तेन 'स्तोकं पाकः' इत्यादौ न क्रियाविशेषणात्षष्ठी ।

किञ्च क्रियाविशेषणेन 'स्तोकम्पाचक' इत्यादौ न समानाधिकरणसमासो, नापि

❀ विजया ❀

इदमप्ययुक्तं, 'यदा कर्म विवक्षितं भवती'त्यस्य 'स्मराम्यहं मातर'मित्येतद्विषयकत्वात् । यदा करणं विवक्षितं भवति तदा षष्ठी नेत्यादि तु स्वयमूह्यम् । एवञ्च 'ज्ञोऽविदर्थस्य करणे' इत्यत्र 'कृत्वोर्थप्रयोगे'-त्यत्र च शेषपदानुवृत्तिः । 'दिवस्तदर्थस्ये'त्यत्र तूत्तरसूत्रद्वयारम्भसामर्थ्यात् , 'द्वितीया ब्राह्मण' इति सूत्रस्थभाष्याच्च शेषपदाननुवृत्तिश्च स्वीकार्येत्याहुः ।

❀ चिदस्थिमाला ❀

ननु तद्वत्समासाभावार्थं सूत्रमत आह—कृद्योगेति । एतेन 'कर्तरि च कृती'ति न्यासे चेन कर्माकर्षसम्भवे पुनः कर्मग्रहणादिति प्राचोक्तं, व्याख्यानादिति दण्डयुक्तञ्चापास्तम् । अर्थान्तरनिरासायाह-भावे इत्यादित्रयम् । अनतिप्रसङ्गाय विशेषमाह—कर्त्रिति । तथा सति वार्तिकविरोधोऽपि दोष इत्याह—किञ्चेति । वैयधिकरण्यादाह—न सेति । आदिना 'मयूरव्यंसके'ति । नन्वेवमिष्टासिद्धिरत

❀ विषमपदविवृतिः ❀

**कर्तृकर्मणोः कृति** । **भेदेनान्वय्येवेति** । वस्तुतः 'साक्षाद्धात्वर्थाश्रय' इत्युचितम् , तेन 'वैकुण्ठमधिशयित'इत्यादौ न षष्ठी । प्रसङ्गादाह—किञ्चेति ।

❀ वरवर्णिनी ❀

**वैयर्थ्यापत्तेरिति** । 'षष्ठी शेषे' इत्यनेनैव षष्ठीसिद्धेः । ननु समासाभावायैव 'कर्तृकर्मणो'रिति सूत्रमत आह—**कृद्योगेति** ।

तत्र=कृद्योगे । **साहचर्यादिति** । ननु—**मनोरमायां**—"कर्मत्वरूपार्थस्य शब्दोपस्थितस्यैव प्रकारत्व–विशेष्यत्वे, 'पश्य मृगो धावती'त्यादौ तु तद्वाचकस्य अमादिप्रत्ययस्याक्षेपासम्भवात्कर्मत्व-रूपार्थस्य संसर्गतयैव भानम्, कर्मार्थाध्याहारे तु तस्य प्रकारताऽपि सम्भवति, एवं फलेऽपि मतभेदेन संसर्गत्वप्रकारत्वाभ्यां कर्मत्वभानं, फलस्यापि कर्मत्वात्–" इत्याशयकमुक्तम् । तद्व्याख्यानावसरे **शब्दरत्ने** च–'पक्व' इत्यादौ व्यापारस्याप्येवमेव संसर्गत्वप्रकारत्वाभ्यां भानम्—" इत्युक्तम् । एवञ्च 'स्तोकं पचती'तिवत् 'शोभनेन देवदत्तेन पक्व'मित्यादौ व्यपदेशिवद्भावेन व्यापारस्य कर्तृत्वे तत्समानाधिकरणात् शोभनपदादपि तृतीया भवतीति–कथं कर्तृसाहचर्येण भेदेनान्वयिनो ग्रहणं ?, कर्तुरप्यभेदेन तत्रान्वितत्वादिति चेन्न, नागेशभट्टैः–'कर्तृप्रत्ययसमभिव्याहारे फलावच्छिन्नव्यापारे, कर्मप्रत्ययसमभिव्याहारे च व्यापारावच्छिन्ने फले शक्ति'रिति स्वीक्रियते, न तु तन्मते खण्डशःशक्तिरिति–पदार्थैकदेशे व्यापारे शोभनपदार्थान्वयाभावाद्व्यापारे कर्तुरभेदान्वयाभावात् ।

नचैवं पदार्थैकदेशतया फलेऽप्यनन्वयापत्तिरिति वाच्यं, 'तत्प्रत्यनुपूर्वमीपलोमकूल'मिति सूत्रेण द्वितीयान्ताद्वर्तते इत्यर्थे प्रत्ययविधानात्फले पदार्थैकदेशेऽप्यन्वयस्य स्वीकारात् । अनुलोमं वर्तते–आनुलोमिक इति तदुदाहरणे द्वितीयाया अन्यथाऽनुपपत्तेः । एवञ्च शब्दरत्नानुरोधाद्व्यापारस्यापि व्यपदेशिवद्भावेन कर्तृत्वं पक्वादौ भवतु नाम, परं फलांशवत्तत्र पदार्थान्तरस्याभेदेनान्वयो न भवतीति कर्तृसाहचर्यादित्यादिः शेखरः सुलग्न एवेत्यस्मद्गुरवः पण्डितैकशेषशेषावताराश्रिपाठिपादाः प्राहुरिति **गौडाः** ।

क्रियाविशेषणात्=फलेऽभेदेनान्वितात्स्तोकादिपदात् । प्रसङ्गादत्र विशेषान्तरमाह-**किञ्चेति** । समाना-

'सुप्सुपे'त्यादिः, सुबन्तार्थविशेष्येणानन्वयेनासामर्थ्यात्। 'द्वितीया श्रिते'त्यादेस्तु सामर्थ्या-द्वयवद्वारके सामर्थ्ये प्रवृत्तिः । द्वितीयाप्रकरणोक्त- **परे तु**-मतरीत्या वा सामर्थ्यम् ।

अत एव 'पूजनात्पूजित'मिति सूत्रे-दारुणं यथा भवति तथाऽध्यापक इत्यर्थकस्य 'दारुणाध्यापक' इत्यस्य सिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये । अन्यथा समासेन सिद्धे तद्व्यर्थं स्यात् ।

एतदेव भाष्यं-ततः षष्ठ्यभावेऽपि मानम्, अन्यथा षष्ठीसमासस्य 'तृजकाभ्यां कर्तरि'-

❀ विजया ❀

**परे तु मतरीत्या वा सामर्थ्यमिति** । यथा प्राप्तिकर्त्रानन्दकर्मेत्यत्र विशेष्ये कर्तरि कर्मत्व-निरूपकत्वाभावेऽपि तद्विशेषणप्राप्तिवृत्तिकर्मत्वनिरूपकत्वं कर्तर्यारोप्यते तथा 'कृष्णश्रित' इत्यत्र श्रयणवृत्तिकर्मत्वनिरूपितं निरूपकत्वं श्रयणकर्तर्यारोप्य सामर्थ्यं निर्वहणीयमिति भावः ।

❀ चिद्स्थिमाला ❀

आह-**द्वितीयेति** । इदमपि प्राचां मतेन । वस्तुतस्तत्र स्वारसिकमेव तदित्याह—**द्वितीयेति** । उक्ते भाष्यसम्मतिमाह—**अत एवेति** । तत्र समासाभावेन ततः षष्ठ्यभावादेवेत्यर्थः । आद्याभावमाह—**अन्यथेति** । द्वितीयाभावायाह—**एतदेवेति** । प्राचां मतेनाह—**तृजेति** । अपिना समासः ।

❀ विषमपदविवृतिः ❀

**परे तु मतरीत्या वेति** । विशेष्य एव द्वितीयान्तस्यान्वयः, विशेष्ये बाधात्तु विशेषणे स पर्य-वस्यतीति रीत्येत्यर्थः । इदं चिन्त्यम्, द्वितीयायाः कारकविभक्तित्वेन शब्दतःक्रियान्वय एव प्रवृत्तेः।

❀ वरवर्णिनी ❀

धिकरणसमासः='विशेषणं विशेष्येणे'ति समासः । **सुबन्तार्थेति** । 'पाचक' इति सुबन्तार्थविशेष्येण कर्त्राऽनन्वयेन [तदेकदेशपच्धात्वर्थ एव तदन्वयेन-] सामर्थ्याभावादित्यर्थः। **सामर्थ्यादिति** । सूत्रारम्भ-सामर्थ्यादित्यर्थः । विशेषणसमासस्तु नीलोत्पलादौ चरितार्थं इति न तत्सामर्थ्यम् । अवयवद्वारके= श्रितादिशब्दघटकश्रिधात्वर्थद्वारके । परेतुमतरीत्या=विशिष्टे श्रितशब्दे कर्मनिरूपकत्वं—'स्वर्गी ध्वस्त' इत्यादिवत्—आरोप्यते इत्यादिरीत्या ।

**असामर्थ्यादिति** । विशेष्यद्वारकसामर्थ्यस्यैव प्रधानाप्रधानन्यायानुरोधेनोचितत्वादित्याशयः । षष्ठीसमासे तु 'तृजकाभ्यां कर्त्तरी'त्यादिगमकादेवावयवद्वारकसामर्थ्यस्यापि ग्रहणमित्युमानाथप्रभृतयः ।

'शोभनं पाचक' इत्यादौ शोभनादिनिष्ठा योपस्थितीयमुख्यविशेष्यतासमानाधिकरणाऽभेदीया प्रकारता, तादृशप्रकारतानिरूपिता याऽभेदीया फलनिष्ठा विशेष्यता, तत्रोपस्थितीया-विशेष्यता नास्तीति-निरुक्तसामानाधिकरण्याभावेन समानाधिकरणसमासाप्राप्तिरिति **श्रीगुरुचरणाः** ।

अत एव=धात्वर्थेऽभेदेनान्वितेन समासाभावादेव । 'दारुणाध्यायक'इत्यपि क्वचित्पाठः । **आरब्धमिति**।

१ नच 'तृजकाभ्या'मितिनिषेधात्कथं षष्ठीसमास इति वाच्यं, कर्तृसाहचर्यात्सामानाधिकरण्येना-न्वयिकर्मषष्ठ्या समासस्यैव तेन निषेधात् । प्रकृते च दारुणं यथा भवति तथाऽध्यापक इत्यत्र षष्ठ्या भेद-सम्बन्धेनान्वयबोधकत्वाभावान्न निषेधावसरः । एवं 'कर्तृकर्मणोः कृती'त्यत्रापि कर्तृसाहचर्या-द्भेदसम्बन्धेनान्वयविवक्षायामेव तेन षष्ठी भवतीत्यर्थस्य लाभेन प्रकृते तेन न षष्ठीति **श्रीदण्डिभट्टाः** ।

त्यादिनिषेधैरुक्तसामर्थ्येपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोध्यम् ।

न च भिन्नपदत्वेऽपि तथाप्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यं, तथा सति 'वाक्ये मलोपश्च वक्तव्यः' इति वदेत् ।

अत एव "—कैयटेन क्रियाविशेषणं दारुणादयस्तत्र वैयधिकरण्यात्समासाभावान्मलोपो विधीयते—"इत्युक्तम् । 'सुप्सुपे'त्यादिसमासो न सार्वत्रिक इति तदाशय इत्यलम् ।

### ❀ चिदस्थिमाला ❀

**वाक्ये इति** । 'मलोपवचनं चे'त्येव तु तत्रोक्तम् । अत एव=वाक्ये तदनिष्टत्वादेव । **विशेषणमिति** । अजहल्लिङ्गत्वेऽपि जातविकत्वं । **वैयधिकरण्यादिति** । दारुणं यदध्यापनं तत् कर्तेति बोधेन द्रव्यवाचिना सामानाधिकरण्याभावादित्यर्थः ।

तत्पदेनोभयम् । स्पष्टश्चेदं पदमञ्जर्याम् । एतेन—'मयूरव्यंसके'ति वैयधिकरण्येऽपि समासः, सुप्सुपेति वा । समासविषये एव समासान्तोदात्तत्वापवादः स निघात इति प्राचोक्तमपास्तम् । तद्भाष्यविरोधात्तदाह—**इत्यलमिति** ।

### ❀ विषमपदविवृतिः ❀

**मलोपवचनं व्यर्थमेव स्यादिति** । इदमुपलक्षणं,—मलोपवचनमसङ्गतमेव स्यात्—मकारस्यैवाभावादित्यर्थस्य । न च षष्ठीबहुवचने आमि तत्सङ्गतिः, क्रियाविशेषणे बहुलाभावेन बहुवचनाप्रवृत्तेः । **वाक्ये मलोपश्चेति** । इदमयुक्तं, गौरवेण तथा नोक्तमिति समाधानसम्भवात् ।

**वैयधिकरण्यादिति** । विशेष्येण सामानाधिकरण्याभावादित्यर्थः । समासाभावात्='विशेषणं विशेष्येणे'ति समासाभावात् । **न सार्वत्रिक इति** । **परे तु** 'भूतपूर्व' इति निर्देशेन 'विस्पष्टा-

### ❀ वरवर्णिनी ❀

अन्यथा षष्ठ्येवात्रापि स्यादिति मकाराभावान्मलोपवचनमनर्थकं स्यादित्याशयः । अन्यथा=अवयवद्वारकसामर्थ्यमादाय तादृशस्थलेऽपि समासे । तत्=मलोपवचनम् । **व्यर्थमिति** । समासे कृते विभक्तिलुकैव मकारनिवृत्तेः सम्भवात्तद्वैयर्थ्यं स्यादित्याशयः । ततः='स्तोकं पाचक' इत्यादावभेदेनान्वितास्तोकादिपदात् । अन्यथा=एतादृशस्थले षष्ठीस्वीकारे । उक्तसामर्थ्ये=अवयवद्वारकेऽपि सामर्थ्ये । तत्समासेनैव सिद्धौ=कृद्योगषष्ठीसमासेनैव सिद्धौ । भिन्नपदत्वेऽपि=वाक्येऽपि । समासस्य वैकल्पिकतया समासाभावे वाक्ये मलोपार्थं तत्स्यादित्याशयः । तथा सति=वाक्य एव मलोपार्थं तद्वचनस्यावश्यकत्वे सति ।

**वदेदिति** । एवञ्च वाक्यमात्रार्थत्वे समासव्याससाधारण्येन मलोपवचनमनर्थकमेवेत्याशयः ।

**श्रीबालशास्त्रिचरणास्तु**—'अन्यथा समासेने'त्यादिशेखरोऽयुक्त एव, 'प्रमेयं दारुणाध्यापक' इत्याद्यर्थमावश्यकत्वात् । समासे तु दारुणादिपदार्थे प्रमेयाद्यनन्वयापत्तिः, 'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो ने'ति सिद्धान्तात् । 'वाक्ये मलोपश्चे'तिशेखरोऽपि चिन्त्य एव, तत्रापि वाक्य एव मलोपप्रवृत्त्या दोषस्य तुल्यत्वादिति प्राहुरिति **श्रीदण्डिभट्टादयः** प्राहुः । वैयधिकरण्यात्=एकार्थीभावाभावात् ।

**कृति किमिति।** कर्तृकर्मभ्यां–क्रिया सन्निधाप्यते।–तद्वाची तु धातुरेव। कारकान्वययोग्यतावच्छेदकरूपेण–साध्यत्वेन–धातुभिरेव तदुपस्थितेः।

'शत्योऽश्वः', 'आभ्रिकः' इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकाणामन्वयः, एतद्भाष्यप्रामाण्यात्। अत एव 'हिरु'गादियोगे न कर्मादिसञ्ज्ञा।

एतेन–'देवदत्तेन शत्योऽश्वः' इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम्।

'अधिका खारी द्रोणेने'त्यत्र हेतौ तृतीया। क्रियायोगाभावात्कर्तुः कर्तृत्वाभावे जनकत्वरूपहेतुत्वसत्त्वात्।

धातोश्च–द्वये[1] प्रत्ययाः–तिङः, कृतश्च। तत्र तिङ्योगे 'न लोके'ति निषेधात् कृद्योगे एव भविष्यतीति–किं तेन?

❀ चिदस्थिमाला ❀

परमतखण्डनसहितं प्रश्नबीजमाह—**कर्त्रेति**। रूपमेवाह—साध्यत्वेनेति। एवव्यवच्छेद्यमेवाह—**शत्य इति**। **न तत्रेति**। तथा च देवदत्तेन शत्योऽश्वः' 'आभ्रिको भूमि'मित्यादयोऽप्रयोगा एवेति भावः। अत एव=ततस्तथोपस्थितक्रियायामेव तदन्वयादेव। प्राचां मतं खण्डयति—**एतेनेति**। तदुपस्थिते तदन्वयेनेत्यर्थः। नन्वेवं क्वचिदिष्टासिद्धिरत आह—**अधिकेति**। एतेनात्रैव षष्ठीवारणार्थं कृद्ग्रहणमित्यपास्तम्। नन्वेवमपि तिङन्तवारणाय तदत आह—**धातोश्चेति**। 'द्वितये' इति पाठः। तत्र=तयोर्मध्ये। अन्यथा तस्यावश्यकत्वादाह–**नलोकेतीति**। 'न कृती'त्यनेन तु 'नलोके'त्यत्र कृदव्ययग्रहणाय

❀ वरवर्णिनी ❀

**सन्निधाप्यते इति**। कर्तृत्वकर्मत्वयोः कारकत्वव्याप्यतया कारकत्वस्य च क्रियानिरूपितत्वात्तल्लाभ इत्याशयः। **तद्वाचीति**। क्रियावाचीत्यर्थः। तदुपस्थितेः=क्रियोपस्थितेः। शत्यः=शतेन क्रीतः। आभ्रिकः=अभ्र्या काष्ठकुद्दालेन यः खनति सः। तद्धितात्=तद्धितान्तात्। तेन रूपेण=कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन। तत्र=तद्धितान्तशत्याद्युपस्थितक्रयणादौ। **एतदिति**। 'कृतपूर्वी'त्यादौ दोषदानपरेत्यर्थः।

अत एव=कारकान्वयितावच्छेदकसाध्यत्वेन रूपेण धातुत एवोपस्थितेरेव। **हिरुगादीति**। ततो वर्जनादिक्रियोपस्थितावपि करकान्वययोग्यतावच्छेदकरूपेण ततोऽनुपस्थितेर्न तद्योगे कर्मादिसञ्ज्ञेत्यर्थः।

एतेन=शत्यादिपदात्कारकान्वयितावच्छेदकरूपेणानुपस्थितेरेव। **षष्ठीति**। 'देवदत्तादिपदा'दित्यादिः। **अपास्तमिति**। तद्धितान्तशत्यादिपदोपस्थितक्रियायाः क्रियाभासतया तत्र देवदत्तादिकारकान्वयाभावेन देवदत्तादिपदसम्बन्धस्यैवाभावेन ततः षष्ठीप्राप्तेर्वक्तुमशक्यतया तन्निवृत्त्यर्थताया दूरापास्तत्वादित्याशयः।

नन्वध्यारूढमित्यर्थेऽधिकमितिसूत्रेणाधिकशब्दस्य व्युत्पादनादध्यारोहणक्रियान्वयितया'ऽधिका खारी द्रोणेने'त्यत्र द्रोणे कर्त्तरि तृतीया भवति, यदि धातुत एव तेन रूपेणोपस्थितिः स्यात्तर्हि ततस्तृतीया न स्यात्कर्त्तृत्वस्य तत्राऽभावादत आह—**अधिकेति**। कर्तुः=स्वतन्त्रस्य द्रोणादेः। कर्तृत्वाभावे=कर्तृसञ्ज्ञाया अभावे। **जनकत्वेति**। आरोहणजनकत्वरूपेत्यर्थः। अत्र द्रोणेनेति प्रकृत्यादित्वात्तृतीयेत्यपि वदन्ति। एवञ्च कृतिग्रहणस्य शत्यादिव्यावृत्तिर्न फलं, तत्र क्रियायाः कारकान्वयितावच्छेदकरूपेणाऽमानात्, किन्तु धातोरेवाक्षेप इति प्रघट्टकार्थः। धातोश्च केवलस्य प्रयोगाभावः, 'न केवला प्रकृतिः प्रयोक्तव्ये'ति सिद्धान्तादत आह—**धातोश्चेति**। **निषेधादिति**। तिङ्प्रकृत्युपस्थाप्यक्रियानिरूपितकर्तृत्वकर्मत्वान्यतरवद्वाचकात्षष्ठी नेत्यर्थक–'नलोके'ति निषेधादित्यर्थः। तेन=''कृती'त्यनेन।

१ 'द्वितये प्रत्ययाः' इति चिदस्थिमालाकृत्सम्मतः पाठः।

'नलोके'ति सूत्रे कृदव्ययस्यैव ग्रहणन्तु 'अव्ययार्थस्य ये कर्तृकर्मणी' इति व्याख्यानेन सिद्धम् । 'उभयप्राप्ता'वित्यत्र बहुव्रीहिस्तु 'एकाचो द्वे' इत्यादाविवान्यपदार्थस्याशाब्दत्वेऽपि व्याख्यानाद्भविष्यति । न च 'भेदिका देवदत्तस्य यज्ञदत्तस्य[1] काष्ठाना'मित्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं 'करोतीति कृ'दिति कर्तृपरं तदिति वाच्यम्, तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नं सिद्धेरिति प्रश्नः ।

## ❀ चिदस्थिमाला ❀

तत्र विशेषणार्थं तदत आह—नलोकेतीति । नन्वेवमप्युभयेत्यत्र बहुव्रीह्यर्थं तत्, अन्यथा तत्पुरुषे भिन्नक्रियाकर्तृकर्मणोः प्राप्तावपि नियमे 'ओदनस्य पाकः' 'ब्राह्मणानां प्रादुर्भावः' इति न स्यादत आह—उभयेति । भाष्योक्तफलान्तरं खण्डयति—नचेति । अन्यथा प्रधानन्यायेन न स्यादिति भावः ।

## ❀ विषमपदविवृतिः ❀

दीनी'ति वचनेन च 'सुप्सुपे'ति समासोऽत्रयवद्वारकसामर्थ्येपि प्रवर्तते, अत एव 'नात्यायतकृष्टचापः' इति रघुकाव्यप्रयोगः सङ्गच्छते। तत्र हि 'नात्यायते'ति क्रियाविशेषणम् । एवं 'पुरुषः सततोत्थितः' 'नित्यप्रवासी' 'शीघ्रभोजी' 'मृगगामी'त्यादयः प्रयोगाः सङ्गच्छन्ते । मलोपवचनन्तु व्यस्तप्रयोगे तथा साधुत्वार्थं, 'वाक्ये मलोप' इति तु गौरवान्नोक्तमित्याहुः ।

'कर्तृत्वाभावे' इत्येव पाठः । 'कर्तुः कर्तृत्वाभावे' इति पाठे तु कर्तृपदमधिशब्दार्थाऽध्यारोहणाश्रयपरम् । 'न लोके'त्युत्तरार्थं कृद्ग्रहणमित्याशङ्क्याह—नलोकेति सूत्रे इति ।

ननु 'पुत्रेण सहे'त्यत्र 'कर्तृत्वादेव तृतीया सिद्धे'ति भाष्यात्क्वचिदव्ययार्थस्यापि साध्यत्वेन भानमिति सहयोगे षष्ठीवारणमेव कृद्ग्रहणफलं सम्भवतीति चेन्न; 'नलोके'ति निषेधेनादोषात् । 'कृदव्ययस्यैव ग्रहण'मिति शेखरस्तु प्रायोभिप्रायः । भेदिका देवदत्तस्येति । 'स्त्रीप्रत्यययो'रिति

## ❀ वरवर्णिनी ❀

ननु 'नलोके'ति सूत्रे कृतीत्यस्यानुवृत्त्या कृदव्यय एव षष्ठी निषेधो भवति, अत एव 'गृहस्योपरी'त्यादौ नासौ निषेध इति षष्ठी भवत्येव, कृद्ग्रहणाभावे तु अव्ययमात्रयोगे षष्ठी निषेधापत्तिरत आह—कृदव्ययेति । व्याख्यानेनेति । कृदव्ययस्थले एव हि—अव्ययार्थस्य कर्तृकर्मणी सम्भवतः, तयोः कारकतया क्रियायोगे एव सम्भवादित्याशयः ।

ननु कृद्ग्रहणाभावे 'उभयप्राप्ता'वित्यत्रापि तदनुवृत्तेरभावात्तद्विशेष्यकः—उभयोः=कर्तृकर्मषष्ठ्योः प्राप्तिर्यस्मिन् कृतीत्येवं—बहुव्रीहिर्न स्यादिति 'कृती'त्यावश्यकमत आह—उभयेति । अशाब्दत्वे=शब्दादनुपस्थितत्वेऽपि । एकाच इति । एकाच इत्यत्र धातोर्विशेष्यत्वे एकाज्धातोः पचादेर्द्वित्वेऽपि जाग्रादौ धातोरेकाच्त्वाभावाद्द्वित्वं न स्यादत एकोऽज्यस्मिन्निति सामान्यत एवाशाब्दमपि यत्किञ्चिद्विशेष्यमादाय यथा बहुव्रीहिर्भवति तथाऽत्रापि अशाब्दं कृतीत्येतदादाय बहुव्रीहिर्भविष्यतीत्युत्तराशयः ।

व्याख्यानादिति । 'ओदनस्य पाको ब्राह्मणानां प्रादुर्भाव' इत्यादौ भाष्यप्रयोगे भिन्नक्रियाकर्तृकर्मवाचकशब्दप्रयोगेऽपि उभयत्र षष्ठीदर्शनमूलकात्कृदेव विशेष्यमिति व्याख्यानादित्यर्थः । एकदेशयुक्तं कृतीत्यस्य प्रयोजनान्तरमाशङ्क्य खण्डयति—न चेति भेदिकेति । भेदनं भेदिका, णिजन्तात्पर्या-

१ अत्र 'भेदिका देवदत्तस्य काष्ठाना'मित्येवमशुद्धं पाठमर्थमननुसन्धाय स्थापयन्तः पर्वतीयाद्यो भ्रान्ता एवेति गौडाः ।

**तद्धित इति** । तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि कर्मणि च मा भूदित्यर्थः । उदाहरणे—सकर्मकप्रकृतिकभावक्तान्तस्येदृशवृत्तिमात्रविषयताया भाष्यसम्मतत्वेन तस्य केवलस्य क्वाप्यप्रयोगेण तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात् । कृद्ग्रहणात्–कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणो-

---

ॐ विजया ॐ

**कर्तृकर्मणोः कृति** । **कृदन्तशक्तीति** । कृदन्तपर्याप्तशक्तीत्यर्थः । अन्यथा 'कृतपूर्वी कट'-मित्यत्राऽपर्याप्त्या 'कृते'त्यत्रापि तादृशशक्तेः सत्त्वात् षष्ठी स्यादेव । एवञ्च सकर्मकप्रकृतिकभावक्तान्तस्य 'कृते'त्यस्य पृथक् क्वाप्यप्रयोगेण 'कृते'त्यत्र पृथक् शक्तिर्नास्ति, किन्तु 'कृतपूर्वी'ति विशिष्ट एवेत्याशयः ।

ॐ चिदस्थिमाला ॐ

तत्र=ग्रहणकर्तरि । यथाश्रुतासङ्गतेरस्यार्थमाह–**तद्धितान्तेति** । ननु 'कृतपूर्व'मितिप्रयोगसत्त्वात्कथं मात्रार्थोऽत आह–**उदेति** । 'अभावस्ये'त्यादिः । क्वापि=समस्तेऽसमस्ते च । **अप्रयोगेणेति** । व्यवहाराभावाच्छक्तग्रहेणास्य समुदायस्य तच्छक्तिज्ञानसहकारेणोपस्थित्यजनकत्वेनेति शेषः । धातुशक्तिज्ञानस्य सहकारित्वेऽपि न सा कृदन्तशक्तिः, तज्ज्ञानमेव हि मात्रपदव्यवच्छेद्यम् । तदाह—**तद्धितान्तेति** । विशेषणदाने न दोष इत्याह—**कृदिति** । अत्र=कृतपूर्वीत्यत्र । सकलप्राचां ग्रन्थासाङ्गत्याय तत्र मात्रपदस्य दानेऽप्यादाने च

ॐ विषमपदविवृतिः ॐ

नियमस्य प्रतिषेधः । **कर्तरि कर्मणि चेति** । अत्र 'कर्तरी'त्यस्योदाहरणं चिन्त्यं, तादृशक्रियाकर्तुरनभिहितस्य कुत्राप्यदर्शनादिति केचित् ।

---

ॐ वरवर्णिनी ॐ

याहणेति भावे ण्वुच्, धात्वर्थनिर्देशे वा ण्वुल् । गुणभूते=प्रयोज्ये । 'प्रधानाप्रधान'न्यायेन प्रधाने णिजर्थकर्त्तरि देवदत्ते चरितार्थतयाऽप्रधाने कर्त्तरि यज्ञदत्ते षष्ठ्या अप्राप्तिरित्याशयः । इति=इति व्युत्पत्त्या । तत्=कृत्पदम् । तृतीयावत्='चैत्रेण मैत्रेणौदनः पाच्यते' इत्यत्राप्रधाने मैत्रे तृतीयावत् । विनैव यत्नं=कृद्ग्रहणाभावेऽपि । विरोधाभावादिति भावः । प्रश्नः=कृति किमित्यादिनिरुक्तप्रश्नाशयः ।

**तद्धितान्तेति** । तद्धितान्तपर्याप्तेत्यर्थः । अत्र शक्तिश्च–आनुभविकी ग्राह्या, सा च–आकाङ्क्षेति तत्त्वम् । उपस्थितिश्च—वाक्यार्थबोध इति श्रीदण्डिभट्टादयः । एवञ्च तद्धितान्तपर्याप्तानुभविकशक्तिग्रहमात्रप्रयोज्यशाब्दबोधक्रियानिरूपितकर्तृत्वकर्मत्ववदर्थवाचकात्पष्ठी माभूदित्यर्थः । कृतपूर्वीत्यादौ च—इनादितद्धितान्त—कृतपूर्वि–पर्याप्तानुभविकतद्धितान्तसमुदायशक्तिग्रहमात्रप्रयोज्यशाब्दबोधविषयीभूतकरणक्रियाकर्मत्वात्कटादेर्न षष्ठीति समन्वयः । तद्धितान्तपर्याप्तसमुदायशक्त्यैव क्रियाविषयकस्तत्र शाब्दबोध इत्युपपादयति—**उदाहरणे इति** । 'कृतपूर्वी'त्यादौ प्रत्युदाहरणे इत्यर्थः ।

**सकर्मकेति** । सकर्मककृधात्वित्यर्थः । भावक्तान्तस्य='कृते'त्यस्य । **ईदृशेति** । तद्धितेत्यर्थः । कर्मान्वितक्रियावाचकधातुप्रकृतिकभावक्तान्तस्य भाष्यप्रामाण्यात्तद्धितवृत्तिमात्रविषयत्वादित्याशयः ।

**भाष्येति** । तद्धितवृत्तिर्यत्र भाविनी तत्र सकर्मकादपि भावे क्तः, पश्चात्कर्मणः सम्बन्ध इत्यर्थस्य 'कृतपूर्वी कट'मित्यादिप्रत्युदाहरणदानपरभाष्याल्लाभादित्यर्थः । तस्य=सकर्मकप्रकृतिकभावक्तान्तस्य 'कृते'त्यादेः । केवलस्य=तद्धितप्रत्ययविकलस्य । **शक्त्यैवेति** । एवञ्च कृदन्तपर्याप्तानुभविकशक्तिग्रहप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्मत्वस्य कटादावभावान्न ततः षष्ठीत्याशयः । कृद्ग्रहणात्=कृद्ग्रहणसामर्थ्यात् । **कृदन्तेति** । पूर्ववत्—कृदन्तपर्याप्तानुभवजनकशक्तिज्ञानप्रयोज्यशाब्दबोधविषय-

ग्रहणं, न चात्र तथा। 'तण्डुलानां पाचकतरः'[1] इत्यादौ च पाचकादेः पृथक्-

❀ विजया ❀

ननु 'देवदत्तेन कटः कृतः' इत्यादौ करणेऽर्थे शक्तस्य 'कृते'त्यस्य शक्ततावच्छेदकं यद्रूपं कृतत्वं, तस्य 'कृतपूर्वी'त्येतद्घटक'कृते'त्यत्र सत्त्वेन 'तस्य करणरूपार्थे शक्तिर्नास्ती'त्यस्य वक्तुमशक्यत्वात्तया शक्त्योपस्थितिविषयीभूतायाः करणरूपक्रियायाः सत्त्वेन [तन्निरूपितकर्मत्ववतः]ज्ञापितेऽपि षष्ठ्यापत्तिर्दुर्वारेति चेन्न, कृदन्तपर्याप्तशक्तिज्ञानविषयताविशिष्टकर्तृत्वकर्मत्ववद्वाचकात् षष्ठीति ज्ञापनेनादोषात्। वै० 'स्वाश्रयक्रियानिरूपितत्वं', 'स्वाश्रयत्वं'तदुभयसम्बन्धेन। तथा च अन्विताभिधानवादिनां मते सम्बन्धेऽपि शक्तिस्वीकारेण 'कटस्य कर्ते'त्यादौ कर्तृपदस्यानभिहितकर्मत्वरूपसम्बन्धे करणे चार्थे शक्तेः सत्त्वेन षष्ठी भवति, 'कृते'त्यस्य चानभिहितकर्मत्वे क्वापि शक्त्यदर्शनेन,—करणेऽर्थे शक्तिसत्त्वेपि अनभिहितकर्मत्वस्य 'कृते'त्येतत्पर्याप्तशक्तिप्रयोज्योपस्थितिविषयत्वाभावेन न तत्र षष्ठी, तत्र हि 'कृतपूर्वी'त्येतत्पर्याप्त—शक्तिज्ञानविषयीभूतमेव कर्मत्वं न तु 'कृते'त्येतत्पर्याप्ततादृशशक्तिज्ञानविषयीभूतमिति न तत्र षष्ठी।

परन्त्वेवं स्वीकारेऽन्विताभिधानवादिनां मते दोषाभावेप्यन्यमते दोषतादवस्थ्यमेव, तथा च तन्मतेऽन्यमते च दोषाभावाय कृतिग्रहणसामर्थ्यात्—कृदन्तपर्याप्तशक्तिज्ञानप्रयोज्यशाब्दबोधविषयीभूतक्रियानिरूपितकर्तृत्वकर्मत्वैतदन्यतरवद्वाचकात्षष्ठीत्येवार्थ आस्थेयः। शाब्दबोधानुकूला च शक्तिर्वाक्ये एव, पदे तूपस्थित्यनुकूलैव। तथाच 'कटस्य कर्ते'त्यादौ कृदन्तं 'कट-कर्तृ' इति; तत्पर्याप्ता या शाब्दबोधानुकूला शक्तिस्तत्प्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्मत्ववद्वाचकात्कटपदात् षष्ठी भवति, 'कृतपूर्वी'त्यत्र तु या कृदन्तपर्याप्ता शक्तिस्तत्प्रयोज्यः शाब्दबोधो न, तस्याः शाब्दबोधानुकूलत्वाभावात्, या तु शाब्दबोधानुकूला तद्धितान्तपर्याप्ता शक्तिः-तस्याः कृदन्तपर्याप्तशक्तित्वाभावेन—कर्मत्वस्य तत्प्रयोज्यबोधविषयक्रियानिरूपितत्वेऽपि न षष्ठी। 'देवदत्तस्य कटः कर्तव्यः' इत्यादौ तु देवदत्तकर्तृककरणकर्मीभूतः कट इत्यर्थस्य सत्त्वेन कर्मत्वस्य कृदन्तपर्याप्तशक्तिप्रयोज्यबोधविषयक्रियानिरूपितत्वेऽपि अनभिहितत्वाभावान्न षष्ठीति श्रीगुरुचरणाः। विस्तरस्तु गुरुवरैः परमपूज्याऽस्मत्पितृचरणैर्विरचितायां शब्देन्दुशेखरत्रिपुरसुन्दर्यामनुसन्धेयः।

❀ चिदस्थिमाला ❀

फलमाह—तण्डुलानामिति। अपिना तद्धितान्तम्। अत एव नलोकेतिनिषेधाविषयत्वं, निष्ठान्तपद-

❀ विषमपदविवृतिः ❀

परे तु 'पाचितपूर्वी तण्डुलं देवदत्तेन यज्ञदत्त' इत्युदाहरणं कर्तुः सम्भवत्येव। अत्र ण्यर्थ-

❀ वरवर्णिनी ❀

क्रियानिरूपितकर्तृत्वकर्मत्ववदर्थवाचकादेव षष्ठीत्यर्थः। न च=नहि। अत्र=कृतपूर्वीत्यादौ। तथा= कृदन्तपर्याप्तानुभविकशक्तिज्ञानप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्मत्वं कटादेः।

तण्डुलानामिति। यथा 'पाचक'इत्यादौ कृदन्तपर्याप्तपाकाश्रयत्वप्रकारकशक्तिज्ञानाधीना तादृशार्थो-

१ अयमाशयः—तमप्प्रत्ययसमभिव्याहारमन्तरेणापि 'तण्डुलानां पाचक' इत्यादौ पाकक्रियानिष्ठविशेष्यतानिरूपितकर्तृत्वकर्मत्वान्यतरसम्बन्धावच्छिन्नप्रकारताकबोधस्य सर्वानुभवसिद्धतया तण्डुलादिपदसमभिव्याहृतपाचकादिपदस्य तादृशशाब्दबोधं प्रति हेतुतायाः क्लृप्ततया तादृशसमभिव्याहारस्य च 'तण्डुलानां पाचकतर' इत्यत्रापि सत्त्वेन षष्ठी सिध्यति। 'कृतपूर्वी'त्यत्र तु सकर्मकधातोर्भावे प्रत्ययस्य भाष्यप्रयोगाऽतिरिक्तेऽनङ्गीकारेण—कृतपूर्वीत्येतत्समभिव्याहृतकटादिसमभिव्याहारस्यैव करणक्रियानिष्ठविशेष्यतानिरूपितकर्मत्वसम्बन्धावच्छिन्नकटादिनिष्ठप्रकारताकशाब्दबुद्धित्वावच्छिन्नं प्रति हेतुतया [ कृतपूर्वीत्यस्य च तद्धितान्ततया— ] कृदन्तपर्याप्तशक्तिग्रहप्रयोज्यत्वस्य तादृशबोधेऽभावान्न तत्र षष्ठीति।

❀ वरवर्णिनी ❀

पस्थितिस्तथैव—[ शक्ततावच्छेदिकाया 'पाचके'त्यानुपूर्व्यास्तत्रापि सत्त्वेन–] 'पाचकतर' इत्यादावर्पाति–कृदन्तपर्याप्तशक्तिज्ञानप्रयोज्योपस्थितिविषयत्वस्य पाकानुकूलक्रियायामपि सत्त्वात्तन्निरूपितकर्मत्ववदर्थ-वाचकादोदनपदात्षष्ठी—'ओदनानां पाचकतर'इत्यत्र भवति । 'कृतपूर्वी कट'मित्यत्र तु—सकर्मकधातु-प्रकृतिकभावक्तान्तस्यान्यत्राप्रयोगात्कृदन्तपर्याप्तशक्तिज्ञानप्रयोज्योपस्थितिविषयत्वस्य करणक्रियायामभावान्न तन्निरूपितकर्मत्ववदर्थवाचकात्कटपदात्षष्ठी । 'कृतपूर्वी'त्यत्र हि या करणक्रियोपस्थितिः सा तद्धितान्त-पर्याप्तशक्तिग्रहप्रयोज्या-नतु कृदन्तपर्याप्तशक्तिग्रहप्रयोज्येति भावः । नन्वानुपूर्व्या एव शक्ततावच्छेदकतया 'कृतः कटस्तेने'त्यत्र करणत्वावच्छिन्ननिरूपितशक्तेः कृतपदे दृष्टत्वेन 'कृतपूर्वी कट'मित्यत्रापि तादृश-ककाराव्यवहितोत्तरऋकारादिघटितानुपूर्व्याः सत्त्वेन 'कृतः कटः' इत्येतद्घटककृतादिपदपर्याप्तशक्तिग्रहे 'कृतपूर्वी'त्येतत्पदजन्यकरणक्रियोपस्थितिजनकताया अक्षततया कृदन्तपर्याप्तशक्तिग्रहप्रयोज्यकरणक्रिया-निरूपितकर्मत्ववदर्थवाचकात्कटपदात्षष्ठी दुर्वारेति चेन्न; कृदन्तपर्याप्तशक्तिग्रहप्रयोज्योपस्थितीयविषयता-विशिष्टकर्तृत्वकर्मत्वान्यतरवदर्थवाचकात्षष्ठी, वै० 'स्वाश्रयत्व' 'स्वाश्रयक्रियानिरूपितत्वो'भयसम्बन्धेने-त्यर्थेनादोषात् । तथाहि—अन्विताभिधानवादिमते सम्बन्धस्यापि शक्तिकुक्षिप्रविष्टत्वेनानभिहितकर्मा-न्वितकरणक्रियायामेव 'कृतःकटस्तेने'त्यत्रत्यकृतपदस्य शक्तेः स्वीकारेण 'कृतपूर्वी'त्यत्र कर्मान्वितकरणाभावेन षष्ठ्यप्राप्तिः । समन्वयस्तु—स्वम्—उपस्थितीया विषयता, तदाश्रयत्वं कर्मत्वरूपे सम्बन्धे । किञ्च–स्वं—सैव विषयता, तदाश्रयीभूता करणक्रिया, तन्निरूपितत्वञ्च कर्मत्वे इति—तादृशविषयताविशिष्ट-कर्मत्ववद्वाचकात्कटादिपदात्षष्ठीप्रवृत्तिरिति–रीत्या बोध्यः । 'कृतपूर्वी'त्यत्र तु कर्मत्वान्वितकरणक्रियाया अभावान्न षष्ठी, तादृशक्रियानिरूपितकर्मत्ववदर्थवाचकत्वस्य कटादावभावात् ।

न चान्विताभिधानवादातिरिक्तमते करणत्वमात्रे एव शक्तेरभ्युपगमात्तादृशशक्तेः 'कृतः कट'इत्यादौ सत्त्वेन कृदन्तपर्याप्तशक्तिग्रहस्य तत्र प्रसिद्धतया तत्रत्यकृदन्तपर्याप्तशक्तिग्रहात्कृतपूर्वीत्यत्र करणक्रियो-पस्थित्या तत्र कटपदात्षष्ठी दुर्वारेति वाच्यं, कृदन्तपर्याप्तशक्तिग्रहप्रयोज्यशाब्दबोधीयविषयताश्रयक्रिया-निरूपितकर्तृत्वकर्मत्वान्यतरवद्वाचकात्षष्ठीत्यर्थस्वीकारेण 'कृतः कट' इत्यादौ कृदन्त'कृत'पदपर्याप्तशक्तिग्रहस्य सत्त्वेऽपि तादृशज्ञानस्य 'कृतपूर्वी'त्यत्रत्यकटकर्मकपूर्वकालावच्छिन्नोत्पत्त्यनुकूलव्यापाराश्रयइत्येतादृशशाब्द-बोधविषयताप्रयोजकत्वाभावात् [–पदपर्याप्तशक्तिग्रहस्य पदार्थोपस्थितौ कारणत्वेऽपि शाब्दबोधे कारणत्वा-भावात्, निरुक्तशाब्दबुद्धौ तादृशसमुदायजन्योपस्थितेः कारणत्वेऽपि केवलकृतपदजन्यशक्तिग्रहस्य कृतरूप-पदार्थोपस्थितावेव हेतुतया–तत्राहेतुत्वात् ] निरुक्तदोषानवकाशात् । 'कटस्य कर्त्ते'त्यत्र तु कृद्ग्रहणपरिभाषया समुदायस्य कृदन्तत्वेन तत्पर्याप्तशक्तिग्रहस्य कटकर्मककरणकर्तृरूपार्थविषयकशाब्दबोधे कारणतया तादृश-बोधविषयकरणक्रियानिरूपितानभिहितकर्मत्ववदर्थवाचकत्वस्य कटे सत्त्वात्षष्ठी सिध्यतीत्याहुः ।

एतेन—'कृत'मिति व्यस्ते 'कृतपूर्वी'त्यत्र वृत्तौ च विद्यमाने कृतपदे एकस्या एव क्रियाविषयकबोधा-नुकूलायाः शक्तेः सत्त्वेन 'कृतपूर्वी कट'मित्यत्र षष्ठी दुर्वारे'ति परास्तम् । अत एव—'देवदत्तेन कृत'-मित्यादौ क्तान्तस्यार्थवत्त्वेन कृद्ग्रहणपरिभाषया कृदन्तत्वात्प्राप्तप्रातिपदिकसञ्ज्ञावारणाय समासग्रहण-नियम आस्थितः । अत एव 'देवदत्तो गार्ग्यं' इत्यादौ सुरहितस्य 'देवदत्तो गार्ग्ये'त्यस्यार्थवत्त्वाभावेन समासग्रहणेनाव्यावृत्तौ प्रसक्तायां प्रत्ययग्रहणपरिभाषया प्रातिपदिकसञ्ज्ञावारणं भाष्योक्तं सङ्गच्छते । देवदत्तकर्तृककरणकर्मरूपार्थस्य 'देवदत्तेन कृतपुत्र' इति वाक्यादपि प्रतीतेः सुरहिते एवानुभविकी शक्तिः । 'देवदत्तो गार्ग्ये'त्यस्मात्तु सुरहिताच्च देवदत्ताभिन्नगार्ग्यप्रतीतिरिति सुसहिते एवानुभविकी शक्तिरित्युमानाथप्रभृतयः । न च 'नलोके'ति निषेधादेव 'कृतपूर्वी कट'मित्यत्र षष्ठी न स्यादिति कृतीति व्यर्थमिति वाच्यं, कर्मबोधकपद–निष्ठान्तैतदुभयपर्याप्तानुभविकशक्तिरूपाऽऽकाङ्क्षाप्रयोज्य–

प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी। अत एव 'तद्धिते मा भू'दित्येवोक्तं, न तु 'तद्धिताधिक्येऽपी'ति। भाष्येऽपि—'तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत्कृतो ये कर्तृकर्मणी तत्रैव यथा स्या'दित्येवोक्तम् ।

**कृतपूर्वीति**। अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाऽविवक्षयाऽकर्मकत्वाद्भावे क्ते 'पूर्वादिनि'रिति तद्धितः। तदनन्तरन्तु विशेषरूपेण कर्मयोगो भवत्येव। तत्रोक्तरीत्या षष्ठ्यभावेऽनभिहितत्वाद्द्वितीया । एवं रीत्या साधुत्वेऽत्रत्यभाष्यमेव मानम् । वृत्तेः पूर्वं कर्मान्वयाभावाच्च 'सापेक्षत्वाद्वृत्तिर्न स्या'दिति न शङ्क्यम् ।

---

### ❀ चिदस्थिमाला ❀

शक्तिज्ञानसहकारेणोपस्थितक्रियान्वयिनोरेव तेन निषेधात्। निष्ठान्तघटितोपस्थाप्येत्यर्थे मानाभावात् । एतेन 'तेन सिद्धे कृतीति व्यर्थ'मिति **पदमञ्जरीकौस्तुभाद्युक्तमपास्तम्** । तद्धितान्तेन क्रियोपस्थितौ कृदन्तशक्तिज्ञानस्यापेक्षणान्मात्रार्थाभावेन नाभावोदाहरणत्वमिति भावः। प्राचां ग्रन्थासाङ्गत्यायेदमेव मूलसम्मतमित्याह—**अत एवेति**। तद्धितविशेष एव वारणस्येष्टत्वादेवेत्यर्थः। तदर्थं भाष्यसम्मतमपीद-मेवेत्याह—**भाष्येऽपीति**। उक्त एव भाष्यार्थः। प्राचां ग्रन्थासाङ्गत्यायाह—**अत्रेति**। अन्यत्रा-प्रसिद्धत्वादाह—**एवमिति** । प्राचोक्तं खण्डयति—**वृत्तेरिति** । चस्त्वर्थे, व्युत्क्रमे च ।

### ❀ विषमपदविवृतिः ❀

कर्तरीनिः, न प्रकृत्यर्थकर्तरि, 'प्रधानाप्रधानयो'रिति न्यायात् । प्रकृत्यर्थस्य णिजर्थविशेषणत्वेन इनिप्रत्ययार्थविशेषणत्वासम्भवाच्चेत्याहुः । **पृथक्प्रयोगेणेति** । तेन 'देवदत्तेन पक्त्रिम'मित्यादौ षष्ठी नेति सूचितम्। एवमेव 'अणिनुगः' 'णचः स्त्रियाम'मित्येतद्विषयेऽपि 'कर्तृकर्मणो'रिति न, तत्र तद्धितं विना कृदन्तस्याप्रयोगेण कृदन्तशक्तिग्रहप्रयोज्यक्रियाकर्तृकर्मणोरभावात् । केचित्तु तद्धिताधिक्ये माभूदित्येतदर्थं कृद्ग्रहणं, 'तण्डुलानां पाचकतर' इत्यादौ तु अन्तरङ्गः कारकयोगः पश्चादतिशययोग इति न दोष इत्याहुः। **वृत्तिर्न स्यादिति**। 'वृत्तस्य विशेषणयोगो ने'ति तु न

---

### ❀ वरवर्णिनी ❀

शाब्दबोधविषयीभूतक्रियानिरूपितकर्तृत्वकर्मत्ववदर्थवाचकात्षष्ठी न भवतीत्येवं 'नलोके'त्यस्यार्थस्वीकारेण तदप्रवृत्तेरिति **श्रीदण्डिभट्टाः** प्राहुः । **श्रीगुरुचरणास्तु**—'कृतपूर्वी कट'मिति 'कर्तव्यपूर्वी कट'-मित्येतदुपलक्षणं, तथा च तत्र निष्ठाया अभावान्नलोकेत्यस्य प्राप्तिरित्याहुरिति सङ्क्षेपः। अन्ये तु 'कृतपूर्वी'-त्यत्र 'निष्ठे'ति न क्तः, किन्तु 'नपुंसके भावे क्त' इत्यनेन क्तः, एवञ्च 'न लोके'ति षष्ठीनिषेधस्य बाधकेन 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यान'मिति वार्त्तिकेन षष्ठी प्राप्ता—कृद्ग्रहणान्नेत्याहुः।

**परे तु** सूत्राक्षरैर्वार्त्तिकबाधनस्यानुचितत्वादुपलक्षणतयैव व्याख्यानं युक्तमित्याहुः ।

'तद्धितस्य कर्तृकर्मणी' इत्यस्य निरुक्तस्तद्धितान्तपर्याप्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्तृकर्मणी इत्यर्थः। कर्मविशेषस्य=कटादेः। तत्तद्रूपेण=कटीयकर्मत्वादिना। सम्बन्धसामान्येन विवक्षिति भावः। 'भावे क्ते'इत्यस्य 'ततः सुप्सुपे'ति समासे' इति शेषः। **विशेषेति**। सम्बन्धत्वेनाऽविवक्षायां, कर्मत्वेन च विवक्षायामिति भावः। भावक्तस्य तु न निवृत्तिः, 'जातसंस्कारो न निवर्त्तते' इति सिद्धान्तात् । एवं रीत्या=आदौ कर्मत्वाविवक्षया भावे क्तस्ततः कर्मत्वविवक्षयेवं रीत्या । एवञ्च 'ग्रामं गम्यते'

एवम्—'अधीती व्याकरणे' इत्यादावपि बोद्धव्यम् ।

तदुक्तं भाष्ये—'यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्ति'रिति । **न तदा प्रत्ययः**—न तदा भावे प्रत्ययः, धातोः सकर्मकत्वात् । **यदा प्रत्ययः**—'भावे' इति शेषः । तदा वृत्तिरेव, सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह—**सामान्येनेति** । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टो योऽर्थः तदर्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः । इयमेव कर्मणोऽविवक्षा नाम । अनेन 'तादृशक्तान्तस्य वाक्ये न प्रयोग' इति स्पष्टमेवोक्तम् । प्रयोगानुरोधिनी हि विवक्षेति तद्भावः । न चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, 'नपुंसके भावे' इत्यनेन सकर्मकेभ्योऽपि सिद्धेरिति वाच्यं, तस्याप्यकर्मकेभ्य एवेष्टेः । अत्र चेदमेव भाष्यं मानम् ।

'ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयन् स्याज्ज्वलो न कः ? ॥'

—इति भट्टिपद्यम् । मादृग्भ्यो दुःखं ददद्भिरुत्तममामोदं पुष्पादीनां गृहीत्वा मादृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृक् विरहाग्निव्याप्तश्चेतयन्—ज्वलः=ज्वलन्निव न स्यादिति तदर्थः ।

'दाधातोः पोषणार्थाद्धाञश्च 'ददाति दधात्यो'रिति शणौ 'लिम्पेः शः, ज्वलेर्ण' इति—जयमङ्गलाश्लोकव्याख्याप्येतज्जातीयैव तत्रेति दिक् । तत्र 'धायैरामोदमुत्तम'मित्यत्र 'गृहीत्वे'त्यध्याहृत्य तद्योगे द्वितीया बोद्ध्या ।

❀ चिद्रस्थिमाला ❀

प्राचां भ्रमनिरासायाह—**एवमिति** । आदिना काव्यप्रकाशप्रयोगः । व्युत्क्रमेणान्वय इत्याह—**तदेति** । अवधारणगर्भमिदमपीत्याह—**कर्मेति** । क्तान्तेन=भावक्तान्तेन । प्राचां भ्रमनिरासायाह—**इयमिति** । एवेन तदुक्तिनिरासः । पूर्वभाष्यस्य साधारणत्वाद्भाष्यान्तरोक्तिरित्याह—**अनेनेति** । भाष्येणेत्यर्थः । **तदिति** । भाष्यान्तरेत्यर्थः । तृतीयान्तस्य साधनरूपयत्नेऽन्वयः । **मानमिति** । तत्प्रकारस्त्वित्थं-'तयोरेवे'ति सूत्रे 'भावे चाकर्मकेभ्य' इत्यनुवर्तते, तच्च वाक्यभेदेन सम्बध्यते । कृत्यादयो भावकर्मणोरेव, भावे च ये कृत्यादयः प्राप्तास्तेऽकर्मकेभ्य एवेति, तत्रानुवादे क्तोऽविशेषात्सर्व एव गृह्यते, 'णेरध्ययने वृत्त'-मित्यादिसूत्रस्थभाष्यकैयटादिप्रामाण्यादिति । नन्विदं व्याख्यानं जयमङ्गलाविरुद्धमत आह—**दाधातोरिति** । **जयमङ्गलेति** । तदाख्यातेत्यर्थः । एवमानुपूर्व्यभावादाह—**एतदिति** । एतेनानित्यमिदं,'तदर्ह'मिति निर्देशाद, तत्प्रकारस्त्वन्यत्र स्पष्ट इतिसकलप्राचोक्तमपास्तम् । भाष्यानुक्तत्वेनानित्यत्वे मानाभावाद् । 'तदर्ह'मित्यत्रकर्मोपपदादण्प्रत्ययेनोपपदसमासेन द्वितीयासमर्थादित्यर्थलाभः, तदर्थमेव च तदुपादानं सार्थकम्, अन्यथा 'तत्रेव' 'तस्य' 'अर्ह'मिति सूत्रत्रयमेव लघुभूतं कृतं स्यादिति तदाह—**इति दिगिति** । तदेतदभिप्रेत्याह—**तत्रेति** ।

❀ वरवर्णिनी ❀

इत्यादि नापादनीयमित्याशयः । तद्भावः=भाष्यकृदाशयः । **व्यर्थः**—'भाष्ये' इति शेषः । **सिद्धेरिति** । 'निष्ठे'ति क्तस्य 'तयोरेवे'ति नियमात्सकर्मकेभ्यः कर्मण्येवेति नियमेऽपि 'नपुंसके भावे' इत्यत्र तदभाव इत्याशयः । "—'तदर्ह'मित्यादिनिर्देशात्कर्तृकर्मणोरिति षष्ठी अनित्या, तथा च 'धायैरामोद'मिति सिद्ध"मिति प्राचां मतं खण्डयति—**ददैरिति** । **एतज्जातीयेति** । मदुक्तिसजातीयैवेत्यर्थः । 'पोषणार्था'दित्युक्त्या दुःखस्य पोषकैरिति भट्टेःकान्वयस्यैव ततो लाभादिति हृदयम् । **बोध्येति** ।

१ भाष्यप्रतीकधारणमेतत् । २ आह—'भाष्यकृ'दिति शेषः । ३ भाष्यप्रतीकधारणमेतत् ।

**उभयोः प्राप्तिर्यस्मिन्निति**। तेनैकनिमित्तत्वलाभात्—'ओदनस्य पाको, ब्राह्मणानाञ्च प्रादुर्भावः' इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति भावः। प्राप्तिपदेन चोभयोः प्रयोग एवायं निषेध इति ध्वनितम्।

**स्त्रीप्रत्यययोरिति**। 'स्त्रियां क्ति'न्नित्यधिकारविहितयोरित्यर्थः। **नायं नियम इति**। तेनोभयत्रापि षष्ठी भवत्येवेति भावः। **भेदिकेति**। धात्वर्थनिर्देशे ण्वुल्, सन्नन्ताद्भिदेः 'अ प्रत्ययात्'दित्यकारप्रत्ययः। **शेषे इति**। नियमस्यायं विकल्पः।

'इत्येके' इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्तये आह—**केचिदिति**। अकाकारभिन्ने कृन्मात्रे इत्यर्थः। **अनुशासनमिति**। अनुशिष्यन्तेऽसाधुभ्यो विविच्य बोध्यन्ते येनेति-करणे ल्युट्। 'मतः' इत्यादौ 'मतिबुद्धी'ति वर्तमाने क्तः।

**इदमेषामिति**।—कर्तरि षष्ठी। सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरपि

---

### ॐ चिदस्थिमाला ॐ

अन्यत्र षष्ठीसत्त्वादाह—**धार्यैरिति**। तेन=बहुव्रीहिणा। **ओदनेति**। 'आश्चर्यं नामे'त्यादिः। प्राचोक्त्यसाङ्गत्यायाह—**प्राप्तीति**। स्पष्टार्थमाह—**स्त्रियामिति**। अपिर्वाक्यालङ्कारे। प्राचां ग्रन्थासाङ्गत्यायाह—**धात्वर्थेति**। बिभित्सेत्यत्राह—**सन्नन्तादिति**। अव्यवहितभ्रमनिरासायाह—**नियमेति**। कदाचिद्भवति कदाचिन्नेत्यर्थः। पूर्वस्यैकीयमतत्वेनाग्रिमस्य सिद्धान्तत्वात्तत्र केचिदित्ययुक्तमत आह—**इत्येके इति**। तथा च 'केचि'दित्यस्य भाष्यतत्त्वविद इत्यर्थो बोध्यार्थः। अन्यथा तदसङ्गतिः स्पष्टैवेति भावः। विशेषमाह—**सकर्मकेभ्य इति**। 'क्तोऽधिकरणे चे'त्यनेनेतिभावः। अनभिहितत्वविशेषादाह—**द्वयोरपीति**। अपिः प्राग्वत्।

---

### ॐ वरवर्णिनी ॐ

एवञ्चानित्यत्वे न फलं, 'तदर्ह'मिति तु सौत्रः प्रयोग इत्याशयः। तेन='यस्मिन्नि'त्येकवचनेन कृत्प्रकृतिभूतैकधातूपात्तक्रियानिरूपितकर्तृत्वकर्मत्वनिमित्तिका यत्र षष्ठीत्याद्यर्थो लभ्यते इत्याशयः। **विभिन्नेति**। पाकप्रादुर्भावक्रियेत्यर्थः।

**प्राप्तिपदेनेति**। ननु प्राप्तिपदोपादाने यत्र कर्तृकर्मणोरुभयोरपि कृदन्तार्थेऽन्वयस्सम्भवति तत्रैवायं नियमः सिद्धान्ते प्रवर्तते, तदनुपादाने तु यत्राविवक्षितकर्मतया कर्मान्वयस्य योग्यता नास्ति—यथा 'चैत्रस्य पाक' इत्यादौ—तत्रापि उभयोः कर्मण्येव षष्ठीत्यस्य नियमस्य प्रवृत्त्यापत्त्या कर्त्तरि षष्ठी न स्यादिति प्राप्तिपदमावश्यकमिति कथन्तदुपादानादुभयोः प्रयोग एवेत्याद्यर्थलाभ इति चेन्न; एवं सत्यकर्मकेष्वेव कर्त्तरि षष्ठी स्यात्, सकर्मकेषु तु सति सम्भवे कर्मण्येवेति 'अकर्मके कर्त्तरि कृति' ततः 'कर्मणी'ति योगविभागेन सिद्धावुभयोर्ग्रहणसामर्थ्याद्यत्रोभयोरन्वययोग्यता तत्रैव प्रवृत्तिसिद्धौ पुनः प्राप्तिग्रहणात्—'यत्रोभयार्थकं पदं श्रूयते' इत्यर्थलाभसम्भवात्। तत्फलन्तु 'अथ शब्दानुशासन'मित्यादौ कर्त्रन्वययोग्यतायाः सत्त्वेऽपि आचार्यादिरूपकर्तृबोधकपदाश्रवणेऽस्य नियमस्याप्रवृत्त्या समाससिद्धिरिति श्रीबालशास्त्रिचरणानुसारिणः। श्रीगुरवस्तु—अर्शआद्यचा 'उभये कृती'त्येव वक्तव्ये—इत्याशयः। प्रत्यासत्त्याऽप्येकनिमित्तत्वलाभ इत्यपि बोध्यमित्याहुः। **कर्त्तरीति**। 'एषा'मिति कर्त्तरि षष्ठीत्यर्थः।

षष्ठी, 'इदमेषां भुक्तमोदनस्य'। 'उभयप्राप्ता'विति तु 'मध्येऽपवाद'न्यायेन 'कर्तृकर्मणो'-रित्यस्यैव नियम इति बोध्यम्।

**न लोका। लादेशा इति।** लकारसम्बन्धिन इत्यर्थः, तेन 'दद्रिर्गा' इति सिद्धम्। केवल—लस्य—क्वापि प्रयोगाभावादेवं व्याख्यातम्। **कुर्वन्निति।** तृन्प्रत्याहारघटकस्तु नायं, तृशब्दस्य तद्घटकत्वेऽपि शतुस्तद्घटकत्वाभावात्। लिडादेश-क्वस्वादियोगे, लिट्सदृशकि-किनोर्योगे च निषेधार्थं तस्यावश्यकत्वाच्च।

**उ इति।** उकारेण व्याख्यानात्तदन्तविधिः, व्यपदेशिवद्भावेनोकारस्यापि। 'सनाशंस'-ति, 'अलङ्क'ञिति च उ-इष्णुचौ। **घातुक इति।** 'लषपतपदे'त्युकञ्, वृद्धिरतन्त्रम्।

**कमेरिति।** 'उकान्तस्ये'ति शेषः। इदञ्च भाषायामेव, 'भाषाया'मिति भाष्योक्तेः।

**निष्ठेति।** एतदपवादतया भाष्ये वार्तिकं पठ्यते—'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यानं—'छात्रस्य हसित'मिति। इदञ्च प्रतिपदोक्तत्वात् 'नपुंसके भावे क्तः' इति-सूत्रविहितक्तान्तयोगे एव। अत एव 'भ्रान्तं देश'मित्यादौ 'गत्यर्थाकर्मके'त्यनेन क्ते नानेन षष्ठी। 'नपुंसके भावे क्त'स्तु नात्र, तस्याप्यकर्मकेभ्य एवेष्टेः। अविवक्षित-कर्मतयाऽकर्मकत्वेन क्तस्तु 'कृतपूर्वी'त्यादिवृत्तिविषय एवेत्युक्तम्। एवञ्च 'इहाहः सृप्त'-मित्यादौ परत्वेन 'क्तोऽधिकरणे चे'त्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठीसाधनस्यात्र-श्यकत्वेन इदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम्।

वार्तिकेन चानेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते। शेषत्व-

---

ॐ चिदस्थिमाला ॐ

दण्ड्याद्यसाङ्गत्यायाह—**मध्येऽपेति**। मौलः सम्बन्धविशेषोऽविवक्षितः, सर्वेषां सिद्धिरित्याह—**लकारेति**। इति=इत्याद्यपि। ननु यथा श्रुतत्यागे एव किं बीजमत आह—**केवलेति**। आदेशरहितेत्यर्थः। तथा च लान्तयोगेनेत्यर्थासम्भवः। न चादेशे स्थानिवत्त्वेन लत्वम्, अल्विधित्वात्। तथा च लक्षणया लसम्बन्धिप्रकृतिप्रतिपाद्यक्रियाकर्तृकर्मणोः षष्ठी नेति फलितम्। ननु लग्रहणं व्यर्थं, तृन्प्रत्याहारघटकतया निषेधसिद्धेरत आह—**तृनिति**। एकदेशद्वारा तस्य घटकत्वे आह—**लिडिति**। तस्य=लस्य। अत्रोकार-प्रश्लेषः। तत्र लश्चोकश्चेति द्वन्द्वोत्तरं लादीनां द्वन्द्वस्तदाह—**उकारेणेति**। क्वचिद्भाष्ये—दृश्यमानकन्यामलं-करिष्णु'रित्युदाहरणमूला-ऽनुवृत्तकृतीत्यस्य विशेष्यत्वादाह—**व्याख्येति**। **उकारस्यापि**—ग्रहणमिति शेषः।
मौलोदाहरणक्रमेणाह—**सनेति**। अनतिप्रसङ्गायाह—**उकान्तेति**। विशेषमाह—**इदञ्चेति**। विशेषमाह—**एतदिति**। **क्तान्तेति**। कालोदासीनेत्यादिः। अत्र='भ्रान्तं देश'मित्यादौ। यत्तु पदसंस्कारपक्षे पूर्वमविवक्षित-कर्मत्वेनाकर्मकतया भूतत्वविवक्षायाः सत्त्वेन च 'निष्ठे'त्यनेनैव क्ते अस्याप्रवृत्तेः, 'कर्तृकर्मणो'रित्यस्य च 'न लोके'ति निषेधादप्रवृत्तौ तत्र द्वितीयाचेति, तत्रेत्याह—**अवीति**। अत एव 'घटः क्रियते', 'घटः कृत'इत्यादौ चारितार्थ्येनानवकाशत्वाभावादाह—**परत्वेनेति**। 'नपुंसके' इत्यतः। प्रत्याख्यातमिति। एवञ्च

---

ॐ वरवर्णिनी ॐ

भुक्तं=भोजनाधिकरणम्। 'नियम' इत्यस्य—ना'ऽधिकरणवाचिनश्चेत्यस्ये'ति शेषः। दद्रिर्गा इति।

त्रिवक्षया भाष्योक्तत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा । 'पूरणगुणे'ति सूत्रे भाष्ये ध्वनितमिदम् । तत्र हि–'सति किमुदाहरणं ? ब्राह्मणस्य कुर्वन्, नैतदस्ति-कारकषष्ठीनिषेधात्, शेषषष्ठ्या तु 'ब्राह्मणस्य कट'मित्यर्थेनासामर्थ्यात्–' इत्याद्यर्थकमुक्तमिति परे ।

**अधीयन्निति** । 'इङ्धार्योः शत्रकृच्छ्रिणी'ति शता । **द्विषन्निति** । 'द्विषोऽमित्रे' इति शता । **शेषे षष्ठी त्विति** । इदञ्चिन्त्यमित्युक्तं परैः ।

**अकेनो** । अत्र यथासङ्ख्यं नेष्यते; अकस्याधमर्ण्येऽसम्भवादाह–**भविष्यत्यकस्येति** । 'वर्षशतस्य पूरकः' इत्यादौ, 'एतत्कर्मकयाजनकर्तारः' इत्यर्थके 'अङ्ग ! यजतां लप्स्यन्तेऽस्य याजकाः' इत्यादौ च षष्ठी भवत्येव, कर्तृमात्रार्थके 'ण्वुल्तृचा'-विति ण्वुलि पदान्तरसम्बन्धेन भविष्यत्त्वप्रतीतावपि अकस्य तत्रावृत्तेः । 'तुमुन्ण्वुला'-विति ण्वुल् तु 'भविष्यती'त्यधिकृत्य विधानाद्भविष्यदर्थक एवेति भावः ।

---

ॐ विजया ॐ

**न लोकाव्ययनिष्ठाखलर्थ** । **उक्तमिति परे इति** । यदि कारकषष्ठीनिषेधविषये शेषत्वविवक्षा भवेत्तर्हि कारकषष्ठ्या निषेधेऽपि शेषषष्ठ्या दुर्वारत्वेन 'नैतदस्ती'ति भाष्यासङ्गतिः स्पष्टैवेति भावः ।

अत्र वदन्ति—तादृशभाष्यात्कारकषष्ठीनिषेधविषये शेषषष्ठ्यनभिधानं न लभ्यते । तथा हि—तस्य भाष्यस्य 'कट'मित्यस्य गम्यमानत्वे 'ब्राह्मणस्य कुर्व'न्नित्यत्र षष्ठ्यर्थस्य क्रियान्वयतात्पर्यात्–कारकषष्ठी न, निरुक्तनिषेधात्, कटाऽन्वयतात्पर्ये तु सामर्थ्याभावात्समासो न प्राप्नोति। नच कटस्याध्याहृतत्वेऽपि षष्ठ्यर्थस्य क्रियान्वये शेषषष्ठ्या तत्र सामर्थ्यस्य सत्त्वेन तत्र समासनिषेधः फलमिति वाच्यं, षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्य व्युत्पन्नत्वात्, अध्याहारे समभिव्याहारस्य सत्त्वादिति । **इत्युक्तं परैरिति** । परोक्तिश्चिन्त्येत्युक्तमस्माभिरपीति मान्याः ।

ॐ चिदस्थिमाला ॐ

शेषे षष्ठी त्वित्यनेनैव मूलकृतेदं सङ्गृहीतमिति न मूले न्यूनता । मूलादिसर्वासाङ्गत्यं ध्वनयन् सिद्धान्तमाह—**वार्तिकेनचेति** । ज्ञाप्यते इत्यादावन्वयः ।

ननु तथैव कुतो नात आह—**पूरणेति** । अन्यथा तदसङ्गतिः स्पष्टैव । अत एवाह—**इदमिति** । एतेन तथा **दण्डिशास्त्र्याद्युक्तमपास्तम्** । **नेष्यते इति** । भाष्यकृता योगविभागेन व्याख्यानादिति भावः।

नन्वेवं सत्याद्यस्याप्युभयसम्बन्धापत्तिरत आह-**अकस्येति** । प्राचोक्तस्वरितत्वप्रतिज्ञाऽसाङ्गत्यायाह—**वर्षेति** । मात्रपदेन भविष्यत्त्वव्यवच्छेदः । तत्र तु नैवमित्याह—**तुमुनिति** । तथा च तदधिकार-

---

ॐ वरवर्णिनी ॐ

अत्र लिङ्गद्वारालिट्प्रयोज्यद्वित्वप्रयोजकत्वरूपसम्बन्धवत्तया लकारसम्बन्धिताऽस्ति । 'लादेश'इत्येतदुक्तौ तु किप्रत्ययस्यातथात्वान्निषेधो न स्यादित्याशयः । **इत्याद्यर्थकमुक्तमिति** । यदि तु **क्तातिरिक्ते** कृति शेषत्वविवक्षा स्यात्तदा—शत्रन्तयोगे शेषत्वविवक्षा नास्तीत्यर्थकं 'नैतदस्ती'त्युक्त्वा कटादिपदार्थान्वयविवक्षया शेषषष्ठ्यामसामर्थ्यात्समासाभावमुपपाद्य 'पूरणगुणे'त्यत्र सद्ग्रहणप्रत्याख्यानमसङ्गतं स्यादिति तत्त्वम् । **परैः**—परे तु मते इत्यर्थः । तत्र हि 'कृति क्तातिरिक्ते न से'त्याद्युक्तम् ।

**नव्या इति** । मनोरमादिकृतो दीक्षिता इत्यर्थः ।

**व्रजङ्गमीति।** 'गमेरिनि'रित्यौणादिक इनिः। स च-भविष्यति, 'भविष्यति गम्यादयः' इत्युक्तेः। 'गामी'ति पाठे बाहुल्काद्वृद्धिः। **शतन्दायीति।** 'आवश्यकाधमर्ण्ययो'रिति णिनिः। आवश्यके णिनावप्ययं निषेधः, सूत्रे आधमर्ण्यपदेन तत्सूत्रोक्तार्थोपलक्षणात्। अत एव 'अंशं हारी'ति निर्देशः सङ्गच्छते। तत्र हि आवश्यके णिनिः। न च तत्र भविष्यदर्थकत्वेन सिद्धिः, भूतवर्त्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यं; वस्तुतो भविष्यतो बोधेऽपि तत्त्वेनाबोधात्।-णिनेस्तदर्थकत्वाभावाच्च। अत एव—'अवश्यङ्कारी कटस्ये'ति वृत्त्युदाहृतं सङ्गच्छते। तत्र हि नानेन णिनिः, अवश्यम्पदोपादानात, किन्तु 'सुप्यजाता'वित्येवेति **नव्याः**।

**कृत्यानाम्।** 'कर्तृकर्मणो'रिति नित्ये प्राप्ते विभाषा। कर्मनिवृत्त्यर्थं कर्त्तृग्रहणम्। **अनुवर्त्तत इति।** निषेधोऽयं कर्त्तरि कर्मणि च। 'कर्तरि वे'ति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः। 'व्रज'मित्यत्र 'गुणकर्मणि वेष्यते' इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य 'दोग्धव्या गावः पयः कृष्णेने'त्यादौ गुणकर्मण उक्तत्वात् प्रधाने चरितार्थेनानेन परत्वाद्बाधात्।

**तुल्यार्थैर्योग इति।** तुल्यत्वार्थैरित्यर्थः। अत एवातुलोपमाभ्यामिति चरितार्थम्। अत एव पर्युदासादनव्ययोग एवेदं, तेन इवशब्दयोगे न।

---

❀ चिदस्थिमाला ❀

विहितस्यैव ग्रहणं फलितम्। आवश्यकेति णिनिरिति-दण्ड्याद्युक्तमयुक्तम्, कालोदासीनस्य तस्य भविष्यदर्थकत्वाभावादिति ध्वनयन्नाह—**बहुलेति।** 'उणादयो बहुल'मित्यर्थः। णिनिः-द्वितीये। अत एव न्यूनतां निराचष्टे—**आवश्यकेति।** सूत्रे=प्रकृते। अत्र मानमाह-**अत एवेति।** तथा तत्राप्यनेन निषेधाभावादेवेत्यर्थः। तत्रान्यथासिद्धिं प्राचोक्तां खण्डयति—**न चेति।** तत्र='अंशं हारी'त्यत्र। आवश्यके णिनिः प्रायेण भविष्यत्येवेत्याह—**भूतेति।** दण्ड्यादिग्रन्थासाङ्गत्यायाह—**अत एवेति।** तस्य तदर्थकत्वाभावादेवेत्यर्थः। अनेन=आवश्यकेत्यनेन। नव्या इत्यरुचिबीजन्तु तथापि तेन णिनावप्युक्तरीत्या न दोष इति। तेन सिद्धेराह—**कर्त्रिति।** ततोऽनुवृत्तेराह—**कर्मेति।** दण्ड्यसाङ्गत्यायाह—**कर्तरीति। विषयमिति।** सामर्थ्यादिति भावः। आदिना हरदत्तदण्ड्यादि। मतान्तरमाह—**अन्ये त्विति।** तत्र बीजमाह—**भाष्यं त्विति।** दण्ड्यादिग्रन्थासाङ्गत्यायाह—**व्रजमिति।** न चैवमनभिहिताधिकाराभावे 'कर्तव्यः कट' इत्यादौ द्वितीयायाः परत्वात् प्राप्तामपि प्रथमां बाधित्वा परत्वात् कृद्योगलक्षणा षष्ठी स्यादित्याकरविरोधस्तदभावे उभयप्राप्तेः सत्त्वेनानेन निषेधापत्तेरिति वाच्यं, तदभावे सर्वत्रैवोभयप्राप्तिविषयत्वसत्त्वेन कर्मण्येव षष्ठ्यापत्तौ 'कर्तृकर्मणो'रिति सूत्रस्थकर्तृग्रहणस्यो'भयप्राप्ता'विति सूत्रस्य च वैयर्थ्यापत्त्या 'आत्ममाने खश्चे'ति सूत्रस्थभाष्यप्रामाण्येन चोभयोः प्रयोगे एवोभयप्राप्तिर्वाच्यतया प्रकृते नोभयप्राप्तिरित्यदोषात्। 'कृत्याना'मिति विभक्तसूत्रस्य 'आक्रष्टव्या ग्रामे शाखे'ति भाष्योदाहरणे कर्तृपदार्थपदे अध्याहृत्योभयप्राप्तिर्निरूप्या। यथाश्रुतासङ्गतेराह—**तुल्यस्वेति।** अत्र बीजमाह—**अत एवेति।**

---

❀ वरवर्णिनी ❀

**परे** तु उपलक्षणत्वे न मानम्। 'अंशंहारी'ति तु सौत्रः प्रयोगः। एवञ्च भविष्यद्विषये इत्येवार्थः।

**चतुर्थी चाशिषि ।** आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकाच्चद्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः । अत एवैतदर्थकचतुर्थ्याद्यन्तेन सुखहितादिभिर्न समासः । उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अत एव हि तेन चतुर्थी-समासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं सङ्गच्छते ।

यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथाऽन्वयान्न समास इति; तन्न, वृत्तावपि प्राप्तत्वादिपर्यालोचनेन 'लोहितोष्णीषाः' इत्यादौ तथान्वयदर्शनात् । भाष्ये तथान्वये वृत्तेरसाधुताया अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः ।

**व्याख्यानादिति ।** सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः । भाष्ये तु नैतद्दृश्यते ।

*** इति षष्ठी ***

---

**❀ चिदस्थिमाला ❀**

अन्यथा तदसङ्गतिः स्पष्टैव । **दण्डिशास्त्र्याद्यसाङ्गत्याह—अत एवेति** । अस्मादेवेत्यर्थः । आशिष-श्चतुर्थ्यर्थत्वाभ्रमायाह—**आशीरिति** । तत्सौत्रक्रमेणाह—**चतुर्थीति** । विशेषं वक्तुमाह—**हितादीति** । मिथ इति शेषः । अत एवेत्यस्यार्थमाह—**उभयोरपीति** । अत्र मानमाह—**अत एवेति** । एत-च्चतुर्थ्यन्तस्य तेन समासाभावादेवेत्यर्थः । सकलप्राचोक्तं खण्डयति—**यत्त्विति** । वृत्तौ=समासादौ । तथान्वये पृथगुपस्थितेस्तन्त्रत्वात् । तत्रान्यथोपपत्तेराह—**भाष्ये इति** । एवञ्च तत्र सा न तन्त्रं, तदाह—**विस्तर इति** । मूलादि दूषयति—**भाष्ये त्विति** ।

**❀ इति षष्ठी ❀**

---

**❀ विषमपदविवृतिः ❀**

शङ्क्यम् । 'शरैः शातितपत्र' इत्यादाविव वृत्तक्रियायामपि कारकान्वयस्वीकारात् । एवं 'तण्डुलानां पाचकपुत्र' इति समासः, 'तण्डुलानां पाचकि रिति इञ्प्रत्ययश्च भवत्येवेति शम् ॥

**इति श्रीमद्राघवेन्द्राचार्यविरचितायां विषमपदवाक्यविवृतौ षष्ठीकारकप्रकरणम् ।**

---

**❀ वरवर्णिनी ❀**

'तुमुन्ण्वुला'विलस्य भविष्यदर्थकधातोरेव ण्वुल्विधायकत्वान्न भविष्यत्त्वं प्रत्ययार्थः । एवञ्च 'ण्वुलतृचा'-वित्यतो नाऽत्र विशेषः, सामान्यकाले विधानेऽपि सामान्यस्य विशेषानतिरेकाद्भविष्यदर्थकतायाः सुलभत्वात् । वृत्त्युदाहरणन्तु चिन्त्यमेवेत्याहुः ।

**❀ इति षष्ठी ❀**

**आधारो** । 'कारके' इत्यधिकारात्क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव । तत्रेप्सिततम–स्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्म-कर्तृसञ्ज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणम् । परम्परा च कर्तृकर्मद्वारिकैव, व्याख्यानादित्याह– **कर्तृकर्मद्वारेति** । यद्यपि कालस्य साक्षात्क्रियापरिच्छेदकत्वं तथापि तदधिकरणं कर्तृकर्मद्वारैव, तथैवानुभवात् । साक्षात्तदाधारत्वेऽपि स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किञ्च साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात् । 'कालः पचति भूतानी'ति-वत् । एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव । 'यस्य यद्द्वारा कारकत्वन्तस्य तद्द्वारैव क्रियान्वयः' इति व्युत्पत्तेः । अत एव 'अक्षशौण्ड' इत्यादौ समासः ।

अत्र आसक्त्यादिक्रियान्तर्भावेण बोधाननुभवात् 'क्रियाद्वारा सामर्थ्य'मिति कैयटाद्युक्तं न युक्तम् ।

'मूले वृक्षः कपिसंयोगी'त्यादौ–'अस्ति'क्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगि-

ॐ विजया ॐ

आधारोऽधिकरणमिति । न युक्तमिति । अधिकरणकारकस्यापि क्रियायां साक्षादन्वयः, सम्बन्धस्तु स्ववृत्तिवृत्तित्वरूपः परम्परया । 'अक्षशौण्ड' इत्यादौ शौण्डपदस्यासक्तशौण्डे लक्षणयाऽऽसक्तिक्रियान्तर्भावेण सामर्थ्यात्समास इति कैयटाद्युक्तिस्तु न युक्ता, किन्त्वधिकरणकारकस्य कर्त्राद्यन्वयद्वारैव क्रियान्वय इति लक्षणाश्रयणं विफलमिति भावः ।

ॐ चिदस्थिमाला ॐ

लोके द्रव्यगुणक्रियाविषयमधिकरणं न शास्त्रे इत्याह—**कारके इति** । वैपरीत्यशङ्कानिरासाय सूत्रक्रमेणाह—**ईप्सितेति** । तत्त्वे तु प्रागुक्त एव । अनतिप्रसङ्गायाह—**परम्परा चेति** । लक्ष्यानुसारि-हरिमूलकमाह—**व्याख्येति** । असम्भवं निराचष्टे—**यद्यपीति** । नन्वेवं तत्सम्भवे कथं तस्यागोऽत आह—**साक्षादिति** । प्राचोक्त्यसाङ्गत्याय सिद्धान्तमाह—**स्वरितेति** । तस्य च चैत्रादितुल्यत्वमाह—**किञ्चेति** । तद्वाक्ये इति भावः । अत एव दृष्टान्तमाह—**काल इति** । प्राचोक्तसाङ्गत्यायाह—**एवञ्चेति** । परम्पराधारग्रहणे चेत्यर्थः । एवेन परम्परासम्बन्धेनान्वयव्यवच्छेदः । तथा च तस्य साक्षात्कर्त्राद्यन्वय एव, तद्द्वारकमेव क्रियान्वयित्वं, कारकाणां भावनान्वयव्युत्पत्तिरप्येतच्छाब्दबलादीदृश-परम्परान्वयविषयापि । कटाधिकरणकचैत्रकर्तृकं शयनमित्यादिशाब्दबोधः, तदभिप्रेत्याह—**अत एवेति** । तथान्वयादेवेत्यर्थः । अत एव भाष्ये तत्रासामर्थ्यशङ्कापि न कृता । अत्र=अक्षशौण्डादौ । 'दध्योदनादा-विवे'ति शेषः । अक्षविषयप्रावीण्यवानित्येव प्रतीतेरिति भावः । नन्वेवं कथं 'मूले वृक्ष' इत्यादौ सम्मन्वत

ॐ वरवर्णिनी ॐ

परम्परया='स्ववृत्तिवृत्तिसम्बन्धेने'त्यर्थः । स्वम्–अधिकरणं, तद्वृत्तित्वं कर्त्रादेः, तद्वृत्तित्वञ्च क्रियाया-मिति समन्वयः । व्याख्यानात्=उपस्थितत्वात् । **साक्षादिति** । 'कालस्ये'त्यादिः । **परम्परेति** । स्थाल्यादेरित्यर्थः । अत्र=अक्षशौण्डे । **आसक्त्यादीति** । शौण्डस्यासक्तशौण्डे लक्षणयाऽऽसक्तिक्रियाद्वारा सामर्थ्यमिति कैयटाशयः । तन्मतं दूषयति—**बोधाननुभवादिति** । परे तु 'अक्षेषु शौण्डस्य धन'मित्यादौ परम्परयाऽपि क्रियान्वयाभावात्तत्र समासानापत्तिरतस्तत्र शौण्डस्यासक्तशौण्डे लक्षणाया भट्टादिभिरप्यङ्गी-करणीयतयाऽक्षशौण्ड इत्यत्रापि तथाश्रयणमेव युक्तं लाघवादिति कैयटोक्तं युक्तमेवेत्याहुः । केचित्तु लक्षणाया जघन्यवृत्तितयाऽगतिकस्थले 'अक्षेषु शौण्डस्य धन'मित्यादावुद्देश्ये लक्षणाया अवश्यकत्वेऽपि सर्वत्र [ विधेय-स्थलेऽपि ] तथाङ्गीकारोऽयुक्त एवेति शेखरोक्तमेव युक्तमित्याचक्षते । तस्याः=सत्तायाः । स्वं=सत्ता ।

वृक्षद्वारा मूलवृत्तित्वादाधारत्वम् । विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽन्यत्रावयवे तद्विशिष्ट-वृक्षाभावप्रतीतेः कपिसंयोगे तदवच्छेद्यत्वं फलतीति दिक् ।

**चकारादिति** । 'प्रातिपदिकार्थे' इति शेषः । **त्रिधेति** । तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम् । यथा—'तिलेषु तैलम्' । इदमेव मुख्यमधिकरणमिति 'स्वरितेने'त्यत्र, 'साधकतम'मित्यत्र च भाष्ये स्पष्टम् ।

उप-समीपे श्लेषः—सम्बन्धस्तत्कृतमौपश्लेषिकम्, अत एव 'इको यणची'-त्यादावौपश्लेषिके आधारे सप्तम्युक्ता—'संहितायाम्'मिति सूत्रे भाष्ये । तत्राजादि-समीप्यमेवेगादीनाम् । 'यन्मासेऽतिक्रान्ते दीयते तस्य स मास औपश्लेषिकम-धिकरण'मित्युक्तं 'तत्र च दीयते' इति सूत्रे भाष्ये । 'तदस्मिन्नधिक'मितिसूत्रे च भाष्ये स्पष्टमिदम् । 'कटे आस्ते' इति तु नौपश्लषिकोदाहरणं युक्तम्, उक्त-भाष्यविरोधात् ।

यद्वा—एकदेशावच्छेदेन श्लेषेऽपि—श्लेषस्य समीपमुपश्लेषं तत्कृतमिति

❀ विजया ❀

अत्र केचित्—नवीनानामपि 'अक्षशौण्डपुत्र'इत्यादौ लक्षणाश्रयणस्य समानत्वात् कैयटाद्युक्तं नायुक्तमिति वदन्ति, तन्न, यत्र क्वचिद्गतिर्नास्ति तत्र लक्षणश्रयणेऽपि सर्वत्र लक्षणाश्रयणे फलाभावादित्यस्मद्गुरवः । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

❀ चिदस्थिमाला ❀

आह—**मूले इति** । आधारत्वं-मूलस्य । नैयायिकाद्युक्तस्यसाङ्गत्यायाह—**विशिष्टेति** । कपिसंयोगविशिष्टे-त्यर्थः । 'शिरसि मे वेदने'त्यादावच्छेदकतासम्बन्धस्याप्याधारतानियामकत्वान्न दोषः । 'ग्रामं प्रविशती'-त्यादौ कर्मणो ग्रामस्य न कदाप्यधिकरणत्वं, परया कर्मसञ्ज्ञया बाधात्, कर्तृद्वारा क्रियाश्रयत्वविवक्षायाः संयोगरूपफलाश्रयत्वं विनाऽसम्भवात् । एवं 'ग्रामं गच्छती'त्यादावपि । इदञ्च 'आकडारात्' 'हृक्रोरन्यतरस्यामि'-त्यत्र भाष्ये स्पष्टम् । तदाह—**इति दिगिति** । अधिकरणाभ्रमायाह—**प्रातीति** । **त्रिधेतीति** । तच्च 'संहितायाम्'मिति सूत्र भाष्ये स्पष्टम् । तत्र=तेषां मध्ये । व्युत्क्रमेणाह—**सकलेति**। संयोगसमवायान्यतरसम्ब-न्धेनेति भावः । **स्वरितेनेति** । **साधकेति** । तत्र हि—'आचार्यः किमधिकरणं न्याय्यं मन्यते ? यत्र कृत्स्न आधारात्माव्याप्त' इत्युक्तम् । अस्य न्याय्यत्वं च प्रकृत्यर्थतावच्छेदकविशिष्टे तद्भानाच्च चैकदेशस्तद्विशिष्टः, आद्यान्त्यभिन्नत्वेन मध्यसङ्ग्रहाय तमपि क्रमं विहाय प्राचोक्तासाङ्गत्याय च सिद्धान्तमाह—**उपेति** । अत एव= तस्योक्तार्थाङ्गीकारादेव । तदेवाह—**तत्रेति** । सूत्रे इत्यर्थः । एवेन कटादितुल्याधारत्वव्यवच्छेदः ।

वर्णानां साङ्ख्यादिमते द्रव्यत्वात्संयोगवत्पूर्वपरयोर्बौद्धाधारस्याप्युपश्लेषनिरूपितस्य स्वीकार इति तदाशयः । भाष्यान्तरंमानमाह—**यदिति** । मानान्तरमाह—**तदिति** । तत्र हि 'एकादशाधिका अस्मिन् शते' इत्यत्र शतस्याधिकरणत्वाभावात्कथं सप्तमीत्याशङ्क्यौपश्लेषिकमिदमधिकरणमेकादश कार्षापणा उपश्लिष्टा अस्मिन् शते इत्युक्तं, शतसमीपे हि ते भवन्ति, न तु तदन्तर्भूताः, तस्मिन् हि सति वृक्षे शाखेति वत्स्यादधिकरणत्वमिति तद्भावः । तथा चात्रोपश्लिष्पदाध्याहारेण सप्तमीत्यपि स्पष्टमुक्तम् ।

प्राचोक्तिं खण्डयति—**कटे इति** । **भाष्येति** । भाष्यत्रयेत्यर्थः । तामपि योजयति—**यद्वेति** ।

❀ वरवर्णिनी ❀

**तस्याः**—कर्ता यः कपिसंयोगी वृक्षः—तद्वारेत्यर्थः । **विशिष्टेति** । कपिसंयोगित्वविशिष्टेत्यर्थः । अन्यत्र= शाखादौ । तदवच्छेद्यत्वं= मूलावच्छिन्नत्वम् । तदुदाहरणम् = औपश्लेषिकोदाहरणम् । तत्='कटे आस्ते इति' ।

व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणन्तत् । एतत्सर्वं गौणमधिकरणं, 'गङ्गायाः ग्नावः' इत्यादिकञ्चेति 'स्वरितेने'त्यादौ भाष्ये स्पष्टम् । गौणोऽप्याधारादिः सप्तम्यादि-शक्य एवेति बोद्धव्यम् । एतदतिरिक्तं सर्वं वैषयिकम् ।

अधिकरणत्वशक्तिमाँश्चाधिकरणविभक्त्यर्थः ।

**इन्विषयस्येति** । इनो विषयस्य=इन्प्रकृतेः—क्तान्तस्य कर्मणीत्यर्थः । तेन 'कृतपूर्वी कट'मित्यत्र न । उदाहरणे न कर्मणि क्तः, अभिहितत्वेन सप्तम्यनापत्तेः; किन्तु भावे । **इष्टादिभ्यश्चेति** । तत्र हि 'श्राद्धमनेने'त्यतोऽनेनेति वर्तते ।

अत्र कर्मशब्देन कालादिव्यतिरिक्तमेव गृह्यते व्याख्यानात्, तेन 'मासमधीती व्याकरणे' इत्यत्र नेति कैयटः ।

**साध्वसाधु** । शेषषष्ठ्यपवादोऽयम् । 'साधुनिपुणाभ्या'मित्येव सिद्धे अनर्चार्थ-मत्र साधुग्रहणम् । तेन तत्त्वकथनेऽपि भवति । सूत्रेऽर्चाग्रहणन्तु निपुणार्थम् ।

**निमित्तादिति** । निमित्तवाचकात् सप्तमी भवति, तस्य=निमित्तस्य—प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योगे इत्यर्थः । निमित्तञ्चात्र क्रियाफलम् । एवञ्च फलं सप्तम्यर्थः ।

---

ॐ चिदस्थिमाला ॐ

'यत्किञ्चि'दिति शेषः । तत=औपश्लेषिकम् । तत्=कटादि । एतत् सर्वं=तिलादिभिन्नमौपश्लेषिकमित्याद्युक्तम् , वक्ष्यमाणञ्च । आदिना 'कूपे गर्गकुल'मित्यादि । गङ्गैकदेशे तरन्तीषु गोषु कूपैकदेशस्थिते गर्गकुले च तथा प्रयोगः । आदिना साधकतमम् । अव्यवहितसामीप्यमेवाधारतानियामकम् , न तु व्यवहितमिति 'संहितायाम'मिति सूत्रे भाष्ये ध्वनितम् । व्यवहितसामीप्ये 'गङ्गायां घोष' इत्यादौ गङ्गाशब्दस्य तीरे लक्षणा तदापि गौणमेवाधारत्वं, सर्वावयवावच्छेदेन तीरस्य घोषसम्बन्धाभावात् । परमताशङ्कयायाह—**गौणोऽपीति** । कारकाधिकारे गौणाधारादीनामपि स्वरितगुणपाठेनाधिकरणसञ्ज्ञादिबोधनादिति भावः । एतेन 'सामीपिकस्यानुक्तेर्भाष्ये न्यूनतेति 'नद्यामास्ते' इत्याद्यर्थं सामीपिकमधिकरण चतुर्थमपि केचिदिच्छन्ती'ति **दण्डिशास्त्र्याद्युक्तं** चापास्तम् । एतत्=उभयं सर्वं—'मोक्षेच्छास्ति' 'खे शकुनयः' इत्यादि । सिद्धान्तमाह—**अधीति** । प्राचोक्तबहुव्रीहौ फलाभावाद्विग्रहमाह—**इन इति** । अर्थमाह—**इन इति** । तद्वदेवक्त इत्याह—**उदेति** । अधीतीत्यत्रेत्यर्थः । कर्तृलाभोपायमाह—**तत्र हीति** ।

ननु 'प्राकृतमेवेदं कर्मे'ति प्रागुपपादितभाष्योक्तरीत्या मासादौ द्वितीयावत्सप्तम्यपि स्यादत आह—**अत्रेति** । लक्ष्यानुरोधमूलकमाह—**व्याख्येति** । 'कैयट' इत्यरुचिबीजं त्वत्र मानाभाव इति । **तेनेति** । प्रतियोगे तदयोगे च, साधुर्भृत्यो राज्ञीत्यादि यथा । अपिनार्चा । तत्र प्रतियोगे न । नन्वनेन तत्रापि सिद्धमत आह—**सूत्रे इति** । यथाश्रुतार्थनिरासायाह—**निमित्तेति** । सर्वत्र नेत्याह—

---

ॐ वरवर्णिनी ॐ

अत्र=वार्त्तिके । **व्याख्यानादिति** । व्याप्तिरूपार्थस्य बहिरङ्गतयाऽन्तरङ्गे चरितार्थस्य तत्र न प्रवृत्तिरित्येवं व्याख्यानादित्यर्थः ।

**कैयट इति** । परे तु—'मासेऽधीती'त्येव तत्र भवति, वार्त्तिकस्यापूर्वतया तेन कर्मसञ्ज्ञायां ['कर्तुरीप्सित'-सूत्रविहितकर्मसञ्ज्ञासमकक्षतया—] तत्र वार्त्तिकप्रवृत्तेरौचित्यात् । एवञ्च तत्राप्रवृत्तौ मानाभावात्सप्तम्येव युक्तेत्याहुः । **स्वान्वयीति** । क्रियाफलान्वयीत्यर्थः । ननु हननस्य प्राणवियोगः फलं ननु चर्मेत्यत आह—

**चर्मणीति** । चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधीनत्वात् । कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम् । द्वीपिचर्मणोरण्डकोशमृगयोश्च समवायः, इतरयोः संयोगः । 'मुक्ताफलाय करिणं रघुवीरे'त्यादौ 'क्रियार्थोपपदस्ये'ति चतुर्थी । 'घ्नन्ती'ति शेषः । मुक्ताफलान्याहर्तुमित्यर्थः ।

**यस्य च भा** । भावः–क्रिया । ततः=ज्ञापकक्रियाश्रयवाचकात् । तेन गोपदुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा । क्रियाश्रयः–कर्त्ता, कर्म च । तत्र 'ब्राह्मणेष्वधीयानेषु गतः' इति कर्त्तर्युदाहरणम् ।

कर्मण्याह—**गोष्विति** । तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति,—यथा प्रकृते । काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन,—यथा 'गोषु धोक्ष्यमाणा'स्वित्यादौ । काचित्स्वाधारकालानन्तरकालेन, यथा 'गोषु दुग्धा'स्वित्यादौ ।

ज्ञापकत्वं–सप्तम्यर्थः, तस्य च–'भावलक्षण'मित्युक्तेः क्रियायामेवान्वयः । लक्ष्यलक्षणभावः शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं, न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोध्यम् । अन्यथो'दिते आदित्ये तमो नष्ट'मित्यादावेव स्यान्न तु प्रकृते । कदाचिद्धि 'गोषु दुह्यमानास्वसौ गतः' । इदञ्च यत्र मानान्तरेण

❀ चिदस्थिमाला ❀

**अत्रेति** । तन्निरासमेवाह—**कर्मेति** । स न सप्तम्यर्थ इति भावः । यद्यपि भाष्ये कर्मसंयोग इत्येवोक्तं तथाप्युदाहरणात्समवायोऽपि बोध्यः । तद्व्यवस्थामाह—**द्वीपीति** । 'मृगाण्डकोशयो'रिति पाठः । अन्यथा पाठे तु मूलक्रमो मूलम् । एतेन सर्वेषां समवाय इति दण्डिशास्त्र्याद्युक्तमपास्तम् ।

नन्वेवं मुक्ताफलायेत्यत्रापि सप्तम्युचिताऽत आह–**मुक्तेति** । तथा व्याख्याने बीजमाह–**भाव इति** । ज्ञापकक्रियावाचकादित्यर्थनिरासायाह—**ज्ञापकेति** । तेन=तदर्थेन । तस्य तत्त्वविवक्षया सप्तमी । क्रियाशब्देन धात्वर्थ इति न्यूनतां परिहरति—**क्रियेति** । तत्र=तयोर्मध्ये । तत्र=तासां मध्ये । व्यवस्थाप्रदर्शकमिदं । बोध्यः=तत्त्वेन विवक्षितः । एवन्यावर्त्यमेवाह—**न त्विति** । तथा च नेदं भूयो दर्शनाश्रयमिति भावः । अन्यथा=तस्य तदपेक्षत्वे । ज्ञाप्यज्ञापकभावस्य भूयो दर्शनाश्रयत्वात् । प्राग्वदाह–**न त्विति** । एवञ्च निर्ज्ञातदेशकालक्रिया अनिर्ज्ञातदेशकालक्रियासम्बन्धिदेशकालपरिच्छेदकत्वेन लक्षणमिति बोध्यम् । कौस्तुभाद्यसाङ्गत्यायाह—**इदञ्चेति** । नन्वेवं कथं 'राहूपरागे स्नाया'दित्यादीत्यत

❀ वरवर्णिनी ❀

**हननस्येति** । एवञ्च फलेच्छाया उपायेच्छाप्रयोजकत्वस्य प्रसिद्धत्वाद्धननरूपोपायेच्छाप्रयोजकेच्छाविषयचर्मलाभस्यैव मुख्यफलत्वं, चर्मणस्तु लाभकर्मत्वादुपचरितं फलत्वमित्याशयः । **स्वरूपसन्नेवेति** । नतु शब्दे भासमानम् । यथा दाहे वह्निर्ज्ञातो वा, अज्ञातो वा स्वरूपसन्नेव निमित्तं तथैवात्रेत्याशयः ।

**ज्ञापकत्वमिति** । परेतु 'गोषु दुह्यमानासु गतः'इत्यादौ गोदोहनसमानकालिकं गमनमित्येव बोधः । 'गोषु धोक्ष्यमाणासु'इत्यत्र गोदोहनपूर्वकालिकं गमनमितिबोधः । 'गोषु दुग्धासु गत'इत्यत्र च गोदोनोत्तरकालिकं गमनमित्येव बोधः । ज्ञाप्यज्ञापकभावस्त्वार्थः । अतएव'कदागत'इतिप्रश्नस्येमान्युत्तराणीत्याहुः ।

**श्रीगुरवस्तु** सामानाधिकरण्यं सप्तम्यर्थः । तत्त्वञ्च यथायथं 'स्वाधिकरणकालवृत्तित्व' 'स्वाधिकरणकालोत्तरकालवृत्तित्व''स्वाधिकरणकालपूर्वकालवृत्तित्वै'तदन्यतमसम्बन्धेन स्वविशिष्टत्वमेवेत्याहुः ।

ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्त्तते, भाष्यस्वरसात् ।

'राहूपरागे स्नाया'दित्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति–अधिकरणसप्तम्येव । 'विवाहे नान्दीमुखङ्कुर्या'दित्यत्र 'विवाह'पदेन तत्प्राक्काल उच्यते । 'गवान्दोहे आगतः' इत्यत्राप्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः ।

**अर्हाणाम्**–कर्तृत्वार्हाणाम् । **तद्वैपरीत्ये**–अर्हाणामकर्तृत्वे, अनर्हाणाञ्च कर्तृत्वे इत्यर्थः । वाक्यचतुष्टयमेतत् । कर्तृसमर्पकादकर्तृसमर्पकाच्च सप्तमीत्यर्थः । सप्तम्याश्च तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव । लक्ष्यलक्षणभावाऽविवक्षार्थमिदम् ।

**सत्स्विति** । सन्तो हि तरणक्रियाकर्तृत्वार्हाः। तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमिति बोधः । स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः ।

**सत्स्विति** । तरणक्रियाकर्तृत्वानर्हाणान्तदकर्तृत्वमत्र । यद्यपि स्थितिक्रियावर्तृत्वार्हत्वेनेदं सिद्धं तथाप्यसतां तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः ।

**सत्स्विति** । तरणक्रियाकर्तृत्वार्हाणान्तदकर्तृत्वमत्र ।

**असत्स्विति** । तरणकर्तृत्वानर्हाणान्तत्कर्तृत्वमत्र ।

**षष्ठी चा** । अनादर इति विषयसप्तमी, 'यस्य च भावेने'त्याद्यनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः । फलितमाह–**अनादराधिक्य इति** । लक्ष्यलक्षणभावः षष्ठ्यर्थः । अनादरविशिष्टं प्रव्रजन-

---

❀ चिदस्थिमाला ❀

आह—**राहूपेति** । उच्यते=बहुव्रीहिणा उच्यते=लक्ष्यते । तदाश्रयकाललक्षणया आह—**गवामिति** । अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वाद्राहूपरागकालावच्छेदेन स्नानविधाने तस्य निमित्तत्वं फलति । एतेन राहूपरागपदं काललक्षकं, सतीत्यध्याहारेण दोहकर्तृकसत्ताया लक्षणत्वेन 'यस्य च भावेने'ति सप्तमी, राहूपरागादिनिमित्तत्वं तु 'सिद्धसाध्ये'ति न्यायेन फलतीति कौस्तुभाद्युक्तमपास्तम् । तन्न्यायविषयस्य पूर्वमीमांसायामन्यथा प्रदर्शितत्वेन प्रकृते तदभावात् , स्नानस्य मानान्तरादप्राप्तौ तत्सूत्राप्राप्तेः, राहूपरागस्य निर्ज्ञातकालत्वाभावाच्च । तदाह—**अन्यत्रेति** । मञ्जूषादावित्यर्थः । प्रत्यासत्तेराह—**कर्तृत्वेति** । तच्च योग्यतया ग्राह्यम् । एकेन विवक्षितालाभादाह—**वाक्येति** । तत्सङ्ग्राहकमर्थमाह—**कार्त्रेति** । तिङोऽप्रयोगमाह–**सप्तम्यां चेति** । अत एव तत्रापि सप्तमी । षष्ठ्यपवादोयम् । ईदृश विषये तस्य प्रतीतेः । सूत्रेण सिद्धिमभिप्रेत्याह—**लक्ष्येति** । एतेन व्यर्थमेवेदमिति—दुष्टिकशास्त्राद्युक्तमपास्तम् । उक्तं लक्ष्येषु योजयति–**सन्तो हीत्यादि** । इति=इत्यादिक्रमेण । प्रसिद्धसम्बन्धासम्भवादाह—**स्वक्रियेति** । तत=तरणं । यथाश्रुतासङ्गतेराह—**अनादर इति** । प्राग्वद्धण्ड्यादिग्रन्थासाङ्गत्यादाह—**विषयेति** । फलितमाह—**गम्येति** । लक्ष्यमाह—**लक्ष्येति** । षष्ठीपदमुपलक्षणम्—सप्तम्या अपि । एवमग्रेऽपि । वैशिष्ट्यञ्च 'सामानाधिकरण्य' 'स्वोत्तरकालिकत्वा'भ्याम् । तल्लाभोपायमाह—**अनेति** ।

---

❀ वरवर्णिनी ❀

**भूयोदर्शनेति** । सहचारदर्शनेत्यर्थः । मानान्तरेण=प्रमाणान्तरेण । **लक्ष्यलक्षणभाव इति** ।

न्धात्वर्थः । तत्र षष्ठी तात्पर्यग्राहिका, अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः ।

**स्वामीश्वरा।** शब्दपरत्वाद्विरूपाणामपीति नैकशेषः । पर्यायान्तरसङ्ग्रहापत्त्या 'स्वाम्यर्थ' इति नोक्तम् । दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात्कः । गवादिकञ्च दीयमानेऽन्वेति । नित्य-साकाङ्क्षत्वाद्वृत्तिः । 'दायाद'शब्दः स्वामिपर्याय इत्यन्ये । **षष्ठ्यामेवेति** । 'शेषे षष्ठी' -इत्यनेनेति भावः ।

**तात्पर्ये इति** । 'आसेवा'पदस्य तत्र रूढेरिति भावः । तात्पर्यञ्च—तदेक-व्यापारता । आयुक्तयोगेऽधिकरणत्वविवक्षायां सप्तमीप्राप्तौ सम्बन्धविवक्षायामत्र कुशल-योगे च षष्ठीप्राप्तौ—वचनम् ।

**यतश्च । जातिगुणक्रियासञ्ज्ञाभिरिति** । 'विशिष्टस्ये'त्यध्याहारः। तद्विशिष्टस्य

---

ॐ विजया ॐ

यतश्चेति । इति बोध इति । 'स्वघटकत्व'—'स्वघटका ये द्विजेतरे यावन्तस्तद्वृत्ति-श्रेष्ठत्ववत्त्वे'ति निर्धारणविभक्त्यर्थसम्बन्धद्वयेन 'नृसमुदायविशिष्टो द्विजः श्रेष्ठः' इतिबोधः। तथा च तादृशसम्बन्धद्वयेन नृसमुदायादेर्जात्यादिविशिष्टे द्विजादावेवान्वयः । एवञ्च 'सरूपाणामेकशेष एकविभक्ता'वित्यत्रैकेति पृथक् पदं लुप्तविभक्तिकं, समासस्तु न सम्भवति, 'स्वघटकत्व'—'स्वघटका ये एकेतरे यावन्तस्तद्वृत्त्यवस्थितिमत्त्वे'ति निर्धारणविभक्त्यर्थसम्बन्धद्वयेन सरूपसमुदायस्यैक-पदार्थेऽन्वयेन साकाङ्क्षत्वात् 'ऋद्धस्य राजपुरुष' इत्यत्रेवासामर्थ्यादिति शेखरकृतामाशयः । परन्तु स चिन्त्यः, श्रेष्ठत्वस्य-सम्बन्धे भानविषयस्य-द्विजेऽन्वये सति श्रेष्ठत्ववति द्विजे श्रेष्ठपदार्थ-

ॐ चिदस्थिमाला ॐ

ननु 'स्वाम्यर्थे'ति वाच्ये ईश्वराधिपत्योर्ग्रहणं व्यर्थमत आह—**पर्येति** । समुदायविशेषणत्वेऽर्था-सङ्गतेराह—**दीयत इति** । 'लब्ध'मिति शेषः । सूत्रेऽनुपसर्गे इत्युक्तेराह—**सोपेति** । अर्थसङ्गतये आह—**गवेति** । नन्वेवं साकाङ्क्षत्वाद्वृत्तिर्न स्यादत आह—**नित्येति** । 'दीयमान'मित्युक्ते किमिति नियताकाङ्क्षादर्शनात् । मतान्तरमाह—**दायादेति** । 'अत्रे'त्यादिः । अर्थत आह—**शेषे इति** । योगतोऽलाभादाह-**आसेवेति** । अत्र=आयुक्तयोगे च । **वचनमिति**। यथायथं षष्ठ्यर्थं सप्तम्यर्थञ्चेति भावः।

पृथक्करणे करणत्वभ्रमनिरासायाह—**विशीति** । सिद्धान्तमाह—**तद्वीति** । जात्यादिविशिष्टेत्यर्थः ।

---

ॐ वरवर्णिनी ॐ

परत्विदं वस्तुसन्निमित्तं, स्वसमानकालवृत्तित्वमेवार्थ इत्याहुः । वृत्तिः=कृत्समासवृत्ती । 'तदेकव्यापारते'-त्यत्र बहुव्रीहिः । तदेकव्यापारवत्त्वमित्यर्थः ।

'यतश्च निर्द्धारण'मितिसूत्राद्यथाश्रुतात्—यस्मात्समुदायान्निर्द्धारणम्=पृथक्करणं तादृशसमुदायघटका-ऽवृत्तिधर्मवत्त्वबोधनं यत्र तत्र तादृशसमुदायवाचकप्रातिपदिकात् षष्ठीसप्तम्यावित्यर्थः प्रतीयते । पर-न्त्वयन्न युक्तः,—'नराणां क्षत्रियः शूरः' इत्यत्र नृशब्दस्य समुदायवाचकत्वाभावादनुपपत्तेरतः सूत्रार्थे उक्तो मूले—**जातिगुणक्रियासञ्ज्ञादिभिरिति** । एवमपि जात्यादिभिरेव पृथक्करणमिति भ्रान्तिर्भवतीत्यत आह—**विशिष्टस्येत्यध्याहार इति** । एवमपि जात्यादिविशिष्टस्य यतो निर्द्धारण-

यतः—स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणं तद्वाचकात् षष्ठीत्यर्थः । 'यत' इति किं ?—यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्त-धर्मवत्त्वबोधनन्तत एव मा भूत्, षष्ठ्यपवादत्ववत्प्रथमापवादत्वस्यापि सम्भवात् ।

स्वघटितसमुदायावधिक—स्वेतर-समुदायघटक-व्यावृत्त-धर्म-करणकपृथक्करण-

ॐ विजया ॐ

स्यान्वयासम्भवात्, तद्धर्मवति तद्धर्मवदन्वयस्याव्युत्पन्नत्वात्, 'घटो घट' इतिवत् । तस्मात् 'स्वघटकवृत्तित्व'—'स्वघटका ये द्विजेतरे यावन्तस्तदवृत्तित्वे'तिनिर्धारणषष्ठ्यर्थसम्बन्धद्वयेन नृसमुदायविशिष्टश्रेष्ठत्ववदभिन्नो द्विज इत्येव बोधः । एवञ्च आदिमसमुदायस्य तादृशषष्ठ्यर्थ-सम्बन्धद्वयेन व्यावृत्तिकरणश्रेष्ठत्वादावेवान्वयः । एवञ्च श्रेष्ठत्वादेर्द्विधा भानस्वीकारे नास्ति फलम् । एवञ्च 'सरूपाणामेकशेष' इत्यत्र समासेऽपि नास्ति बाधः । सरूपसमुदायस्य 'स्वघटकवृत्तित्व' 'स्वघटका ये एकेतरे यावन्तस्तदवृत्तित्व'सम्बन्धाभ्यां विशेष्यभूतायां शेषपदार्थो-ऽवस्थितावन्वयस्वीकारेण साकाङ्क्षत्वाभावात् । नच नृसमुदायादेः पदार्थैकदेशभूते श्रेष्ठत्वादावन्वये 'पदार्थः पदार्थेनाऽन्वेती'तिव्युत्पत्तिविरोध इति वाच्यं, तस्या व्युत्पत्तेर्नित्यसाकाङ्क्षेतरविषयत्वात् । अत्र च श्रेष्ठत्वस्य नित्यसाकाङ्क्षत्वात् । अत एव 'देवदत्तस्य गुरुकुल'मित्यादौ देवदत्तादेः पदार्थैक-देशे गुरुत्वादावन्वयः सर्वैरङ्गीक्रियत एवेतिप्राहुः ।

ॐ चिदस्थिमाला ॐ

षष्ठ्यादीति । तथा च निर्धार्यमाणनिर्धारणावध्योर्मिथोऽन्वयः । तत एव=द्विजादित एव ।

ननु षष्ठीवद्विशेषणादेवौचित्यमत आह—षष्ठ्येति । प्रथमेति । 'दूराऽन्तिकार्थेभ्य' इतिवत् । विभक्त्यर्थ-माह—स्वेति । इदं द्वयं-पृथक्करणम् ।

ॐ वरवर्णिनी ॐ

मिति भ्रमः स्यादतः पूरणेन व्याचष्टे—एकदेशस्येति । एतेन तादृशसमुदायवृत्तिधर्माश्रयस्य लाभः ।

यथा 'नराणां क्षत्रियः शूरः' इत्यत्र नृसमुदायवृत्तिनरत्वाश्रयस्य क्षत्रियस्य जातिविशिष्टस्य लाभः । समुदायवृत्तित्वञ्च समुदायत्वाश्रयवृत्तित्वमेव, न तु समुदायत्वपर्याप्त्यधिकरणपर्याप्तत्वं, क्षत्रिय-त्वस्य तथात्वासम्भवात् । न हि नृत्वं समुदायत्वपर्याप्त्यधिकरणे समुदाये पर्याप्तं, तस्य प्रत्येकपर्याप्तत्वात् । एवञ्च प्रकृते नृशब्दस्य नृसमुदायबोधकतया तादृशसमुदाये वर्त्तमानं यत्समुदायत्वं—स्वरूपसम्बन्धेन-तादृशसमुदायत्वाश्रयवृत्तिनृत्वावच्छिन्नस्य लाभः । क्षत्रियपदार्थश्चात्रैकदेशः । स्वघटितसमुदायात्= नृसमुदायात् । स्वेतरसमुदायघटकेति । स च ब्राह्मणादिः । स्वम्—एकदेशो जात्यादिविशिष्टः । 'स्वेतरे'त्यस्य 'समुदायघटके'न्वयः, तस्य च—व्यावृत्तौ । तादृशसमुदायघटकावृत्तिर्धर्मः शूरत्वं, तत्करणक-म्पृथक्करणञ्च-क्षत्रियस्य शूरत्वाश्रयत्वबोधनमेवेति-नृशब्दादत्र षष्ठ्युपपत्तिः ।

यद्यपि तद्धर्माश्रयत्वबोधनस्य तद्धर्मप्रकारकबोधानुकूलव्यापाररूपतया तस्य धर्मस्य कर्मत्वं सम्भवति, तथापि तद्धर्मवत्त्वबोधने तस्य धर्मस्य करणत्वविवक्षयैव लेखः । एवञ्च 'जात्यादिविशिष्टस्य यद्धर्मा-वच्छिन्नस्य तादृशजात्यादिशून्यतद्धर्मावच्छिन्नावृत्तिविधेयवत्त्वबोधनं यत्र तत्र तद्धर्मावच्छिन्नवाचकप्राति-पदिकात् षष्ठीसप्तम्यौ भवतः' इति सूत्रार्थः पर्यवसन्नः । यथा क्षत्रियत्वविशिष्टस्य नरत्वावच्छिन्नस्य क्षत्रियत्वशून्यनरत्वावच्छिन्नब्राह्मणावृत्तिशूरत्ववत्त्वबोधनं 'नराणां क्षत्रियः शूर' इत्यत्रास्तीति—भवति नृशब्दाद्विभक्तिः । 'यत' इत्यस्याभावे यस्य जातिविशिष्टस्येत्यस्य लाभः स्यात्तदा क्षत्रियपदादेव षष्ठी स्यादित्याशयेनाह—यतः किमित्यादि ।

ननु क्षत्रियपदात्प्रथमा परत्वात्स्यादत आह—षष्ठ्यपवादत्ववदिति ।

रूपनिर्धारण—विषयत्वरूपोऽवयवावयविभावरूपश्च सम्बन्धो विभक्त्यर्थः। नृसमुदायावधिक-द्विजेतरनरव्यावृत्तधर्मकरणकपृथक्करणरूप—निर्धारण—विषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः। संसर्गघटककरणञ्च श्रेष्ठत्वादिरूपमेव—प्रत्यासत्तेः।

अत एव 'न निर्धारणे' इतिसूत्रबोधितं निर्धारणस्य विभक्त्यर्थत्वं सङ्गच्छते। उद्भूतावयवभेदविवक्षया 'नृणा'मिति बहुवचनम्। 'तिरोहितावयवभेदविवक्षया निर्धारणविषये एकवचनन्त्वसाध्वि'ति—'कारके' इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'निर्धारणे कारकेष्विति ब्रूया'दित्युक्तम्। 'मिदचोऽन्त्या'दित्यादौ तु सौत्रो निर्देश इति तदाशयः। 'द्वन्द्वः सामासिकस्य चे'त्यत्र समाससमूहमध्ये इत्यर्थः। समूहेऽर्थे 'ऽचित्ते'ति ठक्।

**पञ्चमी वि**। 'यतश्च निर्धारण'मित्यनुवर्तते। विभागोऽत्र भेदः। तत्र निर्धारणे सवत्र यथाकथञ्चिद्भेदस्य सत्त्वेन 'विभक्त'ग्रहणसामर्थ्याद्यत्र भेद एव न तु केनाप्युपात्त-

❀ **चिदस्थिमाला** ❀

प्राप्तषष्ठ्यर्थत्यागे मानाभावादाह—**अवयवेति**। बोधे श्रेष्ठत्वस्य द्वेधा भाने बीजमाह—**संसर्गेति**।

ननु 'यतः स्वेतरेभ्यः स्वघटितसमुदायघटकेभ्यो व्यावृत्तेन धर्मेण समुदायादेकदेशस्य जातिगुणक्रियासञ्ज्ञाविशिष्टस्य पृथक्करणरूपं निर्धारणं ततः षष्ठीसप्तम्याविति तदर्थः। पृथक्करणञ्च व्यावृत्तधर्मप्रकारकज्ञानविषयीकरणम्। अस्ति च 'नराणां विप्र श्रेष्ठः' इत्यादौ विप्रत्वादिविशिष्टस्य विप्रघटितनरसमुदायघटकविप्रेतरव्यावृत्तश्रेष्ठत्ववत्तया प्रतीतिः। एवञ्च निर्धारकधर्मनिर्धारणावध्योर्व्यावृत्तत्वाख्यः सम्बन्धो निर्धारणविभक्तेरर्थः। नरादिपदञ्च सामान्यरूपेण विप्रतदितरनरादिघटितसमुदायोपस्थापकं, तद्व्यावृत्तश्रेष्ठवानिति क्रमेण बोध' इति प्राचोक्तमेवास्त्वत आह—**अत एवेति**। उक्तार्थाङ्गीकारादेवेत्यर्थः। तथा च तत्र न तत्सूत्रस्वारस्यमिति भावः। एतद्विषये आह—**उद्भूतेति**। प्राचोक्त्यसाङ्गत्यायाह—**तिरोहितेति**। तत्=भाष्यम्। एवं सति गीतावाक्यं योजयति—**द्वन्द्व इति**। विभक्तार्थमाह—**विभाग इति**। नत्वन्यत्रेत्याह—**अत्रेति**। तत्र=अनुवृत्तौ सत्याम्। एवव्यावर्त्यमेवाह—**न त्विति**।

❀ **वरवर्णिनी** ❀

अत एव=निरुक्तस्य विभक्त्यार्थत्वादेव। नृणामिति बहुवचनोपपत्तये आह—**उद्भूतावयवेति**। 'यद्धर्मावच्छिन्नस्ये'त्युपादानान्नराणां व्याघ्रः शूर इति न, किन्तु 'नरेभ्यो व्याघ्रः शूर' इत्येव। 'तादृशजात्यादिशून्ये' त्युपादानाद्विधेयतया विवक्षितस्य शूरत्वस्य नरत्वावच्छिन्नावृत्तित्वबाधेऽपि न क्षतिः। तद्धर्मावच्छिन्नावृत्तित्वम्परित्यज्य तादृशजात्यादिशून्ययत्किञ्चिदवृत्तित्वनिवेशे 'नराणां क्षत्रियो गौरः' इत्यपि स्यात्, गौरत्वस्य क्षत्रियत्वशून्यशूद्रावृत्तित्वात्। तादृशजात्यादिशून्यसामान्यावृत्तित्वनिवेशेऽस्य प्रयोगस्यापत्तिनिरासेऽपि 'नराणां क्षत्रियः शूरः' इत्यत्रैवानुपपत्तिः, शूरत्वस्य विधेयस्य क्षत्रियत्वशून्यसामान्यान्तर्गतराक्षसादिवृत्तित्वेन क्षत्रियत्वशून्यसामान्यावृत्तित्वबाधात्, अतस्तद्धर्मावच्छिन्नावृत्तित्वनिवेश इति मिश्राः।

परेतु—समुदायविशिष्टत्वं निर्धारणविभक्तेरर्थः। वै० 'स्वघटकवृत्तित्व' 'स्वघटकनिर्धार्यमाणेतरयावदवृत्तित्वो'भयसम्बन्धेन। तस्य च श्रेष्ठत्वेऽन्वयः। 'पदार्थः पदार्थेनान्वेती'तिव्युत्पत्तिस्तु नित्यसाकाङ्क्षेतरविषया। नारब्धसमुदायघटकवृत्ति-नारब्धसमुदायघटक—द्विजेतरयावदवृत्ति—श्रेष्ठत्व—वदभिन्नो द्विजः श्रेष्ठ इति बोधः। 'स्वरूपाणा'मित्यत्र च शेषेऽन्वयः, तथा च स्वरूपारब्धसमुदायघटकवृत्ति—स्वरूपारब्धसमुदायघटक—शिष्यमाणेतरयावदवृत्त्यवस्थितिमदभिन्न एकः शिष्यते इति बोध इत्यवधेयमिति गौडाः प्राहुः।

रूपेणाऽभेदस्तत्रैव प्रवृत्तिरित्याह—**भेद एवेति** । अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव। 'पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतराः' इति बोधः । एवञ्च त्रितयोपादान एव निर्धारणप्रतीतिरिति–'पुरुषोत्तम' इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति—समाससिद्धिरिति तत्सूत्रे **कैयटः** ।

**साधुनि** । निपूर्वात् 'पुण कर्मणि शुभे' इत्यत इगुपधलक्षणः कः । अर्चतेश्च भौवादिकात् 'गुरोश्च हलः' इत्यप्रत्ययः—अर्चा । चौरादिकात्तु 'ण्यासश्रन्थे'ति युच् स्यात् । षष्ठ्यपवादोऽयम् । **अप्रत्यादिभिरिति** । 'लक्षणेत्थ'मितिसूत्रोपात्ताः—प्रत्यादयः ।

**नक्षत्रे च** । लुप्शब्देन–लुप्सञ्ज्ञया लुप्तप्रत्ययार्थो लक्ष्यते इति बोद्धव्यम् ।

अधिकरणे किम् ?—'अद्य पुष्यः' । असत्यान्तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थे एव स्यात् ।

**मूलेनेति** । 'नक्षत्रेण युक्तः कालः' इत्यणो 'लुबविशेषे' इति लुप् । नक्षत्रे किं ? 'पञ्चालेषु तिष्ठन्ति' । 'जनपदे लु'बिति लुप् ।

**सप्तमीपञ्चम्यौ** । 'कालाध्वनो'रित्यतस्तदनुवर्त्तते । तच्च पञ्चम्या विपरिणम्यते । मध्यत्वस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः । बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोद्धव्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह—**शक्तिद्वयमध्ये याविति** । कर्तृत्वादिशक्तिरेव कारकं, सा च

❀ चिदस्थिमाला ❀

अन्यथा तस्यापि सत्त्वादाह—**उपात्तेति** । प्राचोक्त्यसाङ्गत्यायाह—**अत्रेति** । एवेनावयवावयविभावनिरासः । एवञ्च=अत्रापि तथा बोधे । कैयट इत्यरुचिबीजं तु—'उत्तमः पुरुषस्त्वन्य' इति वाक्यात्तत्र कर्मधारयो राजदन्तादित्वात्परनिपात इति । इदं सूत्रं भगवता प्रत्याख्यातमिति मञ्जूषायां स्पष्टम् । चस्त्वर्थे । अयं=योगः । एवं सर्वत्र गणपाठाभावादाह—**लक्षणेत्थेति** । अर्चायां प्रत्यादियोगे निषेधार्थमत्र साधुग्रहणम् । वृत्त्यर्थस्यासम्बद्धत्वं परिहरति—**लुबिति** । 'सप्तम्यधिकरणे चे'त्यतो-मण्डूकप्लुत्याऽनुवृत्तिः किमर्थेत्याह—**अधीति** । सर्वविभक्त्यपवादत्वं तदननुवृत्तौ स्यादिति प्राचोक्त्यसाङ्गत्यायाह—**अन्तरङ्गेति** । एतेन परत्वात्प्रथमया बाध इत्यपास्तम् । एवेन कर्मादिव्यवच्छेदः । 'मूकं प्रतीक्षते' इत्यादौ । इत्यतः—सूत्रात् । तत्=कालाध्वनोरितिपदम् । योग्यतया आह—**तच्चेति** । समासः—कारकयोर्मध्य इति । प्राचोक्त्यसाङ्गत्यायाह—**बोधस्त्विति** । वृत्तौ तत्र सङ्ख्यासामान्याभावात् द्रव्यं कारकमित्याह—**नन्विति** । 'अद्य भुक्त्वे'त्यत्र । प्राचोक्त्यसाङ्गत्यायाह—**कर्तृत्वादीति** ।

❀ वरवर्णिनी ❀

अत एव श्रीदण्डिभट्टाः"—'नृणां द्विजः श्रेष्ठ'इत्यत्र श्रेष्ठपदार्थतावच्छेदके श्रेष्ठत्वे नृपदार्थस्य 'स्वघटकवृत्तित्व' 'स्वघटक-निर्धार्यमाण-द्विजेतरयावद्वृत्तित्वोभयसम्बन्धेनान्वयः । अत एव–द्विजमुद्दिश्य निरुक्तोभयसम्बन्धेन नृसमुदायविशिष्टं श्रेष्ठत्वं विधीयते इति—उद्देश्यविधेयभावोऽपि सङ्गच्छते । मूलोक्तन्तु न युक्तम्, उद्देश्यविधेयभावानुपपत्तेः, श्रेष्ठपदवैयर्थ्यापत्तेश्च । 'पुरुषोत्तम'इत्यादौ 'न निर्धारणे'इतिसमास-

क्रियाभेदेन भिन्नेति भावः । यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारक-मध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः । षष्ठ्यपवादोऽयम्। स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः । शक्तिद्वयमध्यवर्त्तित्वन्तु वस्तुसन्निमित्तम् ।

**अधिकशब्देनेति** । कर्त्तरि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकशब्दयोगे लोक-शब्दात् षष्ठ्याम्प्राप्तायां ज्ञापकादिमे इष्येते इत्यर्थः । 'तदस्मिन्नधिक'मिति सूत्रे भाष्ये तु—'उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमी'त्युक्तम् । कर्मणि क्तप्रत्ययान्ता-ध्यारूढशब्दार्थकाधिकयोगे तु 'अधिको लोको हरिणे'ति प्रथमैव ।

**उपपरार्द्धे इति** । 'उपोऽधिके चे'ति कर्मप्रवचनीयत्वम् । ननु 'मामुद्दिश्य विनियोक्ष्यते' इत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह—**अगतित्वादिति** । **तिङि चेति** । उदात्तवति तिङन्ते गतिर्निहन्यते इत्यर्थः । अत्र 'तिङ्ङतिङ' इति निघातस्य निपातै'र्यद्यदी'त्यादिना निषेधात्—'करिष्यती'ति तिङन्तस्यो-दात्तवत्त्वमिति सर्वेष्टसिद्धिः । * इति सप्तमी *

## इति विभक्त्यर्थाः ।

---

❀ विजया ❀

इति श्रीशिवनारायणशास्त्रिन्यायाचार्यविरचितायां विजयायां कारकप्रकरणम् ।

---

❀ चिदस्थिमाला ❀

शक्तिशब्देन=तदर्थककारकशब्देन । एतेन शक्तिः कालभेदाद्भिन्नेति दुण्डयुक्तमपास्तम् । आदिना स्वानन्तरदेशवृत्तित्वम् । एतद्दिवसाधिकरणकभोजनाश्रय इति क्रमेण बोधः । अत आह—**शक्तीति** । कालाध्वनोरिति भावः । यथाश्रुतासङ्गतेराह—**कर्त्तरीति** । ततः कन्युत्तरपदलोपे च तत्सिद्धिरिति भावः । प्राप्तायां—'तदपवादतये'ति शेषः । अंशे मूलाद्यसङ्गतिमाह—**तदिति** । कर्त्तरीत्युक्तिफलमाह—**कर्मणीति** । स्पष्टञ्चेदमधिकमिति सूत्रे भाष्ये । तिङन्ते-परे । यच्छब्दफलमाह—**अत्रेति** । यदत्र सा मामधिकरिष्यतीत्यर्थः । **उदात्तवत्त्वमिति** । विकरणस्वरेणेति भावः । ❀ इति सप्तमी ❀

❀ इति विभक्त्यर्थाः ❀

---

❀ वरवर्णिनी ❀

निषेधशङ्कापरकैयटासङ्गतेश्च । नागेशरीत्या उत्तमत्वेऽन्वयाभावेनासामर्थ्यादेव समासाऽप्राप्त्या तन्निषेध-शङ्काया अनुचितत्वात्—"इत्याहुः । 'नक्षत्रे च लुपी'त्यत्र नक्षत्रपदं तद्युक्तचन्द्रपरमिति सर्वेष्टसिद्धिः ।

❀ इति श्रीगुरुप्रसादशास्त्रिविरचितायां शब्देन्दुशेखरवरवर्णिन्यां कारकप्रकरणम् । ❀

❀ श्रीः ❀

# अथाव्ययीभावसमासः ।

[ अधिगच्छति शास्त्रार्थं स्मरति श्रद्धाति च ।
यत्कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा ॥ १ ॥ ]

**समर्थः पद** । विधिशब्दः कर्मसाधनः,शेषषष्ठ्या समासस्तदाह—**पदसम्बन्धीति** । पदविधिसहचरितोऽपि 'पदविधि'शब्देन गृह्यते । अत एव सन्नन्तादावेकार्थीभावः ।

पदविधिश्च—समाससञ्ज्ञादिः । तस्य च न सामर्थ्यं साक्षाद्विशेषणम्, असम्भवात्,

---

❀ विजया ❀

**पदसम्बन्धीति** । पदनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वं पदविधित्वम् । 'राजपुरुषः' इत्यत्र समासस्य तत्त्वञ्च—पदं—सुबन्तं, तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वाद्बोध्यम् ।

नन्वेवं 'धातोः कर्मणः' इति विहितस्य सनः पदविधित्वं न स्यात्, तथा च तत्र सामर्थ्याभावेऽपि सन् स्यादित्यत आह—**पदविधिसहचरितोऽपि पदविधिशब्देनेति** । पदविधिसहचरितत्वञ्च स्वविधायकशास्त्रघटितपादघटकशास्त्रविधेयत्वम् । यथा—स्वं—क्यच्, तद्विधायकं शास्त्रं 'सुप आत्मनः' इति, तद्घटकस्तृतीयाध्यायस्य प्रथमः पादस्तद्घटकं शास्त्रं—'धातोः कर्मणः' इति, तद्विधेयत्वं—सन इति सनः पदविधिसहचरितत्वेन तत्रापि समर्थपरिभाषोपस्थितिः ।

---

❀ वरवर्णिनी ❀

नुमोऽनवद्य-सद्ग्रन्थ-विद्योद्भासितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्डस्नेहिरामाभिधान् गुरून् ॥ १ ॥

एतावता सुप्सञ्ज्ञोद्देश्यसम्बन्धिनीं सञ्ज्ञां, तत्प्रयुक्तटाबादिकार्याणि च निरूप्य तत्प्रसङ्गसङ्गत्या समासनिरूपणमारभते—**समर्थ इति** । **कर्मेति** । विधानं विधिरिति रीत्या विधिशब्दस्य भावसाधनत्वे तु तस्य कर्मषष्ठ्यन्तेन पदशब्देन समासे पदकर्मकं विधानमित्यर्थः स्यात्, स च नोपपद्यते, समासादिविधानस्य पदकर्मकविधानत्वाभावात्, समर्थपदसामानाधिकरण्यानुपपत्तेश्चातः शेषषष्ठ्यन्तेन कर्मसाधनस्य समास आश्रितः । पदविधिश्च—समासादिः, क्यजादिश्च, पदसञ्ज्ञावन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वात् । नन्वेवमपि सनादेः पदविधित्वानापत्तिः, निरुक्तपदविधित्वाभावादत आह—**पदविधिसहचरित इति** । तत्त्वञ्च पदत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयीभूतप्रत्ययविधायकशास्त्रघटितपादघटकशास्त्रविधेयत्वम् । पदत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय—क्यच्प्रत्ययविधायक—'सुप आत्मनःक्य'-जितिशास्त्र—घटिततृतीयाध्यायप्रथमपादघटक—'धातोः कर्मण' इति शास्त्र—विधेयतया सनः पदविधित्वमित्याहुः।

श्रीगुरुचरणास्तु—पदत्वप्रयोजकप्रत्ययप्रयोजकसञ्ज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकधर्मसम्पादकत्वं पदविधित्वम् । एतच्च क्यच इव सनोऽपीति न दोष इति सहचरितत्वादि नाश्रयणीयम् । विस्तरस्तु जटाजूटत्रिपुरसुन्दर्यादावनुसन्धेय इत्याहुः । **एकार्थीभाव इति** । तेन 'परमं पठितुमिच्छति' 'सुन्दरं पुत्रमात्मन इच्छती'त्यादौ सन्क्यचौ न । **तस्य**=समाससञ्ज्ञादेः । **सामर्थ्यं**=सङ्गतार्थत्वं,—'संसृष्टार्थं

---

१ अयं श्लोकोऽत्र बहुषु लिखितपुस्तकेषु दृश्यते, परं नासौ नागेशकृतः, कर्मकर्तृप्रक्रियायां कौमुद्यामुपलब्धेः ।

अत आह—**समर्थाश्रित इति** । सामर्थ्यञ्चात्र—न व्यपेक्षा, व्याख्यानात्, समासादिवृत्तिषु तस्याऽसम्भवाच्च ।–किन्त्वेकार्थीभावः । स च—विशेष्यविशेषणभावा-

❀ विजया ❀

**परे तु** पदत्वप्रयोजकप्रत्ययप्रयोजकसञ्ज्ञीयोद्देश्यतावच्छेदकसम्पादकशास्त्रविधेयत्वं पदविधित्वमिति वदन्ति । तेन सनः, समासादेश्च तत्त्वं सिद्धम् । तथा हि—'बुभूषती'त्यत्र पदत्वप्रयोजकस्तिङ्प्रत्ययस्तिप्, तत्प्रयोजिका सञ्ज्ञा—'सनाद्यन्ता' इति धातुसञ्ज्ञा, तदीयोद्देश्यतावच्छेदकं सनाद्यन्तत्वं, तत्सम्पादकं शास्त्रं–'धातोः कर्मण' इति, तद्विहितत्वं सनः । एवं 'राजपुरुष' इत्यत्र पदत्वप्रयोजकः सुप्प्रत्ययः—सु इति, तत्प्रयोजिका—'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसञ्ज्ञा, तदीयोद्देश्यतावच्छेदकं समासत्वं, तत्सम्पादकं शास्त्रं–'षष्ठी'ति, तद्विहितत्वं समासस्यास्तीति 'पदविधिसहचरितोपी'त्यादिकथनस्य नोपयोगः । **एकार्थीभाव इति** । स च 'राजपुरुष' इति समासेऽस्ति ।

तत्परिष्कारमाह—**विशेष्यविशेषणेति** । नन्वेवं घटपदस्यापि घटत्वविशेषणकघटविशेष्यकोपस्थितिजनकत्वेन घटपदेऽप्येकार्थीभावः स्यादिति चेदुच्यते–पदविशिष्टत्वं तत्त्वं, वै० 'स्वघटितत्व' 'स्वप्रयोज्या या शक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणा-उपस्थितीया विषयता तादृशविषयतानिरूपिता या शक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणा विषयता तत्प्रयोजकपदघटितत्व' 'स्वप्रयोज्योपस्थितीयविषयत्वानिरूपितविषयताप्रयोजकपदाघटितत्वै'तत्रितयसम्बन्धेन । 'राजपुरुष' इत्यादिसमासे हि—राजपुरुषादिपदेन राजत्वावच्छिन्नविषयतानिरूपितपुरुषत्वावच्छिन्नविषयताकोपस्थितिर्भवति, तत्र राजपदस्य राजत्वावच्छिन्नविषयताप्रयोजकत्वं, पुरुषपदस्य पुरुषत्वावच्छिन्नविषयताप्रयोजकत्वमिति—लक्षणसमन्वयो भवति । तथा हि—स्वं राजपदं, तद्घटितत्वं राजपुरुष इत्यस्य । एवं–स्वं राजपदं, तत्प्रयोज्या तादृशी विषयता राजनिष्ठा, तन्निरूपिता पुरुषनिष्ठा विषयता, तत्प्रयोजकत्वं पुरुषपदस्य, तद्घटितत्वं 'राजपुरुष' इत्यस्य । एवं—स्वं राजपदं—तत्प्रयोज्या–उपस्थितीया राजनिष्ठा विषयता,तदनिरूपिता–उदासीनघटनिष्ठा विषयता, तत्प्रयोजकं घटपदं, तदघटितत्वं–राजपुरुष इत्यस्य ।

❀ वरवर्णिनी ❀

समर्थ'मिति भाष्यात् । **असम्भवादिति** । समाससञ्ज्ञा हि 'राजन्–ङस्–पुरुष–सु'इत्यादिशब्दस्य, तत्रैव च [ शब्दार्थयोः संश्लेषेण–] सामर्थ्यं, न तु सञ्ज्ञायामित्याशयः । **समर्थाश्रित इति** । सङ्गतार्थक–'राजन्–ङस्–पुरुष–सु'–इत्यादिशब्दाश्रितः समाससञ्ज्ञादिरूपः पदविधिरित्यर्थः । समर्थपदस्य तदाश्रिते लक्षणेत्याशयः । क्वचित्सनादिषु शब्दतया स्वयं समर्थोऽपि व्यपदेशिवद्भावेन समर्थाश्रितोऽपि बोध्य इति हृदयन्तु **गौडा** विशदयन्ति । **व्याख्यानात्**='संसृष्टार्थं समर्थ'मित्यादिभाष्योक्तिमूलकाद्व्याख्यानात् ।

तस्य=व्यपेक्षालक्षणसामर्थ्यस्य । 'तस्या'इति पाठे तु व्यपेक्षाया इत्यर्थः सुलभ एव । **असम्भवादिति** । स्वार्थे पर्यवसायिनां पदानामाकाङ्क्षावशाद्यः परस्परं सम्बन्धः सैव हि व्यपेक्षा । सा च राज्ञः पुरुष इत्यादौ वाक्य एव । तत्र हि अपेक्षायां सत्यां यो यः सन्निहितोऽन्वययोग्यश्च तेन तेन सम्बन्धोऽभ्युपेयते । यथा—'राज्ञः पुरुषोऽश्वश्च' 'राज्ञो देवदत्तस्य च पुरुष' इत्यादौ । तत्त्वञ्च यत्किञ्चित्पदविशिष्टत्वं । वै० 'स्वघटितत्व' 'स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्व' 'स्वप्रयोज्यविषयतानिरूपितत्वाभाववती या विषयता तादृशविषयताप्रयोजकपदाऽघटितत्व' 'स्वनिष्ठशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतशक्तिपर्याप्त्यनधिकरणत्वै'तच्चतुष्टयसम्बन्धेनेति तु परिष्कृतं व्यपेक्षालक्षणम् । एवञ्च निरुक्तव्यपेक्षालक्षणस्य समासादावसम्भवः स्पष्ट एव, लक्षणासङ्गमनात् ।

**विशेष्यविशेषणेति** । 'अपृथग्भूतानामर्थानां'मित्यादिः । नन्वेवं लक्षणे घटशब्देऽप्येकार्थीभावापत्तिः,

वगाद्युपस्थितिजनकत्वं, 'संसृष्टार्थं समर्थ'मितिभाष्योक्तेः।

अत एव राजपुरुषैकदेशे राज्ञि 'ऋद्धस्ये'त्यादिविशेषणान्वयो न। 'देवदत्तस्य गुरुकुल'मित्यादौ तु गमकत्वाद्भवत्येव वृत्तिः।

❀ विजया ❀

'राज्ञः पुरुष'इतिवाक्ये तु राजनिष्ठपुरुषनिष्ठविषयतयोः शाब्दबोधीययोर्निरूप्यनिरूपकभावेऽपि उपस्थितीययोस्तयोर्निरूप्यनिरूपकभावाभावेन नातिप्रसङ्गः। घटपदेऽपि—स्वं घटपदं, तत्र घटत्वनिष्ठघटनिष्ठविषयतयोर्निरूप्यनिरूपकभावेऽपि घटत्वनिष्ठविषयतायाः शक्तिज्ञानीयमुख्यविषयतासमानाधिकरणत्वाभावान्नातिव्याप्तिः। द्वितीयसम्बन्धास्वीकारे तु घटपदेऽप्येकार्थीभावः स्यात्। तृतीयसम्बन्धास्वीकारे 'सुन्दरो राजपुरुषः' इति समुदाये एकार्थीभावः स्यात्। तृतीयसम्बन्धघटकविषयतायामुपस्थितीयत्वविशेषणाऽस्वीकारे तु पुरुषनिष्ठविषयतानिरूपितत्वेन सुन्दरपदप्रयोज्यविषयतायाः शाब्दबोधीयायास्तत्रातिव्याप्तिः स्यात्। द्वितीयसम्बन्धघटकविषयतायामुपस्थितीयत्वानिवेशे वाक्येप्यतिव्याप्तिः स्यात्। द्वितीयसम्बन्ध विषयतयोः शक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणत्वानिवेशे—घटत्वनिष्ठविषयतानिरूपितघटनिष्ठविषयताप्रयोजकघटपदघटितत्वाद्धटपदेऽतिव्याप्तिः स्यात्। एवं मुख्यत्वानिवेशे लोमवत्त्वनिष्ठप्रकारतानिरूपितलाङ्गूलनिष्ठविशेष्यतामादाय पशुपदेऽतिव्याप्तिः स्यात्। प्रथमसम्बन्धास्वीकारे—'राजपुरुष' इति समासघटकपुरुषपदेऽप्यतिव्याप्तिः स्यात्, राजपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वात्।

**विशेषणान्वयो नेति।** विशेषणान्वयविवक्षायान्तु—सापेक्षत्वात् 'सापेक्षमसमर्थवद्भवती'ति-वार्तिकेन एकार्थीभावनिषेधात्समास एव न स्यात्।

**भवत्येव वृत्तिरिति।** तथा च 'सापेक्षमसमर्थवद्भवती'ति वार्तिके 'येन सम्बन्धेन

❀ वरवर्णिनी ❀

घटघटत्वविषयकतादृशोपस्थितिजनकत्वस्य घटे सत्त्वात्, घटघटत्वयोर्निरवच्छिन्नप्रकारताविशेष्यताभ्यामुपस्थितेरिति चेदुच्यते—पदविशिष्टत्वन्तत्त्वम्। वै० 'स्वघटितत्व' 'स्वप्रयोज्यशक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविषयतानिरूपित·शक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयमुख्यविषयताप्रयोजकपदघटितत्व' 'स्वप्रयोज्योपस्थितीयविषयत्वानिरूपितविषयताप्रयोजकपदाघटितत्वे' तन्त्रितयसम्बन्धेन। अत्रत्यशब्दरत्नग्रन्थयोजनाय प्रथमः। घटे वारणाय द्वितीयः। लोमत्वावच्छिन्नलोमनिष्ठप्रकारतानिरूपितलोमवन्निष्ठोपस्थितीयविषयतामादाय लोमवल्लाङ्गूलविशिष्टपशुवाचके पशुपदे दोषवारणाय—मुख्येति शक्तिज्ञानीयविषयताविशेषणम्। राजपदघटितपुरुषपदघटितोदासीनसुन्दरादावतिव्याप्तिवारणाय तृतीयः। विस्तरस्तु विजयायां द्रष्टव्य इत्याहुः। अत एव=विशिष्टशक्तेः स्वीकारादेव। **राज्ञीति।** राजपुरुषवृत्तौ संसृष्टतया राज्ञः पृथगनुपस्थितेः, 'पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेने'ति न्यायादत्र ऋद्धपदार्थस्य नान्वयः। मूलञ्चात्र न्याये—'यत्किञ्चिद्धर्मावच्छिन्न—यत्किञ्चित्सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिर्हेतु'रिति कार्यकारणभाव एव। प्रकृते हि—ऋद्धत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितराजत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितेर्हेतोरभावेन न राज्ञि ऋद्धस्यान्वयः, राजपदार्थे मुख्यविशेष्यत्वाभावात्, पुरुषस्यैव मुख्यविशेष्यत्वादिति **गौडाः।**

१ 'देवदत्तस्य गुरुकुल'मित्याद्यर्थं—येन निरूप्यनिरूपकभाव—सामान्यविशेषभावादि–सम्बन्धेन निरूपकांशे नित्यसाकाङ्क्षत्वं तदतिरिक्तसम्बन्धावच्छिन्नेति वक्तव्यम्।

एवं 'राजपुरुषः' इत्यादौ विशेषणपदे सङ्ख्याऽनवगमोप्येकार्थीभावकृतः, सङ्ख्याविशेषप्रकारेण तत्तदर्थभाने पृथगुपस्थितेस्तन्त्रत्वात् । यथा 'घटाः' इत्यादितो बहुत्वेनैव त्रि-चतुरादिव्यक्तीनां भानं, न तु त्रित्व-चतुष्ट्वादिना, तथा वृत्तौ राजत्वादिना-एकानेकव्यक्तिभानं, तात्पर्यवशात्, न त्वेकत्व-द्वित्वादिना। एवं 'तावकीनो' 'यौष्माकीण' इत्यादौ सम्बोध्यत्वेनैवैकानेकव्यक्तिभानं, न त्वेकत्व-बहुत्वादिना। विग्रहवाक्यीयैकवचनत्वारोपेण शास्त्रप्रवृत्तिमात्रं, न तु तद्बोधः, वृत्तिस्वभावविरोधादिति मञ्जूषायां विस्तरः।

गमकत्वादेव—शिवस्य भगवतो भक्त—इत्यर्थे 'शिवभागवतः' इति 'अयःशूले'ति सूत्रे भाष्ये प्रयोगः। परन्तु तत्र वृत्तिरेव, न तु 'शिवस्य भागवत' इति वाक्यं साधु। तत्र भगवच्छब्दादण्, शिवपदेन भगवच्छब्दस्य समासश्च—युगपदेवेति बोध्यम्।

तथोपस्थितिश्च—समुदायशक्तिसाध्या। एवञ्च क्लृप्तशक्तित्यागे मानाभावात्प्रत्येकशक्तिसहकृतया समुदायशक्त्या तथोपस्थितिः।—अयमेव चैकार्थीभावः। 'जहत्स्वार्था वृत्तिः' 'पदानामानर्थक्य'मिति तु न युक्तं, 'महाबाहुः' 'सुपन्थाः' इत्यादावात्वाद्यनापत्तेः।

---

ॐ विजया ॐ

नित्यसाकाङ्क्षत्वन्तदितरसम्बन्धेन साकाङ्क्षमसमर्थवद्भवती'ति सङ्कोचः कर्तव्यः।

**तन्त्रत्वादिति**। कारणत्वादित्यर्थः। 'येन सम्बन्धेन नित्यसाकाङ्क्षत्वं तदितरसम्बन्धावच्छिन्नयत्किञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारण'मिति कार्यकारणभावसिद्ध—'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'तिव्युत्पत्तेरिति भावः। 'राजपुरुषः' इत्यादावेकार्थीभावस्थले समुदायजन्योपस्थितेरवयवजन्योपस्थितिम्प्रति प्रतिबन्धकत्वाद्राजादिपदाश्च विशेष्यतासम्बन्धेन राजार्थस्योपस्थितिरिति—न तत्र ऋद्धादिपदार्थान्वयः। 'देवदत्तस्य गुरुकुल'मित्यादौ तु देवदत्तस्य गुरुत्वेऽन्वये—निरूपितत्वसम्बन्धेन अन्वयान्नित्यसाकाङ्क्षत्वेन भवत्येव वृत्तिरिति श्रीगुरुचरणाः प्राहुः।

---

ॐ वरवर्णिनी ॐ

एवं=तत्र विशेषणानन्वयवत्। विशेषणपदे=राजपदादौ। **सङ्ख्याविशेषेति**। एकत्वद्वित्वादीत्यर्थः। तत्तदर्थभाने=राजादितत्तदर्थविशेष्यकभाने। तन्त्रत्वात्=हेतुत्वात्। न च तत्तत्पदशक्तिप्रयोज्या पृथगुपस्थितिरस्त्येवेति वाच्यं, समुदायशक्तिप्रयोज्योपस्थितेरवयवशक्तिप्रयोज्योपस्थितिबाधकतयाऽवयवशक्त्या पृथगुपस्थितेर्वक्तुमशक्यत्वात्। **बहुत्वेनैवेति**। 'बहुषु बहुवचन'मित्यनुशासनात्, सामान्यस्य बहुत्वादेस्त्रित्वादिविशेषानतिरेकादिति भावः। **अनेकेति**। प्रकरणादिवशादित्याशयः। सम्बोध्यत्वेन=युष्मदर्थभूतेन। 'तावकीन' इत्यत्रैकत्वेन मानाभावः, 'यौष्माकीण' इत्यत्र च बहुत्वेन मानाभाव इति—योजना। **शास्त्रप्रवृत्तीति**। 'अलौकिकप्रक्रियायामेवे'त्यादिः। गमकत्वात्=अर्थबोधजनकत्वात्, भगवतो [ विशेषांशे— ] नित्यसाकाङ्क्षत्वादिति यावत्। **साध्विति**। शिवश्चासौ भगवांश्चेत्यप्यसाध्वित्यपि बोध्यम्। समासः=कर्मधारयसमासः। **तथोपस्थितिश्चेति**। राजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकविशिष्टोपस्थितिश्चेत्यर्थः। **क्लृप्तेति**। कोशादिसिद्धप्रथमशक्तित्यागे इत्यर्थः। तथोपस्थितिः=विशेष्यविशेषणभावापन्नविशिष्टोपस्थितिः। **आत्वेति**। 'आन्महत' इति, 'पथिमथी'ति चेत्यर्थः। **महाबाहुरिति**। 'आन्महत' इत्यात्वस्यार्थवन्महच्छब्दसम्बन्धितया जहत्स्वार्थत्वे तदनापत्तेः।

ननु सूत्रारम्भसामर्थ्यात्तत्रात्वं भविष्यतीत्यरुचेराह—**सुपन्था इति**। 'पथिमथी'त्यस्य 'पन्था'

अर्थवत्त्वे–भूतपूर्वगत्याश्रयणं तु सत्यां गतावयुक्तम् । तदुक्तं वृद्धैः–

'जहत्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।' इति ।

अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः । यथा 'गौरखर–कृष्णसर्पादौ ।

परिभाषेयम् । सा च 'पदविधि'रिति सूत्रस्वरसात्, 'समासेऽङ्गुलेः सङ्गः' इत्यादौ समासग्रहणाच्च, 'गतिर्गता'विति सूत्रे–'पदस्येत्यधिकारात्समर्थपरिभाषोपस्थिति'रिति कैयटस्वरसाच्च—पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैव प्रवर्त्तते । तेनान्यारादितरे'त्यादौ नास्याः प्रवृत्तिः ।

एकार्थीभावश्चालौकिकविग्रहवाक्य एव कल्प्यते । यथा शत्रादौ द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारेऽपि तत्कल्पना तथा 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवाद-बलादस्य तत्र कल्पनेति । तथा च शतृविधायके भाष्यम्–'लस्याप्रथमासमानाधिकरणेनार्थेनाऽयोगादादेशानुपपत्तिस्तस्य क्वापि प्रयोगाभावात्–'इत्याशङ्क्य "आदेशसामानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं–प्रकृतेरपि तद्भवति–'इति । तत्र कैयटः—'सिद्धानां शब्दानामन्वाख्यानात्–'पचन्तं देवदत्तं पश्ये'त्यादिप्रयोगदर्शनात्–स्थानिनोऽपि लटः प्रक्रियार्थं विहितस्याऽप्रथमासामानाधिकरण्यमनुमीयते' इति । अत्रानुमाने सौत्रानुवाद एवानुकूलस्तर्कः । अत्र 'प्रक्रियार्थं विहितस्ये'त्यनेनान्यस्यापि प्रक्रियार्थं कल्पितस्य लोकेऽबोधकत्वं सूचितमित्यन्यत्र विस्तरः ।

समर्थः किं ? 'पश्य कृष्णं', 'श्रितो रामं मित्रः' । अत्र कृष्ण श्रितयोः परस्पर-सम्बन्धाभावेनैकोपस्थित्यजनकत्वेनासामर्थ्यम् ।

---

❀ वरवर्णिनी ❀

इत्यादौ केवले चरितार्थतया समासघटकेऽनर्थके तदप्रवृत्तिरित्याशयः । **गौरखरेति** । गौरखरस्य कृकलासे, [ गिलहरीत्याख्याते, ] कृष्णसर्पस्य द्विमुखे सर्पे च रूढिरित्याशयः । **परिभाषेयमिति** । लाघवात् । अधिकारत्वे तु प्रतिसूत्रमुपस्थितिकल्पने गौरवमित्याशयः । किञ्चाधिकारत्वे 'पदविधि'रिति व्यर्थं स्यात्, परिभाषात्वे तु—यत्र पदविधिस्तत्र 'समर्थं' इत्युपतिष्ठते—इत्येवं रीत्या व्याख्यानाच्चत्सार्थक्य-मित्याहुः । सा च=परिभाषा च । **समासग्रहणादिति** । पदविधिमात्रेऽस्या उपस्थितौ तु तत्रापि 'समर्थं' इत्युपस्थितौ समासग्रहणं व्यर्थम् । अयम्भावः—तत्र परिभाषाप्रवृत्तौ हि अङ्गुली-सङ्गशब्दयोः समासातिरिक्तवृत्तावेकार्थीभावरूपसामर्थ्याभावेन स्वत एव 'समासे' इत्यस्य कार्ये तद्व्यर्थमेव स्यादिति तत्सामर्थ्याच्चत्र तस्या अप्रवृत्तिरिति । **कैयटेति** । गतिपरकगतेः पदत्वाव्यभि-चारादेव पदविधितया समर्थपरिभाषाप्रवृत्तिसम्भवे कैयटस्य 'पदस्येत्यधिकारा'दित्युक्तिर्विरुध्येतेत्याशयः ।

**साक्षादिति** । एवञ्च पदत्वेन साक्षादुद्देश्यत्वसम्पत्तये 'पदस्येत्यधिकारा'दित्युक्तिसाफल्यमिति ध्येयम् । **इत्यादाविति** । एवञ्च 'घटादन्य' इत्यत्र पञ्चमीसिद्धिः, अन्यथैकार्थीभावरूपसामर्थ्याभावात्सा न स्यात् । **प्रवृत्तिरिति** । पदत्वव्याप्यधर्मेण साक्षादवच्छिन्ना यत्रोद्देश्यता तत्रैव समर्थपरिभाषा-प्रवृत्तिरिति तु तत्त्वं, तेन न 'घटादन्य' इत्यादौ दोषः, तत्र ताद्दृशोद्देश्यताया अभावात् । 'गतिर्गता'वित्यादौ तु—स्वस्यापि स्वव्याप्यतया—पदत्वव्याप्यपदत्वधर्मेण साक्षादवच्छिन्नोद्देश्यतायाः सत्त्वात्तत्प्रवृत्तिरिति **गौडाः** ।

**सह सुपा**। 'सुबामन्त्रित'इत्यतः 'सु'बिति वर्तते। सुबन्तसहितं सुबन्तं समाससञ्ज्ञकमित्यर्थः। 'समस्यते' इत्युक्तिस्त्वबुधानां भिन्नयोः शब्दयोरनेन संश्लेषः क्रियत-इति प्रतिपत्तेस्तदनुसारेण। संपूर्वकाऽस्यतेश्च संश्लेषोऽर्थः। प्राक्कडारा'दित्यत्र प्राग्ग्रहणमावर्त्तते। तेन प्राक्समाससञ्ज्ञा भवन्ति, तत्सञ्ज्ञाः सन्तोऽव्ययीभावादिसञ्ज्ञका इत्यर्थात्तयोः समावेश इति भाष्ये स्पष्टम्। अन्यथा आकडारत्वात्पर्यायः स्यादिति दिक्।

अत्र 'सु'बित्येकत्वं विवक्ष्यते, तेन 'महिष्या अजायाश्च क्षीर'मित्यत्र सुबन्तसमुदायस्य न 'क्षीर'शब्देन समास इति—**कैयटादयः**।

परे तु—अनुवाद्यत्वादेकत्वाविवक्षैव। किञ्च तद्विवक्षायामेकेनैव केनचित्सुबन्तेन किञ्चिदेकं सुबन्तं समस्येत न त्वन्यैरन्यानि, तस्मा'त्सु'बित्यादौ जातिविवक्षा। एवञ्च यथा स्वाङ्गग्रहणेन स्वाङ्गसमुदायस्य न ग्रहणं,—स्वाङ्गत्वस्य प्रत्येकं समाप्तत्वात्—एवं सुबन्तत्वादेरपि प्रत्येकं समाप्तत्वेन सुबन्तादिग्रहणेन न सुबन्तादिसमुदायस्य ग्रहणमिति नोक्तदोषः। स्पष्टञ्चेदं मतुप्सूत्र—समर्थसूत्रयोर्भाष्ये। तत्रत्यकैयटादीनान्तु प्रमादः।

—अत एव 'विभक्तिश्चे'ति सूत्रे 'प्रतिप्रत्ययं विभक्तिसञ्ज्ञे'ति पक्षे 'प्रथमयो'रित्यादौ विभक्तिसमुदायस्य विभक्तिग्रहणेनाऽग्रहणात् प्रथमयोः प्रत्यययोरेव ग्रहणं प्राप्नोतीत्युक्तं कैयटेनेत्यन्यत्र विस्तर इत्याहुः।

**अनुव्यचलदिति**। 'अनो'र्व्यचलदित्यनेन वेश्च 'अचल'दित्यनेन युगपत्समासः, 'अनु'—इति सुबन्तेन 'व्यचल'दिति समुदायस्य समर्थत्वात्।

**सुपेति**। इदं लक्षणम्, अधिकारश्च। अन्त्ये फलन्तु—'देवः करोति', 'मातुः स्मरती'त्यादौ विशेषणसमास—षष्ठीसमासयोरभावः।

---

ॐ **वरवर्णिनी** ॐ

शत्रादौ=शत्राद्यन्ते परिनिष्ठिते 'पचन्तं चैत्र'मित्यादौ। तत्=सामानाधिकरण्यम्। अत्र=कैयटे। **समास इति**। 'षष्ठी'ति सूत्रेणेत्यर्थः। अनुवाद्यत्वात्=उद्देश्यत्वात्। ग्रहं संमार्ष्टी'त्यादावुद्देश्यग्रहगतस्य ग्रहैकत्वादेरविवक्षाया इव प्रकृतेऽपि सुबेकत्वादेरविवक्षेति तत्त्वम्। अत एव=पूर्वापरस्वग्रन्थविरोधादेव। प्रतिप्रत्ययं=प्रतिवचनम्। विभक्तिसमुदायस्य=प्रथमाद्वितीयासमुदायस्य।

**इत्याहुरिति**। **परे तु** एकस्य कस्य चिदेव सुबन्तस्य ग्रहणे हि समासविधायके तन्नामैव भगवान् सूत्रकारो निर्दिशेत्, न तु 'षष्ठी'त्यादिरीत्या सामान्येन निर्दिशेत्, एवञ्च सामान्येन निर्देशाद्विनिगमनाविरहेण सर्वस्यापि सुबन्तस्य ग्रहणम्। जातिग्रहणवादिनस्तव तु 'न ब्राह्मणं हन्या'दित्यादौ सकलब्राह्मणग्रहणवत्प्रकृते सकल सुबन्तग्रहणापत्तिर्दुरुद्धरैवेति न त्वदुक्त[भट्टोक्त—]-रीतिरुचिता। एवञ्च समुदायस्य समासप्राप्तिरस्त्येव, सा च कैयटोक्तरीत्यैव वारणीयेति प्राचोक्तमेव युक्तमित्याहुः। **युगपदिति**। 'महिष्या अजायाश्च क्षीर'मित्यादौ तु 'षष्ठी'ति समासाय सुबन्ततदादित्वमपेक्षितमिति समुदायस्य सुबन्ततदादित्वाभावान्न युगपत्तत्र समासः। प्रकृते तु 'समर्थ' इत्यस्यैव सम्बन्धेन सुबन्ततदादित्वस्यानपेक्षणाद्युगपत्समासे न बाधकमिति तत्त्वविदो **गौडाः**।

सुपो धा। 'अङ्गनिमित्तस्य सुप' इत्यर्थभ्रमवारणाय 'अङ्गस्य सुपः' इति नोक्तम्। पूर्वनिपात इति। भूतशब्दस्यैवेत्यर्थः। अन्यथा विनिगमनाविरहेण प्रथमानिर्दिष्टत्वाऽविशेषादनियमः स्यादिति भावः। अत एव निर्देशादीदृशे विषयेऽवयवद्वारकसामर्थ्येऽप्यस्य प्रवृत्तिः। 'त्रिसपष्टपटु'रित्यादावपि 'विस्पष्टादीनि गुणवचने'ष्विति ज्ञापकं बोध्यम्। तत्र हि 'विस्पष्ट'मित्यादि पटुत्वादिविशेषणमिति कैयटे स्पष्टम्।

इवेनेति। 'हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणी'मित्यसाध्येव। 'तिङ्समानाधिकरणे

---

## ❀ वरवर्णिनी ❀

लक्षणं=साक्षाल्लक्ष्यसाधुत्वोपकारकतया विधिशास्त्रम्। अन्त्ये=अधिकारसूत्रत्वस्वीकारे। तत्र समासस्तु समानाधिकरणविशेषणतया 'विशेषणं विशेष्येणे'ति प्राप्नोतीत्याशयः। 'स्मरती'त्यादेः सुबन्तत्वाभावाच्च न भवतीति तत्त्वम्।

ननु 'सुपोऽङ्गस्येव'त्येव कुतो न लाघवात्सूत्रितमत आह—अङ्गेति। अङ्गसञ्ज्ञाजनकस्य सुप इत्यर्थापत्त्या राम इत्यादौ सुप्रत्ययस्यापि तथात्वाल्लुगापत्त्या तथा न सूत्रितमित्युत्तराशयः।

ननु अन्यथासिद्धिशून्यत्वरूपजनकत्वापेक्षयाऽवयवत्वस्य लघुतया तस्यैव षष्ठ्यर्थतयोपस्थिताव-ङ्गावयवस्य सुप इत्यर्थस्य लाभसम्भवे 'सुपोधा'त्वितिरीत्या सूत्रप्रणयनं मुधैव, किञ्च सुपोऽङ्गस्येति न्यासेऽङ्गसञ्ज्ञाजनकस्येत्यर्थो न सम्भवति, स्वादिविधीनां वैयर्थ्यात्, 'प्रत्यय' इत्यादिनिर्देशाच्चेति चेत्, सुवच एवायं न्यासः। तथा च तादृशभ्रमस्यैवाभावेन तद्वारणाय तथा न्यासोऽप्ययुक्त एवेति 'सुपोऽङ्गस्ये'ति न्यासः सुवच एवेति गूढो नागेशभट्टानामाशयोऽत्र बोध्य इति मान्याः।

ननु—परमगावावित्यत्र 'परम-सु—गो—सु—' इति समुदायादौविभक्तौ 'परम—सु—गो—सु—औ' इत्यवस्थायां स्थितयोः सुप्रत्यययोर्लुकि—'औ' इत्यस्य गोशब्दाद्विहितत्वाभावाण्णिद्वद्भावानापत्तिरिति चेन्न; भट्टमते तत्र विहितविशेषणाभावस्य—'परे तु' इत्यादिनोपपादितत्वेनादोषात्। 'हे भानवः' इत्यादौ णिद्वद्भाववारणायैव हि गोतो णिदित्यत्र विहितविशेषणादरः, तत्र च लक्षणप्रतिपदोक्तपरिभाषाश्रयणेनव दोषनिरासस्सम्भवाद्विहितविशेषणाश्रयणं निरर्थकमिति तद्भावः।

ननु 'सुपोऽङ्गस्ये'ति न्यासे 'परमसर्वस्मै' इत्यत्र स्मायादेशानापत्तिस्तत्र ल्यब्लोपपञ्चम्या सर्वनामानमुद्दिश्य विहितस्य ङे इत्यस्य स्मै इत्यर्थस्य सत्त्वादिति चेन्न; अङ्गस्य विशेषणतया—सर्वनामाभिन्नं यदङ्गन्तमङ्गन्तस्मात्परस्य 'ङे' इत्येतस्य 'स्मै' इत्यर्थेन तत्र दोषाभावात्। दिग्योगलक्षणपञ्चमीं विहाय ल्यब्लोपपञ्चम्या 'विहित' इत्यर्थे यत्ते प्रमाणं तदेवास्माकं मतेऽङ्गस्य विशेषणत्वे इति न अङ्गस्य विशेष्यतैवेति नियमविरोध इति सुवचोऽयं न्यास इति गुरवः। विस्तरस्त्वस्मद्विरचितायामभिनवराजलक्ष्म्यामनुसन्धेयः।

भूतशब्दस्यैवेति। केचित्त्विदमनुचितम्, उभयोः प्रथमानिर्दिष्टत्वाविशेषेण निर्धारणानुपपत्तेः, निर्देशस्तु—अनियतभूतशब्दपूर्वनिपातेनापि सूपपाद इत्याहुः।

अपरे तु—'भूतपूर्वे' इत्यादिनिर्देशादेवावयवद्वारकसामर्थ्यमादाय 'भूतपूर्वं' इति समासस्योपपत्तिः, 'पूर्वभूत' इति तु नापादयितुं शक्यं, पूर्वशब्दस्य भूतशब्देन सामर्थ्याभावात्, अवयवद्वारकसामर्थ्याश्रयणे तु न किञ्चिन्मानमिति 'भूतपूर्वं' इत्येव भवति, न 'पूर्वभूत' इति आर्थो निर्धारणलाभ इत्याशयमाहुः। तद्ध्वनयन्नाह—अत एवेति। 'भूतपूर्वं' इत्यस्मादेव निर्देशादित्यर्थः। प्रकृते हि कार्ये एव प्रधानं, तेन च पूर्वमिति न समर्थं, तस्य भवनक्रिययैवान्वयादित्याशयः। प्रवृत्तिरिति। मुख्यविशेष्यार्थोपस्थापकं मुख्यविशेष्यार्थोपस्थापकेन समर्थमित्येवमर्थस्वीकारेणोभयोः सामर्थ्याभावेऽप्यवयवद्वारकसामर्थ्यादेव प्रवृत्तिरिति तत्त्वम्। मातेवेति। मातृप्रतियोगिकसादृश्यवतीमित्यर्थः। अत्र च मातुः सादृश्ये

प्रथमा', 'अभिहिते प्रथमा' इतिवार्त्तिकस्वारस्येन प्रथमायास्तत्र तत्र कारकविभक्तित्वोक्ति-परभाष्येण च क्रियायोग एव प्रथमायाः—प्रवृत्त्या 'माते'ति प्रथमाया मातृसदृशीमित्यर्थेऽसाधुत्वादित्यन्यत्र विस्तरः ।

एतद्योगविभागसिद्धसमासस्य विशेषसञ्ज्ञा न सन्त्येव, तत्तदधिकारेष्वपाठात् ।

**जीमूतस्येवेति** । अत्र यथार्थत्वादिप्रयुक्तोऽव्ययीभावस्तु न, 'तत्र तस्येवे'ति निर्देशात् ।

**अव्ययी** । अनव्ययमव्ययं भवतीति 'भवतेर्णस्य उपसङ्ख्यान'मिति कर्त्तरि णः । महासञ्ज्ञाकरणं—प्राचामनुरोधात् ।

**योगो विभज्यते इति** । भाष्ये त्विदं न दृश्यते । 'अपदिश'मित्यादिमान्तानां स्वरादिपाठादव्ययत्वम् । 'अपदिशेने'त्यादि तु चिन्त्यमेवेत्यन्ये ।

ननु समासगतेऽन्तर्वर्तिविभक्त्याश्रये प्रथमान्तत्वे आश्रीयमाणे कष्टश्रितादौ श्रितस्य पूर्वनिपातापत्तिः, 'निर्दिष्ट'पदञ्च व्यर्थमत आह—**समासशास्त्रे इति** । समास-सञ्ज्ञाविधायके शास्त्रे इत्यर्थः ।

न च राज्ञः कुमारीं श्रितो—'राजकुमारीश्रित' इत्यत्र 'द्वितीया श्रिते'ति सूत्रे प्रथमानिर्दिष्टत्वेन 'कुमारी'शब्दस्य पूर्वनिपातापत्तिरिति वाच्यम् ;

❀ वरवर्णिनी ❀

प्रतियोगित्वसम्बन्धेनान्वयो न क्रियायामिति तत्र प्रथमायाः कारकविभक्तित्वानापत्तिरित्याशयः । एतेन वार्त्तिकेन समासविधानं नापूर्वमिति ध्वनयन्नाह—**एतदिति** । सुपेत्यर्थः। विशेषसञ्ज्ञाः=तत्पुरुषादिसञ्ज्ञाः ।

नन्वत्र सुपेति समासस्य वैकल्पिकतया तदभावे'ऽव्ययं विभक्ती'ति यथार्थे समासापत्त्या प्रथमानिर्दिष्ट-तया 'इव'शब्दस्य पूर्वनिपातापत्तिरत आह—**अत्रेति** । इवशब्दे, 'जीमूतस्येवे'त्यादाविति वाऽर्थः ।

ननु 'तत्र तस्येवे'त्यत्रेवशब्दस्य पूर्वनिपातादर्शनादिवशब्देन यथार्थत्वप्रयुक्तसमासाभावस्य कल्पनेऽपि 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममे'त्यत्र इवार्थकस्य 'व' शब्दस्य यथार्थत्वप्रयुक्तसमासे पूर्वनिपातातिप्रसङ्गात्तादृशप्रयोगासङ्गतिरिति चेन्न; 'तत्र तस्येवे'तिनिर्देशाद्यथार्थेऽव्ययीभावोऽनित्य इत्येव ज्ञापनादार्षत्वाद्वा तदुपपत्तेः । अन्तर्विभक्त्याश्रये=अलौकिकविग्रहवाक्यादिगतविभक्तिनिबन्धने । आश्रीय-माणे='प्रथमानिर्दिष्ट'मित्यत्रत्यप्रथमाशब्देनाश्रीयमाणे सति । **श्रितस्येति** । तस्य 'कष्टं श्रित'त्यादौ प्रथमान्तत्वादित्याशयः । **निर्दिष्टेति** । 'समासे प्रथमे'त्येव वाच्यं, बोधविषयताश्रयार्थकं 'निर्दिष्ट'पदं न कार्यं, प्रथमापदस्य तदन्तविधिना प्रथमान्तपरतया 'समासे प्रथमान्तमुपसर्जन'मित्यर्थेन श्रितादेः पूर्व-निपातस्य सिद्धेरित्याशयः । अत्र समासस्य सञ्ज्ञात्वेन समाससञ्ज्ञाबोधकशास्त्रातिरिक्ते तस्य सञ्ज्ञिबोधक-त्वस्य युक्ततया प्रकृते सञ्ज्ञिपरत्वे समाससञ्ज्ञिनि यत्प्रथमान्तमित्यर्थे पुनरपि निर्दिष्टपदवैयर्थ्य-मिति—तदुपादानसामर्थ्यात्समाससञ्ज्ञाविधायके शास्त्रे इत्येव समासपदस्यार्थ इत्याशयेनाह—**शास्त्रे इति** ।

'समासशास्त्रघटकप्रथमान्तपदप्रयोज्यबोधविषयताश्रय उपसर्जन'मित्यर्थे दोषं शङ्कते—**न चेति** । 'राज्ञः कुमारी'मिति च परिनिष्ठितविभक्त्या समासपक्षे बोध्यम् । कुमारीशब्दस्य=द्वितीयान्तकुमारीशब्दस्य । प्रथमानिर्दिष्टत्वेन=प्रथमान्तपदप्रयोज्यबोधविषयत्वेन । **पूर्वनिपातेति** । 'राजपदापेक्षयापी'त्यादिः ।

ननु 'राज्ञः कुमारीं श्रित' इत्यत्र 'षष्ठी'ति विहितसमासस्य [—प्रधानभूतायाः कुमार्या एव श्रितादौ सापेक्षतया 'राजपुत्रस्य धन'मित्यादाविवं—] प्रवृत्तावपि कुमार्याः श्रितपदेन 'द्वितीया श्रिते'तिसमासाप्राप्तिः, 'ऋद्धस्य राजमातङ्गाः' इत्यत्राप्रधानभूतस्य राज्ञ ऋद्धांशे साकाङ्क्षस्येव कुमार्यास्तत्र

'अप्रधानमुपसर्जन'मितिशास्त्रान्तरोक्तमहासञ्ज्ञाकरणेनास्य तदर्थकतया—'समासशास्त्रे प्रथमानिर्दिष्टम्—अप्रधानत्वसमानाधिकरणोपसर्जनपदव'दिति वाच्यार्थे निष्पन्नेऽप्रधानत्वस्य ससम्बन्धिकत्वात्—'यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसञ्ज्ञ'मित्यवगतेरदोषादिति भाष्येणैव समाधानात् । प्रकृते च न राजनिरूपितमप्राधान्यं कुमार्या इति—न तदपेक्षोऽस्य पूर्वनिपातः ।

न चैवं पूर्वकायाद्यसिद्धिः, कायनिरूपिताऽप्राधान्यस्य पूर्वपदार्थेऽभावादिति वाच्यं, समासशास्त्रस्थ'प्रथमानिर्दिष्ट'शब्दगताऽप्राधान्यस्याश्रयणेनादोषात् । 'समासशास्त्रे यं प्रति यदप्रधानं तं प्रति तदुपसर्जन'मित्यर्थात् । भवति च श्रितादीन्प्रति द्वितीयान्तं तथा ।

ॐ वरवर्णिनी ॐ

समासेऽप्रधानभूताया राजांशे साकाङ्क्षत्वादिति चेन्न; 'राजन्–ङस्–कुमारी–अम्–श्रित–सु' इत्यत्र पूर्वं षष्ठीसमासे विभक्तिलुकि [ पुनर्विभक्त्युत्पत्तेः पूर्वं—] प्रत्ययलक्षणेन तस्य सुबन्ततया 'राजकुमारी'-त्यनेन एकार्थीभावापन्नतया विशिष्टशक्तिमता साकाङ्क्षेण [ कष्टं श्रित' इत्यत्र कष्टादिनेव—] श्रितस्य समासे बाधकाभावात् । अस्य=उपसर्जनपदस्य । तदर्थकतया=अप्रधानार्थकतया । समासशास्त्रे इति । समासशास्त्रघटकप्रथमान्तपदजन्यबोधविषयताश्रय इत्यर्थः । ससम्बन्धित्वात्=निरूपकांशे नित्यसाकाङ्क्ष-त्वात् । यं प्रति=श्रितादिशब्दं प्रति । यत्=द्वितीयान्तं कुमारीत्यादि । तं प्रति=श्रितादिकं प्रति । तत्=कुमार्यादि । एवञ्चोपसर्जनं पूर्वमित्यस्य—यदर्थोपसर्जनीभूतार्थप्रतिपादकं यत्—तत्-तदपेक्षया पूर्वं प्रयोज्यमित्यर्थेन कुमारीशब्दादेरथात्वान्न राजापेक्षया पूर्वनिपात इत्याशयः । प्रकृते='राजकुमारीश्रित' इत्यत्र । कुमार्याः=कुमारीशब्दस्य । तदपेक्षः=राजपदापेक्षः । अस्य=कुमारीशब्दस्य । किन्तु श्रित-निरूपितमेवाऽप्राधान्यं कुमार्या इति तदपेक्ष एवास्य पूर्वनिपात इति भावः । एवम्=उपसर्जनत्वस्य निरुक्तरीत्याऽप्राधान्यसमानाधिकरणत्वे । आदिना—'अर्धपिप्पली'त्यस्य ग्रहणम् । अभावादिति । तत्र पूर्वशब्दे कायनिरूपितप्राधान्यस्यैव सत्त्वेन—समासशास्त्रघटकप्रथमान्तपदजन्यबोधविषयताश्रयत्व-समानाधिकरणाऽप्राधान्यस्य पूर्वशब्दार्थेऽभावादित्यर्थः । समासशास्त्रेति । 'पूर्वापराधरोत्तरमेकदेशिने'ति-शास्त्रस्थप्रथमानिर्दिष्टपूर्वादिशब्दगतस्य लौकिकस्य साहित्यानुयोगित्वरूपस्याप्राधान्यस्याश्रयणेन पूर्वशब्दादेः पूर्वनिपातस्य सुसाधत्वमित्यर्थः । यद्यपि 'सहयुक्तेऽप्रधाने'इत्यादौ शास्त्रीयमप्राधान्यं साहित्यप्रतियोगित्व-रूपमेव, अत एव 'पुत्रेण सहागतः पिते'त्यत्र साहित्यप्रतियोगिवाचकात्पुत्रपदात्तृतीया, तथापि प्रकृते साहित्या-नुयोगित्वलक्षणं लौकिकमेवाप्राधान्यं विवक्षितम् । 'द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते' इत्यत्र—द्वितीयान्तं 'कुमारी'त्यादि, पूर्वकायादौ च पूर्वादिकं—साहित्यानुयोगीति—तस्य पूर्वनिपातसिद्धिरिति हृदयं गौडा विशदयन्ति । यं प्रति=साहित्यप्रतियोगिनं श्रितादिकं प्रति । यत्=साहित्यानुयोगि—द्वितीयान्तं कुमार्यादि । तं प्रति=साहित्यप्रतियोगिनं प्रति । तत्=साहित्यानुयोगिभूतं कुमार्यादि । लोके हि—साहित्यानुयोगिनोऽप्रधानत्वस्य, साहित्यप्रतियोगिनः प्रधानत्वस्य च 'पुत्रेण सहागतः पिते'त्यादौ [तथोक्तौ पुत्रस्य प्राधान्यात्—] दृष्टतया प्रकृतेऽपि तथाश्रयणेन पूर्वादेः साहित्यानुयोगिनोऽप्राधान्यं वक्तुं शक्यम् । 'एकदेशिना सह पूर्वादय' इत्युक्तेरेकदेशिनः साहित्यप्रतियोगितया तस्य लौकिकं प्राधान्यं, पूर्वादेश्च साहित्यानुयोगिनो लौकिकमप्राधान्यम् । शास्त्रे तु साहित्यप्रतियोग्येवाऽप्रधानं, यथा 'पुत्रेण सहागत' इत्यत्र पुत्रस्य साहित्यप्रतियोगिनोऽप्राधान्यात्ततस्तृतीयोपपत्तिरिति तत्त्वं तत्त्वविदो गौडाः प्राहुः।

तथा=लौकिकमप्रधानम् । 'पुत्रेण सहागतः' इत्यादौ साहित्यप्रतियोगिनि पुत्रे लौकिकं प्राधान्यम्—

—सहयुक्ततृतीयान्तार्थस्य शाब्दगुणाद्यन्वयित्वाभावरूपाप्राधान्येऽपि तत्सम-भिव्याहृतप्रथमाद्यन्तार्थे तदधीनत्वरूपाऽप्राधान्यप्रतीतेः ।

अत एव समकक्षयोरप्येकस्य—'परेण सहागन्तव्य'मित्युक्ते दुःखं दृश्यते ।

प्रकृतेऽपि द्वितीयान्तं श्रिताद्यधीनं, तं विना समासाऽघटकत्वात् । श्रितादिकन्तु तं विनापि समासान्तरे घटकमिति द्वितीयान्तस्य श्रिताद्यधीनता । एवमन्यत्राप्यूह्यम् ।

'यस्य शब्दस्य समासविधौ यत्प्रथमानिर्दिष्टं तं प्रति तदुपसर्जनमिति वक्तव्य'मितिवार्त्तिकप्रत्याख्यानाय तद्भाष्यप्रवृत्तेः,—भाष्येऽपि 'यं शब्दं प्रति यत्प्रथमानिर्दिष्टमप्रधानं तं शब्दं प्रति तत्प्रथमानिर्दिष्टवाच्यं पदमुपसर्जन'-मित्यर्थस्यैवौचित्यात् । अत एव 'यं-य'दिति भिन्नलिङ्गनिर्देशः ।

---

❀ वरवर्णिनी ❀

उपपादयति—**सहयुक्तेति** । 'सहयुक्तेऽप्रधाने' इति सूत्रविहिततृतीयान्तपुत्रशब्दार्थस्य पुत्रस्येत्यर्थः । **शाब्देति** । शाब्दं यत्—जाति—गुणक्रियान्वयित्वं, तदभावरूपं यदप्राधान्यमित्येवमर्थः। 'पुत्रेण सहागतः पिते'त्यत्र पितुरेव साक्षादागमनेऽन्वयः । पुत्रस्य तु आर्थोऽन्वयः—पुत्रस्यानागमने हि साहित्या-सम्भवात् । 'पुत्रेण सह स्थूलः पिते'ति गुणोदाहरणम् । 'छात्रेण सह गुरुर्ब्राह्मणः' इति जातेरुदाहरणञ्च बोध्यम् । **तत्समभीति** । तृतीयान्तपुत्रसमभिव्याहृतेत्यर्थः । प्रथमाद्यन्तार्थे=पित्रादौ । **तदधीनत्वेति** । पुत्राद्यधीनत्वेत्यर्थः । साहित्यानुयोगिनि पित्रादौ शास्त्रीयप्राधान्यस्य सत्त्वेऽपि [पुत्रे च शास्त्रीयाऽप्राधान्य-स्यानुभूयमानत्वेऽपि—] तत्र लौकिकमप्राधान्यं [ पुत्रे च साहित्यप्रतियोगित्वरूपं प्राधान्यं— ] प्रतीयते एवेति—साहित्यानुयोगिनः पूर्वादेः कुमार्यादेश्च लौकिकं प्राधान्यं युक्तमिति तत्त्वम् । अत एव= साहित्यानुयोगिनो लौकिकाऽप्राधान्यस्यानुभूयमानत्वादेव । दुःखं='चैत्रेण सह मैत्रेणागन्तव्य'मित्युक्तौ साहित्यानुयोगिनो मैत्रस्य दुःखम् । मैत्रस्य साहित्यानुयोगितया शास्त्रीयप्राधान्येऽपि लौकिकमप्राधान्य-मात्मनोऽनुसन्धाय दुःखोत्पत्तिरनुभूयते इत्याशयः । एवञ्च पूर्वादेः कुमार्यादेश्च साहित्यानुयोगिनो लौकिकमप्राधान्यं सिद्धमिति हृदयम् । तदेवाह—**प्रकृते इति** । 'राजकुमारीश्रित' इत्यादौ ।

द्वितीयान्तं=कुमार्यादि । तं विना=श्रितादिकं विना । समासाघटकत्वात्=द्वितीयान्तस्य समासाघटकत्वात् । तथा सूत्राभावादित्याशयः । तं विनाऽपि=द्वितीयान्तं विनाऽपि । समासान्तरे=परमश्चासौ श्रितश्चेत्यादौ कर्मधारयादौ । द्वितीयान्तस्य=साहित्यानुयोगिनः [शास्त्रीयप्राधान्यवतोऽपि] लौकिकाऽप्रधानस्य कुमार्यादेः। एवं=पूर्वादेरप्राधान्यम्। अन्यत्र='पूर्वकाय' इत्यादौ । पूर्वस्य विशेष्यतया प्राधान्येऽपि साहित्यानुयोगित्वस्य—[ 'एकदेशिना सह पूर्वादयः समस्यन्ते'—] इत्युक्त्या तत्र सत्त्वेन लौकिकाऽप्राधान्यस्य तत्र सत्त्वात्पूर्व-निपातनियमस्योपपादयितुं शक्यत्वादित्याकूतम् । समासविधौ=समासविधायके शास्त्रे ।

**'भाष्यप्रवृत्ते'रिति—औचित्येऽस्मिन्** हेतुः । भाष्येऽपि='यं प्रति यदप्रधानं तं प्रति तदुपसर्जन'-मित्यादिपूर्वोक्तभाष्येऽपि । यं=श्रितादिशब्दम् । यत्=साहित्यानुयोगि । तत्पदं=कृष्णादिपदम् । **औचित्या-दिति** । वार्त्तिके 'यस्य शब्दस्ये'त्युक्त्या तत्प्रत्याख्यानाय प्रवृत्ते भाष्येऽपि 'य'मित्यस्य 'यं शब्दं 'प्रती'-त्येवार्थं उचित इति तेन भाष्येण शब्दगताऽप्राधान्याश्रयणं स्पष्टमेव लभ्यते नत्वर्थगताऽप्राधान्याश्रयणमिति तत्त्वम् । तदाह—**अत एवेति** । तत्र भाष्येऽपि शब्दगताप्राधान्यस्याभिप्रेतत्वादेव । **निर्देश इति** । अन्यथा साहित्यानुयोगिरूपशास्त्रीयप्रधानस्य 'यं'पदेनग्रहणे नपुंसकलिङ्गेन निर्दिशेत्, अनुयोगिपरत्वे पुँल्लिङ्गेनैव वा निर्दिशेत्, 'यं'–'य'दिति भिन्नलिङ्गतया तु निर्देशोऽसङ्गत एव स्यादित्याशयः ।

ननु बहुव्रीहिसञ्ज्ञाविधायके निरुक्तरीत्योपसर्जनत्वं वक्तुमशक्यं, तृतीयान्तपदाभावात्,उभयोः प्रथमान्त-

बहुव्रीहौ त्वेकविभक्तीत्येवोपसर्जनत्वमित्यनुपदमेव स्फुटीभविष्यति—अन्वर्थत्वविरोधान्नानेनेति भाष्यसिद्धान्त इति बोध्यम् ।

यत्तु—'अर्थगताप्राधान्येनाऽन्वर्थत्वेऽपि पूर्वकायादौ न दोषः, अन्वर्थसञ्ज्ञा हि यत्र सोऽर्थः सम्भवति तत्र प्रवृत्तिनिमित्तापेक्षा प्रवर्त्तते, अन्यत्र तु विधानसामर्थ्यात्तन्निरपेक्षा, यथा स्वादीनां कर्मप्रवचनीयत्वमिति,—प्रथमानिर्देशसामर्थ्यात्पूर्वादीनां प्रवर्त्तते—, इति, तन्न; निर्विभक्तिकस्योच्चारणासम्भवेन तत्सामर्थ्याऽयोगात् । प्राथम्यादन्वितार्थकत्वाल्लघुत्वाच्च प्रथमैवोच्चारितेत्यस्य वक्तुं शक्यत्वादित्यलम् ।

**उपसर्जनम्** । 'समासे' इत्यधिकृतं योग्यताबलेन सप्तम्या विपरिणम्यते, तदाह—**समासे इति** । न च 'राज्ञः कुमार्याः' इति परिनिष्ठितविभक्त्या समासे कुमार्या अपि पूर्वनिपातापत्तिरिति वाच्यं; 'षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्याऽपूर्वनिपातः' इति

ॐ वरवर्णिनी ॐ

तया साहित्यानुयोगित्वेन प्रतियोगिनोऽभावादत आह—**बहुव्रीहाविति** । 'चित्रगु'रित्यादौ गवादेः । **उपसर्जनत्वमिति** । शास्त्रीयमित्यर्थः । **अन्वर्थत्वेति** । अप्रधानमुपसर्जनमित्यन्वर्थत्वविरोधात् । अनेन='प्रथमानिर्दिष्टं समास उपसर्जन'मित्यनेन । नचैकविभक्तीत्यत्र विग्रहवाक्यगतनियतविभक्तेरेव विवक्षणं, विग्रहे च द्वयोरपि (चित्रेत्यस्य गोरित्यस्य च) प्रथमान्ततया द्वयोरप्युपसर्जनत्वापत्तिरिति वाच्यं, समासगतनियतविभक्त्यैव तत्र व्यवस्थायाः स्वीकरिष्यमाणत्वादित्याहुः ।

अर्थगतलौकिकाप्राधान्याभिप्रायेण व्यवस्थामत्र वदतां मतं दूषयितुमुत्थापयति—**यत्त्विति** । अन्वर्थत्वेऽपि=अप्रधानार्थकत्वेऽपि, अर्थगताप्राधान्येन=प्रकारता–विशेषणतादिस्वरूपाऽप्राधान्याश्रयणेन, पूर्वपदार्थस्य विशेष्यतया निरुक्ताऽप्राधान्यस्य तत्राभावेऽपि—पूर्वकायादौ='पूर्वकायः' 'अर्धपिप्पली'त्यादौ, न दोषः=नोपसर्जनत्वानुपपत्त्या पूर्वशब्दादेः पूर्वनिपातानापत्तिरिति—योजना । दोषाभावमेवोपपादयति—**अन्वर्थसञ्ज्ञेति** । अन्यत्र=यत्र विशेषणत्वादिरूपाऽप्राधान्यलक्षणः सोऽर्थो न सम्भवति तत्र—पूर्वकायादौ । विधानसामर्थ्यात्=प्रथमानिर्देशसामर्थ्यात् । तन्निरपेक्षा=विशेषणत्वादिरूपलौकिकाऽप्राधान्यनिरपेक्षा ।

**स्वादीनामिति** । कर्म–क्रियां प्रोक्तवन्तः—कर्मप्रवचनीया इत्येवमन्वर्थयोगाभावेऽपि स्वादीनां सा सञ्ज्ञा–विधानसामर्थ्यादेव यथा प्रवर्त्तते इत्यर्थः ।

प्राथम्यात्='स्वौज'सिति सूत्रे तस्याः प्राथम्यात् । नन्वष्टाध्यायीपाठे द्वितीयादय एव प्रथममुपात्ता न प्रथमेत्यत आह—**अन्वितेति** । **लघुत्वेति** । प्रातिपदिकार्थमात्रापेक्षया लघुत्वं बोध्यम् ।

**परे तु**—विधानसामर्थ्यादित्यस्य—उपसर्जनसञ्ज्ञाविधानसामर्थ्यादित्यर्थः । यदि लौकिकोपसर्जनसमानाधिकरणमेव शास्त्रीयमुपसर्जनं ग्राह्यं स्यात्तर्हि [ उपसर्जनसञ्ज्ञाविधायकं— ] सूत्रमेव व्यर्थं, सर्वत्र लौकिकोपसर्जनेनैव सिद्धेः, एवञ्चोपसर्जनसञ्ज्ञाविधानसामर्थ्यात्—क्वचिल्लौकिकोपसर्जनत्वाभावेऽपि सा सञ्ज्ञा प्रवर्त्तते—यथा पूर्वकाय इत्यादौ विशेष्यत्वात्पूर्वादेर्लौकिकोपसर्जनत्वविरहेऽपि सा प्रवर्त्तते, सति सम्भवे तु लौकिकोपसर्जनत्वसमानाधिकरणं शास्त्रीयमुपसर्जनत्वं गृह्यते एवेति तु हृदयमिति प्राचोक्तमेव [ यत्त्वित्यादिनोक्तमर्थगतलौकिकाऽप्राधान्याभिप्रायकमतमेव— ] युक्तमित्याहुः ।

**सप्तम्येति** । 'वृक्षे शाखे'तिवच्च सप्तमी, तदर्थश्च घटकत्वमेव । परिनिष्ठितविभक्त्या=षष्ठ्या, तदन्तेनेति यावत् । **पूर्वनिपातापत्तिरिति** । कुमारीशब्दस्यापि षष्ठ्यन्ततया प्रथमानिर्दिष्टत्वात् ।

प्रत्यासत्त्या दोषं वारयति—**षष्ठ्यन्तयोरिति** । प्रधानस्य = षष्ठ्यर्थसम्बन्धानुयोगिभूतस्य कुमार्यादेः

भाष्येण समाधानात् । **अर्थाभेदात्**–अर्थस्य=प्रधानस्य, अभेदात्=समस्यमानराजपदार्थ-निरूपितसम्बन्धाभावात् । अस्य–षष्ठ्यन्तस्य–प्रथमानिर्दिष्टत्वाभावान्न पूर्वनिपात इति तदर्थः ।

अयं भावः–'षष्ठी'त्यादिसूत्रे येन सुबन्तेन समासस्तदर्थनिरूपितसम्बन्धाद्यर्थक-मेव षष्ठ्याद्यन्तं गृह्यते, तदेव च तत्र प्रथमानिर्दिष्टमिति । तदुक्तं कैयटेन–"–'राज्ञः पुरुषस्ये'त्यत्र राजापेक्षया पुरुषः प्रधानमेवेति–नासौ भिद्यते=राजापेक्षया न व्यतिरिच्यते इत्यप्रधानस्यैव पूर्वनिपातः–"इति । उक्तरीत्याऽप्रधानषष्ठ्यन्तमेव तत्र प्रथमा-निर्दिष्टं न तु प्रधानमिति तद्भावः । यत्तूपसर्जनसञ्ज्ञाऽन्वर्थत्वादप्रधानस्यैवेति 'उप-सर्जनं पूर्व'मित्यत्र कैयटस्तन्नेत्युक्तमेवेत्यलम् ।

---

**ॐ वरवर्णिनी ॐ**

**सम्बन्धाभावादिति** । 'राज्ञः—कुमार्या धन'मित्यादौ 'कुमार्या' इति षष्ठी धनादिनिरूपितसम्बन्धे एव, न तु राजनिरूपितसम्बन्धे । 'षष्ठी'त्यस्य च प्रतियोगिवाचिषष्ठ्यन्तमनुयोगिवाचिना सह समस्यते इत्येवार्थः । 'कुमार्या' इति षष्ठ्यन्तञ्च न राजनिरूपितसम्बन्धप्रतियोगिनो वाचकं, किन्त्वनुयोगिवाचकमेव, धनाद्यनुयोगिकस्वत्वादिसम्बन्धप्रतियोगिवाचकत्वेऽपि राजानुयोगिकसम्बन्धप्रतियोगिवाचकत्वं कुमार्यादौ नास्तीति न कुमार्याः प्रथमानिर्दिष्टत्वमित्याशयः । सुबन्तेन=पुरुषादिना । सम्बन्धाद्यर्थकं = तदर्थनिरूपि-तताद्दशसम्बन्धप्रतियोगिवाचकमेव राजादिपदम् । तत्र = षष्ठीसमासविधायके शास्त्रे ।

न भिद्यते=अप्रधानत्वरूपभेदवन्न भवति । एतदेव विवृणोति—**न व्यतिरिच्यते इति** । व्यतिरेकोऽत्र–भेदमूलकसम्बन्धः । एवञ्च–पुरुषः प्रधानभूतोऽतो राजपदार्थनिरूपितभेदनिबन्धन-सम्बन्धवान्न भवति । विशेष्यवाचकपदाप्रयोगेपि 'राज्ञ' इत्युक्ते हि राज्ञि विशेषणत्वावगतौ विशेषणता-नियामकसम्बन्धाकाङ्क्षा भवति, 'पुरुष' इत्युक्ते तु पुरुषे स्वार्थनिरूपितप्राधान्यस्य भानेपि न सम्बन्धाकाङ्क्षेति विशेषणताया एव सम्बन्धावच्छिन्नत्वनियम इति विशेषणनिष्ठ एव सम्बन्धः । सम्बन्धस्य विशेषण-निष्ठत्वञ्च–'प्रतियोगिता'सम्बन्धेन । पुरुषे तदभावश्च–प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः ।

**इत्युक्तमेवेति** । अर्थगतस्याप्रधानत्वरूपोपसर्जनत्वस्याश्रयणे पूर्वकायाद्यसिद्धिरित्यनेनोक्तमित्यर्थः । परे त्वर्थगताप्राधान्याश्रयणेऽपि न कोऽपि दोष इति–कैयटोक्तमेवयुक्तमिति प्रतिपादितमेव प्रागित्याहुः ।

केचित्तु—'प्रथमानिर्दिष्टं समास उपसर्जन'मिति सञ्ज्ञासूत्रं न कार्यं, किन्तु 'प्रथमानिर्दिष्टं समासे पूर्व'मिति पूर्वनिपातप्रकरणे एव पठनीयम् । न चोपसर्जनसञ्ज्ञासूत्राभावे 'गोस्त्रियो'रित्यस्य ह्रस्वविधायक-सूत्रस्य कथमुपपत्तिरिति वाच्यं, लौकिकस्याऽप्रधानार्थकस्य तत्र ग्रहणात् । न चैवं कुमारीमिच्छन्, कुमारीवाचरन् वा ब्राह्मणः—'कुमारी'त्यत्र ह्रस्वापत्तिरिति वाच्यं, ह्रस्वविधायकसूत्रे 'समासस्ये'-त्यस्यापि पाठेन समास एव ह्रस्वो भविष्यतीति प्राहुः । तन्नापरे क्षमन्ते,–'राज्ञः कुमार्या' इत्यत्र परिनिष्ठितविभक्त्या समासपक्षे 'षष्ठी'तिपदेन 'कुमार्या' इत्यस्यापि ग्रहणसम्भवेन तस्य पूर्वनिपातापत्तेः । उपसर्जनसञ्ज्ञासूत्रसत्त्वे तूक्तरीत्या प्रत्यासत्तिलाभेन दोषस्य परिहारः सम्भवति । किञ्च—ह्रस्वविधायक-सूत्रे लौकिकोपसर्जनत्वस्याश्रयणे—ब्राह्मणी चासौ धूर्ता च'—ब्राह्मणधूर्ता', गार्गी चासौ वृन्दारिका च 'गार्ग्यवृन्दारिके'तीष्यते, इदानीं तत्रोत्तरपदस्य ह्रस्वत्वापत्तिः, समासस्य लौकिकोपसर्जनान्तत्वात्, शास्त्रीयस्य तु तस्य भवन्मतेऽभाव एव । न चास्तु परपदस्यापि ह्रस्वस्तथापि समुदायाद्टापि कृते रूप-सिद्धिर्भविष्यतीति वाच्यं, 'गोबष्कयणी' 'कठप्रवक्त्री'त्यादावुत्तरपदे ह्रस्वत्वापत्तेर्दुर्वारत्वात् । उपसर्जन-सञ्ज्ञासूत्रसत्त्वे तु प्रकृते ताद्दशोपसर्जनत्वाभावेन न दोषः । एतेन—'प्रथमानिर्दिष्टं समासे पूर्व'मिति-न्यासेपि—'येन सुबन्तेन समासविधौ यत्प्रथमानिर्दिष्टं तत्–तत्समासे पूर्वम्प्रयोक्तव्य'मित्यर्थेन 'षष्ठी'ति

'प्रथमानिर्दिष्ट'मित्यतोऽनुवृत्तं 'समासे' इति—तदर्थविग्रहपरमित्याह— **विग्रहे इति। नियतेति।** एकग्रहणादवधारणगर्भसमासलाभ इति भावः। "—'निष्कौशाम्बि'रित्युदाहरणम्। परिनिष्ठितविभक्त्याऽपि समासे 'निष्क्रान्तं' 'निष्क्रान्तेने'त्यादिक्रमेण तस्याऽनियतविभक्तिकतया 'कौशाम्बी'पदस्य तदपेक्षया नियतविभक्तिकत्वादनेनोपसर्जनत्वेन ह्रस्वत्वम्। परिनिष्ठितविभक्त्या समासे चेदमेव ज्ञापकम्। अयं पक्षः—'तत्पुरुषे तुल्यार्थे'ति सूत्रे भाष्ये। 'प्रथमान्तेन समासः' इति पक्षोऽप्यनेकमिति सूत्रे भाष्ये—" इति केचित्।

**परे तु**—'अनेक'मिति सूत्रे भाष्ये,—समासार्थविग्रहे—प्रत्यासत्त्या—समासापेक्षया नियतविभक्तिकस्यानेनोपसर्जनत्वमुक्तम्, राज्ञः कुमारी—'राजकुमारी'त्यत्र परिनिष्ठितविभक्त्यापि समासस्य सत्त्वान्न तदपेक्षया कुमार्या नियतविभक्तिकत्वमिति न तस्या उपसर्जनत्वमित्युक्तम्। 'चित्रगु'रित्यत्र च 'गो'पदस्यानेनोपसर्जनत्वमङ्गीकृत्यानेकग्रहणं प्रत्याख्यातम्। बहूनां समासस्तु 'तद्धितार्थे'त्यनेनोत्तरपदे द्विगुविधानाज्ज्ञापकात्सिद्ध इति चोक्तम्। एवञ्चोत्तरपदेन परिमाणिनेत्यपि प्रत्याख्यातम्। अतिप्रसङ्गस्त्वनभिधानान्न। तदुक्तम्—'अनेकवचनमुपसर्जनार्थं, न वैकविभक्तित्वा'दिति। वार्तिककृताऽन्वर्थत्वा-

---

❀ वरवर्णिनी ❀

समासविधौ षष्ठ्यन्तस्य येन सुबन्तेन समासस्तदर्थानुयोगिकसम्बन्धप्रतियोगिवाचकमेव षष्ठीति पदेन गृह्यते, तथा च 'राज्ञः कुमार्याः' इत्यर्थकसमासे न 'कुमारी'शब्दस्य पूर्वनिपातः—इत्यपास्तम्।

**एकग्रहणादिति।** अवधारणगर्भसमासानाश्रयणे—स्वत एव एकैव खलु विभक्तिरेकस्मात्प्रातिपदिकादुत्पद्यते इति 'एक'शब्दोपादानं व्यर्थमेव स्यादिति भावः। 'एक'पदञ्चैकजातीयपरं, नेनैकवचनद्विवचनादिभेदेन नानाविभक्तिसम्भवेऽपि न क्षतिः। तस्य=निष्क्रान्तादेः। इदमेव='एकविभक्ती'तिसूत्रमेव।

अयं पक्षः='परिनिष्ठितविभक्त्या समास' इति पक्षः। **तुल्यार्थेतिसूत्रे भाष्य इति।** तत्र हि—'परमेण कारकेणे'त्यर्थे 'परमकारकेणे'तिसमासे पूर्वपदप्रकृतिस्वरप्राप्तिमाशङ्क्य—लक्षणप्रतिपदोक्तपरिभाषया वारितम्। **अनेकमितिसूत्रे भाष्य इति।** तत्र हि—'शेष'पदसम्बन्धेन प्रथमान्तानामेव समास उक्तः।

अत्र 'विग्रहे यन्नियतविभक्तिक'मित्युक्त्या विग्रहघटकपदान्तरापेक्षया नियतविभक्तिकमित्यर्थो लभ्यते, स न युक्त इत्यभिप्रायेण सिद्धान्तार्थमाह—**परे त्विति। प्रत्यासत्त्येति।** 'विग्रहे नियतविभक्तिक'मित्युक्तौ समासस्य नियमेनोपस्थितेः। अनेन='एकविभक्ती'त्यनेन। तदपेक्षया=समासाऽपेक्षया। तस्याः=कुमार्याः।

ननु समासार्थविग्रहगतनियतविभक्तिकस्यानेनोपसर्जनत्वे 'चित्रगु'रित्यादौ गोशब्दस्यापि प्रथमान्तत्वेन नियतविभक्तिकतयोपसर्जनत्वापत्तिरत आह—**चित्रेति।** नन्वनेकग्रहणाभावे कथम्बहूनाम्बहुव्रीहिसमास इत्यत आह—**बहूनामिति।** ननूत्तरपदनिमित्तकद्विगुविधानमुत्तरपदेन परिमाणिनेतिवचनविषये चरितार्थमत आह—**एवञ्चेति।**

ननु ज्ञापकेन बहूनां समासश्चेद्राज्ञः कुमार्याश्च धनमित्यर्थे—'राजकुमारीधन'मितिप्रयोगापत्तिरत आह—**अतिप्रसङ्ग इति।** 'अनेक'पदसत्त्वे हि 'सुपे'ति तृतीयान्तं नानुवर्तते। अनेकपदाभावे तु तदनुवर्तनस्यावश्यकतया 'सुबन्तं चित्रेति, तत्—सुबन्तेन गोशब्देन समस्यते' इत्यर्थेऽन्वर्थतया 'चित्रे'त्यस्य प्रथमानिर्दिष्टत्वाद्गोश्च तृतीयानिर्दिष्टत्वाच्चित्रेत्यस्य पूर्वनिपातेऽपि ह्रस्वानापत्तिः। 'अनेक'मित्यस्य करणे तूभयोर्गोशब्दचित्रशब्दयोः प्रथमानिर्दिष्टत्वात्पूर्वनिपातह्रस्वौ भवतः। गोः पूर्वनिपातस्तु न, विशेषणस्यैव नीलोत्पलादौ पूर्वनिपातस्य दृष्टतया चित्रापदस्यैव पूर्वनिपाताङ्गीकारादिति भावः। **उपसर्जनार्थमिति।**

ऽनुक्तेस्तद्रीत्या प्रयोजनवार्त्तिकं, 'नवे'ति तु तत्खण्डनम् । भाष्यरीत्या त्वेतदप्राप्तिरेवात्रेति बोद्ध्यम् । अन्यथा 'चित्रगु'रित्यस्य विग्रहे द्वयोरपि नियतविभक्तिकतया किमपेक्षं गोशब्दस्य नियतविभक्तिकत्वं स्यात् ? । एकस्यानियतविभक्तिकत्वे हि तदपेक्षमन्यस्य तत्त्वं वाच्यम् ।

समासापेक्षं नियतविभक्तित्वमेव युक्तमाश्रयितुम् । अन्यथा 'सभार्य' इत्यत्रोपसर्जनह्रस्वानापत्तिः । सहशब्दस्याव्ययतया विभक्तिमात्राभावेन, लुकाऽनुत्पत्तेरेवान्वाख्यानेन चानियतविभक्तित्वाभावात्तदपेक्षनियतविभक्तित्वस्य 'भार्यये'त्यत्राभावेनोपसर्जनत्वानापत्तिः, मम तु समासस्यानियतविभक्तित्वात्तदपेक्षं तत्त्वमस्त्येवेति न दोष इत्याहुः ।

**गोस्त्रियोः** । अत्र 'स्त्री'शब्दः स्वर्यते, तेन स्त्र्यधिकारोक्तचातुर्थिकप्रत्ययलाभः । 'उपसर्जनस्ये'ति गोस्त्रियोर्विशेषणम् । प्रत्ययग्रहणपरिभाषया च 'स्त्री'शब्देन तदन्तग्रहणम् । ताभ्याञ्च प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**उपसर्जनं य** इत्यादि ।

'गोकुलं' 'राजकुमारीपुत्रः' इत्यादौ तु न दोषः, महासञ्ज्ञाकरणेन येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्येवोक्तरीत्याऽप्रधानत्वेनोपसर्जनत्वात् ।

❀ वरवर्णिनी ❀

'प्रथमानिर्दिष्ट'मित्युपसर्जनसञ्ज्ञासिद्ध्यर्थमित्यर्थः । **न वेति** । इदं तत्खण्डनमपि वार्तिककारकृतम् । भाष्यकारस्तु 'तर्हि वक्तव्यं ? न वक्तव्य'मितिशब्देनैव प्रत्याचष्टे । **एकविभक्तित्वादिति** । चित्रा यस्य गावः सन्ति स चित्रगुः, स तिष्ठति, तम्पृच्छ, तेन कृतमितिरीत्या प्रथमान्तेन विग्रहस्योक्ततया 'एकविभक्ती'तिसूत्रेणोपसर्जनसञ्ज्ञा भविष्यतीति प्रथमानिर्दिष्टमितिसूत्रेण सञ्ज्ञासिद्ध्यर्थमनेकग्रहणं न कार्यमित्यर्थः । **अन्वर्थत्वानुक्तेरिति** । 'यं शब्दम्प्रती'त्यादिरीत्यापूर्वोक्ताऽन्वर्थत्वानुक्तेरित्यर्थः । तत्खण्डनम्=प्रथमवार्तिकखण्डनम् । **भाष्यरीत्येति** । कुतश्चिदेव किञ्चित्पदमध्याहृत्य समासस्यानेकविभक्तिकत्वेपि प्रथमान्तेन विग्रहे—राज्ञः कुमारी राजकुमारीत्यादावपि तथात्वापत्तिरितिसमासापेक्षया नियतविभक्तिकत्वमिति भाष्ये सिद्धान्तितं, तद्रीत्येत्यर्थः । **एतदिति** । 'एकविभक्ती'तिसूत्रेत्यर्थः । **अत्र**=बहुव्रीहिसञ्ज्ञाविषये । **अन्यथा**=समासापेक्षया नियतविभक्तिकत्वानाश्रयणे । **तत्त्वं**=नियतविभक्तिकत्वम् । **अनुत्पत्तेरिति** । न तु जातस्य निवृत्तिः, शब्दानित्यत्वप्रसङ्गात् ।

**परे तु**—पदत्वसिद्ध्येऽव्ययेभ्योऽपि स्वाद्युत्पत्त्या 'सहे'त्येतदपेक्षया 'भार्यये'त्यस्य नियतविभक्तित्वं वक्तुं शक्यमेवेतिप्राचोक्तमेव युक्तम्, अत एव 'स्वर्गच्छती'त्यादौ तिङ्ङतिङ' इति निघातसिद्धिः, अत एव—'अनु' इति सुबन्तेन 'व्यचल'दिति समुदायस्य समर्थत्वा'दिति स्वयमेवानोः सुबन्तत्वमुक्तमित्याहुः ।

**स्वर्यत इति** । स्वरितत्वगुणविशिष्टः पठ्यते । तेन विशिष्टार्थलाभः । अत एव भाष्ये 'गोटाङ्ग्रहण'मिति वार्त्तिकं प्रत्याख्यातम् । अत एव स्त्रीशब्दस्य चातुर्थिकप्रत्ययमात्रपरत्वं, न तु स्त्रीशब्दपरत्वं, न वा स्त्रियामितिविहितेकारप्रत्ययपरत्वं, तदाह—**तेनेति** । तेनातिलक्ष्मीरित्यादौ न ह्रस्वः, ईप्रत्यस्य तादृशप्रत्ययत्वाभावात् । 'स्त्री'शब्दस्य तादृशप्रत्ययमात्रपरत्वादेवाह—**प्रत्ययग्रहणेति** । **ताभ्याम्**='गो'शब्द-प्रत्ययान्तपर-'स्त्री'शब्दाभ्याम् । अन्यथोपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वेनाऽतिखट्वा इत्यादौ समुदायस्य स्त्रीप्रत्ययान्तत्वविरहेऽपि स्त्रीप्रत्ययान्तान्तत्वाद्ध्रस्वत्वसिद्धिः ।

व्यपदेशिवद्भावेन 'गोकुलं' 'राजकुमारीपुत्र' इत्यत्रातिप्रसङ्गशङ्कायामाह—**गोकुलमित्यादि** । उक्तमेव दार्ढ्याय पुनः स्मारयति—**महासञ्ज्ञाकरणेनेति** । 'ससम्बन्धिकत्वाच्चे'ति शेषः । तदेवोपपादयति—**प्रत्यासत्त्येति** । **तदन्तेत्यादि** । तदन्तश्च तत्—तत्समासरूपप्रातिपदिकञ्च,—तस्य योऽन्त्यस्तस्येति विग्रहः । 'तदन्ते'त्यत्र तत्पदञ्च—'गो'—'स्त्रीप्रत्ययान्त'परम् । एवञ्च 'यत्समासशास्त्रे गो—स्त्रीप्रत्ययान्तयोः प्रथमानिर्दिष्टत्वं, यत्समासापेक्षया एकविभक्तित्वं वा प्रत्यासत्त्या गोऽन्तादेस्तस्यैव समासस्य

प्रत्यासत्त्या तदन्ततत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इत्यदोष इति भाष्ये स्पष्टम् ।

तत्र ह्येवं भाष्यम्—'अप्रधानमुपसर्जनमिति सम्बन्धिशब्दावेतौ, तत्र सम्बन्धादेतद्गन्तव्यं यं-प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवती'ति । यत्=प्रथमानिर्दिष्टं, तस्य=तद्घटित-समासस्य, सः = अप्रधानशब्दः—अन्तो भवतीति—तदर्थः ।

**यद्यपि**—'कुक्कुटमयूर्या'विति द्वन्द्वे बहुव्रीहाविव 'एकविभक्ती'त्युपसर्जनत्वम् । 'द्वन्द्वः प्रथमान्तानामेवे'ति 'चार्थे द्वन्द्व'इत्यत्र वक्ष्यते । 'एकविभक्तीत्युपसर्जन-सञ्ज्ञाऽप्रधानार्थकस्यैवे'ति मतेऽपि—उद्भूतावयवभेदसाहित्यं प्रति मयूरीपदार्थस्य तत्त्वमस्ति । सर्वत्र द्वन्द्वे साहित्यमेव विशेष्यमिति 'चार्थ'सूत्रे भाष्ये स्पष्टं—**तथापि**—भाष्ये 'द्वन्द्वे ने'तिवचनारम्भान्न दोषः । अत एव—'कुमारीमिच्छन् ब्राह्मणः—'कुमारी'त्यत्र ह्रस्वो न, 'प्रथमानिर्दिष्ट'मित्यादेः शास्त्रीयस्यैवात्रोपसर्जनस्य ग्रहणात् । अत एव 'गोबष्कयणी'त्यादौ 'बष्कयणी'शब्दस्य गुणशब्दत्वादप्रधानत्वेऽपि तदन्तस्य ह्रस्वो न । एतच्च 'इद्गोण्या'इति सूत्रे भाष्ये स्पष्टम् ।

'अतिराजकुमारि'रित्यादौ स्त्रीप्रत्यये तदादिनियमनिषेधात् 'राजकुमारी'त्यस्य स्त्रीप्रत्ययान्तत्वम् । न च तस्यात्यर्थं प्रत्युपसर्जनत्वेन कथं स्त्रीप्रत्ययान्तत्वम्, उपसर्जन-

❀ वरवर्णिनी ❀

ह्रस्वत्व'मित्यर्थसिद्ध्या 'गोकुल'मित्यादौ न दोषस्तदाह—भाष्ये स्पष्टमिति । पूर्वोक्तार्थे 'समासान्तेष्वये'ति यदुपात्तं—तत एव शङ्कते—**यद्यपीति** । तत्त्वम्=अप्रधानत्वम् । **चार्थसूत्रे भाष्य इति** । तत्र **ह्येवमुक्तम्**—'इतरेतरयोगे प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यते एतत्—प्लक्षोपि न्यग्रोधसहायो, न्यग्रोधोऽपि प्लक्षसहाय इति, समाहारेपि क्रियते प्लक्षन्यग्रोधमिति, तत्रायमप्यर्थः—द्वन्द्वैकवद्भावो न पठितव्यो भवति, समाहारैकत्वादेव सिद्धम्—'इति । अत्र भाष्यकारेण सहायस्योभयत्राभिधानप्रदर्शनात्सहायस्य विशेष्यता दर्शिता, 'समाहारेपि क्रियते प्लक्षन्यग्रोधमिती'त्यनेन च द्वन्द्वैकवद्भावस्याऽपठितव्यत्वाभिधानेन तिरोहितावयवभेदता च प्रदर्शिता । **अत एव**=शास्त्रीयस्य निरुक्तोभयरूपस्योपसर्जनत्वस्य प्रकृतसूत्रार्थपरकत्वादेव । **अत्र**=गोस्त्रियोरित्यत्र । **अत एव**=शास्त्रीयस्यैव ग्रहणादेव । अप्रधानत्वेऽपि=लौकिकोपसर्जनत्वेऽपि । शास्त्रीयस्य तस्य ग्रहणे तु 'पोटायुवती'त्यत्र जातेः प्रथमानिर्दिष्टतया जातिवाचकस्य गोस्तथात्वात्पूर्वनिपात-सिद्धिरिति भावः । **इद्गोण्या इति सूत्रे भाष्य इति** । तत्र हि—द्विचनस्य 'गोणीमात्रमिदं गोणि'रित्यत्र प्रयोजनमुक्तम्, अत्र प्रमाणेऽर्थे मात्रचो लुकि गोणीशब्दस्य गोणीपरिच्छेद्ये वृत्तावपि न शास्त्रीयं-निरुक्तमुपसर्जनत्वमिति भावः । अनेन च भाष्येण शास्त्रीयोपसर्जनस्य प्रकृते ग्रहणमिति स्पष्टमेव लभ्यते इति तत्त्वम् । **अतिराजकुमारिरित्यादाविति** । अत्र हि निरुक्तं शास्त्रीयमुपसर्जनत्वं राजकुमारी-शब्दस्य, तस्य च कथं स्त्रीप्रत्ययान्तत्वमिति शङ्कानिवारणायेदमभिहितम् । स्त्रीप्रत्यये चानुपसर्जने ने'त्यत्र लौकिकोपसर्जनस्यैव ग्रहणाच्च—'कुमारीवाचरन् ब्राह्मणः कुमारी'त्यादिरीत्या निष्पन्नस्य कुमारीशब्दस्य राजशब्देन समासे राजकुमारीत्यस्य चातिशब्देन समासेऽतिराजकुमारीत्यत्रानेन न ह्रस्वः, किन्तराज-कुमारीशब्दार्थं प्रति स्त्रीप्रत्ययस्य निरुक्तोपसर्जनतया तदादिनियमप्रसक्त्या राजकुमारीत्यस्य स्त्रीप्रत्यया-न्तत्वस्यैवाभावेनातिराजकुमारीत्यस्य स्त्रीप्रत्ययान्तान्तत्वाभावादिति मान्याः ।

यथाकथञ्चिदुपसर्जनत्वे सति परिभाषाघटका'ऽनुपसर्जने ने'तिनिषेधस्य विषय इत्यभिमानेन शङ्कते—न चेति ।

स्त्रीप्रत्यय तदादिनियमादिति वाच्यं, यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रति स्त्रीप्रत्ययस्यानुपसर्जनत्वमेवेत्यदोषात् ।—प्रत्यासत्त्या—तादृशानुपसर्जनत्वस्यैव निषेधनिमित्तत्वात् । अस्य चातिक्रान्तार्थं प्रत्युपसर्जनत्वेऽपि 'राजकुमारी'त्येतदर्थं प्रत्यनुपसर्जनत्वमेवेति दिक् ।

**नाव्ययीभावा** । 'अपञ्चम्या' इत्यम एव विशेषणं—न लुगभावस्य, तुना व्यवच्छेदात् । **अपदिशमिति** । यद्यपि नपुंसकह्रस्वेनापीदं सिध्यति, तथापि 'चित्रगु'-रित्याद्यर्थमावश्यकेन 'गोस्त्रियो'रित्यनेनापीदं सिद्ध्यतीति तदुपन्यासः । दिश्शब्दस्य शरदादिषु पाठेऽपि लिङ्गविशिष्टपरिभाषयाऽत्र न टच् ; समासान्तप्रकरणे लिङ्ग-विशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे भाष्ये उक्तत्वात् । टाबन्तदिशाशब्दोऽकारान्त-प्रकृतिक एवेति मते टचः प्राप्तेरेवाभावः । अमरस्वारस्याद्दिशशब्देन विग्रहे तु न ह्रस्वः प्रयोजनम् । **इत्यादाविति** । आदिना—'एकविंशति भारद्वाजं', 'सप्तगङ्ग'-मित्यादिसङ्ग्रहः ।

**विभक्तीत्यादेरिति** । 'विभक्ति'शब्देन तदर्थो लक्ष्यते । 'वचन'शब्दः कर्म-साधनः—प्रत्येकं सम्बध्यते । विभक्त्यादयश्च श्रुतत्वादव्ययस्यैव विशेषणानि । तदाह—**विभक्त्यर्थादिष्विति** । अत्र 'सुबन्तेने'त्यस्य 'समर्थेने'ति विशेषणम् । अत एव तदुत्तरविभक्त्यर्थान्तर्भावेणैकार्थीभावः । 'द्वितीयाश्रिते'त्यादौ 'समर्थेन सुबन्तेने'त्यस्य—समर्थप्रकृतिकसुबन्तेनेत्यर्थः । अत एव 'कष्टं श्रितस्ये'ति परिनिष्ठितविभक्त्या समासे-ऽप्युत्तरपदीयविभक्त्यर्थान्तर्भावेण न सः । अत एव 'कष्टश्रितस्य धन'मित्यादौ षष्ठी; 'द्वितीयान्तं समर्थ'मित्यर्थात्तदर्थान्तर्भावेणैकार्थीभावादुक्तार्थत्वान्न द्वितीयेत्याहुः ।

---

ॐ **वरवर्णिनी** ॐ

प्रत्यासत्तिमाश्रित्य समाधत्ते—**यस्येति** । अदोषमुपपादयति—**अस्येति** । **तुना व्यवच्छेदादिति** । वाक्यभेदस्य सूचनादित्यर्थः । **इदम्**=‘अपदिश’मितिशब्दस्वरूपम् । **तदुपन्यास इति** । **तस्य**—गोस्त्रियो'रितिसूत्रस्योपन्यास इत्यर्थः । **न टजिति** । एतेन—टचि कृते 'यस्येति चे'तिसूत्रेणाकारस्य लोपे ह्रस्वत्वस्य प्रकृते विषय एव नास्तीति 'गोस्त्रियो'रित्यस्य प्रकृते उपन्यासश्चिन्त्यः'—इत्यपास्तम् । **अभाव इति** । हलन्तदिश्शब्दस्य शरदादौ पाठात् ।

इदं व्याख्यानम्मूलोक्तदिशयोर्मध्यमितिविग्रहाभिप्रायेणेति सूचयन्नाह—**अमरेति** । 'क्लीबाव्ययन्त्व-पदिशन्दिशोर्मध्ये विदिक् स्त्रिया'मित्यमरः । **इत्यादिसङ्ग्रह इति** । अस्याङ्कल्पनायाम्प्रमाणन्तु—'नाव्ययीभावा'दितिसूत्रस्थं 'सप्तम्या ऋद्धि नदीसमाससङ्ख्यावयवेभ्यो नित्य'मिति वार्त्तिकमेव । वार्त्तिके 'ऋद्धी'तिपदं लुप्तसप्तम्यन्तम् । ऋद्धिरूपार्थे योऽव्ययीभावस्तस्मात्, नद्यवयवः समासो नदीसमास-स्तस्मात्, सङ्ख्याया—अवयवाः—सङ्ख्यावयवाः सङ्ख्याविशेषास्तेभ्यः—परं यदुत्तरपदन्तदन्तादव्ययीभावा-त्सप्तम्या नित्यमम्भाव इत्यर्थः । **विभक्तीत्यनेनेति** । विभक्तिसञ्ज्ञा यस्य प्रत्ययस्य तस्याव्ययार्थत्वं-नास्तीत्यर्थासङ्गतिपरिहाराय 'विभक्ति' शब्दोत्र लाक्षणिक इति भावः । **अत्र सुबन्तेनेत्यस्येति** । एवञ्चाधिहरि भक्तिरितिशब्दाद्धर्यधिकरणिका भक्तिरिति बोधो भवति । अत्राधिहरिशब्दात्पुनर्न सप्तमी, किन्तु प्रथमेति—स्वीकारेऽपि तादृशः शाब्दबोधो भवति, सप्तम्यर्थस्यान्तर्भावात् । **तदुत्तरेति** । हर्यादि-शब्दोत्तरेत्यर्थः । अत एव=समर्थप्रकृतिकेतिव्याख्यानादेव । अत एव=विभक्त्यर्थान्तर्भावादेव ।

**हरि ङीति** । फलाविशेषेऽप्यन्तरङ्गानपीतिन्यायप्रवृत्तिमभ्युपेत्येदम् । **ङ्यध्योः** समानार्थत्वध्वननाय ङ्युत्तरमेवात्राऽधिशब्दप्रयोगः। **वचनेति** । प्रत्यासत्त्या यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तं तस्य ग्रहणादिति भावः । 'तिङ्कृत्तद्धितसमासै'रिति भाष्यसम्मतपरिगणनाच्च तेनाभिहिते सप्तमीत्यपि बोध्यम् ।

अत एव 'गृहस्योपरी'त्यादौ न समासः । 'उपरी'त्यस्याधिकरणशक्तिप्रधानत्वेऽपि येन सुबन्तेन समासस्तद्घटकविभक्त्यर्थावाचकत्वात् । 'अधिहरि भक्ति'रित्यत्र हर्यधिकरणिका भक्तिरिति बोधः । न च 'प्रतेरुरसः सप्तमीस्था'दितिसूत्रसम्मतसप्तम्यर्थमात्रवृत्तिप्रतिरूपाव्यये चरितार्थस्यास्याधेः शौण्डादिपठितत्वेन परत्वात् 'सप्तमी शौण्डै'रित्यनेन बाधः स्यादिति वाच्यम् , आधेयप्रधानस्यैवाधेस्तत्र पाठात् ।

**विधानसामर्थ्यादिति** । एतच्च रक्षितानुसारेण । वस्तुतो—मध्यार्थक'समया' शब्दयोगे द्वितीयाविधानस्य, दूरार्थकाऽऽराच्छब्दयोगे पञ्चमीविधानस्य च चारितार्थ्यादिदमयुक्तम् । समया—निकषा—ऽऽराच्छब्दा अधिकरणशक्तिप्रधाना इति समीपमात्रवाचित्वाभावान्नैतैः समासः । समीपे इति हि तेषामर्थः, अभक्षन्यायेन विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव तेन समासात् । 'उप'शब्दस्तु तन्मात्रवाची, कृष्णसामीप्यवन्त इति बोधादिति बोध्यम् ।

---

॥ वरवर्णिनी ॥

द्वितीयार्थस्य त्वन्तर्भावो भवत्येवेत्याह—**द्वितीयान्तमिति** ।

ननु समाससञ्ज्ञोत्तरप्राप्तिकलुगपेक्षयाऽन्तरङ्गत्वादितसञ्ज्ञायाः पूर्वम्प्राप्त्या 'हरि ङि अधी'त्यलौकिकविग्रहप्रदर्शनमनुचितमत आह—**फलाविशेष इति** । केचित्तु—समासेऽधिशब्दस्य पूर्वनिपातदर्शनेन तदर्थप्रदर्शकविग्रहेऽप्यधिशब्दस्य पूर्वम्प्रयोग एवोचित इत्यधिहरिङीतिप्रदर्शनमुचितमित्याहुस्तदयुक्तमिति ध्वननायाह—**ङ्यध्योरिति** । वचनसामर्थ्यमुपपादयति—**प्रत्यासत्त्येति** । तद्विभक्त्यैव सुबन्तस्य ग्रहणे यदि प्रकृतेऽधिशब्दाभिहितत्वात्सप्तमी न स्यात्तदा समासविधानमेवानुपपन्नमिति भावः ।

इदं सामर्थ्याभिधानम्प्रायेणेतिप्रागुक्तरीत्या, वस्तुतस्तथा नास्तीत्याह—**तिङ्कृत्तद्धितेति** । अत एव=प्रागुक्तप्रत्यासत्त्यङ्गीकारादेव । **अधिकरणशक्तिप्रधानत्वेऽपीति** । अनेन विभक्त्यर्थवृत्तित्वमुपरीत्यस्याव्ययस्यास्तीति सूचितम् । 'गृहस्योपरी'त्यत्र तु षष्ठ्यन्तेन समासप्रसङ्गस्तद्विभक्त्यर्थवृत्तित्वमुपरीत्यस्य नास्तीति भावः । 'अधिहरी'त्यत्र तत्पुरुषसञ्ज्ञयाऽव्ययीभावसञ्ज्ञाया बाधमाशङ्कते—**न चेति** । अस्य=अव्ययीभावस्य । **आधेयप्रधानस्येति** । एवञ्च सप्तम्यर्थवृत्त्यधिशब्दयोगे तस्य प्राप्तिरेवेति भावः । एतच्च=विधानसामर्थ्योपपादनञ्च । यद्यत्राव्ययीभावः स्यात्तदा समयानिकषाशब्दयोगे द्वितीयायाः, आराच्छब्दयोगे पञ्चम्या विधानाभावेऽपि तद्योगे षष्ठीकृत्वाऽव्ययीभावसञ्ज्ञा कार्या तावतापि रूपसिद्धिर्भविष्यतीति भावः । मध्यार्थकसमयाशब्दयोगे सामीप्यं न प्रतीयते इति तत्र द्वितीयाविधानञ्चरितार्थमित्यन्वयः ।

अत्रान्ये त्वित्यादिना पर्वतीयानामुक्तिर्बालोपलालनमात्रफलैव, तादृशसाहचर्याश्रयणे मानाभावात्, अतिप्रसङ्गाच्च । विस्तरस्त्वभिनवराजलक्ष्म्यान्द्रष्टव्यः । यदि द्वितीयापञ्चमीविधानञ्चरितार्थन्तदा 'समया ग्राम'मित्यादौ कुतो नाव्ययीभाव इत्याशङ्कायामाह—**समयेत्यादि** । **अधिकरणशक्तिप्रधाना इतीति** । 'समया ग्राम'मित्यादेर्ग्रामस्य समीपे इत्यादिरीत्या बोधः। 'उपकृष्ण'मितिशब्दात्तु कृष्णसामीप्यवानित्याकारक एव बोधः । **अभक्षेति** । एवम्प्रयोगो—योऽप एव भक्षयति—तस्मिन्नेव जायते इति तत्र यथाऽवधारण-

**सुमद्रमिति** । वचनग्रहणात्समृद्ध्यादिवाचकत्वेऽव्ययीभावः । 'सुमद्राः' इत्यादौ तु सुशब्दो द्योतकः, समृद्धा मद्रा इति बोधादिति नायमव्ययीभावः । निपातानां वाचकत्वं द्योतकत्वञ्चेत्यत्रैव भाष्ये स्पष्टम् । उपदशादावुपस्य समीपवर्त्तिपदार्थबोधकत्वेन समीपमात्रबोधकत्वाभावान्नाव्ययीभावः । **विगतेति** । ऋद्धेरभाव इति यावत् । 'अर्थाभाव'शब्देन समस्यमानपदार्थाभावस्यैव ग्रहणादत्र तेन न सिद्धिः—तद्ध्वनयन्नाह— **मक्षिकाणामभाव** इत्यादिना । 'अर्थाभाव'शब्देन उत्तरपदार्थाभावस्यैव ग्रहणं, व्याख्यानात् । नञा तु नायं समासः, 'अर्थाभाव'शब्दे नञ उपादानेन सूत्रगृहीताऽव्ययेनैतत्समासाप्राप्तेः । तच्च नञ्सूत्रे उपपादयिष्यते । न चाभावेत्येव सिद्धेऽर्थग्रहणं व्यर्थं ?, प्रतियोगिभूतबहिर्विद्यमानार्थसमानाधिकरणाभाववाचकेनैव समासो यथा स्यादित्येतदर्थं तत्सत्त्वात् । तेनाभावार्थ—निरा शशशृङ्गादिशब्दानामयं न । प्रागभावार्थेन च तेन स न ।

अत एवात्ययग्रहणञ्चरितार्थम् । तदुदाहरणं 'निर्हिमं, 'निःशीत'मिति वृत्त्युक्तमेव युक्तम्, अतेस्तदर्थत्वाभावात्, 'अतिहिम'मित्युक्ते तदतिशयस्यैव प्रतीतेः, 'अत्यय'शब्देऽतेः सूत्रगृहीताव्ययत्वाच्चेति दिक् ।

❀ वरवर्णिनी ❀

गर्भः समासो भवति तथाऽत्रापि विभक्त्यर्थादिमात्रवृत्त्यव्ययस्यैवानेन सूत्रेणाव्ययीभावस्य विधानमिति भावः । अत्र 'विभक्त्यर्थमात्रे'त्युपादानात्—'गृहस्योच्चै'रित्यत्र नाव्ययीभावः । **समृद्ध्यादिवाचकत्व इति** । अत एव 'सुमद्र'मित्यस्य मद्राणां समृद्धिरित्येवं विवरणङ्कृतम्, अव्ययार्थस्य प्राधान्यप्रदर्शनार्थम् ।

**द्योतक इति** । द्योत्यार्थस्य विशेषणत्वम्प्रसिद्धमत एवाह—**समृद्धा मद्रा इतीति** । समस्यमानपदार्थाभावस्य = समस्यमानोत्तरपदार्थप्रतियोगिताकस्य । तदेव दर्शयति—**अर्थाभावेति** । एवञ्च 'दुर्यवन'मित्यादौ यवनपदार्थाभावो न प्रतीयते, किन्तु तदीयऋद्ध्यभाव इति नात्रार्थाभावग्रहणात्समाससिद्धिरतो 'व्यृद्धि'ग्रहणमावश्यकम् । अत एवार्थाभाव इत्यस्योदाहरणं 'मक्षिकाणा'मित्यादिनोपात्तम् । व्याख्यानात् = व्यृद्धिशब्दोपादानमूलकव्याख्यानादित्यर्थः ।

ननु 'घटो न पट' इत्यत्र नञा पटपदस्य समासापत्तिः, पटप्रतियोगिताकाभावस्यैव प्रतीतेरत आह—**नञा त्विति** । नायम्=अव्ययीभावः । **सूत्रगृहीतेति** । अस्य 'तत्तदर्थबोधकपदघटकतये'त्यादिः । 'सूत्रगृहीते'त्यस्य—सूत्रोपात्तेत्यर्थः ।

अभावस्य सप्रतियोगिकत्वनियमाभिप्रायेण शङ्कते—**न चेति** । **प्रतियोगिभूतेति** । प्रतियोगिभूतो यो बहिर्विद्यमानोऽर्थस्तत्समानाधिकरणो योऽभावस्तद्वाचकेनेत्यर्थः । प्रतियोगिसामानाधिकरण्यञ्च—प्रतियोगितावच्छेदकसम्बन्धेन यः प्रतियोगिसम्बन्धी तन्निरूपिताभावीयविशेषणतासम्बन्धावच्छिन्नवृत्तित्वरूपम् । एवञ्च पटभेदस्य प्रतियोगितावच्छेदकसम्बन्धस्तादात्म्यं,—तेन सम्बन्धेन प्रतियोगिसम्बन्धिनि पटे न पटभेदस्तेन सम्बन्धेन वर्त्तते इति न 'निष्पट' इत्यत्र समासः । 'मक्षिकाणामभाव' इत्यत्र तु संयोगसम्बन्धावच्छिन्नाभावः प्रतीयते, स चाऽव्याप्यवृत्तिरतस्तस्य तादृशम्प्रतियोगिसामानाधिकरण्यमस्त्येव । तेन=प्रतियोगिनि बहिर्विद्यमानत्वनिवेशेन । अयम्=अव्ययीभावः । एवञ्च 'निर्घटो' 'निष्पट' इत्यादौ घटादेरत्यन्ताभावस्य तात्पर्यविषयत्वे भवत्येव, भेदस्य तथात्वे तु न भवतीति सिद्धम् । शशशृङ्गशब्दार्थस्तु न बहिर्विद्यमानः । प्रागभावार्थेन च तेन=निरा । न च पटप्रागभावस्य प्रतियोगी

सम्प्रति न युज्यत इति,—वृत्तौ युजिक्रियान्तर्भावेणैकार्थीभावः । 'अतिनिद्र-मासी'दित्यादौ तथाव्यवहारविषयेऽतिनिद्रशब्दस्य लक्षणेति बोध्यम् ।

'शब्दप्रादुर्भावे'त्यस्य शब्दविषयप्रकाशार्थेनाव्ययेन समास इत्यर्थः । **भाष्य-प्रयोगेति** । 'अचः परस्मि'न्निति सूत्रेऽयं प्रयोगः । एतद्भाष्यप्रयोगादेतत्सूत्रे तत्तदर्थबोधक-पदघटकतया गृहीताऽव्ययेन तत्तदर्थकेन नायं समासः ।

अत एव 'यथाऽसादृश्ये' इति सूत्रे 'सादृश्यसम्पत्तीति प्राप्नोती'ति भाष्ये उक्तम् । 'यथा'शब्देन तु भवत्येव, उत्तरसूत्रारम्भादिति भावः ।

ननु नित्यसमासत्वाद्वाक्यं दुर्लभमत आह—**प्रतिशब्दस्येति** । इदं प्राचामनु-रोधेन । वस्तुतः 'प्रतिस्थान'मित्यादौ षत्वाभावसम्पादनेन सा चरितार्था । तस्मात् — 'अर्थमर्थं प्रति प्रत्यर्थ'मिति सरूपसूत्रादिस्थभाष्यप्रयोगात्—यदा द्विर्वचनं तदा प्रतिशब्दस्य वीप्सावृत्तित्वाभावात्समासाप्राप्तया वाक्यं साध्विति तत्त्वम् ।

❀ वरवर्णिनी ❀

पटस्तदधिकरणेषु तन्तुषु पटप्रागभावो वर्त्तत एव पटोत्पत्तिप्राक्क्षणावच्छेदेनेति समासापत्तिर्दुर्वारैवेति वाच्यम्, एकक्षणावच्छेद्यैकाधिकरणवृत्तित्वस्यैवात्र सामानाधिकरण्यपदार्थत्वात् । अत एव=ध्वंसस्यापि तादृशप्रतियोगिसमानाधिकरणत्वविरहादेव ।

मूलोक्तमत्ययोदाहरणन्दूषयति—**तदुदाहरणमिति** । तदनिशयस्य=हिमाधिक्यस्य । युक्त्यन्तरम-प्याह—**अत्ययशब्देऽतेरिति** । 'अतिनिद्र'मित्यत्र तु नास्य निषेधस्य विषयता, युजिक्रियान्तर्भावेण समासाभ्युपगमेन निद्राया अत्ययो ध्वंसो न प्रतीयते किन्तु युजिक्रियायामप्राशस्त्यम् । एवं सत्यतिनि-द्रमितिशब्दान्निद्राकर्तृकवर्त्तमानकालिकयुजिक्रियाऽप्रशस्तेति बोधः । तत्र च वर्त्तमानकालिकत्वस्याप्राशस्त्ये-ऽन्वयः । नन्वेवं वर्त्तमानत्वभूतत्वयोर्विरोधादतिनिद्रमासीदित्यत्राव्ययीभावसमासानुपपत्तिरत आह—**अतिनिद्रमित्यादाविति** । **लक्षणेतीति** । एवञ्चैतादृशव्यवहारविषयकर्तृकस्वक्रियायाम्भूतत्वम्प्रतीयते, तस्य च तादृशाभावनिष्ठवर्त्तमानत्वेन न विरोध इति भावः ।

सूत्रघटक 'शब्दप्रादुर्भाव शब्दार्थमाह—**शब्दप्रादुर्भाव इति** । 'इतिहरी'त्युदाहरणे हरिशब्दः-स्वस्वरूपपरस्तेन षष्ठ्यन्तेन शब्दप्रकाशार्थकेतिशब्दस्य समासः । 'भाष्यप्रयोगा'दिति यन्मूले उपात्त-न्तस्याप्रसिद्धत्वशङ्कां वारयति—**अचः परस्मिन्नितीति** । इदमुपलक्षणम्—'अनेकमन्यपदार्थे' इति सूत्रभाष्ये 'सर्वपश्चा'दितिप्रयोगाच्चेत्यपि बोध्यम् । सति च समासे पश्चाच्छब्दस्य पूर्वनिपातः स्यात् ।

**तत्तदर्थबोधकेति** । यस्मिन्यस्मिन्नर्थे विद्यमानस्याव्ययस्य समास इष्यते तत्तदर्थबोधाभिप्रायेण सूत्रे उपात्तो यः शब्दस्तद्घटकतया गृहीतेन तत्तदर्थकेनाव्ययेन नायं समासः । अत्र 'तत्तदर्थकेने'त्युपादाना-त्सम्प्रत्यर्थबोधाभिप्रायेण कृतस्य वृत्तिकाराद्यभिप्रेतस्यातिहिममित्यादिप्रयोगस्योपपत्तिः । एवमसत्वरूप-पदार्थे 'वैशाखे विहिम'मित्यस्याप्युपपत्तिः । तत्तदर्थबोधकपदघटकत्वञ्च—स्वाविषयकप्रतीतविषयतदर्थ-बोधकपदकत्वम्, इदञ्च यथा—ऽर्थाभावपदघटके नञि वर्त्तते तथा स्वस्मिन्नपीति—पश्चाच्छब्दस्य पश्चादर्थघटक-त्वम् । अत एव=तत्तदर्थबोधकपदघटकतया गृहीतेनेत्यादिकल्पनादेव । 'भाष्यप्रयोगादेव पश्चाच्छब्दस्य न समास' इति तु न युक्तम्, उक्तसूत्रद्वयभाष्यप्रयोगस्थले तदभावकल्पना, 'यथा सादृश्ये' इतिसूत्र-व्याख्यानस्थले त्वशोकवनिकान्यायेन 'यथार्थे' इत्यनुक्त्वा 'सादृश्यसम्पत्ती'त्युक्तमित्यस्य च कल्पनापेक्षया एककल्पनायामेव लाघवमिति भावः । यथाशब्दस्य तु समासस्योपपत्तिमाह—**यथाशब्देन त्विति** ।

वृत्तौ द्विर्वचनन्तु न, समासेन वीप्साया द्योतितत्वादिति 'हयवरट्'सूत्रे **कैयटः**। प्रतिना तस्या उक्तत्वादिति तत्त्वम् । **शक्तिमनतिक्रम्येति** । 'परावरयोगे चे'ति क्त्वा । परावरत्वञ्च—बौद्धम् ।

**हरेः सादृश्यमिति**। 'हरि टा सहे'त्यलौकिकम् । **वक्ष्यमाणेनेति**। अत्र सूत्रालेखो वैचित्र्यार्थः, यथा सूत्रेषूत्तरत्र कृतस्य पूर्वत्रापकर्षणं वैचित्र्याय तद्वत् ।

'अनुज्येष्ठं कार्यं कृतम्', 'अनुज्येष्ठं प्रणमती'त्यादौ करणत्वेनान्वयात्परिनिष्ठित-विभक्त्या समासमभिप्रेत्याह—**ज्येष्ठस्यानुपूर्व्येणेति** । आनुपूर्व्यं—क्रमः । पूर्वं क्रमेणे-त्यनुपूर्वमिति सूत्रगृहीताव्ययेनाप्यनुना सामासः, एतस्मात्सूत्रप्रयोगात् ।

युगपच्छब्देन तु न समासः, सूत्रगृहीतत्वात्। उभयत्रापि स्वार्थे ष्यञ्, तद्बनयन्नाह—**चक्रेण युगपदिति** । **गुणभूते इति**। व्याख्यानात्सादृश्येति स्वार्थे ष्यञिति भावः ।

सम्पत्तिसमृद्ध्योः पर्यायत्वमाशङ्क्याह—**ऋद्धेरिति**। धनधान्यादेरित्यर्थः । अनु-रूपो—योग्य आत्मनः—समस्यमानोत्तरपदस्य भावः—प्रवृत्तिनिमित्तं क्षत्रत्वादिः सम्पत्ति-रित्यर्थः । 'सक्षत्र'मित्यस्य—क्षत्रियाणां योग्यं क्षात्रमित्यर्थः ।

**तृणमपि इति**। साकल्यबोधकाव्ययेन समासः । समासस्य नित्यत्वादस्वपद-विग्रहो दर्शितः । 'तृण टा सहे'त्यलौकिकम् । **अपरित्यज्येति**। 'परावरयोगे चे'ति क्त्वा । तद्योगश्च—बौद्धः । **न त्वत्रेति** । 'तृणेन सह भुङ्क्ते' इतिबोधोत्तरं 'यस्तृणानि भक्षयेत्स कथमन्यत्परित्यजे'दिति प्रतीतेः—सकलं भोज्यमत्तीत्यत्रैव तात्पर्यादिति भावः ।

**अग्निग्रन्थपर्यन्तमिति,**—बहुव्रीहौ द्वितीयान्तं, ग्रन्थोऽन्यपदार्थः । 'अधीत'-

---

❀ वरवर्णिनी ❀

इदम्=कर्मप्रवचनीयसञ्ज्ञाविधानसामर्थ्यकथनम् । तस्याः=वीप्सायाः । **एवञ्च** न वीप्साद्योतनाय द्विर्वचनम् । **बौद्धमिति** । यथा'ऽतिक्रम्य पर्वतं नदी'त्यत्र पर्वतनद्या योगो गम्यते, तथा 'यथाशक्त्यु-त्तरत्र गच्छती'त्यत्र शक्तिसद्भावकालोत्तरदेशगमनकालयोरपि योगो बुद्धिकृतो द्रष्टव्यः । **वैचित्र्यार्थ इति** । तदाह—**यथासूत्रेष्विति** । करणत्वेनान्वयात्=क्रमस्य करणत्वेनान्वयात् । **युगपच्छब्देनेति** । अत एव तत्र 'सचक्र'मित्युक्तम्। एतेन 'युगपच्चारु' इत्यत्राव्ययीभाव इति कस्य चिदुक्तिः प्रत्युक्तेति **मिश्राः**। **व्याख्यानात्**—सादृश्यशब्दोपादानमूलकात् ।

'गुणभूते सादृश्ये' इत्यस्य 'सादृश्ये' इत्यनेन कथं लाभ इत्यत आह—**स्वार्थे इति** । अन्यथा 'पूर्वपदार्थप्रधानोऽव्ययीभाव' इति भाष्यादत्र सादृश्यस्य गुणत्वान्न स्यात् । **क्षत्रम्**=युद्धयूतकर्तृत्वम् । **तद्योगश्चेति** । अदनक्रियाया अपरित्यागेन सहयोग इत्यर्थः । 'पर्यन्त'शब्दोऽन्त्यार्थः, अग्निग्रन्थः पर्यन्तो यस्येत्यर्थस्तदाह—**बहुव्रीहाविति** । तस्मिन् कालेऽध्येयत्वेन परिगृहीतो यावान् ग्रन्थस्तस्याऽग्नि-ग्रन्थोऽन्त्यः, नतु ततः परेणाध्ययनमस्तीति, अत एव सादृश्यात्पृथगुक्तिः। विग्रहसमये—'अधीते' इत्यस्य कथनादध्ययनक्रियायाः समासार्थेऽन्तर्भावात्—'साग्न्यधीते' इति वाक्यानुपपत्तिरिति शङ्कावारणायाह—

इत्यस्य तु न समासेऽन्तभावो–मानाभावात् । अन्त्यत्वं साहित्यञ्च–सहार्थः । अन्त्याग्नि-ग्रन्थसहितमिति बोधः । 'अग्नि–टा–सहे'त्यलौकिकम् । न च 'तदधीते' इत्यणप्रसङ्गो, वैकल्पिकत्वात् ।

**यथाऽसा** । 'असादृश्ये' इति च्छेदः,–तत्रैव वर्त्तमान इत्यर्थः । **तथा हर इति** । तथाशब्दस्य सादृश्यार्थकत्वेऽपि न समासः, 'सदृश' इत्युक्तेर्नियमेन प्रतियोग्याकाङ्क्षा-दर्शनात्सादृश्यप्रतियोगिवाचकेनैव तद्बोधकाऽव्ययस्य समासात् ।

**द्योतयतीति** । सामान्यस्य भेदको यो विशेषस्तद्रूपं प्रकार थालिति–'यद्विशेषवान् हरिस्तद्विशेषवदभिन्नो हर' इति बोधे–यत्तच्छब्दाभ्यां तयोरेकत्वावगमेऽर्थादुपमानत्वप्रतीते-रिति भावः । सूत्रेऽपि सादृश्यशब्देनोपमानत्वमेव । थाल्सूत्रे सादृश्यस्य प्रकारशब्देन ग्रहणे–'यत्सादृश्यवान्हरिस्तत्सादृश्यवान्हर' इत्येव बोधः–स्यान्न तु 'हरिसदृशो हर' इति ।

ॐ विजया ॐ

कैयटादिरीत्या व्याचष्ट–**असादृश्य इति** । सूत्रे'असादृश्ये'इति पर्युदासः' इत्यभिप्रायेणाह–**तत्रैवेति** । असादृश्ये एवेत्यर्थः । एवञ्च 'यथाहरि'रित्यादौ यथार्थतयाऽव्ययं विभक्तीत्यादिना समासे प्राप्ते नियमार्थमिदम्–'असादृश्ये एव यथाशब्दः समस्यते नान्यत्रे'ति–इति प्राचामाशयः । न समासः= 'हर'शब्देन 'तथा' शब्दस्य–'अव्ययं विभक्ती'ति न समासः । **प्रतियोगीति** । प्रकृते हरस्तु सादृश्या-नुयोगीति न तथेति भावः । तद्बोधकाव्ययस्य=सादृश्यबोधकाव्ययस्य यथेत्यादेः । इतीत्यस्य— 'इत्यर्थक–'प्रकारवचने था'लिति–विहितथालन्त–यथा–तथेतिशब्दघटितनिरुक्तवाक्या'दिति शेषः । तयोः=हरिहरगतनिरुक्तविशेषधर्मयोः । सूत्रेऽपि='यथाऽसादृश्ये' इत्यत्रापि । **थाल्सूत्रे**='प्रकारवचने था'लित्यत्र । **इति**="—इत्यतः 'प्रकारवचने था'लित्यत्र प्रकारशब्देन उपमानत्वमेव ग्राह्यमिति प्राञ्चः—"इति शेषः ।

ॐ वरवर्णिनी ॐ

**अधीत इत्यस्येति** । नन्वध्ययनक्रियाया अनन्तर्भावे 'तदधीते' इत्यणप्रसङ्ग इत्यभिप्रायेण शङ्कते— **न चेति** । 'तथा'शब्दस्यापि सादृश्ये वृत्त्या तेन सह समासापत्तिं वारयति—**तथाशब्दस्येति** । **प्रतियोगिवाचकेनेति** । प्रतियोगितासम्बन्धेन सादृश्यान्वयिवाचकेनेत्यर्थः । तथाशब्दार्थसादृश्यस्य तु 'तथा हर' इत्यत्रानुयोगितासम्बन्धेन हरेऽन्वयः । एतादृशकल्पनायां हेतुमाह—**सादृश्य इत्युक्त इति** ।

मूले 'द्योतयती'त्युपात्तं न तु 'शक्त्या प्रतिपादयती'त्युक्तं, तद्बीजमाह—**सामान्यस्येति** । यद्यपि भाष्ये 'यथाशब्दः सादृश्ये वर्त्तते' इत्युक्तन्तथापि तत्र 'द्योतनये'ति शेषो बोध्यः । 'सामान्यस्ये'-त्यस्यैकबुद्धिविषयत्वेन गृहीतस्येत्यर्थः । भेदकः=सादृश्यस्य प्रायेण भेदनियतत्वाद्भेदबुद्धिसम्पादकः ।

**वदभिन्न इति** । उपमानोपमेययोरभेदान्वयबोधो व्युत्पत्तिसिद्ध एव, अत एव 'मृगचपले'त्यत्र पुंवद्भावसिद्धिः । ननूभयत्रैकस्य विशेषधर्मस्याधिकरणत्वप्रतीतावपि नोपमानोपमेयभावप्रतीतिरत आह— **यत्तच्छब्दाभ्यामिति** । तयोः=विशेषधर्मयोः ।

ननु 'असादृश्ये' इतिपदस्य सादृश्ये नेत्यर्थः कृतः, एवञ्च 'यथा हरिस्तथा हर' इत्यत्र हरेः सादृश्य-न्द्योतयती'ति वक्तव्ये 'उपमानत्वन्द्योतयती'त्यनुपपन्नमत आह—**सूत्रेऽपीति** । थाल्सूत्रे 'सामान्यस्य भेदको यो धर्मस्तद्रूप' इत्युक्तन्न तु 'थालर्थः सादृश्यं प्रकृतबोधे प्रकार' इत्युक्तम्, अत्र किम्बीजमित्यत्र नियामकमाह—**थाल्सूत्र इत्यादि** । ग्रहणे=ग्रहणमिति स्वीकारे तु ।

**भाष्यानुसारिणस्तु**—'यथाऽसादृश्ये' इत्यस्य—'यथाशब्दः सुबन्तेन समस्यते, सादृश्ये द्योत्ये ने'त्यर्थः। 'यथाशक्ति' 'यथाबल'मित्याद्युदाहरणम्।

अत एव भाष्ये—'असादृश्ये इति किमर्थं ? यथा देवदत्तस्तथा यज्ञदत्तः'—इत्युक्तं, न तु 'सूत्रमेव किमर्थं'मित्युक्तम्। यथार्थत्वेन तु न सिद्धिः, सूत्रगृहीताऽव्ययेन तेनाऽसमासात्।—अत्र चेदमपि ज्ञापकम्।

न च प्रकारवचने थाला निष्पन्नस्य 'यथा'—शब्दस्य सर्वथा सादृश्यद्योतकत्वेन सूत्रोदाहरणासम्भव इति सूत्रं व्यर्थमिति वाच्यम्, अत्र सूत्रे—अव्युत्पन्नस्य वीप्सा—योग्यता—पदार्थानतिवृत्ति—बोधकस्यैव ग्रहणेनाऽदोषात्। 'यथाशक्ती'त्युदाहरणे तदर्थक एव सः।

**यद्यपि**—

'यथाशब्द उपमानत्वं द्योतयती'ति—सकलाभियुक्तोक्तेर्यद्विशेषवानित्यादिप्रागुक्त-

ॐ **विजया** ॐ

'यथाऽसादृश्ये' इति न नियमः, नापि—'असादृश्ये' इति प्रसज्यप्रतिषेधः, किन्तु 'यथे'त्यंशो विधिः, 'असादृश्ये' इति च प्रसज्यप्रतिषेधः' इति स्वमतमुपन्यस्यति—**भाष्येति**। उदाहरणं-'यथे'त्यस्य। अत एव=यथेत्यस्य विधायकत्वादेव। **इत्युक्तमिति**। इति=इत्यत्र—असादृश्ये किमित्येवाशङ्कितं, नतु सूत्रवैयर्थ्यमाशङ्कितमित्यर्थः। 'असादृश्ये' इत्यस्य पर्युदासत्वेन तस्य सूत्रस्य नियमार्थत्वे तु—'यथाऽसादृश्ये इति सूत्रङ्किमर्थं'मित्येवाशङ्कितं स्यात्। अतो—'यथे'त्ययं विधिः, 'असादृश्ये' इति च प्रसज्यप्रतिषेधेन पूर्वप्राप्तनिषेधार्थमिति लब्धमिति—श्रीनागेशभट्टानामाकूतम्।

ननु 'यथे'त्यस्य विधायकत्वे न फलं, 'यथाशक्ती'त्यादाव 'व्ययं विभक्ती'त्यनेनैव यथार्थतया समासस्य सिद्धत्वादित्यत आह—**यथार्थत्वेनेति**। सिद्धिः='यथाबलं' 'यथाशक्ती'त्यादीनां 'यथे'ति सूत्रफलभूतानां सिद्धिः। सूत्रगृहीताव्ययेन=अव्ययं विभक्तीत्यादिसूत्रोपात्तेन यथेत्यादिना। तेन=अव्ययमित्यादिना। अत्र = सूत्रगृहीताव्ययेन तेनाऽसमास इत्यत्र। इदं='यथाऽसादृश्ये' इति सूत्रम्। सर्वथा = सर्वत्र सर्वदा। **व्यर्थमिति**। असादृश्ये यथाशब्दस्य सर्वथा प्रयोगासम्भवेन 'यथे'त्यंशस्योदाहरणानामेवासम्भवः, 'असादृश्ये' इत्यनेन निषेधादिति—सूत्रमेव व्यर्थमिति भावः। **अव्युत्पन्नस्य**—यथाशब्दस्य। तदर्थकः = पदार्थानतिवृत्त्याद्यर्थकः। सः=यथाशब्दः। एवञ्च

ॐ **वरवर्णिनी** ॐ

सिद्धान्तमाह—**भाष्यानुसारिणस्त्विति**। 'यथाशक्ति' 'यथाबल'मित्यस्य शक्तिमनतिक्रम्य इत्याद्यर्थः। अत एव=उक्तार्थस्याभिप्रेतत्वादेव। ['यथे'त्यंशस्य विधायकत्वादेवेत्यर्थः।] 'यथाऽसादृश्ये' इत्यस्य नियामकत्वाभावादेवेति यावत्। पदार्थानतिवृत्त्यादौ समासार्थं यथेत्यंशस्यावश्यकत्वमित्याशयेन सम्पूर्णसूत्रस्य वैयर्थ्यशङ्का न कृतेत्यभिप्रायः।

ननु पूर्वसूत्रेणैव समासे सिद्धेऽस्य सूत्रस्य वैयर्थ्यमत आह—**यथार्थत्वेनेति**। यथेत्यस्य सूत्रगृहीताव्ययत्वं यथार्थशब्दघटकत्वात्। इदमपि=एतत्सूत्रकरणमपि। उक्तार्थानभिज्ञः शङ्कते—**न चेति**। उक्ताशयं प्रकटयति—**अत्र सूत्र इत्यादि**। 'यथाऽसादृश्ये' इत्यत्र। **तदर्थक एव स इति**। पदार्थानतिवृत्तिबोधको यथाशब्दः, परिशेषादित्यर्थः। असादृश्यग्रहणं व्यर्थमिति शङ्कापरिहारायाह—**यद्यपीत्यादि**। 'द्योतयती'त्यस्य द्योतनया प्रतिपादयतीत्यर्थः। द्योतना च व्यञ्जनैव,

बोधोत्तरम्—'उपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्तः—' इति बोधः। गृहीत-विशेष-धर्म एव च साधारणधर्मः। लक्षणामूलकव्यञ्जनाजन्यबोधस्थले इवोभयोः शाब्दत्वं सुवचम्। अत एवोपमानोपमेययोः समानविभक्तिकत्वसिद्धिः। एवञ्च पूर्वपदार्थप्राधान्याभावेन नात्राव्ययीभावप्रसक्तिः,—

—तथापि—

—प्रसिद्धत्वात्प्रकारवचनस्यैवात्र ग्रहणे तत्सामर्थ्यात्—'द्विमुनी'त्यादाविव तदभावेऽपि समासः स्यात्—अतो'ऽसादृश्ये' इति सूत्रे कृतम्। तत्र कृते तु तद्भिन्नस्य-अव्युत्पन्नस्यैवात्र सूत्रे ग्रहणम्।

न च 'यथाबल'मित्याद्युदाहरणे प्रकारवाचिथाल्न्तस्यैव ग्रहणमस्तु, 'सादृश्य-सम्पत्ती'त्यनेन च समासोऽस्तु, इदं सूत्रञ्च मास्तु, पूर्वसूत्रे यथाग्रहणञ्च

❀ विजया ❀

'यथाबल'मित्यादिस्थले यथाशब्दस्य सादृश्यार्थद्योतकत्वाभावादुदाहरणमम्भव इति न सूत्रवैयर्थ्य-मित्याशयः। तदर्थक एव स इति। प्रत्युदाहरणे'यथा हरिस्तथा हर'इत्यादौ च थाल्न्त उपमान-द्योतक इत्यपि बोध्यम्। उपमानोपमेयभावस्थले साधारणधर्मावश्यकत्वादाह—गृहीतेति। गृहीतो यो विशेषरूपो धर्मः स एव-साधारणधर्मः=उपमानोपमेय-हरिहरगतो—धर्म इत्यर्थः। यथा चन्द्रमुखयोराह्लादकत्वं साधारणो धर्मस्तथात्र विशेषधर्मस्तथेति भावः। उभयोः= विशेषबोधस्य, 'तदभिन्न'इत्याद्युत्तरबोधस्य च। शाब्दत्वमिति। तेनोत्तरस्याऽनुमानत्वनिरासः। अत्र='यथा हरिस्तथा हर' इत्यत्र। एवञ्च 'यथे'त्येव सूत्र्यताम्, 'असादृश्ये' इति मास्त्वित्याशयः। प्रकारवचनस्य=थाल्न्तस्य। अत्र=यथेतिसूत्रे। तत्सामर्थ्यात्=सूत्रारम्भसामर्थ्यात्। तदभावेऽपि=पूर्वपदार्थप्राधान्याभावेऽपि। समासः='यथा हरिस्तथा हर' इत्यत्राव्ययीभावसमासः। तत्र='असादृश्ये' इत्येतस्मिन्। तद्भिन्नस्य=थाल्न्तभिन्नस्य। अत्र='यथे'ति सूत्रे। उदाहरणे= 'यथे'त्यस्योदाहरणे।

थाल्न्तस्यैवेति। एवेन—अव्युत्पन्ननिरासः। समासः='यथाबल'मित्यादिसमासः। इदं सूत्रमिति। 'यथा हरिस्तथे'त्यादौ च पूर्वपदार्थप्राधान्याभावादेवाऽव्ययीभावो न प्राप्नोति,'यथाबल'

❀ वरवर्णिनी ❀

तयोपस्थापितार्थस्य शब्दबोधविषयत्वं भवत्येव, तदाह—उपमानदेवदत्ताभिन्न इति। लक्षणामूलव्यञ्जनास्थल इवेति। यथा—

'सोहेन्ती सखि! सुहअं खणे-खणे दुम्मिआसि मज्झकए।
सब्भाअ-णेह-करणिज्ज-सरिसअं दाव विरचिअं तुमए॥'

अत्रोपनायकसमीपे प्रेषिता या दूती सा तं नायकमुपभोगेन निवृत्तेच्छं कृत्वा पुनर्नायिकाया निकटे समागत्य 'स नायाती'त्युक्त्वा विरता। तत उपभोगचिह्नेन तं वृत्तान्तं ज्ञात्वा तां दूतीम्प्रति नायिकाया उक्तिरियम्। 'मम प्रियं रमयन्त्या त्वया शत्रुत्वमाचरित'मिति लक्ष्यते। तेन कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्। तत्र यथा व्यञ्जना न लक्षणया गतार्था तथाऽत्रापि व्यञ्जना न गतार्थेत्याशयः। अत एव=उपमानोपमेययोरभेदाऽन्वयादेव। पूर्वपदार्थप्राधान्याभावः=पूर्व-पदार्थत्वेनाभिप्रेतो यो यथाशब्दार्थस्तत्प्राधान्याभावः। अत्र='यथा हरिस्तथाहर' इत्यत्र। प्रसिद्धत्वात्=

१ 'साधयन्ती सखि! सुभगं क्षणे-क्षणे दूनासि मम कृते।
सद्भावस्नेहकरणीयसदृशन्तावद्विरचितन्त्वया॥' इतिच्छाया॥

मास्त्विति वाच्यम् , एतत्सूत्रारम्भसामर्थ्येन तत्र तदप्रयोगात् । तत्रार्थे साधोरन्यत्रार्थेऽसाधुत्वापत्तेश्च ।

इदमेव सूत्रम्—अव्युत्पन्नस्य तदर्थकस्य यथाशब्दस्य सत्त्वे मानम् । तथा च भाष्य—'असादृश्ये' इत्युच्यते, तत्रेदं न सिद्ध्यति—'यथाशक्ति' 'यथाबलम्'—प्रकारे यस्थाल् तदन्तस्य सादृश्य एव वृत्तेः'-इत्याशङ्क्य वीप्सादिवाचिनोऽत्र सूत्रे, 'यथाबल' मित्युदाहरणे च ग्रहणमित्यर्थकोक्त्यनन्तरम्-'अथ यः प्रकारवचने थाल् तदन्तस्य ग्रहणं कस्मान्न भवति ? पूर्वेण प्राप्नोति 'सादृश्यसम्पत्ती'ति—' इति पूर्वपक्षिणोक्ते—'प्रतिषेधवचनसामर्थ्यान्न भविष्यती'त्युत्तरितम् । न—'अनेन भाष्येण प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणं शङ्क्यते' इति वक्तुं युक्तम्, 'असादृश्ये' इत्यस्य सूत्रे श्रवणात् । यद्यपि 'तद्विस्मरणेनायं पूर्वपक्ष' इत्यपि वक्तुं शक्यम्, तथापि 'पूर्वेण प्राप्नोती'त्यादेरसङ्गतिः । तस्मात्—'उदाहरणे थालन्तस्य ग्रहणं, तत्र सादृश्यार्थकेन समासं कृत्वाऽन्यत्रार्थे प्रयोगे बाधकाभावः' इत्यभिमानेन, 'अर्थघटितं साधुत्व'मित्यजानतः—अव्युत्पन्नसत्त्वे मानञ्चापश्यतः—शङ्केयमिति युक्तम् ।

---

❀ विजया ❀

मित्यत्र च सादृश्यसम्पत्तीत्येव सिद्धमिति—यथाऽसादृश्ये' इति सकलं सूत्रं मास्त्वित्याशयः । पूर्वसूत्रे='अव्ययं विभक्ती'त्यत्र । मास्त्विति । एवञ्च सूत्रगृहीताव्ययत्वाभावाद्यथाबलमित्यादौ पूर्वेणैव समासो भविष्यतीति 'यथे'तिविधिसूत्रं नावश्यकं, पूर्वपदार्थप्राधान्याभावाच्च 'यथाहरि' रित्यादौ न समास इत्याशयः । तत्र = यथाबलमित्यादौ । तदप्रयोगात्=प्रकारवाचिथालन्तस्याप्रयोगात् । तत्रार्थे=प्रकारार्थे । अन्यत्रार्थे = पदार्थानतिवृत्तिवीप्सादौ । 'साधो'रित्यस्य—'थाल' इतिशेषः । बाधकाभाव इति । एवञ्च प्रकृतसूत्रं किमर्थमिति शङ्कोपपद्यते ।

---

❀ वरवर्णिनी ❀

सादृश्ये प्रसिद्धत्वात् । अत्र='यथे'त्यत्र । तत्सामर्थ्यात्='यथे'ति समासविधानसामर्थ्यात् । तदभावेपि= पूर्वपदार्थप्राधान्याभावेऽपि ।

अत्र—प्रकारवचने थालन्तस्य साधुत्वान्वाख्यानेऽपि—कुशलशब्दस्य प्रवीण इव पदार्थानतिवृत्त्यादिष्वपि प्रयोगो भविष्यत्येवेति न दोष इत्यभिप्रायेणाशङ्कते—न चेति । सादृश्यसम्पत्तीत्यनेन चेति । तस्य सादृश्येऽपि वृत्तेर्दर्शनादिति भावः । तत्र=यथाबलमित्यादौ । तदप्रयोगात्=पदार्थानतिवृत्तिबोधकस्याप्रयोगात् । तत्रार्थे= प्रकाररूपेऽर्थे । साधोः=यथाशब्दस्य । एवञ्चाऽव्युत्पन्न—'यथा' शब्दस्यैव समासविधायकमिदं सूत्रमिति भावः ।

अत्र मानमाह—इदमेवेति । अतदर्थकस्य=असादृश्यार्थकस्य । इत्यर्थकोक्त्येति । एवं हि तत्र भाष्यम्—'असादृश्ये इति किमर्थं ?—'यथा देवदत्तस्तथा यज्ञदत्तः', असादृश्ये इत्युच्यते तत्रेदं न सिध्यति—'यथाशक्ति' 'यथाबल'मिति । किङ्कारणम् ? यथेत्ययम्प्रकारवचने थाल्, स च सादृश्ये वर्त्तते । नैष दोषः—अयं यथाशब्दोऽस्त्येवाव्युत्पन्नं प्रातिपदिकं—वीप्सावाचि, अस्ति (च) प्रकारवचने थाल्, तत्र यदव्युत्पन्नं वीप्सावाचि तस्येदङ्ग्रहणम्—, इति । 'अत्र' वीप्साग्रहणमुपलक्षणं, तेन योग्यतापदार्थानतिवृत्ती अपि यथार्थौ' इति कैयटः । 'अथ यः प्रकारवचने थाल् तस्य ग्रहणङ्कस्मान्न भवति ? पूर्वेण प्राप्नोति' प्रतिषेधवचनसामर्थ्यान्न भविष्यती'ति [ च भाष्यम् , ] । एतद्भाष्ये'ऽसादृश्ये वर्त्तते—'इत्यस्योपमानोपमेयत्वद्योतक इत्यर्थः । 'इदङ्ग्रहण'मित्यस्यैतत्सूत्रीयमित्यर्थः । तद्विस्मरणेन='असादृश्ये' इत्यस्य विस्मरणेन । असङ्गतिरिति । तद्विस्मरणे पूर्वेण प्राप्तिशङ्काया एवाभावः स्यादिति भावः । तद्भाष्ययोजनायाह—तस्मादिति ।

'प्रतिषेधवचने'त्यस्य प्रतिषेधयुक्तैतद्वचनसामर्थ्यादित्यर्थः । एवञ्चाव्युत्पन्नत्वपक्षे अर्थघटितं साधुत्वमित्यत्र चैतदेव मानमिति भावः ।

यत्तु 'प्रतिषेधे'ति प्रतीकमुपादाय—'यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे, सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्ये'ति-कैयटः, तन्न; सूत्रगृहीताव्ययेन तेन सूत्रेणाऽसमासात्, नियमत्वापेक्षयैतदर्थज्ञापकत्वस्यैवोचितत्वात् । तत्र सूत्रे यथार्थशब्देन सादृश्याऽग्रहणाच्च । अत एव तत्र सूत्रे सादृश्यग्रहणं चरितार्थम् । अत एव भगवता 'सादृश्यसम्पत्तीति प्राप्नोती'त्युक्तम् । न च सादृश्यग्रहणं गुणभूतसादृश्यग्रहणार्थं; लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्त्योभयत्रापि तेन सिद्धेः,—यथा योग्यताया यथार्थत्वेऽपि रूपस्य योग्यम्—'अनुरूप'मित्यादौ तद्वदर्थकेनापि समासस्तद्वत् ।

पूर्वसूत्रे यथार्थग्रहणं तदर्थकान्याव्ययग्रहणार्थम्, एवञ्च 'यथाशक्ती'ति—एतदुदाहरणमेवेति—भाष्ये स्पष्टम् ।

वीप्सादावपि यथाशब्देन समासो भवत्येव, 'यदव्युत्पन्नं वीप्सावाचि तस्येदं

❀ विजया ❀

**प्रतिषेधेति** । 'असादृश्ये'इतिप्रतिषेधघटित'यथे'तिवचनसामर्थ्यादित्यर्थः ।

परे तु—'यथाऽसादृश्ये' इत्यत्र 'यथे'ति न विधायकम्, 'असादृश्ये' इति च पर्युदास एव, नियमार्थमेवेदं सूत्रम् । 'असादृश्ये'इतिकिमर्थं ? 'यथा देवदत्तस्तथा यज्ञदत्त'इतिभाष्यस्य च सकलं सूत्रमेव किमर्थमित्यत्रैव तात्पर्यं, तच्च भाष्यरहस्यविदां स्पष्टमेव, एकदेशद्वारा समुदाय एव प्रश्नस्य विश्रान्तेर्वक्तुं शक्यत्वात् । एतत्सूत्रारम्भसामर्थ्येन 'सूत्रगृहीताव्ययेन न समास' इत्येवं कल्पनापेक्षयाऽस्य नियामकत्वस्यैव युक्तत्वात् । अत एव 'ततः पश्चा'दित्यादिभाष्यप्रयोगोऽपि सङ्गच्छते । थाल्सूत्रे च सादृश्यमेव प्रकारशब्दार्थः, 'यथेत्ययं प्रकारवचने थाल् स च सादृश्ये वर्तते' इति भाष्याक्षरस्वारस्यानुगुण्यात् । 'यत्सादृश्यवान् हरिस्तत्सादृश्यवान् हर' इत्येवं प्राथमिकबोधानन्तरं 'हरिसदृशो हर'इति पार्यन्तिकबोधोदये बाधकाभावेन हरिसादृश्यस्य हरे लाभात् । एवञ्च कैयटोक्तमेव युक्तमिति प्राहुः । विस्तरस्त्वस्मत्तातपादैर्विरचितायां शब्देन्दुशेखरत्रिपुरसुन्दर्यां द्रष्टव्यः ।

❀ वरवर्णिनी ❀

**कैयट इति** । 'सूत्रगृहीते'त्यादेस्तेनानङ्गीकारात् । परन्तु पूर्वोक्तरीत्या तथा कल्पनमावश्यकमित्याशयेनाह—**सूत्रगृहीतेति** । अन्यकृतं व्याख्यानं यथाकथञ्चित्सम्भवदुक्तिकमप्यसङ्गतमित्याशयेनाह—**नियमत्वापेक्षयेति** । विधिनियमसम्भवे विधिरेव ज्यायान् । विशेषमाह—**तत्र सूत्र इति** । अव्ययमिति सूत्रे । अत एव=सादृश्यग्रहणादेव । **इत्युक्तमिति** । 'न तु यथार्थत्वात्प्राप्नोती'त्युक्त'मिति शेषः । मूलोक्तमनूद्य दूषयति—**न चेति** । **अन्याव्ययग्रहणार्थमिति** । तेन रूपस्य योग्यमनुरूपमित्यस्य सिद्धिः । **वीप्सादावपीति** । अत्रादिना

ग्रहण'मिति भाष्यात् । एवञ्च स्पष्टमेवोक्रमोपसंहाराभ्यामस्य सूत्रस्य विधित्वं भाष्याल्लभ्यते । अत्र सूत्रे यथाशब्देन यथार्थस्य न ग्रहणं, मानाभावात्, पूर्वसूत्रे तु वचनग्रहणात्तथा, 'विभक्ति'शब्देनेवेत्याहुः ।

**यावदव** । सङ्ख्यादिनैयत्तापरिच्छेदोऽवधारणं, तद्बोधकं 'याव'दित्यव्ययं समस्यते इत्यर्थः । अवधारणे किं ? 'यावद्दत्तं तावद्भुक्तम्' ।–कियद्भुक्तमिति नावधारयामीत्यर्थः ।

**सुप्प्रतिना** । मात्राशब्दोऽल्पपर्यायः । पुनः सुब्ग्रहणम्–अव्ययनिवृत्त्यर्थम् । अन्यथा 'दोषामन्यमहः'इत्यादौ दोषादीनां वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययेनैव समासः स्यात् । **वृक्षं प्रतीति**,–लक्षणे प्रतिः । कर्मप्रवचनीयत्वन्तु प्रतेः 'गतिर्गता'विति निघाताभावायेत्याहुः ।

**अक्षशला** । 'समस्यन्ते' इति शेषः । **पराजय एवेति** । पञ्चिका नाम द्यूतं–पञ्चभिः कपर्दैर्भवति, तत्र यदि सर्वे उत्ताना अवाञ्चो वा पतन्ति, तदा पातयिता जयति, अन्यथा जीयते । विपरीतवर्त्तने कर्तृत्वेनाक्षादेस्तृतीया । वृत्तौ परेस्तदर्थः । 'अक्ष-ङस्-परी'त्यलौकिकम् । नित्यसमासत्वादस्वपदविग्रहः । वैपरीत्यञ्च जयापेक्षयेति भावः । **अक्षेणेति** । अक्षाभ्यां विपरीतं वृत्तमित्याद्यर्थे न समासोऽनभिधानात् । अक्षत्वेनैकाक्षबोधे एवास्य साधुत्वं, न तु तेन रूपेणानेकाक्षबोधे । एकत्वादिना बोधस्तु वृत्तौ नास्त्येवेति भाष्ये स्पष्टम् ।

---

ॐ वरवर्णिनी ॐ

योग्यतापरिग्रहः । वीप्सायामुदाहरणं–'यथास्व'मिति प्रसिद्धमेव । योग्यतायामुदाहरणन्तु 'यथास्वरूपन्दक्षिणादान'मित्यत्र ज्ञेयम् । नन्वस्मिन्नपि सूत्रे यथार्थे विद्यमानं यदव्ययमितिव्याख्यानङ्कुतो नेत्याशङ्क्याह—**अत्र सूत्र इति** ।

**अव्ययमिति** । अनव्ययावच्छब्दव्यावृत्तये अव्ययग्रहणानुवृत्तेः—अव्ययस्य समासः । यावन्तः श्लोका इति वतुबन्तेनानव्ययेनास्वपदविग्रहः । अन्यत्राप्ययमव्ययसञ्ज्ञको दृष्टः । 'यावदमत्रं ब्राह्मणानामन्त्रयस्वे'त्यत्र यथा । **अव्ययनिवृत्त्यर्थमिति** । पूर्वसूत्रे तु तदनुवृत्तिरस्त्येव । **तादृशाव्ययेनेति** । 'तद्गताल्पत्वतात्पर्येण यत्र प्रयोगस्तत्रे'ति शेषः । ननु'वृक्षम्प्रती'त्यत्र समासे कर्मप्रवचनीयसञ्ज्ञाविधानं व्यर्थमत आह–**कर्मप्रेति** । तदर्थः=विपरीतवर्त्तनमर्थः । 'मूलोक्तोदाहरणे'इति शेषः । जीयते=पराजितो भवति । लौकिकविग्रहे 'वृत्त'मिति क्रियावाचकशब्दसत्त्वात्तृतीयान्तमुक्तं, समासे तदभावादाह–**अक्ष ङसिति** । **एवास्य साधुत्वमिति** । "अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् । कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ।" इतिवार्त्तिकसंवादात् । [ पूर्वोक्तस्य = पूर्ववृत्तस्य । धातूनामनेकार्थत्वाद्वचिरिह वर्त्तने । यथा न तत्=तद्वर्त्तनं यथा पूर्वं वृत्तन्न तथा चेदित्यर्थः । स्पष्टप्रतिपत्त्यर्थमेतस्यैव विवरणम्भाष्ये कृतम्—'यथाद्योतने'ति । ] अयथाशब्दो वैपरीत्ये=विपरीतत्वद्योतने, पराजयद्योतने इति यावत् । **वृत्तौ नास्त्येवेति** ।

**विभाषा** । **यद्यपि**–एकार्थीभावे समासस्य, व्यपेक्षायां वाक्यस्य च सिद्धेरिदं व्यर्थम्, एकार्थीभावे एव समाससञ्ज्ञादिविकल्पस्तु नेष्यते । एवं–समासनिषेधसूत्राणि, 'नित्यं क्रीडे'त्यत्र नित्यग्रहणञ्च व्यर्थं, निषेधविषये एकार्थीभावाभावेन समासाप्राप्तेः, नित्याधिकाराविषयेऽस्याभावेन वाक्याप्राप्तेश्च;–**तथापि**–लक्षणैकचक्षुष्कान् मन्दान् प्रति क्वैकार्थीभावो नित्यः ?, क पाक्षिकः ?, क नास्त्येवेत्यर्थबोधनार्थं सर्वमावश्यकम् । ध्वनितं चेदं 'समर्थाना'मिति सूत्रे भाष्ये ।

लक्ष्यैकचक्षुष्कं प्रति–'समर्थः' इति सूत्रे भाष्ये तत्प्रत्याख्यातम् । एवञ्च विशेषणीभूतैकार्थीभावस्य विकल्पादिबोधकानीमानि । अत एव 'पारेमध्ये' इति सूत्रे भाष्ये–'एकया वृत्तिर्विभाषा, परया वृत्तिविषयेऽनित्योऽपवादः' इत्युक्तम् । तत्र वृत्तिः–एकार्थीभावः ।

**एतत्सामर्थ्यादिति** । अत्रैतत्करणात्प्राक्तदसम्बन्धेन तद्विषये एकार्थीभावस्य नित्यत्वमिति भावः । नन्वेवं 'सुप्सुपे'त्यस्यापि नित्यतापत्तिः, एवञ्च भाष्ये 'सुप्सुपे' त्युदाहरणभूते 'विस्पष्टपटु'रित्यत्र विस्पष्टं पटुरिति विग्रहप्रदर्शनासङ्गतिरत आह–**सुप्सुपेति त्विति** । एतत्समासानुवादेनैवाव्ययीभावादिसञ्ज्ञाविधानेन सिद्धे पुनस्तैः समाससञ्ज्ञाविधानं तदनित्यत्वज्ञापकम् । 'उपपदमतिङ्' 'कर्तृकरणे कृता' 'आख्यातमाख्यातेने'त्यादावुद्देश्याप्रसिद्ध्या 'अनेकमन्यपदार्थे' इत्यादौ त्र्यादिपदघटितसमासस्योद्देश्याप्रसिद्ध्या तेषु समाससञ्ज्ञाविधानस्यावश्यकत्वेनार्थाधिकारानुरोधात्सर्वत्र तस्य विधेयसमर्पकत्वम् । प्रथमानिर्दिष्ट'मितिसूत्रे 'समासे' इत्यस्य समासत्वव्याप्यसञ्ज्ञाविधायके लक्षणयाऽव्ययादीनामुपसर्जनत्वं साधयितुं शक्यमिति न तदर्थं समाससञ्ज्ञाविधानं चरितार्थमिति भावः । विग्रहप्रदर्शनपरोक्तभाष्यादपि तस्यानित्यत्वं बोध्यम् ।

---

ॐ वरवर्णिनी ॐ

'अस्य द्योतकाभाव'इति शेषः । तेन 'कुमार्यगारं' 'वध्वगारं' 'यौष्माकीण' 'तावकीन'इत्यादौ सङ्ख्यावगमसत्त्वेऽपि न क्षतिः ।

**नेष्यत इति** । 'न च सञ्ज्ञाया भावाभावाविष्येते' इतिभाष्यविरोधात्–न त्वेकार्थीभावे सञ्ज्ञाया अभाव इत्यर्थः । **ध्वनितञ्चेदमिति** । 'इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च, तत्र स्वभावतश्चैतद्भवति वाक्यञ्च वृत्तिश्चे'त्यनेनोक्तसूत्रस्थभाष्येण ध्वनितमित्यर्थः । तत्प्रत्याख्यानम्=विभाषाऽधिकारस्य प्रत्याख्यानम् । अत एव=एकार्थीभावविकल्पबोधकत्वादेव । एतत्करणात्='विभाषे'तिसूत्रकरणात् ।

सुप्सुपेत्यस्य नित्यत्वाङ्गीकारे दोषमाह–**एवञ्चेति** । तस्य नित्यताङ्गीकारे चेत्यर्थः । ननु 'अव्यय'मित्यादिसूत्रैः समाससञ्ज्ञाविधानन्नैवास्तीत्यत आह—**उपपदेति** । **उद्देश्याप्रसिद्ध्येति** । कचित्सुबुत्पत्तेः प्राक् समासस्येष्टत्वात् । कचित्सुबन्तत्वासम्भवादिति भावः । बहुव्रीहिसञ्ज्ञाविषयेऽपि कचिदप्रसिद्धिमाह—**अनेकेति** । नन्वव्ययमित्यादिसूत्रैः समाससञ्ज्ञाविधानाभावे कथमुपसर्जनसञ्ज्ञेत्यत आह—**प्रथमानिर्दिष्टमितीति** । **उक्तभाष्यादपीति** । विस्पष्टपटुरितिभाष्यादपीत्यर्थः ।

**लक्षणेनाभिप्रती** । अभिप्रती—आभिमुख्यस्य, अग्नेर्ज्ञापकत्वसम्बन्धेनान्वयस्य च द्योतकौ । अग्निज्ञाप्यं शलभकर्तृकं पतनमिति बोध—उदाहरणे । तथाबोधे चाग्न्यभिमुखत्वं शलभपतनस्य लोकप्रसिद्ध्या मनसा गृह्यते—इत्याभिमुख्यद्योतकताऽभिशब्दस्य ।

'अग्निज्ञाप्यं शलभकर्तृकं—प्रत्यासत्त्याऽग्न्यभिमुखं पतनमिति बोधः' इत्यन्ये ।

कर्मप्रवचनीयद्योत्यसम्बन्धेनान्वयाद्वाक्ये द्वितीया, तदाह—**अग्निमभीति** । 'लक्षणेने'ति किं ? 'स्रुघ्नं प्रतिगतः' । स्रुघ्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः ।

आभिमुख्ये किं ? '**वृक्षं प्रति** विद्योतते' इत्यादावाभिमुख्यद्योतनाभावे समासो मा भूदिति । अस्य समासस्य वैकल्पिकत्वेन पक्षे कर्मप्रवचनीयत्वं चरितार्थम् ।

अभिप्रती इति किं ? अग्नेः संमुखं शलभाः पतन्तीत्यर्थे साम्मुख्यार्थकसंशब्देन लक्षणत्वसम्बन्धेनान्वये समासो मा भूदिति ।

**अनुर्य** । 'लक्षणेने'ति वर्त्तते । 'समये'त्यधिकरणशक्तिप्रधानम् । 'य'दिति सामान्ये नपुंसकं—द्वितीयान्तम् । यं पदार्थं समयेत्यर्थद्योतकोऽनुः—तेन लक्षणभूतेन तद्वाचकेन समस्यते इत्यर्थस्तदाह—**यमिति** । वनादेर्लक्षणत्वं समीपद्वारा । स्वसामीप्येन हि वनेनाऽशनिदेशो ज्ञाप्यते । लक्षणत्वन्तु वस्तु सन्निमित्तं, न तु तेन सम्बन्धेनान्वयस्तदाह—**वनस्य समीपमिति** ।

**यस्य दैर्घ्यमिति** । यद्दैर्घ्यसदृशदैर्घ्यमित्यर्थः । अत्रापि लक्षणत्वं वस्तु सदेव निमित्तं तद्ध्वनयन्नाह—**गङ्गाया अन्विति** । तद्योत्यसम्बन्धेनान्वयाभावान्न द्वितीया ।

**उपलक्षितेति** । विशिष्टेत्यर्थः । दैर्घ्यसदृशदैर्घ्यविशिष्टत्वमनयोरर्थः । तथा बोधे च गङ्गायां ज्ञापकत्वस्य, 'वनस्य[1] समीपं गत' इति बोधे च वने ज्ञापकत्वस्य नियमेन

❀ **वरवर्णिनी** ❀

मानसबोधविषयस्य न शाब्दबोधविषयत्वमित्यभिप्रायेणाह—**अग्निज्ञाप्यमित्यादि** । द्योत्यस्याप्यर्थस्य शाब्दबोधविषयत्वं बहुषु दृष्टमिति तद्वदत्राप्युचितमित्याशयेनाह—**अग्निज्ञाप्यमिति** । कर्मप्रवचनीयद्योत्यसम्बन्धेन=लक्ष्यलक्षणभावेन । **द्योतनाभाव इति** । लक्ष्यलक्षणभावस्तु तत्रापीष्यत एव ।

नन्वेवङ्कर्मप्रवचनीयसञ्ज्ञाविधानवैयर्थ्यमत आह—**अस्य समासस्येति** । **अशनिदेश इति** । अशनिगमनदेश इत्यर्थः। अशनिः=वज्रम् । तेन सम्बन्धेन=लक्ष्यणलक्षणभावसम्बन्धेन । एवञ्च 'ऽनुगङ्गं वाराणसी'त्यत्रानुशब्दद्योत्योऽर्थो दैर्घ्यसदृशदैर्घ्यन्तदेकदेशे प्रथमतो भासमाने दैर्घ्ये गङ्गापदार्थस्याधेयतासम्बन्धेनान्वयो न त्वनेन गङ्गापदार्थस्य वाराणस्यामन्वयः, तदभिप्रायेणाह—**सम्बन्धेनान्वयाभावादिति** । एवञ्च गङ्गापदार्थस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वाभावान्न द्वितीयेत्यर्थः ।

'यस्य चायाम' इतिसूत्रविषये आह—**तथा बोध इति** । पूर्वसूत्रविषये आह—**वनस्य समीपञ्च**

१ 'गङ्गासमीपं गत इति बोधे च गङ्गायां ज्ञापकत्वस्ये'ति सकलमुद्रितपुस्तकपाठः ।

मनसा बोधादन्यलभ्यत्वेन नात्र तत्—अनोर्द्योत्यमिति तात्पर्य्यम्। तेन सम्बन्धेनान्वये तु 'वनमनु' 'गङ्गामनु'इति द्वितीयैवेति बोध्यं, 'निवेश्य गङ्गामनु तां महानदीं चमू'मिति रामायणे प्रयोगात्। वाराणस्याः स्वरूपेण ज्ञातत्वेऽप्यायामवैशिष्ट्येन ज्ञाप्यत्वं बोध्यम्।

**तिष्ठद्गुप्र**। चेनैषां वृत्त्यन्तरे प्रवेशो न। 'आ तिष्ठद्गु जपेत्सन्ध्यां पश्चिमामा-यतीगवात्—' इति भट्टिश्लोके 'आ तिष्ठद्गु' 'आ आयतीगवा'दिति भिन्ने पदे।

**इह**—उक्तोदाहरणद्वये, तत्राद्ये शत्रादेशमात्रम्, प्रथमासामानाधिकरण्यात्तदप्राप्तिः। यद्यपि 'पचन् पुरुषः' इतिवत्सिध्यति, तथाऽप्युपायान्तरमिदम्। **समासान्तश्चेति**। इदमन्त्ये। चेनान्यपदार्थेऽव्ययीभाव इति बोद्धव्यम्।

**पक्षे षष्ठीति**। अयं भावः—महाविभाषा नैकार्थीभावस्य विकल्पबोधिका, वृत्तिश्चै-कार्थीभावे नित्येति—येननाप्राप्तिन्यायेनाव्ययीभावस्तत्पुरुषं बाधेत, यथैकदेशिसमासः षष्ठीतत्पुरुषमिति—पक्षे तल्लाभाय पुनर्वाग्रहणमिति।

'सङ्ख्ये'त्यादित्रिसूत्री स्वभावात्समानाधिकरणविषया। **वंश इति**। एकस्वभावः सन्तानप्रबन्धो वंशः। **द्वौ मुनि**—पाणिनिकात्यायनौ। **त्रिमुनि**—भाष्यकृत्, तौ च। स्वपदार्थप्राधान्ये एवायं समासः। नन्वेवं 'त्रिमुनि व्याकरण'मिति सामानाधिकरण्या-नुपपत्तिरत आह—**विद्येति**। अन्ये तु—बहुव्रीहौ-'त्रिमुनि व्याकरणम्' अव्ययीभावे 'व्याकरणस्ये'ति, स्वरभेदश्चेष्ट एवेत्याहुः।

---

❀ वरवर्णिनी ❀

**इतीति**। तेन सम्बन्धेन=अनुद्योत्यसम्बन्धेन। तत्र प्रमाणमाह—**निवेश्येति**।

ननु ज्ञाप्यत्वं—ज्ञापकत्वाभिमतविषयकज्ञानजन्यज्ञानविषयत्वमेव, तच्चाज्ञातस्य सम्भवति, प्रकृते च वाराणस्यास्तत्त्वन्तदा भवेद्यदि वाराणसी पूर्वमज्ञाता स्यात्, तत्तु नेत्याशयेनाह—**वाराणस्या इति**।

**वृत्त्यन्तरे प्रवेशो नेति**। समुच्चेतव्यस्याभावात्। एतदर्थमेव चकारः। तदुक्तम्भाष्ये—'किमर्थ-श्चकारः? एवकारार्थः—'तिष्ठद्गुप्रभृतीन्येव'। क मा भूत्? परमन्तिष्ठद्गु। 'अत्र एवकारार्थ' इत्यनेनै-तत्सूचितं तिष्ठद्गुप्रभृतीन्येवैकार्थीभावविषयाणि न त्वेतेषां शब्दान्तरेणैकार्थीभावः। नन्वातिष्ठद्गु इत्यादौ समासान्तरे प्रवेशदर्शनादिदमयुक्तमत आह—**आतिष्ठद्गु जपेदिति**। **अन्यपदार्थेऽव्ययीभाव इति**। "–'तिष्ठद्गु कालविशेषे' 'तिष्ठद्गु कालविशेष इति वक्तव्यम्'–तिष्ठन्ति गावो यस्मिन् काले–" इति भाष्यात्। इदं=निपातनरूपम्। अन्त्ये='आयतीगव'मित्यत्र। अव्ययीभावविषये अव्ययीभावाभावे तत्पुरुषप्रवृत्त्यु-पायमाह—**अयम्भाव इति**। एकस्वभावः=समानस्वभावः। स्वभावशब्दोऽत्र धर्मवाची। एवं= स्वपदार्थप्राधान्यस्वीकारे।

मूले—**विद्यातद्वतामिति**। तद्वत्त्वञ्चात्र तत्प्रणेतृत्वसम्बन्धेन। एवञ्च विद्यावत्त्वात्मकधर्मसम्बन्धा-त्रिमुनिशब्दस्य यत्प्रवृत्तिनिमित्तन्तदारोपेण व्याकरणे 'त्रिमुनि'शब्दस्य प्रवृत्तिरिति भावः।

**इमं क्लेशम्परिहर्तुमुपायान्तरमाह-अन्ये त्विति**। नन्वेवम्बहुव्रीहौ पूर्वपदप्रकृतिस्वरोऽव्ययीभावे स्वन्तोदा-

परे तु—विद्यावंशो नाम—गुरुशिष्यपरम्परा । न चैतस्य मुनित्रयस्य तत्त्वे मानमस्ति । 'त्रिमुनि व्याकरणस्ये'ति यदीष्यते तदेदं तिष्ठद्गुप्रभृतिषु पाठात्साध्यमित्याहुः । मूलन्तु वृत्त्यनुसारेण । किञ्च 'न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते' इति न्यायेन 'द्विमुनी'ति व्यवहारासङ्गतिर्बोध्या ।

जन्मनोदाहरति—**एकविंशतीति** । 'एकविंशतिर्भरद्वाजा वंश्या' इति विग्रहः । वृत्तौ 'तृतीयासप्तम्यो'रितिसूत्रस्थभाष्यप्रयोगात्तत्प्रामाण्येनोपकादिष्वनयोः पाठात् 'यञञोश्चे'तिलुगभावो बोध्यः ।

**नदीभिश्च** । अत्र च बहुवचननिर्देशान्न सञ्ज्ञाया ग्रहणं, नापि शब्दस्वरूपस्य । शब्दसञ्ज्ञात्वाच्च । किन्तु नदीत्यर्थग्रहणम् । तेन तद्वाचके सर्वत्र प्रवृत्तिः । एतच्च सङ्ख्यासञ्ज्ञासूत्रे भाष्ये स्पष्टम् । **समाहारे चेति** । तत्रैवेत्यर्थः । एवञ्च तदविवक्षायां 'पूर्वकालैके'ति समासे 'एकनदीतरः'—सिद्धः । समानाधिकरणतत्पुरुषं बाधित्वाऽव्ययीभावे नपुंसकह्रस्वापत्तिः ।

'अच् प्रत्यवन्ववे'तियोगविभागसिद्धोऽभियुक्तोक्तः—

—'गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि'—इत्यच् तु न, योगविभागस्येष्टसिद्ध्यर्थत्वात्, भाष्यकृता तदनुक्तेश्चेति भावः ।

**अन्यपदा** । सङ्ख्येति निवृत्तं, नदीग्रहणमनुवर्त्तते । **सञ्ज्ञाऽनवगमादिति** । सञ्ज्ञेति कर्मण्यङ् । तेन सञ्ज्ञिनो देशविशेषस्यानवगमादित्यर्थः ।

---

❀ **वरवर्णिनी** ❀

त्त्वमिति स्वरभेदापत्तिरत आह—**स्वरभेदश्चेति** । **इष्ट एवेति** । समासभेदेन स्वरभेदे इष्टापत्तेः सर्वसम्मतत्वादिति भावः । लोकप्रसिद्ध्यनुसारेणाह—**परे त्विति** । नन्वेवं 'त्रिमुनि व्याकरणस्ये'त्यस्य कथमुपपत्तिरत आह—**यदीष्यत इति** ।

ननु गर्गस्य गोत्रापत्यानाङ्कुलमित्यर्थे 'गर्गकुल'मित्यत्र यथा 'यञञोश्चे'तिसूत्रेण यञो लुग्भवति तथा 'एकविंशति भारद्वाज'मित्यत्राञो लुक् स्यादित्येतादृशप्रयोगानुपपत्तिरत आह—**वृत्ताविति** । **अनयोः**= 'एकविंशति भारद्वाजम्' 'त्रिपञ्चाशद्गौतम'मित्यनयोः ।

ननु 'नदीभिश्चे'तिसूत्रं समानाधिकरणसमासमात्रबाधकम् ? अथ वा पुरस्तादपवादन्यायेन 'पूर्वकालैके'त्यस्य बाधकम् ? उभयथा 'एकनदीतरे'तिप्रयोगानुपपत्तिः, अव्ययीभावनपुंसकह्रस्वत्वापत्तेश्चेरत आह—**तत्रैवेत्यर्थ इति** । तदविवक्षायां=समाहाराविवक्षायाम् । एतेनैकापूपीवत्समाहारविवक्षायामेकनदितरे इति भवत्येव । समासान्तापत्तिं वारयति—**अच्प्रत्ययेति** । 'अभियुक्तोक्त' इत्यस्य 'अच्' इत्यत्रान्वयः । तदनुक्तेः=अचोऽनुक्तेः ।

वाक्याभावेन=लौकिकविग्रहवाक्यसम्बन्धित्वाभावेन । एवञ्च नित्यसमासस्थले विशेष्याभावाद्विशिष्टा-

**नित्यसमास इति** । तत्सदृश इत्यर्थः । तत्सादृश्यञ्च समानार्थकवाक्याभावेन । समासघटकपदानां विग्रहस्त्वस्त्येव, महाविभाषाया असम्बन्धे मानाभावात् ।

अत एव 'द्वितीयतृतीये'ति सूत्रेऽन्यतरस्याङ्ग्रहणेनोत्सर्गापवादयोर्महाविभाषाविषयत्वेऽपवादाभावे उत्सर्गाप्रवृत्तिरित्यर्थे ज्ञापिते–'उन्मत्तगङ्ग'मित्युदाहृतम् , 'अव्ययीभावेन मुक्ते बहुव्रीहिर्ने'ति चोक्तं भाष्ये । अस्य नित्यत्वे 'तेन मुक्ते' इत्यसङ्गतिः स्पष्टैव । एवमन्यत्रापि बोध्यम् ।

**समासान्ताः** । अत्र समासपदं—तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरम् एवमव्ययीभावादिपदान्यपि तत्पराणि ।

अत एव 'बहुकुमारीकः' इत्यादौ ह्रस्वो न । 'गोस्त्रियोः' इत्यत्र भाष्ये स्पष्टमेतत्, 'अन्तः' इति सूत्रे भाष्ये च । एवञ्चालौकिकविग्रहवाक्ये समाससञ्ज्ञासमकालमेव समासान्ताः—इति **सिद्धान्तः** ।

न च पूर्वं समासान्ते तत्संनियोगशिष्टाद्युदात्तत्वे तदेकवाक्यतापन्ने पूर्वस्य निपाते च

---

❀ वरवर्णिनी ❀

भावः । प्रकृत तु लौकिकविग्रहवाक्यसत्त्वेऽपि तस्य स्वन्वयबोधकतया विशेषणाभावाद्विशिष्टाभावोऽक्षत एवेति भावः । न चैतावता लौकिकत्वस्वसमानार्थकत्वाभ्यां विशिष्टस्य वाक्यस्याभावेनेति सिद्धं, लौकिकत्वसमानार्थकत्वोभयाभाववद्वाक्यकत्वेनेत्यर्थात्, तदेतदाह—**समासघटकेति** । अत एव=विग्रहसत्त्वादेव, एतस्य नित्यसमाससदृशत्वन्न तु नित्यसमासत्वमेवेति स्वीकारादेव वा ।

अत एव=समासपदस्य समाससम्बन्ध्यलौकिकविग्रहवाक्ये लक्षणास्वीकारादेव । अन्यथा समाससामान्यापेक्षत्वरूपान्तरङ्गत्वस्य ह्रस्वत्वे सत्त्वेन तत्प्रवृत्त्यापत्तिः स्यात् । समासार्थालौकिकविग्रहे लक्षणायान्त्वन्तरङ्गतरः कबिति न दोषः । **गोस्त्रियोरित्यत्र भाष्य इति** । तत्र हि–'कपि ह्रस्वत्वस्य प्रतिषेधो वक्तव्यः'–बहुकुमारीकः । न वक्तव्यः–कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वं न भविष्यति । इदमिह सम्प्रधार्यम्—कप् क्रियतां ? ह्रस्वत्वमिति ?—परत्वात्कप्, समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप्समासान्त इत्युच्यते, तादर्थ्याचाच्छब्द्यम्भविष्यती'त्युक्तम् । 'न कपी'तिनिषेधस्त्वनन्तरस्येतिन्यायेन 'केऽण' इत्यस्यैव बाधक इति भावः ।

**अन्त इति सूत्रे भाष्ये चेति** । तत्र हि–"किं समासस्यान्त उदात्तः ? आहो स्विदुत्तरपदस्य ? आद्ये 'इदम्प्रथमकाः' इत्यादौ कपि पूर्वस्योपसङ्ख्यानङ्कर्तव्यम् । अन्त्ये'ऽनृचः'इत्यादौ 'नञ्सुभ्या'मित्यनेनान्त्याऽकारस्योदात्तत्वानापत्तिः"–इत्युक्तम् । यदि समासे कृते समासान्तः प्रवर्तेत तदा–'इदम्प्रथमकाः' इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् 'इदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने' इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्फुटैव । पूर्वोक्तव्याख्यानेन यत्सिद्धं तदाह—**एवञ्चेति** । 'समाससञ्ज्ञासमकालमेवे'त्यत्र समासपदम्—अव्ययीभावादीनामप्युपलक्षणम् ।

समासार्थालौकिकविग्रहवाक्यस्यान्ताः समासान्ता इति सिद्धान्ते शङ्कते—**न च पूर्वं समासान्त इति** । अत्र 'पूर्व'मित्यस्य समाससञ्ज्ञाप्रयोज्यकार्यान्तरप्रवृत्तेः पूर्वमित्यर्थः । एतेन 'पूर्वोक्तसमकाल-

कृते पूर्वपदस्योदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वराप्रवृत्तौ टचश्चित्त्वं व्यर्थमिति वाच्यं, तत्सामर्थ्येन समासान्तविधौ 'आद्युदात्तश्चे'त्यस्यासम्बन्धज्ञापनात् ।

तेन समृद्धा पूर्यस्य–'समृद्धपुरो राजे'त्यादौ पूर्वपदप्रकृतिस्वरसिद्धिः । 'द्वित्रिभ्या'मितिसूत्रस्थं 'समासे कृते समासान्ताः' इत्येतत्परं भाष्यमेकदेश्युक्तिः, उक्तभाष्यद्वय-विरोधादित्यन्यत्र प्रपञ्चितम् ।

अन्तशब्दश्चरमावयववाची । स च समुदायावयवः । अत एव 'उपशरद' मित्यत्र 'नाव्ययीभावा'दित्यम्, 'अंव्ययाना'मिति टिलोपाभावश्च सिद्धः, पूर्वभागस्याव्ययी-भावत्वाभावेनानव्ययत्वात् ।

यत्तु कैयटेन–'गोस्त्रियो'रिति सूत्रे समासपदस्य समासार्थविग्रहवाक्यस्थोत्तरपद-लक्षणयोत्तरपदावयवत्वमुक्तम । तथा सरूपसूत्रे उक्तम्–'उत्तरपदावयवत्वमित्यपि भाष्य-कारस्य मत'मिति, तन्न ; फलाभावात् । 'द्विपुरी'त्यादौ स्त्रीत्वस्य लोकतः

---

ॐ वरवर्णिनी ॐ

त्वोक्तिविरोध' इत्यमास्तम् । **चित्त्वं व्यर्थमितीति** । प्रत्ययाद्युदात्तत्वेनैवान्तोदात्तत्वसिद्धेः । न च यस्य मत समाससञ्ज्ञोत्तरं समासान्तस्तन्मतेऽपि सति शिष्टत्वेन प्रत्ययस्वरस्य बलवत्त्वादन्तोदात्तत्वं सिद्धमेवेति डचश्चित्त्वं व्यर्थं, 'बहुव्रीहौ प्रकृत्ये'ति सूत्रेण पूर्वपदप्रकृतिस्वरविधानसामर्थ्यात्प्रत्ययस्वरो न भविष्यती'ति तु वक्तुमशक्यं, कच्विषये चारितार्थ्यादिति वाच्यम् ; 'अनुदात्तम्पद'मिति सूत्रे पदग्रहणस्य परिमाणार्थतया समासान्तस्य समासावयवत्वबोधनेन च पूर्वपदम्बहुव्रीहौ प्रकृत्या तञ्च वर्जयित्वा यावान्बहुव्रीह्यवयवः सन्निहितो भावी वा सोऽनुदात्त इत्यर्थेन डप्रत्ययस्यानुदात्तत्वं स्यादतश्चित्त्वं सफलमित्याशयात् । **तत्सामर्थ्येनेति** । डचश्चित्त्वसामर्थ्येनेत्यर्थः । तेन=आद्युदात्तश्चेत्यस्यासम्बन्धेन ।

**पूर्वपदप्रकृतिस्वरसिद्धिरिति** । यदि समासान्तविधावाद्युदात्तश्चेत्यस्य सम्बन्धः स्यात्तदा तदेकवाक्यतापन्नशेषनिघातेन पूर्वपदस्यानुदात्ततयोदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरो न स्यादिति भावः । तेन 'समृद्ध'शब्दस्वरस्यैव श्रवणं परिनिष्ठिते भवति ।

ननु समाससञ्ज्ञासमकालमेव समासान्तप्रवृत्तिस्वीकारे 'द्वित्रिभ्या'मितिसूत्रस्थभाष्यविरोधः प्राप्नोति । तत्र हि–कृतसमासान्तपाद्दत्साहचार्यात्कृतसमासान्ते मूर्द्धन्शब्देऽस्य प्रवृत्तिस्तदा समासान्ते कृते एव 'द्विमूर्द्धान'मित्यादौ प्रवृत्तौ नान्तत्वं वक्तव्यम् । यदि तु 'मूर्द्ध'स्वितिनिर्देशात्साहचर्यमनादृत्याऽकृतसमासान्ते प्रवृत्तिस्तदा कृते समासान्ते 'द्विमूर्द्ध' इत्यत्र स्वरो न प्राप्नोति,—एवं वितर्क्याऽकृतसमासान्तस्यैव 'मूर्द्ध'स्वितिनिर्देशाद्ग्रहणम् । समासान्तविषये तु समासान्तापेक्षया परत्वात्स्वरे कृते ततः समासान्ते टिलोपे च कृते उदात्तनिवृत्तिस्वरेण सिद्धि'रित्युक्तम् । यदि समाससञ्ज्ञासमकालमेव समासान्तप्रवृत्तिस्तदा समासान्तात्परत्वात्स्वरप्रवृत्तिः स्यादित्येतदसङ्गतं स्यादत आह—**द्वित्रिभ्यामिति सूत्रेति** । **उक्तभाष्यद्वयेति** । 'गोस्त्रियो'रिति 'अन्तः' इति सूत्रस्थभाष्येत्यर्थः । समाससञ्ज्ञासमकालं समासान्तवृत्तिपक्षे तु 'द्वित्रिभ्या'मित्यत्र 'मूर्द्ध'स्विति निर्देशदर्शनादकृतसमासान्तेऽस्य प्रवृत्तिः । समासान्तविधिश्चानित्यः, यत्र तु समासान्तस्तत्रापि समासस्य कार्यित्वेनाश्रयणात्समासान्तसङ्घातस्यापि ग्रहणेनानेनैव स्वरस्य सिद्धिरिति कल्पनया निर्वाहो बोध्यः, तदाह—**अन्यत्रेति** । अत एव=समुदायावयवत्वादेव । **टिलोपाभाव इति** । अव्ययग्रहणेन समासासान्तस्य ग्रहणात् ।

कैयटोक्तोत्तरपदावयवत्वपक्षस्त्वसङ्गत इत्याह—**यत्त्विति** । **फलाभावादिति** । समासपदस्य

सिद्धेः । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति भाष्येण लिङ्गप्रकरणस्य नियमार्थत्वाभावबोधनात् । अत एव 'परवल्लिङ्ग'मितिसूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्द्धखार'मित्यादौ नपुंसकत्वसिद्धिः । 'पञ्चराज'मित्यादावपि तत्प्रवृत्त्यापत्तौ 'अकारान्तोत्तरपद'इत्यत्रोत्तरपदग्रहणस्य व्यर्थत्वापत्तिश्च ।

'अन्त' इत्यादिसूत्रस्थभाष्यविरुद्धश्चोत्तरपदावयवत्वम् । एवं हि तत्र भाष्यं—'समासस्यान्तोदात्तत्वमुत्तरपदस्य वा'इति विकल्पे,—आद्ये 'इदम्प्रथमकाः' इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा—अन्त्ये 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा-उभयोरपि प्रकरणेन लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्व'मिति ।

सरूपसूत्रस्थभाष्यं तदनाश्रयणेऽपि योजयितुं शक्यम् । तथाहि 'कृतद्वन्द्वानां विभक्तौ परत एकशेषः—' इति पक्षे—'ऋक् च ऋक् च ऋचौ, असारूप्यादेकशेषो न प्राप्नोती'ति भाष्यम् । समासान्तानां समासावयवत्वेऽपि तत्प्राग्भागस्य विभक्तिपरत्वाभावस्तद्विशिष्टस्य तु न सरूपवत्त्वमिति तद्भावः । न च तस्यानर्थक्येन तदनुक्त्या भाष्यस्य न्यूनता, द्वन्द्वावयवानामर्थवतमेवैकशेष इत्यर्थे मानाभावात् । विशिष्ट-

❀ वरवर्णिनी ❀

समासार्थालौकिकविग्रहवाक्यात्मकसमुदायपरत्वम्भाष्यकारोक्तं तत्तादर्थ्याच्छब्दमित्येतदनुगृहीतम्भवति । उत्तरपदावयवत्वे तु न तादृशभाष्योपलम्भ इत्यपि बोध्यम् ।

ननु यदि समासान्तो नोत्तरपदावयवस्तदा 'द्विधुरी'त्यत्राऽकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट' इत्यस्य कथम्प्रवृत्तिरत आह—**द्विधुरीत्यादाविति** । अत एव=लिङ्गस्य लोकाश्रयत्वादेव । **नपुंसकत्वसिद्धिरिति** । उत्तरपदावयवत्ववादिमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भावः ।

उत्तरपदावयवत्वस्वीकारे भाष्यविरोधमपि दर्शयति—**अन्त इत्यादिसूत्रेति** । **अन्तोदात्तत्वासिद्धिरिति** । यद्ययमुत्तरपदावयवः स्यात्तदा 'नञ्सुभ्या'मिति सूत्रेणान्तोदात्तत्वमत्र चकारस्य स्यादेवेति भावः ।

विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोधं वारयति—**सरूपेति** । तस्यानर्थकत्वेन=समासान्तरहितस्य 'ऋच्'इत्यस्यार्थवत्त्वाभावेन । **मानाभावादिति** । न च द्वन्द्वापवादत्वव्यवहार एव मानं, द्वन्द्वसमासस्यार्थवत्त्वात् प्रातिपदिकसञ्ज्ञायाम्प्रत्येकं सुबुत्पत्तःवेव प्राप्तेः । 'कृतद्वन्द्वाना'मितिपक्षे तु सुतरान्तथेत्यत आह—**विशिष्टरूप इति** । अर्थबोधकतावच्छेदकानुपूर्वीविशिष्टरूपेत्यर्थः । तद्विशिष्टमेव=सुविशिष्टमेव । **तन्मूलभूतेति** । 'सुबन्तात्तद्धित'इति सिद्धान्तमूलभूतेत्यर्थः । अत एव='परिपूर्ण'मिति युक्तेः सार्थकविषयत्वादेव । तस्यामवस्थायां=वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत आह—**तत्रेति** । तद्ग्रहणेन=वाक्यग्रहणेन । न च सामासान्तस्य भवदुक्तरीत्या वाक्यावयवत्वेन ग्रहणम्भवतु, न तु समासग्रहणेन ग्रहणम्भविष्यतीति वाच्यं, वाक्यस्यैव समाससञ्ज्ञाविधानेन समासशब्दाभिन्नतया समासशब्देन विशिष्टस्य ग्रहणम्भविष्यतीत्याशयात् । अन्यथा=मदुक्तरीत्या तावदित्यस्य

रूपोपादानाभावेन तत्परिभाषाया इहाप्रवृत्तेः । भाष्यान्तरन्तु तादृशं नोपलभ्यत एवेति दिक् ।

स च समासान्तो-'बहु जस् गोमत् जस्' इत्यवस्थायामलौकिके वाक्ये सुपः परस्तादेव । ततः पूर्वत्वे तु—वाग्यार्थविरोधः । न हि सुब्रहितं समासार्थं, किन्तु तद्विशिष्टमेव । न च विशिष्टस्य सुबन्तत्वाभावेन 'सुबन्तात्तद्धित' इतिसिद्धान्तविरोधः, तेषामर्थाभावेन 'परिपूर्णं पद'मिति तन्मूलभूतन्यायस्यात्र विषयाभावात् । अत एव 'पुंयोगा'दिति सूत्रेऽत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेवोत्पत्तिर्भाष्ये उक्ता ।

किञ्च समासान्तप्रकरणे 'ङ्याप्प्रातिपदिका'दित्यस्याप्यसम्बन्धः, तस्यामवस्थायां वाक्यस्याऽप्रातिपदिकत्वात् । तत्र कबुत्पत्तिकाले एव तत्पूर्वभागस्य समाससञ्ज्ञा, विरोधाभावात् । समासान्तस्य च तद्वाक्यावयवत्वेन तद्ग्रहणेन ग्रहणात् 'बहुकुमारीक' इत्यादावुपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकाभावान्न ह्रस्वः । कप्—ह्रस्वादन्तरङ्गतरः, तादर्थ्यात्ताच्छब्द्यम् । 'येषां पदानां समासो, न तावत्तेषामन्यद्भवति, कपं तावत्प्रतीक्षते' इति भाष्येण स्पष्टं तथाऽभिधानात् । तत्राद्यस्य 'ताव'दित्यस्य–कपः प्रथममित्यर्थः । अन्यत्=समाससञ्ज्ञारूपं, कपा सह स्वभवनाय कपं पश्यतीत्यर्थः । पूर्वं स्वप्रवृत्तौ हि तदर्थकवाक्याभावेन कप्शास्त्रवैयर्थ्यभिया तद्भवनकालप्रतीक्षा । अन्यथा तदनपेक्षत्वेन कप्प्रतीक्षोक्तिरत्यन्ताऽसङ्गता स्यात् । अत एव 'प्रत्ययस्था'दिति सूत्रभाष्योदाहृते 'बहुचर्मिके'त्यादावापः सुपः परत्वाभावादित्त्वसिद्धिरिति दिक् ।

अथाव्ययीभावेऽसाधारणसमासान्तानाह—**अव्ययीभावे** । अव्ययीभावे उत्तरपदतया वर्तमानं यच्छरदादिप्रकृतिकसुबन्तं तदन्ताट्टच् । स च समासार्थविग्रहवाक्यस्याऽन्तावयव इत्यर्थः । 'राजाह' इत्यतष्टजनुवर्त्तते । अनन्तादव्ययीभावादित्यादि तु फलितार्थपरतया कथञ्चिन्नेयम् । अत्र गणे ये झयन्तास्तेषां 'झय' इति विकल्पे प्राप्ते नित्यार्थः पाठ इति केचित् । **प्रत्यक्षमिति** । 'लक्षणेनाभी'ति समासः ।

---

**ॐ वरवर्णिनी ॐ**

व्याख्यानाभावे । तदनपेक्षत्वेन=कबनपेक्षत्वेन । अत एव=सुपः परस्तादित्यस्याश्रयणादेव । **दिगिति** । दिगर्थस्तु यदन्यत्रोक्तम्—'अलौकिकविग्रहवाक्ये समासान्ते कृते तद्धितान्तत्वात्प्रातिपदिकत्वे सुब्लुकि प्रत्ययलक्षणेन प्रत्येकं सुबन्तत्वेन समाससञ्ज्ञे'ति, तन्न युक्तम्, उक्तभाष्यस्वारस्येन समासान्तस्य समाससञ्ज्ञायाश्चैककालप्रवृत्तिकत्वस्यैव लाभादित्यादिर्बोध्यः । सूत्रार्थमाह—**अव्ययीभाव इति** । नन्वेवमनश्चेत्यस्यापि अन्नन्तं यत्प्रातिपदिकन्तत्प्रकृतिसुबन्तोत्तरपदकाव्ययीभावार्थवाक्यादित्येवार्थ उचित इत्यन्नन्तादित्यनुपपन्नमत आह—**अन्नन्तेति** ।

**केचिदिति** । 'झय'इति सूत्रस्य वैकल्पिकत्ववादिन इत्यर्थः । वस्तुतस्तु वक्ष्यमाणरीत्या 'झय' इति

**परोक्षमिति** । इन्द्रियाजन्यज्ञानविषये त्वर्शआद्यजन्तः प्रयोगः । नन्वत्राव्ययीभावाप्राप्तिरत आह–**सामर्थ्यादिति** ।

**परस्यौकारेति** । परशब्दस्य ओकारोन्तादेश इत्यर्थः । 'एङ' इति पूर्वरूपत्वम् । 'परस्योकार'ति पाठे–परस्याक्षिशब्दस्यादेरुकार इत्यर्थः । आद्गुणः । **अर्शआद्यचीति** । धर्मपरादिति भावः । अत्र गणसूत्रे परग्रहणं प्रक्षिप्तमिति परोक्षे लिडिति सूत्रस्थभाष्यकैयटस्वरसः । तत्र हि समासान्तोऽपि निपातनात्साधितः । **पूजार्थमिति** । वेति वक्तव्ये तत्पूजार्थमपीत्यर्थः । 'अन्यतरस्या'ङ्ग्रहणस्य तु स्वरितत्वं नास्त्येव ।

अत एव नदीपौर्णमासीति सूत्रे नदीशब्देन विशेषणाङ्ग्रहणे शरदादिषु विपाट्शब्दपाठस्य ज्ञापकत्वमुक्तं सञ्ज्ञासञ्ज्ञासूत्रे भाष्ये । नदीत्यादेर्वैकल्पिकत्वे नित्यत्वाय पाठस्यावश्यकतया ज्ञापकत्वासङ्गतिः स्पष्टैव । तत्र ज्ञयन्तपाठस्तु प्रपञ्चार्थः । तत्र नदीसञ्ज्ञकस्य न ग्रहणं, पौर्णमास्यादिग्रहणात् । न चाऽशब्दसञ्ज्ञेति निषेधात्स्वरूपस्यापि ग्रहणं न स्यादिति वाच्यं; लक्ष्यानुसारेण सामर्थ्येन च तस्यात्र त्यागात् ।

❀ विजया ❀

तत्र=शरदादौ तस्य='आशब्दसञ्ज्ञे'ति निषेधस्य । त्यागात्=अनाश्रयणात् । तत्सूत्रं='स्वं

❀ वरवर्णिनी ❀

नित्यमेव । **लक्षणेनेति** । 'अक्ष्णः सन्मुख'मिति विग्रहः । **अव्ययीभावाप्राप्तिरिति** । परमित्यर्थे विधायकाभावात्, अव्ययार्थघटितत्वाच्चेति भावः । वस्तुतस्त्वस्मिन् गणसूत्रे परस्य पाठ आकरविरुद्ध इत्याह—**अत्रेति** ।

ननु 'पूजार्थ'मितिमूलग्रन्थाद्गिरेश्चेतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते, तन्न युक्तं—वक्ष्यमाणयुक्तेरित्याशयेनाह—**वेति वक्तव्य इति** । अत एव='अन्यतरस्या'मित्यस्य स्वरितत्वाभावादेव ।

**भाष्य इति** । तत्र हि—'कृत्रिमाकृत्रिम'न्यायं व्युत्पाद्योक्तम्—'यदि तर्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति—'नदीपौर्णमास्याग्रहायणीभ्य'इत्यत्रापि प्रसज्येत । पौर्णमास्याग्रहणीग्रहणसामर्थ्यान्न भविष्यति, तद्विशेषेभ्यस्तर्हि प्राप्नोति—'गङ्गायमुने'इति । एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति–यदयं'विपाश्'शब्दं शरत्प्रभृतिषु पठती'ति । **अत्र पौर्णमास्याग्रहायणीग्रहणसामर्थ्यादिति** । यदि नदीसञ्ज्ञकस्य ग्रहणन्तदाऽनयोरुपादानं व्यर्थं स्यात् । नन्वनयोरुपादानं नियमार्थम्भविष्यति–ईकारान्तस्य चेदनयोरेवेति चेत्, एवन्तर्हि 'ऊपौर्णमास्याग्रहायणीभ्य' इत्येव वदेदिति नदीशब्दोपादानं ज्ञापकमेव । साहचर्याच्च ऊपदेन नदीसञ्ज्ञकोकारान्तस्य ग्रहणं भविष्यतीत्यभिप्रायः । ये तु 'नदीपौर्णमासी'तिसूत्रेऽन्यतरस्यामित्यस्यासम्बन्धं वदन्ति, अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति, तेषां—'देवत्रात'इत्याद्युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव । **तस्यात्रेति** ।

अत एव तत्सूत्रे भाष्ये प्रत्याख्यातमिति प्रामाणिकाः ॥

इति महामहोपाध्यायश्रीनागेशभट्टविरचिते लघुशब्देन्दुशेखरे-
अव्ययीभावसमासप्रकरणम् ।

---

※ विजया ※

रूप'मिति सूत्रम् । लक्ष्यानुसारित्वात्तद्व्यवस्थाया इति तत्त्वम् । प्रामाणिकाः = भाष्यतत्त्वविदो नागेशभट्टाः । इति शिवम् ।

इति निखिलशास्त्राटवीविहरणकण्ठीरव—न्यायपञ्चानन—पूर्वोत्तरमीमांसासार्वभौम—
वैयाकरणकेसरि—मरुमण्डलमार्त्तण्ड—शारदाऽपरशिवावतार—प्रातःस्मरणीय-
श्रीस्नेहिरामशास्त्रिचरणानां—पुत्रेण, सतीसार्वभौम—'कुलललना-'
गर्भसम्भूतेन, न्यायाचार्य—प्रतिवादिभयङ्कर—श्रीशिव-
नारायणशास्त्रिणाऽऽकलितायामभिनवपरिष्कार-
मञ्जुलायां लघुशब्देन्दुशेखरविजयायाम-
व्ययीभावसमासप्रकरणम् ।

---

※ वरवर्णिनी ※

'अशब्दसञ्ज्ञे'तिनिषेधस्येत्यर्थः । अत एव=लक्ष्यानुसरणस्य सूत्रसत्त्वेऽप्यावश्यकत्वादेव । तत्सूत्रम्= स्वंरूपमितिसूत्रमिति—[illegible]मिश्राः प्राहुरिति—सर्वेष्टसिद्धिरितिशम् ।

* इति [illegible]शास्त्रवाचस्पति—[illegible]रावतार—श्री१०८स्नेहिरामशास्त्रिणां पौत्रेण, न्यायाचार्य-
श्री[illegible]शिवनारायणशास्त्रिणां पुत्रेण, श्रीराजलक्ष्मीगर्भसम्भूतेन, पण्डितैकशेष-
[illegible]—वैयाकरणकण्ठीरव—श्री१०८श्रीहरनारायणत्रिपाठिगुरुवरा-
नुग्रहलवाधिगतशब्दशास्त्रत्रिचतुराक्षरेण, दानवीर—सेठराधाकृष्णजी-
पोद्दारमहोदयलब्धसाहाय्येन, न्याय—व्याकरणाचार्य—
श्रीगुरुप्रसादशास्त्रिणाऽऽकलितायां लघुशब्देन्दुशेखर-
वरवर्णिन्यामव्ययीभावसमासप्रकरणम् । *

अक्षयतृतीया १९९२

※ पृष्ठसङ्ख्या १२७० ※